# वाचस्पत्य



## बृहत् संस्कृताभिधान

प्रथमखण्डम्

गवर्णमेण्टसंस्कृतविद्यालयस्थ-दर्शन-व्याकरणाध्यापक-
श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्येण
सङ्कलितम्
तेनैव संस्कृतम्
१८२८ संवत्सरे मुद्रितम्






# VACHASPATYA

A
COMPREHENSIVE SANSCRIT DICTIONARY
IN TEN PARTS.—PART. I.



COMPILED BY

TARANATHA TARKAVACHASPATI
Professor of Grammar and Philosophy in the
Govt. Sanscrit College of Calcutta.




CALCUTTA
PRINTED AT THE KAVYA PRAKASHA PRESS.
1873

To be had from Pandit Jibananda Vidyasagara B. A.
Sanscrit College, Calcutta.

# वाचस्पत्याभिधाने प्रतिपाद्यानि

ग्रन्थारम्भप्रयोजनादि ।
सवृत्त्युदाहरणं पाणिनीयलिङ्गानुशासनम् ।
पाणिनीयप्रत्ययपरिनिष्ठितरूपम् ।
उणादिप्रत्ययपरिनिष्ठितरूपम् ।
रूढयौगिकादिशब्दभेदनियमविशेषाः ।
शब्दानां पूर्व्वोत्तरपदयोः परिवृत्तिसहत्वासहत्वे ।
डाक्तर उद्दलसेन–प्रणीताभिधान–शब्दकल्पद्रुमा-
भिधान–प्रदर्शितशब्दानां व्युत्पत्तयस्तदर्थाश्च ।
यथासम्भवं तेषामर्थभेदेषूदाहरणानि ।
तत्रानुक्तानां जरमणीयसंस्कृताभिधानोक्तानां, वैदि-
कानां च शब्दानां व्युत्पत्तयस्तदर्थाश्च ।
तत्राप्यनुक्तानां बहूनां वैदिकशब्दानाम् निम्ननिर्दिष्ट
चार्व्वाकादिपरिभाषितशब्दानाञ्चार्थाः ।
चार्व्वाकपरिभाषितानां शब्दानामर्थास्तन्मतञ्च ।
माध्यमिकपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
योगाचारपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
वैभाषिकपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
सौत्रान्तिकपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
आर्हतपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
रामानुजपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
माध्वपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
पाशुपतपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
शैवदर्शनपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
प्रत्यभिज्ञादर्शनपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
रसेश्वरदर्शनपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
कणादपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
गौतमन्यायपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
जैमिनीयपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
पाणिनीयपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
सांख्यपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
पातञ्जलपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
वेदान्तपरिभाषितशब्दानामर्थास्तन्मतञ्च ।
आश्वलायनादिश्रौतगृह्यसूत्रपरिभाषितानामर्थाः ।
मन्वादिस्मृतिपरिभाषितशब्दानामर्थाः ।
सर्व्वपुराणप्रतिपाद्यविषयाः ।
सर्व्वोपपुराणप्रतिपाद्यविषयाः ।
वाल्मीकिरामायणप्रतिपाद्यविषयाः ।
महाभारतप्रतिपाद्यविषयाः ।
पुराणादिषु प्रसिद्धराजर्षीणां संक्षेपेणेतिवृत्तानि ।
देशविशेषलक्षणतत्स्थानानि ।
हठयोगशास्त्रपरिभाषितशब्दानामर्थाः ।
सुश्रुतादिवैद्यकपरिभाषितशब्दानामर्थाः ।
तदुक्तशरीरादिसंस्थानम् ।
तदुक्तद्रव्यवृक्षादिलक्षणानि ।
ज्योतिषस्य चतुःषष्टिरङ्गानि ।
तेषु परिभाषितशब्दानामर्थाः ।
तत्र सिद्धान्तशिरोमणिपरिभाषितशब्दानामर्थाः
भूमेः स्थिरत्वे तस्य, चलत्वे चार्य्यभट्टस्य मतम् ।
सौरागमपरिभाषितशब्दानामर्थाः ।
भूगोलसंस्थानप्रमाणादि ।
खगोलसंस्थानप्रमाणादि ।
वृहत्संहिताप्रतिपाद्यविषयास्तच्छब्दार्थाश्च ।
वाशिष्ठादिपरिभाषितशब्दानामर्थाः । [च ।
नरपतिजयचर्य्यापरिभाषितानामर्थास्तत्रत्य चक्राणि
शकुनशास्त्रप्रसिद्धशब्दानामर्थाः ।
ताजिकपरिभाषितशब्दानामर्थाः ।
वास्तुशास्त्रादिप्रसिद्धगृहकुण्डादिलक्षणानि ।
सर्व्वदेवमूर्त्तिलक्षणानि ।
तन्त्रशास्त्रपरिभाषितशब्दानामर्थाः ।
तन्त्रोक्तषट्चक्रस्वरूपाणि ।
शारदातिलकादिपरिभाषितशब्दानामर्थाः ।
नीतिशास्त्रपरिभाषितशब्दानामर्थाः ।
अस्त्रशास्त्रपरिभाषितशब्दानामर्थाः ।
धनुर्वेदपरिभाषितशब्दानामर्थाः ।
गान्धर्व्ववेदपरिभाषितशब्दानामर्थाः ।
शिक्षापरिभाषितशब्दानामर्थाः
कल्पपरिभाषितशब्दानामर्थाः ।
छन्दःशास्त्रोक्तशब्दानामर्थास्तल्लक्षणभेदाश्च ।
अलङ्कारशास्त्रपरिभाषितानाममर्थाः ।
शब्दार्थालङ्काराणां लक्षणोदाहरणानि । [णानि च ।
दशरूपकादिपरिभाषितानामर्थास्तल्लक्षणोदाहर-
सैन्यव्यूहादिलक्षणानि ।
सैन्यपरिमाणभेदाः ।
पाकशास्त्रपरिभाषितशब्दानामर्थास्तत्प्रकारभेदाश्च ।

# CONTENTS.





# PREFACE.

The profound learning and indefatigable industry of Pandit Taranath Tarkavachaspati, one of the professors of the Calcutta Sanskrit College, has been well known to all in India interested in the classical language of the Hindus and has extended to England and Germany, where his numerous works command a wide circulation among Sanskrit Scholars.

His edition of Panini's grammar with his own commentary was published in 1863 with the patronage of the Government of Bengal on the recommendation of Mr. E. B. Cowell M. A. at that time Principal of the Calcutta Sanskrit College and now Professor of Sanskrit in the University of Cambridge.

Pandit Taranath has been for many years collecting materials for a Sanskrit Dictionary, which shall have a wider and deeper scope than Wilson's Sanskrit Dictionary and the Sabdakalpadruma by the late Raja Radha kanta Deva. It will moreover contain explanations of terms in the Tantras, Philosophy, Rhetoric and Law which are not fully given in the published portions of Bohtlingk's Dictionary. These Dictionaries are written respectively in English, in Sanskrit with Bengali characters and in German. The Pandit's Dictionary will have the explanations in Sanskrit, so as to be available for the use of both Hindu and European Scholars.

When I had the honor to officiate in 1865 as Director of Public Instruction, I brought to the notice of Sir Cecil Beadon the Lieutenant Governor of Bengal, the desire of Pandit Taranath to publish such a Dictionary, and His Honor in consideration of the acknowledged fitness of the learned Pandit for the preparation of the work, was pleased to accord to it the patronage of the Government of Bengal in the following letter, from the Junior Secretary of the Bengal Government to the Director of Public Instruction No. 507 dated Fort William the 26th January 1866.

" I am directed to acknowledge the receipt of your office letter No. 2 dated the 3rd instant and in reply to convey the Lieutenant Governor's sanction to the purchase of 200 copies at Rupees 50 per copy aggregating Rupees 10,000, of the Sanskrit Dictionary in its complete form which Pandit Tarkavachaspati the Grammar Professor of the Sanskrit College engages to compile within a period not exceeding five years."

" No sum whatever, I am to add, will be paid unless the work is completed."

An extension of time for five years longer was granted for the preparation of the work by Sir William Gray, the Lieutenant Governor of Bengal, in the letter from the Bengal Government No. 3480 dated the 12th December 1870.

H. Woodrow. M. A.
Inspector of Schools, Lower provinces of Bengal.
and formerly Fellow of Caius College, Cambrige.

श्रीं तत्सत्।

## ग्रन्थारम्भः।

श्रीगौरीतनुसम्भवं सुरवरैर्वन्द्याङ्घ्रिपद्मद्वयम् दन्तीन्द्राननमेकदन्तसुमुखं सिन्दूरशोभान्वितम्।
विघ्नध्वान्तनिवारणेऽरुणतनुं सर्व्वार्थसिद्धिप्रदम् वन्दे भक्तिसमन्वितो विमलधीर्हेतुं हृदब्जे सदा॥ १॥
सुत्यार्थाधिगमं सर्व्वप्रकृतिप्रत्ययाभिधम्। अलिङ्गं बहुलिङ्गञ्च शब्दब्रह्माहमाश्रये॥ २॥
वाचामधीश्वरीं देवीं भक्त्या नत्वा वितन्यते। तारानाथद्विजेनेदं वाचस्पत्यसमाह्वयम्॥ ३॥
यो बबन्ध विना सूत्रं शब्दरत्नस्रजं धिया। अशेषशेमुषीदात्रे तस्मै शेषात्मने नमः॥ ४॥
निःशेषं नाशयन्त्वेनः शेषाशेषसुखानि नः। यतः शब्दविशेषाणां रूपार्थाभ्यां प्रकाशनम्॥ ५॥
सूत्रवार्त्तिकभाष्याणां कारकान् मुनिसत्तमान्। पाणिन्यादीन् प्रणम्येह व्युत्पत्तिर्दर्श्यते मया॥ ६॥
निघण्टुकारिणां ग्रन्थास्तद्व्याख्याकारिणां तथा। मच्चित्ते द्योतयन्तोऽर्थान् प्रकाशन्तां सदाऽखिलाः॥ ७॥

## मुखबन्धविज्ञापने।

इह खलु पुरुषा यां काञ्चित् भाषामभ्यसितुमीहमानाः प्रयतन्ते तदर्थज्ञानसाधनं तत्तद्भाषाव्याकरणं कोषञ्चाधिगन्तुम्। तत्र व्याकरणात् प्रायोयौगिकशब्दमात्राणामर्थज्ञानं, कोषात् पुनः रूढ़ानां शब्दानां केषाञ्चित् यौगिकानामपि। कोषो नाम शब्दानामर्थबोधकं शास्त्रम्। तच संस्कृतकोषे प्रायेण लिङ्ग-सहितस्यैवार्थबोधनम्। तच यद्यपि संस्कृतभाषयैव विजातीयभाषयापि भवितुमर्हति, तथापि भाषा-न्तरेण भाषान्तरस्यार्थज्ञापने, सम्पूर्णतात्पर्य्यार्थस्यास्फुरणात् एकविधभाषयैवाऽर्थस्य ज्ञापने तु भावार्थस्य स्फुटं स्फुरणात्, समानभाषयापि प्रकृतिप्रत्ययविभागमप्रदर्श्य अखण्डार्थस्य बोधने तदवयवार्थस्याबोधात् खण्डशस्तया बोधने तु अवयवशब्दार्थस्यापि सुखेन ग्रहाच अवयवार्थप्रदर्शनपूर्व्वकम् एकविधभाषयैवार्थ-बोधनं युक्तम्। किन्तु प्रसिद्धेषु संस्कृताभिधानेषु अमरकोषादिषु केवलम् अखण्डार्थस्यैव प्रतिपादनात् शब्दानां सर्व्वेषामर्थानामप्रतिपादनाच तत्र कीर्त्तितानामपि शब्दानाम् अकारादिक्रममतिक्रम्यैव पाठे-नार्थप्रतिपादनात् व्युत्पित्सूनामतीव दुर्गमत्वेन न तेषां समीचीनता। किञ्च तत्रोक्तानामपि शब्दानाम-वयवार्थज्ञानमसुलभमेव। नानाकोषपठितानां शब्दानामेकत्र सङ्कलनेन पाणिन्यागममनुसृत्य विविध-विद्यावता डाक्तरोपाधिना 'उइलिसन्' साहेवेन, वेदादिशास्त्रादिषु विशेषतः शब्दकल्पद्रुमाभिधाने कृत-श्रमाभ्यां विद्वद्भ्यां बोधलिङ्गरथाभ्यां च प्रणीतयोः संस्कृताभिधानयोः प्रकृतिप्रत्ययविभागप्रदर्शनपूर्व्वकं सुपरिपाट्या बद्धत्वेऽपि तैः स्वस्वभाषयैव संस्कृतशब्दस्यार्थानां बोधनात् संस्कृतभाषयार्थबोधनमन्तरेण संस्कृत-शब्दानामर्थजातस्य अवयवार्थाग्रहेण विशेषतोऽपरिचिततत्तद्भाषाणां सुतरामेव न सुग्रहः। अतः संस्कृतभाषाशब्दानामभिधानं संस्कृतभाषयैव व्याख्यानयुतं प्रकृतिप्रत्ययादिविभागसहितं सुपरिपाटीक-

मेकमभिधानं व्युत्पित्सुनामवश्यमपेक्षितमिति निश्चित्य तथाविधाभिधानसङ्कलने ममातितरां सङ्कल्पो-ऽवर्त्तत। किन्त्वसौ सङ्कल्पस्तत्प्रचारोपयोगिव्ययार्थार्थसामर्थ्यविरहेण निरर्थकतया मुकुलित इव समजनि।

अथ तथाविधाभिधानप्रचारार्थं मुद्राव्यापारोपयोगिधनवाञ्छया एतद्देशाधिपसंस्थापितविद्यासमाज-विभाग-प्रधानाध्यक्षम् (डिरकृटर) इति पदेऽभिषिक्तम् (एमे) इत्युपाधिकं श्रीयुक्तम् (एइच् उड्रो) इति नामकं साहेबं प्रत्यावेदितम्। मदावेदितेन च विविधविद्यानुरागवता विद्यावृद्धिविषये एकान्तोत्साहिना तेन प्रोत्साहितः वङ्गवर्णमेण्टः अयुतं मुद्राः एतत्पुस्तकमुद्राव्ययसाहाय्यार्थं दातुमङ्गीचकार।

एवमेतद्देशाधिपतिनाऽङ्गीकृते प्रचारोपयोगिव्ययानुकूल्ये चिरमुकुलितोऽपि स संकल्पः पुनः फलोन्मुखी-बभूव। अथ तथाविधसंस्कृताभिधाननिर्माणाय वेदस्मृतिपुराणमीमांसादिदर्शनज्योतिषतन्त्रवैद्यकव्याक-रणालङ्कारादीनि शास्त्राणि समालोड्य बहुलाः शब्दाः सङ्कलिताः उदाहरणानि च नानाशास्त्रेभ्य उद्धृत्य दर्शितानि। आदौ च पाणिनीयलिङ्गानुशासनमुद्धृत्य व्याख्यायोदाहरणजातं प्रादर्शि। ततः पाणि-न्यादिविहितप्रत्ययागमानां परिनिष्ठितरूपाणि च दर्शितानि। यौगिकशब्दविशेषे पूर्वोत्तरपदयोः परि-वृत्तियोग्यताबोधनाय नियमविशेषश्चात्राभिहितः।

अत्र च शब्दानां स्थूलाक्षरेण प्रथमं स्वरूपप्रदर्शनम्, ततः सङ्केतविशेषेण लिङ्गप्रदर्शनम्, ततोऽवयवार्थ-प्रदर्शनम्, ततः व्याकरणप्रक्रिया; ततोऽर्थविशेषकथनम्, यदर्थविशेषे लिङ्गभेदः प्रकृतिप्रत्ययभेदश्च तेऽत्र परतो दर्शिताः यद्यदर्थविशेषे येये शब्दा ग्रन्थान्तरे प्रयुक्तास्तत्तदुदाहरणतया तत्तद्ग्रन्थनाम समुदलेखि। 'नाम च धातुजमाह निरुक्ते' इत्युक्तेः सर्व्वशब्दानां धातुमूलतया पाणिनीयगणसूत्रपठितधातूनपि स्थूलाक्षरेण शब्दक्रममध्ये एव निवेश्य तेषाम् धातूनामर्थविशेषः, उपसर्गभेदेनार्थविशेषः, गणभेदः, पदनियमः, इट्प्रभृत्यतादि, सकर्म्मकत्वादि, लटि लुङि प्रभिन्नकृत्सु च रूपञ्च दर्शितम्। यद्यपि अर्थविशेषोत्कीर्त्तनं संस्कृतभाषयैव सर्व्वं च कृतं, तथापि यत्र वङ्गभाषयापि अर्थकथने प्रकृतार्थस्य स्फुटं प्रतीतिर्भवेत् तत्र क्वचित्क्वचित् ग्रन्थवहिर्भूततात्सूचकेन वेष्टनाकाररेखाद्वयेन वेष्टितया वङ्गभाषयाप्यर्थ-प्रकाशनं कृतम्।

अत्र च यावता प्रयत्नेन अतीव सुगमता भवेत् तथा प्रयत्नः कृतः। अतिप्रामाणिकतया पाणिनीया-गमानुसार्य्येव प्रत्ययादिसंज्ञादिकमत्राहृतम्।

एतस्य ग्राहकाणां सम्पूर्णपुस्तकस्य एकदा प्रचारे तत्क्रयार्थम् एकदैव बहुद्रव्यापेक्षा स्यादिति अल्प-वित्तानां कष्टं भवेत् तस्मा भूदित्यनया धिया खण्डश एव प्रचारे यतमानेन मया प्रथममिदं खण्डं प्राचारि।

सम्भावयामि एतत् पुस्तकं प्रायः दशभिः खण्डैः संपूर्णं स्यादिति। प्रयतिष्यते च तथा, यथा षड्भिः षड्भिर्मासैरेकैकं खण्डं प्रचारमियादित्यत्र।

एतस्य सङ्कलने शोधने च भूयान् परिश्रमः स्वीकृतस्तथापि अत्र यत्किञ्चिन्मम स्खलनं सुधीभिः समुन्नीयेत तच्च तैः निजगुणेन परिशोधनीयम्। शिवमस्तु ओं तत्सत्।

प्रतिशब्दं लिङ्गविशेषाणामग्रे वक्ष्यमाणत्वेऽपि शब्दभेदानां प्रत्ययविशेषान्तप्रकृतिविशेषाणाञ्च सामान्यतो लिङ्गविशेषज्ञाने सौकर्य्यं भवतीति पाणिनीयलिङ्गानुशासनसूत्राणि प्रदर्श्य व्याख्यायोदाहरणदर्शनेन लिङ्गविशेषास्तत्रादौ निरूप्यन्ते ।

---

तत्र लिङ्गमित्यधिकृत्य पाणिनिनाऽनुशिष्टम् ।

### स्त्री । १ ।

इत उत्तरं वक्ष्यमाणाः शब्दाः स्त्रीलिङ्गाः स्युरित्यधिकारः । तत्तदपवादस्तत्तत्सूत्रे वक्ष्यते तथा च विशेषैरबाधिता एव स्त्रीलिङ्गाः ।

### ऋकारान्ता मातृदुहितृपौत्रस्वसृननान्दरः । २ ।

ऋकारान्ता अमी पञ्चैव स्त्रीलिङ्गा नान्ये । अन्येषाम् "ऋन्नेभ्यः" इति ङीब्विधानेन ईकारान्तत्वात् स्वस्रादेरेव ङीब्निषेधेन ऋदन्तत्वात्, तिसृचतस्रोस्तु स्त्रियामादेशतया प्रकृतिरूपत्वाभावेन ऋदन्तत्वेऽपि न नियमव्याघातः । माता दुहिता स्वसा पौत्रा ननान्दा ।

### अन्यूप्रत्ययान्तो धातुः । ३ ।

अनिप्रत्ययान्तः ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः सरणिः रजनिरित्यादि । तत्र च "कृदिकारादक्तिनः" इति पक्षे ङीप् अवनी रजनी चेत्यादि । चमूः वधूरित्यादि । प्रत्ययान्तः किम् ? दिव्यतेः क्विप् द्यूः अयं विशेष्यलिङ्गः ।

### अशनिभरण्यरणयः पुंसि च । ४ ।

एते स्त्रीलिङ्गाः पुंलिङ्गाश्च स्युः । अनिप्रत्ययान्ततया स्त्रीत्वे प्राप्ते पाक्षिकपुंस्त्वविधानार्थं सूत्रम् । इयमयं वा अशनिः भरणिः अरणिः । स्त्रीत्वपक्षे ङीप् वा अशनीत्यादि

### मिन्यन्तः । ५ ।

धातुरित्यनुवर्त्तते । मिप्रत्ययान्तः निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः ग्लानिः हानिः धुनिः । अत्रापि वा ङीप् भूमी ग्लानी हानी धुनी इत्यादि ।

### वह्निवृष्ण्यग्नयः पुंसि । ६ ।

निप्रत्ययान्तत्वेन स्त्रीत्वे प्राप्ते तदपवादार्थं सूत्रम् । अयं वह्निः वृष्णिः अग्निः ।

### श्रोणियोन्यूर्मयः पुंसि च । ७ ।

एते शब्दाः स्त्रीलिङ्गाः पुंलिङ्गाश्च स्युः । एतेषां मिन्यन्तत्वेन प्राप्तौ विकल्पः । अयमियं वा श्रोणिः योनिः ऊर्मिः । स्त्रीत्वपक्षे वा ङीप् श्रोणी योनी ऊर्मी ।

### क्तिन्नन्तः । ८ ।

क्तिन्प्रत्ययान्तो धातुः स्त्रियां स्यात् । कृतिः बुद्धिः दृष्टिः । "अक्तिनः" इति निर्देशात् अत्र न पक्षे ङीप् ।

### ईकारान्तश्च । ९ ।

ईप्रत्ययान्तो धातुः स्त्रियां स्यात् । चकारो धात्वधिकारनिवृत्त्यर्थः । एतत्सूत्रपर्य्यन्त एव धातुरनुवर्त्तते नाग्रिमसूत्रे । अवीः, तन्त्रीः, तरीः, लक्ष्मीः ।

### ऊङाबन्तश्च । १० ।

ङीब्ङीष्ङीनां ग्रहणाय ङीग्रहणं टाप्चापोर्ग्रहणायाप्ग्रहणम् । ऊङन्तः ङ्यन्तः आबन्तश्च शब्दः स्त्रीलिङ्गः स्यात् । ऊङादीनां स्त्रियां विहितत्वेऽपि एकत्र सर्व्वेषां ग्रहणे लिङ्गज्ञानस्य सुगमतार्थमिह ग्रहणम् । एवमन्यत्रापि । ऊङ् । कुरूः कर्कन्धूः ङी । कर्त्री गौरी ब्राह्मणी । आप् विद्या भिदा त्वरा जरा इत्यादि ।

### य्वन्तमेकाक्षरम् । ११ ।

एकाक्षरः ईकारान्तः ऊकारान्तश्च अमति विशेषे स्त्रीलिङ्गः स्यात् । श्रीः भूः । दीव्यतेः क्विपि तु विशेषलिङ्गता । एकाक्षरं किम् ? बहुव्रीहौ पृथुश्रीः प्राप्तभूः विशेष्यलिङ्ग एव ।

### विंशत्यादिरा नवतेः । १२ ।

विंशतिप्रभृतयः नवतिपर्य्यन्ताः संख्यासंख्येयवाचकाः स्त्रियां स्युः । इयं विंशतिः त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टिः सप्ततिः अशीतिः नवतिः । कृदिकारान्तत्वाभावात् विंशत्यादिभ्यो न पक्षे ङीप् । एकविंशत्यादेस्तु "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति स्त्रीत्वमेव एकनवत्यादेः नवतिलिङ्गानतिक्रमेणाविधित्वव्याघातः । आ नवतेः किं ? शतं सहस्रम् । विंशत्यादयः किम् ? एकद्व्यादेर्विशेष्यलिङ्गत्वम् ।

### दुन्दुभिरक्षेषु । १३ ।

अक्षार्थको दुन्दुभिशब्दः स्त्रीलिङ्गः स्यात् । इयं दुन्दुभिः पक्षे ङीप् दुन्दुभी । अक्षादन्यत्र न स्त्रीत्वम् किन्तु पुंस्त्वम् ।

नाभिरक्षत्रिये ।१४।

क्षत्रियार्थभिन्नो नाभिशब्दः स्त्रीलिङ्गः स्यात्। इयं नाभिः (अङ्गावयवः) वा ङीप् नाभी।

उभावन्यत्र पुंसि ।१५।

उभौ दुन्दुभिनाभिशब्दौ क्रमेण नाभिभिन्ने क्षत्रिये च वर्त्तमानौ पुंलिङ्गौ स्याताम्। अयं दुन्दुभिः (वाद्यभेदः असुरभेदो वा) अयं नाभिः (क्षत्रियः) "लिङ्गमशिष्यं लोकाश्रयत्वात्" इत्युक्तेः क्वचित् व्यभिचारः। तेन अवयववाचकस्य पुंस्त्वमपि "मरुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीरुपनीविनाभिभिः" इत्यत्र पुंस्त्वम्। अत एव रभसः

सम्राट् क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः।
चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे॥

इत्याह च।

तलन्तः ।१६।

भावाद्यर्थे विहिततल्प्रत्ययान्तः स्त्रीलिङ्गः स्यात्। शुभ्रस्य भावः शुभ्रता एवं जड़ता मृदुता। ब्राह्मणस्य कर्म भावो वा ब्राह्मणता। जनानां समूहः जनता ग्रामता। देव एव देवता "स्वार्थिका अपि प्रत्ययाः क्वचित् प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इत्युक्तेः प्रकृतिभिन्नलिङ्गत्वम्।

भूमिविद्युत्सरिल्लतावनिताभिधानानि ।१७।

भूम्यादिपर्य्यायशब्दाः स्त्रीलिङ्गाः स्युः। अचला अनन्ता विश्वम्भरा इत्यादयः। विद्युत् तड़ित् सौदामनी चपला चञ्चला। सरित् निम्नगा आपगा। लता वल्ली वल्लरी व्रततिः। वनिता योषित् अबला।

यादो नपुंसकम् ।१८।

यादःशब्दः सरिद्वाचकोऽपि क्लीबलिङ्गः स्यात्। पूर्व्वसूत्रापवादः। इदं यादः (नदी)।

भास्स्रुक्स्रग्दिग्दृगुष्णिगुपानहः ।१९।

एते स्त्रियां स्युः। इयं भाः स्रुक् स्रक् दिक् दृक् उष्णिक् उपानत्।

स्थूणोर्णे नपुंसके च ।२०।

स्थूणोर्णाशब्दौ स्त्रियां नपुंसके च स्तः। स्थूणा स्थूणम् (काष्ठमयी हिर्क्किका)। ऊर्णा ऊर्णं (मेषादिलोम)।

गृहशशाभ्यां क्लीबे ।२१।

गृहपूर्व्वकः स्थूणाशब्दः शशपूर्व्वकश्च ऊर्णाशब्दः क्लीबलिङ्ग एव स्यात् न तु स्त्रियाम्। परवल्लिङ्गतापवादः। गृहस्थूणम् शशोर्णम्।

प्रावृड्विप्रुड्रुड्विट्त्विषः ।२२।

एते शब्दाः स्त्रियां स्युः। इयं प्रावृट् विप्रुट् रुट् विट् त्विट्।

दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषध्यङ्गुलयः ।२३।

एते शब्दाः स्त्रीलिङ्गाः स्युः। पक्षे ङीप्। इयं दर्विः विदिः वेदिः खनिः शान्यिः अश्रिः वेशिः कृषिः ओषधिः अङ्गुलिः। पक्षे ङीप् सर्वत्र, दर्वीकरः, "अङ्गुलीयोरगक्षता" इति कालिदासः।

तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः ।२४।

एते स्त्रीलिङ्गाः स्युः। इयं तिथिः। अस्य पुंस्त्वमपि "तिथयो द्वयोः" इत्यमरोक्तेः। "निखिलाश्चिशि पूर्णिमातिथीन्" इति नैषधम्। नाड़िः रुचिः इत्यादि। रात्र्यादय इत्यादिपदात् नक्तंदोषाभिन्ना रात्रिपर्य्याया गृह्यन्ते। सर्व्वत्र पक्षे ङीप्। नाड़ी रुची वीची इत्यादि।

शष्कुलिराजिकुट्यशनिवर्त्तिभ्रुकुटित्रुटिवलिपङ्क्तयः ।२५।

एते शब्दाः स्त्रियां स्युः। इयं शष्कुलिः राजिः इत्यादि। सर्व्वेभ्यः पक्षे ङीप्। "अवलम्बितकर्णशष्कुलीकलसीकम्" इति नैषधम्। "राजीवराजीवशलोलभृङ्गम्" इति माघः। वलिरुदरावयवः।

प्रतिपदापद्विपत्संपच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः ।२६।

एते शब्दाः स्त्रियां स्युः। इयं प्रतिपत् आपत् विपत् इत्यादि। उषाः प्रातरधिष्ठात्री देवता "उषा उशन्ति" इति वेदमन्त्रः।

आशीर्धूःपूर्गीर्द्वारः ।२७।

एते स्त्रियां स्युः। इयमाशीः धूः पूः गीः द्वाः।

अप्सुमनस्समासिकतावर्षाणां बहुत्वञ्च ।२८।

अप्प्रभृतीनां पञ्चानां स्त्रीत्वं बहुवचनान्तत्वं च स्यात्। इमा आपः। इमाः सुमनसः। पुष्पसामान्यवाचित्व एवास्य बहुत्वं तेन सुमना मालती जातिरित्यादौ एकत्वम्। देववाचकस्य तु पुंस्त्वमेव। बहुत्वं चैषां प्रायिकम् अत एव अर्थवत्सूत्रभाष्ये, "एका च सिकता तैलदानेऽसमर्था" इति प्रयुक्तम्। "समां समां विजायते" इति सूत्रभाष्ये समायां समायामिति प्रयुक्तम्। "विभाषा घ्राधेट्" इति सूत्रवृत्तिव्याख्यायाम् आघ्रासातां सुमनसाविति हरदत्तेन च प्रयुक्तम्।

स्रुक्त्वग्ज्योग्वाग्यवागूनौस्फिचः ।२९।

एते शब्दाः स्त्रियां स्युः। इयं स्रुक् त्वक् ज्योक् वाक्।

तटिसीमासंवध्याः ।३०।

एते शब्दाः स्त्रियां स्युः। तटिः पक्षे ङीप् सीमा संवध्या।

## चूर्णिवेणिखार्य्यश्च । ३१ ।

एते शब्दाः स्त्रियां स्युः । इयं चूर्णिः वेणिः खारिः पक्षे ङीप् ।

## ताराधाराज्योत्स्नादयश्च । ३२ ।

एते शब्दाः स्त्रियां स्युः । तारा धारा ज्योत्स्ना ।

## शलाका स्त्रियां नित्यम् । ३३ ।

शलाकाशब्दो नित्यस्त्रीलिङ्गः । इयं शलाका ।

स्त्रीत्वधिकारे पुनः स्त्रीपदग्रहणमधिकारनिवृत्त्यर्थम् । नित्यग्रहणमन्येषां व्यभिचारसूचनार्थम् । यत्र यत्र च व्यभिचारः तत्तत् पूर्व्वमुक्तम् ।

अत्र सूत्रपाठाद्यनुसारेण किञ्चिदवशिष्टं उच्यते । स्त्रियां क्तिन् (३,३,९४) इत्यधिकारे ये विहिताः क्यबादयः प्रत्ययास्तदन्ता अपि स्त्रियां स्युः । यथा व्रजयजोर्भावे क्यप् (३,३,९८ सू०) व्रज्या इज्या । संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः (३,३,९९) । समज्या सभा, निषद्या आपणः, निपत्या पिच्छिला भूमिः, मन्या गलपार्श्वशिरा, विद्या, सुत्या अभिषवः, शय्या, भृत्या, इत्या शिविका । कृञः श च (३,३,१००) क्रिया कृत्या । इच्छा (३,३,१०१) इच्छा । परिचर्य्यापरिसर्य्यामृगयाटाट्यानामुपसंख्यानमिति तत्रत्यवार्त्तिकम् । परिचर्य्या पूजा, परिसर्य्या, मृगया, अटाट्या । जागर्त्तेरकारो वा (वा०) जागरा जागर्य्या । अ प्रत्ययात् (३,३,१०२, सू०) जिगमिषा विविदिषा पुत्रकाम्या । गुरोश्च हलः (३,३,१०३, सू०) ईहा ऊहा, मूर्च्छा । षिद्भिदादिभ्योऽङ् (३,३,१०४, सू०) जरा त्रपा लज्जा भिदा छिदा । चिन्तिपूजिकथिकुम्बिचर्च्चश्च (३,३,१०५, सू०) चिन्ता पूजा कथा कुम्बा चर्चा । आतश्चोपसर्गे (३,३,१०६) उपधा उपमा, उपदा । श्रदन्तरोरुपसंख्यानम् (वा०) श्रद्धा अन्तर्द्धा । ण्यासश्रन्थो युच् (३,३,१०७, सू०) कारणा यातना पीडना आसना श्रन्थना । घट्टिवन्दिविदिभ्यश्च (वा०) घट्टना वन्दना वेदना । इषेरनिच्छार्थस्य (वा०) अन्वेषणा । परेर्वा (वा०) पर्य्येषणा । रोगाख्यायां ण्वुल् बहुलम् (३,३,१०८) प्रच्छर्दिका प्रवाहिका विचर्चिका । धात्वर्थनिर्द्देशे ण्वुल् वक्तव्यः (वा०) आसिका शायिका । संज्ञायाम् (३,३,१०९) उद्दालकपुष्पभञ्जिका । विभाषाख्यानपरिप्रश्नयोरिञ् च (३,३,११०) कां कारिं कारिकां क्रियां कृत्यां कृतिं वा त्वमकार्षीरिति प्रश्ने सर्व्वां कारिं कारिकां वाऽकार्षमित्युत्तरम् एवं गणिं गणिकां गणनाम् । पाचिं पाचिकां पचां पक्तिम् । पर्य्यायार्हर्णोत्पत्तिषु ण्वुच् (३,३,१११) भवत आसिका शय्याशयासना, अर्हे भवानिक्षुभक्षिकामर्हति । ऋणे इक्षुभक्षिकां मे धारयसि । उत्पत्तौ इक्षुभक्षिका उदपादि । आक्रोशे नञ्यनिः (३,३,११२) अजीवनिस्तव भूयादिति । अनिप्रत्ययान्ततया एतस्य प्राप्तावपि स्त्र्यधिकारपतितयोऽत्रोक्तम् । कर्म्मव्यतिहारे णच् स्त्रियाम् (३,३,४३) इति णचि "णचः स्त्रियामञ्" इति (५,४,१४) स्वार्थिकेऽञि व्यावक्रोशी व्यालुखी ।

तत्र इति (१७) सूत्रे तत्रग्रहणं समूहार्थयादीनामुपलक्षणम् अत एव "तत्र द्वन्द्वे येनिकञ्यत्ता वैरमैथुनकादिवुः" इत्यमर आह स्म । तस्य समूहः (४,२,३७) इत्यधिकारे पाशादिभ्यो यः (४,२,४९) इति ये पाश्या वन्या वात्या धूम्या तृण्या । खलगोरथात् (४,२,५० सू०) खल्या गव्या रथ्या । इनित्रकट्यचश्च (४,२,५१, सू०) खलादिभ्य इनिर्वक्तव्यः (वा०) खलिनी डाकिनी कुटुम्बिनी । गोत्रा, रथकट्या । द्वन्द्वाद् वुन् वैरमैथुनिकयोः (४,३,१२५) वैरे काकोलूकिका । मैथुने अत्रिभारद्वाजिका, आदिना "पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्चेति" दण्डव्यवसर्गयोश्चेति (५,१,२७,२८) वुनो ग्रहणम् द्विपादिकां ददाति दण्डितो द्वौ द्वौ पादौ ददातीत्यर्थः । द्विशतिकां त्यजति । वुग्रहणात् वुञोऽपि ग्रहणम् तेन "गोत्रचरणात् श्लाघात्याकारतदवेतेष्वादि" (५,१,१३४) वुञो ग्रहणम् गार्गिकया काठिकया वा श्लाघते । द्वन्द्वमनोज्ञादिभ्यश्चेति (५,१,१३३) वुञश्च ग्रहणम् । शैष्योपाध्यायिका मानोज्ञिका । तदस्यां प्रहरणमिति क्रीडायां णः (४,२,५७) इति णान्तोऽपि स्त्रियाम् । दण्डः प्रहरणमस्यां क्रीडायाम् दाण्डा मौसला । घञः सास्यां क्रियेति ञः (४,२,५८) इति विहितञान्तश्च स्त्रियां स्यात् । दाण्डपाता तिथिः । श्यैनम्पाता मृगया, तैलम्पाता स्वधा ।

एतद्भिन्ना अन्येऽपि केचन, शब्दाः स्त्रीलिङ्गतयाऽमरेऽभिहिताः यथा तिन्दुकी कणिका, भङ्गिः सुरङ्गा सूचिः शातिः काकिनी (णी) चूर्णिः, शाणी द्रुणिः दरत् । कन्था आसन्दी (व्रतिनामुपवेशनासनम्) झल्लरी चर्चरी, पारी होरा लट्वा सिध्मला लाक्षा लिक्षा गण्डूषा, स्थपुटी चमसी मसी । इत्यादयः ।

## इति स्त्रीलिङ्गानुशासनम् ।

---

## पुमान् । १ ।

वक्ष्यमाणाः शब्दाः असति बाधके पुंलिङ्गाः स्युः ।

## घञबन्तः । २ ।

घञन्तः अबन्तश्च धातुः पुंलिङ्गः स्यात् । घञ्—पाकः त्यागः ।

अप्—करः गरः तरः शरः। घञादयो भावार्थका एवेह गृह्यन्ते। भावे विहिताभ्यां क्तल्युड्भ्यां नपुंसकत्वस्य, क्तिन्नादिभिश्च स्त्रीत्वस्य बाधनात् तद्बाध्यतया भावार्थकतैवोचिता। तेन कर्म्मादौ घञाद्यन्ता विशेष्यलिङ्गा एव। अत एव भाष्यकारेण सम्बन्धमनुवर्त्तिष्यते इति सम्बन्धशब्दस्य कर्म्मार्थकत्वेन नपुंसकतया प्रयोगः कृतः।

घाजन्तश्च। ३।

घान्तः अच्प्रत्ययान्तश्च धातुः पुंसि स्यात्। विस्तरः गोचरः चयः जयः नय इत्यादि।

भयलिङ्गभगपदानि नपुंसके। ४।

घञाद्यन्तत्वेन पुंस्त्वे प्राप्ते अपवादार्थं सूत्रम्। एते शब्दा नपुंसकलिङ्गाः स्युः। इदं भयं लिङ्गं भगं पदम्।

नङन्तः। ५।

नङ्प्रत्ययान्तः शब्दः पुंसि स्यात्। यत्नः प्रश्नः इत्यादि।

याच्ञा स्त्रियाम्। ६।

नङ्प्रत्ययान्तत्वेन पुंस्त्वे प्राप्तेऽपवादोऽयम्। याच्ञाशब्दः स्त्रियां स्यात्। इयं याच्ञा।

क्यन्तो घुः। ७।

किप्रत्ययान्तो घुः (दा धा) पुंसि स्यात्। आधिः उदधिः (घटः)। व्याधिः निधिः। घुः किं चक्रिः जज्ञिः विशेष्यलिङ्ग एव।

इषुधिः स्त्री च। ८।

क्यन्तत्वेन पुंस्त्वे प्राप्ते वा स्त्रीत्वार्थं सूत्रम्। इयमयं वा इषुधिः।

देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि। ९।

देवादिपर्य्यायशब्दाः यथासम्भवं तद्भेदवाचिनश्च असति बाधके पुंलिङ्गाः स्युः। देवाः सुराः। भेदाः ब्रह्मा विष्णुः शिवः शक्रः। असुराः दनुजाः। भेदाः बलिः कालकेयः नेमिः। आत्मा चेतनः। स्वर्गः नाकः। गिरिः नगः पर्व्वतः। भेदाः हिमालयः सुमेरुः। समुद्रः उदन्वान् सिन्धुः। भेदाः क्षीरोदः लवणोदः। नखः नखरः करजः। केशः कचः बालः। दन्तः दशनः। स्तनः कुचः पयोधरः। भुजः प्रकोष्ठः। कण्ठः गलः। खड्गः असिः। शरः सायकः मार्गणः। पङ्कः कर्दमः।

त्रिपिष्टपं त्रिभुवने नपुंसके। १०।

तृतीयभुवनवाचकत्रिपिष्टपशब्दः क्लीबे स्यात्। स्वर्गवाचित्वेन पुंस्त्वे प्राप्ते अयमारम्भः। इदं त्रिपिष्टपम् (स्वर्गः)।

द्यौः स्त्रियाम्। ११।

द्योदिवोरुभयोर्ग्रहणम्। स्वर्गाभिधायित्वेन पुंस्त्वे प्राप्तेऽयमारम्भः। द्योशब्दः दिव्शब्दश्च स्त्रियां स्यात्। इयं द्यौः इमे भूदिवौ।

इषुबाहू स्त्रियाञ्च। १२।

इषुबाहुशब्दौ पुंसि स्त्रियाञ्च स्याताम्। शरवाचित्वेन भुजवाचित्वेन पुंस्त्वे प्राप्ते पक्षे स्त्रीत्वविधानार्थमारम्भः। इयमयं वा इषुः बाहुः।

बाणकाण्डौ नपुंसके च। १३।

एतौ पुंसि नपुंसके च स्याताम्। शरवाचित्वेन पुंस्त्वे प्राप्ते पक्षे क्लीबत्वार्थमारम्भः। अयमिदं वा बाणः बाणं काण्डः काण्डम्।

नान्तः। १४।

न इत्येतदन्तः पुंसि स्यात्। राजा तक्षा दृश्वा उक्षा। चर्म्मवर्म्मादयस्तु "मन् द्व्यचकोऽकर्त्तरि" इति परत्वेनास्य बाधात् क्लीबलिङ्गाः। तत्र "द्व्यचकः" इत्युक्तेः प्रथिमा म्रदिमा इत्यादयो नान्तत्वेन पुंस्येव।

क्रतुपुरुषकपोलगुल्फमेघाभिधानानि। १५।

क्रत्वादिपर्य्यायशब्दाः यथासम्भवं तद्विशेषशब्दाश्च पुंसि स्युः। क्रतुः अध्वरः। भेदः उक्थः अग्निष्टोमः। पुरुषः नरः। कपोलः गण्डः। गुल्फः प्रपदः। मेघः नीरदः जलधरः। भेदः पुष्करः आवर्त्तकः।

अभ्रं नपुंसकम्। १६।

मेघवाचित्वेन पुंस्त्वे प्राप्ते तदपवादः। अभ्रम्।

उकारान्तः। १७।

उकारान्तः शब्दः पुंसि स्यात्। विभुः विधुः इक्षुः। इदञ्च विशेषैरबाधितविषयम्। अत एव "हनुर्हट्टविलासिन्यां स्त्रारम्भे मदे स्त्रियाम्। द्वयोः कपोलावयवे" इति मेदिनिः। "करेणुरिभ्यां स्त्री नेभे" इत्यमरः। तथा च एवंजातीयकविशेषाभाव एव सूत्रं प्रवर्त्तते एतदभिप्रायेण "लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः" इत्युक्तममरसिंहेन। एवमन्यत्रापि।

धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम्। १८।

उदन्तत्वेन पुंस्त्वे प्राप्ते तदपवादार्थं सूत्रम्। एते शब्दाः स्त्रियां स्युः। धेनुः रज्जुः कुहूः। अत्र अप्राणिजातित्वात् पक्षे

जङ्। कुहूः करयूः तनूः रेखूः प्रियङ्गूः। धेनोः प्राणित्वात् रज्जोश्च पर्युदासाच्चोङ्।

समासे रज्जुः पुंसि च। १९।

समासान्तस्थः रज्जुशब्दः पुंसि, चात् स्त्रियाम्। कर्कशरज्ज्वा कर्कशरज्जुना वा बध्नाति।

श्मश्रुजानुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके। २०।

उदन्तत्वेन पुंस्त्वे प्राप्ते तदपवादाय सूत्रम्। एतानि क्लीवे स्युः। श्मश्रु जानु स्वादु अश्रु जतु त्रपु तालु।

वसु चार्थवाचि। २१।

अर्थवाचिवसुशब्दः क्लीवे स्यात्। वसु धनम्। अर्थवाचोक्तेः पशुमयूखाग्निधनाधिपेषु देवभेदे च पुमान्।

मद्गुमधुशीधुसानुकमण्डलूनि नपुंसके च। २२।

एते शब्दाः पुंसि नपुंसके च स्युः। पुंस्त्वे प्राप्ते पक्षे क्लीवत्वार्थं सूत्रम्। अयं मद्गुः इदं वा मद्गु मधुः मधु। व्यवस्थितविकल्पाश्रयणेन वसन्ते चैत्रे दैत्यभेदे च पुमानेव क्षौद्रवाचि तु नपुंसकमेव।

रुत्वन्तः। २३।

रुकारान्तः तुकारान्तश्च पुंसि स्यात्। उकारान्तत्वेनैव प्राप्ते प्रपञ्चार्थः। मेरुः सेतुः केतुः।

दारुकसेरुजतुवस्तुमस्तूनि नपुंसके। २४।

पूर्व्वसूत्रापवादः। एते शब्दाः क्लीवे स्युः। दारु कसेरु जतु वस्तु मस्तु।

सक्तुर्नपुंसके च। २५।

तन्तत्वेन पुंस्त्वे प्राप्ते पक्षे क्लीवत्वार्थं सूत्रम्। चात् पुंसि। सक्तुः सक्तु।

प्राग्रश्मेरकारान्तः। २६।

इत ऊर्द्ध्वं रश्मिशब्दघटितसूत्रपर्य्यन्तमकारान्तोऽधिक्रियते।

कोपधः। २७।

ककार उपधाभूतो यस्य तथाभूतोऽकारान्तः पुंसि स्यात्। स्तवकः कल्कः कोरकः। कारकपाठकादयस्तु विशेषणशब्दत्वेन त्रिलिङ्गाः। अत्र च प्रकरणे प्रायः विशेष्यशब्दानामेव लिङ्गमनुशिष्यते न तु विशेषणशब्दानामिति न व्यभिचारः।

चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके। २८।

कोपधतया पुंस्त्वे प्राप्तेऽपवादः। एते शब्दाः क्लीवे स्युः। चिबुकं शालूकं प्रातिपदिकमित्यादि।

कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतटाकनिष्कशुल्कवर्चस्कपिनाकभाण्डककटकदण्डकपिटकतालकफलककल्कपुलाकानि नपुंसके च। २९।

एते शब्दाः पुंसि क्लीवे च स्युः। पुंस्त्वे प्राप्ते पक्षे क्लीवत्वार्थं सूत्रम्। कण्टकः कण्टकम् अनीकः अनीकमित्यादि।

टोपधः। ३०।

टोपधः अकारान्तः पुंसि स्यात्। घटः पटः।

किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके। ३१।

पूर्व्वसूत्रापवादः। एते शब्दाः क्लीवे स्युः। किरीटं मुकुटं ललाटमित्यादि।

कुटकूटकपटकपाटकर्पटनटनिकटकीटकटानि नपुंसके च। ३२।

एते शब्दाः नपुंसके पुंसि च स्युः। कुटं कुटः कूटं कूटः कपटं कपट इत्यादि।

णोपधः। ३३।

णोपधोऽकारान्तः पुंसि स्यात्। गुणः गणः पाषाणः।

ऋणलवणपर्णतोरणरणोष्णानि नपुंसके। ३४।

पूर्व्वसूत्रापवादः। ऋणं लवणम् पर्णं तोरणमित्यादि। अमरस्तु "तोरणोऽस्त्री" इत्युक्तवान् तन्मूलं मृग्यम्। उष्णशब्दस्य स्पर्शवाचित्वे एव क्लीवता तद्वति तु गुणवचनत्वेन त्रिलिङ्गत्वम्। उष्णः वह्निः उष्णा यवागूरित्यादि।

कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च। ३५।

एते शब्दाः क्लीवे पुंसि च स्युः। कार्षापणं कार्षापण इत्यादि।

थोपधः। ३६।

थकारोपधः अकारान्तः पुंसि स्यात्। रथः अर्थः।

काष्ठपृष्ठरिक्थोक्थानि नपुंसके। ३७।

पूर्व्वसूत्रापवादः। एते शब्दाः क्लीवे स्युः। काष्ठम् उक्थं (सामावयवभेदः)।

काष्ठा दिगर्था स्त्रियाम्। ३८।

दिग्वाचककाष्ठाशब्दः स्त्रियां स्यात्। काष्ठा दिक्। दिशि इत्यनेनेष्टसिद्धौ सीमार्थेऽपि स्त्रीत्वार्थमर्थग्रहणं तेन "स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा" इति कालिदासप्रयोगः।

तीर्थप्रोथयूथानि नपुंसके च। ३९।

चादधिकारात् पुंस्त्वमेवानुषज्यते न तु स्त्रियामिति। तेन "प्रोथमस्त्रियाम्" इत्यमरोक्तिः। तीर्थं तीर्थः प्रोथं प्रोथः

नोपधः। ४०।

अदन्तो नोपधः पुंसि स्यात्। इनः फेनः।

जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके। ४१।

पूर्वसूत्रापवादः। शासनशब्दः परित्यक्तुं शक्यते ल्युडन्तत्वेन क्लीवत्वस्य वक्ष्यमाणत्वात्। एते शब्दाः क्लीवे स्युः। जघनम् अजिनं तुहिनं काननमित्यादि।

मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसंभावनविभावनविमानानि नपुंसके च। ४२।

एते शब्दाः पुंसि क्लीवे च स्युः। मानादिषु केषाञ्चिद्घञन्तत्वेन पुंस्त्वे केषाञ्चिच्च ल्युडन्ततया तद्बाधकसूत्रेण क्लीवत्वे प्राप्ते च उभयलिङ्गतार्थं सूत्रम्। मानः मानं यानः यानम्। वस्तुतः "करणाधिकरणयोर्ल्युट्" इति वक्ष्यमाणसूत्रेण त्रिलिङ्गत्वप्राप्तौ पूर्वापवादेन नपुंसकत्वमेवेति तदपवादार्थं सूत्रम्।

पोपधः। ४३।

अदन्तः पोपधः पुंसि स्यात्। धूपः दीपः यूपः।

पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके। ४४।

पूर्वसूत्रापवादः। एते शब्दाः क्लीवे स्युः। पापम् रूपम्

शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च। ४५।

एते शब्दाः पुंसि क्लीवे च स्युः। शूर्पः शूर्पमित्यादि।

भोपधः। ४६।

अदन्तः भोपधः पुंसि स्यात्। करभः कुम्भः शलभः।

तलभं नपुंसकम्। ४७।

पूर्वसूत्रापवादः। तलभम्।

जृम्भं नपुंसके च। ४८।

जृम्भं जृम्भः। अङि तु स्त्रीत्वात् जृम्भा।

मोपधः। ४९।

अदन्तः मोपधः पुंसि स्यात्। सोमः स्तोमः भीमः (मध्यमपाण्डवः) भीतिहेतुवाचित्वे विशेष्यलिङ्ग एव।

रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके। ५०।

पूर्वसूत्रापवादः। रुक्मं सिध्मम्। आत्मनीति विभक्त्यर्थेऽव्ययीभावे अनन्तत्वेनाच्समासान्ते टिलोपेऽदन्तत्वम् तस्य चाव्ययत्वेऽपि नपुंसकत्वकथनम् अदन्तमोपधत्वेन प्राप्तपुंस्त्वापवादार्थम्। वस्तुतः अध्यात्मशब्दः प्रत्याख्यातुं शक्यते।

संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च। ५१।

एते शब्दाः नपुंसके चात् पुंसि च स्युः। संग्रामं संग्रामः। दाडिमं दाडिमः। उद्दामशब्दः प्रचण्डवाची। उद्गतो दामाया इति विग्रहे तु विशेष्यलिङ्ग एव।

योपधः। ५२।

अदन्तः योपधः पुंसि स्यात्। हयः गवयः समयः।

किसलयेन्द्रियहृदयोत्तरीयाणि नपुंसके। ५३।

पूर्वसूत्रापवादः। इदं किसलयम् इन्द्रियम्।

गोमयकषायमलयान्वयाव्ययानि नपुंसके च। ५४।

एते शब्दाः नपुंसके चात् पुंसि च स्युः। गोमयं गोमयः। कषायस्तु रसवाची "तुवरस्तु कषायोऽस्त्री" इत्यमरः। तद्वति तु त्रिलिङ्गः। अव्ययशब्दः क्लीववाची। व्ययाभाववाची तु नास्य विषयः व्ययशब्दस्याजन्ततया पुंस्त्वेन ततो नञ् तत्पुरुषेऽपि पुंस्त्वमिति ततोऽर्थाभावेऽव्ययीभावे क्लीवतेति भेदः।

रोपधः। ५५।

अदन्तः रोपधः पुंसि स्यात्। क्षुरः अङ्कुरः।

द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रच्छिद्रपारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षेत्रपत्रमित्रकलत्रच्छत्रसूत्र-

वक्रनेत्रगोत्राङ्गुलित्रतनुत्रास्त्रशस्त्रशास्त्रवस्त्रपत्त्रपात्रनक्षत्राणि नपुंसके । ५६ ।

पूर्व्वसूत्रापवादः । एते शब्दाः नपुंसके स्युः । इदं हारम् । अत्र स्फारशब्दो रोगभेदवाची प्रकारवाची तु विशेष्यलिङ्ग एव। वक्रशब्दः नद्याः पुटभेदवाची कुटिलवाची तु विशेष्यलिङ्गः । क्षिप्रः शीघ्रार्थे तद्वति विशेष्यलिङ्गः । क्षुद्रशब्द उपद्रवभेदे तद्वति विशेष्यलिङ्गः । दूरशब्दो दूरत्वे, कृच्छ्रशब्दः कृच्छ्रत्वे तद्वति तु विशेष्यलिङ्गः । गभीरशब्दो गाम्भीर्य्ये तद्वति विशेष्यलिङ्गः । क्रूरं क्रौर्य्ये क्रौर्य्यवति त्रि० । चित्रं वर्णे तद्वति त्रि० । अजस्रं सातत्ये तद्वति त्रि० । शिशिरं शीतलस्पर्शे तद्वति त्रि० ।

शुक्रमदेवतायाम् । ५७ ।

देवभिन्नार्थे शुक्रशब्दः क्लीबे स्यात् । शुक्रं रेतः । शुभ्रवर्णवाची तु गुणवचनत्वात् विशेष्यलिङ्गः । देवे तु पुमान् ।

चक्रवज्रान्धकारसारावारपारचौरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च।५८।

एते शब्दाः क्लीबे चात् पुंसि च स्युः । चक्रं चक्रः । शिशिरशब्दस्तु हिमे स्पर्शे च पुंनपुंसकलिङ्गः स्पर्शवति त्रिलिङ्गः ।

षोपधः । ५९ ।

अदन्तः षोपधः पुंसि स्यात् । वृषः वृषः यक्षः ।

शिरीषजोषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके । ६० ।

पूर्व्वसूत्रापवादः । शिरीषं जोषम् । अम्बरीषं भर्ज्जनपात्रभेदः मुनिभेदे तु पुमान् । कल्माषं शस्यभेदे वर्णभेदे च तद्वति तु त्रिलिङ्गः ।

यूषकरीषमिषविषवर्षाणि नपुंसके च । ६१ ।

एते क्लीबे चात् पुंसि च स्युः । यूषं यूषः । वर्षं वर्षः (वृष्टिः) वत्सरे वर्षभेदे च स्त्री ।

सोपधः । ६२ ।

अदन्तः सोपधः पुंसि स्यात् । वत्सः वायसः महानसः ।

मानसविसबुससाहसानि नपुंसके । ६३ ।

पूर्व्वसूत्रापवादः । एते क्लीबे स्युः । मानसं विसमित्यादि ।

चमसमरसनिर्य्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च । ६४ ।

एते पुंनपुंसकयोः स्युः । चमसं चमस इत्यादि ।

कंसञ्चाप्राणिनि । ६५ ।

अप्राणिनि कंसशब्दः क्लीबे पुंसि च स्यात् । कंसं कंसः पानभोजनम् मथुराव्धिपे तु कंसः । चकरोऽदन्ताधिकारसमाप्त्यर्थः ।

रश्मिदिवसाभिधानि । ६६ ।

रश्मिदिवसपर्य्यायशब्दाः पुंसि स्युः । रश्मिर्मयूखः किरणः । दिवसो घस्रः ।

दीधितिः स्त्रियाम् । ६७ ।

पूर्व्वसूत्रापवादः । इयं दीधितिः ।

दिनाहनी नपुंसके । ६८ ।

दिवसाभिधानत्वे पुंस्त्वे प्राप्ते तदपवादः । दिनम् अह्नः ।

मानाभिधानानि । ६९ ।

मीयतेऽनेनेति मानं तद्विशेषाभिधानानि पुंसि स्युः । कुडवः प्रस्थः ।

द्रोणाढ़कौ नपुंसके च । ७० ।

मानविशेषवाचित्वेन पुंस्त्वे प्राप्ते पक्षे क्लीवतार्थं सूत्रम् । द्रोणः द्रोणम् आढकः आढ़कम् ।

खारीमानिके स्त्रियाम् । ७१ ।

पुंस्त्वापवादार्थं सूत्रम् । इयं खारी इयं मानिका ।

दाराक्षतलाजानां बहुलञ्च । ७२ ।

दारशब्दस्य स्त्रीत्वे प्राप्ते रोपधत्वेन पुंस्त्वसिद्धावपि बहुत्वार्थं अन्ययोरप्राप्तौ बहुत्वार्थञ्च सूत्रम् । एते शब्दाः पुंसि नित्यबहुवचनान्ताश्च स्युः । इमे दाराः । अक्षताः लाजाः ।

नाड्यपजनोपपदानि व्रणाङ्गपदानि । ७३ ।

नाडीपूर्व्वपदः व्रणान्तशब्दः अपपूर्व्वकोऽङ्गशब्दः जनपूर्व्वः पदशब्दश्च पुंसि स्यात् । परवल्लिङ्गत्वेन क्लीबादिलिङ्गत्वे प्राप्ते नित्यपुंस्त्वार्थमारम्भः । नाडीव्रणः । अपाङ्गः नेत्रान्ते, अङ्गापगते तु त्रिलिङ्गः । जनपदो (देशो) जनानां पदे तु क्लीवलिङ्गः ।

मरुद्गरुत्तरदृत्विजः । ७४ ।

एते शब्दाः पुंसि स्युः । अयं मरुत् गरुत् (पक्षः) । उत्तरत् उत्पूर्व्वात् तरतेरतिप्रत्ययान्तः शतृप्रत्ययान्तस्तु त्रिलिङ्गः । तरन् तरन्ती तरत् । अयम् ऋत्विक् ।

ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिवलिकौलिमौलिरविकविसुनयः । ७५ ।

एते शब्दाः पुंसि स्युः । अयमृषिः राशिः । वलिः पूजोप-

हारे राजयाह्ये करे दानवभेदे एव पुमान् उदरावयवे तु स्त्रीलिङ्गाधिकारस्थेन (२५) सूत्रेण स्त्रीलिङ्ग इति भेदः।

ध्वजगजमुञ्जपुञ्जाः। ७६।

एते पुंसि स्युः। ध्वजः पताका "ध्वजमस्त्रियाम्" इत्यमरोक्तिः अपाणिनीयतयोपेक्ष्या। मूलं वा तस्य मृग्यम्।

हस्तकुन्तान्तवातव्रातदूतधूर्त्तसूतचूतमुहूर्त्ताः। ७७।

एते पुंसि स्युः। कुन्तः सूतः सारथिः प्रसूते तु त्रिलिङ्गः। "मुहूर्त्तोऽस्त्रियाम्" इत्यमरोक्तिश्चिन्त्यमूला।

षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः। ७८।

एते पुंसि स्युः। षण्डः मण्डः गण्डः। एतद्विरुद्धाभिधायिनी अमरोक्तिश्चिन्त्यमूला।

वंशांशपुरोडाशाः। ७९।

एते पुंसि स्युः। वंशः अंशः पुरोडाशः (हविर्भेदः)।

ह्रदकन्दकुन्दबुद्बुदशब्दाः। ८०।

एते शब्दाः पुंसि स्युः। ह्रदः कन्दः कुन्दो वृक्षः पुष्पे तु कुन्दम्। शब्दः।

अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः। ८१।

एते पुंसि स्युः। पन्थाऽर्घः। सामगैस्तु अर्घमित्येव यदन्ततया प्रयोक्तं तत्र क्लीबलिङ्गम्।

पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः। ८२।

अयं पल्लवः। "पल्लवोऽस्त्री" इत्यमरोक्तिश्चिन्त्यमूला॥

सारथ्यतिथिकुक्षिवस्त्यञ्जलयः। ८३।

एते पुंसि स्युः। अयं सारथिः अतिथिरित्यादि।

अथावशिष्टम्। नौ ण चेति (३,३,६० सू०) घञचोः समुच्चितः अदेः णप्रत्ययोऽपि पुंसि स्यात्। न्यादः। स्तम्बे क च (३,३,८३ सू०) स्तम्बोपपदात् हन्तेः कप्रत्ययः पुंसि स्यात् स्तम्बघ्नः। द्वितोऽथुच् (३,३,८९ सू०) एतद्विहितोऽथुजन्तः पुंसि स्यात्। वेपथुः वमथुः। पूर्ववदश्ववडवौ (२,४,२७ सू०) निर्द्देशात् परवल्लिङ्गतापवादेन पुंस्त्वमेव अश्ववडवौ इत्यविवक्षितम्। अश्ववडवाः

एतद्भिन्नाः केचित् शब्दाः "कान्तः सूर्य्येन्दुपर्य्यायपूर्व्वोऽयः पूर्व्वकोऽपि" चेत्यमरसिंहेन पुंलिङ्गतया विहिताः। सूर्य्यकान्तः तरणिकान्तः चन्द्रकान्तः इन्दुकान्तः अयस्कान्तः लौहकान्तः इत्यादयः। श्रीवेष्टः श्रीवासः वृकधूपः गुग्गुलुः कसेरुः सिह्लकः इत्यादयः वृक्षनिर्यासभेदाः, पुङ्खः न्युब्जः पिण्डः गौण्डः पिचण्डः गडुः लगुडः दृतिः कासमर्दः अर्बुदः (रोगभेदः) गोलः शिङ्खलः पुद्गलः वेतालः मल्लः भल्लः पट्टिशः पतद्ग्रहः।

इति पुंलिङ्गाधिकारः।

---

नपुंसकम्। १।

इत ऊर्द्ध्वं वक्ष्यमाणा बाधमन्तरेण क्लीबलिङ्गाः स्युरित्यधिकारः।

भावे ल्युडन्तः। २।

भावार्थकल्युट्प्रत्ययान्तः धातुः क्लीबे स्यात्। गमनं हसनम्। भावे किं? पच्यतेऽनेनेति करणे ल्युट् पवनो दहनोऽग्निः। इध्मव्रश्चनः कुठारः, पाषाणदारणः टङ्कः।

निष्ठा च। ३।

भावार्थकनिष्ठान्तो धातुः क्लीबे स्यात्। हसितं गीतं वृत्तम्।

त्वष्यञौ तद्धितौ। ४।

भावे इत्यनुवर्त्तते। भावे विहितौ द्वे त्वष्यञौ तद्धितौ तदन्ताः क्लीबे स्युः। भावे—शुभ्रत्वं शौभ्र्यम्, जडत्वं जाड्यम्। ष्यञः षित्त्वसामर्थ्यात् पक्षे स्त्रीत्वमपि तेन षिद्गौरादिभ्यश्चेति ङीषि य लोपे, औचिती औचित्यं, माधुरी माधुर्य्यं, चातुरी चातुर्य्यम्।

कर्म्मणि च ब्राह्मणादिगुणवचनेभ्यः। ५।

ब्राह्मणादिभ्यो गुणवचनेभ्यश्च कर्म्मणि चात् भावे यौ विहितौ त्वष्यञौ तदन्ताः क्लीबे स्युः। ब्राह्मणस्य कर्म्म भावो वा ब्राह्मणत्वं ब्राह्मण्यम्। "चातुर्वर्ण्यादीनां स्वार्थे उपसंख्यानमिति" वार्त्तिकोक्तेः स्वार्थे ष्यञ् चातुर्वर्ण्यं त्रैलोक्यं चातुर्व्वर्ण्यं षाड्गुण्यम् "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति भाष्योक्तेः प्रकृतिलिङ्गवचनातिक्रमः।

ययद्ढग्यगञण्वुञ्छाश्च भावकर्म्मणि। ६।

भावे कर्म्मणि चार्थे विहिता ये यदादयस्तदन्ताः क्लीबे स्युः। भावकर्म्मणीति गृह्यं स्वार्थनिवृत्त्यर्थम्। स्तेनस्य भावः कर्म्म वा "स्तेनाद्यत् नलोपश्चेति" (५,१,१२५) यति स्तेयम्। सख्युर्भावः कर्म्म वा "सख्युर्यः इति" (५,१,१२६) ये सख्यम्। कपेर्ज्ञातेः वा भावादि "कपिज्ञात्योर्ढगिति" (५,१,१२७) ढकि कापेयम्

ज्ञातेयम् । सेनापतेर्भावादि "पत्यन्तपुरोहितादिभ्यो यगिति" (५,१,१२८) यकि सैनापत्यम् आधिपत्यं पौरोहित्यम् । उद्गस्य भावादि "प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञिति" (५,१,१२९) अञि औद्गम् तस्य प्राणधारिजातिवचनत्वात्, शैशवं कौमारं वयोवचनात्वात्, औद्गात्रं चाध्वर्य्यवम् । द्विहायनस्य भावादि "हायनान्तयुवादिभ्योऽण् इति (५,१,१३०) अणि द्वैहायनं यौवनम् । वयोवचनत्वेन प्राप्तावपि णित्स्वरार्थं वचनम् । इगन्ताच्च लघुपूर्वात्" (५,१,१३१) अण् शौचम् मार्द्दवं पाटवम् । "योपधाद् गुरूपोत्तमाद्वुञ् (५,१,१३२) रमणीयस्य भावादि रामणीयकं कामनीयकम् । "होत्रादिभ्यश्छ इति (५,१,१३५) छे अच्छावाकीयम् अच्छावाको होतृविशेषः अनुक्तसमुच्चय चकारः समुच्चयाश्च परिशिष्टे दर्शयिष्यन्ते ।

## अव्ययीभावः । ७ ।

अव्ययीभावसमासनिष्पन्नः क्लीबलिङ्गः स्यात् । अधिस्त्रि स्त्रियामिति विग्रहे विभक्त्यर्थेऽव्ययीभावे तदन्तस्य क्लीबतया ह्रस्वः । उपनदि पक्षे अच्समासान्ते उपनदम् ।

## द्वन्द्वैकत्वम् । ८ ।

समाहारद्वन्द्वनिष्पन्नः शब्दः क्लीबे स्यात् । पाणिपादम् धवखदिरम् ।

## अभाषायां हेमन्तशिशिरावहोरात्रे च ।९।

संस्कृतभाषाभिन्ननियमके वेदे हेमन्तशिशिररूपो द्वन्द्वसमाहारः नैकवत् क्लीबलिङ्गो वा । किन्तु "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि-त्युक्तेः परवल्लिङ्गता द्विवचनान्तता च । तथा अहोरात्रशब्दो द्वन्द्वनिष्पन्नः क्लीब एव "रात्राह्णाहाः पुंसीति" पुंलिङ्गापवादः । अभाषायामित्युक्तेः भाषायां हेमन्तशिशिरम् अहोरात्रश्चेत्येव ।

## अनञ्कर्म्मधारयस्तत्पुरुषः । १० ।

इतः परं नञ्कर्म्मधारयभिन्नस्तत्पुरुषोऽधिक्रियते

## अनल्पे छाया । ११ ।

बहुसम्बन्धिनी या छाया तदन्तस्तत्पुरुषः क्लीबे स्यात् । नपुंसकत्वेन चाप्तो ह्रस्वः । इक्षूणां छाया इक्षुच्छायम् । "इक्षुच्छायानिषादिन्य, इति तु आनिषादिन्य इत्याङ्प्रश्लेषेण समर्थनीयम् । शराणां छाया शरच्छायम् ।

## राजाऽमनुष्यपूर्व्वा सभा । १२ ।

राजपर्य्यायपूर्व्वः मनुष्यभिन्नमनुष्यसदृशतुल्यपूर्व्वश्च सभान्तस्तत्पुरुषः क्लीबे स्यात् । नृपाणां सभा नृपसभम् । इनसभम् राजपर्य्यायपूर्व्वस्यैवेष्यते न तु राजस्वरूपविशेषपूर्व्वस्य । तेन राजसभा चन्द्रगुप्तसभा । भाष्यकृता चन्द्रगुप्तसभेतिप्रत्युदाहरणात् चन्द्रगुप्तस्य भाष्यकारसमकालत्वं ततः प्राक्कालत्वं वा प्रतीयते । अमनुष्येति पर्य्युदासात् तत्सदृशरक्षःपिशाचादिपूर्व्वकस्यैव, तेन रक्षःसभं पिशाचसभम् । तत्पूर्व्वकस्य किम् ? खसभा मृगसभेत्यादि ।

## सुरासेनाच्छायाशालानिशाः स्त्रियाञ्च । १३ ।

एतदन्तस्तत्पुरुषः स्त्रियां चात् क्लीबे च स्यात् । यवसुरं यवसुरा ब्राह्मणसेनं ब्राह्मणसेना । अबहुसम्बन्धार्थं छायाशब्दग्रहणम् । कुड्यच्छाया कुड्यच्छायम् । गोशालं गोशाला । श्वनिशं श्वनिशा । तत्पुरुष इत्यधिकारात् बहुव्रीहौ लिङ्गः । दृढसेनः दृढसेना दृढसेनमित्यादि । अनञ्कर्म्मधारय इत्युक्तेः असेना परमसेना इत्यादि स्त्रियामेव । "अशाला च (२,४,२४) पा० सू०) शालाभिन्नार्थकसभान्तस्तत्पुरुषः क्लीबे स्यात् । स्त्रीसभम् स्त्रीसंघात इत्यर्थः । शालायां धर्म्मसभा धर्म्मशालेत्यर्थः । संज्ञायां कन्थोशीनरेषु (२,४,२०) पा० सू०) कन्थान्तस्तत्पुरुषः क्लीबे स्यात् । सा चेत् कन्था उशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयस्तेषां कन्था । संज्ञायां किं वीरणकन्था । उपज्ञोपक्रमान्तः तदाद्याचिख्यासायाम् (२,४,२१ सू० पा०) उपज्ञान्त उपक्रमान्तश्च तत्पुरुषः नपुंसके स्यात् । तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते । उपज्ञायते इत्युपज्ञा कर्म्मणि अङ् । पाणिनेरुपज्ञा पाणिन्युपज्ञम् । उपक्रम्यते इत्युपक्रमः नन्दस्य उपक्रमः नन्दोपक्रमं द्रोणः । भाष्यकारस्य तयोदाहरणात् नन्दादर्वाचीनत्वं भाष्यकृत इति प्रतीयते ।

## परवत् । १४ ।

उक्तभिन्नस्तत्पुरुषः परवल्लिङ्गः स्यात् । राजपुरुषः राजमाहिषी राजधनम् ।

## रात्राह्णाहाः पुंसि । १५ ।

कृतसमासान्तरात्राद्यन्तस्तत्पुरुषः पुंस्येव स्यात् परवल्लिङ्गतापवादः । तदन्तद्वन्द्वोऽपि पुंसि स्यात् सूत्रपाठे "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्युपक्रमेण एतदपवादसूत्रे द्वन्द्वपदस्यानुवर्त्तनात् । पूर्व्वरात्रः अपररात्रः पूर्व्वाह्णः अपराह्णः द्व्यहः । द्वन्द्वे अहश्च रात्रिश्च अहोरात्रः ।

## संख्यापूर्व्वा रात्रिः । १६ ।

संख्यावाचकपूर्व्वपदः रात्रान्तस्तत्पुरुषः क्लीबे स्यात् । पुंस्त्वापवादः । त्रिरात्रं पञ्चरात्रं गणरात्रम् ।

### अपथपुण्याहे नपुंसके । १७ ।

अपथपुण्याहशब्दो नपुंसके स्तः । अपथम् । तत्पुरुष इत्येव अन्यत्र अपथो देशः । पुण्याहस्य तु पुंस्त्वे प्राप्तेऽयमारम्भः स तु तत्पुरुष एव बहुव्रीहौ समासान्ताप्रसक्तेः वार्त्तिके "पुण्यसुदिनाभ्यामह्नः क्लीवता" इत्युक्तेः । सुदिनाहम् । अपथेति निर्द्देशात् कृतसमासान्त एव सूत्रं प्रवर्त्तते नेह अपन्थाः ।

### द्विगुः स्त्रियाञ्च । १८ ।

द्विगुसमासनिष्पन्नः स्त्रियां चात् नपुंसके च स्यात् । व्यवस्थितविभाषेयं व्यवस्था च सूत्रपाठेन वार्त्तिकपाठेन दर्शिता यथा स नपुंसकम् २,४,१७ सू० पा०) स समाहारद्विगुर्नपुंसकलिङ्गः स्यात् । परवल्लिङ्गतापवादः । पञ्चगवम् । अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः (वा०) । पञ्चमूली, त्रिलोकी, "आबन्तो वा (वा०) आबन्तो द्विगुः स्त्रियां क्लीवे च स्यात् । पञ्चखट्वी पञ्चखट्वम् । अनो नलोपश्च वा च द्विगुः स्त्रियाम्, (वा०) अन्नन्तद्विगोर्वा नलोपः । नलोपपक्षे स्त्रीत्वं पक्षे क्लीवतेत्यर्थः । पञ्चतक्षी पञ्चतक्षम् । पात्राद्यन्तस्य न, (वा०) न स्त्रीत्वमपि तु "स नपुंसकम्" इति क्लीवत्वमेव । अदन्तत्वेन स्त्रीत्वे प्राप्ते तदपवादार्थं वार्त्तिकम् । पञ्चपात्रं त्रिभुवनम् ।

### इसुसन्तः । १९ ।

इस्प्रत्ययान्त उस्प्रत्ययान्तश्च शब्दः क्लीवे स्यात् । हविः धनुः ।

### अर्चिः स्त्रियाञ्च । २० ।

इसन्तत्वेन क्लीवत्वे प्राप्ते वचनम् । इदमियं वा अर्चिः ।

### छर्दिः स्त्रियामेव । २१ ।

इसन्तत्वेऽपि छर्दिशब्दः स्त्रियां स्यात् न तु क्लीवे । इयं छर्दिः एवमनुशासने स्थिते पटलं छर्दिरित्यमरव्याख्यातारः पटलसाहचर्य्यात् छर्दिषः क्लीवतां वदन्तः उपेक्ष्याः ।

### मुखनयनलोहवनमांसरुधिरकार्म्मुकविवरजलहलधनान्नाभिधानानि । २२ ।

एतद्वाचकानि क्लीवे स्युः । मुखम् आननम् । नयनं लोचनम् । लोहं कालम् अयः । वनं गहनम् विपिनम् । मांसमामिषं पलम् । रक्तं रुधिरं शोणितम् असृम् । कार्मुकं शरासनम् । विवरं छिद्रं बिलम् । जलं सलिलं वारि । हलं लाङ्गलम् । धनं द्रविणं वसु । अन्नमशनम् इत्यादि ।

### सीरार्थौदनाः पुंसि । २३ ।

पूर्व्वसूत्रापवादः । एते शब्दाः पुंसि स्युः । सीरः । अर्थः "रायोहलीति" सूत्रनिर्द्देशात् रैशब्दस्य धनवाचित्वेऽपि पुंस्त्वमेव । क्लीवत्वे रैशब्दस्य ह्रस्वे रिण इति स्यात् । ओदनः ।

### वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च । २४ ।

एते शब्दाः पुंसि चात् क्लीवे च स्युः । वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्यः अरण्यम् । गाण्डीवः गाण्डीवम् ।

### अटवी स्त्रियाम् । २५ ।

वनवाचित्वेऽपि अटवीशब्दः स्त्रियां स्यात् । इयमटवी ।

### लोपधः । २६ ।

तलादीनाम् अदन्तानामपवादतया परसूत्रे निर्द्देशेन अदन्ता एवेह प्रकरणे स्वह्यन्ते । एवं सर्व्वत्र । अदन्तो लोपधः क्लीवे स्यात् । कुलं कूलम् स्थलम् स्थानमात्रे अकृत्रिमभूमौ तु ङीब्विधानसामर्थ्यात् स्त्रीत्वमेव । तेन स्थली अकृत्रिमा भूमिः ।

### तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि । २७ ।

पूर्व्वसूत्रापवादः । तूलः उपलः । तालः गानक्रियामानम् । वृक्षवाचकस्य जातित्वात् त्रिलिङ्गता अत एव त्रिन्तालस्यापि परत्वात् त्रिलिङ्गता न विरुध्यते । तरलः हारमध्यगमणिः । चञ्चलपर्य्यायस्तु त्रिलिङ्गः क्रियोपाधित्वात् ।

### शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालविडालखिलशूलाः पुंसि च । २८ ।

एते शब्दाः पुंसि चात् क्लीवे स्युः । लोपधत्वेन क्लीवत्वे प्राप्ते पक्षे पुंस्त्वार्थं सूत्रम् । शीलं शीलः मूलः मूलमित्यादि ।

### शतादिसंख्या । २९ ।

शतादिशब्दाः संख्यासंख्येययोः क्लीवे स्युः । शतं सहस्रम् । शतादिः किम् ? एको द्वौ बहवः । संख्या किम् ? शतः (शतशृङ्गपर्व्वतः) ।

### शतायुतप्रयुताः पुंसि च । ३० ।

एते शब्दाः पुंसि चात् क्लीवे । अयं शतः इदं शतम् । अयुतः अयुतम् प्रयुतः प्रयुतम् । संख्यावाचकत्वेन क्लीवत्वे प्राप्ते पक्षे पुंस्त्वार्थं सूत्रम् ।

### लक्षाकोटी स्त्रियाम् । ३१ ।

एते स्त्रियां स्तः । लक्षा कोटिः । इकारान्तत्वात् पक्षे ङीप् कोटी । लक्षशब्दस्य क्लीवत्वमपि विप्रतिषेधेऽपरं कार्य्यमिति

परिभाषया तथात्वम् अत एव "वा लक्षा नियुतञ्च तत्" इत्यमरः ।

### सहस्रः पुंसि च । ३२ ।

अयं पुंसि चात् क्लीबे स्यात् । क्लीबत्वे प्राप्ते पक्षे पुंस्त्वार्थं सूत्रम् । सहस्रः सहस्रम् ।

### मन् द्व्यच्कोऽकर्त्तरि । ३३ ।

कर्तृभिन्नार्थकमन्प्रत्ययान्तः द्व्यच्कश्चेत् क्लीबे स्यात् । कर्म्म वर्म्म शर्म्म, नर्म्म, । द्व्यच्कः किम् ? अणोर्भावः अणिमा एवं लघिमा । नन्तत्वेन पुंस्त्वम् । अकर्त्तरि किम् ? ददातीति दामा ।

### ब्रह्म पुंसि च । ३४ ।

ब्रह्मन्शब्दः पुंसि चात् क्लीबे च स्यात् । व्यवस्थितविभाषेयम् वेदे सत्ये तपसि परात्मनि च क्लीबम् चतुर्मुखे पुमानिति ब्रह्मा ।

### नामरोमणी नपुंसके । ३५ ।

एते क्लीबे स्तः । मनुद्व्यच्क इत्यस्य प्रपञ्चः । नाम रोम ।

### असन्तो द्व्यच्कः । ३६ ।

अकर्त्तरीत्यनुवर्त्तते । अकर्त्त्रर्थकासुप्रत्ययान्तः द्व्यच्कश्चेत् क्लीबे स्यात् । यशः तपः मनः । अकर्त्तरीत्युक्तेर्नेह । वेधाः । द्व्यच्कः किम् ? पुरोधाः चन्द्रमाः ।

### अप्सराः स्त्रियाम् । ३७ ।

प्रायेणायं बहुवचनान्तः । इमाः अप्सरसः । प्रायेणेत्युक्तेः अप्सरा वै रूपिणी मेनेति भाष्यप्रयोगः सङ्गच्छते । इदं स्त्रीलिङ्गे निर्द्देशसूचितम् असन्तत्वेन प्राप्तावपि द्व्यच्कत्वाभावेन प्राप्त्यभावात् तदपवादत्वासंभवात् ।

### त्रान्तः । ३८ ।

रोपधत्वेन पुंस्त्वे प्राप्ते तदपवादार्थं सूत्रम् । त्रप्रत्ययान्तः क्लीबे स्यात् । पत्त्रम् छत्त्रम् दात्रं कलत्रम् गोत्रम् । गोत्राशब्दस्य भूमिपर्य्यायतया स्त्रीत्वमेव गोत्रशब्दस्य तु गिरिपर्य्यायतया पुंस्त्वमेव। नेत्रशब्दस्य विशेषविधानात् पुं नपुंसकता।

### यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव । ३९ ।

एते शब्दाः स्त्रियां स्युः । त्रान्तत्वेन क्लीबताप्राप्तौ तदपवादार्थं सूत्रम् । दंशस्तेऽनया दन्शेः ष्ट्रन् तस्य षित्त्वेऽपि न ङीष् सूत्रे दंष्ट्रेति निर्द्देशात् । यात्रा मात्रा भस्त्रा दंष्ट्रा वरत्रा ।

### भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्राः पुंसि । ४० ।

त्रान्तत्वेन क्लीबत्वे प्राप्ते तदपवादार्थं सूत्रम् । अयं छत्रः । न मित्रम् अमित्रः मित्रशब्दस्य त्रान्ततया क्लीबत्वेन नञ्तत्पुरुषे परवल्लिङ्गतया तल्लिङ्गत्वापत्तौ ग्रहणसामर्थ्यात् पुंस्त्वम् । "तस्य मित्राण्यमित्रास्ते" इति "स्यातामभित्रौ मित्रे च" इति च माघः । मित्रशब्दस्य सूर्य्यार्थे रोपधत्वेन पूर्व्वविप्रतिषेधेन, देवविशेषवाचित्वेन च पुंस्त्वमेव। मित्रात् स्वार्थेऽण् मैत्रः वचनसामर्थ्यात् न प्रकृतिलिङ्गता ।

### पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च । ४१ ।

त्रान्तत्वेन क्लीबत्वे प्राप्ते पक्षे पुंस्त्वार्थम् वचनम् । पत्रं पत्रः । पात्रं पात्रः । पवित्रं पवित्रः । अनुक्तसमुच्चयचकारेण स्त्रीत्वमप्यस्य । "पवित्रासि वैष्णवी" इति वेदमन्त्रः ।

### बलकुसुमशुल्बपत्तनरणाभिधानानि । ४२ ।

एतेषां पर्य्यायशब्दाः क्लीबे स्युः । बलं सहः वीर्य्यं सामर्थ्यम् । कुसुमं पुष्पम् । सुमनःशब्दस्य विशेषाभिधानात् स्त्रीत्वम् । रणं युद्धम् आयोधनम् । युत्समितोर्विशेषाभिधानात् स्त्रीत्वम् ।

### पद्मकमलोत्पलानि पुंसि च । ४३ ।

पद्मादिशब्दाः क्लीबे पुंसि च स्युः । पद्मं पद्मः । "भाति पद्मः सरोवरे" इत्यादावालङ्कारिकैस्तु अप्रयुक्ततादोषोदाहरणतयाऽस्य पुंस्त्वमनुशासनसिद्धमित्यभ्युपगतम् । अत एव अर्द्धर्चादिसूत्रे पद्मं नपुंसकमेवेति वृत्तिग्रन्थोऽप्रयुक्ततादोषदृष्टेर्बोध्येयः । कमलं कमलः इत्यादि ।

### आहवसंग्रामौ पुंसि । ४४ ।

रणपर्य्यायतया क्लीबत्वे प्राप्ते तद्बाधनार्थं सूत्रम् । आहवः संग्रामः ।

### आजिः स्त्रियामेव । ४५ ।

रणवाचित्वेन प्राप्तक्लीबताबाधनार्थं सूत्रम् । इयम् आजिः पक्षे ङीप् आजी ।

### फलजातिः । ४६ ।

फलप्रधानवृक्षजातिवाची शब्दः क्लीबे स्यात् । आमलक्याः फलम् मयट् "फले लुक्" इति लुकि "लुक् तद्धितलुकि" इति "ङीपो लुकि क्लीबत्वम् । आमलकम् आम्रम् । तथा च विकारावयवप्रत्ययलुग्विषये एवास्य प्रवृत्तिः नान्यथा, तेन "जम्ब्वा वा" इति जम्बूशब्दात् अणि "लुप् चेति" तस्य लुप्पक्षे स्त्रीत्वमेव लुक्पक्षे क्लीबता तदुभयाभावपक्षे प्रत्ययस्थितिः । तेन जम्बू जम्बु जाम्बवम् । अत एव "जम्बूः स्त्री जम्बू जाम्बवम्" इत्यमरः । "फले लुक्" इत्यत्र फलतीति व्युत्पत्त्या फलशब्दः प्रसवमात्र-

वचनः । अत एव "द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम्" इत्यमरः ।

वृक्षजातिः स्त्रियामेव । ४७ ।

क्वचिदित्यध्याहार्यम् । हरितक्यादिप्रसववाचकशब्दः स्त्रियामेव । हरीतक्याः फलम् "हरीतक्यादिभ्यश्च" इति फलार्थकप्रत्ययस्य लुपि स्त्रीत्वम् "हरीतक्यादिषु व्यक्तिः" इति वार्त्तिके हरीतक्यादीनां प्रकृतिलिङ्गत्वोक्तेः । स च गणः "हरितकी कोशातकी नखरजनी, शष्कण्डी, दाडी दोडी श्वेतपाकी अर्ज्जुनपाकी द्राक्षा, काक्षा ध्वाक्षा, गर्भीका कण्टकारिका पिप्पली चिञ्चा शेफालिका" इति । वृक्षजातिरित्युक्तेः फल-प्राधान्याभावेऽपि पुष्पप्रधानजातिवाचिनः पुष्पपरत्वेऽपि क्लीबत्वम् । मालती मल्लिका । लुप् चेति (४,३,१६६) सूत्रे "फलपाकशुषामुपसंख्यानम्" इति वार्त्तिकोक्तेः व्रीहीणां फलानि-व्रीहयः मुद्गाः माषाः । "पुष्पमूलेषु बहुलम्" इति वार्त्तिकोक्तेः बहुलग्रहणात् क्वचित् लुप् क्वचिन्नेति द्योतितम् तेन मल्लिकायाः पुष्पं मल्लिका एवं मालती । विदार्या मूलं विदारी । बहुलग्रहणात् क्वचिन्न पाटलानि पुष्पाणि, शाल्वानि मूलानि । बाहुलकात् पुष्पे मूले च वाच्ये क्वचित् लुक् । अशोकम् करवीरम् ।

वियज्जगत्सकृत्शकृत्पृषच्छकृद्यकृदुदश्वितः । ४८ ।

एते शब्दाः क्लीबे स्युः । वियत् जगत् । सकृत् ।

नवनीतावतानृतामृतनिमित्तवित्तपित्तव्रतरजतपलितानि । ४९ । [भिन्ने त्रि० ।

एते शब्दाः क्लीबे स्युः । नवनीतम् अवतम् अमृतं (सुधा) मृत

श्राद्धकुलिशपीठकुण्डाङ्कदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि ।५० [कण्वेपुंनपुंसकत्वोक्तेः, कण्वं (पापम्)

एते शब्दाः क्लीबे स्युः । श्राद्धं कुलिशम् । आकाशः परित्याज्यः

दैवं पुंसि च । ५१ ।

दैवशब्दः पुंसि चात् क्लीबे स्यात् । दैवः दैवम् ।

धान्याज्यसस्यरूप्यपण्यवर्ण्यधिष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि ।५२।

योपधत्वेन पुंस्त्वे प्राप्तेऽपवादार्थं सूत्रम् । एते शब्दाः क्लीबे स्युः । धान्यम् आज्यं सस्यम् ।

द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरवृन्दारकाणि । ५३ ।

एते शब्दाः क्लीबे स्युः । द्वन्द्वं (मिथुनम्) बर्हम् इत्यादि ।

अक्षमिन्द्रिये । ५४ ।

इन्द्रियार्थे अक्षशब्दः क्लीबे स्यात् । अक्षम् । इन्द्रिये किम् ? रथाङ्गे वृक्षभेदादौ मा भूत् ।

अथ नपुंसकाधिकार उच्यते तत्र भावे ल्युडन्त इत्युपलक्षणं क्तादीनाम्, तेन भावार्थकक्तल्याद्यन्ताः नपुंसके स्युः । भवितव्यम् भवनीयम् भव्यं भाव्यं कार्यं ब्रह्मभूयम् । भावे इत्युक्तेः कर्म्मणि कर्त्तरि च त्रिलिङ्गा एव । कर्म्मणि—चेतव्यः चयनीयः चेय इत्यादि । कर्त्तरि—गेयः भव्य इत्यादि । क्त्वादयश्च "अभिविधौ भावे इनुण्" (३,३,४४, सू०) इतीनुण्, तदन्तात् अणिनुणः इति (५,४,१५) स्वार्थे अणि सांराविणं साङ्कुटिनम् । भावे खल्—दुर्भवं दुःशयम् । आतो युच् (३,३,२८) सुग्लानम् दुर्ग्लानम् ।

तस्य समूहः (४,२,३७) इत्यधिकारे ये वाद्याः स्त्रियास्ताः तद्भिन्नतद्धितान्ता नपुंसके स्युः । अण्—काकं वाकम् । भिक्षादिभ्योऽण् (४,२,३८) भैक्षम् गार्भिणम् । गोत्रादिभ्यो वुञ् (४,२,३९) औपगवकम् औक्षकम् औष्ट्रकम् औरभ्रकम् राजकम् राजन्यकं राजपुत्रकम् मानुष्यकम् आजकम् । केदाराद् यञ् च (४,२,४०) कैदार्यम् कैदारकम् । गणिकाया यञिति (वा०) गाणिक्यम्, ठञ् कवचिनश्च (४,२,४१) कावचिकम् कैदारिकम् । ब्राह्मणमाणववाडवाद्यत् (४,२,४२) ब्राह्मण्यम् माणव्यम् वाडव्यम् पर्श्वा णस् (वा०) पार्श्वम् । अनुदात्तादेरञ् (४,२,४४) कापोतम् मायूरम् । खण्डिकादिभ्यश्च (४,२,४५) खाण्डिकम् सैनम् औलूकमित्यादि । चरणेभ्यो धर्म्मवत् (४,२,४६) छान्दोग्यं काठकम्, अचित्तहस्तिधेनोष्ठक् (४,२,४७) साक्तुकम् हास्तिकम् धैनुकम् । केशाश्वाभ्यां यञ्छावित (४,२,४८) कैश्यं कैशिकम् आश्वीयं आश्वम् । "सामान्ये नपुंसकम्" (वा०) क्रियाव्ययानां भेदकानि नपुंसकलिङ्गानि स्युः । मृदु पचति रमणीयम् प्रातः । एतद्भिन्नाः कतिचिच्छब्दा नपुंसकतयाऽमरे परिगणिताः यथा उकथं (सामावयवभेदः) तोटकं (छन्दोभेदः) । चोचम् (तालफलम्, तदीयफलस्यशस्याकार-पदार्थो वा) । पिच्छं (भक्तसंभूतमण्डः) । तिरीटम् (वेष्टनम्) । राजसूयं राजपेयं यज्ञविशेषत्वेऽपि अनेन बाधात् पुंस्त्वम् । गद्यं पद्यं (कविकृतौ) । माणिक्यं भाष्यं सिन्दूरं चीरं चीवरं, लोकायतं हरितालम् विदलं (वंशपात्रभेदः स्थाली वा) ।

इति नपुंसकलिङ्गानुशासनम् ।

---

स्त्रीपुंसयोः । १ ।

इत ऊर्ध्वं वक्ष्यमाणाः स्त्रीपुंसलिङ्गाः स्युः । इत्यधिकारः ।

गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः । २ ।

एते पुंसि स्त्रियां च स्युः । तत्र गोशब्दस्य पशुविशेषवाचित्वे स्त्रीपुंसलिङ्गता स्वर्गशार्ककिरणनेत्रवाचित्वे पुंसि, भूमिदिग्वाग्वाचित्वे स्त्रियामिति व्यवस्था । इयं गौः अयं गौः, इयमयं वा मणिः स्त्रीत्वपक्षे वा ङीप् मणी एवं सर्वत्र ।

मन्युशीधुकर्कन्धुसिन्धुकण्डूरेणवः । ३ ।

एते स्त्रियां पुंसि च स्युः । इयमयं वा मन्युः शीधुः । कर्कन्धुः अप्राणिजातित्वात् स्त्रीत्वपक्षे ऊङ् कर्कन्धूः ।

गुणवचनमुकारान्तं नपुंसकञ्च । ४ ।

गुणवचना उकारान्ताः शब्दाः नपुंसके चात् स्त्रीपुंसयोः स्युः । तेन त्रिलिङ्गाः । पटुः पट्वी पटु । मृदुः मृद्वी मृदु । उदन्तत्वविशेषणात् तद्भिन्नानां गुणवचनानां गुणपरत्वे पुंस्त्वम् गुणिपरत्वे त्रिलिङ्गता । शुभ्रः शुक्लः शुचिः वर्णः, तद्वति शुक्लं वस्त्रं शुक्लः पटः शुक्ला शाटी । एतत् सूत्रं परित्यक्तुं शक्यते गुणवचनञ्चेति त्रिलिङ्गस्यसूत्रेण परेणास्य बाधात् । तेन शुक्लं शुचि वा वस्त्रमित्युकारान्तत्वाभावेऽपि तेनैव त्रिलिङ्गता ।

अपत्यार्थतद्धिताः । ५ ।

अपत्यार्थे विहिता ये तद्धितास्तदन्ताः स्त्रीपुंसयोः स्युः । औपगवः औपगवी । दाक्षिः दाक्षी, गार्ग्यः गार्गी, वैदः वैदी । अमरेण तु

"स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ।
जातिभेदाः पुमाख्याश्च स्त्रीयोगे सहमल्लकः ॥"

इत्युक्तम् । तथा च द्विपदाः, चतुष्पदाः, षट्पदाः, उरगवाचिनः जातिविशेषवाचिनः पुरुषाख्याश्च स्त्रीयोगे एव ते च स्त्रीलिङ्गास्तेन पुंपरत्वे पुंस्त्वं स्त्रीपरत्वे स्त्रीत्वमिति द्विलिङ्गता । तत्र द्विपदाः—मानुषः मानुषी, विप्रः विप्रा, शूद्रः शूद्रा, बकः बकी, हंसः हंसी इत्यादि । चतुष्पदाः—मृगः मृगी, सिंहः सिंही, वृषभः वृषभी, इत्यादि । षट्पदाः—भ्रमरः भ्रमरी, मधुकरः मधुकरी, उरगः उरगी, सर्पः सर्पी, अबाधिता इत्येव तेन यूकामक्षिकादीनां नित्यस्त्रीत्वमेव । जातिभेदवाचिनः—मत्स्यः मत्सी, शकुलः शकुली । पुमाख्याः—कुम्भकारः स्त्रीयोगे कुम्भकारी (कुम्भकारस्य भार्या) ।

अमरे केचित् शब्दा अपि द्विलिङ्गतया पठिताः । मल्लकः मल्लिका, मुनिः मुनी, वराटकः वराटिका, स्वातिः स्वाती, वर्णकः वर्णिका, झाटलिः झाटली, मनुः मनावी-मनायी, मूषः मूषा, सृपाटिः सृपाटी, शठिः शठीः, कटिः कटी, कुटिः कुटी ।

इति स्त्रीपुंसलिङ्गानुशासनम् ।

---

पुंनपुंसकयोः । १ ।

अधिकारोऽयम् । इत ऊर्द्ध्वं वक्ष्यमाणाः पुंनपुंसकलिङ्गाः स्युः ।

घृतभूतमुस्तक्ष्वेलितैरावतपुस्तबुस्तलोहिताः । २ ।

एते शब्दाः पुंनपुंसयोः स्युः । इदं घृतम्, अयं घृत इत्यादि । भूतशब्दस्य अतीते भवनकर्त्तरि च त्रिलिङ्गता । पिशाचे जन्तुमात्रे च पुंसि । पृथिव्यादिषु पञ्चसु क्लीवता, युक्ते यथार्थे नपुंसकतेति व्यवस्था । अमरेण तु "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्युक्तम् । तथा च भूतशब्दस्य त्रिलिङ्गताविषयभिन्न एवास्य सूत्रस्य विषयः । लोहितं लोहितः (रुधिरम्)

शृङ्गार्द्धनिदाघोद्यमशल्यदृढाः । ३ ।

एते पुंनपुंसकयोः स्युः । अयं शृङ्गः इदं शृङ्गम् । "अर्द्धं नपुंसकम्" (२,२,२,) सूत्रात् समांशवाचिनो नपुंसकता खण्डवाचिनस्तु पुंस्त्वमिति व्यवस्था । दृढशब्दस्य गुणवचनत्वे त्रिलिङ्गता विस्तारवाचित्वे एतत्सूत्रविषयता ।

व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्द्धर्चपुच्छाः । ४ ।

एते पुंनपुंसकलिङ्गाः स्युः । व्रजः व्रजम् । अर्द्धर्चाः पुंसि चेति (२,४,३१) सूत्रे अर्द्धर्चादीनां प्राप्तत्वेऽपि पुनरर्द्धर्चग्रहणं तद्गणपठितानां केषाञ्चित् वैदिकविषयत्वसूचनाय अत एव इह घृतादीनां केषाञ्चित् पाठो लौकिकप्रयोगेऽपि पुंनपुंसकतार्थः ।

अर्द्धर्च गोमय कषाय कार्षापण कुतप कुणप कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म्म कर्म्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु प्रधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव (पात्रीर) षष्टिक वारबाण प्रोथ कपित्थ शुष्क शाल शील शुल्क शीधु कवच रेणु कपट करट शीकर मुसल सुवर्ण वर्ण पूर्व्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड खल मधु मूल मूलक स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक कर्पट शिखर कल्क नाट मस्तक वलय कुसुम

शृष पद्म कुण्डल किरीट कुमुद अर्बुद अङ्कुश तिमिर आश्रम भूषण इष्वास मुकुल वसन्त तडाग पिटक विटङ्क विडङ्ग पिण्याक माष कोश(ष) फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास विशाल चषाल खण्ड दर विटप रण बल मक मृणाल हस्त आर्द्र हल सूत्र ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल छल पुर राष्ट्र विम्ब अम्बर कुट्टिम कुक्कुट कुडप ककुद खण्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य बाल व्याल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन स्तन स्वर संगम निष्क क्षेम शूक छत्र पवित्र यौवन कलह पालक मूषिक मण्डल वल्कल कुञ्ज विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत शूर्प तीर्थ लोमश तमाल लोह दण्डक शपथ प्रतिसर दारु धनुष् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल । अर्द्धर्चादिः ।

अत एव "अर्द्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् तथोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत्" इत्यमरेणोक्तमतो यथोक्तविषयत्वमवगम्यते तत्र घृतादीनामिहोक्तेरेषां लौकिकप्रयोगविषयत्वमपीति अमरोक्तं चिन्त्यमूलमिति भेदः ।

कबन्धौषधायुधान्ताः । ५ ।

कबन्धः कबन्धम् औषधः औषधम् आयुधः आयुधम् अन्तः अन्तम्

दण्डमण्डखण्डशवसैन्धवपार्श्वकाशाङ्कुराकाशकुशकुलिशाः । ६ ।

एते पुंनपुंसयोः स्युः । दण्डः दण्डम् "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशस्त्वले" इत्युक्तार्थेषु पुमान् शलाकावाची तु स्त्रियां जानपदादित्वात् (४,१,४२) अयोविकारे ङीष् विधानात् कुशी । अयोविकारभिन्ने तु टाप् कुशा । अत एव "अतः कृकमीत्यादि (८,३,४८)सूत्रे कुशाकर्णीति, शारीरकसूत्रे च "हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दः" इति स्त्रीत्वप्रयोगः ।

गृहमेहदेहपट्टपटहाष्टापदार्बुदककुदाश्च । ७ ।

एते उक्तलिङ्गाः स्युः । गृहं गृहः । मेहः मेहम् इत्यादि ।

इति पुंनपुंसकलिङ्गानुशासनम् ।

---

स्वतन्त्रता स्त्रीनपुंसकलिङ्गं विशिष्य नोक्तम् अमरसिंहेन तु सावसरमात् तदवशिष्टतयाऽभिहितं तदिहाभिधीयते ।

"स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् कश्चिच्च वुञ्" । इति भावकर्म्मणोर्विहितष्यञन्तस्य स्त्रीनपुंसकलिङ्गत्वं तच्च पूर्व्वमुक्तमपि अवसरप्राप्ततया ज्ञानसौकर्य्यार्थमिह पुनरुच्यते । गुणवचनब्राह्मणादिभ्यः कर्म्मणि चेति चकारात् भावे विहितः ष्यञ् वुञ् च कश्चित् स्त्रीनपुंसकयोः स्यात् । उचितस्य भावः कर्म्म वा औचित्यं औचिती एवं चातुर्य्यं चातुरी माधुर्य्यं माधुरी । कश्चिदित्युक्तेः अर्हतो भावः आर्हन्तीत्येव तत्र- अर्हतो नुम् चेति नुम् । वुञ्, आहोपुरुषिका चौरिका मैत्रो-प्राध्यायिका, गार्गिकया श्लाघते इति । कश्चिदुक्तेः रामणीयकं कामनीयकमित्यादौ "योपधाद्गुरूपोत्तमात्"(५,१,१३२) इति वुञन्तस्य क्लीबत्वमेव । भावकर्म्मणोरित्युक्तेः स्वार्थे ष्यञ् क्लीबे एव चातुर्वर्ण्यं त्रैलोक्यम् ।

"षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः इति"

षष्ठीसमासनिष्पन्नाः सेनाद्यन्ताः स्त्रीनपुंसकलिङ्गाः स्युः । मनुष्यसेना मनुष्यसेनम्, इक्षुच्छाया इक्षुच्छायम्, यवसुरा यवसुरं, गोशाला गोशालम्, श्वनिशा श्वनिशम् ।

"आबन्तोत्तरपदो द्विगुश्चापुंसि नस्य लुक्" इति च । आबन्तं अनन्तञ्च उत्तरपदं यस्य तादृशो द्विगुः स्त्रीनपुंसकयोः तत्र च अनन्तस्य नस्य लुप् च । त्रिखट्वं त्रिखट्वी । त्रितक्षं त्रितक्षी । एतच्च पूर्व्वं प्रायेणोक्तम् प्रपञ्चार्थमिहोपन्यस्तम् ।

स्त्रीनपुंसकलिङ्गानुशासनम् ।

---

अविशिष्टलिङ्गम् । १ ।

नास्ति विशिष्टं लिङ्गं तत्कार्य्यञ्च यस्य । इत ऊर्द्धं वक्ष्यमाणाः शब्दा विशिष्टलिङ्गकार्य्यशून्याः विशिष्टलिङ्गशून्याश्च तेन त्रिलिङ्गाः स्युः ।

अव्ययडतियुष्मदस्मदः । २ ।

चादयोऽव्ययशब्दाः डतिप्रत्ययान्ता, युष्मदस्मच्छब्दौ च विशिष्टलिङ्गकार्य्यशून्याः स्युः । उच्चैः तरुः लता, मन्दिरं वा । कति पुरुषाः स्त्रियः कुलानि वा । त्वं पुमान् त्वं स्त्री त्वं कुलम् । अहं पुमान् स्त्री, कुलं वा ।

ष्णान्ता संख्या । ३ ।

षान्तनान्तसंख्यावाचकाः शब्दाः अविशिष्टलिङ्गकार्य्याः स्युः । पञ्च षट् पुरुषाः स्त्रियः कुलानि वा । ष्णान्तेति विशेषणात् शिष्टाः संख्याः त्रिलिङ्गाः विशिष्टलिङ्गकार्य्यवन्तः । एकः पुमान् एका स्त्री एकं कुलं द्वौ द्वे द्वे । त्रयः तिस्रः त्रीणि वा ।

## गुणवचनञ्च । ४ ।

गुणवाचकाः शब्दाः गुणिपरत्वे त्रिलिङ्गाः स्युः । शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रम् । गुणपरत्वे तु यथाप्राप्तं शुक्लइत्याद्येव अत एव "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्यमरः ।

## कृत्याश्च । ५ ।

कृत्या इति बहुवचनं कृत्सामान्योपलक्षणं तद्वाक्यति बाधके कर्त्राद्यर्थे त्रिलिङ्गाः स्युः । तथा च भावे विहितक्तिन्नादेः स्त्रीत्वस्य, घञादेश्च पुंस्त्वस्य विशिष्योक्तत्वेनास्य बाधः । तत्र कर्त्तरि-भव्यः गेयः पाठकः गायक इत्यादयः त्रिलिङ्गाः । कर्म्मणि-स्तोतव्यः स्नवनीयः स्तुत्य इत्यादयः । अत एव "क्तः कर्त्तव्य-संज्ञायां कृत्याः कर्म्मणि कर्त्तरि" इत्यमरोक्तिः । तत्र क्त-इत्यत्र उत्तरवाक्यस्थं कर्म्मणीति पदमाकृष्यते । तथा च कर्त्तरि कर्म्मणि च क्तः तदर्थे कृत्याश्च त्रिलिङ्गाः स्युः ।

## करणाधिकरणयोर्ल्युट् । ६ ।

करणे अधिकरणे च विहितल्युडन्तास्त्रिलिङ्गाः स्युः । ल्युडन्तत्वेनक्लीवत्वे प्राप्ते त्रिलिङ्गतार्थं सूत्रम् । तत्र करणे—देवयजनः, प्रमाणी, साधनम् प्रमाणम् । अधिकरणे मधुसंज्ञपनो वत्सः इष्टी स्त्री ङीप् । सर्वे नपुंसकम् ।

## सर्व्वादीनि सर्व्वनामानि ।

सर्व्वविश्वेत्यादीनि सर्व्वनामसंज्ञकानि त्रिलिङ्गानि स्युः । सर्व्वः सर्व्वा सर्व्वम्, विश्वः विश्वा विश्वम् । युष्मदस्मदोस्तु सर्व्व-नामत्वेऽपि विशेषाभिधानात् न लिङ्गविशेषकार्य्यमिति भेदः ।

> अमरवार्त्तिकाद्यनुसारेण अत्रेदमधिकमुच्यते ।
> "परं लिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ।
> अर्थान्ताः प्राद्यलंप्राप्तापन्नपूर्व्वाः परोपगाः ।
> तद्धितार्थो द्विगुः संख्यासर्व्वनामतदन्तकाः ।
> बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम् ।
> गुणद्रव्यक्रियायोगोपाधयः परगामिनः ॥

तत्र परवल्लिङ्गं "द्वन्द्वतत्पुरुषयोः" (२,४,२६ सू०) इति द्वन्द्वतत्पुरुषयोः उत्तरपदलिङ्गसमानलिङ्गत्वविधानेऽपि "स नपुं-सकम्" (२,४,१७ सू०) इति समाहारद्विगुद्वन्द्वयोर्नपुंसकत्वस्य विधानात् स्वप्रधान इत्युक्तम्, समाहारे तु तयोः संघातस्यैव प्राधान्यात् न स्वघटकपदार्थप्राधान्यमिति न तत्र परवल्लिङ्गता । "अर्थेन सह नित्यसमासो विशेष्यलिङ्गता च" (२,१,३६ वा०) इति द्विजाय अयमियमिदं वेति विग्रहे द्विजार्थः विशेष्यलिङ्गः ।

कुगतिप्रादयः (२,२,१८) प्रादिभिर्नित्यसमासनिष्पन्न-शब्दाः विशिष्टलिङ्गाः । तत्रत्यवार्त्तिकानि "प्रादयो गताद्यर्थे प्रथमया" (वा०) प्रगत आचार्य्यः प्राचार्य्यः प्रकृष्टः पितामहो प्रपितामही प्रकृष्टं बलम् प्रबलम् सुवचमित्यादि । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा०) अतिक्रान्तः अतिक्रान्ता अतिक्रान्तं वा राजानम् अतिराजः अतिराजी अतिराजम् । परवल्लिङ्गतापवादः । एवमन्यत्राऽपि "अवादयः क्रुष्टाद्यर्थे तृतीयया" (वा०) अवक्रुष्टः कोकिलया अवकोकिलः अवकोकिला अवकोकिलम् । "पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या" (वा०) परिग्लानोऽध्ययनाय पर्य्य-ध्ययनस्त्रिलिङ्गः । "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वा०) निष्क्रान्तो गृहात् इति विग्रहे निर्गृहः निर्गृहा निर्गृहम् । इति वार्त्तिकोक्तार्थविशेषे प्रादिसमासनिष्पन्ना अपि परगामिन-स्त्रिलिङ्गाः । अलंपूर्व्वोऽपि त्रिलिङ्गः । अलं कर्म्मणे, अलं-कर्म्मा त्रिलिङ्गः । "प्राप्तापन्ने च जीविकया" (२,२,४) इति विहितः प्राप्तापन्नपूर्व्वकजीविकान्तस्तत्पुरुषस्त्रिलिङ्गः । प्राप्त-जीविकः प्राप्तजीविका प्राप्तजीविकम् एवम् आपन्नजीविकः । तद्धितार्थे द्विगुः पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यादिस्त्रिलिङ्गः । संख्यासर्व्वनाम्नां त्रिलिङ्गत्वं सूत्रकृतैव पूर्व्वं दर्शितम् । तदन्तानाममरेऽधिकोक्तिः परित्यक्तुं शक्यते तत्पुरुषे द्वन्द्वे च पर-वल्लिङ्गतयैव त्रिलिङ्गताप्राप्तेः बहुव्रीहेस्त्रिलिङ्गत्वस्य अग्रे वक्ष्यमाणत्वाच्च । "अनेकमन्यपदार्थे" २,२,२४ सू०) बहु-व्रीहेरन्यपदार्थबोधकतया तल्लिङ्गत्वौचित्यात् "दिङ्नामान्य-न्तराले" (२,२, २६ सू०) इति दिङ्नामवाचित्वात् स्त्रीत्व-मेव न तु त्रिलिङ्गत्वम् । उत्तरपूर्व्वा । गुणद्रव्यादियोग उपाधिः शब्दप्रवृत्तौ निमित्तं येषां तादृशाः शब्दास्त्रिलिङ्गाः तत्र गुण-वचनानां, "गुणवचनञ्चेति" क्रियावचनानां च "कृत्याश्च" इत्यनेन सूत्रकृतैवोक्तम् द्रव्यसंबन्धोपाधिकास्त्रिलिङ्गाः इत्येवाधिकम् दण्डोऽस्यास्तीति इनिः दण्डी दण्डिनी दण्डि, धनवान् धनवती धनवत् इत्यादि ।

> अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ।

इत्यमरोक्तिः "तेन रक्तं रागात्" (४,२,१) इति रक्ताद्यर्थे रञ्जनद्रव्यवाचिन उत्तरं विहिताणाद्यन्ताः त्रिलिङ्गाः स्युः । कषायेण रक्तमित्यर्थे काषायः पटः काषायी शाटी काषायं वस्त्रम् । आदिपदात् तदधिकारे "लाक्षारोचनाट्ठक्" (४,२,२,) इति ठगादयो गृह्यन्ते । लाक्षिकः रौचनिक-स्त्रिलिङ्गः । रक्तादीत्यादिपदात् क्रियाविशेषकर्म्मणि तत्कर्त्तरि वा ये अणादयो विहिता ये च सम्बन्धार्थे विहितास्ते सर्व्वेऽपि गृह्यन्ते । "नक्षत्रेण युक्तः कालः" (४,२,२) इत्यण् पुष्येण युक्तं पौषं त्रिलिङ्गम् । "दृष्टं साम" (४,२,७) अण् वसिष्ठेन दृष्टं

साम, वासिष्ठं साम वासिष्ठी ऋक् वासिष्ठो मन्त्रः "कलेढ च्" (४,२,८) कलिना दृष्टं कालेयम्। "वामदेवात् ड्यड्ड्यौ" (४,२,९) वामदेव्यम्। "परिवृतो रथः" (४,२,१०) वस्त्रेण परिवृतो वास्त्रः। "तदधीते तद्वेद" (४,२,५९) व्याकरणमधीते वेद वा वैयाकरणः, इत्येवमध्ययनवेदनरूपक्रियादिकर्तरि विहितास्त्रिलिङ्गा एव "साऽस्य देवता" (४,२,२४) इत्यादिना विहिताणादयः पाशुपतम् आग्नेयम् ऐन्द्रम्। "तदस्य पण्यम् (४,४,५१) अपूपं पण्यमस्य आपूपिक इत्यादयो ग्राह्याः।

## इति अविशिष्टलिङ्गत्रिलिङ्गानुशासनम्।

इति पाणिनीयं लिङ्गानुशासनं समाप्तम्।

---

## अकारादिक्रमेण पाणिन्यागमसिद्धप्रत्ययागमानां प्रयोगे परिनिष्ठितरूपाणि इदम्प्रयोजनसहितानि सोदाहरणानि प्रदर्श्यन्ते।

### अ

अ अ भावार्थे कृत्प्रत्ययः। जिगमिषा चिकीर्षा।
अकङ् अक् आगमः अन्तादेशः। सौधातकिः वैयासकिः।
अकच् अक आगमः अन्तोदात्तता। सर्वकः उच्चकैः।
अकार अ अपत्यबहुत्वे तद्धितः। उडुलोमाः। भावे कृत्। जागरा।
अङ् अ भावे कृत्प्रत्ययः गुणाभावादि। भिदा छिदा।
अच् अस्त्यर्थे तद्धितः, अन्तोदात्तः। अर्शसः, कर्तरि कृत् प्रकृतिप्रत्ययसमुदायान्तोदात्तः। पचः देवः।
अञ् अ अपत्याद्यर्थे तद्धितः आदिवृद्धिः आद्युदात्तता। वैदः स्त्रियां ङीप् वैदी। औत्सः।
अट् अ आगमः आद्यवयवः। अभवत् अभूत् अभविष्यत्।
अठच् अठ घटाद्यर्थे तद्धितः अन्तोदात्तः। कर्मठः।
अण् अ अपत्याद्यर्थे तद्धितः आदिवृद्धिः। शैवः स्त्रियां ङीप् शैवी। कर्तरि कृत् वृद्ध्यादि। कुम्भकारः स्त्रियां टाप्।
अत् अ विभक्त्यर्थे तद्धितः स्वरितः अव्ययः। क। [उत्तरतः।
अतसुच् अतस् प्रथम्याद्यर्थे तद्धितः अन्तोदात्तः। दक्षिणतः।
अति अत् परिमाणार्थे वर्गे तद्धितः। पङ्क्तिः दशत् वर्गः।

अटन् अत् कर्तरि कृत् आद्युदात्तता इम्। जरन् स्त्रियां ङी।
अथुच् अथु भावे कृत् समुदायान्तोदात्तता। वेपथुः वमथुः।
अदुक् अद् आगमः अन्तावयवः। एकाद्नविंशतिः एकान्नविंशतिः।
अड्ड् अड् आगमः टिलोपः। कतरत् कतमत्।
अध्यै(न्) अध्यै तुमर्थे कृत्। पृणध्यै। नित्त्वे आद्युदात्तता।
[नील्या रक्तं नीलम्।
अन् अ भागाद्यर्थे तद्धितः, आद्युदात्तता। द्वितीयो भागः।
अनङ् अन् समासान्तः, अन्तादेशः। पुरुपथन्वा।
अनि अनि भावे कृत् स्त्रियाम्। अजीवनिः।
अनिच् अन् समासान्तः, अन्तोदात्तः। सुधर्मा विधर्मा।
अनीयर् अनीय भावकर्मणोः कृत् उपोत्तमोदात्तः। भवनीयम्।
अप् अ समासान्तः अनुदात्तः। कल्याणपञ्चमाः, अन्तर्लोमः। भावे कृत्। करः गरः भवः प्रसवः।
अम् अम् वेदे एवागमः। मितरं लोके तु नितराम्।
अयङ् अय आगमः, अन्तादेशः। शय्यते शय्या।
अयच् अय अवयवे तद्धितः, अन्तोदात्तः। उभयम् इयम्।
असि अस् प्रथमाद्यर्थे तद्धितः अव्य०। पुरः अधः अवः।
असिच् अस् समासान्तः अन्तोदात्तः। अप्रजाः सुप्रजाः।
असुक् अस् आगमः अन्तावयवः। दध्यस्यति।
असुक् अस् आगमः अन्तादेशः। पुमांसौ पुमांसः।
असे(न्) असे तुमर्थे कृत् नित्त्वे आद्युदात्तः। शरदो जीवसे।
अस्ताति अस्तात् प्रथमाद्यर्थे तद्धितः अव्ययः। अधस्तात्।

### आ

आकिनिच् आकिन् असहायार्थे तद्धितः अन्तोदात्तः। एकाकी।
[उत्तरा।
आच् आ प्रथमाद्यर्थे तद्धितः अन्तोदात्तः अव्य०। दक्षिणा।
आट् आ आगमः आद्यावयवः। आतीत्।
आटच् आट मत्वर्थे तद्धितः अन्तोदात्तः। वाचाटः।
आति आत् प्रथमाद्यर्थे तद्धितः अव्य०। दक्षिणात् उत्तरात्।
आनङ् आन् आगमः अन्तादेशः। पिता स्वसा उशनाः।
आनुक् आन् आगमः अन्तावयवः। इन्द्राणी वरुणानी।
आपुक् आप् आगमः अन्तावयवः। सत्यापयति अर्थापयति।
आम् आम् आगमः। एधाञ्चकार एधामास।
आमिनिच् आमिन् मत्वर्थे तद्धितः अन्तोदात्तः। स्वामी।
आमु आम् आगमः अव्य०। नितराम् सुतराम् पचतितमाम्।
आय आय स्वार्थे धात्वंशप्रत्ययः। गोपायति धूपायति।
आय्य आय्य शीलार्थे कृत् उणादि इत्येके। स्पृहयाय्यः।

**आरकन्** आरक मत्वर्थे तद्धितः आद्युदात्तः । शृङ्गारकः।
**आरक्** आर अपत्यार्थे तद्धितः आदिवृद्धिः अन्तोदात्तता । गौधारः । जाडारः ।
**आरि** आरि वर्षे द्रव्ये तद्धितः अव्ययः । परारि ।
**आरु** आरु शीलार्थे कर्तरि कृत् । शरारुः वन्दारुः ।
**आलच्** आल मत्वर्थे तद्धितः अन्तोदात्तः । वाचालः ।
**आलुच्** आलु शीलार्थे कर्तरि कृत् समुदायान्तोदात्तता । स्पृहयालुः । मत्वर्थे तद्धितः अन्तोदात्तः । हृदयालुः ।
**आहि** आहि प्रथमाद्यर्थे तद्धितः अव्य० । दक्षिणाहि ।

इ

**इक्** इ धातुनिर्देशे कृत् गुणवृद्ध्यभावः । भविः भिदिः ।
**इकट्** इक चौरे तद्धितः । ऐकागारिकः स्त्रियां ङीप् ।
**इच्** इ समासान्तः अन्तोदात्तः अव्य० । दण्डादण्डि ।
**इञ्** इ प्रश्नाख्यानार्थे कृत् वृद्ध्यादि आद्युदात्तः । कांकारि-मकार्षीः । अपत्याद्यर्थे तद्धितः आदिवृद्धिः । कार्ष्णिः ।
**इट्** इ आगमः आद्यावयवः । भविता रोदिति । [स्तवकितः
**इतच्** इत अस्य जातेऽर्थे तद्धितः अन्तोदात्तः । तारकितः।
**इत्नु** इत्नु शीलार्थे कर्तरि कृत् । स्तनयित्नुः गदयित्नुः ।
**इथुक्** इथ् डटि आगमः अन्तावयवः । यावतिथः तावतिथः।
**इन** इन नासिकानत्यर्थे समासान्तः । चिकिनम् ।
**इन्** इ कर्तरि कृत् आद्युदात्तः । शम्बरिः नाथहरिः ।
**इनङ्** इन् ढकि आगमः अन्तादेशः । कल्याणिनेयः ।
**इनच्** इन मत्वर्थे तद्धितः अन्तोदात्तः । फलिनः ।
**इनि** इन् शीलार्थे कर्तरि कृत् । मज्जी । मत्वर्थे तद्धितः । धनी ज्ञानी । [आदिवृद्धिः । सांराविणम् ।
**इनुण्** इन् अभिव्याप्तौ भावे कृत् वृद्ध्यादिः । ततः स्वार्थे अण्
**इम** इम तज्जाते तद्धितः । पाकिमः त्यागिमः । [लघिमा।
**इमनिच्** इमन् भावे कर्मणि च तद्धितः अन्तोदात्तः । म्रदिमा।
**इयङ्** इय् अन्तादेशः । श्रियः धियः विभ्रियतः ।
**इल** इल चतुरर्थ्यां तद्धितः । काशिलः तुण्डिलः मर्चिलः ।
**इलच्** इल मत्वर्थे तद्धितः अन्तोदात्तः । फेनिलः पिच्छिलः । स्वार्थे तद्धितः पूर्वपदलोपश्च । दत्तिलः ।
**इष्ठन्** इष्ठ स्वार्थप्रकर्षे तद्धितः आद्युदात्तः । लघिष्ठः करिष्ठः ।
**इष्णुच्** इष्णु शीलार्थे कर्तरि कृत् समुदायान्तोदात्तः । निरा-करिष्णुः अलङ्करिष्णुः ।

ई

**ईकक्** ईक प्रहरणाद्यर्थे इवार्थे च तद्धितः आदिवृद्धिः अन्तोदात्तः । शाक्तीकः । लौहितीकः स्फाटिकीकः ।
**ईकञ्** ईक स्वार्थे तद्धितः आदिवृद्धिः । आद्युदात्तः । द्वैतीयीकः तार्तीयीकः ।
**ईकन्** ईक परिमाणार्थे तद्धितः आद्युदात्तः । खारीकम् । अर्द्धखारीकम् ।
**ईट्** ई आगमः आद्यावयवः । अचेतीत् ब्रवीति करोति ।
**ईमसच्** ईमस मत्वर्थे तद्धितः अन्तोदात्तः । मलीमसः ।
**ईयङ्** ईय धात्वंशप्रत्ययः गुणवृद्ध्यभावः । ऋतीयते ।
**ईयसुन्** ईयस् स्वार्थप्रकर्षे तद्धितःआद्युदात्तः। प्रेयान् स्त्रियां ङीप् ।
**ईरच्** ईर मत्वर्थे तद्धितः अन्तोदात्तः । काण्डीरः ।
**ईरन्** ईर मत्वर्थे तद्धितः आद्युदात्तः । काण्डीरः ।

उ

**उ** उ कर्तरि कृत् । जिगमिषुः आशंसुः भिक्षुः बिन्दुः इच्छुः ।
**उकञ्** उक कर्तरि कृत् वृद्ध्यादिः । पाद्रुकः स्वादुकः ।
**उण्** उ संप्रदानापादानभिन्ने कर्त्रादौ कृत् वृद्ध्यादिः । कारुः ।
**उति** उत् वर्षे द्रव्ये तद्धितः अव्ययः । परुत् ।
**उम्** उ आगमः अन्त्यादचः परः । अशोचत् ।
**उरच्** उर मत्वर्थे तद्धितः अन्तोदात्तः । दन्तुरः ।
**उवङ्** उव अन्तादेशः । भुवः । लुलुवतुः ।
**उसि** उस् करणादौ कृत् । चक्षुः यजुः ।

ऊ

**ऊक** ऊक शीलार्थे कर्तरि कृत् । जागरूकः दंदशूकः ।
**ऊङ्** ऊ स्त्रीप्रत्ययः ङित् चिह्नार्थः । कुरूः कर्कन्धूः ।
**ऊठ्** ऊ आदेशः । अव-ऊः ज्वर-जूः दिव-द्यूतम् ।
**ऊलच्** ऊल समूहाद्यर्थे तद्धितः अन्तोदात्तः । वातूलः बलूलः ।

ए

**एण्य** एण्य भवाद्यर्थे तद्धितः । माहकेयः ।
**एत्य** एत्य भवाद्यर्थे तद्धितः । दूरेत्यः ।
**एद्यवि** एद्यवि अहनीत्यर्थे तद्धितः अव्ययः । परेद्यवि ।
**एद्युसुच्** एद्युस् अहनीत्यर्थे तद्धितः अन्तोदात्तः अव्ययः । परेद्युः अन्येद्युः उभयेद्युः । [द्वेधा त्रेधा ।
**एधाच्** एधा प्रकारार्थे तद्धितः अन्तोदात्तः अव्ययः ।
**एनप्** एन प्रथमासप्तम्यर्थे तद्धितः अव्ययः अनुदात्तः । दक्षिणेन उत्तरेण ।
**एलु** एलु असहनार्थे तद्धितः । हिमेलुः ।

ऐ

**ऐ** ऐ ङीपि स्त्रियाम् आदेशः । पूतक्रतायी वृष्णायी ।
**ऐरक्** ऐर अपत्यार्थे तद्धितः आदिवृद्धिः अन्तोदात्तः । चाटकैरः

औ

औ औ-स्त्रियां ङीपि आदेशः । मनावी ।

क

क अ कर्तरि कृत् गुणाभावादि । किरः ज्ञः प्रस्थः । घञर्थे भावे कृत् । उपघ्नः निघ्नः । चतुरर्थ्यादौ तद्धितः न कित् । अश्मकः शरकः । अज्ञाताद्यर्थे—अश्वकः । कुत्सिते—अश्वकः । स्वार्थे—अधिकः । योगे—तूष्णीकः ।

कक् क चतुरर्थ्यां तद्धितः आदिवृद्धिः अन्तोदात्तः । धारा-हकः । [स्त्रियां ङीप् ।

कञ् अ कर्मकर्तरि कृत् गुणाभावादि आद्युदात्तः । अन्यादृशः

कटच् कट समूहाद्यर्थे तद्धितः न कित् अन्तोदात्तः । समूहे अविकटम् । स्वार्थे सङ्कटम् विकटम् । [रथकट्या ।

कट्यच् कट्य समूहार्थे तद्धितः न कित् अन्तोदात्तः स्त्रियाम् ।

कध्यै(न्) अध्यै तुमर्थे कृत् गुणाभावादि नित्त्वे आद्युदा॰ अव्ययः । आहुवध्यै ।

कन् क अज्ञाताद्यर्थे तद्धितः न कित् । भद्रकः देवदत्तकः ।

कप् क समासान्तत्वात् तद्धितत्वेन न कित् अनुदात्तः । व्यूढोरस्कः अनर्थकः । नदीमातृकः ।

कमुल् अम् तुमर्थे कृत् प्रत्ययात् पूर्वमुदात्तः । प्रलुपं भायकत् प्रलोपितुमित्यर्थः ।

कल्पप् कल्प ईषदसमाप्त्यर्थे तद्धितः न कित् अनुदात्तः । पटुकल्पः । तिङन्तु उत्कर्षे । पचतिकल्पम् ।

कसुन् अस् तुमर्थे कृत् आद्युदात्तः । ईश्वरो विलिखः विलिखितुमित्यर्थः । [म्रियसे ।

कसेन् असे तुमर्थे कृत् आद्युदात्तः अव्ययः । भवानिदं

काण्ड काण्ड समूहार्थे तद्धितः न कित् । दूर्वाकाण्डम् ।

कानच् आन लिड्वत् न गुणः कृत् समुदायान्तोदात्तः । चक्राणः ।

काम् का आगमः अन्त्यादचः परं स्वार्थे तद्धितः अव्ययः । तूष्णीकाम् । [दात्तः । पुत्रकाम्यति ।

काम्यच् काम्य इच्छार्थे धात्वंशप्रत्ययः न कित् समुदायान्तो-

कार कार स्वरूपार्थे तद्धितः न कित् । अकारः ककारः ।

कि(न्) इ कर्तरि कृत् लिड्वत् गुणाभावादि । नित्त्वे आद्यु-दात्तः । पपिः जग्मिः चक्रिः । कर्मणि कृत् । दधिः ददिः । कर्मण्युपपदेऽधिकरणार्थे कृत् । जलधिः ।

कुक् क् आगमः अन्त्यावयवः । स्वकीयं परकीयम् । वातकी अतीसारकी । [अवकुटारम् ।

कुटारच् कुटार अर्वाचीनार्थे तद्धितः न कित् अन्तोदात्तः ।

कुणप् कुण पाकार्थे तद्धितः न कित् अन्तोदात्तः । पीलुकुणः ।

कुरच् उर कर्मकर्तरि कृत् गुणाभावादि समुदायान्तोदात्तः । विदुरः भिदुरः । [पञ्चकृत्वः पचति

कृत्वसुच् कृत्वस् क्रियापौनःपुन्ये तद्धितः न कित् अन्तोदात्तः ।

केन् ए कृत्यार्थे कृत् गुणाभावादि आद्युदात्तः अव्ययः । अवगाहे

केन्य एन्य कृत्यार्थे कृत् गुणाभावादि अव्य॰ । दिदृक्षेण्यः ।

केलिमर् एलिम कर्मकर्तरि कृत् गुणाभावः । उपोत्तमो-दात्तः । भिदेलिमः ।

क्त त कर्मभावादौ कृत् गुणाभावादि । भूतं ज्ञातः विदितः । आशिषि संज्ञायाञ्च । देवदत्तः विष्णुरातः ।

क्तवतु तवत् कर्तरि कृत् गुणाभावादि स्त्रियां ङीप् । गतवान् ।

क्तिच् ति आशीर्वादे संज्ञायां कृत् गुणाभावः समुदायान्तो-दात्तः । रन्तिः, भूतिः ।

क्तिन् ति भावे कृत् गुणाभावादि आद्युदात्तः । कृतिः मतिः ।

क्त्रि त्रि तन्नातेऽर्थे कृत् गुणाभावादि ततः स्वार्थे मप् अनुदात्तः । वप्त्रिमः पक्त्रिमः ।

क्त्वा त्वा प्रकृत्यर्थे कृत् गुणाभावादि । कृत्वा भूत्वा ।

क्नु नु शीलार्थे कर्तरि कृत् गुणाभावः । त्रस्नुः क्षिप्नुः गृध्नुः ।

क्मरच् मर शीलार्थे कर्तरि कृत् गुणाभावः समुदायान्तो-दात्तः । सृमरः । घस्मरः ।

क्यच् य, इच्छार्थे धात्वंशप्रत्ययः समुदायान्तोदात्तः । पुत्रीयति

क्य(ङ)ष् य आचाराद्यर्थे धात्वंशप्रत्ययः ङित्त्वे आत्मने-पदम् । श्येनायते । षित्त्वे उभयपदम् । लोहितायते-ति

क्यप् य, भावकर्मादौ कृत् गुणाभावः अनुदात्तः । कृत्यम् स्तुत्यः । भावे स्त्रियाम् । कृत्या ।

क्रु रु शीलाद्यर्थे कृत् गुणाभावः । भीरुः ।

क्रुकन् रुक शीलाद्यर्थे कृत् गुणाभावः आद्युदात्तः । भीरुकः

क्लुकन् लुक शीलाद्यर्थे कृत् गुणाभावादि आद्युदात्तः । भीलुकः

क्वनिप् वन् शीलाद्यर्थे कृत् गुणाभावादि अनुदात्तः । सुदामा सुधीवा ।

क्वरप् वर शीलाद्यर्थे कृत् गुणाभावः अनुदात्तः । जित्वरः इत्वरः गत्वरः । स्त्रियां ङीप् । [पेचिवान् ।

क्वसु वस् लिड्वत् कृत् गुणाभावादि स्त्रियां ङीप् । जग्मिवान्

क्विन्(प्) व् तस्य लोपः कर्तरि कृत् गुणाभावादि । नित्त्वे आद्युदात्तः कुत्वम् । दृक् स्पृक् । पित्त्वे अनुदात्तः । प्रष्ठः भावाधिकरणादौ स्त्रियाम् । संपद् संसद् ।

क्से से तुमर्थे कृत् गुणाभावः । प्र-इक्ष-प्रेषे ।

ख

ख ख-ईन भवाद्यर्थे तद्धितः न खित् । कुलीनः ।

खच् अ कर्तरि कृत् समुदायान्तोदात्तः मुम् । प्रियंवदः । स्तनन्धयः ।

खञ् ख-ईन भवाद्यर्थे तद्धितः न खित् आदिवृद्धिः आद्युदात्तः । माहाकुलीनः गौडीनः स्त्रियां टाप् ।

खण्ड खण्ड समूहार्थे तद्धितः न खित् । हस्तखण्डः ।

खमुञ् अम् अभूततद्भावे आक्रोशे भावादौ कृत् खित् मुम् आद्युदात्तः वृद्धिः । चौरङ्कारमाक्रोशति । [करम् ।

खल् अ, भावादौ कृत् पूर्व्वमुदात्तः । दुर्भवं सुकरम् ईषत्-

खश् अ कर्तरि कृत् खित् मुम् । जनमेजयः नाडिन्धमः ।

खिष्णुच् इष्णु शीलाद्यर्थे कृत् खित् मुम् समुदायान्तोदात्तः । आढ्यम्भविष्णुः । [प्रियम्भावुकः ।

खुकञ् उक शीलाद्यर्थे कृत् खित् मुम् वृद्धिः आद्युदात्तः ।

ख्युन् यु-अन करणभावयोः कृत् खित् मुम् आद्युदात्तः । अद्गङ्करणम् ।

ग

गोयुगच् गोयुग स्थानार्थे तद्धितः न गित् अन्तोदात्तः । गोगोयुगम् । [गोगोष्ठम् ।

गोष्ठच् गोष्ठ स्थानार्थे तद्धितः न गित् अन्तोदात्तः ।

ग्मिनि ग्मिन् मत्वर्थे तद्धितः न गित् । वाग्मी ।

ग्स्नु स्नु-शीलाद्यर्थे कृत् गित् गुणाभावः । जिष्णुः स्थास्नुः ।

घ

घ अ भावादौ कर्तरि च कृत् । गोचरः उरश्छदः । देवताद्यर्थे तद्धितः न घित् घ-इय । महेन्द्रियम् यज्ञियम् । [यम्

घच् घ-इय चिकित्सार्थे तद्धितः न घित् अन्तोदात्तः । क्षेत्रि-

घञ् अ-भावादौ कृत् चजोः कुः अन्तोदात्तः वृद्ध्यादिः । पाकः त्यागः ।

घन् घ-इय देवताद्यर्थे तद्धितः न घित् आद्युदात्तः । शुक्रियम् । [भत्यम् । ऋत्वियम् ।

घस् घ-इय अस्य प्राप्त्यर्थे तद्धितः वेदे, न घित् सित्त्वाद्

घिनुण् इन् शीलाद्यर्थे कृत् वृद्ध्यादि चजोः कुत्वम् । त्यागी रागी योगी भोगी । [दात्तः । भङ्गुरम् ।

घुरच् उर शीलाद्यर्थे कृत् चजोः कुत्वम् । समुदायान्तो-

ङ

ङीन् ई शारङ्गरवादिभ्यः स्त्रीप्रत्ययः । समुदायान्तोदात्तः । शारङ्गरवी नारी । [मृगी ।

ङीप् ई स्त्रीप्रत्ययः अनुदात्तः । कर्त्री मैथुषी गतवती ।

ङीष् ई स्त्रीप्रत्ययः षित् चिह्नार्थः । कल्याणी शारङ्गी । [यज्वा ।

ङ्वनिप् वन् भूते कर्तरि कृत् गुणाभावादि अनुदात्तः । सुत्वा

च

चणप् चण वित्तार्थे तद्धितः पकारप्रश्लेषात् न चित् अनुदात्तः । विद्याचणः ।

चरट् चर भूतपूर्व्वार्थे तद्धितः पकारप्रश्लेषात् न चित् स्त्रियां ङीप् । आढ्यचरः । [निघ्नानः ।

चानश् आन शीलाद्यर्थे कृत् समुदायान्तोदात्तः । भुञ्जानः ।

चाप् आ यङन्तात् स्त्रीप्रत्ययः चित् अन्तोदात्तः कारीषगन्ध्या । आवट्या । [अभावि ।

चिण् इ-आगमः वृद्ध्यादि समुदायान्तोदात्तता । अदायि

चुञ्चुप् चुञ्चु वित्तार्थे तद्धितः पकारप्रश्लेषात् न चित् । अनुदात्तः । विद्याचुञ्चुः ।

च्फञ् फ-आयन अपत्यार्थे तद्धितः वृद्धिः चित्त्वात् अन्तोदात्तः । कौञ्जायनः ।

च्वि वि, तस्य लोपः अभूततद्भावे तद्धितः अव्ययः चित् अन्तोदात्तः । श्वेतीभवति । भस्मीकरोति ।

छ

छ छ-ईय भवाद्यर्थे तद्धितः न छित् । त्वदीयः ।

छण् छ-ईय अपत्याद्यर्थे तद्धितः न छित् वृद्धिः । पैलमूलीयः ।

छस् छ-ईय भवाद्यर्थे तद्धितः न छित् सित्त्वात् पूर्व्वस्य पदत्वम् । भवदीयः ।

ज

जातीयर् जातीय प्रकारे तद्धितः पप्रश्लेषात् न जित् उपोत्तमोदात्तः । पटुजातीयः ।

जाहच् जाह-मूलार्थे तद्धितः पप्रश्लेषात् न जित् अन्तोदात्तः । कर्णजाहम् ।

ञ

ञ अ भवाद्यर्थे तद्धितः वृद्धिः आद्युदात्तः । पौवशालः ।

ञिठ ठ-इक भवाद्यर्थे तद्धितः वृद्धिः आद्युदात्तः । कार्शिकः ।

ञ्य य-भवाद्यर्थे तद्धितः वृद्धिः आद्युदात्तः । कौविदार्य्यं गाम्भीर्य्यं पाञ्चजन्यः प्रागाद्यः ।

ञ्यङ् य-भवाद्यर्थे तद्धितः वृद्धिः आद्युदात्तः । सौवीर्य्यः कौसल्यः । ङित्करणं यङन्येति चाप्विधानार्थम् ।

ट

ट अ-कर्तरि कृत् स्त्रियां ङीप् । कुरुचरः सेनाचरः पुरःसरः ।

टक् अ-कर्तरि कृत् गुणाभावादि स्त्रियां ङीप् । सामगः सुरापः ।

टच् अ समासान्तः स्त्रियां ङीप् । अन्तोदात्तः । वङ्गराजः ।

टाप् आ स्त्रीप्रत्ययः अनुदात्तः । अजा जिगमिषा । [निकः ।

ठिन् ठ-इक, दानसंप्रदानार्थे तद्धितः आद्युदात्तः । औद-

टीटच् टीट-नासिकानतार्थे तद्धितः व्रमस्तेषात् न टित् अन्तोदात्तः । अवटीटम् । [शार्ङ्गरवः ।

टेण्यन् एण्य स्वार्थे तद्धितः वृद्धिः आद्युदात्तः स्त्रियां ङीप् ।

ट्यण् य-देवतार्थे तद्धितः आदिवृद्धिः स्त्रियां ङीप् । सौम्यम् ।

ट्यु(ल्) यु-अन भवार्थे तद्धितः तुडागमः स्त्रियां ङीप् लित्वे पूर्वोदात्तः । सायन्तनः चिरन्तनः ।

ठ

ठ ठ-इक स्वार्थे तद्धितः न ठित् । देवदत्त एव दैविकः दत्तिकः ।

ठक् ठ-इक अपत्याद्यर्थे तद्धितः आदिवृद्धिः अन्तोदात्तः स्त्रियां ङीप् । रैवतिकः रौचनिकः ।

ठच् ठ-इक चतुरर्थ्यां तद्धितः अन्तोदात्तः । कुमुदिकः ।

ठञ् ठ-इक इस्, उस्, उ, ऋ, इत्यकात् परः क, भवाद्यर्थे तद्धितः स्त्रियां ङीप् आद्युदात्तः । दैनिकः नैयिकः धैनुकम् पैतृकम् ।

ठन् ठ-इक मत्वर्थादौ तद्धितः आद्युदात्तः । धनिकः पतिकः ।

ड

ड अ कर्तरि कृत् अभत्वेऽपि टिलोपः । अन्तगः दूरगः ।

डच् अ समासान्तः तद्धितः अन्तोदात्तः । द्वित्राः पञ्चषाः ।

डट् अ पूरणाद्यर्थे तद्धितः स्त्रियां ङीप् । एकादशः द्वादशः ।

डुण् अ परिमाणार्थे तद्धितः वृद्धिः । त्रैंशं चात्वारिंशम् ।

डतमच् अतम बहूनां मध्ये एकोत्कर्षे तद्धितः आद्युदात्तः । कतमः । [कतरः ।

डतर अतर द्वयोर्मध्ये एकोत्कर्षे तद्धितः अन्तोदात्तः ।

डति अति पूरणार्थे तद्धितः बहुवचनान्तः । कति यति तति ।

डर अर शीलार्थे कर्तरि कृत् । आखरः ।

डवतुप् अवत् कर्तर्थे कृत् अनुदात्तः स्त्रियां ङीप् । भवान् ।

डाच् आ अभूततद्भावादौ तद्धितः अन्तोदात्तः अव्ययः । पटपटाकरोति सीत्राकरोति ।

डाप् आ स्त्रीप्रत्ययः अनुदात्तः । सीमा सीमे सीमाः ।

डामह् आमह-पित्रर्थे तद्धितः अन्तोदात्तः । पितामहः मातामहः ।

डिनि इन् लोमेऽर्थे तद्धितः । पञ्चदशी (पक्षः) त्रिंशी (मासः)

डिमच् इम भवार्थे तद्धितः अन्तोदात्तः । आदिमः ।

डु उ कर्तरि कृत् । विभुः प्रभुः ।

डुपच् उप ह्रस्वार्थे तद्धितः अन्तोदात्तः । कुतुपः ।

डुम्सुन् उम्स् कर्तरि कृत् आद्युदात्तः अभत्वेऽपि टिलोपः । पुनातीति पुमान् पुंसः ।

डुलच् उल भ्रात्रर्थे तद्धितः अन्तोदात्तः । मातुलः ।

ड्मतुप मत् चतुरर्थ्यां तद्धितः स्त्रियां ङीप् अनुदात्तः । ककुद्मान्

ड्य(त्) य दृष्टसामार्थे तद्धितः तित्वे स्वरितः । वामदेव्यम् ।

ड्यण् य साध्वाद्यर्थे वेदे तद्धितः आदिवृद्धिः । पाथ्यः नाद्यः ।

ड्वलच् वल मत्वर्थे तद्धितः अन्तोदात्तः । नड्वलः ।

ड्वुन् वु-अक-आर्हीयस्तद्धित आद्युदात्तः । विंशकः त्रिंशकः ।

ढ

ढ ढ-एय साध्वर्थे तद्धितः न ढित् । सभेयः । शिवेयः ।

ढक् ढ-एय अपत्याद्यर्थे तद्धितः वृद्धिः अन्तोदात्तः स्त्रियां ङीप् । माहेयः गाङ्गेयः काद्रवेयः । नादेयः ।

ढकञ् ढ-एयक अपत्याद्यर्थे तद्धितः वृद्धिः आद्युदात्तः स्त्रियां ङीप् । बाहुकुलेयकः । [ङीप् । गार्टेयः ।

ढञ् ढ-एय अपत्याद्यर्थे तद्धितः वृद्धिः आद्युदात्तः स्त्रियां

ढिनुक् ढिन्-एयिन् प्रोक्ताध्येतरि बहुत्वे तद्धितः वृद्धिः अन्तोदात्तः । कागलेयिनः । [नाटेरः ।

ढ्रक् ढ्र-एर-अपत्यार्थे तद्धितः वृद्धिः अन्तोदात्तः । गौधेरः

ण

ण अ कर्तरि कृत् वृद्ध्यादि । ज्वालः पाकः दायः ।

णच् अ भावे कृत् वृद्ध्यादि स्त्रीत्वम् तदन्तात् स्वार्थे अञ् आद्युदात्तः ङीप् । व्यावक्रोशी व्यातिहासी ।

णमुल् अम् भावे कृत् वृद्ध्यादि अव्ययः । कारंकारम् । अभ्यस्तानामाद्युदात्तः । चिकीर्षंचिकीर्षम् । [(पर्शुसंघः)

णस् अ समूहार्थे तद्धितः वृद्धिः सित्वात् न भत्वम् । पार्शम्

णिङ् इ पुच्छादितः धात्वंशप्रत्ययः आत्मनेपदम् । उत्पुच्छयते संचीवरयते । [कारयति भावयति ।

णिच् इ प्रेरणे धात्वंशप्रत्ययः वृद्ध्यादि समुदायान्तोदात्तः ।

णिनि इन् कर्तरि कृत् वृद्ध्यादि । ग्राही स्थायी पायी ।

ण्य य अपत्याद्यर्थे तद्धितः वृद्धिः । दैत्यः सांकाश्यः ।

ण्यत् य कर्मभावयोः कृत् वृद्ध्यादि स्वरितः । कार्यम् हार्यम् वाच्यम् । क्वचित् कुत्वम् । वाक्यं भोग्यम् ।

ण्युट् यु-अन कर्तरि कृत् वृद्ध्यादि स्त्रियां ङीप् । गायनः ।

ण्वि वि-तस्य लोपः कर्तरि कृत् वृद्ध्यादि । सुखभाक् ।

ण्विन् वि-तस्य लोपः कर्तरि कृत् आद्युदात्तः वृद्ध्यादि । श्वेतवाहौ उक्थशासौ अवयाजौ ।

ण्वुच् वु अक पर्यायाद्यर्थे भावे कृत् वृद्ध्यादि समुदायान्तोदात्तः स्त्रियाम् । भवत आसिका ।

ण्वुल् वु अक रोगाख्यायां भावे कृत् वृद्ध्यादि अभ्यस्तानामाद्युदात्तः स्त्रियाम् । प्रवाहिका विचर्चिका ।

त

त त मत्वर्थे तद्धितः । शृन्तः कन्तः ।

**तप्** त मत्वर्थे तद्धितः अनुदात्तः । पर्व्वतः मरुत्तः ।
**तमट्** तम-डटि आगमः आद्यवयवः । एकविंशतितमः । षष्टितमः । [विद्वत्तमः । पटुतमः ।
**तमप्** तम बहूनां मध्ये एकोत्कर्षे तद्धितः अनुदात्तः ।
**तरप्** तर द्वयोर्मध्ये एकोत्कर्षे तद्धितः अनुदात्तः । पटुतरः लघुतरः । विद्वत्तरः । [जनता ।
**तल्** त-भावसमूहाद्यर्थे तद्धितः पूर्व्वस्योदात्तता । शुक्लता देवता
**तवेङ्** तवे तुमर्थे कृत् अव्ययः गुणाभावादि । सूतवे ।
**तवेन्** तवे तुमर्थे कृत् अव्ययः आद्युदात्तः । कर्त्तवे । [तवै ।
**तवै(न्)** तवै तुमर्थे कृत् अव्ययः नित्त्वे आद्युदात्तः । म्लेच्छि-
**तव्यत्** तव्य-भावकर्म्मणोः कृत् स्वरितः । भवितव्यं चेतव्यः ।
**तसि** तस् पञ्चम्याद्यर्थे तद्धितः अव्ययः । अग्रतः प्रति । एकदिगर्थे च । पीलुमूलतः । [सर्व्वतः ततोभवान् ।
**तसिल्** तस् पञ्चम्याद्यर्थे तद्धितः अव्ययः पूर्व्वस्योदात्तता । कुतः
**तातिल्** ताति स्वार्थे प्रशंसार्थे च तद्धितः पूर्व्वोदात्तता । सर्व्वतातिः । वृकतातिः । [स्त्रीप्रत्ययश्च । युवतिः ।
**ति** ति भूतार्थे मत्वर्थे च तद्धितः । पक्तिः । कन्तिः शन्तिः
**तिकन्** तिक प्रशंसार्थे तद्धितः आद्युदात्तः । वर्त्तिका ।
**तिथुक्** तिथ् डटि आगमः अन्त्यावयवः । बहुतिथः ।
**तीय** तीय पूरणार्थे तद्धितः । द्वितीयः तृतीयः ।
**तु** तु मत्वर्थे तद्धितः । शन्तुः कन्तुः ।
**तुक्** त् कृति पिति आगमः अन्त्यावयवः । संयत् कृत्यम् ।
**तुट्** त् आगमः (ट्युट्युलोः) आद्यवयवः । सायन्तनः ।
**तुमुन्** तुम् भावे क्रियार्थक्रियादौ कृत् आद्युदात्तः । भोक्तुं याति व्रातुमिच्छति । [भोक्त्री स्त्रियां ङीप् ।
**तृच्** तृ-कर्त्तरि कृत् समुदायान्तोदात्तः । कटस्य कर्त्ता अन्नस्य
**तृन्** तृ शीलाद्यर्थे कृत् आद्युदात्तः । कटम् कर्त्ता ।
**तैलच्** तैल स्नेहार्थे तद्धितः अन्तोदात्तः । तिलतैलम् ।
**तोसुन्** तोस् तुमर्थे कृत् अव्ययः आद्युदात्तः । ईश्वरो विचरितोः विचरितुमीश्वर इत्यर्थः ।
**त्न** त्न भवार्थे तद्धितः । चिरत्नः प्रत्नः ।
**त्नप्** त्न स्वार्थे तद्धितः अनुदात्तः । नूत्नं प्रत्नम् ।
**त्यक्** त्य-भवाद्यर्थे तद्धितः वृद्धिः अन्तोदात्तः । दाक्षिणात्यः पाश्चात्त्यः । [अधित्यका
**त्यकन्** त्यक आसन्नाद्यर्थे तद्धितः आद्युदात्तः । उपत्यका
**त्यप्** त्य-भवाद्यर्थे तद्धितः अनुदात्तः । तत्रत्यः इहत्यः ।
**त्र** त्र समूहार्थे तद्धितः स्त्रियाम् । गोत्रा । [तत्रभवान् ।
**त्रल्** त्र सप्तम्याद्यर्थे तद्धितः अव्ययः पूर्व्वोदात्तता । यत्र इत्र ।

**त्रा** त्रा देयाद्यर्थे तद्धितः अव्ययः । देवाय देयं करोति देवत्राकरोति ।
**त्व** त्व-भावकर्म्मार्थे तद्धितः । देवत्वं ब्राह्मणत्वं शुक्लत्वम् ।
**त्वन्** त्व क्त्वार्थे कृत् आद्युदात्तः । कर्त्त्वम् ।

### थ

**थकन्** थक-कर्त्तरि कृत् आद्युदात्तः । गाथकः ।
**थट्** थ पूरणार्थे तद्धितः स्त्रियां ङीप् । पञ्चथः दशथः ।
**थमु** थम् प्रकारेऽर्थे तद्धितः अव्ययः । कथम् इत्थम् ।
**था** था प्रकारेऽर्थे तद्धितः अव्ययः । यथा तथा सर्व्वथा ।
**थाल्** था इवार्थे वेदे तद्धितः अव्ययः पूर्व्वमुदात्तः । प्रत्नथा पूर्व्वथा ।
**थुक्** थ् आगमः डटः अन्त्यावयवः । षष्ठः चतुर्थः कतिथः ।
**थ्यन्** थ्य हितार्थे तद्धितः आद्युदात्तः । अजथ्या यूथिः अविथ्या

### द

**दघ्नच्** दघ्न उन्माने तद्धितः अन्तोदात्तः स्त्रियां ङीप् । ऊरुदघ्नः गजदघ्नः ।
**दा** दा कालेऽर्थे तद्धितः अव्ययः । सर्व्वदा तदा यदा ।
**दानीम्** दानीम् कालेऽर्थे तद्धितः अव्ययः । तदानीम् इदानीम् ।
**दुक्** द् आगमः अन्त्यावयवः । अन्यदाशीः अन्यदीयः ।
**दूस** दूस दुग्धार्थे तद्धितः । अविदूसम् (अविदुग्धम्) ।
**देशीयर्** देशीय ईषदसमाप्तेऽर्थे तद्धितः उभोत्तमोदात्तता । पटुदेशीयः ।
**देश्य** देश्य ईषदसमाप्तेऽर्थे तद्धितः । पटुदेश्यः ।
**द्य** द्य दिनेऽर्थे तद्धितः अव्ययः । अस्मिन् दिने अद्य ।
**द्यस्** द्यस् दिनेऽर्थे तद्धितः अव्ययः । समानेऽह्नि सद्यः ।
**द्युस्** द्युस् दिनेऽर्थे तद्धितः अव्ययः । उभये दिने उभयद्युः ।
**द्वयसच्** द्वयस उन्माने तद्धितः अन्तोदात्तः स्त्रियां ङीप् । ऊरुद्वयसम् गजद्वयसम् ।

### ध

**धमुञ्** धम् प्रकारेऽर्थे तद्धितः अव्ययः वृद्धिः आद्युदात्तः । द्वैधम् त्रैधम् । स्वार्थे द्वैधः ।
**धा** धा क्रियाप्रकारेऽर्थे तद्धितः अव्ययः । चतुर्धा पञ्चधा [पचति ।
**धुना** धुना कालेऽर्थे तद्धितः अव्ययः । अस्मिन् काले अधुना ।
**धेय** धेय स्वरूपार्थे तद्धितः । नामधेयं भागधेयम् ।
**ध्यमुञ्** ध्यम् प्रकारे तद्धितः वृद्धिः आद्युदात्तता अव्ययः । ऐकध्यम् ।

न

न न मत्वर्थे तद्धितः। पामनः अङ्गना ज्योत्स्ना। पुराणेऽर्थे च। प्रणम्।
नङ् न भावे कृत् गुणाभावादि। यत्नः प्रश्नः यज्ञः।
नजिङ् नज् शीलाद्यर्थे कृत् गुणाभावादि। स्वप्नक् धृष्णक्।
नन् न भावे कृत् आद्युदात्तः। स्वप्नः।
ना ना असहायार्थे पृथग्भावे स्वार्थे तद्धितः अव्ययः। विना।
नाञ् ना असहायार्थे पृथग्भावे तद्धितः वृद्धिः अव्ययः आद्युदात्तः। नाना।
नाटच् नाट नासिकानतार्थे तद्धितः अन्तोदात्तः। अवनाटम्।
नि नि भावे कृत् स्त्रियाम्। ग्लानिः हानिः।
निङ् नि समासान्तः अन्तादेशः। युवजानिः।
नीग् नी आगमः अन्त्यावयवः। वनीवञ्चीति।
नुक् नु आगमः अन्त्यावयवः। धूनयति प्रीणयति।

प

पटच् पट-विस्तारे तद्धितः अन्तोदात्तः। अविपटः।
पाशप् पाश कुत्सितार्थे त॰ अनुदात्तः। भिषक्पाशः। [तिलपिञ्जः।
पिञ्ज पिञ्ज निष्फलेऽर्थे तद्धितः। तिलपिञ्जः। वेदे तु डित्।
पिटच् पिट-नासिकानतार्थे तद्धितः अन्तोदात्तः। चिपिटम्।
पुक् प् आगमः अन्त्यावयवः। स्थापयति यापयति।
पेज पेज निष्फलेऽर्थे तद्धितः। तिलपेजः।

फ

फक् फ-आयन अपत्याद्यर्थे तद्धितः वृद्धिः अन्तोदात्तः। नाडायनः। [स्त्रियां ङीप्। वातस्यायनः आश्वलायनः।
फञ् फ-आयन गोत्रार्थे युनि तद्धितः वृद्धिः आद्युदात्तः
फिञ् फि-आयनि अपत्याद्यर्थे तद्धितः वृद्धिः आद्युदात्तः। तैकायनिः। [कायनिः।
फिन् फि-आयनि अपत्यार्थे तद्धितः आद्युदात्तः। ग्लुचु-

ब

ब(व) ब(व) मत्वर्थे तद्धितः। शंवः शम्बः इत्यत्र इति कौमुदीसम्मतम्। [ब(व)हुगुडः।
ब(व)हुच् ब(व)हु ईषदसमाप्त्यर्थे तद्धितः अन्तोदात्तः।

भ

भ भ मत्वर्थे तद्धितः। शम्भः कम्भः।
भक्तल् भक्त चातुरर्थ्याम् तद्धितः पूर्व्वदुदात्तः। ऐषुकारिभक्तम्।
भ्रटच् भ्रट-नासिकानतार्थे तद्धितः अन्तोदात्तः। अवभ्रटम्।

म

म म-भवार्थे मत्वर्थे च तद्धितः। आदिमः मध्यमः। द्रुमः।
मट् म डट् आगमः आद्यावयवः। पञ्चमः दशमः।
मञ् म भवार्थे तद्धितः वृद्धिः स्त्रियां ङीप्। माध्यमः।
मतुप् मत् अस्त्यर्थे तद्धितः स्त्रियां ङीप् अनुदात्तः। अग्निमान् श्रीमान्। अकारादितस्तु मस्य वः। धनवान् लक्ष्मीवान् यशस्वान् विद्वान्।
मनिन् मन्-शीलाद्यर्थे कर्तरि कृत् आद्युदात्तः। सुशर्मा।
मप् म जातार्थे कृत्रिमप्रत्ययान्तान्नित्यं मप् तद्धितः अनुदात्तः। पक्त्रिमम्।
मयट् मय तद्रूपविकारे प्राचुर्यार्थे च तद्धितः स्त्रियां ङीप्। वाङ्मयः यवमयी यवागूः। अन्नमयो यज्ञः। [(अविदुग्धम्)
मरीसच् मरीस-दुग्धेऽर्थे तद्धितः अन्तोदात्तः। अविमरीसम्
मात्रच् मात्र प्रमाणसामान्ये तद्धितः स्त्रियां ङीप् अन्तोदात्तः। प्रस्थमात्रः गजमात्रम्। वतुप्यर्थे च तावन्मात्रम्।
मिनि मिन् मत्वर्थे तद्धितः। गोमी।
मीय मीय भवार्थे तद्धितः। मध्यमीयः।
मुक् म् आगमः अन्त्यावयवः। पचमानः। [न्धयः।
मुम् म् आगमः खिति अन्त्यावयवः। रात्रिञ्चरः। स्तन-

य

य य भावाद्यर्थे कृत् वेदे। निष्टर्क्यः देवहूयः। लोके तु यत्। समूहार्थे तद्धितः स्त्रियाम्। पाश्या वात्या धूम्या। साध्वर्थे च डित्। सभ्यः।
यक् य-धात्वंशप्रत्ययः। कण्डूयते। विकरणः। क्रियते नूयते। भावकर्माद्यर्थे तद्धितः वृद्धिः अन्तोदात्तः। पौरहित्यम् सैनापत्यम्।
यङ् य पौनःपुन्याद्यर्थे धात्वंशप्रत्ययः। ङित् आत्मनेपदं गुणाभावादि। बोभूयते चेक्रीयते। [वात्स्यः।
यञ् य-अपत्याद्यर्थे तद्धितः वृद्धिः आद्युदात्तः। गार्ग्यः
यत् य भावाद्यर्थे कृत् स्वरितः। भव्यं भव्यः, गेयं गेयः, चेयं चेयः।
यल् य-मत्वर्थे तद्धितः पूर्व्वोदात्तः। वेशोभाग्यः यशोभाग्यः।
यस् य मत्वर्थे तद्धितः सित्त्वात् पूर्व्वस्य पदत्वेन अनुस्वारादि शंयः शय्यँः कंयः कय्यँः।
युक् य् आगमः अन्त्यावयवः। आदायि स्थायी दायः। [दुर्योनम्
युच् यु-अन भावाद्यर्थे कृत् समुदायान्तोदात्तता। सुखानम्
युस् यु मत्वर्थे तद्धितः सित्त्वात् पूर्व्वस्य पदत्वेन अनुस्वारादि शंयुः शय्युँः कंयुः कय्युँः। ऊर्णायुः।

र

र र मत्वर्थादौ तद्धितः। कुञ्जरः मधुरः। स्वार्थे कुटीरः न प्रकृतिलिङ्गता।

शीलाद्यर्थे कृत्प्रत्ययः । हिंस्रः कम्प्रः नम्रः ।

रण् र यरयोऽर्थे तद्धितः वृद्धिः । अग्नीध्-आग्नीध्रम् ।

रदानुक् रदानु कर्तरि कृत् । कृत्--जीव-जीरदानुः ।

रिक् रि आगमः अन्तावयवः । कृ-चरिकरीति ।

रिङ् रि अन्तादेशः । कृ-क्रियते क्रिया ।

रिल् रि प्रथमाद्यर्थे तद्धितः अव्ययः पूर्व्वोदात्तः । उपरि ।

रिष्टातिल् रिष्टात् प्रथमाद्यर्थे तद्धितः पूर्व्वोदात्तः । उपरिष्टात् ।

रीक् री आगमः अन्तावयवः । कृ-चरीकरीति ।

रीङ् री अन्तादेशः । मात्रीकरोति धात्रीकरोति । [धारुः ।

रु र् आदेशः । हरिः अहः । रु शीलाद्यर्थे कृत्प्रत्ययः । दारुः

रुक् र् आगमः अन्तावयवः । कृ-चर्करीति ।

रुट् र् आगमः आद्यवयवः । शी—शेरते, सम्+विद्--संविद्रते ।

रूपप् रूप-माशस्त्ये तद्धितः अनुदात्तः । पटुरूपः पचतिरूपम् ।

रूप्य रूप्य भूतपूर्व्वसम्बन्धाद्यर्थे तद्धितः । कृष्णरूप्या गौः ।
  भवार्थे-समरूप्यः ।

र्हिल् र्हि सप्तम्यर्थे तद्धितः अव्ययः पूर्व्वोदात्तः । कर्हि तर्हि ।

ल

ल ल चक्षुःक्षेदार्थे तद्धितः न लित् । चिल्लः चुल्लः पिल्लः ।

लच् ल मत्वर्थे तद्धितः अन्तोदात्तः । चूडालः मांसलः अंसलः ।

ल्यप् य आनन्तर्य्यार्थे कृत् अव्ययः पूर्व्वोदात्तः । प्रभूय प्रकृत्य ।

ल्यु यु-अन कर्तरि कृत् पूर्व्वोदात्तः । नन्दनः विचक्षणः ।

ल्युट् यु-अन भावादौ कृत् पूर्व्वोदात्तः । भवनम् । स्त्रियां
  ङीप् । प्रमाथी ।

व

व व मत्वर्थे तद्धितः । केशवः गाण्डि(ण्डी)वः अजगवः । शंवः
  शव्वः कौमुदीमते वलादिरयम् न वयादिः ।

वति वत् क्रियादितुल्यार्थे तद्धितः अव्ययः । देवदत्तवत्
  पचति । रामवत् लक्ष्मणस्य चरितम् स्वर्गवत् वने वसति ।

वतुप् वत् परिमाणार्थे तद्धितः अनुदात्तः उगित्कार्य्यम् ।
  यावान् तावान् । किमः इदमश्च परस्य वस्य घस्तस्य इयः ।
  कियान् इयान् । [वस्य रश्च । धीवरी ।

वनिप् वन् भूते कर्तरि कृत् अनुदात्तः । यज्वा । स्त्रियां ङीप्

वय वय मानार्थे तद्धितः । द्वयम् ।

वरच् वर शीलाद्यर्थे कृत् समुदायान्तोदात्तः । स्थावरः ईश्वरः ।

वलच् वल चतुरर्थ्यां मत्वर्थे च तद्धितः अन्तोदात्तः । शिखावलः ।
  रजस्वला । [उपयट् उक्थदाः विश्वपाः ।

विच् वि तस्य लोपः कर्तरि कृत् समुदायान्तोदात्तः ।

विट् वि तस्य लोपः कर्तरि कृत् । अग्रेगाः उदधिक्राः ।

विडच् विड संहतार्थे तद्धितः अन्तोदात्तः । निविडम् ।

विधल् विध-विषयार्थे तद्धितः पूर्व्वोदात्तः । भौरिकिविधः ।

विनि विन् मत्वर्थे तद्धितः स्त्रियां ङीप् । तेजस्वी यशस्वी ।

विरीसच् विरीस संहतार्थे तद्धितः अन्तोदात्तः । निविरीसः ।

वुक् वु अक भवाद्यर्थे तद्धितः । कन्थिकम् । व् आगमः
  अन्तावयवः । भू—अभूवन् बभूव ।

वुच् वु-अक स्वार्थे तद्धितः अन्तोदात्तः । उपकः (उपेन्द्रदत्तकः)

वुञ् वु अक शीलाद्यर्थे कृत् वृद्ध्यादि । निन्दकः ।
  हिंसकः । समूहार्थे तद्धितः । औष्ट्रकम् औरभ्रकम्
  राजन्यकम् राजकम् ।

वुन् वु-अक साधुकार्य्यर्थे कृत् आद्युदात्तः । प्रवकः सरकः
  लवकः । वेदनादिकर्त्र्यर्थे तद्धितः । पटकः क्रमकः ।

व्यत् व्य-अपत्यार्थे तद्धितः स्वरितः । भ्रातृव्यः (भ्रातृपुत्त्रः) ।

व्यन् व्य सपत्नार्थे तद्धितः आद्युदात्तः । भ्रातृव्यः (रिपुः)
  भ्रातर्य्यर्थे तद्धितः । पितृव्यः (पितृभ्राता ।

श

श अ भावे कृत् स्त्रियाम् । कृ-क्रिया । कर्तरि कृत् च ।
  विद्—विन्दः । मत्वर्थे तद्धितः न शित् । रोमशः लोमशः ।

शङ्कटच् शङ्कट स्वार्थे तद्धितः अन्तोदात्तः । विशङ्कटः ।

शतृ अत् न गुणादि उगित्कार्य्यम् । पचन्तम् विदन् विदतौ ।

शध्यै(न्) अध्यै तुमर्थे कृत् नित्त्वे आद्युदात्तः । मदयध्यै पिबध्यै

शस् शस् वीप्साबोधके कारके तद्धितः अव्ययः । बहुशो ददाति ।

शाकट शाकट क्षेत्रेऽर्थे तद्धितः न शित् । इक्षुशाकटम् ।

शाकिन शाकिन क्षेत्रेऽर्थे तद्धितः न शित् । इक्षुशाकिनम् ।

शानच् आन कर्तृकर्म्मादौ कृत् समुदायान्तोदात्तः । पचमानः
  चीयमानः भूयमानम् । [यजमानः ।

शानन् आन शीलाद्यर्थे कर्तरि कृत् आद्युदात्तः । पवमानः

शालच् शाल वैपुल्ये तद्धितः अन्तोदात्तः । विशालः ।

श्तिप् ति धातुस्वरूपार्थे कृत् अनुदात्तः । भवतिः बिभर्त्तिः ।

ष

ष अ समासान्तः स्त्रियां ङीष् । द्विमूर्द्धः त्रिमूर्द्धः । [दीर्घसक्थ ।

षच् अ समासान्तः स्त्रियां ङीष् अन्तोदात्तः । पद्माक्षः

षड्गवच् षड्गव पशुषट्कार्थे तद्धितः अन्तोदात्तः ।
  गोषड्गवम् महिषषड्गवम् । [वराकः जल्पाकः ।

षाकन् आक-शीलाद्यर्थे कर्तरि कृत् स्त्रियां ङीष् आद्युदात्तः ।

षिकन् इक अध्येतर्य्यर्थे तद्धितः आद्युदात्तः स्त्रियां ङीष् ।
  शतपथिकः षष्टिपथिकः । [मनु-मानुषम् ।

षुक् ष् आगमः अन्तावयवः । जतु-जातुषम् त्रपु-त्रापुषम्

षेन्यण् एन्य आधानार्थे तद्धितः वृद्धिः आद्युदात्तः। सामिधेन्यः। स्त्रियां ङीष् सामिधेनी ऋक्।
षकन् क गच्छतीत्यर्थे तद्धितः आद्युदात्तः स्त्रियां ङीष्। [पथिकः।
ष्टरच् तर अल्पार्थे तद्धितः अन्तोदात्तः। वत्सतरः। स्त्रियां ङीष्, वत्सतरी।
ष्ट्रन् त्र करणाद्यर्थे कृत् आद्युदात्तः। योत्रम्। स्त्रियां क्वचित् ङीष्। नप्त्री। क्वचिन्न। दंष्ट्रा। [ङीष्। कुसीदिकः।
ष्ठच् ठ-इक गर्ह्यं प्रयच्छतीत्यर्थे तद्धितः अन्तोदात्तः स्त्रियां
ष्ठन् ठ-इक गर्ह्यं प्रयच्छतीत्यर्थे तद्धितः आद्युदात्तः स्त्रियां ङीष्। कुसीदिकः। चरतीत्यर्थे च। पर्पिकः। [आकर्षिकः।
ष्ठल् ठ-इक चरतीत्याद्यर्थे तद्धितः पूर्व्वमुदात्तम् स्त्रियां ङीष्।
ष्फ फ-आयन यञन्तात् तद्धितः स्त्रियां ङीष्। कात्यायनी कौरव्यायणी। [दात्तः। कापिशायनः।
ष्फक् फ-आयन भवाद्यर्थे तद्धितः वृद्धिः स्त्रियां ङीष् अन्तो-
ष्यङ् य-गोत्रार्थे तद्धितः षित्त्वेऽपि यङश्चाप्। क्रौड्या वाराह्या।
ष्यञ् य भावकर्म्मादौ तद्धितः वृद्धिः आद्युदात्तः। चातुर्य्यम्। स्त्रियां ङीष्। चातुरी।
ष्वञ् ल विकाराद्यर्थे तद्धितः वृद्धिः स्त्रियां ङीष्। मामीलम्।
ष्वुन् वु-अक कर्त्तरि कृत् आद्युदात्तः स्त्रियां ङीष्। नर्त्तकः रजकः।

स

स स चतुरर्थ्यां तद्धितः। तृणसः पर्व्वसः। प्राशस्त्ये तद्धितः। वत्सा।
सण् अ समूहार्थे तद्धितः वृद्धिः सित्त्वात् न भत्वम्। पार्श्वम् (परशुसंघः)। सण इत्यस्य सकारस्य इत्त्वाप्रसक्तेः वार्त्तिककृता तत्परिवर्त्तनेन षण् इति पठितम्।
सन् स इच्छार्थे धात्वंशप्रत्ययः। कृ-चिकीर्षति, गम्-जिगमिषति।
समसण् समम् वत्सरार्थे तद्धितः वृद्धिः अव्ययः। ऐषमः।
साति सात् कात्स्न्यैन सम्पद्याद्यर्थे तद्धितः अव्ययः। अग्निसात्-करोति।
सुक् स् आगमः अन्तावयवः। दधिस्सति। [त्रिःपचति।
सुच् स् क्रियावृत्तिगणने तद्धितः अव्ययः अन्तोदात्तः। द्विस्त्रि
से(न्) से तुमर्थे कृत् नित्त्वे आद्युदात्तः। वक्षे वक्तुमित्यर्थः।
सोढ सोढ दुग्धार्थे तद्धितः। अविसोढम् (अविदुग्धम्)।
स्कन्धच् स्कन्ध समूहार्थे तद्धितः अन्तोदात्तः। गजस्कन्धः।
स्न स्न मायख्ये तद्धितः। स्नुत्स्ना।
स्नञ् स्न अपत्याद्यर्थे तद्धितः वृद्धिः आद्युदात्तः। पौंस्नः।

ह

ह ह सप्तम्यर्थे तद्धितः अव्ययः। अस्मिन् इह, कस्मिन् कुह।

विभक्तिस्वरूपादिकं तु प्रसिद्धत्वान्न प्रदर्शितम्।
इति पाणिनीयप्रत्ययादिपरिनिष्ठित-
रूपादिविवरणम्।

---

अथाकारादिक्रमेण उणादिप्रत्ययपरिनिष्ठित-
रूपादिविवरणम्।

अ

अ अ। रिफ-रेफः (कुत्सितः)।
अकुच् अकु समुदायान्तोदात्तः। वच-वचकुः। (विप्रः वाग्मी च)
अङ्गच् अङ्ग समुदायान्तोदात्तः। पत-पतङ्गः तॄ-तरङ्गः। विडादिभ्यः तस्य कित्त्वं तेन न गुणः। विडङ्गः मृदङ्गः। कु-उत्त्वे कुरङ्गः। सॄ वृञ्भ्यां णित्त्वम्। सारङ्गः वारङ्गः।
अच् अ समुदायान्तोदात्तः। उद्+दृ-उदरम्।
अच अच। कु-कवचम्। [संप्रसारणं च। उचक्।
अजि अज्। पारि+अजि-पारक् (सुवर्णम्)। प्रयः कित्त्वं
अटच् अट समुदायान्तोदात्तः। भृ-भरटः।
अटन् अट आद्युदात्तः। शक-शकटः, कंकि-कङ्कटः।
अटि अट्। सृ-सरट्।
अठ अठ। कम-कमठः जॄ-जरठः। रम-वृद्धिः। रामठम्।
अण्डन् अण्ड समुदायान्तोदात्तः। कृ-करण्डः भृ-भरण्डः।
अतच् अत समुदायान्तोदात्तः। भृ-भरतः, सृ-सरत इत्यादि।
अति अत् शतृवत् उगित्कार्य्यम्। पृष-पृषन्ति। मह-महान् महती वृह-वृहन् वृहती।
अति अति। अम-अमतिः रम-रमतिः।
अलन् अल आद्युदात्तः। अम-अमलम्, यज-यजला।
अत्रिन् अत्रि नित् आद्युदात्तः। पत-पतत्रिः।
अथ अथ। शी-शयथः शप-शपथः रप-रपथ इत्यादि।
अदि अद्। शृ-शरद् दृ-दरद् भस-भसद्। त्यजादेः तस्य डित्त्वम्। त्यज-त्यद् तन-तद् यज-यद् सर्वनाम।
अन् अ नित् आद्युदात्तः। क्लिश-ललोपः केशः। [ऋष्यणिः
अनि अनि स्त्रियाम्। ऋ-अरणिः सृ-सरणिः धृ-धरणिः ऋष-
अनुङ् अनु गुणाभावादि। नद-नदनुः क्षिप-क्षिप्नुः। [शब्दम्।
अन्य अन्य। राज-राजन्यः (वह्निः)। शृ-शरण्यम् रम-रम-

अन्युच् अन्यु समुदायान्तोदात्तः । सृ-सरण्युः (मेघः वातश्च) ।
अप अप । सृ-पुक् च सर्षपः ।
अभच् अभ समुदायान्तोदात्तः । कॄ-करभः शॄ-शरभ इत्यादि ।
अम अम । कल-कलमः कर्द्द-कर्द्दमः अव-अवमः अध-अधमः ।
अमच् अम समुदायान्तोदात्तः । प्रथ-प्रथमः चर-चरमः ।
अम्बच् अम्ब समुदायान्तोदात्तः । कृ-करम्बः कद-कदम्बः ।
अयु(यू) अयु(यू) । सृ-सरयुः सरयूर्वा ।
अर(च्) अर । क-अररस् कर्क-कर्करा जर्ज-जर्जरः । चित्त्वे मध्यान्तोदात्तः । अव-अवरः । [हट्च अन्तः।
अरन् अर आद्युदात्तः । प्र+आ+अत-प्रातः । अमः
अरु अरु । ऋ-अररुः ।
अल् अ पूर्वोदात्तः । उद्+ऋ-उदरम् ।
अलच् अल समुदायान्तोदात्तः । मगि-मङ्गलम् ।
अलिच् अलि समुदायान्तोदात्तः । अञ्ज-अञ्जलिः ।
अवक अवक । स्था-तादेशः कित्त्वं च स्तवकः ।
अस अस । अर्पि-अर्पसः (अप्समांसम्) ।
असच् अस समुदायान्तोदात्तः । अत-अतसः चम-चमसः ।
असानच् असान समुदायान्तोदात्तः । ऋ-ऋरसानः जॄ-जरसानः
असि अस् । सु+तप-सुतपाः, जात+विद-जातवेदाः ।
असि असि । मन-मानसिः नि० वृद्धिः । वृ-तुक् वर्तसिः ।
असुन् अस् आद्युदात्तः । चित-चेतः सृ-सरः तप-तपः ।

आ

आ आ अव्ययः । वि+सो-विषा (बुद्धिः)। वि+ष्टा-विष्टा (स्वर्गः) । [पताका ।
आक आक । खज-खजाका बल-बलाका शल-शलाका पत-
आगूच् आगू समुदायान्तोदात्तः । यु-यवागूः ।
आय्यक आय्यक । लू-लवाय्यकः धू-धवाय्यकः ।
आतु आतु । जीव-जीवातुः ।
आतृकन् आतृक आद्युदात्तः । जीव-नि० वृद्धिः जैवातृकः ।
आनक आनक । भी-भयानकः भी-भयानकः ।
आनच् आन समुदायान्तोदात्तः । सम्+स्तु+संस्तवानः । युध-कित् युधानः, एवं लुभ-लुभानः बुध-बुधानः ।
आलुक् आलु गुणाभावः । दय-दयालुः ।
आन्य आन्य । वद-वदान्यः ।
आय्य आय्य । स्पृहि-स्पृहयाय्यः ।
आरन् आर आद्युदात्तः । अगि-अङ्गारम्, मद-मदारः ।
आल आल । मल्ल-यलोपः लस्य लादेशे मरालः ।
आलच् आल समुदायान्तोदात्तः । स्था-स्थालं स्थाली ।
आलञ् आल वृद्धिः आद्युदात्तः । चत-चातलः चात्वालः पत-पातालम् चडि-चण्डालः ।
आलीयच् आलीय समुदायान्तोदात्तः । मृज-मार्जालीयः ।
आस आस । यु-यवासः (दुरालभा) ।
आसि आस् । दृश-अयाः अव्ययः । (वह्निः) ।

इ

इ इ । रु-रविः कु-कविः पु-पविः ऋ-अरिः कॄ-किश्च । किरिः, एवं गॄ-गिरिः ।
इकन् इक आद्युदात्तः । क्री क्रयिकः । आ+पण-आपणिकः । आ+पत-आपतिकः ।
इजि इज् । पण-पक्षवादेशः वणिक् । वश-कित् उशिक् ।
इञ् इ वृद्धिः आद्युदात्तः स्त्रियां वा ङीप् । वप वापिः वापी । यज-याजिः याजी । वस-वासिः वासी ।
इण् इ वृद्धिः । जन-जनिः अज-आजिः अत-आतिः ।
इत इत । कुश-कुशितः (जनपदः) । [पलितम् ।
इतच् इत प्रकृतिप्रत्ययसमुदायान्तोदात्तः । फलः फलपादेशः
इतन् इत आद्युदात्तः । हृ-हरितः श्यै-श्येतः ।
इति इत् । सृ-सरित् हृ-हरित् रुह-रोहित् युष-योषित् ।
इत्नुच् इत्नु-समुदायान्तोदात्तः । स्तनि-स्तनयित्नुः ।
इत्र इत्र । अश-अशित्रम् वह-वहित्रम् धृ-धरित्री ।
इत्वन् इत्व आद्युदात्तः । जन-जनित्वः ।
इथिन् इथि आद्युदात्तः । अत-अतिथिः ।
इन् इ आद्युदात्तः । पच-पचिः बल-बलिः यज-यजिः ।
इनच् इन समुदायान्तोदात्तः । श्यै-श्येनः, हृ-हरिणः, स्त्यै-स्त्येनः, अव-अविनः ।
इनण् इन वृद्धिः । मह-माहिनम् ।
इनन् इन आद्युदात्तः । द्रु-द्रविणम् दक्ष-दक्षिणः-दक्षिणा ।
इनि इन् । गम-गमी । आङि णित् । आगामी । [धृ-धरिमा ।
इमनिच् इमन् समुदायान्तोदात्तः । हृ-हरिमा सृ-सरिमा
इमनिन् इमन् आद्युदात्तः । जन-जनिमा भृ-भरिमा ।
इलच् इल-समुदायान्तोदात्तः । सल-सलिलम् कल-कलिलम्
इ(ष्ट)ष्ठच् इ(ष्ट)ष्ठ समुदायान्तोदात्तः । अञ्ज-अञ्जि(ष्टः)ष्ठः ।
इष्णुच् इष्णु-समुदायान्तोदात्तः । गै-गेष्णुः दा-देष्णुः ।
इसन् इस आद्युदात्तः । अर्पि-अर्पिसः (अप्समांसम्) ।
इसि इस् । अर्च-अर्चिः शुच-शोचिः हु-हविः सृप-सर्पिः ।
इसिन् इस् आद्युदात्तः । द्युत आदेशः ज्योतिः ।

ई

ई ई । अव-अवीः तॄ-तरीः स्तॄ-स्तरीः तन्त्रि-तन्त्रीः ।

ईकन् ईक आद्युदात्तः । कष-कषीका, दूषि-दूषीका ।
ईचि ईचि । मृ-मरीचिः कण-कणीचिः ।
ईद ईद । कुस-कुसीदम् । [धृ-धरीमा ।
ईमनिच् ईमन् समुदायान्तोदात्तः । हृ-हरीमा सृ-सरीमा
ईरच(न्) ईर चित्वे समुदायान्तोदात्तः नित्वे आद्युदात्तः ।
शिंशीरः । [(फलम्) ।
ईरन् ईर-आद्युदात्तः । कॄ-करीरः शॄ-शरीरम् पॄ-परीरम्
ईषन् ईष आद्युदात्तः । कॄ-करीषम् तॄ-तरीषः ।

उ

उ उ । भृ-भरुः शी-शयुः मृ-मरुः तॄ-तरुः चर-चरुः ।
उकन् उक आद्युदात्तः । सम्+कस-सङ्कसुकः ।
उडच् उड समुदायान्तोदात्तः । गॄ-गरुडः । [खाडुः ।
उण् उ वृद्ध्यादि । कृ-कारुः पा-पायुः वा-वायुः स्वद-
उति उत् । मृ-मरुत् गॄ-गरुत् ।
उल उल । लू-लोलम् वृ-वरुलम् ।
उन उन । शक-शकुनः । [दारि-दारुणः ।
उनन् उन आद्युदात्तः । कॄ-करुणः करुणा । वृ-वरुणः,
उनसि उनस् । दम-दमुनाः ।
उनि उनि । शक-शकुनिः ।
उन्त उन्त । शक-शकुन्तः ।
उन्ति उन्ति । शक-शकुन्तिः ।
उम उम । कुस-कुसुमम् ।
उम्भ उम्भ । कुस-कुसुम्भम् । [चत-चतुरः ।
उरच् उर समुदायान्तोदात्तः । मन्द्-मन्दुरा, मथ-मथुरा,
उरन् उर आद्युदात्तः । अस-असुरः, मस-मसुरा ।
उरिन् उरि आद्युदात्तः । जस-जसुरिः सङ्-सङ्गुरिः ।
उल उल । तडि-तण्डुलः ।
उलच् उल समुदायान्तोदात्तः । कुर्द-कुर्दुलः चट-चटुलः ।
उलन् उल आद्युदात्तः । वृ-वरुणः ताडि-तण्डादेशः तण्डुलः ।
उलि उलि । अगि-अङ्गुलिः ।
उशच् उश समुदायान्तोदात्तः । अकि-अङ्कुशः । [कलुषः ।
उषच् उष समुदायान्तोदात्तः । पॄ-परुषः नह-नहुषः कल-
उ(ऊ)षन् उ(ऊ)ष आद्युदात्तः । मृ-मरु(रू)षः ।
उसि उस । जन-जनुः । अस नि० उदन्तत्वमपि ।
उसिन् उस् आद्युदात्तः । ऋ-अरुः, पॄ-परुः, वप-वपुः ।

ऊ

ऊ ऊ । कष-कषूः चम-चमूः तन-तनूः ।
ऊक ऊक । मृ-मरूकः, वल-वलूकः मडि-मण्डूकः ।
ऊकण् ऊक वृद्ध्यादि । कण-काणूकः, शल-शालूकम्,
ऊख ऊख । मा-मयादेशः मयूखः ।
ऊथन् ऊथ आद्युदात्तः । जॄ-जरूथम्, वृ-वरूथः ।
ऊम ऊम । गुध-गोधूमः ।
ऊर ऊर । खर्ज-खर्जूरः, कप-कर्पूरः, वल्ल-वल्लूरम् ।
ऊरन् ऊर आद्युदात्तः । मी-मयूरः । स्यन्द-सम्प्रसारणम्
सिन्दूरम् । मस-मसूरा ।
ऊलच् ऊल समुदायान्तोदात्तः । पिजि-पिञ्जूलम्, कुस-
कुसूलः ।

ऋ

ऋ ऋ । दिव-देवा देवरौ ।
ऋतिन् ऋत् आद्युदात्तः । शक-शकृत् । [ननन्दा ननन्दरौ ।
ऋन् ऋ आद्युदात्तः । सु+अस-स्वसा स्वसारौ । न+नन्द-

ए

एणु एणु । कॄ-करेणुः, हृ-हरेणुः ।
एन्य एन्य । वृ-वरेण्यः । [गुडेरः ।
एरक् एर गुणाभावादि । पत-पतेरः, कुठ-कुठेरः, गुड-
एलिमच् एलिम समुदायान्तोदात्तः । पच-पचेलिमः ।
एष्णुक् एष्णु गुणाभावादि । गै-गेष्णुः ।

ओ

ओतच् ओत समुदायान्तोदात्तः । कवः पादेशः कपोतः ।
ओलच् ओल समुदायान्तोदात्तः । पट-पटोलः । कपि-
नलोपः कपोलम् ।
ओरन् ओर आद्युदात्तः । कठ-कठोरः, चक-चकोरः ।

क

क क गुणाभावादि । स्रु-स्रुवः । वि+आ+घ्रा-व्याघ्रः ।
क क वकारप्रश्लेषात् न कित् । कृ-कर्कः रा-राका कल-कल्कः ।
कक् क अन्तकित्त्वेन नादेः कित्त्वम् । वृ-वृकः, भू-भूका ।
कङ्कण कङ्कण वकारप्रश्लेषात् न कित् । खड-खडङ्कणः (शिशुः)
काण काण वप्रश्लेषात् न कित् । चित-कान्तादेशः गुणाभावश्च
नि० चिक्कणः ।
कतु अतु गुणाभावादि । कृ-कतुः । [(वक्रपुच्छकरः) ।
कलिच् अलि गुणाभावादि समुदायान्तोदात्तः । ऋ-रलिः
कनन् अन गुणाभावादि आद्युदात्तः । सु+विद-सुविदनम् ।
कन् अ गुणाभावादि आद्युदात्तः । क्लिश-नि० कीनाशः ।
कन् क वप्रश्लेषात् न कित् आद्युदात्तः । इण-एकः भी-भेकः
कनसि असस् गुणाभावादि । वश-उशनाः ।
कनिन् अन् गुणाभावादि आद्युदात्तः । यु-युवा, श्व-श्वा ।

कन्यन् अन्य कित् आद्युदात्तः । हर्य्-हिरादेशः हिरण्यम् ।
कन्युच् अन्यु गुणाभावादि समुदायान्तोदात्तः । क्षिप-क्षिपण्युः
कप अप गुणाभावादि । कण-संप्रसारणं कुणपः (शवः) ।
कपन् अप गुणाभावादि आद्युदात्तः । उष-उषपः कुट-कुटपः।
कमिन् अम् कित् आद्युदात्तः । इदि-नलोपः, इदम् सर्वनाम
कयन् अय गुणाभावादि आद्युदात्तः । तन-तनयः ।
करन् कर न कित् आद्युदात्तः । शृ-शर्करा ।
कल अल गुणाभावादि । तप-तपला, तफ-तफला ।
कलन् कल न कित् आद्युदात्तः। पुष-पुष्कलः।
काकु आकु गुणाभावादि । कट-कटाकुः कुण-कुणाकुः (सूर्यः)।
कालन् आल गुणाभावादि आद्युदात्तः । बिड-बिडालः ।
किकन् इक कित् आद्युदात्तः । व्रश्च-वृश्चिकः क्षप-क्षपिकः ।
कितच् इत कित् समुदायान्तोदात्तः । रुच-रुचितं वच-उचितम् । [पुलिन्दः ।
किन्दच् इन्द कित् समुदायान्तोदात्तः । कुल-कुलिन्दः पुल-
किरच् इर कित् समुदायान्तोदात्तः । इष-इषिरः ।
किष्यन् इष्य कित् आद्युदात्तः । रुच-रुचिष्यः भुज-भुजिष्या ।
कीकन् ईक कित् आद्युदात्तः । ऋज-ऋजीकः मृड़-मृड़ीकः ।
कीटन् ईट कित् आद्युदात्तः । कृ-किरीटं तृ-तिरीटम् ।
कु उ गुणाभावादि । पृ-पुरुः भिद-भिदुः व्यध-विधुः ।
कुक् कु अन्त्यकित्त्वादादिकित्त्वम् । ह्री-ह्रीकुः ।
कुकन् उक गुणाभावादि आद्युदात्तः। प्रथ-संप्रसारणम् पृथुकः
कुयन् उय गुणाभावादि आद्युदात्तः । पृ-पुरुयः ।
कू ऊ गुणाभावादि । ऋत-ऋतूः ऋध-ऋधूः ।
केय्य एय्य गुणाभावादि । स्तु स्तुवेय्यः (वेदे एवायम्) ।
क्त त गुणाभावादि । अञ्च-अक्तः ए-एतम् सृ-सृतम् ।
क्तु, त्रु गुणाभावादि । जि-जत्रुः हन-हत्रुः ।
क्त्र त्र गुणाभावादि । अम-अम्त्रं चि-चित्रं मिद-मित्रम् ।
क्थन् थ गुणाभावादि आद्युदात्तः । हन-हथः कुष-कुष्ठः ।
क्थिन् थि गुणाभावादि आद्युदात्तः । अस-अस्थि सक-सक्थि
क्न न गुणाभावादि । तृह-हलोपः तृणम् । [लू-लूनिः ।
क्निन् नि कित् स्त्रियां आद्युदात्तः न ङीप् । वृ-वृणिः ।
क्मलन् मल कित् आद्युदात्तः । कुट-कुट्मलम् कष-कष्मलम् ।
क्यु यु-अन गुणाभावादि । कॄ-किरणः पॄ-पुरणः ।
क्युट् यु-अन गुणाभावादि आद्युदात्तः । ऋ-उत् उरणः ।
क्युन् यु-अन गुणाभावादि समुदायान्तोदात्तः । भू-भुवनम् ।
क्रन् र कित् आद्युदात्तः । सु-सुरः सू-सूरः धा-धीरः ।
क्रच् रर गुणाभावादि समुदायान्तोदात्तः । कु-कुररः ।

क्रि रि गुणाभावादि । सृ-सूरिः ।
क्रिन् रि गुणाभावादि आद्युदात्तः । अद-अद्रिः भू-भूरिः ।
शुभ-शुभ्रिः ।
क्रुकन् रुक गुणाभावादि आद्युदात्तः । भी-भीरुकः । [शलुः ।
क्लन् रु गुणाभावादि आद्युदात्तः । रु-रुरु: शलि-
क्ल ल गुणाभावादि । मू-मूलम् शक-शक्लः अम-अम्लः ।
क्वन् व गुणाभावादि आद्युदात्तः । अश-अश्वः पुष-पुष्वः ।
क्वनिप् वन् गुणाभावः अनुदात्तः । ग्री-ग्रीवा कुष-कुष्वा ।
क्विन् वि, इकारादेशानुनासिकत्वाभावाच्च लोपः । कृ-कीर्विः
गृ-गीर्विः जागृ-जागृविः ।
क्विप् वि तस्य लोपः अनुदात्तः कित् । वच-दीर्घः वाक् ।
क्वुन् वु-अक कित् आद्युदात्तः । चर-चरकः ।
क्सरन् सर कित् आद्युदात्तः । तन-तसरः, कृष-कृत्सरः ।
क्सि सि गुणाभावादि । प्लुष-प्लुक्षिः, कुष-कुक्षिः, शुष-शुक्षिः
क्सु सु गुणाभावादि । इष-इक्षुः ।
क्स्न स्न गुणाभावादि । कृत्-कृत्स्नम्, अश-अक्ष्णम् ।

ख

ख ख वकारप्रश्लेषात् न खित् । गम-गङ्गः मुह-मुरादेशे मूर्खः ।

ग

ग ग वकारप्रश्लेषात् न गित् । गृ-गर्गः ।
गक् ग वकारप्रश्लेषात् न गित् गुणाभावादि । मुद-मुद्गः ।
गण् ग वकारप्रश्लेषात् न गित् वृद्ध्यादि । शृ-लुट् शार्ङ्गः ।
गन् ग वकारप्रश्लेषात् न गित् आद्युदात्तः । गम-गङ्गा ।

घ

घथिन् थि कुत्वम् आद्युदात्तः । नि+सञ्ज+निषङ्गथिः ।

च

चट् च वप्रश्लेषाच्च चित् स्त्रियां ङीप् । कु-दीर्घः कूची ।
चतु अत समुदायान्तोदात्तः । एध-एधतुः, वह-वहतुः ।
चिक् च् वकारप्रश्लेषात् न चित् गुणाभावादि । स्नु-स्नुक् स्नुचौ

झ

झच् झ-अन्त समुदायान्तोदात्तः । जॄ-जरन्तः विश-वेशन्तः ।
झिच् झि अन्ति तेन न झित् समुदायान्तोदात्तः । भू-भवन्तिः ।

ञ

ञुन् उ वृद्ध्यादिः आद्युदात्तः । दॄ-दारु, सन-सानु ।

ट

ट(न्) अ स्त्रियां ङीप् । नित्त्वे आद्युदात्तः । दनुष-नस्य
आ दायः, दनुष-दाषः । [मह-महिषः ।
टिषच् इष समुदायान्तोदात्तः स्त्रियां ङीप् । अव-अविषः

ठ

ठ ठ बमश्लेषात् न ठित् । कष-कष्ठः ।

ड

ड अ अभत्वेऽपि टिलोपः । अर्णु-अर्णा ।

ड ड बमश्लेषात् न डित् । कुष-कुण्डम्, गु-गुडः ।

डउ अउ अभत्वेऽपि टिलोपः । तन-तन्वत् तितउः डउ
इत्यसन्धिनिर्देशान्न सन्धिः ।

डट अट अभत्वेऽपि टिलोपः । नम-नटः ।

डति अति अभत्वेऽपि टिलोपः । पा-पतिः । [भवती ।

डवतुप् अवतु टिलोपः उगित्कार्य्यम् अनुदात्तः । भा-भवान्

डिमि इम् टिलोपः । कै-किम् । अस्य इदमच मान्तत्वेन
कृन्मेजन्तइत्यव्ययत्वप्रसक्तेऽपि द्विरव्ययमिति नियमादुणादौ
द्विप्रत्ययान्तत्वे एवाव्ययत्वं नान्यथा ।

डुतच् उत टिलोपः समुदायान्तोदात्तः । अद्+भू-अद्भुतम् ।

डुन् उ टिलोपः आद्युदात्तः । स्वन्+श्वी-स्वश्वुः, न+श्वी
नश्वुः । [वार्त्तिकोऽयं प्रत्ययः ।

डुमसुन् उमस् टिलोपः आद्युदात्तः । पा-पुमान्, पुंसः ।

डु ऊ टिलोपः । भ्रम-भ्रूः । [डिमिप्रत्यये ।

डै ऐ टिलोपः । रा-रै-राः रायौ । यथा नाव्ययत्वं तथोक्तं

डैसि ऐस् टिलोपः । उद्+चि-उच्चैः नि-दीर्घः नीचैः ।

डो ओ टिलोपः । गम-गो-गौः, गवा । नाव्ययत्वमुक्तम् ।

डोसि ओस् टिलोपः । दम्-दोः दोषौ दोषः ।

डौ औ टिलोपः । ग्लै-ग्लौः नुद्-नौः नाव्ययत्वमुक्तम् ।

ड्रट् र टिलोपः स्त्रियां ङीप् । सै-स्त्री ।

ड्रि रि टिलोपः । ह्र-त्रि-त्रयः ।

ढ

ढ ढ बमश्लेषात् न ढित् । षम-षण्ढः ।

ण

णित्वन् इत्व वृद्धिः आद्युदात्तः । भू-भावित्वं वद-वादित्वम् ।

णु णु बमश्लेषान्न णित् । स्था-स्थाणुः अज-वेणुः वृ-वर्णुः

णुकन् उक वृद्ध्यादि आद्युदात्तः । पच-कादेशे पाकुकः ।

ण्य यत बमश्लेषात् न णित् । छ्म अकारस्य इत्वं धिष्ण्यम् ।

त

त त । श्री-इट् ह्रस्वः श्रितम् (श्वेतम्) ।

तकन् तक आद्युदात्तः । इष-इष्टका, अश-अष्टका ।

तन् त आद्युदात्तः । हस-हस्तः, मृ-मर्त्तः, गृ-गर्त्तः ।

तनन् तन आद्युदात्तः । वी-वेतनम् ।

तशन् तश आद्युदात्तः । इण-एतशः (ब्राह्मणः) ।

तशसुन् तशस् आद्युदात्तः । इण-एतशाः (विप्रः) ।

ति ति । वि+तस-वितस्तिः सु+अस-स्वस्ति स्वरादिः ।
स्वरपाठे स्वस्तीतिनिर्देशात् न भूभावः । [कृत्तिका ।

तिकन् तिक आद्युदात्तः । वृत-वर्तिका । कृत-कित्तम्-

तु तु । कम-कन्तुः जन-जन्तुः गै-गातुः हि-हेतुः ।

तुन् तु आद्युदात्तः । हि-हेतु-ः तन-तन्तुः मन-मन्तुः ।

तृच् तृ समुदायान्तोदात्तः । वद-वक्ता मन्-मन्ता ।

तृन् तृ आद्युदात्तः । शंस-शंस्ता ।

त्नण् त्न वृद्ध्यादि । च्यु-च्यौत्नः । (अश्वजः, चौत्यपुत्रस्य ।

त्नुक् त्नु-गुणाभावादि । कृ-कृत्नुः ।

त्र त्र । गु-गोत्रं गोत्रा । वच-वक्त्रं यम-यन्त्रम् ।

त्रन् त्र आद्युदात्तः । हु-होत्रम् या-यात्रा श्रु-श्रोत्रम् ।

त्रिन् त्रि आद्युदात्तः । अद-अत्त्रिः ।

त्रिन् त्रिन् आद्युदात्तः निर्देशात् न नित् । अद-अत्त्री
अत्त्रिणौ ।

त्रिप् त्रि-अनुदात्तः । रा-रात्रिः यद-यत्त्रिः (इन्द्रो) ।

त्वन् त्व आद्युदात्तः । दात्वः (दाता) ।

थ

थक् थ गुणाभावादि । पृष-पृष्ठं यू-यूथं गू-गूथम् ।

थन् थ आद्युदात्तः । उष-ओष्ठः कुष-कोष्ठम् गा-गाथा ।

द

द द । भा-भादः (जम्बालः शस्यञ्च) ।

दन् द आद्युदात्तः । शप-शब्दः अब-अब्दः ।

ध

धुक् धु गुणाभावादि । सी-सीधु ।

न

न न । धा-धाना (भृष्टयवः) पृ-पर्णम् वस-वस्नः ।

नक् न गुणाभावादि । इण-इनः । सि-सिनः ।

नि नि । वी-नि॰ णत्वं वेणिः । ज्या-ज्यानिः ।

नु नु । दा-दानुः भा-भानुः ।

प

प प । पा-पापम् । नी-नेपः नि॰ नीपः । विष-विष्पम् ।

पास पास । कृ-कर्पासः ।

फ

फक् फ गुणाभावादि । कल-अत्थोत्वं कुल्फः गल-गुल्फः ।

भ

भ भ । दृ-दर्भः दल-दल्भः (ऋषिविशेषः) ।

भन् भ आद्युदात्तः । ऋ-अर्भः गृ-गर्भः ।

म

मक् म गुणाभावादि । इष-इष्मः युध-युध्मः भी-भीमः ।
मदिक् मद् गुणाभावः । युष्-युष्मद्-त्वम् । अस-अस्मद्-अहम् सर्वनाम ।
मन् म आद्युदात्तः । ऋ-अर्मः स्तु-स्तोमः सु-सोमः ।
मनि मन् । सु+शॄ-सुशर्मा ।
मनिण् मन् वृद्धिः । अत-आत्मा ।
मनिन् मन् आद्युदात्तः । सो-साम ऊ-कर्म वृ-वर्म ।
मि मि । नी-नेमिः भू-कित् भूमिः ।
मिनि मिन् । हु-होमी ।
मुक मुक । उष-लान्तादेशः गुणाभावः उलमुकः । (ज्वलदङ्गारम्) ।

य

य य । शल-शल्यम् ।
यक् य गुणाभावः । जन-जन्यं (युद्धम्) जन्या वधूः ।
यत् य स्वरितः । युज-युक् युग्यम् धा-हुक् धान्यम् ।
यतुच् यत् समुदायान्तोदात्तः । तन-तन्यतुः ।
युक् यु गुणाभावः । भुज-भुज्युः (भोजनम्) । [जन्युः ।
युच् यु न अनादेशः समुदायान्तोदात्तः । मन-मन्युः जन-
युन् यु-अन आद्युदात्तः । इन-आद्यन्तयोर्घतौ घतनः ।

र

र र । रीङ्-हस्वः युट् च रिप्रम् (कुत्सितम्) ।
रक् र गुणाभावः । स्फाय-स्फारम् । क्षिप-क्षिप्रम् क्षुप-क्षुम्रः ।
रन् र आद्युदात्तः । इदि-इन्द्रः वज-वज्रः । भी-भेरः ।
रु रु । मी-मेरुः पी-पेरुः पा-पारुः । जत-जत्रुः ।

ल

लक् ल कित् । शी-शीलम् ।

व

व व । कृ-कर्वः गॄ-गर्वः शॄ-शर्वः बभादिरित्येके ।
वन् व आद्युदात्तः । इष-इव, स्वरादिः । शी-शेवः ।
वन् वन् न नित्त्वं ज्ञापकात् । ऋ-अर्वा (कुत्सितः) ।
वनिप् वन् अनुदात्तः । ष्णा-स्नावा ऋ-अर्वा (तुरङ्गगर्ह्यायोः) ।
वरट् वर स्त्रियां ङीप् । अश-उपधाया ईत्त्वम् ईश्वरः ।
वलच् वल समुदायान्तोदात्तः । इल-इल्वलः पल-पल्वलः ।
वलञ् वल वृद्धिः । शी-शैवलः । [दरादित्वात् शैवालम् ।
वालञ् वाल वृद्धिः आद्युदात्तः । शी-शैवालः । पृषो-
वालन् वाल आद्युदात्तः । शी-शेवालः नि० वस्य पः, शेपालम् ।
वि वि ज्ञापकदस्य न लोपः । दृ-दर्विः बभादिरित्येके ।
विन् वि-अनुदात्तत्वप्रतिज्ञाभावात् नास्य इदित्त्वं तेन न विलोपः । दृ-दर्विः । बभादिरित्येके ।
वुन् वु अक-आद्युदात्तः । कृ-करकः करका ।

श

शक् श वकारप्रश्लेषात् न मित् गुणाभावः । इ-वृशः ।
शुन् शु आद्युदात्तः । स्पृश-पृभावः पर्शुः (आयुधम्) ।
श्वण् श्व वृद्धिः । स्पृश-पृभावः पार्श्वः ।

ष

षवन् अव आद्युदात्तः स्त्रियां ङीष् । प्रथ-संप्रसारणे पृथवी ।
षिवन् इव आद्युदात्तः स्त्रियां ङीष् । प्रथ-सम्प्रसारणे पृथिवी
ष्ट्रन् त्र-आद्युदात्तः । वस-वस्त्रं शस-शस्त्रम् अस-अस्त्रम्
स्त्रियां ङीष् । नद्ध्री । [शॄ-शर्वरी ।
ष्वरच् वर समुदायान्तोदात्तः स्त्रियां ङीष् । इ-वर्वरः

स

स स । वृ-वर्षम् । तृ-तर्षः । वस-वत्सः । हन-हंसः ।
सन् स आद्युदात्तः । कम-कंसः ।
सरन् सर आद्युदात्तः । अश-अक्षरम् । वस-वत्सरः ।
सिकन् सिक आद्युदात्तः । हन-हंसिका (हंसयोषित्) ।
स्मन् क्म आद्युदात्तः । सूच-सूक्ष्मम् ।
स्तु स्तु । मद-मत्स्यः ।
स्यन् स्य आद्युदात्तः । मद-मत्स्यः ।

इत्युणादिप्रत्ययस्वरूपादिप्रदर्शनम् ।

---

## शब्दविभागनियमादि ।

शब्दास्तावत् चतुर्विधाः रूढयौगिकयोगरूढपारिभाषिकभेदात् । यत्र अवयवशक्तिमनपेक्ष्य समुदायशक्त्या कस्यचिद्विशिष्टार्थस्य बोधः ते रूढाः । यथा आखण्डलमण्डपघटादयः तत्र अवयवार्थाबोधनेनैव समुदायेन विशिष्टार्थस्य बोधनात् ।

द्रव्यगुणक्रियासम्बन्धरूपावयवार्थयोगेन तत्तद्विशिष्टार्थबोधका यौगिकाः । यथा धनवान् दण्डी रूपवान् रसवान् पाचकः गन्तेत्यादयः । तेषाञ्च धनादिद्रव्यस्य, रूपरसादिगुणस्य, पाकादिक्रियायाश्च संबन्धस्य यथाक्रमं बोधकता । एवञ्च प्रकृतिप्रत्ययाभ्यां तत्तदर्थयोरुपस्थापकत्वेन तद्योगरूपसम्बन्धविशिष्टस्य बोधकत्वात् तेषां यौगिकत्वम् । यौगिका अपि कृदन्ततद्धितान्तसमासजभेदात् त्रिविधाः । तत्र पाचकादयः कृदन्ताः, काशादयः तद्धितान्ताः, राजपुरुषादयः समासजाः । तत्रायं विशेषः कृदन्ताः

क्रियासम्बन्धमात्राभिधायकाः तथा हि पाचक इत्यादौ धातुना पाकस्य, ण्वुलादिना कर्त्रादेर्बोधनात् विशिष्टार्थबोधकत्वेन क्रियासम्बन्धबोधकत्वम् ।

तद्धितान्तास्तु द्रव्यगुणक्रियासम्बन्धाभिधायकाः । तत्र धनवान् दण्डीत्यादौ द्रव्यसम्बन्धस्य, रूपवान् रसवान् ज्ञानवान् इत्यादौ रूपादिगुणसम्बन्धस्य, गतिमान् क्रियावान् स्पन्दनवानित्यादौ च गत्यादिक्रियासम्बन्धस्य मतुबादिभिर्बोधनात् तथात्वम् । तत्र सम्बन्धाश्च नानाविधाः स्वस्वामिभावादिरूपाः, तत्तत्प्रकृत्योपात्ततत्क्रियाकारकादिभावादिरूपाश्च तत्र धनवानित्यादौ स्वस्वामिभावादिः । काषायः लाक्षिक इत्यादौ रञ्जनकर्म्म, शाब्दिक इत्यादौ वेदनकर्म्म, पञ्चगुरित्यादौ क्रयकर्म्म, पथिक इत्यादौ गमनकर्त्ता, इत्येवमादयोऽर्थाः ष्णादिप्रत्ययेन बोध्यन्ते ।

समासजा अपि द्रव्यगुणक्रियासम्बन्धबोधकभेदेन प्रथमं त्रिविधाः । तत्रापि द्रव्ययोः, द्रव्यगुणयोः, द्रव्यक्रिययोः, गुणयोः, गुणक्रिययोः, क्रिययोश्च सम्बन्धबोधकत्वेन ते पुनः षड्विधाः । तत्र राजपुरुषः राजधनमित्यादौ द्रव्ययोः, पटरूपं विप्रज्ञानमित्यादौ द्रव्यगुणयोः, रथगतिः, पादक्रियेत्यादौ द्रव्यक्रिययोः, नीललोहितः कृष्णरक्त इत्यादौ गुणयोः, गतिरोधः, भोजनज्ञानमित्यादौ गुणक्रिययोः, स्नातानुलिप्तः पक्वभुक्त इत्यादौ क्रिययोश्च सम्बन्धस्य साक्षात्, परम्परया वा बोधनात् तथात्वम् ।

तत्र कृतः, तद्धिताः समासाश्च नानाविधाः तेषां स्वरूपभेदाः अर्थविशेषाश्च व्याकरणत एवावगन्तव्याः ।

यत्र अवयवशक्त्या प्रकृतिप्रत्ययार्थयोरुपस्थापनेन तद्योगविशिष्टस्य समुदायशक्त्या रूढ्या वृत्त्या कस्यचित् पदार्थस्य बोधनं ते योगरूढाः । यथा पङ्कजमनोजादयः, ते च अवयवशक्त्या उपस्थापितेन पङ्कजनिकर्तृत्वरूपेणार्थेन सहितस्य रूढ्या वृत्त्या पद्मत्वादिविशिष्टस्य बोधनात् योगरूढाः । तेन पङ्कजशब्दादितः न कुमुदादीनां बोधः ।

अन्ये तु पङ्कजनिकर्तृत्वरूपार्थस्य कुमुदादिषु सद्भावेऽपि पङ्कजशब्दप्रयोगे पद्मत्वस्योपाधिरिति प्रयोगनियमेन पद्मत्वादिकस्य तत्र उपाधित्वमङ्गीकृत्य न कुमुदादिषु तत्प्रयोगस्तथाच पङ्कजादिशब्दादीनां यौगिकेष्वेवान्तर्भाव इत्यूरीचक्रुः ।

वैयाकरणास्तु समासनिष्पन्नानामपि शब्दानाम्

"समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।"

इति पङ्कजशब्दवत् योगरूढत्वमेव स्वीचक्रुः ।

समासानां सम्बन्धवाचकत्वेऽयं विशेषः दिङ्नामविकल्पार्थकभिन्नबहुव्रीहेर्भेदसम्बन्धवाचकत्वम् । यथा पीताम्बरः बहुधनः इत्यादयः पीताम्बरादिभेदसम्बन्धवाचकाः । दिङ्नामसमासे उत्तरपूर्व्वा पूर्व्वदक्षिणेत्यादौ, द्वित्रा पञ्चषा इत्यादौ विकल्पार्थकसमासे च न भेदसम्बन्धबोधकत्वं किन्तु कर्म्मधारयवत् अभेदसम्बन्धबोधकत्वम् बहुव्रीहेरपि भेदसम्बन्धबोधकत्वेऽयं विशेषः, क्वचित् कर्म्मत्वादिकारकसम्बन्धः क्वचिच्च स्वस्वामिभावादिसम्बन्धः बोध्यते तत्र आरूढवानरादौ कर्म्मत्वादिसम्बन्धस्य पीताम्बरादौ तु स्वस्वामिभावसम्बन्धस्य बोधः । यथा आरूढो वानरोऽयम् प्राप्तमुदकं यमिति विग्रहे आरूढवानरप्राप्तोदकशब्दौ वानरकर्तृकारोहणकर्म्मणः उदककर्तृकप्राप्तिकर्म्मणश्च बोधकौ । एवम् ऊढो रथो येन इति विग्रहे ऊढरथशब्दादेः रथवहनकरणस्य, दृष्टो रथो येनेति विग्रहे दृष्टरथादेश्च रथदर्शनादिकर्तुश्च बोधकत्वम् । उपहृतः पशुर्यस्मै इति विग्रहे उपहृतपशुशब्दादेः पशूपहरणसम्प्रदानस्य, पतितं पत्रं यस्मादिति विग्रहे पतितपत्रादेः पत्रपतनापादानस्य, निहितो घटो यत्रेति विग्रहे निहितघटादिशब्दस्य, घटनिधानाधिकरणस्य च बोधकत्वम् । एवमव्ययीभावद्वन्द्वेष्वपि भेदसम्बन्धबोधकत्वमूह्यम् । द्वन्द्वस्य एकक्रियान्वयित्वरूपसम्बन्धबोधकत्वात् तथात्वं अव्ययीभावस्य तु तथात्वं प्रसिद्धमेव

तत्पुरुषेऽपि पूर्व्वपदार्थस्य उत्तरपदार्थे, क्वचिच्च उत्तरपदार्थस्य पूर्व्वपदार्थे सम्बन्धबोधकता । यथा राजपुरुष इत्यादौ राजादिपूर्व्वपदार्थस्य उत्तरपदार्थे पुरुषादौ, अर्द्धग्राम इत्यादौ च ग्रामादेरुत्तरपदार्थस्य अर्द्धादिपूर्व्वपदार्थे, सम्बन्धो बोध्यते । स च सम्बन्धः स्वस्वामिभावः कारकरूपश्च । तत्र राजपुरुषादौ स्वस्वामिभावस्य, ग्रामश्रितादौ, श्रयणकर्म्मणः रामकृतमित्यादौ कर्त्तुः अश्वगतमित्यादौ गतिकरणस्य व्याघ्रभीत इत्यादौ भयापादानस्य, ग्रामस्थित इत्यादौ स्थित्यधिकरणस्य यथायथं पूर्व्वपदार्थस्य उत्तरपदार्थेऽन्वयः । द्विगौ, कर्म्मधारये, समानाधिकरणबहुव्रीहेरवान्तरपदार्थयोश्चाभेदेनैवान्वयात् कर्म्मधारयस्य द्विगोः समानाधिकरणबहुव्रीहेश्च स्वघटकपदार्थाभेदबोधकत्वमिति विवेकः । उपपदसमासस्य तु तत्पुरुष एवान्तर्भावः अन्यत् यथासम्भवमूहनीयम् ।

शास्त्रकारसङ्केतविशेषेण तत्तदर्थबोधकाः शब्दाः पारिभाषिकाः । यथा "कर्त्तुरीप्सिततमं कर्म्म," "साधकतमं करणम्" योगश्चित्तवृत्तिनिरोध इत्यादयः । तत्तच्छास्त्रकारैः, कर्म्मशब्दः कर्त्तुरीप्सिततमं, करणशब्दः साधकतमं, योगशब्दः चित्तवृत्तिनिरोधं बोधयत्वितीच्छाविशेषरूपपरिभाषात्मकसङ्केतेन तत्तदर्थानां बोधनात् तथात्वम् ।

परिभाषायाश्च आधुनिकसङ्केतत्वेन सादित्वात् अनादिसङ्केतवतो रूढाद्भेदः ।

तेषां सङ्केतविशेषकरणञ्च तत्तच्छास्त्रेषु तत्तच्छब्देन तत्र तत्र पारिभाषिकार्थानामेव ग्रहणार्थम् । अत एव "कृत्रिमाकृत्रिमयोर्मध्ये कृत्रिमे कार्य्यसंप्रत्ययः" इति परिभाषया कृत्रिमसङ्केतवत एव ग्रहणसूक्तम् तेन "कर्म्मप्रवचनीय" "कर्म्मणि द्वितीया" इत्यादौ स्वशास्त्रे पारिभाषिकार्थानामेव कर्म्मादीनां ग्रहणं न तु "कर्म्म क्रिया" इति कोषोक्तक्रियादीनां ग्रहणम् ।

केचित्, सङ्केतलक्षणसाम्यात् पारिभाषिकस्य रूढ़ावेवान्तर्भावमिच्छन्ति ।

शक्तिश्च अस्माच्छब्दादयमर्थो बोध्य इत्याकारेच्छा । सा च सम्प्रदायप्रवर्त्तकस्य ईश्वरस्य तत्स्थानीयत्वेन कल्पितस्य तथाविधस्य अपरस्य वेत्यन्यदेतत् । तथा च सम्प्रदायप्रवर्त्तकस्य इदानीमसुलभतया कस्य शब्दस्य कोऽर्थः? इति जिज्ञासायां पूर्व्वपूर्व्वसम्प्रदायानुसारेण आप्तप्रायैः अमरादिभिः स्वस्वकोषेषु बाहुल्येन रूढ़ानां, केषाञ्चिच्च यौगिकानां शब्दानाम्, पाणिन्यादिभिश्च स्वसूत्रपाठादिषु बाहुल्येन यौगिकानां, केषाञ्चिच्च रूढ़ानामर्थविशेषा दर्शिताः । अत एवोक्तम्

शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च ।
वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ इति

अमरकोषादिषु च एकैकग्रन्थेषु सर्व्वशब्दानामनुक्तेः यावत्कोषज्ञानस्य इदानीन्तनैरशक्यतया तेषामसुलभतया च, यौगिकशब्दज्ञानोपयोगिनश्च पाणिन्यागमस्य प्रायशः दुर्बोधतया तत्तद्ग्रन्थानां च एकैकपुरुषेण बहुकालसाध्यपाठतया, पठितानामपि सदा स्फुरणाभावेन, तत्तद्ग्रन्थानाञ्च सुपरिपाटीकत्वाभावेन कथङ्कारं सर्व्वशब्दार्थज्ञानम् सुकरं भवेत् इत्यतः वेदपुराणेतिहासतन्त्रशास्त्रदर्शनशास्त्रज्योतिषनीतिशास्त्रवैद्यकव्याकरणादिशास्त्रेषु प्रयुक्तशब्दानां तत्र तत्र पारिभाषिकशब्दानाञ्च अर्थज्ञानाय नाना कोषादिभ्यः शब्दानां सङ्कलनेन सुपरिपाटीकतया एतद्रचनायामस्माभिः प्रवृत्तम् ।

यानि यानि च शास्त्राण्यालोच्य तत्तदर्थविशेषावधारणं कृतम् उदाहरणतया च तत्तन्नामान्यत्र तत्तच्छब्दार्थदर्शनावसरे प्रदर्शयिष्यन्ते प्रदर्शयिष्यन्ते चात्र तेषां ग्रन्थानां समष्टीकृत्य नामानि ।

यौगिकशब्दानामपि अनन्तभेदतया दिङ्मात्रतयाऽत्र प्रदर्शनं कृतम् अन्यथा एकैकधातोः एकैकप्रत्ययान्ततया शब्दभेदकल्पनेऽनन्तशब्दाः स्युस्तत्कथने च वृथा ग्रन्थबाहुल्यमात्रसम्पादनमनतिप्रयोजनञ्च । अत एवोक्तम्

बृहस्पतिर्दिव्यं वर्षशतमिन्द्राय शब्दपारायणं
जगौ नैवान्तं जगामेति ।

तथा च प्रतिपदशब्दार्थकथनापेक्षया प्रकृतिप्रत्ययविभागेन शब्दसाधुतासम्बोधनाय लघूपायतया व्याकरणमारब्धं तन्त्रकारैः । तच्च तत एवागन्तव्यम् । किन्तु पाणिन्यागमानामिदानीम् असुलभतया बहूनाञ्च तदज्ञानेन तेषां बोधनार्थं ततः सारमाकृष्य अपेक्षितयौगिकशब्दानामर्थविशेषोऽत्राभिधास्यते ।

किञ्च यावन्तः शब्दास्तावन्त एव नञ्योगेन शब्दाः स्युरिति नञ्योगेन शब्दबाहुल्यसम्पादनमकिञ्चित्करमेवेति नञ्युक्तशब्दा अस्माभिः आधुनिककोषकृद्भिरिव नादृताः किन्तु यत्र यत्र अर्थविशेषः यथा असुरः असाक्षात् इत्यादिषु तत्रैव संगृहीष्यन्ते ।

अपरञ्च यौगिकशब्दानां पूर्व्वोत्तरपदयोः परिवर्त्तनेन नानारूपता स्यात् तेषां प्रत्येकं ग्रहणे च वृथानन्तभेदकल्पनेन ग्रन्थबाहुल्यमात्रसम्पादनं अर्व्वाचीनानामिव वृथा स्यात् न च तत्र प्रयोजनाधिक्यमित्यतः प्रथमं कश्चित् नियमविशेषोऽभिधीयते यद्बलात् पूर्व्वोत्तरपदपरिवर्त्तनेन तत्तत्समानार्थकशब्दार्थग्रहः सुकरो भवेत् ।

नियमो यथा

स्वत्वविशिष्टपूर्व्वपदात्, पाल, धर, भुग् धारिन् भृत्, पति, नेतृशब्दास्तत्समानार्थकशब्दाः मतुबादयश्च यदा प्रयुज्यन्ते तदा तत्स्वामी बोध्यते । यथा भूपालः भूधरः भूभुक् भूधारी भूभृत् भूपतिः भूनेता इत्यादयः, भूमान् इत्यादयश्च भूमिपतिवाचकाः अत्र समानार्थकशब्दैः पूर्व्वपदपरिवर्त्तने उत्तरपदपरिवर्त्तने च स एवार्थोऽभिधीयते । यथा भूमिपालः भूमिरक्षकः इत्यादिषु ।

जन्यवाचकपूर्व्वपदात् कृत्-कर्तृ सृ-सृज्-स्रष्टृ-विधातृ कारक-प्रभृतिशब्दास्तत्पर्य्यायशब्दाश्च प्रयुक्ताः तज्जनकबोधकाः । यथा विश्वकृत् विश्वकर्त्ता विश्वसृः विश्वसृट् विश्वस्रष्टा विश्वविधाता विश्वकारकइत्यादयः सर्व्वकृत् सर्व्वकर्त्रित्यादयश्च चतुर्मुखस्य वाचकाः ।

जनकवाचकपूर्व्वपदात्, योनि, ज, रुह, जन्मन्, भू, भव इत्यादयस्तत्पर्य्यायाश्च तज्जन्यबोधकाः । यथा भूमियोनिः भूमिजः भूमिरुहः भूमिजन्मा भूमिभूः भूमिभवः इत्यादयः क्ष्मायोनिः क्ष्माज इत्यादयश्च । तथा अपत्यप्रत्ययार्थे अणादयश्च जन्यवाचकाः । यथा भौमः माहेयः इत्यादयः ।

धार्य्यशस्त्रादिवाचकपूर्व्वपदात्, पाणयङ्कमौलि, भूषण, भृत्कालिन् शेखर, धर्तृ, धारकप्रभृतयः तत्पर्य्यायशब्दाः मत्वर्थीयप्रत्ययाश्च तद्धारकवाचकाः । यथा शूलपाणिः शूलाङ्कः चन्द्रमौलिः चन्द्रभूषणः शूलभृत् शूलधारी चन्द्रशेखरः शूली शूलवान् इत्यादयः । इयांस्तु विशेषः । यत्र यत्रावयवे धार्य्यत्वं प्रतीयते तत्तद्वाचकशब्दा एव उत्तरपदे निवेशनीयाः । यथा शूलहस्तः चन्द्रमस्तक इत्यादि ।

भोज्यवाचकपूर्व्वपदात् अन्न, भुग्, व्रत, लिट्, प्राशिन्, प,

अश, अशनादयः उत्तरपदस्थाः तद्भक्षकवाचकाः। यथा मध्वदः मधुभुक् मधुव्रतः मधुलिट् मधुपायी मधुपः मध्वशः मध्वशन इत्यादयः पूर्व्वोत्तरशब्दपरिवर्त्तनेन तत्पर्य्यायशब्दाश्च भ्रमरवाचकाः।

पतिवाचकात् कान्ता प्रिया, वधू प्रणयिनी इत्यादयः उत्तरपदस्थाः तद्भार्य्यावाचकाः। यथा हरकान्ता हरप्रिया हरवधूः हरप्रणयिनी इत्यादयः पूर्व्वोत्तरशब्दपरिवर्त्तने तत्तत्पर्य्यायशब्दाश्च दुर्गावाचकाः।

भार्य्यावाचकात् वर, रमण, प्रणयिन्, प्रिय, प्रभु, नाथादयः उत्तरपदस्थाः तत्पतिवाचकाः। यथा रमावरः रमारमणः रमाप्रणयी रमाप्रियः रमाप्रभुः रमानाथ इत्यादयः कमलावरादयश्च विष्णुवाचकाः।

सखिवाचकपूर्व्वपदात् सखिवाचकाः शब्दाः सख्यन्तरवाचकाः यथा शिवसखः शिवसुहृत् शिवमित्रम् इत्यादयः कुबेरवाचकाः।

वाहनवस्तुपूर्व्वपदात् गामिन्—यानासनप्रभृतयः शब्दाः तद्वाह्यबोधकाः। यथा हंसगामी हंसयानः हंसासन इत्यादयः।

जन्मनिमित्तकसम्बन्धविशिष्टपूर्व्वपदात् स्वस्रादयः, दुहित्रादयः, आत्मजादयः, अग्रजादयः, अवरजादयश्च तत्तत्सम्बन्धवाचकाः। यथा यमनस्वसा यमनभगिनी यमनसहोदरेत्यादयः एकसूर्य्यतोजन्मवत्त्वेन यमुनाबोधकाः। सूर्य्यदुहिता सूर्य्यनन्दिनी सूर्य्यतनया सूर्य्यपुत्रीत्यादयः तज्जन्मसम्बन्धवत्त्वेन यमुनाबोधकाः। शिवतनयः शिवपुत्रः शिवात्मज इत्यादयः शिवतो जन्मवत्कार्त्तिकेयादिवाचकाः। यमुनाग्रजः यमुनाभ्राता यमुनासहोदर इत्यादयः यमुनासमानजन्मसम्बन्धवत्त्वेन यमबोधकाः। रामानुजः रामावरज इत्यादयः रामपश्चाज्जन्मभाग्वासुदेववाचकाः।

आश्रयवाचकपूर्व्वपदात् शय, शायिन्, सद्मन्, श्रित, सद्, स्थितादिशब्दाः तदाश्रितवाचकाः। यथा भूमिशयः भूमिशायी भूमिसद्मा भूमिश्रितः भूमिसद् भूमिस्थितः इत्यादयः।

वध्यवाचकपूर्व्वपदात् भिद् द्वेषिन् छिद् धग् जिद् घातिन् भुग् रिपु ध्वंसिन् शासनादयः अन्तकदमनदर्पहन् मथनादयश्च तद्घातकवाचकाः। यथा कामभित् कामद्वेषी कामच्छित् कामधक् कामजित् कामघाती कामभुक् कामरिपुः कामध्वंसी कामशासनः इत्यादयः। एवं कामान्तकः कामदमनः कामदर्पहा काममथन इत्यादयः शिववाचकाः।

अन्ये च प्रायशोऽतिदेशेन तत्तच्छब्दानां तत्तदर्थवाचित्वं यथावसरं दर्शयिष्यते दिङ्मात्रमिहोदाहरणमुक्तम्।

एवमुक्तप्रकारेण पूर्व्वोत्तरपदयोः परिवर्त्तनेन बहवः शब्दास्तत्तदर्थवाचका भवन्ति। तत्रायं विशेषः। वृषादेर्वाहनत्वविवक्षायां वृषवाहनादयः प्रयोज्याः, स्वत्वविवक्षायां वृषपतिः वृषस्वामी वृषवान् इत्यादयः, चिह्नत्वविवक्षायां वृषाङ्कः वृषलाञ्छन इत्यादयः। अंश्वादेर्धार्य्यत्वविवक्षायाम् अंशुमाली अंशुभृत् अंशुधर इत्यादयः, स्वत्वविवक्षायाम् अंशुपतिः अंशुमानित्यादयः। सर्पादेर्वध्यत्वविवक्षायां सर्परिपुः सर्पारिः सर्पहा इत्यादयः। भक्ष्यत्वविवक्षायां सर्पभुक् सर्पभोजनः सर्पाशन इत्यादयः यथायथं प्रयोज्याः।

द्रव्यजातिवाचकशब्दा अपि चिह्नत्वविवक्षायां तच्चिह्नितवस्तुनो वाचका भवन्ति। यथा अगस्तिचिह्ना दक्षिणाशा, मकरचिह्नः कामः इत्यादयः।

अयुग्मायुग्विषमादिशब्दाः पूर्व्वपदस्थाः त्रिपञ्चसप्तादिवाचकाः। यथा अयुग्मनेत्रः अयुङ्नेत्रः विषमनेत्र इत्यादयः त्रिनेत्रवाचकाः। अयुग्मबाणः अयुग्बाणः विषमबाणः इत्यादयः पञ्चबाणवाचकाः। अयुग्मच्छदः अयुक्छदः विषमच्छद इत्यादयः सप्तच्छदवाचकाः।

## अथ पूर्व्वोत्तरपदयोः परिवृत्तिसहत्वासहत्वनियमः।

तत्र भूभृदादिशब्देषु उभयपदयोः परिवृत्तिसहत्वम्। यथा भूभृत् भूमिभृत् क्ष्माभृत् भूधरः भूमिधरः क्ष्माधरः क्ष्मापाल इत्यादयः।

वारिधिप्रभृतिशब्देषु पूर्व्वपदस्यैव परिवृत्तिसहत्वं नोत्तरपदस्य। यथा वारिधिः जलधिः तोयधिः वार्धिः पयोधिः। किन्तूत्तरपदस्य तदन्ततया उपसर्गमात्रेणैव व्यवधानमात्रम्। यथा वारिधिः वारिनिधिः पयोधिः पयोनिधिः जलधिः जलनिधिः इत्यादयः इयांस्तु विशेषः यादृशोपसर्गशब्दपूर्व्वपदस्य प्रयोगोऽस्ति तादृशपूर्व्वकस्यैव न तु सर्व्वोपसर्गपूर्व्वकाणाम्।

वाड़वाग्न्यादिषु उत्तरपदस्यैव परिवृत्तिसहत्वम्। यथा वाड़वाग्निः वाड़वानलः वाड़वादहन इत्यादयः। इत्थंभूताः सर्व्वेऽपि शब्दाः यौगिका एव।

गीर्व्वाणादिषु उभयोः पदयोर्न परिवृत्तिसहत्वमिति तेषां योगरूढ़त्वमेव।

नञ्पूर्व्वपदा इतरोत्तरपदाश्च गुणवाचकशब्दाः विरोध्यर्थवाचकाः। यथा असितः अशुक्लः इत्यादयः, एवं सितेतरः शुभ्रेतरः इत्यादयः, शुभ्रत्वविरोधिकृष्णत्ववाचकाः एवं अनुष्ण उष्णेतरः इत्यादयः उष्णविरोधिशीतस्पर्शबोधकाः सुखेतरत् असुखमित्यादयः सुखविरोधिदुःखवाचकाः एवम् अपुण्यम् पुण्येतरदित्यादयः पुण्यविरोधिपापबोधकाः।

इत्येवं नियमावली ज्ञानसौकर्यार्थमादौ प्रदर्शिता एत-दनुसन्धानेन अत्रानुक्ता अतिदिष्टतया तत्तदवसरे उक्तमायाश्च शब्दा यथायथम् ऊहनीयाः ।

गुणवाचकशब्दमध्ये शुक्लादिरूप-मधुरादिरस-खरादिस्पर्श-शीघ्रादिवेग—वाचकशब्देभ्यः यथाप्राप्तं विहितमत्वर्थीयस्य तद्धितस्य लुकि व्यक्तेः (विशेष्यस्य) लिङ्गानुसारित्वम् तथा च शुक्लादयः रूपवाचकाः शब्दा गुणपरत्वे पुंलिङ्गाः तदुत्तरात् मत्वर्थप्रत्ययस्य लुका गुणवत्परत्वे विशेष्यलिङ्गाः । यथा गुणे शुक्लः नीलः पीतः रक्त इत्यादि गुणिनि शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रम् एवं नीलः नीला नीलं पीतः पीता पीत-मित्यादि । एवं स्पर्शविशेषे खरादयः क्लीवलिङ्गाः तद्वति त्रिलिङ्गाः । यथा खरं तिग्मं तीक्ष्णमित्यादि तद्वति खरः किरणः खरा दीधितिः खरं तेज इत्यादि । एवं स्पर्शे शीतं शीतलं शिशिरमित्यादि तद्वति शीतश्चन्द्रः शीता हिमानी शीतं जलमित्यादि । तथा वेगे शीघ्रं त्वरितमित्यादि वेग-वति शीघ्रोऽश्वः शीघ्रा वडवा शीघ्रं यानमित्यादि । एवं रसे मधुरः कटुः अम्ल इत्यादि तद्वति मधुरो गुडः मधुरा द्राक्षा मधुरं क्षौद्रमित्यादि एवं कटुः कट्वी कटु इत्यादयः बोध्याः ।

स्त्रीपुंसवाचकशब्दा अपि अल्पत्वविवक्षायां स्त्रीलिङ्गाः स्युः । यथा घटी पटीत्यादयः स्वल्पघटादिवाचकाः ।

बहुभिः कोषकारैः शब्दानां लिङ्गानुशासनम् कृतं तदनु-सारेण प्रायेणाभिधानस्थशब्दप्रदर्शनसमये लिङ्गान्युक्तानि किन्तु तानि अमूलकानि समूलकानि वा तत्प्रदर्शनाय प्रथमतः पाणि-नीयलिङ्गानुशासनसूत्राणि प्रदर्शितानि तानि च समालोच्य तत्तत्कोषोक्तलिङ्गानां प्रामाणिकत्वाप्रामाणिकत्वे सुधीभिर्विवे-चनीये इति दिक् ।

---

## अथ शब्दव्युत्पत्तिदर्शने कारणादि ।

धातुपाठ-गणपाठ-संयुतं
सूत्रपाठमखिलं सवार्त्तिकम् ।
भाष्यमस्य सरहस्यमर्थतो
ये विदन्ति खलु केऽपि ते विदः ॥ १ ॥

उत्तरङ्गो महानक्रवक्रोक्तिचक्रभीषणः ।
शब्दसिन्धुः सुदुर्गम्यो दुस्तरोऽकृतबुद्धिभिः ॥ २ ॥

येषां सद्गुरुकर्णधारभजनं प्रज्ञावहित्रागमो-
ऽभ्यासयानुगुणो मरुत् प्रतिदिनं शब्दागमाम्भोनिधौ ।
पारं यत्नवशादवाप्य नितरां रत्नानि लभ्यानि तै-
र्दूरात् तीरगतैस्तु दर्शनभिया सीदद्भिराप्यानि किम् ?३

भाष्याद्यागमवारिधौ गुरुहरिप्रोत्साहनाशालिभिः
प्रज्ञावासुकिरज्जुकर्षणयुजा यत्नौघमन्थाद्रिणा ।
तत्साहैर्गुरुकैयटादिवचनैरालोड़िते तत्सुधाम्
व्युत्पत्तिं सुमनोभिरेत्य सुतरां चित्ते परं निर्वृतम् ॥४॥

नो चक्षुषापि कलिता किल कौमुदी ये-
र्भाष्यादिदीपनिवहोऽधिगतो न वा यैः ।
येषाञ्च पाणिनिमतार्कसमागमो नो
तेषां तमःप्रचय एव न चास्य शान्तिः ॥ ५ ॥

यैर्वीक्षिता नोज्ज्वलदत्तवृत्ति-
र्नो काशिकावृत्तिरथाध्यगामि ।
नालोकिता यैर्गणरत्नवृत्ति-
स्तेषां तमःशान्तिरुदेति कस्मात् ? ॥ ६ ॥

पाणिन्यागमसूर्य्येण शब्दाकाशो विकाश्यते
न तु खद्योतमात्रेण स्वल्पव्याकरणादिना ॥७॥

कल्पद्रुमात् फलचयो यदि सौरभं वा
लभ्येत वाञ्छितमथार्थकदम्बकं वा ।
शब्दानुशासनमृते न तदंशबोध-
स्तत्रापि पाणिनिमतन्तु भिन्नशास्त्रम् ॥ ८ ॥

भाष्याद्यागमनामगन्धमपि ये नाघ्रातवन्तो मनाक्
ते व्युत्पत्तिनिदर्शने यदि रताः किन्नाम ? चित्रं ततः ।

आस्तां तत्र कुमारभाववशतः प्रौढ़ा प्रवृत्तिर्हठात्
दौर्भाग्यं बत वङ्गभूमिवसतेस्तत्रादरो यन्मनाक् ॥९॥
कथञ्चित् मुग्धबोधस्य पाठमात्रमदोद्धतैः ।
काव्यमात्रसमालोकात् व्युत्पत्तेर्दर्शनं कथम् ? ॥१०॥
उक्तशास्त्रैकशरणाः स्फूरिसौरभलोभतः ।
कुमाराश्चेत् प्रवर्त्तेरन् प्रवर्त्तन्तां हठान्विताः ॥
तद्वाक्येष्वादरकृतः शोचनीया परं जनाः ।
दौर्भाग्यात् बत वङ्गानां बालवाक्ये समादरः ॥११॥

अत एव प्राचीनैरुक्तम्—

"अद्यश्च भाष्यकारश्च कुशाग्रीयधियावुभौ
नैव शब्दाम्बुधेः पारं किमन्ये जड़बुद्धयः" ॥ इति ।
पदवाक्यप्रमाणज्ञा ये रायमुकुटादयः ।
प्रमत्तास्तेऽपि यत्रासन् बालास्तत्रालमद्भुतम् ॥१२॥
अहोचित्रमहोचित्रमहोचित्रमहोदयः ।
पाणिन्याद्यनभिज्ञैश्चेत् व्युत्पत्तीनां प्रदर्शनम् ॥१३॥
कुण्डभात्तस्तुवालानां महाद्रिखेलनं यथा ।
अज्ञातशास्त्रतत्त्वानां शब्दव्युत्पादनं तथा ॥ १४ ॥
कोषालोकादर्थजातं काव्यालोकादुदाहृतीः ।
दर्शयेयुः कुमाराश्चेत् न च तत्र क्षतिर्मनाक् ॥१५॥
शास्त्रे व्युत्पादिताः शब्दा अन्यथा दर्शिता यदि ।
विश्वासात् खलु तद्वाक्येष्वन्येषां महती क्षतिः ॥१६॥
समीक्ष्यकारिणो ये तु लज्जाभीतिसमन्विताः ।
यथाज्ञानं प्रवर्त्तन्ते नाज्ञातविषये क्वचित् ॥ १७ ॥
कल्पद्रुमादिकर्त्तारः स्वज्ञानाद्यनुसारतः ।
शब्दार्थदर्शने रक्ता न तु व्युत्पत्तिदर्शने ॥ १८ ॥
येषां चित्ते भृशं लज्जा ह्रासभीतिश्च वर्त्तते ।
न ते तथा प्रवर्त्तन्ते प्रवृत्ता बालका यथा ॥ १९ ॥
पाणिन्याद्यनुसारेण शब्दसाधनतत्पराः ।
भवेयुश्चेत् तदा लोके शोभन्ते नान्यथा क्वचित् ॥२०॥
यदि वालाशने चित्ते न मनाग्जायते घृणा ।
तदान्धचुस्तमार्गेऽ धावनं परिशोभते ॥ २१ ॥
स्वयमज्ञाततत्त्वानामन्धचुण्णपथश्रिताम् ।
लेशतोऽतिक्रमः क्वापि ह्रासाय पतनाय च ॥ २२ ॥
परोत्कीर्णपथभ्रान्त्या श्रान्तानां दूरधावनात् ।
मूलचर्चातरुच्छायाराहित्यात् निर्वृतिः कुतः ? ॥२३॥
अन्धानामिव मार्गयानविषये येषां परोक्तं परं
मूलं, ते खलु मार्गदर्शनविधावन्यस्य शक्ताः किमु ? ।
येषां तद्वचने समादरवशस्ते केऽपि लोकाधमा
जाता अन्धतमास्ततोऽद्य वसुधा प्रायोऽन्धतामेष्यति॥२४
यस्मिन् रुचिर्भवेत् यस्य स तत्रैव प्रवर्त्तताम् ।
निरङ्कुशरुचिर्लोको न वाग्वश्यो हि कस्यचित् ॥२५॥

परिशेषे इदमपि स्मार्य्यते—

"प्रायः शास्त्रमधीते कश्चन तनुते निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः"
अनेके चेत् कोषकाराः स्वस्वबुद्धिप्रभावतः ।
चक्रुः कोषानपि तथा गतार्थो न मम श्रमः ॥२६॥

तत्रेदं प्राचीनपद्यं स्मार्य्यते—

"परिष्कुर्वन्त्वर्थान् सहृदयधुरीणाः कतिपये
तथापि क्लेशो मे कथमपि गतार्थो न भविता ।
तिमीन्द्राः संक्षोभं विदधति पयोधेः पुनरमी
किमेतेनायासो भवति ? विफलो मन्दरगिरेः" ॥
भाष्याद्याशयबोधनैकसरणिं वाक्यप्रदीपं सुहृ-
द्दैश्वोद्द्योतसमन्वितं सुविपुलं भाष्यप्रदीपं तथा ।
पाणिन्यष्टकशाकटायनकृते वृत्त्यान्विते वार्त्तिकं
पर्य्यालोच्य समादरादिह मया व्युत्पत्तिरादर्शिता ॥२७
रूढ़ानामपि रूपसाधनकृते कोषादिटीका मया
बह्वीर्दृष्टवता समाहृतवता ताभ्यश्च सारं परम् ।
लोकानां हितकाम्ययैव रचितो ग्रन्थः श्रमात् सुक्रमो
विद्वांसोऽस्य विलोकने यदि रताः स्यान्मे श्रमः सार्थकः ॥२८
जिज्ञासूनां बोधनार्थं सम्यग्व्युत्पत्तिसंयुतम् ।
नानाशब्दान् समाहृत्य वाचस्पत्यं मया कृतम् ॥ ३०॥
सुगमं सुक्रमं वेद—लोकशब्दार्थबोधकृत् ।
वाचस्पत्यमदो वीक्ष्य वाचस्पत्यमवाप्यताम् ॥ ३१ ॥

# वाचस्पत्यम्।

अ

अ पु० अवति रक्षति अतति सातत्येन तिष्ठतीति वा अव–अत–वा ड। विष्णौ "अकारोविष्णुरुद्दिष्टउकारस्तु महेश्वरः। मकारस्तु स्मृतोब्रह्मा प्रणवस्तु त्रयात्मक" इति। अस्य (विष्णोः) अपत्यम् अत इञ् इः (कामः) अस्य (विष्णोः) पत्नी ङीप् ई (लक्ष्मी)।

अ अव्य० अव–प्रीणनादौ ड स्वरादिपाठादव्ययत्वम्। अभावे, प्रतिषेधे स्वल्पेऽर्थे अनुकम्पायां, सम्बोधने, अ अनन्त!। अधिक्षेपे, अ पचसि त्वं जाल्म!। "उपसर्गस्वरविभक्तिप्रतिरूपकाश्चेति" स्वरादिगणसूत्रे अ इति सिद्धान्तकौमुद्यामुदाहृतं मनोरमायाञ्च अ संबोधने अधिक्षेपे निषेधे चेति व्याख्यातम्। "अभावे नह्यनोन" इत्यमरटीकायां नञादेशोऽयमित्युक्तम्। स च आदेशः नखनमुच्यादिभिन्नशब्दघटके उत्तरपदस्थे हलादौ शब्दे परे भवति। स तु नञर्थे एव स्थानितुल्यार्थकत्वादादेशस्य। नञर्थाश्च

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥

इत्युक्तेः षड्विधाः। तत्र अब्राह्मणइत्यादौ ब्राह्मणसादृश्यवत्त्वेन क्षत्रियादीनां बोधकता, अघटमित्यादौ घटाभावस्य, अपटइत्यादौ पटभिन्नस्य, अनुदरा कन्येत्यादौ अल्पोदरत्वस्य, अपशवो वै अन्ये गोऽश्वेभ्यइत्यादौ गवाश्वभिन्नपशूनामप्राशस्त्यस्य, असुरः असितइत्यादौ च सुरसित विरोधस्य बोधकता। तत्रायं विशेषः नञः सर्व्वत्र अभावे भेदे च शक्तिः सादृश्यादौ तु निरूढलक्षणा। तत्र अघटमित्यादौ अव्ययीभावे, अधन इत्यादौ बहुव्रीहौ भाव कृदन्तोत्तरपदके "अभेदः अप्रानमित्यादौ" नञ्तत्पुरुषे च अभावबोधकता। भावकृदन्तभिन्नोत्तरपदनञ्तत्पुरुषे तु अघट इत्यादौ भिन्नत्वबोधकतेति। अन्यदेवं बोध्यम्। समासे हलादौ उत्तरपदे नञः स्थाने अ इत्यादेशविधानेन समासएवास्य नञर्थकस्य अदत्वस्य प्रयोगः नान्यथा, सम्बोधनाद्यर्थकस्य तु पृथक्प्रयोगः किन्तु "नञोनलोपस्तिङि क्षेपे" इति वार्त्तिकेन तिङन्तपदे परेऽपि नञादेशस्य विधानात् तस्यैव पृथक्प्रयोगः। अधिकं नञ्शब्दार्थावसरे वक्ष्यते। अजीवनिरित्यादौ अधिक्षेपार्थकता अजन्मित्यादौ उप० स०। तस्य च क्रियायोगात् प्रतिषेधार्थकता।

अऋणिन् त्रि० न ऋणी नञ् त० ऋकारस्यात्र हल्त्वाभ्युपगमात् न नुट् नलोपमात्रम्। अर्णभिन्ने, ऋणशून्ये,।

दिवसस्याष्टमे भागे शाकं पचति यो नरः।
अऋणी चाप्रवासी च स वारिचर! मोदते इति भारतम्

हल्त्वानाश्रयणे नुटि अनृण्यपि तत्रैवार्थे।

अंश विभाजने अद०चु०उभ०। अंशयति ते आंशिशत् त। अङ्गापयतीतिवत् आपुकि अंशापयतीत्येके। अच् अंशः उ–अंशुः णिनि अंशी क्त अंशितः।

अंश पु० अंश–भावेऽच्। विभागे "सकृदंशो निपतति सकृत्कन्या प्रदीयते। सकृदाह ददानीति त्रीण्येतानि सकृत् सकृदिति स्मृतिः। कर्म्मणि अच्। विभाज्ये "द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पितेति" "द्व्यंशहरोऽर्द्धहरो वा पुत्रवित्तार्ज्जनात् पितेति" च स्मृतिः। संख्यासूचकाङ्कविभाज्ये तथाङ्के, च "अन्योन्यहाराभिहतौ हरांशाविति" अंशाहतिश्छेदवधेन भक्तेति" भजेच्छिदोऽशैरथ तैर्विमिश्रैरिति च लीला०। करणे अच्। अवयवे "अंशुरंशुष्टे देव! सोमाप्यायतामिति" यजु०। अंशुरंशुः सर्वोऽवयव इति वेददीपः। "अंशिनः स्वांशगात्यन्ताभावं प्रति मृषात्मतेति" वेदान्तपरि०। "अंशो नानाव्यपदेशादिति" शारीरक सूत्रम्, जीवस्य निरवयवब्रह्मावयवत्वाभावमाशङ्क्य भाष्य कृता अंश इवेति व्याख्यातम्। तत्समानार्थकं "ममैवांशो जीवलोके जीवभूतः सनातन" इति गीतावाक्यम्। "चतुर्द्दश्यष्टभागे च क्षीणो भवति चन्द्रमाः अमावास्याष्टमांशे च ततः किल भवेदणुरिति, स्मृतिः। विशेषावयवे, राशिचक्रस्य षष्ट्युत्तरशततमवयवा विभाजके भागे, राशेस्त्रिंशद्भा

विभाजके अवयवे, “अत्रत्यांशाः समाख्याताः षष्ट्युत्तरशतत्रयमिति” “क्षेत्रं होरा च द्रेक्काणं नवांशो द्वादशांशकः। त्रिंशांशश्चेति विज्ञेयः षड्वर्ग” इति च ज्योतिषम् नवमितोऽंशः (राशेस्त्रिंशभागः) नवांशः एवं द्वादशांशादयः। स च अंशः षष्टिकलात्मकः कला तु षष्टिविकलात्मिका। नवमिविभक्ते राशेः त्रिंशात्मके नवांशे च। “द्विभर्त्तृका मेषनवांशके स्यात्” इत्युपक्रम्य “निःस्वा वृगांशे” इति, “विगुणा षटांशे” इति च व्यवहारचमत्कारः। ६, १, २०२ पा० सू० वृषादिषु पाठात् अस्य आद्युदात्तत्वम्।

**अंशक** त्रि० अंश-ण्वुल्। विभाजके। स्त्रियाम् अंशिका। ज्ञातौ दायादे पु० अंश+स्वार्थे कन्। अंशशब्दार्थे “त्रिंशांशकस्तथा राशे भाग” इत्यभिधीयते इति ज्योतिषम् नवमिते राशित्रिंशभागात्मके नवांशे, “द्विभर्तृका मेषनवांशके स्यात् इत्युपक्रम्य” “वृषांशके सा पशुशीलयुक्तेति” सिंहांशके सा पितृवाससंस्थितेति, च ज्यो० सौरदिने न०।

**अंशल** त्रि० अंश+बलोपाधिके मत्वर्थे लच्। बलवति। अंशं लाति ला+क। अंशग्राहके त्रि०।

**अंशसवर्णन** न० समानो वर्णः योगवियोगयोग्यता सवर्णः ततः करणार्थे णिचि भावे ल्युट् सवर्णनम् अंशयोः अतुल्यच्छेदयोः राश्योः समच्छेदकरणम् ६त०। लीलावत्युक्ते अतुल्यच्छेदराश्योः योगवियोगयोग्यतासम्पादके समच्छेदसाधने क्रियाविशेषे, तत्रादावंशसवर्णनमित्युक्तमत्र “अन्योन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवमिति लीलावत्याद्युक्तम्।

**अंशहर** त्रि० अंशं हरति हृ-अच्। अंशहारके “दंशहरोऽर्द्धहरो वा पुत्रवित्तार्ज्जनात् पितेति” स्मृतिः। अनुद्यमने एव हृञोऽच् इति नियमात् अन्यत्र अण्। भारहारः।

**अंशावतरण** न० ६ त०। भारते आ०प०६४अ० उक्ते देवानां स्वस्वभागविशेषेण वासुदेवादिरूपेण पृथिव्यामाविर्भावेन नरदेहग्रहणरूपे अवतरणे।

**अंशिन्** त्रि० अंश-णिनि। अंशकारके “पुत्रविभागकरणे सर्वे वा स्युः समांशिन” इति स्मृतिः अंश+मत्वर्थे इनि। अवयविनि। “अंशिनः स्वांशगात्यन्ताभावं प्रति स्वयात्मतेति” वेदान्तपरिभाषा।

**अंशु** पु० अंश-बाहु० कु। किरणे सूत्रे सूक्ष्मांशे प्रकाशे प्रभायां वेगे च “अंशवोऽत्र पतिता रवेः किमु”? इत्युद्भटः “सूर्यांशुभिर्भिन्नमिवारविन्दमिति” कुमा०। तत्र स्वपरप्रकाशकस्य तेजःपदार्थस्य समन्तात् प्रसृतः स्पर्शयोग्यः किञ्चिन्निविडः सूक्ष्मांशविशेषः किरणः, स च प्रायशः सूर्यस्य, तस्य तेजसा प्रदीप्तचन्द्रादेश्च। तदपेक्षया अल्पस्थानप्रसारी किञ्चिद्विरलः स्पर्शायोग्यः तेजःसूक्ष्मांशः प्रभा, सा च रत्नादिवस्तुनः। चन्द्रादेस्तु अन्यापेक्षयाऽधिकप्रसृतत्वात् किरणसम्भवः अतएव तत्र शीतांशुः सितकिरण इत्यादिप्रयोगः। स्पर्शयोग्यः तेजःपदार्थस्य किरणादपि निविडः सूक्ष्मांशः आतपः, किरणापेक्षया अतिविरलप्रसारी स्पर्शायोग्यः परप्रकाशसाधनमतिसूक्ष्मांशविशेषः आलोकः। प्रभायाम् आलोके वा न स्पर्शोऽनुभूयते। तत्र अंशुशब्दस्य किरणवाचित्वे सहस्रांशुः उष्णांशुः शीतांशुरित्यादयः। प्रभापरत्वे रत्नांशुः नखांशुरित्यादयः। “अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नयेति” “द्विजावलीबालनिशाकरांशुभिरिति” च माघः। सूत्रांशपरत्वे अंशुकं पट्टांशुकं चीनांशुकमित्यादयः। प्रकाशपरत्वे उपांशु उपहृतप्रकाशत्वाद्वास्य गुप्तत्वं प्रतीयते तद्वार्थिकम्। सूक्ष्मविभागपरत्वे प्रांशुः प्रोन्नतावयवत्वा द्वास्य दीर्घत्वं प्रतीयते तद्वार्थिकम् इति।

**अंशुक** न० अंशवः सूत्राणि विषयोऽस्य अंशु+कस्यादि० क। वस्त्रे। “यत्रांशुकाक्षेपविलज्जितानामिति” कुमारः। सूक्ष्मवस्त्रे उत्तरीयवस्त्रे पत्रे (तेज पात) शुक्लवस्त्रे च। अंशु+स्वार्थे कन्। अंशुशब्दार्थे पु०।

**अंशुधर** पु० धृ-अच् ६त०। सूर्ये अंशुशब्दादयोऽप्यत्र किरणादिधारके वेगधारके च त्रि०।

**अंशुपट्ट** न० अंशुना सूक्ष्मसूत्रेण युक्तं पट्टम्। सूक्ष्मसूत्रघटितपट्टवस्त्रे। “क्षौमकैरंशुपट्टानामिति” विष्णु०।

**अंशुपति** पु० ६त०। सूर्ये, तस्य सर्वतेजस्विनां किरणाधायकत्वात् चन्द्रादिग्रहादौ तेजोदायकत्वाच्चास्य तथात्वम् अतएवोक्तं वृहत्संहितायाम् “सलिलमये शशिनि रवेर्दीधितय” इति “मूर्त्तित्वे परिकल्पितः शशिभृत” इति वृहज्जातके च। “अग्निं वावादित्यः सायं प्रविशतीति” “उद्यन्तं वावादित्यमग्निरनुसमारोहतीति” च श्रुतौ अग्नौ सूर्यांशुप्रवेशाभिधानम्। अत एव माघे तस्य त्विषां पतित्वेन तस्यास्तमये तासामनुमरणार्थं ज्वलनप्रवेश उक्तः। यथा “रुचिधाम्नि भर्त्तरि भृशं विमलाः परलोकमभ्युपगते विविशुः। ज्वलनं त्विष इति”। एवं अंशुस्वामी त्विट्पतिप्रभृतयोऽप्यत्र।

**अंशुमत्** पु० अंशु+अस्त्यर्थे मतुप्। सूर्ये, अंशुमाल्यादयो-

यत । सूर्य्यवंश्ये असमञ्जःपुत्रे दिलीपजनके राजभेदे तत्कथा रा०आ०४२अ०। अंशुमति पदार्थमात्रे त्रि० ।

अंशुमती स्त्री० अंशु सूक्ष्मं दलमस्याः अंशु+मतुप्+ङीप्। शालपर्ण्याम् (शालपान्) ।

अंशुमत्फला स्त्री० अंशुमानिव रक्तं फलं मोचकं यस्याः जातिवाचकत्वेऽपि फलान्ततया न ङीष् अजा० टाप्, अंशुमानिव समन्तात् प्रसृतं फलतीति फल-अच् वा । कदलीवृक्षे ।

अंशुमालिन् पु० अंशुभिर्मलते संवृणोति मल-णिनि ३त०, अंशवः मालेव ततः अस्त्यर्थे इनि वा । सूर्य्ये, द्वादश संख्यायाञ्च । किरणादिजालवति त्रि० स्त्रियां ङीप् ।

अंशुल पु० अंशुं प्रभां बुद्धिप्रतिभां लाति ला-क । चाणक्ये मुनौ, मुनिमात्रे च । अंशुग्राहके त्रि० ।

अंशुहस्त पु० अंशुः किरणो हस्त इव जलाद्याकर्षणसाधनं यस्य । सूर्य्ये । “शरैरुस्रैरिवोदीच्यान् उद्धरिष्यन् रसानिवेति” रघौ सूर्य्यकिरणानां रसाकर्षकत्वस्य दृष्टान्तविधयोक्तत्वादस्य किरणस्य रसाकर्षकत्वाद्धस्तत्वम् । तस्य च सहस्रांशूनां रसाकर्षकत्वमग्रे सहस्रांशुशब्दे वक्ष्यते ।

अंश्वादि पु०। ब० । स्वरविशेषार्थं पाणिनिगणपाठोक्ते शब्दसमूहे, “प्रतेरंश्वादयस्तत्पुरुषे” (६,२,१९३ पा०) स च गणः अंशु जन, राजन्, उष्ट्र, खेटक, अजिर, आर्द्रा श्रवण, कृत्तिका अर्द्धपुर ।

अंस विभाजने अद०चु०उभ०अंसयति ते आंसिसत् त । आधुनिक अंसापयतीत्यके । वि+विश्लेषकरणे प्रच्यावने च “व्यंसयामास तत् सैन्यमिति” भारतम् । अच् अंसः ।

अंस पुं अंस-कर्म्मभावादौ अच् । अंशशब्दार्थे, स्कन्धे च । “अंसनिषक्तचापः” “अंसारोपितचापेनेति” शास्त्रेऽपि स्कन्धे ।

अंसत्र न० अंसं स्कन्धं त्रायते त्रै-क । स्कन्धावरके कवचभेदे ।

अंसकूट पुंन० अंसः कूट इव उच्चत्वात् । वृषस्कन्धे “राजन्योद्यांसकूटक्रथनपटुरटद्घोरधारः कुठार इति प्रबोध०

अंस(सि)भार पु० अंसे धृतः भारः शा० त० वा अलुक् । स्कन्धधृतभारे । [ठन् । स्कन्धभारहारके, स्त्रियां ङीष् ।

अंस(सि)भारिक त्रि० अंस(से) भारेण हरति भस्त्रा०

अंसल त्रि० अंस+बलोपाधिके अस्त्यर्थे लच् । बलवति ।

अंस्य त्रि० अंसे भवः अंस+यत् । स्कन्धभवे, “ये अंसा ये अङ्ग्याः सूचिका” इति वेदः । अंस-कर्म्मणि यत् । विभाज्ये त्रि० ।

अंह भासने अद० चु० उभ० । अंहयति ते आञ्जिहत् त ।

अंहति स्त्री० हन्ति दुरितमनया हन-अति, अंहादेशः । दाने ।

अंहस् न० अमति गच्छति प्रायश्चित्तेन अम-असुन् हुक् च । पापे “मुञ्चत्वंहस” इति वेदः स्वधर्म्मत्यागे “लोभोऽनृतं चौर्य्यमनार्य्यमंहो ज्येष्ठा च माया कलहश्च दम्भः” इति भागवते कलिं प्रति परीक्षिद्वाक्यम् अंहः स्वधर्म्मत्यागः इति श्रीधरस्वामिरघुनन्दनादयः ।

अंहिति स्त्री० अहि-क्तिन् पृषोदरादित्वात् इट् । दाने ।

अंहु त्रि० अहि-बाह० कु । पापकारिणि । “आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या” इति (ऋ० ८, ७) “अंहोः” पापकारिणः हननशीलस्येति वेददीपः ।

अंहुर त्रि० अहि-मद्गुरादि० उरच् । गतियुक्ते “सप्त मर्य्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्” इति वेदः ।

अंह्रि पु० अंहति गच्छत्यनेन अहि-वङ्क्र्यादि० क्रिन् । पादे वृक्षादीनां मूले, तेन अंह्रिपो वृक्षः । चतुःसंख्यायाञ्च ।

अंह्रिप पु० अंह्रिणा मूलेन पिबति सिक्ततोयम् पा-क । वृक्षमात्रे । [उपरिभागे च ।

अंह्रिस्कन्ध पु० अह्रेः स्कन्धइव । गुल्फेऽङ्गुष्ठाङ्गुलिमध्यभागस्य

अक वक्रगतौ भ्वा० प० घटादि । अकति आकीत् । अकयति ।

अक न० न कम् सुखम् सुखवचनस्य नञ्योगे विरोध्यर्थाभिधायिता न० त० । दुःखे । नास्ति कं सुखं यस्मात् । पापे । नाकशब्दे अकं दुःखं पापं वा ।

अकच पु० अकाय दुःखाय चायते चाय-ड । केतुग्रहे तस्य चोदयेन लोकोपद्रवस्य शास्त्रप्रसिद्धिः केतुशब्दे विस्तरः ।“उपप्लवाय लोकानां धूमकेतुरिवोत्थित इति कुमा०। नास्ति कचो यस्य । केशशून्ये (टाकरोगयुक्त) त्रि० ।

अकडम न० अ,क,ड,म, इत्यादिक्रमेण आद्यकोष्ठादौ वर्णस्य दायोऽस्त्यत्र अच् । याहग्गोपालमन्त्रस्य शुभाशुभविचारोपयोगिनि चक्रभेदे । तत्स्वरूपं यथा रुद्रयामले— “रेखाद्वयं पूर्व्वपरे मध्ये रेखाद्वयं लिखेत् । चतुष्कोणे चतूरेखाऽकडमं चक्रमण्डलम् । भ्रामयित्वा महावृत्तं निर्म्माय वर्णमालिखेत् । अकारादिहकारान्तान् क्लीवहीनान् लिखेत्ततः । एकैकक्रमतो लेख्यान्कोष्ठादिकष्टबालकान् । वामावर्त्तेन गणयेत् क्रमशो वीरवल्लभ ! । दक्षमार्गेण गणयेन्नामादिवर्णकादिकान् । मेषादितोऽपि नामान्तं क्रमशः मन्त्रपण्डितः । सिद्धसाध्यसुसिद्धारीन् पुनः सिद्धादिकान् पुनः । नवैकपञ्चमे सिद्धः साध्यः षड्दशयुग्मके । सुसिद्धस्त्रिसप्ते रुद्रे वेदाष्टद्वादशे रिपुः” इति । (क्लीववर्णाः ऋ ॠ लृ ॡ वर्णाः)

"गोपालेऽकडमं स्मृतमिति" तत्रैवोक्तम्। एतच्च गोपालमन्त्रविषये सिद्धादिचक्रत्वेन व्यवह्रियते ।

**अकथह** न० अ,क,थ,ह, इत्यादिवर्णसंघक्रमेण वर्णसमुदायोऽस्त्यस्मिन् अच् । तन्त्रोक्तमन्त्रग्रहणार्थं तत्तन्मन्त्राणां शुभाशुभविचारोपयोगिनि चक्रभेदे तत्स्वरूपं यथा रुद्रयामले। "वक्ष्येऽकथहचक्राख्यं सर्वचक्रोत्तमोत्तमम् । यस्य विचारमात्रेण कामरूपी भवेन्नरः ॥ तत्प्रकारं वीरनाथ । क्रमशः क्रमशः शृणु । चतुरस्रे लिखेत् वर्णान् चतुःकोष्ठसमन्विते ॥ चतुःकोष्ठ-चतुष्कोष्ठचतुष्टयसमन्वितम् । मन्दिरं षोडशं प्रोक्तं सर्वकर्मार्थसिद्धिदम् ॥ चतुरस्रं लिखेत् कोष्ठं चतुष्कोष्ठसमन्वितम् । पुनश्चतुष्कं तत्रापि लिखेद्धीमान् क्रमेण तु ॥ सर्वेषु स्टहमध्येषु प्रादक्षिण्यक्रमेण तु । अकारादिहकारान्तान् लिखित्वा गणयेत्ततः ॥ चन्द्रमग्निं रुद्रवर्णं नवमं युगलन्तथा ॥ वेदमङ्कं दश रसं वसुं षोडशमेव च । चतुर्दशं भास्करं च सप्त पञ्चदशेति च ॥ वह्नीन्दू कोष्ठगं वर्णपञ्चाशैकं प्रवोदितम् । एतदङ्कस्थितान् वर्णान् गणयेत् तदनन्तरम् ॥ नामाद्यक्षरमारभ्य यावत् मन्त्रादिमाक्षरम् । चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम् ॥ पुनः कोष्ठगकोष्ठेषु सव्यतो नामकादितः। सिद्धः साध्यः सुसिद्धोऽरिः क्रमशो गणयेत् वशी ॥ सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः । सुसिद्धो ग्रहणाज्ज्ञानी शत्रुर्हन्ति चिरायुषम् । सिद्धस्तु बान्धवः प्रोक्तः साध्यः सेवक उच्यते । सुसिद्धः पोषकः प्रोक्तः शत्रुर्घातक उच्यते । सिद्धकोष्ठस्थिता वर्णा बान्धवाः सर्वकामदाः । जपेन बन्धुः सिद्धः स्यात् सेवकोऽधिकसेवनात् ॥ पुष्णाति पोषकोऽभीष्टं घातको नाशयेत् ध्रुवम् । सिद्धो यथोक्तकालेन द्विगुणात् सिद्धसाध्यकः ॥ तत्सुसिद्धोऽर्द्धजप्येन सिद्धारिर्हन्ति बान्धवान् । साध्यसिद्धो द्विगुणतः साध्यसाध्यो निरर्थकः ॥ तत्सुसिद्धो द्विगुजपात् साध्यारिर्हन्ति गोत्रजान् । सुसिद्धसिद्धोऽर्द्धजपात् तत्साध्यो द्विगुणाधिकात् । तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा ॥ अरिसिद्धः सुतान् हन्यात् अरिसाध्यस्तु कन्यकाः । तत्सुसिद्धस्तु पत्नीघ्नस्तदरिर्हन्ति साधकमिति" ॥ एतच्च सर्वमन्त्रेषु सिद्धादिचक्रत्वेन व्यवह्रियते ।

**अकनिष्ठ** पु० अके वेदनिन्द्रारूपे पापे निष्ठाऽस्य । बुद्धे । न० त० । कनिष्ठभिन्ने ज्येष्ठे मध्यमादौ च त्रि० ।

**अकनिष्ठग** पु० अकनिष्ठान् बुद्धान् पातीति पा-क । बुद्धाधिपभेदे । न० त० । कनिष्ठभिन्नपालके त्रि० ।

**अकम्पित** पु० कम्पितं बुद्धितत्त्वचालनं तन्नास्ति यस्य । बुद्धभेदे । कपि-कर्त्तरि क्त न० त० । सङ्कल्पितवस्तुभ्योऽनुपरते दृढाध्यवसाये त्रि० । भावे क्त न० व० । कम्पनशून्ये त्रि० ।

**अकरण** न० कृ-भावे ल्युट् अर्थाभावे न० त० । करणाभावे निवृत्तौ "अकरणे प्रत्यवायानुबन्धित्वं नित्यत्वमिति" मीमांसकादयः। "अकरणात् मन्दकरणं श्रेय" इति स्मार्त्ताः अकरणञ्च न्यायादिमते करणाभावः, मीमांसकवेदान्तिमते निवृत्तिः । अत एव अष्टम्यां मांसं नाश्नीयादित्यादौ सर्वत्र निषेधसमभिव्याहृतक्रियाविषयकनिवृत्त्यैव विध्यर्थान्वयः इत्युक्तं मीमांसकैः । शङ्कराचार्य्येण च "नासतो विद्यते भावोनाभावो विद्यते सत" इति गीताश्लोकभाष्ये महता प्रबन्धेन सत्पदार्थादभावोत्पत्तिं निरस्यता निषेधस्य निवृत्तिरूपत्वमुररीकृतम् । निवृत्तिश्च प्रवृत्तिविरोधी भावरूपोधर्मविशेषः । नास्ति करणं देहेन्द्रियादिकमस्य । सर्वकरणशून्ये परात्मनि पु० । "अपाणिपादोजवनोग्रहीतेत्यादि" श्रुतौ तस्य सर्वकरणशून्यत्वमुक्तम् ।

**अकरणि** स्त्री० नञ्+कृ-आक्रोशे अनि । करणं मा भूदित्याक्रोशात्मके शापे । "तस्याकरणिरेवास्तु" इति ।

**अकरा** स्त्री० अकं दुःखं सेवनात् लोकानां राति गृह्णाति नाशयतीति रा-क । आमलक्याम् । नास्ति करोऽस्य । करशून्ये त्रि० । न करोति कृ-अच् न० त० । कारकभिन्ने करणशीलभिन्ने निवृत्तिपरे च त्रि० ।

**अकरुण** त्रि० नास्ति करुणा यस्य यत्र वा । दयाशून्ये दैन्यशून्ये च ।

**अकर्कश** त्रि० न कर्कशः । कार्कश्यविरोधिमृदुत्ववति कोमले

**अकर्ण** त्रि० नास्ति कर्णोऽस्य । श्रवणेन्द्रियशून्ये "अचक्षुरकर्ण" इति श्रुतिः । सर्पे पु० तस्य चक्षुषैव श्रवणात्तदिन्द्रियशून्यत्वम् । राधेयः कर्णः तच्छून्ये त्रि० । "अनर्जुनमकर्णं वा जगदद्येति निश्चितमिति" भारतम् ।

**अकर्त्तन** त्रि० उच्चस्त्वं फलं कर्त्तिनं शीलमस्य कृत-युच् न० त० । उच्चविरोधिह्रस्वत्ववति खर्वे । कृत-भावे ल्युट् न० ब० । छेदनाकर्त्तरि त्रि० ।

**अकर्त्तव्य** त्रि० कृ-कर्म्मादौ तव्य न० त० । करणानर्हे निषिद्धे पदार्थे । भावे क्त न० ब० । क्रियाशून्ये कूटस्थे चैतन्ये न० । "न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चनेति" गीतायामीश्वरस्य सर्वक्रियानिषेधात् तथात्वम् ।

**अकर्तृ** त्रि० कर्तृ+न० त० । कर्तृभिन्ने कर्तृसदृशे कारके

"अकर्त्तरि च कारके" पा० । कर्त्तृभिन्ने, क्रियाशून्ये च "पुरुषोऽकर्त्ता भोक्ता"चेति सांख्यमतम् ।

**अकर्म्मक** त्रि० नास्ति कर्म्म यस्य ब० कप् । व्याकरणोक्ते कर्म्मशून्ये धातौ, "लः कर्म्मणि च भावे चाकर्म्मकेभ्य इति" पा० । "फलव्यापारयोरेकनिष्ठतायामकर्म्मक इति" हरिः । स्त्रियां टापि कापि अतइत्त्वम् अकर्म्मिका । "प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रियेति" हरिः ।

**अकर्म्मण्य** त्रि० न कर्म्मणे प्रभवति कर्म्मन्+यत् न०त० । कर्म्मानर्हे "अकर्म्मण्य' तिथिमलं विद्यादेकादशीं विनेति" ति०त० ।

**अकर्म्मन्** अनुपलब्ध्यादिवत् अर्थाभावे न० त० । कर्म्माभावे "कर्म्मणोह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्म्मणः । अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणोगतिरिति" गीता अकर्म्मणः अक्रियाया इति तद्भाष्यम् । दुष्टं कर्म्म अप्राशस्त्ये न० त० । दुष्टकार्य्ये अकर्म्मादावभिरत इति स्मृतिः । न०ब० । कार्य्यशून्ये त्रि० "अकर्म्मा दस्युरभित" इति वेदः ।

**अकल** पु० नास्ति कलाऽवयवोऽस्य । निरंशे परमात्मनि "चिन्मयस्याद्वितीयस्य निष्कलस्ये"त्युक्तेस्तस्य तथात्वम् । गीतादिकलाशून्ये, अवयवशून्ये च त्रि० ।

**अकल्कन** त्रि० कल्कनं दम्भः न०ब० । दम्भरहिते "अकल्कनो निरारम्भः" इति गीता । वैद्यकोक्तौषधपाकविशेषः कल्कनं, तच्छून्ये च । नास्ति कल्कोऽस्य ब०कप् । अकल्ककोऽप्यत्र । अत एव गीतायामकल्कक इत्यपि क्वचित् पाठः ।

**अकल्का** स्त्री० न कल्कः मलोयस्य न० ब० । निर्म्मलत्वेन शुभ्रायां ज्योत्स्नायाम् । मलादिशून्ये त्रि० ।

**अकल्य** त्रि० कलासु साधुः कला+यत् कल्यः निरामयः न० त० । अस्वास्थ्ययुक्ते । कल्यते इति कल-यत् कल्यं कल्पनीयं मिथ्याभूतं न० त० । सत्ये "अपि त्वनीनवदपनीताशेषशल्यमकल्यसन्ध" इति दशकु० । अकल्यसन्धः सत्यसन्ध इत्यर्थः ।

**अकवा** त्रि० न कव्यते वर्ण्यते कव-व्वा न०त० । अवर्ण्नीये "प्र मजायन्ते अकवा महोभिरिति" वेदः ।

**अकस्मात्** अव्य० न कस्मात् किञ्चित्कारणाधीनत्वं यत्र अलुक् स० । कारणानधीने अतर्कितोपनते । "कथमयमकस्माद्गगनचारिणामाकाशे करुणध्वनिः श्रूयते" इति नाटकम् "सामान्यलक्षणा कस्मादकस्मात् परिलुप्यते" इति पक्षधरः । "अकस्मात् नगरोपान्ते कथं धूमायते चितेति" हास्या० । पा० चार्व्वादिगणे तथा पाठाच्च न पञ्चम्या लुक् तेन आपतितमवाद्यर्थे ठञि टिलोपे आकस्मिक इति ।

**अकाण्ड** त्रि० न०त० । अनवसरे अनुचितकाले "तातस्त्वमकाण्डे एव प्राणहरमतीकारसुपहृत्यमिति" काद० । अस्य नि० एतदन्तत्वमिति केचित् । ब० । स्कन्धशून्ये वृक्षे पु० ।

**अकाम** त्रि० न कामयते काम-णिङ्-अच् । इच्छाशून्ये "नाकामो दातुमर्हतीति" स्मृतिः । कामनाविषयफलाननुसन्धायिनि । "अकामो विष्णुकामोवेति" श्रुतिः स्मरविकारशून्ये च । "भयादकामाऽपि हि दृष्टिविभ्रममिति" शकु० ।

**अकामतस्** अ० अकाम+पञ्चम्यास्तसिल् । अनिच्छात इत्यर्थे "अकामतः कामचारे चौरवद्दण्डमर्हतीति" स्मृतिः ।

**अकाय** पु० नास्ति कायोऽस्य । कायशून्ये राहौ तस्य चामृताहरणकाले विष्णुना छिन्नमस्तकत्वेऽपि अमृतप्राशनेन अमरत्वमित्युपाख्येयम् । "अमृतास्वादनविशेषाच्छिन्नमपि शिरः किलासुरस्येदम् । प्राणैरपरित्यक्तं पहतां यातं वदन्त्येके इति" बृहत्स० । देहशून्ये त्रि० । परमात्मनि पु० । निष्कलस्याशरीरित्वदृश्युक्तेस्तस्य तथात्वम् ।

**अकार** पु० अ+स्वरूपार्थे कार । अस्वरूपे वर्णे एवमिकारादयोऽपि तत्तद्वर्णस्वरूपेषु । कारः करणं न० ब० । क्रियारहिते त्रि० ।

**अकारण** त्रि० नास्ति कारणं हेतुरुद्देश्यं वा यस्य । हेतुरहिते उद्देश्यरहिते च "किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते" इति कुमा० "ततोऽकारणवैरी नः "कारणादपरे परे इति" नैषधम् । निष्प्रयोजने च । न० त० । कारणभिन्ने "अकारणगुणोत्पन्ना" इति भाषा० ।

**अकारिन्** त्रि०कृ-णिनि न०त० । कर्त्तृभिन्ने, करणानिवृत्ते च ।

**अकार्पण्य** त्रि० नास्ति कार्पण्यं यस्य । दैन्यशून्ये, कृपणताशून्ये च ।

**अकार्य्य** न० अप्रशस्तं कार्य्यम् अप्राशस्त्ये न० त० । कुत्सितकार्य्ये निषिद्धकार्य्ये च । "अकार्य्यमिव पश्यामि स्वमांसमिव भोजने" । "किमकार्य्यं कदर्य्याणामिति" हितो० । कर्त्तव्यभिन्ने त्रि० ।

**अकाल** पु० अप्राशस्त्ये न०त० । अप्रशस्तकाले विहितकर्म्मसु पर्य्युदस्तयाऽभिहिते गुरुशुक्राद्यस्तकालादौ, स च मलमास, गुरुशुक्रबाल्यवृद्धत्वास्तमय, सिंहमकरान्यतरगुरुस्थिति, पूर्व्वराश्यनागतातिचारिगुरुकवत्सर, पूर्व्वराशिसंक्रमिष्यमाणातिचारिगुरुकपक्षत्रय, वक्रगुरुकाष्टाविंशतिदिवस, भूमिकम्पाद्यद्भुतसप्ताह, सिंहादित्य, गुर्व्वादित्य, पौषमासचतुष्टयान्य-

तमैकद्वित्रितदधिकान्यतमदिनहृस्याकालिकदृष्ट्युत्तरैकत्रिसप्ताह्यान्यतमदिनादि, कृमो मलमासतत्त्वाद्युक्तः तत्तद्विहितकर्म्मसु पर्य्युदस्ततयाऽभिहितः कालः एतत्प्रमाणानि सप्रति प्रसवं मलमासतत्त्वशुद्धितत्त्वचिन्तामण्यादौ द्रष्टव्यानि "अकाले वीक्षितो विष्णुर्हन्ति पुण्यं पुराकृतमिति" पु० । अप्राप्तः अनुचितः कालः प्रा०त० । अप्राप्तकाले "नाकाले म्रियते कश्चित् प्राप्ते काले न जीवतीति" पुराणम् । "अकालजलदोदय" इति रघुः । "अकालमृत्युहरण"मिति तन्त्रम् । "वर्त्त्याधारस्नेहयोगात् यथा दीपस्य संस्थितिः । विक्रियापि हि दृष्टैवमकाले प्राणसंक्षय" इति याज्ञ० । "अकालजन्तु विरसं न धान्यं गुणवत् स्मृत"मिति, वैद्य०। "नाकालवृष्टौ कुर्व्वीत व्रतबन्धशुभक्रियामिति" स्मृतिः अनुचितकाले वृष्टाविति तदर्थः। "परमेकाङ्क्षतिः काले नाकाले बहुकोटयः इति ति०त० । नास्ति कालोपाधिजन्यजातमस्य। जन्यशून्ये प्रलये । "अकालकालमेघमेदुरेति काद० । अप्राप्तः कालो यस्य प्रादिभ्यः धातुजस्येति व० उत्तरपदलोपश्च। अप्राप्तकाले अनुचितकाले पदार्थे त्रि० । कालः कृष्णः न०त०। कृष्णविरुद्धशुभ्रवर्णे पु० । कृष्णविरोधिशुभ्रत्ववति त्रि० ।

**अकिञ्चन** त्रि० नास्ति किञ्चन यस्य मयूर० त० । निर्धने, "अकिञ्चनः सन् प्रभवः स सम्पदा"मिति कुमा० । दरिद्रे, "अकिञ्चने किञ्चननायिकाङ्के किमारकूटाभरणेन न स्त्रिय" इति नैषधम् ।

**अकिञ्चनता** स्त्री० अकिञ्चनस्य भावः तल् । संन्यासाङ्गे सर्व्वद्रव्यत्यागरूपे यमविशेषे "व्रतं दानं परित्रज्या तपस्या नियमस्थितिः । अहिंसाऽसत्यतास्तेयब्रह्माकिञ्चनता यम" इति स्मृतिः ब्रह्म वेदमन्त्रः ईश्वरमननं वेत्यर्थः । निर्द्धनत्वे च । भावे त्व । तत्रैवार्थे न० । "स्थाने भवानेकनराधिपः सन्नकिञ्चनत्वं मखजं व्यनक्तीति" रघुः ।

**अकिञ्चिज्ज्ञ** त्रि० न किञ्चित् जानाति ज्ञा–क अन्नाद्यभोजीतिवत् असमर्थस० । किञ्चिदनभिज्ञे, किञ्चिद्ज्ञानशून्ये, अल्पज्ञाने, ज्ञानशून्ये च ।

**अकिञ्चित्कर** त्रि० न किञ्चित् करोति कृ–अच् असमर्थस० । किञ्चिदकारके क्रियाशून्ये, निष्प्रयोजने च ।

**अकुण्ठ** त्रि० नास्ति कुण्ठा यस्य। प्रतिबन्धशून्ये, कर्म्मदक्षे च।

**अकुतोभय** त्रि० नास्ति कुतोऽपि भयं यस्य मयू०स०। कुतश्चिदपि भयशून्ये ।

**अकुप्य** न० गुप्यते निस्वताव्यञ्जकतया–लज्जाकरत्वात् गुप–क्यप् नि० कस्य पः कुप्यं रैत्यादि न०त० । स्वर्णे, रूप्ये च ।

**अकुमार** त्रि० न कुमारः । अतीतकौमारावस्थे तरुणे ।

**अकुल** त्रि० अप्रशस्तं कुलमस्य न० ब० । अप्रशस्तकुले "कुलान्यकुलतां यान्तीति" मनुः ।

**अकुशल** त्रि० न कुशलं मङ्गलमस्य। मङ्गलविरोध्यमङ्गलयुक्ते। न०त०। कुशलविरोधिनि अभद्रे न०। दक्षभिन्ने त्रि०।

**अकूपार** पु० न कूपमृच्छति ऋ–अण् । वृहत्कच्छपे । न कुं पृथ्वीं पिपर्त्ति पृ–पालनपूरणयोः अण् वा०दीर्घः, न कुत्सितं पारं गन्तव्यदेशो यस्य वा, पृ०दीर्घः । महापारे समुद्रे, दूरगामिनि सूर्य्ये च पु०। पृ०। अकूपारोऽप्यत्र ।

**अकृत** त्रि० कृ–कर्म्मणि क्त न०त०। कृतभिन्ने अन्यथाकृते । "कृताकृतावेक्षणादौ ब्रह्मा ऋत्विक् नियुज्यते" इति याज्ञिकप्रसिद्धिः । "अकृतव्यूहाः पाणिनीया" इति परिभाषा । न कृतो व्यूहः विशेषेण ऊहो यैः विनाशोन्मुखं दृष्ट्वा कृतमपि कार्य्यं नाशयन्तीति तदर्थः सि०कौ० । बलपूर्व्वकृते ऋणलेख्यपत्रादौ च "सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीदिति" मनुः । "बलात् कुरुत पापानि सन्तु तान्यकृतानि वः । सर्व्वान् बलकृतानर्थानकृतान् मनुरब्रवीदिति" नैषधम् । पुत्रिकात्वेन अकल्पितायां दुहितरि स्त्री । "अकृता वा कृता वापि यं विन्देत् सदृशात् सुतमिति" स्मृतिः । भावे क्त अभावार्थे न०त० । करणाभावे निवृत्तौ "नैव तस्य कृतेनार्थो नाकृतेनेह कश्चनेति" गीता ।

**अकृतज्ञ** त्रि० न कृतं जानाति ज्ञा–क असम०स० । कृतोपकाराद्यकारके, कृतघ्ने, "आत्मारामाः पूर्णकामाः अकृतज्ञा सुहृद्द्रुहः" इति भागवतम् ।

**अकृतिन्** त्रि० कृतमनेन कृत+इनि न०त० । कार्य्याक्षमे क्रियासु पाटवरहिते ।

**अकृत्य** न० कृ–क्यप् अप्रशस्ते न०त० । दुष्कार्य्ये चौर्य्यादिकरणे । न कृत्यमस्य न०ब० । कर्म्मरहिते त्रि० ।

**अकृत्रिम** त्रि० न कृत्रिमः न०त० । कृत्रिमभिन्ने स्वभावसिद्धे । "कृत्रिमाकृत्रिमयोर्मध्ये कृत्रिमे कार्य्यसंप्रत्यय" इति परिभाषा "अकृत्रिमस्नेहरसानुविद्धमिति" ।

**अकृत्वा** अ० न कृत्वा न+कृ–क्त्वा । करणानन्तर्य्ये "अकृत्वा कुलसन्ततिमिति" मनुः ।

**अकृष्टपच्य** त्रि० अकृष्टे क्षेत्रे पच्यते पच–क्यप् ७त० । हलाद्यकृष्टक्षेत्रे पच्यमाने नीवारादौ शस्ये ।

**अकल्क** पु० नास्ति कल्कः मलो यस्य । निष्कलङ्के चन्द्रे "चन्द्रमा वै ब्रह्माऽकल्कः" इति श्रुतिः । न०त० । कल्कत्व-विरोधिशुभ्रत्वे पु०। तद्वति, शुद्धे च त्रि० । [पुण्यशीले ।

**अकल्ककर्म्मन्** त्रि० न कल्कं शुद्धं कर्म्म यस्य । शुद्धकर्म्मकारिणि

**अकेतु** पु० नास्ति केतुश्चिह्नं यस्य । चिह्नरहिते अज्ञाने, "केतुं कृण्वन्नकेतवे" इति वेदः य० (२९,३७) अकेतवे अज्ञानायेति वेददीपः । चिह्नध्वजाभ्यां रहिते त्रि० ।

**अकौशल** त्रि० न-कुशलः अकुशलस्ततो भवादौ अण् आद्य-चो वा न वृद्धिः । अकुशलभवादौ । आद्यचो वा वृद्धौ आकौशलोऽप्यत्र । कुशलस्य भावः अण्+न०त० । असौष्ठवे न० । [कायति कै क वा । मातरि जनन्याम् ।

**अक्का** स्त्री अक-क, अच्यते इत्यक् अन्च–क्विप् गतिः तस्यै

**अक्त** त्रि० अज्यते अन्ज-कर्म्मणि क्त । कृताञ्जने, "अक्तं रिहाणा व्यन्तु वय इति" "अक्ताः शर्करा उपदधातीति" च श्रुतिः परिमिते, व्याप्ते, सङ्कुले च ।

**अक्तु** पु० अन्ज-तु नि० । रात्रौ, तदुपलक्षिते तमसि च "रुद्रं दिवा वर्द्धया रुद्रमक्तौ" इतिवेदः ।

**अक्त्र** न० अन्ज-बा० त्र । वर्म्मणि । [इतिवेदः ।

**अक्र** त्रि० अन्चु गतौ रक् । स्थिरे । "उदु स्वरुर्नवजा नाक्रः"

**अक्रम** त्रि० नास्ति क्रमः परिपाटी पादः क्रमणं वाऽस्य । परिपाटीशून्ये युगपत्क्रमे एककाले । "तस्मार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः सम्भवतीति" सर्व्व द० पादशून्ये आक्रमणशून्ये च । क्रम-भावे घञ् अभावार्थे न०त० । क्रमणाभावे पु० । अ-व्ययीभावः । क्रमाभावे अव्य० ।

**अक्रान्ता** स्त्री न क्रम्यते स्म कण्टकावृतत्वात् क्रम-क्त न० त० । वृहत्याम् । क्रान्तभिन्ने विष्णुना क्रान्ते च त्रि० ।

**अक्रतु** त्रि० नास्ति क्रतुर्यज्ञः संकल्पो वा यस्य । यज्ञरहिते संकल्परहिते च परमात्मनि पु० "त्वक्रतुर्यजिनो ब्रह्मवाच" इति वेदः ।

**अक्रिया** स्त्री० अभावार्थे न०त० । क्रियाभावे "प्रधानस्या-क्रिया यत्र साङ्गं तत् क्रियते पुनः । तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रियेति" "अक्रिया त्रिविधा प्रोक्तेति" च स्मृतिः । न०ब० । कर्म्मशून्ये शुष्कादौ च त्रि० । सर्व्वकर्म्मशून्ये परमात्मनि पु० । [वंश्ये क्षत्रियभेदे पु०।

**अक्रूर** त्रि० न क्रूरः । क्रूरभिन्ने सरले, स्वनामप्रसिद्धे वृष्णि-

**अक्रोध** पु० न क्रोधः अभावार्थे न०त० । क्रोधाभावे यमभेदे "अहिंसा क्षान्तिरक्रोधः सत्यास्तेयापरिग्रहा" इति पुरा-णम् । "अक्रोधं शिक्षयन्त्यन्ये क्रोधना ये तपोधना इति नैष० न० ब० । क्रोधशून्ये त्रि० ।

**अक्लम** पु० न क्लमः अभावार्थे न०त० । श्रमाभावे । न० ब० । श्रमशून्ये त्रि० ।

**अक्लिष्ट** क्लिश-भावे क्त न०७ब० । क्लेशरहिते कर्म्मादौ । क्लिश-कर्त्तरि क्त न०त० । श्रान्तभिन्ने त्रि० । [ शून्ये त्रि० ।

**अक्लेश** पु० अभावार्थे न०त० । क्लेशाभावे । न०ब० । क्लेश-

**अक्ष** व्याप्तौ संहतौ च भ्वा० प० वेट् । अक्षति अक्ष्णोति आक्षीत् आष्टाम् आक्षिष्टाम् आनक्ष । क्त अष्टः क्तिन् अष्टिः शतृ अक्ष्णुवन् । अक्षि-कनिन् अक्ष ।

**अक्ष** न० अश्नुते व्याप्नोति विषयान् स्ववृत्त्या संयोगेन वा अश-स । इन्द्रिये, "अक्षाणि पण्डितजना विदुरिन्द्रि-याणि" उ०नेत्रे, अधोक्षज इति । तुत्थे (तुँते) सौवर्चले च । ज्योतिषोक्ते राशिचक्रावयवभेदे । "शङ्कुर्नरोना कथितः सएव खार्द्धाद्रवेर्या विषुवद्दिनार्द्धे । नतिः पलोऽक्षश्च सएव तज्ज्ञैस्तलोन्नतिर्याक्ष सएव लम्ब इति" सिद्धान्तशिरोमणिगणिताध्यायोक्ते विषुवद्दिनार्द्धे खार्द्धमिक्षया नतिरूपे पलांशभेदे पु० । एतद्विवरणम् भास्कराचार्य्येण प्रमिताक्षरायां स्वयमेव कृतम् । यथा "निरक्षदेशे (लङ्का-विभागे) यदेव विषुवन्मण्डलं तदेव समण्डलं ततः क्षितिजादन्यदुन्मण्डलं नाम वलयं नास्ति तत्र ध्रुवौ च क्षितिजसंस्थे, अथ निरक्षदेशात् द्रष्टा यथा यथा उत्तरतो गच्छति तथा तथा उदक्ध्रुवमुन्नतं पश्यति तथा यैर्भागैर्ध्रुवउन्नतस्तैरेव भागैः अक्षसंज्ञैः खस्वस्तिकात् दक्षिणतोविषुवन्मण्डलं नतं पश्यतीति" । "चन्द्राश्वि १२ निघ्ना पलभाङ्किता च लङ्कावधिः स्यादिह दक्षिणोऽक्ष" इति भास्वती । "उदग्दिशं याति यथा यथा नरस्तथा तथा स्यान्नतमृक्षमण्डलम् । उदग्ध्रुवं पश्यति चोन्नतं क्षितेस्तद-न्तरे योजनजाः पलांशका इति सिद्धान्तशि० गोलाध्यायः यदि भूपरिधि (४९६७) योजनैश्चक्रांशाः (३६०) लभ्यन्ते तदापसारयोजनैः किमिति, यद्वाक्षपरिधिना (३६०) भूप-रिधिः (४९६७) लभ्यते तदा अक्षांशैः किमिति, त्रैराशिकेन फलं निरक्षदेशलङ्कास्वदेशयोरन्तरयोजनानि स्युरिति, स्वयमेव प्रमिताक्षरायां व्याख्यातम्, तथैव गोलाध्यायोक्तं दर्शितम् । "योजनसंख्या भांशैः (३६०) गुणिता स्वपरिधि (४९६७) हृता भवन्त्यंशाः (अक्षांशाः) । अक्षांशेभ्यो भूमौ कक्षायां (कक्ष ३६० कक्षायाम्) वा योजनानि च व्यस्तमिति" । व्यस्तमिति भूपरिधिगुणिता भांशहृता

अक्षसंख्या (योजनसंख्या) भवतीति। निरक्षदेशात् क्षितिचतुर्थांशे किल मेरुस्तत्र नर्वतिः पलांशाः (अक्षांशाः) इति च तत्रैवोक्तम्। पाशके कर्षपरिमाणे च न० विभीतकवृक्षे (बयडा) तुषे, आत्मनि रुद्राक्षे सर्पे जातान्धे गरुडे च पु०। तत्र रुद्राक्षे अक्षमाला। कर्षे अनुभवति धाराभिरक्षमालाभिरिति, विभीतके "यथा वै द्वे आमलके, द्वे वा कोले द्वौ वाक्षौ इति" श्रुतिः। व्यवहारे अक्षदर्शकः। रावणसुतभेदे पु०। तत्कथा रामा० सु० ४३ अ०।

**अक्षक** पु० अक्ष इव कायति कै-क। तिनिशवृक्षे। स्वार्थे-कन्। अक्षशब्दार्थे प्रकृतिलिङ्गम्। [कन्। तत्रैव।

**अक्षकूट** पु० अक्षस्य चक्षुषः कूटइव। नेत्रतारायां, स्वार्थे

**अक्षक्षेत्र** न० अक्षनिमित्तं क्षेत्रम् शा०त०। ज्योतिषोक्तेषु अक्षसाधनार्थं क्षेत्रतया कल्पितेषु अक्षभवेषु अष्टसु क्षेत्रेषु। तानि च सिद्धान्तशिरोमणौ गणिताध्याये दर्शितानि यथा। "भुजोऽक्षभा कोटिरिनाङ्गुलो ना कर्णोऽक्षकर्णः१ खलु मूलमेतत् क्षेत्राणि यान्यक्षभवानि तेषां विद्धेव मानार्थयशःसुखानाम्॥ लम्बज्यका कोटिरथाक्षजीवा भुजोऽत्र कर्णस्त्रिभुजे २ त्रिभज्या। कुज्या भुजः कोटिरपक्रमज्या कर्णोऽग्रका च त्रिभुजं तथेदम्३॥ तथैव कोटिः समवृत्तशङ्कुरग्रा भुजस्तद्धृतिरत्र कर्णः४। भुजोऽपमज्या समना च कर्णः कुज्योनिता तद्धृतिरत्र कोटिः५॥ अग्रादिखण्डं कथिता च कोटिरुद्वृत्तना दोः श्रवणोऽपमज्या६। उद्वृत्तना कोटिरथाग्रकाग्रखण्डं भुजस्तच्छ्रवणः क्षितिज्या७॥ खण्डं यदूर्ध्वं समवृत्तशङ्कोर्यस्तद्धृतेस्तावथ कोटिकर्णौ। अग्रादिखण्डं भुज ८ एवमष्टौ क्षेत्राण्यमून्यक्षभवानि तावत्॥" क्षेत्राणि दर्शयेत्, "तत्र दक्षिणोत्तरमण्डले विषुवद्वृत्तसम्पातादधो यावांल्लम्बः क्षितिजसमसूत्रपर्यन्तः सा तत्र कोटिः, लम्बनिपातकुमध्ययोरन्तरं साऽक्षज्या तत्र भुजः, भूमध्यात्खमध्यगामिसूत्रं त्रिज्या सा तत्र कर्णः, इदमथमक्षेत्रम्, इष्टाहोरात्रवृत्तं यत्र क्षितिजे लग्नं तस्य प्राक्स्वस्तिकस्य चान्तरमग्रा (चापांशाः) तेषां ज्याऽग्रा तावती च प्रत्यक्क्षितिजे अग्राग्रयोर्निबद्धं सूत्रमुदयास्तसूत्रम् अहोरात्रवृत्तोन्मण्डलसम्पातस्य प्राच्यपरसूत्रस्य च यदन्तरं सा क्रान्तिज्या, सा तत्र कोटिः, अग्रा कर्णः, तदग्रयोरन्तरं सा कुज्या स भुजः इदमथवक्षेत्रं, तथाहोरात्रवृत्तसममण्डलसम्पातादधोवलम्बः, समवृत्तशङ्कुः सा कोटिः, अग्रा भुजः, अहोरात्रवृत्ते ज्यासमहकं तद्धृतिः कर्णः, इदमथक्षेत्रं, तथा कुज्योनिता तद्धृतिरहोरात्रवृत्ते ज्यार्धं सा कोटिः, उन्मण्डले क्रान्तिज्या स भुजः, समवृत्तशङ्कुः कर्णः, इदमक्षक्षेत्रम्, तथाहोरात्रोन्मण्डलयोः सम्पातादवलम्ब उन्मण्डलशङ्कुः स भुजः, उन्मण्डलवृत्ते क्रान्तिज्या कर्णः, उन्मण्डलशङ्कुमूलस्य प्राच्यपरसूत्रस्य च यदन्तरं तदग्रादिखण्डं सा तत्र कोटिः, इदमक्षक्षेत्रं, तथोन्मण्डलशङ्कुः कोटिः, शङ्कुमूलोदयास्तसूत्रयोरन्तरमग्राग्रखण्डं स भुजः, कोटिभुजाग्रयोरन्तरसूत्रं सा कुज्या स तत्र कर्णः, इदमक्षक्षेत्रं, तथोन्मण्डलशङ्कुना हीनः समशङ्कुस्तत्समशङ्कोरूर्ध्वं खण्डं सा कोटिः, कुज्योना तद्धृतिस्तद्धृतेरूर्ध्वखण्डं स कर्णः, अग्रादिखण्डं स भुजः, इदमक्षक्षेत्रम् एतान्यष्टौ तावत्कथितानि एवमन्यान्यपि भवन्ति।

**अक्षज** न० अक्षात् इन्द्रियसन्निकर्षात् जायते जन-ड। इन्द्रियविषयसन्निकर्षोत्पन्ने प्रत्यक्षज्ञाने वज्रे अस्थिरूपावयवजातत्वात्तस्य तन्नामत्वम्। प्रागुक्ताक्षार्थजाते त्रि०। ज्योतिषोक्ते अक्षभवे क्षेत्रादौ च।

**अक्षणिक** त्रि० न क्षणिकं न०। स्थिरे निश्चले च। "हरिवीक्षणाक्षणिकचक्षुषेति" माघः। अक्षणिकचक्षुषा स्थिरदृष्ट्या स्तिमितनेत्रयेत्यर्थः इति मल्लिनाथः।

**अक्षण्वत्** त्रि० अक्षअस्त्यस्ति मतुप् मस्य वः। नेत्रयुक्ते "पश्यदक्षण्वान्न विचेद्" इति "अक्षण्वन्तःकर्णवन्तः सखायः" इति च वेदः।

**अक्षत** पु०ब० न क्षताः। "अक्षताश्च यवाः प्रोक्ता इति का० खण्डोक्ते यवे। नपुंसकमिति केचित् "दूर्वाक्षतानि" चेति पुराणम्। तण्डुले, "अक्षतैर्नार्चयेद्विष्णुं न तुलस्या विनायकमिति" तन्त्रम्। शस्यमात्रे न०। क्षययुक्तभिन्ने उत्कर्षान्विते अविदारिते च त्रि०। "अक्षता वा क्षता वा पीति" मनुः। क्षण-भावे क्त न०त०। क्षयाभावे न०। "अक्षतञ्चारिष्टं चा स्तु" इति श्राद्धविप्रसमीपे कृतकर्मणोऽक्षयप्रार्थना।

**अक्षदर्शक** पु० अक्षाणामृणादानादिव्यवहाराणां दर्शकः दृश-ण्वुल् ६त०। विवादनिर्णेतरि धर्माधिकरणाध्यक्षे। द्यूतदर्शके त्रि०।

**अक्षदृश्** पु० अक्षान् व्यवहारान् पश्यति दृश-क्विन् कुत्वम्। अक्षदर्शकशब्दार्थे। अक्षार्थद्रष्टरि त्रि०।

**अक्षदेविन्** त्रि० अक्षैर्दीव्यति दिव-णिनि ३त०। पाशकादिद्यूतक्रीडाकारके। [कारके।

**अक्षद्यु** त्रि० अक्षैर्दीव्यति दिव-क्विप् ऊठ्। पाशकादिद्यूत-

**अक्षद्यूत** न० अक्षैर्द्यूतम् ३त०। पाशकादिक्रीड़ायाम्।

**अक्षद्यूतादि** पु० ब०। "निर्वृत्तेऽक्षद्यूतादिभ्य" इति पाणिन्युक्ते ठक्प्रत्ययनिमित्ते शब्दसमूहे। अक्षद्यूत, जानुप्रहृत-जङ्घाप्रहृत जङ्घाप्रहृत, पादस्वेदन, कण्टकमर्द्दन, गतानुगत, गतागत-यातोपयात, अनुगत इति। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरमित्यादि।

**अक्षधर** पु० अक्षं चक्रं रथावयवं तत्कीलकमिव कण्टकं वा धरति धृ-अच् ६त०। विष्णौ चक्रे शाखोटकवृक्षे च चक्रधारकमात्रे त्रि०। [समा०] चक्राग्रे चक्रभारे च।

**अक्षधुर्** स्त्री० अक्षस्य चक्रस्य धूरग्रं भारो वा ६त० न अ

**अक्षधूर्त्त** त्रि० अक्षे तद्देवने धूर्त्तः। द्यूतकुशले द्यूतकारिणि च (जुयारि)। [शकटवाहनकर्त्तरि वृषे।

**अक्षधूर्त्तिल** पु० अक्षस्य शकटस्य धूर्त्तिं भारं लाति ला-क।

**अक्षन्** न० अक्ष-बाहु० कनिन्। नेत्रे "दक्षिणेऽक्षन् इति बृह० उप० "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्रा" इति वेदः।

**अक्ष(क्षि)पटल** न० अक्ष्णः नेत्रस्य पटलमिवाच्छादकत्वात्। नेत्रस्यावरके कोषभेदे नेत्ररोगभेदे (छानि) च। पटलस्य-रोगभेदादि सुश्रुते उक्तं यथा

"मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम्। खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः॥ आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम्। शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः॥ रोगांस्तदाश्रयान् घोरान् षट् च षट् च प्रचक्ष्महे। पटलानुप्रविष्टस्य तिमिरस्य च लक्षणम्॥ शिराभिरभिसम्प्राप्य विगुणोऽभ्यन्तरे भृशम्। प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थितः॥ अव्यक्तानि स रूपाणि सर्व्वाण्येव प्रपश्यति। दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते। मक्षिकाः मशकान् केशान् जालकानि च पश्यति। मण्डलानि पताकाश्च मरीचीः कुण्डलानि च॥ परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि वा। दूरस्थान्यपि रूपाणि मन्यते च समीपतः॥ समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात्। यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति॥ ऊर्द्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते। महान्त्यपि च रूपाणि च्छादितानीव वाससा॥ कर्णनासाक्षियुक्तानि विपरीतानि वीक्षते॥ यथादोषञ्च रज्येत दृष्टिर्दोषे बलीयसि॥ अधःस्थिते समीपस्थं दूरस्थञ्चोपरिस्थिते। पार्श्वस्थिते तथा दोषे ऽपार्श्वस्थानीव पश्यति॥ समन्ततः स्थिते दोषे सङ्कुलानीव पश्यति। दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा॥ द्विधास्थिते त्रिधा पश्येद्बहुधा चानवस्थिते। तिमिराख्यः स वै दोषश्चतुर्थपटलङ्गतः॥ रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाशः स उच्यते। तस्मिन्नपि तमोभूते नातिरूढे महागदे॥ चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः। निर्म्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति॥ स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः" इति।

अक्षाणां व्यवहाराणां पटलमस्त्यस्य अच् ६त०। अक्षदर्शके धर्म्माध्यक्षे पु०।

**अक्षपरि** अव्य० अक्षेण पाशकेन विपरीतं वृत्तम्। अक्षशलाकेत्यादिना परिणा अव्य०। पाशकक्रीड़ायां यथा गुटिकापाते जयोभवति तद्विपरीतपातने।

**अक्षपाटक** पु० अक्षे व्यवहारे पाटयति दीप्यते पट दीप्तौ-ण्वुल्। व्यवहारनिर्णेतरि धर्म्माध्यक्षे।

**अक्षपाद** पु० अक्षं नेत्रं दर्शनक्षमतया जातः पादोऽस्य। न्यायसूत्रकारके गौतमे मुनौ, स हि स्वमतदूषकस्य व्यासस्य मुखदर्शनं चक्षुषा न कर्त्तव्यमिति प्रतिज्ञाय पश्चात् व्यासेन प्रसादितः पादे नेत्रं प्रकाश्य तं दृष्टवानिति पौराणिकी कथा। "अक्षपादप्रणीते च काणादे सांख्ययोगयोः। त्याज्यः श्रुतिविरुद्धोऽर्थ इति" पद्मपुराणम्।

**अक्षपीड़ा** स्त्री० अक्षमिन्द्रियं रसनारूपं पीड़यति आस्वादनात् पीड-अच्। यवतिक्तालतायाम्। पीड-भावे अङ्+६त०। इन्द्रियपीडायाम्।

**अक्षम** त्रि० न क्षमते क्षम-अच् न० त०। असमर्थे। क्षम-भावे अङ् अभावार्थे न० त०। क्षमाभावे ईर्ष्यायाम् स्त्री। "अक्षमा भवतः केयमिति" भारतम्। न०ब०। क्षमारहिते त्रि०।

**अक्षमाला** स्त्री अक्षाणां रुद्राक्षाणां माला। रुद्राक्षबीजग्रथितमालायाम्। अकारादिक्षकारान्तः अक्ष तत्कृता तत्प्रतिनिधीभूता वा माला शा० त०। एकपञ्चाशद्वर्णमालायाम् तत्प्रतिनिधीभूतायां स्फटिकादिग्रथितायाम् वाह्यमालायाञ्च "शोण्यशापपुष्करबीजं ग्रथ्यमनाक्षमालमिति" काद०। "विभान्तमच्छस्फटिकाक्षमालयेति" माघः। तद्विवरणम्। "क्रमोत्क्रमगते माला मातृकार्णैः क्षमेरुके। जापवानैः साष्टवर्गैरन्त्यर्णजनकश्च बीति" सनत्कुमारीये। "पद्मबीजादिभिर्माला वहिर्यागे प्रकल्प्य ताः। रुद्राक्षशङ्ख-पद्माक्षपुत्रजीवकमौक्तिकैः। स्फाटिकैर्मणिरत्नैश्च सुवर्णैर्विद्रुमैस्तथा। रजतैः कुशमूलैश्च गृहस्थस्याक्षमालिकेति" तन्त्रसारे एतद्विकारस्ततएवागन्तव्यः। अक्षस्य

नक्षत्रचक्रस्य मालेव भूषणत्वात्। अरुन्धत्यां, सा हि उत्तरस्यां दिशि गगने सप्तर्षिमण्डलचक्रे वसिष्ठसमीपे-मालारूपेण वर्त्तते सर्वेभ्यश्च उज्ज्वलत्वात्तस्या मालारूपेण स्थितत्वाच्च नक्षत्रचक्रभूषणत्वम्।

**अक्षय** त्रि॰ नास्ति क्षयोऽस्य। क्षयरहिते सर्व्वदा वर्त्तमाने "गयायामक्षयवटे पितॄणां दत्तमक्षयमिति" वायुपुराणम् "अभिजिद्रोहिणोदये यद्दत्तं दीयते जन्तोस्तदक्षयमुदाहृतमिति" स्मृतिः। परमात्मनि पु॰। क्षयोवासः, तच्छून्ये अनिकेतने संन्यासिनि, दरिद्रे च। अक्षयं पुण्यमत्रास्ति अच्। अक्षयपुण्यसाधने तिथिभेदे च "अमा वै सोमवारेण रविवारेण सप्तमी। चतुर्थी भौमवारेण अक्षयादपि चाक्षयेति" भविष्यपुराणम्।

**अक्षयतृतीया** स्त्री कर्म्म॰। वैशाखशुक्लपक्षतृतीयायाम्। "वैशाखे मासि राजेन्द्र! शुक्लपक्षे तृतीयिका। अक्षया सा तिथिः प्रोक्ता कृत्तिकारोहिणीयुता। तस्यां दानादिकं सर्व्वमक्षयं समुदाहृतमिति"। "या शुक्ला कुरुशार्दूल! वैशाखे मासि वै तिथिः। तृतीया साक्षया लोके गीर्व्वाणैरभिवन्दितेति" च भविष्यपुराणम्। "वैशाखस्य सिते पक्षे तृतीयाऽक्षयसंज्ञितेति" स्कन्दपुराणम्।

**अक्षय्य** त्रि॰ क्षेतुं शक्यं क्षि-यत् नि॰ न॰त॰। क्षयानर्हे। अक्षदे च "तेषां पिण्डो मया दत्तोह्यक्षय्यमुपतिष्ठतामिति" वायु॰

**अक्षय्योदक** न॰ नक्षय्य मक्षय्य मुदकं यत्र श्राद्धे पिण्डदानानन्तरं देये मधुतिलमिश्रिते उदके। "अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते। षष्ठ्यैव नित्यं तत् कुर्य्यात् न चतुर्थ्यां कदाचनेति" छन्दोगप॰।

**अक्षर** न॰ न क्षरतीति क्षर-चलने अच् न॰त॰। परमब्रह्मणि कूटस्थे चैतन्ये "अक्षरं परमं ब्रह्मेति" गीता। क्रियाशून्ये त्रि॰ जीवे परमात्मनि च पु॰। "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते इति "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति" च गीता। क्षरणशून्येऽपि स्थिरे त्रि॰। अश्नुते व्याप्नोति वेदादिशास्त्राणि अश-सरन्। अकारादिवर्णे न॰ "अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य चेति" गीता। वर्णस्मारकलिपिसन्निवेशे, "अक्षरं वर्णनिर्म्माणं वर्णमप्यक्षरं विदुः। अक्षरं न क्षरं विद्यादश्नोतेर्वा सरेऽक्षरमिति" उज्ज्वल॰। उदके मोक्षे च न॰।

**अक्षरचण** त्रि॰ अक्षरेण वर्णविन्यासलिप्या वित्तः अक्षर+चणप्। लेखनाजीवके। [चु(च)ञ्चुप्। लेखनाजीवके।

**अक्षर(चु)चञ्चु** त्रि॰ अक्षरेण वर्णविन्यासलिप्या वित्तः अक्षर+

**अक्षरच्छन्दस्** न॰ अक्षरेण वर्णसंख्यया कृतं छन्दः। वर्णवृत्ते "छन्दस्तु द्विविधं प्रोक्तं वृत्तं जातिरिति द्विधा वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेदिति" छन्दोम॰ तस्य च तत्कृतत्वात्तथात्वम्। अक्षरं नियतं छन्दोऽभिधायोऽस्य ब॰। परमेश्वरे पु॰ दृढाध्यवसाये त्रि॰।

**अक्षरजननी** स्त्री अक्षराणां जननीव। लेखन्याम् (कलम्)।

**अक्षरजीवक** त्रि॰ अक्षरेण तल्लिपिलेखनेन जीवति जीव-ण्वुल् ३त॰। अक्षरलेखनोपजीवके।

**अक्षरतूलिका** स्त्री अक्षराणां तल्लिपिलेखानां तूलिकेव साधनत्वात्। लेखन्याम् (कलम्)।

**अक्षरन्यास** पु॰ अक्षराणि तत्स्मारकाकारविशेषा न्यस्यन्ते अत्र+नि+अस-आधारे घञ् ६त॰। लिप्याम्, पत्रिकायाम्। भावे घञ् ६त॰। अक्षरस्मारकरेखाद्याकारविशेषलेखने, हृदयाद्याधारस्पर्शपूर्व्वकं तत्तदक्षराणां स्मरणोच्चारणरूपे तन्त्रप्रसिद्धे वर्णन्यासे, "सविन्दून् वा न्यसेदेतान् निर्विन्दून् वा यथाक्रममिति" तन्त्रम्। विस्तारः मातृकाशब्दार्थे द्रष्टव्यः। अक्षरविन्यासोऽप्युक्तार्थेषु।

[पयोऽस्य। लिपिलेखनोपजीविनि।

**अक्षरजीविक** त्रि॰ अक्षरं तल्लिपिलेखनं जीविका वर्त्तनो-

**अक्षरजीविन्** त्रि॰ अक्षरेण तल्लिपिलेखनेन जीवति जीव-णिनि ३त॰। अक्षरलेखनेन वृत्तिनिर्वाहकारके। स्त्रियां ङीप्।

**अक्षरमुख** त्रि॰ अक्षराणि तन्मयानि शास्त्राणि वा मुखे यस्य। शास्त्राभिज्ञे अक्षराभिज्ञे च ६त॰। अकाररूपे वर्णे न॰

**अक्षरशस्** अव्य॰ अक्षरमक्षरमिति वीप्साय कारके शस्। प्रत्यक्षरमित्यर्थे, "पञ्च अक्षरशः इति" श्रुतम्।

**अक्षरसंस्थान** न॰ अक्षराणां तत्स्मारकरेखाविशेषाणां संस्थानमत्र ब॰। वर्णस्मारक-रेखाविशेषयुक्त-लिप्याम्। "लिखिताक्षरसंस्थानमित्यमरः"।

**अक्षराङ्ग** न॰ अक्षराणामङ्गं तत्स्मारकरेखाविशेषाणामवयवः ६त॰। लिप्याम्, लेखनसाधनद्रव्ये च।

**अक्षराज** पु॰ अक्षेण तत्क्रीडया राजेव। द्यूतासक्ते।

**अक्षरी** स्त्री अश्नुते गगनाभोगं मेघैः अश-सरन् गौ॰ ङीष्। वर्षायाम्

**अक्षवती** स्त्री अक्षा पाशकाः साधनत्वेन विद्यन्तेऽत्र अक्ष+मतुप् मस्य वः ङीप्। द्यूतक्रीडायाम्।

**अक्षवाट** पु॰ अक्षाणां पाशकक्रीडानां वाटः वासस्थानम्।

द्यूतस्थाने, पाशकाधारे फलके च। अक्षस्य रथचक्र-युगस्थानस्यैव वाटः। मल्लभूमौ तत्र हि रथचक्रयुग-पांशुसदृशपांशुमत्त्वात् तत्सदृशत्वम्।

**अक्षविद्** त्रि० अक्षं पाशकक्रीडां व्यवहारं वा वेत्ति विद-क्विप्। अक्षविद्याभिज्ञे व्यवहाराभिज्ञे च अक्षवेत्त्रादयोऽप्यत्र। स्त्रियाम् अक्षवेत्त्री।

**अक्षविद्या** स्त्री ६त०। पाशकादिद्यूतविद्यायाम्।

**अक्षवृत्त** न० अक्षं राशिचक्ररूपं वृत्तं वेष्टनाकारं कोष्ठशून्यं क्षेत्रम्। राशिचक्ररूपे वृत्तक्षेत्रे। अक्षे पाशकक्रीडायां वृत्तः व्याप्टतः ७त०। पाशकक्रीडासक्ते "यदक्ष-वृत्तमनु दत्तं न एतदिति" श्रुतिः। [द्यूतक्रीडाकुशले।

**अक्षशौण्ड** पु० अक्षेषु तत्क्रीडायां शौण्डः प्रवीणः ७त०।

**अक्षसूत्र** न० अक्षस्य जपमालायाः सूत्रम्। जपमालाश्रय-साधने सूत्रे "साक्षसूत्रकमण्डलुरिति" पुराणम्।

**अक्षाग्रकीलक** न० अक्षस्य रथनाभिक्षेत्रस्याग्रनद्धं कीलकम्। ६त०। चक्रनाभिक्षेत्राग्रप्रोते कीलके।

**अक्षानह्** न० अक्षे चक्रे आनह्यते बध्यते आ+नह-क्विप्। चक्रसंबद्धे काष्ठभेदे। "अक्षानहो नह्यतनोत सोम्या" इति वेदः। [क्रोधे च। न०ब०। क्षमाशून्ये त्रि०।

**अक्षान्ति** स्त्री० क्षम-क्तिन् विरोध्यर्थे न०त०। ईर्ष्यायां,

**अक्षारलवण** त्रि० क्षारेण उपरक्षत्तिकया निर्वृत्तं अण् क्षारं कृत्रिमं लवणं न०त०। अकृत्रिमलवणे "सन्य-न्नानि पयः सोमो मांसं यच्चानुपाकृतम्। अक्षारलवणञ्चैवेति" मनुः। "चतुर्थकालमश्नीयादक्षारलवणं तथेति" मनुः अक्षारलवणमकृत्रिमलवणमितिप्राय० रघु०। क्षार-लवणभिन्ने सैन्धवलवणे न०। "नैतस्यां रात्र्यामद्य प्रचेयुस्त्रिरात्रमक्षारलवणाशिनः स्युर्हीदशरात्रं महा-गुरुष्विति, आश्वलायनस्मृतम्। अक्षारलवणं क्षार-मृत्तिकादि-कृतलवणभिन्नं सैन्धवं सम्भारि चेति शु० रघु०। "गोधूमं गोघृतञ्चैव धान्यमुद्गास्तिलायवाः। सामुद्रं सैन्धवञ्चैव अक्षारलवणं स्मृतम्" इति स्मृत्युक्ते गोघृतादि-द्रव्यगणे च।

**अक्षावपन** न० अक्षान् पाशकान् आवपति क्षिपत्यस्मिन् आ+वप-आधारे ल्युट् ६त०। पाशकपातनाधारे फलके।

**अक्षावली** स्त्री ६०त०। जपसाधन-रुद्राक्षबीजावली जप-मालायाम् "रत्नावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती"तिकाद०।

**अक्षावाप** त्रि० अक्षान् पाशकान् आवपति क्षिपति आ+वप-अण् उप०स०। द्यूतकारके, तदध्यक्षे च।

**अक्षि** न० अश्नुते विषयान् अश-क्सि। नेत्रे, इन्द्रियमध्ये तस्यैव विषयदेशं प्राप्य विषयग्राहकत्वं सर्ववादिसम्मतमन्ये-षान्तु सर्वमते न तथात्वमतोऽस्य विषयव्यापकता। एतदन्त-बहुव्रीहेः स्वाङ्गपरत्वे षजन्तता पद्माक्षः पद्माक्षी, अस्वाङ्ग-परत्वे अजन्तता दीर्घाक्षो वेणुयष्टिः, अव्ययीभावे अजन्तता प्रत्यक्षं समक्षमित्यादि तत्पुरुषेऽस्वाङ्गपरत्वेऽजन्तता गवाक्षः। इदञ्च शब्दादिषु बाह्येन्द्रियग्राह्यविशेषगुणेषु मध्ये रूपस्यैव ग्राहकतया तैजसं नेत्रगोलकेऽधिष्ठितं किञ्चित् वस्तु। तैजसत्वाच्चास्य सूर्यादिकिरणवदाशुदूरपर्य्यन्ता-नुधावनमागमनञ्च। तच्च परमाणुतुल्यमिति नैयायि-कादयः तदपेक्षया स्थूलमिति सांख्यादयः। उभयमतेऽपि न तस्य प्रत्यक्षयोग्यता। तदाधारगोलके द्वे बाह्ये आन्तराणि च चत्वारि कोशवत् पटलानि, मांसादयः पञ्चांशाः, पक्ष्मादीनि पञ्च मण्डलानि षट् सन्धयश्च सन्ति। तद्विरणं यथा "विद्याद्द्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसम्मितम्। द्व्यङ्गुलं सर्वतः सार्द्धं भिषङ्नयनबुद्बुदम्॥ सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम्। पलं भुवो, ऽग्नितो, रक्तं, वातात् कृष्णं, सितं जलात्॥ आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे। दृष्टिञ्चात्र तथा वक्ष्ये यथावादीद्विशारदः॥ नेत्रायामत्रि-भागन्तु कृष्णमण्डलमुच्यते। कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः॥ मण्डलानि च सन्धींश्च पटलानि च लोचने। यथाक्रमं विजानीयात् पञ्च षट् च षडेव च॥ पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां (५) मण्डलानि तु। अनुपूर्व्वन्तु तन्मध्याश्चत्वारोऽन्त्ये यथोत्तरम्॥ पक्ष्मवर्त्मगतः सन्धिर्वर्त्म शुक्लगतोऽपरः। शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः॥ ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः। द्वे वर्त्मपटले विद्याच्चत्वार्य्यन्यानि चाक्षिणि। जायते तिमिरं येषु व्याधिः परमदारुणः। तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम्॥ मेदस्तृतीयं पटलमाश्रितन्त्वस्थि चापरम्। पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते इति सुश्रुते॥

**अक्षिक** पु० अक्षाय चक्रावयवाय हितम् ठन्। रञ्जनद्रुमे (आतइच)। [तारायाञ्च।

**अक्षिकूटक** न० अक्ष्णः कूट इव कन्। नेत्रगोलके नेत्र-

**अक्षिगत** त्रि० अक्षि गतः सर्व्वदाभावनावशादत्यासन्नि-कृष्टोऽपि उपस्थित इव। द्वेष्ये शत्रौ नेत्रगोचरे च। "त्वयि किलाक्षिगते नयनैस्त्रिभिरिति नै०। [तुल्यम्।

**अक्षितर** न० अक्षीव तरति तॄ-अच्। जले निर्म्मलत्वान्नेत्र

**अक्षिभ्रु** स्त्री अक्ष्णः भ्रूविषयः। चक्षुर्गोचरे प्रत्यक्षे, सत्ये

नेत्रदृष्टवस्तुन एव सत्यतासंवादितया तस्य सत्यत्वम् । "सत्यस्याक्षिर्भुवो यथा, इति श्रुतिः । [वृक्षे ।

**अक्षिभेषज** न० ६त० नेत्ररोगविशेषनिवारके पट्टिकालोध्र-

**अक्षिभ्रुव** न० भ्रुवौ च अक्षिणी च समा०द्व०। राजदन्तादि० अक्षिशब्दस्य बह्वच्कत्वेऽपि पूर्व्वनि० अच्समा०। भ्रूनेत्रसंघाते "सौमित्रिरक्षिभ्रुवमुज्जिहान" इति भट्टिः ।

**अक्षिव** पु० अक्षि वाति शोषयति अञ्जनेन वा-क । (सजना) शोभाञ्जनवृक्षे सामुद्रलवणे च ।

**अक्षिविकूणित** न० अक्ष्णः विकूणितं लज्जादिना सम्यक् प्रसाराभावात् सङ्कोचोयत्र । अपाङ्गदर्शने कटाक्षपाते

**अक्षीव** न० न क्षीवते माद्यति क्षीव-क, क्त वा न०त० । शोभाञ्जने (सजना) सामुद्रलवणे च । मत्तभिन्ने त्रि० । वाल्लोयभिन्नत्वे । [इति वेदः ।

**अक्षु** न० अक्ष-उ । शीघ्रे । "जूर्णौ मक्षुराहंसोयमला"

**अक्षुध्य** त्रि० अक्षुधे हितम् अक्षुध्+यत् । क्षुधाभावसाधने द्रव्ये । "अक्षुध्या अतृष्यास्ते स्दहामाभहिभीतनेति" वेदः ।

**अक्षेत्र** न० अप्रशस्तं क्षेत्रं न०त० । शस्यानुत्पादके क्षेत्रे उपदेशानर्हे शिष्ये, अपात्रे च । "अक्षेत्रे वीजमुत्सृष्टमन्तरैव विनश्यतीति" पुरा०।

**अक्षेत्रविद्** त्रि० क्षेत्रं देहतत्त्वं तत्त्वतो न जानाति विद्-क्विप् अस० स० । क्षेत्रतत्त्वानभिज्ञे आत्मत्वेन देहाभिमानिनि जीवे । "अक्षेत्रविद्धि क्षेत्रविदं ह्यप्राट् प्रैति क्षेत्रविदानुशिष्ट" इति वेदः ।

**अक्षेत्रिन्** पु० क्षेत्रं शस्योत्पत्तिस्थानं कलत्रं वा मत्वर्थे इनि न०त० । क्षेत्रस्वामिभिन्ने । "येऽक्षेत्रिणो वीजवन्तः परक्षेत्रे प्रवापिन इति" स्मृतिः ।

**अक्षोट** पु० अक्ष-ओट, अक्षस्य विभीतकस्येव उटानि पर्णान्यस्य वा । पर्व्वतीयपीलुभेदे (आखरोट) स्वार्थे कन् तत्रैव ।

**अक्षोड** पु० अक्ष-ओड अक्षः विभीतक इव ओडति शत्रैः संहन्यते उड-अच् वा । पर्व्वतीयपीलुवृक्षे ( आखरोट ) स्वार्थे कन् तत्रैव ।

**अक्षोभ्य** त्रि० क्षोभ्यते विचाल्यते क्षुभ-णिच् कर्म्मणि यत् न० त० । भयाविहृलमनस्के "इक्षाकुवलमक्षोभ्यमिति" पुरा० । तन्त्रोक्ते द्वितीयविद्यामन्त्रोपासके तद्देवतायाः शिरसि नागरूपेण स्थिते ऋषिभेदे पु० । "अक्षोभ्योऽस्याऋषिः प्रोक्त, इति तन्त्रम् ।

**अक्षोभ्यकवच** न० अक्षोभाय हितमक्षोभ्यं कर्म्म० । तन्त्रोक्ते कवचभेदे तच्च तन्त्रसारे द्रष्टव्यम् ।

**अक्षौहिणी** स्त्री अक्षः समूहः संविकल्पकज्ञानं वा सोऽस्त्यास्ति इनि, अक्षाणां रथानां सर्व्वेषामिन्द्रियाणाम् "वा ऊहिनी णत्वं वृद्धिश्च । रथगजतुरङ्गपदाति-संख्याविशेषान्विते सेनासमूहे । "अक्षौहिण्यामित्यधिकैः सप्तत्या चाष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः । एवमेव रथानान्तु संख्यानं कीर्त्तितं बुधैः । पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु । संख्यातास्तुरगास्तज्ज्ञैर्विना रथ्यतुरङ्गमैः । नृणां शतसहस्रं तु सहस्राणि नवैव तु । शतानि त्रीणि चान्यानि पञ्चाशच्च पदातय इति। रथाः २१८७० । गजाः २१८७० । रथवाहकाश्वभिन्नाः अश्वाः६५६१० । पदातयः १०९३५० ।

**अक्ष्ण** त्रि० अश्नुते व्याप्नोति अश-क्स्न । व्यापके अखण्डे काले न० अक्ष्णया दक्षिणेऽसे अंक्ष्णां अंसामंसे, इति वेदः ।

**अखट्ट** पु० खट्ट-अच् न०त० । पियालवृक्षे (पियासाल)

**अखट्टि** स्त्री खट्ट-इ न०त० वा ङीप् । अशिष्टव्यवहारे ।

**अखण्ड** त्रि० खडि-घञ् न०त० । संपूर्णे, सकले "अखण्डसाम्राज्यपतितत्वमेतीति" जातकम् खण्डभिन्ने पु०न० ।

**अखण्डन** पु० न खण्ड्यते निरवयवत्वात् खडि-ल्युट् न०त० खण्डनानर्हे परमात्मनि, पूर्ण त्रि० । [च ।

**अखण्डित** त्रि० खडि-क्त न०त० । सम्पूर्णे, "खण्डितभिन्ने

**अखण्डितर्त्तु** पु० अखण्डितः ऋतुः तत्सम्पत् पुष्पादिप्रसवरूपा यत्र पुष्पादि-सर्व्वसम्पद्युक्ते ऋतुकाले ।

**अखलीकार** पु० न खलः अखलस्तस्य कारः अखल+च्वि-कृ-घञ् । सप्रयोजनताविधाने अखलान्यथासम्पादने।

**अखेटिक** पु० न खेटत्वम् आत् खिट-भये षिकन् । वृक्षमात्रे ।

**अखात** पु०न० खन-क्त न०त० । देवखाते, मनुष्याद्यखाते च । खातभिन्ने त्रि० । "खातमखातमुत सक्तमिति" वेदः ।

**अखाद्य** त्रि० खाद-अर्हार्थे ण्यत् न०त० । भोजनानर्हे गोमांसादौ, भक्ष्यभिन्ने च ।

**अखिद्र** त्रि० खिद्-रक् न०त० । खेदरहिते "मरुतोयातेमखिद्रयामभिरिति" वेदः ।

**अखिन्न** त्रि० खिद्-भावे क्त त०ब० । क्लेशरहिते अनायाससाध्ये कर्म्मणि खेदरहिते कर्त्तरि च । कर्त्तरि क्त न०त० । अक्लिष्टे ।

**अखिल** त्रि० न खिल्यते न कणशआदीयते खिल-क न०त० । समग्रे । खिलाभिन्ने हृष्टभूम्यादौ स्त्री । नास्ति खिलमवशिष्टं यस्य शेषशून्ये "वेदोऽखिलोधर्म्ममूलं स्मृतिशीले च तद्विदामिति" मनुः । तेन सिद्धान्त

पैत्र्यमखिलं चारिमखलमिति" रघुः। "न निशाखिलयापि वापिका प्रससाद शरदेव मानिनीति" नै०।

**अग** इदित् गतौ भ्वादि० पर०। अङ्गति। आङ्गीत्। ल्युट् अङ्गनम् असुन् अङ्गः। [यति।

**अग** वक्रगतौ भ्वादि०पर०घटादि। अगति आगीत्। अग-

**अग** पु० न गच्छतीति गम-ड न०त०। वृक्षे, पर्व्वते, च। गमनाकर्त्तरि शूद्रादौ त्रि०। न गच्छति वक्रगत्या पश्चिमम्। सूर्य्ये तस्य हि वक्रगत्यभावः ज्योतिषप्रसिद्धः। "वक्रशीघ्रगतिश्चैव भवेत् भौमादिपञ्चके" इत्युक्तेः आर्य्यभट्टमते तु पृथिव्याएव गतिमत्त्वेन दिनरात्रिसम्भवात् सूर्य्यस्य न गतिमत्त्वम्। सप्तसंख्यायाञ्च कुलाचलानां सप्तत्वेन तेषाञ्च प्राधान्यात् "प्रधानेन व्यपदेशाभवन्तीति" न्यायात् तथात्वम्।

**अगच्छ** पु० गम-बा० श न०त०। वृक्षे।

**अगज** न० अगात् पर्व्वतशिखातो जायते जन-ड। शिलाजतुद्रव्ये। पर्व्वतजातमात्रे त्रि०।

**अगण्य** त्रि० गणयितुमशक्यम् गण-शक्यार्थे यत् न० त०। गणयितुमशक्ये असंख्ये। "गुणैरगण्यैरतिशीलशालिभिरिति"। अर्हे यत् न०त०। गणनानर्हे, अकिञ्चित्करे त्रि०।

**अगति** स्त्री गम-क्तिन् न०त०। उपायाभावे। बहु०। गतिशून्ये, उपायशून्ये च त्रि०। स्वार्थे कन्, शेषाद्वा कप् तत्रैवार्थे त्रि० "मामगतिकमिति" शङ्कराचार्य्यः।

**अगद** पु० नास्ति गदो रोगो यस्मात् ५ब०। औषधे ६ब०। "औषधान्यगदोविद्या दैवी च विविधा स्थितिः। तपसैव प्रसिध्यन्तीति" पुराणम्। रोगशून्ये त्रि०। गद-भाषणे अच्-न०त०। अकथके त्रि०। [दीत्।

**अगद** नीरोगत्वे कण्ड्वा० पर०। अगद्यति आगदीत्-आग-

**अगदङ्कार** पु० अगदं करोति अगद+कृ-अण् मुम् च। वैद्ये। [त्तरि त्रि०।

**अगम** पु० न गच्छतीति गम-अच् न०त०। वृक्षे। अग-

**अगम्य** त्रि० न-गन्तुमर्हति गम-यत् न०त०। गमनानर्हे "अगम्या सा भवस्तत्र यत्राभूत् स महारण इति" चण्डी। अन्त्यजातिस्त्रियां स्त्री। "अगम्यां च स्त्रियं गत्वेति" "अगम्यागमनञ्चैव जातिभ्रंशकराणि षडिति" च स्मृतिः दुर्बोध्ये "योगिनामप्यगम्योऽसाविति" पुराणम्।"

**अगरी** स्त्री नास्ति गरो विषं यस्याः ५ब० गौ०ङीष्। मूषिकविषहारिणि देवताडवृक्षे। विषहारिणि द्रव्यमात्रे त्रि०।

**अगरु** न० न गिरति गॄ-उ न०त०। स्वनामप्रसिद्धे अगुरुचन्दने। "कौसुमस्रजमेताञ्च चन्दनागरुचर्च्चितामिति" दुर्गापूजामन्त्रः "चन्दनागुरु" इति पाठान्तरम्।

**अगर्हित** त्रि० न०त०। निन्दितभिन्ने शुद्धे, "यत्किञ्चित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितमिति" स्मृतिः।

**अगस्ति** पु० अगं विन्ध्याचलम् अस्यति अस्-क्तिच् शकन्ध्वादि०। अगस्त्यनामके मुनौ। अगस्त्यस्यापत्यानि बहुषु यञो लुक्। तद्गोत्रापत्येषु ब०व०। तत्सम्बन्धित्वात् दक्षिणस्यां दिशि। अगस्त्यजन्मकथा च। "तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्व्वशीम् रेतश्चस्कन्द तत् कुम्भे न्यपतद्वासतीवरे तेनैव तु मुहूर्त्तेन वीर्य्यवन्तौ तपस्विनौ, अगस्त्यश्च वशिष्ठश्च तावृषी संबभूवतुः। बहुधा पतितं रेतः कलसे च जले स्थले। स्थले वशिष्ठस्तु मुनिः संभूतर्षिसत्तमः। कुम्भेत्वगस्त्यः सम्भूतः जले मत्स्यो महाद्युतिः। उदियाय ततोऽगस्त्यः शम्यमात्रो महातपाः इति" पुराणम्। तस्य च विन्ध्याचलस्तम्भनकथा काशीखण्डेऽनुसन्धेया। वृहत्संहितायामस्य गगनमण्डले दक्षिणस्यां ताराकपेण स्थितिरुक्ता तच्च अगस्त्यचारशब्दे द्रष्टव्यम्।

**अगस्तिद्रु** पु० अगस्तिप्रियः द्रुः वृक्षः शाक० त०। वकवृक्षे। अगस्तिद्र्वादयोऽप्यत्र।

**अगस्त्य** पु० अगं विन्ध्याचलं स्त्यायति स्तभ्नाति स्त्यै-क। अगस्त्यनामके मुनौ। "अगस्त्यचरितामाशां प्रतस्थे दिग्जिगीषयेति" रघुः। यस्का०यञ्। आगस्त्यस्तदपत्ये।

**अगस्त्यगीता** स्त्री अगस्त्येन गीता विद्याभेदः। भारते शान्तिपर्व्वणि प्रसिद्धे विद्याभेदे।

**अगस्त्यचार** पु० अगस्त्यस्य नक्षत्ररूपेण दक्षिणस्यस्य चारः शुभाशुभसूचकगत्यादि। वराहसंहितोक्ते अगस्त्यनामकनक्षत्रस्य उदयादौ। यथा "विन्ध्यमस्तम्भयद्यस्य तस्योदयः श्रूयताम्" इत्युपक्रम्य। "उदये च मुनेरगस्त्यनाम्नः कु-समायोगमलप्रदूषितानि। हृदयानि सतामिव स्वभावात् पुनरम्बूनि भवन्ति निर्म्मलानि॥ पार्श्वद्वयाधिष्ठितचक्रवाकामापुष्णती सस्वनहंसपङ्क्तिम्। ताम्बूलरक्तोत्कचिताग्रदन्ती विभाति योषेव सरित्सहासा॥ इन्दीवराम्बुजसितोत्पलान्विता सरिद्भ्रमत्षट्पदपङ्क्तिभूषिता। सभ्रूलताक्षेपकटाक्षवीक्षणा विदग्धयोषेव विभाति सस्वरा॥ इन्दोः पयोदविगमोपहितां विभूतिम् दृष्ट्वा तरङ्गवलया कुमुदं निशासु। उन्मीलयत्यलिनिलीनदलं सुपक्ष्म वापी विलोचनमिवासिततारकान्तम्॥ नानाविचित्राम्बुजहंसकोककारण्डवापूर्णतडागहस्ता। रत्नैः प्रभूतैः कुसुमैः फलैश्च अर्घ्यं यच्छती

वार्घमगस्त्यनाम्नः ॥ सलिलमकरपाशयोग्भितं बहुनपरिवेष्टितमूर्त्तिर्भुजङ्गैः । फणिजनितविषाग्निसम्प्रदुष्टं भवति शिवं तदगस्त्यदर्शनेन ॥ स्मरणादपि पापमपाकुरुते किमुत? स्तुतिभिर्वरुणाङ्गरुहः । मुनिभिः कथितोऽस्य यथार्घविधिः कथयामि तथैव नरेन्द्रहितम् ॥ संख्याविधानात् प्रतिदेशमस्य विज्ञाय सन्दर्शनमादिशेज्ज्ञः । तच्चोज्जयिन्यामगतस्य कन्यां भागैः स्वराख्यैः स्फुटभास्करस्य ॥ ईषत्प्रभिन्नेऽरुणरश्मिजालैर्नैशेऽन्धकारे दिशि दक्षिणस्याम् । सांवत्सरावेदितदिग्विभागे भूपोऽर्घमुर्व्यां प्रयतः प्रयच्छेत्" ॥ इत्युक्तान्ते उपसंहृतं यथा "दृश्यते स किल हस्तगतेऽर्के रोहिणीमुपगतेऽस्तमुपैतीति" ।

**अगस्त्यसंहिता** स्त्री अगस्त्यनिर्मिता संहिता । रामचन्द्रविष्णुवामनादिपूजेतिकर्त्तव्यताबोधके शास्त्रभेदे ।

**अगस्त्योदय** पु० अगस्त्यस्य नक्षत्ररूपेण दक्षिणस्यस्य उदयः। अगस्त्यनक्षत्रोदये तस्य च नक्षत्रस्य दक्षिणस्थितत्वेन उत्तरदिग्वासिनां सर्वदा दर्शनयोग्यता नास्ति, तस्योदयश्च भाद्रशेषे भवति "यस्तु भाद्रपदे मासि उदिते कलसोद्भवे इति" पुराणम् । तद्विवरणम् अगस्त्यचारशब्दे दर्शितम् ॥ तस्योदये जलादीनां प्रसन्नत्वं "प्रससादोदयादम्भः कुम्भयोनेर्महौजसः इति" रघावुक्तम् ।

**अगाध** त्रि० गाध–प्रतिष्ठायाम् घञ्–न०ब० । अतिगभीरे । छिद्रे न० । गाधः निम्नसीमा स नास्ति यस्येति । नीचसीमारहिते "साम्प्रगाधे भवे मग्नेति" पुरा० दुर्बोधे च । "अगाधस्थानघातुष्का" इत्यमरः । [ह्रदे ।

**अगाधजल** पु० अगाधं जलमस्य । अतिगभीरजले

**अगार** न० अगम् न गच्छन्तमृच्छति प्राप्नोति अग+ऋ–अण् । गृहे । "तत्रागारं धनपतिगृहानिति मेघ० ।

**अगिर्** पु० न गीर्य्यते दुःखेन गॄ–बा० क न०त० । स्वर्गे ।

**अगिरौकस्** पु० अगिरः स्वर्ग ओकोवासस्थानं यस्य । देवे ।

**अगु** पु० न गौः किरणोऽस्य । राहुग्रहे सूर्य्यालोकाभावे तमसि । गोशून्ये त्रि० ।

**अगुण** पु० न०त०। गुणविरोधिनि दोषे। "तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणमिति" स्मृतिः न०ब० । गुणरहिते त्रि० "भक्तिप्रीतिप्रणयसहितं मानदम्भाद्यपेतं चेतोऽस्माकं गुणवदगुणं गोडुहां देहमेतत्" इत्युद्धवदूतः ।

**अगुरु** न० न गुरुर्यस्मात् । स्वनामप्रसिद्धे, अगुरुचन्दने "धूपैर्यागुरुगन्धिभिरिति" शिंशपा वृक्षे (शिशु) च । गुरुभिन्ने, उपदेशकशून्ये त्रि० । गुरुवर्णभिन्ने लघुवर्णे पु० "अगुरुचतुष्कं भवति गुरु द्वौ घनकुचयुग्मे, शशिवदनासाविति" श्रुतबोधः । गौरवरहिते गौरवविपरीतलाघववति त्रि० ।

**अगुरुशिंशपा** स्त्री अगुरुःसारो यस्याः तादृशी शिंशपा मध्यपदलोपित० । (शिशु) इति प्रसिद्धे शिंशपावृक्षे ।

**अगूढगन्ध** न० न गूढो गन्धो यस्य द्व०। हिङ्गुद्रव्ये । तच्चर्यासस्योत्कटगन्धत्वात्तथा । अगुप्तसौरभे द्रव्यमात्रे त्रि० ।

**अगृभीत** त्रि० न गृहीतम् छान्दसत्वात् हस्य भः । अगृहीते, "जयजय जह्यजामगृभीतगुणामिति, भाग०श्रु० ।

**अगौकस्** पु० अगः पर्वत ओकः स्थानं यस्य । शरभे पशौ पर्वतवासिनि त्रि० ।

**अग्नामरुत्** पु० द्वि० द्व० आनङ् । एकहविर्द्देशयोरग्नामारुतदेवयोः । तौ देवते अस्य अण् । आग्निमारुतं हविः । [देवयोः ।

**अग्नाविष्णु** पु० द्वि०द्व० आनङ् । एकहविर्भोक्त्रोस्तन्नामकयो

**अग्नायी** स्त्री अग्नि+ऐङ्–ङीष् । अग्नेर्योषिति स्वाहास्वायाम् । "वरुणानी नचाग्नायी तस्याः सिमन्तिनी समेति" भट्टिः । सा च दक्षकन्या तस्याश्चाग्निप्रियताकथा महाभारते "दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज! ॥ बाल्यात् प्रभृति नित्यञ्च जातकामा हुताशने स न मे कामनां पुत्र! सम्यग् जानाति पावकः । इच्छामि शाश्वतं वासं वस्तुं पुत्र ! सहाग्निना। स्कन्द उवाच । हव्यं कव्यञ्च यत् किञ्चिद्द्विजा० नामाय संस्कृतम् । होष्यन्त्यग्नौ सदा देवि! स्वाहेत्युक्ता समुद्धृतम् । अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः । एवमग्निस्त्वया सार्द्धं सदा वत्स्यति शोभने" ! वन० मार्क०प० ।

**अग्नि** पु० अङ्गति ऊर्द्धं गच्छति अगि–नि नलोपः । अग्नौ स्वनामप्रसिद्धे तेजोभेदे, तेजसि "आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी, इति" श्रुतिः । तत्र तेजःपदार्थस्तावद्द्विविधः सूक्ष्मः स्थूलश्च । सूक्ष्मवायुसंभूतः सूक्ष्मवायुसंभूतः सूक्ष्मः पञ्चीकृतस्तु स्थूलः "तासां त्रिवृतं त्रिवृतमेकैकां करोतीति" श्रुतौ त्रिवृत्करणस्य पञ्चीकरणस्याप्युपलक्षणत्वम् । पञ्चीकरणप्रकारश्च पञ्चीकरणशब्दे वक्ष्यते । तथा च भूतान्तराष्टमभागमिश्रितेन स्वस्वार्द्धभागेन उत्पन्नः पञ्चीकृतः । तस्य च पञ्चात्मकत्वेऽपि "वैशेष्यात्तद्वाद इति" शारीरकोक्तेः भूयस्त्वात् तैजसत्वव्यवहारः । सोऽयं स्थूलो वह्निः प्रकारान्तरेण त्रिविधः भौमः

दिव्यः जाठरश्चेति भेदात्। तत्र पार्थिवकाष्ठादिप्रभवः भौमः महानसाद्यग्निः, जलवाय्वादिभवः दिव्यः विद्युदुल्कावज्रादिः। उभावपि ऊर्द्ध्वज्वलनस्वभावः। उदरे भवस्तृतीयः। त्रयोऽप्यमी स्वस्वयुक्तपाकदाहप्रकाशनसमर्थाः। सर्व्वेऽप्यमी लोके शास्त्रे च वह्न्यादिशब्देन व्यवह्रियन्ते तेषां विशेषगुणाः शब्दस्पर्शरूपाणि "योयो-यावतिथश्चैषां स स तावद्गुणः स्मृतः" इति मनुना भूतमध्ये तृतीयस्य तेजसः त्रिगुणत्वमुक्तं व्यक्तमुक्तं महाभारते शब्दः स्पर्शश्च रूपञ्च तेजसोऽथ गुणास्त्रय इति "अत एव "वह्नौ भगभगध्वनिरिति" पञ्चदश्यामुक्तम्। वह्नेश्च तेजोजलभूम्यात्मकत्वेन लोहितशुक्लकृष्णरूपत्वम् अत एव छान्दोग्ये त्रिवृत्करणानन्तरम् वह्नेस्त्रिरूपत्वमुक्तं यथा "यदग्नेः रोहितं रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां, यत् कृष्णं तदन्नस्येति" विवृतञ्चैतद्भाष्यकृता "यस्य-द्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते। उदाहरणं नामैकदेशप्रसिद्ध्याशेषप्रसिद्ध्यर्थमुदाह्रियत इति। तद्देतदाह यदग्नेः त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके तदत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि। तथा यच्छुक्लं रूपमग्नेः तदपामत्रिवृत्कृतानामेव यत् कृष्णं तस्यैवाग्नेः रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृताया इति विद्धीति"। अत एव तन्त्रशास्त्रकाव्यादिषु वह्नेररुणरूपतया वर्णनं दृश्यते। अग्निमूर्त्तिध्याने च अरुणरूपत्वमनुपदं दर्शयिष्यते। लोके चारुणत्वेनैव प्रत्यक्षेणासावुपलभ्यते एवञ्च नैयायिकोक्तं तेजसः शुक्लभास्वररूपत्वं प्रत्यक्षवेदविरुद्धत्वादुपेक्ष्यमेव। तत्र भौमदिव्ययोः प्रायशोलोकसिद्धत्वेन दिव्यस्यापि दिव्यशब्दे वक्ष्यमाणत्वाच्च जाठरे वह्नौ विशेषोऽभिधीयते। "नाभेरूर्द्ध्वं हृदयादधस्तादामाशयमाचक्षते तद्गतं सौरं तेजः पित्तमित्याचक्षते" इति भाष्यविवरणे आनन्दगिरिः वैद्यकवचनत्वेनोवाच। अत एव तस्य कौक्षेय इति संज्ञा। छान्दोग्ये च "या हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गलः एष शुक्ल एष नील एष पीत एष लोहित इति"। व्याख्यातञ्चैतत् भाष्यकृता। "अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात् सर्व्वतो विनिःसृता आदित्यमण्डलादिरश्मयस्ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्त्तन्त इत्यर्थः। तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्व्वत्राध्याहार्य्यम्। सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन सम्पर्कात्पिङ्गलं भवति, सौरं तेजः पित्ताख्यम्। तदेव वातभूयस्त्वान्नीलं भवति। तदेव च कफभूयस्त्वाच्छुक्लं, कफेन समतायां पीतम्, शोणितबाहुल्येन लोहितम्। वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः। कथं भवतीति? श्रुतिस्त्वाहादित्यसम्बन्धादेव, तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा" इति। कथमसौ वाऽदित्यः पिङ्गलो"? वर्णत एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव, तस्य चान्नरसस्य धात्वन्तरसम्पर्कवशात् वर्णविशेष" इत्यानन्दगिरिः। अस्यैवजाठरस्य पिपासाहेतुत्वं छान्दोग्ये उक्तं यथा "अथ यत्रैतत् पुरुषः पिपासति नाम तेज एव तत् पीतं नयते इति"। व्याख्यातञ्च भाष्यकृता द्रवकृतस्याशितस्यान्नस्य नेतारः आपोऽन्नगुक्तं देहं क्लेदयन्त्यः शिथिलीकुर्य्युः अम्बाहुल्यात्, यदि तेजसा न शोष्येत। नितराञ्च तेजसा शोष्यमाणास्वप्सु देहभावेन परिणममानासु मात्रमिच्छा पिपासा पुरुषस्य जायते तदा "पुरुषः पिपासति नाम, तदेतदाह "तेज एव तत्तदा पीतमबादि शोषयत् देहलोहितादिभावेन नयते परिणमयतीति"। तत्र रसपाकप्रकारमाह योगार्णवे। "आयुष्यं भुक्तमाहारं स वायुः कुरुते द्विधा संप्रविश्यान्नमध्यन्तु, पृथक् किट्टं पृथग् जलम् (किट्टम् अन्नमलभेदम्)। अग्नेरूर्द्ध्वं च संस्थाप्य तदन्नं च जलोपरि। जलस्याधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः (धमते संधुक्षयति) वायुना ध्मायमानोऽग्निरत्युष्णं कुरुते जलम्। अन्नं तदुष्णतोयेन समन्तात् पच्यते पुनः। द्विधा भवति तत् पक्वं पृथक् किट्टं पृथग् रसम्। रसेन तेन ता नाडीः प्राणः पूरयते पुनः। प्रत्यर्पयन्ति सम्पूर्णा रसानि ताः समन्तत इति"। एवं रसपाकोत्तरं धातुपाकोऽभिहितः पदार्थादर्शे। यथा "त्वगसृग्मांसमेदोऽस्थिमज्जशुक्राणि धातवः। सप्त स्युस्तत्र चोक्ता त्वक् रक्तजोदरवह्निना। पक्वान्नवेदन्नरसादेवं रक्तादिभिस्तथा। स्वस्वकोशाग्निना पाकात् प्रजायन्ते त्वगादय इति"। एतन्मूलमेव "तत्र षोढा शरीराणि षट् त्वचो धारयन्ति चेति" याज्ञवल्क्यवचनव्याख्यायां मिताक्षराकृता स्पष्टमुक्तम् यथा तत्राक्रमीयानि जरायुजाण्डजादीनि शरीराणि तानि प्रत्येकं षट्प्रकाराणि रक्तादिषड्धातुपरिपाकहेतुभूतषडग्निस्थानयोगित्वेन। तथाहि अन्नरसो जाठरवह्निना पच्यमानो रक्ततां प्रतिपद्यते, रक्तः स्वकोश-

स्याग्निना पच्यमानं मांसत्वम्, मांसञ्च स्वकोयस्थानलपरिपक्वं मेदस्त्वम्, मेदोऽपि स्वकोयवह्निना पक्वमस्थिताम्, अस्थ्यापि स्वकीयशिखिपरिपक्वं मज्जत्वम्, मज्जापि स्वकीयपावकपरिपच्यमानं चरमधातुतया परिणमते इति” जाठरस्य प्रकारान्तरेण पाचनादिदशविधकर्मकारित्वात् दशविधत्वमुक्तं पदार्थादर्शे यथा “भ्राजकोरञ्जकश्चैव क्लेदकः स्नेहकस्तथा धारको बन्धकश्चैव द्रावकाख्यश्च सप्तमः। व्यापकः पाचकश्चैव श्लेष्मको दशधा मत इति”। वैद्यकेत्वस्य चतुर्विधकार्य्यविशेषकारित्वाच्चातुर्विध्यमुक्तम्। विषमश्च समस्तीक्ष्णो मन्दश्चेति चतुर्विधः। कफपित्तानलाधिक्यात् तत्साम्याज्जाठरोऽनलः। विषमो वातजान् रोगान्, तीक्ष्णः पित्तसमुद्भवान्, करोत्यग्निस्तथामन्दो विकारान् कफसम्भवान्। समाः समोऽग्निरशितमात्राः सम्यक् पचत्यसौ” इति॥ अग्नेरतितीक्ष्णत्वे भस्मकसंज्ञा स हि सम्यगाहाराभावे शोणितादिधातूनपि पाचयित्वा आशु देहं नाशयतीति रक्षितः आह्व। अधिकं कायशब्दे वक्ष्यते। वाह्यस्य भौमस्याग्नेः कर्म्मविशेषे नामान्युक्तानि विधानपारिजाते। यथा

“लौकिके पावकोह्यग्निः प्रथमः परिकीर्त्तितः। अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्त्तितः॥ पुंसवे चमसो नाम शोभनः शुभकर्म्मसु। (शुङ्गकर्म्मणीति रघु०)। तत्र सीमन्तान्तर्गतकर्म्मभेदः। सीमन्ते ह्यनलो नाम प्रगल्भो जातकर्म्मणि॥ पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः। सभ्यनामा तु चूड़ायां व्रतादेशे समुद्भवः॥ गोदाने सूर्य्यनामा स्यात् केशान्ते यावकः स्मृतः। वैश्वानरो विसर्गे स्यादिवाहे वरदः स्मृतः॥ चतुर्थीकर्म्मणि शिखी धृतिरग्निस्तथाऽपरे। (अपरे कर्म्मणि) आवसथ्यस्तथाधाने वैश्वदेवे तु पावकः। ब्रह्माग्निर्गार्हपत्ये स्याद्दक्षिणाग्निरथेश्वरः। विष्णुराहवनीये स्यादग्निहोत्रे त्रयोमताः लक्षहोमेऽभीष्टदः स्यात् कोटिहोमे महाशनः। एके एतेषां प्राहुरग्निध्यानपरायणाः॥ रुद्रादौ तु मृडो नाम शान्तिके शुभकृत्तथा। आदिशब्दात् लघुरुद्रशतरुद्रातिरुद्रालक्ष्यन्ते। (पूर्णाहुत्यां मृडो नामेति रघु०)। पौष्टिके वरदश्चैव क्रोधाग्निश्चाभिचारके। वश्यार्थे वशकृत् प्रोक्तो वनदाहे तु शोषकः। उदरे जठरो नाम क्रव्यादः शवभक्षणे। समुद्रे वाडवो ह्यग्निः क्षये संवर्त्तकस्तथा॥ सप्तविंशतिसंख्याता अग्नयः कर्मसु स्मृताः। तं तमाहूय होतव्यं यो यत्र विहितोऽनलः॥ अन्यथा विफलं कर्म सर्वं तद्वाक्सम्भवेत्। आदित्यादिग्रहाणां च साम्प्रतं ह्यग्निरुच्यते॥ आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते। धूमकेतुस्तथा भौमे जठरोऽग्निर्बुधे स्मृतः॥ बृहस्पतौ शिखी नाम शुक्रे भवति हाटकः। शनैश्चरे महातेजा राहौ केतौ हुताशनः इति॥” यज्ञादौ तु पञ्च भेदाः “आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च। अन्वाहार्य्यो गार्हपत्य इत्येते पञ्च वह्नयः” इति शा०राघ०। “पञ्चाग्नयो ये च त्रिणाचिकेता” इति श्रुतिः। अग्नेर्ध्येयरूपं यथा “रुद्रतेजःसमुद्भूतं द्विमूर्द्धानं द्विनासिकम्। षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम्। याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम्। स्रुवं स्रुचञ्च शक्तिं च अक्षमालां च दक्षिणे। तोमरं व्यजनं चैव घृतपात्रन्तु वामके। बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम्। दक्षिणञ्च चतुर्जिह्वं त्रिजिह्वमुत्तरं मुखम्। द्वादशकोटिमूर्त्त्याख्यं द्विपञ्चाशत्कलायुतम्। स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम्। रक्तमाल्याम्बरधरं रक्तं पद्मासनस्थितम्॥ रौद्रं तु वह्निनामानं वह्निमावाहयाम्यहम्”। इति रुद्रकल्पः। अग्नेर्भौतिकत्वेऽपि कर्म्माङ्गहोमसाधनतया एवं ध्यातव्यता।

अग्न्यभिमानिनि चेतनाधिष्ठिते शरीरादावपि उपचारात् अग्निशब्दप्रयोगः। अग्न्यधिष्ठातरि देवभेदे “अग्निं दूतं वृणीमहे होतारं विश्ववेदस”मित्यादौ वेदे तस्यैव आह्वानपूर्वकोपास्यत्वमुक्तम्। तदधिष्ठितदेहभेदेऽपि, स एव विश्वनराज्जन्मासाद्य अग्निलोकाधिपत्यं चकारेति काशीखण्डे उक्तं तत्कथा वैश्वानरशब्दे वक्ष्यते। अग्निदेवताके कृत्तिकानक्षत्रे “अग्नियमदहने”त्यादिना ज्योतिषे कृत्तिकानक्षत्रस्य तत्स्वामिकत्वोक्तेः तद्देवताके प्रतिपत्तिथौ वह्नेस्तदाधिपत्यं तिथिशब्दे वक्ष्यते। तस्य एकत्वेऽपि वेदत्रयभेदेन दक्षिणाग्निगार्हपत्याहवनीयनामतया प्राधान्येन त्रित्वात् “प्रधानेन व्यपदेशा भवन्तीति” न्यायात् तत्संख्यासदृशसंख्याके त्रित्वसंख्यान्विते, स्वोदयात् स्वाग्नित्वं (३०) “यद्भुक्तं भोग्यं रवेस्त्र्यंशोदिति”नीलकण्ठः। चित्रकवृक्षे (चिते) स्पर्शे तस्य तत्त्वेजाजातत्वात्तथा तत्कथा अग्निरेतःशब्दे वक्ष्यते भल्लातकवृक्षे (भेला) निम्बुकवृक्षे (नेबु) पित्ते धातौ तस्य तद्गुणपचत्वात्तथा यथा च तस्य तद्गुणपचत्वं तथोक्तं प्राक्। तत्स्वामिके अग्निकोणे च। एवमग्निवाचकाः सर्वेऽपि शब्दाः कृत्तिकानक्षत्रादौ वर्त्तन्ते। विशं म्रक्षणि कार्य्यसिद्धिरतुला शक्रे हुताशे भयमिति तिथित०। “हुताशे अग्निकोणे” अनलविधुशता-

स्वेति" ज्योतिषम् । (अनलः कृत्तिका) एवं यथायथमुदाहार्य्यम् ।

अग्न्यभिमानिनश्च देवाः कुत उत्पन्नाः? कस्मिन् कस्मिन् । कर्म्मणि? वा तेषामधिकारत्वं तदुक्तं भारते ।

अङ्गिरा उवाच कुरु पुण्यं प्रजासर्गं भवाग्निस्तिमिरापहः । मां च देव ! कुरुष्वाग्ने! प्रथमं पुत्त्रमञ्जसा ॥ तच्छ्रुत्वाऽङ्गिरसो वाक्यं जातवेदास्तदाऽकरोत् । राजन् ! । बृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः । ज्ञात्वा प्रथमजं तन्तु वह्नेराङ्गिरसं सुतम् । उपेत्य देवा पप्रच्छुः कारणं तत्र भारत । स तु पृष्टस्तदा देवैस्ततः कारणमब्रवीत् । प्रत्यगृह्णंस्तु देवाश्च तद्वचोऽङ्गिरसस्तदा । तत्र नानाविधानग्नीन् प्रवक्ष्यामि महाप्रभान् । कर्म्मभिर्ब्बहुभिः ख्यातान्नानार्थान् ब्राह्मणेष्विह । व०भार्क० स० २१६ अध्या०

ब्रह्मणो यस्तृतीयस्तु पुत्त्रः कुरुकुलोद्वह ! । तस्याभवत् शुभा भार्य्या प्रजास्तस्याश्च मे शृणु । बृहत्कीर्त्तिर्बृहज्ज्योतिर्बृहद्ब्रह्मा बृहन्मनाः । बृहन्मन्त्रो बृहद्भासस्तथा राजन् ! बृहस्पतिः । प्रजासु तासु सर्व्वासु रूपेणाप्रतिमाऽभवत् । देव ! भानुमती नाम प्रथमाऽङ्गिरसः सुता । भूतानामिव सर्व्वेषां तस्यां रागस्तदाऽभवत् । रागाद्रागेति यामाहुर्द्वितीयाऽङ्गिरसः सुता । यां कपर्द्दिसुतामाहुर्दृश्यादृश्येति देहिनः । तनुत्वात् सा सिनीवाली तृतीयाऽङ्गिरसः सुता । पश्यत्यर्च्चिष्मती भाभिर्हविर्भिश्च हविष्मती । महामखेष्वाङ्गिरसी दीप्तिमत्सु महामते ! । महामतीति विख्याता सप्तमी कथ्यते सुता । यान्तु दृष्ट्वा भगवतीं जनः कुहुकुहायते । एकानंशेति तामाहुः कुहूमङ्गिरसः सुताम् । २१७ अ०

बृहस्पतेश्चान्द्रमसी भार्य्याऽभूद्या यशस्विनी । अग्नीन् साऽजनयत् पुण्यान् षडेकाञ्चापि पुत्त्रिकाम् । आहुतिष्वेव यस्याग्ने हविषाज्यं विधीयते । सोऽग्निर्बृहस्पतेः पुत्त्रः शंयुर्नाम महाव्रतः । चातुर्म्मास्येषु यस्येष्ट्यामश्वमेधेऽग्रजः पशुः । दीप्तो ज्वालैरनेकाभैरग्निरेषोऽथ वीर्य्यवान् । शंयोरप्रतिमा भार्य्या सत्याऽसत्याऽथ धर्म्मज ! ॥ अग्निस्तस्य सुतो दीप्तस्तिस्रः कन्याश्च सुव्रताः प्रथमेनाज्यभागेन पूज्यते योऽग्निरध्वरे । अग्निस्तस्य भरद्वाजः प्रथमः पुत्त्र उच्यते पौर्णमास्येषु सर्व्वेषु हविषाज्यं स्रुचोद्यतम् । भरतो नामतः सोऽग्निर्द्वितीयः शंयुतः सुतः । तिस्रः कन्या भवन्त्यन्या यासां स भरतः पतिः । भरतस्तु सुतस्तस्य भरत्येका च पुत्त्रिका । भरतो भरतस्याग्नेः पावकस्तु प्रजापतेः । महानत्यर्थमहितस्तथा भरतसत्तमः । भरद्वाजस्य भार्य्या तु वीरा वीरस्य पिण्डदा । प्राहुराज्येन तस्येज्यां सोमस्येव द्विजाः शनैः । हविषा यो द्वितीयेन सोमेन सह युज्यते । रथप्रभूरथध्वानः कुम्भरेताः स उच्यते । सरय्वां जनयन् सिद्धिं भानुं भाभिः समावृणोत् । आग्नेयं मानयन्नित्यमाधाने ह्येष स्तूयते । यस्तु न च्यवते नित्यं यशसा वर्च्चसा श्रिया । अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम् । विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्च्चिषा ज्वलन् । विपापोऽग्निः सुतस्तस्य सत्यः समयधर्म्मकृत् । अक्रोशतां हि भूतानां यः करोति हि निष्कृतिम् । अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः । अनुकूजन्ति येनेह वेदनार्त्ताः स्वयं जनाः । तस्य पुत्त्रः स्वनो नाम पावकः स रुजस्करः । यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति । तं प्राहुरध्यात्मविदो विश्वजिन्नामपावकम् । अन्तरग्निः श्रुतो यस्तु भुक्तं पचति देहिनाम् । स जज्ञे विश्वभुङ्नाम सर्व्वलोकेषु भारत ! । ब्रह्मचारी यतात्मा च सततं विपुलव्रतः । ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकम् । पविता गोतमी नाम नदी यस्याऽभवत् प्रिया । तस्मिन् कर्म्माणि सर्व्वाणि क्रियन्ते धर्म्मकर्त्तृभिः । वडवाग्निः पिबत्यम्भो योऽसौ परमदारुणः । ऊर्द्धभागूर्द्धभाङ् नाम कविः प्राणाश्रितस्तु यः । उदग्धारं हविर्यस्य गृहे नित्यं प्रदीयते । ततः स्विष्टं भवेदाज्यं स्विष्टकृत् परमः स्मृतः । यः प्रशान्तेषु भूतेषु मन्युर्भवति पावकः । क्रुद्धस्य तरसा जज्ञे मनस्विनी चाथ पुत्त्रिका । स्वाहेति दारुणा क्रूरा सर्व्वभूतेषु तिष्ठति । त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन । अतुल्यत्वात् कृतो देवैर्नाम्ना कामस्तु पावकः । संहर्षाद्धारयन् क्रोधं धन्वी स्रग्वी रथे स्थितः । समरे नाशयेच्छत्रून् अमोघो नाम पावकः । उक्थो नाम महाभाग । त्रिभिरुक्थैरभिष्टुतः । महावाचमथाजनयत् समाश्वासं हि यं विदुः । २१८ अ०

काश्यपो ह्यथ वाशिष्ठः प्राणश्च प्राणपुत्त्रकः । अग्निराङ्गिरसश्चैव च्यवनस्त्रिसुवर्च्चकः । अचरत् स तपस्तीव्रं पुत्त्रार्थी बहुवार्षिकम् । पुत्त्रं लभेयं धर्म्मिष्ठं यशसा ब्रह्मणा समम् । महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ । जज्ञे तेजो महार्च्चिष्मान् पञ्चवर्णः प्रभावनः । समिद्धोऽग्निः शिरस्तस्य बाहू सूर्य्यनिभौ तथा । त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत ! । पञ्चवर्णः स तपसा कृतस्तैः पञ्चभिर्जनैः । पाञ्चजन्यः श्रुतो देवः पञ्चवंश-

करस्तु सः। दश वर्षसहस्राणि तपस्तप्त्वा महातपाः। जनयत् पावकं घोरं पितृणां स प्रजाः सृजन्। वृहद्रथन्तरं मूर्द्ध्नो वक्त्राद्वा तरसा हरी। शिवं नाभ्यां बलादिन्द्रं वाय्वग्नी प्राणतोऽसृजत्। बाहुभ्यामनुदात्तौ च विश्वाभूतानि चैव ह। एतान् दृष्ट्वा ततः पञ्च पितृणामसृजत् सुतान्। वृहद्रथस्य प्रणिधिः काश्यपस्य महत्तरः। भानुरङ्गिरसो धीरः पुत्रो वर्चस्य सौभरः। प्राणस्य चानुदात्तस्तु व्याख्याताः पञ्चविंशतिः। देवान् यज्ञमुषश्चान्यान् सृजत् पञ्चदशोत्तरान्। सुभीममतिभीमञ्च भीमं भीमबलाबलम्। एतान् यज्ञमुषः पञ्च देवानां ह्यसृजत्तपः। सुमित्रं मित्रवन्तञ्च मित्रज्ञं मित्रवर्द्धनम्। मित्रधर्म्माणमित्येतान् देवानभ्यसृजत्तपः। सुरप्रवीरं वीरञ्च सुरेशं सुरवर्च्चसम्। सुराणामपि हन्तारं पञ्चैतान सृजत्तपः। त्रिविधं संस्थिता ह्येते पञ्च पञ्च पृथक् पृथक्। मुष्णन्त्यत्र स्थिता ह्येते स्वर्गतो यज्ञयाजिनः। तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्भविः। स्पर्द्धया हव्यवाहानां निघ्नन्त्येते हरन्ति च। ह्यां वहिर्वेदी तदादानं कुशलैः संप्रवर्त्तितम्। तदेते नोपसर्पन्ति यत्र चाग्निः स्थितो भवेत्। चितोऽग्निरुद्वहन्यज्ञं पक्षाभ्यां तत् प्रवर्त्तितम्। मन्त्रैः प्रशमिता ह्येते नष्टं मुष्णन्ति यज्ञियम्। वृहदुक्थस्तपसैव पुत्रो भूमिमुपाश्रितः। अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरिज्यते। रथन्तरश्च तपसः पुत्रोऽग्निः परिपठ्यते। मित्रविन्दाय वै तस्य हविरध्वर्यवो विदुः। मुमुदे परमप्रीतः सह पुत्रैर्महायशाः। २१९ अ०

गुरुभिर्नियमैर्जातो भरतो नाम पावकः। अग्निः पुष्टिमतिर्नाम तुष्टः पुष्टिं प्रयच्छति। भरत्येष प्रजाः सर्वास्ततो भरत उच्यते। अग्निर्यश्च शिवो नाम शक्तिपूजापरश्च सः। दुःखार्त्तानाञ्च सर्वेषां शिवकृत् सततं शिवः। तपसस्तु फलं दृष्ट्वा सम्प्रवृद्धं तपो महत्। उद्धर्तुकामो मतिमान् पुत्रो जज्ञे पुरन्दरः। ऊष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते। अग्निश्चापि मनुर्नाम प्राजापत्यमकारयत्। शम्भुमग्निमथ प्राहुर्ब्राह्मणा वेदपारगाः। आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभम्। ऊर्ज्जस्करान् हव्यवाहान् सुवर्णसदृशप्रभान्। ततस्तपो ह्यजनयत् पञ्च यज्ञसुतानिह। प्रशान्तोऽग्निर्महाभाग। परिश्रान्तो गवाम्पतिः। असुरान् जनयन् घोरान्मर्त्यांश्चैव पृथग्विधान्। तपसश्च मनुं पुत्रं भानुञ्चाप्यङ्गिराः सृजत्। वृहद्भानुन्तु तं प्राहुर्ब्राह्मणा वेदपारगाः। भानोर्भार्य्या सुप्रजा तु वृहद्भासा तु सूर्य्यजा। असृजेतान्तु षट् पुत्रान् शृणु तेषां प्रजाविधिम्। दुर्ब्बलानान्तु भूतानामसून् यः सम्प्रयच्छति। तमग्निं बलदं प्राहुः प्रथमं भानुतः सुतम्। यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः। अग्निः स मन्युमान्नाम द्वितीयो भानुतः सुतः। दर्शे च पौर्णमासे च यस्येह हविरुच्यते। विष्णुर्नामेह योऽग्निस्तु धृतिमान् नाम सोऽङ्गिराः। इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम्। अग्निराग्रयणो नाम भानोरेवान्वयस्तु सः। चातुर्मास्येषु नित्यानां हविषां यो निरग्रहः। चतुर्भिः सहितः पुत्रैर्भानोरेवान्वयस्तु सः। निशा त्वजनयत् कन्यामग्नीषोमावुभौ तथा। भानोरेवाभवद्भार्य्या सुषुवे पञ्च पावकान्। पूज्यते हविषाग्र्येण चातुर्मास्येषु पावकः। पर्जन्यसहितः श्रीमानग्निर्वैश्वानरस्तु सः। अस्य लोकस्य सर्व्वस्य यः प्रभुः परिपठ्यते। सोऽग्निर्विश्वपतिर्नाम द्वितीयो वै मनोः सुतः। ततः स्विष्टं भवेदाज्यं स्विष्टकृत् परमस्तु सः। कन्या सा रोहिणी नाम हिरण्यकशिपोः सुता। कर्म्मणाऽसौ बभौ भार्य्या स वह्निः स प्रजापतिः। प्राणानाश्रित्य यो देहं प्रवर्त्तयति देहिनाम्। तस्य सन्निहितो नाम शब्दरूपस्य साधनः। शुक्लकृष्णगतिर्देवो यो बिभर्त्ति हुताशनम्। अकल्मषः कल्मषाणां कर्त्ता क्रोधाश्रितस्तु सः। कपिलं परमर्षिञ्च यम्प्राहुर्यतयः सदा। अग्निः स कपिलो नाम साङ्ख्ययोगप्रवर्त्तकः। अग्रं यच्छन्ति भूतानां येन भूतानि नित्यदा। कर्म्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते। इमानन्यान् समसृजत् पावकान् प्रथितान् भुवि। अग्निहोत्रस्य दुष्टस्य प्रायश्चित्तार्थमुल्बणान्। संस्पृशेयुर्यदाऽन्योऽन्यं कथञ्चिद्वायुनाऽग्नयः। इष्टिरष्टाकपालेन कार्य्या वै शुचयेऽग्नये। दक्षिणाग्निर्यदा द्वाभ्यां संसृजेत तदा किल। इष्टिरष्टाकपालेन कार्य्या वै वीतयेऽग्नये। यद्यग्नयो हि स्पृश्येयुर्निवेशस्था दवाग्निना। इष्टिरष्टाकपालेन कार्य्या तु शुचयेऽग्नये। अग्निं रजस्वला वै स्त्री संस्पृशेदग्निहोत्रिकम्। इष्टिरष्टाकपालेन कार्य्या दस्युमतेऽग्नये। मृतः श्रूयेत यो जीवः परेयुः पशवो यदा। इष्टिरष्टाकपालेन कार्य्या सुरभतेऽग्नये। आर्त्तो न जुहुयादग्निं त्रिरात्रं यस्तु ब्राह्मणः। इष्टिरष्टाकपालेन कार्य्या ह्युत्तराग्नये। दर्शञ्च पौर्णमासञ्च यस्य तिष्ठेत् प्रतिष्ठितम्। इष्टिरष्टाकपालेन कार्य्या रतिकृतेऽग्नये।

सूतिकाऽग्निर्यदा चाग्निं संस्पृशेदग्निहोत्रिकम्। इष्टिरष्टाकपालेन कार्य्या चाग्निमतेऽग्नये। २२० अध्या०
आपस्य दुहिता भार्य्या सहस्य परमा प्रिया। भूपतिर्भुवभर्त्ता चाजनयत् पावकं परम्! भूतानाञ्चापि सर्व्वेषां यं प्राहुः पावकं पतिम्। आत्मा भुवनभर्त्तेति सान्वयेषु द्विजातिषु। महताञ्चैव भूतानां सर्व्वेषामिह यः पतिः। भगवान् स महातेजा नित्यं चरति पावकः। अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते। हुतं वहति यो हव्यमस्य लोकस्य पावकः। अपां गर्भो महाभागः सत्त्वभुग्यो महाद्भुतः। भूपतिर्भुवभर्त्ता च महतः पतिरुच्यते। दहन्मृतानि भूतानि तस्याग्निर्भरतोऽभवत्। अग्निष्टोमे च नियतः क्रतुश्रेष्ठो भरस्य तु। स वह्निः प्रथमो नित्यं देवैरन्विष्यते प्रभुः। आयान्तं नियतं दृष्ट्वा प्रविवेशार्णवं भयात्। देवास्तत्राधिगच्छन्ति मार्गमाणा यथादिशम्। दृष्ट्वा त्वग्निरथर्व्वाणं ततो वचनमब्रवीत्। देवानां वह हव्यं, त्वमहं वीर! सुदुर्ब्बलः। अथ त्वं गच्छ मध्वक्षं प्रियमेतत् कुरुष्व मे। प्रेष्य चाग्निरथर्व्वाणमन्यं देशं ततोऽगमत्। मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत्। भक्ष्या वै विविधैर्भावैर्भविष्यथ शरीरिणाम्। अथर्व्वाणं तथा चापि हव्यवाहोऽब्रवीद्वचः। अनुनीयमानो हि भृशं देववाक्याद्धि तेन सः। नैच्छद्वोढुं हविः सर्व्वं शरीरञ्चापि सोऽत्यजत्। स तच्छरीरं सन्त्यज्य प्रविवेश धरान्तदा। भूमिं स्पृष्टाऽसृजद्धातून् पृथक् पृथगतीव हि। पूयात् स गन्धं तेजश्च अस्थिभ्यो देवदारु च। श्लेष्मणः स्फाटिकं तस्य पित्तान्मारकतं तथा। यकृत् कृष्णायसं तस्य त्रिभिरेव प्रभुः प्रजाः। नखास्तस्याभ्रपटलं शिराजालानि विद्रुमम्। शरीराद्विविधाश्चान्ये धातवोऽस्याभवन्नृप!। एवं त्यक्त्वा शरीरन्तु परमे तपसि स्थितः। भृग्वङ्गिरादिभिर्भूयस्तपसोत्थापितस्तदा। भृशं जज्वाल तेजस्वी तपसाप्यायितः शिखी। दृष्ट्वा ऋषिं भयाच्चापि प्रविवेश महार्णवम्। तस्मिन्नष्टे जगद्भीतमथर्व्वाणमथाश्रितम्॥ अर्च्चयामासुरेवैनमथर्व्वाणं सुरादयः। अथर्व्वा त्वसृजल्लोकानात्मनालोक्य पावकम्। मिषतां सर्व्वभूतानामुन्ममाथ महार्णवम्। एवमग्निर्भगवता नष्टः पूर्व्वमथर्व्वणा। आहूतः सर्व्वभूतानां हव्यं वहति सर्व्वदा। एवं त्वजनयद्धिष्ण्यान् वेदोक्तान् विविधान् बहून्। विचरन् विविधान् देशान् भ्रममाणस्तु तत्र वै। सिन्धुं नदं पञ्चनदं देविकाऽथ सरस्वती। गङ्गा च शतकुम्भा च सरयूर्गण्डसाह्वया चर्म्मण्वती मही चैव मेध्या मेधातिथिस्तदा। ताम्रावती वेत्रवती नद्यस्तिस्रोऽथ कौशिकी। तमसा नर्म्मदा चैव नदी गोदावरी तथा। वेण्णोपवेण्णा भीमा च वडवा चैव भारत!॥ भारती सुप्रयोगा च कावेरी मुर्म्मुरा तथा। तुङ्गवेणा कृष्णवेणा कपिला शोण एव च। एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्त्तिताः। अद्भुतस्य प्रिया भार्य्या तस्य पुत्रो विभूरसिः। यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव तु॥ अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः। अत्रिः पुत्रान् स्रष्टुकामांस्तानेवात्मन्यधारयत्। तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः। एवमेते महात्मानः कीर्त्तितास्तेऽग्नयो मया॥ अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः। अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्त्तितम्। तादृशं विद्धि सर्व्वेषामेको ह्येष हुताशनः। एक एवैष भगवान् विज्ञेयः प्रथमोऽङ्गिराः। बहुधा निःसृतः कायात् ज्योतिष्टोमक्रतुर्यथा। इत्येष वंशः सुमहानग्नीनां कीर्त्तितो मया। योऽर्चितो विविधैर्मन्त्रैर्हव्यं वहति देहिनाम्। भा० व० मार्क० २२१ अध्या०।
सास्य देवतेति—ढक् आग्नेयमग्निदेवताके हविरादौ त्रि०। अग्निना दृष्टं साम ढक्। आग्नेयं साम। आग्नेयी ऋक् स्त्री०। अग्नये हितं ढक्। आग्नेयमौषधम् त्रि०।
लौकिकप्रयोगानुसारेण "अङ्गेर्नलोपश्चेति" औणादिकसूत्रेण अग्निशब्दस्य व्युत्पत्तिर्दर्शिता वैदिकप्रयोगे तु अग्निशब्दस्य प्रवृत्तिनिमित्तभेदोपयोगिन्यो यास्केन बह्व्यो व्युत्पत्तयो दर्शिताः। यथा "अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति" शाकपूणिरितादक्ताद्दग्धाद्वा नीतात् स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवतीति" "अग्निमीडे इति"। अस्यायमर्थः। सामान्येन सर्व्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितमतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते। कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयते? इति प्रश्नस्याग्रणीरित्यादिकमुत्तरम्। देवसेनामध्ये स्वयं नयतीत्यग्रणीः। एतदेवमग्निशब्दस्य प्रवृत्तिनिमित्तम्। तथा च ब्राह्मणान्तरम्। "अग्निर्वै देवानां सेनानीरिति"। एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे आमनन्ति। "अग्नि-

मेषं प्रथमो देवतानामिति" मन्त्रः । "अग्निर्वै देवानामवम इति" ब्राह्मणम् । तथा तैत्तिरीयाश्चामनन्ति । "अग्निरग्रे प्रथमो देवतानामिति" मन्त्रः । "अग्निरवमो देवतानामिति" च । वाजसनेयिनस्त्वेवमामनन्ति । "स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नामेति" । यज्ञे ह्यग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्व्वदिग्वर्त्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम् । सन्नममानः सम्यक् स्वयमेव प्रह्वीभवन्नङ्गं स्वकीयं शरीरं नयति काष्ठदाहे हविःपाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम् । स्थूलाष्ठीविनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्व्वक्ति । तत्र न क्नोपयतीत्युक्ते न स्नेहयति किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति । शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते । इतः इण् गतौ इति धातुः । अक्तो अञ्जु व्यक्तिम्रक्षणगतिषु इति धातुः । दग्धो दह भस्मीकरणे इति धातुः । नीतो णीञ् प्रापणे इति धातुः । अग्निशब्दो ह्यकारगकारनिशब्दानपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते । अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते । यद्वा दहति धातुजन्याद्दग्धशब्दाद्गकारमादत्ते । नीरिति नयतिधातुः स च ह्रस्वो भूत्वा परो भवति । ततो धातुत्रयं मिलित्वाग्निशब्दो भवति । यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविःपाके च प्रेरयतीति समुदायार्थः । तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिदर्शनार्थमग्निमीळे इत्यृग्भवतीति" ऋग्वेदभाष्ये माधवाचार्य्यः एतस्य वैश्वानरादिशब्दप्रवृत्तिनिमित्तदर्शनेनानेकास्तुतयो यास्केन दर्शितास्ताश्च तत्तच्छब्दावसरे दर्शयिष्यन्ते ।

**अग्निक** पु॰ अग्निवत् कायति प्रकाशते कै-क । इन्द्रगोपकीटे ।

**अग्निकण** पु॰ अग्नेः कणः ६त॰ । अग्निच्युतक्षुद्रांशे ।

**अग्निकर्म्मन्** न॰ अग्नौ कर्म्म ७त॰ । होमे अग्निहोत्रादौ "अग्निकर्म्म ततः कृत्वेति" स्मृतिः अग्निकार्य्यादयोऽप्यत्र न॰ ।

**अग्निकला** स्त्री ६त॰ अग्नेरवयवभेदे । सा च दशविधा तासाञ्च यादिक्षान्तवर्णदेवतात्वं यथोक्तं शारदातिलके । "धूम्रार्च्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी । सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि । यादीनां दशवर्णानां कला धर्म्मप्रदा अमूः" इति ।

**अग्निकारिका** स्त्री अग्निं करोति आचष्टे करणे कर्म्मत्वोपचारात् कर्त्तरि ण्वुल् । अग्न्याधानसाधनेष्वग्नीप्रायास्वृचि । सा च अग्निं दूतं पुरोदधे, इत्याद्या यजुर्व्वेदे एवमन्यवेदेऽप्यनुसन्धेया ।

**अग्निकाष्ठ** न॰ अग्नेः उद्दीपनं काष्ठम् शा॰त॰ । अगुरुकाष्ठे ।

**अग्निकुक्कुट** पु॰ अग्नेः कुक्कुटइव रक्तवर्णस्फुलिङ्गवत्त्वात् । ज्वलदग्निव्याप्ततृणपुञ्जे (नुडा) इति ख्याते ।

**अग्निकुण्ड** न॰ अग्नेराधानार्थं कुण्डम् । अग्न्याधानार्थे स्थानभेदे तत्स्थानविवरणं कुण्डशब्देऽनुसन्धेयम् ।

**अग्निकुमार** पु॰ ६त॰ । कार्त्तिकेये तस्याग्निरेतोजातत्वकथा महाभारते वनपर्व्वणि२२३ अध्याये सप्तर्षिपत्नीरूपदर्शनात् जातस्मरविकारस्याग्नेस्तेषां गार्हपत्य-प्रवेशेन अनिशं तद्दर्शनेन जाताधिकविकारे तथानिर्वेदपूर्व्वकं वनगमनमुपक्रम्य, "स्वाहा तं दक्षदुहिता प्रथमं कामयत्तदा ॥ सा तस्य छिद्रमन्वैच्छच्चिरात् प्रभृति भाविनी । अप्रमत्तस्य देवस्य न चापश्यदनिन्दिता ॥ सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतम् । तत्त्वतः कामसन्तप्तं चिन्तयामास भाविनी ॥ अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकम् । कामयिष्यामि कामार्त्तं तासां रूपेण मोहितम् ॥ एवङ्कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ॥ २२३ अध्या॰

मार्कण्डेय उवाच । शिवा भार्य्या त्वङ्गिरसः शीलरूपगुणान्विता । तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप । जगाम पावकाभ्याशं तञ्चोवाच वराङ्गना ॥ मामग्ने! कामसन्तप्तां त्वं कामयितुमर्हसि । करिष्यसि न चेदेवं मृतां मामुपधारय ॥ अहमङ्गिरसो भार्य्या शिवा नाम हुताशन! । शिष्टाभिः प्रहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ॥ अग्निरुवाच । कथं मां त्वं विजानीषे कामार्त्ता इतराः कथम् । यास्त्वया कीर्त्तिताः सर्व्वाः सप्तर्षीणां प्रियाः स्त्रियः ॥ शिवोवाच । अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव । त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषितास्मि तवान्तिकम् ॥ मैथुनायेह संप्राप्ता कामं प्राप्तुं द्रुतं चर । मातरो मां प्रतीक्षन्ते गमिष्यामि हुताशन ! ॥ मार्कण्डेय उवाच । ततोऽग्निरुपयेमे तां शिवां प्रीतिमुदायुतः । प्रीत्या देवी समायुक्ता शुक्रं जग्राह पाणिना ॥ अचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने । ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावके ॥ तस्मादेतद्रक्षमाणा गरुडी संभवाम्यहम् । वनान्निर्गमनञ्चैव सुखं मम भविष्यति ॥ मार्कण्डेय उवाच । सुपर्णी सा तदा भूत्वा निर्जगाम महावनात् । अपश्यत् पर्व्वतं श्वेतं शरस्तम्बैः सुसंवृतम् ॥ दृष्टिविषैः सप्तशीर्षैर्गुप्तं

भोगिभिरद्भुतैः । रक्षोभिश्च पिशाचैश्च रौद्रैर्भूतगणैस्तथा राक्षसीभिश्च संपूर्णमनेकैश्च मृगद्विजैः ॥ सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् । प्राक्षिपत् काञ्चने कुण्डे शुक्रं सा त्वरिता शुभा ॥ सप्तानामपि सा देवी सप्तर्षीणां महात्मनाम् । पत्नीसरूपकं कृत्वा कामयामास पावकम् ॥ दिव्यं रूपमरुन्धत्याः कर्त्तुं न शकितं तया । तस्यास्तपःप्रभावेन भर्तृशुश्रूषणेन च ॥ षट्कृत्वस्तत्र निक्षिप्तमग्नेरेतः कुरूत्तम ! । तस्मिन् कुण्डे प्रतिपदि कामिन्या स्वाहया तदा ॥ तत् स्कन्नं तेजसा तत्र संवृतं जनयत् सुतम् । ऋषिभिः पूजितं स्कन्नमनयत् स्कन्दतां ततः । षट्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभुजक्रमः । एकग्रीवैकजठरः कुमारः समपद्यत ॥ वन० भा० स० २२३ अध्यायः

अग्निकुमारत्वेऽपि तस्य रुद्रकुमारत्वं तदप्युक्तं तत्रैव "ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत् । अभिगच्छ महादेवं पितरं त्रिपुरार्द्दनम् ॥ रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया । हितार्थं सर्व्वलोकानां जातस्त्वमपराजित ! ॥ उमायोन्याञ्च रुद्रेण शुक्रं सिक्तं महात्मना अस्मिन् गिरौ निपतितं मिञ्जिकामिञ्जिकं ततः ॥ सम्भूतं लोहितोदे तु शुक्रशेषमवापतत् । सूर्य्यरश्मिषु चाप्यन्यदन्यच्चैवापतद्भुवि । आसक्तमन्यद्वृक्षेषु तदेवं पञ्चधापतत् ॥ इति २२४ अध्याये । अग्नितनयाग्निसुतादयोऽप्यत्र ।

**अग्निकेतु** पु० अग्नेः केतुरिव । धूमे तस्याग्निप्रभवत्वेन तच्चिह्नीभूतत्वम् गगने उद्धूयमानत्वात् तत्पताकात्वञ्च ।

**अग्निकोण** पु० अग्नेः अग्निदेवताकः कोणः अन्तरालदिक् हेत० । अग्निदैवत्ये पूर्व्वदक्षिणयोर्मध्ये दिग्भागे । "इन्द्रोवह्निः पितृपतिर्नैरृतोवरुणोमरुत् । कुवेरईशः पतयः पूर्व्वादीनां दिशां क्रमात्" इत्युक्तेः तस्य पूर्व्वदक्षिणदिशोर्मध्यदिक्पतित्वम् । उपचारात् तत्स्वामिनोऽग्नेर्वाचका अपि अत्रैव । "प्रतिपत् नवमी पूर्व्वे रामरुद्रौ च पावके" इति ज्योतिषे "शक्रे हुताशे भयमिति" च अग्निकोणपरतया पावकादिशब्दः प्रयुक्तः ।

**अग्निगर्भ** पु० अग्निरिव जारको गर्भोऽस्य । अग्निजारवृक्षे । अग्निर्गर्भेऽस्य । सूर्य्यकान्तमणौ (आतसि) तस्य सूर्य्यकिरणसम्पर्कात् अग्न्युत्तापकत्वात्तथात्वम् । अग्निमन्थनकाष्ठरूपारण्यौ च । अग्निः स्थितो गर्भेऽस्याः । शमीलतायाम् स्त्री । "अग्निगर्भां शमीमिवेति" रघुः । शम्या गर्भेऽग्निस्थितिकथा भा० आनुशा० प० ८५ अध्याये "रुद्रस्य रेतःप्रस्कन्नमग्नौ निपतितञ्च यत् तत्तेजोऽग्निर्महद्भूतं द्वितीयमिव पावकम् । वधार्थं देवशत्रूणां गङ्गायां जनयिष्यतीति" ब्रह्मवाक्यानन्तरं कार्त्तिकेयोत्पत्त्यर्थमन्विष्यमाणस्य कुतश्चित् कारणेन गुप्तस्याग्नेः "नष्टमात्मनि संलीनं नाधिजग्मुर्हुताशनमित्यनेन" देवैस्तस्यानासादने उक्ते नानास्थानेऽन्वेषणात् परिशेषे शमीगर्भे प्राप्तिरुक्ता, यथा "अश्वत्थाद्विनिर्गतोवह्निः शमीगर्भमुपाविशदिति" । शमीगर्भे चास्य स्थितिं कथयतः शुकस्य जिह्वापरिहतिरूपशापदानमुक्त्वा देवैस्तस्मै वरान् दत्त्वा शमीगर्भे वह्निरलक्ष्यत इत्युक्त्वा च "इत्युक्त्वा तं शमीगर्भे वह्निमालक्ष्य देवताः तदेवायतनं चक्रुः पुण्यं सर्व्वक्रियास्वपि । ततः प्रभृति चाग्निः स शमीगर्भेषु दृश्यते । उत्पादने तथोपायमधिजग्मुश्च मानवा" इति ।

अग्नेः सकाशात् गर्भोऽस्याः पृथिव्यां स्त्री । वह्निना गङ्गायामासिक्तगर्भस्य धारयितुमशक्यस्य पृथिव्यां सुमेरौ गङ्गया निक्षेपणमुक्तं तत्रैव । "सा वह्निना धार्य्यमाणा देवैरपि सरिद्वरा । समुत्ससर्ज तं गर्भं मेरौ गिरिवरे तदेति, उक्त्वा "तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्व्वतेषु च तत् सर्वं काञ्चनीभूतं समन्तात् प्रत्यदृश्यत । पृथिवी च तदा देवी ख्याता वसुमतीति च स तु गर्भो महातेजाः गाङ्गेयः पावकोद्भवः दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शन इति भा० आनु० ८५ अ० । अतएव श्रुतौ "यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी" इत्युक्तम् । अग्निरिव गर्भोमध्यभागोऽस्याः । अग्निदीप्तायां महाज्योतिष्मतीलतायाम् स्त्री ।

**अग्निगृह** न० अग्निकार्य्यार्थं गृहं शा० त० । होमार्थे गृहे हेत० । श्रौतस्मार्त्ताग्निरक्षाधारे गृहे न । अग्न्यगारादयोऽप्यत्र । "वसंश्चतुर्थोऽग्निरिवाग्न्यगारे" इति रघुः ।

**अग्निग्रन्थ** पु० अग्निप्रतिपादकः ग्रन्थः शा० त० । अग्निहोमादि-प्रतिपादके शास्त्रे "अग्निग्रन्थपर्य्यन्तमधीते" सि० कौ० अग्निग्रन्थः अग्निप्रतिपादकः ग्रन्थ इति तत्त्वबो० । एवमेव मत्कृतसरलायामुक्तम् ।

**अग्निघृत** न० अग्न्युद्दीपनं घृतं शा० त० । वैद्यकोक्ते घृतभेदे यथा चक्रदत्तः ।

"पिप्पलीपिप्पलीमूलं चित्रको हस्तिपिप्पली । हिङ्गुचव्याजमोदा च पञ्चैव लवणानि च ॥ द्वौ क्षारौ हपुषा चैव दद्यादर्द्धपलोन्मितान् । दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च । आर्द्रकं स्वरसं प्रस्थं घृतप्रस्थं विपाचयेदिति । एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते इति" ॥

"भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत् । अष्टभागावशेषन्तु कषायमवतारयेत् । घृतप्रस्थं समादाय कल्कानीमानि दापयेत् । त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ हिङ्गुचव्याजमोदा च पञ्चैव लवणानि च । द्वौ चारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ॥ दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च । आर्द्रकं सरसञ्चैव शोभाञ्जनरसन्तथा ॥ तत् सर्व्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् । एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते" इति च ।

**अग्निचयन** पु० अग्निश्चीयते आधीयते अनेन चि–करणे ल्युट् ६त० । अग्न्याधानसाधने मन्त्रभेदे, भावे ल्युट् ६त० । अग्न्याधाने न० ।

**अग्निचित्** त्रि० अग्निं चितवान् चि-भूतार्थे क्विप् । मन्त्रपूर्व्वककृतवह्निस्थापने अग्निहोत्रिणि । भावे क्विप् । अग्न्याधाने ।

**अग्निचित्या** स्त्री अग्नेश्चित्या चि-भावे क्यप् नि० स्त्रीत्वम् । अग्निचयने अग्न्याधाने "उपविशेदग्निपुच्छस्य साग्निचित्यायामिति" गृह्यम् । "चित्याग्निचित्ये" चेति पा० ।

**अग्निचित्वत्** त्रि० अग्निचित् अग्निचयनसम्पादिन् मतुप् मस्य वः तान्तत्वान् न पदत्वम् । अग्निचयनयुतेषु यज्ञेषु "अध्वरेष्वग्निचित्वत्स्विति" भट्टिः स्त्रियां ङीप् ।

**अग्निज** पु० अग्नये अग्न्युद्दीपनाय जायते सेवनात् प्रभवति जन-ड ४त० । अग्निजारवृक्षे । अग्नेर्जायते जन-ड ५त० । स्वर्णे न० । कार्त्तिकेये पु० । तत्कथाऽग्निकुमारशब्दे द्रष्टव्या । अग्निजातमात्रे त्रि० "अग्निजा ओषधिजा महीनामिति श्रुति" "अग्नीश्वरस्य भक्तानां न भयं विद्युदग्निजमिति" काशीखण्डः ।

**अग्निजन्मन्** पु० अग्नेर्जन्माऽस्य ५त० । कार्त्तिकेये तद्विवरणम् अग्निकुमारशब्देऽनुसन्धेयम् । स्वर्णे न० ।

**अग्निजार** पु० जारयति जॄ-णिच्-कर्त्तरि अण् अग्निरिव जारः । स्वनामख्याते वृक्षे, ओषधभेदे च । रस्य लत्वे अग्निजालोऽप्यत्र ।

**अग्निजिह्व** त्रि० अग्निर्जिह्वास्वादसाधनं यस्य । अग्निमुखे देवे "ये अग्निजिह्वा उत वा यजत्रा" श्रुतिः अग्निरेव जिह्वाऽस्य । वराहमूर्त्तिधारणकाले विष्णोर्वराहरूपे "अग्निजिह्वो दर्भरोमेति वराहरूपवर्णने विष्णुः । ६त० । अग्निजिह्वायां स्त्री सा च सप्तविधा तासां नामानि यथा "कराली धूमिनी श्वेता लोहिता नीललोहिता सुवर्णा पद्मरागा च जिह्वाः सप्त विभावसोरिति" कथं तासामग्निमुखे स्थितिस्तच्च अग्निशब्दे तद्ध्याने दर्शितम् अग्नेर्जिह्वेव शिखाऽस्याः ब० । लाङ्गलीवृक्षे स्त्री ।

**अग्निज्वाला** स्त्री अग्नेर्ज्वालेव शिखाऽस्याः । गजपिप्पलीवृक्षे । (विषलाङ्गुला) ६त० । अग्निशिखायाम् ।

**अग्नितप्** त्रि० अग्निना तप्यते तप-क्विप् । अग्निना तपस्याकारके "परावीरास एतनमर्य्यास भद्रजानयः । अग्नितपो यथा स्थेति, श्रुतिः ।

**अग्नितपस्** त्रि० अग्निभिः सम्मुखस्थसूर्य्यसहितचतुर्दिक्स्थपावकैस्तप्यते तप-असुन् ३त० । "ग्रीष्मे पञ्चाग्निमध्यस्थ" इति स्मृत्युक्ततीव्रतपस्याकारके । तपतीति तपाः अग्निरिव तपाः । अग्निसदृशोष्णस्पर्शवति । "यदा वलस्य पीयतो जसुं भेद् बृहस्पतिरग्नितपोभिरर्कैरिति" श्रुतिः ।

**अग्नितेजस्** त्रि० अग्नेरिव तेजोऽस्य । अग्नितुल्यतेजस्के पदार्थे "अग्नितोकोऽग्नितेजस, इति काशी० । "विष्णोः क्रमोऽसि सपत्नहा पृथिवीसंशितो अग्नितेजा इति" श्रुतिः । ६त० । अग्नेस्तेजसि न० ।

**अग्नित्रय** न० त्र्यवयवं त्रयं त्रि+अयट् ६त० । यथाविधानेन कृताधाने अग्नित्रितये । पित्रादीन्यपक्रम्य "एतएव त्रयो लोका एतएव त्रयोऽग्नयः । पिता गार्हपत्याग्निर्माता दक्षिणाग्निः, आचार्य्य आवहनीय इति" विष्णूक्ते गार्हपत्यदक्षिणाग्न्यावहनीयवह्नित्रयरूपे पित्रादौ च । अस्य वा स्त्रीत्वे ङीप् अग्नित्रय्यप्यत्र ।

**अग्निद** त्रि० अग्निं गृहादौ दाहार्थं ददाति दा-क । गृहादौ दाहार्थं वह्निदायके आततायिभेदे "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिन इति" स्मृतिः ।

**अग्निदग्ध** त्रि० अग्निना अन्त्येष्टिविधानेन दग्धः दह-कर्म्मणि क्त । शास्त्रविधानेन संस्कृताग्निना कृतदाहे "अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम" इति, वायु पु० । अग्निना कृतदाहे पदार्थमात्रे त्रि० । "अग्निदग्धाविमौ पक्षाविति" रामा० ।

**अग्निदमनी** स्त्री अग्निर्दम्यते अनया दम-णिच्-करणे ल्युट् ६त० ङीप् । कण्टकारिकातः क्षुद्रे-कण्टकावृते गुच्छस्थक्षुद्रफलवति ( गणियारी ) इति ख्याते क्षुपभेदे ।

**अग्निदातृ** त्रि० अग्निं विधानेन ददाति दा-तृच् । अन्त्येष्टिविधानेन दाहकारके "यथाग्निदाता प्रेतस्य पिण्डं दद्यात् सएव हि" इति स्मृतिः । स्त्रियां ङीप् ।

**अग्निदीपन** त्रि० अग्निं जठरस्थानलं दीपयति दीप-णिच्-ल्यु ६त० । जठरानलोद्दीपके पदार्थमात्रे औषधभेदे न०।

**अग्निदीप्ता** स्त्री अग्निर्जठरानलोदीप्तः सेवनात् यस्याः । ज्योतिष्मतीलतायाम् ।

**अग्निदूत** पु०अग्निर्दूत इव यस्मिन् यस्य वाऽऽह्वाहकत्वात् । अग्न्याधानानन्तरमाहूतदेवके यज्ञादौ, "यमं ह "यज्ञो गच्छत्यग्निदूतो अरं कृत" इति वेदः तत्राहूते देवे च अतएव यज्ञे अग्नेर्दूतत्वमग्निस्थापने मन्त्रे "अग्निं दूतं पुरोदधे इति, 'अग्निं दूतं वृणीमहे इति' च श्रुतावुक्तम् ।

**अग्निदेवा** स्त्री अग्निर्देवोऽस्याः । कृत्तिकातारायाम् "अश्वियमदहनयजिकमलजन्दुजध्वददितिजीवफणिपितर इति" ज्योतिषे अश्विन्यादीनां क्रमशोऽश्व्यादिदेवतात्वकथनात् तत्क्रमात् कृत्तिकाया अग्निदैवत्वम् ।

**अग्निध** पु० अग्निं दधाति मन्त्रविधिना स्थापयति धा-क्विप् नि० आलोपः ६त० । अग्न्याधानकर्त्तरि । "अध्वर्युं वा मधुपाणिं सुहस्तमग्निधं वा धृतदक्षं दमूनसमिति" वेदः।

**अग्निधान** न० अग्निर्विधिना धीयतेऽस्मिन् धा-आधारे ल्युट् ६त० । अग्निहोत्रगृहे "पदं कृणुते अग्निधाने" इति वेदः । [तारावह्नितारकादयोऽप्यत्र ।

**अग्निनक्षत्र** न० ६त० । अग्निदैवत्ये कृत्तिकानक्षत्रे अग्नि-

**अग्निनयन** न० अग्नेर्नयनं मन्त्रविधिना संस्कारः नी-भावे ल्युट् ६त० । अग्निसंस्काररूपे विधिना अग्निप्रणयने ६त० । अग्निनेत्र न० । [अग्निजारवृक्षे ।

**अग्निनिर्यास** अग्नेः जठरानलस्येव दीपको निर्यासोऽस्य ।

**अग्निनेत्र** पु० अग्निर्नेता हुतहविःप्रापयिता यस्य अच् समा०। देवतामात्रे । "हव्यं वहति देवानामिति" श्रुतौ हि तस्य देवेभ्यो हव्यवाहकत्वसत्त्वम् । ६त० । वह्निनयने न० ।

**अग्निपद** न० ६त० । अग्न्याधानस्थाने अग्निबोधकशब्दे च । तत्र दीयते इत्यर्थे व्युष्टादित्वात् अण् आग्निपदम् ।

**अग्निपरिक्रिया** स्त्री अग्नेः परिक्रिया परिचर्या परि+कृ-भावे श ६त०।अग्निचर्यायां होमादिकरणे ।[पर्वतभेदे ।

**अग्निपर्वत** पु० अग्निसाधनं पर्वतः । स्वतः अग्निसम्पादके

**अग्निपुच्छ** पु० न० अग्नेरग्न्याधानस्थानस्य पुच्छ इव । आहिताग्निस्थानात् पृष्ठभागे । "दक्षिणत आहवनीयस्योपविशेदग्निपुच्छस्य साग्निचित्यायामिति" कर्कभाष्यम् ।

**अग्निपुराण** न० अग्निना प्रोक्तं पुराणम् । वेदव्यास प्रणीतेषु अष्टादशसु महापुराणेषु मध्येऽष्टमे वह्निप्रोक्ते पुराणभेदे तद्विवरणं यथा ।

"आग्नेयमष्टमं स्मृतमिति" भागवते । "परमग्निपुराणञ्च रुचिरं परिकीर्त्तितम् । चतुर्दश सहस्राणि परं पञ्चशताधिकम्" इति ब्रह्मवैवर्त्ते । तत्राभिधेयसंक्षेपः । भगवतोऽवतारः, सृष्टिप्रकारः, विष्णुपूजा, अग्निपूजा, मुद्रादिलक्षणम्, दीक्षा, अभिषेकः, मण्डपलक्षणम् कुशमार्जनाविधिः, पवित्रारोपः, देवतायतनादिनिर्माणप्रकारः, शालग्रामलक्षण-पूजे, देवप्रतिष्ठानियामकदीक्षा, देवप्रतिष्ठाविधिः, ब्रह्माण्डस्वरूपं, गङ्गादितीर्थमाहात्म्यं, द्वीपवर्णनम् ऊर्ध्वाधोलोकवर्णना, ज्योतिश्चक्रस्वरूपम् । युद्धजयोपायषट्कर्म्मविधानम्, यन्त्रमन्त्रौषधप्रकारः कुब्जिकार्चनाविधिः, कोटिहोमविधानम्, ब्रह्मचर्य्यधर्म्मः, श्राद्धकल्पः ग्रहयज्ञः, वैदिकस्मार्त्तकर्म्मणी, प्रायश्चित्तम्, तिथिभेदे व्रतभेदः, वारव्रतनक्षत्रव्रते, मासव्रतम्, दीपदानविधिः, नूतनव्यूहारम्भादि, नरकनिरूपणम्, दानव्रतम्, नाडीचक्रम्, सन्ध्याविधिः, गायत्र्यर्थः, शिवस्तोत्रं, राज्याभिषेकः, राजधर्म्मः, राजाध्येयशास्त्रम्, शुभाशुभशकुनादि, मण्डलादि, रणदीक्षाविधिः, श्रीरामनीतिः, रत्नलक्षणम्, धनुर्विद्या, व्यवहारविधिः, देवासुरयोर्युद्धम्, आयुर्वेदः, गजादिचिकित्सा, पूजाप्रकारः । शान्तिविधिः, छन्दःशास्त्रम्, साहित्यं, शिष्टानुशासनम्, सृष्ट्यादिप्रलयवर्णने, शारीरकरूपं, नरकवर्णनम्, योगः, ब्रह्मज्ञानम्, पुराणमाहात्म्यञ्च ॥ एते विषयाः संक्षेपेण दर्शिता विस्तरस्तत्रैव द्रष्टव्यः ॥

**अग्निप्रणयन** न० अग्नेः प्रणयनं मन्त्रपूर्व्वकं संस्कारः प्र+नी-भावे ल्युट् ६त०। शास्त्रोक्तविधानेन वह्निसंस्कारभेदे "दक्षिणत आहवनीयेऽवस्थितस्याग्नेः सौमिकायामुत्तरवेद्यां नयनं यदस्ति तदेतदग्निप्रणयनमिति" कर्कभाष्यम् ।

**अग्निप्रस्कन्दन** न० ६त० । यथाविधानमग्निकार्य्यरूपहोमाकरणे "प्रजाय यौवनं प्राप्य विनशिष्यन्त्यतो ! तव । अग्निप्रस्कन्दनपरस्त्वञ्चाधर्मं भविष्यसीति, सगरं प्रति ययातिवाक्यम् भार० आदि प०।

**अग्निप्रसर** पु० अग्निं प्रसृणाति सृ-अच् अग्नेर्वा प्रसरः । (चकमकि) ख्याते वह्निप्रस्तापके प्रस्तरखण्डे ।

**अग्निबाहु** पु० अग्नेर्बाहुरिव दीर्घशिखत्वात् । धूमे ।

**अग्निभ** न० अग्निरिव भाति भा-क । स्वर्णे अग्नितुल्यवर्णत्वात् तथात्वम् । वह्नितुल्यवर्णपदार्थे त्रि० । भ० नक्षत्रं ६त० । अग्निदैवत्ये कृत्तिकानक्षत्रे न० ।

**अग्निभू** पु० अग्नेर्भवति भू-क्विप् । कार्त्तिकेये अग्निकुमार

शब्दे तदुद्भवकथा। अग्निसम्बन्धे त्रि०। स्वर्णे न० कृशानुः। अग्निभवादयोऽप्यत्र।

**अग्निभूति** पु० अग्निरिव भूतिः तेजस्वित्वादैश्वर्य्यमस्य। बौद्धभेदे हेम०। पावकविभूत्यां तद्दीप्त्यै च स्त्री। हेम०। वह्निसम्बन्धे त्रि०।

**अग्निभ्राजस्** त्रि० अग्निरिव भ्राजते भ्राज-असुन्। वह्नितुल्यदीप्तियुक्ते। 'अग्निभ्राजसोविद्युतो गर्भस्थ इति' वेदः।

**अग्निमणि** पु० अग्नेरुत्पादकोमणिः शा० त०। सूर्य्यादितैजसद्रव्यसम्पर्कात् अग्न्युत्पादके सूर्य्यकान्ताभिधे मणौ (आतसी) (चकमकीति) ख्याते प्रस्तरे च।

**अग्निमत्** पु० अग्निराधानादस्त्यस्य मतुप्। यथाविधानेनाहिताग्निके साग्निके द्विजे "दारास्वग्निं विनिःक्षिप्य प्रवसेदनग्निमान् द्विजः" इति स्मृतिः।

**अग्निमथ्** पु० अग्निं मथ्नाति अरणिद्वयघर्षणेन निष्पादयति मन्थ–क्विप् नलोपः। अग्न्याधानार्थमरणिद्वयघर्षणेन वह्निसम्पादके याज्ञिके। करणे क्विप्। अग्निमन्थसाधने मन्त्रे, अरणिकाष्ठे च त्रि०।

**अग्निमन्थ** पु० अग्निर्मथ्यतेऽनेन मन्थ-करणे घञ्। गणिकारीवृक्षे (गणियारि) तत्काष्ठयोर्घर्षणे हि आशु वह्निरुद्भाव्यते। तन्मन्थनसाधने मन्त्रे च। करणे ल्युट् हेम०। अग्निमन्थनोऽप्युक्तार्थे त्रि० स्त्रियां ङीप्।

**अग्निमान्द्य** न० अग्नेर्जठरानलस्य मान्द्यं पाचनकुण्ठता। धातुवैषम्येण जठरानलस्य पाचनशक्तिराहित्ये "अग्नीश्वरस्य भक्तानां न विद्युदग्निजं भयम् अग्निमान्द्यभयं नैवेति" काशीखण्डः। अग्निमान्द्येऽजीर्णता स्यात् तत्राल्पभोजनं कार्य्यं यथा। 'मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत् इति चक्र०। तत्कारणमुक्तम्। स्नेहपीतस्य चान्नस्य विरिक्तस्य स्नुतासृजः। निरूढस्य च कायाग्निर्मन्दो भवति देहिनः॥ सोऽन्नैरल्पैर्गुरुभिरुपयुक्तैः प्रशाम्यति। अल्पोमहद्भिर्वैकुभिस्तथादितोऽग्निरिवेन्धनैः॥ यथाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्द्धते। काष्ठैरणुभिरल्पैश्च सन्धुक्षित इवानलः॥ हृतदोषप्रमाणेन सदाहारविधिः स्मृत' इति सुश्रुते।

**अग्निमारुति** अग्निश्च मरुच्च तयोरपत्यं बाह्वादेराकृतिगणत्वादिञ् ततो वृद्धिः देवताद्वन्द्वे च आनङं बाधित्वा 'इद्वृद्धाविति' इत् "देवताद्वन्द्वे च" इति द्विपदवृद्धौ पू० पूर्व्वपदस्य ह्रस्वः। अगस्त्ये मुनौ तस्य च कल्पान्तरे ताभ्यामुत्पत्तिरनुसन्धेया।

**अग्निमुख** पु० अग्निर्मुखमिव यस्य। देवे। हुतद्रव्यं हि देवैरग्निरूपमुखद्वारेणैवाश्यते। "हव्यं वहति देवानामिति" श्रुतेस्तथैव तात्पर्य्यात्। "अग्निमुखा वै देवा" इति "अग्निर्मुखं प्रथमं देवतानामिति च" श्रुतिः। अग्निर्मुखेऽग्रेऽस्य। देवे, "अग्निरग्रे प्रथमं देवानामिति" श्रुतौ वह्नेरेव देवानामग्रोत्पत्तेस्तथात्वम्। यथा चाग्नेर्देवमुखत्वं तदादित्वञ्च तथाऽग्निशब्दे निरुक्तव्याख्याने ऋग्वेदभाष्ये प्राक् दर्शितम् अग्निधिकमग्निहोत्रशब्दे वक्ष्यते। अग्निर्मुखं प्रधानमुपास्यो यस्य। अग्निहोत्रिणि द्विजे। अग्निः दाहकत्वात् शापाग्निर्मुखे यस्य। विप्रे "वाग्वज्रा वै विप्रा" इति श्रुतौ तेषां वाग्वज्रत्वकथनात् अग्निमुखत्वम्। अग्निरिव स्पर्शात् दुःखदायकं मुखमग्रमस्य। भल्लातकवृक्षे (भेला) चित्रकवृक्षे च। तन्निर्य्यासस्पर्शेन हि देहे क्षतोत्पत्तेस्तथोत्वम्। अग्नेः जठरानलस्य मुखं द्वारम्। वैद्यकोक्ते चूर्णभेदे न० यथा "हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्। पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम्॥ यमानिका पञ्चगुणा षड्गुणा च हरीतकी। चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत्॥ एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नकृत्। पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा॥ सोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम्॥ अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम्। कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम्॥ चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते" इति चक्रदत्तः।

**अग्निमुखी** स्त्री अग्निरिव दुःखमयं यस्याः गौरादित्वात् ङीष्। (भेला) भल्लातकवृक्षे, लाङ्गलिकावृक्षे (विषलाङ्गला) अग्निरेव मुखं मुखत्वेन कल्पितं यस्याः गौरा०। गायत्रीमन्त्रे। "कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत्। गायत्र्यग्निमुखी यस्मात्तस्मादुत्थाय तां जपेदिति" गोभिलः। तस्याश्च "सोऽकामयत यज्ञं सृजेयेति स मुखत एव त्रिवृतमसृजत तं गायत्री छन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणोमनुष्योवसन्तऋतुस्तस्मात् त्रिवृत् स्तोमानां मुखं, गायत्री छन्दसामग्निर्देवानामिति" श्रुतौ। अग्निना समं प्रजापतिमुखजातत्वात् तथात्वम्। अस्त्रिय पक्षे। अग्नेरिव मुखं प्रजापतिमुखं मुखमुत्पत्तिद्वारमस्या इति विग्रहः गौरा०। गायत्रीमन्त्रश्च गायत्रीशब्दे वक्ष्यते। विप्रे तु पु०। अग्निरिव उत्तप्तं मुखं यस्याः गौ० ङीष्। पाकशालायाम् स्त्री अग्निर्मुखमाद्यो यस्य अग्निप्रभृतौ देवे त्रि०।

**अग्निरक्षण** न॰ अग्निः रक्ष्यतेऽनेनात्र वा रक्ष–ल्युट्। राक्षसादिभ्योऽग्निरक्षाकारके मन्त्रभेदे, अग्निहोत्रे, अग्निहोत्रगृहे च। भावे ल्युट्। अग्न्याधाने।

**अग्निरजस्** पु॰ अग्निरिव रज्यते दीप्यते रन्ज् असुन् नलोपः। रक्तवर्णे इन्द्रगोपनामककीटे। ६त॰। अग्निवीर्ये, स्वर्णे च न॰।

**अग्निरहस्य** त्रि॰ अग्नेः रहस्यं तदुपासनाद्यङ्गजातमत्र। अनलोपसनाबोधके शास्त्रे अग्निकल्पे।

**अग्निरुहा** स्त्री अग्निरिव रोहति रुह–क। मांसादन्यां तदङ्कुरस्य वह्नितुल्यवर्णतयोत्पन्नत्वात् तथात्वमस्याः।

**अग्निरूप** त्रि॰ अग्नेरिव रूपं वर्णोऽस्य, अग्निरिव रूप्यतेऽसौ रूप–कर्म्मणि अच् वा। वह्नितुल्यवर्णे अग्निसदृशमान्ये च ६त॰। अग्नेर्वर्णे अग्निसञ्ज्ञोते वङ्गेष्वे यरूपे च न॰।

**अग्निरेतस्** न॰ ६त॰। अग्निशुक्रे, तज्जातत्वात् सुवर्णे च तत्कथा च प्रस्कन्नरुद्रशुक्रस्य अग्निसंक्रान्तस्याग्निना देवताप्रार्थनया गङ्गायामाहितस्य तया च वोढुमसमर्थया “सन्तसृज्य तं गर्भं मेरौ गिरिवरे तदेत्यनेन” मेरौ पातने कृते तस्य तेजसैव मेरुस्थं सर्वं वस्तु सुवर्णीकृतं यथोक्तमानुशासनिके प॰ भा॰। “तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्व्वतेषु च। तत् सर्वं काञ्चनीभूतं समन्तात् प्रत्यदृश्यत” इति। अन्ते च “तस्मात् सुवर्णं माङ्गल्यं रत्नानामुत्तमोत्तमम्। सहजं कार्त्तिकेयस्य वह्नेस्तेजः परं मतमिति” ८६ अध्याये।

**अग्निलोक** पु॰ ६त॰। अग्न्यधिष्ठिते मेरुशृङ्गाधःस्थे भुवनभेदे। स च। ‘सद्रत्नकाञ्चनमयं शिखरत्रयं च मेरोः सुरारिकपुरादिपुराणि तेषु। तेषामधःशतमखज्वलनान्तकानां रक्षोऽम्बुपानिलशशीशपुराणि चाष्टौ” इति सि॰शि॰गोलाध्याये दर्शितः। अयमेव पक्षः युक्तियुक्तः। पुराणे तु अन्तरीक्षएव तस्य स्थितिरुक्ता। काशीखण्डे, विमानयानेन गच्छता शिवशर्म्मणा पृष्टाभ्यां विष्णुदूताभ्यां सूर्यलोकादूर्द्ध्वं शक्रपुरीवर्णनोत्तरं तद्दक्षिणस्याम् अग्निलोको वर्णितः यथा

“एतस्या दक्षिणे भागे येयं पूर्दृश्यते शुभा। इमामर्चिष्मतीं पश्य वीतिहोत्रपुरीं शुभाम्। जातवेदसि ये भक्ता स्ते वसन्त्यत्र सुव्रताः। अग्निप्रवेशं कुर्य्युर्ये दृढसत्वा जितेन्द्रियाः। स्त्रियो वा सत्वसम्पन्नास्ते सर्व्वेऽग्नितेजसः। अग्निहोत्ररता विप्रास्तथाग्निब्रह्मचारिणः। पञ्चाग्निव्रतिनो ये वै तेऽग्निलोकेऽग्नितेजसः। शीते शीतापनुत्त्यै यस्त्विध्मभारान् प्रयच्छति। कुर्य्यादग्नीष्टिकां वापि स वसेदग्निसन्निधौ। अनाथस्याग्निसंस्कारं यः कुर्य्याद्दयान्वितः। अशक्तः प्रेरयेदन्यान् सोऽग्निलोके महीयते। जठराग्निविवृद्ध्यै यो दद्यादाग्नेयमौषधम्। मन्दाग्नये स पुण्यात्मा वह्निलोके वसेच्चिरम्। यज्ञोपस्करवस्तूनि यज्ञार्थं द्रविणन्तु वा। यथाशक्ति प्रदद्याद्यो ह्यर्च्चिर्भूत्वा वसेत् स वै। अग्निरेको द्विजातीनां निःश्रेयसकरः परः। गुरुर्देवो व्रतं तीर्थं सर्व्वमग्नेर्विनिश्चितम्। अपावनानि सर्व्वाणि वह्निसंसर्गतः क्वचित्। पावनानि भवन्त्येव तस्मात् स पावकः स्मृतः। अपि वेदं विदित्वा यस्त्वज्ञो वै जातवेदसम्। अन्यत्र बध्नाति रतिं ब्राह्मणो न स वेदवित्। अन्तरात्मा ह्ययं साक्षान्निश्चितो ह्याशुशुक्षणिः। मांसग्रासान् पचेत् कुक्षौ स्त्रीणां नो मांसपेशिकाम्। तैजसी शाम्भवी मूर्त्तिः प्रत्यक्षा दहनात्मिका। कर्त्री हर्त्री पालयित्री विनैनां किं विलोक्यते। चित्रभानुरयं साक्षान्नेत्रं त्रिभुवनेशितुः। अन्धतमोमये लोके विनेत्रः प्रकाशकः। धूपप्रदीपनैवेद्यपयोदधिघृतैक्षवम्। एतद्भुक्तं निषेवन्ते सर्व्वे दिवि दिवौकसः” इति।

**अग्निवत्** त्रि॰ अग्निरस्त्यस्य अग्नि+मतुप् वेदे मस्य वः। साग्निके विप्रे, “वपुर्व्वयस्तु चक्ररग्निवाँ इव” इति वेदः। तुल्यार्थे वति। अग्नितुल्यक्रियायादौ अव्य॰।

**अग्निवधू** स्त्री ६त॰। स्वाहायाम् दक्षकन्यायाम्। अग्नायीशब्दे विवरणं द्रष्टव्यम्।

**अग्निवर्चस्** त्रि॰ अग्नेर्वर्च इव वर्चो दीप्तिरस्य। अग्नितुल्यदीप्तिमति, “स्कन्देनाग्निवर्चसा” इति भार॰। ६त॰। अग्नितेजसि न॰।

**अग्निवर्द्धक** त्रि॰ अग्नेर्जठरानलस्य वर्द्धकः वृध+णिच्–ण्वुल्। जठराग्न्युद्दीपके औषधभेदे, पथ्याहारे च।

**अग्निवर्ण** त्रि॰ अग्नेर्वर्ण इव वर्णो रूपं यस्य। अग्नितुल्यवर्णे, “ब्राह्मणस्तु सुरां पीत्वा अग्निवर्णां सुरां पिबेदिति” स्मृतिः। सूर्य्यवंश्ये नृपतिभेदे पु॰ तत्कथा रघौ १९स॰। ६त॰। अग्नेः रूपे पु॰। [अग्निप्रिये त्रि॰।

**अग्निवल्लभ** पु॰ अग्नेर्वल्लभः सुखेन दाह्यत्वात्। शालवृक्षे।

**अग्निवासस्** न॰ अग्निरिव शुद्धं वासो वस्त्रम्। अग्नितुल्यशुद्धे वस्त्रे। ६ब॰। तादृशवस्त्रवति त्रि॰।

**अग्निवाह** पु॰ अग्निं वाहयति गमयति अनुमापयति वा वाहि+अण्। छागे, धूमे च। वह्निवाहकमात्रे त्रि॰।

**अग्निवाहन** न० ६त०। छागे, "रक्तं जटाधरं वह्निं कारयेद्धूम-वाससम्। ज्वालामालाकुलं सौम्यं त्रिनेत्रं श्मश्रुधारिणम्। चतुर्वाहुं चतुर्दंष्ट्रं देवेशं वायुसारथिम्। चतुर्भिश्छागलैर्युक्तो वायुचिह्ने रथे स्थितम्" इति पुराणे छागवाहनत्वमुक्तम्।

**अग्निविद्** पु० अग्निं विन्दते विन्द-क्विप्। अग्निहोत्रिणि साग्निके। अग्निरहस्यं वेत्तीति विद-क्विप्। अग्नि-रहस्यशाखाभिज्ञे पु०।

**अग्निविन्दु** पु० अग्नेर्विन्दुरिव। विस्फुलिङ्गे अग्निकणे।

**अग्निवीज** न० ६त०। अग्नेर्वीजे तद्रेतोजातत्वात् उपचारात् स्वर्णे। "रुद्रतेजःसमुद्भूतं हेम वीजं विभावसोरिति" स्वर्ण-दानमन्त्रः। तत्कथा अग्निरेतःशब्दे द्रष्टव्या। तन्त्रोक्ते रकारवर्णे "अग्निवीजं समुद्धृत्य सुखदक्षसमन्वितमिति" तन्त्रम्।

**अग्निवीर्य्य** न० अग्नेर्वीर्य्यम्। वह्निरेतसि, तत्पराक्रमे च। तद्वी-र्य्यजातत्वादुपचारात् स्वर्णे। ब०। अग्नितुल्यपराक्रमवति त्रि०

**अग्निशरण** न० ६त०। अग्न्याधानगृहे अग्निहोत्रगृहे।

**अग्निशर्म्मन्** त्रि० अग्निरिव शृणाति तीव्रकोपत्वात् शृ-मनिन्। तीव्रकोपान्विते। ऋषिभेदे पु०। वाह्वादि० इञ् आग्नि-शर्म्मिः तदपत्ये। नडादि० फक्। आग्निशर्म्मायणः तद्गोत्रापत्ये।

**अग्निशाला** स्त्री अग्नीनां शाला ६तत्। अग्न्याधानस्थाने अस्त्रा वा नपुंसकत्वम्। "हविर्धानमग्निशालं पत्नीनां सदनम्" इति वेदः।

**अग्निशिख** पु० अग्नेरिव अग्निरिव वा शिखा यस्य। कुङ्कुमवृक्षे, कुसुम्भवृक्षे, अग्नितुल्यशिखे-लाङ्गलीवृक्षे च। अग्नितुल्यजटावति त्रि०। अग्निशिखेव शिखाऽग्रमस्य। लाङ्गलिकावृक्षे स्त्री (विषलाङ्गला) अग्नितुल्याग्रभागे त्रि० "वाणैरग्निशिखैरिवेति" पुरा०। स्वर्णे कुसुम्भपुष्पे च न०। ६त०। अग्निज्वालायां स्त्री "शरैरग्निशिखोपमै रिति, भार०। [होमे।

**अग्निशुश्रूषा** स्त्री ६त०। वह्नेः विधानेन सेवोपयोगिनि

**अग्निशेखर** पु० अग्निरिव शेखरमग्रं यस्य। कुङ्कुमवृक्षे, कुसुमवृक्षे, लाङ्गलीवृक्षे च। अग्नितुल्याग्रवति त्रि०।

**अग्निष्टुत्** पु० अग्निःस्तूयतेऽत्र स्तु-आधारे क्विप् षत्वम्। अग्निष्टोमस्य विकृतिभूते एकाहसाध्ये यागभेदे। सामसंहिताभाष्ये संशयपूर्वकं तत्र कर्मान्तरमिति सायणा-चार्य्येण निर्णीतम् यथा। "उक्थाग्निष्टुतमेतस्य वारव-न्तीय-साम हि। रेवतीष्वस्तु कर्त्वेति श्रुतं पशु-फलाप्तये। रैवत्यादिर्गुणः कर्म पृथग्वा पूर्ववद् गुणः। रेवती-वारवन्तीय-सम्बन्धाख्यः पशु-प्रदः। साम्नो-ऽत्र फल-कर्मभ्यां सम्बन्धे वाक्य-भिन्नता। तेनोक्त-गुण-संयुक्तमन्यत् कर्मोच्यते फले"॥ "त्रिवृदग्निष्टोमस्तस्य वायव्यासु स्तु एकविंशाग्निष्टोम-साम कृत्वा ब्रह्म-वर्चस-कामो यजेत"-इत्यस्य सन्निधौ श्रूयते—"एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशु-कामोह्येतेन यजेत" इति। "अस्यायमर्थः। प्रकृतौ तृतीयसवने आर्भव-पवमानस्तोपरि यज्ञायज्ञीयं साम गीयते, तेन च साम्ना अग्निष्टोमयागस्य समाप्यमानत्वादग्नि-ष्टोम सामेत्युच्यते, तच्च प्रकृतौ "यज्ञायज्ञीयो वा अग्नये" इत्याद्याग्नेयीष्वृक्षु गीयते अस्मिंस्त्वग्निष्टुति ब्रह्मवर्चस-कामेन वायव्यास्वृक्षु तत् साम गातव्यम्, तच्च प्रकृताविवैक विंश-स्तोम-युक्तम्। पशुकामस्य तु "रेवतीर्नः सधमादे" इत्यादिषु रेवतीष्वृक्षु "वारवन्तीयं" साम गायेदिति, तत्र रेवतीनामृचां वारवन्तीयनामकेन साम्ना यः सम्बन्धः सोऽयं पशु-फलायाग्निष्टुति विधीयते, एतस्यैवेति प्रकृत-परामर्शकेनैतच्छब्देनान्य-व्यावर्त्तकेनैवकारेण चाग्निष्टुतः समर्प्यमाणत्वात् यथा पूर्वाधिकरणे इन्द्रियफलाय प्रकृता-ग्निहोत्रे दधि-गुणोविहितः तद्वत्, इति प्राप्ते, ब्रूमः:-विषमो दृष्टान्तः, दध्नोहोम-जनकत्वं न शास्त्रेण बोध-नीयं तस्य लोकतोऽवगन्तुं शक्यत्वात्। फल-सम्बन्धः एकएव शास्त्रबोध्यः इति न तत्र वाक्यभेदः, इह तु रेवत्यृगाधारकवारवन्तीय-साम्नोऽग्निष्टुत्-कर्म-साधनत्वं फल साधनत्वं चेत्युभयस्य शास्त्रैक-बोध्यत्वाद् दुर्वारोवाक्य-भेदः तेन पशुफलकं यथोक्तगुण-विशिष्ट-कर्मान्तरमत्र विधी-यते। एतच्छब्दः एवकारश्च विधीयमान-कर्मान्तर-विषयतया योजनीयौ इति"। "यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा,। अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा" इति स्मृतिः।

**अग्निष्टुभ्** पु० अग्निस्तुभ्यतेऽत्र क्विप् षत्वम्। यज्ञभेदे।

**अग्निष्टोम** पु० अग्नेः स्तोमः स्तुतिसाधनं तृचसमुदायो-ऽवसानेऽत्र। यागविशेषे स च यागः ताण्ड्यमहा-ब्राह्मणे षष्ठाध्याये "प्रजापतिरकामयत बहु स्यां प्रजा-येयेति सएतमग्निष्टोममसृजत" इत्युपक्रम्य "एष वाव यज्ञोयदग्निष्टोम" इति "एकस्मा अन्यो यज्ञः कामाया-ह्रियते सर्वेभ्योऽग्निष्टोम" इति चाग्निष्टोमं स्तुत्वा "द्वादश

स्तोत्राख्यग्निष्टोम" इत्यादिना सप्रपञ्चं दर्शितः। अग्निष्टोम शब्दस्य व्युत्पत्तिर्भाष्यकृता सायणाचार्य्येण दर्शिता यथा "यज्ञायज्ञीय इत्यस्यामाग्नेय्यामृतुपञ्चेन अग्नेष्टोमसाम्ना समाप्तेरग्निष्टोम इतिनाम सम्पन्नमिति"। तद्विधानपरिपाटी च बौधायनीये केशवस्वामिना दर्शिता तत एव साऽवगन्तव्या। ताण्ड्ये षष्ठाध्याये च "अग्निष्टोमे द्वादश स्तोत्राणि द्वादश शस्त्राणी"त्युक्त्वा अष्टमाध्यायपर्य्यन्तं यानि स्तोत्राणि शस्त्राणि वा प्रयोज्यानि तान्यभिहितानि तानि च तत एवावगन्तव्यानि तेषां स्वरूपादि तत्तच्छब्दार्थे वक्ष्यते तत्र अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रं प्रगीतमन्त्रसाध्या तु स्तोत्रमिति तयोर्भेदः। एकाहसाध्ये अग्निष्टुन्नामके यज्ञे च तत् प्रमाणम् अग्निष्टुच्छब्दे। अग्निष्टोमस्य व्याख्यानः कल्पः ठक्। आग्निष्टोमिकः अग्निष्टोमबोधककल्पे।

**अग्निष्टोमसाम** न० अग्निष्टोमे अवसाने विहितं साम गानविशेषः। अग्निष्टोमयज्ञसमापके तृतीय-सवने विहिते "यज्ञायज्ञीय" इत्यस्यामाग्नेय्यामृचि गीय-माने सामवेदे "प्रकृतौ (अग्निष्टोमे) तृतीयसवने आर्भव-पवमानस्तोत्रोपरि यज्ञायज्ञीयं साम गीयते तेन च साम्ना अग्निष्टोमस्य समाप्यमानत्वादग्निष्टोमसामेत्युच्यते इति सा० भा०। "ब्रह्मणो वा एष रसो यद्यज्ञायज्ञीयं स्तुवन्ति ब्रह्मण्येव रसे यज्ञं प्रतिष्ठापयन्तीति" ताण्ड्यब्राह्मणम् तच्च साम यज्ञायज्ञीयशब्दे वक्ष्यते।

**अग्निष्ठ** पु० अग्नौ स्थातुमर्हति स्था—क षत्वम्। वह्नौ स्थिति योग्ये लौहमये कटाहादिपात्रे।

**अग्निसंस्कार** पु० अग्निना संस्कारः मन्त्रपूर्व्वकदाहः। विधानेन अग्निकृतदाहे। "अनाथस्याग्निसंस्कारं यः कुर्य्याद्वा दयान्वितः" इति काशी०।

**अग्निसङ्काश** त्रि० अग्निरिव सङ्काशते काश-दीप्तौ अच्। अग्नितुल्यवर्णे तत्तुल्यतेजस्के च।

**अग्निसम्भव** पु० अग्निरिव सम्भवति सम्+भू—अच्। अर-ण्यकुसुम्भे। ५त०। स्वर्णे न०। अग्निसम्भूतमात्रे त्रि०।

**अग्निसहाय** पु० अग्निना सह अयते अय—अच् ३त०। वायौ, धूमे च। अग्निसहायधूमवद्वर्णत्वात् शीघ्रगति-त्वाच्च वनकोपते च।

**अग्निसाक्षिक** त्रि० अग्निःसाक्षी यत्र कप्। वह्निं साक्षीकृत्य कृते कर्म्मणि। "सख्यं कृत्वाग्निसाक्षिकमिति" रामा०।

**अग्निसार** न० अग्नौ सारो यस्य अत्यन्तानलोत्तापनेऽपि सारांशादहनात्। रसाञ्जने ६त०। वह्निसारे तु अस्त्री।

**अग्निस्तम्भ** पु० अग्निः दाहशक्तौ निरुध्यते अनेन। अग्नि-दाहनशक्तिनिरोधके मन्त्रे, ओषधे च। ६त०। अग्ने-र्दाहशक्तिप्रतिरोधे पु०।

**अग्निष्वा(स्वा)त्त** पु० ब०व० अग्नितः (आहीयविप्रकर-णानलात् सुष्ठु आत्तं प्रहणं येषां आ-दा—क्त षत्वमिति बहवः। मरीचिपुत्रे पितृगणविशेषे। "अग्निष्वा(स्वा)त्ताः बर्हिषदः ऊष्मपा आज्यपास्तथेति" मनुः। तैत्ति-रीयब्राह्मणे तु अन्यथा निरुक्तं यथा "अग्निष्वात्ता-नृतुमतो हवामहे। नराशंसे सोमपीथं य आशुः। ते नो अर्वन्तः सुहवा भवन्तु। शन्नो भवन्तु द्विपदे शं चतुष्पदे" इति "अग्निष्वात्ता अग्निष्वात्त-नामकाः पितरः पितृविशेषाः। ते च चातुर्मास्यगतपितृ-यज्ञब्राह्मणे स्पष्टमभिहिताः, "ये वा अयज्वानो गृहमेधिन स्ते पितरोऽग्निष्वात्ता" इति। मनुष्यजन्मन्यग्निष्टोमादियाग-मकृत्वा आर्त्तकर्म्मनिष्ठाः सन्तो मृत्वा च पितृत्वं गताः। तानग्निष्वात्तान्" इति तद्भाष्ये माधवाचार्य्यः।

**अग्निहुत्** पु० अग्निं हुतवान् हु—क्विप् ६त०। कृताग्नि-हवने अग्निहोत्रिणि।

**अग्निहोत्र** न० अग्नये हूयतेऽत्र हु—त्र ४त०। मन्त्रक-रणकवह्निस्थापनपूर्व्वतदुद्देश्यकहोमे। अग्निहोत्रसम्बन्धित्वात् हविषि, वह्नौ पु०। काञ्चिदाख्यायिकामुपक्रम्य अग्नि-होत्रशब्दनिरुक्तिविधानाद्युक्तं तैत्तिरीयब्राह्मणे "सोऽग्नि-रबिभेत् आहुतिभिर्मामाप्स्यतीति स प्रजापतिं पुनः प्राविशत् तं प्रजापतिरब्रवीत् जायस्वेति सोऽब्रवीत् किं भागधेयमभिजनिष्य इति तुभ्यमेवेदं हूयाता इत्य-ब्रवीत् स एतद्भागधेयमभ्यजायत। यदग्निहोत्रम्" इति पुरा प्रजापतेस्तापं दृष्ट्वा पलायनादुपरतोऽग्निः प्रजापतेस्त-पक्रमप्रागत एव, ततः प्रजापतिस्तस्मिन्नग्नौ पूर्व्वोक्तं एतं स्वाहाकारेण यामाहुतिं प्रथममजुहोत्। तदाहुतिसामर्थ्येन पुरुषमसृजत। तथा द्वितीयाद्याहुतिभिः अश्वादीनसृजत। ततः प्रजानां पुनरुत्पत्तेः स्वस्य प्रजापतित्वं सुस्थितम्। तदानीमग्निर्भीतोऽभूत्। तस्यायमभिप्रायः। प्रजापतिः पुनः पुनराहुतिभिरेव मां प्राप्नोति न तु भागं प्रयच्छति। तास्वाहुतीर्देवा एव भक्षन्ति। तस्माद्भागरहितः केवलं न शक्नोमीति विचार्य्य पूर्व्ववत् पलायनमकृत्वा तस्मिन् प्रजा-पतावेव प्रविष्टः। स च प्रजायस्वेति पुनः पुनरग्निमब्रवीत् सदाग्निस्तदुदर एव स्थित्वा भागरहितोऽहं क्षुधितः केवलं न शक्नोमि भागो मेऽपेक्षितः। किं भागमभिलक्ष्याह-

सतृपद्यत इत्युक्तम् । अग्निना उक्तः प्रजापतिरिदमग्निहोत्रगतं हविस्तुभ्यमेव हूयतां इति भागं दत्तवान् । ततोऽग्निहोत्रहविःस्वरूपं भागधेयमभिलक्ष्याग्निरुत्पन्नः । तस्मादग्नये होत्रं होमोऽस्मिन् कर्मणीति बहुव्रीहिव्युत्पत्त्या अग्निहोत्रमिति कर्मनाम । अग्नये होत्रमिति तत्पुरुषव्युत्पत्त्या हविर्नाम" इति तद्भाष्यम् । तत्कालस्य तत्त्वेयोक्तः "तद्धूयमानमादित्योऽब्रवीत् । मा हौषीः । उभयोर्वै नावेतदिति सोऽग्निरब्रवीत् । कथं नौ होष्यन्तीति । सायमेव तुभ्यं जुह्वन् प्रातर्मह्यमित्यब्रवीत् । तस्मादग्नये सायं हूयते सूर्याय प्रातः" इति । तद्वह्निरग्न्यर्थं प्रजापतिना हूयमानं दृष्ट्वा मा हौषीरित्येवमादित्यो निवारयामास । हेतुञ्चैवमवोचत् । योऽयमग्न्यर्थं वाह्रं तयोरुभयोरावयोरेतद्धविः, न त्वेकस्याग्नेः इति । तदानीमुभयोर्भागव्यवस्था जाता । अग्निना दृष्टा या कालभेदेन व्यवस्था तामुवाच । तस्मादग्नये सायं जुहुयात्, सूर्याय प्रातर्जुहुयात्" इति तद्भाष्यम् ।

तच्च नित्यं काम्यञ्च "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुत्या नित्यस्य "उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीति" श्रुत्या च काम्यस्य विधानमुक्तम् । अस्य यजुर्वेदोक्तत्वेऽपि सर्ववेदिभिः कर्त्तव्यता "यज्ञाम्नातं स्वशाखायां पारक्यमविरोधि च विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादि कर्मवदिति" छन्दोग०प० कात्या० । "अग्निहोत्रं त्रयोवेदा स्त्रिदण्डं भस्मधारणम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिरिति" चार्वाकमतम् ।

**अग्निहोत्रहवनी** स्त्री अग्निहोत्रोऽग्निः हविर्वा हूयतेऽनया हु-करणे ल्युट् ङीत० । अग्निहोत्रहविर्ग्रहणस्रुचि ।

**अग्निहोत्रहुत्** पु० अग्निहोत्रमग्निं जुहोति अहु—क्विप् ६त० । हुताग्निहोत्रे "यत्र हुत्वा हुतामग्निहोत्र हुतां यत्र लोक" इति, श्रुतिः ।

**अग्निहोत्रिन्** पु० अग्निहोत्र+मत्वर्थे इनि । अग्निस्थापनपूर्वकं प्रातरादिकाले अग्निहोत्रहोमकर्त्तरि साग्निके ।

**अग्नीध्** पु० इध्यते इन्ध-भावे क्विप् ६त० । अग्न्युद्दीपने "अग्नीधः शरणे रण् भत्वेति" कात्या० वा० । शरणार्थे रण आग्नीध्रः । कर्त्तरि क्विप् । अग्न्याधानकर्त्तरि ।

**अग्नीध्र** पु० अग्निम् आदधाति ध्र—क दीर्घः । वह्न्याधानकारके ब्रह्मापरपर्याये ऋत्विग्भेदे । अग्निं धारयत्यस्मै सम्प्रदाने घञर्थे क दीर्घः । अग्निशल्ये होमादौ पु० ।

**अग्नीन्द्र** पु० द्वि० द्वन्द्व० इन्द्रपरत्वान्नात् । एतन्नामकयो रेकहविर्भाक्त्रोर्देवयोः ।

**अग्नीन्धन** त्रि० अग्निरिध्यतेऽनेन इन्ध—ल्युट् ६त० । मन्त्रभेदे । स्त्रियां टित्वात् ङीप् । भावे ल्युट् । अग्नि ज्वाले न० । [वह्निज्वलनस्थाने ।

**अग्नीय** त्रि० अग्नेरदूरभवं स्थानादि—उत्करा० छ । वह्नि-

**अग्नीवरुण** पु० द्वि० द्वन्द्व० ईत् । एतयोरेकहविर्भाक्त्रोर्देवयोः ।

**अग्नीषोम** पु० द्वि० द्वन्द्व० ईत् षत्वञ्च । एतन्नामकयोरेक हविर्भाक्त्रोर्देवयोः । "अग्नीषोमीयं पशुमालभेतेति" श्रुतिः ।

**अग्नीषोमप्रणयनी** स्त्री अग्नीषोमौ प्रणीयेते संस्क्रियेते अनया अत्र वा प्र+नी-करणे आधारे वा ल्युट् ङीप् । तयोः संस्कारिकायामृचि पात्राञ्च । भावे ल्युट् । तयोः संस्कारे न० ।

**अग्नीषोमीय** त्रि० अग्नीषोमौ देवते अस्य छ । तद्देवताके पश्वादौ कपालरूपपात्रादिसंस्कृते हविर्भेदे च "अग्नीषोमीयमेकादशकपालं निर्वपतीति" "योऽग्नीषोमीयस्य पशोरश्नातीति" च श्रुतिः ।

**अग्न्यगार** न० अग्नेः अग्निहोत्रसंबन्धिवह्नेरगारं ६त० । अग्निहोत्रगृहे "वसंश्चतुर्थोऽग्निरिवाग्न्यगारे" इति रघुः । अग्निगृहादयोऽप्यत्र ।

**अग्न्याधान** न० अग्नेराधानम् आ-धाञ्-ल्युट् ६त० । वेदमन्त्रद्वारा वह्निस्थापने । अवृ० । अग्निहोत्रयागे ।

**अग्न्याधेय** पु० अग्निराधेयो येन । अग्निहोत्रिणि साग्निके द्विजे तत्प्रकारश्च "पुत्रमेवादधीताग्निमित्युपक्रम्य कात्यायनसंहितायां दर्शितः कल्पग्रन्थे च विस्तरो द्रष्टव्यः ।

**अग्न्यालय** पु० अग्नेरालयः आ+ली—आधारे अच् ६त० । वेदमन्त्रद्वारा वह्निस्थापनयोग्ये स्थले, तदाधारे-कुण्डे, स्थण्डिले च ।

**अग्न्याहित** पु० अग्निराहितो येन आ+धाञ्-कर्मणि क्त, वा परनिपातः । अग्निहोत्रिणि साग्निके द्विजे ।

**अग्न्युत्पात** पु० अग्निना दिव्यानलेन कृत उत्पातः (अनिष्टसूचकोपद्रवः) उद्+पत-घञ् ३त० । आकाशस्थानल विकारसूचितोपद्रवे, उल्कापातादावशुभसूचके, धूमकेतुकृतविकारे च । स च नाभस उत्पातः उल्कादिरूपः पञ्च विधः धिष्ण्योल्काशनिविद्युत्ताराभेदात् । तेषां लक्षणादिकं फलसहितम् बृहत्संहितायामुक्तं ३३ अ० यथा "दिवि भुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः ।

धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्नाः॥ उल्का पक्षेण फलं तद्वद्धिष्ण्याशनिस्त्रिभिः पक्षैः। विद्युदहोभिः षड्भिस्तद्वत्तारा विपाचयति॥ तारा फलपादकरी फलार्द्धदात्री प्रकीर्त्तिता धिष्ण्या। तिस्रः सम्पूर्णफला विद्युदथोल्काशनिश्चेति॥ अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु। निपतति विदारयन्ती धरातलं चक्रसंस्थाना॥ विद्युत्सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा। कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता॥ धिष्ण्या कृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम्। ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन॥ तारा हस्तं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा। तिर्य्यगधश्चोर्द्ध्वं वा याति वियत्युह्यमानेव। उल्का शिरसि विशाला निपतन्ती वर्द्धते प्रतनुपुच्छा। दीर्घा भवति च पुरुषं भेदा बहवो भवन्त्यस्याः। प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलाङ्गलमृगाभाः। गोधाहिधूमरूपाः पापा या चोभयशिरस्का॥ ध्वजझषकरिगिरिकमलेन्दुतुरगसन्तप्तरजतहंसाभाः। श्रीवत्सवज्रशङ्खस्वस्तिकरूपाः शिवसुभिक्षाः॥ अम्बरमध्याद्बह्व्यो निपतन्त्यो राजराष्ट्रनाशाय। बम्भ्रमती गगनोपरि विभ्रममाख्याति लोकस्य॥ संस्पृशती चन्द्रार्कौ तद्विसृता वा सभूप्रकम्पा च। परचक्रागमनृपवध-दुर्भिक्षावृष्टिभयजननी॥ पौरेतरघ्नमुल्कापसव्यकरणं दिवाकरहिमांश्वोः। उल्का शुभदा पुरतो दिवाकरविनिःसृता यातुः॥ शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी। क्रमशश्चैतान् हन्युर्मूर्द्धोरःपार्श्वपुच्छस्थाः॥ उत्तरदिगादिपतिता विप्रादीनामनिष्टदा रूक्षा। ऋज्वी स्निग्धाखण्डा नीचोपगता च तद्वृद्ध्यै॥ श्यामा वारुणनीलाऽसृग्दहनासितभस्मनिभा रूक्षा। सन्ध्यादिनजा वक्रा दलिता च परागमभयाय॥ नक्षत्रग्रहघाते तद्भक्तीनां क्षयाय निर्दिष्टा। उदये घ्नती रवीन्द्वोः पौरेतरमृत्यवेऽस्ते वा॥ भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम्। विप्रक्षत्रियपीडा पुष्यानिलविष्णुदेवेषु॥ ध्रुवसौम्येषु नृपाणामुग्रेषु सदारुणेषु चौराणाम्। क्षिप्रेषु कलाविदुषां पीडा साधारणे च हते॥ कुर्व्वन्त्येताः पतिता देवप्रतिमासु राजराष्ट्रभयम्। शक्रोपरि नृपतीनां गृहेषु तत्स्वामिनां पीडाम्॥ आशाग्रहोपघाते तद्देश्यानां खले कृषिरतानाम्। चैत्यतरौ सम्पतिता सत्कृतपीडां करोत्युल्का॥ द्वारि पुरस्य पुरक्षयमथेन्द्रकीले जनक्षयोऽभिहितः। ब्रह्मायतने विप्रान् विनिहन्याद्गोमिनो गोष्ठे॥ क्ष्वेडास्फोटितवादितगीतोत्क्रुष्टस्वना भवन्ति यदा। उल्कानिपातसमये भयाय राष्ट्रस्य सनृपस्य॥ यस्याश्चिरं तिष्ठति खेऽनुषङ्गो दण्डाकृतिः सा नृपतेर्भयाय। या चोह्यते तन्तुधृतेव खस्था या वा महेन्द्रध्वजतुल्यरूपा॥ श्रेष्ठिनः प्रतीपगा तिर्य्यगा नृपाङ्गनाः। हन्त्यधोमुखी नृपान् ब्राह्मणानथोर्द्ध्वगा॥ बर्हिपुच्छरूपिणी लोकसङ्क्षयावहा। सर्पवत् प्रसर्पिणी योषितामनिष्टदा॥ हन्ति मण्डला पुरं छत्रवत् पुरोहितम्। वंशगुल्मवत् स्थिता राष्ट्रदोषकारिणी॥ व्यालसूकरोपमा विस्फुलिङ्गमालिनी। खण्डशोऽथ वा गता सस्वना च पापदा॥ सुरपतिचापप्रतिमा राज्यं नभसि विलीना जलदान् हन्ति। पवनविलोमा कुटिलं याता न भवति शस्ता विनिवृत्ता वा॥ अभिभवति यतः पुरं बलं वा भवति भयं तत एव पार्थिवस्य। निपतति च यया दिशा प्रदीप्ता जयति रिपूनचिरात्तया प्रयातः"॥ तत्कारणमुक्तं गर्गसंहितायाम् "अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्म्मतः। नरापचारान्नियतमुपसर्गः प्रवर्त्तते। ततोऽपराधान्नियतमपवर्ज्जन्ति देवताः। ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान्। त एव त्रिविधा लोके उत्पाता देवनिर्म्मिताः। विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च" इति। अनिष्टशुभरूपभेदाश्च वृहत्संहितावाक्ये प्राक् दर्शिताः। तल्लक्षणं काश्यपेन सामान्यत उक्तम् "दीर्घाकृता च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषेय प्रमाणेन उल्का नानाविधा कृतेति"।

**अग्न्युद्धार** पुं० अग्नेः आवनार्थमुद्धारः अरणिमन्थनेन उत्पादनम्। अरणिद्वयघर्षणेनानलोत्पादने। तत्प्रकारस्तु "अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः। तस्य या प्राङ्मुखी शाखा चोदीची चोर्द्ध्वगापि वा॥ अरणिस्तन्मयी प्रोक्ता तन्मय्येवोत्तरारणिः। सारवद्दारवञ्चत्रमोविली च प्रशस्यते॥ संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते। अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः॥ चतुर्विंशतिरङ्गुष्ठदैर्घ्यं षडपि पार्थिवम्। चत्वार उच्छ्राये मानमरण्योः परिकीर्त्तितम्॥ अष्टाङ्गुलः प्रमन्थः स्याच्चत्रं स्याद्द्वादशाङ्गुलम्। ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम्॥ अङ्गुष्ठाङ्गुलमानन्तु यत्र यत्रोपदिश्यते। तत्र तत्र बृहत्पर्व्वग्रन्थिभिर्म्मिनुयात् सदा॥ गोवालैः शणसंमिश्रैस्त्रिवृत्तममलात्मकम्। व्याममात्रं नेत्रं स्यात् प्रबध्यस्तेन पावकः॥ मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी।

अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुलं वक्त्र उच्यते ॥ अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम् । एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिद्वौ च गुह्यकम् ॥ ऊरू जङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम् । अरण्यवयवा ह्येते याज्ञिकैः परिकीर्त्तिताः ॥ यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते । अस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥ अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः । प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च ॥ उत्तरारणिनिष्पन्नः प्रमन्थः सर्व्वदा भवेत् । योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत् ॥ आर्द्रा सशुषिरा चैव घूर्णाङ्गी पाटिता तथा । न हिता यजमानानामरणिश्चोत्तरारणिः ॥ परिधायाऽहतं वासः प्रावृत्य च यथाविधि । विभृयात् प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया ॥ चत्त्रबुध्नप्रमन्थाग्रं गाढं कृत्वा विचक्षणः । कृत्वोत्तराग्रामरणिं तद्बुध्नमुपरि न्यसेत् ॥ चत्त्राधः कीलकाग्रस्थामोविलीमुदगग्रकाम् । विष्टभ्याद्धारयेद्यन्त्रं निष्कम्पं प्रयतः शुचिः" इति कात्या० स० ॥

**अग्न्युपस्थान** न० अग्निरुपस्थीयतेऽनेन उप+स्था ल्युट् ६त०। वह्नेरुपासनमन्त्रे। स्त्रियां ङीप्। भावे ल्युट् ६त०। वह्नेरुपासने न०।

**अग्र** न० अङ्ग-रन् नलोपः। उपरिभागे, शेषभागे, आलम्बने पूर्व्वभागे, उत्कर्षे समूहे च। प्रधाने, अधिके, प्रथमे च त्रि०। तत्र पूर्व्वभागे अग्रकायः "अथाग्रहस्ते मुकुलीकृताङ्गुलाविति" कुमा०। ऊर्द्ध्वे "शृङ्गाणि यस्याग्रतरोरुहाणि इति" कु०। आलम्बने, "मनुमेकाग्रमासीनमिति" मनुः प्रधाने "अथाग्रमहिषी राज्ञ" इति प्रथमे अग्रहायणेष्टिरिति। पुरोऽर्थे, अग्रतः। शेषभागे, "इमामग्रकूटेषु लताङ्कुरेष्विति" रघुः। "सूच्यग्रेण न दातव्यं विना युद्धेन केशवेति" "बालाग्रशतभागस्य शतधा कल्पितस्य चेति" "आराग्रमात्रोह्यपरोऽपि दृष्टः इति" च श्रुतिः। अधिके "अथाग्रस्परयशालिनेति"। समूहे, "कैलासाग्रमासीनमिति" तन्त्रम् उत्कर्षे, अग्रादग्रं रोहतीति ता० ब्रा० अग्रमुत्कर्षमिति माधवाचार्य्यः अधिके "साग्रं वर्षशतमिति" रामा० अक्षरूपपलपरिमाणे (ज्योतिषोक्तस्य अक्षरूपपलस्य परिमाणार्थेऽंशभेदे) च। अक्षक्षेत्रसाधनार्थायां सिद्धान्तशिरोमण्युक्तायाम् अक्षक्षेत्रकर्णेन गुणितायां स्वकोट्या हृतायां क्रान्तिज्यायां स्त्री। "क्रान्तिज्यके कर्णगुणे विभक्ते कोट्या भुजेनाग्रमितात्मिका स्यात्" इति सि० शि०। "क्रान्तिज्या अक्षश्रुतिकर्णेन गुणिता हृतः स्वाया एकत्र स्वकोट्या भक्ता सती अग्रा भवतीति" प्रमिता०। "रेखा प्राच्यपरा साध्या विषुवद्भाग्रगा तथा। इष्टच्छायाविषुवतोर्मध्यमग्राभिधीयते" इति सूर्य्यसिद्धान्तपारिभाषितेऽर्थे च स्त्री। विवृतञ्चैतत् रङ्गनाथेन यथा "अथाग्राज्ञानार्थमाह। तस्मिंश्चतुरस्रे पूर्वापररेखात उत्तरभागे विषुवद्भाग्रगाग्रभागप्रदेशस्थाग्रभाङ्गुलान्तरितेत्यर्थः। प्राच्यपरा रेखा पूर्व्वापररेखानुकारा रेखा तथा सर्व्वतस्तुल्यान्तरेण यथेष्टच्छायाग्ररेखाभुजान्तरेण कार्य्या। अनन्तरमिष्टच्छायाविषुवतोरिष्टच्छायाग्ररेखाग्रभाग्ररेखयोरित्यर्थः। मध्यं चतुरस्रेऽङ्गुलात्मकमन्तरालं सर्व्वतस्तुल्यम्। अग्रा कर्णवृत्ताग्रोच्यते। अत्रोपपत्तिः। भुजस्य कर्णवृत्ताग्रा पलभासंस्काररेखाग्रा उक्ता तद्दक्षिणगोले पलभाधिकोत्तरभुजत्वाद्देन पलभोनो भुजोऽग्रेति, प्राच्यपरसूत्रादुत्तरभागेऽग्राग्ररेखा भुजमध्ये भवतीति द्वयो रेखयोरन्तरमग्रा पलभोनभुजरूपा। एवमुत्तरगोले उत्तरभुजस्य पलभाल्पत्वाद्भुजोनपलभाग्रेति पलभारेखा प्राच्यपरसूत्रादुत्तरभागस्था भुजरेखातोऽग्र्यग्रान्तरेणोत्तरदिश्येति द्वयो रेखयोरन्तरं भुजोनपलभारूपं कर्णवृत्ताग्रा। एवं दक्षिणभुजस्य पलभोनाग्रत्वात् पलभायुतोऽग्रेति प्राच्यपरसूत्राद्भुजाग्रपलभाग्ररेखयोः क्रमेण याम्योत्तरत्वात् तयोरन्तरालं पलभाभुजैक्यरूपमग्रा पलभायाः सङ्कुतलाङ्गुलत्वात् सदोत्तरत्वं छायासम्बन्धादुक्तम्" इति। "अग्रशब्दस्यावयवरूपैकदेशपरत्वे क्लीबत्वं तद्वत्परत्वे अग्रहस्त" इति यथोक्तम् वामनेन, "हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदादिति"। अग्र+भवाद्यर्थे यत्। अग्र्यः। घ अग्रियम्। कुशाग्रमिव छ। कुशाग्रीयः। स्वार्थे शाखादि० य अग्र्यः॥ अग्रः ऋषिभेदस्तद्गोत्रापत्ये नडादि० फक्। आग्रायणः। तत्तदर्थेषु। [वत् कर्म्म०। देहपूर्व्वभागे।

**अग्रकाय** पु० अग्रः कायः अवयवावयविनोरभेदात् अग्रहस्त-

**अग्रग** त्रि० अग्रे गच्छतीति गम-ड ७त०। पुरोगामिनि।

**अग्रगण्य** त्रि० अग्रे गण्यते गण-यत् ७त०। अग्रगणनीये, प्रधाने च।

**अग्रगामिन्** त्रि० अग्रे गच्छति गम-णिनि ७त०। पुरोगामिनि। "प्रष्ठोऽग्रगामिनीति" पा०। अत्रास्य निर्देशात् अग्रगामिन्नित्यादौ न णत्वम्। स्त्रियां ङीप्।

**अग्रज** पु० अग्रे पुरस्तात् जायते जन-ड। अग्रजाते ज्येष्ठभ्रातरि "जगादाग्रे गदाग्रजम्" इति माघः।

ज्येष्ठभगिन्यां स्त्री। वर्णेषु मध्ये अग्रजातत्वात् विप्रे। [स०। जङ्घाग्रभागे।

**अग्रजङ्घा** स्त्री अग्रा जङ्घा अवयवावयविनोरभेदात् क०

**अग्रजन्मन्** पु० अग्रे जन्म यस्य जन-मनिन् व्यधि० बहु०। ज्येष्ठभ्रातरि, विप्रे च। अग्रजातमात्रे त्रि०। अग्रात् प्रधानाङ्गात् मुखात् जन्मास्य ब्य०ब०। ब्रह्ममुखोत्पन्ने विप्रे, तस्य तन्मुखोत्पत्तिश्च ताण्ड्यमहाब्राह्मणे उक्ता यथा "सोऽकामयत यज्ञं सृजेयेति स मुखत एव त्रिवृतमसृजत तं गायत्रीच्छन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणोमनुष्यो वसन्त ऋतुस्तस्मात्त्रिवृत् स्तोमानां मुखं, गायत्री छन्दसाम्, अग्निर्देवतानां, ब्राह्मणो मनुष्याणां, वसन्त ऋतूनां, तस्माद्ब्राह्मणो मुखेन वीर्य्यं करोति मुखतो हि सृष्टः" इति। व्याख्यातञ्चैतत् भाष्ये "सः प्रजापतिरकामयत किमिति"? सर्व्वसाधकं यज्ञं सृजेयेति स एतमग्निष्टोममपश्यत् तमाहरदित्युक्तस्यैवेदं विवरणं सः प्रजापतिः मुखत आत्मनो मुखादेव त्रिवृतमावृत्तित्रयसाध्यमेतन्नामकं स्तोममसृजत तं त्रिवृतमनु पश्चाद्गायत्रीछन्दः गायत्रं नाम छन्दोऽसृज्यत तदनु अग्निर्देवताऽसृज्यत तमनु मनुष्यो ब्राह्मणोऽसृज्यत तथा तमनु वसन्ताख्य ऋतुरसृज्यत यस्मादेते मुखतएव सृष्टाः तस्मादेते त्रिवृदादयः स्वस्वजातीयानां मध्ये मुख्या अभवन् त्रिवृदादीनां मुख्यानां मध्ये ब्राह्मणस्य मुख्यत्वप्रयुक्तं वीर्य्यं लोकसिद्धं दर्शयति तस्मान्मुखसृष्टत्वेन मुख्यत्वात् ब्राह्मणो मुखेनेदानीमपि वीर्य्यं स्वाध्यायप्रवचनादिजन्यं सामर्थ्यं करोति तस्मादित्युक्तं विवृणोति हि यस्माद् ब्राह्मणो मुखतः सृष्टस्तस्मादित्यर्थः। एवमुक्तमर्थं यो वेद सोऽपि मुखेन वीर्य्यं करोति मुखसाध्येन स्वाध्यायप्रवचनादिनैवाभीष्टं साधयतीत्यर्थः" इति। "ब्राह्मणोऽस्य मुखमासीत्" इति पुरुषसूक्तम् अत एव विप्रस्य मुखजातत्वेन मुखसाध्यस्वाध्यायाभ्यसने एव वीर्य्यं भवतीत्युक्तम् अतएव मनुना "वेदमेव सदाभ्यस्ये"दित्युक्तम् हारीतसंहितायां तु "षट् कर्म्माणि, निजान्याहुर्ब्राह्मणस्य महात्मनः। तैरेव सततं यस्तु वर्त्तयेत् सुखमेधते अध्यापनं चाध्ययनं याजनं यजनं तथा। दानं प्रतिग्रहश्चेति षट्कर्म्माणीति चोच्यते" इति "वेदश्चैव सदाभ्यस्येत् शुचौ देशे समाहितः धर्म्मशास्त्रं तथा पाठ्यं ब्राह्मणैः शुद्धमानसैः वेदवत् पठितव्यञ्च श्रोतव्यञ्च दिवानिशि स्मृतिहीनाय विप्राय श्रुतिहीने तथैव च दानं भोजनमन्यञ्च दत्तं कुलविनाशनम्। तस्मात् सर्व्वप्रयत्नेन वेद शास्त्रं पठेत् द्विज इति" च। "सत्त्वप्रधाना विप्राः स्युरिति भारतोक्तेः विप्रस्य सत्त्वप्रधानतया "ब्राह्मणक्षत्त्रियविशां शूद्राणाञ्च परन्तप!। कर्म्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः। शमोदमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म्म स्वभावजमिति" गीतायां सात्त्विकधर्म्माण्यस्य स्वाभाविका इत्युक्तम्। विवृतञ्चैतत् श्रीधरस्वामिना "तत्र ब्राह्मणस्य स्वाभाविकानि कर्म्माण्याह शम इति, शमश्चित्तोपरमः (बाह्यविषयान्निवर्त्तनम्) दमो-बाह्येन्द्रियोपरमः (स्वस्वविषयान्निवर्त्तनम्) तपः पूर्व्वोक्तं (सगुणब्रह्मोपासनादि) शौचं बाह्यमाभ्यन्तरञ्च। क्षान्तिः (शीतोष्णादिद्वन्द्वसहिष्णुता) आर्जवम् अवक्रता (बाह्याभ्यन्तरयोः कापट्याभावः) ज्ञानं शास्त्रीयं विज्ञानमनुभवः आस्तिक्यम् अस्ति परलोक इति निश्चयः। एतत् शमादि ब्राह्मणस्य स्वभावात् जातं कर्म्मेति"। "मुखजातादयोऽप्यत्र अग्रे प्रथमं जन्म यस्य। चतुर्मुखे ब्रह्मणि, "यो वै ब्रह्माणं विदधाति पूर्व्वं यश्चास्मै प्रहिणोति वेदमिति" "हिरण्यगर्भः समवर्त्तताग्रे" इति च श्रुतौ परब्रह्मसकाशात् तस्य प्रथमोत्पत्तिरुक्ता, तदुत्पत्तिप्रकारस्तु मनुना "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्ज्जादौ तासु वीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामह" इत्यनेनोक्तः।

**अग्रजात** पु० अग्रे जातः जन-क्त ७त०। ज्येष्ठभ्रातरि, विप्रे च। ज्येष्ठभगिन्यां स्त्री। पूर्व्वजातमात्रे त्रि०।

**अग्रजाति** पु० अग्रा श्रेष्ठा जातिर्यस्य, जन-क्तिन् कर्म०। विप्रे।

**अग्रजिह्वा** स्त्री अग्रा जिह्वा अग्रहस्तवत् क०। जिह्वाग्रभागे।

**अग्रणी** त्रि० अग्रे नीयतेऽसौ णी-क्विप् ७त० अलुक्। प्रभौ श्रेष्ठे च। अग्रं नयति देवेभ्य इति। वह्नौ पु० यथा-चास्याग्रणीत्वं तथाग्निशब्दे निरुक्तव्याख्यायामुक्तम्।

**अग्रतस्** अव्य० अग्रे अग्राद्वा अग्र+तसिल्। पूर्व्ववृत्तौ, पूर्व्वभागावधिके च। [अग्रगामिनि। स्त्रियां ङीप्।

**अग्रतःसर** त्रि० अग्रतः सरति गच्छति सृ-ट ७त०।

**अग्रदानिन्** पु० अग्रे दानं उद्देश्यत्वेनास्य अग्रदान+इनि प्रेतोद्देशेन यद्दानं दीयते तत्प्रतिग्राहिणि "अग्रदानीति" ख्याते विप्रे। "लोभी विप्रस्य शूद्राणामग्रे दानं गृहीतवान्। ग्रहणात्तस्य दानानामग्रदानी बभूव सः" इति पुरा०।

**अग्रदानीय** पु० अग्रे दानमर्हति छ। अग्रदानिविप्रे।

**अग्रनख** पु० अग्रो नखः अग्रहस्तवत् क०। नखाग्रे।

**अग्रनासिका** स्त्री अग्रा नासिका अग्रहस्तवत् क० । नासिकाग्रभागे ।

**अग्रन्थिक** पु० नास्ति ग्रन्थिर्बन्धग्रन्थिः संसारबन्धग्रन्थिर्वाऽस्य । निर्ग्रन्थिके क्षपणके जैनभेदे आत्मज्ञे च "भिद्यते हृदयग्रन्थि"रित्यनेन तस्य संसारग्रन्थिशून्यत्वोक्तेस्तथात्वम् । ग्रन्थिशून्ये त्रि० ।

**अग्रपर्णी** स्त्री अग्रे पर्णं यस्याः जातित्वात् ङीप् । (आलकुशीति) ख्याते वृक्षे ।

**अग्रपूजा** स्त्री अग्रे पूजा । प्राथमिकपूजायाम् । "अग्रेपूजामिह स्थित्वा स्पृहयेमार्मिति" पुरा० ।

**अग्रभाग** पु० भज्यते इति भागः एकदेशः भज-घञ् अग्रः पूर्वः भागः कर्म० । श्राद्धादौ प्रथमसमुद्धृत्य देये द्रव्ये अवयविनः शेषभागे च । यथा शराग्रभागः ।

**अग्रभुक्** त्रि० अग्रे देवपित्रादिभ्योऽदत्त्वा भुङ्क्ते भुज-क्विप् ७त० । औदरिके ।

**अग्रभू** पु० अग्रे भवति उत्पद्यते भू-क्विप् ७त० । पूर्वजाते ज्येष्ठभ्रातरि विप्रे च ज्येष्ठभगिन्यां स्त्री । पूर्वजाते त्रि० ।

**अग्रमहिषी** स्त्री कर्म० । प्रधानस्त्रियाम् । "अथाग्रमहिषी राज्ञ" इति ।

**अग्रमांस** न० अग्रं प्रधानं भक्ष्यत्वेन मन्यते मन्-स, दीर्घः कर्म० । हृदयस्थे पद्माकारे (फुलका) इति नामके मांसे । केचित् वुक्काग्रमांसमेकं नामेत्याहुः । (अग्रमास) इति प्रसिद्धे रोगभेदे च ।

**अग्रमुख** न० अग्रं मुखम् अग्रहस्तवत् कर्म० । मुखाग्रे ।

**अग्रयण** न० अग्रमयनात् उत्तरायणात् यत्नम् शक० तत्विधानकालोऽस्य अच् । मार्गे मासि साग्निककर्त्तव्ये नवशस्येष्टिरूपे यज्ञभेदे । निरग्निकर्त्तव्ये नवान्नश्राद्धे च । "अकृताग्रयणश्चैव धान्यजातं द्विजोत्तमेति" वञ्जारीति स्मृतिः । "अकृताग्रयणमकृतनवशस्येष्टिश्राद्धं यथायोग्यं साग्निकनिरग्निपरमिति" श्राद्धतत्त्वे रघुनन्दनः ।

**अग्रयान** न० अग्रे यानं यस्य या-ल्युट् संज्ञात्वेऽग्रणत्वम् । पुरोगामिनि सैन्ये । अग्रगामिमात्रे त्रि० ।

**अग्रयायिन्** त्रि० अग्रे याति या-णिनि ७त० । पुरोगामिनि "पुत्रस्य ते रणशिरस्ययमग्रयायीति" श्रेष्ठे च ।

**अग्रयोधिन्** पु० अग्रे स्थित्वा युध्यति युध-णिनि ७त० । सैन्यानामग्रे स्थित्वा योद्धरि । [चिल्लीति प्रसिद्धे शाकभेदे ।

**अग्रलोहिता** स्त्री अग्रमुपरिभागः लोहितं यस्याः ब० ।

**अग्रबीज** पु० अग्रं शाखाग्रं बीजमुत्पादकं यस्य । छिन्नाग्रतरुखण्डरूढे (कलम) इतिप्रसिद्धे काण्डजाते कुरण्टकादिवृक्षे ।

**अग्रसन्धानी** स्त्री अग्रे फलोत्पत्तेः प्राक् सन्धीयते ज्ञायतेऽनया कार्य्यं सम्+धा-करणे ल्युट् ङीप् । यमपञ्जिकायाम् । यत्र हि प्राणिवर्गस्य प्राग्भवीयकर्म्मानुसारेण शुभाशुभसूचकं सर्व्वं लिख्यते सा यमपञ्जिका. । केचित् यमपट्टिकेति वा कथ्यते । अग्रसन्धानकारिणि त्रि० ।

**अग्रसन्ध्या** स्त्री अग्रं सन्ध्यायाः, "सर्व्वोऽप्येकदेशः कालवाचिना समस्यते, इत्युक्तेः एक०त० । सन्ध्यापूर्व्वसमये । अग्रा पूर्व्वा सन्ध्या इति कर्म० । प्रातःसन्ध्यायाम् "कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्येति" शकुन्तला ।

**अग्रसर** त्रि० अग्रे सरति गच्छति सृ-ट ७त० । अग्रगामिनि । "युद्धायाग्रसरोऽभवदिति" स्त्रियां ङीप् ।

**अग्रसारा** स्त्री अग्रं शीर्षभागं सारोऽस्याः । फलशून्यशिखायां मञ्जर्य्याम् । अग्रात् अग्रमारभ्य सारोऽस्य । वंशादौ पु० ।

**अग्रह** पु० ग्रहः परिग्रहः न०त०। परिग्रहाभावे । बहु०। परिग्रहशून्ये सन्यासिप्रभृतौ, ज्ञानशून्ये त्रि० ।

**अग्रहर** त्रि०अग्रे ह्रियते दीयतेऽसौ अग्र-हृ-अच्। अग्रदेये वस्तुनि, भागाग्रे पु० अग्र-हृ-कर्त्तरि अच्। अग्रहारिणि त्रि० "प्राग्रहरः कुमार" इति ।

**अग्रहस्त** पु० अग्रश्चासौ हस्तश्चेति गुणगुणिनोरभेदात् कर्म्म०। हस्तस्याग्रभागे "अथाग्रहस्ते मुकुलीकृताङ्गुलाविति" कु० ।

**अग्रहायण** पु० अग्रः श्रेष्ठः हायनो व्रीहिरत्र णत्वम् । मार्गशीर्षे मासि । तस्य च "मासानां मार्गशीर्षोऽस्मीति" गीतायां भगवद्विभूतिरूपत्वोक्तेः श्रेष्ठधान्यवत्त्वाच्च तथात्वम् ।

**अग्रहायणेष्टि** स्त्री अग्रा प्राथमिकी हायननिमित्ता इष्टिः । नवशस्येष्टौ यागभेदे ।

**अग्रहार** पु० अग्रं प्रथमं ह्रियते उत्पन्नशस्यादुद्धृत्य स्थाप्यते हृ-कर्म्मणि घञ् । क्षेत्रोत्पन्नशस्यादुद्धृत्य ब्राह्मणोद्देशेन स्थाप्ये धान्यादौ गुरुकुलादावसद्ब्रह्मचारिणे देये क्षेत्रादौ, ग्रामभेदे च "स कश्चिदग्रहारे कालो नामैकस्त्रेति" दशकु० । अग्रं हरति-अण् । अग्रहारके त्रि० ।

**अग्राक्षि** न० अग्रञ्च तदक्षि नेत्रं चेति गुणगुणिनोरभेदात् कर्म० स्वाङ्गपरत्वात् नाच्समा० । नेत्राग्रे अपाङ्गे "अग्राक्ष्णा वीक्षमाणस्तु तिर्य्यग्भ्रातरमब्रवीदिति रामा० ।

**अग्राणीक** न० अग्रञ्च तदनीकं चेति गुणगुणिनोरभेदात्

कर्म्म० णत्वम् । अग्रयायिसैन्ये । "अग्रायणीकं रघुव्याघ्रो राक्षसानां बभञ्जतुः इति" रामा० ।

**अग्रायणीय** न० अग्रं श्रेष्ठमयनं ज्ञानं तत्र साधु छ । बौद्धागमसिद्धे प्रवादभेदे "उत्पादपूर्व्वमग्रायणीयमथ वीर्य्यता प्रवादः स्यात् इति" हेमचन्द्रः ।

**अग्रावलेहित** न० अग्रं प्रथमभाग उद्धृत्यावलेहितमास्वादितं यस्य । श्राद्धाद्यर्थप्रस्तुताद्यादग्रभागमुद्धृत्यास्वादनेन श्राद्धदानाद्यनर्हतापयोजकदोषदुष्टे अन्नादौ "हिःखित्रं परिदग्धञ्च तथैवाग्रावलेहितमिति" श्राद्धवर्ज्ज्ये ब्रह्मपुराणम् "अग्रावलेहितं श्राद्धार्थोपकल्पितं सकृदुपभुक्ताग्रभागमिति" रघु० ।

**अग्रासन** न० अग्रमर्घादिदानात् पूर्व्वं कल्पितमासनम् । श्राद्धान्नभोजनार्थं अर्घदानादितोऽग्रे कल्पिते विप्रस्योपवेशनार्थं आसने "मामग्रासनतोऽवकृष्टमवशमिति" मुद्रा० ।

**अग्राह्य** त्रि० ग्रह-ण्यत्-न० त० । ग्रहणायोग्ये शिवनिर्म्माल्यादौ प्रतिग्रहायोग्ये तिलाद्यादौ च । "अग्राह्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलमिति" पुरा० । "ब्राह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतस्तथा । अव्यक्तमपि मातङ्गतिललौहांश्च वर्ज्जयेत् । कृष्णाजिनहयग्राही न भूयः पुरुषोभवेत् । शय्यालङ्कारवस्त्रादि प्रतिगृह्य मृतस्य च । नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा" । तथा "ब्रह्महत्या सुरापानमपि स्तेयं तरिष्यति । आतुराद्यदुपादीतन्तु तत् कथं ? वै तरिष्यति" । "एतदा दद्व्यादानं महोन्नदोषजनकम्" इति रघु० । "अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः । अन्यत्र कुलटाषण्डपतितेभ्यो द्विषस्तथेति" मनुः । तेन कुलटादिद्रव्यम् अग्राह्यम् । शौचादौ कर्म्मणि अनुपादेयमृत्तिकायाम् स्त्री । "अन्तर्जले देवगृहे वल्मीके मूषिकस्थले । कृतशौचावशिष्टे च अग्राह्याः पञ्च मृत्तिका" इति स्मृतिः । अविचारणीये त्रि० "अग्राह्यस्त्वनिवेदित" इति स्मृतिः । आवेदनकालेऽनिवेदितः पश्चात् निवेदितोऽपि व्यवहारे न विचारणीयः इति तदर्थः ।

**अग्रिम** पु० अग्रे भवः अग्र+डिमच् । ज्येष्ठभ्रातरि । श्रेष्ठे, उत्तमे च त्रि० । "वीराणामग्रिमो भूत्वा युयुधे पार्थिवैः सहेति" पुरा० ।

**अग्रिय** पु० अग्रे भवः अग्र+घ । ज्येष्ठभ्रातरि । श्रेष्ठे, उत्तमे, अग्रजातमात्रे च त्रि० । "सन्ध्या अग्रिया भवन्तीति ता० ब्रा० ।

**अग्रीय** पु० अग्रे भवः अग्र+छ । ज्येष्ठभ्रातरि । श्रेष्ठे, उत्तमे च त्रि० । "अग्रीयभागं ददतेऽस्य देव्या" इति वेदः ।

**अग्रु(ग्रू)** स्त्री अगि-रु नलोपः वा ऊङ् । नद्यामङ्गुल्याञ्च । निरुक्ते तन्नामोरेतस्या उक्तेस्तदर्थत्वम् । "जनीयन्तोन्वग्रुव" इति वेदः ।

**अग्रेग** त्रि० अग्रे गच्छतीति गम-ड अलुक् स० । पुरोगन्तरि ।

**अग्रेगा** त्रि० अग्रे गच्छति गम-विट् अलुक् स० । पुरोगन्तरि ।

**अग्रेग** त्रि० अग्रे गच्छतीति गम-डु अलुक् स० । पुरोगामिनि सेवके ।

**अग्रेदिधिषु (षू)** पु० दिधिं धैर्य्यं स्यति निरस्यति, सो-कू षत्वम् दिधिषूः द्विरूढा पुनर्भूर्योषित् अग्रे गणनीया दिधिषूर्यस्य अलुक् स० कवभावः पृ० वा ह्रस्वः । पुनर्भूविवाहकारिणि । प्रागनूढज्येष्ठभगिन्याः प्रागूढकनिष्ठभगिन्यां स्त्री । "ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा । सा चाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूः स्मृतेति, मनुः एतत्पक्षे च अग्रे ज्येष्ठाविवाहात् पूर्व्वं दिधिषूः ज्येष्ठाविवाहकाला सहनरूपधैर्य्यलोपकारिणीति विग्रहः । दीर्घान्त एवायम् ।

**अग्रेदिधिषूपति** पु० ६त० । अनूढज्येष्ठायां भगिन्याम् सत्यां कनिष्ठायाभगिन्या वोढरि "यश्चाग्रेदिधिषूपतिरिति" स्मृतिः ।

**अग्रेपा** त्रि० अग्रे स्थित्वा पाति पा-क्विप् अलुक् स० । पुरतो भूत्वा पालके "अग्रेपा ऋभवो मन्दसाना" इति वेदः ।

**अग्रेपू** त्रि० अग्रे कृत्वा पूयते पू-क्विप् अलुक् स० । पुरः पवित्रकारके "सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुव" इति वेदः ।

**अग्रेवण** वनस्याग्रं-राज०पूर्व्व० अलुक् स० णत्वम्, नि० एदन्तत्वम् । वनाग्रभागे । [गामिनि । स्त्रियां ङीप् ।

**अग्रेसर** त्रि० अग्रे सरति सृ-ट-अलुक् स० । पुरो-

**अग्रेसरिक** त्रि० सृ-भावे-अप् अलुक् स० अग्रे सरे अग्रगतौ प्रसृतः ठन् । पुरोगामि-सेवके ।

**अग्रोपहरणीय** त्रि० अग्रमुपह्रियते यस्मै उप+हृ-सम्प्रदाने अनीयर् । श्राद्धाद्यर्थमुपकल्पितग्रासादेरग्रे दानोद्देश्ये वास्तुदेवादौ । अग्रे उपह्रियते कर्म्मणि अनीयर् । प्रथमदानार्हे द्रव्ये । ["हश्यते त्वग्र्यया बुद्ध्येति" गीता ।

**अग्र्य** पु० अग्रेजातः यत् । ज्येष्ठे भ्रातरि । श्रेष्ठे त्रि०

**अघ** इदित् गतौ भ्वादि०आत्म० सक०सेट् । अङ्घते । आङ्घिष्ट । क्रि-अङ्घ्रिः अमुन् अङ्घः ।

**अघ** पापकरणे अदन्तचुरा० उभय० अक० । अघयति-ते । आजिघत् त । अघ-अच् अघः ।

**अघ** न० घुरा० अघ-भावे अच्। पापे "हरत्यघं सम्प्रति हेतुरेष्यत" इति माघः। कर्त्तरि अच्। पापकारके त्रि० "अघायुरिन्द्रियारामो मोघं पार्थ! स जीवतीति" गीता अघं हेतुत्वेनास्त्यस्य अर्श०अच्। व्यसने दुःखे च न०तयोः पापजन्यत्वात्तत्त्वम्। तत्र व्यसने "कच्चित् मृगीणामनघा प्रसूतिरिति" रघु। "अनघा अव्यसनेति" मल्लिनाथः। "न वर्द्धयेदघाहानीति" "अघाहेषु निवृत्तेषु सुस्नाताः कृतमङ्गला इति" च स्मृतिः अघस्य व्यसनस्य इष्टवियोगरूपस्य तज्जन्यदुःखस्य वा अहानि अघाहानीति तदर्थः। दुःखे, "उपप्लुतमघो येन नात्मानमवबुध्यते इति" दुःखौघेनेत्यर्थः "दयालुमनघस्पृष्टं पुराणमजरं विदुरिति" माघः। परदुःखेन दुःखित्वे एव तत्प्रहरणाय दयालोरिच्छा, ईश्वरस्य तु दयालुत्वेऽपि न दुःखस्पर्शः आनन्दस्वरूपत्वादिति, तत्तात्पर्यार्थः "स्वयशांसि विक्रमवतामवतां न वधूष्वघानि इति भा०। अघानि व्यसनानीत्यर्थः। पूतनाबकासुरयोर्भ्रातरि असुरभेदे पु०। "कृष्णचरितमिवाघनाशनमिति" श्लेषः। एतत्कथा चाघनाशनशब्दे द्रष्टव्या।

**अघकृत्** त्रि० अघं पापं सततं करोति कृ-कर्त्तरि ताच्छील्यादिषु वा क्विप् ६त०। पापकारिणि, सततपापशीले च।

**अघन** त्रि० न०त०। निविडताविरुद्धधर्मविशिष्टयुक्ते।

**अघनाशन** त्रि० अघं नाशयति नश-णिच्-ल्यु। पापनाशके जपदानादौ "जपेत् सर्व्वाघनाशनमिति" स्मृतिः। स्त्रियां ङीप्। अघस्यासुरभेदस्य नाशनः। श्रीकृष्णे, स हि अजगररूपेण जिघांसन्तं तं हतवान् तत्कथा भागवते "अथाघनामाभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः। नित्यं यदन्तर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते॥ दृष्ट्वार्भकान् कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः। अयन्तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये। एते यदा मत्सुहृदोस्तिलापाः कृतास्तदा नष्टसमा व्रजौकसः। प्राणे गते वर्ष्मसु कानुचिन्ता प्रजासवः प्राणभृतो हि ये ते॥ इति व्यवस्याजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम्। धृत्वाद्भुतं व्यात्तगुहाननं तदा पथि व्यशेत ग्रसनाशया खलः"॥ इत्थम् अघनामकेऽसुरे स्थिते तदुदरे गोवत्सवत्सपालेषु गतेषु स्वयमपि हरिः प्रविश्य अत्यन्तं स्वदेहवर्द्धनेन तं हतवान् इत्यप्युक्तम्। "तच्छ्रुत्वा भगवान् कृष्णस्त्वव्ययः सार्भवत्सकम्। चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले॥ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः। पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्द्धन् विनिर्भिद्य विनिर्गतो बहिः" इति। "कृष्णचरितमिवाघनाशनमिति" श्लेषः।

**अघभोजिन्** त्रि० अघं पापफलकं भुङ्क्ते भुज-णिनि ६त०। देवपित्रतिथ्युद्देशाभावेन स्वार्थपाचके। "अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्" इति विष्णुः। "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" इति गीता।

**अघमर्षण** न० अघं पापं मृष्यते उत्पन्नत्वेऽपि नाशनेन कर्म्माक्षमत्वात् सह्यतेऽनेन मृष-ल्युट् ६त०। उत्पन्नपापनाशार्थं जप्ये मन्त्रभेदे तच्च द्रुपदादिवेत्यादि, ऋतञ्च सत्यञ्चेत्यादि आपोहिष्ठेत्यादि सूक्तञ्च। तच्च अन्तर्जले जप्यम् तत्फलञ्चोक्तं ब्राह्मणसर्वस्वे। यथा "बौधायनः "ऋतञ्च सत्यञ्चाद्यघमर्षणम् त्रिरन्तर्जले जपन् सर्वस्मात् पापात् प्रमुच्यते"। योगियाज्ञवल्क्यः "कृत्वा लोकानिमांस्त्रीन् हि त्रिः पठेदघमर्षणम्। यथाश्वमेधावभृथमेवं तन्मनुरब्रवीत्" इति। हारीतः "पातकोपपातकमहापातकानामेकतमसन्निपातेऽघमर्षणमेव जपेत्" इति। वृहद्विष्णुः "यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः। तथाघमर्षणं सूक्तं सर्वपापप्रणाशनम्" इति। योगियाज्ञवल्क्यः "स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः। अघमर्षणसूक्तेन अश्वमेधावभृथसमम्" इति। शङ्खः "जलनिमग्नः प्राणान् संयम्य त्रिरावर्त्ताघमर्षणसूक्तेन स्नायात् नास्त्यघमर्षणात् परमन्तर्ज्जले" इति। गौतमः "अन्तर्जलेऽघमर्षणं त्रिरावर्त्तयन् सर्वपापेभ्यो मुच्यते" इति। अत्रिः "अपि चाप्सु निमज्जित्वा त्रिः पठेदघमर्षणम्। यथाश्वमेधावभृथं तथैतन्मनुरब्रवीत्" इति। वशिष्ठः "अपि चाप्सु निमज्जानः त्रिः पठेदघमर्षणम्। यथाश्वमेधावभृथं तादृशं मनुरब्रवीत्" इति। आपस्तम्बः "अपि चाप्सु निमज्जित्वा त्रिः पठेदघमर्षणम्"। यथाश्वमेधयज्ञो हि मनुस्तादृगमाह तत्" इति। बौधायनः "त्रिरात्रं वायुपवसन् त्रिरह्नाभ्युपयन्नपः। प्राणानप्सु नि संयम्य त्रिः पठेदघमर्षणम्। "यथाश्वमेधावभृथमेवं तन्मनुरब्रवीत्" इति। योगियाज्ञवल्क्यः "त्र्यहं चोपवसेद् यस्तु त्रिरह्नोऽभ्युपयन्नपः। मुच्यते पातकैः सर्वैः जप्त्वा त्रिरघमर्षणम्" इति। रहस्ये वृहन्मनुः "मातरं भगिनीं गत्वा मातृस्वसारं स्नुषां सखीं सनाभ्याञ्च अगम्यागमनं कृत्वा अघमर्षणम् अन्तर्जले त्रिरावर्त्त्य एतस्मात् पापात् पूतो भवतीति"। तथा "गुरुतल्पगमनं कृत्वा अघमर्षणमन्तर्ज्जले त्रिरावर्त्त्य एतस्मात् पापात् पूतो

भवतीति"। अत्र पापगौरवमाकलय्य संयतेन मासैकं यावत् जलमवगाह्याघमर्षणसूक्तं त्रिरावर्त्त्य स्नातव्यम्। तथा च लघुयमः "महापातककर्त्तारश्चत्वारश्च विशेषतः। अग्निं प्रविश्य शुद्ध्यन्ति स्नात्वा वाथ इति क्रतौ। रहस्यकरणे चैव मासमभ्यस्य पौरुषम्। अघमर्षणसूक्तं वा सूक्तं शुध्येच्चान्तर्जलेस्थितः"इति। बृहद्यमः "अथ ब्रह्महत्यां कृत्वा प्राचीं वा उदीचीं वा दिशमुपनिष्क्रम्य प्रभूतेनेध्मेनाग्निं प्रज्वाल्याघमर्षणं चाष्टसहस्रमावर्त्त्य जुहुयात् तस्मात् पापात् पूतो भवतीति"। हारीतश्च "अन्तर्ज्जले त्रिरावर्त्त्य मुच्यते ब्रह्महत्ययेति"। वृद्धापस्तम्बः "अकार्य्यकरणे चैव अभक्ष्यस्य च भक्षणे। अघमर्षणसूक्तेन पीत्वापः शुध्यते नरः"। वशिष्ठः "मनसा पापं कृत्वा अघमर्षणं जपेत्" इति। वृद्धापस्तम्बः "क्षत्रियागमने वैश्यागमने चैव तापसीम्। त्रिरावर्त्त्य विशुद्धः स्यात् शूद्रागास्त्वघमर्षणम्" इति। तापसीमिति तापसीम् ऋचमित्यर्थः शङ्खलिखितौ "ब्रह्महा "त्रिरात्रोपोषितोऽन्तर्जलेऽघमर्षणं त्रिरावर्त्तयेत्" इति। याज्ञवल्क्यः त्रिरात्रोपोषितोजप्त्वा ब्रह्महा त्वघमर्षणम्। अन्तर्जले विशुद्ध्येत्तु दत्त्वा गान्तु पयस्विनीम्"इति। प्रकाशविषये बौधायनः "तीर्थं गत्वा ततः शुचिरात्मा उदकान्ते स्थण्डिले उद्धृत्य सकृच्छिन्नवाससा सकृत् पूर्णेन पाणिना आदित्याभिमुखः अघमर्षणमध्यायमधीयीत इति"।

षडङ्गन्यासं कृत्वा वामहस्ते जलं निधाय दक्षिणहस्तेन जलमाच्छाद्य हं यं रं लं वं इति त्रिरभिमन्त्र्य मूलमुच्चरन् गलितोदकबिन्दुभिस्तत्तुद्रया सप्तधा मूर्द्धानमभ्युक्ष्य शेषजलं दक्षिणहस्ते समादाय तेजोरूपं ध्यात्वा इडयाकृष्य देहान्तःपापं प्रक्षाल्य कृष्णवर्णं तज्जलं ध्यात्वा पिङ्गलया विरेच्य पुरः कल्पितवज्रशिलायां फडिति मन्त्रेण पापपुरुषस्वरूपं तज्जलं निःक्षिपेदित्यघमर्षणम् इति तन्त्रसारे तान्त्रिकाघमर्षणमुक्तम् तत्प्रमाणं तु तत्रैवावगम्यम्।

**अघमार** त्रि० अघं मारयति मृ-णिच्-अण् उप०। पापनाशके देवादौ, "यमोक्षुरघमारो निर्ऋत" इति वेदः।

**अघरुद्** त्रि० अघं रोदिति स्वकर्म्माक्षमतया यस्मात् रुद— अपादाने क्विप् ६त०। पापापनोदनहेतौ, पापनाशने मन्त्रे। "मा त्वाघरुदोरुदन्" इति वेदः। अघं व्यसने रोदिति न तु तत्प्रतीकाराय यतते रुद+कर्त्तरि क्विप्। रोदनेनैव व्यसनोत्तारके तत्प्रतीकारार्थमनुद्यते त्रि०।

**अघर्म्म** पु० न०त०। उष्णविरोधिशीते तद्वति त्रि०। "अघर्म्मे काले" इति काद०।

**अघल** त्रि० अघं लाति गृह्णाति नाशयतीति ला-क। पापापनोदके। "कल्योर्यें अघलादूता" इति वेदः।

**अघवत्** त्रि० अघमस्त्यस्य मतुप् मस्य वः। पापवति सम्बोधने अघोः—अघवन्। "अघोयजेति" मुग्धबोधम्।

**अघविष** पु० अघं व्यसनकारि-विषं यस्य। सर्पे।

**अघशंस** पु० अघमनिष्टं शंसति इच्छति शंस—अण् उपस०। अनिष्टसंपादके चौरे "अघाघशंसंनुदतामरातिमिति" वेदः। भावे अच् ६त०। व्यसनसूचने पु०।

**अघशंसिन्** त्रि० अघं शंसति सूचयति शंस—णिनि ६त०। व्यसनसूचके "व्यसनाशंसाकर्त्तरि "वचः क्रूरं मयोक्तमघशंसिनेति। स्त्रियां ङीप्।

**अघायु** त्रि० अघं पापं परव्यसनं वा कर्त्तुमिच्छति अघ+क्यच्-उ। पापाचरणेच्छावति, परव्यसनचिकीर्षके च। "त्वा वृका अघायवोविदन्" इति यजु०। परस्याघं कर्त्तुमिच्छन्तीति वेददीपः। अघमायाति आ+या उ ६त०। हिंसानिरते। "बधोऽघायूनामिति" ता०ब्रा०।

**अघायुस्** त्रि० अघं पापसाधनमायुरस्य। सर्व्वावस्थासु पापकारके "अघायुरिन्द्रियारामोमोघं पार्थेति" गीता।

**अघारिन्** त्रि० अघं व्यसनमृच्छति ऋ-णिनि। व्यसनयुक्ते स्त्रियां ङीप्। "अघारिणीविकेश्योरुदत्य" इति वेदः।

**अघासुर** पु० कर्म्म०। असुरभेदे अघनामशब्दे तत्कथा।

**अघाह** पु० अघस्य व्यसनस्याहः अचसमा०। व्यसनदिने अशौचदिने "अघाहं नैव वर्द्धयेदिति" "अघाहेषु निरस्तेषु सुस्नाताः कृतमङ्गलाः। आशौचग्राहिप्रमुच्यन्त इति" च स्मृतिः।

**अघोर** त्रि० न घोरः भयानकः। भयानकभिन्ने सौम्यरूपे "या ते रुद्र! "शिवा तनूरघोरा पापकाशिनी"इति वेदः। "अघोरा सौम्या अत एव पापकाशिनी शिवा च इति" वेददीपः। नास्ति घोरो यस्मात्। अतिभयानके त्रि०। रुद्रमूर्त्तिभेदे पु०। "ईशानाघोरनामानौ, वामदेवस्ततः परम्। सद्योजात इति प्रोक्तः क्रमशोऽर्चनकर्म्मणीति पुरा०। अघोरः शिव उपास्यत्वेनास्त्यस्याम् अघोर+अच्। भाद्रकृष्णचतुर्द्दश्यां स्त्री। "भाद्रे मास्यसिते पक्षे ह्यघोराख्या चतुर्द्दशी। तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवमिति" पुरा०।

**अघोष** पु० नास्ति घोषोऽस्मात्र वा। वर्णोत्पादनार्थे बाह्य

प्रयत्नभेदे तत्प्रयत्नयुक्तेषु वर्णेषु च । ते च वर्णाः "वर्गाणां प्रथमद्वितीयाः खयः+क पौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च विवृता: वेदितव्याः । विवरणं मत्कृतशब्दार्थरत्ने स्तबोपत्ने द्रष्टव्यम् । शब्दशून्ये त्रि० ।

**अघोषवत्** त्रि० अघोषः वर्णोच्चारणबाह्यप्रयत्नः अस्त्यस्य मतुप् मस्य वः । "वर्गाणां प्रथमद्वितीयाः-खय+क पौ विसर्गः शर एवेत्युक्तेषु वर्णेषु ।

**अघ्न्य** पु० न हन्ति सृष्टिकर्त्तृत्वात् न+हन-यक् निपातनात् साधु । प्रजापतौ । न हन्यते स्त्रीहत्यायाः, "अवध्याञ्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतामपीति" निषिद्धत्वात् कर्म्मणि नि० । हननकर्म्मतानर्हायां स्त्रियां गवि स्त्री । अघ्न्या "गवां पतिरघ्न्य" इति वेदः । "पतिं वो अघ्न्यानामिति" वेदः "गावः प्रास्नन्त्यघ्न्या इति" च वेदः ।

**अघ्रेय** त्रि० न घ्रातुं शक्यः अर्हः वा घ्रा-शक्याद्यर्थे यत् न० त०। घ्राणानर्हे दुर्गन्धे वस्तुमात्रे, मद्ये न० । "मदिराघ्राणमात्रेण ब्राह्मण्यादेव हीयते" इति स्मृतौ मद्यस्य घ्राणनिषेधात् तस्य तथात्वम् ।

**अङ्क** (नृक) संख्याकरणे चिह्नयुक्तकरणे अदन्तचुरादि० उभ० सक० सेट् । अङ्कय-ति ते आङ्किक-त्-त । अङ्कापयति ते इति केचित् । "प्रेयांसमाङ्कयदसौ न विधौ कलङ्क" इत्युद्भटः । "पुक् चेत्यङ्कापयत्यपीति" कामधेनुः । अच् अङ्कः । क्त अङ्कितः ल्युट् अङ्कनम् असुन् अङ्कः ।

**अङ्क** पु०न० अङ्क-करणे, कर्त्तरि वा अच् । चिह्ने "रतिवलयपदाङ्के चापमासज्य कण्ठे" इति कुमा० । कलङ्के, "एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्क" इति कुमा० । दृश्यकाव्याङ्गभेदे तल्लक्षणं यथा "प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः । युक्तो न बहुभिः कार्य्यैर्बीजसंहृतिमान् न च ॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकानां कार्य्याणामविरोधाद्विनिर्म्मितः ॥ नानेकदिननिर्व्वर्त्त्यकथया सम्प्रयोजितः । आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । विवाहो भोजनं शापोत्सर्गौ मृत्यू रतन्तथा ॥ दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत् । शयनाधरपानादि नगराद्युपरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि ॥ प्रख्यातचरितैर्युक्तो भावरसोद्भवैः । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः" इति सा०॥ दृश्यकाव्यरूपकभेदे च पु०। यथा "नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश" इति विभज्य "उत्सृष्टिकाऽङ्क एकाङ्कोनेतारः व्याप्टता नराः । रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ॥ प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत् । भाणवत् सन्धिवृत्त्यङ्गान्यस्मिन् जयपराजयौ ॥ युद्धञ्च वाचा कर्त्तव्यं निर्वेदवचनं बहु" । इति लक्षितम् "इमञ्च केचित् नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कनामानम्" आहुः । अन्ये तु "उत्क्रान्ता विलोमरूपा सृष्टिर्यत्रेति उत्सृष्टिकाङ्कः" इति सा० । पर्व्वते, समीपे, कुक्षभूषणे, देहे, अपराधे, स्थाने, चित्रयुद्धे परम्परासम्बद्धे चिह्ने च पु० । क्रोड़े पु० न० "अनन्यनारीकमनीयमङ्कमिति" कुमा० । "अङ्के निधाय तं बालं पुनः संस्कारमर्हतीति" स्मृतिः । "पुनरङ्काश्रयणी भवामि ते" इति कुमा० । "प्रेक्षणोपकण्ठं मुहुरङ्कभाजो रत्नावलीरम्बुधिराबबन्धेति" माघः । "अङ्कः समीपम् उत्सङ्ग" इति मल्लिनाथः । एकत्वादिसंख्याबोधकरेखासन्निवेशे "अङ्कयुतिः किल सङ्कलिताख्येति" लीला० । नवसंख्यायाञ्च पु० ।

**अङ्कतन्त्र** न०अङ्कानामेकादिपरार्द्धान्तसंख्याबोधकरेखाविशेषाणां प्रतिपादकम् तन्त्रं शास्त्रम् । अङ्कशास्त्रे व्यक्ताव्यक्तरूपे, पाटीगणितबीजगणितादौ ।

**अङ्कति** पु० अनृच-गतौ अति कुत्वम् । वाते । पूजनार्थात् कर्म्मणि अति । ब्रह्मणि, अग्नौ, अग्निहोत्रिणि च । गन्तरि त्रि० स्त्रियाम् वा ङीप् अङ्कती च ।

**अङ्कधारण** न० ६त०। चिह्नधारणे तप्तमुद्रादिवैष्णवचिह्नधारणे च । धृ-णिच् भावे युच् । अङ्कधारणाप्यत्र स्त्री ।

**अङ्कन** न० अङ्क-करणे ल्युट् । अङ्कनसाधनद्रव्ये गदा(गणीति) प्रसिद्धे । भावे ल्युट् । चिह्नकरणमात्रे न०। "अन्यत्राङ्कनलक्षण्यां वाहनिर्म्मोचने" इति स्मृतिः । अङ्कनं लिन्दूरादिचिह्नकरणमिति प्रा० रघु०। भावे युच् । अङ्कनाप्यत्र स्त्री ।

**अङ्कपादव्रत** न० व्रतभेदे ।

**अङ्कपालि** स्त्री पा-अलि ६त० वा ङीप् । क्रोड़प्रान्ते । अङ्केन पालयतीति पालि-इ ३त० । उपमातरि (धाइमा) इति प्रसिद्धायाम् । अङ्कस्य पालिरिव । आलिङ्गने ।

**अङ्कपाली** स्त्री अङ्कपालि+ङीप् । अङ्कपालिशब्दार्थे वेदिकाख्यगन्धद्रव्ये च ।

**अङ्कपाश** पु॰ अङ्कः पाश इव बन्धनेनेव पातनहेतुरत्र । लीलावत्युक्ते एकाद्यङ्कानां स्थानविनिमयेन संख्याभेदबोधके, तदैक्यसंख्यासङ्कलनोपयोगिनि च प्रक्रियाभेदे "स्थानान्तमेकादिचयाङ्कघातः संख्याविभेदा नियतैः स्युरङ्कैः । भक्तोऽङ्कमित्याङ्कसमासनिघ्नः स्थानेषु युक्तो मितिसंयुतिः स्यादिति"। यथा १, २, एतयोरङ्कयोः स्थानद्वये, स्थितिः तयोः स्थानविनिमये कति भेदा, भेदभिन्नानाञ्च संख्यैक्यमितिः केति १ च पृष्टे अनेनैव प्रकारेण १२, २१, एतौ द्वौ भेदौ ऐक्याङ्कमितिः" ३३ इत्युत्तरं तज्ज्ञानेनैव भवति । "न गुणो न हरो न कृतिर्न घनः पृष्टस्तथापि दुष्टानाम् । गर्वितगणकबटूनां स्यात् पातोऽवश्यमङ्कपाशेऽस्मिन्निति" लीलावती ।

**अङ्कपूरण** न॰ अङ्कयोस्तत्संख्ययोः पूरणं गुणनम् । अङ्कयोर्गुणने । [परितोऽङ्कस्य बन्धनम् ।

**अङ्कबन्ध** पु॰ अङ्कस्य बन्धः । क्रोड़बन्धे । यथा पर्य्यङ्कबन्धः ।

**अङ्कलोद्य** पु॰ अङ्केन लोद्यतेऽसौ लोड-ण्यत् ३त॰ । चिञ्चोड़वृक्षे ।

**अङ्कलोप** पु॰ अङ्कस्य वियोज्यसंख्याया इष्टसंख्यातो लोपः वियोजनम् । इष्टसंख्यातः कस्याश्चित् संख्याया वियोजने यथा नवाङ्कसंख्यातः पञ्चाङ्कसंख्याया वियोजने चतुःसंख्याऽवशिष्यते । एवम् अन्यत्रापि ।

**अङ्कस्** न॰ अन्च-असुन् कुत्वम् । चिह्ने, शरीरे च । "पवामङ्कांस्यपनीफलदिति" वेदः ।

**अङ्कस** न॰ अङ्कोऽस्त्यस्य अच् । चिह्नयुक्ते । "श्येनस्येव भजतोऽङ्कसं परीति" यजुः । अङ्कसं वक्ष्यमाणपर्यादिकमिति ।

**अङ्काङ्क** न॰ अङ्के मध्ये अङ्काः शतपत्रादिचिह्नानि यस्य । जले "आपो वै अङ्काङ्काः छन्द" इति, अङ्काङ्कं छन्द इति च श्रुतिः । [कारैरङ्कितं मेघवाहनमिति" वह्निध्यानम् ।

**अङ्कित** त्रि॰ अङ्क-क्त । चिह्नयुक्तीकृते, "स्वाहास्वधावषट्-

**अङ्किन्** त्रि॰ अङ्कः आलिङ्गनस्थानत्वेन अस्त्यस्य अङ्क+इनि । अङ्केनालिङ्ग्य वादनीये मृदङ्गादिवाद्यभेदे, क्रोड़विशिष्टे च । "पाशायामङ्किनो ये चरन्तीति" वेदः ।

**अङ्किनी** स्त्री अङ्कानां चिह्नानां समूहः खलादि॰ इनि ङीप् । चिह्नसंघाते । मत्वर्थे इनि ङीप् । अङ्कयुक्तस्त्रियाम् ।

**अङ्कुर** अस्त्री॰ अङ्क-उरच् । बीजादभिनवोत्पन्ने, अत्रिकासुद्भिद्य जाते तृणवृक्षादौ "हर्म्यापृष्ठेषु तृणाङ्कुरेष्विति" रघुः । जले, शोणोत्पत्तिसाधर्म्यात् रुधिरे, लोम्नि च सङ्कुचेव "चूताङ्कुरास्वादकषायकण्ठ" इति कुमा॰।

**अङ्कुरक** पु॰ अङ्क्यते तृणादिना सञ्चीयतेऽसौ अन्च-कुरच् ततः क । पक्ष्यादीनां वासस्थाने (वासा इति) ख्याते ।

**अङ्कुरित** त्रि॰ अङ्कुरः जातोऽस्य ता॰ इतच् । जाताङ्कुरे ।

**अङ्कुश** अस्त्री॰ अङ्क-उशच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहास्त्रभेदे (डाङ्गश) इति ख्याते । "तिरोगतं साङ्कुशमुद्वहन् शिर" इति माघः । "सन्निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशमिति" रघुः । प्रतिबन्धे च "निरङ्कुशाः कवय इति" मल्लिनाथः पक्षा॰ फक् । आङ्कुशायनः अङ्कुशचिह्नस्थाने त्रि॰ ।

**अङ्कुशग्रह** पु॰ गृह्णातीति ग्रह-अच् ६त॰ । अङ्कुशधारिणि निषादिनि । "अन्वेतुकामोऽवमताङ्कुशग्रह" इति माघः ।

**अङ्कुशदुर्द्धर** पु॰ दुःखेन धार्य्यते व्यवस्थाप्यते दुर्-धारि-खल् कुत्स अङ्कुशेन-दुर्द्धरः ३त॰ । दुर्दान्तहस्तिनि ।

**अङ्कुशधारिन्** पु॰ अङ्कुशं धारयति धारि-णिनि । हस्तिपालके ।

**अङ्कुशमुद्रा** स्त्री अङ्कुशाकारा मुद्रा । "ऋज्वीञ्च मध्यमां कृत्वा तन्मध्यपर्व्वमूलतः । तर्ज्जनीं किञ्चिदाकुञ्चेत् सा मुद्राऽङ्कुशसंज्ञितेति" तन्त्रोक्ते तीर्थावाहनाद्यर्थं कल्पिते अङ्गुलिसन्निवेश रूपमुद्राभेदे ।

**अङ्कुशी** स्त्री अङ्कुशः चित्तनाशरोधनोपायः विवेकः अस्त्यस्याः अच् गौ॰ । जैनीयदेवीभेदे । [तृणवृक्षादौ ।

**अङ्कूर** पु॰ अङ्क-खर्जूरादित्वात् ऊरच् । अभिनवोत्पन्ने

**अङ्कूष** अस्त्री॰ अङ्क-ऊषच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहमयेऽस्त्रभेदे (डाङ्गश) ।

**अङ्कोट(ठ)** (ल) पु॰ अङ्क्यते लक्ष्यते कीलाकारकण्टैः । अङ्कोट (अङ्कोठ) (अङ्कोल) वा । पीतवर्णसारे गन्धयुक्तपुष्पे दीर्घकण्टकयुक्ते रक्तवर्णफले (आकोड) इति ख्याते वृक्षे ।

**अङ्कोलक** पु॰ अङ्कोल+स्वार्थे-क । आकोड इति ख्याते वृक्षे ।

**अङ्कोलिका** स्त्री वल-अच् नि॰ संप्रसारणे-उलः अङ्काय तद्दानाय उलः स्वार्थे क । आलिङ्गनक्रियायाम् । [विषभेदे ।

**अङ्कोलसार** पु॰ अङ्कोलस्य सारः ६त॰ । अङ्कोटवृक्षजाते

**अङ्कोल्लिका** स्त्री । पृ॰ साधुः । अङ्कोठवृक्षे ।

**अङ्क्य** पु॰ अङ्के क्रोड़े स्थापयित्वा वाद्यतेऽसौ यत्, अङ्के साधुः अङ्क+य वा । "सार्द्धतालत्रयायामः षडङ्गुलाननः । हरीतक्याकृतिः स्यादङ्क्योऽङ्के स हि वाद्यते इत्युक्ते" क्रोड़े स्थापनपूर्व्वकं वादनीये मृदङ्गादौ । अङ्कनीये त्रि॰ ।

**अङ्ग** चिह्नयुक्तकरणे अदन्तचुरादि उभय॰ सकर्म्मक॰ सेट् । अङ्गय-ति ते आञ्जिग-त् त । मतान्तरे अङ्गापयति ते ।

**अङ्ग** न० अम-गत्यादौ बा० गन्। चित्ते (अङ्गजः कामः) "हिरण्यगर्भाङ्गभुवंमिति" देहे "हस्तेनस्पृशं तदङ्गमिन्दु"रिति कुमा०। अङ्गशब्दस्य चेष्टावदन्त्यावयविवाचिनोऽपि तदवयवेऽपि हस्तपादादौ व्यवहारः अवयवत्वसामान्यात् तेषाञ्च प्रत्यङ्गशब्देनापि व्यवहारः। तत्राङ्गशब्दस्य देहार्थत्वे तदीयस्वरूपं तदवयवभेदाश्च सुश्रुते दर्शिताः। यथा "शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकार-संमूर्च्छितं गर्भ इत्युच्यते तञ्च चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः क्लेदयन्ति, पृथिवी संहन्त्याकाशं विवर्द्धयति। एवं विवर्द्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरङ्गैरुपेतस्तदा शरीर-मिति संज्ञां लभते तच्च षडङ्गं शाखाश्चतस्रो, मध्यं पञ्चमं, षष्ठं शिर इति।

"अतःपरं प्रत्यङ्गानि वक्ष्यन्ते। मस्तकोदरपृष्ठनाभि-ललाटनासाचिबुकवस्तिग्रीवा इत्येता एकैकाः। कर्ण-नेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषपार्श्वस्फिग्जानु-बाहूरु-प्रभृतयो द्वे द्वे, विंशतिरङ्गुलयः। स्रोतांसि च वक्ष्य-माणानि। एष प्रत्यङ्गविभाग उक्तः॥ तस्य पुनःसङ्ख्या-नम्। त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशया अन्त्राणि वृक्कौ स्रोतांसि कण्डरा जालानि कूर्चा रज्जवः सेवन्यःसङ्घाताः सीमन्ता अस्थीनि सन्धयः स्नायवः पेश्यो मर्म्माणि शिरा धमन्यो योगवहानि स्रोतांसि च॥

त्वचः सप्त। कलाः सप्त। आशयाः सप्त। धातवः सप्त। सप्त शिराशतानि। पञ्च पेशीशतानि। नव स्नायुशतानि। त्रीण्यस्थिशतानि। द्वे दशोत्तरे सन्धि-शते। सप्तोत्तरं मर्म्मशतम्। चतुर्विंशतिर्धमन्यः। त्रयो दोषाः, त्रयो मलाः। नव स्रोतांसीति समासः इति"॥

अवयवे "शेषाङ्गनिर्म्माणविधौ विधातुरिति" कुमा०। अपाङ्ग इति।

उपाये, "सर्व्वकार्य्यशरीरेषु मुक्ताङ्गस्कन्धपञ्चकमिति" "मन्त्रो योधइवाधीरः सर्व्वाङ्गैः संवृतैरपीति" च माघः। प्रधानोपयोगिनि उपकरणे, "फलवत्सन्निधावफलं तदङ्गमिति" मीमांसा। "प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः तदङ्गस्याक्रियायान्त्विति" स्मृतिः। "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमिति" सम्बोधने अव्य०। "त्वमङ्ग यस्याः पतिरुज्झि तत्रस" इति नैषधम्। अङ्गमस्त्यस्य अच्। अङ्गवति "येनाङ्गविकार इति" पा०। अङ्गस्याङ्गिन इवार्थः अन्तिके च त्रि०। जन्मादिलग्ने न० "अङ्गाधीशः स्वगेहे बुधगुरुकविभिः संयुतो वीक्षितो वेति" जातकम्। देशभेदे पु०। तस्य विवरणम् अङ्गाधिपशब्दे। "अङ्गेषु वङ्गेषु खसेषु योज्या" इति "अङ्गवङ्गखसेष्वेवेति" च ज्योतिषम् अङ्गानां राजा आङ्गः बहुर्थे अङ्गाः। अङ्गदेशे भवः अण्। आङ्गः। बहुर्थे अङ्गाः। अङ्गेन देहेन निर्वृत्तः ठक्। आङ्गिकः। अङ्गदेशस्तद्राजानो वा भक्तिरस्य अण् आङ्गः। अङ्गस्येदम् अङ्गीयः। "यस्मात् प्रत्ययविधि-स्तदादि प्रत्ययेऽङ्गमिति" पाणिनिपरिभाषिते प्रत्ययावधि-भूते शब्दभेदे, "इणः षीध्वं लुङ्लिटां धोऽङ्गादिति" पा०। अङ्गादागतम् अण्। आङ्गः अङ्गनिमित्ते कार्य्ये "वर्णा-दाङ्गं बलीय इति" परिभा०। उपकरणानि च यथा यथमूह्यानि दिङ्मात्रमत्रोच्यते। तत्र "स्वाम्यमात्यसुहृत् कोषो राष्ट्रं दुर्गं बलानि च राज्याङ्गानीत्युक्तानि" "स्वाम्य-मात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा। सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते" इत्युक्तानि राज्याङ्गानि। दर्शादौ च प्रयाजादीनि, वैदिककर्म्मणाञ्च तत्तत्क्रिया-कलापाः तत्तद्द्रव्याणि चाङ्गानि "साङ्गाद्धि वैदिककर्म्मणः फलावश्यम्भाव इति" मीमा०। वेदस्य व्याकरणादीनि अङ्गानि, "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसाञ्चितिः। ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु इति"। एतेषाञ्च लक्षणादिकमग्रे वक्ष्यते। एतेषां वेदार्थज्ञानोपयोगित्वा-दङ्गत्वम् अतएव श्रुतौ "ब्राह्मणेन निष्कारणः षडङ्गः सरह-स्योवेदोऽध्येतव्य" इत्युक्तम् शिक्षायां तेषां वेदार्थज्ञानोपयो-गित्वादङ्गत्वं दर्शितम् यथा

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषाम-यनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतं तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते इति" अतो वेदार्थज्ञानोपयोगितया एतेषां ग्रन्थानां वेदाङ्ग-त्वम्। "द्वे विद्ये वेदितव्ये" इत्युपक्रम्य "पराचापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोज्योतिषमिति सा परा ययाक्षर-मधिगम्यते" इति श्रुतौ व्याकरणादीनामपरविद्यात्वेन कीर्त्तनं "तेषाञ्च साधनभूतधर्म्महेतुत्वात् षडङ्गकाण्डितानां धर्म्मसाधनत्वेनापरविद्यात्वमिति" भाष्ये उक्तम्। आयु-र्वेदादीनामुपवेदत्वं न्यायादीनामुपाङ्गत्वं यथा च तेषां तथात्वं तथा तत्तच्छब्दे दर्शयिष्यते।

तथा ज्योतिषस्याङ्गानि नानाविधानि तत्र प्राधान्यात् त्रिविधानि यथोक्तं वराहसंहितायाम् । "ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम् तत्कात्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता । स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः" इति ।

नरपतिजयचर्य्यायान्तु षड्विधान्यङ्गानि समासेनोक्ता तेषां विस्तारो दर्शितो यथा

"स्वरचक्राणि चक्राणि भूबलानि बलानि च । ज्योतिषं शकुनञ्चैव षडङ्गान्यत्र वच्म्यहम् ॥ यामलेषु च सर्वेषु यान्युक्तानि स्वरोदये । विंशतिःस्वरचक्राणि तन्नामानि वदाम्यहम् । मात्रावर्णौ ग्रहोजीवो राशिभं पिण्डयोगकौ । द्वादशाब्दोद्भवञ्चक्रं वर्षायनर्त्तुमासकम् ॥ पक्षाहं नाडिकं चक्रन्तिथिशारत्रयोगकम् । तत्कालेन्दु फलञ्चान्यत्स्वरन्देहोद्भवन्तथा ॥ (इति स्वरचक्रनामानि) । पूर्व्वशास्त्रेषु शास्त्रेषु मया ज्ञातानि यानि च चतुरशीतिचक्राणि तेषां नामानि वच्म्यहम् ॥ एकाशीतिपदञ्चक्रं शतपदं नवांशकम् । रुतं सिंहासनं चक्रं कूर्म्मं पञ्चविधात्मकम् ॥ भूदेशं नगरं क्षेत्रं गृहकूर्मञ्च पञ्चकम् । पद्मचक्रं फणी शाख्यं राहुकालानलन्त्रिधा ॥ सूर्य्यं कालानलं चक्रं चन्द्रकालानलन्तथा । घोरकालानलं प्रोक्तं गूढकालानलं बलम् ॥ राशिसूर्य्यसमायोगे चक्रं कालानलं मतम् । संघट्टकं सप्त ज्ञेयं सप्त कालानलानि च ॥ तिथिवारञ्च नक्षत्रं त्रिधा चैव कुलाकुलम् । कुम्भचक्रं द्विधा प्रोक्तं राशिनक्षत्रसम्भवम् ॥ प्रस्तारञ्चक्रवेधाख्यैः प्रभेदैस्तु चतुर्विधा । भूचरं खेचरं, पान्यं नाडीचक्रं त्रिधा मतम् ॥ कालचक्रं फणिदन्तं सूर्य्याख्यं चन्द्रजन्तथा । कविचक्रं द्विधा प्रोक्तं स्थानस्वाम्य द्यूनकम् ॥ खलकाख्यं द्विधा चैव क्षत्रिकास्थानभादिकम् । कोटचक्राष्टकं प्रोक्तञ्चतुरस्रादिभेदतः ॥ गजमश्वं रथं व्यूहं कुन्तं खड्गं छुरीन्धनुः । सौरिं सेवां नरपिण्डभम्पञ्चिमार्गाश्वदण्डिकम् ॥ सप्तरेखोद्भवञ्चक्रं पञ्चरेखेन्दुभास्करम् । त्रिविध मात्रिकाचक्रं विजयं श्येनतोरणम् ॥ अहिलाङ्गलवीजोप्तिवर्षाख्यं सप्तनाडिकम् । चक्रं सांवत्सरञ्चैव स्थानचक्रं तथैव च ॥ एतानि सर्वचक्राणि ज्ञात्वा युद्धं समाचरेत् । जयेदिह न सन्देहो शक्रतुल्योऽपि भूभुजि ॥ (इति चक्रनामानि) । स्वरोदयैश्च चक्रैश्च शत्रुर्यत्र समोऽधिकः । तत्र युद्धे बलं ज्ञेयं भूबलैर्विजयार्थिनाम् ॥ तेषां नामान्यहं वक्ष्ये ख्यातानां ब्रह्मयामले चतुरशीतिसंख्यानां यद्बलेन जयी रणे ॥ उड्डी जालन्धरी पूर्णा कामकीलैकवीरका । शिखिन्द्री च महामारी चेत्रपाली च वंशजा ॥ रुद्रकालानला काली कालरेखा निरामया । जयलक्ष्मीर्महालक्ष्मीर्जया विजयभैरवी ॥ बाली योगेश्वरी चण्डी जानुवक्षककर्त्तरी । शार्दूली सिंहली तन्वी महामाया महेश्वरी ॥ देवकोटी शिवा शक्री धूम्रवाणा वराटिका । त्रिमुखडा मल्लरी धर्म्माऽच्युताष्टाऽक्षया जया ॥ दुर्मती प्रवरा गौरी काली नरहरी बला । खेचरी भूचरी गुह्या द्वादशी विटिकोज्ज्वला ॥ त्रैलोक्यविजया घोरी कराली वडवापरा । रौद्री च शिशुमातङ्गी अभेद्या दहनी मता ॥ वज्रवला वर्गभूमी कपाली चानिलानला । चन्द्रार्कबिम्बभूमी च ग्रहभूराशिलग्नगा ॥ राहुकाला नक्षीभूमी स्वरभूमि द्विधा मता । रुद्रक्षिमाक्षिकश्चैव राहुचाष्टविधस्तथा ॥ चन्द्रः सप्तविधः सूर्य्यश्चतुर्द्धा योगिनी त्रिधा । कालवलन्त्रिभेदञ्च तिथिनक्षत्रवारजम् ॥ इमानि भूबलान्यत्र ज्ञात्वा यः प्रविशेद्रणे । अरयस्तस्य नश्यन्ति मेघा वातहता यथा ॥ (इति भूबलानि) । शत्रोः समाधिके नाम्नि स्वरैश्चक्रैश्च भूबलैः । स्थानसेनाधिके शत्रौ बलविज्ञानसंयुते ॥ अभङ्गे चाप्यभेदे च दुःसाध्ये दुर्जयेरिपौ । जयोपायमहं वक्ष्ये मन्त्रयन्त्रादिकं बलम् ॥ रणाभिषेचनं दीक्षा रणार्चा रणकङ्कणम् । वीरपट्टं रणपट्टं जयपट्टस्य बन्धनम् ॥ मेखलाकवचं न्यासं मुद्रारक्षां च कङ्कणम् । ओषधन्तिलकं चण्डागुटिकां च कपर्दिकाम् ॥ योगेषटितशस्त्राणि शस्त्ररक्षाय मोहनम् । शस्त्रलेपांश्च विविधान् वाणानाम्मिश्रबन्धनम् ॥ शब्दलङ्काहलचक्रां मुद्गजश्मश्रधारणम् । मारणं मोहनं स्तम्भविद्वेषोच्चाटनं वशम् ॥ पताकापिच्छकं यन्त्रमात्परविद्याविनाशनम् । शान्तिकं निजसैन्यस्य सर्वोपद्रवनाशनम् ॥ बलान्येतानि यो ज्ञात्वा संग्रामं कुरुते नृपः । असाध्यस्तस्य नैवास्ति शत्रुःको पि महीतले ॥ (बलाबलनामानि) । गणितं व्यवहारञ्च होराज्ञानं परिस्फुटम् । त्रिस्कन्धं ज्योतिषं वक्ष्ये जयचर्य्यां स्वरोदये ॥ खेचरानयनं स्पष्टं पञ्चाङ्गं तिथिसाधनम् । उदयास्तमनञ्चक्रान्तिं वक्ष्ये यथाकृति ॥ नतोन्नतप्रमाणञ्च भावसन्धिप्रसाधनम् । ग्रहाणां षड्बलं वक्ष्ये राशिभावबलान्वितम् ॥ राशिसंज्ञाप्रभेदञ्च खेचराणां तथैव च । नृणां जन्मफलं वक्ष्ये काशराश्यंशलग्नजम् ॥ फलञ्चन्द्रार्कयोगानां ग्रहाणां स्वोच्चनीचकम् । आयुर्दायं दशाचैव तासाञ्चान्तर्प्रवेशनम् ॥ तत्काललग्नं ग्रहानुग्रहान्दशान्तर्द्दशयोः

फलम् । षड्वर्गाष्टकं स्पष्टं तस्माहिनफलं वदेत् ॥ तात्कालिकलग्नस्य साधनञ्च परिस्फुटम् । वर्षमासदिनालग्नन्त्वयान्तत्फलन्ततः ॥ छायोत्पत्तिं त्रिधा वक्ष्ये विषुमध्ये दिनेष्टकम् । दिनमानं दिनं भुक्तमुदयर्भं घटीषु च शिङ्कुच्छायात्रिषष्टिञ्च इष्टमासप्रविंशति । लग्नोदयान् स्वदेशीयान् तेभ्योलग्नस्य साधनम् ॥ लग्नमानन्तथा होराद्रेष्काणं सप्तमांशकम् । नवांशं द्वादशं त्रिंशम् उदये सप्तसाधनम् ॥ तिथेः प्रकरणं वक्ष्ये वारनक्षत्रयोगजम् । योगाख्यं करणाख्यञ्च मुहूर्त्तान् संक्रमोद्भवम् ॥ चन्द्रताराबलञ्चैव पञ्चभेदेन संयुतम् । शुभाशुभांश्च योगांश्च तिथिवारर्क्षयोगजान् ॥ सिद्धं संवर्त्तकञ्चैव तथा वारशुभाशुभम् । अवमन्त्रिदिनं वक्ष्ये ततो योगन्त्रिपुष्करम् ॥ यमघण्टं यमदंष्ट्रां क्रकचार्गलपातकान् । कुमारन्तरुणं वृद्धं मूलातिमूलयोगिनीम् ॥ वारस्थूलन्तथा कालं कालवेलां परिस्फुटम् । कालहोरार्द्धयामञ्च कुलिकहृष्टकद्वयम् ॥ फलं ग्रहस्य धिष्ण्यस्य वक्रभार्गवयोः फलम् । दशां चान्तर्दशां स्थूलां वक्रातिचारयोः फलम् ॥ पीडास्थानानि खेटानां ग्रहावस्थां तथैवच । भावफलं सन्धिफलं शतावेधमुपग्रहान् ॥ शीघ्रवक्रग्रहोद्दिष्टं शक्रोपरं गोचरव्यधम् । विवाहञ्च प्रतिष्ठाञ्च दीक्षायात्राप्रवेशनम् ॥ वास्तुदीपोर्द्धविन्यासं कालविंशोपकांस्तथा । जलयोगार्घकाण्डञ्च वर्षमासदिनार्द्धतत् ॥ तिथ्यादिपञ्चकं खेटचन्द्रस्तत्काल सम्भवम् । अवस्थाचतुःषष्टिञ्च लोकचिन्तां यदाग्रहम् ॥ अङ्कसन्दादि सर्वाणि कालचिह्नानि यानि च । दुष्टरिष्टान्यहं वक्ष्ये तथा तेषाञ्च शान्तिकम् ॥ ज्योतिरङ्गमिदं सर्वं ये जानन्ति मनीषिणः । दीपवत्तान्विजानीयान्मोहान्धकारनाशने" इति ॥

गर्गसंहितायां तु चतुर्विंशतिसंख्यानि अङ्गानि उपाङ्गानि चत्वारिंशदिति ज्योतिरङ्गानि चतुःषष्टिविधान्युक्तानि यथा "यथैव वेदस्याङ्गानि षडङ्गानि मनीषिभिः । चतुःषष्टिस्तथाङ्गानि ज्योतिषस्य विदुर्बुधाः" इत्युपक्रम्य गणितज्ञानपूर्वकं तज्ज्ञानमावश्यकमित्युक्त्वा तद्विभागा दर्शिता यथा "तस्मात् कृत्स्नमधीत्यापि वेदाङ्गं कालसाधनम् । ज्योतिषामयनाङ्गानि चतुःषष्टिन्ततः पठेत् । तेषामपि कर्मगुणौ चन्द्रलग्ने तदनन्तरम् । नक्षत्रकेन्द्रभे चैव द्विवर्गः प्रथमः स्मृतः । राहौ बृहस्पतौ शुक्रे, धूमकेतौ शनैश्चरे । अङ्गारके बुधेऽर्के च चारानष्टौ ततः पठेत् । चक्रोऽप्यनन्तरं चक्रं मृगचक्रं तथैव च । श्वचक्रं वातचक्रं च चक्राङ्गेषु चतुष्टयम् । वास्तुविद्याङ्गविद्या च वायसानां तथैव च । क्षेत्रास्तिकस्तु विज्ञेता इन्द्रगर्गमताः शुभाः । स्वातीयोगं तथाषाढारोहिण्यायोगमेव वा । एतान् कृत्स्नान् विजानीयात् प्रयोगान् वै विशेषतः । रहस्यं चेतीहाङ्गानि चतुर्विंशतिरीरिताः । अतऊर्द्ध्वं प्रवक्ष्यामि उपाङ्गानीह नामतः । आनुपूर्व्याद्विधानेन चत्वारिंशच्च नामतः । ग्रहकोषो ग्रहयुद्धं ग्रहशृङ्गाटकं तथा । कृत्स्नं ग्रहेश्वराणाञ्च ग्रहपाकास्तथैव च । विपथाचाग्निवर्णाश्च सेनाव्यूहस्तथैव च । मयूरचित्रोपनिषदुपहारप्रशान्तयः । तत्रान्तिके तुलाकोशोद्भवन्तत्रोपधारयेत् । सर्व्वभूतहितांश्चैव तथा पुष्पलतां विदुः । उपानहोस्तथा छेदोवस्त्रच्छेदस्तथैव च । कृत्स्नोभुवनकोशश्च गर्भाधानादिकं तथा निर्घातो भूमिकम्पश्च परिवेषास्तथैव च । ऋतुस्वभावाः सन्ध्येवं तथोल्काश्चोपधारयेत् । सांवत्सरस्तथा युक्तः शास्त्राणां देशकोभवेत् । बलाबलं तु विज्ञेयं बहु यत्र बलं वदेत् । चतुःषष्ट्यङ्गमेतत्तु संवत्सरमुदाहृतमिति" । एवञ्च गणितादित्रयं प्रधानाङ्गत्वात् स्कन्धसंज्ञम् अन्यानि तु अप्रधानान्यङ्गानीति क्वचित् संक्षेपत उक्तानि, क्वचिच्च विस्तरत इति विशेषः । गर्गोक्तविभागाभिप्रायेणैव मुद्राराक्षसे "कृतपरिश्रमोऽस्मि चतुःषष्ठ्यङ्गे ज्योतिषे" इति सूत्रधारवाक्यम् । बृहत्संहितायां तु गर्गोक्तान्येव प्रायशोऽङ्गानि प्रदर्शितानि तेषां स्वरूपादिकं तत्तच्छब्दे वक्ष्यते ।

दृश्यकाव्ये मुखप्रतिगर्भविमर्षोपसंहृतिरूपसन्धिपञ्चकस्य चतुःषष्टिरङ्गानि यथोक्तं साहित्यदर्पणे "उपक्षेपः परिकरः परिन्यासो विलोभनं । युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥ उद्भेदः करणं भेदः एतान्यङ्गानि वै मुखे"(इति मुखस्य १२) "विलासः परिसर्पश्च विधूतं तापनं तथा । नर्म्म नर्म्मद्युतिश्चैव तथा प्रगमनं पुनः ॥ विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम् । पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि" (इति प्रतिमुखस्य १३)॥ "अभूताहरणं मार्गो रूपोदाहरणं क्रमः । संग्रहश्चानुमानञ्च प्रार्थनाक्षिप्तिरेव च ॥ त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा (इति गर्भस्य १२) । "अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः । शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ॥ प्ररोचना विमर्षे स्यादादानं छादनं तथा (इति विमर्षस्य १३) । "सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् । कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ॥ भाषणं पूर्व्ववाक्यञ्च काव्यसंहार एव च । प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः" (उप-

संहारस्य १४)॥ चतुःषष्टिविधं चैतदङ्गं प्रोक्तं मनीषिभिः। कुर्य्यादनियते तस्य सम्भावपि निवेशनम्। रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता। इपरिच्छेदे

**अङ्गकर्म्मन्** न० अङ्गस्य कर्म्म मर्द्दनानुलेपनादि परिकर्म। मर्द्दनादिदेहसंस्कारे व्यापारे।

**अङ्गग्रह** पु० अङ्गस्य रोगादिना ग्रहः ६त०। देहवेदनायाम्।

**अङ्गज** पु० अङ्गात् जायते जन–ड। पुत्रे दुहितरि स्त्री। "अङ्गादङ्गं सम्भवति पुत्रवद्दुहिता न्यामिति" श्रुतिः। देहजातमात्रे त्रि०। रुधिरे न०। रोगे पु०। लोम्नि न०। "तवोत्तरीयं करिचर्म्म साङ्गजमिति" भार०। अङ्गजन्मादयोऽप्युक्तार्थे। अङ्गं मनः तस्मात् जाते कामे पु०।

**अङ्गज्वर** पु० अङ्गमङ्गम् अधिकृत्य ज्वरः। राजयक्ष्मरोगे। "निरवोचमहं यच्च अङ्गज्वरमिति"-वैद्यकम्।

**अङ्गण(न)** न०अगि-गतौ अङ्गते स्वहाद्भिःस्त्र गम्यते अत्र ल्युट् पृ० वा णत्वम्। अजिरे, चत्वरे, (उठान) इति ख्याते स्थाने "अजनि पङ्कुरपाङ्गनिजाङ्गणप्रतिकृणोऽपीति" नैषधम्। दन्त्यनान्तत्वमपि। "प्रकटाङ्गनोपभोगाप्यखण्डितचरित्रेति" काद०। अङ्गनं चत्वरमङ्गना स्त्री चेति तदर्थः। करणे ल्युट्। याने।

**अङ्गति** पु० अङ्गति यात्यनेन अगि–करणे अति। वाहने स्त्रीत्वमपीत्येके वा ङीप्। अङ्गते गम्यते सेवादिना कर्म्मणि अति। ब्रह्मणि, अग्नौ च। कर्त्तरि अति। अग्निहोत्रिणि पु०।

**अङ्गद** न० अङ्गं दायति शोधयति दै–क। (ताड़, वाजु) इति प्रसिद्धे बाहुभूषणे। वालिपुत्रे-वानरे पु०। स च किष्किन्ध्याधिपस्य वानरराजस्य वालिनस्ताराग र्भजः पुत्रस्तच्चरितं रामायणे सुन्दरलङ्काकाण्डयोर्विस्तीर्णम्। अङ्गदानकर्त्तरि त्रि०। दक्षिणदिग्गजकरिण्यां स्त्रीत्वेके। अङ्गं ददाति समर्पयति दा–क। अङ्गदानकर्त्तरि त्रि० योषिति स्त्री।

**अङ्गना** स्त्री प्रशस्तमङ्गमस्ति अस्याः अङ्ग+न। अङ्गसौष्ठववत्यां योषिति, योषिन्मात्रे च, "अङ्गना वामनस्य स्यात्" इति हैमोक्तेः वामनदिग्गजयोषिति च।

**अङ्गनाप्रिय** पु० प्री–क ६त०। अशोकवृक्षे तत्पुष्पेण हि स्त्रियः स्वाङ्गं भूषयन्तीति लोकसिद्धम्। योषित्प्रियमात्रे तु त्रि०। दक्षिणदिग्गजे वामने पु०।

**अङ्गदनिर्य्यूह** अङ्गदस्य केयूरस्य निर्य्यूह इव। केयूरशीर्षस्थे चूड़ाकारेऽग्रभागे।

**अङ्गन्यास** पु० अङ्गेषु हृदयादिषु मन्त्रभेदस्य न्यासः। मन्त्रविशेषस्य उच्चारणपूर्व्वकं करस्पर्शेन कर्त्तव्ये तन्त्रोक्ते न्यासभेदे "अङ्गन्यासं करन्यासं वीजन्यासन्तथैव चेति" तन्त्रम्।

**अङ्गपालि** स्त्री अङ्गं पाल्यते सम्बध्यतेऽत्र अङ्ग–पाल–इ। आलिङ्गने।

**अङ्गपालिका** स्त्री अङ्गं देहं पालयतीति पालि–ण्वुल् ६त०। (धाइ मा) इति ख्यातायाम् उपमातरि। अङ्गपालनकारके त्रि०।

**अङ्गप्रायश्चित्त** न० अङ्गस्य देहस्य शुद्ध्यर्थं प्रायश्चित्तम्। अशौचेषु पञ्चसूनाजन्यदुरितक्षयार्थं कार्य्ये "दशाहात्तु परं सम्यक् विप्रोऽधीयीत धर्म्मवत्। "दानञ्च विधिवद्देय मशुभात्तारकं हि तदिति" स्मृत्युक्ते दानरूपे प्रायश्चित्ते।

**अङ्गभू** पु० अङ्गात् देहात् मनसो वा भवति भू–क्विप्। पुत्रे, मनोजे कामे च देहमनोजातमात्रे त्रि०। "हिरण्यगर्भाङ्गभुवं मुनिं हरिः"इति माघः। नारदस्य तन्मनोजातत्वात् ब्रह्माङ्गभूत्वम्। अङ्गानामङ्गमन्त्राणां भूः। कृताङ्गन्यासे त्रि०। "ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मेति" कुमा०।

**अङ्गमन्त्र** पु० अङ्गेषु हृदयादिषु षट्सु न्यास्यो मन्त्रः। तन्त्रोक्ते षड्दीर्घभाजि मन्त्रभेदे।

**अङ्गमर्द्द** पु०अङ्गं मर्द्दयति संवाहयति मृद–णिच् अच् ६त०। देहसंवाहके-सेवके। अङ्गमर्द्दनकारके त्रि०। भावे घञ्। देहमर्द्दने पु०।

**अङ्गमर्द्दक** पु० अङ्गं मर्द्दयति मृद–णिच्–ण्वुल् ६त०। देहसंवाहके–सेवके। देहमर्द्दनकारके त्रि०।

**अङ्गमर्द्दिन्** पु० अङ्गं मर्द्दयति मृद–णिच्–णिनि ६त०। अङ्गमर्दके सेवके। अङ्गमर्दनकारके त्रि० स्त्रियां ङीप्।

**अङ्गयज्ञ** पु० अङ्गीभूतः प्रधानयज्ञोपकरणीभूतः यज्ञः। "नवयज्ञमखं कृत्वा ततः कर्म्म समाचरेदि"त्युक्ते कर्मयज्ञमखं कृत्वा ततः कर्म्म समाचरेदि"त्युक्ते कर्म्माङ्गे यज्ञयागादौ, दर्शाद्यङ्गे समिद्यागादौ च ते च "समिधो यजति, तनूनपातं यजति, इड़ो यजति, वर्हिर्यजति, स्वाहाकारं यजति, इत्येवं पञ्चविधाः। एतेषाञ्च सकृदनुष्ठानेनैव तन्त्रन्यायेन प्रधानयागानामाग्नेयादीनामुपकारितेति मीमांसा। अङ्गयागादयोऽप्यत्र। "अङ्गान्ययाज्ञीदभितः प्रधानमिति" भट्टिः।

**अङ्गरक्त** न० पु० अङ्गेऽवयवे रक्तः रञ्ज–क्त ७त०। कम्पिल्लदेशजाते रक्तवर्णचूर्णवति (गुड़ारोचना) इति वणिजेषु वैद्येषु च प्रसिद्धे द्रव्यभेदे। ६व०रक्ताङ्गमात्रे त्रि०।

**अङ्गरक्षणी** अङ्गं रक्ष्यतेऽनया रक्ष–करणे ल्युट् ६त० ङीप्।

लौहजालमये अङ्गरक्षणसाधने वर्म्मभेदे अङ्गरक्षणसाधनमात्रे त्रि० । भावे ल्युट् । देहत्राणे न० ।

**अङ्गराग** पु० अङ्गं रज्यतेऽनेन रन्ज–करणे घञ् । अङ्गलेपने कुङ्कुमादौ । भावे घञ् । अङ्गस्य विलेपने पु० ।

**अङ्गराज** पु० अङ्गानां जनपदानां राजा अच् समा० । अङ्गदेशाधिपे, कर्णे च तत्कथा अङ्गाधिपशब्दे दृश्या । अङ्गम्पादयोऽप्यत्र ।

**अङ्गराज्** पु० अङ्गेषु तन्नामकदेशेषु राजते राज–क्विप् ७त० । अङ्गदेशाधिपे कर्णे, तद्देशराजमात्रे च ।

**अङ्गरुह** न० अङ्गे रोहति रुह–क्विप् ७त० । देहजे लोमकेशादौ । "विहङ्गराजाङ्गरुहैरिवायतैरिति" माघः ।

**अङ्गलेप** पु० अङ्गं लिप्यतेऽनेन लिप–करणे घञ् ६त० । अङ्गरागद्रव्ये । भावे घञ् ७त० । देहे चन्दनाद्यनुलेपने ।

**अङ्गव** न० अङ्गे स्वावयवे वाति अन्तर्भवति अतिशोषणात् सङ्कुचिताङ्गमिव भवति वा–ड ७त० । शुष्कफले ।

**अङ्गविकल** त्रि० अङ्गेन विकलः । देहव्याकुलतायुक्ते ।

**अङ्गविकृति** पु० वि–कृ–क्तिन् अङ्गस्य विकृतिश्चालनादिर्यस्मात् ५त० । (मृगीनाडा) इति ख्याते अपस्माररोगे । ६त० । अङ्गस्य विकारे स्त्री ।

**अङ्गविक्षेप** पु० वि–क्षिप–घञ् अङ्गस्य विक्षेपः चालनं यत्र ब० । अङ्गुल्यादिविन्यासभेदेन देहचालनरूपे नृत्ये । तद्भेदादि यथा । "देहरुच्या प्रतीतो यस्तालमानसमाश्रयः । सविलासोऽङ्गविक्षेपो नृत्यमित्यभिधीयते । ताण्डवञ्च तथा लास्यं द्विविधं नृत्यमुच्यते । पेवलिर्बहुरूपञ्च ताण्डवं द्विविधं मतम् । अङ्गविक्षेपबाहुल्यं तथाभिनयमल्पकम् । यत्र सा पेवलिस्तस्या देशीति नाम लोकतः । छेदनं भेदनं यत्र बहुरूपा मुखाबलौ । ताण्डवं बहुरूपन्तत् दारुणात् गलमूर्द्धतः । छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते । यत्राभिनयभावाद्यो रसैराश्लेषचुम्बनैः । नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् । मधुरं बहुलीलाभिर्भङ्गीभिश्च नृत्यते वशीकरणविद्याभं तल्लास्यं यौवतं मतम् । गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः । लयतालसमारब्धं ततो नृत्यं प्रवर्त्तते इति सङ्गीतदामोदरः । भावे घञ् । अङ्गचालने ।

**अङ्गविद्या** स्त्री अङ्गरूपा व्याकरणादिशास्त्ररूपा विद्या ज्ञानसाधनम् । ज्ञानसम्पादके व्याकरणादिशास्त्रे । प्रश्नकाले अङ्गानां देहावयवानां चेष्टादिना शुभाशुभबोधके ज्योतिरङ्गे शास्त्रे च । सा च विद्या वृहत्संहितायां दर्शिता यथा "अथाङ्गान्यूर्द्ध्वोष्ठस्तनवृषणपादं च दशना भुजौ हस्तौ गण्डौ कचगलनखाङ्गुष्ठमपि यत् । सशङ्खं कक्षांसश्रवणगुदसन्धीति पुरुषे, स्त्रियां भ्रूनासास्फिग्वलिकटिसुलेखाङ्गुलिचयम् ॥ जिह्वा ग्रीवा पिण्डिके पार्ष्णियुग्मं जङ्घे नाभिः कर्णपालौ कृकाटौ । वक्त्रं पृष्ठं जत्रुजान्वस्थिपार्श्वं हृत्तालुन्यौ मेहनोरस्त्रिकं च ॥ नपुंसकाख्यं च शिरो ललाटम् आस्वाद्यसंज्ञैरपरैश्चिरेण । सिद्धिर्भवेज्ज्ञातृ नपुंसकैर्नो कृत्यतैश्चिन्नकृतैश्च पूर्वैः ॥ स्पृष्टे वा चालिते वापि पादाङ्गुष्ठेऽक्षिरुग् भवेत् । अङ्गुल्यां दुहितुः शोकं शिरोघाते नृपाद्भयम् ॥ विप्रयोगमुरसि स्वगात्रतः कर्पटाप्तिरनर्घदा भवेत् । स्वात्मियात्मिरभिमृष्टहृत् कर्पटं पृष्ठतश्चरणपादयोर्जितः ॥ पादाङ्गुष्ठेन विलिखेद्भूमिं क्षेत्रोत्थचिन्तया । हस्तेन पादौ कण्डूयेत्तस्य दासीमया च सा ॥ तालभूर्जपटदर्शनेऽंशुकं चिन्तयेत्कवचयाथिभक्षगम् । व्याधिराचयति रज्जुजालकं वल्कलं च समवेक्ष्य बन्धनम् ॥ पिप्पलीमरिचशुण्ठिवारिदैर्लोध्रकुष्ठवसनाम्बुजीरकैः । गन्धमांसिशतपुष्पया वदेत् पृच्छतस्तगरकेण चिन्तनम् । स्त्रीपुरुषदोषपीडितसर्वाध्वसुतार्थधान्यतनयानाम् । द्विचतुःषट्पदजातीनां विनाशतः कीर्त्तितैर्दृष्टैः ॥ न्यग्रोधमधूकतिन्दुकजम्बूप्लक्षाम्रबदरिजातिफलैः । धनकनकपुरुषलोहांशुकरूप्योदुम्बराप्तिरपि करगैः ॥ धान्यपरिपूर्णपात्रं कुम्भः पूर्णः कुटुम्बवृद्धिकरौ । गजगोशुनां पुरीषं धनयुवतिसुहृद्विनाशकरम् ॥ पशुहस्तिमहिषपङ्कजरजतव्याघ्रैर्लभेत सन्दृष्टैः । अविधननिवसनमलयजकौशेयाभरणसङ्घातम् ॥ पृच्छा हरश्रावककुपरिव्राड्दर्शने नृभिर्विहिता । मित्रद्युतार्थभवा गणिकानृपसूतिकार्थकृता ॥ शाक्योपाध्यायार्हतनिर्ग्रन्थिनिमित्तनिगमकैवर्त्तैः । चौरचमूपतिवणिजां दासयोधापणस्थवध्यानाम् ॥ तापसे शौण्डिके दृष्टे प्रोषितः पशुपालनम् । हृतं पृच्छकस्य स्यादुञ्छवृत्तौ विपन्नता ॥ इच्छामि प्रष्टुं भण पश्यतार्थः समादिशेत्तुल्ये । संयोगकूटमोला लाभेषयोर्हता चिन्ता ॥ निर्दिशेति गदिते जयाध्वगा, प्रश्नवेध मम चिन्तितं वद । आशु सर्वजनमध्यगं त्वया दृश्यतामिति च बन्धुचौरजा ॥ अन्तःस्थेऽङ्गे स्वजन उदितो बाह्यजे बाह्य एवं पादाङ्गुष्ठाङ्गुलिकलनया दासदासीजनः स्यात् । जङ्घे प्रेष्यो भवति भगिनी नाभितो हृत्सभार्या पाणङ्गुष्ठाङ्गुलिचयकृतस्पर्शने

पुत्रकन्ये ॥ मातरं जठरे, मूर्द्ध्नि गुरुं, दक्षिणवामकौ । बाहू भ्राताथ तत्पत्नी स्पृष्ट्वैवं चौरमादिशेत् ॥ अन्तरङ्गमवमुच्य शरीरगस्पर्शनं यदि करोति पृच्छकः । श्लेष्मलमूत्रशकृज्जलनिधः पातयेत्करतलस्थवस्तु चेत् ॥ भग्नमवनामिताङ्गपरिमोटनतोऽप्यथवा, अनष्टतरिक्तभाण्डमवलोक्य च चौरजनम् । हृतपतितक्षताक्षतविनष्टविभग्नगतोन्मुषितकृतार्द्धनिष्टरवतो लभते न हृतम् ॥ निगदितमिदं यत्तत् सर्वं तुषास्थिविषादिकैः सह क्षतिकरं पीडार्त्तानां समं रुदितश्रुतेः । अवयवमपि स्पृष्ट्वान्तःस्थं दृढं मरुदाहरेद् अतिबहु तदा भुक्तान्नं संस्थितः क्षुधितो वदेत् ॥ ललाटस्पर्शनाच्छूकदर्शनाच्छालिजौदनम् । उरःस्पर्शात् षष्टिकान्नं ग्रीवास्पर्शे च यावकम् ॥ कुक्षिकुचजठरजानुस्पर्शे माषाः पयस्तिलयवाग्वः । आस्वादयतश्चोष्ठौ लिहतो मधुरं रसं श्रेयम् ॥ विसृक्के स्फोटयेज्जिह्वामम्ले वक्त्रं विकूणयेत् । कटुतिक्तकषायोष्णैर्हिक्केत्, ष्ठीवेच्च सैन्धवे ॥ श्लेष्मत्यागे शुष्कतिक्तं तदन्नं, श्रुत्वा क्रव्यादं प्रेक्ष्य वा मांसमिश्रम् । भ्रूगण्डौष्ठस्पर्शने शाकुनं तद् भुक्तं तेनेत्युक्तमेतन्निमित्तम् ॥ मूर्धगलकेशहनुशङ्खकर्णजङ्घं वस्तिं च स्पृष्ट्वा । गजमहिषमेषसूकरगोशशमृगमांससमुपभुक्तम् ॥ दृष्टे श्रुतेऽप्यशकुने गोधामत्स्यामिषं वदेद्भुक्तम् । गर्भिण्या गर्भस्य च नियतनमेवं प्रकल्पयेत्प्रश्ने ॥ पुंस्त्रीनपुंसकाख्ये दृष्टेऽनुमिते पुरःस्थिते स्पृष्टे ! तज्जन्म भवति पानान्नपुष्पफलदर्शने च शुभम् ॥ अङ्गुष्ठेन भ्रूदरं वाङ्गुलिं वा स्पृष्ट्वा पृच्छेद्गर्भचिन्ता तदा स्यात् । मध्वाज्याद्यैर्हेमरत्नप्रवालैरप्यस्यैर्वा मातृधात्र्यात्मजैर्वा ॥ गर्भयुता जठरे करगे स्याद् दुष्टनिमित्तवशात्सुदासः । कर्षति तज्जठरं यदि पीडो तु पीडनतः करगे च करेऽपि । भार्याया दक्षिणे द्वारे स्पृष्टे मासोत्तरं वदेत् । वामे द्वौ कर्ण एवं मा हिचदर्भैः श्रुतिमने ॥ वेणीमूले त्रीन् सुतान् कन्यके द्वे कर्णे पुत्रान् पञ्च हस्ते त्रयं च । अङ्गुष्ठान्ते पञ्चकं चानुपूर्व्या पादाङ्गुष्ठे पार्ष्णियुग्मेऽपि कन्याम् ॥ सव्यासव्योरुसंस्पर्शे सुते कन्यासुतद्वयम् । स्पृष्टे ललाटमध्यान्ते चतुस्त्रितनयान् वदेत् ॥ शिरोललाटभ्रूकर्णगण्डहनुरदा गलम् । सव्यापसव्यस्कन्धश्च हस्तौ चिबुकनालकम् ॥ उरः कुचं दक्षिणमप्यसव्यं हृत् पार्श्वमेवं जठरं कटिश्च । स्फिक् पायुसन्ध्यूरुयुगं च जानू जङ्घे च पादाविति कृत्तिकादौ ॥ इति निगदितमेतद्गात्रसंस्पर्शलक्ष्म प्रकटमभिहिताख्यौ वीक्ष्य शास्त्राणि सम्यक् । विपुलमतिरुदारो वेत्ति यः सर्वमेतन्नरपतिजनताभिः पूज्यतेऽसौ सदैव ॥ इति बृहत्संहितायामङ्गविद्या प्रकरणम् । "वास्तुविद्याङ्गविद्या चेति" गर्गः । अङ्गविद्याया व्याख्यानो ग्रन्थः ऋगयना० अण् । आङ्गविद्यस्तद्व्याख्यानग्रन्थे ।

**अङ्गविधि** पु० अङ्गस्य प्रधानोपकारिणः विधिः विधानम् । गुणविध्यपरपर्याये विधिभेदे । तथाहि इष्टसाधनताकार्य्यत्वादिबोधकवाक्यं विधिः । स च प्रमाणान्तरैरप्राप्तस्यैव बोधकतयोत्पत्तिविधिः "विधिरत्यन्तमप्राप्तौ" इत्युक्तेः । तथा च प्रमाणान्तराप्राप्तकर्म्मणि इष्टसाधनताकार्य्यतादिबोधकं वाक्यं प्राथमिकप्रवृत्तिजनकप्रतीतिजनकत्वात् उत्पत्तिविधिः । यत्र तु प्राप्तस्यैव कर्म्मणोऽनुवादेन तस्य द्रव्यदेवतादौ इष्टसाधनतादिकं बोध्यते सोऽयमङ्गविधिः स च स्वविषये प्राथमिकप्रवृत्तिजनकप्रतीतिजनकत्वात् विधिरेव । किन्तु प्रधानविधिविधेयकर्म्मणोऽङ्गबोधकतया अङ्गविधिरित्येव विशेषः यथा, अग्निहोत्रं जुहोतीत्युत्पत्तिविधिवाक्येन प्राप्तस्याग्निहोत्रस्य गुणविधानाय प्रवृत्तं दध्ना जुहोतीति वाक्यं प्राप्ताग्निहोत्रानुवादेन दधिकरणत्वमात्रं बोधयत् दधि इष्टसाधनताबोधनेन तत्र प्रवर्त्तयतीति दध्ना जुहोतीति वाक्यं गुणविधिरङ्गविधिरिति च उच्यते । एवमन्यान्युदाहार्य्याणि । तच्चाङ्गं क्वचित् कालः क्वचित् द्रव्यं क्वचित् देवतादि इति नानाविधम् अतएवोक्तं "कार्म्मार्थचिह्नितं नैव बुद्धौ विपरिवर्त्तते । शब्दात्तु तदुपस्थानमुपादेये गुणो भवेदिति" भट्टः । विवृतञ्चैतत् रघुनन्दनेन प्रमाणान्तराचिह्नितं कर्म प्रथमं बुद्धौ न विषयीभवति प्राथमिकी शब्दादेव तस्य कर्म्मण उपस्थितिरिति उपादेये विधेये कर्म्मणि तिथ्यादिर्गुण इति" ।

**अङ्गवैकृत** न० विकृतस्य भावः विकृत+अण् अङ्गेन अङ्गचेष्टया वैकृतं हृदयभावो ज्ञाप्यते यत्र बहु० । आकार इति ख्यातायाम्-हृदयगतभावावेदकचेष्टायाम् । हेम० । अङ्गस्य विकारे न० ।

**अङ्गवैगुण्य** न० अङ्गस्य प्रधानोपकारिणः वैगुण्यमन्यथाकरणम् । प्रधानकर्म्माङ्गीभूतद्रव्यादेरन्यथाकरणे तद्दोषनिवारणार्थं विष्णुस्मरणं कर्त्तव्यतया विहितं "यदसाङ्गं कृतं कर्म्म जानता वाप्यजानता साङ्गं भवतु तत् सर्वं हरेर्नामानुकीर्त्तनादिति" स्मृतिः । अतएव श्राद्धादिपद्धतौ कर्म्मान्ते यत् किञ्चिदङ्गवैगुण्यं जातं तद्दोषप्रशमनाय विष्णुस्मरणमहं करिष्ये इत्यभिलापवाक्यम् ।

**अङ्गशुद्धि** स्त्री शुध्यतेऽनया इति शुध-करणे क्तिन् ६त० । स्नानादौ देहसंस्कारसाधने । भावे क्तिन् । देहशोधने ।

**अङ्गस्** न० अनज-असुन् कुत्वञ्च । पक्षिणि इत्युज्ज्वलदत्तः ।

**अङ्गसंस्कार** पु० अङ्गं संस्क्रियतेऽनेन सम्-कृ+करणे घञ् सुट् । देहसंशोधनादिसंस्कारकारणे स्नाने गोधूमचूर्णादिनाङ्गमर्द्दने च । भावे घञ् ६त० । अङ्गस्य संस्कारे विलेपनादौ । अङ्गं संस्करोति सम्+कृ-कर्त्तरि अण् ६त० । देहसंस्कारके नरमात्रे त्रि० ।

**अङ्गसंस्क्रिया** स्त्री ६त० । अङ्गसंस्कारे ।

**अङ्गस्पर्श** पु० अङ्गस्य अशौचिदेहस्य इतरैः स्पर्शस्तद्योग्यता । इतरकर्त्तृकस्पर्शयोग्यतायाम् । अशौचिनाम् देहस्पर्शनिषेधे "चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं द्विजैः । ततः सञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते" इति दक्षकृतौ चतुर्थदिवसे अशौचिदेहस्य स्पर्शयोग्यताभिधानात् चतुर्थदिवसे देहस्पर्शयोग्यता । एतच्च "यावद्दोलमसंस्पृश्य"मित्याद्युक्तव्यतिरिक्तविषयं महागुरुनिपाते पुत्रादिभिन्नविषयञ्च तच्चाङ्गास्पृश्यत्वशब्दे वक्ष्यते ।

**अङ्गहार** पु० अङ्गं ह्रियते चाल्यतेऽत्र हृ-आधारे घञ् ६त० । अङ्गुल्यादिविन्यासभेदेन नृत्ये । तच्चाङ्गविक्षेपशब्दे दर्शितम् । भावे घञ् ६त० । अङ्गस्य हरणमात्रे पु० ।

**अङ्गहानि** स्त्री अङ्गस्य प्रधानोपकारिणः कर्म्मणः हानिः प्रधानकर्म्मोपयोगिनः गुणादेरन्यथा सम्पादनेऽसम्पादने च । "देशात् कालात् प्रमादाच्चेदङ्गहानिः प्रजायते । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति" पुरा० ।

**अङ्गहारि** पु० अङ्गानि ह्रियन्ते अत्र हृ-बा० णि । अङ्गहारार्थे स्थाने रङ्गभूमौ ।

**अङ्गहीन** त्रि० अङ्गेन हीनम् । साधनीभूतद्रव्यकालाद्यङ्गकरणशून्ये कर्म्मणि "अङ्गहीनं क्रियाहीनं विधिहीनञ्च यद्भवेत् । तत् सर्व्वं पूर्णतामेतु भास्करस्य प्रसादतः" इति स्मृतिः । "अङ्गहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजम् । यजमानमदक्षिणो नास्ति यज्ञसमो रिपुः" इति पुरा० । विकले, छिन्नदेहे च त्रि० । अङ्गेन देहेन हीनः रहितः । कामे पु० । तस्यानङ्गत्वात्तथात्वम् । अङ्गं हीनं यथोचितप्रमाणादल्पं यस्य । हस्तपादाद्यवयवस्य यथोचितपरिमाणाभावयुक्ते त्रि० । "धान्यचौरोऽङ्गहीनत्वमातिरेक्यञ्च मिश्रक इति" मनुः । वा परनिपातेऽहीनाङ्गोऽप्यत्रार्थे । अङ्गस्य हीनतायां कारणमुक्तं सुश्रुते । "द्विहृदयाञ्च नारीं दौहृदिनीमाचक्षते । दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति । तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत् । लब्धदौहृदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति ॥ भवन्ति चात्र ॥ इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी । गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् । सा प्राप्तदौहृदा पुत्रं जनयेत गुणान्वितम् । अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् ॥ येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना । जायेत तत् सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये" इति ॥

**अङ्गाङ्गिभावः** पु० अङ्गस्य अङ्गिनश्च भावः । गौणमुख्यभावे उपकार्य्योपकारकभावे च यथा दर्शादीन् प्रति प्रयाजादीनामङ्गत्वं, प्रयाजदींश्च प्रति दर्शादीनामङ्गित्वम् । "अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यमन्यथ" इति च मीमा० ।

**अङ्गाधिप** पु० अङ्गस्य देशभेदस्य अधिपः । अङ्गदेशाधिपे प्रसिद्धतया कर्णे तस्य तद्राज्यप्राप्तिः भारते आ० । "यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति । तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ॥ वैशम्पायन उवाच । ततस्तस्मिन् क्षणे कर्णः सलाजकुसुमैर्घटैः । काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः । अभिषिक्तोऽङ्गराज्ये स श्रिया युक्तो महाबल इति सच देशः मगधदेशस्थगिरिव्रजात् सन्निकृष्टः पूर्व्वस्यां दिशि स्थितः । सभापर्व्वणि मगधदेशवर्णने गिरिव्रजस्थवर्णने "अङ्गवङ्गादयश्चैव राजानश्च महाबलाः । गौतमाश्रममभ्येत्य रमन्ते स्म पुरार्ज्जुनेति" अङ्गवङ्गयोरपायां सन्निकृष्टत्वमुक्तम् । भीमप्राच्यदिग्विजये च "विजित्य युधि कौन्तेयो मागधानभ्ययाद्बली ॥ दण्डञ्च दण्डधारञ्च विजित्य पृथिवीपतीन् । तैरेव सहितः सर्व्वैर्गिरिव्रजमुपाद्रवत् । जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह । तैरेव सहितः सर्व्वैः कर्णमभ्यद्रवद्बली ॥ स कम्पयन्निव महीं बलेन चतुरङ्गिणा । युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ स कर्णं युधि निर्ज्जित्य वशे कृत्वा च भारत । ततो विजिग्ये बलवान् राज्ञः पर्व्वतवासिनः ॥ अथ मोदागिरौ चैव राजानं बलवत्तरम् । पाण्डवो बाहुवीर्य्येण निजघान महामृधे इति" ॥ एवञ्च गिरिव्रजात् पूर्व्वं मोदागिरेः पश्चात् स देशः । वृहत्संहितायान्तु तस्य भारतवर्षे आग्नेय्यां स्थितिरुक्ता । यथा "आग्नेय्यां दिशि कोषल कलिङ्गवङ्गोपवङ्गजठराङ्गा" इति । अङ्गस्य ज्योतिःशास्त्रोक्तलग्नस्य अधिपः । लग्नाधिपे पु० । "अङ्गाधिपे वक्ति सर्व्वविभूतिसम्पदिति" ज्योति० ।

**अङ्गाधीश** पु० ६त० । अङ्गदेशाधिपे कर्णे लग्नाधिपे च "अङ्गाधीशः स्वगेहे बुधगुरुकविभिः संयुत" इति जातकम् । अङ्गाधीश्वरादयोऽप्यत्र ।

**अङ्गार** अस्त्री० अगि-आरन् । अर्द्धदग्धे-अग्निसंक्रान्ते अग्निशून्ये वा (आङार) इति प्रसिद्धे काष्ठखण्डे । "घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमानिति" "ज्वलदङ्गारसन्निभमिति" "अङ्गारे शतधौतेऽपि मालिन्यं नैव गच्छतीति" । "उष्णो दहति चाङ्गारः शीतः कृष्णायते करमिति" च पुरा० । "असौ वावादित्योऽग्निर्दिशोऽङ्गारा" इति छा०उ० । "अङ्गारे भुक्तवज्जने" इति स्मृतिः । "अङ्गिरा अङ्गार" इति यजु० । "येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति" ऐत० ब्रा० । भौमग्रहे पु० रक्तवर्णे न० तद्वति त्रि० । पाशा०यत् अङ्गार्या स्त्री तत्समूहे ।

**अङ्गारक** अस्त्री अङ्गार+स्वार्थे कन् । अङ्गारे "अङ्गारकस्तथान्याश्चेति" पुरा० । "अष्टावङ्गारके तथेति" ज्योतिषम् । "अङ्गारके कुमारञ्च बुधे नारायणं तथेति" पुरा० । अस्य चारो यथा

"यद्युदयर्क्षाद्वक्रं करोति नवमाष्टमसप्तमर्क्षेषु । तदङ्गकुष्णमुदये पीडाकरमग्निवार्त्तानाम् ॥ द्वादशदशमैकादशनक्षत्राद्वक्रितः कुजोऽश्रुमुखम् । दूषयति रसानुदये करोति रोगाननष्टिं च ॥ व्यालं त्रयोदशाच्चतुर्दशाद्वा विपच्यतेऽस्तमये । दंष्ट्रिव्यालमृगेभ्यः करोति पीडां सुभिक्षं च ॥ रुधिराननमिति वक्रं पञ्चदशात् षोडशाच्च विनिवृत्ते तत्कालं मुखरोगं सभयं च सुभिक्षमावहति ॥ असिमुषलं सप्तदशादष्टादशतोऽपि वा तदनु वक्रे । दस्युगणेभ्यः पीडां करोत्यवृष्टिं सशस्त्रभयम् ॥ भाग्यार्यमोदितो यदि निवर्त्तते वैश्वदेवते भौमः । प्राजापत्येऽस्तमितस्त्रीनपि लोकान्निपीडयति ॥ श्रवणोदितस्य वक्रं पुष्ये मूर्द्धाभिषिक्तपीडाकृत् । यस्मिन् ऋक्षेऽभ्युदितस्तद्दिग्व्यूहान् जनान् हन्ति ॥ मध्येन यदि मघानां गतागतं लोहितः करोति ततः । पाण्ड्यो नृपो विनश्यति शस्त्रोद्योगाद्भयमवृष्टिः ॥ भित्त्वा मघां विशाखां भिन्दन् भौमः करोति दुर्भिक्षम् । मरकं करोति घोरं यदि भित्त्वा रोहिणीं याति ॥ दक्षिणतो रोहिण्याश्चरन् महीजोऽर्घवृष्टिनिग्रहकृत् । धूमायन् सशिखो वा विनिहन्यात् पारियात्रस्थान् ॥ प्राजापत्ये श्रवणे मूले तिसृषूत्तरासु शाक्रे च । विचरन् घननिवहानामुपघातकरः क्षमातनयः ॥ चारोदयाः प्रशस्ताः श्रवणमघादित्यमूलहस्तेषु । एकपदाश्विविशाखाप्राजापत्येषु च कुजस्य ॥ विपुलविमलमूर्त्तिः किंशुकाशोकवर्णः स्फुटरुचिरमयूखस्तप्तताम्रप्रभाभः । विचरति यदि मार्गं चोत्तरं मेदिनीजः शुभकृदवनिपानां हार्दिदश्च प्रजानाम् ॥" इति बृहत्संहिता ।

तस्य भक्तिदेशादि ग्रहभक्त्यध्याये तत्रैवोक्तं यथा

"शोणस्य नर्मदाया भीमरथायाश्च पश्चिमार्द्धस्थाः । निर्विन्ध्या वेत्रवती शिप्रा गोदावरी वेणा ॥ मन्दाकिनी पयोष्णी महानदी सिन्धुमालतीपाराः । उत्तरपाण्ड्यमहेन्द्राद्रिविन्ध्यमलयोपगाश्चोलाः ॥ द्रविडविदेहान्ध्राश्मकभासापुरकौङ्कणाः समन्त्रिषकाः । कुन्तलकेरलदण्डककान्तिपुरम्लेच्छसङ्करजाः ॥ नासिक्यभोगवर्द्धनविराटविन्ध्याद्रिपार्श्वगा देशाः । ये च पिबन्ति सुतोयां तापीं ये चापि गोमतीसलिलम् ॥ नागरकृषिकरपारतहुताशनाजीविशस्त्रवार्त्तानाम् । आटविकदुर्गकर्वटवधकनृशंसावलिप्तानाम् ॥ नरपतिकुमारकुञ्जरदाम्भिकडिम्भाभिघातपशुपानाम् । रक्तफलकुसुमविद्रुमचमूपगुडमद्यतीक्ष्णानाम् ॥ कोशभवनाग्निहोत्रिकधात्वाकरशाक्यभिक्षुचौराणाम् । शठदीर्घवैरबह्वाशिनां च वसुधासुतोऽधिपतिः" इति । अङ्गारमिव इवार्थे कन् । रक्तवर्णत्वात् कुरण्टकवृक्षे, (भीमराज) इति ख्याते-भृङ्गराजवृक्षे च पु० । अल्पार्थे कन् । विस्फुलिङ्ग इति विख्याते-अङ्गारक्षुद्रांशे न० । "दूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी । बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी । आरनालाढकेनैव तैलप्रस्थं विपाचयेत् । तैलमङ्गारकं नाम सर्वज्वरविनाशनमिति" चक्रदत्तवैद्यकोक्ते तैलभेदे न० । [विक्रयार्थमङ्गारकारके ।

**अङ्गारकारिन्** त्रि० अङ्गारं करोति कृ-णिनि । काष्ठं दग्ध्वा

**अङ्गारकमणि** पु० अङ्गारकस्य प्रियः मणिः । प्रवाले तस्य च रक्तवर्णत्वात् तत्प्रियत्वं "माणिक्यं भास्करे देयं चन्द्रे मुक्तां प्रदापयेत् प्रवालञ्च कुजे दद्या"दित्यादिना तत्कृताशुभप्रतीकाराय प्रवालदानोक्तेः तत्प्रियत्वम् ।

**अङ्गारकुष्ठक** पु० अङ्गारवर्णं कुष्ठमिव कन् । हिलावलीनामकौषधिभेदे ।

**अङ्गारधानी** स्त्री अङ्गाराणि धीयन्तेऽस्याम् धा-आधारे ल्युट् ङीप् । (आङठा) इति ख्याते अङ्गाराधानपात्राम् स्वार्थे कन् । अङ्गारधानिकाप्यत्रैव ।

**अङ्गारपरिपाचित** न० अङ्गारेण (ज्वलदग्निव्याप्तकाष्ठखण्डेन) परिपाच्यते परि+पच-स्वार्थे णिच्-क्त ३त० । (कवाव) इति प्रसिद्धे-पक्वमांसादौ ।

**अङ्गशुद्धि** स्त्री शुध्यतेऽनया इति शुध-करणे क्तिन् ६त० । स्नानादौ देहसंस्कारसाधने । भावे क्तिन् । देहशोधने ।

**अङ्गस्** न० अनज-असुन् कुत्वञ्च । पक्षिणि इत्युज्ज्वलदत्तः ।

**अङ्गसंस्कार** पु० अङ्गं संस्क्रियतेऽनेन सम्-कृ+करणे घञ् सुट् । देहसंशोधनादिसंस्कारकारणे स्नाने गोधूमचूर्णादिनाङ्गमर्द्दने च । भावे घञ् ६त० । अङ्गस्य संस्कारे विलेपनादौ । अङ्गं संस्करोति सम्+कृ-कर्त्तरि अण् ६त० । देहसंस्कारके नरमात्रे त्रि० ।

**अङ्गसंस्क्रिया** स्त्री ६त० । अङ्गसंस्कारे ।

**अङ्गस्पर्श** पु० अङ्गस्य अशौचिदेहस्य इतरैः स्पर्शसद्योग्यता । इतरकर्त्तृकस्पर्शयोग्यतायाम् । अशौचिनाम् देहस्पर्शनिषेधे "चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं द्विजैः । ततः सञ्चयनादूर्द्धमङ्गस्पर्शो विधीयते" इति दक्षस्मृतौ चतुर्थदिवसे अशौचिदेहस्य स्पर्शयोग्यताभिधानात् चतुर्थदिवसे देहस्पर्शयोग्यता । एतच्च "यावद्वोत्तमसंस्पृश्य"मित्याद्युक्तव्यतिरिक्तविषयं महागुरुनिपाते पुत्रादिभिन्नविषयञ्च तच्चाङ्गास्पृश्यत्वशब्दे वक्ष्यते ।

**अङ्गहार** पु० अङ्गं ह्रियते चाल्यतेऽत्र हृ-आधारे घञ् ६त० । अङ्गुल्यादिविन्यासभेदेन नृत्ये । तच्चाङ्गविक्षेपशब्दे दर्शितम् । भावे घञ् ६त० । अङ्गस्य हरणमात्रे पु० ।

**अङ्गहानि** स्त्री अङ्गस्य प्रधानोपकारिणः कर्म्मणः हानिः प्रधानकर्म्मोपयोगिनः गुणादेरन्यथा सम्पादनेऽसम्पादने च । "देशाद् कमात् प्रमादाद्वा यदङ्गहानिः प्रजायते । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति" पुरा० ।

**अङ्गहारि** पु० अङ्गानि ह्रियन्ते अत्र हृ-बा० णि । अङ्गहारार्थे स्थले रङ्गभूमौ ।

**अङ्गहीन** त्रि० अङ्गेन हीनम् । साधनीभूतद्रव्यकालाद्यङ्गकरणशून्ये कर्म्मणि "अङ्गहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत् । तत् सर्व्वं पूर्णतामेतु भास्करस्य प्रसादतः" इति स्मृतिः । "अङ्गहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजम् । यजमानमदाक्षिण्यो नास्ति यज्ञसमो रिपुः" इति पुरा० । विकले, छिन्नदेहे च त्रि० । अङ्गेन देहेन हीनः रहितः । कामे पु० । तस्यानङ्गत्वात्तत्त्वम् । अङ्गं हीनं यथोचितप्रमाणादल्पं यस्य । हस्तपादाद्यवयवस्य यथोचितपरिमाणाभावयुक्ते त्रि० । "धान्यचौरोऽङ्गहीनस्त्वमातिरेक्यस्तु मिश्रक इति" मनुः । वा परनिपातेऽहीनाङ्गोऽप्यत्रार्थे । अङ्गस्य हीनतायां कारणमुक्तं सुश्रुते । "द्विहृदयान्तु नारीं दौहृदिनीमाचक्षते । दौहृदविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति । तस्मात् सा यद्यदिच्छेत्तत्तस्यै दापयेत् । लब्धदौहृदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति ॥ भवन्ति चात्र ॥ इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी । गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् । सा प्राप्तदौहृदा पुत्रं जनयेत गुणान्वितम् । अलब्धदौहृदा गर्भे लभेतात्मनि वा भयम् ॥ येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना । जायेत तत् सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये" इति ॥

**अङ्गाङ्गिभावः** पु० अङ्गस्य अङ्गिनश्च भावः । गौणमुख्यभावे उपकार्य्योपकारकभावे च यथा दर्शादीन् प्रति प्रयाजादीनामङ्गत्वं, प्रयाजदीन् प्रति दर्शादीनामङ्गित्वम् । "अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यमन्वय" इति च मीमा० ।

**अङ्गाधिप** पु० अङ्गस्य देशभेदस्य अधिपः । अङ्गदेशाधिपे प्रसिद्धतया कर्णे तस्य तद्राज्यप्राप्तिः भारते आ० । "यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति । तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ॥ वैशम्पायन उवाच । ततस्तस्मिन् क्षणे कर्णः सलाजकुसुमैर्घटैः । काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः । अभिषिक्तोऽङ्गराज्ये स श्रिया युक्तो महाबल इति स च देशः मगधदेशस्थगिरिव्रजात् सन्निकृष्टः पूर्व्वस्यां दिशि स्थितः । सभापर्व्वणि मगधदेशवर्णने गिरिव्रजसुपवर्ण्य "अङ्गवङ्गादयश्चैव राजानश्च महाबलाः । गौतमाश्रममभ्येत्य रमन्ते स्म पुरार्जुनेति" अङ्गवङ्गनृपाणां सन्निकृष्टत्वमुक्तम् । भीमप्राच्यदिग्विजये च "विजित्य युधि कौन्तेयो मागधानभ्ययाद्बली ॥ दण्डञ्च दण्डधारञ्च विजित्य पृथिवीपतीन् । तैरेव सहितः सर्व्वैर्गिरिव्रजमुपाद्रवत् । जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह । तैरेव सहितः सर्व्वैः कर्णमभ्यद्रवद्बली ॥ स कम्पयन्निव महीं बलेन चतुरङ्गिणा । युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ स कर्णं युधि निर्ज्जित्य वशे कृत्वा च भारत । ततो विजिग्ये बलवान् राज्ञः पर्व्वतवासिनः ॥ अथ मोदागिरौ चैव राजानं बलवत्तरम् । पाण्डवो बाहुवीर्य्येण निजघान महामृधे इति" ॥ एवञ्च गिरिव्रजात् पूर्व्वं मोदागिरेः पश्चात् स देशः । बृहत्संहितायान्तु तस्य भारतवर्षे आग्नेय्यां स्थितिरुक्ता । यथा "आग्नेय्यां दिशि कोशल कलिङ्गवङ्गोपवङ्गजठराङ्गा" इति । अङ्गस्य ज्योतिःशास्त्रोक्तलग्नस्य अधिपः । लग्नाधिपे पु० । "अङ्गाधिपे वलिनि सर्व्वविभूतिसम्पदिति" ज्योति० ।

**अङ्गाधीश** पु० ६त० । अङ्गदेशाधिपे कर्णे लग्नाधिपे च "अङ्गाधीशः स्वगेहे बुधगुरुकविभिः संयुतः" इति जातकम् । अङ्गाधीश्वरादयोऽप्यत्र ।

**अङ्गार** अस्त्री० अङ्ग-आरन् । अर्द्धदग्धे-अग्निसंक्रान्ते अग्निमुक्ते वा (आङ्गार) इति प्रसिद्धे काष्ठखण्डे । "घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमानिति" "ज्वलदङ्गारसन्निभमिति" "अङ्गारं शतधौतेऽपि मालिन्यं नैव गच्छतीति" । "उष्णो दहति चाङ्गारः शीतः कृष्णायते करमिति" च पुरा० । "असौ वावादित्योऽग्निर्दिशोऽङ्गाराः" इति श०ब्रा० । "व्यङ्गारे भुक्तवज्जने" इति स्मृतिः । "अङ्गिरा अङ्गार" इति यजु० । "येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति" ऐत० ब्रा० । भौमग्रहे पु० रक्तवर्णे न०तद्वति त्रि० । पाणा०यत् अङ्गार्या स्त्री तत्समूहे ।

**अङ्गारक** अस्त्री अङ्गार+स्वार्थे कन् । अङ्गारे "अङ्गारकस्तवन्याच्चेति" पुरा० । "अष्टावङ्गारके तथेति" ज्योतिषम् । "अङ्गारके कुमारञ्च बुधे नारायणं तथेति" पुरा० । अस्य चारो यथा

"यद्युदयर्क्षाद्वक्रं करोति नवमाष्टमसप्तमर्क्षेषु । तद्वक्रमुष्णमुदये पीडाकरमग्निवार्त्तानाम् ॥ द्वादशदशमैकादशनक्षत्राद्वक्रितः कुजोऽस्रुमुखम् । दूषयति रसानुदये करोति रोगानवृष्टिं च ॥ व्यालं त्रयोदशर्क्षाच्चतुर्दशाद्वा विपच्यतेऽस्तमये । दंष्ट्रिव्यालमृगेभ्यः करोति पीडां सुभिक्षं च ॥ रुधिराननमिति वक्रं पञ्चदशात् षोडशाच्च विनिवृत्ते तत्कालं मुखरोगं सभयं च सुभिक्षमावहति ॥ असिमुषलं सप्तदशादष्टादशतोऽपि वा तदनु वक्रे । दस्युगणेभ्यः पीडां करोत्यवृष्टिं सशस्त्रभयम् ॥ भाग्यार्यम्णोदितो यदि निवर्त्तते वैश्वदेवते भौमः । प्राजापत्येऽस्तमितस्त्रीनपि लोकान्निपीडयति ॥ श्रवणोदितस्य वक्रं पुष्ये मूर्द्धाभिषिक्तपीडाकृत् । यस्मिन् ऋक्षेऽभ्युदितस्तद्दिग्व्यूहान् जनान् हन्ति ॥ मध्येन यदि मघानां गतागतं लोहितः करोति ततः । पाण्ड्यो नृपो विनश्यति शस्त्रोद्योगाद्भयमवृष्टिः ॥ भित्त्वा मघां विशाखां भिन्दन् भौमः करोति दुर्भिक्षम् । मरकं करोति घोरं यदि भित्त्वा रोहिणीं याति ॥ दक्षिणतो रोहिण्याश्चरन् महीजोऽर्घवृष्टिनिग्रहकृत् । धूमायन् सशिखो वा विनिहन्यात् पारियात्रस्थान् ॥ प्राजापत्ये श्रवणे मूले तिसृषूत्तरासु शाक्रे च । विचरन् घननिवहानामुपघातकरः क्षमातनयः ॥ चारोदयाः प्रशस्ताः श्रवणमघादित्यमूलहस्तेषु । एकपदाश्विविशाखाप्राजापत्येषु च कुजस्य ॥ विपुलविमलमूर्त्तिः किंशुकाशोकवर्णः स्फुटरुचिरमयूखस्तप्तताम्रप्रभाभः । विचरति यदि मार्गं चोत्तरं मेदिनीजः शुभकृदवनिपानां हार्दिदश्च प्रजानाम् ॥" इति बृहत्संहिता ।

तस्य भक्तिदेशादि ग्रहभक्त्यध्याये तत्रैवोक्तं यथा

"शोणस्य नर्मदाया भीमरथायाश्च पश्चिमार्द्धस्थाः । निर्विन्ध्या वेत्रवती सिप्रा गोदावरी वेणा ॥ मन्दाकिनी पयोष्णी महानदी सिन्धुमालतीपाराः । उत्तरपाण्ड्यमहेन्द्राद्रिविन्ध्यमलयोपगाश्चोलाः ॥ द्रविडविदेहान्ध्राश्मकभासापुरकौङ्कणाः समन्त्रिषिकाः । कुन्तलकेरलदण्डककान्तिपुरम्लेच्छसङ्करजाः ॥ नासिक्यभोगवर्द्धनविराटविन्ध्याद्रिपार्श्वगा देशाः । ये च पिबन्ति सुतोयां तापीं ये चापि गोमतीसलिलम् ॥ नागरकृषिकरपारतहुताशनाजीविशस्त्रवार्त्तानाम् । आटविकदुर्गकर्वटवधकनृशंसावलिप्तानाम् ॥ नरपतिकुमारकुञ्जरदाम्भिकडिम्भाभिघातपशुपानाम् । रक्तफलकुसुमविद्रुमचमूपगुडमद्यतीक्ष्णानाम् ॥ कोशभवनाग्निहोत्रिकधात्वाकरशाक्यभिक्षुचौराणाम् । शठदीर्घवैरबह्वाशिनां च वसुधासुतोऽधिपतिः" इति । अङ्गारमिव इवार्थे कन् । रक्तवर्णत्वात् कुरण्टकवृक्षे, (भीमराज) इति ख्याते-भृङ्गराजवृक्षे च पु० । अल्पार्थे कन् । विस्फुलिङ्ग इति विख्याते-अङ्गारक्षुद्रांशे न० । "दूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी । बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी । आरनालाढकेनैव तैलप्रस्थं विपाचयेत् । तैलमङ्गारकं नाम सर्वज्वरविनाशनमिति" चक्रदत्तवैद्यकोक्ते तैलभेदे न० । [विक्रयार्थमङ्गारकारके ।

**अङ्गारकारिन्** त्रि० अङ्गारं करोति कृ-णिनि । काष्ठं दग्ध्वा

**अङ्गारकमणि** पु० अङ्गारकस्य प्रियः मणिः । प्रवाले तस्य च रक्तवर्णत्वात् तत्प्रियत्वं "माणिक्यं भास्करे देयं चन्द्रे मुक्तां प्रदापयेत् प्रवालञ्च कुजे दद्या"दित्यादिना तत्कृताशुभप्रतीकाराय प्रवालदानोक्तेः तत्प्रियत्वम् ।

**अङ्गारकुष्ठक** पु० अङ्गारवर्णं कुष्ठमिव कन् । हितावलीनामकौषधिभेदे ।

**अङ्गारधानी** स्त्री अङ्गाराणि धीयन्तेऽस्याम् धा-आधारे ल्युट् ङीप् । ( आङ्टा ) इति ख्याते अङ्गाराधानपात्राम् स्वार्थे कन् । अङ्गारधानिकाप्यत्रैव ।

**अङ्गारपरिपाचित** न० अङ्गारेण (ज्वलदग्निव्याप्तकाष्ठखण्डेन) परिपाच्यते परि+पच-स्वार्थे णिच्-क्त ३त० । (कवाब) इति प्रसिद्धे-पक्वमांसादौ ।

**अङ्गारपर्ण** न॰ अङ्गारमिव पर्णमस्य। वनभेदे। अस्त्यर्थे अच्। तत्स्वामिनि चित्ररथगन्धर्व्वे पु॰। भारते चैत्ररथे प॰। चित्ररथगन्धर्व्वस्य अर्ज्जुनादीन् प्रति उक्तिः। "आराच्चिरत मा मह्यं समीपमुपसर्पत। कस्मान्मां नाभिजानीत प्राप्तं भागीरथीजलम्। अङ्गारपर्णं गन्धर्व्वं वित्त मां स्वबलाश्रयम्। अहं मानी तथेर्षुश्च कुवेरस्य प्रियः सखा। अङ्गारपर्णमित्येवं ख्यातं चेदं वनं ममेति"। [ख्यातपात्रे।

**अङ्गारपात्री** स्त्री ६त॰ अङ्गारधान्याम् (आङ्टा) इति

**अङ्गारपुष्प** पु॰ अङ्गारमिव लोहितवर्णं पुष्पं यस्य ब॰। (जियापुति) इति ख्याते इङ्गुदीवृक्षे।

**अङ्गारमञ्जरी** स्त्री अङ्गारा रक्तवर्णा मञ्जरी ब॰ समासान्तकबभावाच्छस्वत्वे संज्ञात्वात्। (करमचा) इति ख्याते रक्तकरञ्जवृक्षे।

**अङ्गारवल्ली** स्त्री अङ्गारा इव रक्तफलत्वात् रक्ता वल्ली कर्म्म॰। रक्तवर्णफलवत्त्वात् (कुँच) इति प्रसिद्धायाम् गुञ्जालतायां करञ्जवृक्षे च। स्वार्थे कन्। अङ्गारवल्लिका तत्रैव।

**अङ्गारवेणु** पु॰ अङ्गारवर्णोवेणुः। वंशभेदे। तज्जाते ठक् अनुशतादि॰ द्विपदवृद्धिः। आङ्गारवैणुकं, तज्जाते त्रि॰।

**अङ्गारशकटी** स्त्री शक्नोति वोढुं शकटम्, अल्पं शकटं, शकटी, षष्ठ्यादिवत् अल्पार्थे ङीप् अङ्गारस्य शकटी६त॰। (आङ्टा) (धुनाचीति) च प्रसिद्धे अङ्गाराधारे पात्रभेदे।

**अङ्गारावक्षेपण** न॰ अङ्गारमवक्षिप्यतेऽनेन करणे ल्युट्। अङ्गारक्षेपणसाधने पात्रे। भावे ल्युट्। अङ्गारक्षेपणे।

**अङ्गारि** स्त्री अङ्गार+मत्वर्थे ठन् पृषोदरादित्वात् कलोपः। अङ्गाराधारे (आङ्टा) इति प्रसिद्धे पात्रभेदे।

**अङ्गारिका** स्त्री अङ्गारं विद्यतेऽस्याः अङ्गार+मत्वर्थे ठन् टाप्। (आङ्टा) इति ख्याते अङ्गारपात्रे।

**अङ्गारिणी** स्त्री॰ अङ्गार+मत्वर्थे इनि। अङ्गारधानिकायाम् (आङ्टा इति) ख्याते पात्रे। अङ्गारवति त्रि॰।

**अङ्गारित** पु॰ अङ्गारमिवाचरतीति अङ्गार+क्विप् ततः कर्त्तरि क्त। पलाशकलिकायाम्। अङ्गारं करोतीत्यर्थे णिचि कर्म्मणि क्त, अङ्गार+तारका॰ इतच् वा। दग्धप्राये काष्ठादौ त्रि॰। [अङ्गारप्रकृतिभूते काष्ठादौ।

**अङ्गारीय** त्रि॰ अङ्गारेभ्य एतानि प्रकृतिरूपार्थे अङ्गार+छ।

**अङ्गिका** स्त्री अङ्गम् आच्छादयति अङ्ग+इनि–स्वार्थे कन् स्त्रियां टाप्। (आङ्राखा) इति प्रसिद्धे कञ्चुकवस्त्रे।

**अङ्गिन्** त्रि॰ अङ्ग+इनि। अवयवविशिष्टे, देहवति च। "येनाङ्गविकार इति" सूत्रस्य "येनाङ्गेन विकृतेनाङ्गिनो विकार इति" वृत्तिः। अङ्गिनं नाङ्गबाधेन हन्यादपि कदाचनेति" मीमा॰। प्रधाने, "एकएव भवेदङ्गी शृङ्गारो वीर एव वेति" "ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मन इति" च साहि॰।

**अङ्गिरस्** पु॰ अङ्गति अगि-गतौ असि इरुट्। ब्रह्मणोमानसपुत्रे स्वनामख्याते मुनिभेदे। भारते वन॰ मार्क॰ "ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः" इति
"त्वमग्ने प्रथमोऽङ्गिरा ऋषिर्देवानामिति" श्रुतौ अग्नेरङ्गिरस्त्वमुक्तं तत्कथा भारते वन॰ मार्क॰।
"यदा क्रुद्धो हुतवहस्तपस्तप्तुं वनं गतः॥ तदा च भगवानग्निः स्वयमेवाङ्गिराभवत्। सन्तापयंश्च प्रभया नाशयंस्तिमिराणि च॥ पुराङ्गिरा महाबाहो! चचार तप उत्तमम्। आश्रमस्थो महाभागो हव्यवाहं विशेषयन्। तथा स भूत्वा तु तदा जगत् सर्वं व्यकाशयत्॥ तपश्चरंस्तु हुतभुक् सन्तप्तस्य तेजसा। भृशं ग्लानश्च तेजस्वी न स किञ्चित् प्रजज्ञिवान्॥ अथ सञ्चिन्तयामास भगवान् हव्यवाहनः। अन्योऽग्निरिह लोकानां ब्रह्मणा संप्रकल्पितः॥ अग्नित्वं विप्रनष्टं हि तप्यमानस्य मे तपः। कथमग्निः पुनरहं भवेयमिति चिन्त्य सः। अपश्यदग्निवल्लोकांस्तापयन्तं महामुनिम्॥ सोऽपासर्पच्छनैर्भीतस्तमुवाच तदाङ्गिराः। शीघ्रमेव भवस्वाग्निस्त्वं पुनर्लोकभावनः। विज्ञातश्चासि लोकेषु त्रिषु संस्थानचारिषु॥ त्वमग्निः प्रथमं सृष्टो ब्रह्मणा तिमिरापहः। स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमोनुद!॥ अग्निरुवाच। नष्टकीर्त्तिरहं लोके भवान् जातो हुताशनः। भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः॥ निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव। भविष्यामि द्वितीयोऽहं प्राजापत्यक एव च॥ अङ्गिरा उवाच। कुरु पुण्यं प्रजास्वर्ग्यं भवाग्निस्तिमिरापहः। मां तु देव! कुरुष्वाग्ने! प्रथमं पुत्रमञ्जसा॥ मार्कण्डेय उवाच। तच्छ्रुत्वाङ्गिरसो वाक्यं जातवेदास्तथाकरोत्। राजन् वृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः इति"॥
तस्य च यथा अग्निपुत्रत्वं येन येन क्रमेण च आविर्भावस्तथोक्तमग्निशब्दे। अग्नौ च। "शिवो भव प्राजापत्यो मानुषीभ्यामङ्गिरः इति य॰ अङ्गिरोभिः ऋषिभिः सम्पादितत्वात् अङ्गशोभवाद्वा अङ्गिरा अग्निरूपः

हे अङ्गिरः! अग्निरूपेति” वेददीपः। अङ्गिरसः गोत्रापत्यम् शिवा० अण्। आङ्गिरसः बहुषु लुक्। अङ्गिरसस्तद्गोत्रापत्ये ब० व०। “सर्वे सान्ना अदन्ताः स्युः” इत्युक्तेः पु० सलोपे अङ्गिरशब्दोऽप्यत्र, “येनानवग्वे अङ्गिरे” इति वेदः। मन्वत्रिविष्णुहारीत याज्ञवल्क्योशनोऽङ्गिरा इति याज्ञ०। “एवं त्यक्त्वा शरीरं तु परमे तपसि स्थितः। भृग्वङ्गिरादिभिर्युक्तमप्यायितस्तदेति” भार०।

**अङ्गिरस्वत्** पु० अङ्गिरा अग्निः सहायत्वेन विद्यतेऽस्य मतुप् मस्य वः सान्तत्वात् न पदत्वम्। वायौ “यमाय त्वाङ्गिरस्वते पितृमते स्वाहेति” यजुः। “अङ्गिरोयुक्ताय वातायेति” वेददीपः।

**अङ्गीकार** पु० अनङ्गम् अस्योपकरणं अस्वकीयम् अङ्गं क्रियते अङ्ग+च्वि+कृ–घञ्। स्वीकारे अभ्युपगमे। “अङ्गीकुरु दृशोर्भङ्गीमङ्गीभवतु मन्मथ” इति “नवाङ्गी कुरङ्गीदृगङ्गीकरोत्विति” जगन्नाथः। “अङ्गीकुर्वन् स्वमाहात्म्यं भयं जज्वाल पावक” इति पुरा०।

**अङ्गीकृत** त्रि० अङ्गीति च्व्यन्तं तत्पूर्वकात् कृञः क्त। स्वीकृते “अङ्गीकृतं सुकृतिनः परिपालयन्ती”तिचौरपञ्चाशिका। “नाङ्गीकृतमुत्सृजन्तीति” नीतिसा०।

**अङ्गु** पु० अगि–उन्। पाणौ हस्ते “अङ्गुः”।

**अङ्गुरि(री)** स्त्री अङ्ग–उलि–रलयोरैक्य स्मरणात् रत्वम्। (आङ्गुल) इति प्रसिद्धायाम् हस्तपादशाखायाम् वा ङीप्। अत्रैवार्थे “अङ्गुरीवोरगक्षतेति” रघुः।

**अङ्गुरीय** न० अङ्गुरौ भवम् अङ्गुरि+छ बाहमूलादित्वात् वा लत्वाभावः। अङ्गुलिभूषणे (आङ्गुटीति) प्रसिद्धे।

**अङ्गुरीयक** न० अङ्गुरीय+स्वार्थे कन्। अङ्गुलिभूषणे (आङ्गुटीति) ख्याते भूषणभेदे।

**अङ्गुल** पु० अङ्ग–उल। हस्तपदशाखायाम् (आंगुल) इति ख्यातायाम्। वात्स्यायनमुनौ च। “यवोदरैरङ्गुलमष्टसंख्यैरिति” भास्कराचार्य्योक्ते अष्टयवोदरपरिमाणे तु न०। अङ्गौ पाणौ लीयते वा ड। अङ्गुले न०। “समन्तादङ्गुलोत्सेधं हस्तमात्रं तु स्थण्डिलमिति” पुरा०।

**अङ्गुलि** स्त्री अङ्ग–उलि। हस्तपदशाखायाम् (आङ्गुल) इति ख्यातायाम्। अङ्गुलिं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे” इति स्मृतिः (हात शुंडा) इति ख्याते गजकर्णिकाग्रे, गजशुण्डाग्रे च। पुंस्त्वमपि “संहताधरोत्तमङ्गुलिनेति” शकु०।

**अङ्गुलितोरण** न० अङ्गुलेः तोरणमिव कृतम्। चन्दनादिद्वारा कृते ललाटस्थार्द्धचन्द्राकृतितिलके।

**अङ्गुलित्र** न० अङ्गुलिं त्रायते त्रै–क इत०। (चामाटीति) प्रसिद्धे ज्याकर्षणकृतखेदवारणार्थम् अङ्गुलिबद्धे चर्म्मणि “बद्धगोधाङ्गुलित्रे” इति भट्टिः।

**अङ्गुलित्राण** अङ्गुलिस्त्रायतेऽनेन त्रै–क ई त०। (चामाटीति) प्रसिद्धे ज्याकर्षणकृतखेदनिवारणार्थम् अङ्गुलिबद्धे चर्म्मणि।

**अङ्गुलिमुद्रा** स्त्री अङ्गुलेः मुदं राति रा–क इत०। धारयितुर्नामाक्षरमुद्राचिह्निते (आङ्गुटीति) प्रसिद्धे अङ्गुलीभूषणे। “उपहितस्मृतिरङ्गुलिमुद्रयेति” शकु०।

**अङ्गुलिमोटन** न० अङ्गुल्योर्मोटनं मर्दनं यत्र ब०। अङ्गुलिद्वयमर्दनजाते (तुड़ि) इति प्रसिद्धे शब्दे।

**अङ्गुलिषङ्गा** स्त्री अङ्गुलौ सङ्गो यस्याः षत्वम् ७ब०। (याउ) इति प्रसिद्धे अङ्गुलिसंश्लेषकारके यवागूद्रव्ये।

**अङ्गुलिसंज्ञा** स्त्री अङ्गुल्या संज्ञा सङ्केतज्ञापनम्। अङ्गुलिचेष्टाभेदेन अभीष्टकर्म्मणि द्वेषे सङ्केतविशेषे “मुखार्पितैकाङ्गुलिसंज्ञयैवेति” कुमा०।

**अङ्गुलिसन्देश** पु० अङ्गुल्या अङ्गुलिध्वनिना सन्दिश्यते सम्+दिश–भावे घञ्। अङ्गुलिध्वनिद्वारा संज्ञादाने।

**अङ्गुलिस्फोटन** न० अङ्गुल्योः स्फोटनं ताड़नं यत्र ७ब०। (तुड़ि) इति प्रसिद्धे अङ्गुलिद्वयमर्दनजाते शब्दे इत०। अङ्गुलिस्फोटनमात्रे च।

**अङ्गुली** स्त्री अङ्गुलि+वा ङीप्। अङ्गुलिशब्दार्थे “च्युतमपि लक्ष्यपदं यदङ्गुलीष्विति” शकु० “तर्जयन्नङ्गुलीभिरिति”।

**अङ्गुलीपञ्चक** न० अङ्गुलीनां पञ्चकम् पञ्चसंख्या। हस्तस्थानामङ्गुलीनां समुदाये ताश्च अङ्गुष्ठतर्जनीमध्यमानामिका कनिष्ठाः।

**अङ्गुलीय** न० अङ्गुरीयकवत् वा रत्वाभावः। (आंगुटीति) प्रसिद्धे अङ्गुलिभूषणे। “तव सुचरितमङ्गुलीय! नूनमिति” शकु०। इवार्थे कन्। तत्तुल्यपरिणाहवत्त्वात्तलवे न०।

**अङ्गुलीसम्भूत** पु० अङ्गुल्यां सम्भूतः ७त०। नखे। अङ्गुलीसम्भूतमात्रे त्रि०।

**अङ्गुल्यादि** पु० इब०। पाणिन्युक्ते इवार्थे विहितकनुप्रत्ययनिमित्ते शब्दगणसमूहे। स च गणः “अङ्गुलि भरुज बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि कपि मुनिरुह खल उदश्वित् गोणी उरस् कुलिश इति। अङ्गुलीव+कन् अङ्गुलीयकमित्यादिः।

**अङ्गुष्ठ** पु० अङ्गौ पाणौ प्राधान्येन तिष्ठति स्था–क ७त०

त्वम् । वृद्धाङ्गुलौ । "अम्बाम्बेति"स्थलेऽङ्गुष्ठशब्दप्रयोगात् अङ्गुष्ठशब्दः ह्रस्ववाचीतिज्ञापितम् । "अङ्गुष्ठोदरमध्ये तु यवो यस्य विराजते" इति सामु० ।

**अङ्गुष्ठमात्र** त्रि० अङ्गुष्ठ+परिमाणार्थे मात्रच् । अङ्गुष्ठमध्यपर्वपरिमिते । "अङ्गुष्ठमात्रोऽन्तरात्मा" इति श्रुतिः । "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः" इति भारतम् । "अङ्गुष्ठाङ्गुष्ठमानन्तु यत्र यत्रोपदिश्यते । तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदेति" काला० ।

**अङ्गुष** पु० अगि-उषन् । नकुले बाणे च ।

**अङ्हस्** न०अङ्हते नरकमनेन अघि-गतौ असुन् । पापे "युष्मच्छासनलङ्घनाङ्हसि मया मग्नेन नाम स्थितमिति" वेणी० ।

**अङ्हारि** पु० ऋ-इण् ३त०ष्ठ० । दोषप्रियीवे । "कविरसि "अङ्हारिरसीति" यजु० । "अङ्हारिर्दोषप्रियीव इति" वेददीपः ।

**अङ्घ्रि** पु० अधिगतौ-क्रिन् । पादे, वृक्षमूले च ।

**अङ्घ्रि** पु० अघि-गतौ करणे क्रिन् । चरणे, वृक्षमूले, "अधारि पद्मेषु तदङ्घ्रिणा घृणेति नै० ।अङ्घ्रिपः (पादपः) छन्दसां चतुर्थभागे च । "प्रथमाङ्घ्रिसमोयस्येति" वृत्त० ।

**अङ्घ्रिप** पु० अङ्घ्रिणा मूलेन पिबति सिक्तजलम् पा-क ३त० । वृक्षमात्रे ।

**अङ्घ्रिपर्णिका** स्त्री अङ्घ्रौ मूले तदारभ्य वा पर्णमस्याः जातौ ङीप् स्वार्थे कन् । सिंहपुच्छाकारपुष्पवति (चाकुलिया) इति ख्याते वृक्षे । काभावे अङ्घ्रिपर्णीत्यपि तत्रैव ।

**अङ्घ्रिवल्लिका** स्त्री अङ्घ्रेरारभ्य वल्लीव पर्णवत्त्वेन, ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति (चाकुलिया) इति प्रसिद्धे वृक्षे । काभावे । अङ्घ्रिवल्लीत्यपि तत्रैव ।

**अच** अविस्पष्टकथने गतौ च उभय० भ्वादि० सक० सेट् क्त्वा वेट् । अचति ते । आचीत् आचिष्ट । क्त अक्तः क्त्वा अचित्वा-अक्त्वा "स्वाहायज्ञमित्यक्ष्णो अचते" इति काला० । "अचते सङ्कोचयति" इति वेददीपः ।

**अच(अन्चु)** गतौ पूजायाञ्च प० सक० सेट् । तत्र अच इदित् ओदिच्च (अन्चु) अव्यक्तशब्दे च । अञ्चति आञ्चीत् अन्चु-गतौ अच्यात् पूजायामञ्च्यात् । क्त अक्तः पूजायामुभयोः अञ्चितः अचि-वर्त्तमाने क्त अञ्चितः । अन्चु-क्त्वा अञ्चित्वा-अक्त्वा अचि-अञ्चित्वा ।"अयमञ्चति पञ्चशरानुचर" इति सा० टी० । प्र+प्रकर्षे पूर्व्वदिक्कालवृत्तौ च प्राञ्चति प्राङ्(पूर्व्वकालः) प्राची (पूर्व्वा दिक्) परा+प्रतिगतौ, आभिमुख्याभावे, पश्चाद्भावे, बहिर्भावे च पराञ्चति (पराङ्गच्छति) पराङ् (बाह्यः) । अप+अपसरणे अपाञ्चति । सम्+सुन्दरगमने, यथोचितगमने च समञ्चति सम्यङ् । अनु+पश्चाद्गतौ । अन्वञ्चति अन्वङ् । उद्+ऊर्द्धगमने, उत्तरदिग्वृत्तौ च उदञ्चति (ऊर्द्ध्वं गच्छति) "उदञ्चद्रोमाञ्चमिति" उदङ् देशः उदीची (उत्तरा दिक्) । परि+समन्ताद्गतौ । पर्य्यञ्चति । प्रति+प्रतीपगतौ, पश्चाद्गतौ, पश्चाद्दर्शित्वे च प्रत्यञ्चति (प्रतीपं गच्छति) । प्रत्यङ्, प्रतीची (पश्चिमा दिक्) । आत्मनि व्याप्त्यर्थकप्रतिना योगात् प्रत्यक्शब्दः तस्य सर्व्वविषयव्यापकत्वात् प्रत्यक्त्वम् । नि+न्यूनीभावे न्यञ्चति न्यङ् न्यग्भावः न्यक्कारः । अव+अधोगतौ, दक्षिणदिग्वृत्तौ च । अवाञ्चति अवाङ् (अधोमुखः) अवाची (दक्षिणा दिक्) यथा च उत्तरदक्षिणयोः ऊर्द्धाधोभावस्तथा अवाक्शब्दे वक्ष्यते ।

**अच** गतौ पूजायाम् इदित् उभ० सक० सेट् क्त्वा वेट् । अञ्चति ते आञ्चीत् आञ्चिष्ट । क्त्वा अङ्क्त्वा-अञ्चित्वा । उपसर्गात् अनुचुवत् । "न्यञ्चते प्रत्यहं मोहो यथाचन्द्रकलि चारव" इति कवि० ।

**अचक्षुस्** त्रि० न०व० । मन्दनेत्रे, नेत्रहीने च । "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इवेति" श्रुतिः । न०त० । चक्षुर्भिन्ने न० ।

**अचतुर** त्रि० न सन्ति चत्वारि यत्र नि० अच्समा० । चतुःसंख्याशून्ये । चतुरोनिपुणः न०त० । तद्भिन्ने अपटौ त्रि० ।

**अचपल** त्रि० न चपलः । चापल्यविरोधिस्थैर्य्ययुक्ते ।

**अचर** त्रि० न चरति चलति-चर-अच् न० त० । चरत्वविरोधिस्थैर्य्यवति स्थावरे स्थितिशीले पृथिव्यादौ "चराणामन्नमचरमिति" मनुः । चलनशून्ये त्रि० । ज्योतिषोक्ते० मेषकर्कटतुलामकरराशिरूपचरराशिभिन्नेषु स्थिरराशिषु वृषसिंहवृश्चिककुम्भराशिषु न० ।

**अचरम** त्रि० न०त० । अन्तिमत्वविरोधिमध्यत्वाद्यवस्थावति "वयस्यचरमे" इति पा० । अचरमं वयः कौमारादि ।

**अचल** पु० न चलः ।। (गोंज)इति ख्याते शङ्कौ । पर्व्वते, "अचलाः सागराः श्यामाः प्रासादधवला गृहाः धारितं च त्वया सर्व्वमिति" पृथिवीप्रार्थनामन्त्रः ।"अचलएव भवानिव राजते" इति माघः । पृथिव्यां स्त्री । भूमेरचलत्वादिकमुक्तं सि०शि०गो० "भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षावृत्तैर्वृत्तो वृतः सन् मृद-

निलसलिलव्योमतेजोमयोऽयम्। नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे निष्ठं विश्वं च शश्वत्सदनुजमनुजादित्यदैत्यं समन्तात्। सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः। कदम्बकुसुमग्रन्थिः केसरप्रकरैरिव। यथोष्णतार्कानलयोश्च, शीतता विधौ, द्रुतिः के, कठिनत्वमश्मनि। मरुच्चलो भूरचला स्वभावतो यतो विचित्रा बत वस्तुशक्तयः। आकृष्टशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या। आकृष्यते तत्पततीव भाति समे समन्तात् क्व? पतत्वियं खे" इति। आर्य्यभट्टमते तु अस्याचलत्वेऽपि अचलाः पर्वताः सन्त्यत अस्यां चेऽपि। अस्याचलत्वं स्वकक्षातो बहिर्गमनाभावाद्वा अचल-त्वम्। तेन च तस्याचलत्वं इष्टान्तविषयोक्तं तच्च विस्तरतो भूगोलशब्दे वक्ष्यते। चलनशून्ये त्रि० "तथात्वमचलोभवेति" कलशस्थापनमन्त्रः। "तथान्मम गृहे नित्यं लक्ष्मि! त्वमचला भवेति" पुरा०। "तथाधावचला बुद्धिरिति, गीता, अचला भक्तिरीश्वरे" इति पुरा०। न चलति स्वभावात्। शिवे पु० तस्य स्थाणुत्वात् तथात्वम्। ब्रह्मणि न०। "निष्कलं निष्क्रियं शान्तमिति" श्रुत्या अस्य सर्वक्रियाशून्यत्वोक्तेरचलत्वम्। आत्मनि पु० "नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन" इति गीता।

**अचलकन्या** स्त्री अचलस्य हिमाचलस्य कन्या। पार्व्वत्यां, सा हि हिमाचलेन मेनायामुत्पादिता। तत्कथा च "प्रकृतिरभवत्तस्य मेनायाः कन्यका सुतेति" शिवपुराणे प्रपञ्चेन दर्शिता। तन्मूलं कुमारे चोक्तम् "अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्व्वपत्नी। सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे। सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्येति" इति अचलसुतादयोऽप्यत्र।

**अचलकीला** स्त्री अचलाः कीला इव यस्याः। पृथिव्याम्। अचलस्य सुमेरोः कील इव, अचलः कीलइवाचलत्वाद्वा। विष्कम्भपर्वतेषु मन्दरादिषु पु०। ते च सुमेरुपसवर्ग्ये, "विष्कम्भशैलाः खलु मन्दरोऽस्य सुगन्धशैलो विपुलः सुपार्श्व इति" सि० शि० गो० दर्शितास्तेषां स्वरूपादि तत्तच्छब्दे वक्ष्यते।

**अचलजा** स्त्री अचलात् हिमालयात् जायते जन-ड ५त०। पार्व्वत्यां, तत्कथा पूर्व्वशब्दे उक्ता। पर्वतजातमात्रे त्रि० अचलजातादयोऽप्यत्र।

**अचलत्विष्** पु० अचला चञ्चलत्वेनापि माल्लिन्यानपगमात् स्थिरा त्विट् कान्तिर्यस्य। कोकिले। स्थिरकान्तिमति त्रि०। कर्म्मधा०। स्थिरायां कान्तौ स्त्री।

**अचलद्विष्** पु० अचलेभ्यः द्वेष्टि द्विष-क्विप् ४त०। इन्द्रे तस्य चाचलपक्षच्छेदकत्वात्तथात्वं तत्कथा गोत्रभिच्छब्दे वक्ष्यते। अचलरिपादयोऽप्यत्र पु०। पर्व्वतजाते त्रि०।

**अचलपति** पु० ६त०। हिमाचले। यथा तस्य तत्पतित्वं तथाचलराजशब्दे वक्ष्यते।

**अचलभ्राट** पु० बौद्धभेदे।

**अचलराज** पु० अचलानां राजा टच् समा०। हिमाचले "शैलानां हिमवन्तं च नदीनाञ्चैव सागरम्। गन्धर्व्वाणामधिपतिं चक्रे चित्ररथं विधिरिति" ब्रह्मपुराणे तस्याचलराजत्वमुक्तम् अचलाधिपादयोऽप्यत्र।

**अचापल** न० चपलस्य भावः अण् न०त०। चाञ्चल्यविरोधिस्थिरतायाम्। ब०। चाञ्चल्यशून्ये स्थिरे त्रि०।

**अचापल्य** न० चपलस्य भावः ष्यञ् न० त०। चाञ्चल्यविरोधिस्थिरतायाम् च०। ब०। चाञ्चल्यशून्ये त्रि०।

**अचिक्कण** त्रि० न चिक्कणः। चिक्कणताविरोधिरूक्षत्ववति।

**अचित्त** त्रि० नास्ति चित्तं यस्य। चित्तशून्ये चेतनारहिते "अचित्तहस्तिधेनोर्ढगिति" अचित्ताददेशकालाट्ठगिति" च पा०। स्थावरादीनान्तु न चित्तशून्यत्वं किन्तु विशिष्टचेतनाराहित्यमेवेति अचेतनशब्दे वक्ष्यते।

**अचिन्तनीय** त्रि० चिन्तयितुं अनुमापकहेतुभावेन तर्कयितुमशक्यः चिति—शक्यार्थे कर्म्मणि अनीयर् न०त०। अनुमापकहेतुभावेन तर्कयितुमशक्ये। "अचिन्तनीयस्तु तव प्रभाव इति" रघु०। तदर्थे यत्। अचिन्त्योऽप्यत्रार्थे त्रि० "अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने समस्तजगदाधारमूर्त्तये ब्रह्मणे नमः" इति सूर्य्य०।

**अचिन्तित** त्रि० न चिन्तितः। पूर्व्वरूपादिकारणानुसन्धानादिकमन्तरेण अतर्किते "विधेर्नियोगादेतन्मे अचिन्तितमुपस्थितमिति" पुरा०।

**अचिर** न० न चिरम्। अल्पकाले, अल्पकालस्थायिनि वस्तुमात्रे त्रि०। "अचिरेणैव कालेन वंशनाशो भवेद्ध्रुवमिति पुरा०। अचिरांशुः अचिरप्रभा अचिरद्युतिः।

**अचिरत्विष्** स्त्री अचिरा अल्पकालस्थायिनी त्विट् कान्तिरस्याः। विद्युति। अल्पकालकान्तियुक्ते त्रि०।

**अचिरद्युतिः** स्त्री अचिरा अल्पकालस्थायिनी द्युतिर्यस्याः। विद्युति। अल्पकालस्थायिद्युतिमति त्रि०। कर्म्म०। अल्पकालस्थायिन्यां कान्तौ स्त्री।

**अचिरप्रभा** स्त्री अचिरा अचिरस्थायिनी प्रभा यस्याः । विद्युति । "च्युता दिवः स्थास्नुरिवाचिरप्रभेति" भट्टिः । अल्पकालस्थायिप्रभावति त्रि० । कर्म्म० । अचिरायां दीप्तौ स्त्री ।

**अचिरभास्** स्त्री अचिरा अल्पकालस्थायिनी भाः यस्याः । विद्युति । अल्पकालस्थायिदीप्तिमति त्रि० ।

**अचिररोचिस्** स्त्री अचिरं रोचिर्यस्याः । विद्युति । अचिरकान्तिमति त्रि० । कर्म्म० । अचिरकान्तौ न० ।

**अचिरस्य** अव्य० चिरस्येत्यव्ययेन न० त० । स्वल्पकाले ।

**अचिरांशु** स्त्री अचिरा अंशवोऽस्याः । विद्युति । "अचिरांशुसमप्रभेति" पुरा० । अल्पकालस्थायिकिरणवति त्रि० । कर्म्म० । अचिरकिरणे पु० । [लम्बे च ।

**अचिरात्** अव्य० अचिरम् अततीति क्विप् । शीघ्रे, अवि-

**अचिराभा** स्त्री अचिरा आभा यस्याः । विद्युति ।

**अचिराय** अव्य० न चिराय । स्वल्पकाले शीघ्रे च ।

**अचिरेण** अव्य० चिरेणेत्यव्ययस्य न० त० । अल्पकाले शीघ्रे च ।

**अचिष्णु(ष्टु)** त्रि० अच-गतौ वा० इष्णु(ष्टु)च् । गमनशीले । "त्वष्टा दधच्छुष्मिन्द्राय वृष्णेऽपाकोऽचिष्णु(ष्टु)रिति" यजु० अचि(ष्टु)ष्णुः सर्व्वगत इति वेददीपः ।

**अचेतन** त्रि० चेतना ज्ञानम् न०ब० । चेतनाशून्ये । चित्-त्वु न०त० । ज्ञानविशिष्टभिन्ने । ज्ञानञ्च द्विविधं विषयाकारमनोवृत्तिरूपं तत्फलितचैतन्यरूपञ्च तत्र वृत्तिरूपं ज्ञानं चित्तस्यैव धर्म्मः "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एवेति" श्रुतौ तस्य चित्तधर्म्मत्वावगमात् । द्वितीयं तदुज्ज्वलितचैतन्यमात्मधर्म्मः । प्रकाशरूपचैतन्यस्य सर्व्वदा स्थितावपि वृत्तिसहकारेणैव तद्गताज्ञाननिवारणे चैतन्यं समुज्ज्वलति नान्यथा अतएव "बुद्धिवृत्तिचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत्" इत्युक्तमिति वेदान्तिनः । सांख्यास्तु विषयोपरक्ता वृत्तिश्चितौ प्रतिबिम्बति तेनैव विषयावभासः "तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमा" इति मन्यन्ते । नैयायिकास्तु सांख्यवेदान्तिमतसिद्धं यत् वृत्तिरूपं ज्ञानं तत्स्थानीयमात्मचैतन्यमुररीचक्रुः । ताडशवृत्तौ तत्स्थानीयज्ञाने च आत्ममनःसंयोगादयः कारणानि । आभ्यन्तरसुखादिविषयग्रहणे मनःकरणम्, इन्द्रियाणि तु स्वस्वग्राह्यविषयग्रहणे करणानि, "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमिति" गौतमसूत्रे "प्रतिविषयाध्यवसाय इति" सांख्यसूत्रे च तथैव स्वस्वविषयेष्विन्द्रियाणां ग्राहकता उक्ता । तच्च तत्तच्छब्दावसरे दर्शयिष्यते । एवञ्च आभ्यन्तरे सुखादौ मन इव, बाह्येषु शब्दादिषु श्रोत्रादीनि असाधारणकारणानि । मनस्तु बाह्येष्वपि सर्व्वत्र साधारणकारणमिति भेदः । एवञ्च ज्ञानकारणेन्द्रियशून्ये एवाचेतनशब्दस्य प्रवृत्तिः । अतएवोक्तं "सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनमिति" । एवञ्च वृक्षादीनामपि अन्तःकरणादिमत्त्वमस्त्येव । अन्यथा सुखदुःखानुभवो न स्यात् । तेषां हि स्वकर्म्मानुसारिदुःखभोगार्थमेव पापेनैव स्थावरत्वप्राप्तिः । अतएव "महापातकजान् घोरान् नरकान् प्राप्य दारुणान् । कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह" इत्युपक्रम्य "तृणगुल्मलतात्वञ्च क्रमशो गुरुतल्पगः" इति याज्ञवल्क्येन चेतनस्यैव पापावशेषभोगार्थं तृणादिरूपेण जन्मोक्तम् "शरीरजैः कर्म्मदोषैर्याति स्थावरतां नर" इति च सामान्यतः शारीरिकपापात् वृक्षादिरूपस्थावरजन्म तेनैवोक्तमतस्तेषां दुःखभोगार्थमेव वृक्षादिरूपत्वप्राप्तौ इन्द्रियाभावे कथङ्कारं ते दुःखमनुभवेयुरित्यवश्यं तेषु इन्द्रियादिमत्त्वमस्त्येव । अतएव पद्मं सरोऽन्तरं गच्छति, शाखा छिन्नापि चेतनसंयोगात् पुनः प्ररोहतीत्युपलभ्यते । अतएव च श्रुतौ "अथ जीवो यां जहाति सा शुष्यती"त्युक्तम् । तेन तेषां जीवसंबन्धोऽस्त्येव किन्तु विशिष्टचेतनाशून्यत्वादेव तेषु अचेतनत्वव्यवहार इति भेदः । पदार्थादर्शे "देहश्चतुर्विधो ज्ञेयो जन्तोरुत्पत्तिभेदतः । उद्भिज्ज अण्डजोऽस्वेदोत्थश्चतुर्थस्तु जरायुज", इति स्थावराणां देहसम्बन्ध उक्तः । "चेतनाधिष्ठिते भोगायतननिर्म्माणमन्यथा पूतिभावप्रसङ्ग" इति सांख्ये च चेतनसम्बन्धे एव भोगायतनरूपदेहोत्पत्तिरुक्ता । तेषाञ्च भोगायतनदेहवत्त्वेऽपि सर्व्वेन्द्रियस्थानगोलकादेरभावात् न दर्शनादि किन्तु त्वाचप्रत्यक्षं घ्राणजप्रत्यक्षं च भवत्येव अतएव अग्न्यादिखरतरकिरणस्पर्शे तेषां शुष्कता, ओषधिविशेषजधूमादिसम्पर्के च तद्घ्राणात् पुष्पफलोत्पत्तिः । अत एव तेषां द्वीन्द्रियत्वेन व्यवहारः यथोक्तम् "पञ्चेन्द्रिया मनुष्याद्याः सर्पाद्याश्चतुरिन्द्रियाः । त्रीन्द्रियाः कृमिकीटाद्या द्वीन्द्रिया वृक्षजातय" इति । मनसो विद्यमानत्वेऽपि हृदयरूपविशिष्टस्थानाभावात् न स्पष्टमवबोधः । श्रुते हि हृदयस्थानमुपवर्ण्य "तद्धृदयं विशिष्टचेतनाश्रयमित्युक्तम्" तेन तेषां विशिष्टचेतनाश्रय-

हृदयस्थानशून्यत्वात् विशिष्टचेतनावत्त्वं नास्ति सुखदुःखानुभवमात्रं तु तेषां जायते एवेति विशेषः तेनैव स्वस्वकर्म्मफलानुरूपदुःखानुभवात् स्वस्वकर्म्मफलभाक्त्वम् इति सुस्थितम्। चेतनाशून्ये पदार्थमात्रे त्रि०। "अचेतनं चेतनावदिव लिङ्गमिति" सा०का०। तत्तद्विशेषज्ञानशून्ये च। "तन्तु दुःखाभिसन्तप्तं विलपन्तमचेतनमिति" पुरा०। अत्र दुःखानुतप्तत्वेन तदनुभवस्योक्तेः तथाभूतेऽपि चेतने अचेतनत्वोक्तिः विवेकज्ञानशून्यत्वपरत्वेनैव, एवमन्यत्रापि। "अहङ्कारलये सुप्तौ भवेद्देहोऽप्यचेतन" इत्युक्तिस्तु देहस्य चैतन्यप्रकाशावच्छेदकतया, जागरे स्वप्ने च चैतन्यमुपचर्य्य सुषुप्तौ अवच्छेद्याहङ्काररूपमनसो लयात् कथमवच्छेदकत्वं? स्यादित्यतोऽचेतनत्वमित्येवंपरा। अन्यथा "शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः" इत्युक्तेः देहे सदा चैतन्याभावस्य सिद्धत्वात् सुषुप्तौ तथात्वकथनमनर्थकं स्यात्। सुषुप्तावपि इन्द्रियाणां मनसश्च विशिष्टव्यापारराहित्येन लयत्वोपचारः किन्तु आत्मनि तदापि चैतन्यमस्त्येव। "आनन्दभुक् चेतोमुखः प्राज्ञ" इति श्रुतेः सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति" सुप्तोत्थितस्य परामर्शाच्च आनन्दानुभवस्य तत्रापि सत्त्वात् सुतरां देहस्य तदनुभवज्ञानावच्छेदकत्वमस्त्येवेति विशेषः। विस्तरस्तु सुषुप्तिशब्दे वक्ष्यते।

**अचेतस्** त्रि० न चेतति चित-असुन् न० त०। चेतनाशून्ये अचेतने घटादौ, तत्तद्विषयज्ञानरहिते च। "गतसंभ्रमचेतसमिति" पुरा०। नास्ति चेतोऽस्य। चित्तरहिते त्रि०।

**अचेतान** त्रि० चित-शानच् वेदे न मुक् न० त०। चैतन्यरहिते "अचेतानस्य मा पथो वि दुक्षः इति" वेदः।

**अचेष्ट** त्रि० नास्ति चेष्टा यस्य। चेष्टारहिते। चेष्टा च "आत्मजन्या भवेदिच्छा-इच्छा जन्या भवेत् कृतिः। कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया" इत्युक्तेः यत्नसाध्या क्रियाजनकव्यापाररूपा। चेतनाधिष्ठितदेहेष्वेव कर्म्मविशेषः न तदनधिष्ठिते तथा च यस्मिन् देहे आत्मनो यत्नो भवति तद्देहावच्छेदेनैव चेष्टा जायते नान्यस्मिन् सा च उद्यमरूपैव। मनोवायुभिन्नद्रव्यस्य न स्वतःक्रिया सम्भवति किन्तु गुरुद्रव्याद्याघातनोदनादिनैव क्रिया भवति नान्यथा। तथा च हस्तादिचालनदर्शनात् तत्कारणीभूतनोदनादिकमनुमीयते तच्च नोदनम् आत्मकार्य्यमेव अन्यस्यानुपलब्धेः। अधिकं चेष्टाशब्दे वक्ष्यते।

**अचेष्टता** स्त्री अचेष्टस्य भावः। चेष्टाराहित्ये।

**अचैतन्य** त्रि० नास्ति चैतन्यं चेतना यस्य। चैतन्यशून्ये। "अचैतन्यमिदं विश्वं दैवं चैतन्यमेव यदिति"। न०त०। चैतन्यभिन्ने न०।

**अच्छ** अव्य० न छ्यति दृष्टिं सम्मुखत्वात् छो-क न०त०। आभिमुख्ये। "अच्छा त्वचचा असरत् पवित्रे इति" वेदः। "अच्छ गत्यर्थवदेष्विति" सूत्रे "अच्छगत्य अच्छोद्य इत्युदाहृत्य अभिमुखं गत्वा अभिमुखमुक्त्वेति" व्याख्यातम् सि०कौ०।

**अच्छ** त्रि० न छ्यति दृष्टिम्, छो-क न०त०। स्वच्छे निर्म्मले। निर्म्मले हि वस्तुनि दृष्टिः प्रसरति न तु समले आभ्यन्तरपर्य्यन्तं धावतीति निर्म्मलस्यैव तदप्रतिबन्धकत्वात्तथात्वम्। "स्वच्छन्दोच्छलदच्छकच्छकुहरेति काव्यप्र०। स्फटिके पु०। न छ्यति भक्षयति नाशितसत्त्वं छो-भक्षणे क न०त०। भल्लुके पु०। अच्छभल्लुकइत्येकं नामेत्यन्ये।

**अच्छन्दस्** त्रि० नास्ति अध्येयत्वेन छन्दोवेदोऽस्य लुक्। वेदाध्ययनशून्ये अनुपनीते बालके, सर्व्वथा तच्छून्ये शूद्रादौ च। नास्ति छन्दो वृत्तानुसारी, परिमितमात्राक्षरादिसन्निवेशविशेषो यत्र ७ब० लुक्। छन्दःशून्ये गद्यात्मके, चूर्णके वा शब्दसमूहे। नास्ति छन्दोऽभिप्रायो यस्य ब० लुक्। अभिप्रायशून्ये। वा कपि। अच्छन्दस्कोऽप्युक्तार्थेषु।

**अच्छावाक** पु० अच्छं निर्म्मलम् अच्छ आभिमुख्येन वा वक्ति शंसति वच-कर्त्तरि संज्ञायां घञ् (निपातस्य चेति) दीर्घः। शंसनकर्त्तरि होतृसहकारिणि सोमयागसम्बन्धिनि ऋत्विग्भेदे। स च आश्वलायनेन दर्शितः। "प्रागपि सोमेनैके, इत्युपक्रम्य, "तस्यर्त्विजः, चत्वारस्त्रिपुरुषाः, तस्य तस्योत्तरे त्रयः, होता, मैत्रावरुणोऽच्छावाको ग्रावस्तुत्, अध्वर्युः, प्रतिप्रस्थाता नेष्टोन्नेता, ब्रह्मा, ब्राह्मणाच्छंस्याग्नीध्रः पोता, उद्गाता, प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति, एतेऽहीनैकाहैर्याजयन्ति, एत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समाप्यान्नौत्सन्नुवाः सत्रमासते" इति। "अस्यार्थः, दर्शपूर्णमासाभ्यामिष्ट्वा पश्चाद्वा तद्यजमानः पुरस्ताद्वा सोमेन यजेत तस्य सोमयागस्य होताध्वर्युर्ब्रह्मोद्गातेति चत्वारः ऋत्विजो मुख्याः ते च प्रत्येकं त्रिभिः त्रिभिः पुरुषैरुपेता अतस्तस्य तस्य एकैकस्योत्तरे त्रयः पुरुषा भवन्ति, त एते होत्रादिनामकाः षोडशर्त्विजो द्विरात्रादिभिरहीनसंज्ञकैरग्निष्टोमादिभिरेकाहसंज्ञकैर्याजयन्ति। एतएव होत्रादयः षोडशर्त्विजः स्वयमप्याहिताग्नयः प्रथमयज्ञेनाग्निष्टो-

नेद्रा स्वङ्गपतिसंज्ञकेन सप्तदशसंख्यापूरकेण सहिता द्वादशाहादिसत्रार्थं दीक्षित्वा स्वस्वसम्बन्धिनोऽग्नीनेकत्र स्थापयित्वा तत्प्रधानाः सत्राख्यमुपतिष्ठेयुः इति" भाष्यम् । "यदच्छावाकमनुसंतिष्ठते इति" ता॰ ब्रा॰ । अच्छावाकशब्दोऽस्त्यत्र छ । अच्छावाकीयम् तच्छब्दयुक्ते सूक्तभेदे, तच्च सूक्तम् "अच्छावाक ! वदस्वेत्युक्तोऽच्छा वो अग्निमवस इति तृचमन्वाहेत्यादिना" दर्शितम् । अच्छावाकस्येयम् यत् । अच्छावाक्या । अच्छावाकस्येदम्-पात्रादावर्थे च । "एषा होत्रा यदच्छावाक्या" इति ता॰ ब्रा॰ । "अच्छावाक्या अच्छावाकसम्बन्धिनी होत्राशंसनरूपा क्रियेति" तद्भाष्यम् ।

**अच्छावाकसामन्** न॰ अच्छावाकेन गेयं साम । "य एक इदिद्यत इति तृचे गेये सामभेदे एतस्यैव नामान्तरमुद्वंशीयमिति" "त्रैककुभं चोद्वंशीयञ्चान्ततः प्रतिष्ठाप्ये इति" ताण्ड्य॰ ब्रा॰ । "त्रैककुभं ब्रह्मसाम भवति, उद्वंशीयमच्छावाकसामेति, "य एक इदिद्यते इति" तृचे गेयं साम उद्वंशीयमेते सामनी इति" तद्भाष्यम् ।

**अच्छावाकीय** न॰ अच्छावाकस्य ऋत्विग्भेदस्य कर्म्म भावो वा "होत्राभ्य" इति छ । शंसनरूपे अच्छावाककर्म्मणि, तद्भावे च ।

**अच्छिद्र** त्रि॰ न छिद्रं तत्तत्कार्य्येषु प्रमादादिना स्खलनं, रन्ध्रं वा यत्र । प्रमादादिना स्खलनरहिते । "अच्छिद्रेण विचेतव्या देशाः सगिरिकन्दरा" इति रा॰ । "यन्नच्छिद्रं तदच्छिद्रं यच्छिद्रं पूजने मम अच्छिद्रमस्तु तत्सर्वमिति" "अच्छिद्रं तु भवत्येतत् सर्वेषाञ्च शिवाय नः" इति च पुरा॰ । "तत्तथा क्रियतां राजन् यथाऽच्छिद्रः क्रतुर्भवेदिति" भार॰ । रन्ध्ररहिते च ।

**अच्छिन्न** त्रि॰ छिद-भावे क्त न॰ ब॰ । खण्डनरहिते, छेदनरहिते, सन्तते च "वसुधारां प्रदर्शीत अच्छिन्न घृतधारयेति" पुरा॰ । कर्म्मणि क्त न॰त॰ । छिन्नभिन्ने त्रि॰ ।

**अच्छिन्नपत्र** पु॰ अच्छिन्नं सन्ततं पत्रमस्य । शाखोटकवृक्षे सन्ततपत्रयुक्तवृक्षमात्रे च । अच्छिन्नपर्णादयोऽप्यत्र ।

**अच्छेदिक** त्रि॰ छेदनं नार्हति ठञ् । छेदनानर्हे ।

**अच्छेद्य** त्रि॰ न छेत्तुमर्हति छिद-अर्हार्थे कर्म्मणि यत् । छेदनानर्हे । आत्मनि पु॰ "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव चेति" गीता । आत्मनश्च अवयवाभावात् अवयवद्वैधीकरणरूपच्छेदनानर्हत्वात् तथात्वम् ।

**अच्छोद** न॰ अच्छं निर्म्मलमुदकं यस्य उदादेशः । हिमालयप्रदेशस्थे कादम्बरीप्रसिद्धे सरोवरभेदे । "आह्लादनं दृशे, अच्छोदं नाम सरो दृष्टवानिति" काद॰ । नदीभेदे स्त्री । अग्निष्वात्तादीन् प्रक्रम्य, "एतेषां मानसी कन्या अच्छोदा नाम निम्नगा" इति पुरा॰ ।

**अच्युत** पु॰ स्वरूपसामर्थ्याच्च च्युतो न च्यवते न च्यविष्यते वा च्यु-कालसामान्ये कर्त्तरि क्त न॰ त॰ । परमेश्वरे "शाश्वतं शिवमच्युतमिति" श्रुतिः । "यस्माच्च च्युतपूर्व्वोऽहमच्युतस्तेन कर्म्मणेति" भगवद्वाक्यम् । "तेन च्युत्यभावरूपप्रवृत्तिनिमित्तेने"त्यानन्दगिरिः । तदवतारभेदे वासुदेवे "इयमच्युतलीलाढ्या सहसा जातिशालिनीति" छन्दोमञ्जरी अच्युतस्य लीला अच्युता अभ्रष्टा लीला च । षड्भावविकाररहिते च "अच्युतः प्रथितः प्राण" इति सहस्रनामभाष्ये तथैव व्याख्यातम् । नारायणे च "गरुडमूर्त्तिरिवाच्युतस्थितिरमणीयेति" काद॰ । अच्युतस्य विष्णोः स्थितिः अच्युता अचञ्चला च स्थितिरिति तदर्थः । चलनरहिते अभ्रष्टे स्थिरे त्रि॰ । "अक्षितमसि अच्युतमसीति" वेदः । द्वादशसर्गयुक्ते काव्यभेदे पु॰ हेमचन्द्रः । न च्योतति क्षरति च्युत-क न॰त॰ । क्षरणशून्ये त्रि॰ ।

**अच्युताग्रज** पु॰ अच्युतस्य वासुदेवस्य उपेन्द्रस्य वा अग्रजः ६त॰ । बलदेवे । वसुदेवाज्जन्मकाले बलदेवस्य ततोऽग्रजननात् तथात्वम् । इन्द्रे । कश्यपाज्जन्मकाले च अदित्यामग्रोत्पन्नत्वात् तस्य तथात्वमिति भेदः । तयोश्च तदग्रजत्वं सङ्कर्षणशब्दे इन्द्रावरजशब्दे च वक्ष्यते ।

**अच्युताङ्गज** पु॰ अच्युतस्य वासुदेवस्य अङ्गजः । कृष्णपुत्त्रे प्राधान्यात् कामदेवे । [जात इति भा॰ १॰ स्कन्धे ।

**अच्युतात्मज** पु॰ ६त॰ कामदेवे । स हि रुक्मिण्यां कृष्णात्

**अच्युतावास** पु॰ अच्युतेन उष्यतेऽत्र आ-वस-आधारे घञ् ६त॰ । अश्वत्थवृक्षे । "अश्वत्थः सर्ववृक्षाणामिति" स्तुतेस्तस्य तत्रोपस्थत्वात्तदावासत्वम् । [च्युतिशून्ये त्रि॰ ।

**अच्युति** स्त्री च्यु-क्तिन् न॰त॰ । क्षरणाभावे । बहु॰ ।

**अज** गतौ क्षेपणे च भ्वादि॰ पर॰ सक॰ सेट् । अजति । अवैषीत्-आजीत् । तृच् अजिता-वेता । घञ् । आजः । "अजन्ति वह्निं सदनान्यच्छ" इति वेदः ।

**अज** दीप्तौ इदित् चुरादि॰ उभय॰ सेट् अक॰ । अञ्जयति ते । आञ्जिजत् त ।

**अज** पु॰ न जायते जन ड न॰त॰ । ईश्वरे, "न जातो न जनिष्यते" इति श्रुतेः "न हि जातो न जायेऽहं न जनिष्ये कदाचन । क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः"

इति भार० । जीवे च "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इति गीता । "जहात्येनां भुक्तभोगामजोऽन्य इति" श्रुतिः । स हि स्वोपाधिभूतबुद्धिनिष्ठकर्म्मभिरारब्धदेहमधिष्ठाय बुद्धिनिष्ठकर्त्तृत्वादिकमात्मन्यभिमन्यमानः जीव इति व्यवह्रियते "न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः" इति गीतायां तस्य जन्मादिशून्यत्वमुक्तं तत्र "जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीति" यास्कोक्तषड्भावविकाराणामुपलक्षणमाद्यन्तयोः जन्मनाशरूपविकारयो रभावकथनेन तदन्तःपातिनामपि सन्दंशपतितन्यायेन षड्भावस्थाभावात् । स च ब्रह्माभिन्न एवेति वेदान्तिमतम् बुद्धिरूपोपाधीनां नानात्वात् न सर्व्वव्यवहारसाङ्कर्य्यम् । बहव इति साङ्ख्यादयः "जन्मादिव्यवस्थातः पुरुषबहुत्वमिति" पुरुषस्वोपाधिभूतबुद्धिभेदेऽपि "उपाधिर्भिद्यते न तु तद्वानिति" सूत्रेण उपाधिभेदेऽपि उपहितस्यैकत्वेन न भेदः, विशिष्टस्यानतिरिक्ततया न जन्मादिव्यवस्थेति पुरुषबहुत्वमङ्गीचक्रुः कर्त्तृत्वादिकं बुद्धिगतमपि स्वोपाहितचैतन्ये एव प्रतिविम्बति तेन तदविविक्तचैतन्ये तदवभासात् पुरुषस्य भोगः, "चिदवसानोभोग इति" सूत्रे तथैव प्रतिपादनात् एवञ्च यावन्तः बुद्धिव्यक्तयस्तावन्त एव पुरुषाः स्वस्वोपाधिकृतं कर्म्मादिकं स्वकर्त्तृकतया अभिमन्यमानास्तत्प्रयुक्तं सुखदुःखादिकमात्मीयत्वेन अभिमन्यमानाः भोक्तारइति व्यवह्रियन्ते अतएवोक्तम् "बुद्धेर्भोग इवात्मनीति" । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति" श्रुतेः ज्ञानादिवृत्तीनां मनोजन्यत्वात् मनोधर्म्मत्वम् सांख्यवेदान्तिनोस्तुल्यम् जीवस्य विभुत्वाङ्गीकारेऽपि स्वोपाधिबुद्ध्यधिष्ठानदेह एव विशेषसंयोगात् तत्रैव आत्मत्वाभिमानः नान्यदेहेषु, तेषां स्वभोगार्थं स्वोपाधिबुद्धिगतकर्म्मारब्धत्वाभावात् । एवं सुखदुःखानुसन्धानमपि स्वोपाधिगतकर्म्मविशेषादेवेति तत्तद्भेदव्यवस्थेति । ज्ञानकारणमनसाञ्च पुरुषभेदेन भिन्नत्वात् न परानुसन्धानेनापरस्यानुसन्धानप्रसक्त इति सांख्यवेदान्त्योस्तुल्यम् । विशिष्टस्यातिरिक्तत्वानतिरिक्त एव तयोर्विसंवादः । नैयायिकवैशेषिकादयस्तु ज्ञानादयो जीवधर्म्माः जीवाश्च बहवः नित्या विभवश्च कर्त्तृत्वं भोक्तृत्वञ्च जीवानामेव धर्म्मः, तेषां विभुत्वेऽपि स्वादृष्टारब्धदेहेष्वेव संयोगविशेषः सएव जन्म, तद्वियोगश्च मरणमित्येव विशेषः न तु स्वतो जन्मनाशाविति स्वीचक्रुः । तेन तन्मतेऽपि न अजत्वव्याघातः । एवं सर्व्वदर्शनाङ्गीकृतमरणाद्यजत्वम् । माध्वास्तु जीवस्याणुत्वमीश्वराद्भिन्नत्वञ्च "एतस्यैव विस्फुलिङ्गाव्युच्चरन्तीति" श्रुतेस्तस्यैव तात्पर्य्यात् "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेय" इत्युक्तेश्च जीवस्याणुत्वम् अणुत्वेऽपि तेषां सर्व्वदेहगतसुखाद्यनुसन्धानं गुणद्वारैव, यथा गृहैकदेशस्थितं कस्तूरीप्रभृतिसुगन्धिद्रव्यं सौरभेण सर्वं गृहमामोदयति एवं हृदयस्थं विस्फुलिङ्गरूपं चैतन्यं सर्वदेहगतं प्रकाशं कुर्वत् शब्दादीन् विषयांश्चावभासयत् सर्वव्यापीत्युच्यते न तु स्वरूपतः "अणोरणीयान् महतो महीयानिति" श्रुतेः स्वरूपगुणाभ्यां अणुत्वमहत्त्वयोः सम्भवपरतायामेव तात्पर्य्यात् । अजत्वव्यपदेशस्तु भूतारब्धत्वाभावकृतं गौणमतोऽत्र अजशब्दो भाक्त एव इत्युररीचक्रुः । चार्वाकमते तु आत्मनो नाजत्वं देहाकारपरिणतभूतचतुष्टयस्यैव तेषां मते जीवत्वात् तद्विवरणं चेतनशब्दे वक्ष्यते । सौगतादिमते तु जीवानां संविदनतिरिक्ततया सर्वसंविदनुस्यूतत्वात् जन्मान्तरभाविनः अपवर्गरूपफलादेः स्वीकाराच्च नित्यत्वं, नित्यत्वाच्च अजत्वमिति भेदः । "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञा"मित्युक्तेश्च ईश्वरस्यैव स्वोपाधिमायागतसत्त्वरजआद्युपाधिभिः जन्मस्थितिनाशनरूपकार्य्यकरणार्थमायाविर्भावात् अजस्वरूपानतिरेकात् तेषामजत्वं तेन ब्रह्मणि, विष्णौ, हरे च पु० । न जायते इत्यजा । सांख्यमतसिद्धप्रधानापरपर्य्याये साम्यावस्थापन्नसत्त्वरजस्तमोरूपगुणत्रयात्मके स्त्री । "अजामेकां लोहितशुक्लकृष्णवर्णाः सरूपाः बह्वीः प्रजाः सृजमानामिति" श्रुतिः । सत्त्वादिगुणानुसारेण श्वेतादिरूपयुक्तबहुकार्य्यसृष्टत्वाच्च तस्याः नानावर्णत्वमिति सांख्याः । वेदान्तिनस्तु एतां श्रुतिं तेजोऽबन्नरूपपरतया व्याचक्रुः । तथा हि "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" तेजोऽबन्नाभिमानिनीस्तिस्रो देवता अनुप्रविश्येत्युक्तेः प्रकान्ततेजोऽबन्नानामेव भौतिकसृष्ट्युपादानत्वावगमात् तासामेव प्रकृतित्वेन अजत्वम्, तासाञ्च लोहितादिरूपाणि तत्प्रकरणशेषे उक्तानि "यल्लोहितं रूपं तत्तेजसो रूपं, यच्छुक्लं तदपां, यत् कृष्णं तदन्नस्येति" । एवञ्चोक्तश्रुत्युक्तलोहितादिरूपाणामेवेह श्रुतौ प्रत्यभिज्ञानात् अजाशब्देन तेजोऽबन्नरूपप्रकृतेर्ग्रहणमिति" तेन अजामित्यादिश्रुतौ अजा-

शब्देन तादृशप्रकृतिरेव बोध्यते । तथा च तादृश्यां तेजोबन्नाभिमानिदेवतायां स्त्री । अजाशब्दोक्ता नानागुणाः सन्त्यस्य अच् । छागे तस्य नानावर्णत्वात्तथात्वम् । अस्यां स्त्री जातित्वेऽपि अजादित्वात् टाप् । "अजागलस्तनच्छायेति" ज्योतिषम् । द्वादशधा विभक्तस्य राशिचक्रस्य मेषरूपे प्रथमे राशौ "जीवार्किभानुजेज्यानां क्षेत्राणि सुरजादयइति" ज्योतिषम् तस्य मेषरूपत्वेऽपि मेषस्य अजतुल्याजाधिष्ठितरूपाभ्यां तत्त्वम् । मेषे च अजेन ब्रह्मणा दक्षयज्ञभङ्गसमये मेषरूपधारणेन पलायमानत्वात् अजाधिष्ठितरूपवत्त्वात् मेषस्य उपचारात् अजत्वम् । माक्षिकधातौ पु० । जननशून्ये गगनादौ त्रि० । अात् विष्णोर्जायते इति । चन्द्रे कामे, च पु० । "चन्द्रमा मनसो जात इति" श्रुतौ विष्णोर्मनोजन्यत्वाच्चन्द्रस्य अजत्वम् ॥ कामस्य वासुदेवात् रुक्मिण्यां जातत्वं भागवते प्रसिद्धम् दशरथपितरि रघुराजपुत्रे रामचन्द्रस्य पितामहे सूर्य्यवंश्ये नृपभेदे च । तस्याजत्वञ्च अजरूपब्रह्मणो मुहूर्त्तजातत्वात् यथोक्तं रघौ "ब्राह्मे मुहूर्त्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् । अतः पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकारेति" तच्चरितञ्च तत्रैव पञ्चमाद्यष्टमसर्गान्ते द्रष्टव्यम् । छागतुल्याकारवत्त्वात् ओषधिविशेषे स्त्री । तल्लक्षणं "अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी । अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डरेति" वैद्यकम् । ऋषिभेदे पु० । गर्गा० यञ् । आज्यः तदपत्ये । बहुषु लुक् । अजाः । नड़ा० फक् । आजायनः तद्गोत्रापत्ये । उपमानतया पूर्व्वनिर्द्देशे तद्वत्पादस्य नान्त्यलोपः । अजपादः स्त्रियान्तु कुम्भप० ङीप् अन्त्यलोपः पदादेशश्च । अजपदीति भेदः । एकादशरुद्रमध्ये प्रथमे रुद्रे पु० । तद्विवरणम् अजैकपादशब्दे दृश्यम् ।

**अजकर्ण** पु० अजस्य कर्ण इव पर्णं यस्य । छागतुल्य लम्बायमानपत्रयुक्ते (शाल) इति ख्याते वृक्षे मरिचवृक्षे च । ईत० छागकर्णे । [कै–क । (शाल) इति ख्याते वृक्षे ।

**अजकर्णक** पु० अजकर्ण इव कायति पत्रद्वारा प्रकाशते

**अजकव** अस्त्री० अजो विष्णुः को ब्रह्मा तौ वाति त्रिपुरासुरवधद्वारानेन वा+करणे क ईत० । शिवधनुषि । शिवो हि अनेनैव धनुषा त्रिपुरासुरस्य वधेन विष्णुं ब्रह्माणं च प्रीणितवान् इति तस्य धनुषोऽजकवत्वम् अजकौ अवतीति । अजकावमप्यत्र । "धनुष्यजगवं गुप्यमजकावमजीकवमिति" शब्दार्णवः । अजकं छागं वाति प्रीणाति वा–क । (वावुइ इति) ख्याते वर्वरीवृक्षे पु० । तद्भक्षणे तस्य प्रीत्याधिक्यात्तथात्वम् ।

**अजका** स्त्री अजस्य विकारः अवयवः गलस्तनः पुरीषं वा कन् । अजागलस्थे स्तनाकारे मांसखण्डे, तत्पुरीषे च ।

**अजकाजात** पु०५त०। अजकेव जातः । "अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्रः । विदार्य्य कृष्णं प्रचयोऽभ्युपैति तं चाजकाजातमिति व्यवस्येदिति" वैद्योक्ते रोगभेदे ।

**अजकाव** न० अजका अजागलस्तनइव वाति प्रकाशते वा–क । अजागलस्तनाकारकाष्ठावयवयुक्ते मैत्रावरुणे यज्ञीयपात्रभेदे, "अजकावं दुर्ह्णीकं तिरोदधे" इति वेदः । अजैव अजका तत्पुरीषं वा तद्वत् वाति प्रकाशते वा–क । अजकाजाताख्ये रोगभेदे पु०। शिवधनुषि न०।

**अजक्षीर** न० अजायाः क्षीरं ईत० पुंवद्भावः । छागीस्तन्य-दुग्धे "अजक्षीरेण पाचयेदिति" वैद्यकम् ।

**अजग** न० अजं विष्णुं गच्छति शरत्वेन गम–ड । शिवधनुषि । अजेन ब्रह्मणा गम्यते गीयते वा कर्म्मणि गम–ड–गै–क वा । विष्णौ पु० । अजेन गच्छति, अजं छागं यज्ञाङ्गत्वेन वा गच्छति गम–ड । वह्नौ पु०। प्रज्ञा०स्वार्थे अण् आजगमपि शिवधनुषि "स्थाणोर्धनुष्याजगमित्यमरमाला ।

**अजगन्धा** स्त्री अजस्य गन्ध इव गन्धोऽस्याः । (वनजोयान) इति ख्यातायां वनयामान्याम् अजमोदायाम् ।

**अजगन्धिका** स्त्री अजस्य गन्ध इव गन्धो यस्याः ब० कप्, कापि अत इत्त्वम्, अजस्य गन्ध इव गन्धः अस्त्यस्य ठन् वा । (वावुइ इति) प्रसिद्धे वर्वरीशाके ।

**अजगन्धिनी** स्त्री अजस्य मेषस्य गन्धो लेशः एकदेशः शृङ्गमिति यावत् सोऽस्याः फलाकारेणास्तीति अजगन्ध+इनि ङीप् । (गाड़रशिङ्गा) इति प्रसिद्धे अजशृङ्गीवृक्षे ।

**अजगर** पु० अजं छागं गिरति गिलति गॄ–अच् । वृहत्सर्पे । अजगरं अगस्त्यशापात् वृहत्सर्पभावापन्नं नहुषमधिकृत्य कृतो ग्रन्थः अण् । आजगरम् अजगरकथायाम् न०। तच्च वनपर्व्वणि आजगरोपाख्यानरूपम् ।

**अजगव** पु० अजगो विष्णुः शरत्वेन त्रिपुरासुरवधकालेऽस्यास्ति अजग+अस्त्यर्थे व । शिवधनुषि "शिवोऽप्यजगवं चापं विधुन्वन् तरसा रथे" इति पुरा० । [शिवधनुषि ।

**अजगाव** पु० अजगं विष्णुमवति अव–अण् उप० स० ।

**अजघन्य** त्रि० न जघन्यः अधमः न०त० । अधमभिन्ने

श्रेष्ठे च। "त्वष्टा च द्वादशोविष्णुरजघन्योजघन्यज" इति भार०।

**अजजीविक** त्रि० अजएव क्रयविक्रयादिभ्यां पालनादिना वा जीविका जीवनोपायोऽस्य। छागक्रयविक्रयादिना जीविकावति।

**अजटा** स्त्री नास्ति जटा शिफा यस्याः। (भुंइआमला) इति प्रसिद्धे शिफारहिते वृक्षभेदे। शब्द०। अजडामप्यत्र

**अजडा** स्त्री अजडयति स्पर्शमात्रादङ्गमङ्गनार्थं चालयति अजड+णिच्-ततः अच्। (आलकुशीति) प्रसिद्धे वृक्षे-जडभिन्ने जाड्यविरोधिबुद्धियुक्तवति त्रि०।

**अजथ्या** स्त्री अजानां समूहः अज+थ्यन् स्त्रीत्वात् टाप्। अजसमूहे। तद्वर्णावर्णत्वात् स्वर्णयूथिकायाञ्च।

**अजदण्डी** स्त्री अजस्य ब्रह्मणोदण्डोऽस्याः ष्व० गौरा० ङीष्। ब्रह्मदण्डीवृक्षे ब्रह्मणो यज्ञार्थदण्डस्य तदीयकाष्ठेन करणात्तथात्वम्।

**अजदेवता** पु० ६त०। छागाधिदैवे वह्नौ "रौद्री धेनुर्विनिर्द्दिष्टा छाग आग्नेय उच्यते" इति शु० विष्णुध०।

**अजननि** स्त्री न+जन-आक्रोशे अनि। आक्रुश्यमाने जन्माभावे। "तस्याजननिरेवास्तु जननीक्लेशकारिणीति" माघः। वा ङीप् अजननीत्यप्यत्र। अर्थाभावे अव्ययी०। जनन्याद्यभावे अव्य०।

**अजन्मन्** पु० नास्ति जन्म यत्र। जन्मनिवृत्तौ मोक्षे "तस्मात् मयोगादधिगम्य योगमजन्मनेऽकल्पत जन्मभीरु" रिति रघुः। ६त०। जन्मरहिते त्रि०।

**अजन्य** स्त्री लौकिकहेतुभिर्न जन्यते जन-णिच्-यत् न०त०। शुभाशुभसूचके दैवकृते भूकम्पादावुत्पाते। जन्यभिन्ने त्रि०।

**अजप** पु० असत् जपति निन्दार्थे नञ्, जप-अच्। कुपाठके अजं पाति रक्षति पा-क ६त०। छागपालके त्रि०।

**अजपति** पु० ६त०। छागश्रेष्ठे, मेषराशिपतौ मङ्गले च।

**अजपथ** पु० अजस्य तच्चरणयोग्यः पन्थाः अजेन ब्रह्मणा निर्मितः पन्था वा अच्समा०। छागचरणयोग्यपथे गगनस्थे पथाकारे सेतौ च (यमनाला) छायापथे।

**अजपथ्य** त्रि० अजपथ इव देवपथा० इवार्थे यत्। सङ्कीर्णपथे नगनसेतुतुल्ये च।

**अजपद** पु०अजस्येव पदं चरणोऽस्य। अजैकपान्नामके [रुद्रभेदे।

**अजपा** स्त्री प्रयत्नेन न जप्या अप्रयत्नोच्चारितत्वात् जप-कर्म्मणि अच्। श्वासप्रश्वासयोः वहिर्गमनागमनाभ्याम् अक्षरनिष्पादनरूपे जपे, स च हंसः, सोऽहमित्याकारस्तैन, तदाकारमन्त्रे च। "उच्छ्वासैरेव निश्वासैर्हंस इत्यक्षरद्वयम् तस्मात् प्राणश्च हंसाख्य आत्माकारेण संस्थितः। नाभेरुच्छ्वास निश्वासात् हृदयाग्रे व्यवस्थितः। षष्टिश्वासैर्भवेत् प्राणः षट् प्राणा नाडिका मता। षष्टिनाड्याह्नोरात्रम् जपसंख्याक्रमोमतः। एकविंशतिसाहस्रं षट्शताधिकमीश्वरि!। जपति प्रत्यहं प्राणी सान्द्रानन्दमयीं पराम्। विना जपेन देवेशि! जपो भवति मन्त्रिणः। अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनीति" तन्त्रम्।

**अजपाद** पु० अजस्य पाद इव पादोऽस्य हस्त्या० न अन्त्याकारलोपः। रुद्रभेदे तद्देवताकत्वात् पूर्व्वभाद्रपदनक्षत्रे च। पाक्षान्तरेन तु समासे अजपादपि उक्तार्थे पु०।

**अजपाल** त्रि० अजान् छागान् पालयति पा+णिच्-अण् ६त०। छागपालके।

**अजबन्धु** पु०अजस्य बन्धुरिव मूर्खत्वात्। अजतुल्यमन्दबुद्धौ। "सिलाची नाम कानीना अजबन्धुः पिता तवेति"।

**अजभक्ष** पु० अजैर्भक्ष्यतेऽसौ भक्ष-कर्म्मणि घञ् ६त०। (बाबुइ इति) प्रसिद्धे वर्वरीवृक्षे तत्पत्रं हि अजैरतिप्रीतितो भक्ष्यते।

**अजमार** पु०अजं मारयति विक्रयार्थं मृ-णिच्-अण् उप०। (कषाइ) इति अजमांसविक्रयोपजीवे, तत्प्रधानदेशे च। भवादौ कुर्व्वा० ण्य। आजमार्य्यस्तद्भवादौ त्रि०।

**अजमीढ** पु० अजोमीढः यत्र सिक्तः यत्र ब०। (आजमीर) प्रसिद्धे देशे। राजनि अण्। आजमीढः तद्देशाधिपे प्रसिद्धतया युधिष्ठिरे।

**अजमुख** पु० अजस्य मेषस्य मुखमेव मुखत्वेन कल्पितमस्य। दक्षे प्रजापतौ, तस्य हि शिवद्वेषे मुखेन शिवनिन्दाकरणात् दक्षयज्ञे शिवाज्ञया वीरभद्रेण तच्छोत्पाटने कृते पश्चात् शिवप्रसादने पुनरुत्पादनाय वीरभद्रे नियोजिते अजमुखेनैव तन्मुखं कल्पितं तच्च काशीखण्डे विवृतं यथा। "वीरभद्रोऽपि तत् सर्वं सर्व्वाज्ञां प्रतिपद्य च। विना दक्षस्य वदनं यथापूर्व्वमकल्पयत्। ईश्वरं ये हि निन्दन्ति ते स्मृताः पशवो ध्रुवम् ततो मेषमुखं दक्षं वीरभद्रोऽप्यकल्पयदिति"।

**अजमोदा** स्त्री अजस्य मोद इव मोदो गन्धो यस्याः अजं मोदयति आनन्दयति मोदि-अण् वा। अजगन्धयवान्यां, वनयवान्याम् यमानीभाले च।

**अजम्भ** पु० नास्ति जम्भो दन्तोऽस्य ब०। भेके सूर्य्ये च। दन्तशून्ये त्रि०। अजातदन्ते अवस्थाभेदे च।

**अजय** पु० वीरभूमिनगरसन्निधाने (अजय) इति नामके नद-विशेषे इति कल्पद्रुमः । तन्मूलं मृग्यं संस्कृतशास्त्रे तन्न-दस्य कुत्राप्यनुल्लेखात् । अजेन छागेन याति या-क ३त० । छागवाहने अग्नौ पु० । जि-अच् न०त० । जयाभावे "लाभालाभौ जया जयाविति" गीता । व० । जयशून्ये त्रि० । अव्ययी० । जयाभावे अव्य० । नास्ति जयो मादकत्वे-नास्याम् । (सिद्धि, भाङ्) इति च प्रसिद्धनामिकायाम् विजयायाम् स्त्री ।

**अजय्य** त्रि० जि-शक्यार्थे यत् न०त० । जेतुमशक्ये दुर्जये शत्रौ पक्षे च । "दैवैरजय्यान् दितिजान् विजिग्ये" इति भार० । "तत्राजय्यं जिगाय तान्" इति मुग्ध० ।

**अजरा** त्रि० नास्ति जराऽस्याः । (घृतकुमारी) इति प्रसिद्धे वृक्षे तस्य जराभावात्तत्त्वम् । अव्ययीभावे अच् समा० अज-रसम् जराभावे अव्य० । नास्ति जरा यस्य, देवे । तेषां षड्भावविकारमध्ये जायतेऽस्ति वर्द्धते इति तिसृणामेव दशानां सद्भावात् तदुत्तरवर्त्तिनीनां "विपरिणमते अपक्षीयते नश्यतीति" तिसृणामभावादजरत्वम् । जराशून्ये त्रि० । "अजरामरवत् प्राज्ञो विद्यामर्थांश्च चिन्तयेदिति" नीति० । ब्राह्मणजातौ स्त्री । "सा सत्वा साऽजरामरेति पुरा० । न जीर्य्यति क्षीयते जॄ-अच् न० त० । परब्रह्मणि न० । वृन्दारकनामकवृक्षभेदे पु० । स्थूलगोधिकायाम् स्त्री ।

**अजर्य्य** न० न जीर्य्यति न+जॄ-कर्त्तरि यत् । सौहार्दे "तेन सङ्गतमर्थेण रामाजर्य्यं कुरु द्रुतमिति" भट्टिः ।

**अजलम्बन** न० अज इव लम्ब्यते स्पृश्यते तत्स्पर्शत्वात् कर्म्मणि ल्युट् । स्रोतोऽञ्जने ।

**अजलोमन्** पु० अजस्य लोमेव लोम (मञ्जरी) यस्य ब० । (शूकशिम्बी) इति ख्याते अजलोमवन्मञ्जरीविशिष्टे वृक्षभेदे । वा डाप् वा ङीप् च । अजलोमा-अजलोमी चेत्यप्यत्र स्त्री । [जविनीभिर्विहृयन्" इति वेदः ।

**अजवस्** पु० जु-असुन् न०त० । वेगशून्ये । "अजवसो

**अजवस्ति** स्त्री अजस्य वस्तिरिव वस्तिरस्य । ऋषिभेदे । शुभ्रा० अपत्यार्थे ढक् । आजवस्तेयः तदपत्ये पु० स्त्री । स्त्रियाम् आजवस्तेयी । यस्कादिपाठात् बहुषु लुकि । अजवस्तयः तदपत्येषु ।

**अजवाह** पु० अजं वाहयति यत्र आधारे घञ् ६त० । देशभेदे । कच्छादि० भवाद्यर्थे अण् । आजवाहः तद्देश जातादौ त्रि० ।

**अजवीथी** स्त्री अजेन ब्रह्मणा निर्म्मिता वीथी पदं शा०त० । गगनसेतुरूपे (यमनाला) इति ख्याते छायापथे । यामा-रभ्य अगस्त्यस्थानपर्य्यन्तं पितृयानपथः । "पितृयानोऽज-वीथ्याश्च यदगस्त्यस्य चान्तरमिति" पुरा० ।

**अजशृङ्गी** स्त्री अजस्य मेषस्य शृङ्गमिव फलमस्याः ब० । (गाड़ल्यिङ्गा) इति प्रसिद्धे मेषशृङ्गतुल्यफलवल्यां मेष-शृङ्ग्याम् ।

**अजस्तुन्द** न० अजस्य तुन्दमिव तुन्दमस्मिन् तन्नगरवासिना-मित्यर्थात् सुट् । नगरभेदे । "अजस्तुन्दं नाम नगर-मिति" सि०कौ० ।

**अजस्र** न० न+जस र । सन्तते विच्छेदरहिते । तथाभूतका-लस्थायिनि वस्तुमात्रे त्रि० । "अजस्रमास्फालितवल्लकीगु-णेति" माघः "अजस्रदीक्षाप्रयतस्य मद्गुरोरिति" रघुः ।

**अजहत्स्वार्था** स्त्री न जहत् स्वार्थो याम् हा-शतृ न०ब० । स्वार्थापरित्यागेन परार्थावबोधिकायां लक्षणा-याम् । यथा श्वेतो धावतीत्यादौ श्वेतगुणापरित्यागेन तद्वति लक्षणा । "जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्तौ ते पुन-स्त्रिधा" इति हरिः ।

**अजहल्लिङ्ग** पु० न जहत् लिङ्गं यम् हा-शतृ न०ब० । नियतलिङ्गके विशेष्यस्यान्यलिङ्गकत्वेऽपि स्वलिङ्गात्यागेन स्वलिङ्गपरे विशेषणशब्दे । तथा चान्यत्र विशेषणस्य विशेष्यानुसारिलिङ्गत्वनियमेऽपि अस्य न तथा नियमः । यथा वेदः श्रुतिर्वा प्रमाणम् । [कुशीति) ख्याते वृक्षे ।

**अजहा** स्त्री न जहाति शूकान् । हा-श न०त० । (आल्-

**अजागर** पु० जागरयति जागरः न जागरो यस्मात् ५ब० । सेवनेन निद्राराहित्यकारके "यदपेक्षयाऽन्यस्मिन् जागरण-कर्तृत्वं नास्ति" तादृशे(भीमराज) इति ख्याते भृङ्गराजे । "भृङ्गराजः सुजागर" इति रभसवाक्यात् तस्यात्यन्त-निद्राराहित्यकारित्वम् ।

**अजाजि(जी)** स्त्री अजेन छागेन वीयते गन्धोत्कटत्वात् त्यज्यते अज-इन् वीभावाभावः ६त० । सर्वभक्षेणापि छागेन गन्धोत्कटतया त्यज्यमाने, ( जीरा ) इति प्रसिद्धे जीरके वृक्षे । काकोडुम्बरिकावृक्षे च (पेयारा) ॥

**अजाजीव** पु० अजेन तद्रक्षणपोषणादिना तत्क्रयविक्रया-दिना वा आजीवति आ+जीव-अच् ३त० । छाग पालके तत्क्रयविक्रयाभ्यामाजीविनि च ।

**अजातककुद्** पु० न जातं ककुदमंसकूटं यस्य न-ब० ककुदस्यऽवस्थान्याकारलोपः । अपूर्णककुदि अल्पवयस्के गवादिवत्से ।

**अजातदन्त** त्रि० न जातो दन्तोऽस्य, यस्मिन् वयसि वा। दन्तजननशून्ये, अवस्थाभेदे च। "अजातदन्ता ये केचिद् ये च गर्भे प्रपीड़िताः" इति वायुपुरा०। "अजातदन्तमरणे पित्रोरेकाहमिष्यते" इति शु० कूर्मपुरा०। तत्कालश्च नृणां षण्मासाभ्यन्तरमिति शुद्धितत्त्वे सपञ्चं निरूपितम्। पश्वादीनान्तु प्रधानदन्तोत्पत्त्यभावे एवाजातदन्तत्वव्यवहारः (आदाँता) इत्यादि लोके प्रसिद्धिः। स च प्रायेण द्विवर्षोत्तरकालपर्य्यन्तः।

**अजातपक्ष** त्रि० न जातौ उड्डयनसामर्थ्ययुतौ पक्षावस्य। अनुद्भिन्नपक्षके पक्षिणि। "अजातपक्षाः शकुना इवाबभुरिदि भार०।

**अजातशत्रु** पु० जातस्य जन्तुमात्रस्य न शत्रुः अश्राद्धभोजीत्यादिवत् नञो व्यवहितेन शत्रुशब्देनान्वयात् असमर्थसमासः, न जातः शत्रुरस्य वा। युधिष्ठिरे राजनि। "न द्वेष्टि यज्जनमतस्त्वमजातशत्रुः, इति" वेणी०। एवमजातारिरपि तत्रैव। "हन्त जातमजातारेः प्रथमेन त्वयारिणेति" माघः। [शून्ये, व्यायोक्ते-जाल्मादौ, नित्ये च त्रि०।

**अजाति** स्त्री जन-क्तिन् न०त०। अनुत्पत्तौ। ब०। जाति-

**अजादनी** स्त्री अजैरद्यतेऽसौ अन्येन दुःस्पर्शत्वेऽपि अजै-राद्यते इति अद्-कर्म्मणि ल्युट् ङीप्०। दुरालभा इति (विचिति) इति च प्रसिद्धे स्पर्शेन दुःखदायके वृक्षभेदे।

**अजादि** पु० ङीप्०। ङीब्बाधकटाब्निमित्ते पाणिन्युक्ते शब्दसमूहे स च गणः। एडका, कोकिला, चटका, अश्वा मूषिका, बाला, होड़ा, पतृषा, पाका, मन्दा विलाता, पूर्व्वापहाणा, अपरापहाणा (सम्भस्त्राजिनशणपिण्डेभ्यः फलात्)। (सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्)। (मूलान्नञः) (शूद्रा चामहत्-पूर्व्वा जातिः) ज्येष्ठा कनिष्ठा मध्यमा (पुंयोगेऽपि) क्रुञ्चा उष्णिहा देवविशा दंष्ट्रा। [जायारहिते।

**अजानि** पु० नास्ति जाया यस्य ब० जायाया निङादेशः।

**अजाजिक** त्रि० अजेन तद्विक्रयपालनादिना आजो जीवनम् अस्त्यस्य ठन्। अजाजीविनि। तस्य कर्म्म भावो वा पुरोहिता० यक्। आजाजिक्यम् तत्कर्म्मणि तद्भावे च न०।

**अजानेय** पु० अजेऽपि विक्षेपेऽपि आनेयो यथास्थानं प्रापणीय आरोही येन अज-विक्षेपे अप् वीभावाभावः आ+नी-कर्म्मणि यत् ततः ३ब०। खड्गखड्गप्रहारप्रतिरोधेऽपि निर्भयेन यथास्थानमारोहिणः प्रापके अश्वे, उत्तमाश्वे च निर्भये त्रि०।

**अजान्त्री** स्त्री अजस्यान्त्रमिव अन्त्रं तदाकारवती मञ्जरी अस्याः गौ० ङीष्। नीलवुह्नायाम् (नीलबोना)।

**अजापक** न० "छागशलद्रुममूलक्षीरैदंभ्रा च साधितं सर्पिः। सक्षारं यक्ष्महरं कासश्वासोपशान्तये परममिति" चक्रदत्तोक्ते घृतभेदे न०। [उप०। अजपालके, तेनाजीवके च।

**अजापालक** त्रि० अजान् आपालयति आ+पा-णिच् ण्वुल्

**अजि** त्रि० अजति अज-इन् व्यभावः। गतिशीले। पदाजिः। भावे इन्। गतौ, क्षेपे च स्त्रियां वा ङीप्।

**अजित** त्रि० न०त०। जितभिन्ने पराजितभिन्ने। जिधातोर्द्विकर्म्मकत्वात् अनिर्जितशत्रौ, अपराजितदेशादौ चास्य प्रवृत्तिः एकस्य कर्म्मणोऽविवक्षायामन्यस्य विवक्षायां तत्रैव कर्म्मणि क्तः। भूरिप्रयोगस्तु अनिर्जितशत्रावेव तथा च "गौणे कर्म्मणि दुह्यादे"रित्युक्तेः गौणकर्म्मण्येवाभिधाननियमात् तस्यैव जयकर्म्मतायां क्तेनाभिधातुं योग्यत्वम्। "न च तेऽस्त्यजितं किञ्चिदिति पुरा०, नास्त्येषाम्जितो देश" इत्यादौ गौणकर्म्मणोऽविवक्षयैव जयप्राप्तदेशादौ जितशब्दप्रयोगात् ततोनञ्समास इति भेदः। रागादिभिर्जितत्वाभावात् शिवे, विष्णौ, बुद्धे, च पु०।

**अजिन** न० अजति क्षिपति रजआदि, आवरणेन अज-इनच् न व्यादेशः। चर्म्मणि, चर्म्मावृतत्वादेव रजआदीनां न देहप्रवेश इत्यतश्चर्म्मणोरजोविक्षेपसाधनत्वात्तथात्वम्। "चैलाजिनकुशोत्तरमिति" श्रुतिः। "ऐणेनाजिनेन ब्राह्मणमिति" स्मृतिः। "गजाजिनं शोणितबिन्दुवर्षि चेति" "अथाजिनाषाढ़धर इति" च कुमा०। अदूरभवादावर्थे तस्या० अण्। आजिनीयः तददूरभवादौ त्रि०।

**अजिनपत्रा(त्री)** (त्रिका) स्त्री अजिनं चर्म्मैव कुत्सितं पत्रं पक्षो यस्याः ब०। (चामुचिका) इति प्रसिद्धे पक्षिभेदे गौ० ङीप् (त्री) तत्रार्थे। ततः स्वार्थे के ह्रस्वे टापि-पत्रिकापि तत्रार्थे।

**अजिनफला** स्त्री अजिनं चर्म्मविकारत्वात् भस्त्रा इव फलं यस्याः अजिनपूर्व्वकत्वेन जातिलक्षणं ङीषं बाधित्वा अजा० टाप्। (टेपारी) इति प्रसिद्धे, भस्त्राकारफले वृक्षभेदे।

**अजिर** न० अज-किरन् वीभावाभावः। (उठान) इति ख्याते चत्वरे। शीघ्रगन्तरि त्रि०। "श्येना अजिरा इति" ता० ब्रा० "अजिराः क्षिप्रगमनशीला इति" भाष्यम् अत एव क्षिप्रनाम्नि निरुक्ते अजिरमिति पठितम् शीघ्रवेग-

त्वात् नद्यां स्त्री। निरुक्ते च अजिरेति नद्याः नाम्नि पठितम् ऋषिभेदे पु॰ तदपत्यम् शुभ्रा॰ ढक्। आजिरेयः तदपत्ये पु॰ स्त्री। उत्करा॰ छ। अजिरीयः तत्सम्बन्धिनि त्रि॰।

**अजिरादि** ब॰ पाणिनिना संज्ञायां मतुपि दीर्घविधौ पर्य्युदस्ते शब्दसमूहे स च गणः अजिर, खदिर, पुलिन, हंस, कारण्डव, चक्रवाक इति। अजिरवती। तद्भिन्ने तु अमरावतीति।

**अजिह्म** त्रि॰ हा-मन् द्वित्वालोपौ ततः न॰ त॰। सरले "अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकामिति" पुरा॰।

**अजिह्मग** पु॰ अजिह्मं सरलं गच्छति गम-ड। बाणे। "वेगवद्भिरजिह्मगैरिति"। सरलगामिनि त्रि॰। "ब्रजेद्दिशमजिह्मग" इति।

**अजिह्व** पु॰ जि-वन् ह्रस्व च जिह्वा रसना सा नास्ति यस्य ब॰। भेके। तेषां जिह्वाशून्यत्वकथा भारते आनु॰। "उवाच देवान् मण्डूको रसातलतलोत्थितः। रसातलतले देवा! वसत्यग्निरिति प्रभो!। सन्तापादिह सम्प्राप्तः पावकप्रभवादहम्। स संसुप्तो जले देवा! भगवान् हव्यवाहनः। अपः सं सृज्य तेजोभिस्तेन सन्तापिता वयम्। तस्य दर्शनमिष्टं वो यदि देवा! विभावसोः। तत्रैनमधिगच्छध्वं कार्य्यं वो यदि वह्निना। गम्यतां साधयिष्यामो वयं ह्यग्निभयात् सुराः!। एतावदुक्त्वा मण्डूकस्त्वरितो जलमाविशत्। हुताशनस्तु बुबुधे मण्डूकस्य च पैशुनम्। स शशाप स तमासाद्य न रसान् वेत्स्यसीति वै। तं वै संयुज्य शापेन मण्डूकं त्वरितो ययौ। अन्यत्र वासाय विभुर्न चात्मानमदर्शयत्। देवास्त्वनुग्रहं चक्रुर्मण्डूकानां भृगूत्तम!। यत्तच्छृणु महाबाहो! गदतो मम सर्वशः। अग्निशापादजिह्वापि रसज्ञानबहिष्कृताः। सरस्वतीं बहुविधां यूयमुच्चारयिष्यथ। बिलवासगतांश्चैव निराहारानचेतसः। गतासूनपि संशुष्कान् भूमिः सन्धारयिष्यति। तमोघनायामपि वै निशायां विचरिष्यथ इति"। जिह्वाशून्ये त्रि॰।

**अजीकव** अजा गरलेपत्वेन कं ब्रह्माणं वाति प्रीणाति वा-क। शिवधनुषि। [आजीगर्त्तस्तदपत्ये पुंस्त्री।

**अजीगर्त्त** अजः गमनाय गर्त्तमस्य। सर्पे। बाह्वा॰ इञ्।

**अजीर्ण** न॰ जृ-भावे क्त न॰त॰। जठरानलमान्द्येन भुक्तान्नादेरपाके, न॰ब॰। रोगभेदे। "भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले। पूर्व्वं सशुण्ठीमभयामशङ्कः संप्राश्य भुञ्जीत हितं हि पथ्यमिति" चक्र॰। "अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदमिति" वैद्यकम्। कर्त्तरि क्त जीर्णोऽन्यः। तद्भिन्ने त्रि॰।

**अजीव** त्रि॰ नास्ति जीवो जीवनं वा यस्य। जीवरहिते घटादौ, मृते, जन्तुमात्रे च।

**अजीवनि** स्त्री न+जीव-अनि। आक्रुश्यमाने जीवनाभावे निन्दितजीवने च "अजीवनिस्तव भूयात्" इति मुग्ध॰। "तस्य भूयादजीवनिरिति"।

**अजुर** त्रि॰ अज-कुरच् व्यभावः। वेगशीले बलवति "अवक्रिणं वृषभं यथाजुरमिति" वेदः।

**अजेय** त्रि॰ जेतुमशक्ये जि-यत् न॰त॰। जयायोग्ये। अजेयाख्ये घृते न॰। "पिबेद्घृतमजेयाख्यमिति" वैद्यकम्।

**अजैकपाद (द्)** पु॰ अजस्य छागस्य एकः पाद इव पादो यस्य उपमा॰ब॰ न पादस्यान्त्याकारलोपः। रुद्रविशेषे, तद्देवताके पूर्व्वभाद्रपदनक्षत्रे च। पाच्छब्देन समासे अजैकपादपि तत्रार्थे। "वीरभद्रश्च १ शम्भुश्च २ गिरीशश्च ३ महायशाः। अजैकपाद (४) हिर्बुध्नः ५ पिनाकी ७ चापराजितः ७। भुवनाधीश्वरश्चैव ८ कपाली च ९ विशाम्पते! स्थाणु १० र्भगश्च ११ भगवान् रुद्रास्त्वेकादश स्मृता" इत्युक्तेषु एकादशसु रुद्रेषु मध्ये चतुर्थे रुद्रे। अन्यत्र तु अजैकपादहिर्बुध्ना २ विरूपाक्षश्च ४ रैवतः ५। हरश्च ६ बहुरूपश्च ७ त्र्यम्बकश्च ८ सुरेश्वरः ९। रुद्रा एकादश प्रोक्ता जयन्त १० श्चापराजितः ११ इत्येवं तद्भेदाः। एतेषामेव ध्यानानि वक्ष्यन्ते। तेन अज इति नामान्तरं एकपादिति च नामान्तरमिति द्रष्टव्यम्। "तेन अजनामा महारुद्रम्" इत्यादि अजस्य ध्यानम्। "एकपादाभिधो विप्रेत्यादि" एकपादस्य ध्यानमिति वक्ष्यते

**अज्जुका** स्त्री अर्जयति या सा अर्ज्ज-उक, पृ॰ रकारस्य जत्वम्। वेश्यायाम्। नाट्य एवास्य प्रयोगः नान्यत्र।

**अज्झटा** स्त्री अजति दोषं क्षिपति अज्-क्विप् झटति संहन्यते झट-अच् ततः कर्म्म॰ पृ॰ कुत्वचोभावाभावः। (भुँइ आमला) इति प्रसिद्धे वृक्षे।

**अज्झल** न॰ अजति क्विप् अक् झलति विजलति झल-अच् कर्म्म॰ पृ॰ न कुत्वम्। चर्म्मादिमये प्रतियोधायुधप्रतिरोधके (ढाल) इति ख्याते फलके।

**अज्ञ** त्रि॰ न जानाति ज्ञा-क न॰त॰। ज्ञानशून्ये चैतन्यशून्ये, विशेषज्ञानशून्ये, मूर्खे, वेदान्तिमतसिद्धाज्ञानरूपपदार्थवति च। तैर्हि अहमज्ञ इत्यनुभवस्य अज्ञानविषयत्वं स्वीक्रियते अज्ञानस्य न ज्ञानाभावः किन्तु पदार्थान्तरं

तच्चाज्ञानशब्दे विस्तरेण वक्ष्यते । प्राज्ञः प्रकर्षेणाज्ञः सुषुप्त्यवस्थापन्ने जीवे तदानीं विशेषज्ञानाभावात् प्राज्ञत्वम् । अचेतने, जडे, "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्येति" सांख्यका० । अल्पज्ञे, किञ्चिज्ज्ञे च ।

**अज्ञात** त्रि० न ज्ञातः । ज्ञानाविषयीभूते पदार्थे । "अज्ञातकुलशीलस्य वासो देयो न कस्यचित्" इति हितोप० ।

**अज्ञान** न० न ज्ञानम् । ज्ञानाभावे, ज्ञानविरोधिनि तदभावे "तत्राज्ञानं धिया नश्येदिति" वेदान्तिमतसिद्धे पदार्थान्तरे च "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव" इति गीता । "अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकयेति, गुरुनतिः । अज्ञानञ्च ज्ञानाभाव इति नैयायिकाः । पदार्थान्तरमिति वेदान्तिनः । तथाहि अहं न जानामि अहमज्ञ इत्यादिविशिष्टानुभवः सार्वलौकिकः स च ज्ञानाभावविषय इति नैयायिकैर्यदुक्तं तन्न युक्तं विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतायाः सर्ववादिसिद्धतया आत्मधर्म्मिकज्ञानाभावप्रकारकज्ञाने जनयितव्ये तद्विशिष्टज्ञानाभावघटकज्ञानरूपस्य विशेषणस्य ज्ञानं पूर्व्वमपेक्षितम् आत्मनि तादृशे ज्ञाने च तदानीं सति कथङ्कारं ज्ञानाभावविशिष्टबुद्धिः स्यात् यस्मिन् धर्म्मिणि ज्ञानमस्ति तत्र ज्ञानाभावज्ञानस्य बाधितत्वमेव अभावबुद्धेः प्रतियोगिज्ञानरोधितायाः सर्वसम्मतत्वात् । किञ्च ज्ञानाभावः किं ज्ञानसामान्याभाव उत तत्प्रागभावः अथ तद्ध्वंसो वा तत्र विषयो भवति, नाद्यः पूर्व्वोक्तयुक्त्या ज्ञानाभावानुभवासम्भवेन प्रत्याख्यातत्वात् । न द्वितीयः प्रागभावस्य सामान्यधर्म्मानवच्छिन्नप्रतियोगिताकतया तत्तज्ज्ञानप्रागभावस्यैव विषयता वाच्या सा च न सम्भवति सामान्याकारेण ज्ञानाभावस्यैव प्रतीयमानत्वात् अन्यथा ज्ञानवत्यपि पुरुषे तादृशप्रतीतिः स्यात् अग्रे जनिष्यमाणानन्तज्ञानप्रागभावानामात्मनि सत्त्वेऽपि तेषाञ्च तत्तज्ज्ञानप्रतियोगिकत्वेन ज्ञानसामान्यविशिष्टबुद्धौ विरोधिताभावात् । नान्त्यः प्रागभावरीत्या तस्यापि प्रत्याख्यातत्वात् । अतस्तादृशानुभवस्य विषयरक्षार्थं ज्ञानाभावातिरिक्तमज्ञानं कल्पनीयम् । तच्चानुमानेनैव । अनुमानञ्चेत्थमुक्तं प्रमेयविवरणोपन्यासे । विवादाध्यासितं ज्ञानं स्वप्रागभावातिरिक्तस्वविषयावरकस्वविषयकवस्तुपूर्व्वकं भवितुमर्हति प्रकाशत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । यथा अन्धकारे प्रथमोत्पन्ना प्रदीपप्रभा स्वविषयस्य घटादेरावरकतमोरूपपदार्थपूर्व्विका एवं ज्ञानमपि प्रकाशत्वादस्मात् स्वविषयस्य घटादेरावरकं किञ्चित् पदार्थं समानविषयकं नियतम् पूर्व्वमपेक्षते । उत्पन्ने च ज्ञाने प्रदीपप्रभया तम इव तन्निवर्त्तते ज्ञानप्रागभावेन सिद्धसाधनतावारणाय स्वप्रागभावातिरिक्तेति विशेषणम् । तच्च अज्ञानं ज्ञानविरोधि सत्त्वासत्त्वाभ्यामनिर्वचनीयम् । तच्च शुक्तिकाद्यज्ञानं शुक्तौ रजतादिकमिव ब्रह्मणि प्रपञ्चमुत्पादयति । अतएव तद्भावरूपं भावस्यैव भावपदार्थोपादानत्वसम्भवात् । अभावस्य तु अधिकरणस्वरूपत्वाङ्गीकारात् न भावस्याभावोपादानत्वव्याघातः । तस्य भावरूपत्वेऽपि न त्रैकालिकाबाध्यत्वरूपम् सत्त्वं तत्त्वज्ञानेन बाध्यत्वात् नापि प्रातीतिकरजतादिवदसत्त्वम् व्यवहारयोग्यत्वात् । अतः सदसद्भ्यामनिर्वचनीयं व्यवहारिकसत्त्ववत् यत् किञ्चित् भावरूपं पदार्थान्तरमेवाज्ञानमिति सुस्थितम् । अस्य चाज्ञानस्य द्वे शक्ती आवरणं विक्षेपश्च तत्र या कदाचित् स्वविषयमावृणोति (विषयत्वसंप्राप्त्यनर्हं करोति) सा आवरणशक्तिः या तु स्वकार्य्यबुद्धिवृत्त्या इन्द्रियादिद्वारा विषयदेशं प्राप्य विषयगतं स्वकारणनिष्ठावरणशक्तिं नाशयति सा विक्षेपशक्तिः यथोक्तं "बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येत् आभासात्तु घटः स्फुरेदिति" । यथा च शुक्तिविषयाज्ञानं स्वविषयशुक्तिमावृत्य स्वशक्त्यैव तत्र उत्पादितं रजतं विषयीकृत्य तद्गतमावरणशक्तिं नाशयति एवं ब्रह्मविषयकाज्ञानं स्वशक्त्यैव ब्रह्मणि उत्पादितं प्रपञ्चं विषयीकृत्य तत्तदाकारबुद्धिवृत्तिरूपा विक्षेपशक्तिः तद्गतावरणशक्तिं निवारयतीति दृष्टानुसारिणीयं कल्पना । अधिकमाकरे द्रष्टव्यम् । नास्ति विशिष्टज्ञानमस्य । विशिष्टज्ञानाभाववति अज्ञे त्रि० ।

**अज्मन्** स्त्री अजति गच्छति स्वर्गं दानेनानया अजकरणे मनिन् न वीभावः । गवि, इति निरुक्तकारः ।

**अञ्चति** पु० न० अन्च-गतौ कर्त्तरि अति । वायौ, गन्तरि त्रि० ।

**अञ्चल** पु० अञ्चति प्रान्तम् अन्च-अलच् । वस्त्रप्रान्ते "क्षौमाञ्चलमिव पीनस्तनजघनायाः कुलीनायाः" इति "भूमौ दत्त्वा पदमिह समाधेहि चेलाञ्चलेऽस्मिन्निति च उद्भटः । प्रान्तभागे "दृगञ्चलैः पश्यति केवलं मनागिति" उद्भटः ।

**अञ्चित** त्रि० अन्च-क्त । पूजिते, आकुञ्चिते च । "अपि लङ्घनमङ्गनाञ्चितमिति" नैष० । "अञ्चितसव्यपाद इति" भट्टिः । "अञ्चितः शूलपाणिरिति" पुरा० । गमिते च "ऊर्द्धाञ्चिता सत्वरकल्पितया" इति रघुः ।

**अञ्जन** न० अज्यतेऽनेन अन्ज-करणे ल्युट्। कज्जले। "अपि अञ्जनमञ्जनमञ्जनाञ्चितमिति" नैष०। "मैत्रं प्रसाधनं स्नानं दन्तधावनमञ्जनम्। पूर्व्वाह्णएव कुर्व्वीतेति" स्मृतिः। "विलोचनं दक्षिणमञ्जनेन संभाव्येति" रघुः। अञ्जनविशेषाश्च सुश्रुते दर्शिता यथा "चत्वार एते योगाः स्युरुभयोरञ्जने हिताः। कुञ्ज-काशोकशालाम्रप्रियङ्गुनलिनोत्पलैः॥ पुष्पैर्हरेणुकृष्णाह्वा-पथ्यामलकसंयुतैः। सर्पिर्मधुयुतैश्चूर्णैर्वेणुनाड्यामवस्थितैः॥ अञ्जयेद् द्वावपि भिषक् पित्तश्लेष्मविभावितौ। आम्रजम्बू-द्भवं पुष्पं तद्रसेन हरेणुकाम्॥ पिष्ट्वा क्षौद्राज्यसंयुक्तां प्रयोज्यमथ वाञ्जनम्। नलिनोत्पलकिञ्जल्कगैरिकैर्गोश-कृद्रसैः॥ गुडिकाञ्जनमेतद्वा दिनरात्र्यन्धयोर्हितम्। रसाञ्जनरसक्षौद्रतालीशस्वर्णगैरिकम्॥ गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये। शीतं सौवीरकं चापि पिष्ट्वाथ रस-भावितम्॥ कूर्म्मपित्तेन मतिमान् भावयेद्रौहितेन वा। चूर्णाञ्जनमिदं नित्यं प्रयोज्यं पित्तशान्तये॥ काश्मरी-पुष्पमधुकदार्व्वीलोध्ररसाञ्जनैः। सक्षौद्रमञ्जनन्तद्धितं नेत्रा-मये सदा॥ स्रोतोजं सैन्धवं कृष्णां रेणुकाञ्चापि पेष-येत्। अजमूत्रेण ता वर्त्तिः क्षणदान्ध्याञ्जने हिताः॥ कालानुसारिवां कृष्णां नागरं मधुकं तथा। ताली-शपत्रं क्षणदे गाङ्गेयञ्च शकृद्रसे॥ कृतास्ता वर्त्तयः पिष्ट्वा-च्छायाशुष्काः सुखावहाः। मनःशिलाभयाव्योषबलाका-लानुसारिवाः॥ सफेना वर्त्तयः पिष्टाश्छागक्षीरसम-न्विताः। गोमूत्रपित्तमदिराशकृद्धात्रीरसे पचेत्॥ चूर्णाञ्जनं रसे चान्यद्यकृतस्तैफलेऽपि वा। गोमूत्राज्या-र्णवमलपिप्पलीक्षौद्रकट्फलम्॥ सैन्धवोपहितं शुक्रा-चिहितं वेणुगह्वरे। मेदोयकृद्घृतच्छागं पिप्पल्यः सैन्धवं मधु॥ रसमामलकञ्चापि पक्वं सम्यङ्निधापयेत्। कोषे खदिरनिर्म्माणे तद्वत्क्षुद्राञ्जनं हितम्॥ हरेणुमग-धाजास्थिमज्जैलायकृदन्वितम्। शकृद्रसेनाञ्जनं वा श्लेष्म-महतदृष्टये॥ विपाच्य गोधायकृदर्द्धपाटितं सुपूरितं मागधिकाभिरग्निना। निषेवितं तत्सकृदञ्जनेन निहन्ति नक्तान्ध्यमसंशयं खलु॥ तथा यकृच्छागभवं हुताशने विपाच्य सम्यक्मगधासमन्वितम्। प्रयोजितं पूर्व्ववदा-श्वसंशयं जयेत् क्षपान्ध्यं सकृदञ्जनक्रियाम्॥ प्लीहा यकृच्चाप्यपभक्षिते उभे प्रकल्प्य शूल्ये घृततैलसंयुतम्। ते चार्धपक्वे ह्यसमायुतेऽञ्जनं नक्तान्ध्यमाश्वेव हतः प्रयोजिते। नदीजशङ्खत्रिकटून्यथाञ्जनं मनःशिला द्वे च निशे शकृ-द्रसे। स चन्दनेयं गुटिकाथ वाञ्जनं प्रशस्यते वै दिवसेष्व-पश्यताम्" इति॥ सौवीरे, रसाञ्जने च। अञ्जनवर्णोऽस्त्यस्य। अर्श०अच्। ज्येष्ठदिग्गजे पु० उत्तरदिग्गजयोषिति केशरियोषिति वानर्याञ्च स्त्री। "अञ्जनागर्भसम्भूतो वायु-पुत्रो महाबल इति" तन्त्रम्। भावे ल्युट्। मिश्रीकरणे, लेपने व्यक्तिकरणे मालिन्ये च न० "निरञ्जनं दिव्यमुपैति साम्यमिति" निरवद्यं निरञ्जनमिति" च श्रुतिः। अञ्ज-णिच्-युच्। शक्यलक्ष्यार्थातिरिक्तार्थबोधके आलङ्कारि-कोक्ते व्यञ्जनापरनामके शब्दशक्तिभेदे स्त्री० "अन्यार्थधी-कृत् व्यापृतिरञ्जनेति" काव्यप्रकाशः। तत एव भावे ल्युट् तत्रैवार्थे न०।

**अञ्जनकेशी** स्त्री अञ्जनमिव केशो यस्याः ५त०। केश-संस्कारके हट्टविलासिनीनामके गन्धद्रव्ये। यत्संयोगात् केशस्यातीव कृष्णता स्यात्।

**अञ्जनशलाका** स्त्री अञ्जनसाधनं शलाका। अञ्जनदानार्थ शलाकायाम् "ज्ञानाञ्जनशलाकयेति" गुरुनतिः।

**अञ्जनागिरि** पु० अञ्जनवर्णो गिरिः किंशुका०दीर्घः। नील-पर्वते तद्विवरणं नीलगिरिशब्दे।

**अञ्जनाद्रि** पु० अञ्जनमिव कृष्णः अद्रिः। नीलपर्वते "अञ्ज-नाद्रिनिभां श्यामामिति" कालीध्यानम्।

**अञ्जनाधिका** स्त्री अञ्जनादधिका कृष्णत्वात् ५त०। (आज-नाइ) इति ख्याते कीटभेदे।

**अञ्जनावती** स्त्री अञ्जनं विद्यतेऽस्याः अधिककृष्णवर्णत्वात् अञ्जन+मतुप् वत्वं दीर्घः। ऐशानकोणस्य हस्तिन्याम्। कालाञ्जनवृक्षे पु०।

**अञ्जनिका** स्त्री अञ्जनवर्णोऽस्त्यस्याः ठन् कापि पूर्व्वा-कारस्य ह्रस्वम्। (आजनाइ) इति प्रसिद्धे अञ्जनाख्ये कीटभेदे। अञ्जिना स्वार्थे कन्। प्रतीकादिग्गजस्त्रियाम्। पुरोहि०यक्। आञ्जनिक्यम् तद्भावे न०।

**अञ्जनी** स्त्री अज्यते चन्दनकुङ्कुमादिभिरसौ अन्ज-कर्म्मणि ल्युट् ङीप्। कुङ्कुमाद्यनुलिप्तायाम् स्त्रियाम्। करणे ल्युट्। कटुकावृक्षे, कालाञ्जनवृक्षे च। "अञ्जनीदारुकाष्ठमय-स्तम्भः मैत्रावरुणः" इति याज्ञिकाः व्याख्यायां स्त्रियाञ्च।

**अञ्जलि** पु० अन्ज-अलि। संयुतकरपुटे, "अवधाञ्जलि-पुटमेवमिति वेणी०। "न्यायप्रसूनाञ्जलिरिति" उदयनः कुडवपरिमाणे च अञ्जलिपरिमितद्रव्ये च "प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयमिति" वेणी०। [चालमणिकायाम्।

**अञ्जलिका** स्त्री अञ्जलिरिव कायति प्रकाशते कै-क टाप्।

**अञ्जस्** न० अनक्ति गच्छति मिश्रयति वाऽनेन अनूज्-गतौ मिश्रणे च असुन्। वेगे, बले, औचित्ये च। "अञ्जस उपसंख्यानमिति" वार्त्तिकात् तृतीयायाः अलुक्। अञ्जसा-कृतम्। "अञ्जः समुद्रमपजग्मुरापः" इति वेदः।

**अञ्जस** त्रि० अनूज-असच्। सरले अवक्रे।

**अञ्जसा** अव्य०अनूज-भावे अच् अञ्जं गतिं विलम्बं वा स्यति सो-वा०का। विलम्बाभावे, शैघ्र्ये, याथार्थ्ये च। "रसोऽ-ञ्जसा यासता रज" इति वेदः।

**अञ्जि** पु० अज्यतेऽनेन अनूज-करणे इन्। तिलकादौ चिह्ने "अग्नयेऽनीकवते रोहिताञ्जिरनड्वानिति" य० रोहितो रक्तोऽञ्जिस्तिलकोऽस्येति वेददीपः। "तस्मै दन्ताञ्जये इति" भवद्देवे वेदमन्त्रः। [(ष्णु)ष्। सूर्ये।

**अञ्जिष्ठ(ष्णु)** पु० अनक्ति स्वभाभिर्विश्वम्। अनूज-इष्ठ-

**अञ्जी** स्त्री० अञ्जि+वा ङीप्। मेघवायन्त्रे, मङ्गले च।

**अञ्जीर** पु० अनूज-बा० ईरन् (पेयारा) इति ख्याते वृक्षे।

**अट** गतौ भ्वादि० सक० पर० सेट्। अटति आटीत्। "भो वटो भिक्षामटेति" सि०कौ। परि+परितो भ्रमणे पर्य्यटन्।

**अट** गमौ इदित् भ्वा०आत्म०सक०सेट्। अण्टते आण्टिष्ट।

**अटनि(नी)** स्त्री अटति मौर्व्वीम् अट-अनि वा ङीप्। धनुरग्रे गुणारोपणस्थाने।

**अटरु(रू)ष** पु० अटति भ्रमति अट-अच् तं रोषति हिनस्ति रुष-क, अटैः अटद्भिर्वा रूष्यते न युज्यते रूष-क वा। (वासक) इति ख्याते वृक्षे।

**अटवि(वी)** स्त्री अटन्ति चरमे वयांसि यत्र अट-अवि वा ङीप्। वने। विन्ध्याटवीति का० विन्ध्यगिरिसन्निकृष्ट प्रसिद्धवनम्। "कान्तारप्रदेशेष्वटवीषु चेति" रामा०।

**अटा** स्त्री अट-बा० अङ्। पर्य्यटने।

**अटाट्या** स्त्री अट-यङ्-भावे अ स्त्रीत्वात् टाप्। परि-भ्रमणे, हृत्यागमने च। यङ्लुकि। अटाटाट्या।

**अट्ट** अतिक्रमे वधे च भ्वादि० आत्म० सक० सेट्। अट्टते। आट्टिष्ट। टोपधोऽयं तेन अट्टिटिषते आट्टिटत्। क्विपि अत्। टोपधस्य तु आटिट्टिषते अटिट्टत् क्विप् अट्।

**अट्ट** अनादरे चुरादि० उभय० सक० सेट्। अट्टयति ते। आटिट्टत्।

**अट्ट** पु० अट्टयति अनाद्रियतेऽन्यद्यत्र अट्ट-आधारे घञ्। प्रासादस्योपरिगृहे, प्राचीरोपरिस्थसैन्यगृहे, च यत्र स्थिता हि नरा अन्यान् हीनतया नाद्रियन्ते, यस्मिन् वसतश्च अन्योत्कर्षेऽनादरः। उच्चे भृशे च त्रि०अट्टे "अट्टशूला जनपदाः शिवशूलाश्चतुष्पथा" इति भार० "अट्टमन्नं शूलं विक्रेयं येषामिति" नीलकण्ठः शुष्के च न०। क्षौमवस्त्रे प्रासादे च पु० "सुधाधवलाट्टहासेति" काद०। "ददृशे नगरी लङ्का साट्टप्राकारतोरणेति" रामा०। अट्टगृहे प्रासादलक्षणादि वक्ष्यते।

**अट्टट्ट** अव्य० अट्टोऽनादरः अट्टप्रकारः अट्टस्य गुणवाचितया प्रकारे द्वित्वम् शकन्ध्वादि० पररूपम्। अत्युच्चे, "अट्टट्ट हासमशिवं शिवदूती चकार हेति" चण्डी

**अट्टन** न० अट्ट्यतेऽनाद्रियते रिपुरनेन अट्ट-करणे ल्युट्। चक्राकारफलकास्त्रे। भावे ल्युट्। अनादरे न०।

**अट्टस्थली** स्त्री अट्टप्रधाना स्थली शा०त०। प्रासादप्रधाने देशभेदे धूमा० वुञ्। आट्टस्थलकः तद्देशभवे त्रि०।

**अट्टहास** पु० अट्टेनातिशयेन हासः हस-घञ् ३त०। उच्चहासे।

**अट्टहासक** पु० अट्टहास इव कायति कै-क। कुन्दवृक्षे तस्य शुभ्रपुष्पत्वात् उच्चहासतुल्यत्वम्। [उच्चहासिनि त्रि०।

**अट्टहासिन्** पु० अट्टमत्यर्थं हसति हस-णिनि। शिवे।

**अट्टाट्ट** पु० अट्टट्टवत् न पररूपम्। अत्युच्चे सर्व्वोत्कर्षे अना-दराधिक्ये।

**अट्टालक** पु० अट्ट इव प्रासादगृहमिव अलति पर्य्याप्तो भवति अल-अच्। प्रासादोपरिस्थे गृहे। स्वार्थे कन्। तत्रार्थे 'गोपुराट्टालकवतीं हर्म्यप्राकारशोभनामिति" रा०।

**अट्टालिका** स्त्री अट्टाल+स्वार्थे कन्। इष्टकादिनिर्म्मिते राजगृहे।

**अट्टालिकाकार** पु० अट्टालिकां करोति रचयति कृ-अण् उप०। (राज) प्रासादकारके "कुलटायां च शूद्रायां चित्रकारस्य वीर्य्यतः। भवेदट्टालिकाकारः पतितो जारदोषत"इत्युक्ते सङ्कीर्णजातिभेदे।

**अठ** गतौ भ्वादि० पर० सक० सेट्। अठति। आठीत्।

**अठ** गतौ इदित् आ० भ्वादि० सक० सेट्। अण्ठते। आण्ठिष्ट।

**अड** उद्यमे भ्वादि० पर० सक० सेट्। अडति आडीत्।

**अड** व्याप्तौ स्वादि० पर० अक०सेट्। वेद एवास्य प्रयोगः। अड्णोति। आडीत्।

**अड्ड** अभियोगे, समाधाने च भ्वादि०पर०सक०सेट्। अड्डति। आड्डीत्। दोपधोऽयम् अड्डिडिषति आड्डिडत्। क्विप् अत्। डोपधस्य तु आडिड्डिषति आडिड्डत् अद्

**अण** शब्दे भ्वादि० पर० अक० सेट्। अणति। आणीत्।

**अण** जीवने दिवा० आत्म० अक० सेट्। अण्यते आणिष्ट।

**अण (न) क** त्रि० अणति यथेच्छम् नदति अण-अच् ततः कुत्सायाम् क। अधमे, निन्दिते च। "पापाणके कुत्सितैरिति पा०"। अणक कुलालः सि०कौ०। इन्द्रमध्यशायमित्यन्ये।

**अणव्य** त्रि० अणोः सूक्ष्मशस्यचीनादिकस्य भवनं चेत्रम् अणु+यत्। चीनकादिसमुत्पत्तियोग्ये (चिनाभूमि) चेत्रे।

**अणि** पु० स्त्री अणति शब्दायते अण-इन्। (आरा) इति ख्याते रथचक्राग्रस्थिते कीलके, सूच्याद्यग्रभागे च। स्त्रीत्वे वा ङीप्। अत्र आदेर्दीर्घतापीष्यते। तेन आणिः आणी।

**अणिमन्** पु० अणोर्भावः अणु+इमनिच्। सूक्ष्मत्वे सूक्ष्मपरिमाणे, ऐश्वर्य्यभेदे च यद्वशात् सूक्ष्मीभूय सर्व्वत्र गन्तुं शक्नोति। ऐश्वर्य्याणि च। "अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वं च वशित्वञ्च तथा कामावसायिता" इत्युक्तानि। एतेषां स्वरूपाणि ऐश्वर्य्यपदार्थनिरूपणे वक्ष्यन्ते। "यथा केशः सहस्रधा भिन्नस्तावताणिम्नेति" वेदः।

**अणिष्ठ** त्रि० अतिशयेन अणु-इष्ठन्। अणुतरे अतिसूक्ष्मे। "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं, यन्मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मन" इति छा०उ०।

**अणीमाण्डव्य** पु०अणौ शूलाग्रं तच्चिह्नितः माण्डव्यः। तन्नामके मुनिभेदे। तस्य तत्प्रोतत्वकथा भार०आ०प०। "बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः। धृतिमान् सर्व्वधर्म्मज्ञः सत्ये तपसि च स्थितः॥ स आश्रमपदद्वारि वृक्षमूले महातपाः। ऊर्द्ध्वबाहुर्म्महायोगी तस्थौ मौनव्रतान्वितः॥ तस्य कालेन महता तस्मिंस्तपसि वर्त्ततः। तमाश्रमपदं प्राप्ता दस्यवो लोप्त्रहारिणः॥ अनुसार्य्यमाणा बहुभी रक्षिभिर्भरतर्षभ!। ते तस्यावसथे लोप्त्रं दस्यवः कुरुसत्तम!। निधाय च भयाल्लीनास्तत्रैवानागते बले। तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम्। आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः॥ तमपृच्छंस्ततो राजंस्तथावृत्तं तपोधनम्। कतमेन पथा याता दस्यवो द्विजसत्तम!। तेन गच्छामहे ब्रह्मन्! पथा शीघ्रतरं वयम्॥ तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः। न किञ्चिद्वचनं राजन्नब्रवीत् साध्वसाधु वा॥ ततस्ते राजपुरुषा विचिन्वानास्तमाश्रमम्। ददृशुस्तत्र लीनांस्तांश्चौरां द्रव्यमेव च॥ ततः शङ्का समभवद्रक्षिणां तं मुनिं प्रति। संयम्यैनं ततो राज्ञे दस्यूंश्चैव न्यवेदयन्॥ तं राजा सह तैश्चौरैरन्वशाद्वध्यतामिति। स रक्षिभिस्तैरज्ञातः शूले प्रोतो महायशाः॥ ततस्ते शूल आरोप्य तं मुनिं रक्षिणस्तदा। प्रतिजग्मुर्महीपालं धनान्यादाय तान्यथ॥ शूलस्थः स तु धर्म्मात्मा कालेन महता ततः। निराहारोऽपि विप्रर्षिर्म्मरणं नाभ्यपद्यत। धारयामास च प्राणान्नृषींश्च समुपानयत्॥ शूलाग्रे तप्यमानेन तपस्तेन महात्मना। सन्तापं परमं जग्मुर्मुनयस्तपसान्विताः॥ ते रात्रौ शकुना भूत्वा सन्निपत्य तु भारत!। दर्शयन्तो यथाशक्ति तमपृच्छन् द्विजोत्तमम्॥ श्रोतुमिच्छामहे ब्रह्मन्! किं पापं कृतवानसि। येनेह समनुप्राप्तं शूले दुःखभयं महत्॥ वैशम्पायन उवाच। ततः स मुनिशार्दूलस्तानुवाच तपोधनान्। दोषतः कं गमिष्यामि न हि मेऽन्योऽपराध्यति॥ तं दृष्ट्वा रक्षिणस्तत्र तथा बहुतिथेऽहनि। न्यवेदयंस्तथा राज्ञे यथावृत्तं नराधिप!॥ श्रुत्वा च वचनं तेषां निश्चित्य सह मन्त्रिभिः। प्रसादयामास तदा शूलस्थमृषिसत्तमम्॥ राजोवाच। यन्मयापकृतं मोहादज्ञानादृषिसत्तम!। प्रसादये त्वां तत्राहं न मे त्वं क्रोद्धुमर्हसि॥ एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः। कृतप्रसादं राजा तं ततः समवतारयत्॥ अवतार्य्य च शूलाग्रात्तच्छूलं निश्चकर्ष ह। अशक्नुवंश्च निष्क्रष्टुं शूलं मूले स चिच्छिदे॥ स तथान्तर्गतेनैव शूलेन व्यचरन्मुनिः। तेनातितपसा लोकान् विजिग्ये दुर्लभान् परैः। अणीमाण्डव्य इति च ततो लोकेषु गीयते" इति॥

**अणीयस्** त्रि० अतिशयेन अणुः अणु+ईयसुन्। अणुतरे अतिसूक्ष्मे "अणोरणीयान् महतो महीयान् इति" श्रुतिः। स्त्रियां ङीप्।

**अणु** त्रि० अण-उन्। क्षुद्रे, सूक्ष्मपरिमाणवति, द्रव्ये, लेशे च। (चिना, काङ्नी, श्यामा) प्रभृति सूक्ष्मधान्ये पु०। "अनणु दशमांशोऽण्वथैकादशांश" इति लीला०। अणुशब्दो हि परिमाणविशेषवाची। तत्र परिमाणस्य चतुर्व्विधा स्थूलसूक्ष्मदीर्घह्रस्वरूपाः "अथादेशो नेति नेति" इत्युपक्रम्य "अस्थूलमनण्वह्रस्वमदीर्घमित्यादि" श्रुत्या चतुर्व्विधपरिमाणस्यैव ब्रह्मणि निषेधेन परिमाणचातुर्व्विध्यलाभः एतन्मूलकमेव शारीरकभाष्ये, वैशेषिकसूत्रे, न्यायकन्दल्याञ्च उक्तभेदमादाय परिमाणचातुर्व्विध्यमुक्तम्। तत्रारम्भकद्रव्यमयत्वाभूयस्त्वाभ्यां स्थूलसूक्ष्मत्वे ह्रस्वदीर्घत्वे तु तत्तच्छब्दे वक्ष्येते। एवञ्च सूक्ष्मपदार्थे आरम्भकात्यन्त

त्वात् अणुत्वं यत्र चारम्भकद्रव्यान्तरं नास्ति स तादृशपरिमाणवत्त्वात् परमाणुरित्युच्यते । एवञ्च अणुशब्दस्य शुक्लादिशब्दवत् अणुत्वपरिमाणविशिष्टद्रव्यवाचकत्वम् । अणुत्वञ्च सूक्ष्मत्वम् अतिसूक्ष्मत्वञ्च । तत्र सूक्ष्मपरत्वेन सर्षपचीनकादिद्रव्याणामारम्भकद्रव्यात्मत्वात् तत्र प्रवृत्तिः । तदभिप्रायेणैव "अनणु दशमांशोऽण्वष्टैकादशांश" इति लीला० । श्रुतौ च "अणोरणीयानिति" निर्देशः । अतिसूक्ष्मपरत्वे च "नित्या स्यादणुलक्षणेति" भाषा० तत्र नित्यत्वञ्च आरम्भकावयवाभावात् "अनित्या च भवेदन्या सैवावयवयोगिनीति" भाषापरिच्छेदेऽवयवयोगिन्यानित्यत्वकथनात् परमाणोस्तदभावेनैव नित्यत्वं भङ्ग्योक्तमिति नैयायिकाः । वेदान्तिनस्तु सूक्ष्मभूतानामपि ब्रह्मण उत्पत्तिमङ्गीचक्रुः । यथा च एतन्मतयोः युक्तायुक्तत्वे तथा आरम्भवादशब्दे वक्ष्यते । सूक्ष्मार्थग्राहित्वेन अणुबुद्धिरित्यादौ, अणुजीव इत्यादौ च दुर्ज्ञेयत्वेन तत्र तस्य भाक्तत्वम् । एवञ्च अणुत्वपरिमाणरूपगुणमादाय तद्वाचकत्वात्र प्रवृत्तिः तेन तत्र त्रि० स्त्रियान्तु गुणवचनतया वा ङीप् । अण्वी । "अण्व्योमात्राविनाशिन्यो दशार्द्धानाञ्च याः स्मृता इति मनुः ।" "अस्थूलमनणु इत्यादि" श्रुतिः अत्र नञ्तत्पुरुषसमासनिष्पन्नस्य अनणुशब्दस्य "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति" पाणिन्युक्तेः परवल्लिङ्गत्वेन अणुशब्दस्यापि नपुंसकत्वमित्यवसीयते । अधिकं परमाणुशब्दे वक्ष्यते ।

**अणुक** त्रि० अणुप्रकारः अणु-स्थूला० कन् । अणुप्रकारे स्वार्थे कन् । अणुशब्दार्थे चीनकादिधान्ये पु० ।

**अणुत्व** न० अणोर्भावः । अणुपरिमाणे ।

**अणुधर्म्म** पु० अणुः सूक्ष्मो दुर्विज्ञेयो धर्म्मः । "दुर्ज्ञेये धर्म्मे" "नहि सुबोधोऽण्वेव धर्म्म इति" पुरा० ।

**अणुभा** स्त्री अण्वी सूक्ष्मा भा दीप्तिर्यस्याः ब० । विद्युति ।

**अणुमात्र** त्रि० अणुः परिमाणमस्य अणु+मात्रच् । अल्पपरिमाणे "स अणुमात्रेण न संबध्यते" इति शारीरकभा० ।

**अणुरेवती** स्त्री अणुः सूक्ष्मा रेवती तारेव । दन्तिवृक्षे ।

**अणुवीक्षण** न० अणुः सूक्ष्मो वीक्ष्यतेऽनेन करणे ल्युट् । सूक्ष्मपदार्थदर्शनसाधने यन्त्रभेदे, भावे ल्युट् । सूक्ष्मपदार्थालोचने न० ।

**अणुव्रीहि** पु० कर्म० । सूक्ष्मधान्ये श्यामादौ चीनकादौ च ।

**अण्ड** न० अमन्ति संप्रयोगं यान्ति अनेन अम-ड टवर्गादित्वेऽपि डस्य नेत्त्वम् । पुंसोऽवयवभेदे मुष्के, पक्षिडिम्बे, "तदण्डमभवद्धैमं सहस्रांशुसमप्रभमिति" मनुः । "ब्रह्माण्डभाण्डोदरभ्रामयदिति" वीर० । वीर्य्ये च । स्वार्थे कन् । तत्रैव । अस्मिन् कुक्कुट्यादीनां पुंवत् । कुक्कुटाण्डम् ।

**अण्डकटाह** न० अण्डं ब्रह्माण्डं कटाहमिव प्राणिजातकृतकर्मपाकसाधनत्वात् । शुभाशुभकर्मपाकसाधने ब्रह्माण्डगोलके । "तद्ब्रह्माण्डकटाहसंपुटतटे" इति सि० शि० गो० ।

**अण्डकोटरपुष्पी** स्त्री० अण्डमिव कोटरे मध्ये पुष्पं यस्याः जातित्वात् ङीप् । नीलबुह्माख्ये ।

**अण्डकोष(श)** पु० अण्डस्य मुष्कस्य कोष(शः) इवावरकत्वात् । अण्डाकारे चर्म्मावृते पुंचिह्नभेदे ।

**अण्डज** पु० अण्डात् डिम्बात् जायते जन-ड । अण्डजाते पक्षिणि, सर्पे, मत्स्ये, (कांकलास) इति ख्याते कृकलासे च । अण्डजातमात्रे त्रि० । मृगनाभिकस्तूर्य्यान्तु स्त्री "अण्डजास्तु पक्षिणः सर्पा नक्रा मत्स्याः कच्छपा" इत्यादयः सर्व्व एवाण्डजातत्वात् "अण्डजाः । तेषामुत्पत्तिप्रकारः पदार्थादर्शे दर्शितो यथा "अण्डतो वर्त्तुलीभूताच्छुक्रशोणितसंयुतात् कालेन भिन्नात् पूर्णाङ्गा निर्गच्छन् भक्षयिष्यतीति" । अण्डजातादयोऽप्यत्र ।

**अण्डालु** पु० अण्डः अस्त्यस्य अण्ड+आलुच् । डिम्बविशिष्टे मत्स्ये ।

**अण्डीर** पु० अण्डः पुमवयवभेदः अस्त्यस्तीति अण्ड-ईरन् । विशिष्टसामर्थ्यवति पुरुषे, समर्थे च ।

**अत** बन्धने इदित् भ्वा० पर०सक०सेट् । अन्तति । आन्तीत् "समन्तति कपोत इव गर्तधिमिति" वेदः ।

**अत** बन्धने भ्वादि० पर०सक० सेट् । अतति । आतीत् ।

**अत** प्रापणे, सातत्ये, गतौ च भ्वादि० पर० सक०सेट् । अतति । आतीत् । क्त अतितः । इन् ( पदातिः ) "अतिथिरभ्यतति स्वहान् प्रति" इति वेदः ।

**अत्** अव्य० अत-क्विप् । आश्चर्य्ये । ऊर्य्यादि० । अद्भुतम् ।

**अतक** पु० अतति सततं गच्छति अत-कन् । पथिके ।

**अतट** पु० तट्यते आहन्यतेऽस्मात् इति तटं जलाघातस्थानं तन्नास्ति यस्य ब० । (आड़रीरि) प्रसिद्धे आलम्बनस्थानशून्ये, "मनोरथानामतटप्रपाताः" इति । पर्व्वताद्युच्चस्थाने, भूमेरधोभागे च ।

**अतथोचित** त्रि० न तथारूपमुचितं यस्य । यस्य यद्रूपमुचितं तद्विरोधिरूपापन्ने ।

**अतद्गुण** पु० "तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुण इति"

दर्पणोक्ते अर्थालङ्कारभेदे, "इन्त सान्द्रेण रागेण भृतेऽपि हृदये मम। गुणगौर! निषण्णोऽपि कथं ? नाम न रज्यसीति। अत्रातिरक्तहृदयसंबन्धात् उचितमपि रक्तत्वं न निष्पन्नमिति हेतुसद्भावेऽपि तद्रूपाननुहरणात्तथात्वम्।

**अतद्गुणसंविज्ञान** पु॰ न तस्य गुणीभूतस्य सम्यक् ज्ञानं यत्र। शाब्दिकोक्ते बहुव्रीहिभेदे। यथा लम्बकर्णमादायेत्यादौ गुणीभूतकर्णादेरपि धर्म्मिद्वारा आनयनेऽन्वयस्तथा दृष्टसमुद्रमानयेत्यादौ गुणीभूतस्य समुद्रस्य नानयनेऽन्वयः इत्यतः लम्बकर्णइत्यादिस्तद्गुणसंविज्ञानः दृष्टसमुद्र इत्यादिश्च अतद्गुणसंविज्ञानः बहुव्रीहिरिति भेदः। एवमुदाहरणान्तराणि ज्ञेयानि।

**अतन्त्र** त्रि॰ न तन्त्रं कारणं तदधीना विवक्षा वा यस्य। कारणानधीने विवक्षाशून्ये च। "सुखप्रहणमतन्त्रमिति" सिद्धान्तकौ॰। [निद्रारहिते, अनलसे च।

**अतन्द्र** त्रि॰ नास्ति तन्द्रा निद्रा, तत्सदृशम् आलस्यं वा यस्य।

**अतन्द्रित** त्रि॰ तन्द्रा जाताऽस्य तार॰ इतच् न॰त॰। अजातनिद्रे अनलसे च "अतन्द्रिता सा स्वयमेव वृक्षकान्" इति कुमा॰।

**अतप्ततनु(नू)** त्रि॰ न तप्ता पयोव्रतादिना तनुरस्य। पयोव्रतादिना देहकार्श्यकारके। दीर्घान्तपाठोप्यत्रैव "विश्वतोऽतप्ततनूं तदाम" इति ता॰ब्रा॰। न तप्ता तप्तमुद्रया तनुरस्य। तप्तमुद्रया अकृतचिह्ने त्रि॰ "मातप्ततनुरिति" श्रुतिस्तत्परतयैव वैष्णवैर्व्याख्याता। [निर्हेतुके, तर्कहीने च।

**अतर्क** त्रि॰ तर्क्यतेऽनेन तर्कस्तर्कहेतुः स नास्ति यस्य।

**अतर्कित** त्रि॰ न तर्कितम्। तर्कहेतुव्यापारानुसन्धानेन हठादागते, अनुमितभिन्ने च। "अतर्कितमुपस्थितमिति" पुरा॰।

**अतल** न॰ अस्य भूखण्डस्य तलं पृषो॰ इदमोऽत्वम्। सप्तपातालमध्ये प्रथमखण्डे भूमेरधोभागे। तल्लोकाच सप्त, अतल, वितल, सुतल, तलातल, महातल, रसातल, पातालसंज्ञका अधोऽधस्तिष्ठन्ति तेषां निवेशस्थानञ्च "स्वादूदकान्तर्वलयानलोऽसौ पातालंलोकाः पृथिवीपुटानीति" सि॰शि गो॰उक्तम्। विशेषस्तत्तच्छब्दे वक्ष्यते। तलशून्ये त्रि॰ नास्ति तलः प्रतिष्ठा यस्य। अप्रतिष्ठे त्रि॰। [गभीरे।

**अतलस्पर्श** त्रि॰ न तलस्याधोभागस्य स्पर्शो यत्र ब॰। अति-

**अतलस्पृश्** त्रि॰ न तले स्पृश्यते कर्म्मणि क्विन्। अगाधे।

**अतस्** अव्य॰ इदम्+तसिल्। एतद्धेत्वर्थे "अथातो ब्रह्मजिज्ञासेति" स्थले अतःशब्दो हेत्वर्थ इति भाष्यम्। "अथातो धर्म्मजिज्ञासेति" जै॰। "अतश्चराचरं विश्वमिति" कुमा॰।

**अतस** पु॰ अत-गतौ असच्। वाते। सातत्यार्थकात् अ तः असच्, आत्मनि। गौरादित्वात् ङीषि अतसी। (तिसि, मसिना) इति ख्याते वृक्षे स्त्री। "तस्यातसीसूनसमानभास" इति माघः। "अतसीपुष्पवर्णाभेति" दुर्गाध्याने अतसी शण इति ख्यातेः शणवृक्षे च। तत्सूत्रजाते क्षौमवस्त्रे न॰।

**अति** अव्य॰ अत-इ। पूजायाम्, उत्कर्षे, अतिक्रमणे, च। स्वभावोह्यतिरिच्यते "तेषु हार्दी तथाप्यतीति" चण्डी॰। तत्पुरुषपूर्व्वपदस्थः अतिक्रान्तार्थे "अत्यादयः क्रान्ताद्यर्थे द्वितीययेति" वा॰। अतिराजी अतिश्री। उत्कर्षार्थे कुगतिप्रादयश्चेति समासे अतिधनमतिबलमिति। "विक्रमातिक्रमावृद्धिभयार्थातिशयेष्वतीति" गणरत्नोक्तेश्च विक्रमादिषु तत्र, विक्रमे अतिरथः, (रथाधिकविक्रमवान्) अतिक्रमे, अतिमति (बुद्ध्यतिक्रमः) अवृद्धौ अतिगहनम् (बुद्धेरविषयः) भये अतिभयम् (भयतप्तम्) अतिशये अतिवेगः (अतिशयितो वेगः) एवमन्यान्युदाहार्य्याणि। अस्य क्रियायोगे उपसर्गता अतिक्रमे पूजायाञ्च कर्म्मप्रवचनीयसंज्ञा तेन तद्योगे द्वितीयादि तत्रातिक्रमे राजानमति, पूजायाम् अतिस्तुतमित्यादौ उपसर्गत्वबाधाच्च सत्वम्।

**अतिकथ** त्रि॰ अतिक्रान्तः कथाम्। कथनायोग्ये, अश्रद्धेये, नष्टे च। [भाषणे च।

**अतिकथा** स्त्री अत्युत्कटा कथा। अत्युत्कटवर्णने, व्यर्थ-

**अतिकन्दक** पु॰ अतिरिक्तः कन्दः यस्य कप्। हस्तिकन्दनामके वृक्षे। [अत्यन्ताकर्षके च।

**अतिकर्षण** त्रि॰ अत्यन्तं कर्षति कृष-ल्यु। अत्यन्ततापदायके,

**अतिकश** त्रि॰ अतिक्रान्तः कशाम् तत्प्रहारमनादृत्य स्वेच्छानुसारेण प्रवृत्तत्वात् अत्या॰ त॰। कशाप्रहारमुल्लङ्घ्य यथेच्छव्यापृते दुर्दान्ते अश्वे।

**अतिकाय** त्रि॰ अत्युत्कटः कायोऽस्य। विकटदेहे, रावणसुते राक्षसभेदे पु॰ तत्कथा लङ्काकाण्डे "चुकोप स महातेजा ब्रह्मदत्तवरो विभुः अतिकायो महावीर्य्य" इत्युपक्रमस्य "आश चक्रे महातेजा रामाय रावणानुजः। दशग्रीवो महातेजाः राजा वैश्रवणात्मजः। तस्य पुत्रो ह्यसौ वीरो रावणप्रतिमोरणे इति" तस्य सामर्थ्यं विभीषणेन निवेदिते लक्ष्मणेन सह तस्य युद्धमासीत् तेन च तस्य शिरश्छिन्ने इति "तदातिकायस्य शिरो जहारेति" रामा॰लङ्का॰।

**अतिकुत्स** त्रि॰ अति+कुस-व-क्विप्। अतिलोमशे।

**अतिकृच्छ्र** न॰ अतिक्रान्तं कृच्छ्रं प्राजापत्यं तदधिकदुःख-

शाब्धत्वात् "अत्यादयः क्रान्ताद्यर्थे द्वितीययेति" स०। द्वादशरात्रसाध्ये प्रायश्चित्तरूपे व्रतभेदे "एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्ववत्। त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः इति" मनुः। "त्र्यहाणि त्रीणि नवाहानि पूर्ववत् प्रातःसायमयाचितैः प्राजापत्यवदिति" रघुनन्दनः। प्राजापत्ये हि "त्र्यहं प्रातस्त्र्यहं सायं, त्र्यहमद्यादयाचितमिति" मनुनैव प्रातःकालादौ भक्षणमुक्तं पूर्व्ववदित्यनेन तद्धर्म्मातिदेशः। अस्य पुंलिङ्गत्वमपि "अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रक" इति विश्वामित्रवचने पुंस्त्वनिर्द्देशात्। "अवगुर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने इति" मनुः। अतिशयितं कृच्छ्रं प्रा० स०। अतिकष्टे। तद्वति त्रि०।

**अतिकृत** त्रि० मर्य्यादातिक्रमेण कृतम्। मर्य्यादातिक्रमेण कृते पदार्थे "सर्व्वत्रातिकृतं लोके व्यसनायोपकल्पते" इति पुरा०।

**अतिकृति** स्त्री अति+कृ-क्तिन्। मर्य्यादातिक्रमेण करणे। अत्या०स०। छन्दश्चाकरोक्ते "तथातिकृतिरुत्कृतिरिति" पञ्चविंशत्यक्षरपादके वर्णवृत्तभेदे।

**अतिकेशर** पु० अतिरिक्तानि केशराण्यस्य ब०। कुब्जकवृक्षे।

**अतिक्रम** पु० अति-क्रम-घञ् ह्रस्वः। उल्लङ्घने। अतिक्रान्तः क्रममिति अत्या०स०। लङ्घितक्रमे त्रि०। दुर्+अति+क्रम-कर्म्मणि खल्। दुःखेनातिक्रमणीये त्रि०। "कालो हि दुरतिक्रम" इति "स्वभावो दुरतिक्रम" इति च पुरा०। भावे ल्युट्। अतिक्रमणम् अत्रैव न०। भावे क्तिन्। अतिक्रान्तिरप्यत्रार्थे स्त्री।

**अतिक्रुद्ध** पु० प्रा०स०। "अष्टाविंशत्यक्षरोय एकत्रिंशदथापि वा। अतिक्रुद्धः स विज्ञेयो निन्दितः सर्व्वकर्म्मसु इति" तन्त्रोक्तमन्त्रभेदे। अतिकोपान्विते त्रि०।

**अतिक्रूर** पु० प्रा०स०। "क्रूरा वक्रा अतिक्रूरा" इति ज्योतिषपरिभाषिते वक्रगत्यापन्ने भौमशनिरूपक्रूरग्रहे। अत्यन्तक्रूरे त्रि०। "त्रिंशदक्षरको मन्त्रस्त्रयस्त्रिंशदथापि वा। अतिक्रूरः स विज्ञेयो निन्दितः सर्व्वकर्म्मसु" इति तन्त्रोक्ते मन्त्रभेदे पु०।

**अतिगण्ड** पु० अत्या०स० "अतिगण्डः सुकर्म्मा चेति" ज्योतिषपरिभाषिते विष्कुम्भावधि षष्ठे योगे। "गण्डातिगण्डयोर्नाड़ीषट्कं परिवर्ज्जयेदिति" ज्यो०। अतिवृद्धो गण्डो गलः। वृद्धगण्डे पु०। प्रा० ब०। अतिवृद्धगण्डवति त्रि०।

**अतिगन्ध** पु० अतिशयितो गन्धो यस्य ब०। चम्पकवृक्षे। अतिशयितगन्धवति त्रि०। [याम् राजनि०।

**अतिगन्धालु** पु० अतिगन्ध+मत्वर्थे आलुच्। पुत्रदात्रीलता

**अतिगर्वित** त्रि० अत्यन्तं गर्वितः। अत्यन्तगर्व्वयुक्ते आत्माभिमानिनि गर्व्वश्च आत्मनि असतो गुणादेरुत्कर्षाभिमानः तस्मात्यन्तत्वमन्यस्मिन् अपकर्षज्ञानपूर्व्वकत्वम्।

**अतिगव** त्रि० अतिक्रान्तो गां वुद्धा यच्समा०। अत्यन्तमूर्खे, अतिक्रान्तः गां वाचम्। वाक्पथातीते अवर्णनीये च त्रि०।

**अतिगह्वर** त्रि० अतिक्रान्तो गह्वरं दुर्बोधत्वेन प्रवेशायोग्यत्वात् अत्या० स०। दुर्बोधे अतिगहने।

**अतिगुण** पु० अतिशयितो गुणः। अतिशयविनयदाक्षिण्यादौ। अतिक्रान्तो गुणम्। गुणहीने त्रि०। अतिशयितो गुणोऽस्य प्रा०ब०। उत्कृष्टगुणवति त्रि०।

**अतिगुरु** पु० अतिशयितो गुरुः पूज्यतमत्वात् प्रा० स०। "त्रयः पुरुषस्यातिगुरवो भवन्ति पिता माताचार्य्यश्चेति" विष्णूक्ते पित्रादौ। अत्यन्तगुरुत्ववति पारदादौ द्रव्ये त्रि०। स्त्रियां वा ङीप्। अतिगुर्वी। [पर्य्यायम्।

**अतिगुहा** स्त्री अतिक्रान्तो गुहां मध्यावकाशेन। पृश्नि-

**अतिग्रह** त्रि० अतिशयितः ग्रहो ज्ञानं, स्वस्वकार्य्यस्य ग्रहणं वा येषाम्। स्वस्वविषयग्राहकेषु नेत्रादिषु ज्ञानेन्द्रियेषु, आदानादिस्वस्वकार्य्यकारकेषु वागादिषु कर्म्मेन्द्रियेषु च। अतिक्रान्तो ग्रहम्। अत्यन्तदुर्बोधे त्रि०। अतिशयितो ग्रहो ज्ञानम्। सर्व्वं वा सम्यग्ज्ञाने पु०। अतिग्रहणादयोऽप्यत्रार्थेषु। [सम्भिन्ने सुखावस्थाभेदे।

**अतिघ्नी** स्त्री अतिशयेन हन्ति दुःखं हन-टक्। दुःखा-

**अतिचरा** स्त्री अतिक्रम्य स्वस्थानं सरोऽन्तरं चरति गच्छति चर-अच्। पद्मिन्याम्, तत्तुल्याकारवत्त्वात् स्थलपद्मिन्यां, पद्मचारिण्यां लतायाञ्च। अतिक्रमणकारिणि त्रि०।

**अतिचारः** पु० अतिक्रम्य स्वस्वभोगकालमुल्लङ्घ्य चारः राश्यन्तरगमनम्। ज्योतिषोक्ते भौमादिपञ्चकस्य स्वस्वाक्रान्तराशिषु भोगकालमुल्लङ्घ्य राश्यन्तरगमने। अतिचारश्च ग्रहगतिशब्दे वक्ष्यमाणेन "रविर्मासं निशानाथः सपादद्दिवसद्वय"मित्यादिनोक्तभोगकालभेदोल्लङ्घनेन ग्रहाणां अतिशीघ्रगतया अल्पकालेनैव आक्रान्तराशिमुपभुज्य राश्यन्तरगमनम्। तच्च विस्तरेण ग्रहगतिशब्दे वक्ष्यते। "यदातिचारं सुरराजमन्त्रीति" "अतिचारं गते जीवे" इति "गोऽजालिकुम्भे तरगोऽतिचारग" इति च ज्योतिषम्। गुरोरतिचारे कालाशुद्धिश्च अकालशब्दे दर्शिता। अतिक्रम्य गमने च।

**अतिचारिन्** त्रि० अति+चर–णिनि । पूर्व्वोक्तातिचारवति ग्रहे । "अतिचारी यदा जीव" इति ज्योतिषम् । अतिक्रम्य अतिशयेन वा गन्तमात्रे त्रि० ।

**अतिच्छत्र** पु० अतिक्रान्तश्छत्रम् तुल्याकारेण अत्या०स० । (कालिया) इति प्रसिद्धे स्थलतृणविशेषे, (तालमाखना) इति प्रसिद्धे जलतृणभेदे च । स्वार्थे कन् । अतिच्छत्रकोऽप्यत्रार्थे, छत्राकारपत्रपुष्पवति (सूलफा) इति प्रसिद्धे शाकभेदे तु स्त्री । क्षीरस्वामिमते छत्रा इत्येव नाम । छत्रातिक्रमकारिणि त्रि० । अतिक्रमेऽव्ययी०। छत्रातिक्रमे अव्य० ।

**अतिच्छन्दस्** न० अतिक्रान्तः छन्दः वृत्तानुसारिवर्णविन्यासभेदम् अत्या०स०। उक्थादिछन्दोऽतिक्रमेण विन्यस्तेऽक्षरविन्यासभेदे "प्राजापत्या अच्छन्दस" इति "अच्छन्दसः शंसतीति" च वेदः । छन्दो वेदोऽभिप्रायो वा । तदतिक्रान्तरि वेदोक्तकर्म्महीने, अतिक्रान्ताभिप्राये च त्रि० ।

**अतिजगती** स्त्री अतिक्रान्ता जगतीं द्वादशाक्षरपादामेकाक्षराधिक्यात् अत्या०स०। त्रयोदशाक्षरपादके छन्दोभेदे । जगतीं भुवनमतिक्रान्तवति त्रि०। पुंसि क्लीबे च ह्रस्वान्तः ।

**अतिजव** त्रि० अतिशयितो जवोयस्य ब० । अतिवेगवति द्रुतगामिनि च । प्रा०स० । अतिशयितवेगे पु० । "समरसन्नतिसन्तरणेच्छया प्रचलितातिजवेन" इत्युद्भटः ।

**अतिजागर** पु० अतिशयितो जागरो निद्राराहित्यं यस्य ब०। नीलवके पक्षिणि तस्य सर्व्वदा जागरूकत्वात्तत्त्वम् । निद्राराहित्यवति त्रि०।

**अतिडीन** न० अतिक्रान्तं डीनं गतिभेदं अत्या०स०। पक्षिणाम् [अतिदीर्घगमने ।

**अतित(मा)राम्** अव्य० अति+तर(म)प् आम् । अत्यन्ते "वेगवानतितरामायाति चेन्मारुत" इत्युद्भटः ।

**अतितार** त्रि० अतिशयितस्तारः । सुक्तादेरतिशयशुद्धौ "अतितारहारेति" कादम्ब० । अत्युच्चशब्दे पु० तद्वति त्रि० ।

**अतितीक्ष्ण** त्रि० अतिशयेन तीक्ष्णः कटुरसो यस्य ब० । मरीचादौ (सजना) इति प्रसिद्धे शोभाञ्जने पु० । अतितिक्ते पु० । तद्वति त्रि० ।

**अतिथि** पु० अतति गच्छति न तिष्ठति अत–इथिन् । अध्वयोगेन आगन्तुके गृहागते, "एकरात्रं हि निवसन् ह्यतिथिर्ब्राह्मणः स्मृतः । अनित्यास्य स्थितिर्यस्मात्तस्मादतिथिरुच्यते" । नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथेति विष्णु स० । तस्य च वैश्वदेववलेः प्रागेव पूज्यता परत्र आहारदानमात्रं यथोक्तं मनुना "वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् तस्मा अन्नं यथाशक्ति प्रदद्यादिति" किन्तु तस्याप्यतिथित्वमेव यथोक्तं "प्रियो वा यदि द्वेष्यो मूर्खः पण्डित एव वा । संप्राप्तो वैश्वदेवान्ते विप्रः सोऽतिथिरिष्यते" इति स्मृत्या । अतिथिप्रतीक्षणञ्च मुहूर्त्ताष्टमभागपर्य्यन्तम् । "आचम्य च ततः कुर्य्यात् प्राज्ञो द्वारावलोकनम् मुहूर्त्तस्याष्टमं भागमुद्वीक्ष्योह्यतिथिर्भवेत्" इति मार्क० । विषये च तस्य इन्द्रियेषु संसर्गमात्रकाले एव चेतसि स्थितिर्नोत्तरकालमिति गतिरनुमीयते । "प्रथमं पथि लोचनातिथिमिति" नैष० ।

**अतिथिपूजा** स्त्री ६त० । गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते न्यज्ञरूपेऽतिथिपूजने अतिथिसत्कारादयोऽप्यत्र ।

**अतिदान** न० अतिशयितं दानम् प्रा० स० । अत्युत्कटदाने "अतिदाने बलिर्बद्ध" इति नीति० ।

**अतिदिष्ट** त्रि० अति+दिश–क्त । अतिदेशविषये यथा "प्रकृतिवत् विकृतिः कर्त्तव्येति" वाक्येन प्रकृतीभूतदर्शयागादेरङ्गकार्य्याणि प्रयाजादीनि विकृतौ पश्वादियागेऽतिदिश्यन्ते । अतिदेशोनाम इतरधर्मस्य इतरस्मिन् प्रयोगाय आदेशः इति मीमांसायां स्थितम् ।

**अतिदीप्य** पु० अतिशयेन दीप्यते अति+दीप-कर्त्तरि यत् । रक्तचित्रके (लालचिता) इति ख्याते वृक्षे ।

**अतिदेव** पु० अतिक्रान्तोदेवान् अत्या०स०। सर्व्वदेवश्रेष्ठे रुद्रे "द्रावयाद्धातिदेव इति" वेदः ।

**अतिदेशः** पु० अतिक्रम्य स्वविषयलक्षणं अन्यत्र विषये देशः उपदेशः अतिदिश्यते या करणे कर्म्मणि वा घञ् । "अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्म्मसंहतेः । अन्यत्र कार्य्यतः–प्राप्तिरतिदेशः स उच्यते । प्राकृतात् कर्म्मणो यस्मात्तत्–समानेषु कर्म्मसु । धर्म्मप्रवेशो येन स्यादतिदेशः स उच्यते" इत्यधिकरणमालाधृताभियुक्तवाक्योक्ते अन्यत्रप्राप्तेऽन्यधर्म्मे तत्प्रापके शास्त्रभेदे च । यथा "प्रकृतिवत् विकृतिः कर्त्तव्येत्यादिः" स चातिदेशः पञ्चविधः शास्त्रातिदेशः, कार्य्यातिदेशः, निमित्तातिदेशः, व्यपदेशातिदेशः, रूपातिदेशश्च । एतस्य उदाहरणादिकमाकरे ज्ञेयम् । अतिदेशश्च प्रायेण इववदादिसादृश्यवाचकशब्देन यथा प्रकृतिवत् विकृतिरित्यादि अयञ्च वैदिककर्म्मणीव व्याकरणादिशास्त्रे, लौकिके व्यवहारे च विद्यते यथा "इस्वदिक, इत्यत्र व्याकरणे रूपातिदेशः" "कर्म्मणा कर्म्मवत्तुल्यक्रिय" इत्यादौ, पुंवदित्यादौ च कार्य्यातिदेशः, स्थिवदित्यादौ निमित्तातिदेशः, व्यपदेशिवद्भावइत्यादौ संज्ञाति-

देश इत्येवं प्रकारा अतिदेशाःसन्ति ॥ लोके च गोसदृशो-गवयइत्यादौ रूपातिदेशइत्यादि । अतएवोपमानरूपप्रमाणे चस्यातिदेशवाक्यस्य करणत्वं सहकारिभावोवेत्यादि तत्त-च्छास्त्रकारैरुक्तोलतम् अतिदेशेन निर्वृत्तम् ठक् । आति-देशिक त्रि०। "आतिदेशिकविधिरनित्य" इति परिभाषा ।

**अतिधन्वन्** पु० अत्युत्कृष्टं धनुर्यस्य प्रा०ब० धनुषोऽनङ् । उत्कृष्टधनुर्युक्ते योधे । धन्वा मरुः अत्या०स० । मरुस्थ-लातिक्रमकारिणि त्रि० ।

**अतिधृति** स्त्री अतिक्रान्ता धृतिम् अष्टादशाक्षरपादिकां वृत्ति-मेकाक्षराधिक्यात् अत्या० स० । ऊनविंशत्यक्षरपादके छन्दोभेदे । धृतिर्धैर्य्यं सन्तोषो वा । तदतिक्रमकारिणि त्रि०।

**अतिनु(नौ)** त्रि०अतिक्रान्तोनावम् अत्या०स०क्लीबे ह्रस्वः । नौकातिक्रमकारिणि । पुंसि स्त्रियां च अतिनौः ।

**अतिनिद्र** अव्य० निद्रा सम्प्रति न युज्यते अव्ययी० । निद्राया अयोग्यकाले ।अतिक्रान्तो निद्राम् अत्या०स० । अतिक्रान्तनिद्रे निद्रारहिते त्रि० । अतिशयिता निद्रा-ऽस्य । दीर्घनिद्रे त्रि० । प्रा०स० । दीर्घनिद्रायां स्त्री ।

**अतिपत्ति** स्त्री अति+पत–क्तिन् । अतिपतने, अति-क्रमे । "कालातिपत्तौ द्विगुणामिति" स्मृतिः । पद–क्तिन् पत्तिर्निष्पत्तिः अत्या०स० । अनिष्पत्तौ स्त्री । "लिङ्निमित्ते लृङ् क्रियातिपत्ताविति" पा० । क्रियातिपत्तिः क्रियाया अनिष्पत्तिरिति वृत्तिः । पत्तिं सेनामतिक्रान्ते त्रि० ।

**अतिपत्र** पु० अतिरिक्तं बृहत्पत्रमस्य । हस्तिकन्दवृक्षे ।

**अतिप(थ)थिन्** पु० अतिशयितः सुन्दरः पन्थाः प्रा०स०स्वतेः पूजार्थत्वात् न समा० ।सत्पथे । अतीतपथे तु समा०।

**अतिपद** त्रि०अतिक्रान्तः पदं चरणम् । वर्णवृत्तानुसारिपादा-तिक्रान्ते "अतिपदा गायत्री अतिपदा जगतीति" ।

**अतिपन्न** त्रि० अति+पद–क्त । अतिक्रान्ते । "तथातिपन्न-शिशुसंस्कारादेति" मुहूर्त्तचि० ।

**अतिपरोक्ष** त्रि०अतिक्रान्तम् परोक्षम् । प्रत्यक्षे, तद्विषये च ।

**अतिपात** पु० अतिक्रम्य पातः गतिः अति+पत–घञ् । "अतिक्रमे "न चेत् कार्य्यातिपातः" इति शकु० ।

**अतिपातक** न० अतिक्रान्तोऽत्यन्तदुष्टत्वेनान्यत् पातकं अत्या० स० । पुंसां मातृस्नुषादुहितृगमनजन्ये, स्त्रीणाञ्च पुत्र-पितृश्वशुरगमनजन्ये पातकविशेषे । "मातृगमनं, दुहितृ-गमनं, स्नुषागमनञ्चेत्यतिपातकानीति" "अतिपातकि-नस्त्वेते प्रविशेयुर्हुताशनमिति" "एतेष्वकृतप्राय-श्चित्ता अतिपातकिनः पर्य्यायेण कल्पं पच्यन्ते" इति च विष्णु स० । "सद्योऽग्निप्रवेशनतिपातकिन" इति हारीतः । "अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये लक्षणानि कुष्ठ्यतिपातकीति" विष्णु स० । पातक-मतिक्रान्तवति पुण्यशीले त्रि० ।

**अतिप्रगे** अव्य० अतिप्रगीयतेऽस्मिन् काले अति+प्र+गै–के । अत्यन्तप्रातःकाले । "नातिप्रगे नातिसायं न नियीथे न चोपसोति" स्मृतिः ।

**अतिप्रमाण** त्रि० अतिक्रान्तः प्रमाणम् अत्या० स० । प्रमा-णातिक्रान्ते यस्य यत्प्रमाणमुचितं ततोऽधिकप्रमाणवति । प्रा० स० । अत्यन्तप्रमाणे बृहत्प्रमाणे न० ।

**अतिप्रवृद्ध** त्रि० अत्यन्तं प्रमाणातिरेकेण प्रवृद्धम् । प्रमाणाति-रेकेण वृद्धिमति । अतिमहति च नद्यादेर्जलस्य तीराद्यति-क्रमेण, क्षत्रियादेः स्वकर्त्तव्यतामूढतया मर्य्यादाद्यतिक्रमेण वीर्य्याधिक्येन वा वृद्धिः "तस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति अनादर" इति । "अतिप्रवृद्धं प्रहितास्त्रवृष्टिभिरिति" रघुः ।

**अतिप्रश्न** पु० अतिक्रम्य मर्य्यादां प्रश्नः । मर्य्यादातिक्रमेण प्रश्ने सदुत्तरे जातेऽपि पुनर्जिज्ञासायाम् । यथा बृह-दारण्यके याज्ञवल्क्यं प्रति वाचक्न्यतिप्रश्नः तत्र ब्रह्ममी-मांसायाम् तेन कृतायामपि वृथातिप्रश्नकरणात् तस्य मुण्डपतनं स्वर्य्यवरात् जातमिति बृहदारण्यकेऽनुसन्धेयम् ।

**अतिप्रसक्ति** स्त्री अति+प्र+सन्ज–क्तिन् । अत्यन्तासक्तौ, प्रसङ्गमतिक्रम्यान्यत्र सम्बन्धे अतिप्रसङ्गे च । लक्ष्ये लक्षण-सम्बन्धः प्रसङ्गः, अलक्ष्ये तत्सम्बन्धोऽतिप्रसङ्गः । "अति-प्रसक्त्यनापादकेति" जगदीशः ।

**अतिप्रसङ्ग** पु० अति+प्र+सन्ज घञ् । अतिप्रसक्तिपदार्थे । प्रसङ्गमतिक्रान्तवति त्रि०। [सुभूषिते च ।

**अतिप्रसिद्ध** त्रि० अति+प्र+सिध–क्त । अतिविख्याते

**अतिप्रौढा** स्त्री प्रकर्षेण ऊह्यतेऽत्र प्रौढः विवाहकालः प्रा०ब० अतिशयिता वा प्रौढा वृद्धियुक्ता । विवाहयोग्यकालायाम् अतिशयवृद्धियुक्तायाञ्च स्त्रियाम् स्त्रीणान्तु दशवर्षा-तीतकाल एव अतिप्रौढकालः । "अतिप्रौढा च या नारीति" स्मृतिः अतिप्रवृद्धे त्रि० ।

**अतिबल** त्रि० अतिशयितं बलं यस्याः प्र०ब०। अत्यन्तबलाधायि कायां पीतवर्णायां (बेडियाला) इति ख्यातायां लतायां, विश्वामित्रेण रामाय दत्ते अस्त्रविद्याभेदे च स्त्री । यथा "गृहाण द्वे इमे विद्ये बलामतिबलां तथा । न ते श्रमो जरा वाभ्यां भविता नाङ्गवैकृतम् ॥ न च सुप्तं प्रमत्तं

वा धर्षयिष्यन्ति नैरृताः । न च ते सदृशो राम ! वीर्य्ये-णान्यो भविष्यति । सदेवनरनागेषु लोकेष्विह पुमांस्त्विषु । न सौभाग्ये, न दाक्षिण्ये, न बुद्धिन्रुतिपौरुषे ॥ नोत्तरे प्रतिपत्तव्ये त्वत्तुल्यो वा भविष्यति । एतद्विद्याद्वयं प्राप्य यशश्चाप्यमाप्स्यसि ॥ बलामतिबलां चैव ज्ञान-विज्ञानमातरौ । क्षुत्पिपासे च ते राम ! नात्यर्थं पीड़यिष्यतः ॥ जयश्च दुर्गकान्तारप्रदेशेष्वटवीषु च । भारतां त्रिषु लोकेषु गमिष्यसि च राघव ! ॥ पितामहसुते ह्येते विद्ये चायुर्बलावहे । पात्रं त्वमसि काकुत्स्थ ! विद्ययोर्ग्रहणेऽनयोः ॥ स्वभावजैर्गुणैर्दिव्यैः कर्म्मजैर्बहुलैर्नतः । भूयस्तव गुणोत्कर्षमेते विद्ये करिष्यतः ॥ ततो रामो जलं स्पृष्ट्वा प्राञ्जलिः प्रयतः स्थितः । प्रतिजग्राह ते विद्ये विश्वामित्रात् तपोधनादिति" । अतिशयितं बलम् प्रा० स०। अत्यन्ते बले, सामर्थ्ये, सैन्ये च न० । अतिरिक्तं बल-मस्य । अत्यन्तबलयुक्ते त्रि० "जयत्यतिबलो रामो लक्ष्मणश्च महाबल" इति रामा०। अतिरथे च भारते अति-रथविषयएव,"एष ह्यतिबलोमत" इति भीष्मेण भूरिशः प्रयुक्तत्वात् बलकार्य्यत्वाच्च तस्य तथात्वम् ।

**अतिबाला** स्त्री अतिक्रान्तो बालं बाल्यावस्थाम् । द्विवर्षवयस्कायाम् "वर्षमाला तु बाला स्यादतिबाला द्विवार्षिकीति" स्मृत्युक्तायाम् गवि "अतिवृद्धामतिकृशामतिबालां च रोगिणाम् कृत्वा चरेदिति" स्मृतिः । अत्यन्तबाले त्रि० ।

**अतिब्रह्मचर्य्य** पु० अतिक्रान्तो ब्रह्मचर्य्यम् अत्या०स० । स्त्रीसङ्गमकारिणि ब्रह्मचर्य्यत्यागिनि ।

**अतिभारः** पु० अत्यन्तोभारः गुरुत्वम् स्वकार्य्यकरणे क्षमता-विशेषो वा । अत्यन्तगौरवे अत्यन्तभारे, "न चातिभारः समर्थानामिति" । अतिशये "सा सन्नकण्ठं व्यसनातिभारात् चक्रन्द विग्ना कुररीव भूयः" इति रघुः । वेगे च ।

**अतिभारग** पु० अतिभारेण वेगेन गच्छति गम–ड ३त० । खरे अश्वतरे गर्द्दभाद्वडवाजाते अश्वभेदे ।

**अतिभी** स्त्री अतिबिभेत्यस्याः दर्शनात् अति+भी–क्विप् । वज्रज्वालायाम् । तद्दर्शने हि लोकानामतिभीतिर्लोकसिद्धा ।

**अतिभूमि** स्त्री अतिशयिता भूमिर्मर्य्यादा प्रा०स० । अति-मर्य्यादायाम्, आधिक्ये च । "प्राप्य मन्मथमदादतिभूमिं दुःसहस्तनभराः सुरतस्येति" माघः । अतिक्रमेऽव्ययी० । मर्य्यादातिक्रमेऽव्य० । भूमिं मर्य्यादां याऽतिक्रान्ते त्रि०।

**अतिभोजन** न० अत्यन्तं मर्य्यादामतिक्रम्य भोजनम् । यस्य यावत् भोजनमुचितं तदतिक्रमेण भोजने ।

**अतिमङ्गल्य** पु० अतिमङ्गलाय हितम् अतिमङ्गल+यत् । बिल्ववृक्षे । प्रा०ब० । अतिमङ्गलहिते त्रि० ।

**अतिमर्य्याद** अव्य०। अतिक्रमे अव्ययी० । मर्य्यादातिक्रमे । अतिक्रान्तो मर्य्यादाम् अत्या० स० । मर्य्यादामति-क्रान्तवति । यस्य वस्तुनः यावती सीमा तदतिक्रान्ते निर्मर्य्यादे त्रि० ।

**अतिमात्र** त्रि० अतिक्रान्तो मात्रामल्पं अत्या०स० । अति-शयिते, मात्रातिक्रमकर्त्तरि च । अतिशयिता मात्रा प्रमाणमस्य । भृशार्थे त्रि० । "सुनिव्रतैस्त्वामतिमात्रकर्शितामिति" कुमा० । अतिक्रान्तोमात्रां प्रमाणम् अत्या० स० । वृहत्प्रमाणे त्रि० । [वृत्तिशोभार्थे ।

**अतिमात्रशस्** अव्य० अतिमात्र+शस् । अतिप्रमाणकारक-

**अतिमान** पु० अत्यन्तः मानः अभिमानः । अनुचिताभिमाने "अतिमाने च कौरव" इति चाणक्यः । अतिक्रान्तोमानं प्रमाणम् अत्या०स० । प्रमाणाधिके त्रि० ।

**अतिमानुष** त्रि० अतिक्रान्तो मानुषचरितम् अत्या०स० । मनुष्यायोग्ये दिव्ये कर्म्मादौ । "कर्म्म तस्यातिमानुषमिति" पुरा० । तथाभूते रूपादौ च ।

**अतिमित्र** न० अत्यन्तं परमं मित्रम् । अत्यन्तबान्धवे "जन्मसम्पद् विपत् क्षेमं प्रत्यरिः साधकोबधः मित्रं परममित्रञ्चेति" ज्योतिषोक्ते नृणां जन्मतारावधि नवमाष्टादशसप्तविंशात्मके परममित्रतारके च ।

**अतिमुक्त** त्रि० अतिशयेन मुक्तः विदेहकैवल्यं गतः अति+मुच–कर्त्तरि क्त । निर्व्वाणमुक्तिमति । अतिक्रान्तो मुक्तां शौभ्रात् अत्या० स० । माधवीलतायां, तिनिशवृक्षे च पु० ।

**अतिमुक्तक** त्रि० अतिमुक्त+स्वार्थे कन् । निर्वाणमुक्तिमति अतिशयितमुक्ते च । मुचा भावे क्त अतिशयेन मुक्तं बन्धहीनता यस्य कप् । तिन्दुकवृक्षे, तालवृक्षे च पु० ।

**अतिमुक्ति** स्त्री अत्यन्ता मुक्तिः । विदेहकैवल्ये तत्त्वज्ञानानन्तरम् "तस्य तावदेव चिरं यावत् विमोक्ष्ये इति" श्रुतिदर्शिते शरीरत्यागे, अतिमोक्षादयोप्यत्रार्थे पु० ।

**अतिमृत्यु** पु० अतिक्रान्तो मृत्युम् अत्या०स० । मोक्षे "तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था विद्यते" इति श्रुतिः । स्वादृष्टादिभिः शरीरसंबन्धोहि जन्म, तद्वियोगश्च मरणम् तदभिमानिनोजीवस्य । सति च ज्ञाने तन्मूलाज्ञाने निवृत्ते तद्धेतुकशरीरसंबन्धादिकं तन्तुदाहे पटदाहवत् स्वयं निवर्त्तते अत एव ज्ञानवतो देहादिसंबन्धं श्रुतिर्निरास "अशरीरं

यात् सन्तं प्रियाप्रिये न स्पृशत इति"। तथा च देहसंबन्धाभावे कथं मरणसम्भवः। "न जायते म्रियते वा कदाचिदिति" गीतावाक्येन तस्य मरणनिषेधात्। "न तस्य प्राणा ह्युत्क्रामन्ति इहैव समवलीयन्ते" इति श्रुत्या तत्त्वज्ञानिनः प्राणोत्क्रमणरूपमरणनिषेधेन ज्ञानिनो न मृत्युरिति वेदान्तिसिद्धान्तः। अन्यमते तु एतद्देहात् प्राणोत्क्रान्तावपि न पुनर्देहसम्बन्धोत्तरं पुनर्मरणमिति तदात्यन्तिकमेव मोक्ष इति भेदः। अतएवोक्तं श्रुत्या "मृत्युमुखात् प्रमुच्यते" इति तेन पुनर्मृत्युकारणीभूतादृष्टक्षय एव ज्ञानेन जन्यते "ज्ञानाग्निः सर्वकर्म्माणीति" शास्त्रेण प्रारब्धकर्म्मातिरिक्तकर्म्मक्षयस्यैव ज्ञानेन साध्यतायाः सर्वसम्मतत्वात् विदुषश्च एतद्देहारम्भकादृष्टवत् एतद्देहविगमादृष्टस्यापि प्रारब्धफलकतया न तस्य नाश इति। अधिकमाकरे द्रष्टव्यम्।

**अतिमैथुन** न० अत्यन्तं स्वशक्तिमतिक्रम्य मैथुनं स्त्रीसङ्गमः। स्वशक्त्यतिक्रमेण स्त्रीसङ्गमे। "अतिमैथुनादमैथुनाद्वेति"

**अतिमोदा** स्त्री अतिशयितो मोदो गन्धः यस्याः ब०। नवमल्लिकायाम्। अत्यन्तामोदवति त्रि०।

**अतिरक्त** त्रि० अत्यन्तः रक्तः रक्तवर्णः अनुरागयुक्तो वा। अतिलोहितवर्णे, अत्यन्तानुरक्ते च। अत्यन्तरक्तवर्णे पु०।

**अतिरथ** पु० अतिक्रान्तो रथं रथिनम् अत्या०स०। "अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः" इत्युक्तलक्षणे योधविशेषे। "ये रथाः पृथिवीपाल! तथैवातिरथाश्च ये" इत्युपक्रम्य "कृतवर्म्मा त्वतिरथ" इति "मद्रराजो महेष्वासः शल्यो मेऽतिरथो मत" इत्यादिना बहवोऽतिरथा भा० उद्यो० रथातिरथसंख्याने दर्शिताः। रथातिक्रमकारके त्रि०। [स्थातायां मूर्व्वालतायाम्।

**अतिरसा** स्त्री अतिशयितो रसो यस्याः ब०। (राखा) इति

**अतिराज** त्रि० अतिक्रान्तो राजानम् टच् समा०। अतिक्रान्तनृपे। स्त्रियां ङीप्। [निषेधात् न टच्। पूज्यनृपतौ।

**अतिराजन्** पु० अतिशयितः पूजितो राजा "न पूजनादिति

**अतिरात्र** पु० अतिशयिता रात्रिः ततः अस्त्यर्थे अच्। एकरात्रसाध्ये यागभेदे। स च गवामयने प्रथमसंस्थः यथोक्तं ताण्ड्यब्राह्मणे। "प्रजापतिर्वा इदमग्र आसीत् सोऽकामयत बहु स्यां प्रजायेयेति स एतमतिरात्रमपश्यत्तमाहरत्तेनाहोरात्रे प्राजनयदिति" गवामयनसत्रमुपक्रम्य, "अथास्य सत्रस्य पूर्व्वोक्तान्यहानि क्रमेण विधास्यन् अतिरात्रसंस्थम् प्रथमं विधातुमाहेति" भाष्ये अवतरणिकां दत्त्वा व्याख्यातं यथा "स एवं कामयमानः प्रजापतिः सृष्टिसाधनत्वेन एतं गवामयनस्याद्यमतिरात्रमपश्यदिति"। तच्च स्तुतिपूर्व्वकं विधित्सन्नाह। "यदेषोऽतिरात्रो स एवाहोरात्रे एव प्रजनयन्तीति" "एष प्रजापतिना दृष्टोऽतिरात्रः गवामयनस्य प्रथममहर्भवतीति यत् तेन सत्रानुतिष्ठन्तो यजमाना अहोरात्रे एव प्रजनयन्ति उत्पादयन्ति स्वाधीने कुर्व्वन्तीति" भाष्यम्। इत्युपक्रम्य चतुर्थाध्यायप्रथमखण्डपर्य्यन्ते तत्र विहितानि स्तोत्रशस्त्रादीन्युक्तानि। "अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीति" श्रुत्यन्तरम्। षोडशी पात्रभेदः।

**अतिरि** न० अतिक्रान्तं रायं क्लीवत्वात् ह्रस्वः। धनातिक्रान्ते कुलादौ। तृतीयाद्यचि तु अतिरिणा अतिरिणे इत्येवमेकैकमेव रूपं, न पुंवद्भावः तस्य इगन्ताङ्गत्वाभावात्। पुंसि, स्त्रियाञ्च अतिराः अतिरायावित्यादि।

**अतिरिक्त** त्रि० अति+रिच्-क्त। अतिशयिते, श्रेष्ठे, भिन्ने, शून्ये च। भावे क्त। अतिशये, आधिक्ये च न०। तत्र भेदे "अतिरिक्तमथापि यद्भवेदिति" भाषा० "न स्पृशन्ति अतिरिक्तेति" कुमा०। यस्य यावत्प्रमाणं युक्तं ततोऽधिकत्वे "हीनाङ्गीमतिरिक्ताङ्गीमिति" स्मृतिः।

**अतिरुच्** पु० रोचते इति रुक् स्त्रीणामूरुदेशः अतिक्रान्तो रुचम् अत्या०स०। जानुदेशे। अतिक्रान्तकान्तिके त्रि०। प्रा०स०। अतिशयितकान्तौ स्त्री।

**अतिरूक्ष** त्रि० अतिशयितः रूक्षः प्रा०स०। अत्यन्तरूक्षे स्नेहशून्ये च। तथाभूते कङ्गुकोद्रवादिधान्ये पु०। अतिक्रान्तो रूक्षम्। अतिशयस्निग्धे त्रि०।

**अतिरूप** पु० अतिक्रान्तो रूपम्। रूपवर्ज्जिते परमेश्वरे। "अशब्दमस्पर्शमरूपमव्ययमिति" श्रुत्या तस्य रूपहीनताप्रतिपादनात्तथात्वम्। शुक्लादिरूपहीने वाय्वादौ त्रि०। अतिशयितं रूपम् प्रा०स०। सुन्दररूपे न०। "अतिरूपवती कन्या"।

**अतिरेक** पु० अति+रिच्-घञ्। अतिशये, भेदे, प्राधान्ये, आधिक्ये च। "संपूर्णमेतयोर्द्वयमतिरेके परेऽह्नीति" तिथित०। [प्रा०ब०। अत्यन्तरोगयुक्ते त्रि०।

**अतिरोग** पु० अतिशयितो रोगः प्रा०स०। क्षयरोगे

**अतिरोधान** न० न तिरोधानम्। प्रकाशे, व्यवधानाभावे च।

**अतिरोमश** पु० अतिशयितं रोम अतिरोमन्+अस्त्यर्थे श। वनजाते छागे, इहद्दानरे च। अत्यन्तरोमाढ्ये त्रि०।

**अतिरोहित** त्रि० न तिरोहितः। प्रकाशिते स्फुटेऽर्थे "अतिरोहितार्थमन्यदिति" प्रमिता०। अव्यवहिते च।

अतिलोमश पु॰ अतिरोमवत् । वनजाते छागे इहद्वानरे च । अतिलोमयुक्ते त्रि॰ । नीलदुर्व्वायां स्त्री ।

अतिवक्तृ त्रि॰ अति+वच–तृच् ।वावदूके, वाचोयुक्तिदक्षे च ।

अतिवक्र पु॰ प्रा॰स॰ "अतिवक्रा नगाष्टके" इति ज्योतिषोक्ते सूर्य्यस्य सप्तमाष्टमस्थितिवशात् पूर्व्वगतिविपरीतपश्चाद्गतिशालिनि भौमादिग्रहपञ्चके । अत्यन्तकुटिले त्रि॰ ।

अतिवयस् त्रि॰ अतिक्रान्तो वयः कालकृतावस्थां, वयसं पक्षिणं वा । प्राप्तवार्द्धके, अतिक्रान्तपक्षिणि च ।

अतिवर्णाश्रमिन् पु॰ अतिक्रान्तो वर्णानाश्रमिणश्च अत्या॰ स॰ । ब्राह्मणादिवर्णभिन्ने ब्रह्मचर्य्याद्याश्रमिभिन्ने च "यो वेदान्तमहावाक्यश्रवणेनैव केवलम् आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवे"दित्याद्युक्तलक्षणे एकात्मज्ञानिनि

अतिवर्त्तन न॰ अति+वृत-ल्युट् । अतिरेके । अतिक्रमय दण्डं वर्त्तते कर्त्तरि ल्यु । यानसारथ्यादेः, दण्डाभावप्रयोजके छिन्ननस्यादिदशके मनुना "यानस्य चैव यातुश्च यानस्वामिन एव च दशातिवर्त्तनान्याहुरित्युपक्रम्य, छिन्ननस्ये भग्नयुगे तिर्य्यक्प्रतिमुखागते अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च । छेदने चैव यन्त्राणां यन्त्ररश्म्योस्तथैव च । आक्रोशे चाप्यपैहीति न दण्डं मनुरब्रवीदिति" दण्डाभावकारणानि दश दर्शितानि ज्ञेयानि । अत्या॰स॰। अतीतजीवनोपाये त्रि॰ ।

अतिवर्त्तिन् त्रि॰ अतीत्य वर्त्तते अति+वृत–णिनि । अति- [शयिनि, अपगे च ।

अतिवर्त्तुल पु॰ अतिशयितः वर्त्तुलः । (वाटुलाकलाइ) इति ख्याते वर्त्तुलाकारके कलाये । अत्यन्तवर्त्तुले त्रि॰ ।

अतिवाद पु॰ अति+वद–घञ् । अत्युक्तौ, "अतिवादरता ये च" इति पुराणम् । "अतिवादं शंसत्यतिवादेन" इति वेदः । कठोरवाक्ये, अप्रियवाक्ये च ।

अतिवादिन् त्रि॰ सर्व्वानतीत्य वदतीति अति+वद–णिनि । सर्व्वानतिक्रम्य वदनशीले, सर्व्वमतखण्डनेन स्वमतव्यवस्थापके च । "विजानन् विद्वान् भवते नातिवादीति" श्रुतिः ।

अतिवाह पु॰ अतीत्य देहमन्यदेहे वाहः प्रापणम् ७त॰। ऐहिकभोगसाधनादृष्टक्षये सूक्ष्मभूतमात्रासहितसूक्ष्मशरीरावच्छिन्नजीवस्य देहान्तरादिसंयोगाय नयने, अतियापने च । अतिवाहे नियुक्तः ठक् । आतिवाहिकः तन्नियुक्ते त्रि॰ ।

अतिवाहक पु॰अतीत्यैतं देहं वाहयति देहान्तरं प्रापयति अति+वह–ण्वुल् । ईश्वरनियोजिते अर्चिराद्यभिमानिदेवभेदे । तथाहि "अर्चिषोऽहः, अह्न आपूर्य्यमाणपक्षम्, आपूर्य्यमाणपक्षात् यान् षण्मासान् उदङ्ङेति तान् मासान्, मासेभ्यः संवत्सरं, संवत्सरादादित्यमादित्याच्चन्द्रमसम् चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः सएनं ब्रह्म गमयतीति" श्रुतौ वाक्यशेषे अमानवपुरुषस्य ब्रह्मलोकप्रापकत्वश्रुतेः तत्पूर्व्वाणामपि अर्चिरादीनां चेतनत्वमिति "आतिवाहिकास्तल्लिङ्गादिति" सूत्रे निर्णीतम् । "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणमिति" गीताव्याख्यायाञ्च अर्च्चिरादयस्तदभिमानिन्यो देवता" इति श्रीधरस्वामिभिरप्युक्तम् युक्तञ्च अहङ्कृतिकेन्द्रियादिकसूक्ष्मशरीरस्य स्थानान्तरनयनं चेतनकर्त्तृकं विनाऽनुपपन्नमित्यतस्तदानीं तस्य स्थानान्तरगमनसिद्धये कल्पितचेतनानामेव प्रेरकत्वमिति । अन्यच्च, "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधन" मित्युक्तस्य भोगसाधनस्य लिङ्गस्य सूक्ष्मशरीरस्य तदवच्छिन्नजीवस्य च स्थानान्तरनयनमाश्रयभूतेन विना न सम्भवतीति तदाश्रयभूतं भूतपञ्चकं च कल्प्यते यथोक्तं मनुना "अण्व्योमात्राविनाशिन्यो दशार्द्धानान्तु याः स्मृताः । ताभिः सार्द्धम्" इत्युक्तम् शारीरकसूत्रे च "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः इति" भूतमात्रोपश्लिष्टस्यैव संसरणमुक्तं सांख्ये च "चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया । तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गमिति, संसरति निरुपभोगं भावैरधिवासितं लिङ्गमिति" चोक्तम् । अतिवाहप्रकारस्तु उत्क्रमणशब्दे विशेषेण वक्ष्यते । अति+वह–णिच् ण्वुल् अतिवाहकारके, अतियापके च त्रि॰ ।

अतिवाहिक त्रि॰ अतिवाहः अस्त्यस्य ठन् । अतिवाहयोग्ये अतिवाहशब्दोक्ते सूक्ष्मशरीरे । [क्रमिते च ।

अतिवाहित त्रि॰ अति+वह–णिच्–क्त । यापिते, अति-

अतिवाह्य त्रि॰ अति+वह–णिच् कर्म्मणि-यत् । अतिवाहयोग्ये कालादौ । [अतिकराले त्रि॰ ।

अतिविकट पु॰ अतिशयेन विकटः । दुष्टहस्तिनि ।

अतिविषा स्त्री अतिक्रान्ता विषम् अत्या॰स॰ । (आतइच्) इति ख्यातायाम् लतायाम् ।

"त्रिविधाऽतिविषा ज्ञेया शुक्ला कृष्णा तथाऽरुणा । रसवीर्य्यविपाकेषु निर्व्विशेषा गुणाधिकेति" वैद्यकम् । विषातिक्रमकारके त्रि॰ । [क्रान्ते "तद्युद्धमतिवृत्तमिति" नाट॰ ।

अतिवृत्त त्रि॰ अतिक्रम्य वर्त्तते वृत–क्त । अतिशयिते, अति-

**अतिवृत्ति** स्त्री अति+वृत-क्तिन् । अतिक्रमे । वृत्ति-जीविका तामतिक्रान्ते त्रि० ।

**अतिवृद्ध** त्रि० अत्यन्तं वृद्धः । अत्यन्तवृद्धियुक्ते, अतिजरति च । वृषादिचर्व्वणासमर्थायां गवि स्त्री । "अतिवृद्धामति-कृशामिति" स्मृतिः "अतिवृद्धाम् तृणच्छेदनासमर्थामिति" रघु० । "चतुःशतं समारभ्य यावद्वर्षसहस्रकम् । अति-वृद्धः स मन्त्रस्तु सर्व्वशास्त्रेषु वर्ज्जित इति" तन्त्रोक्ते मन्त्रभेदे पु० ।

**अतिवृष्टि** स्त्री अति+वृष-क्तिन् । अत्यन्तवृष्टौ शस्योपघात-कोपद्रवरूपे "अतिवृष्टिरनावृष्टिः शलभाः मूषिकाः खगाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" इत्युक्ते" ईतिभेदे "निरीतिभावं गमितेऽति-वृष्टय" इति नैष० ।

**अतिवेध** पु० अत्यन्तोवेधः सम्पर्कः । "अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकाद्वयम् । अतिवेधोद्विघटिका प्रभासन्दर्शना द्रवेः" इत्युक्ते एकादश्याः दशमीसम्पर्कभेदे, "यातुधानं प्रतं योगे, महावेधे तु राचसम् । जम्भासुरस्यातिवेधः" इति ब्रह्मवै० जम्भासुरस्य फलदायकं न तु कर्त्तुः फलदम् तेन निन्दाश्रवणात् सा एकादशी नैवोपास्येति ।

**अतिवेगित** त्रि० अतिवेगो जातोऽस्य तारा० इतच् । जाता-धिकवेगे "भौमादयोऽल्पमूर्त्तित्वाच्छीघ्रमन्दोच्चसंज्ञकैः दैवतै-रपकृष्यन्ते सुदूरमतिवेगिताः" इति सूर्य० ।

**अतिवेल** त्रि० अतिक्रान्तो वेलां मर्य्यादाम् कूलं वा अत्या०स० । अतिशयिते, निर्म्मर्य्यादे, समुद्रादिकूलातिक्रमकारके च । अतिक्रमे अव्ययी० । वेलातिक्रमे अव्य० ।

**अतिवोढृ** त्रि० अति+वह-तृच् । अतिवहनकर्त्तरि मापके "अग्निर्वै पथोऽतिवोढा स एतानतिवहतीति" श्रुतिः । स्त्रियां ङीप् ।

**अतिव्यथन** न० अति+व्यथ-णिच्-ल्युट् घटा० ह्रस्वः । अत्यन्तपीड़ने, "सपत्नविध्वनादतिव्यथने" इति पा० ।

**अतिव्यथा** स्त्री अत्यन्ता व्यथा । अत्यन्तपीड़ायाम् ।

**अतिव्यय** त्रि० अतिशयितोव्ययः । अपरिमितव्यये यस्य यावान् व्ययउचितस्ततोऽधिकव्यये व्ययनियमश्च, "पादेन तस्य पारक्यं कुर्य्यात् सञ्चयमात्मवान् । अर्द्धेन चात्मभरणं नित्यनैमित्तिकं तथा पादार्द्धञ्चैव सर्व्वस्य मूलभूतं विवर्द्धयेत् एवमारभतः पुंसामर्थः साफल्यमृच्छतीति" मार्क०पुरा० । "अतिव्ययात् स्वल्पकालात् क्षिप्रं दैन्यपरिक्षयादिति" नीति० ।

**अतिव्याप्ति** स्त्री अतिशयेन लक्ष्यमलक्ष्यञ्चाभिविष्य व्याप्तिः व्यापनम् । अतिशयव्यापने (लक्ष्यस्येवालक्ष्यस्यापि व्यापने) । तथा च यत्र यस्य स्थितिरुचिता ततोऽन्यत्रापि तस्य सम्बन्धे प्रसक्ते अतिव्याप्तिः । यथा पृथिव्याः गन्धो लक्षणं तत्रैव तस्य स्थितिरुचिता तस्य वाय्वादौ सत्त्वप्रसङ्गे अतिव्याप्तिः । यथा वा धूमे वह्नेर्व्यापकता न तु जले, तत्र प्रसक्तौ अतिव्याप्तिः । एवञ्च पृथिव्या रूपवत्त्वं लक्षणम् जला-दावतिव्याप्तम् । "परिगणनं कर्त्तव्यमव्याप्त्यतिव्याप्ति-दोषवारणायेति" सिद्धा०कौ० ।

**अतिशक्करी** पु० अतिक्रान्ता शक्करीमेकाक्षराधिक्यात् । पञ्च-दशाक्षरपादके वृत्तभेदे "शक्करी सातिपूर्व्वा स्यादिति,वृत्त० ।

**अतिशक्ति** स्त्री अतिशयिता शक्तिः कर्म्मसाधनं सामर्थ्यम् देहजं बलम् वा मा०स० । अतिशयिते सामर्थ्ये, अधिक-वीर्य्ये च "स वीर्य्यमतिशक्तिभागि"त्यमरः । अतिक्रान्तः शक्तिम् अत्या०स० । सामर्थ्यातिक्रमकारके त्रि० । अतिशयिता शक्तिर्यस्य ब० । अतिशयबलवति त्रि० । अतिक्रमेऽव्ययी० । शक्त्यतिक्रमे अव्य० ।

**अतिशय** पु० अति+शीङ्-अच् । आधिक्ये, अतिरेके च । अतिक्रान्तः शयं हस्तम् अत्या०स० । हस्तातिक्रमकारके त्रि० । अतिशय+अस्त्यर्थे अच् । अतिशयवति । "अति-शयरमणीयेनेति" काद० । द्वारे व्यापारे च "चिरमस्तं कलायाश्च न कर्म्मातिशयं विदे"त्युदयनः ।

**अतिशयन** न० अति+शी-भावे ल्युट् । अतिरेके अति-शयार्थे । अतिक्रान्तं शयनम् अत्या०स० ।

**अतिशयित** त्रि० अति+शीङ्-क्त । अधिके, अतिक्रान्ते च ।

**अतिशयिन्** त्रि० अति+शी-इनि । अतिशयान्विते स्त्रियां ङीप् । "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः" इति काव्यप्र० ।

**अतिशयोक्ति** स्त्री अतिशयेन उक्तिर्निर्द्देशः यत्र । अलङ्कार-शास्त्रप्रसिद्धे (सा० १० परि०) "सिद्धत्वेऽध्यवसायस्याति-शयोक्तिर्निगद्यते भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ । पौर्व्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा मते"त्युक्तलक्षणे अर्थालङ्कारभेदे यथा "किमधरो शुक्रस्य? किं स्त्रियाः स्तवकदुःसाहसिक बहुमौन"मित्यत्र चेतनगतं मौनित्वमन्यत्, अचेतनगतञ्चान्यदिति द्वयोर्भेदे-ऽपि अभेदः । "अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पद" इत्यत्र लावण्यादेरभेदेऽपि अन्यशब्देन भेदः इति" "अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु? कान्तिप्रद" इत्यादौ श्लोके "वेदाभ्यासजडः कथं नु? विषयव्यावृत्तकौतूहलो निर्म्मातुं प्रभवे"दित्यादिना विधातुः सम्बन्धेऽपि तदसम्बन्धः । "यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् तदोपमीयते तस्या वदनं चारुलोचनमिति" यदि शब्दबला-

दात्कृतसम्भावनायैव सम्बन्धात् तद्विपर्य्ययः । "सममेव समाक्रान्तं द्वयं द्विरदगामिना तेन सिंहासनं पित्र्यमखिलं चारिमण्डल"मित्यत्र कार्य्यकारणयोः पौर्व्वापर्य्याभावः ।

**अतिशायन** न० अति-शीङ् ल्युट् "अतिशायने तम"मित्यादिसूत्रनिर्द्देशात् नि० दीर्घः । आधिक्ये, प्रकर्षे च । "भूमनिन्दाप्रशंसायां नित्ययोगेऽतिशायने इति" कारिका ।

**अतिशीत** न० अतिशयितं शीतम् प्रा०स० । अत्यन्तशीतलस्पर्शे । तद्विशिष्टे त्रि० ।

**अतिशेष** पु० अतिशिष्यते कर्म्मणि घञ् । स्वल्पावशिष्टे, "स हि आदित्यातिशेषान् जायाया आजहारेति" । [श्रेष्ठे च ।

**अतिशोभन** त्रि० अति+शुभ–ल्यु । अत्यन्तशोभान्विते,

**अतिश्व** त्रि० अतिक्रान्तः श्वानं बलेन अच् समा० । वराहादौ । सेवायां स्त्री, सेवायाः कुक्कुरवत् पराधीनवृत्तित्वात् तथात्वम् । अतएव मनुना "न श्ववृत्त्या कदाचनेति" सेवायाः कुकुरवृत्तित्वेन निषेधः कृतः ।

**अतिश्वन्** पु० अतिशयितः सुन्दरः श्वा अतेः पूजार्थत्वात् न समा० । उत्तमकुक्कुरे तद्दूरदेशादौ चतुरर्थ्यां फक् । आतिश्वायनः तद्दूरदेशादौ त्रि० ।

**अतिष्ठा** त्रि० अतीत्य सर्व्वान् तिष्ठति स्था-क्विप्-षत्वम् । सर्व्वातीते । "अतिष्ठा वा एषा छन्दसां यदतिच्छन्दा अतिष्ठा अश्वमेधो यज्ञानामिति" बृ०उ० ।

**अतिसञ्चय** पु० अतीत्य आवश्यककृत्यं सञ्चयः । मधुमक्षिकादीनामिव स्वपरवञ्चनेनातिमात्रसञ्चये ।

**अतिसन्ध** त्रि० अतिक्रान्तः सन्धां सन्धानं मर्य्यादां वा अत्या० स० । सन्धानवर्ज्जिते, अतिक्रान्तमर्य्यादे च ।

**अतिसन्धेय** त्रि० अतिकष्टेन सन्धेयः अनुसन्धेयः संयोज्यो वा । कष्टानुसन्धेये, कष्टेन संयोजनीये च ।

**अतिसन्ध्या** स्त्री अत्यासन्ना सन्ध्या यस्याः ब०स० । पूर्व्वदिवसीयरात्रिशेषदण्डादिपरदिनसूर्य्योदयपर्य्यन्तः, सूर्य्यास्तात् पूर्व्वोत्तरदण्डात्मकश्च कालः सन्ध्या । तस्याः आसन्ने काले । "नातिसन्ध्यासमीपत" इति स्मृतिः ।

**अतिसर** त्रि० अतीत्य स्वगतिसङ्कुत्र सरति अति+सृ–अच् । अतिचारिणि, अग्रसरे च यौ "असावतिसरांचकारेति"

**अतिसर्ग** पु० अति+सृज-घञ् । दाने । "सद्वैरातिसर्गात्तु मया तस्य दुरात्मनः" इति रघुः । सर्गं सृष्टिमतिक्रान्तरि, नित्ये, मुक्ते च त्रि० । अतिसृज्यते यथेष्टं कर्म्म क्रियतेऽनेन । कामचारानुज्ञायाम् यथेच्छं क्रियतामित्याद्यभिलापरूपायाम् "विधिनिमन्त्रणामन्त्रणाधीष्टप्रैषातिसर्गेति" पा० । अतिसर्गः कामचारानुज्ञेति वृत्तिः ।

**अतिसर्जन** न० अति+सृज-ल्युट् । दाने, वधे, विप्रलम्भे, अतिशयदाने च । "ज्वलनातिसर्जनादिति" कुमा० ।

**अतिसर्व्व** त्रि० अतिक्रान्तः सर्वान् अत्या०स० गौणत्वान्न सर्वनामता । सर्वातिगे सर्वातीते । "अतिसर्वाय सर्वायेति" मुग्ध० ।

**अतिसान्तपन** न० अतिक्रान्तं सान्तपनमधिकदिनसाध्यत्वात् अत्या० स० । "गोमूत्रगोमयक्षीरदधिसर्पिःकुशोदकान्येकाहं द्वितीयमुपवसेत्तत् सान्तपनम्, त्र्यहाभ्यस्तैवातिसान्तपनमिति" विष्णूक्ते व्रतभेदे ।

**अतिसाम्या** स्त्री अत्यन्तं साम्यं मधुनाऽस्याः । मधुयष्टिलतायाम् । प्रा०स० । अत्यन्तसादृश्ये न० ।

**अतिसायम्** अव्य० अत्यासन्नं सायम् यस्य ब०स० । सायंकालसमीपे काले "नातिप्रगे नातिसायमिति" स्मृतिः ।

**अति(ती)सार** पु० अतिसारयति मलम् द्रवीकृत्य अति+सृ–णिच्–अच् वा अतेः दीर्घः । रोगभेदे उदरामये । तस्य निदानादि सुश्रुते उक्तं यथा "गुर्व्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः । विरुद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनैः । स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः । शोकाद्दुष्टाम्बुमद्यातिपानैः सात्म्यर्त्तुपर्य्ययैः । जलाभिरमणैर्वेगविघातैः कृमिदोषतः । नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते । (तस्य संप्राप्तिः) "संशम्यापां धातुरग्निं प्रवृद्धः शकृन्मिश्रो वायुनाधः प्रणुन्नः । सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधं तं वदन्ति । एकैकशः, ३ सर्व्वशश्चापि ४ दोषैः शोकेनान्यः ५ षष्ठ आमेन ६ चोक्तः ॥ (तस्य पूर्व्वरूपम्) हृन्नाभिपायूदरकुक्षितोद–गात्रावसादानिलसन्निरोधाः । विट्सङ्ग आध्मानमथाऽविपाको भविष्यतस्तस्य पुरःसराणि । (वातजः) शूलाविष्टः सक्तमूत्रोऽन्त्रकूजी स्रस्तापानः सन्नकट्यूरुजङ्घः । वर्चोमुञ्चत्यल्पमल्पं सफेनं रूक्षं श्यावं सानिलं मारुतेन । (पित्तजः) दुर्गन्ध्युष्णं वेगवन्मांसतोयप्रख्यं भिन्नं स्विन्नदेहोऽतितीक्ष्णम् । पित्तात् पीतं नीलमालोहितं वा तृष्णा मूर्च्छा दाहपाकज्वरार्त्तः । (कफजः) तन्द्रानिद्रागौरवोत्क्लेशसादी वेगाशङ्की सृष्टविट्कोऽपि भूयः । शुक्लं सान्द्रं श्लेष्मणा श्लेष्मयुक्तं भक्तद्वेषी निस्वनं हृष्टरोमा ॥ (त्रिदोषजः) तन्द्रायुक्तो मोहसादास्यशोषी वर्चः कुर्य्यान्नैकवर्णं तृषार्त्तः । सर्व्वोद्भूतः सर्व्वलिङ्गोपपत्तिः कृच्छ्रश्चायं बालवृद्धेष्वसाध्यः ॥ (शोकजः) तैस्तैर्भावैः शोचतोऽल्पाशनस्य बाष्पो वेगः पक्तिमाविध्य-

जन्तोः। कोष्ठं गत्वा क्षोभयन् यस्य रक्तं तच्चाध-स्तात्काकनन्तीप्रकाशम् ॥ वर्चोमिश्रं निः पुरीषं सगन्धं निर्गन्धं वा सार्य्यते तेन कोष्ठात्। शोकोत्पन्नो दुश्चिकित्स्योऽतिसारो रोगो वैद्यैः कष्ट एव प्रदिष्टः ॥ (आमजः) आमाजीर्णैः प्रद्रुताः क्षोभयन्तः कोष्ठं दोषाः सम्प्रदुष्टाः सभक्तम्। नानावर्णं नैकशः सारयन्ति कृच्छ्राज्जन्तोः षष्ठमेनं वदन्ति ॥

**अति(ती)सारकिन्** त्रि॰ अतिसारो रोगोऽस्यास्ति अतिसार+इनि-कुक्-च। अतिसाररोगवति। [अतिसाररोगे।

**अतिसारिन्** पु॰ अत्यन्तं सारयति मलम् अति+सृ-णिनि।

**अतिसृज्य** त्रि॰ अति+सृज-क्यप्। त्याज्ये, सर्जनीये च।

**अतिसृष्ट** त्रि॰ अति+सृज-क्त। दत्ते, प्रेरिते च।

**अतिसौरभ** पु॰ अतिशयितं सौरभमस्य ब॰। अत्यन्तामोदवति आम्रे। सौरभान्विते वस्तुमात्रे त्रि॰। प्रा॰स॰। अत्यन्तसुरभिगन्धे न॰। [माचरेदिति" स्मृतिः।

**अतिसौहित्य** न॰ प्रा॰स॰। अत्यन्ततृप्तौ "नातिसौहित्य-

**अतिस्तुति** स्त्री अति+स्तु-क्तिन् अतेः पूजार्थत्वादुपसर्गत्वबाधाच्च षत्वम्। अविद्यमानगुणानुकीर्त्तने।

**अतिस्पर्श** त्रि॰ अतिक्रान्तः स्पर्शं वर्णोच्चारणप्रयत्नभेदं दानं वा। जिह्वाग्रादेः सम्पूर्णस्पर्शाभावेन ईषत्स्पर्शमात्रेण उच्चार्य्ये अवरलात्मके वर्णे स्वरवर्णे च "अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलस्तथेति" शिक्षायां तेषामुच्चारणेऽस्पर्शेषत्स्पर्शयोरुक्तेस्तथात्वम्। दानहाने ऋणे अधमे च। "अतिस्पर्शो यवरता च रेफे" इति। प्रा॰स॰। अत्यन्तस्पर्शे।

**अतिस्फिर** त्रि॰ प्रा॰स॰। अत्यन्तस्फूर्त्तिशालिनि, अतिवृद्धे च।

**अतिहसित** न॰ अति+हस-क्त। उद्दहासे। घञ्। अतिहासोऽप्यत्र पु॰। [अति+हस्त+णि-अतिहस्तयति।

**अतिहस्ति** नामधातुः हस्तो निरस्यति हस्तिनाऽतिक्रामति वा

**अतीक्ष्ण** त्रि॰ न॰त॰। तीक्ष्णत्वविरोधिमृदुत्ववति। विषवृक्षनीलस्वरूपतीक्ष्णशब्दार्थभिन्ने न॰।

**अतीत** त्रि॰ अति+इण-क्त। अतिक्रान्ते, भूतकाले च। तद्वृत्तौ आरब्धपरिसमाप्ते पदार्थमात्रे त्रि॰। अतीतत्वं वर्त्तमानध्वंसप्रतियोगी। भवति च अपचदित्यादौ पाकादेर्वर्त्तमानध्वंसप्रतियोगित्वम्। स च कालो द्विविधः अद्यतनः अनद्यतनश्च अद्यतनस्तु अतीतायाः रात्रेः पश्चार्द्धेन, आगामिन्याः पूर्व्वार्द्धेन च सहितः कालः। तत्र वृत्तिध्वंसप्रतियोगी अद्यतनातीतः तदतिरिक्तः अनद्यतनः। तत्रानद्यतने भूते लङ् (अपचत्) "अनद्यतने लङिति" सूत्रात् तत्रैव वक्तुरपारोक्ष्यविवक्षायां लिट् (पपाच) "परोक्षानद्यतने लिङिति" सूत्रात्। भूतसामान्ये लुङ्। अपाक्षीत्। स्मशब्दादियोगे लटोऽपि भूतत्वमर्थः। कालस्तु क्रियान्वयी सर्वत्र, "क्रियाभेदाय कालस्त्विति" हर्य्युक्तेः। अतीतत्वादिकन्तु सर्वत्र प्रयोगकालमादायैव व्यवह्रियते इत्यादिकमाकरे द्रष्टव्यम्। अतीतकाले, "शीतेऽतीते वसनमशनमिति" "कालातीता वृथा सन्ध्येति" "संवत्सरे अतीते तु पुनरागमनाय चेति" तत्कालवृत्तौ "अस्तमतीतवान्तवेत्यादि"।

**अतीन्द्र** पु॰ अतिक्रान्त इन्द्रम् गुणैः अत्या॰। इन्द्रगुणातिगे विष्णौ इन्द्रातिगमात्रे त्रि॰ "अतीन्द्रमतिरुद्रं च भवतश्चरितं परमिति" पुरा॰।

**अतीन्द्रिय** त्रि॰ अतिक्रान्तमिन्द्रियं तदविषयत्वात् अत्या॰ स॰। इन्द्रियायोग्ये अप्रत्यक्षे, "नेत्रश्रोत्रनासिकारसनात्वक्चेतांसीन्द्रियाणि तैर्ग्राह्यमयक्षे विषये। "ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते" भाषा॰ "यत्तत् सूक्ष्ममतीन्द्रियमिति" गीता। ईश्वरे च तस्य तथात्वम् वाह्येन्द्रियायोग्यत्वेनैव अन्यथा "मनसैवानुद्रष्टव्य" इति श्रुतौ ज्ञानविषयत्वमुक्तं विरुध्येत। "यन्मनसा न मनुते" इत्यादिकं तु अशुद्धमनसोऽविषयत्वपरम्। अत एव "विशुद्धचेतसा गम्यमिति" वाक्यान्तरम्। किन्तु वेदान्तिमते ज्ञानं द्विविधं वृत्तिरूपं तदवच्छिन्नमनोवृत्तिप्रतिविम्बितचैतन्यरूपञ्च तत्र वाह्येन्द्रियाणां रूपादिष्वेव ग्राहकत्वमीश्वरस्य रूपादेरभावेन वाह्येन्द्रिययोग्यत्वाभावेऽपि मनोवृत्तिविषयत्वमस्त्येव अतिसूक्ष्मत्वाच्च नाशुद्धमनोविषयत्वमित्येव भेदः। किन्तु मनोवृत्तिविषयत्वेऽपि तदवच्छिन्नचैतन्याविषयत्वात्तस्य मानसाविषयत्वम् अतएवोक्तमभियुक्तैः "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षितेति"। अन्यथा विषयगताज्ञाननिवृत्तिं प्रति स्वविषयकमनोवृत्तेः कारणतया तदभावे कथंकारं? तद्गताज्ञाननिवृत्तिः स्यात् एतत्पक्षेऽप्यतीन्द्रियत्वं तज्जन्यवृत्त्यवच्छिन्नचैतन्याविषयत्वेन द्रष्टव्यम्।

**अतीव** अव्य॰ अति+इव-इवः अवधारणे प्रा॰स॰। अत्युत्कटातिशयेऽत्यन्तातिशये च। "अतीव विव्यथे" इति भार॰। "अतीव सुकुमाराङ्गीति"। "उच्चैःशिरस्त्वमतीवेति" कु॰।

**अतुल** पु॰ नास्ति तुला शुभ्रपुष्पतायामस्याः। तिलकवृक्षे तुलारहिते त्रि॰। "रामस्त्वतुलविक्रम" इति रामा॰।

**अतुल्य** त्रि॰ न तुल्यः । असदृशे असमाने "अतुल्यमहमा-मांड रामेण मम विग्रह" इति भट्टिः ।

**अतुष** त्रि॰ नास्ति तुषोऽस्य । अवघातादिना निस्तुषीकृते धान्यादौ "अतुषानिव यवान् कृत्वेति" ।

**अतुहिनरश्मि** पु॰ न तुहिनः अहिम उष्णो रश्मिरस्य । उष्णरश्मौ सूर्य्ये । न॰त॰ । उष्णरश्मौ पु॰ ।

**अतूतुजि** पु॰ न+तुज-कि द्वित्वदीर्घौ । अदातरि । "अतू-तुजिं चित् तूतुजिरशिश्रदिति" ऋ॰तूतुजिदातेति भा॰।

**अतूर्त्त** त्रि॰ न तूर्यते तुरी हिंसायाम् क्त ईदित्त्वादिट् न । अहिंसिते। "अतूर्त्तः राजा अव इच्छमान इति ऋ॰ । अतूर्त्तः अहिंसित इति भा॰ ।

**अतृणाद** त्रि॰ न तृणमत्ति अद-अण्-उप॰ न॰त॰ । तृणाभक्षके दुग्धमात्रपोष्ये गवादिवत्से । "अथ वत्सं जातमाहुरतृणादमिति" वेदः । [मनह्वे पर्वते ।

**अतृदिल** पु॰ न तृद्यते बध्यते तृद-किलच् न॰त॰ । हन्तु-

**अतृप्ति** स्त्री तृप्तिः सन्तोषः अभावार्थे-न॰त॰। तृप्त्यभावे व॰। तृप्तिरहिते, असन्तोषिणि, लोलुपे च त्रि॰ ।

**अतेजस्** न॰ न तेजः विरोधे न॰त॰। तेजोविरोधिनि तमसि छायायाम् । नास्ति तेजोऽस्य वा न कप् । तेजोरहिते त्रि॰ कपि । अतितेजस्कोऽप्यत्र त्रि॰ ।

**अत्क** पु॰ अतति सततं विकृतिम् अत-कन् कित्त्वम् । शरीरावयवे "स्तरीर्नात्कं व्युतं वसानेति" श्रुतिः । अतति सततं गच्छति । पान्थे त्रि॰ ।

**अत्तवे** अव्य॰ अद-तुमर्थे तवेङ् । अत्तुमित्यर्थे "हविषेऽत्तवे इति" यजु॰ । "अत्तवे हविर्भिर्वृतमिति" वेददीपः ।

**अत्ता** स्त्री अतति सततं सम्बध्नाति अत-तक् इडभावः । मातरि, स्त्रियाः-श्वश्र्वाञ्च । स्वार्थे के कापि अत इत्त्वे । अत्तिकाप्यत्र ।

**अत्ति** त्रि॰ अद्यते सर्वदा सम्बध्यते कर्म्मणि क्तिन् । मातरि, ज्येष्ठभगिन्यां, स्त्रियाः-श्वश्र्वाञ्च । स्वार्थे कन् । तत्रैवार्थे ।

**अत्तृ** पु॰ अद्-तृच् । परमेश्वरे, "अत्ता चराचरग्रहणादिति" शारीरकसूत्रम् तस्य अत्तृत्वञ्च "यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनो मृत्युर्यस्योपसेचनमिति" श्रुतौ सर्वभ-क्षकत्वेनोक्तेः । अधिकमर्द्दितशब्दे दृश्यते भक्षककर्त्तृमात्रे त्रि॰ स्त्रियां ङीप् । "अरक्षितारमत्तारं नृपं विद्या-दधोगतिमिति" भार॰ ।

**अत्न** न॰ अतति जयपराजयावत्र अत-न । युद्धे । निरु॰

**अत्नु** पु॰अत-नु । वायौ । सततगन्तरि । पथिके त्रि॰ । उणा॰

**अत्य** त्रि॰ अतति शीघ्रं गच्छति कर्त्तरि यत् । शीघ्रगेऽश्वे, "अश्वोऽस्यत्योऽसि मयोऽसीति" ता॰ब्रा॰ । "अशुमत्यं न वाजिनमिति" वेदः ।

**अत्यग्निष्टोम** पु॰ अतिक्रान्तोऽग्निष्टोममधिकफलदत्वात् अत्या॰स॰ । "अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशी राज-पेयोऽतिरात्रोऽप्तोर्याम इति" गवामयनसंस्थयज्ञभेदे ।

**अत्यङ्कुश** पु॰ अतिक्रान्तोऽङ्कुशं तत्पीडनमनादृत्य यथेष्टं प्रवृत्त-त्वात् अत्या॰स॰ । अङ्कुशाघातानादरेण यथेच्छं प्रवृत्ते उत्कटे दुर्दान्ते गजे । [अङ्गुलिपरिमाणाधिके ।

**अत्यङ्गुल** त्रि॰ अतिक्रान्तोऽङ्गुलिं तत्परिमाणम् अच् समा॰ ।

**अत्यध्व** त्रि॰ अतिक्रान्तोऽध्वानम् अत्या॰स॰ अच् समा॰ । अतिक्रान्तपथे प्रा॰स॰ । अतः पूजनार्थत्वान्न समा॰ । अत्यध्वन् । सुपथि पु॰ ।

**अत्यन्त** न॰ अतिक्रान्तोऽन्तं सीमाम् अत्या॰स॰ । अतिशये । तद्युक्ते सर्वपरिच्छेदातिक्रान्ते त्रि॰ । अतिक्रमेऽव्ययी॰। परिच्छेदातिक्रमे नाशातिक्रमे च अव्य॰ । "किं वा तवा-त्यन्तवियोगदुःखे" इति रघु॰ "अत्यन्तहिमोत्कराऽनिला इति" कुमा॰ । "सुखमत्यन्तमश्नुते" इति गीता । "शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरमिति" च पुरा॰ । "अत्यन्ते भवः ठक् आत्यन्तिकः । अत्यन्तभवे वस्तुनि त्रि॰। नाशाति-क्रान्ते त्रि॰ "अत्यन्तं निर्जगद्योमेति" पञ्चदशी ।

**अत्यन्तकोपन** त्रि॰ अत्यन्तं भृशं कुप्यति अति+कुप-ल्यु । भृशकोपान्विते अतिकोपयुक्ते ।

**अत्यन्तगामिन्** त्रि॰ अत्यन्तम् अन्तात्ययं अति+अन्त-अत्यये अव्ययीभावः तद्गच्छति गम-कर्त्तरि णिनि । अत्य-न्तिके अतिशयगमनशीले च । स्त्रियामत्यन्तगामिनी ।

**अत्यन्तनिवृत्ति** स्त्री अत्यन्ता निवृत्तिः । स्वप्रतियोगि-जातीयप्रागभावासमानाधिकरणे ध्वंसे । यस्यां सत्यां स्वप्रतियोगिजातीयस्यान्यस्य पुनरुत्पत्तिर्न भवेत् तादृशी निवृत्तिरत्यन्तनिवृत्तिः "अथ त्रिविधदुःखात्यन्तनिवृत्ति-रत्यन्तपुरुषार्थ इति" सांख्यसूत्रम् । सा च मोक्षावस्थाया-मेव, मोक्षे हि विवेकेनाविद्यानिवृत्तौ तत्कार्य्यस्य दुःखादेः सुतरां समूलमुच्छेद इति तत्र न पुनर्दुःखोत्पादः अतस्तत्र दुःखात्यन्तनिवृत्तिः ।

**अत्यन्तसंयोग** पु॰ अत्यन्तेन साकल्येन संयोगः संबन्धः व्याप्तिरिति यावत् अन्तमवसानमतिक्रान्तः संयोगो वा । सन्ततसम्बन्धे, व्याप्तौ च । "कालाध्वनोरत्यन्तसंयोग" इति पा॰ । [इक्षौ राजनि॰ ।

**अत्यन्तसुकुमार** पु॰अत्यन्तं सुकुमार इव । (काङ्नी) कङ्गनी

**अत्यन्ताभाव** पु० अत्यन्तः अन्तमतिक्रान्तः नित्यः अभावः कर्म्म० । नास्तीति वाक्याभिलप्यमाने नाशप्रागभावभिन्ने संसर्गाभावे । यथा न्यायमते भूतले घटाभावः प्रतीयते स च भूतले घटोनास्ति इति वाक्येन अभिलप्यते सोऽयमभावः, न नाशः, नापि प्रागभावः तयोः समवायि देशवृत्तित्वनियमात् भूतलादेव तदभावात् । नाशप्राग-भावयोस्तु न अत्यन्तता प्रतियोगिकाले तयोरसत्त्वात् । नापि तयोर्नित्यता प्रागभावस्य प्रयोगिनाश्यत्वात् ध्वंसस्य च प्रतियोगिजन्यत्वात् । भेदस्य नित्यत्वेऽपि संसर्गाभाव-त्वाभावात् न तथात्वम् । अत्यन्ताभावस्य नित्यत्वेऽपि प्रतियोगिसत्त्वकाले न तत्प्रतीतिः अभावप्रत्यक्षे योग्यानु-पलब्धेर्हेतुतया योग्यस्य घटादिरूपप्रतियोगिन उपलब्धौ तदनुपलब्धेरभावात् । नापि एकस्मिन् भावाभावयोः सत्त्वं विरुद्धम् एकस्मिन्नपि वृक्षे कपिसंयोगतदभावयोरवच्छेद-भेदेन सत्त्वदर्शनात् तथा च एकस्मिन्नपि भूतलेऽवच्छेद-भेदेन तयोः सत्त्वं न विरुध्यते । द्रव्यादौ गुणतदभावयोः कालरूपावच्छेदभेदेन स्थितिरपि न विरुद्धा । तथा च प्रतियोगिसत्त्वकाले द्रव्ये गुणात्यन्ताभावबुद्धिः प्रतिबन्धक-सद्भावेन परं नोदेति इत्येव विरोधमात्रम् । अधिकमभाव-शब्दे वक्ष्यते । “प्रागभावस्तथाध्वंसोऽप्यत्यान्ताभाव एव चेति” भाषा० ।

**अत्यन्तिक** त्रि० अत्यन्तं गच्छति अत्यन्त+ठन् । अति-शयितगमनकारिणि । अतिशयितमन्तिकं निकटं प्रा० स० । अतिनिकटे न० । तद्वृत्तौ त्रि० । नात्यैवात्यन्तिके नोदूरे तत् स्थापयेदिति । अत्या० स० । अतिक्रान्तसामीप्ये दूरे न० । तद्वृत्तौ त्रि० ।

**अत्यन्तीन** त्रि० अन्तस्यात्ययः अत्यन्तम् अत्यये अव्ययी० अत्यन्तं गामी अत्यन्त+ख । अतिशयितगतिशीले । “लक्ष्मीं परम्परीणां त्वमत्यन्तीनत्वमुन्नयेति” भट्टिः ।

**अत्यम्ल** पु० अतिशयितोऽम्लोरसः फलपत्रादौ यस्य ब० । (तेतुल) इति प्रसिद्धे तिन्तिड़ीवृक्षे । अत्यन्ताम्लरसवति वस्तु-मात्रे त्रि० । वनबीजपूरे (टावालेबु) इति प्रसिद्धे वृक्षे स्त्री । अम्लरसस्य लक्षणादुक्तं सुश्रुते यथा “यो दन्त-हर्षमुत्पादयति मुखस्रावं जनयति श्रद्धाञ्चोत्पादयति सोऽम्ल इति” अम्लो जरणः पाचनः पवननिग्रहणो-ऽनुलोमनः कोष्ठविदाही बहिःशीतः क्लेदनःप्रायशो हृद्यश्चेति स एवं गुणोऽप्येक एवात्यर्थमुपसेव्यमानो दन्त-हर्षनयनसंमीलनरोमसंवेजनकफविलयनशरीरशैथिल्यान्या-पादयति तथा क्षताभिहतदग्धदष्टभग्नशूनरुग्णप्रच्युताऽ-वमूत्रितविसर्पितच्छिन्नभिन्नविद्धोत्पिष्टादीनि पाचयत्याग्नेय-स्वभावात् परिदहति कण्ठमुरो हृदयञ्चेति” । अम्ल-द्रव्याणि च तत्र कानिचित् प्राधान्येन दर्शितानि यथा । दाड़िमामलकमातुलुङ्गाम्रातक-कपित्थकरमर्दवरकोलप्राची-नामलकतिन्तिड़ीककोशाम्रभव्यपारावतवेत्रफललकुचाम्लवेत-सदन्तशठदधितक्रसुराशुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनि समासेनाम्लवर्ग इति ।

**अत्यम्लपर्णी** स्त्री अत्यम्लं पर्णं यस्याः जातित्वात् ङीष् । अत्यम्लपत्रयुक्ते वनबीजपूरे (टावालेबु) इति ख्याते वृक्षे ।

**अत्यय** पु० अति+इण-अच् । अतिक्रमे, अभावे, विनाशे, दोषे, कृच्छ्रे, अतिक्रम्य गमने, कार्य्यस्यावश्यम्भावाभावे च । “प्राणात्यये च संप्राप्ते योऽन्नमत्ति यतस्ततः । न स पापेन लिप्येत पद्मपत्रमिवाम्भसेति” स्मृतिः । “क्षुरस्य धारा निशिता दुरत्ययेति” श्रुतिः । अत्ययं कालातिक्रमं न सहते ठक् आत्ययिकः । विलम्बाक्षमे कार्य्ये त्रि० । “आत्ययिकेषु कार्य्येषु सद्य एवाधिवासयेदिति” पुराणम् ।

**अत्यर्थ** न० अतिक्रान्तमर्थमनुरूपस्वरूपं अत्या० स०। अतिशये । तद्वति त्रि० । अत्यये अव्ययी० । अर्थाभावे अव्य० ।

**अत्यल्प** त्रि० अतिशयितोऽल्पः प्रा०स० । अत्यन्ताल्पे अणुतरे च । [कुर्य्यादिति” ।

**अत्यशन** न० अतिशयितमशनम् । अतिभोजने “नचैवात्यशनं

**अत्यष्टि** स्त्री अतिक्रान्ता अष्टिं षोड़शाक्षरपादिकां वृत्तिमेका-क्षराधिक्यात् अत्या०स० । सप्तदशाक्षरपादके छन्दोभेदे ।

**अत्याकार** पु० अतिशयेन आकारः तिरस्कारः अति+आ+कृ-घञ् । तिरस्कारे । “ख्याधात्याकारतद्वेतेष्विति” पा० अतिशयित आकारो मूर्त्तिः प्रा०स० । बृहद्देहे पु० । अतिशयित आकारो यस्य ब० । तद्विशिष्टे त्रि० ।

**अत्याग** पु० न त्यागः अभावार्थे न०त० । त्यागाभावे “उपे-त्यातिक्रमे दोषश्रुतेरत्यागदर्शनादिति” स्मृतिः ।

**अत्यागिन्** त्रि० त्यज-घिणुन् भन्दार्थे नञ् त० । कर्म्मफला-नुसन्धानेन कर्म्मानुष्ठायिनि, त्यागिभिन्ने च ।

**अत्याचार** पु० अत्युत्कट आचारः प्रा०स०। अनुचिताचरणे । अतिक्रमे अव्ययी० । आचारातिक्रमे अव्य० ।

**अत्याज्य** न० न त्यक्तुं शक्यम् शक्यार्थे यत् न कुत्वम् । त्यागाशक्ये त्यागानर्हे च ।

**अत्यादान** त्रि० अतिक्रान्तम् आदानम् । आदानातिक्रान्ते अतिशयितमादानम् प्रा०स० । अत्यादाने ।

**अत्याधान** न॰ अति+आ+धा–ल्युट्। अतिक्रमणे, सम्बन्धमात्रे, उपरिस्थापने च। अत्यये अव्ययी॰। अग्न्याधानातिक्रमे अव्य॰। अतिक्रम्य ज्योऽमाधानम्। ज्योऽतिक्रमेण अग्न्याधाने न॰।

**अत्याय** पु॰ अति+अय–घञ्। अतिक्रमे, "प्रजाह तिस्रो "अत्यायमीयुरिति" श्रुतिः। अतिक्रान्तलाभे त्रि॰। प्रा॰स॰। अतिशयिते लाभे पु॰।

**अत्यायु** न॰ अति+आ+या–कु। यज्ञियपात्रभेदे। "मूर्द्धास्यात्यायु पात्रमस्तीति" ता॰ "अत्यायुनामाभिधेयमिति" भाष्यम्। [विख्यात्यतिशये अतिप्रसिद्धौ च।

**अत्यारूढि** स्त्री अति+आ+रुह–क्तिन्। आरोहणातिशये।

**अत्याल** पु॰ अतिशयेन समन्तात् अलति पर्य्याप्नोति अति+आ+अल–अच्। (लालचिता) इति ख्याते रक्तचित्रकवृक्षे, तस्य अत्यल्पकालेन समन्तात् व्यापनात् तत्त्वम्।

**अत्याशा** स्त्री प्रा॰स॰। अपूरणीयधनादितृष्णायाम्। अत्या॰ स॰। आशातिक्रान्ते त्रि॰।

**अत्याश्रम** त्रि॰ अतिक्रान्त आश्रमान् तद्विहितधर्म्मान् अत्या॰ स॰। सर्व्वाश्रमत्यागिनि पञ्चमाश्रमिणि संन्यासिनि। अत्यात्याश्रमिन् इत्यपत्र। अतिशयित आश्रमः प्रा॰स॰। उत्तमाश्रमे संन्यासे पु॰।

**अत्याहित** न॰ अत्यन्तमाधीयते तन्निवारणार्थं मनो दीयतेऽस्मिन् आ+धा–आधारे क्त। अत्यन्तभीतौ, प्राणहानिशङ्काकरे अनर्थे च। "किमत्यात्याहितमिति" नाटकम्।

**अत्युक्ति** स्त्री अतिशयेन अनौचित्येन वा उक्तिः अति+वच–क्तिन्। अतिशयोक्तौ, अन्याय्योक्तौ, निर्गुणस्य जड़स्य वा आरोपितगुणेन स्तवने। "अत्युक्तौ न यदि प्रकुप्यसि मृषावादञ्च नो मन्यसे" इत्युद्भटः।

**अत्युक्ता(क्था)** स्त्री उक्ता(क्था) एकाक्षरपादिका वृत्तिः ताम् अतिक्रान्ता अत्या॰स॰। द्व्यक्षरपादके छन्दोभेदे। अत्युक्थस्तु उक्थनामकसामभेदातिक्रान्तरि त्रि॰।

**अत्युच्छ्रित** त्रि॰ अत्यन्तमुच्छ्रितः। अत्यन्तोन्नते उन्नतेः परमसीमापन्ने।

**अत्युत्कट** त्रि॰ अत्यन्त उत्कटः। अत्यन्तोग्रे। "अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते" इति पुरा॰।

**अत्युत्कृष्ट** त्रि॰ अत्यन्तमुत्कृष्टः। परसीमापन्नोत्कर्षयुते।

**अत्यूमशा** अव्य॰ ऊर्य्यादिगणोक्ते अनुकरणशब्दे हिंसाद्योतकोऽयमित्यन्ये अत्यूमशाऽत्य। गणरत्ने तु अयं न दृश्यते गणपाठे तु दृश्यते इति विवेच्यम्।

**अत्यूह** पु॰ अतिशयेन ऊहते शब्दायते अति+ऊह–अच्। कालकण्ठे (ड़ेको) इति प्रसिद्धे दात्यूहे पक्षिणि। अतिशयेन ऊहस्तर्कः प्रा॰स॰। अतिशयितवितर्के। (नील) इति ख्यातौषधौ नीलिकायां स्त्री। अत्ययेऽव्ययी॰। वितर्काभावे अव्य॰।

**अत्र** अव्य॰ अस्मिन् एतस्मिन् वा इदम्+एतद्–वा सप्तम्यास्त्रल् प्रकृतेरश्भावश्च। अस्मिन् एतस्मिन् वेत्यर्थे। "कोऽत्र भूमिवलये जनान् सुखेति" माघः। न त्रायते केनापि त्रै–बा॰ कर्म्मणि क। अन्यत्राणायोग्ये क्षत्रिये "प्राणः क्षणितोः प्रत्नमत्रमाप्नोतीति" यत्र न त्रायते केनचिदत्र' त्रत्र प्राप्नोत्यर्थः।

**अत्रप** त्रि॰ नास्ति त्रपा यस्य। निर्लज्जे।

**अत्रभवत्** त्रि॰ अयमित्यर्थे अत्र "अन्येभ्योऽपीति" प्रथमार्थे त्रल् ततः कर्म्म॰। पूज्ये, "जयमत्रभवान्नूनमरातिष्वभिलाषुकः" इति भार॰।

**अत्रस्त** त्रि॰ न त्रस्तः। त्रासरहिते त्रासोपाधिरहिते च "जुगोपात्मानमत्रस्त" इति रघुः। त्रासोपाधिमन्तरेणेत्यर्थः मल्लिनाथः। [त्रासशून्ये त्रि॰।

**अत्रास** पु॰ न त्रासः अभावार्थे न॰त॰। त्रासाभावे न॰ब॰।

**अत्रि(त्त्रि)** पु॰ अद–त्रिन् "मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। ब्रह्मणोमानसाः पुत्रा वशिष्ठश्चेति सप्त ते इत्युक्ते सप्तर्षिमध्ये मुनिभेदे। "अग्निरत्रिं घर्म उरुष्यदन्त इति श्रुतिः"। अत्र पक्षे वा तल्लोपे अत्रिरित्यपि। त्रिभिन्ने त्रि॰ बहुवचनान्तः। अस्य उत्तरदिशि ताराहरूपेणापि स्थितिः बृहत्संहितायामुक्ता यथा "एकावलीव राजति ससितोत्पलमालिनी सहासेव। नाथवतीव च दिग्यैः कौवेरी सप्तभिर्मुनिभिः॥ ध्रुवनायकोपदेशान्नरीनर्त्तीवोत्तरा भ्रमद्भिश्च। यैश्चारमहं तेषां कथयिष्ये वृद्धगर्गमतात्॥ आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ। षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्ञश्च॥ एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम्। प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः॥ पूर्वे भागे भगवान् मरीचिरपरे स्थितो वशिष्ठोऽस्मात्। तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च॥ पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्व्वाद्याः। तत्र वशिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी॥ उल्काशनिधूमाद्यैर्हता विवर्णा विरश्मयो ह्रस्वाः। हन्युः स्वं स्वं वर्गं विपुलाः स्निग्धाश्च तद्वृद्ध्यै" इति॥ अत्रेर्वंशाश्च तत्रैवोक्ता यथा

"अत्रेः कान्तारभवा" इति । अधिकं सप्तर्षि शब्दे दृश्यम् । अद्–त्रिनि । अत्तीत्यत्र उणादि० ।

**अत्रिजात** पु० अत्रेर्नेत्रात् जातः जन–क्त ५त० । चन्द्रे, चन्द्रो हि प्रजासर्गार्थं तपस्यतोऽत्रेर्नेत्रात् जातो यथा । "पिता सोमस्य वै राजन् जज्ञेऽत्रिर्भगवानृषिः । ब्रह्मणो मानसात् पूर्व्वं प्रजासर्गं विधित्सतः । तत्रात्रिः सर्व्वभूतानां तस्थौ स्वतनयैर्वृतः । कर्म्मणा मनसा वाचा शुभान्येव चचार सः । अहिंस्रः सर्वभूतेषु धर्म्मात्मा संशितव्रतः । काष्ठकुड्यशिलाभूत ऊर्द्ध्वबाहुर्म्महाद्युतिः । अनुत्तरं नाम तपो येन तप्तं महत् पुरा । त्रीणि वर्षसहस्राणि दिव्यानीति ह नः श्रुतम् । तत्रोर्द्ध्वरेतसस्तस्य स्थितस्यानिमिषस्य ह । सोमत्वं तनुरापेदे महासत्त्वस्य भारत । ऊर्द्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः । नेत्राभ्यां वारि सुस्राव दशधा द्योतयन् दिशः । तं गर्भविधिना हृष्टा दश देव्यो दधुस्तदा । समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयन् लोकान् शीतांशुः सर्वभावनः । यदा न धारणे शक्तास्तस्य गर्भस्य ता दिशः । ततस्ताभिः सहैवाशु निपपात वसुन्धराम् । पतितं सोममालोक्य ब्रह्मा लोकपितामहः । रथमारोपयामास लोकानां हितकाम्यया । स हि वेदमयस्तात ! धर्म्मात्मा सत्यसङ्गरः । युक्तो वाजिसहस्रेण सितेनेति हि नः श्रुतम् । तस्मिन्निपतिते देवाः पुत्रेऽत्रेः परमात्मनि । तुष्टुवुर्ब्रह्मणः पुत्रा मानसाः सप्त ये श्रुताः इति हरिवंशे ।

**अत्रिदृग्ज** पु० अत्रेर्दृशोनेत्राज्जायते जन–ड ५त० । चन्द्रे अत्रिनेत्रजादयोऽप्यत्र । तद्विवृतिरत्रिजशब्दे दृश्यम् ।

**अत्रिभारद्वाजिका** स्त्री अत्रिभारद्वाजवंश्ययोः मैथुनम् "द्वन्द्वाद्वुन् वैरमैथुनयोरिति" वुन् "वैरमैथुनकादिषु"स्त्रियभरोक्तेः स्त्रीत्वम् । तद्वंश्यजातयोः स्त्रीपुंसयोर्मैथुने ।

**अत्रिसंहिता** स्त्री अत्रेः संहिता स्मृतिः । वर्णाश्रमाचारादिबोधके अत्रिप्रणीते धर्मशास्त्रभेदे ।

**अत्वरा** स्त्री न त्वरा शीघ्रम् अभावार्थे न०त० । त्वराभावे "त्रीणि श्राद्धे प्रशंसन्ति शौचमक्रोधमत्वरामिति" स्मृतिः ।

**अत्सरुक** पु० नास्ति त्सरुरिव मुष्टिबन्धनस्थानं यस्य । मुष्टिबन्धनस्थानशून्ये खड्गाकारे यज्ञियपात्रभेदे चमसे ।

**अथ** अव्य० उ०–अर्थ–ड पृषो० रलोपः । संशये, आरम्भे आनन्तर्य्ये, प्रश्ने, विकल्पे, प्रकरणे, समुच्चये पक्षान्तरे च । मङ्गलं तु नास्यार्थः किन्तु अर्थान्तरप्रयुक्तोऽप्ययं श्रुत्या मङ्गलसाधनं भवति । "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभा"वित्युक्तेः अस्य श्रवणेन मङ्गलसाधनत्वम् अतएव शारीरकभाष्ये "अर्थान्तरप्रयुक्तोऽथशब्दः श्रुत्या मङ्गलमारचयती"त्युक्तम् । तत्र "अथातो ब्रह्मजिज्ञासेत्यादौ" साधनचतुष्टयानन्तर्य्यार्थे "अथ प्रजानामधिप" इत्यादौ चानन्तर्य्ये, "अथ योगानुशासन"मित्यत्र अधिकाररूपारम्भे "शब्दोनित्यः अथानित्य" इत्यादौ संशये, संशयश्च एकधर्म्मिकं कोटिद्वयज्ञानं तत्र कोट्युपस्थापनस्य संशयहेतुत्वात् प्रकृते तस्यैव संशयशब्दार्थता विकल्पश्च संशयविशेष एव । "अथ शक्तोऽसि भोक्तुमित्यादौ" प्रश्ने, "अथ शब्दानुशासनमित्यत्र मङ्गलार्थतयोपादानमर्थस्तु अधिकार एव "अथ मरणमवश्यमेव जन्तोरिति" नैषधम्, "अथ चेत्त्वमिमं धर्म्म्यं संग्रामं न करिष्यसीत्यादौ गीतायां च पक्षान्तरे, अथातोधर्मं व्याख्यास्याम इत्यादौ कातन्त्रे, "भीमोऽथार्ज्जुन" इत्यादौ समुच्चये, स्वरादिपाठादस्याव्ययत्वम् ।

**अथकिम्** अव्य०अथ+कायतेः कथतेर्वा बा०डिमि । स्वीकारे । स्वीकारश्चेह नादानं, किन्तु अन्योक्तपदार्थस्य वक्तुः तथात्वेनाभ्युपगमात्मकज्ञानम्, तत्र द्योतकत्वमस्य शब्दस्य, यथा कस्यचित् "इत्थं इत्तमिति" प्रश्ने अथकिमित्यादिना पृष्टवस्तुनः यथावृत्तत्वाभ्युपगमः स च वक्तुरेव ।

**अथर्वण** पु० अथर्वा तदुक्तविद्याऽस्त्यस्य ज्ञातत्वात् अच् पृ० न टिलोपः । शिवे, त्रिकाण्ड० ।

**अथर्वणि** पु० अथर्वणि तदुक्तशान्त्यादौ कुशलः बा० इस् सिच्चेन भत्वाभावात् न टिलोपः । अथर्ववेदोक्तकर्माभिज्ञे ब्राह्मणे पुरोहिते च मेदिनिः ।

**अथर्वन्** पु० अथ+ऋ–वनिप् शक० । अथर्व्वनामकमुनिविशेषे, स च कल्पभेदे ब्रह्मणो ज्येष्ठः पुत्रः यथोक्तं मुण्डके । "ब्रह्मा देवानां प्रथमं संबभूवे"त्युपक्रम्य ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहेत्युक्तम्" "अनेकेषु ब्रह्मणः सृष्टिप्रकारेषु अन्यतमस्य सृष्टिप्रकारस्य मुखे अयमथर्वा सृष्ट" इति भाष्यम् । "अथर्वणे यां प्रवदेत ब्रह्माथर्वा पुरोवाचाङ्गिरे इति" अथर्वायेत्युक्तेः अथर्वशब्दोऽदन्तोऽपि "सर्वे नान्ता अदन्ताः स्युरित्युक्तेः" पृषो० नलोपः । अथर्व्वणाऽधीतत्वात् वेदभेदे पु० । ततः तद्वेदाधीते वा ठक् आथर्वणिकः, अथर्वणा दृष्टं साम अण् आथर्वणम् । तेन प्रोक्तम् अधीयते इतठको लुक् । अथर्वाणः । तत्प्रोक्ताध्यायिप्रभृतिष्वर्थेषु ।

**अथर्वविद्** पु० अथर्ववेदं तदुक्तं कर्म वा वेत्ति विद–क्विप्। अथर्ववेदस्य "शन्नो देवीरभीष्टय" इत्यादिकस्य, तद्विहिताभिचारादिकर्म्मणश्च वेत्तरि वशिष्ठादौ। "गुरुणाऽथर्ववि‌दा कृतक्रिय" इति रघुः।

**अथर्ववेद** पु० कर्म०। वेदभेदे तद्विद्वतिः "अथर्वस्य नव शाखाः, पैप्पलादा शौनकी दामोदा तौत्ता जाजला ब्रह्मदा शशशौनकी देवदर्शी चारणविद्या चेति तेषामध्ययनं द्वादशैव सहस्राणि तस्य पञ्च कल्पा भवन्ति कल्पे कल्पे पञ्च शतानि भवन्ति नक्षत्रकल्पो, विधानकल्पः संहिताविधिकल्पः, अभिचारकल्पः, शान्तिकल्पश्चेति" चरणव्यूहोक्ता। तस्याध्ययनप्रचारभेदादि विष्णुपुराणेऽभिहितं यथा
"अथर्वाणामथो वक्ष्ये संहितानां समुच्चयम्। अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः॥ शिष्यमध्यापयामास कबन्धं सोऽपि तद् द्विधा। कृत्वा तु देवदर्शाय तथा पथ्याय दत्तवान्॥ देवदर्शस्य शिष्यास्तु मौद्गो ब्रह्मबलिस्तथा। शौल्कायनिः पिप्पलादस्तथान्यो मुनिसत्तम!॥ पथ्यस्यापि त्रयः शिष्याः कृता यैर्द्विज! संहिताः। जाजलिः कुमुदादिश्च तृतीयः शौनको द्विजः॥ शौनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे। द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने॥ सैन्धवमुञ्जकेशाभ्यां भिन्ना वेदा द्विधा पुनः। नक्षत्रकल्पो वेदानां संहितानां तथैव च॥ चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः। श्रेष्ठास्त्वथर्वणामेते संहितानां हि कल्पकाः इति"॥ एतस्य उपनिषदः एकत्रिंशत् तासां नामानि यथा प्रश्नः १ मुण्डकं २ माण्डूक्यम् ३ अथर्वशिरः ४ अथर्वशिखा ५ वृहज्जाबालिः ६ नृसिंहतापनी ७ नारदपरिव्राजकः ८ सीता ९ शरभः १० नारायणः ११ रामरहस्यम् १२ रामतापनी १३ शाण्डिल्यः १४ परमहंसपरिव्राजकः १५ अन्नपूर्णा १६ सूर्य्यात्मा १७ पाशुपतम् १८ परब्रह्म १९ त्रिपुरातापनी २० देवी २१ भावना २२ भस्म २३ जाबालिः २४ गणपतिः २५ महावाक्यम् २६ गोपालतापनी २७ कृष्णतापनी २८ हयग्रीवः २९ दत्तात्रेयः ३० गरुडः ३१ एताश्च प्रायशः ब्रह्मविद्यातदङ्गोपासनाप्रतिपादिकाः मुक्तिको०।

**अथर्वशिखा** स्त्री अथर्वणः वेदस्य शिखेव ब्रह्मविद्याप्रतिपादकत्वेन श्रेष्ठत्वात्। तद्वेदीये ब्रह्मप्रतिपादके तन्नामके उपनिषद्भेदे। [श्रेष्ठत्वात् स्वनामख्याते अथर्वोपनिषद्भेदे।

**अथर्वशिरस्** न० अथर्वणः शिरइव ब्रह्मविद्याप्रतिपादकतया

**अथर्वाङ्गिरस** पु० अथर्वा चाङ्गिराश्च नि० अच्। एतयोर्मुन्योः। उपचारात् तद्दृष्टमन्त्रादिभेदे च "अथर्वाङ्गिरसं नीलरुद्रं देव्यपराजितेति" तन्त्र। "अथर्वाणं पितरं देवबन्धुं मातुगर्भं पितुरसुं युवानम्॥ य इमं यज्ञं मनसा चिकेत प्रणो वोचस्तमिहेह ब्रुवः इति"। ""अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सौम्यासः। तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥ अङ्गिरोभिर्यज्ञियैरागहीह यम वैरूपैरिह मादयस्व। विवस्वन्तं हुवे यः पिता तेऽस्मिन् बर्हिष्या निषद्य॥ इमं यम प्रस्तरमा हि रोहाङ्गिरोभिः संविदानः। आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषो मादयस्व॥ इतएत उदारुहन् दिवस्पृष्ठान्यारुहन्। प्रभूर्ज्जयो यथा पथा द्यामङ्गिरसो ययुरिति" ऋक्च॥ अथ० १८,१,५८,६१, [वेदरादित्युक्ते" बुधे।

**अथर्वाधिप** पु० ६त०। "सामवेदाधिपो भौमः शशिजोऽथर्व-

**अथर्वी** स्त्री न+थुर्व अच् पृ० उलोपः गौ० ङीष्। अहिंसिकायाम् "याभिर्विश्वलां धनसामथर्व्यमिति" वेदः।

**अथवा** अव्य० अथेति वायते अथ+वा–का। पक्षान्तरे "अथ वा कृतवाग्द्वारे इति" "अथवा मृदु वस्तु हिंसितुमिति" च रघुः। "अथवा हेतुमन्निष्ठविरहाप्रतियोगिनेति" भाषा०।

**अथो** अव्य० अर्थ–डो पृषो० रलोपः। अथशब्दार्थे आरम्भादौ। "अथाथो संशये स्यातामधिकारे च मङ्गले विकल्पानन्तर प्रश्नकात्स्न्यारम्भसमुच्चये इत्युक्ते" अथशब्दार्थे।

**अद** बन्धने भ्वा० पर० इदित् सक० सेट्। अन्दति आन्दीत्।

**अद** भक्षणे च अदा० पर० सक० अनिट्। अत्ति अघसत् जघास अत्ता अत्स्यति। सनि जिघत्सति। क्त–ओदनार्थे अन्नम् अन्यत्र जग्धम् घञ् घसः–आदः क्तिन् जग्धिः। "योऽन्नमत्ति यतस्तत" इति श्रुतिः। "अत्ता चराचरग्रहणादिति" शा० सू०। "किमदन्ति भक्ष्या" इति।

**अदंष्ट्र** पु० नास्ति दंष्ट्रा दशनसाधनदन्तविशेषः यस्य। मन्त्रा-शीदन्ते सर्पे। प्रधानदन्तरहिते त्रि०।

**अदक्ष** त्रि० विरोधार्थे न०त०। दक्षत्वविरोधिमान्द्यवति।

**अदक्षिण** त्रि० दक्षिणोऽनुकूलः कुशलश्च विरोधार्थे न०त०। दक्षिणत्वविरुद्धनैपुण्यप्रतिकूलत्ववति, वामाङ्गे च। नास्ति दक्षिणा कर्म्मसमाप्तौ देया यत्र। दक्षिणाशून्ये यज्ञादौ। दक्षिणादानस्य नित्यत्वं दक्षिणाशब्दे वक्ष्यते "हतयज्ञमदक्षिणमिति"।

**अदग्ध** त्रि० शास्त्रविधिनाग्निना न दग्धः। शास्त्रविधिना-

ऽकृताग्निसंस्कारे। "अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले ममेति" श्राद्धमन्त्रः। दग्धभिन्ने त्रि०।

**अदण्ड्य** त्रि० न दण्डमर्हति यत्। दण्डानर्हे "अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्निति" याज्ञ०। "अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा नादण्ड्यो नाम राज्ञोऽस्ति धर्म्मात् प्रचलितः स्वकादिति" मनुः। ऋष्यादौ कर्मविशेषे दण्डः तदभावश्च उक्तोऽनुसन्धेयः तत्र केचिददण्ड्याः संस्मृह्यन्ते। "अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा। सपालान् वा विपालान् न दण्ड्यान् मनुरब्रवीत्"। यानवाहकदण्डाभावे प्रयोजकमुक्तम् अतिवर्त्तनशब्दे, क्षेत्रे देयप्रावरणविशेषमुक्त्वा तदकरणे दण्डाभावो मनुनोक्तः यथा "तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणामिति" "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः पालोयेषाञ्च ते मोच्या दैवराजपरिप्लुता" इति "अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः। अदण्ड्याः काणकुण्डाश्च वृषभः कृतलक्षण इति" स्मृतिः।

**अदत्ता** स्त्री दा-क्त न०त०। परिणयार्थमदत्तायां स्त्रियाम्। "अदत्तायां मृतायान्तु त्र्यहाच्छुध्यन्ति बान्धवा" इति स्मृतिः अदत्तमात्रे त्रि०। अप्रागल्भ्ये न०त०। अदत्तन्तु भयक्रोधेत्याद्यभिहितलक्षणे दानाभासेनार्पिते दत्त्वापि प्रत्याहर्त्तुं योग्ये त्रि०। तच्चोक्तं नारदेन यथा "अदत्तन्तु भयक्रोधशोकवेगरुजान्वितैः। तथोत्कोचपरीहासव्यत्यासच्छलयोगतः॥ बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम्। कर्त्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत्। अपात्रे पात्रमित्युक्ते कार्ये वा धर्म्मसंहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति तत् स्मृतमिति"। अस्यार्थः भयेन वन्दिग्राहादिभ्यो दत्तम्। क्रोधेन शत्रादिवैरनिर्यातनायान्यस्मै दत्तम्। पुत्रविहीनतादिनिमित्तशोकाविष्टेन दत्तम्। उत्कोचेन कार्यप्रतिबन्धनिरासार्थमधिकृतेभ्यो दत्तम्। परिहासेनोपहासेन दत्तम्। एकः स्वद्रव्यमन्यस्मै ददात्यन्योऽपि तस्मै ददातीति दानव्यत्यासः। छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य ददाति। बालेनाप्राप्तषोडशवयस्केन मूढेन, लोकवेदानभिज्ञेन अस्वतन्त्रेण पुत्रदासादिना, आर्त्तेन रोगाभिभूतेन, मत्तेन मदनीयप्रमत्तेन, उन्मत्तेन, वातिकाद्युन्मादग्रस्तेन वा अपवर्जितं दत्तम्। तथाऽयं मदीयमिदं कर्म करिष्यतीति प्रतिलाभेच्छया दत्तम्। अचतुर्वेदाय चतुर्वेदोऽहमित्युक्तवते दत्तम्। यज्ञं करिष्यामीति धनं लब्ध्वा द्यूतादौ विनियुञ्जानाय दत्तमित्येवं षोडशप्रकारमपि दत्तमदत्तमित्युच्यते प्रत्याहरणीयत्वात्। आर्त्तदत्तस्यादत्तत्वं धर्म्मकार्यव्यतिरिक्तविषयम्। "स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्म्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशय" इति कात्यायनस्मरणात्। तथेदमपरं संक्षिप्तार्थवचनं सर्वविवादसाधारणम्। "योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिं पश्येत् तत् सर्वं विनिवर्त्तयेत्" इति। योग उपाधिः। योगेनोपाधिविशेषेणाधिविक्रयदानप्रतिग्रहाः कृतास्तदुपाधिविगमे तान् विक्रयादीन् विनिवर्त्तयेदिति। यः पुनः षोडशप्रकारमप्यदत्तं गृह्णाति, यश्चादेयं प्रयच्छति, तयोर्दण्डो नारदेनोक्तः। "गृह्णात्यदत्तं यो लोभात् यश्चादेयं प्रयच्छति। अदेयदायको दण्ड्यस्तथाऽदत्तप्रतीच्छक" इति। मिताक्षरा०।

**अदत्तादायिन्** त्रि० अदत्तमादत्ते आ+दा-णिनि ६त०। अदत्तस्य ग्राहके "अदत्तादायिनो हस्तात् लिप्सेत ब्राह्मणो धनम् याजनाध्यापनेनापि यथा स्तेनस्तथैव स" इति स्मृतिः।

**अदत्र** त्रि० अद-बा० अत्रन्। अदनीये "अदत्रया दयते वार्य्याणीति" ऋ० ५, ४८, २, अदत्रया, अदनीयानीति भा०।

**अदद्र्यञ्च्** त्रि० असुमञ्चति अदस्+अन्च-क्विप् अद्र्यागमः। अदोगते, स्त्रियाम् अदद्रीची असर्वनामस्थानादौ तु अदद्रीचः इत्यादि। अस्य दस्य वा मत्वोत्वे अमुद्र्यङ् अमुमुयङ् इत्यादयोऽप्यत्र।

**अदन्त** पु० नास्ति दन्तोऽस्य। पूषरूपे आदित्यभेदे वा कप्। तत्रैव। "यद्यप्यदन्तकः पूषा पिष्टमत्ति सदा चरुमिति" छन्दोगप०। तस्यादन्तता च दक्षयज्ञभङ्गसमये वीरभद्रेण कृता यथा भागवते ४ स्कन्धे। "पूष्णो ह्यपातयद्दन्तान् कालिङ्गस्य यथा बलः। शप्यमाने गरिमणि योऽहसद्दर्शयन् दत" इति। अतएव तस्यादन्ततया पिष्टचरुभुक्त्वं तदपि तत्रैवोक्तम् मज्ञप्रसादितेन शिवेन पश्चात् दक्षादिवरदानसमये "पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुगिति" श्रुतावपि "प्रपिष्टभागोऽदन्तको हि तं देवा अध्यगामिति" अदन्तकत्वेन पिष्टकभागित्वमुक्तम्। दन्तहीने, अजातदन्ते च त्रि०। "येऽप्यदन्ताः कुले ममेति" वायु०। तेषां दन्तजननकालस्तु षण्मास एव शुद्धितत्त्वे निर्णीतः पञ्चमासान्तु "षण्मासा तु बाला स्याद-

त्रिवत्सा द्विवार्षिकी। अतः परन्तु सा गौः स्यात्तरुणी दन्तजन्मनीति” अङ्गिरोवचने द्विवर्षोत्तरकाले गवां दन्तजन्मकथनं पशुमात्रोपलक्षणम् अतैव काले (आदाँता) इति लोके प्रसिद्धिः सा च गवामिव महिषाश्वादीनामपि तथैव। अत् अन्ते यस्य ब०। अकारान्तशब्दे पु०।

**अदब्ध** दन्भ-क्त न०त०। अहिंसिते “अदब्धेभिः पायुभिः पाह्यग्मानिति” ऋ०१,९५,९, अदब्धैरहिंसितैरिति भा०। “अदब्धासुर्भ्राजमानोऽहेव” इति वेदः।

**अदब्धायु** पु० अदब्धेन अहिंसनेन आयौति आ–या–कु–रत०। अहिंसायुक्ते “अग्नेऽदब्धायो अशीततमेति यजु० अदब्धायो। अहिंसित! यजमान इति वेददीपः।

**अदभ** त्रि० न दभ्यते कर्म्मणि बा०क। अहिंस्ये “तावधन्नावस्तु यूक्तर्त्ताय देवावदभा” इति ऋ०५,८६,५ अदभौ अहिंस्यौ इति भा०।

**अदभ्र** त्रि० दन्भ–रक् दभ्रमल्पं न०त०। अनल्पे “अदभ्रदर्भामधिशय्य स स्थलीमिति” भारविः।

**अदम्भ** पु० अभावार्थे न०त०। दम्भाभावे। नास्तिदम्भो यस्य। दम्भरहिते त्रि०। “अदम्भं शठतां हीनं कर्म्म कुर्य्यादलोलुप” इतिपुरा०।

**अदम्य** त्रि० न दम्यतेऽसौ। अदमनीये। गवामेकवर्षपर्य्यन्तकालेऽदम्यता “पादयाप्राप्तके देय इति”स्मृतिः अप्राप्तकः अप्राप्तदम्यावस्थ इति” रघु० तेन “एकवर्षे गवि हते कृच्छ्रपादो विधीयते” इत्येकवाक्यतया एकवर्षकालपर्य्यन्तकाल एव वत्सानामदम्यत्वं प्रतीयते।

**अदर्शन** न० न दर्शनम् अभावार्थे न०त०। दर्शनाभावे लोपे, विनाशे च “लोपोऽदर्शनमिति” पा०। नास्ति दर्शनं यस्याः ब०। दर्शनाविषये दृष्टिशून्ये च त्रि०।

**अदल** पु० दल्यते भिद्यते इति दलं पत्रं दल–कर्म्मणि घञ् न०ब०। दलशून्ये (हिजल) इति ख्याते वृक्षे। पत्रशून्ये वृक्षमात्रे त्रि०। घृतकुमार्य्यां स्त्री। दलः खण्डः। तच्छून्ये त्रि०।

**अदस्** त्रि० न दस्यते उत्क्षिप्यतेऽङ्गुलिर्यत्र इदन्तया निर्द्धारणाय पुरोवर्त्तिन्येवाङ्गुलिनिर्द्देशः सम्भवति नापुरोवर्त्तिनि। न+दस्–क्विप्। अपुरोवर्त्तिनि परोक्षे ज्ञाते वस्तुनि। सर्व्वनामता। “अमुष्य विद्या रसनाग्रनर्त्तकीति” नैषधम्। परलोके “नचासत्र फलप्रद इति” पुरा०। “इदमस्तु सन्निकृष्टं समीपतरवर्त्ति चैतदोरूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादित्युक्तं” विप्रकृष्टे एवास्य प्रयोगः। यच्छब्दाकाङ्क्षिततच्छब्दाप्रयोगेऽस्य तदर्थबोधकता। यथा “आनन्दयति ते नेत्रे योऽधुनासौ समागत इत्यादौ”। अतएवोक्तं काव्यप्रकाशे इदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्ते इत्युक्तम्” यच्छब्दस्य तु निकटस्थितत्वे तच्छब्दस्यापि प्रसिद्धपरामर्शितेति वदता च तेन तच्छब्दस्येव इदमदःशब्दयोरपि प्रसिद्धार्थकता तत्रैवोक्ता। यथा “करवालकरालदोःसहायो युधि योऽसौ विजयार्ज्जुनैकमल्लः। यदि भूपतिना स तत्र कार्य्ये” इत्यादौ प्रसिद्धार्थकता। अन्यथा स इत्यनेन पुनरुक्तत्वापत्तेः अतएव दर्पणकृता “आनन्दयति ते नेत्रे योऽसौ सुभ्रु! समागत” इति पद्ये यच्छब्दस्य सन्निकृष्टतया तच्छब्दार्थावाचकत्वमाशङ्क्य आनन्दयति ते नेत्रे योऽधुनासौ समागत इत्येवं पाठःपरिवर्त्तितः। यच्छब्देनानाकाङ्क्षितत्वे तु न तच्छब्दार्थाभिधायित्वं किन्तु प्रसिद्धाद्यभिधायकता यथा “असौ मरुच्चुम्बितचारुकेशर इत्यादौ” नात्र तच्छब्दार्थप्रतीतिरिति काव्यप्रकाशे उक्तम्। तथा च यच्छब्देनाकाङ्क्षास्थले एव यच्छब्दस्यासन्निकृष्टतयोपात्तस्यादःशब्दस्य तच्छब्दार्थकता नान्यथेति सुस्थितम्। “अदोऽनुपदेशे इति” सूत्रनिर्द्देशात् अनुपदेशे अदसः गतिसंज्ञा तेन अदः कृत्यादः कृतमित्यादौ गतित्वेन समासे ल्यप्। परं प्रति उपदेशे तु अदः कृत्वा अदः कुरु इत्यादौ न गतित्वम्। अस्य गतिसंज्ञात्वे नाव्ययत्वमपि। तेनाव्ययपूर्व्वकतया ल्यप् अर्थस्तु अदःशब्दस्येव।

**अदातृ** त्रि० न०त०। दातृभिन्ने “अदाता वंशदोषेणेति” पुरा०। “अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छतीति” नीति०। स्त्रियां ङीप्।

**अदान** न० न दानमभावार्थे न०त०। दानाभावे। नास्तिदानं त्यागोमदजलं वा यस्य। दानशून्ये त्रि०। मदजलशून्ये गजे पु०। “सदा दानपरिक्षीणः शस्तएव करीश्वरः। अदानः पीनकायस्तु निन्द्यतएव गर्द्दभ” इति।

**अदान्त** त्रि० न०त०। इन्द्रियदमनाकारके अविनीते च “अदान्तोविषयासक्त” इति पुरा०।

**अदाभ्य** त्रि० दन्भ ण्यत् नलोपोपधावृद्धी न०त०। अहिंस्ये। “यत्ते सोमादाभ्यं नाम जागृवीति य० ७,२, हे सोम! ते त्वदीयमहिंसितं जागृवि जागरणशीलमिति वेददीपः।

**अदाय** त्रि० नास्ति दायो येषाम्। दायानर्हपतितक्लीबादौ। “अदायाद स्त्रियोमता” इति स्मृतिः।

**अदायाद** त्रि॰ दायं पित्रादिधनं सम्बन्धितया अदन्ति भुञ्जते अद्-अण् ६त॰ न॰त॰। सम्बन्धिधनग्राहके पतितादि सपिण्डभेदे "अदायादाश्च परिगणितमात्रादिभिन्नाः स्त्रियः, "अदायाश्च स्त्रियोमताः" इति स्मृतेः। द्वादशविधान् पुत्रानुक्त्वा "कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवा इति मनूक्ताः कानीनादयश्च वेदितव्याः तथा विभागानार्हा अपि क्लीवादयोऽदायादा इत्यवसरे वाच्यम्। सपिण्डभिन्ने च।

**अदायिक** त्रि॰ दायमर्हन्ति दाय+ठक्-न॰ब॰। दायादशून्ये "अदायिकं राजगामीति" स्मृतिः दायग्राहकपुत्रादिशून्यं तदर्थः।

**अदाह्य** त्रि॰ न दग्धुमर्हति दह-अर्हार्थे ण्यत् न॰त॰। शास्त्रोक्तविधिना अग्निसंस्कारानर्हे पतितादौ ते च स्मृतौ दर्शिता यथा। "शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रियाजलैः। आदरात् परिहर्त्तव्यः कुर्वन् क्रीड़ां मृतस्तु यः। नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता। निग्रहीतः स्वयं राज्ञा चौर्य्यदोषेण कुत्रचित्। परदारान् रमन्तश्च द्वेषात्तत्पतिभिर्हताः। असमानैश्च संकीर्णैश्चाण्डालाद्यैश्च विग्रहम्। कृत्वा तैर्निहता ये तु चाण्डालादीन् समाश्रिताः। गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः। क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्। गिरिवृक्षप्रपातञ्च ये कुर्वन्ति नराधमाः। कुशिल्पजीविनश्चैव सूनालङ्कारकारिणः। मुखेभगाश्च ये केचित् क्लीवप्राया नपुंसकाः। ब्रह्मदण्डहता ये च ये च वै ब्राह्मणैर्हताः। महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः। पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः। नचाश्रुपातः पिण्डं वा कार्य्यं श्राद्धादिकं क्वचित्। एतानि पतितानाञ्च यः करोति विमोहितः। तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्नचान्यथा" इति। दग्धुमशक्ये निरवयवत्वात् परमात्मनि। "नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावक" इत्युपक्रमात् "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्यएव चेति" गीतायां तस्यादाह्यत्वोक्तेस्तथात्वम्।

**अदिति** स्त्री न दीयते खण्ड्यते इत्यत्वात् दो-क्तिन् न॰त॰। दातुं छेत्तुं न योग्यायां पृथिव्याम् "चक्षुरदितावमनमिति" ता॰ब्रा॰ "अदितौ पृथिव्यामिति" भाष्यम्। वाचि निरुक्त॰। दितिर्दनुजमाता विरोधार्थे न॰त॰। तद्विरोधिन्यां देवमातरि "प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश। अदितिर्दितिर्दनुःकाला दनायुः सिंहिका तथा। क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः। कद्रुश्च मनुजव्याघ्र! दक्षकन्यैव भारतेति" भारतम् आदिप॰। एता एव कश्यपाय दक्षेण दत्ता यथोक्तं तत्रैव "दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः ब्रह्मणः पृथिवीपाल! शान्तात्मा सुमहातपाः। वामादजायताङ्गुष्ठाद्भार्य्या तस्य महात्मनः। तस्यां पञ्चाशतं कन्याः स एवाजनयत् प्रभुः। ददौ स दश धर्म्माय सप्तविंशतिमिन्दवे। दिव्येन विधिना देव! कश्यपाय त्रयोदशेति" अदितिरदीना-देवमातेति निरु॰। तद्देवताके पुनर्वसुनक्षत्रे। अस्ति प्राणिजातम् अद्-इतिच्। सर्वनाशके मृत्यौ, परमेश्वरे च पु॰। "स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वम्, सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेदे"ति बृ॰उ॰ दितिः खण्डनम्। तच्छून्ये अखण्डे। "अदित्यासि यज्ञियास्यदितिरसीति" यजु॰ "अदितिरखण्डितेति" वेददीपः।

**अदितिज** पु॰ अदितेर्जायते जन-ड। देवे। "द्वादशैवादितेः पुत्राः शक्रमुख्याः नराधिप!। तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिता इति" भारतम् द्वादश आदित्याः शक्रादयः शक्रमुख्याश्च देवाश्चेत्यर्थः।

**अदितिनन्दन** पु॰ ६त॰। देवे अदितिसुतादयोऽप्यत्र।

**अदीन** त्रि॰ दी-क्त न॰त॰। अकातरे कातर्य्यरहिते।

**अदुष्ट** त्रि॰न॰त॰। स्मृत्युक्तदुरदृष्टसाधनताक्रमदोषरहिते। "अदुष्टा सन्तता धारा" इति स्मृतिः "दुष्टानि च दुष्टशब्दे वक्ष्यन्ते।

**अदूर** न॰ न॰त॰। दूरत्वविरोधिसामीप्ये "अदूरे जगदम्बायाः शारदीयो महोत्सव" इति पुरा॰। तद्वति त्रि॰। "परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मस्विति" रघुः।

**अदूषित** त्रि॰ न॰त॰। दूषितभिन्ने स्मृत्युक्ते दोषानर्हे द्रव्यभेदे च। दूषितञ्च अस्पृश्यस्पर्शवत्त्वेन, पर्य्युषितत्वेन, विरसत्वेन, दोषजनकादृष्टविशेषहेतुत्वेन च स्मृत्यादौ दुष्टत्वेन कीर्त्तितम् तत्रैव कचिद्विषये प्रतिप्रसवः स्मृत्युक्तत्वादृश-पदार्थएवादूषितम्। दूषितविवरणं दुष्टशब्दे वक्ष्यते।

**अदृश्** त्रि॰ नास्ति दृक् दृष्टिरस्य। अन्धे चक्षुरिन्द्रियशून्ये। न पश्यति दृश-कर्त्तरि क्विप् न॰त॰। अदर्शके त्रि॰।

**अदृश्य** त्रि॰ न॰त॰। दृश्यभिन्ने। न द्रष्टुमर्हति। दर्शनानर्हे, परमेश्वरे च। "यत्तदद्रेश्यमग्राह्यमिति" श्रुतिः।

**अदृष्ट** न॰ दृश-क्त न॰त॰। पुण्यापुण्यरूपे भाग्ये,

इन्द्रियायोग्यत्वात् तस्यादृष्टत्वम्। अदृष्टसत्त्वे प्रमाणञ्च। "सापेक्षत्वादनादित्वात् वैचित्र्यात् विश्ववृत्तितः। प्रत्यात्मनियमात् भुक्तेरस्ति हेतुरलौकिक" इति "चिरध्वस्तं फलायालं न कर्म्मातिशयं विनेति" चेति कुसु०। अस्याभिप्रायः। इह हि जगति उच्चावच विचित्राः सुखदुःखानुभवरूपा भोगाः प्रत्यात्मवेदनीयाः, ते च न नित्या उत्पत्तिविनाशशालित्वात् अतएव न सदातनाः किन्तु कादाचित्का एव, सति च तेषां कादाचित्कत्वे हेतुसापेक्षत्वमेव तथा हि विमता भोगव्यक्तयः हेतुसापेक्षाः कादाचित्कत्वात् घटवत्। यद्यत् कादाचित्कं तत्तत् हेतुसापेक्षं यथा घटः भवन्ति च भोगव्यक्तयः कादाचित्काः तस्मात् हेतुसापेक्षा इति पञ्चावयवन्यायेन भोगानां हेतुसापेक्षत्वसिद्धिः स च हेतुः न लौकिकप्रत्यक्षादिविषयः कश्चित् सम्भवति तदन्वयव्यतिरेकाभावात् न च कालस्यैव तद्धेतुत्वे नार्थान्तरापातः। कालस्य साधारणकारणतया विचित्रभोगं प्रत्यनियामकत्वात् अन्यथा कालस्यैकरूपतया सर्वदा सर्वभोगप्रसङ्गः। एतेन तत्तत्कालत्वेन कारणताकल्पनेऽपि न निस्तारः तत्तत्कालव्यक्तीनां पुरुषमात्रसाधारण्येन प्रत्यात्मविचित्रभोगोपपादकत्वानुपपत्तेः। अतो विचित्रभोगान्यथानुपपत्त्या तदाधायकमलौकिकं कारणं यत् कल्पनीयं, तदेवादृष्टम्। एवमनुमानेन आगमप्रामाण्यानभ्युपगन्तॄन् प्रति अलौकिकादृष्टसाधनम्। आगमेन तु तत्सिद्धिरेवमभियुक्तैरभ्युपेता "स्वर्गकामो यजेतेति" वाक्ये समभिव्याहृतस्वर्गसाधनत्वं यागे विधिप्रत्ययेन बोध्यते तच्च न सम्भवति, स्वर्गादेः कालान्तरभावितया आशुविनाशिनो यागादेस्तदानीमसत्त्वेन कारणत्वासम्भवात् अतो विधिबोधितं यागादेरिष्टसाधनत्वं फलकालपर्य्यन्तस्थायिस्वजन्यव्यापारं विनानुपपन्नमित्यनुपपत्तिज्ञानेन द्वारीभूतमपूर्व्वं कल्प्यते। तदभिप्रायेणैव चिरध्वस्तमित्याद्युक्तम्। अतएव "पौरुषं दैवसम्पत्त्या काले फलति पार्थिव!। त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहमिति" शास्त्रान्तरे कार्य्यजननसामर्थ्यां दैवपदाभिधेयापूर्व्वस्य कीर्त्तनम्। तच्चादृष्टं द्विविधं पुण्यं पापञ्च विहितानुष्ठानजन्यं पुण्यं, निषिद्धानुष्ठानजन्यं पापम्, तदुभयमपि त्रिविधं, प्रारब्धं फलदानोन्मुखं सञ्चितञ्चेति। देहाद्यारम्भकमदृष्टं प्रारब्धं, बहूनामदृष्टानां चिरसञ्चितानां मध्ये फलविपाकाय उन्मुखं फलदानोन्मुखं, तद्भिन्नं सञ्चितम्। तत्र "ये समर्था जगत्यस्मिन् सृष्टिसंहारकारकाः। तेऽपि कालेन लीयन्ते इति" शास्त्रात् "कलनात् सर्व्वभूतानां काल इत्यभिधीयते" इत्युक्तेश्च कालस्य सर्व्वनाशकत्वेऽपि नादृष्टनाशकत्वम् "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति" शास्त्रान्तरात् किन्तु भोगादेव क्षयः। तथा पुण्यस्य कर्म्मनाशाजलस्पर्शादितोऽपि नाशः, पापस्य प्रायश्चित्तादिना नाशः। प्रारब्धातिरिक्तपुण्यापुण्यकर्म्मणां तत्त्वज्ञानात् नाशः। "ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्जुनेति" गीतादिशास्त्रात्। इदमदृष्टं वेदान्तिभिर्न्नानुमन्यते तैर्हि कर्म्मणः सूक्ष्मावस्थापन्नसंस्कारविशेष एवादृष्टस्थानीयतयाङ्गीक्रियते इति भेदः। तच्चानुशयशब्दे विस्तरतो वाच्यम्। तच्चादृष्टमात्मधर्म्म इति नैयायिका वैशेषिकादयश्चाभ्युपगच्छन्ति। वेदान्तिसाङ्ख्यपातञ्जलास्तु बुद्धिधर्म इति भेदः। तेषां मते हि कर्त्तृत्वस्य बुद्धिधर्म्मतया "शास्त्रदेशितं फलमनुष्ठातरीति" न्यायात् तत्रैवादृष्टोत्पत्तेरुचितत्वम् अन्यकृतकर्म्मणा अन्यस्यादृष्टोत्पत्तौ अतिप्रसङ्गात् "कृतहानाकृताभ्यागमप्रसङ्गश्चेति" सूत्रेण च तथैव प्रतिपादितत्वादधिकमाकरे द्रष्टव्यम्। अस्य च अदृष्टशब्दवाच्यत्वे "प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादिति" जैमिनिसूत्रं मानम्। तस्यायमभिप्रायः "चोदनालक्षणोऽर्थो धर्म्म" इति धर्म्मे वेदैकसमधिगम्यत्वमुपक्षिप्तं तस्य दृढीकरणार्थमिदं सूत्रं प्रवृत्तम्। "अनुष्ठानादूर्द्ध्वमुत्पद्यमानस्य धर्म्मस्य पूर्व्वमविद्यमानत्वात् न प्रत्यक्षयोग्यतास्ति उत्तरकालेऽपि रूपादिराहित्याच्चेन्द्रियैरवगम्यता। अतएवादृष्टमिति सर्व्वैरभिधीयते" इति भ० भाष्यम्। सूत्रार्थस्तु प्रत्यक्षं चक्षुरादि न तद्ग्रहणे निमित्तं तेषां विद्यमानोपलम्भहेतुत्वात् धर्म्मस्य च प्राक् अविद्यमानत्वात्। लिङ्गराहित्याच्च नानुमानविषयत्वमप्यस्ति। सुखदुःखयोस्तद्गमकत्वेन लिङ्गत्वसम्भवेऽपि तयोर्लिङ्गत्वज्ञानमपि वेदैकगम्यं, "कस्य कर्म्मणः? किं फल? मित्यध्यवसायस्य वेदैकसमधिगम्यत्वात् सुखदुःखाभ्यां सामान्येन धर्म्माधर्म्ममात्रानुमानेऽपि तद्विशेषप्रतिपत्तौ वेदस्यैव साधनत्वादिति प्रतिज्ञातं धर्म्मस्य चोदनामात्रप्रमापकत्वं सुस्थितमिति। दृष्टभिन्ने त्रि० "सर्व्वमदृष्टं शृणोति" अत्यन्तरम्। "अदृष्टमर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिमिति" नैष०। अज्ञातमात्रे त्रि०। "अदृष्टविरहव्यथमिति"। हितो०। "अदृष्टमङ्गिर्निखिलमिति" श्रुतिः "अदृष्टसुपथातसृष्टाभिरक्षातमिति" रघु०। अदृष्टहेतुके भयादौ च। दैविकाग्निभयादेरदृष्टसाध्यत्वाददृष्टत्वम्।

**अदृष्टपूर्व्व** त्रि॰ न पूर्वं दृष्टः सह सुपेति स॰ परनि॰। पूर्व्वमदृष्टे। "अदृष्टपूर्व्वं हृषितोऽस्मि दृष्ट्वेति" गीता।

**अदृष्टि** स्त्री विरुद्धा दृष्टिः विरोधार्थे अभावार्थे वा न॰त॰। क्रूरदृष्टौ, सरोषवक्रदृष्टौ, दर्शनाभावे च। ब॰। दृष्टिशून्ये त्रि॰।

**अदेय** त्रि॰न॰त॰। देयभिन्ने दानायोग्ये च। दानायोग्यञ्च पुत्रादि—"स्वं कुटुम्बाविरोधेन देयं दारसुतादृते नान्वये सति सर्व्वस्वं यच्चान्यस्मै प्रतिश्रुतमिति" याज्ञ॰ "अन्वाहितं याचितकमाधिः साधारणञ्च यत्। निक्षेपः पुत्रदाराश्च सर्व्वस्वञ्चान्वये सति। आपत्स्वपि च कष्टासु वर्त्तमानेन देहिना। अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुतम्" इत्येवं स्मृतिनिषिद्धदाने वस्तुनि "योऽदत्तं प्रतिगृह्णाति यश्चादेयं प्रयच्छतीति" तदादानमपि स्मृतौ निषिद्धम्। "मद्यमदेयमपेयमग्राह्यमिति" स्मृतिः।

**अदेवत्र** त्रि॰ न देवान् त्रायते प्रीणाति अनेन त्रै—करणे क। देवप्रीणनासाधने यज्ञादौ "अदेवत्रादराधस" इति श्रुतिः।

**अदेवमातृक** पु॰ न॰त॰। देवमातृकदेशभिन्ने नदीहस्त्यम्बुसम्पन्नव्रीहिपालितदेशे। "वितन्वति क्षेममदेवमातृका" इति भार॰। ["अवज्ञानमदेवयुमिति" ऋ॰ ५,८,११।

**अदेवयु** त्रि॰ न देवं याति प्राप्नोति या—कु। देवाप्रापके।

**अदेश** पु॰ न॰त॰। गर्हितदेशे अयोग्यदेशे च। "नादेशे तर्पणं कुर्य्यात् न सन्ध्यां नापि पूजनमिति" स्मृतिः। "स्नियं स्पृशेददेशे च" इति स्मृतिः। गर्हितदेशाश्च स्मृतौ दर्शिताः केचित् संगृह्यन्ते। "चातुर्व्वर्ण्यव्यवस्था तु यस्मिन् देशे न वर्त्तते। तं म्लेच्छदेशं जानीयादार्य्यावर्त्तं ततःपरम्" इति विष्णु॰। "आनर्त्तकाङ्गमगधाः सुराष्ट्राः दक्षिणापथः। तथा च सिन्धुसौवीरा एते सङ्कीर्णयोनय इति" "पद्भ्यां स कुरुते पापं यः कलिङ्गान् प्रपद्यते। ऋषयो निष्कृतिस्तस्य प्राहुर्वैश्वानरं हविरिति" बौधा॰। "अङ्गवङ्गकलिङ्गांश्च तीर्थयात्रां विना व्रजन्। प्रायश्चित्तं प्रकुर्व्वीतेति" स्मृतिः। इष्टदेशेऽपि केचित् श्राद्धतर्पणादौ विशेषतोवर्ज्याः यथा "कृष्णं क्रमियुतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्। देशं त्वनिष्टशब्दञ्च वर्ज्जयेत् श्राद्धकर्मणीति"। "न म्लेच्छविषये श्राद्धं कुर्य्यान्नम्लेच्छेतुतं तथा नेष्टकाचरिते पितॄन् तर्पयेदिति" शङ्खलिखितौ। "परकीयस्थले यस्तु पितॄन् संतर्पयेद्यदि। तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलादिति" एवमन्येऽपि गर्हितत्वयोजकाः स्मृत्याद्युक्ता वेदितव्याः। "अदेशकाले यद्दानं—तद्दानं तामसं विदु" रिति गीता।

**अदैव** न॰दैवं वैश्वदेविकश्राद्धं तन्नास्ति यत्र। वैश्वदेविकश्राद्धशून्ये नित्यश्राद्धे। तस्य पार्व्वणेतिकर्त्तव्यतया वैश्वदेवश्राद्धप्राप्तौ "अदैविकन्तु तत् कार्य्यमिति" स्मृतौ पर्य्युदासात् वैश्वदेविकम् भिन्नं नित्यश्राद्धशब्दे वक्ष्यते। अदैविकमप्यत्र। दैवं भाग्यम्। तच्छून्ये, दुर्भाग्यवति च त्रि॰।

**अदोष** पु॰ दोषः स्मृत्युक्तदुरदृष्टसाधनत्वम् अभावार्थे न॰त॰। स्मृत्युक्तदुरदृष्टसाधनत्वदोषाभावे। न॰ब॰। दोषशून्ये त्रि॰। अलङ्कारोक्तदोषशून्ययोः शब्दार्थयोः "तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापीति" काव्यप्र॰। "अदोषं गुणवत् काव्यमिति" सरस्वतीक॰।

**अद्म** न॰अद्यते देवैः अद्—कर्म्मणि मन्। पुरोडाशे उज्ज्वलद॰।

**अद्धा** अव्य॰ अद्यते अत् तं सततं गमनं ज्ञानं वा दधाति क्विप्। याथार्थ्ये, साक्षात्कारे, स्फुटे, अवधारणे, अतिशये च। "अद्धा श्रियं पालितसङ्गरायेति" रघुः। "यस्य स्यादद्धा न विचिकित्सास्तीति" श्रुतिः। अयं स्वरादिः, चादिश्च तेनोभयस्वरता। साक्षादादिषु पाठात् अद्धाकृत्येत्यादौ समासे ल्यप्।

**अद्भुत** न॰ अततीत्यत् अव्ययमाकस्मिकार्थे तथा भाति भा—डुतच्। आकस्मिके उल्कापातादौ, आलङ्कारिकप्रसिद्धे नवरसान्तर्गतविस्मयस्थायिभावके रसभेदे यथोक्तम् "अद्भुतो विस्मयस्थायिभावो गन्धर्व्वदैवतः॥ पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्। गुणानां तस्य महिमा भवेदुद्दीपनं पुनः॥ स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसम्भ्रमाः। तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः॥ वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः इति"। यथा "दोर्द्दण्डाञ्चितचन्द्रशेखरधनुर्द्दण्डावभङ्गोद्यतष्टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः। द्राक्पर्य्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमा कथमहो? नाद्यापि विश्राम्यति" इति॥ तद्वति त्रि॰। "कस्माद्यद्भुतमप्राक्षे इति" ज्योति॰। अद्भुतस्वरूपविभागादि "प्रकृतिविरुद्धमद्भुतवचनन् प्रकृतिविरुद्धमद्भुतमापदः प्राक् प्रबोधाय देवाः सृजन्तीति" ज्योतिषतत्त्वे आर्थवणवाक्ये। "आपज्ज्ञानाय भूम्यादीनां पूर्व्वं स्वभावप्रच्छावः देवकृतोऽद्भुत" इति रघु॰। तेषां त्वैविध्यादि अन्यत्वात शब्दे उक्तम्। "उदयति स तदद्भुतमालिभिरिति" नैष॰। "तमद्भुतं बालकमम्बुजेक्षणमिति" भाग॰।

**अद्भुतस्वन** पु॰ अद्भुतः स्वनो यस्य ब॰। महादेवे। शब्द॰। आश्चर्य्यशब्दे। ब॰। तथा भूतशब्दवति त्रि॰।

**अद्मनि** पु० अत्ति सर्वान् अद–मनिन् । अग्नौ ।

**अद्मर** त्रि० अद्–कर्त्तरि क्मरच् । भक्षणशीले ।

**अद्य** अव्य० अस्मिन्नहनि इदम्शब्दस्य निपातः सप्तम्यर्थे । अस्मिन् दिवसे । "कृष्ण ! त्वदीयपदपङ्कजपिञ्जरान्ते अद्यैव मे विशतु मानसराजहंस इत्युद्भटः । अद्यत्वे इत्यादिभाष्यप्रयोगात् तद्वृत्तावपि अस्य बोधकता । तेनाधारार्थत्वेऽपि अस्य समासान्तरघटकता "अद्यदिन मारभ्य इति" "अद्यप्रभृत्यवनताङ्गीति" कुमारः । एवञ्च वर्त्तमाने काले वर्त्तमानकालवृत्तौ च वृत्तिः "अद्यावधि भवद्भ्यो भिन्नोऽहमिति" वेणी० ।

**अद्यतन** त्रि० अद्य भवः अद्य+ट्यु तुडागमश्च । अद्यभवे वस्तुमात्रे । स्त्रियामद्यतनी । अद्यतनश्च अतीतो भविष्यश्चेति द्विधा । तत्र अद्यतनभूते लुङ् अपाक्षीत् । अद्यतनभविष्यति लृट् । पक्ष्यति । अनद्यतनभूते तु लङ्–अपचत् अनद्यतने भविष्यति लुट् पक्ता । [इत्तित्वे वर्त्तमानत्वे ।

**अद्यत्व** न० अद्य तद्वृत्तेर्भावः अद्य+त्व । एतर्हिन् वस-

**अद्यश्वीना** स्त्री अद्य श्वः परदिने वा प्रसोष्यते अद्य–श्वस्+ख टिलोपः । आसन्नप्रसवायां प्रौढगर्भिण्याम् । "अद्यश्वीनावष्टब्धे" इति पा० ।

**अद्रव** पु० अभावार्थे न०त० । द्रवाभावे । न०ब० । द्रवशून्ये त्रि० "अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजमिति" महाभाष्य० ।

**अद्रव्य** न० अप्राशस्त्ये न०त० । अप्रशस्तद्रव्ये अयोग्यपदार्थे "नाद्रव्ये निहिता काचित् क्रिया फलवती भवेदिति"

**अद्रि** पु० अद्–क्रिन् । पर्वते, तदवयवे प्रस्तरे ग्रावणि । वृक्षे, सूर्य्ये, मेघे, परिमाणभेदे च तद्भेदश्च परिमाणशब्दे वक्ष्यते तत्र ग्रावणि, अद्रिसुतः, मेघे "अद्रिमाता, पर्वते, दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्यामिति" कुमा० ।

**अद्रिकर्णी** स्त्री अद्रिः अद्रिनामिका गिरिर्वालमूषिका तस्याः कर्णः कर्णतुल्यं पुष्पान्तःस्थं पत्रं यस्याः गौरादित्वात् ङीष् । वालमूषिकाकर्णतुल्यपुष्पाभ्यन्तरपत्रायां अपराजितायाम् ।

**अद्रिकीला** स्त्री अद्रयः कुलाचलाः पर्वताः कीलाः शङ्कव इव यस्याः ब० । पृथिव्याम् । अद्रेः सुमेरोः कील इव वा । विष्णुस्थपर्वते पु० । तद्विवरणं अचलकीलाशब्दे दृश्यम् ।

**अद्रिज** न० अद्रौ जायते जन–ड ७त० । (शिलाजतु) इति ख्यातप्रसिद्धे गन्धद्रव्ये । (गेरि) इति प्रसिद्धे उपधाताविति केचित् । पार्व्वत्यां स्त्री । पर्व्वतभवमात्रे त्रि० । सैंहलीह्वे स्त्री राजनि० । अद्रिजातादयोऽप्युक्तार्थेषु पर्वतजाते दवानले, सूर्यजे हंसे, रूपे आत्मनि च पु० ।

**अद्रितनया** स्त्री ६त० । पार्व्वत्यां तद्व्युत्पत्तिः अचलकन्याशब्दे द्रष्टव्या अद्रिसुतादयोऽप्यत्र । "अद्रिसुतासमागमोत्क" इति कुमा० ।

**अद्रिद्विष्** पु० अद्रिभ्यः द्वेष्टि द्विष–क्विप् । इन्द्रे । तस्य तद्द्वेष्टृत्वं गोत्रभिच्छब्दे दृश्यम् ।

**अद्रिदुग्ध** पु० अद्रिभिर्ग्रावभिर्दुग्धः अभिषुतः ३त० । ग्रावाभिषुते सोमे, "तिरो रोम पवते अद्रिदुग्ध" इति ऋ० । ९, ९७, ११, "अद्रिदुग्धः ग्रावाभिषुत" इति भा० ।

**अद्रिद्रोणि** स्त्री अद्रेर्द्रोणिरिव । पर्वतभवनद्याम् "अद्रिद्रोणीरनपसारमार्गा" इति दश० ।

**अद्रिपति** पु० ६त० । हिमाचले तद्विवरणम् अचलराजशब्दे ।

**अद्रिबर्हस्** त्रि० अद्रेर्बर्ह इव बर्होऽस्य । अद्रिसारे अतिकठिने "मीढ्वं द्यौरदितिरद्रिबर्हा" इति ऋ० १०,६३,३ ।

**अद्रिबुध्न** पु० उपमा० ब० । अतिकठिने । "अयं निधिः सरमे अद्रिबुध्न इति" ऋ० १०,१०८, ७, ।

**अद्रिभिद्** पु० अद्रिं भिनत्ति भिद्–क्विप् ६त० । इन्द्रे । गोत्रभिच्छब्दे तद्भेदेन विवरणम् ।

**अद्रिभू** स्त्री अद्रावपि भवति भू–क्विप् ७त० । अपराजिता लतायाम् तस्याः पर्वतेऽप्यतिकठोरभूमिषु जायमानत्वात्तथात्वम् । पार्वत्यां स्त्री । पर्वतजातमात्रे त्रि० ।

**अद्रिमातृ** पु० अद्रिर्मेघस्तज्जलं मिमीते मा–तृच् । मेघजलनिर्मातरि "स्वर्वित् कोशं दिवो अद्रिमातरमिति" ऋ० ९,८६,३ ।

**अद्रिराज** पु० अद्रीणां राजा टच्समा० । हिमाचले । अद्रिषु राजते क्विप् अद्रिराडपि अत्रैव पु० । विवरणमचलराजशब्दे ।

**अद्रिषुत** पु० अद्रिभिः ग्रावभिः सुतः अभिषुतः ३त० षत्वम् । ग्रावाभिषुते सोमे । "अधुक्षतो अद्रिषुतोवर्हिषीति" ऋ० ९,७२,४ अद्रिषुतः ग्रावभिरभिषुत इति भाष्यम् ।

**अद्रिसंहत** पु० अद्रिभिः संहतम् अभिषुतम् । ग्रावाभिषुते सोमे "स्वसारो अद्रिसंहतावित" ऋ० ९,९८,६, अद्रिरिव संहतः कठिनः । अतिकठिने त्रि० ।

**अद्रिसार** पु० अद्रेः सार इव । लौहे । अद्रेरिव सारोऽस्य अतिकठिने त्रि० ।

**अद्रिसारमय** त्रि० अद्रिसारात्मकः । अत्यन्तकठिने ।

**अद्रीश** पु॰ अद्रीणाम् अद्रेर्वा ईशः ६त॰। हिमाचले, शिवे च।

**अद्रुह्वन्** त्रि॰ द्रुह–क्वनिप् न॰त॰। द्रोहाकर्त्तरि–"ता वां सम्यगद्रुह्वाणेषमिति" ऋ॰ ५,७०,२, "हे अद्रुह्वाणा अद्रोग्धाराविति" भाष्यम्।

**अद्रोघ** त्रि॰ द्रुह–घञ् वेदे घत्वम् न॰ब॰। द्रोहरहिते "त्वं देहि सहस्रिणं रयिं नोऽद्रोघेणेति" ऋ॰२,२२,६, "अद्रोघेण द्रोहरहितेनेति" भा॰। न॰त॰। द्रोहाभावे पु॰।

**अद्रोघावित** त्रि॰ अद्रोघः अवितो येन। अद्रोहरक्षके। "कृणुत धूमं वृषण सखायोऽद्रोघाविता" इति वेदः।

**अद्रोह** पु॰ अभावार्थे न॰त॰। द्रोहाभावे "अद्रोहोनाभिमानितेति" "अद्रोहः सर्वभूतानामिति" च पुरा॰।

**अद्वय** न॰ न द्वयम्। द्वित्वाभावे। नास्ति द्वयं द्वित्वं तज्ज्ञानं वा यस्य। सर्वात्मतया आत्मरूपे ब्रह्मात्मैक्यरूपे, अभेदे च। "अथैतोऽप्यद्वयानन्दमतीतद्वैतभानत" इति वे॰सा॰। ब्रह्म द्वयं पश्यत इति अद्वयं विज्ञानाभेदः पदार्थानामस्त्यस्य वादकत्वेन अर्श्चआद्यच्। बौद्धभेदे ते हि "सहोपालम्भनियमादभेदो नीलतद्धियोरित्यनेन" पदार्थानां संविदभिन्नत्वं वदन्ति विवरणं बौद्धशब्दे दृश्यम्।

**अद्वयवादिन्** पु॰ अद्वयं वदति सर्वमेव वस्तु चित्स्वरूपं नान्यदतो द्वितीयमस्तीति वदतीति वद–णिनि। अद्वैतवादिनि वैदान्तिके, बाह्यार्थाभावेन ज्ञानात्मकं सर्वं वस्तु स्वीकुर्वति बौद्धे च।

**अद्वयस्** त्रि॰ नास्ति द्वयं द्वित्वमस्य ब॰ योगविभागात् असिच् समा॰। द्वित्वरहिते। "सखा सुशेवो अद्वया इति" ऋ॰ १,१८७,३, "अद्वया द्वयरहित" इति भाष्यम्।

**अद्वयानन्द** पु॰ नास्ति द्वयं द्वित्वं भेदः तज्ज्ञानं वा यस्य यत्र वा तादृश आनन्दः। ब्रह्मरूपानन्दे अद्वैतानन्दे। "अथैतोऽप्यद्वयानन्दमतीतद्वैतभानत इति" वे॰सा॰।

**अद्वयाविन्** त्रि॰अद्वयमस्त्यर्थे विनि छन्दसि दीर्घः देवपितृयानरूपमार्गद्वयरहिते। "पुत्रस्य पाथः पदमद्वयाविन" इति ऋ॰ १,४ १५८, २, अद्वयाविनः मार्गद्वयरहितस्येति भाष्यम्।

**अद्वयु** त्रि॰ द्वयं द्विप्रकारोऽस्त्यस्य वा॰ उ न॰त॰। द्विप्रकाररूपकापट्यशून्ये अन्तर्बाह्यैकरूपे "उप द्वयुस्वाद्वयुश्च वसव इति" ऋ॰८, १८, १५।

**अद्वार** न॰ निन्दितं द्वारम्। प्रवेशानर्हे गुप्तद्वारे "अद्वारेण प्रवेशनमिति" "अद्वारेण न चातीयाद्ग्रामं वा वेश्म वा पुरमिति" च पुरा॰। नास्ति द्वारमस्य ब॰। प्रवेशायोग्ये दुष्प्रवेशे, अगम्ये अनुपाये च त्रि॰।

**अद्वितीय** त्रि॰ द्विधा इतं भेदं गतम् द्वीतम् तस्य भावः द्वैतं तन्नास्ति यस्य ब॰। सजातीयादिभेदशून्ये केवले परमात्मनि। वस्त्वद्वितीयमिति भा॰ "एकमेवाद्वितीयं ब्रह्मेति" श्रुतिः। "अत्र एकम्, एव, अद्वितीयमिति" पदत्रयेण ब्रह्मणि भेदत्रयराहित्यमुक्तम्। तथाहि भेदस्तावत् त्रिधा स्वगतभेदः सजातीयभेदः विजातीयभेदश्चेति। वृक्षादीनां स्वावयवशाखादिभ्यो भेदः स्वगतभेदः, घटात् घटान्तरस्य भेदः सजातीयभेदः, घटस्य पटादितो भेदः विजातीयभेदः। ब्रह्मणश्च "तदनन्यत्वमारम्भणशब्दादिभ्य" इति सूत्रेण स्वकार्यात् घटादितोऽनन्यत्वात् न स्वगतभेदः। घटादिव्यावहारिकसत्त्ववत्त्वेन पारमार्थिकसत्त्ववतो ब्रह्मणः विजातीयत्वेऽपि ततोऽभेदएव तद्भिन्नस्याभावात् "सर्वं खल्विदं ब्रह्मेति" श्रुत्यन्तरात् तत्सजातीयवस्त्वन्तराभावादेव तद्भेदः सिद्धएवेत्यादिकमाकरे दृश्यम्। द्वितीयशून्ये, असहचरे त्रि॰।

**अद्विषेण्य** त्रि॰ द्वेष्टुं योग्यमस्य, द्विष–एण्यन्–किच्च न॰त॰। प्रियरूपे, "मयोभुरद्विषेण्यः सखेति" ऋ॰ १,१८७,३, अद्वेषिण्यः अद्वेष्यरसः प्रियरस इति भाष्यम्।

**अद्वेष** पु॰ न द्वेषः अभावार्थे न॰त॰। द्वेषाभावे। ब॰। द्वेषरहिते त्रि॰। "अद्वेषो हस्तयोर्दधे" इति ऋ॰ १, २४,४, "अद्वेषः द्वेषरहितः नास्ति द्वेषोऽस्येति" भाष्यम्। एतेन अद्वेषःशब्दे सतन्तस्योदाहरणत्वेनोपन्यासः केषाञ्चित् भाष्यादर्शनमूलकः।

**अद्वेषस्** त्रि॰ द्विष–असुन् न॰त॰। द्वेषानाश्रये द्वेषाकर्त्तरि "अद्वेषो मरुतो गातुमेतनेति" ऋ॰ ५,८७,८, "अद्वेषः अद्वेषस" इति भाष्यम्।

**अद्वैत** न॰ द्विधा इतम् द्वीतं तस्य भावः द्वैतं भेदः अभावार्थे न॰त॰। अभेदे, "अद्वैतं सुखदुःखयोरनुगुणं सर्व्वास्ववस्थासु यदिति" उत्तरचरितम्। नास्ति द्वैतं भेदो यत्र। भेदरहिते त्रि॰ ब्रह्मणि न॰। "अद्वैततत्त्व इव सत्यतरेऽपि लोक" इति नैषधम्।

**अद्वैतसिद्धि** पु॰ अद्वैतस्य जगतो ब्रह्माभेदस्य सिद्धिरत्र। स्वनामख्याते वेदान्तप्रकरणभेदे ६त॰। तत्सिद्धौ स्त्री।

**अध** अव्य॰ अथ वेदे "सुपांसुलुगित्यादिना" वर्णव्यत्ययः। अथशब्दार्थे "अधा नियुत्व उत्तर" इति ऋ॰४,१८,६, अधा "अथानन्तरमिति" भा॰। अधापोषस्य पोषेणेति य॰ १२,८, अधेति अव्ययम् अथार्थे "निपातस्य चेति" पा॰ दीर्घ इति वेददीपः।

**अधःकाय** पु॰ अधः अधरं कायस्य एकदेशिस॰ । नाभेरधःप्रदेशे नेत्वनुवृत्तौ "कौपीनीविमधःकायं संस्पृशन् धरणीमपीति" स्मृतिः । "अधःकायं नाभेरधःप्रदेशमिति" रघु॰ ।

**अधःकार** पु॰ अधरमित्यर्थे अधः तस्य कारः । न्यूनीकरणे, तिरस्कारे, अधरीकरणे च ।

**अधःक्षिप्त** त्रि॰ अधोमुखेन क्षिप्तम् क्षिप–क्त शाक॰त॰ । अधोमुखतया स्थापिते न्यञ्चिते न्युब्जीकृते, ऽधस्ताच्छिद्रिते च ।

**अधःपुष्पी** स्त्री अधोमुखं पुष्पं यस्याः (अनन्तमूल) गोजिह्वायाम् अधाकपुष्प्याम् (भाटुइ) इति ख्याते वृक्षे इत्यन्ये ।

**अधः(धस्य)शय्या** स्त्री अधोवर्त्तिनी शय्या वा सत्वम् । खट्वावर्जनेन भूमिशय्यायाम् "अग्नीन्धनं ब्रह्मचर्य्यमधःशय्यां गुरोर्हितम् । आ समावर्त्तनात् कुर्य्यादिति" मनु॰ ।

**अधन** त्रि॰ नास्ति धनमस्य । धनहीने दरिद्रे स्वातन्त्र्यरहिते च । "अधनो हि धनं लब्ध्वा तृणवत् मन्यते जगदिति" नीति॰ । "भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमिति" मनुः । "स्वातन्त्र्यराहित्यपरमिति" दायभागः ।

**अधम** त्रि॰ अव–अम–धादेशः । कुत्सिते, हीने च । "सर्व्वत्र त्रिविधा भेदा उत्तमाधममध्यमा" इति । "अधमसमवरिष्ठान्यर्ककेन्द्रादिसंस्थे शशिनि विनयवित्तज्ञानधीनैपुणानामिति" ज्योतिषोक्ते नृणां वित्तज्ञानादिषु अधमत्वसूचके रविचन्द्रयोः स्थितिविशेषरूपे योगभेदे ।

**अधमभृतक** पु॰ कर्म्म॰ । "उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः । अधमो भारवाही स्यादित्येवं त्रिविधो भृत इति" स्मृत्युक्ते, पञ्चविधशुश्रूषकमध्ये भृतकभेदे ।

**अधमर्ण** त्रि॰ ऋणं अवश्यदेयम् तत् अधमं शोध्यं यस्य ब॰ । अवश्यदेयर्णशोधके (खातक) इति प्रसिद्धे ऋणग्रहीतरि ।

**अधमर्णिक** त्रि॰ अधमस्त्वृणमवश्यदेयं दातृत्वेनास्त्यस्य ठन् । अधमर्णशब्दार्थे । "गृहीता च क्रमाद्दाप्यो धनिनामधमर्णिक" इति याज्ञ॰ "यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः । तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकमिति" मनुः । अस्यार्थे इनि । अधमर्णीत्यप्यत्रैव त्रि॰ स्त्रियां ङीप् ।

**अधमाङ्ग** न॰ अधमम् अङ्गम् कर्म्म॰ । चरणे । तस्य सर्व्वाङ्गापेक्षया अधरस्थत्वात् अधमत्वम् ।

**अधमार्द्ध** न॰ अधमम् अर्द्धम् । नाभेरधोभागे । तत॰ भवादौ यत् । अधमार्द्ध्यम् तद्भवादौ, तत्सम्बन्धिनि च त्रि॰ ।

**अधर** पु॰ न ध्रियते धृङ–अच् न॰त॰ । (ठोट) इति ख्याते ओष्ठे, नीचे वा ओष्ठे । "पिबसि रतिसर्वस्वमधरमिति" शकु॰ । "निर्द्दष्टरागोऽधर" इति सा॰दर्प॰ । "उमामुखे विम्बफलाधरोष्ठे" इति कुमा॰ । "अधरं खलु बिम्बनामकं फलमाभ्यामिति भव्यमन्वयम् । लभतेऽधरबिम्बइत्यदः पदमस्या रदनच्छदे वददिति" नैष॰ । धरणं धरः ब॰ । तत्सम्बन्धरहिते हीने, पृब॰ । तले, नीचे च स्मरमन्दिरे स्त्रीचिह्नभेदे पु॰न॰ । हीनवादिनि त्रि॰ । अयं सर्वनामकार्य्यभाक् । तत्रायं विशेषः पूर्व्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायामिति (पा॰ग॰) । इत्युक्तेः व्यवस्थायामेवास्य सर्वनामता-व्यवस्था च स्वाभिधेयापेक्षोऽवधिनियमः । अवधित्वञ्च दैशिकं कालिकञ्च तत्र "पूर्व्वापरादिशब्दानां केषाञ्चित् प्रविभागतः । सामान्येनाभिधानेऽपि प्रवृत्तिर्देशकालयोरित्य" भियुक्तोक्तेः केषाञ्चिदेव उभयावधित्वनियमः न सर्वेषाम्, तथाहि पूर्व्वापरावरपरोत्तरशब्दाः सम्प्रवृत्त्या दिक्कालयोर्वर्त्तन्ते तदवच्छिन्नदेशग्रामादौ च । तत्र पूर्व्वस्यां दिशि वसति, पूर्व्वस्मादिश आगतः पूर्वदिक्सम्बन्धात् पूर्व्वा वापी । एवं पूर्व्वस्मिन् मासे वसति पूर्व्वस्मात् मासाच्चिरन्तः । तत्कालसम्बन्धात् पूर्व्वो गुरुः पूर्व्वस्मिन् गुरोरागतः पूर्व्वस्मात् प्रासादादागत इत्यादि । एवम् अपरावरपरशब्दत्रयस्यापि "ते च विनापि दिक्कालसम्बन्धं देशवृत्तिमन्तः इति भेदः । अपरदेशसम्बन्धादपरो ग्रामः अवरो वा । अपरस्मिन् अवरस्मिन् वा पर्व्वते वसति । सन्निकर्षे विप्रकर्षे च सर्व्वासु दिक्षु तुल्योऽयं व्यपदेशः । न तु ते दिग्गतसम्बन्धेन तत्तदर्थबोधकाः एकस्यामेव दिशि स्थितयोर्निकटानिकटयोः परावरादिव्यपदेशप्रवृत्तेः । एतच्छब्दापेक्षया सम्प्रवृत्त्या वक्ष्यमाणकारिकायां देशग्रहणम् सार्थकं अन्यस्य तु स्वतो देशवृत्तित्वम् । सन्निकर्षासन्निकर्षयोर्देशवत् कालोऽप्याश्रयः । तेन परः अपरः अवरो वा कालः । अतएव परकालसम्बन्धात् परःपाणिनिः अपरकालसंबन्धादपरः कैयटादिरिति । दक्षिणाधरशब्दौ तु दिशि दिगवच्छिन्ने पर्व्वतादौ च वर्त्तेते न तु काले, नापि कालावच्छिन्ने इति भेदः । दक्षिणस्यां वसति, दक्षिणे पर्व्वते वा वसति, अधरस्यां दिशि वसति अधरदिक्सम्बन्धात् अधरप्रासादे वा वसति इति । तेन "स्वस्वज्ञातिधनेऽनाम्नि कालदिग्देशवृत्तयः । पूर्व्वापरावरधरापराश्च दक्षिणोत्तरौ" इति गणरत्ने सर्वेषां कालादिवृत्तित्वोक्तावपि दक्षिणाधरयोस्तु न कालवृत्तित्वमिति तेनैव स्वकृतव्याख्यानरूपे गणरत्नमहोदधौ स्वीकृतम् । दक्षिणस्यां दिशि

स्त्री॰ दक्षिणदिशश्च भूगोले यथाधरत्वं तथा उदक्शब्दे वक्ष्यते । सर्वनाम्नां वृत्तौ पुंवद्भावात् अधरस्यां भवः अधरतन इत्यादि अधरस्यां वर्त्तते अधरवृत्तिः अधरा अधरस्याः अधरस्यामित्यर्थे अधरत इत्यादि । [अधोभागे इत्यर्थे ।

**अधरतस्** अव्य॰ अधर–तसिल् । प्रथमापञ्चमीसप्तम्यर्थवृत्तौ

**अधरस्तात्** अव्य॰अधर+अस्ताति प्र॰ । अधरत इत्यर्थे । "पुरस्तात् सवितोत्तरस्तादधरस्तादिति" ऋ॰ १०,३६,१४,

**अधरमधु** न॰ अधरस्य मध्विव आस्वादातिशयात् । अधररसे । [रतइत्यर्थे

**अधरस्तात्** अव्य॰ अधर+सप्तम्याद्यर्थे अस्ताति । अध-

**अधराच्** त्रि॰ अधरां दक्षिणां दिशमञ्चति क्विप् । दक्षिण दिगन्तरि । "प्राङ् वा उदङ् वाऽधराङ् वा प्रध्मायीताभिनह्याच्च इति आ॰ उ॰ । स्त्रियामधराचीति । सा च दक्षिणस्यां दिशि च ।

**अधराचीन** त्रि॰ अधराचि भवः अधराच्+ख । अधःप्रदेशभवे । "अधराचीनमकृणोदपामप" इति ऋ॰ २,१७,५,

**अधराच्य** त्रि॰ अधराच्यां भवः यत् । दक्षिणदिग्भवे अधोदिग्भवे च । "अरसं प्राच्यं विषमरसं यदुदीच्यम् अथैतमधराच्यमिति" वेदः ।

**अधरात्** अव्य॰ अधर+अस्त्यर्थे आति । अधरतइत्यर्थे । "पश्चादोत्तरादधरादापुरस्तादिति" ऋ॰ ६,८,८, अधरात् दक्षिणत इत्यर्थः ।

**अधरीण** त्रि॰ अधरे भवः अधर+ख । अधरभवे ।

**अधरेण** अव्य॰ अधरस्मिन् देशे, दिशि वा अधर+एनप् । प्रथमासप्तमीवृत्तौ आसन्ने नीचे देशादौ, सन्निकृष्टदक्षिणदिशि च । [लक्षपचारात् । अधरदिवसे ।

**अधरेद्युस्** अव्य॰ अधरे दिने अधर+एद्युस् । कालवृत्ति-

**अधरोत्तर** न॰ अधरञ्च उत्तरञ्च समा॰द्व॰। न्यूनाधिक्यवति निम्नोच्चते । "अद्यात् काकः पुरोडाशं श्वावलिह्याद्धविस्तथा स्वाम्यं च न स्यात् कस्मिंश्चित् प्रवर्त्तेताधरोत्तरमिति" मनुः ।

**अधर्म्म** पु॰ ध्रियतेऽनेन धृ–मनिन् विरोधे न॰त॰ । धर्म्मविरोधिनि वेदादिनिषिद्धकर्म्मजन्ये पापे, तद्धेतुभूतप्राणिहिंसादौ च । "चोदनालक्षणोऽर्थोधर्म्म" इति सूत्रकारेण निषेधलक्षणोऽनर्थोऽधर्म्म इति तल्लक्षणं सूचितम् तत्र वेदप्रतिपाद्योऽर्थोधर्म्मः, तन्निषेधप्रतिपाद्योऽनर्थः अधर्म्मः । स च निषिद्धकर्म्माधीनः पापनामा अदृष्टभेदः । अनर्थश्च अनिष्टसाधनम् । तदुत्पत्त्युक्तिस्तु "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् अनिग्रहाच्चेन्द्रियाणाम् नरः पतनमृच्छतीति" । "शरीरजैः कर्म्मदोषैर्याति स्थावरतां नर" इत्यादिना शास्त्रेण कर्म्मणामाशुविनाशिनां कालान्तरभाविनरकादिजन्मविशेषान् प्रति हेतुत्वोक्तावपि तथात्वं मध्यस्थद्वारीभूतमदृष्टं विना न सम्भवतीति तत् कल्प्यते अतः "चिरध्वस्तं फलायालमित्यादिना" अदृष्टशब्दे दर्शितयुक्त्या च पापस्यवसाधनम् । "अधर्म्मेणैधते तावत् ततो भद्राणि पश्यति । ततः सपत्नान् जयति समूलस्तु विनश्यतीति" मनुः । "अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहमिति" गीता । अधर्म्मभेदात्गतिविशेषोक्तेराधर्म्मसत्त्वम् यथा

"कर्म्मभिर्निवर्तैर्बद्धो जन्तुर्दुःखान्युपाश्नुते । येन येन तु भावेन कर्म्मणा पुरुषो गतिम् । प्रयाति परुषां घोरां तत्ते वक्ष्याम्यतः परम् । अधीत्य चतुरो वेदान् द्विजो मोहसमन्वितः । पतितात् प्रतिगृह्याथ खरयोनौ प्रजायते । खरो जीवति वर्षाणि दश पञ्च च भारत ! । खरो मृतो बलीवर्द्दः सप्त वर्षाणि जीवति । बलीवर्द्दो मृतश्चापि जायते ब्रह्मराक्षसः । ब्रह्मरक्षश्च मासांस्त्रींस्ततो जायेत ब्राह्मणः । पतितं याजयित्वा तु कृमियोनौ प्रजायते । तत्र जीवति वर्षाणि दश पञ्च च भारत ! । कृमिभावाद्विमुक्तस्तु ततो जायेत गर्द्दभः । गर्द्दभः पञ्च वर्षाणि पञ्च वर्षाणि शूकरः । कुक्कुटः पञ्च वर्षाणि पञ्च वर्षाणि जम्बुकः । श्वा वर्षमेकं भवति ततो जायेत मानवः । उपाध्यायस्य यः पापं शिष्यः कुर्यादबुद्धिमान् । स जीव इह संसारांस्त्रीनाप्नोति न संशयः । प्राक् श्वा भवति राजेन्द्र ! ततः क्रव्यात्ततः खरः । ततः प्रेतः परिक्लिष्टः पश्चाज्जायेत ब्राह्मणः । मनसाऽपि गुरोर्भार्य्यां यः शिष्यो याति पापकृत् । स उग्रान् प्रैति संसारानधर्म्मेणेह चेतसा । श्वयोनौ तु स सम्भूतस्त्रीणि वर्षाणि जीवति । तत्रापि निधनं प्राप्तः कृमियोनौ प्रजायते । कृमिभावमनुप्राप्तो वर्षमेकन्तु जीवति । ततस्तु निधनं प्राप्तो ब्रह्मयोनौ प्रजायते । यदि पुत्त्रसमं शिष्यं गुरुर्हन्यादकारणे । आत्मनः कामकारेण सोऽपि हिंस्रः प्रजायते । पितरं मातरञ्चैव यस्तु पुत्त्रोऽवमन्यते । सोऽपि राजन् ! मृतो जन्तुः पूर्व्वं जायेत गर्द्दभः । गर्द्दभत्वन्तु सम्प्राप्य दश वर्षाणि जीवति । संवत्सरन्तु कुम्भीरस्ततो जायेत मानवः । पुत्त्रस्य मातापितरौ यस्य रुष्टावुभावपि । गुर्व्वपध्यानतः सोऽपि मृतो जायेत गर्द्दभः । खरो जीवति मासांस्तु दश श्वा

च चतुर्द्दश। विडालः सप्त मासांस्तु ततो जायेत मानवः। मातापितरावाक्रुश्य सारिकः सम्प्रजायते। ताडयित्वा तु तावेव जायते कच्छपो नृप!। कच्छपो दश वर्षाणि त्रीणि वर्षाणि शल्लकः। व्यालो भूत्वा च षण्मासांस्ततो जायेत मानुषः। भर्त्तृपिण्डमुपाश्नन् यो राजद्विष्टानि सेवते। सोऽपि मोहसमापन्नो मृतो जायेत वानरः। वानरो दश वर्षाणि पञ्च वर्षाणि मूषिकः। श्वाऽथ भूत्वाऽथ षण्मासांस्ततो जायेत मानुषः। न्यासापहर्त्ता तु नरो यमस्य विषयं गतः। संसाराणां शतं गत्वा कृमियोनौ प्रजायते। तत्र जीवति वर्षाणि दश पञ्च च भारत!। दुष्कृतस्य क्षयं कृत्वा ततो जायेत मानुषः। असूयको नरश्चापि मृतो जायेत शार्ङ्गकः। विश्वासहर्त्ता च नरो मीनो जायेत दुर्म्मतिः। भूत्वा मीनोऽष्ट वर्षाणि मृगो जायेत भारत। मृगस्तु चतुरो मासांस्ततश्छागः प्रजायते। छागस्तु निधनं प्राप्य पूर्णे संवत्सरे ततः। कीटः प्रजायते जन्तुस्ततो जायेत मानुषः। धान्यान् यवांस्तिलान् माषान् कुलत्थान् सर्षपांश्चणान्। कलायानथ मुद्गांश्च गोधूमानतसीस्तथा। शस्यस्यान्यस्य हर्त्ता च मोहाज्जन्तुरचेतनः। स जायते महाराज! मूषिको निरपत्रपः। तत्र प्रेत्य महाराज! मृतो जायेत शूकरः। शूकरो जातमात्रस्तु रोगेण म्रियते नृप!। श्वा ततो जायते मूढः कर्म्मणा तेन पार्थिव!। भूत्वा श्वा पञ्च वर्षाणि ततो जायेत मानवः। परदाराभिमर्षन्तु कृत्वा जायेत वै वृकः। श्वा शृगालस्ततो गृध्रो व्यालः कङ्को बकस्तथा। भ्रातृभार्य्यान्तु पापात्मा यो धर्षयति मोहितः। पुंस्कोकिलत्वमाप्नोति सोऽपि संवत्सरं नृप!। सखिभार्य्यां गुरोर्भार्य्यां राजभार्य्यान्तथैव च। धर्षयित्वा तु कामात् मृतो जायेत शूकरः। शूकरः पञ्च वर्षाणि दश वर्षाणि वै वृकः। विडालः पञ्च वर्षाणि दश वर्षाणि कुक्कुटः। पिपीलकस्तु मासांस्त्रीन् कीटः स्यान्मासमेव तु। एतानासाद्य संसारान् कृमियोनौ प्रजायते। तत्र जीवति मासांस्तु कृमियोनौ चतुर्द्दश। ततोऽधर्म्मक्षयं कृत्वा पुनर्ज्जायेत मानवः। उपस्थिते विवाहे तु यज्ञे दानेऽथवा विभो!। मोहात्करोति यो विघ्नं स मृतो जायते कृमिः। कृमिर्जीवति वर्षाणि दश पञ्च च भारत!। अधर्म्मस्य क्षयं कृत्वा ततो जायेत मानवः। पूर्व्वं दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति। सोऽपि राजन्! मृतो जन्तुः कृमियोनौ प्रजायते। तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर!। अधर्म्मसङ्क्षये युक्तस्ततो जायेत मानुषः। देवकार्य्यमकृत्वा तु पितृकार्य्यमथापि वा। अनिर्व्वाप्य समश्नन् वै मृतो जायेत वायसः। वायसः शतवर्षाणि ततो जायेत कुक्कुटः। जायते व्यालकश्चापि मासं तस्मात्तु मानुषः। ज्येष्ठं पितृसमञ्चापि भ्रातरं योऽवमन्यते। सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ प्रजायते। क्रौञ्चो जीवति मासांस्तु दश द्वौ सप्त पञ्च च। ततो निधनमापन्नो मानुषत्वमुपाश्नुते। वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते। ततः सम्प्राप्य निधनं जायते शूकरः पुनः। शूकरो जातमात्रस्तु रोगेण म्रियते नृप!। श्वा ततो जायते मूढः कर्म्मणा तेन पार्थिव!। श्वा भूत्वा कृतकर्म्माऽसौ जायते मानुषस्ततः। तत्रापत्यं समुत्पाद्य मृतो जायेत मूषिकः। कृतघ्नस्तु मृतो राजन्! यमस्य विषयं गतः। यमस्य पुरुषैः क्रुद्धैर्व्वधं प्राप्नोति दारुणम्। दण्डं समुद्गरं शूलमग्निकुम्भञ्च दारुणम्। असिपत्रवनं घोरं वालुकां कूटशाल्मलीम्। एताश्चान्याश्च बह्वीः स यमस्य विषयं गतः। यातनाः प्राप्य तत्रोग्रास्ततो वध्यति भारत!। ततो हतः कृतघ्नः स तत्रोग्रैर्भरतर्षभ!। संसारचक्रमासाद्य कृमियोनौ प्रजायते। कृमिर्भवति वर्षाणि दश पञ्च च भारत!। ततो गर्भं समासाद्य तत्रैव म्रियते शिशुः। ततो गर्भशतैर्जन्तुर्बहुभिः सम्प्रपद्यते। संसारांश्च बहून् गत्वा ततस्तिर्य्यक् प्रजायते। ततो दुःखमनुप्राप्य बहुवर्षगणानिह। अपुनर्भवसंयुक्तस्ततः कूर्म्मः प्रजायते। दधि हृत्वा बकश्चापि प्लवो मत्स्यानसंस्कृतान्। चोरयित्वा तु दुर्बुद्धिर्मधुदंशः प्रजायते। फलं वा मूलकं हृत्वा अपूपं वा पिपीलिकाः। चोरयित्वा तु निष्पावं जायते हलगोलकः। पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते। हृत्वा पिष्टमयं पूपं कुम्भोलूकः प्रजायते। अयो हृत्वा तु दुर्ब्बुद्धिर्व्वायसो जायते नरः। कांस्यं हृत्वा तु दुर्ब्बुद्धिर्हारीतो जायते नरः। राजतं भाजनं हृत्वा कपोतः संप्रजायते। हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते। पत्रोर्णं चोरयित्वा तु क्रकरत्वं स गच्छति। कौषिकन्तु ततो हृत्वा नरो जायेत वर्त्तकः। अंशुकं चोरयित्वा तु शुको जायेत मानवः। चोरयित्वा दुकूलन्तु मृतो हंसः प्रजायते। क्रौञ्चः कार्पासिकं हृत्वा मृतो जायेत मानवः। चोरयित्वा नरः पट्टं त्वाविकञ्चैव भारत!। क्षौमञ्च वस्त्रमादाय शशो जन्तुः प्रजायते

वर्णान् हृत्वा तु पुरुषो मृतो जायेत वर्हिणः । हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः । वर्णकादींस्तथा गन्धांश्चोरयित्वेह मानवः । छुच्छुन्दरित्वमाप्नोति राजन् ! लोभपरायणः । तत्र जीवति वर्षाणि ततो दश च पञ्च च । अधर्म्मस्य क्षयं कृत्वा ततो जायेत मानवः । चोरयित्वा पयश्चापि बलाका सम्प्रजायते । यस्तु चोरयते तैलं नरो मोहसमन्वितः । सोऽपि राजन् ! मृतो जन्तुस्तैलपायी प्रजायते । अशस्त्रं पुरुषं हत्वा सशस्त्रः पुरुषाधमः । अर्थार्थी यदि वा वैरी स मृतो जायते खरः । खरो जीवति वर्षे द्वे ततः शस्त्रेण वध्यते । स मृतो मृगयोनौ तु नित्योद्विग्नोऽभिजायते । मृगो वध्यति शस्त्रेण गते संवत्सरे तु सः । हतो मृगस्ततो मीनः सोऽपि जालेन बध्यते । मासे चतुर्थे सम्प्राप्ते श्वापदः सम्प्रजायते । श्वापदो दश वर्षाणि द्वीपी वर्षाणि पञ्च च । ततस्तु निधनं प्राप्य कालपर्य्यायनोदितः । अधर्म्मस्य क्षयं कृत्वा ततो जायेत मानुषः । स्त्रियं हत्वा तु दुर्बुद्धिर्यमस्य विषयं गतः । बहून् क्लेशान् समासाद्य संसारांश्चैव विंशतिम् । ततः पश्चान्महाराज ! कृमियोनौ प्रजायते । कृमिर्विंशतिवर्षाणि भूत्वा जायेत मानुषः । भोजनं चोरयित्वा तु मक्षिका जायते नरः । मक्षिकासङ्घवशगो बहून् मासान् भवत्युत । ततः पापक्षयं कृत्वा मानुषत्वमवाप्नुते । धान्यं हृत्वा तु पुरुषो लोमशः सम्प्रजायते । तथा पिण्याकसंमिश्रमशनं चोरयन्नरः । स जायते बभ्रुसमो दारुणो मूषिको महान् । दशन् वै मानुषं नित्यं पापात्मा स प्रजायते । घृतं हृत्वा तु दुर्बुद्धिः काकमद्गुः प्रजायते । मत्स्यमांसमथो हृत्वा काको जायेत दुर्म्मतिः । लवणं चोरयित्वा तु चौरिकाकः प्रजायते । विश्वासेन तु निक्षिप्तं यो वै निह्नौति मानवः । स गतायुर्नरस्तादृक् मत्स्ययोनौ प्रजायते । मत्स्ययोनिमनुप्राप्य मृतो जायेत मानवः । मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते । पापानि तु नरः कृत्वा तिर्य्यग् जायेत भारत ! । न चात्मनः प्रमाणन्ते धर्म्मं जानन्ति किञ्चन । ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः सदा । सुखदुःखसमायुक्ता व्याधितास्ते भवन्त्युत । असंवासाः प्रजायन्ते म्लेच्छा अपि न संशयः । नराः पापसमाचारा लोभमोहसमन्विताः । वर्ज्जयन्ति च पापानि जन्मप्रभृति ये नराः । अरोगा रूपवन्तश्च धनिनश्च भवन्त्युत । स्त्रियोऽप्येतेन कल्पेन कृत्वा पापमवाप्नुयुः । एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः । परस्वहरणे दोषाः सर्व्व एव प्रकीर्त्तिताः । एतद्वै लेशमात्रेण कथितं ते मयाऽनघ ! । अपरान् सत्कथायोगे भूयः श्रोष्यसि भारत ! । एतन्मया महाराज ! ब्रह्मणो वदतः पुरा । सुरर्षीणां श्रुतं मध्ये पृष्टश्चापि यथातथम् । मयाऽपि तच्च कात्स्न्र्येन यथावदनुवर्णितम् । एतच्छ्रुत्वा महाराज ! धर्म्मे कुरु मनः सदा ॥” इति महाभारते अनुशासनपर्व्व० ।

“महापातकजान् घोरान्नरकान् प्राप्य दारुणान् । कर्म्मक्षयात् प्रजायन्ते महापातकिनस्त्विह । मृगश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति । खरपुक्कसवेणानां सुरापो नात्र संशयः । कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् । तृणगुल्मलतात्वञ्च क्रमशो गुरुतल्पग” इति । “श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् । चण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति । कृमिकीटपतङ्गानां विड्भुजाञ्चैव पक्षिणाम् । हिंस्राणाञ्चैव सत्वानां सुरापो ब्राह्मणो व्रजेत् । लूताहिसरटानाञ्च तिरश्चां चाम्बुचारिणाम् । हिंस्राणाञ्च पिशाचानां स्तेनो विप्रः सहस्रशः । तृणगुल्मलतानाञ्च क्रव्यादां दंष्ट्रिणामपि । क्रूरकर्म्मकृताञ्चैव शतशो गुरुतल्पग” इति । “ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः । हेमहारी च कुनखी दुश्चर्म्मा गुरुतल्पगः । यो येन संवसत्येषां स तल्लिङ्गोऽभिजायते । अन्नहर्त्तामयावी स्यान्मूको वागपहारकः । धान्यमिश्रोऽतिरिक्ताङ्गः पिशुनः पूतिनासिकः । तैलहृत्तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः । यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः । अवश्यं याति तिर्य्यक्त्वञ्जग्ध्वा चैवाहुतं हविरिति” । “परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च । अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः । हीनजातौ प्रजायेत पररत्नापहारकः । पत्रशाकं शिखी हृत्वा, गन्धान् छुच्छुन्दरिः शुभान् । मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः । विविधानि च रत्नानि जायते हेमकर्त्तृष्विति” । “मूषिको धान्यहारी, स्याद्यानमुष्ट्रः, कपिः फलम् । जलं प्लवः, पयः काको, गृहकारी ह्युपस्करम् । मधु दंशः, पलं गृध्रो, गां गोधा, ऽग्निं बकस्तथा । श्वित्री वस्त्रं, श्वा रसन्तु, चीरी लवणहारकः । प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्म्मणि । द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः” इति । “द्रव्यस्यापह्रियमाणस्य यादृशाः प्रकारास्तादृशा एव प्राणिजातयः स्तेयकर्म्मण्यपहर्त्तारो भवन्ति यथा कांस्यहारी हंस इति । अथवा यत्फलसाधनन्द्रव्यमपहरति तत्साधनविकलो यथा पङ्गुताश्वहारक इति” मिता० । “ब्रह्महा

कुष्ठी, तैजसापहारी मण्डली, देवब्राह्मणाक्रोशकः खलतिः, गरदाग्निदावुन्मत्तौ, गुरुप्रतिहन्तापस्मारी, गोघ्नश्चान्धो, धर्म्मपत्नीं त्यक्त्वान्यत्र प्रवृत्तः शब्दवेधी प्राणिविशेषः, कुण्डाशी भगभक्षी, देव-ब्राह्मण-स्वापहारी पाण्डुरोगी, न्यासापहारी च काणः, स्त्रीपण्योपजीवी षण्ढः, कौमारदारत्यागी दुर्भगो, मिष्टैकाशी वातगुल्मी, अभक्ष्यभक्षकी गण्डमाली, ब्राह्मणीगामी निर्बीजी, क्रूरकर्म्मा वामनो, वस्त्रापहारी पतङ्गः, शय्यापहारी क्षपणकः, शङ्खशुक्त्यपहारी, कपाली दीपापहारी कौशिको, मित्रध्रुक् क्षयी, मातापित्रोराक्रोशकः खञ्जन" इति अन्ततश्चागुल्मणो, सङ्गर्भेङ्गःसंलग्नवाक् जलोदरी, दारत्यागी कूटसाक्षीलोपदी, उच्छूनजङ्घाचरणो, विवाहविघ्नकर्त्ता छिन्नोष्ठः, अवगुरणः छिन्नहस्तो, मातृघ्नोऽन्धः, स्नुषागामी, वातरूषणः, चतुष्पथे विण्मूत्रविसर्जने मूत्रकृच्छ्री, कन्यादूषकः षण्ढः, ईर्ष्यालुर्मशकः, पित्रोर्विवदमानोऽपस्मारी, न्यासापहार्य्यनपत्यो, रत्नापहार्य्यत्यन्तदरिद्रोविद्याविक्रयी पुरुषमृगः, वेदविक्रयी द्वीपी, बहुयाजकोजलप्लवः, अयाज्ययाजकोवराहः, अनिमन्त्रितभोजी वायसः, मिष्टैकभोजी वानरः, यतस्ततोऽन्नमार्जारः, कक्षवनदहनात् खद्योतः, दारकाचार्य्योदुर्गन्धिः, पर्य्युषितभोजी क्रिमिः, अदत्तादायी बलीवर्दो, मत्सरी भ्रमरः, अग्न्युत्सादी मण्डलकुष्ठी, शूद्राचार्य्यःश्वपाकः, गोहर्त्ता सर्पः, स्नेहापहारी क्षयी, अन्नापहार्य्यजीर्णी, ज्ञानापहारी मूकः, चण्डालीपुक्कसीगमनेऽजगरः, प्रव्रजितागमने मरुपिशाचः, शूद्रागमने दीर्घकीटः, सवर्णाभिगामी दरिद्रः, जलहारी मत्स्यः, क्षीरहारी बलाका, वार्द्धुषिकोऽङ्गहीनः, अविक्रेयविक्रयी व्याघ्रः, राजमहिषीगामी नपुंसकः, राजाक्रोशकोगर्दभः, गोगामी मण्डूकः, अनध्यायाध्ययने शृगालः, परद्रव्यापहारी परप्रेष्यः, मत्स्यवधे गर्भवासी" इत्येवं नानास्मृतिवचनैः गतिविशेषो मिताक्षरायां दर्शितस्तेन तत्कालपर्य्यन्तस्थायिताऽधर्म्मस्येति गम्यते। ब० अनित्यसमा० अधर्म्मा । पुण्यरूपधर्म्मशून्ये त्रि० । नास्ति निवृत्तः धर्म्मो यस्य अनित्यसमा० अधर्म्मा । क्षीणपुण्ये त्रि०। "तारकावधमिवाधर्म्मविनाशायिशुर्नमिति" काद० । गुणाद्यपरपर्य्यायः अधर्म्मत्वादूहिते ब्रह्मणि न० ।

**अधर्म्मचारिन्** त्रि० न धर्म्मं चरति अनुतिष्ठति चर+णिनि ६त० न०त० । धर्म्मकृत्यानुष्ठायिनि, पापानुष्ठायिनि च स्त्रियां ङीप् ।

**अधर्म्ममय** त्रि० अधर्म्मेण प्रचुरः प्राचुर्य्यार्थे मयट् । पापप्रचुरे । स्त्रियां ङीप् । [पापाचारिणि ।

**अधर्म्मात्मन्** त्रि० अधर्म्मप्रधानः आत्मा यस्य । प्राधान्येन

**अधर्म्मास्तिकाय** पु० आर्हतमतसिद्धेषु जीवादिषट्कास्तिकायेषु मध्ये स्थितिस्वभावके पदार्थभेदे विवरणमर्हच्छब्दे द्रष्टव्यम् । [ङीप् ।

**अधर्म्मिन्** त्रि० अधर्म्मः पापमस्त्यस्य इनि । पापवति स्त्रियां

**अधर्म्मिष्ठ** त्रि० अतिशयेन अधर्म्मी इष्ठन् मत्वादिलोपः । भृशपापयुक्ते ।

**अधर्म्म्य** त्रि० न धर्म्माय हितं यत् । पापापादके, "पञ्चानां तु त्रयो धर्म्म्या द्वावधर्म्म्यौ स्मृताविहेति" मनुः ।

**अधवा** स्त्री न विद्यमानो धवो भर्त्ता यस्याः । मृतभर्तृकायां विधवायाम् स्त्रियाम् । [भागमन्तरि त्रि० ।

**अधश्चर** पु० अधःखनित्वा चरति अच् । चौरे, अधो-

**अधश्चौर** पु० अधोभागे खनित्वा चोरयति चुर–अच् स्वार्थे अण् । सन्धिं कृत्वा चौर्य्यकारके । (सिन्धियाल) ।

**अधश्शिरस्** न० अधोवर्त्ति शिरः यस्य शत्वम् वा । अवाङ्मस्तके ।

**अधस्** अव्य० अधर+असि अधरशब्दस्याने अधादेशश्च । पाताले, अधस्थानमात्रे च । तत्रापि अर्थवशात् प्रथमापञ्चमीसप्तम्यर्थो उन्नेयाः । तत्र प्रथमार्थे अधोरथ्यं, पञ्चम्यर्थे अधोऽवतात् पतति, सप्तम्यर्थे अधोऽवहे शेते इत्यादि । "अधः कथञ्चिद्धृतभूमिभागमिति" कुमा० । "पतत्यधोधाम विसारि सर्व्वतः, इति माघः ।

**अधस्तन** त्रि० अधोभवः अधस्+ष्णु तुट् च । अधोभवे स्त्रियां ङीप् । "एकमागामियागीयमुख्यकालादधस्तनः स्वकालादुत्तरो गौणः कालः पूर्व्वस्य कर्म्मण इति" स्मृतिः । "अधस्तनः पूर्व्वतनः इत्यनन्यास्तेषु व्यवहार" इति न्यायादिति" रघुनन्दनोक्तेः पूर्व्वतनेऽपि ।

**अधस्तरा(मा)म्** अव्य० अतिशयेन अधः, तर(म)प् आमु । अत्यन्ताधरे । द्रव्ये तु नामु । अधस्तरोदेशइत्यादि ।

**अधस्तात्** अव्य० अधर+अस्ताति अधादेशः । अधःशब्दार्थे । अयन्तु प्रथमापञ्चमीसप्तम्यर्थे एव "धर्म्मेण गमनमूर्द्ध्वं गमनमधस्ताद् भवत्यधर्म्मेणेति" ४४ साङ्ख्यका० ।

**अधस्पदम्** न० अधोवर्त्ति पदं या यस्य । निम्नपदे ।

**अधामार्गव** पु० न धीयते अधाः तादृशं मार्गं याति या–क । अपामार्गे इति क्षीरस्वामी ।

**अधार्म्मिक** त्रि० धर्म्मं चरति आसेवते ठक् विरोधार्थे न०त० ।

अधर्म्म—ष्ठारसिकप्रकृतिमति "अधर्म्माच्चेति वक्तव्यमिति" ठक् तु आधर्म्मिक इत्यप्यत्र त्रि० ।

**अधि** अव्य० न+धा—कि । अधिकारे, ऐश्वर्य्ये, स्वत्वे, अधिकत्वेऽर्थे, उपरि, आधिक्ये, अतिशये च । अस्य ऐश्वर्य्ये, स्वत्वे च कर्म्मप्रवचनीयत्वेन तद्योगे सप्तमी, अधि रामे भूः, अधि भुवि राम इति । "अधिः अध्ययनैश्वर्य्यवशित्वस्मरणाधिक्येषु" इति गणरत्ने उक्तम् तच्चोपाध्यायादधीते इत्यादावध्ययने, इङोऽध्ययनार्थकत्वस्य अधिद्योतकः । ऐश्वर्य्ये अधिपतिः, वशित्वे अधीनः, अधिगतमिनम् अत्या०स० । स्मरणे मातुरध्येति इकः स्मरणार्थत्वमधिद्योतयति । अधिके, अधिकमिति अधि+कन् । "अधिपरी अनर्थकाविति" पा० उक्तेः आनर्थक्ये गतित्वाभावात् नोपसर्गत्वं तेन अध्यागच्छति इत्यादौ गतिसंज्ञाबाधात् "गतिर्गताविति" पा० निघातो न । अतएव अस्य धात्वर्थत्वमात्रद्योतकत्वेऽपि विशिष्टक्रियाद्योतकत्वाभावात् अनर्थकत्वव्यवहारः विशिष्टक्रियायोगाभावाच्च नोपसर्गत्वम् तेन "तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषीति" रघौ न षत्वम् सति च क्रियाविशेषद्योतकत्वे अधितष्ठावित्यादाविव उपसर्गत्वेन षत्वमिति भेदः । मुग्धबोधे तु "नात्यार्च्चौ स्वतो नातिक्रमेऽतिः पर्य्यधी गताविति" गत्यर्थद्योतकत्वे नोपसर्गत्वमित्युक्तम् तेन नाकमधितस्थुषीत्यस्य गतवतीत्यर्थकतयोपसर्गत्वाभावान्न षत्वमिति विवेकः । तथा अधिके, "इतो वा सातिमीमहे दिवो वा पार्थिवादधि" इति ऋ० १,६,१० "अधीमहे आधिक्येन याचामहे" इति भाष्यम् । उपरि "ये नाकस्याधि रोचने दिवीति" ऋ० १,१९,६, "नाकस्य दुःखरहितस्य सूर्य्यस्य उपरीति" भाष्यम्, अधिकारे "यदत्र मामधिकरिष्यतीति" सि० कौ० । विभाषा कृञीति पा० । वा गतित्वमत्र विनियोक्तुरीश्वरत्वं गम्यते अधिकारो विनियोगः । आधिक्ये "अधिगत्य जगत्यधीश्वरादिति" नैष० अधिगत्येत्यादौ गमेर्विशिष्टज्ञानार्थत्वद्योतकत्वात् उपसर्गत्वम् "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते, तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधेत्युक्तेः विशिष्टज्ञानार्थता, तेन गतिसमासे ल्यप् । "अधिगतं विधिवद् यदपालयदित्यादौ" दायत्वेन लब्धमित्यर्थः । एवमन्यत्रापि विशेषार्थद्योतकता विज्ञेया । आधीयते दुःखमनेनेति आ+धा—कि वा पृ० ह्रस्वः । मनःपीड़ायाम् पु० ।

**अधिक** त्रि० अध्यारूढ एव स्वार्थे कन् उत्तरपदलोपश्च । प्रधाने अतिरिक्ते, "ऊनं न सत्त्वेष्वधिको बबाधे" इति रघुः । आधिक्यं च योग्यपरिमाणातिक्रमः अतिशयवृद्धिश्च । तत्रानुरूपातिक्रमे "अकालप्रसवा नार्य्य इत्युपक्रम्य "हीनाङ्गीमधिकाङ्गीश्च जायन्ते यदि वा तय" इत्यरिष्टसूचकदाहार्य्यम् । "हीनाङ्गमधिकाङ्गञ्च श्राद्धभोज्ये विवर्जयेदिति" स्मृतिः । "इयमधिकमनोज्ञा वल्कलेनापि तन्वीति" शकु० । "अधिकं फलमश्नुते" इति पुरा० । असाधारणे च । "ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विजितं, निर्व्विष्टं वैश्यशूद्रयोरिति" गौतमः "ब्राह्मणस्याधिकं लब्धमिति ब्राह्मणस्य प्रतिग्रहादिना यल्लब्धं तदधिकमसाधारणम् । क्षत्रियस्य विजितमित्यत्राधिकमित्यनुवर्त्तते क्षत्रियस्य विजयदण्डादिलब्धमसाधारणम् । "निर्व्विष्टं वैश्यशूद्रयोरिति" । अत्राप्यधिकमित्यनुवर्त्तते वैश्यस्य कृषिगोरक्षादिलब्धं निर्व्विष्टं तदसाधारणं, शूद्रस्य द्विजशुश्रूषादिना भृतिरूपेण यल्लब्धं तदसाधारणम् । एवमनुलोमजानां प्रतिलोमजानाञ्च लोकप्रसिद्धेषु स्वत्वहेतुषु यद्यदसाधारणमुक्तं सूतानामश्वसारथ्यमित्यादि तत्तत् सर्व्वं निर्व्विष्टशब्देनोच्यते सर्व्वस्यापि भृतिरूपत्वात् "निर्व्वेशो भृतिभोगयोरिति" त्रिकाण्डीस्मरणात् । तत्तदसाधारणं वेदितव्यम्" इति मिताक्षरा । दर्पणोक्ते अर्थालङ्कारभेदे यथा दर्पणे "आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते" । "किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र । अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि" इत्यत्राश्रयस्य । "युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत । तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः" इति माघे तु आश्रितस्याधिक्यम् । भावार्थे ष्यञ्—आधिक्यम् । उचित प्रमाणातिरेके न० । [अत्यन्तोत्कृष्टे च ।

**अधिकतर** त्रि० अधिक+तरप् । द्वयोर्मध्ये उत्कृष्टे एकस्मिन्,

**अधिकतम** त्रि० अधिक+तमप् । बहूनां मध्ये एकस्मिन् उत्कृष्टे, अत्यन्तोत्कृष्टे च ।

**अधिकमास** पु० कर्म्म० । मलमासे तद्विवरणमधिमासशब्दे ।

**अधिकरण** न० अधि+कृ—ल्युट् । आधारे, व्याकरणशास्त्रे "कर्तृकर्म्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति" हरिपरिभाषिते अधिकरणसंज्ञके कर्तृकर्म्मद्वारा क्रियाश्रये कारके, यथा गेहे स्थाल्यामन्नं पचतीत्यादौ गेहस्य कर्तृद्वारा, स्थाल्याश्च कर्म्मद्वारा, परम्परया पाकक्रियाश्रयत्वात्, गेहादेः । "आधारोऽधिकरणमिति" "सप्तम्यधिकरणे इति" पा० ।

अधिकरणं च यस्य गुणादेर्यो धर्म्मी स एव। यथा गुणकर्मजातीनां द्रव्यम्, द्रव्यस्य च संयोगादिसम्बन्धेन द्रव्यान्तरं, तत्राधिकस्यैवाधिकरणत्वं यथा कुण्डादेर्बदरादीनामधिकरणत्वम् स्कन्धादेर्घटादीनां, न तु वैपरीत्ये। द्रव्यादिषु गुणादेरेव, समवायेन तादात्म्येन वा मतभेदेन अधिकरणत्वं नतु गुणादीनां द्रव्याधिकरणत्वमित्येव मन्तव्यम्। क्रियते निर्णयार्थं विचारोऽस्मिन्। पूर्व्वोत्तरमीमांसाशास्त्रप्रसिद्धे एकार्थप्रतिपादके विषयसंशयपूर्व्वपक्षसिद्धान्तनिर्णयात्मकपञ्चाङ्गबोधकवाक्यसमुदाये न्याये। तथा हि "विषयोविषयश्चैव पूर्व्वपक्षस्तथोत्तरं निर्णयश्चेति"सिद्धान्तः शास्त्रेऽधिकरणं स्मृतमिति" मीमांसा। तत्र विचारार्हं वाक्यं विषयः, तस्यार्थविषये विषयः इदमित्थं न वेति विकल्पः। तत्र सन्दिह्यमानयोः पक्षयोः असत्पक्षे युक्तिप्रदर्शनवाक्यं पूर्व्वपक्षवाक्यं, पूर्वपक्षोक्तां युक्तिं खण्डयित्वा सत्पक्षे युक्तिप्रदर्शनवाक्यम् सिद्धान्तः। तत्तत्वाद्यभिप्रायेण सिद्धान्तसिद्धार्थोपसंहारकं वाक्यं निर्णायकवाक्यमिति यथा "स्वाध्यायोऽध्येतव्य" इत्यादिवाक्यं विचारार्हत्वेन विषयः। अत्राध्ययनमक्षरग्रहणमात्रम्? अर्थग्रहणपर्य्यन्ताध्ययनं? वेति संशयः। तत्र अक्षरग्रहणमात्रमध्ययनमिति पूर्व्वपक्षः। अर्थज्ञानसहिताक्षरग्रहणमिति सिद्धान्तः। तेन विधिवाक्यस्य सार्थवेदाध्ययनमेव फलितोऽर्थ इति निर्णय इत्थं तत्प्रतिपादकावयवपञ्चात्मकोन्यायोऽत्रावसीयते। एवमन्यदप्युदाहार्य्यम्। उत्तरमीमांसायामपि एतानि यथायथं योज्यानि विशेषस्तयं वेदान्ते पञ्चावयवा अन्यविधा यथोक्तं माधवाचार्य्येण। "तत्रैकैकमधिकरणं पञ्चावयवं विषयः सन्देहः सङ्गतिः पूर्व्वपक्षः सिद्धान्तश्चेति पञ्चावयवा इति" सङ्गतिश्च "शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा। शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरुह्यतां" मित्यनेन सङ्गतिस्त्रैविध्यं तेनैव दर्शितं तद्विवरणं सङ्गतिशब्दे वक्ष्यते। तत्र वेदान्ताधिकरणं यथा "अथातो ब्रह्मजिज्ञासेति प्रथमाधिकरणम् "अविचार्य्यं विचार्य्यं वा ब्रह्माध्यासानिरूपणात्। असन्देहाफलत्वाभ्यां न विचारं तदर्हति। अध्यासोऽहंबुद्धिसिद्धोऽसङ्गं ब्रह्म श्रुतीरितम् सन्देहान्मुक्तिभावाच्च विचार्य्यं ब्रह्म वेदत" इति माधवः। व्याख्यातञ्चैतत् तेनैव यथा "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यत्र आत्मदर्शनं फलमुद्दिश्य तत्साधनत्वेन श्रवणं विधीयते। श्रवणं नाम वेदान्तवाक्यानां ब्रह्मणि तात्पर्य्यं निर्णेतुमनुकूलोन्यायविचारः तदेतद्विचारविधायकं वाक्यं विषयः। न चायं विषयः श्लोकयोर्न संगृहीतः, सन्देहसंग्रहेणैवार्थात् तत् संग्रहप्रतीतेः ब्रह्मविचारात्मकन्यायनिर्णयात्मकशास्त्रमनारम्भणीयमारम्भणीयं वेति सन्देहः। पूर्वोत्तरपक्षयुक्तिद्वयं सर्वत्र सन्देहबीजमुन्नेयम्। तत्रानारभ्यमिति तावत्प्राप्तं विषयप्रयोजनयोरभावात्। संदिग्धं हि विचारविषयोभवति ब्रह्म त्वसन्दिग्धं तथा हि तत् किं ब्रह्माकारेण सन्दिह्येत? आत्माकारेण? वा, नाद्यः "सत्यं ज्ञानमनन्तं ब्रह्मेति"वाक्येन ब्रह्माकारस्य निश्चयात्। न द्वितीयः अहंप्रत्ययेनात्माकारस्य निश्चयात्। अध्यासात्मविषयत्वेन भ्रान्तोऽयं प्रत्यय इति चेत् न अध्यासानिरूपणात् तमःप्रकाशवद्विरुद्धस्वभावयोर्जडाजडयोर्देहात्मनोः शुक्तिरजतवदन्योन्यतादात्म्याध्यासेन निरूपयितुं शक्यते। तस्माद्भ्रान्ताभ्यां श्रुत्यहंप्रत्ययाभ्यां निश्चितस्यासंदिग्धत्वाच्च विचारस्य विषयोऽस्ति। नापि प्रयोजनं पश्यामः। उक्तप्रकारेण ब्रह्मात्मनिश्चयेऽपि मुक्त्यदर्शनात् तस्माद्ब्रह्म न विचारमर्हति अतः शास्त्रमनारम्भणीयमिति पूर्वपक्षः। अत्रोच्यते। शास्त्रमारम्भणीयं विषयप्रयोजनसद्भावात् श्रुत्यहंप्रत्यययोः सन्दिग्धं ब्रह्मात्मवस्तु। "अयमात्मा ब्रह्मेति" श्रुतिरसङ्गं ब्रह्मात्मत्वेनोपदिशति। अहंमनुष्यइत्यादाहंबुद्धिर्देहादितादात्म्याध्यासेनात्मानं गृह्णाति, अध्यासस्य दुर्निरूपत्वमलङ्काराय, तस्मात् संदिग्धं वस्तु विषयः तन्निश्चयेन मुक्तिलक्षणं प्रयोजनं श्रुत्या, विद्वदनुभवेन च सिद्धम्। तस्माद्वेदान्तवाक्यविचारमुखेन ब्रह्मणो विचारार्हत्वाच्छास्त्रमारम्भणीयमिति सिद्धम् इति"। अभेदान्वयिपदार्थबोधकतुल्यविभक्तिकशब्दे च। "समानाधिकरणस्तत्पुरुषः कर्मधारय"इति पा०। समानाधिकरणः अभेदान्वयिपदार्थबोधकतुल्यविभक्तिकपदघटितस्तत्पुरुषः कर्मधारय इत्यर्थः "तादृशपदघटितत्वेनान्यपदार्थत्वे समानाधिकरणबहुव्रीहिः पीतमम्बरं यस्येति वाक्ये पीताम्बर इत्यादि। अभेदान्वयिपदार्थबोधकाभिन्नपदघटितत्वे व्यधिकरणबहुव्रीहिरिति यथा पद्मं नाभौ यस्येति वाक्ये पद्मनाभः। युक्त्युक्तेषु द्वात्रिंशत्तन्त्रयुक्तिषु तन्त्रयुक्तिभेदे च तन्त्रयुक्तिशब्दे तद्विवरणम्।

**अधिकरणविचाल** पु० अधिकरणस्य विचालः अन्यथाकरणं वि—चल णिच् घञ् इत०। द्रव्यस्य अवस्थान्तरकरणेन संख्यान्तरकरणे, विचालो नाम यदेकमनेकं क्रियते अनेकं वैकं क्रियते इति। एकस्य राशेः पञ्चधा विभागे, पञ्चात्मकस्य वा एकधा विभागे च अधिकरणस्य संख्याया विचालः। "अधिकरणविचाले चेति" पा०।

**अधिकरणिक** पु॰ अधिकरणम् धर्म्माधिकरणम् आश्रयतयाऽस्त्यस्य ठन्। विचारकरणाय धर्म्माधिकरणमण्डपे नियुक्ते प्राड्विवाकादौ। तत्र नियुक्तः ठक्। आधिकरणिकोऽप्यत्र पु॰।

**अधिकर्म्म(न्)** अव्य॰कर्म्मणि विभक्त्यर्थेऽव्ययी॰वा अच्समा॰। कर्म्माधिकृत्येत्यर्थे। अधिकं कर्म्म प्रा॰स॰। अधिककर्म्मणि। न॰त॰। अधिककर्म्मयुक्ते त्रि॰।

**अधिकर्म्मकर** त्रि॰ अधिकं कर्म्म तत्करोति कृ—आनुलोम्यादौ ट। शुश्रूषकभेदे दासभेदे। क्विप् अधिकर्म्मकृदप्यत्र त्रि॰।

**अधिकर्म्मकृत** त्रि॰ अधिकं कर्म अधिकर्म तत् कृतं येन निष्ठान्तस्य परनि॰। "सर्व्वेष्वधिकृतो यः स्यात् कुटुम्बस्य तथोपरि। सोऽधिकर्मकृतो ज्ञेय" इति स्मृत्युक्ते शुश्रूषकभेदे।

**अधिकर्म्मिक** पु॰ अधिकृत्य हट्टं कर्मणेऽलम् अधिकर्म—ठन्। हट्टाध्यक्षे, हट्टस्थवणिग्भ्यः शुल्कादानकर्म्मणि नियुक्ते।

**अधिकाङ्ग** न॰ अधिकोऽङ्गात्। वर्मधरयोर्भिर्हृदयमध्ये वर्मदार्ढ्यार्थं बद्धपट्टिकादौ। ब॰। अधिकाङ्गवति त्रि॰। "अजाविघातने चैव अधिकाङ्गः प्रजायते" इति शाता॰।

**अधिकार** पु॰ अधि+कृ—घञ्। आरम्भे, यथेष्ट क्रयविक्रयादिकर्तृत्वसम्पादके स्वामित्वे, "अधिकारः फले स्वाम्यमधिकारी प्रभुर्भवेदिति" मीमांसोक्ते विहितकर्म्मफलस्वामित्वे, विनियोक्तृपुरुषस्य सम्बन्धे, यथा याजनादिकर्म्मणि ब्राह्मणादेः, राज्ञः प्रजापालनादौ, वैश्यस्य कृष्यादौ, शूद्रस्य द्विजसेवायाम्, "नैमित्तिकोऽयं प्रायश्चित्ताधिकार" इति मिताक्षरा। स्वामित्वे—"सर्व्वं स्युरधिकारिण" इति स्मृतिः। तत्र च वैदिकादिकर्मसु कर्त्तव्यताज्ञानाधीनप्रवृत्तिहेतुरधिकारः। यथा याजनादौ ब्राह्मणस्येत्यादि। शूद्रस्य नाध्ययनादिष्वधिकारः यथोक्तं "निषेकादिश्मशानान्तो यस्य वेदोदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिन्ज्ञेयो नान्यस्य कस्यचित्" मनुना। न केवलम् अध्ययने शूद्राणामधिकारः यागादावप्यनधिकारः यथोक्तं जैमिनीयसूत्रभाष्यादौ। "चातुर्वर्ण्यमविशेषात्" इत्याशङ्क्य "निर्द्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेय" इति। "वाशब्दः पक्षं व्यावर्त्तयति, "त्रयाणाम्" अधिकारः स्यात् कुतः? अग्न्याधेये निर्देशात् अग्न्याधेये त्रयाणां निर्द्देशो भवति, "वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति शूद्रस्य आधाने श्रुतिर्नास्ति इत्यनग्निः शूद्रः असमर्थोऽग्निहोत्रादि निर्वर्त्तयितुम्। तस्मात् "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्येवमादिषु शूद्रस्य प्रापिका श्रुतिर्नास्ति। ब्राह्मणादीन् एवाधिकृत्य सा प्रवर्त्तते, ते हि समर्था अग्निमत्त्वात्, आहवनीयादयो न शूद्रस्य, अविधानात्, संस्कारशब्दत्वाच्च आहवनीयादीनाम्। तस्मात् अनधिकृतोऽग्निहोत्रादिषु शूद्रः इत्यात्रेयः मन्यते स्म" इति भा॰। तथा कर्मप्रतिपादक सर्वशास्त्रविहितकर्मसु मनुष्याणामेवाधिकारः न तिरश्चां न वा देवादीनां यथोक्तं तत्रैव "फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्" इत्याशङ्क्य "कर्त्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते" इति सू॰ "वाशब्दः पक्षं व्यावर्त्तयति। न चैतदस्ति तिर्य्यगादीनामपि अधिकारः इति। कस्य तर्हि?। यः समर्थः कृत्स्नं कर्म अभिनिर्वर्त्तयितुम्। न चैते, शक्नुवन्ति तिर्य्यगादयः कृत्स्नं कर्म्माभिनिर्वर्त्तयितुम्, तस्मात् एषां न सुखस्याभ्युपायः कर्म, कथं यो न शक्नोति कर्त्तुम्, सोऽभ्युपायः स्यात्? इति। न देवानां, देवतान्तराभावात्" न हि आत्मानम् उद्दिश्य त्यागः सम्भवति, त्याग एवासौ न स्यात्, न ऋषीणाम्, आर्षेयाभावात् न भृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति, न चैषां सामर्थ्यं प्रत्यक्षम्। "अपि च तिर्य्यञ्चो न कालान्तरफलेन अर्थिनः, आसन्नं हि कामयन्ते। "ननु च उक्तं, कालान्तरफलार्थिनः तिरश्चः पश्यामः, शुनः श्येनांचतुर्द्दश्याम् अष्टम्यां च उपवसतः" इति उच्यते न जन्मान्तरफलार्थिन उपवसन्ति। 'कथं' अवगम्यते? वेदाध्ययनाभावात्, ये वेदमधीयते ते एतद्विदुः "इदं कर्म कृत्वा, इदं फलमत्र प्राप्नोति इति" न चैते वेदमधीयते, नापि स्मृतिशास्त्राणि, नाप्यन्येभ्यः अवगच्छन्ति, तस्मात् न विदन्ति धर्मम्। अविद्वांसः कथम् अनुतिष्ठेयुः, तस्मात् न धर्म्माय उपवसन्ति इति। किमर्थंच तर्ह्येषाम् उपवासः?। उच्यते, रोगात् अन्नाचिरेषाम्। कथं पुनर्नियते काले रोगो भवति?। उच्यते नियतकाला अपि रोगा भवन्ति यथा तृतीयकचातुर्थकाचेति। तस्मात् मनुष्याणाम् अधिकारः इति। न च तिरश्चां द्रव्यपरिग्रहः, न हि एते द्रव्यं स्वेच्छया उपयुञ्जाना दृश्यन्ते, तस्मात् अनीशाना धनस्य। यत्तु, देवग्रामो हस्तिग्रामः इति, उपचारमात्रं तत्। तस्मात् अपि न तिरश्चाम् अधिकारः इति। यानि पुनर्लिङ्गानि, "देवा वै सत्रमासत" इत्येवमादीनि, अर्थवादाः ते विधिप्ररोचनार्थाः। विद्यते हि विधिरन्यः तेषु सर्वेषु,

न च विधेर्विधिनैकवाक्यभावो भवति, वचनव्यक्तिभेदात्। स्तुतिस्तु सा, इत्थं नाम सत्राणि आसितव्यानि, यत् शतशत्या अपि आसते देवाः, आसन्नचेतना अपि तिर्यञ्चः, अचेतना अपि वनस्पतयः, किमङ्ग पुनर्विद्वांसो मनुष्या" इति भा०। ब्रह्मविद्यायान्तु सर्वेषां देवादीनामधिकार इति "तदुपर्य्यपि बादरायणः सम्भवात्" इति शा०सूत्रेण व्यवस्थापितं, व्याख्यातञ्चैतत् शाङ्कराचार्य्येण यथा "बाढ़ं मनुष्यानधिकरोतु शास्त्रं न तु मनुष्यानेवेतीह ब्रह्मविज्ञाने नियमोऽस्ति तेषां मनुष्याणामुपरिष्टात् ये देवादयस्तान् अधिकरोति शास्त्रमिति बादरायण आचार्य्यो मन्यते कस्मात्? सम्भवात्। सम्भवति हि तेषामर्थित्वाद्यधिकारकारणम्। तत्रार्थित्वं तावत् मोक्षविषयं देवादीनामपि, सम्भवति विकारविषयविभूत्यनित्यतालोचनादिनिमित्तम्। तथा सामर्थ्यमपि तेषां सम्भवति मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात्। नच तेषां कश्चित् प्रतिषेधोऽस्ति। नचोपनयनादिशास्त्रेणैषामधिकारो निवर्त्तितः उपनयनस्य वेदाध्ययनार्थत्वात् तेषाञ्च स्वयंप्रतिभातवेदत्वात्। अपि चैषां विद्याग्रहणार्थं ब्रह्मचर्य्यादि दर्शयति "एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवास" "भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो! ब्रह्मेत्यादि"। यदपि कर्म्मस्वनधिकारकारणमुक्तम्, न देवानां, देवतान्तराभावात्। न ऋषीणामार्षेयान्तराभावादिति। न तद्विद्यास्वस्ति न हीन्द्रादीनां विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किञ्चित् कृत्यमस्ति न च भृग्वादीनां भृग्वादिसगोत्रतया। तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्य्येत? इति"। ततश्च विद्वत्त्वकर्मफलार्थित्व–तत्तत्कर्मकरणसमर्थत्वापर्य्युदस्तत्वानि अधिकारप्रयोजकानीति सिद्धम् तत्रापि विधानेन सर्वकर्मत्यागरूपे सन्न्यासे विप्रस्यैवाधिकार इति सर्वशादिसम्मतम् द्विजमात्राणामधिकार इति केषाञ्चिन्मतम्। अधिकमाकरे दृश्यम्। क्वचिच्चाधिकृतस्याधिकारः। यथा दर्शाद्यधिकृतस्य प्रयाजादिष्वधिकारः "प्रधानाधिकारो अङ्गाधिकारी भवतीति" न्यायात्। "ताम्बूलाधिकारो दत्त इति" हितो०। "हृताधिकारां मलिनामिति" स्मृतिः। कर्म्मणि घञ्। "कर्त्तव्ये" "स्वाधिकारे प्रमत्त" इति मेघ०। प्रकरणे, व्याकरणशास्त्रे पूर्व्वसूत्रोपात्तपदादेरुत्तरत्र सूत्रेषु अनुवर्त्तने। "अधिकारोऽयम् आ पञ्चमाध्यायसमाप्तेरिति" सि०कौ०। तत्राधिकारश्च प्रत्ययादिकम्माद्यर्थसुत्तरोत्तरसूत्रेषु पूर्व्वसूत्रोपात्तशब्दस्यानुवर्त्तनम्। यथा "प्रत्ययः, परश्च" इति सूत्रोपात्तप्रत्ययपरशब्दयोः आ पञ्चमाध्यायसमाप्तेः सर्व्वत्र सूत्रेषु अनुवर्त्तनम्। स चाधिकारः त्रिविधः "सिंहावलोकितं चैव मण्डूकप्लुतमेव च। गङ्गाप्रवाहवच्चापि अधिकारस्त्रिधा मत" इत्युक्तभेदत्रयात्। तदुदाहरणन्तु व्याकरणेऽवगमग्रम्। नियोज्यतया विषयीकरणे, "सर्व्वाधिकारं शास्त्रमिति" जै०सू०। तदभिप्रायेण "बाढं मनुष्यानधिकरोतु शास्त्र"मिति मनुष्याधिकारत्वाच्छास्त्रस्येति" च शा०भा०। सर्व्वमधिकरोति कर्म्मण्युपपदे अण् एवमेव मनुष्याधिकारत्वादित्यत्रापि

**अधिकारविधि** पु० अधिकारे फलस्वाम्ये विधिर्विधानम्। मीमांसकोक्ते विधिभेदे कर्मजन्यफलभोक्तृताज्ञापके विधौ यथा स्वर्गकामो यजेत इत्यनेन यागजन्यफलभोक्ता स्वर्गकामीति ज्ञाप्यते। तत्र नियोज्यप्रवर्त्तनाविधिः अधिकारः यथा "राजा राजसूयेन यजेतेति" तत्र राजसूये राज्ञ एव नियोज्यतया तत्र प्रवर्त्तनात्तस्य तथात्वम् स्वस्वकर्मणि नियोगे च।

**अधिकारिता** स्त्री अधिकारिणो भावः तल्। विद्वत्त्वफलार्थित्वकर्मकरणशक्तिमत्त्वापर्य्युदस्तत्वप्रयोज्ये अधिकारे "भार्य्यापुत्रविहीनस्य–नास्ति यज्ञेऽधिकारितेति" स्मृतिः। भावार्थे त्व। अधिकारित्वम् अत्रैवार्थे न०।

**अधिकारिन्** त्रि० अधिकरोति अधि+कृ–णिनि। स्वामिनि विहितकर्मफलभोक्तरि, शास्त्रेण कर्त्तव्यतोपदेशेन नियोजिते, कामनाविषयफल-तदुपायोपदेशेन प्रवर्त्तिते च स्त्रियां ङीप्। वेदान्तमतसिद्धे अनुबन्धचतुष्टयमध्ये अनुबन्धभेदे वेदान्तसारे वेदान्तशास्त्रालोचनहेतुभूतानुबन्धचतुष्टयनिरूपणाय "अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थः इह जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्ज्जनपुरस्सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्म्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाते"त्युक्तम्। स चाधिकारी उत्तममध्यमाधमभेदेन त्रिविधः "अधिकारित्रैविध्यान्न नियम" इति "अधिकारिभेदान्न नियम"इति च सांख्यसूत्रभ्यां तयोक्तेः। तत्र उत्तमाधिकारिणः विधानेन विहितसर्वकर्मत्यागपूर्व्वकं निराकारब्रह्मध्यानेऽधिकारः, मध्यमाधिकारिणः विहितवर्णाश्रमादि कर्म्म करणपूर्व्वकं सोपाधिब्रह्मोपासने, अधमस्य तु वर्णाश्रमविहितकर्म्म विधानपूर्व्वकं साकारब्रह्मोपा-

मने “द्वे मन्त्रात्ते तु सञ्जन्ते ब्रह्मणोरूपकल्पने” इत्युक्तेः । अतएवोक्तम् “प्रशान्तचित्ताय जितेन्द्रियाय प्रक्षीणदोषाय यथोक्तकारिणे—प्रदेयमेतत् सततं मुमुक्षवे” इति । अत्र यथोक्तकारिणे इत्यनेन प्राक् ज्ञानोत्पत्तेः वर्णाश्रमविहितं कर्म्मानुष्ठेयमेवेत्युक्तं शा० सूत्रकृताऽपि “विहितत्वादाश्रमकर्म्मापि” इत्युक्तम् गीतायामपि “आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते” इत्यनेन आरुरुक्षोः यथोक्तकर्म्माधिकारः उक्तः “कषाये कर्म्मभिः पक्वे ततोज्ञानं प्रजायते” इत्यनेन कषायशब्द-वाच्यचित्तदोषक्षयार्थं कर्म्मावश्यकतेत्युक्तम् । “द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव चेति” श्रुतावप्यधिकारिभेदात् निराकारसोपाधिकयोः द्वयोर्ब्रह्मणोर्वेद्यतोक्ता । गीतायामपि “लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ! ज्ञानयोगेन सांख्यानां, कर्म्मयोगेन योगिनामिति” अधिकारिभेदात् ज्ञानकर्म्मणोरधिकार इत्युक्तम् । “सम्यक् संसाधनं कर्म्म कर्त्तव्यमधिकारिणा । निष्कामेण सदा पार्थ ! काम्यञ्च कामान्वितेन चेति” भवि०पु० । “अधिकारिणाऽर्थिना विदुषा समर्थेनेति” रघु० तेन विद्वत्त्वं तत्तत्कर्म्मजन्यफलार्थित्वम् तत्तत्कर्म्मकरणयोग्यत्वम् अपर्य्युदस्तत्वञ्च अधिकारिताप्रयोजकम् । तत्र फलार्थित्वञ्च सति कामे एव, मुमुक्षुत्वे तु न फलार्थित्वावश्यकतेति भेदः । मार्कण्डेयपुराणे रुचिवाक्येन “पितृगणस्ते दिवि ये च मूर्त्ताः स्वधाभुजः काम्यफलाभिसन्धौ । प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेष्विति” अनेन फलार्थिनं प्रति तत्तत्फलदातृत्वं, तदनर्थिनं मुमुक्षुं प्रति मुक्तिदातृत्वमिति स्पष्टमुक्तम् एवं देवतानामप्यधिकारिभेदेन फलदातृत्वम् । अनभिसंहितेषु अनुद्दिष्टेषु फलेष्वित्यर्थः । अधिकारोऽस्त्यस्य इनि । स्वामित्ववति “सर्वे स्वरधिकारिण” इति स्मृतिः स्त्रियां ङीप् । “कृतान्त देवी वचनाधिकारिणीति नैष० ।

**अधिकार्थवचन** न० अधिकार्थस्य स्तुतिनिन्दाभ्यामारोपितस्य वस्तुधर्म्मादतिरिक्तस्य गुणस्य वचनम् । स्तुत्यर्थवादे, निन्दार्थवादे च । यथा वातच्छेद्यं तृणमित्यत्र दुर्बलत्वेन निन्दा, काकपेया नदीत्यत्र च पूर्णजलत्वेन स्तुतिः गम्यते “कृत्यैरधिकार्थवचने” इति पा० ।

**अधिकाम** पु० अधिकः कामः । अत्यन्ताभिलाषे । ब० । तद्वति त्रि० । कामे विभक्त्यर्थे अव्य० । काममधिकृत्येत्यर्थे अव्य० ।

**अधिकृच्छ्र** पु० अधिकं कृच्छ्रं कष्टं साधनतयाऽस्त्यस्य अच् । “विल्वैरामलकैर्वापि कपित्थैरथवा शुभैः । मासेन लोकेऽधिकृच्छ्रः कथ्यते द्विजसत्तमैः” इति (ब्रह्मपु०) उक्ते माससाध्ये व्रतभेदे । प्रा०स० । अधिककष्टे न० । तद्वति त्रि० ।

**अधिकृत** पु० अधि+कृ–क्त । आयव्ययाद्यवेक्षके, अध्यक्षे कर्म्मजन्यफलसम्बन्धिनि नियुक्ते, स्वामित्ववति च त्रि० । “महीपतीनां पृथगर्हणार्थं समादिदेशाधिकृतानधिश्रीरिति” रघुः ।

**अधिकृति** स्त्री अधि+कृ–क्तिन् । अधिकारे । [आरोहणे ।

**अधिक्रम** पु० अधि+क्रम–भावे घञ् अमन्तत्वान्न वृद्धिः ।

**अधिक्षित्** त्रि० अधि+क्षि भावे कर्त्तरि वा क्विप्–तुक् च । परिक्षये, तत्कारिणि च । “विशामासामभयानामधिक्षितम्” ऋ० १०, ९२, २४ ।

**अधिक्षिप्त** त्रि० अधि+क्षिप–क्त । स्थापिते, निन्दिते, कृताधिक्षेपे, प्रेरिते, तिरस्कृते च ।

**अधिक्षेप** पु० अधि+क्षिप–भावे घञ् । तिरस्कारे, स्थापने, प्रेरणे च ।

**अधिगत** त्रि० अधि+गम कर्म्मणि–क्त । प्राप्ते, ज्ञाते च । “अधिगतं विधिवत् यदपालयदिति” रघुः “अधिगतसकलकलाकलापकमिति” काद० । अधिगताखिलवेदार्थ” इति वे०सा० ।

**अधिगम** पु० अधि+गम–घञ् । ज्ञाने, प्राप्तौ, स्वीकारे च । “अध्यात्मयोगाधिगमेनेति” गीता । निध्यादेः प्राप्तौ च । “स्वामी ऋक्थक्रयसंविभागपरिग्रहाधिगमेष्विति” गौत० । “अधिगमो निध्यादेः प्राप्तिरिति” मिता० ।

**अधिगव** अव्य० गवि विभक्त्यर्थे अव्ययी० वेदे अच् समा० । गवीत्यर्थे “स्वादीयो यदधिगवं क्षीरमिति” वेदः ।

**अधिगुण** पु० अधिको गुणः प्रा०स० । अतिशयितविनयादिगुणे । ब० । तद्वति त्रि० । “याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा” इति नीति० । गुणे–विभक्त्यर्थे अव्ययी० । गुणमधिकृत्येत्यर्थे अव्य० । अधिगतो गुणो येन । ज्याधिरूढे धनुषि न० ।

**अधिजिह्व** पु० अधिका जिह्वा यस्य । द्विजिह्वे सर्पे तस्य द्विजिह्वत्वञ्च अमृतास्वादाशया कुशविलेहनात् । यथोक्तं भा०आ०प० । “यत्रैतदमृतञ्चापि स्थापितं कुशसंस्तरे । तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतञ्च तत् । सोमस्थानमिदञ्चेति दर्भांस्ते लिलिहुस्तदा । ततो द्विधाकृता जिह्वा सर्पाणां तेन कर्म्मणा । अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः । एवं तदमृतं तेन हृतमाहृतमेव च । द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना” इति ।

**अधिजिह्विका** स्त्री जिह्वेव इवार्थे कन् अधिरूढ़ा जिह्विका वा । (आल्जिभ) उपजिह्वायाम् ।

**अधिज्य** न० अध्यारूढ़ा ज्या यत्र प्रा०ब०, अधिगतं ज्यां वा अत्या०स० । आरोपितगुणके धनुषि "त्वयि चाधिज्यकार्मुके" इति शकु० ।

**अधिज्योतिष** अव्य० ज्योतिषि विभक्त्यर्थे अव्ययी० अच् समा० । सूर्य्यतारकादिज्योतींष्यधिकृत्येत्यर्थे ।

**अधित्यका** स्त्री अधि+त्यकन् । पर्वतस्योपरिभूमौ । "आरूढ़' स्थलमधित्यकेति" सि०कौ० । "स्थाणुं तपस्यन्तमधित्यकायामिति" कुमा० । "अधित्यकायामिव धातुमय्यामिति" रघुः ।

**अधिदन्त** पु० अध्यारूढ़ो दन्तम् अत्या०स० । दन्तोपरि जातदन्ते (गजदाँत) । प्रा०ब०। तद्वति त्रि०। दन्ते विभक्त्यर्थे अव्ययी० । दन्तमधिकृत्येत्यर्थे अव्य० ।

**अधिदेव** पु० अधिकृतोदेवः येन गुणातिशयात् प्रा०ब० । सर्व्वदेवाधिपे परमेश्वरे । देवे विभक्त्यर्थे अव्ययी० । देवमधिकृत्येत्यर्थे अव्य० । अधिदेवं भवः ठञ् । अनुशतिका० द्विपदवृद्धिः । आधिदैविकं देवेभ्यो जाते दुःखादौ त्रि० ।

**अधिदेवता** स्त्री अधिष्ठात्री देवता शा०त० । अधिष्ठात्र्यां देवतायाम् । देवतानाम् अधिष्ठातृत्वञ्च सन्निधानमात्रेण तत्तत्पदार्थानां तत्तत्कर्म्मसु नियन्तृत्वरूपम् । तच्च साक्षात् परमेश्वरस्यैव यथोक्तम् वृ०उ० अन्तर्यामिब्राह्मणे । "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ योऽप्सु तिष्ठन्नद्भ्योऽन्तरो, यमापो न विदुर्यस्यापः शरीरं, योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद, यस्याग्निः शरीरं, योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो, यमन्तरिक्षं न वेद यस्यान्तरिक्षं शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यो वायौ तिष्ठन्वायोरन्तरो, यं वायुर्न वेद, यस्य वायुः शरीरं, यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यो दिवि तिष्ठन्दिवोऽन्तरो, यं द्यौर्न वेद, यस्य द्यौः शरीरं, यो दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । य आदित्ये तिष्ठन्नादित्यादन्तरो, यमादित्यो न वेद, यस्यादित्यः शरीरं, य आदित्यमन्तरो, यमयत्येष त आत्मान्तर्याम्यमृतः । यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो, यं दिशो न विदुर्यस्य दिशः शरीरं, यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यश्चन्द्रतारके तिष्ठंश्चन्द्रतारकादन्तरो, यञ्चन्द्रतारकं न वेद, यस्य चन्द्रतारकं शरीरं, यश्चन्द्रतारकमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । य आकाशे तिष्ठन्नाकाशादन्तरो, यमाकाशो न वेद, यस्याकाशः शरीरं, य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यस्तमसि तिष्ठंस्तमसोऽन्तरो, यं तमो न वेद, यस्य तमःशरीरं, यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यस्तेजसि तिष्ठंस्तेजसोऽन्तरो, यं तेजो न वेद, यस्य तेजः शरीरं, यस्तेजोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतम् । अथाधिभूतम् यः सर्व्वेषु भूतेषु तिष्ठन्सर्व्वेभ्यो भूतेभ्योऽन्तरो, यं सर्व्वाणि भूतानि न विदुर्यस्य सर्व्वाणि भूतानि शरीरं, यः सर्व्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतम् । अथाध्यात्मम् यः प्राणे तिष्ठन्प्राणादन्तरो, यं प्राणो न वेद, यस्य प्राणः शरीरं, यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यो वाचि तिष्ठन्वाचोऽन्तरो, यं वाङ्न वेद, यस्य वाक् शरीरं, यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो, यं चक्षुर्न वेद, यस्य चक्षुःशरीरं, यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो, यं श्रोत्रं न वेद, यस्य श्रोत्रं शरीरं, यःश्रोत्रमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यो मनसि तिष्ठन्मनसोऽन्तरो, यं मनो न वेद, यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यस्त्वचि तिष्ठंस्त्वचोऽन्तरो, यं त्वङ्न वेद, यस्य त्वक् शरीरं, यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यो विज्ञाने तिष्ठन्विज्ञानादन्तरो, यं विज्ञानं न वेद, यस्य विज्ञानं शरीरं, यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः । यो रेतसि तिष्ठन्रेतसोऽन्तरो, यं रेतो न वेद, यस्य रेतः शरीरं, यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टा,ऽश्रुतः श्रोता,ऽमतो मन्ता,ऽविज्ञातो विज्ञाता, नान्योऽतोऽस्ति द्रष्टा, नान्यतोऽस्ति श्रोता, नान्यतोऽस्ति मन्ता, नान्यतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्त्तम्" इति । तस्यैवांशविशेषेणाविर्भूतानां दिगाद्यभिमानिदेवानामिन्द्रियाधिष्ठातृत्वं यथा "वैकारिकादहङ्काराद्देवा वैकारिका दश । दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः" इति शार० । "शक्तिसामर्थ्याद्विकृतपरमेश्वराद्गुत्पन्नत्वेनाऽहङ्कारस्य तदु-

त्पत्तदेवानाञ्च वैकारिकत्वमिति" राघवभट्टेन व्याख्यातम् । "वैकारिका दिगाद्याश्च चन्द्रैकादश स्मृताः । इन्द्रियाणामधिष्ठातृदेवास्ते परिकीर्त्तिता" इति तद्भुताभियुक्तोक्तिः । तथा च श्रोत्रस्य दिक्, त्वचो वातः, नेत्रस्य अर्कः, रसनायाः वरुणः, घ्राणस्य अश्विनौ, वागिन्द्रियस्य वह्निः, हस्तस्य इन्द्रः, पादस्य उपेन्द्रः, पायोः मित्रः, उपस्थस्य (कः) प्रजापतिः, मनसः चन्द्रः, इत्येते एकादशेन्द्रियाणामधिष्ठातृदेवाः । "ईश्वरं भास्करे विद्यादुमां विद्यान्निशाकरे । स्कन्दमङ्गारके विद्याद्बुधे नारायणं विदुः । गुरौ वेदनिधिं विद्यात् शुक्रे शक्रो विधीयते । शनैश्चरे यमं विद्याद्राहोः कालं तथैव च । चित्रगुप्तोऽधिपः केतोरित्येते ग्रहदेवताः" इति (मत्स्यपुरा०) उक्ता ग्रहाणामधिदेवाः । एतेषां पुनरधिष्ठातृदेवाश्च प्रत्यधिदेवतात्वेन व्यवह्रियन्ते ते च प्रत्यधिदेवताशब्दे दर्शयिष्यन्ते । अधिदेवताप्यत्रैव । "आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवता" इति मत्स्यपु० । "यथाङ्कमूर्त्तेरधिदेवतायतिरिति" भट्टिः । चन्द्राधिदेवता उमा ।

**अधिदैवत** न० अधिष्ठातृ दैवतम् प्रा०स० । अधिदेवताशब्दार्थे "शिवाधिदैवतं ध्यायेत् वह्निप्रत्यधिदैवतमिति" "विचिन्त्यो साधिदैवत"मिति च विष्णुध०पु० । दैवते विभक्त्यर्थे अव्ययीभावः । दैवतमधिकृत्येत्यर्थे अव्य० । "अथाधिदैवतम् आदित्यो वा" इति छन्दो० उ० "इत्यधिदैवतमिति बृ०उ०" । अधिदैवमप्यत्र अव्य० । "अधिदैवं किमुच्यते इति" गीता ।

**अधिनाथ** पु० अधिको नाथः प्रा०स० । अधीश्वरे । "तत्राधिनाथमधिकृत्य दिवस्तथासाविति" नैष० ।

**अधिनाय** पु० अधिनीयते वायुना गन्धाधारसूक्ष्मांशनयनद्वारा तत्तत्स्थानं ह्रियतेऽसौ अधि+नी–घञ् । गन्धे ।

**अधिप** पु० अधिपाति अधि+पा–क । प्रभौ ईश्वरे । "अथ प्रजानामधिपः प्रभाते" इति रघुः । "श्रियः कुरूणामधिपस्येति" भार० ।

**अधिपति** पु० अधिकः पतिः, अधि+पा–डति वा । ईश्वरे स्वामिनि "स वा एष सर्वेषां भूतानामधिपतिरिति" श्रुतिः । "सर्वस्याधिपतिर्हि स" इति मनुः । "ततो भुजङ्गाधिपतेः फणाग्रैरिति" कुमा० । पत्यन्तत्वात् भावादौ यक् आधिपत्यम् । अस्यन्तर्थे न० । "शैलाधिपत्यं स्वयमन्वतिष्ठदिति" कुमा० । सपूर्व्वपदकत्वात् स्त्रियां ङीप् नवान्तादेशः । "विष्टम्भिनीं दिशामधिपत्नीमिति यजु० १४,५,अधिपत्नीं स्वामिनीमिति" दीपः ।

**अधिपा** त्रि० अधिपाति अधि+पा क्विप् अधिपतौ, अधिपालके च "स्वर्यदश्मन्नधिपा उ अन्धोऽभि" ऋ०७,८८,२ ।

**अधिपु(पू)रुष** पु० अधिकः उत्तमः पु(पू)रुषः प्रा०स० । परमेश्वरे । पु(पू)रुषे विभ० अव्ययी० । पु(पू)रुषमधिकृत्येत्यर्थे अव्य० ।  [बहुप्रजायां स्त्री ।

**अधिप्रज** त्रि० अधिका प्रजा यस्य । बहुप्रजायुक्ते । प्रा०स० ।

**अधिभू** पु० अभिभवति स्वामीभवति स्वामर्थ्येनाधिः अधि+भू–क्विप् । प्रभौ ।

**अधिभूत** अव्य० भूतेषु विभ० अव्ययी० । भूतान्यधिकृत्येत्यर्थे "अधिभूतं किमुच्यत" इत्यर्जुनप्रश्ने "अधिभूतं क्षरोभाव" इति भगवदुत्तरम् इति गीता । "भूतं प्राणिमात्रमधिकृत्य भवतीत्यधिभूतमुच्यते" इति श्रीधरः । अधिभूतं भवः अनुशतिका० द्विपदवृद्धिः आधिभौतिकम् । भूतान्यधिकृत्य जाते दुःखादौ त्रि० ।

**अधिभोजन** न० अधिकमत्यन्तं भोजनम् प्रा०स० । अत्यन्तभोजने । भोजनं निरुक्ते धननामसु पठितम् अधिकं धनं मूल्यं यस्य । अतिमूल्यलभ्ये वस्तुनि त्रि० । "दश वस्त्राधिभोजना इति ऋ०६,४७,२३ अधिभोजना अधिकं धनं मूल्यं येषां तादृशानि दश वस्त्राणीति भाष्यम् ।

**अधिमन्थ** पु० अधिकं मथ्यतेऽनेन अधि+मन्थ–करणे घञ् । "उत्पाद्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा । शिरसोऽर्द्धं तु तं विद्यादधिमन्थं स्वलक्षणैः" इत्युक्ते अरणिकाष्ठमन्थनावयवभेदे ।

**अधिमांस** न० अधिकं मांसमत्र । "विशीर्णं मृदु बहुलं बहुलप्रकारं स्रावं वा तदधिमांससंज्ञं विद्यादिति" वैद्यकोक्ते रोगभेदे ।

**अधिमांसक** पु० अधिको मांसो यत्र ब० कप् । "हनुस्थे पश्चिमे दन्ते महाशोथो महारुजः । कालास्रावी कफकृतो विज्ञेयः सोऽधिमांसक" इति वैद्यकोक्ते दन्तरोगविशेषे ।

**अधिमात्र** त्रि० अधिका मात्रा यस्य, अधिकं प्रमाणमस्य मात्रच् वा । अधिकप्रमाणे ।

**अधिमास** पु० अधिको रविमासादतिरिक्तः शुक्लप्रतिपदादिदर्शान्तचान्द्रो मासः प्रा०स० । मलमासे "असंक्रान्तमासोऽधिमासो निरुक्त"इतिस्मृत्युक्तो रविसंक्रान्तिवर्जितो मासोऽधिमासः । तथा हि "मीनादिस्थो रविर्येषामारम्भः प्रथमे क्षणे । ते चैत्राद्या" इत्युक्तदिशा मीनस्थे रवौ यस्य चान्द्रमासस्यारम्भः स चैत्रः एवं मेषस्थरव्यारब्धो वैशाख

इत्येवं स्थिते यस्मिन् चान्द्रमासे रवेः राश्यन्तरसंक्रमो न जातः, तस्य तदुत्तरस्य च चान्द्रमासस्य उभयोर्मेषस्थे रवौ स्वारम्भात् उभयोरपि वैशाखता, तत्राद्योऽधिमासः संक्रान्तिहीनत्वात् द्वितीयः शुद्धः इति स्मृतौ प्रसिद्धम् । यथा मलमासतत्त्वे लघुहारीतः ॥ "इन्द्राग्नी यत्र हूयते" इत्युक्ता "तमतिक्रम्य तु रविर्यदा गच्छेत् कथञ्चन । आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः । तस्मिंस्तु प्रकृते मासि कुर्य्यात् श्राद्धं यथाविधि । तथैवाभ्युदयं कार्य्यं नित्यमेकं तु सर्व्वदा" । "यदा तं दर्शान्तमासमतिक्रम्य तत्पूर्व्वमासान्त्यक्षणवर्त्तिराशिस्थः सन् सूर्य्योऽतिवाह्य गच्छेत् मासान्तरे राश्यन्तरसंयोगं गच्छेत्तदाद्योऽतिक्रान्तोमासोमलिम्लुचोज्ञेयः"।ज्योतिषे।"अमावास्याद्वयं यत्र रविसंक्रान्तिवर्जितम् मलमासः स विज्ञेयोविष्णुः स्वपिति कर्कटे" ।"अमावास्याद्वयं अमावास्यान्त्यक्षणद्वयं रविसंक्रान्तिभ्यां क्रियोत्पत्तिरूपोत्तरसंयोगरूपाभ्यां यथाक्रमं वर्जितं तेन दर्शान्त्यक्षणद्वययोरेव क्रियोत्पत्त्युत्तरसंयोगाभ्यां यथाक्रमं संयोगेनाधिमासः । संक्रान्तेरेकक्षणे क्रियोत्पत्तिरपरक्षणे पूर्व्वसंयोगनाशः उत्तरसंयोगोत्पत्तिश्चेति क्षणद्वयवृत्तित्वमिति मीमांसकसिद्धान्तात्" । छन्दोगपरिशिष्टज्योतिःपराशरौ । "रविणा लङ्घितोमासश्चान्द्रः ख्यातोमलिम्लुचः । तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत्" पराशरः । "पक्षद्वयेऽपि संक्रान्तिर्यदि न स्यात् सितासिते । तदा तन्मासविहितमुत्तरे मासि कारयेत्" । अत्र लङ्घनमसंक्रमणञ्च रवेस्तदा भवति यदा तन्मास तत्पूर्व्वमासान्त्यक्षणयोरेकराश्यवस्थितस्य तन्मासानन्तरसंयोगः, न त्वेकराशिस्थितस्य मासव्यापनमात्रं तथात्वे चतुर्द्दश्यामेकराशौ संक्रान्तस्य प्रतिपत्प्रथमक्षणेऽपरराशौ, तत्परराशौ च द्वितीयायां प्रतिपदि वा रवेः संयोगेऽपरस्यापि मलमासता स्यात्"। अतएव ज्योतिषे "अमावास्यापरिच्छिन्नं रविसंक्रान्तिवर्ज्जितम् । मलमासं विजानीयाद्गर्हितं सर्व्वकर्म्मसु । तस्यार्कोदर्शकश्चैकराशौ दर्शद्वयातिगः" । "अत्रैकराशिस्थार्कस्य दर्शद्वयातिगत्वमुक्तम् । एतच्च पूर्व्वापरदर्शितयोर्मासयोः पूर्व्वस्यैव सम्भवति न परस्य" । मलमासकारणन्तु ज्योतिषे । "दिवसस्य हरत्यर्कः षष्टिभागमृतौ सदा । करोत्येकमहश्छेदं तथैवैकञ्च चन्द्रमाः । एवमर्द्धतृतीयानामब्दानामधिमासकम् । ग्रीष्मे जनयतः पूर्व्वं पञ्चाब्दान्ते तु पश्चिमम्" । "तेन दिवसस्य तिथेः षष्टिभागं दण्डमेकं रविर्हरति छेदयति उत्तरे छेदमित्यभिधानात् । ततश्च ऋतौ मासद्वये षष्टिनाडीच्छेदादङ्कस्थितेन्दच्छेदमाकर्षं करोति । एवं चन्द्रोऽपि । एवमित्युत्क्रमेण वर्षे द्वादश तिथ्यात्मककालाकर्षादर्द्धतृतीयानामन्ते अर्द्धं तृतीयं येषां ते तथा । ग्रीष्मे माधवादिषु षट्केषु पूर्व्वं माधवादित्रिकपतितं, पञ्चाब्दान्ते तु पश्चिमं श्रावणादित्रिकपतितं मलमासञ्चन्द्रार्कौ जनयतः"। मिहिरः । "माधवादिषु षट्केषु मासि दर्शद्वयं यदा । द्विराषाढः स विज्ञेयः शेते तु श्रावणेऽच्युतः।"मिथुनोपगतो भानुरमावास्याद्वयं स्पृशेत् । द्विराषाढः स विज्ञेयोविष्णुः स्वपिति कर्कटे" । "अमावास्याद्वयं तदन्त्यक्षणद्वयं स्पृशेत् संयुज्यात् न तन्मध्ये राश्यन्तरसंयोग इत्यर्थः" । "कन्यासिंहकुलीरेषु यदा दर्शद्वयं भवेत् । आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत्" । यद्यपि "यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः । तयैव सर्व्वसंक्रान्तिर्यावच्छेषं न गच्छति" इति "राजमार्त्तण्डवचनात्तुलादिषण्मासे तिथिवृद्ध्यभावाद्वर्षे द्वादशवृद्धिरनुपपन्ना तथापि "मध्ये विषुवतोर्भानुर्यान्यहानि तु वर्द्धयेत् । तैः सम्भूताधिकोमासः पतत्येव त्रयोदशः" इति "छन्दोगपरिशिष्टवाक्ये विषुवतोर्मेषतुलासंक्रान्त्योर्मध्ये मेषादिषण्मास एव तिथिवृद्धिरुक्ता अहर्गणने मेषादिषण्मासे मन्दभुक्त्या सप्तदिनवृद्धिस्तुलादौ शीघ्रभुक्त्या दिनद्वयह्रासः"इति तथा च ज्योतिःशास्त्रम् "मेषादीनामहर्वृन्दं षण्णां सप्ताष्टचन्द्रकम् (१८७) । तुलादीनामष्टसप्तचन्द्रकन्तु(१७८) लिखेत् पृथक्" ।"चन्द्र एकः "अङ्कस्य वामा गतिः" इत्यङ्कविदां समयात् व्युत्क्रमेणाङ्का बोध्याः । तेन दिनवृद्धि ५ क्रमह्रासाभ्यां ६ मेषादिषट्के एव एका० दशतिथिवृद्धिः" । एवञ्च "गतेऽब्दद्वितये सार्द्धे पञ्चपक्षे दिनद्वये । दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः" । इति "राजमार्त्तण्डोक्तः सप्तदशदिनाधिकाष्टमासाधिकवर्षद्वयेऽधिमासः । स च सौरे मासि सप्तदशदिनोत्तरं चान्द्रमासलङ्घनासम्भवात् सायनमानेन ज्ञेयः इति"। सिद्धान्तशिरोमणौ तु ४३२०००००००० कल्पप्रमाणवर्षेषु १५९३३००००० एतन्मिता अधिमासाभवन्तीत्युक्तम् यथा "खखाङ्कता देवनवेषुचन्द्राः कल्पेऽधिमासाः कथिताः सुधीभिरिति" । "अत्रोपपत्तिः प्रकृताकायदविमासास्तेभ्यश्चान्द्रमासा यावद्भिरधिकास्तावन्तोऽधिमासा" इति । तदेवाह । "रवेः कोटिनिघ्नाः कृताऽष्टेन्दुबाणाः" ५१८४००००००० "कुराम्भोधिरामेषवो वर्षनिघ्नाः५३४३३३००००० ।

शशाङ्कमत्र मासाः पृथक् सूर्यमासैर्विहीनास्तु कल्पेऽथवा तेऽधिमासाः इति"॥ इष्टवर्षेऽधिमासानयनं तत्रैवोक्तं यथा "कथितकल्पगतार्कसमागणो रविगुणो गतमाससमन्वितः। खदहनैः (३०) र्गुणितस्तिथिसंयुतः पृथगतोऽधिकमाससमाहतात् (१५९३३००००००)॥ रविदिना (१५५५२००००००००)प्रगताधिकमासकैः क्षतदिनैः सहितो द्युगणो विधोः" इति। अत्र वासना कल्पगताब्दा द्वादशगुणिता रविमासा जातास्ते चैत्रादिगतचान्द्रतुल्यैः सौरैरेव युतास्त्रिंशद्गुणा इष्टमासप्रतिपदादिगततिथितुल्यैः सौरैरेव दिनैर्युताः एवन्ते सौरा जातास्तेभ्यः पृथक् स्थितेभ्योऽधिमासानयनं त्रैराशिकेन, यदि कल्पसौरदिनैः कल्पाधिमासा लभ्यन्ते तदैभिः किमिति फलम् गताधिमासाः। तैर्दिनीकृतैः पृथक् स्थितः सौराहर्गणसहितचान्द्रो भवति यतः सौरचान्द्रान्तरमधिमासदिनान्येव" इति। सूर्यसिद्धान्तेऽप्युक्तम्। "भवन्ति शशिनो मासाः सूर्येन्दुभगणान्तरम्। रविमासोनितास्ते तु शेषाः स्युरधिमासकाः" इति॥ सूर्यचन्द्रभगणयोरन्तरं चन्द्रस्य मासा भवन्ति ते चान्द्रमासा रविमासोनिताः सन्तः शेषा अवशिष्टा ये चान्द्रमासास्तेऽधिकमासा एव भवन्ति नान्ये। अनेन चान्द्रत्वमधिमासानां स्फुटीकृतम्। अत्रोपपत्तिः। त्रिंशत्तिथ्यात्मकस्य रवीन्दुयुतिकालरूपदर्शान्तावधेश्चान्द्रस्य, द्वादशराशिमितेन सूर्येन्द्वन्तरेणैव सिद्धिः कथमन्यथा दर्शान्ते जातस्य मन्दशीघ्रयोः सूर्येन्द्वोर्योगस्य पुनर्दर्शान्ते सम्भवः। द्वादशराश्यन्तरं चैकं भगणान्तरमतो भगणान्तरेण चान्द्रो मासः सिद्धः। सौरमासापेक्षया यदन्तरेण चान्द्रमासानामधिकत्वं त एवाधिमासा इति।

**अधियज्ञः** पु० अधिकृतोयज्ञो यस्मात् प्रा०ब०। परमेश्वरे। "अधियज्ञः कथं? कोऽत्रे"त्यर्जुन प्रश्ने। "अधियज्ञोऽहमेवात्र देहे देहभृतां वर!" इति भगवदुत्तरम् गीतायाम्। "अत्रास्मिन् देहेऽन्तर्यामित्वे न स्थितोऽहमधियज्ञः यज्ञादिकर्मप्रवर्त्तकस्तत्फलदाता चेति" श्रीधरः। यथा च तस्य सर्व्वान्तर्यामित्वं तथा अधिदेवताशब्देऽन्तर्यामिब्राह्मणे पुरस्ताद्दर्शितम्। यज्ञे विभ० अव्ययी०। यज्ञमधिकृत्येत्यर्थे अव्य०। अधियज्ञं ब्रह्म जपेदिति मनुः, यागे विभ०अव्ययी०। अधियागमप्युक्तार्थे अव्य०। अधिकः अधिकाङ्गयागः प्रा०स०। अधिकाङ्गे यागे पु०।

**अधियोग** पु० अधिकोयोगः प्रा०स०। ज्योतिषप्रसिद्ध यात्रिकशुभयोगे। स च गमनसमयलग्ने-तस्माद्वा चतुर्थे, पञ्चमे, सप्तमे, नवमे, दशमे, वा स्वस्तमस्थाने बुधजीवभार्गवाणां मध्ये द्वयोः स्थितौ सत्यां भवति। "योगे क्षेममथाधियोगगमने क्षेमं विपूर्णां वध इति" मुहू०।

**अधियोध** पु० आधिक्येन युध्यति अधि+युध-अच्। अतियोद्धरि। विभ०अव्ययी०। योधे इत्यर्थे अव्य०।

**अधिरथ** अध्यारूढः रथं रथिनम् अत्या०स०। अतिरथे। कर्णपितरि पु०। "विवेशाधिरथोरङ्गं यष्टिप्राणो ह्वयन्निवेति" भा० आदि०। तस्यापत्यम् इञ्। आधिरथिः कर्णे पु०। कर्णपर्व्वणि भूरिप्रयोगोऽस्य।

**अधिराज्** पु० अधिराजते अधि+राज-क्विप्। साम्राज्यवति, नृपे, सम्यङ्नृपे च "प्रायोपविष्टो गङ्गायामनादृत्याधिराट् श्रियमिति" भाग०। अधिकशोभान्विते त्रि०।

**अधिराज** पु० अधिको राजा टच् समा०। अधीश्वरे साम्राज्यवति, नृपे च। "शैलाधिराजतनया न ययौ न तस्थाविति" "हिमालयोनाम नगाधिराज" इति च कुमा०।

**अधिराज्य** न० अधिकं राज्यं प्रा०स०। साम्राज्ये। "अन्यान् पृथिवीपालान् पृथिव्यामधिराज्यभागिति"।

**अधिराष्ट्र** न० अधिकृतं राष्ट्रमत्र प्रा०ब०। राज्ये। विभ० अव्ययी०। राष्ट्रमधिकृत्येत्यर्थे अव्य०।

**अधिरुक्म** त्रि० अधिगतं रुक्ममाभरणं येन प्रा०ब०। अधिगतसुवर्णाभरणे मानवे। अधिरुक्मा विनीयते" इति ऋ० ८,४६,३३, अधिरुक्मा अधिकरुक्माभरणेति" भाष्यम्।

**अधिरूढ** त्रि० अधि+रुह-कर्त्तरि-क्त। उपरिभागे आरोहणकर्त्तरि, अतिवृद्धिमति च। [यत्नेनारोपिते।

**अधिरोपित** त्रि० अधि+रुह-णिच्-पुक् कर्मणि क्त। अति-

**अधिरोहण** न० अधि+रुह भावे-ल्युट्। उपर्य्यारोहणे। घञ्। अधिरोहोऽप्यत्र पु०।

**अधिरोहणी** स्त्री अधिरुह्यतेऽनया अधि+रुह-करणे ल्युट्। (मइ) इति, (सिंड़ि) इति च प्रसिद्धे काष्ठवंशादिनिर्मिते उच्चस्थानारोहणसाधने सोपानद्रव्ये। अधिरोहः साधनत्वेनास्त्यस्याः इनि। अधिरोहिणीत्यप्यत्र इति शब्दकल्पद्रुमः तन्मूलं मृग्यम्। रायमुकुटादिभिः ल्युटैव तत्पदसाधनाच्चास्य इन्यन्तता।

**अधिलोक** अव्य० लोके विभ० अव्ययी०। लोके इत्यर्थे।

**अधिवक्तृ** त्रि० अधि+वच-तृच्। पक्षपातेन वक्तरि। "विश्वाहेन्द्रो अधिवक्ता" इति ऋ० १,१००,१०, अधिवक्ता पक्षपातेन वचनवक्ता इति भा०। स्त्रियां ङीप्।

**अधिवचन** न० अधि+वच-ल्युट्। पक्षपातेन कथने। "अधिकवचनं पक्षपातेन वचन"मिति माधवाचार्य्यः।

**अधिवक्ष** त्रि० अध्याहृतं वक्षं येन प्रा०ब०। उपरिनिहित वक्षे। "यत्रे भिराहृतोऽधिवक्षा बधूरिवेति" ऋ० ८,२ ६,१३, अधिवक्षा उपरिनिहितवक्षेति भा०।

**अधिवाक** पु० अधि-वच-घञ्। पक्षपातेन वचने। "तमिद्धनेषु हितेष्वधिवाकाय हवन्ते" इति ऋ०८,१५,५, "अधिवाकाय पक्षपातवचनायेति" भा०।

**अधिवास** पु० अधि+वस निवासे-घञ्। निवासे "श्रीः कैटभारिहृदयैककृताधिवासेति" देवीमा०। अधि+वास सुरभीकरणे भावे घञ्। सौरभे "ककुद्मिकन्यावक्त्रान्त-र्वासलब्धाधिवासयेति" माघः "अधिवासस्पृहयेव मारुत" इति रघुः। अधिवासयति देवता अनेन अधि+वस-णिच् करणे घञ्। यज्ञारम्भपूर्वदिवसे देवतास्थापनादि-कर्म्मणि। "अधिवासः परेऽहनीति" स्मृतिः "मध्यरात्रेऽधि-वासयेदिति" स्मृत्युक्तेस्तस्य पूर्वेद्युर्मध्यरात्रे कर्त्तव्यता। "आत्ययिकेषु कार्य्येषु सद्यएवाधिवासये"दित्युक्ते र्यागदिनेऽपि क्वचित् कर्त्तव्यता। गन्धमाल्याद्यैः संस्कारे च।

**अधिवासन** न० अधिवासयति स्थापयति देवता अनेन अधि+वस-णिच् ल्युट्। यागपूर्वदिने देवताद्यावाहनपूर्वक-पूजनादिकर्म्मभेदे। अधिवास्यते सुरभीक्रियते अधि+वास सुरभीकरणे भावे ल्युट्। गन्धमाल्यादिभिः सुरभीकरणरूप-संस्कारभेदे तद्द्रव्याणि च "महो गन्धः शिला धान्यं दूर्वा पुष्पं फलं दधि। घृतं स्वस्तिकसिन्दूरं शङ्खकज्जलरोचनाः। सिद्धार्थं काञ्चनं रौप्यं ताम्रचामरदर्पणम्। दीपः प्रश-स्तिपात्रञ्च विज्ञेयमधिवासने" इति कृत्युक्तानि वेद्यानि। "सायं सन्ध्यान्तु कर्त्तव्यं पार्वत्या अधिवासनमिति" पुरा०।

**अधिवासित** त्रि० अधि+वास-सुरभीकरणे कर्म्मणि क्त। सुरभीकृते गन्धमाल्यादिभिः कृतसंस्कारे। अधि+वास-निवासे णिच् कर्म्मणि क्त। कृताधिवासने देवादौ।

**अधिवाहन** न० अधि+वह-णिच्-ल्युट्। उपरि प्रापणे वाहने, च। विभ०अव्ययी०। वाहनं यानमधिकृत्ये-त्यर्थे अव्य०।

**अधिविकर्त्तन** न० अधि+वि+कृत-छेदने ल्युट्। कल्पन-च्छेदने "आशसनं विशासनमथो अधिविकर्त्तनमिति" ऋ० १०,८५,३५।

**अधिविद्य** अव्य० विद्यायां विभक्त्य० अव्ययी०। विद्यामधि-कृत्येत्यर्थे। "अधिविद्यं प्रकाश्यते इति" वाक्यपदीयम्।

**अधिविन्ना** स्त्री अधि+विद-लाभे कर्म्मणि क्त। कृताधि-वेदनायां यस्या उपरि विवाहान्तरं कृतं तस्यां स्त्रियाम् "अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहादिति" मनुः। अधिविन्नस्त्रियै देयमाधिवेदनिकं सममिति" याज्ञ०।

**अधिवेत्तृ** पु० अधि+विद-लाभे कर्त्तरि तृच्। विवाहोत्तरं विवाहान्तरकर्त्तरि।

**अधिवेद** अव्य० वेदे-विभक्त्य०अव्ययी०। वेदमधिकृत्येत्यर्थे। अधि+विद-भावे घञ्। विवाहोत्तरं विवाहान्तरकरणे पु०

**अधिवेदन** न० अधि+विद-लाभे भावे ल्युट्। विवाहोपरि-विवाहान्तरकरणे। तत्र नियुक्तादि ठक्। आधिवेदनिकम् अधिवेदनविषयनियुक्ते तत्रलब्धे च धनादौ त्रि०। "अधिविन्नस्त्रियै देयमाधिवेदनिकं सममिति" याज्ञ०। "आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्त्तितमिति" स्मृतिः। अधिवेदनकालनिमित्ते तु मत्कृतबहुविवाहवादे विस्तरत उक्ते ततएवावसेये।

**अधिवेदनीय** स्त्री अधि+विद-लाभे कर्म्मणि-अनीयर्। यद्विवाहोपरि विवाहान्तरकरणयोग्यं तादृश्यां स्त्रियाम्। कर्म्मणि यत्। अधिवेद्याप्यत्र स्त्री। "बन्ध्याष्टमेऽधिवेद्याब्दे" इति मनुः। [ल्युट्। पाचने।

**अधिश्रपण** न० अधि+श्रा-पाके णिच्-पुक् ह्रस्व भावे

**अधिश्रय** पु०अधि+श्री-पाके भावे अच्। चूल्ल्याद्युपरिस्था-पनरूपे विक्लित्तिहेतुभूते व्यापारे, पाके।

**अधिश्रयण** न० अधि उपरि श्रयणं पाकार्थं स्थापनं श्रीञ्-भावे ल्युट्। चूल्ल्या उपरि स्थापने, तत्पूर्व्वकपाके च। अधिश्रीयते पच्यतेऽत्र, आधारे ल्युट् ङीप्। चूल्ल्याम् (चाका) इति, (चूला), इति च ख्यातायाम् स्त्री।

**अधिश्रयणीय** त्रि०अधिश्रयणाय पाकाय हितम् छ। पाक-साधनपात्रे। अधिश्रयितुमर्हति अधि+श्री-पाके अर्हार्थे कर्म्मणि अनीयर्। पाकार्हे वस्तुनि त्रि०।

**अधिश्रयितवै** अव्य० अधि+श्री-पाके वेदे तुमर्थे तवै। पचनीये "गौरिव दुग्धमधिश्रयितवै ब्रूयादिति" वेदः।

**अधिश्री** त्रि० अधिका श्रीर्यस्य। अधिकशोभान्विते अधिक-सम्पत्तिमति च "इयं महेन्द्रप्रभृतीनधिश्रिय" इति कुमा० "समादिदेशाधिकृतानधिश्रीरिति" रघुः।

**अधिषवण** न० अधिषूयते सोमः यत्र अधि+षु अभिषवे आधारे ल्युट्। सोमाभिषवसाधनचर्म्मादिपात्रे। "अंशू-निव ग्रावाभिषवणे" इति वेदः। भावे ल्युट्। अभिषवे।

**अधिषवण्य** त्रि०अधिषवणाय हितम् यत्। अभिषवसाधने फलके। "यत्र द्वाविव जघनाधिषवण्या कृता" इति ऋ० १,२८,२ अधिषवण्या उभे अधिषवणफलके इति भा०।

**अधिष्ठातृ** त्रि॰ अधि+स्था–तृच् षत्वम् । अध्यक्षे, नियमितकार्य्यविशेषाकरणेन कृताकृतावेक्षके, नियन्तरि च । "आत्मेन्द्रियाद्यधिष्ठातेति" भाषा॰ । अधिदेवे च । "इन्द्रियाणामधिष्ठातृदेवास्ते परिकीर्त्तिता" इति पुरा॰ । ते च अधिदेवताशब्दे दर्शिताः सर्वाधिष्ठाता तु परमेश्वर एव तदपि तत्रैवान्तर्यामिब्राह्मणेन दर्शितम् । "तत्सान्निध्यादधिष्ठातृत्वं मणिवदिति" सांख्यसू॰ । यथायस्कान्तमणेः सान्निध्यमात्रेण शल्यनिष्कर्षकत्वं न सङ्कल्पादिना तथैवादिपुरुषस्य संयोगमात्रेण प्रकृतेर्महत्तत्त्वरूपेण परिणमनम् । इदमेव च सोपाधिकस्रष्टृत्वमित्यर्थः । तथाचोक्तम् । "निरिच्छे संस्थिते रत्ने यथा लोहः प्रवर्त्तते । सत्तामात्रेण देवस्य तथा चेयं जगज्जनिः । अत आत्मनि कर्त्तृत्वमकर्त्तृत्वं च संस्थितम् । "निरिच्छत्वादकर्त्तासौ कर्त्ता सन्निधिमात्रतः" इति सां॰भा॰ । स्त्रियां ङीप् ।

**अधिष्ठान** न॰ अधि+स्था–ल्युट् । नियमितकार्य्यविशेषाकरणेन सान्निध्यमात्रेण नियमनाय, स्थितौ, वेदान्तशास्त्रप्रसिद्धे आरोपाधिकरणे च । वेदान्तिनाञ्च अध्यासस्याङ्गमधिष्ठानं यथा तथाऽध्यासशब्दे वक्ष्यते । अधिकरणे ल्युट् । पुरे आधारमात्रे, आश्रये च । "तदधिष्ठानाश्रयदेहे तद्वाद इति" सां॰सू॰ । "तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तस्याश्रये षाट्कौषिके देहे इति भाष्यम्" । करणे ल्युट् । चक्रे, प्रभावे च चक्रेण, प्रभावेन च हि महत्त्वयुद्धत्वादिसम्भवः । अधिष्ठानञ्च नियन्तृत्वं यथोक्तं सांख्ये । "संहतपरार्थत्वात् त्रिगुणादिविपर्य्ययादधिष्ठानादिति" "इतश्च पुरुषोऽस्ति अधिष्ठानात् त्रिगुणात्मकानामधिष्ठीयमानत्वात् यद्यत् सुखदुःखमोहात्मकं तत् सर्व्वं परेणाधिष्ठीयमानं दृष्टं यथा रथादि यन्त्रादिभिः, सुखदुःखमोहात्मकञ्चेदं बुद्ध्यादि, तस्मादेतदपि परेणाधिष्ठातव्यम् । स च परस्त्रैगुण्यादन्य आत्मेति" सा॰कौ॰ । भावे ल्युट् । सन्निधिमात्रे । "अत्राधिष्ठानं कुर्व्विति" आवाहनमन्त्रः । "भोक्तुरधिष्ठानाद्भोगायतननिर्म्माणमन्यथा पूतिभावप्रसङ्गात्" इति सांख्यसू॰ "भोक्तुः प्राणस्याधिष्ठानात् व्यापारादेव भोगायतनस्य शरीरस्य निर्म्माणं भवति । अन्यथा प्राणव्यापाराभावे शुक्रशोणितयोः पूतिभावप्रसङ्गात् मृतदेहवदित्यर्थः । तथाच रससञ्चारादिव्यापारविशेषैः प्राणो देहस्य निमित्तकारणं धारकत्वादिति भाव इति भा॰ । ननु प्राणिनः निर्व्यापारस्याधिष्ठाने प्रयोजनाभाव इति तत्राह । "भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्त्यात्" इति सा॰ सू॰ । "देहनिर्म्माणे व्यापाररूपमधिष्ठानं स्वामिनश्चेतनस्यैकान्त्यात् अपेक्षा नास्ति किन्तु प्राणरूपभृत्यद्वारा यथा राज्ञः पुरनिर्म्माण इत्यर्थः । तथा च प्राणस्याधिष्ठातृत्वं साक्षात्, पुरुषस्याधिष्ठातृत्वं प्राणसंयोगमात्रेणेति सिद्धम् । कुलालादीनां घटादिनिर्म्माणेऽप्येवम् । विशेषस्त्वयं तत्र चेतनस्य बुद्ध्यादेरप्युपयोगोऽस्ति बुद्धिपूर्व्वकं सृष्टत्वादिति । यद्यपि प्राणाधिष्ठानादेव देहनिर्म्माणं तथापि प्राणद्वारा प्राणिसंयोगोऽप्यपेक्ष्यते पुरुषार्थमेव प्राणेन देहनिर्म्माणादित्याशयेन भोक्तुरधिष्ठानादित्युक्तम् इति भा॰ । अधिष्ठीयते कर्म्मणि ल्युट् । अधिष्ठिते सन्निधिमात्रेण नियन्त्रिते । "इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते" इति गीता ।

**अधिष्ठित** त्रि॰ अधि–स्था–कर्म्मणि क्त । अध्युषिते "त्रिलोक्य इह्नीयमधिष्ठितं त्वयेति" कुमा॰ । सन्निधिमात्रेण नियोजिते "ईश्वराधिष्ठिताः सर्वे स्वं स्वं कार्य्यं हि कुर्वते इति पुरा॰ ।

**अधिहरि** अव्य॰ हरौ, विभ॰ अव्ययी॰ । हरिमधिकृत्येत्यर्थे

**अधीकार** पु॰ अधि+कृ–घञ् उपसर्गस्य दीर्घत्वम् । अधिकारशब्दार्थे "सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम्" इत्युपपातकगणनायां मनुः । "स्वागतं स्वानधीकारानिति" कुमा॰ ।

**अधीत** न॰ अधि+इङ–भावे क्त । अध्ययने, कर्म्मणि क्त । कृताध्ययने अभ्यस्ते च त्रि॰ "ईषदीषदनधीतविद्ययेति" कुश॰ । "अधीतवेदवेदाङ्गेनेति" वे॰सा॰ ।

**अधीति** स्त्री अधि+इङ् अध्ययने क्तिन् । अध्ययने "अधीतिबोधाचरणप्रचारणैरिति" नैष॰ । अधि+इक–स्मरणे क्तिन् । स्मरणे "न ते पूर्व्वस्य वसो अधीतौ तृतीये" इति ऋ॰२,४,८, "अधीतौ स्मरणे" इति भाष्यम् ।

**अधीतिन्** त्रि॰ अधीतमनेन अधीत+इनि । कृताध्ययने । "स्वगुणैरनङ्गवतीमधीतिनीमिति" कुमा॰ । एतद्योगे च कर्म्मणि सप्तमी वेदेऽधीतीत्यादि किन्तु कर्म्मविवक्षया प्रथमं भावे एव क्तः पश्चात् कर्म्मणा योगः कृतपूर्व्वी कटमित्यत्रेव । यथोक्तं हरिणा । "अकर्म्मकत्वे सत्येव क्तान्ते भावाभिधायिनि । पश्चात् क्रियावता कर्म्मा योगो भवति कर्म्मणेति" । विस्तरः शब्दकल्पतरलतायां द्रष्टव्यः ।

**अधीन** त्रि॰ अधिगतमिनं प्रभुम् अत्या॰स॰ । आयत्ते । वित्ताधीन इत्यादौ तु वित्ते अधि–इति वाक्ये समासे अध्युत्तरपदात् ख । "क तु मां त्वदधीनजीवितामिति" कुमा॰ ।

"दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह" इति मनुः । "इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः" इति रघुः ।

**अधीर** त्रि० धीरः धैर्य्यान्वितः न०त० । चञ्चले, "कालस्य धरमणिम् अधीरमाचुचुम्बेति" दशकु० । कातरे, रोगादिनाकुलचित्ते च । विद्युति, नायिकाभेदे च स्त्री । तल्लक्षणं नायिकाशब्दे वक्ष्यते

**अधीवास** अधि+वस आच्छादने करणे घञ् । सर्व्वत आवरके महाकञ्चुके वस्त्रभेदे । "अधीवासं परिसच्चोष्णीषं संवेष्ट्य निवीते" इति कात्या० १५,५,१२, उपरि सर्वतः संछाद्यतेऽनेनेत्यधीवासः महाकञ्चुक इति तद्व्याख्या । "अधीवासेन प्रच्छादयतीति" कात्या० २०,६,१५, "उपरिष्टादावरकं वासोऽधीवास" इति वेददीपः ।

**अधीश** त्रि० अधिक ईशः प्रा०स० । सार्वभौमे अधिपतौ च । "अङ्गाधीशः स्वगेहे बुधगुरुकविभिः संयुत" इति जात० ।

**अधीश्वर** त्रि० अधिक ईश्वरः प्रा०स० । स्त्रियां ङीप् । राजनि "अधिगत्य जगत्यधीश्वरादिति" नैष० । प्रभौ च ।

**अधीष्ट** न० अधि+दिवा०इष–भावे क्त । सत्कारपूर्व्वकनियोगे, "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङिति" पा० "अधीष्टं सत्कारपूर्व्वकव्यापार" इति सि०कौ० । कर्म्मणि क्त । सत्कारपूर्व्वकं नियोजिते त्रि० ।

**अधुना** अव्य० अस्मिन् काले इदम्शब्दस्य न० । संप्रतीत्यर्थे "प्रमदानामधुना" विडम्बनेति कुमा० । अधुना भवार्थे ठञ् । आधुनिकः इदानीन्तने त्रि० । [स्त्रियां ङीप् ।

**अधुनातन** त्रि० अधुना+भवार्थे ट्युल् तुट् च । इदानीम्भवे

**अधुर** नास्ति धूः चिन्ता भारो वा यस्य अच्समा० । भारशून्ये चिन्ताशून्ये च, न०त० । अधूः–अभारे अचिन्ते च । अस्य तु नाच्समा० । अधूरत्र इति ।

**अधूमक** पु० नास्ति धूमो यत्र कप् । धूमशून्ये ज्वलदग्नौ ।

**अधृत** पु० न धृतः । सर्वेषां धारकत्वेन केनापि न धृते परमेश्वरे, श्रुतौ "स भगवः ! कस्मिन्नु प्रतिष्ठितः ?" इति प्रश्ने "स्वे महिम्नि" त्युत्तरम् तेनान्याधृतत्वात् स्वप्रतिष्ठत्वाच्च तस्य तथात्वम् । "अधृतः स्वधृतः स्वास्य इति विष्णु सहस्र० ।

**अधृति** स्त्री धृतिर्धारणं धैर्य्यं वा अभावार्थे न०त० । धारणाभावे, धैर्य्याभावे, च ।

**अधृष्ट** त्रि० धृष–निर्लज्जत्वे क्त न०त० । लज्जाशीले । धृष–अभिभवे क्त न०त० । अनभिभूते "वन्तं नोभिमावरुणावधृष्टमिति ऋ०६,६७,२, अधृष्टमनभिभूतमिति भा० । अहिंसिते च । "दूतासोऽस्यवोऽधृष्टा" इति ऋ० ६,५०,४, "अधृष्टा अहिंसिता" इति भा० ।

**अधृष्य** त्रि० न धृष्यः न०त० । अनभिभवनीये "अधृष्यवाभिगम्यश्च यादोरत्नैरिवार्णव" इति रघुः । धृष–निर्लज्जत्वे भावे क्यप् तदस्ति यस्य । अप्रगल्भे, लज्जाशीले च त्रि० ।

**अधेनु** स्त्री न०त० । दोहनशून्यायां गवि । "अधेनुं दस्रा स्तर्य्यमिति" ऋ० १,११७,२०, "अधेनुम् अदोग्ध्रीमिति" भा० । [शून्ये त्रि० ।

**अधैर्य्य** न० अभावार्थे न०त० । धैर्य्याभावे । ब० । धैर्य्य-

**अधोक्षत** त्रि० अधः अक्षस्, अधस्तात् अक्षति अश्नुते वा अक्ष–अच्, अश–स वा वेदे अतोलोपाभावः । अधरस्तात् व्यापके । "अधोक्षताः सिन्धवः क्षोद्माभिरिति" ऋ० २ ६२,९, "यदापः अधस्तादधस्ताद्भवन्ति तदा रथादीनि नेतुं शक्यन्ते" इति भा० । [अधादेशश्च । परिधानवस्त्रे ।

**अधोंऽशुक** न० अधरमंशुकम् अधर+प्रथमार्थे असि अधरस्य

**अधोऽक्ष** न० अधरमक्षं यत्र मार्गे अधर+प्रथमार्थे असि ब० । हविर्धानाक्षाधोमार्गे । "दक्षिणस्याक्षं प्राङ्गो निष्क्रामतीति" का० १२, ४, १४, दक्षिणहविर्धानाक्षाधोमार्गेण प्राङ्मुखा निःसरन्तीति" वेददीपः ।

**अधोऽक्षज** पु० अक्षात् इन्द्रियात् जायते जन–ड ५त० । अक्षजं प्रत्यक्षज्ञानम् अधरं ग्राहकत्वाभावाद्धीनं यस्य अधर–प्रथमार्थे असि अधादेशश्च । इन्द्रियायोग्ये, "अधो न क्षीयते जातु यस्मात्तस्मादधोऽक्षज" इत्युक्तलक्षणे, वा विष्णौ । "व्याप्तो वायुरधोऽक्षज" इति विष्णुसह० । "द्यौरयं पृथिवी चाधस्तयोर्यस्मादजायत । मध्ये वैराजरूपेण ततोऽधोक्षजउच्यते" इति भाष्ये तथा च अण्डकपालद्वयमध्ये विराड्रूपेण जातत्वादस्य तथात्वम् । अधोभूते स्वस्वविषयेभ्यो निवर्त्तनेन प्रत्यक्प्रवाहिते अक्षगणे जायते प्रकाशते इति अधोक्षज इति वा । तत्रैवार्थे ।

**अधोगति** स्त्री अधरस्मिन् अधस्तात् नरकादौ गतिः नरकादिगमने "साधकानां त्वधोगतिरिति" तन्त्र० । नरकस्य च पापफलत्वेन पुण्यादधरत्वात् अधरत्वम् "और्वे च सर्वे नरकाः सदैवा" इति (सि०शिरो०) और्वस्थाने एव नरकस्थितिरुक्ता और्वस्थिति च । "स्वादूदकान्तर्वडवानलोऽसौ पातालकोकाः पृथिवीपुटानी" त्यनेन पातालसन्निकृष्टे तत्रैवोक्ता । अतो नरकानामधःस्थत्वम्, भूगोलशब्दे विवरणं द्रष्टव्यम् । "जघन्यगुणवृत्तास्तु अधोगच्छन्ति तामसा इत्युक्तेः तामसानामधोगतित्वम् । अधोगतित्वञ्च पापादेव । अधःप्रदेशमात्रे गमने च "मूत्रा-

नामधोगतिरिति" कादं०। अधोऽधस्तात् गतिर्यस्य ब० । नरकगामिनि त्रि० "अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम् अरक्षितारमत्तारं नृपं विद्यादधोगतिमिति" मनुः ८,३९, ४१, अधोगतिं नरकगामिनमिति कुल्लूकभट्टः ।

**अधोगामिन्** त्रि० अधरस्मिन् अधः गच्छति गम–णिनि । नरकगामिनि, अधोभागे–गन्तरि च । स्त्रियां ङीप् ।

**अधोघण्टा** स्त्री अधरात् अधस्तादारभ्य घण्टेव तदाकारफलवत्त्वात् । अपामार्गे रक्तमाला ।

**अधोजानु** न० अधरं जानुनः प्रथमार्थे असि । जानुनोऽधरे आश्वयादीनां प्रमाणविशेषमभिधाय "सर्वेषां वाधोजानु इति का० २१,४,१८, "वा विकल्पार्थे सर्वेषां जानुनोरधस्तात् अधोजान्विति" तद्व्याख्या ।

**अधोजिह्विका** स्त्री अल्पा जिह्वा जिह्विका अल्पार्थे कन् अधोऽधरा जिह्विका कर्म्म० । (आलजिभ) इति ख्यातायाम् तालुस्थजिह्विकायाम् ।

**अधोदारु** न० अधरं दारु अधर+प्रथमार्थे असि । काष्ठमयद्वारस्याधरकाष्ठे (गोवराट्) ।

**अधोदिश्** स्त्री अधरा दिग् अधर+प्रथमार्थे असि कर्म्म० । दक्षिणस्यां दिशि । अस्या अधरत्वञ्चोदक्शब्दे वक्ष्यते ।

**अधोदृष्टि** त्रि० अधरस्मिन् अधः दृष्टिरस्य । योगाभ्याससमये नासिकाग्रमात्रदर्शनयुक्ते, तत्प्रकारस्तु "किञ्चित् प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः । नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्षीकृतघ्राणमधोमयूखैरिति" कुमारे "करणान्यवहिष्कृत्य स्वाणुवन्निश्चलात्मकः । आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचन" इति योगसारे "गीतायामपि "सम्प्रेक्ष्य नासिकाग्रं स्वमित्यादिना" दर्शितः । अधोदर्शनयुक्तमात्रे त्रि० । "अधोदृष्टिर्नैष्कृतिक" इति मनुः ४,१९६ । कर्म्म० । अधस्थदृष्टौ स्त्री ।

**अधोऽधस्** अधस्+अधस्तात् सामीप्ये द्वित्वम् । समीपाधोदेशे "नवानधोऽधोबृहतः पयोधरानिति" माघः ।

**अधोपहास** पु० अधः अधोभागस्य स्मरमन्दिरस्य उपहासः सन्निकृष्टान्तः । स्त्रीणामधोभागस्योपहसने । "यएवं विद्वानधोपहासं चरत्यासां, स्त्रीणां सुकृतं वृङ्क्त" इति वृ०उप० । वृङ्क्ते आवर्ज्जयतीति भाष्यम् ।

**अधोभक्त** न० अधरं भक्तं यस्मात् अधर+प्रथमार्थे असि ५त० । भक्तभोजनान्ते पीयमानजले ।

**अधोभाग** अधरोभागः अधर+प्रथमार्थे असि कर्म्म० । अधरभागे "पूर्व्वभागो गुरुः पुंसामधोभागस्तु योषितामिति" ।

**अधोभुवन** न० अधरमधः भुवनम् लोकः । सप्तसु पातालेषु । तत्स्थानञ्च 'भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बुद्वीपं प्राहुराचार्य्यवर्य्याः अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः ॥ लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतममृतरश्मिः श्रीश्च दस्मादभूव । महितचरणपद्मः पद्मजन्मादिदेवैर्वसति सकलवासो वासुदेवश्च यत्र ॥ दध्नो घृतस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्त्यः । स्वादूदकान्तर्वडवानलोऽसौ पातालोकाः पृथिवीपुटानीति सि०शि० ॥ अधिकं भूगोलशब्दे वक्ष्यते ।

**अधोमुख** त्रि० अधो मुखं यस्य ब० । ज्योतिषशास्त्रे प्रसिद्धेषु नक्षत्रभेदेषु । यथा "मूलाश्लेषा कृत्तिका च विशाखा भरणी तथा । मघा पूर्व्वात्रयं चैव अधोमुखगणः स्मृत" इति । गोजिह्वाख्यवृक्षे (अनन्तमूल) अवाङ्मुखे स्त्रियां वा ङीप् । "तस्थावधिरधोमुख" इति "अधोमुखैरूर्द्धमुखैश्च पत्रिभिः" इति रघुः । रुद्राभेदे च तत्स्वरूपं रुद्राशब्दे वक्ष्यते ।

**अधोराम** पु० अधोभागे अधस्ताद्भागे रामः शुक्लः दृष्टिवर्णकत्वात् तस्य रामत्वम् । अधोभागे शुक्लवर्णे "आश्विनावधोरामाविति" य०२४,१, "अधोरामौ अधोभागे शुक्लवर्णावजाविति" वेददीपः । [अधोभुवनशब्दे विवरणम् ।

**अधोलोक** पु० अधोऽधरो लोकः कर्म्म० । भूमेरधःस्थपाताले ।

**अधोवर्चस्** त्रि० अधोगामि वर्चः ज्योतिर्यस्य । अवाचीनज्योतिष्के "तत्ते विद्वान् वरुण ! प्रब्रवीम्यधोवर्चस" इति वेदः ।

**अधोवायु** पु० अधोगामी वायुः शा०त० । अपानवायौ पर्द्दशब्दकारके वाते "अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे" इत्युपक्रम्य "कर्म्म कुर्व्वन्नुपस्पृशे"दित्युक्तं स्मृतौ ।

**अध्यक्ष** त्रि० अधिगतोऽक्षं व्यवहारम् अत्या०स० । नृपस्य कलधारणादिव्यवहारेष्वधिकृते । अध्यक्ष्णोति व्याप्नोति अधि+अक्ष–अच् । व्यापके । अधिगतं भूततया अक्षमिन्द्रियम् अत्या०स० । प्रत्यक्षज्ञाने । अर्श आदित्वात् अच् । तद्विषये त्रि० । "द्रव्याध्यक्षे त्वचोयोगो मनसा ज्ञानकारणमिति" भाषा० । "सेनापतिबलाध्यक्षाविति" मनुः । अधिष्ठातरि सन्निधिमात्रेण नियन्तरि च "मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति" गीता "यदध्यक्षेण जगता वयमारोपितास्त्वयेति" कुमा० क्षीरिकावृक्षे पु० शब्दार्णवः ।

**अध्यक्षर** अव्य० अक्षरे–विभ० अव्ययी० । अक्षरमधिकृत्येत्यर्थे ।

**अध्यग्नि** अव्य० अग्नौ अग्निसमीपे वा विभक्त्यर्थे सामीप्ये

ऽर्थे वा अव्ययी०। अग्नौ अग्निसमीपे सेत्यर्थे। तत्र स्थाने विवाहादौ स्त्रीभ्यो दत्ते धनादौ न०। स्मृतिशास्त्रे चास्मिन्नर्थे पारिभाषास्य कृता यथा "विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ। तदध्यग्नि कृतं सद्भिः स्त्रीधनं परिकीर्त्तितमिति" कात्या०। "अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्म्मणि भ्रातृमातृपितृमाप्तं षड्विधं स्त्रीधनं स्मृतमिति" मनुः। "पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितमिति याज्ञ०। "विवाहकालेऽग्न्यावधिकृत्य मातुलादिदत्तमिति" मिताक्षरा। अध्यग्निकृतमित्येकं पदं दत्तमध्यग्न्युपागतमित्येकवाक्यत्वात् कृतं दत्तमित्यर्थः इत्येके।

**अध्यच्** त्रि० अधि+अन्चु—क्विप्। अधिगन्तरि।

**अध्यण्डा** स्त्री अधिकमण्डमिव वीजं यस्याः ईत०। अधिकवीजवत्याम् (भुंइ आमला) इति ख्यातायाम् भूम्यामलक्याम्।

**अध्यधिक्षेप** पु० अधिकोऽधिक्षेपः प्रा०स०। अत्यन्तनिन्दायामतिशयतिरस्कारे च "गुरूणामध्यधिक्षेप" इति।

**अध्यधीन** त्रि० आधिक्येन अधीनः। अत्यन्ताधीने गर्भदासे तस्य जन्मावधि दासत्वात् क्रयविक्रयार्हत्वाच्च तथात्वम्।

**अध्यय** पु० अधि—इङ्—इक् वा भावे अच्। अध्ययने स्मरणे च।

**अध्ययन** न० अधि+इङ—ल्युट्। पठने, गुरुमुखोच्चारणानुसारिणि उच्चारणे च। अध्ययनञ्चाक्षरमात्रपाठ इति वैदिकाः सार्थाक्षरग्रहणमिति मीमांसकाः। "इज्याध्ययनदानानि तपः सत्यं क्षमा दमः। अलोभ इति मार्गोऽयं धर्म्मस्याष्टविधः स्मृत" इति "अत्राह्मणादध्ययनमापत्काले विधीयते" इति "श्रुताध्ययनसम्पन्न" इति च स्मृतिः अध्ययनं च वेदाध्ययनं तत्र च त्रैवर्णिकानामधिकारः यथोक्तं मनुना। "अध्यापनमध्ययनं यजनं याजनं तथा, दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत्॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च। विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः। पशूनां रक्षणं दानमिज्याध्ययनमेव च। वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च" इति मनुः। वेदाध्ययनञ्च ब्रह्मयज्ञत्वेनाभिधीयते तच्च ब्रह्मयज्ञशब्दे वक्ष्यते तच्च सार्थाध्ययनमेव प्रशस्तं यथोक्तं ब्राह्मणसर्वस्वे "कूर्म्मपुराणे। न वेदपाठमात्रेण सन्तोषं कारयेद्गुरुः। पाठमात्रावसन्नस्तु पङ्के गौरिव सीदति। योऽधीत्य विधिवद्विप्रो वेदार्थं न विचारयेत् स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते"। व्यासः "वेदस्याध्ययनं कार्य्यं धर्म्मशास्त्रस्य चापि यत्। अजानतार्थं तत् सर्वं तुषाणां कण्डनं यथा" तथा "यथा पशुर्भारवाही न तस्य भजते फलम्। द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते"। तथा "पाठमात्ररताश्चित्यं द्विजातींश्चार्थवर्ज्जितान्। पशूनिव च तान् प्राहुर्वाङ्मात्रेणापि नार्चयेत्। श्रुतहीनमधीतं यच्चेह नाकुलं तद्भवेत्। श्रुतन्तु केवलमपि सदुद्धाराय कल्पते"। स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। अर्थवित् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा। व्यासः। "योऽधीते नार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा। भारवाहीव स्तकः केवलं क्लेशभाग्भवेत्। तस्मादर्थपरिज्ञाने यत्नः कार्य्यो विजानता"। व्यासः। "ज्ञानं कर्म्म च संयुक्तं सुखार्थं कथितं यथा। अधीतं श्रुतसंयुक्तं तथा चेष्टं न केवलम्" व्यासः। "अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः। स्वर्गलोकमवाप्नोति धर्म्मानुष्ठानविद्द्विजः"। मनुः "वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्। इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते"। व्यासः। "सञ्चितं स्तोकमपि श्रुताधीतं विशिष्यते। चतुर्णामपि वेदानां केवलाध्ययनात् द्विजात्"। वृहद्व्यासः "अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणोवराः। धारिभ्यश्चार्थतत्त्वज्ञास्तेभ्योऽप्यध्यात्मचिन्तकाः" इति॥ एतच्च स्वाध्यायोऽध्येतव्य" इति श्रुतौ मीमांसकैः विस्तरतो व्यवस्थापितम्।

**अध्यर्द्ध** त्रि० अधिकमर्द्धं यस्य ब०। सार्द्धेन सहिते वस्तुमात्रे। "एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुज" इति मनुः। एकाधिकमंशं द्वावंशाविति यावत् ज्येष्ठपुत्रो गृह्णीयात् अधिकमर्द्धं यत्रांशे सार्द्धमंशं इति कुल्लू०। अर्द्धशब्दः रूपकार्द्धे रूढः तेन सार्द्धरूपके च। अध्यर्द्धपूर्व्वात् क्रीताद्यर्थे "अध्यर्द्धपूर्व्वद्विगोर्लुगसंज्ञायामिति" पा० अध्यर्द्धपूर्व्वात् द्विगोश्चार्हीयस्य ठञो लुक्। अध्यर्द्धकंसम्। "विंशतिकात्ख" इति पा०। खविधाश्च लुक्। अध्यर्द्धविंशतिकीनं "खार्य्यांईकन्" पा०। अध्यर्द्धखारीकम् "पणपादमाषशताद्यत्" पा०। अध्यर्द्धपण्यं अध्यर्द्धपाद्यम् अध्यर्द्धमाष्यम् अध्यर्द्धशत्यम् "शाणाद्वेति" पा० यत् ठञ् तस्य लुक् वेति अध्यर्द्धशाण्यम् अध्यर्द्धशाणम्। इत्यादयः शब्दाः तत्क्रीतार्थे त्रि०। अध्यृध्नोति यत्र अधि+ऋध—आधारे घञ्। वायौ। "कत्येव देवा याज्ञवल्क्य! इति" याज्ञवल्क्यं प्रति शाकल्यप्रश्ने तत्र याज्ञवल्क्येन "अध्यर्द्ध" इत्युत्तरं (वृ०उ०) दत्तम् तस्य विशेषज्ञानाय

"कतमोऽध्यर्द्ध" ? इति पुनः शाकल्यप्रश्ने, "योऽयं पवत" इत्युक्तं तत्र पवत इत्यनेन वायुरुक्तः । "तदाहुर्यदयमेकएव पवते अथ कथमध्यर्द्ध"? इति । वायोरेकत्वेन अध्यर्द्धशब्दार्थस्य सार्द्धत्वस्यासम्भवे पुनराक्षिप्ते "यदस्मिन् इदं सर्वमध्यार्ध्नोत् तेनाध्यर्द्ध" इत्युत्तरम् तेन अधिकर्द्धिहेतुत्वात् वायोरध्यर्द्धत्वात् तथात्वम् अधि+ऋध–अङ् अध्यार्ध्नोत् ।

**अध्यवसाय** पु० अधि+अव–सो–घञ् । इदमेवमेवेति विषयपरिच्छेदे निश्चये । स चात्मधर्म इति नैयायिकाः बुद्धिधर्म इति सांख्यादयः । "उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेः रजस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽयमध्यवसाय इति वृत्तिरिति चाख्यायते" इति सांख्यतत्त्वकौमुदीपरिभाषितलक्षणः, "कर्त्तव्यमिति योऽयं निश्चयः चित्सान्निध्यात् प्राप्तचैतन्याया बुद्धेः परिणामः सोऽयमध्यवसाय" इत्युक्तलक्षणो वा निश्चयः । "प्रतिविषयाध्यवसायो दृष्टमिति सां०का० । उत्साहे च । उत्साहस्य कर्म्मसु सुकरत्वेन ज्ञानात् उद्यमभेदः ।

**अध्यवसायित** त्रि० अध्यवसायो जातोऽस्य तारा० इतच् । जाताध्यवसाये । [निश्चयवति च ।

**अध्यवसायिन्** त्रि० अधि+अव–सो–णिनि । उत्साहान्विते

**अध्यवहनन** न० अधि–उपरि अवहननम् । पूर्व्वावघातेन वितुषीकरणेऽपि पुनरवघाते । तेन च "व्रीहीनवहन्तीति" नियमपालनम् ।

**अध्यशन** न० अधिकमशनम् । "अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते" इति सुश्रुतोक्ते अजीर्णेऽपि अधिकाशने । "यथोक्तैः प्रकोपणैर्विरुद्धाध्यशनस्त्रीप्रसङ्गेत्यादि" सुश्रुतम् ।

**अध्यस्त** त्रि० अधि+अस–कर्म्मणि क्त । कृताध्यासे आरोपिते, अध्यासवाच्ये वक्ष्यते तद्विषये मिथ्याभूते पदार्थे । शुक्तौ रजतमध्यस्तम् ब्रह्मणि जगदध्यस्तमित्यादि ।

**अध्यात्म** अव्य० आत्मानं देहमिन्द्रियादिकं चेतनं ब्रह्म वाऽधिकृत्य टच् समा० । देहमिन्द्रियादिकम् आत्मानं ब्रह्म वाधिकृत्येत्यर्थे । तत्र देहाधिकारे "अध्यात्ममिति" वृ०उ० अधिदेवताशब्दे दृश्यम्, तत्र प्राणाद्यधिकारेण अन्तर्यामित्वमुक्तम् । चेतनाधिकारे "अध्यात्मयोगाधिगमेनेति" । "अध्यात्मरतिरासीनो निराकाङ्क्षो निरामिष" इति मनुः । "आत्मानं ब्रह्माधिकृत्येति" कुल्लू० । "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म्म चाखिलमिति" गीता । "ते जनाः परं ब्रह्म कृत्स्नमध्यात्मञ्च विदुः ये तत् प्राप्तव्यं देहादिव्यतिरिक्तं शुद्धमात्मानञ्च जानन्तीति" श्रीध० । "अक्षरं परमं ब्रह्म स्वभावोऽध्यात्ममुच्यते" इति गीता । "स्वस्यैव ब्रह्मण एवांशतया जीवस्वरूपेण भावोभवनं स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्त्तमानोऽध्यात्मशब्देनोच्यते" इति श्रीधरः । तेन देहाधिकारेण भोक्तृतया ब्रह्मणोऽंशस्य जीवभवनेऽस्य पारिभाषिकत्वं सूचितम् "अध्यात्मविद्या विद्यानां वादः प्रवदतामहमिति" गीता सा च विद्या न्याय वैशेषिकमते देहभिन्नत्वेन, सांख्यादिमते प्रकृतिभिन्नत्वेन आत्मनः स्वरूपादिप्रतिपादिका । वेदान्तिमते तु ब्रह्माभिन्नत्वेनेति भेदः । सर्व्वेषां मतेऽध्यात्मतत्त्वज्ञानरूपत्वात्तस्या अध्यात्मविद्यात्वम् । तत्र नैयायिकवैशेषिकमते आत्मा द्विविधः जीवात्मा परमात्मा च । तत्र जीवात्मानमधिकृत्य उदयनाचार्य्येण आत्मतत्त्वविवेकरूपप्रकरणं, परमात्मानमधिकृत्य च कुसुमाञ्जलिनामकमपरं प्रकरणं निरमायि । सांख्ये ईश्वरानभ्युपगमेन पुरुषस्य प्रकृत्यादिभ्यो विवेकज्ञानाय षडध्यायीरूपं कपिलमुनिना, तन्मूलकमीश्वरकृष्णेन च सांख्यकारिकाः सप्ततिः निरमायिषत, वाचस्पतिना च ता व्याख्याताः ततएव विस्तरोऽवसेयः । पातञ्जले तु जीवानामीश्वरस्य च भेदस्वीकारेऽपि ईश्वरप्रणिधानेन पुरुषस्य प्रकृत्यादिभ्यो भेदसाक्षात्कार इति भेदः । अधिकं तत्तच्छब्दे वक्ष्यते । "मयि कर्म्माणि सर्व्वाणि संन्यस्याध्यात्मचेतसेति" गीता । "अध्यात्मचेतसा विवेकबुद्ध्या" । अध्यात्मं जातः ठञ् । अनुशतिका० द्विपदवृद्धिः । आध्यात्मिकं दैहिके मानसिके च दुःखादौ त्रि० ।

**अध्यात्मदृश्** त्रि० अध्यात्मं पश्यति दृश–क्विन् । आत्मत्त विषयत्यागेनात्ममात्रदर्शके ।

**अध्यात्मयोग** पु० आत्मानं चेतनमधिकृत्य योगः । विषयेभ्यः प्रतिसंहृत्य चेतसआत्मनि समवधाने । "अध्यात्मयोगाधिगमेनेति" ।

**अध्यात्मरामायण** न० आत्मानमधिकृत्य कृतं रामस्यायनं यत्र । वाल्मीकिप्रणीते अध्यात्मज्ञानप्रतिपादके प्रसङ्गतो रामचरितज्ञापके स्वनामख्याते ग्रन्थभेदे ।

**अध्यात्मशास्त्र** न० अध्यात्म प्रतिपादकं शास्त्रम् । आत्मस्वरूपादि प्रतिपादकग्रन्थे ।

**अध्यापक** पु० अध्यापयति अधि+इङ् णिच्–ण्वुल् । अध्ययनकारयितरि, उपाध्याये च । "भृतकाध्यापकोयस्तु भृतकाध्यापितस्तथेति" मनुः । अस्य अकान्तत्वेऽपि याजकादिगणे पाठात् षष्ठीसमासः तेन वेदाध्यापकः न्याया-

ध्यापक इति। अध्यापकश्च द्विविधः आचार्य्य उपाध्यायश्च यथोक्तं विष्णुना "यस्तूपनीय व्रतादेशं कृत्वा वेदमध्यापयेत्तमाचार्य्यं विद्यात्। यस्त्वेनं मूल्येनाध्यापयेदेकदेशं वा तमुपाध्यायमिति"।

**अध्यापन** न० अधि+इङ्–णिच्–भावे ल्युट्। पाठनायाम्। "याजनाध्यापने तथेति" मनुः। "अध्यापनञ्च त्रिविधं धर्म्मार्थमृक्थकारणम् शुश्रूषाकारणञ्चेति त्रिविधं परिकीर्त्तितमिति" हारीतसंहितोक्तेस्त्रिविधमध्यापनम् अध्यापनप्रकारादि यथा "नापरीक्षितं याजयेत् नाध्यापयेत् नोपनयेत॥ योऽधर्म्मेणाह यश्चाधर्म्मेण पृच्छति तयोरन्यतरः प्रैति, विद्वेषं वाधिगच्छति॥ धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा। तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे। विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि। असूयकायानृजवेऽयताय न मां ब्रूया वीर्य्यवती तथा स्याम्॥ यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्य्योपपन्नम्। यस्ते न द्रुह्येत् कतमांच नाह तस्मै मां ब्रूया निधिपाय ब्रह्मन् इति"॥ शुचि तु स्त्रीत्वात् टापि, अध्यापना तत्रैवार्थे स्त्री।

**अध्यापित** त्रि० अधि–इङ्–णिच् कर्म्मणि क्त। पाठिते "अध्यापितस्योशनसापि नीतिमिति" कुमा०।

**अध्याप्य** त्रि० अधि इङ्–णिच–कर्म्मणि यत्। पाठनीये अध्यापयितुमर्हे छात्रे "मङ्गाञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रिय" इति मनुनाध्यापनीयार्हता दर्शिता।

**अध्याय** पु० अधि+इङ्–घञ्। अध्ययने, कर्म्मणि घञ। वेदादिशास्त्रस्य एकार्थकविषयसमाप्तिद्योतके विश्रामस्थाने अंशविशेषे, "सर्गोवर्गः परिच्छेदोद्घाताध्यायाङ्कसंग्रहाः। उच्छासः परिवर्त्तश्च पटलः काण्डमेव च। स्थानं प्रकरणञ्चैव पर्व्वोल्लासाह्निकानि च। पुराणादौ परिच्छेदा अनेके परिकीर्त्तिता" इत्युक्तान्यतमप्रकारे च "संकल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत् सुधीः अध्याय प्राप्य विरमेत्न तु मध्ये कदाचन। कृते विरामे मध्ये तु अध्यायादिं पुनः पठेदिति" म० सू० "स्वाध्यायोऽध्येतव्य" इति श्रुतिः।

**अध्यारूढ** त्रि० अधि+आ+रुह् कर्म्मणि कर्त्तरि वा क्त। आक्रान्ते, अध्यारोहणकर्त्तरि उपरिष्टात् आरोहणकर्त्तरि, समारूढे, अधिके च।

**अध्यारोप** पु० अधि+आ–रुह–णिच्–पान्तादेशः घञ् अतस्मिन् तद्बुद्धिरारोपः मिथ्याज्ञानम् किञ्चिदधिष्ठानमधिकृत्य तादृशारोपः अध्यारोपः यथा असर्पभूतां रज्जुमधिकृत्य सर्पारोपः तथैव अजगद्रूपे ब्रह्मणि जगद्रूपारोपः। तादृशे मिथ्याज्ञाने। "स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्त" इति वृ० उप० भाष्यम्।

**अध्यारोपण** न० अधि+रुह–णिच् पान्तादेशः ल्युट्। अतिशयेनारोपणे धान्यादेर्वपने।

**अध्यावाप** पु० अधि+आ+वप–घञ्। अधिवपने सस्यानामावापे। आधारे घञ्। तदाधारक्षेत्रे।

**अध्यावाहनिक** न० अध्यावाहनं पितृगृहात् भर्त्तृगृहागमनं तत्काले लब्धम् अधि+आ+वह–ल्युट् ततः लब्धार्थे ठन्। "यत् पुनर्लभते नारी नीयमाना हि पैतृकात्। अध्यावाहनिकं नाम स्त्रीधनं परिकीर्त्तितमिति" कात्यायनलक्षणे पितृकुलात् भर्त्तृकुलगमनकाले तेभ्यः प्राप्ते स्त्रीधने। "अध्यग्न्यध्यावाहनिक स्त्रीधनं षड्विधं स्मृतमिति" स्मृतिः।

**अध्यास** पु० अधि+अस–क्षेपे घञ। मिथ्याज्ञाने "आह कोऽयमध्यासो? नामेति प्रश्ने "स्मृतिरूपः परत्र पूर्व्वदृष्टावभास" इति शा० भाष्यम्। स्मृतेः रूपमिव रूपमस्य संस्कारप्रभवत्वात्। परत्र अन्यस्मिन् स्वभिन्ने स्वाभाववति च पूर्व्वदृष्टस्य पूर्व्वानुभूतस्यावभासो ज्ञानम्। यथा शुक्तौ रजतभिन्नायां पूर्व्वदृष्टस्य रजतस्याभेदज्ञानम्, स्वाऽभाववति च स्फटिके पूर्व्वानुभूतस्य लोहितरूपस्य वा ज्ञानम्। तथाभूते मिथ्याभूतज्ञाने। तत्र चाध्यासे अधिष्ठानशुक्त्यादौ इन्द्रियसंप्रयोगे सत्यपि तस्य विशेषरूपेणाज्ञानात् सामान्याकारेण इदन्त्वादिरूपेण ज्ञानं, सादृश्यज्ञानम्, आरोप्यमाणस्य संस्कारश्चेति कारणत्रयं सति च तस्मिन् चाकचक्यादिदोषविशेषात् अधिष्ठानविशेषज्ञानं प्रतिरुध्य, रजतादिसंस्कारे चोद्बोधिते तत्रानिर्वचनीयं रजतादिकं शुक्त्याद्यज्ञानेनोत्पाद्यते तदाकारवृत्तिश्च जन्यते तत्र आविद्यिकरजताद्यनुत्पत्तौ इदं रजतं पश्यामीत्याद्यनुभवानुपपत्तिः नच स्मरणेन तस्योपपत्तिः स्मरणस्य विषयाप्रवर्त्तकत्वात् तदुत्तरं प्रवर्त्तते च तत्तद्रूप्यग्रहणाय सर्वः। नापि अलौकिकप्रत्यक्षरूपता साक्षात्करोमीत्यनुभवस्य साक्षात्कारविषयत्वात् अन्यथानुमानादीनामपि अलौकिकप्रत्यक्षत्वापत्तेः तत्पूर्व्वं नियतं तत्तज्ज्ञानस्यावश्यम्भावेन विशिष्टालौकिकप्रत्यक्षापत्तेर्दुर्निवारत्वात् अतः तत्तद्रूप्यग्रहणाय प्रवर्त्तकस्य तत्तज्ज्ञानस्य प्रत्यक्षत्वसमर्थनाय अनिर्वचनीयं रजतादिकम् अधिष्ठानाज्ञानेन तत्राधिष्ठाने उत्पद्यते इति कल्प्यं प्रत्यक्षे हि विषयसन्निकर्षः कारणत्वेन क्लृप्तः

देशान्तरस्थरजतादिकं तु न इन्द्रियसन्निकृष्टमित्यगत्या तथा कल्प्यते। अतएव श्रुतौ "यत्र द्वैतमिव भवति तदितर इतरत् पश्यतीति" "अथ रथान् रथयोगान् पथः सृजते" इति च जागरे द्वैतस्य इवशब्देन मिथ्यात्वं सूचितम्। स्वप्ने च रथादेः स्पष्टं सृष्टिरुक्ता। तथाच ब्रह्मणि जगदादेरनिर्वचनीयस्य तदज्ञानेनोत्पत्तिः। इयांस्तु विशेषः रजतादेः स्वप्नरथादेश्च प्रतीतिसमकालत्वं, वियदादेस्तु व्यावहारिकत्वम्। "देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयादित्युक्तेः व्यवहारकाले वियदादिप्रमेयाणां सत्त्वं, "परमार्थदृष्ट्या तु मिथ्यात्वमिति" "अन्यदार्त्तमित्यादि"श्रुत्या च ब्रह्मभिन्नानां मिथ्यात्वावगमात्। अधिकमाकरे दृश्यम्।

**अध्यासन** न० अधि+आस–उपवेशे ल्युट्। निवासे। विभ०अव्ययी०। आसने इत्यर्थे अव्य०।

**अध्यासित** त्रि० अधि+आस आधारस्य कर्मसंज्ञायां कर्मणि क्त। अधिष्ठिते। "धेन्वा तदध्यासितकातराक्ष्येति" रघुः।

**अध्याहार** पु० अध्याह्रियते ज्ञानायानुसन्धीयते अधि+आ+हृ-घञ्। आकाङ्क्षाविषयपदानुसन्धाने, ऊहे, तर्के, अपूर्व्वोत्प्रेक्षणे च। ऊहस्वरूपमूहशब्दे तर्कस्वरूपं च तर्कशब्दे वक्ष्यते। [क्त। अधिष्ठिते स्थानादौ।

**अध्युषित** त्रि० अधि+वस–आधारस्य कर्मसंज्ञया कर्मणि

**अध्युष्ट्र** त्रि० अधिगतमुष्ट्रं वाहनत्वेन अत्या०स०। उष्ट्रवाहनयुक्ते शकटादौ। (उटगाड़ि)।

**अध्यूढ** त्रि० अधि उपरि ऊढः। अवलम्बनत्वेन उपरिभावेण अवलम्बिते। "तस्मादृच्यध्यूढं साम गीयते" इति छा० उप०। ऋचमवलम्ब्यैव साम्नो गीयमानतया ऋच्यध्यूढत्वम्। अधिकर्द्धियुक्ते, समृद्धे च। कृतसापत्निकायां प्रथमायां "यस्या उपरि विवाहान्तरं कृतं" तादृश्यां स्त्रियाम् स्त्री।

**अध्यूध्नी** स्त्री अधिकमूधोयस्याः अनङ् ङीप् च। समृद्धापीनायां धेन्वाम् "अध्यूध्नीं होत्रे प्रयच्छतीति श्रुतिः अवधाध्यूध्नीवनिष्णुषु सद्वय इति का० १,८,८१।

**अध्येतव्य** त्रि० अधि–इङ कर्म्मणि क्त। पाठ्ये "स्वाध्यायोऽध्येतव्य इति" श्रुतिः। अर्हार्थे तव्य। अध्येतुमर्हे "श्रोत-मिह शूद्रेण नाध्येतव्यं कदाचनेति" स्मृतिः।

**अध्येषण** न० अधि–इष–प्रेरणे ल्युट्। सत्कारपूर्व्वकमाचार्य्यादेः प्रेरणे, प्रवर्त्तनमात्रे च। युचि टाप् तत्रैवार्थे स्त्री। अधिका एषणा प्रार्थना। अधिकप्रार्थने स्त्री।

**अध्रि** त्रि० न–धृ–क्रि। अधृते। न+धृष–ड्रि, अधृष्ये।

**अध्रिगु** त्रि० अध्रि+गम–कु–डिच्च ऊङादेशो वा। अधृतगमने। "यदध्रिगावोऽध्रिगू इदाचिदह्नो अश्विना" इति ऋ० ८,२२,११, "अध्रिगावोऽधृतगमना अध्रिगू–अधृतगमनाविति" भा०।

**अध्रिज** त्रि० अध्रिमधृतमधृष्यं वा जनयति जन–अन्तर्भूतण्यर्थे, ड। अधृतजनके अधृष्यजनके च। "इति चिन्मन्युमध्रिज इति ऋ०५,७,१० "अध्रिजः अधृतमन्यैः अग्निव्यतिरिक्तैः अधृष्यं वा जनयिता" इति भा०।

**अध्रुव** त्रि० न०त०। अनिश्चिते, चञ्चले, अस्थिरे च। "योध्रुवाणि परित्यज्य अध्रुवाणि निषेवते। ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि" इति हितो०।

**अध्रुष** पु० "शोथः स्थूलस्तोददाहप्रकाशो रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्य इति" सुश्रुतोक्ते विकृतरक्तादिजे ज्वरकारके शोथरोगभेदे।

**अध्वग** पु० अध्वन्+गम–ड। पथिके, अध्वगमनप्रकारश्च विष्णुसंहितायामुक्तः। यथा "नैकोऽध्वानं प्रपद्येत नाधार्म्मिकैः सार्द्धम्, न वृषलैः, न द्विषद्भिः, नातिप्रत्यूषम्, नातिसायम्, न सन्ध्ययोः, न मध्याह्ने, न सन्निहितपानीयम्, नातित्वरितम्, न रात्रौ, न सन्ततव्याधितार्त्तवाहनैः, न हीनाङ्गैः, न रोगिभिः, न दीनैः, न गोभिः, नादान्तैः, यवसोदकवाहनानामदत्त्वात्मनः क्षुत्तृष्णापनोदने न कुर्य्यात्। न चतुष्पथमधितिष्ठेत्, न रात्रौ वृक्षमूलम्, न शून्यालयं, न तृणम्, न पशूनां बन्धनागारम्, न केशतुषकपालास्थिभस्माङ्गारान्, न कार्पासास्थि। चतुष्पथं प्रदक्षिणीकुर्य्यात् देवतांश्च। प्रज्ञातांश्च वनस्पतीन्, अग्निब्राह्मणगणिकापूर्णकुम्भादर्शच्छत्रध्वजपताकाश्रीवृक्षवर्द्धमाननन्द्यावर्त्तांश्च, तालवृन्तचामराग्निगजाजगोदधिक्षीरमधुसिद्धार्थकांश्च, वीणाचन्दनायुधार्द्रगोमयपुष्पशाकगोरोचनादूर्वाप्ररोहांश्च, उष्णीषालङ्कारमणिकनकरजतवस्त्रासनयानामिषांश्च, भृङ्गारोद्धृतोर्व्वरारज्जुबद्धपशुकुमारीमीनांश्च दृष्ट्वा प्रयायादिति। मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत वान्तविरिक्तमुण्डमलिनवसनजटिलवामनांश्च, कषायिप्रव्रजितमलिनांश्च, तैलगुड़शुष्कगोमयेन्धनतृणकुशपलाशभस्माङ्गारांश्च, लवणक्लीववासवनपुंसककार्पासरज्जुनिगड़मुक्तकेशांश्च, वीणाचन्दनार्द्रकाणोष्णीषालङ्कृतकुमारीः प्रस्थानकालेऽभिवन्द्येदिति। देवब्राह्मणगुरुदीक्षितानां छायां नाक्रामेत्,

निष्ठ्यूतवान्तरुधिरविण्मूत्रस्नानोदकानि वा । न वत्सतन्त्रीं लङ्घयेत् । प्रवर्षति न धावन्, न द्रुत्या नदीं तरेत् । न देवताभ्यः पितृभ्यश्च कामं प्रदाय, न बाहुभ्याम्, न भिन्नया नावा । न कच्छमधितिष्ठेत् । न कूपमवलोकयेत्, न लङ्घयेत् । वृद्धभारिन्रूपस्नातस्त्रीरोगिवरचक्रिणाम् पन्थादेयो नृपस्तेषां मान्यः स्नातश्च भूपतेरिति" । "सन्तानकतरुच्छायासुप्तविद्याधराध्वगमिति" कुमा० । सूर्य्ये, उष्ट्रे, च । पथिगामकमात्रे त्रि० । गङ्गायां स्त्री अश्वतरे पु० ।

**अध्वगत्** त्रि० अध्वानं गच्छति क्विप् । पथिके ।

**अध्वगभोग्य** पु० अध्वगेन अतिसौलभ्यात् अयत्नलभ्यफलत्वाच्च भोग्यः ३त० । (आमड़ा) इति प्रसिद्धे आम्रातकवृक्षे । अनायासेन तत्फलस्य भोग्यत्वात्तस्य तथात्वम् ।

**अध्वजा** स्त्री अध्वनि जायते जन–ड ७त० । (सोना) इति ख्याते स्वर्णपुष्पीवृक्षे ।

**अध्वन्** पु० अत्ति बलम् अद्–क्वनिप् धादेशः । पथि, "अपि लङ्घितमध्वानं बुबुधे न बुधोपमः" इति रघुः । "अध्वानमध्वान्तविकारलङ्घ्य" इति कु० । "नैकोऽध्वानं गच्छेदिति विष्णुस० । आकाशे पु० निरुक्तकारः । अधिकदुरारोहणे च । सर्वभक्षकत्वात् काले, हिंसे च । अद्यते खण्डशो भक्ष्यतेऽनेनेति करणे क्वनिप् । अवयवे । शा०स० । उपसर्गपूर्वादच्समा० । अध्वः दुरध्वः (कुपथः) प्रा०ब० । कदादेशः कदध्वा । अवयवश्च वेदस्य शाखाऽपि यथा "एकविंशत्यध्वयुक्तमृग्वेदमृषयो विदुः । सहस्राध्वा सामवेदो यजुरेकशताध्वकमिति ।

**अध्वनीन** त्रि० अध्वानमलं गच्छति अध्वन्+ख । पथिके । पथिगमनक्षमे ।

**अध्वन्य** त्रि० अध्वानमलं गच्छति अध्वन्+यत् । पथिके । पथि शीघ्रगमनक्षमे शीघ्रगामिनि । "क्षिप्रं ततोऽध्वन्यतुरङ्गयायीति" भट्टिः ।

**अध्वपति** त्रि० ६त० । मार्गपालके । सूर्य्ये पु० दिवैव पथिकानां गमनात् रात्रौ च "न रात्राविति" विष्णुना गमननिषेधात् सूर्य्यस्य तत्पालकत्वम् "अध्वनामध्वपते ! प्रमा तिर स्वस्ति मेऽस्मिन् देवयाने पथीति यजु० । "अध्वपते ! मार्गपालकरवे" इति वेददीपः ।

**अध्वर** पु० अध्वानं सत्पथं राति रा+क । यज्ञे । "अध्वरेष्विष्टिनां पातेति" भट्टिः । "तमध्वरे विश्वजिति क्षितीशमिति" रघुः । आकाशे निरुक्तकारः । अष्टवसुमध्ये द्वितीयवसौ च । न ध्वरति कुटिलो न भवति ध्वृ–अच् न०त० । अकुटिले च । दैव्या होतारा ऊर्द्ध्वमध्वरं न इति २७,१८ "इमं यज्ञमवतामध्वरं न" इति यजु० । २७,१७ अध्वरं "अकुटिलं शाक्लोक्तमिति" वेददीपः । सावधाने त्रि० नञा० फक् । आध्वरायणः ।

**अध्वरकर्म्मन्** न० अध्वरएव कर्म्म । यज्ञरूपकर्म्मणि ।

**अध्वरमीमांसा** स्त्री अध्वरस्य यज्ञस्य कर्त्तव्यताज्ञानाय मीमांसा विचारः । जैमिनीयप्रोक्ते "अथातो धर्मजिज्ञासेत्यादि धर्म्ममीमांसाख्ये शास्त्रे ।

**अध्वरथ** पु० अध्वैव रथो यस्य ब० । पथिमत्ते दूते । अध्वने हितः पर्य्याप्तो रथो यस्य ब० । पथिगमनोपयुक्ते रथे । चक्रविशिष्टोरथस्तावत् क्रीडार्थः, देवयानार्थः विनयार्थः पथिगमनार्थः गम्भीरथश्चेति भेदात् पञ्चविधः । इति हेमचन्द्रः ।

**अध्वर्य्यु** पु० अध्वरमिच्छति अध्वर+क्यच्–युच् ततोऽन्त्याकारलोपः । यजुर्वेदज्ञे होमकारिणि ऋत्विजि । "निर्मिमीते क्रियास्तुर्य्यैरध्वर्य्युर्वित्रियं वपु"रिति सा०भा० । सोमयागे षोड़शसु ऋत्विक्षु चतुर्षु प्रधानेषु मध्ये ऋत्विग्भेदे तद्विवरणम् अच्छावाकशब्दे दृश्यम् । "होता प्रथमं शंसति तमध्वर्य्युः प्रोत्साहयतीति" सि०कौ० । "त्वमध्वर्य्युरुत होतासि पूर्व्यः प्रशास्तापोता जनुषा पुरोहित" इति ऋ० १,९४,६ । योपधत्वात् स्त्रियां न ङीप् । अध्वर्य्योर्भावः कर्म्म उद्गा० अण् आध्वर्य्यवम् तद्भावादौ न० ।

**अध्वशल्य** पु० अध्वनि शल्यमिवाचरतीति क्विप्+अच् । पथिकानां पादवस्त्रादौ शल्यवद्वेधकारके (आपाङ) इति ख्याते अपामार्गवृक्षे ।

**अध्वस्मन्** त्रि० ध्वंस–मनिन् किच्च न०त० । ध्वंसरहिते "अध्वस्मभिः पथिभिः भ्राजदृष्टय" इति ऋ० २,२४,५, अध्वस्मभिः ध्वंसरहितैरिति भा० अध्वस्मानोद्विविष्मति ऋ०१२०४० ।

**अध्वाति** पु० अध्वानमतति अत इ ६त० । पथिके । अध्वा नियममतति अद्धेति दोपदो धात्नः । मेधाविनि निरुक्त० ।

**अध्वान्तशात्रव** पु० अध्वान्तस्य मार्गसीमायाः शात्रव इव । शोनाकवृक्षे । ६त० । मार्गसीमारिपौ पु० ।

**अध्वायन** न० अध्वनि अयनं गतिः । यात्रायाम् "अध्वायनस्य अङ्गचारकर्म्मा शौरेण मानेन सदाध्यवस्ये"दिति विष्णुध० पुरा० । "अध्वायनमध्वगमनं यात्रेति यावदिति" रघु० ।

**अन** जीवने अदा०पर० अक०सेट्। अनिति आनीत्। घञ् आनः, अच् अनः, ल्युट् अननम्। आनयति अनिनिषति। क्विप् अन् "सर्वं खल्विदं ब्रह्म तज्जलानिति" "विश्वे चनेदना ऋ० ४ ३०, २, अना प्राणेनेति भा० छा०उप० "यद्येष आकाश आनन्दो न स्यात् कोह्येवान्यात्? कः प्राण्यात्? इति श्रुतिः "प्राणिवत्तत्र मानार्थमिति" भट्टिः। प्राद्युपसर्गतो विशेषगत्यर्थता। प्र+प्राग्गतौ, प्राणः अप+अधोगतौ अपानः, उद्+ऊर्द्ध्वगतौ उदानः, वि+आ+विश्वग्गतौ व्यानः, सम्+समन्ताद्गतौ समानः। "यद्वै प्राणिति स प्राणः यदपानिति सोऽपानः" इति श्रुतिः। जीवनं च प्राणधारणं तेन धात्वर्थसङ्गृहीतकर्मकत्वादकर्मकः यस्य संयोगात् देहनिर्म्माणमित्युक्तमधिष्ठानशब्दे। उपसर्गनिमित्तात् हलन्तेऽप्यस्य णत्वं प्राण्।

**अन** जीवने दिवा० आत्म०अक० सेट्। अन्यते आनिष्ट।

**अन** पु० आ+नी—वा०ड पृ० आङो ह्रस्वः अन—वा० अच् वा। आनयने प्राणने च "प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण इति" वृ०उप०। "अथ प्राण उच्यते। प्राणो मुखनासिकसञ्चार्य्याहृदयवृत्तिः। प्रणयनात् प्राणः। अपनयनान्मूत्रपुरीषादेरपानोऽधोवृत्तिः आनाभिस्थानः। व्यानो व्यानयनकर्मा, व्यानः प्राणापानयोः सन्धिर्वीर्य्यवत्कर्म्महेतुश्च। उदान उत्कर्षोर्द्ध्वगमनादिहेतुरापादतलमस्तकस्थान ऊर्द्ध्ववृत्तिः। समानः समं नयनाद्भुक्तस्य पीतस्य च कोष्ठस्थानोऽन्नपक्ता। अन इत्येषां वृत्तिविशेषाणां सामान्यभूता सामान्यदेहचेष्टासम्बन्धिनी वृत्तिरेवं यथोक्तं प्राणादिवृत्तिजातमेतत् सर्वं प्राण एवेति" भा०। प्राणे च "स होवाच किं मेऽन्नं भविष्यतीति" यत्किञ्चिदिदमा श्वभ्य आ शकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षमिति छा०उ० "स होवाच मुख्यः प्राणः, किं मेऽन्नं भविष्यतीति" मुख्यप्राणं प्रष्टारमिव कल्पयित्वा वागादीन् प्रतिवक्तॄनिव कल्पयन्ती श्रुतिराह। यदिदं लोकेऽन्नजातं सर्वप्रसिद्धमा श्वभ्य आ श्वभिः सह, आ शकुनिभ्यः सह शकुनिभिः सर्वं प्राणिनां यदन्नं तत्तवान्नमिति होचुर्वागादय इति। प्राणस्य सर्वमन्नं प्राणोऽत्ता सर्वस्यान्नस्येत्येवं प्रतिपत्तये कल्पिताख्यायिकारूपाद्वाक्यात् स्वेन श्रुतिरूपेणाह। तद्वै एतद्यत्किञ्चिल्लोके प्राणिभिरन्नमद्यते अनस्य प्राणस्य तदन्नम् भा०

**अनंश** त्रि० नास्ति अंशो दायग्रहणाधिकारोऽस्य। अंशानधिकारिणि अयुक्ते क्लीवपतितादौ। ते च "सर्व्वे हि धर्म्मयुक्ता भागिनो द्रव्यमर्हन्ति यस्त्वधर्म्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीतेति" आप०। "सवर्णाजोऽप्यगुणवान्नार्हः स्यात् पैतृके धने। तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते। उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः। अतस्तद्विपरीतेन नास्ति तेन प्रयोजनम्। तथा गवा किं क्रियते या न धेनुर्न गर्भिणी। कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्म्मिकः। शास्त्रशौर्य्यार्थरहितस्तपोविज्ञानवर्ज्जितः। आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्तु स इति वृह०। "श्राद्धादेः पुत्रकर्त्तृकतया महाफलश्रुतेस्तत्कर्म्मवेतनं धनसम्बन्धित्वं अतस्तदकुर्व्वतः कुतो वेतन? मिति दा०भा०। अतएवाह मनुः। "सर्व एव विकर्म्मस्था नार्हन्ति भ्रातरो धनम्"। तथा "अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा। उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः इति। "पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जड़ः। अन्धोऽचिकित्स्यरोगार्त्तौ भर्त्तव्यास्ते निरंशका" इति कात्या०। देवलः "मृते पितरि न क्लीवकुष्ठ्युन्मत्तजड़ान्धकाः। पतितः पतितापत्यं लिङ्गी दायांशभागिनः। तेषां पतितवर्ज्जेभ्यो भक्तवस्त्रं प्रदीयते। तत्सुताः पितृदायांशं लभेरन् दोषवर्ज्जिताः" इति। बौधायनः। "अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुः, अन्धजड़क्लीवव्यसनिव्याधितादींश्चाकर्म्मिणः पतिततज्जातवर्जम् इति"। "पितृद्विट् पतितः षण्डो यश्च स्यादौपपातिकः। औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः?। इति" नार० "अक्रमोढासुतश्चैव सगोत्राद्यस्तु जायते। प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति। अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः। असवर्णप्रसूतश्च क्रमोढायाश्च यो भवेत्। प्रतिलोमप्रसूतायास्तस्याः पुत्रो न रिक्थभाक्। ग्रासाच्छादनमात्रं तु देयं तद्बन्धुभिर्मतम्। बन्धूनामप्यभावे तु पित्र्यं द्रव्यं तदाप्नुयात्। स्वपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवा इति कात्या०। एवं दर्शिताः। अंशः अवयवः। तच्छून्ये निरवयवे आकाशादौ, परमेश्वरे च। [यस्याः। कदल्याम् जटाधरः।

**अनंशुमत्फला** स्त्री न अंशुमत् मोचकाभ्यन्तरस्थत्वात् फलं

**अनक** पु० अणकवत्। अधमे, कुत्सिते च।

**अनक्ष्** त्रि० न अक्ष्णोति व्याप्नोति विषयमिन्द्रियेण अक्ष—क्विप् न०त०। अन्धे चक्षुरिन्द्रियशून्ये। "प्रतिश्रोणः स्था व्यनगचष्टेति" ऋ०२, १५, ७, "पूर्व्वमन्धः अधुना चक्षुर्लाभात् व्यचष्टेति भा०।

**अनक्ष** त्रि० नास्ति अक्षं चक्षुर्नेत्रादिकमिन्द्रियं वा यस्य ब०।

वक्रशून्ये, चक्षुरादीन्द्रियशून्ये च। "अपानक्षासो बधिरा अहासत" इति ऋ० ९,७३,६, अनक्षासचक्षुर्वर्ज्जिताः इति भा० वेदे सौभ्रास इति वत् अनक्षास इति। रूपसिद्धिः।

**अनक्षर** न० अप्रशस्तान्यक्षराणि यत्र ब०। सद्गुणसमाक्षेपके दोषोद्घोषकवाक्ये, अवाच्ये निन्दावचने, (गालि) इति प्रसिद्धे दुष्टवचने च। न सन्ति अक्षराणि ज्ञेयत्वेनास्य। अक्षरज्ञानशून्ये मूर्खे त्रि०।

**अनक्षि** पु० अप्रशस्तं मन्दमक्षि न०त०। मन्दनेत्रे। ब०। षच्समासान्तः। तत्र अनक्ष इत्येव। तद्वति। स्त्रियां ङीष्।

**अनगार** त्रि० नास्ति अगारमस्य। गृहशून्ये। अनिकेतने। प्रव्रजिते, मुन्यादौ च पु०।

**अनग्न** त्रि० न नग्नः। अदिगम्बरे आच्छादनवति च "यद्वोन-वसना अनग्ना" इति ऋ० १,१,६,। "स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको यथा वासो भवत्यनग्नो ह भवतीति छा०उ०। "तस्मात्प्राणस्य वास आपस्तस्माद्वा एतदशिष्यन्तो भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा विद्वांस एतत्कुर्वन्ति। किं अद्भिर्वासस्थानीयाभिः पुरस्ताद्भोजनात्पूर्व्वञ्चपरिष्टाच्च भोजनादूर्द्धञ्च परिदधति परिधानं कुर्व्वन्ति मुख्यस्य प्राणस्य लम्भुको लम्भनशीलो वासो भवति। वाससो लब्धैव भवतीत्यर्थः। अनग्नो भवति। वाससो लम्भुकत्वेनार्थसिद्धैवानग्नता इत्यनग्नो ह भवतीत्युत्तरीयवान् भवतीत्येतत्" इति भाष्यम्।

**अनग्नि** पु० नास्ति अग्निः श्रौतः स्मार्त्तो वाऽस्य। श्रौतेन स्मार्त्तेन वा विधिना अनाहिताग्नौ गृहस्थभेदे, सर्व्वथा अग्निशून्ये, प्रव्रजिते च। "अनग्निरनिकेतश्च मुनिर्मूलफलाशन" इति मनुः। न०त०। अग्निभिन्ने पु०। "अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिदिति" श्रुतिः। ७ब०। अग्निचयनरहिते यज्ञे च। "अनग्नावुत्तरवेदिम्, कात्या० २६,७,११, "अनग्नौ अग्निरहिते अनग्निचित्ये यज्ञे, उत्तरवेदिं प्रतिगच्छतीति" तद्व्याख्या।

**अनग्नित्रा** न अग्निं त्रायते रक्षति असम०स०। अग्निरक्षाकरे पापिष्ठे "अनग्नित्रा अभ्यमन्त कृष्टीः" ऋ० १,१८९,३, "अनग्नित्राः पापिष्ठाः कृष्टयः प्रजा" इति भा०।

**अनग्निदग्ध** त्रि० न अग्निना दग्धः असम०स०। श्मशानकर्म्मणि अग्निसंस्कारहीने "ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः" इति ऋ० १०,१५,१४, "अनग्निदग्धाः श्मशानकर्म्म न प्राप्ताः" इति भा०। पितृभेदे "अग्निदग्धानग्निदग्धान् काव्यान् बर्हिषदस्तथा अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्द्दिशेदिति" मनुः। वह्निना अदग्धे च।

**अनघ** त्रि० नास्ति अघं पापं दुःखं व्यसनं कालुष्यं वा यस्य। पापशून्ये, दुःखहीने, व्यसनशून्ये, मलशून्ये, स्वच्छे च। विष्णौ पु० "अनघो विजयो जेतेति" वि० सह०। "स आत्माऽपहतपाप्मेत्यादि" श्रुतौ तस्य पापराहित्योक्तेस्तथात्वम्। तत्र दुःखशून्ये, "दयालुमनघस्पृहमिति" माघः। दोषरहिते "अगाधस्यानघा गुणा" इत्यमरः। व्यसनरहिते "कच्चित् मृगीणामनघा प्रसूतिः ? इति" रघुः।

**अनङ्ग** न० नास्ति अङ्गमाकारो यस्य। आकाशे, चित्ते च। कन्दर्पे पु०। अङ्गशून्यमात्रे त्रि०। तत्राकाशस्य निरवयवत्वात्, न्यायवैशेषिकनये चित्तस्याणुत्वेन च निरवयवत्वात्तथात्वम्। कामस्य हरनेत्रेण दग्धाङ्गत्वात् अनङ्गत्वम्। तत्कथा च शिवपुराणे "कामो धनुषि संयोज्य पुष्पवाणं तदा मुने! पार्व्वतीसम्मुखे स्थाणौ मोक्तुकामो व्यवस्थितः। हरस्तु धैर्य्यमालम्ब्य किमेतदिति चिन्तयन्। ददर्श पृष्ठतः कामं पुष्पवाणधनुर्धरम्। विवृद्धमन्योस्तस्याथ तृतीयनयनात् मुने!। स्फुरन्नुदर्च्चिरग्निस्तु पपात मदनोपरि। क्रोधं संहर हे देव! इति यावत् वदन्ति खे। इन्द्रादिसकला देवास्तावद्भस्मीचकार तम्" इति॥ "त्वमनङ्गः कथमक्षता रतिरिति" "तनुतां दुःखमनङ्ग! मोक्ष्यतीति" च कुमा०। अङ्गमुपकरणं न०त०। अङ्गभिन्ने। न०ब०। तच्छून्ये त्रि०।

**अनङ्गक्रीडा** स्त्री अनङ्गेन क्रीडा। कामहेतुकक्रीडायाम्। "अष्टावर्द्धे गा ह्रस्वास्ता यस्याः सानङ्गक्रीडेत्युक्तेति" (वृत्त०) उक्ते मात्रावृत्तभेदे च।

**अनङ्गलेख** पु० अनङ्गस्य तद्व्यञ्जको लेखः। कामव्यञ्जकलेखे। "अनङ्गलेखक्रिययोपयोगमिति" कुमा०।

**अनङ्गशेखर** पु० क्रमेण लघुगुरुनिवेशवति दण्डकभेदे, छन्दोविशेषे। यथा "लघुगुरुः क्रमेण यत्र बध्यते सुधीभिरिच्छया स दण्डकस्त्वनङ्गशेखरः स्मृतः" इति छन्दो०।

**अनङ्गासुहृत्** पु० ६त०। शिवे तस्य तद्देहभस्मीकरणात्तत्त्वम्।

**अनच्छ** त्रि० न अच्छः निर्मलः न०त०। कलुषे, अप्रसन्ने च।

**अनञ्जन** न० न अज्यते लिप्यते अन्ज—कर्म्मणि ल्युट् न०त०। निःसम्बन्धे, आकाशे, परब्रह्मणि च। "निरञ्जनं साम्यमुपैति दिव्यमिति" श्रुत्या तस्य सम्बन्धराहित्योक्तेस्तथात्वम्। अञ्जनं दोषस्तद्रहिते नारायणे पु०। तथाभूतवस्तुमात्रे

त्रि० । कज्जलशून्ये त्रि० । "नेत्रे दूरमनञ्जने पुलकितेति" सा०द० ।

**अनडुज्जिह्वा** स्त्री अनडुहोजिह्वेव । गोजिह्वायाम् (अनन्तमूल) । तस्या गोजिह्वाकृतिपत्रत्वात्तथात्वम् ।

**अनडुह्** पु० अनः शकटं वहतीति नि०। (एँड़े) इति प्रसिद्धे गवि । स्त्रियां गवि ङीपि अनडुही, अनड्वाहीति च । ऋश्यादि० क । अनडुत्कः अनडुदासन्नदेशादौ त्रि० । ऋषिभेदे । तद्गोत्रापत्ये गर्गा० यञ् । आनडुह्यः तदपत्ये पु०स्त्री ।

**अनणु** पु० न अणुः । स्थूलधान्ये "अनणुषु दशमांशोऽणुष्वष्टकादशांशः" लीला० । अणुभिन्ने स्थूले त्रि० स्त्रियां ङीप् ।

**अनतिक्रम** न० न०त० । अतिक्रमाभावे । [क्रमणीये ।

**अनतिक्रमणीय** त्रि० न०त० । अतिक्रमणीयभिन्ने अनुल्ल-

**अनतिद्भुत** त्रि० सर्वाणि अतिक्रम्य न भवति अति–भू–डुतच् न०त०ष्ठ० । सर्वातिक्रमेणाभूते यथार्थभूते । "नकी त इन्द्र ! गिर्वणः क्रियन्ते अनतिद्भुता" इति ऋ० ८,९१,२, अनतिद्भुता सर्वानतिक्रम्य न भवन्ति इन्द्रगुणव्यापकानि यथार्थभूतानीति" भा० ।

**अनतिप्रश्न्य** त्रि० अतिप्रश्नमर्हति यत् न०त० । अतिप्रश्नानर्हे वस्तुनि । "सहोवाच गार्गि ! मातिप्राक्षीः मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसीति" वृ०उ०

**अनतिरिक्त** त्रि० न० । अधिके । "न्यायोक्ते स्वानधिकरणवृत्तिभिन्ने च "अनतिरिक्तवृत्तित्वमवच्छेदकत्वमिति"गदा०।

**अनतिविलम्बिता** स्त्री न अतिविलम्बिता अभावार्थे न०त० । अतिविलम्बाभावे वाग्गुणभेदे च । वाग्गुणाश्च हेमचन्द्रे दर्शिताः यथा "संस्कारवत्त्वमौदार्य्यमुपचारपरीतता । मेघगाम्भीर्य्यनिर्घोषप्रतिनादविधायिता दक्षिणत्वमुपनीतरागत्वं च महार्थता । अव्याहतत्वं शिष्टत्वं संशयानामसम्भवः । निराकृतान्योत्तरत्वं हृदयङ्गमिताऽपि च । मिथः साकाङ्क्षता प्रस्तावौचित्यं तत्त्वनिष्ठता । अप्रकीर्णप्रसृतत्वमसंश्लाघ्यान्यनिन्दिता । आभिजात्यमतिस्निग्धमधुरत्वं प्रशस्यता । अमर्मवेधितौदार्य्यं धर्म्मार्थप्रतिबद्धता । कारकाद्यविपर्य्यासो विभ्रमादिवियुक्तता चित्रकृत्त्वमद्भुतत्वं तथानतिविलम्बिता अनेकजातिवैचित्र्यमारोपितविशेषता । सत्वप्रधानता वर्णपदवाक्यविविक्तता । अव्युच्छित्तिरखेदित्वम् पञ्चत्रिंशच्च वाग्गुणाः" इति ।

**अनद्धा** अव्य० न अद्धा । अनिश्चये "अनद्धा वैतद्यदिमाल्लोकानतीति" वेदः । नह–क्त न०त० । अपरिबद्धे त्रि० ।

**अनद्धापुरुष** न अद्धा स्वकार्य्ये निश्चयो यस्य तादृशः पुरुषः । देवपितृकार्य्यविमुखे । "अनद्धापुरुषमीक्षते" इति का० १६,२,१२, "अनद्धापुरुषं देवपितृकार्य्ये विमुखमध्वर्युमिति" वेददीपः ।

**अनद्य** पु० न अद्यं भक्ष्यम् अप्राशस्त्ये न०त० । गौरसर्षपे राजनिघ० । भक्ष्यभिन्ने त्रि० ।

**अनद्यतन** पु० न अद्यतनः । अद्यतनभिन्ने भूते भविष्यति च काले "अनद्यतने लङि"ति "अनद्यतने लुडिति" च पा० । अनद्यतने भूते लङ् अपचत्, अनद्यतने भविष्यति लुट् पक्तेति "परोक्षानद्यतने लिडिति" पा० पपाच । तत्कालवृत्तौ त्रि० । अद्यतनश्च "अतीतायारात्रेः पश्चार्द्धेन, आगामिन्याः रात्रेः पूर्व्वार्द्धेन सहितोदिवसोऽद्यतन" इति सि०कौ० तद्भिन्नः कालः ।

**अनधिकार** पु० न अधिकारः अभावार्थे न०त० । अधिकाराभावे । ब० । अधिकारशून्ये ।

**अनधिकारचर्चा** स्त्री अनधिकारस्य चर्चा चिन्ता । यत्र यस्याधिकारो नास्ति तस्य तद्विषये चिन्तायाम् ।

**अनधिकारिन्** त्रि० न अधिकारी । अधिकारिभिन्ने ।

**अनधिकृत** त्रि० न अधिकृतः । अधिकृतभिन्ने ।

**अनधिगत** त्रि० न०त० । गतभिन्ने, प्राप्तभिन्ने, ज्ञातभिन्ने च अनधिगताबाधितार्थज्ञानत्वेन प्रमाणत्वमिति वे०प० ।

**अनधिष्ठित** त्रि० न अधिष्ठितः । अधिष्ठितभिन्ने ।

**अनधीन** त्रि० न अधीनः परस्य । स्वाधीने । संज्ञायाम् कन् । कौटतक्षे । स हि स्वशां वसन् न कस्यचित् अधीनः

**अनध्यक्ष** न० अध्यक्षम् अभावे न०त० । प्रत्यक्षाभावे "मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्" इति भाषा० द्रव्यप्रत्यक्षं प्रति आश्रयमहत्त्वस्य कारणत्वेन मनसश्च "अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते इत्युक्तेः अणुत्वेन ज्ञानादिप्रकारकं अहंजानामीत्याद्याकारं ज्ञानं प्रत्यक्षं न स्यात् ज्ञानाश्रयत्वेन अभिमतस्य मनसो महत्त्वाभावादिति तदाशयः । ब० । अध्यक्षरहिते त्रि० ।

**अनध्याय** पु० अध्यायोऽध्ययनमभावार्थे न०त० । अध्ययनाभावे । न अधीयतेऽस्मिन् काले इति अधिकरणे घञ् । अध्ययनाय निषिद्धे "चातुर्मास्यद्वितीयादौ स्मृतिप्रक्तानध्यायकाले "अष्टकासु च संक्रान्तौ शयने बोधने हरेः । अनध्यायं प्रकुर्व्वीत" तेष्वाद्युक्ते काले, "निर्घाते भूमिचलने" इत्याद्याकालिकानध्यायकाले च । अनध्यायकालाश्च स्मृतौ

दर्शिताः यथा "प्रेकोर्च्चा द्वितीयास्ताः प्रेतपक्षे गते तु या । या तु कोजागरे याते चैत्रावल्याः परेऽपि या । चातुर्मास्ये समाप्ते च द्वितीया या भवेत्तिथिः । परास्त्वेतास्त्वनध्यायः पुराणैः परिकीर्त्तित" इति राजमार्त्तण्डः । "चैत्रकृष्णद्वितीयायां तिसृष्वेवाष्टकासु च मार्गे च फाल्गुने चैव आषाढ़े कार्त्तिके तथा । पक्षयोर्माघमासस्य द्वितीयां परिवर्ज्जयेदिति" भुजबलः । "मन्वादौ च युगादौ च शिष्यान्नाध्यापयेद्बुधः" । निर्णयामृते "रात्रौ यामद्वयादर्व्वाक् सप्तमी च त्रयोदशी । प्रदोषः स तु विज्ञेयो वेदाध्ययनगर्हितः ॥ रात्रौ नवसु नाड़ीषु चतुर्थी यदि दृश्यते । प्रदोषः स तु विज्ञेयो वेदाध्ययनगर्हित" इति ॥ निर्णयसिन्धौ प्रजापतिः । "षष्ठी च द्वादशी चैव अर्द्धरात्रोननाड़िका । प्रदोषे त्वनधीयीत तृतीया नवनाड़िका" ॥ वृद्धगर्गः । "कृतिशुक्लाननध्यायान् सप्तमीञ्च त्रयोदशीम् । पक्षयोर्माघमासस्य द्वितीयां परिवर्जयेत्" इति । अनध्यायास्तु द्विविधा नित्या नैमित्तिकाश्चेति तत्र नित्याः । "आषाढ़े फाल्गुने ज्यैष्ठे या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः" ॥ गर्गोऽपि ॥ "कृष्णपक्षे द्वितीयायां फाल्गुनाषाढ़कार्त्तिके । शुक्लाश्वयुग्द्वितीयायां नैवाध्ययनमाचरेत्" इति । "एतायुगादयः प्रोक्ताः स्वाध्यायं वर्जयेद्बुध" इति उश० । गौतमः । "चातुर्मास्यद्वितीयासु, मन्वादिषु युगादिषु । अष्टकासु च संक्रान्तौ शयने बोधने हरेः । अनध्यायं प्रकुर्वीत तथा सोपपदासु चेति" । सोपपदास्तु । "सिता ज्यैष्ठे द्वितीया च आश्विने दशमी तथा । चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृता इति" गर्गोक्ताः । वृहन्मनुः "पक्षद्वये चतुर्दश्योरष्टमीद्वितीये तथा । पक्षादावपि पक्षान्ते ब्रह्म नाधीयते नरैः ॥ अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्द्दशी । अमावस्योभयं हन्ति प्रतिपत् पाठमात्रत" इति । मनुः नैमित्तिकानध्यायानाह स्म । "सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने । अतवन्धं न कुर्व्वीत" इति ॥ तथापस्तम्बः ॥ "उल्कायामस्त्युत्पाते च सर्वासां विद्यानामाकालिकमिति" ॥ स्मृत्यन्तरे ॥ "विद्युद्गर्जितवृष्टीनां सन्निपातोयदा भवेत् । अनध्यायं प्रकुर्वीतेत्यादि" । "प्रतेऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्ज्जति । तद्दिनं स्यादनध्यायं प्रतं तत्र विवर्जयेत्" ॥ "सायं सन्ध्यास्तनिते, प्रातःसन्ध्यास्तनिते अहोरात्रौ, विद्युत्पररात्रावधि विद्युति, नक्तञ्चापररात्रादिति गौत० । स्मृतिरत्नावल्याम् "कालवृष्टौ च तत्कालमकाले च त्रिरात्रकम् । अतिमात्राथवा वृष्टिर्नाधीयीत दिनत्रयम् । अनुराधर्क्षमारभ्य षोड़शर्क्षेषु भास्करः । यावद्वर्त्तति चैतावत्कालं मुनयो विदुः ॥ तथा च वराहः । मार्गान्मासात् प्रभृति मुनयोव्यासवाल्मीकिगर्गाश्चैत्रं यावत् प्रवर्षणविधौ नेतिकालं वदन्ति । नाड़ीजङ्घः कुरुगुरुमुनिः प्राह वृष्टेरकालौ मासावेतावशुभफलदौ पौषमाघौ न शेषाः" । तत्राकालवृष्टौ पशुमर्त्त्यचरणाङ्कितायामेव दोषो-नान्यथा उक्तञ्च मुहूर्त्तचिन्तामणौ "यदि मासु चतुर्षु पौषमासादिषु भवेदकालवृष्टिः । पशुमर्त्त्यचरणाङ्कितायां यावद्वसुधा नहि तावद्दोष" इति । तत्र दिनसंख्याप्युक्ता तत्रैव । एकैकमहः प्रोक्तं द्वितीयेन त्रिरात्रकम् । तृतीयेन तु सप्ताहं दशरात्रमतः परमिति, पौषे दिनत्रयं वर्ज्ज्यं माघे चैव दिनद्वयम् । फाल्गुने दिनमेकन्तु चैत्रे तु घटिकाद्वय" मित्यावश्यककार्य्यविषयम् । "अनध्यायस्य पूर्व्वेद्युरस्य चैवापरेऽहनि । व्रतबन्धं विसर्गञ्च विद्यारम्भं न कारयेत्, इति नैमित्तिकानध्यायः । मनुरपि नित्याद्यनध्यायमाह स्म । "इमान्नित्यानध्यायानधीयानो विवर्जयेत् । अध्यापनञ्च कुर्व्वाणः शिष्याणां विधिपूर्व्वकम् ॥ कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने । एतौ वर्षास्वनध्यायावध्ययज्ञाः प्रचक्षते । विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे । आकालिकमनध्यायमेतेषु मनुरब्रवीत् । एतांस्त्वभ्युदितान् विद्यात् यदा प्रादुष्कृताग्निषु । तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने । निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्जने । एतानाकालिकान् विद्यादनध्यायानृतावपि । प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने । सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा । नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च । धर्म्मनैपुण्यकामानां पूतिगन्धे च सर्व्वदा । अन्तर्गतशवे ग्रामे वृषलस्य च सन्निधौ । अनध्यायो रुद्यमाने समवाये जनस्य च । उदके मध्यरात्रे च विण्मूत्रस्य विसर्जने । उच्छिष्टः श्राद्धभुक् चैव मनसापि न चिन्तयेत् । प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् । त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके । यावदेकानुद्दिष्टस्य गन्धो लेपश्च तिष्ठति । विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्त्तयेत् । शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकाम् । नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च । नीहारे बाणशब्दे च सन्ध्ययोरेव चोभयोः । अमावास्याचतुर्द्दश्योः पौर्णमास्यष्टकासु च । अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्द्दशी । ब्रह्माष्टका-

पौर्णमास्यौ तथाष्टकाः परिवर्जयेत् । पांशुवर्षे दिशां दाहे गोमायुविरुते तथा । श्वखरोष्ट्रे च रुवति पङ्क्तौ च न पठेद् द्विजः । नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा । वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च । प्राणि वा यदि वाऽप्राणि यत्किञ्चिच्छ्राद्धिकं भवेत् । तदालभ्याप्यनध्यायः पाण्यास्यो हि द्विजः स्मृतः । चौरैरुपप्लुते ग्रामे संभ्रमे चाग्निकारिते । आकालिकमनध्यायं विद्यात् सर्वाद्भुतेषु च । उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् । अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु । नाधीयीताश्वमारूढो न वृक्षं, न च हस्तिनम् । न नावं, न खरं, नोष्ट्रं, नेरिणस्थो, न यानगः । न विवादे, न कलहे, न सेनायां, न सङ्गरे । न भुक्तमात्रे, नाजीर्णे, न वमित्वा, न सूतके । अतिथिं चाननुज्ञाप्य, मारुते वाति वा भृशम् । रुधिरे च स्रुते गात्राच्छस्त्रेण च परिक्षते । सामध्वनावृग्यजुषी नाधीयीत कदाचन । वेदस्याधीत्य वाप्यन्तमारण्यकमधीत्य च" इति । याज्ञवल्क्यस्तु । "त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु । उपाकर्मणि, चोत्सर्गे, स्वशाखश्रोत्रिये मृते । सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने । समाप्य वेदं द्युनिशमारण्यकमधीत्य च । पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके । ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च । पशुमण्डूकनकुलश्वाहिमार्जारमूषिकैः । कृतेऽन्तरे त्वहोरात्रं, शक्रपाते, तथोच्छ्रये । श्वक्रोष्टुगर्दभोलूकसामबाणार्त्तनिस्वने । अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके । देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे । भुक्तार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते । पांशुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु । धावतः पूतिगन्धे च शिष्टे च गृहमागते । खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे । सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः" इति । वशिष्ठः । "तस्यानध्यायाः सन्ध्यास्तमिते सूतके शवे दिवाकीर्त्तौ नगरेषु कामं गोमयपर्य्युषिते परिलिखिते वा श्मशानान्ते शयानस्य श्राद्धिकस्य । मानवञ्चात्र श्लोकमुदाहरन्ति । फलान्यापस्तिलान् भक्ष्यमथान्यच्छ्राद्धिकं भवेत् । प्रतिगृह्याप्यनध्यायः पाण्यास्या, ब्राह्मणाः स्मृता इति ॥ धावतः पूतिगन्धिप्रसृतेरिणद्रुममारूढस्य, नावि, सेनायाञ्च, भुक्त्वा चार्द्रपाणे, वाणशब्दे, चतुर्दश्याममावास्यायामष्टम्यामष्टकासु प्रसारितपादोपस्थस्योपाश्रितस्य गुरुसमीपे मिथुनव्यपेतायां वाससा मिथुनव्यपेतेनानिर्णिक्ते न ग्रामान्तेऽर्दितस्य, मूत्रितस्योच्चरितस्य, वजुषाञ्च सामशब्दे, वाणीये निर्घातभूमौ च न चन्द्रसूर्य्योपरागेषु, दिङ्नादपर्वतनादकम्पप्रपातेषूपलरुधिरपांशुवर्षेष्वाकालिकम् । उल्काविद्युत्सज्योतिषमपर्त्वाकालिकं वा । आचार्य्ये च प्रेते त्रिरात्रमाचार्य्यपुत्रशिष्यभार्य्यास्वहोरात्रम् । ऋत्विग्योनिसम्बन्धेषु च" इति । शङ्खोऽप्याह । "अनध्यायेष्वध्ययनं वर्जयेच्च प्रयत्नतः । चतुर्दशीं पञ्चदशीमष्टमीं राहुसूतकम् । उल्कापातं महीकम्पमशौचं ग्रामविप्लवम् । इन्द्रप्रयाणं सुरतं घनसंघातनिस्वनम् । वाद्यकोलाहलं युद्धमनध्यायं विवर्जयेत् । नाधीयीताभियुक्तोऽपि प्रयत्नाच्च वेगत" इति । "यद्दिनमहः क्रियते तद्दिनमनध्याय" इत्युक्तेः देवोत्सवादिदिनेऽपि अनध्याय इति केचित् तेन सारस्वतोत्सवे श्रीपञ्चमीदिवसे रथयात्रोत्सवादौ चानध्यायः । "महानवम्यां द्वादश्यां भरण्यामपि पर्वसु । तथाक्षयतृतीयायां शिष्यान्नाध्यापयेद् बुधः । माघमासे तु सप्तम्यां रथाख्यायाञ्च वर्जयेदिति" हारीतः । एवं नानाकृत्युक्तेषु च येन सर्वसंप्रदायाचरणीयम् ।

**अनन** न० अन–भावे ल्युट् । जीवने, गतौ च "प्राणनवान् प्राण" इत्यादि वे०भा० ।

**अननुगत** त्रि० न अनुगतः । अनुगतभिन्ने अनुगतश्च तुल्याकारप्रतीतिप्रयोजको धर्मभेदः यथा घट इति बुद्धौ घटत्वम् एवं पटत्वम् तस्य सर्वत्र एकरूपेण प्रतीयमानत्वात् । अननुगतश्च तत्तद्व्यक्तित्वादिकं तस्य सर्वत्र प्रतीत्यभावात् । अपर्य्याप्ते, अनधीने च ।

**अननुगम** पु० न अनुगमः अभावार्थे न०त० । अनुगमाभावे अनुगमश्च तुल्यप्रतीतिप्रयोजकधर्म्मानुसरणम् एतस्य न्यायादिदर्शनेषु भूरिप्रयोगः ।

**अनन्त** पु० नास्ति अन्तः गुणानां यस्य ब० । "गन्धर्वाप्सरसः सिद्धाः किन्नरोरगचारणाः । नान्तं गुणानां जानन्ति तेनानन्तोऽयमुच्यते" इत्युक्तलक्षणे विष्णौ, "अनन्त ! संसारमहासमुद्रे मग्नान् समभ्युद्धर वासुदेव !" इति भविष्यपुरा० । "विष्णुर्वीरोऽनन्त" इति विष्णुस० । मेघे । बहुशीर्षकत्वादपरिच्छिन्ने शेषनागे, तदवतारे बलभद्रे च । अन्तः परिच्छेदः देशतः कालतः वस्तुतश्च नास्ति यस्य । तस्मिन् परब्रह्मणि न० "सत्यं ज्ञानमनन्तं ब्रह्मेति" श्रुतिः । "न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः । न वस्तुतोऽपि सर्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा । देशकालान्यवस्तूनां कल्पितत्वाच्च मायया । न देशादिकृतोऽन्तोऽस्ति

ब्रह्मानन्दं ततः स्फुटमिति” पञ्चदशी। आकाशे च। बहुविस्तारवति सिन्दुवारवृक्षे पु०। अवधिशून्ये, इयत्ताशून्ये वस्तुमात्रे, सकले च त्रि० “अनन्तरत्नप्रभवस्य यस्येति” कुमा०। जिनभेदे पु०।

**अनन्तचतुर्द्दशी** स्त्री अनन्तस्य विष्णोराधानायां चतुर्दशी। भाद्रपदशुक्लचतुर्दश्याम्।

**अनन्तजित्** अनन्तानि भूतानि जितवान् जि–क्विप्। सर्वभूतजयिनि वासुदेवे। “सहस्रजिदनन्तजिदिति” विष्णुसह०। अनन्तान् चित्तदोषान् जयति। जिनदेवभेदे पु०।

**अनन्ततीर्थकृत्** पु० अनन्तानि अनेकानि तीर्थानि शास्त्राणि करोति कृ–क्विप्। जैनभेदे। बहुतीर्थकर्त्तरि त्रि०।

**अनन्ततृतीया** स्त्री “नभस्ये वाथ वैशाखे मार्गशीर्षेऽथवा पुनः। शुक्लपक्षतृतीयाया”मित्युपक्रम्य पञ्चपुराणे तत्तदन्यतमतिथिषु व्रतविशेषमभिधाय “उक्तानन्ततृतीयैषा हुतानन्दफलप्रदा”इत्यनेन परिभाषितायां भाद्रमार्गवैशाखान्यतममासीयशुक्लतृतीयायाम् हेमा०व्रत०। [परमेश्वरे च।

**अनन्तदृष्टि** पु० अनन्ता दृष्टयो नेत्राणि यस्य। इन्द्रे

**अनन्तदेव** पु० अनन्तो देव इव। शेषनागे, अनन्ते शेषनागे दीव्यति दिव–अच्। शेषशायिनि नारायणे।

**अनन्तमूल** पु०अनन्तानि मूलान्यस्य। स्वनामख्याते मूलप्रधाने वृक्षभेदे।

**अनन्तर** त्रि० नास्ति अन्तरं व्यवधानं यत्र। अव्यवहिते, व्यवधानञ्च द्विविधं दैशिकं कालिकञ्च। तत्र दैशिके“विषयानन्तरो राजा शत्रु”रित्यमरः। “एष ब्रह्मर्षिदेशो वै आर्य्यावर्त्तादनन्तर” इति मनुः। कालिके। “तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनमिति” कुमा०। “पितुरनन्तरमुत्तरकोशलामिति”रघुः। कालिकमपि द्विविधं पूर्व्वापरकालकृतव्यवधानभेदात् उत्तरकालकृतयुक्तोदाहरणे “अनन्तरोदीरितलक्ष्मभाजाविस्तर”पूर्व्वकालावधिकृतम्। मध्यशून्ये, अवकाशशून्ये, अवधिशून्ये च।“तदेतद्ब्रह्मापूर्व्वमनपरमनन्तरमबाह्यमिति” स यथा “सैन्धवघनोऽनन्तरोऽबाह्य” इति च वृ०उ०। अव्यवहितकाले। “पुराणपत्रापगमादनन्तरं–लतेव सन्नद्धमनोज्ञपल्लवा” इति रघुः। तत्र व्याप्तौ द्वितीया। तत्कालवृत्तिसंनहनक्रियाविशेषणतया क्लीवत्वादि। एवमन्यत्र एवञ्च एतस्य क्लीवोक्तिरर्वाचीनानां प्रामादिकी। एतेन अनन्तरस्याभावः अभावार्थेऽव्ययीभाव इत्याशयेन साव्ययत्वकल्पनमपि तत्तदुदाहरणेषु अनन्वयादुपेक्ष्यमेव। उक्तोदाहरणेषु “अथास्य गोदानविधेरनन्तरमिति” “अनन्तरं भर्त्तुरुपस्थितोदयेति” च रघौ “योगाच्चान्तिरनन्तरमित्यादौ” च व्यवधानाभावार्थकत्वे समभिव्याहृतपदार्थानां हि नान्वयः तस्य देशकालादिबोधकत्वाभावेन व्याप्त्यर्थे द्वितीयाया असम्भवः। अतः बहुव्रीहित्वात् कालबोधकतया उक्तोदाहरणादिषु व्याप्त्यर्थे द्वितीयेति बोध्यम्। न०त०। अन्तरभिन्ने त्रि० तस्य अपुरि सर्व्वनामता। अनन्तरे भवः गहा०छ। अनन्तरीयः अविलम्बभवे त्रि०।

**अनन्तरज** पु०स्त्री अनन्तरस्याः अनन्तरवर्णायाः जायते जन–ड पुंवद्भावः। क्रमोढाजे पुत्रादौ। अनन्तरं जातः। ज्येष्ठे कनिष्ठे च भ्रातरि। तथाभूतभगिन्यां स्त्री।

**अनन्तरय** पु० अन्तरयति दूरीकरोति अन्तर+कृत्यर्थे णिच् भावे अच् अन्तरयः दूरीकरणम् अभावार्थे न०त०। अपरित्यागे। “वदुकृषो यशकृतोरनन्तरयायेति” ऋ० ४,१, ६, “अनन्तरयाय अपरित्यागायेति” भा०।

**अनन्तराय** त्रि० नास्ति अन्तरायः प्रतिबन्धको यस्य। निष्प्रतिबन्धके निर्विघ्ने“तान्येतानवानन्तरायमन्वाहेति” छ०उ०।

**अनन्तराशि** पु० अनन्तस्य आकाशरूपशून्यस्य राशिः। बीजगणितोक्ते शून्यभागहाराद्यर्थं परिकल्पिते राशौ।

**अनन्तरूप** पु० अनन्तानि रूपाण्यस्य। परमेश्वरे विष्णौ “अनन्तरूपोऽनन्तश्रीरिति” वि०स०। “इन्द्रोमायाभिः पुरुरूपईयत” इति श्रुत्या तस्य बहुरूपत्वप्रतिपादनात्तत्त्वम्।

**अनन्तर्गर्भिन्** अन्तर्गर्भोऽस्त्य अस्त्यर्थे इनि न०त०। अन्तर्गर्भशून्ये पवित्रार्थे कुशे। “अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव चेति” आ०तत्त्वे छन्दो०प०। अनन्तर्गर्भिणमन्तर्गर्भशून्य”मिति रघुनन्दनः।

**अनन्तविजय** पु० अनन्तान् विजयतेऽनेन ध्वनिद्वारा। युधिष्ठिरशङ्खे “अनन्तविजयं नाम कुन्तीपुत्रोयुधिष्ठिरः” इति गीता।

**अनन्तवीर्य्य** पु०। ब०। जैनभेदे।

**अनन्तव्रत** न० अनन्तस्य व्रतमुपासनार्थम् ६त०। भाद्रशुक्लचतुर्द्दश्यां कर्त्तव्ये स्वनामख्याते व्रते। “अनन्तव्रतमेतद्धि सर्वपापहरं शुभम्” इत्युपक्रम्य “तथा शुक्लचतुर्द्दश्यां मासि भाद्रपदे भवेदिति” भवि० पुरा०।

**अनन्तशक्ति** पु० अनन्ता अपरिच्छेद्या शक्तिरस्य। परमेश्वरे “परास्य शक्तिर्विविधैव श्रूयते” इति श्रुतौ तस्य बहुशक्तिश्रवणात् तथात्वम्।

**अनन्तशीर्षा** स्त्री अनन्तानि बहूनि शीर्षाणि यस्याः।

वासुकिपत्न्याम् । वासुकौ परमेश्वरे च पु० “सहस्रशीर्षा पुरुष” इति श्रुत्या तस्य बहुशीर्षत्वोक्तेस्तथात्वम् ।

**अनन्तश्री** पु० अनन्ता अपरिमिता श्रीः परा शक्तिरस्य । परमेश्वरे “परास्य शक्तिर्विविधैव श्रूयते इति” श्रुत्या तस्य बहुशक्तिप्रतिपादनात्तथात्वम् ।

**अनन्ता** स्त्री नास्ति अन्तोऽस्याः ब० । विशल्यायामोषधौ (अनन्तमूल) इति ख्याते मूलभेदे, पार्व्वत्याम्, पृथिव्याम्, दुरालभायां, दूर्व्वायां, हरितक्यां, आमलक्याम्, गुडूच्याम्, अग्निमन्थवृक्षे, अग्निशिखावृक्षे, श्यामलतायाम्, पिप्पल्यां, नीलदूर्व्वायाम्, श्वेतदूर्व्वायां, शारिवौषधौ च ।

**अनन्त्य** न० अनन्तस्येदम् यत् । हिरण्यगर्भपदे ।

**अनन्द** त्रि० न नन्दयति नन्द–णिच्–अच् न०त० । आनन्दविरुद्धे “अनन्दा, नाम ते लोका इति कठ०उ० ।

**अनन्न** न० न०त० । अदनीयभिन्ने । “न किञ्चिदनन्नं भवति आ श्वभ्यः आ शकुनिभ्य” इति छा०उ० ।

**अनन्य** त्रि० न अन्यः सर्व्वना० । अन्यभिन्ने स्वस्मिन् “अनन्यरतिरासीन” इति मनुः अनन्यस्मिन् स्वस्मिन् रतिरनुरागोऽस्येति तदर्थः । नास्ति अन्यो यस्य उपास्यत्वेन विषयत्वेन वा । अन्यासेवके “अनन्याश्चिन्तयन्तोमामिति” अनन्यविषये च । “पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्ययेति” च गीता । अस्य नञ उत्तरत्र पदान्तरसत्त्वे असमर्थसमासाश्रयणात् तदर्थेनैवान्वयः । यथा “अनन्यदृष्टिः सवितारमैक्षतेत्यादौ” अन्यत्र दृष्ट्यभावस्य, अनन्यचेता इत्यादौ अन्यत्र चेतोऽभावस्य, अनन्यकाम इत्यादौ अन्यत्र कामाभावस्य च बोधनमेवमन्यत्र ।

**अनन्यगतिक** त्रि० नास्ति अन्या गतिरस्य कप् । अन्योपायरहिते तन्मात्राश्रये च । “अनन्यगतिके जने विगतपातके चातके” इत्युद्भटः ।

**अनन्यज** पु० नास्ति अन्यद्यस्मात् सर्व्ववस्तुभेदानां तदात्मकत्वात् अनन्यो विष्णुः तस्मात् जायते जन–ड ५त० । कामदेवे । तस्य कृष्णात् रुक्मिण्यां जन्मेति भाग० १०स्क०“तस्यास्तु तादृशीमवस्थां गतायां जनस्यानन्यजेनेति” दशकु० ।

**अनन्यदेव** पु० न अन्यद्यस्मात् सर्व्वात्मकत्वात् तादृशोदेवः । परमेश्वरे विष्णौ “सर्व्वदेवमयोहरिरित्युक्तेस्तथात्वम् ।

**अनन्यपूर्व्वा** स्त्री न अन्यः पूर्व्वो यस्याः सा अन्यपूर्व्वा न भवति । अन्याभुक्तायां स्त्रियाम् “मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः । तथाप्यनन्यपूर्व्वेव तस्मिन्नासीद्वसुन्धरेति” रघुः ।

**अनन्यभाज्** त्रि० न अन्यम् अन्यां वा भजते भज–ण्वि अस० पुंवद्भावः । अन्यस्यान्यस्या वा सेवनाकारिणि । “भजते मामनन्यभागिति” गीताः “अनन्यभाजं पतिमाप्नुहीति” कुमा० ।

**अनन्यवृत्ति** त्रि० न अन्या विभिन्ना एकरूपा वृत्तिर्मनोवृत्तिरस्य । एकतानचित्ते । न अन्या वृत्तिर्जीवनोपायोऽस्य । एकमात्रजीवने त्रि० ।

**अनन्यसाधारण** त्रि० न अन्यस्यान्यधर्म्मस्य साधारणः सदृशः । अन्यधर्म्मासदृशे “अनन्यसाधारणमेव कर्म्मेति” कुमा० ।

**अनन्वय** त्रि नास्ति अन्वयो यत्र ब० । अन्वयशून्ये । शाब्दबोधे परस्परं संसर्गशून्ये अन्वयशान्वयशब्दे वक्ष्यते अर्थालङ्कारभेदे पु० । तल्लक्षणं यथा “उपमानोपमेयत्वे एकस्यैव त्वनन्वय” इति सा०द० । “राजीवमिव राजीवं जलं जलमिवाजनी”त्यादौ च अनन्वयात् तदलङ्कारत्वं तथा हि उपमानोपमेयभावे सादृश्यज्ञानावश्यकत्वेन तस्य बोधने नियते तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वरूपसादृश्यस्य भेदगर्भिततया स्वप्रतियोगिकभेदस्य स्वस्मिन्नसम्भवेनापाततोऽनन्वय एव तात्पर्य्येण तु इतरसादृश्याभावपरत्वलक्षणयान्वयकथा च राजीवं राजीवेतरासदृशमिति बोधात्तस्योत्कर्षो व्यज्यते । एवं “रामरावणयोर्युद्धं रामरावणयोरिवे”त्यत्रापि ।

**अनप** त्रि० न सन्ति आधिक्येनापो यत्र नञ्पूर्व्वकत्वेऽपि बहुव्रीहौ अच्समा० । स्वल्पजले पल्वलादौ ।

**अनपकर्म्मन्** न० अपकर्म्म अपाकरणं अभावार्थे न०त० । त्यागाभावोपलक्षिते दत्तस्य आदाने “दत्तस्यानपकर्म्म चेति” मनुः अपकर्म अपात्रे पात्रबुद्ध्या क्रोधादिना वा दत्तस्यानपकर्म, पुनर्ग्रहणम् । “ऋणस्यापकर्म चेति” स्मृतिः । अनपकर्म अपाकरणाभावः अशोधनमित्यर्थः । अनपक्रियाप्यत्र स्त्री । अपाकरणाभावे । “ऋणानामनपक्रियेति” स्मृतिः ।

**अनपच्युत** त्रि० अप+च्यु–भावे क्त न०ब० । विनाशरहिते “ स्थिरं सुवज्रमनपच्युतमिति” ऋ० ४,१७,४, अनपच्युतं विनाशरहितमिति” भा० ।

**अनपत्य** त्रि० नास्ति अपत्यं यस्य । अपत्यशून्ये । न हितमपत्यानामिति, पताय पतनाय हितं पत+यत् वा न०त० ततः न०त० । अपत्याहिते, पतनकारणे च “शुयोत नो अनपत्यानीति ऋ० ३, ५४,१८, अनपत्यानि अपत्यानां पुत्राणामहितानि, पतनकारणं न भवत्यपत्यं तदन्यानि पतनकारणानीति” भाष्यम् ।

**अनपत्रप** त्रि॰ नास्ति अपत्रपा अन्यहेतुका लज्जा यस्य । अन्यहेतुकलज्जाहीने ।

**अनपभ्रंश** पु॰ न अपभ्रंशः न॰त॰ । अपभ्रंशभिन्ने व्याकरणप्रतिपाद्यसंस्कारवति साधुशब्दे "अनपभ्रंशता-नादिर्यद्वाभ्युदयोन्यता । व्याक्रियाव्यञ्जनीया वा जातिः कापीह साधुतेति" हरिः ।

**अनपाकर्म्मन्** न॰ अपाकर्म अपाकरणम् अभावार्थे न॰त॰ । अपाकरणाभावे ऋणादेरशोधने ।

**अनपायिन्** त्रि॰ न अपैति अप–इण–णिनि न॰त॰ । निश्चले स्थिरे "अनपायिनि संश्रयद्रुमे गजभग्ने इति" कुमा॰ ।

**अनपावृत्** त्रि॰ अपावर्त्तनमपावृत् अप+आ+वृत–भावे क्विप् न॰ब॰ । पुनरावृत्तिशून्ये । "इत्था सृजाना अनपावृद-र्थमिति" ऋ॰ ६,२,५, "अनपावृत् अपावृत् अपावर्त्तनम् पुनरागमनं न भवतीति" भा॰ ।

**अनपिहित** त्रि॰ न अपिहितमावरणं भावे क्त तन्नास्ति यस्य । आवरणशून्ये । "एष वानपिहितस्तस्यैव तदपिधानं यच्छिखेति ब्रा॰ "अनपिहित आवरणशून्य" इति रघु॰ ।

**अनपेक्ष** त्रि॰ न अपेक्षते अनुरुध्यते अक्ष् न॰त॰ । अपेक्षा-शून्ये अननुरोधिनि । "उत्सृज्य प्रमदामेतामनपेक्षो यथासुखमिति" रामा॰ ।

**अनपेत** त्रि॰ न अपेतः वहिर्गतः अपगतो वा । अवहिर्गते अपेतभिन्ने अनुगते । "धर्मपथ्यर्थन्यायादनपेते" इति पा॰ "धर्मादनपेतम् धर्म्यमित्यादि" सि॰कौ॰ ।

**अनप्न** त्रि॰ न आप्नः वेदे पृ॰ ह्रस्वः । आप्नभिन्ने । "अनप्न-मप्सु दुष्टरमिति" ऋ॰ ८, १६,२, "अनप्नं शत्रुभिरनाप्न-मिति" भा॰ ।

**अनप्नस्** त्रि॰ नास्ति अप्नो रूपं यस्य । रूपहीने "अप्नाया अनप्नस इति" ऋ॰ २,२,६, "अनप्नसः कर्म्महीना" इति भाष्योक्तेः कर्म्महीने च ।

**अनफा** पु॰ (चन्द्रात्) "रविवर्ज्जं द्वादशगैरनफेति" दीपिकोक्तेः योगभेदे "सच्छीलं सुखान्वितं प्रभुं ख्यातियुक्तमन-फायामिति" दीपिका ।

**अनभिज्ञ** त्रि॰ न अभिजानाति । अज्ञे ज्ञानशून्ये ।

**अनभिधेय** न॰ न अभिधेयः । अवाच्ये ।

**अनभिभव** पु॰ न अभिभवः अभावार्थे न॰त॰ । अभिभवा-भावे पराजयाभावे ।

**अनभिभवनीय** त्रि॰ न अभिभवनीयः । अपराजेये ।

**अनभिभूत** त्रि॰ न अभिभूतः । अपराभूते ।

**अनभिमत** त्रि॰ न अभिमतः । असम्मते, विमते च ।

**अनभिम्लातवर्ण** त्रि॰ अभि+म्ला–तन् न अभिम्लातः क्षीणोवर्णो यस्य । दीप्यमाने । "सो अपां नपादनभि-म्लातवर्ण" इति ऋ॰२,३५,१३ अनभिम्लातवर्णः दीप्यमान इति भा॰ । शिवा॰ अण् । आनभिम्लातः तदपत्ये पु॰स्त्री॰ ।

**अनभिलाप** पु॰ न अभिलापः अभावे न॰त॰ । अभिलाषा-भावे । न॰ब॰ । अभिलाषशून्ये त्रि॰ ।

**अनभिव्यक्त** त्रि॰ न अभिव्यक्तः न॰त॰ । अपरिस्फुटे ।

**अनभिशस्त** त्रि॰ अभि+शन्स–क्त न॰त॰ । अनिन्दिते । "पराक्षानभिशस्ता दिव्या" इति ऋ॰ ६,८८,७, "अन-भिशस्ता अनिन्दिता" इति भा॰ । परिवादायुक्ते च ।

**अनभिशस्त्य** त्रि॰ अभिशस्तिं निन्दामर्हति अभिशस्त्यः न॰त॰ । अनिन्दनीये प्रशस्ते निरुक्तकारः ।

**अनभिसंहित** त्रि॰ न अभिसंहितः न॰त॰ । अभि-सन्धिना फलोद्देशेन अकृते "विसृज्यदा येऽनभिसंहिते-ष्विति" रुचि॰ ।

**अनभिहित** त्रि॰ न अभिहितः । अनुक्ते प्रत्ययादिना उक्तार्थभिन्ने "अनभिहिते इति पा॰ अस्य उपकादिगणे पाठात् तत्कार्य्यम् । [वातस्तगगमनामिति" का॰वृ॰ ।

**अनभीष्ट** त्रि॰ न अभीष्टः । अभीष्टभिन्ने "अनभीष्टदक्षिण-

**अनभ्यावृत्ति** स्त्री न अभ्यावृत्तिः अभ्यासः अभावार्थे न॰ त॰ । अभ्यासाभावे । "मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमीति" माघः ।

**अनभ्यासमित्य** त्रि॰ न अभ्यासे निकटे इत्यः इण–कर्म्मणि क्यप् तुम् । दूरतः परिहर्त्तव्ये सि॰ कौ॰ ।

**अनमित्र** त्रि॰ नास्ति अमित्रोऽस्य । शत्रुशून्ये "इन्द्रोयां चक्रे आत्मने अनमित्रां शचीपतिरिति" अथ॰ १२,१, नृपभेदे पु॰ ।

**अनमीव** त्रि॰ अमीवः रोगः न॰ब॰ । रोगहीने "अनमीवा इषस्करदिति" ऋ॰ २,१६२,१४, अनमीवा "रोग-वर्जितानि इषोऽन्नानीति" भा॰ "प्रदानमीवस्य शुष्मिणः" इति ता॰ब्रा॰ । "अरोगोऽमीवस्तद्रहितस्येति" भा॰ ।

**अनम्बर** पु॰ नास्ति अम्बरं कच्छसहितं वस्त्र यस्य । बौद्धभेदेऽस्य मता-कच्छतया तथात्वम् दिगम्बरशब्देऽस्य विवरणम् । नग्ने त्रि॰ ।

**अनय** पु॰ अयः शुभावहो विधिस्तदन्यः न॰त॰ । अशुभ-दैवे । नयोद्धृते दक्षिणावर्त्तेन शाराणामिष्टस्थान-नयनं विरोधे न॰त॰ । (दुगडोति) ख्याते द्यूतभेदे शाराणां वामावर्त्तेनाभीष्टस्थाननयने पु॰ । नयोनीतिः

नी—अच् न०त० । नयाभावे अनीतौ दुर्नये, दुष्टे, कर्म्मणि च। "विजानतोऽपि ह्यनयस्य रौद्रतेति" भार०। न० ब० । आपदि "जीवेद्देतेन राजन्यः सर्वेणाप्यनयं गत इति" मनुः । "सर्वतः प्रतिगृह्णीयात् ब्राह्मणस्त्वनयं गतः" इति मनुः "अनयमापद्मिति" कुल्लू० । दैव० । नयहीने त्रि०। [स हि रावणेन परिभूतो हतः ।

**अनरण्य** पु० सूर्य्यवंश्ये नृपभेदे तत्कथा रामा० उत्तराकाण्डे

**अनर्काभ्युदित** पु० न ईषत्, अर्कोऽभ्युदितो यस्मिन् । ईषदर्कोदयकाले । "अनर्काभ्युदिते काले माघे कृष्णचतुर्दशी-इति" यमः "माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ" इत्यनेनैकवाक्यत्वात् नञ ईषदर्थता ।

**अनर्गल** त्रि० नास्ति अर्गलं प्रतिबन्धकं यस्य । अप्रतिबन्धके प्रतिबन्धकशून्ये "तुरङ्गमुत्सृष्टमनर्गलं पुनरिति" रघुः ।

**अनर्घ** त्रि० अर्घो मूल्यं न०ब० । अमूल्ये । [नाटकभेदे ।

**अनर्घराघव** न० राघवचरितख्यापके मुरारिमिश्ररचिते

**अनर्घ्य** त्रि० न अर्घ्यः पूज्यो यस्य, यस्माद्वा । अन्यपूज्यशून्ये अत्यन्तपूजनीये च "अनर्घ्यमर्घ्येण तमद्रिनाथ" इति कुमा०।

**अनर्थ** पु० अर्थः प्रयोजनं विरोधे न०त० । अनिष्टे । "एकैकमप्यनर्थाय किमु तत्र चतुष्टयमिति" हितो० । "चोदनालक्षणोऽर्थो धर्म्म" इति सूत्रे निषेधलक्षणोऽनर्थोऽधर्म इति भङ्ग्या सूचिते नरकादिसाधनत्वादनिष्टहेतावधर्म्मे च । "दातुर्भवत्यनर्थाय परत्रादातुरेव चेति" मनुः । ब० । अभीष्टरहिते विष्णौ पु० आप्तकामत्वात्तत्त्वम् । अर्थोऽभिधेयः प्रयोजनं वा नास्ति यस्य ब० कप् । अर्थरहितमात्रे त्रि० ।

**अनर्थक** न० अर्थोऽभिधेयोऽभावस्य न०ब० कप्समा० । समुदायार्थशून्ये प्रलापे, असम्बद्धे वाक्ये च । अर्थे त्रि० । "धिगिदं जीवितं लोके किमु ? सार्थमनर्थकमिति" ।

**अनर्थलुप्त** त्रि० दृष्टेनार्थेन अलुप्तः असम०स० । दृष्टार्थेनालुप्ते "अनर्थलुप्ता इति" कात्या० ६,१०,२०, ।

**अनर्थान्तर** न० अन्योऽर्थः अर्थान्तरं मयूर०त० ततः न०त० । अभेदे, एकार्थे ।

**अनर्व** त्रि० ऋ—व अर्वः गतिः ग्रैथिल्यं स नास्ति यस्य । अशिथिले "त्रिनाभि चक्रमजरमनर्वमिति ऋ० १,१६४,२, 'अनर्वमशिथिलमिति" भा० ।

**अनर्वन्** त्रि० अर्व—हिंसायां कनिन् "अर्वा भ्रातृव्य" इति श्रुतेः अर्वा सपत्नः न० त० । शत्रुभिन्ने । "अनोऽनर्वाणं तं परित" इति ऋ० १,१२६,५, "अनर्वाणमहिंसमिति" भा०। अर्वा अश्वः । तच्छून्ये त्रि०। न त्रादेशः ।

**अनर्विश्** त्रि० अनसा शकटेन विशति प्राप्नोति विश—क्विप् ३त० अलुक् स०, ऋ—कर्म्मणि विच् अरं गन्तव्यं प्रति विशति विश—क्विप् वा न०त० । शकटेन काष्ठाद्याहरणाय वनप्रवेशिनि, गन्तव्यं स्थलं गन्तुमशक्ते च । "अन् दूनमनर्विशे पथिभे तुरावेति" ऋ० १,१२१,७,

**अनर्शराति** त्रि० अनर्शाय अपापिष्ठाय रातिर्दानं यस्य । अपापिष्ठे दातरि 'अनर्शरातिं वसुदामुपस्तुहीति ऋ० ८, ९९,४, अनर्शरातिमनश्लीलदानमश्लीलं पापमिति निरुक्त०

**अनर्ह** न अर्हः । अयोग्ये । "तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीदिति" मनुः ।

**अनल** पु० नास्ति अलः पर्य्याप्तिर्यस्य बहुदाह्यदहनेऽपि तृप्तेरभावात् न०ब० । वह्नौ, "व्यभिचारं न तापकरोऽनल" इति नैषधम् अनलः नलाभावोपलक्षित अनुपलब्धतदभावार्थे न०त० । अव्ययीभावसिद्धत्वे क्लीवता स्यात् । "अचे नलोऽयमिति तं प्रति चित्तमेकं भूतेऽस्य चान्यदनलोऽयमितीदमीयमिति" "आवर्ज्जनं तमनु ते ननु साधु नामयाहं भयानलमुदीरितमेतदत्र" इति "सैमानवे महजरागभरादिति" च नैषधम् "पयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेऽप्सु चेति" स्मृतिः । जठरानलस्य पित्तजातत्वात् देहस्थे पित्तधातौ च । अष्टवसुमध्ये पञ्चमे वसौ, मेदिनिः तत्र "धरोध्रुवः सोमनामा तथाऽपोऽथानिलोऽनल" इति वसुभेदबोधकवचने नलइत्यत्रानलइत्यकारप्रश्लेषस्यान्येषां किन्तु वसूनां स्वरूपख्यापके विष्णुधर्म्मोत्तरवचने "स्रुवाक्षमालिके दक्षे वामे शक्तिकपालभृत् सप्तोर्द्धादिश्रमाद्योऽसौ नलाख्यस्तु वसुः स्मृत" इति नलनामतयैव प्रतीतेर्नलएव वसुभेद इत्यवधेयम् । अनलदैवतत्वात् कृत्तिकानक्षत्रे "अनलविधियताख्येति ज्योति० । (चिता) इति ख्याते चित्रके वृक्षे, पु० । तस्य सर्वतः पर्य्याप्तत्वेऽपि पर्य्याप्तेः सीमाभावात्तत्त्वम्, (भेला) इति ख्याते भल्लातके वृक्षे च । अन—कलच् । षष्टिवर्षमध्ये पञ्चाशत्संख्याते वर्षे षष्टिवर्षगणननामभेदादि वर्षशब्दे वक्ष्यते । पितृदेवभेदे "कव्यवाडोऽनलः सोमः यमश्चैवार्य्यमा तथा अग्निष्वात्ताः बर्हिषदः सोमपाः पितृदेवता" इति वायुपुरा०। अनात् प्राणात् लाति व्याकत्वेन अनलः जीवः । तद्रूपेण सर्वान्तर्यामितया स्थिते विष्णौ णल—गन्धे बन्धे वा न नलति न बध्यते वा अच् । गन्धशून्ये परमेश्वरे विष्णौ "अगन्धनस्य शर्म्म एव" इति "तथा एवं नित्यमगन्धवच्चेति"

च श्रुतेस्तस्य गन्धशून्यत्वात् तथात्वम्। अल पर्य्याप्तौ अच् न०त०। अपर्य्याप्ते अपरिमिते परमेश्वरे "पवनः-पावनोऽनल" इति वि०सह०। भाष्यकृता च उक्तव्युत्पत्तिः विष्णुविषयत्वे दर्शिता।

**अनलदीपन** त्रि० अनलं जठरानलं पित्तधातुवर्द्धनेन दीपयति वर्द्धयति दीप–णिच्–ल्यु। जठरानलोद्दीपके "मधुरो मधुरः पाके दीपनोऽनलदीपन इति" "सौगन्ध्यात् पूतिकोष्णः सौक्ष्म्याच्चानलदीपन" इति च सुश्रुतोक्ते द्रव्यभेदे। [नामिकायां लतायाम्।

**अनलप्रभा** स्त्री अनलस्य प्रभेव प्रभा यस्य ब०। ज्योतिष्मती-

**अनलप्रिया** स्त्री ६त०। स्वाहाख्यायां दक्षकन्यायाम् वह्निपत्न्याम्।

**अनलि** पु० अनिति अन–अच् अनः अलिर्यत्र ब० शक०। बकवृक्षे तत्पुष्पस्य बहुमधुमत्त्वेन तन्मधुभिर्भ्रमराणां जीवनधारणात्तथात्वम्।

**अनल्प** त्रि० न अल्पः। प्रचुरे भूयिष्ठे। [शून्ये त्रि०।

**अनवकाश** पु० न०त०। अवकाशाभावे। ब०। अवकाश

**अनवगीत** त्रि० अव+गै–क्त न०त०। अनिन्दिते।

**अनवग्रह** त्रि० नास्ति अवग्रहो यस्य। प्रतिबन्धशून्ये "अवग्रहमव्येमनवग्रहमचेति" नैष०। न०त०। वृष्टिप्रतिबन्धाभावे।

**अनवद्य** त्रि० न अवद्यं निन्द्यम्। निन्द्यभिन्ने दोषशून्ये च "अनवद्यतृणार्द्दिनो मृगानिति" नैष०। "अनवद्यविद्योद्योतेनेति" दायभा०। "अनवद्योरियादा" इति ऋ०८,६८,१०, "अनवद्योगर्ह्यारहित" इति भा०। "अग्निः शर्द्धमनवद्यं युवानमिति" ऋ० १,७१,८।

**अनवधान** न० न अवधीयते मनः संयुज्यते कर्त्तव्यकर्म्मणि यथावस्थितं प्रवर्त्त्यतेऽनेन अव+धा–करणे ल्युट् अवधानम् चित्तवृत्तिभेदः अभावे न०त०। अवधानाभावे मनःसंयोगविशेषाभावे प्रमादे, न०ब०। तद्वति त्रि०।

**अनवधानता** स्त्री अवधानं नास्ति यस्य तस्य भावः। प्रमादे। कर्त्तव्येऽकर्त्तव्यताबोधेन ततोनिवृत्तिः, अकर्त्तव्ये कर्त्तव्यताबोधेन तत्र प्रवृत्तिश्च प्रमादः। "कर्त्तव्याकरणं यत्राकर्त्तव्यस्याथवा क्रिया। उच्यते द्वितयं तत्र प्रमादोऽनवधानतेति"।

**अनवपृग्ण** त्रि० अव+पृच् संपर्के क्त इडभावादि छान्दसम् न०त०। असम्पृक्ते। "अनवपृग्णा वितता वसानमिति" ऋ० १,१५२,४।

**अनवब्रव** पु० अव+ब्रू–अच् न वचादेशः न०त०। अपवादवर्जिते "विजेष कृदिन्द्र इवानवब्रवोऽस्माकमिति" ऋ० १०,८४,५।

**अनवभ्र** त्रि० न भ्रंशते वा०ड। अवभ्रंशशून्ये "प्रक्ष्मभ्रदेवा अनवभ्रराधस" इति ऋ० १,१६६,७। "अनवभ्रराधसः अनवभ्रष्टहविरादिधना" इति भा०।

**अनवम** त्रि० न अवमः। न्यूनताहीने श्रेष्ठे "सुधर्म्मानवमां सभामिति" रघुः।

**अनवर** त्रि० न अवरः। अवरभिन्ने श्रेष्ठे अजघन्ये "सोऽयमिन्द्रादनवरो वासुदेवश्च भारतेति भार०।

**अनवरत** त्रि० अव+रम+भावे क्त अवरतम् विरामः तन्नास्ति यस्य ब०। निरन्तरे विश्रामशून्ये।

**अनवरार्द्ध्य** त्रि० अवरस्मिन् अर्द्धे भवः यत् न०त०। उत्कृष्टे श्रेष्ठे च शीर्षभागे स्थापनीयतयास्य तत्त्वम्।

**अनवलम्ब** त्रि० नास्ति अवलम्बो यत्र। आलम्बनहीने। "न परं पथि पक्षपातितानवलम्बे किमु? मादृशेऽपि सेति" नैष०।

**अनवलोभन** न अवलुप्यते पुमान् येन अव+लुप–ल्युट् पृ० पस्य भः। गर्भसंस्कारभेदे। "उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनञ्चेति" आ० गृ०।

**अनवस** त्रि० अव–प्रीणनादौ असच् अवसः भोजनं प्रीतिकरत्वात् न०ब०। पथ्याशनहीने "अनवसो अनभीशु" इति ऋ०६,६६,७, "अनवसः पथ्याशनरहित" इति भा०।

**अनवसर** त्रि० अवसरः उचितः कालः नास्ति यस्य ब०। उचितकालविहीने। "अतर्क्यैश्वर्य्ये त्वय्यनवसरदुःस्थाहतधिय इति महि० स्तो०। न०त०। अवसराभावे।

**अनवसित** त्रि० अवसितः समाप्तो निश्चितो वा न०त०। अनिश्चिते असमाप्ते च। "अनवसितान्यौ भगौ गुरुरन्ते" इति (वृत्त०) उक्ते छन्दोभेदे स्त्री।

**अनवस्कर** त्रि० अवस्क्रियते शोध्यते अव–कृ–अप् सुडागमः अवस्करो मलः स नास्ति यस्य ब०। मलहीने।

**अनवस्था** स्त्री अव+स्था–अङ् अवस्थितिः न०त०। अवस्थाभावे, तर्कदोषविशेषे उपपाद्यस्य समर्थनाय उपपादकस्यानुसरणं तर्कः यत्र तर्के उपपाद्योपपादकयोर्विश्रान्तिर्नास्ति तादृशतर्कस्यानवस्थादोषः तत्र स तर्को न ग्राह्यः। अधिकं तर्कशब्दे वक्ष्यते "प्रामाणिकी अनवस्था न दोषायेति" जग०। नास्ति अवस्था यस्य। अवस्थितिशून्ये त्रि०। "अशरीरं शरीरेषु अनवस्थेष्ववस्थितमिति"।

**अनवस्थान** न० अव+स्था–ल्युट् न०त० । अवस्थानाभावे । ब० । वायौ पु० । चञ्चलमात्रे त्रि० ।

**अनवस्थित** त्रि० न अवस्थितः । चञ्चले, अस्थिरे "दयितास्वनवस्थितं नृणामिति" कुमा० । व्यभिचारवति च । "चतसॄणामपि वर्णानां नारीर्हन्त्यानवस्थिता" इति मनुः अनवस्थिताव्यभिचारिणीरिति कुल्लू० । व्यभिचारिण्याश्च पत्यौ नितान्तावस्थानाभावात् तथात्वम् । अवस्थात्मनमे च "प्रस्थितं तमनवस्थितं प्रिया" इति रघुः अनवस्थितम् अवस्थात्मकमनमिति" मल्लि० । [नाभावे ।

**अनवस्थिति** स्त्री० न अवस्थितिः । अभावार्थे न०त० । अवस्था-

**अनवक्कर** त्रि० अव+ह्वृ–कौटिल्ये अच् न०त० । अकुटिले सरले "सचेते अनवह्वरमिति" ऋ० २,४१,६ । "अनवह्वरमकुटिलमिति" भा० ।

**अनवाप्त** त्रि० न अवाप्तः । अप्राप्ते "नानवाप्तमवाप्तव्यं त्रिषु लोकेषु किञ्चनेति" गीता ।

**अनवाय** त्रि० अव+इण् घञ् अवायः अवयवः न०ब० । निरवयवे "अनवायं किमीदिने" इति ऋ० ७,१०४,२ ।

**अनवेक्षक** त्रि० न अवेक्षकः न०त० । पर्यालोचनाहीने सदसद्विवेकहीने । [अपेक्षाभावे ।

**अनवेक्षा** स्त्री न अवेक्षा अपेक्षा अभावार्थे न०त० ।

**अनशन** अश–ल्युट् न०त० । भक्षणाभावे, उपवासे, स च भोजनविषयनिवृत्तिरूपः व्रतभेदः अहोरात्रभोजनाभाव एव तस्य प्रयोगोपाधिता । तेन यत्किञ्चित्क्षणे अभोजनेऽपि न उपवासपदप्रयोगः । त्रिरात्रादिपदसमभिव्याहारे तु भोजनाभावमात्रपरतेति भेदः । न०ब० । भोजनशून्ये त्रि० ।

**अनश्वर** त्रि० न नश्वरः । नश्वरभिन्ने, स्थायिनि, नित्ये च ।

**अनस्** न० अनिति शब्दायते अन–असुन् । शकटे "दूरादनसा रथेन" ऋ० २,२२,१ । अनिति जीवत्वेन करणे ल्युट् । ओदने, ओदनस्थाने, पितरि च मातरि स्त्री । उत्तरपदस्थः अव्ययी० शरदा० टच्समा० । अध्यनसम् तत्पुरुषेऽपि संज्ञायां जातौ च टच्समा० । उपानसं महानसम् अनोऽत्र भक्तस्थानम् । "अपोषा अनसः" इति ऋ० ४,३०,१० ।

**अनसूय** त्रि० नास्ति असूया यस्य । परगुणेषु दोषारोपशून्ये "श्रद्धावाननसूयश्चेति" गीता "श्रद्दधानोऽनसूयश्चेति" मनुः ।

**अनसूयक** न असूयकः । असूयाशून्ये "यथा तथा हि सद्वृत्तमातिष्ठन्ननसूयक" इति मनुः ।

**अनसूया** स्त्री असु–कण्ड्वादित्वात् यक्–भावे अङ् असूया गुणेषु दोषारोपः अभावार्थे न०त० । "न गुणान् गुणिनोहन्ति स्तौति चान्यगुणानपि । न हसेच्चान्यदोषांश्च साऽनसूया प्रकीर्त्तिते" लक्षणे असूयाभावे । "एकमेव तु शूद्रस्य प्रभुः कर्म्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूययेति" "यत्किञ्चिदपि दातव्यं याचितेनानसूययेति" च मनुः । अत्रिमुनिपत्न्यां च शकुन्तलासहचरीभेदे शकु० ।

**अनसूयु** त्रि० असु–उपतापे कण्ड्वा० यक् उ न०त० । असूयाशून्ये "इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे" इतिगीता ।

**अनस्तमित** त्रि० न अस्तमितः गतः अस्तम०स० । अस्तमप्राप्ते ।

**अनस्थ** पु० नास्ति अस्थि यस्य वा० अच्समा० । अस्थिवर्जिते अवयवे "पुरस्तादनस्थ जक्रवरंबमाय" इति ऋ० ८,१,३४, अस्थि अवयवः । तच्छून्ये निरवयवे सांख्यप्रसिद्धे प्रधाने, ईश्वरमायायाञ्च "यदनस्था बिभर्त्ति" ऋ० १,१६४,४, "अनस्था निरवयवा प्रकृतिरीश्वरायत्तमायाचेति" भा० । समासान्ताभावे अनस्थि । अस्थिशून्ये त्रि० ।

**अनस्वत्** त्रि० अनः शकटमस्त्यस्य मतुप् मस्य वः सान्तत्वान्न पदत्वम् । शकटयुक्ते "अनस्वन्तः अत्र ऐतन्त पज्राः ऋ० १,१२६,५ ।

**अनहङ्कार** पु० न अहङ्कारः अभावार्थे न०त० । अहङ्काराभावे । ब० । तच्छून्ये त्रि० अहङ्कारयाहङ्कारशब्दे वक्ष्यते ।

**अनहङ्कारिन्** त्रि० । अहमिति गर्वं करोति अहम्+कृ णिनि । न०त० । गर्वशून्ये ।

**अनहंकृत** त्रि० अहमिति कृतमहङ्कारः, भावे क्त न०ब० । अहङ्कारशून्ये "सह वाग्मनहङ्कृत" इति मनुः ।

**अनहङ्कृति** स्त्री अहमिति क्रियते भावे क्तिन् न०त० । अहङ्काराभावे न०ब० । अहङ्कारशून्ये त्रि० ।

**अनहंवादिन्** त्रि० अहमिति गर्वेण न वदति वद–णिनि, गर्वरहिते "मुक्तसङ्गोऽनहंवादीति" गीता ।

**अनाकार** त्रि० नास्ति आकारोऽस्य । अवयवहीने आकाशादौ, ईश्वरे च ।

**अनाकाल** पु० आ सम्यक् अन्नादिसम्पन्नःकालः आकालः न०त० । शस्यादिसम्पन्नकालभिन्ने दुर्भिक्षे काले ।

**अनाकुल** त्रि० न आकुलः न०त० । अव्यग्रे, एकाग्रे, स्थिरे, असङ्कीर्णवाक्ये च ।

**अनाकृत** न० नेत्यनेन कृतः नाकृतः निराकृतः न०त० ।

— अनिवारिते "न वक्ता जरया अनाकृत" इति ऋ० १,१४१,७, "अनाकृतः अनिवारित" इति भा० ।

अनाक्रान्ता स्त्री आक्रमितुमयोग्या सर्व्वतःकण्टकावृतत्वात् आ+क्रम–क्त न०त०। कण्टकारिवृक्षे। आक्रान्तभिन्ने त्रि०।

अनाचारित न० न आचारितः अपकृतः। अनपकृते। "अनाचारितपूर्व्वोऽयं" इति काव्यास०। "अनाचारितोऽनपकृत" इति प्रा०विवेकः।

अनागस् त्रि० न आ सम्यग्गच्छति स्वर्गमनेन नागः अधर्म्मः न०ब०। पापरहिते "मित्रो नो अत्रादितिरनागान्" ऋ० १०,१२,८, "अनागान् अपापान्" इति भा०।

अनागत त्रि० न आगतः। भविष्यत्कालवृत्तौ, "हेयं दुःखमनागतमिति पा०सू० आगतभिन्ने च "अनागतार्त्तवे" अमरः "तावद्भयस्य भेतव्यं यावद्भयमनागतमिति" हितो० "अनागतादिलिङ्गेन न स्यादनुमितिस्तदेति" भाषा०।

अनागतविधातृ त्रि० अनागतस्य भविष्यतः अनिष्टस्य विधाता प्रतिविधानकर्त्ता। आगामिदुःखस्य लिङ्गद्वारानुमानेन तन्निवारणोपायानुष्ठातरि "अनागतविधाता च प्रत्युत्पन्नमतिस्तथा। द्वावेतौ सुखमेधेते यद्भविष्योविनश्यतीति" हितो०।

अनागताबाध अनागतः आबाधः दुःखम्। भाविदैहिकादिदुःखे। यदाचरणेन भाविदुःखानुत्पादस्तादृशा उपायाः सुश्रुते दर्शिता यथा "अथातोऽनागताबाधप्रतिषेधनीयं व्याख्यास्याम"इत्युपक्रम्य। "उत्थायोत्थाय सततं स्वस्थेनारोग्यमिच्छता। धीमता यदनुष्ठेयं तत् सर्व्वं सम्प्रवक्ष्यते॥ तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम्। कनिष्ठिकापरिणाहमृज्वग्रथितमव्रणम्। अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम्। अवेक्ष्यर्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत्॥ कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः। निम्बश्च तिक्तके श्रेष्ठः, कषाये खदिरस्तथा॥ मधूको मधुरे श्रेष्ठः, करञ्जः कटुके तथा। क्षौद्रव्योषत्रिवर्गाक्तं सतैलं सैन्धवेन च॥ चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत्। एकैकं घर्षयेद्दन्तं मृदुना कूर्च्चकेन च॥ दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन्॥ तद्दौर्गन्ध्योपदेहौ तु श्लेष्माणं चापकर्षति। वैशद्यमन्नाभिरुचिं सौमनस्यं करोति च॥ न खादेद्गलताल्वोष्ठजिह्वारोगसमुद्भवे। अथास्यपाके श्वासे च कासहिक्कावमीषु च॥ दुर्ब्बलो जीर्णभक्तश्च मूर्च्छार्त्तो मदपीड़ितः। शिरोरुगार्त्तस्तृषितः श्रान्तः पानक्लमान्वितः॥ अर्द्दितो कर्णशूली च दन्तरोगी च मानवः। जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च॥ तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम्। मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं सुखम्॥ दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणम्। क्षीरवृक्षकषायैर्वा क्षीरेण च विमिश्रितैः॥ शिक्थोदककषायेण तथैवामलकस्य वा। प्रक्षालयेन्मुखं नेत्रे स्वस्थः शीतोदकेन वा॥ नीलिकां मुखशोषञ्च पिड़कां व्यङ्गमेव च। रक्तपित्तकृतान् रोगान् सद्य एव विनाशयेत्॥ सुखं लघु निरीक्षेत दृढं पश्यति चक्षुषा। मतं स्रोतोऽञ्जनं श्रेष्ठं विशुद्धं सिन्धुसम्भवम्॥ दाहकण्डूमलघ्नञ्च दृष्टिक्लेदरुजापहम्। अक्ष्णोरूपावहञ्चैव सहते मारुतातपौ॥ न नेत्ररोगा जायन्ते तस्मादञ्जनमाचरेत्। भुक्तवान् शिरसा स्नातः श्रान्तश्छर्द्दनवाहनैः॥ रात्रौ जागरितश्चापि नाञ्ज्याज्ज्वरित एव च। कर्पूरजातिकक्कोललवङ्गकटुकाह्वयैः॥ सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभम्। मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम्॥ हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनम्। प्रसेकशमनं हृद्यं गलामयविनाशनम्। पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च मानवे। रक्तपित्तक्षतक्षीणतृष्णामूर्च्छापरीतिनाम्॥ रूक्षदुर्ब्बलमर्त्त्यानां न हितं चास्यशोषिणाम्। शिरोगतांस्तथा रोगान् शिरोऽभ्यङ्गोऽपकर्षति॥ केशानां मार्द्दवं दैर्घ्यं बहुत्वं स्निग्धकृष्णताम्। करोति शिरसस्तृप्तिं सुत्वक्कमपि चाननम्॥ सन्तर्पणं चेन्द्रियाणां शिरसः प्रतिपूरणम्। मधूकं क्षीरशुक्ला च सरलं देवदारु च। क्षुद्रकं पञ्चनामानं समभागानि संहरेत्। तेषां कल्ककषायाभ्यां चक्रतैलं विपाचयेत्॥ सदैव शीतलं जन्तोर्मूर्द्ध्नि तैलं प्रदापयेत्। केशप्रसाधनी केश्या रजोजन्तुमलापहा॥ हनुमन्याशिरःकर्णशूलघ्नं कर्णपूरणम्। अभ्यङ्गो मार्द्दवकरः कफवातनिरोधनः॥ धातूनां पुष्टिजननो मृजावर्णबलप्रदः। सेकः श्रमघ्नोऽनिलहृद्भग्नसन्धिप्रसाधकः॥ क्षताग्निदग्धाभिहतविघृष्टानां रुजापहः। जलसिक्तस्य वर्द्धन्ते यथा मूलेऽङ्कुरास्तरोः॥ तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते। शिरामुखै रोमकूपैर्धमनीभिश्च तर्पयन्॥ शरीरबलमाधत्ते युक्तः स्नेहोऽवगाहने। तत्र प्रकृतिसात्म्यर्त्तुदेशदोषविकारवित्॥ तैलं घृतं वा मतिमान् युञ्ज्यादभ्यङ्गसेकयोः। केवलं सामदोषेषु न कथञ्चन योजयेत्॥ तरुणज्वरजीर्णौ च नाभ्यक्तव्यौ कथञ्चन। तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः॥

पूर्व्वयोः लक्षणं व्याध्योरसाध्यत्वमथापि वा । शेषाणां तदहः प्रोक्ता अग्निमान्द्यादयोगदाः ॥ सन्तर्पणसमुत्थानां रोगाणां नैव कारयेत् । शरीरायासजननं कर्म व्यायामसंज्ञितम् ॥ तत् कृत्वा तु सुखं देहं विमृद्नीयात् समन्ततः । शरीरोपचयः कान्तिर्गात्राणां सुविभक्तता ॥ दीप्ताग्नित्वमनालस्यं स्थिरत्वं लाघवं मृजा । श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ॥ आरोग्यं चापि परमं व्यायामादुपजायते । न चास्ति सदृशं तेन किञ्चित् स्थौल्यापकर्षणम् ॥ न च व्यायामिनं मर्त्त्यं मर्द्दयन्त्यरयो भयात् । नचैनं सहसाक्रम्य जरा समधिरोहति ॥ स्थिरीभवति मांसञ्च व्यायामाभिरतस्य च । व्यायामस्विन्नगात्रस्य पद्भ्यामुद्वर्त्तितस्य च ॥ व्याधयो नोपसर्पन्ति सिंहं क्षुद्रमृगा इव । वयोरूपगुणैर्हीनमपि कुर्य्यात् सुदर्शनम् ॥ व्यायामं कुर्व्वतो नित्यं विरुद्धमपि भोजनम् । विदग्धमविदग्धं वा निर्द्दोषं परिपच्यते ॥ व्यायामो हि सदा पथ्यो बलिनां स्निग्धभोजिनाम् । स च शीते वसन्ते च तेषां पथ्यतमः स्मृतः ॥ सर्व्वेष्वृतुष्वहरहः पुम्भिरात्महितैषिभिः । बलस्यार्द्धेन कर्त्तव्यो व्यायामो हन्त्यतोऽन्यथा ॥ हृदि स्थानस्थितो वायुर्यदा वक्त्रं प्रपद्यते । व्यायामं कुर्व्वतो जन्तोस्तद्बलार्द्धस्य लक्षणम् ॥ वयोबलशरीराणि देशकालाशनानि च । समीक्ष्य कुर्य्यात् व्यायाममन्यथा रोगमाप्नुयात् ॥ क्षयस्तृष्णारुचिश्छर्दिरक्तपित्तभ्रमक्लमाः । कासशोषज्वरश्वासा अतिव्यायामसम्भवाः ॥ रक्तपित्ती कृशः शोषी श्वासकासक्षतातुरः । भुक्तवान् स्त्रीषु च क्षीणो भ्रमार्त्तश्च विवर्जयेत्” ॥ उद्वर्त्तनं वातहरं कफमेदोविलापनम् । स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥ शिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् । उद्घर्षणोत्सादनाभ्यां जायेयातामसंशयम् ॥ उत्सादनाद्भवेत् स्त्रीणां विशेषात् कान्तिमद्वपुः । प्रहर्षसौभाग्यमृजालाघवादिगुणान्वितम् ॥ उद्घर्षणन्तु विज्ञेयं कण्डूकोठानिलापहम् । उर्व्वीः सञ्जनयत्याशु फेनकः स्थैर्य्यलाघवे कण्डूकोठानिलस्तम्भमलरोगापहश्च सः । तेजनं त्वग्गतस्याग्नेः शिरामुखविरेचनम् ॥ उद्घर्षणन्त्विष्टिकया कण्डूकोठविनाशनम् । निद्रादाहश्रमहरं स्वेदकण्डूतृषापहम् ॥ हृद्यं मलहरं श्रेष्ठं सर्व्वेन्द्रियविशोधनम् । तन्द्रापापोपशमनं तुष्टिदं पुंस्त्ववर्द्धनम् ॥ रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम् । उष्णेन शिरसः स्नानमहितञ्चक्षुषः सदा ॥ शीतेन शिरसः स्नानं चक्षुष्यमिति निर्द्दिशेत् । श्लेष्ममारुतकोपे तु ज्ञात्वा व्याधिबलाबलम् ॥ काममुष्णं शिरःस्नानं भैषज्यार्थं समाचरेत् । अतिशीताम्बु शीते च श्लेष्ममारुतकोपनम् ॥ अत्युष्णमुष्णकाले च पित्तशोणितवर्द्धनम् । तच्चातिसारज्वरितकर्णशूलानिलार्त्तिषु ॥ आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम् । सौभाग्यदं वर्णकरं प्रीत्योजोबलवर्द्धनम् ॥ स्वेददौर्गन्ध्यवैवर्ण्यश्रमघ्नमनुलेपनम् । स्नानं येषां निषिद्धन्तु तेषामप्यनुलेपनम् । रजोघ्नमथ चौजस्यं सौभाग्यकरमुत्तमम् । सुमनोऽम्बररत्नानां धारणं प्रीतिवर्द्धनम् ॥ सुखालेपाद्दृढ़ं चक्षुःपीनगण्डं तथाननम् । अव्यङ्गपिडकं कान्तं भवत्यम्बुजसन्निभम् ॥ पक्ष्मलं विशदं कान्तममलोज्ज्वलमण्डलम् । नेत्रमञ्जनसंयोगाद्भवेच्चामलतारकम् ॥ यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्द्धनम् । देवतातिथिविप्राणां पूजनं गोत्रवर्द्धनम् ॥ आहारः प्रीणनः सद्योबलकृद्देहधारकः । आयुस्तेजःसमुत्साहस्मृत्योजोऽग्निविवर्द्धनः ॥ पादप्रक्षालनं पादमलरोगश्रमापहम् । चक्षुःप्रसादनं वृष्यं रजोघ्नं प्रीतिवर्द्धनम् ॥ निद्राकरो देहसुखश्चक्षुष्यः श्रमसुप्तिनुत् । पादत्वङ्मृदुकारी च पादाभ्यङ्गः सदा हितः ॥ पादरोगहरं वृष्यं रजोघ्नं प्रीतिवर्द्धनम् । सुखप्रचारमौजस्यं सदा पादत्रधारणम् ॥ अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत् । पादाभ्यामनुपानद्भ्यां सदा चंक्रमणं नृणाम् ॥ पापोपशमनं केशनखरोमापमार्जनम् । हर्षलाघवसौभाग्यकरमुत्साहवर्द्धनम् ॥ वाणवारं मृजावर्णतेजोबलविवर्द्धनम् । पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम् ॥ वर्षानिलरजोघर्म्महिमादीनां निवारणम् । वर्ण्यं चक्षुष्यमौजस्यं शिवं छत्रधारणम् ॥ शुनः सरीसृपव्यालविषाणिभ्यो भयापहम् । श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते ॥ सत्त्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनम् । अवष्टम्भकरञ्चापि भयघ्नं दण्डधारणम् ॥ आस्या वर्णकफस्थौल्यसौकुमार्य्यकरी सुखा । अध्वा वर्णकफस्थौल्यसौकुमार्य्यविनाशनः । अत्यध्वा विपरीतोऽस्माज्जरादौर्बल्यकृच्च सः ॥ यत्तु चंक्रमणं नातिदेहपीड़ाकरं भवेत् । तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् ॥ श्रमानिलहरं वृष्यं पुष्टिनिद्राधृतिप्रदम् । सुखं शय्यासनं दुःखं विपरीतगुणं मतम् ॥ व्यालव्यजनमौजस्यं मक्षिकादीनपोहति । शोषदाहश्रमस्वेदमूर्च्छाघ्नो व्यजनानिलः ॥ प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् । संवाहनं मांसरक्तत्वक्प्रसादकरं सुखम् ।

देशभेदे परम्परागताः तत्तत्कुलस्थितिमूला वेद्याः । ब० । आचारहीने त्रि० ।

**अनाम्नात** त्रि० न आम्नातः । सम्यग्ज्ञानाविषयीभूते "आम्नातं यदनाम्नातं यज्ञस्य क्रियते मिथ" इति यजु० ।

**अनातप** पु० आ+तप—अच् न०त० । आतपस्य रौद्रस्याभावे, छायायां च । अनातपविशोषितमिति" वैद्यकम् छायाशुष्कमिति तदर्थः । ब०। आतपशून्ये त्रि०।

**अनातुर** त्रि० न आतुरः । आतुरभिन्ने स्वस्थे अरोगे च "यद्देवाः शर्म शरणं यद्भद्रं यदनातुरमिति" ऋ० ८,४७,१०, 'भेजे धर्ममनातुर" इति रघुः ।

**अनात्मक** त्रि० नास्ति आत्मा स्थिरः यत्र कप् । क्षणिक विज्ञानमते, स्थिरात्मशून्ये जगति च । नैरात्म्यवादे हि चेतयिता स्थिर आत्मा न स्वीक्रियते किन्तु क्षणिकविज्ञानेनैव सर्वव्यवहारसिद्धिरित्यतः पराभिमतात्मशून्यत्वम् जगतः । विस्तरः क्षणिकविज्ञानशब्दे दृश्यः ।

**अनात्मज्ञ** त्रि० आत्मानं यथास्वरूपं न जानाति ज्ञा—क अस०स० । आत्मस्वरूपानभिज्ञे आत्मचेष्टितानभिज्ञे स्वपरविवेचनाशून्ये च ।

**अनात्मन्** पु० न आत्मा अप्राशस्त्ये भेदार्थे च न०त० । "अप्राप्तः प्राप्यते योऽयमत्यन्तं त्यज्यतेऽथवा । जानीयात्तमनात्मानं बुधस्त्वं वपुरादिकम्" इत्येवं प्रतिपादिते आत्मभिन्ने अपकृष्टात्मनि देहादौ "अनात्मनि देहादौ आत्मेति या बुद्धिः साऽविद्येति वे०प्र० । "देवाश्च असुराश्च उभयएवानात्मान" इति श्रुतिः "अनात्मन्यात्मबुद्धिर्या साऽविद्या परिकीर्त्तितेति" पुरा०।

**अनात्मवत्** त्रि० आत्माऽन्तःकरणं वश्यत्वेनास्त्यस्य मतुप् मस्य वः न०त० । अजितेन्द्रिये ।"अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणत" इति सुश्रुतम् ।

**अनात्म्य** न० आत्मन इदं आत्मन्+यत् आत्म्यम् शरीरं न०ब० । अशरीरे "एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते इति तै०आ० "अनात्म्ये अशरीरे" इति भा० ।

**अनाथ** त्रि० नास्ति नाथः प्रभुरस्य । प्रभुहीने "किं भ्राता सद्यदनाथमिति" ऋ० १०,१०,११,। विलपन्तमनाथवदिति भार० ।

**अनादर** पु० आदरः गौरवहेतुका सम्माननाविरोधे न० त० । परिभवे, तिरस्कारे, अवज्ञायाम् च तेषामादरविरोधित्वात्तथात्वम् । "गुणेषु रागो व्यसनेष्वनादरः" नीति०। ब० । आदरशून्ये त्रि० ।

**अनादि** पु० आदिः कारणम् पूर्व्वकालो वा स नास्ति यस्य परमेश्वरे । नास्ति आदिः प्राथमिकोऽयस्मात् ५ब० । हिरण्यगर्भे पु० तस्य च "हिरण्यगर्भः समवर्त्तताग्रे" इति श्रुतौ सृष्टेः प्रथमुत्पन्नत्वात्तथात्वम् । आदिशून्ये त्रि० । "जगदादिरनादिस्त्वमिति" कुमा० । "अनादिनिधनं ब्रह्म शब्दतत्त्वं प्रचक्षते" इति हरिः । "अनादिनिधना देवी वाग्रूत्सृष्टा स्वयम्भुवेति" पुरा० । "अनादिर्भूर्भुव इति" विष्णु स० । "अनादित्वात् निर्गुणत्वादिति" गीता ।

**अनादिमत्** आदिमत् कार्य्यं तद्भिन्नः । कार्य्यभिन्ने ।

**अनादिष्ट** त्रि० न आदिष्टः विशेषरूपेण उपदिष्टः । विशेषरूपेणाकथिते "अस्य पापस्य इदं प्रायश्चित्त" मित्यादिरूपेण विशेषतोऽनिर्दिष्टे प्रायश्चित्ते "उपपातकयुक्तानामनादिष्टेषु चैव हि । प्रकाशे च रहस्ये च" इति विश्वामित्रः ।]

**अनादृत** न० आदृतम् आदरः भावे क्त अभावार्थे न०त० । आदराभावे अवज्ञायाम् । कर्म्मणि क्त न०त०। आदृतभिन्ने अवज्ञाते तिरस्कृते च त्रि० ।

**अनादेय** न० न आदेयः । स्मृत्यादिषु निषिद्धतया आदानानर्हे वस्तुनि "अनादेयस्य चादानादादेयस्य च वर्जनादिति" मनुः । अप्रतिग्राह्ये च अप्रतिग्राह्यद्रव्याणि च अप्रतिग्राह्यशब्दे वक्ष्यन्ते । ["मन्त्रानादेशे गायत्रीति" स्मृतिः ।

**अनादेश** पु० न आदेशः अभावे न०त० । उपदेशाभावे ।

**अनाद्य** त्रि० न आद्यं भक्ष्यम् । अभक्ष्ये स्मृतिनिषिद्धतया भक्षणानर्हे । "एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिरिति" "ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे" इति च मनुः । अनाद्यानि च अभक्ष्यशब्दे दर्शयिष्यन्ते । आद्यशून्ये अनादौ त्रि० ।

**अनाधार** त्रि० नास्ति आधारो यस्य । आश्रयशून्ये "अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहेष्यते" (भाषा०) उक्तेः न्यायमते नित्यद्रव्यमात्रे, आश्रयशून्यत्वाच्च युक्तमनाधारत्वम् "अम्बरान्तधृते"रित्यादि शा० सूत्रेण अम्बरपर्य्यन्तानां सर्वेषामाधारत्वमीश्वरस्येति नाम्बरादौ अनाधारत्वं किन्तु ब्रह्मण एवेति वेदान्तिनः ।

**अनाधृष्** त्रि० आ+धृष—क्त न०त० । अनभिभूते आधर्षणरहिते "रेवतीरनाधृषः सिषासव" इति अथर्व० ६,२,२ ।

**अनाधृष्ट** त्रि० न आधृष्टः पराभूतः । अपरिभूते "महो न वायस्यनाधृष्ट" इति ऋ० ७,१५, १४, । वार्य्यमनाधृष्टं रक्षस्विना, ऋ० ८,२२,१८ ।

**अनाधृष्य** त्रि॰ आ+धृष–कर्म्मणि क्यप् न आधृष्यः न॰त॰। अनभिभवनीये "अनाधृष्यं वृषभं तुम्रमिन्द्रमिति" ऋ॰ ४, १८, १०, "तव दैवैरनाधृष्यमिति" रामा॰।

**अनानुद** त्रि॰ अनुददाति अनु+दा–क न॰त॰ पृ॰ दीर्घः। समानदातृशून्ये अतुल्यदातरि। "अनानुदो वृषभोदोधत" इति ऋ॰ २, २१, ४, "प्रभूतधनदानेन अन्यः समानो दाता नास्तीति" भा॰।

**अनापि** त्रि॰ आप्यते आप–कर्म्मणि इन् आपिराप्तो बन्धुश्च न॰ब॰। आप्तशून्ये। "अनापिरज्ञा असजात्यामतिरिति" ऋ॰ १०, ३९, ६, "अनापिरबन्धुरिति" भा॰ "अभ्रातृव्यो अना त्वमनापिरिन्द्र" इति ऋ॰ ८, २१, १३।

**अनाप्त** त्रि॰ आप्तो बन्धुः यथार्थज्ञानवान्, प्राप्तश्च, न॰त॰। बन्धुभिन्ने, अप्राप्ते, "यस्यानाप्तः सूर्य्यस्येव ऋ॰१, १००, २, "अनाप्तः परैरप्राप्तः" इति भा॰। यथार्थनिश्चयवद्भिन्ने "युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतमिति" मनुः।

**अनाभयिन्** त्रि॰ आबिभेति आ+भी–उणा॰ इनि न॰त॰। सम्यग्भीतभिन्ने। "अनाभयिन्नरिमा ते" ऋ॰८, २, १,।

**अनाभू** त्रि॰ आभिमुख्येन भवति आभूः श्रोता न॰त॰। श्रोतृभिन्ने आभिमुख्याप्राप्ते च। "इन्द्रः श्रथयन्ननाभुव" इति ऋ॰ १, ५१, ९,।

**अनामन्** न॰ अननमनः अनं जीवनम् अमयति रुजति अम–कनिन्। अर्शोरोगे। नास्ति नामास्य नामन्शब्दे सत्यभावे पु॰ तस्य वैदिककर्म्मानर्हतयाऽनामत्वात्तत्त्वम्। नामशून्ये त्रि॰ अनामिकायामपि पु॰ शब्दरत्ना॰। स्वार्थे कन्। तत्रार्थे।

**अनामय** पु॰ अम–घञ् आमं तापं यात्यनेन या–क आमयो रोगः न॰त॰। रोगाभावे आरोग्ये। "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयमिति" मनुः। न॰ब॰। बाह्याभ्यन्तरपीड़ानिवारके विष्णौ पु॰ "पुण्यकीर्त्तिरनामय" इति विष्णु स॰। रोगशून्ये त्रि॰। "जन्मबन्धविनिर्म्मुक्ताः पदं गच्छन्त्यनामयमिति" गीता।

**अनामयित्नु** अम–णिच्–बा॰ इत्नुच् न॰त॰। व्याधकभिन्ने "हस्ताभ्यामनामयित्नुभ्यामिति" ऋ॰ १०, १३७, ७,।

**अनामा** स्त्री ब्रह्मणः शिरश्छेदनसाधनतया ग्रहणायोग्यत्वात् नास्ति नाम ग्रहणयोग्यं यस्याः, नास्ति अङ्गुष्ठतर्जन्यादिवत् विशेषनामास्य वा मनन्तत्वात् डाप्। स्वनामप्रसिद्धायां मध्यमाकनिष्ठयोः मध्यगायामङ्गुल्याम्। स्वार्थे कन्। अनामिकाप्यत्र। तया हि शिवेन ब्रह्मशिरश्छिन्नमिति पुराणे प्रसिद्धम् तेन तस्या अपवित्रजातीयता अतएव तस्याः पवित्रीकरणार्थं यज्ञादौ पवित्रनामककुशधारणं तत्र क्रियते। "अनामिकाधृता दर्भा हेत्रकानामिकयापि वा, द्वाभ्यामनामिकाभ्यां तु धार्य्ये दर्भपवित्रके" इति छन्दो॰प॰।

**अनाम्नृण** त्रि॰ आम्नृणाति हिनस्ति आ+म्नृण–क न॰ब॰। हिंसकरहिते। "अनाम्नृणः कुविदादस्य ऋ॰ १, २२१,।

**अनायत्त** त्रि॰ न आयत्तः। अवशे अनधीने। "एतावज्जन्मसाफल्यं यदनायत्तवृत्तितेति" हितो॰।

**अनायन** न॰ न आयनं चालनम् यत्र। एकान्ते हेम॰ एकान्तानायनमित्येकं नामेति केचित्।

**अनायास** पु॰ आ–यस घञ् अल्पार्थे न॰त॰। प्रयत्नाभावे, अल्पप्रयासे, अक्लेशे च। "शरीरं पीड्यते येन शुभेनाप्यशुभेन वा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते" अत्रि॰। ब॰। प्रयत्नशून्ये त्रि॰। "समाप्येऽकस्मिन्ननायासे कर्म्मणि सहायेन भवता भवितव्यमिति" शकु॰।

**अनायासकृत** न॰ अनायासेन अल्पप्रयत्नेन कृतं न॰त॰। अल्पायासेन साध्ये फाण्टे क्वाथे।

**अनायुष्य** न॰ आयुषे हितम् आयुस्+यत् न॰त॰। आयुरहितकरे अतिभोजनादौ। "अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम्" इति "नहीदृशमनायुष्यं लोके किञ्चन विद्यते यादृशं पुरुषस्येह परदारोपसेवनमिति" च मनुः। "तत्र प्रथमदिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसामिति" सुश्रुतम् एवमन्यान्यपि बहूनि अनायुष्याणि तत्र स्थाने स्थाने दर्शितानि। तत एव तानि बोध्यानि।

**अनारत** न॰ आ+रम–क्त आरतं विरतिः अन्तनाभावे न॰त॰। सन्तते, अविरामे अविच्छेदे च। "अनारतं तेन पदेषु लम्भिता" इति भार॰। ब॰। तद्वति त्रि॰।

**अनारभ्य** अव्य॰ आ+रभ–ल्यप् न आरभ्य। किञ्चिदनधिकृत्येत्यर्थे। "अनारभ्याधीतत्वादिति" मीमांसा। न आरभ्यः न॰त॰। आरभ्यभिन्ने त्रि॰। अनारभ्यत्वादिति का॰ १, ८, ३, "नैवायमारभ्याधीतोऽर्थ" इति व्याख्या। "अनारभ्यत्वाच्चेति" इति कात्या॰ २०, ८, २९,। "तस्मादनारभ्योऽयमर्थ" इति व्याख्या।

**अनारभ्याधीत** त्रि॰ न आरभ्य किञ्चित् अधीतः। किञ्चिदनधिकृत्य अधीते, येषां मन्त्राणां कर्म्मविशेषे विनियोगो नोक्तस्तेषां मन्त्राणामनारभ्याधीतत्वात् ब्रह्मयज्ञे एव विनियोग इति मीमांसायां स्थिरीकृतम्। "सामान्येन तु विनियोगो यद्यपि ब्रह्मयज्ञविधेय" इति ऋ॰भा॰ माधवः।

**अनारम्भ** पु० न आरम्भः अभावार्थे न०त० । आरम्भाभावे अनुष्ठानाभावे । "न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते इति" गीता ।

**अनारोग्य** न० न आरोग्यम् । आरोग्याभावे । नास्ति आरोग्यं यस्मात् ५ब० । आरोग्यासाधने "अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनमिति" मनुः ।

**अनार्ज्जव** पु० ऋजोर्भाव आर्ज्जवं सरलता स्वाच्छन्द्यं वा न० ७ब० । रोगे । अभावार्थे अव्ययी० । ऋजुत्वाभावे अव्य० । ६ब० । कुटिले त्रि० ।

**अनार्त्तव** त्रि० ऋतुरस्य प्राप्तः ऋतु+अण् न०त० । अकाल रूपे–ऋतौ–अनुत्पन्ने कुसुमादौ । ऋतोः स्त्रीकुसुमस्येदम् विकाशनम् आर्त्तवं तन्नास्ति यस्याः । अदृष्टरजस्कायां स्त्रियां स्त्री ।

**अनार्य्य** पु० न आर्य्यः न०त० । आर्य्यभिन्ने असच्चरिते । "अनार्य्य इति मामार्य्या इति" रामा० । न० ७ब० । आर्य्यानाश्रये देशे ।

**अनार्य्यक** न० । न आर्य्या यत्र देशे तत्र आर्य्यावर्त्तादिभिन्ने द्वीपान्तरादौ भवः अनार्य्य+कन् । अगरुकाष्ठे ।

**अनार्य्यज** न० । अनार्य्ये देशे जायते जन–ड । अनार्य्यदेशजाते अगरुकाष्ठे । तद्देशजातमात्रे त्रि० ।

**अनार्य्यतिक्त** पु० अनार्य्यप्रियस्तिक्तः शाक० त० । (चिराता) इति ख्याते भूनिम्बे वृक्षे ।

**अनार्ष** त्रि० ऋषिजुष्टत्वादृषिर्वेदस्तत्रोक्तः आर्षः न०त० । अवैदिके वेदाप्रयुक्ते । "संबुद्धौ शाकल्यस्येतावनार्षे" इति पा० । "अनार्षे अवैदिके" इति सि०कौ० । ऋषिणा दृष्टम् अण् आर्षम् न०त० । ऋषिणाऽदृष्टे । "अणिञोरनार्षयोर्गुरूपोत्तमयोरिति" पा० । "अनार्षयो किं? वासिष्ठीति" सि०कौ० ।

**अनालोचि(डि)त** त्रि० न आलोचि (डि) तः । अविवेचिते । "अनालोचितकार्य्यस्य वाग्जालं वाग्मिनो वृथेति" माघः अनिर्लोचितेति वा पाठः ।

**अनाविल** त्रि० न आविलः । प्रसन्ने स्वच्छे कालुष्यरहिते ।

**अनाविद्ध** त्रि० न आविद्धः । अबाधिते । "अनाविद्धया तन्वा त्वाजय" ऋ० ६,७५,१ ।

**अनावृत्त** त्रि० न आवृत्तः अभ्यस्तः । अपुनर्गते प्रथमगते च । "सप्तमासेऽप्यनावृत्तां तीर्थयात्रां विवर्जयेदिति" स्मृतिः ।

**अनावृत्ति** स्त्री न आवृत्तिः पुनर्गमनम् । अभ्यासाभावे, आगमनाभावे च "अनावृत्तिः शब्दादिति" शा० सू० । "तत्र प्राप्तविवेकस्यानावृत्तीति" सां०सू० । ब० । तद्वति त्रि० ।

**अनावृष्टि** स्त्री आ+वृष–क्तिन् "अभावार्थे न० त० । "अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृता" इत्युक्ते ईतिभेदे "द्वादशवार्षिक्यामनावृष्ट्यामिति" हितो० ।

**अनाशक** पु० आ सम्यक् यथेच्छम् आशः अशनम् आ+अश घञ् न०ब०कप् नश्यति नश–ण्वुल् न०त० वा । यथेच्छभोगशून्ये, अनश्वरे च "तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन तपसाऽनाशकेनेति" श्रुतिः । फलकामनाशून्यत्वेन, भोगाय फलाजनकत्वात् तादृशकर्मणश्च भोगेन क्षयाभावाच्च तथात्वम् ।

**अनाशकायन** न नश्यति अनाशक आत्मा तस्यायनं प्राप्त्युपायः । आत्मज्ञानसाधने ब्रह्मचर्य्यभेदे, "अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्य्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्य्येणानुविन्दते" इति छा०उ० ।

**अनाशस्त** त्रि० आ+शन्सु स्तुतौ–क्त न०त० । अस्तुते । "अनाशस्त इवास्मसि" ऋ० १,२९,१, ।

**अनाशिन्** त्रि० न नश्यति नश–णिनि, कर्म्मफलमश्नुते अश–णिनि वा न०त० । अनश्वरे आत्मनि, ईश्वरे च, "अनाशिनोऽप्रमेयस्येति" गीता "अन्योऽनश्नन्नभिचाकशीति" श्रुतेरीश्वरस्य फलभोक्तृत्वाभावात्तथात्वम् । नाशरहिते त्रि० "नश्यतो विनिपातेनाविनिपाते त्वनाशिनौ" मनुः ।

**अनाशु** त्रि० नश–उण्–अश–व्याप्तौ कर्म्मणि उण् वा न०त० । विनाशरहिते, अव्याप्ते च । "भन्वन् विद्ये अनाशव" इति ऋ० १,१३५,८, "अनाशवः विनाशरहिताः अव्याप्ता वा इति भा० । न आशुः शीघ्रः न०त० । क्षिप्रभिन्ने । "अविप्रे चिद्वयोदधदनाशुनेति ऋ० ६,४५,२, "अनाशुना अक्षिप्रगमनेनेति" भा० ।

**अनाश्रमिन्** पु० न आश्रमी न०त० । ब्रह्मचर्य्याद्याश्रमशून्ये "अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विज" इति स्मृतिः ।

**अनाश्रय** त्रि० नास्ति आश्रयो यस्य । आलम्बनरहिते ।

**अनाश्वस्** त्रि० अश–भोजने क्वसु नि० । भोगशून्ये "उपेयिवननाश्वाननूचानश्चेति" पा० "व्रतजयव्रतैरनाश्वुष" इति भारविः ।

**अनाश्वास** पु० अभावार्थे न०त० । आस्थाभावे विश्वासाभावे "प्रत्यक्षपूर्व्वकत्वादनुमानस्य सर्व्वत्रानाश्वासप्रसङ्गादिति" बृ०उ० भा० ।

अनास् त्रि० आस्यते निरास्यते जीवनमनेन आ+अस-क्षेपे करणे क्विप् आः सुखं नास्ति तत् साधनत्वेनास्य । आस-व्यापारशब्दरहिते। "अनासोदस्यूँरमुणो" इति ऋ० ५,२९, १०, "अनासः आस्यरहितानि तद्व्यापारशून्यानीति" भा०।

अनासिक त्रि० नास्ति नासिकाऽस्य । भग्ननासिके विकृत नासिके च ।

अनास्था स्त्री आ+स्था-अङ् आस्था आदरः अभावार्थे न०त० । अनादरे । "स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सतामिति" कुमा० "अनास्थया सूनकरप्रसारिणीमिति" नैष० । न०ब० । आदररहिते त्रि० ।

अनास्थान त्रि० आस्थीयतेऽस्मिन् आ+स्था-आधारे ल्युट् आस्थानोभूप्रदेशः न०त० । आस्थानायोग्ये जलादौ । "अनारम्भणे तदवीरयेथामनास्थाने"इति ऋ०१,११६,५। आस्थानं सभा । तच्छून्ये च ।

अनास्राव आ+स्रु-वेदे घञ् न०ब० । क्लेशरहिते । लोके तु अप् अनास्रव इति । "तेषामसि त्वमुत्तममनास्रावमरोगणमिति अथ० २,३,२ ।

अनाह पु० नह-घञ् न०त० । मलादिवन्धाभावोपलक्षितेऽस्यूर्णरोगे ।

अनाहत न० आ-हन-भावे क्त आहतं छेदो भोगो वा न० ब० । छेदभोगादिरहिते नवीने वस्त्रे । तन्त्रशास्त्रप्रसिद्धे हृदयस्थिते सुषुम्णामध्यस्थे द्वादशदलपद्मे "शब्दो ब्रह्ममयः, शब्दोऽनाहतो यत्र दृश्यते अनाहताख्यं तत् पद्मं मुनिभिः परिकीर्त्तितमित्युक्तलक्षणे । नाभिस्थं मणिपूरं चक्रं वर्णयित्वा "तदूर्द्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् । कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् । तन्मध्ये वाणलिङ्गन्तु सूर्यायुतसमप्रभम् । आनन्दसदनं तत्तु पुरुषाधिष्ठितं परमिति" तन्त्रसारे उक्तम् । अस्मिन् पक्षे च आहतमाघातः कण्ठताल्वाद्यभिघातः तन्नास्ति साधनत्वेनास्य तादृशः शब्दः अस्यास्ति अर्श आदित्वात् अच् । अनाहतशब्देन च परा, पश्यन्ती, मध्यमा, वैखरीतिप्रसिद्धानां वागवृत्तीनां मध्ये मध्यमा वाक् कथ्यते तस्याश्च हृदयपद्मे कण्ठादिस्थानमनाहत्यैवोत्पन्नत्वादनाहतत्वम् अधिकं मध्यमाशब्दे वक्ष्यते । ब० । आघातरहिते वस्तुमात्रे त्रि० ।

अनाहार पु० न आहारः अभावार्थे न०त० । भोजनाभावे "अनाहारेणात्मानं तव द्वारि व्यापादयिष्यामीति" हितो० । "अनाहारेण देहिन" इति पुरा० ।

अनाहार्य्य त्रि० आहार्य्यः कृत्रिमः आहरणीयश्च न०त०। अकृत्रिमे स्वाभाविके, आहरणीयभिन्ने च ।

अनाहिताग्नि पु० न आहितः अग्निर्येन । विधिना अकृताग्न्याधाने निरग्नौ द्विजभेदे । "योऽनाहिताग्निः शतगुरयज्वा च सहस्रगु"रिति मनुः । 'अनाहिताग्निश्चुतेश्चेति' कात्या० ४,१,२९, "अनाहिताग्नेरपि पिण्डपितृयज्ञः श्रूयते" इति तद्व्याख्या सा च श्रुतिस्तत्रैव दर्शिता "अनाहिताग्निना कार्य्यं इति" "यदि स दर्शाङ्गं स्यात् अनाहिताग्ने र्दर्शपौर्णमासाभावान्न श्रूयेतेति" तद्व्याख्या ।

अनिकेत पु० नास्ति निकेतः नियमेन निवासो यस्य ब० । नियतनिवासशून्ये परिव्राजके । "अनग्निरनिकेतः स्याद्मुनिर्मूलफलाशन" इति "अनग्निरनिकेतः स्याद्ग्राममन्नार्थमाश्रयेदिति" च मनुः "अनिकेतः स्थिरमतिरिति:" गीता अनिकेतनोऽप्यत्रार्थे ।

अनिक्षु न० न इक्षुः साम्ये, अप्राशस्त्ये वा न०त० । इक्षुसदृशे गुडहेतौ (नटा) इति ख्याते काशभेदे ।

अनिगीर्ण त्रि० न निगीर्णः । अनपह्नुतभेदे, "विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् सारोपा स्यादिति"सा०द०। (अनिगीर्णस्य) अनपह्नुतभेदस्य (विषयस्य) आरोपविषयस्य आरोप्यमाणस्य, (अन्यस्य) आरोपाश्रयस्य तादात्म्यभेदस्तत्प्रतीतिकृत् तद्बोधसाधनं वृत्तिः सारोपा लक्षणेति तदर्थः यथा अश्वः श्वेतो धावतीत्यादौ श्वेतगुणवानश्वोऽनपह्नुतभेदः सन् स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते इत्यतस्तत्र सारोपा लक्षणा ।

अनिच्छा स्त्री न इच्छा अभावार्थे न०त० । इच्छाभावे "स्फुटामनिच्छां विदधीत सत्सुकामिति नैष० । "चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छयेति" मनुः ।

अनित्य त्रि० न नित्यः । नश्वरे, जन्ये च। "नित्याऽनित्या च च सा द्वेधा नित्या स्यादणुलक्षणा । अनित्या तु तदन्या स्यादिति" भाषा० । "यदि नित्यमनित्येन निर्मलं मलवाहिना । यशः कायेन लभ्येतेति" हितो० "रजस्वलमनित्यञ्च भूतावासमिमं त्यजेदिति"मनुः । अस्थिरे "अनित्योविजयो यस्मात् दृश्यते युध्यमानयोः।पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेदिति"मनुः। कृताकृतप्रसङ्गि नित्यं विरोधे न०त०। कृताकृतप्रसङ्गशून्ये वैकल्पिके, "समासान्तविधेरनित्यत्वमिति" पा०भा०। यावदाश्रयमवस्थानायोग्ये, "वर्णे चानित्ये" इति पा०। अव्यवस्थिते, (यावदाश्रयमदनवस्थिते) "इह खलु द्रव्यं व्यवस्थितं न रसादयः, यथा आमे फले, ये रसादयस्ते

पक्षे न सन्ति, नित्यत्वाद्य नित्यं द्रव्यम् अनित्या गुणा यथा कल्पादिप्रविभागः, स एव सम्यक्‌रसगन्धो व्यापन्नरसगन्धो वा भवतीति” सुश्रुतम् अतएव “सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः” इति गुणलक्षणे गुणानामुत्पत्तिविनाशोक्तिः। सदातनभिन्ने काले च। “अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते” इति मनुः। अनित्यमित्यत्र व्याप्तौ, कालाधिकरणे वा द्वितीया न मात्रव्यवत्वमस्य तथात्वे प्रमाणाभावात्। सदाकालवृत्तिपरत्वेऽपि धातूपस्थाप्यसाध्यक्रियाविशेषणत्वेन मध्यारोरतिमन्दिरावधीत्यादिवत् द्वितीयेति बोध्यम्। नित्यम् मान्तमव्ययम् न०त०। केचित्।

**अनिद्रा** स्त्री न निद्रा अभावार्थे न०त०। निद्राभावे “हृद्व्यथक्लोम्यमनिद्रा तस्य” इति सुश्रुतम्। निद्राराहित्ये च रोगविशेष एव कारणम्। नास्ति निद्रा यस्य। निद्रारहिते आलस्यरहिते त्रि० “अनिद्रो मङ्‌क्षोरात्रं तपोवनमरक्षतामिति “प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिता” इति च रामा०। “अनिद्रेण अनलसेनेति” तदर्थः।

**अनिन्दित** त्रि० न निन्दितः। निन्दारहिते प्रशस्ते “अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजेति” मनुः।

**अनिन्द्र** त्रि० न इन्द्रोयाज्योयस्य। इन्द्रोपासनाशून्ये “मामनिन्द्राः क्षणवन्नुक्थाः” ऋ० ५,२,३, “अनिन्द्रा इन्द्रमयजन्त” इति भाष्यम्।

**अनिबद्ध** त्रि० न निबद्धः। अनायत्ते, “अनायतो अनिबद्ध” इति ऋ० ४,१३,५। प्रथितभिन्ने च।

**अनिबाध** त्रि० नास्ति निबाधः संबाधा यस्य। संबाधरहिते “उरौ महाँ अनिबाधे ववर्ध” इति ऋ० ३,१,११, अनिबाधे असंबाधे इति भा०।

**अनिभृत** त्रि० न निभृतः न०त०। चञ्चले “भुवमनिभृतवेलेति” भा०। “वेलाचञ्चला” इति मल्लि०।

**अनिभृष्ट** त्रि० नि+धृष क्त नि० न०त०। अबाधिते। अनिभृष्टतविषिर्हन्त्योजसा” ऋ०२,२५,४, अनिभृष्टतविषिः अबाधितबल” इति भा०।

**अनिमक** पु० अन–जीवने यक्टे च भावे बा० इसन् “अनिमः जीवनं तेन कायति प्रकाशते कै–क। भेके। तस्य मरणेऽपि पुनरुज्जीवनात्तथात्वम्। कोकिले, भ्रमरे च तयोः मधुरशब्देन प्रकाशमानत्वात्तथात्वम्। अनिमाय जीवनाय कं जलं यस्य। पद्मकेशरे। अनिमाय कं सुखं यस्मात्। मधूके (मौल) वृक्षे मेदिनिः।

**अनिमान** त्रि० नि+मा–भावे ल्युट् न०ब०। परिच्छेदरहिते “स नो महाँ अनिमानो धूमकेतुः ऋ०१,२७,११ “अनिमानः अपरिच्छिन्न” इति भा०।

**अनिमित्त** न० न निमित्तम्। निमित्ताभावे कारणाभावे “अनातुरः स्वानि खानि न स्पृशेदनिमित्तत” इति मनुः न०ब०। कारणशून्ये त्रि०।

**अनिमिष्** त्रि० नि+मिष–भावे क्विप् स नास्ति यत्र। स्पन्दशून्ये दर्शने “इमे दिवो अनिमिषा” इति ऋ०७, ६०,७, “मित्रः कृष्टीरनिमिषा” इति ऋ०३,५९,१, अनिमिषा निमिषरहितेनेति भा०।

**अनिमि(मे)ष** पु०नास्ति निमि(मे)षः चक्षुःस्पन्दनं यस्य मिष घञ् कुटादि० न गुणः, मिष–भ्वादि घञ्–वा,। चक्षुःस्पन्दनशून्ये देवे “सुरेषु नापश्यदवेक्षताक्षोर्द्वये निमेषं निजसम्मुखे येति” नैषधे सुराणां निमेषशून्यत्वमुक्तम् “अस्मजो अनिमिषा” इति २,२७,९ संक्रन्दनो अनिमिष एकवीर इति च ऋ० १०१०३,१। मत्स्ये च। निमिषो दृष्टिमतिबन्धस्तच्छून्ये विष्णौ च। “नैमिषेऽनिमिषक्षेत्रे” इति भाग० “अनिमिषः विष्णुः अलुप्तदृष्टित्वात् तस्य क्षेत्रे इति श्रीधरः। न निमिषति चलतीति नि+मिष –क न०त०। महाकाले। क्रियाशून्ये वस्तुमात्रे त्रि०। स्पन्दनशून्ये त्रि०। “शतैस्तमक्ष्णामनिमेषवृत्तिभिरिति” रघुः।

**अनियत** त्रि० न नियतः। नियमेनैकरूपशून्ये, अनित्ये अस्थायिनि “रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिण” इति सा०द०। नियतकारणाद्यनपेक्षे च “रिष्टं त्रिविधं सुनयोनियतमनियतं योगजञ्चेति” ज्योति०। अनियन्त्रिते च। [उच्छृङ्खले च।

**अनियन्त्रित** त्रि० नि+यन्त्र चु० क्त न०त०। अनियमिते

**अनियम** पु० न नियमः अभावार्थे न०त०। नियमाभावे। “पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। षष्ठे पादे गुरु ज्ञेयं शेषेष्वनियमोमत” इति छन्दो०।

**अनिरा** स्त्री नास्ति इरा अन्नं यस्याः ५ब०। अतिवृष्ट्यादौ ईतौ। “अघ्नन् विश्वा अनिरा” इति यजु० ११,४७, अनिराः अतिवृष्ट्याद्या इति वेददीपः। न ईरयितुं शक्यते ईर–क पृ० ह्रस्वः न०त०। प्रेरयितुमशक्ये। “अपत्या अस्थुरनिरा” इति ऋ० ८,४८,११, “अनिरा प्रेरयितुमशक्या” इति भा०। ६ब०। अन्नरहिते दारिद्र्ये च “अभुतमस्मदनिरामभीवामिति” ऋ०७,७१,२, “अनिरामन्नदारिद्र्यमिति” भा०।

**अनिराकरण** न निराकरणमभावार्थे न०त० । निराकरणाभावे "अनिराकरणात् कर्तुस्त्यागात्कर्मणोऽमितमिति" हरिः ।

**अनिरुक्त** त्रि० निरुक्तान्तं उक्तमवयवार्थं निर्वक्तुमशक्यमवयवार्थौ येन वा निरुक्तं निर्वचनम् न०त० । विशेषरूपेण निर्वचनशून्ये "एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते" इति वेद० । निर्वचनञ्च निरुक्ते यास्केन दर्शितं यथा "अथ निर्वचनम् तद्येषु पदेषु स्वरसंस्कारौ समर्थौ, प्रादेशिकेन गुणेनान्वितौ स्यातां, तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात् नत्वेव न निर्ब्रूयान्न संस्कारमाद्रियेत विषयवत्यो हि वृत्तयो भवन्ति । यथार्थं विभक्तीः संनमयेत्प्रत्तमवत्तमिति धात्वादी एव शिष्येते । अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति स्तः सन्तीति, अथाप्यन्तलोपो भवति गत्वा गतमिति, अथाप्युपधालोपो भवति जग्मतुर्जग्मुरिति, अथाप्युपधाविकारो भवति राजा दण्डीति, अथापि वर्णलोपो भवति तत्त्वा यामीति अथापि द्विवर्णलोपः तृच इति, अथ आदिविपर्ययो भवति ज्योतिर्घनो बिन्दुर्वाट्य इति अथाद्यन्तविपर्ययो भवति स्तोको रज्जुः सिकतास्तर्कु इति अथाप्यन्तव्यापत्तिर्भवति" इति ॥ तथा प्रकृतिप्रत्ययानपेक्षयैव समुदायेन विशिष्टार्थबोधकमपि निरुक्तं यथोक्तम् ऋ० भा० माधवेन यथा "प्रकृतिप्रत्ययार्थमनपेक्ष्य विशिष्टैकार्थबोधकं पदं निरुक्तमिति" । अनिर्दिष्टे "अनिरुक्तप्रातःसवनः प्रथम" इति कात्या० २२,५,७, "अनिरुक्तं प्रातःसवनं यस्यासौ प्रथम" इति तद्व्याख्या ।

**अनिरुद्ध** पु० न केनापि युद्धे निरुद्धः नि+रुध-क्त न०त० । कामदेवपुत्रे, उषापतौ, वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यचतुर्व्यूहस्य परमेश्वरस्य कथमप्यनिषेध्यस्य अत्यन्तचलस्य चेतसोऽधिष्ठातरि अनिरुद्धाख्ये अंशे च "अनिरुद्धः सुरानन्द" इति विष्णु० सं० । "न केनापि प्रादुर्भावेषु निरुध्यते" इति भा० "अनिरुद्धोऽप्रतिरथ" इति विष्णुसह० । "चतुर्षु व्यूहेष्वनिरुद्ध" इति भा० "संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः । व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं सम्पूर्णषड्गुणमिति" रामा० दर्श० । विवरणं रामानुजशब्दे वक्ष्यते । अप्रतिरुद्धे त्रि० ।

**अनिरुद्धपथ** न० न निरुद्धः पन्था यत्र ब० । आकाशे तत्र हि कस्यापि गतिरोधनाभावः । रुद्धवर्त्मभिन्ने त्रि० ।

**अनिरुद्धभाविनी** स्त्री ६त० । उषायां बाणकन्यायां तस्यास्तत्पत्नीभवनकथा च उषापतिशब्दे दृश्या ।

**अनिर्ज्ञात** त्रि० न निर्ज्ञातः निश्चितो प्राप्तो वा । अप्राप्ते, अनिश्चिते च "क्रिया हि अनिर्ज्ञातकालादिक्रियायाः परिच्छेदकत्वात् लक्षणं भवतीति" प्रौ० मनो० । अनिर्ज्ञातप्राप्त्यर्थं प्रतीक्षणं प्रतीक्षेति कठ०उ०भा० । प्राप्तं हि यथा स्वरूपं ज्ञातुं शक्यते नाप्राप्तमित्यतोऽप्राप्तस्यानिर्ज्ञातत्वम् । [धारणाभावे ।

**अनिर्णय** न निर्णयः अभावे न०त० । निश्चयाभावे अव-

**अनिर्दश** त्रि० न निर्गतानि दश दिनानि यस्य उपसमा० । अनपगतदशाहे । "उत्पाद्य सूतिकान्नञ्च पर्य्याचान्तमनिर्दशमिति" अनिर्दशञ्च प्रेतान्नमिति, "तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशमिति" "विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशमिति" "अनिर्दशायाः गोःक्षीरमौष्ट्रमेकशफं तथेति च" मनुः । अनिर्दशाहमप्यत्र त्रि० । "अनिर्दशाहां गां सूतामिति" मनुः ।

**अनिर्देश्य** त्रि० न निर्देश्यं जातिगुणक्रियासंज्ञाभिर्निर्देष्टुमशक्यम् निर्+दिश्-शक्यार्थे ण्यत् न०त० । निर्विशेषे निर्धर्मके परमात्मनि तस्य जातिगुणाद्यभावेन "इदं तदिति" निर्देशायोग्यत्वात्तत्त्वम् । "यत्तत् सूक्ष्ममनिर्देश्यमिति" श्रुतिः । "ब्रह्मन् ! ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तय" इति भाग० १०म स्क० । अनिर्देश्यवपुः श्रीमानिति विष्णु स० । "इदं तदिति निर्देष्टुं यन्न शक्यते परस्मै, स्वयं वेद्यत्वादिति" भाष्यम् । [श्चिते ।

**अनिर्द्धारित** त्रि० न निर्द्धारितः । अवधारितभिन्ने अनि-

**अनिर्माल्या** स्त्री निर्-मल-ष्यञ् न०त० । पृक्कानामकौषधौ शब्दरत्ना० ।

**अनिर्वचनीय** पु० निर्वचनं निरुक्तिः लक्षणादिना ज्ञापनम् । एवंरूपतया निर्वक्तुमशक्ये परमात्मनि । सत्त्वासत्त्वाभ्यामेकतररूपेण निर्वक्तुमशक्ये वेदान्तिमते जगति, अज्ञाने च न० । "अज्ञानन्तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति" वे०सा० ।

**अनिर्वचनीयसर्वस्व** न० अनिर्वचनीयं सर्वस्वं यस्य । श्रीहर्षप्रणीते खण्डनखण्डखाद्यापरपर्य्याये ग्रन्थभेदे तत्र हि सर्वेषां पदार्थानामिदन्तया निर्वक्तुमशक्यता व्यवस्थिता ।

**अनिर्वृति** स्त्री न निर्वृतिः स्वाच्छन्द्यमभावार्थे न०त० । स्वाच्छन्द्याभावे तद्रूपोपलक्षिते दारिद्र्ये च "अनिर्वृति-

निशाचरो मम वक्षान्तरालं गते" लुब्धः । ब० । तद्वति त्रि० ।

**अनिर्वेद** पु० न निर्वेदः अभावार्थे न० त० । निर्वेदाभावे वैराग्याभावे अवैराग्ये, असन्तोषे च "अनिर्वेदः श्रियोमूलमनिर्वेदमयं सुखम्" "अनिर्वेदो हि सततं सर्वार्थेष्वनुवर्त्तते" इति रामा० ।

**अनिल** पु० अनित्यनेन अन–इलच् । वायौ, तेनैव सर्वेषां प्राणधारणात्तत्त्वम् । "तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्" इति सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य चेति" मनुः । "स सखा दीप इवानिलाहत" इति कुमा० । अनिलश्च मायासहकृतेन ब्रह्मणा वियदुत्पाद्य तदनुप्रविष्टेन ततोदृशांशत उत्पादितः द्रव्यभेदः "तस्माद्वेतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निरित्यादिश्रुतिः, स च स्वाभाविकशोषस्पर्शगतिवेगाख्यगुणवान् वियत उत्पन्नत्वात् शब्दगुणवांश्च । यथोक्तं पञ्चदश्यां "माया सत्त्वैकदेशस्था यथा तत्त्वैकदेशगम् । वियत्, तत्राप्येकदेशगतो वायुः प्रकल्पितः । शोषस्पर्शौ गतिर्वेगो वायुधर्मा इमे मताः । त्रयः स्वभावात् सन्मायाव्योम्नां ये तेऽपि वायुगाः । वायुरस्तीति सद्भावः, सतोवायौ पृथक्कृते । निस्तत्त्वरूपो मायायाः स्वभावो वियतोध्वनिरिति "पुराणोक्तं तारतम्यं दर्शये भूतपञ्चके" इति च । तदाविष्टेनैव ब्रह्मणा वह्निरुत्पादित इति वेदान्तिमतम् सांख्यमते तु स्पर्शतन्मात्रादुत्पन्नः । वैशेषिकनये तु स्पर्श, संख्या, परिमाण, पृथक्त्वसंयोगविभागपरत्वापरत्ववेगगुणकोऽनिलः ईश्वरादेव अदृष्टवशादुत्पद्यते इति भेदः स च स्थूलः सूक्ष्मश्च । तत्र स्थूलः सप्तविधः सप्तस्थानस्थितः यथोक्तं सिद्धान्तशिरोमणौ "भूवायुरावह इह प्रवहस्तदूर्ध्वं स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवहः परिपूर्वकोऽस्माद्बाह्यः परावह इमे पवनाः प्रसिद्धाः । भूमेर्बहिर्द्वादशयोजनानि भूवायुरत्राम्बुदविद्युदाद्यम् । तदूर्ध्वगो यः प्रवहः स नित्यं प्रत्यग्गतिस्तस्य तु मध्यसंस्था । नक्षत्रकक्षा खचरैः समेतो यस्मादतस्तेन समाहतोऽयम् । भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन इति" । भूवायौ विद्युदादय उत्पद्यन्ते इत्युक्तम् तेषां स्वरूपादि तट्टीकायामुक्तं श्रीपतिवाक्येन । "निर्घातोल्काघनसुरधनुर्विद्युदन्तः कुवायोः संदृश्यन्ते खनगरपुरोवेषपूर्वं तथान्यत्" इति । तत्र विद्युतः । "सुजलजलधिमध्ये वाडवोऽग्निः स्थितोऽस्मात् सलिलभरनिमग्नादुत्थिता धूममालाः । वियति पवननीताः सर्वतस्ता द्रवन्ति द्युमणिकिरणतप्ता विद्युतस्तत्स्फुलिङ्गाः" । करकाः । "उद्धृतैः पांशुभिर्भूमेः प्रचण्डपवनोद्धयात् । मेघमण्डलमानीतैर्मालिन्यपरिवर्जितैः । मिश्रणाज्जलबिन्दूनां पिण्डभावो भवेदिह । दृषद्वत्प्रपतन्त्येते द्रवन्ते च पुनः क्षितौ" । विद्युत्पातसंभवस्तु । "अकस्माद्वैद्युतं तेजः पार्थिवांशकमिश्रितम् । वाय्वावद्धमसदाघाते प्रतिकूलानुकूलयोः । वाय्वोस्तत् पतति प्रायो ह्यप्रकालं प्राप्य वर्षणे । यतः प्रावृषि नैवेते पांशवः प्रसरन्ति हि । तत् त्रेधा पार्थिवं चाप्यं तैजसं, तत्तदुत्थितः । यतो निर्झरदाहैश्च भूमिस्थैरनुभूयते" । इन्द्रधनुः । "सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे । वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः" । परिवेषः । "संमूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः । नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषः" । उल्का । "यासां गतिर्दिवि भवेद्घर्षितेन गत्यास्तास्तारकाः सकलखेचरतोऽतिदूरे । तिष्ठन्ति या अनियतोद्गतयश्च ताराश्चन्द्रादधो हि निवसन्ति तदाश्रितास्ताः । शीतांशुवज्जलमयास्तपनात् स्फुरन्ति ताश्चावहप्रवहमारुतसंधिसंस्थाः । पूर्वानिलैस्तिमितभावमुपागतेऽस्मिंस्ताराः पतन्ति कुहचिद्गुरुतावशेन" । अथ रजःसंहतिः । "वर्षान्ते निर्जला मेघा वायुना विरलीकृताः । ईषद्गाम्भीर्यशेषास्तु पतन्ति वसुधातले । धूमावयवरूपैस्तैश्छाद्यन्ते गिरयो द्रुमाः । रामारामादयस्ते तु पुनरर्कांशुशोभिताः । भूवायुना विशीर्णास्तु विलीयन्ते नभस्तले । तद्रजःसंहतिर्धेनुमहिषीक्षीरनामकृत्" । संध्यारागः । "भूम्युत्थितै रजोधूमैर्दिगन्तव्योम्नि संस्थितैः । सूर्यास्तकिरणैर्भिन्नैरारक्तमवभासते । विरलावयवं वस्तु यद्दृष्टेर्व्यवधायकम् । तेनाभ्ररूपीभूतं दृश्यते शक्रचापवत् । संध्यारागः स विज्ञेयो दिनादौ च दिनात्यये । राकायां तु निशावक्त्रे तथैवेन्दुकरोद्गमे" इति । तदधिष्ठातृदेवोत्पत्तिर्मन्वन्तरभेदेन वामनपुराणादौ दर्शिता यथा "पुलस्त्य उवाच । प्रविश्य जठरं शुक्रो दैत्यमातुः पुरन्दरः । ददर्शोर्द्ध्वमुखं बालं कटिन्यस्तकरं महत् ॥ तेनैव गर्भं दितिजं वज्रेण शतपर्वणा । चिच्छेद सप्तधा ब्रह्मन् ! स रुरोद सुविस्वरम् । शक्रोऽपि प्राह मा मूढ! रुदस्वेति सुघर्घरम् । इत्येवमुक्त्वा चैकैकं भूयश्चिच्छेद सप्तधा ॥ ते जाता मरुतो नाम देवाद्याः शतक्रतोः । मातुर्वैरपचारेण बलवीर्यपुरस्कृताः इति ॥ "यदमी भवता प्रोक्ता मरुतोदितिसम्भवाः । तत् केन पूर्व्वमासन् वै मरुन्मार्गेण कथ्यतामिति" नारद-

प्रश्ने पुलस्त्योक्तिः । "श्रूयताम् पूर्व्वमरुतामुत्पत्तिं कथयामि ते । स्वायम्भुवं समारभ्य यावन्मन्वन्तरं त्विदम् ॥ स्वायम्भुवस्य पुत्त्रोऽभून्मनोर्नाम प्रियव्रतः । तस्यासीत् सवनो नाम पुत्त्रस्त्रैलोक्यपूजितः ॥ स सुतप्रपाताच्च स कामचारी समं महिष्या वहमानपुत्त्रया । ररास तन्व्या सह कामचारी ततोऽम्बरात् प्राच्यवतास्य शुक्रम् ॥ पत्निभिः समनुज्ञाताः पपुः पुष्करसंस्थितम् । तं शुक्रं पार्थिवेन्द्रस्य मन्यमानास्तदामृतम् ॥ पीतमात्रेण शुक्रेण पार्थिवेन्द्रोद्भवेन च । ब्रह्मतेजोविहीनास्ता जाताः पत्न्यस्तपस्विनाम् ॥ सुषुवुः सप्त तनयांस्ते रुदन्तोऽथ भैरवम् । तेषां रुदितशब्देन सर्व्वमापूरितं जगत् ॥ अथाजगाम भगवान् ब्रह्मलोकात् पितामहः । समभ्येत्याब्रवीद्बालान् मा रुदध्वं महाबलाः ! ॥ मरुतो नाम यूयं वै भविष्यध्वं वियच्चराः । इत्येवमुक्त्वा देवेशो ब्रह्मा लोकपितामहः ॥ तानादाय वियच्चारी मारुतानादिदेश ह । ते चासन् मरुतश्चाद्या मनोः स्वायम्भुवान्तरे" ॥ स्वारोचिषे तु मरुतो वक्ष्यामि शृणु नारद ! । स्वारोचिषस्य पुत्त्रश्च श्रीमानासीत् क्रतुध्वजः ॥ तस्य पुत्त्राभवन् सप्त सप्तार्च्चिःप्रतिमा मुने ! । तपोऽर्थं ते गताः शैलं महामेरुं नभश्चराः ॥ आराधयन्तो ब्रह्माणं पदमैन्द्रमभीप्सवः । ततो विपश्चिन्नामा स सहस्राक्षो भयातुरः ॥ पूतनामप्सरोमुख्यां प्राह नारद ! वाक्यवित् । यथा हि तपसो विघ्नं तेषां भवति सुन्दरि ! ॥ तथा कुरुष्व मा तेषु, सिद्धिर्भवतु वै यथा । इत्येवमुक्ता शक्रेण पूतना रूपशालिनी ॥ तत्राजगाम त्वरिता यत्र तप्यन्ति ते तपः । आश्रमस्याविदूरे तु नदी मन्दोदवाहिनी ॥ तस्यां स्नातुं समायाताः सर्व्व एव सहोदराः । सा तु स्नातुं सुचार्व्वङ्गी त्ववतीर्णा महानदीम् ॥ ददृशुस्ते नृपाः स्नातुं ततश्चुक्षुभिरे मुने ! । तेषाञ्च प्राच्यवत् शुक्रं, तत् पपौ जलचारिणी ॥ शङ्खिनी ग्राहमुख्यस्य महाशङ्खस्य वल्लभा । ते वै विनिष्टतपसो जग्मू राज्यन्तु पैतृकम् ॥ अथो बहुतिथे काले सा ग्राही शङ्खरूपिणी । धृता महाजालैर्मत्स्यबन्धेन मानिनी ॥ स तां दृष्ट्वा महाशङ्खीं स्वशक्त्या मत्स्यजीवनः । निवेदयामास तदा क्रतुध्वजसुतेषु वै ॥ तथाध्येन महात्मानो योगिनो योगधारिणः । नीत्वा स्वमन्दिरं सर्व्वे पुरव्याप्यां समुत्सृजन् ॥ ततः क्रमाच्छङ्खिनी सा सुषुवे सप्त वै शिशून् । जातमात्रेषु पुत्त्रेषु मोक्षभावमगाच्च सा ॥ अमातापितृका बाला जलमध्य-

विचारिणः । स्तन्यार्थिनो वै रुरुदुरथाभ्यागात् पितामहः ॥ मा रुदध्वमिति प्राह मरुतो नाम पुत्त्रकाः ! । यूयं देवा भविष्यध्वं वायवोऽम्बरचारिणः ॥ इत्येवमुक्त्वादाय सर्व्वांस्तान् दैवतान् प्रति । नियोज्य च मरुन्मार्गे वैराजभवनं गतः ॥ एवमासंश्च मरुतो मनोः स्वारोचिषान्तरे । औत्तमे मरुतो ये च तान् शृणुष्व तपोधन ! ॥ औत्तमस्यान्ववाये च राजासीन्निषधाधिपः । वपुष्मानिति विख्यातो वपुषा भास्करोपमः ॥ तस्य पुत्त्रो गणश्रेष्ठो ज्योतिष्मान् धार्म्मिकोऽभवत् । स पुत्त्रार्थी तपस्तेपे नदीं मन्दाकिनीमनु ॥ तस्य भार्य्या च सुश्रोणी देवाचार्य्यसुता शुभा । तपश्चरणयुक्तस्य बभूव परिचारिका ॥ तेजोयुक्ता सुचार्व्वङ्गी दृष्टा सप्तर्षिभिर्व्वने । तां तथा चारुसर्व्वाङ्गीं दृष्ट्वाथ तपसा कृशाम् । पप्रच्छुस्तपसो हेतुं तस्यास्तद्भर्त्तुरेव च । साऽब्रवीत्तनयार्थाय आवाभ्यां वै तपः क्रिया ॥ ते चास्यै वरदा ब्रह्मन् ! जाताः सप्त महर्षयः । व्रजध्वं तनयाः सप्त भविष्यन्ति न संशयः ॥ युवयोर्गुणसंयुक्ता महर्षीणां प्रसादतः । इत्येवमुक्त्वा जग्मुस्ते सर्व्व एव महर्षयः ॥ सोऽपि राजर्षिरगमत् सभार्य्यो नगरं निजम् । ततो बहुतिथे काले सा राज्ञो महिषी प्रिया ॥ अवाप गर्भं तन्वङ्गी तस्मात् नृपतिसत्तमात् । गुर्व्विणीमथ भार्य्यां तां ममारासौ नराधिपः ॥ सा चाप्यारोढुमिच्छन्ती भर्त्तारं वै पतिव्रता । निवारिता तदामात्यैर्न तथापि व्यतिष्ठत ॥ तं समालिङ्ग्य भर्त्तारं चितायामारुरोह सा । ततोऽग्निमध्यात् सलिले मांसमेकमपतन्मुने ! ॥ साम्भसा सुखशीतेन संसिक्ता सप्तधाऽभवत् । तेऽजायन्ताथ मरुत औत्तमस्यान्तरे मनोः ॥ तामसस्यान्तरे ये च मरुतोऽप्यभवन् पुरा । तानहं कीर्त्तयिष्यामि गीतनृत्यकलिप्रिय ! ॥ तामसस्य मनोः पुत्त्र ऋतध्वज इति श्रुतः । स पुत्त्रार्थी जुहावाग्नौ स्वमांसं रुधिरं तथा ॥ अस्थीनि रोम केशांश्च स्नायुमज्जायकृद्धनम् । शुक्रं च निमसो राजा सुतार्थी चेति नः श्रुतम् ॥ सप्तार्च्चिर्मध्याच्च ततः शुक्रपातादनन्तरम् । मा मा क्षिपस्वेत्यभवत् शब्दः सोऽपि नृपो मृतः ॥ ततस्तस्माद्धुतवहात् सप्त तत्तेजसोपमाः । शिशवः समजायन्त ते रुदन्तश्च तन्मुने ! ॥ तेषान्तु ध्वनिमाकर्ण्य भगवान् पद्मसम्भवः । समागम्य निवार्य्याथ स चक्रे मरुतः सुतान् ॥ ते त्वाद्यमरुतो ब्रह्मन् तामसे देवतागणाः । येऽभवन्रैवते तांश्च शृणुष्व त्वं तपोधन ! ॥ रैवतस्यान्ववाये तु राजासीद्रिपु-

जिद्बली । रिपुजिन्नाम स ख्यातो न तस्यासीत् सुतः किल ॥ स समाराध्य तपसा भास्करं तेजसां निधिम् । अवाप कन्यां सुरतिं तां प्रगृह्य स्वर्गं ययौ ॥ तस्यां पितृगृहे ब्रह्मन् ! वसन्त्यां तु पिता मृतः । सापि दुःखपरीताङ्गी स्वां तनुं त्यक्तुमुद्यता ॥ ततस्तां वारयामासुर्ऋषयः सप्त मानसाः । तस्यामासक्तचित्तास्तु सर्व्व एव तपोधनाः ॥ अपारयन्ती तद्दुःखं प्रज्वाल्याग्निं विवेश ह । ते चापश्यन्त ऋषयस्तच्चित्ता भाविताशया ॥ तां मृतां ऋषयो दृष्ट्वा कष्टं कष्टेति वादिनः । प्रजग्मुर्व्वनाश्चापि सप्ताजायन्त दारकाः ॥ ते च मात्रा विना भूता रुरुदुस्तान् पितामहः । निवारयित्वा रुतवान् लोकनाथो मरुद्गणान् ॥ रैवतस्यान्तरे जाता मरुतोऽमी तपोधन ! । शृणुष्व कीर्त्तयिष्यामि चाक्षुषस्यान्तरे मनोः ॥ आसीन्माङ्कीति विख्यातो तपस्वी सत्यवाक् शुचिः । सप्तसारस्वते तीर्थे सोऽतप्यत महत्तपः ॥ विघ्नार्थं तस्य तपसो देवाः सम्प्रैषयन् वधूम् । सा चाभ्येत्य नदीतीरं चोभयामास भाविनी ॥ ततोऽस्य प्राच्यवच्छुक्रं सप्तसारस्वते जले । तां चैवाप्यशपत्क्रुद्धां मुनिर्म्माङ्कनिको वधूम् ॥ गच्छाधमेऽतिमूढे ! त्वं पापस्यास्य फलं महत् । विध्वंसयिष्यति ह्यो भवतीं यज्ञसंसदि ॥ एवं गत्वा ऋषिः चोभान् जगामाथ स्वमाश्रमम् । स्वरस्वतोभ्यः सप्तभ्यः सप्त वै मरुतोऽभवन् । एते तवोक्ता मरुतः पुरा यथा जाता वियद्व्याप्तिकरा महर्षे ! । येषां श्रुते जन्मनि पापहानिर्भवेच्च धर्म्माभ्युदयो महान्वै" ॥ अतःपरं प्रवक्ष्यामि मरुतोऽग्नीन् पितॄन् ग्रहान् । आवहो निवहश्चैव उद्वहः संवहस्तथा ॥ विवहः प्रवहश्चैव परिवाहस्तथैव च । अन्तरीक्षे च वाह्येत्र ते पृथङ्मार्गविचारिणः ॥ महेन्द्रपविभक्ताङ्गा मरुतः सप्त कीर्त्तिताः । ऋक्षाग्निश्च शुचिर्नामा वैद्युतः पावकः स्मृतः ॥ निर्मथ्य पवमानोऽग्निस्त्रयः प्रोक्ता इमेऽग्नयः । अग्नीनां पुत्रपौत्राश्च चत्वारिंशच्चैव तु । मरुतामपि सर्व्वेषां विज्ञेयाः सप्त सप्तका इति" ॥ तेषां नामान्युक्तानि वह्निपुराणे यथा

"एकज्योतिश्च द्विज्योतिस्त्रिज्योतिर्ज्योतिरेव च । एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ॥ इन्द्रश्च गत्यदृश्यश्च ततः प्रतिसकृत्परः । मितश्च सम्मितश्चैव सुमितश्च महाबलः ॥ ऋतजित् सत्यजिच्चैव सुषेणः सेनजित्तथा । अनिमित्रोऽनमित्रश्च पुरुमित्रोऽपराजितः ॥ ऋतश्च ऋतवाहश्च धर्त्ता च धरुणो ध्रुवः । विधारणो नाम तथा देवदेवो महाबलः ॥ ईदृक्षश्चाप्यदृक्षश्च एते दश मिताशिनः । व्रतिनः प्रसदृक्षश्च सभरश्च महायशाः ॥ धाता दुर्गो धृतिर्भीमस्त्वभियुक्तस्त्वपात् सहः । द्युतिर्वपुरनाधृष्योऽथ वासः कामो जयो विराट् ॥ इत्येकोनाश्च पञ्चाशन्मरुतः पूर्व्वसम्भवाः इति" ॥ एवञ्च अनिलस्य जनपञ्चाशद्देवत्वेन सप्तभेदत्वेन च गणदेवतात्वम् अयञ्चानिलाधिपाता दिक्पालभेदः तस्य च गन्धवतीनामिका पुरी मेरोः शृङ्गे वरुणकुबेरपुरयोर्म्मध्येऽस्ति । तस्य पूर्व्वादिदिग्भेदेन वहनभेदेन च शुभाशुभसूचकत्वमुक्तं "पूर्व्वः पूर्व्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णितचन्द्रार्कांशुसटाभिघातकलितो वायुर्यदाकाशतः । नैकान्तस्थितनीलमेघपटलां शारद्यसंवर्धितां फुल्लोत्कटकलमखण्डितवतीं विद्यात्तदा मेदिनीम् ॥ यदाग्नेयो वायुर्ज्वलयशिखराल्फालनपटुः प्रवत्यास्मिन्योगे भगवति पतङ्गे प्रवहति । तदा नित्योद्दीप्ता ज्वलनशिखरालिङ्गितवती खगालोघ्रोच्छ्वासैर्वमति वसुधा भस्मनिकरम् ॥ तालीपत्रलतावितानतरुभिः शाखाल्पगान्नर्त्तयन् योगेऽस्मिन् श्वसति ध्वनन् सुपरुषो वायुर्यदा दाक्षिणः । सर्व्वोद्योगसमुन्नताश्च गजवत्तालाङ्कुशैर्घट्टिताः कीनाशा इव मन्दवारिकणिकान्मुञ्चन्ति मेघास्तदा ॥ सूक्ष्मैलालवलीलवङ्गनिचयान् व्याघूर्णयन् सागरे भानोरस्तमये प्रवत्यविरतो वायुर्यदा नैरृतः । क्षुत्तृष्णाम्लनमानुषास्थिशकलप्रस्तारभारस्तदा मत्ता प्रेतवधूरिवोग्रचपला भूमिस्तदा लक्ष्यते ॥ यदा रेणूत्पातैः प्रविकटसटाटोपचपलः प्रवातः पश्चार्धे दिनकरकरापातसमये । तदा सस्योपेता प्रवरनरवराबद्धसमरा धरा स्थाने स्थानेष्वविरतवसामांसरुधिरा ॥ आषाढीपर्व्वकाले यदि किरणपतेरस्तकालोपपत्तौ वायव्यो बद्धवेगः श्वसति घनरिपुः पन्नगादानुकारी । जानीयाद्वारिधाराप्रमुदितमुदितां सक्रमण्डूककण्ठां सखोद्भासैकचिह्नां सुखबहुलतया भाग्यसेनामिवोर्वीम् । मेरुपत्रमरीचिमण्डलतले प्रोष्मावसाने रवौ वाद्यामोदिकदम्बगन्धसुरभिर्वायुर्यदा चोत्तरः । विद्युद्भ्रान्तिसमस्तकान्तिकलनामत्तास्तदा तोयदा उन्मत्ता इव नष्टचन्द्रकिरणां गां पूरयन्त्यम्बुभिः ॥ ऐशानो यदि शीतलोऽमरगणैः संसेव्यमानो भवेत् पुन्नागागुरुपारिजातसुरभिर्वायुः प्रचण्डध्वनिः । आपूर्णोदकयौवना वसुमती सम्पन्नसस्याकुला धर्म्मिष्ठाः प्रणतारयो नृपतयो रक्षन्ति वर्षांस्तदा" इति वृहत्संहितायाम् ॥ अथ वैद्यकोक्ता दिग्भववायुगुणाः । "प्राग्वातो मधुरः क्षारो वह्निमान्द्यकरो गुरुः । वेरस्य गौरवोष्णानि करोत्यपस्मोपभोषु च ॥ भग्नोत्पिष्टक्षतादोषु रागञ्चयमुदाहृतम् । सचि-

पातज्वरश्वासत्वग्दोषार्शोविषक्रमीन् ॥ कोपयेदामवातञ्च घनसंघातकारणम्, ॥ दाक्षिणो मारुतोवल्यचक्षुष्यः श्रम-घातकः । मधुरश्चाम्लदाही च कषायानुरसो लघुः ॥ रक्त-पित्तप्रशमनो न च मारुतकोपनः । गरुड़पदादिकीटानां जनकः प्राणकारकः, ॥ पाश्चिमोऽग्निवपुर्वर्णबलारोग्यविव-र्द्धनः । कषायः शोषणः रूक्षो रोचनो विशदो लघुः ॥ अपां लघुत्वशैघ्र्यत्वशैत्यमल्पकारकः । सर्वद्रव्येष्वभिव्यक्त-प्रभावरसवीर्यकृत् ॥ व्रणसंरोपणस्त्वच्यो दाहशोषव्रणा-पहः, ॥ औत्तरो मारुतः स्निग्धो मृदुर्मधुर एव च । कषायानुरसः शीतः सर्वदोषप्रकोप(णः)नः ॥ क्षीणक्षत विषार्त्तानां हितोदाहव्रणापहः । शीताधिकः सनीहारः स विद्युत्स्तनयित्नुमान्, ॥ विश्वग्वायुरनायुष्यः प्राणिनां नैकदोषकृत् । सर्वर्त्तुनिन्दको हन्ता तत्वोत्पातपुरःसरः" इति ॥ तालादिव्यजनवायुगुणाः । मूर्च्छादाहव्रणस्वेद-श्रमघ्नो व्यजनानिलः । तालवृन्तभवो वातस्त्रिदोषशमनो लघुः । वंशव्यजनजो वातो रूक्षोष्णो वातपित्तदः । वालव्यजनमौजस्यं मक्षिकादीन् व्यपोहति ॥ मायूरा वस्त्रजा वैत्रा वाता दोषत्रयापहा" इति ।

रूक्षस्तु वायुः शरीरस्थः प्राणादिभेदेन दशविधः दश-विधकार्य्यकरणात् । यथोक्तम् वैद्यके
"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः । नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः ॥ प्राणस्तु प्रथमो वायुर्नराणामधिपः प्रभुः । नित्यमापययेत् सर्व्वान् प्राणिनामुरसि स्थितः ॥ निःश्वासोच्छ्वासकश्चैव प्राणो जीवं समाश्रितः । प्रसाराकुञ्चनो वायुः प्रकाशो धारणस्तथा ॥ प्राणस्त्वेवंविधं कुर्य्यात् प्राणिनां प्राण-धारकः । प्राणनं कुरुते यस्मात् तस्मात् प्राणः प्रकी-र्त्तितः । प्राणो हि भगवान् ईशः प्राणो विष्णुः पिता-महः । प्राणेन धार्य्यते लोकः सर्व्वं प्राणमयं जगत् ॥ इन्द्रियाणि प्रवर्त्तन्ते यावत् प्राणानिलो हृदि । नष्टे न दृश्यते सर्व्वं तस्मात् प्राणन्तु रक्षयेत्, ॥ रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः । गुणबद्धस्तथा जीवः प्राणा-पानेन कृष्यते, ॥ अपानवंक्षणाहारं मनुजानां यतोऽ-धमः । शुक्रमूत्रवहो वायुरपानस्तेन कीर्त्तितः, ॥ पीतं भक्षितमाघ्रातं रक्तं पित्तकफानिलान् । समं नयति गात्रेषु समानो नाम मारुतः ॥ समानोऽग्निसमीपस्थः कोष्ठे च वाति सर्व्वतः । अन्नं गृह्णाति पचति विरेचयति मुञ्चति ॥ स्पन्दयत्यधरं वक्त्रं नेत्रगात्रप्रकोप(नः)णः । उद्वेजयति मर्म्माणि उदानो नाम मारुतः ॥ व्यानो-विनामयत्यङ्गं व्यानो व्याधिप्रकोप(नः)णः । प्रीतेर्विना-शकश्चायं बाङ्कोत्पादकस्त्रिधा इति ॥

प्राणादीनां स्थानानि । "शिरसो नासिकाप्रान्तमुदान-स्थानमुच्यते । नाभेः पादतलं यावदपानस्य प्रकीर्त्तितम् ॥ शरीरव्यापको व्यानः प्राणः सकलनायकः । उद्गारे नाग इत्युक्तः कूर्म्मश्चोन्मीलने स्थितः ॥ कृकरः क्षुधिते चैव देवदत्तो विजृम्भिते । धनञ्जयस्थितो मेढ्रे मृतस्यापि न मुञ्चति ॥ भूतावाप्तिस्ततस्तस्माज्जायतेन्द्रियगोचरात् ॥ उत्साहो-च्छ्वासनिःश्वासचेष्टा धातुगतिः समा । समो मोक्षो गतिमतां वायोः कर्म्माविकारजम्" इति सुखबोधः ॥ प्राणादयश्च पञ्चसूक्ष्मभूतरजोगुणेभ्यः समस्तेभ्य उत्पद्यन्ते इति वेदान्तिमतम् सकलेन्द्रियाणां व्यापार एव प्राणो न पदार्थान्तरमिति सांख्यमतं विवरणं प्राणशब्दे द्रष्टव्यम् ।

उदानादीनां कर्म्मविशेषा उक्ता यथा "उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः । तेन भाषितगीतादिप्रवृत्ति-कुपितस्तु सः ॥ ऊर्द्ध्वजत्रुगतान् रोगान् विदधाति विशेषतः ॥ यो वायुः प्राणनामासौ मुखं गच्छति देहधृक् ॥ सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते । प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान् ॥ आमपक्वाशयचरः समानो वह्निसंगतः । सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि ॥ स दुष्टो वह्नि-मान्द्यातिसारगुल्मान् करोति हि । पक्वाशयालयोऽपानः काले कर्षति चाप्ययम् ॥ समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवा-न्यधः । क्रुद्धस्तु कुरुते रोगान् घोरान् वस्तिगुदाश्रयान् ॥ शुक्रदोषप्रमेहांश्च व्यानापानप्रकोपजान् । कृत्स्नदेहचरो व्यानो रससंवहनो यतः ॥ स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि । गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ॥ प्रायः सर्व्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् । प्रस्यन्दनं चोद्वहनं पूरणञ्च विरेचनम् ॥ धारणञ्चेति पञ्चैताश्चेष्टाः प्रोक्ता नभस्वतः । क्रुद्धः स कुरुते रोगान् प्रायशः सर्व्वदेहगान् ॥ युगपत् कुपिता एते देहं भिन्द्युरसंशयम् इति च वैद्यके उक्तम् ।

तत्र देहस्थस्य वायोर्विकारहेतुलक्षणादिकमुक्तं वैद्यके "व्यायामादपतर्पणात् प्रपतनाद्भङ्गात् क्षयाज्जागरात् वेगानाञ्च विधारणादतिशुचः शैत्यादतित्रासतः । रूक्षक्षोभकषायतिक्तकटुकैरेभिः प्रकोपं व्रजेत् वायुर्वारिधरागमे परिणते चाह्नोऽपराह्णेऽपि च" ॥ विकृतवायुलक्षणम् ।

"आध्मानस्तम्भरौक्ष्यस्फुटनविमथनक्षोभकम्पप्रतोदाः कण्ठध्वंसावसादौ श्रमकविलपनं स्रंसशूलप्रभेदाः। पारुष्यं कर्णनादो विषमपरिणतिभ्रंशदृष्टिप्रमोहा विस्पन्दोद्वेष्टनादिग्लपनमनशनं ताड़नं पीड़नञ्च॥ नामोन्नामौ विषादो भ्रमपरिपतनं जृम्भणं रोमहर्षौ विक्षेपाक्षेपशोषश्वहृषणशुषिरता छेदनं वेष्टनञ्च। वर्णः श्यावोऽरुणो वा तृड़पि च महती स्वापविश्लेषसङ्गा विद्यात् कर्माण्यमूनि प्रकुपितपवने स्यात् कषायो रसश्च"॥ किञ्च "वदनविरसता स्याद्वचसः कर्कशत्वं भवति वपुषि कार्श्यं रात्रिनिद्रानिवृत्तिः। त्वचि च परुषता स्यात् स्याच्च वैशद्यमङ्गेरिति पवनविकारे लक्षणं प्रोक्तमेतत्"॥ तत्प्रशमनकारणम् यथा। "रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः। विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति"॥ "स्निग्धोष्णस्थिरगुरुबल्यलवणस्वाद्वम्लतैलातपस्नानाभ्यञ्जनवस्तिमांसमदिरासंवाहनोन्मर्द्दनैः। स्निग्धस्वेदनिरूहणोपशमनः स्नेहोपनाहादिकं पानाहारविहारभेषजमिदं वातं प्रशान्तं नयेत्"॥ ऋतुभेदेन विहारादिना च तस्य प्रकोपप्रचयप्रशमाद्युक्तं यथा "ग्रीष्मे सञ्चीयते वायुः प्रावृट्काले प्रकुप्यति। प्रायेणोपशमं याति स्वयमेव समीरणः॥ शरत्काले वसन्ते च पित्तं प्रावृट्तौ कफः। चयकोपशमान्दोषान् विहाराहारसेवनैः॥ समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्य्ययः" इति॥ नरपतिजयचर्य्योक्तमनिलचक्रन्तु चक्रशब्दे वक्ष्यते। अनाहतचक्रस्थवायुमण्डलविवरणं तन्त्रोक्तं षट्चक्रशब्दे दृश्यम्। तद्देवताके स्वातिनक्षत्रे, अष्टवसुमध्ये पञ्चमे वसौ च। "धरोध्रुवः सोमनामा तथापोऽप्यनिलो नलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः" इति विष्णुधर्म्मो॰ पुरा॰। विष्णौ, तस्य प्राणात्मना सर्वदेहधारणात् तथात्वम् "अहः संवर्त्तको वह्निरनिलो धरणीधरः" इति विष्णु॰ स॰। शरीरस्थे धातुभेदे च। तस्य विवरणसुक्तप्रायम्। "पित्तं पङ्गुः कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत्॥ वायुरायुर्बलं वायुर्वायुर्धाता शरीरिणाम्। वायुर्विश्वमिदं सर्वं प्रभुर्वायुः प्रकीर्त्तितः॥ बाह्यमण्डलचक्रेषु यथा राजा प्रशस्यते। तथा शरीरमध्येऽपि वायुरेकः परो विभुरिति" वैद्यकम्॥ दोषधातुमलादीनां नेता शीघ्रः समीरणः॥ रजोगुणमयः सूक्ष्मो रूक्षशीतो लघुश्चलः॥ उत्साहोच्छ्वासनिःश्वासचेष्टावेगप्रवर्त्तनैः। सम्यग्गत्या च धातूनामिन्द्रियाणाञ्च पाटवैः॥ अनुवर्त्तनाद्व्यविहतो हृदयेन्द्रियचित्तधृक्। खरो मृदुर्योगवाही संयोगादुभयार्थकृत्। दाहकृत्तेजसा युक्तः शीतकृत् सोमसंश्रयात्॥ विभागकरणाद्वायुः प्रधानं दोषसंग्रहैः। पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम्॥ स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः" इति।

**अनिलघ्नक** पु॰ अनिलं वातरोगं हन्ति हन्+क ततः संज्ञायां कन्। (बयड़ा) इति ख्याते वृक्षे तत्फलस्य हि वातनाशकत्वम्।

**अनिलसख** पु॰ अनिलस्य वायोः सखा टच्। वह्नौ। अनिलबन्ध्वादयोऽप्यत्र "मघा विशाखानिलबन्धिभ्यति" ज्योति॰।

**अनिलान्तक** पु॰ अनिलो वातरोगस्तस्यान्तकः अन्तं करोतीति अन्त+णिच्–ण्वुल्। (जीयापुति) इति ख्याते वृक्षे।

**अनिलामय** पु॰ अनिलकृत आमयः शाक॰त॰। वातरोगे।

**अनिवर्त्तिन्** त्रि॰ न निवर्त्तते नि–वृत–णिनि न॰त॰। कार्य्यान्तमगत्वा अनिवृत्ते। संग्रामेष्वनिवर्त्तिनामिति" रामा॰ न निवर्त्तते कुतश्चेत् अलुप्तशक्तिकत्वात् ईश्वरे, विष्णौ च पु॰ संग्रामादनिवर्त्तित्वात्तथात्वम् "अनिवर्त्ती निवृत्तात्मेति" विष्णुसहस्रनाम।

**अनिविशमान** त्रि॰ न निविशमानः। निवेशनरूपस्थितिशून्ये सर्वदा गन्तरि, "पुनाना यत् मन्त्वानिविशमाना" इति ऋ॰ ७,४९,१, अनिविशमानाः सर्वदा गच्छन्त्य इति भाष्यम्।

**अनिश** त्रि॰ निशा तद्धेतुकत्वेनोपचारात् चेष्टाविनाशः सा नास्ति यस्य ब॰। अविरते, निरन्तरे, सदाभवे वस्तुनि, रात्रिवर्ज्जिते च। "तदुभयोरनिशं हि विरोधिता कथमहो समता मम तापने" इत्युद्भटः।

**अनिशम्** न निशेतेऽत्र नि+शी–बा॰ डम् न॰त॰। सातत्ये स्वरादेराकृतिगणत्वेन तस्य तत्र पाठ इति मौ॰म॰।

**अनिशस्त** त्रि॰ निर्+शन्स–क्त न॰त॰। अनिन्दिते "न योऽतीतृपामानिःशस्ता" इति ऋ॰ ४,२४,११, "अनिशस्ता अनिन्दिता" इति भा॰।

**अनिष्ट** त्रि॰ इष–क्त विरोधे न॰त॰। इष्टस्य सुखादेर्विरोधिनि प्रतिकूलवेदनीये दुःखे, तत्साधने-पापे, विषादौ, अपकारे च। "इष्टनाशादनिष्टाप्तेः करुणाख्यो रसोभवेदिति सा॰द॰। "ध्यायत्यनिष्टं यत्किञ्चित् पाणिग्राहस्य चेतसेति" "एवं यद्यप्यनिष्टेषु वर्त्तन्ते" इति अनिष्टं वा यानिष्टेषु तं धर्म्मं न विचालयेदिति" मत-

मानिष्टचिन्तनमिति" च मनुः। नागबलायां स्त्री। यज–क्त न०त०। अकृतयागे देवादौ।

**अनिष्टिन्** त्रि० न इष्टमनेन यज–भावे क्त ततः इनि न०त०। कृतयागभिन्ने। "अनिष्टिनोवाजपेयेन" इति कात्या० १५,१,२।

**अनिष्पत्र** न० निःसृतं पत्रं पक्षोऽत्र तादृशं न भवति। अनिःसृतपत्रकशरेण वेधनादौ। "शिराख्यां वा श्रोणिं-सुच्छ्रितं वा विध्यन्त्यनिष्पत्रमिति" कात्या० १३,२,१२, "अनिष्पत्रमित्यनिःसृतपत्रकं विध्यन्ति क्षत्रिया" इति तद्व्याख्या।

**अनीक** पु०न० अनित्यनेन अन–ईकन् अर्द्धर्चादि। सैन्ये, तस्य हि जीवनरक्षकत्वम्। न नीयते अपसार्य्यतेऽस्मात्। नी–क्विप् ब० कप् ह्रस्वाभावः। युद्धे, ततोहि प्रायोमरणात् पुनरादृत्तिः। "रथेषु योऽनीकेष्वधिश्रिय" इति ऋ० ८,२०,१२ अनीकेषु सेनामुखेष्विति भा०। "दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदेति" गीता मुखे, तस्य प्राणवायुनिःसारणद्वारत्वात् तथात्वम् "अग्नेरनीकमप आविवेशापामिति" यजु० ८,२४, "अनीकं मुखमिति" वेददीपः।

**अनीकस्थ** त्रि० अनीके युद्धे तिष्ठति स्था–क। युद्धगते सैन्ये।

**अनीकिनी** स्त्री अनीकानां संघः अनीकं युद्धं प्रयोजनतया अस्त्यस्याः वा अनीक+इनि। सेनासंघे हस्त्यादिसंख्याविशेषवत्यां सेनायाञ्च तत्संख्या चोक्ता भारते "एको रथो गजश्चैको नराः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते॥ पत्तिन्तु त्रिगुणामेतामाहुः सेनामुखं बुधाः। त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते॥ त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः। स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः॥ चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनीति"। तत्र हस्तिनः २१८७। रथाः २१८७। अश्वाः ६५६१। पदातयः १०९३५ समुदिताः २१८७०।

**अनीश** पु० नास्ति ईशो नियन्ता यस्य ब०। सर्वनियन्तरि विष्णौ, स्वामिशून्ये त्रि०। न०त०। ईश्वरभिन्ने "भजेरन् मातृकं रिक्थमनीशास्ते हि जीवतोरिति" मनुः। असमर्थे, "एकोह्यनीशः सर्वत्रेति" व्यास स्मृतिः। ईश–भावे अङ् न०त०। दीनभावे स्त्री "निमग्नोऽनीशया शोचतीति" मु०उ०। दीनभावोऽनीशेति भा०।

**अनीश्वर** न० न ईश्वरः नियन्ता यत्र। नियन्तृशून्ये सांख्यादिमते जगति "जगदाहुरनीश्वरमिति" गीता ईश्वरस्य न भवति असम०स०। ईश्वरसम्बन्धिभिन्ने "ध्यानेनानीश्वरान् गुणानिति" मनुः। नियन्तृशून्ये, स्वामिशून्ये च।

**अनीह** त्रि० ईह–भावे अङ् न०ब०। स्पृहाशून्ये, निश्चेष्टे च।

**अनु** अव्य० अन–उ। "अनु वेदाध्ययनानुष्ठानसामीप्यपश्चाद्भावानुबन्धसाम्याभिमुख्यविसर्गलक्षणेष्विति" गणरत्नोक्तेषु अर्थेषु तत्र वेदे अनुवाक इति। अध्ययने अन्वधीते, अनुष्ठाने, अनुतिष्ठति, सामीप्ये अनुमेघं वर्षति, पश्चाद्भावे तदनु, अनुबन्धने, अनुशेते अनुशयः, साम्ये, अनुकरोति, आभिमुख्ये अनुमातरं वत्सोधावति, हीने अनु हरिं सुराः विसर्गे (प्रदत्तप्रतिबन्धे) अनुजानीते, लक्षणे अनु वनमशनिर्गतः"। "अनुर्लक्षणे" इति "तृतीयार्थे" इति (सहार्थे) "हीने" इति, लक्षणेत्थम्भूताख्यानभाग वीप्सासु प्रतिपर्य्यनव इति, च (पा०) उक्तेषु अर्थेषु, तत्र लक्षणे, जपमनुप्रावर्षत्। "हेतुभूतजपोपलक्षितम् वर्षणम्" सि०कौ० सहार्थे, नदीमनु अवसिता सेना, "नद्या सह संबद्धा सेना" सि०कौ० हीने, हरिमनु सुराः हरेर्हीना इत्यर्थः, लक्षणे वृक्षमनु विद्योतते विद्युत्, तत्र च वृक्षप्रकाशेन विद्युद्विद्योतदेशज्ञापनात् वृक्षो लक्षणमिति प्रौ०मनो०। (इत्थम्भूतः) कश्चित् प्रकारं प्राप्तः आख्यायते अनेन, इत्थम्भूताख्यानं प्रकारविशेषनिरूपकं तस्मिन्नर्थे, यथा भक्तोहरिमनु, हरेरित्थम्भूतः, भक्तिविशेषयुक्त इत्यर्थः। भागे भागोऽस्यास्ति अर्शआद्यच् भागस्वामिनि, हरिमनु लक्ष्मीः, हरिस्वामिकभागवतीत्यर्थः। वीप्सायां, विषयभूतायां, वृक्षं वृक्षमनु सिञ्चति, यावद्वृक्षव्यापकः सेकः। इयांस्तु भेदः अन्यत्रानुशब्दः तत्तदर्थस्य द्योतकः अत्र तु द्विवचनेनैव व्याप्तिबोधनात् अनोस्तद्विषयत्वमात्रम्। पाणिन्युक्तेष्वेष्वर्थेष्वस्य कर्म्मप्रवचनीयसंज्ञा तेन तद्योगे द्वितीया एवं कर्म्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधनात् न षत्वादि न वा अनुव्यचलदित्यादौ अतिर्गतावित्यादिना निघातः। "अनुर्यत् समया इति" "यस्य चायाम इति च" (पा०) उक्ते सामीप्ये, अनुवनमशनिर्गत इति वनसमीपं गत इत्यर्थः आयामे, अनुगङ्गं वाराणसी, गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षिता वाराणसीत्यर्थः नित्यसमासः योग्यत्वे च। अनुरूपम्। "रूपादियोग्यमिति" सि०कौ०, अनुक्रमम्। क्रमानतिक्रमे अत्रापि नित्यसमासः एतेषामुदाहरणानि शास्त्रान्तरेषु दृष्टानि दिङ्मात्रमुदाह्रियते। तत्र पश्चादर्थे "तदनु तनु कथासौ ब्रूहि यातोऽध्वरक्षोति" लीला०। "तदनु ज्वलनं मदर्पितमिति" कुमा० अथौ "कुमारसम्भवोऽनु-

जात" इति रघुः। "रत्या च साशङ्कमनुप्रयात" इति कुमा० अनुगाने, "शैलाधिपत्यं स्वयमन्वतिष्ठदिति" कुमा० सादृश्ये, "अनुगर्जितसन्दिग्धा" इति कुमा०। अनुगर्जितं गर्जनसदृशं प्रतिरूपगर्जितमित्यर्थः। अनुगताद्यर्थे नित्यसमासः। तथैव सोऽभूदन्वर्थो "राजा प्रकृतिरञ्जनादिति" रघुः। तत्र अन्वर्थः अनुगतोऽर्थो यस्येति प्रा०ब०वा अनित्यसमास उत्तरपदलोपो वा इति तत्र अनुगतार्थोपीति भेदः। एवमेव अनूप इत्यादावपि। उपासने च "अन्वासितमरुन्धत्येति" रघुः "पश्चादुपवेशनपूर्व्वकसेवायां धातोर्लक्षणायामनुर्द्योतकः। एवम् एतद्योगे वसतेः आधारस्य कर्म्मता अनुवसति ग्रामं देवदत्तः "मथुरामनूष्येति" मु०बो० क्रियासमभिव्याहृतस्यानुशब्दस्य तत्तत्क्रियासदृशतत्तत्क्रियायां लक्षणाद्योतकत्वं तत्र आद्यक्रियाश्रयस्य कर्मत्वम् यथा मातरमनुरोदितीत्यादौ मातृरोदनसदृशरोदनस्य बोधनेन प्रथमरोदनाश्रयस्य मातुः कर्मत्वमेवमन्यत्र। कर्मणि तिङाद्युक्ते तु प्रथमा।

**अनुक** त्रि० अनुकामयते अनु+कामतर्य्यर्थे कन्। कामुके "अनुकाभिकाभीकाः कमयितेति" पा० "वाचमनुकामाकनोऽकुरुतेति" कौ० ब्रा०।

**अनुकम्** अव्य० अनुकामयते अनु-कम-क्विप्। वितर्के। चादेराकृतिगणत्वात् अस्य चादिगणे पाठः इति मौ०मनो०।

**अनुकम्पक** त्रि० अनुकम्पते दयते अनु-कम्प-ण्वुल्। दयाकारके। "सर्व्वभूतानुकम्पक" इति मनुः।

**अनुकम्पन** त्रि० अनु+कम्प-युच्। दयाशीले। "सर्वभूतानुकम्पन" इति रामा०। भावे ल्युट्। दयायां न०।

**अनुकम्पा** स्त्री अनु+कम्प-अङ्। दयायाम्, दयया हि दुःखहेत्वकान्यकम्पं दृष्ट्वा तत्सदृशकम्पकरणात् दयायास्तथात्वम् अतएवानुकम्पधातोरनुरोदनवत् सकर्म्मकत्वम्। दया च परदुःखप्रहरणेच्छा अनुपूर्व्वककम्पतेस्तदर्थपरत्वमित्येके धात्वर्थस्गृहीतकर्म्मकत्वेन तत्राकर्म्मकत्वमिति भेदः। "तेषामेवानुकम्पार्थं प्रदेयं प्रीतिपूर्व्वकमिति" स्मृतिः। "भूतानुकम्पा तव चेदियं गौरिति" रघुः। किञ्चिच्चलने च।

**अनुकम्प्य** त्रि० अनुकम्पमर्हति अनुकम्प+यत्। तरस्विनि वेगवति। अनुकम्प्यते अर्हार्थे यत्। दयार्हे त्रि०। "इन्दितरमनुकम्प्यामद्रिरादाय दोर्भ्यामिति" कुमा०।

**अनुकरण** न० सादृश्ये अनु+कृ-ल्युट्। सदृशक्रियादिकरणे। तच्च गुणक्रियावयवादिभिः सदृशीकरणम्। अनुक्रियतेऽनेनेति करणे ल्युट्। सदृशीकरणसाधने। यथा पटत्प्रभृतिशब्दाः अव्यक्तशब्दानुकरणानि। "अव्यक्तानुकरणस्यात इतौ" इति पा०।

**अनुकर्ष(ण)** पु० अनुकृष्यते स्वसंबद्धेन चक्रेण अनु+कृष-घञ्। रथाधःस्थिते चक्रोपरि बद्धे काष्ठे। कर्त्तरि ल्यु। नालोऽप्यत्रार्थे। भावे ल्युट्। पूर्व्ववाक्योपात्तपदादेरुत्तरत्रान्वयार्थमाकर्षणे, आकर्षणमात्रे च न०।

**अनुकल्प** पु० कल्प्यते विधीयते इति कृप-णिच्-अच् कल्पो विहितः हीनः कल्पो मुख्यकल्पादधमः प्रा०स०। गौणकल्पे, प्रतिनिधौ। "एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः। अनुकल्पस्त्वयं ज्ञेय" इति। "प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते" इति च मनुः "समर्थः प्रथमे कल्पे योऽनुकल्पे प्रवर्त्तते" इति श्रुतिः। "भार्य्याः कार्य्याः सजातीयाः सर्व्वेषां श्रेयस्यः स्युरितिमुख्यः कल्पस्ततोऽनुकल्पस्तु चतस्रो ब्राह्मणस्येत्यादि" पैठीनसि स्मृतिः। अनुकल्पश्च मुख्यद्रव्याद्यभावे तत्सदृशद्रव्यान्तरादि प्रतिनिधिरूपम्। यथा "यवाद्यभावे गोधूमाः मध्वाद्यभावे गुडादयः। एवं उपवासासामर्थ्ये नक्तं "हविष्याद्यादि स्मृतिप्रोक्तं वेदितव्यम्। अनुगतं कल्पं वेदाङ्गभेदम् अत्या०स०। कल्पानुगते ग्रन्थे अनुकल्पप्रतिपादकग्रन्थे च तद्वेत्तरि उक्थादि०ठक्। आनुकल्पिकः अनुकल्पग्रन्थवेत्तरि त्रि०।

**अनुकाम** पु० अनुरूपः कामः प्रा०स०। योग्याभिलाषे। सदृशं कामस्य सादृश्यार्थे काममनतिक्रम्य यथार्थे वा अव्ययी०। कामसादृश्ये यथाकामे च अव्य०। अनुकामं तर्पयेथामिति ऋ० १,१७,२, "अनुकामं परा दा इति" ऋ०८,४८,८, "अनुकामं यथाकाममिति" भा०। अनुकामयते अनु+काम-अच्। अतिकामुके त्रि०।

**अनुकामीन** त्रि० कामस्य अभिलाषस्य सदृशमनुकामं सादृश्येऽव्ययी० ततः गच्छतीत्यर्थे ख। यथेष्टगमनशीले। "अनुकामीनतां त्यजेति" भट्टिः। [विवरणमनुकरणशब्दे दृश्यम्

**अनुकार** पु० अनु-कृ-घञ्। गुणक्रियादिभिः सदृशीकरणे।

**अनुकारिन्** त्रि० अनुकरोति अनु+कृ-णिनि स्त्रियां ङीप्। गुणक्रियादिभिः सदृशीकारके। "अनुकारिणि पूर्व्वेषां युक्तरूपमिदं तव" इति रामा०।

**अनुकार्य्य** अनुक्रियतेऽसौ अनु+कृ-कर्मणि अर्हार्थे वा यत्। अनुकरणीये सदृशीकरणार्हे पश्चात्करणीये च। "यः पश्चात् पूर्व्वकार्य्याणि कुर्य्यादैश्वर्य्यमोहितः पूर्व्वं चैवानुकार्य्याणीति" रामा०।

**अनुकाल** अव्य० कालस्य योग्यम् यथार्थे अव्ययी०। काल-

योग्यत्वे । "भोजनाच्छादनं दद्यादनुकालं विशेषत" इति ।

**अनुकीर्त्तन** न० अनु+कृत-णिच्-ल्युट् कीर्त्तादेशः । कथने "सार्द्धं भवति तत् सर्वं हरेर्नामानुकीर्त्तनादिति" स्मृतिः ।

**अनुकूल** त्रि० कूलमावरणं स्नेहेनानुबध्य इति यावत् अनुगतस्तम् अत्या०स० । सहचरे, सहाये, स्वपक्षपातिनि, "नारीणामनुकूलमाचरसि चेज्जानासीति" का० प्र० । "अनुकूलयतीन्द्रोऽपि स्वर्गद्रुमविभूषणैरिति" कुमा० अनुकूलयति अनुकूलं करोतीति नामधातुः । दन्तीवृक्षे स्त्री राजनि० । अलङ्कारशास्त्रप्रसिद्धे "अनुकूल एकरति"रित्युक्ते नायकभेदे "एकस्यामेव नायिकायामासक्तोऽनुकूलनायक" इति तदर्थः यथा "अस्माकं सखि ! वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं, नो वक्रा गतिरुद्धतं, न हसितं, नैवास्ति कश्चिन्मदः । किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्" इति ॥ "अनुकूलं प्रातिकूल्यमानुकूल्यानुबन्धि चेत्" इति (सा० द०) इत्युक्तेऽर्थालङ्कारभेदे न० । यथा "कुपितासि यदा तन्वि ! निधाय करजक्षतम् । बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥" "सर्वेषामात्मत्वेनानुकूले परमेश्वरे पु० "अनुकूलः शतावर्त्त"इति"विष्णुस०। सर्वेषामात्मत्वादनुकूलः न हि स्वस्मिन् प्रतिकूलं स्वयमाचरतीति" भा० ।

**अनुकृति** स्त्री अनु+कृ-क्तिन् । "अनुकरणे । ओमित्येतदनुकृतिर्ह स्म वा" इति श्रुतिः ।

**अनुकृष्ट** अनु+कृष-कर्म्मणि क्त । कृताकर्षणे, अनुवर्त्तिते च ।

**अनुक्त** त्रि० न उक्तः । अनभिहिते अकथिते उक्तिश्च प्रायेण तिङ्कृत्तद्धितसमासैः "तत्र तिङा हरिः सेव्यते, कृता चैत्रेण गतः, तद्धितेन, शतेन क्रीतः शत्यः । शत्यः, समासेन, आरूढो वानरो यमिति वाक्ये आरूढवानरो वृक्षः सर्वत्र कर्म्मण उक्तत्वात् प्रातिपदिकार्थे प्रथमा । तैरनभिधाने तु ग्रामं गच्छति, ग्रामं गत, वेदोऽधीतो, इत्यादौ "अनभिहिते" इति द्वितीयाद्येव एवमन्यकारकेऽप्युदाहार्य्यम् "अनुक्तमप्यूह्यचकार" इति रघु० अनियोजिते च "कस्यानुक्तोऽपि सहाय एव इति" कुमा० ।

**अनुकथ** त्रि० नास्ति उक्थं स्तोत्रं यस्य । स्तोत्रशून्ये "किं यामनिन्द्रः कृणवदनुकथा" इति ऋ०५,२,१, "अनुकथाः अस्तुतय" इति भा० ।

**अनुक्रम** त्रि० अनुगतः क्रमम् अत्या०स० । अनुगतक्रमे क्रमानुबद्धे, अनुक्रमेण यथोत्तरं यस्य पाठः करणं वा उचितं तदनतिक्रमेण तस्यानुष्ठानरूपा परपाटी । "प्रचक्रमे वक्तुमनुक्रमज्ञा" इति रघुः । क्रमश्च स्थानं तत्स्वरूपादि क्रमशब्दे वक्ष्यते । क्रममनतिक्रम्य यथार्थे अव्ययी० । क्रमानतिक्रमे अव्य० ।

**अनुक्रमणिका** स्त्री अनुक्रम्यते यथोत्तरं परिपाट्या आरभ्यतेऽनया अनु+क्रम-करणे ल्युट् स्त्रीत्वात् ङीप् स्वार्थे कनि ह्रस्वः । अनुक्रमज्ञापके, ग्रन्थाद्यंशभेदे उक्तस्य वक्तव्यस्य वार्थसङ्घस्य ग्रन्थशेषे, क्वचिदादौ वा संग्राहके पुराणादेरंशविशेषे । स्वार्थे कामावेऽनुक्रमणीत्यपि, तत्रैव । तत्र आदौ यथा "भारतस्येतिहासस्य श्रूयतां पर्व्वसंग्रहः पर्व्वानुक्रमणी पूर्व्वं द्वितीयः पर्व्वसंग्रह" भार० आदि० । अन्ते यथा "अनुक्रमणिकाध्यायं तथा माहात्म्यमुत्तममिति" काशीख० । एवमन्यत्र द्रष्टव्यम् ।

**अनुक्री** पु० अनुक्रियते अनु-कृ-उणा० बा० ई किच्च । साद्यस्क्रक्रतुभेदे, "षट् साद्यस्का इत्युपक्रम्य "श्येनश्चानुक्रीः" इति कात्या०२२,२,१६, उक्तम् "अनुक्रीर्नाम साद्यस्कः क्रतुः स श्येनस्य भवतीति" तद्व्याख्या ।

**अनुक्रोश** पु० अनुक्रोशत्यनेन अनु+क्रुश-आह्वाने रोदने च घञ् । दयायाम् । परदुःख प्रहरणेच्छारूपदयया हि परक्रोशं दृष्ट्वा तदनु रोदनं क्रियते इति तस्यास्तथात्वम् । अनुगतः क्रोशं गतिस० । प्राप्तक्रोशाध्वके त्रि० ।

**अनुक्षण** न० वीप्सायाम् अव्ययी० । प्रतिक्षणे अनवरते, अनुगतं क्षणम् अत्या०स० । अजस्रवृत्तौ त्रि० ।

**अनुग** त्रि०अनुगच्छति अनु+गम-ड । पश्चाद्गामिनि, "गोत्ररिक्थानुगः पिण्डः व्यपैति ददतः स्वधेति" "छिद्रं निवारयेत् सर्वं कूर्म्मकरस्यानुगमिति" "प्रमदामनुसंप्राप्तं नेत कामक्रोधवशानुगमिति" च मनुः । सहचरे, आनुलोम्य गते, सेवके च । "तद्भूतनाथानुग ! नार्हसि त्वमिति" रघुः ।

**अनुगङ्ग** अव्य० गङ्गायाम् विभक्त्यर्थे अव्ययी० । गङ्गायामित्यर्थे । परिलुप्ता० अञ् । आनुगङ्गम् अनुगङ्गभवे त्रि० ।

**अनुगत** त्रि० अनु+गम-क्त । पश्चाद्गते, सहगते, आनुलोम्यं गते, सामान्यधर्म्मरूपेण संगृहीतेऽखिले विशेषे, अधीने च । "आगच्छदत्र काकुत्स्थः स्वर्गाय समुपस्थितः विमानशतकोटीभिर्देवैरनुगतस्तदेति" रामा० ।

**अनुगति** स्त्री अनु+गम-क्तिन् । अनुगमने, पश्चाद्गतौ, "बलस्य चतुरङ्गस्य नायकानुगतिर्भव"इति "गतानुगतिकन्यायः" ।

**अनुगम** पु० अनु+गम-घञ् वृद्ध्यभावः । पश्चाद्गमने, "इहतेर्धातोरर्थानुगमादिति" शा०भा० । सहायीभवने, सामा-

न्वयधर्म्मेण सर्व्वेषां विशेषरूपाणां संग्रहे च। "सम्बन्धस्यानुगमो न दोषायेति" दाय० श्रीकृष्णः। आनुलोम्यकरणे, "अतो त्वनुगमान्विति" इति स्मृतिः।

**अनुगमन** न० अनु+गम–भावे ल्युट्। पश्चाद्गमने। "शवानुगमनाशौचं स्नानमालेभ्य शुध्यतीति" स्मृतिः भर्त्तृशरीरानुगमनमहं करिष्यामीति शु०त० रघु०।

**अनुगव** न० गोःसदृश आयामः "यस्य चायाम" इति समासे नि०अच्। गवायामतुल्यायामयुक्ते शकटादौ।

**अनुगवीन** त्रि० गोः पश्चात् पर्य्याप्तं वा गच्छति अनुगु–ख। गोः पश्चाद्गामिनि गोपाले। "अनुग्वलंगामीति" (पा०) उक्तेः पर्य्याप्तगन्तरि च।

**अनुगादिन्** त्रि० अनुगदति अनु+गद–णिनि। अनुवादके स्त्रियां ङीप्। अनुगाद्येव स्वार्थे, "अनुगादिनठक् च" पा० ठक् आनुगादिकः तदर्थे।

**अनुगामिन्** त्रि० अनुगच्छति अनु+गम–णिनि। पश्चाद्गन्तरि, सहचरे च। स्त्रियां ङीप्। "दृष्ट्वा स्त्रियमिवायान्तीं ब्राह्मणीमनुगामिनीमिति" रामा०।

**अनुगुण** त्रि० अनुकूलो गुणो यस्य। अनुकूले, अनुगते, अनुरूपे च। "अद्वैतं सुखदुःखयोरनुगुणं सर्व्वास्ववस्थासु यदिति" उत्तरच०। अनुरूपः गुण उपकरणम्। योग्योपकरणे "रसानुगुणतामेतीति" सा०द०। सदृशगुणयुक्ते त्रि०। "कान्तारतापकारित्व वंशकानुगुणौ मताविति" सुश्रुतम्। अनुगतः गुणं तन्त्रीसूत्रं वा गुणानुरक्ते त्रि० तन्त्रीयुक्तवीणायां स्त्री "उत्कण्ठितस्य हृदयानुगुणा वयस्येति" अनुगुणा वीणेति तदर्थः। गुणे विभक्त्यर्थे, गुणमनतिक्रम्य वा अव्ययी०। गुणे इत्यर्थे, गुणानतिक्रमे च। तद्बोधकग्रन्थमधीते वसन्तादि० ठक्। आनुगुणिकस्तदध्येतरि, तद्वेत्तरि च त्रि०।

**अनुगुप्त** त्रि० अनु+गुप्–क्त। आच्छादिते। "अनुगुप्ता अप आहृत्येति" गोभिलः "अनुगुप्ता आच्छादिता" इति रघु०।

**अनुगृहीत** त्रि० अनुग्रह–क्त। कृतानुग्रहे।

**अनुग्र** त्रि० न उग्रः। शान्तस्वभावे असमर्थे, अनुद्धते च। "भगमनुग्रो अध याति रत्नमिति" ऋ०७,३८,६, "अनुग्रः असमर्थ" इति भा० "अनुग्रासश्च इत्वहन् ऋ० ८,१,१४, अनुग्रा अनुद्गूर्णा इति (भा०) उक्तेः अनुद्गूर्णे च।

**अनुग्रह** पु० अनु+ग्रह–अप्। अभीष्टसम्पादनेच्छारूपे प्रसादे, आनुकूल्ये, अनिष्टनिवारणपूर्व्वकेष्टसाधनेच्छारूपायामभ्युपपत्तौ "निग्रहोऽन्वर्त्तनिःस्वानामनुग्रहपूर्व्वकं हि यत्। पूरणं दानमानाभ्यामनुग्रह उदाहृत" इत्युक्तलक्षणे दरिद्रादिपोषणे च। "निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयते" इति तन्त्रम्। "अनुग्रहं संस्मरणप्रवृत्तमिति" कुमा०। "पादार्पणानुग्रहपूतपृष्ठमिति" रघुः। पश्चाद्ग्रहणं सूर्य्यादिग्रहो वा अनुगतस्तम् गति स०। ग्रहानुगते सूर्य्यादिग्रहानुगे च त्रि०।

**अनुग्राह्य** त्रि० अनु+ग्रह–ण्यत्। अनुग्रहार्हे "यदि तेऽहमनुग्राह्यो यदि स्मरसि मे गुणानिति" "सर्व्वथानुग्राह्यो देवतानामसंशय" इति च रामा०।

**अनुचर** त्रि० अनुचरति अनु+चर–ट स्त्रियां ङीप् अच् वा स्त्रियां टाप्। सहचरे, पश्चाद्गामिनि, दासादौ, "व्रताय तेनानुचरेण धेनोरिति" "अन्वेद्युराज्ञानुचरस्य भावमिति च" रघुः। अनुगतश्चरं दूतं गतिस०। दूतानुगे त्रि०। सेवके च, "गन्धर्व्वा गुह्यकायक्षा विबुधानुचराश्च ये" इति मनुः "चत्वारि च शतान्यनुचराणामिति" कौ०ब्रा० "अप्सरसो महेन्द्रानुचरा इयेति "सौमित्रिसीतानुचरस्येति" भट्टिः। "पालागली सानुचर्य्यः शतेन शतेन" इति कात्या० २०,१,१२, एतद्व्याख्यायां कर्कः अनुचरीशब्दप्रयोगस्तत्र द्रष्टव्यः पालागली दासदुली।

**अनुचारक** त्रि० अनुचरति अनु+चर–ण्वुल्। अनुगन्तरि, सेवके च। तस्य धर्म्यम् अण्। आनुचारिकम् सेवकधर्म्ये कार्य्ये त्रि०।

**अनुचित** त्रि० न–उचितः। अपरिचिते, अयुक्ते च।

**अनुचिन्तन** न० अनु+चिन्ति–ल्युट्। अनुस्मरणे सततचिन्तायाम् "द्वादशे स्वभावे च वैपरीत्यानुचिन्तनमिति" ज्योति०।

**अनुचिन्ता** स्त्री अनु+चिन्ति–अ। सततचिन्तायाम्।

**अनुच्च** त्रि० न उच्चः विरोधे न०त०। उच्चताविरोधिनिम्नत्ववति। ज्योतिषोक्ते ग्रहाणां नीचस्थाने च। तानि स्थानानि उच्चशब्दे वक्ष्यन्ते।

**अनुच्छिष्ट** त्रि० उद्+शिष–क्त न०त०। उच्छिष्टभिन्ने आहार्य्यद्रव्यस्य भुक्तावशिष्टमुच्छिष्टं तद्भिन्ने।

**अनुज** त्रि० अनु पश्चात् जायते अनु+जन–ड। पश्चाज्जाते सहोदरे भ्रातरि। तादृश्यां भगिन्यां स्त्री। "एकाधिकं हरेज्ज्येष्ठः सुतोऽध्यर्द्धं ततोऽनुज" इति मनुः। "चचार सानुजः शान्त" इति रघुः "परिवेत्तानुजेऽनूढे" इति मनुः।

**अनुजन्मन्** पु० अनु जन्म यस्य। सहोदरे कनिष्ठभ्रातरि। "जननाथ! तवानुजन्मनामिति" भारविः।

**अनुजात** त्रि० अनु+जन–क्त । पश्चाज्जातमात्रे, "दन्तजातेऽनुजाते च कृतचूड़े च संस्थिते" इति मनुः । अनुजाते दन्तजन्मानन्तरं संस्थित इति" कुल्लू० "भ्रातस्त्वानुजाताऽहं भुङ्क्ष्व भक्तमिदं शुभम्" इति स्मृतिः । "असौ कुमारस्तमजोऽनुजात" इति रघुः । अनन्तरजातत्वात् पुत्रस्य तथात्वम् ।

**अनुजावर** त्रि० अनुजादप्यवरः । अत्यन्तनिकृष्टे । "एतामेवानुजावराय कुर्य्यादिति" ता०ब्रा० । अनु पश्चाज्जायते इत्यनुजः कनीयान् सहि निकृष्टः तस्मादप्यवरो निकृष्ट इति भा० वेदे न स्वभावः लोके तु अनुजावरश्च ।

**अनुजीविन्** त्रि० अनुजीवितुमाश्रयितुं शीलमस्य अनु+जीव–णिनि । सेवके, आश्रिते च । [णीये सेव्ये ।

**अनुजीव्य** त्रि० अनुजीव्यतेऽसौ अनु+जीव–ण्यत् । आश्र-

**अनुज्ञा** स्त्री अनु+ज्ञा–अङ् । स्वयंप्रवृत्तस्यान्यस्य प्रवृत्त्यविघातकरणेन प्रवर्त्तनारूपायामनुमतौ । "गुरोरनुज्ञामधिगम्य मातः" ! इति रघुः । "तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाहेति" श्रुतिः ।

**अनुज्ञात** त्रि० अनु+ज्ञा–क्त । कृतानुज्ञे यस्मै करणायानुज्ञा कृता तस्मिन् जने ।

**अनुज्येष्ठ** त्रि० अनुगतो ज्येष्ठम् प्रा०स० । ज्येष्ठानुगते । ज्येष्ठमनतिक्रम्य याथार्थ्ये अव्ययी० । ज्येष्ठानुरूपे ज्येष्ठानतिक्रमे च अव्य० । [राथे देये शुल्कादौ, आतरे ।

**अनुतर** न० अनुतीर्य्यतेऽनेन अनु–तॄ–करणे अप् । नद्यीपा-

**अनुतर्ष** न० अनुतृष्यतेऽनेनेदं वा करणे कर्म्मणि वा घञ् । सुरापानपात्रे, मद्ये च । भावे घञ् । मद्यपाने, अभिलाषे, पानेच्छायाञ्च । "सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेनेति" माघः ।

**अनुताप** पु० अनु+तप–घञ । इदमनुचितं कृतमिति स्वकृतवस्तुनो दुःखजनकतया ध्यानेन पश्चात्तापे । "ख्यापनेनानुतापेन" इति" मनुः । "तस्याः करिष्यामि दृढानुतापमिति" कुमा० ।

**अनुतिल** त्रि० अनुगतस्तिलम् अत्या० स० । तिलानुगते वेलादौ, तिले विभक्त्यर्थे अव्ययी० तत्र भवः परिमुखादि० ञ्य । आनुतिल्यः तिलभवे त्रि० ।

**अनुतूलन** न० तूलेनानुकृष्याति तृणाद्यर्यं तूलेनानुबन्द्र्यति अनु+तूल+अनुकोषणे णिच्–भावे ल्युट् । तूलेन तृणादेरनुघट्टने ।

**अनुत्क** त्रि० न०त० । उत्कण्ठितभिन्ने स्वस्थे ।

**अनुत्कर्ष** पु० न उत्कर्षः अभावे न०त० । उत्कर्षाभावे ब० । उत्कर्षशून्ये त्रि० ।

**अनुत्त** त्रि० न+ उन्द्–क्त नसत्तनिषत्तानुत्तेत्यादिना नि० । अक्लिन्ने "इन्द्र ! तुभ्यमिदद्रिवोऽनुत्तमिति" ऋ० १,८०,७, नुद–क्त न०त० । अनुन्ने अप्रेरिते । "अनुत्तमाते मघवन्निति" ऋ० १,१६५,८,"अनुत्तमप्रेरितमिति" भा० ।

**अनुत्तम** न० न उत्तमोयस्मात् । अत्युत्कृष्टे । "काङ्क्षन् गतिमनुत्तमामिति,"इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखमिति" "यथोऽस्मिन् लोके प्राप्नोति प्रेत्य चानुत्तमं सुखमिति" च मनुः ।

**अनुत्तर** त्रि० उत्तरउत्तमः न० ५ब० । अत्यन्तश्रेष्ठे । ६ब० । उत्तरयाक्यरहिते "भवत्यवद्या च भवत्यनुत्तरादिति" नैष० । न०त० । उत्तरदिग्भिन्नायां तद्विरोधिन्यां दक्षिणस्यां दिशि, स्त्री । उत्तमभिन्ने अपकृष्टे त्रि० । न उत्तरति चलति उद्+तॄ–अच् न०त० । स्थिरे त्रि० ।

**अनुत्तान** त्रि० न उत्तानः विरोधे न०त० । उत्तानभिन्ने अवताने अवाङ्मुखे ।

**अनुत्तरङ्ग** त्रि० उद्गतस्तरङ्गो वीचिर्यस्माद्धुल्यं वा यस्मात् प्रा० ब० न०त० । अनुद्गततरङ्गे अचञ्चले च "अपामिवाधारमनुत्तरङ्गमिति" कुमा० स्थिरपक्षे अचञ्चलमित्यर्थः ।

**अनुत्पत्ति** स्त्री न उत्पत्तिः अभावे न०त० । उत्पत्त्यभावे "अयं केचिदुपायस्य दुरितस्य प्रचक्षते । अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते" स्मृतिः ।

**अनुत्पत्तिक** त्रि० नास्ति उत्पत्तिर्यस्य कप् । उत्पादशून्ये ।

**अनुत्पन्न** त्रि० न उत्पन्न न०त० । उत्पन्नभिन्ने अजन्ये ।

**अनुत्पाद** पु० न उत्पाद उत्पत्तिः अभावार्थे न०त० । उत्पत्त्यभावे । ब० । उत्पत्तिशून्ये त्रि० ।

**अनुत्साद** पु० न उत्सादः अवसादनम् भावे न०त० । अवसादाभावे उच्छेदाभावे । न०ब० । उच्छेदशून्ये त्रि० ।

**अनुत्साह** पु० न उत्साहः अभावे न०त० । उत्साहाभावे ब० । उत्साहशून्ये त्रि० ।

**अनुत्सिक्त** त्रि० न उत्सिक्तः गर्व्वितः । अगर्व्विते गर्वशून्ये ।

**अनुत्सुक** त्रि० न०त० । उत्सुक–भिन्ने उत्कण्ठाशून्ये ।

**अनुत्सूत्र** त्रि० उत्क्रान्तः सूत्रम् अत्या०स० न०त० । सूत्रानुगते "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धनेति" माघः । सूत्रं पाणिनीयसूत्रं नीतिशास्त्रञ्चेति विवेकः ।

**अनुद** त्रि० न नुदति नुद–क न०त० । प्रेरकभिन्ने अनुददाति तुल्यं ददाति अनु+दा क । तुल्यरूपदातरि,

एतस्य उदाहरणम् प्रागुक्तं अनानुदग्धशब्दे दृश्यम् ।

**अनुदक** त्रि॰ नास्ति उदकं यत्र । “उदकशून्ये मरुदेशादौ अल्पार्थे न॰त॰ । अल्पजले पल्वलादौ “उदन्वतीरनुदकाश्च या” इति अ॰७,५,१,४, उदकदानविशेषशून्ये श्राद्धभेदे “पुरोडाशमात्रा अनुदका” इति कात्या॰ १०, ५,११, । “अनुदकाः प्रत्यवनेजनपरिषेचनादि वर्जिता” इति तद्व्याख्या ।

**अनुदग्र** न उद्गतमग्रमस्य । मृदौ अतीक्ष्णे उन्नताग्रभिन्ने च नास्ति उदग्रोयस्मात् ५ब॰ । अनुन्नते त्रि॰ ।

**अनुदर** त्रि॰ न उदरं यस्याल्पार्थे न॰ब॰ । अल्पोदरशालिनि कृशोदरे, “अनुदरा कन्येति सि॰कौ॰ स्त्रियां टाप् ।

**अनुदर्शन** अनु+दृश–ल्युट् । अनुचिन्तने, “जन्ममृत्युजराव्याधि दुःखदोषानुदर्शन”मिति गीता ।

**अनुदात्त** न॰ न उदात्तः विरोधे न॰त॰ । उदात्तस्वरभिन्ने नीचैरुच्चारिते स्वरभेदे । स्वराहि त्रिविधाः उदात्तः अनुदात्तः स्वरित इति भेदात् तत्र “उच्चैरुदात्तः” “नीचैरनुदात्तः” “समाहारः स्वरित” इति च पा॰। ताल्वादिषु सभागेषु स्थानेषूर्द्ध्वभागे निष्पन्नोऽजुदात्तः, तत्रैव नीचभागे निष्पन्नोऽच् अनुदात्तः । “तस्यादित उदात्तमर्द्धह्रस्वमिति” पा॰ । तस्यादितोऽर्द्धमुदात्तमन्यमनुदात्तं तादृशः स्वरः स्वरितः इति” “अनुदात्तं पदमेकवर्ज्जमिति”अस्यैव निघात नीचादि संज्ञा उदात्तानुदात्तत्वादिकं स्वरवर्णस्यैव न तु व्यञ्जनानां, यथोक्तम् शिक्षायाम् “उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ह्रस्वोदीर्घः प्लुतश्चेति कालतोनियमस्त्वचीति” । “प्रयत्नप्रेरितोवायुर्यदोर्द्ध्वभागे प्रतिहतोऽचं निष्पादयति स उदात्तः । एवमधोनिष्पन्नोऽजनुदात्त इति” शब्देन्दु॰ । “उदात्तानुदात्तस्वरितानां सन्निकर्षे ऐकश्रुत्यम्” इति आश्व॰ श्रौ॰ ।

**अनुदार** न॰ न उदारः । अतिदातृभिन्ने, अमहति च । नास्ति उदारो यस्मात् ५ब॰ । अतिमात्रदातरि, अति महति च । अनुगतो दारान् अत्या॰स॰ । दारानुगते । “यस्मिन् प्रसीदसि पुनः स भवत्युदारोऽनुदारश्चेति का॰ प्र॰ । उदारत्वानुदारत्वयोरापाततो विरोधः । उदारत्वानुगतदारत्वाभ्यां तत्परिहारः ।

**अनुदित** पु॰ उद्+इण्+क्त ईषदर्थे न॰ ७ब॰। किरणमालेष ईषदुदितसूर्ये प्रविरलतारके काले । “उदितेऽनुदिते चैवेति मनुः न॰त॰ । उदितभिन्ने त्रि॰ । वद्–क्त न॰त॰ । अकथिते त्रि॰ ।

**अनुदिन** अव्य॰ वीप्सार्थे अव्ययी॰ । प्रतिदिने “पारावतः खलु शिलाकणमात्रभोजी कामी भवेदनुदिनं वद कोऽत्र हेतु”रित्युद्भटः । अनुदिवसादयोप्यत्र ।

**अनुदृष्टि** स्त्री अनुगता अनुकूला वा दृष्टिः प्रा॰स॰ । अनुगतदृष्टौ, अनुकूलदृष्टौ च । ब॰ । तथादृष्टिमति त्रि॰ । तथाभूतस्त्रियाः अपत्यं कल्याण्या॰ढक् इनङ् च । आनुदृष्टिनेयः तदपत्ये पुंस्त्री॰। अनुदृष्टेः पुंसोऽपत्यम् शुभ्रा॰ ढक् । आनुदृष्टेयः तदपत्ये पुंस्त्री॰ ।

**अनुदेश** पु॰ अनु+दिश–घञ् । यथाक्रमोच्चारणे, उपदेशे च “यथासंख्यमनुदेशः समानामिति” पा॰ । अनुदिश्यते कर्मणि घञ् । उपदेश्ये “अनुदेशाद्याः पुरोडाशेत्यादि” कात्या॰ १८,६,१५ ।

**अनुद्देश** पु॰ न उद्देशः अभावार्थे न॰त॰ । उद्देशाभावे ।

**अनुद्धत** त्रि॰ न उद्धतः विरोधे न॰त॰ । विनययुक्ते ।

**अनुद्धरण** न॰ न उद्धरणम् अभावार्थे न॰त॰ । उद्धाराभावे

**अनुद्धार** पु॰ न उद्धारः अभावार्थे न॰त॰ । उद्धाराभावे । न उद्धारः विभाज्यविशेषस्योत्थापनं यत्र । विंशोद्धारशून्ये विभागे त्रि॰ । “अनुद्धारोविभागः स्यादिति श्रुतिः ।

**अनुद्धृत** त्रि॰ न उद्धृतमुत्थापितम् । अनुत्थापिते “पयोऽनुद्धृतसारञ्चेति” हविर्विषये श्रुतिः ।

**अनुद्भट** त्रि॰ न उद्भटः विरोधे न॰त॰ । अप्रगल्भे मृदौ ।

**अनुद्यम** पु॰ न उद्यमः अभावे न॰त॰ । उद्यमाभावे । न॰ ब॰ । उद्यमशून्ये त्रि॰ ।

**अनुद्यूत** न॰ अनु+दिव–क्त । द्यूतस्य पश्चात् पुनर्द्यूते । तदधिकृत्य कृतग्रन्थतयोक्तमनुद्यूतपर्व सभापर्वणि दृश्यम् ।

**अनुद्योग** पु॰ न उद्योगः अभावे, न॰त॰ । उद्योगाभावे ब॰ । उद्यमशून्ये त्रि॰ ।

**अनुद्रुत** त्रि॰ अनु+द्रु–क्त । अनुगते “धनुर्धरैः राजसुतैरनुद्रुतमिति रघुः “अनुद्रुतः संयति येन केवलं बलस्य शत्रुः प्रशशंस शीघ्रतामिति” माघः । “अर्द्धमात्रं द्रुतं ज्ञेयं द्रुतार्द्धञ्चाप्यनुद्रुतमित्युक्ते” मात्राचतुर्थभागकाले तालभेदे न॰ । [न॰त॰ । तच्छून्ये त्रि॰ ।

**अनुद्वाह** पु॰ न उद्वाहः अभावार्थे न॰त॰ । विवाहाभावे

**अनुद्विग्न** त्रि॰ न उद्विग्नः विरोधे न॰त॰ । उद्विग्नभिन्ने अव्याकुलचित्ते ।

**अनुद्वेग** पु॰ न उद्वेगः अभावार्थे न॰त॰ । उद्वेगाभावे न॰ब॰ । तच्छून्ये त्रि॰ “अनुद्वेगकरं वाक्यं सतां स्वाभाविकं मतमिति” नीति॰ ।

**अनुधावन** न॰ अनु+धाव–ल्युट् । पश्चाद्गमने, तत्त्वनिश्चयार्थानुसरणे, अनुसन्धाने च । [आसक्तौ च ।

**अनुध्या** स्त्री अनु+ध्यै–अङ् । शुभानुचिन्तने, अनुग्रहे,

**अनुध्यान** न॰ अनु+ध्यै–ल्युट् । अनुक्षणचिन्तने "या नः प्रीतिर्विरूपाक्ष ! त्वदनुध्यानसम्भवेति" कुमा॰ ।

**अनुध्याय** पु॰ अनु+ध्यै–कर्त्तरि घञ् । अनुचिन्तके शुभानुचिन्तके । "बालस्यायजस्य वा तदनुध्यायमनसेति" प्रा॰त॰ स्मृतिः ।

**अनुध्येय** त्रि॰ अनु+ध्यै–कर्म्मणि यत् । अनुग्राह्ये यदीयशुभानुचिन्तनं क्रियते तस्मिन् । "अनुदध्युरनुध्येयं साचिध्यैः प्रतिमागतैरिति" रघुः ।

**अनुनय** पु॰ अनु+नी+अच् । विनये, प्रणिपाते, प्रार्थने, सान्त्वने च । "कथं नु ? शक्योऽनुनयोमहर्षेर्विश्राणनाच्चान्यपयस्विनीनामिति" रघुः । [अनुरूपशब्दे ।

**अनुनाद** पु॰ अनुरूपोःनादः प्रा॰स॰। प्रतिध्वनौ प्रतिशब्दे

**अनुनादिन्** त्रि॰ अनु+नदति अनु+नद–णिनि । प्रतिरूपशब्दकारके "गम्भीरेणानुनादिनेति" रामा॰ ।

**अनुनायिका** स्त्री अनुगता नायिकाम् । नायिकानुगतायाम् "सखी प्रव्रजिता दासी प्रेष्या धात्रेयिका तथा । अन्याश्च शिल्पकारिण्यो विज्ञेया ह्यनुनायिका" इत्युज्ज्वलदाख्यादौ ।

**अनुनाश** पु॰ अनु+नश–घञ् । अनुमरणे । अदूरदेशादावर्थे सङ्काशादि॰ण्य आनुनाश्यः तददूरदेशादौ त्रि॰ ।

**अनुनासिक** त्रि॰ अनुगतो नासिकाम् अत्या॰स॰। नासिकया सह स्वस्वस्थानेनोच्चार्य्यमाणेषु वर्णभेदेषु । ते च "अमोऽनुनासिका न ह्रौ" इति शिक्षायां दर्शिताः हकाररकारभिन्नाः अमप्रत्याहारान्तर्गताः वर्णाः । "मुखनासिकावचनोऽनुनासिक" इति पाणिन्युक्तेस्तेषां तत्तत्स्थानसहितनासिकयोच्चार्य्यमाणत्वात्तत्त्वम् "उपदेशेऽजनुनासिक" इति पा॰ । अमप्रत्याहारमध्ये रभिन्ना यवलाः निरनुनासिकाः सानुनासिकाश्च तत्रानुनासिकस्थाने उभयप्रयत्नामेव सानुनासिकत्वम् "यलोद्विधाऽरो निरनुनासिकः सानुनासिकः । अमोऽनुनासिकत्वेन तत्स्थाने सानुनासिक" इत्यभियुक्तोक्तेः यथा यँल्ल्यते विद्वाँल्लिखति, सँव्वत्सरः अन्ये निरनुनासिकाः । वेत्वनुवृत्तौ "अणोऽप्रगृह्यस्यानुनासिक" इति पाणिन्युक्तेरप्रगृह्या एवाणोऽनुनासिकाः ।

**अनुनीत** त्रि॰ अनु+नी–क्त । कृतानुनये यस्य सान्त्वनार्थं विनयादिकं क्रियते तस्मिन् । "स चानुनीतोऽपि भृशं चुकोपेति" भारतम् ।

**अनुनेय** त्रि॰ अनु+नी–कर्मणि यत् । अनुनयकरणार्हे, अनुनेतुं योग्ये च ।

**अनुपकार** पु॰ न उपकारः अभावार्थे न॰त॰ । उपकाराभावे विरोधे न॰त॰ । अपकारे । [स्त्रियां ङीप् ।

**अनुपकारिन्** त्रि॰ न उपकारो विरोधे न॰त॰। अपकारिणि

**अनुपचित** त्रि॰ उप+चि–क्त वेदे निष्ठातस्य न नत्वम् न॰त॰ । अनुपक्षीणे । "सुवीर्यं वर्षिष्ठमनुपचितम् ऋ॰ २,१२,७ अनुपचितम् "अनुपक्षीणमिति" भा॰ । लोके तु अनुपक्षीणः त्रि॰ ।

**अनुपठित** न॰ अनु+पठ–भावे क्त । गुरुमुखपाठानुसारिपाठे अनुपठितमनेन इष्टादि॰ इनि । अनुपठिती कृतानुपाठे त्रि॰ स्त्रियां ङीप् । [पतने च ।

**अनुपतन** न॰ अनु+पत–ल्युट् । अनुकूलपतने, अनुरूप-

**अनुपति** अव्य॰ पत्युः सामीप्यम् अव्ययी॰ । पतिसमीपे । "अनुपति पत्नीरुत्तर उत्तर" इति कात्या॰ १२,२,१६, टीकाकर्त्ता पतिसमीपे तत्पत्नीः दीक्षयतीति तद्व्याख्या ।

**अनुपथ** पु॰ अनुकूलः पन्थाः अच् समा॰ । अनुकूलमार्गे "अनुक्षथा अनुपथा" इति ऋ॰ ५,५२,१०, अनुपथाः अनुकूलमार्गा" इति भा॰। पथःसमीपे पथि वा अव्ययी॰। पथिसमीपे पथोऽर्थे वा अव्य॰ । परिमुखा॰ ञ्य । आनुपथ्यम् पथिभवादौ त्रि॰ ।

**अनुपद** न॰ अनुरूपं पदम् प्रा॰समा॰। अनुकूलपदे अनुरूपस्थाने "आशिषामनुपदमिति" "अर्थानुपदमाशिष" इति च रघुः । पदस्य पश्चात् अव्ययी॰ । पदस्य पश्चादित्यर्थे पश्चाद्गमने च । भवादौ परिमुखा॰ ञ्य आनुपद्यः तत्र भवादौ त्रि॰ । सुप्तिङन्तं पदं तत्सदृशं ग्रन्थमधीते वेत्ति वा उक्था॰ ठक् । आनुपदिकः तदध्येतरि तद्वेत्तरि च त्रि॰।

**अनुपद्** न॰ अनुपद्यते प्रतिदिनं लभ्यते अनु+पद–क्विप् । प्रतिदिनलभ्येऽन्ने । "अनुपदस्थानुपदे त्वा" य॰ १५,८, "प्रतिदिनमनुपद्यतेऽनुपदन्नमिति" वेददीपः ।

**अनुपदिक** त्रि॰ अनुपदमन्वस्य गन्तृत्वेन ठन् । पश्चाद्गते

**अनुपदिन्** अनुपदमन्वेष्टा अनुपद+इनि । अनुपदम् अन्वेष्टरि (अन्वेषणकर्त्तरि) "अनुपद्यन्वेष्टेति" पा॰ "मृगस्यानुपदी रामो जगाम गजविक्रम" इति भट्टिः ।

**अनुपदिष्ट** त्रि॰ उप+दिश–क्त न॰त॰ । उपदेशाकर्म्मणि ।

**अनुपदीना** स्त्री अनु पदस्य आयामतुल्यायामः आयामेऽव्ययी॰ अनुपदं बद्धेत्यर्थे ख । पादतुल्यायामवत्यां पादबद्धायां पादुकायाम् (मोजा) इत्यादि ख्यातायाम् ।

**अनुपधि** त्रि॰ नास्ति उपधिश्छलं यत्र । निष्कपटे सरलव्यवहारे । [ज्ञानलक्षणाधीनज्ञानाविषयीभूते त्रि॰ ।

**अनुपनीत** पु॰ न उपनीतः न॰त॰ । अकृतोपनयनसंस्कारे

**अनुपन्यास** त्रि॰ न उपन्यासः अभावे न॰त॰ । उपन्यासाभावे कथनाभावे । न॰ब॰ । कथनशून्ये वागारम्भशून्ये त्रि॰ ।

**अनुपपत्ति** स्त्री उप+पद–क्तिन् उपपत्तिर्युक्तिः न॰त॰ । युक्त्यभावे, असङ्गतौ च । "तात्पर्य्यानुपपत्तित" इति भाषा॰ । उपपत्तिश्च न्यायादिमते व्यतिरेकव्याप्तिज्ञानाधीनानुमितिः" आपादकज्ञानाधीना आपाद्यनिश्चयरूपाऽनुभूतिर्वा । यथा पीनोदेवदत्तो दिवा न भुङ्क्ते इत्युक्ते दिवाऽभोजिनः पीनत्वं रात्रिभोजनं विनानुपपन्नमिति" अभोक्तुः पीनत्वासम्भवेन रात्रिभोजनं निश्चीयते तथा हि पीनत्वस्य भोजनव्याप्यतया पीनत्वाभावस्य च रात्रिभोजित्वाभावव्याप्यतानियमेन पीनत्वेन रात्रिभोजनमनुमीयते सा चानुमितिः अर्थापत्तित्वेन व्यवह्रियते इति नैयायिकाः । मीमांसकवेदान्तिभिस्तु कल्पयामि अर्थापयामीति विलक्षणानुभवात् अनुमितिभिन्नैव सेति स्वीक्रियते । अधिकमर्थापत्तिशब्दे वक्ष्यते ।

**अनुपपन्न** त्रि॰ उप+पद–क्त न॰त॰ । उपपत्तिशून्ये ।

**अनुपबाध** त्रि॰ नास्ति उपबाधा प्रतिबन्धोऽस्य । प्रतिबन्धशून्ये ।

**अनुपम** त्रि॰ नास्ति उपमा यस्य । अतुल्ये अन्यसादृश्यरहिते अत्युत्कृष्टे । "बलं प्रमाणं शक्तिश्च परैरनुपमं ममेति रा॰ । कुमुददिग्गजयोषिति स्त्र्यमरः । सुप्रतीकदिग्गजस्त्रियां स्त्रीति मेदिनिः ।

**अनुपमेय** त्रि॰ केनापि न उपमीयतेऽसौ उप+मि–कर्मणि यत् न॰त॰ । अन्यैरतुल्ये, अन्यसादृश्यरहिते ।

**अनुपयुक्त** न उपयुक्तम् उचितं भुक्तं वा न॰त॰ । समुचितभिन्ने अननुरूपे भुक्तभिन्ने च ।

**अनुपयोग** पु॰ न उपयोगः आनुकूल्यं भोजनं वा न॰त॰ । आनुकूल्याभावे, भोजनाभावे च । न॰ब॰ । आनुकूल्यशून्ये, भोजनशून्ये च त्रि॰ । [रागनिवृत्तिशून्ये ।

**अनुपरत** त्रि॰ उपरतः निवृत्तः न॰त॰ । अनिवृत्ते विषय-

**अनुपरति** स्त्री न उपरतिः विषयरागः अभावे न॰त॰ । विषयरागाभावे । [विशेषाज्ञाते अतर्किते ।

**अनुपलक्षित** त्रि॰ न उपलक्षितः विशेषेण ज्ञातः । विशे-

**अनुपलब्धि** स्त्री न उपलब्धिः अभावे न॰त॰ । लाभाभावे ज्ञानाद्यभावे च । तत्र अनुपलब्धिश्च न केवलं इन्द्रियादिसन्निकर्षाभावमात्रेण, किन्तु तत्सन्निकर्षेऽपि कारणान्तरादपि भवति यथोक्तं सांख्यसूत्रे । "सौक्ष्म्यात्तदनुपलब्धिरिति" । तदेव कारिकायां विवृतम् "अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् । सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहारादिति "नास्ति घटोऽनुपलब्धेरिति" । योग्यपदार्थस्यानुपलब्धिश्च अभावज्ञानसामग्री । तद्विवरणं योग्यानुपलब्धिशब्दे दृश्यम् ।

**अनुपवीत** पु॰ न उपवीतं यज्ञसूत्रं विधिना जातमस्य । अनुपनीते माणवके । उपवीतरूपयज्ञसूत्रशून्ये च ।

**अनुपशम** पु॰ न उपशमः शान्तिः निवृत्तिर्वा अभावे न॰त॰ । शान्त्यभावे, निवृत्त्यभावे च ।

**अनुपसंहारिन्** पु॰ न्यायमते परिभाषिते दुष्टहेतुविशेषे । स च अन्वये व्यतिरेके च दृष्टान्तरहितत्वेन दुष्टोहेतुः । यथा सर्वमनित्यं प्रमेयत्वादित्यनुमाने सर्वस्यापि पक्षत्वेन अन्वये दृष्टान्तो नास्ति नापि व्यतिरेके दृष्टान्तः, सर्वस्यापि प्रमेयतया तदभावस्य कुत्राप्यसिद्धेः । "तथैवानुपसंहारी केवलान्वयिपक्षक" इति । "आद्यः साधारणस्तु स्यादसाधारणको मतः । तथैवानुपसंहारी त्रिधा नैकान्तिको मत" इति च भाषा॰ मुक्तावल्यान्तु सर्वमभिधेयं प्रमेयत्वादित्यादिकं तदुदाहरणत्वेनोपन्यस्तं "केवलान्वयिपक्षक इत्यस्य च केवलान्वयिसाध्यक इत्येतत् परतया व्याख्यातञ्च । यथा "केवलान्वयिधर्मावच्छिन्नपक्षक इत्यर्थः । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात् सामान्याधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः इदन्तु न सम्यक् । पक्षैकदेशे घटसहचारग्रहेऽपि क्षतेरभावात् अस्तु वा सहचारग्रहस्थलावतापि पक्षे अज्ञानरूपासिद्धिरेव न दुहेत्वाभासत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् । उपसंहाराकारके त्रि॰ ।

**अनुपसेचन** त्रि॰ नास्ति उपसेचनं व्यञ्जनं यत्र । दध्यादिव्यञ्जनशून्ये अन्ने "स य एतदन्नस्य महिमानं विद्यादि"त्युपक्रम्य "नास्य इति ब्रूयान्नानुपसेचन" इति उक्तम्, अथ॰ ११,३,४ ।

**अनुपस्कृत** त्रि॰ उप+कृ–प्रतियत्ने क्त सुट् न॰त॰ । अकृतपाकादिसंस्कारे अविकृते च "सन्ध्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतमिति" मनुः अनुपस्कृतं पाकोपस्काररहितमिति रघु॰ । "अविकृतमिति" कुल्लू॰ । अपरिष्कृते "अज्ञानप्रभवञ्चैव राजतञ्चानुपस्कृतमिति" मनुः । दृष्टप्रयोजनानपेक्षे "ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृत"

इति मनुः “इष्टप्रयोजनानपेक्ष” इति कुल्लू०। अनिन्दिते च “एषोऽनुपस्कृतः प्रोक्त” इति मनुः अनुपस्कृतः अविहित इति कुल्लू०। [भावे न०त०। तच्छून्ये त्रि०।

**अनुपस्थान** न० न उपस्थानम् अभावे न०त०। उपस्थाना-

**अनुपस्थाप्य** त्रि० न उपस्थाप्यः। अस्मरणीये। प्रथमान्तपदानुपस्थाप्यत्वादिति जग०।[भावे, स्मृत्यभावे च।

**अनुपस्थिति** स्त्री न उपस्थितिः अभावे न०त०। उपस्थित्य-

**अनुपहत** न० न उपहतः भोगच्छेदादिना। सदृशे नवे अभुक्ते वस्त्रे “अनुपहतमतिधवलमिति” कात्०। उपघातशून्ये त्रि०। [रचनादिसंस्कार उपाकरणं तद्रहिते।

**अनुपाकृत** त्रि० उप–आ–कृ–क्त न०त०। मन्त्रैर्यज्ञे पशो-

**अनुपात** पु० अनुरूपः त्रैराशिकेन पातः। पाटीगणितोक्तेन त्रैराशिकेन युक्तसंख्यापाते। “पुरान्तरं चेदिदमुत्तरं स्यात् तदन्तरज्ञेयववैस्तदा किम्?। चक्रांशकैरित्यनुपातयुक्त्या युक्तं निरुक्तं परिधेः प्रमाणम्” सि०शि०॥“निरक्षदेशः स्वदेशाद्यथा यथा दक्षिणतो भवति तथा तथा स्वस्तिकादिपुवद्वृत्तं नतम् तयोरन्तरेऽक्षांशाः। ते च निरक्षदेशजाप्यसारयोजनैरनुपातेनोत्पद्यन्ते। अतः कस्मिंश्चित् पुरेऽक्षांशान् ज्ञात्वा तस्मात् पुरादुत्तरतोऽन्यस्मिन् पुरे ज्ञेयाः। ततस्तेषामन्तरांशैः पुरान्तरयोजनैश्चानुपातः। यद्यन्तरांशैः पुरान्तरयोजनानि लभ्यन्ते तदा चक्रांशैः ३६० किमिति फलं भूपरिधियोजनानि” इति प्रमि०। तदानयनञ्च “प्रमाणमिच्छा च समानजाती आद्यन्तयोः स्तः, फलमन्यजाति मध्ये, तदिच्छाहतमाद्यहृत् स्या”दित्युक्तत्रैराशिकरीत्या अन्तरयोजनसंख्याङ्केन राशिचक्रसंख्या-३६० अङ्के गुणिते पुरान्तरयोजनाङ्केन विभक्ते लब्धं परिधिमानसंख्या। पश्चात्पतने च। अनुगतः पातं राहुरूपग्रहभेदम्। पातग्रहानुगते। अनु+पत–णिच् णमुल्। पश्चादनुपातयित्वेत्यर्थे अव्य०। किन्तु कर्मोपपदेन सह “कर्मण्याक्रोशे कृञः” (?) पा० नित्यसमासः “लतानुपातं कुसुमान्यगृह्णादिति” भट्टिः।

**अनुपातक** न० अनुपातयति नरकं गमयति पत–णिच्–ण्वुल् पातकं ब्रह्महत्यादि तत्सदृशम् प्रा०स०। ब्रह्महत्यादिमहापातकसदृशे वेदनिन्दादिजन्ये पापविशेषे तानि च पञ्चविंशत्प्रकारहेतुत्वेन तावत्संख्यानि अनन्तरं साहस्रे तेन पतनहेतुमहापातकतुल्यत्वादस्य अनुपातकत्वमिति प्रा० वि०। तानि च विष्णुना दर्शितानि यथा “यागस्थस्य क्षत्रियस्य वैश्यस्य च, रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं ब्रह्महत्यासमानीति, कौटसाक्ष्यं सुहृद्वध एतौ सुरापानसमौ। ब्राह्मणस्य भूम्यपहरणं निक्षेपापहरणं सुवर्णस्तेयसमम्। पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम्। पितृष्वसृमातृष्वसृस्वसृगमनञ्च श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनञ्च स्वसुः सख्याः सगोत्राया उत्तमवर्णायाः कुमार्या अन्त्यजाया रजस्वलायाः शरणागतायाः प्रव्रजिताया निक्षिप्तायाश्च॥ अनुपातकिनस्त्वेते महापातकिनो यथा अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा इति”॥ नरकाण्यभिधाय “एतेष्वकृतप्रायश्चित्ता अतिपातकिनः पर्यायेण कल्पं पच्यन्ते, मन्वन्तरं तु महापातकिनः, अनुपातकिनश्च, उपपातकिनश्चतुर्युगमिति विष्णु०स०। तथा च महापातकसदृशान्येतानि पातकानि। अन्यान्यपि मनुना संक्षिप्य दर्शितानि यथा “अनृतञ्च समुत्कर्षे राजगामि च पैशुनम्। गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया॥ ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः। गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्॥ निक्षेपस्यापहरणं नराश्वरजतस्य च। भूमिवज्रमणीनाञ्च रुक्मस्तेयसमं स्मृतम्॥ रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च। सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुरिति”॥

**अनुपातकिन्** त्रि० अनुपातकमस्त्यस्य इनि स्त्रियां ङीप्। अनुपातकयुक्ते “अनुपातकिनस्त्वेते महापातकिनस्तथा” स्मृ०।

**अनुपातिन्** त्रि० अनुपतति अनुगच्छति अनु+गम–णिनि अनुगामिनि।

**अनुपान** न० अनु भेषजेन सह पश्चाद्वा पीयते कर्मणि ल्युट्। औषधेन सह, तत्पश्चाद्वा पेये मधुगुडादौ। पानस्य जलस्य समीपे अव्ययी०। जलसामीप्ये अव्य०।

**अनुपावृत्त** त्रि० न उपावृत्तः। अपरावृत्ते।

**अनुपुष्प** पु० अनुगतं पुष्पं तद्विकाशम् अत्या०स०। शरपत्रे तस्य पुष्पेणैव प्रकाशात्तथात्वम्।

**अनुपूर्व** त्रि० अनुगतं पूर्वं परिपाटीं गतिस०। यथाक्रमप्राप्ते यथाहान्यनुपूर्वं भवति ऋ० १०, १८, ५ “यथावदनुपूर्वशः” इति “वर्णानामनुपूर्वशः” इति च मनुः। अनुपूर्व+शस्। अनुपूर्वशः। “वृत्तानुपूर्वे च न चातिदीर्घे” इति कुमा० “ततोऽनुपूर्वायतवृत्तबाहुरिति” भारविः पूर्वमनुगतौ गोपुच्छाकारावित्ति मल्लि०, अनुगतः पूर्वम्। पश्चाद्गामिनि त्रि०। आग्नेयः प्रथमो गच्छत्यनारक्षो-

ऽनुपूर्व्या इतरे, कात्या० ८,८,२९ "इतरे दश पशवः अनन्तरोक्ता एव अनुपूर्व्याः अनुगामिनो भवेयुरिति" व्या० निकृष्टप्रमाणे च "अनुपूर्व्यादितरे" कात्या० ८,८,२०, "अनुपूर्व्याः निकृष्टा ह्रासमनुगच्छन्ति अत्र च प्रमाणेन निकृष्टत्वम्। अतश्च दक्षिणस्य वर्षिष्ठत्वमुक्तं तत उत्तरस्य तदपेक्षया हीनप्रमाणत्वं तदपेक्षया तत उत्तरस्य, तदपेक्षया तदुत्तरस्येत्येवमेकादशो यूपः सर्वतो निकृष्टो यथा भवति तथा कर्त्तव्यमिति" व्याख्या। अनुपूर्व्व+भावादौ ष्यञ्। आनुपूर्व्यं तद्भावे षित्त्वात् चातुरीवत् वा स्त्री "शाजस्य समानानुपूर्व्वीकत्वेनेति" जग०। वेदे पु० पूर्व्वपदह्रस्वः। अनुपूर्व्वी आनुपूर्व्व्य स्त्री। "वर्षिष्ठरशनः पुरुषोऽनुपूर्व्या इतरेषामिति" कात्या० १६,१,६, "अनुपूर्व्या ह्रिव्यामया रशनया" इति व्याख्या।

**अनुपृष्ठ्य** त्रि० अनुपृष्ठं बध्यते अनुपृष्ठ+यत्। पृष्ठमध्ये बध्यमानादौ "अनुपृष्ठ्यामायम्य पाशयोरिति" कात्या० १६,८,५।

**अनुपेत** त्रि० न उपेतः। उपगतभिन्ने। उपगमनञ्च उपनयनार्थं गुरुसमीपगमनम्, तच्छून्ये च। न स्त्री जुहुयान्नानुपेत" इति स्मृतिः "अनुपेतः अनुपनीतः" इति रघु०। "यं प्रव्रजन्तमनुपेतमपेतकृत्यमिति" भाग० अत्रापि शुकस्य विद्वत्त्वेन कृत्यसामान्याभावेन अनुपनीततयैव प्रयुक्तोक्तिः।

**अनुप्रदान** न० अनुप्रदीयते वर्णविशेषरूपता आधीयते अनेन अनु+प्र+दा-करणे ल्युट्। वर्णोत्पादनवाह्यप्रयत्नभेदे "एते श्वासानुप्रदाना अघोषाश्च विवृण्वते" इति सि०कौ०। श्वासः अनुप्रदानं वाह्यप्रयत्नो येषामिति तत्त्वबो०। "अनुप्रदानात् संसर्गात् स्थानात् करणविन्ययात्। जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमादिति" शिक्षा।

**अनुप्रवचन** न० अनुरूपं गुरूच्चारितानुरूपं प्रवचनम्। गुरूच्चारितानुवचने। तत्प्रयोजनमस्य छ। अनुप्रवचनीयः तथाभूतप्रवचनप्रयोजनयुक्ते त्रि०।

**अनुप्रवचनादि** पु० ईत०। पाणिन्युक्ते "तदस्य प्रयोजनमित्यर्थे विहितप्रत्ययनिमित्ते प्रकृतिभूते शब्दसमूहे। अनुप्रवचन, उत्थापन, उपस्थापन, संवेशन, अनुप्रवेशन, अनुवादन, अनुवचन, अनुवाचन, अन्वारोहण, प्रारम्भण, आरम्भण, आरोहण।

**अनुप्रवेश** पु० अनु+प्र+विश+भावे घञ्। अनुरूपप्रवेशे "प्रपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमा" इति रघुः। अमावास्यायां चन्द्रार्कयोः एकराश्यवस्थितत्वेन सूर्य्यमण्डलादधःस्थितत्वाच्चार्काच्चन्द्रस्यान्तरगतौ सूर्य्यरश्मेरिन्दौ प्रवेशः तदुत्तरञ्च क्रमशः प्रवेशाधिक्यम् "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तरिति" बृहत्स०। यथा च तस्याधस्त्वं तथा इन्दुशब्दे वक्ष्यते। तथाहि यावद्यावच्च सूर्य्यात् चन्द्रमाः पूर्वं गच्छति तावत्तावदेव व्यवधानानुरूपेण सूर्य्यरश्मेस्तत्र क्रमशः प्रवेशः।

**अनुप्रासः** पु० अनुगतः रसाद्यनुगुणं प्रकृष्टमासं वर्णन्यासं समवर्णरचनां समवर्णोच्चारणं वा गतिस०। अलङ्कारप्रसिद्धे स्वरवैषम्येऽपि समवर्णानां तुल्यरचनारूपे "अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् (सा०द०) उक्ते शब्दालङ्कारभेदे। स च पञ्चधा ते च सोदाहरणास्तत्र दर्पणे यथा "छेको व्यञ्जनसङ्घस्य सकृत् साम्यमनेकधा"। छेकश्छेकानुप्रासः। अनेकधेति स्वरूपतः क्रमतश्च। रसः सर इत्यादिक्रमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः। यथा "आदाय वकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान्। अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः"॥ अत्र गन्धानन्धीति संयुक्तयोः, कावेरीवारीत्यसंयुक्तयोः। पावनः पवन इति बहूनां व्यञ्जनानां सकृदावृत्तिः। छेको विदग्धः तत्प्रयोज्यत्वादेष छेकानुप्रासः। "अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा। एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते"॥ एकधा स्वरूपत एव न तु क्रमतोऽपि। अनेकधा स्वरूपतः क्रमतश्च। सकृदपीत्यपिशब्दादसकृदपि। यथा "उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः। नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः"। अत्र रसोल्लासैरमी इति रसयोरेकधैव साम्यम्। न तु तेनैव क्रमेणापि। द्वितीये पादे तु कलयोरसकृत् तेनैव क्रमेण च। प्रथमे एकस्य तकारस्य सकृत्। रसविषयव्यापारवती वर्णरचना वृत्तिस्तदनुगतत्वेन प्रकर्षेण न्यसनाद्वृत्त्यनुप्रासः। "उच्चार्य्यत्वाद्यदेकत्र स्थाने तालुरदादिके। सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते"॥ यथा "दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः। विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः"॥ अत्र 'जीवयन्तीति" "या इति" "जयिनीरिति" अत्र जकारयकारयोरेकत्र स्थाने तालौ उच्चार्य्यत्वात् सादृश्यम्। एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यम्। एष च सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः। "व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु। आवर्त्त्यतेऽन्त्य-

योज्यत्वादन्त्यानुप्रास एव तत्"॥ "यथावस्थमिति" यथा सम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम्। एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः। पादान्तगो यथा "केशः काशस्तबकविकासः कायः प्रकटितकरभविलासः। चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम्"॥ पदान्तगो यथा। "मन्दं हसन्तः पुलकं वहन्त इत्यादि। "शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः। लाटानुप्रास इत्युक्तोऽनुप्रासः पञ्चधा ततः" इति। यथा "स्मेर-राजीवनयने! नयने किं निमीलिते?। पश्य निर्जित-कन्दर्पं कन्दर्पवशगं प्रियम्॥ अत्र विभक्त्यर्थस्यापौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्म्मिरूपस्याभिन्नार्थत्वाल्ला-टानुप्रासत्वमेव। "नयने तस्यैव नयने" अत्र द्वितीय नयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्य्यमात्रेण भिन्नार्थः। यथा वा। "यस्य न सविधे दयिता दवदहन-स्तुहिनदीधितिस्तस्य। यस्य च सविधे दयिता दवदहन-स्तुहिनदीधितिस्तस्य"॥ अत्रानेकपदानां पौनरुक्त्यम्। एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रास" इति।

**अनुप्लव** पु० अनु–प्लु–अच्। सहाये, अनुचरे, दासे च। "सानुप्लवः प्रभुरपि क्षणदाचराणामिति" रघुः।

**अनुबन्ध** पु० अनु+बन्ध–यथायथं भावादौ घञ्। बन्धने, इच्छापूर्वकदोषविशेषाभ्यासे, "अनुबन्धादिकं दृष्ट्वा सर्वं कार्य्यं यथाक्रममिति" स्मृतिः। "अनुबन्धः पौनःपुन्येना-भिनिवेश" इति रघु०। शास्त्रस्यादौ वक्तव्येषु अधिकारि-विषयप्रयोजनसम्बन्धेषु, "अनुबन्धोनामविषयप्रयोजनाधिका-रिसम्बन्ध" इति "अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धै-स्तद्वत्तासिद्धेरिति च" वेदा०सा० "ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। ग्रन्थादौ तेन वक्तव्यः सम्बन्धः स प्रयो-जन" इत्युक्तेः विषयप्रयोजनादीनामारम्भप्रयोजकत्वात् तद्वत्त्वम्। क्वचित् पक्षे च अनुबध्यते अनेनेति करणे घञ्। मुख्यानुयायिनि अप्रधाने, बालकादौ प्रकृत-स्यानुवर्त्तने, संबन्धे, वातपित्तादिदोषाणामप्राधान्ये, प्रकृतिप्रत्ययागमादेशानां विकरणागमगुणवृद्ध्यादिकार्य्य-विशेषार्थमनुबध्यमाने परिनिष्पन्नपदकालेषु अश्रूयमाणतया नश्वरे इत्संज्ञतया लुप्ते वर्णादौ, "पदानिद्विद्विक-रणाद्यनुबन्धगणोदितम् कर्म्मोच्चारणमात्रेण सदृशत्वानु-बन्धत इति" कविकल्पद्रुमः। फलसाधने पुनःपुनरनु-ष्ठानाभ्यासे, "अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः। सत्त्वापराधौ चालोक्य दण्डं दण्ड्येषु पातयेदिति" मनुः। बन्धेऽपि मेदिनिः। आरम्भे, शब्दरत्ना०। अनु-सरणे "शान्तज्वरोऽपि शोध्यः स्यादनुबन्धभयाच्चर इति" सुश्रुतम्। सन्ततसम्बन्धे ( अविच्छेदे ) "सानुबन्धाः कथं न स्युः सम्पदो मे निरापद" इति रघुः। अनुबध्यते अनुरुध्यते कर्म्मणि घञ्। पश्चाद्भाविनि शुभाशुभे। "अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्" इति गीता पश्चात्सम्बन्धे च। "यदग्रे चानुबन्धे च सुखं मोहनमा-त्मन" इति गीता।

**अनुबन्धिन्** त्रि० अनुबध्नाति अनु+बन्ध–णिनि। सहचरे, अनुगते, अनुरोधिनि, व्यापके च। स्त्रियां ङीप्। "शुचा शुचानुबन्धिन्यास्तस्य सप्रसवा इव" इति रघुः। "अधश्च मूलान्यनुसन्ततानि कर्म्मानुबन्धीनि मनुष्यलोके" इति गीता। "तृष्णानुबन्धी तृष्णश्च सुगन्धो रोचनो मृदुरिति" "मेदःकषायैः खलु रोग एष सुदुस्तरो दर्भ-गणानुबन्धी" इति च सुश्रुतम्।

**अनुबन्धी** स्त्री अनुबध्यतेऽतिश्वासेन व्याप्रियतेऽनया अनु+बन्ध–घञ् गौरा० ङीष्। हिक्कारोगे, तृष्णायाञ्च।

**अनुबन्ध्य** त्रि०वधार्थं बन्धोऽनुबन्धः अनु+बन्ध-कर्म्मणि यत्। वधार्थं बध्ये गवादौ। "नानुबन्ध्यावधोऽपि वा। तयो-र्द्वारविभागश्च नैव संप्रति वर्त्तते" इति स्मृतिः।

**अनुबोध** पु० अनु+बुध–णिच्–घञ्। पूर्व्वलिप्तचन्दनादेर्गन्धो-द्दीपनार्थं पुनर्मर्द्दनादौ, पश्चाद्बोधे च।

**अनुब्राह्मण** न०ब्राह्मणं मन्त्रेतरवेदभागस्तत्सदृशम्। ब्राह्मण सदृशे ग्रन्थे। तदधीते वेद वा इनि। अनुब्राह्मणी ब्राह्मण-सदृशग्रन्थाध्यायिनि, तद्वेत्तरि च त्रि० स्त्रियां ङीप्।

**अनुभव** पु० अनु+भू–अप्। स्मृतिभिन्ने ज्ञाने। विषयानु-रूपभवनाद्बुद्धिवृत्तेरनुभवत्वम्। "वृत्तिसारूप्यमितरत्र" पात० सूत्रे, विषयानुरूपत्वं चित्तवृत्तेरभिहितम्। तथाहि यथा पयः प्रणाल्या क्षेत्रादिकं प्राप्य चतुरस्राद्या-कारेण परिणमते एवमेव इन्द्रियादिप्रणाल्याऽन्तःकरणं बहिर्निःसृत्य विषयाकारेण परिणमते तादृशपरिणाम-रूपवृत्त्या च विषयगतमज्ञानं निवारयतीति अन्तःकरणस्य विषयरूपानुरूपभवनात् अनुभवत्वम्। स्मृतौ तु विषय-सन्निकर्षाभावात् न विषयाकारताप्राप्तिरिति तद्भिन्ने ज्ञाने एवास्य प्रयोगोपाधिता इति सांख्यवेदान्तिमतम्। अनु-भवस्य प्रत्यक्षानुमानोपमानशाब्दभेदेन चतस्रो विधाः इति नैयायिकादयः। वेदान्तिनो मीमांसकाश्च अर्थापत्त्यनुप-लब्धिरूपमधिकं तद्भेदद्वयमुररीचक्रुः। वैशेषिकाः सौगताश्च

प्रत्यक्षानुमानरूपमेव अनुभवद्वयं स्वीचक्रुः अन्येषां सर्वेषामनयोरन्तर्भावात् । सांख्यादयः प्रत्यक्षानुमानशाब्दा एवेति भेदत्रयीमङ्गीचक्रुः । चार्वाकाः प्रत्यक्षमात्रमिति भेदः । "अनुभवं वचसा सखि लुम्पसीति" नैष० ।

**अनुभाव** पु० अनुभावयति उद्बोधयत्यनेन अनु+भू–णिच्–करणे–घञ् । कोषदण्डादिजाते राज्ञां तेजोविशेषे । सामर्थ्ये च । कर्त्तरि अच् । अलङ्कारशास्त्रप्रसिद्धे रसव्यञ्जके "भावं मनोगतं साक्षात् स्वगतं व्यञ्जयन्ति ये । तेऽनुभावा" इति ख्याताः, इत्युक्तलक्षणे भ्रूभङ्गादौ । "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथेति" सा०द० । अनुभावस्य लक्षणभेदादिकमुक्तं दर्प्पणे । "उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् । लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥ यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणैर्रामादेरन्तरुद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते स काव्यनाट्ययोः पुनरनुभावः । कः पुनरसावित्याह । "उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः । तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि" ॥ तद्रूपा अनुभावस्वरूपाः । तत्र च यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने तत्र तत्र दर्शितः । तत्र सात्त्विकाः । "विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः" । सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनाऽऽन्तरो धर्म्मः । "सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः" ॥ गोवलीवर्द्दन्यायेन इति शेषः । के ते इत्याह । स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ तत्र । स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः । वपुर्जलोद्गमः स्वेदो रतिघर्म्मश्रमादिभिः ॥ हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया । मदसंमदपीडाद्यैर्वैस्वर्य्यं गद्गदं विदुः ॥ रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः । विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ॥ अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् । प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः इति" ॥ "अनुभावविशेषात्तु सेनापरिगतैरिव" रघुः । तेजसि च । गुर्व्वीमरभिनिविष्टं लोकपालानुभावैरिति" रघुः । माहात्म्ये, "जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ इति" रघुः ।

**अनुभावक** त्रि० अनुभावयति बोधयति अनु–भू–णिच्–ण्वुल् । बोधके "यत्पदेन विना यस्यानुभावकता भवेत् साकाङ्क्षेति" भाषा० । "येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षेति" सिद्धान्तमुक्तावली ।

**अनुभाविन्** त्रि० अनु भवति अनु+भू–णिनि । साक्षात्कारादिकारके । "अनुभावी तु यः कश्चित् कुर्य्यात् साक्ष्यं विवादिनामिति" मनुः । अनु पश्चात् भवति । पश्चाज्जाते कनिष्ठादौ । "अनुभाविनां परिवापनमिति" आप०स्मृतिः । अनुपश्चाद्भवन्तीति अनुभाविनः कनिष्ठा इति रत्नाकरः "स्वागौचमनुभवन्तीति अनुभवकारका" इति शु०त०रघु० ।

**अनुभाषण** न० अनु सहितं भाषणम् । सहभाषणे ।

**अनुभू** स्त्री अनु+भू–क्विप् । अनुभवरूपे ज्ञानभेदे "अयमात्मा सर्व्वानुभूरिति" ह०उप० । "सत्यं ज्ञानमनन्तं ब्रह्मेति" श्रुत्या ब्रह्मणो ज्ञानरूपत्वात् सर्व्वज्ञानरूपत्वम् ।

**अनुभूत** त्रि० अनु+भू–कर्म्मणि क्त । अनुभवविषयीभूते पदार्थे अनु+भू–कर्त्तरि क्त । पश्चाज्जाते त्रि० ।

**अनुभूति** स्त्री अनु+भू–क्तिन् । अनुभवे तद्विवरणमनुभवशब्दे दृश्यम् । "अनुभूतिश्चतुर्विधा प्रत्यक्षमप्यनुमितिस्तथोपमितिशाब्दजे" इति भाषा० ।

**अनुभूतिप्रकाश** पु० अनुभूतेरनुभवस्य वेदान्तश्रवणजन्यस्य प्रकाशार्थं माधवाचार्य्यप्रणीते उपनिषत्तात्पर्य्यज्ञापके प्रकरणभेदे

**अनुमत** त्रि० अनु+मन–क्त । स्वयंप्रवृत्ते इदं क्रियतामिति प्रोत्साहनार्थमनुज्ञाते । अनुमोदिते च "कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकमिति" वेणी० । "गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि" इति मनुः । "सख्यस्विनीयानुमतो स्पृहावेति" च रघुः । "उभयानुमतः साक्षीति" स्मृतिः ।

**अनुमति** स्त्री अनु+मन–क्तिन् । अनुज्ञायाम् । "अनुमत्या व्ययेयादिति" स्मृतिः । अनुमन्यते कलाहीनत्वेऽपि पूर्णिमात्वेन कृतयागादिकरणायानुज्ञायते अस्याम् अधिकरणे क्तिन् । कलाहीनचन्द्रवत्यां शुक्लचतुर्दशीयुतपूर्णिमातिथौ । अनुमतो राकेति देवपत्न्याविति नैरुक्ताः पौर्णमास्याविति याज्ञिका या पूर्व्वा पौर्णमासी सानुमतिर्योत्तरा सा राकेति विज्ञायते । अनुमतिरनुमननात् । "अनुमतिराकासिनीवालीकुह्वयादय" इति का० १८,६,२१, कुहूँ "चैवानुमत्यै च प्राजापत्य एव चेति" मनुः ।

**अनुमन्तृ** त्रि० अनु+मन–तृच् । स्वयमुदासीने कार्य्यादौ प्रवृत्तस्यान्यस्योत्साहवर्द्धनार्थमनुज्ञाकर्त्तरि । "अनुमन्ता विशसिता नियन्ता क्रयविक्रयीति" मनुः "उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वर" इति गीता । "अनुमन्ता अनुमोदयितैव सन्निधिमात्रेणानुग्राहक" इति श्रीधरः ।

**अनुमन्त्रण** पु० अनु मन्त्रोच्चारणात् पश्चात् मन्त्रणम् मन्त्रेण

संस्कारादिकरणम् । मन्त्रोच्चारपूर्व्वके यागादिषु संस्कारभेदे "प्रयाजानुमन्त्रणमिति" कात्या० २,२.२ ।

**अनुमरण** न० अनु+मृ–ल्युट् । भर्त्तरि मृते तद्देहाप्राप्तौ तत्पादुकादिग्रहणेन पृथक्चितारोहणेन स्त्रीणां देहत्यागे । "भर्त्त्रनुमरणं काले याः कुर्व्वन्ति तथाविधाः । कामात् क्रोधात् भयाद्वापि सर्व्वाः पूताः भवन्ति ताः" इति स्मृतिः अनुपूर्व्वकमरणस्य मरणपश्चाम्मरणार्थकत्वेन सकर्म्मकत्वम् अतएव "भवता नानुमृतापि लभ्यते" इति रघौ कर्म्मणि क्तप्रयोगः । अनुमरणं च भर्त्तुः देशान्तरादिमरणे देहाद्यलाभे एव "देशान्तरे मृते पत्यौ साध्वी तत्पादुकाद्वयम् । निधायोरसि संशुद्धा प्रविशेज्जातवेदसमिति" स्मृतिः । तत्र क्षत्रियादीनामेवाधिकारो न विप्रायाः, यथोक्तम् । "पृथक् चितां समारुह्य न विप्रा गन्तुमर्हतीति" शु०त०स्मृतौ ।

**अनुमा** स्त्री अनु+मा–अङ् । परामर्शज्ञानाधीने (व्याप्तधूमादिलिङ्गविशिष्टज्ञानाधीने) ज्ञानभेदे यथा "पर्व्वतो वह्निमानित्यादि" तथाहि धूमादिहेतौ महानसादौ प्राक् भूयः सहचारदर्शनात् धूमत्ववह्नित्वसामान्यधर्म्मेण सकलवह्निधूमादिव्याप्तिनिश्चयः अनन्तरं देशान्तरं गतवतो वह्न्यर्थिनः पर्व्वतादौ धूमदर्शने सति तत्र वह्निव्याप्तिस्मृतिर्जायते एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकतया नियमेन, धूमदर्शनात् धूमगतायाः वह्नेर्व्याप्तेः स्मरणसम्भवात् । ततश्च वह्निव्याप्यधूमवान् अयं पर्व्वत इति निश्चयरूपपरामर्शेन तत्र वह्निमानयमिति निश्चिनोति सोऽयं निश्चयः अनुमितिरूपः अनुभवभेद इति । तत्र च धूमादिलिङ्गज्ञानमेव करणं नतु ज्ञायमानलिङ्गं करणमिति नव्यनैयायिकसिद्धान्तः प्राचीनमते ज्ञायमानलिङ्गमेवेति भेदः "अनुमायां ज्ञायमानं लिङ्गं तु करणं न हीति" भाषा० । "सोऽयं निर्व्विकल्पतार्थत्वाच्च प्रत्यक्षं न चानुमेति" स०द०प० ।

**अनुमातृ** त्रि० अनु+मा–तृच् । अनुमानकर्त्तरि "नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः" इति वाचस्पतिः ।

**अनुमान** न० अनु–मि–मा–वा भावादौ ल्युट् । व्याप्यस्य ज्ञानेन व्यापकस्य निश्चये, यथा वह्निर्धूमस्य व्यापक इति धूमस्तस्य व्याप्य इत्येवं तयोः भूयः सहचारं पाकस्थानादौ दृष्ट्वा पश्चात् पर्व्वतादौ उद्धूयमानशिखस्य धूमस्य दर्शने तत्र वह्निरस्तीति निश्चीयते । करणे ल्युट् । तद्धेतुभूते धूमादौ । "तच्चानुमानं त्रिविधमिति" चिन्तामणिः । श्रुतेरेव स्वतः प्रामाण्यं, यत्र श्रुतिः साक्षात् न श्रूयते तत्र स्मृतिवाक्यात् श्रुतिवाक्यमनुमीयते इति तल्लिङ्गमापकं स्मृतिवाक्यमप्यनुमानपदेनाभिधीयते इति मीमांसकाः । "विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानमिति जै०सू० । इयं स्मृतिः वेदमूलिका आप्तवाक्यत्वादित्येवमनुमानाकारः इति । "दृष्टमनुमानमाप्तवचनञ्च सर्व्वप्रमाणसिद्धत्वादिति सा०का० । "अतीन्द्रियस्य सिद्धिरनुमानादिति" सांख्य०सू० "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते" इति वाच० "प्रत्यक्षमनुमानं च शास्त्रञ्च विविधागममिति मनुः । "एवमनुमाने निरूपिते तस्मात् पुरुषधौरेयसिद्धिरिति" चिन्ता० "नानुमानं रसादीनामिति सा०द० "सपरिकरमनुमानं निरूप्येति" चिन्तामणिदीधितिः ।

**अनुमानचिन्तामणि** पु० गङ्गेशोपाध्यायकृते न्यायशास्त्रस्यानुमानतत्त्वज्ञापके प्रकरणभेदे । तत्र च आदौ अनुमितिस्वरूपादिनिरूपणं ततस्तत्कारणव्याप्तिज्ञानार्थं व्याप्तिनिरूपणम् ततोव्याप्तिग्रहोपायनिरूपणम् ततो व्याप्तिग्रहानुकूलतर्कनिरूपणम्, उक्तासु बह्वीषु व्याप्तिषु कथङ्कारं तासामनुगमस्तन्निरूपणम्" ततः व्याप्तिज्ञानोपायतया सामान्यलक्षणानिरूपणम् ततो हेतोः परिशुद्धिज्ञानार्थं उपाधिनिरूपणम् । ततोऽनुमित्यङ्गपक्षतानिरूपणम् परार्थानुमानस्य पञ्चावयवन्यायसाध्यतया तन्निरूपणम् । अनुमितौ परामर्शस्य ( साध्यव्याप्तिमद्धेतुविशिष्टज्ञानात्मकस्य ) स्वरूपादिनिरूपणम् ॥ ततोहेतुत्रैविध्यस्य ( केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकिरूपस्य ) निरूपणम् ततो वर्ज्जनीयतया हेतोर्दोषाणां ( हेत्वाभासानाम् ) निरूपणम् तत्रादौ सामान्यतो हेत्वाभासलक्षणम् ततः सव्यभिचारस्य, साधारणस्य, असाधारणस्य, अनुपसंहारिणः, असिद्धेश्च क्रमशः, ततो बाधस्य निरूपणम् इत्येतत्पर्य्यन्तं सपरिकरमनुमानं हेयतया तद्दोषांश्च निरूप्य तादृशानुमानेन ईश्वरस्य सिद्धिर्दर्शिता तस्याराधनसहकृतेन षोडशपदार्थतत्त्वज्ञानेनात्यन्तिकदुःखनिवृत्तिरूपापवर्गसिद्धिरित्येते पदार्थाः तत्रत्या अवधेयाः ।

**अनुमानदीधिति** स्त्री अनुमानरूपचिन्तामणेर्दीधितिरिव । रघुनाथशिरोमणिकृतायामनुमानचिन्तामणिव्याख्यायाम् ।

**अनुमार्ग** अव्य० मार्गे विभक्त्यर्थे याथार्थ्ये, पश्चादर्थे वा अव्ययी० । मार्गे इत्यर्थे, मार्गानुरूपे, मार्गस्य पश्चादर्थे च । "अनुमार्गागताया श्चेति" काद० ।

**अनुमाष** अव्य० माषे विभक्त्यर्थे अव्ययी० । माषे इत्यर्थे । परिमुखा० अञ् । आनुमाष्यः तद्भवादौ त्रि० ।

**अनुमास** अव्य० वीप्सार्थे अव्ययी० । प्रतिमासे, अनुमासे

भवः ठञ् । आनुमासिकः प्रतिमासभवे “पितृभ्यश्चाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्” इति मनुः ।

**अनुमित** त्रि० अनु+मि—कर्म्मणि क्त । कृतानुमाने अनुमानविषयीभूते । “अनुमितोऽपि हि वाष्पनिरोधनाद् व्यभिचचार न तापकरोऽनलः” इति नैष० ।

**अनुमिति** स्त्री अनु—मा—क्तिन् । अनुमाने व्याप्तिविशिष्टस्य पक्षधर्म्मताज्ञानाधीने अनुभवभेदे “स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेदिति” भाषा० । अनुमितिश्च द्विविधा स्वार्था परार्था च तत्र हेतौ व्याप्तिनिश्चये सति तस्य च पक्षे वृत्तित्वज्ञानात् उपादेयपदार्थग्रहणाय प्रवर्त्तिका यानुमितिः सा स्वार्था । विवदमानं प्रति कञ्चित्पदार्थं साधयितुं मध्यस्थाद्यवलम्बनेन प्रतिज्ञाहेतूदाहरणोपनयननिगमनरूपपञ्चावयवन्यायसाध्या परार्था ।

**अनुमित्सा** स्त्री अनु+मि—सन्—भावे अ । अनुमातुमिच्छायाम् सिषाधयिषायाम् । अनुमित्सायां हि सिद्धिसत्त्वेऽप्यनुमितिरुदेति तदभावे साध्यवत्तानिश्चयरूपसिद्धिसत्त्वे नानुमितिः । तत्रायं विशेषः सामानाधिकरण्येन सिद्धिसत्त्वेऽपि अवच्छेदावच्छेदेनानुमितिर्भवत्येव न तत्रानुमित्सापेक्षा तथा च अवच्छेदावच्छेदेन सिद्धिरेव अवच्छेदावच्छेदेन सामानाधिकरण्येन चानुमितिं प्रतिबध्नाति एवञ्च तत्रैव इच्छापेक्षेति । अतएव वाचस्पतिना “प्रत्यक्षपरिकल्पितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः” इत्युक्तम् ।

**अनुम्रृत** त्रि० अनु पश्चात् शोकादिना म्रृतः । शोकादिना म्रृतस्य पश्चात् म्रृते । अनु+म्रृ—कर्म्मणि क्त । यस्य पश्चात् म्रियते तस्मिन् “भवता नानुम्रृताऽपि लभ्यते” इति रघुः ।

**अनुमेय** त्रि० अनुमीयतेऽसौ अनु+मि—कर्म्मणि यत् । अनुमित्यर्हे, अनुमातुं योग्ये “एतावता नन्वनुमेयशोभीति” कुमा० । “फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव” इति रघुः ।

**अनुमोद** पु० अनु+मुद—णिच्—घञ् । प्रकृतकर्म्मणि प्रवृत्तिविघाताकरणेनान्यप्रोत्साहानुकूलव्यापारे, । त्वया यत् कृतं तन्मेऽनुमतमित्याद्यभिलापव्यङ्ग्ये । भावे ल्युट् । तत्रैवार्थे न० ।

**अनुमोदित** त्रि० अनु+मुद—णिच्—कर्म्मणि क्त । कृतानुमोदने स्वानुमतत्वज्ञापनेन प्रोत्साहिते “भवता यद्व्यवसितं तन्मेऽप्यनुमोदितम्” । प्रार्थ्यमानोऽर्थिना यत्र ब्रूयौ नैव निषिद्धतः । दानकालेऽथवा तूष्णीं स्थितः, सोऽर्थोऽनुमोदित इति (प्रा०वि०) उक्तेऽर्थे च ।

**अनुयव** अव्य० यवे विभक्त्यर्थे अव्ययी० । यवे इत्यर्थे । परिसुषा० भवादौ अञ् । आनुयव्यम् तत्रभवे पदार्थे त्रि० ।

**अनुयाज** पु० अनु+यज—घञ् यज्ञाङ्गत्वात् कुत्वाभावः । दर्शपौर्णमासाङ्गेषु प्रयाजादिषु पञ्चसु यागेषु । “यजतिषु ये यजामहे नानुयाजेषु” इति श्रुतिः । “प्रयाजान्मे अनुयाजांश्च केवलानिति” ऋ० १०,५१,८, अनुयाजानुमन्त्रणम् का० ३,५,१४ ।

**अनुयात** त्रि० अनु या—कर्त्तरि क्तः । पश्चाद्गन्तरि, सहगन्तरि च कर्म्मणि क्त यस्य पश्चाद्गम्यते तादृशे जने ।

**अनुयात्र** अव्य० यात्रायां विभक्त्यर्थे पश्चादर्थे वा अव्ययी० । यात्रायामित्यर्थे, यात्रायाः पश्चाद्भावे च । अनुगता अनुरूपीकृता यात्रा येन प्रा० ब० । अनुयायिवर्गे । “त्यक्तभोगस्य मे राजन् ! वने वन्येन जीवतः । किं कार्य्यमनुयात्रेणेति” रामा० अनुगता यात्रा प्रा० स० । पश्चाद्यात्रायां स्त्री । तत्प्रयोजनमस्येत्यर्थे ठक् । आनुयात्रिकः अनुचरे सेवके त्रि० ।

**अनुयात्रिक** त्रि० अनुयात्रा पश्चाद् यात्रा अनुगमनमस्त्यस्य ठन् । पश्चाद्गन्तरि अनुचरे “सर्व्वानेवानुयात्रिकवर्गान् त्वया सहेति” शकु० ।

**अनुयायिन्** त्रि० अनुयाति पश्चात् गच्छति अनु+या—णिनि स्त्रियां ङीप् । पश्चाद्गन्तरि, सेवके, अनुचरे “व्यपेधि शेषोऽप्यनुयायिवर्गः” इति रघुः सदृशे, तुल्यस्यानुगन्तरि शिष्ये च ।

**अनुयुक्त** त्रि० अनु+युज—क्त । जिज्ञासिते पदार्थे । कृतप्रश्ने, यं प्रति कस्यचित् पदार्थस्य जिज्ञासार्थं प्रश्नः क्रियते तस्मिंश्च । “स चानुयुक्तो व्याचष्टामिति खण्डनखाद्यम् ।

**अनुयुग** अव्य० युगे विभ० अव्ययी० । युग इत्यर्थे । तत्र भवः परिमुखा० अञ् । आनुयुग्यः अनुयुगभवे त्रि० ।

**अनुयूप** अव्य० यूपे विभ० अव्ययी० । “यूप इत्यर्थे । तत्र भवः परिमुखा० अञ् । आनुयूप्यः यूपभवे त्रि० ।

**अनुयोक्तृ** त्रि० अनु+युज—तृच् स्त्रियां ङीप् । प्रश्नकारके । भृतकाध्यापके च ।

**अनुयोग** पु० अनुयुज्यते कथनाय नियुज्यते अनु+युज—घञ् । प्रश्ने । सति हि प्रश्ने, पृष्टः कथनाय प्रवर्त्तते । “निष्ठाद्यानुयोगे चेति” पा० । अनुपूर्व्वात् युजेः प्रश्नार्थकता । तेन “त्वया कियद्देति तमन्वयुङ्क्त” इति रघौ प्रश्नार्थकतया निर्द्देशः ।

**अनुयोगकृत्** पु० अनुयोगं प्रश्नविषयसंशयं कृन्तति कृत छेदने क्विप् । आचार्य्ये । कृ—क्विप् । प्रश्नके त्रि० ।

**अनुयोगिन्** त्रि॰ अनुयुङ्क्ते अनु+युज–घिनुण् । प्रश्नकारके ।

**अनुयोज्य** त्रि॰ अनुयुज्यते नियुज्यते "अनु+युज–शक्यार्थे आवश्यकार्थे वा ण्यत् । प्रश्नार्हे अवश्यनियोज्ये, त्वया कथमित्थं कृतमित्याक्षेपेण कृतप्रश्ने, आज्ञाकारके, दासादौ च "वासवानुयोज्यो दुष्मन्तः प्रणमति" शकु॰ ।

**अनुरक्त** त्रि॰ अनु+रन्ज क्त । अनुरागयुक्ते, अनुगतः रक्तं रागम् अत्या॰स॰ । प्राप्तरक्तवर्णे ।

**अनुरक्ति** स्त्री अनु+रन्ज–क्तिन् । अनुरागे ।

**अनुरञ्जक** त्रि॰ अनुरञ्जयति अनुरक्तं करोति अनु+रन्ज–णिच्–ण्वुल् । अनुरागयुक्तकारके ।

**अनुरञ्जन** न॰ अनु+रन्ज–णिच्–भावे ल्युट् । अनुरागयुक्तकरणे "विश्वेषामनुरञ्जनेन जनयन्नानन्दमिति" रामा॰ । कर्त्तरि ल्यु । अनुरञ्जके त्रि॰ ।

**अनुरञ्जित** त्रि॰अनु+रन्ज–णिच्–कर्म्मणि क्त । यस्य अनुरागः कृतः तस्मिन्, अनुरक्तीकृते जने ।

**अनुरणन** अनु+रण–ल्युट् । घण्टादिशब्दज प्रतिध्वन्यात्मके शब्दसन्ताने व्यञ्जनरूपशब्दशक्तिभेदे, ध्वनिभेदे च ।

**अनुरत** त्रि॰ अनु+रम–कर्त्तरि क्त । अनुरक्ते, अभिरते च ।

**अनुरति** स्त्री अनु+रम–भावे क्तिन् । अनुरागे ।

**अनुरस** त्रि॰ अनुगतो रसम् । माधुर्य्यादिरसानुगते "भूमिजं गुरु नातिवातलं भूमितस्यानुरस" इति "मधुरानुरसं रूक्षं लवणानुरसं लघु । नार्य्यास्तु मधुरं स्निग्धं कषायानुरसं हिममिति" च सुश्रुतम् ।

**अनुरहस** त्रि॰ अनुगतं रहः अत्या॰स॰ अच्समा॰ । निर्ज्जनदेशानुगते ।

**अनुराग** पु॰ अनु+रन्ज+घञ् । आत्मप्रीतौ, स्नेहे च । अनुरूपो रागः प्रा॰स॰ । अनुरूपरागे । "अनुरागवन्तमपि लोचनयोरिति" माघः "पश्चादस्तु शब्दः स्यादनुरागज" इत्यमरः । "प्रियानुरागस्य मनःसमुन्नतेरिति" रघुः । अनुगतो रागं गतिस॰ । प्राप्तलौहित्यवर्णे त्रि॰ ।

**अनुरागिन्** त्रि॰ अनु+रन्ज–घिनुण् कुत्वम् । अनुरागयुक्ते स्त्रियां ङीप् । "वेश्याश्चानुरागिणीमिति" सा॰द॰

**अनुरात्र** अव्य॰ रात्रौ विभ॰ अव्ययी॰ अच्समा॰। रात्र्यर्थे, प्रतिरात्रे च । "तस्मात् स्त्र्यनुरात्रं पत्याविच्छते" इति श्रुतिः । अनुगतो रात्रिम् । रात्र्यनुगते त्रि॰ ।

**अनुराधा** स्त्री॰ अनुगता राधां विशाखाम् अत्या॰स॰ । सप्तविंशतिधाविभक्तस्य राशिचक्रस्य सप्तदशभागात्मके नक्षत्रभेदे "रेवत्युत्तररोहिणीमृगशिरोमूलानुराधामघेति" ज्योति॰। "राधे विशाखे सुहवानुराधा ज्येष्ठा सुनक्षत्रैरिति" श्रुतिः । "शिखिगुणरसेन्द्रियानलशशिविषयगुणर्त्तुपञ्चवसुपक्षाः । विषयैकचन्द्रभूतार्णवाग्निरुद्राश्विवसुदहनाः । भूतशतपक्षवसवो द्वात्रिंशच्चेति तारकामानम् । क्रमशोऽश्विन्यादीनां कालस्ताराप्रमाणेन । नक्षत्रजसदृशे फलमस्तैन्तारकामितैः सदसत् । दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्यः" इति वृ॰उक्तेस्तस्याः चतुस्तारात्मकत्वम् । "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः । योन्यर्य्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राश्च । शक्रो निर्ऋतिस्तोयं विश्वे देवा हरिर्वसुर्वरुणः । अजपादोऽहिर्बुध्न्यः पूषा चेतीश्वरा भानाम्" इति बृहत्संहितोक्तेस्तस्या मित्रदेवताकत्वम् । तस्य च योगतारा "ज्येष्ठाश्रवणमैत्राणां वार्हस्पत्यस्य मध्यमा" इति सूर्य्यसि॰ उक्तेर्मध्यमा तारा । तत्र भवः अणो लुक् "लुक्तद्धितलुकीति" पा॰ स्त्रीप्रत्ययस्य लुक् । अनुराधस्तत्र जाते त्रि॰ । नक्षत्रेण युक्तः काल इत्यणस्तु लुप् "लुपि युक्तवद्व्यक्तिवचनमिति" पा॰ अनुराधा अनुराधानक्षत्रयुक्तकाले ततः सप्तम्यर्थे तृतीयेति भेदः । पृ॰ दीर्घः । अनूराधाप्यत्र ।

**अनुरुद्ध**–त्रि अनु+रुध–कर्म्मणि क्त । अपेक्षिते ।

**अनुरुध्** त्रि॰अनु+रुध–क्विप् । अनुरोद्धरि अपेक्षके । कर्म्मणि क्विपि वेदे उपसर्गदीर्घः । अनुरुद्धे । "आश्विनपूर्व्वास्वपरा अनूरुद्ध ऋ॰ २,५५,५, "अनूरुद्ध अनुरुद्धमिति" भा॰ ।

**अनुरूप** अव्य॰ रूपस्य सादृश्ये योग्यत्वे वा अव्ययी॰ । रूपस्य सादृश्ये, योग्यतायाञ्च । अर्श आद्यचि । तद्वति त्रि॰ । "अथानुरूपाभिनिवेशतोषिणेति" कुमा॰ । "सत्वानुरूपा सर्व्वस्य श्रद्धा भवति भारत" गीता । द्वादशाहसाध्ये यागे वक्ष्यमाणगतानां त्र्यहाणां तृचानां मध्ये मध्यमे तृचे । "स्तोत्रियानुरूपौ तृचौ भवतः एषवृन्तभूता भवन्ति तत्र उत्तमः पर्य्यास" इति ता॰ब्रा॰। प्राक्तनानां वक्ष्यमाणगतानां त्र्यहाणां तृचानां स्तोत्रियः, अनुरूपः, पर्य्यासश्चेति त्रीणि नामानीति भा॰ ।

**अनुरोध** पु॰ अनु+रुध–घञ् । अनुसरणे, आराध्यादेरिष्टसम्पादनेच्छायाञ्च । "मित्रस्यानुरोधेन द्विविधं स्मृतमासनमिति" "नानुरोधोऽस्त्यनध्याये" इति च मनुः ।

**अनुरोधिन्** त्रि॰अनु+रुध–णिनि। अपेक्षके । स्त्रियां ङीप्। "पतिव्रतानां समयानुरोधिनीति" रामा॰ । [भाषणे ।

**अनुलाप** पु॰ अनुवीप्सायां वारंवारं लप्यते लप–घञ् । मुहु-

**अनुलिप्त** त्रि॰ अनु+लिप–क्त । गन्धादिना कृतानुलेपे

"चन्दनागुरुकर्पूरकुङ्कुमोशीरपत्रकैः अनुलिप्तो नरैर्भक्त्या हरिरिष्टं प्रयच्छतीति" पुरा० ।

**अनुलेप** पु० अनु+लिप–भावे घञ् । चन्दनादिमर्द्दने । करणे घञ् । अनुलेपसाधने चन्दनादौ ।

**अनुलेपक** त्रि० अनुलिम्पति अनु+लिप–ण्वुल् । चन्दनादिभिः स्वदेहदेशाङ्गाद्यनुलेपकारके । स्त्रियां टाप् । तस्याः भर्थं महिष्या० अण् । आनुलेपिकम् तद्धर्म्ये त्रि० ।

**अनुलेपन** न० अनु+लिप–भावे ल्युट् । चन्दनादिमर्दने "धात्रीफलं तथा दद्यादनुलेपनकारणादिति" पुरा० । करणे ल्युट् । अनुलेपसाधने चन्दनादौ द्रव्ये ।

**अनुलेपित** त्रि०अनु+लिप–णिच्–कर्मणि क्त । "अनुलिप्तीकृते

**अनुलेपिन्** त्रि० अनुलिम्पति अनु+लिप–णिनि । अनुलेपके

**अनुलोम** पु० यथाक्रमे अव्ययी० अच्समा० । यथाक्रमे । "अनुलोमविलोमाभ्यां मातृकार्णान् जपेद्बुध इति तन्त्र० "तत्र प्रतिलोममालिम्पेच्चानुलोममिति" सुश्रुतम् अनुगतः लोम आनुकूल्यम् रोम वा प्रा०स० । आनुकूल्यप्राप्ते, यथाक्रमप्राप्ते च त्रि० "सवर्णासु पुत्राः सवर्णा भवन्ति अनुलोमजा मातृवर्णा" इति विष्णुस० अनुलोमं तटं वेलं प्रतिलोमं कर्षति सि०कौ० । अनुगतरोमे च । "अनुलोमाः सुलोमाश्च रुचिरा रोमराजय" इति ।

**अनुलोमज** पु०स्त्री० अनुलोमेन यथाक्रमेण जातः जन–ड । परिणीतक्षत्रियादिस्त्रीषु विप्रादिभ्य उत्कृष्टेभ्यो वर्णेभ्यो जाते मूर्द्धाभिषिक्तादौ सङ्कीर्णवर्णे । अनुलोमजाश्च "विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशःस्त्रियाम् । अम्बष्ठः, शूद्र्यां निषादजातिः पारशवोऽपि वा" "वैश्याशूद्र्योस्तु राजन्यात्, माहिष्योग्रौ सुतौ स्मृतौ, वैश्यात्तु करणः शूद्र्यां, विन्नास्वेष विधिः स्मृत" इति च याज्ञ०स० ।

**अनुलोमजन्मन्** पु०स्त्री० अनुलोमं पितृवर्णानुक्रमेण जन्म यस्य । अनुलोमजाते मूर्द्धावसिक्तादौ । स्त्रियां डाप् । "अन्येऽनुलोमजन्मानः प्रतिलोमभवा अपीति" काशी० ।

**अनुवंश** अव्य० वंशे विभक्त्यर्थे अव्ययी० । वंशे इत्यर्थे तत्र भवः परिमुखा० ञ्य । आनुवंश्यस्तत्र भवे त्रि० ।

**अनुवक्तृ** त्रि० अनुवक्ति गुरुमुखात् श्रुत्वा तदनुरूपं वदति अनु+वच–तृच् । गुरूच्चारितानुरूपपाठके । स्त्रियां ङीप् ।

**अनुवक्र** त्रि० अनुक्रमेण वक्रः । अतिवक्रे "यस्य वक्रानुवक्राख्या" इति सुश्रुतम् अतिवक्रत्वञ्च ग्रहाणाम् "अतिवक्रा नगाद्दश" इति स्वर्य्याक्रान्तराश्यपेक्षया सप्ताष्टमस्थानस्थितौ भवति ।

**अनुवचन** न० अनुरूपं वचनम् प्रा०स० । अनुरूपकथने "तमेतं ब्राह्मणाविविदिषन्ति वेदानुवचनेन" इति "विप्रश्चोर्वेदानुवचनमिति" च श्रुतिः ।

**अनुवत्सर** पु० अनुकूलो वत्सरो दानादिविशेषाय । "शकाङ्कात् पञ्चभिः शेषात् समाद्यादिषु वत्सराः । सम्परीदानुपूर्व्वाश्च तथोदापूर्व्वका मता" इत्युक्ते वत्सरभेदे । "संवत्सरे तथा दानं तिलस्य तु महाफलम् । परिपूर्व्वे तथा दानं वस्त्राणाञ्च द्विजोत्तम ! । इदापूर्व्वे च वस्त्राणां धान्यानाञ्चानुपूर्व्वके उदासंवत्सरे दानं रजतस्य महाफलमिति" विष्णु०ध०पुरा० । अनुवर्षादयोऽप्यत्र ।

**अनुवर्त्तन** न०अनु+वृत–ल्युट् । अनुगमने, अनुसरणे, व्याकरणादौ पूर्व्वस्थलस्थितशब्दस्योत्तरस्थलेऽन्वयार्थमनुसरणे च ।

**अनुवर्त्तिन्** त्रि०अनु+वृत–णिनि । पश्चाद्गामिनि अनुयायिनि च स्त्रियां ङीप् । "सशरीरा गता स्वर्गं भर्त्तारमनुवर्त्तिनी" इति रामा० ।

**अनुवाक** पु० अनूच्यते अनु+वच–घञ् कुत्वम् । मानस्तूक्ते ऋग्विशेषे, ऋग्यजुःसमूहे, गन्धनाम्ना ख्याते वेदांशे । "अग्निरेकाक्षरेणेत्यनुवाकं द्वादशवत् हुत्वेति" कात्या० १४,५,२६, "चतुःकण्डिकात्मकमनुवाकं द्वादशवदिति" वेददीपः । "अध्यायानुवाकयोर्लुक्" पा० विमुक्तशब्दोऽस्मिन्नस्य अण् तस्य वा लुक् । वैमुक्तो विमुक्तो वा अध्यायः अनुवाको वा ।

**अनुवाक्या** स्त्री अनु+वच–ण्यत् कुत्वम् । ऋत्विग्भेदः प्रयाक्ता तत्माख्यायां देवताह्वानसाधने ऋचि । "पुरोऽनुवाक्या याज्या वेति" यजु० "द्वे ऋचौ सुराग्रहणार्थे याज्यानुवाक्ये प्रथमानुवाक्या, सुतमित्येति याज्येति" वेददीपः । "पुरोऽनुवाक्या याज्या च शस्येति" ह०उप० । पुरोऽनुवाक्या प्राक्प्रयोगकालाद् याः प्रयुज्यन्ते ऋचः सा ऋग्जातिः पुरोऽनुवाक्योच्यते इति भा० ।

**अनुवाच्** पु० अनुवाचयति अनु+वच–णिच्–क्विप् । अनुवाचके अध्यापके ।

**अनुवाचन** न०अनु+वच–णिच्–ल्युट् । अध्यापने । तत्प्रयोजनमस्य अनुप्रव० छ । अनुवाचनीयः अध्यापके त्रि० ।

**अनुवात** पु० अनुगतो वातः । शिष्यादिदेशात् गुर्वादिदेशगन्तरि वायौ "प्रतिवातेऽनुवाते च नासीत गुरुणा सहेति" मनुः ।

**अनुवाद** पु० अनु+वद–घञ् । विधिप्राप्तस्य वाक्यान्तरेण कथने यथा अग्निहोत्रं जुहोतीति वाक्येन प्राप्तस्य होमस्य

दध्ना जुहोतीति वाक्येन पुनरनुवादेन दधिकरणकत्व-मात्रं तत्र विधेयम्। तत्र होमस्यानुवादः एवमन्यत्राप्यूह्यम् अनुवादः पूर्व्वस्येति का०४,२,१८, "य इष्ट्येत्यनेन वाक्येन पौर्णमास्याममावस्यायां वा विकृतीनामनुष्ठानमुच्यते तच्च प्रकृतितः प्राप्तमेव अतः कारणात् य इष्ट्येत्यनुवाद इति तद्भा०। अनुवादश्च त्रिविध भूतार्थानुवादः स्तुत्यर्थानुवादः गुणानुवादश्चेति। तत्र सदेव सौम्येदमग्र आसीदित्यादौ भूतार्थानुवादः। "वायुर्वै क्षेपिष्ठा देवतेत्यादौ स्तुत्यर्थानुवादः। वायव्यं श्वेतं छागमालभेतेत्यादौ प्राप्ताया वायुदेवतायाः स्तुत्यर्थत्वात् तस्य स्तुत्यर्थानुवादत्वम्। अग्निहोत्रं जुहोतीति प्राप्तस्याग्निहोत्रहोमस्य गुणविधानार्थं प्रवृत्तं दध्ना जुहोतीत्यादि गुणानुवादः। एवमन्यान्यप्युदाहार्य्याणि। अनुलक्षकथने। "क उत्तमःश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नादिति" भाग० "सिद्धोपदेशे च "अनुवादे चरणानामिति" पा०। "सिद्धोपदेशे" इति सि०कौ०।

**अनुवादक** त्रि० अनुवदति अनु+वद–ण्वुल्। अनुवादकारके अनुवदनशीले च।

**अनुवादिन्** त्रि० अनुवदति अनु+वद–णिनि। अनुवादकारके, अनुवदनशीले, युक्तगीतानुवादिनि च स्त्रियां ङीप्।

**अनुवाद्य** त्रि० अनु+वद–ण्यत्। उद्देश्ये प्राप्तावपि किञ्चिद्विधानार्थमनुकीर्त्तनीये। "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदिति वृद्धाः तथा च। पर्वतो वह्निमानित्येव प्रयोक्तव्यं न वैपरीत्येन, तथा प्रयोगे तु आलङ्कारिकैः वाक्यगतविधेयाविमर्शदोषो भवतीति प्रतिपादितम् यथा "न्यक्कारो ह्ययमेव मे यदरयः" इति वाक्ये अयमेव न्यक्कार इति प्रयोक्तव्ये तद्वैपरीत्येन प्रयोगात्तथात्वम्। अतएव "वृद्धिरादैच्" इति पा० सूत्रे आदैच् वृद्धिसंज्ञः स्यादित्यर्थके वृद्धेर्विधेयत्वेन पूर्व्वनिर्देशावश्यम्भावेऽपि वृद्धिशब्दस्य मङ्गलार्थत्वेन प्राक्प्रयोगो भाष्यादौ समर्थितः यथा "पूर्व्वोच्चारितः" संज्ञी परोच्चारितः संज्ञेत्याक्षिप्य "एतदेकमाचार्य्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्य्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषाणि च अध्येतारश्च वृद्धियुक्ता यथा स्युरित्यनेन"। "माङ्गलिको मङ्गलप्रयोजनः। महतोऽर्थतः एकैकं सूत्रं शास्त्रमिति शास्त्रौघस्येत्युक्तम्। मङ्गलादीनीत्यादिना सप्रयोजनं श्लोकप्रयोजनञ्चोक्तम्। प्रथन्ते विस्तृतानि भवन्ति तेन समाप्तिरर्थाक्षिप्तेति" भा०उद्यो०।

**अनुवासन** न० अनु+वास–सौरभ्ये ल्युट्। धूपादिभिः सुरभीकरणे, वैद्योक्ते स्नेहाद्यैः वस्तिकर्म्मणि च। "द्विधा वस्तिः परिज्ञेयो निरूहश्चानुवासनम्। कषायाद्यैर्निरूहः स्यात् स्नेहाद्यैरनुवासनम्" इति वैद्यकम्। अनुवसति, अनुवासरं दीयते वा पृ०। सुश्रुतोक्ते अनुवासनद्रव्ये पु०। तत्र यथाप्रमाणगुणविहितः स्नेहवस्तिविकल्पोऽनुवासनः पादावकृष्टः। अनुवसन्नपि न दुष्यत्यनुदिवसं वा दीयत इत्यनुवासनः। तस्यापि विकल्पोऽर्द्धमात्रावकृष्टोऽपरिहार्य्यो मात्रावस्तिरिति"। "निरूहः शोधनो लेखी स्नेहनो बृंहणो मतः। निरूहशोधितान् मार्गान् सम्यक् स्नेहोऽनुगच्छति। अपेतसर्वदोषासु नाडीष्विव वहज्जलम्। सर्वदोषहरत्वाच्च शरीरस्य च जीवनः। तस्माद्धि शुद्धदेहस्य स्नेहवस्तिर्विधीयते" इति। "तत्रोन्मादभयशोकपिपासारोचकाजीर्णार्शःपाण्डुरोगभ्रममदमूर्च्छाच्छर्दि-कुष्ठ-मेहोदर-स्थौल्यश्वासकासकण्ठशोषशोफोपसृष्टक्षतक्षीणचतुर्म्मासगर्भिणी दुर्बलाग्न्यतृष्णा बालवृद्धौ च वातरोगादृते क्षीणा नानुवास्या नास्थापयितव्याः उदरी च प्रमेही च कुष्ठी स्थूलश्च मानवः। असाध्यता विकाराणां स्यादेषामनुवासनात्" इति च सुश्रुतम्। अजादिवस्तिचर्म्मघनवस्त्रादिनिर्म्मितेन (पिचकारीति) प्रसिद्धयन्त्रेण धातुवैषम्यदोषनाशाय लिङ्गद्वारेण योनिद्वारेण वा दीयमानं स्नेहादिद्रव्यमनुवासन इति वैद्यकप्रसिद्धिः। अधिकं वस्तिकर्म्मशब्दे वक्ष्यते। अनुवासनं प्रयोजनमस्य अनुप्रवच० छ। अनुवासनीयः अनुवासनहेतौ त्रि०।

**अनुवासित** त्रि० अनु–वास–क्त। सुरभीकृते, वस्तिकर्म्मणा चिकित्सिते च।

**अनुवास्य** त्रि० अनु+वस–कर्म्मणि यत्। सुरभीकार्य्ये वस्तिकर्म्मणा चिकित्स्ये च। "अवश्यं स्थापनीयाश्च नानुवास्या कथञ्चनेति" सुश्रुतम्।

**अनुविधायिन्** त्रि० अनु+विधत्ते अनु+वि+धा–णिनि। पश्चाद्विधायिनि, अनुगते च। "गुणानां तदन्वयव्यतिरेकानुविधायित्वमिति" सा०द०।

**अनुविद्ध** त्रि० अनु+व्यध–क्त। संसृष्टे। "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्ध इवार्थो हि सर्वः शब्देन भासते" इति वाक्यप०। "कीटानुविद्धरत्नादिसाधारण्येन काव्यता। दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुट" इति सा०द०। [आवन्त्याविति" भा०भी०प०।

**अनुविन्ध्य** पु० अवन्तिदेशीये नृपतिभेदे "विन्ध्यानुविन्ध्या-

**अनुवृत्** त्रि॰ अनु पश्चात् वर्त्तते अनु+वृत–क्विप्। पश्चाद्वर्त्तिनि पश्चाद्भाविनि अनुगते च "अनुवृदस्त्वनुवृते" इति ता॰ब्रा॰।

**अनुवृत्त** त्रि॰ अनु+वृत–क्त। अनुगते, पूर्व्वस्थलादपरस्थले आकाङ्क्षापूरणार्थम् अन्विते पदादौ, अनुक्रमेण वृत्ततामाप्ते क्रमशः वर्त्तुलाकारे। अनुगतो वृत्तं शीलम् अत्या॰स॰। शीलानुगते त्रि॰।

**अनुवृत्ति** स्त्री अनु+वृत–क्तिन्। अनुसरणे, सेवने, पूर्वस्थलादुत्तरस्थले आकाङ्क्षापूरणार्थमनुसरणे च। "कुर्य्याद्दर्शिवाणिज्यशुल्कशालानुवृत्तिभिः कृतोपकारादाप्तञ्च राजसं समुदाहृतमिति" नारदः। "अनुवृत्तिः सेवेति" रघु॰। "अनुवृत्तिं ध्रुवं तेऽद्य कुर्वन्त्यन्यमहीक्षितामिति" देवी॰ तत्सत्त्वे तत्सत्त्वरूपे अन्वये, समन्वये च। एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमिति छा॰ उप॰भा॰। "जन्माद्यस्य यतोऽन्वयादिति" भागव॰। "अन्वयशब्देनानुवृत्तिरिति" श्रीधरः नह्यनवबुद्धस्वभावा भिषजः स्वस्थानुवृत्तिं रोगनिग्रहणञ्च कर्त्तुं समर्था इति सुश्रुतम् "यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परेति" सा॰द॰। दोषः दोषा च तदनुवृत्तिः सेवा अनुसरणञ्चेति तदर्थः।

**अनुवेध** पु॰ अनु+विध–घञ्। संसर्गे। "नहि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशा" इति सा॰द॰।

**अनुवेल** न॰ वीप्सार्थे अव्ययी॰। प्रतिसमये अनुक्षणे "इति स्म पृच्छत्यनुवेलमादृत" इति रघुः। अर्श्चआदि॰ अस्त्यर्थे अच्। तद्वत्ति त्रि॰।

**अनुवेल्लित** न॰ अनु+वेल्ल–क्त। सुश्रुतोक्ते व्रणक्षेपनबन्धभेदे। बन्धाश्च "कोशदामस्वस्तिकानुवेल्लितप्रतोलीमण्डलस्थगिकायमकखट्वाचीनविबन्धवितानगोफणा पञ्चाङ्गी चेति चतुर्दश बन्धविशेषाः तेषां नामभिरेवाकृतयः प्रायेण व्याख्याता" इति सुश्रुतोक्ताः वेदितव्याः। तत्र अनुवेल्लितं तु शाखासु इति वैद्यकप्रसिद्धिः।

**अनुवेश** पु॰ अनु+विश–घञ्। ज्येष्ठनातिक्रमेण कनिष्ठस्य विवाहे "यवीयसोऽनुवेशो हि ज्येष्ठस्य विधिलोपकः" इति भार॰।

**अनुवेश्य** त्रि॰ अनुक्रमेण वेशमर्हति यत्। प्रतिवेश्यानन्तरवासिनि। "प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे" इति मनुः। "अनुवेश्यः प्रातिवेश्यानन्तरस्थवासीति कुल्लू॰।

**अनुव्य** त्रि॰ अनुव्ययति अनुगच्छति अनु+व्ये–क। अनुगते ततो देवा अनुव्यमिवासुः का॰ १,२,५, अनुव्यम् अनुगमनं व्यगभूतिं "माम्रा इव बभूवुरिति" तद्भा॰।

**अनुव्याख्यान** न॰ अनुरूपं व्याख्यानम् प्रा॰स॰। मन्त्रादीनामनुरूपार्थप्रकाशके व्याख्याने। [कथने च।

**अनुव्याहार** पु॰ अनु+वि+आ+हृ–घञ्। अनुवादे, सकृ-

**अनुव्रजन** न॰ अनु+व्रज+भावे ल्युट्। अनुगमने अनुव्रजनं च गच्छतोऽतिथिस्निग्धादेः जलसमीपपर्य्यन्तानुधावनम् तदैवोपमाविधया वर्णितं नैषधे "वनान्तपर्य्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नथ तीर्थहेतुपथे। न्यवर्त्ति दृष्टिप्रकरैः पुरौकसामनुव्रजद्बन्धुसमाजबन्धुभिरिति"।

**अनुव्रज्या** स्त्री अनु+व्रज–क्यप्। अनुसरणादिरूपे सेवने। "अब्राह्मणादध्ययनमापत्काले विधीयते। अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोरिति" मनुः।

**अनुव्रत** त्रि॰ अनुकूलं व्रतं कर्म्म यस्य। अनुकूलकर्म्मयुक्ते। "अनुव्रताय रन्धयन्नपव्रतायेति ऋ॰ १,५,८, अनुव्रताय अनुकूलकर्म्मणे इति भा॰। वैश्याः क्षत्रमनुव्रताः रामा॰

**अनुशतिकादि** न॰ ईव॰ पाणिनीयगणपाठोक्ते ञिति णिति किति च तद्धिते परे द्विपदयोराद्यचोवृद्धिनिमित्तीभूते शब्दसमूहे, स च गणः। अनुशतिक, अनुहोड़, अनुसंवरण, अनुसंवत्सर, अङ्गारवेणु, असिहत्य, अस्यहत्य, अस्यहेति, वध्योग, पुष्करसद्, अनुहरत्, कुरुकत, कुरुपञ्चाल, उदकशुद्ध, इहलोक, परलोक, सर्व्वलोक, सर्व्वपुरुष, सर्व्वभूमि, प्रयोग, परस्त्री, (राजपुरुषात् ष्यञि) सूत्रनड़, आकृतिगणोऽयम्। तेनाभिगम, अधिभूत, अधिदेव, चतुर्विद्या, इत्यादयोऽन्येऽपि।

**अनुशय** पु॰ अनु+शीङ्–अच्। अत्यन्तद्वेषे, पश्चात्तापे, पूर्व्ववैरे च। अनुगतः शयं हस्तं गतिस॰ हस्तानुगते त्रि॰। तत्र क्रीतादिपदार्थविशेषेणानुशयस्वरूपादि नारदेनोक्तम्। "क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते। क्रीतानुशय इत्येतद्विवादपदमुच्यते"। तत्र च यस्मिन्नहनि पण्यं क्रीतन्तस्मिन्नेवाह्नि तदविकृतं प्रत्यर्पणीयमिति तेनैवोक्तम्। "क्रीत्वा मूल्येन यत् पण्यं दुःक्रीतं मन्यते क्रयी। विक्रेतुः प्रतिदेयन्तत्तस्मिन्नेवाह्न्यविक्षतमिति"। द्वितीयादिदिने तु प्रत्यर्पणे विशेषस्तेनैवोक्तः। "द्वितीयेऽह्नि ददत् क्रेता मूल्यात्त्रिंशांशमाहरेत्। द्विगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तदिति"। परतोऽनुशयो न कर्त्तव्य इत्यर्थः। एतच्च वीजादिव्यतिरिक्तोपभोगादिविनश्वरवस्तुविषयम्। वीजादिक्रये पुनरन्य एव प्रत्यर्पणेऽवधिरित्याह। "दशैक-

पञ्चसप्ताहमासत्र्यहार्द्धमासिकम् । बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम्" । बीजं व्रीह्यादिबीजम् । अयो लौहम् । वाह्यो बलीवर्द्दादिः । रत्नं मुक्ताप्रवालादि । स्त्री दासी । दोह्यं महिष्यादि । पुमान् दासः । एषां बीजादीनां यथाक्रमेण दशाहादिकः परीक्षाकालो विज्ञेयः । परीक्ष्यमाणे च बीजादौ यद्यसम्यग्बुद्ध्याऽनुशयो भवति तदा दशाहाभ्यन्तर एव क्रयनिवृत्तिः । न पुनरूर्द्धमित्युपदेशप्रयोजनम् । यत्तु मनुवचनम् । "क्रीत्वा विक्रीय वा किञ्चित् यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात् तद्द्रव्यं दद्याच्चैवाददीत वेति" । तदुक्तलौहादिव्यतिरिक्तोपभोगादिविनश्वरवस्त्रहलयानशयनासनादिविषयम् । सर्वञ्चैतदपरीक्षितक्रीतविषयम् । यत् पुनः परीक्षितञ्च पुनः प्रत्यर्पणीयमिति समयं कृत्वा क्रीतं तद्विक्रेत्रे न प्रत्यर्पणीयम् तदुक्तम् । "क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति" मिता० । ततश्च क्रीतस्य, विक्रीतस्य, अन्यथा वा कृतस्य वस्तुनः, असमीचीनत्वबुद्ध्या यः पश्चात्तापः सोऽनुशय इति बोध्यम् । "भुक्तकर्म्मणोऽवशेषे च "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवमिति" शा० सू० स्वर्गार्थकर्म्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेहवत् यथा हि स्नेहभाण्डं विरिच्यमानं न सर्वात्मना विरिच्यते भाण्डानुसार्य्येव कश्चित् स्नेहशेषोऽवतिष्ठते तथानुशयोऽपीति" भा० । "तत्र दृष्टं प्रत्यक्षं श्रुतिः सा हि सानुशयानामेवावरोहं दर्शयति यथा "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं चाण्डालयोनिं वेति" । चरणशब्देनानुशयः (शेषः) सूच्यते । दृश्यमानं जन्मनैव प्राणिगणेषु उच्चावचरूपउपभोगः प्रविभज्यमान आकस्मिकत्वासम्भवात् अनुशयसद्भावं सूचयति अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुकत्वस्य सामान्यतः शास्त्रेणावगमितत्वादिति च शा०भा० ।

**अनुशयाना** स्त्री अनु+शीङ्—शानच् । परकीयनायिकाभेदे । तद्विवरणं नायिकाशब्दे दृश्यम् । अनुतापकर्त्तरि त्रि० ।

**अनुशयिन्** पु० अनु+शीङ्—इनि । यावत्कर्मक्षयं चन्द्रलोके स्थित्वा सावशेषे एव कर्माणि पश्चात्तापान्विततया भूमिलोके जन्मग्रहणायागन्तुं प्रवृत्ते जीवे । "यो यो ह्यन्नमत्ति अनुशयिभिः तदंशेन भावितत्वात् संस्कृतत्वाच्च संश्लिष्टरेतःसिगिति" छा०भा० । तस्य रेतःसिगाकृत्या पूर्व्वकृत्वात् तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भवतीति आनन्द० । पश्चात्तापयुते त्रि० । पुरुषस्य अनुशयत एव भुक्तभोगायाः प्रकृतेस्त्यागः श्रुतावप्युक्तः । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति "यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथेति" भाग० ।

**अनुशयी** स्त्री अनुशय्यते पश्चात्तप्यतेऽस्याम् । अनु+शीङ्—अधिकरणे अच् गौरा० ङीष् । पादरोगभेदे, "हरेदनुशयीं वैद्यः क्रियया श्लेष्मविद्रधेरिति" भावप्रकाशः ।

**अनुशर** पु० अनुशृणाति अनु+शॄ—कर्त्तरि—अच् । राक्षसे ।

**अनुशासन** न० अनुशिष्यते याथार्थ्येन निरूप्यते अनु+शास—भावे ल्युट् । याथार्थ्यख्यापने, निरूपणे, कर्त्तव्योपदेशे च । "स्वे देशे प्रतिज्ञाते पञ्चकं शतमर्हति । अपह्नुते तद्द्विगुणं तन्मनोरनुशासनमिति" मनुः अनुशासनविरोधादिति वृद्धाः । करणे ल्युट् । तत्प्रतिपादके शास्त्रे यथा "अथ शब्दानुशासनम्" । 'अनुशिष्यन्तेऽसाधुशब्देभ्यो विविच्य बोध्यन्तेऽनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भाष्यप्रदीपोद्द्योतः । 'अथशब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यमिति भाष्यम्" । "अथ योगानुशासनमिति" पातञ्जलसूत्रम् योगोऽनुशिष्यतेऽनेन तादृशं शास्त्रमधिकृतमिति तदर्थः उभयत्र अथशब्दस्याधिकारार्थत्वात्तथात्वम् "नामलिङ्गानुशासनमित्यमरः" अनुशासनं धर्मनिरूपणं प्रयोजनमस्य ठक् आनुशासनिकम् । महाभारतान्तर्गतानुशासनपर्व्वणि ।

**अनुशासितृ** त्रि० अनुशास्ति याथार्थ्येन कर्त्तव्यमुपदिशति अनु+शास—तृच् । कर्त्तव्योपदेशके । स्त्रियां ङीप् । औणा०तृन् । अनुशास्तापि तत्रार्थे त्रि० स्त्रियां ङीप् ।

**अनुशासिन्** त्रि० अनु+शास—णिनि । कर्त्तव्योपदेशके दण्डयितरि च 'एवस्तेनानुशासी राजेति" विक्र० ।

**अनुशिष्ट** त्रि० अनु+शास—कर्म्मणि क्त । कृतानुशासने, यस्य हितोपदेशः क्रियते तस्मिन्, दण्डिते च ।

**अनुशीत** अव्य० शीते विभ० अव्ययी० । शीते इत्यर्थे, परिमुखा० भवादौ ञ्य । आनुशीत्यः तद्भवादौ त्रि० ।

**अनुशीलन** न० अनुक्षणं शीलनं प्रा०स० । सतताभ्यासे अनवरताचरणे "आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमेति" भक्तिरसा० कृष्णस्य तद्गुणकीर्त्तनस्यानुशीलनं तदर्थः ।

**अनुशोक** पु० अनु+शुच–घञ् । पश्चाच्छोके अनुशोचने ।

**अनुशोचन** न० अनु+शुच–ल्युट् । अनुशोके । "दृष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात् । श्लाघानुशोचनाभ्यां च भग्नतेजो विभिद्यते" इति शु०त० देवलः । अनुशोचनं धनव्ययेन पश्चात्ताप इति रघुनन्दनः । स्वार्थे णिचि युच् । अनुशोचना तत्रैवार्थे स्त्री ।

**अनुशोचनीय** त्रि० अनुशुच्यते अनु+शुच–कर्म्मणि अनीयर् । अनुशोचनार्हे यमुद्दिश्य शोक क्रियते तस्मिन् ।

**अनुशो(शु)चित** न० अनु+शुच–भावे क्त उदुपधत्वात् वा न कित्त्वम् । अनुशोचने । अनुशोचितुमारब्धः आरम्भार्थे क्त वा गुणः । कृतशोचनारम्भे त्रि० ।

**अनुश्लोक** न० अनुश्लोक्यते गीयते अनु+श्लोक–कर्म्मणि अच् । महाव्रते गेये सामभेदे, "श्लोकेन स्तुवते पुरस्तात् सदसः, अनुश्लोकेन पश्चादिति" ता०ब्रा० । तच्च वेगानग्रन्थे ११.२ प्रपा० आद्यम् साम । [नुषक्ता" इति सि०कौ० ।

**अनुषक्त** त्रि० अनु+सन्ज–क्त । संलग्ने । "येऽत्र नकारा-

**अनुषङ्ग** पु० अनु+सन्ज–घञ् । दयायां दयया हि अन्यदुःखेनान्यदुःखसम्बन्धात्तथात्वम् । प्रसङ्गे, प्रसङ्गश्च अन्योद्देशेन प्रवृत्तस्य तन्नान्तरीयकविधयान्यसिद्धिः यथा "विप्रवधप्रायश्चित्तेन तन्नान्तरीयकविधया अवगोरदण्डनिपातनप्रायश्चित्तसिद्धिः । "अयं केचिदुपात्तस्य दुरितस्य प्रचक्षते । अनुत्पत्तिं तथाचान्ये प्रत्यवायस्य मन्वते । नित्यक्रियां तथाचान्ये ह्यनुषङ्गफलां श्रुतिमिति" प्रा०त० आप०स्तु० । अनुषङ्गेण फलं यस्या इति तदर्थः । एकत्र वाक्ये श्रुतस्य शब्दस्यान्यत्र वाक्येऽन्वयार्थमाकर्षणे । यथा "नित्यक्रियां तथा चान्ये" इति वाक्ये पूर्व्ववाक्योपात्तस्य मन्वते इति क्रियापदस्यान्वयार्थमाकर्षणम् । तथा पञ्चावयवन्यायवाक्येषु उपनयवाक्यस्थस्य अयमिति पदस्य निगमनवाक्येऽन्वयार्थमाकर्षणम् । यथा वह्निव्याप्यो धूमो धूमवांश्चायमिति उपनयवाक्यस्थस्य अयमिति शब्दस्य तस्माद्वह्निमानिति वाक्येऽन्वयेन अयं वह्निमानिति बोधः । अतएव शास्त्रकारैः पूर्व्वत्र श्रुतशब्दस्योत्तरत्रानुकर्षणबोधनाय एतत्पदमनुषञ्जनीयमित्युक्तम् ।

**अनुषङ्गिन्** त्रि० अनुलग्नं सजते अनु+सन्ज घिनुण् । अनुलग्नं प्रसक्ते । "सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्व्वं पूर्व्वं गुरुतरं विद्याद्व्यसनमात्मन" इति मनुः । अनुषङ्गिणः प्रायेणावस्थितस्येति" कुल्लू० । व्यापके च । "विभुतानुषङ्गि भयमेति जन इति "किरा० विभुतायाः प्रभुत्वस्यानुषङ्गि व्यापकमिति" तट्टीकायां मल्लिनाथः ।

**अनुषक्** अव्य० अनु+सन्ज–क्विप् । आनुपूर्व्व्यां । "अरादेराकृतिगणत्वादयं तद्गणीयः" इति मनो० । पृ० दीर्घः । आनुषगप्यत्रार्थे अव्य० ।

**अनुषिक्त** त्रि० अनु+सिच–क्त । सततसिक्ते पश्चात्सिक्ते च ।

**अनुषेचन** न० अनु+सिच–भावे ल्युट् । अनुवापसेचने, पश्चात्सेचने च ।

**अनुष्टुति** स्त्री अनु+स्तु–क्तिन् । अनुक्रमेण स्तुतौ "यः पूर्व्व्यमनुष्टुतिमीशे इति ऋ० ८,६८, अनुष्टुतिम् अनुक्रमेण क्रियमाणां स्तुतिमिति भाष्यम् ।

**अनुष्टुब्गर्भा** स्त्री ६त० । "आद्यः पञ्चाक्षरः" पादः उत्तरेऽष्टाक्षरास्त्रयः अनुष्टुब्गर्भैव सोष्णिक्तल्लक्षणे छन्दोभेदे । "अद्यः पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा" इति का०सर्वा०

**अनुषण्ड** अव्य० षण्डः पद्मसमूहस्तत्र विभ० अव्ययी० । षण्डे इत्यर्थे । तत्र जातादि कच्छादि० अण् । आनुषण्डस्तज्जाते त्रि० ।

**अनुष्टुभ्** स्त्री अनु+स्तुभ–क्विप् षत्वम् । सरस्वत्याम्, अष्टाक्षरपादके, छन्दोभेदे वाचि च । अनुष्टुप्छन्द इति य० १५,५, "अनु निरन्तरं स्तुभ्यतेऽनया अनुष्टुप् वाक्" वागेव संस्तुप् छन्दः "वागनुष्टुप् छन्द" इति श्रुतेरिति" वेददी० । "अनुष्टोभनादनुष्टुबिति" ब्राह्मणे निरुक्तिः । "गायत्र्युष्णिगनुष्टुप् चेति छन्द० । अनुष्टुप् च द्विविधा यथा कथञ्चिदष्टाक्षरपादिका जातिः, विशेषनियमयुक्ताक्षरकं छन्दश्च । तत्र जातेः २५६ भेदाः । "पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठञ्च पादानां शेषेष्वनियमो मत" इति छन्दोमञ्जर्य्युक्तलक्षणं द्वितीयम् । तस्य च पञ्चमलघुत्वं व्यभिचरति च "विशदकाशेनाहत" इति माघः । तस्य च मालाष्टकरूपत्वं यथा "प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् । लोकेऽनुष्टुबिति ख्यातम् तस्याष्टाक्षरता मतेति छन्दोम० । अतएव वृत्तरत्नाकरे "वक्त्रं नाद्यान्नसौ स्यामब्धेर्योऽनुष्टुभि ख्यातमिति" वक्त्रनामतोक्ता । वर्णवृत्तस्य तु वितानमिति नाम यथोक्तं वृत्तरत्नाकरे "वितानमाभ्यां यदन्यदिति ।" आभ्यां समानिकाप्रमाणिकाभ्यामन्यत् सर्वमित्यर्थः । "अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्याद्युपक्रम्य चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि, ऊनाधिकेनैकेन निचृद्भूरिजौ, द्वाभ्यां विराट्स्वराजौ, पादपूरणार्थं तु क्षिप्रसंयोगैकाक्षरीभावात् व्यूहेदिति "अनादेशेऽष्टाक्षराः पादाश्चतुष्पदाश्चैव इति

तृतीयमनुष्टुभिति” च कात्या० सर्वानुक्र० “शुचिमनु-ष्टिाहा प्राणमनुष्टुभेति” यजु० ।

**अनुष्ठ** त्रि० अनुक्रमेण तिष्ठति अनु+स्था—क षत्वम् । अनु-क्रमेण स्थातरि “हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते इति ऋ० १,५४,१०, अनुष्ठाः अनुक्रमेण तिष्ठन्तीरिति भाष्यम् । भावे अङ् टाप् । अनुष्ठाने स्त्री ।

**अनुष्ठातृ** त्रि० अनु+स्था—तृच् स्त्रियां ङीप् । विधानकर्त्तरि “शास्त्रदेशितं फलमनुष्ठातरीति” न्यायवाक्यम् ।

**अनुष्ठान** न० अनु+स्था—भावे ल्युट् षत्वम् । विहितकर्म्मा-दिकरणे । चतुर्व्वर्गलाभादिकमभिधाय “एतच्चतुर्विधं विद्यात् पुरुषार्थप्रयोजनम् । अस्य नित्यमनुष्ठानं सम्यक् कुर्य्यादत-न्द्रित” इति मनुराह स्म “उपरुध्यते तपोऽनुष्ठानम्” शकु० ।

**अनुष्ठित** त्रि० अनु+स्था—कर्म्मणि क्त । विधानेन कृते धर्म्मकार्य्यादौ “कृच्छ्राभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितमिति” भा० व०प० ।

**अनुष्ठु** अव्य० अनु+स्था—कु । सम्यगित्यर्थे “पार्थिवानाश्रृतून् प्रासादिदधावनुष्ठु इति ऋ० १,९५,२, अनुष्ठु इत्येतद-व्ययं सम्यक्समानार्थं सुष्ठु यथेति भा० ।

**अनुष्ठेय** त्रि० अनु+स्था—कर्म्मणि यत् । विधेये । “कृच्छ्राभि-र्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितमिति” भा०व०प० ।

**अनुष्ण** त्रि० न उष्णः न०त० । उष्णभिन्ने शीतपदार्थे “अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्मविदिति” मनुः । न उष्णः विरोधे न०त० । अलसे । अलसो हि शीतबाधाभावेऽपि शीतबाधामभिनयन् कर्त्तव्यकर्म्मणि जड़ इव भवति दक्षस्तु शीतेऽपि तदगणयित्वा कर्त्तव्य-करणाय अजड़ इव सन् व्याप्रियते इति तयोरुष्णानु-ष्णता । अत्र कारिणार्थे कनि अनुष्णकोऽपि । उत्पले न० । उष्णभिन्ने शीतले स्पर्शे पु० “अनुष्णाशीतपाकज” इति भाषा० । अनुष्णः स्पर्शश्च पृथिवीसमीरणयोः, तयोरौष्ण्योपलब्धिस्तु तेजःसंयोगविशेषादिति बोध्यम् ।

**अनुष्णगु** पु० अनुष्णाः शीतला गावः किरणाः अस्य । चन्द्रे अनुष्णकिरणादयोऽप्यत्र पु० ।

**अनुष्णवल्लिका** स्त्री अनुष्णा शीतला वल्लीव इवार्थे कनि टापि अत इत्त्वम् । नीलदूर्व्वायाम् ।

**अनुसंवत्सर** अव्य० संवत्सरे विभक्त्य० वीप्सायां वा अव्ययी० । वत्सरे इत्यर्थे, प्रतिवर्षे च । तत्र भवादौ ठञ् अनुशतिका० उभयपदवृद्धिः । आनुसांवत्सरिकः प्रतिवर्षभवे त्रि० ।

**अनुसंवरण** न० अनु+सम्+वृ—ल्युट् । अनुक्रमेण गोपने । अनुसंवरणाय हितम् ठञ् अनुशतिका० द्विपदवृद्धिः । आनुसांवरणिकः तद्धितादौ त्रि० ।

**अनुसंहित** त्रि० अनु+सम्+धा—कर्म्मणि क्त । कृतानुसन्धाने यस्य ज्ञानार्थमन्वेषणादिकम् क्रियते तस्मिन् । संहितायां विभ० अव्ययी० । संहितायामित्यर्थे । “अर्धर्चे प्राहुर-नुसंहितमिति ऋग्वेदप्रातिशाख्यम् ।

**अनुसन्तति** स्त्री अनुक्रमेण सन्ततिः । अविच्छेदधारायाम् “अनुसन्ततिपातिनः पटवमिति” माघः ।

**अनुसन्धान** न० अनु+सम्+धाञ्—ल्युट् । अन्वेषणे, चिन्तने च

**अनुसन्धेय** त्रि० अनु+सम्+धा कर्म्मणि अर्हाद्यर्थे वा यत् । अनुसन्धातुं योग्ये, अनुसन्धातव्ये च ।

**अनुसर** त्रि० अनुसरति पश्चाद् गच्छति । अनु+सृ—ट स्त्रियां ङीप् । अनुचरे, सहगन्तरि च ।

**अनुसरण** न० अनु+सृ—ल्युट् । अनुगमने, सदृशीकरणे च ।

**अनुसवन** अव्य० सवनस्य पश्चात् अव्ययी० । सवनस्य (स्नानस्य) पश्चात् सवने, “अनुसवनमेनमालभेरन्निति का० २५,१२,२६, एनं ज्वराद्यभिभूतं दीक्षितं सर्वे ऋत्विजः सवनान्तेषु स्पृशेयुरिति तद्व्याख्या ।

**अनुसाय** अव्य० साये विभ० अव्ययी० । सायाह्ने इत्यर्थे तत्रभवः पारिरुक्षा० ञ्य । आनुसाय्यः तत्रभवे त्रि० ।

**अनुसार** पु० अनु+सृ—घञ् । अनुसरणे, “धर्मशास्त्रानु-सारेण क्रोधलोभविवर्जितः” इति या० स्मृतिः । “कृतानु-सारादधिका व्यतिरिक्ता न सिध्यतीति” मनुः ।

**अनुसारणा** स्त्री अनु+सृ+णिच्-युच् सारणा अनुगत्य सारणा चालना । अनुधावने, अपसारणायाम्, भीतिहेतोरनुधावने हि भीतस्य चालना भवतीति तस्य सरणहेतुत्वम् “तस्मात् पलायमानानां कुर्य्याच्चाप्यनुसारणाम्” भा०शा०प० ।

**अनुसारिन्** त्रि० अनुसरति पश्चाद् गच्छति अनु+सृ—णिनि । अनुगन्तरि । “कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके । मृगानुसारिणं साक्षात् पश्यामीव पिनाकिन”मिति शकु० । “यदा यदा सतां हानिर्वेदमार्गानुसारिणामिति” पुरा० ।

**अनुसूया** स्त्री अनुसूयते अनु+सू—क्यप् । शकुन्तलासहचरी-भेदे शकु० । अनुसूतेत्येके ।

**अनुसृति** स्त्री अनु+सृ—क्तिन् । अनुसरणे । अनुसरति पुंसा-न्तरं कर्त्तरि संज्ञायां क्तिच् । कुलटायां स्त्रियां, स्त्री । तस्याः अपत्यं मतान्तरे कल्याण्यादि० ढक् इनङ् च । आनुसृतिनेयः तदपत्ये पु०स्त्री० ।

**अनुसृष्टि** स्त्री अनु+सृज—क्तिन् । अनुसर्जने । कर्त्तरि संज्ञायां

क्तिच्। प्रत्युत्पन्नमतौ स्त्रियां स्त्री। तस्याः अपत्यम् कल्याण्यादि० ढक् इनङ् च। आनुसृष्टिनेयः तदपत्ये पु०स्त्री०।

**अनुसेविन्** त्रि० अनुवर्ण सेवते अनु+सेव–णिनि स्त्रियां ङीप्। सततसेविनि "क्रूरकर्म्मानुसेविनीमिति" रामा०।

**अनुस्तरण** त्रि० अनुस्तीर्य्यते अनु+स्तृ–कर्म्मे ल्युट्। आच्छादने चर्म्मादौ स्त्रियां ङीप्। "अनुस्तरण्या वपामुत्खिद्य शिरोमुखं प्रच्छादयेदिति" ता०ब्रा०। तत्साधने स्त्रीगव्यां स्त्री। "अनुस्तरणीं गामजां वैकवर्णां कृष्णामेके सव्ये बाहौ बध्नीति" श्रुतिः। "सैव गौः सूतं दीक्षितमनुस्तृतत्वाद्विवितत्वाच्चानुस्तरणीत्युच्यते" इति तद्विरक्तब्राह्मणम्। अनुतीर्य्यते वैतरणी नदी अनया अनु+तॄ–करणे ल्युट् पृ० सुट्। वैतरणीनद्युत्तारिकायां गवि स्त्री। "तस्मात् पुरुषाय पुरुषानुस्तरणी क्रियते इति" श्रुतिः।

**अनुस्मृति** स्त्री अनु+स्मृ–क्तिन्। अनुरूपचिन्तने आलम्बनसङ्ग्रहतया चिन्तने "अनुस्मृतेर्बादरिरिति" शा०सू०। प्रादेशमात्रत्वेन अयम् (परमेश्वरः) अप्रादेशमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रप्रत्ययवत्त्वाय। एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्य्योमन्यते इति भा०। "प्रादेशमात्रोऽह्यपरोऽपि हृद इत्यादौ श्रुतौ प्रादेशमात्रश्रवणमनुस्मृत्यर्थमित्यत्र तत्तात्पर्य्यम्।

**अनुस्यूत** त्रि० अनु+सिव–क्त ऊठ्। ग्रथिते, सततसंबद्धे च। "सन्तुलवत् सर्वानुस्यूतेति" ति०त०रघुनन्दनः।

**अनुसमाहार** पु० अनु+सम्+आ+हृ–घञ्। अनुसन्धाने "अनुसमाहरतीत्यस्यानुसन्धत्ते" इति भाष्ये व्याख्यानात् तथात्वम्।

**अनुस्वार** पु०स्वृ–घञ् उदात्तादिस्वरवत्त्वात् स्वराः स्वरवर्णाएव स्वाराः अनुगतः स्वारान् अत्या० स०। स्वराश्रयेण उच्चार्य्यमाणे बिन्दुरेखया व्यज्यमानेऽनुनासिके वर्णभेदे। "अनुस्वारो विसर्गश्चे"त्युपक्रम्य "आश्रयस्थानभागिन" इत्युक्तेस्तस्य तथात्वम्। सानुस्वारो विसर्गी च दीर्घश्चैव गुरुर्भवेत् छन्दोम०। "अनुस्वारो विसर्गश्च ⁺क⁺पौ चापि पराश्रितौ। अयोगवाहा विज्ञेया आश्रयस्थानभागिन" इति शिक्षा।

**अनुहरण** न० अनु+हृ–ल्युट्। देशभाषाचेष्टादिना सदृशीकरणे सादृश्यधर्म्माविष्करणे च।

**अनुहार** पु० अनु+हृ–घञ्। अनुकरणे पश्चाद्धरणे च।

**अनुहार्य्य** त्रि० अनु+हृ–ण्यत्। सदृशीकार्य्ये।

**अनुहृत** त्रि० अनु+हृ–क्त। अनुकृते सदृशीकृते।

**अनुहोड** त्रि० होडे विभक्त्य० अव्ययी०। होडे इत्यर्थे। तत्र भवादौ ठक् अनुशतिका० द्विपदवृद्धिः। आनुहौडिकः। होडभवे त्रि०।

**अनूक** पु० अनु+उच–समवाये क नि० कुत्वम्। गतजन्मनि। सुशीले न०। पृष्ठाधारे पृष्ठास्थिभेदे पु०। यत्र ग्रीवाः अवद्याति नांसयोर्नानूकस्य नापरसक्थ्योरिति" शत० ३,८,२,२७, भाष्यकृता तथैव व्याख्यातम्। चयनसाधने यज्ञिये इष्टकोपधायकपात्रभेदे न०। "अयुग्मागणमध्यमानूके" इति कात्या० १६,७,२२। अयुग्मो य इष्टकागणः तासां मध्यमाऽनूके उपधेया इति। "एका च" कात्या० १६,७,२३। याश्चेष्टका साप्यनूक एव। "अभितो युग्माः २४, अनूकमभितो युग्मा चतुर्विंशत्या इति तद्वृ०। "साध्यमनूकं वक्तादिति" इत्युक्तं स्थितोक्तं पुरुषलक्षणभेदे न०।

**अनूकाश** पु० अनु+काश–घञ् उप० दीर्घः। अधस्तनदेहादिप्रकाशे"प्रकाशेनान्तरमनूकाशेन बाह्यमिति" य० २५,२ "अनूकाशेनाधस्तनदेहकान्त्येति" वेददीपः।

**अनूचान** पु० अनु+वच–कान नि०। शिक्षादिषडङ्गसहितवेदाध्ययनकारिणि, वेदार्थानुवचनसमर्थे च। "इदमूचुरनूचानाः प्रीतिकण्टकितत्वच" इति कुमा० "सह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एवाय" छा० उप०। "बालाकिर्हानूचानमना आसेति" छा० उ०।

**अनूच्य** त्रि० अनूच्यते अनु+वच–क्यप्। अनुवाच्ये शास्त्रे "पश्चादरण्येऽनूच्यमिति" "विमुखेनारण्येऽनूच्यमिति" च का० १८,४२०,२४।

**अनूढ** त्रि० अनु+वह–क्त। अविवाहिते। "परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहा"दित्यमरः। स्त्रियां ङीप्।

**अनूति** स्त्री वे–क्तिन् अभावे न०त०। गमनाभावे। "अनूती अनूती हिरिशिप्रःसत्वा" इति ऋ० ६,२९,६। "अनूत्या अनागमनेनेति" भा०।

**अनूदित** त्रि० अनु+वद–क्त। यस्य तुल्यार्थकभाषान्तरेणानुवादः कृतः, तस्मिन् पदार्थे अनुवादविषये च।

**अनूद्य** अव्य० अनु+वद–ल्यप्। अनुवादं कृत्वेत्यर्थे। अनु+वद–क्यप्। अनूद्ये अनुवादार्हे।

**अनून** त्रि०न ऊनः न०त०। परिपूर्णे, समग्रे, अहीने च। "अनूनराजस्य गुणैरनूनामिति" रघुः। नूनं निश्चितं न०त०। अनिश्चिते। स्वार्थे कन् तत्रैवार्थे।

**अनूप** त्रि॰ अनुगता आपो यत्र ७त॰ अच्समा॰ अत ऊत्त्वम् । जलप्राये स्थाने । "शकटः शाकिनी गावो जालमस्यन्दनं वनम् । अनूपं पर्वतो राजा दुर्भिक्षे नव वृत्तय" इति आह्नि॰ त॰ छागलेयः । तत्स्थे सर्व्वदावासिनि महिषे पु॰ । "बहुम्बुर्बहुवृक्षश्च वातश्लेष्मामयान्वितः । देशोऽनूप इति ख्यात" इत्युक्ते "अनूपसर" इति प्रसिद्धे देशभेदे पु॰। "अनूपराजस्य गुणैरनूनामिति" रघुः।

**अनूपज** न॰ अनूपे जलप्राये देशे जायते जन–ड ७त॰ । (आदा) इति ख्याते आर्द्रके, तस्य जलप्रायोद्भवत्वात्तथात्वम् । तत्स्थानजातमात्रे त्रि॰ ।

**अनूप्य** त्रि॰ अनूपदेशे भवः यत् । अनुगतजलदेशभवे "शञ्च आपो धन्वन्याः शमनः सन्त्वनूप्या" इति स्नानमन्त्रः ।

**अनूबन्ध्य** त्रि॰ अनु+बन्ध–ण्यत् उपस॰ दीर्घः । वधार्थं बन्धनीये यज्ञिये पशौ, "वशामनूबन्ध्यामालभेत" इति शत॰ २.४,४,१४, "अनुबन्ध्ययेष्टेति" आश्व॰ । [याजार्थे ।

**अनूयाज** पु॰ अनु+यज घञ् उपसर्गस्य वा दीर्घः । अनु-

**अनूरु** पु॰ न स्तः ऊरू यस्य ब॰ । सूर्य्यसारथौ विनताज्येष्ठपुत्रे अरुणे । तस्य अपूर्ण एव गर्भे मात्रा अण्डस्य स्फोटनादूरुप्रभृत्यङ्गविकलत्वम् तत्कथा भा॰आदिप॰ । यथा "ततः पुत्रार्थिनी देवी व्रीड़िता च तपस्विनी । अण्डं बिभेद विनता तत्र पुत्रमपश्यत । पूर्व्वार्द्धकायसम्पन्नमितरेणाप्रकाशता । स पुत्रः क्रोधसंरब्धः शशापैनामिति श्रुतिः । योऽहमेवं कृतो मातस्त्वया लोभपरीतया । शरीरेणासमग्रेण तस्माद्दासी भविष्यसि । पञ्चवर्षशतान्यस्या यया विस्पर्द्धसे सह । एष च त्वां सुतो मातर्दासीत्वान्मोचयिष्यति । यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् । न करिष्यस्यनङ्गं वा व्यङ्गं वापि यशस्विनम् । प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया । विशिष्टं बलमीप्सन्त्या पञ्चवर्षशतात्परः । एवं शप्त्वा ततः पुत्रो विनतामन्तरीक्षगः । अरुणो दृश्यते ब्रह्मन् प्रभातसमये सदा । आदित्यरथमध्यास्ते सारथ्यं समकल्पयदिति"। 'गतं तिरश्चीनमनूरुसारथेरिति" माघः । [तत्कथाऽनुपदमुक्ता ।

**अनूरुसारथि** पु॰ अनूरुः सारथिः रथनियन्ता यस्य । सूर्य्ये

**अनूराध** त्रि॰ अनु+राध–घञ् उपस॰दी॰ । अनुराधनीये "इन्द्रं वयमनूराधं हवामहे" इति अथ॰ १९,१५,२ ।

**अनूच** पु॰ नास्ति अध्ययनतया ऋक् यस्य अच् समासान्तः । ऋक्शून्ये अनुपनीते बालके । "अनृचवकृत्यावध्येतव्यं वेति" सि॰कौ॰। "यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः" मनुः । "अनृचः अनधीयान इति" कुल्लू॰ । "अनृचो माणवक इति" मुग्धबोधम् । समासान्तविधेरनित्यत्वात् क्वचित् न अच्। "तेन सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते इति" "तथानृचे हविर्दत्त्वा न दाता लभते फलमिति" च मनुः । समासान्तपक्षे अनृचे इति विवक्षया सप्तमी, तदभावपक्षे चतुर्थीति भेदः। अध्येतरीत्युक्तेः "अनृक् सामेति" सि॰कौ॰ । अजभावपक्षे विभाषया कप् । अनृचकः ऋक्शून्ये त्रि॰ ।

**अनृजु** त्रि॰ न ऋजुः । शठे वक्रे कुटिले च । "न पाणिपाद चपलो न नेत्रचपलोऽनृजुः" इति मनुः । "या भ्रातरश्चे अनृजोर्ऋणमिति" ऋ॰४,३,१२ । "लग्नात् पापावनृजू व्ययार्थस्थौ यदा तदा । कर्त्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदेति" मुहूर्त्तचि॰ । ऋजुर्मार्गगामी पूर्व्वगतिः, अनृजुः वक्री पश्चाद्गतिरिति तदर्थः ।

**अनृण** त्रि॰ न ऋणं यस्य । ऋणशून्ये । ऋणञ्च अवश्यदेयम् तच्च उत्तमर्णाय दातव्यत्वेन स्वीकृतं धनम् । तच्चावश्यं शोध्यं तदशोधने "ऋणानामनपाक्रियेत्युक्तेरुपपातकं भवति। अवश्यशोध्यत्वेन तत्सदृशम् वेदाध्ययनादिकमपि ऋणशब्देन व्यवह्रियते 'जायमानो वै पुरुषस्त्रिभिर्ऋणैर्ऋणी भवति स्वाध्यायेन ऋषिभ्यः, यज्ञेन देवेभ्यः प्रजया पितृभ्य" इति श्रुतिः एवञ्च वेदाध्ययनादिना ऋष्यादीनामृणशोधने अनृणो भवतीति श्रुत्यादौ प्रसिद्धम् । एवञ्च "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदिति" ऋणशून्यस्यैव मोक्षाधिकारः। अतएव मनुना "दशलक्षणकं धर्म्ममनुतिष्ठन् समाहितः । वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विज" इति अनृणस्यैव संन्यासोऽभिहितः। "ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितृणामनृणश्चैव स तस्मात् सर्व्वमर्हतीति" मनुः। "एष वा अनृणः यः पुत्रीति" श्रुतिः । कृतोपकारस्य प्रत्युपकारोऽपि ऋणत्वेन स्वीक्रियते । तदभिप्रायेणैव "प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्त्तिभिरिति" रघौ वर्णितम् ।

**अनृणिन्** त्रि॰ न ऋणी स्त्रियां ङीप् । ऋणिभिन्ने "दिवसस्याष्टमे भागे शाकं पचति यो नरः । अनृणी चाप्रवासी च स वारिचर ! मोदते, इति भा॰व॰प॰ । "एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् । पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणी भवेदिति" पु॰ ।

**अनृत** न॰ न ऋतम् । सत्यभिन्ने मिथ्याभूते । "यद्वाहमभिदुद्रोह यद्वा शेप उतानृतमिति" ऋ॰१,२३,२२। "प्रियञ्च

नानृतं ब्रूयादेष धर्म्मः सनातन” इति मनुना मिथ्याभूतं प्रियवाक्यमपि निषिद्धं तत्र साक्ष्यनृतभाषणस्यातीवनिन्द्यता यथा “यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन्निति” “एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेदिति” च मनुः। “ये च पापकृतां लोका महापातकिनां तथा। अग्निदानाञ्च ये लोकाः ये च स्त्रीबालघातिनाम्। स तान् सर्व्वानवाप्नोति यः साक्ष्यमनृतं वदेदिति” या०। “ब्रूहि साक्षिन्! यथातत्त्वं लम्बन्ते पितरस्तव। तव वाक्यमुदीक्षन्त उत्पतन्ति पतन्ति च॥ नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः। अन्धः शत्रुकुले गच्छेद् यस्तु साक्ष्यनृतं वदेत्॥ पञ्च कन्यानृते हन्ति दश हन्ति गवानृते। शतमश्वानृते हन्ति, सहस्रं पुरुषानृते॥ वशि०स्मृ०। क्वचिद्विषये तदपवादः। “वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेदिति” या०। “प्राणात्यये सर्व्वधनापहारे विप्रस्य चार्थे ह्यनृतं वदेच्च। विवाहकाले रतिसंप्रयोगे पञ्चानृतान्याहुरपातकानि भा०क०प०। अधिकमेषि न०मे०।

**अनृतक** त्रि० अनृते प्रसृतः कन्। असत्यकथनरते “लुब्धा अनृतकाश्चैव तिष्ये जायन्ति भारत”। भा० भी०प०।

**अनृतवादिन्** त्रि० अनृतं वदति वद–णिनि। मिथ्यावादिनि

**अनृतु** पु० न ऋतुः वर्षादिकालः। स्वस्वयोग्यवर्षर्त्तुभिन्ने काले “तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने” इति मनुः। नास्ति ऋतुः स्त्रीपुष्पविकाशो यस्मिन् काले। स्त्रीपुष्पविकाशशून्ये काले पु०। “अनृतावृतुकाले च मन्त्रसंस्कारकृत् पतिरिति” मनुः।

**अनृशंस** त्रि० न नृशंसः विरोधे न०त०। अहिंस्रे दयालौ। तस्य भावः युवादि० अण् आनृशंसम्, ब्राह्मणा० ष्यञ् आनृशंस्यञ्च दयायाम्।

**अनेक** त्रि० न एकः एकभिन्नतया उत्सर्गतः बहुवचनान्तता। बहुसंख्यकेषु। “अनेकानि सहस्राणि कौमारब्रह्मचारिणा” मिति मनुः। “पतन्त्यनेके जलधेरिवोर्मयः” इति माघः “अनेके सेवन्ते भवदधिकगीर्वाणनिवहानिति” श्यामास्तोत्रम्। एकशब्दस्य सर्व्वनामत्वेन नञ्तत्पुरुषे तद्भिन्नवाचकतया गौणत्वेऽपि अतच्छब्दवत् सर्व्वनामकार्य्यं तेन अनेके इति, अनेकेषामिति, अनेकत्वेत्यादि। एवञ्च एकशब्दस्य समाहारद्विगुत्वनिषेधादनेकशब्दस्य बहुसंख्यावाचकत्वेऽपि न समाहारः। तेन अनेकराजन्यरथाश्वसङ्कुलमिति किरा० समाहारे अनेकराजन्यरथाश्वीति स्यात्। “यत्रानेकविधमानन्त्यं तत्र स्यानत आनन्त्यं बलीय इति” परिभा० सि०कौ०। “अनेकपितृकाणान्तु पितृतो भागकल्पनेति” याज्ञ०। “अनेकबाहूदरवक्त्रनेत्रमिति” “अनेकजन्मसंसिद्धस्ततो याति परां गतिमिति” च गीता नास्ति एकः “द्व्येकयोर्द्विवचनैकवचने” इतिवत् एकत्वं यत्रेति बहुव्रीहौ अनेकशब्दस्य एकवचनान्ततापीष्यते। “अनेकमन्यपदार्थे” इति पा०सू०। “आकाशमेकं हि यथा घटादिषु पृथग्भवेत् तथात्मैकोऽप्यनेकधेति” याज्ञ०। “अनेकमाश्रितं लिङ्गमिति” सा०का०। “एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते” इत्युक्तेष्वर्थेषु एकशब्दस्य वृत्तेः तदुक्तार्थभिन्ने त्रि०। तत्र च संख्यान्यार्थे एव बहुवचनान्ततान्यत्र यथेष्टतेति मनो०। उत्करादि० भवार्थे छ। अनेकीयः तद्भवे त्रि०। भावे ब्रा० ष्यञ्। आनैक्यं बहुत्वे न०।

**अनेकज** पु० अनेकवारं जायते जन–ड वृत्तौ संख्यावाचकस्य सुजर्थता। द्विवारं जाते पक्षिणि, तस्य गर्भाण्डाभ्यां जातत्वेन द्विवारजाततया द्विजत्वादनेकजत्वम्। ५.त०। बहुभ्यो जाते त्रि०।

**अनेकधा** अव्य० अनेक+प्रकारे धाच्। बहुप्रकारे “अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैरिति” स्मृतिः। “तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधेति” गीता।

**अनेकप** पु० अनेकाभ्यां मुखशुण्डाभ्यां पिबति पा–क। द्विपे हस्तिनि। “मालवनाथोऽप्यनेकानेकपयूथनाथः” द०कु०।

**अनेकमूर्त्ति** पु० अनेका लोकानामनुग्रहाय अवतारेषु नानाविधा मूर्त्तयोऽस्य। परमेश्वरे “अनेकमूर्त्तिरव्यक्त” इति विष्णुसह०।

**अनेकरूप** पु० अनेकानि रूपाण्यस्य। बहुरूपे परमेश्वरे “रूपं रूपं प्रतिरूपो बभूवेति” श्रुतौ तस्य बहुरूपत्वोक्तेस्तथात्वम्। नानाविधरूपयुक्तमात्रे पटादौ त्रि०।

**अनेकलोचन** पु० अनेकानि लोचनानि यस्य। इन्द्रे, परमेश्वरे च “सहस्राक्षः सहस्रपादिति” श्रुतौ अनेकबाहूदरवक्त्रनेत्रमिति” गीतायाञ्च तस्य अनेकनेत्रत्वोक्तेस्तथात्वम्

**अनेकवर्णसमीकरण** न० अनेकवर्णाः अज्ञातविशेषसंख्यकानेकराशयः समीक्रियन्ते ज्ञातसंख्यकसमतया क्रियन्ते यत्र। बीजभेदे यथोक्तं भास्करबीजगणिते “अथानेकवर्णसमीकरणं बीजम्। तत्र सूत्रं सार्द्धवृत्तत्रयम्।” “आद्यं वर्णं शोधयेदन्यपक्षादन्यान् रूपाण्यन्यतश्चाद्यभक्ते। पक्षेऽन्यस्मिन्नाद्यवर्णोन्मितिः स्याद्वर्णस्यैकस्योन्मितीनां बहुत्वे॥ समीकृत-

च्छेदगमे तु ताभ्यस्तदन्यवर्णोन्मितयः प्रसाध्याः । अन्योन्मितौ कुट्टविधेर्गुणाप्ती ते भाज्यतद्भाजकवर्णमाने । अन्येऽपि भाज्ये यदि सन्ति वर्णास्तन्मानमिष्टं परिकल्प्य साध्यम् । विलोमकोत्थापनतोऽन्यवर्णमानानि भिन्नं यदि मानमेवम् । भूयः कार्य्यः कुट्टको ऽत्रान्यवर्णं तेनोत्थाप्योत्थापयेद्व्यस्तमानात्" । "इदमनेकवर्णसमीकरणं वीजं यत्रोदाहरणे द्वित्र्यादयोऽव्यक्तराशयो भवन्ति तेषां यावत्तावदादयो वर्णाः मानेषु कल्प्यास्तत्र पूर्व्वाचार्य्यैः कल्पिताः यावत्तावत्, कालक, नीलक, पीतक, लोहितक, श्वेतक, चित्रक, कपिलक, पिङ्गलक, धूम्रक, पाटलक, शवलक, श्यामलक, मेचका, इत्यादि । अथ वा कादीन्यक्षराणि अव्यक्तानां संज्ञाः असङ्करार्थं कल्प्याः । अतः प्राग्वदुद्देशकालापवद्विधिं कुर्वता गणकेन पक्षौ समौ कार्य्यौ पक्षा वा समाः कार्य्याः। ततः सूत्रावतारोऽयं तयोः समयोरनेकस्मात् पक्षादितरपक्षस्याद्यं वर्णं शोधयेत्तदन्यवर्णान् रूपाणि च इतरपक्षाच्छोधयेत्ततः आद्यवर्णशेषेणेतरपक्षे भक्ते भाजकवर्णोन्मितिः । बहुषु पक्षेषु ययोर्ययोः साम्यमस्ति तयोरेवं कृते सति अन्या उन्मितयः स्युः। ततस्तासून्मितिषु एकवर्णोन्मितयो यद्यनेकधा भवन्ति ततस्तासां मध्ये द्वयोर्द्वयोः समीकृतच्छेदगमेनाद्यं वर्णं शोधयेदित्यादिनान्यवर्णोन्मितयः स्युः । एवं यावत्सम्भवस्ततोऽन्योन्मितौ भाज्यवर्णे योऽङ्कः स भाज्यराशिः, यो भाजके स भाजकः, रूपाणि क्षेपः, अतः कुट्टकविधिना यो गुण उत्पद्यते तद्भाज्यवर्णमानं, या लब्धिस्तद्भाजकवर्णमानं, तयोर्मानयोर्दृभाजकभाज्याविष्टेन वर्णेन गुणितौ क्षेपकौ कल्प्यौ । ततः स्वस्वमानेन सक्षेपेण पूर्व्ववर्णोन्मितौ वर्णानुत्थाप्य स्वच्छेदेन हरणे यल्लभ्यते तत् पूर्व्ववर्णस्य मानम् । एवं विलोमकोत्थापनतोऽन्यवर्णमानानि भवन्ति । यदि तु अन्योन्मितौ द्व्यादयो वर्णा भवन्ति तदा तेषामिष्टानि मानानि कृत्वा स्वस्वमानैस्तानुत्थाप्य रूपेषु प्रक्षिप्य कुट्टकः कार्य्यः।अथ यदि विलोमकोत्थापने क्रियमाणे पूर्व्ववर्णोन्मितौ तन्मितिर्भिन्ना लभ्यते तदा कुट्टकविधिना यो गुण उत्पद्यते स क्षेपः स भाज्यवर्णमानं तेनान्यवर्णमानेषु तं वर्णमुत्थाप्य पूर्वोन्मितिषु विलोमकोत्थापनप्रकारेणान्यवर्णमानानि साध्यानि । इह यस्य वर्णस्य यन्मानमागतं व्यक्तमव्यक्तं, व्यक्ताव्यक्तं वा तस्य मानस्य व्यक्ताङ्केन गुणने कृते तद्वर्णाचरस्य निरसनमुत्थापनमुच्यते" तद्व्याख्या । उदाहरणं तत्रैव दृश्यम् ।

**अनेकविध** त्रि॰ अनेका विधा प्रकारा यत्र । बहुप्रकारे "यत्रानेकविधमानन्त्यं तत्र स्यानत आनन्त्यं वलीय" इति परि॰ ।

**अनेकशस्** अव्य॰ अनेक+वीप्सार्थे कारके शस् । अनेकवारार्थे "अनेकशो निर्जितराजकस्तमिति" भट्टिः ।

**अनेकाग्र** त्रि॰ न एकाग्रः । शून्यहृदये एकाग्रताशून्ये

**अनेकान्त** त्रि॰ न एकान्तो नियमो अव्यभिचारो यत्र । अनियमे, अनिश्चितफलके च । व्यभिचारवति दुष्टहेतौ पु॰ । "अनेकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः । कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधेति" भाषा॰ । स च त्रिविधः "आद्यः साधारणस्तु स्यादन्योऽसाधारणो मतः । तथैवानुपसंहारी त्रिधाऽनैकान्तिको मत" इति भाषा॰। एकान्तोऽस्त्यस्य मत्वा॰ण । ऐकान्तः न॰त॰ अनैकान्तोऽप्यत्र क्वचित् "भाषायाम् अनैकान्तो विरुद्ध श्चेत्येव" पाठः । तथा च साधारणादित्रितयान्यान्यत्वमनेकान्तत्वम् ।

**अनेकान्तवादिन्** पु॰ अस्ति नास्ति चेत्येकान्तं न वदति वद–णिनि ६त॰ । बौद्धभेदे । तस्य अस्तिनास्तिकायवादित्वेन तथात्वं विवरणमर्हच्छब्दे दृश्यम् ।

**अनेकार्थ** त्रि॰ अनेके अर्था अभिधेया यस्य । नानार्थे शब्दे । यथा गवादय अक्षादयश्च । 'अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते । एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रयेति" सा॰द॰। अयमाशयः "संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव" इति हर्युक्तैरनेकार्थशब्दानां सर्वत्र शक्तौ समानायां सत्यां, संयोगाद्यैरितरार्थबोधप्रतिरोधनेन विशेषार्थ एव स्मार्य्यते । तद्भिन्नार्थस्य तु व्यञ्जनया बोधः इत्यलङ्कारिकाणां मतम् । तथाच संयोगादयः शक्त्या अन्यार्थोपस्थितौ प्रतिबन्धकाः । व्यञ्जनावृत्त्या तदुपस्थापने तु न । "अनेकार्थशब्देभ्यः सर्वेषामर्थानामविशेषेणोपस्थितौ सत्यामपि संयोगादयः अन्यशक्यविषयशाब्दबोधमात्रं प्रतिबध्नन्ति नतु व्यङ्ग्यविषयमिति" रसगङ्गाधरः। नैयायिकादयस्तु अनेकार्थशब्दानां शक्यतावच्छेदकलाघवलाभे तत्रैव शक्तिरन्यत्र लक्षणा तत्र संयोगादयः अन्यार्थबोधनं नैव प्रतिबध्नन्ति । तथा च संयोगादयः सति तात्पर्य्ये, तद्विषयीभूतार्थविषयकस्मृतिं तज्जन्यान्वयबुद्धिं वा न प्रतिबध्नन्ति किन्तु तात्पर्य्यमात्रोन्नायका इत्यतं व्यञ्जनावृत्तेर्नात स्वीचक्रुरिति भेदः । अनेके अर्थाः प्रयोजनानि

यत्र यस्य वा । अनेकप्रयोजनवति त्रि० "अनेकार्थाभियोगे च यावत्संसाधयेद्धनी" इति स्मृतिः । कर्म्म० । बहुप्रयोजने पु० ब०व० ।

**अनेकाश्रित** पु० अनेकेषु आश्रितः ७त० । वैशेषिकनये संयोगादिषु, सामान्येषु च । "संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा । द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः" इति भाषा० "नित्यत्वे सति अनेकसमवेतत्वं जातित्वमिति" मुक्ता० । एकस्या एव व्यक्तेर्नानाव्यक्तिनिष्ठत्वेऽस्य प्रयोगोपाधिता । भवन्ति च संयोगादयः सामान्यं च तथा । रूपादेर्नानाव्यक्तिषु सत्त्वेऽपि नैकव्यक्तेरिति न तस्य तथात्वमिति भेदः ।

**अनेजत्** न० न एजत् । सर्व्वदैकरूपे ब्रह्मणि । "अनेजदेकं मनसो जवीयः" इति ईशोप० । "एजनं कम्पनं स्वभावप्रच्युतिस्तद्विवर्ज्जितं सर्व्वदा एकरूपमिति" भा० । कम्पनशून्ये त्रि० स्त्रियां ङीप् ।

**अनेडमूक** त्रि० एडो बधिरो मूको वाक्‌शक्तिरहितश्च नास्ति यस्मात् ५ ब० । (काला, बोबा) इति ख्याते श्रवणवचनशक्तिरहिते, शठे च । [प्रशस्ते प्रधाने निरुक्तकारः ।

**अनेद्य** त्रि० निदि कुत्सने ण्यत् नि० नलोपगुणौ न०त० ।

**अनेनस्** त्रि० नास्ति व्यसनमधर्म्मो वा यस्य । व्यसनपापादिरहिते "राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः" इति व्यव०त० मन्वादिस्मृ० । "अनेनो वोमरुतो याम" इति ऋ०६,६६,७ । "अनेनः पापरहितं यथा भवतीति" भाष्यम् "त्वानेना नमसा तुर" इति ७,८६,४ । "अनेना अपाप" इति भाष्यम् ।

**अनेमा** पु० नी–मनिन् न०त० । प्रशस्ते निरुक्तकारः ।

**अनेहस्** पु० न हन्यते हन–असि प्रकृतेरेहादेशः । काले । सौ अनङ् । अनेहा "कालोदिष्टोऽप्यनेहापि"त्यमरः । न हन्यते कर्म्मणि असि । अहिंसनीये त्रि० । "शम्भुवं मन्त्रं देवा अनेहसमिति" ऋ०१,४०,६ । "अनेहसं केनाप्यहिंस्यामिति" भा० । "दाधिनोवयम् यजामहे सुमतिमनेहसम्" ऋ० १,४०,४ । "यथा नोऽस्मे वयाय धिषणे अनेहः" ऋ०६,५०,३ ।

**अनैकाग्र्य** न० एकाग्रस्य भावः ष्यञ् अभावे न०त० । ऐकाग्र्याभावे । न०ब० । ऐकाग्र्यशून्ये त्रि० । "आचाराणामनैकाग्र्यं सर्व्वेषामुपलक्षणादिति" भाग० ।

**अनैकान्त** पु० अनैकान्तशब्दार्थे । तत्रैव व्युत्पत्तिर्दर्शिता "अनैकान्तो विरुद्धश्चेति" भाषा० पाठान्तरम् ।

**अनैकान्तिक** पु० एकान्तं नियतं व्याप्नोति एकान्त+ठक् एकान्तो नियमो व्याप्तिरस्यस्य ठन् स्वार्थे अण् वा न०त० । अनेकान्तशब्दार्थे अनेकान्तशब्देऽधिकं दृश्यम् "त्रिधाऽनैकान्तिको मत" भाषा० । ऐकान्तिको निश्चितरूपस्तद्भिन्ने त्रि० ।

**अनैक्य** न० न ऐक्यम् अभावे न०त० । ऐक्याभावे ।

**अनैतिह्य** त्रि० न ऐतिह्यं यत्र । परम्पराश्रवणरूपैतिह्यप्रमाणशून्ये । "अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति" ? भा०शा०प० ।

**अ(आ)नैपुण** न० अनिपुणस्य भावः अण् आद्यचो वा वृद्धिः । अनिपुणत्वे । ष्यञ् अ(आ)नैपुण्यमप्यत्र न० ।

**अ(आ)नैश्वर्य्य** न० अनीश्वरस्य भावः आद्यचो वा वृद्धिः । अनीश्वरत्वे अधीनत्वे । नास्ति ऐश्वर्य्यं यस्य । अनैश्वर्य्यः ऐश्वर्य्यशून्ये त्रि० ।

**अनो** अव्य० न+नी–डो । अभावार्थे । "अभावे, नह्यनो नापी"त्यमरे अनो इत्येकं नामेति नीलकण्ठः । अन्ये तु अ इति, नो इति, च छित्त्वा नामद्वयमित्याहुः ।

**अनोकह** पु० अनसः शकटस्याकं गतिं हन्ति प्रतिरोधं करोति हन–ड ६त० । वृक्षे । "हनान्तरुचं हरति पुष्पमनोकहानामिति" "अनोकहाकम्पितपुष्पगन्धीति च" रघुः । "उद्यन्तमुद्दूतमनोकहजालमध्ये इति" माघः ।

**अनोदन** त्रि० नास्ति ओदनरूपं भक्ष्यं यत्र । "अन्नवर्जनयुक्ते व्रते । "नक्तं हविष्यान्नमनोदनं वा" इति स्मृतिः ।

**अनोङ्कृत** त्रि० न ओङ्कारमुच्चार्य्य कृतः ओम्+कृ–क्त न०त० । ओङ्कारोच्चारणाभावेन कृते । "ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा । स्रवत्यनोङ्कृतं पूर्व्वं परस्ताच्च विशीर्य्यति" मनुः । ओमिति स्वीकारे तथा कृतम् । अङ्गीकृते त्रि० ।

**अन्च** व्यक्तौ चु०उभ०सक० सेट् । अञ्चयति-ते आञ्चिचत्-त कर्म्मणि अञ्च्यते । णिजभावे अच्यते इति भेदः "पूर्णात् पूर्णमुदच्यते" इति श्रुतिः ।

**अन्चु** गतौ अचिवत् ८२ पृ० दृश्यम् ।

**अन्ज** गतौ कान्तौ म्रक्षणे व्यक्तौ च रुधा० वर्त्तमाने क्त ऊदित् वेट् पर० । अनक्ति । लिटि परस्मैपदे नित्यमिट् । आञ्जीत्-आनङ्क्षीत् । अञ्जिता-अङ्क्ता । अञ्जिष्यति–अङ्क्ष्यति । क्त अक्तः । क्तिन् अक्तिः । क्त्वा–अङ्क्त्वा अञ्जित्वा । वि+प्रकाशने । व्यनक्ति व्यज्यते "व्यनक्ति कालत्रितयेऽपि योग्यतामिति" माघः । घञ् व्यङ्गः । ष्वत् व्यङ्ग्यः । "सव्यङ्ग्यमुत्तमं काव्यमिति" । णिच् । व्यञ्जयति ल्युट् । व्यञ्ज-

नम् । "अन्यार्थधीकृद् व्याहृतिरञ्जनम्" का०प्र० । कर्त्तरि ल्यु । व्यञ्जना एतल्लार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रयेति" सा०द० ।

**अन्त** न० अम–तन् । स्वरूपे, स्वभावे च । शेषे पु०न० । नाशे, सीमायां, निश्चये, शेषावयवे च पु० । निकटे, मनोहरे च त्रि० । तत्र स्वरूपे "स्फुटसतान्तवतान्तमलोकवदिति" माघः । नाशे "पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा । अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यतीति" उद्भटः । "वैरस्यान्तं करिष्यति" रामा० । सीमायां "वनान्तपर्य्यन्तमुपेत्य सस्पृहमिति" नैष० । "कोदकान्तात् स्निग्धोऽनुगन्तव्य" इति श्रुतिः । सीमाऽवधिः स च दैशिकः कालिकश्च । तत्र दैशिक उक्तोदाहरणे कालिकस्तु । "पक्षान्ते निष्फला यात्रा मासान्ते मरणं ध्रुवमिति" ज्योति० । "दशाहान्ते पुनः क्रियेति" स्मृतिः शेषसीमायाम् "अस्तु वनान्तादनितवञ्चारिणमिति" माघः । "दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिन" इति भामिनी० । "गङ्गाप्रपातान्तविरूढशष्पमिति" रघुः । शेषावयवे "वेदान्तमुद्दीयते" इति वेदान्त इत्यादि । निश्चये । "उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिरिति" गीता । उभयोः सदसतोरित्यर्थः । निकटे अन्तमाकः । स्वभावे शुद्धान्तः । शेषे निशान्तः ।

**अन्तःकरण** न० कृ-करणे ल्युट् अन्तरभ्यन्तरस्थं करणं, कर्म०, तद्वृत्तिपदार्थानां सुखादीनां करणं ज्ञानसाधनं ६त० वा । ज्ञानसुखादिसाधने आभ्यन्तरे मनोबुद्धिचित्तादिपदाभिलप्यमाने इन्द्रिये । तच्चान्तःकरणम् वेदान्तिमते चतुर्विधम् । "मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् । संशयो निश्चयो गर्वः स्मरणं विषया इमे" इत्युक्तकार्य्यभेदात् । अन्यत्र व्यक्तमुक्तम् "यदा तु संकल्पविकल्पकृत्यं तदा भवेत्तन्मन इत्यभिख्यम् । स्याद्बुद्धिसंज्ञं च यदा तु वेत्ति सुनिश्चितं संशयरूपहीनम् । अनुसन्धानरूपं तच्चित्तञ्च परिकीर्त्तितम् । अहंकृत्यात्मवृत्त्या तु तदहङ्कारतां गतमिति" । एतदनुसारेणैव शारदायामुक्तम् "अन्तःकरणमात्मनः । मनोबुद्धिरहङ्कारश्चित्तञ्चेति प्रकीर्त्तितमिति" । तस्य च ज्ञानादिप्रत्यक्षकरणत्वादन्तःकरणत्वम् । तत्साधकमनुमानञ्चेत्थम् ज्ञानसुखादिप्रत्यक्षं सप्राहकेन्द्रियसापेक्षं प्रत्यक्षत्वात् रूपादिप्रत्यक्षवत् । नच चक्षुरादीनां तत्करणत्वं सम्भवति रूपादित्वाभावादित्यन्तःकरणसिद्धिरिति नैयायिकादयः । सांख्यादयस्तु महत्तत्त्वापरपर्य्यायमेवान्तःकरणमङ्गीचक्रुः । पञ्चतन्मात्रेभ्यो भूतेभ्यश्चाहङ्काररूपद्रव्यसिद्धिमुक्त्वा "तेनाऽन्तःकरणस्येति" सां०सू० तत्सिद्धिरुक्ता तदनुमाने च भाष्ये एवं प्रयोगादिकं दर्शितम् । "अहङ्कारद्रव्यं निश्चयवृत्तिमद्द्रव्योपादानकं निश्चयकार्य्यद्रव्यत्वात् यन्नैवं तन्नैवं यथा पुरुषादिरिति । अत्रायं तर्कः, सर्वोऽपि लोकः पदार्थमादौ स्वरूपतो निश्चित्य पश्चादभिमन्यते अयमहं, मयेदं कर्त्तव्यमित्यादिरूपेणेति, तावत् सिद्धमेव । तत्राहङ्कारद्रव्यकारणाकाङ्क्षायां वृत्त्योः कार्य्यकारणभावेन तदाश्रययोरेव कार्य्यकारणभावो लाघवात् कल्प्यते कारणस्य वृत्तिलाभेन कार्य्यवृत्तिलाभस्यौत्सर्गिकत्वादिति । यद्यपि अन्तःकरणमेकं तथापि वंशपर्वस्विवावान्तरभेदमाश्रित्यान्तःकरणत्रये क्रमः, कार्य्यकारणभावश्चोक्तः योगोपयोगिश्रुतिस्मृतिपरिभाषानुसारादिति मन्तव्यम् । तदुक्तं वाशिष्ठे । "अहमर्थोदयो योऽयं चित्तात्मा वेदनात्मकः । एतच्चित्तद्रुमस्यास्य वीजं विद्धि महामते ! ॥ एतस्मात् प्रथमोद्भिन्नादङ्कुरोऽभिनवाकृतिः । निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते ॥ अस्य बुद्ध्यभिधानस्य याङ्कुरस्य प्रपीनता । सङ्कल्परूपिणी तस्याश्चित्तचेतोमनोभिधा" इति । अहमर्थोऽन्तःकरणसामान्यम् । अत्र वाक्ये बीजाङ्कुरन्यायेनैकस्यैवान्तःकरणद्रव्यस्य वृत्तिमात्ररूपेण चित्ताद्यवस्थाभेदाः क्रमिकास्त्रिविधाः परिणामा उक्ता इति । साङ्ख्यशास्त्रे च चिन्तनावृत्तिकस्य चित्तस्य बुद्धावेवान्तर्भावः । अहङ्कारस्य चात्र वाक्ये बुद्धावन्तर्भावः" इति ॥ कारिकायामपि "अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यमिति" त्रैविध्यमुक्त्वा "सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्, तस्मात्त्रिविधं करणं द्वारि, द्वाराणि शेषाणीति" तत्त्रयस्यैव प्राधान्यमुक्तम् । एवञ्च पुरुषस्य सन्निधिमात्रादधिष्ठातृत्वं गौणं मुख्यमधिष्ठातृत्वन्तु अन्तःकरणस्यैव यथोक्तम् "अन्तःकरणस्य तदुज्ज्वलितत्वाल्लौहवदधिष्ठातृत्वम्" सां०सू० ॥ "अन्तःकरणस्यानुपचरितमधिष्ठातृत्वं सङ्कल्पादिद्वारकं प्रत्येतव्यम् । नन्वधिष्ठातृत्वं घटादिवदचेतनस्य न युक्तं तत्राह । लौहवत् तदुज्ज्वलितत्वादिति । अन्तःकरणं हि तप्तलौहवच्चेतनोज्ज्वलितं भवति । अतस्तस्य चेतनायमानतयाधिष्ठातृत्वं घटादिव्यावृत्तमुपपद्यत इत्यर्थः । नन्वेवं चैतन्येनान्तःकरणस्योज्ज्वलने चितेः सङ्गित्वमनिवृत्त्येव स्यादिति चेन्न नित्योज्ज्वलचैतन्यसंयोगविशेषमात्रस्य संयोगविशेष

जन्यचैतन्यप्रतिबिम्बस्य चान्तःकरणोज्ज्वलनरूपत्वात्। न तु चैतन्यमन्तःकरणे संक्रामति येन सङ्गिता स्यात्॥ अग्नेरपि हि प्रकाशादिकं न लौहे संक्रामति, किन्त्वग्निसंयोगविशेष एव लौहस्योज्ज्वलनमिति। नन्वेवमपि संयोगेन परिणामित्वमिति चेन्न सामान्यगुणातिरिक्तधर्म्मोत्पत्तावेव परिणामव्यवहारादिति। अयं च संयोगविशेषोऽन्तःकरणस्यैव सत्त्वोद्रेकरूपात् परिणामाद्भवतीति फलबलात् कल्प्यते पुरुषस्यापरिणामित्वेन संयोगे तन्निमित्तकविशेषासम्भवादिति। अयमेव च संयोगविशेषो बुद्ध्यात्मनोरन्योऽन्यप्रतिबिम्बने हेतुरिति" सा॰प्र॰भा॰। अन्तःकरणस्य च वृत्तयस्त्रिधा "शान्ताघोराश्च मूढा मनसो वृत्तयस्त्रिधा। वैराग्यं क्षान्तिरौदार्य्यमित्याद्याः शान्तवृत्तयः। तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः। सम्मोहो भयमित्याद्याः कथिता मूढवृत्तयः" इति तास्वेव वृत्तिषु ज्ञानत्वोपचारात् तत्साधनत्वमिन्द्रियाणाम् "अन्तःकरणवृत्तौ ज्ञानत्वोपचारादिति" पञ्चपादिकाविवरणम्। शान्तादीनामेव सात्त्विकादिरूपेण व्यवहारः। तास्च वृत्तयः "क्रमशोऽक्रमशश्च वृत्तय इति सां॰सू॰ उक्तेः युगपदपि भवन्तीति सांख्यादयः। नैयायिकादयस्तु "अयौगपद्याज्ज्ञानाना"मित्युक्तेः क्रमिकत्वमेवाङ्गीचक्रुः। तस्मान्तःकरणमणुपरिमाणमिति नैयायिकादयः। यावद्देहकार्य्यकारित्वात् जलावगाहे एकदैव सर्व्वदेहगतशैत्याद्युपलब्धेर्मध्यपरिमाणमिति सांख्यादयः। तेषां च चतुर्णां चन्द्रचतुर्मुखशङ्कराच्युता अधिष्ठातारोदेवा इति।

**अन्तःकुटिल** पु॰ अन्तर्म्मध्ये कुटिलः। वक्राकारमध्यावयववति शङ्खे। वक्रान्तःकरणे त्रि॰।

**अन्तःकृमि** पु॰ अन्तरभ्यन्तरे कृमिर्यस्य। (गुटि) इति ख्याते कृमिकोषफले। मध्यस्थकृमियुक्ते फलादौ त्रि॰।

**अन्तःकोटरपुष्पी** स्त्री अन्तःकोटरे अभ्यन्तरे पुष्पं यस्याः जातित्वात् ङीप्। अन्तःकोटरपुष्पवत्यां नीलवुह्नायाम्।

**अन्तःपदवी** स्त्री ७त॰। सुषुम्नामध्यगते पथि।

**अन्तःपशु** पु॰ अन्तःग्राममध्ये पशवो यत्र। ग्राममध्ये पशुस्थितिकाले प्राह्णे, सायाह्ने च "अन्तःपशौ पशुकामस्य सायं प्रातः" कात्या॰ ४,१५,१४। "अन्तःपशौ काले ग्राममध्ये पशवो यस्मिन् काले, सायं पशुषु ग्राममध्येषु आगतेषु, प्रातश्च ग्रामादनिःसृतेष्विति" तद्व्या॰।

**अन्तःपात** पु॰ अन्तर्म्मध्ये पततीति पत–कर्त्तरि ण। सन्धिस्थाने। भावे घञ्। मध्यपतने।

**अन्तःपातिन्** त्रि॰ अन्तःपतति पत–णिनि ६त॰। मध्यप्रविष्टे। स्त्रियां ङीप्।

**अन्तःपात्य** पु॰ अन्तर्मध्ये पात्यते पत–णिच्–आधारे यत्। मध्ये पातनाधारे देशे "अन्तःपूर्ब्बेण यूपं परीत्यान्तःपात्यदेशे स्थापयतीति" कात्या॰ १५,६,२२, "स्थापितगवानां पतये स्वभ्रात्रे द्रव्यं शतमधिकं वा दत्त्वा यूपात् पूर्ब्बदिशि परीत्यान्तःपात्यदेशे स्थापयेदिति" वेददीपः।

**अन्तःपुर** न॰ अन्तरभ्यन्तरं पुरं गृहं कर्म्म॰। (अन्दर) इति प्रसिद्धे राज्ञां स्त्रीणां स्थानयोग्ये गृहे। "वितर्यमिदमपूर्ब्बं दृष्टमन्तःपुरे ते" इत्युद्भटः "व्यायम्याप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं विशेत् इति" भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सहेति। "अन्तःपुरप्रचारञ्च प्रणिधीनाञ्च चेष्टितमिति" च मनुः। तत्र स्थितत्वात् राजमहिषीणामपि। "दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदेति" शकु॰। पुरशब्दसमासे अचि स्त्रीत्वात् ङीप्। अन्तःपुरीत्यपि स्त्री।

**अन्तःपुरचर** पु॰ अन्तःपुरे चरति चर–ट ७त॰। राजान्तःपुरचारिणि कञ्चुक्यादौ। अन्तःपुरस्त्रियाम् स्त्री ङीप्।

**अन्तःपुरसहाय** पु॰ अन्तःपुरे सहायः। राज्ञामन्तःपुरसहचरे विदूषकादौ।

**अन्तःपुराध्यक्ष** पु॰ ६त॰। "वृद्धः कुलोद्गतः शक्तः पितृपैतामहः शुचिः। राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते" इति नरपतुक्तलक्षणेऽन्तःपुराधिकृते। अन्येऽपि पञ्च तथा, "पञ्चापरे वामनको जघन्यः कुब्जोऽपरो मण्डलकोऽथ सामी। पूर्ब्बोक्तभूपानुचरा भवन्ति सङ्कीर्णसंज्ञाः प्रथगेव लक्षणात्॥ सम्पूर्णाङ्गो वामनो (१) भग्नपृष्ठः किञ्चिच्चोरुमध्यकक्षान्तरेषु। ख्यातो राज्ञो ह्येष भद्रानुजीवी स्तोता दाता वासुदेवस्य भक्तः॥ मालव्यसेवी तु जघन्यनामा खण्डेन्दुतुल्यश्रवणः सुसन्धिः। शुक्रेण सारः पिशुनः कविश्च रूक्षच्छविः स्थूलकराङ्गुलीकः॥ क्रूरो धनी स्थूलमतिः प्रतीतस्ताम्रच्छविः स्यात् परिहासशीलः। उरोऽङ्घ्रिहस्तेष्वसिशक्तिपाशपरश्वधाङ्कश्च जघन्यनामा (२)॥ कुब्जो (३) नाम्ना यः स शुद्धो ह्यधस्तात् क्षीणः किञ्चित्पूर्वकाये नतश्च। हंसासेवी नास्तिकोऽर्थैरुपेतो विद्वान् शूरः सूचकः स्यात् कृतज्ञः॥ कलास्वभिज्ञः कलहप्रियश्च प्रभूतभक्षः प्रमदाजितश्च। सम्पूज्य लोकं प्रलहात्मकस्मात् कुब्जोऽयमुक्तः सततोद्यतश्च॥ मण्डलकनामधेयो ४ रुचकानुचरोऽभिचारवित् कुशलः। कृत्यावैतालादिषु कर्म्मसु विद्यासु चानुरतः॥

ष्टह्लाकारः खरकृष्णमूर्द्धजः शत्रुनाशने कुशलः। द्विजदेवयज्ञयोगप्रसक्तधीः स्त्रीजितो मतिमान्॥ सामोति (५) यः सोऽतिविरूपदेहः शठानुगामी खलु दुर्भगश्च। दाता महारम्भसमाप्तकार्य्यो गुणैः शशस्यैव भवेत् समानः” वृहत्संहितोक्तलक्षणादिभेदपञ्चकात्।

अन्तःपुरिक त्रि० अन्तःपुरे नियुक्तः ठक् संज्ञापूर्व्वकविधेरनित्यत्वान्नवृद्धिः। अन्तःपुराध्यक्षे कञ्चुक्यादौ “अस्मत्प्रार्थनामन्तःपुरिकाभ्यो निवेदयेति” चण्डको०।

अन्तःपुष्प न० अन्तर्गतं पुष्पं स्त्रीरजः। द्वादशवर्षादूर्द्ध्वमभ्यन्तरजाते स्त्रीणां रजसि। “वर्षद्वादशकादूर्द्ध्वं यदि पुष्पं वहिर्नहि। अन्तःपुष्पं भवत्येव पनसोडुम्बरादिवत्”। इति काश्यपसंहिता।

अन्तःप्रकृति स्त्री अन्तर्वर्त्तिनी प्रकृतिः राज्याङ्गम्। राज्ञां सचिवादिप्रकृतौ अमात्यादौ। “अन्तःप्रकृतिकोपनं हि राज्ञां महद्व्यसनमिति” नीति०। [आत्मानुसन्धानपरे।

अन्तःप्रज्ञ त्रि० अन्तःस्था प्रत्यक्तत्त्वविषयिणी प्रज्ञा यस्य।

अन्तःप्रविष्ट त्रि० अन्तःकरणे, मध्ये वा प्रविष्टः। हृदयगते, अभ्यन्तरगते च। “अन्तःप्रविष्टकर्णपल्लवप्रतिविम्बेनेति” काद०॥

अन्तःशरीर न० अन्तः स्थूलदेहमध्यस्थं शरीरम्। स्थूलदेहमध्यवर्त्तिनि वेदान्तमतसिद्धे सूक्ष्मशरीरे। तच्च “पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमित्युक्तं सप्तदशावयवं भोगसाधनं सूक्ष्ममङ्गम्। शरीरस्य मध्ये अव्ययी०। देहमध्ये इत्यर्थे अव्य०। अन्तर्देहादयोऽप्युक्तार्थयोः। अन्तरेव देहः। मनोरूपदेहे न०। [दुःखदायके।

अन्तःशल्य न० अन्तःकरणस्य शल्यमिव पीडकत्वात्। मनसो

अन्तःसंज्ञ त्रि० अन्तः अभ्यन्तरवर्त्तिनी कथनायोग्यत्वात् अप्रकाश्या संज्ञा चेतना यस्य। वृक्षादौ। ते च मनुना दर्शिता यथा “उद्भिज्जाः स्थावराः सर्व्वे बीजकाण्डप्ररोहिणः। ओषध्यः फलपाकान्ताः बहुपुष्पफलोपगाः। अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः। पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः। गुच्छगुल्मं तु विविधं तथैव तृणजातयः। बीजकाण्डरुहाण्येव प्रतानाः वल्ल्य एव च। तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना। अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता” इति।

अन्तःसत्त्वा स्त्री अन्तरभ्यन्तरे गर्भे सत्त्वं प्राणी सारो वा यस्याः यस्य वा इव०। गर्भिण्यां स्त्रियाम्। अन्तःसारे त्रि०।

अन्तःसुख त्रि० अन्तरात्मनि तदनुसन्धाने एव सुखं यस्य। आत्मानुसन्धानमात्रसुखे वाह्यसुखशून्ये। “योऽन्तःसुखोऽन्तरारामः इति” गीता। [मदस्राविणि हस्तिनि।

अन्तःस्वेद पु० अन्तःस्वेदो मदस्यन्दनं मदजलं यस्य इव०।

अन्तक पु० अन्तयति अन्तं करोति अन्त+णिच्—ण्वुल्। मृत्यौ “व्याजेनापि कृता राजन् नो दर्शयति चान्तकमिति” मार०पु०। देहिनां स्वस्वकर्म्मानुसारेण विनाशनाय ईश्वरनियुक्ते यमाख्ये देवभेदे “कृषिप्रभावात्मयि नान्तकोऽपि प्रभुः प्रहर्त्तुं किमुतान्यहिंस्राः” इति रघुः। विनाशकमात्रे त्रि० “क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहमिति” वेणी०। परमेश्वरे पु० तस्य सर्व्वभूतानां प्रलये संहर्त्तृत्वात्तथात्वम्, “महोदधिशयोऽन्तक” इति विष्णुसह०।

अन्तकर त्रि० अन्तं नाशं करोति कृ—ट उप०स०। नाशकारके। “अहमन्तकरो नूनं ध्वान्तस्येव दिवाकर” इति भट्टिः। स्त्रियां ङीप्।

अन्तकरण त्रि० अन्तं करोति नन्द्या० ल्यु। नाशकारके। “दूतं समाहूयस्यैव राजा राष्ट्राद्विवासयेत्। राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षितामिति” मनुः। भावे ल्युट्। नाशने न०।

अन्तकर्म्मन् न० अन्तस्य नाशस्य परिच्छेदस्य वा कर्म्म उत्पादनम्। नाशने। “षो अन्तकर्म्मणि इति” पा०धातु०। अनेनाशनार्थत्वात् सकर्म्मकत्वम् तेन “राघव! स्य शरैर्घोरैर्घोरं रावणमाहवे” इत्यादौ शारणस्य कर्म्मता स्येति स्यतेर्लोटो मध्यमैकवचनान्तरूपम्। परिच्छेदकरणे “अवासासीश्च वैयासकीमित्यादि।

अन्तकारिन् त्रि० अन्तं करोति कृ—णिनि इत०। अन्तकारके विनाशके। स्त्रियां ङीप्। ण्वुल्। अन्तकारकोऽप्युक्तार्थे त्रि०। [ब्रह्म निर्वाणमृच्छतीति” गीता।

अन्तकाल पु० इत०। मृत्युकाले, “स्थित्वाऽस्यामन्तकालेऽपि

अन्तकृत् त्रि० अन्तं करोति कृ—क्विप् इत०। विनाशके।

अन्तग त्रि० अन्तं गच्छति गम-ड उप०स०। कार्य्यान्तगामिनि, निरवशेषकार्य्यकारके, पारगामिनि, च “यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्। शाखान्तगमथाध्वर्य्युं छन्दोगं च समाप्तिकमिति” मनुः। [गामिनि।

अन्तचर त्रि० अन्ते शेषावधौ चरति चर—ट। कार्य्यादिशेष-

अन्ततस् अव्य० अन्त+सार्वविभक्तिकस्तसि। अन्तेन अन्ते अन्तादित्याद्यर्थे। तत्र तृतीयार्थे। “वैश्योऽद्भिः प्राशिता-

भिस्तु स्तृद्रः स्पृष्टाभिरन्तत” इति मनुः। “शुध्येत स्त्री च शूद्रवत्सततृस्पृष्टाभिरन्तत” इति या०। सप्तम्यर्थे “सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्तत” इति मनुः। “अन्ततः उपस्पृश्य शुचिरिति गोभि०। अन्ततः अन्तावच्छेदे इत्यर्थः ‘तामन्ततोऽपक्रम्येत्यादौ तु पञ्चम्यर्थे। अपेक्षायां, सम्भावनायाञ्च। अवयवे, शासने च विश्व०।

**अन्तम** त्रि० अन्तिक+तमप् “तादेश्वेति” वेदे तिकशब्दलोपः। अन्तिकतमे अत्यन्तनिकटस्थिते। शिचा अन्तमस्येति ऋ० १,२७,५, “तनूपा अन्तमो भवेति” ऋ० ६,४६,१०,। भाष्यकृतोक्तार्थतयैव व्याख्यातम्।

**अन्तपाल** त्रि०पु० अन्तं समीपदेशं द्वारं पालयति। द्वारपाले। “शुश्रूमन्तपालेभ्यः श्रुत्वा लिखितमागतमिति” भा०शा०प०।

**अन्तर्** अव्य० अम-अरन् तुड़ागमश्च। मध्ये “अन्तःशाक्ता बहिःशैवाः सभायां वैष्णवा मता” इति तन्त्रम्। “अन्तर्विश्वानि भेषजा” ऋ० १,२३,२० “अप्स्वन्तरमृतमप्सु” इति ऋ० १,२३,१६, “न प्रसन्नचि गतान्याखाद्य दन्तान्तरधिष्ठितमिति” मनुः “प्रतिवलजलधेरन्तरौर्वायमाणे” इति “अन्तर्ज्वालावलीढेति” च वेषी०। सर्वमध्यस्थे परमेश्वरे देहमध्यस्थे जीवे च अन्तःप्रज्ञः अन्तर्ज्योतिरित्यादि। चित्ते “अन्तर्गता मदनवह्निशिखावली येत्युद्भटः “अन्तर्गतं प्राणभृतां हि वेदेति” रघुः। प्राप्ते, स्वीकारे च। अस्य च मध्यार्थेऽव्ययीभावः। अन्तर्जलधि अन्तर्गृहमित्यादि अव्य०।

**अन्तर** न० अन्तं राति ददाति रा-क। अवकाशे, अवधौ, परिधानांशुके अन्तर्द्धाने, भेदे, परस्परवैलक्षण्यरूपे विशेषे, तादर्थ्ये, छिद्रे, आत्मीये, विनार्थे, वहिरर्थे, व्यवधाने, मध्ये, सदृशे च। आसन्ने त्रि०। “हव्यायुजन्विदन्तरम् ऋ० १,१०,८, अन्तरं हव्य आसन्नं कुरु” भा० “मायुरन्तरो निषङ्गाय” ऋ० १,२१,१२, “अन्तरः समीपवर्त्तीति” भा० “न यत्परो नान्तर इति” ऋ० २,४१,८, “अन्तरः समीपवर्त्तीति” भा० निकटस्थे “यश्राहीलो यो अन्तर इति” ८,१८,१९, अन्तरः अन्तिके वर्त्तमान इति भा०। अन्तरयति दूरीकरोति अन्तर-णिच्+अच्। अपवारणे। अन्तर्गते त्रि०। “हृदो अस्त्वन्तरम्” ऋ० ७,१०१,५ “अन्तरमन्तर्गतमिति” भा०। ह० उप० अन्तर्यामिब्राह्मणे अन्तर्गते बहुशः प्रयुक्तः तच्च (१२०) पृष्ठे दृश्यम्। “यो अन्तरोमित्रमहो वनुष्यात् ऋ० ६,५,४, अन्तरः अभ्यन्तरवर्त्तीति भा०। “पुरोहितोऽन्तरोयासिदूत्यम् ऋ० १,४४,१२ “अन्तरः देवयजनमध्ये वर्त्तमान” इति भा०। अवकाशे, “क्षणावस्थलान्तरमप्यलभ्यम्” कुमा०। “तत्रान्तरे जम्भुरसं कटाक्षैः” माघः। मध्ये, “दिलीपसूनोः स बृहद्भुजान्तरमिति” रघुः। “आवयोरन्तरे जाताः पर्वताः सरितो द्रुमा” इति रामा०। व्यवधाने गिरिर्वा व्यवधायकः। “महानद्यन्तरं यत्र तद्देशान्तरमुच्यते इ०मनुः। “निरन्तराभ्यन्तरवातवृत्तिषु” कुमा० निरन्तरमव्यवधानम् इत्यर्थः। “एकान्तरे आनुलोम्यादिति” मनुः। भेदे “सैव विशिनष्टि पुनःप्रधानपुरुषान्तरं सूक्ष्ममिति” सा०का०। “शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरमिति” हितो०। “यदन्तरं सर्पपशैलराजयोर्यदन्तरं वायसवैनतेययो-रिति” रामा०। व्यसने। “प्रहरेदन्तरे रिपुम्”। वहिर्योगे “अन्तरे च पुरात् चाण्डालावासा” इति। उपसंव्याने (उत्तरीयवस्त्रे) अन्तरं परिदधाति। सदृशे, “स्थानेऽन्तरतम” इति पा० अन्तरशब्दस्य पुरीभिन्ने एव विशेष्ये सर्वनामकार्यम् “सुमेधसामन्तरस्मै” इति सि०कौ०,मु०बो०। पुर्य्यान्तु न, अन्तरायै नगर्य्यै। तत्रापि वहिर्योगे उपसंव्याने एव सर्वनामता। मयूरव्यंसादित्वात् नञादेशान्तरशब्दस्य स्वजातीयभिन्ने वृत्तिः शब्दस्वाभावात् “राजान्तरं राजसुतां निनायेति” रघुः। अन्यो राजा मयू० “राजान्तरमिति” मल्लिना० “देशान्तरस्थे पत्यौ साध्वी तत्पादुकाद्वयमिति” स्मृतिः “स्वमेव मूर्त्त्यन्तरमष्टमूर्त्तिरिति “अर्थोऽयमर्थान्तरभाव्य एव” इति च कुमा०। अन्तरस्य भावः ब्राह्मा० ष्यञ्। आन्तर्य्यं सादृश्ये न० “यत्रानेकविधमान्तर्य्यं तत्र स्थानत आन्तर्य्यं बलीय” इति परि०सि०कौ०। अन्तरे भवः अण् आन्तरः तद्भवे त्रि०। “कश्चन आन्तरो भाव इति” सा०द०। “अन्तःकरणमान्तरमिति” वेदा० व्यवकलने (वियोजने) “कुर्य्याद् यथा स्वाननकमन्तरं वेति” लीला०।

**अन्तरग्नि** पु० अन्तर्वर्त्ती अग्निः। जठरानले “दीप्तान्तरग्निः परिशुद्धकोष्ठ” इति “शाम्यन्ति चायं चिरमन्तरग्नेरिति” “इच्छाभिघातभयशोकहतेऽन्तरग्नौ” इति च सुश्रुतम्। अग्नेर्मध्ये अव्य०। अग्निमध्ये अव्य०।

**अन्तरङ्ग** पु० अन्तरं सदृशमङ्गं यस्य। अत्यन्तप्रिये, “समीपगोऽन्तरङ्गःप्रियो भवतीति” छा०उप०भा०। “चरमगिरिकुरङ्गीशृङ्गकण्डूयनेन स्वपिति सुखमिदानीमन्तरङ्ग

कुरङ्गः" इति । बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये अन्तर्भूतानि अङ्गानि निमित्तानि यस्य । व्याकरणोक्ते परनित्यबहिरङ्गबाधके नैमित्तिककार्य्यभेदे, तद्बोधकशास्त्रे च । यथा ग्रामणिनी कुले इत्यादौ "इकोऽचीति"पा०)नित्यप्राप्तं नुमं बाधित्वा "ह्रस्वो नपुंसके" इति पा० ह्रस्वः । पूर्व्वं कृते तु नुमि अजन्तत्वाभावात् ह्रस्वो न स्यात् । ततश्च नुमूरूपकार्य्यं प्रत्ययस्याजूरूपं निमित्तमपेक्षतेइति तद्बहिरङ्गं ह्रस्वस्तु प्रकृतिमात्रमपेक्षत्वात् अन्तरङ्ग इति तस्य बहिरङ्गनिमित्तककार्य्यबाधकत्वे बीजम् । "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति" "असिद्धं बहिरङ्गमन्तरङ्गे" इति च परि०सि०कौ० । एतन्मूलिकैव "बहिरङ्गविधिभ्यस्तु अन्तरङ्गविधिर्बलीति"कारिका । अन्तः आसन्नमङ्गं कर्म्म० । आरादुपकारके न० यथा ब्रह्मसाक्षात्कारे श्रवणमनननिदिध्यासनानि, संप्रज्ञातसमाधौ च धारणादीनि त्रीणि अन्तरङ्गाणि । यमादयस्तु पञ्च बहिरङ्गाणि । तथा हि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयइत्यष्टौ संप्रज्ञातसमाधेरङ्गानि तत्र यमादयः बहिरङ्गाणि, प्रतिबन्धकस्य चित्तकायप्राणेन्द्रियमलस्य निवर्त्तनेन परम्परया उपकारकत्वात्, धारणादयस्तु संप्रज्ञातसमाधेः समानविषयतया साक्षात्स्वरूपोपकारकत्वादन्तरङ्गाणीति अत एव धारणादित्रयमभिधाय "त्रयमन्तरङ्गं पूर्व्वेभ्य" इति पात०सूत्रे धारणादित्रयस्यान्तरङ्गत्वमुक्तम् । धारणादिस्वरूपादि तत्तच्छब्दे वक्ष्यते । असंप्रज्ञातसमाधौ तु सर्व्वाण्येव बहिरङ्गाणि असमानविषयत्वादिति बोध्यम् ।

**अन्तरचक्र** न० अन्तरं मध्यवर्त्ति चक्रम् । तन्त्रोक्तेषु देहस्थसुषुम्णामध्यस्थेषु मूलाधारादिषु षट्सु पद्माकारचक्रेषु । विवरणं षट्चक्रशब्दे द्रष्टव्यम् । ६त० । आत्मीयसमूहे न० ।

**अन्तरज्ञ** त्रि० अन्तरं भेदं विशेषं जानाति ज्ञा—क ६त० । विशेषज्ञे "नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते" इति किरा० ।

**अन्तरण** न० अन्तरं व्यवहितं करोति अन्तर+णिच्—भावे ल्युट् । अन्तरितकरणे व्यवधापने, "हविरन्तरणे प्राक् प्रधानेज्यायाः" इति कात्या० २५.५.१५, "यदि नाम हविरन्तरितं न स्वष्टीतमेव, प्राक् प्रधानेज्यायाः स्वत्वा अन्यादरेत् हविषोऽन्तरणं बहूनां मध्ये एकस्यापहरणमिति" तद्भा० ।

**अन्तरतम** त्रि० अतिशयेन अन्तरः सदृशः, अत्यन्तसदृशे "स्थानेऽन्तरतम" इति पा० । सादृश्यञ्च "तुल्यास्यप्रयत्नमिति" पा० सूत्रोपात्तं स्थानादिसाम्यम्, यथा ककारादीनां ङकारादिषु तुल्यस्थानप्रयत्नवत्त्वेन साम्यम् एवं सकारस्य थकारे । आत्मीयतमे च ।

**अन्तरतस्** अव्य० सप्तम्यर्थे तसि । मध्ये इत्याद्यर्थे । "तमन्तरतःकृत्वा रावणं वाक्यमब्रवीत्" इति रामा० ।

**अन्तरदृश्** पु० अन्तरे हग् यस्य । अन्तरस्थ परमात्मानुसन्धायिनि । अन्तरं भेदं पश्यति दृश-क्विप् ६त० । विभेदद्रष्टरि त्रि० ।

**अन्तरदेश** पु०कर्म्म० । मध्यदेशे तद्विवरणं मध्यदेशशब्दे द्रष्टव्यम् ।

**अन्तरपु(पू)रुष** पु० अन्तरः मध्यवर्त्ती पुरुषः वा दीर्घः । अन्तर्यामिणि परमेश्वरे । "मन्यन्ते व पापकृतो "न कश्चित् पश्यतीति नः" । तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुष" इति मनुः ।

**अन्तरपूजा** स्त्री ७त० तन्त्रोक्ते मनःकल्पितोपचारेण पूजायाम् तत्प्रकारस्तु अन्तर्यागशब्दे वक्ष्यते ।

**अन्तरप्रभव** पु० अन्तरेभ्यो भिन्नवर्णमातृपितृभ्यः प्रभवति प्र+भू—अच् ५त० । सङ्कीर्णवर्णे मूर्द्धावसिक्तादौ । अन्तरप्रभवाश्च द्विविधाः अनुलोमजाः, प्रतिलोमजाश्च तत्रोत्कृष्टवर्णात् अपकृष्टवर्णायां स्त्रियां जाताः मूर्द्धावसिक्तादयः अनुलोमजाः, अपकृष्टवर्णात् उत्कृष्टवर्णायां स्त्रियां जाताः प्रतिलोमजाः सूतादयः । "भगवन्! सर्व्ववर्णानां यथावदनुपूर्व्वशः । अन्तरप्रभवानाञ्च धर्म्मान्नो वक्तुमर्हसीति" मनुः । एतेषां भिन्नवर्णजातत्वात् अन्तरनामत्वमपि मनुना हि अनुलोमजान् प्रतिलोमजांश्च उक्त्वा "तानन्तरनाम्नस्तु मातृदोषात् प्रचक्षते" इत्युक्तम् । अधिकं वर्णसङ्करशब्दे वक्ष्यते ।

**अन्तरय** पु० अन्तर्मध्ये अयः गमनम् इण—अच् । मध्यगतौ व्यवधाने । स्युङन्तमयत्र न० । अन्तरं याति या—क । देहमध्यस्थचित्तगते त्रि० ।

**अन्तरशायिन्** पु० अन्तरे शेते शी+णिनि । चित्तस्थे जीवे । तस्य तत्र प्रतिबिम्बरूपेण स्थितत्वात्तथात्वम् ।

**अन्तरस्थ** पु० अन्तरे देहमध्ये तिष्ठति स्था—क ७त० । देहमध्यस्थचित्तस्थे जीवे ।

**अन्तरा** अव्य० अन्तरेति इण्—डा । निकटे, मध्ये, विनार्थे च । तत्र मध्ये "अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेदिति" या० । "अन्तरा स्तनस्तनके" इति स्मृतिः । "पशुमण्डूकमार्ज्जारश्वसर्पनकुलादिभिः अन्तरा गमने, विद्यादनध्यायमहर्निशमिति" मनुः । "सौमित्रेर्निमित्तैर्वाणैरन्तरा शकलीकृता" इति रघुः । "अन्तेले बीज-

सतृस्य तदनन्तरैव विनश्यति" इति मनुः। द्वयोर्मध्ये "अन्तरान्तरेण युक्ते" पा० उक्तेः एतत्सम्बन्धिपदात् द्वितीया। "अन्तरा त्वां मां हरिरिति" सि०कौ०। वर्ज्जने निकटे च मेदिनिः। [विनाऽप्यन्तराकेति" सा०द०।

**अन्तरात्मन्** पु० कर्म्म०। जीवात्मनि। "तदपि न हरिणाक्षी'

**अन्तरापत्या** स्त्री अन्तरे गर्भमध्येऽपत्यं यस्याः। गर्भवत्यां स्त्रियाम्।

**अन्तराय** त्रि० अन्तरं व्यवधानमयते अय–अच्। व्यवधानकारके। "अस्य ते वाणपातपथवर्त्तिनः कृष्णसारस्यान्तरायौ तपस्विनौ संवृत्तौ" शकु०। विघ्ने च "त्वमन्तरायो भवसि च्युतो विधिरिति" रघुः। "वैरी न चेद्गु वेपथुरन्तराय" इति सा०द० "समाध्यन्तरायाश्च लयादयः वेदान्तसारे दर्शिताः यथा। "अस्याङ्गिनोनिर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारोविघ्नाः सम्भवन्ति। लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा। अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः। लयविक्षेपयोरभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावादखण्डवस्त्वनवलम्बनं कषायः। अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पानन्दास्वादनं रसास्वादः, समाध्यारम्भसमये सविकल्पानन्दास्वादनं वा। अनेन विघ्नचतुष्टयेन रहितं चित्तं निर्व्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा, तदा निर्व्विकल्पकसमाधिरित्युच्यते। तदुक्तम्। "लये संबोधयेत् चित्तं विक्षिप्तं शमयेत्पुनः। सकषायं विजानीयात् शमप्राप्तं न चालयेत्। नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्" इति। योगशास्त्रोक्ताः प्रधानपुरुषसाक्षात्कारात् प्राग्भवाः प्रातिभादयः सिद्धयः विवेकसाक्षात्कारस्योपसर्गापरपर्य्याया अन्तरायाः यथोक्तं पातञ्जलसूत्रे "ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते" इत्यनेन प्रातिभादिसिद्धीरुक्त्वा "ते समाधावुपसर्गा व्युत्थाने सिद्धय इति" अयमर्थः। योगजशुक्लधर्म्मानुस्पृष्टेन मनोमात्रेण सर्वगोचरज्ञानं प्रातिभसिद्धिः। दिव्यानां शब्दस्पर्शरूपरसगन्धानां ग्रहणे योगजधर्म्मानुस्पृष्टानि श्रवणादीनि यथाक्रमं समर्थानि यदा भवन्ति तदा श्रावणवेदनादर्शास्वादवार्त्ताख्याः सिद्धयः। तथा च दिव्यशब्दग्रहणे यदा योगिनः श्रवणं समर्थं भवति तदा श्रावणमिति संज्ञा एवं दिव्यस्पर्शग्रहणसमर्था त्वक् वेदनासंज्ञा, दिव्यरूपग्रहणे समर्थं नेत्रं दर्शसंज्ञम्। दिव्यरसास्वादे समर्था रसना आस्वादसंज्ञा, दिव्यगन्धग्रहणे समर्थं घ्राणं वार्त्तासंज्ञा। ते प्रातिभादयः निःश्रेयसफले समाधौ तस्य योगिनः व्युत्थानसमये योगविरामकाले जायमानाः उपसर्गा भवन्ति। अतो मोक्षार्थी तानुपेक्षेतेति उपदेशप्रयोजनम् तद्ब्रह्मसाक्षात्कारं विना सिद्धिकोट्यापि कृतकृत्यता भवतीति।

**अन्तराराम** पु० अन्तरे सर्व्वाभ्यन्तरेऽतिसूक्ष्मत्वात् आत्मनि आरमते क्रीडति आ+रम कर्त्तरि घञ्। आत्माभिरते। "योऽन्तःसुखोऽन्तराराम" इति गीता।

**अन्तराल** न० अन्तरं व्यवधानसीमामाराति गृह्णाति आ+रा-क रस्य लत्वम्। मध्ये अभ्यन्तरे। "तुतोष पश्यन् वितृणान्तराला" इति भट्टिः। "वधूप्रवेशोऽष्टदिनान्तराल" इति सङ्ग्र० "दिङ्नामान्यन्तराले" पा०। सङ्कीर्णवर्णे च। "वर्णानां सान्तरालानां स सदाचार उच्यते" मनुः। तद्वर्त्तिनि त्रि० स्वार्थे ष्यञ् आन्तरालमप्यत्र न०।

**अन्तरालदिक्** स्त्री अन्तराला दिक्। दिशो मध्यायां विदिशि ऐशान्यादौ कोणे।

**अन्तरावेदि(दी)** स्त्री अन्तरा मध्यस्था वेदिः वा ङीप्। गजयोर्युध्यमानयोर्मध्यस्थायां स्तम्भवेद्याम्। "जयश्रीरन्तरावेदी मत्तवारणयोरिव" रघुः। अन्तरेति पृथक्पदमिति मल्लि०। "सम्मृष्टे चान्तरावेद्यामिति" त्रिका०।

**अन्तरिक्ष** न० अन्तः स्वर्गपृथिव्योर्मध्ये ईक्ष्यते ईक्ष–कर्म्मणि घञ्, अन्तः ऋक्षाणि अस्य वा पृषो० पक्षे ह्रस्वः अकारस्य रित्वं वा। पवनमेघसञ्चारयोग्ये भूलोकस्वर्गमध्यवर्त्तिनि आकाशप्रदेशे। "पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्ताव" इति छा० उप०। "अन्तरिक्षगतांश्चैव मुनीन् देवांश्च इति" मनुः। "तिर्य्यक् चान्तरिक्षं व्यपोह्हितमिति" अथ०। "अदितिर्द्यौरदितिरन्तरिक्षमिति" ऋ० १,८९,१०। "अदितिरदीना अखण्डनीया वा पृथिवी देवमाता वा सैव द्यौर्द्योतनशीलो नाकः तत्र सैवान्तरिक्षम् अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योमेति" भा०। "विश्वमाप्रा अन्तरिक्षमिति" ऋ० १,५२,१३। अन्तरिक्षमन्तरिक्षान्तं द्यावापृथिव्योर्मध्ये वर्त्तमानमाकाशं विश्वं सर्वमिति" भा०। "दिवञ्च पृथिवीं चान्तरिक्षमथो स्वरिति" सन्ध्यामन्त्रः। तत्र द्यावापृथिवीमध्यस्थाकाशस्यैव भुवर्लोकरूपस्यान्तरिक्षत्वम्। "साद्याभ्यन्तरिक्षस्य धर्त्रीमिति" य० १४,५। अन्तरिक्षस्य भुवर्लोकस्य धर्त्रीमिति" वेददीपः। अत्र अन्तरीक्षमपि। अस्य चान्तरीक्ष–

निरुक्तिः श्रुतौ। "योऽन्तरे नाकाश आसीदन्तरीक्षमभव-दीक्षं हि तन्नाम ततः पुरान्तरा वा इदानीमीक्षमभूदिति" तस्मादन्तरीक्षमिति"।

**अन्तरिक्षप्रा** त्रि० अन्तरिक्षं प्राति पूरयति प्रा–पूरणे विच्। अन्तरिक्षपूरके "अन्तरिक्षप्रां तविषीभिरावृतमिति" ऋ० १,५१,२। "अन्तरिक्षं द्युलोकं स्वतेजसा प्राति पूरयतीति" विच्, भा०।

**अन्तरिक्षप्रुत्** त्रि० अन्तरिक्षं प्रवते प्रुङ् गतौ क्विप्। अन्तरिक्षचरे "अन्तरिक्षप्रुद्भिरपोदकाभिरिति" ऋ०१,११६,३।

**अन्तरिक्षसद्** त्रि० अन्तरिक्षे सीदति सञ्चरति सद–गतौ क्विप्। आकाशचारिणि। "हंसः शुचिषद्वसुरन्तरिक्ष-सदिति ऋ० ४,४०,५। "अन्तरिक्षसद अन्तरिक्षसञ्चा-रीति" भा०।

**अन्तरिक्षसद्य** त्रि० अन्तरिक्षे सद्यम् सदनं सद–भावे यत्। अरिक्षसदने। "उपरि सद्यं वा एष जयति यो जयत्यन्तरिक्षसद्यमिति" कौ० ब्राह्म०।

**अन्तरिक्ष्य** त्रि० अन्तरिक्षे भवः यत्। अन्तरिक्षभवे। "पवतामन्तरिक्ष्या इति ऋ० ८,२६,५।

**अन्तरित** त्रि० अन्तर्–इण–कर्त्तरि क्त २त०। अन्तर्गते अन्तरं व्यवधानं करोतीति णिचि कर्म्मणि क्त। व्यवधानीगते, व्यवधापिते, तिरस्कृते आच्छादिते, "द्विरेफवृन्दान्तरितैः सरोरुहैरिति" किरा०। अपसारिते, "कुर्य्यात् यथास्थानकमन्तरं वेति" लीलावत्यामन्तरशब्दस्य वियोजने प्रयोगात् तत्प्रकृतिकतया वियोजिते च।

**अन्तरिन्द्रिय** न० कर्म्म०। अन्तःकरणे।

**अन्तरीक्ष** न० अन्तरिक्षवत्सर्व्वम्। [इके आकाशात्पतितजले

**अन्तरीक्षजल** न० अन्तरीक्षात् पतितं जलम् शा०त०। दिव्यो-

**अन्तरीप** पु० अन्तर्मध्ये गता आपोऽस्य ब०अच् समा० आत-ईत्वम्। द्वीपभेदे। द्वीपस्य हि जलमध्यस्थत्वात् अन्तर्गत-जलत्वात्तथात्वम् द्वयोस्तु भेदः चतुर्दिक्षु जलसत्त्वे तस्य अन्तरीपत्वम् द्वयोर्दिशोर्जलसत्त्वे द्वीपत्वमित्यनयो-र्भेदः। काकाक्षिगोलकन्यायात् "द्वीपोऽस्त्रियामन्तरीप-मित्यत्रापि अस्त्रियामित्यस्य अन्वय इति तेनायं पुंस्त्री० इति केचित्।

**अन्तरीय** न० अन्तरे भवं गहादित्वात् छ। "नाभौ धृतस्य यद्वस्त्रमाच्छादयति जानुनी। अन्तरीयं प्रशस्तं तद-च्छिन्नमुभयान्तयो" रित्येवंलक्षणे परिधाने वस्त्रे। भवाद्यर्थे धूमा० वुञ्। आन्तरीयकः तद्भवे त्रि०।

**अन्तरे** अव्य० अन्तरेति इण्–विच्। मध्ये। "आनन्देऽथा-न्तरेऽन्तरा, अन्तरेण च मध्ये स्युरित्यमरः"।

**अन्तरेण** अव्य० अन्तरेति इण्–ण टवर्गादित्वेऽपि णस्य नेत्त्वम्। विनार्थे, मध्यार्थे च। तत्र विनार्थे "अन्तरेणाञ्जलिं बद्धा लक्ष्मणस्य प्रसादनमिति" रामायणम्। मध्ये "अन्तरेण वै योनिं गर्भः सञ्चरति" कौ०ब्रा०। "अन्तरेणापां गुणम् इति" श्रुतिः। तत्र विनार्थे, द्वितीयातृतीये पर्य्यायेण, "श्रीनिवेशेन विना शम्भुनान्तरेणाच्युतं सुखमिति" मु०बो०। उभयोर्मध्ये ऽर्थे द्वितीया "अन्तरेणाहवनीयं गार्हपत्यञ्चेति" कौ० ब्रा०।

**अन्तर्गडु** त्रि० अन्तर्मध्ये गडुरिव निरर्थकः। ग्रीवाप्रदेशे जातस्य गलमांसपिण्डस्य गडोर्यथा निरर्थकत्वम् तद्व-न्निरर्थके। "किमनेनान्तर्गडुनेति सर्व्वदर्शन सं०। "अन्त-र्गडु निरर्थकमिति" मेदिनिः।

**अन्तर्गत** त्रि० अन्तःअन्तकरणे गतः। अन्तःकरणस्थे देहस्थे च "अन्तर्गतं प्राणभृतां हि वेद" इति रघुः। "येषामन्तर्गतं पापं जनानां पुण्यकर्म्मणामिति" पुरा०। "अन्तर्गता मदन-वह्निशिखावली या सा बाध्यते किमिह चन्दनचर्च्चिते-नेति" उद्भटः। अभ्यन्तरस्थे च "अन्तर्गतशवे ग्रामे इष-लस्य च सन्निधाविति"। "नेत्रवक्त्रविकारेण लक्ष्यते-ऽन्तर्गतं मनः" इति च मनुः। अन्तर्गतफलारम्भाः शस्यानामिव सम्पदः" इति रघुः।

**अन्तर्गर्भ** त्रि० अन्तरभ्यन्तरस्थो गर्भोऽस्य। अभ्यन्तरस्थगर्भयुक्ते। "कुशौ समावप्रशीर्षावनन्तर्गर्भाविति" कात्या० २,२, २१। गर्भस्य मध्यम् अव्ययी०। गर्भमध्ये अव्य०।

**अन्तर्गर्भिन्** त्रि० अन्तर्मध्ये गर्भोऽस्यस्य इनि। मध्यस्थ-गर्भयुक्ते। "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव चेति" पवित्रलक्षणे कात्यायन स्मृतिः।

**अन्तर्गृह** न० अन्तःस्थं गृहम्। वाराणसीस्थे सप्तावरणवति स्थानविशेषे "अन्यस्थाने कृतं पापं वाराणस्यां विन-श्यति। वाराणस्यां कृतं पापं पञ्चक्रोश्यां विनश्यति। पञ्चक्रोश्यां कृतं पापमन्तर्गृहे विनश्यति"॥ काशीमा०। अन्तर्गृहमध्ये "अन्यत्र यत्कृतं पापं तत्काश्यां परिणश्यति वाराणस्यां कृतं पापं मन्तर्गृहे विनश्यति अन्तर्गृहे कृतं पापं पैशाच्यनरकावहमिति" "देवो विरजसः पीठादन्तर्गृहं विवेश चेति" च काशी०। मध्यस्थगृहे च। गृहस्य मध्यम् अव्ययी० गृहस्य मध्ये अव्य०।

**अन्तर्घण** पु० अन्तर्हन्यते क्रीडीभवत्यत्रिन् अन्तर्+हन–अप्

नि॰ षादेशः षत्वम् । द्वारमतिक्रम्य स्थिते सावकाशे देशे "तस्मिन्नन्तर्घणे पश्यन् प्रघणे सौधसद्मनः" इति भट्टिः ।

**अन्तर्जठर** अव्य॰ जठरस्य मध्यम् अव्ययी॰ । जठरस्य मध्ये, उपचारात् तत्स्थकोष्ठे न॰ ।

**अन्तर्जात** त्रि॰ अन्तर्देहमध्ये जातः । देहाभ्यन्तरजाते ।

**अन्तर्जानु** अव्य॰ जानुनोर्मध्यम् अव्ययी॰ । जानुनोर्मध्ये "अन्तर्जानु शुचौ देश उपविष्ट उदङ्मुखः । प्राग् वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेदिति" या॰ "जानुनोर्मध्ये हस्तौ कृत्वेति" रघु॰ ।

**अन्तर्ज्योतिस्** न॰ अन्तर्गतं ज्योतिःप्रकाशकत्वात् चैतन्यम् । सर्वान्तर्यामिनि परब्रह्मरूपचैतन्ये तस्य सर्वान्तर्यामित्वात्तथात्वम् ।

**अन्तर्ज्वलन** न॰ अन्तः देहान्तरस्य ज्वलनम् । रोगकृते देहान्तर्दाहे । अन्तःस्थो ज्वलनः । जठरानले पु॰ ।

**अन्तर्दधन** न॰ अन्तर्दध्यते आधीयते मादकताऽनेन दध-करणे ल्युट् । किण्वप्रभृतौ मद्यबीजे ।

**अन्तर्दशा** स्त्री अन्तर्गता दशा आधिपत्यकालः । ज्योतिषोक्ते महादशान्तर्गते ग्रहाणां स्वाधिपत्ययुक्तकालभेदे । दशा च नानाविधा तत्र दशाशब्दे वक्ष्यन्ते । तत्राष्टोत्तरीयदशायामन्तर्दशाऽभिधीयते वङ्गे च तस्या एव प्रचलितत्वम् । "षट् सूर्य्यस्य दशा ज्ञेयाः शशिनोदश पञ्च च । अष्टावङ्गारके ज्ञेया बुधे सप्तदश स्मृताः । शनैश्वरे दश प्रोक्ता गुरोरेकोनविंशतिः । राहोर्द्वादश वर्षाणि भृगोरप्येकविंशति"रित्युपक्रम्य सत्याचार्य्यैः "कृत्तिकादित्रये सूर्य्यः सोमो रौद्रचतुष्टये । मघादित्रितये भौमो बुधो हस्तचतुष्टये ॥ अनुराधात्रये सौरिर्गुरुः पूर्व्वाचतुष्टये । धनिष्ठात्रितये राहुः शेषे शुक्रः प्रकीर्त्तितः ॥ सूर्य्योपप्लवभौमार्किदशातिकष्टदा नृणाम् । गुरुज्ञचन्द्रशुक्राणां यथेप्सितफलप्रदा" ॥ अन्तर्दशाज्ञानं यथा । "स्वदशाभिर्दशां हत्वा नवभिर्भागमाहरेत् । लब्धा मासास्तु तच्छेषं पूरयित्वा तु त्रिंशता ॥ अष्टौ हृत्वा दिनं लभ्यं तच्छेषे घटिपूरिति । नवभिश्च हृते लब्धा ज्ञेया दशक्रमादन्तरे ॥ रवेः षड्वर्षमध्ये तु वेदा ४ मासा रवेर्निजाः । चन्द्रस्य दश मासाश्च दिग्दिनं पञ्चमासकाः । कुजस्य, षष्ठ रुद्रास्तु मासा दिग्दिवसाः, शनेः । ऋतुमासाश्च विंशच्च गुरोर्वर्षौ द्युविंशतिः । राहोर्मासाष्टकं ज्ञेयं भृगोर्वर्षस्तु मासकौ एवं ग्रहाणामन्येषामूह्याद्दैवान्तरादयः । यद्ग्रहस्यान्तरे यस्तु यत्संख्यकालमाप्तवान् । तत्संख्यं स्वान्तरे तत्तं स दद्यादिति निश्चयः । स्वान्तरे ग्रहणे स्वांशं स्वांशेन पूरयेत् सदा इति" ज्यो॰त॰ । विंशोत्तरीये तु । "आर्चं कुराजीशबुकेशुपूर्व्वा वह्न्यादितो भात् क्रमशस्त्रिवारम् । मानं रसाशानगदन्तिचन्द्रकलाङ्कचन्द्राद्रिरसाद्रिविंशा" इत्युक्तेः कृत्तिकादिक्रमेण रव्यादीनां त्रिवारं रसादिमिता वर्षा महादशा । यथा कृत्तिकायां जातौ रवेः षट्वर्षाः, रोहिण्यां जातौ चन्द्रस्य १० वर्षाः, मृगे, कुजस्य ७ वर्षाः, आर्द्रायां राहोः १८ वर्षाः, पुनर्वसौ जीवस्य १६ वर्षाः, पुष्ये जातौ शनेः १९ वर्षाः, अश्लेषायां बुधस्य १७ वर्षाः, मघायां केतोः ७ वर्षाः, पूर्व्वफाल्गुन्यां जातस्य शुक्रस्य २० वर्षाः, एवमुत्तरफाल्गुन्यादिषु नवसु उत्तराषाढ़ादिषु नवसु च रव्यादीनां यथाक्रमं षड़ादिवर्षाः । तदन्तर्दशा तु "स्वदशाभिर्दशां हत्वा वसुभिर्भागमाहरेदिति" विशेषः । तत्र उभयोर्दशयोरनुपातेनान्तर्दशामानमूह्यम् यथा यदि १०८ वर्षैः ६ वर्षाः तदा ६ वर्षैः किमिति इत्यादिक्रमेण त्रैराशिकेन तत्तन्मानम् एवं १२० वर्षैः यदि ६ वर्षाः तदा ६ वर्षैः किमित्यादिक्रमेण त्रैराशिकेन तत्तन्मानसिद्धिः । एवं योगिन्यादिदशायामपि अन्तर्दशामानमूह्यम् ।

**अन्तर्दशाह** अव्य॰ दशाहस्य मध्यम् अव्ययी॰ । दशाहाभ्यन्तरे "अन्तर्दशाहे स्यातांचेत् पुनर्मरणजन्मनी" इति मनुः दशाहपदं स्वस्वजात्युक्ताशौचदिनपरम् ।

**अन्तर्दहन** न॰ अन्तरभ्यन्तरे दहनम् । रोगकृते देहाभ्यन्तरदाहे । अन्तःस्थः दहनः । जठरानले पु॰ ।

**अन्तर्दाह** पु॰ अन्तर्मध्ये दाहः । देहाभ्यन्तरसन्तापे ।

**अन्तर्दुष्ट** त्रि॰ अन्तः अन्तःकरणे दुष्टः । दुष्टान्तःकरणे ।

**अन्तर्द्वार** न॰ अन्तर्गतं द्वारम् । गृहमध्यस्थे गुप्तद्वारे । जालद्वारे क्षीरस्वामी (खिड़की) द्वारे शबरः ।

**अन्तर्द्धा** स्त्री अन्तर्+धा क्रियां भावेऽङ् । अन्तर्द्धाने तिरोधाने "अन्तर्द्धामुपययुरुत्पलावलीषु" इति माघः ।

**अन्तर्द्धान** न॰ अन्तर्+धा–ल्युट् । तिरोधाने दृश्यपदार्थस्य दर्शनायोग्यस्थाने स्थितौ, मुन्यादीनां शरीरत्यागे च । "अन्तर्द्धानं गते रामेइति" रामायणम् ।

**अन्तर्द्धि** पु॰ अन्तर्+धा–कि । आच्छादने, व्यवधाने, अन्तर्धाने च "अन्तर्द्धौ येनादर्शनमिच्छति" पा॰ ।

**अन्तर्नगर** न॰ नगरस्य मध्यम् अव्ययी॰ । नगरमध्ये अन्तःस्थं नगरम् कर्म्म॰ । अन्तःपुरे । "दशाननान्तर्नगरं ददर्शेति" रामा॰ ।

**अन्तर्भाव** पु० अन्तर्मध्ये भावः प्रवेशः। मध्यप्रवेशे समुदायमध्यपाते। "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मक" इति हरिका०। स्वविषयकज्ञानविषयत्वे च भवति च वह्निमद्धूमविषयत्वाद्धूमे वह्निमदन्तर्भावः। अन्तःस्थोभावः। चित्तवृत्तिभेदे।

**अन्तर्भावना** स्त्री अन्तःस्था व्यञ्जकचेष्टाकारादिरहिता भावना। व्यञ्जकचेष्टादिशून्ये चिन्तने।

**अन्तर्भावित** त्रि० अन्तर्+भू–णिच्–क्त। मध्यप्रवेशिते समुदायान्तर्भूतीकृते। "अन्तर्भावितसत्त्वं चेत् कारणं तदसत्त्वतः। नान्तर्भावितसत्त्वं चेत् कारणं तदसत्त्वत" इति खण्डनखण्डखाद्यम्। अव्यवहितपूर्ववर्त्तितया कारणस्य यत् सत्त्वमुररीक्रियते तस्य सत्त्वमस्ति न वा तस्य सत्त्वस्वीकारे पुनस्तत्सत्त्वस्य सत्त्वस्वीकारेऽनवस्थापातः ततश्च उत्तरत्र एकस्य सत्त्वमनङ्गीकृत्यैव अनवस्था वारणीया तथाच कारणसत्त्वेऽपि कुतः तथा नाङ्गीक्रियते। एवं च विनापि सत्त्वं, तदङ्गीकृत्य कारणतास्वीकारे न कोऽपि दोषोऽस्ति इति तदाशयः।

**अन्तर्भूत** त्रि० अन्तर्मध्ये भूतः भू+क्त। मध्यस्थिते, अन्तर्गते च। "कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्म्मकैर्योगे कर्म्मत्वमुपजायते" इति हरिका०। "एष वै भगवान् विष्णुरन्तर्भूतः सनातन" इति पुरा०।

**अन्तर्मनस्** त्रि० अन्तर्गतं वाह्यव्यापारशून्यतया अन्तरेव स्थितं मनो यस्य। व्याकुलचित्ते, समाहितमनस्के च। दुःखितस्य हि वाह्यतदितरव्यापारशून्यतया तत्प्रतीकारचिन्तनायान्तरेव मनसः स्थितत्वात् तथात्वम् समाधिस्थस्य तु वाह्यविषयपरिहारेण ध्येयात्ममात्रगोचरमनस्कतया तथात्वमिति भेदः।

**अन्तर्मुख** त्रि० अन्तःपरमात्मा मुखं प्रवेशद्वारं यस्य। वाह्यवस्तुपरिहारेण परमात्मविषयकतया प्रवेशयुक्ते चित्तादौ। अन्तरभ्यन्तरे मुखं यस्य। सुश्रुतोक्ते व्रणस्रावणसाधने शस्त्रभेदे न०। "सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्चकानि विस्रावणे" इति सुश्रुतम्। अन्तःकरणं अविद्यावृत्तिरूपं द्वारं सुखानुभवे यस्य। स्वरूपसुखानुभवहेतुना अविद्यावृत्तिरूपान्तःकरणेन सुषुप्तौ आनन्दानुभवकारके प्राज्ञाख्ये जीवभेदे "आनन्दभुक् चेतोमुखः प्राज्ञः" इति श्रुतौ प्राज्ञस्य आनन्दभोगे चेतोमुखत्वोक्त्या तथात्वम्। मुखस्य मध्यम् अव्ययी०। मुखस्य मध्ये इत्यर्थे अव्य०।

**अन्तर्मातृका** स्त्री अन्तःस्था षट्चक्रस्था मातृका अकारादिवर्णाः। तन्त्रोक्तेषु षट्पद्मस्थेषु अकारादिषु वर्णेषु। ते च वर्णा अन्तर्मातृकान्यासशब्देऽनुपदं वक्ष्यन्ते।

**अन्तर्मातृकान्यास** पु० अन्तःस्थाया मातृकाया न्यासः उच्चारणपूर्व्वकं तत्तत्स्थानेषु न्यासः। अन्तःस्थमातृकावर्णानां स्मरणपूर्व्वकं तत्तत्स्थानेषु न्यासे। यथा "न्यासोऽथान्तर" इत्युपक्रम्य "द्व्यष्टपत्राम्बुजे कण्ठे स्वरान् षोड़श विन्यसेत्। द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत्। दशपत्राम्बुजे नाभौ डकारादीन्न्यसेद्दश। षट्पत्रमध्ये लिङ्गस्थे बकारादीन्न्यसेच्च षट्। आधारे चतुरोवर्णान् न्यसेद्वादीन् चतुर्द्दले। हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये!। तन्मध्ये परबिन्दुञ्च सृष्टिस्थितिलयात्मकम्। एवं समाहितमना ध्यायेच्चाशेषमान्तरः" इति तन्त्रसारः।

**अन्तर्मृत** पु० स्त्री अन्तर्गर्भाशये मृतः। गर्भाशये मृते बालकादौ "भवत्युच्छासपूतिश्च शूलं चान्तर्मृते शिशौ" इति सुश्रुतम्।

**अन्तर्य्य** त्रि० अन्तरे भवः दिगा०यत्। मध्यभवे।

**अन्तर्याग** पु० अन्तरन्तःकरणेन मनसा कल्पितोपचारैर्यागः पूजा होमश्च। तन्त्रोक्ते मानसोपचारैः पूजने, होमभेदे च। "अर्च्चयन् विषयैः पुष्पैस्तत्त्वयात् तन्मयो भवेत्। न्यासेस्तन्मयताबुद्धिः सोऽहंभावेन पूजयेत्"। तन्मयेति तदेकत्वज्ञानं सोऽहमिति, "मन्त्राक्षराणि तच्चक्रे प्रोतानि परिभावयेत्। तामेव परमव्योम्नि परमानन्दबृंहिते। दर्शयत्यात्मसद्भावं पूजा होमादिभिर्विनेति"। विषयपुष्पाणि यथा। अमायामनहङ्कारमरागममदं तथा। अमोहकमदम्भञ्च अनिन्दाऽक्षोभकौ तथा। अमात्सर्य्यमलोभञ्च दशपुष्पं विदुर्बुधाः। अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहः। दया पुष्पं क्षमा पुष्पं ज्ञानं पुष्पञ्च पञ्चमम्। इत्येवमादिभिः १५ पुष्पैः पूजयेत् परदेवताम्"। अथ होमः। "आत्मानमपरिच्छिन्नं विभाव्यात्मानमन्तरा परमात्मज्ञानमेकस्वरूपं संविभाव्य च। चतुरस्रं तु चित्कुण्डमानन्दमेखलायुतम्। अर्द्धमात्राकृतियोनिस्तया चैव विभूषितम्। नाभौ ध्यात्वा तन्मयस्तत्रानाग्नौ जुहुयात् यथा। मूलान्ते नाभिचैतन्यरूपाग्नौ हविषा स्रुचा। ज्ञानप्रदीपिते नित्यमक्षवृत्तीर्जुहोम्यहम्"। (स्वाहा इति प्रथमाहुतिः, मूलान्ते) धर्म्माधर्म्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा। सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्"। (स्वाहेति द्वितीयाहुतिः, मूलान्ते) "प्रकाशाकाशहस्ताभ्यां अवलम्ब्योन्मनः स्रुचा। धर्म्माधर्म्मकलास्नेहपूर्णमग्नौ जुहोम्यहम्"। (स्वाहेति तृती-

याहुतिं जुहुयात्। ततो मूलान्ते)। "अन्तर्निरन्तरनिरिन्धनएधमाने मायान्धकारपरिपन्थिनि संविदग्नौ। कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ विश्वं जुहोमि वसुधादिशिवावसानम्। इत्यन्तर्यजनं कृत्वा साक्षाद्ब्रह्ममयो भवेत्। न तस्य पापपुण्यानि जीवन्मुक्तोभवेद्ध्रुवम्"। 'अयमन्तर्यागोयोगिनामेव। अथान्तःपञ्चमकारयजनप्रकारः॥ तदुक्तं कुलार्णवे अन्तर्यजने"। "सुरा शक्तिः शिवोमांसं तद्भोक्ता भैरवःस्वयम्। तयोरैक्यसमुत्पन्न आनन्दोमोक्ष उच्यते। आनन्दं ब्रह्मणोरूपं तच्च देहे व्यवस्थितम्। तस्याभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयते। लिङ्गत्रयविशेषज्ञः षट्चक्रपद्मभेदतः। पीठस्थानानि चागम्य महापद्मवनं व्रजेत्। आमूलाधारमाब्रह्मरन्ध्रं गत्वा पुनः पुनः। चिच्चन्द्रकुण्डलीशक्तिसामरस्यसुखोदयः। व्योमपङ्कजनिस्यन्दसुधापानरतो नरः। मधुपानमिदं देवि! चेतरन्मद्यपानकम्। पुण्यापुण्यं पशुं हत्वा ज्ञानखड्गेन योगवित्। परे लयं नयेच्चित्तं पलाशीति निगद्यते। मानसादीन्द्रियगणं संयम्यात्मनि योजयेत्। मांसाशी स भवेद्देवि! इतरे प्राणिघातकाः। शिवशक्त्यात्ममिथुनसंयोगानन्दनिर्भराः। मुक्तास्ते मैथुनं तत्स्यादितरे स्त्रीनिषेवकाः" इति त०सा० "अन्तःपूजां विधायैव वाह्यपूजां समाचरेदिति" तन्त्रम्।

**अन्तर्याम** पु० अन्तर्यामो यस्मात्। यज्ञकर्मे सामापराख्ये पात्रभेदे। "त्रिष्टुभः स्वारं स्वारादन्तर्यामः 'अन्तर्यामात् पञ्चदश" इति यजु० १२,५५ स्वारात् साम्नोऽन्तर्यामं ग्रहं निरमिमीतेति" श्रुतेरिति वेददीपः। तत्र यज्ञियं पात्रभेदः। "हुत्वा ग्रहावन्तर्याममनुमन्त्रयेदिति" स्मृतिः "उच्चैः पात्रयोजनमित्युपक्रम्य" खरोत्तरपूर्व्वार्द्धे उपांश्वन्तर्यामयोः" कात्या० ८,१,२, खरस्य उत्तरपूर्व्वार्द्धे ईशानकोणे, उपांश्वन्तर्यामयोः पात्रयो र्योजयति सादयतीति वा" तद्वृ०।

**अन्तर्यामिन्** पु० अन्तर्मध्येऽनुप्रविश्य यमयति स्वस्वकर्म्मणि इन्द्रियादीनि जीवं वा व्यापारयति यम+णिच्—णिनि। "अन्तराविश्य भूतानि यो बिभर्त्यात्मकेतुभिः। अन्तर्यामीश्वरः साक्षात् भवे"दित्युक्ते ईश्वरे 'अन्तरेण यमयतीत्यादि" वृहदारण्यकान्तर्यामिब्राह्मणोक्तेस्तस्य तथात्वम्। आत्मकेतुभिः निजव्यापारैः प्राणादिवृत्तिभिरित्यर्थः। वायौ च तस्य सर्व्वप्राणिषु अध्यात्मवायुरूपेण स्थितत्वात्तथात्वम्। अन्तर्गतवस्तुज्ञातरि त्रि०।

**अन्तर्यामिब्राह्मण** न० अन्तर्यामिन ईश्वरस्य ज्ञापकम् ब्राह्मणं मन्त्रेतरवेदभागः। वृहदारण्यकान्तर्गते अन्तर्यामिनः ईश्वरस्य ज्ञापके ब्राह्मणे। तच्च १२०पृष्ठे दर्शितम्।

**अन्तर्लोम** न० अन्तर्गतमाच्छाद्यं लोम अच् समा०। आच्छाद्ये लोम्नि।

**अन्तर्वंशिक** त्रि० अन्तर्वंशे राज्ञामाभ्यन्तरस्थाने नियुक्तः नियुक्तार्थे ठक् संज्ञापूर्व्वकविधेरनित्यत्वान्न वृद्धिः, अन्तर्वंशः नियोज्यतयाऽस्त्यस्य ठन् वा। राज्ञामन्तःपुरे रक्षार्थं नियुक्ते कुब्जवामनादौ।

**अन्तर्वण** अव्य० वनस्य मध्यम् णत्वम्। वनमध्ये इत्यर्थे।

**अन्तर्वत्नी** अन्तरस्त्यस्य गर्भं इति वाक्ये "अन्तर्वत्पतिवतोर्नुगिति" पा० अन्तःशब्दस्याधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावात् अप्राप्तौ मतुप् अनुपपत्तौ मस्य वः नुक् च। गर्भवत्याम् स्त्रियाम्। "तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती सुतावसूत सम्पन्नाविति" रघुः। अन्तःशब्दस्य तत्स्थलक्षणया अस्त्यर्थे मतुप् मस्य वः। अन्तःस्थपदार्थवति त्रि०। "पुमानन्तर्वां स्थविरः पयस्वानिति" अथ० ८,४,३,।

**अन्तर्वमि** पु० अन्तःस्थित एव वाययति उद्गारशब्दं कारयति वम-शब्दे इन् अस्य मत्वम्। (ढेकुर) इतिख्यातस्योद्गारशब्दस्य कारके अजीर्णनामके रोगभेदे।

**अन्तर्वर्त्तिन्** त्रि० अन्तः मध्ये वर्त्तते वृत—णिनि। मध्यवर्त्तिनि। "अन्तर्वर्त्तिनीं विभक्तिमाश्रित्येति" सि०कौ०।

**अन्तर्वा** त्रि० अन्तः अन्तरङ्गभावम् अन्तःकरणं वा वाति गच्छति स्निग्धत्वेन वा—गतिगन्धनयोः विच्। पुत्रपश्वादिषु।

**अन्तर्वाणि** त्रि० अन्तर्गता अन्तःकरणे स्थिता शास्त्रवाक्यात्मिका वाणी यस्य ब० समासान्तविधेरनित्यत्वान्न कप् ह्रस्वश्च। बहुशास्त्रवाक्याभिज्ञे पण्डिते।

**अन्तर्वावत्** त्रि० अन्तर्वाः पुत्रादिरस्त्यस्मिन् मतुप् मस्य वः। पुत्रादिमति "अन्तर्वावत् क्षयं दधे" इति ऋ० १,४०,७, 'अन्तर्वावत् अन्तःस्थितपुत्रादिमत्त्वात् बहुगुणोपेतं क्षयं गृहमिति" भा०।

**अन्तर्वाष्प** त्रि० अन्तर्गतं वाष्पम्। वाह्याप्रकाशिते कण्ठपथामात्रे रोदनजन्यजलकणे। ब०। तद्युक्तपदार्थे त्रि०। "अन्तर्वाष्पविलोचने" इति।

**अन्तर्विगाह** पु० अन्तर्भूत्वा विगाहः। मध्यप्रवेशे। ल्युट्। अन्तर्विगाहनमप्यत्र न० हेम०।

**अन्तर्वेदि** पु० अन्तर्गता वेदिर्यत्र देशे। ब्रह्मावर्त्तदेशे, स च देशः आ प्रयागात् हरिद्वारपर्य्यन्तो गङ्गायमुनयोर्मध्यदेशः।

वेद्या मध्यम् अव्ययी० । वेदिमध्ये अव्य० । "अपपश्च पश्चादुपविशत्यन्तर्वेदि वा कात्या० २,५,११, "अन्तर्वेदि वेद्याः करिष्यमाणायाः प्रदेशो लक्ष्यते तस्य देशस्याभ्यन्तरे उपविशतीति" तद्भा० "अन्वदन्तर्वेदि" कात्या० १२,२,२ । अन्तर्वेदि विहितं कर्म्म ठञ् । आन्तर्वेदिकम् अन्तर्वेदि-विहिते इष्ट्यादौ कर्म्मणि "नित्यमैष्टिकपौर्त्तिकमिति" मनुवचने ऐष्टिकमन्तर्वेदिकमिति" कुल्लू० ।

**अन्तर्वेदी** स्त्री पृथिव्या मध्यस्थितत्वादन्तर्वेदीव । हरिद्वारा-वधिप्रयागपर्य्यन्ते शशस्थलीति ब्रह्मावर्त्त इति च ख्याते देशे

**अन्तर्वेश्मिक** त्रि० अन्तर्वेश्मे अन्तःपुरे नियुक्तः ठञ् संज्ञापूर्व्वकविधेरनित्यत्वात् न वृद्धिः । अन्तःपुररक्षणाय नियुक्ते कञ्चुक्यादौ । आन्तर्वेश्मिकादयोऽप्यत्र ।

**अन्तर्हत्य** अव्य० अन्तर्+हन–ल्यप् । मध्ये हत्येत्यर्थे "अन्तरपरिग्रहे" पा० अपरिग्रह एवास्य गतित्वेन समासः परिग्रहे तु न, "अन्तर्हत्वा गतः हतं परिगृह्येति" [तद्वति त्रि० । सि०कौ० ।

**अन्तर्हास** पु० अन्तरप्रकाशो हासः । गूढ़हास्ये हेम० ।

**अन्तर्हित** त्रि० अन्तर्+धा–क्त । गुप्ते, तिरोहिते च । "अन्तर्हितशशधरे" इति सि०कौ० ।

**अन्तवत्** त्रि० अन्तो नाशः परिच्छेदो वाऽस्य मतुप् मस्य वः । अवश्यनश्वरे "अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिण" इति गीता । परिच्छेदयुक्ते सीमावति च । "स हैतानन्तवत उपास्तेऽन्तवतः स लोकान् जयतीति" छा० उ० । "अन्तवतः परिच्छिन्नानिति" भा० । स्त्रियां ङीप् ।

**अन्त(न्ते)वासिन्** पु० अन्ते समीपे वस्तुं शीलमस्य वस–णिनि सप्तम्या वा अलुक् । शिष्ये । स्त्रियां ङीप् । समीपस्थिते त्रि० । [सीमावासे, नापितभेदे च ।

**अन्तवेला** स्त्री अन्तस्य वेलाऽवधिः कालो वा हेत० । शेष-

**अन्तशय्या** स्त्री शयनं शय्या शीङ्–भावे क्यप् अन्तस्य नाशार्थं शय्या चतुर्थ्यर्थे हेत० । मरणार्थं भूमिशय्यायाम्, तद्धेतुत्वात् श्मशाने च । अन्त एव शय्या निर्व्वाणरत-साहचर्य्यात् कर्म्म० । मरणे ।

**अन्तसद्** पु० अन्ते निकटे सीदति सद–क्विप् । अन्तेवासिनि शिष्ये । "तमुपासते गुरुमिवान्तसद" इति किरा० । समीपगे त्रि० ।

**अन्तस्सलिल** न० अन्तरप्रकाशं सलिलम् । भूमिमध्यस्थे जले "गङ्गाया अन्तस्सलिलवाहित्वाच्च दोष" इति रघु० । सत्वाभावपक्षे अन्तःसलिलमप्यत्र । अन्तर्गतं सलिलं यस्याः । अप्रकाशितजलायां सरस्वतीनद्यां स्त्री । सलिलस्य मध्यम् अव्ययी० । जलमध्ये अव्य० । "अन्तःसलिलमवगाहेतेति" श्रुतिः । [तापे च ।

**अन्तस्ताप** पु० अन्तःस्थितः तापः । चित्ततापे, देहमध्य-

**अन्त(न्तः)स्था** पु० अन्तः स्पर्शोष्मणोर्वर्णयोर्मध्ये तिष्ठतीति स्था–क्विप् । यरलवाख्येषु वर्णेषु ते हि कादिमावसानस्पर्शानां शषसहरूपोष्मवर्णमध्यस्थाः । वा विसर्गलोपेऽन्तस्था अपि । "हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् । औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतमिति" पा०शि० । स्था–क । अन्तःस्थोऽप्यत्र मध्यस्थितमात्रे त्रि० । भवादौ गहा० छ । अन्तःस्थीयः मध्यस्थभवे त्रि० ।

**अन्तादि** त्रि० आदिश्च अन्तश्च द०राज० वा परनिपातः । आद्यन्तयोः । "अन्तादिवच्चेति" पा० ।

**अन्तानल** पु० अन्तस्य प्रलयस्यानलो वह्निः । प्रलयानले, अन्त्येष्टिकर्म्माङ्गवह्नौ च ।

**अन्तार** पु० अन्तं वनपर्य्यन्तदेशमृच्छति ऋ–अण् उप० । "अविज्ञातारमन्तारं पशूनां पुरुषं विदुरिति" भारतोक्ते पशुपालके । [चाण्डालादौ तस्य ग्रामान्तस्थत्वात्तथात्वम् ।

**अन्तावशायिन्** पु० अन्ते पर्य्यन्तदेशेऽवशेते अव+शी–णिनि ।

**अन्तावसायिन्** पु० नखकेशानामन्तमवसातुं छेत्तुं शीलमस्य अव+सो–णिनि युक् च । नापिते । अन्ते वृद्धे वयसि अवस्यति निश्चिनोति तत्त्वम् । मुनिभेदे । "अन्ताय स्वतो-थार्थं जन्तुनाशाय अवस्यति । प्राणिहिंसके चाण्डालादौ ।

**अन्ति** (का) स्त्री अन्त्यते संबध्यते अन्त–इ । नटाभिनयन-काले तद्भक्तौ ज्येष्ठभगिन्याम् । स्वार्थे के टापि अन्तिकेत्यपि । सामीप्यार्थे अव्य० "कुत्सप्रभीतवधुमेषतुरन्ति कालो-रिति" भाग० "यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट स" इति ऋ० १,७९,११, "अन्ति अन्तिके" भा० । "नहि नु वो मरुतो अन्त्यस्मे" ऋ० १,१६७,९ । अस्य सामीप्यार्थ-त्वात् पदान्तरेण अव्ययीभावे । तत्तदर्थसामीप्ये "इष-वावन्तिदेवमिति ऋ० १,१८०,७ ।

**अन्तिक** त्रि० अन्त्यते संबध्यते सामीप्येन, अन्त–घञ् सोऽस्त्यस्येति मत्वर्थीयः ठन् । सामीप्यवति । "विप्रान्तिके पितॄन् ध्यायन्निति" "शनैः पिण्डान्तिके पुनरिति" "वसेयुश्च स्वगृहान्तिके" इति च मनुः । "तामन्तिकन्यस्तबलि-प्रदीपामिति" रघुः । स्वार्थे ठनि सामीप्ये न० । चूक्राम् न० । ओषधिभेदे स्त्री । अन्तं शेषसीमां व्याप्नोति अन्त+कन् । पर्य्यन्तव्यापके त्रि० । "केशान्तिको ब्राह्म-

षस्य दण्डः कार्य्यः प्रमाणतः । ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विश" इति "षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम् । तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वेति" च मनुः । "जनान्ते स्याज्जनान्तिकमिति" सा०द० ।

**अन्तिकतम** त्रि० अतिशयेनान्तिकः अतिशायने तमप् । अत्यासन्ने वेदे तु "तादेवेति" तिकलोपे अन्तमोऽप्युक्तार्थे ।

**अन्तिकाश्रय** पु० अन्तिकं समीपम् आश्रयते आ+श्रि—अच् । निकटस्थे, अवलम्बनस्थाने च ।

**अन्तितस्** अव्य० अन्तिक+तसिल् कलोपः अन्तिशब्दाद्वा तसिल् । अन्तिके इत्यर्थे "नकिष्टं घ्नन्त्यन्तितोनदूरादिति" ऋ० २,२७,१३, "अन्तितः अन्तिकादिति" भा० ।

**अन्तिम** त्रि० अन्ते भवः अन्त+डिमच् । अन्तभवे, चरमे च । "अजातमृतमूर्खाणां वरमाद्यौ नचान्तिमः । सकृद्दोषकरावाद्यावन्तिमस्तु पदे पदे" हितो० ।

**अन्तिवाम** त्रि० अन्ति अन्तिके वामं वननीयं धनमस्य । निकटस्थधने "अन्तिवामा दूरे" इति ऋ० ७,७७,४ । "अन्ति अस्मदन्तिके वामं धनं यस्याः सान्तिवामेति" भा० ।

**अन्तेवसत्** पु० अन्ते निकटे विद्याग्रहणाय वसति वस—शतृ ७त० अलुक्समा० । शिष्ये अन्ते शब्दस्य पृथक्स्थितावपि तत्समभिव्याहारमात्रेण तदर्थता । "वसन्निवान्ते विनयेन जिष्णुः" किरा० ।

**अन्तेवासिन्** पु० अन्ते निकटे विद्याग्रहणाय वसति वस—णिनि ७त० अलुक्समा० । शिष्ये "वाच्यान्तेवासिनोर्वापि न त्वन्यत इति स्थितिरिति" मनुः "कलापिवैशम्पायनान्तेवासिभ्यश्चेति" "आचार्य्योपसर्जनाश्चान्तेवासीति" च पा० । "वामदेवान्तेवासी तदाश्रमवासीति" दशकु० । ग्रामादेरन्तेवासिनि चाण्डालादौ त्रि० ।

**अन्तोदात्त** न० अन्ते उदात्तः स्वरो यस्य । अन्तोदात्तस्वरयुक्ते पदे "पथिमथोः सर्वनामस्थाने" पा०सूत्रे 'सर्वनामस्थाने किम् ? ज्योतिष्मतः पथो रक्षेति उदात्तनिवृत्तिस्वरेणान्तोदात्तं पदमिति" सि०कौ०। अन्ते अन्त्यावयवे उदात्तः । शब्दसमुदायस्य अन्त उदात्तः तादृशे समुदाये 'कर्षात्वतो घञोऽन्त उदात्त" इत्यधिकारे विहिते अन्तोदात्तस्वरे, कार्षःपाक इत्यादि । 'धातोः" पा० अन्तोदात्तः । 'गोपायतम्" इति सि०कौ० । "फिषोऽन्त उदात्त" इत्यधिकारे शान्तनवाचार्य्यप्रणीतसूत्रैः प्रातिपदिकस्यान्त उदात्तः । तानि च सूत्राणि सि०कौ० उत्तरार्द्धे ५५१, पृष्ठादौ उपात्तानि । तादृशसूत्रोक्तानां प्रातिपदिकानामन्तोदात्तता बोध्या ।

**अन्त्य** त्रि० अन्ते पर्य्यन्ते वसतीति अन्त+यत् । चाण्डाले । "अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपीति" मनुः "अन्त्यचण्डाल" इति कुल्लू० । म्लेच्छे, "चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च पतत्यज्ञानतो विप्रो ज्ञानात् साम्यं तु गच्छति" नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकामिति" 'नान्त्यो न विकलेन्द्रिय" इति च मनुः । "अन्त्यचण्डालादिरिति" "नक्षत्रवृक्षनदीम्लेच्छपर्वतनामिकामिति" च कुल्लू० । म्लेच्छानां सर्व्वापकर्षान्तभवत्वात्तथात्वम् । अवसानभवे, "जायायै पूर्व्वमारिण्यै दत्त्वाग्नीनन्त्यकर्म्मणीति" मनुः 'नानाबीजेष्वन्त्य एव सामर्थ्यात्" शाण्डि० २,४,१०, "असह्यपीड़ं भगवन्! ऋणमन्त्यमवेहि मे" इति "विससर्ज्ज तदन्त्यमण्डनमिति" च रघुः "क्रियतां कथमन्त्यमण्डनमिति" कुमा० । अवसानञ्च दैशिकं कालिकञ्च उक्तोदाहरणे यथायथं बोध्यम् अन्ताय परिच्छेदाय हितः यत् । परिच्छेदकारके वैशेषिकोक्ते विशेषपदार्थे "अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तित" इति भाषा० प्रलये परमाणूनां गगनादीनाञ्च अन्यस्य विशेषकारकस्याभावात् विशेषस्यैव परिच्छेदकत्वमिति तस्यान्त्यत्वम् । मुस्तायाम् स्त्री । अन्तिमे वस्तुनि त्रि० । यथा नक्षत्राणां मध्ये रेवती, राशीनां मध्ये मीनः, वर्णानां मध्ये हकार इत्यादि । संख्याभेदे न० "जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तरा संज्ञे"ति भास्कराचार्य्योक्ते परार्द्धशतभागे । गणितशास्त्रोक्ते सर्वस्य वामस्थिताङ्के "स्थाप्योऽन्त्यवर्गो द्विगुणान्त्यनिघ्न" इति लीला० । लग्नावधिद्वादशराशौ पु० षष्ठेऽष्टमेऽन्त्ये भुवि चेन्निवेश इति नील०ता० । "त्रिकोणाष्टकयुक्तान्त्यमहावहत् फलं तथा इति" ज्योति० । अन्तेभवः दिगा० यत् । सिद्धान्तशिरोमण्युक्तायां चरजीवया युतोनायां त्रिज्यायाम् स्त्री । यथा "क्षितिज्ययैवं द्युगुणश्च सा हृतिश्चरज्ययैवं त्रिगुणोऽपि सान्त्यका" । 'द्युज्यैव क्षितिज्ययोत्तरगोले युता, याम्ये रहिता हृतिर्भवति । एवं त्रिज्या चरजीवया युतोनान्त्या स्यात् । अत्रोपपत्तिः । अत्र गोलेऽहोरात्रवृत्तक्षितिजसंपातयोर्मध्ये यत् तदुदयास्तसूत्रम् । एवमुन्मण्डलसंपातयोर्मध्ये तदहोरात्रव्यासदलम् । तदुदयास्तसूत्रयोरन्तरं सर्वत्र तुल्या । अत्र याम्योत्तरवृत्तसंपातयोर्मध्ये यत् तन्मितं तस्य व्यासदलम् ।

तयोर्व्यासखण्डयोर्यः संपातस्तस्मादुपरितनं खण्डं द्युज्या । सोऽत्तरगोलेऽधःस्थया कुज्यया युता यावत् क्रियते तावद्दिनार्धेऽर्कोदयास्तसूत्रयोरन्तरं स्यात् । दक्षिणे तु कुज्यया हीना । यतस्तत्रोदयास्तसूत्रादधः कुज्या । यदर्कोदयास्तसूत्रयोरन्तरं सा च हृतिरुच्यते । एवमन्यत्रापि । यथाहोरात्रवृत्तव्यासार्धं त्रिज्यातुल्यैरङ्कैरङ्क्यते तावत् त्रिज्यातुल्यं भवति । तैरङ्कैर्यावत् कुज्या गण्यते तावच्चरज्यातुल्या भवति । अथ चरज्यया त्रिज्या युतोनाऽन्त्यासंज्ञा भवति । नह्यन्त्याहृत्योः केवलं स्थानभेदः । किन्त्वङ्कानां गुरुलघुत्वात् केवलं सङ्ख्याकृतो भेद इत्युपपन्नम्" प्रमिता० ।

**अन्त्यकर्म्मन्** न० अन्ते नाशे भवं कर्म्म । अन्त्येष्टिक्रियायाम् । "आयाव पूर्वमारिष्टै दत्त्वाग्नीनन्त्यकर्मणि" "याज्यानां याजनं कृत्वा परेषामन्त्यकर्म च अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति" इति "जातकर्म्मान्त्यकर्माणि नवश्राद्धं तथैव चेति" च मनुः । "तमेनं मृतमितोऽग्नावुद्यामात् अग्नये" इति का०उप० "अग्नयेऽन्त्यर्थमृत्विजोहरन्ति पुत्रा वान्त्यकर्म्मणि" इति का०उप० भा० ।

**अन्त्यज** पु०स्त्री० अन्त्यः सन् जायते जन–ड । शूद्रे तस्य वर्णमध्ये शेषभवत्वात्तथात्वम् । "येन केनचिदङ्गेन हिंस्याच्चेच्छ्रेष्ठमन्त्यजः" इति मनुः । "अन्त्यजः शूद्रः" इति कुल्लू० । शेषजातमात्रे त्रि० । अन्त्यश्चाण्डाल इव जायते जन–ड । रजकादिषु सप्तसु जातिषु पु०स्त्री० "रजकश्चर्मकारश्च नटो वरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः" अत्रिसंहिता । "न शूद्रराज्ये निवसेन्नाधार्मिकजनावृते । न पाषण्डिगणाक्रान्ते नोपसृष्टेऽन्त्यजैर्नृभिरिति" "मृत्युं त्वन्त्यजस्त्रियामिति" च मनुः ।

**अन्त्यजन्मन्** पु०स्त्री० अन्त्यं जन्म यस्य । शूद्रे, "प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मन" इति मनुः । शेषजातमात्रे त्रि० ।

**अन्त्यजाति** पु०स्त्री० अन्त्या जातिर्यस्य । शूद्रे । "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातितामिति" मनुः । चण्डालादौ च । "अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनीति" प्राय० ।

**अन्त्यभ** न० कर्म० । मीनराशौ, रेवतीनक्षत्रे च तयोः राशिचक्रस्यान्ते स्थितत्वात्तथात्वम् ।

**अन्त्ययोनि** पु०स्त्री० अन्त्या योनिरुत्पत्तिर्यस्य । शूद्रे, चण्डालादौ च "शूद्रश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनय" इति मनुः ।

**अन्त्यवर्ण** पु०स्त्री० कर्म० । शूद्रे । पदवाक्यादेरवसानस्थिताक्षरे ह० । [१४ऽस्य विवरणम् ।

**अन्त्यानुप्रास** पु० कर्म० । शब्दालङ्काररूपे अनुप्रासभेदे (१७८)

**अन्त्यावसायिन्** पु० स्त्री० "निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम् । श्मशानगोचरं सूते" इति मनूक्ते निषादस्त्रियां चण्डालजाते (कुरदाफरास) इति ख्याते सङ्कीर्णवर्णे स्त्रियां ङीप् । "चण्डालः श्वपचःक्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः" इत्यङ्गिरसोक्तचाण्डालादिषु च । "अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः" इति आङ्गिरःस्मृतिः ।

**अन्त्याश्रम** पुंन० कर्म० । चतुर्थाश्रमे भिक्षुरूपशेषाश्रमे ।

**अन्त्याश्रमिन्** पु० अन्त्याश्रमोऽस्त्यस्य इनि । चतुर्थाश्रमयुक्ते ।

**अन्त्याहुति** स्त्री कर्म० । अन्त्ये साग्निकस्य मृतस्य देहसंस्कारके यज्ञभेदे "अन्त्याहुतिं हावयितुं सविप्रा" इति भट्टिः ।

**अन्त्यूति** स्त्री अन्ति अन्तिकस्य वा ऊतिः रक्षणम् अव–क्तिन् कलोपः । आसन्नरक्षणे "अहमन्त्यूतिमयोभुवमिति" ऋ० १,१३८,१ ।

**अन्त्येष्टि** स्त्री अन्ते भवा इष्टिः । साग्निकस्य मृतस्य देहसंस्कारार्थमिष्टिभेदे तत्प्रभवत्वात् निरग्नेर्दाहमात्रसंस्कारे च । "पतितानां न दाहःस्यात् नान्त्येष्टिर्नास्थिसञ्चय" इति शु०त० स्मृतिः ।

**अन्त्र** न० अम्यते देहो बध्यतेऽनेन अम–बन्धने करणे ष्ट्रन् । देहबन्धने—"उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः अर्द्धव्यामेन हीनानि स्त्रीणामन्त्राणि निर्दिशेत्" । इति वैद्यकोक्तपरिमाणवति नाडीभेदे । "सार्द्धत्रिव्यामान्यन्त्राणि पुंसः स्त्रीणामर्द्धव्यामहीनानि" सुश्रुतम् । "निर्भिन्नदन्तविभूषितमिति दुर्गाध्यानम्" "यस्यान्त्रमन्त्रं रुधिरेषिभिरिति" सुश्रुतम् ।

**अन्त्रकूज** पु० अन्त्रस्य कूजः शब्दभेदः । अन्त्रविकूजने "प्रकाशयस्योऽन्त्रकूजं शूलं नाभौ करोति चेति" सुश्रुतम् ।

**अन्त्रपाचक** अन्त्रस्थं दोषं पाचयति । त्वचिसारे निर्य्यासविषे औषधिभेदे "स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते" इत्युपक्रम्य । "दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयमित्यभिधाय "मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च निर्य्यासाः धातवश्चैव कन्दश्च दशमः स्मृत" इति विशेषतः स्थावरस्य स्थानमुक्त्वा "अन्त्रपाचककर्त्तरीयसौरीयककरघाटक रम्भनन्दनवराटकानि सप्त त्वक्सारनिर्य्यासविषाणा-

ष्येति" २९२ पृ० सुश्रुते उक्तम् । विवरणं विषशब्दे दृश्यम् ।

**अन्त्रमांस** न० "आन्त्रिकं छिद्रमार्गेण धौतं निर्मलधारिणा । तस्य खण्डान् संविधाय वेसवार (वेसन) युतान् पचेत् । निःसारं चिरकोद्गारमन्त्रमांससुदाहृतमिति वैद्यकोक्ते पक्वमांसभेदे आन्त्रिके ।

**अन्त्रवृद्धि** पु० अन्त्रनिमित्ता वृद्धिः । सुश्रुतोक्ते रोगभेदे स च रोगः सु० २८६ पृ० सुश्रुते दर्शितो यथा "वातपित्तश्लेष्मशोणितमेदोमूत्रान्त्रनिमित्ताः सप्त वृद्धयः । तासां मूत्रान्त्रनिमित्ते वृद्धी वातसमुत्थे केवलमुत्पत्तिहेतुरन्यतमः ॥ अधःप्रकुपितोऽन्यतमो हि दोषः फलकोषवाहिनीरभिप्रपद्य धमनीः फलकोषयोर्वृद्धिं जनयति तां वृद्धिमित्याचक्षते ॥ तासां भविष्यन्तीनां पूर्व्वरूपाणि वस्तिकटीमुष्कमेढ्रेषु वेदना मारुतनिग्रहः फलकोषशोफश्चेति तत्रानिलपरिपूर्णां वस्तिमिवाततां परुषामनिलनिमित्तामनिमित्तरुजं वातवृद्धिमाचक्षते, पक्वोडुम्बरसङ्काशां ज्वरदाहोष्मवतीं चाशु समुत्थानपाकां पित्तवृद्धिं, कठिनामल्पवेदनां शीतां कण्डूमतीं श्लेष्मवृद्धिं, कृष्णस्फोटावृतां पित्तवृद्धिलिङ्गां, रक्तवृद्धिं मृदुस्निग्धां कण्डूमतीमल्पवेदनां तालफलप्रकाशां मेदोवृद्धिम् ॥ मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रं वेदनां वृषणयोः श्वयथुं कोषयोश्चापादयति तां मूत्रवृद्धिं विद्यात् ॥ भारहरणबलवद्विग्रहवृक्षप्रपतनादिभिरायासविशेषैर्वायुरतिप्रवृद्धः प्रकुपितश्च स्थूलान्त्रस्येतरस्य चैकदेशं द्विगुणमादायाधोगत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोषं प्रविश्य मुष्कशोफमापादयत्याध्मातो वस्तिरिवाततः प्रदीर्घः शोफो भवति सशब्दमवपीडितश्चोर्द्ध्वमुपैति । विमुक्तश्च पुनराध्मायते तामन्त्रवृद्धिमसाध्यामित्याचक्षते" इति । "वस्त्यासानुपसुप्तैतमन्त्रवृद्धिं व्यपोहति" सुश्रुतम् ।

**अन्दिका** स्त्री अदि+बन्धने ण्वुल् । नाट्योक्तौ ज्येष्ठभगिन्यामित्यमरटीकायां नीलकण्ठः ।

**अन्दू** स्त्री अन्द्यते बध्यतेऽनेन अदि+कू । निगड़े स्त्रीपादभूषणभेदे च । स्वार्थे कन् "केऽण इति" ह्रस्वः । अन्दुकोऽप्यत्र "स्वार्थिकप्रत्ययस्य प्रकृतितो लिङ्गवचनातिक्रमस्य देवताशब्दादौ दर्शनात् पुंस्त्वम् ।

**अ(आ)न्दोल** दोलने अद० चु० उभ० सक० सेट् । अ(आ)न्दोलयति-ते आन्दुदोलत्-त । ल्युट् । अ(आ)न्दोलनम् "किञ्चालामरविन्दसुन्दरदृशां द्राक्चामरान्दोलनादि"त्युद्भटः । अ(आ)न्दोलितः । चुरादेराकृतिगणत्वेनायमत्र प्रेक्षितः स च दीर्घादिः ।"आन्दोलत् क दोलने" इति कविकल्पद्रुमोक्तेः तुल्यान्त इत्यन्ये तन्मूलं मृग्यम् ।

**अन्ध** दृष्टिविघाते अद० चु० उभ० धात्वर्थगृहीतकर्म्मकत्वादकर्म्मकः सेट् । अन्धयति-ते आन्दिधत्-त । अन्धयन् अन्धितः । "कनकमृगतृष्णान्धितधियेति" सा० द० । दृष्टिरत्र नेत्रेन्द्रियजं प्रत्यक्षं विवेकज्ञानञ्च तद्विघातायत्तस्य कर्त्तृत्वम् ।

**अन्ध** त्रि० अन्ध-अच् । नेत्रद्वयशून्ये एकचक्षुर्हीने तु नास्य प्रयोगः अनुपहतनेत्रान्तरेण तस्य दर्शनसम्भवात् । अन्धश्च द्विविधः जन्मान्धः, उत्पत्तौ नेत्रद्वयवानपि रोगादिना उपहतनेत्रद्वयश्च उभयत्रैव तत्प्रयोगात् । "जड़मूकान्धबधिरानिति" "उन्मत्तोऽन्धश्च वर्ज्याः स्युरिति" च मनुः । "दृष्टेनाक्ते तु या लोके गौरन्धेनैकचेष्टनीति" "अनंशौ क्लीवपतितौ जात्यन्धबधिरौ" तथेति स्मृत्यन्तरम् "अन्धो-गगनं न पश्यतीति" व्यु० गदा० "वृद्धोऽन्धः पतिरेष मञ्चकगत" इति सा० द० । चक्षुःसत्त्वेऽपि आलोकादि सहकारिकारणान्तराभावेन दृष्टेराहित्येऽपि अस्य प्रयोगः । यथा "दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथा परे । केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टय" इति देवी० । तत्र पेचकानां दर्शने आलोकाभावस्यैव सहकारितया तेषां दिवान्धत्वम् । कपोतादीनां तु सूर्य्यालोकाभावेऽपि दीपाद्यालोकान्तरसद्भावे रात्रावन्धता । मनुष्याणान्तु दिवा सूर्य्यालोकात्, रात्रौ दीपाद्यालोकात् उभयत्र दृष्टिमत्त्वाद्यान्धत्वम् । विवेकज्ञानशून्ये "क्रोधान्धस्तस्य तस्य स्वयमिह भवितेति" वेणी० "नैवान्धत्र मदान्धसिन्धुरघटेति" गङ्गास्तोत्रम् । "कुराध्वा गाढ़तारुण्या समस्तरतकोविदेति" सा० द० "अज्ञानतिमिरान्धस्येति" गुरुनतिः । परिव्राजकभेदे, तस्य "सचक्षुरचक्षुरिव सकर्णः अकर्ण इवे"त्यादि श्रुत्या बाह्यवस्तुदर्शनशून्यचक्षुःश्रोत्रोरन्धत्वम् अतएव "तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् । चतुष्पदां भुवं त्यक्त्वा, परिव्राडन्ध उच्यते" इत्यनेन तस्यान्धत्वं परिभाषितम् । नष्टद्रव्यलाभालाभोपयोगितया ज्योतिषपरिभाषिते राशिभेदे च । "मेषो वृषो मृगेन्द्रश्च दिवान्धाः परिकीर्त्तिताः । धनुःकर्कटकन्याश्च रात्रावन्धाः प्रकीर्त्तिता" इति तथा च मेषादिषु दिवा नष्टद्रव्यस्य लाभः तत्र षष्ठीवचौरस्य दिवान्धत्वात् । मिथुनादिषु तु रात्रौ नष्टद्रव्यस्य लाभः तत्र षष्ठीवचौरस्य रात्र्यन्धत्वात्

अन्धत्व नष्टस्य न लाभ इत्येतत्परतया तत्वान्धत्वम् भाक्तम् । अन्धयतीत्यन्धम् अन्ध–चु॰प्रेरणे णिच्–अच्, अन्ध–करणे अच् वा । तमसि अन्धकारे "अन्धं तमस्ते प्रविशन्ति ये के चात्महनोजना इति" श्रुतिः । यथार्थ ज्ञानावरके वेदान्तिमतसिद्धे अज्ञाने च "आसीदिदं तमोभूतमिति" मनौ "तमसाहततस्त्वेनेति" "तमसैवावृतं तत्त्वं नानुपश्यति मूढधीरिति" च पुराणे तमःशब्देनाज्ञानस्यैवाभिधानात्तथात्वम् । जले न॰मेदि॰ । तस्य मनुष्याणामन्धकारित्वात्तथात्वम् तेषां हि जलमध्ये उन्मीलितनेत्राणामपि न दर्शनमित्यनुभवसिद्धम् ।

**अन्धक** पु॰ अन्ध–ण्वुल् । दैत्यभेदे स च दैत्यः दितौ कश्यपादुत्पन्नः तस्य वरेण महादेवैरवध्यतामासेदे यथोक्तं हरिवंशे १४५ अ॰ "दितिरुवाच हतपुत्राऽस्मि भगवन्! देवैर्धर्म्मभृताम्वर! । अवध्यं पुत्रमिच्छामि देवैरमितविक्रमम् । कश्यप उवाच । अवध्यस्ते सुतो देवि! दाक्षायणि! भवेदिति । देवानां संशयो नात्र कश्चित् कमललोचने! । देवदेवमृते रुद्रं तस्य न प्रभवाम्यहम् । आत्मा ततस्ते पुत्रेण रक्षितव्यो हि सर्व्वथा । अन्वालभत तां देवीं कश्यपः सत्यवागथ । अङ्गुल्योदरदेशे तु सा पुत्रं सुषुवे ततः । सहस्रबाहुं कौरव्य! सहस्रशिरसं तथा । द्विसहस्रेक्षणञ्चैव तावच्चरणमेव च । स व्रजत्यन्धवद्यस्मादनन्धोऽपि हि भारत! । तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निवासिनः । अवध्योऽस्मीति लोकान् स सर्व्वान् बाधति भारत! । हरत्यपि च रत्नानि सर्व्वाण्यात्मवशाश्रयात् । वासयत्यात्मवीर्य्येण निगृह्याप्सरसां गणान् । स्वेच्छन्दूर्ज्जितोऽव्ययं सर्व्वलोकभयङ्करः । परदारापहरणं पररत्नविलोपनम् । चकार सततं मोहादन्धकः पापनिश्चयः" इति "निशितत्रिशूलदारितान्धकमहासुर इति" काद॰ । अन्ध एव अन्धकः स्वार्थे कन् । मुनिभेदे स च बृहस्पतिज्येष्ठभ्रातुः उतथ्यात् ममतायामुत्पन्नः बृहस्पतिशापादन्धत्वमापेदे । तस्य जात्यन्धत्वात् दीर्घतमा इति नामान्तरं तत्कथा भा॰ आ॰प॰ १०४अ॰ "उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम् । बृहस्पतिर्बृहत्तेजा ममतामन्वपद्यत ॥ उवाच ममता तन्तु देवरं वदताम्वरम् ॥ अन्तर्वत्नी त्वहं भ्रात्रा ज्येष्ठेनारम्यतामिति । अयञ्च मे महाभाग! कुक्षावेव बृहस्पते! । औतथ्यो वेदमत्रापि षडङ्गं प्रत्यधीयत ॥ अमोघरेतास्त्वञ्चापि द्वयोर्नास्त्यत्र सम्भवः । तस्मादेवं गतेऽद्य त्वमुपारमितुमर्हसि ॥ एवमुक्तस्तया सम्यक् बृहस्पतिरुदारधीः । कामात्मानं तदात्मानं न शशाक नियच्छितुम् ॥ स बभूव ततः कामी तया सार्द्धमकामया । उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत ॥ भोस्तात! मा गमः कामं द्वयोर्नास्तीह सम्भवः । अल्पावकाशो भगवन्! पूर्व्वञ्चाहमिहागतः । अमोघरेताश्च भवान् पीडां कर्त्तुमर्हसि ॥ अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य बृहस्पतिः । जगाम मैथुनायैव ममतां चारुलोचनाम् ॥ शुक्रोत्सर्गं ततो बुद्ध्वा तस्या गर्भगतो मुनिः । पद्भ्यामरोधयन्मार्गं शुक्रस्य च बृहस्पतेः ॥ स्थानमप्राप्तमथ तद्रेतः प्रतिहतन्तदा । पपात सहसा भूमौ ततः क्रुद्धो बृहस्पतिः ॥ तद्दृष्ट्वा पतितं शुक्रं शशाप सरुषान्वितः । उतथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः ॥ यन्मां त्वमीदृशे काले सर्व्वभूतेप्सिते सति । एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि ॥ स वै दीर्घतमा नाम शापादृषिरजायत । बृहस्पतेर्बृहत्कीर्त्तेर्बृहस्पतिरिवौजसा ॥ जात्यन्धो वेदवित् प्राज्ञः पत्नीं लेभे स विद्यया । तरुणीं रूपसम्पन्नां प्रद्वेषीं नाम ब्राह्मणीम् ॥ स पुत्रान् जनयामास गौतमादीन् महायशाः" इति । यादवभेदे च "सात्वतान् सत्त्वसम्पन्नात् कौशल्या सुषुवे सुतान् । भजिनं भजमानञ्च दिव्यं देवावृधं नृपम् । अन्धकञ्च महाबाहुं वृष्णिञ्च यदुनन्दनम् । तेषां विसर्गाश्चत्वारो विस्तरेणेह तान् शृणु । अन्धकात् काश्यदुहिता चतुरोऽलभतात्मजान् । कुकुरं भजमानञ्च शमं कम्बलवर्हिषम्" । इति हरिवंशे ३८ अ॰ । "दूतं संप्रेषयामास वृष्ण्यन्धकनिवेशनम्, ततो वृष्ण्यन्धकाः सर्व्वमिति" हरिवंशः ।

**अन्धकरिपु** पु॰ ६त॰ । महादेवे तस्य तन्नाशकत्वात्तथात्वम् यथा हरिवंशे १४६ अ॰ "मुमोच भगवाञ्छूलं प्रदीप्ताग्निसमप्रभम् । तत् पपात हरोत्सृष्टमन्धकोरसि दुर्द्धरम् । भस्मसाच्चाकरोद्रौद्रमन्धकं साधुकण्टकमिति" । अन्धकहन्त्रादयोऽप्यत्र । अन्धकस्यान्धकारस्य रिपुरपसारकत्वात् । सूर्य्ये, चन्द्रे, वह्नौ, च पु॰ ।

**अन्धकवर्त्त** पु॰ अन्धक इव वर्त्तते वृत–अच् । पर्व्वतभेदे गहा॰ छ । अन्धकवर्त्तीयस्तद्भवे त्रि॰ ।

**अन्धकार** पुंन॰ अन्धं करोति कृ–अण् उप॰स॰ । तमसि तच्च तेजोद्रव्यसामान्याभावरूपमिति नैयायिकाः । नीलं तमश्चलतीति प्रयोगात् नीलरूपवत् चलनादिक्रियावच्च द्रव्यान्तरम्, आलोकस्य अन्यत्र चाक्षुषप्रत्यक्षे सहकारित्वेऽपि तमस्त्वस्य मेचकप्रत्यक्षस्य न सहकारिता

वस्तुत्वाभाव्यादिति भेद इति मीमांसकादयः। "दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारमिति" कुमा० "सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनमिति" मृच्छ० "अथान्धकारं गिरिगह्वराणामिति" रघुः। अन्धकारस्य दृष्टिविघातकत्वं मनुष्याणामेव तेषामेवालोकसहकारेण दर्शनोदयात् उन्दुरादीनान्तु तदभावेऽपि दृष्टेरुदयात्। ततश्च आलोकरूपसहकारिविघटनेनास्य दृष्टिरोधकत्वमवसेयम्। यथार्थज्ञानविरोधिनि वेदान्तिमतसिद्धे अज्ञाने च। [राम्धकारे।

**अन्धकारमय** त्रि० अन्धकार+प्राचुर्य्ये मयट्। प्रचु-

**अन्धकारि** पु० अन्धकः तदाख्यस्यासुरस्यारिः ६त०। शिवे अन्धकरिपुशब्देऽस्य विवृतिः।

**अन्धकासुहृत्** पु० अन्धकस्य असून् हरति हृ–क्विप् तुक् च, अन्धकस्यासुरस्य असुहृत् रिपुर्वा ६त०। महादेवे।

**अन्धकूप** पु० अन्धयतीत्यन्धः स चासौ कूपः। साम्धकारे कूपे। अन्धः कूपो यत्र ७ब०। नरकभेदे यथा "यस्त्विह वै भूतानामीश्वरकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथोव्यथामाचरति स परत्रान्धकूपे तदभिद्रोहेण निपतति॥ तत्र हासौ तैर्जन्तुभिः पशुमृगपक्षिसरीसृपैर्मशकयूकमत्कुणमक्षिकादिभिः, ये के चाभिद्रुग्धास्तैः सर्व्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः" इति भाग० ५स्क०। अन्धस्य दृष्ट्यभावस्य कूप इव। मोहे। सहि सर्व्वदृष्ट्यभावस्याकरः इति तस्य तथात्वम्। [अन्धकरणसाधने।

**अन्धङ्करण** न० अन्धःक्रियतेऽनेन च्व्यर्थे कृ–करणे ख्युन्।

**अन्धतमस** न० अन्धयति अन्ध+अच् ताम्यति अनेनेति तम–करणे–असि कर्म्म० अच् समासान्तः। निविडान्धकारे, तद्युक्ते नरकभेदे च।

**अन्धतामस** न० तम एव तामसं प्रज्ञा० स्वार्थे अण् अन्धयतीति अन्धं कर्म्म०। निविडान्धकारे।

**अन्धतामिस्र** न० तमिस्रा तमस्ततिः; तमिस्रैव तामिस्रम् अन्धयतीत्यन्धम् कर्म्म०। निविडान्धकारे। अन्धम् अन्धकारकं तामिस्रं यत्र ७ब०। नरकविशेषे पु० न०। "तामिस्रमन्धतामिस्रं महारौरवरौरवौ नरकं कालसूत्रञ्च महानरकमेव चेत्यादिना" मनुना गणितेषु एकविंशतिनरकभेदेषु द्वितीये नरके तत्स्वरूपम्। "यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते॥ अनशनानिपानदण्डताडनसन्तर्जनादिभिर्यातनाभिर्यात्यमानो जन्तुर्यत्र कश्मलमासादितएकदैव मूर्च्छामुपयाति तामिस्रप्राये॥ एवमेव अन्धतामिस्रे। यस्तु "वञ्चयित्वा पुरुषं दारादीनुपभुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मादन्धतामिस्रं तमुपदिशन्ति" इति भाग० ५स्क०॥ सांख्यशास्त्रप्रसिद्धे भयविशेषविषयकेऽभिनिवेशे पु०। तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः इति सा० का०। "अभिनिवेशस्त्रासः दिव्यादिव्यशब्दविषयत्वेन दशविषयकत्वात् अणिमाद्यष्टविधैश्वर्य्यविषयत्वाच्चाष्टादशधा। तथा हि देवाः खल्वणिमादिकमष्टविधमैश्वर्य्यमासाद्य दश शब्दादीन् भुञ्जानाः "शब्दादयो भोग्यास्तदुपायाश्चाणिमादयोऽस्माकं असुरादिभि र्मास्म उपध्वंसिषतेति बिभ्यति तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वादष्टादशधेति" सा० कौ०। वेदान्तिमतसिद्धे "देहे नष्टे अहमेव नष्टोऽस्मीत्येवं"रूपे अज्ञाने च।

**अन्धत्व** न० अन्धस्य भावः। नेत्रघाते चक्षुषः रूपाग्राहकत्वे "एकादशेन्द्रियवधा" इत्यादि सा० का० (४९) व्याख्याने कौमुद्याम् "बाधिर्य्यं कुष्ठितान्धत्वजडताऽजिघ्रता तथा। मूकता कौण्यपङ्गुत्वक्लैव्योदावर्त्तमन्दता इत्यादिना श्रोत्रादीनां क्रमेण इन्द्रियाणां घातोदर्शितः।

**अन्धपूतना** स्त्री २८४ सुश्रुतोक्ते बालग्रहभेदे "स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च शकुनी रेवती चैव पूतना चान्धपूतने" त्युद्दिश्य। "योद्वेष्टि स्तनमतिसारकासहिक्काच्छर्दीभिर्ज्वरसहिताभिरर्द्यमानः दुर्वर्णः सततमधःशयोऽम्लगन्धिस्तं ब्रुवते भिषजोऽन्धपूतनार्त्तमिति" तल्लक्षणमुक्तम्।

**अन्धमूषिका** स्त्री अन्धं दृष्ट्यभावं मुष्णाति मुष–ण्वुल् दीर्घः। देवताडवृक्षे तत्सेवने हि चक्षुष्मत्ता भवतीति वैद्यकप्रसिद्धम्।

**अन्धम्भविष्णु** त्रि० अनन्धोऽन्धोभवति भू–च्व्यर्थे खिष्णुच्। अन्धीभवितरि।

**अन्धम्भावुक** त्रि० अन्ध च्व्यर्थे भू–खुकञ्। अन्धीभवितरि

**अन्धस्** न० अद्यते अद–असुन् नुम् धश्च। ओदने। अवतान्धसोदेवाः। "द्विजातिशेषेण यदेतदन्धसा" किरा० "विपानं शुक्रमन्धस इति" यजु० १९, ७५।

**अन्धाहि** पु० अन्धोऽहिरिव। (कुचिया) इति प्रसिद्धे मत्स्ये।

**अन्धवर्त्मन्** पु० अन्धं सूर्य्यप्रकाशरहितत्वादप्रकाशं वर्त्म यत्र। वायोः सप्तमे स्कन्धे। "मरुदिन्द्रः सरभसः साम-

स्रोमानुषीतिपाः देवीविशोऽन्धवर्का च स्कन्धः सप्तम स्या भुवादिति" पुरा० ।

**अन्धातमस** न० कर्म्म० अन्धेभ्योऽपीति दीर्घः । निविड़ान्धकारे । रजन्यान्तु स्त्री ।

**अन्धिका** स्त्री अन्धयति अन्ध–प्रेरणे णिच् ण्वुल् । द्यूतक्रीड़ायाम् तया हि जनः अन्धइव विवेकशून्यः क्रियते । सर्षपाञ्च तस्याचात्यन्तसेवनात् दृष्टिक्षयः वैद्यकप्रसिद्धः ।

**अन्धु** पु० अन्ध–कु । कूपे । कूपतुल्यच्छिद्रवत्त्वात् पुंचिह्ने च । "वाक्पाणिपादपायन्धुसंज्ञान्याहुर्मनीषिणः" इति शा० ति० । अन्धुलिङ्गमिति शब्दा०चि० ।

**अन्धुल** पु० अन्ध–उलच् । शिरीषवृक्षे । तत्पुष्पदर्शनात् वियोगिनामन्धत्वात्तथात्वम् ।

**अन्ध्र** पु० अन्ध–रन् । देशभेदे स च देशः । "जगन्नाथादूर्द्ध्वभागादर्वाक् श्रीभ्रमरात्मकात् तावदन्ध्राभिधोदेश इत्युक्तः" ॥ वैदेहेन कारावरस्य स्त्रियामुत्पादिते अन्त्यजभेदे च । व्याधभेदे इति काश्यपः ।

**अन्न** न० अनित्यनेन अन–नन्, अद्यते इति अद्–क्त वा "अन्नाञ्च इति" पा० निर्द्देशात् अन्नादेशतया न जग्धिः । ओदने, स्विन्नान्ने "शस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते । आमं तु वितुषं ज्ञेयं स्विन्नमन्नमुदाहृतम्" इति वसि० स्मृ० । अन्नमूलं हि जीवनमित्युक्तेः तेषां प्राणहेतुत्वात्तथात्वम् । तत्कारणेऽपि अन्नशब्दप्रयोगः "आमान्नं हरये दत्त्वा पक्वं कृत्वाथ खादयेत् । षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिरिति" पुराणे "चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत् सिद्धं भुक्त्वा पराक" इति विष्णुसूत्रे, आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति मानवे च तत्र प्रयोगात् "स्विन्नमन्नमुदाहृतमिति वशिष्ठोक्तिस्तु परिभाषार्था न तु तत्कालसंवाचतावोधनार्था । अतएव "अन्नमाश्रित्य पापानि तिष्ठन्ति हरिवासरे" इत्यादिनिषेधे आमान्नभक्षणस्यापि ग्रहणम् अन्नानि च विविधानि "अन्नानि विविधानीह भवन्ति गिरिसम्भवे" । इत्युपक्रम्य अष्टादशविधानि धान्यान्यभिधाय "अन्नवर्ज्जव्रते देवि ! एतान्येव विवर्ज्जयेदि"त्यनेन पद्मपुराणे अन्नवर्ज्जनव्रते तेषां वर्ज्जनीयत्वाभिधानात् अष्टादश धान्यानि च धान्यशब्दे वक्ष्यन्ते "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठोधातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन" इति श्रुत्या "अन्नमयं हि सोम्य मन इति" श्रुत्यन्तरोक्तेः मनसोऽन्नमयत्वं यत् कर्मार्थितं तत् सर्व्वप्रकारान्नविकारत्वेनैव । तत्र "राजान्नं तेज आदत्ते" इत्यादौ निषिद्धतापि सर्वेषामेव । "शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः । भोज्यान्नाः नापितश्चैव यश्चात्मानं निवेदयेदि"त्यादावपि दासादेर्भोज्यान्नताप्रतिप्रसवः अष्टादशान्नविषयएव दासादयश्च संकीर्णजातिभेदाः पराशरोक्ता वेदितव्यास्ते च तत्तच्छब्दे दर्शयिष्यन्ते । "गोरसं तिलसक्तुं च तिलपिण्याकमेव च । अपूपान् भक्षयेत् शूद्राद्यच्चान्यत् पयसाकृतमिति" संवर्त्तवचनन्तु आपदि शूद्रान्ननिवृत्तानामपि भक्ष्यतार्थम् । "कन्दुपक्वं तैलपक्वं पायसं दधि सक्तवः । एतान्यशूद्रान्नभुजां भोज्यानि मनुरब्रवीदिति" हारीतवचने अशूद्रान्नभुजामिति विशेषणात्तथावगतेः एवमेव प्रा०वि० । "अन्नं हि भूतानां ज्येष्ठं तस्मात् सर्व्वौषधमुच्यते" इति श्रुतौ अन्नस्य सर्व्वौषधिरूपत्वोक्तेः सर्वेषां व्रीह्याद्योषधीनामन्नत्वं व्यक्तम् "पृथिव्या ओषधय ओषधिभ्योऽन्नमिति" श्रुतौ च ओषधिजमात्रस्य अन्नत्वमुक्तम् "अद्यतेऽत्ति च भूतानि तस्मादन्नमिहोच्यते" इति तन्निरुक्तिरपि श्रुतौ दर्शिता । पृथिव्यां, तस्याश्च अन्नहेतुत्वादन्नशब्दवाच्यता । "अन्नं वा अन्नमिति श्रुतेः" "यत् कृष्णं रूपं तदन्नस्येति" छा०उप० श्रुतेश्च । अत एव भाष्यकृता "हन्ताहमिमास्तिस्रो देवता" इति श्रुतौ इदमा तेजोबन्नात्मिकाया देवतायाः परामर्शः इत्युक्तम् । उदके च निरुक्त० तस्य च "वृष्टेरन्नं ततः प्रजा इति" मनुना अन्नहेतुत्वोक्तेस्तथात्वम् । तथाऽनिति प्राणित्यनेनेति व्युत्पत्तेः उदकस्य प्राणहेतुत्वादन्नत्वम् "आपोमयः प्राण" इत्युक्त्वा तत्समर्थनाय "आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठोधातुस्तन्मूत्रं योमध्यमः तल्लोहितं योऽणिष्ठः स प्राण इति छान्दोग्येऽपां प्राणहेतुत्वमुक्तम् । तथा "षोड़शकलो वा अयं पुरुषः" इत्युपक्रम्य "पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यते" इति तत्रैव जलपानाभावे प्राणविच्छेद उक्तः । प्राणानन्दहेतुत्वाद्वा अन्नस्य तथात्वम् यथा "आपो वा अन्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणाः अन्नं कनीयो भविष्यतीति अथ यदा सुवृष्टिर्भवति आनन्दिनः प्राणाः भवन्ति अन्नं बहु भविष्यतीति छा०उप० । सूर्य्ये पु० सि०कौ० तस्य अन्नहेतुवृष्टिहेतुत्वात्तथात्वम् "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति मनुना तद्धेतुत्वोक्तेस्तथात्वम् भोगसाधने उपकरणे, न० "स्त्रियोऽन्नं पयसोऽन्नञ्च वियोऽन्नञ्च मन्नोचितामिति" मनुः । भक्ष्यद्रव्ये च "प्राणस्यान्नमिदं सर्वं प्रजापतिरकल्पयत् । स्थावरं

जङ्गमञ्चैव सर्वं प्राणस्य भोजनमिति" मनुना जङ्गमस्याप्यन्नत्वोक्तेः ।

**अन्नकिट्ट** न० ६त० । अन्नपाकशब्दे वक्ष्यमाणे अन्नमलभेदे ।

**अन्नकोष्ठ** पु० अन्नस्य व्रीह्यादेः स्वल्पं कोष्ठमिव अल्पार्थे कन् । (कुटी) इति ख्याते धान्यादेः स्थापनस्थाने ।

**अन्नद** त्रि० अन्नं ददाति दा–क । अन्नदातरि "वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नद" इति मनुः । अन्नपूर्णाख्यदेवीभेदे स्त्री तत्पूजादि अन्नदाकल्पग्रन्थे दृश्यम् ।

**अन्नदास** पु० अन्नेन पालितो दासः । अन्नमात्रलाभेन प्राप्तदासत्वे भक्तदासे (पेटभाता) अन्नस्य दासमात्रे च, "अन्नस्य पुरुषो दास" इति भारते पुरुषस्य अन्नहेतुकैव दासत्वोक्तेः ।

**अन्नदोष** पु० अन्नस्य भोजनप्रतिग्रहादिकृतः दोषः पापविशेषः धातुवैषम्यं वा । अभक्ष्यान्नभक्षणजनिते अग्राह्यान्नप्रतिग्रहजनिते च पापहेतौ अपथ्यभोजनजधातुवैषम्यकृते च दोषभेदे "आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" मनुः । अभक्ष्याण्यन्नानि द्विविधानि स्मृत्यादौ निषिद्धतया उक्तानि, तानि च अभक्ष्यशब्दे वक्ष्यन्ते । वैद्यके रोगनिदानतया उक्तानि च, तानि धातुवैषम्यसम्पादनद्वारा रोगनिदानतया वैद्यके प्रसिद्धानि यथा मन्दाग्नेः गुर्वन्नादीनि ।

**अन्नपाक** पु० ६त० । अन्नस्य व्रीह्यादेर्लौकिकदहनेन विक्लित्त्यनुकूलव्यापाररूपे पचने, भुक्तान्नस्य जठरानलेन रसरक्तादिरूपान्तरापादने च तत्र लौकिकपाकः चुल्ल्युपरिस्थापनपूर्वाधःसन्तापनादिर्लोकसिद्धः । जाठरपाको यथा पदार्थादर्शे योगार्णवे । "आयुष्यं भुक्तमाहारं स वायुः कुरुते द्विधा संप्रविश्यान्नमध्यन्तु पृथक् किट्टं पृथग्जलम् । अग्नेरूर्द्ध्वं जलं स्थाप्य तदन्नं च जलोपरि । जलस्याधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः । वायुना ध्मायमानोऽग्निरत्युष्णं कुरुते जलम् । अन्नं तदुष्णतोयेन समन्तात् पच्यते पुनः । द्विधा भवति तत् पक्वं पृथक् किट्टं पृथग्जलम् । रसेन तेन ता नाडीः प्राणः पूरयते पुनः । तर्पयन्ति सम्पूर्णास्ताश्च देहं समन्ततः । रसः स नाडीमध्यस्थः शरीरे चोष्मणा स्वगम् । पच्यते पच्यमानस्तु भवेत् पाकद्वयं पुनः । चर्म्माविष्ट्र समन्ताच्च रुधिरञ्च प्रजायते" इति त्वगादिधातुपाकस्तु ४८ पृष्ठे उक्तः ।

**अन्नपान** न० अन्नस्य अभ्यवहार्य्यमात्रस्य पानसम्भोगः । तावदशनीयादिभक्षणे, "अथातोऽन्नपानविधिमध्यायं व्याख्यास्यामः" इति प्रतिज्ञाय "तस्याशितपीतलीढखादितस्य नानाद्रव्याकस्येति" सुश्रुते उक्तत्वात् सर्व्वेषामन्नपानत्वम् ।

**अन्नपूर्णा** अन्नं पूर्णं यया । देवीभेदे "अन्नपूर्णे ! सदापूर्णे ! शङ्करप्राणवल्लभे ! । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां मे देहि पार्व्वतीति" शङ्कराचार्य्यः । एषा च काशीश्वरस्यैश्वरी काशीखण्डे एतस्याभूरिशो वर्णनम् ।

**अन्नपूर्णेश्वरी** स्त्री भैरवीभेदे, तन्त्रसारेऽस्या विवरणम् । अन्नपूर्णायामपि "भिक्षां देहि कृपावलोकनकरी मातान्नपूर्णेश्वरीति" शङ्कराचार्य्यः ।

**अन्नप्राशन** न० गृह्योक्तं विधानेन प्रथममशनं प्राशनं ६त० । षष्ठाष्टममासादौ बालकादेर्विधानेन प्रथममन्नभोजने । "षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले" इति मनुः । "ततोऽन्नप्राशनं षष्ठे मासि कार्य्यं यथाविधि । "अष्टमे वास्य कर्त्तव्यं यद्वेष्टं मङ्गलं कुले" इति स्मृत्यन्तरम् । षष्ठ इति मुख्यकल्प इति रघु० । तत्रायं विशेषः ज्योतिश्चिन्तामणौ । "अन्नस्य प्राशनं कार्य्यं मासि षष्ठेऽष्टमे बुधैः स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ" मुनिः । तत्र विहिततिथ्यादि यथा

"षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे । प्राजेशादितिपौष्णवैष्णववसुश्रेष्ठादिषट्कोत्तरैराग्नेयाप्पतिपैत्रभैव नितरामन्नादिभक्षः शुभ इति, भुज० भी० । प्राजेशादयश्च रोहिण्यादयः ४,५,७,८,२७,१,२२,२३,१३,१४,१५,१६,१७,१८,१२, २१,२६,३,२०,१०, । तथाचैतन्निन्दितानि नक्षत्राणि तत्र । विहितानि । तत्र वर्ज्ज्यानि । "द्वादशीसप्तमीनन्दारिक्तासु पञ्चपर्वसु । बलमायुर्यशोहन्यात् शिशूनामन्नभक्षणम् । क्वचि० । "जेधं सर्वत्र वर्ज्जयेदिलुक्तेर्नक्षत्रवेधस्यापि तत्र वर्ज्जता ।

**अन्नभक्त** त्रि० अन्नार्थं भक्तः दासः । अन्नमात्रदानेन प्रतिपालिते दासभेदे भक्तदासे विवृतिरस्य दासशब्दे दृश्या ।

**अन्नमय** पु० अन्नस्य विकारः अन्न+विकारार्थे मयट् । स्थूलशरीरे । स्थूलशरीरस्य अन्नविकारत्वादन्नमयत्वम् अतएवोक्तम् "पितृभुक्तान्नजाद्वीर्य्याज्जातोऽन्नेनैव वर्द्धते, देहः सोऽन्नमयोनात्मा प्राक् चोर्द्ध्वं तदभावत इति" इत्युक्तिः "सवा एष पुरुषोऽन्नरस" इति श्रुतौ अन्नरसत्वोक्तेस्तस्य अन्नमयत्वम् । "अन्नाद्रेतः रेतसः पुरुषः" इति श्रुतौ च देहस्यान्नमयत्वे प्रकारोदर्शितः ॥ अन्नविकृतिमात्रे त्रि० । "अन्नमयं

हि सौम्य ! मनः" इति श्रुतिः विवरणं कोशशब्दे । अन्न-प्रकृतमुच्यतेऽस्मिन् "तत् प्रकृतवचने" पा० मयट् । अन्न-प्रचुरे यज्ञादौ "अन्नमयोयज्ञ" इति सि०कौ० ।

**अन्नमल** न०पु० अन्नस्य मलः किट्टः । निःसारितरसभागभेदे (मिटि) इति ख्यातेऽन्नकिट्टे "वर्चस्कः मल" इति सि० कौ० । सुरायाञ्च "सुरा वै मलमन्नानां पुरीषं मलमुच्यते । तस्मात् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेदिति" प्रा०वि० स्मृतिः ।

**अन्नरस** पु० अन्नस्य रसः सारांशः स्वादो वा । भुक्तस्य अन्नस्य सारांशे "सवा अयं पुरुषोऽन्नरस" इति श्रुतिः अपथ्यैः सह संभुङ्क्ते व्याधिरन्नरसे यदेति" वै० । रसस्तु जठरा-नलेनान्नस्य परिपाकात् कश्चित् सारांशः । अन्नपाकशब्दे तद्विवरणम् । अन्नस्यास्वादे च ।

**अन्नविकार** पु० अन्नस्य विकारः । शोणितादिषु सप्तसु धातुषु "प्रधानेन व्यपदेशाभवन्तीति" न्यायात् चरमधातो-रेवास्य प्रयोगोपाधित्वात् चरमे धातौ शुक्रे रा०नि० । शुक्रोत्पत्त्यर्थमेव हि क्रमशःशोणितादिपाकात्तस्य प्राधा-न्यम् । अत एव "अन्नाद्रेत" इति श्रुतौ अन्नतो रेतस उत्पत्तिर्दर्शिता सा च परम्परयैव ।

**अन्नाद** त्रि० अन्नमत्तुं शक्नोति अद-अण् उप० । अन्न-भोजनसामर्थ्यवति दीप्ताग्नौ । "अन्नवानन्नादोभवति य एवं विद्वानिति छा०उप० । "अन्नादः दीप्ताग्निरिति" शा०भा० । "त्विषिमानपचितिमान् यशस्वी ब्रह्मवर्चस-न्नाद" इति कात्या० ३,३,५ । अन्नभक्षके त्रि० "टिड्-ढाणञित्यादि" पा० सूत्रे आद्यन्तयोस्तद्धितसाहचर्य्यात् तद्धिताणन्तादेव ङीप् अन्यतोन, तेनातः स्त्रियां टाप् ।

**अन्नादिन्** त्रि० अन्नमत्ति अद-णिनि ६त० । अन्नभक्षके । "भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रतीति" मनुः स्त्रियां ङीप् ।

**अन्नाद्य** न० अन्नरूपमाद्यं भक्ष्यम् । अन्नरूपभक्ष्ये । "अग्नि-मन्नादमन्नाद्यायादधे" य०३,५, । अन्नमाद्यं यस्य । अन्न-प्रभृतौ त्रि० "अन्नाद्याय व्यूहध्वं सोमोराजा यमागमदिति" दन्तधावनमन्त्रः । "अन्नाद्येनोदकेन वा" इति मनुः ।

**अन्नायुस्** त्रि० अन्नमायुर्जीवनसाधनमस्य । अन्नजीवने "स एषोऽन्नस्य महोयद्दायुरन्नायुर्वा एव यद्दायुरिति" ऐ० उप० । अन्नायुरन्ननिबन्धनायुरन्नजीवन इत्यर्थः ।

**अन्नावृध** त्रि० अन्नं वर्द्धतेऽनेन वृध-करणे क्विप् ६त० पूर्व्व-पददीर्घः । अन्नवर्द्धके । "अत उत्वा पितुभृतोजनित्री-रन्नावृधं प्रतिचरन्त्यन्नैरिति ऋ० १०,१,४, ।

**अन्नाशन** न० अन्नस्य विधानेन आशनम् । अन्नप्राशनार्थे ।

**अन्य** त्रि० अन-अघ्न्यादि० य । भिन्ने, सदृशे च । "उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किञ्चनेति" रघुः । "शरीरेण समं नाशं सर्वमन्यद्धि गच्छति" हितो० । "अन्यदुच्छृङ्खलं सत्वमन्यच्छास्त्रनियन्त्रितमिति" माघः धन्यास्मागुणरत्नरोहणभुवोधन्यास्तदन्यैव सेति" सा०द० सदृशे अन्योक्तिः सर्वत्वेऽस्य सर्वनामता । "नान्यये सति सर्वस्वं यत्नान्यस्मै प्रतिश्रुतमिति" या० । "व्याप्तिः साध्यवदन्यस्मिन्निति" भाषा० । "इतरच्चन्येषां वा शत-क्रतोरिति ऋ० ८,३३,१४, अन्यस्मिन् यूपे, निदधाति रेत इति ऋ० ३,५५,१७ । छन्दस्यन्यस्य न तत्कार्य्यम्, "साध्वन्यानां सखिद्विषे" इति मु०बो० जसि तु वा साध्वन्ये-साध्वन्याः । तस्येदमित्यर्थे छ दुक् । अन्यदीयः ।

**अन्यकारुक** पु० अन्यत् करोति कृ-उण् स्वार्थे कन् कारुकः । पुरीषकिट्टे हारा० । अन्यस्य कारके त्रि० ।

**अन्यचित्त** न० अन्यदिव स्वव्यापाराक्षमं चित्तं कर्म्म० । विषयालोचनासमर्थे चित्ते । ६त० । अन्यमनस्के त्रि० ।

**अन्यत्** अव्य० । अन-बा० दति । अन्यार्थे । "देव-दत्तोगच्छति अन्यच्च यज्ञदत्त" इति गण० महो० स्वरादिपाठादव्ययत्वम् ।

**अन्यतम** त्रि० अन्य+डतमइति, मुग्धबोधम् । बहूनां मध्ये निर्द्धारिते एकस्मिन् । न्यायमते अनेकभेदावच्छिन्नप्रतियो-गिताकभेदवति तच्च तद्भिन्नत्वे सति तद्भिन्नत्वे सति तद्भिन्न-भिन्नत्वम् । यथा घटपटमठान्यतम इत्यादौ घटादिभेद-त्रयभेदो घटपटमठेष्वेव, तद्भिन्नेषु सर्वत्र तत्त्रयभेदस-त्त्वात् । अनेकत्वञ्च अपेक्षाबोधविषयत्वं तथा च यावन्तः पदार्थाः अन्यतमघटकप्रथमभेदप्रतियोगितया विवक्षिता-स्तावन्तएव भेदा ग्राह्यास्तथा च तावत्पदार्थभिन्नभेद-वत्त्वमेवान्यतमशब्दार्थः । "अन्यतरान्यतमशब्दौ अव्युत्पन्नौ प्रातिपदिके इति" कैयटः । तेनान्यतमस्य न सर्वनामका-र्य्यम् "किंयत्तदोनिर्द्धारणे इति" पा० किंयत्तद्भ्योऽन्यत्र डतरादिविधानाभावाच्च डतमान्तत्वम् अतोऽव्युत्पन्नत्वम् । इति भा०प्र०उ० । अतएव सर्वनामसंज्ञासूत्रे डतरडतमान्तयोरुक्तत्वेऽपि अन्यतरशब्दस्य पृथग्ग्रहणम् । "कर्म्मादिष्वन्यतमत्वं कारकत्वमिति" सारमञ्जरी "अधःप्रकुपितोऽन्यतमो हि दोष" इति सुश्रुतम् ।

**अन्यतर** त्रि० अन्य+डतर मु०बो० । द्वयोर्मध्ये निर्द्धारिते एकस्मिन् । न्यायमते भेदद्वयावच्छिन्नप्रतियोगिताकभेदवति

तच्च तद्भिन्नत्वे सति तद्भिन्नभिन्नत्वमधिकमन्यतमशब्दे दृश्यम् अव्युत्पन्नत्वेऽपि अस्य स्वशब्देनोपात्तत्वात् सर्वनामकार्य्यम् । किंयत्तद्भ्योऽन्यत्र डतराद्यभावात् अव्युत्पन्नत्वमिति भाष्य० प्र० उद्योत० । शुभ्रादि० अपत्ये ढक् । आन्यतरेयस्तदपत्ये पुंस्त्री० । [दिवसे ।

**अन्यतरेद्युस्** अव्य० अन्यतरस्मिन्नहनि एद्युस् । अन्यतर-

**अन्यतस्** अव्य० अन्य+सप्तम्याद्यर्थे तसिल् । अन्यत्र अन्यस्मादित्याद्यर्थे । तत्र सप्तम्यर्थे "नैव न प्रियतमोभयथासौ यद्यमुं न शृणुते शृणुते वा । एकतस्तु धिगमूमगुणज्ञामन्यतः कथमदःप्रतिलम्भः इति" नै० "एकतस्तु सकलानि निमित्तान्यन्यतो मनसः प्रतिपत्तिरिति" नीति० "गुरो र्यत्र परीवादो निन्दा वापि प्रवर्त्तते । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यत" इति मनुः । पञ्चम्यर्थे तु "या नियुक्तान्यतः पुत्रं देवराद्वाप्यवाप्नुयादिति" मनुः ।

**अन्यतस्त्य** त्रि० अन्यतोऽन्यस्मिन् स्वेतरपक्षे भवः अन्यतस्+त्यप् । सपत्ने । "स य एतमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायीति" श्रुतिः । [कारके ।

**अन्यत्कारक** त्रि० अन्यस्य कारकः ६त० दुक् च । अन्यस्य-

**अन्यत्र** अव्य० अन्यस्मिन्+अन्य+त्रल् । अन्यस्मिन्नित्यर्थे । "अन्यत्र निर्द्रव्येभ्य आश्रितत्वमिष्यते इति" भाषा० न चानुमानगम्यं शास्त्रप्रामाण्यं येनान्यत्र दृष्टं निदर्शनमपेक्षते इति" अन्यत्र प्रजापतिव्रतादिभ्यः इति च शारी० भा० । प्रकरणबलाच्च कालो देशो वा विशेष्यः तत्र कालः । "अन्यत्र निधनात् पत्युः पत्नी केशान्न वापयेदित्यादौ" निधनकालभिन्ने काले इत्यर्थः । उक्तोदाहरणे तु देश इति । "इतराभ्योऽपि दृश्यन्ते इति" पा० उक्तेः तत्रभवानित्यादिवत् प्रथमार्थे त्रल् । प्रथमार्थे "देवा अन्यत्राश्विभ्यां सत्रं निषेदुरिति" कौ० ब्रा० । अन्यत्र अन्ये इत्यर्थः "अन्यत्र धर्मादन्यत्राधर्मादन्यत्र कृताकृतात् अन्यत्र भूताच्च भव्याच्चेति" कठ० उप० । धर्मादन्यदित्यर्थः ।

**अन्यथा** अव्य० अन्य+प्रकारार्थे थाच् । अन्यप्रकारे "यदभावि न तद्भावि भावि चेन्न तदन्यथेति" हितो० । "अवाप्यते वा कथमन्यथा द्वयमिति" कुमा० । निष्कारणे मेदि० अभावार्थे च "अन्यथानुपपत्तिरिति" ।

**अन्यथाकारम्** अव्य० अन्यथा+कृ+णमुल् । अन्यप्रकारेण कृत्वेत्यर्थे यस्य यथाकरणमुचितं ततोन्यरूपेण कृत्वेत्यर्थे ।

**अन्यथाख्याति** स्त्री अन्यथा अन्यरूपेण ख्यातिर्ज्ञानम् । यस्य यद्धर्म्मवत्त्वेन ज्ञानमुचितं तस्य तद्भिन्नधर्म्मेण ज्ञाने । यथा ह्रदो वह्निमानित्यादिज्ञानम् तच्च भ्रमात्मकं तदभाववति तत्प्रकारकत्वात् । तच्च विशिष्टमेकं ज्ञानं तस्यैव प्रवर्त्तकत्वात् तथा च शुक्तौ रजतत्वभ्रमात् रजतार्थिनस्तद्ग्रहणे प्रवृत्तिरुपजायते इति नैयायिकादयः । मीमांसकादयस्तु तत्र ज्ञानद्वयम् वह्निज्ञानं ह्रदज्ञानञ्च असंसर्गाग्रहणाच्च तयोः विशिष्टज्ञानकार्य्यकारिता सति च ह्रदे वह्नेरसंसर्गज्ञाने तत्र न प्रवृत्तिरित्यतोऽसंसर्गाग्रह एव तत् प्रवर्त्तकः अप्रवृत्तिस्तु तदभावे इत्याहुः । वेदान्तिनस्तु धर्म्मिणोऽसन्निकृष्टस्थले नान्यथाख्यातिः किन्तु अलौकिकपदार्थान्तरोत्पत्त्या तस्य लौकिकं प्रत्यक्षं जायते यथा इदं रजतमिति ज्ञानं तद्विवरणमध्यासशब्दे १४० पृष्ठे उक्तम् । अतोऽसत एव तत्र ख्यातिरित्यसत्ख्यातिः धर्म्मिसन्निकर्षस्थले तु जपासन्निकृष्टस्फटिकादौ अन्यथा ख्यातिरिति भेद इत्यङ्गीचक्रुः ।

**अन्यथानुपपत्ति** स्त्री अन्यथा अभावे न उपपत्तिःअसम्भवः स्वाभावप्रयोज्यासम्भवे, अर्थापत्तिप्रमाणे च तथा हि पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ दिवाऽभोक्तुर्देवदत्तस्य पीनत्वं रात्रिभोजनं विनाऽनुपपन्नम् (असम्भवि) इति ज्ञानात् रात्रिभोजनाकर्त्तृव्यक्तिपीनत्वे न रात्रिभोजनं कल्प्यते तथा च भोजनस्य पीनत्वव्यापकतया व्यापकाभावस्य च व्याप्याभावव्याप्यतया साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानात् अनुमितिरूपार्थापत्तिरुदेति । सेयमर्थापत्तिः मीमांसकमते प्रमाणान्तरं नैयायिकानां मते व्यतिरेकव्याप्तिज्ञानहेतुकानुमितिरिति भेदः ।

**अन्यथाभाव** पु० अन्यथा अन्यरूपेण भावः । यस्य यथारूपमुचितं तस्य ततोऽन्यथारूपेण भवने । अन्यरूपागमे च । "अतो मय्यन्यथाभावो न कर्त्तव्य इति" छा० उप० भा० "ज्ञातेऽपि विषये तवानुक्तिरित्येवं रूपो भाव इत्यर्थः ।

**अन्यथाभूत** त्रि० अन्यथा अन्यप्रकारेण भूतः । प्रकारान्तरतां प्राप्ते । "अन्यथाभूतखिरिति" मु० बो० ।

**अन्यथावृत्ति** स्त्री अन्यथाऽन्यरूपेण वृत्तिः । चित्तादेः अन्यप्रकारेण वृत्तौ, (परिणामे) अन्यथास्थितौ च ।

**अन्यथासिद्ध** त्रि० अन्यथा अन्यप्रकारेण सिद्धः । अन्यप्रकारेण सिद्धे पदार्थे, न्यायादिमते अन्यथासिद्धिरूपाणां कारणताप्रतिबन्धकानां दोषाणामाश्रये वस्तुनि च । अन्यथासिद्धानि च पञ्च तत्र घटादौ दण्डत्वादिकमाद्यम् दण्डादिरूपं द्वितीयं, कुलालजनकः तृतीयः, गगनादि चतुर्थम् रासभादि पञ्चमम्, यथोक्तं भाषायाम् "येन सह पूर्व-

भावः कारणमादाय वा यस्य । अन्यं प्रति पूर्व्वभावे ज्ञाते यत्पूर्व्वभावविज्ञानम् ॥ जनकं प्रति पूर्व्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते । अतिरिक्तमथापि यद्भवेन्नियतावश्यक-पूर्व्वभाविनः ॥ एते पञ्चान्यथासिद्धा दण्डत्वादिकमादि-मम् । घटादौ, दण्डरूपादि द्वितीयमपि दर्शितम् ॥ तृतीयन्तु भवेद् व्योम कुलालजनकोऽपरः । पञ्चमो रास-भादिः स्यादेतेष्वावश्यकस्त्वसौ” इति ॥

**अन्यथासिद्धि** स्त्री अन्यथा अन्यप्रकारेण सिद्धिः । अन्य-प्रकारेण सिद्धौ न्यायाद्युक्तकारणताप्रतिबन्धकरूपे पञ्च-विधे दोषे च ।

**अन्यदर्थ** पु० अन्योऽर्थः कर्म्म० दुक् । भिन्नार्थे । ६त०३त० वा अन्यार्थः अन्यस्यान्येन वाऽर्थे पु० । अन्यः अर्थोयस्य अन्यार्थः भिन्नार्थके त्रि० । “अन्यार्थं उपन्यास इति”

**अन्यदा** अव्य० अन्यस्मिन् काले दा । अन्यस्मिन् काले इत्यर्थे “अन्यदा भूषणं पुंसां क्षमा लज्जेव योषितामिति” माघः

**अन्यदाशा** स्त्री अन्या आशा दुक् । भिन्नप्रार्थने । अन्य-स्याशा ६त० । अन्यस्य वाञ्छायाम् अन्यलाभाशये ।

**अन्यदाशिस्** स्त्री अन्या आशीः दुक् । अन्याशीर्वादे अन्यस्य अन्येन वाशीरिति ६त०३त० वा । अन्या-शीरित्येव । अन्यस्य अन्येन वाऽयास्यप्रार्थने ।

**अन्यदास्था** स्त्री अन्यस्मिन् आस्था दुक् । अन्यस्मिन्नास्थायाम् अन्यस्यास्था ६त० । अन्यास्थेत्येव अन्यस्यास्थायाम् ।

**अन्यदास्थित** त्रि० अन्यमास्थितः दुक् । अन्यरूपास्थिते ३त० । अन्यास्थित इत्येव अन्येनास्थिते ।

**अन्यदीय** त्रि० अन्यस्यायम् गहा०छ दुक् च । अन्यसम्बन्धिनि

**अन्यदुत्सुक** त्रि० अन्यस्मिन् उत्सुकः दुक् । अन्य-विषयोत्कण्ठिते । अन्येन उत्सुकः ३त० । अन्योत्-सुक इत्येव तत्रैवार्थे त्रि० ।

**अन्यदूति** स्त्री अन्या ऊतिः दुक् । अन्यरक्षणे । अन्यस्य ऊतिः ६त० । अन्योतिरित्येव अन्यस्य रक्षणे ।

**अन्यद्राग** पु० अन्यस्मिन् रागः दुक् । अन्यविषयरागे । अन्येन अन्यस्य वा रागः ३त०६त० वा । अन्यराग इत्येव अन्यकरणके अन्यसम्बन्धिनि च रागे ।

**अन्यपुष्ट** पुंस्त्री० अन्यया मातृभिन्नया पुष्टः सर्वनाम्नो वृत्तौ पुंवद्भावः । कोकिले “अप्यन्यपुष्टाः प्रतिकूलशब्दाः श्रोतुर्वितन्त्रीरिव ताड्यमानेति” कुमा० । “बलिपुष्ट-कुलादिवान्यपुष्टैरिति” माघः ।

**अन्यपूर्व्वा** स्त्री अन्यः पूर्व्वो यस्याः । पूर्व्वपतिमरणादौ पश्चात् कृतद्वितीयपतिकायां पुनर्भूस्त्रियाम् । अन्यपूर्व्वा च सप्तविधाः यथोक्तं नारदेन “परपूर्व्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् । पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्व्विधा । कन्यैवाक्षतयोनिर्या पाणिग्रहण-दूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्म्मणा । देशधर्म्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्त्तिता”।(उत्पन्नसाहसा उत्पन्नव्यभिचारा) । “असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते । सवर्णाय सपि-ण्डाय सा तृतीया प्रकीर्त्तिता” । स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति । कामात् समाश्रयेदन्यम् प्रथमा स्वैरिणी तु सा । कौमारम्पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता । पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्त्तिता । मृते भर्तरि तु प्राप्तान् देवरादीनपास्य या । उपगच्छेत्परं कामात्सा तृतीया प्रकीर्त्तिता । प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या । तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता इति” । अन्या अपि सप्तविधाः कात्यायनेन दर्शिता यथा “सप्त पौनर्भवाः कन्या वर्जनीयाः कुला-धमाः । वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला । उद-कस्पर्शिता या च या च पाणिगृहीतिका । अग्निं परिगता या च पुनर्भूप्रभवा च या । इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्” इति । अन्यपूर्व्वावेदनञ्च युगान्तरविषय-मिति माधवाचार्य्यादयः “नष्टे मृते प्रव्रजिते क्लीबे वा पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्योविधीयते पराशरवाक्यस्य तेन युगान्तरविषयकत्वस्य व्यवस्थापनात् । कलियुगेऽपि तत्कर्त्तव्यतेति आधुनिकामन्यन्ते तत्र बला-बले तत्तद्ग्रन्थे एवावगन्तव्ये । अन्यस्वामिकमात्रेऽपि “मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः । तथाप्यनन्य-पूर्व्वेव तस्मिन्नासीत् वसुन्धरेति रघुः । ततः अर्शआदित्वादच् अन्या पूर्व्वा यस्य वा । तत्परिणेतरि पुनर्भूपतौ पु० ।

**अन्यभाव** पु० अन्यरूपो भावः । अन्यरूपभवने अन्यरूप-चित्तभावे च । ब्रा० ष्यञ् । आन्यभाव्यं तद्भावे न० ।

**अन्यभृत्** पुंस्त्री० अन्यया भ्रियते भृ-कर्म्मणि क्विप् । कोकिले ।

**अन्यभृत** पुंस्त्री० अन्यया भृतः पुष्टः । कोकिले । “कलमन्य-भृतासु भाषितमिति” रघुः । अन्यपुष्टमात्रे त्रि० ।

**अन्यमनस्** त्रि० अन्यस्मिन् मनोयस्य । स्वभावाद्विषयपरि-हारेण उत्कण्ठया व्याकुलीभावेन अन्यत्रासक्तचित्ते । षा कप् । अन्यमनस्कोऽप्यत्र त्रि० ।

**अन्यमातृज** पु० अन्यस्या मातुर्जायते जन ड ५त० पुंवद् ।

कारणकत्वाद्भिन्न इति यथोक्तं प्रकाशिकायाम् । “शब्दो यदि स्वार्थस्यानुभवे भवेत्तर्हि शाब्दिकएवौपनायिके, तत्र नाकाङ्क्षाद्युपयोगः, तद्भिन्ने चेदानुमानिक एव न च तत्र सद्यः, साकाङ्क्षत्वादिधीमात्रेण, व्याप्तिबोधस्याधिकस्यापेक्षणादित्याशङ्कामपनेतुमन्वयबोधनामकमनुभवान्तरं दर्शयति । “साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः । सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा” । शाब्दधियः प्रत्यक्षत्वाभ्युपगमे प्रत्यक्षादिसामान्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासम्भवात्, शाब्दान्यप्रत्यक्षत्वाद्यवच्छिन्नं प्रति तस्यास्तथात्वमपेक्ष्य शाब्दधियः प्रत्यक्षाद्भिन्नत्वकल्पनायामेव लाघवाच्च । लिङ्गजन्यत्वेनान्वयबुद्धेरनुमितित्वसिद्धावनायत्त्या शाब्दान्यानुमित्यां तत्सामग्र्याः प्रतिबन्धकत्वं वाच्यमतो लिङ्गजत्वमेव शाब्दधियः खण्डयति ।“योग्यतार्थगताऽऽकाङ्क्षा शब्दनिष्ठाऽनुभाविका । प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः” । गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वबाधविरहरूपं लिङ्गं बाधनिश्चयाभावेनान्यथासिद्धस्य योग्यतानिश्चयस्यानावश्यकत्वात् योग्यतामात्रलिङ्गकसंसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्म्मत्वमित्यादिस्थलीयस्यापि तस्य तथात्वापाताच्च । योग्यतायाः संशयस्थलेऽप्यन्वयबुद्धेरानुभविकत्वात् । गवादावस्तित्वादेरन्वयबोधानुकूलानुपूर्व्वीपर्य्यवसितत्वाकाङ्क्षा स्वयमसिद्धा कथमस्तित्वाद्यन्वयबोधं साधयेत् तत्र गवास्तित्वादेर्योग्यताविशिष्टमप्याकाङ्क्षावत्त्वं न तदन्वयस्यानुमापकमसिद्धेरित्यादि” ।

**अन्वयिन्** त्रि० अन्वेति अनु–इण–णिनि । शाब्दबोधोपयोगि संबन्धवति अनुगते च अन्वयः वंशादिः अस्त्यस्य इनि । प्रशस्तान्वयवति स्त्रियां ङीप् । न्यायनये अन्वयव्याप्तियुक्ते हेतौ पु० “केवलान्वयी” ।

**अन्वर्थ** त्रि० अनुगतोऽर्थम् अत्या०स० । अर्थानुगते व्युत्पत्तियुक्ते शब्दे “तथैव सोऽभूदन्वर्थः राजा प्रकृतिरञ्जनादिति” रघुः ।

**अन्ववसर्ग** पु० अनु+अव+सृज–घञ् अनुगतोऽवसर्गमिच्छानुरूपप्रचारम्, अत्या०स०, अनुरूपं स्वेच्छानुरूपतया अवसृज्यते न प्रतिरुध्यते अनेन इति वा अनु+अव+सृज–घञ् । यथेष्टं क्रियतामित्येवं रूपायामनुज्ञायाम् कामाचारानुज्ञाने, “अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु” पा० अपि सिञ्च अपि स्तुहि इत्यादौ यथेष्टं कुर्य्या इत्याद्यर्थोऽपिना द्योत्यते न तु कुत्रापि अनुत्वया प्रतिरोधः क्रियते इति तस्य तथात्वम् ।

**अन्ववाय** पु० अन्ववायते उत्पत्त्यानुसंबध्यते अनु+अव+अय–घञ्, इण्–अच् वा अनुन्वेति अनुगच्छति देहावयवम् अनु+अव+इण्–कर्त्तरि अच् वा । वंशे, सन्ताने च ।

**अन्वयव्यतिरेकिन्** त्रि० अन्वयव्यतिरेकौ स्तोऽस्य इनि । साध्यसाधके हेतुविशेषे, यथा वह्निसाधने धूमः । स हि वह्निमति महानसादौ, वह्न्यभाववति जलादौ च भावाभावाभ्यां वह्नेरन्वयव्याप्तेः व्यतिरेकव्याप्तेश्च तथेति न्यायमते प्रसिद्धम् । अन्वयोऽन्वयव्याप्तिर्व्यतिरेको व्यतिरेकव्याप्तिस्तौ विद्येते अस्य इनि । अन्वयव्याप्तिमति व्यतिरेकव्याप्तिमति च हेतौ । यथा वह्नौ साध्ये धूमस्य अन्वयव्यतिरेकव्याप्तिकत्वम् । तत्र च धूमसत्त्वे वह्नि सत्त्वरूपान्वयव्याप्तिः वह्निव्यतिरेके च धूमाभावः व्यतिरेकव्याप्तिरित्युभयव्याप्तिसत्त्वात्तथात्वम् ।

**अन्वयव्याप्ति** स्त्री अन्वयेन व्याप्तिर्व्यापनं नियततया स्थितिः ३त०। यत्र धूमस्तत्र वह्निरित्येवं रूपायां व्याप्तौ। अन्वयेन तस्य सत्त्वेन व्याप्तिः इतरान्वयस्य साध्यस्यान्वयः व्यापकता । यथा धूमसत्त्वेन वह्निसत्ता इत्यतो धूमसत्त्वेन वह्नेर्व्यापकता । सा च साध्यसामानाधिकरण्यरूपा ।

**अन्वयागत** त्रि० अन्वयात् वंशपरम्परायाः आगतः । दायप्राप्ते धनादौ “श्रुतं शौर्य्यं तपःकन्याशिष्ययाज्यान्वयागतम् धनं सप्तविधं शुक्लमिति” नारद० ।

**अन्ववेक्षा** स्त्री अनु+अव+ईक्ष–अङ् । अपेक्षायामनुरोधे ।

**अन्वष्टका** स्त्री अनुगतोऽष्टकाम् । श्राद्धकालभेदे स च अग्रहायण्या ऊर्द्ध्वं तिस्रः कृष्णाष्टम्यः अष्टकाः, तदुत्तरवर्त्तिन्यस्तिस्रः कृष्णनवम्यः तद्रूपः। तत्र साग्निकस्य मात्रादिश्राद्धकालः । तथाहि “अष्टका ऊर्द्ध्वमाग्रहायण्यास्तामिस्राष्टमीति” गोभि० । “पितृदानाय मूले स्युरष्टकास्तिस्र एव च कृष्णपक्षे वरिष्ठा वेति” ब्रह्मपु० । आश्वलायनगृह्ये तु तावतस्य इत्युक्तम् यथा । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका” इति ।“एकस्यां चतसृषु वेति” विकल्पश्रवणात् सामर्थ्यभेदेन एकस्यां तिसृषु चतसृषु वा अष्टकाश्राद्धम् अन्वष्टकाश्राद्धं च कार्य्यमिति गम्यते । तत्र पशुकल्पस्थालीपाकाद्यङ्गजातमुक्त्वा “अपरेद्युरन्वष्टक्यमिति” सूत्रेण तदुत्तरवर्त्तिकृष्णनवमीषु तद्विहितम् तच्च मात्रादिभ्योऽपि देयम् “पितृभ्यश्च कृत्वा मन्त्रवर्ज्जम् स्त्रीभ्यश्च सुराचाममिति” तत्रैवोक्तेः मनुनाऽपि “पितॄंश्चैवाष्टकास्वर्च्चेन्नित्यमन्वष्टकासु” चेत्युक्तम् अत्र पितृपदमष्टकापक्षे स्वपरम्, अन्वका-

पक्षे "स्त्रिया पुंवत्" इत्येकशेषेण मातृपितामहीप्रपितामहीसहितपित्रादिपरम्। एवञ्च आश्वलायनगृह्ये मनुवचने च पित्रादेरपि देवतात्वश्रवणात् मात्रादिमात्रदैवत्यं रघुनन्दनोक्तं चिन्त्यं वस्तुतः शाखिभेदेन सपत्नीकपितृश्राद्धं मात्रादिदेवताकं वा तच्छ्राद्धमिति व्यवस्था। "पित्रादित्रिकपत्नीषु भोज्या मातुः प्रति द्विजाः। स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते" मनुवचनन्तु तासां पृथक्श्राद्धविधानार्थम्। एतच्च अन्वष्टकाश्राद्धं साग्निकमात्रेण कर्त्तव्यम्। तथा च विष्णुः। "अन्वष्टकास्वष्टकावदग्नौ हुत्वा मात्रे पितामह्यै प्रपितामह्यै पूर्ववद्ब्राह्मणान् भोजयित्वा" इति। अत्र होमत्वदेवाग्निप्राप्तेरग्निग्रहणं तन्नियमार्थम्। न चाग्नौकरणहोमे विप्रपाण्यादेर्विधानादत्रापि तथेति वाच्यम् प्रकृतिभूतश्राद्धविध्युक्ताधारान्तरस्य विकृतिभूतश्राद्धे विशेषविहिताधारेण बाधात्। न वा लौकिकाग्नौ होमः "न पैतृयज्ञियो होमो लौकिकाग्नौ विधीयते" इति मनुवचनेन निषेधात्। श्राद्धचिन्तामण्यादावेवम्। श्रा०त० रघुनन्दनः।

**अन्वष्टमदिश** अव्य० अष्टमीं दिशमनुलक्षीकृत्य अव्ययी० अच्समा०। पश्चिमोत्तरयोर्दिशोरष्टमाभिमुखीकृतदिग्भागे। स च वायुकोणः तस्य च पश्चिमोत्तरयोर्वामावर्त्तदक्षिणावर्त्ताभ्यामष्टमभागत्वात्तथात्वम् "अरण्ये समित्पाणिः सन्ध्यामुपास्ते नित्यं वाग्यत उत्तराभिमुखोऽन्वष्टमदिशमानक्षत्रदर्शनादिति" श्रा०त० सांख्या०सू०। अन्वष्टमदिशमिति उभयदिगष्टमभागमिति रघु०। [प्रत्यहमित्यर्थे।

**अन्वह** अव्य० अहि अहि वीप्सार्थेऽव्ययी० अच् समा०।

**अन्वाख्यान** न० अनु+आ+ख्या—ल्युट्। तात्पर्य्यविवरणार्थं व्याख्याने तत्प्रतिपादने च "वस्त्वन्वाख्यानं क्रियान्वाख्यानं चेति" "आत्मस्वरूपान्वाख्यानपरैरिति च बृ०उ०भा०

**अन्वाचय** पु० प्रधानस्य पश्चादन्यः आचीयते बोध्यते यत्र अनु+आ+चि+अच्। उद्देश्यसिद्ध्यानुद्देश्यसिद्ध्यर्थोपदेशे। यथा भिक्षां गच्छ यदि गां पश्येस्तां चानय, अत्र भिक्षाया एव उद्देशः न गवानयने, तत्सिद्ध्युत्तरं गवानयनमनुद्दिष्टमपि साध्यतया निर्द्दिष्टम्। "चान्वाचये समाहारे" इत्यमरः। "चार्थे द्वन्द्व इति" पा० सूत्रे "समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः" इति सि०कौ०।

**अन्वाजे** अव्य० अनु-आजयत्यनेन अनु+आ+जि—डे। दुर्ब्बलस्य बलाधाने। बलस्य हि जयहेतुत्वं प्रसिद्धम्। सप्तम्यन्तप्रतिरूपकोऽयम्। "उपाजे अन्वाजे इति" पा० वा उपपदसमासे अन्वाजेकृत्येत्यादौ ल्यप्। पक्षे अन्वाजेकृत्वा।

**अन्वादेश** पु० अनु+आ+दिश—घञ्। पूर्व्वोपात्तस्य किञ्चित्कार्य्यान्तरं विधातुं पुनरुपदेशे। यथा अनेन व्याकरणमधीतं न्यायमेनं प्रपाठयेति न्यायपाठनार्थं पुनरुपदेशः। कथितकथने, अनुवादार्थे च। "इदमोऽन्वादेशेऽशनुदात्त" इति पा०।

**अन्वाधान** न० वह्निस्थापनस्य पश्चात् आधानम्। आहितवह्नौ—इध्मयोः तिसृणां वा समिधामाधाने। स्थण्डिलादिकरणानन्तरम् "तदभ्युक्ष्याग्निं प्रतिष्ठाप्यान्वाधाय परिसमूह्येति" आ०सू० सूत्रे हि अन्वाधानोत्तरं तदाधानमुक्तम्। "अग्न्यन्वाधानमध्वर्युर्यजमानो" वेति कात्या० २,१,२।

**अन्वाधि** पु० पश्चात् आधीयते अनु+आ+धा—कि। स्वसमीपे आहितस्य वस्तुनः स्वामिने दानाय परत्राधाने तद्विषये धने च "अर्थमार्गणकार्य्येषु अन्यस्मिन् वचनान्मम। दद्यास्त्वमिति योदत्तः स इहान्वाधिरुच्यते इति" कात्या० स०। सन्तत आधिः। सन्ततमानसव्यथायाम्।

**अन्वाधेय** न० विवाहस्य पश्चात् आधेयम् दत्तम्। अनु+आ+धा—यत्। विवाहात् परम् पित्रादिभिः स्त्रीभ्यो दत्तधने स्त्रीधनभेदे "विवाहात् परतोयत्तु लब्धं भर्त्तृकुलात् स्त्रिया अन्वाधेयं तदुक्तं तु लब्धं बन्धुकुलात्तथेति" ना०स०। "बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च। अप्रजायामतीतायां बान्धवास्तदवाप्नुयुरिति" या०।

**अन्वायतन** अव्य० आयतनस्य मध्यम् अव्य०। गृहमध्ये इत्यर्थे अनुगतमायतनम् अत्या०स०। गृहानुगते त्रि०।

**अन्वायत्त** त्रि० अनु+यत—क्त। अनुगते "प्रस्तोतः! या देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वानिति" "बसवोऽन्वायत्ता" इति च छा०उप०।

**अन्वारब्ध** त्रि० अनु+आ+लभ—कर्त्तरि क्त लस्य रः। कृतस्पर्शे "विष्णोः कर्म्माणीति वाचयति यूपमन्वारब्धमिति" का० ६,२,१२, "अन्वारब्धं स्पृष्टवन्तमिति" वेददीपः। कर्म्मणि क्त। पश्चाद्भागे—स्पृष्टे, पश्चाल्लग्ने च। "अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु इति" आ०त० या०। "अन्वारब्धेन पश्चाल्लग्नेनेति" रघु०। "द्वाभ्यां पत्नीभ्यामन्वारब्ध" इति श्रौ० सू०।

**अन्वारभ्य** त्रि० सह आलभ्यः लस्य रः। सहस्पृश्ये।

**अन्वारम्भ** न० पश्चात् आलम्भः लस्य रः। स्पर्शे अनुपूर्व्वकलभेर्हि स्पर्शार्थत्वम्। "अनड्वाहमन्वारभामहे"

इति यजु० २५,१२ स्वर्थार्थे प्रयोगात्। “अनड्वाहमन्वारभामहे स्वालभामहे स्वस्तये” इति वेददीपः। [रूढे च।

**अन्वारूढ** त्रि० अनु+आ+रुह–क्त। अधिरूढे। पश्चादा-

**अन्वारोहण** न० पश्चात् आरोहणम्। पश्चाद्भर्त्तरि मृते पश्चात् सह वा स्त्रियाश्चितारोहणे तच्च “ब्रह्मचर्यं तदन्वारोहणं वेति” वि०स्मृते विहितम् विवृतमनुमरणशब्दे।

**अन्वासन** न० अनु+आस–ल्युट्। अनूपवेशनेन सेवने।

**अन्वासित** त्रि० अनु+आस–कर्मणि क्त। पश्चादुपवेशनादिना सेविते “अन्वासितमरुन्धत्येति” रघुः।

**अन्वाहार्य्य** न० मासि मासि आह्रियते अनु+आ+हृ–कर्मणि ण्यत्। “यच्छ्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत्। अमावास्यं द्वितीयं स्यादन्वाहार्य्यं विदुर्बुधा इति” कात्यायनपरिभाषिते नान्दीमुखश्राद्धे, अमावास्यायां मासि मासि कर्त्तव्ये श्राद्धे, दक्षिणायाञ्च “पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा इति मनुः। “सर्वान्त्वेवान्वाहार्य्यमन्ति” गोभि०। अन्वाहार्य्यं नान्दीमुखश्राद्धम् दक्षिणा च तदुभयवन्ति। स्वार्थे कन् तत्रैव। “पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकमिति” मनुः मासिमासिकर्त्तव्यश्राद्धस्यानुमासमाह्रियमाणत्वात् नान्दीमुखस्य संस्कारादौ आह्रियमाणत्वात्, दक्षिणायाः कर्मणां पश्चात् आह्रियमाणत्वाच्च तथात्वम्।

**अन्वाहार्य्यपचन** पु० अन्वाहार्य्यं तदर्थाचं पच्यतेऽनेन पच+ल्युट्। दक्षिणाग्नौ अग्न्येदविधिना स्थापितेऽग्नौ। “अथ हैनमन्वाहार्य्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति छा०उप०। अन्वाहार्य्यपचनो दक्षिणाग्निरापो दिशो नक्षत्राणि चन्द्रमा इत्येतमेमम चतस्रस्तनवश्चतुर्द्धा अहमन्वाहार्य्यपचनः विभज्य आत्मानं स्थितः इति” भा०। “प्रसिद्धं हि दर्शपौर्णमासयोरन्वाहार्य्यपचने हविः श्रपयन्तीति” आन०गि०। “यस्मिन्नग्नावृचा वा साम्ना वा यजुषा वा समिधं वाभ्यादध्यादाहुतिं वा जुहुयादन्ते दक्षिणां वा हरेयुरनु वा गमयेयुर्दक्षिणा वाहेन हरन्त्यान्वाहार्य्यपचनोभविष्यतीति अनु वा गमयन्ति” इति शत० ब्रा० तस्य निरुक्तिर्दर्शिता।

**अन्वाहित** त्रि० अनु+आ+धा–क्त। कृतान्वाधाने, वह्नौ-र्भक्षिप्तसमिद्विशेषे अन्वारोपिते” आधेःस्वामिनोदानार्थमपरस्य हस्ते निक्षिप्ते च। “अन्वाहितं याचितकमित्यादि या०।

**अन्विच्छा** स्त्री अनु+इष–श नि०। अन्वेषणे।

**अन्वित** त्रि० अनु+इण+क्त। अनुगते, युक्ते, सहसम्बद्धे, शाब्दबोधे विशेष्यताप्राप्ते च “प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति” न्यायः।

**अन्विष्ट** त्रि० अनु+इष–क्त। अन्वेषिते कृतान्वेषणे। “यद्वायुरन्विष्टमृगैः किरातै”रिति कुमा०। कृतानुसन्धाने च “अन्विष्टः स्यात् प्रमातैव पापदोषादिवर्ज्जित” इति शा०भा०।

**अन्विति** त्रि० इण–क्तिन् नमस्कारेण अनुकूला इतिः यस्य। नत्वा अनुकूलताप्राप्ते “अन्वितिरसि दिवे त्वेति” ता० ब्रा०। “अन्वितिः अनुकूलनतियुक्तोऽसीति” भा०।

**अन्वीक्षा** स्त्री पश्चात् ईक्षा पर्य्यालोचना प्रा०स०। वेदवाक्यश्रवणस्य पश्चात् तदर्थनिश्चयार्थं तदर्थपर्य्यालोचने, अन्वीक्षायै हिता ठक्। आन्वीक्षिकी तर्कविद्या। “आन्वीक्षिकीं कौशलानामिति” गीता। ल्युट्। अन्वीक्षणमप्यत्र न०।

**अन्वीत** त्रि० अनु+ई–गतौ कर्त्तरि क्त। अनुगते अन्वितशब्दार्थे

**अन्वीप** त्रि० अनुगता आपो यत्र स्थानादौ अच्समा० अचि आत ईत्। अनुगतजले स्थाने, देशे वाच्ये तु “ऊदनोर्देशे” इति पा० ऊत्, अनूपोदेशः।

**अन्वच्** अव्य० अचि विभ० अव्ययी० अच् समा०। ऋचोऽनुयेऽर्थे। “लिङ्भयान्वाह तावानुक्तो नन्वुक्तं वेदामन्वृचमिति” शत०ब्रा०।

**अन्वेष** पु० अनु+इष–भावे घञ्। अन्वेषणे अनुसन्धाने गवेषणे “वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृतीति” शकु०।

**अन्वेषण** न० अनु+इष–भावे ल्युट्। अनुसन्धाने गवेषणे नष्टद्रव्यस्य दर्शनाय लाभाय वा व्यापारभेदे। “रत्नान्वेषणदक्षाणां द्विषामामिषतां ययौ” रघुः।

**अन्वेषणा** स्त्री अनुगता एषणा “इषेरनिच्छार्थस्येति” पा० युच् टाप्। तत्त्वानुसन्धाने तर्कादिना ज्ञातपदार्थस्य शुद्धार्थं युक्त्यादिना समर्थने गवेषणे च।

**अन्वेषित** त्रि० अनु+एष–गतौ–इष–स्वार्थे णिच्–कर्मणि वा क्त। गवेषिते, कृतानुसन्धाने च।

**अन्वेषिन्** अनु+इष–णिनि। गवेषणकर्त्तरि “तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यतामिति” रघुः। स्त्रियां ङीप्।

**अन्वेष्टव्य** त्रि० अनु+इष–कर्मणि तव्य। अनुसन्धेये “सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति श्रुतिः “अन्वेष्टव्यात्मविज्ञानात् प्राक्प्रमातृत्वमात्मन” इति शा०भा०।

**अन्वेष्टृ** त्रि० अनु+इष–शीलार्थे तृच् वा इडभावः। गवेषण

शीले तत्कर्त्तरि च "अनुपदसन्वेष्टा" पा०। इट्पक्षे अन्वेषिताप्यत्र । उभयतः स्त्रियां ङीप् ।

**अप्** स्त्री ब०व० । आप–क्विप् ह्रस्वश्च । जले । "मनं जलं ह्राऽऽक्षमल्लिकेऽपाम्" भट्टिः । "अद्भिरेव पारयित्वा नैत्यिकान्ते भुजिक्रियेति" स्मृतिः अग्नेरापः, अद्भ्यो भूमिरिति श्रुतिः "अप एव ससर्ज्जादौ तासु बीजमवासृजदिति" मनुः । समासान्ते अच् समासान्तः । "बह्वपानि तडागानि सारसाः समुपासते" इत्युद्भटः । कृतसमासान्तस्य उपसर्गद्व्यन्तःपरस्य आत ईत्त्वम् । समीपं प्रेपस् द्वीपः अन्तरीपम् । अनुपूर्व्वात्तु देशे वाच्ये ऊत् । अनूपो देशः अन्यत्र अन्वीपो ग्राम इत्यादि । पूजार्थकसुपूर्व्वात् न अच् । स्वप्सि नगराणि । अपां विकारः मयट् । अम्मयः, वा यञ् । आप्यम् । स्वार्थे चातु० ष्यञ् । आप्यं जले न० ।

**अप** अव्य० न पाति पा–ड । वियोगे, विकृतौ, विपरीते, निदर्शने, आनन्दे, वर्ज्जने, चौर्य्ये च । "अप–वियोग विकृति-विपरीत-निदर्शनानन्द-वर्ज्जन-चौर्य्य-वारणेषु" इति ग०र०। वियोगे "अपयाति सत्वे निविशतेऽपैतीति" पा० भा०। "भीत्या रामादपासरत्" । विकृतौ, अपकृतः अपचयः विपरीते, अपशब्दः "तएव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" इति हर्य्युक्तेः साधुशब्दानां वैपरीत्येनोच्चारणस्यैवापशब्दत्वस्य परिभाषितत्वादस्य विपरीतशब्दत्वम् । निदर्शने निर्देशे अपदिशति । आनन्दे अपहसति, वर्जने "अपपरी वर्ज्जने" इति पा० उक्तेः कर्म्मप्रवचनीयसंज्ञा तद्योगे पञ्चमी । अप त्रिगर्त्तात् वृष्टो देवः । चौर्य्ये अपहरति । वारणे अपवर्त्तयति "समेन केनापवर्त्त्यते" लीला० । अपकर्षे अपकर्म्म । अधः प्रदेशे च अपाङ् अपानः । अध गतिमानित्यर्थः ।

**अपकर्म्मन्** न० अपकृष्टं कर्म्म प्रा०स० । दुष्टाचरणे । अपाकरणे च "अथाख्यानपकर्म्म चेति" दत्तस्यानपकर्म्म चेति स्मृतिः प्रा०ब०। दुष्टाचरणवति त्रि०। स्त्रियां वा डाप् ।

**अपकर्त्तृ** त्रि० अप+कृ–तृच् स्त्रियां ङीप् । अपकारकारके ।

**अपकर्ष** पु० अप+कृष–भावे घञ् । उचितधर्म्मापेक्षातो हीनतायां, "तत्र पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलभवरसोऽप्युत्कर्षापकर्षेण चेति" यथा हि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेणेति" च सुश्रुतः "उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मत इति" मनुः । "उत्कर्षापकर्षविहीनो मध्यः, सि०कौ० । स्वकर्त्तव्यकालात् पूर्व्वकालकरणे, परस्थलपदानामन्वयार्थं पूर्व्वकृते आकर्षणे आकर्षणमात्रे च । अपकृष्यते कर्म्मणि घञ् । स्वकालतः पूर्व्वं कर्त्तव्ये यथा अपकर्षसपिण्डनम् । तथा च "मुख्यं श्राद्धं मासिमासि अपर्य्याप्तावृतं प्रति । द्वादशाहेन वा कुर्य्यादेकाहे द्वादशाथवेति" स्मृतौ मरणोत्तरं मृताहे मासि मासि कर्त्तव्यानां मृताहनिमित्तकमासिकादीनां द्वादशाहेषु एकाहेषु च कर्त्तव्यत्वोक्तेः सर्व्वापकर्षः । तथाऽपकर्षे च हेतव एकपुत्रत्वादयः । "आनन्त्यात् कुलधर्म्माणां पुंसश्चायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वादशाहे प्रशस्यते इति" स्मृत्युक्ताः । तत्र पाश्चात्यानां कुलधर्म्मात् द्वादशाह एव कर्त्तव्यतायाः कुलपरम्पराचारः । वङ्गीयानान्तु एकपुत्रस्यैव आयुषःक्षयसम्भावनायामिति भेदः । अयमेव सर्व्वापकर्षः, आवश्यकतद्यारम्भकाले तु न सर्वापकर्षः । किन्तु पश्चाद्भाविनामेवापकर्ष इति भेदः । एवं नवममासादिष्वप्यपकर्षणे न सर्वापकर्ष इति बोध्यम् ।

**अपकर्षक** त्रि० अपकर्षति अप+कृष–कर्त्तरि ण्वुल् । अपकर्षकारके "रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते" इति "दोषास्तस्यापकर्षकाः" इति च सा०द० ।

**अपकर्षण** त्रि० अपकर्षति अपहरति कर्त्तरि ल्यु । अपहारके "नचास्ति सदृशं तेन किञ्चित्स्थौल्यापकर्षणमिति" "वर्णानां बहुविधत्वाच्च त्रेयापकर्षणा" इति सुश्रु० भावे ल्युट् । आकर्षणे न० । "सशल्यः क्लिश्यते प्राणैर्विशल्योविनशिष्यति । इति मामाविशच्चिन्ता तस्य शल्यापकर्षणे" रामा० ।

**अपकाम** त्रि० अपगतः कामो यस्य यत्र यस्माद्वा प्रा०ब० । अपगतकामे वा उत्तरपदलोपाभावे अपगतकामोऽप्युक्तार्थे "अपकामं स्यन्दमाना अवीवरत वोह्वितमिति" अथ० २।३।२, । कामस्यात्ययः अत्यये अव्ययी० । कामात्यये अव्य० "शलोरकामं कृणोति धन्वनेति" ऋ० ६,७५,२, "अपकामं कामस्यापायमिति" भा० ।

**अपकार** पु० अप+कृ-भावे घञ् । अनिष्टसम्पादने तद्धेतौ द्रोहे च "द्रोहोऽपकार इति" सि०कौ० । "उपकर्त्तारिणा सन्धिर्न मित्रेणापकारिणा । उपकारापकारौ हि लक्ष्यं लक्षणमेतयोरिति" माघः । "अपकारोऽनिष्टचिन्ते"त्युक्तेरनिष्ट भयादि चिन्तने च "ततो जातास्त्विमा घोरा नानारूपा महाविषाः अपकाराय वर्त्तन्ते इति" सुश्रुतः ।

**अपकारगिर्** स्त्री अपकारेण द्वेषेण गीर्य्यते गॄ–क्विप् । भर्त्सनवाक्ये । "भर्त्सनं त्वपकारगीः" इत्यमरः ।

**अपकारिन्** त्रि० अप+कृ–कर्त्तरि णिनि । अपकारकारके,

अनिष्टचिन्तके द्रोग्धरि च। "उपकर्त्तारिणा सन्धिर्न मित्रेणापकारिणेति" माघः स्वशीर्य्यैरेव तान् शिष्यान्मान-वानपकारिण" इति मनुः।

**अपकृत** त्रि॰ अप+कृ–कर्म्मणि क्त। यस्यानिष्टं कृतं तस्मिन् कृतद्रोहे "किं मयापकृतं तस्येति"। भावे क्त। अपकारे न॰। "मित्रस्य चैवापकृते द्विविधोविग्रहः स्मृत" इति मनुः। [द्रोहे च।

**अपकृति** स्त्री अप+कृ–भावे क्तिन्। अपकारे, अनिष्टचिन्तने,

**अपकृत्य** न॰ अपकृष्टं कृत्यम् प्रा॰स॰। अपकृष्टकर्म्मणि। अप+कृ–भावे क्यप्। अपकारे न॰। भावे स्त्रियां क्यप्। अपकृत्या अपकारे स्त्री।

**अपकृष्ट** त्रि॰ अप+कृष–क्त। अधमे, हीने, स्वकालात् पूर्व्व-काले कृते, परस्थलादन्यथार्थं पूर्व्वस्थले आकृष्टे, आकृष्टमात्रे च "स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहा" इति सूर्य्यसिद्धान्तः।

**अपक्ति** स्त्री न पक्तिः अभावार्थे न॰त॰। पाकाभावे।

**अपक्रम** पु॰ अप+क्रम–भावे घञ्। अपयाने। "अपक्रमा-दुर्हैवैषामेतद्विभयाञ्चकार" शत॰ब्रा॰ ४,२,२,११। अपक्रम्यते यस्मात् अपादाने घञ्। अपयानावधिस्थाने "विक्षिपत्येष विक्षेपं चन्द्रादीनामपक्रमादिति" सू॰सि॰। "अपक्रमात् क्रान्तिवृत्तस्थस्पष्टग्रहभोगस्थानादिति" रङ्ग-नाथः। अपगतः क्रमःपरिपाटी यस्मात् प्रा॰स॰। क्रम-विहीने अक्रमे त्रि॰ वा उत्तरपदलोपाभावे अपगत-क्रमोऽप्युक्तार्थे त्रि॰। क्रमस्यात्ययः अव्ययी॰। क्रमात्यये अव्य॰। क्ति वेट्कत्वात् वा वृद्धिः। अपक्रामोऽप्युक्तार्थे। "यस्मस्याभिक्रान्त्याऽपक्रामाय" इति ऐ॰ ब्रा॰।

**अपक्रमण** त्रि॰ अप+क्रम–भावे ल्युट्। अपयाने पलायने च। "अपक्रमणमेवास्य सर्व्वकामैरहं वृणे" इति रामा॰। "पुरस्ताच्चापक्रमणमप्यत्वैवान्विच्छतेति" शत॰ब्रा॰।

**अपक्रमिन्** त्रि॰ अप+क्रम–कर्त्तरि णिनि वेट्कामन्तत्वात् वा वृद्धः। अपयानकर्त्तरि "तानेवैतदनपक्रमिणोऽकुरुत" शत॰ ब्रा॰ वृद्धौ अपक्रामीत्यपि स्त्रियां ङीप्।

**अपक्रिया** स्त्री अप+कृ–भावे स्त्रियां श। द्रोहे, अपकारे च। चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रियेति" माघः। "अन्यवेयतपसां विरोधिनो मा कृथाः पुनरमूमपक्रिया-मिति" किरा॰।

**अपक्रोश** पु॰ अप+क्रुश–घञ्। निन्दने। उपक्रोशोऽप्यत्र। भावे ल्युट्। अपक्रोशनमप्यत्र न॰।

**अपक्व** त्रि॰ न पक्वः। अपरिणते अपक्वयोगी अपरिणतयोगी यथा योगाभ्यास उचितः तथाभ्यासशून्यः इत्यर्थः। आमे तण्डुलफलादौ च। "अपक्वेन वर्त्तितव्यं फलमूलादि-नापि वेति" स्मृतिः।

**अपक्ष** त्रि॰ नास्ति पक्षो गरुत् यस्य। पक्षशून्ये उड्डयन-शक्तिशून्ये च। पक्षः सहायः। तच्छून्ये।

**अपक्षपात** पु॰ पक्षे सहायतायां पातः आनुकूल्यम् अभा-वार्थे न॰ त॰। पक्षपाताभावे सहायताऽकरणे। "अपक्षपातात् वक्तव्यं सभायामिति निश्चय इति"नीति॰।

**अपक्षपातिन्** त्रि॰ पक्षे सहायतायां पतति पत–णिनि ७॰त॰ ततः न॰त॰। पक्षपातिभिन्ने यथार्थवादिनि।

**अपक्षेपण** न॰ अप–क्षिप–ल्युट्। अधःस्थानसंयोगहेतौ क्रियाविशेषे, अधःपातने च। अवक्षेपणमप्यत्रार्थे। "उत्-क्षेपणं तथापक्षेपणमाकुञ्चनं तथा प्रसारणञ्च गमनं कर्म्मा-ण्येतानि पञ्च चेति" भाषा॰ अवक्षेपणमिति वा पाठः।

**अपगण्ड** पु॰ गण्डोदृढो वैपरीत्यार्थकेनापशब्देन प्रा॰स॰। अतिबाले अपोगण्ड इति हैम॰। अपोगण्डशब्दे विवरणं दृश्यम्। [भावे घञ्। तत्रार्थे पु॰।

**अपगत** त्रि॰ अप+गम–कर्त्तरि क्त। अपयाते पलायिते च।

**अपगम** पु॰ अप+गम–भावे घञ् न वृद्धिः। अपयाने अप-सरणे। "निद्रापगमहेतुभ्यो विबोधश्चेतनागम" इति सा॰द॰ "पुराणपत्रापगमादनन्तरं लतेव सन्नद्धमनोज्ञ-पल्लवेति" रघुः।

**अपगर** पु॰ अप+निन्दार्थे गॄ–भावे अप्। निन्दने। "अन्य-दन्तर्वेद्यामुपक्रम्य "अभिगरापगरौ" कात्या॰ १२,३,२, "अपगरोनिन्देति" तद्व्या॰।

**अपगा** स्त्री अपगच्छति निष्यन्दते अप+गम–ड। आप-गायाम् नद्याम्। अपयानकर्त्तरि त्रि॰।

**अपगा(गो)रम्** अव्य॰ अप+गुरी–उद्यमने णमुल् एच आत् वा। उद्यम्येत्यर्थे "अस्यपगारम् अस्यपगोरं वेति" सि॰कौ॰।

**अपगोह** पु॰ अप+गुह–घञ्। तिरोधाने गोपने च। "स विद्वानपगोहं कवीनामाविर्भवन्निति" ऋ॰ २,१५,७, "अपगोहं तिरोभावमिति" भाष्यम्।

**अपघन** पु॰ अपहन्यते संहत्य कर्म्म कृत्वा वियुज्यते अप+हन-अप् घनादेशः। शरीरे, हस्ताद्यवयवे च। शरीरादि हि पुरुषोपभोगाय प्रथमं संहत्य तत्तत्कर्म्म निष्पाद्य भोगावसा-नये पुनर्विमुज्यते इति तस्य तथात्वम्। देहादेः संहत्य

कारित्वं च सातङ्खलादौ दर्शितं यथा। "परार्थं संहत्य कारित्वादिति" सात०। इतरसाहित्येनार्थक्रियाकारित्वं संहत्यकारिता, संहननञ्च आरम्भकसंयोगभेदः। तथा च देहादिकं परार्थं (क्षेत्रज्ञस्य भोगापवर्गफलकम्) संहतत्वात् शय्यासनादिवदित्यनुमानप्रयोगः। अतएव सांख्यसूत्रे "संहतपरार्थत्वादिति" संहन्तृसिद्धिरुक्ता। संहतानां देहादीनां क्षेत्रज्ञस्य भोगादिफलकत्वात् संघातातिरिक्तः पुरुषोऽनुमीयते नहि अचेतनानां देहादीनां स्वतः संघातः सम्भवति अतः संघातसिद्धये पुरुषसिद्धिरिति समुदितार्थः। "संयोगाश्च विभागान्ता" इत्युक्तेः संयोगभेदरूपसंहननस्यावश्यं वियोगान्तत्वात् देहादीनां तदवयवानाञ्च क्रमेणारम्भकसंयोगनाशेन परस्परवियोग इत्यतोऽङ्गादेरवश्यवियोगवत्त्वात् तथात्वम् अतएव "अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः" इति गीतायामारम्भकसंयोगनाशपूर्व्वकपरस्परवियोगेन नाश उक्तः। "लौहोदनघनस्कन्धा ललितापघनां स्त्रियमिति" भट्टिः। अपगतोघनोमेघो यस्मात् प्रा०ब० वा गतलोपः। मेघावरणशून्ये त्रि० वा गतलोपाभावे अपगतघनोऽप्युक्तार्थे। [मरणे च।

**अपघात** पु० अप–हन–भावे घञ्। अपकृष्टहनने दुष्टहेतुक-

**अपघातक** पु० अपहन्ति अप+हन–ण्वुल्। विनाशके। "जिज्ञासा तदपघातके हेतौ" सां०का० पाठान्तरम्।

**अपघातिन्** त्रि० अप+हन–कर्त्तरि णिनि। अपहननकर्त्तरि स्त्रियां ङीप्।

**अपच** पु० न पक्तुं शक्तः पच–"अचकावशक्ताविति" पा०। अच्। पक्तुमशक्ते। "अपचः पक्तुमशक्त" इति सि०कौ०।

**अपचय** पु० अप+चि भावे अच्। हानौ, अपहरणे, व्यये च।

**अपचरित** न० अपकृष्टं चरितं प्रा०स०। अपकृष्टचरिते सदोषाचरणे, "आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधामिति" शकु०।

**अपचार** पु० अप+चर–भावे घञ्। अहिताचरणे अपथ्यसेवने "कृतापचारोऽपि परैरनाविष्कृतविक्रियः। असाध्यं कुरुते कोपं प्राप्ते काले गदो यथेति" माघः। "अपचारः अपकारः अपथ्यञ्चेति" मल्लि०। "योनिप्रदोषाञ्च भवन्ति स्त्रियो यज्ञोपदंशा विविधापचारैरिति" वैद्य०। वैपरीत्यादिहेतुकदोषे "नापचारमगमन् क्वचित् क्रिया" इति माघः। "अपचारं लोपविपर्ययविपर्यासादिदोषमिति" मल्लि०। विनाशे च "महाध्वरे विध्यपचारदोष" इति किरा०। "अपचारः कर्म्मलोपदोष" इति मल्लि०। "सुह्रापचारे मातृप्रतिनिधाविति" मीमांसा। अपकर्म्मणि च "गुह्यमानाऽपचारं सा बन्धुपक्षभयात्तदा" भा०आ०प० १११ अ०।

**अपचारिन्** त्रि० अप+चर–तच्छीलार्थे कर्त्तरि णिनि। अपकर्म्मकरणशीले स्त्रियां ङीप्। "पत्यौ भार्यापचारिणीति" मनुः। "भार्या अपचारिणी व्यभिचारिणी जारपतिं क्षममाणे भर्त्तरि पापं संश्लेषयतीति" कुल्लूकभट्टः।

**अपचिकीर्षा** स्त्री अपकर्त्तुमिच्छा अप+कृ–सन्–भावे स्त्रियाम् अ। अपकर्त्तुमिच्छायाम्। [कारकस्येच्छावति।

**अपचिकीर्षु** त्रि० अपकर्त्तुमिच्छुः अप+कृ–सन्–उ। अप-

**अपचित्** त्रि० अप+चि–क्विप्। अपचयकारके। "इतस्ताः सर्व्वानश्यन्तु बाधका अपचितामिव" अथ०६,२५,१।

**अपचित** त्रि० अपचाय्यते आनन्देन पूज्यते चाय–पूजनादौ क्त चायतेश्चिः अपशब्दस्यानन्दपूर्व्वकत्वम्। आनन्देन पूजिते। पूजितो हि आनन्दपूर्व्वकं पूज्यते। अप+चि–क्त। जातापचये अवयवाद्यपचययुक्ते, क्षीणे, व्ययिते च। "तत्रापचितबलाः प्राणिनोभवन्ति" सुश्रुतः।

**अपचिति** स्त्री० अप+चाय–क्तिन् चायतेश्चिः। पूजायाम् "विहितापचितिर्महीभृता" इति माघः। अप+चि–क्तिन्। अपचये क्षीणतायाम्, अपचयरूपभावविकारभेदे च।

**अपची** स्त्री अपकृष्टं पच्यतेऽसौ पच–कर्म्मकर्त्तरि अच् अप्राशन्त्ये न०त० गौ० ङीष्। गण्डमालोपरिजाते रोगभेदे "अथातोऽग्रन्थ्यपच्यर्व्वुदगण्डमालानां निदानं व्याख्यास्याम" इत्युपक्रम्य "अनन्यवर्णैरपचीयमानं चयप्रकर्षादपचीं वदन्ति कण्ड्वन्वितास्तेऽल्परुजाः प्रभिन्नाः स्रवन्ति नश्यन्ति भवन्ति चान्ये" इति सुश्रुते तल्लक्षणमुक्तम्। "ते ग्रन्थयो केचिदनाप्रपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये। कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति केचिदिति" वै०। "नाडीं कफानिलकृतामपचीं प्रणाशयेति" अपचीं गण्डमालां च प्रदृष्टां शोघमेव वेति" च सुश्रुतः। [यमाणे।

**अपचीयमान** त्रि० अप+चि–कर्म्मकर्त्तरि शानच्। अपचो-

**अपच्छाय** पु० अपगता देहच्छाया कान्तिर्वास्य प्रा०ब० वा गतलोपश्च। देवे देहच्छायाशून्यत्वात्तेषामपच्छायत्वम्। अतएव "भजन्तु रूपं कियदस्य देवाश्छाया नलस्यास्ति तथापि नैषाम्। इतीयमन्तर्ध्व तथा निरैक्षि सा (छाया) नैषधे नलमरेषु तेषु" इति नैषधे देवानां छायाराहित्यं लक्षणत्वेन वर्णितम्। अपगतकान्तौ त्रि०।

**अपच्यव** पु० अप+च्युङ्–गतौ भावे अप्। अपसरणे निर्गमने

"यत्र नार्य्यपच्यवमुपच्यवञ्च शिचते" इति ऋ० १,२८,३ "अपच्यवं शालाया निर्गममिति" भा० । अप—च्यु—करणे, अप् । अपसरणे । [चरिते च ।

**अपच्युत** त्रि० अप+च्यु—कर्त्तरि क्त । अपक्षयप्राप्ते नष्टप्राये-

**अपजर्गुराण** त्रि० अप+गॄ—यङ् लुक्—ताच्छील्ये चानश् । आच्छादनादिमोचनशीले "जिगर्त्तिमिन्द्रो अपजर्गुराणः" इति ऋ० ५,२९,४, ।

**अपञ्चीकृत** त्रि० अपञ्चात्मकः पञ्चात्मकः कृतः न०त० । पञ्चात्मकतामनापादिते सूक्ष्मभूते, पञ्चीकारप्रकारस्तु पञ्चीकरणशब्दे वक्ष्यते "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति" वेदा०प० ।

**अपजय** पु० अप+जि—भावे अच् । पराजये ।

**अपटान्तर** त्रि० पटेन तिरस्करिण्या अन्तरमत्र न०त० । अव्यवहिते, आसन्ने, संसक्ते च । अपटान्तरमित्यप्यत्रैवार्थे ।

**अपटी** स्त्री अल्पः पटः पटी न०त० । (कानात्) इति ख्याते काण्डपटे वस्त्रप्रावरणे स च "दूष्याधोलम्बिवायुस्फाराधः पटभेद" इति मल्लिनाथः ।

**अपटीक** त्रि० नास्ति पटी यस्य कप् । प्रावरणपटशून्ये, अपगता टीकाव्याख्यायन्योयस्य । टीकाज्ञानशून्ये, "अपटीकोजडोमाघे भवं जाड्येन ताद्यते" इत्युद्भटः ।

**अपटीक्षेप** पु० अपट्याः काण्डपटस्य क्षेपः । प्रावरणपटक्षेपे । नाट्ये हि प्रावरणपटे कर्ण्णरात्क्षिप्ते एव पात्रप्रवेशोऽभिनयसम्प्रदायस्तदक्रुत्य पात्रेण यत्र काण्डपटं स्वयं क्षिप्त्वा प्रविश्यते तेन चाकस्मिकत्वं तत्प्रवेशस्य गम्यते । एतत्प्रयोगश्च भूरिशो नाटकेषु ।

**अपटु** त्रि० पटुर्दक्षः न०त० । रोगिणि, दक्षतारहिते, कार्य्याक्षमे, दक्षताविरोधिमन्दत्वे च । भावे त्व अपटुत्वम् । अपाटवे । तल् । अपटुताप्यत्रैव त्वान्तं न०तलन्तं स्त्री । गुणवचनत्वात् इमनिच् । अपटिमा तत्रैव पु० ।

**अपण्य** त्रि० न पण्यः विक्रेयः अप्राशस्त्ये न०त० । स्मृत्यादिनिषिद्धविक्रये पदार्थे । प्रायश्चित्तसहितानि अपण्यानि च प्रायश्चित्तविवेके दर्शितानि यथा

विष्णुः । लवणरक्तरक्तगुडगन्धमधुरसोर्णाविक्रयी त्रिरात्रमुपवसेत् । रक्तः सिन्दूरकुसुम्भादि । एतत् सकृद्विक्रये पैठीनसिः । "तथाऽविक्रेयाणि ब्राह्मणस्य लवणं पक्वान्नं मधुरक्षीरं दधि घृतमुदकं सर्व्वगन्धोलाक्षारक्तवासो गुडस्तैलं ग्राम्यपशूनामेकशफाः केशिनः । सर्व्वे चारण्याः पशवोऽविद्यापूर्त्तमिदं गावः शङ्खोर्णा चेति विक्रयेण तेषामेकैकस्मिन् प्राजापत्यञ्चरेत्" । तथाच्यवनः "दधिमधुच्छिपिष्टसर्पिःपक्वान्नतिलतक्रक्षीररसविषतिलान्ननीलीकौशेयशाणोलाक्षारसलवणविक्रये प्राजापत्यञ्चरेत् । एतच्चाभ्यासविषयं तत्र धेनुरेका दातव्या । हारीतः । "लाक्षालवणमांसतैलक्षीरदधिघृततक्रगन्धचर्म्मरक्तवाससामेकतमविक्रये चान्द्रायणम्" तथा शातातपः । "आममांसमुराशोमलाक्षालवणसर्पिषाम् । विक्रये सर्व्वपण्यानां द्विजश्चान्द्रायणञ्चरेत्" । एतच्चात्यन्ताभ्यासे चान्द्रायणे चाष्टधेनवः । भविष्यपुराणे । "गुडं तिलांस्तथा नीलीं केशगोधूमकन्यकाः । विक्रये ब्राह्मणोऽप्याशु कृच्छ्रं सान्तपनञ्चरेत्" । एतद्वारत्रयाभ्यासे सान्तपने धेनुद्वयम् । हारीतः "क्रयोर्ह्लिशैवणिकेशरिणाश्च धेन्वनडुदश्वगजविक्रविक्रये तप्तकृच्छ्रविधिः । हिङ्गुगुग्गुलुरसमर्ज्जरसहरितालमनःशिलाञ्जनगैरिकक्षारलवणमणिमौक्तिकप्रवालदन्तशङ्खशुक्तिशङ्खवेणवैणवक्रयक्रयविक्रये च । आरामतडागोदपानपुष्करिणीपूर्त्तसुकृतविक्रयेषु त्रिषवणस्नाय्यधःशायी चतुर्थकालभुक् संवत्सरेण पूतोभवतीति" । आरामादिनिखिलविक्रये हेतदितिधर्म्मप्रदीपः । तथा "हीनोन्मानमापनसङ्कर सङ्कीर्णविक्रये च" । अत्र च कामाकामसकृदभ्यासापेक्षयावैषम्यदोषः समर्थनीयः । हीनमानोन्मानमापनं तुलादिनासङ्करसङ्कीर्णत्वं द्रव्यस्याद्रव्येण । विष्णुः "मणिमुक्तासोमविक्रयी तप्तकृच्छ्रं कुर्य्यात् । अन्नौषधिपुष्पमूलचर्मविदलतृणकार्पासकेशभस्मास्थिगोरसपिण्याकतिलतैलविक्रयी प्राजापत्यम्" । विदलः पाटितवंशादिनिर्म्मितः । तथा "श्लेष्मजतुमधूच्छिष्टशङ्खशुक्तित्रपुसीसकलोहकांस्योदुम्बरखड्गपात्रविक्रयी महासान्तपनम्" । श्लेष्मा चर्म्मविकारः वरडेति यस्य पर्य्यायः । महासान्तपने धेनुद्वयम्, सुमन्तुः "देवर्षिसोमचैलप्राजापत्यकूपोदपानदाराणां विक्रये कृच्छ्रद्वयम् । घृततिलतैलरक्तवस्त्रपक्वान्नानां प्राजापत्यं चरेत् । गोविक्रयनिन्दामाह यमः । "गवां विक्रयकारी च यावि रोमाणि यानि तु । तावद्वर्षसहस्राणि गवां गोष्ठे कृमिर्भवेत्" ॥ यच्च मनुनोक्तं सद्यः पतति मांसेन लाक्षया लवणेन च । त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीरविक्रयीति, तच्चिन्दातिशयार्थम् । गौतमः । "पशवः हिंसायोगे" अस्यार्थः यत्र विक्रीताः सन्तः पशवोहिंस्यन्ते तत्र तेषामपण्यत्वम् । यानि चान्यानि गुरुतरप्रायश्चित्तबोधकवचनानि तानि बहुतरकालाभ्यासे समूह्यानि शूद्रस्य त्वल्पापदि दोषाभावमाह पराशरः । "लवणं मधु मद्यं वा दधि तक्रं घृतं

पयः । न दुह्येत् शूद्रजातीनां कुर्य्यात् सर्वेषु विक्रयम्" ॥ कालिकापुराणे । "विक्रयं सर्ववस्तूनां कुर्वन् शूद्रो न दोषभाक् ॥ मधुचर्मसुरां लाक्षां त्यक्त्वा मांसञ्च पञ्चमम्" । एतद्रूपापदि दोषापवादमाह गौतमः । "विनिमयस्तु रसानां रसैः पशूनाञ्च लवणकृतान्नयोस्तिलानाञ्च समेनामेन पक्वस्य संप्रत्यर्थे" । पशूनां समानजातीयैरसमानजातीयैर्वा पशुभिरेव परिवर्त्तो न तु द्रव्यान्तरेण । पक्वान्नस्य चामेन तण्डुलादिना तावत्परिमितेनेत्यर्थः । अत्र समशब्दात् न्यद्रव्यपरिवर्त्ते न नियमः । मनुः "रसारसैर्विमातव्या नत्वेव लवणं रसैः । कृतान्नञ्चाकृतान्नेन तिलधान्येन तत्समाः" ॥ वशिष्ठः "रसारसैः समतोहीनतो वा विमातव्या नत्वेव लवणं रसैः तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्त्तकेन" । नारदः । "अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च । यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः" ॥ एतेन "काममुत्पाद्य कृष्यान्तु स्वयमेव कृषीवलः । विक्रीणीत तिलान् शुद्धान् धर्म्मार्थमचिरस्थितानिति" मनुवचनम् तिलविनिमयपरम् ॥

**अपतन्त्रक** पु० अपगतं तन्त्रं भिषजामधीनता यत्र कप् । वातरोगभेदे "वायुरूर्द्ध्वं व्रजेत् स्थानात् कुपितो हृदयं शिरः । शङ्खौ च पीड़यत्यङ्गान्याक्षिपेन्नमयेच्च सः । निमीलिताक्षो निश्चेष्टस्तब्धाक्षो वापि कूजति । निरुच्छ्वासोऽथ वा कृच्छ्रादुच्छ्वस्य नष्टचेतनः । स्वस्थः स्याद्धृदये मुक्ते आवृते च प्रमुह्यति । कफान्वितेन वातेन ज्ञेय एषोऽपतन्त्रक इति" सुश्रुते २५५ पृ० तल्लक्षणमुक्तम् । "अपतन्त्रकातुरं नापतर्पयेदिति" सुश्रुतः ।

**अपतर्पण** न० अप+तृप–भावे ल्युट् । रोगादौ–उपवासे, तद्भावे च । "अपगतं तर्पणं यस्य वा गतलोपः तर्पणशून्ये त्रि० "क्रियाभिश्चिकित्सेत् स्थूलमपतर्पणं युक्ताभिरिति" सुश्रुतः ।

**अपतानक** पु० अपकृष्य अन्तरान्तरा तनुते तन कर्त्तरि–ण्वुल् । वातरोगभेदे "यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः । तदाक्षिपत्याशुमुहुर्मुहुर्देहं मुहुश्चरः । मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः । सोऽपतानकसंज्ञोयः पातयत्यन्तरान्तरेति सुश्रुते आक्षेपकवातरोगस्यैवान्तरान्तरापतने अपतानकसंज्ञा" सु० २५४ पृ० उक्ता "अभिघातनिमित्तश्च शोणिताभिस्रवाच्च यः । गर्भपातनिमित्तश्च न सिध्यत्यपतानकः" इति तत्रैव तस्यासाध्यतोक्ता "अभुक्तवता पीतमल्पदधिमरिचवचायुक्तमपतानकं हन्ति तैलमपि वैकाशोद्भवञ्च चेति" सुश्रु० ।

**अपत्नी** स्त्री नास्ति पतिर्यस्याः "विभाषा सपूर्वस्येति" पा० वा न ङीप् च । पतिरहितायां स्त्रियाम् । पक्षे अपतिरित्यपि कपि तु अपतिकेत्येव तत्रैवार्थे ।

**अपत्नीक** पु० नास्ति सन्निकर्षे कर्म्मयोग्या मृता वा पत्नी यस्य कप् । असन्निकृष्टपत्नीके, कर्म्मायोग्यपत्नीके, मृतपत्नीके च । "अपत्नीकस्याहवनीये तच्छ्रापणः" कात्या० २,५,१८ । "अपत्नीकस्य रजोदोषप्रसवप्रवासादिना असन्निहितपत्नीकस्य तच्छ्रापण आहवनीयश्रापणः आहवनीये हविःश्रपणं कुर्वतो यजमानस्य "आहवनीये आज्यमधिश्रयति" त्युक्तेः । आहवनीयश्रापणोऽपि सन्निहितायां पत्न्यां गार्हपत्य एवाज्यमधिश्रयति, शाखान्तरे चैवं श्रूयते "यस्य व्रत्येऽहनि पत्न्यनालम्भुका (रजस्वला) स्यात्तामपरुध्य यजेतेति" । केचित् अपत्नीको मृतपत्नीक इत्याहुः तस्यापि एकाकिन एवाधानं श्रूयते आश्वलायनब्राह्मणे, "पत्न्यां मृतायामग्निभिर्दग्धायां पुनर्विवाहासम्भवे आत्मार्थमन्त्राधानमाहापस्तम्बः दर्शपौर्णमासाद्ययनार्थं, शेषाणि कर्म्माणि न भवन्तीति" तथा त्रिकाण्डे मण्डनः "तस्मात्तन्त्रैकदेशेन दग्ध्वा पूर्व्वमारिणी पत्नी ज्येष्ठेतरा वापि यज्ञपार्श्वे निरूपितम्" ॥ कात्यायनः (कर्मप्रदीपे) "मृतायामपि भार्य्यायां वैदिकाग्निं नहि त्यजेत् । उपाधिनापि तत्कर्म यावज्जीवं समापयेदिति" । तद्भा० (उपाधिना स्वर्णादितत्प्रतिमूर्त्त्या) । नास्ति पत्नी सहिता यस्य कप् । पत्नीसाहित्यरहिते । "पित्र्यमपत्नीकम्" । "अपत्नीकः" कात्या० ५,७,५ । "पित्र्यश्चो भवति केवलस्यैकाकिनो यजमानस्यैवाधिकारो न तु पत्नीसहितस्य । अतोऽत्र पत्न्याः प्रतिषेधात् "पत्नीं सन्नह्येति प्रैषस्याभावः । आज्यावेक्षणं त्वाज्यसंस्कारत्वादध्वर्युः करोतीति" तद्भा० ।

**अपत्य** न० न पतन्ति पितरोऽनेन पत–वा करणे यत् न०त० । पुत्रदुहितृरूपे संताने । "नापुत्रस्य लोकोऽस्तीति श्रुतेः पुत्राभावे स्वर्गादिलोकानुत्पत्तेः "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपमिति" या० स्मृतेश्च तदुत्पादने स्वर्गलोकलाभोक्तेः "पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र" इति स्मृत्या नरकनिस्तारकत्वस्य उक्तेश्च सुतादीनां पतनाहेतुत्वात् तथात्वम् पौत्रादीनामपि पतनाहेतुत्वात् अपत्यत्वम् । अतएव "अपत्यं पौत्रप्रभृति गोत्रमिति" पा० सूत्रे पौत्रादीनामप्यपत्यशब्दवाच्यतोक्ता । पौत्रादीनां तु गोत्रसंज्ञापीति विशेषः । "अपत्यं पितुरेव स्यात् ततः

प्राचामपीति चेति" सि॰कौ॰का॰। "अपत्यैरिव नीवारभागधेयोचितैर्मृगैरिति" रघुः। "सोऽपत्यं स्वातुरतत्प्राप्नोति" "अपत्यलाभात् या तु स्त्रीति, "अपत्यं धर्मशुश्रूषेति" च मनुः।

**अपत्यदा** स्त्री॰ अपत्यं तद्धेतुं गर्भं ददाति। सेवनेन गर्भदायके ओषधिविशेषे गर्भदायिविद्यादौ च। अपत्यदायिमात्रे मन्त्रादौ त्रि॰।

**अपत्यपथ** पु॰ अपत्यस्य गर्भात् तन्निःसारणस्य तदुत्पत्तेश्च पन्थाः अच् समा॰। पुत्रनिःसारणद्वारे स्त्रीणां गुह्यस्थानभेदे "स यदा विगुणानिलपीड़ितोऽपत्यपथमनेकधा प्रतिपद्यते इति" स्त्रीणान्तु विंशतिरधिका, दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च, यौवने तासां परिवृद्धिः। अपत्यपथे चतस्र इति"। "तिर्य्यगागतस्य परिघस्येव तिरश्चीनस्य पाश्चार्द्धमूर्द्धमुत्क्षिप्य गर्भमपत्यपथं प्रत्यार्ज्जवमानीयापहरेत् पार्श्वापवृत्तशिरसमंसं प्रपीड्य ऊर्द्धमुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेदिति" च सुश्रुतः।

**अपत्यशत्रु** स्त्री अपत्यं शत्रुर्गर्भभेदनेन नाशकं यस्याः। कर्क्कटाम् सा हि गर्भेऽपत्यजनने तन्निःसारणसमये गर्भस्फोटनान्म्रियते इति" लोकप्रसिद्धेः "स्वनाशाय कर्कटी गर्भं धत्ते" इत्युक्तेश्च तथात्वम्। द्वैत॰। अपत्यनाशके, कर्कटे सर्पे च।

**अपत्यसाच्** पुं॰स्त्री॰ अपत्यैः सचते संबध्यते सच—वेदे—ण्वि। अपत्यसमवेते। "अपत्यसाचं श्रुत्यं रराथाम्" ऋ॰ १, ११७,२१।

**अपत्र** पु॰ नास्ति पत्रं दलं यस्य। वंशकरीरे (कोंड़) अङ्कुरे च तदवस्थायां तयोः पत्रशून्यतयोत्पत्तेस्तथात्वम्। गलितपत्रे वृक्षे गलितपक्षे विहगे च।

**अपत्रप** त्रि॰ अपगता त्रपा लज्जा यस्मात् प्रा॰ब॰ वा गतलोपः। लज्जाहीने लोपाभावे अपगतत्रपोऽप्युक्तार्थे।

**अपत्रपा** स्त्री अपरम् अपेक्ष्य त्रपा, अप+त्रप—भावे स्त्रियाम् अ वा। अन्यहेतुकलज्जायाम् लज्जामात्रे च। "अपत्रपा चेतसि च व्यपैधदिति" नैषधम्। [लज्जाशीले।

**अपत्रपिष्णु** त्रि॰ अप+त्रप—शीलार्थे इष्णुच्। स्वभावतो

**अपथ** न॰ न पन्थाः अप्राशस्त्ये न॰त॰। "अपथं" पु॰न॰ पा॰। "विभाषेति" पा॰ वा अच् समा॰। अपकृष्टपथे निन्दितपथे कुपथे। "घनागमे राजपथे हि पिच्छिले कथिद्बुधैरप्यपथेन गम्यते" इति नै॰। "को वा न पदमपथेऽकार्य्यत मया" इति प्रबोध॰। "कथैतदपथमिवैति यदेतांदिशमिति" शत॰ब्रा॰। नास्ति पन्थाः सुन्दरमार्गो यत्र ब॰ अच् समा॰। सुन्दरपथशून्ये ग्रामादौ त्रि॰। पथोऽभावः अव्ययी॰ अच् समा॰। मार्गाभावे अव्य॰।

**अपथिन्** पु॰ न पन्थाः अप्राशस्त्ये न॰त॰ वा अतभावः। अपकृष्टपथे।

**अपथ्य** न॰ पथ्ये वैद्यकोक्तभोजनादिनियमाय नीत्याचाराय वा हितम् यत् न॰त॰। वैद्यकोक्तिसहकृत, अनिष्टे भोजनादौ अहिताचारे च "अकार्य्यं कार्य्यसङ्काशमपथ्यं पथ्यसन्निभम्" रामा॰। "संतापयन्ति किमपथ्यभुजं न रोगा" इति वै॰। पथ्यापथ्ये च सुश्रुते दर्शिते यथा "अथातो हिताहितीयमध्यायं व्याख्यास्यामः। यद्वायोः पथ्यं तत्पित्तस्यापथ्यमित्यनेन हेतुना न किञ्चिद्द्रव्यमेकान्तेन हितमहितं वास्तीति" केचिदाचार्य्या ब्रुवते तत्तु न सम्यक्। इह खलु यस्माद् द्रव्याणि स्वभावतः संयोगतश्चैकान्तहितान्येकान्ताहितानि हिताहितानि च भवन्ति। तत्रैकान्तहितानि जातिसात्म्यात् सलिलघृतदुग्धौदनप्रभृतीनि। एकान्ताहितानि दहनपचनमारणादिषु प्रवृत्तान्यग्निक्षारविषादीनि। संयोगादपराणि विषतुल्यानि भवन्ति। हिताऽहितानि तु यद्वायोः पथ्यं तत्पित्तस्यापथ्यमित्यतः सर्व्वप्राणिनामवमाहारार्थं वर्गं उपदिश्यते। तद्यथा रक्तशालिषष्टिककङ्गुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकासनकपुष्पककर्दमकशकुनाहृतसुगन्धककलमनीवारकोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः। एणहरिणकुरङ्गमृगमातृकाश्वदंष्ट्राकरालक्रकरकपोतलावतित्तिरिकपिञ्जलवर्त्तीरवर्त्तिकादीनां मांसानि। मुद्गवनमुद्गमकुष्ठकलायमसूरमङ्गल्यचणकहरेणुआढकीसतीनाः। चिल्लीवास्तूकसुनिषण्णकजीवन्तीतण्डुलीयकमण्डूकपर्ण्यः। गव्यं घृतं सैन्धवदाड़िमामलकमित्येष वर्गः सर्व्वप्राणिनां सामान्यतः पथ्यतमः। तथा ब्रह्मचर्य्य-निवातशयनोष्णोदकनिशास्वप्नव्यायामाश्चैकान्ततः पथ्यतमाः। एकान्तहितान्येकान्ताहितानि प्रागुपदिष्टानि॥ हिताहितानि तु यद्वायोः पथ्यं तत्पित्तस्यापथ्यमिति॥ संयोगतस्त्वपराणि विषतुल्यानि भवन्ति। तद्यथा। वल्लीफलकवककरीराम्लफललवणकुलत्थपिण्याकदधितैलविरोहिपिष्टशुष्कशाकाजाविकमांसमद्यजाम्बवचिलिचिमत्स्यगोधावराहांश्च नैकध्यमश्नीयात् पयसा।

रोगं सात्म्यञ्च देशञ्च कालं देहञ्च बुद्धिमान्। अवेक्ष्यान्नादिकान् भावान् रोगवृत्तेः प्रयोजयेत्। अवस्थान्तर-

वाङ्क्ष्याद्दीनादीनां व्यवस्थितम् । द्रव्यं नेच्छन्ति भिषज इच्छन्ति स्वस्थरक्षणे । द्वयोरन्यतरादाने वदन्ति विषदुग्धयोः । दुग्धस्यैकान्तहिततां विषमेकान्ततोऽहितम् ॥ एवं युक्तरसाद्येषु द्रव्येषु सलिलादिषु । एकान्तहिततां विद्धि वत्स ! सुश्रुत ! नान्यथा ॥

अतोऽन्यान्यपि संयोगादहितानि वक्ष्यामः ॥ न च विरूढधान्यैर्वसामधुपयोगुडमाषैर्वा ग्राम्यानूपौदकपिशितादीनि चाभ्यवहरेत् । न पयोमधुभ्यां रोहिणीशाकं जातु शाकं वाश्नीयात् । बलाकां वारुणीकुल्माषाभ्याम् । काकमाचीं पिप्पलीमरिचाभ्यां, नाडीभङ्गशाककुक्कुटदधीनि च नैकध्यम् । मधु चोष्णोदकानुपानं पित्तेन वा मांसानि । सुरासरपायसांश्च नैकध्यम् । सौवीरकेण सह तिलशष्कुलीम् । मत्स्यैः सहेक्षुविकारान् । गुडेन काकमाचीं, मधुना मूलकं, गुडेन वाराहं, मधुना च सह विरुद्धम् । क्षीरेण मूलकम् । आम्रजाम्बवश्वाविच्छूकरसगोधांश्च सर्वांश्च मत्स्यान्विशेषेण चिलिचिमं पयसा । कदलीफलं तालफलेन, पयसा, दध्ना, तक्रेण वा । लकुचफलं पयसा, दध्ना, माषसूपेन वा मधुना, घृतेन च प्राक् पयसः पयसोऽन्ते वा ।

अतः कर्मविरुद्धान् वक्ष्यामः ॥ कपोतान् सर्षपतैलभृष्टान्नाद्यात् । कपिञ्जलमयूरलावतित्तिरिगोधांश्चैरण्डदार्व्वग्निसिद्धा एरण्डतैलसिद्धा वा नाद्यात् । कांस्यभाजने दशरात्रपर्य्युषितं सर्पिर्मधु चोष्णैरुष्णे वा । मत्स्यपरिपचने शृङ्गवेरपरिपचने वा सिद्धां काकमाचीम् । तिलकल्कसिद्धमुपोदिकाशाकम् । नारिकेलेन वराहवसापरिभृष्टां बलाकाम् । भासमङ्गारशूल्यं नाश्नीयादिति ॥

अतो मानविरुद्धान् वक्ष्यामः ॥ मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयात् । स्नेहौ मधुस्नेहौ जलस्नेहौ वा विशेषादान्तरीक्षोदकानुपानौ ।

अत ऊर्द्ध्वं रसद्वन्द्वानि रसतो वीर्य्यतो विपाकतश्च विरुद्धानि वक्ष्यामः । तत्र मधुराम्लौ रसवीर्य्यविरुद्धौ मधुरलवणौ च मधुरकटुकौ च सर्वतः । मधुरतिक्तौ रसविपाकाभ्यां मधुरकषायौ चाम्ललवणौ रसतः । अम्लकटुकौ रसविपाकाभ्यामम्लतिक्तावम्लकषायौ च सर्वतः । लवणकटुकौ रसविपाकाभ्यां लवणतिक्तौ लवणकषायौ च सर्वतः । कटुतिक्तौ रसवीर्य्याभ्यां कटुकषायौ तिक्तकषायौ च रसतः । तरतमयोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत् । भवन्ति चात्र ॥

विरुद्धान्येवमादीनि रसवीर्य्यविपाकतः । तान्येकान्ताहितान्येव शेषं विद्याद्धिताहितम् ॥ व्याधिमिन्द्रियदौर्बल्यं मरणञ्चाधिगच्छति । विरुद्धरसवीर्य्यादीन् भुञ्जानोऽनात्मवान्नरः ॥ यत्किञ्चिद्दोषमुत्क्लेश्य भुक्तं कायान्न निर्हरेत् । रसादिष्वयथार्थं वा तद्विकाराय कल्पते ॥ विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् । वमनं शमनं वापि पूर्व्वं वा हितसेवनम् ॥ सात्म्यतोऽल्पतया वापि दीप्ताग्नेस्तरुणस्य च । स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् ॥ व्यायामशीलो बलवान् शिशुश्च स्निग्धोऽग्निमांश्चापि महाशनश्च । आप्नोति रोगान्न विरुद्धजातानभ्यासतो वाऽल्पतया च जन्तुः । अथ वातगुणान् वक्ष्यामः ॥

पूर्व्वः समधुरः स्निग्धो लवणश्चैव मारुतः । गुरुर्विदाहजननो रक्तपित्ताभिवर्द्धनः ॥ क्षतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये । तेषामेव विशेषेण सदा रोगविवर्द्धनः ॥ वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम् । तेषामेव विशेषेण व्रणक्लेदविवर्द्धनः ॥ मधुरश्चाविदाही च कषायानुरसो लघुः । दक्षिणो मारुतः श्रेष्ठश्चक्षुष्यो बलवर्द्धनः । रक्तपित्तप्रशमनो न च वातप्रकोपणः ॥ विशदो रूक्षपरुषः खरः स्नेहबलापहः । पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः । सद्यः प्राणक्षयकरः शोषणस्तु शरीरिणाम् ॥ उत्तरो मारुतः स्निग्धो मृदुर्म्मधुर एव च । कषायानुरसः शीतो दोषाणामप्रकोपणः ॥ तस्माच्च प्रकृतिस्थानां क्लेदनो बलवर्द्धनः । क्षीणक्षयविषार्त्तानां विशेषेण तु पूजितः" इति सु० १,२० ।

**अपद्** त्रि० न पद्यते ज्ञायते पद—कर्म्मणि क्विप् न०त० । अज्ञेये । "गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न पद्यसे" इति शत०ब्रा० १४,८,१५,१० । नास्ति पादोऽस्याः पादोऽन्त्यलोपः कुम्भ० ङीप् पादः पत्त्व । पादशून्यायां स्त्रियाम् । पुंसि तु अन्त्यलोपो "न ङीप् । अपाद् । "अपादशीर्षा गूहमान" इति ऋ० ४, १,११ । "अपादहस्तोऽपृतन्यदिन्द्रमिति" ऋ० १,३२,७ । "अथ यदपात् समभवत्तस्मादहिरिति" शत०ब्रा० । "अपादपाणिर्जवनोग्रहीतेति" श्रुतिः ।

**अपद** न० न पदम् अभावार्थे न०त० । अप्रकृतस्थाने सुप्तिङन्तभिन्ने च नापदं शास्त्रे प्रयुञ्जीतेति वृद्धाः ।

**अपदान** न० अपदायति परिशुध्यति येन कर्म्मणा अप+दैप—शोधने करणे ल्युट् । परिशुद्धाचरणे येन कर्म्मणा सर्वैः परिशुद्धत्वेन ज्ञायते तस्मिन् कर्म्मणि । [सुचरिते, संसृष्टे च ।

**अपदान्तर** त्रि० न पदान्तरं व्यवधानं यत्र । अव्यवहिते,

**अपदिश** अव्य० दिशयोर्मध्ये अप+दिशा+अव्ययी०। दिशोर्मध्ये विदिक् इति कोण इति च ख्याते। दिक्शब्देन समासे तु शरदा० टच् इति भेदः।

**अपदिष्ट** त्रि० अप+दिश–कर्म्मणि क्त। कथिते प्रयुक्ते। "कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधेति" भाषा०।

**अपदेश** पु० अप+दिश–घञ्। लक्ष्ये, स्वरूपाच्छादनरूपे, छले, निमित्ते स्थाने च। "रक्षापदेशान्मुनिहोमधेनोरिति" रघुः। "न धर्म्मस्यापदेशेन पापं कृत्वा व्रतं चरेदिति"। "भक्ष्यभोज्यापदेशैश्च ब्राह्मणानां च दर्शनैः"। "शौर्य्यकर्म्मापदेशेनेति" "साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः। अपदेशैश्च संन्यस्य हिरण्यं तस्य तत्त्वत इति" च मनुः। उपदेशे च। "दीक्षाया अपदेशात्" कात्या० २२, १२२। अपदेश उपदेश इत्यर्थः। अपकृष्टो देशः प्रा० ब० वा कृष्टपदलोपः। अपकृष्टदेशे, अनुचितस्थाने च।

**अपदेश्य** त्रि० अप+दिश–कर्म्मणि यत्। छलेन कथनीये। अपदेशे अनुचितस्थाने भवः दिगा० यत्। अनुचितस्थानभवे त्रि०। "अपदिश्यापदेश्यञ्च पुनर्यस्त्वपधावतीति" मनुः। यत्र यस्य दानमुचितं ततोऽन्यत्र स्थाने दानस्यानुचितत्वात् तथात्वम्।

**अपद्रव्य** न० अपकृष्टं द्रव्यम् प्रा०ब० वा कृष्टभागलोपः। अपकृष्टद्रव्ये "अदूषितानां द्रव्याणां दूषणे भेदने तथेति" मानव व्याख्यायाम् "अपद्रव्यप्रदानेन दूषणे" इति कुल्लूकः।

**अपद्वार** न० अपकृष्टं द्वारं प्रा०ब० वा कृष्टलोपः। अपकृष्टद्वारे "निर्विषासुरपद्वारैरिति" सुश्रुतः।

**अपधा** स्त्री अप+धारणे धा–भावे स्त्रियाम् अङ्। धारणार्थे निरोधे, "मा उदाजदपधा बलस्य" इति ऋ० २,१२,३। "अपधा अपधायाः निरोधादिति" भा०।

**अपध्यान** न० अपकृष्टं ध्यानम् प्रा०स०। अनिष्टचिन्तने। वैपरीत्यचिन्तने च।

**अपध्वंस** पु० अप+ध्वन्स–भावे घञ्। नाशे, यस्य यथारूपमुचितं ततः प्रच्यवे च। "यथामपध्वंसेनैत्विन्द्र" इति ऋ० १,२,५।

**अपध्वंसज** पुंस्त्री अपध्वस्यतेऽनेन अपध्वंसः वर्णानां भिन्नरूपतासंपादकः सङ्करस्तस्माज्जायते जन–ड ५त०। भिन्नवर्णसङ्गमजाते करणादौ सङ्कीर्णवर्णे। "शूद्राणां तु सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृता" इति मनुः "ये द्विजानामपसदा ये चापध्वंसजाः स्मृता" इति च मनुः। तेषां पित्रोः समवर्णत्वाभावेः स्वरूपप्रच्यवेन जातत्वात् तथात्वम्।

**अपध्वंसिन्** त्रि० अपध्वंसयति अप+ध्वन्स–णिच्–णिनि। नाशके। "सर्व्वैनसामपध्वंसि जप्यं स्यादघमर्षणमिति" मनुः

**अपध्वस्त** त्रि० अप+ध्वन्स–क्त। निन्दिते, परित्यक्ते अवचूर्णिते च।

**अपध्वान्त** न० अपकृष्टं ध्वान्तं ध्वनितम् ध्वन–क्त वेदे नि० स्वनार्थेऽपि इडभावः। भिन्नकांस्यस्वरसमे शब्दे "इक्षतेरपध्वान्तमिति" छा०उप०। बार्हस्पत्यं तदपध्वान्तं भिन्नकांस्यस्वरसममिति" भा०।

**अपनय** पु० अप+नी–अच्। दूरीकरणे स्थानान्तरनयने च। "अपनयो वाऽदृष्टत्वादिति" कात्या० २५,८,२। "तस्य तण्डुलापनयो वचनादिति" कात्या० २५,४४,२। "अपनयतेर्दूरीकरणार्थत्वात्तथात्वम् अतएव "अविनयमपनय विष्णो!" इति शङ्कराचार्य्येण दूरीकरणार्थतया प्रयुक्तम्। अपकृष्टो नयो वैपरीत्ये प्रा०स० वा। निन्दितनीतौ दुष्टनीतौ च। अपकारे "ततः सपत्नापनयस्मरणानुशयस्फुरेति" माघः।

**अपनयन** न० अप+नी–ल्युट्। दूरीकरणे, खण्डने च। अपनीयतेऽनेन अप+नी–करणे ल्युट्। अपकारसाधने। अपगतं नयनं यस्य। नेत्रहीने त्रि०।

**अपनस** त्रि० अपगता नासिका यस्य प्रा०ब० नसादेशश्च। अपगतनासिके। "असिं कौक्षेयमुद्यम्य चकारापनसं मुखमिति" भट्टिः। [मारिते च।

**अपनीत** त्रि० अप+नी–क्त। खण्डिते, दूरीकृते, अप-

**अपनुत्ति** स्त्री अप+नुद–क्तिन्। खण्डने दूरीकरणे। "परिजनश्रमापनुत्त्यै" इति छा०उप०। "पापानामपनुत्तये इति" "गुरुतल्पापनुत्तये" इति च मनुः।

**अपनुद** त्रि० अप+नुद–क। दूरीकारके, खण्डके, शोधके च।

**अपनोद** पु० अप+नुद–भावे घञ्। खण्डने, दूरीकरणे, अपसारणे च। "तस्यापनोदाय फलप्रवृत्ताविति" रघुः। "ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रिय" इति मनुः।

**अपनोदन** न० अप+नुद–ल्युट्। अपसारणे खण्डने च "एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनमिति" मनुः। कर्त्तरि ल्यु। दूरीकारके त्रि०। "यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः। तथाऽघमर्षणं जप्यं सर्वपापापनोदनम्" इति। "पराकोनाम कृच्छ्रोऽयं सर्वपापापनोदन" इति च मनुः।

**अपन्न** त्रि० पत–क्त नि० न० त०। अपतिते। "आयवोऽपन्नदक्षेति" यजु० ६,२४। न पन्नं पतितं दक्षं यस्येति" वेददीपः। पंचम इत्यत्र हि पन्नशब्दस्य पतितार्थकत्वं दृष्टम्।

**अपपाठ** पु॰ अपकृष्टः पाठः । यथा यस्य पाठः समुचितः ततोऽन्यथा पाठे अपकृष्टपाठे "द्वादशापपाठा अस्य जाता इति" सि॰कौ॰ ।

**अपपात्र** त्रि॰ अपकृष्टं पात्रं भोजनपात्रं यस्य । चण्डाली तेषां हि भोजने पात्राणामपकृष्टत्वं तत्पात्रैर्भोजनानर्हत्वात्तेषां तथात्वम् "चण्डालश्वपचानान्तु बहिर्ग्रामात् प्रतिश्रयः अपपात्राश्च कर्त्तव्या इति" मनुः ।

**अपबर्हिस्** त्रि॰ अपगतं बर्हिर्यत्र प्रा॰ब॰ वा गतलोपः । बर्हिर्होमरहिते "श्रोऽपबर्हिषौ द्वावनुयाजौ" इति श्रुतिः । "अपबर्हिषश्चतुरः प्रयाजान् यजति" । शत॰ब्रा॰। अपबर्हिष इति पृथक्पदमित्यन्ये ।

**अपभय** त्रि॰ अपगतं भयं यस्य प्रा॰ब॰ वा गतलोपः । गतभये भीतिशून्ये । लोपाभावे अपगतभयोऽप्युक्तार्थे त्रि॰ ।

**अपभर्त्तृ** पु॰अपकृष्टोभर्त्ता प्रा॰स॰ । अपकृष्टभर्त्तरि

**अपभी** त्रि॰ अपगता भीरस्य प्रा॰ब॰ वा गतलोपः । भीतिशून्ये अपभीतिरप्यत्र स्त्री ।

**अपभूति** स्त्री अपकृष्टा भूतिः प्रा॰स॰ । "अपकृष्टविभूतौ "यमभी पुरोदधिरे ब्रह्माणमपभूतये" इति श्रुतिः ।

**अपभ्रंश** पु॰ अप+भ्रन्श–घञ् । अपचरणे अधःपतने "अल्पाद्धृद्भिर्भवति महतामप्यपभ्रंशनिष्ठा" शकु॰ । "अपभ्रंशति स्वभावात् प्रच्यवते" अप+भ्रन्श–कर्त्तरि अच् । साधुशब्दस्य शक्तिवैकल्यप्रयुक्तान्यथोच्चारणयुक्ते अपशब्दे । "त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" इति हरिणा साधुशब्दानामेवान्यथोच्चारणेऽपशब्दतोक्तेः तस्य स्वभावतो भ्रंशात् तथात्वम् । "अनपभ्रंशतानादिर्यदाभ्युदयश्चाभ्यतेति" हरिः । "आभीरादिगिरः काव्येष्वपभ्रंशगिरः स्मृताः । शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितमिति" दण्डी ।

**अपम** त्रि॰ अपकृष्टं मीयते अप+ मा–बा॰ क । अपकृष्टतया ज्ञाते "भगोऽनाशोचिद्दविताऽपमस्य चित्" । ऋ॰१०, ३९,३ । "अपमस्य जात्यातिनिकृष्टस्य" भा॰ । अपक्रम्य भूगोलादुपरि मीयते । भूगोलानाड्यादितान्तरितभागे ज्योतिषपरिभाषितायां सूर्यादिगत्यर्थतिर्य्यग्रेखायाम् क्रान्तौ यथा । "नाड़िकामण्डलात् तिर्य्यगपमः, क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः । विक्षेपवृत्तावधिस्तिर्य्यगेवं स्फुटो नाड़िकावृत्तखेटान्तरालेऽपम" इति सि॰शि॰ । "क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य नाड़ीवृत्तात् तिर्य्यगन्तरम् अपमः क्रान्तिः । अथ विमण्डले यत् ग्रहस्थानं तस्य क्रान्तिवृत्तात् यत् तिर्य्यगन्तरं स विक्षेपः अथ विमण्डलस्य प्राक् च नाड़ीवृत्तात् यत् तिर्य्यगन्तरम् सः अपमः स्फुटा क्रान्तिः ग्रहस्य उत्तरतो याम्यदिशं याम्यान्तात् तदनु सौम्यदिग्भागम् । प्रमि॰ "परिसरतां गगनसदां चलनं किञ्चिद्भवेदपमः" इति । सि॰शि॰ ।

**अपमज्या** स्त्री अपमस्य धनुराकृतिचेत्रस्य ज्येव । क्रान्तिवृत्तास्यजीवायाम् । विवरणम् क्रान्तिज्याशब्दे दृश्यम् ।

**अपमण्डल** न॰ अपक्रान्तं मण्डलात् भूमण्डलात् निरा॰त॰ । सिद्धान्तशिरोमण्युक्ते क्रान्तिवृत्ते । यथा "ग्रहस्य गोले कथिताऽपमण्डलं प्रकल्प्य कक्षावलयं यथोदितमिति" "क्रान्तिवृत्तं कक्षामण्डलं प्रकल्प्येति" प्रमिता॰ । "एष भगोलः कथितः खेचरगोलोऽयमेव विज्ञेयः । अत्रापमण्डले वा स्वकक्षयैव यस्य तस्यैवेति" सि॰शि॰ ।

**अपमर्द्द** पु॰ अप+मृद–घञ । विमर्द्दने "हयहस्तिकरीषाभ्यामपमर्द्दः कृतोमहानिति" रामा॰ ।

**अपमान** पु॰ अपकृष्टं मीयतेऽनेन अप+मा–करणे ल्युट् । अनादरे "अपमानं पुरस्कृत्य स्वकार्य्यं साधयेन्नर" इति नीतिः । "मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयो" रिति" गीता । वेदस्य ब्राह्मणानाञ्च अपमानादधोगतिः पुरा॰ अपकृष्टो मानो यस्मात् अप+मन–करणे घञ् वा । अनादरे पु॰ । नापमानः प्रयोक्तव्यः कामक्रोधकृतः क्वचिदिति" रामा॰ । "अथापमानेन पितुःप्रयुक्तेति" कुमा॰ ।

**अपमानित** त्रि॰ अपमानं जातमस्य तार॰ इतच् । यस्यापमानं कृतं तस्मिन् कृतापमाने अनादृते । [मितवर्त्मनि ।

**अपमार्ग** पु॰ अपकृष्टो मार्गः प्रा॰स॰ वा कृष्टलोपः । कुत्-

**अपमार्जन** न॰ अप+मृज–भावे ल्युट् वृद्धिः । संशोधने । "कांस्यापमार्जनमसीमधुरं सैन्धवं नतमिति" सुश्रुतः अधस्तान्मार्जने च । अपमार्जनप्रोक्षिताभ्यामपकृष्ट इति कात्या॰ ८,१०,४ । "अपमार्जनं ग्रहपात्रमुखादारभ्याधस्तादपमार्जनमिति" तद्भा॰ ।

**अपमित** त्रि॰ अप–मा–क्त । अवज्ञाते अनादृते ।

**अपमित्यक** न॰अपमित्य अपमानमङ्गीकृत्य गृह्यते कन् । ऋणे

**अपमुख** न॰ अपगतं पराभूतं मुखम् प्रा॰त॰ । पराङ्मुखे वदने प्रा॰ब॰ गतलोपः । पराङ्मुखवदनवति पदार्थे त्रि॰ ।

**अपमूर्द्ध** त्रि॰ अपगतो मूर्द्धा यस्य । शिरःशून्ये कबन्धे ।

**अपमृत्यु** पु॰ अपकृष्टः दुष्टहेतुजन्यत्वेन मृत्युर्मरणम् । विषोद्वन्धनादिहेतुके मृत्यौ । "अपमृत्युहेतवश्च शुद्धितत्त्वे कौर्म्मे दर्शिता यथा

"शृङ्गिदंष्ट्रिनखिव्यालविषवह्निस्त्रिया जलैः। आदरात् परिहर्त्तव्यः कुर्वन् क्रीड़ां मृतस्तु यः। नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता। निगृहीतः स्वयं राज्ञा चौर्य्यदोषेण कुत्रचित्। परदारान् रमन्तश्च द्वेषात्तत्पतिभिर्हताः। असमानैश्च सङ्कीर्णैश्चाण्डालाद्यैश्च विग्रहम्। कृत्वा तैर्निहतास्तांस्तु चाण्डालादीन् समाश्रिताः। गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः। क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्। गिरिवृक्षप्रपातञ्च ये कुर्वन्ति नराधमा" इति।

**अपमृषित** त्रि०न० अप+मृष-क्त वाक्ये वाच्ये नि०। क्षान्ते वाक्ये। अन्यत्र अपमृष्टमित्येव सोढ़े क्षान्ते, परामृष्टे च।

**अपयशस्** न० अपकृष्टं यशः। "यशोविपरीतायामकीर्त्तौ "अपयशो यद्यस्ति किं मृत्युना" इतिनीतिः। अपगतं यशो यस्य। कीर्त्तिशून्ये त्रि०। [अकीर्त्तिहेतौ।

**अपयशस्कर** त्रि० न यशस्करः कृ-हेतौ ट विरोधे न०।

**अपयान** न० अप+या-भावे ल्युट्। अपक्रम्य पलायने "अपयानेऽपि न भवान् समर्थो लघुविक्रम" इति रामा०।

**अपर** न० न पूर्य्यते यतः पृ-अपादाने, अप्। गजस्य पश्चाद्भागे। "बद्धापराणि परितो निगडान्यलावीदिति" माघः। परितो बद्धः अपरः पश्चिमपादो यैरिति मल्लि०। न पृणाति सन्तोषयति पृ-अच्। अन्यौ, भिन्ने त्रि०। "अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे" इति मनुः "तस्मा समुद्रादपरे परे नृपाः" नैष० पश्चिमायां दिशि स्त्री "अपरदिग्गणिकेति" माघः परकालवृत्तौ त्रि०। "पूर्व्वां सन्ध्यां जपन् तिष्ठेत् स्वकाले चापरां चिरमिति" मनुः। पश्चाद्वृत्तौ त्रि० "पूर्व्वापरौ तोयनिधी वगाह्य" कुमा०। ऋग्वेदादिविद्यायां स्त्री। "द्वे विद्ये विदितव्ये इति स्म ब्रह्मविदो वदन्ति परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्व्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति" मु० भा० धृता श्रुतिः। अस्य च कालदेशादिनियमे सर्व्वनामकार्य्यम्। तत्र "पूर्व्वादिभ्यो नवभ्यो वा इति" पा०वा तत्-कर्म। अपरत्वञ्च दैशिकं कालिकं च द्विविधं, तत्र स्वापेक्षया उदयाचलविप्रकृष्टत्वम् दैशिकमपरत्वम् स्वापेक्षयाधिकसूर्य्यस्पन्दनवत्त्वं कालिकम्। उक्तोदाहृतौ दैशिकम् कालिकन्तु। "अपरं भवतो जन्म परं जन्म विवस्वत" इति गीता। अल्पदेशवृत्तिरूपे व्याप्ये त्रि० "सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च। व्यापकत्वात् परापि स्यात्, व्याप्यत्वादपरापि च" भाषा०। द्रव्यत्वादेः घटत्वाद्यपेक्षया अधिकदेशवृत्तित्वात् परत्वं सत्तापेक्षया अल्पदेशवृत्तित्वात् अपरत्वमिति मुक्ता०। "द्रव्यत्वादिक जातिस्तु परापरतयोच्यते" इति भाषा०। "स्वायम्भुवस्य च मनोः षड्वंश्या मनवोऽपरे" इति अपरकालिका भिन्ना वा इत्यर्थः। निकृष्टे। "भूमिरापोऽनलो वायुः खं मनोबुद्धिरेव च अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परामिति" गीता। तत्र भूम्यादीनामितरपदार्थप्रकृतित्वेऽपि जड़त्वात् संहत्य कारित्वात् स्वयमसमर्थत्वेन जीवस्य भोगाद्यर्थमेव प्रवृत्तिमत्त्वाच्च निकृष्टत्वम्। जीवस्य तु तदपेक्षया परत्वम्।

उत्तरकालिकत्वात् तद्विकारलक्षणे कार्य्ये "तदेतद्ब्रह्माऽपूर्व्वमनपरमनन्तमिति" बृह०उप०। नास्ति अपरं कार्य्यं यस्येति भा०। वस्तुतः स्वरूपप्रच्यवाभावेन कूटस्थस्य न कार्य्यकारित्वमत एव "न कर्त्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इति" गीतायाम् तस्याकर्त्तृत्वमुक्तं कर्त्तृत्वन्तु अज्ञानोपहितेश्वरस्येति न विरोधः। समुदायिनः शेषभागे "अपररात्रः अपराह्णः एकदेशि स०। अस्य पूर्व्वपदस्थस्य पश्चादेशः पश्चार्द्धम् न० शेषार्द्धे। अपरस्मिन् भवः डिमच् पश्चिमः शेषभवे। प्रथमापञ्चम्यादिदेशकालवृत्ते रपरशब्दात् प्रथमाद्यर्थे अति। पश्चात्। अधिकमधःशब्दे दृश्यम्। अस्य दिग्वाचकत्वात् तेन समासे देशवाचिनः णिदादि तद्धिते उत्तरपदस्यैव वृद्धिः अपरपाञ्चालक इत्यादि।

**अपरक्त** त्रि० अपगतो रक्तः शोणितो यस्मात्। अपगतरक्तवर्णे अप+रन्ज-क्त। विरक्ते अनुरागशून्ये च त्रि०।

**अपरज** पु० अपरस्मिन् काले जायते जन-ड ७त०। रुद्रभेदे "नमः पूर्व्वजाय चापरजाय" चेति यजु० १६,३२।

**अपरति** स्त्री अप+रम-भावे क्तिन्। अविरतौ। [काले वा।

**अपरत्र** अव्य० अपरस्मिन् कालादौ। अपरस्मिन् देशे

**अपरत्व** न० अपरस्य भावः त्व। अपरभावे तच्च वैशेषिकोक्तो गुणभेदः। तदपि द्विविधं दैशिकं कालिकञ्च तत्तत्स्वरूपमपरशब्दे उक्तम्। तत्र च कारणमपेक्षाबुद्धिविशेषः तस्य नाशाच्च परत्वापरत्वयोर्नाशः। "संयोगश्च विभागश्च परत्वञ्चापरत्वकमिति" "परापरत्वधीहेतुरेका नित्या दिगुच्यते" इति च भाषा०। तत्र दैशिकापरत्वं अल्पसूर्य्यसंयोगज्ञानजन्यं, कालिकं तु अल्पसूर्य्यपरिस्पन्दज्ञानजन्यमिति भेदः। कालिके कालो हेतुः दैशिके तु

दिगिति भेदः । "परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितम् । दैशिकं कालिकञ्चापि मूर्त्त एव तु दैशिकम् ॥ परत्वं सूर्य्यसंयोगभूयस्त्वज्ञानतो भवेत् । अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ तयोरसमवायी तु दिक्संयोगस्तदाश्रये । दिवाकरपरिस्पन्दपूर्व्वोत्पन्नत्वबुद्धितः ॥ परत्वमपरत्वन्तु तदनन्तरबुद्धितः । अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः ॥ अपेक्षाबुद्धिनाशेन नाशस्तेषामुदाहृत" इति भाषा० ।

**अपरदक्षिण** अव्य० अपरा च दक्षिणा च "दिङ्नामान्यन्तराले इति" पा० सूत्रं बाधित्वा तिष्ठद्गुप्रभृतिपाठात् अव्ययी० । पश्चिमदक्षिणयोरन्तराले नैर्ऋते कोणे । तद्गणपाठाच्च नैतस्य समासान्तरघटकतेति विशेषः ।

**अपरपक्ष** पु० अपरः शेषः पक्षः । कृष्णपक्षे स हि चन्द्रस्य वृद्धिह्रासपक्षयोर्मध्ये शेषः, चैत्रशुक्लप्रतिपद्येव वर्षारम्भणात् शुक्लस्य पूर्व्वत्वम् सुतरां कृष्णस्यापरत्वम् । "पूर्व्वपक्षो देवानामपरपक्षः पितॄणामिति" श्रुतिः । "यथा चैवाऽपरपक्षः पूर्व्वपक्षाद्विशिष्यते" इति मनुः "अथ श्राद्धममावास्यायां पितॄणां दद्यात् पञ्चमीप्रभृति वाऽपरपक्षस्येति" स्मृतिः "अत्र शुक्लकृष्णपक्षस्य प्रेतपक्षत्वेन अपरपक्षत्वव्यवहारः । "अमावास्यावृतीयश्चापरपक्षस्ततस्तथा । तस्य पार्व्वणमुद्दिष्टं मुनिभिः पञ्चपात्रकमिति" स्मृतिः क्वचित् प्रेतपक्षेत्येव पाठः । "तुलादिषडशीत्यह्नां षडशीतिमुखं क्रमात् । तच्चतुष्टयमेव स्याद्द्विस्वभावेषु राशिषु ॥ षड्विंशे धनुषो भागे द्वाविंशेऽनिमिषस्य च । मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे ॥ ततः शेषाणि कन्याया यान्यहानि तु षोड़श । क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयम्" इति सूर्य्यसिद्धान्तोक्तेः षड़शीतिमुखावशिष्टानां षोड़शानां दिनानां श्राद्धप्रशस्तकालत्वादपरपक्षत्वम् अथ वा नास्ति परो यस्मात् तादृशः पक्षः । तावाचावयपुण्यप्रदत्वेन अत्युत्कृष्टत्वात्तथात्वम् । पञ्चादशात्मकस्यैव पक्षत्वेऽपि षोड़शानां दिनानां किञ्चिदधिकपक्षत्वात् पक्षत्वम् तेषां सौरत्वेऽपि चान्द्रे पक्षे व्यवहारस्य गौणतेति भेदः । विकल्प्यमानयोः पक्षयोर्मध्ये शेषपक्षे च ।

**अपरराव** पु० अपरं रात्रेः एकदे०त० अच् समा० । रात्रिशेषे "अपररात्रे सायंदोहमिति" कात्या० ७,४,२०, "अपररात्रकृतम्" सि०कौ० ।

**अपरव** पु० अपकृष्टोरवःप्रा०त० । अकीर्त्तौ अपयशसि ।

**अपरवक्त्र** न० "अयुजि ननरला गुरुः समे नृजमपरवक्त्रमिदं ततोजरौ" इति वृत्तरत्नाकरोक्ते अर्द्धसमे मात्रावृत्तभेदे "वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः । पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथेति" वृ०र० । अपरवक्त्रा स्त्रियामिति केचिदाहुः ।

**अपरवैराग्य** न० कर्म्म० । पातञ्जलोक्ते वैराग्यभेदे । यथा "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञं वैराग्यमिति" यतमानव्यतिरेकैकेन्द्रियवशीकारसंज्ञाश्चतस्रः तत्र रागादीनां चित्तस्थानां कषायाणां विषयेष्विन्द्रियप्रवर्त्तकानां पाकाय प्रयत्नो यतमानसंज्ञं वैराग्यं ततः पक्वानां केषाञ्चित्कषायाणां वक्ष्यमाणेभ्यो विरागावधारणं व्यतिरेकसंज्ञं वैराग्यं, ततः पक्वानां सर्व्वेषामिन्द्रियप्रवर्त्तनाऽशक्तानां मनस्यौत्सुक्यरूपेणावस्थानमेकेन्द्रियसंज्ञं वैराग्यम्, स्त्रियोऽन्नपानमित्यादिषु दृष्टेषु, गुरूच्चारणमनु श्रवः श्रवणं यस्य सोऽनुश्रवो वेदः तदुक्तेष्वानुश्रविकेषु स्वर्गादिदिव्यविषयेषु मर्त्त्येषु च विनाशपरितापसातिशयत्वाक्षयादिदोषाणामभ्यासेन साक्षात्काराद्वितृष्णस्योपेक्षाबुद्धिः वशीकारसंज्ञं वैराग्यमित्यर्थः । एतानि च संप्रज्ञातसमाधेरन्तरङ्गाणि असंप्रज्ञातसमाधेस्तु बहिरङ्गाणि" इति पा० वृ० ।

**अपरस्पर** न० अपरञ्च परञ्च क्रियासातत्ये द्वित्वं सुट् च । क्रियासातत्ये । क्रियावतां सातत्ये तु त्रि० । अपरस्पराः पुमांसः, योषितो वा गच्छन्ति अपरस्पराणि कुलानि यान्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । "अपरस्पराः सार्था गच्छन्ति" सि०कौ० ।

**अपरहैमन** त्रि० अपरहेमन्ते भवः अपरहेमन्त+भवार्थे अण् तलोपः उत्तरपदवृद्धिः । हेमन्तशेषभवे । एवं पूर्व्वहैमनः हेमन्तपूर्व्वभवे त्रि० ।

**अपरा** स्त्री अपकृत्य राति स्वरूपाति जन्म यस्याः रा—आदाने बा०ड । जरायौ ततोऽपयानादेव गर्भाद्बहिर्निःसरणाज्जन्मेति तस्यास्तथात्वम् । अधिकमपरशब्दे दृश्यम् ।

**अपराग** पु० अप+रन्ज—घञ् नलोपकुत्वे । अनुरागे विरागे "अनुरागापरागौ च प्रचारं मण्डलस्य चेति" मनुः ।

**अपराग्नि** पु० द्विव० कर्म्म० । गार्हपत्यदक्षिणाग्न्योः, "अन्तरेणापराग्नी गत्वा दक्षिणेनेति" कात्या० ४,१२,१२, "अपराग्नी गार्हपत्यदक्षिणाग्नी" इति तद्भा० । अन्तिमाग्नौ आन्त्येष्टिकर्म्माङ्गवह्नौ पु० एकव० ।

**अपराङ्ग** न० अपरस्य रसादेरङ्गम् । गुणीभूतव्यङ्ग्ये काव्यभेदे । "अगूढमपरस्याङ्गमिति" काव्य०प्र० । अपरस्य रसादेः वाक्यार्थीभूतस्य वा वाच्यस्याङ्गम् यथा "अयं स

रशनोत्कर्षी पीनस्तनविमर्द्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः कर इति" । अत्र शृङ्गारस्य करुणाङ्गत्वात्तथात्वम् वाच्याङ्गव्यङ्ग्यं तत्र द्रष्टव्यम् ।

**अपराङ्मुख** त्रि० न पराङ्मुखः न०त० । अनिवृत्ते कर्त्तव्यकर्म्मणोऽसोढ़तया ततोनिवृत्तिरहिते" स्त्रियां ङीप् ।

**अपराच्** त्रि० न पराञ्चति परावर्त्तते परा+अञ्च—क्विन् न०त० । अनिवृत्ते पराङ्भिन्ने स्त्रियां ङीप् ।

**अपराजित** पु० परा+जि—क्त न०त० । शिवे, विष्णौ, तयोः केनाप्यपराजितत्वात्तथात्वम् ऋषिभेदे च । पराजितभिन्ने त्रि० । दूर्वायां, शेफालिकायां, जयन्तीवृक्षे, असनवृक्षे, शङ्खिनीवृक्षे, क्षुपवृक्षे असनपर्णाम्, ऐशान्यां दिशि "अपराजितां वास्थाय व्रजेद्दिशमजिह्मग" इति मनुः "अपाजितामैशानीं दिशमिति" कुल्लू० । चतुर्दशाक्षरपादके "ननरसलगैः स्वरैरपराजितेति" वृ०र० उक्ते छन्दोभेदे, दुर्गायां देव्यां "अपर्णा चापराजितेति" दुर्गास्तोत्रम् "नास्ति पराजितं शत्रोः पराजयो यस्याः ष०त० । विजयदशम्याम् पूजनेन अपराजयदातृदुर्गामूर्त्तिभेदे । सा च आश्विनशुक्लदशम्यां श्रवणयुतायामपराह्णे सन्ध्यायां वा पूज्या यथा हेमाद्रौ व्रतखण्डे "आश्विनशुक्लपक्षमुपक्रम्य" "दशम्यां च नरैः सम्यक् पूजनीयाऽपराजिता । क्षेमार्थं विजयार्थञ्च पूर्व्वोक्तविधिना नरैः । नवमीशेषयुक्तायां दशम्यामपराजिता । ददाति विजयं देवी पूजिता जयवर्द्धिनी" स्कान्दम् । "आश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः । एकादश्यां न कुर्व्वीत पूजनञ्चापराजितमिति" निर्णयसिन्धौ स्कान्दम् । "उदये दशमी किञ्चित् संपूर्णैकादशी यदि, श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधेति" हेमाद्रौ काश्यपः । "कालेऽपराह्णे" इति निर्णयसिन्धुः । तस्याश्च अपराह्णपूज्यता हेमाद्रौ दर्शिता ततएव तद्गवन्तव्यम् । "नाधयोव्याधयस्तस्य भवन्ति न पराजयः श्रियं पुण्यमवाप्नोति विजयञ्च सदा भवीति" तत्पूजायाः फलत्वेन अपराजयस्योक्तेस्तस्यास्तथात्वम् । तत्पूजाङ्गदशम्या अपि अपराजयहेतुत्वात् विजयहेतुत्वाच्च अपराजितेति विजयेति च नाम अतएव "पूजनञ्चापराजित" मित्युक्तम् अपराजितामधिकृत्योक्तत्वात् पूजनस्यापराजितत्वम् तत्र पूजनप्रकारस्तु हेमाद्रौ व्रतखण्डे अपराजितदशमीप्रकरणे द्रष्टव्यः । योगिनीभेदे तत्स्वरूपं ध्यानशब्दे द्रक्ष्यते । अ:विष्णुः पराजितः तुल्यवर्णतया यया । विष्णुक्रान्तायां स्वनामख्यातायां लतायां च स्त्री । अधिकं विजयदशम्यां वक्ष्यते ।

**अपराद्ध** त्रि० अप+राध—कर्त्तरि क्त । अपराधिनि, स्वोचितकार्य्याकारके, स्खलिते च "निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितमिति" माघः भावे क्त । अपराधे ।

**अपराद्धपृषत्क** पु० अपराद्धो लक्ष्यात् च्युतः पृषत्को बाणो यस्य । लक्ष्याप्राप्तिसायके धानुष्के ।

**अपराद्धृ** त्रि० अप+राध—तृच् । अपराधकर्त्तरि स्वोचितकार्य्याकारके स्त्रियां ङीप् ।

**अपराध** पु० अप+राध—घञ् । स्वोचितकर्म्माकरणे आगसि "कमपराधलवं मम पश्यसीति" सा०द० । दण्डयोग्यकर्म्मकरणे । "यथाऽपराधदण्डानामिति" रघुः । देवविषये अपराधश्च शास्त्रविध्युल्लङ्घनेन, निषिद्धसेवनेन च जातदुरितविशेषः । तत्र निगमे द्वात्रिंशद् अपराधा दर्शिता यथा "यानैर्वा पादुकैर्व्वापि गमनं भगवद्गृहे । देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः ॥ उच्छिष्टे वाथवाऽशौचे भगवद्दर्शनादिकम् । एकहस्तप्रणामश्च पुरस्तादप्रदक्षिणम् ॥ पादप्रसारणं चाग्रे तथा पर्य्यङ्कबन्धनम् । शयनं भक्षणं वापि मिथ्याभाषणमेव च ॥ उच्चैर्भाषा मिथोजल्पो रोदनानि च विग्रहः । निग्रहानुग्रहौ चैव स्त्रीषु च क्रूरभाषणम् ॥ कम्बलावरणं चैव परनिन्दा परस्तुतिः । अश्लीलभाषणं चैव अधोवायुविमोक्षणम् ॥ शक्तौ गौणोपचारश्च अनिवेदितभक्षणम् । तत्तत्कालोद्भवानाञ्च फलादीनामनर्पणम् ॥ विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिके । पृष्ठीकृत्यासनं चैव परेषामभिवादनम् ॥ गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा । अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्त्तिताः इति" ॥ आह्निकतत्त्वे तु वाराहमूलका अन्यविधा द्वात्रिंशत् दर्शिता यथा । "भगवद्भक्तानां चत्रियमिश्रान्नभोजनम् १ अनिषिद्धदिने दन्तधावनमकृत्वा विष्णोरुपसर्पणम् २ मैथुनं कृत्वाऽस्नात्वा विष्णोरुपसर्पणम् ३ मृतं नरं स्पृष्ट्वाऽस्नात्वा विष्णुकर्म्मकरणम् ४ रजस्वलां स्पृष्ट्वा विष्णुगृहप्रवेशनम् ५ मानवं शवं स्पृष्ट्वाऽस्नात्वा विष्णुसन्निधावस्थानम् ६ विष्णुं स्पृशतः पायुवायुप्रयोगः ७ विष्णोः कर्म्म कुर्वतः पुरीषत्यागः ८ विष्णुशास्त्रमनादृत्य शास्त्रान्तरप्रशंसा ९ अतिमलिनं वासः परिधाय विष्णुकर्म्माचरणम् १० अविधानेनाचम्य विष्णोरुपसर्पणम् । ११ विष्णोरपराधं कृत्वा विष्णोरुपसर्पणम् १२ क्रुद्धस्य विष्णु-

स्पर्शनम् १३ निषिद्धपुष्पेण विष्ण्वर्चनम् १४ रक्तं वासः परिधाय विष्णोरुपसर्पणम् १५ अन्धकारे दीपेन विना विष्णोः स्पर्शनम् १६ कृष्णवस्त्रं परिधाय विष्णोः कर्म्माचरणम् १७ वायसोद्भूतवासः परिधाय विष्णोः कर्म्माचरणम् १८ विष्णवे कुक्कुरोच्छिष्टदानम् १९ वराहमांसं भुक्त्वा विष्णोरुपसर्पणम् २० हंसजालपादसरारिमांसं भुक्त्वा विष्णोरुपसर्पणम् २१ दीपं स्पृष्ट्वा हस्तमप्रक्षाल्य विष्णोःस्पर्शनं कर्म्मकरणं वा २२ श्मशानं गत्वाऽस्नात्वा विष्णूपसर्पणम् २३ पिण्याकं भुक्त्वा विष्णोरुपसर्पणम् २४ विष्णवे वराहमांसनिवेदनम् २५ मद्यमाघ्राय पीत्वा स्पृष्ट्वा वा विष्णुगृहप्रवेशनम् २६ परकीयेणाशुचिना वस्त्रेण परिहितेन विष्णुकर्म्माचरणम् २७ विष्णवे नवान्नमप्रदाय तद्भोजनम् २८ गन्धपुष्पे अप्रदाय धूपदीपदानम् २९ उपानद्भ्यामारुह्य विष्णुस्थानप्रवेशनम् ३० भेरिशब्देन विना विष्णुप्रबोधनम् ३१ अजीर्णे सति विष्णुस्पर्शनम् ३२ इति" एतदुपलक्षणम् "अपराधसहस्राणि, अपराधशतानि चेति" मन्त्रलिङ्गात् "अहन्यहनि योमर्त्त्यो गीताध्यायन्तु संपठेत् । द्वात्रिंशदपराधेस्तु अहन्यहनि मुच्यते" इति नरसिंहपुरा० ।

**अपराधय** त्रि० अपराधं याति या—ड । अपराधप्राप्ते । स्वार्थे० भावे कर्म्मणि च ष्यञ् आपराध्यं तस्य भावे तत्कर्म्मणि च न० । [कारके, स्त्रियां ङीप् ।

**अपराधिन्** त्रि० अप+राध–णिनि । कृतागसि अपराध-

**अपरान्त** पु० "अपरस्याः पश्चिमायाः अन्तः सीमाभूतोदेशः । देशभेदेऽस्य पश्चिमदिशः सीमाभूतत्वात्तथात्वम् स च देशः कतम इति तावन्निर्णीयते "तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णव इति" रघुः । तेनास्य सह्यपर्व्वतसन्निकृष्टत्वम् । "आकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ । अपरान्तमहीपालव्याजेन रघवे करमिति" रघुः तेनार्णवसन्निकृष्टत्वं च प्रतीयते । तत्रैव देशे रघौ "त्रिकूटमेव तत्रोच्चं जयस्तम्भं चकार स" इति त्रिकूटपर्वतदर्शनात् त्रिकूटयुक्तत्वञ्च तस्य प्रतीयते । "पारसीकांस्ततोजेतुमित्यनन्तरोक्तेश्च पारसीकदेशात् पूर्व्वत्वं प्रतीयते पारसीकदेशश्च पाश्चात्त्यः "संग्रामस्तुमुलस्तस्य पाश्चात्त्यैरश्वसाधनैरिति" तेषां पाश्चात्त्यत्वस्य तत्रैव वर्णनात् । वृहत्संहितायाञ्च "नव भारतवर्षे मध्यात् प्रागादिविभाजितादेशा" इत्युपक्रम्य "अपरस्यां मणिमान् मेघवान् वनौघः क्षुरार्पणोऽस्तगिरिः । अपरान्तशान्तिकहैहयप्रशस्ताद्रिकोङ्कणा" इत्यादिना मध्यस्थानात्तस्य पश्चिमदिक्स्थत्वमुक्तम् तत्र च मुरला नाम नदी । "मुरलामारुतोद्धूतमिति" रघौ तत्र तस्या वर्णनात् तदवान्तरदेशः केरलः । "भयोत्सृष्टविभूषाणां तत्र केरलयोषितामिति" रघौ तथा वर्णनात् । जनपदवाचित्वात् तद्धिताणोलुकि तद्देशभवे तद्राजनि च ब०व० । "उन्मूर्द्धानः सन्निपत्यापरान्तैरिति" माघः ।

**अपरार्क** पु० स्मृतिसंग्रहभेदे ।

**अपरार्द्ध** पु० न परार्द्धम् । परार्द्धभिन्ने । अपरमर्द्धमिति वाक्ये तु अपरस्य पश्चाद्देशे पश्चार्द्धमित्येव ।

**अपरावर्त्तिन्** त्रि० न परावर्त्तते परा+वृत–णिनि न०त० । अपराङ्मुखे कार्य्यं समाप्तिमकृत्वाऽनिवर्त्तिनि स्त्रियां ङीप् ।

**अपराह्ण** पु० अपरमह्नः एक०त०टच् अह्नादेशः । दिनशेषभागे स च द्विधा विभक्तस्य, त्रिधा विभक्तस्य च दिनस्य शेषभागः । "पूर्व्वं दिनं मनुष्याणामपराह्णः पितृणामिति" श्रुतौ द्विधा विभजनात् "पूर्व्वाह्णोवै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितृणामिति श्रुतौ त्रिधा विभजनाच्च तयोरुभयोरपि शेषस्य तथात्वम् । तथा च द्विधा विभक्तस्य दिनस्य शेषार्द्धम्, त्रिधा विभक्तस्य तृतीयार्द्धं च अपराह्णः । "यथास्तं सविता याति पितरस्तामुपासते । तिथिं तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयंभुवेति" स्मृतिः । "तथा श्राद्धस्य पूर्व्वाह्णादपराह्णो विशिष्यते" मनुः । पञ्चधा विभक्तस्य तु चतुर्थभागे च तस्य च कर्म्मयोग्येतरापेक्षयाऽपरत्वात् तथात्वम् । अन्तिमत्रिमुहूर्त्तस्य तु राक्षसवेलात्वेन कर्म्मानर्हत्वात् कर्म्मयोग्यशेषभागत्वाभावान्नापराह्णत्वम् । तथा च "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्त्तःस्यादपराह्णस्ततस्तथा । सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेत् । राक्षसी नाम सा वेला गर्हिता सर्वकर्म्मसु इति" त्रित्रिमुहूर्त्तात्मकतया पञ्चधा विभक्तदिनस्य चतुर्थे भागे कर्म्मार्हापराह्णत्वेन परिभाषणात्तथात्वम् । लौकिके तु मध्याह्नात्परतः, सूर्य्यास्तात् प्राक्कालोऽपराह्णत्वेन व्यवह्रियते इति" भेदः । ततः भवार्थे वा वुन् अपराह्णकः तद्भवे त्रि० । पक्षे तदर्थे ठञ् आपराह्णिकः । तद्भवे त्रि० । श्राद्धे चैवापराह्णिक" इति स्मृतिः । स्त्रियां ङीप् । "पार्वणे पितृकृत्ये च तिथिर्ग्राह्यापराह्णिकीति" स्मृतिः ।

**अपराह्णतन** त्रि० अपराह्णे भवः ट्युल् तुट् च । अपराह्ण-

भवे त्रि० स्त्रियां ङीप् । "घकालेत्यादिना" पा० सप्तम्या अलुकि अपराह्णेतनोऽप्यत्रार्थे त्रि०। [अनुते च ।

**अपरिकलित** त्रि० न परिकलितः न०त० । अज्ञाते, अदृष्टे,

**अपरिक्रम** त्रि० नास्ति परिक्रमः उद्योगोयस्य । अनुद्युक्ते । "जानन्नपि च किं कुर्य्यादशक्तश्चापरिक्रम इति" स्मृतिः । परितः क्रमः क्रमणम् अभावार्थे न०त० । परितः क्रमणाभावे पु० । परिगतः क्रमम् न० त० । क्रमापरिगते अपरपाटीके त्रि० ।

**अपरिक्लिष्ट** त्रि० क्लिश भावे क्त न परिक्लिष्टं क्लेशोयत्र । अनायाससाध्ये । कर्त्तरि क्त न०त०। क्लेशयुक्तभिन्ने त्रि० ।

**अपरिगत** त्रि० न०त० । ज्ञातभिन्ने, अप्राप्ते च ।

**अपरिगृहीत** त्रि० न०त०। अस्वीकृते, अगृहीते, अज्ञाते च

**अपरिग्रह** पु० अभावे न०त० । परिग्रहाभावे, पातञ्जलोक्ते यमभेदे च यथा "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः' "सू० तत्रापरिग्रहो नाम देहयात्रानिर्वाहकातिरिक्तभोगसाधनधनाद्यनङ्गीकारः । तस्य फलमपि तत्रैव दर्शितम् यथा "अपरिग्रहस्थैर्य्ये जन्मकथन्तासंबोधः" अपरिग्रहशीलस्य तत्स्थैर्य्ये सति किंरूपं जन्म किंप्रकारकं, किंहेतुकं, किंफलकम्, किमवसानमिति शरीरस्यापि परिग्रहविरोधिनी जिज्ञासा भवति शरीरस्यापि परिग्राहत्वाविशेषात्कथं तत्परिग्रहो न स्यादिति जिज्ञासावश्यम्भावात् । ततः कार्य्यकारणसंबन्धात् पुरुषस्याद्यस्य जन्म देवनरतिर्य्यक्त्वप्रकारम् । क्लेशकर्म्महेतुकं, दुःखैकफलकम्, पुरुषतत्त्वावसानमित्याचार्य्यादागमतश्च निश्चित्य अदेहः सन्नपरिग्रहयमस्य परमां काष्ठामनुभवतीत्यर्थः" इति तद्वृ० । "लोभस्य पुरतः कोऽसौ ? सत्यात्ते वापरिग्रहा" इति प्र०च०। नास्ति देहयात्रानिर्व्वाहकव्यतिरिक्तस्य परिग्रहः संग्रहो यस्य । परिव्राजके "निराशीरपरिग्रह" इति गीता । तस्य च कौपीनादिपरिग्रहेऽपि तस्य शरीरयात्रानिर्वाहकत्वान्न क्षतिः "कौपीनाच्छादनार्थं हि वासोवै बिभृयाद्यतिः । योगसम्भारभेदांश्च स्वगृह्णीयात् पादुके तथेति" स्मृतौ तत्परिग्रहविधानात् । [पूर्व्वमज्ञाते च ।

**अपरिचित** त्रि० परि+चि–क्त न०त० । अनुशीलितभिन्ने,

**अपरिच्छद** त्रि० न परिच्छदोयस्य अप्राशस्त्ये न०ब० । अपकृष्टवस्त्राद्युपकरणयुक्ते दरिद्रे ।

**अपरिच्छन्न** त्रि० परिच्छदः परिष्कृतः न०त० । अपरिष्कृते, मार्ज्जनशुद्ध्यादिरहिते ।

**अपरिच्छिन्न** न० न परिच्छिन्नः । इयत्तारहिते निःसीमनि कूटस्थे चैतन्यात्मके ब्रह्मणि "तदेतद्ब्रह्मापूर्व्वमनपरमनन्तरमिति वृ०उ०श्रुत्या तस्यानन्तराहित्योक्तेस्तथात्वम् इयत्तारहितमात्रे त्रि० "जगत्यपर्य्याप्तेत्यादि" माघव्याख्यायामपर्य्याप्तः अपरिच्छन्न" इति मल्लि० ।

**अपरिच्छेद** पु० अभावार्थे न० । परिच्छेदाभावे इयत्ताभावे । न०ब० । इयत्ताशून्ये त्रि० । [तच्छून्ये त्रि० ।

**अपरिज्ञान** न० अभावे न०त०। तत्त्वविवेकाभावे। न०ब०।

**अपरिणत** त्रि० परि+नम–क्त न०त० । अपरिपक्वे । यस्य यथा परिणाम उचितस्तथात्वमप्राप्ते अन्यरूपतामप्राप्ते च ।

**अपरिणय** पु० परिणयो विवाहः अभावे न०त० । विवाहाभावे । [हीने कौमारावस्थायुक्ते ।

**अपरिणीत** त्रि० परि+नी–क्त न०त० । विवाहसंस्कार-

**अपरितोष** पु० अभावे न०त० । सन्तोषाभावे ।

**अपरिपक्व** त्रि० न०त० । परिपक्वभिन्ने यस्य यथा परिणतिरुचिता तथारूपतामप्राप्ते, "यथा अपरिपक्वयोगीति" । विक्लित्तिप्राप्तिशून्ये आमे तण्डुलफलादौ च ।

**अपरिमाण** न० अभावे न०त० । परिमाणाभावे इयत्ताराहित्ये न०ब० । तच्छून्ये त्रि० ।

**अपरिमित** त्रि० न०त० । इयत्ताशून्ये परिमाणशून्ये ।

**अपरिमेय** त्रि० परिमातुं योग्यः न०त० । परिमातुमयोग्ये इयत्तारहिते ।

**अपरिम्लान** पु० न परिम्लायति कर्त्तरि क्त । रक्तवर्णे (आयला) ख्याते महासहाख्ये रा०नि०। तस्य बहुमर्द्दनेऽपि म्लानिराहित्यात् तथात्वम् । म्लानिवर्जिते त्रि० ।

**अपरिविष्ट** त्रि० परि+विष–कर्म्मणि क्त न०त० । वेष्टनशून्ये अव्याप्ते । "जर्ज्जयन्त्या अपरिविष्टमास्यमिति" ऋ० ३, १२,८ । अपरिविष्टं मलादिभिरव्याप्तमिति" भा० । विष्टमाहारार्थमुपहृतं न०त० । परिवेषणशून्ये भोजपरिनार्थमनुपढौकिते त्रि० ।

**अपरिवृत** त्रि० न परिवृतः । अनाच्छादिते । परितोवेष्टनरहिते अनावृते क्षेत्रादौ "तत्रापरिवृतं धान्यं विहिंस्युः पशवोयदीति" मनुः क्षेत्राद्यावरणप्रकारोऽपि तेन दर्शितः "वृतिं तत्र प्रकुर्व्वीत यामुष्ट्रोनावलोकयेत् छिद्रञ्च वारयेत् सर्वं श्वसूकरमुखानुगमिति" तेन तादृशच्छिद्रहीनवरणशून्येऽपि अपरिवृतत्वम् असंस्पृष्टे च "महोभिरपरीवृतो वसति प्रचेताः" ऋ० २,१०,२, अपरीवृतोऽसंस्पृष्टः इति भा० वेदे दीर्घः । [राहित्ये। न०ब०। इयत्ताशून्ये त्रि०।

**अपरिशेष** पु० अभावे न०त० । परिशेषाभावे इयत्ता-

**अपरिष्कार** पु॰ अभावे न॰त॰। मार्ज्जनादिशोधनसंस्काराभावे। न॰ब॰। तच्छून्ये त्रि॰।

**अपरिष्टि** स्त्री अप+वैपरीत्ये रिष–हिंसायाम् क्तिन्। पूजायाम् हेम॰। पूजायाश्च हिंसाहेतुकद्वेषशून्यत्वात् तथात्वम्।

**अपरिसमाप्ति** स्त्री अभावे न॰त॰। इयत्ताभावे समाप्त्यभावे च। न॰ब॰। तच्छून्ये त्रि॰। [न॰ब॰। तच्छून्ये त्रि॰।

**अपरिसर** पु॰ अभावे न॰त॰। विस्ताराभावे प्रसाराभावे च

**अपरिहरणीय** त्रि॰ न परिहर्त्तुं शक्यते हृ–शक्याद्यर्थे कर्म्मणि अनीयर्। परिहर्त्तुमशक्ये, परिहर्त्तुमयोग्ये च।

**अपरिहार्य्य** त्रि॰ न परिहर्त्तुमर्हति शक्यते वा हृ–ण्यत्। परिहर्त्तुमयोग्ये, परिहर्त्तुमशक्ये च।

**अपरीक्षित** त्रि॰ न॰त॰। रूपवर्णपरिमाणादिना यथार्थतत्त्वानुसन्धानशून्ये “एतच्चापरीक्षितक्रयविषयमिति” मिताक्षरा परीक्षिते तु “परीक्षितं तु यत् क्रीतं तत् सर्वं न निवर्त्तयेदिति” तदुक्ता स्मृतिः।

**अपरीत** त्रि॰ न॰त॰। परितोऽव्याप्ते अनभिगते च “शश्वत्ताऽपरीता” इति ऋ॰ १,१००,२, “अपरीताः अपरैरनभिगता” इति भा॰। अपरिगते, अपर्य्याप्ते च “अपरीतं कृतो शव” इति ऋ॰ ८,२४,८, “अपरीतम् शत्रुभिरपरिगतमव्याप्तमिति वा” भा॰।

**अपरुष्** त्रि॰ अपगता रुट् यस्य। विगतक्रोधे “अपरुषा परुषाक्षरमीरितेति” रघुः।

**अपरूप** न॰ अप आनन्दे आश्चर्य्ये वा प्रा॰स॰। आश्चर्य्यरूपे आनन्दहेतुप्रशंसितरूपे च। “ततोऽपरूपं जायते तस्माद्बिभ्यदेनस इति” अथ॰ १२,४,८, अपकृष्टरूपे च। प्रा॰ब॰। तद्वति त्रि॰।

**अपरेद्युस्** अव्य॰ अपरस्मिन् अहनि एद्युस्। अपरदिने इत्यर्थे “पूर्व्वेद्युरपरेद्युर्वा श्राद्धकर्म्मण्युपस्थिते निमन्त्रयेत विप्रान् वै” इति स्मृतिः।

**अपरोक्ष** अव्य॰ न परोऽक्षम् इन्द्रियासन्निकृष्टम्। प्रत्यक्षे विषयेन्द्रियसन्निकर्षोत्पन्ने ज्ञाने “सम्भावनादिनिरासे तु विचारपिपाकास्तेनैव प्रमाणेन जनितं ज्ञानं प्रतिबन्धाभावात् फलं जनयदपरोक्षमित्युच्यते” इति वृद्धाः। फलं ज्ञाततामिति भाट्टाः चिति बुद्धेः प्रतिबिम्बमिति सांख्याः बुद्धौ चितः प्रतिबिम्बमिति वेदान्तिनः। संस्कारम् विषयताविशेषं वेति तार्किकादयः। तथा हि प्रथममिन्द्रियेण विषयः संबध्यते ततो विषयालोचनारूपं विनिर्विकल्पकस्थानीयं सामान्याकारं ज्ञानं जायते ततः विषयावरणरूपप्रतिबन्धनाशात् चित्प्रतिबिम्बरूपं फलं जनयज्ज्ञानमपरोक्षमित्युच्यते इति वेदान्तिनः। नैयायिकास्तु विषयेन्द्रियसन्निकर्षात् प्रथमं निर्विकल्पकरूपं विशेष्यविशेषणयोः संसर्गानवगाहि ज्ञानं जायते तदुत्तरं विषयप्रत्यक्षमित्यङ्गीचक्रुः। सांख्यादयस्तु विषयेन्द्रियसन्निकर्षात् बुद्धेस्तद्विषयकारेण परिणामे जाते तत्र चेतनाशक्तौ बुद्धेः प्रतिबिम्बरूपं फलमुत्पद्यते तत्रैव ज्ञानत्वव्यवहारो मुख्यः बुद्धिवृत्तौ तु गौण इति मन्यन्ते। “युक्तितोऽपि न बाध्यते दिङ्मोहवदपरोक्षादृते” सां॰सू॰। ब्रह्मणस्तु अज्ञानरूपावरणाभावात् सर्वदा प्रकाशमानत्वात् नेन्द्रियादिसन्निकर्षापेक्षेति तस्य सर्वदा प्रत्यक्षरूपत्वम् “यत् साक्षादपरोक्षाद्ब्रह्मेति” श्रुतिः अपरोक्षादपरोक्षमित्यर्थः। अर्श॰अस्त्यर्थे अच्। तद्विषये त्रि॰।

**अपरोक्षानुभूति** पु॰ अपरोक्षा प्रत्यक्षा अनुभूतिर्यस्मात्। वेदान्तप्रकरणभेदे। कर्म॰। प्रत्यक्षरूपे ज्ञाने स्त्री।

**अपरोध** पु॰ अप+रुध–भावे घञ्। “बाधने अभिप्रवायमभिमुखन्ति देशानपरोधेन” कात्या॰ २४,३,२१।

**अपर्णा** स्त्री नास्ति पर्णान्यपि वृत्तिसाधनानि यस्याः। शैलराजदुहितरि उमायां सा हि शिवप्राप्त्यर्थं व्रतकाले पर्णान्यपि त्यक्तवती यथोक्तं कुमारे “स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः। तदप्यपाकीर्णमतः प्रियंवदाम् वदन्त्यपर्णामिति तां पुराविदः” इति “चतुर्थे त्यक्तपर्णा च अपर्णाख्यामवाप सेति” शि॰पु॰।

**अपर्त्तु** त्रि॰ अपगत ऋतुर्यस्य। असमयाद्यृतुविगमयुक्ते। “यत्र विजायते यमिन्यपर्तुरिति” अथ॰ ३,२८,१, अपगतऋतुः स्त्रीपुष्पं यस्याः। निवृत्तरजस्कायां स्त्रियां स्त्री।

**अपर्य्यन्त** त्रि॰ नास्ति पर्य्यन्तो मर्य्यादा यस्य। निःसीमनि इयत्तारहिते “तदक्षयमपर्य्यन्तं दुर्ज्जयं वानरं बलम्” रा॰।

**अपर्य्याप्त** त्रि॰ परि+आप–क्त न॰त॰। असमर्थे, असम्पूर्णे, स्वकार्य्याक्षमे च “परिभुक्तमवज्ञातमपर्य्याप्तमसंस्कृतम् यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठतीति” “अपर्य्याप्तं स्वकार्य्याक्षममिति शु॰त॰ रघ॰। अपरिच्छिन्ने इयत्तारहिते “जगत्यपर्य्याप्तसहस्रभानुनेति” माघः “अपर्य्याप्तः अपरिच्छिन्न” इति मल्लि॰।

**अपर्य्याप्ति** स्त्री न पर्य्याप्तिः अभावार्थे न॰त॰। अपरिच्छेदे असामर्थ्ये च। “सर्व्वं श्राद्धं मासिमासि अपर्य्याप्ताविन्दुप्रतीति” स्मृतिः। न॰ब॰। परिच्छेदशून्ये त्रि॰।

**अपर्य्याय** पु॰ न पर्य्यायः परिपाटी अभावे न॰त॰। पक्रमाभावे। न॰ब॰। क्रमशून्ये त्रि॰।

**अपर्य्युषित** त्रि॰ न पर्य्युषितः । अभिनवे सद्योभवे पुष्पादौ । "अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्ज्जितैरिति" नर॰पु॰।

**अपर्वदण्ड** पु॰ अपर्व्वा दण्ड इव । रामशराख्यशरभेदे तस्येतरशरस्येव ग्रन्थियुक्तत्वाभावात्तथात्वम् ।

**अपर्वन्** त्रि॰ नास्ति पर्व्व ग्रन्थिः ग्रन्थप्रकरणपरिच्छेदो वा यस्य । ग्रन्थिशून्ये दण्डादौ विच्छेदशून्ये ग्रन्थादौ च । वा कप् । अपर्व्वकोऽप्यत्र त्रि॰। "यदपर्व्वकं स्यात् प्रत्यक्षमिति" शत॰ब्रा॰ । "विच्छेदशून्यमिति" भा॰ ।

**अपल** न॰ अपक्रमनिवृत्तौ लाति स्वरूपात्वत ला–बा॰ आधारे क । कीलके शब्द॰मा॰ । तद्बन्धने हि अपक्रमनिवृत्तेस्तथात्वम् । नास्ति पलं मांसं यस्य । मांसशून्ये त्रि॰।

**अपलाप** पु॰ अप+लप–घञ् । सतोऽप्यसत्त्वेन कथनरूपे अपह्नवे, "न च प्रत्यक्षसिद्धस्यापलापः कर्त्तुं शक्यते इति" अप+आनन्दे लप्यतेऽनेन लप–करणे घञ् । स्नेहे मेदिनिः । स्नेहेनैवानन्दभावप्राप्तत्वात्तथात्वम् ।

**अपलाषिका** स्त्री लष इच्छायां पर्य्याये ण्वुच् लाषिका पर्य्यायेण इच्छा अप वैपरीत्ये प्रा॰स॰ । अपर्य्यायेच्छारूपायां तृष्णायामतिशयलालसायाम् हेम॰ । स्वार्थे अपलाषिकेति पाठकल्पनं प्रामादिकं लषतेरिच्छार्थत्वाभावात् ।

**अपलाषिन्** त्रि॰ अप+अपकर्षे लष–ताच्छील्यादौ घिनुण् । अनुचितधनादितृष्णाशीले । स्त्रियां ङीप् ।

**अपलाषुक** त्रि॰ अप+अनुचितत्वात् अपकर्षे लष–ताच्छील्यादौ बा॰ उकञ् । अनुचितधनादितृष्णाशीले ।

**अपल्पूलन** न॰ न पल्पूलनं शोधनम् अभावे न॰त॰ । स्नानमार्ज्जनक्षारसंयोगादिना शोधनाभावे । "यदिदं स्नातस्य निहितमपल्पूलनकृतं भवतीति शत॰ब्रा॰ । "अपल्पूलनकृतं क्षारद्रव्यसंयोगादिनाऽधौतमिति" भा॰ । अत्रासमर्थसमासात् करणे नञर्थान्वय इति भेदः । तथा च रजकाधौतमिति तदर्थः । कर्मकाले रजकधौतवस्त्रपरिधानस्य स्मृतौ निषेधात् तथोक्तम् ।

**अपवत्** त्रि॰ अपः कर्म तदस्त्यस्य मतुप् वेदे मस्य लोपः । कर्मयुक्ते । "अपूपवानपवांश्चरुरेह सीदतु" अथ॰ १८.४.२४।

**अपवन** न॰ अपकृष्टं कृत्रिमत्वात् स्वस्थत्वाच्च वनम् प्रा॰त॰ । उपवने कृत्रिमवने हेम॰ । [अन्तर्ष्टे वासष्टे ।

**अपवरक** न॰ अप+व्रियते अप+वृ–कर्म्म॰ संज्ञायां वुन् ।

**अपवरण** न॰ अप+वृ–भावे ल्युट् । अनावरणे आवरणापाकरणे च ।

**अपवर्ग** पु॰ अपवृज्यते संसारोऽत्र अप+वृज–घञ् कुत्वम् । मोक्षे । "स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः" इति कुसुमा॰ । "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायात्तदनन्तरापायादपवर्गः" इति "कृपालयापाकरणाच्चाप्यपवर्गः" इति च न्यायसू॰ । अपवर्गप्रकारस्तु मोक्षशब्दे वक्ष्यते । भावे घञ् । दाने, त्यागे च "सुदेरमक्षेद इवापवर्गे" किरा॰। अपवृज्यते विरज्यते यस्मात् अपादाने घञ् । फलप्राप्तौ तद्धेतुके कर्म्मसमापने च "अपवर्गे तृतीयेति" पा॰ । "अपवर्गे तृतीयेति भणतः पाणिनेरपीति" नैषधम् "उदगपवर्गं सुखेषु सम्पद्यादिति" ता॰ब्रा॰ । "कृत्वा गते भाग्य इवापवर्गमिति" किरा॰ "अपवर्गं समाप्तिमिति" मल्लि॰ ।

**अपवर्ज्जन** न॰ अप+वृज–ल्युट् । दानादावपवर्गार्थे । "पट्टापवर्ज्जनमिति" मिताक्षरा ।

**अपवर्ज्जित** त्रि॰ अप+वर्ज्ज–क्त । परिहृते, त्यक्ते, दत्ते च ।

**अपवर्त्तन** न॰ अप+वृत–णिच्–ल्युट् । परिवर्त्तने, वक्रीकरणे अङ्कशास्त्रे प्रसिद्धे भाज्यभाजकयोरुभयोरपि तुल्यरूपेण केनचिदङ्केन विभाजने । "समेन केनाप्यपवर्त्त्येति" लीला॰। अपहरणे च "न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनमिति" मनुः । भावे अच् अपवर्त्तोऽप्यत्र पु॰ ।

**अपवाद** पु॰ अप+वद–भावे घञ् । निन्दायाम् अपकीर्त्तौ "किं करिष्यामि राज्येन सापवादेन राघव !" "प्रकाशं च कृते तस्मिन्नपवादो भवेन्मम" इति च रामा॰ । मिथ्यावादे "अपवादमात्रमबुद्धानामिति" सां॰सू॰ "अपवादः मिथ्यावादः" भा॰ । कुत्सितवादे तत्रैव "अपवादः कुत्सितवाद" इति व्याख्यान्तरम् । अपोद्यते सामान्यशास्त्रं स्वविषयात् सङ्कोच्यतेऽनेन करणे घञ् । विशेषशास्त्रे । तद्धि स्वविषयं परिहृत्य सामान्यशास्त्रं विषयान्तरे व्यवस्थापयतीति तस्य सङ्कोचकं भवति यथा "मा हिंस्यात् सर्व्वाभूतानीति" श्रुतौ हिंसानिषेधस्य सर्वभूतविषयकत्वेऽपि "वायव्यं श्वेतमालभेतेति" शास्त्रं वायव्यच्छागहिंसाविषयकत्वेन विरोधात् स्वविषयात् सङ्कोचयत् तस्येतरविषयकतां व्यवस्थापयति "अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैरिति" कुमारः "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" इति "अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते" इति च व्या॰ परि॰ । "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इति पा॰भा॰ । अपोद्यते अपवाह्यते मिथ्याभूततयाऽनेन अप+वद–करणे घञ् । वेदान्तमतसिद्धे मिथ्याभूतपदार्थनिवारणार्थसुपदेशभेदे । स च रज्जुविवर्त्तस्य मिथ्याभूतसर्पस्य रज्जुमात्रत्ववत् वस्तुभूतब्रह्मणो विवर्त्तस्य प्रपञ्चादेः वस्तु-

भूतरूपतोपदेशः। "अध्यारोपापवादाभ्यां वस्तुतत्त्वविनिश्चय, इति वेदा०प्र०। भावे घञ्। विश्वासे, प्रणये च। करणे घञ्। बाधकसाधने वस्तुमात्रे। कर्म्मणि घञ्। कुत्सितवादे "मधुकरैरपवादकरैरिव" माघः "अपवादैः स्वगवञ्चनाय षट्पदादि कुत्सितवादमिति" मल्लि०। भावे घञ्। आदेशे "ततोऽपवादेन पताकिनीपतेरिति" किरा०। "अपवादेन आदेशेनेति" मल्लि०। निरासने च।

**अपवादक** त्रि० अपसार्य्य स्वविषयात्, वदति शास्त्रान्तरम् व्यवस्थापयति वद्–ण्वुल्। स्वविषयं परिहृत्य सामान्यशास्त्रस्येतरत्र व्यवस्थापके विशेषशास्त्रे। अप+वद–ण्वुल्। अकीर्त्तिकरे" निन्दके निरासके च त्रि०। [ङीप्।

**अपवादिन्** त्रि० अप+वद–णिनि। अपवादकर्त्तरि स्त्रियां

**अपवारण** त्रि० अपवारयति आच्छादयति अप+वृ–णिच् नन्द्या० ल्यु। व्यवधायके। भावे ल्युट्। व्यवधाने न० आधारे ल्युट्। अन्तर्द्धौ सति तु व्यवधाने अन्तर्धानं भवत्वेवेति तस्य तथात्वम्।

**अपवारित** त्रि० अप+वृ–णिच्–कर्म्मणि क्त। आच्छादिते व्यवधापिते च। भावे क्त। अपवारणे, अप्रकाशे न०। "तद्भवेदपवारितम्। रहस्यन्तु यदन्यस्य परावृत्त्य प्रकाश्यते" इति सा०द०। उक्ते परावृत्त्यान्यस्य रहस्यकथने न० परावृत्त्यान्यस्य रहस्यकथनमपवारितमिति तदर्थः।

**अपवारितक** न० अपवारितं अपवारणम् अप्रकाशमेव स्वार्थे कन्। अप्रकाशे "अपवारितकेन प्राडयोतीति" नाटकम्। अप्रकाश्याच्छोदयतीत्यर्थः।

**अपवारुक** पु० अप+वृ–ण०। उकञ्। मत्सरे।

**अपवार्य्य** अव्य० अप+वृ–णिच्–ल्यप्। आच्छाद्येत्यर्थे "त्रिपताककरेणान्यमपवार्य्यान्तरा कथेति" सा०द०।

**अपवास** पु० अपकृष्य वासः स्थितिः। अपसरणे "अपवासे नक्षत्राणामपवास उपसामुत" अथ० ३,७,७।

**अपवाह** पु० अपसार्य्य वाहः स्थानान्तरनयनम्। इतरस्थानादपसार्य्य स्थानान्तरप्रापणे। "भूतपूर्व्वमभूतपूर्व्वं वा जनपदं परदेशापवाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेदिति" कौटिल्यः "षोनाः षट् गिति नवरसशरयतियुतमपवाहाख्यमिति" वृ०र० उक्ते वर्णवृत्तभेदे।

**अपवाहन** न० अप+वह–णिच्–ल्युट्। परदेशस्थजनानां स्वदेशप्रापणे "स्वराष्ट्रं वर्द्धयेद्राजा परदेशापवाहनादिति" हितो०। [वह–णिच्–ल्यप्। अपसार्य्येत्यर्थे अव्य०।

**अपवाह्य** त्रि० अप+वह–कर्म्मणि यत्। दूरीकार्य्ये। अप+

**अपविघ्न** त्रि० अपगतो विघ्नो यस्मात्। विघ्नशून्ये "शतं क्रतूनामपविघ्नमाप स" इति रघुः।

**अपवित्र** पु० न पवित्रः अकृतशौचादिः। अकृतशौचादौ "अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरे शुचिरिति" स्मृतिः।

**अपविद्ध** त्रि० अप+व्यध–क्त। त्यक्ते "अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः" इति कु०। "सोऽपविद्धस्तया रक्षस्निर्भेदभयादिति" दश०कु०। प्रत्याख्याते, निरस्ते च "रक्षोविप्रकृतावास्तामपविद्धशुचाविव" रघुः "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते" इति मनूक्ते द्वादशपुत्रान्तर्गते पुत्रभेदे पु०।

**अपविद्या** स्त्री अप विरोधे प्रा०स०। विद्याविरोधिन्यां वेदान्तादिप्रसिद्धायामविद्यायाम् "तत्त्वस्य संवित्तिरिवापविद्यामिति" किरा०। अपकृष्टा विद्या। बौद्धाद्यागमविद्यायाम्। [राज०नि०। अपगतविष मात्रे त्रि०।

**अपविषा** स्त्री अपगतं विषं यस्याः। निर्विषतृणभेदे

**अपवृत्त** त्रि० अपवर्त्तते अप+वृत–कर्त्तरि क्त। समाप्ते, "अपवृत्ते कर्म्मणि वामदेव्यगानं शान्त्यर्थमिति" गोभिलः। "अपवृत्ते समाप्ते" संस्कारतत्त्वे रघुनन्दनः।

**अपवेध** पु० अपकृष्टः अस्थानकृतत्वात् वेधः प्रा०स०। मणीनामस्थानकृते वेधने "मणीनामपवेधे च दण्ड उत्तमसाहसम् इति" मनुः।

**अपव्यय** पु० अपकृष्टः शास्त्रादिमर्य्यादामुल्लङ्घ्यास्थाने कृतत्वात् व्ययः प्रा०स०। द्यूतवेश्यादावस्थाने कृते व्यये। अपगतः व्ययः क्षयोऽस्य। अविनश्वरे त्रि०।

**अपव्ययमान** त्रि० अप+वि+अय–शानच्। अपलापकर्त्तरि। "अर्थेऽपव्ययमानन्तु कारणेन विभावितम्। दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तित इति" मनुः। अपव्ययमानमपलपन्तमिति दि०त०रघु०। अपव्ययकर्त्तरि त्रि०।

**अपव्रत** त्रि० अपगतं व्रतं श्रौतादि कर्म्म यस्य। अपगतविहितकर्म्मणि "अनुव्रताय रन्धयन्नपव्रतानिति" ऋ०१,५१,८, अपव्रतान् "अपगतकर्म्मणः" इति भा०। "गूढं सूर्य्यं तमसाऽपव्रतेन" ऋ०५,०,४,६,१, अपगतव्रतस्य। नष्टव्रते स्वीकृतव्रतत्यागिनि त्रि०। प्रा०स०। अपकृष्टे व्रते न०

**अपशङ्क** त्रि० अपगता शङ्काऽस्य प्रा०ब०। निःशङ्के शङ्कारहिते।

**अपशद** त्रि० अप+शद–कर्त्तरि अच्। नीचे इति केचित्। तन्न सदधातुघटिततया दन्त्यमध्यमिति बहवः।

**अपशब्द** पु० अप वैपरीत्ये प्रा०स०। शक्तिवैकल्यप्रमा-

दादिना साधुशब्दस्यान्यथोच्चारणसाध्ये अपभ्रंशशब्दे "त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" इति हरिः "म्लेच्छो ह वा नाम यदपशब्दः" इति श्रुतिः ।

**अपशव्य** त्रि० पशवे हितः यत्, विरोधे न०त० । पशुवृद्धिविघातके "अपशव्येव तु या देवरा" इति ता०ब्रा० "अपशव्येव पशूनां वृद्धिविघातिनी" भा० ।

**अपशु** पु० न पशुः अप्राशस्त्ये न०त० । गोऽश्वभिन्ने पशौ । "अपशवो वा अन्ये गोऽश्वेभ्यः इति" "अपशुर्वा एष यदारण्यस्तेनैतस्य होतव्यमिति" च शत०ब्रा०। नास्ति पशुर्यस्य । पशुशून्ये "अप्रजा अपशुर्भविष्यति" । शत०ब्रा० ।

**अपशुच्** त्रि० अपगता शुक् शोकोयस्य प्रा०ब० । अपगतशोके । सर्वदाऽपेतशोके आत्मनि पु० । "क उत्तमःश्लोकगुणानुवादात् पुमान् विरज्येत विनाऽपशुग्घ्नादिति," भागवते पाठं प्रकल्प्य श्रीधरेण अपशुगात्मेतिव्याख्यातम् तस्य हननञ्च यथार्थेनाज्ञानं "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते किं तेन न कृतं पापं ? चौरेणात्मापहारिणेति" मनुना आत्मनोऽन्यथारूपज्ञानेनैव स्वात्महन्तृत्वोक्तेः । "अन्धं तमस्ते प्रविशन्ति ये केचात्महनोजनाः" इति श्रुतिभाष्येऽपि तथैवात्माज्ञाने आत्महननमुक्तम् । अपशोकादयोऽप्यत्र त्रि० ।

**अपश्चिम** त्रि० न पश्चिमः विरोधे न०त० । अन्तिमे "कश्यपश्च महाभागस्तेषामासीदपश्चिमः" इति रामा० नास्ति पश्चिमः शेषभवोयस्य । शेषशून्ये, इयत्ताशून्ये च "अपश्चिमामिमां कष्टामापदं प्राप्नवत्यहमिति" रामा० ।

**अपश्य** त्रि० दृश–वेदे बा०श न०त० । अद्रष्टरि अदर्शके "अन्धा अपश्या न दभन्नभिख्या" इति ऋ०१,१४८,५, "अपश्या अद्रष्टारः" इति भा० लोके तु अदर्शीत्येव ।

**अपश्रय** पु० अप+श्रि–अच् । उपाश्रये "सामासाद उद्गीथोऽपश्रयः" अथ० १५,३,८, ।

**अपश्री** त्रि० अपगता श्रीर्यस्मात् श्रीःशोभादिः । शोभादिहीने ।

**अपश्लिष्ट** त्रि० अप+श्लिष–क्त । श्लेषशून्ये, संसर्गहीने, वियुक्ते च । [अपक्रम्य स्थातरि त्रि० ।

**अपष्ठ** न० अप+स्था–क अम्बा० षत्वम् । अङ्कुशाग्रे हेम०।

**अपष्ठु** अव्य० अप+स्था–सुषामादि० षत्वम् । निर्दोषे, शोभने, विपरीते, च । "अपष्ठु पठतः पाठमधिगोष्ठि शठस्य ते" इति नैष० । प्रतिकूले, विरुद्धार्थे च त्रि० । काले पु० ।

**अपष्ठुर(ल)** त्रि० अप+स्था–कुरच् वा लत्वम् । प्रतिकूले हेम० । विपरीते त्रिका० ।

**अपस्** न० आप–असुन् ह्रस्वश्च । कर्म्मणि निरु०। तद्वति च । "अपसा सन्तु नेमे" ऋ० १,५४,८, अपः कर्म्म तद्वन्तोवेति भा० "ग्लास्नाऽऽस्नानपसोऽतन्वत" ता०ब्रा० । "अश्रुध्नन्तीरपसोयन्त्यच्छा" ऋ० ७,७१,२ "अपसा कर्म्मयुक्ता" इति भा० । प्राप्ते त्रि० । "आध्याम कर्म्मापसा नवेन ऋ० १,३१,८, "अपसा प्राप्तेनेति" भा० ।

**अपसद** त्रि० अपकृष्ट इव सीदति सद–अच् । अधमे, नीचे च । "रेरे क्षत्रियापसदाः!" इति वेणी०। "विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः । वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृता इति" मनूक्ते अनुलोमवर्णस्त्रीजाते वर्णसङ्करभेदे मूर्द्धावसिक्तादौ पुंस्त्री० । "ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः" इति मनुः ।

**अपसम** अव्य० समाया अत्ययः अव्ययी० । शरत्प्रभृतिषु तिष्ठद्गुगणपाठान्नैतस्य समासान्तटच्कता ।

**अपसर** पु० अप+सृ–भावे अच् । अपयाने, अपसरत्यस्मात् ल्यबम् अपादाने अच् । प्रतिपत्त्यादौ । "निरन्वयोऽनपसरः प्राप्तःस्याच्चौरकिल्बिषमिति" मनुः । "अपसरः प्रतिपत्त्यादिः" कुल्लूकभट्टः ।

**अपसरण** न० अप+सृ–भावे ल्युट् । अपयाने "इतोऽपसरणमेव श्रेय इति" नाटकम् "अपसरणतोह वा अग्रे देवा जयन्तोऽजयन्" इति "दिवमेवाग्रे अथेदमन्तरिक्षमथेतोऽनपसरणात् सपत्नानतुदन्त इति च शत०ब्रा० १,८,१११ ।

**अपसर्जन** न० अप+सृज–भावे ल्युट् । त्यागे, वर्ज्जने च । घञ् । अपसर्गोऽप्युक्तार्थे पु०।

**अपसर्प** पु० अप+सृप–कर्त्तरि अच् । गुप्तचरे । "सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः" रघुः । "तथैवापसर्पभूतया तत्र स्कन्दावस्थानशेषसंचोरयात्रः" इति दशकु० । भावे घञ् । अपसरणे । [गमने ।

**अपसर्पण** न० अप+सृप–भावे ल्युट् । अपयाने प्रवृत्तो

**अपसल** त्रि० अप+सल–कर्त्तरि अच् । अपसव्यतामाप्ते । "यथाबालं पुरस्कृत्य यज्ञोपवीतानि अपसलानि कृत्वा तीर्थमवतीर्य्येति" शु०त० बौधा० । "अपसलानि अपसव्यानीति शुद्धितत्त्वे रघुनन्दनः ।

**अपसलवि** अव्य० अप+सल–बा० अवि । तर्ज्जन्यङ्गुष्ठमध्यस्थानरूपे पितृतीर्थे, "तर्ज्जन्यङ्गुष्ठयोरन्तरा अपसलवि अपसव्यं वा तेन पितृभ्योनिदधाति" शु०त० सूत्रम् । "सव्येनैव पाणिना सूत्रतन्तु' न्दहीत्वा अपसलवि पूर्व्वस्यां कर्ष्वां पिण्डं निदध्यादिति" गोभिलः ।

**अपसव्य** न० अपक्रान्तं सव्यात् निरा०त० । १ देहदक्षिणभागे "तर्ज्जन्यङ्गुष्ठयोरन्तरा अपसव्यं वेति" २ श्राद्धपरिभाषिते पितृतीर्थे च । अपगतं भग्नतया भूमौ पातितत्वात् सव्यं यत्र । भूमौ पातनेन भग्नप्रायत्वमाङ्क अप वैपरीत्ये स्तृ-भावे यत् सव्यं गतिः । विपरीते त्रि० । "अपसव्यं ततः कृत्वा पितॄणामाप्रदक्षिणमिति" याज्ञ० । "देवकर्म्मानन्तरं पितृकर्मकरणे प्राप्तग्रामोपचारनिराकाया-प्रदक्षिणव्यापार" इति श्रा०त० रघु० । आभ्युदयिके हि "निपातो न हि सव्यस्य जानुनोविद्यते क्वचिदिति" श्रा० त० वशिष्ठोक्तेः भूमौ पातितत्वाभजानुकरणाभावः । अतएव "नात्रापसव्यकरणं न पैत्र्यं तीर्थमिष्यते" इत्यादिना अपसव्यकरणनिषेधः सूपपन्नः । पितृतीर्थञ्च "यत्राङ्गुष्ठा-विशेषस्तु दक्षिणस्तत्र गम्यते इति" स्मृतेः । दक्षिणहस्त एव । "प्राचीनावीतिना भाव्यमपसव्यमतन्द्रिणा । पित्र्य-मानिधनात् कार्य्यं विधिवद्दर्भपाणिना" इति मनुः ।

**अपसार** पु० अप+सृ-णिच्-अच् । १ दूरीकरणे२वहिष्करणे, ३ अपनयने ३ च । ल्युट् । अपसारणमप्यत्र न० ।

**अपसारित** त्रि०अप+सृ-णिच्-क्त । १ उत्सारिते२ दूरीकृते च

**अपसिद्धान्त** पु० अपक्रान्तः सिद्धान्तात् निरा०त० । १ स्वीकृत-सिद्धान्तात् स्खलनरूपे दोषभेदे, "सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त इति" गौ०सू० । सिद्धान्तं किञ्चिच्छास्त्रकाराभ्युपगतमर्थमभ्युपेत्य स्वीकृत्यानियमात् तन्नियमोल्लङ्घनात् कथायां प्रसङ्गः स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्त इति तदर्थः । यथा सांख्यमतेनाहं वदिष्यामीत्यभ्युपेत्य कथायामारब्धायाम् आविर्भावस्याविर्भावाङ्गीकारेऽनवस्थेति दूषणे वादिनोद्भाविते प्रतिवादी यदा तद्दोषोद्धारणाय आविर्भावस्यासतोऽपि समुत्पत्तिमभ्युपैति तदा सत्-कार्य्यवादिसांख्यमतविरुद्धाभिधायित्वेन स्वाभ्युपगतनियमातिक्रमात् स्वीकृतसिद्धान्तप्रच्यवरूपो दोषो भवति सएवापसिद्धान्तः एवमन्योऽप्युदाहार्य्यः । वितण्डावादिनः बौद्धभेदाश्च नापसिद्धान्तं दोषमङ्गीचक्रुः तेषां कस्यचित् सिद्धान्तस्यानङ्गीकारात् ।

**अपसोपान** पु० अपक्रान्तः अतिक्रान्तः सोपानमाकारेण अत्या०स० । १ हस्तिनखे ।

**अपस्कर** पु० अप+कृ-अप् रथाङ्गे नि०सुट् । १ चक्रभिन्ने रथारम्भके अवयवभेदे । "अपस्करोरथाङ्गमिति" पा० । "कूबरश्च रथस्यासीदाशुकिर्भुजगोत्तमः । अपस्करमधिष्ठाने हिमवान् विन्ध्यपर्व्वत" इति भा०क०प० उक्तेः क्लीवमपि ।

**अपस्नात** त्रि० अपकृष्टं अमङ्गलार्थत्वात् स्नातः । १ मृतसहिश्य स्नाते जने । २ स्नानसंस्काराय स्नापिते मृते पुंस्त्री०चीर० ।

**अपस्नान** त्रि० अपक्रान्तः स्नानात् निरा०स० । १ स्नानावशिष्टे जले "उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च । श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः" इति मनुः ।

**अपस्पश** त्रि० अपगतः स्पशोगूढचरोयतः । १ गूढचरशून्ये । "अङ्गविद्येव नोभाति राजनीतिरपस्पशेति" माघः । अङ्ग-विद्यापक्षे पस्पशा पातञ्जलभाष्यस्य नवाह्निकं २ तच्छून्येऽप्यर्थः ।

**अपस्मार** पु० अपस्मारयति स्मरणं विलोपयति अप+स्मृ-णिच्-कर्त्तरि अच्, अपगतः स्मारः स्मरणं यतो वा । १ रोग-भेदे । स च सुश्रुते दर्शितो यथा "स्मृतिर्भूतार्थविज्ञानमपस्तु परिवर्जने अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥ मिथ्यादियोगेन्द्रियार्थकर्म्मणामतिसेवनात् । विरुद्धमलिना-हारविहारकुपितैर्मलैः । वेगनिग्रहशीलानामहिताशुचि-भोजिनाम् । रजस्तमोऽभिभूतानां गच्छताञ्च रजस्वलाम् ॥ तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम् । चेतस्यभिहते पुंसामपस्मारोऽभिजायते ॥ संज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः । रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥ विक्षिपन् हस्तपादौ च विजिह्मभ्रूविलोचनः । दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ ॥ अल्पकालान्तरञ्चापि पुनः संज्ञां लभेत सः । सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्विधः ॥ वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः । हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ॥ निद्रानाशश्च तस्मिंस्तु भविष्यति भवन्त्यथ । वेपमानो दशन्दन्तान् श्वसन् फेनं वमन्नपि ॥ यो मूयाद्विकृतं सत्वं कृष्णं मामनुधावति । ततो मे चित्त-नाशः स्यात्सोऽपस्मारोऽनिलात्मकः ॥ तृट्तापस्वेदमूर्च्छा-र्त्तोऽध्वनच्चाङ्गानि विह्वलः । यो मूयाद्विकृतं सत्वं पीतं मामनुधावति ॥ ततो मे चित्तनाशः स्यात्स पित्तभव उच्यते । शीतहृल्लासनिद्रार्त्तः पतन् भूमौ वमन् कफम् ॥ यो मूयाद्विकृतं सत्वं शुक्लं मामनुधावति । ततो मे चित्त-नाशः स्यात्सोऽपस्मारः कफात्मकः ॥ हृदि तोदस्तृडुत्क्लेद-स्त्रिष्वप्येतेषु संस्थया । प्रलापः कूजनं क्लेशः प्रत्येकन्तु भवेदिह ॥ सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे । अनिमित्तागमाद्यापीगमनादृतेऽपि च ॥ आगमश्चाप्यप-स्मारं वदन्त्यन्ये न दोषजम् । कर्म्मोपयोगाद्दोषाणां क्षणि-कत्वात्तथैव च ॥ आगमाद्वेगरूपाच्च स तु निर्व्वर्त्यते बुधैः । वर्षत्यपि यथा देवे भूमौ बीजानि कानिचित् ॥ शरदि प्रतिरोहन्ति तथा व्याधिसमुद्भवः । स्थायिनः केचिदल्पेन

कालेनाभिप्रवर्द्धिताः ॥ दर्शयन्ति विकारांस्तु विविधव्याधि- सर्गतः । अपस्मारो महाव्याधिस्तस्माद्दोषज एव तु” इति॥ “धूर्त्तोऽपस्माररोगी स्यादिति” शाता॰कर्म्म॰ । “अपस्मा- रादिरोगाणां ज्वरादीनां विशेषत इति” वटुकस्तोत्रम् ।

**अपस्मारिन्** त्रि॰ अपस्मार+अस्त्यर्थे इनि । १ अपस्माररोग- युक्ते । स्त्रियां ङीप् ।

**अपस्य** त्रि॰ अपसि कर्म्मणि साधुः अपस्+यत् । १साधुकर्म्मका- रिणि “अनाधृष्टा अपस्योवसाना” इति “यजु॰ १०,७, अपस्याः अपसि कर्मणि साध्व्यः” वे॰दी॰। “अपरेण स्वय- मातृण्णमित्यापस्याः पञ्च पञ्चानूकान्त्येष्वपामिति” का॰ १७, ६,२, अपस्यास्तत्संज्ञका इष्टकाभेदा इति वेददी॰ ।

**अपस्यु** त्रि॰ अपः कर्मेच्छति अपस्+क्यच्–उ । १ कर्म्मेच्छौ “गिर यदी सबन्धवः पञ्चव्राता अपस्यव” इति ऋ॰८,१४,२

**अपह** त्रि॰ अप+हन–“अपे क्लेशतमसोः” पा॰ ड । १अपघात- कर्त्तरि । क्लेशापहः पुत्रः तमोऽपहः सूर्य्यः । योगविभागा- दन्यत्रापि “सुपरीक्षितमन्त्राद्यमद्यात्मन्त्रैर्विषापहैरिति” मनुः

**अपहत** त्रि॰ अप+हन–क्त । १विनाशिते “योऽयमात्माऽ- पहतपाप्मेति” श्रुतिः ।

**अपहति** स्त्री अप+हन–क्तिन् । १नाशने । “न ह वै सशरी- रस्य सतः प्रियाप्रिययोरपहतिरस्ति” छा॰उ॰ ।

**अपहर** त्रि॰ अप+हृ–कर्त्तरि अच् । १अपहरणकर्त्तरि “भद्रं भवेद्भवभयापहरं त्रिलोके” इति हेमा॰भवि॰पु॰ ।

**अपहरण** न॰ अप+हृ–ल्युट् । १स्तेये साधारणस्य परकीयस्य वा धनादिचौर्य्ये। “सीताद्रव्यापहरणे शस्त्राणामौषधस्य चेति” “निक्षेपस्यापहरणं नराश्वरजतस्य चेति” “भक्ष्यभोज्याप- हरणे यानशय्यासनस्य च” इति च मनुः स्तेयस्वरूपञ्च स्मृतौ दर्शितं यथा “उपायैर्विविधैरेषां छलयित्वापकर्षणम् सुप्रमत्त प्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः” इति नार॰। “स्यात् साहसं त्वन्वयवत् प्रसभं कर्म्म यत् कृतम् । निरन्वयं भवेत् स्तेयं हृत्वा- पह्नूयते च यदिति” मनुः । “अन्वयवद् द्रव्यरक्षिराजा- ध्यक्षादिसमक्षं प्रसभं बलावष्टम्भेन यत् परधनहरणा- दिकं क्रियते तत् साहसं, स्तेयन्तु तद्विलक्षणं निरन्वयं द्रव्य- स्वाम्याद्यसमक्षं वञ्चयित्वा यत् परधनहरणं तदुच्यते यच्च- सान्वयमपि हृत्वा न मयेदं कृतमिति भयात् निह्नुते तदपि स्तेयमिति” मिताक्षरा । तच्च साधारणस्य परकीयस्य वा हरणम् “सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतमिति” याज्ञ॰ उक्तेः । तथाच परकीये साधारणे वा द्रव्ये स्वत्व- हेतुभूतलौकिकक्रयप्रतिग्रहादिकमन्तरेण स्वाम्यापादनं हरणम् तदेव बलपूर्व्वकं साहसमिति भेद इति मिताक्षरादि- मतम् दायभागमते तु साधारणद्रव्यस्य नापहरणं परमात्म- स्वत्वद्रव्यस्यैवापहरणमिति तत्रोक्तेरिति विशेषः । २बला- दपकर्षणे च । “निर्विण्णोऽतिममत्वेन राज्यापहरणेन चेति” देवी मा॰ ।

**अपहरणीय** त्रि॰ अपहर्त्तुमर्हति अप+हृ–अनीयर् । १ अपहरणयोग्ये तानि वस्तूनि च स्मृतौ दर्शितानि । “द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न दण्डं दातुमर्हति” मनुः । “चणकव्रीहिगोधूम यवानां मुद्गमाषयोः । अनिषिद्धैर्ग्रहीतव्या मुष्टिरेका पथि स्थितैरिति” “तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः इति” च मनुः । “द्विजस्तृणैधःपुष्पाणि सर्व्वतः स्वादाहरेदिति” याज्ञ॰। “गोऽर्थे तृणमेधांसि वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत फलानि चेति” गौ॰ । २ अपनेतव्ये च ।

**अपहर्त्तृ** त्रि॰ अप+हृ–तृच् स्त्रियां ङीप् । १ अपहारके । “निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दममिति” मनुः । त्वचि तु नलोकेत्यादिना पा॰ षष्ठीनिषेधात् कर्मणि द्वितीया ।

**अपहस्त** पु॰ अपसारणार्थः हस्तः । १ गलहस्ते अपसारणा- योद्यतः हस्तोयस्य । २ गलहस्तेन अपसारिते त्रि॰।

**अपहस्तित** त्रि॰ हस्तेन अपसार्य्यते अप+हस्त+णिच्– कर्म्मणि क्त । १ गलहस्तादिना निरस्ते अपसारिते ।

**अपहार** पु॰ अप+हृ–घञ् । १चौर्य्ये२अपहरणे, ३अपनयने । “कथं नासापहारेण भगिनी मे विरूपितेति” रामा॰ स्वाम्य- नुपकारिधनव्यये “नापहारं स्त्रियः कुर्य्युः पतिरिक्थात् कथञ्चनेति” स्मृतिः । “अपहारश्च धनस्वाम्यनुपयोगे भव- तीति” दायभागः ।४ अपचये, ५ हानौ, ६ सङ्गोपने च ।

**अपहारक** त्रि॰ अप+हृ–ण्वुल् । १ चौर्य्यकर्त्तरि २अपसारण- कर्त्तरि ३सङ्गोपके ४स्थानान्तरापकर्षके च । “जालापहार- कान् पश्चिम” इति हितो॰ । अपहारकभेदाश्च मनुना दर्शिताः “द्विविधांस्तस्करान् विद्यात् परद्रव्यापहारकान् । प्रका- शांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः । प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः । प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविका- दयः । उत्कोचकाश्चौपधिकावञ्चकाः कितवास्तथा । मङ्गला- देशवृत्ताश्च भद्राश्चेक्षणिकैः सह । असम्यक्कारिणश्चैव महा- मात्राश्चिकित्सकाः । शिल्पोपचारयुक्ताश्च निपुणाः पण्य- योषितः । एवमादीन् विजानीयात् प्रकाशांल्लोककण्ट- कान् । “निगूढचारिणश्चान्याननार्य्यानार्य्यलिङ्गिन” इति ।

**अपहारिन्** त्रि० अप+हृ–णिनि स्त्रियां ङीप् । १अपहर्त्तरि २अपनायके च "इन्द्रियाणां विचरतां विषयेष्वपहारिषु" इति मनुः "क्षेत्रदारापहारी च षडेते ह्याततायिन" इति मनुः

**अपहास** पु० अप+हस–घञ् । १ अकारणहासे हेमचन्द्रः ।

**अपह्नव** पु० अप+ह्नु–अप् । १सतोऽपि वस्तुनोऽसत्त्वेन कथनरूपेऽपलापे, । अपह्नवश्च द्विविधः शब्दतः अर्थतोवा "मिथ्यैतदिति शब्दतः, नाभिजानाम्यहं, तत्र तदा न मम स्थितिरित्येवमर्थतोऽपह्नव इति । २ प्रेम्णि च ।

**अपह्नुत** त्रि० अप+ह्नु–क्त । १कृतापहारे वस्तुनि यस्य चौर्य्यं कृतं तस्मिन्, २ स्थानान्तरं नीते, ३ अपसारिते च ।

**अपह्नुति** स्त्री० अप+ह्नु–क्तिन् । १ अपह्नवे "प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिरिति" सा०द० उक्ते २ अर्थालङ्कारभेदे च । सा च द्विधा अपह्नवपूर्व्वकः अध्यारोपः, अध्यारोपपूर्व्वकः अपह्नवश्च यथा "नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः । नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः" ॥ "एतद्विभाति चरमाचलचूडचुम्बि हिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् । उज्ज्वालितस्य रजनीं मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन" ॥ "विराजते व्योमवपुः पयोधिस्तारामयास्तत्र च फेनभङ्गाः" । इत्याद्याकारेण प्रकृतनिषेधो बोद्धव्यः । "गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन । यदि श्लेषेणान्यथा वाऽन्ययेत् साप्यपह्नुतिः" सा०द० तत्र श्लेषेण यथा ॥ "काले वारिधराणामपतितया नैव शक्यते स्थातुम् । उत्कण्ठितासि तरले ! न हि न हि सखि ! पिच्छिलः पन्थाः" ॥ अत्रापतितयेत्यत्र पतिं विनेत्युक्त्वा पतनाभावेनेत्यन्यथाकृतम् । अश्लेषेण यथा । "इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि ! कान्तरतोत्सवं ! न हि घनागमरीतिरुदाहृता" इति ॥

**अपह्नुवान** त्रि० अप+ह्नु–शानच् । १चोरयति २अपनयति ३संगोपयति च "अपह्नुवानस्य जनाय यन्निजामिति" नैष०

**अपह्नूयमान** त्रि० अप+ह्नु–कर्म्मणि शानच् । १ अपनीयमाने २ स्थानान्तरमपसार्य्यमाणे ३ चौर्य्यमाणे च ।

**अपह्रियमाण** त्रि० अप+हृ–कर्म्मणि शानच् । १चौर्य्यमाणे । २ अपाक्रियमाणे च ।

**अपांक्षय** पु० ६त० अलुक् स० । १ नेत्रे । अम्बुजलधरत्वात्तथात्वम् "अपांक्षये चक्षुषि, त्वां सादयामि "चक्षु र्वा अपांक्षय इति" श्रुतिः यजुर्वेददीपः । पदद्वयमित्येके ।

**अपांज्योतिस्** न० ६त० अलुक्स० । १ विद्युत्सुता हि अम्बुलिप्यन्ति "अपांज्योतिषि विद्युति त्वां सादयामि" "विद्युद्वा अपांज्योतिरिति" श्रुतिः वे०दी० पदद्वयमित्येके

**अपांनपात्** पु० न पातयति पत–णिच्–क्विप् न०त० "न भ्राण्नपान्नवेदा०" पा० प्रकृतिभावः अलुक्स० । १ यज्ञदेवताभेदे । "अपोनपात् अपांनपाच्च देवतेति" सि०कौ० । "अपोनपाते अपांनपातेऽनुब्रूहीति" श्रुतिः ।

**अपांनप्त्रि(प्त्री)य** त्रि० अपांनपात् देवताऽस्य घ, छ वा । १ अपांनपाद्देवताके हविरादौ ।

**अपांनाथ** पु० ६त० अलुक् स० । १ समुद्रे ।

**अपांनिधि** पु० निधीयतेऽस्मिन् नि+धा–आधारे कि ६त० अलुक्स० । १ समुद्रे, २ विष्णौ च "अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठित इति" विष्णुसह० । "सरितामस्मि सागर" इति गीतोक्तेस्तस्य तथात्वम् । [ २ वरुणे च ।

**अपांपति** पु० पा–डति ६त० अलुक् स० । १ समुद्रे,

**अपांपाथस्** न० पाथः सारः ६त० अलुक्स० । १ अन्ने तस्य वृष्टिप्रभवत्वात्तथात्वम् "वृष्टेरन्नं ततः प्रजेति" गीतायां तथोक्तेः । "अपांपाथसि अन्ने त्वां सादयामि" "अन्नं वा अपांपाथ" इति श्रुतिः वे०दी० । पदद्वयमित्येके ।

**अपांपित्त** न० ६त० वा अलुक् स० । १ अग्नौ, तस्य जलहेतुत्वात् तत्पित्तत्वम् "आकाशाद्वायुर्वायोरग्निरग्नेराप" इति" श्रुतौ तस्य तथात्वावगतेः । वा लुकि अप्पित्तमप्यत्र ।

**अपांपुरीष** न० पुरीषं मलः ६त० अलुक्स० । १ सिकतासु, तासां जलमलरूपत्वात्तथात्वम् "अपांपुरीषे सिकतासु त्वां सादयामि "सिकता वा अपां पुरीषमिति श्रुतिः" वेददी०

**अपांयोनि** स्त्री० ६त० अलुक्स० । १समुद्रे "अपांयोनौ समुद्रे" इति वेददी० "समुद्रोवै अपांयोनिरिति" शत० ब्रा० पदद्वयमित्येके ।

**अपांशु(सु)ला** स्त्री पांश(स)वोव्यभिचारदोषाः सन्ति यस्याः सिध्मा० लच् पांशु(सु)ला स्वैरिणी न०त० । १ पतिव्रतायां स्त्रियाम् "अपांशु(सु)लानां धुरि कीर्त्तनीयेति" रघुः ।

**अपांसदन** न० अलुक्स० । १ दिवि "दिवि ह्यापः सन्ना इति" शत०ब्रा० । भिन्नं पदमित्येके ।

**अपांसधस्थ** पु० ६त० अलुक्स० । १ अन्तरिक्षे "अपांसधस्थे अन्तरिक्षे" वेददी० "अन्तरिक्षं वा अपांसधस्थमिति" शत०ब्रा० । भिन्नं पदमित्येके ।

**अपांसधिस्** न० ६त० अलुक्स० । १ श्रोत्रे "अपांसधिषि श्रोत्रे" वेददी० । "श्रोत्रं वा अपांसधिरिति" शत०ब्रा० ।

**अपांसमुद्र** पु॰ समुद्रः सदनम् इत॰ अलुक्स॰। १ मनसि "मनो वा अपां समुद्र" इति शत॰ब्रा॰।

**अपाक** पु॰ पच–घञ न॰त॰। १ पाकाभावे, भुक्तान्नादेरग्निमान्द्यादिना २ पाकाभावे च। ३अ॰। तत्साधने ४अजीर्णता-रोगे। ५व॰। पाकरहिते आमे त्रि॰। ४ मूर्खः पाकः ५तद्भिन्ने,प्राज्ञे "एतनापाकाः प्राञ्चो न केचिदापय" इति ऋ॰ १,११०२, अपाकाः! पक्तव्यप्रज्ञाःअपरिपक्वज्ञाना इति भा॰। "अद्रियुतत् स्वपाको विभावाम्ने ऋ॰ ६,११। पाकः पक्तव्यप्रज्ञो मूर्खस्तद्भिन्नश्च इति" भा॰ "आ यस्मिन् ते स्वपाके यजत्रा" ऋ॰ ६,१२,२, "अपाके प्राज्ञे" इति भा॰ "पाकः पक्तव्य" इति निरु॰। पाकश्च द्विविधः लौकिकः अलौकिकश्च तत्र लौकिकः दहनादिसाध्यः अलौकिकस्तु द्विविधः कालकृतपरिणतिभेदः जठराग्निसाध्यश्च तत्र तण्डुलादेः पाकः लौकिकः, आम्रफलादेः कालकृतः, भुक्तान्नादेः जठराग्निकृतः वैद्यकप्रसिद्धः। स च सुश्रुते दर्शितः "विपाकः प्रधानमिति" कस्मात्? सम्यङ्मिथ्याविपाकत्वादिह सर्व्वद्रव्याण्यभ्यवहृतानि सम्यग्मिथ्याविपक्वानि गुणं दोषं वा जनयन्ति। तत्राहुरन्ये प्रतिरसं पाक इति। केचित्त्रिविधमिच्छन्ति मधुरमम्लं कटुकं चेति तत्तु न सम्यगन्नगुणादागमाद्धाम्लो विपाको नास्ति पित्तं हि विदग्धमम्लतामुपैत्यग्नेर्मान्द्यात्। यद्येवं लवणोऽप्यन्यः पाको भविष्यति श्लेष्मा हि विदग्धो लवणतामुपैति मधुरो मधुरस्याम्लोऽम्लस्यैवं सर्व्वेषामिति केचिदाहुर्दृष्टान्तं परिदिशन्ति यथा तावत् क्षीरं स्थालीगतमभिपच्यमानं मधुरमेव स्यात्तथा शालियवमुद्गादयः प्रकीर्णाः स्वभावमुत्तरकालेऽपि न परित्यजन्ति तद्वदिति। केचिद्वदन्त्यबलवन्तोबलवतां वशमायान्तीत्येवमनवस्थितिस्तस्मादसिद्धान्त एषः। आगमे हि द्विविध एव पाकोमधुरः कटुकश्च तयोर्मधुराख्योगुरुः कटुकाख्यो लघुरिति तत्र पृथिव्यप्तेजोवाय्वाकाशानां द्वैविध्यं भवति गुणसाधर्म्याद्गुरुता लघुता च पृथिव्यापश्च गुर्व्यः, शेषाणि लघूनि, तस्माद्द्विविध एव पाक इति। भवन्ति चात्र।

द्रव्येषु पच्यमानेषु येष्वम्बुपृथिवीगुणाः। निर्वर्त्तन्तेऽधिकास्तत्र पाको मधुर उच्यते॥ तेजोऽनिलाकाशगुणाः पच्यमानेषु येषु तु। निर्वर्त्तन्तेऽधिकास्तत्र पाकः कटुक उच्यते॥ पृथक्त्वदर्शिनामेष वादिनां वादसंग्रहः। चतुर्णामपि सामर्थ्यमिच्छन्त्यत्र विपश्चितः॥ तद्द्रव्यमात्मना किञ्चित् किञ्चिद्वीर्य्येण सेवितम्। किञ्चिद्रसविपाकाभ्यां दोषं हन्ति करोति वा॥ पाको नास्ति विना वीर्य्याद्वीर्य्यं नास्ति विना रसात्। रसो नास्ति विना द्रव्याद्द्रव्यं श्रेष्ठमतः स्मृतम्॥ जन्म तु द्रव्यरसयोरन्योऽन्यापेक्षकं स्मृतम्। अन्योऽन्यापेक्षकं जन्म यथा स्याद्देहदेहिनोः॥ वीर्य्यसंज्ञा गुणा येऽष्टौ तेऽपि द्रव्याश्रयाः स्मृताः। रसेषु न वसन्त्येते निर्गुणास्तु गुणाः स्मृताः॥ द्रव्ये द्रव्याणि यस्माद्धि विपच्यन्ते न षड्रसाः। श्रेष्ठं द्रव्यमतो ज्ञेयं शेषा भावास्तदाश्रयाः॥ अमीमांस्यान्यचिन्त्यानि प्रसिद्धानि स्वभावतः। आगमेनोपयोज्यानि भेषजानि विचक्षणैः" इति॥ तदुभयाभावः अपाकः। वैद्यकोक्तापाकलक्षणमुक्तं निदाने "अङ्गमर्द्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वरः॥ अपाकः शून्यताङ्गानामामवातस्य लक्षणमिति"। गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक् प्रदुष्य, वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकमिति" माधवः। पाकः अल्पः ६ तद्भिन्ने त्रि॰। "सेनयाम्नेरपाकचक्षस" इति ऋ॰ ८।७१।७। "अपाकचक्षसः अनल्पचक्षस" इति भा॰। अधिकं पाकशब्दे वक्ष्यते।

**अपाकज** त्रि॰ न पाकाज्जायते जन–ड न॰त॰। १ पाकजभिन्ने "अपाकजानुष्णाशीतः स्पर्शस्तु पवने मत" इति भाषा॰।

**अपाकरण** न॰ अप+आ+कृ–ल्युट्। १ निराकरणे। "तदपाकरणायाचेति" प्रश्न॰उ॰भा॰। "अयालयापाकरणान्नाभ्यपदर्ग इति" गौ॰सू॰ अपसारणे, दूरीकरणे च। "निधाय वत्सापाकरणं पूर्व्ववदिति" का॰ ४१२।२५।

**अपाकरिष्णु** त्रि॰ अप+आ+कृ–वा॰ इष्णुच्। १ दूरीकरणशीले २ अपसारणशीले।

**अपाकर्त्तोस्** अव्य॰ अप+आ+कृ–तुमर्थे तोसुन्। १ अपाकर्त्तव्ये तस्य च भावलक्षणत्वमौपाधिकम्।

**अपाकर्म्मन्** न॰ अप+आ+कृ मनिन् निरासे।

**अपाकशाक** पु॰ न पच्यते शाको यस्य। १ आर्द्रके। तस्य मूलमेव भोजनार्थं पच्यते न शाकः।

**अपाकिन्** त्रि॰ न पाकोऽस्यस्य इनि। १ पाकशून्ये अपाके।

**अपाकृत** त्रि॰ अप+आ+कृ–क्त। १ निवारिते २ दूरीकृते "अपाकृतक्लेदलवामवर्द्धिरिति" रघुः। [२अपसारणे च।

**अपाकृति** स्त्री अप+आ+कृ–भावे क्तिन्। १ दूरीकरणे।

**अपाकृत्य** अव्य॰ अप+आ+कृ–ल्यप्। १ निराकृत्येत्यर्थे "ऋणत्रयमपाकृत्य मनोमोक्षे निवेशयेदिति" मनुः।

**अपाक्रिया** स्त्री अप+आ+कृ–भावे श। १ अपाकरणे २ अपसारणे "ऋणानाम नपाक्रियेति" उपपातकगणनायां स्मृतिः

**अपाक्तात्** अव्य० अपाची अवाची प्रतीची वा वा० तातिल् । १अपाच्याः २प्रतीच्या वा इत्यर्थे "प्राक्तादपाक्तादधरादुदक्तादभि ऋ०७,१०४।१९ । अपाक्तात् प्रतीच्या इति भा०।

**अपाक्ष** न० अपगतमनुगतमक्षमिन्द्रियम् अत्या० स० । १ इन्द्रियसन्निकर्षजे प्रत्यक्षे २ तद्विषये त्रि० त्रिका० ।

**अपाङ्क्तेय** त्रि० सद्भिः सह भोजने पङ्क्तिमर्हति अर्हार्थे ढक् न०त० । १ सद्भिः सह एकपङ्क्तौ भोजनानर्हे स्तेनपतितादौ । अत्र ण्यत् अपाङ्क्त्य इत्यपि । ते च मनौ दर्शिताः यथा "ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः । तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥ जटिलं चानधीयानं दुर्बलं कितवं तथा । याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् ॥ चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा । विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ।
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः । प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा ॥ यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः । ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥ कुशीलवोऽवकीर्णी च वृषलीपतिरेव च । पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥ भृतकाध्यापको यश्च भृतकाध्यापितस्तथा । शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥ अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा । ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥ अगारदाही गरदः कुण्डाशी सोमविक्रयी । समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥ पित्रा विवदमानश्च कितवो मद्यपस्तथा । पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ॥ धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः । मित्रध्रुग्द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च ॥ भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा । उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥ हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति । पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥ स्रोतसां भेदको यश्च तेषां च पोषणे रतः । गृहसंवेशको दूतो वृक्षारोपक एव च ॥ श्वक्रीडी श्येनजीवी च कन्यादूषक एव च । हिंस्रो वृषलवृत्तिश्च गणानां चैव याजकः ॥ आचारहीनः क्लीबश्च नित्यं याचनकस्तथा । कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च ॥ औरभ्रिको माहिषिकः परपूर्वापतिस्तथा । प्रेतनिर्हारकश्चैव वर्जनीयाः प्रयत्नतः ॥ एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान् । द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत् । ब्राह्मणस्त्वनधीयानस्तृणाग्निरिव शाम्यति । तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते ॥ अपाङ्क्तदाने यो दातुर्भवत्यूर्द्धं फलोदयः । दैवे हविषि पित्र्ये वा तत्प्रवक्ष्याम्यशेषतः ॥ अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्रादिभिस्तथा । अपाङ्क्तैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते" इति ॥

**अपाङ्क्त्य** त्रि० न पङ्क्तिमर्हति यत् न०त०। १ अपाङ्क्तेये । "अपाङ्क्त्यदाने यो दातुरिति" मनुः ।

**अपाङ्ग** पु० अपाङ्गति तिर्यक् चलति नेत्रं यत्र अप+अङ्ग घञ् । १नेत्रप्रान्ते, "अजनि पङ्कुरपाङ्गनिजाङ्गणभ्रमिकयेऽपि तदीक्षणखञ्जन" इति नैष० २ तिलके च । अपगतमङ्गं यस्य प्रा० ब० । ३ अङ्गहीने त्रि० स्त्रियां ङीप् ।

**अपाङ्गक** पु० अपकृष्टमङ्गं यस्य वा कप् । (आपाङ्) इति ख्याते अपामार्गे । स्वार्थे कन् १ नेत्रान्ते पु०। २ अपगताङ्गे त्रि०।

**अपाङ्गदर्शन** न० अपाङ्गेन नेत्रान्तेन दर्शनं ३त०। १ कटाक्षे

**अपाङ्गनेत्र** न० अपाङ्गं देशं व्याप्य नेत्रम् । १ दीर्घनेत्रे ।

**अपाच्** त्रि० अपाञ्चति अप+अन्च-क्विप् । १ अपगमनकर्त्तरि २ अप्रकाशार्थे च । स्त्रियां ङीप् । सा च ३ दक्षिणस्यां दिशि, ४ प्रतीच्यामिति वेदभाष्ये माधवः । "प्राक्तादपाक्तादधरादिति ऋ०७,१०४,१९ "अपाक्तात् प्रतीच्या" इति तेन व्याख्यानात् । तत्र पदान्तरेण दक्षिणप्रतीतेरपाक्शब्दस्य प्रतीच्यां लक्षणैव न तत्रशक्तिरिति तु युक्तम् ।

**अपाचीन** त्रि० अपाच्यां दक्षिणस्यां भवः ख । १ दक्षिणदिग्भवे २ अप्रकाशमाने च । "योऽह्यपाचीने तमसि मदन्तीरिति" ऋ० ७,६,४, "अपाचीने अप्रकाशमाने" भा० ।

**अपाच्य** त्रि० अपाच्यां भवः "द्युप्रागित्या०" पा० यत् । १ दक्षिणदिग्भवे पदार्थे "ये के च नीच्यानां राजानो ये अपाच्यानामिति" ऐत०ब्रा० ।

**अपाटव** न० पाटवं पटुता पटु+भावे ष्यञ् नास्ति तद्यत्र । १ रोगे । न०त०।२ पटुताभावे "अपाटवाद्यशौचाद्यैर्यदि विघ्नं प्रजायते" इति स्मृतिः । ६ब०। ३ पटुताशून्ये त्रि०

**अपात्त** त्रि० अप+आ+दा-क्त । १ प्राप्ते । "स होवाच विप्रायते नास्ति हिरण्यस्यापात्तमिति" छ०उ०। "अपात्तं प्राप्तमिति" भा० ।

**अपात्र** न० पात्रं श्राद्धभोजनदानादियोग्यं न०त०। १ विद्यादिहीनेऽनाचारे, २ दानादियोग्यताहीने कुपात्रे, नटादौ च । दानादिपात्रञ्च पात्रशब्दे दर्शयिष्यते । "अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृतमिति" गीता "अपात्रेषु च यद्दत्तं तत् सर्वं विफलं भवेदिति" स्मृतिः "अपात्रं पात्रमित्युक्तं कार्ये वा धर्मसंहिते" इति मिताक्षरायां नारदः ।

**अपात्रीकरण** न॰ अपात्रं श्राद्धभोजनाद्ययोग्यं क्रियतेऽनेन। १ निन्दितप्रतिग्रहादिजनिते "निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्। अपात्रीकरणं ज्ञेयमसत्यस्य च भाषण"मिति मनूक्ते पापभेदे २ तद्धेतुभूते निन्दितधनादानादौ च।

**अपाद्** त्रि॰ नास्ति पादोऽस्य अन्त्यलोपः समा॰। १ पादशून्ये "अपादपाणिर्जवनोग्रहीतेति" श्रुतिः।

**अपादान** न॰ अपगमाय आदीयतेऽवधित्वेन अप+आ+दा–ल्युट्। "ध्रुवमपायेऽपादानमिति" १ व्याकरणपरिभाषितकारकभेदे। यथोक्तं हरिणा "अपाये यदुदासीनं चलं वा यदि वाऽचलम्। ध्रुवमेवातदावेशात्तदपादानमुच्यते" पततोऽश्व एवासौ यस्मादश्वात् पतत्यसौ। तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते। मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक्" इति तच्चापादानं त्रिविधम्। "निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा। अपेक्षितक्रियञ्चेति त्रिधापादानमिष्यते" इति हर्य्युक्तेः। निर्दिष्टः श्रूयमाणो विषयो यस्य तत्, स्वापेक्षितश्रूयमाणक्रियमित्यर्थः यथा वृक्षात् पत्रं पततीत्यादौ, अपादानविषयीभूतं पतनं हि तत्र श्रूयमाणम्। द्वितीयम् उपात्तः स्वहीतः धात्वन्तरार्थघटकीभूत इति यावत् विषयो यस्येति व्युत्पत्त्या स्वविषयक्रियाघटितश्रूयमाणक्रियान्तरमित्यर्थः यथा मेघात् विद्योतते विद्युदित्यादौ निःसरणपूर्वकविद्योतनार्थविद्योततियोगे मेघादेस्तदेकदेशे निःसरणेऽपादानत्वम्। अपेक्षितक्रियं तृतीयं यथा कुतो भवानिति प्रश्नवाक्ये, पाटलिपुत्रादित्युत्तरवाक्ये च कुत इति पाटलिपुत्रादित्यनयोरपेक्षितगत्यादिक्रियापेक्षत्वात् अपेक्षितक्रियापादानत्वम्। "अपादाने पञ्चमीति पा॰।

**अपान** पु॰ अपानयति अपसारयति मूत्रादि अप+आ+नी–ड अपसारयति अधोऽनिति गच्छति वा अप+अन–अच् वा १ मूत्रादेरधो नयनशीले, गुह्यदेशस्थे "अधोनयनमपानस्तु आहारस्य च्युता पुन" रित्युक्तलक्षणे "मूत्रशुक्रवहोवायुरपान इति कीर्त्त्यते" इत्युक्तलक्षणे च वायौ। "प्राणोऽपानव्यानसमान इत्येतत् सर्वं प्राण" इति छ॰ "अपनयनात् मूत्रपुरीषादेरपानोऽधोवृत्तिर्वायुः नाभिस्थान" इति भा॰ "अथ योऽस्य प्रत्यङ् सुषिः सोऽपान" इति छा॰उ॰। "अथ योऽस्य प्रत्यङ् सुषिः पश्चिमदिक्स्थो वायुविशेषः स मूत्रपुरीषाद्यपनयनोऽनितीत्यपान" इति भा॰ "यद्वै प्राणिति स प्राणः यदपानिति सोऽपान इति" छा॰ उ॰। "यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति स प्राणाख्यो वायुर्वायुवृत्तिविशेषः यदपानित्यपश्वसिति ताभ्यामेव मुखनासिकाभ्याम् अन्तराकर्षति वायुः सोऽपानोऽपानाख्या वृत्तिरिति" भा॰। पदार्थादर्शे तु पूर्वोक्तैव निरुक्तिर्दर्शिता यथा अपानयत्यपानोऽयमाहारं च मलादिकम्। "शुक्रं मूत्रं तयोरुत्सर्गमपानस्तेन मारुतः। इन्द्रगोपप्रभाकारः सन्ध्याजलदसन्निभः॥ स च मेढ्रे च पायौ च ऊरुवङ्क्षणजानुषु। जङ्घोदरे कलाप्यासु नाभिमूले च तिष्ठती" ति योगार्णवः। "प्राणापानान्तरे देवी वाग्वै नित्यं प्रतिष्ठतीति" महा॰ भा॰ "प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणा" विति गीता। अप+अन–भावे घञ्। २अपानक्रियायाम् बहिर्गतायाः ३ प्राणवृत्तेरन्तः प्रवेशने पु॰ "प्रजाभ्योऽपानायेति" ता॰ब्रा॰। "अपानः बहिर्गतायाः प्राणवृत्तेरन्तःप्रवेशनमपाननं तेन हि वायुः शरीरे नीयते अपानेन, यतः "प्राणो न पराभवतीति" श्रुत्यन्तरमिति" ता॰भा॰। आधारे घञ् ४ गुह्यस्थाने पु॰।

**अपानन** न॰ अप+अन-भावे ल्युट्। १ अपश्वसने, मुखनासिकाभ्यां बहिर्निःसारितप्राणवायोस्ताभ्यामेव मार्गाभ्यामन्तराकर्षणे २ मूत्रपुरीषादेरधोनयने च अपानशब्दे ता॰ब्रा॰उदा॰

**अपान्तरतमस्** पु॰ अपगतमान्तरं तमो यस्य। १ वेदार्थप्रकाशके देवसुतभेदे। "अपान्तरतमा नाम जातो देवस्य वै सुतः। कृतास्तेन वेदार्थास्तेन सत्त्वेन मोक्षयेति" हरिव॰ २६२अ॰

**अपाप** त्रि॰ नास्ति पापं पापकारणं वा यस्य। १ पापजनकाचारशून्ये" २ निष्पापे च "इयं दाशरथे! सीता सुव्रता ब्रह्मचारिणी। अपापा हि त्वया त्यक्तेति" रामा॰।

**अपामार्ग** पु॰ अपमृज्यते व्याधिरनेन मृज्–करणे घञ् कुत्वं दीर्घः। (आपाङ्) इति १ ख्याते वृक्षे! "अपामार्ग! त्वया वयं सर्वं तदपमृज्महे" अथ॰ ४,१८,७। "अपामार्ग ओषधीनां सर्वासामेक इद्वशीति" अथ॰ ४,१७,८,७।

**अपामार्गक्षारतैल** न॰ "कर्णनादे कर्णक्ष्वेडे कटुतैलेन पूरणम् नादबाधिर्य्ययोः कुर्यात् कर्णशूलोक्तमौषधम् अपामार्गक्षारजलैः कृतकल्केन साधितम् तिलजमपहरति कर्णनादं बाधिर्य्यञ्चापि पूरणत" इति चक्रदत्तोक्ते १ तैलभेदे।

**अपामार्गतैल** न॰ "क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधिः। पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शुभम्। कृमिजे व्योषनक्ताह्वशिग्रुबीजैश्च नावनम्। अजामूत्रयुतं नस्यं कृमिजे कृमिजित् परम्। अपामार्गफलव्योषनिशाक्षारकरामठैः। सविडङ्गं स्रुतं मूत्रे तैलं नस्यं

कृमिं जयेदिति" चक्रदत्तोक्ते ४ कृमिघ्नतैलभेदे ।

**अपाय** पु० अप+इण्-अच् । १ विश्लेषजनकक्रियायाम् "ध्रुवमपायेऽपादानमिति" पा० । "अपाये विश्लेषजनकक्रियायामिति" सि०कौ० । "अपाये यदुदासीनमिति" हरि० । २ नाशे ३ अपगमने च ।

**अपायिन्** त्रि० अप+इण-णिनि । १ अपाययुक्ते २ वियोगिनि ३ नश्वरे च "मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारतेति" गीता । "अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरीति" कु० ।

**अपार** त्रि० नास्ति पारं यस्य । १ पारशून्ये २ दुःखेनोत्तार्य्ये ३ दीर्घमर्य्यादे । "मही़मपारां सदने सदस्तेति" ऋ०२,२०,८ ४ अगाधे "अनरपार ऊर्वे अन्तं दद्दनोः ऋ० २,१,१४ । "अपारे अगाध" इति भा० । ५ दूरपारे "रजसी अपारे ऋ०१,४२,४६ । "इमे चिदिन्द्र ! रोदसी अपारे इति ऋ०२,२०५ । "अपारे दूरपारे" इति भा० । ६ सीमारहिते "मही अपारे रजसी" ऋ० ८,६८,२ । "अपारे सीमारहिते" इति भा० । ७ अधिके "अपारो वो महिमा हद्धशवस" इति ऋ०५,८७,६ । "अपारः अधिक" इति भा० । "अपारे पारमिच्छन्तः संसारार्णवरोधसीति" महाभा० । "तदपारं मसंख्येयं वानराणां महद्बलम्" रामा० । ८ अनुत्तार्य्ये "रावणश्च महाग्राहुरपारः प्रतिभाति मे इति" रामा० । तस्याः पारमपारस्य प्रजान्ति विजर्धेषिय इति" भा०क०प०१८ अ० । ९ नद्यादेरर्वाक्पारे न० । १० पृथिव्यां स्त्री निरु० ।

**अपार्ण** न० अप+अर्द्द-क्त नि०न । १ अभ्यर्णे समीपे निरु० । २ समीपवर्त्तिनि त्रि० ।

**अपार्थ** त्रि० अपगतोऽर्थो यस्य । १ निरर्थके २ व्यर्थे ३ निष्प्रयोजने "सर्व्वमेतदपार्थं ते क्षिप्रं नो संप्रसादयेति" वनप० २१४ अ० । ४ अभिधेयशून्ये, "अपार्थं बहु सद्दोषं भाषते" इति सुश्रुतम् । वा कप् । अपार्थकोऽप्यत्र । अतो यदन्यद्धि कुधर्म्माय तदपार्थकमिति" मनुः । तच्च योग्यतासत्त्वाकाङ्क्षाशून्यं वाक्यं यथोक्तं गौतमेन "पौर्वापर्य्यायोगादप्रतिसम्बद्धार्थमपार्थकमिति" "पौर्वापर्य्यं कार्य्यकारणभावस्तस्याऽयोगादसम्भवात् शाब्दबोधजनकाकाङ्क्षाज्ञानाद्यसम्भवात् अप्रतिबद्धः असम्बद्धोऽर्थः प्रयोजनं शाब्दबोधरूपं यत्र । तथाचाभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकत्वं तत्त्वमिति तदर्थः ।

**अपाल** त्रि० नास्ति पालः पालको यस्य । १ पालकशून्ये पश्वादौ । २ अङ्गुल्यादिव्याप्तसविस्तृतायां स्त्री । "अपालामिन्द्र ! त्रिष्पूत्व्यकृणोरिति" ऋ० ८,९,१७ । अपालामेतन्नामिकामत्रिसुतां ब्रह्मवादिनीमिति" भा० ।

**अपालम्ब** पु० अपकृष्यालम्ब्यते अप+आ-लम्ब घञ् । १ शकटपश्चाद्भागे "ततःपश्चात् परिक्रम्य अपालम्बमभिपद्यास्तेति" शत० ब्रा० ३,३,४,१२, "अपालम्बं शकटस्य पश्चाद्भागमिति" भा० । [पतित्वा लुण्ठने, २ अपाकरणे च ।

**अपावर्त्तन** न० अप+आ+वृत-ल्युट् । १ उद्लुण्ठने भूम्यादौ

**अपावृत** त्रि० अप+आ+वृ-क्त । १ अनावृते २ उद्घाटिते ३ अपसारितावरणे च "यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् । सुखिनः क्षत्रियाः पार्थ ! लभन्ते युद्धमीदृशमिति" गीता । "अहो अपावृतं द्वारमापदामयमेव मे" रामा० ४ आवृते, ५ पिहिते स्वतन्त्रे च इति मेदिनिः ।

**अपावृति** स्त्री अप+आ+वृ-क्तिन् । १ आवरणनिवारणे उद्घाटने २ आवरणापसारणे च । "स ऊ स्वे रेजयत्वपावृतिमिति" ऋ० ।

**अपावृत्त** त्रि० अप+आ+वृत-क्त । १ अन्तरिते २ परावृत्ते, ३ निवृत्ते च "प्रतिपक्षादपावृत्तः सन्तुष्टो येन केनचिदिति" महा०भा० "कथं दृष्ट्वाप्यपावृत्तां परैरिव हृतां चमूमिति" रामा० । [वृत्तौ च ।

**अपावृत्ति** स्त्री अप+आ+वृत-क्तिन् । १ उद्वर्त्तने २ नि-

**अपाश्रय** पु०अप+आ+श्रि-अच् । १ मध्ये "पर्य्यङ्कस्यापाश्रये" इति काद० । २ अङ्गावरणे चन्द्रातपादौ हेम० अपगत आश्रयो यस्य । ३ आश्रयविहीने त्रि० ।

**अपाष्ठ** त्रि० अप+आ+स्था-क अम्बा० षत्वम् । १ अपास्थिते "शल्याद्विषं निरवचं प्राञ्जनादुत पर्णधेः । अपाष्ठाच्छृङ्गादिति" अथ० ४,६,५ ।

**अपासङ्ग** पु० अप+आ+सञ्ज-घञ् कुत्वम् । १ तूणे इषुधौ ।

**अपासन** न० अप+अस-ल्युट् । १ मारणे वधे २ अपक्षेपणे, ३ दूरीकरणे च ।

**अपासित** त्रि० । अप+अस+णिच्-क्त । १ अपसारिते ।

**अपास्तृत** त्रि० अप+आ+स्तृ-क्त । १ दूरीभूते २ पलायिते ।

**अपास्त** त्रि० अप+अस+क्त । १ क्षिप्ते २ निरस्ते ३ दूरीकृते ४ अपसारिते च "समुच्छ्रितविभ्रमा गतिरपास्तसंस्था मतिरिति" माल० "निरस्तगाम्भीर्य्यमपास्तपुष्पकमिति" माघः । [पास्ताभरणानि यौवने" इति कुमा० ।

**अपास्य** अव्य० अप+अस-ल्यप् । १ निरस्येत्यर्थे । "किमित्यअपि अव्य० न पिबति गच्छति । पि-गतौ क्विप् न तुक् ।

अशक्यकरणायोद्यमरूपायां, १ शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिरूपायाञ्च सम्भावनायां, २ सन्देहे, ३ निन्दायां, ४ प्रश्ने, ५ समुच्चये, ६ अल्पपदार्थे, ७ कामचारानुज्ञायाम्, ८ अवधारणे, ९ पुनरर्थे च। क्रियायोगेऽस्य उपसर्गसंज्ञा "अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु इति" पा॰ उक्तार्थेषु कर्म्मप्रवचनीयसंज्ञा तदर्थेषु न तु उपसर्गत्वम् तेन न षत्वादि तत्र "पदार्थे सर्पिषोऽपि स्यात्। अनुपसर्गत्वान्न षः। सम्भावनायां लिङ् तस्या एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तन्दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते सर्पिष इति षष्ठी तु अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसम्बन्धे। इयमेवापिशब्दस्य पदार्थद्योतकता नाम। द्वितीया तु नेह प्रवर्त्तते सर्पिषो बिन्दुना योगो न त्वपिनेत्युक्तत्वात्" सि॰कौ॰ सम्भावने अपि स्तुयाद्विष्णुम् सम्भावनं शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिः। अन्ववसर्गः कामचारानुज्ञा अपि स्तुहि। गर्हायाम् धिग्देवदत्तमपि स्तुयाद्वृषलम्। समुच्चये अपि सिञ्च अपि स्तुहि। गणरत्ने तु "सम्भवगर्हाशीर्ष्वतिभूषासमुच्चयेष्वित्युक्तं तेन तेऽपि अपिशब्दार्थाः तत्र १० सम्भवे योजनमस्ति, गर्हायाम् अपि पापिन्! ११ आशीर्वादे भद्रमपि, १२ स्तुतौ मरणमपि, १३ भूषायाम् अपि नह्यति हारम्, समुच्चये तदपीत्युदाहृतञ्च। समुच्चये "अप्यप्रसिद्धं यशसे हि पुंसामिति" कुमा॰। प्रश्ने "अपि प्रसन्नेन महर्षिणा त्वमिति" रघुः अस्य क्रियायोगभेदे अकारलोपो वा "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो" रित्युक्तेः। अपिधानं पिधानं अपिनद्धः पिनद्ध इति "वितत्य शार्ङ्गं कवचं पिनह्येति" भट्टिः।

**अपिकक्ष** अव्य॰ कक्षे विभक्त्यर्थे अव्ययी॰। १ कक्षप्रदेशे इत्यर्थे "ग्रीवायां बद्धो अपिकक्ष आसनि" ऋ॰ ४,४०,४।

**अपिकक्ष्य** त्रि॰ अपिकक्षं सन्धानम् यत्। १ कक्षप्रदेशेन संधानभूते प्रवर्ग्यविद्याख्ये रहस्ये। "त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम्" ऋ॰ १,११७,२२। "अपिकक्ष्यं छिन्नस्य यज्ञशिरसः कक्षप्रदेशेन संधानभूतं प्रवर्ग्यविद्याख्यं रहस्यमिति" भा॰।

**अपिकर्ण** न॰ अपिगतः कर्णम् अत्या॰स॰। १ समीपे। २ तद्वर्त्तिनि त्रि॰। "तु ते अपिकर्णे आघुणे ऋ॰ ६,४८,१६, "अपिकर्णे कर्णसमीपगते समीपे स्थितः इति भा॰।

**अपिगीर्ण** त्रि॰ अपि+गॄ-क्त। १ कथिते २ वर्णिते ३ स्तुते च।

[१ प्रतिष्याचेत्र।

**अपिगृ(ग्रा)ह्य** त्रि॰ अपि+ग्रह-वेदे-क्यप् लोके यत्।

**अपिच** अव्य॰ द्व॰। १ विशेषार्थे पदद्वयमिति बहवः।

**अपिच्छिल** त्रि॰ न॰त॰। १ पिच्छिलविरोधिनि गाढ़े २ अपङ्किले च। "प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलमिति" निदा॰।

**अपिज** त्रि॰ अपि अप्सु जायते जन-ड अलुक्समा॰ वेदे अप्शब्दस्यैकत्वम्। १ ज्यैष्ठे मासि तस्य जलक्रीडारतिसाधनत्वात्तथात्वम्। "प्रसवाय स्वाहापिजाय स्वाहेति" यजु॰ १८,२८। "अप्सु जायते इत्यपिजः जलक्रीड़ारतत्वाज्ज्यैष्ठ इति" वेददीपः।

**अपित्** स्त्री आप इतोगता यस्याः वेदे न जस्। १ जलरहितायां नद्याम् "अपितः पिन्वतं धियः" ऋ॰ ७,८२,३ "अपितो जलरहिता नदीरिति" भा॰ "अस्य मदे जरितमिन्द्रोऽजिन्वदजुषोऽपिन्वदपित" इति तद्भूता श्रुतिः।

**अपितु** अव्य॰ अपि+तु+द्व॰। १ यद्यर्थे त्रिका॰। २ किन्तु इत्यर्थे भूरिप्रयोगः।

**अपित्व** न॰ अपित्वरतेऽस्मै अपि+त्वर-बा॰ ड। १ भागे भागिनो हि विभक्तधनाद्यादानाय त्वरन्ते इति तस्य तथात्वम्। "तस्यामपित्वमीषा ते" इति शत॰ब्रा॰।

**अपित्विन्** त्रि॰ अपित्वं भागोऽस्यास्ति इनि स्त्रियां ङीप्। १ भागवति सभागे। "तस्मिन् देवता अपित्विन्योमन्यन्त" इति शत॰ब्रा॰।

**अपिधान** न॰ अपि+धा-ल्युट्। १ आच्छादने। करणे ल्युट्। २ तत्साधने त्रि॰। "अमृतापिधानमसि स्वाहेति" भोजनान्त जलपानमन्त्रः "राध्यमानस्यौदनस्य द्यौरपिधानमिति" अथ॰ ११,३,१। साधने आच्छादनत्वोपचारात् सामानाधिकरण्यम्। अपेरतो वा लोपे पिधानमप्यत्र "पृथिवी ते पात्रं द्यौः पिधानमिति" श्राद्धमन्त्रः "तस्य तद्द्वारं यदमावास्या चन्द्रमा एवद्वारपिधानः" शत॰ब्रा॰।

**अपिधि** पु॰ अपिधीयते अग्निपर्य्यन्तं दीयते अपि+धा-कि। १ अग्निपर्यन्तदत्ते। "प्रियाँ अपिधीँ वनिषीष्ट" ऋ॰ १,१२७,७, "अपधीन् अग्निपर्य्यन्तं दत्तानिति" भा॰।

**अपिनद्ध** त्रि॰ अपि+नह-क्त। १ परिहिते, अतोवालोपे पिनद्धञ्च तत्रार्थे।

**अपिप्राण** त्रि॰ अपि+प्र+अन-अच् स्त्रियां गौ॰ ङीष्। १ सर्व्वदा चेष्टमाने "यजत्रा अपिप्राणी च सदनी च भूयाः" इति ऋ॰। १,१८६,११। "अपिप्राणी सर्व्वदा चेष्टयित्रीति" भा॰।

**अपिव्रत** त्रि॰ अपिः संसर्गे संसृष्टं व्रतं, कर्म्म, भोजनं वा यस्य।

१ दायाद्येनाविभक्ते २ संसृष्टधने ३गोत्रजे ४संसृष्टभोजने च । "अपिव्रताद्यान्वारभन्ते यजमानमिति" का० ८,६, २६ । "अपिव्रतास्त उच्यन्ते येषां यजमानव्रते अपित्वमस्ति दायाद्येनाविभक्ता इति" पितृभूतिः "अपिव्रता गोत्रजा इति कर्कभा०" "अपिः संसर्गे संसृष्टं व्रतं कर्म येषामिति अपिव्रता अविभक्ता दायादाः तेष्वेकेनापि कृष्यादि कर्म्म कृतं सर्वे उपजीवन्तीति हरिस्वामी, "व्रतं भोजनं यजमानेन सह प्राप्तभोजनाः बन्धुवर्गाः" इति माधवः ।

**अपिशर्व्वर** त्रि० अपिः प्रादुर्भावे अव्ययी० वा० अच् समा० । १ शर्व्वरीमुखसमये प्रदोषकाले, "समिद्धमपिशर्वरे" इति ऋ० ३,९,७, । "अपिशर्वरे शर्वरीमुखे" इति भा० ।

**अपिशल** पु० अपिशलते अपि+शल–अच् । १ मुनिभेदे तस्यापत्यम् इञ् । आपिशलिः । शाब्दिकभेदे । "इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः । पाणिन्यमरजैनेन्द्राजयन्त्यष्टादिशाब्दिका" क०क० "तुष्यापिशलेः" इति पा० ।

**अपिहित** त्रि० अपि+धा–क्त । १ आवृते "तृच्छ्रेनाभ्वपिहित" इति श्रुतिः । अतोलोपे पिहितोऽप्यत्र "भुजङ्गपिहितद्वारमिति" रघुः ।

**अपीच्य** त्रि० अपिच्यवते सौन्दर्य्याद्धीयते अपि+च्यु–ड अतोलोप उपसर्गदीर्घः न०त० । १ अतिसुन्दरे "अपीच्यदर्शनं सौम्यं सर्वलोकनमस्कृतमिति" ष्टृ० "अपीच्यवेशं द्विभुजं सौम्याकारं सुदर्शनमिति" यमसूर्त्तिलक्षणम्, अपि+अनूच–क्विप् अप्यङ् तत्र साधु यत् अञ्चतेरतोलोपे पूर्व्वदीर्घः । २ अन्तर्हिते । "यदाविर्यदपीच्यं देवासो अस्ति दुष्कृतमिति" ऋ० ८,४७,१३, अपीच्यमन्तर्हितम् भा० ३ गुह्ये "मर्त्तानां मनुष्याणामपीच्यम्" ऋ० ८,१९,६, "अपीच्यं गुह्यमिति" भा० ।

**अपिजू** त्रि० अपि+जव–क्विप्–ऊठ् । १ प्रेरके । "उषसानक्ता जगतामपीजुवा" ऋ० २,३१,५ । "अपिजुवा प्रेरयित्र्यौ" इति वेदे उवङ् भा० ।

**अपीत** त्रि० अपि+इण–क्त । १ विलयप्राप्ते विलीने, "सौम्य ! तदा सम्पन्नोभवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतोभवतीति" शा० भा० धृता श्रुतिः । भावे क्त । १ विलये २ अपगमने न० । पीतवर्णभिन्ने पु० तद्वति त्रि० । पीतं पानकर्म्म २ तद्भिन्ने त्रि० ।

**अपीति** स्त्री अपि+इण–क्तिन् । १ विलये २ अपगमे ३प्रलये च । "अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्" शा०सू० । आधारे क्तिन् । ४ संग्रामे । "पुरा यत् सूरस्तमसो अपीतेस्तमद्रिवः" इति ऋ० १,१२१,१० । "अपीतेः संग्रामादिति" भा० ।

**अपीनस** पु० अपीनाय अपीनत्वाय कीयते कल्पते सो कर्म्मकर्त्तरि क । १ पीनसरोगे तद्विवरणं पीनसशब्दे ।

**अपुंस्** पु० न पुमान् न०त० । १ नपुंसके क्लीबे । "पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्य्यय इति" मनुः ।

**अपुंस्का** स्त्री नास्ति पुमान् यस्याः उरःप्रभृतित्वात् कप् । १पतिशून्यस्त्रियाम् । "नापुंस्कास्मीति मे मतिरिति" भट्टिः ।

**अपुच्छा** स्त्री नास्ति पुच्छमस्यं यस्याः । १ शिखरहीने शिंशपावृक्षे । २पुच्छहीने त्रि० । [२ पुण्यशून्ये त्रि० ।

**अपुण्य** न० न पुण्यं विरोधे न०त० । १ पापे । न०ब० ।

**अपुण्यकृत्** त्रि० पुण्यं न करोति अपुण्यं पापं वा करोति । ताच्छील्ये क्विप् १ पुण्याकर्त्तरि २ पापकारिणि च । "क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रस्तथैव च । यः पिबेत् कपिलाक्षीरं न ततोऽन्योस्त्यपुण्यकृत्" आप० स्मृतिः ।

**अपुत्र** पुंस्त्री नास्ति पुत्रोयस्य । १अजातपुत्रे २मृतपुत्रे च । "अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदेति" स्मृतिः "नापुत्रस्य लोकोऽस्ति" श्रुतिः । "अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थितेति" वृहन्मनुः । "अपुत्रस्यैव या कन्या सैव पिण्डप्रदा भवेदिति" स्मृतिः पुत्रपदञ्च पुत्रपौत्रप्रपौत्रपरमिति दायभागादयः वा कप् । अपुत्रकोऽप्युक्तार्थे ।

**अपुनर्** अव्य० न पुनः न०त० । पुनर्वारभिन्ने सकृदर्थे "अनानुकृत्यमपुनश्चकार" ऋ० १०,६८,१० ।

**अपुनरावृत्ति** स्त्री न पुनः आवृत्तिः संसारगतिर्यतः ५ब० । निर्वाणमुक्तौ "न स पुनरावर्त्तते" इति श्रुतेस्तथात्वम् । ६त० । पुनर्गमनशून्ये त्रि० । अर्थाभावे अव्ययी० । पुनरावृत्त्यभावे अव्य० ।

**अपुनर्भव** पु० न पुनर्भवति संसारं भजतेऽस्मिन् भू–आधारे अप् । १ मोक्षे । करणे अप् न०त० । २ पुनर्भवाभाव हेतौ तत्त्वज्ञाने अभावार्थे न०त० । पुनरुत्पत्त्यभावे पु० ३ प्रशमने निवारणे, "रोगाणामपुनर्भवे । ज्ञानं चतुर्विधं यस्येति" वैद्यकम् । नास्ति पुनर्भवः पुनरुत्पत्तिरस्य ४ पुनर्जन्मशून्ये तत्त्वज्ञानवति कृते ।

**अपुराण** त्रि० विरोधे न०त० । १ पुराणभिन्ने नवीने ।

**अपुष्ट** त्रि० पुष–कर्म्मणि क्त न०त० । १ अकृतपोषणे यस्य पुष्टिर्न कृता तस्मिन् ।

**अपुष्टता** स्त्री अपुष्टस्य भावः तल् । अपुष्टदुष्क्रमग्राम्यव्याहता-

ष्ठीलकरता” इत्यादिना सा०द०उक्ते काव्ये प्रकृतार्थोपोषकाकारित्वरूपे अर्थदोषभेदे। यथा “विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये!”इत्यत्र विततपदो मानत्यागं प्रति न किञ्चिदुपकुरुते इति तस्य तत्पोषानुपकारित्वात्तथात्वम् अपुष्टस्य भावः त्व। अपुष्टत्वमप्यत्र न०। “अपुष्टत्वं मुख्यानुपकारित्वमिति” सा०द०।

**अपुष्प** अव्य० पुष्पस्याभावः अव्ययी०। पुष्पाभावे। “तैरपुष्पात् वनस्पति”रित्यमरः अपुष्पादित्यत्र पञ्चम्या नाभ्भावः।

**अपुष्पफलद** पु० अपुष्पं पुष्पाभावेऽपि फलं ददाति दा—क। १ पुष्पं विना फलदे पनसे तथाभूते उदुम्बरादौ च। उपचारात् २ अहेतुकफलदातरि कर्त्तरि त्रि०।

**अपूजा** स्त्री अभावादौ न०त०। १ पूजाभावे २ आदराभावे ३ सम्मानाभावे ४ कुत्सितपूजायाम् ५ अविधानेनार्चने च।

**अपूजित** त्रि०न०त०। १ पूजितभिन्ने २ अनादृते ३ अवज्ञाते च

**अपूत** त्रि० न०त०। १ पवित्रभिन्ने २ अशुचौ “अपूतो वा एषोऽमेध्यो यदनृतः” इति शत०ब्रा० “यथापूत इव मन्येत” काव्या० २२,४,२८। ३ संस्कारहीने व्रात्ये च “एतैरपूतैर्विधिवदापद्यपि च कर्हिचिदिति” मनुः।

**अपूप** पु०न पूयते विशीर्य्यति पू—प न०त०। १ गोधूमादिचूर्णपिष्टके पुरोडाशे हविर्भेदे “अपूपं देव घृतवन्तमग्ने” ऋ० १०,४५,८। ‘अपूपं पुरोडाशमिति’ भा०। “हवाःशष्कुलसंयावं पायसापूपमेव चेति” मनुः। प्राचुर्य्ये मयट्। अपूपमयं पर्व्व अपूपमयो यज्ञः। अपूपाय हितम् “विभाषा हविरपूपादिभ्यः” पा०यत्। अपूप्यम् “छ च” पा० अपूपीयंच पिष्टकहिते गोधूमचूर्णादौ। तत् पण्यमस्य ठक्। आपूपिकः। अपूपविक्रेतरि त्रि०।

**अपूपादि** पु० ह्व०। पाणिन्युक्ते हितार्थे यतोः प्रकृतिभूते शब्दसमूहे। स च गणः “अपूप तण्डुल, अभ्यूष, अभ्योष, अवोष, अभ्येष, पृथुक, ओदन, सूप, पूप, किण्व, प्रदीप, मुसल, कटक, कर्णवेष्टक।

**अपूपाष्टका** स्त्री अपूपसाधनाष्टका। पौष्या ऊर्द्धं १ कृष्णाष्टम्यां २ तत्र विहिते श्राद्धे च।

**अपूरणी** स्त्री न पूर्य्यते सर्व्वतः कण्टकाकीर्णतया दुरारोहत्वात् पूर—कर्म्मणि ल्युट् ङीप् न०त०। शाल्मलिवृक्षे। करणे ल्युट्। संख्यापूरणसाधनार्थकप्रत्ययभिन्ने च।

**अपूर्ण** त्रि० न पूर्णम्। ऊने। “अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामिति” रघुः। भावे क्त। पूरणाभावे “सार-तण्डुलमपूर्णं अर्पयित्वेति” का० ४।१।५,७, अपूर्णं यथा स्यात्तेन चरुणा स्थाल्याः पूरणं न भवतीति तथा अर्पयित्वेति” तद्भा०। [पूरणं कुर्वं तत्कालाप्राप्ते।

**अपूर्णकाल** त्रि० न पूर्णः कालोयस्य। यस्य यत्काले

**अपूर्व्व** त्रि० न पूर्व्वं दृष्टम्। १ अविदिते २ आश्चर्य्ये “अधतुषि शरजालं मर्म्मभेदानुकारि त्रितयमिदमपूर्व्वं दृष्टमन्तःपुरे ते” इति “अपूर्व्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले। दूरतोदहतीवाङ्गं हृदि लग्नस्तु शीतलः” इति च उद्भटः। पूर्व्वः पूर्व्ववर्त्ती न०ब०। ३ हेतुशून्ये त्रि०। न०त०। ४ पूर्व्वकालादिभिन्ने त्रि०। पूर्व्वशब्दस्य दिग्देशकालशब्दत्वे सर्व्वनामतया ततो नञ्तत्पुरुषेऽपि अस्य सर्व्वनामता तेन तत्कार्य्यम् अपूर्व्वे अपूर्व्वस्मै ङिङसोस्तु वा स्त्रीं पुंवद्भावश्च “कौमारापूर्व्ववचने” इति पा०५ परमब्रह्मणि पु०। “तदेतद् ब्रह्मापूर्व्वमनपरमनन्तरमपारमबाह्यमिति” शत०ब्रा०। ६प्रमाणान्तराप्राप्ते “उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलमिति” वेदा० सा० ७धर्मनिषिद्धक्रियाजन्ययोः कालान्तरभाविनोः सुखदुःखयोर्हेतुभूतयोः पुण्यपापयोः न०। आद्दृष्टसिद्धिवत् अपूर्व्वसिद्धिरन्वेया। सा च ११७ पृष्ठे दृश्या। स्वर्गकामोयजेतत्यादौ लिङा हि यागादौ इष्टसाधनत्वं बोध्यते इति नैयायिकाः कार्य्यत्वेनापूर्व्वं बोध्यते इति प्राभाकरामन्यन्ते। तत्रोभयमतेऽपि, आशुविनाशिनः कालान्तरभाविफलजनकत्वे फलसमयपर्य्यन्तस्थायिव्यापारजनकत्वं प्रयोजकमिति तथा हि अव्यवहितपूर्व्वस्थायिन एव कारणत्वेन यागस्य कालान्तरभाविस्वर्गस्य च मध्ये व्यापाररूपमपूर्व्वं प्रकल्प्यते साक्षादसाधनस्य यागस्य स्वर्गसाधनता व्यापारमन्तरेणानुपद्यमाना स्वर्गनिर्वाहकं व्यापारमपूर्व्वं कल्पयतीति। तत्रापूर्व्वं किंनिष्ठं कथं वा तस्यैव व्यापारत्वमित्याशङ्क्य शब्दचिन्तामणौ निर्णीतं यथा “तथापि ध्वंस एव व्यापारोऽस्तु तस्य सहभावनिरूपकत्वादपि कारणत्वात् तस्यानन्तत्वेऽपि स्वभावात् सावधेः फलजनकत्वम्। यत्र ध्वंसोहेतुस्तत्र तत्प्रागभावोऽपीति चेत् न दुग्धध्वंसजन्यदधि, मिथ्याधीध्वंससाध्यतत्त्वधी च व्यभिचारात्। प्रतिबन्धकाभावत्वेन हेतुत्वे, तथाभावाच्च ध्वंसेनानुपपत्तिः कथं तेनैव समाधातव्येति चेन्न ध्वंसे सति तद्व्यापारत्वज्ञानं विनानुपपत्तेस्तद्व्यापारत्वकल्पनया शान्तेरिति नैवं प्रतियोगिध्वंसयोरेकत्राजनकत्वात् न हि नियमतोध्वंसे सति यद्भवति तत्र कारणम् न च संसर्गाभावत्वेन हेतुत्वे तथेति वाच्यं व्यभिचाराभावेन तस्यापि प्रयोजकत्वात्।

अथ यद्वादृयागकारणता, व्यापारं विना तदनुपपत्तेः न च तज्जन्यध्वंसस्य कारणत्वकल्पनमित्युभयमपि जनकम् अन्यत्र तु मानाभावाच्च तथेति वाच्यं यागध्वंसस्य यागजन्यस्वर्गं प्रति जनकत्वस्य प्रमाणान्तरविरोधेनार्थापत्त्यकल्पनात्। अस्तु देवताप्रीतिरेव व्यापार इति चेन्न यागस्य देवताप्रीतिहेतुत्वे मानाभावात् गङ्गास्नानादौ देवताविरहेण तदभावात्। न च तत्रापि तत्प्रीतिः, तस्य तत्प्रीतिहेतुत्वे मानाभावात् लाघवेन कर्तृगतव्यापारकल्पनाच्च नतु नायं नियमः, पुत्रगतश्राद्धादिना पितरि, पितृगतजातेष्ट्या पुत्रे चाऽदृष्टोत्पत्तेश्च अथ तत्रापि कर्तर्य्येवाऽदृष्टं, विहितक्रियाया यागस्येव कर्तृगतादृष्टजनकत्वात्। न च मुक्ते पुत्रे तददृष्टनाशात् पितरि स्वर्गः स्यादिति वाच्यम् अदृष्टस्य फलनाश्यतया पितरि स्वर्गाभावेनाऽदृष्टनाशात् स्वर्गकामयागजन्याऽदृष्टस्य मुक्तिविरोधित्वात् न तु पितृगतमदृष्टं जन्यते मुक्ते पितरि दोषाभावेन योगिनामिव विहितक्रियायाः, पित्रदृष्टजनकत्वात् तथात्वे च साङ्गमपि श्राद्धादिकं निःफलं स्यादिति तद्विधेरप्रामाण्यापत्तिः पुत्रगताऽदृष्टेन च मुक्तपितरि सुखोत्पत्तौ न विरोधः योगिनामिव सुखोत्पत्तौ दोषस्याहेतुत्वात् अथ पितृसुखं पितृपुण्यजन्यमिति पितरि न पुण्यं तेन विना तदभावात्, न, पुत्रे तत्फलप्रसङ्गात्। पितृस्वर्गकामनाजन्यक्रिया पितृपुण्यहेतुरिति पुत्रक्रियापि तज्जनिकेति चेत् एवं पितृक्रियापितृपुण्यजनिकेति न तं विना पितरि पुण्यं, पुत्रक्रिया च पुत्रपुण्यजनिकेति पुत्रे पुण्यं, पितृस्वर्गकामनाजन्यपुण्यत्वेन पितृस्वर्गहेतुरस्तु तत्पुण्यं पितृवृत्ति तत्सुखहेतुत्वात् न च पुत्रवृत्ति, तत्सुखाहेतुत्वादिति न, तत्पुण्यं न पितृवृत्ति तत्कृत्यजन्यपुण्यत्वात् पुत्रवृत्ति वा तत्कृतिजन्यपुण्यत्वात् तत्कृतपुण्यवत् तस्मात् पितृस्वर्गकामनाजन्यपुण्यत्वेन पितृस्वर्गहेतुतेति पुत्रएव तत्पुण्यमिति, मैवं स्वर्गोपपादकं हि पूर्वं स्वर्गाश्रये कल्प्यते प्रथमोपस्थितित्वेन लाघवात् कल्पनायाः साक्षादुपपादकविषयत्वाच्च। न च स्वर्गहेतुकामनाश्रये, स्वर्गकामनाजन्यक्रियाकर्तरि वा, विलम्बोपस्थितिकत्वात् गौरवात् परम्परया स्वर्गोपपादकत्वाच्च यदि च पुत्रकृतपुण्येन मुक्तस्य शरीराद्युत्पत्तिः सुखं वा स्यात्, तदा मार्त्तिविद्याऽसत्याभिधानादि पुत्रक्रियाजन्यपापेन "स विद्यायां कर्मभूत्वा पितृभिः सह पच्येत" इत्यादिबोधितं नरकभागित्वादि मुक्तस्य पितुः स्यात् तथा च पुत्रकृततथाविधशङ्कया न कश्चिन्मोक्षार्थी ब्रह्मचर्यादिदुःखेनात्मानमवसादयेत् "दुःखेनात्यन्तविमुक्तश्चरतीति" "न स पुनरावर्त्तत" इति श्रुतिविरोधश्च तथा च मुक्तस्य सुखदुःखशरीरादिकञ्च भवतीत्यदर्शनम्। मुक्ते च पितरि श्राद्धादिना दोषाभावादेव नाऽदृष्टमुत्पद्यते न चैवं साङ्गश्राद्धस्यापि निष्फलत्वम् अदृष्टोत्पत्तौ स्वरूपसतो दोषस्याङ्गस्य वैगुण्यात्, यथा विघ्नहेतुदुरितशून्येन कृतं मङ्गलं न पापध्वंसं जनयति स्वरूपसतः पापस्याङ्गस्याभावादिति एवञ्च यागस्यापि व्यधिकरणव्यापारोभविष्यतीति। उच्यते विहितक्रियया कर्तृगतव्यापारद्वारा कालान्तरे फलं जन्यत इत्युत्सर्गः स च बलवता बाधकेनापोद्यते प्रकृते च बाधकं नास्ति यथा शास्त्रदेशितं फलमनुपातरीत्युत्सर्गः सुतकृतगयाश्राद्धस्य पितृस्वर्गं प्रति, पितृकृतजातेष्टेः पुत्रपूतत्वादिकं प्रति हेतुत्वस्य शास्त्रेण बोधनात् नन्वयं नियमएव पितृयज्ञजातेष्ट्यादौ परम्परासम्बन्धेन कर्तृगतमेव फलं, न हि यस्य कस्यापि पितरि पुत्रे वा फलं किन्तु स्वपितृपुत्रयोः तथा च स्वपितृगतत्वं स्वर्गभागिपितृकत्वं परम्परासम्बन्धः फलेन पुत्रस्य, एवं पूतत्वादिकं पितृगतमेव। न च फलस्य कर्तृगतत्वं साक्षात्सम्बन्धेनैवेति वाच्यं श्यामपशुभूमिहिरण्यादीनां परम्परया कर्तृगतत्वमिति व्यभिचारात् न हि श्यामादयः कर्त्तरि साक्षात्संबद्धाः। एवं फलस्य साक्षात्कर्तृगामित्वबोधने शास्त्रस्योत्सर्गो न तु फलस्य कर्तृगामितावोधने यत्तु स्वर्गभागिपितृकत्वं न फलं तत्कामनाया अधिकारिविशेषणत्वाभावात् 'पितृस्वर्गकाम' इत्यादि श्रुतेः स्वतश्च तथा कामनया प्रवृत्तौ फलकामनाविरहेण प्रयोगेऽङ्गवैगुण्यात् फलाभावप्रसङ्गः। किञ्च स्वर्गभागिपितृकत्वं विशिष्टं तत्र विशेष्यं तत्पितृकत्वं न काम्यम् न वा फलं, सिद्धत्वात् तदसाध्यत्वाच्च, किन्तु विशेषणं पितृगतः स्वर्ग इति सएव फलमिति" तन्न न हि स्वर्गभागिपितृकत्वं फलम् अपि तु स्वर्गेण समं पुत्रस्य परम्परासम्बन्धरूपं तदुक्तमिति। उच्यते परम्परासम्बन्धेन यदि पुत्रगतत्वं पितृस्वर्गस्य, तदा संयुक्तसमवायेन तत्पुत्रधनस्यापि फलत्वं स्यात्। सम्बन्धः शास्त्रेण बोध्यत इति चेत् तदा स्वर्गभागिपितृकत्वमपि न तथा, शास्त्रेण बोधितत्वाभावात् श्यामादिपशुहिरण्यादीनाञ्च सिद्धत्वेन न काम्यत्वं किन्तु तद्विषयकं स्वत्वं काम्यं फलमपि काम्यं तदेव, तच्च साक्षात्कर्तृगतमिति कर्तृगतत्वेन फलस्य साक्षात्सम्बन्धोऽपि नियत एव तत्स्वत्वेन फले कामनात्। तस्मात् यथागममेव शास्त्रदेशितं फलम्

अतएव कामनाविषयः स्वगत एव स्वर्गः फलं यागादेः, स्वर्गपतत्वादेव पितृपुत्रगतत्वेन काम्यत्वमिति श्राद्धजातेष्ट्यादेः पितृपुत्रगतमेव फलम् एवञ्च मातापित्रादिगतस्वर्गकामनया पुत्रादिना कृतं पुष्करिणीमहादानादिकं पित्रादिस्वर्गजनकमेव कामनाविषयस्वर्गसाधनत्वेन तेषां श्रुतत्वात् न हि स्वगतस्वर्गकामस्य कर्त्तव्यतां पुष्करिण्यादेर्विधिर्बोधयति किन्तु स्वर्गकामस्य स्वर्गः स्वगतः परगतो वेति स्वर्गकामत्वमविशिष्टम् । यजेतेत्यात्मनेपदमपि कर्त्रभिप्रेतक्रियाफलमात्रजनकत्वे । न च स्वर्गकामोयजेतेत्यादौ स्वगतस्वर्गकामनाया अन्तरङ्गत्वादौत्सर्गिकत्वाच्च स्वर्गकामत्वेन स्वगतस्वर्गकाम एवोच्यते । सामान्ये बाधकं विना विशेषपरत्वे मानाभावात् । केचित्तु सम्यगदृष्टस्याश्रमपरिपालनस्य ब्रह्मलोकावाप्तिः फलं श्रूयते इति जातेष्टिपितृयज्ञयोरपि स्वष्टस्वकर्म्मत्वेन तदेव फलमिति फलस्य कर्त्तृगामित्वे नियमएव प्रातिस्विकफलाभिप्रायेणोत्सर्गः इत्याहुः नतु यावन्नित्यपरिपालनस्य तत् फलं न तु काम्यश्राद्धादेः काम्यान्तर्भावे मानाभावात् यावत्काम्यानुष्ठानाशक्तेः, यावच्छक्यानुष्ठानस्यापि नान्तर्भावः कामनाविरहादिनाप्यकरणात् यावन्नित्यानुष्ठाने तत्फलाभावप्रसङ्गान्नित्यस्यैवावश्यकत्वेनोपस्थितत्वाच्च । अपि च तैः कर्म्मभिः प्रत्येकमुत्पन्नपूर्व्वं तैव परमापूर्व्वं जन्यत इति" न गौरवान्मानाभावाच्च किन्त्वन्तिमक्रियया परिपालनरूपक्रियान्तरेण वेति न सर्व्वं कर्म्म ब्रह्मलोकावाप्तिफलकमिति" मैवं भगवदुद्देशेन कृतस्य नित्यस्य यस्य कस्यापि पालनात् ब्रह्मलोकप्राप्तिः फलं श्रूयत इति जातेष्टिपितृयज्ञयोरपि तथा कृतयोस्तदेव फलं तथा च श्रीभगवद्गीता "यज्ञायाचरतः कर्म्म कर्म्मण्यभिनिलीयते यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धन" इति तत्र कर्म्म यज्ञार्थतया प्रत्येकमेव तत्फलसमर्थं फलसम्बन्धे, संवलनन्तु सङ्कलवदुपयुज्यते अन्यथैकप्रयोगस्य व्यवधानादसम्भवः । परिपालनन्तु कर्त्तव्यमित्येव करणं तदुक्तं "ददामि देयमित्येव यजे यष्टव्यमित्यहमिति" यत्तु निषिद्धासम्बन्धएव सम्यक्त्वम् न तु विहितमात्रानुष्ठानमिति, तन्न यत्किञ्चिन्निषिद्धासम्बन्धस्याभावात्, सर्वनिषिद्धासम्बन्धस्य सर्वत्र सुलभत्वादिति सम्प्रदायः । अत्र ब्रूमः भगवदुद्देशेन कृतं किञ्चिदेव कर्म्म, सर्वं वा, काम्यं वा सर्वं, नित्यं वा सर्वमिति नाद्यः एकेनैव काम्येन नित्येन वा स्नानेन तथा कृतेन तत्फलसिद्धौ वह्निविद्यादिसाध्ये श्राद्धादावप्रवृत्त्यापत्तेः नापरौ अशक्यत्वात् न तुर्य्यः जातेष्ट्यादेर्नित्यत्वाभावात् तस्मात् सम्यगदृष्टस्याश्रमपालनस्य न तत्फलं सम्यक्त्वञ्च सामस्त्यमेव अतो न श्राद्धादेः ब्रह्मलोकावाप्तिरिति साधूक्तं शास्त्रदेर्शितं फलमनुष्ठातरीत्युत्सर्ग इति तच्च फलं क्वचिद्विधिवाक्यश्रुतं क्वचिच्चार्थवादिकमिति" । इदन्त्ववधेयं कर्म्मध्वंसेनापूर्वप्रत्याख्याने "ज्ञानाग्निः सर्वकर्म्माणीत्यादि शास्त्रबोधितस्य तत्त्वज्ञाननाश्यत्वस्य बाधः ध्वंसस्य नाश्यत्वाभावात् न्यायमते तु कर्मपदेन तज्जन्यापूर्व्वलक्षणया तेषां क्षयसम्भव इति । अस्य च कार्य्यमात्रं प्रति कारणतेति नैयायिकादयः । कर्म्मण एव फलमिति मीमांसकाः । ईश्वराधिष्ठितादेव सूक्ष्मावस्थापन्नात् कर्म्मणः फलमिति वेदान्तिनः तथा हि "फलमत उपपत्तेरिति" शा० सू० भाष्ये "अथोच्येत कर्म्मकार्य्यादपूर्व्वात् फलमुत्पत्स्यते" इत्याशङ्क्य । तदपि नोपपद्यते अपूर्व्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनाप्रवर्त्तितस्य प्रवृत्त्यनुपपत्तेः तदस्तित्वे च प्रमाणाभावात् अर्थापत्तिः प्रमाणमिति चेन्न ईश्वरसिद्धेरर्थापत्तिपरिक्षयादिति" अपूर्व्वं निराकृत्य । "धर्म्मं जैमिनिरतएवेति" शा० सू० । जैमिनिमतं धर्म्मस्यैव फलहेतुत्वं पूर्व्वपक्षीकृत्य । "पूर्व्वन्तु वादरायणो हेतुव्यपदेशादिति" शा० सू० निराकृतम् । व्याख्यातञ्चैतत् भाष्यकृता शङ्कराचार्य्येण । नन्वनुक्षणविनाशिनः कर्म्मणः फलं नोपपद्यते इति परित्यक्तोऽयं पक्षः नैष दोषः श्रुतिप्रामाण्यात् श्रुतिश्चेत् प्रमाणं यथायं कर्म्मफलसम्बन्धः श्रुत एव उपपद्यते तथा कल्पयितव्यः न चानुत्पाद्य किमप्यपूर्व्वं कर्म्म विनश्यत् कालान्तरितं फलं दातुं शक्नोतीति अतः कर्म्मणो वा काचिदुत्तरावस्था फलस्य वा पूर्व्वावस्थाऽपूर्व्वं नामास्तीति च तर्क्यते । उपपद्यते चायमर्थ उक्तेन प्रकारेण ईश्वरस्तु फलं ददातीत्यनुपपन्नम् । अविचित्रस्य कारणस्य विचित्रकार्य्यानुपपत्तेः वैषम्यनैर्घृण्यप्रसङ्गादनुष्ठानवैयर्थ्यापत्तेश्च तथा च धर्म्मत एव फलमिति "पूर्व्वपक्षः" वादरायणस्तु आचार्य्यः पूर्व्वोक्तमेवेश्वरं फलहेतुं मन्यते केवलात् कर्म्मणोऽपूर्व्वाद्वा केवलात् फलमित्ययं पक्षः तुशब्देन व्यावर्त्त्यते कर्म्मापेक्षाद्वाऽपूर्व्वापेक्षाद्वा यथा तथा वा ईश्वरात् फलमिति सिद्धान्तः "हेतुव्यपदेशात्" धर्म्माधर्म्मयोरपि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते फलदातृतया च । "एष ह्येव साधु कर्म्म कारयति तं यमेभ्य उन्निनीषते एष उ एवासाधु कर्म्म कारयति तं यमधोनिनीषते" इति श्रूयते स्मर्य्यते चायमर्थो गीतासु । "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्य

साधनमीहते । लभते च ततः कामान् मयैव विहि-तान् हि तान् इति" । विचित्रकार्य्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते" इति । एतेन "नमस्तत् कर्म्मभ्यो विधिरपि न येभ्यः प्रभवतीत्युक्तिस्तु प्रामादिकीत्यवसेयम् एवञ्च ईश्वराधिष्ठितकर्मभ्य एव तत्तत्-फलोत्पत्तिरिति सुस्थम् । कर्म्मणामाशुविनाशिनामपि सूक्ष्म-रूपेणैव स्वकारणेऽन्तःकरणे सत्त्वात् "क्षीयन्ते चास्य कर्म्माणि" इत्यादिश्रुतिः सङ्गच्छते तज्जन्यापूर्व्वस्वीकारे तु तत्र तज्जन्य-स्य क्षयेति भेदः । अतएव "ज्ञानाग्निः सर्वकर्म्माणीत्यादौ सू-क्ष्मावस्थानां ज्ञानादेव क्षयः, स्थूलावस्थापन्नानान्तु भोग-नाशात्" इति वेदान्तिमते युक्तिरूहनीया । "आत्मान्तरगुणा-नामात्मान्तरेऽकारणत्वादिति" वै॰ सू॰ "आत्मान्तरस्य गुणानां पुण्यपापानामात्मान्तरेऽकारणत्वात् स्वर्गफलस्येति शेषः । "शास्त्रदेशितं फलमनुष्ठातरीति" जै॰ सू॰ । "आत्मान्तरे यौ सुखदुःखगुणौ तयोरकारणत्वात् समवायिनिष्ठाभ्यामेव धर्म्माधर्म्माभ्यां सुखदुःखे, न व्यधिकरणाभ्याम् । अन्यथा येन यागहिंसादिकं न कृतं तस्य तत्फलं स्यादिति कृत-हानिरकृताभ्यागमश्च प्रसज्येतेति" एतच्च सामान्यशास्त्रं विशे-षशास्त्रेणापोद्यते तेन पित्र्य श्राद्धेः पुत्रपूतत्वादिहेतुत्वमिति" वै॰ सू॰ उपस्कारः । तच्चापूर्व्वं त्रिविधं प्रधानापूर्व्व-मङ्गापूर्वं कलिकापूर्वञ्चेति मीमांसकाः । तत्र दर्शपौर्ण-मासाद्यपूर्वं प्रधानापूर्वं तदेव परमापूर्वं, प्रयाजाद्यङ्गजन्या-पूर्वमङ्गापूर्वं, तदवान्तरक्रियाकूटजन्यमपूर्वं कलिकापूर्वं तच्च व्रीहिप्रोक्षणाभ्युक्षणादिजन्यं द्रव्यनिष्ठमिति मीमांसकाः तज्जन्यसंस्कारविशेष एव कलिकापूर्व्वतया व्यवह्रियते स चात्मनिष्ठ इति नैयायिकाः विस्तरस्तु कुसुमाञ्जलौ १ स्तबके दृश्यः । कलिकापूर्वञ्च परमापूर्वं जनयित्वा नश्यति । अङ्गापूर्वैस्तु परमापूर्वे विशेष आधीयते इति भेदः तथा च अङ्गापूर्वसहितं परमापूर्वं विशिष्टफलं जन-यति तद्विहीनन्तु स्वल्पं फलम् । अत एव प्रधानकरणे दैवात् यत्काङ्गाकरणे न प्रधानस्य वैफल्यं किन्तु स्वल्प-फलत्वमेवेति सिद्धान्तः । केवलाङ्गापूर्वाणां तु न फल-जनकत्वम् प्रधानासिद्धेः फलाभावात् । अतएव "प्रधानस्या क्रिया यत्र साङ्गं तत् क्रियते पुनः । अप्रधानाक्रियायान्तु नावृत्तिर्न च तत्क्रियेति" छन्दोगपरिशिष्टे तथा व्यव-स्थापितम् । इदञ्च परमापूर्वं फलनाश्यं तत्त्वज्ञाननाश्यं कर्मनाशाजलस्पर्शादिनाश्यञ्च । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभ-मिति" "कर्मणाञ्चैव सर्वेषां भोगादेव क्षयो भवेदिति" च शास्त्रात् "ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते-ऽर्जुनेति" गीतावाक्याच्च । सर्वकर्मपदेन च प्रारब्धकर्म्मा-तिरिक्तकर्म्माण्येवोच्यन्ते तेन प्रारब्धकर्मणां भोगा-देव क्षय इत्यनुपदं वक्ष्यते । परमापूर्वञ्च नित्यकर्मणि प्रत्यवायापूर्वत्वेन मीमांसकैः व्यवह्रियते सन्ध्यावन्दनस्य किञ्चित्फलाजनकत्वात् । अर्थवादोपस्थापितब्रह्मलोकादि-प्राप्तिरूपफलजननात् न तत्रापूर्वस्य फलाजनकत्वेन प्रत्यवायत्वमिति नैयायिकाः । अत एव चिन्तामणौ यत्रार्थ-वादिकं फलं न श्रूयते तत्र तत्त्वज्ञानसाधनत्वं गीतादिवाक्येन व्यवस्थापितं तच्च पूर्वं दर्शितम् । "न कलञ्जं भक्षयेदित्यादि निषेधस्यापि प्रत्यवायापूर्वजनकत्वमिति मीमां-सकाः । तत्रापि प्रत्यवायाभावरूपफलाङ्गीकाराच्च प्रत्यवायत्व-मिति तत्त्वज्ञानप्रतिबन्धकाभावत्वेन तस्यापीष्टत्वादिति नैयायिकाः । अपूर्वस्यापूर्वशब्दवाच्यत्वं हेतुर्जैमिनिना दर्शितः । "प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" सूत्रेण व्याख्यातञ्चैतत् अदृष्टशब्दे ११६ पृष्ठे ततश्च पूर्वमविद्यमानत्वात् अपूर्वशब्दवाच्यतेति । वेदान्तिनस्तु कर्मणः सूक्ष्मावस्था, फलस्य पूर्वावस्था वाऽपूर्वमिति स्वीचक्रुः तच्चानुपदं दर्शितम् । तत्त्वज्ञानेन कर्मक्षये कश्चिद्विशेषोऽभि-धीयते । "तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्य-पदेशात्" शा॰ सू॰ भाष्ये "अथेदानीं ब्रह्मविद्या-फलं प्रति चिन्ता प्रजायते ब्रह्माधिगमे सति तद्विपरीत-फलं दुरितं क्षीयते न वा क्षीयत इति संशयः किन्तावत् प्राप्तं फलहेतुत्वात् कर्मणः फलमदत्त्वा न सम्भाव्यते क्षयः । फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता यदि तदन्तरेणैव फलोपभोगमपक्षीयेत, श्रुतिः कदर्थिता स्यात् । स्मरन्ति च "नहि कर्म क्षीयत" इति । नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति । नैष दोषः प्राय-श्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत् । अपि च प्राय-श्चित्तानां दोषसंयोगेन विधानात् भवेदपि दोषक्षपणार्थता नत्वेवं ब्रह्मविद्यायाविधानमस्ति । नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये, तत्फलस्यावश्यभोक्तव्यत्वादनिर्म्मोक्षः स्यात् । नेत्युच्यते । देशकालनिमित्तापेक्षो मोक्षः कर्मफल-वद्भविष्यति । तस्माद्ब्रह्मविद्याधिगमे दुरितनिवृत्तिरित्येवं प्राप्ते ब्रूमः । तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्व्वाघयोर-श्लेषविनाशौ भवतः उत्तरस्याश्लेषः पूर्वस्य विनाशः । कस्मात् ? तद्व्यपदेशात् । तथा हि ब्रह्मविद्याप्रक्रियायां

सम्भाव्यमानसम्बन्धस्यागामिनो दुरितस्यानभिसम्बन्धं विदुषो व्यपदिशति श्रुतौ "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत" इति । तथा विनाशमपि पूर्व्वोपचितस्य दुरितस्य व्यपदिशति "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त" इति । अयमपरः कर्मक्षयव्यपदेशो भवति । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" इति । यदुक्तमनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रकदर्थनं स्यादिति । नैष दोषः न हि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे विद्यत एव सा, सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः । शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियेत न प्रतिबन्धाभावेऽपि । "न हि कर्म क्षीयत" इत्येतदपि शास्त्रमौत्सर्गिकं न भोगादृते कर्म क्षीयते तदर्थत्वादिति इष्यत एव प्रायश्चित्तादिना तस्य क्षयः । "सर्वं पाप्मानन्तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेत्यादिश्रुतिस्मृतिभ्यः । यत्तूक्तं नैमित्तिकानि प्रायश्चित्तानि क्षपयिष्यन्तीति तदसत् दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलान्तरकल्पनानुपपत्तेः । यत् पुनरुक्तं न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीत्यत्र ब्रूमः । सगुणासु तावद्विद्यासु विद्यत एव विधानं तासु च वाक्यशेषे ऐश्वर्य्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते । तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्य्यप्राप्तिस्तासां फलमिति निश्चीयते । निर्गुणायान्तु विद्यायां यद्यपि विधानं नास्ति तथाप्यकर्त्रात्मबोधात् कर्मप्रदाहसिद्धिः । अश्लेष इति चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति । अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात् कर्तृत्वं प्रतिपेद इव तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रलीयन्त इत्याह विनाश इति । पूर्वप्रसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वरूपं ब्रह्माहमस्मि नेतः पूर्वमपि कर्त्ता भोक्ता वाहमासं नेदानीं" नापि भविष्यति काल इति ब्रह्मविदवगच्छति । एवमेव च मोक्ष उपपद्यते अन्यथा ह्यनादिकालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात् । न च देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भवितुमर्हति अनित्यत्वप्रसङ्गात् परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य । तस्माद्ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥ "इतरस्याप्येवमसंश्लेषः पाते तु" शा० सू० ॥ "पूर्व्वाधिकरणे बन्धहेतोरघस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेन विरोध इत्याशङ्क्य तन्निराकरणाय पूर्व्वाधिकरणन्यायातिदेशः क्रियते । इतरस्यापि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः । कुतः ? तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात् "उभे उ हैवैष एतेन तरतीत्यादि" श्रुतिषु च दुष्कृतवत् सुकृतस्यापि प्रणाशव्यपदेशात् अकर्त्रात्मबोधनिमित्तस्य कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् । "क्षीयन्ते चास्य कर्म्माणि" इति चाविशेषश्रुतेः । यत्रापि केवल एव पाप्मशब्दः पठ्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यं ज्ञानापेक्षया निकृष्टफलत्वात् । अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः "नैनं सेतुमहोरात्रे तरतः" इत्यत्र सह दुष्कृतेन सुकृतमप्युक्त्वा "सर्वे पाप्मानोऽतो निवर्त्तन्त" इत्यविशेषेणैव प्रकृतेषु पाप्मशब्दप्रयोगात् । पाते त्विति । तुशब्दोऽवधारणार्थः । एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्यं भाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति "अनारब्धकार्य्ये एव तु पूर्वे तदवधेः" शा० सू० ॥ "पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः स किमविशेषेणारब्धकार्य्ययोश्च भवत्युत विशेषेणानारब्धकार्य्ययोरेवेति विचार्य्यते तत्र "उभे उ हैवैष एतेन तरतीत्येवमादि"श्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इत्येवं प्राप्ते प्रत्याह अनारब्धकार्य्ये एव त्विति । अप्रवृत्तफले एव पूर्वजन्मान्तरसञ्चिते अस्मिन्नपि च जन्मनि प्राक् च ज्ञानोत्पत्तेः सञ्चिते सुकृतदुष्कृते ज्ञानाधिगमात् क्षीयेते न त्वारब्धकार्य्ये सामिभुक्तफले याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम् । कुत एतत् ? "तस्य तावदेव चिरं यावन्न विमोक्ष्य" इति शरीरपातावधिकरणात् क्षेमप्राप्तेः । इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावात् ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत तत्र शरीरपातप्रतीक्षां नाचक्षीत । ननु वस्तुबलेनैवायमकर्त्रात्मबोधः कर्म्माणि क्षपयन् कथं कानिचित् क्षपयेत् कानिचिच्चोपेक्षेत न हि समाने ह्यग्निबीजसम्पर्के केषाञ्चिद्बीजशक्तिः क्षीयते केषाञ्चिन्न क्षीयते इति शक्यमङ्गीकर्त्तुमिति । उच्यते । न तावदनाश्रित्यारब्धकार्य्यं कर्म्माशयं ज्ञानोत्पत्तिरुपपद्यते आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेगस्यान्तराले प्रतिबन्धासम्भवाद्भवति वेगक्षयप्रतिपालनम् । अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्म्माण्युच्छिनत्ति । बाधितमपि मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात्

कञ्चित् कालमनुवर्त्तत एव । अपि च नैवात्र विवदितव्यं ब्रह्मविदः कञ्चित् कालं शरीरं ध्रियते न ध्रियते वा इति । कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणञ्चापरेण प्रतिक्षेप्तुं शक्येत ? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्द्देशेनैतदेव निरुच्यते । तस्मादनारब्धकार्य्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात् क्षय” इति भा० ।

**अपूर्व्वता** स्त्री अपूर्व्वस्य अन्यतोऽप्राप्तस्य भावः तल् । १ प्रमाणान्तरागम्यत्वे “उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलम् अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये २ इत्युक्ते तात्पर्य्यावधारणहेतुभेदे च यथा छान्दोग्ये “तन्त्वौपनिषदं वेदेति ब्रह्मणो मानान्तरागम्यत्वमुक्तम् ।

**अपूर्व्वपति** स्त्री न पूर्व्वः पतिर्य्यस्याः । कुमार्य्याम् । “अपूर्व्वपतिं कुमारीमिति” सि० कौ० ।

**अपूर्व्ववाद** पु० अपूर्व्वमधिकृत्य वादः तत्त्वबुभुत्सोः कथा । गङ्गेशोपाध्यायकृते शब्दचिन्तामणयन्तर्गते ग्रन्थभेदे ।

**अपूर्व्वविधि** पु० अपूर्व्वे प्रमाणान्तरेणाप्राप्ते विधिर्विधानम् वि+धा–कि । अप्राप्तप्रापके लिङादिपदवेदनीये शब्दविशेषे । यथा स्वर्गकामो यजेतेति लिङादियुक्तं वाक्यं प्रमाणान्तरेणाप्राप्तस्य स्वर्गसाधनत्वस्य यागे बोधयत् तथा । अपूर्व्वविधिरपि चतुर्विधः कर्म्मविधिः गुणविधिः विनियोगविधिः प्रयोगविधिश्चेति । तत्र अग्निहोत्रं जुहोति इत्यादौ यागरूपे कर्म्मणि इष्टसाधनतायाः, कृतिसाध्यताया भावनाया वा मतभेदेन बोधनात् कर्म्मविधित्वम् । द्रव्यदेवतादिविधायकविधिर्गुणविधिः । यथा दध्ना जुहोत्यादिवाक्यं प्राप्तस्याग्निहोत्रस्यानुवादेनाप्राप्तगुणरूपद्रव्यादेर्विधानात् । “ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादि ऐन्द्र्या ऋचः गार्हपत्योपस्थाने विनियोजनात् विनियोगविधिः । एवं कृत्वा एवं कुर्य्यादित्यादि प्रयोगज्ञापको विधिः प्रयोगविधिः । यथा अधीत्य स्नायादित्यादि “उपसङ्क्रम्य दित्वा मासमेकमग्निहोत्रं जुहोत्यादि च अयन्तु विशिष्टविधिरिति भेदः ।

**अपूर्व्व्य** त्रि० न पूर्व्वमर्हति यत् न०त० । पूर्व्वानर्हे “त्वं नो वायवेषामपूर्व्व्यः सोमानामिति” ऋ० १,१३४,६ ।

**अपृक्त** त्रि० पृच–क्त न०त० । १ असंबद्धे “अपृक्त एकाल् इति पाणिन्युक्ते वर्णान्तरायुक्ते २ एकवर्णे “वेरपृक्तस्य पा०

**अपृथक्** अव्य० न पृथक् । सहयोगे पूर्व्वापरयोरेकादेशरूपे समुच्चयभवने पृथक्साहित्यमपृथक्साहित्यञ्चेति साहित्यं द्विविधमिति वृद्धाः ।

**अपेक्षणीय** त्रि० अप+ईक्ष–कर्म्मणि अनीयर् । १ अनुरोद्धव्ये अपेक्षाकर्म्मणि २ प्रतिपाल्ये च “आत्मा यत्नेन रक्ष्योरणशिरसि पुनः सोऽपि नापेक्षणीय” इति नीति० ।

**अपेक्षा** स्त्री अप+ईक्ष–भावे अ । १ आकाङ्क्षायां, सा च शाब्दबोधजनिका “यत्पदेन विना यस्याननुभावकता भवेदित्युक्ता तत्पदे पदवत्त्वरूपा । अपेक्षायाञ्च प्रायशोवृत्तिर्नेष्यते “सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन । सापेक्षं तद्विजानीयादसमर्थविशेषणम्” यथा प्रवीरं पुत्रकाम्यति ऋद्धस्य राजमातङ्ग इत्यादौ प्रत्ययसमासौ न स्तः । “सापेक्षत्वेऽपि गमकत्वात् समास” इति भाष्योक्तेः देवदत्तस्य गुरुकुलमित्यादौ समासः इति भेदः । १ प्रयोजकत्वे तच्च ज्ञाने स्थितौ उत्पत्तौ वा इतरस्यानुरोधित्वम् ज्ञानादिकार्य्यं च यस्य यत्पदार्थान्तरज्ञानाद्यनुरोधः तस्य तदपेक्षा । अतएव तर्कग्रन्थे जगदीशेन “स्वापेक्षापादकः प्रसङ्ग आत्माश्रयः अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ च ग्राह्येत्यभिधाय एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति ज्ञप्तौ । घटोऽयं यद्येतद्घटजनकः स्यात् एतद्घटभिन्नः स्यादिति उत्पत्तौ, अयं घटः यद्येतद्घटवृत्तिः स्यात् तदात्वेनोपलभ्येतेति स्थितौ च” स्वापेक्षापेक्षितत्वे उदाहृतम् । अनतिदूरे च “अपेक्षा चात्र साक्षात्परम्परासाधारणी ग्राह्ये”त्युक्तम् । तेन साक्षात् परम्परया वा स्वज्ञानादिप्रयोजकतैवापेक्षेति निष्कर्षः । स्वपक्षसापेक्षपक्षसापेक्षपक्षकत्वमन्योन्याश्रयलक्षणम् । २ अनुरोधे “सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः” रघुः । ४ स्पृहायाञ्च “सर्व्वगोऽपेषु कामेषु निरपेक्षः परिव्रजेदिति” “अध्यात्मरतिरासीत निरपेक्षोनिरामिष इति” च मनुः । “निरपेक्षः विगतस्पृह इति” कुल्लूकभट्टः ।

**अपेक्षाबुद्धि** स्त्री अयमेकः अयमेक इत्याकारिकायाम् अनेकैकत्वविषयिण्यां “अनेकैकत्वबुद्धिर्य्या साऽपेक्षाबुद्धिरिष्यते भाषा० परिभाषितायाम् बुद्धौ ।

**अपेक्षाबुद्धिज** त्रि० अपेक्षाबुद्धितो जायते जन–ड ५त० । न्यायोक्ते द्वित्वादिपरार्द्धान्ते संख्याभेदे । “द्वित्वादयः परार्द्धान्ता अपेक्षाबुद्धिजा मताः अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः अपेक्षाबुद्धिनाशाच्च नाशस्तेषां प्रकीर्त्तित” इति भाषा० । अत्रायमभिसन्धिः । यद्यपि द्वित्वादि समवायः प्रत्येकं घटादावस्ति तथापि एकोद्वाविति ज्ञानाभावात् एको न द्वाविति ज्ञानाच्च द्वित्वादीनां पर्य्याप्तिस्वरूपः कश्चित् संबन्धोऽनेकाश्रयोऽङ्गीक्रियते पर्य्याप्तिसंबन्धेन च

प्रत्येकं घटादौ न द्वित्वादि । तादृशसम्बन्धश्च अपेक्षाबुद्धिसामीप्येन तत्सत्त्वे तथा ज्ञानं, तदसत्त्वे न तथाज्ञानम् । तत्र प्रथमम् अयमेकः अयमेक इत्याकारिका अपेक्षाबुद्धिस्ततोद्वित्वोत्पत्तिः ततो द्वित्वद्वित्वत्वनिर्विकल्पकं ततोद्वित्वप्रत्यक्षम् । अपेक्षाबुद्धिनाशाच्च ततोद्वित्वनाशः इति । यद्यपि योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वेन ज्ञानमात्रस्य द्विक्षणस्थायित्वं तथापि अगत्या अपेक्षाबुद्धेस्त्रिक्षणस्थायित्वं स्वीक्रियते अन्यथा निर्विकल्पककाले अपेक्षाबुद्धिनाशे द्वित्वस्य नाशः प्रसज्येत न तु द्वित्वप्रत्यक्षं तदानीं विषयाभावात् विषयस्य प्रत्यक्षं प्रति कार्य्यकालवृत्तितयैव कारणत्वोपगमात् तथा च द्वित्वप्रत्यक्षमेवापेक्षाबुद्धिनाशकं नान्यदिति कल्प्यते । कालान्तरे द्वित्वप्रत्यक्षाभावाच्च अपेक्षाबुद्धिनाशात् द्वित्वादिनाशइति कल्प्यतइति सि०मु० ।

**अपेक्षित** त्रि० अप+ईक्ष–कर्म्मणि क्त । १ अपेक्षाविषयभूते २ आकाङ्क्षिते च । "अपेक्षितक्रियश्चेति त्रिधाऽपादानमिष्यते" इति हरिः ।

**अपेक्षिन्** त्रि० अप+ईक्ष–णिनि स्त्रियां ङीप् । अपेक्षावति स्वकार्य्यजननादौ इतरप्रयोजकतानुरोधिनि च ।

**अपेक्ष्य** त्रि० अप+ईक्ष–कर्म्मणि ण्यत् । १ अपेक्षणीये । भावे ल्यप् । अनुरुध्येत्यर्थे अव्य० "किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिप" इति किरा० ।

**अपेत** त्रि० अ+इण–कर्त्तरि क्त । १ अपगते अपसृते । "यं प्रव्रजन्तमनुपेतमपेतकृत्यमिति" भाग० २ पलायिते च ।

**अपेतराक्षसी** स्त्री अपेतः राक्षस इव पातकं यस्याः गौ०ङीष् । तुलस्याम् राजनि० । तस्याः राक्षसतुल्यपापादिहरणात्तथात्वम् । "दूर्व्वा दहति पापानि धात्री हरति पातकम् । हरितकी हरेद्रोगं तुलसी हरते त्रयम्" आ०त० स्कान्दोक्तेस्तस्याः पापादिहारित्वम् ।

**अपेय** त्रि० पा अर्हाद्यर्थे यत् न०त० । १ स्मृतौ निषिद्धपाने मद्यादौ "मद्यमदेयमपेयमनिग्राह्यमिति" ति०त०उश० एवमन्यानि अपेयानि स्मृतौ प्रसिद्धानि यथा "वर्ज्ज्यं सन्धिनीक्षीरं यच्च विस्यन्दितं पयः । अनिर्दशायागोः क्षीरं पीत्वा चान्द्रायणं चरेदिति" आ० त० स्मृतिः । "अपः सुराभाजनस्था मद्यभाण्डे स्थितास्तथा पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पय" इति मनुः । "शुनोच्छिष्टाः स्थिता ह्यापो यदि कश्चित् द्विजः पिबेत् शङ्खपुष्पीविपक्वेन त्र्यहं क्षीरेण वर्त्तयेदिति" यमः । "स्त्रियोच्छिष्टाः स्थिता आपो यदि कश्चित् पिबेद्द्विजः । शङ्खपुष्पीत्यादि० शङ्खः "शूद्रोच्छिष्टा स्थिता ह्यापो यदि कश्चित् पिबेत् द्विजः । कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेदिति हारीतः "शुना संस्पृष्टभाण्डे तु रेतोमूत्रविदूषिते । जलक्षीरादिकं पीत्वा तप्तकृच्छ्रं समाचरेत्" लघुवि० । "चण्डालकूपभाण्डेषु यस्त्वज्ञानाज्जलं पिबेत् प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते । चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः । तदर्द्धं तु चरेद्वैश्यः पादं शूद्रस्य निर्द्दिशेत्" आप० । "चण्डालपरिगृहीतं योऽज्ञानाज्जलं पिबेत् । तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यश" इति आप० । "यस्तु चण्डालसंस्पृष्टं पिबेत् किञ्चिदकामतः स तु सान्तपनं कृच्छ्रं चरेच्छुद्ध्यर्थमात्मनः" अङ्गिराः । "किञ्चिदिति जलक्षीरादिकमिति" प्रा०वि० । आममांसादौ न दोषः । "आमं मांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः । म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः" यमः "अन्त्यजैः खानिताः कूपास्तडागानि तथैव च । एषु स्नात्वा च पीत्वा च पञ्चगव्येन शुध्यति" आप० । जलान्तरालाभे तु तदप्यापदि पातुं शक्यते "अन्त्यजैः खानिते कूपे सेतौ वाप्यादिके तथा तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते इति वृद्धशाता० । "इदमत्यन्तापद्विषयमिति" प्रा०वि० । "भाण्डस्थिता अभोज्यानामपः पीत्वा पयोदधि । ब्राह्मणो क्षत्रियो वैश्यः शूद्रश्चैवोपसर्पति ब्रह्मकूर्चोपवासश्च याज्यवर्णस्य निष्कृतिः" परा० । उपसर्पति उपसर्पेत् प्रायश्चित्तमिति शेषः तदेवाह ब्रह्मकूर्चोमिति । "यदि विप्रः प्रमादेन शूद्रतोयं पिबेत् स्वयम् । उपोष्य बिल्वपद्मानां पलाशस्य कुशस्य च । एतेषामुदकं पीत्वा तेन शुद्धिमवाप्नुयात्" शाता० । अत्रापवादः । "नवभाण्डेषु पानीयं विट्शूद्रक्षत्रजन्मनाम् । पेयं तदाहुर्विप्राणां पयोदधि तथैव च" जावा० । "घृतं तैलं पयःक्षीरं तथैवेक्षुरसो गुडः । शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति" शाता० । घृतादीनामाकरभाण्डस्थितानां न दोषः" शङ्खः । "पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित् । त्रिरात्रं तु व्रतं कुर्य्याद्वामहस्तेन वा पुनः" शङ्खः । "वामेन केवलेनेति" प्रा०वि० । "प्रपामरण्ये घटके च कूपे द्रोण्यां जलं कोषगतास्तथापः । ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेत्ता" इति यमः । प्रपाजलं, कूपजलाहरण घटस्थजलं द्रोणी सेकपात्रविशेषः तज्जलं, खड्गादि कोषगतं जलञ्च शूद्रासम्बन्धेऽप्यपेयम् "आपदि तु तदेव जलं भूमिगतं कृत्वा ततः पात्रान्तरेणोद्धृत्य पेयमिति"

प्रा०वि०। एतद्विषये एव। द्रोण्यामायसयुक्तायां कृते प्राव-र्त्तके तथा। आमप्रपाजलञ्चैव पीत्वापत्सु न दुष्यतीति लघुहारीतः। तदपि भूमिगतं कृत्वैव पेयं पूर्ववचनैकवाक्य-त्वात्। "प्रावर्त्तके सेचके कृते च ज्ञाते" प्रा०वि०। "कूपे विण्मूत्रसंसृष्टे पीत्वा तोयं द्विजोत्तमः। त्रिरात्रेण विशुध्येत" अङ्गिराः। "जलाशये तथान्येषु स्थावरेषु महीतले। कूपवत् कथिता शुद्धिः महत्सु च न दूषणमिति" विष्णुः। "महत्-स्वप्यशुचिशङ्कया तीर्थसमीपतोयग्रहणवर्ज्जनमिति" प्रा० वि०। यथोक्तं देवलेन। "तल्लाद्यन्यतडागानि नदीवापीः सरांसि च कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेदिति"। "हृतपञ्चनखात् कूपादत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मण-स्त्रिरात्रमुपवसेदित्यादि" विष्णुः "अत्यन्तोपहतात् अमे-ध्यादिनेति" प्रा०वि०। "यस्तु कूपात् पिबेत् तोयं ब्राह्मणः शवदूषितात् उपवासत्रयं कुर्य्यादित्यादि" लघुहा०। "क्लिन्नो भिन्नः शवश्चैव कूपस्थो यदि दृश्यते। पयः पीत्वा त्रिरात्रेण इत्यादि" देवलः। "पीतशेषं पिबेत् विप्रैर्विप्रः स्यादन्यथा पशुरिति भवि०पु०। "श्लेष्मोपानहविण्मूत्रं स्त्रीरजो मद्य-मेव च। एभिः संदूषिते कूपे तोयं पीत्वा कथं विधिः। एकं द्व्यहं त्र्यहञ्चैव द्विजातीनां विशोधनमिति" अत्रिः। अस्यापवादमाह स एव "गोदोहने चर्म्मपुटे च तोयं यन्त्रा-करे कारुकशिल्पिहस्ते। स्त्रीबालवृद्धाचरितानि यान्य-प्रत्यक्षदृष्टानि शुचीनि तानि। प्राकाररोधे विषमप्रदेशे सेनानिवेशे भवनस्य दाहे। आरब्धयज्ञेषु महोत्सवेषु तथैव दोषा न विकल्पनीयाः। शुचि गोतृप्तिकृत्तोयं प्र-कृतिस्थं महीगतम्। चर्म्मभाण्डैस्तु धाराभिस्तथा यन्त्रो-द्धृतं जलमिति"। प्रागुक्तवचनजातैः चर्म्मभाण्डस्थित-यन्त्रोद्धृतयोरपेयत्वेन निषेधे प्राप्ते चर्म्मभाण्डैरुद्धृतं यन्त्रोद्धृतञ्च सन्ततधारयोद्धृतञ्च एतत्त्रयं यदि महीगतं गोतृप्तिकरं प्रकृतिस्थमविकृतं च तदा शुचीत्यनेन प्रतिप्रसूतम् महत्सु च न दुष्यतीत्यनेन महत्त्वस्यापेक्षाकृतत्वेन अव्या-वर्त्तकतया गोतृप्तिकरत्वेन विशेषणात् तथाभूतं महत्त्व-मेव प्रकृते विवक्षितम्। तदपि जलान्तराभावे शुद्धमित्य-वधेयं प्रागुक्तवचने आपद्गतस्यैव भूमिगतं कृत्वा तत उद्धृत्य पानविधानेन तदेकवाक्यत्वात् तथैवेह ज्ञेयम्। एतच्च स्वभा-वतः पेयजलस्यैव—चर्म्मभाण्डादिस्थितिरूपदोषप्रतिप्रसवार्थम् न तु अपेयस्य म्लेच्छादिखानिततोयस्यापि पेयताविधा-नार्थं तथात्वे वाक्यभेदापत्तेः न च हिरण्योदकस्पर्शस्य अप-स्येव सामान्यशास्त्रनिषिद्धापेयजलस्य शुद्धार्थतापरं स्वभावतः पेयस्यैव चर्म्मभाण्डादिगतत्वेन दोषपरिहारार्थतापरत्वस्यैव सर्व्वसामञ्जस्ये विधिद्वयकल्पनायाः अन्याय्यत्वात् एतेन इदानीन्तनम्लेच्छराजखानितस्य जलस्य यन्त्रोद्धृतत्वेन शुद्ध-ताकीर्त्तनं साहसमेव तस्य म्लेच्छखानितजलत्वेन स्वभा-वतोऽपेयत्वात् जलान्तरस्य गङ्गाजलस्य च सन्निकृष्टत्वादाप-द्विषयत्वाभावात् प्रकृतिस्थविशेषणाच्च तस्य संस्कारविशेषेण विकारविशेषवत्त्वादेतद्वचनस्यापि तत्राप्रवृत्तेश्च। किञ्च "विचित्सा तु हृदये यस्मिन्वस्तुनि प्रजायते सङ्कल्पं तत्तु विद्येयं पुरीषवत् स्वभावतः" इति ब्रह्मपुराणेन अमेध्यस्पर्शवत्त्वेन शङ्कितान्नादेर्भोजननिषेधात् म्लेच्छामेध्यादिस्पर्शवत्त्वेन शङ्कि-तस्यास्य जलादेरप्यपेयतेति गम्यते। शशिसूर्य्यकिरणास्पृष्ट-तया च तस्य व्यापन्नजलतया वैद्यकोक्तदोषाधायकत्वेनापि अपेयता। "अपि चण्डालभाण्डस्थं तज्जलं पावनं महत्" इत्युक्तेस्तत्खाते गङ्गाजलानामेवाहृतत्वात्तस्य स्वभावतः शुद्धतेति तु न शङ्क्यं "सर्व्वत्र पावनी गङ्गा त्रिषु स्थानेषु दुष्यति म्लेच्छस्पर्शे सुराभाण्डे भेकादिजलमिश्रणे" इति वचनात् तस्य भेकादिजलसम्पर्कयुक्तायाम्लेच्छादिस्पर्शस्य प्रत्यक्ष-दर्शनाच्च स्वभावतः शुद्धत्वाभावात्। धारायां प्रतिप्रसवमाह बौधायनः "अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः। आ-कराः शुचयः सर्व्वे वर्ज्जयित्वा सुराकरमिति" काले नवोदकं शुद्धं न पातव्यन्तु तत्त्र्यहम्। अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशमिति" आ०त०स्मृतिः। "स्नानमाच-मनं दानं देवतापितृतर्पणम्। शूद्रोदकैर्न कुर्वीत तथा मेघा-द्विनिःसृतैः"। आचमननिषेधात् पानादेः सुतरां नि-षेधः। "श्रावण्याद्यं श्रावणादि सर्व्वा नद्यो रजस्वलाः। तासु स्नानादिकं वर्ज्यं वर्ज्जयित्वा कुरापगाम् इति" छन्दो०प०। "यैः कृतः सर्व्वभक्ष्योऽग्निरपेयश्च महोदधिरिति" मनुः यैः विप्रैः "अन्यथा हि कृतस्येह देवयोनिरपांपतिः। कु-शाग्रेणापि कौन्तेय न स्पृष्टव्यो महोदधिरिति भा०अ०प० स्पर्शनिषेधात् पाननिषेधः। "अनिर्द्दशाया गोः क्षीरमौष्ट्रमै-कशफं तथा। आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः। आरण्यानाञ्च सर्व्वेषां मृगाणां माहिषं विना। स्त्री-क्षीरञ्चैव वर्ज्ज्यानि सर्व्वशुक्तानि चैव हि" मनुः। "गोः क्षीर-मनिर्द्दशायाः सूतके अजामहिष्योश्च नित्यमपेयमौष्ट्रमैक-शफञ्च स्यन्दिनीनाञ्च याश्च वत्सव्यपेताः" आङ्गि०। "व-र्ज्जयेद्गोरवत्सायाः पयश्चान्यवत्सया। आरण्यानाञ्च सर्व्वेषां वर्ज्जयित्वा तु माहिषमिति" यमः। "सर्व्वासां द्वि-स्तनीनां क्षीरं वर्ज्ज्यमजावर्ज्जमिति" शङ्खः "गोजामहिषीवर्ज्जं"

सर्वरसानि यान्यनिर्द्दशाहं तान्यपि सन्धिनीस्यन्दिनीविवत्सायमसूक्षीरं चामेध्यभुजश्च" विष्णुः। पीत्वोपवसेदित्यनुवृत्तिः। सन्धिनी वृषभाक्रान्ता स्यन्दिनी नित्यं प्रस्रवत्पयःस्तना। अमेध्यभुजः मद्यादिभक्षणशीलायाः। यमसूर्यमसुयुग्मं प्रसूता "कृशवत्सा निन्दितं रासभञ्च पयो वर्ज्जयेदिति" हारीतः। तत्राजाक्षीरं दशाहादर्वाक् निषिद्धम् ऊर्द्धं तत् पेयं सर्ववचनसामञ्जस्यात् "गोघ्रातं शकुनोच्छिष्टं पदास्पृष्टञ्च कामतः। सन्धिन्यनिर्द्दशावत्सगोपयः परिवर्ज्जयेत् याज्ञ०।" "क्षीराणि यान्यभक्ष्याणि तद्विकाराशने पुनः सप्तरात्रं व्रतं कुर्य्यादित्यादि" या०। "उष्ट्रीक्षीरमानुषीक्षीरपाने पुनरुपनयनं तप्तकृच्छ्रञ्चेत्यादि" शाता०। "उद्धृतस्नेहविलयनपिण्याकमथितप्रभृतीनि चात्तवीर्य्याणि नाश्नीयात्" गौत०। उद्धृतस्नेहं क्षीरादि विलयनं घृतमलं पिण्याकः खलिः मथितं तक्रादि आत्तवीर्य्याणि गृहीतसाराणि॥ आत्तवीर्य्यपदञ्चान्तोद्धृतस्नेहपरं मथितपदं च उदकप्रायतक्रपरञ्च। "क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽथ वा पुनः। यः पिबेत् कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्" आप०। "कापिलं यः पिबेच्छूद्रो नरकेषु विपच्यते" स्मृतिः। सुश्रुते तु धातुदोषविशेषजनकतया कानिचिदपेयान्युक्तानि तानि प्रायशः सामान्यतोऽपेयशब्दे २२६,२७, पृष्ठे उक्तानि। तत्र विशेषः कश्चित् प्रदर्श्यते "वर्षाजले गाङ्गेयसामुद्रयोः परीक्षणमुक्ता "वर्षान्यत्वे भिकृतक्लेदे च सामुद्रमिति विद्यात्तच्चोपादेयमित्युक्तम् कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम्। तृणपर्णोत्करयुतं कलुषं विषसंयुतम् योऽवगाहेत वर्षासु पिबेद्वापि नवं जलम्। स बाह्याभ्यन्तरान् रोगान् प्राप्नुयात् क्षिप्रमेव तु तत्र यत् शैवालपङ्कतृणपद्मप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टञ्च तद्व्यापन्नमिति विद्यात्। तस्य स्पर्शरूपरसगन्धवीर्य्यविपाकाः दोषाः षट् सम्भवन्ति। व्यापन्नं वर्ज्जयेन्नित्यं तोयं यद्यप्यनार्त्तवम्। दोषसञ्जननं ह्येतत् आददीताहितन्तु तत्। "व्यापन्नं सलिलं यस्तु पिबतीहाप्रसाधितम्। श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम्। श्वासकासप्रतिश्यायशूलगुल्मोदराणि च। अन्यान् वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेव चेति" नदीविशेषजलस्य दोषकीर्त्तनेनापेयता च तत्रोक्ता "पूर्व्वाभिमुखास्तु न प्रशस्यन्ते गुरूदकत्वादिति। सह्यप्रभवाः कुष्ठं जनयन्ति, विन्ध्यप्रभवाः कुष्ठं पाण्डुरोगञ्च, मलयप्रभवाः क्रमीन्, महेन्द्रप्रभवाः श्लीपदोदराणि, हिमवत्प्रभवाः हृद्रोगश्वयथुशिरोरोगश्लीपदगलगण्डान्, प्राच्यावन्त्याः अपरावन्त्याश्चार्शांस्युपजनयन्ति, इति "शाकद्रसदकं भिन्नं लवणं सर्व्वदोषकृदिति। अनेकदोषमानूपं वार्य्यभिष्यन्दि गर्हितमिति" च। रोगभेदे शीतलजलस्यापेयताप्युक्ता, "पार्श्वशूले प्रतिश्याये, वातरोगे गलग्रहे, आध्माने स्तिमिते कोष्ठे सद्यः शुद्धे नवज्वरे। हिक्कायां स्नेहपीते च शीताम्बु परिवर्ज्जयेदिति"। तक्रस्यापेयता रोगभेदे तत्रोक्ता "तक्रं नैव क्षते दद्यान्नोष्णकाले न दुर्ब्बले। न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके। शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु चेति"। द्रव्यान्तरसंयोगादपेयता अपथ्यशब्दे २२६,२७, पृष्ठे दर्शिता। विशेषस्त्वेषः। "उष्णोदकानुपानन्तु स्नेहानामथ शस्यते, ऋते भल्लातकस्नेहात् स्नेहात्तौवरकात्तथेति" रोगभेदेऽनुपाननिषेधेन तत्र जलादीनामपेयता भङ्ग्या तत्रैव दर्शिता। अनुपानगुणमभिधाय "न पिबेच्छ्वासकासार्त्तौ रोगे चाप्यूर्द्ध्वजत्रुगे। क्षतोरस्कः प्रसेकी च यस्य चोपहतः स्वरः। पीत्वाऽध्वभाष्याध्ययनगेयस्वप्नान् न शीलयेत्। प्रदुष्यामाशयं तद्धि तस्य कण्ठोरसि स्थितः। मन्दाग्निसादछर्द्यादीनामयान् जनयेत् बहूनिति" सुश्रुते॥ [शब्दे

**अपेशल** त्रि० विरोधे न०त०। पेशलत्वविरोधिमान्द्ययुक्ते

**अपेहिकटा** स्त्री अपेहि अपगच्छ कट! इत्युच्यते यस्यां क्रियायाम् मयू०स०। कटसम्बोधनकापगतिनिर्देशक्रियाविशेषे। एवं मयू० समासे। अपेहिद्वितीया, अपेहिप्रघसा, अपेहिवाणिजा अपेहिस्वागता एतेऽपि शब्दाः तत्तत्सम्बोधनकागमनक्रियानिर्देशे।

**अपैशुन** न० अभावे न०त०। १ पैशुन्याभावे न०ब०। २ पैशुन्यशून्ये त्रि० अपैशुन्यमप्युक्तार्थे न० तद्वति त्रि०।

**अपोगण्ड** त्रि० अपसि कर्म्मणि गण्डः त्याज्यः। विकलाङ्गे "विकलाङ्गं हि सर्वत्र धर्म्मकार्य्येषु वर्ज्जयेदिति" स्मृतेः स हि वैधकर्म्मसु त्याज्यः। २ अतिभीरौ सोऽपि हि कर्म्मसु त्याज्यः। अपसि अगण्डः अधीर इति वा तस्य कर्म्मणि अधीरत्वात्तथात्वम्। अपोजलमिव भङ्गुरत्वात् गण्ड एकदेशोऽस्य। ३ त्रिवलियुते मध्यभागे वलीनामेव तस्य तरङ्गाकारत्वात् तथात्वम्। अपसि कर्म्मणि त्याज्यः गण्डः अपटुत्वात् पोगण्डः शिशुः न०त०। पोगण्डः पञ्चमादब्दादर्वाक् च दशमाब्दतदयुक्ते पञ्चाब्दे बाले। पोगण्डभिन्नशिशोरेव तथात्वात्। "बाल आषोडशात् वर्षात् पोगण्डश्चेति शब्द्यते" इति नारदोक्तपोगण्डभिन्ने ५ षोडशवर्षातीतवयस्के च "अजडश्चेदपोगण्डो

विषये चास्य भुज्यते भक्ष्यं तद्द्वारेण भोक्ता तद्द्रव्य-मर्हति" काव्या०। [भान्तं प्रत्यक्षं निर्विकल्पकम्"स०द०।

अपोढ त्रि० अप-वह-क्त। १ निरस्ते त्यक्ते २"कल्पनापोढम-

अपोदक त्रि० अपगतमुदकं सुश्लिष्टत्वात् यस्य। १ अप्रविष्टोदके "तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः" ऋ०१,११६,३। अपनद्धं फलेषूदकं यस्याः उक्तपुंस्कत्वात् स्त्रियामत इत्त्वं वा। इत्त्वपक्षेऽपोदिकापि (पुइ) पूतिकायाम् तत्फलेषु उदकाभावात्तथात्वम्। अपहृतमुदकं यस्मात् ५ब०। जलापकर्षहेतौ विषादौ "यत्र अपोदकं विषं तत्र एतास्वप्यभवम्" अथ० ५,१३,१।

अपोनप्त्रि(प्त्री)य त्रि० अपोनपात् देवताऽस्य घ-छ वा नि०। अपोनपाद्देवताके हविरादौ। [मयट्। जलमये।

अपोमय त्रि० अपः जलं तदात्मकं तद्विकारत्वात् अपस्+

अपोह पु० अप+ऊह गत्यादौ वा० भावे क। १ त्यागे २ अतद्व्यावृत्तौ तद्भिन्नस्य व्यावृत्तेरपि त्यागविशेषरूपत्वात्तथात्वम्। "तद्वानपोहो वा शब्दार्थ" इति काव्यप्र० "अपोहः अतद्व्यावृत्तिरिति" महेश्वरः। ऊहस्तर्कः अपः विपरीते प्रा०स०। अपरतर्कनिरासाय कृते विपरीततर्के स च "शुश्रूषा श्रवणं चैव ग्रहणं धारणा तथा। ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणा इति हेमचन्द्रोक्तः बुद्धिगुणभेदः। "स्वयमूहापोहासमर्थ" इति पा०भा०। भावे ल्युट्। अपोहनमप्यत्र न०। "मत्तः स्मृतिर्ज्ञानमपोहनञ्चेति" गीता।

अपोहनीय त्रि० अप-ऊह-अनीयर्। अपरकृततर्कनिरसनेन तर्कणीये, "स्मृतिरपोहनीयास्त्रयः" काव्या० २२,६,२१।

अपोह्य त्रि० अप-ऊह गत्यादौ कर्मणि ण्यत्। अपगमनीये "त्याज्ये एतैर्द्विजैरपोह्य स्यादेनोहिंसासमुद्भवम्" मनुः अप+वह-ल्यप्। दूरीकृत्येत्यर्थे अव्य०।

अपौरुष त्रि० नास्ति पौरुषमस्य। विक्रमशून्ये। अभावे न०त०। पौरुषाभावे न०।

अप्चर त्रि० अप्सु चरति चर-ट। १ जलचरे जन्तौ स्त्रियां ङीप् "लौख्याद्याद्यान्याश्रितास्तेषां मृगगर्त्ताश्रयाप्चराः" इति मनुः लोपि दुर्गाणि।

अप्तु न० आप्यते भोगाय जीवेन आप-तुन् ह्रस्वश्च। १शरीरे २ सूक्ष्मरूपसोमे च। "अथाप्त्वे द्वितीये यामाहुतिं जुहोति शत०ब्रा०३,६,२८, अप्तुः सूक्ष्मरूपः सोमः भा०।

अप्तुर् पु० अप्तुरः जलदानाय त्वरते त्वर-वेगे क्विप्। जलदायके इन्द्रे तस्य मेघनायकत्वेन तत्प्रेरकतया जलदातृत्वात्तथात्वम्"यद्येन गातुमप्तुरो विविद्रिरे ऋ०२,२१,५, "अप्तुरः अपां प्रेरकादिन्द्रात्" भा०। २तद्दायकेऽनलादौ च तस्याग्न्यादेः "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते आदित्याज्जायते वृष्टिरिति" मनूक्तेः जलप्रेरकत्वम्।

अप्तुर्य्य न० अप्तुरो भावः वा० वेदे यत्। "जलप्रेरकत्वे लोके तु ष्यञ् आप्तुर्य्यमित्येव। "इन्द्राग्नी! तविषाणि वां सधस्थानि प्रयांसि च युवोरप्तुर्य्यं हितम् १२,८, अप्तुर्य्यं वृष्टिप्रेरकत्वम् भा०युवोर्युवयोरिन्द्राग्न्योः

अप्तोर्याम पु० अप्तोर्देहस्य व्यापकत्वाद्याम इव अलु०स०। अग्निष्टोमाङ्गयागभेदे "यावज्जीवमग्निहोत्रं जुहोतीति" श्रुत्या अग्निष्टोमस्य देहव्यापककालकत्वात्तथात्वम्। "सोऽप्तोर्यामेण यजेत"काव्या० ८,११,१०, "यद्युत्तरे अत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः काव्या० १०,८,२६,।

अप्त्य त्रि० अप्तुनि देहे भवः यत् वेदे टिलोपः। १अपत्ये निरु० २देहकर्म्मणि स्थिते च "पूर्व्यं अर्हं रजसो अप्त्यस्य"ऋ०१,१२४,५"अप्त्यस्य कर्म्मणि स्थितस्येति"भा०

अप्नःस्थ त्रि० अप्नसि कर्म्मणि तिष्ठति अधिकृतत्वात् स्था-क ७त०। १ कर्मण्यधिकृते "संयावप्नःस्थो अपसेव" ऋ० ६,६७,३। "अप्नःस्थः कर्मण्यधिकृतः" भा०।

अप्नराज पु० अप्नसां कर्म्मणां राजा प्रेरकत्वात् टच् समा० वेदे पृ० सलोपः। कर्म्मप्रेरके। "युवं ह्यप्नराजावसीदतम् ऋ० १०१३२७।

अप्नवान पु० अप्नसा कर्म्मणा वानं गतिः सन्ततिरस्य। भृगुवंश्ये, ऋषिभेदे, "यमप्नवानो भृगवो विरुरुचुः ऋ० ४,७,१, अप्नवानः भृगुसम्बन्धी कश्चिदृषिः भा०। "और्वभृगुवदप्नवानवदाहुवे अग्निं समुद्रसम्" ऋ०८,१०२,४, अस्यैव वत्सादिगोत्रप्रवरत्वम् "वत्सानां भार्गवच्यवनाप्नवानौर्वजामदग्न्याः" इति "भार्गवौर्वजामदग्न्याः" इति वा "भार्गवच्यवनाप्नवानाः" इति वा"वेदानां पञ्च, भार्गवच्यवनाप्नवानौर्ववैदाः" इति गोत्रप्रवरा०। वङ्गानामाप्नुवतः प्रवरत्वकल्पनं प्रवराध्यायविरुद्धत्वादेयम्। अप्नसे आदानकर्मणे वानमस्य पृ० सलोपः। आङ्गौ निरु०।

अप्नस् त्रि० आप-असुन् नुट् ह्रस्वश्च। १ कर्म्मणि निरु०। "क्रियातो विभागः विभागात् पूर्व्वदेशसंयोगनाशस्तत उत्तरदेशसंयोग" इत्युक्तेः संयोगहेतुत्वात्तथात्वम् "तद्देषु चक्रषे भद्रमप्नः ऋ० १,११३,६। "अप्नः कर्म" भा०।

वा॰ अकर्म्मांख्यायामपि असुन् तुट् ह्रस्वश्च । २ प्राप्नव्ये, "अच्छितमप्न उषसो वहन्त" ऋ॰ १,११३,२० । "अप्नः प्राप्तव्यम्" भा॰ ।

**अप्नस्वत्** त्रि॰ अप्नस्+अस्त्यर्थे मतुप् मस्य वः स्त्रियां ङीप् । कर्मयुक्ते । "अप्नस्वतीषूर्वरास्विति" ऋ॰ १,१२७,६ । "अप्नस्वतीषु खननादिकर्म्मोपेतासु" भा॰ ।

**अप्पति** पु॰ अपां पतिः ६त॰ । १वरुणे २समुद्रे च । "इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो बलिं हरेत्" इति "वित्ताप्पत्योर्यमस्य च" इति च मनुः ।

**अप्पित्त** न॰ अपां पित्तमिव हेतुत्वात् । १ अग्नौ "अग्नेराप" इति श्रुतौ अग्नेर्जलहेतुत्वोक्तेस्तथात्वम् ।

**अप्य** त्रि॰ अपामिदम् तत्र साधु संस्कृतं वा यत् । १जलसंस्कृते "अप्यो गो राजाप्यस्तमिष्यते" ऋ॰ ८,८६,४५ । "अप्यः अप्सु संस्कृतः" भा॰ जलसम्बन्धिनि "त्वयाहितमप्यमप्सु भागम्" ऋ॰ २,३८,७ । "अप्यमपां सम्बन्धिनम्" भा॰ । ३कर्मणि साधौ "स ईं वृषो अप्योवनर्गुरुष" ऋ॰ १, १४५,५ । "अप्यः कर्मणि साधुः" भा॰ अप्नु योग्यं वेदे यत् ह्रस्वश्च । ४माप्नु योग्ये "योनिमप्यमनिशितम्" ऋ॰ २,३८,८ । "अप्यम् आप्नु योग्यम्" भा॰ ।

**अप्यय** पु॰ अप+इण–भावे अच् । १ "अपगमने २ नाशे ३ विलये च "स्वाप्ययादिति शा॰सू॰ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशोमया" गीता । अपैत्यस्मात् अपादाने अच् । पक्षपुच्छसन्धिषु "पक्षपुच्छानि पराभिरप्ययेषु" कात्या॰ १७,६,७, "अप्ययेषु पक्षपुच्छाप्यसन्धिषु" वेददी॰।

**अप्रकट** त्रि॰ न प्रकाशः विरोधे न॰त॰ । प्रकाशितभिन्ने गुप्ते । "प्रकटाऽप्रकटा चेति लीला सेयं हरेर्द्विधा प॰पु॰

**अप्रकम्प** पु॰ न प्रकम्पः अभावे न॰त॰ । १ चलनाभावे न॰ ब॰ । २चलनहीने त्रि॰ "अप्रकम्पो दुराधर्ष" इति पुरा॰ ।

**अप्रकर्ष** पु॰ न प्रकर्षः विरोधे न॰त॰ । १ अपकर्षे न॰ब॰ । २ प्रकर्षशून्ये त्रि॰ ।

**अप्रकाण्ड** पु॰ न प्रकृष्टः काण्डः स्कन्धोऽस्य । १ स्कन्धशून्ये झिण्टीप्रभृतिवृक्षे । न॰त॰ । २प्रकाण्डभिन्ने स्कन्धे त्रि॰

**अप्रकाश** पु॰ न प्रकाशः अभावे न॰त॰ । प्रकाशाभावे, गोपने "अप्रकाशक्रये क्रेतुः स्वामिनश्चापरस्यादिति" प्रा॰त॰ना॰ । न॰ब॰ । "प्रकाशशून्ये त्रि॰ "प्रकाशांश्चाप्रकाशांश्च तस्करान् द्विविधान् विदुः" मनुः । अप्रकाशचौराश्च अपहर्त्तृशब्दे मनूक्ताः १५४ पृष्ठे दृश्याः । "प्रकाशश्चाप्रकाशश्च लोकालोक इवाचल" इति रघुः ।

**अप्रकाश्य** त्रि॰ प्र+काश–णिच् अर्हार्थे कर्म्मणि यत् । १ प्रकाशयितुमनर्हे गोप्ये "अप्रकाश्यमिदं गुह्यं न देयं यस्य कस्यचित्" तन्त्रम् । २ विशेषतो गोप्ये जन्मर्क्षादिनवके च तत्र । "जन्मर्क्षं मैथुनं मन्त्रो गृहच्छिद्रञ्च वञ्चनम् । आयुर्धनापमानं स्त्री न प्रकाश्यानि सर्वदा" का॰ख॰ ।

**अप्रकृत** त्रि॰ न प्रकृतः प्रक्रान्तः यथार्थो वा । १अप्रक्रान्ते २अयथार्थे च । प्रकृतिः स्वभावोऽस्त्यस्य अर्श॰ आ॰ अच् न॰त॰ । भयादिना ३स्वभावहीने । "तामसं यच्चाप्रकृतो ददातीति शु॰त॰ हारी॰ "अप्रकृतो भयादिमान्" रघुनन्दनः ।

**अप्रकृति** स्त्री न प्रकृतिः । प्रकृतिभिन्ने कार्य्यकारणभिन्ने सांख्यप्रसिद्धे पुरुषे "न प्रकृतिर्न विकृतिः पुरुष" इति सां॰का॰ उक्तेस्तस्य प्रकृतिभिन्नत्वात्तथात्वम् २ व्याकरणोक्ते प्रत्ययनिमित्तरूपप्रकृतिभिन्ने प्रत्ययादिशब्दे, मीमांसकोक्तायां ३ प्रकृतिभिन्नायां विकृतौ च । प्रकृतिः स्वभावः न॰ ब॰ । ४ तच्छून्ये त्रि॰ वा कप् । अप्रकृतिकोऽप्यत्र ।

**अप्रकृतिस्थ** त्रि॰ प्रकृतौ स्वभावे न तिष्ठति रोगभयादिना तत्रचलति स्था–क ७त॰ न॰त॰ । रोगभयादिना स्वभावाच्चलिते ।

**अप्रकृष्ट** त्रि॰ न प्रकृष्टः विरोधे न॰त॰ । निकृष्टे अपकर्षयुक्ते

**अप्रकॢप्त** त्रि॰ प्र+कॢप्–क्त न॰त॰ । कॢप्तभिन्ने यदुचितं तद्भिन्ने "ऋत्विजां वैकोऽप्रकॢप्तप्त्याच्छामिते कात्या॰ ६,७,२

**अप्रचित** त्रि॰ प्र+चि–भावे क्त "अयदर्थे" पा॰ उक्तेः भावकर्मणोश्च यदर्थतया तद्भिन्ने दीर्घविधानात् भावस्य च यदर्थतया न दीर्घः तेन न नत्वम् नास्ति प्रचितं प्रचयो यस्य । प्रचयरहिते "अप्रचितं वसु बिभर्षि" ऋ॰ १,५५,८ । [स्कदुत्तर्ति ।

**अप्रखर** त्रि॰ न प्रखरः विरोधे न॰त॰ । १ तीक्ष्णत्वविरोधि

**अप्रगुण** त्रि॰ न प्रकृष्टो गुण उपकरणं कार्य्यसामर्थ्यं वा यस्य । १ व्याकुले न॰त॰ । २ अनुगुणभिन्ने च ।

**अप्रचेतस्** न॰ न प्रचेतति प्र+चित–असुन् न॰त॰ । अज्ञाने "कथा विधात्यप्रचेताः" ऋ॰ १,१२०,१ ।

**अप्रज** पु॰ न प्रजायते आत्मजरूपेण प्र+जन–ड न॰त॰ । पुत्रादिजननाभावेन अज ते १ वन्ध्ये "आत्मा वै जायते पुत्र" इति श्रुतेः पुत्रजनने आत्मजननात् तच्छून्यस्य तथात्वम् । "भ्रातृणामप्रजः कश्चित् म्रियेत प्रव्रजेत वेति" स्मृतिः "अप्रजस्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपीति" या॰ । २पुत्ररहितायां स्त्रियां स्त्री "अप्रजायामतीतायां बान्धवा-

स्तद्वाप्नुयुः” इति स्मृतिः “संवत्सरद्वयं तन्तु गान्धारीगर्भमाहितम्। अप्रजा धारयामास ततस्तां दुःखमाविशत्” भा॰आ॰प॰।

**अप्रजस्** पुंस्त्री न प्रजा सन्ततिः यस्य असिच् समा॰। प्रजाशून्ये। “अतीतायामप्रजसि तद्धनं भर्त्तृगामि च” स्मृतिः। “अस्वं त्वाप्रजसं कृणोमि” अथ॰ ७,३५,३।

**अप्रजाता** स्त्री न प्रजाता कदापि न प्रसूता। १ अप्रसूतगर्भायां वन्ध्यायां स्त्रियाम् “दासीनामप्रजातानां शुभानां स्वर्णवर्चसाम्। शतमस्मै प्रदास्यामि” भा॰उ॰प॰ १५अ॰।

**अप्रणीत** त्रि॰ न प्रणीतः वेदविधिना संस्कृतः। १ वैधसंस्कारशून्ये अनलादौ २ असते च।

**अप्रतर्क्य** त्रि॰ न प्रतर्क्यः तर्कयितुमशक्यः। लिङ्गाद्यभावेन अनुमानेन ज्ञातुमशक्ये। “अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः” मनुः।

**अप्रता** त्रि॰ प्र+ताय–क्विप् नास्ति प्रताः यस्मात् ५त॰। १ अतिविस्तीर्णे “न सोमो अप्रता पपे” ऋ॰ ८,३२,१६, “अप्रता विस्तीर्णधनेनेति” भा॰ धातोरातोलोपात् रूपम्

**अप्रति** त्रि॰ नास्ति प्रति प्रतिरूपः प्रतिद्वन्द्वी वा यस्य। १ अत्युत्कृष्टे “सो अप्रतीनि मनवे पुरूणीन्द्रः” ऋ॰ २,१९ ४, “अप्रतीनि उत्कृष्टानि” भा॰ २ प्रतिद्वन्द्विरहिते “यः एकः इदप्रतिर्मन्यमानः ऋ॰ ५,३२,३। “अप्रतिः प्रतिद्वन्द्विरहितः” भा॰। ३ अप्रतिरूपे अनुपमे च

**अप्रतिकर** त्रि॰ प्रति वैपरीत्ये कृ–कर्त्तरि अच् न प्रतिकरः। १ विपरीतकारिणि विश्वस्ते, जटा॰ प्रति+कृ–भावे अप् प्रतिकरः प्रतिक्षेपः अभावे न॰त॰। २प्रतिक्षेपाभावे पु॰ न॰ब॰ ३ प्रतिक्षेपशून्ये त्रि॰।

**अप्रति(ती)कार** पु॰ प्रति+कृ–घञ् वा दीर्घः अभावे न॰त॰ १ प्रतीकाराभावे। न॰ब॰। २ प्रतीकारहीने ३प्रतिकर्त्तुमशक्ये च त्रि॰। अभावे अव्ययी॰। ४प्रतीकाराभावे अव्य॰।

**अप्रतिकर्मन्** त्रि॰ नास्ति प्रतिकर्म प्रतीकारो यस्य। १ प्रतिकर्त्तुमशक्ये। नास्ति प्रति प्रतिरूपं तुल्यं यस्य तादृशं कर्म यस्य। २ अतुल्यकर्मके त्रि॰ स्त्रियां ङाप् वा।

**अप्रतिक्रिया** स्त्री प्रतिक्रिया प्रतीकारः अभावे न॰त॰। १ प्रतीकाराभावे। न॰ब॰। २ प्रतीकारशून्ये ३ प्रतिकर्त्तुमशक्ये च त्रि॰।

**अप्रतिग्राह्य** त्रि॰ न प्रतिग्रहीतुं योग्यं स्मृतौ निषेधात्। प्रतिग्रहीतुमयोग्ये स्मृतौ निषिद्धप्रतिग्रहतया उल्लिखिते हिरण्यादौ द्रव्ये, शूद्रादिधनादौ च प्रतिग्रहयाऽदृष्टार्थत्यक्तद्रव्याङ्गीकारः। तत्र द्रव्यविशेषे, अपादानविशेषे, कालादिविशेषे च प्रायश्चित्तोत्कीर्त्तनेन पापजनकत्वात् क्वचित् वस्तुकृता क्वचित् कालादिनिमित्तकृता चाप्रतिग्राह्यता “प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम्” मनुः तानि च प्रायश्चित्तविवेके दर्शितानि तत्रादौ प्रतिग्रहे अपादाननियमः “यथा “राजतो धनमन्विच्छेत् संसीदन् स्नातकः क्षुधा। याज्यान्तेवासिनो वापि नत्वन्यत इति स्थितिः” मनुः। राजशब्दोऽत्र न्यायवर्त्तिक्षत्रियनृपतिपरः ‘न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः” इति “यो राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः स पर्यायेण यातीमान्नरकानेकविंशतिमिति” मनुनान्यराजतत्त्वन्निषेधात् देवलेन विशिष्टादेव राज्ञः प्रतिग्रहविधानाच्च “धर्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन् मेध्यमेव धनं प्राह्यस्तीक्ष्णस्यापि महीपतेः” इति “द्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः। अपि वा क्षत्रियात् वैश्यात् न तु शूद्रात् कदाचनेति” व्यासः निन्दितप्रतिग्रहस्य अपाङ्क्तीकरणम् “निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्। अपाङ्क्तीकरणं ज्ञेयमिति” मनूक्तेः चाण्डालादिप्रतिग्रहस्तु पातित्यहेतुः “चण्डालान्त्यस्त्रियोगत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतोविप्रोज्ञानात् साम्यं तु गच्छति” मनूक्तेः तेन प्रायश्चित्ताधिक्यम् रजकादीनुक्त्वा ‘भुक्त्वा चैषां स्त्रियोगत्वा पीत्वापः प्रतिगृह्य च। कृच्छ्रमब्दं चरेज्ज्ञानादिति” मनूक्तेः “पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च। मासोपवासं कुर्वीत चान्द्रायणमथापि वा” हह॰ “शौकरिकव्याधनिषादरजकवरुड़चर्मकारा न भोज्यान्ना अप्रतिग्राह्यास्तद्ग्रहणप्रतिग्रहयोश्चान्द्रायणं चरेत्” सुम॰ “रजकश्चर्मकारश्च नटोवरुड़ एव च कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः एतेषाञ्च स्त्रियोगत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतोविप्रोज्ञानात् साम्यं तु गच्छति” यमः अत्रापवादः “शय्यां गृहं कुशान् गन्धान् पतं पुष्पं फलं दधि। धानामत्स्यान् पयोमांसं शाकञ्चैव न निर्णुदेदिति” मनुः न निर्णुदेत् न त्यजेत् “अभोज्यान्नानामपि पुष्पफलशाकतृणकाष्ठधान्यानि क्षेत्रस्थान्यम्बु तड़ागस्थं, गोष्ठस्थं च पय आदाय न दोष” इति सुमन्तुः तेषाञ्च उपढौकितानामेवादाने न दोष इति प्रा॰वि॰। “अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः। अन्यत्र कुलटाषण्डपतितेभ्यो द्विष-

स्तथेति” या० स्मृत्येकवाक्यत्वात्। व्यक्तमुक्तम् “गन्धपुष्प-कुशान् शय्यां शाकं मांसं पयोदधि। मणिमत्स्यौ गृहं धान्यं ग्राह्यमेतदुपस्थितम्। मधूदकं फलं मूलमेधांस्य भयदक्षिणा अभ्युद्यतानि ग्राह्याणि” का०ख०। तेनैषामेवायाचिताहृतानां ग्राह्यता नान्येषाम्। एवञ्च चण्डालादितोऽपि शय्यादिभिन्नानामुपढौकितानामपि अप्रतिग्राह्यता। शूद्रादिप्रतिग्रहनिषेधस्तु अनापद्येव, आपदि तु तस्य कर्त्तव्यता “याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्। प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मन” इति “अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत् सर्वतः प्रतिगृह्णीयात् ब्राह्मणस्त्वनयं गतः” इति मनुना तस्याभ्यनुज्ञानात्। तत्र स्तेनात् द्रव्यं कथञ्चिदपि न प्रतिग्राह्यम् “योऽदत्तादायिनो हस्तात् लिप्सेत ब्राह्मणो धनम् याजनाध्यापनेनापि यदा स्तेनस्तथैव सः” या०उक्तेः आपदि शूद्रधनस्य ग्राह्यत्वेऽपि यज्ञार्थतया न ग्राह्यता “न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचिदिति” मनुना कर्हिचिदित्यनेन आपद्यपि तस्य निषेधात् “ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते ऋत्विजस्ते हि शूद्राणां ब्रह्मवादिषु गर्हिता” इति मनूक्तेश्च। तत्र द्रव्यविशेषे प्रतिग्रहनिषेधः। “कृतशय्याश्वयग्राही न पुनर्मानवो भवेदिति” पुरा०। “यक्षं विक्तं सुरा चाप्रतिग्राह्या ब्राह्मणानामन्येषाञ्च” वशि०। विक्तं सुवर्णम्” “सद्यः मद्दैवमपेयमनिग्राह्यमिति” ति०त० उश०। “मणिवासोगवादीनां प्रतिग्रहे सावित्र्यष्टोत्तरं जपेत् पञ्चरात्रं, मध्यमे द्वादशरात्रं पयोव्रतः शतसहस्रमसत्प्रतिग्रहे” हारी० “हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्। अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत्” मनुः। अविद्वानित्युक्तेः विदुषो न दोषाय। “किं करिष्यत्यसौ मूढोऽगृह्णन्नुभयतोमुखीम्। सहस्रं वारुणाः पाशाः क्षुरधारासमन्विताः पूर्णे वर्षसहस्रे तु पाश एकः प्रमुच्यते। एतामवस्थां प्राप्नोति गृह्णन्नुभयतोमुखीमिति” म०पु०। एतस्य विद्वदविद्वद्विषये निषिद्धता कृष्णाजिनादीनां तु अग्राह्यमङ्के ६७१पृ० उक्ता। देशकालादिविशेषे च प्रतिग्राह्याणामपि प्रतिग्राह्यता “न तीर्थे प्रतिगृह्णीयात् पुण्येष्वायतनेषु च। निमित्तेषु च सर्वेषु अप्रमत्तो भवेद्द्विजः” “तीर्थे प्रतिग्रहस्त्याज्यस्त्याज्यो धर्मस्य विक्रय” इतिप्रा०त०पु०। “पाथेयं पायसं भैक्ष्यं घृतं लवणमेव च। हस्तादत्तं न गृह्णीयात् तुल्यं गोमांसभक्षणैः” इति का० ख०। “तस्यैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषा” मित्यनेन ज्येष्ठपुत्रदानप्रतिग्रहयोर्निषेधेन तस्याप्रतिग्राह्यता। तथा “न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानात् भर्त्तुरिति” स्मृतेः भर्त्तनुज्ञानन्तरेण स्त्रियाः पुत्रस्याप्रतिग्राह्यता। परितोषार्थं विप्रदृष्टयहणे तु न दोषः। न प्रतिग्राह्यं यस्मात् ५त०। प्रतिग्राह्यद्रव्यादानान वधौ शौकरिकादौ चण्डालादौ च पु०। “न भोज्याश्चाप्रतिग्राह्या” इति प्रागुक्तमनुवाक्यम्। “प्रायश्चित्तद्रव्यग्रहणे दोष” इति प्रा०वि०।

**अप्रतिघ** त्रि० नास्ति प्रतिघः प्रतिघातकोऽस्य। १ प्रतिघातकशून्ये अप्रतिबद्धे “यस्तु दुःखसमायुक्तमप्रीतिकरमात्मनः। तद्रजोऽप्रतिघं विद्यात् सततं हारि देहिनामिति” मनुः।

**अप्रतिद्वन्द्व** त्रि० प्रतिगतः द्वन्द्वं विरोधं स्पर्द्धां वा अत्या०स० न० त०। १प्रतिस्पर्द्धाशून्ये “त्वामप्रतिमकर्म्माणमप्रतिद्वन्द्वमाहवे” रामा०। प्रतिद्वन्द्वः सहचरः। २तच्छून्ये च “सोऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः। सीतया चाप्रतिद्वन्द्व” इति रामा०।

**अप्रतिपक्ष** त्रि० नास्ति प्रतिपक्षः विपक्षः सदृशो वा यस्य। १विपक्षहीने २असदृशे च।

**अप्रतिपत्ति** स्त्री प्रतिपत्तिः कर्त्तव्यतानिश्चयः अभावे न० त०। इतिकर्त्तव्यतानिश्चयाभावे “अप्रतिपत्तिविक्लवानि चेन्द्रियाणि” काद०। २ निश्चयाभावे ३ अस्वीकारे ४अग्रहणे ५स्फूर्त्त्यभावे “उत्तरस्याप्रतिपत्तिरप्रतिभेति” गौ०सू०। न०ब०। ६तच्छून्ये त्रि०।

**अप्रतिपद्** त्रि० प्रतिपद्यते जानाति प्रति+पद–क्विप् न०त०। विकले “सर्वदेवेभ्यो प्रतिपदम्” य० २०,८। “अप्रतिपदं विकलमिति” वेददी०।

**अप्रतिपन्न** त्रि० न०त०। १अज्ञाते २अनङ्गीकृते च।

**अप्रतिबद्ध** त्रि० न प्रतिबद्धः निरुद्धः न०त०। अनिरुद्धे स्वैरे। [प्रबले २ विपक्षहीने च।

**अप्रतिबल** त्रि० नास्ति प्रतिबलः प्रतिपक्षो यस्य। १ अति-

**अप्रतिभ** त्रि० नास्ति प्रतिभा यस्य। १ प्रतिभाशून्ये २अप्रगल्भे ३ स्फूर्त्तिशून्ये ४ प्रत्युत्पन्नमतिशून्ये ५अधृष्टे ६लज्जिते च।

**अप्रतिभा** स्त्री अभावे न०त०। वादिप्रतिवादिनोर्वादे प्रवृत्ते वादिनोद्भावितदोषोद्धारणोपायज्ञानेऽपि तत्कालं प्रतिवादिनः१ स्फूर्त्त्यभावरूपे निग्रहस्थानभेदे “उत्तरस्याप्रतिपत्तिरप्रतिभेति” गौ०सू०।२ प्रगल्भताभावे च।

**अप्रतिम** त्रि० नास्ति प्रतिमा उपमा यस्य । अतुल्ये “अनुपमे-“त्वामप्रतिमकर्म्माणमप्रतिद्वन्द्वमाहवे” इति रामायणम् ।

**अप्रतियोगिन्** त्रि० नास्ति प्रतियोगी तुल्यरूपः यस्य । स्त्रियां ङीप् । १ अनुपमे । प्रतियोगी अभावसंबन्धी न०त० । २ अभावसम्बन्धिभिन्ने । “अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते” भाषा० । यस्याभावः स एव प्रतियोगीति वृद्धाः ।

**अप्रतिरथ** पु० नास्ति प्रतिरथः प्रतियोद्धा यस्य । १ प्रतियोधशून्ये । नास्ति प्रतिरथः तुल्यः मङ्गलार्थत्वेनास्य ।२याला मङ्गलार्थे सामभेदे ।“एष सोऽप्रतिरथोऽथ यः स इहस्पतिरिति”“ब्रह्मा दक्षिणतोऽप्रतिरथं जपति”इति च शत०ब्रा०

**अप्रतिरव** त्रि० न प्रतिकूलो रवः प्रतिरवः स नास्ति यत्र । ममेदं द्रव्यं त्वया न भोक्तव्यमित्यादि प्रतिषेधकवचनशून्ये भोगे । “अप्रतिरवं विंशतिवर्षोपभोगनिमित्ता हानिर्भवति” मिता० ।

**अप्रतिरूप** त्रि० नास्ति प्रतिरूपस्तुल्यरूपो यस्य । असदृशे ।

**अप्रतिरूपकथा** स्त्री नास्ति प्रतिरूपा प्रत्युत्तरीभूता कथा यस्याः । उत्तरवाक्यरहितायां वाचि । [पराक्रमे ।

**अप्रतिवीर्य्य** त्रि० न प्रतिरुद्धं वीर्य्यं यस्य । अन्यैरनिरोध्य

**अप्रतिषिद्ध** त्रि० न प्रतिषिद्धम् । अनिषिद्धे “अप्रतिषिद्धमनुमतं भवतीति” न्यायः सौवर्णराजतौम्बरखड्गमणिमयपात्राणामन्यतमेषु अप्रतिषिद्धेषु वेति” आ०त० गोभिलः “अप्रतिषिद्धानि कदलीदलत्वगादीनि” रघु० ।

**अप्रतिष्कुत** त्रि० प्रति+स्कु–क्त न०त० वेदे षत्वम् । १अप्रतिशब्दिते “स वीरो अप्रतिष्कुतः” ऋ० ७,३२,६, “अप्रतिगतोऽप्रतिशब्दितो वा” भा० २अप्रतिगते च ।

**अप्रतिष्ठ** न० नास्ति प्रतिष्ठा यस्य । १अन्याधारशून्ये स्वधामप्रतिष्ठिते ब्रह्मणि । “स भगवः ! कस्मिन् प्रतिष्ठितः स्वे महिम्नीति”श्रुतेस्तस्यान्याधारशून्यत्वात्तथात्वम् । २अनाश्रये ३निष्फले । “सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम् । नष्टं देवलके दत्तमप्रतिष्ठं तु वार्द्धुषौ” मनुः ४प्रशंसाशून्ये च त्रि० । अभावे न०त० । ५प्रशंसाभावे स्त्री । अप्रतिष्ठितमप्यत्र । स च विष्णौ पु० । “अपांनिधिरधिष्ठानमप्रमत्तोऽप्रतिष्ठित” इति विष्णु सह० ।

**अप्रतिसंख्य** त्रि० न प्रतीता संख्या यस्य उत्तरपदलोपः । अयमेकः अयमेक इत्याकारापेक्षाबुद्ध्यभावेन १प्रत्येकसंख्याग्रहणाभावादनुपलब्धसंख्याके वस्तुनि । प्रतिसंख्या बुद्धिविशेषः । अभावे न०त० । २विशेषबुद्ध्यभावे स्त्री ।

**अप्रतिसंख्यानिरोध** पु० न प्रतिसंख्यया बुद्ध्या निरोधः । १ बौद्धविशेषकल्पिते अबुद्धिपूर्व्वके भावविनाशे । तद्विशेषः बौद्धशब्दे वक्ष्यते । सोऽयम् प्रतिसंख्यानिरोधः “प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्” शा०सू० प्रत्याख्यातः । “अपि च वैनाशिकाः कल्पयन्ति बुद्धिबोध्यं त्रयादन्यत् संस्कृतं क्षणिकञ्चेति” तदपि त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशञ्चेत्याचक्षते । त्रयमपि चैतद्वस्तु अभावमात्रं निरुपाख्यमिति मन्यन्ते बुद्धिपूर्व्वकः किल विनाशोभावानां प्रतिसंख्यानिरोधोनाम भाष्यते तद्विपरीतोऽप्रतिसंख्यानिरोधः आवरणाभावमात्रमाकाशमिति प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरप्राप्तिरसम्भव इत्यर्थः । कस्मात् ? अविच्छेदात् तौ हि प्रतिसंख्याऽप्रतिसंख्यानिरोधौ सन्तानगोचरौ वा स्याताम् भावगोचरौ वा । न तावत् सन्तानगोचरौ सम्भवतः, सर्व्वेष्वपि सन्तानेषु (ज्ञानप्रवाहेषु) सन्तानिनामविच्छिन्नफलहेतुभावेन सन्तानविच्छेदस्यासम्भवात् नापि भावगोचरौ, नहि निरान्वयो निरुपाख्योविनाशः सम्भवति सर्व्वास्ववस्थासु प्रत्यभिज्ञावलेनान्वयाविच्छेददर्शनात् अस्पष्टप्रत्यभिज्ञास्ववस्थासु क्वचिद्दृष्टेनान्वयाविच्छेदेन अन्यत्रापि तदनुमानात् । तस्मात् परकल्पितस्य निरोधद्वयस्यानुपपत्तिरिति” शङ्करभाष्यम् ।

**अप्रतिश्रुत** त्रि० न०त० । अनङ्गीकृते दातव्यत्वेनास्वीकृते ।

**अप्रतिहत** त्रि० न प्रतिहतोऽभिभूतः प्रतिरुद्धो वा न०त० । अन्यैरनभिभूते २अप्रतिरुद्धे च । [३निरवयवे ब्रह्मणि न० ।

**अप्रतीक** त्रि० नास्ति प्रतीकमेकदेशो यस्य । १ सम्पूर्णे

**अप्रतीक्षा** स्त्री न प्रतीक्षा अपेक्षया कालयापनम् अभावे न०त० । १ प्रतीक्षाभावे कार्य्यजननाय इतरापेक्षया कालयापनाभावे २इतरानपेक्षया त्वरितकरणे । न०ब० । ३प्रतीक्षाशून्ये “अथाप्रतीक्षं पुनरायन्ति” शत०ब्रा० ।

**अप्रतीत** त्रि० प्रति+इण–क्त प्रतीतः परिज्ञातः प्रतिगतश्च न०त० । १ प्रतिगतभिन्ने “सहस्रसां वाजिनमप्रतीतम् ऋ० १,११७,८, । “अप्रतीतं शत्रुभिरप्रतिगतम्” भा० “सहन्ती अप्रतीतस्य” ऋ० । ५,४२,६, “अप्रतीतस्य” प्रतिगतस्य भा० २अपरिज्ञाते “देवेभिर्विश्वतो अप्रतीतः” ऋ० २,४६,२, “अप्रतीतः एतावदस्य सामर्थ्यमित्यपरिच्छिद्यमानः” भा० ३अपलायिते च ।

**अप्रतीति** न० अभावे न०त० । ज्ञानाभावे “न स्फोटः प्रतीत्यप्रतीतिभ्याम्” सां० सू० ।

**अप्रतीत्त** त्रि० प्रति+दा–क्त प्रतीत्तं प्रतिदत्तं न०त० ।

प्रतिद्वन्द्विभिन्ने "अपमित्यमप्रतीत्तं यदस्मि यमस्य येन बलिना चरामि" इति अथर्ववेदः ६,११७,१,

**अप्रतीप** त्रि० विरोधे न०त०। प्रतीपभिन्ने अनुकूले।

**अप्रत्यय** पु० न प्रत्ययः विश्वासो ज्ञानं वा अभावे न०त०। १विश्वासाभावे "दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानामिति" शिह्लनः न०ब०। २ विश्वासशून्ये। "बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः" शकु०। ३ज्ञानाभावे पु०। न०ब०। ४ज्ञानशून्ये त्रि०। प्रत्ययः-प्रकृतिनिमित्तकः अर्थबोधकः सुबादिशब्दभेदः न०त०। ५सुबादिशब्दभिन्ने सार्थके प्रकृतिरूपे शब्दे "अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति" पा०।

**अप्रत्याख्येय** त्रि० न०त०। अपरिहार्य्ये त्यक्तुमशक्ये।

**अप्रधान** न० न प्रधानम्। १प्रधानभिन्ने मुख्यभिन्ने गौणे। "प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणाम् अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्म्मणः" हरिः कर्म्मणोऽप्रधानत्वञ्च अप्रधानक्रियाफलाश्रयत्वम्। "प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानतेति" भाट्टाः। २अनुत्कृष्टे अस्य त्रिलिङ्गत्वमपीष्यते। "अप्रधानः प्रधानः स्यात् सेवते यदि पार्थिवम्। प्रधानोऽप्यप्रधानः स्याद्यदि सेवाविवर्जितः" नीति०। ३ प्रधानकर्म्माङ्गे न० "अप्रधानकालं सकृदसन्निपातात्" कात्या० १,७,१५, अयमर्थः। "वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यनारभ्याधीतमग्न्याधानमग्निहोत्रादीनामङ्गमिति कृत्वा चिन्त्यते किमङ्गं सत् आधानं प्रतिकर्म प्रतिप्रयोगं च भेदेन कर्त्तव्यम् उत सर्व्वप्रयोगाणां साधारणं सकृदिति। तत्र कर्म्माङ्गत्वे प्रयाजाद्यङ्गवत् प्रतिकर्म्मभेदेन कर्त्तव्यम् न च बहिःकालत्वेनाग्न्याधानविशेषता, यद्ध्यस्यानन्तरं क्रियते तत्तदर्थमित्यानन्तर्य्येण विशेषग्रहणात्। तस्मात् प्रतिकर्मभेदेनाधानप्राप्ताविदमुच्यते अप्रधानकालं यदङ्गमाधानसञ्ज्ञम् तत्सकृदेव कर्त्तव्यम् न भेदेन कर्मण आदौ। कुतः? असंनिपातात् न चैतत् कस्यचित् कर्मणः प्रक्रमे कर्ममध्ये वा संनिपतितम् येन विशेषग्रहणं स्यात् किन्तु यदैव किञ्चिदग्निकार्य्यं निमित्तवशात् कामवशाद्वा यथाकामं प्राप्तम् तदर्थमाधास्येऽग्नीनिति, न तु कञ्चिदेव कर्मविशेषमभिसंधायाधानम् एवमनभिसंहितकर्मविशेषेण सर्वोद्देशेनाधाने कृते यद्यपि कारणवशात् किञ्चित् कर्म प्रथममापतति तथापि न तादर्थ्यमेव भवति प्रथमावस्थायामेव सर्वार्थत्वावधारणात् तस्मात् अप्रधानकालीनत्वात् सकृदेव कार्य्यमिति" कात्या०व्या०।

**अप्रधृष्य** त्रि० न प्रधर्षितुं शक्यः। १अतिक्रान्तुमशक्ये २धर्षितुमशक्ये च। "यदाश्रौषं भीष्ममत्यन्तशूरं हतं पार्थेनाहवेष्वप्रधृष्यम्" भा०आ०प०।

**अप्रपन्न** त्रि० न०त०। १प्राप्तभिन्ने, २अनागते, ३अज्ञाते च

**अप्रबल** त्रि० न प्रबलः। प्रबलभिन्ने हीनबले।

**अप्रभाव** पु० न प्रभावः अभावे न०त०। १ प्रभावाभावे न०ब०। २ प्रभावशून्ये त्रि०।

**अप्रभूत** त्रि० न प्रभूतः न०त०। प्रचुरभिन्ने स्वल्पे।

**अप्रमत्त** त्रि० प्र+मद—क्त प्रमादवान् विरोधे न०त०। सावधाने "निमित्तेषु च सर्व्वेषु अप्रमत्तोभवेन्नर" इति स्मृतिः। "यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्" "युक्तश्चाप्रमत्तश्च परिरक्षेदिमाः प्रजाः" इति च मनुः २ विष्णौ पु० "अपां निधिरधिष्ठानमप्रमत्तोऽप्रतिष्ठितः" विष्णुस० "अप्रमत्तोऽधिकारिभ्यः कर्म्मानुरूपं फलं यच्छन्नप्रमत्तः" इति भा०। २ मद्यादिना प्रमत्तभिन्ने त्रि०।

**अप्रमय** पु० न प्रमीयते प्र+मि—अच् वेदे नात्वम्। अप्रमेये "मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्" शत० ब्रा० "अप्रमयमप्रमेयम्" भा०।

**अप्रमाण** न० न प्रमाणं विरोधे न०। प्रमाज्ञानभिन्नभ्रमादिजनके वाक्यादौ। तानि च "वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम्। यस्य प्रमाणं न भवेत् प्रमाणं कस्तस्य कुर्य्याद्वचनं प्रमाणमिति" स्मृत्युक्तवेदादिप्रमाणभिन्नानि चार्वाकादिवचनानि "नद्यां शिलाः तरन्तीत्यादीनि प्रमाणान्तरविरुद्धार्थकानि वचनानि" च। एवं पित्तादिदुष्टानि इन्द्रियाणि आभासकलितानि लिङ्गानि च। "प्रमाणत्वाप्रमाणत्वे" इत्यादि मीमांसा।

**अप्रमाद** पु० न प्रमादः अभावार्थे न०त०। १ प्रमादाभावे "अप्रमादेन गन्तव्यं कान्तारेषु नदीषु च" इति "अप्रमादश्च कर्त्तव्यः सर्व्वभूतेषु नित्यशः" इति च रामा०। न०ब० २प्रमादशून्ये त्रि० "माता च मम कौशल्या। कुशलं चाभिवाद्यताम्। अप्रमादं च वक्तव्यमिति" रामा० "प्रमादश्च कर्त्तव्येषु अकर्त्तव्यत्वभ्रमेण ततोनिवृत्तिः। अकर्त्तव्येषु च कर्त्तव्यत्वभ्रमेण तत्र प्रवृत्तिरिति" मञ्जूषादयः। [प्रमादहीने स्त्रियां ङीप्।

**अप्रमादिन्** त्रि० न प्रमाद्यति प्र+मद—णिनि न०त०।

**अप्रमायुक** त्रि० प्र+मि+उण् आत्त्वे युक् स्वार्थे कन् न०त०। अपरिच्छेदके। "कृणोत्वप्रमायुकं रथयुतिमनागसम्" अथ० १८,४४,२।

**अप्रमित** त्रि० न प्रमितः न०त०। १अपरिमिते २अनुपलब्धे च।

**अप्रमीय** त्रि० प्र+मा–बा० कर्मणि य०न०त०। अप्रमेये। "गजराजिमुख्याः शाऽप्रमीयाः प्रमीयन्ते" श्रुतिः।

**अप्रमूर** त्रि० प्र+मूर्छा–क्विप् प्रमूः मूर्छा अस्त्यर्थे कुञ्जादि० र न त०। १मूर्छायुक्तभिन्ने अमूर्च्छिते। "ते हि वस्वो वसवानास्ते अप्रमूरा महोभिः" ऋ० १,९०,२, "अप्रमूराः अमूर्च्छिताः" भा०।

**अप्रमृष्ट** त्रि० प्र+मृष–क्त न०त०। १ अमोढ़े अक्षान्ते। प्र+मृज–क्त न०त०। २ अमृष्टे ३अप्रोञ्छिते प्र+मृश–क्त न०त०। ४अज्ञाते च।

**अप्रमृष्य** त्रि० न प्रमृष्यः प्र+मृष–क्यप् न०त०। १ बाधितुमशक्ये। "सुदामं तद्रेक्णो अप्रमृष्यम्" ऋ० ६,२०,७। "अप्रमृष्यं केनाप्यबाध्यम्" भा०।

**अप्रमेय** त्रि० प्रमातुं ज्ञातुं परिच्छेत्तुं वा योग्यं न०त० १अपरिच्छेद्ये २बहुसंख्यकार्य्यवति ३इदमित्थमिति निर्णेतुमशक्ये "त्वमेकोह्यस्य सर्वस्य विधानस्य स्वयम्भुवः। अचिन्त्यस्याप्रमेयस्य कार्य्यतत्त्वार्थवित्प्रभो" मनुः "स्वयंभुवोऽपौरुषस्य विधानस्य वेदस्य" कुल्लू०। "अशक्यञ्चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः" मनुः। ४ ब्रह्मणि न० केनापि प्रमाणेन तस्य प्रमातुमशक्यत्वात्। वेदान्तिमते हि प्रमाणानि षट् प्रत्यक्षानुमानशब्दोपमानार्थापत्तियोग्यानुपलब्धिभेदात् तत्र परब्रह्मणः न प्रत्यक्षप्रमाणचक्षुरादिगम्यता रूपाद्यभावात् "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदिति" श्रुतौ तस्य रूपाद्यभावस्योक्तेः। नापि अनुमानगम्यता व्याप्तिलिङ्गाद्यभावात् "असङ्गोऽयं पुरुष" इति श्रुत्या तस्य सर्वसङ्गशून्यतोक्तेः नाप्युपमानगम्यता निर्द्धर्मकत्वेन, तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वलक्षणस्य सादृश्यस्य तत्राभावात्। न चार्थापत्तिगम्यत्वम् किञ्चिद्वस्तु विना अनुपपद्यमानस्यैवार्थस्यार्थापत्तिप्रमाणवेद्यतया तद्भिन्नवस्त्वभावेन तत्र तदसम्भवात्। न्यायमते च अर्थापत्तेर्व्यतिरेकव्याप्तिहेतुकानुमानेऽन्तर्भावेण तल्लिङ्गस्य तत्राभावात्। योग्यानुपलब्धेरभावमात्रप्रमाणत्वात् परब्रह्मणश्च सदात्मकत्वेनाभावरूपत्वाभावात्। नापि शब्दप्रमाणवेद्यत्वम् तत्र शाब्दबोधोपायशक्त्यादेरभावात् अतएव "यद्वाचा न मनुते येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुत्याऽस्य वाग्विषयत्वं निराकृतम्। न च लक्षणया तद्बोधः, शक्यसम्बन्धरूपलक्षणायाः निःसम्बन्धे तस्मिन्नप्रवृत्तेः। अतएव "ब्रह्मन्! ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति? श्रुतयः साक्षात् सदसतः परे" इति भागवते गुणवृत्तिश्रुतिगोचरताशून्यत्वमस्योक्तम्। न च प्रमाणागोचरत्वे तस्य कथं सिद्धिः? कथं वा "तन्त्वौपनिषदं पुरुषं वेदेति" श्रुतौ "शास्त्रयोनित्वादिति" शा० सूत्रे च तस्य उपनिषद्वेद्यत्वमुक्तं संगच्छताम्? शास्त्रजनितवृत्त्यैव तस्य विषयीकरणात् तथात्वसङ्गतेः। तथा च शास्त्रजन्यान्तःकरणविषयत्वमेव तस्य न तु तदवच्छिन्नचैतन्यविषयतापि यथोक्तं "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षितेति" फलति प्रतिविम्बति बुद्धिवृत्तौ फलं चिदाभासस्तद्व्याप्यत्वं तद्विषयत्वं तेन यथा घटपटादीनां तदाकारबुद्धिवृत्तिप्रतिफलितेन चिदाभासेनैव प्रकाश्यता, न तथा ब्रह्मणः स्वप्रकाशतया तस्य इतराप्रकाश्यत्वात् किन्तु स्वयं प्रकाश्यता न तु तत्राप्यपेक्षास्ति। परन्तु स्वाज्ञाननाशायैव बुद्धिवृत्तेरपेक्षामात्रं सा च शब्दजनितेति उपनिषद्वेद्यता इत्युभयश्रुतिसामञ्जस्यम्। वाचस्पतिमते तु शब्दादपि अखण्डाकारा काचित् दशमस्त्वमसीत्यादिवत् मनोवृत्तिरुदेति तद्विषयत्वादस्य शास्त्रवेद्यता। "मनसैवानुद्रष्टव्यमिति" श्रुतेस्तस्य मनोमात्रवेद्यत्वेऽपि "तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनमिति" शास्त्रात् मनःसंस्कारे च शास्त्रापेक्षणात् शास्त्रवृत्तिवेद्यता। न च मनोवृत्तिवेद्यत्वेऽप्रमेयत्वहानिः। असंस्कृतमनोविषयत्वाभावेनैव तथात्वात् "अवाङ्मनसगोचरमिति" वाक्यस्यापि तत्रैव तात्पर्य्यात्। मनोविषयत्वोक्तिरपि अज्ञाननाशार्थमनोवृत्तिमात्रवेद्यताभिप्रायेण, तदवच्छिन्नचिदाभासविषयत्वाभावाच्चाप्रमेयता "यन्मनसा न मनुते येन मनोऽनुमन्यते" इति श्रुतेस्तदर्थत्वात्। जगत्कर्त्तृत्वेन ईश्वरस्यानुमानेऽपि कूटस्थस्य तदनुमानगम्यत्वाभावात् ईश्वरस्यैव श्रुतिप्रमाणकत्वेन उपनिषद्वेद्यतोक्तिः। तदुत्तरं मननादिना श्रुतिवाक्यतात्पर्य्यावधारणेनाखण्डब्रह्माकारा चित्तवृत्तिरुदेति इति न काचिदनुपपत्तिः। नैयायिकादिमते तु तद्गुणगणस्य परिमातुमशक्यत्वात् दुष्टाशयावेद्यत्वाच्च अप्रमेयत्वमिति। प्र+मि+कर्मणि यत् न०त०। अपरिच्छेद्ये "यदाप्नोषि वासुदेवार्जुनौ तौ तथा धनुर्गाण्डिवमप्रमेयम्" भा०आ०प०।

**अप्रयत्न** पु० प्रकृष्टो यत्नः प्रयत्नः प्रयासः अभावे न०त०। १प्रयत्नाभावे प्रयासाभावे। न०ब०। २प्रयासशून्ये त्रि०। "अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः" मनुः।

**अप्रयुत** त्रि० प्र+यु–मिश्रणे अमिश्रणे च क्त न०त०। १अपृथग्भूततया युते २पृथग्भूततया युते च।

**अप्रयुत्वन्** त्रि० प्र+यु–पृथग्भावे क्वनिप् न०त०। अपृथग्भूते "पर्तृभिरिन्द्रमदद्भिरप्रयुत्वभिः" ऋ० ६,४८,१०, "अप्रयुत्वभिरपृथग्भूतैः" भा०।

**अप्रलम्ब** न० प्र+लम्ब–घञ् अभावे न०त०। १विलम्बाभावे शीघ्रे २तद्वति त्रि० हलायुधः।

**अप्रवर्त्तिन्** त्रि० न प्रवर्त्तितुं शीलमस्य ताच्छील्ये इनि। १प्रवृत्तिशीलशून्ये २अनन्ते ३विच्छेदरहिते स्त्रियां ङीप्। ४अनुच्छित्तौ "नैतदस्मिन् सर्वदिवाः अप्रवर्त्तीति" छा०उ०। "अयं वाव स योऽयमन्तर्हृदयाकाशस्तदेतत् पूर्णमप्रवर्त्ति अप्रवर्त्तिनीं श्रियं लभते य एवं वेद" इति छा० उ०। "अप्रवर्त्ति अनुच्छित्तिधर्मकमिति" भा०।

**अप्रवीत** त्रि० प्र+वी–प्रजननादिषु क्त न०त० १अजाते। गर्भधारणेन गतसारभिन्नायां २अकामितायां च स्त्रियां स्त्री। "दक्षिणेन द्वारं सोमक्रयणी तिष्ठत्यलक्षिता व्यङ्गाऽप्रवीतेति" कात्या० ७,६,१४, "अप्रवीता वी गतिजननकान्त्यादिषु अत्र प्रजननार्थः प्रशब्दात् वाक्यशेषाच्च प्रजाता हि गतसारा भवति नोपभोगमात्रेण। तस्मादप्रवीताऽप्रजातेति हरिस्वामी। अकामितेति कर्कभा० ३अयातयामायां स्त्रियाम् "सा स्यादप्रवीता याम्या एषा निदानेन यत् सहस्री अजातयाम्नी या इयं वागयातयाम्नी अप्रवीता, तस्मादप्रवीता स्यादिति" शत०ब्रा० ५अनुपगते त्रि० "यदप्रवीता दधते ह गर्भम्" ऋ० ४,७,६, "अप्रवीता अनुपगता" भा०। [निवृत्ते।

**अप्रवृत्त** त्रि० न प्रवृत्तः विरोधे न०त०। प्रवृत्तिभिन्ने

**अप्रवेद** त्रि० नास्ति प्रवेदः लाभोऽस्य। १दुर्लभे। "अलस्तु आप्रवेदे इति माह कस्माच्च न लस्तु प्रलाभीमौत इदं पुटं कचन प्रविदतेत्येवैतदाह" शत०ब्रा० "नास्ति प्रवेदः प्रलाभः ययोः दुर्लभे" इति भा०।

**अप्रशस्त** त्रि० न प्रशस्तम् विरोधे न०त०। १प्रशस्तभिन्ने अपकृष्टे २दुष्टे "अप्रशस्तांस्तु कृत्वाप्सु मासमासीत भैक्षभुक्" मनुः। ३निन्दिते च "अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनादिति" परा०। ४क्षीणे "पान्ति मित्रावरुणाववद्याच्चयत ईमर्यमोऽप्रशस्तान्" ऋ० १,१६७,८, "अप्रशस्तान् क्षीणान्" भा०। यावत्पदार्थस्य यत्र उचितत्वम् ततोऽन्यूनत्वे अस्य प्रवृत्तिः।

**अप्रसक्त** त्रि० न प्रसक्तः अभिनिवेशयुक्तः संबद्धो वा। १अभिनिवेशशून्ये, आग्रहरहिते २प्रसङ्गरहिते च अप्रसक्तनिषेधानुपपत्तेरिति मीमांसा। ३असंबद्धे।

**अप्रसक्ति** स्त्री अभावे न०त०। प्रसङ्गाभावे न०ब०। प्रसङ्गशून्ये त्रि० प्रसक्तिराग्रहः प्राप्तिश्च।

**अप्रसङ्ग** पु० अभावे न०त०। १सम्बन्धाभावे। न०ब०। २सम्बन्धशून्ये त्रि०। प्रसङ्गः उत्तराभिधाने सङ्गतिभेदः अभावे न०त०। ३सङ्गत्यभावे। न०ब०। ४तच्छून्ये त्रि० "अप्रसङ्गाभिधाने च श्रोतुः श्रद्धा न जायते" वृद्धाः।

**अप्रसन्न** त्रि० न०त०। १प्रसादशून्ये २अस्वच्छे ३चित्तप्रसादशून्ये ४स्फूर्त्तिहीने ५असन्तुष्टे च।

**अप्रसाद्य** त्रि० न प्रसादयितुं योग्यम्। १प्रसादयितुमयोग्ये तीव्रकोपयुते।

**अप्रसाह** पु० न प्रसह्यतेऽभिभूयते प्र+सह–कर्मणि घञ्। १अनिष्टादिना अनभिभूयमाने "पश्चादग्नेः संविशति चर्मणि स्थण्डिले वा वाचंयमोऽप्रसाहः" छा०उ०। "न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टप्रदर्शनेन" भा०।

**अप्रसिद्ध** त्रि० न०त०। १अनिष्पन्ने २अविख्याते च "अथ प्रसिद्धं वयसि हि पुंसामिति" कुमा०।

**अप्रसृत** त्रि० न प्रसृतः। १विस्तारशून्ये प्रसरशून्ये।

**अप्रस्तुत** त्रि० न प्रस्तुतः। १अनिष्पन्ने २कार्य्यसाधनायानुद्युक्ते ३अप्रक्रान्ते ४असंस्तुते च।

**अप्रस्तुतप्रशंसा** स्त्री सा०द०उक्ते अर्थालङ्कारभेदे तल्लक्षणादि "क्वचिद्विशेषः सामान्यात्१, सामान्यं वा विशेषतः२। कार्य्यान्निमित्तं३ कार्य्यञ्च ४हेतोरथ समात् समम्५॥ अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्यात्"। "पादाहतं यदुत्थाय मूर्द्धानमधिरोहति। स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः"॥ अत्रास्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितम्। "स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्?। विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया"॥ अत्रेश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं, हितकारिणोऽप्यहितकारित्वमिति सामान्ये प्रस्तुते विशेषोऽभिहितः। एवञ्चात्राप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः। दृष्टान्ते प्रसिद्धमेव वस्तु प्रतिबिम्बत्वेनोपादीयते। इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः। "इन्दुर्लिप्त इवाञ्जनेन, जडिता दृष्टिर्मृगीणामिव, प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा। कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हैव

मनु ॥" अत्र संभाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्य्येभ्यो वदनादिगतसौन्दर्य्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते। "गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं त्यक्त्वा तिर्य्यगवेक्ष्य बाष्पकलुषेणैकेन मां चक्षुषा। अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यतामित्थं स्नेहविवर्द्धितो मृगशिशुः सोत्प्रासमाभाषितः ॥" अत्र कस्यचिद्गमनरूपे कार्य्ये कारणमभिहितम्। तुल्येऽप्रस्तुते तुल्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च। श्लेषमूलापि समासोक्तिवद्विशेषणमात्रश्लेषे, श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा। क्रमेण यथा ॥ "सहकारः सदामोदो वसन्तश्रीसमन्वितः। समुज्ज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाकुलः" ॥ अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः "पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि यायाद्यदि प्रणयनेन महानपि स्यात्। अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक् प्रकटिता पुरुषोत्तमेन" ॥ अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते। तेन वर्णनीयः कश्चित् पुरुषः प्रतीयते। सादृश्यमात्रमूला यथा। "एकः कपोतपोतः शतशः श्येनाः क्षुधाभिधावन्ति। अम्बरमावृतिशून्यं हरि हरि शरणं विधेः करुणा" ॥ अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते। इयं क्वचित् वैधर्म्म्येणापि भवति। यथा "धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः। राममिन्दीवरश्यामम् ये स्पृशन्त्यनिवारिताः" ॥ अत्र वाता "धन्या अहमधन्या इति वैधर्म्म्येण प्रस्तुता प्रतीयते। वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम्। तत्र सम्भवे उक्तोदाहरणान्येव। असम्भवे यथा। "कोकिलोऽहं भवान् काकः समानः कालिमावयोः। अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः" ॥ अत्र काककोकिलयोर्वाकोवाक्यम् प्रस्तुताध्यारोपणं विनाऽसम्भवि। उभयरूपत्वे यथा। "अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः। कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः" ॥ अत्र प्रस्तुतस्य कस्यचिदध्यारोपणम् विना कमलनालान्तश्छिद्राणाम् गुणभङ्गुरीकरणे हेतुत्वमसम्भवि अन्येषान्तु सम्भवीत्युभयरूपत्वम्।

**अप्रहत** त्रि० न प्रहन्यते स्म प्र+हन—क्त न०त०। अनुप्ते (खिल) इति ख्याते अकृष्टभूम्यादौ। "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् निर्णेजकाचालितञ्चाप्रहतं वाससुच्यते" इति विधा०पा० उक्ते वासोभेदे अहतमिति पाठान्तरम्।

**अप्रहन्** त्रि० न प्रहन्ति प्र+हन्—क्विप् न०त०। स्त्रियां ङीप्। "कार्य्यानाशके तदनुत्पादके "त्वमेको अप्रहणं स्तवीषे सबसाम्प्रतिम्" ऋ०६,४४,४। "अप्रहणमनुत्पादकमिति" भा०।

**अप्राकृत** त्रि० प्रकृतेरागतम् अण् प्राकृतम् न०त०। १प्रकृतिकार्य्यभिन्ने ईश्वरलीलादौ। प्रकृतेः स्वभावस्य अयम् अण् न०त०। २स्वभावसम्बन्धिभिन्ने असामान्ये मनुष्यादौ च।

**अप्राग्र्य** त्रि० न प्राग्र्यः प्रधानः विरोधे न०त०। श्रेष्ठभिन्ने [अधमे।

**अप्राण** त्रि० नास्ति देहादुत्क्रान्तत्वात् प्राणो यस्य। १मृते शवे। सर्व्वथा प्राणशून्ये २ईश्वरे पु० "अप्राणोह्यमनो वुद्धिरिति" श्रुतिः।

**अप्राप्त** त्रि० न प्राप्तः प्रमाणान्तरावगतः। १ प्रमाणान्तरानवगते "अप्राप्तप्रापको विधिरिति" "अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इति च मीमांसा। २अनागते च।

**अप्राप्तकाल** त्रि० न प्राप्तः कालोऽस्य। अप्राप्तसमये। "अवयवविपर्य्यासवचनमप्राप्तकालमिति" गौ०सू० उक्ते २सभाक्षोभव्यामोहादिना व्युत्क्रमाभिधानरूपे वादिदोषभेदे च। प्रतिज्ञाहेतूदाहरणादीनां यथाक्रमं विन्यासे हि वादसम्भवः। तेषां व्युत्क्रमकथने वादिनो निग्रहः।

**अप्राप्तप्रापक** पु० अप्राप्तं प्रापयति बोधयति प्र+आप—णिच्—ण्वुल् ६त०। प्रमाणान्तरेणानवगतस्य यागादीनामिष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा बोधके लिङादौ शब्दे। तथा च प्राथमिकप्रवृत्तिजनकप्रतीतिजनकत्वं तत्त्वम् भवति च स्वर्गकामोयजेतेत्यादौ लिङ्युक्तं वाक्यं यागे इष्टसाधनतां कृतिसाध्यतां वा बोधयत् प्रेरकत्वात्तथा। अप्राप्ता दम्यावस्था यस्य ततः स्वार्थे कन् देवकवत् उत्तरपदलोपः। २अप्राप्तदम्यावस्थे वत्से "प्रादद्यादप्राप्तके देयः" स्मृतिः "अप्राप्तके अप्राप्तदम्यावस्थे" इति रघु०।

**अप्राप्तव्यवहार** त्रि० न प्राप्तः व्यवहारयोग्यः कालोऽस्य। "अप्राप्तव्यवहारोऽसौ यावत् षोड़शवर्षक" इति दक्षोक्ते अपूर्णषोड़शवर्षवयस्के बाले "गर्भस्थैः सदृशो ज्ञेय आष्टमात् वत्सराच्छिशुः। बाल आ षोड़शाद्वर्षात् पौगण्डश्च निगद्यते। परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते इति" नारदः। "अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम्। न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च" कात्या० स्मृतिः।

**अप्राप्ता** स्त्री न प्राप्तः विवाहप्रयुक्तकालोऽस्याः ब० उत्तरपदलोपः। अप्राप्तविवाहप्रयुक्तकालायां कुमार्य्याम्।

"उत्कृष्टायाभिरूपाय वराय सदृशाय च । अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि" मनुः "अप्राप्ताम् अप्राप्त विवाहप्रशस्तकालाम्" उ०त० रघुनन्दनः ।

**अप्राप्ति** स्त्री अभावे न०त० । १ लाभाभावे "तदप्राप्ति-महादुःखविलीनाशेषपातका" का०प्र० २प्रमाणान्तरतो-ज्ञानाभावे "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सतीति" मीमां० ३असम्भवे "प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्ति-रिति" शा०सू० । "अप्राप्तिरसम्भव" इति भा० । ४अनुपपत्तौ च "समुदायहेतुकेऽपि तदप्राप्तिः" शा०सू० । समुदायाप्राप्तिः समुदयभावानुपपत्तिः भा० । न०ब० । ५लाभशून्ये त्रि० ।

**अप्रामाणिक** त्रि० प्रमाणेन सिद्धः, प्रमाणं वेद वा ठञ् न०त० । १प्रमाणासिद्धे २प्रमाणानभिज्ञे च स्त्रियां ङीप् । "अप्रमाणिकीयमनवस्थेति" सां०भा० ।

**अप्रामाण्य** न० अभावे न०त० । १यथार्थबोधकत्वाभावे "अप्रामाण्यं कथयति सदा नन्दसूनोर्वियोगः" पदा० अप्रामाण्यहेतुकानुष्ठानाभावे च "अननुष्ठानलक्षणमप्रा-माण्यम्" सां०सू० ।

**अप्रामि** त्रि० प्रकर्षेण अम्यते हिंस्यतेऽसौ प्र+अम-णिच् कर्म्मणि इन् न०त० । अहिंसिते, "अप्रामिसत्यमघवन्" । ऋ० ८,६०,४, "अप्रामिसत्यः अहिंसितसत्यः" भा० ।

**अप्रायु** त्रि० प्र+इण-उण् न०त० । अगन्तरि, "असन्नप्रा-युवोरक्षितारो दिवेदिवे" ऋ० १,८९,१, "अप्रायुवः अप्रायवः अगच्छन्तः वेदे तन्वादित्वादुवङ्" भा० ।

**अप्रायुस्** त्रि० न प्रकृष्टं प्रगतं वाऽऽयुर्यस्य । १प्रकृष्टायुर्भिन्ने २गतायुर्भिन्ने च । "नक्तयः सुदर्शतरोदिवातरादप्रायुषः ऋ० १,१२७,५ ।

**अप्रिय** न० विरोधे न०त० । प्रियभिन्ने इष्टभिन्ने स्वभा-लोद्दिष्टे दुःखे "न ह वै सशरीरस्य सतः प्रियाप्रिययोरप-हतिरस्ति" श्रुतिः "तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये" इति मनुः । २ तत्साधने वचनादौ त्रि० "सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्" "पाणिग्राहस्य साध्वी स्त्री नाचरेत् किञ्चिदप्रियम्" इति च मनुः । (शिङि) ३कण्टकीमत्स्ये स्त्री शब्द र० । प्रिय-हेतुत्वाभावात्तस्यास्तथात्वम् । [जकवाक्यप्रयोक्तरि

**अप्रियंवद** त्रि० विरोधे न०त० । कटुवाक्यवादिनि उद्वे-

**अप्रियवादिन्** त्रि० अप्रियं वदति वद-णिनि ६त० स्त्रियां ङीप् । १ कटुवाक्यवादिनि उद्वेजकवाक्यकथके "माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनीति" चाणक्यः ।

**अप्रीति** स्त्री अभावे न०त० । १सन्तोषाभावे, २दुःखे, "प्रीत्यप्रीतिविषादाः प्रकाशप्रवृत्तिनियमार्थाः" इति सां०का० । "प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः, अप्रीति-र्दुःखमप्रीत्यात्मकोरजोगुणः" इति सां०त०कौ० ।

**अप्रेतराक्षसी** स्त्री न प्रेता प्राप्ता राक्षसीम् अत्या०स० न०त० । तुलस्याम्, अप्रेतराक्षसीशब्दे २५४पृष्ठे विस्तरः ।

**अप्रेमन्** पु० न प्रेम विरोधे न०त० । स्नेहविरोधिनि द्वेषे ।

**अप्रौढ़** त्रि० न प्रौढः न०त० । १अप्रवृद्धे २अपटौ च ।

**अप्नु** त्रि० आप-बा०व ह्र० ह्रस्वः । प्राप्ये "अमीषां चित्त' प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि" ऋ० १०, १०३, १२, "हरिमाणं तेऽङ्गेभ्योऽप्वामन्तरोदरात्" अथ०९,८,९

**अप्स** त्रि० अपः सनोति सन-ड । १अपां विशेषगुणीभूते रसे "पृथिव्याः पुरीषमस्यप्सोनाम" य०१४,४ । "अप्सोनामापां सारभूतो रस" इति वेददी० । आप इव निर्मलतया सन्यते संबध्यते सन-बा०ड । २रूपे निरु० ।

**अप्सरःपति** पु० ६त० । १ इन्द्रे अप्सरापतिरप्यत्र ।

**अप्सरस्** स्त्री ब०व० अद्भ्यः सरन्ति उद्गच्छन्ति सृ-असुन् । समुद्रान्मिथ्यमानायां स्त्रीजातौ "अप्सु निर्मथनादेव रसात्त-स्माद्वरस्त्रियः । उत्पेतुर्मनुजश्रेष्ठ । तस्मादप्सरसोऽभवन्" इत्युक्तेस्तासां तथात्वम् । "एकाप्सरःप्रार्थितयोर्विवादः" रघुः "आराधितोऽद्धा मनुरप्सरोभिश्चक्रे प्रजाः स्वाः स-निमेषचिह्नाः" इति माघः । तासां च नाट्यकर्म्म वृत्तिः । तास्च प्रधानतया द्वादश वह्निपुराणे दर्शिताः "उर्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुषा विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा भानुवत्सवला रम्या द्वादशाप्सरसः शुभाः" इति गणभेदनामाध्याये । अत्र शुभा इति विशेषणात् अन्या अपि । तत्र "उर्वशी मेनका रम्भा घृताची पुञ्जिकास्थला सुकेशी मञ्जुघोषा च महारङ्गवतीति च" इति मा० पु० "अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा । क्रोधा प्रधा च विश्वा च विनता कपिला मुनिः । कद्रुश्च मनुजव्याघ्र । दक्षकन्यास्तथोदश" इति कश्यपपत्नीरभिधाय । "इत्येते देवगन्धर्व्वाः प्राधेयाः परिकीर्त्तिताः" इति गन्धर्ववंशमभिधाय च "इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् प्रधाऽसूत महाभागादेव देवर्षितः पुरा । अलम्बुषा मिश्रकेशी विद्युत्पर्णा तिलो-त्तमा । अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा । केशिनी च सुबाहुश्च सुरता सुरसा तथा । सुप्रिया चातिबाहुश्च"

त्युक्तम् भा॰आ॰प॰। एतासाञ्च चतुर्द्दशोत्पत्ति स्थानानि क दम्बर्य्यां वर्णितानि "यथा विबुधसद्मन्यप्सरसो नाम कन्यकाः सन्तीति तासां चतुर्दश कुलानि एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम्, अन्यद्वेदेभ्यः सम्भूतम्, अन्यदग्नेरुद्भूतम् अन्यत् पवनात् प्रसूतम्, अन्यदमृतान्मथ्यमानादुत्थितम्, अन्यज्जलाज्जातम्, अन्यदर्ककिरणेभ्यो निर्गतम्, अन्यत् सोमरश्मिभ्यो निष्पतितम्, अन्यद्भूमेरुद्भूतम्, अन्यत् सौदामनीभ्यः प्रवृत्तम्, अन्यन्मृत्युना निर्मितम्, अपरं मकरकेतुना समुत्पादितम्, अन्यत्तु दक्षस्य प्रजापतेरतिप्रभूतानां सुतानां मध्ये द्वौ सुते मुनिररिष्टा च बभूवतुः, ताभ्यां गन्धर्वैः सह कुलद्वयं जातम् एवमेतान्येकत्र चतुर्दश कुलानि" एतन्मूलं तु विस्तरभयान्नोक्तम्। २दिशि ३ उपदिशि च तयोर्जलहेतुत्वात्तथात्वम् "पुञ्जिकास्थला च क्रतुस्थला चाप्सरसाविति" य॰ १५,१५, "पुञ्जिकास्थला क्रतुस्थला चाप्सरसौ दिगुपदिग्रूपे परिचारिके" इति वेददी॰। "अप्सरसाविति दिक् च उपदिक् चाह" श्रुतेस्तथात्वम्। "मेनका वै अप्सराद्रूपिण्योति" भाष्यप्रयोगात् अप्सरसाविति श्रुति निर्देशाच्च नित्यबहुवचनान्ततेत्युत्सर्गः क्वचिदेकवचनान्तताऽपि

**अप्सरस्तीर्थ** न॰ ६त॰। १ तीर्थभेदे।

**अप्सरा** स्त्री अप्सं रूपमस्त्यस्याः प्राशस्त्ये कुल्ला॰र। दिव्यरूपवत्यां स्वर्वेश्यायाम् "उद्भिन्दतीं संजयन्तीमप्सराम्" अ॰ ४,३८,१।

**अप्सरायमाणा** स्त्री अप्सरस इवाचरति देहसौन्दर्य्यादिना अप्सरस्+क्यङ्–सलोपः कर्त्तरि शानच्। अप्सरस्तुल्य सौन्दर्य्यवत्यां स्त्रियाम्।

**अप्सव** त्रि॰ अप्सं जलरसं वाति हिनस्ति वा–क ६त॰। जलरसशून्ये समुद्रे तस्य लवणजलत्वात्तथात्वम्। "ये अप्सवमर्णवं चित्रराधसस्तेनो रासन्ताम्" ऋ॰ १०,६५,३।

**अप्सव्य** पु॰ अप्सु भवः "अपोयोनियन्मतुपः" वार्त्ति॰ सप्तम्या अलुक्, यत्। जलभवे।

**अप्सस्** त्रि॰ अप्सु अप्सावने तेजसि सस्ति स्वपिति ससक्विप् ७त॰। १ रूपे तस्य तेजोहेतुत्वात् तथात्वम् २ रूपवति च। "शीर्ष्णा शिरोऽप्ससाप्सो अर्दयन्तं नूनु बभस्ति हरितेभिरप्सभिः" ऋ॰ ६,४६,२, "जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः" ऋ॰ १,१२४,७।

**अप्सा** त्रि॰ अपोजलानि सनति ददाति सन–विट्। जलदातरि "आषाढं युत्सु पृतनासु पप्रिं स्वर्षामप्सामिति" ऋ॰ १,९१,२१, "अप्सां जलानां दातारम्" भा॰। "पवस्व देवमादनो विचर्षणिरप्साः" ऋ॰ ९,८४।

**अप्सु** त्रि॰ नास्ति प्सु रूपम् (निरुक्तोक्तम्) यस्य। रूपरहिते "मा त्वा वयं सहसावन्नवीरा माप्सवः परि" ऋ॰७,४,६, "अप्सवः रूपरहिताः" भा॰। अप्राशस्त्ये न॰ब॰। अप्रशस्तरूपे अघुरे, "अप्सुजितः" अप्सुजिच्छब्दे दृश्यम्।

**अप्सुक्षित्** त्रि॰ अप्सु जलाधारे अन्तरिक्षे क्षियति निवसति–क्षि–क्विप् अलुक्स॰। अन्तरिक्षवासिनि देवादौ "ये देवासो दिव्येकादश स्थ पृथिव्यामेकादश स्थ अप्सुक्षितो महिनैकादश ऋ॰ १,१३९,११, य॰ १८,९, च "तद्धेतुत्वात् तात्स्थ्यम् अप्सु अन्तरिक्षे क्षियन्ति निवसन्तीति" भा॰।

**अप्सुचर** त्रि॰ अप्सु चरतीति चर–ट अलुक्स॰ स्त्रियां ङीप्। जलचरे।

**अप्सुज** त्रि॰ अप्सु जले तद्धेतौ अन्तरिक्षे वा जायते जन–ड अलुक्स॰। १जलजाते २अन्तरिक्षजाते "यदग्ने! दिविजा अस्यप्सुजाः" इति ऋ॰ ८,४३,२८, "अप्सुजा अन्तरिक्षजाता" इति भा॰।

**अप्सुजा** पु॰ अप्सु–जायते जन+विट् अलुक्स॰। अश्वे "अमृतावाप्ततो वह्नेर्देवेभ्योऽथवाच्च गर्भतः। साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्त्तिता" इत्युक्तेस्तस्य वाष्पजातत्वात्तथात्वम् "संशितो अप्सुप्सुजा ब्रह्मा सोम पुरोगवः" य॰ २२,१४, "अप्सुजा अश्व" इति वेददी॰। २ वेतसे तस्य जलसमीपजातत्वात् तथात्वम् "अप्सुयोनिर्वा अश्वोऽप्सुजा वेतस" इति शत॰ब्रा॰। ३ जलजातमात्रे त्रि॰।

**अप्सुजित्** त्रि॰ अप्सून् असुरान् जयति जि–क्विप् अलुक्समा॰। अन्तरिक्षस्थासुरजेतरि "सुपारः सुश्रवस्तमः समप्सुजितः" ऋ॰ ८,१३,२, "अप्सुजितः अन्तरिक्षवर्त्तमानानामसुराणां जेतारः" भा॰।

**अप्सुमत्** त्रि॰ अप्सु आपः जलानि सन्त्यस्य "अपोयोनियन्मतुपः" वार्त्ति॰ सप्तम्या मतुप् अलुक्स॰ च। १जलसंपृक्ते आधारज्यभागे। "अप्सुमन्तावाधाराज्यभागाविति" सि॰कौ॰। २यथेष्ट जलवति च "न ह्यप्सु प्रैत्यप्सुमान् भवति, का॰उप॰। मरुस्थलीष्वपि यथेष्टोदकवान् भवतीति" आनन्दगिरिः।

**अप्सुयोग** पु॰ ७त॰ अलुक्समा॰। जलेषु योगे। "जिष्णवे योगायाप्सुयोगैर्वोयुनज्मि" अथ॰ १०,७,५।

**अप्सुयोनि** त्रि॰ अप्सु योनिरुत्पत्तिरस्य अलुक्समा॰।

१जलभवे २अश्वे पु० "अप्सुयोनिर्वा अश्वः" इति शत० ब्रा० । जलजत्वमश्वस्य अप्सुजायन्ते उक्तम् ।

**अप्सुषद्** त्रि० अप्सु जले कारणत्वेन सीदति सद–क्विप् वेदे षत्वम् । जलस्थे अग्नौ "चन्द्रमग्निं चन्द्ररथं हरित्वं वैश्वानरमप्सुषदम्" ऋ० ६,२,५ ।

**अप्सुषोम** पु० अप्सु अद्भिः सोम इव पवित्रत्वात् "सुपां सु" पा० व्यत्ययेन सप्तमी अलुक्समा० वेदे षत्वम् । जलपूर्णे चमसभेदे "अप्सुषोमानाम चमसाश्चात्वालदेशे अद्भिः पूर्णाः" इति ता०ब्रा० द्राह्यायणसूत्रम् । "पूर्णपात्रान् समवस्यन्ति यानेकेऽप्सुषोमा इत्याचक्षते" शत० ब्रा० ।

**अप्सुसंशित** पु० अद्भिः संशितः वि०व्य० अलुक्समा० जलनिमित्तभूते विष्णुक्रमेऽन्तरीक्षे "विष्णोः क्रमोऽसि सपत्नहाप्सुसंशितो वरुणतेजाः" अथ० १०,५,२२, ।

**अफल** त्रि० नास्ति फलं पुण्यप्रभवं धर्म्मप्रभवं सुखादिकं वा यस्य । १वन्ध्ये फलकाले फलशून्ये (राँड़ाइचे) २धर्मकार्य्यसुखादिशून्ये ३निष्फले च । "यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला । यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफल इति" मनुः । अफलं दानमाह मनुः "धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे चाटचारणचौरेषु दत्तं भवति निष्फलमिति" हारीतः । "अथासद्द्रव्यदानमस्वर्ग्यं दत्त्वा परितप्यते तद्धि दानमफलं यच्चोपकारिणे ददाति यच्च तस्मात् परिक्लिष्टं यच्च सोपधं ददाति अन्यथाचितमल्पं यच्चापात्राय ददाति अनिष्टदानं स्रवति यच्च दत्त्वा प्रकीर्त्त्यते क्षयदानं यच्चाश्रद्धया ददाति क्रोधाद्राक्षसं यच्चाक्रुश्य ददाति दत्त्वा वा क्रोशति असत्कृतं पैशाचं यच्चावज्ञात ददाति वावजानीते मनुर्गोकामसं यच्चाप्रकृतो ददाति" । "एतैर्दानोपसर्गैरुपसृष्टं दानमप्रशस्तमस्वर्ग्यमयशस्यमध्रुवफलं भवत्यल्पफलं वा" रघु०(भाउ)। ४आरग्वधवृक्षे पु० तस्य फलशून्यत्वात्तथात्वम् । नास्ति फलमिव वृषणावस्य । ५इन्द्रे! स हि गौतमशापात् वृषणशून्योमेषवृषणआसीत् यथोक्तं रामायणे "नित्यं पुष्पफलोपेतैः पादपैरुपशोभिते ॥ स चेह तप आतिष्ठदहल्यासहितो मुनिः । संवत्सरसहस्राणि बहूनि रघुनन्दन ! ॥ तस्यान्तरं विदित्वा च कामार्तस्त्रिदिवेश्वरः । मुनिवेशधरो भूत्वा सोऽहल्यामिदमब्रवीत् ॥ ऋतुकालः प्रतीक्ष्योऽपि न प्रतीक्षे सुमध्यमे । संगमं शीघ्रमिच्छामि सुश्रोणि ! सह त्वया ॥ मुनिवेशधरं शक्रं सा ज्ञात्वापि परंतप ! । मतिं चकार दुर्मेधा देवराजकुतूहलात्" इत्युपक्रम्य ॥ "सोऽपि दृष्ट्वैव देवेन्द्रं मुनिवेशधरं मुनिः ॥ दुर्वृत्तं वृत्तसंपन्नो रोषाद्वचनमब्रवीत् । मम रूपं समास्थाय कृतवानसि दुर्मते ! ॥ अकर्त्तव्यमिदं यस्मात्तस्मात् त्वं विफलो भव । गौतमेनैवमुक्तस्य सरोषेण महात्मना ॥ पेततुर्वृषणौ भूमौ सहस्राक्षस्य राघव ! । व्यथितः स तदा चासीद्धतौजा विफलीकृतः ॥ धर्षितस्तपसोऽस्येव कश्मलं चापि सोऽविशत्" इत्युक्त्वा । "गौतमक्रोधमुत्पाद्य सुरकार्यं चिकीर्षुणा ॥ अफलोऽहं कृतस्तेन क्रोधात् सा च निराकृता । शापदोषेण तेनास्य तपोविघ्नः कृतो मया ॥ तस्मात् सुरगणाः! सर्वे! सर्षिसंघाः! सचारणाः । सुरकार्यार्थमफलं सफलं कर्त्तुमर्हथ ॥ शतक्रतोर्वचः श्रुत्वा देवा अग्निपुरोगमाः । ऊचुः पितृगणान् वाक्यमिदं तत्र समागतान् ॥ एष मेषः सवृषणः शक्रस्त्वावृषणीकृतः । अस्येमौ वृषणौ छित्त्वा महेन्द्राय प्रयच्छत ॥ अफलस्तु कृतो मेषः परां तुष्टिमुपैष्यति । भवतां सुप्रयोगेन तद्वास्य सुमहत् फलम् ॥ तस्मान्मेषस्य वृषणौ छित्त्वेमौ दातुमर्हत । इन्द्राय सुरकार्यार्थं विफलाय पितामहाः! ॥ श्रुत्वाथाग्निपुरोगाणां देवानां पितरो वचः । उत्पाट्य मेषवृषणाविन्द्रायोपदधुस्तदा ॥ ततःप्रभृति काकुत्स्थ ! पितरः कव्यभोजिनः । अफलं भुञ्जते मेषं सफलं तु न भुञ्जते ॥ इन्द्रश्च मेषवृषणस्ततःप्रभृति राघव ! गौतमस्य प्रभावेन बभूवामिततेजसः" रामा० ॥ ६मेषे च तस्य वृषणेन शक्रवृषणकरणात्तस्य तथात्वम् नास्ति फलं यस्याः जातित्वेऽपि "फलाञ्च" इति पा० ग० अजादित्वात् टाप् । ७घृतकुमार्य्याम् ८भूम्यामलक्याञ्च स्त्री तयोः फलशून्यत्वात्तथात्वम् । फलं प्रयोजनम् ९तच्छून्ये त्रि० । "अन्यथा ते वर्त्तमानस्याधर्म्मो भवत्यफला च विद्या" सुश्रु० । "यथा षण्ढ इत्यादि" मनुः ।

**अफलाकाङ्क्षिन्** त्रि० न फलं कर्मफलमाकाङ्क्षते आ+काङ्क्ष–णिनि ङीत० न०त० स्त्रियां ङीप् । कर्मफलाकाङ्क्षाशून्ये। "अफलाकाङ्क्षिभिर्यज्ञः क्रियते ब्रह्मवादिभिः" गीता ।

**अफलित** त्रि० फलं जातमस्य तारका० इतच् न०त० । फलितभिन्ने वन्ध्ये अफले वृक्षे ।

**अफल्गु** त्रि० विरोधे न०त० । फल्गुभिन्ने सारे ।

**अफुल्ल** त्रि० न०त० । फुल्लभिन्ने मुकुलिते ।

**अफेन** त्रि० नास्ति फेनं यस्य । १फेनशून्ये दुग्धादौ । निन्दितं फेनं निर्यासोऽस्य ( आफिङ् ) ख्याते अहिफेने तस्य निर्यासस्य बहुसेवने प्राणनाशनात् निन्दितफेनत्वम् ।

**अब** शब्दे इदित् भ्वादि० आत्म० सक० सेट् । अम्बते

आम्बिष्ट अम्बा अम्बाला अम्बिका अम्बरम् अम्बष्ठः ।

**अवद्ध** त्रि॰ बन्ध–क्त न॰त॰। १असंबद्धे २अन्वयबोधयोग्यता-शून्ये परस्परविरुद्धे वाक्ये च यथा “यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता माता तु मम वन्ध्यासीदपुत्रश्च पितामहः” इत्यादि वाक्यम् । ३ बद्धभिन्ने मुक्ते च ।

**अवद्धमुख** त्रि॰ न बद्धं यथेच्छवादितया अप्रतिबद्धं मुख-मास्यक्रिया यस्य स्त्रियां वा ङीप् । अप्रियवादिनि “सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियमिति” मनुनाऽप्रियवचनकथनस्य निषेधेऽपि तदुल्लङ्घनेन अप्रिय-वाक्यप्रयोक्तृत्वेन तस्य तथात्वम् ।

**अवध** पु॰ न बधस्ताडनं देहे आघातः प्राणवियोजनं वा अभावे न॰त॰। ताड़नाभावे । “शिष्यशिष्टिरवधेनाशक्तौ वेणुदलेनेति” मिता॰ स्मृतिः । ३प्राणवियोजनाभावे च ।

**अवधा** स्त्री न बध्यतेऽस्यते लम्बेन । लीलावत्युक्ते त्रिकोणादि क्षेत्रे लम्बोभयपार्श्वस्थे भूमिखण्डे। न, बाध्यते आबाध्यते वा, अबाधा आबाधाऽप्यत्र । तदानयनञ्च “त्रिभुजे भुजयो-र्योगस्तदन्तरगुणो भुवा हृतो लब्ध्या। द्विःस्था भूरूनयुता दलिताऽबाधे तयोः स्यातामिति” लीला॰।“दशसप्तदशप्रमौ भुजौ त्रिभुजे यत्र नवप्रमा मही। अबधे वद लम्बकं तथा गणितं गणितिकाशु तत्र मे” इति लीला॰ अवधोद्देशकः ।

**अवध्य** त्रि॰ बधमर्हति यत् न॰त॰ । १बधानर्हे प्राणवियोग फलकव्यापारो हिंसात्र बधः । “अवध्याश्च स्त्रियं प्राहु-स्तिर्य्यग्योनिगतामपि” स्मृतिः । २बधदण्डानर्हे ब्राह्मणे च “बधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसः। अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः । बधादृते ब्राह्मणस्य न बधं ब्राह्मणो-र्हति” मिता॰ स्मृतिः । “उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमी। चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणोव्रजेदिति” मनुः बन्ध–बा॰ क्यप् । ३अयोग्यवाक्ये हे॰मे॰ च ।

**अवन्धक** न॰ बध्यते स्वधनमितरत्र आधीयते बन्ध आधीय-मानद्रव्यं स नास्ति यत्र कप् । १आधिशून्ये ऋणादाने । “अशीतिभागोवृद्धिः स्यान्मासिमासि सबन्धके । वर्ण-क्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा” या॰ “अन्यथा बन्धक-रहिते” मिता॰ “दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु” या॰ व्याख्यायाम् “ब्राह्मणादयोवर्णा अबन्धके सबन्धके वा स्वकृतां वृद्धिं सर्वासु जातिषु दद्युः” विज्ञा॰। अस्य पा॰उपकादिगणपाठात् “उपकादिभ्योऽन्यतरस्यामद्वन्द्वे च” पा॰सूत्रेण गोत्रप्रत्ययस्य बहुत्वे लुग्विधानात् कश्चि-चित् २ गोत्रप्रवर्त्तके ऋषावपि अस्य वृत्तिः ।

**अवन्धुर** त्रि॰ न॰त॰ । १ उन्नतानतभिन्ने २ शोभनभिन्ने ३ विधुरवन्धुरबन्धुरमैक्षतेति” माघः ।

**अवन्ध्य** त्रि॰ बन्ध्यः अफलः । १सफले,“अवन्ध्यं दिवसं कुर्य्यात् दानाध्ययनकर्म्मभिः”स्मृतिः २अफलभिन्ने फलकाले फल-युक्ते वृक्षे पु॰।

**अवल** न॰ न बलं सामर्थ्यमुत्कर्षोवाऽभावे न॰त॰। १ बलाभावे “प्रायश्चित्तं प्रदातव्यं दृष्ट्वा तस्य बलाबलम्” स्मृतिः । “गन्धानाञ्च रसानाञ्च ज्ञात्वा चार्थबलाबलम्” मनुः । बलमुत्कर्षमबलमनुत्कर्षम्” इति कुल्लू॰ । नास्ति बलं यस्य। २बलहीने दुर्बले त्रि॰ “पञ्चवर्गोबलेनोनो न दुर्ग-स्थानमाश्रितः अबलोऽयं लम्नदर्शीति नी॰ता॰। अबल-स्वकुलाशिनो झषान्निजनीडद्रुमपीड़िनः खगान्” नैष॰। ३नार्य्यां स्त्री “भुजलतां जड़तामबलाजनः” रघुः।“हृदये वहसि गिरीन्द्रौ त्रिभुवनजयिनी कटाक्षेण । अबला त्वं यदि मन्ये के बलवन्तोन जानीम” इत्युद्भटः । ५ब॰ । ४वरुणवृक्षे पु॰ । [रोगादिनिमित्ते देहस्य क्षमीभावे ।

**अवलिमन्** पु॰ बलस्य भावः इमनिच् विरोधे न॰त॰ ।

**अवाध** पु॰ अभावे न॰त॰ । १बाधाभावे २ प्रतिबन्धाभावे । नास्ति बाधो यस्य । ३ बाधशून्ये त्रि॰ । बाधश्च असत्त्वं स चानुमापकहेतौ दोषभेदः वह्न्यभाववद्ह्रदत्वं हि बाध दोषः यत्सत्त्वेऽनुमितेः प्रतिबन्धः तस्य हेत्वदूषकत्वमिति नैया॰। नास्ति बाधा पीड़ायस्य । ४पीड़ाशून्ये त्रि॰ ।

**अवाधक** त्रि॰ न॰त॰। १बाधकभिन्ने अनुगुणे। नास्ति । बाधो यस्य वा कप्। २बाधशून्ये त्रि॰।

**अवाधित** त्रि॰ न बाधितः । बाधितभिन्ने यथार्थे “अबा-धिताऽगृहीतविषयत्वं प्रमात्वमिति” वृद्धाः । तद्वति तत्प्रकारकं ज्ञानं हि प्रमा तच्च तदभाववति तत्प्रकारक-ज्ञानेन प्रतिबध्यते तथा च तदभाववति तत्प्रकारकता-शून्यत्वेन ज्ञानस्य याथार्थ्यं, तादृशज्ञानविषयत्वात् विष-यस्याबाधितत्वम् । [अप्रतिरोध्ये ।

**अवाध्य** त्रि॰ न बाध्यते अपोद्यते बाध–ण्यत् न॰त॰ ।

**अवाल** त्रि॰ न॰त॰ । १ बालभिन्ने पूर्णे चन्द्रादौ २तरुणे च ।

**अविन्धन** पु॰ आप एव इन्धनमुद्दीपनसाधनमस्य । बाड़-वाग्नौ “अविन्धनं वह्निमसौ बिभर्त्ति” रघुः ।

**अबुद्ध** त्रि० बुध—कर्त्तरि कर्म्मणि वा क्त न०त०। १बोधानाश्रये २बोधाविषये च। [सूचितं २तथाज्ञानाभावे।

**अबुद्धि** स्त्री अभावे न०त०। १ज्ञानाभावे यस्य यद्रूपेण ज्ञान-

**अबुद्धिपूर्व्वक** त्रि० अबुद्धिः पूर्व्वा यस्य। यथार्थबुद्धिपूर्व्वकभिन्ने। "अबुद्धिपूर्व्वं हनने व्रतार्द्धमुपकल्पयेत्" स्मृतिः यदि गां गवयबुद्ध्या हन्ति, गवयं वा गोभ्रान्त्या हन्ति, सर्वथाऽबुद्धिपूर्वकत्वम् एवमन्यार्थक्षिप्तनाराचादिना हनने ऽपि तथात्वम्। इयं गौरिमां हन्मीत्युद्देशेनैव हनने बुद्धिपूर्वकत्वम्। [२अल्पज्ञाने च।

**अबुध** पु० विरोधे अप्राशस्त्ये वा न०त०। १बुधभिन्ने मूर्खे

**अबु(बो)ध्य** त्रि० बुध वा० वेदे क्यप् लोके तु ण्यत्। ज्ञातुमशक्येऽर्थे "अबुध्यमबुध्यमानं सुषुपाणमिन्द्रम्" ऋ० ४, १८, १२, ",अबुध्यं दुर्विज्ञेयमिति" भा०।

**अबुध्न** न० नास्ति बुध्नं मूलमस्य। १मूलशून्ये अन्तरिक्षे "अबुध्ने राजा वरुणो वनस्योर्द्ध्वम्"ऋ०१,२४,७,"अबुध्ने मूलशून्ये अन्तरिक्षे"भा०। २मूलशून्यमात्रे करकादौ त्रि०।

**अबोध** पु० अभावे न०त०। १बोधाभावे अज्ञाने "निसर्गदुर्बोधमबोधविक्लवाः"किरा०। न०ब०। २बोधरहिते त्रि०।

**अबोधगम्य** त्रि० बोधेन गम्यः विषयीकार्य्यः न०त०। ज्ञानेनाविषयीकार्य्ये ज्ञातुमशक्ये।

**अब्ज** न० अप्सु जायते जन—ड ७त०। १पद्मे, २ शङ्खे पुंन०। ३ निचुलवृक्षे तस्य जलप्रायभवत्वात् तथात्वम् ४ चन्द्रे ५ धन्वन्तरौ च पु० तयोः समुद्रजातत्वात् तथात्वम् "प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः" इति "धन्वन्तरिस्ततोदेव! वपुष्मानुदतिष्ठत" इति च भा०आ०प०। चन्द्रनामकत्वात् ६कर्पूरे पु०।"अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मादिति" लीलावत्युक्त दशार्बुदसंख्यायां ७शतकोटिसंख्यायां ८तत्संख्येये च न०। ९जलजातमात्रे त्रि० "स्थलजाः पक्षिणोऽब्जाश्च" इति "अब्जेषु चैव रत्नेषु सर्व्वेष्वश्मयेषु च" इति रामा०।

**अब्जकर्णिका** स्त्री अब्जस्य कर्णिका कर्णाभरणभेद इव तुल्याकारत्वात्। पद्ममध्यस्थवर्त्तिकाख्ये पद्मावयवभेदे पद्मकर्णिकादयोऽप्यत्र।

**अब्जज** पु० अब्जात् विष्णोर्नाभिकमलात् जायते जन—ड। चतुर्मुखे ब्रह्मणि तस्य विष्णुनाभिकमलजातत्वात्तथात्वम् "दृष्ट्वा भूतानि भगवान् लोकसृष्ट्यर्थमव्ययः। ब्रह्मणो जन्मसहितं बहुरूपं विचिन्तति"। इत्युपक्रम्य "ततस्तस्मिन्महातोये हृषिको हरिरच्युतः। स्वपन् क्रीडंश्च विविधं मोदते चैव पावकिः पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्ततः। सहस्रपर्णं विरजो भास्कराभं हिरण्मयम्। अथ योगविदां श्रेष्ठं सर्वभूतमनोमयम्। स्रष्टारं सर्वभूतानां ब्रह्माणं सर्वतोमुखम्। तस्मिन् हिरण्मये पद्मे बहुयोजनविस्तृते। इति समुत्पादितवानित्याकर्ण्य अनतिदूरे च "कस्त्वं पुष्करमध्यस्थः सितोष्णीषचतुर्मुखः। आवां न गणकेगौहादाख्ये त्वं विगतज्वरः। एकत्रावयोर्बाह्वयुद्धं प्रयच्छ कमलोद्भव। इति तेन तस्य विष्णुनाभिकमलज त्वं तदुत्पत्तिश्च हरि०पौ०प०।"स्वराशौ स्वांशगे सौम्ये (बुधे) लग्नस्थे वा भृगोः सुते। जीवे वाऽब्जयोगोऽयं यातुः शत्रुविनाशकृदिति" ज्योतिषोक्ते २ यात्रायोगभेदे च।

**अब्जबान्धव** पु० अब्जानां बान्धव इव प्रकाशकत्वात्। कमलप्रकाशके सूर्य्ये तस्योदये हि कमलं विकाशते इति कविसम्प्रदायप्रसिद्धिः। एवं कमलबान्धवादयोऽप्यत्र।

**अब्जभोग** पु० अब्जस्य शङ्खस्य भोगः अवयव इव भोगोयस्य। शङ्खावयवतुल्यावयवे वराटके। भुज्यते भुज—कर्म्मणि घञ् भोगः भोज्यम्। अब्जस्य भोज्यांशे पद्मकन्दे शालूके तस्य लोकैर्भुज्यमानत्वात् तथात्वम् कमलभोगादयोऽप्यत्र।

**अब्जयोनि** पु० अब्जं विष्णुनाभिकमलं योनिरुत्पत्तिस्थानं यस्य। चतुर्मुखे ब्रह्मणि। विस्तरोऽब्जजशब्दे दृश्यः।

**अब्जवाहन** पु० अब्जस्य चन्द्रस्य वाहनं धारणं येन "अब्जं शङ्ख इव शुभ्रं वाहनं वृषरूपं यस्य वा। १चन्द्रमौलौ शिवे। अब्जं कमलं वाहनमिवाधारो यस्याः। २पद्मासनस्थायां लक्ष्म्याम् "पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरमिति" तद्ध्याने उक्तेः तस्या अब्जवाहनत्वम् कमलादिवाहनाप्यत्र। [उ०द०। तस्य जन्मावधिप्राप्तत्वेन तथात्वम्।

**अब्जस्** न० आप्यते जन्मतः आप—असुन् जुट्—ह्रस्वश्च। रूपे

**अब्जस्थित** पु०। अब्जे विष्णुनाभिकमले स्थितः स्था—क्त। चतुर्मुखे ब्रह्मणि "स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः देवी अधिकमब्जजशब्दे दृश्यम्।

**अब्जहस्त** पु० अब्जं पद्मं हस्ते यस्य। सूर्य्ये "पद्मासनं पद्महस्तम्" इति तद्ध्यानोक्तेस्तथात्वम्।

**अब्जा** त्रि० अप्सु जायते जन—विट् ७त०। जलजातमात्रे "अब्जामुक्थैरहिं गृणीषे"ऋ०७,३४,१६,"अब्जामप्सुजातमहिम्" भा०।

**अब्जिनी** स्त्री अब्जानां समूहः अब्ज+इनि—ङीप्। पद्मसमूहे। अब्जानां देशः पुष्करा० इनि। २पद्मलतायाम् च।

**अब्जिनीपति** पु० अब्जिन्याः पद्मसमूहस्य पतिः प्रकाशकत्वात्।

कमलप्रकाशके सूर्य्ये । पद्मिनीनायकतत्पत्यादयोऽप्यत्र ।

अ(ब्द्)ब्द पु० अवति रक्षति सोमानं दन् । १ पर्वतभेदे स च वर्षपर्वत एव तद्भेदः वर्षपर्वतशब्दे वक्ष्यते । अपोददाति दा-क ६त० । २मेघे ३मुस्तायां च तस्याः शालत्वशीतवीर्य्यत्वेन वैद्यकोक्तेः जलमयमूलत्वाच्च तथात्वम् । आप्यन्ते व्याप्यन्ते ऋतुमासपक्षतिथिनक्षत्रयोगकरणवारादयो येन आप–दन् ह्रस्वश्च "अ(ब्दा)ब्दादयश्च"उ०नि०। ४वत्सरे। स च नवविधः । "ब्राह्मं दिव्यं तथा पित्र्यं प्राजापत्यं गुरोस्तथा सौरञ्च सावनं चान्द्रमार्क्षं मानानि वै नवेति" सू०सि० उक्तेः तत्र ब्राह्माब्दमानम् "सूर्य्याब्दसंख्यया द्वित्रिसागरैरयुताहतैः सन्ध्यासन्ध्यंशसहितं विज्ञेयं तच्चतुर्युगम् इत्थं युगसहस्रेण भूतसंहारकारकः कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावतीति"परमायुः शतं तस्य तयाहोरात्रसंख्यया"इति च सू०सि।तथाच सौरैः(४३२००००००००) एतावद्वर्षैस्तस्याहस्तावद्भिश्च रात्रिः तेन द्विगुणितैस्तैः ३६० गुणितैर्ब्राह्माब्दमानम् । अथ दिव्यम् "मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते तत्षष्टिः षड्गुणा दिव्यं वर्षमासुरमुच्यते" इति तत्रोक्तेः ३६० सौरवर्षैर्दिव्याब्दमानम् "मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम् न तत्र द्युनिशोर्भेद इति तत्रोक्तम् मन्वन्तरमानमेव प्राजापत्याब्दमानम् तच्च "युगानां ४३२०००० सप्ततिः सैका मन्वन्तरमुदाहृतम्" इत्युक्तम् तेन७१ गुणितैः ३११०४०००सौरवर्षैः प्राजापत्यम् ।पित्र्यं तु "त्रिंशता तिथिभिर्मासश्चान्द्रः पित्र्यमहः स्मृतम् निशा च मासपक्षान्तौ तयोर्मध्ये विभागतः" इत्युक्तेः चान्द्रमास एव पित्र्यमहोरात्रं तच्च ३६०गुणितं तद्वर्षमानम् तथाच १०८०० चान्द्रदिनैः पित्र्यवर्षमानमितिफलितम् । बार्हस्पत्यन्तु "वैशाखादिषु कृष्णे च योगः पञ्चदशे तिथौ । कार्त्तिकादीनि वर्षाणि गुरोरस्तोदयात् तथा" सू०सि० "यथा पौर्णमास्यां नक्षत्रसम्बन्धेन तत्संज्ञो मासो भवति तथेति समुच्चयार्थकम् । बृहस्पतेः सूर्य्यसान्निध्यदूरत्वाभ्यामस्तादुदयाद्वा वैशाखादिषु द्वादशसु मासेषु कृष्णपक्षे पञ्चदशे तिथौ अमावास्यामित्यर्थः । चकारः पौर्णमासीसम्बन्धात् समुच्चयार्थकः । योगो दिननक्षत्रसम्बन्धः कार्त्तिकादीनि द्वादश वर्षाणि भवन्ति । वैशाखकृष्णपक्षपञ्चदश्याममावास्यायां बृहस्पतेरस्ते उदये वा जाते सति तदादि बृहस्पतिवर्षं कृत्तिकादिनक्षत्रसम्बन्धात् कार्त्तिकसंज्ञम् । एवं ज्यैष्ठाषाढश्रावणभाद्रपदाश्विनकार्त्तिकमार्गशीर्षपौषमाघफाल्गुनचैत्रमासु क्रमशो मृगपुष्यमघापूर्वफाल्गुनीचित्राविशाखाज्येष्ठापूर्वाषाढाश्रवणापूर्वभाद्राश्विनीनक्षत्रसम्बन्धान्मार्गशीर्षादीनि भवन्ति । अत्रापि नक्षत्रद्वयत्रयसम्बन्धः चान्द्रमासवत् बोध्यः ।तच्च मासशब्दे दृश्यम् तेन यद्दिने बृहस्पतेरुदयोऽस्तो वा तद्दिने यच्चन्द्राधिष्ठितनक्षत्रं तत्संज्ञं बार्हस्पत्यं वर्षं भवतीति तात्पर्य्यम् । मेषादिसंक्रान्तीरुक्त्वा "मेषाद्यो द्वादशैव सौरमाने तु वत्सर" इति "सौरन्तु तद्धनेन्मानं भानोर्भगणपूरणादिति" चोक्तेः ३६० सौरदिवसैः सौरवर्षमानम् । सावनन्तु "उदयादोदयं भानोः सावनं तत्प्रकीर्त्तितमित्युक्तम् । "पञ्चाङ्करामाश्वियमः खरामाः सार्द्धद्विदस्राः कुदिनाद्यमब्दे" इति सि०शि० उक्तेः ३६५, दिनानि १५,३०,२२,३०, दण्डादिसहितानि सावनदिनानि "व्यक्षार्कमासोऽर्कतः सदिष्टस्त्रिंशद्दिनः सावनमास" इति सि०शि० उक्तदिशा तन्मासादयोऽह्येयाः । "त्रिंशता तिथिभिर्मासश्चान्द्र इति" प्रागुक्तं चान्द्रमानम् तच्च "कालेन येनैति पुनः शशीनं क्रामन् भचक्रं विवरेण गत्योः मासः स चान्द्रोऽङ्कयमाः कुरामाः स्वन्धेषवस्तत् कुदिनप्रमाणम्" इति सि०शि० उक्तेः २९।५० दण्डादियुतैरेकोनत्रिंशत्कुदिनैश्चान्द्रमासः द्वादशगुणिते च तस्मिन् ३५४।१८ कुदिनैश्चान्द्रवर्षमानम् चान्द्रमासविशेषाः मासशब्दे वक्ष्यन्ते । नाक्षत्रं यथा "भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते"सू०सि०नित्यं प्रत्यहं भचक्रभ्रमणं नक्षत्रसमूहस्य प्रवहवायुकृतः परिभ्रमः नाक्षत्रं नक्षत्रसंबन्धि दिनम् । एवं नवसु ब्राह्मादिषु वर्षेषु दर्शितेषु चतुर्णामेव व्यवहारोपयोगिता यथोक्तं "चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यश" इति सू०सि० । तत्र कस्य कुत्रोपयोगस्तदप्युक्तं तत्रैव । "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च अयनं विषवच्चैव संक्रान्तेः पुण्यकालता" इति "तिथिःकरणमुद्वाहः क्षौरं सर्व्वक्रियास्तथा व्रतोपवासयात्राणां क्रिया चान्द्रेण गृह्यते" इति "सावनानि स्युरेतेन यज्ञकालविधिस्तु तैः सूतकानां परिच्छेदोदिनमासाब्दपास्तथा मध्यमग्रहभुक्तिश्च सावनेनैव गृह्यते" सू०सि० । चान्द्रेण तु मासवर्षादिगणनापि "चैत्रे मासि जगत्स्रष्टा ससर्ज्ज प्रथमेऽहनि शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति प्रवर्त्तयामास तदा कालस्य गणनामपि ग्रहान् राशीन्ऋतून् मासान् वत्सरान् वत्सराधिपान्" इति म०त० ब्र०पु० । "ष-लाब्दे पुण्यमहसं शुभं सोऽब्दः शुभप्रदः" इति नी०ता०।

**अब्दप** पु॰ अब्दं पाति पा—क । १वर्षाधिपे तदानयनप्रकारश्च सि॰शि॰ दर्शितः यथा "अधोऽधःक्लृप्ता कल्पयाताद्द्युवृन्दात् कराभ्यां, शतैः, पावकैः, संगुणाद्वा । भुजङ्गैरवाप्तं फलं स्याद्दिनाद्यं तदङ्कान्वितं भास्करादब्दपः स्यात्" अस्योपपत्तिः । एकस्मिन् रविवर्षे सावनाहाः प्राक् प्रतिपादिताः ३६५ । १५ । ३० । २२ । ३० एतदष्टभिः सवर्णितं कार्य्यम् । ततोऽनुपातः । यद्यष्टभिर्वर्षैरेताव-द्दिनाद्यं तदा कल्पगतैः किमिति । फलं दिनाद्यम् । तदनष्टं संस्थाप्यम् । ततो गताब्दैर्युतं तदब्दपतिः स्यादिति यदुक्तं तद्युक्तम् । यतः पञ्चषष्ट्यधिकशतत्रये सप्तभिर्भक्ते एकोऽवशिष्यते । अत एकगुणाब्दसंख्या तस्मिन् दिनाद्ये निक्षिप्ता । तस्मिन् सप्ततष्टेऽर्काद्योऽब्दपतिः । यतो यस्मिन् वारेऽब्दादिः सोऽब्दपतिः स्यादित्युपपन्नम् । ताजिकोक्ते २ वर्षाधिपतौ च तदानयनप्रकारश्च जन्मलग्न-पतिवर्षलग्नाधिपतिमुन्थहाधिपतित्रिराशिपतीनां दिवा-सूर्य्याक्रान्तराशिपतेः रात्रौ चन्द्राक्रान्तराशिपतेश्चैषां पञ्चा-धिकारिणां मध्ये द्वादशवर्गीबलेन पञ्चवर्गीबलेन वोर्जितः लग्नदर्शी वर्षाधिपतिः । बलसाम्ये दृष्ट्यतिरेकात्, तत्रापि साम्ये दृष्ट्यभावे च मुथहेश्वरः वर्षाधिपः । "अब्दपबलस्य विचारयेत्थम्" नी॰ता॰ । अब्दपत्यादयोऽप्यत्र ।

**अब्दसार** पु॰ अब्दस्य मुस्तायाः सारः मूलनिर्यासः । कर्पूरे तस्य मुस्तामूलसारजलात्तथात्वम् घनसारमेघसारादयोऽप्यत्र ।

**अब्दवाहन** पु॰ अब्दो मेघो वाहनमस्य । इन्द्रे ।

**अब्दिमान्** त्रि॰ अपां दानमब्दिः दा॰बा॰ भावे कि इत॰ ततः अस्त्यर्थे मतुप् । जलदानवति "अब्दिमानुदधिमान्" ऋ॰ ५,४२,१४, "अपां दानवान् मेघः" इति भा॰ ।

**अब्दुर्ग** अद्भिर्वेष्टितं दुर्गं शा॰त॰ । सर्वतोवेष्टितेनोदके-नोपलक्षिते दुर्गे (गड़) "धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च । नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम्" मनुः ।

**अब्दैवत** त्रि॰ आपोदैवतान्यस्य । १जलदेवताके मन्त्रभेदे "उदित्तुत्या वारुणेन ऋचेनाब्दैवतेन च" मनुः "स्नानमब्दै-वतैर्मन्त्रैर्मार्जनं प्राणसंयमः" इति या॰ । स च मन्त्रः "आपोहि ष्ठा मयोभुव" इत्यादिसूक्तात्मकः । य॰ ११,५०,५१,५२ । २जलदेवताके पूर्व्वाषाढानक्षत्रे च ।

**अब्धि** पु॰ आपो धीयन्तेऽस्मिन् धा—आधारे कि उप॰स॰ । १सरोवरे २समुद्रे च स च जम्बूद्वीपपूर्व्वापरादिवर्त्तिता-भेदेन चतुर्विधः यथोक्तं भागवते "तत्र चतुर्द्धा विभज्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभिस्यन्दन्ती नदनदीपतिमेवाभि-निविशति, सीतालकनन्दा वङ्क्षुर्भद्रेति । सीता तु ब्रह्मसद-नात् केशराचलादिशिखरेभ्योऽधोऽधः प्रस्रवन्ती गन्ध-मादनमूर्द्धसु पतित्वान्तरेण भद्राश्वं वर्षं प्राच्यां दिशि क्षार-समुद्रमभिप्रविशति । एवं माल्यवच्छिखरान्निष्पतन्ती तत उपरतवेगा केतुमालमभिवङ्क्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति । भद्रा चोत्तरतो मेरुशिखरान्निपतिता गिरि-शिखराद्गिरिशिखरमतिहाय शृङ्गवतः शृङ्गादवस्यन्दमाना उत्तरांस्तु कुरूनभित उदीच्यां दिशि लवणार्णवं प्रविशति । तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटानि अतिक्रम्य हेमकूटहिमकूटान्यतिरभसरंहसा लुठन्ती भारत-मभिवर्षं दक्षिणस्यां दिशि लवणजलधिमभिप्रविशति" अत एव तत्संख्यातुल्यसंख्याकचतुःसंख्यावाचकताऽस्य । "पञ्च पञ्चयुगषट्कलोचनद्व्यब्धिषड्गुणमिता ६४२२६२५५ गुरो-र्मता" । "खाष्टाब्धयो (४८०) ऽष्टाब्धगजेषुदिग्द्विपद्विपाब्धयः ४८८१०५८५८, इति च सि॰शि॰ । सप्तद्वीपान्तरालस्य लवणादिभेदात् सप्तविधोऽपि यथोक्तं सि॰शि॰ "भूमेरर्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः । अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः । लवणजलधिरादौ दुग्धसिन्धुश्च तस्मादमृतममृतरश्मिः श्रीश्च यस्मादभूव । महितचरणपद्मः पद्मजन्मा-दिदेवैर्वसति सकलवासो वासुदेवश्च यत्र । दध्नो घृतस्ये-क्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्त्यः । स्वादू-दकान्तर्वडवानलोऽसौ पातालकोकाः पृथिवीपुटानि" । तेषाञ्च द्वीपद्वयान्तरालस्थितिमूलम् अब्धिद्वीपाशब्दे दृश्यम् तेन तत्संख्यातुल्यसप्तसंख्यकेऽप्यस्य क्वचित् प्रवृत्तिः अतएव सप्तद्वीपेत्यर्थे अब्धिद्वीपेति प्रयुक्तम् । "चतुरः सप्त वाम्बुधीन्" वाग्भटालङ्कारः ।

**अब्धिकफ** पु॰ अब्धेः समुद्रस्य कफ इव । समुद्रफेने ।

**अब्धिज** पु॰ अब्धौ जायते जन—ड ७त॰ । १चन्द्रे २शङ्खे ३समुद्रजातमात्रे त्रि॰ ४सुरायां स्त्री । ५अश्विनीकुमा-रयोः द्वि॰व॰ । एतेषाञ्च समुद्रजातत्वात्तथात्वम् ।

**अब्धिद्वीपा** स्त्री अब्धिसंख्याता लवणादिसप्तसंख्याता द्वीपा यस्याः । जम्बूप्रभृतिसप्तद्वीपवत्याम् पृथिव्याम् । "शाकं ततः शाल्मलमत्र कौशं क्रौञ्चं च गोमेदकपुष्करे च । द्वयो-र्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति" सि॰शि॰ ।

**अब्धिनगरी** स्त्री अब्धौ तत्समीपे नगरी । द्वारकायां तस्याः समुद्रपरिवेष्टत्वात् समुद्रोत्सृष्टभूमौ रचितत्वाच्च तथात्वम् यथा "इयं द्वारवती नाम पृथिव्यां निर्म्मिता मया भविष्यति

पुरी रम्या यथा खेवामरावती"त्युपक्रम्य "वदोच्चेत् सागरः किञ्चिदुत्सृज्य मिह तोयराट्। ततः स्थायतलक्षणा पुरी स्यात् पुरुषोत्तम। एवमुक्तस्ततः कृष्णः प्रागेव कृतनिश्चयः। सागरं सरितां नाथमुवाच वदतांवरः। समुद्र! दश च द्वे च योजनानि जलाशये। प्रतिसंह्रियतामात्मा यद्यस्ति मयि मान्यता। अवकाशे त्वया दत्ते पुरीयं मामकं बलम्। पर्य्याप्तविषयारामा समग्रं विषहिष्यति ततः कृष्णस्य वचनं श्रुत्वा नदनदीपतिः। स मारुतेन योगेन उत्ससर्ज्ज जलाशयम्"। इति हरिवंशः।

**अब्धिनवनीतक** पु॰ अब्धेर्नवनीतमिव कायति प्रकाशते कै-क। चन्द्रे-श॰र॰ तस्य क्षीरसारतुल्यत्वात् तथात्वम्।

**अब्धिफेन** पु॰ ६त॰। समुद्रफेने।

**अब्धिमण्डूकी** स्त्री अब्धिं मण्डयति मण्ड-उक गौरा॰ ङीष् ६त॰। मुक्तासाधने शुक्तौ।

**अब्धिशय** पु॰ अब्धौ शेते शी-अच् ७त॰। समुद्रस्थवटपत्रशय्यायाम् अब्धौ वा शय्यायां शायिनि विष्णौ। खण्डप्रलयमुपक्रम्य "ततस्तं मारुतं घोरं स्वयम्भूर्मनुजाधिप!। आदिःपद्मालयोदेवः पीत्वा स्वपिति भारत!। तस्मिन्नेकार्णवे घोरे" इत्युपक्रम्य॥ "ततः कदाचित् पश्यामि तस्मिन् सलिलसञ्चये। न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते!। शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप!। पर्य्यङ्के पृथिवीपाल! विस्मयः सुमहानभूत्। कथं त्वयं शिशुःशेते लोके नाशमुपागते भा॰व॰ मार्क॰प॰ १८८२ देवीमाहात्म्ये तु "एकार्णवेऽहिशयने योगनिद्रामुपागत" इत्यहिशयनत्वमुक्तम्।

**अब्ध्यग्नि** पु॰ अब्धौ स्थितोऽग्निः। वड़वानले तत्कथा और्वशब्दे दृश्या। अब्धिदहनादयोऽप्यत्र।

**अब्भक्ष** पु॰ अपो भक्षयति भक्ष-अण् उप॰स॰। १सर्पभेदे २जलमात्राहारे त्रि॰। "अब्भक्षो वायुभक्षश्च उपवासपरस्तथा" इति पुरा॰।

**अब्द(भ्र)** न॰ अपोबिभर्त्ति क अभ्र-गतौ-अच् वा बा डित्वम्। १ मेघे "अ(भ्रा)बभ्राणि विभ्राणसुमाङ्गसङ्गेति" माघः। २मेघनामायां सुस्तायाम्, (आभ) ३ धातुभेदे च। मेघतुल्याकारत्वात्तस्य तथात्वम्। ४ मेघाधारे आकाशे न॰।

**अब्भ्रं(भ्रं)लिह** पु॰ अब्भ्रं(भ्रं) लेढि स्पृशति लिह-खश् मुम् च। उड्डशिखरे "अब्भ्रंलिहाग्रं रविमार्गभङ्गमिति" भट्टिः। "अब्भ्रंलिहानि लिलिहे नवपल्लवानीति"माघः।

**अब्भ्र(भ्र)क** पु॰ अब्भ्र(भ्र)मिव कायति राजते कै-क। (आभ) धातुभेदे। मेघतुल्याकारत्वात्तस्य तथात्वम्।

**अब्भ्र(भ्र)कष** त्रि॰ अ(ब्भ्रं)भ्रं मेघं कषति शोषयति कष-खच् मुम् च। १वायौ। २अत्युच्चे त्रि॰।

**अब्भ्र(भ्र)पुष्प** न॰ अब्भ्र(भ्र)स्य पुष्पमिव शुभ्रत्वात् कार्य्यत्वाच्च। १जले। अब्भ्र(भ्र)मिव पुष्पमस्य ब॰। २वेतसवृक्षे पु॰। [ऐरावते गजे तस्य मेघनायकत्वात्तथात्वम्।

**अब्भ्र(भ्र)मातङ्ग** पु॰ अब्भ्रा(भ्रा)णिषः मातङ्गः शा॰त॰।

**अब्भ्र(भ्र)मु** स्त्री अब्भ्रे(भ्रे) अब्भ्रा(भ्रा)णिषे ऐरावते माति मा-कु। ऐरावतस्य योषिति पूर्व्वदिग्गजस्त्रियाम्।

**अब्भ्र(भ्र)मुवल्लभ** पु॰ अब्भ्र(भ्र)मोः वल्लभः ६त॰। ऐरावते गजे। अब्भ्र(भ्र)-सुपत्यादयोऽप्यत्र।

**अब्भ्र(भ्र)रोहम्** पु॰ अब्भ्रा(भ्रा)त् तच्छब्दात् रोहति रुह-अच्च्। वैदूर्य्यमणौ तस्य हि मेघशब्दादुद्भव इति प्रसिद्धम् "विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव" कु॰वर्णितम्।

**अब्भ्रो(भ्रो)त्थ** न॰ अ(ब्भ्र)भ्रात् तद्विवर्षणादुत्तिष्ठति उद्+स्था-क। १ वज्रे २ विद्युदग्नौ पु॰ अ(भ्र)ब्भ्रजादयोऽप्यत्र। [नौकामकाषकर्षके काष्ठमये कुद्दाले।

**अब्भि(भ्रि)** स्त्री अभ्र गतौ इन् वा डित्वम्। काष्ठकुद्दाले

**अब्भि(भ्रि)य** त्रि॰ अब्भ्रे(भ्रे)भवः घ। मेघभवे।

**अब्रह्मचर्य्य** न॰ विरोधे न॰त॰। १ ब्रह्मचर्य्यविरोधिनि स्त्रीसंभोगादौ ब्रह्मचर्य्यं च स्त्रीस्मरणादि तच्च ब्रह्मचर्य्यशब्दे वक्ष्यते। न॰ब॰। २ ब्रह्मचर्य्यरहिते त्रि॰।

**अब्रह्मण्य** न॰ ब्रह्मणि ब्राह्मणोचितकर्म्मणि अहिंसादौ साधु यत् विरोधे न॰त॰। १ब्रह्मकर्म्मण्यसाधौ २हिंसादौ तथात्वेन बोदनविषये ३वचने च तथा हि "वधं न वध्य"इति वचने हि न हिंस्यते। हिंसा च ब्रह्मकर्म्मणि न साधुः इत्यतस्तस्य तथात्वम् एतच्च प्रायेण नाट्योक्तावेव प्रयुज्यते "भो अब्रह्मण्यमब्रह्मण्यं वर्त्तते" नाटकम्। क्वचिदन्यत्रापि "अद्यैव योगनन्दस्य व्याहृता क्रन्दितं पुरः। अब्रह्मण्यमनुत्क्रान्तजीवो योगस्थितोद्विजः" बृहत्कथासारः।

**अब्राह्मण** पु॰ अप्रशस्ते न॰त॰। १ अप्रशस्तब्राह्मणे "समम-ब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे" इति पुरा॰ अब्राह्मणाश्च षट् स्मृतौ दर्शिताः। "अब्राह्मणास्तु षट् प्रोक्ता ऋषिणा तत्त्ववादिना। आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी तृतीयो बहुयाज्यःस्याच्चतुर्थो ग्रामयाजकः। पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च। अनागतान्तु यः पूर्व्वां सादित्यां चैव पश्चिमाम्। नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः" प्रा॰त॰शाता॰। एवमन्योऽपि स्मृत्यु-

ज्ञावेदितव्याः । २ ब्राह्मणभिन्ने क्षत्रियादौ भट्टदेवलादौ च "अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः" मनुः । भेदे न०त०। ३ ब्राह्मणभिन्ने शूद्रादौ च "नैतदब्राह्मणोवक्तुमर्हति समिधमाहर उप त्वा नेष्ये" इति छा०उ० ।

**अभ्रूतत** न० न भुवे ततम् । १ कथनाय प्रतिरोधके सनिकोचे अभ्रूतते "अभ्रूततमाह नह्यं दुष्टम्" इति श्रुतिः ।

**अभिलिङ्ग** त्रि० अभि लिङ्गं बोधनसामर्थ्यं यत्र । जलरूपार्थ प्रकाशसामर्थ्ययुक्ते य० पठिते ११,५०'५१,५२ आपोहिष्ठा इत्यादिके तृचे अभिलिङ्गे (अब्दैवते) मन्त्रे "कस्य नूनमित्यादि" पञ्चदशर्चात्मके च तत्र ऋ० १ मण्डले चतुर्विंशम् सूक्तम् ।

**अभक्त** त्रि० भज–सेवायां विभागे च कर्त्तरि कर्म्मणि वा क्त न०त० । १ असेवके । "भक्तमभक्तमवोऽन्तः" इति ऋ०१, १२७,५ । २ अपृथक्कृते च । [क्षीने त्रि० ।

**अभक्ति** स्त्री अभावे न०त०। १ भक्त्यभावे । न०ब०। २ भक्ति-

**अभक्षण** न० अभावे न०त०। १ भक्षणाभावे २ भक्षणनिवृत्तौ च । "पौर्णमास्यन्नमाघे च मूलकानामभक्षणमिति" म०त०।

**अभक्ष्य** त्रि० भक्षितुमयोग्यं स्मृतिनिषिद्धत्वात् । १ स्मृतिनिषिद्धभक्षणे लशुनादौ अभक्ष्यत्वञ्च वस्तुस्वभावकृतं, कालकृतं, देशादिनिमित्तकृतं, द्रव्यान्तरयोगकृतं, स्वामिविशेषकृतं, चण्डालादिस्पर्शदर्शनादिदोषकृतम्, पात्रविशेषपाकादिकृतम्, अधिकारिविशेषकृतञ्चेति तत्तदुपाधिकृतम्, तत्र केषाञ्चित् मन्वादिना केषाञ्चिच्च तत्तद्भक्षणे प्रायश्चित्तोपदेशेन भक्ष्यत्वं स्मृत्यादावुक्तम् । अभक्ष्याणि च स्मृत्यादौ दर्शितानि "न कलञ्जं भक्षयेत् लशुनं न पलाण्डुमिति श्रुतिः"लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च" मनुः । । कवकानि छत्राकाः अमेध्यप्रभवानि विडादिजातानि । पलाण्डुसदृशं यत्तु गन्धवर्णरसादिभिः । अभोज्यं तद्भवेत् सर्वमिति"लशुनादिषु ये तुल्या गन्धवर्णरसादिभिः । अभक्ष्यास्ते द्विजातीनाम्"इति च देव०।"लशुनपलाण्डुगृञ्जनकवकिंपाककुम्भीभक्षणे द्वादशरात्रं पयः पिबेत्" शङ्खः "लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा । शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत्"मनुः शेलुं बहुवारफलं गोसम्बन्धि पेयूषं नवप्रसूतायाः गोः अग्निसंयोगात् कठिनीभूतं क्षीरम् । "वृथाकृसरसंयावं पायसापूपमेव च अनुपाकृतमांसानि देवान्नानि हवींषि च" मनुः । वृथा देवताद्युद्देशेन आत्मार्थं यत् पच्यते तत् । "तिलत-

ण्डुलसंपक्वः कृसरः सोऽभिधीयते" इति का०प० उक्तः कृसरः, संयावः इतक्षीरगुडगोधूमचूर्णमयः पिष्टकभेदः । अनुपाकृतानि मन्त्रैरसंस्कृतपशुमांसानि । देवान्नानि देवार्थं कल्पितानि प्राक् होमात् नाद्यानि । "वृथामांसञ्च नाश्नीयात् पितृदेवादिवर्जितम्" स्मृतिः "न तदश्नीयादुद्देवपितृमनुष्यार्थञ्च कुर्यात्" शङ्खलि०। "वृथा मांसं न भोक्तव्यं भोक्तव्यं श्राद्धकर्मणि अन्यथा भक्षयन् विप्रः प्राजापत्यं समाचरेत्" छाग० । अस्यापवादः "भक्षयन्नपि मांसानि शेषभोजी न दुष्यति औषधार्थमशक्तौ वा नियोगात् यज्ञकारणात्"देवलः,"रोगी नियुक्तोविधिना श्राद्धं विप्रमतं तथा । मांसमद्यात्त्वदेषा परिसंख्या प्रकीर्त्तिता"वृह०। मनुरपि "क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा अर्चयित्वा पितॄन् देवान् खादन्मांसं न दुष्यति" अन्यत्र दोषमाह स एव "अतोऽन्यथा तु योऽश्नीयात् विधिं हित्वा पिशाचवत् । यावन्ति पशुरोमाणि तावत् प्राप्नोति मान्यदम् । प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया यथाविधि नियुक्तस्तु प्राणानामेव चात्यये इति च मनुः । ब्राह्मणकाम्यया तु सकृदेव भक्ष्यम् "भक्षयेत् प्रोक्षितं मांसं सकृद् ब्राह्मणकाम्यया दैवे नियुक्तं श्राद्धे वा नियमे तु विवर्जयेदिति" यमोक्तेः नियमः मांसभोजननिवृत्तिसंकल्पः स च व्रतभेदः । "मांसं नाश्नीयात् तद्व्रतम् संवत्सरं वेति" छा० उप० इत्यादिकः । अतएव विहित मांसविवर्जने एव मनुना फलाधिक्यं दर्शितम् "यो बन्धन बधक्लेशान् प्राणिनां न चिकीर्षति स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते । यद्ध्यायति यत्कुरुते धृतिं या याति यत्र च । तदवाप्नोत्ययत्नेन यो हिनस्ति न किञ्चन" इति वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः । मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥ फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः न तत् फलमवाप्नोति यन्मांस परिवर्जनात्" । अतएव मनुना न मांसभक्षणे दोषो न मद्ये न च मैथुने प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" इत्यनिषिद्धमांसवर्ज्जनस्य महाफलतोक्ता । मांसभक्षणे न दोषइत्यादिकं तु दैवादिकर्म्मादौ अनुज्ञातमांसादिदोषाभावपरम् न तु निन्दितमांसभोजनेऽपि दोषाभावपरं तस्य स्वेनैव दुष्टत्वाभिधानात् तथा च श्रौतविहितमांसभक्षणे "सौत्रामण्यां सुरां पिबेदिति" स्मृत्युक्ते मद्यपाने, "न काञ्चन परिहरेत्तद्व्रतमित्यादि" श्रुत्युक्ते मैथुने च न दोषः । तेषामेव त्यागे महाफलत्वम् । अत

एवं “कुर्य्यात् घृतपशुं सङ्गे कुर्य्यात् पिष्टपशुं तथे”त्यनेन सति सङ्गे (वृथादिफलकामनायाम्) पिष्टपशुनैव तं सम्पा-दयेदिति तेनैवोक्तम् अधिकं पिष्टपशुशब्दे वक्ष्यते। रोगिणा भक्षणेऽपि विशेषः “ब्राह्मणानुज्ञया भक्ष्यमुक्तं मांसञ्च रोगिभिः । मातापितृभ्यां संभुक्तं येवं वा ब्रह्मचारिणः पुनः प्रशान्तरोगेण कर्त्तव्यमधिकं व्रतम्” ब्रह्मपु० । “अगम्यागमने चैव मद्यगोमांसभक्षणे शुद्ध्यै चान्द्रायणं कुर्य्यात् पराश० “ग्रामस्थं कुक्कुटोष्ट्रौ च सर्वान् पञ्चनखांस्तथा। क्रव्यादं कुक्कुटं ग्राम्यम् भुक्त्वा संवत्सरं व्रतम्” शङ्खः । पञ्चनखाश्च शशादिभिन्नाः । “शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमः । भक्ष्यान् पञ्चनखेष्वाहुरिति मनूक्तेः । “विड्वराहग्रामकुक्कुटनरगोमांसभक्षणेषु सर्वेष्वेव द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्” विष्णुः “हंसं मद्गुं च काकोलं काकं वा खञ्जरीटकम्। मत्स्यादांश्च तथा मत्स्यान् बलाकां शुकसारिके। चक्रवाकं प्लवं कोलं मण्डूकं भुजगं तथा। मासमेकं व्रतं कुर्य्यात् भूयश्च तन्न भक्षयेदिति शङ्खः । मत्स्यादः पाठीनव्यतिरिक्तः “पाठीनरोहिता-वाद्यौ नियुक्तौ दैवपैत्रयोः” मनुना तस्य विधानात् । “कल-विङ्कहंसमद्गुचक्रवाकरज्जुवालसारसदात्यूहशुकसारिकाभास-चाषकाकश्लाककोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत्” विष्णुः। “चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्” मनुः । सूना वध्य-स्थानं तत्र भवत् सौनम् वल्लूरं शुष्कमांसम् । “क्रव्यादान् शकुनीन् सर्वान् टिट्टिभञ्च विवर्ज्जयेत् कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् सारसं रज्जुवालञ्च दात्यूहं शुकसारिके । प्रतुदान् जालपादांश्च कोयष्टिनख विष्किरान् । निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च बकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकम् मत्स्यादान् विड्-वराहांश्च मत्स्यानेव च सर्वशः” इति मनुः। मत्स्यभेदे दैवा-द्यपवादमाह मनुः “पाठीनरोहितावाद्यौ नियुक्तौ हव्य-कव्ययोः । राजीवसिंहतुण्डांश्च सशल्कांश्चैव सर्वशः” “अभक्ष्यं भक्ष्येवजामहिषीक्षीरं विवर्जयेत् पञ्चनखमत्स्य-वराहमांसानि” चेति विष्णुः । “मत्स्यकर्कटशम्बूक-मद्गुशुक्तिकपर्द्दकान् पीत्वा नवोदकञ्चैव पञ्चगव्येन शुध्यति” हारी० “कृमिकीटपिपीलिकाजलौकापतङ्गा-स्थिप्राशने गोमूत्रगोमयाहारस्त्रिरात्रेण प्रयतो-भवेत्” हारी० केशमक्षिकारुधिरप्राशने आममांसक्रिमि-भक्षणे इत्युपक्रम्य “त्रिरात्रोपवासं घृतप्राशनञ्च कुर्य्यात्” मङ्गलि० । “भक्ष्याणामभक्ष्यमांसरुधिरप्राशने तु पञ्च-गव्यम्” हारी०। “नखकेशरुधिरप्राशने सद्यः स्नानं घृत-कुशाहिरण्योदकप्राशनञ्च” बुधः “अजाविकमहिषवर्ज्यानाम् मांसभक्षणे केशरुधिरप्राशने च बुद्धिपूर्व्वे त्रिरात्रम्” बौधा० भक्ष्यमांसस्यापि क्वचिदंशे निषिद्धता “वृक्षमांसं गर्भशय्यां शुष्कमांसमथापि वा । भूमेरन्तर्गतं हत्वा खङ्गिनागालितं च यत् । पक्वं मांसं स्वजीयस्य प्रयत्नाच्च न भक्षयेत् । प्रमादभक्षितैरेभिर्वने वासं वसेदहः ब्र०पु०। स्वजीयं पितृपचनभाण्डं तत्र पक्वम् । व्यक्ति-विशेषे सर्वमांसानामभक्ष्यता “न भक्ष्यं यतिना मांसं कदाचित्तु मुमुक्षुणा” ब्र०पु० । स्त्रीणान्तु सर्व्वथा मांसनिषेधमाह भागवतम् “ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून् खादन्ति तांश्च ताश्च ते पशवः इह ये निहता यमसदने यातयन्तो रक्षो-गणाः सौनिका इव स्वधितिनावदायासृक् पिबन्ति” इति। कार्त्तिकादौ तु सर्व्वथा मांसादिनिषेधः । “न मत्स्यं भक्ष-येन्मांसं न कौर्मं नान्यदेव हि। चण्डालो जायते राजन् ! कार्त्तिके मांसभक्षणात्” का०त०ना०पु० । “कौमु-दन्तु विशेषेण शुक्लपक्षं नराधिप ! । वर्ज्जयेत् सर्वमांसानि धर्म्मस्तत्र विधीयते । एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु” इत्युपक्रम्य वर्ज्जितव्या तथा हिंसा मांसभक्षणमेव च ब्रह्मपु० ।“निष्पावान् राजमाषांश्च शुभे दैवे जनार्द्दने यो भक्षयति राजेन्द्र ! चण्डालादधिकोहि सः । कार्त्तिके तु विशेषेण राजमाषांश्च वर्ज्जयेत्। निष्पावान् मुनिशार्द्दूल । यावदाहूतनारकी। कदम्बानि पटोलानि वृन्ताकसहितानि च । न त्यजन् कार्त्तिके मासे यावदाहूतनारकी । एतानि भक्षयेद्यस्तु शुभे दैवे जनार्द्दने । शतजन्मार्जितं पुण्यं दह्यते नात्र संशयः”म०त०ब्रह्मपु०। निष्पावः श्वेत-शिम्बी । कदम्बानि कदम्बफलानीति कलम्बीति वा म०त० रघु०। तिथिविशेषेषु मांसादीनामभक्ष्यता “स्त्रीतैलमांस-संभोगी पर्व्वस्वेतेषु मानवः विण्मूत्रभोजनं नाम नरकं प्रति-पद्यते” इति वि०पु० । “अष्टमी पञ्चदशी उभे पक्षे चतुर्द्दशी। अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे” स्मृतिः “मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन। केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः । भ्रूणघ्नावेक्षितं चैव संस्पृष्टञ्चाप्युदक्यया । पतत्रिणावलीढञ्च शुना संस्पृष्ट-मेव च। गवा चान्नमुपाघ्रातं घुष्टान्नञ्च विशेषतः । गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम् । स्तेनगाय-

नयोश्चैव तथोग्रवार्द्धुषिकस्य च । दीक्षितस्य कदर्य्यस्य बद्धस्य निगडस्य च । अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च । चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः । उग्रान्नं सूतिकान्नञ्च पर्य्याचान्तमनिर्द्दशम् । शुक्तं पर्य्युषितं चैव शूद्रोच्छिष्टं तथैव च । अनर्चितं वृथामांसमवीरायाश्च योषितः । द्विषदन्नं नगर्य्यन्नम् पतितान्नमवक्षुतम् । पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा । शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च । कर्म्मारस्य निषादस्य रङ्गावतारकस्य च । सुवर्णकर्त्तुर्वेणस्य शस्त्रविक्रयिणस्तथा श्ववतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च । रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे । मृष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्वशः । अनिर्द्दशञ्च प्रेतान्नमतुष्टिकरमेव च । राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् । आयुः सुवर्णकारान्नं यशश्चर्म्मावकर्त्तिनः । कारुकान्नं प्रजा हन्ति बलं निर्णेजकस्य च । गणान्नं गणिकान्नं च लोकेभ्यः परिकृन्तति । पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् । विष्ठा वार्द्धुषिकस्यान्नं शस्त्रविक्रयिणोमलम् । भुक्त्वा चान्यतमस्यान्नममत्या क्षपणं त्र्यहम् । मत्या भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च । नाद्यात् शूद्रस्य पक्वान्नं विद्वानश्राद्धिनोद्विजः । आददीताममेवास्माद् वृत्तावेकरात्रिकम्" मनुः । 'केशकीटावपन्नं केशकीटैः सह पक्वम् । घुष्टान्नं "कोभोक्ता" इत्युक्त्वा सत्रादौ यदन्नं दीयते तत् । गणान्नं बहुभिर्मिलित्वा यद्भोज्यं क्रियते तत् । दीक्षितस्य दीक्षणीययागानन्तरमा यज्ञसमाप्तेः अन्नमभक्ष्यम् । बद्धस्य रज्ज्वादिना । निगडस्य अर्श० आ० अच् निगडवतः निगडबद्धस्येत्यर्थः । सूतिकान्नं सूतिकामुद्दिश्य यत् पक्वं तत्कुलजैरपि न भक्ष्यम् । पर्य्याचान्तम् एकपङ्क्तिस्थेषु बहुषु भुञ्जानेषु यदि कश्चिदाचमनं करोति तदा तत्पङ्क्त्युपविष्टानां तदन्नमभक्ष्यम् । अनिर्द्दशं जननाशौचिनोऽन्नं तेनानिर्द्दशाहं प्रेतान्नमित्यनेन न पौनरुक्त्यम् । "सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः । पिबेत् पानीयमज्ञानात् समश्नीयात् स्पृशेत वा । पानीयपाने कुर्वीत पञ्चगव्यस्य भक्षणम् त्रिरात्रं भोजने प्रोक्तम्" शङ्खः । एतच्चोभयाशौचपरम् शुक्तं यन्मधुरं कालवशादम्लतां गतमन्य द्रव्यान्तराम्लताम् । शुक्तेषु दधि तज्जातञ्च भक्ष्यम् "दधि शुक्तेषु भोक्तव्यं सर्वञ्च दधिसम्भवमिति" मनूक्तेः । तदपि गुडादिद्रव्यमिश्रणेऽभक्ष्यमेव "गुडादिद्रव्यसंयुक्तं वर्ज्जं पर्य्युषितं दधि ।

तथैव यावकादीनि मन्थादिचरितान्यपि" यमोक्तेः । "सगुडं मरिचाक्तं च तथा पर्य्युषितं दधि जीर्णतक्रमपेयञ्च नष्टस्वादञ्च केनचित् । प्रमादभक्षितैरेभिर्वने पवव्रतं चरेत्" स्मृतेश्च "यवगोधूमवर्ज्जं शष्यविकारं स्नेहाक्तं चक्रुषाभवं वर्जयित्वा पर्य्युषितं प्राश्योपवसेत् तथा दधिवर्जं सर्वशुक्तानि" विष्णुः । "केवलानि च शुक्तानि तथा पर्य्युषितानि च । ऋजीषपक्वं भुक्त्वा तु त्रिरात्रं तु व्रती भवेत् शङ्खः । चक्रुषा व्यञ्जनभेदः । "अपूपाश्च करम्भाश्च धाना वटकशक्तवः । शाकं मांसमपूपञ्च सूपं कृशरमेव च । यवागूं पायसञ्चैव यच्चान्यत् स्नेहसंयुतम् सर्वं पर्य्युषितं भक्ष्यं शुक्तं तु परिवर्जयेदिति यमः । "अविकारि भवेन्मेध्यमभक्ष्यं तद्विकारवत्" पर्य्युषितं रात्र्यन्तरितम् स्नेहाक्तं चेद्भक्ष्यं यथाह मनुः । यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितम् तत्पर्य्युषितमप्याद्यं हविः शेषञ्च यद्भवेदिति" "चिरसंस्थितमप्याद्यं मस्नेहाक्तमपि द्विजैः । यवगोधूमजं सर्वं पयसश्चैव विक्रियेति" च अनर्चितं निन्द्याधरीकृतम् । अवीराया निःस्वन्वायाः पतिपुत्रहीनायाः सम्बन्धिन्यास्तु पितामहादेर्न दोषः । नगर्य्यन्नं नगरिणो नगराधिपस्यान्नम् "नगराधिपतेः शक्तोः पिशुनानृतिनोस्तथेति" ब्र० पु० एकवाक्यात् । अवक्षुतं क्षवथुसहितम् । "हस्त्यन्वेषी नटानान्तु स तु शैलूषकः स्मृत" इति आ० पु० उक्तः शैलूषः । तुन्नवायकः सूचीकर्म्मकृत्, निषादः प्रतिलोमजवर्णसङ्करभेदः । रङ्गावतारकः रङ्गस्थाने गीतवाद्यादिना तदनुगुणतायां प्रवक्ता । वेणः वंशविकारपात्रादिकर्त्ता । श्ववान् मृगयाद्यर्थं कुक्कुरपोषणकृत् ; शौण्डिकादयश्च तत्तद्वृत्तिभाजो द्विजाः अन्त्यजानां गुरुप्रायश्चित्तश्रवणात् प्रा० वि० । शूद्रान्नं शूद्रगृहे न भक्ष्यम् । "शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि । निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्" । "निवृत्तेन शूद्रान्नान्निवृत्तेनेति" आ० त० रघु० "यथा यतस्ततो ह्यापः शुद्धिं यान्ति नदीं गताः । शूद्रादिगृहमपन्नं प्रविष्टं तु सदा शुचि" अत्रिः । तेन स्वगृहागतस्यैव शुद्धत्वं तद्गृहगतस्य शूद्रान्नत्वमिति भेदः । "यः शूद्रेण समाहूतो भोजनं कुरुते द्विजः । सुरापीति स विज्ञेयः सर्वधर्मबहिष्कृतः । यः शूद्रेणाभ्यनुज्ञातः कुर्याद्वा भोजनं द्विजः । सुरापीति स विज्ञेयः सर्वधर्मबहिष्कृतः" इह० ना० । "शूद्रान्नेन तु भुक्तेन उदरस्थेन यो मृतः । स वै खरत्वमुष्ट्रत्वं शूद्रत्वं चाऽधिगच्छति । "शूद्रान्नं ब्राह्मणोभुक्त्वा तथा रङ्गावतारिणः । चिकित्सकस्य क्रूरस्य तथा स्त्रीमृग-

जीविनः। चण्डालान्नं भूमिपान्नमजजीव्यश्वजीविनाम्। शौण्डिकान्नं सूतिकान्नं भुक्त्वा मासव्रती भवेदिति" शङ्खः। शूद्रस्यापि भोज्यविशेषस्य भक्ष्यतामाह सुमन्तुः गोरसञ्चैव शक्तुं च तैलं पिण्याकमेव च। अपूपान् भक्षयेच्छूद्रात् यच्चान्यत् पयसा कृतम्। कन्दुपक्वं तैलपक्वं पायसं दधि शक्तवः एतान्यशूद्रान्नभुजां भोज्यानि मनुरब्रवीदिति" हारीतः। "रजके चैव शैलूषे वेणुचर्म्मोपजीविनि। एतेषां यस्तु भुञ्जीत द्विजश्चान्द्रायणं चरेत्" आप०। अन्त्यजान्नं यदा भुङ्क्ते शूद्रो मोहात् कदाचन एकरात्रोषितोभूत्वा दानं दत्त्वा विशुध्यति" संवर्त्तः "अभिशस्तपतितपौनर्भवब्रह्मघ्नषण्ढपुंश्चल्यशुचिशस्त्रकारतैलिकचाक्रिकध्वजिसुवर्णकारवैद्यकगण्डतन्तुवायकवर्द्धकगणिकान्नानि च न भोज्यानि शौकरिकव्याधनिषादरजकवरुडकैवर्त्तचर्मकारा अभोज्यान्ना अप्रतिग्राह्याश्च" सुम०। "पतितानां गृहं गत्वा भुक्त्वा च प्रतिगृह्य च मासोपवासं कुर्वीत" वृह०। "चाण्डालपतितान्नभोजनेषु ततः पुनरुपनयनम्" वसि०। "पतितद्रव्यमादाय भुङ्क्ते च ब्राह्मणः क्वचित्। कृत्वा तस्य समुत्सर्गं अतिकृच्छ्रं चरेद्द्विजः" उश०। "चण्डालचाक्रिकलोहकारघाण्टिकान्नभोजने त्रिरात्रमुपवसेत्" हारीतः चाक्रिको वृषादिचक्रेण तैलनिष्पादनवृत्तिः। घाण्टिकः देवघण्टावादकः। "ध्वजिवणिक्किरीटिवार्द्धुषिकान्नभोजने पञ्चरात्रम्" हारीतः। ध्वजी शौण्डिकवृत्तिः वणिक् शिल्पोपजीवी। किरीटी वणिग्भेदः। "भगवृत्तिपुंश्चलोवेश्यान्नभोजने सप्तरात्रम् दुष्कृतिगरदतस्करान्नभोजने दशरात्रम् प्रव्रजितगणोद्दिष्टान्नभोजने दशरात्रं ताम्रकांस्यसीसककारव्याधिततक्षकान्नभोजने तप्तकृच्छ्रं ब्राह्मणवृत्तिप्रवधवन्ध्योपघातवृत्त्यन्नभोजने च सद्वीर्यान्नभोजने च असंस्कृतावश्यासरोषविक्रयान्नभोजने च" हारी०। भगवृत्तिर्दुनशुल्केन यस्य वृत्तिः गरदो विषदाता व्याधिजनकौषधदाता च "इतरे द्वे त्वभोज्यान्नास्तेषामन्नं विगर्हितम् अजाविके माहिषिके कूटे च वृषलीपतौ एतेषां भोजनं कृत्वा द्वादशाहं पयः पिबेत्" मनुः। अजाविकोऽजाविभ्यां वृत्तिमान्। माहिषिकः महिषेण वृत्तिमान्। कूटः अन्यतृमनसि अन्यद्वचसीत्यादिरूपकपटव्यवहारी "वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा। अपरा वृषली ज्ञेया कुमारी या रजस्वला"। उश० उक्ता तस्याः शूद्रायाश्च पतिः विष्णुः "गणगणिकास्तेनगायकान्नानि भुक्त्वा सप्तरात्रं पयसा वर्त्तेत तक्षणान्नं चर्मकर्त्तुश्च वार्द्धुषिककदर्यस्य दीक्षितबद्धनिगडाभिशस्तानाञ्च पुंश्चलोदाम्भिकचिकित्सकलुब्धकक्रूरोच्छिष्टभोजिनाञ्च अवीरास्त्रीसुवर्णकारसंसर्गपतितानाञ्च पिशुनानृतवादिनाञ्च धर्म्मसोमविक्रयिणाञ्च शैलूषतुन्नवायकृतघ्नरजकानाञ्च कर्म्मकारनिषादरङ्गावतारिवेणशस्त्रविक्रयिणाञ्च श्वजीविशौण्डिकतैलिकचेलनिर्णेजकानाञ्च भ्रूणघ्नावेक्षितमुदक्या संस्पृष्टं पतत्रिणावलीढं शुना संस्पृष्टं गवा घ्रातञ्च कामतः पदास्पृष्टमवक्षुतञ्च मत्तक्रुद्धातुराणाञ्च अनर्चितं वृथा मांसञ्च। यत्र नाश्नन्ति देवाश्च पितरश्च यथाविधि। वृथापाकः परिज्ञेयः तस्य नाद्यात् कथञ्चन। वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेत्"। "नवं कृसरपूपादि पायसं मधुसर्पिषी चण्डालेन शुना वापि दृष्टं हविरयज्ञियम्। बिडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत् अन्यत्र हिरण्योदकस्पर्शादिति" शाता०। हिरण्योदकस्पर्शसेचनस्य, तापनादेः एतादीनां शुद्धिकरत्वमाह सएव "तापनं घृततैलानां प्लावनं गोरसस्य च अन्त्यानां भक्तशेषस्तु भक्षितो यैर्द्विजातिभिः। चान्द्रं कृच्छ्रं तदर्द्धं वा" उशनाः "कापालिकान्नभोक्तॄणां तन्नारीगामिनां तथा। ज्ञानात् कृच्छ्राब्दमुद्दिष्टम्" आप०। "अन्त्यावसायिनामन्नमश्नीयाद्यस्तु कामतः। शिशुचान्द्रायणं कुर्य्यादिति" अङ्गि०। "चण्डालपतितादीनामुच्छिष्टस्य च भक्षणे। द्विजः शुध्येत् पराकेण" अङ्गि०। "अमेध्यपतितचाण्डालपुक्कशरजस्वलाऽवधूतकुणिकुष्ठिनखिस्पृष्टानि भुक्त्वा कृच्छ्रमाचरेत्" शङ्खः। अमेध्यं मद्यभाण्डविण्मूत्ररेतआदि। पुक्कशः क्षत्रियायां शूद्राज्जातः प्रतिलोमजः वर्णसङ्करः। कुणिः स्वभावतः पाणिविकलः। "चाण्डालपतितामेध्यकुणपैः कुत्सिना तथा उदक्यासूतिभिः स्पृष्टं भुक्त्वा मासं वने वसेदिति" ब्र०पु०। "श्वस्रादिदूषितान्नञ्च भुञ्जानस्तु यदा भवेत् स्नात्वार्कमर्चयित्वा तु घृतं प्राश्य विशुध्यति" ब्र०पु० पतितादिस्पर्शे अकृतस्नानानामन्नमात्रस्याभक्ष्यता "महापातकिसंसर्गे स्नानमेव विधीयते संस्पृष्टस्तु यदा भुङ्क्ते तप्तकृच्छ्रं समाचरेत् स्नानार्हको यदा स्नानमकृत्वाश्नाति वै द्विजः। अहोरात्रोषितः स्नातः पञ्चगव्येन शुध्यति" पैठ०। "केशकीटावपन्नञ्च स्त्रीभिः स्पृष्टं तथैव च। कोदक्याशूद्रसंस्पृष्टं पञ्चगव्येन शुध्यति" जाबा०। स्त्री भिन्नजातिस्त्री। केशकीटाद्युपहतस्य प्रोक्षणादिकं कृत्वा भक्ष्यमेव। "अवक्षुतं केशपतङ्गकीटैरुदक्यया वा पतितैश्च दृष्टम्। अलातभस्मभिर्हिरण्यतोयैः संस्पृष्टमन्नं मनुराह भोज्यम्"

यमः चण्डालपतितामेध्यैः कुणपैः कुटिना तथा । ब्रह्मघ्नसूतिकोदक्याकौलेयकादुदृष्टिभिः । दृष्टं वा केशकीटाक्तं भङ्गस्वकनकाम्बुभिः शुद्धमद्यात् महद्यच्च प्रभूतं व्युष्टतैव च ब्रह्मपु॰ । कौलेयकः कुक्कुरः कुटुम्बी कुक्कुटादि प्राणिभेदः तस्य बहुकुटुम्बवत्त्वात् । व्युष्टं पर्य्युषितम् । एतच्च चरतरमभ्युक्ष्य भक्ष्यम् अत्यन्तोपहतस्य तु त्यज्यतैव" प्रा॰वि॰ "विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः । केशलोमनखैर्वापि दूषितं परिवर्ज्जयेत्" देव॰ । तत्कालसूतं शुद्धेत् कठिनन्तु पयोदधि । "अविलीनं तथा चैव विलीनं अपरेण तु" शाता॰ "नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा । स्त्रिया क्लीवेन च हुते भुञ्जीत ब्राह्मणः क्वचित् । अश्लीलमेतत् साधूनां यत्र जुह्वत्यमी हविः प्रतीपमेतद्देवानां तस्मात्तत् परिवर्ज्जयेदिति" मनुः । "अश्रोत्रियोऽनधीतवेदः तेन हुतयज्ञे अन्नमभक्ष्यम् । ग्रामयाजी ग्रामजनानां शान्तिपूजाकारयिता ऋत्विग्भावेन होमसम्पादनकर्त्ता च स च होता यत्र यज्ञे तदन्नमभक्ष्यम् । श्राद्धविशेषान्नस्याभक्ष्यता "चान्द्रायणं नवश्राद्धे पराको मासिके मतः । पक्षश्राद्धेऽतिकृच्छ्रः स्यात् षाण्मासि कृच्छ्रएव च । आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके" अङ्गिः॰ । पक्षश्राद्धं तु पाक्षिकश्राद्धम् । नवश्राद्धमेकादशाहादिश्राद्धम् । हस्तादिदत्तद्रव्यविशेषस्याभक्ष्यता । "हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च दातारं नोपतिष्ठन्ति भोक्ता भुङ्क्ते च किल्विषम् । तस्माद्व्यवहितं देयं पर्णेनाथ तृणेन वा । प्रदद्यात्तु न हस्तेन नायसेन कदाचन । आयसेन तु पात्रेण यदन्नमुपदीयते । भोक्ता विष्ठासमं भुङ्क्ते दाता च नरकं व्रजेत्" भवि॰पु॰ । "माक्षिकं फाणितं शाकं गोरसं लवणं घृतम् । हस्तदत्तानि भुक्त्वा च भोक्ता सान्तपनञ्चरेत्" यमः । "एकेन पाणिना दत्तं शूद्रादत्तं न भक्षयेत् । घृतं तैलञ्च लवणं पानीयं पायसं तथा" स्मृतिः । "वाग्दुष्टं भावदुष्टञ्च भाजने भावदूषिते भुक्त्वान्नं ब्राह्मणः पश्चात् त्रिरात्रं तु व्रती भवेत्" शङ्खः । "शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने । अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति" संव॰ । भिन्नभाजनं कांस्यपरं "भिन्नकांस्ये तु योऽश्नीयादन्नं स्नात्वा जपन् द्विजः । गायत्र्यष्टसहस्रं तु एकभक्तव्रतः शुचिः" बौधा॰ कांस्यत्वेन विशेषणात् । आपोशनाकरणे भोजनस्य निषेधात् तदकृतवता द्रव्यमात्रस्याभक्ष्यता । "आपोशानमकृत्वा तु भुङ्क्ते योऽनापदि द्विजः । भुञ्जानश्च यदा ब्रूयात् गायत्र्यष्टशतं जपेत्" । अनाचान्तस्य द्रव्यमात्रस्याभक्ष्यता । "अनाचान्तः पिबेद्यस्तु भक्षयेद्वापि किञ्चन । गायत्र्यष्टसहस्रं तु जप्यं कृत्वा विशुध्यति । आचामेद्वर्ज्जये नित्यं भुक्त्वा ताम्बूलचर्वणम् दन्तलग्ने फलमूले भुक्तस्नेहे तथैव च । ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः" जावा॰ । "कषायकटुताम्बूले भुक्तस्नेहानुलेपने । मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत्" लघुशौ॰ अनाचान्तः कषायकटुताम्बूलेक्षुव्यतिरिक्तद्रव्यं सकृद्भक्षयित्वा दुग्धमधुनारिकेलजलादिकञ्च सकृत् पीत्वा अष्टोत्तरसहस्राद्यसां गायत्रीं जपेत् प्रा॰वि॰ । यज्ञोपवीतरहितानामन्नमात्रस्याभक्ष्यता । "विना यज्ञोपवीतेन भुङ्क्ते तु ब्राह्मणो यदि । स्नानं कृत्वा जपं कृत्वा उपवासेन शुध्यति" लघुहा॰ । अमेध्यदूषितफलानामभक्ष्यता । "अङ्गारिकुसुमादींश्च फलकन्दमूलकान् । विण्मूत्रदूषितान् प्राश्य कृच्छ्रं तु पादतश्चरेत् सचिकटे उर्द्धमेव स्यात्" संव॰ । मृदादेरभक्ष्यता । "अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षलवणं तथा । मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणैः" भवि॰पु॰ । अत्रापवादः । "सैन्धवं लवणञ्चैव यच्च सामुद्रिकं भवेत् पवित्रे परमे चैते प्रत्यक्षे अपि नित्यशः" वायुपु॰ । "भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत्" यमः । "स्त्रीहोत्रयादने अहोरात्रमभोजनाच्छुद्धिः" श्रा॰त॰रघु॰ । "नैकोमिष्टान्नमश्नीयात् वञ्चयित्वा गृही सुतान् । दासान् भृत्यातिथींश्चैव तथासम्बन्धिबान्धवान् इत्युपक्रम्य "लालाख्ये नरके घोरे दुर्गन्धे प्राप्स्यते नरः" यमः । "पयोऽनुद्धृतसारञ्च भक्षयेद्दधि नो निशि दिवसे नवनीतञ्चेति" "सर्वं तिलमयं नाद्यात् सायं धर्म्माभिलाषिभिः" इति । "नाश्नीयात् सन्ध्ययोर्द्वयोः" इति च का॰ख॰ । "नातिसौहित्यमाचरेत् नातिप्रगे नातिसायम् न निशीथे नचोषसि" मनुः न दध्युद्धृतसारञ्च भक्षयेद्दधि नो निशि । नाद्यादाद्रग्नि रात्रिषु" काशी॰ख॰ "श्राद्धं कृत्वा परश्राद्धे योऽश्नीयात् ज्ञानवर्ज्जितः । दातुः श्राद्धफलं नास्ति भोक्ता किल्विषभुक् भवेत्" यत् वेष्टितशिरा भुङ्क्ते यत् भुङ्क्ते दक्षिणामुखः सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते, इति का॰ख॰ । "यो गृहीत्वा विवाहाग्निं गृहस्थ इव मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः" का॰ख॰ । "पक्षे वा यदि मासे वा यस्य गेहेऽत्ति न द्विजः । भुक्त्वा दुरात्मनस्तस्य चरेच्चान्द्रायणं व्रतम्" का॰ख॰ "अयाज्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम्" ति॰त॰पु॰ । "यातुधानाः

पिशाचाश्च राक्षसाः क्रूरकर्मिणः । हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् का०ख०। नोत्सङ्गे भाजनं कृत्वा नो पाणौ नैव कर्पटे । नासने न च शय्यायां भुञ्जीत न मलार्दितः” का०ख०”। “नारिकेलोदकं कांस्ये ताम्रपात्रे गुडस्तथा । सुरातुल्यं भवेदेतत् ताम्रे गव्यं घृतं विनेति ब्रा०त०पुरा०।“वर्जनीयं सदा माघे मूलकं मदिरासममिति” ब्र०पु०। सदा विप्रैरिति विधानपा० पाठः । “वटप्लक्षोदुम्बरनीपदधित्थमातुलङ्गानि न भक्षयेत्” हारी० दधित्थः कपित्थः। कालान्तरेऽपि द्रव्यान्तर निषेधः “आमिषं चक्रशाकञ्च योभुङ्क्ते च रवेर्दिने सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते। स्त्रीतैलमांससंभोगी पर्वस्वेतेषु वै पुमान् । विण्मूत्रभोजनं नाम नरकं प्रतिपद्यते” वि०पु० । अथ तिथिविशेषे द्रव्यविशेषाभक्ष्यतामाह स्मृतौ “कुष्माण्डे चार्थहानिः स्यात् बृहत्यां न स्मरेद्धरिम् । बहुशत्रुः पटोले स्यात् धनहानिस्तु मूलके । कलङ्की जायते बिल्वे तिर्य्यग्योनिश्च निम्बके । ताले शरीरनाशः स्यान्नारिकेले च मूर्खता। तुम्बी गोमांसतुल्या स्यात् कलम्बी गोवधात्मिका । शिम्बी पापकरी प्रोक्ता पूतिका ब्रह्मघातिका । वार्त्ताकी सुतहानिः स्याच्चिररोगी च माषके ।महापापकरं मांसं प्रतिपदादिषु वर्जयेत्” षट्त्रि०। तत्र सप्तम्यामेव तालनिषेधादन्यत्र भक्षणं प्राप्तम् । अतः ‘तालं श्वेताञ्च वार्त्ताकीं न खादेद्वैष्णवो नरः’। इत्यनेन तालमपि श्वेतं निषिद्धं साहचर्य्येण श्वेतानुषङ्गात् । “अलाबुं वर्त्तुलाकारां वार्त्ताकीं कन्दकद्विभाम्”” ति०त० पु० यदपि ‘कलम्बं नालिकाशाकं कलम्बं पूतिकान्तथा । भक्षयन् पतितस्तु स्यादपि वेदान्तगोद्विजः’ इत्युशनसा सामान्यतोऽभिहितम् ! तदपि श्वेतकलम्बपरम् । तत्र नालिकाश्वेतकलम्बी । पूतिका द्वादश्यामधिकदोषाय स्तुद्रविषयिकावा इति ति०त०रघु० ।

कुष्माण्डं २बृहतीफलम् ३लवणं वर्ज्यं ४तिलाम्लं तथा ५तैलं ६ चामलकं ७दिवं भ्रमता ८शीर्षं ९ कपालान्त्रकम् १०। ११ निष्पावाश्च १२ मसूरिकाफलमथो १३ वृन्ताकसंज्ञं १४ मधु द्यूतं १५ स्त्रीगमनं क्रमात् प्रतिपदादिष्वेवमाषोडश । नि०सि०सु०दीपि० । शीर्षं नारिकेलम् कपालं अलाबुः अन्त्रकं पटोलम् । “१कुष्माण्डं २ बृहती ३ क्षारं ४ मूलकं ५ पनसं ६ फलम् । ७ धात्री ८ शिरः ९ कपालान्त्रं १० ११नख १२ चर्म १३ तिलानि च १४ क्षुरकर्माङ्गनासेवां १५ प्रतिपदादिषु वर्जयेत् नि०

सि०भूपालः । नखं शिम्बी चर्म मसूरिका । “उच्छिष्टस्यादमात्रस्याभक्ष्यता “उच्छिष्टमगुरोरभोज्यं स्वोच्छिष्टमुच्छिष्टोपहतञ्च” शाता० । गुरुः पित्रादिः । “पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यम्’, आप० मातापितृभ्यां संभुक्तं शेषं वा ब्रह्मचारिणः” ब्र०पु० । स्वशुच्छिष्टन्तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभाजने एवं वैवस्वतः प्राह भुक्त्वा चान्द्रायणं चरेत्” चतुर्वि०मतम् । “नाश्नीयात् भार्य्यया सार्द्धं नाश्नीयादुत्कटासने” मनुना स्त्रिया सह भोजननिषेधेऽपि अध्वनि ब्राह्मण्या स्त्रिया सह भोक्तुं शक्यते। “ब्राह्मण्या स्त्रिया सार्द्धं कश्चिद्भुञ्जीत चाध्वनि । अधोवर्णस्त्रिया सार्द्धं भुक्त्वा चान्द्रायणं चरेत्” ब्र०पु० । एतद्विषय एव “ब्राह्मण्या वा सहाश्नीयादुच्छिष्टं न कथञ्चन । न तत्र दोषं मन्यन्ते” अङ्गिराः। विड़ालाद्युच्छिष्टस्याभक्ष्यता । “विड़ालकाकाद्युच्छिष्टं जग्ध्वा श्वन कुलस्य च । केशकीटावपन्नञ्च पिबेत् ब्रह्मसुवर्चलाम्” मनुः। “दूषितं केशकीटैश्च मार्ज्जारैर्मक्षिकैस्तथा । मक्षिकामशकैश्चैव तिरात्रेण विशुध्यति । श्वकाकगोभिरुच्छिष्टभक्षणे तु दिनत्रयम्” मनुः अस्यापवादः । “देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत् । तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति” यमः । संस्कारश्च “घनानां प्रोक्षणाच्छुद्धिः द्रवाणामपि तापनात् । संस्पर्शात्तु भवेच्छुद्धिरपां प्राहुर्न तस्य च काकस्य मुखसंस्पृष्टं शुचि चैव हि तद्भवेत्” यमः । “पक्षिश्वापदजग्धस्य रसस्यान्नस्य भूयसः । संस्काररहितस्यापि भोजने पादकृच्छ्रकम्” विष्णुः । कुत्सितशूद्रादिपङ्क्तिभोजननिषेधात्तत्रान्नमात्रस्याभक्ष्यता “यस्तु पङ्क्तिषु भुञ्जीत कुत्सितानां विशेषतः अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति” अङ्गि०। “अपाङ्क्तेयब्राह्मणोपवेशनेन कुत्सितास्तु । जलादिना पङ्क्तिभेदनमन्तरेणेत्याचारः प्रा०वि०। “ब्राह्मणः क्षत्रियपङ्क्त्यामुपविश्याश्नन् यदा भुङ्क्ते तदा नक्तमाचरेत् । वैश्यपङ्क्त्यामेकरात्रं शूद्रपङ्क्त्यां त्र्यहमाचरेत्” विष्णुः। अनिन्दितपङ्क्तिष्वपि सहभोजने एकस्योत्थाने तदन्नस्याभक्ष्यता ‘एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने । यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं न भोजयेत् । मोहात् भुङ्क्ते तु यः पङ्क्त्यामुच्छिष्टं सहभोजने । प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनं तदा” शङ्खः । कालविशेषे द्रव्यमात्रस्य अभक्ष्यता । “सूर्य्यग्रहे तु नाश्नीयात् पूर्व्वं यामचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना” वृद्ध०गौ०। “ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः भुञ्जी-

तावर्त्तनात् पूर्व्वं प्रथमे प्रथमादधः" मा॰पु॰। अधि कर्त्तुम्। "ग्रस्तोदये सति विधोर्नाह्निर्भोजनमाचरेत्" वशि॰। "अमुक्तयोरस्तगयोरद्यात् दृष्ट्वा परेऽहनि" व्यासः। "अहोरात्रं न भोक्तव्यं चन्द्रसूर्य्यग्रहो यदा मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततःपरम्" विष्णुध॰पु॰। "सन्ध्याकाले यदा राहुर्ग्रसते शशिभास्करौ। तदहर्नैव भुञ्जीत रात्रावपि कदाचन" गर्गः। सायं सन्ध्यायां सूर्य्ये ग्रस्तास्ते, पूर्व्वेऽह्नि रात्रौ च न भोक्तव्यं, प्रातः सन्ध्यायां चन्द्रे ग्रस्तास्ते पूर्व्वरात्रावपरेऽह्नि च न भोक्तव्यमित्यर्थः नि॰सि॰। वृद्धहारीतेनोक्तस्तेषां विशेषः। "सायाह्ने ग्रहणं चेत् स्यादपराह्णे न भोजनम्। अपराह्णे, न मध्याह्ने, मध्याह्ने न तु सङ्गवे। भुञ्जीत सङ्गवे चेत् स्यान्नपूर्व्वं भोजनक्रियेति" मा॰पु॰ उक्तः। एतच्च बालादिविषयमिति नि॰सि॰। "सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने स्नात्वा कर्म्माणि कुर्व्वीत शृतमन्नं विवर्ज्जयेत्" हेमा॰षट्त्रिं॰। "नवश्राद्धेषु यच्छिष्टं गृहपर्य्युषितञ्च यत्। सर्व्वं तद्दुष्टतामेति" स्मृतेः ग्रासकाले पक्वान्नादेरभक्ष्यता। अस्यापवादः। "आरनालं पयस्तक्रं दधि स्नेहाज्यपाचितम्। मणिकस्योदकं चैव न दुष्येद्राहुसूतके" मेधा॰। "अन्नं पक्वमिह त्याज्यं स्नानं सवसनं ग्रहे। वारितक्रारनालादि तिलदर्भैर्न दुष्यति" स्मृतिः। पुंसवनाद्यन्नस्याभक्ष्यता। "याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम्। स्त्रीणां प्रथमगर्भे च भुक्त्वा चान्द्रायणं चरेत्। ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा। जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्" आप॰। संग्रहे स्त्रीणामेव व्यभिचारादिदोषैः प्रायश्चित्तेन संग्रहे। ब्रह्मौदने आपोवसथ्याङ्गकर्म्मविशेषे प्रा॰वि॰। "जन्मप्रभृति संस्कारे बालस्यान्नस्य भोजने। असंपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः" अङ्गि॰। "निर्वृत्ते चूड़होमे च प्राङ्नामकरणात् तथा। चरेत् सान्तपनं भुक्त्वा जातकर्म्मणि चैव हि" व्यासः। भोजनकाले मूत्राद्युत्सर्गेऽन्नमात्रस्याभक्ष्यता। "मूत्रोच्चारसमुत्सर्गे मोहात् भुङ्क्तेऽथ वा पिबेत्। त्रिरात्रं कुर्व्वीत" शाता॰। भोजनकाले सूतकाद्यशौचे तन्मात्रस्याभक्ष्यता "यदा भोजनकाले तु अशुचिर्भवति द्विजः। भूमौ निःक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति। भक्षयित्वा तु तं ग्रासमहोरात्रेण शुध्यति अशित्वा सर्व्वमेवान्नं त्रिरात्रेण विशुध्यति" शाता॰। "अशुचिः सूतकादिनेति" प्रा॰वि॰। तैलाभ्यङ्गादिना स्नानार्हस्याकृतस्नानस्यान्नमात्रस्याभक्ष्यता। "सतैलके द्विजः स्नाने भुञ्जीताथ पिबेत्तथा। गायत्र्यष्टसहस्रं तु जपेत् स्नात्वा समाहितः" संव॰। स्नाने तैलाभ्यङ्गक्षौरादिनिमित्ते स्नाने प्राप्ते प्रा॰वि॰। नीलीवस्त्रपरिधाने द्रव्यमात्रस्याभक्ष्यता। "नीलीवस्त्रं परिधाय भुक्त्वा स्नानार्हकस्तथा। त्रिरात्रं तु व्रतं कुर्य्यात्" शङ्खः। "लोहितान् वृश्चनांस्तथा। अनुपाकृतमांसानि विड्जानि कवकानि च वृथाकृसरसंयावपायसापूपशष्कुलीरिति" या॰। विड्जानि अमेध्योद्भवानि। अमेध्यदेशोद्भवानान्तु न दुष्टता "अमेध्येषु तु ये वृक्षा उप्ताः पुष्पफलोपगाः तेषाञ्चैव न दुष्यन्ति पत्रपुष्पफलानि चेति" बौधा॰ उक्तेः। अतिथ्यादिष्वभुक्तवत्सु गृहस्थस्यान्नमात्रस्याभक्ष्यता "देवतातिथिभृत्येषु भृत्येष्वभ्यागतेषु च। अभुक्तवत्सु येऽश्नन्ति तथा पित्रग्निपक्षिषु। दुष्टान्नपर्य्यनिर्यासभुजः सूचीमुखास्तु ते। जायन्ते गिरिवर्ष्माणः" इति मार्क॰पु॰। "असंतर्प्य पितॄन् देवान्नाद्यादन्नं नवं क्वचित्। पक्वान्नं चापि नो मांसमिति" का॰ख॰ भक्ष्येष्वपि देवायानिवेदितमभक्ष्यमेव "अनिवेद्य न भुञ्जीत मत्स्यमांसादिकं च यत्। अन्नं विष्ठा पयोमूत्रं यद्विष्णोरनिवेदितम्" वा॰त॰पु॰। "तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः" गीता ब्रह्मचारिणोऽभक्ष्याणि। "मासिकान्नन्तु योऽश्नीयादसमावर्त्तको द्विजः। स त्रीण्यहान्युपवसेद्" मनुः। "सूतान्नं मधुमांसञ्च नैवाश्नीत व्रती क्वचित्। त्रिरात्रोपोषितः सम्यग्याविमेकां जले वसेत्" देवलः। "सूतिकान्नं नवश्राद्धं मासिकान्नं तथैव च। ब्रह्मचारी च योऽश्नीयात् मधुमांसं कथञ्चन प्राजापत्यं तु कृत्वादौ मौञ्जीहोमेन शुध्यति" संव॰। मांसं च शिष्टभक्ष्यमांसपरम् "ब्रह्मचारी चेन्मधुमांसमश्नीयात् शिष्टभोजनीयं, कृच्छ्रं द्वादशरात्रञ्चरित्वा व्रतशेषं समापयेत्" वशि॰उक्तेः। अस्यापवादः "स चेत् व्याधीयत कामं गुरोरुच्छिष्टं भैषज्यार्थं सर्व्वं प्राश्नीयात् येनेच्छत्तेन चिकित्सेत् स यदा अगदः स्यादादित्यमुपतिष्ठेत्" बौधा॰। अस्य पात्रविशेषे द्रव्यमात्रस्याभक्ष्यता। "आमिषस्य तु यो भाण्डे पक्वमश्नीत सुव्रतः (ब्रह्मचारी)। कुशमूलविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्" लघुहारीतः।

सर्व्वापवादः। "जातमात्रः शिशुस्तावद्यावदष्टौ समाः" स्मृताः। भक्ष्याभक्ष्ये तु नो दुष्येद्यावन्नैवोपनीयते" का॰ख॰ एवमन्यान्यपि स्मृतौ निषिद्धानि द्रव्याणि वैद्यकोक्तदोषादपि कानिचिदभक्ष्याणि तानि चापथ्यशब्दे २२६ पृष्ठे प्रायशो दर्शितानि विशेषतः कानिचित् प्रदर्श्यन्ते "वर्ज्जयेत् पयसा सिद्धं मत्स्यमांसमनूपकम्। वल्लीफलम-

कुष्माण्डमर्ज्जिकाम्बूफलादिते । मांसं मूलकसंसिद्धं हतेन मधुमांसके । मत्स्यानि चुरिकारेण चौद्रशुष्णेन वारिणा पुनरुष्णीकृतञ्चान्नं एतं कांस्ये दशाह्निकम् । दध्ना तक्रेण पयसा तालस्यापि फलेन च । विरोधार्थं न भुञ्जीत मतिमान् कदलीफलम् । विरुद्धाशनजान् रोगान् प्रतिहन्ति विरेचनम् वमनं शमनं वारि पूर्व्वं वा हितभोजनम् सात्म्येतात्मतया वापि दीप्ताग्नेस्तरुणस्य च स्निग्धव्यायामबलिनां विरुद्धं वितथं भवेत् । अदृष्टाहारदोषास्तु जायन्ते पापिनामिह" आह्निकतत्त्वे वैद्यकम् ।

**अभङ्ग** पु० न०त०। १ भङ्गाभावे २ पलायनाभावे च न०ब०। ३भङ्गरहिते त्रि०। ४ अभङ्गाख्ये "पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मक" इति सा०द० उक्ते श्लेषे शब्दालङ्कारभेदे पु० । यथा "पायात् स स्वयमम्बकत्रयकरस्त्वां सर्वदोमाधवः" । अम्बकेत्यत्राभङ्गः श्लेषः ।

**अभङ्गुर** त्रि० न भङ्गुरः । भङ्गुरभिन्ने स्थिरे "अभङ्गुरतनुत्विषां वलयिता घनैर्विद्युताम्" रसगङ्गाधरः ।

**अभद्र** न० विरोधे न०त० । सुखभिन्ने दुःखे १ न०ब० । २ मङ्गलभिन्ने अमङ्गले च ३ तत्साधने ४ तदाश्रये च त्रि०।

**अभय** न० अभावे न०त०। १भयाभावे। "प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च" मनुः । "अभयं वै जनक ! प्राप्तोऽसीति" श्रुतिः । "प्रवृत्तिं च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये" गीता ६त०। २ भयशून्ये त्रि०।न भयमस्मात् ५ब०। ३परमात्मनि, ४तज्ज्ञाने च । ५हरितक्याम् ६दुर्गामूर्त्तिभेदे च स्त्री ७ वीरणमूले उशीरे न० ८ सर्वपरिग्रहशून्ये, शास्त्रोपदिष्टेऽर्थेऽसन्देहेनानुष्ठातरि ९ आत्मनिष्ठे पु०। "उड्डमूलत्रिकोणेषु वर्त्तेते गुरुभार्गवौ । अभयाभिधयोगोऽयं भयङ्करविनाशनः" इति "यत्रैकादशगश्चन्द्रोभानुर्वा प्रबलः शुभः । अभयोनाम योगोऽयमरिभूतविनाशकृदिति" च ज्योतिषोक्ते १० यात्रिकयोगभेदे पु०। न भयं यस्मात् ५त० । माभैषीरित्युक्त्या ११ उत्तोलितदक्षिणहस्तप्रसारभेदे "अभयं वरदं चैव दक्षिणे दधतीक्रमात्" श्यामाध्यानम् । १२ त्राणे च न० ।

**अभयकृत्** त्रि० अभयं त्राणं करोति कृ—क्विप् ६त० । १ त्राणकर्त्तरि । न भयकृत् विरोधे न०त०। भयङ्करभिन्ने २ सौम्ये । अभयकारकादयोऽप्युक्तार्थे । [सौम्ये ।

**अभयङ्कर** त्रि० न भयङ्करः विरोधे न०त० । भयङ्करभिन्ने

**अभयङ्कृत्** स्त्री द्वि० अभयं कुरुतः क्विप् वेदे ह० मुम् । द्यावापृथिव्योः द्यावापृथिव्याविन्युपक्रम्य "उरू गव्यूती अभयङ्कृतावित्येति "उरू गव्यूती ते अभये स्वामित्यतदाह" शत०ब्रा० ।

**अभयजात** पु० अभयाय जातः । गर्गादिगणमध्ये ऋषिभेदे तस्यापत्यं यञ् । आभयजात्यः तदपत्ये पु'स्त्री० स्त्रियां ङीप् यलोपश्च आभयजाती । पुंसि बहुषु लुक् । अभयजाताः । यूनि आभयजातायनः ।

**अभयडिण्डिम** पु० अभयाय स्वयोधभयाभावाय डिण्डिमः स्वसैन्यप्रोत्साहनार्थं वाद्यमाने रणढक्कादौ वाद्यभेदे ।

**अभयद** त्रि० अभयं भयाभावं ददाति तदर्थं वचनं प्रयुङ्क्ते इति दा—क ६त० । मा भैषीरित्यादिवचनयुक्ते भीत-२ त्राणकर्त्तरि "त्रातुमलमभयदार्हति"किरा०अभयप्रदयोऽप्यत्र । "यानशय्याप्रदोभार्य्यामैश्वर्य्यमभयप्रदः २ विष्णुः ।

**अभयदक्षिणा** स्त्री अभये त्राणे त्रातेन देया दक्षिणा । त्रातेन रक्षितरि देयदक्षिणायाम् । "मधूदकं फलं मूलमेधांस्यभयदक्षिणा अभ्युद्यतानि याह्याणि" का०ख० "सर्वतः प्रतिगृह्णीयान्मध्वथाभयदक्षिणाम्"मनुः । अभयं दक्षिणेव देयत्वात् । अभयरूपदेये "रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्" मत्स्य पु० । अभयदक्षिणामभयदानम् रघु० । [शब्दे विवरणम् ।

**अभयमुद्रा** स्त्री अभयार्था मुद्रा । १ तन्त्रोक्ते मुद्राभेदे मुद्रा-

**अभयवाच्** स्त्री अभयार्था वाक् । १ अभयदानार्थे मा भैषीरित्यादिवाक्ये ।

**अभयाद्य** पु० अभया हरितकी आद्या यस्य । १ वैद्यकोक्ते मोदकभेदे । स च "अभया पिप्पलीमूलं मरिचं नागरं तथा ॥ त्वक्पत्रपिप्पलीमुस्तविडङ्गामलकानि च । कर्षः प्रत्येकमेषान्तु दन्त्याः कर्षत्रयन्तथा ॥ षट्कर्षाश्च सितायास्तु द्विपलं त्रिवृतो भवेत् । सर्वं सुचूर्णितं कृत्वा मधुना मोदकं कृतम् ॥ खादेत् प्रतिदिनञ्चैकं शीतञ्चानुपिबेज्जलम् । तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ॥ अभयाद्योमोदकोऽयम्" चक्रदत्तोक्तः ।

**अभव** पु० भव उत्पत्तिः अभावे न०त०। १ भवाभावे जन्माभावे "मत्त एव भवाभवौ" गीता । २ विनाशे "भवाय सर्वभूतानामभवाय च रक्षसाम्" रामा० । ७ब० । ३मोक्षे "प्राप्तुमभवमभिवाञ्छसि वा" किरा०शिवभिन्ने पु०

**अभव्य** न० न भव्यम् अभावार्थे न०त० । १ अमङ्गले, २दुष्टभाग्ये च न०ब०। ३ दुर्भाग्यवति त्रि०। "उपनतमवधीरयन्त्यभव्याः" किरा० ।

**अभाग** पु० न भागः अभावे न०त० । १ भागाभावे।

भागश्च एकदेशः दायादप्याह्यधनाद्यंश ७ब० । तच्छून्ये पूर्वै निर्दाये च त्रि० । "यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन् यवीयसः । सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः" मनुः "यं भागिनं निर्भजन्त्यथ यमभागं निर्भजन्ति" शत०ब्रा० ।

**अभागिन्** त्रि० न भागी स्त्रियां ङीप् । १ अधिकारानर्हे क्लीवपतितादौ । २ भाग्यभाग्यम् । तच्छून्ये च । "यमात्मानं नविद्युरभागिनं" इति कट उ० ।

**अभाग्य** न० अप्रभाग्ये न०त० । १ दुरदृष्टे । न०ब० । २ दुरदृष्टवति त्रि० । "[गुणदत्तोरभाजनम्" का०प्र० ।

**अभाजन** न० न०त० । अनाधारे "दोषोवेदोसमः कश्चिद्

**अभार्य्य** पु० नास्ति भार्य्या तत्सम्बन्धो वा यस्य । १भार्य्याहीने २ शास्त्रनिषिद्धभार्य्यासम्बन्धे नैष्ठिकब्रह्मचारिप्रभृतौ च । "अतिष्ठन्नभार्य्यांश्च कृषिसक्तान्" व्यपस्य च उ०त० का०प० । "अभार्य्यान् शास्त्रनिषिद्धभार्य्यासम्बन्धान्" रघु०

**अभाव** पु० न भावः । भावभिन्ने सत्त्वेन प्रतीत्यनर्हे वैशेषिकोक्ते सप्तमपदार्थे भावभिन्नत्वमभावत्वमिति बहवः । भावभेदाश्रयरूपत्वस्य तल्लक्षणस्य अभावविशेषघटितत्वेन अन्योन्याश्रयदोषग्रस्ततया अभावत्वमखण्डोपाधिरिति नव्याः । अभावश्च भावाभावसाधारणाश्रयः घटाभावस्य पटे पटाभावदौ च सत्त्वात् स च भावातिरिक्तः कश्चित् पदार्थ इत्याधुनिका वैशेषिका नैयायिकाश्च उररीचक्रुः । सूत्रकृता तु "द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" इति षडेव पदार्थाः कण्ठत उक्ताः । अत एव "न वयं षट्पदार्थवादिनः" इति सांख्यसूत्रे षट्पदार्थीस्वीकारस्तेषां सूचितः । आधुनिकास्तु घटोनास्तीत्यादिप्रतीत्यन्यथानुपपत्त्या पदार्थान्तरमभावं कल्पयन्ति । प्राभाकरास्तु अभावस्याधिकरणस्वरूपत्वमङ्गीचक्रुः । तेषामयमाशयः "मानाधीना मेयसिद्धिः" रित्युक्तेः अभावस्यातिरिक्तस्य सिद्धौ प्रमाणं वक्तव्यम् न तावत् प्रत्यक्षम्, अभावस्य रूपाद्यभावेन इन्द्रियसन्निकर्षाभावात् तदयोग्यत्वात् न च इन्द्रियसंयुक्तविशेषणता तत्सन्निकर्षः भूतलादौ चक्षुरादिसन्निकर्षसत्त्वेऽपि तत्स्वरूपविशेषणतायाः अव्यावर्त्तकत्वात् अन्यथा घटाभाव प्रत्यक्षकाले पटाद्यभावप्रत्यक्षस्य दुर्वारत्वात् भूतलादिस्वरूपस्यानुगमात् तत्ये सन्निकर्षरूपे विशेषणता सम्बन्धे विनिगमनाभावेन नियामकत्वाभावात् । अथ ज्ञानलक्षणया यस्य ज्ञानं, तस्यैवाभावस्य प्रत्यक्षमिति कल्पनादस्ति नियम इति चेत् ज्ञानलक्षणया घटादेरुपनये

तद्विशिष्टबुद्धेरेवोदयप्रसङ्गात् विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वेन तज्ज्ञानसामग्र्याः समवधानात् अथ अभावज्ञानसामग्र्याः प्रतिबन्धकत्वेन न तद्दोष इति चेत् अभावबोधसामग्र्याः अनियतत्वेन तस्या अप्रतिबन्धकत्वात् इन्द्रियसन्निकृष्टविशेषणताकस्य स्वरूपसम्बन्धस्य भूतलादिस्वरूपत्वानतिरेके: भूतलादिस्वरूपस्य कदाचिदप्यनपायेन प्रतिबन्धकत्वायोगात् अन्यथा भूतलादौ कदापि घटादेर्ज्ञानलक्षणया विशिष्टज्ञानस्यानुत्पत्त्यापत्तेः "अभावबुद्धिश्च विशिष्टवैशिष्ट्यावगाहिबोधमर्य्यादां नातिशेते" इति दीधितिकृदुक्तेरादौ प्रतियोगिज्ञानस्यापेक्षितत्वेन अभावांशे प्रतियोगिज्ञानवत् धर्म्यंशे तज्ज्ञानस्य दुष्परिहारत्वात् । एतेन योग्यानुपलब्धेस्तत्र हेतुत्वकल्पनेऽपि न निस्तारः । घटादीनामिव पटादेरपि योग्यतया तदुपलब्धेरभावस्य सत्त्वेन सर्वेषां योग्यानामभावप्रत्यक्षप्रसङ्गात् । नाप्यनुमानं तत्र प्रमाणं, तत्र व्याप्तिलिङ्गादेरभावात् । तस्यैवाज्ञाने तद्व्याप्यताग्रहासम्भवाच्च किञ्चातिरिक्ताभाववादिभिः भूतले "घटोनास्तीति प्रतीतिः सविषया प्रतीतित्वात् यत्तज्ज्ञानं तत्तत् सविषयकं यथा घटादिज्ञानमित्यनुमानप्रयोगः स्वीकार्य्यः । तत्र तदनुमानेन सविषयकत्वसिद्धावपि अधिकरणस्वरूपेणैव तद्विषयकत्वसम्भवेन उद्देश्यासिद्धेः नापि लक्षणात्तत्सिद्धिः अभावस्य निर्वक्तुमशक्यतया तल्लक्षणस्यैवाभावात् । तथा हि अभावशब्दस्य व्युत्पाद्यमानस्य भावभिन्नत्ववाचितया भावभिन्नत्वमभावस्य लक्षणं वाच्यं तच्च भेदरूपाभावज्ञानसापेक्षत्वेनान्योन्याश्रयदोषकवलितत्वेन दुर्वचम् । किञ्च भावभिन्नत्वस्य अभावलक्षणत्वे भावरूपविशेषणज्ञानशून्यकाले घटोनास्तीति प्रत्ययानुपपत्तिः विशिष्टबुद्धेर्विशेषणज्ञानाधीनत्वात्, अभावो न भाव इति वाक्यात् शाब्दबोधानुपपत्तिश्च उद्देश्यतावच्छेदकविधेययोरैक्ये घटोघटः इत्यादाविव शाब्दबोधाभावस्य सर्वसम्मतत्वात् । एतेन अभावत्वम् समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्त्वाभाववत्त्वमित्युक्तावपि न निस्तारः तथात्वे अभावो न भाव इति शाब्दबोधोपपत्तावपि तदज्ञानकाले घटोनास्तीति प्रत्ययस्यानुपपत्तेरन्योन्याश्रयदोषस्य दुष्परिहरत्वाच्च । घटाभावाभावादेर्घटरूपतयाऽङ्गीकारेण तत्र समवायेन सत्तावत्त्वेन निरुक्ताभाववत्त्वाभावात् घटाभावाभावोऽभाव इति बुद्धेरनुत्पत्त्यापत्तेश्च । अथ अभाववत् अभावत्वमप्यतिरिक्तः पदार्थः तथाचाभावत्वं न भावभिन्नत्वादि किन्तु स्वरूप-

सम्बन्धविशेषः अखण्डोपाधिर्वेति मतम् तत्रेदमुच्यते कोऽयं स्वरूपसम्बन्धः? किं स्वरूपमेव संबन्धः? स्वरूपस्य वा सम्बन्धः? तत्राद्ये यदि अधिकरणस्वरूपस्यैव सम्बन्धत्वम् आयातं तर्हि अभावस्याधिकरणस्वरूपत्वेन, स्वरूपसंबन्धाभावाधिकरणसम्बन्धत्वेन भवताऽपि स्वीकारात्। अन्त्ये कस्य स्वरूपस्य सम्बन्धः? यदि अधिकरणस्य तदा जितं प्राभाकरैः अन्यस्य तथाविधत्वेऽपसिद्धान्तापत्तेः भूतले तदाधारतानुपपत्तेश्च। अखण्डोपाधेरपि अभाववत् प्रमाणसापेक्षतया तद्दोषतादवस्थ्यम् प्रमाणाधीनतयैव पदार्थस्य सिद्धेः सर्वसम्मतत्वात् असति प्रमाणे कथं तत्सिद्धिः?। किञ्च अखण्डोपाधित्वस्य भवन्मते कारणतादाविव सत्त्वेनाभावेतरभेदासाधकतया तल्लक्षणत्वायोगः भिन्नभिन्नाखण्डोपाधिस्वीकारे च तस्यापि लक्षणसापेक्षतया तस्य च निर्वक्तुमशक्यतया न तस्याभावलक्षणत्वम्। न च नञ्पदशक्यतावच्छेदकतया तत्सिद्धिः तथाहि अभावस्य अधिकरणस्वरूपत्वे स्वरूपसंबन्धविशेषस्यैव नञ्पदशक्यतावच्छेदकत्वं वाच्यं तदपेक्षया अभावत्वरूपाखण्डोपाधेरेव तथात्वकल्पने लाघवम् इति वाच्यम् कम्बुग्रीवादिमानित्यादौ गुरुधर्मेऽपि शक्यतावच्छेदकत्वस्वीकारात् अन्यथा घटः कम्बुग्रीवादिमानित्यादि वाक्यात् शाब्दबोधानुपपत्तिः। उपेयते च सर्वैः गुरुधर्मेऽपि शक्यतावच्छेदकत्वम्। अथ शब्दएव अभावे प्रामाण्यमिति चेत् शब्दवेद्यस्य वन्ध्यापुत्रादेरपि, अतिरिक्ततया कल्पनापत्तेः अथाप्तशब्दएव प्रमाणमिति चेन्न अभावस्य पदार्थान्तरत्वे आप्तवाक्याभावात् भवतां सूत्रकृताऽपि अभावस्य षट्पदार्थातिरिक्ततया अनुक्तेः अभावशब्दमात्रप्रयोगेऽपि तस्याधिकरणस्वरूपत्वेनोपक्षीणत्वात्। एवमतिरिक्ताभावकल्पनपक्षे निरस्तेऽपि स्वपक्षदोषोद्धारमित्थं चक्रुः। अभावस्याधारस्वरूपत्वे भूतले घटोनास्तीत्यादावधिकरणताप्रतीतिः कथं संगच्छतामिति चेत् परेषामिव अत्यन्ताभावस्य नित्यत्वेऽपि घटसत्त्वे घटाभावबुद्धेरनुत्पादे तत्तत्कालीनभूतलादिसम्बन्धस्य नियामकतावत् तत्तत्कालीनभूतलस्वरूपस्यैव अभावपदार्थतया तथाप्रतीतिसम्भवात् तत्तत्कालीनभूतलस्वरूपस्य घटाद्यनवच्छेद्यकालसम्बन्धरूपतया तस्य च भूतले स्वरूपमित्यादिवदाधारताऽवगतेः। एतेनानन्तसम्बन्धस्वरूपकल्पनापेक्षया एकाभावकल्पने लाघवमित्यपास्तं क्लृप्ततया कालस्य तत्सम्बन्धस्य च सर्ववादिसम्मततया अधिकस्याकल्पनात्। भवतामभाव इव तत्रैव सम्बन्धे घटादेः प्रतियोगितयान्वयः कल्प्यते अतो नाधिककल्पना। घटो न पट इत्यादौ घटनिष्ठस्य तत्तत्कालीनतादात्म्यं भेदशब्दार्थस्तत्रैव पटतादात्म्यानुपहितस्य तादात्म्यस्याधिकरणे घटादिस्वरूपे भेदे तादृशसम्बन्धे वा पटादेः प्रतियोगितयान्वये सर्वसामञ्जस्यम्। अतएव "न सोऽस्ति प्रत्ययोलोके यत्र कालो न भासते" इत्युक्तेः सर्वत्र बुद्धौ कालावभास इत्यभियुक्तोक्तिः। भवतामभावभेदबुद्ध्योर्यथा नियमः मन्मतेऽपि तथा। वाय्वादौ रूपाद्यभावचाक्षुषत्वाद्यनुपपत्तिरिष्टैव न च तत्र इदन्तरं किञ्चित् प्रमाणमस्तियेन तत्स्वीकारावश्यकतेति"। अभावभेदबुद्ध्योर्नियमाश्च नञ्शब्दे प्रदर्शयिष्यन्ते। सोऽयमभावः बौद्धैः शून्यतया आकाशतया निरावरणतया निरुपाख्यतया च व्यवह्रियते तच्च तन्मतावसरे वक्ष्यते। "अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशय" इति हरिः। "नाभावउपलब्धेः" शा॰सू॰। "नासतोविद्यते भावो नाभावोविद्यते सतः" इति गीता। यथा च अभावान्न भावोत्पत्तिस्तथा उत्पत्तिशब्दे वक्ष्यते। न्यायादिमते च अभावः द्विविधः संसर्गाभावः अन्योन्याभावश्चेति भेदात् संसर्गाभावश्च ध्वंसप्रागभावात्यन्ताभावभेदात् त्रिविधः। "अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः। प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभावएव च। एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते" इति भाषा॰। प्रागभावश्च उत्पत्तेः प्राक् कारणस्य सूक्ष्मावस्था, उत्पत्तिराविर्भावः, ध्वंसस्तिरोभाव इति सांख्यादयः। २मरणे, मरणञ्च स्थूलशरीरेण सह जीवस्य विभागः, पूर्वसंयोगनाशो वा, प्राणवायोरुत्क्रमणं वा बोध्यम्। भावः आलङ्कारिकोक्तरत्यादिस्थायिभावः ३ तच्छून्ये त्रि॰। आन्तरः भावः स्नेहापरपर्यायः अनुरागः। ४तद्धीने त्रि॰। सप्रानुरागः देवविषयो भक्तिः पुत्रादिविषयः स्नेहः पत्न्यादिविषयः प्रेमेति भेदः। मीमांसकाद्युक्ते अभावाख्ये ६ योग्यानुपलब्धिरूपे प्रमाणे ७ असत्त्वे, अविद्यमानत्वे च। नास्ति भावः सत्त्वं यस्य। ८मिथ्याभूते त्रि॰। [तुमशक्ये च।

**अभावनीय** त्रि॰ न॰त॰। १ चिन्तयितुमशक्ये २उत्पादयि-

**अभावसम्पत्ति** स्त्री अभावस्य मिथ्याभूतस्य सम्पत्तिः। १ मिथ्याभूतपदार्थज्ञाने अध्यासे यथा शुक्तिकायां रजतज्ञानं तत्र च यथा मिथ्याभूतस्यैव ज्ञानं तथोक्तमध्यासशब्दे।

**अभाषण** न॰ अभावे न॰त॰। भाषणाभावे मौनभावे।

**अभि** अव्य॰ न भाति भा—बा॰कि। १ कञ्चित् प्रकारं प्राप्तस्य

द्योतने, २ आभिमुख्ये, ३ अभिलाषे, ४ वीप्सायाम्, ५ लक्षणे, ६ समन्तादर्थे । ७ घर्षणे दुर्गा० । "अभि पूजाभृशार्थेच्छासौम्याभिमुख्यसौरूप्यवचनाहारस्वाध्यायेषु" गणरत्नोक्तेः पूजादौ च तत्र पूजायाम् अभिवन्दते अभिवादयते । भृशार्थे अभियुक्तः अभिनिवेशः । इच्छायाम् अभिलाषः अभिकः । सौम्यं माधुर्य्यम् तत्र अभिजातः "प्रजल्पितायामभिजातवाचि" कुमा० । आभिमुख्ये अभिमुखम् अभ्यग्नि शलभाः पतन्ति "अभिचैद्यं प्रतिष्ठासुः" माघः सौरूप्ये अभिरूपम् । वचने, अभिधानम् "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" इति काव्य०प्र० । आहारे अभ्यवहारः । स्वाध्याये अभ्यस्यति "वेदाभ्यासे सदारतः" स्मृतिः । स्वाध्याय इत्युपलक्षणम् अन्यस्यापि पौनःपुन्यमात्रेऽस्य प्रवृत्तिः "अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः" कु० । एतस्य च तत्तदर्थद्योतकतामात्रं समभिव्याहृतशब्दस्यैव तत्तदर्थे लक्षणेति सिद्धान्तः अस्य क्रियायोगे उपसर्गता "वीप्सेत्थम्भावचिह्नेषु तु कर्मप्रवचनीयता । वृक्षं वृक्षमभि सिञ्चति । हरिमभि वर्त्तते । भक्तो हरिमभि, अग्निमभि शलभाः पतन्तीत्याद्युदाहार्य्यम् शब्दपरत्वे तु० "अभिरभागे" पा० ।

**अभिक** त्रि० अभिकामयते अभि+कन् । १ "अनुकाभिकाभीकः कमितेति" पा० नि० । कामुके "सोऽधिकारमभिकः कुलोचितं काश्चन स्वयमवर्त्तयत् समाः" रघुः ।

**अभिकाङ्क्षा** स्त्री अभि+काङ्क्ष–भावे अ । अभिलाषे "शीताभिकाङ्क्षा मुखतिक्तता च" सुश्रु० ।

**अभिकाङ्क्षित** त्रि० अभि+काङ्क्ष–कर्मणि क्त । अभिलषिते ।

**अभिकाङ्क्षिन्** त्रि० अभि+काङ्क्ष–णिनि । अभिलाषवति [स्त्रियां ङीप् ।

**अभिकाम** त्रि० अभिकामयते अभि+कम–णिङ्–अच् । १ कामयमाने "याचे त्वामभिकामाहं तस्मात् कुरु मम प्रियम्" भा० आ० प० । भावे घञ् । अभिलाषे पु० "मनसाप्यभिकामस्य कुरुतेत्वं युधिष्ठिर" भा० व० प० अभिकामादागतः ठञ् आभिकामिकः अभिलाषात् प्राप्ते त्रि० स्त्रियां ङीप् । "गुणैश्चानुपमैर्युक्तः समस्तैराभिकामिकैः" भा० शा० प० ।

**अभिक्रम** पु० अभि+क्रम–भावे घञ् अवृद्धिः । १ आरम्भे, २ आरोहणे, ३ युद्धाय, शत्रुसंमुखयाने च । कर्मणि घञ् । ४ आरब्धे "नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते" गीता । आधारे घञ् । ५ युद्धे ।

**अभिक्रत्वन्** त्रि० अभि+कृ–क्वनिप् स्त्रियां ङीप् वनो रश्च । आभिमुख्येन कारयितरि । "अमेयं रात्र्युक्षतपोक्षन्वभिक्रत्वरीः" ऋच० २,८,२ ।

**अभिक्लृप्त** त्रि० अभि+क्लृप–क्त रोषः । १ सम्यक् २ नियते ३ अभिप्रकाशिते च "हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुः" कठ उप० ।

**अभिक्रतु** पु० आभिमुख्येन क्रतुर्यज्ञकर्म यस्य । बलवति । "अयाभवद्दमिताभिक्रतूनाम्" ऋ० २,३४,१० । "अभिक्रतूनाम् बलीयसाम्" भा० ।

**अभिक्रान्ति** स्त्री अभि+क्रम–क्तिन् । १ अभिक्रमे २ उपक्रमे "यज्ञस्याभिक्रान्तिरनपक्रमाय" श्रुतिः ।

**अभिक्रान्तिन्** त्रि० अभिक्रान्तमनेन इष्टादि० इनि । उपक्रमकर्त्तरि "य एषामध्ययने अभिक्रान्तितमः" श्रुतिः ।

**अभिक्रामम्** अव्य० अभि+क्रम–वीप्साभीक्ष्ण्ययोः णमुल् । आक्रम्य, आरभ्य, आभिमुख्येन गत्वेत्यर्थे । "पूर्वं पूर्वमेवाभिक्रामम्" कात्या० ३,२,२१ ।

**अभिक्रोश** पु० अभि+क्रुश–भावे घञ् । १ आक्रोशे २ निन्दायाम् ।

**अभिक्रोशक** त्रि० अभि+क्रुश–ण्वुल् । १ निन्दके २ अपवादके च

**अभिचत्तृ** त्रि० अभि+चद–तृच् स्त्रियां ङीप् । हिंसके "अभिचत्तुस्तावतो वरुताः" ऋ० ७।२१।८। "अभिचत्तुरभिहिंसकस्य" भा० ।

**अभिचद** त्रि० अभि+चद–हिंसायाम् अच् । हिंसके । "अभिचदामर्थ्यमाणम्" ऋ० ६,५०,१ । अभिचदां हिंसकं छान्दसत्वात् आत्त्वम् ।

**अभिख्या** स्त्री अभि+ख्या–अङ् । १ अभिधाने, २ शोभायां "काप्यभिख्या तयोरासीत् व्रजतोः शुद्धवेशयोः" रघुः । ३ कीर्त्तौ ४ अभितः ख्यातौ, ५ माहात्म्ये "अस्मा अपख्यानदभ्रमभिख्याम्" ऋ० १,१४८,५ "अभिख्यामभितः ख्यातिं माहात्म्यं वा" भा० । कर्त्तरि क्विप् । ६ अभितो गन्तरि" ७ प्रसिद्धे च "अभिख्या भासा बृहता शुशुक्वनिः" ऋ० ८,२३,५ "अभिख्या अभिमुखं गच्छन्त्याऽभितः प्रसिद्धया वा भासा" भा० धातोरातोलोपात् रूपम् । ८ प्रज्ञायां निरु० ।

**अभिख्यातृ** त्रि० अभि+ख्या–तृच् स्त्रियां ङीप् । १ कथके अभिगन्तरि २ अभिद्रष्टरि च । "आपिरभिख्याता मर्डिता सोम्यानाम्" ऋ० ४,१७,१७ "अभिख्याताभिद्रष्टा" भा० ।

**अभिगत** त्रि० अभि+गम–क्त । १ आनुकूल्येन प्राप्ते २ सेविते ३ आभिमुख्येन गते च ।

**अभिगन्तव्य** त्रि० अभि+गम–तव्य । अभिगम्ये सेव्ये च

"सन्तः सदाभिगन्तव्या यदि नोपदिशन्ति ते" वह्नि० ।

**अभिगन्तृ** त्रि० अभि+गम–तृच् स्त्रियां ङीप् । युद्धार्थम् आभिमुख्येन १ गन्तरि २ आनुकूल्येन गन्तरि च । "त्वं वरुणोऽभिगन्तेव ब्रह्म" शत० ब्रा० ।

**अभिगम** पु० अभि+आभिमुख्ये आनुकूल्ये वा गम–घञ् । आभिमुख्येन गमने "तवार्हतो नाभिगमेन तृप्तम्" रघुः आनुकूल्येन २ गमने "स्वरुच्या क्रियमाणे तु यत्नावश्यक्रिया क्वचित् । नोच्यते नियमः सोऽत्र ऋत्वादभिगमो यथेति" मीमांसा । भावे ल्युट् । अभिगमनं तत्रैव न० । "उद्धेराभिगमनात् पूर्वं तेनाप्यनभिनन्दिता" रघुः । "पापकृन्मुच्यते पापात्तीर्थाभिगमनेन च" स्मृतिः ।

**अभिगम्य** त्रि० अभिगन्तुं शक्यते सौम्याकारत्वात् । आभिमुख्येन गन्तुं शक्ये "अद्यप्रभृति भूतानामभिगम्योऽस्मि शुद्धये" कुमा० । "सोऽभिगम्यश्च पूज्यश्च कर्त्तव्यश्च प्रदक्षिणम्" रामा० । "अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः" रघुः । अभि+गम–ल्यप् । आभिमुख्येन गत्वेत्यर्थे अव्य० "मनुमेकाग्रमासीनमभिगम्य महर्षयः" इति मनुः ।

**अभिगर** पु० अभि+गॄ–स्तुतौ अप् । १ अभितः स्तवे । "अनुष्टुप् तेऽभिगरम्" इति यजु० ८,४७ ।

**अभिगामिन्** त्रि० अभिगच्छति अभि+गम–णिनि अभिगन्तरि । "ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" मनुः । "राजपत्न्यभिगामी च दग्धव्यास्ते कटाग्निना" या०

**अभिगीत** त्रि० आनुकूल्येन गीतः । १ आनुकूल्यार्थं स्तुते २ अभितोगीते च ।

**अभिगुप्ति** स्त्री अभि+गुप्–क्तिन् । १ अभिरक्षणे "तद्व्रजमेवैताभिगुप्त्या आसादयति" श० ब्रा० ।

**अभिगूर्त्त(र्त्त)** त्रि० अभि+गुर–क्त वेदे नत्वाभावः । १उक्ते "इष्टं वीतमभिगूर्त्तम्" यजु० २१,२७, "अभिगूर्त्तं ये यजामहे इत्यभिगूर्त्योक्तम्" वे०दी० लोके तु अभिगूर्णइत्येव अभ्युद्यते त्रि० ।

**अभिगूर्त्ति** स्त्री अभि+सातत्ये गुर–क्तिन् । सततमुद्यमे "तेषामभिगूर्त्तिं न इन्वत" ऋ० १,१६२,६ । "अभिगूर्त्तिः सततः सर्वथा करणीयमिति बुद्धिः" भा० २ अभित उद्यमे च "उतो तेषामभिगूर्त्तिर्न इन्वतु" ऋ० १,१६२,१२, "अभिगूर्त्तिः" उद्यमः भा० । [आनुकूल्यार्थं ज्ञाताङ्गुलौ ।

**अभिगृहीतपाणि** त्रि० आनुकूल्यार्थं गृहीतः पाणिर्येन ।

**अभिगेष्ण** त्रि० अभि+गै–इष्णु । अभितो गायके "यद्देवता अभिगेष्णाचरन्ति" श्रुतिः ।

**अभिगोप्तृ** त्रि० अभितो गोपायति अभि+गुप–तृच् स्त्रियां ङीप् । अभिरक्षके ।

**अभिग्रस्त** त्रि० अभि+ग्रस–क्त । १ आक्रान्ते २ कवलीकृते च

**अभिग्रह** पु० अभि+ग्रह–अप् । (लुट) इति ख्याते प्रकाशहरणे, २ अभियोगे, ३ आभिमुख्येनोद्यमे, ४ गौरवे ५ युद्धे च । ल्युटि अभिग्रहणमप्यत्र न० । [१घर्षणे, २ मर्दने च ।

**अभिघर्षण** न० अभि+घृष–भावे ल्युट् । परस्परसंयोगेन

**अभिघात** पु० अभि+हन–भावे घञ् । १ निःशेषहनने समूलनाशने "दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ" सां०का० । २ ताड़ने । "तद्गाभिघातादिव लम्बपङ्के" कुमा० । अभिहन्यतेऽसौ फलाय उद्दिश्यार्थे वा० घञ् । द्रव्यान्तरक्रियया उत्पादितद्रव्यान्तरसंयोगे, वैशेषिकोक्ते शब्दहेतौ, संयोगिनोर्मिथोविभागजनकक्रियाहेतौ च ३ संयोगभेदे । यथोक्तं "नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्मेति" वै०सू० । "यः संयोगः शब्दनिमित्तकारणं, यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघातः नोदनं तु तद्विलक्षणः संयोगः । ताभ्यामपि प्रत्येकं कर्म जन्यते पङ्काख्यायां पृथिव्यां चरणेन नोदनात् चरणाभिघाताच्च कर्म जायते तत्र पङ्कः समवायिकारणम् नोदनाभिघातौ यथा यथमसमवायिकारणम् गुरुत्ववेगप्रयत्ना निमित्तकारणानि संयुक्तसंयोगात् नोदनाभिघाताद्वा पङ्के कर्म पङ्कस्थिते घटादावपि, तत्समकालमेव कर्मदर्शनादिति" श०उपस्कारः । "आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म, तथा हस्तसंयोगाच्च मुषले, अभिघातजे मुषले कर्मणि व्यतिरेकादकारणं हस्तसंयोगः" वै०सू० तथात्मसंयोगात् हस्तकर्मणि, अभिघातान्मुषलसंयोगाच्च हस्ते कर्म "आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत् क्रिये"त्युक्तिमनुसृत्याह आत्मसंयोगप्रयत्नाभ्यां हस्ते समवायिकारणे कर्म, तस्य च कर्मणः प्रयत्नवदात्मसंयोगोऽसमवायिकारणं प्रयत्नस्तु निमित्तकारणम् प्रयत्नवदात्मसंयोगासमवायिकारणिका च क्रियैव चेष्टा । तथा उत्क्षेपकहस्तसंयोगात् मुषले उत्क्षेपणं कर्म जायते । तथाच प्रयत्नवदात्मसंयुक्तेन हस्तेन यो मुषलस्य संयोगः स तत्रासमवायिकारणम् मुषलं समवायिकारणमिति । उदूखलाभिहतस्य मुषलस्य कर्मयदुत्पतनं जायते तत्र कारणमाह । मुषलादौ उत्पतनकर्मणि अभिघात एव हेतुः, न तु हस्तसंयोगः तस्य तं प्रति कारणत्वेनान्वयासिद्धत्वात् तद्व्यतिरेकेऽपि अभिघात-

मात्रे ण अभिहतप्रधानगुरुद्रव्यसंयोगेनैव उत्पतनदर्शनात् यथा मुष्ट्यादौ हस्तेन वेगवित्प्रक्षोटादेर्हस्तयोगं विनाऽपि उत्पत्तिर्दृश्यते।त उत्पतने अभिघात एव असमवायिकारणम् "अभिघातात् मुसले संयोगाद्धस्ते कर्म" वै॰सू॰ अभिघातात् अभिघातजनितसंस्कारजनितात् हस्तमुसलसंयोगात् हस्ते उत्पतनं कर्म तत्र मुसलसंयोगोऽसमवायिकारणम्। तीव्रवेगप्रयुक्तक्रियाजनितः संयोगः शब्दहेतुः। "तृतीयः स्यात् कर्म्मजोऽपि द्विधैव परिकीर्त्तितः अभिघातोनोदनञ्च शब्दहेतुरिहादिमः। शब्दाहेतुर्द्वितीयः स्यादिति" "शब्दोध्वनिश्च वर्णश्च मृदङ्गादिभवोध्वनिः। "कण्ठसंयोगादिजन्यावर्णास्ते कादयोमताः"इति च भाषा॰ अतएवोक्तम् "कण्ठताल्वाद्यभिघातजन्यः शब्दः" इति वृद्धैः। शिक्षायामप्युक्तम् "आत्मा बुद्ध्या समेत्यार्थान् मनोयुङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः वर्णान् जनयते"इति। स उदीर्णः सन्निः पादपूरणार्थः। मृदङ्गादौ तीव्रवेगेन काष्ठादिताडनसंयोगे शब्दोजन्यते इति लोके प्रसिद्धिः। वृक्षादौ प्रबलतरवायुसंयोगाच्च शब्दो ध्वन्यात्मक एव। मृदुवेगेन क्रियया संयोगे नोदनरूपे न शब्दः इति तस्य शब्दाहेतुत्वमुक्तम् अधिकं नोदनशब्दे वक्ष्यते। "अभिघातोऽस्त्यस्य अर्श॰अच्। अभिघातयुक्ते त्रि॰ "अभिघातं स्यात् पूर्व्वं वेदहिस्रादिवर्ण्यायेत्। नवयर्गाणां नवतो धरणीचन्द्रहिरामाद्या।" इति केरलोक्ते वर्णभेदे, न॰ शब्दकल्पद्रुमः।

**अभिघातक** त्रि॰ अभि+हन–ण्वुल्। १शत्रौ रिपौ २अभिघातसंयोगकारके ३ समूलनाशके च। "तदभिघातके हेतौ" सां॰का॰। [इनु। रिपौ।

**अभिघाति** पु॰ अभिघातयति अभि–हन–स्वार्थे णिच–

**अभिघातिन्** त्रि॰अभि+हन–णिनि स्त्रियां ङीप्। १शत्रौ २नाशके ३अभिघातसंयोगकारके च।

**अभिघार** पु॰ अभिघार्य्यते समन्तादग्नौ सिच्यते अभि+घृ–क्षरणे णिच–भावे घञ्। अग्नौ समन्तात् घृतादेः १सेचने २ घृतादिसंस्कारभेदे च। "तदभिहितोभावो द्रव्यवत् प्रकाशते" इत्युक्तेः अभिघार्य्यमाणे ३घृतादौ च मेद॰।

**अभिघारण** न॰ अभितोघारणम् जलादिभिः विधिना सेचनम्। अभि+घृ–णिच्–भावे ल्युट्। घृतादेः संस्कारभेदे "तत्र जुह्वाभिघारणम् ध्रुवाया हविष उपभृतश्च" कात्या॰ ३,२,८, "पञ्चप्रयाजहोमानन्तरं यजमानस्थानादेव वेदेः पश्चादागत्य उपविश्य जुह्वस्थैनैव प्रयाजशेषेण ध्रुवाया ध्रौवस्याज्यस्य हविषः आज्यस्याज्यपुरोडाशयोश्च उपभृतः उपभृत्संस्थस्याज्यस्य अध्वर्युरभिघारणं करोति उपयोगक्रमेण अयञ्च हविःसंस्कारः प्रयाजशेषप्रतिपत्तिः हवींषीति द्वितीयाश्रुतेः हविषः संस्कार्य्यत्वावगमात् अतः सन्निहितानि सर्व्वाणि हवींषि शेषेणाभिघारणीयानि" कर्क॰

**अभिचक्षण** अभि–चक्ष–ल्यु। १ सर्वतोविचक्षणे कर्मकुशले "वेदाहं तस्य भेषजं चीपुद्रुरभिचक्षणम्" अथ॰६,१२७,२, विष्वीर्य्यवतीराशा अभिचक्षणादिवः अथ॰ ८,२,२१।

**अभिचर** त्रि॰ अभितः आभिमुख्येनाद्दूरस्थादं चरति चर–ट। १ भृत्ये २ अभितो गते च स्त्रियां ङीप्।

**अभिचरण** न॰ अभि+चर–ल्युट्। १ शत्रुघाताय विहितश्येनयागादौ।

**अभिचरणीय** त्रि॰ अभिचरणमर्हति छ। १ अभिचारार्हे वैरिणि "तं त्वष्टा हतपुत्रोऽभ्यचरत् सोऽभिचरणीयमपेन्द्रम् सोममाहरत्" शत॰ ब्रा॰।

**अभिचार** पु॰ अभि–आभिमुख्येन हत्याजननार्थं चारः अभि+चर–भावे घञ्। १ शत्रुवधोत्पादकहत्याजनके मन्त्रकर्मणि "श्येनेनाभिचरन् यजेतेति" विहिते श्येनयागादौ। "अभिचारेषु सर्वेषु कर्त्तव्यो द्विशतोदमः" "अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति"इति च मनुः "अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसः" काद॰। अभिचाराय हितं स प्रयोजनमस्य वा ठञ्। आभिचारिकः। १तत्रहितकर्म्मादौ २तत्साधनमन्त्रादौ च त्रि॰स्त्रियां ङीप्।

**अभिचारकल्प** पु॰ अभिचारसाधनं कल्पोरहस्यज्ञापकग्रन्थः। १ अथर्ववेदान्तर्गते ग्रन्थभेदे अथर्ववेदशब्दे विवरणम्।

**अभिचारिन्** त्रि॰ अभिचरति अभि+चर–णिनि स्त्रियां ङीप्। १अभिचारकर्त्तरि "ये त्वा कृत्वा लेभिरे विद्वला अभिचारिणः" अथ॰ १०,१,८।

**अभिच्छाय** त्रि॰ अभिगतम्छायाम् अत्या॰स॰, अभिमुखीभूता छाया यस्य वा। १छायाप्राप्ते २छायाभिमुखप्राप्ते च। छायायां अभिमुखम् अव्ययी॰। ३छायाभिमुखे अव्य॰। "यो माभिच्छायमत्येषि मां चाग्निं चान्तरा" अथ॰ १३,१,५७।

**अभिजन** पु॰ अभिजायतेऽस्मिन् जन+आधारे–घञ् अवृद्धिः। १ कुले, "न परिचयं रक्षति नाभिजनमीक्षते" काद॰। "वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च वेशवाग्बुद्धिसारूप्यमाचरन् विचरेदिह" मनुः। २ जन्मभूमौ

अभिमतः पित्रादीनां जनोजन्मस्थानम् । २ पित्रादिभिरध्युषिते स्थाने "अभिजनश्च" पा० "अभिजनो-नाम यत्र पूर्व्वैरुषितम्" भाष्यम् । अभिमतोजनः श्रेष्ठत्वात् प्रा०स० । ४कुलश्रेष्ठे अभि+जन–भावे घञ् । उत्कृष्टस्थानजतया ५अभिमतोत्पत्तौ "श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति" मनुः ब्रह्ममुखोद्भवत्वेनाभिजनेन श्रेष्ठतया" कुल्लू० । अभिजायते सत्पुरुषोभवति येन करणे घञ् । ६कीर्त्तौ "यावत् कीर्त्तिर्हि लोकेषु तावत् पुरुष उच्यते" इत्युक्तेः कीर्त्त्यैव सफलजन्मत्वात्तस्यास्तथात्वम् । अभिजनादागतः अण् । आभिजनः वंशसंबन्धादागते, त्रि० "तां पार्व्वतीत्याभिजनेन नाम्ना" कु० ।

**अभिजात** त्रि० अभिमतं प्रशस्तं जातं जन्म यस्य । १कुलीने, "आत्मसेनाभिजातेन शूरः शौर्य्यवता कुशः" "भिन्नानस्त्रैर्मोहभाजोऽभिजातान्" च रघुः । २ पण्डिते, ३योग्ये "न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम्" वृद्धाः । ४मनोहरे । "प्रजल्पितायामभिजातवाचि" कु० । अभिजातस्य भावः ष्यञ् । आभिजात्यं कौलीन्ये न० । [जनने ।

**अभिजाति** स्त्री प्रशस्ता जातिः जननं प्रा०स० । प्रशस्तवंश-

**अभिजित्** त्रि० अभिमुखीभूय जयति शत्रून् अभि+जि–क्विप् । १अभिमुखीभूय शत्रुजयिनि । अभितो जयत्यनेन करणे क्विप् । २सर्वतोजयसाधने "अभिजिता तेजसा तेजो जिन्व" य० १५,७, "सर्व्वजयहेतुना तेजसा अन्नेन" वेददी० । "अभिजिदसि युक्तग्रावेन्द्राय" ता० ब्रा० "अभिजित् सर्वजयहेतुरसि" भा० । अभिजयति ऊर्द्धाधःस्थित्या अपराणि नक्षत्राणि कर्त्तरि क्विप् । "अभिजिन्नाम नक्षत्रमुपरिष्टादाषाढानामवस्तात् श्रोणायाः" श्रुत्युक्ते ३नक्षत्रभेदे इतरनक्षत्राणां स्वकक्षामात्रस्थितेस्तस्य च ऊर्द्धाधःस्थित्या इतरनक्षत्रजयित्वात् तथात्वम् । अतएव भागवते "नक्षत्राणि मेरुं दक्षिणेनैव कालायने ईश्वरयोजितानि सहाभिजिताऽष्टाविंशति"रित्युक्तम् । नक्षत्रचक्रस्य अश्विन्यादिसप्तविंशतिनक्षत्रात्मकतया ज्योतिषे प्रसिद्धत्वेऽपि श्रुत्युत्तराषाढोपरिश्रवणाधःस्थाने अभिजिन्नामकं नक्षत्रचक्रान्तर्गतमपि कर्म्मविशेषे फलविशेषार्थं ज्योतिषादौ स्वीकृतम् यथा" सप्त सप्त विलिखेत्तु रेखिकास्तिर्य्यगूर्द्ध्वमथ कृत्तिकादिकम् । लेखयेदभिजिता समन्वितं चैकरेखकमखगेन विध्यते । वैश्वस्य चतुर्थांशे श्रवणादौ लिप्तिकाचतुष्के च । अभिजित् तत्स्थे खेटे विद्धा रोहिणी विद्धा । यद्दत्तेदेकरेखास्थो वेधः सप्तशलाकके" इति दीपिका तत्र आषाढोपरिश्रवणाधोभागे तस्य स्थितावपि ऊनविंशकलात्मकत्वं कर्म्मविशेषार्थं कल्पितम् तत्र यद्गस्थित्या सप्तशलाकादिवेधवशात् विवाहादौ वर्ज्जता अनिष्टफलदायकत्वात् । श्रुतौ स्थानविशेषोक्तिस्तु तस्य स्थिति स्थानज्ञापनार्था अतएव सूर्य्यसिद्धान्ते "आप्यस्यैवाभिजित् प्रान्ते वैश्वान्ते श्रवणस्थितिरित्युक्तं व्याख्यातञ्चैतत् रङ्गनाथेन आप्यस्य पूर्व्वाषाढाया अवसाने, धनूराशौ विंशतिकलोनसप्तविंशतिभागे २६,४० अभिजिद्योगतारा" इति एवञ्च दीपिकोक्ता ऊनविंशतिकलात्मकता कर्मविशेषार्था अतएव अष्टाविंशतिनक्षत्राभिप्रायेणैव बृहत्संहितायामष्टाविंशतिर्नक्षत्राधीश्वरा उक्ताः "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः । योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राश्च ॥ शक्रो निर्ऋतिस्तोयं विश्वे ब्रह्मा हरिर्वसुर्वरुणः । अजपादोऽहिर्बुध्नः पूषा चेतीश्वरा भानाम्" ॥ तथा चाभिजितोब्रह्माधीश्वरः । अभिजयति इतरत्राद्धकालान् प्राशस्त्येन, आभिमुख्येन पश्चिमावस्थितां छायां जयति प्राग्वर्त्तिनीं करोति वा क्विप् । पश्चिमवर्त्तिच्छायायाः पूर्व्ववर्त्तित्वसम्पादके पञ्चदशधाविभक्तदिनस्याष्टमे कुतपाख्ये श्राद्धप्रशस्ते ३ मुहूर्त्ते । "अपराह्णे तु संप्राप्ते अभिजिद्रौहिणोदये । यदत्र दीयते जन्तोस्तदक्षयमुदाहृतमिति"मत्स्य०पु० उक्तेस्तस्येतरापेक्षयाऽक्षयफलदातृत्वात्तथात्वम् । "कुतपप्रथमभागे एकोद्दिष्टमुपक्रमेत् आवर्त्तनसमीपे वा" स्मृतेः "आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः" इत्युक्तेश्च तन्मुहूर्त्तस्यारम्भकालतया प्रशस्तत्वाच्च तथात्वम् । अभिजयति शत्रून् गमनेनात्र आधारे" क्विप् । "मध्यं व्योमगते स्फुरदनलनिभे केशरे चार्कबिम्बे छाया साध्वीव कान्ता प्रचलति पुरुषे यत्र तत्पादलग्ना । तावत् सौरेर्न दृष्टिः कुजकृतमशुभं नैव कक्षस्य योगः लक्ष्मीमारोग्यसम्पत्‌र्जितमथ युवतीं तत्र गत्वा लभेत" इति ज्योतिषोक्ते ४ यात्रालग्नभेदे च । यद्यपि "सर्वस्मिन् विधुपापयुक्ततनुयावर्ज्जं निशार्द्धोर्ध्वटीत्रयं वै" इत्यादिना दिनार्द्धपूर्व्वापरस्थघटीत्र्यात्मक–२० पलस्य सर्वत्र वर्ज्यता तथापि यात्रायां विशिष्याभिधानात्तदपवादः । "ततः प्रभाते विमले मुहूर्त्तेऽभिजिति प्रभुः" रामा० । अग्निष्टोमयागाङ्गे गवामयनिके ५ यागभेदे "अभिजिदग्निष्टोम" इति कात्या० । अग्निष्टोमप्रकृत्यादभि-

जिदन्तरं तत्संज्ञकं गवामयनिकमेतत् कर्क० । संवत्सरसाध्ये गवामयने ६षष्ठमासीयपञ्चविंशतितमदिने यथोक्तम् ता०भाष्ये "तत्र षष्ठे मासादौ त्रयोऽभिप्लवाः षडहाः कार्य्याः तत एकः पृष्ठ्यः षडहः ततोऽभिजिदेकमहः" इति । अभिजिन्मुहूर्त्तस्य च किञ्चिदूनदिनार्द्धप्रवृत्तेः तत्साम्यात् पञ्चविंशतिदिनाधिकपञ्चममासस्य किञ्चिदूनदैवदिवसार्द्धतुल्यतयास्याभिजिच्छब्दवाच्यता ६ तद्दिनकर्त्तव्ये ७ अतिरात्रयागादौ च उपचारात् अतएव ताण्ड्यभाष्ये "षष्ठे मासि त्रीनभिप्लवान् एकं पृष्ठ्यञ्च कृत्वाऽभिजिदनुष्ठेयः" इत्युक्तम् विवरणं गवामयनशब्दे दृश्यम् । "अभिजिदतिरात्र" इति शत०ब्रा० ।"अतिरात्रसंस्थः अभिजिन्नामके दिने कार्य्य" इति भा० ।

**अभिजित** पु० अभिजीयादन्यात् संज्ञायामाशीर्व्वादे देवरातादिवत् क्तच् । अर्द्धरात्रसम्बन्धिनि मुहूर्त्ते "अहं त्वभिजिते योगे निशाया यौवने स्थिते । अर्द्धरात्रे करिष्यामि गर्भमोक्षं यथासुखम्" । मुहूर्त्तेऽभिजिते प्राप्ते सार्द्धरात्रे विभूषिते देवक्यजनयद्विष्णुं यशोदा तान्तु कन्यकाम् विष्णु पु० ।

**अभिजिति** स्त्री अभि+जि—भावे क्तिन् । अभिजये "एषां लोकानामभिजित्यै" शत०ब्रा० ।

**अभिज्ञ** त्रि० अभिजानाति अभि+ज्ञा—क । १ निपुणे, २पण्डिते ३ ज्ञातरि चेतने "अन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्" भाग० । अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः कुमा० "शङ्खस्वनाभिज्ञतया निवृत्ताः" रघुः ।

**अभिज्ञा** स्त्री अभि—ज्ञा—अङ् । १ प्रथमसुत्पन्ने ज्ञाने । २ संस्कारसहकृते इन्द्रियसन्निकर्षजन्ये प्रत्यभिज्ञारूपे ज्ञाने च ।

**अभिज्ञात** त्रि० अभिज्ञायतेस्म अभि+ज्ञा—कर्म्मणि क्त । कालान्तरे पुनर्दृष्ट्वा जातेन सोयमित्याकारकज्ञानेन विषयीकृते पूर्व्वदृष्टे पदार्थे ।

**अभिज्ञान** न० अभिज्ञायतेऽनेन अभि+ज्ञा—करणे ल्युट् । सोऽयमिति ज्ञानसाधने १चिह्ने । "चिह्नभूतं त्वभिज्ञानं त्वमङ्गे कर्त्तुमर्हसि" "उपपन्नैरभिज्ञानैर्दूतं तमवगच्छत" इति च रामा० । भावे ल्युट् । तदिदमित्याकारके २ज्ञाने च । तच्च संस्कारसहकृतं पुरोवर्त्तिनि इन्द्रियसन्निकर्षजन्यं प्रत्यक्षविलक्षणं स्मृतिविलक्षणञ्च ज्ञानम् । "तदभिज्ञानहेतोर्हि दत्तं तेन महात्मना" रामा० ।

**अभिज्ञानशकुन्तला** स्त्री अभिज्ञायते कर्म्मणि ल्युट् तथाभूतां शकुन्तलामधिकृत्य कृताख्यायिका "तदधिकृत्य कृते ग्रन्थे" पा० अण् आख्यायिकायां तस्य वा लुपि व्यक्तिवचनतेति स्त्रीत्वम् । कालिदासकृतौ दुष्मन्तेन गान्धर्व्वविधिना कृतोपयमां कण्वकन्यां शकुन्तलामधिकृत्य कृते नाटकभेदे तस्याश्च दुर्वासःशापात् प्रथमं दुष्मन्तेनानभिज्ञानात् पश्चाच्च स्वदत्ताङ्गुरीयकरूपाभिज्ञानदर्शनेन प्रत्यभिज्ञातत्वात् तामधिकृत्याख्यायिकारूपत्वान्नाटकस्य तथात्वम् । "कालिदासस्य सर्व्वस्वमभिज्ञानशकुन्तला" त्वभावे आभिज्ञानशकुन्तलम् न० । "नवेनाभिज्ञानशकुन्तलेनेति" शकु० ।

**अभिज्ञु** त्रि अभिगते आभिमुख्येन स्थापिते जानुनी येन वेदे वा०षु १ आभिमुख्येनावस्थापितजानुयुक्ते । "संजानाना उपसीदन्नभिज्ञु" ऋ०१,७२,५ ।

**अभितराम्** अव्य० अभि+प्रकर्षे—तरप् आम् । १ आभिमुख्यातिशये २ शनैःशनैराभिमुख्ये च "अभितरां वै जयन् क्रामति तस्मादभितरामभितरामेव क्रामेत्" शत०ब्रा० । "अभितराम् उ वै शलोरन्तमभिमुखं खलु, अन्नानपिदैपदीपत् पुरस्तादाक्रामेदिति" भा० ।

**अभितस्** अव्य० अभि+तसिल् । सामीप्ये, आभिमुख्ये, उभयतोऽर्थे, शीघ्रतायाञ्च । एतद्योगे द्वितीया "अभिसर्वतसोःकार्य्या धिगुपर्य्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इत्युक्तेः । "अक्रान्ययाचीदभितः प्रधानमिति" भट्टिः "अभितस्तं पृथासूनुः स्नेहेन परितस्तरे" किरा० "कामक्रोधवियुक्तानां यतीनां यतचेतसाम् । अभितोब्रह्मनिर्वाणमिति" गीता १साकल्ये च । "पर्य्यभिभ्याञ्च" पा० "सर्व्वोभयार्थाभ्यामेव वा० उक्तेः सर्व्वोभयार्थयोरेवास्य साधुता ।

**अभिताप** पु० अभि+तप—घञ् । भृश सन्तापे ।

**अभिताम्र** पु० भृशं ताम्रं प्रा०स० । १ अत्यन्तताम्रवर्णे २ तद्वति त्रि० "राममभिताम्राक्षं दृष्ट्वाशोकावलम्बिनम्" रघुः ।

**अभितोमुख** त्रि० अभितः मुखमस्य । १ सर्व्वदिङ्मुखे ।

**अभिदर्शन** न०आभिमुख्येन दर्शनम् अभि+दृश—भावे ल्युट् । आभिमुख्येन दर्शने, "श्यामधाते छिताभक्ते परेषामभिदर्शने" मनुः । [स्मृतौ च ।

**अभिद्रा** स्त्री अभि+द्रा—अङ् । १ पलायने, २अभिध्यायाम्

**अभिदि(धि)प्सु** त्रि० अभि+दम्भ—सन् उ वेदे नदस्य धः । १अभिभवनेच्छावति "विश्वा इदर्य्यो अभिदिप्सुः" इति ऋ० ३,२२,१२ । "अभिदिप्सुः अभिभवनेच्छावती कान्दसम्" भा०

**अभिद्रवण** न० अभि+द्रु–ल्युट्। १ वेगेन गमने। अप्। अभिद्रवोऽप्युक्तार्थे पु०।

**अभिद्रुह्** त्रि० अभिद्रुह्यति अभि+द्रुह् क्विप्। १ अपकारके

**अभिद्रोह** पु० अभि+द्रुह–घञ्। १आक्रोशे, २अनिष्टचिन्तने, ३अपकारे च। "नामजात्यग्रहं तेषामभिद्रोहेण कुर्वतः"। मनुः "भूतेन्द्रियानभिद्रोहो धर्मोहि परमोमतः" का०ख०

**अभिधर्षण** न० आभिमुख्येन धर्षणम्। १निष्पीडने २आस्फालने ३भूतादेरावेशे च। कर्त्तरि ल्यु। ४राक्षसे पु०।

**अभिधा** स्त्री अभि+धाञ्–भावे अङ्। १ कथने, २शब्दनिष्ठे अर्थबोधजनकताशक्तिभेदे च। अभिधीयतेऽनेनेति करणे अङ्। ३ वाचकशब्दे भट्टमते फलजनकव्यापाररूपायां शब्दनिष्ठायां ४ भावनायाञ्च। अभिधा च सङ्केतितार्थस्य बोधिका शब्दनिष्ठा शक्तिरिति आलङ्कारिकाः "वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः॥ व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः" ता अभिधाद्याः। "तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा" सा०द०। भाट्टास्तु प्रवृत्तिजनने विधिव्यापारीभूता विधिसमवेता भावनापरनामाऽतिरिक्तपदार्थविशेषोऽभिधा तस्या एव ज्ञानं प्रवर्त्तकं तत्त्वेन च भावनात्वरूपेण विधिशक्तिः सा च जन्यत्वसम्बन्धेन एकपदोपात्तत्वप्रत्यासत्त्या वा आख्यातसामान्यशक्तिबललभ्या कृतिरूपव्यापारविधेरर्थान्तरे विशेषणतयाऽन्वेति प्रकृत्यर्थोऽपि विषयितया व्यापारे विशेषणं तथा च यागविषयकभावनाजन्यव्यापारवान् पुरुष इत्यन्वयबोधः नचैतादृशबुद्धावपि प्रयोजनाज्ञाने कुतः प्रवृत्तिः प्रयोजनस्याहेतुत्वे विश्वजिदादौ फलकल्पनानुपपत्तेरिति वाच्यम् यागविषयकव्यापारेऽभिधाजन्यत्वस्यान्वये व्यापारनिष्ठेष्टसाधनत्वस्यान्वयप्रयोजकरूपतया योग्यतात्वेन योग्यताबलादेव व्यापारे तज्ज्ञानात्। यद्वा विधित एव स्वर्गादिसाधनत्वमप्यत्र प्रवृत्तिरूपव्यापारे आख्यातार्थेऽन्वेति प्रवृत्ताविष्टसाधनताज्ञानमेव प्रवर्त्तकम्। न चैवं न्यायमताविशेषः इष्टसाधनत्वेन विध्यर्थत्वस्वीकारादिति वाच्यं क्रियागतं साधनत्वं न विध्यर्थः अपि तु प्रवृत्तिगतमिति विशेषात् अभिधाभ्युपगमानभ्युपगमाभ्यामपि विशेषसम्भवाच्च न चैवं तादृशाभिधायां मानाभाव इति वाच्यं विधिः प्रवृत्तिजनकधर्मसमवायिकारणं तज्जनकद्रव्यत्वादात्मवदित्यनुमानादेव तत्सिद्धेः भट्टमते शब्दस्य द्रव्यत्वान्नासिद्धिः। न च प्रवृत्तिजनकशरीरे व्यभिचारः, तस्य शरीरप्राणसंयोगोपादानत्वात् न च विधिर्न प्रवृत्तौ कारणं प्रवृत्तिसामान्ये व्यभिचारात् इति वाच्यं वैधजन्यप्रवृत्तौ तद्धेतुत्वात् ज्ञानवत् प्रवृत्तावपि वैलक्षण्यसम्भवाच्च तच्च जातिरूपमखण्डोपाधिरूपं स्वरूपं वेत्यन्यदेतत्। नन्वस्त्वभिधा तथापि तज्ज्ञानं प्रवृत्तिहेतुः प्रवृत्तिसामान्ये तस्य व्यभिचारात् प्रत्यक्षादिना इष्टसाधनत्वग्रहेऽपि प्रवृत्तेः, नापि यागादिविषयिकायां, यागकृतिः स्वर्गसाधनमित्याप्तवाक्यादितोऽपि प्रवृत्तेः। नापि विधिजन्यायां, तज्जन्यतावच्छेदकस्यैव दुष्परिचयात्। नापि जातिविशेषावच्छिन्नायां, गुणगतजात्यनभ्युपगमात् इति चेन्न विधिजन्यतावच्छेदकाखण्डोपाध्यवच्छेदेनैव तद्धेतुत्वात् न च भावनादिपदादपि तादृशप्रवृत्त्यापत्तिरिति वाच्यं विधिजन्यभावनाज्ञानस्यैव विलक्षणशक्तिमत्त्वेन तादृशप्रवृत्तिविशेषे हेतुत्वादित्याहुः। तामेतामभिधारूपभावनां प्रभाकरा न मन्यन्ते। एवं हि तस्या निरासस्तैः कृतः" अभिधासंकल्पाद्यपूर्वभावनाज्ञानं न प्रवर्त्तकं तस्मिन् सत्यप्रवृत्तेः असत्यपि प्रवृत्तेश्च किन्तु कार्य्यत्वज्ञानमेव प्रवर्त्तकमिति तथा हि ज्ञानस्य कृतौ जनयितव्यायां चिकीर्षातिरिक्तं न कर्त्तव्यमस्ति यत्सत्त्वे कृतिविलम्बो हेत्वन्तराभावात्। चिकीर्षा च कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयकेच्छा पाकं कृत्वा साधयामीति तदनुभवात् सा च स्वकृतिसाध्यज्ञानसाध्या इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात्" इति। यथा चास्यैव प्रवर्त्तकत्वं तथा विधिशब्दे वक्ष्यते। सा चाभिधाशक्तिः कुत्रार्थे कस्येति व्याकरणादितो ज्ञायते तदुक्तमभियुक्तैः "शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति व्याख्यातश्चैतदुदाहृतमस्माभिः शब्दार्थरत्ने। यथा "तत्र सर्वेषां शब्दानां प्रथमतो व्यवहारादेव प्रायशः शक्तिग्रहः। तथा हि केनचित् वृद्धेन व्युत्पन्नं पुरुषं प्रति गामानयेत्युपदिष्टे तत् शृण्वन् व्युत्पन्नो गवानयने प्रवर्त्तते। तच्चेष्टादर्शनेन तत्प्रवृत्तिमनुमाय व्युत्पित्सुर्बालो व्युत्पन्नपुरुषीयप्रवृत्त्यन्यथानुपपत्त्या तद्धेतुभूतकर्त्तव्यतादिज्ञानादिकं तत्रानुमिनुतेऽनुमिनुते चापरकारणानुपस्थितेः श्रुतस्यैव समुदितवाक्यस्य तद्धीजनकत्वम्। ततश्च वाक्यस्य तद्धीजनकत्वेन तत्सम्बन्धित्वमवसीयते इत्यतो व्यवहारस्यैव शक्तिग्राहकत्वमित्येवमवसीयते शास्त्रकारैः। पश्चाच्च पदानामन्वयव्यतिरेकाभ्यां प्रत्येकपदशक्तिग्रहः तथा हि पुनश्च गां बधान घटमानयेत्यादिवाक्यश्रवणे नियोज्यस्य पूर्व्वापेक्षया विशेषकार्य्यप्रवृत्तिदर्शनेन गवादिपदश्रवणसत्त्वे तत्कार्य्यकरणं तदभावे च तत्कार्य्या-

करणमित्यन्वयव्यतिरेकाभ्यां तत्तत्पदानां विशेषार्थवाचकत्वावधारणमिति द्रष्टव्यम्। व्याकरणमपि तथा, तद्धि कर्मणि द्वितीयेत्यादिना द्वितीयादीनामर्थविशेषे प्रयोगनियमाय प्रवृत्तं द्वितीयादीनामर्थमप्यवगमयति तथा हि कर्मण्येव द्वितीया शक्ता न करणादौ, कर्मणि द्वितीयैव शक्ता न तृतीयेत्येवं द्विविधनियमपरतया प्रवृत्तं शास्त्रं नियमतदतिक्रमयोः पुण्यापुण्यफले दर्शयत् तत्तच्छब्दानां तत्तदर्थेष्वेव साधुतोक्त्या शक्तिमवगमयति। तदुक्तं भाष्यकारैः "सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्। प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु चेति"। उपमानमपि शक्तिग्राहकम्। यथा गोसदृशो गवय इत्युपदेशवाक्यं श्रुतवतो ग्रामस्थपुरुषस्य वनगमनादनन्तरं गोसदृशपिण्डदर्शने उपदिष्टं वाक्यं स्मरतः ईदृक् पिण्डो गवयपदवाच्य इति भवति मतिरित्युपमानरूपोपदेशवाक्यस्य गवयपदशक्तिग्राहकत्वम्। तत्र च व्याकरणादीनामप्रवृत्तेः प्रकृतिप्रत्ययाधीनोपस्थितिविषये एव व्याकरणस्य, रूढिविषये च कोषस्योपयोगात्तदभावाच्च तस्यैव तत्र तथात्वम्। कोषोऽपि अनपेक्ष्यैव प्रकृतिप्रत्ययादिविभागं कैषाञ्चित् पदजातानां रूढिज्ञानाय प्रवर्त्तमानो मण्डपघटादिशब्दानां शक्तिमवगमयति। आप्तवाक्यमपि तथा, व्याकरणादिशक्तिधीहेत्वभावेऽपि यथार्थज्ञानवतामुपदेशेन तत्तच्छब्दानां तत्तदर्थे शक्तिग्रहः। व्यवहारतस्तु दर्शितः। वाक्यशेषोऽपि तद्ग्रहे हेतुः यथा स्वर्गकामोयजेतेत्यादौ श्रुतस्वर्गपदस्य अर्थविशेषमजानतामधिकारिणां तच्छक्तिबोधनाय प्रवृत्तेन "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमिति" वाक्यशेषब्राह्मणेन दुःखासंभिन्नत्वादिमति सुखविशेषे एव स्वर्गपदस्य शक्तिग्रहः। व्याख्यानरूपा टीकादिपदाभिधेया विवृतिरपि तत्तच्छब्दानां तत्तदर्थेषु शक्तिं ग्राहयति यथा पचतिपदस्य पाकं करोतीति व्याख्या पाककर्त्र्यर्थसम्बन्धतापि। प्रसिद्धपदसामानाधिकरण्यमपि तद्ग्रहे हेतुः। पिकादिशब्दार्थमविदुषामुपदेशाय प्रवृत्तेन सहकारतरौ मधुरं रौति पिक इति वाक्येन प्रत्येकशक्त्या ज्ञातशक्तिकपदोपस्थापितार्थे मधुरशब्दकारके पिकशब्दस्य शक्तिग्रहः। एवं कोषादावपि "सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः" इत्यादौ प्रसिद्धपदोपस्थापितार्थे सत्कारपूर्व्वकालङ्कृतकन्यादातरि कूकुदपदस्य शक्तिग्रहः। अत्र च प्रसिद्धपदसान्निध्यं नाम अर्थविशेषे निश्चितशक्तिकपदसामानाधिकरण्यम् सामानाधिकरण्यञ्च स्वबोध्यार्थेऽभेदेनान्वयबोधजनकत्वम्। वैयाकरणमते चाख्यातप्रथमान्तार्थयोरप्यभेदेनान्वयस्वीकारः। अतो मधुरं रौति कन्यां ददातीत्यादावाख्यातान्तस्य प्रथमान्तसामानाधिकरण्यं सुलभमेव। अतएव च भाष्ये "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रे अप्रथमासमानाधिकरणे इति निर्द्देशादन्यत्र लटः प्रथमान्तसामानाधिकरण्यमुपपादितमुपपादितञ्च "आदेशे सामानाधिकरण्यं दृष्ट्वाऽनुमानाद्गन्तव्यं स्थानिनः सामानाधिकरण्यमित्यादिना" लटः स्थानिलकारसामान्यस्य प्रथमान्तसमाधिकरण्यम्। एतेन ददानः कूकुदः स्मृत इत्यादि पाठकल्पनमपि परेषामनादेयमेवेति"।

**अभिधान** न० अभि+धा—भावे ल्युट्। १ कथने। करणे ल्युट् २नामनि, ३शब्दार्थप्रतिपादके निघण्टुकोषादिनामके ग्रन्थे च। तथा च शब्दादानामर्थविशेषे शक्तिग्राहकं कोषादिकमेव अभिधानशब्दवाच्यम् तच्चामरादिनाना कोषादिकम्। तत्र च प्रायेण एकार्थवाचकानां पर्य्याय शब्दानां क्वचिच्च नानार्थानामपि शब्दानां संघ उपदिष्टः तेषां शक्तिग्राहकत्वञ्च अभिधाशब्दे दर्शितम्।

**अभिधानी** स्त्री आभिधीयते आभिमुख्येन धीयते बध्येनानया अभि+धा—करणे ल्युट्। १ रज्जौ तया हि बध्नेन वध्यमाभिमुख्येन स्थाप्यते। "इमामगृभ्णन्रशनामृतस्य इत्यश्वाभिधानीमादत्ते" इति तै०ब्रा०। "अभिधानीं रशनामिति" भा० "तस्या इन्द्रोवत्स आसीद्गायत्र्यभिधान्यभ्रमूधः" अथ० ८,१०,१२। "भूमौ ज्ञीभिरभिधानीभिर्हिता भवन्ति" कात्या० २,४।

**अभिधामूला** स्त्री अभिधा मूलं यस्याः। आलङ्कारिकोक्ते व्यञ्जनाभेदे। अभिधाश्रयाप्यत्र अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा "अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया" आद्यशब्दाद्विप्रयोगादयः"। उक्तं हि "संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालोव्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" इति यथा सशङ्खचक्रो हरिः". इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दोविष्णुमेवाभिधत्ते। अशङ्खचक्रो हरिः इति वियोगेन तमेव। भीमार्ज्जुनौ इति अर्ज्जुनः पार्थः। कर्णार्ज्जुनौ इति कर्णः सूतपुत्रः। स्थाणुं वन्दे इति स्थाणुः शिवः

सर्वं जानाति देवः इति देवोभगवान् । कुपितोमकरध्वजः इति मकरध्वजः कामः । देवः पुरारिः इति पुरारिः शिवः । मधुना मत्तः पिकः इति मधुर्वसन्तः । पातु वोद-यितासुखमिति साम्मुख्यम् । विभाति गगने चन्द्रः इति चन्द्रः शशी । निशि चित्रभानुः इति चित्रभानुर्वह्निः । भाति रथाङ्गम् इति नपुंसकव्यक्त्या रथाङ्गं चक्रम् । स्वरस्तु वेदे एव विशेषप्रतीतिकृत् न काव्यादौ तस्य विषयोऽतोनोदाहृत इति, यथा । दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः । नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचं धारयन् गामाक्रम्य विभूतिविभूषिततनू राजत्युमा-वल्लभः । अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्योमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते" सा०द० ।

अभिधायक त्रि० अभि+धा–ण्वुल् । वाचकशब्दे "लिङ्गान्तरा नभिधायकत्वं नित्यस्त्रीत्वमिति का० वृत्तिः २ तत्तच्छब्दो-च्चारके च ।

अभिधायिन् त्रि०अभिधत्ते कथयति अभि+धा–णिनि स्त्रियां ङीप् । १ कथके २ शब्दप्रयोक्तरि । "त्वं मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकां संस्पृशीति "अमरुशतकम् वाचकशब्दे च "प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः वेदान्ता यदि-शास्त्राणि बौद्धैः किमपराध्यते इति ।

अभिधावक त्रि० आभिमुख्येन धावति अभि+धाव–ण्वुल् । आभिमुख्येन वेगेन गन्तरि । [धित्सु अभित्सायां विवक्षायाम् ।

अभिधित्सा स्त्री अभिधातुमिच्छा अभि+धा–सन्–अ । कथ-

अभिधृष्णु त्रि० अभि+धृष–क्नु । अत्यन्तधर्षके । "तस्माद्‌-ब्राह्मणः पाप्मनभिधृष्णुतमः" शत० ब्रा० ।

अभिधेय त्रि० अभिधीयते अभिधावृत्त्या बोध्यते अभि+धा–कर्मणि यत् । वाच्यार्थे सङ्केतयति शब्दार्थे । "अवि-स्करातिशयोऽभिधेयवत् प्रतीयते" सा०द० "अभिधेया विनाभूतप्रतीतिर्लक्षणोच्यते का०प्र० अन्यप्रतिपाद्ये च" "इतिप्रयोजनाभिधेयसम्बन्धाः" इति मुग्धबोधम् "एते-नाभिधेयस्य दर्शितम् सा० द० ।

अभिध्या स्त्री अभि+ध्यै–अङ् । १ परधनस्याजिहीर्षायां, २ जिघ्नायां, ३ विषयप्रार्थनायां ४ चिन्तने, च । अभि-ध्यायतेश्चिन्तनार्थत्वात् तथात्वम् "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजा इति" मनुना आलोचने अभिध्यायतेः प्रयोगात् तस्यालोचनार्थत्वम् । "अभिध्योप-देशाच्च" शा०सू० ।

अभिध्यातव्य त्रि० अभि+ध्या–तव्य । सततचिन्तनीये । "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेति" श्रुत्वा "परमेव ब्रह्माभिध्यातव्यमित्युपदिश्यते" शा०भा० ।

अभिध्यान न० अभि+ध्यै–भावे ल्युट् । १ अभिध्याशब्दार्थे २अभितोध्याने च तच्च भिन्नजातीयप्रत्ययानन्तरितोऽ-विच्छिन्न एकमात्रविषयप्रत्ययसन्तानः । "तदभिध्यानादेव-तल्लिङ्गात्" शा०सू० ।

अभिनद्ध त्रि० अभितो नद्धः बद्धः अभि+नह–क्त । सर्वतो बद्धे "यथा सौम्य । पुरुषमभिनद्धाक्षमिति" छा० उ० "अभिनद्धाक्षं बद्धाक्षम्" भा० "परिरम्भरुचिं ततिर्जेता-नामभिनद्धा रसमानसारसेन" माघः ।

अभिनन्द पु० अभि+नन्द–घञ् । १सन्तोषे, २प्रतिपाद्यगुण-कथनादिनाऽऽनन्दे ३ प्रशंसायाम् ४अल्पसुखे च "योऽभि-रचिर्वदन्तः करोति तेऽङ्कारा अभिनन्दाः विस्फुलिङ्गाः छा० उ० "अभिनन्दाः सुखलवाः" भा० । अभि-नन्दयति । अभि+नन्द–णिच्–अच् । ५ सन्तोषके ६ प्रोत्साहनेन प्रवर्त्तके च त्रि० । अभितो नन्दत्यत्र आधारे घञ् । अत्रस्य स्वकतत्वादि गुणप्रशंसनप्रवर्त्तक-श्वान्तिभेदे । तत्र हि स सुखायते । अभितोनन्दः । आ-ऽनन्दमये परमात्मनि इति वेदान्तिमते । नैयायिकादिमते तु अभितोनन्दः दुःखाभावो यत्र ७व० । परमात्मनि, सर्वदुःखशून्यत्वात्तस्य तथात्वम् । भारादिदुःखापनयेऽपि भारादिवाहकानाम् अहं सुखी संवृत्तः इति प्रतीते दुःखाभावेऽपि सुखत्वोपचारदर्शनात् ईश्वरस्य सदा दुःखाभावाच्च तथात्वम् ।

अभिनन्दन न० अभि+नन्द–भावे ल्युट् । १ सन्तोषे । णिच्–ल्युट् । सन्तोषार्थं २ प्रशंसने । कर्त्तरि ल्यु । ३ सन्तोषके प्रोत्साहनार्थं ४ प्रवर्त्तके ५ प्रशंसके च त्रि० । ६ तद्भेदे पु० ।

अभिनन्दनीय त्रि० अभिनन्द्यते प्रशस्यते अभि+नन्द–णिच् कर्मणि अनीयर् । १प्रशंसनीये २प्रोत्साहनेन प्रवर्त्तनीये च ।

अभिनन्दित त्रि०अभि+नन्द–णिच्–क्त । १प्रशंसिते २अनु-मोदनेन प्रोत्साहिते च ।

अभिनन्दिन् त्रि० अभिनन्दति णिनि । १ सन्तोषिणि । अभिनन्दयति णिनि । २ अनुमोदनेन प्रोत्साहके । स्त्रियां ङीप् ।

**अभिनन्द्य** त्रि० अभिनन्द्यते प्रशस्यते अभि+नन्द–णिच्–यत् । १ प्रशंसनीये "जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ" रघुः अभि+नन्द–णिच् ल्यप् । प्रशस्येत्यर्थे अनुमोदनेन प्रोत्साह्येत्यर्थे अव्य० ।

**अभिनम्** त्रि० अभिमुखं नम्रः प्रा० स० । आभिमुख्येन नम्रे नते "इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तवकाभिनम्राम्" रघुः ।

**अभिनय** पु० अभि–नी–करणे अच् । १हृद्गतभावव्यञ्जके शरीरचेष्टादौ । भावे अच् । २अभिनेयपदार्थस्य शरीरचेष्टाभाषणादिभिरनुकरणे "भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आङ्गिकोवाचिकश्चैवमाहार्यः सात्त्विकस्तथेति" नटै रङ्गादिभिः रामयुधिष्ठिरादीनामवस्थानुकरोऽभिनयः सा० द० । नर्त्तकीरभिनयातिलङ्घिनीरिति" रघुः । नानाभिनयसम्बन्धान् भावयन्ति रसान् यतः" का० द० तदभिनयमिवावलिर्वनानामतनुत नूतनपल्लवाङ्गुलीभिः माघः । "अङ्गैरालम्बवेद्गीतं हस्तेनार्थं प्रकाशयेदित्युक्तदिशा व्यञ्जकचेष्टामतनुतेत्यर्थः । "शौरिरित्यभिनयादिवोच्चकैः" माघः । अभिनयति बोधयत्यर्थमत्र आधारे अच् । शरीरचेष्टादिभिरर्थपदार्थज्ञापके २ रूपकादौ दृश्यकाव्ये ।

**अभिनव** पु० अभि+नु–भावे अप् । आनुकूल्यार्थस्तवे । अभिमतः प्रशस्तः नवः प्रा०स० । प्रथमोद्भूते नवीने त्रि० । "रथाङ्गभर्त्रेऽभिनवं वराय" माघः । "अभिनवा इव पत्रविशेषकाः" रघुः ।

**अभिनवतामरस** न० "अभिनवतामरसं ननजाद्य" इति छन्दो० उक्ते द्वादशाक्षरपादके १वृत्तभेदे । २नूतनपद्मे च ।

**अभिनवोद्भिद्** (द्) पु० अभिनवमुद्भिद्य जायते उद्+भिद्–क्विप् क वा । अङ्कुरे । [दृढबन्धने च ।

**अभिनहन** न० अभि+नह–भावे ल्युट् । १अभितो बन्धने

**अभिनिधन** त्रि० अभिगतं निधनम् अत्या०स० । १नाशाभिमुखतां प्राप्ते नाशोन्मुखे । निधनस्य समाप्तेर्वाभिमुख्यम् अव्ययी० । २नाशावसानयोराभिमुख्ये अव्य० तत्र प्राप्ते ३साममेदे च । "आभीकमभिनिधनमाभीशवानि" कात्या० २५,१४,१५, "आभीकाद्यानि सामानीति" कर्क० ।

**अभिनिधान** अभि+धा–भावे ल्युट् । १आभिमुख्येन स्थापने । "संसृष्य पुष्करया दध्यभिनिधानतया" कात्या०५.१,२१ ।

**अभिनिर्मुक्त** पु० अभितः सर्वतः सायन्तनकर्मणा निर्मुक्तः । १सूर्य्यास्तकाले निद्रावशात् त्यक्ततत्कालकर्त्तव्यकर्मणि । "सूर्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः प्रायश्चित्तमकुर्वाणोयुक्तः स्यान्महतैनसा" मनुः एतद्वचनस्य ब्रह्मचारिप्रकरणस्थत्वात् ब्रह्मचारित्वेनभूतेऽस्य रूढिः ।

**अभिनिर्य्याण** न० अभिलक्ष्य रिपून् निर्याणम् युद्धार्थं निष्क्रमः । रिपुजिगीषया सैन्यैः सह निष्क्रमणे ।

**अभिनिर्वृत्त** त्रि० अभि+निर्+वृत–क्त । १ निष्पन्ने ।

**अभिनिर्वृत्ति** स्त्री० अभि+निर्+वृत–क्तिन् । १ निष्पत्तौ ।

**अभिनिवर्त्त** पु० अभि+नि+वृत–भावे घञ् । १ अभितोनिवृत्तौ । णमुल् । अभिनिवर्त्तम् । पुनः पुनर्निवृत्त्येत्यर्थे अव्य० । "पुनरभिनिवर्त्तमृत्विजोभक्षयन्ति तस्मादेतस्य मासस्यान्योन्यमभिनिवर्त्तन्ते" शत०ब्रा० ।

**अभिनिविष्ट** त्रि० अभि+नि+विश–कर्त्तरि क्त । १ अभिनिवेशयुक्ते २चिन्तयाव्यग्रे ३चिन्तनाय प्रवृत्ते च "निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता" सा०द० ।

**अभिनिवेश** पु० अभितोनिवेशः घञ् । अवश्यमिदं कर्त्तव्यमित्याग्रहसमन्विते मनःसंयोगभेदे योगशास्त्रप्रसिद्धे मरणभीतिजनके अज्ञानविशेषे, अनित्यैरपि देहादिभिर्वियोगो मा भूदिति मरणनिवारणार्थे आग्रहे च । योगशास्त्रे हि अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः दर्शिताः क्लिश्यन्ति कर्मतत्फलप्रवर्त्तकाः सन्तः पुरुषं दुःखाकुर्वन्ति क्लेशाः पञ्च । उत्तरेषामविद्याप्रसवत्वमपि तत्रोक्तम् ! "अविद्याक्षेत्रमुत्तरेषाम्प्रसुप्ता तनुविच्छिन्नोदाराणाम्" पा०सू० उत्तरेषामस्मितादीनामविद्या क्षेत्रं प्रसवभूमिः तेषाञ्च अप्रसुप्ता विवेकख्यात्यभावेनादग्धतया शक्तिरूपेणावस्थानात् अतएव ते पुनरुद्भवन्ति ते च क्रियायोगिनां तनवः, विषयसङ्गिनां विच्छिन्ना उदाराश्च भवन्ति । यथा यत्र रागस्तत्र क्रोधो विच्छिन्नः सुरतां राग उदारः । एवं यत्र क्रोध उदारस्तत्र रागोविच्छिन्न एवं रागादयः विच्छिन्नोदाराभूत्वा पुरुषपशुं क्लेशयन्ति एवं च क्लेशा अविद्यामूलाः अविद्यायाः पुरुषविवेकख्यात्या-निवृत्तौ निवर्त्तन्ते । एवं सामान्यतः क्लेशानुक्त्वाऽभिनिवेश उक्तः "स्वरसवाही विदुषोरूढोऽभिनिवेशः" इति । विदुषोमूर्खस्य वा जन्तुमात्रस्य यो मरणत्रासः सोऽभिनिवेशः यथा मर्त्त्यस्य अहं सदा भूयासं न म्रियेयेति रूढः त्रासस्तथा विदुषोऽपि दृश्यते यतः स्वरसवाही सः, पूर्व्वजन्मसु मरणकारणदुःखानुभवजन्यवासनातोयः स्वरसः तेन वहति प्रवर्त्ततीति स्वरसवाही । ते चाविद्यादयः पञ्च क्रमेण तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञाः । सांख्यकारिकायाम् पञ्च विपर्य्ययभेदास्तथाख्य । "भेदस्तमसोऽष्टविधो-

मोहस्य च दशविधो महामोहः । तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः" । अन्धतामिस्रः अभिनिवेशस्मासः तथेत्यनेनाष्टादशधेत्यनुषज्यते । देवाः खल्वणिमादिकमष्टविधमैश्वर्य्यमासाद्य दश शब्दादीन् भुञ्जानाः शब्दादयो भोग्यास्तदुपायाश्चाणिमादयोऽस्माकमसुरादिभिर्मा स्म उपघानिषतेति बिभ्यति । तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयित्वात् अष्टादशधेति" सां॰कौ॰। २ आसक्तौ च "अथानुरूपाभिनिवेशतोषिणा" कुमा॰ ।

**अभिनिवेशिन्** त्रि॰ अभि+नि+विश–णिनि स्त्रियां ङीप् । १ आग्रहवति २ अनुरागवति च ।

**अभिनिष्कारिन्** त्रि॰ अभि+निस्+कृ–णिनि स्त्रियां ङीप् । अभितो निःशेषेण कारिणि "कृताकृतौ वयुनोऽभिनिष्कारिणः प्रजाम्" अथ॰ १०,१,२१ ।

**अभिनिष्क्रम** पु॰ अभि+निस्+क्रम–घञ् । आभिमुख्येन निर्गतौ ल्युट् । अभिनिष्क्रमणमप्यत्र न॰ । [निर्गते ।

**अभिनिष्क्रान्त** त्रि॰ अभि+निस्+क्रम–कर्त्तरि क्त । अभि-

**अभिनिष्टान** पु॰ अभि+स्तन–घञ् शब्दसंज्ञायां षत्वम् । १ विसर्जनीये । "नाम चास्मै दद्युर्घोषवदाद्यन्तस्थमभिनिष्टानान्तम्" गृह्यसूत्रम् । २ अक्षरमात्रे च शब्दमात्रे तु न षत्वम् । अभिनिस्तान इत्येव । [निर्गमे ।

**अभिनिष्पतन** न॰ अभि+निस्+पत–ल्युट् । आभिमुख्येन

**अभिनिष्पत्ति** स्त्री अभि+निस्+पद–क्तिन् । १ सम्पत्तौ सिद्धौ यस्य यथारूपमुचितं तथारूपेण तस्य भवने २ उत्पत्तौ च ।

**अभिनिष्पन्न** त्रि॰ अभि+निस्–पद–क्त । १ सम्पन्ने २ सिद्धे च ।

**अभिनीत** त्रि॰ अभिनीयते स्म अभि–नी क्त । न्याय्ये, १ युक्ते "अभिनीततरं वाक्यमित्युवाच युधिष्ठिरः" भा॰शा॰प॰ । २ भूषिते ३ अतिसंस्कृते ४ पूजिते ५ क्रोधने, यस्याभिनयः रूपाद्यनुकरणं चेष्टादिभिः कृतस्तस्मिन् ६ आभिमुख्येन ७ प्रापिते च "मितार्थमभिनीतस्त्वम्" रामा॰ ।

**अभिनीति** स्त्री आनुकूल्यार्थी युक्तिः । १ प्रियवाक्यादियुक्तयुक्तौ । "सान्त्वपूर्व्वमभिनीतिहेतुकम्" किरा॰ । २ अभितः प्रापणे च रूपादेर्देहादिना ३ अनुकरणे च । नीतेराभिमुख्यम् अव्ययी॰ । ४ नीत्याभिमुख्ये अव्य॰ ।

**अभिनेतव्य** त्रि॰ अभि+नी–कर्म्मणि तव्य । देहचेष्टादिना १ अनुकार्य्ये आभिमुख्येन २ प्रापणीये च । भावे तव्य । आवश्यकाभिनये न॰ । [रनुकरणकर्त्तरि नटादौ ।

**अभिनेतृ** त्रि॰ अभि+नी–तृच् स्त्रियां ङीप् । नाटके देहादे-

**अभिनेय** त्रि॰ अभि+नी–कर्म्मणि यत् । १ देहादिचेष्टादिना १ अनुकार्य्ये अभिमुखं २ प्रापणीये च ।

**अभिन्न** त्रि॰ न भिन्नः । १ एकरूपतापन्ने २ अविदलिते ३ अविदारिते च "भूयोभूयो रयिमिदस्य वर्द्धयन्नभिन्ने खिल्ये" ऋ॰ ६,२८,२ "अभिन्ने शत्रुभिरभेद्ये" भा॰ । "न भिन्नां कृष्णामुपदध्यात् आकृतिं वा यया या भिद्यते" इत्युपक्रम्य "नाभिन्नां पराक्षेदिति" शत॰ब्रा॰ । ४ अभग्ने दृढे "अभिन्नेन चरेत्" कात्या॰ २६,७,४८ "अभग्नेन दृढेन" कर्क॰

**अभिन्नपुट** पु॰ अभिन्नं न विदलितं पुटं यस्य । नवपल्लवे "दूर्व्वायवाङ्कुरप्लक्षत्वगभिन्नपुटोत्तरान्" रघुः ।

**अभिन्यास** पु॰ अभिन्यस्यते अन्तःस्थ ऊष्मा बहिष्करणेन अभि+नि–अस–करणे घञ् । ज्वरमुपक्रम्य, "श्वसन् निपतितः शेते प्रलापोपद्रवायुतः । तमभिन्यासमित्याहुर्हतौजसमथापरे" सुश्रुतोक्ते ज्वरभेदे "निद्रालुं तमभिन्यासं क्षीणमेनं हतौजसमिति" सुश्रुतः ।

**अभिपत्ति** स्त्री अभि+पद–क्तिन् । निष्पत्तौ ।

**अभिपन्न** त्रि॰ अभि+पद–क्त । १ अपराधवति, २ आपद्गते, ३ स्वीकृते, ४ आभिमुख्येन गते च ।

**अभिपित्व** न॰ अभि+पा–भावे कित्वन् । १ अभिपतने २ आगमनकाले "विश्वं जगदभिपित्वे मनीषा" य॰ २३,२४, "अभिपित्वे अभिपतने आगमनकाले" वेददी॰ । ३ अभिमतप्राप्तौ "कुदत्समिहाभिपित्वम् करते स्वधानः" ऋ॰ ४,१६,१, "अभिपित्वमभिमतप्राप्तिम्" भा॰ । ४ अभितः प्राप्तौ "तस्येदिन्द्रो अभिपित्वेषु रणति" ऋ॰ १,८२,६, "अभिपित्वेषु अभिप्राप्तिषु" भा॰ कुहाभिपित्वं करतः कुहोषतुः ऋ॰ १०,४०,२, "इमामेव ऋचमभिप्रेत्य "क्व स्विद्रात्रौ भवथः क्व दिवा क्वाभिप्राप्तिं कुरुथ" इति यास्केन अभिप्राप्तिपरत्वमस्य सूचितम् । कर्म्मणि कित्वन् । ५ अभिपतनीये "नोविश्वं जगदभिपित्वे मनीषा" १,१८६,१, "अभिपित्वे अभिपतनीये" भा॰ ६ अभिगन्तव्ये, "सूरिभिरभिपित्वे सजोषाः" ऋ॰ १,१८६,६, "अभिपित्वे अभिगन्तव्ये" भा॰ ७ अभिप्राप्ते "पश्चीमाह्वनेदभिपित्वं जगाम" ऋ॰ ७,१८,९, "इन्द्रायिन्द्रो अभिपित्व वरारुः" ऋ॰ ८,५,२१, अभिपित्वे अभिप्राप्ते भा॰ । ८ आसन्नकाले "कक्षीवा अभिपित्वे अह्नाम्" ऋ॰ १,१२६,३ "अभिपित्वशब्दस्यासन्नकालवाचीति" भा॰ ९ अभिप्राप्तकाले "अभिपित्वे मनवे शास्यः" ऋ॰ १,१८९,७, "अभिपित्वे अभिप्राप्तकाले" भा॰ ।

**अभिपुष्प** पु॰ अभितः पुष्पमस्य । १ सर्वतः पुष्पवति वृक्षे ।

**अभिपूरण** न॰ अभ्यासेन अभितो वा पूरणम् प्रा॰स॰ । अभ्यासेन सर्वतः पूरणे "अभिप्लवाभ्यासेनाभिपूरणम्" कात्या॰ २४,१,११, ।

**अभिप्रज्ञा** स्त्री अभितः सततं प्रज्ञा चिन्तनम् । सततचिन्तने "तमयनायापिपासे अब्रूतामावाभ्यामभिप्रजानीहि" ऐ॰ब्रा॰ अभिप्रजानीहि चिन्तयेति व्याख्यानात्तस्यास्तथार्थत्वम् ।

**अभिप्रणयन** न॰ अभितः सर्वतः प्रणयनं संस्कारः । वेदविधिना अग्न्यादेः संस्कारे ।

**अभिप्रणीत** पु॰ अभितः प्रणीतः । सर्वतः वेदविधिना संस्कृते वह्न्यादौ "जज्वाल लोकस्थितये स राजा यथाध्वरे वह्निरभिप्रणीतः" भट्टिः ।

**अभिप्रमुर्** स्त्री अभिप्रमूर्च्छति आकृतिदानेन वह्निरनया । १ अभि+प्र+मूर्च्छ करणे क्विप् । जुह्वाम् ।

**अभिप्रवर्त्तन** न॰ अभितः प्रवर्त्तनम् । १सर्वतः प्रवृत्तौ २सर्वतः प्रवृत्तिसम्पादने च "त्वक्पादोरोमहर्षश्च स्वेदस्याभिप्रवर्त्तनम्" सुश्रुतः ।

**अभिप्रातर्** अव्य॰ अत्यन्तं प्रातः । १ अतिप्रत्यूषे "अथाभिप्रातरेव स्थालीपाकाद्दताज्यमिति" शत॰ब्रा॰ ।

**अभिप्राप्ति** स्त्री आभिमुख्येन प्राप्तिः प्रा॰स॰ । १ आभिमुख्येन प्राप्तौ अभिपित्वशब्दे उदाहृतं निरुक्तवाक्यम् ।

**अभिप्राय** पु॰ अभि+प्र+इण–भावे अच् ।१ आशये । "तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक्" मनुः ।"सर्वानभिप्रायकृतान् भार्य्यालभत कौरव" भा॰उ॰प॰ अभिप्रैति कर्त्तरि पचा॰ अच् । २ अभिगामिनि "स्वरितञितः आत्मनेपदं कर्त्रभिप्राये क्रियाफले" पा॰ कर्त्रभिगामिनीति व्याख्याकारः मणिकृता तु एतत्सूत्रं कर्तुद्देश्यकतापरतया व्याख्यातम् तच्चापूर्वशब्दे २५॰ पृष्ठे दर्शितम् । अभिप्रेयते पुरुषार्थक ल्प्तिभिः आभिमुख्येन प्रलयेऽभिप्रैति जगदस्मिन् वा कर्मणि आधारे वा अच् । ३विष्णौ "अभिप्रायः प्रियार्होऽर्हः" इति वि॰सह॰ ।

**अभिप्री** त्रि॰ अभिप्रीणाति अभि+प्री–क्विप् । १ सर्वतस्तर्पके "तुभ्यं वाता अभिप्रियस्तुभ्यं मर्षन्ति सिन्धवः" ऋ॰८,२१,२

**अभिप्रेत** त्रि॰ अभि+प्र+इण–क्त । १अभिलषिते "अभिप्रेतार्थसिद्ध्यर्थं मङ्गलम्" "कामाय तु भवेत् काम्यमभिप्रेतार्थसिद्धये" भवि॰पु॰ ।

**अभिप्रेत्य** अव्य॰ अभि+प्र+इण–ल्यप् । १ उद्दिश्येत्यर्थे । "यदभिप्रेत्य धात्वर्थस्तुमुन्नदानमिति" व्याकरणान्तरम्

**अभिप्रेप्सु** त्रि॰ अभि+प्र+आप–सन–उ । प्राप्तुमिच्छौ "सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः" "ऐन्द्रं स्थानमभिप्रेप्सुः" इति च मनुः ।

**अभिप्रोक्षण** न॰ अभितः प्रोक्षणं संस्कारभेदः । १ जलादिना सर्वतः सेचनरूपे वैधे संस्कारे ।

**अभिप्लव** पु॰ अभिप्लवन्ते स्वर्गमभिगच्छन्ति अभि+प्लु–गतौ अच् । १ प्राजापत्ये आदित्ये । "अथादित्याश्च आङ्गिरसश्च उभये प्राजापत्या अस्पर्द्धन्त वयं पूर्वे स्वर्गं लोकमेष्यामो-वयं पूर्व इति । आदित्याश्चतुर्भिः स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गं लोकमभ्यप्लवन्त तस्मादभिप्लवाः आदित्याः" शत॰ब्रा॰ । वर्षसाध्ये गवामयने प्रत्येकमासीयचतुर्विंशतिदिवसेषु चतुःषट्कात्मकेषु चतुर्षु षडहेषु विशेषः गवामयनशब्दे वक्ष्यते । "अभिप्लवः षडहः षडहानि भवन्त्यभिप्लवः" इति शत॰ब्रा॰ । "अभिप्लवं पूर्व्वं पुरस्ताद्विषुवत् उपयन्ति चतुर्विंशेन महाव्रतमभिप्लवेन परमभिप्लवमिति" च शत॰ब्रा॰ । ३षडहसाध्ये स्तोमादिपाठसाधनके गवामयनाङ्गयागभेदे च । ४उपप्लवे–उपद्रवे ५सर्व्वतः प्लवने च । अभिप्लवे विहितः ठक् । आभिप्लविकः उक्तषडहेषु विहिते सामादौ । [सिक्ते च ।

**अभिप्लुत** त्रि॰ अभि+प्लुत–क्त । १ सर्वतोव्याप्ते २अभितः

**अभिभङ्ग** त्रि॰ अभितोभङ्गोयस्मात् । १ भङ्गहेतौ "अभिभूवेऽभिभङ्गाय वन्वते" ऋ॰२,२१,२, अभितोभङ्गः । २सर्वतोभङ्गे पु॰ । अभिमतोभङ्गो यस्य । ३भङ्गयुक्ते त्रि॰ ।

**अभिभव** पु॰ अभि+भू–अप् । पराजये, तिरस्कारे, अनादरे, च । "रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः" रघुः "अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु! कुतः पितुर्गृहे" कु॰ "अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः" गीता । रोगादिना गात्रादिजड़ीभावे "इषमिह दृश्चिकषट्टविद्धि स्थानं गमागमौ न सः । न च हतं न चापि नष्टं न रोगशान्तिर्नचाभिभवः" षट् पञ्चाशिका ।

**अभिभवन** न॰ अभि+भू–ल्युट् । १ अभिभवे रोगादिना-ज्ञानरोधे "जरया चाभिभवनं व्याधिभिश्चोपपीड़नम्" मनुः

**अभिभा** स्त्री अभि+भा–अङ् । १ अभिभवे "मा त्वा काचिदभिभा विश्व्याविदत्" ऋ॰ २,४२,१ । "अभिभा अभिभवः" भा॰ ।

**अभिभार** त्रि॰ अभिर्भृशार्थे अतिशयितो भारो यस्य । अतिभारान्विते "चतुरुपस्यति तद्वज्रमभिभारं करोति तेन वज्रेणाभिभारेणेमां लोकान् प्रभिनत्ति" शत॰ब्रा॰ ।

**अभिभावक** त्रि० अभि+भू–ण्वुल्। १ अभिभवकर्त्तरि २तिरस्कारके ३पराजेतरि ४जडीभावकारके च।

**अभिभाविन्** त्रि० अभिभवति अभि+भू–णिनि स्त्रियां ङीप्। १तिरस्कारके २ पराजेतरि "सर्वातिरिक्तसारेण सर्वतेजोऽभिभाविना" रघुः। तृच्। अभिभवितापत्र।

**अभिभावुक** त्रि० अभि+भू–उकञ्। १ तिरस्कारके २पराजेतरि ३जड़ीभावकारके च। [मुख्येन कथने।

**अभिभाषण** न० आभिमुख्येन भाषणम् प्रा०स०। १ आभि-

**अभिभाषिन्** त्रि० आभिमुख्येन भाषते अभि+भाष–णिनि स्त्रियां ङीप्। आभिमुख्येन भाषिणि। "प्रसन्नमुखरागं तं स्मितपूर्व्वाभिभाषिणम्" रघुः।

**अभिभू** त्रि० अभिभवति अभि+भू–क्विप्। १ अभिभावके २ तिरस्कारके "अभिभुवे ऽभिभङ्गाय वन्वते" ऋ०२,२१, २, "अभिभुवे अभिभवित्रे" भा०।

**अभिभूत** त्रि० अभि+भू–क्त। १ किं कर्त्तव्यमिति ज्ञानशून्ये, २पराभूते, ३व्याकुले च। "सज्वरेणाभिभूत" इति ज्यो०।

**अभिभूति** स्त्री अभि+भू–क्तिन्। १ पराभवे २अवस्थायाञ्च अभिभवति कर्त्तरि क्तिच्। ३अभिभावके त्रि०। "गायत्रैश्छन्दसे अभिभूत्यै स्वाहा" काल्या०२५,२। "यस्य पूर्वीर्दोर्मिश्वल्लमभिभूति पुष्यात्" ऋ० ४,२१,१। अभिभूति अभिभावुकं बलम्" भा०। अतः संम्रष्टाभिभूत आभर" ऋ०१,५२,२। "अभिभूते, शत्रूणामभिभवितः" भा०।

**अभिभूय** न० अभि+भू–भावे 'भुवो भावे' पा० क्यप्। अभितोभावे "अभिभूयाय त्वा राष्ट्रम्" अथ०१८,२७,२। अभि+भू–ल्यप्। तिरस्कृत्येत्यर्थे अव्य०।

**अभिभूवन्** त्रि० अभि+भू–क्वनिप् स्त्रियां ङीप् रश्च। अभिभावके "समजैषमिमा अहं सपत्नीरभिभूवरीः" ऋ० १०,१५९,६।

**अभिमत** त्रि० अभि+मन–कर्म्मणि क्त। १अभिमानविषयीभूते ममेदमिदमित्याकारमिथ्याज्ञानविषये २सम्मते ३आदृते ४अभीष्टे च "अभिमतफलशंसी चारु पुस्फोर बाहुः" भट्टिः। भावे क्त। ५ अभिमाने मिथ्याज्ञाने न०।

**अभिमति** स्त्री अभि+मन–क्तिन्। १अभिमाने, मिथ्याज्ञाने २आदरे, ३सम्माने, ४अभिलाषे च।

**अभिमनस्** त्रि० अभिमुखं मनो यस्य। कर्त्तव्यप्रवणमनस्के। भृशा० क्यङ् सलोपश्च अभिमनायते। "कान्तिं नाभिमनायेत कोवा स्थाणुसमोऽपि ते" भट्टिः।

**अभिमन्तव्य** त्रि० अभि+मन–कर्म्मणि तव्य। ज्ञातव्ये "न सा स्त्रीत्वभिमन्तव्या यस्यां भर्त्ता न रज्यति" पुरा०। २अभिमानेन विषयीकर्त्तव्ये च।

**अभिमन्तृ** त्रि० अभि+मन–तृच् स्त्रियां ङीप्। १अभिमानिनि "मनस्चाप्यहङ्कारमभिमन्तारमीश्वरम्" मनुः। २सम्मानकर्त्तरि च।

**अभिमन्तोस्** अव्य० अभि+मन–तोसुन्। अभिमन्तुमभिमानेन विषयीकर्त्तुमित्यर्थे "एष वै रुद्रियोऽग्निः कर्त्तनमीश्वरः सपुत्रं सपशुमभिमन्तोः" शत० ब्रा०।

**अभिमन्त्र** न० अभि+मन्त्र–भावे अच्। १ "मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्करेत्। शेषिणं तद्धिना भूत्वा स्यादेतदनुमन्त्रणम् एतदेवाभिमन्त्रस्य लक्षणं वीक्षणाधिकम्" मीमांसोक्ते मन्त्रपाठपूर्व्वकेक्षणादिसंस्कारभेदे। ल्युट्। अभिमन्त्रणमप्यत्र न० "अभिमन्त्रणशेषो वा विशेषोपदेशात्" काल्या० ६,१,१६, "अभिमन्त्रणमुत्तरैः" काल्या०८,८,२१।

**अभिमन्त्र्य** अव्य० अभि+मन्त्र+ल्यप्। १ अभिमन्त्रणं कृत्वेत्यर्थे

**अभि(धि)मन्थ** पु० अभि(धि)मथ्नाति नेत्रम्। "हन्तैर्तैरभिष्यन्दैर्नराणामक्रियावताम्। तावन्तस्त्वभि(धि)मन्थाः स्युर्नयने तीव्रवेदने" इति माधवोक्ते १ नेत्ररोगभेदे भावे घञ्। २भृशमन्थने। अव्ययी०। मन्थदण्डस्याभिमुख्ये अव्य०।

**अभिमन्यु** पु० कृष्णस्वसृसुभद्रागर्भजाते अर्ज्जुनपुत्रे। स च युद्धे षड्भिः महारथैः परिवृत्य हतः। तत्कथा। "एतत्कुरु महेष्वास! राधेय! यदि शक्यसे। अथैनं विमुखीकृत्य पश्चात् प्रहरणं कुरु। सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः। विरथं विधनुष्कञ्च कुरुष्वैनं यदीच्छसि तदाचार्य्यवचः श्रुत्वा कर्णो वैकर्त्तनस्त्वरन्। अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत्। तस्याश्वानवधीद्भोजो गौतमः पार्ष्णिसारथी। शेषास्तु छिन्नधन्वानं शरवर्षैरवाकिरन्। त्वरमाणास्त्वराकाले विरथं षण्महारथाः। शरवर्षैरकरुणा बालमेकमवाकिरन्। स छिन्नधन्वा विरथः स्वं धर्म्ममनुपालयन्। खड्गचर्म्मधरः श्रीमानुत्पपात विहायसा। मार्गैः स कैशिकाद्यैश्च लाघवेन बलेन च। आर्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराड़िव। मय्येव निपतत्येष सासिरित्यूर्द्ध्वदृष्टयः। विव्यधुस्तं महेष्वासाः समरे छिद्रदर्शिनः। तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम्। क्षुरप्रेण महातेजास्त्वरमाणः सपत्नजित्। राधेयो निशितैर्वाणैर्व्यधमच्चर्म्म चोत्तमम्। व्यसिचर्म्मेषुपूर्णाङ्गः सोऽन्तरिक्षात् पुनः क्षितिम्। आस्थितचक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत" इति "विचेता व्यपतद्भूमौ सौभद्रः परवीरहा। एवं

विनिहतो राजन् एकोऽङ्कभिराहवे" भा॰द्रो॰प॰ ।

**अभिमर** पु॰ आभिमुख्येन म्रियतेऽत्र अभि+मृ-आधारे अप् । १युद्धे । करणे अप् । २भये, अभिम्रियते यस्मात् अपादाने अप् । ३ मारणव्यापारे वधे ४ बन्धने च अभिमुखीभूय म्रियते कर्त्तरि अच् । ५ स्वसैन्ये ६ धनाशया प्राणनिरपेक्षतया हस्तिनं व्याघ्रं वाऽभियोद्धुमुद्यते च ।

**अभिमर्द्द** पु॰ अभि+मृद–भावे घञ् । १चूर्णीकरणे २निष्पीड़ने च । आधारे घञ् । ३ युद्धे, ४ मद्ये च । कर्त्तरि अच् । ५ मर्द्दनकर्त्तरि त्रि॰ ।

**अभिमर्द्दन** न॰ अभि+मृद–भावे ल्युट् । १ आरम्भकसंयोगनाशनेन चूर्णीकरणे २निष्पीड़ने च ।

**अभिमर्श(र्ष)** पु॰ अभि+मृश(ष) भावे घञ् । १ स्पर्शे धर्षणे च "पराभिमर्शोन तवास्ति कः करमिति" कुमा॰ । "कृताभिमर्शा(र्षा)मनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्य" शकु॰ । "परदाराभिमर्शे(र्षे)षु प्रवृत्तान् नॄन् महीपतिः" मनुः ।

**अभिमर्श(र्ष)क** त्रि॰ अभि+मृश(ष) ण्वुल् । १स्पर्शकर्त्तरि २धर्षणकर्त्तरि च "न दुष्टः कश्चिदप्यासीत् परदाराभिमर्शकः" रामा॰ ।

**अभिमर्शन(र्षण)** न॰ अभि+मृश(ष)–भावे ल्युट् । १ स्पर्शे "नीवीस्तनप्रावरणसक्थिकेशाभिमर्शनम् (र्षणम्)" या॰ । "यः पुनः परनारीपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूर्द्धजादिस्पर्शनं साभिलाष इवाचरति" मिता॰। "सदोऽभिमर्शनम्(र्षणम्) काव्या॰ ८,८,१८, "तूर्ष्णीं पिन्वनादीनां करणाभिमर्शन(र्षण)ग्रहणधूपनप्रदहनोद्धरणावसेचनानि" काव्या॰ २६,१,२७ धर्षणे च "परदाराभिम(र्श)र्षणम्" स्मृतिः ।

**अभिमाति** त्रि॰ अभि–मेङ् कर्त्तरि क्तिन् न इत्त्वम् । घातके । "विष्णोः क्रमोऽस्यभिमातिहा" यजु॰ १२,५, "अभिमातिः घातकः" वेददी॰ । २शत्रौ पु॰ हेम॰ । "अग्ने! सहस्व पृतना अभिमातीरपास्य" य॰ ८,२७, अभिमातिः शत्रुरुच्यते स्त्रीत्वमार्षम् अभिमातीन् शत्रून्" वेददी॰।

**अभिमातिन्** पु॰ अभिमातमनेन अभि+मेङ्–भावे क्त वेदे ए॰ न इत्त्वम् इष्टा॰ इनि । शत्रौ । "बाधते विश्वमभिमातिनम्" ऋ॰ १,८५,३ "अभिमातिनम् शत्रुम्" भा॰ ।

**अभिमातिषाह्** त्रि॰ अभिमातिं रिपुं सहते सह–ण्वि–वेदे षत्वम् । रिपुजयिनि "तद्वीरासो अभिमातिषाहः ऋ॰६,७,२, "अभिमातिषाहः शत्रूणामभिभवितारः" भा॰

**अभिमातिषाह** त्रि॰ अभिमातिं रिपुं सहते सह–अच् उप॰स॰ वेदे षत्वम् । रिपुजयिनि । "अभिमातिषाहोगवेषणः सहमान उद्भित्" अथ॰५,२०,११ ।

**अभिमान** पु॰ अभि+मन–घञ् । १ आत्मन्युत्कर्षारोपे, २ मिथ्यागर्व्वे–बलादिदर्पे, ३ प्रणये, ४ हिंसायाम् । ५गर्वमात्रे "संकल्पयोनेरभिमानभूतम्" कुमा॰ ६स्वरूपज्ञाने । "अनात्तस्य चाभिमानसामर्थ्यात्" काव्या॰८,५,१२ "अनात्तस्य अनात्तरसस्य सरसस्यैव सोमस्य सोमाभिमानसामर्थ्यात् सोमबुद्धिसामर्थ्यादिति सोमोऽयमिति बुद्धिरनात्तरसे अनभिषुते एव सोमे नाभिषुते" कर्क॰ । ७मिथ्याज्ञाने "अभिमानैर्न मानोऽसे जातिदोषेण वै महान्" भा॰ शा॰प॰ । "ब्रह्माहादिमहद्दोषः साधारणाभिमानतः" सा॰द॰ । मिथ्याज्ञानञ्च तदभाववति तत्प्रकारकं ज्ञानं यथा देहे आत्मत्वबुद्धिः आत्मनि च असतोऽप्युत्कर्षस्य ज्ञानम् । शुक्तिकायां रजतज्ञानम् मूर्खस्य पाण्डित्याभिमान इत्यादि । अभिमानश्चात्मधर्म इति वैशेषिकादयः । अन्तःकरणधर्म इति पातञ्जलादयो वेदान्तिनश्च । तत्र विपर्य्यासज्ञानमविद्या सा च बुद्धिधर्मः गर्वात्मकज्ञानम् अहङ्कारस्य वृत्तिभेदः । अहङ्काराभिमानवृत्तिकमन्तःकरणद्रव्यम्" सां॰प्र॰भा॰। अभिमानोऽहङ्कारः सा॰सू॰ "अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्त्तते सर्गः" सा॰का॰ अभिमानोऽहङ्कारः यत् खल्वालोचितं, मतञ्च तत्राहमधिकृतः शक्तः खल्वहमत्र, मदर्था एवामी विषयाः, मत्तो नान्योऽत्राधिकृतः कश्चिदस्त्यतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वादहङ्कारः तमुपजीव्य हि बुद्धिरध्यवस्यति कर्त्तव्यमेतन्मयेति" त॰कौ॰ । अन्तःकरणञ्च वृत्तिभेदात् त्रिविधमिति साङ्ख्यादयः" "मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम् । संशयो निश्चयोगर्वः स्मरणम् विषया इमे" इति चतुर्विधवृत्तिमत्त्वेन चतुर्विधं वेदान्तिनः स्वीचक्रुः । "न हि धनिनो गृहस्थस्य धनाभिमानिनो धनापहारनिमित्तं दुःखं दृष्टमिति तस्यैव प्रव्रजितस्य धनाभिमानरहितस्य तदेव धनापहारनिमित्तं दुःखं भवति । न हि कुण्डलिनः कुण्डलित्वाभिमाननिमित्तं सुखं दृष्टमिति तस्यैव कुण्डलवियुक्तस्य कुण्डलित्वाभिमानहीनस्य तदेव कुण्डलित्वनिमित्तं सुखं भवति" शा॰भा॰ । अभितोमानः । ८अहङ्काररसावस्थाभेदे । "विप्रलम्भोऽथ सम्भोग इत्येष द्विविधोमतः स

च पूर्व्वरागमानप्रवासात्मकचतुर्द्धा स्यात् । मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि” सा० द० अधिकं मानशब्दे । ८वैरनिर्यातने, “अभिमानधनस्य गत्वरैः” किरा० । अभिमानेन निर्वृत्तः ठक् । आभिमानिक अभिमानसाध्ये त्रि० ।

**अभिमानित** त्रि० अभिमानोगर्वोजातोऽस्य इतच् । जातगर्वे १जाताभिमाने अभि+मन+णिच्—आधारे क्त । २अभिमानसाधने मैथुने सुरते न० ।

**अभिमानिन्** त्रि० अभि+मन–णिनि स्त्रियां ङीप् । १गर्वयुक्ते २प्रणयकोपादियुक्ते च सौत्यस्य मनोः ३पुत्रभेदे पु० । “तरङ्गभीरुर्विप्रश्च तरस्वानुग्र एव च अभिमानी प्रवीणश्च जिष्णुः संक्रन्दनस्तथा । तेजस्वी सबलश्चैव सौत्यस्यैते मनोः सुताः, ह० वं० । ४मिथ्याज्ञानयुक्ते त्रि० । “अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्” शा० सू० । “यतोभिमानिव्यपदेश एषः । मृदाद्यभिमानिन्योवागाद्यभिमानिन्यश्चेतना देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते” शा० भा० ।

**अभिमानुक** त्रि० अभि+मन–वा० उकञ् । अभिमानशीले अभिमानश्च प्रागुक्तः बाधितुं शक्ते च । “अनक्ता एवखुरभिमानुकोरुद्रः पशूनुत्स्यात् यदक्त्वात्” शत० ब्रा० । “अभिमन्तु बाधितुं शक्तः स्यात्” भा० ।

**अभिमाय** त्रि० अभिगतोमायामविद्याम् अत्या० स० । इति कर्त्तव्यविमूढे अज्ञानेनैव लोकानां कर्त्तव्याकर्त्तव्येषु मोहः इति तद्गतत्वान्मूढत्वम् ।

**अभिमि(मे)ह्य** त्रि० अभि+मिह–वा० वेदे क्यप् लोके ण्यत् । यस्याभिमुखं मेहनं मलमूत्रत्यागः क्रियते तस्मिन् “यत्र मेक्ष्यन् भवति तत् कृष्णविषाणया लोष्टं वा किञ्चिद्वोपहन्त्योयं ते यज्ञिया तनूरिति इयं वै पृथिवी देवयजनी सा दीक्षितेन नाभिमिह्या” शत० ब्रा० ।

**अभिमुख** त्रि० अभिगतोमुखम् अत्या० स० । १सम्मुखतां गते “प्रसादाभिमुखो ब्रह्मा प्रत्युवाच दिवौकसः” कुमा० । “वानराभिमुखोऽगच्छद्रणे रणविशारदः” रामा० । “निद्रा चिरेण नयनाभिमुखीबभूव” । मुखशब्दस्य स्वाङ्गपरत्वे स्त्रियां वा ङीप् । अभिमुखीप्रतिमा अस्वाङ्गपरत्वे टाबेव अभिमुखा शाला । अभिगतं मुखं यस्य । तत्तत्कर्म्मकरणाय २प्रेरितमुखे उद्यते । “प्रातः प्रयाणाभिमुखाय तस्मै” “पुरः प्रवेशाभिमुखो बभूव” इति च रघुः । “युयोज पाकाभिमुखैः भर्त्तुर्विज्ञापनाफलैः” कु० । मुख मभिलक्षीकृत्य अव्य० । ३आभिमुख्ये अव्य० । “कथं ददात्यभिमुखं मयि भाषमाणे” अमरुशतकम् ।

**अभिमुखीकरण** न० न अभिमुखः अभिमुखः क्रियते अनेन अभिमुख+च्वि–कृ–करणे ल्युट् । व्याकरणोक्ते सम्बोधने । श्रुते हि सम्बोधनपदाद्युच्चारणे श्रोता अभिमुखो भवति इति तस्य तथात्वम् । “सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः । प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते” इति हर्य्युक्तदिशा अभिमतक्रियाप्रवर्त्तनाविषयबोधनस्यैव सम्बोधनपदार्थत्वात् प्रवर्त्तयितव्यस्य तत्राभिमुखीभावस्यावश्यकत्वाच्च तथात्वम् ।

**अभिमुखीभाव** पु० अनभिमुखस्य अभिमुखतया भावः । १आभिमुख्ये २ कार्य्योन्मुखतायाम् ३ तत्तत्क्रियोद्यमे च ।

**अभिमृष्ट** त्रि० अभि+मृश–मृष–वा क्त । १स्पृष्टे २धर्षिते ३मिलिते ४संसृष्टे च । मृज–क्त । कृतमार्जने त्रि० ।

**अभिमेथक** त्रि० अभि+मिथ–ण्वुल् । सर्वप्राप्तिसाधने वाक्यभेदे । स्त्रियां तु टापि अत इत्त्वम् । “सर्वाप्तिर्वा एषा वाचः यदभिमेथिका सर्व्वे कामाः अश्वमेधे सर्वया वाचा सर्वान् कामानाप्नवाम” शत० ब्रा० ।

**अभिम्लात** त्रि० अभि+म्ला–क्त । सर्व्वतोम्लाने । न० त० । अनभिम्लातः तस्यापत्यम् । शिवा० अण् । आनभिम्लातः अनभिम्लात इत्यपि नमध्यपाठः ।

**अभियाचन** न० अभि+याच+ल्युट् । अभिमुखप्रार्थने ।

**अभियाति** पु० अभिमुखं युद्धार्थं याति या–क्तिच् । १रिपौ भावे क्तिन् । २युद्धार्थमभिगमने स्त्री । [इनि । शत्रौ ।

**अभियातिन्** पु० अभियातमनेन अभि+या–भावे क्त इष्टा०

**अभियातृ** पु० अभिमुखं याति युद्धार्थम् अभि+या–तृच् । १शत्रौ, २अभिमुखगन्तृमात्रे त्रि० । स्त्रियां ङीप् ।

**अभियायिन्** त्रि० अभिमुखं याति या–णिनि । अभिमुखगन्तरि । “रामाभियायिनां तेषां तदेवाभूदमङ्गलम्” रघुः ।

**अभियुक्त** त्रि० अभि+युज–क्त । १परैः रुद्धे, २आसक्ते व्यवहारविषये ३प्रतिवादिनि च । “अभियुक्तोऽभियोगस्य यदि कुर्य्यादपह्नवम्” नार० । “अभियुक्तस्तु नान्येन नोक्तं विप्रकृतं नयेदिति” या० । ४पराक्रान्ते “नागाभियुक्त इव युक्तमहो महेभः” माघः । ५आप्ते दक्षतमे ।

**अभियुग्व(ग्वा)न्** त्रि० अभि+युज–क्वनिप् वेदे पृ० कुत्वम् । अभियोक्तरि “स रथेन रथीतमोऽस्माकेनाभियुग्वना” ऋ० ६,४५,१५ लोके तु अभियुज्वा । स्त्रियां ङीप् वनोरश्च ।

**अभियुज्** त्रि० अभिमुखं युनक्ति अभि+युज–क्विप् । अभि-

योक्तरि "आभिर्विश्वा अभियुजो विषूचीः" ऋ० ६।२५।२।

**अभियोक्तव्य** त्रि० अभि+युज-तव्य। निषेध्ये "न स राज्ञाभियोक्तव्यः स्वकं संसाधयन् धनम्" मनुः। व्यवहारे यं प्रति अभियोगः कर्त्तुं शक्यते २ तस्मिन् प्रतिवादिनि अभिमुखं ३योजनीये च।

**अभियोक्तृ** त्रि० अभि+युज-तृच्। १व्यवहारे—अपराधयोजनकर्त्तरि वादिनि, स्त्रियां ङीप् "अभियोक्ता दिशेद्देश्यं करणं वान्यदुद्दिशेत्"। "अभियोक्ता न चेत् ब्रूयाद्बध्यो दण्ड्यश्च धर्म्मतः" इति च मनुः २युद्धार्थमाक्रामिणि च।

**अभियोग** पु० अभि+युज-घञ्। अन्यकृतस्य निजधर्षणस्य न्यायाय १विज्ञापने, (नालिश) अभियोगो द्विविधः "अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः। शङ्काऽसतान्तु संसर्गात् तत्त्वं होढ़ाभिदर्शनात्" नारदोक्तेः। "अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत्" या० २युद्धार्थमाक्रमे, ४शपथे, ५उद्योगे, ६आग्रहे "सन्तः स्वयं परहितेषु कृताभियोगाः नीति० ७अपचिकीर्षयाक्रमणे, "सम्प्रापदप्राप्तपराभियोगम्" कुमा० ८अभिनिवेशे "मयाभियोगं मनसः प्रसादं समापयस्वात्मगुणेन कामम्" रामा० ९अपचिकीर्षयानिरोधे। "क्षुभितं वनगोचराभियोगादिति" किरा०।

**अभियोगिन्** त्रि० अभि+युज-घिनुण्। १अभियोगकर्त्तरि वादिनि "मिथ्याभियोगी दण्ड्यः स्यात् विवादात् द्विगुणं दमम्" या०। २आक्रमकर्त्तरि, ३आग्रहयुक्ते, ४अभिनिविष्टे, ५योजनकर्त्तरि च।

**अभियोजन** न० भृशं योजनम्। योजितस्य दार्ढ्यार्थं पुनर्योजने "अभियोजनं नाम युक्तस्य पुनर्योजनमिति" माध०।

**अभिरक्षण** न० अभितो रक्षणम्। मन्त्रादिना सर्व्वतः श्वेतसर्षपादिविक्षेपैः यातुधानादिभ्यो १ रक्षणे २ सर्व्वतो रक्षणे चाभावे अ। अभिरक्षाप्यत्र स्त्री। "प्रयान्तबाधं दिगतोऽभिरक्षया" किरा०।

**अभिरक्षित** त्रि० अभितोरक्षितः। सर्व्वतोरक्षिते।

**अभिरक्षितृ** त्रि० अभितोरक्षति तृच् स्त्रियां ङीप्। सर्व्वतो रक्षके "वर्णानामाश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता" मनुः

**अभिरत** त्रि० अभिमुखतया भृशं वा रतः। १अत्यन्तासक्ते २अभिमुखतया रते च।

**अभिरति** स्त्री अभितो रतिः प्रा०स०। आसक्तौ "न मृगयाभिरतिर्न दुरोदरम्" रघुः। [मनोरमे।

**अभिरम्य** त्रि० अभिरमते भृशं रमतेऽत्र आधारे यत्।

**अभिराज्** त्रि० अभितो राजते अभि+राज+क्विप्। १ अधिकदीप्तिशीले २ अधीश्वरे च।

**अभिराद्ध** त्रि० अभि+राध-क्त। सेविते।

**अभिराम** पु० अभिरम्यतेऽस्मिन् रम+आधारे घञ्। १ सुन्दरे २ प्रिये, ३ मनोहरे च। "श्रोत्राभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः" "श्रोत्राभिरामध्वनिना रथेन" "वक्षाक्रान्ते नयनाभिरामः" इति च रघुः "ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः" शकु०। "राम इत्यभिरामेण वपुषा तस्य नोदितः" रघुः।

**अभिरुचि** पु० भृशा अत्यन्ता रुचिः प्रा०स०। १ अत्यन्तरुचौ

**अभिरूप** त्रि० अभिरूपयति सर्वं स्वात्मकं करोति चु० रूप-अच्। १ शिवे, २ विष्णौ च। अभिरूपयति निरूपयति। ३ पण्डिते। उत्कृष्टं रूपं यस्य। ४ कन्दर्पे, ५ चन्द्रे च। ६ मनोहरे त्रि०। "उत्कृष्टायाभिरूपाय वराय सदृशाय च" मनुः। "अभिरूपगुणभूयिष्ठा परिषत्" शकु० ७ अनुरूपे त्रि० "काममनभिरूपमस्या वयसो वल्कलम्" शकु०। अभिरूपस्य भावः मनोज्ञा० वुञ् आभिरूपकम् ष्यञ् आभिरूप्यञ्च सौन्दर्य्यादौ न०। "अर्च्चकस्य तपोयोगादर्च्चनस्यातिशायनात्। आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति" ति०त०पु०।

**अभिलक्ष्य** त्रि० अभिलक्ष्यते उद्दिश्यते अभि+लक्ष ण्यत्। १उद्देश्ये। लक्ष्यस्य शरव्यस्याभिमुख्यम् अव्ययी०। २शरव्याभिमुख्ये अव्य०। "शब्दं प्रतिगजस्येषुरभिलक्ष्यमपातयत्" रघुः। ल्यप्। ३लक्षीकृत्येत्यर्थे अव्य०।

**अभिलङ्घन** न० अभि+लघि—भावे ल्युट्। उल्लङ्घने। "तथा त्वमेव भूतानां सागरस्याभिलङ्घने" रामा०।

**अभिलषणीय** त्रि० अभि+लष-कर्म्मणि अनीयर्। काम्ये। एष्टव्ये। तव्य। अभिलषितव्योऽप्यत्र त्रि०।

**अभिलषित** त्रि० अभि+लष—कर्म्मणि क्त। १ इष्टे अभिलाषविषये। भावे क्त। २अभिलाषे इच्छायाम् न०।

**अभिलाप** पु० अभिलप्यते मनःसंकल्पोऽनेन। १ मनःसंकल्पावेदके अहमिदं करिष्ये इत्यादिरूपे वाक्ये "काम्ये हि कामाभिलापसहितकुशजलतिलत्यागरूपः सङ्कल्पः कार्य्य इति प्रा०त० प्रक्रमाधिकरणम्। २ आत्मीयज्ञानाकारोल्लेखिवाक्ये च यथा भूतले घटाभाववदिति ज्ञानावेदकं घटोनास्तीति वाक्यं यथा च अयं घट इति ज्ञानोत्तरमनुव्यवसायात्मकज्ञानस्यावेदकं घटमहं जानामीति वाक्यम् "न निर्विकल्पकं ज्ञानं तस्य यादृकमिष्यते तथाऽभिलाप-

संसर्गयोग्यत्वविरहाच्च सविकल्पकज्ञानवेद्यानां हि वचन-प्रयोगयोग्यता न तु स्वस्येति" सा०द० । कथने च "तद-भावाभिलापाच्च" शा०सू० ।

**अभिलाव** पु० अभि+लू-घञ् । छेदने ।

**अभिलाष(स)** पु० अभि+लष(स)-घञ् । १इच्छायां, २लोभे च । अभेरिच्छाद्योतकत्वात् तदुपसृष्टलसेरिच्छार्थत्वम् । "अतोऽभिलाषे प्रथमं तथाविधे" इति रघुः मानुषामनुज-व्याघ्र ! साभिलाषाः सुतान् प्रति" देवीभा० । "न खलु सत्यमेव शकुन्तलायां ममाभिलाषः" शकु० ।

**अभिलाषक** त्रि० अभि+लष-ण्वुल् । १ अभिलाषयुक्ते ।

**अभिलाषिन्** त्रि० अभि+लष-णिनि स्त्रियां ङीप् । अभि-लाषशीले "जलाभिलाषी जलमाददानाम्" "अगच्छदंशेन गुणाभिलाषिणी" इति च रघुः "असंशयं क्षत्रपरिग्रह-क्षमा यदार्य्यमस्यामभिलाषि मे मनः" शकु० ।

**अभिलाषुक** त्रि० अभि+लष-उकञ् । अभिलाषशीले, "जयमत्र भवान्नूनमरातिष्वभिलाषुकः" किरा० ।

**अभिवदन** न० अभिरानुकूल्ये अनुकूलं वदनं कथनम् । १आनुकूल्यार्थकथने अभिवादने । वदनस्य मुखस्या-भिमुख्यम् अव्ययी० । २मुखस्याभिमुख्ये अव्य० ।

**अभिवन्दन** न० अभितः सर्वतोऽभिमुखे वा वन्दनम् । १सर्वतोनतिकरणे २ अभिमुखप्रणामे च । "उभयोरेव शि-रसा चक्रे पादाभिवन्दनम्" रामा० ।

**अभिवयस्** त्रि० अभिनवं श्रेष्ठं वयोऽस्य प्रा०ब० । प्रकृष्ट-वयस्के "तीव्रस्याभिवयसो अस्य पाहि" ऋ०१०,१६०,१ ।

**अभिवर्त्तिन्** त्रि० आभिमुख्येन वर्त्तते अभि+वृत-णिनि स्त्रियां ङीप् । १ अभिमुखे वर्त्तमाने "कल्पन्तां च रणा-र्थाय मृत्युकालाभिवर्त्तिनः" रामा० ।

**अभिवर्षक** त्रि० अभितोवर्षकः । १ सर्वतोवर्षणकर्त्तरि ।

**अभिवर्षण** न० अभितोवर्षणम् । सर्वतोवर्षणे ।[सर्वतोवर्षके ।

**अभिवर्षिन्** अभितोवर्षति अभि+वृष-णिनि स्त्रियां ङीप् ।

**अभिवात्** त्रि० आभिमुख्येन वाति गच्छति वा-शतृ स्त्रियां ङीप् । १अनुचरे, २"अभिवातमभिभूत्यै रूपम्" शत०ब्रा० ।

**अभिवाद** पु० अभि+चु०वद-भावे अच् । १अभितः प्रणामे-"प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते" इति "नामधेयस्य ये केचिदभिवादं न जानते" इति च मनुः

**अभिवादक** त्रि० अभि+चु०वद-ण्वुल् । १ आभिमुख्येन नतिकारके । "आयुष्मान् भव सौम्येति वाच्योविप्रोऽभि-वादकः (ने) मनुः ।

**अभिवादन** न० अभिमुखीकरणाय वादनं वदनम् चु०-वद-ल्युट्, अभिमुखं वाद्यते आशीरनेन वद-णिच्-ल्युट् वा । १नामग्रहणपूर्व्वकनतौ २पादग्रहणेन वाचा वा नतौ । तत् प्रकारो यथा "ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि संप्रवर्द्धन्ते आयुर्विद्या यशो बलम् ॥ अभिवादात् परं विप्रो ज्यायांस-मभिवादयन् । असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत् ॥ नामधेयस्य ये केचिदभिवादं न जानते । तान् प्राज्ञोऽह-मिति ब्रूयात् स्त्रियः सर्वास्तथैव च ॥ भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नां स्वरूपभावोहि भोभाव ऋषिभिः स्मृतः ॥ आयुष्मान् भव सौम्येति वाच्यो विप्रो-ऽभिवादकः (ने) । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वा-क्षरप्लुतः ॥ यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् । भोभवत्पूर्व्वकं त्वेनमभिभाषेत धर्मवित् ॥ परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः । तां ब्रूया-द्भवतीत्येवं सुभगे ! भगिनीति च ॥ मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् । असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥ मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा । संपूज्या गुरुपत्नीवत् समास्ता गुरुभार्य्यया ॥ भ्रातुर्भार्य्यो-पसंग्राह्या सवर्णाहन्यहन्यपि । विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥ पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्य्यपि मातृवद्वृत्तिमातिष्ठेत् माता ताभ्यो गरीयसी ॥ दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कलाभृताम् । त्र्यब्द-पूर्व्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥ ब्राह्मणं दश-वर्षन्तु शतवर्षन्तु भूमिपम् । पितापुत्रौ विजानीयाद्-ब्राह्मणस्तु तयोः पिता ॥ वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद्यदु-त्तरम् ॥ पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च । यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥ चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः । स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥ तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ । राजस्नातकयोश्चैव स्नातको नृपमानभाक्" इति मनुः "राजर्त्विक्श्रोत्रियाधर्मप्रतिषेध्युपाध्यायपितृव्य मातामहमातुलश्वशुरज्येष्ठभ्रातृसम्बन्धिनश्चाचार्य्यवत् । पत्न्य

एतेषां सवर्णाः। मातृष्वसा पितृष्वसा ज्येष्ठा स्वसा च। श्वशुरपितृव्यमातुलर्त्विजां कनीयसां प्रत्युत्थानमेवाभिवादनम्। हीनवर्णानां गुरुपत्नीनां दूरादभिवादनं न पादोपसंस्पर्शनम्। गुरुपत्नीनां गात्रोत्सादनाञ्जनकेशसंयमनपादप्रक्षालनं न कुर्य्यात्" विष्णुः। "पादोपसंग्रहणं गुरुसमवायेऽन्वहम्। अभिगम्य तु विप्रोष्य मातापितृतद्बन्धूनां पूर्व्वजानां विद्यागुरूणां तत्तद्गुरूणाञ्च सन्निपाते परस्य। नाम प्रोच्याहमयमित्यभिवादोऽज्ञसमवाये स्त्रीपुंयोगेऽभिवादतोऽनियममेके न विप्रोष्य स्त्रीणाममातृपितृव्यभार्य्याभगिनीनां, नोपसंग्रहणं भ्रातृभार्य्याणां श्वश्र्वाश्च। ऋत्विक्श्वशुरपितृव्यमातुलानान्तु यवीयसां प्रत्युत्थानमनभिवाद्यास्तथान्यः पूर्व्वः पौरोऽशीतिकावरः शूद्रोऽप्यपत्यसमेनावरोऽप्यार्य्यः शूद्रेण नाम चास्य वर्जयेद्राजन्यश्चाजपः प्रेष्योभोभवन्निति वयस्यः समानेऽहनि जातो दशवर्षवृद्धः पौरः पञ्चभिः कलाभरः श्रोत्रियश्चारणस्त्रिभिः राजन्योवैश्यः कर्मविद्याहीनो दीक्षितस्य प्राक्क्रयात्। वित्तबन्धुकर्मजातिविद्यावयांसि मान्यानि परबलीयांसि श्रुतन्तु सर्व्वेभ्योगरीयस्तन्मूलत्वाद्धर्मस्य श्रुतेः" गौत॰। अनभिवाद्याश्च "समिद्धार्य्युदकुम्भपुष्पान्नहस्तोनाभिवादयेद्यच्चाप्येवंयुक्तमिति" बौधायनः। "जपयज्ञजलस्थञ्च समित्पुष्पकुशानलान् दन्तकाष्ठञ्च भक्ष्यञ्च वहन्तं नाभिवादयेदिति" लघुहारीतः। अन्यत्रापि। "समित्पुष्पकुशाज्याम्बु-मृदन्नाक्षतपाणिकः। जपं होमञ्च कुर्वाणोनाभिवाद्यो द्विजो भवेदिति" च।

**अभिवाद्य** त्रि॰ अभिवादयितुमर्हः यत्। १ अभिवादनार्हे अभिवाद्याश्चाभिवादनशब्दे उक्ताः। "गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः" मनुः। ल्यप्। २ अभिप्रणम्येत्यर्थे अव्य॰।

**अभिवान्य** त्रि॰ अभि+वन-संभक्तौ कर्म्मणि ण्यत्। संभजनीये। "अभिवान्यवत्सायाः प्रजुहुयात्" श्रुतिः।

**अभिवासस्** अव्य॰ वासस उपरि अव्ययी॰। परिहितवस्त्रस्योपरिभागे "स वा अभिवासः संनह्यति" शत॰ब्रा॰। "परिहितस्य वस्त्रस्य उपरि" भा॰।

**अभिवाह्य** अभि++वह-ण्यत्। १ अभितो वहनीये। भावे ण्यत्। २ वहने न॰ "हव्यकव्याभिवाह्याय सर्व्वस्यास्य च गुप्तये" इति मनुः।

**अभिविधि** पु॰ अभितो विधिर्व्याप्तिः। १ व्याप्तौ, मर्य्यादायां हि अवधिभूतं विहाय तत्तत्कार्य्यान्वयः अभिविधौ तु अवधिसहिते कार्य्यान्वय इति तस्य व्यापकता अतएवोक्तम् "मर्य्यादाभिविधिसन्देहे कार्य्यान्वितत्वादभिविधेर्ग्रहणमित्यभियुक्तैः। "आङ् मर्य्यादाभिविध्योः" पा॰। "अभिविधौ भाव इनुण्" पा॰ "मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः। य आकारः स ङित् प्रोक्तः" मु॰बो॰।

**अभिविमान** पु॰ परमात्मनि, "यस्त्वेनं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते" इति छा॰उ॰। एतस्य निरुक्तिः शा॰ भाष्ये दर्शिता। प्रत्यगात्मतया सर्व्वैः प्राणिभिरभिविमीयत इति अभिविमानः। अभिगतो वाऽयं प्रत्यगात्मत्वात्, विमानश्च मानवियोगादित्यभिविमानः। अभिविमीते वा सर्व्वं जगत्कारणत्वादित्यभिविमानः" इति।

**अभिइति** स्त्री अभि+इन्-क्तिन्। अभिगमने "स्वर्गस्य नो तस्याभिइत्यै" ता॰ब्रा॰ "अभिइत्यै अभिगमनाय" भा॰

**अभिव्यक्त** त्रि॰ अभि+वि+अन्ज-कर्म्मणि क्त। १ अभिव्यक्तियुक्ते २ सांख्यादिमते आविर्भावयुक्ते "तत्र दैवमभिव्यक्तं पौरुषम् पौर्व्वदेहिकम्" पु॰ अभिव्यक्तमाविर्भूतं फलदानोन्मुखम्" रघु॰

**अभिव्यक्ति** स्त्री अभि+वि-अन्ज-क्तिन्। १ प्रकाशे सूक्ष्मरूपेण स्थितस्य ("कारणात्मना स्थितस्य) कारणस्य २ कार्य्यरूपेणाविर्भावे। सांख्यपातञ्जलादिमते हि उत्पत्तेः प्राक् कार्य्यं सत् कारणव्यापारेण व्यज्यते यथोक्तम्। सांख्यसूत्रे। "त्रिविधविरोधापत्तेश्च"। "अथ सर्व्वं कार्य्यं त्रिविधं सर्व्ववादिसिद्धमतीतमनागतं वर्त्तमानमिति। तत्र यदि कार्य्यं सदा सन्नेष्यते तदा त्रिविधत्वानुपपत्तिः। अतीतादिकाले घटाद्यभावेन घटादेरतीतादिधर्म्मकत्वानुपपत्तेः सदसतोः सम्बन्धानुपपत्तेः। किञ्च प्रतियोगित्वस्य प्रतियोगिरूपत्वे तद्दोषतादवस्थ्यात्। अभावमात्रस्वरूपत्वे घटाद्यभावो घटाद्यभावः स्यादभावत्वाविशेषात्। अभावेऽपि स्वरूपतो विशेषाङ्गीकारे चाभावत्वस्य परिभाषामात्रत्वप्रसङ्गात्। अथ प्रतियोग्येवाभावविशेषक इति चेन्न असतः प्रतियोगिनः प्रागभावादिषु विशेषकत्वासम्भवादिति। तस्मान्नित्यस्यैव कार्य्यस्यातीतानागतवर्त्तमानावस्थाभेदा एव वक्तव्याः। घटोऽतीतो घटो वर्त्तमानो घटो भविष्यन्निति प्रत्ययानां तुल्यरूपतौचित्यात्। न त्वेकस्य भावविषयत्वमन्ययोश्चाभावविषयत्वमिति। ते एवातीतानागतत्वे अवस्थे ध्वंसप्रागभावव्यवहारं जनयतस्तदतिरिक्ताभावद्वये प्रमाणाभावादिति एवमत्यन्ताभावान्योन्याभावावप्यधिकरणस्वरूपावेव। न चैवं प्रतियोगिसत्ताकालेऽप्यधिकरणस्वरूपानपायादत्यन्ताभावप्रत्ययप्रसङ्ग इति वाच्यम् परैरपि प्रतियोगिसति देशे तदत्यन्ताभावाङ्गीकारात्। प्रतियोगिसम्बन्धस्यातीतानागतावस्थयोरेव

सामयिकात्यन्ताभावत्वसम्भवाच्च । तस्मात्साङ्ख्यसिद्धान्तेऽभावो-ऽतिरिक्तः किन्तु घटो ध्वस्तो घटो भावी घटोऽत्र नास्ती-त्यादिप्रत्ययनियामकतया किञ्चिद्वस्त्वाकाङ्क्षायां तद्भावरूप-मेव कल्प्यते लाघवात् । अभावस्यादृष्टस्य कल्पने गौरवा-दिति" प्र०भा० ॥ "नासदुत्पादो नृशृङ्गवत्" सू०॥ नरशृङ्ग-तुल्यस्यासत उत्पादोऽपि न सम्भवतीत्यर्थः ॥ "उपादाननिय-मात्" सू०॥ मृद्येव घट उत्पद्यते तन्तुष्वेव पट इत्येवं कार्य्याणामुपादानकारणं प्रति नियमोऽस्ति । स न सम्भवति उत्पत्तेः प्राक् कार्य्यासत्तायां हि न कोऽपि कारणे विशेषो-ऽस्ति येन कश्चिदेवासन्तं जनयेन्नेतरमिति । विशेषाङ्गी-कारे च भावत्वापत्तेर्गतमसत्तया । स एव च विशेषोऽ-स्माभिः कार्य्यस्यानागतावस्थेत्युच्यत इति । एतेन यद्वैशे-षिकाः प्रागभावमेव कार्य्योत्पत्तिनियामकं कल्पयन्ति तद-प्यपास्तम् । अभावकल्पनापेक्षया भावकल्पने लाघवात् । भावानां दृष्टत्वादन्यानपेक्षत्वाच्च । किञ्चाभावेषु स्वतो विशेषे भावत्वापत्तिः । प्रतियोगिविशेषश्च प्रतियोग्यसत्ता-काले नास्ति । अतोऽभावानामविशिष्टतया न कार्य्योत्पत्तौ नियामकत्वं युक्तमिति ॥ "शक्तस्य शक्यकरणात्" सू०॥ कार्य्य-शक्तिमत्त्वमेवोपादानकारणत्वम् अन्यस्य दुर्वचत्वात् लाघ-वाच्च । सा शक्तिः कार्य्यस्यानागतावस्थैवेत्यतः शक्तस्य शक्य-कार्य्यकरणाच्चासत उत्पाद इत्यर्थः ॥ "कारणभावाच्च" सू० उत्पत्तेः प्रागपि कार्य्यस्य कारणाभेदः श्रूयते तस्माच्च सत्कार्य्यसिद्धा नासदुत्पाद इत्यर्थः । कार्य्यस्यासत्त्वे हि सदसतोरभेदानुपपत्तिरिति । उत्पत्तेः प्राक् कार्य्याणां कारणाभेदे च श्रुतयः । "तद्धेदं तर्ह्यव्याकृतमासीत् । सदेव सौम्येदमग्र आसीत् । आत्मैवेदमग्र आसीत् । आप एवे-दमग्र आसुरित्याद्याः ॥ "न भावे भावयोगश्चेत्" सू०॥ नन्वेवं कार्य्यस्य नित्यत्वे सति भावरूपे कार्य्ये भावयोग उत्-पत्तियोगो न सम्भवति असतः सत्त्व एवोत्पत्तिव्यवहारा-दिति चेदित्यर्थः ॥ "नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यव-हारौ" सू०॥ कार्य्योत्पत्तेर्व्यवहाराव्यवहारौ कार्य्याभिव्यक्ति-निमित्तकौ । अभिव्यक्तिरेव उत्पत्तिव्यवहारोऽभिव्यक्त्यभा-वाच्चोत्पत्तिव्यवहाराभावः न त्वसतः सत्तयेत्यर्थः । अभिव्यक्तिश्च न ज्ञानं किन्तु वर्त्तमानावस्था । कारणव्या-पारोऽपि कार्य्यस्य वर्त्तमानलक्षणपरिणाममेव जनयति । सतश्च कार्य्यस्य कारणव्यापारादभिव्यक्तिमात्रं लोकेऽपि दृश्यते । यथा शिलामध्यस्थप्रतिमाया टाङ्किकव्यापारेणा-भिव्यक्तिमात्रं तिलस्थतैलस्य च निष्पीडनेन, धान्यस्थतण्डु-

लस्य चावघातेनेति । तदुक्तं वाशिष्ठे । "सुषुप्तावस्थया चक्रपद्मरेखाः शिलोदरे । यथा स्थिताश्चितेरन्तस्तथेयं जगदावली" ॥ एतेषामिवास्माकमप्यनागतावस्थायाः प्रागभा-वाख्याया अभिव्यक्तिहेतुत्वाच्चेति । नन्वतीतमप्यस्तीत्यत्र किं प्रमाणं ? न ह्यनागतसत्तायामिव सुखादयोऽतीतसत्ता-यामपि स्फुटमुपलभ्यन्त इति । मैवम् । योगिप्रत्यक्षस्या-न्यथानुपपत्त्यानागतातीतयोरुभयोरेव सत्त्वसिद्धेः प्रत्यक्ष-सामान्ये विषयस्य हेतुत्वात् । अन्यथा वर्त्तमान-स्यापि प्रत्यक्षेणासिद्ध्यापत्तेः । तस्माद्बियामौत्सर्गिकप्रामा-ण्येनासति बाधके योगिप्रत्यक्षेणातीतमप्यस्तीति सिद्ध्यति योगिनामतीतानागतप्रत्यक्षे च श्रुतिस्मृतीतिहासादिकं प्रमाणं योगवार्त्तिके प्रपञ्चितमिति । नन्वभिव्यक्तिरपि पूर्व्वं सती वाऽसती वा । आद्ये कारणव्यापारात् प्रागपि कार्य्य-स्याभिव्यक्त्या स्वकार्य्यजनकत्वापत्तिः कारणव्यापारश्च विफलः । अन्त्ये चाभिव्यक्तावेव सत्कार्य्यसिद्धान्तक्षतिः असत्या एवाभिव्यक्तेरभिव्यक्त्यङ्गीकारादिति कथोच्यते । कारणव्यापारात् प्राक् सर्व्वकार्य्याणां सदासत्त्वाभ्युपगमेनो-क्तविकल्पानवकाशाद्घटवत् तदभिव्यक्तेरपि वर्त्तमानावस्थया प्रागसत्त्वेन तदसत्तानिवृत्त्यर्थं कारणव्यापारापेक्षणात् । अनागतावस्थया च सत्कार्य्यसिद्धान्तस्याक्षतेः । नन्वेकदा सदसत्त्वयोर्विरोध इति चेत् । प्रकारभेदस्योक्तत्वात् । नन्वेवमपि प्रागभावानङ्गीकारेण प्रागसत्त्वमेव कार्य्याणां दुर्वचमिति । मैवम् । अवस्थानामेव परस्पराभावरूपत्वा-दिति ॥ ननु सत्कार्य्यसिद्धान्तरक्षार्थमभिव्यक्तेरप्यभिव्यक्ति-रेष्टव्येत्यत आह । "पारम्पर्य्यतोऽन्वेषणा बीजाङ्कुरवत्" सू०॥ पारम्पर्य्यतः परम्पराक्रमेणैवाभिव्यक्तेरनुधावनं कर्त्तव्यम् बीजाङ्कुरवत् प्रामाणिकत्वेन चास्या अदोषत्वादित्यर्थः । बीजा-ङ्कुराभ्यां चात्रायमेव विशेषो यद्बीजाङ्कुरस्थले क्रमिकपरम्पर-यानवस्था, अभिव्यक्तौ चैककालीनपरम्परयेति । प्रामाणि-कत्वन्तु तुल्यमेवेति । सर्व्वकार्य्याणां स्वरूपतो नित्यत्वमव-स्थाभिर्विनाशित्वं चेति पातञ्जलभाष्ये वदद्भिर्व्यासदेवैरपीय-मनवस्था प्रामाणिकत्वेन स्वीकृतेति । "उत्पत्तिवद्वाऽदोषः" सू०॥ यथा घटोत्पत्तेरुत्पत्तिः स्वरूपमेव वैशेषिकादिभि-रसदुत्पादवादिभिरिष्यते लाघवात् तथैवास्माभिर्घटाभिव्यक्ते-रप्यभिव्यक्तिः स्वरूपमेवेष्टव्या लाघवात् । अत उत्पत्तावि-वाभिव्यक्तावपि नानवस्थादोष इत्यर्थः । अथैवमभिव्यक्तेर-भिव्यक्त्यनङ्गीकारे कारणव्यापारात् प्राक् तस्याः सत्त्वानु-पपत्त्या सत्कार्य्यवादक्षतिरिति चेन्न । अस्मिन् पक्षे सत

यथाभिव्यक्तिरित्येव सत्कार्यसिद्धान्त इत्याशयात्। अभिव्यक्तेश्चाभिव्यक्त्यभावेन तस्याः प्रागसत्त्वेऽपि नासत्कार्यवादत्वापत्तिः। नन्वेवं महदादीनामेव प्रागसत्त्वमिष्यतां किमभिव्यक्त्याख्यावस्थाकल्पनेनेति चेन्न। तद्धेदं तर्ह्यव्याकृतमासीदित्यादि श्रुतिभिरव्यक्तावस्थायाः सतामेव कार्याणां सिद्धेः तथाप्यभिव्यक्तेः प्रागभावादिस्वीकारापत्तिरिति चेन्न। तिसृणामनागताद्यवस्थानामन्योऽन्यस्याभावरूपतयोक्तत्वात् तादृशाभावनिवृत्तय एव च कारणव्यापारसाफल्यादिसम्भवात्। अयमेव हि सत्कार्यवादिनामसत्कार्यवादिभ्यो विशेषो यत् तैरुच्यमानौ प्रागभावध्वंसौ सत्कार्यवादिभिः कार्यस्यानागतातीतावस्थे भावरूपे प्रोच्येते। वर्त्तमानताख्या चाभिव्यक्त्यवस्था घटाद्यतिरिक्तेति घटादेरवस्थात्रयवत्त्वानुभवादिति। अन्यत्तु सर्वं समानम्। अतो नास्यख्यास्वधिकशङ्कावकाश इति सां० प्र०भा०। "अतः सिद्धं प्राक् कार्य्योत्पत्तेः कारणसद्भावः। कार्य्यस्य चाभिव्यक्तिलिङ्गत्वात् अभिव्यक्तेः कार्य्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः। कथम्? अभिव्यक्तिलिङ्गत्वात्। अभिव्यक्तिलिङ्गमस्येत्यभिव्यक्तिश्च साक्षाद्विज्ञानालम्बनत्वप्राप्तिः। यद्धि लोके प्रावृतं तमआदिना घटादि वस्तु तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत् प्राक् सद्भावं न व्यभिचरति। तथेदमपि जगत् प्रागुत्पत्तेरित्यवगच्छामः न ह्यविद्यमानो घट उदितेऽप्यादित्ये उपलभ्यते" वृ०भा०। २ अन्यथा स्थितस्य अन्यरूपेण प्रकाशे "अभिव्यक्तेरित्याश्मरथ्यः" शा०सू०। अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् अभिव्यज्यते किल प्रादेशपरिमाणः परमेश्वर उपासकानां कृते, प्रदेशेषु वा हृदयादिषु प्राणविज्ञानस्थानेषु विशेषेणाभिव्यज्यते ततः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्य्यो मन्यते" इति भा०।

**अभिव्यञ्जक** त्रि० अभिव्यञ्जयति प्रकाशयति अभि+वि+अन्ज–णिच्–ण्वुल्। प्रकाशके आलङ्कारिकप्रसिद्धव्यञ्जनया वृत्त्या प्रकाशके च गुणाभिव्यञ्जकौ शब्दार्थौ "गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि रसाभिव्यञ्जकत्वेन उपचारत" इति च सा०द०।

**अभिव्यापक** त्रि० अभि+वि+आप–ण्वुल्। अभितोव्यापके सर्वावयवावच्छेदेन व्यापके यथा वृक्षादेराकाशसंयोगः, कपिसंयोगादिस्तु नैवं तस्य स्वाधिकरणे एक एव मूलावच्छेदेनासत्त्वात्। वैयाकरणोक्ते सर्वथा व्यापकतावति आधारभेदे "औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा" सि०कौ०। यथा सर्वस्मिन् ब्रह्मास्ति"।

**अभिव्याप्ति** स्त्री अभि+वि+आप–भावे क्तिन्। १ अभितोव्याप्तौ सर्वावयवावच्छेदेन व्याप्तौ। व्याप्तिशब्दे विस्तरः।

**अभिव्याप्य** त्रि० अभि+वि+आप–कर्मणि ण्यत्। १ सर्वावयवावच्छेदेन १ व्याप्ये। ल्यप्। २ सर्वतो व्याप्येत्यर्थे अव्य०। "अभिव्याप्याकर्षणमपवर्गे" इति मुग्ध०।

**अभिव्याहार** पु० अभि+वि+आ+हृ–घञ्। १ प्रयुक्तोक्तौ २ अभितः कथने व्याङुपसर्गयुक्तस्य हरतेः कथनार्थत्वादभियोगात्तस्यैव सम्यक्त्वार्थता। अतएव "ऋचं वा यजुर्वा साम वाऽभिव्याहरतीति" शत०ब्रा० "नाभिव्याहारयेत् ब्रह्म स्वधानिनयनादृते" मनौ च तथार्थे एव अभिव्याहरतेः प्रयोगः। समुपसर्गयोगे तु साहित्येऽस्य रूढिः।

**अभिवृङ्ग** पु० अभि+वृगि–गतौ घञ्। अभिगमने "यासां तिस्रः पञ्चाशतोभिवृङ्गैरपायत" ऋ० १,११२,४। "अभिवृङ्गैरभिगमनैः वृङ्गतिर्गतिकर्म्मेति" भा०।

**अभिशंसन** न० आभिमुख्येन शंसनमाक्रोशवचनं वाऽपवादश्च। १ समक्षमाक्रोशरूपे पारुष्यकथने १ अयं चौर" इत्यादिना २ मिथ्यापवादे च "शतं ब्राह्मणमाक्रुश्य" "उपक्रम्य" "पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने इति वाक्पारुष्ये "अभिशंसनप्रयोगात्तयोस्तुल्यार्थत्वम् "स्वभार्य्यान्तु यदा क्रोधादगम्येति नरो वदेत्" या० व्याख्यायां स्वभार्य्याभिशंसनमिति विज्ञानेश्वरेणोक्तम्। ३ आभिमुख्येन कथनमात्रे च "शतं स्त्रीदूषणे दद्यात् द्वे तु मिथ्याभिशंसने" इति याज्ञ०।

**अभिशंसिन्** त्रि० अभि+शन्स–णिनि। १ समक्षमाक्रोशके २ अपवादवाक्यप्रयोक्तरि च "मिथ्याभिशंसिनो दोषो द्विगुणोऽनृतवादिन" इति या०।

**अभिशङ्का** स्त्री अभि+शङ्क-भावे अ। १ सर्वथा शङ्कने २ संशये ३ भ्रमे च। "उपेयुषो कल्पलताभिशङ्कया" किरा० "कल्पलताभिशङ्कया कल्पलताभ्रमेण" मल्लि०। संशयस्य स्थाणुर्वानरोवेति उभयकोटिज्ञानरूपत्वेऽपि तदीयायथार्थकोटिविषयत्वेन भ्रमस्य तदीयैकतरकोटिविषयकत्वात् तथात्वम्। अयन्तु मिथ्याभूतकोटिमेवावगाहते इति विशेषः। कर्त्तरि अच्। २ सर्वतः शङ्किते त्रि०।

**अभिशङ्कित** त्रि० अभि+शङ्क–क्त। १ सन्दिग्धे २ भ्रान्ते च।

**अभिशप्त** त्रि० अभि+शप–क्त। इदं तेऽनिष्टं भूयादित्येवं रूपस्य

गुरुविप्राद्यभिशापस्य उद्देश्ये । "न नाम पुरुषं कुर्यात् जनकस्य गुरोस्तथा । भार्य्याया अभिशप्तस्य कृपणस्य विशेषत" इति पुरा० । [२समवक्कथिते च ।

**अभिशब्दित** त्रि० आभिमुख्येन शब्दितः । १ समक्षमाहूते

**अभिशस्** त्रि० अभि+शन्स–क्विप् । अभिशंसनकर्त्तरि "यद्राशंसा निःशसाभिशसा" ऋ० १०,१६४,३ ।

**अभिशस्त** त्रि० अभि+शन्स–क्त । अयं परस्त्रियं गच्छतीत्यादिना मिथ्यावाक्येन मैथुनविषयकदोषारोपो यस्मिन् जने कृतः तस्मिन् । "अभिशस्तो मृषा कृच्छ्रं चरेदाग्नेयमेव वा" या० । "नियम्य प्रयतो वाचमभिशस्तांस्तु वर्ज्जयेत्" स्मृतिः । अभि+शस-वधे क्त । १हिंसिते २आक्रान्ते च त्रि० । "आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भये" मनुः । "अभिशस्तामाक्रान्तामिति" प्रा०त० रघु० । उभयतः भावे–क्त ४ आक्रोशे, ५ अपवादकथने ६हिंसने ७ अभिशापे च न० । "एतच्चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः । शापराधानपि हि तान् विषयान्ते समुत्सृजेत् अभिशस्तमपि ह्येषां कृपायीत विशाम्पते" । भा०शा०प० ।

**अभिशस्तक** त्रि० अभिशस्ते अभिशापे भवः कन् । वैद्यकोक्ते अभिशापजज्वरादौ "हता वै देवद्रोहाभिशस्तका अथर्वकृता उपसर्गकृताश्च" सुश्रुतः ।

**अभिशस्ति** स्त्री अभि+शन्स–क्तिन् । १ अभिशापे "उरुष्या णो अभिशस्तेः सोमः" ऋ० १,९१,१५ । अभिशस्तेरभिशापरूपाच्चिन्दनात्" भा० । २ अपशब्दे "इमां मिथ्याभिशस्तिञ्च कृष्णस्य समुदाहृताम्" हृ० वं० । अभि+शस वधे भावे क्तिन् । ३ हिंसायां "तितिक्षन्ते अभिशस्तिं जनानाम्" ऋ०३,३०,१ । "अभिशस्तिं हिंसाम्" भा० । शस्यते हिंस्यतेऽनेन करणे क्तिन् । ४हिंसाहेतौ, "पुरा तस्या अभिशस्तेरधीहि" ऋ० १,७१,१० "अभिशस्तेः हिंसाहेतोः" भा० । आभिमुख्येन शस्तिर्याचनम् । ५प्रार्थनायाम् । [शार्हे च

**अभिशस्य** त्रि० अभिशस्तिमर्हति यत् । १हिंसार्हे २आक्रो-

**अभि(भी)शाप** पु० अभि+शप–घञ् वा दीर्घः । १ मिथ्यापवादकथने २ आरोपितदोषकथने ३ अनिष्टं ते भूयादित्याक्रोशे च "वेद मिथ्याभिशापास्तं न स्पृशन्ति कदाचन" हृ०वं० ।

**अभिशिरोग्र** त्रि० शिरसोभिमुखमग्रं यस्य । १ ऊर्द्ध्व मूलाधोग्रे "ओषधे त्रायस्वैनमिति सप्त दर्भपिञ्जलीर्दक्षिणस्यां कपुष्णिकायामभिशिरोग्रा उपदधाति" शो० । अभिशिरोग्राः ऊर्द्ध्वमूलाधोग्राः सं०त०रघुनन्दनः ।

**अभिशोक** पु० अभिलक्ष्य शोकः । कञ्चिदभिलक्षीकृत्य कृते शोके । शुच–ल्युट् । अभिशोचनमप्यत्र न० ।

**अभिश्रा(श्र)व** पु० अभि+श्रु–अप् वेदे घञ् । अभितः श्रवणे "ऋतं दिवे तदवोचं पृथिव्यामभिश्रावाय" श्रुतिः ।

**अभिश्वैत्य** त्रि० अभितः श्वैत्यं शुक्लचारित्र्यादस्य । शुक्लचरिते "अदर्शिषमयक्ष्मानमभिश्वैत्येति व्याहरन्" भा०द्रो०प०

**अभिषङ्ग** पु० अभि+षञ्ज–घञ् । १ पराभवे, २ आक्रोशे, ३ शपथे, ४ व्यसने च "अभिषङ्गजडं विजज्ञिवानिति" रघुः "तीव्राभिषङ्गप्रभवेण वृत्तिम्" कुमा० "जाताभिषङ्गो नृपतिर्निषङ्गात्" "ततोऽभिषङ्गानिलविप्रविद्धा" "विनोदयिष्यन्ति नवाभिषङ्गाम्" इति च रघुः "नवाभिषङ्गां नूतनदुःखामिति" मल्लि० । ५आसक्तौ "सङ्गरिति वनविभ्रमाभिषङ्गात्" माघः ६भूताद्यावेशे अभिघाताभिषङ्गाभ्यामभिचाराभिशापतः" माधवनिदानम् ।

**अभिषव** पु० अभि+सु–अप् । १ यज्ञाङ्गस्नाने, २निष्पीड़ने, ३ सुरोत्पादनादिव्यापारे, ४ सोमलतापाने, ५ तत्कण्डने च "अङ्ग्रादानप्रभृति त्रिपर्य्यायानभिषवान् करोति" कात्या० १०,१,४ । "निर्यात्य राजानमभिषुण्वन्ति व्याख्यातोऽभिषव" इति कर्क० । "आप्यायनाभिषवाग्न्दाभ्येषु च" कात्या० ७,६,२८ । सर्वजित् महाव्रतः संवत्सरदीक्षः सप्ताहाभिषवस्तिस्र उपसदः कात्या० "संवत्सरादूर्द्धं सप्ताहेऽतीतेऽभिषवः सुत्या" कर्क० । ६स्नाने । "जपोपवासाभिषवैर्मुनीनाम्" किरा० । करणे अप् । ७ अङ्गुल्यामिति निरु० सोमकण्डनसाधनत्वात् तथात्वम् । आधारे अप् । ८यज्ञे ।

**अभिषवण** न० अभि+सु–ल्युट् । अभिषवशब्दार्थे स्नानमात्रे "शिरसा हरिन्मणिनिभः स वहन् कृतजन्मनोऽभिषवणेन जटाः" किरा० करणे ल्युट् स्त्रियां ङीप् । अभिषवसाधने "नृपं पवित्र तथा काजीषाभिषवणीरापः" अथ० ।

**अभिषह्य** त्रि० अभितः सह्यः । १ सोढुं शक्ये । ल्यप् । २प्रसह्येत्यर्थे अव्य० "अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः" । मनुः ।

**अभिषाच्** त्रि० अभि+सच-सेव–स्वार्थे णिच्–क्विप् वा । १ आभिमुख्येन सम्बन्धुं समर्थे २ अभिभावुके च "यशो अभिषाचकप्यान्" ऋ० ६,६३,८ ।

**अभि(भी)षाह्** त्रि० अभि+सह–णि णिच्–क्विप् वा षत्वम् वा दीर्घः । १शत्रुजयिनि २सहनशीले च ।

**अभिषिक्त** त्रि० अभि+सिच–क्त । १ कृताभिषेके राजादौ

"कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तम्" सा०द० । "दीक्षितेष्वभिषिक्तेषु व्रततीर्थपरेषु च" परा० । "सेनापत्येन देवानामभिषिक्तो गुहस्तदा" भा०व०प० २ स्नाते च । अभिषिक्तेन निर्वृत्तम् सङ्कला० अण् । आभिषिक्तः अभिषिक्तनिर्वृत्ते कूपे पुं० । [सोमादौ च ३काञ्जिके न० ।

**अभिषुत** त्रि० अभि+सु–क्त । १ निष्पीड़िते २ कृताभिषवे

**अभिषेक** पु० अभि+सिच–घञ् । १ विधिना शान्त्यर्थं सेचने, २अधिकारप्राप्त्यर्थं स्नाने, यथा "अथाभिषेकं रघुवंशकेतोः" रघुः । मन्त्रादिना शिरसि जलप्रक्षेपमात्रेण ३ मार्जने । ४स्नानमात्रे च । "कृताभिषेकां हुतजातवेदसम्" कुमा० । "निष्पन्दि नीरनिकरेण कृताभिषेकाः" माघः "तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत्" । "तत्राभिषेकं कुर्व्वीत पितृदेवार्चने" रत्न: "तत्राभिषेकं कुर्व्वीत नागतीर्थे नराधिप । भा०व०प० । ५ कर्म्मान्ते शान्त्यर्थं स्नाने च । "सुरास्त्वामभिषिञ्चन्तु इत्यादिमन्त्रैः स्नाने तच्च मत्कृततुलादानादिपद्धतौ २०६पृष्ठे दृश्यम् । ६प्रतिष्ठादौ देवादेः स्नपने च । करणे घञ् । ७ जले ।

**अभिषेक्तृ** त्रि० अभि+सिच–तृच् । अभिषेक्तरि स्त्रियां ङीप् ।

**अभिषेक्य** त्रि० अभिषेक्तुमर्हति अभि+सिच–ण्यत् कुत्वम् । अभिषेकयोग्ये "अभिषेक्याभविष्यत समाप्नुवन्त इत्याह राजपुत्रान्" कात्या० २०,२,१७ "यूयमन्वरत्वां समाप्नुवन्तः पट्टाभिषेकयोग्या भविष्यथ" कर्क० ।

**अभिषेचन** न० अभि+सिच–भावे ल्युट् । अभिषेकशब्दार्थे अभिषेचने हितम् ठञ् । आभिषेचनिकम् । अभिषेक द्रव्यमन्त्रादौ त्रि० । करणे ल्युट् । अभिषेकद्रव्ये न० ।

**अभिषेचनीय** त्रि० अभि+सिच–कर्म्मणि अनीयर् । अभिअभिषेकार्हे "ये वा एतस्मोऽध्वं गमिष्यन्ति राष्ट्रं ते भविष्यति राजानो अभिषेचनीयाः" शत०ब्रा० । स्वार्थे क । २ अभिषेकद्रव्ये त्रि० "पुरोडाशस्विष्टकृतोऽभिषेचनीयवत्" कात्या० १८,६,१५, "राजसूयस्यान्तर्गताभिषेचनीय सोमस्येव" कर्क० "अभिषेचनीयेष्ट्या" शत०ब्रा० ।

**अभिषेणन** न० सह इनेन सेना तयाभिमुखं याति णत्वोः अभि+सेना+णिच्–ल्युट् षत्वम् । युद्धार्थं शत्रोरभिमुखं सेनया सह जिगीषोर्गमने ।

**अभिष्टन** पु० अभि+स्तन–अप् षत्वम् । सिंहनादे "अभिष्टने ते अद्रिवो यत् स्था" ऋ० १,८०१४, "अभिष्टने सिंहनादे" भा० ।

**अभि(भी)ष्टि** त्रि० अभि+यज–इच वा क्तिन् वेदे पृ०षत्वा० ।

१ "अभियष्टव्ये 'भद्रा अभिष्टिरोजसा य०२१,२५, अभीज्यते इत्यभियष्टव्यः वे०दी० । २ अभिलाषे । आसादभिष्टिहृदयस्मै यासदुषः" य० २०,४८ अभिष्टिमभिलाषं करोतीत्यभिष्टिकृत् मनोरथप्रदः" इति वेददी० ।

**अभिष्टुत** त्रि० अभि+स्तु–क्त । १वर्णिते, २स्तुते, च ।

**अभि(स्य)ष्यन्द** पु० अभि+स्यन्द–भावे घञ् अप्राणि कर्त्तरि वा षत्वम् । १ अतिवृत्तौ २ स्रवणे ३ जलादिक्षरणे च । कर्त्तरि घञ् । ४ अधिके । "स्वर्गाभिष्यन्दवमनमिति" कुमा० । "भूतपूर्व्वमभूतपूर्व्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेदिति" कौटि० । आधारे घञ् । ५नेत्ररोगभेदे । "प्रायेण सर्व्वे नयनामयास्तु भवन्त्यभिष्यन्दनिमित्तमूलाः" । तस्मादभिष्यन्दमुदीर्य्यमाणमुपाचरेदाशु हिताय धीमान्" सुश्रु० । उष्णाभितप्तस्य जलप्रवेशाद् दूरेक्षणात् स्वप्नविपर्य्ययाच्च । स्वेदाद्रजोधूमनिषेवणाच्च छर्द्दिर्विघाताद्वमनातियोगात् । द्रवात्तथान्नान्निशि सेविताच्च विण्मूत्रवातक्रमनिग्रहाच्च प्रसक्तसंरोदनशोककोपाच्छिरोभिघातादतिमद्यपानात् । तथा ऋतूनाञ्च विपर्य्ययेण क्लेशाभिघातादतिमैथुनाच्च । बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः । स च चतुर्विधः यथा । वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः । प्रायेण जायते घोरः सर्व्व नेत्रामयाकरः । सुश्रु० ।

**अभिष्यन्दनगर** न० अभिष्यन्देन प्रधाननगरातिवृद्ध्या तदतिवाहेन कृतं नगरम् । शाखानगरे अभिस्यन्दरमणमित्यपि पाठः । रलयं रतिस्रामं दैत० । तत्रार्थे ।

**अभिष्य(स्य)न्दिन्** त्रि० अभिष्यन्दते अभि+स्यन्द–णिनि अप्राणिकर्त्तरि वा षत्वम् १ सर्वतः स्रुते । "पयोऽभिष्यन्दि गुर्व्वामं प्रायशः परिकीर्त्तितम्" सुश्रु० ।

**अभिष्वङ्ग** पु० अभि+स्वन्ज–घञ् । १ उत्कटरागे २अनात्मन्यहंबुद्धौ च "असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु" गीता

**अभिसंरब्ध** त्रि० अभि+सम्+रभ–क्त । १ क्रुद्धे । [निष्पन्दे च

**अभिसंवृत्ति** स्त्री अभि+सम्+वृत–क्तिन् । १ व्यवहारे२अभि-

**अभिसंश्रय** च० अभितः संश्रयः । १ सर्वत आश्रये "यदि कुर्य्यात् भवानेवं विलेऽस्मिन्नभिसंश्रयम्" रामा० ।

**अभिसंसार** अव्य० संसारस्याभिमुख्यम् अव्ययी० । संसाराभिमुख्ये । अभि+सम्+सृ–वीप्सायां णमुल् । अभिनावीप्साद्योतनात् न द्वित्वम् । अभिसंसारम् अभिगम्याभिगम्येत्यर्थे । "मद्वानागमिवाभिसंसारं दिदृक्षितारः" श०ब्रा०

**अभिसंहित** त्रि॰ अभि+सम्+धा—कर्मणि कर्त्तरि वा क्त । १ फलोद्देशेन कृते २ अभिसन्धिविषयभूते ३ अभिसन्धिकर्त्तरि च "विसृज्यदायेऽनभिसंहितेषु" रुचिदत्तः ।

**अभिसन्ताप** पु॰ अभिसन्ताप्यतेऽनेन अभि+सम्+तप—णिच्-करणे अच् । १ अभिशापे । तप—भावे घञ् । २ अभितः सन्तापे । तप—आधारे । घञ् । ३ युद्धे ।

**अभिसन्धक** त्रि॰ अभि+सम्+धा—क—स्वार्थे कन् । १ परगुणाच्छन्नेन आक्षेपके "वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः मनुः" । "अभिसन्धकः परगुणाच्छन्नेन सर्वाक्षेपक इति" कुल्लू॰ । [ २ फलोद्देशे ३ वञ्चने च ।

**अभिसन्धा** स्त्री अभि+सम्+धा—भावे अङ् । १ अभिसन्धौ

**अभिसन्धान** न॰ अभि+सम्+धा—ल्युट् । १ परवञ्चने । "पराभिसन्धानपरं यद्यप्यस्य विचेष्टितम्" रघुः । "पराभिसन्धानपरामन्त्रिणः" काद॰ २ फलोद्देशे ३ अभिसन्धौ च । "फलाभिसन्धानपरा न योगिनः" पुरा॰ ।

**अभिसन्धाय** पु॰ अभि+सम्+धा—भावे घञ् । १ अभिसन्धौ फलाद्युद्देशे । ल्यप् । २फलाद्युद्दिश्येत्यर्थे अव्य॰ । "अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्" गीता ।

**अभिसन्धि** पु॰ अभि+सम्+धा—भावे कि । १ फलाद्युद्देशे । "स्वर्गाभिसन्धि सुकृतं वञ्चनामिव मेनिरे" कुमा॰। "सुधाभुजः काम्यफलाभिसन्धौ" रुचिदत्तः ।

**अभिसन्धित** त्रि॰ अभिसन्धा जाताऽस्य तार॰ इतच् । १ जाताभिसन्धौ अभिसन्धिविषये ।

**अभिसम्पत्ति** त्रि॰ अभि+सम्+पद—क्तिन् । १ अभितः सम्पत्तौ अन्यरूपस्यान्यथाभवने, "चित्यस्याहवनीयाभिसम्पत्तेः" कात्या॰ १८,६,२५ । "आहवनीय एव चित्याभिसम्पत्ति श्रवणात् "यो वाव चितोऽग्निर्निधीयते तामेवेष्टकामेव सर्वोऽग्निरभिसम्पद्यत" इतिश्रुतिः एकवारं चित्यस्योपरि निधानेनाहवनीयाग्नेरेव सर्वदा चित्यात्मकतासम्पन्ना" कर्क॰।

**अभिसम्पद्** स्त्री अधिका सम्पद् प्रा॰स॰ । १ अधिकसम्पत्तौ । अभिलक्ष्य संख्यां सम्पद् । तत्तत्संख्यादिसाम्येन सम्पन्नतायाम् "तान्युभयान्येकविंशतिः सम्पद्यन्ते द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोकाः असावादित्य एकविंशः एतामभिसम्पदम्" शत॰ब्रा॰ । "यैषा संख्यासम्पत्तिस्तामभिलक्ष्य भवति" भा॰ । सम्पदमभिलक्ष्य अव्ययी॰ टच् समा॰ । अभिसम्पदम् सम्पदमभिलक्षीकृत्येत्यर्थे अव्य॰ ।

**अभिसम्पात** पु॰ अभि+सम्+पत—आधारे घञ् । १ युद्धे । भावे घञ् । २ पतने । करणे घञ् । ३ अभिशापे लोकप्रसिद्धिः ।

**अभिसम्बन्ध** पु॰ अभि+सम्+बन्ध—घञ् । १ अभितः सम्बन्धे "द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः" "फलार्थित्वात् स्वामित्वे नाभि" जै॰सू॰ "यैजिकादभिसम्बन्धादनुबन्ध्यादघं त्र्यहम्" मनुः २ वाक्यादौ आकाङ्क्षितपदान्वये च पदानामन्वयेन पदार्थान्वयोऽप्यत्यत एव ।

**अभिसर** त्रि॰ अभितःसरति सृ+ट स्त्रियां ङीप् । १ सहाये, २ अनुचरे । "तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः" भा॰उ॰प॰ । "अथ साभिसरं शरैस्तरस्वी" माघः ।

**अभिसरण** न॰ अभि+सृ—ल्युट् । १ अभिगमने २ नायकयोरेकतरेण रागेण सङ्केतस्थानगमने च । [२ उत्कृष्टे च

**अभिसर्जन** न॰ अभि+सृज—भावे घञ् । १ दाने, २ वधे

**अभिसाय** अव्य॰ आभिमुख्ये अव्ययी॰ । सायाह्नाभिमुख्ये । "श्रितोदयाद्रेरभिसायमुच्चैरचूचुरच्चन्द्रमसोऽभिरामताम्" माघः ।

**अभिसार** पु॰ अभि+सृ—आधारादौ घञ् । १ युद्धे, २ साहाय्ये, ३ साधने, ४ स्त्रियाः पुंसो वा संभोगार्थं निर्ज्जनसङ्केतस्थानगमने च । "आरब्धे रमसान्धया प्रियसखि ! क्रीडाभिसारोत्सवे" । अभिसारप्रकारश्च । "स्वेषु गात्रेषु संलीना मूकीकृतविभूषणा" । अवगुण्ठनसंवीता कुलजाऽभिसरेद्यदि । विचित्रोज्ज्वलवेशा तु रणन्नूपुरनिस्वना प्रमोदस्मेरवदना स्याद्वेश्याऽभिसरेद्यदि । मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना । आविद्धगतिसञ्चारा स्यात् प्रेष्याऽभिसरेद्यदि ॥ क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् । मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा एवं कृताभिसाराणां पुंश्चलीनां विनोदने, स्थानान्यष्टौ तथा ध्वान्तच्छन्नेषु कचिदाश्रये" इति सा॰द॰ । कर्त्तरि घञ् । अनुचरे पु॰ "अभिसारेण सर्वेण ततोयुद्धमवर्त्तत" भा॰व॰प॰ ।

**अभिसारिका** स्त्री अभिसरति अभिसारयति वा कान्तं सङ्केतस्थानं अभि+सृ—णिच्—वा ण्वुल् । १ "अभिसारयते कान्तं या मन्मथवशंवदा । स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका" सा॰द॰ उक्ते नायिकाभेदे "अनभिज्ञास्तमिस्राणां दुर्द्दिनेष्वभिसारिकाः" कुमा॰ "यः सञ्चरोऽभूदभिसारिकाणाम्" रघुः ।

**अभिसारिन्** त्रि॰ अभिसरति णिनि । १आभिमुख्येन गन्तरि २अनुचरे च स्त्रियां ङीप् । "मठं लिट्पे लंदुभपदा

द्वौ तु जागतौ यस्याः सा जागते जगती, सैं ट्टुभे त्रिष्टुप्। वैराजौ जागतौ चाभिसारिणी” अनु०क्र० उक्ते वैदिकच्छन्दोभेदे स्त्री यस्याः वैराजौ द्वौ पादौ द्वौ च पादौ जागतौ साऽभिसारिणीति तदर्थः।

**अभिसृष्ट** पु० अभि+सृज–क्त। १दत्ते, २उत्सृष्टे, ३त्यक्ते च

**अभिस्वर्** न० स्वृ–भावे–क्विप् स्वः अभितः स्वः स्वरणं शब्दो वा यस्य। अभितः स्वरयुक्ते स्तोत्रभेदे “अभिस्वरा निषदा गा अवस्यवः” ऋ०२,२१,५ अभितः स्वः स्वरः शब्दनं वा यस्य तेन स्तोत्रेण” भा०। “स्तोत्रं नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा” ऋ०८,९७,१२ “अभिस्वरा अभिस्वरणेन स्तोत्रेण” भा०। [रथस्य हयैरभिरभिस्वरे”श्रुतिः।

**अभिस्वर** पु० अभि+स्वृ–अप्। आभिमुख्येन प्रेरणे “स्यात

**अभिहत** त्रि० अभि+हन–क्त। १ अभिघातसंयोगवति। “सो-दीर्णोमूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः” शिक्षा। २ ताडिते “परस्परेणाभिहता निपेतुः” पु०। ३ गुणिते च। “अन्योन्यहाराभिहतौ हरांशौ” लीला०।

**अभिहरण** न० अभि+हृ–ल्युट्। १आभिमुख्याहरणे “कार्मुकाभिहरणाय मैथिलः”रघुः।२विवाहादौ यौतकदाने च।

**अभिहव** पु० अभिह्वयते अभि+ह्वे–अप् संप्रसारणञ्च। आभिमुख्येनाह्वाने ह्व–अप्। २ सर्वतोहोमे।

**अभिहस्य** त्रि० अभि+हस–यत्। उपहसनीये “यस्ते मदोऽव केशोविकेशो येनाभिहस्यं पुरुषं कृणोषि” अथ०६,३०,२, ल्यप्। २ उपहस्येत्यर्थे अव्य०।

**अभिहार** पु० अभि+हृ–घञ्। १ अपचिकीर्षया अभिगम्याक्रमणे, २ साक्षाच्चौर्य्ये, ३ अभियोगे, ४ कवचादिधारणे ५ संक्षेपणे ६ मेलने च। “अतिदूरात् सामीप्यादिन्द्रियघातान्मनोनवस्थानात्। सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च” सां०का०। “समानाभिहारात् तोयदविमुक्तानुदविन्दून् जलाशये न पश्यति” सा० कौ०।

**अभिहित** त्रि० अभि+धा–क्त। १ अभिधया वृत्त्या बोधिते २उक्ते। “अभिहिते प्रथमा” वा०। अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः क्वचिदव्ययेन। तत्तद्गतसंख्याया अभिहितत्वे कर्त्तृकर्मणोरभिहितत्वमिति नैयायिकाः भवति च ग्रामं गच्छति चैत्रः, ग्रामो गम्यते चैत्रेणेत्यादौ कर्तृकर्मगतसंख्याया आख्यातेनाभिधानमतस्तत्र प्रथमोपपत्तिः। तथाचाख्यातार्थसंख्यावत्त्वेन कर्त्तृकर्मणोः अभिहितत्वम्। वैयाकरणमते कर्त्तृकर्मणोरेव आख्यातेनाभिधानमिति भेदः। “अनभिहिते” पा० अनभिहिते इत्यधिकारे कर्मादौ द्वितीयादि “इति प्रविश्याभिहिता द्विजन्मना” कु०अस्य चतुर्थ्यर्थकतया गौणे कर्मणि क्त। वचनोद्देश्यत्वेन तस्याः कर्मत्वादुक्तता। गौणकर्मणोऽप्रयोगे तु मुख्यकर्मणोवचनादेरुक्तता। “वासुदेवेनाभिहिते वाक्ये तेन महात्मना” भा०उ०प०।

**अभिहितान्वय** अभिहितानामन्वयः। अभिधावृत्त्या(शक्त्या)उपस्थापितानामर्थानां परस्परसंबन्धे। तथा हि अभिधावृत्त्या पदार्थबोधने द्विधा प्रकारः। अन्विताभिधानम् अभिहितान्वयश्च तत्र मीमांसका एवमाहुः “सर्वेषां शब्दानां व्यवहारादेव प्रथमं व्युत्पत्तिर्गृह्यते इतरोपायानां शब्दव्युत्पत्त्यधीनत्वात्। तथा हि प्रयोजकस्य वाक्योच्चारणानन्तरं प्रयोज्यप्रवृत्तिमुपलभमानो बालः प्रेक्षावद्वाक्योच्चारणस्य प्रयोजनजिज्ञासायां तदन्वयव्यतिरेकानुविधायित्वादुपस्थितत्वाच्च प्रयोज्यवृद्धप्रवृत्तिरेव प्रयोजनमवधारयति न चाकिञ्चित्कुर्व्वतस्तादृर्थ्यं सम्भवतीति तद्वाक्यजन्यं प्रवृत्त्यनुकूलं कार्य्यताज्ञानमेव कल्पयति स्वप्रवृत्तौ बालेन कार्यताज्ञानस्य हेतुत्वावधारणात् तथा च प्रेक्षावत् प्रवृत्तिः कार्यताज्ञानाधीना प्रवृत्तित्वात् मदीयप्रवृत्तिवदित्यनुमीयते तत्र कारणान्तरानुपस्थितेः शब्दस्यैवोपस्थितेस्तस्यैव कार्यताज्ञानहेतुत्वमवधार्य्य तत्रैव शक्तिं कल्पयति पश्चाच्चान्वयव्यतिरेकाभ्यां क्रियाकारकपदानां कार्य्यान्वितस्वार्थेषु शक्तिं गृह्णाति प्रथमं गृहीतसामान्यशक्त्यनुरोधात्। ततश्च पदं कार्य्यान्वितज्ञानशक्तं पदत्वादिति सामान्यतोऽवगतः स्वार्थः, विशेषः परं नाधिगतः स च उत्तरकाले सुहृदुपदेशादिभिरवगम्यते। अतः प्रवृत्तिपराणामेव शब्दानां प्रवर्त्तकज्ञानजनकत्वम् तच्च क्वचित् साक्षात् क्वचित्परम्परया कार्य्यान्वितम् तत्र साक्षात् यजेत पटमानयेत्यादौ वाक्ये। विधिशेषीभूतार्थवादादौ तु परम्परया। कार्य्यान्वय इति सर्व्वत्र वेदे कार्य्यान्वितस्वार्थबोधकता स्वरूपाख्यानपराणाञ्च काव्यनाटकादीनां पदार्थसंसर्गापेक्षया संसर्गस्य व्यवहारः न तु संसर्गापेक्षया, तथा च व्यवहारेणैवानुमिते इतरान्वितज्ञाने करणत्वग्रहात् तत्रैव शक्तिर्गृह्यते उपस्थितत्वात् नचान्ये तत्त्यागः हेत्वभावात्। न तु पदार्थमात्रे शक्तिग्रहः व्यवहारात्तस्यानुपस्थितेः उपायान्तरात्तदुपस्थित्यन्तरकल्पने मानाभावात्। एवञ्च इतरान्वितस्वार्थज्ञानशक्तत्वेन ज्ञातं पदं स्वार्थान्वयानुभावकमिति वाक्यार्थ एव शक्त्याऽभिधीयते इत्यन्विताभिधानवादिनः”। अभिहितान्वयवादिनस्तु नैयायिकादयस्त्वेवमाहुः। इतरा-

न्वितपदार्थज्ञानोपस्थितौ पदार्थज्ञानं विशेष्यमिति तदुपस्थितौ पदार्थस्य विषयत्वात् विशिष्टज्ञानस्य विशेष्यविषयत्वनियमादिति तत्रैव शक्तिः कल्प्यते लाघवात् नत्वन्वयांशेऽपि गौरवात् अस्तु वा प्रथममितरान्विते शक्तिग्रहोऽन्ये तस्य त्यागः आकाङ्क्षायोग्यतादिलभ्यत्वप्रतिसन्धानात् अनन्यलभ्यस्यैव शब्दार्थत्वात् प्रथम गृहीतत्वमात्रस्याकिञ्चित्करत्वात् तथा च घटशक्तत्वेन ज्ञातं पदं स्वार्थस्मरणद्वाराकाङ्क्षादिसहकारिवशात् समभिव्याहृतपदार्थेन सह स्वार्थस्यान्वयमनुभावयति स्वभावादित्यन्यथैवान्वयज्ञानोदयात् किं तत्र शक्त्या, अन्वयमात्रशक्तावपि अन्वयविशेषज्ञानार्थमाकाङ्क्षादेरवश्यमपेक्षणात् तैरेव सहकारिभिरन्वयविशेषावगमसम्भवात् । क्रियाकारकपदयोः प्रत्येकमितरान्वितस्वार्थबोधकत्वेऽवान्तरवाक्यार्थद्वयबोधप्रसङ्गात् । न चैकमेव पदमन्विताभिधायकमितरत्तु अन्वयप्रतियोगिस्वारकमिति वाच्यम् अविशेषात् कस्याभिधायकत्वमित्यनिश्चयात् । किञ्च किमशक्ययोरेवान्वये शक्तिः? उत शक्ययोः? आद्ये यस्य कस्यापि अन्वयबोधकत्वापत्तेरतिप्रसङ्गः स्यात् तथा च शक्यान्वयाभिधायकत्वं वाच्यं एवं च शक्ये शक्यान्वये च द्विधा शक्तिः कल्पनीयेति गौरवम् । अथ अन्वयतात्पर्य्यकतया तत्प्रतिपादकं पदमित्युभयसम्मतम् तात्पर्य्यनिर्वाहिका च वृत्तिः सा च न गौणी न वा लक्षणेति अगत्या शक्तिः स्वीकार्य्येति चेत् वृत्तिं विनापि तात्पर्य्यनिर्वाहात् किं वृत्त्या, पदानामुक्तक्रमेणान्वयबोधकत्वसम्भवात् अन्यथा शक्त्यैव तात्पर्य्यनिर्वाहावश्यम्भावे लक्षणोच्छेदः स्यात् । अथ घटमानयेत्यादौ प्रत्येकमन्वये सत्येव विशेषान्वयसामान्ये जिज्ञासा भवति न च सामान्यानवगमे विशेषे सा स्यादित्यतस्तत्र शक्तिरिति चेन्न कारकेण क्रियायाः क्रियया च कारकस्य सामान्यत आक्षेपात् दृष्टे फले तदीयरसजिज्ञासावत् तदुपपत्तेः ततश्च पदार्थे एव शक्तिः न पदार्थान्वयांशे तस्मात् पदज्ञानं करणं पदार्थस्मरणं व्यापारः आकाङ्क्षादिसहकारेण स्मारितपदार्थान्वयानुभवः फलमिति"।

अभिह्नुति स्त्री अभि+ह्नु–क्तिन्। आभिमुख्येनाज्ञाने।

अभिह्रुत् त्रि० अभि+ह्रु–कर्मणि क्विप् वेदे पृ० न गुणः। आभिमुख्येन ह्रियमाणे। "दुरितादभिह्रुतः शंसादघादभिह्रुतः" ऋ० १,१२८,५ "अभिह्रुत आभिमुख्येन ह्रियमाणान्" भा०।

अभिह्वर् त्रि० अभि+ह्वृ–विच्। १ कुटिलगन्तरि "नाभिह्वरे पदं निदधाति सत्त्वये" अथ० ६,७६,२ अभि+ह्वृ–कर्मणि अप्। अभिह्वरः उपह्वरे गन्तव्यदेशादौ।

अभिह्रुत् त्रि० ह्रु कौटिल्ये कर्त्तरि क्विप् पृ०। आभिमुख्येन कुटिलं कुर्व्वति "भिनित्सोरभिह्रुतामसि" ऋ० १,१८६,६, "अभिह्रुतामाभिमुख्येन कुटिलं कुर्व्वताम्" भा०।

अभिह्रुति स्त्री अभि+ह्रु–क्तिच् वेदे पृ०। कुटिलस्वभावे। "शतभुजिभिस्तमभिह्रुतेरघात्" ऋ० १,१६६,८ "अभिह्रुतेः कुटिलस्वभावात्" भा०।

अभी त्रि० नास्ति भीर्यस्य। भयशून्ये। कप्। अभीकोऽप्यत्र

अभीक त्रि० अभि+कन् "अनुकाभिकाभीकः कमयिता" पा० नि०। १ कामयमाने "मेदस्विनः सरभसोपगतानभीकान्" माघः। २क्रूरे ३उत्सुके च। आभिमुख्येन कायति प्रकाशते दीर्घः। ४समीपे "मतङ्गावयो वहन्त्वस्यामभीके" ऋ० १,११८,५, "अभीके गृहसमीपे" भा०। ४ अभि+इण+कन्। ५ अभिगते त्रि० "यामन्नु रुध्यतामभीके" ऋ० ७,८६,१, "अभीके अभिगते" भा०। ६कवौ ७स्वामिनि च त्रि०।

अभीक्ष्ण त्रि० अभि+क्ष्णु–तेजने बा०ड पृ० दीर्घः अभिगतः क्ष्णं वा पृ०। १ सन्तते २ भृशे च। ३ क्रियापौनःपुन्ये" न०। "भङ्गारवत्यमभीक्ष्णोपसेवितम्" रामा०। अभीक्ष्णस्य भावः ष्यञ्। आभीक्ष्ण्यम् सन्ततभावे "नित्यवीप्सयोः" पा० "आभीक्ष्ण्ये" इति सि०कौ०।

अभीक्ष्णम् अव्य० अभि+क्ष्णु–बा०डमु पृ० दीर्घः। पौनःपुन्ये स्वरादि। "अभीक्ष्णमुष्णकरतयाऽतिदुर्गमम्", माघः।

अभीत त्रि० अभि+इण–क्त न०त०। १ अभिगते। न भीतः विरोधे न०त०। २ भीतभिन्ने उत्साहान्विते त्रि०।

अभीति स्त्री अभावे न०त०। १ भयाभावे २ तद्दानार्थायाम् अभयमुद्रायाञ्च। "परशुमृगवराभीतिहस्तं प्रसन्नम्" शिवध्यानम्। ६त०। ३ भीतिशून्ये त्रि०। अभि+इण–क्तिन्। अभिगमने ४ "अभीतिमर्य्ये" इति ऋ० ७,२१,६। "अभीतिमभिगमनम्" भा०। कर्मणि क्तिन्। ५समीपे।

अभीपत् त्रि० अभि+पत–क्विप् दीर्घः। अभिगमनकर्त्तरि। "अभीपतोऽवृष्टिभिस्तर्पयन्तम् ऋ० १,१६४,५२, "अभीपतोऽभिगमनवतः" भा०। [लषिते।

अभीप्सित त्रि० अभि+आप+सन–क्त। १ अभीष्टे अभि-

अभीप्सु त्रि० अभि+आप+सन्–उ। अभिलाषुके।

अभीम त्रि० विरोधे न०त०। १ भयानकभिन्ने सौम्ये।

अभीमान पु० अभि+मन–क्विप् वा दीर्घः। अभिमानशब्दार्थे

अभीर पु० अभिमुखीकृत्य ईरयति गाः अभि+ईरः अच्।

गोपे जातिवाचकादन्तशब्दत्वेन ततः स्त्रियां ङीप् ।

**अभीरु(लु)** त्रि० न०त०। १ भीरु(लु)भिन्ने युद्धादावुत्साहान्विते । "स्थाने युद्धे च कुशलानभीरूनविकारिणः" मनुः "ते वाशीमन्त इष्मिणो अभीरवः" ऋ० १,८७,६ । २वटुकभैरवे पु० "अभीरुर्भैरवो भीरुर्भूतपोयोगिनीपतिः" वटुकस्त० ७त०। युद्धस्थाने न०। शतमूल्यां स्त्री असङ्कुचितपत्रत्वात्तथात्वम् । वा ऊङ् । अभीरूः शतमूल्याम् । "अभीरुभिरिषिस्वृक्षयतूषकोशीरपद्मकैः" सुश्रुतः ।

**अभीरुण** अभि+रु–बा०उनन् दीर्घः । १ अभिमुखे "यश्चाभिदुद्रोहानृतं यश्च शेपे अभीरुणम्" श्रुतिः ।

**अभीरुपत्री** स्त्री न भीरूणि असंकुचितत्वात् पत्राण्यस्याः जातौ ङीष् । शतमूल्याम् । [२ तद्वति । त्रि०

**अभील** न० अभि+ईर–अच् रस्य लः । १ कष्टे २ भयानके

**अभीलाप** पु० अभि+लप–भावे घञ् दीर्घः । अभिमुखकथनरूपे शब्दे । "आलापाश्च प्रलापाश्चाभीलापलपश्च ये" अथ० ११,८,२५ लप् लपनं भावे क्विप् ततोद्वन्द्वः । तेन लपनालापप्रलापाभीलापाश्चत्वार इह उक्ताः । अभीलापलप् इति शब्दकल्पनं भ्रमविजृम्भितम् ।

**अभीवर्ग** पु० अभि+वृज–आधारे घञ् । अभिमुखसंघे "अहं राष्ट्रस्याभीवर्गे निजोभूयासमुत्तमः" अथ०२,५,२०।

**अभीवर्त्त** पु०अभिवर्त्तन्ते गच्छन्ति स्वर्गमनेन अभि+वृत–करणे घञ् । १ब्रह्मसामनि तच्च "उद्वृत्ततीयाहमिदस्यां योनावुत्पन्नं ब्राह्मणाच्छंसिनऋत्विग्भेदस्य पृष्ठस्तोत्रम् । "अभीवर्त्तोब्रह्मसाम भवति अभीवर्त्तेन वै देवाः स्वर्गं लोकमभ्यवर्त्तन्त यदभ्यवर्त्तन्त तदभीवर्त्तो ब्रह्मसाम भवति स्वर्गस्य लोकस्याभिवृत्त्यै" ता०ब्रा० । "अभिवृत्तिसाधनत्वादस्य साम्नोऽभीवर्त्तसंज्ञा निष्पन्ना"भा०। "तदभीवर्त्तस्याभीवर्त्तत्वमिति सांख्यायनसू०। एतदभीवर्त्ताख्यं साम पूर्व्वस्मिन् पक्षसि विद्यमानानामाभिप्लविकानामह्नां स्वरसाम्नां च माध्यन्दिने सवने यजमानान्वारब्धेन ब्रह्मणा पृष्ठस्तोत्रतया कर्त्तव्यं, तथा उत्तरस्मिन् पक्षसि "इन्द्रक्रतुन्न आभर" त्येक एव प्रगाथः ब्रह्मसामाश्रयः कर्त्तव्यः । प्रत्यहं च तस्मिन् प्रगाथे अन्यदन्यत्साम ब्रह्मणा पृष्ठस्तोत्रार्थं कर्त्तव्यम् इति" ता०ब्रा० भा० । २ संवत्सरे । "अभीवर्त्तः सविंशः" यजु० १४,२३ । अभिवर्त्तते आवर्त्तत इत्यभीवर्त्तः मासाद्यावृत्तिरूपः स विंशः स्तोमः यद्वा अभिवर्त्तयत्यावर्त्तयति सर्व्वाणि भूतानीत्यभीवर्त्तः संवत्सरः "उपसर्गस्य घञ्यमनुष्ये बहुलमिति" पा० दीर्घः। द्वादशमाससप्तर्त्तुसंवत्सररूपविंशतिसङ्ख्यया सहितः सविंशः । य एष सविंशस्तोमः तस्मुपदधातीत्यर्थः "संवत्सरो वा अभीवर्त्तः इति संवत्सरो हि सर्व्वाणि भूतान्यभिवर्त्तते" श्रुतिः वे०दी०। ३अभीवर्त्तेनेत्यादिके सूक्ते "अथैनं सारथमाणमुपारुह्याभीवर्त्तं वाचयति" आश्व० श्र० । ४ अभिवृत्तिसाधने हविर्भेदे च । "अभीवर्त्तेन हविषा येनेन्द्रो अभिवावृते" ऋ० १०,१७४,१ ।

**अभीशु** पु० अभि+अश–उन् पृ० अत इत्त्वम् । १ बाहौ "अभीशवोऽभ्यश्नुवते कर्म्माणि" निरु० । २ अश्वरज्जौ । "स्थिरा वसन्तु नेयोरथो अश्वा स एषां सुसंस्कृता अभीशवः" ऋ० १,१३८,१२, । ३ किरणे "प्रफुल्लतापिच्छनिभैरभीशुभिः" माघः "सुयन्तुभिः सर्व्वशासैरभीशुभिः" ऋ० ५,४४,४, अभीशुभिः रश्मिभिः" भा० । ४ "अङ्गुली च अभीशवोऽङ्गुलयः" ऋ० भा० उक्तेः ।

**अभीशुमत्** पु० अभीशवः किरणा बाहुल्येन सन्त्यस्य मतुप् । सूर्य्ये "त्रितिपःस्थिरुरभीशुमानिव" माघः ।

**अभीषङ्ग** पु० अभि+सन्ज–घञ् दीर्घः । अभिषङ्गशब्दार्थे ।

**अभीषु** पु० अभि+इष+कु । १ किरणे (लागाम) इति ख्याते २प्रग्रहे, ३ कामे, ४ अनुरागे च । सर्वे कोषकारा मूर्द्धन्यान्ततया पेठुः लोकवेदयोस्तु तालव्यान्तप्रयोगः" मल्लि० ।

**अभीष्ट** त्रि० अभि+इष–क्त । १ वाञ्छिते, २ दयिते, ३ हृद्ये च "स्नातकं गुरुमभीष्टमृत्विजम्" माघः । "आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये" वे०सा० ।

**अभुक्त** त्रि० भुज–कर्म्मणि क्त न०त०। १ "अभक्षिते अन्नादौ २अकृतभोगे पुण्यादौ च । "नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि" पुरा० । भोगश्च भोजनीयद्रव्याहारः कर्म्मफलसुखदुःखानुभवश्च । भुक्तं भोजनं भावे क्त अर्श० अच् न०त० । २ भुक्तवद्भिन्ने "भुक्ताब्राह्मणाः पीता गाव इति अर्थ आद्यच्" पा०भाष्यम् । मुग्धबोधे तु कर्त्तरि क्त इत्युक्तम् । "अभुक्तौ इत्यतिथिर्व्रजन्" स्मृतिः "अभुक्तस्य दिवा निद्रा पाषाणमपि जीर्य्यति" वैद्य० ।

**अभुक्तमूल** न० "भुजङ्गपौरन्दरपौष्णभानां तदग्रभानाञ्च यदन्तरालम् । अभुक्तमूलं प्रहरप्रमाणं त्यजेत् सुतं तत्रभवां सुताञ्च" इति नार० । "ज्येष्ठान्ते घटिके द्वे च मूलाद्यघटिकाद्वयम् । अभुक्तमूलमित्याहुर्जातं तत्र विवर्जयेत्" वशि० ज्येष्ठान्त्यघटिकार्द्धञ्च मूलादौ घटिकार्द्धकम् । तयोरन्तर्गता नाडी ह्यभुक्तमूलमुच्यते" इति ज्यो०त० उक्ते ज्येष्ठामूलानक्षत्रयोराद्यन्तघटिकाविशेषे ।

**अभुज्** त्रि॰ न भुङ्क्ते भुज–क्विप् न॰त॰। अभक्षके। "नभ आदृश्योः किमभुग्वदामि" ऋ॰ १०,९५,११।

**अभूत** त्रि॰ न भूतः। भूतशब्दार्थभिन्ने। "अभूतमासज्य विरुद्धमीहितम्" माघः। २ मिथ्याभूते ३ अविद्यमाने च

**अभूततद्भाव** पु॰ अभूतस्य प्रकृतिरूपेणानाविर्भूतस्य तेन रूपेण भावः। यः कश्चित् पदार्थः येन रूपेण प्रागभूतस्तेन रूपेण तस्याविर्भावे। यथा मृत्तिका घटीभवति। "कृभ्वस्तियोगे सम्पद्ये कर्त्तरि च्विः" पा॰ "अभूततद्भावे इति वक्तव्यम्" वा॰। [त्याभिमाने।

**अभूताभिनिवेश** पु॰ अभूतेऽसत्येऽभिनिवेशः। असत्ये सत्य-

**अभूति** स्त्री अभावे न॰त॰। १ भवनाभावे "तस्य ह न देवाश्च नाभूत्या ईशते" शत॰ ब्रा॰। "अभूत्यै अभवनाय" भा॰ २ सम्पत्त्यभावे "ध्वजाश्चापि व्यशीर्य्यन्त भरतानामभूतये" भा॰श॰प॰। न॰ब॰। भूतिशून्ये त्रि॰।

**अभूमन्** पु॰ विरोधे न॰त॰। १ भूरिभिन्ने स्वल्पे।

**अभूमि** स्त्री न॰त॰। १ अनाश्रमे अविषये "अभूद्भूमिः प्रतिपक्षजन्मनां भियामिति" माघः "अभूमिरियमपनयस्य" शकु॰ "नाभूद्भूमिः स्मरशायकानाम्" नैष॰। "सखलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः" इति शकु॰। अप्रशस्ते न॰त॰। अप्रशस्तभूमौ। न॰ब॰। भूमिशून्ये त्रि॰।

**अभूमिज** त्रि॰ न॰त॰। १ भूमिजभिन्ने आकाशजे जलादौ २ अप्रशस्तभूमौ उत्पन्ने धान्यादौ च। "अभूमिजं नवञ्चापि न धान्यं गुणवत् स्मृतमिति" सुश्रुतः।

**अभूयिष्ठ** त्रि॰ विरोधे न॰त॰। भूरिभिन्ने अल्पे।

**अभूषित** त्रि॰ विरोधे न॰त॰। भूषितभिन्ने अपरिष्कृते

**अभृत** त्रि॰ न भृतः। १ अप्राप्तवेतने। गोस्वाम्यनुमते भृत्यः सा स्यात् पालेऽभृते भृतिः" मनुः २ अपुष्टे च।

**अभृश** त्रि॰ न॰त॰। १ भृशभिन्ने मन्दे अल्पे।

**अभेद** पु॰ अभावे न॰त॰। भेदाभावे ऐक्ये "गतयोरभेदमिति सैन्ययोस्तयोः" माघः "अभेदः शिवरामयोः" पुरा॰ "रलयोर्डलयोश्चैव जययोर्बवयोरपि। शसयोर्बनयोश्चान्ते सविसर्गाविसर्गयोः। सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम्" आलङ्कारिकाः "गुणगुणिनोः क्रि[illegible] इति सांख्यादयः। अभेदश्च भेदाभाव इति बहवः। तादात्म्यमिति तु शाङ्करादयः। तादात्म्यञ्च तत्सत्त्वनियतसत्ताकत्वं तेन गुणगुणिनोः क्रियाक्रियावतोरपि तादात्म्यं गुणक्रिययोर्द्रव्यनियतसत्ताकत्वात् अतएव वेदान्तपरिभाषायाम् सत्यैक्ये मिथोभेदस्तादात्म्यमित्युक्तं द्रव्यगुणयोर्मिथोभेदसत्त्वेऽपि तत्सत्त्वनियतसत्ताकत्वात् तथात्वम्।

**अभेद्य** त्रि॰ भेत्तुं शक्यते भिद–शक्यार्थे यत् न॰त॰। १ भेत्तुमशक्ये "अभेद्यकवचं दधे" भा॰द्रो॰प॰। २ हीरके न॰ तस्य केनापि धातुना भेत्तुमशक्यत्वात् तथात्वम्।

**अभोक्तव्य** त्रि॰ न भोक्तुमर्हम् स्मृत्यादिनिषिद्धत्वात्। अभक्ष्ये। तच्चाभक्ष्यशब्दे २७४ पृष्ठे दर्शितम्।

**अभोक्तृ** त्रि॰ न भोक्ता स्त्रियां ङीप्। भोक्तृभिन्ने। [त्रि॰

**अभोग** पु॰ अभावे न॰त॰। १ भोगाभावे न॰ब॰। २ भोगशून्ये

**अभोजन** न॰ अभावे न॰त॰। भोजनाभावे उपवासे "स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्" "यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्" इति च मनुः। भोजनाभावश्च भोजनविषयकनिवृत्तिरिति मीमांसकाः भोजनात्यन्ताभाव इति नैयायिकाः अत्यन्ताभवस्य कैमिकजन्यत्वाङ्गीकाराद् कृतिसाध्यत्वमिति विवेकः। भोजनाभावश्च भोजने क्वचिद्रागाभावेन रोगेण वा, क्वचिच्च शास्त्रादितो भोजने बलवदनिष्टसाधनत्वज्ञानेन विरोधात् इष्टसाधनताज्ञानानुदयेन, यथा न कलञ्जं भक्षयेदित्यादौ। क्वचिच्च व्रतरूपे भोजनाभावे इष्टसाधनताज्ञानेन। स च भोजननिवृत्तिस्तदन्याभावो वेत्युक्तम्। विस्तरस्तु निषेधनिषेधविधिशब्दयोर्दृश्यः। "अजीर्णे भोजनं येषां जीर्णे येषामभोजनम् रात्रावभोजनं येषां तेषां नश्यन्ति धातवः" इति वैद्य॰। न॰ब॰। २ भोजनशून्ये त्रि॰।

**अभोज्य** त्रि॰ न भोक्तुं शक्यं निषिद्धत्वात्। अभक्ष्ये तत्स्वामिनि उपचारात् "अभोज्यानान्तु भुक्त्वान्नमिति" मनुः अभक्ष्यशब्दे २७४ पृष्ठे विवरणम्।

**अभोज्यान्न** त्रि॰ न भोज्यमन्नं यस्य स्मृतिनिषिद्धत्वात्। अभक्ष्यान्नस्वामिनि ते च अभक्ष्यशब्दे २७४ पृष्ठे उक्ताः। "य एतेऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः" मनुः।

**अभौम** न॰ भूमौ भवम् न॰त॰। भौमभिन्ने नाभसजलादौ विवरणं जलशब्दे "अभौममम्भोविसृजन्ति मेघाः" इति पुरा॰

**अभ्यक्त** त्रि॰ अभि+अन्ज–क्त। १ कृततैलाद्यभ्यङ्गे २ अभितोलिप्ते च।

**[illegible]ग्र** त्रि॰ अभिमुखमग्रं यस्य। आसन्ने निकटे।

**अभ्यङ्ग** पु॰ अभि+अन्ज–घञ् कुत्वम्। तैलादिमर्द्दने। "मूर्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम्। स्रोतोभिस्तर्पयेत् बाह्यं अभ्यङ्गः स उदाहृतः" "तैलमल्पं यदाङ्गेषु न च स्याद्वाङ्गतर्पणम्। संमार्ष्टि वक्रभोऽभ्यङ्गोमस्तकादौ प्रकीर्त्तितः" इति च वैद्यकोक्ते २ विशेषाभ्यङ्गे च। "तैलाभ्य-

ङ्गनिषेधे तु तिलतैलं निषिध्यते"। "अतैलं सार्षपं तैलं यत् तैलं पुष्पवासितम्। अदुष्टं पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यश" इति च ति॰त॰ स्मृतिः। "अभ्यङ्गनेपथ्यमलङ्कार" कुमा॰। "अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणमिति" मनुः। "अभ्यङ्गमाचरेन्नित्यं सजराश्रमवातहम्"। "शिरःश्रवणपादेषु तं विशेषेण शीलयेत्" वैद्य॰।

**अभ्यञ्जन** न॰ अभि+अन्ज–भावे ल्युट्। अभ्यङ्गशब्दार्थे "भोजनाभ्यञ्जनाद्दानात् यदन्यत् कुरुते तिलैः" मनुः। "ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" शु॰त॰ प्रचेताः। करणे ल्युट्। २नेत्रादौ कज्जलादिदाने। ३ तत्साधने द्रव्ये। अभि+अन्ज–णिच् ल्युट्। अभ्यञ्जनसाधनव्यापारे "अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च। गुरुपत्न्या न कार्य्याणि" मनुः।

**अभ्यञ्जनीय** त्रि॰ अभि+अन्ज–कर्मणि अनीयर्। १अनुलेप्ये चन्दनादौ २ मर्द्दनीये तैलघृतादौ च "एतदभ्यञ्जनीयं घृतमिति" दुर्गोत्सवपूजापद्धतिः"।

**अभ्यधिक** त्रि॰भृशमधिकः प्रा॰स॰। उत्कृष्टतमे। "अयं वै नः श्रेष्ठ" इति वृ॰उ॰ भाष्ये श्रेष्ठः प्रशस्यतमः अभ्यधिकइति व्याख्यानात् तथात्वम्। "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" गीता। २ अधिकपरिमाणे 'धान्यं' दशभ्यः कुम्भेभ्योहरतोऽभ्यधिकं वधः" "तथा धरिम (पल) मेयानां शताद्भ्याधिके वधः" इति। "पञ्चपलतस्त्वभ्यधिके हस्तच्छेदनमिष्यते" इति च मनुः।

**अभ्यध्व** अव्य॰ अध्वनोऽभिमुखम् अव्ययी॰ अच्समा॰। मार्गाभिमुखे "संस्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाऽभ्यध्वं गम्यां प्राश्नाति" कात्या॰ २४,५,२५, "अभ्यध्वं मार्गाभिमुखम्" कर्कः। "ययोरभ्यध्वे उत यद्दूरे चित्" "ऋ॰४,२८,२" तृतीयासप्तम्योर्बहुलम्" पा॰वा नाम्

**अभ्यग्र** पु॰ अभि–अग्र–अच् ट॰। तिलकल्के। (खलि)

**अभ्यनुज्ञा** स्त्री॰ अभि+अनु+ज्ञा–अङ्। अनुज्ञायाम् इदं कुरु इत्यादिना प्रवर्त्तने "कृताभ्यनुज्ञा गुरुणा गरीयसा" कुमा॰"पत्नी वशिष्ठेन कृताभ्यनुज्ञः" रघुः।

**अभ्यनुज्ञात** त्रि॰ अभि+अनु+ज्ञा–क्त। इदं कुरु इत्यायुक्ता नियोजिते आभिमुख्येनानुज्ञाते।

**अभ्यनुज्ञान** न॰ अभि+अनु+ज्ञा–भावे ल्युट्। १ अनुज्ञायाम् इदं कुरु इत्याद्युक्त्वा नियोजनभेदे। 'भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम्" रामा॰। [२ प्रकाशिते च

**अभ्यनूक्त** त्रि॰ अभि+अनु+वच–क्त। १ आभिमुख्येन अनूक्ते

**अभ्यन्तर** न॰ अभिगतमन्तरम्। १ अन्तराले, मध्यस्थाने। "नवोटजाभ्यन्तरसम्भृतानलम्" कुमा॰। "प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया" "शमीमिवाभ्यन्तरलीनपावकाम्" इति च रघुः। "ब्रह्मद्विट्परिवित्तिश्च गणाभ्यन्तर एव च" मनुः। २ उभयोर्मध्ये ३ अन्तःकरणे च। अभ्यन्तरे भवः अण् आभ्यन्तरम्। अन्तःकरणस्थे त्रि॰ "शौचन्तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम्। अशौचाद्धि वरं वाह्यं तस्मादाभ्यन्तरं वरम्" दक्षः।

**अभ्यन्तराराम** त्रि॰अभ्यन्तरे सर्व्वाभ्यन्तरे परमात्मनि आरमति कर्त्तरि घञ्। आत्मारामे आत्मज्ञे योगिनि "आत्मनश्च "इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इति गीतावाक्येन अन्तर्यामिब्राह्मणेन १२० पृष्ठे दर्शितेन च सर्व्वाभ्यन्तरवर्त्तित्वम्।

**अभ्यमन** न॰ अभितः अमनम् अम–गत्यादौ भावे ल्युट्। १ अभिगमने। चु॰ अम–ल्युट् अमन्तत्वात् ह्रस्वः। २। रोगे, करणे ल्युट्। ३तत्साधने अहितसेवने च।

**अभ्यमित** त्रि॰ अभि+चु॰+अम–कर्मणि क्त। १ रुग्णे २ पीड़िते च। वा नि॰। अभ्यान्तोऽप्यत्र "बहुभिस्तेन चाभ्यान्तं विव्याध ततोऽधिकैः" भा॰ द्रो॰प॰।

**अभ्यमित्र** अव्य॰ अमित्रस्याभिमुख्यम् अव्ययी॰। अमित्रस्य शत्रोराभिमुख्ये। अमित्रमलंगामीत्यर्थे "अलं गामीत्यधिकारे "अभ्यमित्राच्छ च" पा॰छ अभ्यमित्रीयः चात् यत्खौ अभ्यमित्रीणः अभ्यमित्र्यः। सामर्थ्येन शत्रोरभिमुखगामिनि वीरे पु॰। "मारीचोऽनुनयंस्तासादभ्यमित्रीभवामि ते" "उद्योगमभ्यमित्रीणोयथेष्टं त्वञ्च सन्तु" इति च भट्टिः।

**अभ्यमिन्** त्रि॰ अभि+चु॰+रोगे–अम–कर्त्तरि अमन्तत्वात् ह्रस्वः णिनि। १रोगयुक्ते २आभिमुख्येन पीड़के।

**अभ्यय** पु॰ अभितः सर्व्वतः अयः निष्क्रमः इण–अच्। १ अस्तमये "आदित्याभ्ययेऽङ्कतायामपि" कात्या॰ ८, ८,१२"यथाहोमात् पूर्व्वमादित्यास्तमये" कर्कः। २अपगमे च 'तमोऽभ्यये सायं जुहुयात्" कात्या॰ ४,१५,१२ तमसोऽन्धकारस्याभ्ययेऽपगमे" कर्कः।

**अभ्यर्चन** न॰ अभि+अर्च–ल्युट्। १ समन्तात्पूजने २ आभिमुख्यार्थं पूजने च। "नित्यं स्नात्वा शुचिः

कृष्यादिलुप्तकर्मे "देवताभ्यर्चनञ्चैव" मनुः। भावे अ। अभ्यर्चापत्र स्त्री।

**अभ्यर्च्य** त्रि॰ अभि+अर्च—कर्म्मणि ण्यत्। १ अभितः पूजनीये "देवाग्नयः सदाभ्यर्च्यास्तद्वस्येतु विशेषतः" पु॰। ल्यप्। २ आभिमुख्येन पूजयित्वेत्यर्थे अव्य॰ "देवान् पितृन् समभ्यर्च्य खादन् मांसं न दोषभाक्" मनुः।

**अभ्यर्ण** त्रि॰ अभि+अर्द्—कर्मणि क्त आविदूर्ये दृढभावे नि॰ नत्वम्। समीपे। "कालोऽभ्यर्णजलागमः कुशलिनोवत्सस्य वार्त्तापि न" सा॰द॰। "अभ्यर्णमागच्छतमस्त्रभद्भिः" रघुः। "ऋणार्णवाभ्यर्णचरैकहंसः" मतप्रमभ्यर्णतया विवस्वता" इति च माघः।

**अभ्यर्थना** स्त्री अभि+अर्थ-भावे युच्। आभिमुख्येन प्रार्थने "अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे" कुमा॰। भावे ल्युट्। तत्रैव न॰। [अभिमुखं याचनीये।

**अभ्यर्थनीय** त्रि॰ अभि+अर्थ-गौणे कर्मणि अनीयर्।

**अभ्यर्थित** त्रि॰ अभि+अर्थ-गौणे कर्मणि क्त। १प्रार्थिते "अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ" रघुः। गौणकर्म्मविवक्षायां मुख्ये क्त। २प्रार्थनाकर्म्मणि।

**अभ्यर्थ्य** त्रि॰ अभि+अर्थ-ण्यत्। प्रार्थनीये। "कार्य्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा" रघुः। ल्यप्। अभिमुखं याचयित्वेत्यर्थे अव्य॰।

**अभ्यर्दित** त्रि॰ अभि+अर्द् क्त। भृशपीड़िते।

**अभ्यर्हणा** स्त्री अभि+अर्ह-भावे युच्। १ पूजायाम् २अभिमुखमर्चायाञ्च। भावे ल्युट्। तत्रैव न॰।

**अभ्यर्हणीय** त्रि॰ अभि+अर्ह—अनीयर्। पूजनीये। "गारुड़ी मन्दपालेन जगामाभ्यर्हणीयताम्" मनुः।

**अभ्यर्हित** त्रि॰ अभि+अर्ह—कर्मणि क्त। १पूज्ये २उचिते च।

**अभ्यवकर्षण** न॰ अभि+अव+कृष-भावे ल्युट्। शल्याद्युद्धारे।

**अभ्यवस्कन्द** पु॰ अभि+अव+स्कन्द-घञ्। १ शत्रोराक्रमे, २ निर्बलीकरणाय शत्रुभिः क्रियमाणे प्रहारे ३अभ्यवसादने ४ प्रहारमात्रे, ५ आसादने, ६ प्रपाते च। ल्युटि अभ्यवस्कन्दनमप्यत्रार्थे न॰।

**अभ्यवहरण** न॰ अभि+अव-हृ-ल्युट्। भोजने।

**अभ्यवहार** पु॰ अभि+अव+हृ-घञ्। भोजने। "अन्नाद्याभ्यवहारेषु" मनुः।

**अभ्यवहार्य्य** त्रि॰ अभि+अव+हृ-ण्यत्। भोक्तुं योग्ये।"सर्व्वमौदरिकस्याभ्यवहार्य्यमेव" विक्र॰।"वरं विषदभ्यवहार्य्यम्" पा॰भ॰

**अभ्यवहृत** त्रि॰ अभि+अव+हृ-क्त। भक्षिते।

**अभ्यवायन** न॰ अभि+अव+इण-ल्युट्। आभिमुख्येनापयाने "यत्र शुष्कस्य चार्द्रस्य च सन्धिःस्यात्तदुपगूहेत यद्यु अभ्यवायनाय" शत॰ब्रा॰।

**अभ्यसन** न॰ अभि+अस-ल्युट्। १अभ्यासे २पौनःपुन्येनैकक्रियाकरणे ३ पुनःपुनरावर्त्तने "विद्यामभ्यसनेनेव प्रसादयितुमर्हसि" रघुः। "स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते" गीता "अनभ्यसनशीलस्य विद्येव तनुतां गता" रामा॰ "वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः" दक्षः।

**अभ्यसनीय** त्रि॰ अभि+अस—आवश्यकार्थे अनीयर्। अवश्याभ्यासयोग्ये वेदादौ।

**अभ्यसूयक** त्रि॰ अभि+असू—उपतापे कण्ड्वा॰ यक् ण्वुल्। अक्षान्त्यासूयाकर्त्तरि सन्मार्गवर्त्तिनां गुणेषु दोषारोपके। "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः" गीता।

**अभ्यसूया** स्त्री अभि+असू—उपतापे कण्ड्वादि॰ यक् प्रत्ययान्तत्वात् अ, स्त्रीत्वात् टाप्। गुणेषु दोषारोपणे। "तेनाभ्यसूया पदकाङ्क्षिणा ते" कुमा॰ "रूपेषु वेषेषु च साभ्यसूयाः" "शक्राभ्यसूयाविनिवृत्तये यः" "नूनं तेनाभ्यसूयापरीऽभूत्" इति च रघुः।

**अभ्यस्त** त्रि॰ अभि+अस—क्त। पौनःपुन्येनैकजातीयाक्रिया कर्मणि पुनःपुनरावर्त्तिते। "शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणामिति" रघुः। २ "उभे अभ्यस्तम्" पा॰ उक्तयोः कृतद्वित्वयोरुभयोः धातुभागयोः। "नाभ्यस्ताच्छतुः" "अभ्यस्तस्य च" पा॰।

**अभ्यस्य** अव्य॰ अभि+अस—ल्यप्। पुनःपुनरावर्त्त्येत्यर्थे।

**अभ्याकाङ्क्षित** न॰ अभि+आ+काङ्क्ष—भावे क्त। १मिथ्याभियोगे। (मिथ्यानालिश) कर्म्मणि क्त। २ईप्सिते त्रि॰।

**अभ्याख्यान** न॰ अभि+आ+ख्या-ल्युट्। १ मिथ्याभियोगे, "शतं मे धारयसीत्यादि" मिथ्याभियोगे २ मिथ्योद्भावने च।

**अभ्यागत** पु॰ अभि+आ+गम+क्त। भिक्षुपामीप्ये स्वयं गतेऽतिथौ "सर्व्वत्राभ्यागतो गुरुः" पुरा॰। २ सम्मुखागतमात्रे त्रि॰। "अभ्यजातोऽभ्यागतकृर्षतर्षकान्" माघः।

**अभ्यागम** आभिमुख्येनागम्यतेऽत्र अभि+आ+गम—अप्। १ युद्धे। कर्मणि अप्। २ अन्तिके। करणे अप्। ३ विरोधे। भावे अप्। ४ अभ्युत्थाने ५ अभिघाते ६ अभिमुखगमने "किं वा भदभ्यागमकारणं ते" रघुः।

**अभ्यागमन** न॰ अभि+आ—गम—ल्युट्। १ आभिमुख्येनोद्गमने २ अभ्युत्थाने च।

**अभ्यागारिक** पु॰ अभ्यगारे तद्गतकर्म्मणि व्यापृतः ठन्।

१ स्फुटक्तिउवादिपोषणेषु व्याहृते २तेनैव व्याकुवे ।

**अभ्याघात** पु॰ अभि+आ+हन–घञ् । १ आघाते २ ताड़ने च । करणे घञ् । ३ आघातोपद्रवे । "अभ्याघातेषु भक्ष्यः स्यात् शिष्याश्चौरानिव द्रुतम्" मनुः "अभ्याघातेषु चौर्य्योपद्रवेषु" कुल्लू॰ ।

**अभ्याघातिन्** त्रि॰ अभि+आ+हन–ताच्छील्ये णिनुण् । हिंसाशीले । "अभ्याघातिभिरामिन्द्रघातकैः परिराटिभिः" भट्टिः ।

**अभ्याचार** पु॰ अभि+आ+चर–घञ् । आभिमुख्येनाचरणे । "अशारयन्त वरणेन देवाअभ्याचारमसुराणाम्" अथ॰ १०, ३, २

**अभ्याघ्राय** पु॰ अभि+आ+घ्रा–घञ् । अभिघ्राणे पूर्व्वघ्रातस्य तथात्वक्रमेण घ्राणे "तस्मिन् दक्षिणां दधाति तूपरौ मिथुनौ दद्यादित्यभ्याघ्रायेनेवमन्य" इति शत॰ ब्रा॰

**अभ्यातान** पु॰ अभि+आ+तन–घञ् । अभ्यन्तनन्ततौ ।

**अभ्यात्त** पु॰ अभि+आ+अत+सातत्ये कर्त्तरि क्त वेदे नि॰ । १सर्व्वव्यापके परमेश्वरे । "सर्व्वमिदमभ्यात्तोऽवाक्यनादरः" छा॰उप॰ । "सर्व्वमिदं जगदभ्यात्तः अभिव्याप्तः अततेः व्याप्त्यर्थस्य कर्त्तरि निष्ठा" भा॰ । अभि+आ–दा–क्त । २आभिमुख्येन गृहीते त्रि॰ । [२ आरम्भे च ।

**अभ्यादान** न॰ अभि+आ+दा–ल्युट् । १ आभिमुख्येनादाने,

**अभ्याधान** न॰ अभित आधानम् । अभितोमन्त्रादिना वज्रादेराधाने "यानिध्मस्य परिदधात्यभ्याधानाय" शत॰ ब्रा॰ । [अभ्यभितशब्दे २७५ पृष्ठे विवरणम् ।

**अभ्यान्त** पु॰ अभि+अम–क्त नि॰ । रोगयुक्ते निष्पीड़िते

**अभ्यापत्ति** स्त्री अभि+आ–पद–क्तिन् । अभिमुखागमने ।

**अभ्यामर्द्द** अभि+आ+मृद–आधारे घञ् । १ रणे । भावे घञ् । २निष्पीड़ने ।

**अभ्यायंसेन्य** त्रि॰ अभि+आ+यम–कर्म्मणि बा॰ सेन्य । अभितो नियन्तव्ये । "वांसमोऽभ्यायंसेन्या भवतं मनीषिभिः" ऋ॰ १, ३४, १, "अभ्यायंसेन्यौ अभितोनियन्तव्यौ" भा॰ ।

**अभ्यारम्भ** पु॰॰ अभि+आ+रभ–घञ् मुम् । प्रथमारम्भे

**अभ्यारूढ** त्रि॰ अभि+आ+रुह–क्त । प्रथमारूढे उद्ये "तेनैव वलमुनभ्यारूढम्" शत॰ ब्रा॰ ।

**अभ्यारोह** पु॰ अभि+आ+रुह–घञ् । १ अभिमुखारोहणे ।आभिमुख्येनारोहति देवभावमनेन करणे घञ् । २मन्त्रजपभेदे "नन्विदमभ्यारोपजपविधिशेषोऽर्थवादः" इति छ॰भा॰ । "श्रेयान् वा एषोऽभ्यारोहाद्भवति" शत॰ ब्रा॰ ।

**अभ्यारोहणीय** त्रि॰ अभि+आ+रुह–अनीयर् । आभिमुख्येनारोहणीये । यत् । अभ्यारोह्योऽप्यत्र ।

**अभ्यावर्त्त** त्रि॰ मि+आ+वृत–अच् । १ पुनः पुनरावर्त्तमाने "प्रजा वै बर्हीरेतः आज्यं तत्प्रजास्वेवैतत् रेतः सिच्यते तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते" शत॰ ब्रा॰ । भावे घञ् । २ भ्रमणावृत्तौ पु॰ । अभि+आ+वृत–णिच् कर्म्मणि अच् । २ पुनः पुनरावर्त्तनीये स्तोत्रादौ त्रि॰ । "चतुर्विंशाः पवमानाः त्रिवृदभ्यावर्त्तं चतुश्चत्वारिंशाः पवमानाः एकविंशमभ्यावर्त्तम् अष्टाचत्वारिंशाः पवमानास्त्रयस्त्रिंशमभ्यावर्त्तम्" शत॰ब्रा॰ ।

**अभ्यावर्त्तिन्** त्रि॰ भ्रमणावर्त्तते अभि+आ+वृत–णिनि । १ सन्ततं वर्त्तमाने । २वेदप्रसिद्धे चयमानराजपुत्रे पु॰ । "शेषोऽभ्यावर्त्तिने चायमानाय शिक्षन्" ऋ॰ ६, २७, ५ । "अभ्यावर्त्ती चायमानो ददाति" ऋ॰ ६, २७, ८ ।

**अभ्यावृत्त** पु॰ अभि+आ+वृत– उपसृष्टत्वात् कर्म्मणि क्त । आभिमुख्येन आनीते होमयोग्यद्रव्ये । "वातोऽभ्यावृत्तः" य॰ १, ५८ । "अभ्यावृत्तः होमयोग्यीभूतः" वे॰दी॰ २ पुनःपुनरभ्यस्ते त्रि॰ ।

**अभ्यावृत्ति** स्त्री अभि+आ+वृत–क्तिन् । पौनःपुन्येनाभ्यासे "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" पा॰ । "मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी" माघः ।

**अभ्याश** पु॰ आभिमुख्येनाश्यते व्याप्यतेऽनेन अशु–व्याप्तौ करणे घञ् । निकटे । निकटस्थस्याभिमुखव्यापनात्तथात्वम् । २ क्षिप्रे तस्याव्यवहितकालेन व्यापनात्तथात्वम् । "यएतदेवं विद्वान् साधु सामैत्युपास्ते अभ्याशोह यदेनं साधवोधर्म्मा अभ्यागच्छेयुः" छा॰उ॰ । "अभ्याशः क्षिप्रम्" भा॰"तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्" । य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्" छा॰उ॰ ।

**अभ्यास** पु॰ आभिमुख्येनास्यते क्षिप्यते अस–क्षेपे कर्म्मणि घञ् । १ निकटे । "चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी" कुमा॰ । अभेर्वैम्यार्थत्वे । २ पुनःपुनरनुशीलने पौनःपुन्येन करणे । "अमङ्गलाभ्यासरतिं विचिन्त्य तमिति" कुमा॰ । "अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ! "अभ्यासेन च कौन्तेय ! वैराग्येण च गृह्यते" । "अभ्यासेऽप्यसमर्थोऽसि मत्कर्म्मपरमोभव" ३ "अभ्यासयोगयुक्तात्मा ततो याति परां गतिम्" इति च गीता ४वेदादेरावृत्तौ च अभ्यासस्य पञ्चधा । "वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः । तद्दानञ्चैव शिष्येभ्योवेदाभ्यासो हि पञ्चधा"

दश्च । ४ ग्रन्थतात्पर्य्यज्ञापके पौनःपुन्येन कथनरूपे लिङ्गभेदे "उपक्रमोपसंहारावभ्यासोऽपूर्व्वता फलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये इति" उक्तेः यथा छान्दोग्ये षष्ठप्रपाठके "तत्त्वमसि श्वेतकेतो! इत्यस्य नवकृत्वः अभ्यासः । ५ एकस्मिन्नालम्बने देवादौ इतरतः समाहृत्य मनसः स्थापने च । कर्म्मणि घञ् । ६ व्याकरणोक्तयोः द्वित्वभावापन्नयोः धातुभागयोः । "स्यादिष्वभ्यासेन चाभ्यासस्य" पा० ।

**अभ्यासयोग** पु० अभ्यासेन सततानुशीलनेन योगः । सततैकविषयचिन्तनेन जाते समाधौ । "अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय" । "अभ्यासयोगयुक्तात्मा ततो याति परां गतिमिति" च गीता ।

**अभ्यासादन** न० अभि+आ+सद्–णिच् ल्युट् । १ शत्र्वादेः शत्रोर्निर्बलताकरणे, २ शत्रोः सम्मुखगमने ३ समीपस्थापने च ।

**अभ्याहार** पु० अभि+आ+हृ–घञ् । १ अभिहारार्थे २ समवहरणे ३ आभिमुख्येन आनयने च । "अखिन्नु हैवैऽवान्तरदेशे कर्षूं खात्वा ततोऽभ्याहारं कुर्व्वन्ति" शत०ब्रा०

**अभ्याहित** त्रि० अभि+आ+धा–कर्म्मणि क्त । १ आभिमुख्येन मन्त्रादिना स्थापिते विधिना कृतसंस्कारे वह्नौ ।

**अभ्युक्त** त्रि०आभिमुख्येनोक्तः । १ सम्यगुक्ते २ प्रकाशिते च

**अभ्युक्षण** न० अभि+उक्ष–सेचने ल्युट् । "उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्त्तितम् । न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्" स्मृत्युक्ते अवतानपाणिना सेक्ताभिमुख्येन, सेचने २सेचनमात्रे "परस्पराभ्युक्षणतत्पराणाम्" रघुः अभ्युक्षणं च स्नानकार्य्यं कात्या०२२,६,१४ । कर्त्तव्यमिति शेषः। अभ्युक्षणादि च द्रव्यादिसंस्कारविशेषः अभ्युक्षितद्रव्याणामेव यागाङ्गत्वात् । स च संस्कारः अदृष्टविशेषरूपः द्रव्यनिष्ठ इति मीमांसकाः तेषामयमाशयः । यो यद्गतफलार्थितया क्रियते स तन्निष्ठफलजनकव्यापारजनक इति नियमेन व्रीह्यादिगतावघातानुकूलशक्तिरूपफलार्थितया क्रियमाणानां प्रोक्षणाभ्युक्षणादीनां स्वगतावघातादिरूपफलजनकव्यापारत्वम् तथा च प्रोक्षिता एव व्रीह्यादयोऽवघातादौ कल्पन्ते प्रोक्षणादिजन्यः कालान्तरभाव्यवघातजनकोव्यापारो व्रीह्यादिनिष्ठ एव कल्प्यते" इति । नैयायिकास्तु "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" कुसुमा० उक्तेः प्रोक्षणादिभिः संस्कारोऽदृष्टं पुंस एव पुंनिष्ठः एव स्वीक्रियते प्रतिव्रीह्यादि नानाशक्तिकल्पनापेक्षया एकस्यैवादृष्टस्यात्मनिष्ठस्य प्रोक्षणादिजन्यस्य लाघवेन कल्पनात् शास्त्रदेशितं फलमनुष्ठातरीतिन्यायेन क्रियाकर्त्तर्य्येव प्रधानफलवत्तत्तदवान्तरादृष्टस्यापि तत्रैव कल्पनौचित्यात् अन्यथा अन्यगतादृष्टेन अन्यगतप्रधानापूर्व्वजनने वैयधिकरण्यात् अतिप्रसङ्गः स्यात् व्रीह्यादेश्च सर्व्वपुरुषसाधारण्येनानियामकत्वात् अन्यथा अकृतप्रोक्षणादिसंस्कारस्यापि पुंसः परकृतसंस्कारेण प्रधानापूर्व्ववत्त्वापत्तेः । यो यद्गतफलार्थितयेत्यादिनियमस्य शत्रुनिष्ठवधाद्युद्देशेन क्रियमाणे श्येनयागादौ व्यभिचारात्तदर्थसाधकत्वं तत्र हि शत्रुगतवधफलाद्युद्देशेऽपि अभिचारिपुरुषगतस्यादृष्टविशेषस्य कल्पनावश्यम्भावात् अन्यथा तत्कर्त्तुः प्रायश्चित्तोपदेशस्यानर्थक्यापत्तेः अभिचारकर्म्मणश्च उपपातकमध्ये मन्वादिभिर्गणनात् तस्य पापजनकत्वसिद्धिरिति ।

**अभ्युक्षित** त्रि० अभि+उक्ष–क्त । कृताभ्युक्षणे यज्ञपात्रादौ

**अभ्युक्ष्य** त्रि० अभि+उक्ष–अर्हार्थे ण्यत् । अभ्युक्षणार्हे । ल्यप् । अवतानपाणिना सिक्त्वेत्यर्थे अव्य० "असन्द्यै नमयन्त्यं हुत्वाभ्युक्ष्य सोमोपनहनेन" कात्या० २२,६,१२ । तेनोदकेनात्मानं पूजनोपकरणञ्चाभ्युक्ष्येति" त०भा० ।

**अभ्युच्चय** पु०अभि+उद्+चि–अच् । १वृद्धौ । "अभ्युच्चयस्तु लक्ष्मीः" किरा०२,१८ मल्लिनाथोक्तेः २समुच्चयेऽपि ।

**अभ्युत्थान** न० अभि+उत्–स्था–ल्युट् । १आदरेणासनादित उत्थाने २गौरवेणोत्थानादिना २प्रत्युद्गमने, ४उत्थानमात्रे, ५उद्यमे, ६उद्भवे च । "नवाभ्युत्थानदर्शिन्योननन्दुः सप्रजाः प्रजाः" रघुः "अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्" गीता । [कर्त्तरि स्त्रियां ङीप् ।

**अभ्युत्थायिन्** त्रि० अभि+उद्+स्था–णिनि । अभ्युत्थान

**अभ्युत्थित** त्रि० अभि+उद्–स्था–क्त । १कृताभ्युत्थाने अभिवादे सम्मानार्थमासनादित उत्थिते । २अभिमुखेनोद्गते च "अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान्" रघुः ।

**अभ्युत्थेय** त्रि० अभि+उद्+स्था–उपसृष्टत्वात् कर्म्मणि यत् । अभिवाद्ये यस्याभिवादनार्थमासनादित उत्थानं क्रियते तस्मिन् । "अभ्युत्थेयस्यापि" कात्या० २२,४,२७ गुर्व्वादेरभ्युत्थेयस्यापि अभ्युत्थानमिति" कर्क० ।

**अभ्युत्पतन** न० अभि+उत्+पत–ल्युट् । आभिमुख्येनोत्पतने "अवर्जिताभ्युत्पतनो नृपेण प्रसह्य सिंहः" रघुः ।

**अभ्युदय** पु०अभि+उत्+इण्–अच् । १अभीष्टकार्य्याणां प्रादुर्भावे, २वृद्धौ, "भवो हि लोकाभ्युदयाय तादृशाम्" रघुः ।

अभ्युदीयतेऽनेन करणे अच् । २आगामस्नानचूड़ादिसंस्कारे च । अत एव तदर्थकश्राद्धम् आभ्युदयिकमित्युच्यते । ४अभ्युदयसाधने इष्टलाभे ५वृद्धिनिमित्तके श्राद्धे च "स्वस्त्ययनमित्यभ्युदये दैवे रुचितमित्यपि" मनुः । "अभ्युदये वृद्धिश्राद्धे" कुल्लू० । "प्रतिषेद्धाऽपि चेद्या तु मद्यमभ्युदयेष्वपि" मनुः । भावे अच् । ६उत्तरोत्तरवृद्धौ "अभ्युदयफलं धर्मज्ञानमिति" शा०भा० "धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयसाधनमिति" भवि०पु० । अभ्युदयः इष्टलाभादि प्रयोजनमस्य ठञ् । अभ्युदयनिमित्ते श्राद्धे । "अथाभ्युदयिके श्राद्धे युग्मान् भोजयेत्" गोभि० "अभ्युदयः इष्टलाभः विवाहादि तदर्थं श्राद्धम् आभ्युदयिकम् तच्च भूतभविष्यद्भेदेन द्विविधम् भूतं पुत्रजन्मादि भविष्यत् विवाहादि" श्रा०त० रघुनन्दनः ।

**अभ्युदयार्थक** न० अभ्युदयः इष्टलाभादि अर्थो निमित्तं यस्य । अभ्युदयनिमित्ते श्राद्धे "नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयार्थकम्" मार्क० पु० ।

**अभ्युदानयन** न० अभि+उद्+आ+नी—ल्युट् । अग्नेरभिमुखानयने "अभ्युदानयन्"गो०सू० अभ्युदानयन् अग्नेरभिमुखमानयन् जपेदिति स०त० रघुनन्दनव्याख्यानात् तदुपसृष्टस्य नयतेः तथार्थत्वम् ।

**अभ्युदाहरण** न० अभि+उद्+आ+हृ—ल्युट् । १अभिमुखकथने २आभिमुख्येनोर्द्धमुत्क्षेपणे च ।

**अभ्युदित** त्रि० अभितः सर्वतः उदितस्तत्कालं प्रातर्विहितं कर्म यस्मात् । सूर्योदयकाले निद्रयाऽकृततत्कालकर्त्तव्ये १ब्रह्मचारिणि । "सूर्य्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः" मनुः । २अभितउदिते, ३ प्रकाशिते च त्रि० "माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ" म०त०पुरा० । [भावे क्त कथने न० ।

**अभ्युदीरित** त्रि० अभि—उद्+ईर—क्त । अभिमुखमुक्ते ।

**अभ्युद्गम** पु० अभि+उद्+गम—भावे अप् । १ अभ्युत्थाने २ उद्गमे च । ल्युट् । अभ्युद्गमनमप्यत्र न० ।

**अभ्युद्यत** त्रि० अभि+उद्+यम—क्त । उद्युक्ते "कुलमभ्युद्यतनूतनेश्वरम्" रघुः । १अयाचितोपनीते फलादौ, "एधोदकं मूलफलमन्नमभ्युद्यतञ्च यत्" मनुः ।

**अभ्युद्धृत** त्रि० अभि+उद्+हृ—क्त । १अयाचितोपनीते २अभ्यर्थ्य दत्ते च "एधोदकं मूलफलमन्नमभ्युद्धृतञ्च यत्" शु०त० मनुवचनपाठः "अभ्यर्थ्य दत्तमिति व्याख्यातं च रघुनन्दनेन । अभि+उद्+धृ—क्त । २आभिमुख्येनोत्तोलनेन धृते ।

**अभ्युन्नत** त्रि० आभिमुख्येन उन्नतः । आभिमुख्येन उन्नते अत्युन्नते । "अभ्युन्नताङ्गुष्ठनखप्रभाभिः" कुमा० ।

**अभ्युपगत** त्रि० अभि+उप+गम—क्त । १स्वीकृते अङ्गीकृते । २ समीपगते ३अभिमुखमुपगते च ।

**अभ्युपगम** पु० अभि+उप+गम—अप् । १स्वीकारे "क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत् प्रदीयते" मनुः । २समीपगतौ च । "नियमदयादीक्षाभ्युपगमेत्यादि" सुश्रुतः ।

**अभ्युपपत्ति** स्त्री अभि+उप+पद—क्तिन् । अनिष्टनिवारणपूर्वकाभीष्टसम्पादनरूपे अनुग्रहे, "ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकमिति" "स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति" "स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम्" इति च मनुः अभ्युपपूर्वपदतेः सान्त्वनानुग्रहार्थत्वेनैव "रतिमभ्युपपत्तुमातुराम्" इति कु०प्रयोगः । २ सान्त्वने च

**अभ्युपपत्तुम्** अव्य० अभि+उप+पद—तुमुन् । सान्त्वयितुम् अनुग्रहीतुं वेत्यर्थे "रतिमभ्युपपत्तुमातुराम्" कुमा० ।

**अभ्युपपन्न** त्रि० अभि+उप+पद—क्त । अनुगृहीते ।

**अभ्युपाय** पु० अभि+उप+इण्—अच् । १ स्वीकारे २ अभिकोपाये च । "तस्मिन् सुराणां विजयाभ्युपाये" कुमा० "तान् वोऽभ्युपायान् वक्ष्यामि" मनुः ।

**अभ्युपेत** त्रि० अभि+उप+इण—क्त । १अभिमुखसमीपगते २अङ्गीकृते ३ अङ्गीकर्त्तरि च ।

**अभ्युपेत्य** त्रि० अभि+उप+इण—कर्मणि क्यप् । अभिमुखं समीपगम्ये । ल्यप् । स्वीकृत्येत्यर्थे अव्य० । "अभ्युपेत्य च शुश्रूषामिति" नार० ।

**अभ्युपेत्याशुश्रूषा** स्त्री अभ्युपेत्य अङ्गीकृत्य अशुश्रूषाऽसेवनम् । अङ्गीकृत्य पश्चात् दास्याकरणरूपे विवादभेदे "अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते" नार० । "आज्ञाकरणं शुश्रूषा तामङ्गीकृत्य पश्चाद्यो न सम्पादयति तद्विवादपदमभ्युपेत्याशुश्रूषाख्यमिति" मिताक्षरा ।

**अभ्युपेत्या** स्त्री अभि+उप+इण—भावे क्यप् । सेवायाम् ।

**अभ्युषित** त्रि० अभि+वस—क्त । १अभिमुखमुषिते अभिमुखस्थिते सेवकादौ पु० ।

**अभ्यु(भ्यू)ष** पु० अभित उ(ऊ)ष्यते अग्निना दह्यते अभि+उ(ऊ)ष—बा० कर्मणि क । १ यवगोधूमादिचूर्णकृते (रोटि) प्रसिद्धे दग्धान्नभेदे । अत्र भावे कर्म्मणि वा घञ् । वह्निना ईषद्दग्धेऽन्ने हेम० भावे घञ् । कलायादेरीषद्दहने अभि+उष—भावादौ घञ् । अभ्योषोऽप्यत्र अभ्यु(भ्यू)(भ्यो)षायहितं छ यतौ अभ्यू(भ्यु)(भ्यो)षीयम् अभ्यू(भ्यु)(भ्यो)-

घञ् । तलच्छिते गोधूमकणायादौ । अपूपादिगणपाठात् नि० अभ्येषशब्दोऽप्युक्तार्थे ततोऽपि भवतौ उक्तार्थे ।

**अभ्यूह** अभि+ऊह-घञ् । स्वबुद्धिमात्रकल्पिते तर्के "नैषा तर्केण मतिरापनेयेति" कठ उ० भाष्ये "स्वबुद्ध्यभ्यूहेन केवलेन तर्क्यमाण इति" उक्तम् ।

**अभ्यूहनीय** त्रि० अभितः ऊहनीयः । स्वबुद्ध्या तर्कणीये ।

**अभ्यूह्य** त्रि० अभितः ऊह्यः । १स्वबुद्धिमात्रेण तर्कणीये । ल्यप् । २अभितस्तर्कयित्वेत्यर्थे अव्य० ।

**अभ्र** गतौ भ्वादि०पर०सक० सेट् । अभ्रति आभ्रीत् आनभ्र अभ्रम् "तेषसौ दन्दनुकारिवेनेव्यानभ्र निर्भयः" भट्टिः ।

**अभ्र** न० अभ्र-अच् । १मेघे २सुस्तके ३आकाशे च अवभ्रशब्देऽधिकं दृश्यम् । "तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने" मनुः "अभ्रं लिहाग्रं रविमार्गभङ्गम्" भट्टिः । "वर्णान्तरेण इवमभ्रघनादिवोन्दोः" रघुः कुर्वादिगणपाठात् तन्नामके ऋषिभेदे पु० । तस्य अपत्यम् कुर्वादि०ण्य । आभ्र्यः तदपत्ये पुंस्त्री । अभ्रमिवाचरति क्यङ् अभ्रायते ।

**अभ्रक** न० पु० अभ्र-क्वुन् । कचित् पुंस्त्वमप्यस्य । (आव)-धातुभेदे एतच्च गौरीरजोजातं यथोक्तम् रसेश्वरदर्शने शिववाक्यम् । "अभ्रकस्तव बीजन्तु मम बीजन्तु पारदः अनयोर्मेलनं देवि! मृत्युदारिद्र्यनाशनम्"। जारिताभ्रस्य पारदमेलनद्वारा मृत्युनाशकत्वमतस्तज्जारणविधिर्दर्शितः चक्रदत्ते । "कृष्णाभ्रकमनेकपुटं ज्वाल्यछ्च कपालकं कृत्वा । काष्ठमयोदूखलके चूर्णं मुषलेन कुर्वीत ॥ भूयो दृषदि च पिष्टं वासःसूक्ष्मावकाशतलगलितम् । मण्डूकपर्णिकायाः प्रचुररसे स्थापयेत्त्रिदिनम् ॥ उद्धृत्य तद्रसादथ पिण्याद्ब्रह्मनिकधान्यभक्तस्य्म् । अथोदात्त-न्नाम्लस्यकजलेन प्रयत्नेन । मण्डूकपर्णिकायाः पूर्वं सुरसेनालोडनं कुर्यात् । स्थालीपाकं पुटनं चार्द्रैरपि भृङ्गराजाद्यैः ॥ तालादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्माग्नौ । तावद्द्धेत्त यावल्लीनोऽग्निदं स्यते सुचिरम् ॥ निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु । पिष्टा श्लक्ष्णं वस्त्रे चूर्णं निश्चन्द्रकं कुर्यात्" इति ।

**अभ्रंलिह** त्रि० अभ्रं गगनं लेढ़ि स्पृशति अभ्र+लिह-खश् मुम् । गगनस्पर्शिनि अत्युच्चे "प्रासादमभ्रंलिहमारुरोह" रघुः"अभ्रंलिहाग्रं रविमार्गभङ्गमिति" भट्टिः ।

**अभ्रङ्कष** त्रि० अभ्रं गगनं कषति पीडयति उच्चत्वात् अभ्र+कष-ख मुम् । अत्युच्चे । "आदायाभ्रङ्कषं प्रायान्मलयं फलशालिनम्" भट्टिः ।

**अभ्रजा** त्रि० अभ्रात् मेघात् जायते जन-विट् ५त० । मेघजाते "यो अभ्रजा वातजा यश्च शुष्मोवनस्पतीनृत्सचतां पर्वतांश्च, अथ० १,१२,३जन-ड । अभ्रजोऽप्युक्तार्थे त्रि०

**अभ्रनाग** पु० ६त० १ ऐरावते गजे ।

**अभ्रपथ** पु० ६त० अच् समा० । विमाने गगनमार्गे ।

**अभ्रपिशाच** पु० अभ्रे गगने पिशाच इव । राहुग्रहे तस्य छायात्मकत्वेन नीलवर्णतया पिशाचतुल्यत्वम् ।

**अभ्रम** पु० भ्रमोभ्रमणं मिथ्याज्ञानञ्च अभावे न०त०। १भ्रमाभावे । न०ब०। २भ्रान्तिशून्ये त्रि० । [जटामांस्याम् ।

**अभ्रमांसी** स्त्री अभ्रमिव जटाया मांसमस्य गौ०ङीष् ।

**अभ्रमाला** स्त्री ६त०। मेघसमूहे ।[जैन लिप्रायां स्त्रियाञ्च ।

**अभ्रलिप्ती** स्त्री ३त० ङीप् । १अल्पार्थैलिप्रायां दिवि २अल्पसुख-

**अभ्रवर्ष** पु० अभ्रैर्मेघैर्वर्ष्यते कर्मणि घञ् । १मेघैः सिच्यमाने "दिव्यानकोशासो अभ्रवर्षाः" ऋ० ८,८८,६, अभ्रवर्षाः अभ्रैर्द्यमाणाः भा०। भावे घञ् । २मेघवर्षणे ।

**अभ्रवाटिका** स्त्री अभ्रेण शून्येन वाटो वेष्टनं यस्याः गौ० ङीष् । आम्रातकवृक्षे । तस्याः फलशून्यकाले शून्यावृतत्वेन प्रतीतेस्तथात्वम् ।

**अभ्राज** त्रि० न भ्राजते भ्राज-अच् न०त० । १ दीप्तिशीलभिन्ने २सामगानविशेषद्रष्टरि ऋषिभेदे पु०। तेन दृष्टं साम अण् । आभ्राजं तद्दृष्टे सामभेदे न० तच्च "परिस्रानो गरिष्ठा इत्यस्यामृचि गीयमानं साम" ता०ब्रा०भा० । तदपि ऊहगाने ६प्र० दर्शितम् । तस्य च पाठविनियोगः ता०ब्रा० उक्तः यथा "भ्राजाभ्राजे पवमानमुखे भवत" इति गवामयने विषुवन्नामाहे तत् पाठ्यम् ।

**अभ्रातृ**(क) पुंस्त्री नास्ति भ्राता यस्य वेदे न कप् लोके तु कप् । भ्रातृशून्ये ।"अभ्रातेव पुंस एति प्रतीची"ऋ० १,२४,७, कवभावे स्त्रियां ङीप् । "नाभ्रातृकीमुपयच्छेत्" स्मृ०। कपि तु अभ्रातृका तत्रार्थे "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्" मनुः ।

**अभ्रातृव्य** त्रि० नास्ति भ्रातृव्यः शत्रुर्यस्य । शत्रुरहिते "अभ्रातृव्योभ्रातृव्यहा भवति य एवं विद्वान्" शत०ब्रा०

**अभ्रान्त** त्रि० विरोधे न०त०। १ भ्रान्तभिन्ने यथार्थज्ञानयुक्ते २ भ्रमणशून्ये स्थिरे च ।

**अभ्रान्ति** स्त्री अभावे न०त०। १मिथ्याज्ञानाभावे २ भ्रमणाभावे च । न०ब०। ३मिथ्याज्ञानशून्ये ४ भ्रमणशून्ये च त्रि०।

**अभ्रावकाश** पु०अभ्रमेवावकाशः । इतरावरणशून्ये आकाशमात्रावकाशे ।

अभ्रावकाशिन् त्रि० अभ्रावकाशोऽस्त्यस्य इनि । गगनमात्रावकाशवति निरावरणे । स्वार्थे कन् । तत्रैव “ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः” मनुः ।

अभ्रि स्त्री अभ्रति गच्छं यस्मात् अभ्र गतौ अपादाने इन् । १नौकामलघर्षणार्थे काष्ठमये कुद्दाले २ कुद्दालभाले च । “खनति भेषजमिन्नुपक्रम्य । “हिरण्मयीभिरभ्रिभिर्गिरीणामुपसानुषु” अथ० १०,४,१४ । वा ङीप् । अभ्रीत्यप्यत्र

अभ्रित त्रि० अभ्रं मेघो जातमस्य तार० इतच् । जातमेघे अम्बरादौ “ददर्श काले दिवमभ्रितामिव” रघुः ।

अभ्रिय त्रि० अभ्रे मेघे भवः घ । १मेघोद्भवे, २ मुस्तकभवे, ३गगनभवे च । “अभ्रिया न द्युतयन्तो वृष्टयः ऋ०२, ३४,२, । “यदभ्रियां वाचमुदीरयन्ति ऋ०१,१६८,८, ।

अभ्रेष पु० भ्रेष-चलने घञ् न०त० । १ न्याय्ये, उचिते । २ चलनशून्ये त्रि० ।

अभ्व त्रि० भू-प्राप्तौ क्वन् डित्त्व न०त० । महति निरु० । “यत्र ते विश्वागिरश्चिदभ्वाः” इति ऋ० १,६३,१ ।

अम रोगे चुरा० उभय० सेट् अक० पीडने सक० । आमयति-ते आमिमत् त । “यक्ष्मा उदरमामयत्” ऋ० १०८६,८ मा च नः किञ्चनाममत्” अथ० ६,३७,२ । अमितः-आन्तः घञादौ तत्र अमः-आमः अमी-आमी ।

अम गतौ भोजने भ्वादि० सक० शब्दे च अक० सेट् प० । अमति आमीत् । “किन्नुरपत्निनस्त्वमभ्यमीषि” १०,८६,८ वेदे शपोलुकि ईट् । अमतः अमतिः अमनिमः ।

अम पु० अम-रोगे घञ् । १ रोगे “अम-गतौ अच् । माणे सर्व्वदागतिमत्त्वात्तस्य तथात्वम् । “वाक्वै सामैषा सा चामश्चेति छा० उ० “अमो नामासि अमा हि सर्व्वमिदम् का०उ० । अमः प्राणः भा० । अमति सहगच्छति । सेवके “याहि राजेवामवाँ” इभेन य० १३, ८ । “अमवान् सेवकान्” वेदी० ४ अपक्वफलादौ न० शब्दर० । प्राणहेतुत्वात् ५ बले “सैनेव सृष्टामं दधाति” ऋ० १,६६,४, अमं बलम् भा० ।

अम् अव्य० चु० अम-क्विप् स्वरादि० । १वले २ शीघ्रतायाञ्च

अमङ्गल पु०नास्ति मङ्गलं प्रयोजनं यतः । एरण्डवृक्षे । हेम० । २मङ्गलशून्ये त्रि० । न०त० । मङ्गलभिन्ने । अमङ्गलञ्च मङ्गलविरोधि वस्तु । मङ्गलञ्च अभिप्रेतार्थसिद्धिर्मङ्गलमित्युक्तलक्षणं तद्विरोधि अनभिप्रेतार्थसिद्धिः । तथा च अनिष्ट दुःखावाप्तिरमङ्गलं मङ्गलस्य चेतोविनायकस्तवपाठादेर्मङ्गलत्ववत् अनिष्टप्राप्तिसाधनस्याप्यमङ्गलत्वम् । अमङ्गलसाधनं च द्विविधं लौकिकमलौकिकञ्च । लौकिकमिष्टवियोगादि । अलौकिकन्तु अनिष्टसूचकत्वात् अनिष्टसाधनम् न तु कारकम् “गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचकाः इत्युक्तेः “उत्पातेन ज्ञापिते चेति वार्त्तिकोक्तेश्च । अलौकिकमपि त्रिविधं भौमं दिव्यमान्तरिक्षञ्च । तानि च उत्पातशब्दे वक्ष्यन्ते । अमङ्गलसूचकानि लिङ्गानि च कानिचित् साधारणानि कानिचिद्साधारणानि नेत्रस्पन्दादीनि तत्र साधारणानि कतिचित् संगृह्य दर्श्यन्ते यथा भा०भी०प० । “तथेमानि निमित्तानि भयायाद्योपलक्षये ॥ श्येना गृध्राश्च काकाश्च कङ्काश्च सहिता बकैः । संपतन्ति नगाग्रेषु समवायांश्च कुर्व्वते ॥ अभ्यग्रञ्च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः । क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनाम् ॥ निर्द्दयञ्चाभिवाशन्तो भैरवा भयवेदिनः । कङ्काः प्रयान्ति मध्येन दक्षिणामभितो दिशम् ॥ उभे पूर्व्वापरे सन्ध्ये नित्यं पश्यामि भारत ! । उदयास्तमने सूर्य्यं कबन्धैः परिवारितम् ॥ श्वेतलोहितपर्य्यन्ताः कृष्णग्रीवाः सविद्युतः । त्रिवर्णाः परिघाः सन्धौ भानुमन्तमवारयन् ॥ ज्वलितार्केन्दुनक्षत्रं निर्व्विशेषदिनक्षयम् । अहोरात्रं मया दृष्टं तद्भयाय भविष्यति ॥ अलक्ष्यः प्रभया हीनः पौर्णमासीञ्च कार्त्तिकीम् । चन्द्रोऽभूदग्निवर्णश्च पद्मवर्णे नभस्तले ॥ स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः । राजानो राजपुत्राश्च शूराः परिघबाहवः ॥ अन्तरीक्षे वराहस्य वृषदंशस्य चोभयोः । प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रलक्षये ॥ देवताप्रतिमाश्चैव प्रकम्पन्ते हसन्ति च । वमन्ति रुधिरञ्चास्यैः स्विद्यन्ति प्रपतन्ति च ॥ अनाहता दुन्दुभयः प्रणदन्ति विशाम्पते । अयुक्ताश्च प्रवर्त्तन्ते क्षत्रियाणां महारथाः ॥ कोकिलाः शतपत्राश्च चाषा भासाः शुकास्तथा । सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणाः ॥ गृहीतशस्त्राः क्रोशन्ति चर्म्मिणो वाजिपृष्ठगाः । अरुणोदये प्रदृश्यन्ते शतशः शलभव्रजाः ॥ उभे सन्ध्ये प्रकाशेते दिशां दाहसमन्विते । पर्ज्जन्यः पांशुवर्षी च मांसवर्षी च भारत ! ॥ या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसम्मता अरुन्धती तयाप्येष वशिष्ठः पृष्ठतः कृतः ॥ रोहिणीं पीडयन्नेष स्थितो राजन् ! शनैश्चरः । व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयम् ॥ अनभ्रे च महाघोरः स्तनितः श्रूयते स्वनः । वाहनानाञ्च रुदतां निपतन्त्यश्रुबिन्दवः ॥ खरा गोषु प्रजायन्ते रमन्ते मातृभिः सुताः । अना-

र्त्तवं पुष्पफलं दर्शयन्ति वनद्रुमाः ॥ गर्भिण्यो राजपुत्राश्च जनयन्ति विभीषणान् । क्रव्यादाः पक्षिणश्चापि सहाश्नन्ति परस्परम् ॥ त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः । द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥ जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः । त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्दंष्ट्रा विषाणिनः ॥ तथैवान्याश्च दृश्यन्ते स्त्रियो वै ब्रह्मवादिनाम् । वैनतेयान् मयूरांश्च जनयन्त्यः पुरे तव ॥ गोवत्सं वड़वा सूते श्वा शृगालं महीपते ! । कुक्कुटान् करभांश्चैव शुकांश्चाशुभवादिनः ॥ स्त्रियः काश्चित् प्रजायन्ते चतस्रः पञ्च कन्यकाः । जातमात्राश्च नृत्यन्ति गायन्ति प्रहसन्ति च ॥ पृथग्जनस्य सर्वस्य क्षुद्रकाः प्रहसन्ति च । नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयम् । प्रतिमाश्चालिखन्त्येते सशस्त्राः कालचोदिताः अन्योन्यमभिधावन्ति शिशवो दण्डपाणयः । अन्योन्यमवमृद्नन्ति नगराणि युयुत्सवः ॥ पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च । विष्वग्वाताश्च वान्त्युग्रा रजो नाप्युपशाम्यति । अभीक्ष्णं कम्पते भूमिरर्कं राहुरुपैति च । श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति । अभावं हि विशेषेण कुरूणां तत्र पश्यति ॥ धूमकेतुर्महाघोरः पुष्यञ्चाक्रम्य तिष्ठति । सेनयोरशिवं घोरं करिष्यति महाग्रहः ॥ मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः । भाग्यं(मघाम्)नक्षत्रमाक्रम्य सूर्य्यपुत्रेण पीड्यते ॥ शुक्रः प्रोष्ठपदे पूर्व्वे समारुह्य विरोचते । उत्तरे तु परिक्रम्य सहितः समुदीक्ष्यते ॥ श्वेतो ग्रहः प्रज्वलितः सधूम इव पावकः । ऐन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥ ध्रुवं प्रज्वलितं घोरमपसव्यं प्रवर्त्तते । रोहिणीं च पीड़यत उभौ च शशिभास्करौ ॥ चित्रास्वात्यन्तरे चैव धिष्ठितः परुषो ग्रहः । वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः । ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ॥ सर्व्वशस्यपरिच्छन्ना पृथिवी सस्यशालिनी । पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः ॥ प्रधानाः सर्व्वलोकस्य यास्वायत्तमिदं जगत् । ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत ॥ निश्चेरुरर्चिषश्चापात् खड्गाश्च ज्वलिता भृशम् । व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम् ॥ अग्निवर्णा यथा भासः शस्त्राणामुदकस्य च । कवचानां ध्वजानाञ्च भविष्यति महान् क्षयः ॥ पृथ्वी शोणितावर्त्ता ध्वजोडुपसमाकुला । कुरूणां वैशसे राजन् ! पाण्डवैः सह भारत ! ॥ दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः । अत्याहितं दर्शयन्तो वेदयन्ति महद्भयम् ॥ एकपक्षाक्षिचरणः शकुनिः खचरो निशि । रौद्रं वदति संरब्धः शोणितं छर्द्दयन्निव ॥ शस्त्राणि चैव राजेन्द्र ! प्रज्वलन्तीव संप्रति । सप्तर्षीणामुदाराणां समवच्छाद्यते प्रभा ॥ संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ । विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ ॥ चन्द्रादित्यावुभौ ग्रस्तावेकपक्षे त्रयोदशीम् । अपर्व्वणि ग्रहं यातौ प्रजासंक्षयमिच्छतः ॥ अशोभिता दिशः सर्व्वाः पांशुवर्षैः समन्ततः । उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम् ॥ कृत्तिका पीड्यते तीक्ष्णैर्नक्षत्रं पृथिवीपते ! ॥ अभीक्ष्णं वाता वायन्ते धूमकेतुमवस्थिताः । विषमं जनयन्त्येते आक्रन्दजननं महत् ॥ त्रिषु सर्व्वेषु नक्षत्रेषु विशाम्पते ! गृध्रः संपतते शीर्षं जनयन् भयमुत्तमम् ॥ चतुर्द्दशीं पञ्चदशीं भूतपूर्व्वां च षोड़शीम् । इमान्तु नाभिजानामि भूतपूर्व्वां त्रयोदशीम् ॥ चन्द्रसूर्य्यावुभौ ग्रस्तावेकमासे त्रयोदशीम् । अपर्व्वणि ग्रहावेतौ प्रजाः संक्षपयिष्यतः । शोणितैर्व्यक्तसम्भूर्णा अत्रप्राकाल राक्षसाः । प्रतिस्रोतोवहा नद्यः सरितः शोणितोदकाः । फेनायमानाः कूपाश्च कूर्द्दन्ति वृषभा इव ॥ पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः । अद्य चैव निशां व्युष्टामुदये भानुराहरत् ॥ ज्वलन्तीभिश्च वह्नीभिरुल्काभिः सर्व्वतो दिशम् । अन्योन्यमवस्थयन्त्युक्तश्चोक्तं महर्षिभिः। भूमिपालसहस्राणां भूमिः पास्यति शोणितम् ॥ कैलासमन्दराभ्यान्तु तथा हिमवतो गिरेः । सहस्रशो महाशब्दाः शिखराणि पतन्ति च ॥ महाभूता भूमिकम्पे चत्वारः सागराः पृथक् । वेलामुद्वर्त्तयन्तीव क्षोभयन्तो वसुन्धराम् । वृक्षानुन्मथ्य वान्त्युग्रा वाताः शर्करकर्षिणः ॥ अभग्नाः सुमहावातैरशनीभिः समाहताः । वृक्षाः पतन्ति चैत्याश्च ग्रामेषु नगरेषु च । नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजैः । वामार्चिर्दुष्टगन्धश्च शब्दन् वै दारुणं स्वनम् ॥ स्पर्शा गन्धा रसाश्चैव विपरीता महीपते ! । धूमं ध्वजाः प्रमुञ्चन्ति कम्पमाना मुहुर्मुहुः ॥ मुञ्चन्त्यङ्गारवर्षञ्च भेर्य्यश्च पटहास्तथा ॥ शिखराणां सहस्रानामुपरिष्टात् समन्ततः । वायसाश्च रुवन्त्युग्रं वामं मण्डलमाश्रिताः । पक्वापक्वेति सुभृशं वावाश्यन्ते वयांसि च ॥ निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् ॥ ध्यायन्तः प्रकिरन्तश्च व्याला वेपथुसंयुताः । दीनास्तुरङ्गमाः सर्वे वारणाः सलिलाश्रयाः" इति असाधारणानि अमङ्गलानि च दर्शितानि यथा "सुक्रेशीं छिन्ननासां रुदतीञ्च दिगम्बराम् । कृष्णवस्त्रपरीधाना-

मपरां विधवामपि । मुखदुष्टां योनिदुष्टां व्याधिताञ्चैव कुट्टिनीम् । पतिपुत्रविहीनाञ्च डाकिनीं पुंश्चलीमहो । कुम्भकारं तैलकारं व्याधं सर्पोपजीविनम् । कुचेलमतिरुक्षाङ्गं नग्नं काषायवासिनम् । अङ्गविक्रयिणञ्चैव कन्याविक्रयिणं तथा । चितां दग्धशवं भस्म निर्व्वाणाङ्गारमेव च । सर्पञ्चतनरं सर्पं गोधाञ्च शशकं विषम् । भ्राद्धपात्रञ्च पिण्डञ्च मोटकं वानरं तथा । देवलं ग्रामयाजञ्च शूद्र-श्राद्धान्नभोजिनम् । शूद्रान्नपाचकं शूद्रयाजकं ग्राम-याजकम् । कुशपुत्तलिकाञ्चैव शवदाहनकारिणम् । शून्यकुम्भं भग्नकुम्भं तैलं लवणमस्थि च । कार्पासं कच्छपं चूर्णं कुक्कुरं शब्दकारिणम् । दक्षिणेन शृगालञ्च कुर्व्वन्तं भैरवं रवम् । कपर्द्दकञ्च चौरञ्च छिन्नकेशं नखं मलम् । कलहञ्च विलापञ्च विलापकारिणं जनम् । अमङ्गलं वदन्तञ्च रुदन्तं शोककारिणम् । मिथ्यासाक्षिप्रदातारं चौरञ्च नर-घातिनम् । पुंश्चलीपतिपुत्रञ्च पुंश्चल्योदनभोजिनम् । देवतागुरुविप्राणां वस्तुवित्तापहारिणम् । दत्तापहारिणं दस्युं हिंसकं सूचकं खलम् । पितृमातृविरक्तञ्च द्विजा-श्वत्थघातिनम् । सत्यघ्नञ्च कृतघ्नञ्च स्थाप्यापहारिणं जनम् । विप्रद्रोहं मित्रद्रोहं शठं विश्वासघातकम् । गुरु-देवद्विजानाञ्च निन्दकं स्वाङ्गघातकम् । जीवानां घातकञ्चैव स्वाङ्गहीनञ्च निर्द्दयम् । व्रतोपवासहीनञ्च दीक्षाहीनं नपुंसकम् । गलितव्याधिगात्रञ्च काणं बधिरमेव च । पुक्कसं छिन्नलिङ्गञ्च सुरामत्तं सुरां तथा । विप्रं वमन्तं रुधिरं महिषं गर्द्दभं तथा । मूत्रं पुरीषं श्लेष्माणं कन्थिनं चक्रपालिनम् । झञ्झावातं रक्तवृष्टिं वात्याञ्च वृक्ष-पातनम् । वृकञ्च शूकरं गृध्रं श्येनं कङ्कञ्च भल्लुकम् । पाशञ्च शुष्ककाष्ठञ्च वायसं शम्बुकं तथा । अपदानिव्राह्मणञ्च तन्त्रमन्त्रोपजीविनम् । वैद्यञ्च रक्तपुष्पञ्चैवौषधं तुष-मेव च । कुवार्त्तां कृतवार्त्ताञ्च विप्रशापञ्च दारुणम् । दुर्गन्धवातं दुःशब्दं राजा संप्राप्य वर्त्मनि । मनश्च कुत्सितं प्रायः क्षुभितञ्च निरन्तरम् । वामाङ्गस्पन्दनं देहज्वरो राज्ञो बभूव ह । तथापि राजा निःशङ्कं दर्शंदर्शममङ्गलम्” इति ब्रह्म॰पु॰नि॰नि । एवमन्यान्यपि साधारणासाधारणानि निमित्तान्यूह्यानि “अमङ्गलाभ्यासरतिं विचिन्त्य तम्” कुमा॰

**अमङ्गल्य** त्रि॰ अमङ्गलाय हितं यत् । अमङ्गलसाधने “अमङ्गल्यं शीलं तव भवतु नामैवमखिलम्” पुष्पदन्तः ।

**अमण्ड** त्रि॰ नास्ति मण्डो भक्तादिपिष्ट भूषा वा यस्य । १ मण्डहीने भक्तादौ २ भूषणहीने च ।

**अमत** पु॰ अम-रागादौ अतच् । १मृत्यौ २काले ३रोगे च । ४रेणौ उज्ज्वल॰ । मन–क्त न॰त॰ । ५अम्मतभिन्ने त्रि॰ । “यस्यामतं तस्य मतमिति श्रुतिः । ६अज्ञाते च ।

**अमति** पु॰ अम–अति । १ काले उणा॰ । २ चन्द्रे मेदि॰ ३रूपे स्त्री निरु॰ वेदे तु रूपे एव अस्य प्रयोगः “हिरण्ययोममतिं याश्रयिद्धेत्” “अयुर्वां हर्ष्यामममतिं सृजान” ऋ॰७,३८,१,२ अमतिं रूपमिति भा॰ आवस्तुरेवममतिं दर्शता” १,६४,८ । दुष्टे त्रि॰ शब्दार्थ॰। मननं मतिः अभावे न॰त॰। ४ज्ञानाभावे यथास्वरूपाज्ञाने । “अमत्यैतानि षड्जग्ध्वा त्रिरात्रमिति” मनुः “कृच्छ्रांस्तु चतुरः कुर्य्याद्गोवधे बुद्धिपूर्व्वके अमत्या तु द्वयं कुर्य्यादिति स्मृतिः ५ अप्रशस्तबुद्धौ च स्त्री न॰ब॰ । ६ज्ञानहीने त्रि॰ ।

**अमतीवन्** त्रि॰ अमतिरप्रशस्ता बुद्धिः तया वनुते वन–क्विप् दीर्घः । अप्रशस्तबुद्धियुक्ते । “न मे स्तोताऽमतीवान दुर्हितः स्यात्” ऋ॰८,१९,२६ । “अमतीवा अप्रशस्तबुद्धिमान्” भा॰।

**अमत्र** न॰ अमत्यन्नमत्र अम–भोजने आधारे अत्रन् । १भोजनपात्रे । “अयं सोमश्चमूसुतोऽमत्रे परिषिच्यते” ऋ॰५, “आसनं वसनं चैव शय्याऽमत्रं कमण्डलुः । आत्मनस्तु शुचीनि स्युर्न परेषां कदाचन” स्मृतिः । अम–रोगे अत्रन् । २ शत्रूणामभिभावके । “महाँ अमत्रो वृजने” ऋ॰२,२६,४ । “अमत्रः शत्रूणामभिभविता” भा॰ अम–गतौ कर्त्तरि अत्रन् । ३गमनशीले त्रि॰ । “सरिरमत्रो वयन्ते रथाय १,६१,९ । “अमत्रः युद्धादिषु गमनकुशलः” भा॰ ४ बले च “गम्भीरेण न उरुणाममत्रिन्” ६,२४,९ “अमत्रं बलं तद्वन्” भा॰ ।

**अमत्त** त्रि॰ न॰त॰ । १ मत्तभिन्ने मादकद्रव्यादिभिरविह्वलचित्ते २सावधाने अप्रमत्ते च । [२अन्यदेवमूल्ये त्रि॰।

**अमत्सर** पु॰ अभावे न॰त॰ । १अन्यशुभद्वेषाभावे । न॰ब॰ ।

**अमनस्** त्रि॰ नास्ति कार्य्यक्षमं मनो यस्य । १ कार्य्यक्षममनोहीने बालादौ “यथा बाला अमनसः प्राणन्तः” छा॰उ॰। २मनोवृत्तिहीने योगिनि च । सर्व्वथा मनःशून्ये ३परात्मनि पु॰ “अप्राणो ह्यमनाः शुभ्रः” श्रुतिः । वा कप् । ४अन्यमनस्के ५स्नेहशून्ये ६अभिलष्टचित्तमनस्के च ६योगपञ्चभेदे पु॰ ।

**अमनि** स्त्री अमति गच्छत्यत्र अम–अनि । पथि ।

**अमनुष्य** पु॰ अभावार्थे न॰त॰ । १ मनुष्योचितकर्त्तव्यशून्ये जातिमात्रमनुष्ये २मनुष्यभिन्ने गन्धर्व्वादौ च “सहस्रसंवत्सरममनुष्याणामसम्भवात्” कात्या॰ १,६,१७ । सहस्रसंवत्सर-

सत्वम् अमनुष्याणां मनुष्यभिन्नानां गन्धर्व्वादीनां सत्त्वात् दृढत्वायुष्यं भवति मनुष्याणां तु तदसम्भवात्" कर्क०।

**अमनोगत** त्रि० न मनोगतः। १ अनभिप्रेते २ मनसाऽचिन्तिते। [अस्वीकृते २अनभिप्रेते च

**अमनोनीत** त्रि० न मनसा नीतः स्वीकृतः। १ मनोऽस्वी-

**अमनोयोग** पु० मनसो योगः विषयेषु सावधानतया संयोजनम् अभावे न०त०। अवधानाभावे तत्त्वनिर्णायकमनोऽवस्थाभावे। न०ब०। तच्छून्ये त्रि०।

**अमनोहर** त्रि० विरोधे न०त०। रम्यभिन्ने कुत्सिते।

**अमन्तु** त्रि० मन्तुर्मन्ता मन–तुन् न०त०। अज्ञातरि "अकर्मा दस्युरभितो अमन्तुरन्यव्रतः" ऋ०१०,२२,८ १ मन्तुरपराधः न०ब०। २ तच्छून्ये त्रि०।

**अमन्त्र** त्रि० नास्ति मन्त्रः पाठ्यो यत्र कर्मणि। १ मन्त्रशून्ये कर्म्मादौ "सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्" मनुः नास्ति मन्त्रः मन्त्राध्ययनमस्य। २ वेदपाठशून्ये "अव्रतानाममन्त्राणां जातिमात्रोपजीविनां नैषाम् प्रतिग्रहो देयः" "निरिन्द्रियाह्यमन्त्राश्च स्त्रियोऽनृतमितीरिताः" इति च मनुः। वा कप्। अमन्त्रकोऽप्युक्तार्थे "अमन्त्रकं तु शूद्रस्य सर्व्वकर्म्माणि कारयेत्" अमन्त्रकस्य शूद्रस्य विप्रोमन्त्रेण गृह्यते" इति च स्मृतिः। [कष्टे च।

**अमन्द** त्रि० विरोधे न०त०। १मन्दभिन्ने पटौ २उत्-

**अमम** त्रि० नास्ति ममेत्यभिमानः गेहादिषु यस्य। स्वदेहपुत्रादिषु ममेत्यभिमानशून्ये "शरण्येष्वममश्चैव वृक्षमूलनिकेतनः" मनुः। २ जिनविशेषे पु०। अममकारादयोऽत्र

**अमर** पु० मृ–पचाद्यच् न०त०। बहुकालस्थायितया मृत्युहीने देवे, "तत्रामरास्तवमरावमरालकेशी" नै० "सुधाश्च रत्नानि हरामराङ्गनाः" माघः। लोकगुत्तराणि क्रमशः श्रवङ्गमनरामराः" मनुः अष्टयाज्ञिकमध्ये २ अमरसिंहनामके शाब्दिके "पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः" इति कविक०। स च काण्डत्रययुक्तलिङ्गानुशासनकोषकर्त्ता विक्रमादित्यसभासदनवरत्नमध्येऽन्यतमः "धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कु वेतालभट्टघटकर्परकालिदासाः। ख्यातोवराहमिहिरोन्टपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" शङ्कुः सुवाग् वररुचिर्मणिरंशुदत्तो जिष्णुस्त्रिलोचनहरो घटकर्पराख्यः। अन्येऽपि सन्ति कवयोऽमरसिंहपूर्व्वा यस्यैव विक्रमन्टपस्य सभासदोऽमी" इति च ज्योतिर्विदा०। ३स्नुहीवृक्षे, स हि छिन्नोऽपि पुनःपुनः प्ररोहति, सहसा न म्रियते। ४ पारदे तस्य वह्न्यादौ बहुतापनेऽपि न ध्वंसः। अपादाने वा अप्। तत्रैव तस्य सेवने हि मृत्युराहित्यम् रसेश्वरदर्शनग्रन्थे वक्ष्यते। ५ अस्थिसंहृद्वृक्षे च स हि बहुकालं भूमौ स्थितोपि न जीर्य्यति। स०ब० ६ मरणशून्ये त्रि०। "अजरामरवत् प्राज्ञो विद्यामर्थांश्च चिन्तयेत्" हितो० "उत्पादयति सावित्र्या सा नित्या साऽजराऽमरा" मनुः ज्योतिषोक्ते ७ विवाहयोटकार्थे नक्षत्रगणभेदे "इन्द्राख्यातिद्युतिहरगिरिः पुष्यमैत्रादिभानि पौष्णादित्ये जगुरिह बुधा देवसंज्ञानि भानि" ज्यचिन्ता० अधिकं गणशब्दे दृश्यम्। मरुत्वतीगर्भजाते ८मरुद्गणभेदे पु०। "मारुत्वती च मरुतो देवानजनयत् सुतान् अग्निश्चक्षुर्हविर्ज्योतिः सावित्रं मित्रमेव च। अमरं शरवृष्टिञ्च संवर्त्तञ्च महाभुजम्" इत्यादि हरिवं० ९ गुडूच्याम् १० दूर्वायां ११ वास्तुकवृक्षे १२ महानिलीवृक्षे १३ घृतकुमार्य्याम् १४ स्नुहीवृक्षे च स्त्री। एतासां छेदनेऽपि पुनः प्ररोहणात् यथायथं दुर्मरत्वाच्च तथात्वम्। न म्रियतेऽनया करणे अप्। १५ जरायौ स्त्री। तच्चर्म्मणा वेष्टनेनैव जठरानलदाहनिवारणात् मरणनिवारकत्वात् तथात्वम्। १६नाभिनालायाम् राजनि० १७स्थूणायां गृहस्य स्तम्भनिपातकत्वात्तथा। अमराः सन्त्यस्याम् अर्श आ०अच्। १८ इन्द्रपुर्य्याममरावत्यां स्त्री

**अमरकोष** पु० अमरेण कृतः कोषः। अमरसिंहकृते लिङ्गानुशासनाख्ये त्रिकाण्डात्मके अभिधानभेदे।

**अमरज** पु० अमरः दुर्मर इव जायते जन–ड। दुष्खदिरे कालस्कन्दाख्ये खदिरभेदे दुर्मरत्वेन जातत्वात्तथात्वम्।

**अमरदारु** पु०न०। अमराणां प्रियं दारु। देवदारुवृक्षे।

**अमरद्विज** पु० अमरपूजकः द्विजः शाक० त०। देवले (पूजारीति) ख्याते विप्रे।

**अमरपति** पु०६०त०। देवराजे इन्द्रे अमरभर्त्रादयोऽप्यत्रार्थे

**अमरपुष्पक** पु० अमरमविशीर्णं पुष्पं यस्य। १कल्पवृक्षे२इक्षुगन्धायां स्त्री। ३ काशतृणे पु० रत्नमा०।

**अमरपुष्पी** स्त्री अमरमविशीर्णं पुष्पमस्याः जातित्वात् ङीप्। अम्लानपुष्प्याम्। कप् अत इत्त्वम्। अमरपुष्पिकाप्यत्र।

**अमरप्रभु** पु०६त०। १विष्णौ तस्य सर्व्वेश्वरत्वात्तथा। २ यज्ञे च

**अमररत्न** न० अमर इव शुद्धं रत्नम्। स्फटिके मणौ।

**अमरराज** पु० ६त० टच् समा०। देवराजे इन्द्रे।

**अमरलोक** पु० ६त०। १ स्वर्गे। अमराणामिव लोको भुवनं यस्य। २प्राप्तदेवलोके धार्म्मिके त्रि०। "तेषां सत्यगवर्त्त-

मानो गच्छत्यमरलोकताम्" मनुः ।

**अमरवल्ली** स्त्री अमरा उच्छेदेऽपि न म्रियमाणा वल्ली । आकाशवल्ल्याम् (आलकलता) अमरलतादयोऽप्यत्र ।

**अमरसरित्** स्त्री ६त० । मन्दाकिन्यां गङ्गायाम् ।

**अमराङ्गना** स्त्री ६त० । "अङ्गरागः सुधाय रत्नानि हरामराङ्गनाः" माघः ।

**अमराद्रि** पु० ६त० । सुमेरौ । तत्स्थानञ्च । "लङ्का कुमध्ये यमकोटिरस्याः प्राक्पश्चिमे रोमकपत्तनञ्च । अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथ याम्ये वडवानलश्च । इह हि मेरुगिरिः किल मध्यगः कनकरत्नमयस्त्रिदशालयः द्रुहिणजन्मकुपद्मककर्णिकेति च पुराविद इत्यमवर्णयन्" सि० शि० । अधिकं मेरुशब्दे भूगोलशब्दे च दृश्यम् ।

**अमराधिप** पु० ६त० । देवराजे इन्द्रे अमराधीशादयोऽप्यत्र

**अमरापगा** स्त्री ६त० । गङ्गायाम् । [नैष० ।

**अमरालय** पु० ६त० । स्वर्गे "तत्रामरालयमरालमरालकेशी"

**अमरावती** स्त्री अमरा विद्यन्तेऽस्यां मतुप् मस्य वः दीर्घः । इन्द्रनगर्य्याम् । सा च मेरुपर्व्वतोपरिस्था "मद्रत्नकाञ्चनमयं शिखरत्रयञ्च मेरौ सुरारिकपुरारिपुराणि तेषु । तेषामधः शतमखज्वलनान्तकानां रक्षोऽम्बुपानिलशशीशपुराणि चाष्टौ" सि०शि० । एतद्वर्णनं भा०स०प०७ अध्याये काशी०ख० १० अध्याये च दृश्यम् । "दशमुखमेन्द्रद्रुतपातितार्गला निमीलितावीव भियाऽमरावती" का०प्र० ।

**अमरिष्णु** त्रि० मृ–वा० इष्णुच् न० त० । मरणशीलभिन्ने "अनातुरा अजरास्थामरिष्णवः" ऋ०१०,९४,११ ।

**अमरु** पु० अमरुशतकग्रन्थकारके कविभेदे "कविरमरः कविरमरुः कविश्चौरोमयूरक" इत्युद्भटः ।

**अमरेश** पु० ६त० । देवराजे इन्द्रे अमरेश्वरादयोऽप्युक्तार्थे "अयममरेशदिगोत्सवं सुधांशुः" सा०द० ।

**अमर्त्त** त्रि० मृ–तन् न० त० । मरणधर्मशून्ये "हिमृणानि च त्नतमानो अमर्त्तः" ऋ०५,३३,६, 'अमर्त्तः अमरणधर्म्मा' भा०

**अमर्त्त्य** त्रि० मर्त्तिमर्हति यत् न०त० । मरणशून्ये "अग्ने ! विश्वस्त्वदुपसाधन' राधो अमर्त्त्य !" ऋ० १,४४,१, "अमर्त्त्य ! मरणरहित !" भा० "तदुश्रान्तवायोः समकालमेव अमर्त्त्यभावेऽपि कयोश्चिदासीत्" रघुः ।

**अमर्त्त्यभुवन** न० अमर्त्त्यानां देवानां भुवनम् । स्वर्गे ।

**अमर्य्याद** त्रि० नास्ति मर्य्यादा सीमा सम्मानो वा यत्र । १ सीमारहिते २ सम्मानरहिते च ।

**अमर्ष** पु० मृष–क्षान्तौ घञ् विरोधे न०त० । क्षमाविरुद्धे कोपे । "अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः" किरा० तानेव सामर्षतया निजघ्नुः" रघुः "हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः" गीता ।

**अमर्षण** त्रि० मृष–ल्यु न०त० । १असहने २क्रोधने, च । "हृदि क्षतो गोत्रभिदाप्यमर्षणः" रघुः । अमर्षणोऽनवस्थायी विशालं कायलक्षणम्" । अमर्षणः स्वयं जेतुमशक्तः शत्रियोरणे भा० आ० प० । भावे ल्युट् । क्रोधे न० ।

**अमर्षित** त्रि० मृष–क्त इट् गुणश्च न०त० । क्रुद्धे "अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः" भा० आदिप० ।

**अमर्षिन्** त्रि० मृष–णिनि न०त० । क्रुद्धे स्त्रियां ङीप् ।

**अमल** न० अम+कलच् । १ मातलाद्ये २ अभ्रके च नास्ति मलं यस्य । ३निर्मले, दोषरहिते त्रि० "रसकलामलपल्लवलीलया" माघः "संनिभासरकोमलामलपटैर्लीलावतीम्" "अमलकमलराशेस्त्वं शपद्मांशपद्मैः" लीला०

**अमलात्मन्** पु० अमलः रागादिदोषरहितत्वात् स्वच्छ आत्मा अन्तःकरणं यस्य । निवृत्तरागादौ योगिनि । [२निर्बोधे च

**अमम** पु० अम–गतिरोगादौ असच् । १ काले २ रोगे

**अमलिन** त्रि० विरोधे न०त० । १मालिन्यशून्ये २निर्द्दोषे च "कुसुममलिनं नस्येत्यहं न च जीवितम्" माल० ।

**अमसृण** त्रि० विरोधे न०त० । चिक्कणभिन्ने रूक्षे ।

**अमा** अव्य० न+मा–का । १सहार्थे, अमैवानः सुहवाः" ऋ० २,३६,२ । "अमा सह मा०" । अमावस्या । २निकटे च । न माति परिच्छिनत्ति क्षयोदयविशेषम् मा–क न०त० । सर्व्व कलाव्यापकतया स्थितायां चन्द्रस्य षोडश्यां ३कलायाम् स्त्री "अमा षोडशभागेन देवि ! प्रोक्ता महाकला संस्थिता परमा माया देहिनां देहधारिणी अमादिपौर्णमास्यन्ताया एव शशिनः कलाः । तिथयस्ताः समाख्याताः षोडशैव वरानने !" इति स्क०प्रभा०ख० । व्याख्यातं चैतत् कालमाधवीये 'महामाया आधारशक्तिरूपा देहिनां देहधारिणी सा चन्द्रमण्डलस्य षोडशभागेन परिमिता चन्द्रदेहधारिणी अमानाम्नी महाकलेति प्रोक्ता क्षयोदयरहिता नित्या तिथिसंज्ञिकैव इतरा अपि पञ्चदश कला दिवसव्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदश तिथयो भवन्तीति तिथयः षोडशैव एवञ्चात्र सामान्यविशेषरूपेण तिथिद्वैविध्यमुक्तं भवति । तत्र येयम् अमेत्युक्ता क्षयोदयवर्जिता ध्रुवा षोडशी कला तद्युक्तः कालस्तिथिसामान्यम् । यास्त्ववशिष्टा इद्धिक्षयोपेताः पञ्चदश कलास्ताभिः विशिष्टकालविभागस्तिथिविशेष" इति । अधिकं तिथिशब्दे वक्ष्यते

सूर्य्यकिरणासंपर्कादृदीप्तायां, ४ षष्ठदश्यां कलायाम् न मीयते दृश्यते विधुरत्र । ५ अमावस्यायां तिथौ च स्त्री । "अमार्कपाते श्रवणं यदि स्यात्" "यद्यमा रविवारेण" इति च प्रा॰त॰पुरा॰ । "अमायां तु सदा सोम-ओषधीः प्रतिपद्यते" इति सोभो॰ । न मीयतेऽसौ मा—कर्म्मणि किप् । ६ आत्मनि पु॰ । ७ मानशून्ये त्रि॰ । ८ सहे अव्य॰ निरु॰ । "कामचरतामसमा भूते" ऋ॰ २,३८,६ । "अमा स्वहमिति" भा॰ । अम्यते गम्यते चन्द्रलोकात् अत्र अम—आधारे—घञ् वा ह्रस्वः । ९ इहलोके । "अमातोभयतोर्वि आन्तरिक्षादृमायुत" ऋ॰५,५०,५८ । "अमातः अस्माल्लोकात्" भा॰ । तत्र यावत्सम्पातमुषित्वा "क्षीणे पुण्ये मर्त्यलोकं विशन्तीति" श्रुतौ चन्द्रलोकादेव इह लोकागमनात्तथात्वम् । [दुर्ब्बलः ।

**अमांस** त्रि॰ नास्ति मांसं यस्य । १ दुर्ब्बले । मांसहीनो हि

**अमात्य** पु॰ अमा सह भवति त्यप् । मन्त्रिणि । तस्य दण्डनीतौ राजसहचरत्वात्तथात्वम् । "पुरोहितामात्यसुखाश्च योधाः" भट्टिः । "अमात्यपुत्रैः सवयोभिरन्वितः" रघुः । "अमात्ये दण्ड आयत्त" इति मनुः "अमात्यव्यङ्गना राज्ञां दुष्यास्ते यत्संहिताः" माघः । अमात्यलक्षणमुक्तं हेमा॰ विष्णुध॰ पु॰ । "सर्व्वलक्षणलक्षण्यो मन्त्री राज्ञस्तथा भवेत् । ब्राह्मणो वेदतत्त्वज्ञोविनीतः प्रियदर्शनः । कुलजश्च महात्मा च स्वामिभक्तः प्रियंवदः । वृहस्पत्युशनःप्रोक्तां नीतिं जानाति सर्व्वतः । रागद्वेषेण यः कार्यं न च हन्ति महीक्षितः । लोकापवादाद्राजार्थे भयं यस्य न विद्यते । क्लेशक्षमस्तु धर्म्मात्मा विजितात्मा जितेन्द्रियः । गूढमन्त्रश्चाऽव्यग्रः प्राज्ञो भक्तजनप्रियः । इङ्गिताकारतत्त्वज्ञ ऊहापोहविशारदः । स्मरश्च ज्ञातविद्यश्च न मानी न च मत्सरी । चारप्रचारकुशलः प्रणिधिप्राप्य आत्मवान् । षाड्गुण्यविधितत्त्वज्ञ उपायकुशलस्तथा । वेत्ता विधाता कार्य्याणां नैव कार्य्यातिपातनः । समयज्ञश्च कालज्ञो भृत्यानाञ्च गुणप्रियः । कृतानामकृतानां च कर्म्मणामन्ववेक्षिता । यथा पुरुषमर्हाणां पुरुषाणां नियोजकः । कर्त्ता परोक्षे कार्य्याणि सांपराये भृगूत्तम । तत्त्वातत्त्ववेदिता च कर्म्मणो गुरुलाघवम् । शत्रुमित्रविभागज्ञो विभक्ते चैव तत्त्ववित् स राज्ञः सर्व्वकार्य्याणि कुर्य्याद्भृगुकुलोद्वह । विदितानि तथा कुर्य्याच्च ज्ञातानि महीक्षिता अज्ञातानि नरेन्द्रस्य कृत्वा कार्य्याणि भार्गव । अचिरेणापि विद्वेषं स मन्त्री त्वधिगच्छति । कुरुते यस्तु कार्य्याणि विदितानि महीपतेः भेदो न तस्य भवति कदाचिदपि भूभुजा एवंगुणो यस्य भवेत्तु मन्त्री वाचश्च तस्याभिरतस्य राज्ञः । राज्यं स्थिरं स्याद्विपुला च लक्ष्मीर्यशश्च दीप्तं भुवनत्रयेऽपि" इति ।

**अमात्र** पु॰ नास्ति मात्रा परिच्छित्तिर्यस्य । १ इयत्ताशून्ये परमात्मनि तुरीये ब्रह्मणि । वृहत्परिमाणकल्पनेन २ परिच्छेदशून्ये गगनादौ च त्रि॰ । अमात्रं त्वा धिषणं तविषे ऋ॰ १,१०२,७ । "अमात्रं मात्रया इयत्तया रहितम्" भा॰ ।

**अमानना** स्त्री अभावे न॰त॰ । आदराभावे न॰ब॰ । आदरशून्ये त्रि॰ । [मनःकष्टदायके दुःखे ।

**अमानस्य** न॰ मानसे साधु न भवति मानस+यत् न॰त॰ ।

**अमा(म)मासी** स्त्री अमा सह सूर्य्येण माः मासो वा चन्द्रमा यस्यां गौरा॰ ङीष् । अमावस्यायाम् ।

**अमाय** त्रि॰ नास्ति माया यस्य । १ कपटशून्ये २ अविद्याशून्ये ब्रह्मणि न॰ । मायोमानम् । ३ इयत्ताशून्ये त्रि॰ ।

**अमानिन्** त्रि॰ न मन्यतेऽभिमन्यते मन—णिनि न॰त॰ । अभिमानशून्ये "अमानित्वमदम्भित्वम्" गीता ।

**अमार्जित** त्रि॰ मृज—क्त विरोधे न॰त॰ । अपरिष्कृते ।

**अमा(वा)वसी** स्त्री अमा सह वसतश्चन्द्रार्कौ यस्याम् अप् घञ् वा नि॰ गौरा॰ ङीष् । अमावास्यायाम् ।

**अमाव(वा)स्या** अमा सह वसतश्चन्द्रार्कौ यस्याम् नि॰ । कृष्णपक्षीयपञ्चदशीतिथौ । तथा हि अधः प्रदेशवर्त्ती शीघ्रगामी चन्द्रः, ऊर्द्ध्वप्रदेशवर्त्ती मन्दगामी सूर्य्यः । तयोर्गतिविशेषात् यत्काले चन्द्रमण्डलमन्यूनमनतिरिक्तं सत् सूर्य्यमण्डलस्याधोभागे व्यवस्थितम् भवति तदा सूर्य्यरश्मिभिः साकल्येनाभिभूतत्वात् चन्द्रमण्डलमोमदपि न दृश्यते इति कृष्णपक्षे पञ्चदशकलाक्रियाकूटोपलक्षित कालः अमावस्येति निष्कर्षः । "सूर्य्याचन्द्रमसोः यः परो विप्रकर्षः सा पौर्णमासी यः परः सन्निकर्षः साऽमावस्येति" गोभि॰ "अमावस्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी" मनुः । अमावास्यायां भवः वा वुन् अमावास्यकः अण् आमावस्यः । तत्रभवे त्रि॰ । "य आमारे कृणवन्ते प्रतिकोशेऽमावास्ये" अथ॰ १६,२ ।

**अमावसु** पु॰ आयुपुत्रे ऋषिभेदे "अमावसुमिति ख्यातमायोः पुत्रं यशस्विनम्" ह॰वं॰ ।

**अमित** त्रि॰ न मितः । १ अपरिच्छिन्ने इयत्ताशून्ये "अमितस्य हि दातारं भर्त्तारं का न पूजयेत्" ? रामा॰ । २ अज्ञाते च ।

**अमितविक्रम** पु॰ अमिता अपरिच्छिन्ना विक्रमास्त्रयः पाद-

विक्रमो यस्य, अमितः विक्रमः शौर्य्यमस्येति वा । विष्णौ । "सुकुन्दोऽमितविक्रमः" वि०स० । बहुशौर्य्ये त्रि० ।

**अमिताशन** पु० अमितमश्नाति संहारसमये अश–ल्यु । सर्वभक्षके परमेश्वरे । "यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनं मृत्युर्यस्योपसेचनम्" इति श्रुतेः "अत्ता चराचरग्रहणात्" इति शा० सूत्राच्च तस्य सर्वभक्षकत्वम् । २ विष्णौ च "वेगवानमिताशनः" विष्णुस० ।

**अमितौजस्** त्रि० अमितमोजो यस्य । अपरिच्छिन्न सामर्थ्ये प्रभुत्वे । "कविरमितौजा अजायत" ऋ० १,११,४ । "स तैः पृष्टस्तथा सम्यगमितौजा महात्मभिः" मनुः ।

**अमित्र** अम० रोगे इत्र । रिपौ । "स्वातामित्रौ मित्रे च सहजप्राकृतावपि" तस्य मित्राणामित्रामित्रास्ते" इति च माघः "अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्" नैष० "अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम्" मनुः ।

**अमित्रस(षा)ह** त्रि०अमित्रं सहते बलाधिक्यात् अच् अण् वा । रिपुजयशीले बलिनि "शासइत्था महाँ अस्यमित्रसाहः" । अथ० १,२०,४ । [तस्मै प्रियमप्यमित्रा"रघुः ।

**अमिथ्या** अव्य० विरोधे न०त० । मिथ्याभिन्ने सत्ये "तामूच-

**अमिन्** त्रि० पु० अम–रोगे बुक्तः इनि । रोगिणि ।

**अमिन** त्रि० मि–क्षेपे बा० कर्मणि नक् न०त० । अक्षेपणीये अहिंस्ये "उत द्विबर्हा अमिनः सहोभिः" ऋ० ६, १९,१ । "अमिनः अहिंसनीयः" भा० ।

**अमिश्र** त्रि० न०त० । संकीर्णभिन्ने पृथग्भूते । "तद्दा अमिश्रमेव वसूनां प्रातः सवनम्" शत०ब्रा० ।

**अमिश्रित** त्रि० न०त० । मिश्रितभिन्ने पृथग्भूते ।

**अमिष** न० अम–भोगे कर्मणि इषन् । १लौकिकसुखे नास्ति मिषच्छलं यत्र । २व्याजशून्ये त्रि० ।

**अमीत** त्रि० मी–वधे कर्मणि क्त न०त० । अहिंसिते । "अमीतवर्णा उषसश्चरन्ति" ऋ० ४,५१,९, "अमीतवर्णा अहिंसितवर्णाः" भा० ।

**अमीव** त्रि० अम–वन् नि० ईडागमः । १रोगे "मनेस्यमद्य, यवक्ष्मीवाः य०"९,१६ । अमीवाः व्याधीन् सुपांसुः वे०दी० । "अपामीवं बाधते वेति" ऋ० १, ३५, ९ "अमीवां रोगादिबाधाम्" भा० "प्रजावन्तोऽनमीवा अनागसः" ऋ० १०,३७,७ "अनमीवा रोगरहिताः" भा० । "अमीवहा वास्तोष्पते" । ऋ० ७,५५,१ "अमीवं रोगं हन्ति अमीवानां रोगाणां नाशयिता" भा० । २पापे, ३ दुःखे, च न० । उज्ज्वलदत्तस्तु मीञ् हिंसायां वन् मीवः उदरक्रमिरित्येव निपातः न तु अमीवः इत्याह ।

**अमीवचातन** त्रि० अमीवं रोगं चातयति चत–याचने णिच्–ल्यु । रोगहिंसके "देवममीवचातनम्" ऋ० १,१२,७ अमीवानां हिंसकानां शत्रूणां रोगाणां वा चातनं घातकम्" भा० स्त्रियां गौ० ङीष् । आप इद्वा उ भेषजीरापो अमीवचातनीः" ऋ० १०,१३७,६ ।

**अमुक** त्रि० अदस्+टेरकच् उत्वमत्वे । अदःशब्दार्थे "अत्राहममुकः साक्षी" "समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम्" च या० ।

**अमुक्त** त्रि० न मुक्तः विरोधे न०त० । मुक्तभिन्ने १ बद्धे "सदा प्रहृष्टया भाव्यं व्यये चामुक्तहस्तया" मनुः । २संसारबन्धयुक्ते च न मुच्यते सर्वदा योधैः । (छातकुरी) । ३छुरिकाभेदे न० [गौणे ।

**अमुक्ति** स्त्री अभावे न०त० । १मुक्त्यभावे मुक्तिर्मोचनं रज्ज्वादिबन्धननिवृत्तिः संसारबन्धनिवृत्तिरूपोमोक्षश्च । न०ब० २मुक्तिशून्ये त्रि० ।

**अमुख्य** त्रि० मुख्यम् विरोधे न०त० । मुख्यभिन्ने प्रधानभिन्ने

**अमुग्ध** त्रि० न मुग्धः १ मुग्धभिन्ने । मुग्धः मोहान्वितः मनोहरश्च । २मुग्धावस्थातीतप्रौढायां स्त्रियां स्त्री ।

**अमुतस्** अव्य० अमुष्मात् अदस्+तसिल् उत्वमत्वे । १ अमुष्मादित्यर्थे २ परलोकादित्यर्थे च "इतश्चाजातोऽमुतः कुतश्चित् ऋ० १, १७९ ४ ।

**अमुत्र** अव्य० अमुष्मिन् अदस् त्रल् उत्वमत्वे । १ अमुष्मिन्नित्यर्थे २ परलोके इत्यर्थे च "यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत्" मनुः । ["अमुत्रभूयादथ यद्यमस्य"श्रुतिः ।

**अमुत्रभूय** न० अमुत्र भवनम् भू–भावे क्यप् । परलोकभवने

**अमुथा** अव्य० अमुना प्रकारेण थाल् । अमुनाप्रकारेणेत्यर्थे "इत्थं नः सद्योऽमुथासद्योः न एतदतिक्रामादिति" शत०ब्रा० ।

**अमुद्र्यञ्च्(च्)** त्रि० अमुमञ्चति अदस्+अनुच क्विप् अद्रिआगमः उत्वमत्वे । १अदःशब्दार्थमाप्ते २तत्पूजके च । शसादौ अमुद्रीचः । पूजार्थे अमुद्र्यञ्चः । स्त्रियां ङीप् ।

**अमुमुयञ्च्(च्)** त्रि० अमुमञ्चति अदस् अनुच–क्विप् गतौ न लोपः अद्र्यादेशः अद्रेरपि उत्वमत्वे । १अदः शब्दार्थं गते तत्पूजके च शसादौ अमुमुईचः अमुमुञ्चः स्त्रियां ङीप् ।

**अमु(दो)वत्** अव्य० अमुष्येव वति वेदे उत्वमत्वे । अमुष्येवेत्यर्थे "मनुष्वद्भरतवदमुवदिति यजमानार्षे सम्बाह" कात्या० ३,२,७ ।

**अमुष्यकुल** न० ६त० नि० अलुक् । प्रसिद्धकुले । मनोज्ञा० वुञ् आमुष्यकुलकम् तद्भावे कौलीन्ये न० ।

**अमुष्यपुत्र** पु० ६त०नि०अलुक्। प्रख्यातवंशे कुलीने तस्य भावः मनोज्ञा० वुञ् आमुष्यकम्। कौलीन्ये न०।

**अ(आ)मुष्यायण** पु० अमुष्य अपत्यम् फ (फञ्) अलुक्। विख्यातकुलोत्पन्ने अपत्ये अमुष्यापत्ये च।

**अमूदृश** त्रि० अमुष्येव दर्शनमस्य अदस्+दृश–कञ् आत्वमत्वे। अदःशब्दार्थसदृशे। कञ्। अमूदृशः क्विन् अमूदृक् कुलम्। उक्तार्थे। कञ् प्रत्यये स्त्रियां ङीप् "अमूदृशी तत्कविहन्दवन्दिता" नै०।

**अमूर** त्रि० अमूः मूर्च्छाभावः कुञ्जा० अस्त्यर्थे र। मूढभिन्ने मोहशून्ये "संजानत स्वैर्दक्षैरमूराः" ऋ० १।६८।४, "यास्कस्तु मूढा वयं स्मोऽमूढस्त्वमसि इति" मूढशब्दस्य रूपमाह तत्र पृ० साधुत्वम्।

**अमूर्त्त** त्रि० न०त०। मूर्त्तभिन्ने अवयवशून्ये अपरिच्छिन्नपरिमाणे "क्षितिर्जलं तथा तेजः पवनोमन एव च। परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी" भाषा० "मूर्त्तत्वमवच्छिन्नपरिमाणवत्त्वमिति" सि०मु० तद्धीने गगनादौ। "द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तमेव च" शत०ब्रा०।

**अमूर्त्तगुण** पु० ६त०। वैशेषिकोक्ते अमूर्त्ताकाशादेर्गुणविशेषे "धर्माधर्मौ भावना च शब्दोबुद्ध्यादयोऽपि च एतेऽमूर्त्तगुणाः सर्वे" भाषा०।

**अमूर्त्ति** त्रि० नास्ति मूर्त्तिरस्य। १अवयवशून्ये गगनादौ २विष्णौ पु० "अमूर्त्तिरनघोऽचिन्त्यः" विष्णुस० "मूर्त्तिर्घनरूपं धारणसमर्थं चराचरलक्षणं तन्नास्ति यस्य" भा०।

**अमूर्त्तिमत्** त्रि० न०त०। १मूर्त्तिमद्भिन्ने गगनादौ २विष्णौ पु० "दीप्तमूर्त्तिरमूर्त्तिमान्" वि०स०।

**अमूल** त्रि० नास्ति मूलं यस्य। १आदिकारणशून्ये "मूले मूलाभावादमूलम्" सा०सू०। "त्रयोविंशतत्त्वानां मूलमुपादानं प्रधानं अमूलं मूलशून्यं अनवस्थापत्त्या तत्र मूलान्तरासम्भवात्" प्र०भ०। "इयं वा इदं जीवनं "मूलि चैवामूलञ्च तदुभयं देवानां यन्मनुष्याः उपजीवन्ति पशवोऽमूलाः ओषधयोमूलिन्यः" शत० ब्रा०। मूलि च अमूलञ्चान्नाद्यं प्रतिष्ठितम्" शत०ब्रा०। २ मूलहयादिशिफा तच्छून्ये त्रि० मूलाद्यञ्"। पा० अजादि टाप्। सा च ३ अग्निशिखावृक्षे। कप्। अमूलकोऽत्युक्तार्थे मूलग्रन्थेषु–अदृष्टे च "एतद्वचनममूलकम्" भूरिलोकप्रसिद्धिः।

**अमृक्त** त्रि० मृज–शोधालङ्कारयोः वेदे न षत्वम् न०त०। १अशोधिते अनिर्णिक्ते "अमृक्तेन रुशता वाससा" ऋ० ६,६६,५ लोके तु अमृष्टः। तदर्थं धातूनामनेकार्थत्वात् २अहिंसिते। "रथोवाजा ऋभुक्षणो अमृक्तः" ऋ०७,२७,१। "अमृक्तः अहिंसितः" भा०।

**अमृणाल** न० लामज्जके न०त०। मृणालसदृशे वीरणमूले।

**अमृत** त्रि० न मृतः। १मरणशून्ये जीविते "अमृते जारजः कुण्डः" अमरः "अपाम सोममसृता अभूम" इति श्रुतिः मरणञ्चात्र "आभूतसंप्लवस्थानममृतत्वं हि भाष्यते इति" विष्णु पु० उक्तम् महाकल्पावस्थायित्वं देवानामपि तद्वदमृतत्वम् "कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात्" शा०सू० कार्य्यब्रह्मणा सह सर्व्वेषां लयाभिधानात्। न मृतं मरणं यस्मात्। २पीयूषे तत्सेवने हि अमृतत्वं भारतादौ प्रसिद्धम्। तच्च प्रथमं पृथूपदिष्टैर्देवैरिन्द्रं वत्सं कृत्वा गोरूपधरायाः पृथ्व्या दुग्धम् पश्चात्तु दुर्वासःशापात् समुद्रमध्यं गतम् ततो देवासुरैः समुद्रे मथिते पुनरुत्पन्नमिति पौराणिकी कथानुसन्धेया "देवासुरैरमृतमम्बुनिधिर्ममन्थे" किरा० न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति" छा०उ०। "अमृतदीधितिरेष विदर्भजे। भजसि तापमनुष्णकिमंशुभिः। यदि भवन्ति मृताः सखि! चन्द्रिकाः इति" नैषधम्। ३ जले तस्य प्राणहेतुत्वात् अमृतत्वम्। "अन्नमयं हि सौम्य! मन आपोमयः प्राणः" इत्युपक्रम्य षोडशकलः सौम्य! पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यते" छा०उ०। जलपानाभावे प्राणविच्छेदोक्तेः तत्पाने च प्राणवृद्धेः जलस्य मरणाहेतुत्वम्। "अमृतोपस्तरणमसि स्वाहा" "अमृतापिधानमसि स्वाहेति" आपोशनमन्त्रः। ४ घृते तस्य, "आयुर्वै घृत" मित्युक्तेरायुर्जनकत्वात् मरणाहेतुत्वात्तथात्वम्। "अमृतं नाम यत् सन्तोमन्त्रजिह्वेषु जुह्वति। शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना" माघः। ५पारदे तस्य च रसायनादिना पाने "अभ्रकस्तव बीजन्तु मम बीजन्तु पारदः अनयोर्मेलनं देवि! मृत्युदारिद्र्यनाशनम्" इत्युक्तेः बहुकालजीवनहेतुत्वात् तथात्वम् रसेश्वरदर्शने विस्तरः। ६यज्ञशिष्टे द्रव्ये "यज्ञशेषोऽमृतं स्मृत"मित्युक्तेस्तथात्वम्। ७ अयाचिते वस्तुनि "मृतं स्याद्याचितं भैक्ष्यममृतं स्यादयाचितम्" मनूक्तेस्तस्य मरणरूपापमानहेतुयाचनशून्यत्वात् तथात्वम्। "ऋतामृताभ्यां जीवेत" मनुः। ८दुग्धे तस्य देहधारकत्वेन मरणाहेतुत्वात् तथात्वम्। ९अन्ने "अन्नमूलं हि जीवन"मित्युक्तेस्तथात्वम्। न म्रियते क्षीयते। १०स्वर्गे।

"अग्नौ सुवर्णमक्षीयमिति" श्रु० उक्तेस्तस्य वह्नौ बहुतापनेऽपि अक्षीणत्वात्तथात्वम् अतएव तस्य तैजसत्वं "स्वर्णं तैजसमत्यन्तानलसंयोगेऽपि अनाश्यत्वादित्यनुमानेन" सि०मु०साधितम् । एतदभिप्रायेणैव "अमृतं वै हिरण्य-मित्युक्तम्" शत०ब्रा० । ११भक्षणीयद्रव्यमात्रे, तस्याप्यमृततथा-त्वम् १२स्वादुद्रव्ये अमृततुल्यस्वादवत्त्वात् । १३ तत्साधने द्रव्ये त्रि० "आदित्योवै देवमधु" इत्यादि मधुविद्यायाम् 'ता एता-स्यामृतानामधुनाड्यः" छा०उ०पञ्चस्तनः पाठः । १४हृद्ये अमृत-वदाह्लादकत्वात् तथात्वम् १५ विषे १६ वत्सनाभे विषे तयोः वैद्यकोक्तादिना शोधने अमरणहेतुत्वात्तथा । अतएव "विषमप्यमृतं क्वचिद्भवेदिति" रघुः १७मोक्षे "विद्यया-मृतमश्नुते" इति श्रुतिः जन्मशून्यत्वात्तथा "अमृत-स्यैव सेतुरिति" श्रुतिः "स श्रिये चामृताय च" अमरः । १८ अमृततुल्ये आनन्दकरत्वात्तथा । "अमृतं बालभाषितमिति" हितो० । "आप्यायितोऽसौ वच-नामृतेन वृद्धः" । अमृतमस्त्यस्य स्वामित्वेन भक्षक-त्वेन वा अर्श०अच् । १९ धन्वन्तरौ सहि समुद्रमथ-नसमये अमृतं बिभ्रदुत्थितः इति पुराणे प्रसिद्धम् । २० देवे तद्भक्षत्वेन तथात्वम् । देवानाञ्चामृतदर्शनेनैव तृप्त-त्वम् "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्य-न्तीति" छा०उ०उक्तेः "रथेनामृतं मर्त्यञ्च" य०३३,४० अमृतं देवादिकमिति" वे०दी० । न म्रियते म्रङ् कर्त्तरि क्त । २१वाराहीकन्दे तस्य बहुच्छेदनेऽपि पुनःप्ररूढत्वात्तथा २२ वनमुद्गे च तस्य ओषधितया फलपाकान्तत्वेऽपि छिन्न-प्ररूढत्वात्तथात्वम् । २३ गुडूच्याम् । २४ इन्द्रवारुण्यां २५ ज्योतिष्मत्याम् २६ गोरक्षदुग्धायाम् २७ अतिविषायां २८ रक्तत्रिवृति २९ दूर्वायाम् ३०आमलक्यां ३१ हरी-तक्यां ३२ तुलस्यां ३३ पिप्पल्यां ३४ स्थूलमांस-हरीतक्याञ्च स्त्री । एतासां यथायथं रोगनिवारकत्वेन तथात्वम् । अमृतेन सहोत्पन्नत्वात् अमृततुल्यास्वादव-त्त्वाच्च ३५ सुरायां स्त्री । ३६सूर्यरश्मिभेदे स्त्री "तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रयं हिमोत्सर्गे तावद्घर्मस्य सर्जने । आनन्दाश्च हि मेध्याश्च भूतनाः पूतना इति । चतुःशतं वृष्टिवाहाः सर्वास्ता अमृता स्त्रियः" मत्स्य० यादवः । तासाञ्चामृतस्य जलस्य दायित्वात्तथा । "सौरीभिरिव नाडीभिरमृताख्याभिर-म्मयः" रघुः । ३७मरणशून्ये विष्णौ पु० "अमृतः शाश्वतः स्थाणुः" वि० स० । नास्ति मृतं मरणं यस्मात् । ३८ अजरामरत्वप्रदे त्रि० । "इन्द्रियस्येन्द्रियमिदं पयोऽ-मृतं मधु" यजु० १९,७२,७३,७४,७५ । "अमृतमजरा मृत्युप्रदत्वात् आनन्दकरम् अमृततुल्यम् वे०दी० "नन्दा भौमार्कयोर्भद्रा शुक्रेन्द्वोश्च जया बुधे । शुभयोगा गुरौ रिक्ता पूर्णा मन्देऽमृताह्वया । "आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः जया ज्ञे स्याद् गुरौ रिक्ता पूर्णार्कौ चामृता शुभेति" इति ज्योतिषोक्ते ३९ तिथिवार-योगरूपे योगभेदे "ध्रुवमृदुकरमूला पौष्णभान्यर्कवारे हरियुगविधियुग्मे फल्गुनीभाद्रयुग्मे । दिवसकरतरक्षौ शर्वरीनाथवारे । गुरुयुगनलवातोपान्त्यपौष्णानि भौमे । दहनविधियताख्यामैत्रभं सौम्यवारे । मरुददितिभपुष्या मैत्रभं जीववारे । भगयुगजयुगश्रोत्रिपुमैत्रे सिताहे । श्रवणकमलयोनी सौरिवारेऽमृतानि" राज मा० उक्ते आदित्यहस्ता गुरुपुष्ययुक्ता बुधानुराधा शनिरोहिणी च । सोमे च विष्णुः कुजरेवती च शुक्राश्विनी चामृतयोगवर्गाः । उक्ते च ४० वारनक्षत्रयोगजे योगभेदे "यदि विष्टिव्यती-पातौ दिनं वाप्यशुभं भवेत् । हन्यतेऽमृतयोगेन भास्क-रेण तमो यथा" ज्योति० । ४१ब्रह्मणि न० ।

**अमृतगति** स्त्री यदि दशमं गुरु विहितं विशिखमितं सुक विहितम् । अमृतगतिः फणिकथिता दशयतिका नृप ! कथिता" इत्युक्तलक्षणे छन्दोभेदे ।

**अमृतगर्भ** पु० अमृतं ब्रह्म गर्भेऽभ्यन्तरे यस्य । १ जीवे तस्य ब्रह्मात्मकत्वात् ब्रह्मणा चान्तर्यामितया तदन्तःस्थितत्वात् तथात्वम् । "यो न जीवोऽसि न मृतो देवानाममृतगर्भोऽसि स्वप्न" अथ० ६,४६,१ "स्वपन् स्वेन तदा सम्पन्नो भवतीति" श्रुतेः सुषुप्त्यवस्थायां सकलानर्थानवभासनेन तच्छून्यतया जीवस्य ब्रह्मरूपापत्त्या तथात्वम् अधिकं सुषुप्तिशब्दे दृश्यम् अमृतस्य मोक्षस्य गर्भ आधारः ।२ब्रह्मणि

**अमृतजटा** स्त्री अमृतमिव स्वादु जटा यस्याः । जटामांस्याम्

**अमृतत्व** न० अमृतस्यामरणस्य भावः त्व । १मोक्षे । "त्यागे नैके अमृतत्वमानशुः" श्रुतिः "कश्चिद्धीरः प्रत्यगात्मानमैक्षदा-वृत्तचक्षुरमृतत्वमिच्छन्" क०उ० । "अमृतत्वममरणधर्मत्वम्" भा० "अहिंसया च भूतानाममृतत्वाय कल्पते" इति मनुः "आभूतसंप्लवस्थानममृतत्वं हि भाष्यते" इति विष्णु०पु० उक्ते २महाकल्पावस्थायित्वे च ।

**अमृततरङ्गिणी** स्त्री अमृतस्य सुधाया तुषारस्य तरङ्गिणी नदीव । ज्योत्स्नायाम् राज०नि० ।

**अमृततिलका** स्त्री मगणपयोधररुचिरा कुसुमविराजितसु-

कुरा । वसुलघुदीर्घयुगलका भवति सखेऽमृततिलका इत्युक्तलक्षणे इगालरपादके वर्णवृत्तभेदे "त्वरितगतिश्च नजनगैरित्युक्तत्वरितगतिलक्षणाक्रान्तत्वात् तस्या एव नामान्तरम्।

**अमृतदीधिति** पु० अमृतमिवाप्यायिका दीधितिरस्य । चन्द्रे "अमृतदीधितिरेष विदर्भजे भजसि तापमसुष्य" नै० ।

**अमृतद्युति** पु० अमृतमिवाप्यायिका द्युतिरस्य । चन्द्रे।

**अमृतधारा** स्त्री अमृतस्य धारा सन्ततिः । अमृतसन्ततौ । "चरमचरणलयमवमितिगुरुयुग्मम् । अखिलमपरमुपरिगतमिति ललितपदयुक्ता तदियममृतधारा" वृ०र० उक्ते-१पदचतुष्कविषमपदके २छन्दोभेदे । उपरिगतम् "मुखपादोऽष्टभिर्वर्णैः परेऽस्मात्मकरालयैः क्रमाद्वृद्धा" इत्याद्युक्तलक्षणम् दैत० । ३सुधासन्ततौ च । [उपनिषच्छब्दे विवरणम् ।

**अमृतनाद** पु० उपनिषद्भेदे सा च कृष्णयजुर्वेदान्तर्गता

**अमृतनालिका** स्त्री अमृतस्य स्वादुरसस्य नालीव । कर्पूरनालिकाभेदे पक्वान्नभेदे भन्न०र० ।

**अमृतप** पु० अमृतं पाति रक्षति असुरेभ्यः पा-रक्षणे क । १विष्णौ सहि अमृतमन्थनसमये असुरैर्ह्रियमाणममृतं मोहिनीरूपं विधाय तान् वञ्चयित्वा देवेभ्योदानात् तत्पालकः इति भागवती कथा । "सोमपोऽमृतपः सोम" इति वि०स० । अमृतं पिबति पा-पाने क । २देवे तद्दर्शनेन तृप्तत्वात्तत्पायित्वम् अमृतशब्दे दृश्यम् । ३ अमृततुल्यमद्यादिपातरि त्रि० । "भुवममृतपनामयाञ्चयासाद्य धरमस्य मधुपस्त्वयाजिह्वीते" माघः ।

**अमृतपक्ष** पु० अमृतस्य हिरण्यस्य पक्षः क्षयाकारित्वात् । १वह्नौ "अग्नौ सुवर्णमक्षीणम्," या० उक्तेः सर्व्वदाहकस्यापि वह्ने न सुवर्णनाशकत्वमित्यतस्तस्य स्वर्णपक्षत्वम् । "तस्यैतावमृतपक्षौ यावेतावभितोऽग्नी" इति शत०ब्रा० अमृतं स्वर्णमिव पोतौ पक्षावस्य । १स्वर्णवर्णपक्षे श्येनभेदे "हिरण्यपक्षः शकुनोभुरण्युममृतं वै हिरण्यमृतपक्षः शकुनः" शत०ब्रा० ।

**अमृतफल** न० अमृतमिव स्वादु फलम् । (नासपातीति) १ यवनप्रसिद्धे रुचिफले "अमृतफलं लघु हृद्यं सुस्वादु त्रीनूहरेद्दोषान् । देशेषु सद्दलानां बहुलं तल्लभ्यते लोकैः भा०प्र० । ई०व० । २ आमलक्याम् ३ द्राक्षायाञ्च स्त्री ४पटोले ५पारावततरौ च पु० ।

**अमृतबन्धु** पु० अमृतस्य बन्धुः एकस्थानोत्पत्तिकत्वात् सहोदरः । १ चन्द्रे तस्य अमृतमन्थनसमये समुद्रात् उत्पन्नत्वात् तथात्वम् । "ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात् अमृतात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वल" इति भा०आ० प० । अमृतस्य बन्धुरिव प्राहकत्वात् । २ देवमात्रे "तं देवा अन्वजानन्त भद्रा अमृतबन्धवः" ऋ० १०,७२,५, ।

**अमृतभल्लातकी** स्त्री "सुपक्वभल्लातफलानि सम्यक् छित्वा विदार्याढकसम्मितानि । विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषेव्यपनीय तेन ॥ पुनः पचेत् क्षीरचतुर्गुणेन घृतांशयुक्तेन घनं यथा स्यात् । सितोपलाः षोडशभिः पलैस्तु विमिश्र्य संस्थाप्य दिनानि सप्त ॥ ततः प्रयोज्याग्निबलेन मात्रां जयेद्गुदोत्थानखिलान् विकारान् । कचान् सुनीलान् घनकुञ्चितान् सुवर्णदृष्टिं सुकुमारताञ्च ॥ जवं हयानाञ्च मतङ्गजं बलं, स्वरं मयूरस्य हुताशदीप्तिम् । स्त्रीवल्लभत्वं लभते प्रजाञ्च नीरोगमब्दाद्विशतानि चायुः ॥ न चान्नपाने परिहार्य्यमस्ति न चातपे चाध्वनि मैथुने च । प्रयोगकाले सकलामयानां राजा ह्ययं सर्व्वरसायनानाम् ॥ भल्लातकी शुद्धिरिह प्रागिष्टा चूर्णगुडनात् । घृताच्चतुर्गुणं क्षीरं घृतस्य प्रस्थ इष्यते" चक्रदत्तोक्ते घृतभेदे ।

**अमृतभुज्** पु० अमृतं भुङ्क्ते दृष्ट्वा भोगतुल्यं तृप्तिमश्नुते भुज-क्विप् दैत०। देवे "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्तीति" छा०उ० उक्तेः दर्शनमात्रेण भोजनतृप्तिमत्त्वात्तथात्वम् । अमृतम् अयाचितं यज्ञशिष्टान्नं वा भुङ्क्ते । २ यज्ञशिष्टान्नभोक्तरि ३ अयाचितान्नभोक्तरि च त्रि० ।

**अमृतयोग** पु० अमृताख्योयोगः । ज्योतिषोक्ते । तिथिवारादियोगभेदे स चामृतशब्दे उक्तः ।

**अमृतरस** पु० अमृत रस इव आस्वाद्यम् । १ अमृतरूपे आस्वाद्ये "विस्नानेन विमर्द्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः" कुमा०। अमृतस्य रसः सारः। २सुधारसे "सिक्ता इवामृतरसेन सुहृज्जनानाम्" माघः । अमृतं मोक्षः रस इव यस्य । ३ परमात्मनि "स एव सैन्धवघनोऽमृतरस इति" श्रुतिः अमृतस्येव रस आस्वादोऽस्याः । ४ कपिलद्राक्षायां (खन्दरसा) प्रसिद्धे ५ पक्वान्नभेदे च स्त्री । सा च "तृतीयभागखण्डेन मिश्रितं शालिपिष्टकम् । शुभ्रमीषद्दधियुतं मर्द्दयेद्दृढपाणिना । एवं सम्हितं कृत्वा स्थापयेद्रजनीमितम् । ततोऽस्याश्चवहनि तु चिलितं निम्नचोन्नतैः विधाय पूपकं तेन तस्थिकायां घृते पचेत् । ततोऽमृतरसा जाता वातसुद्धवर्द्धिनी" इति भा०प्र० उक्ता ।

**अमृतलता** स्त्री अमृतालता । १ गुडूच्याम्" (अमरलता) इति २ ख्यातायां लतायाञ्च ।

**अमृतवपुस्** अमृतेनाप्यायितं वपुरस्य । १ चन्द्रे स हि कृष्ण-

पक्षे वह्न्यादिभिः कलानामेकैकशः भक्षणेऽपि पुनः यज्ञधिष्ण्यपामृतेनाप्याय्यते। यथोक्तं कालमाधवीये सोमोत्पत्तिवाक्येन “प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः। विश्वे देवास्तृतीयान्तु चतुर्थीं सलिलाधिपः। पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः। सप्तमीमृषयो दिव्या अष्टमीमजएकपात्। नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम्। दशमीं पिबते वायुः पिबत्येकादशीमुमा। द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः। त्रयोदशीं धनाध्यक्षः कुवेरः पिबते कलाम्। चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः। निष्पीतश्च कलाशेषश्चन्द्रमा न प्रकाशते। कला षोड़शिका या तु सा त्वपो विशते तदा। अमायां तु सदा सोम ओषधीः प्रतिपद्यते। तमोषधिगतं गावः पिबन्त्यम्बुगतञ्च यत्। तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः। हुतमग्निषु यज्ञेषु पुनराप्यायते शशी। दिने दिने कलावृद्धिः पौर्णमास्यां तु पूर्णता” इति। यद्यपि ज्योतिषे कृष्णपक्षे सूर्य्यमण्डले प्रवेश एव उक्तस्तथापि तत्तद्दिवसे चन्द्रकलाभक्षणवत् वह्न्यादीनां तृप्तिरित्येतत्परत्वं सोमोत्पत्तिवाक्यस्य देवानाम् अस्मदादीनामिव भोजनस्यासिद्धेः तृप्तिमात्राधायकत्वेन तद्भोग्यत्वम् “न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति” छा० उ० उक्तेरवगम्यते इत्यविरोधः। अनश्वरस्वरूपे विष्णौ: “अमृतांशोऽमृतवपुः” विष्णुस०।

**अमृतवल्ली** स्त्री अमृता वल्ली। गुडूच्याम् (गुलञ्च)।

**अमृतवाक** त्रि० अमृतमिव वाको वचनं यस्य। १अमृततुल्यवचने “अमृतवाका वयसां सा चिप्रश्लेनं जनयति” शत० ब्रा०

**अमृतसंभवा** स्त्री अमृतैव सम्भवति सम् भू+अच्। गुडूच्याम् (गुलञ्च)।

**अमृतसंयाव** न० अमृतमिव स्वादु संयावम्। पक्वान्नभेदे। “पचेत् घृतोत्तमे तप्ते न्यसेत् पक्वं नवे घटे। ततो मरिचचूर्णेन खण्डचूर्णावचूर्णितम्। कुर्य्यात् कर्पूरसंयुक्तं संयावममृतोपमम्। संयावममृतस्वादु पित्तघ्नं मधुरं स्मृतमिति भा० प्र०।

**अमृतसार** पु० अमृतस्य दुग्धस्य सारः। घृते। चक्रदत्तोक्ते अयःपाकभेदे यथा “लौहस्य पाकमधुना नागार्ज्जुनशिष्टमभिदध्मः॥ लौहारकूटताम्रजकटाहे दृढमृण्मये प्रणस्य शिवम्। तदयः पचेदचपलः काष्ठेन्धनेन वह्निना मृदुना॥ निक्षिप्य त्रिफलाजलमुद्दिष्टं यत्तत् घृतञ्च दुग्धञ्च। संचाल्य लौहमय्या दर्व्या सम्यं समुत्पाद्य॥ मृदुमध्यखरभावैः पाकस्त्रिविधोऽत्र वच्यते पुंसाम्। पित्तसमीरणश्लेष्मप्रकृतीनां मध्यमस्य समः॥ अव्यक्तदर्विलोहं सुखदुःखस्खलनयोगि मृदु मध्यम्। उज्झितदर्वि खरं परिभाषन्ते केचिदाचार्य्याः॥ अन्ये विहीनदर्व्वीप्रलेपमाचुक्करात्मृतिं ब्रुवते। मृदुमध्यमर्द्दचूर्णं सिकतापुञ्जोपमन्तु खरम्॥ त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः। प्रकृतिविशेषे ख्यातौ गुणदोषौ जनयतीत्यलम्॥ विज्ञाय पाकमेवं द्राग्घृताद्ध्ये क्षितौ चणान् क्रियतः। विन्यस्य तत्र लौहे त्रिफलादेः प्रक्षिपेच्चूर्णम्॥ यदि कर्पूरप्राप्तिर्भवति ततो विगलिते यदुष्णत्वे। चूर्णीकृतमनुरूपं क्षिपेच्च वा न यदि तल्लाभः॥ पक्वं तदश्मसारं शुचिरघृतस्निग्धतादिरूक्षत्वे। गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम्। यदि तु परिप्लुतिहेतोर्घृतमोच्चताधिकं ततोऽन्यस्मिन्। भाण्डे निधाय रक्षेद्गाव्युपयोगो यत्नेन महान्॥ क्वचिदपि विस्तीभूते स्नेहस्निग्धतेन सम्पाद्यः। एतत्ततो गुणोत्तरमित्यमुना स्नेहनीयं तत्॥ अत्यन्तकफप्रकृतेर्भक्षणमयसोऽमुनैव शंसन्ति। केवलमपीदृगशितं जनयत्ययसो गुणान् क्रियतः॥ अमृतसारः” चक्र०द०।

**अमृतसारज** पु० अमृतादिव स्वादोः सारात् जायते जन–ड ५त०। १गुड़े रा०नि०।

**अमृतसू** अमृतं दीधितिरूपमाप्ययनं सूते सू–क्विप्। चन्द्रे। अमृतान् देवान् सूते। देवमातरि स्त्री।

**अमृतसोदर** अमृतस्य सोदर एकत उत्पन्नत्वात्। उच्चैःश्रवसि अश्वे। तस्यामृतमथने समुद्रादुत्पन्नत्वात् तथात्वम्। “सुरा देवी समुत्पन्ना तुरगः पाण्डरस्तथा” भा० आ० प०। तज्जातीयत्वात् घोटकमात्रे राजनि०।

**अमृतस्रवा** स्त्री० अमृतमिव स्रवति स्रु–पचाद्यच्। १ रुदन्तीलतायाम्। भावे अप् ६त०। २ अमृतनिष्यन्दे पु०।

**अमृतांशु** पु० अमृतमिवाप्यायकः अंशुरस्य। चन्द्रे।

**अमृतांशूद्भव** पु० अमृतांशोश्चन्द्रस्योद्भवो यस्मात्। विष्णौ “अमृतांशूद्भवो भानुः” वि०स०। ५त० चन्द्रोद्भवे त्रि०।

**अमृतान्धस्** पु० अमृतमन्धोऽन्नमिव दर्शनात् तृप्तिकरमस्य। अमृताशने देवे तेषाममृताशनञ्च दर्शनमात्रेण “न वै देवा अश्नन्ति पिबन्ति एतद्देवामृतं दृष्ट्वा तृप्यन्ति” श्रुतेः। तेषां तत्पानकथा “ततस्तदमृतं देवो विष्णुरादाय वीर्य्यवान्। जहार दानवेन्द्रेभ्यो नरेण सहितः प्रभुः। ततो देवगणाः सर्वे पपुस्तदमृतं समम्” भा०आ०प०।

**अमृताफल** न० अमृतायाः फलम्। पटोले द्रव्याभि०।

**अमृतायमान** त्रि० अमृतमिवाचरति अमृत+क्यङ् शानच्।

अमृततुल्ये "उत्तिष्ठ वत्से त्वमृतायमानम् वचोनिशम्येति" रघुः ।

**अमृताश** पु॰ अमृतममरणं यथाभावमश्नुते अश–व्याप्तौ अण् । विष्णौ "१अमृतांशोऽमृतवपुः" विष्णु॰स॰ अमृतं सुधामश्नाति अश-भोजने अण् । २देवे । [स्वःशब्दे विवरणम्

**अमृताशन** पु॰ अमृतमश्नाति अश-भोजने ल्यु । देवे अमृता

**अमृताश्म** त्रि॰ न म्रियते मृ–तन् न॰त॰ जीव नित्यः कर्म्म॰ टच् समा॰। प्रस्तरभेदे जीविप्रस्तरखण्डभेदे ।

**अमृताष्टक** पु॰ अमृताप्रभृतीनामष्टकं यत्र । गुडूचीन्द्रयवारिष्टपटोलं कटुका तथा नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम् "अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः" चक्रदत्तोक्ते कषायभेदे ।

**अमृतासङ्ग** न॰ अमृतस्य विषस्येवासङ्गो यत्र । नीलवर्णे तुत्थभेदे हेम॰ तस्य विषतुल्यनीलवर्णत्वात् तथात्वम् ।

**अमृतासु** त्रि॰ अमृता अनश्वरा असवो यस्य । अनश्वरप्राणे बहुकालजीविनि । "आविर्भवामृतासुर्वर्धमानः सुजन्मा" "उतामृतासुर्व्रतएमि" इति च ऋच॰ ५,१,१,७ ।

**अमृताहरण** पु॰ अमृतमाहरति मातृदास्यनिवारणार्थं स्वर्गात् भूलोकं नयति आ+हृ-ल्युट् । गरुडे तत्कथा भा॰ आदि प॰ ३२ अ॰ । "तान् कृत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान् । अतिक्रान्तोऽमृतस्यार्थे सर्वतोऽग्निमपश्यत ॥ आवृण्वानं महाज्वालमर्चिर्भिः सर्वतोऽम्बरे । दहन्तमिव तीक्ष्णांशुं चण्डवायुसमीरितम् ॥ ततो नवत्या नवतीर्मुखानां कृत्वा महात्मा गरुडस्तरस्वी । नदीः समापीय मुखैस्ततस्तैः सुशीघ्रमागम्य पुनर्जवेन ॥ ज्वलन्तमग्निं तममित्रतापनः समास्तरत् पत्ररथो नदीभिः । ततः प्रचक्रे वपुरन्यदल्पं प्रवेष्टुकामोऽग्निमभिप्रशाम्य ॥ जाम्बूनदमयो भूत्वा मरीचिनिकरोज्ज्वलः । प्रविवेश बलात् पक्षी वारिवेग इवार्णवम् ॥ स चक्रं क्षुरपर्य्यन्तमपश्यदमृतान्तिके । परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम् ॥ ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम् । घोररूपं तमत्यर्थं यन्त्रं देवैः सुनिर्मितम् ॥ तस्यान्तरं स दृष्ट्वैव पर्य्यवर्त्तत खेचरः । अरान्तरेणाभ्यपतत् संक्षिप्याङ्गं क्षणेन ह ॥ अधश्चक्रस्य चैवात्र दीप्तानलसमद्युती । विद्युज्जिह्वौ महावीर्य्यौ दीप्तास्यौ दीप्तलोचनौ ॥ चक्षुर्विषौ महाघोरौ नित्यं क्रुद्धौ तरस्विनौ । रक्षार्थमेवामृतस्य ददर्श भुजगोत्तमौ ॥ सदा संरब्धनयनौ सदा चानिमिषेक्षणौ । तयोरेकोऽपि यं पश्येत् स तूर्णं भस्मसाद्भवेत् ॥ तयोश्चक्षूंषि रजसा सुपर्णः सहसाऽऽवृणोत् । ताभ्यामदृष्टरूपोऽसौ सर्वतः समताडयत् ॥ तयोरङ्गे समाक्रम्य वैनतेयोऽन्तरीक्षगः । अच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः ॥ समुत्पाट्यामृतं तत्र वैनतेयस्ततो बली । उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्य्यवान् ॥ अपीत्वैवामृतं पक्षी परिगृह्याशु निःसृतः । अगच्छदपरिश्रान्त आवार्य्यार्कप्रभां ततः" ॥ तृच् । अमृताहर्त्ता तत्रैव । "काश्यपेयोऽमृताहर्त्ता" ध्वजपूजामन्त्रः ।

**अमृताह्व** न॰ अमृतमाह्वयते स्पर्द्धते तुल्यस्वादफलेन आ+ह्वे–क (आराकानदेश) जाते लघुविल्वाकृतौ (नासपाति) नामके रुचिकवे वृक्षे । अमृतफलशब्दे विवरणम् ।

**अमृतेशय** पु॰ अमृते जले शेते शी–अच् अलुक् स॰ । विष्णौ तस्य प्रलये जलशायित्वात् तथात्वम् ।

**अमृतोत्पन्न** न॰ अमृतं विषमिव उत्पन्नम् नीलवर्णत्वात् । खर्परीतुत्थे राजनि॰ । [५त॰ । मक्षिकायां राजनि॰ ।

**अमृतोत्पन्ना** स्त्री अमृतमिव स्वादु मधु उत्पन्नं यस्याः

**अमृतोद्भव** न॰ अमृतं विषमिव नीलवर्णतया उद्भवति उद्+भू–अच् । खर्परीतुत्थे (तुते) तुत्थभेदे । अमृतं मृत्युञ्जयं शिवमुद्भवते प्राप्नोति स्वसाध्यार्चनावत्त्वात् । विल्ववृक्षे । "अमृतोद्भवः श्रीवृक्षः महेशस्य सदा प्रियः" तद्दानमन्त्रः ।

**अमृत्यु** पु॰ अभावे न॰। १ मृत्युविगमे । नास्ति मृत्युर्यस्मात् । २मृत्युहेतुभिन्ने त्रि॰। "अमानवे अश्वोऽमृत्यु धुचत" ऋ॰६, ४८,१२ "अमृत्यु अमरणहेतु अन्नोऽन्नम्" भा॰। मृत्युर्विनाशो नास्त्यस्य । ३ विनाशशून्ये विष्णौ "अमृत्युः सर्व्वदृक् सिंहः" विष्णुसहस्रनाम ।

**अमृध्र** त्रि॰ मृधु उन्दने वा॰ रक् न॰त॰। केनाप्यहिंस्ये । "पृथु मिहोनपातममृध्रम्" ऋ॰ १,३७,११, "अमृध्रं केनाप्यहिंस्यम्" भा॰ । [स्मृतिस्तथैव पुरुषोऽमृषा" शत॰ब्रा॰ ।

**अमृषा** अव्य॰ न॰त॰। मिथ्याभिन्ने सत्ये। "यथा वृक्षो वन

**अमेधस्** त्रि॰नास्ति मेधा धारणावती बुद्धिर्यस्य असिच् समा॰। श्रवणमात्रेण विस्मारिणि धारणाशून्यबुद्धिमति मूर्खे ।

**अमेध्य** त्रि॰ न मेध्यम् पवित्रम् विरोधे न॰त॰ । अपवित्रे । "अमेध्यादपि काञ्चनम्" "नामेध्यं प्रक्षिपेदग्नौ" इति "अमेध्यप्रभशानि च" इति च मनुः । २ पुरीषे न॰।

**अमेनि** त्रि॰ मि–नि–न॰त॰। परिच्छेदाभावे । "मेन्या मेनिरस्यमेनयस्ते सन्तु मेऽस्मानभ्यघायन्ति" अथ॰५,६,९ ।

**अमेय** त्रि॰न मेयः । १ परिच्छेत्तुमशक्ये २ ज्ञातुमशक्ये च "अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः" रघुः ३"इषाकपिरमेयात्मा" विष्णुस॰ ।

**अमोघ** त्रि॰ मोघो निष्फलः न॰त॰। १ सफले,२ अव्यर्थे च ।

"अमोघास्तु पतन्ते षु धर्म्मपौतेन सन्तर" भा० शा०प०। "यदमोघमपामन्तरुप्तं बीजमज! त्वया" कुमा० "धनुष्यमोघं समधत्त सायकम्" "अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषम्" इति च रघुः। २नदभेदे पु०। ४पटोलतायां, हरितक्यां ५विडङ्गे च स्त्री। ६विष्णौ पु० "अमोघः पुण्डरीकाक्षः" विष्णु०स० "सत्यकामः सत्यसङ्कल्प" इति श्रुतेः अवितथसङ्कल्पत्वात्तस्य तथात्वम्।

**अमोत** न० अमा सह उतम् वे-क्त। अच्छिन्नदशवस्त्रयुग्मे "अमोतं वासो दद्याद्धिरण्यमपि दक्षिणाम्" अथ० ९,५,१४

**अम्ब** गतौ भ्वादि० पर०सक० सेट्। अम्बति आम्बीत् आनम्ब अत्त्वा अम्बालिका अम्बिका अयमिदित् शब्दे इत्येके।

**अम्बक** न० अम्बति शीघ्रं नक्षत्रस्थानपर्य्यन्तं गच्छति अम्ब-ण्वुल्। १नेत्रे। अम्ब्यते स्नेहेनोपगम्यते घञ् स्वार्थे क। २ पितरि।

**अम्बर** न० अबि-शब्दे घञ् अम्बः शब्दस्तं राति धत्ते रा-क ६त०। १शब्दाश्रये आकाशे २मर्म्मरशब्दयुते वस्त्रे, स्वनामख्याते ३गन्धद्रव्ये ४अभ्रकधातौ च। "अङ्कुशाकारयाङ्गुल्या तावतर्जयताम्बरे" इति रघुः "धौतदुकूलवल्कलधवलाम्बर" इति काद० "आकाशसाम्यं दधुरम्बराणि" माघः "संविव्युरम्बरविकाशि चमूसमुत्थम्" माघः। २अन्तिके निरु०।

**अम्ब(रि)रीष** पु०न० अम्ब्यते पच्यतेऽत्र अम्ब-अरिष नि० वा दीर्घः। (भाजनाखोला) इति ख्याते भर्जनपात्रे। अम्बरीषमपि। "वैश्यकुलाम्बरीषमहानसाद्वा" कात्या० ४,७,१६,। "अग्निमाहृत्य गार्हपत्यागारे निर्मथ्याभ्यादधीतेति शेषः वैश्यकुलाद्वा लौकिकोऽग्निर्हुतोच्छिष्टो वा ग्राह्यः न तु परिगृहीत आवसथ्यादिः। अथवा अम्बरीषात् भ्राष्ट्रात् कन्दुकस्थानात् महानसाद्वेति कर्क०। दीर्घयुक्तस्तु २ विष्णौ, ३ शिवे, ४ भास्करे ५बालके आम्रातकवृक्षे, ७ नरकभेदे, ८ अनुतापे। ९ सूर्य्यवंश्यनृपभेदे पु० स च। "भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः। नाभागस्तु सुतस्तस्यासीत् पुत्रः परमधार्म्मिकः। अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताऽभवत्" इति हरिवंशोक्तः सूर्य्यवंश्यभगीरथपौत्रः "अम्बरीष! शुकप्रोक्तं नित्यं भागवतं शृणु" परा० उ०। "भगवान् अम्बरीषश्च ब्रह्मण्यानमितौजसे" भा० आनु०प०। "पुण्यश्लोकोऽम्बरीषश्च पुण्यश्लोको युधिष्ठिरः" इति प्रातःस्मरणीयेषु पुरा०।

**अम्बरौकस्** पु० अम्बरमोको यस्य। देवेषु तेषां मेर्वाद्युन्नतस्थलेऽपि मेरोः सर्व्वतः उन्नतत्वादस्यादाद्यपेक्षयाम्बरवासित्वम्। तेन आकाशस्य धारणाक्षमत्वेऽपि न क्षतिः। "विलिख्यते मौलिभिरम्बरौकसाम्" कुमा०।

**अम्बर्य** आभरणे कण्ड्वा०। अम्बर्य्यति।

**अम्बष्ठ** पु० अम्बाय चिकित्सकवर्गाय तत्प्रख्यापनार्थं तिष्ठतेऽभिप्रैति स्था-क षत्वम्। चिकित्सके "विप्रात् वैश्यकन्यायां जाते १सङ्कीर्णवर्णे, "ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनाम जायते" मनुः "सजातिजानन्तरजाः षट्सुता द्विजधर्म्मिणः" इति मनूक्तेः "द्विजातीनां समानजातीयासु जाताः तथानुलोम्येनोत्पन्नाः ब्राह्मणेन क्षत्रियावैश्ययोः, क्षत्रियेण वैश्यायामेवं षट् पुत्रा द्विजधर्म्मिणः उपनेयाः तानन्तरजनाम्न इति यदुक्तं तत् तज्जातिव्यपदेशार्थं न संस्कारार्थमिति कस्यचिद्भ्रमः स्यात् अत एवं द्विजातिसंस्कारार्थवचनमिति" कुल्लू० उक्तेश्च अम्बष्ठादीनामुपनयनसंस्कारसत्त्वेऽपि इदानीन्तनानां संस्कारलोपेन शूद्रत्वम् अतएव इदानीं क्षत्रियादीनां शूद्रत्वमेवमम्बष्ठादीनामपि" इति रघु० ये तु व्रात्यदोषप्रायश्चित्तमाचरन्ति तेषामुपनयनयोग्यता भवत्येव "येषां पित्रादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तम्" यस्य पिता पितामहावनुपनीतौ स्यातान्तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्य्यं यस्य प्रपितामहादीनां नानुस्मर्य्यते उपनयनन्तस्य द्वादशवार्षिकं त्रैविद्यकम्ब्रह्मचर्य्यमिति" मिता० उक्तेः। "सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्" मनूक्ता तेषां वृत्तिः। २देशभेदे, ३हस्तिपके च। ४यूथिकायां स्त्री। स्वार्थे कनि ह्रस्वे अत इत्त्वे। अम्बष्ठिकाप्यत्रैव (आमनहाटीति) प्रसिद्धायां ५ब्राह्मीलतायाञ्च।

**अम्बष्ठकी** स्त्री अम्बष्ठं कायति आदानार्थमाह्वयति कै-क गौरा० ङीष्। १ (पटाखड्) इति ख्यातायां लतायां पाठायाम्।

**अम्बष्ठा** स्त्री अम्ब्यते शब्द्यते अम्बा तादृशी सती तिष्ठति स्था-क अम्बा० षत्वम्। (अम्बाड़ा) इति ख्यातायाम् शठाख्यायाम् (पटांड्) इति हिमगिरिप्रसिद्धायां १पाठायाम्। २चाङ्गेर्य्याम्। ३यूथिकायाञ्च। संज्ञायां कन् अत इत्त्वे। अम्बष्ठिका। (आमन् हाटी) ४ब्राह्मीलतायाम्।

**अम्बा** स्त्री अम्ब्यते स्नेहेनोपगम्यते अम्ब-कर्म्मणि घञ्। १मातरि, लोके सम्बोधने तदर्थे ह्रस्वः। "कृताञ्जलिस्तत्र यदम्ब! सत्यात्" रघुः। वेदे तु "अम्बेऽम्बालेऽम्बिके पूर्व्वाणि" पा० निर्देशात् न ह्रस्वः। "अम्बे! अम्बिके

अम्बालिके ! न मानयति कश्चन य० २३,१८ । नाथोक्ता-
र्थमपि तत्रैव, २ अम्बष्ठलतायां, ३ काशीराजकन्यायाञ्च ।
"अथाशौषं महाबाहो तिस्रः कन्याः स्वयम्वराः ।
रूपेणाप्रतिमा लोके काशीराजसुतास्तदा । अम्बां
चैवाम्बिकां चैव तथैवाम्बालिकामिति । राजानश्च
समाहूताः पृथिव्यां भरतर्षभ ! । "अम्बा ज्येष्ठाभवत्तासा-
मम्बिका त्वथ मध्यमा । अम्बालिका च राजेन्द्र !
राजकन्या कनीयसी इत्युपक्रम्य । अम्बाया उपा-
ख्यानं विस्तरेण वर्णितम् भा० उ०प० अम्बोपाख्याने ।
"मया सौभपतिः पूर्व्वं मनसा हि वृतः पतिः इत्यम्बि-
योक्ते "अनुजज्ञे तदा ज्येष्ठामम्बां काशीपतेः सुताम् ।
अम्बिकाम्बालिके भार्य्ये प्रादात् भ्रात्रे यवीयसे । भीष्मो
विचित्रवीर्य्याय विधिदृष्टेन कर्म्मणा" भा०आ०प० ।

**अम्बाला** स्त्री अम्बेति शब्दं लाति धत्ते ला—क । मातरि ।

**अम्बालिका** स्त्री अम्बालैव स्वार्थे के ह्रस्वे अत इत्त्वम् ।
मातरि, १पाण्डुराजमातरि काशीराजकन्यायां
विचित्रवीर्य्यस्य भार्य्यायाम् ।

**अम्बिका** स्त्री अम्बैव कन् । १मातरि २दुर्गायाम् "आशी-
र्भिरेधयामासुः पुरः पाकाभिरम्बिकाम्" कुमा० । काशी-
राजस्य मध्यमकन्यायां विचित्रवीर्य्यस्य भार्य्यायां धृत-
राष्ट्रस्य ३मातरि ।

**अम्बिकापति** पु० ६त० । शिवे । [ १गणेशे २धृतराष्ट्रे च ।

**अ(आ)म्बिकेय** पु० अम्बिकाया अपत्यम् ढ (ढक्) वा ।

**अम्बु** न० अबि शब्दे—उण् । १लग्नावधिके चतुर्थस्थाने २(बाला)
इति ख्यातायामोषधौ ३ जले "गाङ्गमम्बु सितमम्बु
यामुनं कज्जलाभमुभयत्र मज्जतः" का०प्र० ।"शातोदराम्बु-
च्छटा" का०प्र० "विश्रामाय विहङ्गानामालवालाम्बु-
पायिनाम्" । "तौ सरांसि रसवद्भिरम्बुभिः" इति च रघुः ।
"फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादनम्" मनुः । तच्च जलम्
रसतन्मात्रादुत्पन्नो भूतविशेष इति सांख्याः पञ्चीकृतेभ्य
एव पञ्चभ्यो भूतेभ्यः स्थूलतया उत्पन्नमिति वेदान्तिनः
जलभूतांशबाहुल्यात् जलत्वव्यवहारः "वैशेष्यात्तद्वादः"
शा०सूत्रात् । तस्य च रूपरसस्पर्शशब्दा विशेषगुणाः
"योयोयावतिथश्चैषां स स तावद्गुणः स्मृतः" इति मनुना
भूतमध्ये चतुर्थस्य जलस्य चतुर्गुणत्वाभिधानात् "शब्दस्पर्शौ
रूपरसौ सलिलस्य गुणा अमी" भा०शा०प० उक्तेश्च
"जले बुलबुलध्वनिः । शीतस्पर्शः शुक्लरूपं रसो माधुर्य्य-
मीरितम्" पञ्चद० । "अग्नेरापः" इति श्रुतेस्तस्याग्निप्रभव-
त्वम् यथोक्तं "तत्तेज ऐक्षत बहु स्यां प्रजायेयेति
तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते पुरुषस्तेजस
एव तदध्यापो जायन्ते" छा० उ० । "तेज इति प्रसिद्धं
लोके दग्धृपक्तृप्रकाशकं रोहितञ्चेति तत्सृष्टं तेज ऐक्षत ।
तेजोरूपत्वेन स्थितं सदैवतेत्यर्थः । बहु स्यां प्रजायेयेति
पूर्व्ववत्तदपोऽसृजत । आपो द्रवाः स्निग्धाः स्यन्दिन्यः
शुक्लाश्चेति प्रसिद्धं लोके । यस्मात्तेजसः कार्य्यभूता आप-
स्तस्माद्यत्र क्व च देशे काले वा शोचति सन्तप्यते स्वेदते
प्रस्विद्यते वा पुरुषस्तेजस एव तदापोऽधिजायन्ते । ता
आप ऐक्षन्तेति पूर्व्ववदेव आकारसंस्थितं सदैवतेत्यर्थः
भा० । "तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति "सेयं
देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे
व्याकरोत्" छा०उ० ॥ "सेयं तिस्रो देवता अनुप्रविश्य स्वा-
त्मावस्थे बीजभूते अव्याकृते नामरूपे व्याकरवाणीति
तासाञ्च तिसृणां देवतानामेकैकां त्रिवृतं करवाणि एकै-
कस्याः त्रिवृत्करणे एकैकस्याः प्राधान्यं द्वयोर्द्वयोर्गुणभा-
वोऽन्यथा हि रज्ज्वा इवैकमेव त्रिवृत्करणं स्यात् न
तु तिसृणां पृथक् त्रिवृत्करणमिति । एवं हि तेजोऽबन्नानां
पृथङ्नामप्रत्ययलाभः स्यात्तेज इदम्" इमा आपः, अन्नमिद-
मिति च पृथङ्नामप्रत्ययलाभे देवतानां सम्यग्व्यावहारस्य
प्रसिद्धिः प्रयोजनं स्यात् । एवमीक्षित्वा सेयं देवतेमा-
स्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्य्यबिम्बवदन्तः
प्रविश्य वैराजं पिण्डं प्रथमं देवतादीनां च पिण्डमनु-
प्रविश्य यथासङ्कल्पमेव नामरूपे व्याकरोदसौनामायमिदं-
रूप इति तासाञ्च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृ-
तमेकैकामकरोत्कृतवती देवता" भा० । "अद्भिः सोम्य ! शुङ्गेन
तेजो मूलमन्विच्छ" छा०उ० "अद्भिः शुङ्गेन तेजो मूलं
कार्य्येण कारणम् अन्विच्छ "तेजो वा अद्भ्यो भूयस्तद्वा एत-
द्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति
वर्षिष्यति वा इति तेज एव तत्पूर्व्वं दर्शयित्वाऽथापः
सृजते तदेतदूर्द्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्च-
रन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति
तेज एव तत्पूर्व्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति"
छा०उ० । "तेजो वाऽद्भ्यो भूयः, तेजसोऽप्कारण-
त्वात् । कथमप्कारणत्वमित्याह । यस्मादब्योनिस्तेजस्तस्मा-
त्तद्वा एतत्तेजोवायुमात्मगृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य
वायुमाकाशमभिव्याप्नुवत्तपति यदा, तदाहुर्लौकिकाः अभि-
शोचति सन्तपति सामान्येन जगन्ति तपति देहानतो वर्षि-

ष्यति वै इति । प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्टवतः कार्यं भविष्यतीति विज्ञानम् ॥ तेज एव तत्पूर्व्वमात्मान-सद्भूतं दर्शयित्वाऽथानन्तरमपः सृजतेऽतोऽप्सृष्टत्वाद्धेतोऽद्भ्यस्तेजः । किञ्चान्यद्यदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति । कथं जलाभिश्चोर्द्धगामिभिर्विद्युद्भिरर्चिर्भिश्च तिर्य्यग्गताभिश्च महाह्रादाः स्तनयनशब्दाश्चरन्ति । तस्मात्तद्दर्शनाद्धि लौकिका विद्योतते स्तनयति वर्षिष्यति वा इत्याद्युक्तार्थमतस्तेज उपास्स्वेति भा० ।

नैयायिकादयस्तु परमाणुविशेषेभ्य एव तस्योत्पत्तिः । तच्च द्विविधं नित्यमनित्यञ्च नित्यं परमाणुरूपमनित्यं द्व्यणुकादि । प्रकारान्तरेण अनित्यमपि त्रिविधं देहेन्द्रियविषयभेदात् । देहः अयोनिजः वरुणचन्द्रलोकयोः स्मृत्यादिप्रसिद्धः इन्द्रियं रसनं गन्धादिषु मध्ये रसमात्रव्यञ्जकत्वात् तस्य जलीयत्वम् । द्व्यणुकादिकमारभ्य हिमकरकसिन्धुपर्य्यन्तं विषयः उपभोग्यत्वात् । स्पर्शसंख्यापरिमितिसंयोगविभागपरत्वापरत्वानीत्यष्टौ वेगः गुरुत्वं रूपं रसः स्नेह इत्र जलस्यैते चतुर्द्दशसामान्यविशेषगुणाः यथोक्तं "स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम् । रूपं रसस्तथा स्नेहो वारिण्येते चतुर्द्दश । वर्णः शुक्लोरसस्पर्शौ । जले मधुरशीतलौ । स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम्" । नित्यतादि प्रथमवत् किन्तु देहमयोनिजम् इन्द्रियं रसनं सिन्धुर्हिमादिविषयो मतः" भाषा० । एवं स्थूलभूतजलस्य उपाधिभेदेन सुश्रुते गुणदोषादिविवेकाय भेदा दर्शिता यथा "पानीयमान्तरीक्षमनिर्देश्यरसममृतं जीवनं तर्पणं धारणमाश्वासजननं श्रमक्लमपिपासामदमूर्च्छातन्द्रानिद्रादाहप्रशमनमेकान्ततः पथ्यतमञ्च तदेवावनौ पतितमन्यतमं रसमुपलभते स्थानविशेषान्नदीनदसरस्तडागवापीकूपचुण्टीप्रस्रवणोद्भिदविकिरकेदारपल्वलादिषु स्थानेष्ववस्थितमिति । तत्र लोहितकपिलपाण्डुपीतनीलशुक्लेष्ववनिप्रदेशेषु मधुराम्ललवणकटुतिक्तकषायाणि यथासङ्ख्यमुदकानि सम्भवन्तीत्येके भाषन्ते तत्तु न सम्यक् तत्र पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण तत्र भूगुणभूयिष्ठायां भूमावम्लं लवणञ्च । अम्बुगुणभूयिष्ठायां मधुरम् । तेजोगुणभूयिष्ठायां कटुकं तिक्तञ्च । वायुगुणभूयिष्ठायां कषायञ्च । आकाशगुणभूयिष्ठायामव्यक्तरसमव्यक्तं ह्याकाशमित्यतस्तत्प्रधानमव्यक्तरसत्वात् तत्पेयमान्तरीक्षालाभे । तत्रान्तरीक्षं चतुर्व्विधम् । तद्यथा । धारं कारं तौषारं हैममिति । तेषां धारं प्रधानं लघुत्वात्तत्पुनर्द्विविधं गाङ्गं सामुद्रं चेति । तत्र गाङ्गमाश्वयुजे मासि प्रायशो वर्षति तयोर्द्वयोरपि परीक्षणं कुर्व्वीत शाल्योदनपिण्डमकथितमविदग्धं रजतभाजनोपहितं वर्षति देवे वहिष्कुर्व्वीत स यदि मुहूर्त्तं स्थितस्तादृश एव भवति तदा गाङ्गं पततीत्यवगन्तव्यं वर्णान्यत्वे सिक्थक्लेदे च सामुद्रमिति विद्यात्तत् तदुपादेयम् । सामुद्रमप्याश्वयुजे मासि गृहीतं गाङ्गं पुनः प्रधानं तदुपाददीताश्वयुजे मासि, शुचिशुक्लविततपटैकदेशच्युतमथ वा हर्म्यतलपरिभ्रष्टमन्यैर्वा शुचिभिर्भाजनैर्गृहीतं सौवर्णे राजते मृण्मये वा पात्रे निदध्यात्तत्सर्व्वकालमुपयुञ्जीत तस्याभावे भौमम् । तच्चाकाशगुणबहुलं तत्पुनः सप्तविधम् । तद्यथा । कौपं नादेयं सारसं ताडागं प्रास्रवणमौद्भिदं चौण्ट्यमिति तत्र वर्षास्वान्तरीक्षमौद्भिदं वा सेवेत महागुणत्वात् शरदि सर्व्वं प्रसन्नत्वात् हेमन्ते सारसं ताडागं वा, वसन्ते कौपं प्रास्रवणं वा ग्रीष्मेष्वेवं प्रावृषि चौण्ट्यमनवमनभिवृष्टं सर्व्वञ्चेति ॥ कीटमूत्रपुरीषाण्डशवकोथप्रदूषितम् । तृणपर्णोत्करयुतं कलुषं विषसंयुतम् ॥ योऽवगाहेत वर्षासु पिबेद्वापि नवं जलम् । स वाह्याभ्यन्तरान् रोगान् प्राप्नुयात्क्षिप्रमेव तु ॥ तत्र यत् शैवालपङ्कतृणपद्मपत्रप्रभृतिभिरवच्छन्नं शशिसूर्य्यकिरणानिलैर्नाभिजुष्टं गन्धवर्णरसोपसृष्टञ्च तद्व्यापन्नमिति विद्यात् ॥ तस्य स्पर्शरूपरसगन्धवीर्य्यविपाकदोषाः षट् सम्भवन्ति । तत्र खरता पैच्छिल्यमौष्ण्यं दन्तग्राहिता च स्पर्शदोषाः । पङ्कसिकताशैवालबहुवर्णता रूपदोषाः । व्यक्तरसता रसदोषः । अनिष्टगन्धता गन्धदोषः । यदुपयुक्तं तृष्णागौरवशूलकफप्रसेकानापादयति स वीर्य्यदोषः । यदुपयुक्तं चिराद्विपच्यते विष्टभ्नाति वा स विपाकदोष इति । त एते आन्तरीक्षे न सन्ति ॥ व्यापन्नानामग्निक्वथनं सूर्य्यातपप्रतापनं तप्तायःपिण्डसिकतालोष्ट्राणां वा निर्व्वापणं प्रसादनञ्च कर्त्तव्यं नागचम्पकोत्पलपाटलापुष्पप्रभृतिभिश्चाधिवासनमिति ॥ सौवर्णे राजते ताम्रे कांस्ये मणिमये तथा । पुष्पावतंसं भौमे वा सुगन्धि सलिलं पिबेत् ॥ व्यापन्नं वर्जयेन्नित्यं तोयं यच्चाप्यनार्त्तवम् । दोषसञ्जननं ह्येतन्नाददीताहितन्तु तत् ॥ व्यापन्नं सलिलं यस्तु पिबतीहाप्रसादितम् । श्वयथुं पाण्डुरोगञ्च त्वग्दोषमविपाकताम् ॥ श्वासकासप्रतिश्यायशूलगुल्मोदराणि च । अन्यान् वा विषमान् रोगान् प्राप्नुयात् क्षिप्रमेव च ॥ तत्र सप्त कलुषस्य प्रसादनानि भवन्ति । तद्यथा । कतकगोमेदकविसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति ।

यत्र निर्लेपणानि भवन्ति । तद्यथा । फलकं लाटकं सुहृकलय उदकमङ्किका शिक्यश्चेति ॥ यत्र शीतीकरणानि भवन्ति प्रवातस्थापनमुदकप्रक्षेपणं यष्टिकाभ्रामणं व्यजनं वस्त्रोद्धरणं वालुकाप्रक्षेपणं शिक्यावलम्बनञ्चेति

**अम्बुकण** पु० ६त० । शीकरे जलविन्दौ स्त्रोल्पेके । [च ।

**अम्बुकण्टक** पु० अम्बुनः कण्टकमिव । १कुम्भीरे, २शृङ्गाटके

**अम्बुकिरात** पु० अम्बुनि किरात इव हिंस्रः । कुम्भीरे ।

**अम्बुकीश** पु० अम्बुनि कीशः वानर इव । (शुशक) इति ख्याते शिशुमारे जलजन्तुभेदे ।

**अम्बुकूर्म्म** पु० अम्बुनि कूर्म्म इव । शिशुमारे (शुशक) हेम० ।

**अम्बुकेशर** पु० अम्बुजातः केशरोऽस्य । छोलङ्गवृक्षे रत्नमा० ।

**अम्बुचर** त्रि० अम्बुनि चरति चर—ट ७त० । जलचरे हंसादौ स्त्रियां ङीप् । [ख्याते शैवाले ।

**अम्बुचामर** न० अम्बुनि चामरमिव । (सेओयाला) इति

**अम्बुचारिन्** त्रि० अम्बुनि चरति चर—णिनि ७त० । जलचरे हंसादौ स्त्रियां ङीप् । "लूताहिसरटानाञ्च तिरश्चां चाम्बुचारिणाम्" मनुः ।

**अम्बुज** न० अम्बुनि जायते जन+ड । १पद्मे २सारसपक्षिणि । ३चन्द्रे ४कर्पूरे ५हिजल् इति ख्याते वृक्षे च पु० । ६शङ्खे पु०न० । ७वज्रे च । वज्रस्य जलदप्रभवत्वात्तथात्वम् । "चापं पायाम्बुजसरसिजान्यङ्कुशं पुष्पवाणमिति"-भुवनेश्वरीध्याने अम्बुजं पद्मं ननु शङ्खमिति तन्त्रसारोक्तेः अस्य शङ्खवाचकतापीति ज्ञायते ।

**अम्बुजन्मन्** न० अम्बुनो जन्मास्य जन्मोत्तरपदत्वाद्व्यधिकरणो बहुव्रीहिः । १पद्मे २सारसविहङ्गे ३शङ्खे पु०च ।

**अम्बुजासना** स्त्री अम्बुजमासनम् यस्याः । १लक्ष्म्याम् । २जलोद्भवे त्रि० । [याम् अच् । शैवाले (सेओयाला) ।

**अम्बुताल** पु० अम्बुनि तालयति प्रतितिष्ठति चु० तल—प्रतिष्ठा-

**अम्बुद** पु० अम्बु ददाति दा—क । १मेघे, "नवाम्बुदश्यामवपुर्न्यविक्षत" माघः "नवाम्बुदानीकमुहूर्त्तलाञ्छने" "स्रुतवृतं वह्निमिवाद्भिरम्बुदः" इति च रघुः । २मुस्तके च ।

**अम्बुधर** पु० अम्बूनि धरति धृ—अच् । १मेघे "शरत्प्रमृष्टाम्बुधरोपरोधः" रघुः "अगनेरब्भृतस्य चोभयोर्वैशिनश्चाम्बुधराश्च योनयः" कुमा० । २मुस्तके च ।

**अम्बुधि** पु० अम्बूनि धीयन्तेऽत्र धा—आधारे कि । १समुद्रे । "रत्नावलीरम्बुधिराबबन्ध" माघः २उदकाधारे घटादौ अम्बुधिर्घटः सि०कौ० । ३चतुःसंख्यान्विते च ।

**अम्बुधिप्रसवा** स्त्री अम्बुधिमिव प्रचुररसं प्रसूते प्र+सू—अच् । १घृतकुमार्य्याम् ।

**अम्बुनिधि** अम्बूनि निधीयन्तेऽस्मिन् अम्बु+नि+धा—आधारे कि । समुद्रे । "देवासुरैरमृतमम्बुनिधिर्ममन्थे" किरा० । "ये पक्षिणः प्रथममम्बुनिधिं गतास्ते" माघः ।

**अम्बुप** पु अम्बूनि पाति पिबति वा पा—रक्षणे—पाने वा क । १जलेश्वरे वरुणे "रक्षोऽम्बुपानिलशशीशपुरोगाणि चाष्टौ" सि०शि० । २समुद्रे च ३जलपायिनि त्रि० ।

**अम्बुपत्रा** स्त्री अम्बूनि पत्रे यस्याः । उच्चटावृक्षे । अम्बुयुक्तं पत्रमस्याः गौरा० ङीष् । अम्बुपत्रीत्यप्यत्र ।

**अम्बुप्रसाद** पु० अम्बूनि प्रसादयति प्र+सद्—णिच्—अण् उप०स० । कतककवृक्षे (निर्माल्लि) ।

**अम्बुप्रसादन** न० अम्बूनि प्रसादयति प्र+सद्+णिच्—ल्यु ६त० । कतकतफले "फलं कतकवृक्षस्य यद्यम्बुप्रसादनम्" मनुः । जलप्रसादकारके त्रि० तानि २९०पृष्ठे दृश्यानि ।

**अम्बुभृत्** पु० अम्बु बिभर्त्ति—भृ—क्विप् ६त० । १मेघे २मुस्तके ३समुद्रे च । ४जलाधारमात्रे त्रि० ।

**अम्बुमत्** त्रि० अम्बूनि बाहुल्येन सन्त्यस्मिन् । १बहूदके देशादौ स्त्रियां ङीप् । सा च २नदीभेदे । "ततोऽम्बुमत्या धर्मज्ञ ! सुतीर्थञ्चाप्यनुत्तमम् भा०व०प० ।

**अम्बुमात्रज** पु० अम्बुमात्रे अल्पजले जायते जन—ड ७त० । शम्बूके, (शामुक) हेम० । [२मुस्तके च ।

**अम्बुमुच्** पु० अम्बूनि मुञ्चति मुच—क्विप् ६त० । १मेघे

**अम्बुर** पु० अम्ब—बा०उरन् । द्वाराधःकाष्ठे (गोवराट)हेम०

**अम्बुराशि** पु० अम्बूनां राशयो यत्र । समुद्रे । "नैतन्नभोमण्डलमम्बुराशिः" सा०द० "अमृतपूर्व्वां रुचमम्बुराशे" माघः "शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः" रघुः ।

**अम्बुरुह्** न० अम्बुनि रोहति रुह—क्विप् ७त० १पद्मे "विस्तृत्वरैरम्बुरुहां रजोभिः" माघः । २सारसविहगे च

**अम्बुरुह** पु० अम्बुनि—रोहति रुह—क ७त० । १पद्मे । "द्रक्ष्यथाम्बुरुहं दिव्यं गोश्टङ्गं नाम पर्वतम्" । "नदीं गोदावरीं चैव प्रसन्नाम्बुरुहां तत" इति च रामा० । अम्बुरुहं पद्ममिव पुष्पमस्याः अर्श०अच् । स्थल पद्मिन्यांस्त्री

**अम्बुरुहिणी** स्त्री अम्बुरुहाणां समूहः तद्विशिष्टदेशो वा इनि । १पद्मसमूहे २पद्मलतायाञ्च । [रुचि च ।

**अम्बुरोहिन्** न०अम्बुनि रोहति रुह—णिनि । १पद्मे २सा-

**अम्बुवाची** स्त्री अम्बु तद्धर्षं वाचयति सूचयति वच-णिच्—अण् उप०स०ङीप् । आर्द्राद्यपादस्यरविकालिकभूमौ "आर्द्राद्यादि

विशाखान्तं रविचारेण वर्धते" इत्युक्तेस्तथा हृष्टिसूचकत्वम् । तत्काले हि भूमेरन्तर्गतरजोयोगरूपत्वात्तथात्वम् । यथोक्तम् "रजोयुक्चाम्बुवाची च रौद्राद्यपादगे रवौ" ज्योति० । मिथुनराशिर्हि मृगशिरःशेषार्द्धार्द्रापादचतुष्क पुनर्वसुपादत्रयात्मकः । तत्र मृगशिरसि भुक्ते यदा आर्द्रायाः प्रथमपादोपभोगार्थं रविर्गच्छति तदा पृथ्वी ऋतुमती भवति तच्च मिथुने ६।४० चत्वारिंशत्कलाधिकषडंशातीतेष्व आर्द्राद्यपादावधि यावत्तिष्ठति तावत् । यथोक्तं राजमा० । "रवौ रौद्राद्यपादस्थे भूमेः संजायते रजः" इत्युपक्रम्य । "चत्वारिंशत्त्रिभिक षड्भागयुतोरविर्यदा भवति । तत्राम्बुवाची ज्ञेया मिथुनपादे स्थितो यावत् । दिग्भागान्तन्य त्रिभोगमितेन भवति रविर्यदा याम्ये" इति । तत्र च वर्ज्यानि "न स्वाध्यायं वषट्कारं न देवपितृतर्पणम् ॥ कृषाणां वाहनञ्चैव बीजानां वपनं तथा" राजमा० । "तस्यां पाठोबीजवापोनाहिभीर्दुग्धपानतः" ज्यो०। यदा द्रौ वा समादाय भानोर्मन्दगमिता । पुनस्तस्यैनमादाय यजनं त्रिदिनं त्यजेत् । काम्यं नैमित्तिकं चैव यात्रां मन्त्रक्रियां तथा । ऋतुमत्यां न कुर्वीत पूर्वसङ्कल्पिताहते । न कुर्यात् खननं भूमेः सूक्ष्मेणापि यद्गुरि ! । मत्स्य सू० । "यतिनोव्रतिनश्चैव विधवा च द्विजस्तथा । अम्बुवाचीदिने चैव पाकं कृत्वा न भक्षयेत् । स्वपाकं परपाकं वा अम्बुवाचीदिने तथा । भक्षणं नैव कर्त्तव्यं चत्वालाग्रमयं स्मृतम्" विष्णुरहस्यम् ।

**अम्बुवासिन्** त्रि० अम्बुप्रधाने देशे वसति वस–णिनि ङीप् । १ पाटलावृक्षे । २ जलवासिमात्रे त्रि० । [पाटलावृक्षे ।

**अम्बुवासी** स्त्री अम्बुप्रधाने देशे वासो यस्याः गौरा० ङीष् ।

**अम्बुवाह** पु० अम्बूनि वहति वह–अण् उप० स० । १ जलधरे मेघे । "व्याजेन यस्याविहरम्बुवाहः यतोज्झितांभिर्मुहुरम्बुवाहैः" "जलधरपरिधानश्यामलैरम्बुवाहैः" इति च माघः । २ मुस्तके । त्रि अम्बुवाहमात्र ।

**अम्बुवाहिन्** त्रि० अम्बूनि वहति धारयति वह–णिनि ६त० । १ जलधारके त्रि० २ मेघे ३ मुस्ते च पु० ।

**अम्बुवाहिनी** स्त्री अम्बूनि वहति स्थानान्तरं नयति वह–णिनि ६त० ङीप् । १नौकाजलसेचनार्थे काष्ठनिर्मिते पात्रभेदे २ जलवाहिकायां स्त्रियाञ्च ।

**अम्बुविहार** पु०७त०। जलक्रीडायाम् सन्तरणादौ "वधुरम्बुविहारहिमं सुचिना" माघः । [वैकूदकायां घृतकुमार्याम् ।

**अम्बुविस्रवा** स्त्री अम्बूनि विस्रवति वि+स्रु–अच् । पत्रान्-

**अम्बुवेतस** पु० अम्बुजातोवेतसः शाक०त० । जलवेतसे ।

**अम्बुशिरीषिका** स्त्री अल्पः शिरीषः अल्पार्थे कन् स्त्रीत्वम् जलशिरीषे । [(जोंक) इति ख्यातायां जलौकायाम् ।

**अम्बुसर्पिणी** स्त्री अम्बुनि सर्पति सृप–णिनि ७त० ।

**अम्बुसेचनी** स्त्री अम्बूनि सिच्यन्ते नौकातः अनया सिच–करणे ल्युट् ६त० ङीप् । नौकादेर्जलसेचनीपात्रे ।

**अम्बूकृत** न० अनम्बु अम्बु कृतं अम्बु श्लेष्मात्मकाम्बु उपचारात्तद्युक्तं ततः च्वि+कृ–क्त । निष्ठीवनयुक्ते वचसि ।

**अम्ल** पु० अबि–शब्दे क नि० न इट् । १अम्लरसे २तद्वति त्रि०।

**अम्भ** ध्वनौ भ्वा० आ० अक० सेट् । अम्भते आम्भिष्ट आनम्भे आनम्भे अयम् इति लेके तेन आनम्भे इत्येव। अम्भः

**अम्भस्** न० आप्यते आप–असुन् "उदके नुम्भौ चेति" उणा० अम्भ–शब्दे असुन् वा । १जले "सैव्यमानमजरं प्रातः कोऽम्भसा परिषिञ्चति"? । "त्रिस्रोतसः सन्ततधारमम्भः" इति च माघः । "परिश्रमाम्भःपुलकेन सर्पता" किरा०। "कथमप्यम्भसामन्तरा निष्पत्तेः प्रतीक्षते" कुमा० "अम्बरेऽम्भःपतनसमये" इति मेघ० । २देवे, जलहेतुत्वात् तथात्वम् ३ पितृलोके, तेषां जलमयचन्द्रलोके स्थितत्वात् जलमयदेहत्वाच्च तत्त्वम् । ४मनुष्ये "तेन सौम्य ! यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" छा०उ०श्रुतेः । पुरुषाणां जलमयत्वात् तथात्वं पञ्चाग्निविद्याशब्दे प्रपञ्चः । ५असुरे, युद्धे देवसृष्ट्या शब्दायमानत्वात् तथा । "तानि ह वा एतानि चत्वार्यम्भांसि देवा मनुष्याः पितरोऽसुराः" इति श्रुतिः । ६वालकनामौषधौ । ज्योतिषोक्ते ७लग्नाच्चतुर्थस्थाने । योगशास्त्रोक्तासु नवविधतुष्टिषु मध्ये प्रकृत्याख्यायां आध्यात्मिकतुष्टौ च । यथा "आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः । बाह्या विषयोपरमात् पञ्च, नव तुष्टयोऽभिमताः" सां०का० । "प्रकृतिव्यतिरिक्त आत्मास्तीति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वदुपदेशतुष्टो यो न प्रयतते तस्य चतस्र आध्यात्मिक्यस्तुष्टयोभवन्ति प्रकृतिव्यतिरिक्तात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः, ताश्च, इत्यत आह प्रकृत्युपादानकालभाग्याख्याः प्रकृत्यादिराख्या यासां तास्तथोक्ताः । तत्र प्रकृत्याख्या तुष्टिर्यथा कस्यचिदुपदेशः "विवेकसाक्षात्कारोहि प्रकृतिपरिणामभेदः तच्च प्रकृतिरेव करोतीति कृतं ते ध्यानाभ्यासेन, तस्मादेवमेवास्व वत्सेति" । सैवमुपदेष्टव्यस्य शिष्यस्य प्रकृतौ तुष्टिः प्रकृत्याख्या तुष्टिः अम्भ इत्युच्यते" त०कौ० । अस्य अम्भः-

शब्दवाच्यत्वे हेतुस्तद्व्याख्याने दर्शितोऽस्माभिः यथा “अम्भाय तदेरम्भ इव प्रसन्नत्वात् उपदेशरूपशब्दहेतुत्वाच्च अम्भस्त्वम् अभि–शब्दे इति धातोरसुन्नन्तस्य शब्दहेतुकरूपार्थानुगमात्”। इत्याद्यर्थयोः द्वि०व० निरु०। [रा०नि०।

**अम्भः(म्भसा)सार** न० अम्भसां सारं वा सत्वम्। मुक्तायां

**अम्भः(म्भस्)सू** पु० अम्भांसि सूते सू-क्विप् वा सत्वम्। धूमे हे०।

**अम्भसांनिधि** पु० ६त० अलुक् स०। समुद्रे “शिखाभिराश्लिष्ट इवाम्भसां निधिः” माघः।

**अम्भृण** पु० भय–शब्दे यङ् लुक् अच् वेदे नि०। १महति निरु०। २भयङ्करशब्दकारके “पिशङ्गभृष्टिमम्भृणं पिशाचिम्” ऋ० १,१३३,५, “भयङ्करशब्दायमानमतिमहद्वेति” भा०। “कुम्भीभ्यामम्भृणौ सुते” य० १९,२७।

**अम्भोज** न० अम्भसि जायते जन–ड ७त०। १पद्मे “गिरा सुधाम्भोजमियं युयोज” नैष०। “यस्याम्भोजं सरस्वत्यधिवसति सदा शोणएवाधरस्ते” का०प्र०। २सारसे ३चन्द्रे “पिबन्ति त्वन्मुखाम्भोजच्युतं हरिकथामृतमिति” भाग०। चन्द्रादेवामृतच्युति सम्भवः ४कर्पूरे च पु०। ५शङ्खे पु०न०। ६जलजातमात्रे त्रि०।

**अम्भोज(ख)षण्ड** न० अम्भोजानां समूहः(ख)षण्डच्। पद्मसमूहे “कुमुदवनमपश्रि श्रीमदम्भोजख(ष)ण्डम्” माघः।

**अम्भोजजन्मन्** पु० अम्भोजाज्जन्म यस्य जन्माद्युत्तरपदोव्यधिकरणोऽपि साधु वामनः। चतुर्मुखे हरिनाभिपद्मजे ब्रह्मणि अब्जजशब्दे विवरणम्। “अम्भोजजन्मजनितस्तदन्तरगतो ब्रह्मानितो वल्पवान्” भाग० अम्भोजजन्मनः हिरण्यगर्भस्य जनिरुत्पत्तिर्यस्मात् तथाविधो विष्णुरित्यर्थः।

**अम्भोजयोनि** पु० अम्भोजं हरिनाभिपद्मं योनिः उत्पत्तिस्थानं यस्य। विधातरि। अब्जजशब्दे विवरणम्। “मदनसुपगतोऽहं पूर्वमम्भोजयोनेरिति” प्रबो०।

**अम्भोजिनी** स्त्री अम्भोज+समूहार्थे तद्वति देशे वा पुष्करा० इनि। १पद्मसमूहे, २ तलारूपे पद्मयुक्तदेशे च।

**अम्भोद** पु० अम्भो ददाति दा–क। १मेघे, २मुस्तके च। ३जलदानकर्त्तरि त्रि०। [२मुस्तके ३समुद्रे, च।

**अम्भोधर** पु० अम्भो धरति धृञ्–धारणे अच्। १मेघे।

**अम्भोधि** पु० अम्भांसि धीयन्ते यत्र धा–आधारे कि। समुद्रे। “सम्भूयाम्भोधिमभ्येति महानद्या नगापगा”। “अम्भोधिरोधसि पृथुप्रतिमानभागेति” “अम्भोधिर्विकसित वारिजाननोऽसौ” इति च माघः।

**अम्भोधिवल्लभ** पु० ६त०। प्रवाले राजनि०।

**अम्भोनिधि** पु० अम्भांसि निधीयन्तेऽत्र अम्भस्-नि+धा-कि। १समुद्रे। “मैनाकमम्भोनिधिबद्धसख्यम्” कु० “अम्भोनिधिर्वहति दुर्वहवाड़वाग्निम्” चौ० प०। [समुद्रे।

**अम्भोराशि** पु० अम्भसां राशिरिव एकत्रोपचितत्वात्।

**अम्भोरुह** न० अम्भसि रोहति रुह–क। १पद्मे २सारसे च ३जलजातमात्रे त्रि० “हेमाम्भोरुहशस्यानां तद्वाप्यो धाम साम्प्रतम्” कुमा०।

**अम्मय** त्रि० अपां विकारादि अप्+मयट्। १जलविकारे २जलप्रचुरे च “सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः” रघुः। “नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः” भाग०।

**अम्र** पु० अमति सौरभेण दूरं गच्छति अम–रन्। आम्रवृक्षे। फलपक्वादौ न०। एवं प्रायः सर्व्वत्र वृक्षवाचकेषु।

**अम्रा(म्ला)त** पु० अम्रं रसं सर्व्वत्र फलपुष्पादौ अतति व्याप्नोति अत–अण् वा रस्य लत्वम्। (आमड़ा) आम्रातकवृक्षे। स्वार्थे कन् अम्रा(म्ला)तकोऽपि।

**अम्ल** न० अम–क्त। (घोल) १तक्रे। (टक)रसभेदे पु०। २ तद्वति त्रि० “कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः” गीता। अम्लरसद्रव्याणि च सुश्रुते दर्शितानि यथा। “दाड़िमामलकमातुलुङ्गाम्रातककपित्थकरमर्द्दबदरकोलप्राचीनामलकतिन्तिड़ीककोषाम्रभव्यपारावतवेत्रफललकुचाम्लवेतसदन्तशठदधितक्रसुराशुक्तसौवीरकतुषोदकधान्याम्लप्रभृतीनि समासेनाम्लोवर्गः”।

**अम्लक** पु० अम्लोऽम्लः अल्पार्थे कन्। (मान्दार) लकुचवृक्षे।

**अम्लकाण्ड** न० अम्लं काण्डं यस्य। लवणतृणे राजनि०।

**अम्लकेशर** पु० अम्लः केशरोऽस्य। बीजपूरे (गोंड़ानेबु)।

**अम्लचूड** पु० अम्ला चूड़ा शिखाऽस्य। अम्लशाके।

**अम्लजम्बीर** पु० अम्लो जम्बीरः। (गोंड़ानेबु)जम्बीरवृक्षे।

**अम्लनायक** पु० अम्लं रसं नयति नी–ण्वुल्। अम्लवेतसे।

**अम्लनिशा** स्त्री अम्लरसे निःशेषेण शेते शीङ् ड। शटीवृक्षे

**अम्लपञ्चफल** त्रि० “कोलं च दाड़िमञ्चैव वृक्षाम्लं चुक्रिका तथा। अम्लवेतसमित्येतदम्लपञ्चफलं स्मृतम्” जम्बीरं नागरङ्गञ्च तथाम्लवेतसं पुनः। तिन्तिड़ीकं बीजपूरमम्लपञ्चफलं स्मृतमिति चोक्तं फलपञ्चके।

**अम्लपत्र** पु० अम्लं पत्रं यस्य। अश्मन्तकवृक्षे।

**अम्लपत्री** स्त्री अम्लं पत्रं यस्याः ङीप्। पलाशीलतायाम्।

**अम्लपनस** पु० अम्लः पनसः कर्म०। (मान्दार) लकुचवृक्षे।

**अम्लपित्त** त्रि० अम्लाय पित्तम्। रोगभेदे यत्र भुक्तं सर्व्वं

वस्तुमात्रं पित्तदोषेणाम्लरसतां नीयते तस्मिन् रोगभेदे ।

**अम्लपूर** न० अम्लेन अम्लरसेन पूर्य्यते पूर-कर्म्मणि घञ् ६त० । वृक्षाम्ले (तेतुल) राजनि० ।

**अम्लफल** पु० अम्लं फलं यस्य । (तेतुल) इतिख्याते वृक्षाम्ले ।

**अम्लबन्ध्या** स्त्री बन्ध-कर्म्मणि ण्यत् । अम्लसम्बद्धे कन्दभेदे ।

**अम्लभेदन** पु० अम्लार्थं भिद्यतेऽसौ कर्म्मणि ल्युट् । अम्लवेतसे

**अम्लरस** पु० अम्लो रसः । अम्ले रसे । २तद्वति त्रि० ।

**अम्लरुहा** स्त्री अम्लाय रोहति रुह-क । मालवजनागवल्लयाम्

**अम्ललोनि(णि)का** स्त्री अम्लं रसं लाति ल्लाति अम्लल: तमूनयति अल्पाम्लत्वात् हीनयति ऊन-ण्वुल् पृ० णत्वम् । (आमरूल) इति ख्याते लताभेदे । अम्लोनीयत ।

**अम्लवती** स्त्री अम्लो रसो विद्यतेऽस्याः अम्ल+रसा० मतुप् मस्यवत्वम् । (आमरूल) ख्याते लताभेदे ।

**अम्लवर्ग** पु० अम्लरसप्रधानानां वर्गः । सुश्रुतोक्ते अम्लरस-प्रधानद्रव्ये । तच्च अम्लशब्दे ३२३ पृष्ठे दृश्यम् ।

**अम्लवल्ली** स्त्री अम्लरसवती वल्ली । त्रिपर्णिकानामकन्दभेदे

**अम्लवाटिका** स्त्री अम्लस्य वाटिका स्थानमिव । नागवल्ली भेदे । पित्तरक्तप्रकोपकत्वेन तत्स्थानत्वात् तथात्वम् ।

**अम्लवास्तूक** पु० अम्लरसान्वितो वास्तूकः शाकभेदः । (चुक-पालङ्क) इति ख्याते चुक्रे ।

**अम्लवीज** न० अम्लस्य वीजं कारणम् । (तेतुल) वृक्षाम्ले ।

**अम्लवृन्त** न० अम्लरसोवृन्ते यस्य । (तेतुल) वृक्षाम्ले

**अम्लवेतस** पु०अम्लावेतस इव नम्रत्व । (चुका) ख्याते चुक्रे

**अम्लशाक** पु० अम्लः शाको यस्य । (चुका) इति १ ख्याते चुक्रे । २ अम्लप्रधाने शाकमात्रे पु० ।

**अम्लसार** पु० अम्लोरसएव सारः प्रधानं यस्य । १ चुक्रे २निम्बुके, ३हिन्ताले च । ४ काञ्जिके न० । [ख्याते वृक्षे

**अम्लहरिद्रा** स्त्री अम्लरसान्विता हरिद्रा । (आमहरिद्रा)

**अम्ला** स्त्री अम्लो विद्यतेऽस्या अर्श आद्यच् । तिन्तिड्याम् ।

**अम्लाङ्कुश** पु० अम्लम् अङ्कुशाकारमग्रं यस्य । चुक्रे ।

**अम्लातक** पु० न म्लायति म्लै-तन् न०त० । अम्लवेतसे ।

**अम्लादन** पु०अद्यते अद-कर्म्मणि ल्युट् कर्म्म० । कुरण्टकवृक्षे ।

**अम्लान** पु० म्लै-क्त न०त० । (आमला) इति ख्याते महा-सहावृक्षे । २ म्लानभिन्ने त्रि० । "अम्लानपङ्कजां मालां शिरस्युर्द्दिम चापराम्" देवी० । ३ पद्मे न० । [न्याम् ।

**अम्लानिनी** स्त्री अम्लानानां पद्मानां समूहः इनि । पद्मि-

**अम्लिका** स्त्री अम्लं+स्वार्थे कन् । १तिन्तिड्याम् । अत्राम्लीके-त्यपि पा० च २ पलाशीलतायां ३ श्वेताम्लिकायां ४ क्षुद्रा-म्लिकायाञ्च राजनि० । अम्लोऽस्त्यत्र उद्गारे वा ठन् । ५ अम्लोद्गारे मेदि० ।

**अम्लिकावटक** पु० अम्लिकाया वटकः । भावप्रकाशोक्ते (अम्ल वड़ी) इति ख्याते वटकभेदे यथा "अम्लिकां स्वेदयित्वा तु जलेन सह मर्द्दयेत् । तन्नीरे कृतसंस्कारे वटकान् मज्जयेत् पुनः । अम्लिकावटकास्ते तु रुच्यवह्निप्रदीपनाः" भा०प्र० ।

**अम्ली** स्त्री अम्ल+गौ०ङीष् । चाङ्गेर्य्याम् (आमरूल) ।

**अम्लोटक** पु० अम्लम् उटं पत्रं यस्य । (अम्लकुचा) इति अश्मन्तकवृक्षे ।

**अम्लोद्गार** पु० अम्लस्य उद्गारः । अम्लरससूचके उद्गारे ।

**अय** गतौ भ्वा० आ०सक० सेट् । अयते आयिष्ट अयाम्बभूव अयामास अयाञ्चक्रे । अस्य परस्मैपदित्वमपि "अय मुदयति मुद्राभञ्जनः पद्मिनीनामित्युद्भटः "शुचोदयन् दीधितिसञ्चयाशः यजु० १८ ६८ । "उदयति विततो-र्द्ध्वरश्मिः" माघः ।

**अय** पु० एति सुखमनेन इण्-करणे अच् । १ मङ्गले शुभ-कर्म्मणि, २शुभदायके-दैवे "स शुभमूलपत्रन्नः शुद्धपार्ष्णि-रयान्वितः" रघुः "तव धर्म्मः सदयोदयोज्ज्वलः" नै० ३विधाने च । अयते जयमनेन । ४कपर्द्दकरूपे एकाद्यङ्कयुक्ते द्यूतसाधने ५पाशके च "अयाश्च पञ्चालान् पाशावावपति अभिभूरस्त्वेतास्ते पञ्च दिशः कल्पन्तामित्येष वा अयानभि-भूर्यत्कलिरेष हि सर्वानयानभिभवति" इति शत०ब्रा० । "अया नाम कपर्द्दकाः सुवर्णनिर्म्मिता, विभीतफलानि सौवर्णानि वा । ते चाक्षा द्यूतकाले निवपनीयाः । तेषां चतुर्णामङ्कानां कृतसंज्ञा पञ्चानां कलिसंज्ञा तथा च शाखान्तरे सोमसंस्थायां कृतादिव्यवहारः कृतः "ये वै चत्वारः स्तोमाः कृतं तत्" अथ ये पञ्च कलिः इति" यदा पञ्चाप्यक्षा उत्ताना भवन्ति तदा देवि-तुर्जयोभवति पञ्चसु त्वेकरूपासु जय एव भविष्यतीत्यन्य-त्रोक्तम् । अयशब्दः अक्षवाची" इति भा० । चतुरङ्का-न्विते ६ पाशकभागे च । "यथा कृताय विजितायाधरेयाः संयन्ति" छा०उ० "कृतो नाम अयोद्यूतसमये प्रसिद्धश्चतुरङ्कः स यदा जयति द्यूते प्रवृत्तानां, तस्मै विजिताय तदर्थमितरे त्रिद्व्येकाङ्का अधरेयाः त्रेताद्वापरकलिनामानः संयन्ति सङ्गच्छन्ते अन्तर्भवन्ति चतुरङ्के कृताङ्के त्रिद्व्येकाङ्कानां विद्यमानत्वादन्तर्भवन्तीति" भा० । "द्यूतस्य समयः सङ्केतस्तदनुष्ठानसमयो वा येन द्यूतविद्यायां जीयते सोऽयस्य कलिद्वापरोऽयशब्दवाच्यः स

च चतुरङ्कोभागः चत्वारोऽङ्काश्चिह्नान्यस्मिन्निति व्युत्पत्तेः तस्य, कृतनामभृते, यदा द्यूते प्रवृत्तानां मध्ये स कोऽपि जयति तदा तस्य कृतनामभृते विजिताय अध-रेयाः संयन्तीति सम्बन्धः तदर्थं व्याचष्टे तदर्थमिति अधरेयान् व्याकरोति त्रेतेति । अयस्य यस्मिन् भागे त्रयोऽङ्काः स त्रेतानामायः यत्र तु द्वावङ्कौ स द्वापर-नामायः । यत्र एकोऽङ्कः स कलिनामाय इति । तादर्थ्ये-नेतराङ्कानामन्तर्भावसूचकं व्यक्तीकरोति चतुरङ्क इति तदन्त-र्भवति तस्मिन् कृताये त्रेतादयस्त्वन्तर्भवन्ति महासंख्या-यामवान्तरसंख्यान्तर्भावः प्रसिद्ध इति" आनन्दगिरिः । यन्ति शाराः यस्मिन् इण-आधारे अच् । द्यूते सर्व-शारगन्तव्ये अन्तभेदे अयानयशब्दे विवरणम् । अयते अच् । इगन्तरि त्रि० । चिदया आ नाम ऋ०६,६६,५ ।

**अयःपान** न० अयः द्रवीभूतं तप्तलौहं पीयतेऽत्र ल्युट् । नर-कभेदे यथा भाग० ५स्कन्धे तामिस्रादिनरकगणनायाम् वीचिरयःपानमित्युक्त्वा तद्विवरणं सहेतुकं तत्रैवोक्तं 'यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुराः व्रतस्थो वा पिबति प्रमादतः तेषां निरयं नीतानामुरसि पदाक्रम्य वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति" इति ।

**अयःशूल** न० अय एव शूलम् उपतापकम् । १तीव्रे उपतापे, २तीक्ष्णतास्त्रभेदे च । वा सत्वम्, अयश्शूलमप्यत्र ।

**अयक्ष्म** त्रि० नास्ति यक्ष्मा रोगोयस्य वेदे नि० अच् समा० । १नीरोगे रोगशून्ये "यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत्" यजु०१६,४ अयक्ष्मं नीरोगम् वेददी० । ५व० । २उपद्रवासाधने "तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज" यजु० १६,११, "अयक्ष्मया निरुपद्रवया" वेददी० ।

**अयज्ञ** त्रि० नास्ति यज्ञो यस्य । अकृतयज्ञे । "पर्णीं अयज्ञ अद्धा अयज्ञान्" ऋ० ७,६,३ ।

**अयज्ञिय** त्रि० न यज्ञाय हितः यज्ञ—घ न०त० । १यज्ञकर्मणि दानमनर्हे २माषादौ "अयज्ञिया वै माषा" श्रुतिः यज्ञकाले-ऽनुपयोग्येऽपशब्दे च अयज्ञियशब्दवचने भ०भ० ३यज्ञं कर्त्तु-मनर्हे असंस्कृतेऽनुपनीतादौ "अयज्ञिया वै गर्भास्तमेतं मन्त्रेणैव यजुषा यज्ञियं करोति" शत०ब्रा० ।

**अयज्यु** त्रि० यज—या० उ नि० युट्० न०त० । १यष्टृभिन्ने २यज्ञविघातके च "शासद्भिन्द्र मर्त्यमयज्युं शवसस्पते !" ऋ० १,१३१,४ "यज्वेदयज्योर्विभजातिभोजनम्" ऋ०२,२६,१ ।

**अयज्वन्** पु० विधिनेष्टवान् यज्वा न०त० । अकृतयज्ञे । "अयज्वानमदक्षिणममभिशस्तेति व्याहरन्" भा०द्रो०प० षोड़शधा पाठः । "योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः" "अयज्वनान्तु यद्वित्तमासुरं यं तदुच्यते" मनुः ।

**अयत** त्रि० न यम्यते यम—क्त न०त० । १असंयमे असंयते-न्द्रियनिग्रहे । यतते यत—अच् न०त० । २यत्नशून्ये ।

**अयत्न** पु० अभावे न०त० । १यत्नाभावे आयासाभावे "तद्-वाप्नोत्ययत्नेन यो हिनस्ति न कञ्चन" मनुः । न०ब० । २प्रयासशून्ये त्रि० "तद्योषवारयाषानामयत्नपटवास-ताम्" रघुः ।

**अयत्नवत्** त्रि० न यत्नवान् । १यत्नशून्ये "तेन तुल्यम् क्रिया चेद्वतिः" "तत्र तस्येविति" पा० वा वति । २यत्न-शून्यतुल्यक्रियादौ ३यत्नशून्यस्य समाने च अव्य० ।

**अयथा** अव्य० यथा योग्यत्वे न०त० । यस्य यथा विधान-मुचितं १यथा करणाभावे २अनुचितकरणे ३मिथ्याभूते च नास्ति तथा योग्यत्वं यत्र । ४अयोग्ये ५ अयत्ने च त्रि० । "तस्मा अयथं कर्यदेतत्" ऋ० १०,१८,१५ "अयथमयत्नेन लीलया" भा० ।

**अयथातथ** त्रि० यथा योग्यं तथा न भवति "यथातथयथा-पुरयोरिति" पा० निर्देशात् नि०स० । १अयथार्थे यत् यदर्थं क्रियते तस्मिन् तदर्थमभूते च । "दैवे कर्मणि पित्र्ये च तद्भवत्ययथातथम्" मनुः । यत् कर्म यदर्थं क्रियते तन्न साधयति" कुल्लू० तस्य भावः ष्यञ् वा पूर्व्वपदवृद्धिः आयातथ्यम् अयाथातथ्यञ्च तद्भावे न० ।

**अयथार्थ** त्रि० विरोधे न० त० । यथार्थभिन्ने मिथ्याभूते यथा अयथार्थानुभवः । स च तदभाववति तत्प्रकारकं ज्ञानं तच्च त्रिविधम् संशयभ्रमारोपरूपतर्कज्ञानभेदात् । तेषां सर्वेषाम् तदभाववति तत्प्रकारकज्ञानरूपत्वात्तथात्वम् ।

**अयथावत्** अव्य० अयोग्यरूपमर्हति अर्थार्थे वति । अननु-रूपे यथोचितभिन्ने । [२तत्वे त्रि० ।

**अयथेष्ट** अव्य० न०त० । १इच्छानुरूप्याभावे । अर्श आद्यच्

**अयन** न० अय—भावे ल्युट् । १गतौ, दक्षिणत उत्तरस्याम्, उत्तरतश्च दक्षिणस्यां सूर्य्यस्य चन्द्रस्य च २गतौ, तथा हि द्वादशराश्यात्मकस्य राशिचक्रस्यार्द्धं मकरादिमिथुनपर्य्यन्तम् राशिषट्कं क्रमेण उत्तरायनं तत्र स्थितोऽर्कश्चन्द्रो वा स्वगत्या प्राचीं गच्छन्नपि किञ्चित् किञ्चित्तिर्य्यग्गत्या उत्तरामभिक्रामति, एवं कर्कटादिधनुःपर्य्यन्तं राशिषट्कं क्रमेण दक्षिणायनं तत्र स्थितोऽर्कश्चन्द्रो वा प्राग्वत् दक्षि-णामेवाभिक्रामति सेयं गतिरयनशब्देन ज्योतिषे व्यव-

ह्रियते तत्र सूर्य्यस्यायनं सौरैः षड्भिर्मासैरेकं भवतीति च तत्रैव प्रसिद्धम् । "अयनविषुवद्दोषडशीतय" इत्युक्तेः २ अयनाख्यसंक्रान्तौ सा हि परिभाषिकायनशब्दवाच्या । नभोमण्डले प्रवहानिलेन पश्चाद्गत्या वंभ्रम्यमाणस्य राशिचक्रस्य निराधारतया दोलायमानत्वेन सप्तविंशांशपर्य्यन्तं प्राक् पश्चाच्च गतिर्भवति । क्रान्तिस्थानञ्च अष्टमासाधिक ६६।८ षट्षष्टिवर्षैरेकैकमंशमतीत्य प्राक्, पश्चाद्वा चलतीति १८०० अष्टदशशतवर्षैः सप्तविंशांशपर्य्यन्तं प्राक् गत्वा पुनः पश्चात्, पश्चाद्गत्वा च पुनः प्रागवलम्बते । यदा चैवं राशिचक्रस्यायनस्थानं प्राक् गच्छति तदा राशिचक्रनिर्द्दिष्टमेषादिस्थानात् उक्तकालभेदेनैकैकांशातिक्रमेण क्रमशः प्राचि, प्राक्तरे, प्राक्तमे, वा स्थाने रव्यादिग्रहाणां प्रभापुञ्जसञ्चारः । यदा तु पश्चादवलम्बते तदा निर्द्दिष्टमेषादिस्थानात् तत्रैव परे, परतरे, परतमे, च स्थाने ग्रहणां प्रभापुञ्जसञ्चार इति भेदः । इदानीञ्च पश्चिमायनं तेन राशिस्थानात् पश्चादेव ग्रहप्रभापुञ्जसञ्चारः । तथा च ज्योतिषोक्तगणितरीत्या मीनान्तात् पश्चादेकविंशांशे एवेदानीं विषुवादिसंक्रान्तिर्भवति एवं विष्णुपद्यादीनामपि तत्तदंश एव ग्रहप्रभापुञ्जसञ्चारः । अयनांशानुसारेण ग्रहप्रभापुञ्जसञ्चारस्वीकारः दिनमानविशेषस्य लग्नपरिमाणस्य छायापदविशेषस्य, च बोधार्थमिति सिद्धान्ते प्रसिद्धम् । करणे ल्युट् । ४ उक्तायनज्ञानसाधने शास्त्रे, "ज्योतिषामयनञ्चैवेति" ५ सैन्यनिवेशविशेषरूपव्यूहप्रवेशमार्गे च "अयनेषु च सर्व्वेषु यथाभागमवस्थिताः" इति गीता । आधारे ल्युट् । ६ पथि, ७ गृहे, ८ आश्रये, ९ स्थाने, "ता यदस्यायनं पूर्व्वमिति" मनुः । प्रागुक्तराशिचक्रस्य क्रान्तिवृत्तारम्भस्थानविशेषे १० अंशादौ च "तत्काले सायनार्कस्थेति" नीलकण्ठः । तथा हि मीनान्तो हि युगादौ अयनांशप्रथमस्थानं ततःप्राग्गत्वा कियदंशपर्य्यन्तचलनेन परावृत्त्य पश्चाद्गत्वा पूर्व्वराशेः कियदंशपर्य्यन्तं गत्वा पुनः प्राग्गत्या प्राथमिकचलनस्थानप्राप्तौ अयनस्यैकोविलक्षणो भगणो भवति इत्येवं स्थिते तद्भगणपरणकालादिज्ञापनाय किञ्चिदभिधीयते । सूर्य्यसिद्धान्ते । "त्रिंशत्कृत्यो युगे भानां चक्रं प्राक् परिलम्बते । तद्गुणाद्भूदिनैर्भक्ताद्द्युगणाद्यदवाप्यते ॥ तद्दोस्त्रिघ्ना दशाप्तांशा विज्ञेया अयनाभिधाः । तत्संस्कृताद्ग्रहात् क्रान्तिच्छायाचरदलादिकम्" इति ॥ "भानां चक्रं राशीनां वृत्तं क्रान्तिवृत्तं स्वस्वविक्षेपमितशलाकाप्रोतनक्षत्रगर्भवृत्तमित्यर्थः । युगे महायुगे प्राक् पूर्व्वविभागे त्रिंशत्कृत्यस्त्रिंशत्सङ्ख्याका कृत्यः विंशतयः षट्शतमित्यर्थः । परिलम्बते ध्रुवाधारमगोलस्थानात् तद्दूरमवलम्बते । अत्र परिलम्बत इत्यनेन भचक्रपूर्व्वभ्रमणाभाव उक्तोऽन्यथा ग्रहभगणप्रसङ्गेन मध्याधिकार एवैतदुक्तं स्यात् । तथा च तद्दूरमवलम्बनोत्था परावृत्त्य यथास्थितं भवतीत्यागतं तथापि स्वस्थानात् तथैव पश्चिमतोऽप्यवलम्बत इति सूचितम् । एवञ्च भचक्रं पश्चिमत ईश्वरेच्छया प्रथमतः कतिचिद्भागैश्चलति ततः परावृत्त्य यथास्थितं भवति ततोऽपि तद्भागैः क्रमेण पूर्व्वतश्चलति ततोऽपि परावृत्त्य यथावस्थानंस्थितमित्येको विलक्षणो भगणः । तेन प्रागित्युपलक्षणम् । पश्चिमावलम्बनानुक्तिस्तु संवादकाले तदभावात् । अत्र त्रिंशत्कृत्व इति पाठः प्रामादिकः । "युगे षट्शतकृत्वो हि भचक्रं प्राग्विलम्बते" इति सोमसिद्धान्तविरोधात् । "तत् पश्चाच्चलितं चक्रमिति" ब्रह्मसिद्धान्तोक्तेश्च । अहर्गणात् तद्गुणात् षट्शतगुणिताद् भूदिनैर्युगीयसूर्य्यसावनदिनैर्भक्ताद्यत् फलं भगणादिकं प्राप्यते तस्य भगणत्यागेन राश्यादिकस्य भुजः कार्य्यस्तस्माद्याप्तांशा दशभिर्भजनेनाप्तभागास्त्रिगुणिता अयनसंज्ञका ज्ञेयाः । भुजांशास्त्रिगुणिता दशभक्ताः फलमयनांशा इति तात्पर्य्यार्थः । तत्संस्कृतात् तैरयनांशैर्भचक्रपूर्व्वापरचलनवशाद्युतहीनाद्ग्रहात् पूर्व्वापरभचक्रचलनावगमस्त्वयनग्रहस्य षड्भान्तर्गतानन्तर्गतत्वक्रमेण क्रान्तिच्छायाचरदलादिकं साध्यम् । न केवलात्, विशेषोक्तेः । छाया वक्ष्यमाणा चरदलं चरं पूर्व्वाधिकारोक्तम् । आदिशब्दादयनदृक्कर्म्म सङ्गृह्यते । यद्यपि तत्संस्कृताद् ग्रहात् क्रान्तिरित्येव वक्तव्यमन्येषामत्र तदुपजीव्यत्वाद् ग्रहणं व्यर्थं तथापि क्रान्तिरित्युक्त्या केवलक्रान्तिज्ञानार्थं तत्संस्कृतग्रहात् क्रान्तिः साध्या । पदार्थान्तरोपजीव्यायाः क्रान्तेः साधनं तु केवलादित्यस्य वारणार्थं क्रान्तिमात्रं तत्संस्कृतात् साध्यमिति सूचकं छायाचरदलादिकथनम् । ईश्वरेच्छया क्रान्तिवृत्तं स्वमार्गे पश्चिमतः सप्तविंशत्यंशैः क्रमोपचितैश्चलितं ततः परावृत्त्य स्वस्थान आगत्य तत्स्थानात् पूर्व्वतः सप्तविंशत्यंशैश्चलितम् । तथा च सूर्य्यादिभूतक्रान्तिविषुवद्वृत्तसम्पातान्वितक्रान्तिवृत्तप्रदेशो रेवत्यासन्नः प्रागानीतग्रहभोगावधिरूपः स्वस्थानात् पूर्व्वमपरत्र वा क्रान्तिवृत्तस्वमार्गे गतः । विषुवद्वृत्ते तु तद्भागस्य वा पश्चिमभागः पूर्व्वभागो वा गतः । सम्पाते तद्वृत्तयोर्याम्योत्तरान्तराभावात् क्रान्त्यभावः । पूर्व्वसम्पातप्रदेशे तु तयोर्याम्योत्तरान्तरत्वात् क्रान्तिरुत्पन्नातो यथास्थितग्रहभो-

गात् क्रान्तिरुक्तेति सम्पातावधिकस्पष्टभोगात् क्रान्तिर्युक्ता तत्र सम्पातावधिकस्पष्टभोगज्ञानार्थं पूर्व्वसम्पातावधिकः पर्व्वाधिकारोक्तो स्पष्टभोगो वर्त्तमानसम्पातपूर्व्वसम्पाताश्रितक्रान्तिवृत्तप्रदेशयोरन्तरभागैरयनांशाख्यैः पूर्व्वसम्पातप्रदेशस्य पूर्व्वापश्चिमावस्थानक्रमेण युतहीनो भवति । क्रान्त्युपजीव्याः पदार्था अपि वर्त्तमानसम्पातादुत्पन्ना इति तत्साधनमपि तत्संस्कृतस्पष्टात् । अथायनांशज्ञानं तु षट्शतभगणेभ्यः पूर्व्वानुपातरीत्याहर्गणाद्‌स्पष्टभोगो भगणादिकस्तत्र गतभगणमितं परपूर्व्वभचक्रावलम्बनं गतम् । वर्त्तमानं त्वारब्धं पश्चिमावलम्बनाद्राशिषट्कान्तर्गते राश्यादिके पश्चिमावलम्बनमन्तर्गते पूर्व्वावलम्बनम् । तत्रापि त्रिभान्तर्गतानन्तर्गतत्वक्रमेण चलनं परावर्त्तनमिति भुजः साधितस्ततो नवत्यंशैर्यदि सप्तविंशतिभागास्तदा भुजांशैः किमित्यनुपातेन गुणहरौ नवभिरपवर्त्त्य भुजांशास्त्रिगुणिता दशभक्ता इति सर्व्वमुपपन्नम् रङ्ग०"॥ 'स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्द्वये । प्राक् चक्रं चलितं हीने छायार्कात् करणागते ॥ अन्तरांशैरथावृत्य पश्चाच्छेषैस्तथाधिके" सू० सि० । "अयने दक्षिणोत्तरायणसन्धौ विषुवद्द्वये गोलसन्धौ चलितं चक्रं दृक्तुल्यतां दृष्टिगोचरतां स्फुटमनायासं गच्छेत् । तत्र प्रत्यक्षतस्तस्मिन् गत्यन्तरं दृश्यत इत्यर्थः । तथा च सृष्ट्यादिकाले रेवतीयोगतारासन्नावधिमेषतुलाद्योः कर्कमकराद्योर्विषुवायनप्रवृत्तेरिदानीमन्यत्र तत्स्वरूपे प्रत्यक्षे इति क्रान्तिवृत्तं चलितमन्यथा तदनुपपत्तेरिति भावः । ननु पूर्व्वतोऽपरत्र वा चलितमिति कथं ज्ञेयमित्यत आह । प्रागिति । छायार्काद्यद्दिने सूर्य्यस्यायनदिक्परावर्त्तनमुदये प्राच्यपरत्ववस्थत्वं वा तस्मिन् दिनेऽन्यस्मिन् दिने वा मध्याह्नच्छायातो वक्ष्यमाणप्रकारेण सूर्य्यः साध्यस्तस्मादित्यर्थः । करणागते प्रागुक्तप्रकारेणानीतः स्पष्टः सूर्य्यस्तस्मिन्नित्यर्थः । न्यूने सति अन्तरांशैः सूर्य्ययोरन्तरांशैश्चक्रं क्रान्तिवृत्तं प्राक् पूर्व्वस्मिन् चलितमिति ज्ञेयम् । अथ यद्यधिके सति शेषैः सूर्य्ययोरन्तरांशैश्चक्रमावृत्य परिवृत्य पश्चात् पश्चिमाभिमुखं तथा चलितमिति ज्ञेयम् । अत्रोपपत्तिः । छायातो वक्ष्यमाणप्रकारेण सूर्य्यो वर्त्तमानसम्पाताद्गणितागतस्तु रेवतीतारासन्नाद्यवधितोऽतस्तयोरन्तरमयनांशास्तत्र क्रान्तिवृत्तस्य पूर्व्वचलने गणितागतच्छायार्कोऽधिको भवति पश्चिमचलने तु न्यूनो भवतीति सर्व्वमुपपन्नम्" । रङ्गनाथः ॥ एवमयनस्य प्रकृतस्थानात् चलने स्थिते सौरागमे "त्रिंशत्कृत्वोयुगे भाना" मित्युक्तेः सोमसिद्धान्ते "युगे षट्शतकृत्वो हि भचक्रं प्राक् विलम्बते" इत्युक्तेश्च ४३२०००० वर्षमिते युगे षट्शतैर्विभाजिते लब्धैः ७२०० वर्षैरेकोऽयनस्य भगणो भवतीति गम्यते । एवञ्चोक्तदिशा युगादितः प्रथमं मीनान्तात् मेषसप्तविंशतिपर्य्यन्तं प्राक् गत्वा ततः परिवृत्य मीनशेषपर्य्यन्तं सप्तविंशत्यंशैरागत्य ततोऽपि पश्चाद्गत्वा सप्तविंशत्यंशैः मीनचतुर्थांशपर्य्यन्तमागत्य परावृत्य प्राग्गत्वा पुनः सप्तविंशत्यंशैः मीनशेषपर्य्यन्तं आवर्त्तत इत्येवं चतुर्भिः सप्तविंशत्यंशैः अष्टोत्तरशतांशैः प्राक्पश्चाद्गतिभेदेन एकोऽयनभगणोभवति प्रागुक्तैः ७२०० वर्षैः यदि १०८ अंशाः तदा एकांशे किमित्यनुपातेन ६६ । ८अष्टमासाधिकषट्षष्टिवर्षैरेकैकांशायनचलनम् इति प्रतिभाति ततश्च यदि ६६। ८ वर्षादिभिः ६० कलात्मकोऽशस्तदा एकवर्षेण किमित्यनुपाते ५४ विकलाः प्रतिवर्षमयनस्थानचलनमायाति अत्र प्रागित्युक्तेः सृष्ट्यादौ युगादौ च प्रथमं प्रागेव गतिर्न तु पश्चिमत तथात्वे इदानीन्तनांशवैषम्यापत्तेः । तथा हि ४३२०००० युगे यदि षट्शतानि अयनभगणास्तदा १७२८००० कृतयुगे किमित्यनुपातेन २४० भगणाः १२९६००० त्रेतायुगे १८० भगणाः ८६४००० द्वापरे १२० भगणाः इत्येवं त्रियुगे ५४० भगणा गता इदानीं कलियुगस्य वर्षागता ४९७३ यदि ७२०० वर्षेषु १०८ अंशात्मकोभगणस्तदा ४९७३ वर्षेषु किमिति त्रैराशिके ७४ अंशाः २५ कलाः ४४ विकलाः लब्धा तथा च १०८ अंशात्मकायनभगणमध्ये एतावदंशादयो गता इति लभ्यते । तत्र यदि प्रथमं पश्चाद्गत्वा भगणारम्भस्तदा मीनान्तात् चतुर्थांशं यावत् पश्चाद्गत्वा परावृत्त्य मीनपर्य्यन्तगमने ५४ अंशाः गता ततः प्राग्गत्वा मेषसप्तविंशत्यंशैर्गतिस्वीकारे इदानीं मेषस्य २०।२५।४४ अयनांशादिः स्यात् । न च तत् छायादिसंवादि प्रथमं प्राग्गतिस्वीकारे तु प्राग्गत्वा प्रथमं मीनान्तात् मेषस्य सप्तविंशत्यंशपर्य्यन्तं गत्वा पश्चाद्गत्वा सप्तविंशत्यंशैः मीनान्तगमने ५४ अंशाः गताः ततः पश्चाद्गत्वा मीनस्य गते २०।२५।४४ अंशादयोगतास्तथा च पश्चाद्गत्वा मीनस्य नवमांशे इदानीमयनांशादिरिति सर्व्वज्योतिर्वित्संप्रदायः । अतएव एतदयनांशमादायैव स्पष्टस्पष्टादिकं स्पष्टं साध्यते दिनमानादिकञ्चानीयते । इदानीन्तनाः ज्योतिर्विदां शिरोमणयः सर्वगणकावतंसाः पण्डितोत्तमाः श्रीमन्तो बापुदेवशास्त्रिणः अयनचलनस्य राङ्कदृष्टान्तेन सर्व्वथा

विलोमगतित्वायनभगणम् यदुरीचक्रुः तत्र विरोधादिकं प्रदर्शयिष्यते तद्दृष्ट्वा विद्वद्भिस्तस्य प्रमादोऽप्रमादो वावगन्तव्यः। तथा हि आर्यादिना अयनभोगस्य प्रतिवर्षं ५४विकलाः इदानीं पश्चादयनस्थानचलनं च सर्वज्योतिर्वित्प्रसिद्धम्। तत्र केवलं पश्चाद्गत्याऽयनस्थानचलनेन भचक्रस्यभ्रमणाङ्गीकारे। यदि ५४विकलाभिः एको वर्षस्तदा १२९६००० विकलात्मकभचक्रभ्रमणे कति वर्षा इत्यनुपातेन २४००० वर्षैरेको भगणो भवति यदि २४००० वर्षैः एकोभगणः तदा ४३२०००० वर्षात्मके महायुगे कति भगणा भवन्ति इत्यनुपातेन १८० भगणा भवन्ति। ततश्च सौरसोमसिद्धान्तोक्तषट्गतसंख्याविरोधः इदानीं मीननवांशे अयनस्थानविरोधश्च। तथा हि तन्मते राशिचक्रस्य केवलं विलोमगत्यायनभगणस्वीकारेण प्रागुक्तदिशा २४००० वर्षैरेको भगणः तदा १७२८००० वर्षात्मके कृतयुगे कतीत्यनुपातेन ७२ भगणाः। १२९६००० वर्षात्मकत्रेतायाम् ५४, ८६४००० द्वापरे ३६ इत्येवं त्रियुगे १६२ भगणाः गताः इदानीं कलेः ४९७२ गताब्देषु किमिति जिज्ञासायाम् यदि ५४ विकलाभिरेको वर्षस्तदा ४९७२ वर्षेषु किमित्यनुपाते ७४।२५।४४ अंशाद्योगताः इत्यायाति तन्मते च मीनान्तात् सर्वथा पश्चाद्गत्या भगणपूरणस्वीकारेण मीनान्तात् ७४।२५।४४ अंशादितः पूर्व्वमयनस्थानापत्तिः तथा च मीनान्तात् तावद्भिरंशैः पूर्व्वं मकरस्य पञ्चदशांशे अयनांशादि स्यात्। न च तथाप्रत्यक्षादिभिरवगम्यते नापि ज्योतिर्विदां केषाञ्चित् सम्मतम् अतोऽयनस्थानेन केवलविलोमगत्या भचक्रस्य भ्रमणोक्तिः साहसमेव। किन्तु अतिचिरन्तनकालैः संवादनीये प्राग्गतित्वे पश्चाद्गतित्वे वा आर्षज्ञानं विना निर्णयासम्भवः अतः सौराद्यागमोक्तं प्राग्गतित्वमनादृत्य प्रथमं पश्चाद्गतिस्वीकारः केवलपश्चाद्गतिस्वीकारः अयनचलनस्य तद्भगणसंख्यातो विषमकल्पनञ्चार्वाग्दृशां आगमविरोधात् वचनमात्रेण न श्रद्धाय प्रभवति। किञ्च सौरागमाद्युक्तं प्राग्गतित्वमनादृत्य केवलं पश्चाद्गतित्वं यत् स्वीकृतं तत् सर्व्वव्यवहारलोपकम् तिथ्यादिसाधनाङ्गायनांशादिविलोपकञ्च। एतेन इंलण्डीया अपि ज्योतिर्वेत्तारः सृष्टिकालस्य षट्सहस्रकालमात्रपरिमितत्वादिनोऽपि परास्ताः। तैरपि प्रतिवर्षं ५४ विकलाः अयनांशभोगाः स्वीकृताः स्वीकृतश्च षट्षष्टिवर्षैरेकांशभोगः तथा च ६६।८ वर्षादिभिर्यदि एकोऽंशः पश्चाद्गच्छति तदा तदुक्तसृष्टिकाले ६००० अतीत्यनुपाते ९० अंशाः समायान्ति तेन मीनान्तात् ९० अंशान्तरे पश्चाद्गत्या धनुःशेषांशेऽयनारम्भः स्यात् तदेतद्दृष्टविरुद्धत्वादुपेक्ष्यमेव मीनान्तं विहाय अन्यत्र क्रान्तिवृत्तारम्भस्थानतच्चलनकल्पने न विनिगमकमस्ति इति विजातीयज्योतिर्विदाम्मतमसङ्गतमेव तैरपि तदवधिक्रान्तिवृत्तारम्भांशचलनस्वीकारात्। इदानीं च संवाद्ययनानुसारेण मीनान्तात् २०।२५।४४ तत्रानुपाते प्रायेण १२७० वर्षा आयान्ति तत्रैव सृष्टिकल्पनन्तु नैव सम्भवति खीष्टाब्द १८७२कालस्य ततोऽधिकत्वेन तत्पूर्व्वं सृष्टेरुचितत्वात्। पुनर्भगणान्तरस्वीकारे तु २४००० वर्षास्ततोऽधिकाः सुखेन २५१५ वर्षाः सृष्टिकालाः अन्ततः स्युः तावतिघेव काले सर्वपदार्थानां मेषादौ स्थितिसम्भव एव इति सर्वथा तन्मतमनादरणीयमेव। प्राग्दर्शितसरणौ प्राचीनसम्मतिरपि यथा। "मृगसंक्रान्तितः पूर्व्वं पश्चात्तारादिनान्तरे। प्रतिवर्षं चतुःपञ्चपलमानक्रमेण तु। षट्षष्टिवत्सरानेकदिनं स्यादयनं रवेः। एवं चतुःपञ्चदिनादयनारम्भणं क्रमात्। व्युत्क्रमेण च तद्वत् स्यादुदगयनं रवेर्ध्रुवम्। कर्किसंक्रमणे तद्वदभितोदक्षिणायनम्। अयनांशक्रमेणैव विषुवारम्भणं तथा। रविसंक्रान्तितोमेषतुलयोरभितः पुनः" तिथि०त०। अधिकमयनसंक्रान्तिशब्दे वक्ष्यते। एति सूर्य्योदक्षिणामुत्तरां वाऽत्र आधारे ल्युट्। पूर्व्वोक्तरीत्या सूर्य्यस्योत्तरदक्षिणागत्याधारे ११काले तथा च। "तपस्तपस्यौ शिशिरावृतुः मधुश्च माधवश्च वासन्तिकावृतुः शुक्रश्च शुचिश्च ग्रीष्मावृतुः अथैतदुत्तरायणं देवानां दिनं नभश्च नभस्यश्च वार्षिकावृतु इषश्च ऊर्जश्च शारदावृतुः सहश्च सहस्यश्च हैमन्तिकावृतुः अथैतद्दक्षिणायनं देवानां रात्रिः" इति श्रुतौ "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदोजनाः। धूमोरात्रिस्तथा कृष्णः षण्मासादक्षिणायनमिति" गीतायाञ्च षण्मासानामेव अयनत्वेनाभिधानात्। १२ अयनाभिमानिदेवेषु "आतिवाहिकास्तल्लिङ्गात्" शा०सू०। अर्च्चिरादीनां तदभिमानदेवतापरत्वव्यवस्थापनात् "तेऽर्च्चिषमभिसम्भवन्ति अर्च्चिषोऽहः अह्न आपूर्य्यमाणपक्षम् आपूर्य्यमाणपक्षात् यान् षडुदङ्ङेति तान्मासान् मासेभ्यः संवत्सरमित्युपक्रम्य स एतान् ब्रह्म गमयतीति" छा०उ० श्रुतौ ब्रह्मगमयितृत्वोक्तेः तेषां चेतनपरत्वौचित्यम्। "अयते याति अनेन करणेन सूर्य्योदक्षिणामुत्तरां वेति

ऋतुत्रयमयनं तथा च वाजसनेयिनः पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः समामनन्ति। "यान् षण्मासान् दक्षिणादित्य एति, यान् षण्मासानुदङ्ङादित्य एतीति" तथा छन्दोगा अधीयते। "यान् षड्दक्षिणैति- मासान् तान्, यान् षडुत्तरैति मासांस्तानिति" तैत्तिरीयाः क्रतुमध्ये ब्राह्मणे पठन्ति "तस्मादादित्यः षण्मासान् दक्षिणेनैति षडुत्तरेणेति" एवंवादित्यगतिमुपजीव्यायननिष्पत्तेः सौरमेवैतत् अत एव विष्णुधर्म्मोत्तरे सौरमानमधिकृत्योक्तम् "ऋतुत्रयं चायनं स्यादिति" केचित्तु चान्द्रमानेनायनद्वयमभ्युपगच्छन्ति "मार्गमासादिकैस्त्रिभिः ऋतुभिः कल्पितः कालः षण्मासात्मकमुत्तरायणं ज्यैष्ठमासादिकैः दक्षिणायनमिति तत्र प्रमाणं ज्योतिःशास्त्रादौ मृग्यं श्रौतस्मार्त्तकर्मानुष्ठाने तु मकरकर्कटसंक्रान्त्यादिक एवायनद्वयकाल इति यथोक्तश्रुतिस्मृतिभ्यामवगन्तव्यम् उत्तरायणस्य यागकर्माङ्गत्वं कण्वा अधीयते "उदगयन आपूर्य्यमाणे पक्षे पुण्याहे द्वादशाहमुपसद्व्रती भूत्वेत्यादि"। चौलादीनामुत्तरायणकर्त्तव्यता गृह्यस्मृतिषु प्रसिद्धा। सत्यव्रतश्च देवताप्रतिष्ठादीनामुत्तरायणदक्षिणायनयोर्विधिनिषेधावाह "देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ। दक्षिणाभिमुखे कुर्व्वन् न तत्फलमवाप्नुयादिति" उग्रदेवतानां प्रतिष्ठा दक्षिणायने कर्त्तव्या तथा च वैखानससंहितायामभिहितम् "मातृभैरववाराहनारसिंहत्रिविक्रमाः। महिषासुरहन्त्री च स्थाप्या वै दक्षिणायन इति" कालमाधवीये माधवः। "सौरेण द्युनिशोर्मानं षडशीतिमुखानि च। अयनं विषुवच्चैव संक्रान्तेः पुण्यकालता"। सू॰सि॰ उक्तेः अयनं सौरमानेनैवेत्यवगम्यते। क्रान्तिपातारम्भस्थानचलनं च सर्वेषां राशीनां स्वस्वस्थानात् प्राक् पश्चाद्वा अयनांशानुसारेणान्यत्र स्थाने भवति। तस्य स्फुटायनमयनसंक्रान्तिशब्दे वक्ष्यते। "संक्रान्तिषु यथा कालस्तद्वदेऽप्ययने तथा" का॰मा॰ स्मृतिः। एति ऋद्धिमनेन करणे ल्युट्। १२सत्रविशेषे यथा गवामयनम् तद्विवरणं गवामयनशब्दे। अयनेन निर्वृत्तम् अयनस्येदं वा अण्। आयनम् अयनसाध्ये अयनसम्बन्धिनि च त्रि॰। "युतायनांशोडुपकोटिशिञ्जिनी जिनांशमौर्व्या गुणिता विभाजिता। द्युजीवया लब्धफलस्य कार्मुकम् भवेच्छराद्वायनदिक्कमायनमिति" आयनं वलनमस्फुटेषुणा सङ्गुणं द्युगुणभाजितं हृतम्। पूर्व्वपूर्व्वघटितिभिर्हृतान्वितव्यजभोदयक्रूदायनाः कलाः "अस्फुटेषुवलनाहतिस्तु वा षडिहृत् फलकलाः स्युरायनाः" इति च सि॰शि॰। अयने भवः ठञ्। आयनिकः अयनभवे त्रि॰ स्त्रियां ङीप्।

**अयनकाल** पु॰ अयधारः कालः। अयनांशाधारे काले

**अयन(च)वलन** न॰ ६त॰। अयनांशस्य प्राक् पश्चाद्वा स्थानान्तरचलने।

**अयनज** पु॰ अयनात् राशीनां स्वस्वस्थानचलनात् जायते जन–ड। अयनांशजाते मासादौ।

**अयनभाग** पु॰ अयनज्ञापको भागः। अयनांशे।

**अयनमास** पु॰ अयनकृतः मासः। अयनांशानुसारेण दिनमानादिज्ञानार्थं कल्पिते मासे।

**अयनसंक्रम** पु॰ अयनांशानुसारेण संक्रमः। मेषादिषु राशिषु अयनांशानुसारेण ग्रहाणां प्रभाङ्कसञ्चारे अयनसंक्रान्तिशब्दे विवरणम्।

**अयनसंक्रान्ति** स्त्री अयनेन राशिचक्रस्य पश्चात् प्राग्वा गत्या कृता संक्रान्तिर्ग्रहाणां प्रभाङ्कस्य सञ्चारः सम्+क्रम–क्तिन्। चलसंक्रान्तौ, संक्रान्तिस्त्रिविधा मध्या चला अचला चेति भेदात् मध्यानुपदं वक्ष्यते मेषादिभिर्द्वादशभिः स्थानैर्विभक्तस्य निराधारतया स्थितस्य राशिचक्रस्य दोलायमानतया प्राक् पश्चाद्वा निर्द्दिष्टमेषादिस्थानात् पश्चात् पूर्व्वं वा राश्यन्तरे मण्डलगतिं विनापि ग्रहाणां प्रभाङ्कमात्रसंचारः चलसंक्रान्तिः अनियतस्थानतया चलत्वात्। निर्द्दिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चारः अचलसंक्रान्तिः राशिसंक्रान्तिरिति चोच्यते तस्या नियतमेकस्थानएव जायमानत्वादचलत्वम्। अनयैव संक्रान्त्या यथा मासादिव्यवहारे न दोषः चलसंक्रान्त्या तु बहवो दोषास्तथा निरूप्यते तथा हि ग्रहाणामाक्रान्तराशितो राश्यन्तरक्रमणं संक्रान्तिरित्युच्यते सा च द्विधा मध्यमा स्फुटा च। षट्कर्म्मसंस्कृतो मध्यग्रहो यदा राश्यन्तरं संक्रामति तदा मध्यसंक्रान्तिरित्युच्यते यदा तु स्फुटीकृतसंस्कारो ग्रहो राश्यन्तरं गच्छति सा स्फुटसंक्रान्तिरित्युच्यते तत्र मध्यसंक्रमस्य स्फुटीकरणार्थत्वादेव तज्जनितसंक्रान्तेः स्फुटीकार एवोपयोगात् लोकशास्त्रयोर्व्यवहारे न तस्य उपयोगः किन्तु "गुरोर्मध्यमसंक्रान्तिहीनोयश्चान्द्रवत्सरः। अधिसंवत्सरस्तस्मिन् कारयेन्न व्रतत्रयम्। वर्ज्जनीया प्रयत्नेन प्रतिष्ठा सर्व्वनाकिनाम्। स्फुटसंक्रान्तिहीनश्चेत् सोऽप्याङ्गिराधिमासकम्" इति कालमाधवीयधृतस्मृतेः मध्यसंक्रान्तेरपि अधिवर्षोपयोगिता तदन्यत्र तु तस्या-

नोपयोगः इति स्फुटसंक्रान्तेरेव लोकशास्त्रोपयोगः। स्फुट-संक्रान्तिरपि द्विविधा सायनांशा निरयनांशा चेति भेदात् यदा सिद्धान्तगणनयायनांशसंस्कृतो ग्रहोराश्यन्तरं गच्छति सा सायनांशा संक्रान्तिः। यदा तु अयनांशसंस्काररहितः राश्यन्तरं गच्छति सा निरयनांशा संक्रान्तिरुच्यते। संक्रान्तिश्च "त्रुटेः सहस्रभागोयः स कालोरविसंक्रमः" इत्युक्तसूक्ष्मकालरूपा एतच्च क्रियैव काल इति मते अन्यमते तु संक्रान्त्युपलक्षितस्तादृशसूक्ष्मकाल इति भेदः। तादृशसूक्ष्मकालस्य संक्रान्तिशब्दार्थत्वे संक्रान्तिशब्दे वक्ष्यमाणदानाद्यङ्गत्वासम्भवेन "मुख्याभावे प्रतिनिधिः शास्त्रार्थः" इति न्यायेन गौणकालस्याप्यदर्शयता स्नानाद्यङ्गत्वान्यथानुपपत्त्या च तथा कल्पाते स्नानाद्यङ्गकालविशेष एव तदङ्गत्वेन कल्पाते यथोक्तं कालमाधवीये स्नानदानाद्यङ्गभूते संक्रान्तिकाले मुख्यकल्पस्यासम्भवादनुकल्पएवादर्त्तव्यः यथाह देवलः "संक्रान्तिसमयः सूक्ष्मोदुर्ज्ञेयः पिशितेक्षणैः। तद्योगादप्यधश्चोर्द्धं त्रिंशन्नाड्यः पवित्रिताः" इति दैवज्ञप्रधानराशिद्वयेनात्यन्तसंश्लिष्टयोः पूर्व्वोत्तरराश्योर्मध्ये सूर्य्यः पूर्व्वराशिं परित्यज्य यावता कालेनोत्तरराशिं प्रविशति स कालः योगदृष्टिं विना मांसदृष्ट्या दुर्लक्ष्यः अतोऽनुष्ठाने मुख्यसंक्रान्तिकालग्रहणासंभवात् संक्रान्तिसम्बन्धिनौ पूर्व्वोत्तरकालौ ग्रहीतव्यौ संक्रान्तेः पूर्व्वोत्तरयोरेकैकस्मिंस्त्रिंशद्घटिकाः पुण्या इति सामान्येन उक्तमिति"। तत्र अचलसंक्रान्तेरिव चलसंक्रान्तेरपि पुण्यकालतास्ति यथोक्तं तत्रैव मेषादिसंक्रान्तयो यस्मिन्दिने भवन्ति तस्माद्दिनात् पूर्व्वेभ्य एकादशदिनेभ्यः प्राचीने दिने मेषायनमेवं वृषभायनमित्येवं तन्नामाङ्कितमयनं तत्काले तस्मिन्नयने स्नानादिषु पुण्यकालमाह जाबालिः "संक्रान्तिषु यथा कालस्तदीयेऽप्ययने तथा। अयने विंशतिः पूर्व्वा मकरे विंशतिः परेति" मकरव्यतिरिक्तैकादशसंक्रान्तिसम्बन्ध्ययनेषु तत्तत्संक्रान्तिवत् पुण्यकालोऽवगन्तव्यः मकरसंक्रान्तिसम्बन्धिनि त्वयने संक्रान्तिवैलक्षण्यं, तद्यथा मकरभिन्ने प्राचीना विंशतिघटिकाः पुण्याः मकरसंक्रान्तौ तु पाश्चात्त्या विंशतिघटिकाः पुण्या इति"। न केवलमादित्यस्यैव संक्रान्तिष्वयने पुण्यकालः किन्तु सर्व्वेषामपि ग्रहाणां नक्षत्रराशिसंक्रमे पुण्यकालो भवति एषांन्तु विशेषोरवेरेव राशिसंक्रमे पुण्यकालः अयनसंक्रमे तु चन्द्रादीनामपि कालविशेषे पुण्यता यथाह तत्रैव ज्योतिःशास्त्रे "नक्षत्रराश्योरविसंक्रमे स्युरर्व्वाक् परस्तादिह चन्द्रनाड्यः पुण्यास्तथेन्दोस्त्रिधरावसैर्युता एकैव नाड़ी मुनिभिः शुभोक्ता। नाड्यश्चतस्रः सपलाः कुजस्य। बुधस्य तिस्रः पलविन्दुयुक्ताः। अर्द्धेननाड्यः पलसप्तयुक्ता गुरोश्चतस्रः सपलाश्च शुक्रे। द्विनागनाड्यः पलसप्तयुक्ताः शनैश्चरस्याभिहिताः सुपुण्याः। आद्यन्तमध्ये जपहोमदानं कुर्व्वन्नवाप्नोति सुरेन्द्रधामेति"। अयमर्थः आदित्यस्य राशिनक्षत्रगमने अर्व्वाक् परतश्च षोडश घटिकाः पुण्यकालः तथा चन्द्रस्यापि घटिकैका पलानि च त्रयोदशार्व्वाक्परतश्च पुण्यकालः। एवं मङ्गलस्य चतस्रो घटिकाः पलमेकं च पुण्यकालः तथा बुधस्य तिस्रो घटिकाश्चतुर्द्दश पलानि च पुण्यकालः बृहस्पतेरपि सार्द्धचतस्रो घटिकाः सप्त पलानि च पुण्यकालः। शुक्रस्य चतस्रो घटिकाः पलमेकञ्च पुण्यकालः शनैश्चरस्य द्व्यशीतिघटिकाः पलानि च सप्त पुण्यकालः। पीयूषधारायां तु जैमिनिवचनत्वेन एतद्वचनमुपन्यस्तम्। मेषायनादिषु संक्रान्तिस्फुटीकरणञ्च मुहूर्त्तचिन्तामणौ "तथायनांशाः खरसाहताश्च खटार्कगत्या विहृता दिनादि। मेषादितः प्राक् चलसंक्रमाः स्युर्दाने जपादौ बहुपुण्यदास्ते"। यथा राशिसंक्रमाः बहुपुण्यदास्तथा चलसंक्रमा अपीति द्योतनाय तथाशब्दः। अयनांशाः षष्ठ्या गुण्या स्पष्टया सूर्य्यगत्या विहृताः लब्धैर्दिनाद्यैः दिनघटीपलैः कलां कृत्वा मेषादिद्वादशराशिसंक्रमणकालात् प्राक्चलसंक्रमाश्चल संक्रान्तयः चलसंक्रमदाने ब्राह्मणेभ्यो दक्षिणादाने जपादौ जपश्राद्धहोमादौ बहुपुण्यदा भवन्ति तदुक्तं वशिष्ठसिद्धान्ते चलसंक्रमसूक्ष्मांशे संक्रमोयः स संक्रमः अज्ञातनक्षत्र इव राशिसंक्रान्तिरुच्यते" पुलस्त्यः "अयनांशसंस्कृतोभानुर्गोले चरति सर्व्वदा अमुख्या राशिसंक्रान्तिस्तुल्यः कालविधिस्तयोः। स्नानदानजपश्राद्धव्रतहोमादिकर्म्मणि यत् कृतं चलसंक्रान्तावक्षय्यं पुण्योऽश्नुते" इति रत्नमालायाम् "यावद्भिरंशैरयनच्युतिः स्यात्तद्भोग्यकालेन दिवाकरस्य। च्युतिभैर्विष्णुपदादिकानां रहस्यमेतन्मुनिभिः प्रदिष्टमिति" अयनांशानयनञ्च अयनशब्दे दर्शितम्। तद्राश्यादिभागेषु सूर्य्यादि तेजःपुञ्जस्तारचलसंक्रमोमण्डलमध्यसंपर्कश्च राशिसंक्रम इतिविषयविवेकः तद्यथा रथ्यायां प्राक् पश्चाद्वा नीयमानस्य दीपस्याग्रे दीपप्रभा यस्मिन्प्रदेशे गच्छति तस्मिन्नेव प्रदेशे क्षणान्तरेण दीपोऽपि गच्छति एवं सर्व्वेषामपि ग्रहाणां चलसंक्रमा द्रष्टव्याः नन्वेवं चलसंक्रमस्य मुख्यत्वे तेनैव मानेन ग्रहाङ्कगणना स्यात् इति चेत् न अश्विन्यादिभानां विसंवादात् तथाहि सूर्य्याक्रान्तराशितश्चतुर्द्दशनक्षत्रस्यैव सन्ध्याकाले प्रथममुदयोज्योतिषे प्रसिद्धः सर्व्वसम्मतश्च। तत्र

यदि अयनांशशोधनमन्तरेणैव सूर्य्यस्य तत्तद्राशिघटकनक्षत्रस्थितिस्वीकारस्तदा इदानीमयनांशानुसारेण २०,३५,४४, एतदंशादितः पूर्वं रवेर्मेषादौ गन्तव्यत्वकल्पनात् तस्य च तद्घटकनक्षत्रस्थितेस्तत्तद्दर्शनकालस्य सन्ध्यायां प्रथमोदयापत्तिर्न च तथा दृश्यते तथा यस्मिन् दिने इदानीमपूर्णिमादयो दृश्यन्ते ततः पूर्वं २०,३५,४४ सूर्य्यचन्द्रयोरेकराशिस्थत्वेन अमावस्यापत्तिस्ततः पञ्चदशेऽहनि पूर्णिमापत्तिश्च नचैतत् प्रत्यक्षसंवादीति। अयनांशशोधनेन निरयनांशसंक्रमादितस्तु सर्व्वं प्रत्यक्षसंवादि। किं च सायनसंक्रमरहितस्य चान्द्रमासस्याऽधिमासत्वव्यवहारप्रसङ्गः संक्रान्तिद्वययुतस्य तस्य क्षयमासत्वव्यवहारप्रसङ्गश्च। एवं च बहुविप्लवात् चलसंक्रान्तेः मुख्यत्वेऽपि तेनैव मासवर्षगणनादिशङ्का न कार्य्या प्राग्प्रदर्शितपुलस्त्यवचनेन, अयनशब्दे दर्शितेन सौरागमवाक्येन, "दिनरात्रिप्रमाणानां निर्णयो न भसंक्रमात्" अतः सकलकर्माणि" इति, सिद्धान्तशिरोमणिवाक्येन च श्रौतकर्म्मविशेषे, लग्नस्नानादिकर्म्मस्वेव तस्य मुख्यत्वाभिधानात् न तेन सर्व्वव्यवहारः अन्यथा तत्तद्विशेषोपादानं व्यर्थं स्यात्। एकान्तेन राशिसंक्रमानङ्गीकारे प्रागुक्तवचनजाते राशिसंक्रान्तिवत् पुण्यकालताभिधानानुपपत्तिः तथा च यथा मासवत्सराणामनेकविधत्वेऽपि क्रियाविशेषे तेषां ग्राह्यता एवं चलस्थिरसंक्रान्त्योरपि विषयविशेषेऽपि ग्राह्यता। किञ्च सायनसंक्रममात्रेण सर्व्वव्यवहारे अनेके विसंवादा पीयूषधारायां दर्शिताः। तेऽत्रलोपदर्श्यन्ते। सायनगणनया त्वयोक्तेऽपि काले ग्रहः कदाचिदेकनक्षत्रान्तरे नक्षत्रयोरन्तरे चोपलभ्येत सूर्य्यचन्द्रयोस्तु तेजोबहुत्वान्नक्षत्रतेजः परिभवाच्च नक्षत्रसंनिधावुपलम्भो यद्यपि। तथापि कदाचित् क्षीणचन्द्रस्याप्युपलम्भोऽस्त्येव गोचरादिविषयकदुष्टफलानि एकराशिस्थितग्रहयोगफलानि च विरुध्येरन् ग्रहणादिविसंवादश्च। तस्मान्निरयनगणनयैव सर्व्वोऽपि व्यवहारो युक्तः यत्तु अजागलस्तनइवेत्यादि प्रागुक्तवचनम् "पुण्यत्वं राशिसंक्रान्तेः केचिदाहुर्मनीषिणः नैतन्मम मतम्" इत्यादिवशिष्ठवाक्यञ्च तत् चलसंक्रान्तेः स्तुतिपरम् "न निन्दानिन्दनीयं निन्दति किन्तु विधेयं स्तौतीति" न्यायात् अन्यथा संक्रान्तिशब्दे दर्शयिष्यमाणानां राशिसंक्रान्तिपुण्यकालताबोधकवचनानां बहूनां विप्लवापत्तेः "दिनपतिसंक्रमात् प्राक् षोडश नाड्यस्तु पुण्यकालः सः। परतः षोडश नाड्यः स्नानदानकार्य्येष्विति" वशिष्ठस्यैव वचनान्तरेण विरोधः स्यात् अयनसंक्रान्तिषु तु अन्यविधस्यैव तेन पुण्यकालतोक्तेस्ततो विलक्षणविषयत्वोचित्यं तादृशवचनानाम्।

**अयनांशज** पु॰ अयनस्य अंशः तज्जः। प्राथमिकक्रान्तिप्रसारम्भस्थानातिक्रमेण जाते मासे "अयनांशजमासान्ते व्युत्क्रमेणादितो बुधैः" ज्यो॰तत्त्व॰।

**अयव** पु॰ अल्पोयवस्तुल्योवा। १पुरीषजे क्रमिभेदे क्रमिशब्दे विवरणम् नास्ति यवः यवसाधनं यत्र। अकृतया यवहीने तिलसाधने २पित्रकृत्यादौ। दु मिश्रणे कर्त्तरि अच् न॰त॰। ३असम्बद्धे गतौ ४रविचन्द्रयोर्वियोजके कृष्णपक्षे च "अयवानामाधिपत्यमिति पूर्वपक्षा वा यवाअपरपक्षा वा अयवास्ते हीदं सर्वं युवते चायुवते" इति शतब्रा॰।

**अयवस्** पु॰ न युतः पृथग्भूतौ चन्द्रसूर्य्यौ यत्र यु-असुन् न॰त॰। अर्द्धमासे पक्षे। "सजूरब्दो अयवोभिः" यजु॰ १२,७४ "यवाश्चायवाश्चार्द्धमासाश्चोच्यन्ते वे॰दी॰।

**अयशस्** विरोधे न॰त॰। यशोविरोधिनि अपवादे। अयशो-"महदाप्नोति नरकञ्चैव गच्छति" मनुः। "स्वभावलोलेत्ययशः प्रमृष्टम्" रघुः। न॰ब॰। कीर्त्तिशून्ये त्रि॰ वा कप् अयशस्कः तत्रैव।

**अयशस्कर** त्रि॰ अयशः करोति कृ-ताच्छील्यादौ ट स्त्रियां ङीप्। अपवादकरे।

**अयशस्य** न॰ यशसे हितम् यत् यशस्यम् विरोधे न॰त॰। अपवादकरे "पैशुन्याऽनृतालस्यायशस्यानि हित्वा" सुश्रु॰।

**अयश्चूर्ण** न॰६त॰। "शकृद्रसं तुरङ्गस्य सुयुक्तं भावयेदति। निःक्वाथेन विडङ्गानां चूर्णं प्रथमनन्तु तत्। अयश्चूर्णान्यनेनैव विधिना योजयेद्भिषक्" सुश्रुतोक्ते लौहचूर्णघटितौषधभेदे।

**अयस्** न॰ एति चलति अयस्कान्तसान्निध्यात् इण-असुन्। लौहे धातुभेदे तस्य स्थिरत्वेऽपि अयस्कान्तसान्निध्याच्चलनात्तथात्वम्। "सुहृदयोहृदयः प्रतिगर्ज्जताम्" "अभितप्तमयोऽपि मार्द्दवं भजते कैव कथा शरीरिणाम्" इति च रघुः "ताम्रायःकांस्यरैत्यानां त्रिपुणः सीसकस्य च" अयः कांस्यपलानाञ्च द्वादशाहमपाचता" इति च मनुः। अयसः पाकादि अमृतसारशब्दे २२६ पृष्ठे दृश्यम्। अधिकं लौहशब्दे वक्ष्यते। उपचारात् २अयोनिर्म्मिते शस्त्रादावपि। "तेजोऽयसो न धाराम् ऋ॰६,३,५, अयसः अयोमयस्य परश्वादेर्धाराम्" भा॰। हिरण्ययश्रृङ्गोऽयो अस्यपादाः ऋ॰ १,१६३,९भावे असुन्। ३गमने न॰। "ज्योतिरकारि हरितो

नाऽयसे ऋ० १,५७,२ "अयसे गमनाय" भा० अयसा निर्म्मितम् अण् । आयसम् लौहमये कटाहादौ अयसो-विकारः अण् आयसः । लौहविकारे 'अयस्कान्तइवायसम्' रघुः "आयसेन तु पात्रेणेत्यादि २७८ पृष्ठे दर्शितम् । मयट् अयोमयः । वेदे तु अयस्मयादि० नि० अयस्मयः । लौहविकारे त्रि० स्त्रियां ङीप् । चतुरर्थ्यां छण् । आयसीयः अयस्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप् । एति यज्ञस्थानम् इण असुन् । २अग्नौ पु० । "अयाश्चाग्नेऽस्यनभिशस्तयाश्च सत्यमित्त्वमया असि । अयानो यज्ञं वहास्यया नोऽधेहि भेषजम्" यजु० । ४हिरण्ये निरु० "रक्षोहा विश्वचर्षणिरभियोनिमयोहतम् अस्थनूषतायोहतम् ऋ० ९,१,२,८०, 'अय इति हिरण्यनामेति भा० "हिरण्यपाणिः प्रतिदोषमास्थात् अयोहनुर्यजते इति ऋ० ६,७१,१, अयोहनुर्हिरण्यहनुः" भा० ।

**अयस्कंस** पु०न० । अयोविकारः कंसं पात्रं सत्वम् । लौहनिर्म्मिते पानपात्रे ।

**अयस्कर्णी** स्त्री अय इव कर्णावस्य गौ० ङीष् । लौहतुल्यकठिनकर्णयुक्तायां स्त्रियाम् ।

**अयस्कान्त** पु० अयस्सु कान्तः रमणीयः कस्कादित्वात् सत्वम् । (कान्तिलौह) इति ख्याते १लौहभेदे । अयसां कान्तः इष्टः सन्निधिमात्रेणाकर्षकत्वात् । सन्निधिमात्रेण लौहाकर्षके (चुम्बक) इति ख्याते २प्रस्तरभेदे । "अश्मोर्यतश्चमाकृष्टमयस्कान्तेन लौहवत्" कुमा० "स चकर्ष परस्मात्तदयस्कान्तमिवायसम्" रघुः । अयस्कान्तेनाकर्षणीयशल्यापनयनार्थे ३व्रणचिकित्साभेदे यथोक्तं सुश्रुते "अनुलोममनवबद्धमकर्णमनल्पव्रणमुखमयस्कान्तेन" ।

**अयस्काम** त्रि० अयः कामयते कम–अण् उप०स० सत्वम् । लौहाभिलाषिणि । [सत्वम् । लौहकारे (कामार) ।

**अयस्कार** त्रि० अयोविकारं करोति कृ–अण् उप०स०

**अयस्कुम्भ** पु० अयोविकारः कुम्भः सत्वम् । लौहमये घटे ।

**अयस्कुशा** स्त्री अयःसहिता कुशा शाक०त० सत्वम् । लौहसहितकुशायाम् ।

**अयस्कृति** स्त्री अयसा कृतिः चिकित्साप्रक्रिया सत्वम् । सुश्रुतोक्ते महाकुष्ठचिकित्साभेदे "अथ ऊर्द्धमयस्कृतीर्वक्ष्यामः । तीक्ष्णलौहपत्राणि तनूनि लवणवर्गप्रदिग्धानि गोमयाग्निप्रतप्तानि त्रिफलाशालसारादिकषायेण निर्वापयेत् षोड़शवारांस्ततः खदिराङ्गारतप्तान्युपशान्ततापानि सूक्ष्मचूर्णानि कारयेद्गाढतान्तवपरिस्रावितानि ततो यथाबलं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत । जीर्णे यथाव्याध्यम्लमलवणमाहारं कुर्वीत । तुलामुपयुज्य कुष्ठमेहमेदःश्वयथुपाण्डुरोगोन्मादापस्मारानपहृत्य वर्षशतं जीवति तुलायां तुलायां वर्षशतगुणोत्कर्षः । एतेन सर्वलौहेष्वयस्कृतयो व्याख्याताः ।

**अयस्थूण** पु० अयोनिर्म्मितः स्थूणः वा विसर्गलोपः । लौहमये १स्तम्भे देव० । तथाविधस्तम्भस्य युक्ते २स्तम्भे । "अयस्थूणगृहपतीनां वै" शतब्रा० अयस्थूणा गृहपतयस्तेषामिति तेषाम् हीनद्रव्यकत्वादाक्षेपः भा० । ७त० ३अयोमयस्तम्भे रथादौ त्रि० । "ऋतावयस्थूणमुदिता सूर्य्यस्य" ऋ० ५,६२,८, अयस्थूणमयोमयस्थूणं गर्त्तं रथं वेति भा० । ४ऋषिभेदे पु० तस्य गोत्रम् अण् आयस्थूणः तस्य बहुषु लुक् । अयस्थूणाः । गौ० पाठात् ङीष् अयस्थूणी ।

**अयस्पात्र** न० अयोमयं पात्रं सत्वम् । लौहमये पात्रे ।

**अयस्मय** त्रि० अयोविकारः अयस्+मयट् वेदे नि० सत्वम् स्त्रियां ङीप् । अयोमये लौहमये "असुरा एषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवास्मिँल्लोके रजतामन्तरीक्षे हरिणीं दिवि" शतब्रा० । "भूम्या अयस्मयम् पातु" अथ० ५,२८,९, शतस्त्वहिरण्ययोः अथ० ४,२७,८, छन्दसीति प्रायिकं तेन लोकेऽपि 'परिभ्रमन्मर्मभिदं तीक्ष्णधारमयस्मयम्" भा०आ०प० "ततः शक्तिं गृहीत्वा तु रुक्मदण्डमयस्मयीम्" भा०द्रो०प० ।

**अयस्मयादि** पु० ६त० "अयस्मयादीनि छन्दसि" पा० उक्ते भत्वादिकार्यार्थे निपातनार्थे शब्दगणभेदे ।

**अयाचित** न० याच+क्त न०त० । १अमृताख्यवृत्तौ "अमृतं स्यादयाचित"मिति मनुः । २अप्रार्थिते त्रि० । "अयाचितोपस्थितमम्बु केवलम्" "अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्म्मणः" स्मृतिः "याचेर्द्व्यादिपाठात् गौणे कर्म्मणि" क्त । यस्य सकाशे न याच्यते ३तस्मिन् जने च ।

**अयाज्य** त्रि०न याजयितुमर्हः यज-णिच्-कर्म्मणि यत् न०त० । पतितादौ स्मृतिनिषिद्धयाजने । ते च स्मृतौ दर्शिताः यथा देवलः "पतितेन सहोषित्वा जानन् संवत्सरं नरः मिश्रितः कोन सोऽप्यन्ते स्वयञ्च पतितो भवेत् । याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतत्येव पतितेन न संशयः । बौधा० "संवत्सरेण पतति पतितेन न संशयः याजनाध्यापनाद्यौनात् सद्यो न शयनासनात्" ।

मनुविष्णू । "संवत्सरेण पतति पतितेन सहाचरन् याजनाध्यापनाद्यौनात् न तु यानासनाशनात्" पैठीनसिः "संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनात्तु त्वेकशयनासनात्" । पतितानभिभाषाह सुमन्तुः । "यस्तैर्यौनमौखस्रौवाणां सम्बन्धानामन्यतमेन सह संवत्सरं सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यात्" इयात् कुर्यात् द्वादशवार्षिकमित्यर्थः मौखं मुखसाध्यमध्यापनं स्रौवं स्रुवसाध्यं याजनमित्यर्थः अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते प्रा॰वि॰ । हारीतः । "संवत्सरेण पतति पतितेन सहाचरन् याजनाध्यापनाद्यौनादेकशय्यैकभोजनात्" बृहस्पतिः । "षाण्मासिके तु संयोगे याजनाध्यापनादिना । एकत्रासनशय्याभिः प्रायश्चित्तार्द्धमाचरेत्" । "याजनादिकं लघुगुरुभेदेन द्विविधं भवति तत्र गुरुयाज्ञानकृतेन याजनादिना एकैकेन सद्यःपातः तेनैवाज्ञानकृतेन वारद्वयाभ्यासात् । लघुनि याजनादावज्ञानकृते संवत्सरेण पतति तस्मिन्नेव ज्ञानकृते वत्सरार्द्धेनेति व्यवस्था । तथाहि याजनं योनिसम्बन्धमित्यत्र देवलवचने पतितेन सहोषित्वा जानन्निति पूर्व्ववचनस्थस्य जानन्निति पदस्य सम्बन्धात् ज्ञानकृतत्वे गुरुत्वं दर्शितं गुरुयाजनाध्यापनादिकमाह देवलः । "आचार्य्याद्व्रतनियमशुश्रूषादिभिस्त्रयोविद्योपादानमध्ययनम् । तस्य चाचारान्वयप्रज्ञासामर्थ्यं भक्तिशीलशुश्रूषोपनताय शिष्याय प्रदानमध्यापनं, पशुसोमाज्यपुरोडाशसोमौषधिचरुप्रभृतिभिः खदिरपलाशाश्वत्थन्यग्रोधोदुम्बरप्रभृतिभिः समिद्भिः स्रुक्स्रुवोदूखलमुषलकुठारखनित्रयूपदारुचर्म्मदर्भग्रावपवित्रभाजनादिभिर्द्रव्योपकरणैः प्रोतृत्वाहृहोतृध्वर्य्युब्रह्मादिभिः ऋत्विग्भिः काम्यनैमित्तिकानां पशादिपूर्व्वकाणां यथोक्तदक्षिणानां यज्ञानां समापनं यजनम् एतेन याजनं व्याख्यातम्" । तथा च ज्योतिष्टोमादियज्ञानां याजनं गुरु, पूर्त्तादिकर्म्मणा याजनं लघु । कौर्म्मम् "याजनं योनिसम्बन्धं तथैवाध्यापनं द्विजः । कृत्वा सद्यः पतेज्ज्ञानन् सहभोजनमेव च" । यमः । "असत्प्रतिग्रहीतारस्तथैवायाज्ययाजकाः । नक्षत्रैर्जीव्यते यच सोऽन्धकारं प्रपद्यते" । वसिष्ठः । "अश्रद्दधानस्य भोक्तव्यं चौरस्य च विशेषतः । न त्वेव बहुयाज्यस्य यश्चोपनयते बहून्" । बौधायनः । "बहुप्रतिग्राह्यस्याऽप्रतिगृह्यस्य याज्यं वा याजयित्वाऽप्रतिग्राह्यस्य वा प्रतिगृह्य अनाशकस्य वाऽश्रमयित्वा तरत्समन्दीयं जपेत्" । वसिष्ठः । "एतेनैव गर्हिताध्यापकयाजकाव्याख्याता" "दक्षिणात्यागाच्च पूता भवन्तीति विज्ञायते" "एतच्च मुख्येतरस्योपपातकादिगर्हितस्य पशुसहायत्वयाजनादिविषयमिति धर्म्मप्रदीपः" प्रा॰वि॰ । तत्रैव शूद्रपुरोहितयाजकाध्यापकादावृत्तौ यमः । "एतेषामेव सर्व्वेषां प्रायश्चित्तन्तु मार्गताम् । भैक्षाचरणयुक्तात्मा द्विजश्चान्द्रायणञ्चरेत् । फलं नागह्रदे तोये ज्ञायेदभिभावितम् अधीतसर्गेण यन्मात्रे तस्मात् पापात् प्रमुच्यते । अथापरकृतवर्णं रुक्तां पिबेद्धेनुवत्सलाम् । तस्योपनयनं कृत्वा व्यवहार्य्यस्तदा भवेत्" इति । फलं लब्धं धनं नागह्रदे गजमज्जनयोग्यह्रदे अविभावितम् अभुक्तम् । यन्मात्रे व्रतान्ते ।

**अयाज्ययाजन** न॰ अयाज्यस्य याजनम् । अयाज्यस्य पतितादेर्याजने । याजनं च लघुगुरुभेदेन द्विधेत्युक्तम् याज्यशब्दे । "अयाज्ययाजनैश्चैव नास्तिक्येन च कर्म्मणाम् कुलान्याशु विनश्यन्ति यानि हीनानि मन्त्रतः" मनुः ।

**अयाज्यसंयाज्य** न॰ सम्+यज–णिच्–भावे यत् ६त॰ । अयाज्यस्य पतितादेर्याजने "सेवाध्यायाज्यसंयाज्यपारदार्य्यात्मविक्रयः" इति मनुः ।

**अयातयाम** पु॰ न यातो यामः समयोऽस्य । १अपर्य्युषिते २अनतिक्रान्तकाले ३विगतदोषे च । "छन्दांस्येवैतत् पुनराप्याययत्यस्यातयामानि करोति—न वा अत्र स्तुवते न शंसन्ति तच्छन्दांस्येवैतत् पुनराप्याययत्यस्यातयामानि करोति तैरयातयामैर्यज्ञं तन्वते" इति शत॰ ब्रा॰ । "छन्दांस्ययातयामानि" भाग॰ । "अयातयामानि विगतदोषाणि" श्रीधरः ।

**अयातु** पु॰ भीमो भीमसेनवत् यातुर्यातुधानः न॰त॰ । १राक्षसभिन्ने २अहिंसके च योमायातु यातुधानेत्याह ऋ॰ ७,१०४,१६, अयातुमराक्षसम् भा॰ । "इयाभि देवा अयातुरग्ने ! ऋ॰७,३४,८ अयातुः अहिंसकः भा॰ ।

**अयाथातथ्य** न॰त॰ । मिथ्यात्वे । अयथातथशब्दे विवृतिः ।

**अयान** न॰ न यानं चलनं यस्य । १स्वभावे निसर्गे यथा जले शैत्यं अग्ने रुष्णता न हि तत् कदापि चलतीति तस्य तथात्वम् अभावे न॰त॰ । २गमनाभावे । यानं गमनं वाहनञ्च न॰ब॰ । ३यानशून्ये त्रि॰ ।

**अयानय** पु॰ द्यूते सर्व्वशारगन्तव्यपथसीमाभूते शीर्षस्थाने व्युत्पत्तिविवरणम् मतृकृतकरणायाम् यथा आनीयन्ते शारा अस्मिन् इत्यानयः अयेन दक्षिणावर्त्तेनापसव्य-

गमनेनानयः अयानयः शीर्षस्थानम् । तत् नेयः च । द्यूतविशेषे हि चतस्रोवीथयः प्रत्येकं द्वादशकोष्ठोपेताः शारास्तु त्रिंशत् ते च एकैकत्रितयेन पञ्चदशशो भाज्याः स्वाभिपार्श्वस्थप्रथमकोष्ठपर्य्यन्तमारभ्यान्तिमकोष्ठरूपशीर्षस्थानरूपमयानयं दक्षिणावर्त्तेनापसव्यगत्या सर्व्वेऽपि शारा नेया अतस्ते अयानयीना इत्युच्यन्ते तत्रायं प्रकारः "ससहायस्य शारस्य परैर्नाक्रम्यते पदम् । असहायस्तु शारेण परकीयेण हन्यते इत्युक्तदिशावसेयः । परैः परकीयैः नाक्रम्यते द्व्यादिशाराश्रितकोष्ठं नाक्रम्यते परकीयशारेण तत्स्थानाक्रमणेन प्रतिरोधात् । असहायस्तु हन्यते इत्यतः प्रतिरोधाजनकः "अनुपदमर्व्वायानयं वद्धा भवति नेयेषु" मा० "अयानयः स्थानविशेषः तं नेयः अयानयीनः शारः" सि०कौ ।

**अयाशु** त्रि० अयमश्नाति नाशयति अय–उ–ईत० । शुभावहविधिलोपके यातुधानभेदे "खलजाःशकधूमजा उरुण्डा ये च मट्मटाः कुम्भमुष्का अयाशवः । तानस्या ब्रह्मणस्पते प्रतीबोधेन नाशय" अथ० ८,६,१५ ।

**अयास्य** त्रि० यस–णिच्–शक्यार्थे यत् न०त० । १उपक्षपयितुमशक्ये "अयुजो असमो नृभिरेकः कृष्टीरयास्यः" ऋ० ८,६२,२, "अयास्यः उपक्षपयितुमशक्यः" भा० । यासः प्रयत्नस्तत्साध्यः यत् न०त० । २ युद्धरूपसाधनैः साधयितुमशक्ये शत्रौ। आस्यादयते निर्गच्छति अय् घ० पृ०षद्यत्वयः । ३ मुखेन निर्गमनशक्तिके प्राणवायौ उपचारात् ४ तदुपासके अङ्गिरसि ऋषिभेदे । "अयास्यः स्तवमानेभिरर्कैः" ऋ० १,६२,७, "अयास्यः यासः प्रयत्नः तत्साध्यो यास्यः न यास्योऽयास्यः । युद्धरूपैः प्रयत्नैः साधयितुमशक्य इत्यर्थः यद्वा अयास्यः पञ्चवृत्तिर्मुख्यः प्राणः । स ह्यास्यान्मुखादयते गच्छति निष्क्रामति । तदुपासकोऽप्यङ्गिरा उपचारादयास्य उच्यते । तथा च छन्दोगैराम्नातम् "तं हायास्य उद्गीथमुपासाञ्चक्रे एतमु एवायास्यं मन्यन्ते आस्याद्यदयते तेनेति" । अथवा अयमास्ये मुखे वर्त्तत इत्ययास्यः तथा च वाजसनेयकम् "ते होचुः क नु सोऽभूद्योन इत्थमसक्तेत्ययमास्यान्तरितीति" । पूर्व्ववदुपासकोऽप्ययास्यः" भा० ।

**अयि** अव्य० इण–इन् । १प्रश्ने, २अनुनये, ३संबोधने, ४अनुरागे च "अयि सम्प्रति देहि दर्शनम्" "अयि जीवितनाथ ! जीवसि" इति च कुमा० । "अयि जानीषे रैभिकस्य सार्थवाहस्य गृहम्" मृच्छ० ।

**अयुक्छद** पु० अयुग्माः सप्त सप्त छदा अस्य । सप्तपर्णे वृक्षे तस्य हि प्रत्येकपल्लवे सप्त सप्त पर्णानि विद्यन्ते । "दूरयुक्छदगुच्छगन्धयः" माघः । अयुक्पत्रादयोऽप्यत्र।

**अयुक्त** त्रि० युज–क्त न०त० । १विषयान्तरासक्ततया कर्त्तव्येऽनवहिते, २अनुचिते, ३आपद्गते ४असंयुक्ते च "अयुक्तः प्राकृतस्तब्धः शठो नैष्कृतिकोऽलसः गीता" अयुक्तः अनवहित इति श्रा०त० रघु० । "नचायुक्तस्य भावना" गीता ५अयोग्ये "अयुक्तरूपं किमतः परं वद" कुमा० । अयुक्तं शपथं कुर्व्वन्नयोग्यो योग्यकर्म्मकृत् । ६वहिर्मुखे "अयुक्तः कामकारेण फले सक्तो निबध्यते इति गीता" "अयुक्तः वहिर्मुखः" म०त० रघु० । युक्तियुक्तं युक्तम् न०त० ७युक्तिशून्ये त्रि० । "अयुक्तं यदिह प्रोक्तम्" इति दुर्गादासः ८अनियोजिते च । "अयुक्तचारप्रायैश्च" नीति० ।

**अयुक्ति** स्त्री अभावे न०त० । १युक्त्यभावे । न०ब० । २युक्तिशून्ये ३योजनशून्ये च त्रि० ।

**अयुग** न०त० । युग्मभिन्ने (विजोड़) विषमे । "युगपद्युगसप्तिस्तुल्यसंख्यैर्मयूखैः" माघः अयुगनेत्रः त्रिनेत्रः अयुगेषुः पञ्चशरः १अयुगलादयोऽप्यत्र । न०ब० । २युगशून्ये त्रि० । ३भग्नयुगे रथादौ

**अयुगपद्** अव्य० न०त० । युगपद्भिन्ने क्रमिकभवने ।

**अयुगू** स्त्री एति वन्ध्यात्वम् इण–उन् अयुर्गीयते गै–कू । काकवन्ध्यायां स्त्रियाम् । "अयुगूः काकवन्ध्या या जाता तां न विवाहयेत्" कात्या० स्मृतिः।

**अयुग्म** न० न०त० । युग्मभिन्ने (विजोड़) १विषमे । यथा संख्यायामेकत्रिपञ्चसप्तादयः । न०ब० । २तत्संख्यान्विते त्रि० । "अर्थेन्द्रियक्षोभमयुग्मनेत्र" इति कुमा० । अयुग्मशरः पञ्चवाणः । अयुग्मच्छदः सप्तच्छदः अयुग्मवाहः सप्ताश्वः ।"अयुग्मे विधवा नारी"उ०त०पु०"युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु"मनुः । "द्वादशराशिषु विषमसमसंख्यान्वितेषु मेषमिथुनसिंहतुलाधनुःकुम्भेषु" ज्यो० प्रथमतृतीयचरणयोः ।

**अयुग्मनेत्र** पु० अयुग्मानि नेत्राण्यस्य । त्रिनेत्रे महादेवे "अर्थेन्द्रियक्षोभमयुग्मनेत्रः" कु०, अयुग्मलोचनादयोऽप्यत्र ।

**अयुग्मच्छद** पु० अयुग्माः सप्त सप्त छदा अस्य । सप्तच्छदे (छातिम्) वृक्षे अयुग्मपत्रादयोऽप्यत्र ।

**अयुग्मवाह** पु० अयुग्माः सप्त वाहा अस्य । सप्ताश्वे सूर्य्ये । अयुग्माश्वादयोऽप्यत्र ।

**अयुग्मशर** पु० अयुग्माः पञ्च शरा अस्य । पञ्चबाणे कामदेवे अयुग्मबाणादयोऽप्यत्र । बाणपञ्चकं च पञ्चबाणशब्दे वक्ष्यते।

**अयुज्** त्रि० न युज्यते सजातीयेन, युज-क्विन् न०त० । अयुग्मे (विजोड़) विषमे "अयुजि नयुगरेफतो यकारो युजि नजरगाश्च पुष्पिताग्रा" "अयुग्दान्तं स्त्रीणाम्" गोभि० । "अयुक् अयुग्माकरम्" स०त० रघु० "अयुक्षु तु पितॄन् सर्वान्" मनुः । "वपुरदुक्छदगुच्छकुगम्भय": माघः ।

**अयुत** त्रि० न युतः संयुक्तः सम्बद्धो वा । १असंयुक्ते २असम्बद्धे च ३दशसहस्रसंख्यायाम् न० "सूर्य्याब्धिसंख्यया द्वित्रिसागरैरयुताहतैः" सू०सि० । "स विज्ञेयः परः धर्म्मो नाज्ञानामुदितोऽयुतैः" मनुः । ४तत्संख्यान्विते च ।

**अयुतनायिन्** पु० अयुतं पुरुषमेधानामयुतं नीतवान् जि-भूते णिनि । पुरुवंश्ये महाभौमपुत्रे राजभेदे । "पूरोस्तु-भार्य्या कौशल्यानाम तस्यामथ जज्ञे जनमेजय" इत्युपक्रम्य "महाभौमः खलु प्रासेनजितीमुपयेमे तस्य पुत्रो जज्ञे अयुतनायी यः पुरुषमेधानामयुतमनयत् तेनास्यायुतनायित्वम्" भा० आ०प० ।

**अयुतशस्** अव्य० अयुतमयुतम् वीप्सार्थे कारकात् शस् । अयुतमयुतमित्यर्थे ।

**अयुतसिद्ध** त्रि० युतः पृथग्भूतः सन् सिद्धो न भवति न०त० । कारणकपालादेरपृथग्भूततया सिद्धे १कार्य्यद्रव्ये घटादौ तथाभूते वैशेषिकोक्ते द्रव्याश्रिते २गुणे ३कर्म्मणि च तदेतदयुतसिद्धत्वं कार्य्यद्रव्यगुणकर्म्मणां वेदान्तिभिर्नाङ्गीक्रियते यथा शा०भा० । गुणकर्म्मादीनां कारणद्रव्यात्मकतां व्यवस्थाप्य द्रव्यगुणादेरयुतसिद्धत्वनिरासायोक्तम् "गुणानां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यदुच्येत तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्यात् अपृथक्कालत्वं वा अपृथक्स्वभावत्वं वा । सर्व्वथापि नोपपद्यते । अपृथग्देशत्वे तावत् स्वाभ्युपगमो विरुध्येत कथं तन्त्वारब्धो हि पटस्तन्तुदेशोऽभ्युपगम्यते न तु पटदेशः पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते न तन्तुदेशाः तथाचाहुः । "द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरमिति" ।तन्तवो हि कारणद्रव्याणि कार्य्यद्रव्यं पटमारभन्ते तन्तुगताश्च गुणाः शुक्लत्वादयः कार्य्यद्रव्ये पटे शुक्लादि गुणान्तरमारभन्ते इति हि तेऽभ्युपगच्छन्ति । सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगम्यमाने बाध्येत। अथापृथक्कालत्वमयुतसिद्धत्वमुच्येत सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत । अथापृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः सम्भवति तस्य तादात्म्येनैव प्रतीयमानत्वात् । युतसिद्धयोः सम्बन्धः संयोगः अयुतसिद्धयोस्तु समवाय इत्ययमभ्युपगमो मृषैव। तेषां प्राक्सिद्धस्य कार्य्यात् कारणस्यायुतसिद्धत्वानुपपत्तेः अथान्यतरापेक्ष एवायमभ्युपगमः स्यात् अयुतसिद्धस्य कार्य्यस्य कारणेन सम्बन्धः समवाय इति" एवमपि प्रागसिद्धस्यालब्धात्मकस्य कार्य्यस्य कारणेन सम्बन्धो नोपपद्यते द्व्यायत्तत्वात् सम्बन्धस्य । सिद्धं भूत्वा सम्बध्येत इति चेत् प्राक्कारणसम्बन्धात् कार्य्यस्य सिद्धावभ्युपगम्यमानायाम् युतसिद्ध्यभावात् कार्य्यकारणयोः संयोगविभागौ न विद्येते इतीदमुक्तं दुरुक्तं स्यात् । यथा चोत्पन्नमात्रस्याक्रियस्य कार्य्यद्रव्यस्य विभुभिराकाशादिद्रव्यान्तरैः सम्बन्धः संयोग एवाभ्युपगम्यते न समवायः एवं कारणद्रव्येणापि सम्बन्धः संयोग एव स्यान्न समवायः । नापि संयोगस्य समवायस्य वा सम्बन्धस्य सम्बन्धिव्यतिरेकेणास्तित्वे किञ्चित्प्रमाणमस्ति । सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययदर्शनात्तयोरस्तित्वमिति चेन्न एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयाऽनेकशब्दप्रत्ययदर्शनात् । यथैकोऽपि सन् देवदत्तो लोके स्वरूपं सम्बन्धिरूपञ्चापेक्ष्यानेकशब्दप्रत्ययभाग्भवति मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति । तथा चैकापि सती रेखा स्थानान्यत्वेन निवेश्यमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति तथा सम्बन्धिनोरेव सम्बन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वं न व्यतिरिक्तवस्त्वस्तित्वेनोपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य । नापि सम्बन्धिविषयत्वे सम्बन्धशब्दप्रत्यययोः सततभावप्रसङ्गः स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात् । तथैवाऽण्वात्ममनसामप्रदेशत्वान्न संयोगः सम्भवति प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात् । कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति चेन्न अविद्यमानार्थस्य कल्पनायां सर्व्वार्थसिद्धिप्रसङ्गात् इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वार्थः कल्पनीयो नातोऽधिक इति नियमहेत्वभावात् कल्पनायाश्च स्वायत्तत्वात् प्रभूतत्वसम्भवाच्च । न च वैशेषिकैः कल्पितेभ्यः षड्भ्योऽर्थेभ्योऽभ्यधिकाः शतं सहस्रं वार्था न कल्पयितव्या इति निवारको हेतुरस्ति । तस्माद्यस्मै यस्मै यद्यद्रोचते तत्तत् सिध्येत् । कश्चिद्दयालुः प्राणिनां दुःखबहुलः संसार एव माभूदिति कल्पयेत् अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं कल्पयेत्

कत्वयोर्निवारकः स्यात् । किञ्चान्यत् द्वाभ्यामणुभ्यां निरवयवाभ्यां सावयवस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः नह्याकाशस्य पृथिव्यादीनाञ्च जतुकाष्ठवत् संश्लेषोऽस्ति । कार्य्यकारणद्रव्ययोराश्रिताश्रयभावोऽन्यथा नोपपद्यते इत्यवश्यकल्प्यः समवायइति चेन्न इतरेतराश्रयत्वात् । कार्य्यकारणयोर्हि भेदसिद्धावाश्रिताश्रयतावसिद्धिराश्रिताश्रयभावसिद्धौच तयोर्भेदसिद्धिः कुण्डवदरवदितरेतराश्रयता स्यात् । न हि कार्य्यकारणयोर्भेदः आश्रिताश्रयभावो वा वेदान्तवादिभिरभ्युपगम्यते कारणस्यैव संस्थानमात्रं कार्य्यमित्यभ्युपगमात् । किञ्चान्यत् परमाणूनां परिच्छिन्नत्वात् यावत्योदिशः षडष्टौ दश वा तावद्भिरवयवैः सावयवास्ते स्युः सावयवत्वादनित्याश्चेति नित्यत्वनिरवयवत्वाभ्युपगमोबाध्येत । यांस्त्वं दिग्भेदभेदिनोऽवयवान् कल्पयसि तएव मम परमाणव इति चेन्न स्थूलसूक्ष्मतारतम्यक्रमेणा परकारणत्वेन नाशोपपत्तेः । यथा पृथिवी द्व्यणुकाद्यपेक्षया स्थूलतमा वस्तुभूतापि विनश्यति ततः सूक्ष्मं सूक्ष्मतरञ्च पृथिव्येकजातीयकं विनश्यति ततोद्व्यणुकं तथा परमाणवोऽपि पृथिव्येकजातीयकत्वाद्विनश्येयुः । विनश्यन्तोऽवयवविभागेनैव विनश्यन्तीतिचेन्नायं दोषः यतोघृतकाठिन्यविलयनवदपि विनाशोपपत्तिमवोचाम । यथाहि घृतसुवर्णादीनामविभज्यमानावयवानामप्यग्निसंयोगात् द्रवभावापत्त्या काठिन्यविनाशोभवति एवं परमाणूनामपि परमकारणभावापत्त्याविनाशोभविष्यति । तथा कार्य्यारम्भोऽपि नावयवसंयोगेनैव केवलेन भवति क्षीरजलादीनामन्तरेणाप्यवयवसंयोगान्तरं दधिहिमादिकार्य्यारम्भदर्शनात्" । शा० सू० भा० सत्कार्य्यव्यवस्थापनोद्देशे 'द्विनिष्ठत्वात् सम्बन्धस्यायुतसिद्धानामदोष इति चेत् न । भावाभावयोरयुतसिद्धत्वानुपपत्तेः । भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा स्यान्न तु भावाभावयोर्वा तस्मात् सदेव कार्य्यं प्रागुत्पत्तेरिति सिद्धम्" । "युतसिद्धयोरज्जुघटयोर्मिथःसंयोगे पृथक्सिद्धिरपेक्ष्यते अयुतसिद्धानां परस्परपरिहारेण प्रतीत्यनर्हाणां कार्य्यकारणादीनां मिथोयोगेऽपृथक्सिद्धभावो न दोषमावहतीति यद्वते अयुतेति" आनन्दगिरिः । "द्रव्याश्रयेष्वपि गुणेषु" मा० ५, २८, व्याख्यायां मल्लिनाथः द्रव्याश्रयेष्वपि अयुतसिद्धत्वात् द्रव्यसमवेतत्वाद् द्रव्याधीनसत्ताकेषु सत्स्वपीति ।

**अयुतसिद्धि** स्त्री यु-अमिश्रणे क्त युतः पृथग्रूपेण स्थितः तथाभूतयोः सिद्धिः अभावे न०त० । पृथग्भावेनासिद्धौ । यथा अवयवावयविनोः, द्रव्यगुणयोः, द्रव्यक्रिययोस्तथासिद्धिः ते हि स्वस्वकारणे अपृथग्भूततया सिद्धाः । अतएवोक्तं "युतसिद्ध्यभावात् कार्य्यकारणयोः संयोगविभागौ न विद्येते", वै०सू० । "सम्बन्धयोर्विद्यमानत्वम् पृथगाश्रयाश्रयित्वं वा युतसिद्धिस्तदभावस्त्ववयवावयविनोः" इति उप०वृत्तिः । अयमाशयः 'घटपटादयो हि पृथग्भूततया सिद्धाः आश्रयाश्रयिभावं लभन्ते । कार्य्यकारणयोस्तु न पृथक्स्थितिर्येन तथा स्यात्' इति ।

**अयुताजित्** पु० अयुतं जितवान् जि-भूते क्विप् दीर्घः उ०प०स० । यदुवंश्ये नृपभेदे । "अयुताजित् सहस्राजित् शताजिदथ दासकः उपवाह्यकस्तद्भार्य्यां भजमानाद्विजज्ञिरे" हरि०प० । [त्रि० ।

**अयुद्ध** न० अभावे न०त० । १युद्धाभावे न०ब० । २युद्धशून्ये

**अयुव** त्रि० न यौति यु-वा०क० । असंसृष्टे "अयुवमार्य्यस्य राष्ट्रं भवति" ऐत०ब्रा० ।

**अयुवन्** पु०स्त्री० न युवा विरोधे न०त० । वृद्धे-स्त्रियां ङीप् ।

**अयूप्य** त्रि० यूपे साधु यत् न०त० । यूपासाधने निम्बजम्बीरादौ वृक्षे "वृक्षा द्विविधा यूप्या अयूप्याश्च पलाशखदिरबिल्वादयो यूप्या निम्बजम्बीरादयस्त्वयूप्याः" यजु०वेद०दी० ।

**अये** अव्य० इण्-एच् । १कोपे, २विषादे, ३संभ्रमे, ४स्मृतौ, ५आहूतौ च । "अये दक्षिणेन पुष्पवाटिकामालाप इव श्रूयते" शकु० "अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन" ! सां०द० ।

**अयोग** पु० युज्-घञ् अभावे न०त० । १योगाभावे, अप्राशस्त्ये न०त० । ज्योतिषोक्ते तिथिवारादीनां दुष्टे २योगे "अयोगः सिद्धियोगश्च द्वावेतौ भवतोयदि । अयोगोहन्यते तत्र सिद्धियोगः प्रवर्त्तते" इति राजमा० । "अयोगे सुयोगोऽपि चेत् स्यात्तदानीमयोगं निहत्यैव सिद्धिं तनोति । परे लग्नशुद्ध्या कुयोगादिनाशं दिनार्द्धोत्तरं विष्टि-पूर्व्वञ्च शस्तम्" "यत्र लग्नं विना किञ्चित् क्रियते शुभकर्म्मकम् तत्र तेषामयोगानां प्रभावाज्जायते फलम्" इति च मुहू० चि० । न०ब० । ३विधुरे, ४कूटे, ५कठिनोदये सुश्रुतोक्ते वमनापशमनीये ६रोगभेदे च । "बलाध्मानं हृदयग्रहं-तृष्णा मूर्च्छा दाहश्च भवति तमयोगमित्याचक्षते तमाशु शमयेदिति" । "अयोगाङ्गास्तु वक्ष्यामि व्यापदः सचिकित्सिताः । चतुष्पोऽल्पौषधो हीनो वस्तिर्नैति प्रयोजितः विष्टभ्याध्मानशूलैश्च तमयोगं प्रचक्षते" इति च सुश्रुतः ।

**अयोगवः** पु॰ अय इव कठिना गौर्वाणी यस्य नि॰ अच्। अयोगं दुष्टयोगं वाति वा—क वा। "शूद्रादयोगवःक्षत्ता चाण्डालश्चाधमो नृणाम्। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः" इति मनूक्ते शूद्रात् वैश्यायां जाते प्रतिलोमजे सङ्कीर्णवर्णे। "प्रसाधनोपचारज्ञमदासं दासजीवनम्। सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे", मनुः। अयोगवस्यायम् अण्। आयोगवः तज्जातिसम्बन्धिनि त्रि॰ स्त्रियां ङीप्। "भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः" मनुः।

**अयोगवाह** पु॰ अक्षरसमाम्नायस्थलेषु "अइउण्" इत्यादिषु चतुर्दशसु नास्ति योगः पाठादिरूपः संबन्धो येषां ते तथापि वाहयन्ति णत्वषत्वादिकार्य्यादिकं निष्पादयन्ति वाहेः अच् कर्म्मधा॰। "अनुस्वारो विसर्गश्च+क ँ पौ चैव पराश्रितौ। अयोगवाहा विज्ञेयाः" इति शिक्षोक्तेषु अनुस्वारविसर्गादिषु

**अयोगुल** (ड) पु॰ गुलः गोलाकारः अयसा निर्म्मितोगुलः। (गोलीति) ख्याते लौहगुटिकायाम्। वा लस्य डः।

**अयोगू** पु॰ अयोलोहविकारं गच्छति कर्त्तृत्वेन गम—बा॰ डू। अयोगन्तरि अयस्कारे "पाप्मने क्लीवमाक्रियाया अयोगूमिति"। पुरुषमेधे यजु॰ ३०,५, "अयोगूमयोगन्तारम्। वेद दी॰।

**अयोग्य** त्रि॰ न॰त॰। १योग्यभिन्ने अनर्हे २अनुचिते च।

**अयोऽग्र** न॰ अयोऽग्रे मुखे यस्य। मुषले तस्य मुखे लौहावस्थित्या तथात्वम्।

**अयोघन** पु॰ अयांसि हन्यन्तेऽनेन हन-अप् घादेशश्च नि॰। (हातुड़ीति) ख्याते लौहमुद्गरे। "अयोघनेनाय इवाभितप्तम्" ॥ रघुः।

**अयोजाल** न॰अयोविकारः जालम्। १लौहमये जाले अय इव दुर्भेद्यं जालं मायाऽस्य। २दुर्भेद्यकपटे असुरादौ त्रि॰ "अयोजाला असुरा मायिनोऽयस्मयैः" अथ॰ १,१८,६६।

**अयोदंष्ट्र** त्रि॰ अयोमयी दंष्ट्रा चक्राग्रधारा अस्य। लौहमयधारे रथादौ। "पश्यन् हिरण्यचक्रानयोदंष्ट्रान् विधावतो वराहून्" ऋ॰ १,८८,६, "दंष्ट्रा चक्रधारा" भा॰।

**अयोदत्** त्रि॰ अयइव कठिनो दन्तोयस्य संज्ञायां दन्तादेशः। लौहवत्कठिनदन्तयुक्ते राक्षसादौ स्त्रियां ङीप्।

**अयोध्य** त्रि॰ योद्धुमशक्यः युध—ण्यत् न॰त॰। योद्धुमशक्ये "अष्टाचक्रा नवद्वारा देवानां पूरयोध्या" अथ॰ १०, २,३१, इक्ष्वाकुवंश्यन्टपाणां राजधान्यां स्त्री सा च सरयूतीरसन्निकृष्टा सेवनादौ मोक्षदा च। "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" पुरा॰ "बलमुपहितशोभां तूर्णमायादयोध्याम्" भट्टिः।

**अयोध्याकाण्ड** न॰ अयोध्यायास्तत्स्थवृत्तान्तवर्णनस्य काण्डम्। रामायणान्तर्गते अयोध्यावर्णनात्मके ग्रन्थे।

**अयोनि** स्त्री न॰त॰। १योनिभिन्नस्थाने। "अमानषीषु पुरुषे उदक्यायामयोनिषु। रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत्" मनुः। नास्ति योनिरुत्पत्तिस्थानं यस्य। २अजन्ये नित्ये। "जगद्योनिरयोनिस्त्वम्" कु॰।

**अयोनिक** त्रि॰ न आम्नाता योनिरस्य कप्। अनाम्नातयोनिकेषु यज्ञरूपयज्ञपात्रादौ "नायोनिकेषु" कात्या॰ ८,५,२२, अयोनिकेषु यत्र "एष ते योनिः" इत्यस्याम्नानं न भवति तत्र "एष ते योनिः" इत्यनेनासादनं भवति "सर्वेष्विति वातुस्योऽविशेषात्" कात्या॰ ८,५,२७ "सर्वेष्वाम्नातयोनिकेषु अनाम्नातयोनिकेषु च ग्रहेषु परिमार्जनानन्तरम् एष ते योनिरिति मन्त्रेणासादनं भवत्येव" कर्क॰।

**अयोनिज** न॰ योनेर्न जायते जन—ड। योनितोऽनुत्पन्ने-शुक्रशोणितसन्निपातानुत्पन्ने जरायुजभिन्ने दंशमशकादौ तथाहि "शरीरं द्विविधं योनिजमयोनिजञ्च" वै॰ सू॰। तत्र पार्थिवादिशरीरेषु मध्ये पार्थिवं शरीरं द्विविधं योनिजमयोनिजञ्चेति आप्यतैजसवायवीयशरीराणां वरुणादिलोकवायुलोकेषु प्रसिद्धानामयोनिजत्वमेव शुक्रशोणितसन्निपातानपेक्षत्वात्। अयोनिजञ्च देवानामृषीणाञ्च श्रूयते हि "ब्रह्मणो मानसामन्वादय" इति। कारणमन्तरेण कथं कार्य्यमिति चेत् योनेः शरीरत्वावच्छेदेनाकारणत्वात् जन्मजक्रमिमशकादिशरीरे व्यभिचारात् संस्थानविशेषवत्त्वस्य चासिद्धेः देवर्षिशरीरापेक्षयाऽस्मदादिशरीराणामन्याङगत्वात्, योनिजमपि द्विविधं जरायुजमण्डजञ्च, जरायुजं मानुषपशुमृगाणां, गर्भाशयस्य जरायुत्वात्, पक्षिसरीसृपाणामण्डजं परितः सर्पणशीलत्वात् सर्पकीटमत्स्यग्राहादयोऽपि सरीसृपा एव यद्यपि वृक्षादयोऽपि शरीरभेदा एव भोगाधिष्ठानत्वात् न खलु भोगाधिष्ठानत्वमन्तरेण जीवन-मरण-स्वप्न-जागरणभेषज-प्रयोग-बीजसजातीयानुबन्धानुकूलोपगम-प्रतिकूलापगमादयः सम्भवन्ति इति वृक्षतभग्नसंरोहणे च भोगोपपादके स्फुटे एव, आगमोऽप्यस्ति। "नर्म्मदातीरसम्भूताः सरलार्ज्जुनपादपाः। नर्म्मदातोयसंस्पर्शात् ते यान्ति परमां गतिम्"।

"श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवितः", इत्यादिच तथापि चेष्टावत्त्वमिन्द्रियवत्त्वञ्च नोद्भिदां स्फुटतरमतो न शरीरव्यवहारः उ॰ वृ॰॥ वृक्षादीनामयोनिजशरीरसत्त्वे प्रमाणान्तरमस्ति "शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः" मनुना कर्मविशेषैर्नराणां तद्भावप्राप्तिरुक्ता। "गुरुं तुङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः। श्मशाने जायते वृक्षः कङ्कगृध्रादिसेवित"इत्यादि वचनेन। अयोनिजशरीरोत्पत्तिकारणमाह। "अनियतदिग्देशपूर्व्वकत्वात्" वै॰ सू॰। "धर्म्मविशेषाच्च" "समाख्याभावाच्च" "अनियतदिग्देशाः परमाणवोधर्म्मविशेषजनितकर्म्मापन्नास्तत्पूर्व्वकत्वात् अयोनिजशरीराणाम् ननु परमाणूनां कर्म्म विना कथं द्व्यणुकासमवायिकारणं संयोगमन्तरेण द्रव्योत्पत्तिरत आह। अदृष्टवदात्मसंयोगादेव सर्गादौ परमाणूनां कर्म्म तेन च कर्म्मणा सम्भूय परमाणवो द्व्यणुकादिक्रमेण अयोनिजं देवर्षीणां शरीरमारभन्ते इत्यर्थः, उपलक्षणञ्चैतत् अधर्म्मविशेषाच्च क्षुद्रजन्तूनामूष्मजानां यातनामयानि शरीराण्युत्पद्यन्ते इत्यपि द्रष्टव्यम् देवर्षीणामयोनिजे शरीरे प्रमाणान्तरमाह। समाख्या अन्वर्था संज्ञा श्रुतिस्मृतीतिहासपुराणादिषु संज्ञायाश्चादित्वात् प्रसिद्धा तथाहि दुर्व्वासःप्रभृतयो मानसाः "अङ्गारेभ्यः समभवदङ्गिरा" इत्यादिका, तथाऽपि ज्ञायते सन्त्ययोनिजानि शरीराणि देवर्षीणामिति प्रमाणान्तरमाह। सर्गादौ या ब्रह्मादिसंज्ञा आदिभूता प्राथमिकी तया ज्ञायते अस्त्ययोनिजं शरीरमिति नहि तदा ब्रह्मणो मातापितरौ स्तः याभ्यां ब्रह्मादिसंज्ञा कृता स्यादिति भावः उपसंहरति। "सन्त्ययोनिजाः" "वेदलिङ्गाच्च वै॰सू॰" शरीरविशेषा इति शेषः उपसंहृतेऽतिदार्ढ्यं प्रमाणान्तरमाह। वेदो मन्त्रः स च लिङ्ग्यते ज्ञाप्यतेऽनेनेति वेदलिङ्गं ब्राह्मणम्, ततोऽप्ययोनिजं शरीरं प्रतिपद्यते इत्यर्थः। तथाहि ब्राह्मणम् "प्रजापतिः प्रजा अनेका असृजत् स तपोऽतप्यत प्रजाः सृजेयमिति स मुखतो ब्राह्मणमसृजत् बाहुभ्यां राजन्यमूरुभ्यां वैश्यम् पद्भ्यां शूद्रम्" इति, वेदोऽपि "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत" इत्यादिः, एवं योनिजमयोनिजञ्च पार्थिवशरीरमुक्तम्, आप्यं तैजसं वायवीयञ्चायोनिजमेव "ब्रह्मणो मानसा मन्वादय" इति उप॰ वृत्तिः। "किन्तु देहमयोनिजमिति" भाषा॰ का॰ उ॰ तद्भाष्ये च तं विध्यसक्तं यथा "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति" छा॰ उ॰ "तेषां जीवाविष्टानां खल्वेषु पक्ष्यादीनां भूतानामेषामिति प्रत्यक्षनिर्देशान्नतु तेजःप्रभृतीनां तेषां त्रिवृत्करणस्य वक्ष्यमाणत्वादसति त्रिवृत्करणे प्रत्यक्षनिर्देशानुपपत्तिः। देवताशब्दप्रयोगाच्च तेजःप्रभृतिषु इमास्तिस्रोदेवता इति। तस्मात्तेषां खल्वेषां भूतानां पशुपक्षिस्थावरादीनां त्रीण्येव नातिरिक्तानि बीजानि कारणानि भवन्ति। कानि तानीत्युच्यन्ते। आण्डजमण्डाज्जातं अण्डजमेवाण्डजं पक्ष्यादि। पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते। ते च पक्षिणां बीजम्। सर्पः सर्पाणां बीजम्। तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः भा॰। २अयोनिजदेहवति नरादौ च त्रि॰ "राघवाय तनयामयोनिजाम्" रघुः ३विष्णौ पु॰। "वाचस्पतिरयोनिज" इति वि॰ सह॰।

**अयोमय** त्रि॰ विकारे मयट् स्त्रियां ङीप्। लौहविकारे अस्त्रशस्त्रादौ। "निःक्षेपोऽयोमयः शङ्कुर्व्वज्रास्त्रे दशाङ्कुलः" गुरुतल्पग्रभिभाष्यैनस्तप्ते स्वप्यादयोमये" इति च मनुः।

**अयोमल** न॰ अयसो मलमिव। (वीहगू) इतिख्याते लौहमले तत्किट्टे "शताद्‌र्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम्" अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् यल्लौहं यद्गुणं प्रोक्तं तत्किट्टं चापि तद्गुणमिति" राजनि॰।

**अयोमुख** न॰ अयोविकाररूपं मुखं यस्य। १लाङ्गलादौ "भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्" २अग्रलौहयुक्ते त्रि॰ "भित्त्वाजः "कुम्भमयोमुखेन" रघुः। अय इव कठिनं मुखं यस्य। ३लौहतुल्यकठिनमुखे विहगादौ "अयोमुखाः सूचीमुखाः अथोविकृतमुखाः पिशाचा क्रव्यादो वातरंहसः अथ॰ ११,१०,३। "श्वानो भीषणकाया अयोमुखानि वयांसि जले स्थप्रपक्षिणश्च मज्जाः भा॰ शा॰ प॰। ४असुरभेदे पु॰। "शङ्कुकर्णो विराधश्च गवेष्ठी दुन्दुभिस्तथा अयोमुखः शम्बरश्च कपिलोवामनस्तथा हरिवं॰। अयःसुवर्णं मुखमाद्यं यस्य। सुवर्णादिधातौ "अयोमुखैव विपुलः पर्व्वतो धातुभिर्युतः इति हरिवं॰ तत्र भवः कुम्रादि॰ छ। अयोमुखीयः तद्भवे त्रि॰।

**अयोरस** पु॰ ६त॰। लौहमले। ताप्यमानाल्लौहात् यद् पृथग् भवति तस्मिन् "सर्व्वायोरसाग्रचूर्णैः स्वङ्गाः संसृज्ये काल्या॰ १५,५,८, "अयोरसः लोहसिङ्घानः

किट्ट इति यः प्रसिद्धः कर्क॰ ‘अथैतत्त्रयं पिष्टं भवति शर्कराश्मायोरसस्तेन संसृजति” श॰ ब्रा॰ ।

**अयोहृदय** त्रि॰ अय इव कठिनं हृदयमस्य । कठिनचित्ते दयाशून्यचित्ते । “सुहृदयोहृदयः प्रतिगर्जताम् रघुः ।

**अश्मन्** त्रि॰ अश–मनिन् । १गन्तरि २गमनसाधने च “समानमश्मन् पर्य्येति जाम्दविः” ता॰ब्रा॰ “अश्मन् अश्मनि गमनसाधने रथे उपविष्टः” भा॰ ।

**अर** पु॰ इयर्त्ति गच्छत्यनेन ऋ–अच् । १चक्रस्य २नाभिनेम्योर्मध्यस्थे काष्ठे ३शीघ्रे च ४शीघ्रतादियुक्ते त्रि॰ । “गलद्धोल्बणासृग्ज्वालनाभिचक्रया विराजमानां नवयोदरश्रियां” माघः उदरा उन्नता अराश्चक्रशलाका इति मल्लि॰ “विभुरराश्च नेमिः परिभूरजायथाः ऋ॰१ १४,८ “अरा इव रथनाभावित” श्रुतिः “यस्यद्धोऽग्निं स पर्य्यतारा नाभिमिवाभितः” अथ॰ २,१०,६, “अरा इवाग्ने नेमिरिति” शत॰ब्रा॰। एवमस्य पुंस्त्वेन प्रयोगात् “रोपधः” ६।७ पृष्ठे दर्शितात् पा॰ सूत्राच्च पुंस्त्वे स्थिते मेदिनीकरोक्तं क्लीवत्वं शीघ्रतायामेवान्वितं न तु चक्राङ्गेऽपि । “यदपि च तच्चक्रं द्वादशारं षड् कुमाराः परिवर्त्तयन्ति तेऽपि षड्तवः संवत्सरचक्रम्” भा॰आ॰प॰ । द्वादश मासा अरा इव यस्य तदर्थः । “पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्नातस्थुर्भुवनानि च विश्वा” ऋ॰१,१६४,१२ पञ्चारे पञ्चर्त्तुरूपैररैर्युक्ते हेमन्तशिशिरयोरेकत्वाभिप्रायेण पञ्चर्त्तुता” भा॰ ४ कोणे “त्रिपञ्चारे पीठे शवशिवहृदीति” श्यामास्तवः । संज्ञायां कन् । ५शैवाले “मापडोति” ख्याते ६पर्पटे च पु॰।

**अरक्षस्** त्रि॰ नास्ति रक्षो रक्षस्तुल्यं बाधकं यस्य । “बाधकरहिते । “जिघर्म्यरक्षसा मनसा च तज्जुषेत” ऋ॰२,१०,५ । “अरक्षसा बाधकरहितेन मनसा” भा॰ ।

**अरचित** त्रि॰ न रचितः । रचितभिन्ने । “पादं स्वामिन्यरचिते” स्मृतिः ।

**अरग्वध** पु॰ष्ट॰ वृक्षः । आरग्वधशब्दे (सुंदाली) ।

**अरघट्ट** पु॰ अरं शीघ्रं घट्टते चाल्यतेऽसौ । १महाकूपे, २कूपोपरिनिबद्धजलोत्तोलनकाष्ठे च । “अथ कूपमासाद्यारघट्टघाटिकामार्गेण सर्पस्तेनानीतः” । “तदाकर्ण्य स अरघट्टघाटिकामार्गमक्रमाच्चिल्वेति” च पञ्चत॰ स्वार्थे कन् । तत्रैव ।

**अरङ्कृत्** त्रि॰ अलं करोति अलम्+कृ–क्विप् लस्य रः । १अलङ्कारिणि “त्वमग्ने ! द्रविणोदा अरङ्कृते” ऋ॰ २,१,६,० “अरङ्कृते अलङ्कुर्वते” भा॰ हविष्मन्तो अरङ्कृतः ऋ॰१,१४,५, भा॰ अलङ्कृतः अलङ्कुर्वतः “कपिलकादीनां संज्ञाछन्दसोः” लस्य रः भा॰। २पर्य्याप्तकारिणि च “उरुधारामरङ्कृतम् ऋ॰ ८,९,१०, “अरङ्कृतं पर्य्याप्तकारिणमिन्द्रम्” भा॰ ।

**अरङ्कृत** त्रि॰ अलं क्रियते स्म अलम्+कृ+क्त लो रः । अलङ्कृते भूषिते “यमोह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः” ऋ॰१०,१४,१३, अरङ्कृतः बहुभिर्द्रव्यैरलङ्काररूपैर्युक्तः” भा॰ ।

**अरङ्कृति** स्त्री अलम्+कृ+क्तिन् लस्य रः। अलङ्कारे भूषायाम् “का ते अस्त्यरङ्कृतिः सूक्तैः” ऋ॰७,२९,३ । “अरङ्कृतिरलङ्कृतिः” भा॰ ।

**अरङ्गम** पु॰ अलं पर्य्याप्तं गमोगतिः लस्य रः । पर्य्याप्तगमने “अरङ्गमाय जग्मयेऽपश्चाद्दघ्वने नरे” ऋ॰६,४२,१, “अरङ्गमाय पर्य्याप्तगमनाय” भा॰ ।

**अरजस्** त्रि॰ रञ्ज असुन् नलोपः न॰ब॰ । १रजोगुणकार्य्यकामक्रोधादिशून्ये । “अजरममरमभयमक्षतमरजं” इति शत॰ब्रा॰ वा कप् । अरजस्कोऽप्यत्र । २अनार्त्तवायां नग्निकायां स्त्री । भृशा॰ अभूततद्भावे क्यङ् सलोपश्च, अरजायते ।

**अरज्जु** न॰ नास्ति रज्जुर्बन्धनसाधनं यत्र । १बन्धनागारे रज्जुहीनत्वेऽपि बन्धनहेतुत्वात् तथात्वम् । “अरज्जौ दस्यून्त्समुनब्दभीतये” ऋ॰२,१३,९, “अरज्जौ बन्धनागारे” भा॰ २रज्जुरहिते रोगादौ च “सेतृभिः रज्जुभिः सिनीथः, ७,८४,२, रज्जुरहितैः रोगादिभिः भा॰ ।

**अरटु(लु)** पु॰ अरं शीघ्रमटति अट–अल वा उन् शक॰ । (शोना) वृक्षे इति ख्याते कश्यादि॰ क । डलयोरैक्यात् अरडुकः तद्भवे त्रि॰ ।

**अरट्व** पु॰ न रटति रट–वन् न॰त॰ । दुष्मन्तोन्मपतिमन्त्रिभेदे “अरट्वे अक्षे नहुषे सुकृत्वनि” सुकृत्तराय सुक्रतुः” ऋ॰ ८,४५,१७ अरट्वे अक्षे नहुषे सुकृत्वनि च एते तस्य राज्ञोऽध्यक्षाः” भा॰ ।

**अरण** त्रि॰ नास्ति रणं युद्धं यस्य । १युद्धशून्ये “अरणं मरणं समयात् समयात्” भट्टिः नास्ति रणः शब्दो येन । वाक्सङ्गरहिते २रिपौ “ब्रह्मराजन्याभ्यां शूद्राय चार्य्याय स्वाय चारणाय” यजु॰ १६,२, “अरणाय पराय वाक्सङ्गरहिताय शत्रवे” वेददी॰। ३अरणमात्ये पु॰साधुः। “योनः स्वो अरणो यश्च निष्ट्यो जिघांसति” ऋ॰६,

७१,१८ "अरणोऽरममाणः" इति भा०। ४दुःखिते "मा भूम निष्ट्या इवेन्द्र! अरणा इव" ऋ०८,१,१३, "अरणा अरममाणाः दुःखिनः" भा०।

**अरणि** पु० ऋ–अनि। १सूर्य्ये 'गणियारीति' ख्याते २वृक्षे। ऋच्छति प्रापयत्यग्निम्। ३अग्निमन्थनकाष्ठे द्वि०। स्त्रियां ङीप्। "जाते पुत्रेऽरणीं मथित्वेति" श्रुतिः "आत्मानमरणिं कृत्वा" पुरा० "अग्न्युद्धारयज्ञे ६२पृष्ठे विवरणम् "अरणीसहितं मन्थं ब्राह्मणस्य तपस्विनः। मृगस्य घर्षमाणस्य विषाणे समसज्जत" भा०व०प०। "ततः पुनर्महात्मानः पाणिं वेनस्य दक्षिणम्। अरणीमिव संरब्धा ममन्थुर्जातमन्यव" इति हरिवं०। "पराशरकुलोद्भूतः शुकोनाम महातपाः। भविष्यति युगे तस्मिन् महायोगी द्विजर्षभः। व्यासादरण्यां संभूतो विधूमोऽग्निरिव ज्वलन्" हरिवं०। अरणीमधिकृत्य कृतोग्रन्थः ठक्। आरणेयम् भारतवनपर्व्वान्तर्गते अरणीहरणाधिकारेण व्यासकृतेऽवान्तरपर्व्वभेदे।

**अरणिक** पु० अरणये अग्निमन्थनकाष्ठाय साधु ठन्। अग्निमन्थनकाष्ठसाधने अग्निमन्थनवृक्षे।

**अरणीकेतु** पु० अरणी केतुरस्य। अग्निमन्थनवृक्षे राजनि०।

**अरणीसुत** पु० ६त०। शुकदेवे "स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः"। अरणीसहिते गृह्य मन्थानग्निचिकीर्षया। अथ रूपं परं राजन् बिभ्रतीं स्वेन तेजसा। घृताचीं नामाप्सरसमपश्यद्भगवानृषिः। ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः। अभवद्भगवान् व्यासो वने तस्मिन् युधिष्ठिर!। सा च दृष्ट्वा तदा व्यासं कामसंविग्नमानसम्। शुकीभूत्वा महाराज! घृताची समुपागमत्। स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम्। शरीरजेनानुगतः सर्व्वगात्रातिगेन ह। स तु धैर्य्येण महता निगृह्णन् हृच्छयं मुनिः। न शशाक नियन्तुं तत् व्यासः प्रविसृतं मनः। भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः। यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया। अरण्यामेव सहसा तस्य शुक्रमवापतत्। सोऽविशङ्केन मनसा तथैव द्विजसत्तमः। अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप!। शुक्रे निर्मथ्यमाने स शुको जज्ञे महातपाः। परमर्षिर्महायोगी अरणीगर्भसम्भवः। यथाऽध्वरे समिद्धोऽग्निर्भाति हव्यमुदावहन्। तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा" भा०शा०प०।

**अरण्य** पु०न० अर्य्यते शेषे वयसि ऋ–अन्य। १वने, कक्षादि। "माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्" चाणक्यः। "सावित्रीमप्यधीयीत गत्वारण्यं समाहितः। गृहे गुरौ वारण्ये वा निवसन्नात्मवान् द्विजः" मनुः। "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्" मनुना अन्त्ये वयस्येव अरण्यवासविधानात्तस्य तथात्वम्। स्वार्थे कन् तत्रैव। "य एनमेव विन्दन्ति ये चारण्यकमाश्रिताः" या०स्मृ०। २कट्फलवृक्षे पु०। उत्करादि०चतुरर्थ्यां छ। अरण्यीयः अरण्यसन्निकृष्टदेशादौ त्रि०। अरण्येऽध्येयः वुञ्। आरण्यकं वनपाठ्ये अनुवाकभेदे "आरण्यकमधीत्य च" मनुः। अरण्यमधिकृत्य कृतः ग्रन्थः आरण्यम् रामायणान्तर्गतारण्यकाण्डे।

**अरण्यकदली** स्त्री अरण्यस्यैव कदली। गिरिकदल्यां तस्या ग्रामादावनुत्पत्तेस्तथात्वम्। [ग्रन्थभेदे।

**अरण्यकाण्ड** न० रामायणान्तर्गते रामस्य वनगमनवर्णनात्मके

**अरण्यकार्पासी** स्त्री अरण्ये कार्पासी। (वनकापास) इति ख्यातायां वनकार्पास्याम्।

**अरण्यकुलत्थिका** स्त्री अरण्यस्य कुलत्थिका। (वनकुलथीति) ख्यातायाम् वनकुलत्थिकायाम्।

**अरण्यकुसुम्भ** पु० ६त०। वनकुसुम्भे।

**अरण्यगज** पु० अरण्यस्थो गजः। दुर्दान्तगजे।

**अरण्यगान** न० अरण्ये गीयते कर्म्मणि ल्युट्। सामवेदान्तर्गते अरण्ये गेये गानभेदे। [भेदे राजनि०।

**अरण्यघोली** स्त्री अरण्यजा घोली। वनघोल्यां पत्रशाक-

**अरण्यचटक** पु० ६त०। वनचटके।

**अरण्यचन्द्रिका** अरण्ये चन्द्रिकेव निष्फला द्रष्टुरभावात्। निष्फलभूषणे। लोके हि चन्द्रिका उन्मीलितनेत्रपङ्क्तिभिरालोक्यते अरण्ये तु लोकाभावेन दर्शकाभावात् दर्शनेन प्रीतिजनिका न भवतीति तस्याः यथा निष्फला शोभा एवमन्यस्यापि तथा, अतएव "स्त्रीणां प्रियालोकफलो हि वेषः" इति कुमा० व्याख्यायां मल्लिनाथेन "अन्यथा अरण्यचन्द्रिका स्यादित्युक्तम्"।

**अरण्य(ण्ये)चर** त्रि० अरण्ये चरति चर–ट ७त० वा अलुक्स०। वनचरे व्याधादौ।

**अरण्यज** त्रि० अरण्ये जायते जन–ड उप०स०। वनजाते।

**अरण्यजार्द्रक** न० अरण्ये जायते जन–ड कर्म्म०। (वन आदा) इति ख्याते वनार्द्रके।

**अरण्यजीर** पु० । ६त० । वनजीरके ।

**अरण्यजीव** त्रि० अरण्येन तद्भवफलादिना जीवति जीव-क । वनस्थफलादिना जीविकावति वानप्रस्थादौ ।

**अरण्यधर्म्म** पु० अरण्ये आचरणीयो धर्म्मः । वानप्रस्थधर्म्मे । स च धर्म्मः "गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् । सन्त्यज्य ग्राम्यमाहारं सर्व्वञ्चैव परिच्छदम् । पुत्त्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा । अग्निहोत्रं समादाय गृह्यञ्चाग्निपरिच्छदम् । ग्रामादरण्यं निःसृत्य निवसेन्नियतेन्द्रियः । मुन्यन्नैर्व्विविधैर्मेध्यैः शाकमूलफलेन वा । एतानेव महायज्ञान्निर्व्वपेद्विधिपूर्व्वकम् । वसीत चर्म्म चीरं वा सायं स्नायात् प्रगे तथा । जटाश्च बिभृयान्नित्यं श्मश्रुलोमनखानि च । यद्भक्ष्यं स्यात्ततो दद्याद्बलिं भिक्षाञ्च शक्तितः । अम्मूलफलभिक्षाभिरर्च्चयेदाश्रमागतान् । स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः । दाता नित्यमनादाता सर्व्वभूतानुकम्पकः । वैतानिकञ्च जुहुयादग्निहोत्रं यथाविधि । दर्शमस्कन्दयन् पर्व्व पौर्णमासञ्च योगतः । ऋक्षेष्ट्याग्रयणञ्चैव चातुर्म्मास्यानि चाहरेत् । उत्तरायणञ्च क्रमशो दक्षिणायनमेव च । वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशांश्चरूंश्चैव विधिवन्निर्व्वपेत् पृथक् । देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः । शेषमात्मनि युञ्जीत लवणञ्च स्वयंकृतम् । स्थलजौदकशाकानि पुष्पमूलफलानि च । मेध्यवृक्षोद्भवान्यद्यात् स्नेहांश्च फलसम्भवान् । वर्जयेन्मधुमांसञ्च भौमानि कवकानि च । भूस्तृणं शिग्रुकञ्चैव श्लेष्मान्तकफलानि च । त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्व्वसञ्चितम् । जीर्णानि चैव वासांसि शाकमूलफलानि च । न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् । न ग्रामजातान्यार्त्तोऽपि मूलानि च फलानि च । अग्निपक्वाशनो वा स्यात् कालपक्वभुगेव वा । अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोऽपि वा । सद्यःप्रक्षालको वा स्यान्माससञ्चयिकोऽपि वा । षण्मासनिचयो वा स्यात् समानिचय एव वा । नक्तञ्चान्नं समश्नीयाद्दिवा वाहृत्य शक्तितः । चतुर्थकालिको वा स्यात् स्याद्वाप्यष्टमकालिकः । चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्त्तयेत् । पक्षान्तयोर्वाप्यश्नीयाद्यवागूं क्वथितां सकृत् । पुष्पमूलफलैर्वापि केवलैर्वर्त्तयेत् सदा । कालपक्वैः स्वयंशीर्णैर्वैखानसमते स्थितः । भूमौ विपरिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् । स्थानासनाभ्यां विहरेत् सवनेषूपयन्नपः । ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिकः । आर्द्रवासास्तु हेमन्ते क्रमशो वर्द्धयंस्तपः । उपस्पृशंस्त्रिषवणं पितॄन् देवांश्च तर्पयेत् । तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः । अग्नीनात्मनि वैतानान् समारोप्य यथाविधि । अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः । अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः । शरणेष्वममश्चैव वृक्षमूलनिकेतनः । तापसेष्वेव विप्रेषु यात्रिकं भैक्ष्यमाचरेत् । गृहमेधिषु चान्येषु द्विजेषु वनवासिषु । ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् । प्रतिगृह्य पुटेनैव पाणिना शकलेन वा । एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् । विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः । ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः । विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये । अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः । आ निपाताच्छरीरस्य युक्तो वार्य्यनिलाशनः । आसां महर्षिचर्य्याणां त्यक्त्वान्यतमया तनूम् । वीतशोकभयो विप्रो ब्रह्मलोके महीयते" मनुः ६अ० ।

**अरण्यधान्य** न० ६त० । नीवारादौ वनधान्ये ।

**अरण्य(ण्यानाम्)पति** पु० अरण्यानां तत्रस्थानां चौराणां पतिः वा अलुक् समा० । चौराधिकारिणि रुद्रे "नमोनमो निचेरवे परिचरायारण्यानां पतये नमः" यजु० १६,२०, "रुद्रो हि लीलया चौरादिरूपं धत्ते यद्वा रुद्रस्य जगदात्मकत्वाच्चौरादयो रुद्रा एव ज्ञेयाः यद्वा स्तेनादिशरीरे जीवेश्वररूपेण रुद्रो द्विधा तिष्ठति तत्र जीवरूपं स्तेनादिशब्दवाच्यम् तदीश्वररुद्ररूपं लक्षयति यथा शाखाग्रं चन्द्रम्" वे०दी० । तस्य सर्व्वनियन्तृत्वेन चौराणामपि पतित्वं युक्तमेव "एष एव साधु कर्म्म कारयति तं यमुन्निनीषते एष एवासाधु कर्म्म कारयति तं यमधो निनीषते" इति श्रुत्या तस्य साध्वसाधुकर्म्मनियन्तृत्वोक्तेः पूर्व्वकृतकर्म्मसापेक्षत्वेन च न वैषम्यनैर्घृण्ये इत्याकरे व्यक्तम् । २ अरण्यचरव्याधपतौ च ।

**अरण्यभव** त्रि० अरण्ये भवति भू-अच् । वनभवे ।

**अरण्यमक्षिका** स्त्री ६त० । (डांश) इति ख्याते दंशे ।

**अरण्यमार्ज्जार** पु० अरण्ये मार्ज्जारः । वनविडाले ।

**अरण्यमुद्ग** पु० ६त० । वनमुद्गे ।

**अरण्ययान** न० अरण्ये यानम् । अयोग्यकाले वनगमने "अरण्ययाने सुकरे पिता माम्" इति भट्टिः ।

**अरण्यरक्षक** पु० अरण्ये रक्षकः । वनरक्षके वनेषु लोकरक्षार्थं राज्ञा नियुक्तसैन्यभेदे ।

**अरण्यराशि** अरण्यसंज्ञको राशिः। "मकरादिमार्द्धसिंहौ वन्यौ दिवसेऽजवृषभौ चेति" ज्योतिषोक्ते सिंहादिराशौ।

**अरण्य(ण्ये)रुदित** न० अरण्ये रुदितं रोदनम् सप्तम्या वा अलुक्। शान्त्युपायकारकश्रोतृशून्ये निष्फले १ रोदने २ तत्तुल्ये निष्फले वस्तुमात्रे च। लोके हि रोदने तद्रोदनशान्त्युपायोदयालुभिः क्रियते अरण्ये रोदने तु न कश्चित् तस्य शमयितेति तस्य निष्फलत्वम्।

**अरण्यवायस** पु० ६त०। (दाँड़काक) इतिख्याते द्रोणकाके।

**अरण्यवास** पु० अरण्ये वासः। वनवासे।

**अरण्यवासिन्** त्रि० अरण्ये वसति वस–णिनि। वनवासिनि १मुन्यादौ "एते हिमगिरेरुपत्यकारण्यवासिनः" इति शकु०। स्त्रियां ङीप्। सा च २ अत्यम्लपर्णीलतायां राजनि०। [ वार्त्ताके।

**अरण्यवास्तूक** पु० ६त०। (वनवेतो) इति ख्याते वन-

**अरण्यशालि** पु० अरण्यभवः शालिः। वनभवे नीवारादौ।

**अरण्यशूकर** पु० अरण्यस्य शूकरः। वनवराहे। [शूरणे।

**अरण्यशूरण** पु० शा०त०। वनभवे (ओल) इति ख्याते

**अरण्यश्वन्** पु० अरण्ये श्वेव हिंस्रः। वृके।

**अरण्यषष्ठी** स्त्री अरण्याय गन्तुं षष्ठी। ज्यैष्ठशुक्लषष्ठ्याम्। "ज्यैष्ठे मासि सिते पक्षे षष्ठी यारण्यसंज्ञिता। व्यजनैकरास्तस्यामटन्ति विपिने स्त्रियः" इतिः राजमा०।

**अरण्याध्यक्ष** पु० अरण्यरक्षणादौ अध्यक्षः। वनेषु लोकरक्षार्थं राजनियुक्ते सैन्यपतिभेदे।

**अरण्यानी** स्त्री महदरण्यं नि०ङीप् आनुक् च। महारण्ये। "यथारण्यान्याम्सत्साचरत" शत०ब्रा०।

**अरण्यायन** न० अरण्येऽयनं वानप्रस्थधर्म्मस्तद्विधाचरणमस्यस्य अच्। "यद् अरण्यायनमित्याचक्षते ब्रह्मचर्य्यमेव तदिति" स्तुते ब्रह्मचर्य्ये। "तदरश्च ण्यश्चार्णवावित्यादिना तत्रैव व्युत्पत्तिर्दर्शिता।

**अरण्येतिलक** पु० सप्तम्या अलुक्। वनतिलभेदे।

**अरण्येऽनूच्य** त्रि० अरण्ये अनूच्यः नियतपाठ्योमन्त्रो यस्य अलुक् समा० १ अरण्यमात्रपाठ्यमन्त्रेण संस्कृते पुरोडाशादौ "पश्चादरण्येऽनूच्याम्" १८,४,२०। "अरण्येऽनूच्या वक्तव्याः पठनीया मन्त्रा यस्यासौ अरण्येऽनूच्य" इति कर्क०। उत०अलुक्स०। २अरण्येऽनूच्ये (पाठ्ये) मन्त्रभेदे पु०। स च "उपयाम भीमसेत्यादिमन्त्रः स हि नियतमरण्ये पठ्यते" इति कर्क०। "वागेवारण्येऽनूच्यासोऽरण्येनूच्यो भवति" ता०ब्रा०। "अरण्येऽनूच्यः कश्चिदनुवाकः तेन हूयमानोऽपि पुरोडाशोऽरण्येऽनूच्यो भवति" भा०। अयमेव पक्षः श्रेयान् कर्कमते बहुव्रीहिणा अयथे सप्तम्या लुक् न स्यात् अलुक्समासस्य तत्पुरुषैकविषयत्वात् अत उपचारात् तत्सम्बन्धवाचकत्वं युक्तम् "सोऽस्यैषोऽवाङ् प्राण एतस्य प्रजापतेः सोऽरण्येनूच्यो भवति" शत०ब्रा०।

**अरण्यौकस्** पु०अरण्ये विधानेनओकोयस्य। १मुन्यादौ २वानप्रस्थे "वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः" शकु०

**अरत** त्रि० न रतः। १ अनतुरक्ते २विरते च। [त्रि०।

**अरतत्रप** पु० अरता विरता त्रपा यस्य। १ कुक्कुरे २लज्जाहीने

**अरति** पु० ऋ–अति। १क्रोधे। रम–क्तिन् न०त०। २अनवस्थितचित्ततायाम्, ३रागाभावे, "मुखं कषायमरतिर्गौरवं कण्ठवक्षसोः" सुश्रुतः। ४ रतिविरहे, ५उद्वेगे, "लाभोष्टवस्तुलाभेन चेतसो याऽनवस्थितिः अरतिःसा" इत्येवंरूपे ६ इष्टवियोगान्मनसोव्याकुलीभावे ७ असन्तोषे "भयमरतिं हि सद्वियोगः" इति। किरा० स्मरकृते ८ नायकदशाभेदे च स्त्री। "हृङ्मनःसङ्गसङ्कल्पाजागरः कृशताऽरतिः। ह्रीत्यागोन्मादमूर्च्छान्ताः इत्यनङ्गदशा दश" मल्लि०। सा च विषयविद्वेषं करोति। न०ब०। ९रागहीने त्रि०।

**अरत्नि** पु० ऋ–कत्नि रत्निः बद्धमुष्टिकरः स नास्ति यत्र। १विस्तृतकनिष्ठे बद्धमुष्टिहस्ते, २कफोणिमारभ्य कनिष्ठाङ्गुलिपर्य्यन्तपरिमाणे। अतस्ततः प्रमाणे मात्रच्। तत्परिमिते त्रि०। "अरत्निमात्रान्तरिते देशे" भवदेवः। "तासूत्तरतोऽग्नेर्निदध्यादरत्निमात्रे" कात्या०श्रौ०। "अरत्निमात्रं स्रुपकाः पत्रैर्द्वाङ्गुलसम्मितैः" सुश्रु०। ३ कफोणौ (कुनो) बाह्वोरवयवे। "भीमो धनुष्मानुपजान्वरत्निः" भट्टिः। "जघनेनाहवनीयमरत्नी संधत्त" शत०ब्रा०। ४बाहौ बाहुर्वा अरत्निः बाहुना वीर्य्यं क्रियते" शत०ब्रा०। वा कप्। अरत्निकोऽप्युक्तार्थे।

**अरथि** पु० अश्नुति रथिना सह युद्धभूमिम् अश–रथिन् सारथिः न०त०। सारथिभिन्ने। "अस्तनरथिविद्यमलव्यरथ्योः" ऋ० ६,६६,७, रथिः सारथिः न रथिअरथिः" ऋा०दीर्घः भा०। [ २ भग्नदन्ते हस्ते च

**अरद** पु० न जातोरदोयस्य। अजातदन्तावस्थे बाले

**अरध्र** त्रि० राध–हिंसने, कर्म्मणि रन् ह्रस्वश्च न०त०। शत्रु- "निरहिंस्ये उपसत्पस्य तवसस्त्वीयोऽरध्रस्य रध्रतरोबभूव" ऋ० ६,१८,४, राध–सिद्धौ रन् ह्रस्वः भा०।

२सम्बद्धे च "ता ह त्वद्दुर्निर्यदरंभमुपे त्वा" ऋ०६,६२, ३, अरभ्रम् सम्बद्धम् भा० ।

**अरन्तुक** न० कुरुक्षेत्रान्तर्गतसमन्तपञ्चकसीमाभूते स्थानभेदे । "तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकम्" इति भा०व०प० ।

**अरन्धन** न० अभावे न०त० । पाकाभावे स च सिंह-संक्रान्तौ कन्यासंक्रान्तौ च विधेयः "कर्कादिमद्यात् सिंहार्के सिंहार्द्धे सिंहकन्ययोः" । इत्याचारमार्त्तण्डोक्तेः तस्मिन् पर्य्युषितान्नभोजनविधानेन पाकाभावो गम्यते ।

**अरन्ध्र** त्रि० नास्ति रन्ध्रं छिद्रं यस्य । निविड़े छिद्ररहिते

**अरपस्** त्रि० नास्ति रपोदुरितं यस्य । पापशून्ये "शंयोररपोदधातन" ऋ०१०,१५,४, "तदस्मे शंयोररपोदधातन" ऋ० १०,३७,११ ।

**अरम्** अव्य० अल-अम् वा लस्य रत्वम् । १ वक्ष्यमाणेऽलमर्थे २ शीघ्रतायाञ्च । अरङ्कृतशब्दे अरङ्कृतिशब्दे च उदा० । ३ अलमर्थे च । "तस्मा अरं गमाय:" य० ११,५२ अरमिव गवामहे मीलक्षये अरंगमाय जग्मये" ऋ०८,४६,१७ ।

**अरम** त्रि० न रम्यतेऽत्र आधारे घञ् । अधमे ।

**अरमति** स्त्री अरमत्यर्थां पर्य्याप्ता वा मतिः । १पर्य्याप्तबुद्धौ २दीप्तौ च । "स्वादस्मे अरमतिर्वसूयुः ऋ०७,३४,२१ । "उप स्वैनमरमतिर्वसूयुः" श्रा०उ०।

**अरर** त्रि० ऋ-अरन् । १ कवाटे । "सरभसमररापि द्रागपाङ्क्त्व" वीर० च० । २छदापिधाने ३ वंशकोषे विश्वः ४ ऋषिभेदे पु० । गर्गा० यञ् । आरर्य्यस्तदपत्ये पुंस्त्री०

**अररि** पु०न० अच्छति ऋ+विट् अरमियर्त्ति ऋ-इन् । कपाटे

**अररिन्द** न० रा-कि इव ररिर्दाता नास्त्यन्योररिरस्य पिपा-सोपशमस्य अररिं पिपासोपशमं ददाति दा-क मुम्। जले निरु०। "अधारयदररिन्दानि सुक्रतुः" ऋ०१।२९।१०। भाष्ये मागुक्ता अन्या च व्युत्पत्तिर्दर्शिता । 'यद्वा-अररिरित्येतत् गमनं औणादिकोऽरिप्रत्ययः । आतोऽनुपसर्गे कः पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । तद्ददतीत्यररिन्दान्युदकानि चेष्टाप्रदानीत्यर्थः । 'आपोमयाः प्राणा" इति श्रुतेः । यद्वा ररिर्दानं न विद्यते दानं यस्य । यद्वा ररिर्दानं न विद्यते ताहशं दानमितरस्मात् तदररि अन्यैरदेयं लोकोपकारि भोगं ददतीत्यर्थः" इति ।

**अररिवस्** त्रि० रा-क्वसु: ररिवान् न०त० । अदातरि । "योनो अग्ने अररिवाँ अघायुररातीः" ऋ० १,१४७,४ ।

**अररु** पु० ऋ-अरु। १यमौ सि०कौ०। २आयुधे उज्ज्वद० ३ गमनस्वभावे त्रि० अररुं, "दूर मर्त्यं परिष्णवा मर्त्यं ऋ० १,१२९,२, 'अररुं' गमनस्वभावम्' भा०।

**अररुस्** पु० ऋ-अरुस् । अर्तेररुः इति" इत्यं शान्तमिति माधवः । उपद्रवकर्त्तुमागते शत्रौ "मा नः शंसो अररुषो धूर्त्तिः" ऋ०१,१८,३, । "अररुषः उपद्रवं कर्त्तुमस्मत्-समीपे प्राप्तस्य शत्रुरूपस्य मनुष्यस्य" भा० ।

**अररे** अव्य० अरं शीघ्रं राति रा-के । शीघ्रं प्रत्युत्तर लाभेच्छया कृते अतिव्यग्रतया संबोधने । तत्र नीचं प्रत्येव

**अरलु** पु० अरं लाति ला-कु-अ अरु कपिलका० रस्य लः वा। (शोना) श्योनाकवृक्षे । "अरलुत्वक्प्रियङ्गू च मधुकं दाड़िमाङ्कुरान् । अवाप्य पिष्टा दधनि यवागूं साधयेद्-द्रवम्" सुश्रु० । स्वार्थे कन् "तत्रैव । कपोतवङ्कारलुको वरुणः पारिभद्रक" इति सुश्रु०।

**अरव** पु० अभावे न०त०। १रवाभावे प्रतिषेधार्थक शब्दाभावे न०ब०। २तच्छून्ये त्रि० ।

**अरविन्द** न० अरान् चक्राङ्गानीव पत्राण्यपि विन्दते विद-श । पद्मे "सरसीषुरविन्दानां वीचिविक्षोभशीतलम् रघुः" "रविन्दधानेऽप्यरविन्दधाने" माघः "रागेण श्रियमरविन्दतः करार्थैः" माघः २सारसपक्षिणि ३ नीलोत्पले, ४ रक्तकमले ५ ताम्रे च । [नाभे विष्णौ ।

**अरविन्दनाभ** पु० अरविन्दं नाभौ यस्य अच् समा०। पद्म-

**अरविन्दाक्ष** त्रि० अरविन्दमिव मनोहरमक्षि यस्य अच् समा० स्त्रियां ङीप् । १ पद्मसदृशनेत्रे २ पुण्डरीकाक्षे विष्णौ पु०। "पद्मनाभोऽरविन्दाक्षः" विष्णु सह० ।

**अरविन्दिनी** स्त्री अरविन्दस्य सन्निकृष्टदेशादि इति ङीप् । १पद्मयुक्ते देशे २पद्मलतायाञ्च। तेषां संघः इति । ३ पद्मसमूहे ।

**अरश्मन्** त्रि० नास्ति रश्मिरस्य वेदे बा० अनिच्समा० । प्रग्रहरज्जुरहिते रथादौ "अरश्मानो येऽरथा अयुक्ताः" ऋ० ६,६,७,२,० । "अरश्मानो रज्जुरहिताः" भा० ।

**अरस** पु० अभावे न०त० । १ आस्वादाभावे । रस्यते आस्वाद्यते कर्म्मणि अच् । आस्वाद्यं मधुरादि न०त० । २ मधुरादिरसभिन्ने ३ अप्रकृष्टरसे। न०ब० । ४ रसशून्ये त्रि० "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" श्रुतिः ५ असारे त्रि० । "इषिकस्यारसं विषमरसं इषिक ! ते विषम्" ऋ० १,१९१,१६, "अरसमसारमिति भा०" । रसं वेत्ति अच् न०त०। रसज्ञभिन्ने । "किमस्थानाम स्वादरसयुरसानादरभरैः" नैष० ।

**अरसिक** त्रि० रसं वेत्ति रस+ठन् न०त० । रसानभिज्ञे "अरसिकेषु रहस्य निवेदनं शिरसि मा लिख" इत्युद्भटः ।

**अराग** पु० अभावे न० । १ अनुरागाभावे रञ्जनाभावे च न०ब० । २रागशून्ये त्रि० । "तमहमरागमकृष्णम्" वेणी० ।

**अरागिन्** त्रि० न रागी न०त० । विरक्ते स्त्रियां ङीप् ।

**अराजक** त्रि० नास्ति राजा यत्र कप् । राजशून्ये देशादौ "अराजको हि लोकोऽस्मिन् सर्व्वतो विद्रुते भयात्" मनुः । [ द्राजन्यप्रसूतितः" मनुः ।

**अराजन्य** पु० न०त० । क्षत्रियभिन्ने "राज्ञो न धनमन्विच्छे-

**अराजिन्** त्रि० राजा अधिष्ठातृत्वेनास्त्यस्य ब्रीह्या० इनि न०त० । १ राजानधिष्ठिते "वि पर्व्वताः अराजिनः" ऋ० १,७,२२ । अराजिनः राज्ञा केनचित्स्वामिना ऽनधिष्ठिताः" भा० । न राजते राज–इनि । २दीप्तिशून्ये त्रि० स्त्रियामुभयतो ङीप् ।

**अराजीव** पु० अरम् चक्राङ्गं तत्साधनम् आजीवति आ+ जीव अच् उप०स० । १रथकारे । राजीवं पद्मम् न०ब० । २पद्मशून्ये जलादौ त्रि० ।

**अराति** पु०न राति ददाति सुखं रा+क्तिच् न०त० । १शत्रौ । "देशः, सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः" वेणी० अरिशब्दे विवृतिः । ज्योतिषोक्ते २षष्ठस्थाने । "आरातिव्ययोः षष्ठे अष्टमे मृत्युरन्ध्रयोः" इत्युक्तेः षष्ठस्थाने अरिकृतशुभाशुभचिन्तनीयत्वात्तथात्वम् कामादिष्वान्तररिपुषु ४षट्संख्यायां कामादीनामान्तररिपूणां संख्या-साम्यात् । ५अभिगमनशीले च "मा पाप्यत्वेनिनुभामरा-तयः" ऋ०७,८२,५, । "विश्वा अग्नौ अरातीः ऋ० ८,७६,२, अरातीः अभिगमनशीलाः शत्रवोवा भा० भावे क्तिन् अभावे न०त० । ६ दानाभावे स्त्री "मा नो अरातिरीशत" ऋ० २,७,२ । "अरातिरदानम् शत्रुर्वा वेदे शत्रौ अरातिशब्दः स्त्री" भा० । अरातिरिवा-चरति । आत्मनः अरमिच्छति क्यच् अरातीयति । शत्रुतुल्यमचरति तदिच्छति वेत्यर्थे । "य उक्त यजमने यारातीयति" शत० ब्रा० । योऽस्मभ्यमरातीयात्" यजु० ११, ८० । [अथ० १०,६,१ ।

**अरातीयु** त्रि० अरातिरिव आचरति अराति+क्यच्–उ । शत्रुतुल्याचारशीले "अरातीयोर्भ्रातृव्यस्य दुर्हृदः"

**अरातीवन्** त्रि० अरातिमिच्छति वेदे मत्वर्थीयोवनिप् पूर्व्वपददीर्घश्च । शत्रुतुल्याचारयति । "अघायुररातीवा मर्च्चयति द्वयेन" ऋ०१,१४७,४ ।

**अराधस्** त्रि० राधः धननाम निरु० । तन्नास्ति यस्य । धनरहिते 'कदामर्त्तमराधसम्' ऋ०१,८४,८, "अराधसम् राधसा धनेन रहितम्" भा० 'पदा पर्णीं रराधसो निबाधस्व' ऋ०८,६४,२ "अराधसं धनहीनम् यजनम्"भा० ।

**अराय** त्रि० नास्ति राधनं यस्य वेदे पच् समा० । १धनशून्ये स्त्रियां ङीप् । "अपसृज्य वा यातुधानानप सर्व्वा अराय्यः" अथ० ४,१८,८ रा+भावे घञ् रायोयज्ञादौदानम् न०ब० । २तच्छून्ये त्रि० । "नारायासो न जल्हवः" ऋ० ८।६१।११, "अरायाः अधनाः अहविष्का वा" भा० "अरायेभ्यो-जिघत्सुभ्य इमं मे परिरक्षत" अथ० ८,२,२० ।

**अराल** पु० ऋ-णिच् अरमालाति आ+ला–क । १ सर्ज्ज-रसे २ मत्तहस्तिनि । ३ कुटिले त्रि० । "तत्रामरालयम-रालमरालकेशी" नैष० "भित्त्वा निराक्रामदरालकेश्याः" रघुः "नीतक्रमात्मीयमरालपक्ष्मणः" कुमा० । ४ वेश्यायां स्त्री

**अरावन्** त्रि० रा–वनिप् न०त० । अदातरि । "अरावा चन मर्त्यः" ऋ०८,८,४, 'पाहि धूर्त्तेरराव्णः, ऋ०१,३६, १५ स्त्रियां ङीप् वनोरच । अरावरी ।

**अरि** पु० ऋ–इन् । १ शत्रौ २ रथाङ्गे, चक्रे, ३विट्खदिरे, ४कामक्रोधलोभमोहमदमात्सर्येषु षट्सु, तत्संख्यासाम्यात् ५षट्संख्यायां, ६ ज्योतिषप्रसिद्धे लग्नावधिके षष्ठस्थाने ७ ईश्वरे च । तत्र शत्रौ "दूरात्प्रशमितारिभिः" 'विजि-तारिपुरः पुरः" रघुः । "नारीणामनुकूलमाचरसि चेज्-जानासि" का०प्र० "अरिकारिहरणार्थम्" लीला० । "नारिं न मित्रं यं विद्यात्तं श्राद्धेभोजयेत् द्विजम्" मनुः । चक्रे "गदारिखड्ग पद्माढ्यक्" विष्णुध्यानम् । कामादौ "हतारिषड्वर्गजयेन" किरा० । ईश्वरे अरिधामन् शब्दे ऋ०विट्खदिरे अरिमेदः । "सितासितौ चन्द्रमसो न कश्चित् बुधः शशी सौम्यसितौ रवीन्दू । रवीन्दुभौमा रवितस्त्वमित्रा" इति ज्योतिषोक्तेषु रव्यादीनां दशुक्रमन्दादिषु । यथा रवेः शुक्रशनी, कुजस्य बुधः, बुधस्य शशी, गुरोः बुधशुक्रौ शुक्रस्य रविचन्द्रौ" शनेः रविचन्द्रभौमाः । "नीचस्थितेऽरि-गेहगेऽथ पराजिते वा जीवे भृगौ व्रतविधौ स्मृतिकर्म्महीनः" ज्योति० एते च नैसर्गिका अरयः तात्कालिकास्तु "चतुर्दश-वित्तान्त्यविनाशस्थाः परस्परम् । तत्कालमित्राण्युक्तस्थः केचिदुक्तोऽन्यथा रिपुः" ज्योतिषोक्तेः तत्काले तत्तद्राशिस्थ-ग्रहापेक्षया २,३,४,१०,११,१२ स्थानभिन्नेषु १,५,६, ७,८,६ स्थानेषु स्थिताः ग्रहाः तथाहि कर्म्मकाले ये ग्रहा यत्र राशौ तिष्ठन्ति तेषां यदपेक्षया १,५,६,७,८,६,स्थान

स्था यग्रहास्ते तेषां तत्कालिकारयो भवन्ति तएव ग्रहा यदि नैसर्गिकरिपवस्तदा अधिशत्रवः नैसर्गिकसमाश्चेत् रिपवः, इति भेदः । यथोक्तं हितसमरिपुसंज्ञा ये निसर्गे निरुक्ताः अधिहितहितमध्यास्तेऽपि तत्कालमित्रैः । रिपुसमसुहृदाख्या ये निसर्गोपदिष्टा अधिरिपुरिपुमध्याः शत्रुभिश्चिन्तनीयाः इतिराजमा०। निसर्गसमाश्च "बुधःकुजेज्यास्फुजिदर्कपुत्राः शुक्रार्कजौ, भौमसुरेज्यमन्दाः, । शनिः, कुजेज्यौ, सुरराजमन्त्री रव्यादितोऽमी समसंस्थिताः स्युः" इत्युक्ताः यथा रवेः बुधः, चन्द्रस्य कुजगुरुशुक्रशनयः । कुजस्य शुक्रशनी, बुधस्य कुजगुरुशनयः । गुरोः शनिः, शुक्रस्य कुजगुरू शनेः गुरुः, एतेषां क्रमेणैते समास्त एव समा अपि तात्कालिकरिपवश्चेत् रिपव इति अवगन्तव्यम् । एतेषां बलज्ञानार्थं तत्तत्संज्ञा तथाहि अधिमित्रस्थे २२।३०कला बलम् मित्रस्थे १५ कलाः, समस्थे ११।१५कलाः शत्रुगेहे ७।२ कलाः अधिशत्रुस्थे ३।४५ कलाबलम् ।मूलं जातकादौ दृश्यम् । नैसर्गिकरिपुता तु सर्वकार्यमात्रे इति भेदः। एतच्च जातोक्तग्रहादिबलज्ञानोपयोगि। ताजके तु "दृष्टिः स्यान्नवपञ्चमे बलवती प्रत्यक्षतः स्नेहदा पादोना (४५कलाः) ऽखिलकार्यसाधनकरी मेलापकाख्योच्यते । गुप्तस्नेहकरी तृतीयभवने कार्यस्य संसिद्धिदा त्र्यंशोना कथिता (४०कलाः) तृतीयभवने षड्भागदृष्टिर्भवे (१०कलाः) । दृष्टिः पादमिता (१५कलाः) चतुर्थदशमे गुप्तारिभावा स्मृताऽन्योन्यं सप्तमभे तथैकभवने प्रत्यक्षवैराखिला" (६०कलाः) इति दृष्टिविशेषमभिधाय "पश्यन्मित्रदृशा (३,५,९,११,) सुहृत्, रिपुदृशा (१,४,७,१०,) शत्रुः। समस्त्वन्यथा २,६,८,१२, इति नील०उक्तदिशा तात्कालिकमित्रादि । तेन स्वापेक्षया १,४,७,१०, स्थानस्था ग्रहाः रिपवः । तत्र "स्वस्वाधिकारोक्तबलं सुहृद्भे पादोनमर्द्धं समभेऽरिभेऽङ्घ्रिः": नील० । राहोर्निसर्गरिपवस्तु "सूर्यः शशाङ्को धरणीसुतश्च राहो रिपुः" इत्युक्ता ज्ञेयाः । तत्कालिकास्तु प्रागुक्तदिशा ज्ञेयाः केतोस्तु "शुक्रशनी विपक्षौ" इत्युक्तौ ज्ञेयौ । जातके षष्ठस्थाने "षष्ठे च शत्रुविद्विषौ" इत्युक्तौ चिन्तनीयौ। ताजके तु "रिपौ मातुलमान्द्यारिचतुष्पाद्धन्यगोत्रजाः" इति नील० ताजकोक्ताः चिन्तनीयाः । ८ तन्त्रोक्ते मन्त्रभेदे ।

तथाहि षोडशकोष्ठात्मके सिद्धादिचक्रे चतुश्चतुःकोष्ठादिक्रमेण सिद्धः, साध्यः सुसिद्धः अरिरिति संज्ञा । तत्रापि तेषु चतुःकोष्ठात्मकेषु प्रत्येकं चतुर्थं कोष्ठमपि अरिसंज्ञं तथा च पञ्चमकोष्ठं सप्तमकोष्ठं त्रयोदशकोष्ठं एकादशंकोष्ठम् द्वादशं पञ्चदशं कोष्ठं षोडशं चेति सप्तकमरिसंज्ञं तस्यारिसंज्ञकत्वात् तत्रस्थवर्णा अप्यरिसंज्ञाः। षोडशकोष्ठस्थवर्णेषु मध्ये साधकनामाक्षरं यत्र तिष्ठति तस्यैवादित्वं प्रकल्प्य दक्षिणावर्त्तेन सर्वत्र चतुर्षु चतुःकोष्ठात्मकेषु गणना तथा च प्रथमादिकोष्ठस्थाक्षरादिको मन्त्रः सिद्धादिनामभाक् । यथा आद्यकोष्ठचतुष्टये प्रथमे १सिद्धसिद्धः २ द्वितीये सिद्धसाध्यः । तृतीये ३सिद्धसुसिद्धः ४ चतुर्थे सिद्धारिः । द्वितीयकोष्ठचतुष्के आद्ये साध्यसिद्धः द्वितीये साध्यसाध्यः। तृतीये साध्यसुसिद्धः चतुर्थे साध्यारिः । तृतीयकोष्ठचतुष्टये आद्ये सुसिद्धसिद्धः द्वितीये सुसिद्धसाध्यः । तृतीये सुसिद्धसुसिद्धः चतुर्थे सुसिद्धारिः । चतुर्थकोष्ठचतुष्के आद्ये अरिसिद्धः । द्वितीये अरिसाध्यः तृतीये अरिसुसिद्धः चतुर्थे अर्य्यरिरिति गणना । एतच्च प्रदर्शनमात्रमुक्तम् किन्तु सर्वत्र यत्र कोष्ठे साधकनामाक्षरं तदारभ्यैव गणना तथाच साधकनामाक्षरं यत्र तिष्ठति तत्कोष्ठस्यैवादित्वं प्रकल्प्य दक्षिणावर्त्तेन गणने मन्त्राक्षरं यत्र तिष्ठति तत्पर्य्यन्तगणनायां सिद्धादिषोडशसंज्ञा तथा च ३८ पृष्ठे दर्शिताऽकथहचक्रानुसारेण प्रथमादिसंज्ञा साधकनामाक्षरादिकल्पनयैव । तत्र सिद्धादिचक्रस्थकोष्ठानां प्रथमादिसंख्या या उक्ता सा न नियता अकथहचक्रशब्दे तन्मूलं दृश्यम् ।"अरिमन्त्रं न गृह्णीयादिति"तन्त्रम् । राशौ विषयानन्तरस्थे ९ नृपतौ । स च द्वादशराजचक्रमध्ये आदिभूतः यथोक्तं माघ २,८१ श्लोकव्याख्यायां मल्लि०। "अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । अरिमित्रस्य मित्रञ्च विजिगीषोः पुरःसराः" पञ्चेति शेषः "पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः" पार्ष्णिग्राहासारः आक्रन्दासारश्चेति चत्वार इति शेषः एवं नव भवन्ति विजिगीषुर्दशमः ":अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे। मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः" इति मध्यमोदासीनाभ्यां सह द्वादश इति । अरये साधु तस्मै हितं वा यत् । अराय्यं तत्र साध्वादौ त्रि० "असौ यो अधराद्गृहस्तत्र सन्त्वराय्यः" अथ० २,१४,३, । १० प्रेरके त्रि० अरिदूतशब्दे उदा० ।

**अरिक्थभाज्** त्रि० रिक्थं पित्रादिदायं न भजते भज–ण्वि अस०स०। दायानर्हेषु अनंशे क्लीवपतितादौ अनंशशब्दे १४३ पृष्ठेऽस्य विवरणम् ।

**अरिगूर्त्त(र्त्त)** पु० अरये तद्धननाय गूर्त्तः उद्युक्तः गुरी उद्यमे क्त तस्य न वेदे नत्वम् । शत्रुवधायोद्युक्ते “पर्षदरिगूर्त्तः सूरिः” ऋ० १,१८६,२ लोके तु अरिगूर्ण इत्येव ।

**अरिता** स्त्री अरेर्भावः तल् । शत्रुतायामनिष्टसम्पादने ।

**अरितृ** पु० ऋ–अन्तर्भूतण्यर्थे तृच् वेदे इट् । नाविके कर्णधारे “इयर्त्ति वाचमरितेव नावम्” ऋ० ६,६५,२, २,४२,१, लोके तु नेट् अर्त्ता गन्तरि स्त्रियां ङीप् ।

**अरित्र** न० ऋच्छत्यनेन ऋ–इत्र । (हालि( इति ख्याते १नौकाचालनकाष्ठे । “नौभिररित्रैरस्थैरिवाभितः” माघः “नौर्ह वा एषा स्वर्ग्या यद्धविर्यज्ञमानं तस्या ऋत्विज एव स्फ्याधारित्राय” शत०ब्रा० । २गमनसाधने वाहनादौ च “अरित्रं वां दिवस्पृथु” ऋ० १,४६,८, ‘अरित्रं’ गमनसाधनं नौरूपम्” भा० । “शतारित्रां नावमातस्थिवांसम्” ऋ० १,११६।५, ‘शतारित्रां बह्वरित्रां यैः काष्ठैः पार्श्वतोबद्धैर्जलालोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि” भा० । अरितः पापादितस्त्रायते त्रै–क । पापादितो २रक्षके त्रि० । “दशारित्रो मनुष्यः स्वर्षाः” ऋ० २,१८,१, “दशारित्रः अरिभ्य पापेभ्यस्त्रायन्ते इत्यरित्रा ग्रहाः दशसंख्याकाग्रहायस्य” भा० । काश्या० ठञ्जिठौ । तत्सम्बन्धिनि आरित्रिकः तद्वादौ च त्रि० जित् स्त्रियां ङीप् ।

**अरिदान्त** पु० अरिर्दान्तोयेन निष्ठान्तत्वात् विशेष्यस्यापि परनिपातः । यदुवंश्ये क्षत्रियभेदे । ‘रामे भारं समासज्य, युयुधाने च वीर्यवान् । अक्रूरे विष्टथौ चापि गदे च कृतवर्म्मणि । चक्रदेवे सुदेवे च सारणे च महाबले । निशठसत्वौ विक्रान्ते भङ्गकारे विदूरथे । उग्रसेनात्मजे कङ्के शतद्युम्ने च केशवः । राजाधिदेवे मृदरे प्रसेने चित्रके तथा । अरिदान्ते इन्द्रदमे श्वफल्के सात्यकौ पृथौ । इष्वान्धकेषु चान्येषु मुख्येषु । मधुसूदनः । गुरुमासज्य तं भारं ययौ द्वारवतीं प्रति” । इति हरिवं० ।

**अरिधायस्** त्रि० अरिभिरीश्वरैः धार्य्यते धा–असुन् पृ० युट् च । ईश्वरधार्य्ये । “अष्टावरिधायसोगाः” ऋ० १,१२६,५, अरिधायसः “अरिभिरीश्वरैः धार्य्यमाणा” भा० ।

**अरिनन्दन** त्रि० अरीन् शत्रून् नन्दयति तोषयति नन्द–णिच्–ल्यु उप०स० । शत्रुसन्तोषके अकृतेन्द्रियजये व्यसनासक्ते ।

**अरिन्दम** त्रि० अरीन् शत्रून् कामादीन्वा दाम्यति दमयति दम–अन्तर्भूतण्यर्थे खच् मुम् उप०स० । पराभिभावके १शत्रुतापके २जितकामादौ च । काश्या० ठञ्जिठौ आरिन्दमिकः । तत्सम्बन्धिनि त्रि० ञिति स्त्रियां ङीप् ।

**अरिप्र** त्रि० रिप्रमिति निरुक्ते पापनाम तन्नास्ति यस्य । पापरहिते “अरिप्रा इतहन्तमाः” ऋ० ८,८,६, “रिप्रमिति पापनाम” भा० । “तं वो वयं शुचिमरिप्रमद्य” । ऋ० ७,४७,१, “अरिप्रं पापरहितम्” भा० ।

**अरिमर्द्द** पु० अरिं रोगरूपं शत्रुं मृद्नाति मृद–अण् उ०स० १कासमर्द्दवृक्षे । २शत्रुतापके त्रि० ।

**अरिमर्द्दन** त्रि० अरिं मृद्नाति मृद–ल्यु–उप०स० । १शत्रुतापके गान्दिनीपुत्रे अक्रूरसोदरे श्वफल्कस्य पुत्रे यदुवंश्ये क्षत्रियभेदे “श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत । गान्दिनीं नाम तस्यार्थे गाः सदा प्रददौ पिता । तस्यां जज्ञे महाबाहुः श्रुतवानिति विश्रुतः । अक्रूरोऽथ महाभागो यज्वा विपुलदक्षिणः । उपमद्गुस्तथा मद्गुस्तु दरश्चारिमर्द्दनः । अरिक्षिपस्तथोपेक्षः शत्रुघ्नोऽथारिमर्द्दनः । धर्म्मभृद्यतिधर्म्मा च गृध्रभोजान्धकस्तथा आवाहाप्रतिवाहौ च सुन्दरी च वराङ्गना” हरिवं० ।

**अरिमेजय** पु० अरिमेजयति कम्पयति एज–णिच्–खश् मुम् उ०स० । शत्रुतापके अक्रूरसोदरे यदुवंश्ये क्षत्रियभेदे अरिमर्द्दनशब्दे विवृतिः ।

**अरिमेद** पु० अरेर्विट्खदिरस्येव मेदः सारः छन्दोऽस्य । (गुयेबाबला) १वृक्षभेदे । अरिरिव मेद्यति दुष्टत्वात् अल्पं स्निह्यति मिद–अच् । २विट्खदिरे । संज्ञायां कन् । ३कृमिभेदे तद्वर्णनायाम् “वाहूका पिप्पिटः कुक्षी वर्जकीटोऽरिमेदकः” सुश्रु० ।

**अरिल्ला** स्त्री ‘षोड़शकले विलासिनि ! छन्दसि प्रतिपदमन्ते यमकविलासिनि । अरिल्ला नाम पयोधरधारिणि ! शेषे नियतलघुद्वयधारिणि” “इत्युक्तलक्षणे मात्रावृत्तभेदे ।

**अरिष** पु० न इयर्त्ति मलं यस्मात् ऋ-किषन् न० त० । १अपानमांसजे रोगभेदे । न रिष्यति विच्छिद्यते रिष-क न०त० । २अविच्छिन्नधारावर्षणे न० ।

**अरिषड्वर्ग्ग / अरिषड्टक** न० षट् च अष्टौ च द्व० ततः परिमाणार्थे कन् षड्टकम् अरिस्वामिकं षड्टकं शाक० त० । विवाहे वर्जनीये योगविशेषे, तथाहि दम्पत्योः परस्पराश्रयापेक्षया परस्परस्य राशेः षष्ठत्वेऽष्टमत्वे वा अशुभं तयोः राश्योर्मित्रस्वामिकत्वे पुनर्न दोषः शत्रुस्वामिकत्वेऽतीव दोषः । यथोक्तं “मकरः कर्कटारिपुषा कन्या मेषेण सह झषस्तुलया । कर्किघटौ वृषधनुषी

इविकर्मिथुने चारिविधौ। यदि कन्याष्टमे मर्त्तुर्भर्त्तुः षष्ठे च कन्यका। षड्ष्टकं विजानीयात् वर्ज्जितं त्रिदशैरपि" ज्यो०त०। तत्र प्रतिप्रसवः। "मौहृदे शुभयोर्द्वयोरपि तयोरेकाधिपत्येऽपि वा ताराशुद्ध सुमित्रमित्रसुखदत्त्वेमार्थसम्पद्यदि। षट्काष्टे नवपञ्चमे व्ययधने योगे च पुंयोषितोः प्रोत्यायुःसुखवृद्धिपुष्टिजननं कार्य्यो विवाहः शुभः" मुज०भी०। अत्यन्तापद्विषये व्यासः। "मैत्रादियोगेऽपि षडष्टकादौ ताराविपत्प्रत्यरिनैधनाख्याः। वर्ज्ज्या विवाहे पुरुषोडुतो हि प्रीतिः परा जन्मसु तारकासु"। तत्रदानमुक्तम् तत्रैव। "षड्ष्टके गोमिथुनं प्रदेयमिति"।

**अरिषड्वर्ग** पु० षण्णां वर्गः समुदायः षड्वर्गः अरीणां कामक्रोधलोभमोहमदमात्सर्य्यरूपाणामन्तःशत्रूणां षड्वर्गः देवीभागवतवत् विष्णुभागवतवच्च सापेक्षत्वेऽपि गमकतया स०। कामादिषु षट्सान्तरेषु रिपुषु "कृतारिषड्वर्गजयेन" किरा०।

**अरिषण्य** त्रि० न रिषति हिनस्ति रिष हिंसायाम् अन्यक् न०त०। अहिंसके "श्वानेव नौ अरिषण्या तनूनाम्" ऋ०२,३९,४, "अरिषण्यावहिंसकौ श्वानौ" भा०।

**अरिष्ट** पु० रिष–हिंसायां कर्त्तरि–क्त न०त०। १लशुने २निम्बे। "सर्षपारिष्टपत्राभ्यां सर्पिषा लवणेन च "व्रणरक्षायां सुश्रुतः। "सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथेति" विद्रधिचिकित्सायां सुश्रुतः। ३ लङ्कानिकटवर्त्तिपर्व्वतभेदे ४काके ५कङ्के (रीठा) इति ख्याते ६फेनिलफलकवृक्षे। "अरिष्टकस्त्रिदोषघ्नोग्रहघ्नजिद्गर्भपातनः" वैद्य०। ७कृष्णहतेऽसुरभेदे। "यत्र गावुच्च मैन्दञ्च कंसं द्विविदमेव च अरिष्टं वृषभं केशिं पूतनां दैत्यदारिकाम्। नागं कुवलयापीडं चानूरं मुष्टिकं तथा। दैत्यान् मानुषदेहस्थान् सूदयामास वीर्य्यवान्" हरिवं०। ८अशुभे। ९तक्रे। १०सूतिकागृहे। "अरिष्टशय्यां परितोविसर्पिणा" रघुः तत्करणप्रकारस्तु "नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु बिल्वबन्धपोधतिन्दुकभल्लातकसर्षपदूर्व्वानिर्म्मितं शय्यागारं यथासंख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्ति सुविभक्तपरिच्छदं प्रागद्वारं दक्षिणद्वारं वाऽष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयम्" सुश्रु०। तत्र प्रवेशे "रोहिण्यैन्दवपौष्णे तु स्वातीवरुणयोरपि। पुनर्वसौ पुष्यहस्तधनिष्ठासूत्तरासु च। मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारमाविशेत्" नि० सि० तारा उक्ता। एतच्च सम्भवे "प्रसूति समये प्राप्ते सद्यएव प्रवेशयेत्" वशिष्ठोक्तेः। तच्च नैर्ऋत्यां वास्तुभूमौ कार्य्यम् "वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम्" वशिष्ठोक्तेः "दद्याद्गृहं सूतिकागारमायुधैश्च विशेषतः। वह्निना तिन्दुकालातैः पूर्णकुम्भैः प्रदीपकैः। मुषलेन तथा द्वारि वर्णकैर्लिखितेन च" विष्णु०पु०। ११अनिष्टसूचके उत्पाते भूमिकम्पादौ "अरिष्टे त्रिविधोत्पाते" इतिज्यो०। १२अनिष्टस्थानस्थेषु रव्यादिग्रहेषु। १३पानेनारिष्टकारके मद्ये। "रक्तारिष्टं शोषिताजीर्णशेषम्" माघः। "अरिष्टं लघु पाकेन सर्व्वतस्तु गुणाधिकम्। अरिष्टस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः" वैद्य०। मद्ये पुंस्त्वमपि भावप्र०। नास्ति रिष्टं यतोऽधिकम् ५ब०। १४मरणचिह्ने। "रोगिणो मरणं यस्मादवश्यं भावि लक्ष्यते। तल्लक्षणमरिष्टं स्यात् रिष्टमप्यभिधीयते" इति पुरा०। न०त०। १५शुभे न० ५ब०। १६ शुभदायके विधाने १७अविनाशिनि च त्रि०। १८ बलिपुत्रे दैत्यभेदे पु० "अरिष्टो बलिपुत्रश्च वरिष्ठोऽथ शिलायुधः" हरिवं० (कटकी) ख्यातायां १९ कटुकायां २०कश्यपपत्नीभेदे च स्त्री "अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खशा" इत्युपक्रम्य "कद्रुर्मुनिश्च राजेन्द्र! तास्वपत्यानि मे शृणु अरिष्टा तु महासत्वान् गन्धर्वानमितौजसः" हरिव०। रिष्टं हिंसा विरोधे न०त०। २१सुखेनावस्थाने न० "मर्त्तेभ्यो अरिष्टतातये" ता०ब्रा०। "अरिष्टं सुखेनावस्थानं तस्य ताततये विस्ताराय" भा०। स्वार्थे कन्। निम्बादौ।

**अरिष्टगातु** अरिष्टं हिंसितं गच्छति गम–तुन् नि० आदन्तादेशः। अहिंसितगमने। "अरिष्टगातुःसहोता–सहोभरिः", ऋ० ५,४४,२, "अरिष्टगातुरहिंसितगमनः" भा०।

**अरिष्टताति** अरिष्टस्य करः वेदे अरिष्ट+तातिल्। सुखकरणे 'जीवातवे न मृत्यवेऽथोऽरिष्टतातये' ऋ०१०,६०, ८, "ओषधीरक्षा अरिष्टतातये" यजु०। लोके तु तावत्त्विन्। अरिष्टविस्तारे "तदलभवतां निष्पन्नाशिषमरिष्टतातिमाशास्महे" वीरच०। क्वचिद्वेदेऽपि तथा अरिष्टशब्दे दृश्यम्।

**अरिष्टदुष्टधी** त्रि० अरिष्टेन मरणसूचकनिमित्तेन दुष्टा धीरस्य। आसन्नमरणसूचक-निमित्तेन दुष्टमतौ

**अरिष्टनेमि** पु०६त०। कश्यपपुत्रे विनतायाः पुत्रभेदे "तार्क्ष्य-

श्चारिष्टनेमिश्च गरुडश्च महाबलः। अरुणश्चारुणिश्चैव विनतायाः सुताः स्मृताः" भारि०।२तीर्थङ्करे जिनभेदे च।

**अरिष्टि** स्त्री न रिष्टिः हिंसा अभावे न०त०। हिंसाभावे। "प्रोष्ठं रयीणामरिष्टिं तनूनाम् ऋ० २, २१, ६,। 'अरिष्टिमहिंसाम्" भा०।

**अरिष्टुत** त्रि० अरिभिः प्रेरयितृभिः स्तुतं वेदे षत्वम्। प्रेरयितृभिः स्तुते प्रशस्ते "रामते विश्वगूर्त्तो अरिष्टुतः ऋ० ८,१,२२। लोके तु न षत्वम्। [ स्थातरि।

**अरिष्ठ** त्रि० अरये तिष्ठते स्था–क वेदे षत्वम्। शत्रुनाशाय

**अरिह** त्रि०अरीन् हन्ति हन–ड। १शत्रुनाशके "हरिहयो-ऽरिहयोगविचक्षणः" रघुः "पौरवे नृपभेदे" अराचीनो-ऽपि वैदर्भीमपरामुपयेमे मर्य्यादां नाम तस्यामस्य जज्ञे अरिहः, अरिहः खल्वङ्गामुपयेमे" भा० आ० प०।

**अरीढ़** त्रि० न रीढः लीढः न आस्वादितः लस्य रः। १अना-स्वादिते। ऋग्वेदे तु ढस्य ल्हः अरील्हः इत्येव। "अरील्हं वत्सम्" ऋ०४,१८,१०। अरील्हं शत्रु-भिरनभिभूतमानम् भाष्योक्ते २अर्थे च।

**अरीहण** पु० अरिं हन्ति हन–अच् पूर्व्वदीर्घः। नृपभेदे अरीहणेन निर्वृत्तम् वुञ्। आरीहणकम्। चतुरर्थ्याम् उत्करा० छ। अरीहणीयः तत्सन्निकृष्टदेशादौ त्रि०।

**अरीहणादि** पु० अरीहण आदिर्यस्य। निर्वृत्तार्थे विहित-वुञ्प्रत्ययनिमित्ते पाणिन्युक्ते शब्दसमूहे। स च गणः अरीहण, द्रुघण, द्रुहण, भगल, उलन्द, किरण, सांपरायण क्रौष्ट्रायण, औष्ट्रायण, त्रैगर्तायन, मैत्रायण भास्त्रायण, वैमतायन। गौमतायन, सौमतायन। सौसायन, धौमतायन, सौमायन, ऐन्द्रायण,। कौन्द्रायण खाडायन, शाण्डिल्यायन, रायस्पोष, विपथ, विपाश। उद्दण्ड, उदञ्चन, खाण्डवीरण, वीरण, कशकृत्स्न, जाम्बवत शिंशपा, रैवत, बिल्व, सुयज्ञ, शिरीष, बधिर जम्बु खदिर सुशर्मन्, दलतृ, भलन्दन, खण्डु, कनल यज्ञदत्त, अरीहणादिः।

**अरुंषिका** अरुंषि मर्मस्थानान्यधिकृत्य जाता ठन् टा०, त्वम्। क्षुद्ररोगभेदे। "समासेन चतुश्चत्वारिंशत्क्षुद्ररोगा भ-वन्ति॥ तद्यथा अजगल्लिका यवप्रख्याऽन्धालजी विवृता। कच्छपिका वल्मीकमिन्द्रवृद्धा पनसिका पाषाणगर्द्दभो जाल गर्द्दभः कक्षा विस्फोटकोऽग्निरोहिणी चिप्पं कुनखोऽनुशयी विदारिका शर्कराऽर्वुदं पामा विचर्च्चिका रकसा पाददा-रिका कदरमलसेन्द्रलुप्तौ दारुणकोऽरुंषिका पलितं मसू-रिका यौवनपिडका पद्मिनीकण्टको जतुमणिर्म्मशकचर्म्म कीलतिलकालको न्यच्छं व्यङ्गः परिवर्त्तिकाऽवपाटिका निरुद्धप्रकशः निरुद्धगुदोऽहिपूतनं वृषणकच्छुर्गुदभ्रंशश्चेति"॥ अरुंषि बहुवक्त्राणि बहुक्लेदानि मूर्द्धनि। कफासृक् क्रमिकोपेन नृणां विद्यादरुंषिकाम्" "अरुंषिकाहृते रक्ते सेचयेन्निम्बवारिणा" इति च सुश्रुतः।

**अरुगण** त्रि० रुगणः विरोधे न०त०। स्वस्थे रोगशून्ये "रुजदरुग्णं विवलस्य सानुम्" ऋ०६,३९,२।

**अरुच्** त्रि० नास्ति रुक् कान्तिर्यस्य। प्रकाशहीने मलीमसे "अयं रोचयदरुचो रुचानोऽयम्" ऋ०६,३९,४॥

**अरुचि** पु० न रुचिर्यत्र। भक्ष्यभिलाषे १भोजनायोग्यता सम्पादके १रोगभेदे। न रुचिः सन्तोषः न०त०। २सन्तो-षाभावे 'इत्यरुचेराह' जगदीशः। पूर्व्वोक्तावितदोषस्य शिथिलत्वशङ्कया सन्तोषाभावादित्यर्थः। भोजनादौ ३अभिलाषाभावे च "सन्निपातज्वरश्वासकासहिक्काऽरुचिप्र-मुत्" "स्वादुर्विरिक्ते कफपित्तकोपो दाहोऽरुचिर्गौरवम-ग्निसादः" इति च सुश्रुतः।

**अरुज्** त्रि० नास्ति रुक् रोगो यस्य। १रोगशून्ये २अनुत्पन्न-रोगे च "कोऽरुक् कोऽरुक् कोऽरुक् "इति प्रश्ने" हितभुग्-मितभुगशाकभुक् सोऽरुगित्युक्तः "अरुक् सएवाश्वत्थो महांश्च मर्म्मोत्थितश्चापि विवर्ज्जनीयः" सुश्रुतः।

**अरुज** पु० न रुजति रुज–क। (सोंदाल)इति ख्याते १वृक्षे। नास्ति रुजा यस्मात् ५ब०। २रोगाभावसाधने त्रि० "विषेभ्यः खलु सर्व्वेभ्यः कर्णिकामरुजां स्थिराम्" सुश्रुतः। ३ दानवभेदे पु० दानवगणनायां हरिवं० "अनुह्लादो हरि हयोवराहः संह्रादोऽरुजः"। दैत०। ४रोगशून्ये नीरोगे च त्रि०। "अपाककठिनः स्थूलोपन्थिर्व्वर्त्मभवोऽरुजः" सु-श्रुतः। "अरुजं वा हृतः न्यूनमन्तः क्लिन्नं सवत्यपि" सुश्रु०।

**अरुण** पु० ऋ–उनन्। १सूर्य्ये, २सूर्य्यसारथौ, ३गुडे, ४स-न्ध्यारागे ५निःशब्दे, ६दानवभेदे ७ कुष्ठभेदे, ८पुन्नाग-वृक्षे। ९ अव्यक्तरागे १० कृष्णमिश्रितरक्तवर्णे च ११ तद्वति त्रि०। १२ कुङ्कुमे, १३ सिन्दूरे च न०। १४ मञ्जिष्ठायाम् १५ श्यामाकायाम्, १६ अतिविषायाम् १७ नदीभेदे १८ कदम्बपुष्पायाञ्च स्त्री। १९ त्रिवृतायां मेदि०२०इन्द्रवारुण्याम् २१गुञ्जायां राजनि०२२मुण्ड-तिकायाम् च स्त्री। तत्र अमरौ 'विभावरी यद्यरुणाय कल्पते' कुमा० "यावत् प्रतापनिधिराक्रमते न भानुरह्नाय तावद-रुणेन तमोनिरस्तम्" रघुः। "तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च

महाबलः अरुणश्चारुणिश्चैव विनतायाः सुताः स्मृताः" हरि॰ "अरुणो गरुडभ्राता जपापुष्पसमप्रभः । योगानाञ्चैव सर्व्वेषां साध्यानामधिपः कृतः" हरिवं॰ । "तदुत्पत्त्यादिकथा अनूरुशब्दे" १८१ उक्ता । सूर्य्ये "संहरिष्यते सरिजैररुणांशुभिश्चैः" रघुः "रागेण बालारुणकोमलेन" कुमा॰ । वर्णे तद्वति च "नयनान्यरुणानि घूर्णयन्" कुमा॰ "अरुणपुष्पाणि फाल्गुनानि" शत॰ ब्रा॰ । "दधत् सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः" माघः । द्वादशादित्यमध्ये माघमासाधिपे २३आदित्यभेदे "अरुणो माघमासे वै" आदित्यहृदयम् विवरणमादित्यशब्दे । २४देवभेदे पु॰ । पृथ्वादि॰ वुञ् । आरुणकः तद्वति त्रि॰ गुणवचनात् भावे इमनिच् अरुणिमा पु॰ ष्यञ् आरुण्यम् न॰ । तल् अरुणता स्त्री त्व अरुणत्वम् न॰ । रक्तादिवर्णे । अपत्ये इञ् । आरुणिः जटायौ सूर्य्यपुत्रे मन्दे यमे कर्णे वैवस्वतमनौ सुग्रीवे ऋषिभेदे च । अश्विनीकुमारयोः द्वि॰ व॰ यमुनायां तपत्यां च स्त्री गुणवचनात् भृशा॰ अभूततद्भावे क्यङ् अरुणायते अरुणायमानः । गौरा॰ ङीष् । २५अरुणवर्णायां गवि स्त्री । "अरुण्यो गाव उषसामिति" निरुक्तोक्तायाम् २६ उषायामपि स्त्री । २७ मन्दरगिरिस्थे सरोवरे तस्य चारुणजलत्वात्तथात्वम् "सरांस्यथैतेष्वरुणञ्च मानसं महाह्रदः श्वेतजलं यथाक्रमात्" सि॰ शि॰ । "एतेषु मन्दरादिविष्कम्भशैलेषु गुडकुङ्कुमसिन्दूरादीनाञ्चारुणवर्णत्वात्तथात्वम् ।

**अरुणकमल** न॰ कृष्णसर्पवत् नित्यकर्म्मधा॰ । रक्तोत्पले

**अरुणदूर्व्वा** स्त्री कृष्णसर्पवत् नित्यसमासः । रक्तदूर्व्वाभेदे, "यद्यदारान्न विन्देयुः अरुणदूर्व्वा अभिषुणुयात् एष वै सोमस्य न्यङ्गो यदरुणदूर्व्वा तस्मादरुणदूर्व्वा अभिषुणुयात् यद्यरुणदूर्व्वा न विन्देयुः" शत॰ ब्रा॰ ।

**अरुणप्रिया** स्त्री अरुणस्य प्रिया । सूर्य्यभार्य्यायाम् १ संज्ञायाम्, २ छायायाञ्च अरुणभार्य्यादयोऽप्यत्र "तस्य भार्य्याऽभवत् देवी संज्ञा त्वाष्ट्री विवस्वतः" इति । "असहन्ती तु तां छायां सवर्णां निर्म्ममे ततः । छायामयी तु सा संज्ञा, तस्याश्छायासमुत्थिता । प्राञ्जलिः प्रणता भूत्वा छाया संज्ञां नरेश्वर ! । उवाच किं मया कार्य्यं कथयस्व शुचिस्मिते ! । स्थितास्मि तव निर्देशे शाधि मां वरवर्णिनि ! । संज्ञोवाच । अहं यास्यामि भद्रं ते स्वमेव भवनं पितुः । त्वयेह भवने मह्यं वस्तव्यं निर्व्विकारया । इमौ च बालकौ मह्यं कन्या चेयं सुमध्यमा । संभाव्यास्ते न चाख्येयमिदं भगवते क्वचित् । छायोवाच । आकचग्रहणाद्देवि ! आ शापाच्चैव कर्हिचित् । आख्यास्यामि मतं तुभ्यं गच्छ देवि ! यथेच्छया" । इति हरिवं॰ । ३प्रभाकन्याभेदे च । "सुषुवेऽष्टौ महाभागा प्रभा देवर्षिपूजिताः" । अनुवन्द्या मनूकाञ्च अननामरुणप्रियाम् अनुगां सुभगाञ्चैव" हरिवं॰ अरुणवर्णं पुष्पादि प्रियमस्य । ४रक्तवर्णपुष्पप्रिये सूर्य्ये पु॰ ५तद्वर्णपुष्पप्रियमात्रे त्रि॰ ।

**अरुणप्सु** त्रि॰ अरुणः प्सुः रूपं (निरु॰) यस्य । रक्तवर्णरूपे "ऋतावरीमरुणप्सुं विभातीम्" ऋ॰५,८०,१, "अरुणप्सुमरुणरूपाम्" भा॰ । [ २ रक्तनेत्रयुक्ते त्रि॰ ।

**अरुणलोचन** पु॰ अरुणे रक्ते लोचने यस्य । १पारावतपक्षिणि

**अरुणसारथि** पु॰ अरुणः गरुडाग्रजः सारथिरस्य । सूर्य्ये विवरणमनूरुशब्दे ।

**अरुणात्मज** पु॰ ६त॰ ।१जटायौ पक्षिणि । २सूर्य्यपुत्रे मन्दे ३ सावर्णे मनौ ४ कर्णे ५ सुग्रीवे ६ यमे च ७ अश्विनीकुमारयोः द्वि॰व॰ ८ यमुनायां तपत्यां च स्त्री । "लोकख्यातानि कौरव्य ! संज्ञायां तपतांवरः । आदित्यो जनयामास कन्यां द्वौ च प्रजापती । स च वैवस्वतः पूर्व्वं श्राद्धदेवः प्रजापतिः । यमश्च यमुना चैव यमजौ संबभूवतुः" । संज्ञायां द्वौ सुतौ सुता चेति लोकख्यातानि । "द्वितीयायां तु संज्ञायां संज्ञेयमिति चिन्तयन् । आदित्यो जनयामास पुत्रमात्मसमं तदा । पूर्व्वजस्य मनोस्तात सदृशोऽयमिति प्रभुः । मनुरेवाभवन्नाम्ना सावर्ण इति चोच्यते । द्वितीयायां सुतस्तस्याः स विज्ञेयः शनैश्चरः" । इति सावर्णः शनिश्च एतौ द्वौ सुतौ, संज्ञायाः छायाख्यायां द्वितीयायां सवर्णायां जातौ हरिवं॰ । वडवारूपधारिण्यां संज्ञायाञ्च अश्विनीकुमारौ जातौ यथा तत्रैव । "वडवारूपमास्थाय वने चरति शाद्वले । स तथारूपमास्थाय स्वां भार्य्यां शुभलीलया । ददर्श योगमास्थाय स्वां भार्य्यां वडवां ततः । अदृश्यां सर्व्वभूतानां तपसा नियमेन च । वडवावपुषा राजंश्चरन्तीमकुतोभयाम् । सोऽश्वरूपेण भगवांस्तां मुखे समभावयत् । मैथुनाय विचेष्टन्तीं, परपुरुषशङ्कया । सा तन्निरवमच्छुक्रं नासिकायां विवस्वतः । देवौ तस्यामजायेतामश्विनौ भिषजां वरौ । नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति" । तपतीशब्दे तदुत्पत्तिः कर्णोत्पत्तिः यथा "एवमुक्ता बहुविधं सान्त्वपूर्व्वं विवस्वता । सा तु नैच्छद्वरारोहा कन्याऽहमिति भारत ! । बन्धुपक्षभयाद्भीता लज्जया च यशस्विनी । तामर्कः पुनरेवेदमब्रवीद्भरतर्षभ ! । मत्प्रसादान्न ते राज्ञि ! भवि-

ता दोष इत्युत । एवमुक्त्वा स भगवान् कुन्तिराजसुतां तदा । प्रकाशकर्त्ता तपनः सम्बभूव तया सह । तत्र वीरः समभवत् कर्णः शस्त्रभृतां वरः । आमुक्तकवचः श्रीमान्देवगर्भः श्रियाऽन्वितः । सहजं कवचं बिभ्रत् कुण्डली द्योतिताननः । अजायत सुतः कर्णः सर्व्वलोकेषु विश्रुतः" । भा॰आ॰प॰ । सुग्रीवोत्पत्तिः सुग्रीवशब्दे दृश्या ।

**अरुणानुज** पु॰ अरुणस्यानुजः । गरुड़े तस्य ततोऽनुजातकथा नूरुशब्दे दृश्या । [ रोह रथे हरिः" हरिवं॰ ।

**अरुणावरज** पु॰ ईत॰ । गरुड़े "अरुणावरजं श्रीमानारु-

**अरुणित** त्रि॰ अरुणं क्रियते स्म अरुण+तत्करोत्यर्थे णिच्–कर्म्मणि क्त, तारकादि॰ इतच् वा । १रक्तवर्णीकृते २जातलोहितवर्णे च । "स्तनाङ्गरागारुणिताच्च कन्दुकात्" कुमा॰ ।

**अरुणोदक** न॰ अरुणमुदकं यस्य । १सरोवरभेदे । उदकस्य वा उदादेशे अरुणोदमप्यत्र । तच्च सरः मन्दरगिरिरूपविष्कम्भपर्व्वतस्थम् वि॰पु॰ । २नदीभेदे स्त्री सा च "मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसोगिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति । तेषां विशीर्य्यमाणानामति मधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्व्वेणेलावृतमुपप्लावयति" इति भागवतोक्तस्थलस्था ।

**अरुणोदय** पु॰ अरुणस्यार्कस्य तत्किरणस्योदयो यत्र । "चतस्रो घटिकाः प्रातररुणोदय उच्यते" इत्युक्ते सूर्य्योदयात् प्राचि चतुर्दण्डात्मके काले ।

**अरुणोदयविद्धा** स्त्री अरुणोदयकाले विद्धा । अरुणोदयकाले दशम्या विद्धायामेकादश्याम् । "दशमीशेषसंयुक्ता यदि स्यादरुणोदये । वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम्" हेमा॰ भवि॰पु॰ "अरुणोदयविद्धा तु द्वादश्यां पारणा लाभेऽपि वैष्णवैर्नोपोष्या" ए॰त॰ रघुनन्दनः ।

**अरुणोदयसप्तमी** स्त्री अरुणोदयकाले पुण्यविशेषसाधनं सप्तमी । माघशुक्लसप्तम्याम् । "सूर्य्यग्रहेण तुल्या हि शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां तस्यां स्नानं महाफलम् । माघे मासि सिते पक्षे सप्तमी कोटिभास्करा । दद्यात् स्नानार्घदानाभ्यामायुरारोग्यसम्पदः । अरुणोदयवेलायां शुक्ला माघस्य सप्तमी । गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समेति" ति॰त॰ भविष्य पु॰ ।

**अरुणोपल** पु॰ अरुण उपलः । (चुनीति) ख्याते पद्मरागे ।

**अरुन्तुद** त्रि॰ अरूंषि मर्म्माणि तुदति तुद–खश् मुम् च । मर्म्मपीड़के दुःखदायके "अरुन्तुदमिवालानं नवबद्धस्य दन्तिनः" इति रघुः "नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्म्मकृत्" मनुः ।

**अरुन्धती** स्त्री न रुन्धती । १ रोधनाकारिकायां स्त्रियाम् २ वशिष्ठपत्न्याम् संज्ञात्वाद्व्युत्पत्तिः "अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम्" रघुः "आर्य्याप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति" "साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती" इति च कुमा॰ । सा च कर्द्दमप्रजापतेरात्मजा-सुत्पन्ना भाग॰ तपसा सिद्धा नक्षत्ररूपेण सप्तर्षि-स्थाने स्थिता । ३ तन्नामके नक्षत्रभेदे तत्स्थितिस्थानञ्च "प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः । पूर्व्वे भागे भगवान् मरीचिरपरे स्थितो वशिष्ठोऽस्मात् । तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च । पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः । तत्र वशिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी" वृ॰सं॰ । विवाहकाले सैव पत्या पत्नी दर्श्यते "अरुन्धतीञ्च रुन्धाहमस्मीति" गोभि॰ । "एवञ्च सप्तर्षिनिकटवर्त्तिनीं सूक्ष्मां तारामरुन्धतीं रुन्धाहमस्मीति मात्रमन्त्रेण पश्येत्" सं॰त॰रघु॰ । अरुन्धती यथा पत्यौ अनुरक्ता एवमेवं त्वं मयि इत्यभिप्रायेण तद्दर्शनम् । आसन्नमृत्यवश्च तां न पश्यन्ति यथोक्तम् सुश्रुते । "न पश्यति सनक्षत्रां यस्तु देवीमरुन्धतीम्" ध्रुवमाकाशगङ्गां च तं वदन्ति गतायुषं" ४दक्षकन्यारूपे धर्म्मस्य पत्नीभेदे । "ददौ स दश धर्म्माय" इत्युपक्रम्य "तासां नामानि मे शृणु" इति चोक्ता । "अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती । सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च भारत ! । धर्म्मपत्न्यो दश त्वेता इति" "पृथिवीविषयं सर्वमरुन्धत्या-मजायत च" हरिवं॰ । ५जिह्वायाञ्च "अरुन्धतीं ध्रुवञ्चैव विष्णोस्त्रीणि पदानि च । आसन्नमृत्युर्नो पश्येच्चतुर्थं मातृमण्डलम्" इत्युक्त्वा तत्रारुन्धत्यादिशब्दानां पारिभाषिकत्वं दर्शितं यथा "अरुन्धती भवेज्जिह्वा ध्रुवोनासाग्रमुच्यते विष्णोः पदानि भ्रूमध्यं नेत्रेऽस्मी मातृमण्डलम्" काशीखण्ड॰ । [वशिष्ठे मुनौ

**अरुन्धतीजानि** पु॰ अरुन्धती जाया यस्य निङ् समा॰ ।

**अरुन्धतीदर्शनन्याय** पु॰ अरुन्धत्यादर्शनमिव दर्शनं यस्य तत् सूचको न्यायः । प्रथमस्थूलदर्शनेन सूक्ष्मदर्शनरूपे न्याये "यथाऽरुन्धतीं दिदर्शयिषुः तत्समीपस्थां स्थूलां तारामसुख्यां प्रथममरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति" शा॰भा॰ ।

**अरुन्धतीनाथ** पु॰ ईत॰ । वशिष्ठे मुनौ तत्पत्यादयोऽप्यत्र ।

**अरुष** त्रि॰ न रोषति क्रुध्यति रुष–क न॰त॰। १अक्रोधने। "युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः" यजु॰ २३,५ "असौ वा आदित्योब्रध्नोऽरुषः" इति श्रुतिः। विरोधे न॰त॰। २ रोचमाने। "श्वेतं सघानमरुषं सहिता" ऋ॰ २,१,४, 'अरुषं रोचमानम्' भा॰। ऋ–गतौ–उषन्। ३ गमनशीले अश्वादौ वेदे स्त्रियां ङीप्। "युक्ष्वाह्यरुषी रथे" ऋ॰१,१४,१२, अरुषीर्गमनशीला वड़वाः" भा॰। रुषा हिंसा न॰ब॰। ४हिंसारहिते "जानन्ति वृष्णो अरुषस्य शेवम्" ऋ॰ ३,७,५,। "अरुषस्य हिंसारहितस्य" भा॰। [स्त्री निरु॰।

**अरुष्** त्रि॰नास्ति रुट् यस्य। १अक्रोधे। गौ॰ङीष्। २उपसि

**अरुष्क** पु॰ अरुर्मर्म स्थानं कायति पीड़यति कै–क। स्वर्णमालेण ब्रणकारकफलरसे (भेला) भल्लातकवृक्षे।

**अरुष्कर** पु॰ अरुः करोति ट उप॰स॰ षत्वम्। स्वर्णमालेण ब्रणकारकफलरसे १भल्लातके (भेला) २ब्रणकारके त्रि॰ "शुष्कोद्वयपार्थकोऽरुष्करय" सुश्रु॰। स्त्रियां ङीप्।

**अरुस्** पु॰ऋ–उसि। १अर्के, २रक्तखदिरे च। ३मर्म्मणि न॰। ४ब्रणे, ५क्षते च पु॰न॰। "अरुर्हि षट्जन्तस्य मुम्" पा॰। "अरुर्वै पुरुषोऽवच्छिन्नः अनरुरेवैतत्कुर्वति" शत॰ब्रा॰। "यद्दण्डेन यदिष्वा यद्वारुषा हरसा" अथ॰५,५,४। "अरुर्वै पुरुषस्याप्नोति" शत॰ब्रा॰ उक्ते ईदृशे च। अरुस्+अभूततद्भावे च्वि अन्त्यलोपः दीर्घः अरूकरोति।

**अरुहा** स्त्री न किञ्चिन्मूलमाश्रित्य रोहति रुह+क। भूम्यामलक्याम् राजनि॰। कृशा॰ छण्। आरुहीयम् तत्सन्निकृष्टदेशादौ त्रि॰।

**अरूक्ष** त्रि॰ विरोधे न॰त॰। स्निग्धे मसृणे, "दर्भैः प्रच्छादयत्यरूक्षतायै", शत॰ब्रा॰।

**अरूक्षित** त्रि॰न रूक्षितः विरोधे न॰त॰। स्निग्धे मसृणे, "अरूक्षितं इव आ रूपे अक्षम्" ऋ॰४,११,१, अरूक्षितं स्निग्धम्" भा॰।

**अरूक्ष्ण** त्रि॰रूक्ष+नन् विरोधे न॰ त॰। स्निग्धे। "यत्ते वासः परिधानम्–संस्पर्शेऽरूक्ष्णमस्तु ते" अथ॰८,२,१६।

**अरूप** त्रि॰ नास्ति रूपमस्य। १रूपशून्ये २सांख्योक्ते प्रधाने वेदान्तोक्ते ३ब्रह्मणि न॰ "अशब्दमस्पर्शमरूपमव्ययमिति" कठ॰उ॰। कुत्सितार्थे न॰त॰। ३कुत्सितरूपे न॰।

**अरूपहार्य्य** त्रि॰ रूपेण न हार्य्यः वशीकार्य्यः अस॰स॰। सौन्दर्य्यादिना अवशीकार्य्ये 'अरूपहार्य्यं मदनस्य निग्रहात्" कुमा॰।

**अरूष** पु॰ ऋ–ऊषन्। १सर्पविशेषे २ सूर्य्ये च सि॰ कौ॰।

**अरे** अव्य॰ ऋ–ए। १रोषाह्वाने, २नीचसंबोधने "आत्मा वा अरे द्रष्टव्यः श्रोतव्य इति" न वा अरे पत्युः कामाय पतिः प्रियो भवति" शत॰ ब्रा॰ बहुशत्य: पाठः। तत्र याज्ञवल्क्येन मैत्रेयीनामकपत्नीं प्रति सम्बोधनायोक्तं तस्याः स्वापेक्षया न्यूनत्वात् नीचसम्बोधनम्। ३अपकृतौ, ४असूयायाञ्च।

**अरेपस्** त्रि॰ नास्ति रेपः पापं निरुक्तोक्तं यस्य १निष्पापे "ग्रामे रूपी पुराऽरेपाः" इति माघः २निर्मले च "अरेपसा तन्वा शाशदाना" ऋ॰१,१२४,५, अरेपसाऽपापया निर्म्मलया वा" भा॰।

**अरेऽरे** अव्य॰ अरे+वीप्सायां द्विरुक्तिः। नीचसंबोधनादौ। २सक्रोधसम्बोधने च "अरेरे राधागर्भभारभूत! सूतापसद! किमेवमालिपसि" अरेरे वाचाट! वृथाशस्त्रग्रहणदुर्विदग्ध! वटो" इति च वेणीसंहारः।

**अरोक** त्रि॰ रुच–दीप्तौ घञ् रोकश्छिद्रं दीप्तिश्च न॰ब॰। १छिद्रशून्ये २दीप्तिशून्ये च। "विभाषा श्यावारोकाभ्याम्" पा॰बहुब्रीहौ एतत्पूर्व्वकदन्तस्य दतृ। अरोकदन् अरोकदन्तः। निविड़दन्ते दत्रादेशे स्त्रियां ङीप्।

**अरोग** त्रि॰ नास्ति रोगोऽस्य। रोगशून्ये "अरोगाः सर्व्वसिद्धार्थाश्चतुर्वर्षशतायुषः" मनु॰। "एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः" मनुः तस्य भावः ष्यञ्। आरोग्यम्। रोगाभावे न॰ "आयुरारोग्यविजयं देहि देवि! नमोऽस्तु ते" दुर्गास्तवः "आरोग्यं वित्तसम्पत्तिर्गङ्गास्नानजं फलमिति" पुरा॰ तल् अरोगता स्त्री त्व अरोग्यत्वम्" तत्रैव न॰।

**अरोगण** त्रि॰ रोगोऽस्त्यस्य वा॰मत्वर्थे न न॰त॰। रोगशून्ये "तेषामसि त्वमुत्तममनास्रावमरोगणम्" अथ॰२,३,२।

**अरोगिन्** त्रि॰ न रोगी विरोधे न॰त॰। रोगशून्ये "यावज्जीवमरोगी स्यात्" पुरा॰ स्त्रियां ङीप्। "अरोगिणीं ब्राह्मणताम्" स्मृतिः।

**अरोचक** पु॰न रोचयति प्रीणयति रुच+णिच्–ण्वुल् न॰त॰। रोगभेदे यत्र कस्मिन्नपि द्रव्ये भोजनादौ न प्रीतिस्तादृशे रोगे स च सुश्रुतोक्तः। 'दोषैः पृथक् सहजचित्तविपर्य्ययाच्च भक्तायनेषु हृदि चावतते प्रगाढम्। नान्ने रुचिर्भवति तं भिषजो विकारं भक्तोपघातमिह पञ्चविधं वदन्ति। हृच्छूलपीड़नयुतं विरसाननत्वं वातात्मके भवति लिङ्गमरोचके तु। हृद्दाहचोषबहुता मुखतिक्तता च

मूर्च्छा सङ्कट् भवति पित्तकृते तथैव । कफाद् गुरुत्वकफसंस्रवसादतन्द्राः श्लेष्मात्मके मधुरमास्यमरोचके तु । सर्वात्मके पवनपित्तकफा बहूनि रूपाण्यथास्य हृदये समुदीरयन्ति । संरागशोकभयविप्लुतचेतसस्तु चिन्ताकृते भवति सोऽशुचिदर्शनाच्च” इति । “गुल्मान् प्लीहोदरं कासं हलीमकमरोचकम्” इति सुश्रुतः । [शून्ये त्रि० ।

**अरोदन** न०अभावे न०त०। १रोदनाभावे । ब०। २क्रन्दन-

**अरोधन** न० अभावे न०त०। १रोधाभावे २आवरणाभावे ३गतिरोधके व्यापारे । न०ब० । ४तच्छून्ये त्रि० ।

**अरोध्य** त्रि० न रोध्यः । रोद्धुमशक्ये । [शून्ये त्रि० ।

**अरोपण** न०अभावे न०त०। १रोपणाभावे न०ब०। २रोप-

**अरोष** पु०अभावे न०त०। १क्रोधाभावे । न०ब० । २क्रोधशून्ये त्रि० ।

**अरौद्र** त्रि०न रौद्रः विरोधे न०त०। १भीषणभिन्ने सौम्याकृतौ २ रागद्वेषादिशून्ये विष्णौ पु० । “अरौद्रः कुण्डली चक्री” विष्णुस० “कर्म रौद्रं, रागश्च रौद्रः, कोपश्च रौद्रः, त्रयं यस्य नास्ति अवाप्तसर्वकामत्वेन द्वेषरागादेरभावादित्यरौद्रः” भा० ।

**अर्क** तापे, स्तुतौ च चुरा०उभ०सक० सेट् । अर्कयति ते आर्चिकत् त । अर्कयामास अर्कितः अर्कयितुम् ।

**अर्क** पु० अर्च–कर्मणि घञ् कुत्वम् । १सूर्य्ये, २इन्द्रे, ३ताम्रे, ४स्फटिके, ५विष्णौ, ६पण्डिते, (आकन्द) इति ख्याते ७वृक्षे, (आरख) इति ख्याते ८काथविशेषे च । ९अर्चनीये त्रि० । “आ सूर्य्यो न भानुमद्भिरर्कैः” ऋ० ६,५,६ “अर्कैः अर्चनीयैः” भा० “ब्रह्मादिभिः पूज्यमानैरर्चनीयत्वादर्कः” भा० १०ज्येष्ठे” पु० । तत्रथया ११अर्काधिपे वारे १२सप्तमीतिथौ १३उत्तरफल्गुनीनक्षत्रे १४द्वादशसंख्यायाञ्च तत्र विष्णौ । “अर्को वाजसनः शृङ्गी” वि०सह० अर्कवृक्षे “अर्कः पलाशःखदिरः इति विष्णुध०। सूर्य्ये “अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी” सूर्य्यसि० “संपर्कादर्करोचिषाम्” माघः “सं,द्द, जगत्पूज्यनयुज्य तार्कैः” माघः इन्द्रे अर्कसोदरशब्दे उदा०। अर्कस्यापत्यम् इञ् । आर्किः सूर्य्यपुत्रे यमादौ, यमुनायां, तपत्याञ्च स्त्री अरुणात्मजशब्दे विवृतिः ।

**अर्ककला** स्त्री ६त० । शारदातिलके सूर्य्यस्य उपास्यत्वेनोक्ते द्वादशसंख्याके पीतवर्णे कादिठान्तवर्णभषिते कलाभेदे । ताश्च १“तपिनी २तापिनी ३धूम्रा ४मरीचि ५ज्वालिनी ६रुचिः । ७सुषुम्णा ८भोगदा ९विश्वा १०बोधिनी ११धारिणी १२क्षमा । काद्याश्च वसुदाः सौर्य्यो ठान्ता स्ता द्वादशेरिताः” “वरानयकरा ध्येयाः श्वेतपीतारुणाः क्रमात्” शार० ति० ।

**अर्ककान्ता** स्त्री अर्कोऽर्ककिरणः कान्तोऽनुकूलो यस्याः कम॰ । (हुड़हुड़िया) इति ख्याते १वृक्षे ६त० । २सूर्य्यप्रियायाम् ३संज्ञायां छायायाञ्च अरुणप्रियाशब्दे विवृतिः ।

**अर्कक्षेत्र** न० ६त० “कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् । जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः” ज्योतिषोक्ते सूर्य्यस्वामिके सिंहराशौ ।

**अर्कचन्दन** पु० अर्कस्य प्रियःचन्दनः शाक०त० । रक्तचन्दने

**अर्कज** पु० अर्काज्जायते जन–ड ५त० । १यमादौ २तपत्यां ३यमुनायां च स्त्री ४अश्विनीकुमारयोः द्वि०व०। ५सुग्रीवे ६कर्णे च । अरुणात्मजशब्दे विवृतिः ।

**अर्कतनय** पु० ६त० । राधासुते १ कर्णे २यमादौ च । अरुणात्मजशब्दे विवृतिः ।

**अर्कदुग्ध** न० अर्कस्य वृक्षस्य दुग्धमिव निर्य्यासः । अर्कवृक्षनिर्य्यासे श्वेतत्वेन दुग्धाकारे पदार्थे ।

**अर्कनयन** पु० अर्को नयनं यस्य । विराट्पुरुषे । “सूर्य्याचन्द्रमसावग्निर्यस्य नेत्राणि जज्ञिरे” पुरा० “अनन्तबाहुं शशिसूर्य्यनेत्रम्” गीता अर्कइव दुर्दर्शं नयनमस्य । २दुर्द्दर्शलोचने त्रि० ।

**अर्कनामन्** पु० अर्कं नामयति अनुकूलयति नम–णिच् कनि । रक्तार्कवृक्षे ।

**अर्कपत्र** पु० अर्कः सूर्य्यइव तीक्ष्णं पत्रं यस्य । १अर्कवृक्षे । अर्कपर्णोऽप्यत्र । २सुनन्दायाम् ३अर्कमूलायां स्त्री । ६त०। ४अर्कवृक्षस्य पत्रे न० “स कदाचिदर्कपत्राण्यभक्षयत् क्षुधार्त्तः तैर्भक्षितैरर्कपत्रैः” भा०आ०प० “देवराजो मया दृष्टो वारिवारणमस्तके । खादयत्यर्कपत्राणि” विद०म० । “सप्त बदरपत्राणि सप्तार्कपत्राणि च शिरसि निधायेति, माघसप्तम्यां स्नाने क०त० रघु० ।

**अर्कपर्ण** त्रि० अर्कइव रक्तं पर्णमस्य । १मन्दारे । ६त० २अर्कवृक्षपत्रे न० । [कर्म्मधा० । (आकन्द) २वृक्षभेदे ।

**अर्कपादप** पु० अर्कः अर्कवृक्षइव तीक्ष्णः पादपः । १निम्बे ।

**अर्कपुष्पी** स्त्री अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्पमस्याः जातित्वात् ङीप् । २कटुम्भिनीवृक्षे । वा कप् । अत इत्त्वे अर्कपुष्पिकाप्यत्र ।

**अर्कप्रिया** स्त्री अर्कं प्रीणाति प्री-क । जवायाम् । ६त०। १सूर्य्यप्रियायां, २संज्ञादौ अरुणप्रियाशब्दे विवृतिः ।

**अर्कबन्धु** पु॰ अर्कस्य बन्धुरिव। १गौतमे सूर्यवंश्ये बौद्धभेदे। तस्य तत्कुलोत्पन्नत्वात्तद्बन्धुत्वम्। अर्कस्य बन्धुरिव प्रकाश्यत्वात्। २पद्मे। अर्कबान्धवोऽप्यत्र।

**अर्कभ** न॰ अर्काक्रान्तं भं नक्षत्रं शा॰त॰। १सूर्य्याक्रान्ते नक्षत्रे हेम॰। तत्स्वामिके २सिंहराशौ ३उत्तरफल्गुनीनक्षत्रे च।

**अर्कभक्ता** स्त्री अर्कस्य भक्ता (हुड़हुड़िया) इति ख्यातायां लतायाम्। तत्किरणसंपर्के एव हि तस्याः सौन्दर्य्यम्।

**अर्कमूल** पु॰ अर्कस्य मर्य्यादां दुग्धसदृशं मूलं यस्याः। (इश्वरमूल) इति ख्यातायां लतायाम्।

**अर्कलुष** पु॰ अर्कस्य रूष उपः रस लः। ऋषिभेदे विदा॰ अञ्। आर्कलुषः तदपत्ये पुंस्त्री॰। स्त्रियां ङीप्।

**अर्कवल्लभ** पु॰ अर्कस्य वल्लभः समानवर्णपुष्पत्वात्। रक्तपुष्पत्वेन अर्कतुल्यपुष्पे बन्धूकवृक्षे। ब॰। २पद्मे।

**अर्कविवाह** पु॰ अर्कवृक्षस्य कन्यात्वेन प्रकल्पनेन विवाहः। तृतीयविवाहसिद्ध्यर्थमर्कवृक्षस्य कन्यात्वकल्पनेन विहिते विवाहभेदे। "चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत्। "आदित्यदिवसे वापि हस्तर्क्षे वा शनैश्चरे। शुभे दिने वा पूर्वाह्णे कुर्य्यादर्कविवाहकम्" कश्य॰। "तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु। आर्कं विवाहं वक्ष्यामि शौनकोऽहं विधानतः" शौनकः। तत्प्रकारस्तु विधानपारिजाते तृतीयविवाहप्रकरणे दृश्यः।

**अर्कवेध** पु॰ अर्कस्य वृक्षस्येव वेधोऽस्य। तालीशपत्रे वृक्षे।

**अर्कव्रत** पु॰ अर्कस्याराधनार्थं व्रतम्। माघशुक्लसप्तम्यादौ कर्त्तव्ये अर्काराधनार्थे १व्रते। अर्कस्येव व्रतम् नियमः। "सहस्रगुणमुत्स्रष्टुमादत्ते हि रसान् रविः" इत्युक्तेर्यथा रविणा लोकहितार्थं रसस्य ग्रहणमेवं प्रजापालनार्थमेव राज्ञा प्रजाभ्यो यत् करस्य ग्रहणं क्रियते तादृशे "अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः। तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तदिति" मनूक्ते राज्ञः २करादानभेदे।

**अर्कसुत** पु॰ हेम॰। १यमे २शनैश्चरे ३सुग्रीवे ४कर्णे ५वाद्रदेवे ६अश्विनीकुमारयोः द्वि॰व॰। ७यमुनायां ८तपत्याञ्च स्त्री

**अर्कसोदर** पु॰ अर्कस्य इन्द्रस्य सोदर इवोपकारकत्वात्। १ऐरावते हस्तिनि २अर्कतुल्ये दुर्द्दर्षे च।

**अर्कहिता** स्त्री हेम॰। १अर्कभक्तायां (हुड़हुड़िया) लतायाम् २सूर्यहितकरे त्रि॰।

**अर्काश्मन्** पु॰ अर्कस्य अनुगतः अश्मा। सूर्य्यकान्तमणौ, स हि सूर्यरश्मिसंपर्कादुज्ज्वलति ततस्तस्यार्कसम्बन्धित्वम्। अर्कइव रक्तः अश्मा। (चुनी) २अरुणोपले।

**अर्किन्** त्रि॰ अर्च्यतेऽनेन मन्त्रेण अर्कोऽर्चनहेतुमन्त्रः सोऽस्यास्ति इनि। अर्चनसाधनमन्त्रयुक्ते। "इन्द्रमिन्द्रमर्केभिरर्किणः" ऋ॰ १, ७, १, 'अर्किणः अर्चनहेतुमन्त्रोपेताः' भा॰ "गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ऋ॰ १, १०, १, १ अर्कोऽर्चनमस्त्यस्य इनि। २अर्चनयुक्ते त्रि॰। "वन्दस्व मारुतं गणं त्वेषम् पनस्युमर्किणम्" ऋ॰ १, ३८, १५। अर्किणम् अर्चनोपेतम् भा॰।

**अर्केन्दुसङ्गम** पु॰ अर्कः इन्दुश्च सङ्गच्छेते यत्र। अमावास्यायां तिथौ तद्दिने हि सूर्य्याचन्द्रमसोरेकराश्येकांशच्छेदेन उपर्यधोभावेन स्थितिः ज्योतिषप्रसिद्धा 'सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः साऽमावास्येति" गोभिलेन तस्यास्तथाविधत्वकीर्त्तनात् तथात्वम्। [पद्मरागे च।

**अर्कोपल** पु॰ अर्कस्यानुगतउपलः। १सूर्य्यकान्तमणौ (चुनी)

**अर्क्य** त्रि॰ अर्च–कर्म्मणि ण्यत् कुत्वम्। १अर्चनीये। अर्कस्यायम् यत्। अर्क्यः अर्कसम्बन्धिनि। "स एष वाकौय एष तपति तस्यैतदन्नं क्यमेष चन्द्रमार्क्यम्" शत॰ब्रा॰।

**अर्गल** स्त्रीन॰ अर्ज-कलच् न्यङ्क्वा॰ कुत्वम्। १कपाटमध्यस्थेरोधके २काष्ठादिदण्डे, "ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती" का॰प्र॰। "पुरार्गलादीर्घभुजा बुभोज" रघुः, "अथानपोढार्गलमप्यगारमिति" रघुः। सप्तशतीस्तोत्रस्यादौ पाठ्ये ३स्तोत्रविशेषे "अर्गलां कीलकं चादौ पठित्वा कवचं पठेत्। जपेत् सप्तशतीं पश्चात्" मत्स्यसूक्तम्। ३कल्लोले, ४कपाटे च न॰ ५क्षुद्रार्गले स्त्री। गौरा॰ ङीष् स्वार्थे कन्। अर्गलिकाप्यत्रार्थे। ६निष्कम्भमात्रे रोधकमात्रे स्त्रीन॰। "वार्य्यर्गलाभङ्ग इव प्रवृत्तः" रघुः। अनुगतनयमार्गामर्गलां दुर्नयस्य" माघः। [वृक्षे

**अर्ग्वध** पु॰ आरग्वधः पृ॰। आरग्वधे (सिंधालि)

**अर्घ** मूल्ये भ्वादि॰ पर॰ सक॰ सेट्। अर्घति आर्घीत्। आनर्घ। अर्घः। अर्घ्यः।

**अर्घ** पु॰ अर्घ–घञ्। क्रेयवस्तुग्रहणार्थं देये तन्मूल्ये रजतादिद्रव्यरूपे १मूल्ये। "कुर्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः" "कुर्य्युरर्घं यथापण्यमिति" च मनुः अर्ह–करणे घञ् न्यङ्क्वादित्वात् कुत्वम्। २पूजोपचारे दूर्वाक्षतादौ। सामगैरयं षयकारः क्लीवलिङ्गश्च प्रयोक्तव्यः अन्यैः पुंलिङ्गोनिर्यकारश्च। अर्घाय देयम् यत्। अर्घ्यम् पूजार्थं देये जलादौ अर्घद्रव्याणि च "आपः क्षीरं

कुशाग्रञ्च दधि सर्पिः सतण्डुलम्। यवः सिद्धार्थकश्चैव षडङ्गोऽर्घः प्रकीर्त्तितः” काशीखण्डम्। “तमर्घ्यमर्घ्यादिकयादिपूरुषः” माघः “अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरतायजो यतः” “अर्घ्यानुपदमाशिषमिति” च रघुः। [पूज्यतमे महादेवे।

**अर्घीश** पु० अर्घोऽस्त्यस्य इनि देयत्वेन तेषु ईशः। सर्व्वदेवेषु

**अर्घ्य** त्रि० अर्हते पूज्यते अर्ह-ण्यत्-न्यङ्क्वा० कुत्वम्-अर्घमर्हति अर्घ+यत् वा। १पूजनीये “तमर्घ्यमर्घ्यादिकयादिपूरुषः माघः”। अर्घाय देयं यत्। २पूजार्थे देये जलादौ। “तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः” कुमा०। “अनर्घ्यमर्घ्येण तमद्रिनाथः” कुमा०। अर्घं मूल्यमधिकमर्हति यत्। ३जरत्कारतपोवनवर्त्तोद्भवे मधुनि न०। तस्य बहुमूल्यत्वात्तथात्वम्।

**अर्च** पूजायाम् उभ० भ्वादि०सक० सेट्। अर्चति ते आर्चीत् आर्चिष्ट। आनर्च-र्चे “पितॄन् वाष्टकास्वर्चेत्” मनुः। “एवं हि सर्वभूतानि ब्राह्मणोनित्यमर्चति” मनुः। “रत्नपुष्पोपहारेण छायामानर्च पादयोः” रघुः “इन्द्रियमाद्यैर्दिशुधाधिपानाम्” “समीहे मर्त्तुमानर्चे तेन वाचाऽखिलं बलम्”। “आर्चीत् द्विजातीन् परमार्थविन्दान्” “प्रानर्चुरर्च्यं जगदर्चनीयम्” “विप्रानर्चंस्तथा स्तुवन्” इति च भट्टिः अर्चिः अर्चकः अर्चितः अर्चितवान् अर्चितुम् अर्चित्वा।

**अर्च** पूजायां चुरा० उभ० सक० सेट्। अर्चयति ते आर्चिचत् त। अर्चयामास “दूरस्थमार्चयेदेनम् मनुः। “स्वर्गौकसामर्चितमर्चयित्वा” कुमा०।

**अर्चक** त्रि० अर्चति अर्च-ण्वुल्। पूजके “ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्चकः’ मनुः स्त्रियां टाप् अत इत्त्वम्।

**अर्चत्रि** त्रि० अर्च-वेदे बा०अत्रि। अर्चनीये। “अर्चत्रयो धुनयो न वीराः” ऋ० ६,६६,१०। “अर्चत्रयः अर्चनीयाः” भा०।

**अर्चत्र्य** त्रि०अर्च-भावे-अत्रि अर्चत्रिमर्चनमर्हति यत्। पूजनीये। “अर्चत्र्योमघवा नृभ्यः” ऋ०६,२४,१। “अर्चत्र्यः अर्चनीयः” भा०।

**अर्चन** न० अर्च-भावे ल्युट्। पूजने। “अरिष्टं नाशयेत् सर्वं यद्दृष्टिग्रहाराधनम् पुरा०। [“निरतः पुरा०।

**अर्चना** स्त्री चु० अर्च-युच्। पूजायाम्। “देवार्चनायां

**अर्चनीय** त्रि० अर्च+अनीयर्। पूजनीये। “प्रानर्चुरर्च्यं जगदर्चनीयम्” भट्टिः।

**अर्चा** स्त्री अर्च-आधारे अङ्। १प्रतिमायाम् “अभिरूप्येण चार्चाया देवः सान्निध्यमृच्छति” ति०त० पुरा०। “देवार्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः” आ०त०। भावेऽङ्। २पूजायाम् “लोकः पश्यमानश्चतुर्भिर्धर्मैः ब्राह्मण्यं भगवदर्चया च दानेन चोज्ज्या दयया च”। शत०ब्रा०।

**अर्चि** स्त्री अर्च-इन्। वह्न्यादिशिखायाम्। “वक्षा इवग्नो अर्चयः प्रतिभद्रा अदृश्रन्” ऋ०१,४८,१२, “तव ज्योतींष्यर्चयः” ऋ०८,४४,१७।

**अर्चित** त्रि०अर्च-क्त। १पूजिते “स्वर्गौकसामर्चितमर्चयित्वा” कुमा० २विष्णौ पु० “अर्चिष्मानर्चितः कुम्भः” वि०स०। “सर्व्वलोकार्चितैर्ब्रह्मादिभिरर्चितः” भा०।

**अर्चिरादिमार्ग** पु०अर्चिरादिभिस्तदभिमानिदेवैः उपलक्षितो मार्गः। देवयाने पथि उत्तरमार्गे। “तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽह्नः, अह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं, संवत्सराद् आदित्यम्, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्थाः” छा०उ०। “आतिवाहिकास्तल्लिङ्गात्” शा०सूत्रे तेषां तदभिमानिदेवतापरतोक्तम् “अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदोजनाः” गीता।

**अर्चिव(म)त्** त्रि० अर्चिरस्त्यस्य मतुप् वेदे मस्य वः। दीप्तियुक्ते। “उद्यन्नजस्रमर्चिवत्” ऋ०७,८,९१,२, “यत्ते पवित्रमर्चिवदग्ने” ऋ०९,६७,२४। लोके तु अर्चिमान्। स्त्रियां ङीप्।

**अर्चिष्मत्** पु० अर्चिर्विद्यतेऽस्य मतुप्। १सूर्ये, २वह्नौ ३उपदेवभेदे च “अर्चिष्मांस्तुम्बुरुश्चैव भोरिश्च वदतांवरः। नेतारो देवदेवानामेते हि तपसान्विताः” हरिवं० ४दीप्ते त्रि०। स्त्रियां ङीप्। सा च ५अग्निपुर्याम्। इन्द्रलोकसमवर्ष्यं “एतस्मादर्चिषे भागे येयं दृश्येत पूः शुभा। इमामर्चिष्मतीं पश्य वीतिहोत्रपुरीं शुभाम्” काशीख० विवरणमग्निलोकशब्दे। ६विष्णौ पु०अर्चितशब्दे उदा०।

**अर्चिस्** न० अर्च-इसि। १वह्न्यादेः शिखायां “प्रदक्षिणार्चिर्व्याजेन” “प्रदक्षिणार्चिर्हविरग्निराददे” “आसीदासन्ननिर्वाणप्रदीपार्चिरिवोषसि” इति च रघुः २मयूखे ३वह्नौ च पु०“तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽह्नः” छा० उ० “अग्निर्ज्योतिरहः शुक्ल” इति गीतावाक्यैकवाक्य-

त्वात् अर्च्चिरस्य वह्निः ४दीप्तिमात्रे न० "प्रथमादर्च्चिषामेतदत्तुङ्गोर्खुरायुधम्" कुमा० ।

**अर्च्य** त्रि० अर्च–स्तुतौ ण्यत् न कुत्वम् चु० अर्च–यत् वा । पूजनीये "प्रानर्चुरर्च्यं जगदर्चनीयम्" भट्टिः ।

**अर्ज** प्रतियत्ने भ्वादि०पर०सक०सेट् । अर्ज्जति, आर्ज्जीत् आनर्ज अर्जकः अर्जितः अर्जितवान् अर्जित्वा उपार्ज्य अर्जन् । "अर्जकोंऽशद्वयमाहरेत्" दाय०स्मृ० "न तत्पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्जितम्" मनुः । "आनर्जुर्नृभुजोऽस्त्राणि" भट्टिः ।

**अर्ज्ज** संस्कारे चुरा० उभ०सक०सेट् । अर्ज्जयति ते आर्जिजत् त । "अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जयेत्" स्मृतिः "परस्वान्यर्जयाचारीरन्यदीयाः पराक्षयन्" भट्टिः । अर्ज्जयितुम् अर्ज्जयित्वा ।

**अर्ज्जक** पु० अर्ज्जयति रज्जुम् अर्ज्ज–ण्वुल् । (बाबुइ) इति ख्याते तृणे, तत्त्वक्तन्तुना हि रज्जुर्निर्म्मीयते । अर्ज्जनकर्त्तरि त्रि० । "अर्ज्जकोंऽशद्वयमाहरेत्" स्मृतिः ।

**अर्जन** न० अर्ज-ल्युट् । १सम्पादने स्वामित्वसम्पादके २व्यापारभेदे च । स्वामित्वहेतवश्च "सप्त वित्तागमाः धर्म्म्या दायोलाभः क्रयोजयः । विभागः सम्प्रयोगश्च सत्प्रतिग्रह एव च" स्मृत्युक्ताः "स्वामी रिक्थक्रयसंविभागाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः" गौ० उक्ताश्च रिक्थादयः साधारणाः सर्व्ववर्णेषु । तत्राप्रतिबन्धोदायोरिक्थं यथा पित्रादिधने पुत्रादेः । अप्रतिबन्धोदायोविभागो यथा पत्नीप्रभृतेः । लब्धं प्रतिग्रहः ब्राह्मणस्य तदसाधारणं "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणोधनमर्ज्जयेदिति" श्रुत्वा ब्राह्मणकर्त्तृकार्ज्जनस्य याजनादिकरणकत्वनियमनात् । क्षत्रियस्य विजितं विजयलब्धमसाधारणम् । निर्विष्टं भृतिः तच्च वैश्यस्य कृषिगोरक्षादिलब्धम् शूद्रस्य शुश्रूषा वेतनं चेति तयोरसाधारणम् । एवञ्च मनुना "सूतानामश्वसारथ्यम्" इत्यादि यदुक्तं तत् सर्व्वं तेषामसाधारणं तदपि निर्विष्टशब्दाभिधेयम्" मिता० शूद्रवत् वर्णसङ्करा इति स्मृतेः "शूद्राणान्तु सधर्म्माणः सर्व्वेऽपध्वंसजा स्मृताः" मनूक्तेश्च तेषां शूद्रधर्म्मातिदेशात्तथा । तच्चार्ज्जनं पुरुषार्थं न यज्ञार्थं तेन यद्यस्य वर्णस्योचितं तदतिरेकेणार्ज्जितेनापि धनेन क्रतुसिद्धिः पुरुषस्य परं नियमातिक्रमे दोषः इति जैमिनीये लिप्साधिकरणे स्थितम् । मिताक्षराकृता तस्य चायमर्थ एवं विवृतः । "यदा द्रव्यार्ज्जननियमानां क्रत्वर्थत्वं तदानियमार्जितेनैव द्रव्येण क्रतुसिद्धिरिति न पुरुषस्य नियमातिक्रमदोषः इति पूर्व्वपक्षे सिद्धान्ते तु अर्ज्जननियमस्य पुरुषार्थत्वात् तदतिक्रमेणार्जितेनापि द्रव्येण क्रतुसिद्धिर्भवति पुरुषस्यैव नियमातिक्रमाद्दोष इति नियमातिक्रमार्जितस्यापि स्वत्वमङ्गीकृतम् अन्यथा क्रतुसिद्ध्यभावात् । नचैतावता चौर्य्यादिप्राप्तस्यापि स्वत्वं स्यादिति मन्तव्यम् । लोके तत्रतत्र स्वत्वप्रसिद्ध्यभावात् व्यवहारविसंवादाच्च" इति । एवञ्च प्रतिग्रहाद्युपायकं स्वत्वं लौकिकमेव अतएव "सप्त वित्तागमा धर्म्म्याः" इत्यनेन तेषां धर्म्महेतुत्वमात्रमुक्तं न तु भृतिप्रभृतीनां तत्रानुक्तानां स्वत्वाहेतुत्वमपि "अर्जयितृव्यापारोऽर्ज्जनमिति" दायभा० । "अर्जं स्वत्वं नापादयतीति" मिता० । "कणिशाद्यर्जनं शिलम्" मनुः । "अर्थानामर्जने दुःखमिति" नीति० अर्जधातोः प्रतियत्नार्थकतया विद्यमानपदार्थस्यैव स्वत्वसम्पादनार्थकत्वेन तस्य तथात्वम् ।

**अर्जुन** पु० अर्ज्ज–उनन् । स्वनामख्याते १वृक्षे, "सोऽङ्गनाभिः स्मृतः कृष्णः कर्षमाण उदूखलम् । यमलाभ्यां प्रवृत्ताभ्यामर्ज्जुनाभ्यां निवारितः । मध्यान्निष्क्राम तयोः शिशुः कर्षन्नुदूखलम् । ततस्य कर्षतो बद्धं तिर्य्यग्गतमुदूखलम् । लग्नं ताभ्यां समूलाभ्यामर्ज्जुनाभ्यां चकर्ष सः । तावर्ज्जुनौ कृष्यमाणौ तेन बालेन वचसा । समूलविटपौ भग्नौ स च मध्ये जहास वै" इति हरिवं० । "कदम्बसर्जार्ज्जुननीपकेतकी" ऋतु० । २मध्यमपाण्डवे शुद्धचरितत्वान्मध्यमपाण्डवस्यार्ज्जुनत्वम् । "पृथिव्यां चतुरन्तायां वर्णोमे दुर्लभः समः । करोमि कर्म्म शुक्लञ्च तेन मामर्ज्जुनं विदुः" भा० वि० प० उत्तरं प्रति तस्य स्वनामव्युत्पत्तिकथनम् । स च पाण्डोः क्षेत्रे कुन्त्यां शक्रेण जनितः "एवमुक्ता ततः शक्रमाजुहाव यशस्विनी अथाजगाम देवेन्द्रो जनयामास चार्ज्जुनम् । जातमात्रे कुमारे तु वागुवाचाशरीरिणी । महागम्भीरनिर्घोषा नभोनादयतीव ह । शृण्वतां सर्व्वभूतानां तेषां चाश्रमवासिनाम् । कुन्तीमाभाष्य विस्पष्टमुवाचेदं शुचिस्मिताम् । कार्त्तवीर्य्यसमः कुन्ति ! शिवतुल्यपराक्रमः । एष शक्र इवाजय्यो यशस्ते प्रथयिष्यति । अदित्या विष्णुना प्रीतिर्य्यथाऽभूदभिवर्द्धिता । तथाविष्णुसमः प्रीतिं वर्द्धयिष्यति तेऽर्ज्जुनः" । भा० आ० प० । "पार्थः कर्णवधाय मार्गणगणान् यानर्ज्जुनः संदधे" लीला० ३हैहयाधिपे कार्त्तवीर्य्ये, "एतस्मिन्नेव काले तु कृतवीर्य्यसुतोबली ।

अर्ज्जुनो नाम तेजस्वी क्षत्रियो हैहयाधिपः। दत्तात्रेयप्रसादेन राजा बाहुसहस्रवान्। चक्रवर्त्ती महातेजा विप्राणामाश्वमेधिके। ददौ स पृथिवीं सप्तद्वीपां सपर्वताम्"। हरिवं० ४करवीरे, ५मयूरे, "तथाख्याताभियुक्तः" ईदृशे ७धवले। ८शुभ्रतागुणवति त्रि०। "अहश्च कृष्णमहरर्ज्जुनं च" ऋ० ६,९,१, "अर्ज्जुनं सौरेण तेजसा शुक्लवर्णम्" भा०। "कृष्णा रूपाण्यर्ज्जुना वि वो मदे विश्वा" ऋ०१०,२१,३ "हे अग्ने! त्वं कृष्णा कृष्णान्यर्ज्जुना अर्ज्जुनानि श्वेतवर्णानि" भा० "पिशङ्गमौञ्जीयुजमर्ज्जुनच्छविम्" माघः। (आजनि) इति ख्याते ९नेत्ररोगभेदे "एकोयः शशरुधिरोपमस्तु बिन्दुः शुक्लस्थो भवति तदर्ज्जुनं वदन्ति" माधवः। एकस्या मातुरेकस्मिन् १०पुत्रे मेदि० ११इन्द्रे "अर्ज्जुनो वै इन्द्रो यदस्य गुह्यं नाम" शत०ब्रा०। अर्ज्जुनस्यापत्यम् इञ्। आर्ज्जुनिः अभिमन्यौ।

अर्ज्जुनध्वज पुंन०हैत०। हनूमति। विवरणं कपिध्वजशब्दे।

अर्ज्जुनपाकी स्त्री अर्ज्जुनः श्वेतः पाकः फलादिः यस्याः ङीप्। श्वेतपाक्यां लताभेदे हरितक्यादित्वात् फले जातस्याणोलुप् लुपि प्रकृतिव्यक्तिवचने। अर्ज्जुनपाकी तत्फले स्त्री। [३स्त्रियां गवि, ४कुट्टिन्याञ्च।

अर्ज्जुनी स्त्री गौरा० ङीष्। १उषायां, २बाहुदायां, नद्याम्

अर्ज्जुनोपम पु० अर्ज्जुनः स्वनामख्यातः वृक्ष उपमा यस्य। (सेगुन) इति ख्याते १शाकद्रुमे, २मञ्जुपत्राख्यवृक्षे च।

अर्ण पु० ऋ-न। अकारादौ १वर्णे "पञ्चार्णोमनुरीरितः" तन्त्रम्। २गमनस्वभावे त्रि०। "अर्णोरपो अनवद्यार्णाः" ऋ० १,१७४,२ "अर्णाः चरणस्वभावाः" भा० "त्वं चिदर्णं मधुपः" ऋ०५,३२,८ "अर्णं गन्तारम्" भा०। ३जले न० "अग्ने! दिवो अर्णमच्छा" ऋ०३,२२,३। "अर्णमम्भः" भा०। अर्णो जलमस्त्यस्य अर्श० अच्। ४नद्याम् स्त्री। "वर्धन्तामभियाता अर्णाः" ऋ०५,४१,१४। "अर्णाःनद्यः, भा०। अभि+अर्द्द-क्त इड्भावादि। अभ्यर्णम्। नि+न्यर्णम् वि+व्यर्णम् सम्+समर्णम् अभ्यासादौ न०तद्वर्त्तिनि त्रि०। "कालोऽभ्यर्णं जलागमः" इति सा०द०। "कृष्णार्णवाभ्यर्णचरैकहंसः" माघः।

अर्णव पु० अर्णांसि सन्त्यस्मिन् अर्णस्+व सलोपः। १समुद्रे। "यादोरत्नैरिवार्णवः" रघुः "कृष्णार्णवाभ्यर्णचरैकहंसः" माघः २उदकयुक्ते त्रि० "ततः समुद्रादर्णवात्" सन्ध्यामन्त्रः "तिरः समुद्रमर्णवम्" ऋ०१,१९,७। "अर्णवमुदकयुक्तम्" भा०। अर्णांसि दातृत्वेनास्त्यस्य मतुप् मलोपः। जलदातरि ३सूर्य्ये ४इन्द्रे च "आदित्याज्जायते वृष्टिः" गीतोक्तेः सूर्य्यस्य पर्ज्जन्याधिपत्वाच्च शक्रस्य जलदातृत्वात्तथात्वम्। "समानुरर्णवो न्यचक्राः" ऋ० २,१९,२ "शतक्रतुमर्णवं शाकिनं नरम्" ३,५१,२, "अर्णवं पर्ज्जन्यात्मनोदकवन्तम्" भा०। ५सजले च। "अजएकपादनिहुरर्णवम्" ऋ०१०,६६,११। "ब्रह्मलोके एतादेवताः सृष्टा अस्मिन्नमृतार्णवे" ऐ०ब्रा०। अस्य समुद्रवाचित्वेन क्षीरार्णवः जलार्णवः लवणार्णवः इत्यादौ आधारतामात्रबोधः।

अर्णवज पु० अर्णवात् जायते जन-ड ५त०। १समुद्रफेने रत्नमा०। २समुद्रजातमात्रे त्रि०। अर्णवजातादयोऽप्यत्र।

अर्णवमन्दिर पु० अर्णवः मन्दिरमिव यस्य। वरुणे।

अर्णवोद्भव पु० उद्भवत्यस्मात् उद्+भू-अपादाने अप् अर्णव उद्भवोऽस्य। १अग्निजारवृक्षे २चन्द्रे च ३अमृते न०। ४श्रियां स्त्री।

अर्णस् न० ऋच्छति ऋ-असुन् उदके नुट् चेति, नुट्। जले। "अवर्णमर्णः कथमन्यथास्य" माघः। "सिन्धुर्नैपिप्येऽर्णसा" ऋ०९,१०७,१२। [त्रि०।

अर्णस पु० अर्णोऽस्त्यस्य अर्श० अच्। १समुद्रे २जलवति

अर्णस्वत् पु० अर्णांसि सन्त्यस्मिन् मतुप् मस्य वः १समुद्रे २जलवति त्रि०।

अर्णोद पु० अर्णांसि ददाति दा-क। १मेघे २मुस्तके च जलदातरि त्रि०। [२जलोद्भवमात्रे त्रि०।

अर्णोभव पु० अर्णसि जले भवति भू-अच् ७त०। १शङ्खे

अ(आ)र्त्तगल पु० आर्त्त इव गलति गल-अच् पृषो० वा ह्रस्वः। नीलझिण्टिकायाम्। ह्रस्वाभावे आर्त्तगलश्च।

अर्त्तन न० ऋत-ल्युट् पक्षे इयङभावः। निन्दायाम्।

अर्त्ति स्त्री अर्द्द-क्तिन्। १पीडायाम्। करणे क्तिन्। २धनुष्कोट्याम्। "नान्नं वाञ्छति नो निद्रामुपैत्यर्त्तिनिपीडितः" सुश्रुतः।

अर्त्तिका स्त्री। ऋत-ण्वुल्। नाट्योक्तौ ज्येष्ठभगिन्याम्।

अर्त्तुक त्रि० ऋत-बा० उकञ्। स्पर्द्धके। "समदैनान्निन्द्रत्वर्त्तुकाः भवन्त्यपि हतमर्धं समहिन्दति" शत०ब्रा०।

अर्थ याचने अद०चु०आत्म०द्विक०सेट्। अर्थयते आर्त्थयत। अर्थयामास। अर्थकः अर्थी अर्थितः अर्थ्यः अर्थनीयः अर्थयितम् अर्थनम् अर्थना। अर्थयित्वा अर्थयिता "सुराः समभ्यर्थयितार एते" कुमा०। "अवकाशं किलो-

इत्यात् रामायाभ्यर्थितो ददौ" रघुः "अग्लोपित्वं स्थानिवत्त्वाद्नस्य प्रयोजनम् यत्र त्वेते न विद्येते तत्राग्लोपविकल्पनम्। तद्बलादन्यदीर्घश्च पुक् चेत्यङ्गापयत्यपि"कामधेनूक्तेः पुक्–दीर्घश्च अर्थापयते। सम्+समर्थने समर्थयते समर्थनञ्च प्रमाणेन व्यवस्थापनम्। कु पीड़ने कदादेशः कदर्थयते। अभि+आभिमुख्येन प्रार्थने अभ्यर्थनीयः। "अभ्यर्थनाभङ्गभयेन साधुः" कुमा०। प्रति+प्रतिकूलाचरणे प्रत्यर्थी। "प्रत्यर्थीभूतामपि तां समाधेः" कुमा०।

अर्थ पु० अर्थ भावकर्म्मादौ यथायथम् अच्। १अभिधेये २शब्दशक्त्या बोध्ये पदार्थे च "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" का०प्र०। आलङ्कारिकमते स च अर्थस्त्रिविधः वाच्यो लक्ष्यो व्यङ्ग्यश्चेति भेदात्। "अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः। वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः। व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः" सा०द०। तास्र तत्तच्छब्दे वक्ष्यन्ते। अन्यमते "तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने। तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे"। इति तात्पर्य्यप्रतिपाद्योऽप्यपरः अर्थभेदः। स च अभिहितान्वयशब्दे विवृतः। ३धने। तस्य सर्व्वैरर्थनीयत्वात्तथात्वम् "अजरामरवत् प्राज्ञोविद्यामर्थाञ्च चिन्तयेत्" "अर्थस्योपार्ज्जने क्लेशस्ततोऽपि परिरक्षणे" नीति०। स चार्थस्त्रिविधः शुक्लः शवलः कृष्णश्चेति भेदात् यथा "अथ स्वहार्य्यमिथस्त्रिविधोऽर्थो भवति। शुक्लः शवलोऽसितश्चेति। शुक्लेनार्थेन यदैहिकं करोति तद्देवमासादयति। शवलेन तन्मानुष्यम्, यत्कृष्णेन तत्तिर्य्यक्त्वम्॥ स्ववृत्त्युपार्जितं सर्व्वं सर्व्वेषां शुक्लम्। अनन्तरवृत्त्युपात्तं शवलम्। अन्तरितवृत्त्युपात्तञ्च कृष्णम्। क्रमागतं प्रीतिदायम् प्राप्तञ्च सह भार्य्यया। अविशेषेण सर्व्वेषां धनं शुक्लं प्रकीर्त्तितम्॥ उत्कोचशुल्कसंप्राप्तमविक्रेयस्य विक्रये। कृतोपकारादाप्तञ्च शवलं समुदाहृतम्॥ पार्श्विकद्यूतचौर्य्याप्तं प्रतिरूपकसाहसैः। व्याजेनोपार्जितं यच्च तत् कृष्णं समुदाहृतम्॥ यथाविधेन द्रव्येण यत्किञ्चित् कुरुते नरः। तथाविधमवाप्नोति स फलं प्रेत्य चेह च" विष्णु०सू०॥ ४प्रयोजने इष्टे। प्रयोजनञ्च इच्छाविषयः। तच्च गौणमुख्यभेदेन द्विविधम् यत्र अन्येच्छानधीनेच्छा जायते तत् मुख्यं यथा सुखं दुःखाभावश्च तयोरिच्छाया अन्येच्छानधीनत्वात्। साक्षात् परम्परया वा तत्साधनं तु गौणं तत्र सुखदुःखाभावेच्छयैव इच्छोदयात् गौणत्वम्। प्रयोजनञ्च यद्यपि नानाविधम् तथापि शास्त्रकारैः प्राधान्येन धर्म्मार्थकाममोक्षरूपाणि चत्वार्य्येवाङ्गीकृतानि तत्रैव सर्व्वप्रयोजनानामन्तर्भावात्। तएव चत्वारः पुरुषार्थाः पुरुषैष्यमाणत्वात्। सांख्यास्तु सर्गापवर्गात्मकं द्विविधं पुरुषार्थमाहुःपुरुषस्य प्रयोजनसिद्धिस्य प्रकृतेः प्रवर्त्तनात्। एवं चतुर्विधे द्विविधे वा पुरुषार्थे मतभेदेन स्थिते तेषु मध्ये मोक्षएव परमपुरुषार्थः "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" सा०सू०। "इह खलु धर्म्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्षएव परमपुरुषार्थः" वे०प०। दुःखात्यन्तनिवृत्तिरूपमुख्यप्रयोजनस्य अन्येच्छानधीनेच्छाविषयत्वात् प्राधान्यम्। धर्म्मार्थकामास्तु तत्साधनानि तत्रापि धर्म्मोऽर्थसाधनम् अर्थः कामस्य साधनमित्यवान्तरभेदः "इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः" रघुः। "ज्ञातार्थोज्ञातसम्बन्धः श्रोतुं श्रोता प्रवर्त्तते" इत्यत्रार्थपदेनाभिधेयप्रयोजनयोर्ग्रहणम् "कस्यार्थकामौ वद पीड़यामि" "अप्यर्थकामौ तस्यास्तां धर्म्म एव मनीषिणः" रघुः। ५निमित्ते "अतोऽर्थात् प्रमाद्यन्ति प्रमदासु विपश्चितः" मनुः अर्थात् हेतोः कुल्लू० "अर्थोऽयमर्थान्तरलभ्य एव" कुमा० "अर्थान्तरं कारणान्तरमिति" मल्लि०। निमित्तञ्च कारणमुद्देश्यञ्च तत्र निमित्तार्थेन "अर्थेन तु नित्यसमासो विशेष्यनिघ्नता चेति" वार्त्तिकोक्तेः नित्यचतुर्थीसमासः। द्विजार्थं पयः। द्विजार्था यवागूः। यूपार्थं दारु। भाष्यकृता तु यूपार्थं दारु इत्यादौ बहुव्रीहिरपि साधुः स्वरे विशेष इत्युक्तम् "अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः" गीता "मदर्थमपि कर्म्माणि कुर्व्वन्नाप्नोति किल्विषम्" गीता "मदर्थसन्देशमृणालमन्थरः" नैष०। "परलोकसहायार्थं सर्व्वभूतान्यपीड़यन्" "तस्माद्धर्म्मं सहायार्थं" इति च मनुः। कर्म्मणि–अच्। ६विषये शब्दादौ। "इन्द्रियाणीन्द्रियार्थेभ्यः" गीता "इन्द्रियेभ्यः पराह्यर्था ह्यर्थेभ्यश्च परं मनः" क०उ०। ७घटादिवस्तुनि "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्" गौ० सू०। अत्रार्थः घटादिवस्तुमात्रम्। राज्ञ उपाये ८सन्धिविग्रहादौ अर्थचिन्ताशब्दे उदा०। ९वस्तुस्वभावे यथार्थम्। १०निवर्त्तनीये मशकार्थो धूमः। ज्योतिषोक्ते ११लग्नावधिद्वितीयभवने १२प्रकारे। भावे अच् १३अभिलाषे १४प्रार्थने च कर्म्मणि यत् १५अर्थनीये विष्णौ पु० "अर्थोऽनर्थो महाकोषः" वि० स० "सुखरूपतया सर्व्वैरर्थ्यत इत्यर्थः। भा० १६फले। अर्थाय साधुः अर्था-

दनपेतो वा यत् अर्थ्यः । अर्थादनपेते अर्थसाधने च त्रि० । "अर्थ्यामर्थपतिर्वाचम्" रघुः । "वागीशं वाग्भिरर्थ्याभिः" कुमा० ।

**अर्थकर** त्रि० अर्थं करोति कृ-हेत्वादौ ट । अर्थहेतुकर्मकारके स्त्रियां ङीप् । अर्थकरी दण्डनीत्यादिविद्या ।

**अर्थकृच्छ्र** न० अर्थविषये कृच्छ्रम् । अर्थस्य प्रयोजनस्य कृच्छ्रतायाम् कष्टसाध्यत्व एव तस्य तथात्वम् ।

**अर्थकृत्** त्रि० अर्थं करोति-कृ-क्विप् । अर्थकारके ।

**अर्थक्रम** पु० ६त० क्रमनिर्णयाय श्रुतशब्दक्रमातिक्रमेणाश्रयणीये प्रयोजनानुसारिक्रमे यथा पाठक्रममनादृत्याग्निहोत्रसाधनतया यवागूपाकः प्राक्क्रियते अग्निहोत्ररूपप्रयोजनादेः यवागूसाध्यत्वात्तथात्वम् यथोक्तं मीमां० यत्र प्रयोजनवशेन क्रमनिर्णयः स अर्थक्रमः । यथा अग्निहोत्रं जुहोति यवागूं पचतीत्यग्निहोत्रहोमयवागूपाकयोः । यवाग्वा होमसाधनत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते । स चायं पाठक्रमाद्बलवान् । यथापाठं ह्यनुष्ठाने क्रमस्य प्रयोजनबाधेऽदृष्टार्थत्वं स्यात् । नहि होमानन्तरं क्रियमाणस्य पाकस्य किञ्चिद् दृष्टं प्रयोजनमस्ति येनार्थक्रमबाधेन पाठक्रमस्यात्रादिः क्रियेत" ।

**अर्थगत** त्रि० अर्थं गतः । १अर्थनिष्ठे अर्थाश्रये अलङ्कारोक्ते २दोषभेदे पु० अर्थदोषशब्दे विवरणम् । गतोऽर्थोऽस्य आहिता० वा परनि० । ३गतार्थे त्रि० ।

**अर्थगौरव** न० ६त० स्वल्पशब्दस्यापि अर्थस्य गौरवम् । "भारवेरर्थगौरवम्" उद्भटः ।

**अर्थघ्न** त्रि० अर्थं हन्ति ताच्छील्यादौ ट स्त्रियां ङीप् । अर्थनाशके "व्याधिता वाऽधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा" मनुः ।

**अर्थचिन्ता** स्त्री अर्थानां तन्त्रावापादीनां चिन्ता । राज्याङ्गतन्त्रावापादीनां चिन्तने । "मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावपादयः" सा०द० । अर्थचिन्तनमप्यत्र न० "मन्त्री स्वस्योभयस्यापि सखा तस्यार्थचिन्तने" इति । सा०द० धृतमतम् । [अर्थोजातोऽस्य । २जातधने त्रि० ।

**अर्थजात** न० अर्थानां जातम् ६त० । १अर्थसमूहे ।

**अर्थज्ञ** त्रि० अर्थं जानाति ज्ञा-क । प्रयोजनाभिज्ञे ।

**अर्थतस्** अव्य० अर्थ+तसिल् । १अर्थादित्यर्थे २अर्थानुसारेणेत्यर्थे ३वस्तुस्वभावादित्यर्थे च । "अर्थतोऽप्यहयामन्द्रानतीतदर्शमानतः" वे० सा० ।

**अर्थद** त्रि० अर्थान् धनानि ददाति दा-क । १धनदे धनदानेन तोषकेऽध्यापके २शिष्यभेदे पु० । "आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । आप्तः शक्तोऽर्थदः साधुः स्वाध्याप्या दश धर्मतः" इति मनुः । ३कुबेरे पु० ।

**अर्थदूषण** न० अर्थानां दूषणं नाशनम् । क्रोधजव्यसनमध्ये अतिशयेनासत्कर्मणि विनियोगेन कष्टदायके धननाशनरूपे व्यसनभेदे । "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" इति "दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदेति च" मनुः । "अर्थदूषणञ्च धनानामपहारः देयानामदानञ्चेति" म०त० रघुनन्दनः । [साधुः" कु०

**अर्थना** स्त्री अर्थ-युच् । याचने । "अभ्यर्थना भङ्गभयेन

**अर्थपति** पु० अर्थानां पतिः ६त० । १नृपे, । "अर्थ्यामर्थपतिर्वाचम्" सनैषधस्यार्थपतेः सुतायाम्" "किञ्चिद्विहस्यार्थपतिर्बभाषे" । "बलनिषूदनमर्थपतिञ्च तम्" इति च रघुः । २कुबेरे च ।

**अर्थप्रकृति** स्त्री अर्थानां प्रयोजनानां प्रकृतिः कारणम् । ६प्रयोजनहेतौ । "वीजं बिन्दुः पताका च प्रकरी कार्यमेव च । अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि" सा०द० उक्ते नाटकाङ्गे २कार्य्यवीजरूपपदार्थे च ।

**अर्थप्रयोग** पु० अर्थानां धनानां प्रयोगः नियोगः । ऋणदानादिवृत्तौ १ऋणदानवाणिज्यादिरूपे धनवर्द्धके व्यवहारे । अर्थास्तन्त्रावापादयः ६त० । २यथायथं तन्त्रावापादेर्विनियोगे च । "अर्थप्रयोगकुशल" इति अमात्यलक्षणम् ।

**अर्थप्राप्त** पु० अर्थतः वाचकशब्दाप्रयोगेऽपि तात्पर्य्यवशतः प्राप्तः । वाचकशब्दानुच्चारणेऽपि तात्पर्य्यवशात् प्राप्ते "अर्थप्राप्त एवात्मज्ञानविधेरेव यज्ञोपवीतादिपरित्यागो न विधातव्यः" छ०उ०भा० ।

**अर्थबन्ध** पु० अर्थैः विषयैः शब्दादिभिर्बन्धः । १जीवस्य शब्दादिभिः श्रोत्रसम्बन्धरूपे बन्धे २धनकृतबन्धे च ।

**अर्थभावना** स्त्री अर्थनिष्ठा भावना भावयितृव्यापार उत्पादना । भट्टमतोक्तायामर्थनिष्ठायां यागसाधनिकायां स्वर्गाद्युत्पादनायां स्वर्गादीष्टं यागेन साधयेदित्येवंरूपायाम् । भावना च द्विधा शाब्दी आर्थी च विवरणं भावनाशब्दे ।

**अर्थमर्य्यादा** स्त्री अर्थस्य कारणस्य मर्य्यादा इतरसहकारेण सामग्रीसमवधानम् । सामग्रीसमवधाने, १सामग्रीसमवधाने इ

कार्य्योत्पत्तिरर्थमाप्नोति तद्दुत्पादस्यार्थमर्य्यादाधीनत्वम् ।

**अर्थमात्र** न० अर्थ एव मयूर० अवधारणाद्यर्थमात्रशब्देन नित्यस० । १अवधारितेऽर्थे । "भोजनाच्छादनाभ्यधिकं स्वत्वमर्थमात्रं न सम्पद्यते" इति ह०भा० । अल्पार्थमात्रा शब्देन द्वित० । २अल्पधनांशे स्त्री इह स्वार्थे च मात्राशब्देन । द्वित० ।३धनराशौ । कथं मयास्त्वेवमर्थमात्राहर्त्तव्या" महती धनमात्रेत्यर्थः ।

**अर्थवत्** त्रि० अर्थोऽस्त्यस्य अभिव्हितः मतुप् मस्य वः । १अर्थयुते २सार्थके "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" पा० । ३प्रयोजनयुक्ते ४फलयुक्ते च "अपसव्य उपेतयो दाहितान्याहृतार्थवत् । या०स्मृ० "विपक्वलोतृपर्ग गृह्याथं अदाद्यादेयमर्थवत्" मनुः ५असञ्चितधनवति त्रि० । सन्निहिते तु इति अर्थीत्येव । स च व्यवहारे वादिनि रूढः "ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधनम्" या०स्मृ० । स्त्रियामुभयत्र ङीप् । ५पुरुषे पु० राजनि० । अर्थमर्हति अर्थेन तुल्यं क्रिया, अर्थे इव वा वति । ६अर्थार्हे ७अर्थतुल्यक्रियायाम् ८अर्थसदृशे आश्रये च अव्य० ।

**अर्थवाद** पु० अर्थस्य वक्ष्यया स्तुत्यर्थस्य, निन्दार्थस्य वा वादः वद-करणे घञ् । १प्रशंसानीयगुणवाचके, २निन्दनीयदोषवाचके च शब्दविशेषे । भावे घञ् । ३तत्कथने । अभिधया गौण्या वा वृत्त्या भूतमर्थं वदन् स्वाध्यायविध्यापादित प्रयोजनवत्त्वलाभाय विधिमाकाङ्क्षन्नर्थवादः" अर्थवादेन हि कश्चिद्विधिशक्तिरवसोदन्ती विध्यर्थे शीघ्रं प्रवर्त्तयितुमुत्तभ्यते । स च चतुर्विधः "स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः" गौ० सूत्रोक्तेः । तत्र स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यं यथा "सर्वस्य जिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयतीत्यादि" । अनिष्टसाधनताद्वारा विध्यर्थप्रवर्त्तकं वाक्यम् निन्दा । यथा "एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः य एतेनानिष्ट्वाऽन्येन यजते स गर्त्ते पततीत्यादि" । पुरुषविशेषनिष्ठतया कथनं परकृतिः परक्रिया, यथा "वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेःप्राणाः पृषदाज्यमित्यभिदधतीत्यादि" ऐतिह्यमात्रचरिततया कीर्त्तनं पुराकल्पः । एवमन्येऽपि अर्थवादा ब्राह्मणरूपाः सामसंहिताभाष्ये माधवाचार्य्येण दर्शिताः यथा "हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः । परकृतिः पुराकल्पोव्यवधारणकल्पना" इति "तेन ह्यन्नं क्रियत" इति हेतुः "एतद्ध्योदधित्वमिति" निर्वचनम् । "अमेध्या वै माषा" इति निन्दा "वायुर्वै क्षेपिष्ठेति" प्रशंसा "तद्व्यचिकित्सन् जुहवानीमा३होषा३मिति" संशयः "यजमानेन संमिता औदुम्बरी भवतीति" विधिः "माषानेव मह्यं पचते" इति परकृतिः "पुरा ब्राह्मणा अभैषुः" इति पुराकल्पः । "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति" विशेषावधारणकल्पनेत्युदाहृतं च तत्रैव । लौगाक्षिणा तु त्रैविध्यमुक्तम् "अर्थवादश्च त्रिविधः गुणवादोऽनुवादोभूतार्थवादश्चेति तदुक्तम् ॥ "गुणवादो विरोधे स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः" ॥ गुणवादश्च "यथा सिंहो माणवक" इत्यादौ माणवके सिंहाभेदस्य विरोधेन तद्गतद्गुणाभेदो बोध्यते तेन समर्थत्वादिरूपं तद्वृत्तिगुणमनुवदति प्रतिपादयतीति गुणवादः अन्ये तु "यजमानः प्रस्तर" इत्यादौ प्रत्यक्षादिभिरवधारितेऽर्थे तमेवार्थमनुवदतीत्यनुवादः यथा "वह्निर्हिमस्य भेषजं, "भूमिरावपनं महत् सूर्यस्तापकर" इत्याहुः । तद्धानादेतदुभयार्थकत्वाभावात् तथा चैतदुभयभिन्नं भूतं सिद्धार्थं वदतीति भूतार्थवादः इति । अयञ्चानेकविधः क्वचिदुक्तः, स्तुत्यर्थवादः फलार्थवादः सिद्धार्थवादः निन्दार्थवादः परकृतिः पुराकल्पः मन्त्रश्चेति" । तत्र स्तुत्यर्थवादो यथा "वायुर्वै क्षेपिष्ठा देवता" इत्यादि । फलार्थवादो यथा "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेतेत्यादि" । "प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यादि" च यद्यप्येतस्य परकृतावेव पर्य्यवसानं तथापि फलस्य विशेष्यतयाऽनभिधानात्तादृशेण पृथगुपन्यासः ॥ सिद्धार्थवादो यथा । "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदमित्यादि" ॥ निन्दार्थवादो यथा "अन्धन्तमस्ते प्रविशन्ति ये के चात्महनो जना" इत्यादि ॥ परकृतिः परकृत्यभिधानं परक्रियोक्तिः । एवञ्च लौगाक्षिभास्करोक्तस्य "विरोधेनानुवादः स्यादित्यादि कारिकोक्तस्य त्रैविध्यस्य मध्ये स्तुत्यर्थवादस्यैवावान्तरभेदेन तस्य सप्तविधत्वमिति भेदः । २अन्यतात्पर्य्यावधारणार्थे लिङ्गषट्कान्तर्गते लिङ्गभेदे च । "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्य्यनिर्णये इति वे०सा० यथा "उत तमादेशमप्राक्ष्यो" येनाश्रुतं श्रुतम् इत्यादिनाऽद्वितीयवस्तुनः प्रशंसनम्" का० उ० भा० उक्तम् ।

**अर्थविज्ञान** न० ६त० शुश्रूषाद्यष्टविधासु बुद्धिगुणान्तर्गते गुणभेदे हे० ।

**अर्थविद्** त्रि० अर्थं कार्यं वेत्ति विद-क्विप् । कार्य्याभिज्ञे

"विवक्षितामर्थविदस्तत्क्षणं प्रतिसंहृताम्" माघः ।

**अर्थविप्रकर्ष** पु० अर्थस्य अर्थबोधस्य विप्रकर्षः बोधनस्य विलम्बेनोत्पादनम् । पूर्व्वपूर्व्वमपेक्ष्य उत्तरोत्तरस्य विलम्बेनार्थबोधने "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" जै०सू० । तथाहि अनपेक्षरवरूपायाः द्वितीयादिश्रुतेः अर्थप्रकाशनसामर्थ्य-रूपलिङ्गापेक्षया शीघ्रार्थबोधकत्वम् इति तस्याः सर्वतः प्राबल्यम् एवं लिङ्गस्य वाक्याद्यपेक्षया शीघ्रार्थोपस्थापकतया बलवत्त्वम् । विवृतिः बलाबलाधिकरणशब्दे ।

**अर्थव्ययज्ञ** त्रि० अर्थस्य धनस्य व्ययं तत्प्रकारं जानाति ज्ञा—क । किं धनं, कथं,कुत्र, कियत्, कस्मै वा व्ययितव्यमिति विशेषाभिज्ञे ।

**अर्थव्यपाश्रय** पु०अर्थस्य प्रयोजनस्य व्यपाश्रयः । १प्रयोजनसम्बन्धे २अभिधेयाश्रये । ब० । ३सप्रयोजने त्रि० ।

**अर्थशास्त्र** न० अर्थस्य भूमिधनादेः प्रापकं शास्त्रं शाक०त० । १नीतिशास्त्रे, अभिचारादिकर्म्मप्रतिपादके २शास्त्रे च । "अर्थशास्त्रात्तु बलवत् धर्म्मशास्त्रमिति स्थितिः" या०स्मृ० विवृतमेतन्मिताक्षरायाम् "यद्यपि समानकर्त्तृकतया अर्थशास्त्रधर्म्मशास्त्रयोः स्वरूपगतो विशेषोनास्ति तथापि प्रमेयस्य धर्म्मस्य प्राधान्यादर्थस्य चाप्राधान्याद्धर्म-शास्त्रं बलवदित्यभिप्रायः धर्मस्य च प्राधान्यं शास्त्रादौ दर्शितन्तस्माद्धर्मशास्त्रार्थशास्त्रयोर्विरोधे अर्थशास्त्रस्य बाध एव । 'गुरुर्वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषोहन्तुर्भवति कश्चन । प्रकाशं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति" तथा "आततायिन मायान्तमपि वेदान्तगं रणे । जिघांसन्तञ्जिघांसीयान्न तेन ब्रह्महा भवेत्" इत्याद्यर्थशास्त्रम् । "इयं विशुद्धिरुदिता प्रमाप्याकामतोद्विजम् अकामतो ब्रह्मवधे निष्कृतिर्न विधीयते" इत्यादि धर्म्मशास्त्रन्तयोर्विरोधे धर्म्मशास्त्रं बलवदिति युक्तं"मित्यन्यमतसत्त्वा । "हिरण्यभूमिलाभेभ्योमित्रलब्धिर्वरा यतः । अतो यतेततत् प्राप्तौ" इत्यर्थशास्त्रम् । "धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्जितः" इति धर्म्मशास्त्रम् । तयोः क्वचिद्विषये विरोधो भवति यथा चतुष्पाद्व्यवहारे प्रवर्त्तमाने एकस्य जयेऽवधार्य्यमाणे धर्म्मानुसरणम् न मित्रलाभः । अन्यस्य तु जये मित्रलब्धिर्न धर्म्म-शास्त्रमनुसृतम्भवति तत्रार्थशास्त्राद्धर्मशास्त्रं बलवत् अतएव "धर्मार्थसन्निपाते अर्थग्राहिण एतदेवेति" प्रायश्चित्तस्य गुरुत्वन्दर्शितमापस्तम्बेन" इति ।

**अर्थशौच** अर्थानां तदुपायानां शौचम् तदर्जने शुद्धिः । अन्यायेन धनोपार्ज्जनपरिहारेण अर्थार्ज्जनशुद्धौ "सर्व्वेषामेव शौचानामर्थशौचं परं स्मृतमिति" मनुः ।

**अर्थसंग्रह** पु० ६त० । धनसञ्चये ।

**अर्थसंस्थान** न० अर्थानां धनानां संस्थानं स्थितिर्यस्मात् सम्+स्था—अपादाने ल्युट् वा । १धनोपार्जनसाधन प्रतिग्रहादौ । २भावे ल्युट् ६त० । ३अर्थस्थितौ ।

**अर्थसञ्चय** पु० अर्थानां धनानां सञ्चयः संग्रहः समुदायश्च । १धनसंग्रहे । "कुदेशमासाद्य कुतोऽर्थसञ्चयः" इति नीति० । २धनसमूहे च ।

**अर्थसमाज** पु० अर्थानां कारणानां वा समाजः समूहः । १बहुविधार्थसमूहे २कारणसमूहे च । "अर्थसमाजग्रस्तत्वात् नीलघटत्वादिकम् न कस्यचित् कार्य्यतावच्छेदकमिति" गदा० । तथाहि घटत्वं दण्डादेः कार्य्यतावच्छेदकम् । नीलत्वन्तु नीलकपालस्येति भिन्नभिन्नकारणस्यैव तत्तत्कार्य्यतावच्छेदकम् तथाच नीलघटत्वं न कस्याप्येकस्य कारणस्य कार्य्यतावच्छेदकम् नीलघटत्वस्य नाना कारणस्यैव कार्य्यतावच्छेदकत्वात् एवञ्च तस्य कारणसमाजग्रस्तत्वात् न कस्यापि कार्य्यतावच्छेदकत्वम् । एवमन्यदप्युदाहार्य्यम् । ३धनसमूहे च ।

**अर्थसमाहार** पु० ६त० । १धनसंग्रहे सम्यगुपायेनार्ज्जने ते च उपायाः "सप्त वित्तागमा धर्म्या दायोलाभः क्रयोजयः । विभागः संप्रयोगश्च सत्प्रतिग्रहएव चेति" मन्वुक्ताः साधारणाः "ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः गौ०उक्ताः "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणोधनमर्ज्जयेदितित्युक्ताश्च ब्राह्मणादेः यथायथम् असाधारणाः ज्ञेयाः । २धनसमूहे च ।

**अर्थसम्बन्ध** पु० अर्थस्य धनस्य वाच्याद्यर्थस्य वा सम्बन्धः । १धनसम्बन्धे वाच्याद्यर्थसम्बन्धे । २ धनसम्बन्धप्रयोजकाश्च अपतितपुत्रत्वादयः शास्त्रीयाः क्रयादयश्च लौकिकाः ।

**अर्थसिद्ध** अर्थात् अर्थान्वयविशेषात् सिद्धः । शब्दादिनाऽबोधनेऽपि अन्वयबललभ्ये पदार्थे यथा घटमानयेति वाक्ये घटस्य छिद्रेतरत्वमन्वयबललभ्यं न च तत्र शब्दशक्त्याद्यपेक्षा । तथा च शाब्दबोधे योग्यताज्ञानस्य हेतुतया छिद्रेतरघटएव जलाहरणप्रयोजकत्वावधारणेन तत्रैव प्रवृत्तिर्न तरघटादौ एवमन्यत्रापि । अर्थः प्रयोजनं धनं वा सिद्धोऽस्य प्ररनि० । २सिद्धार्थे सिद्धप्रयोजने ३स्वतः सिद्धधने च त्रि० ।

**अर्थसिद्धि** स्त्री अर्थतः योग्यान्वयवशात् सिद्धिः । १अपदार्थस्य तात्पर्यविषयया सिद्धौ । ६त० । २धनसिद्धौ ।

**अर्थहर** त्रि० अर्थान् धनानि हरति ताच्छील्यादौ ट स्त्रियां ङीप् । परकीयधनहरणशीले चौरादौ ।

**अर्थहीन** त्रि० अर्थेन धनेन हीनः । १धनहीने दरिद्रे । २वाच्यार्थहीने च ।

**अर्थागम** पु० अर्थस्य आगमः । १आये । अर्थागमोनित्यमरोगिता च"नीति० । अर्थं आगमयतेऽनेन करणे घञ् । २धनार्जनोपाये क्रयादौ । ३वाच्याद्यर्थापतने च "दृष्टा पूर्विकयान्यार्थागमोऽर्थापत्तिरिष्यते" सा०द० ।

**अर्थान्तर** न० अन्योऽर्थः अर्थान्तरं मयू०त० । १अन्यार्थे, "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति" सांख्यम् । न्यायमते उद्देश्यसिद्ध्यर्थं प्रयुक्ते शब्दसामर्थ्यादनुद्देश्यसिद्ध्युक्ते २वाक्ये । तस्य प्रतिवादिनोद्भावने वादिनिग्रहः । "प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासोहेत्वन्तरमर्थान्तरं फलमित्यादि" गौ० सूत्रेण निग्रहस्थानान्युक्त्वा "प्रकृतादर्थादसम्बन्धार्थोऽर्थान्तरमिति" लक्षितम् । प्रकृतात् प्रकृतोपयुक्तात् ल्यब्लोपे पञ्चमी तेन प्रकृतोपयुक्तमर्थमुपेक्ष्यासम्बन्धार्थाभिधानमर्थान्तरं प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः यथा शब्दोऽनित्यः कृतकत्वात् इत्युक्त्वा शब्दोगुणः स चाकाशस्येत्याद्युक्तिः" न्या०वृत्तिः । शब्दस्यानित्यत्वसाधने प्रवृत्ते तस्य गुणत्वस्याकाशवृत्तित्वस्य च साधने प्रकृतोपयोगित्वं नास्तीति तस्य तथात्वम् । विवरणं निग्रहस्थानशब्दे । अर्थशब्दस्य कारणपरत्वे ३कारणान्तरे "अर्थोऽयमर्थान्तरलभ्य एव" कुमा० "अर्थान्तरेण कारणान्तरेण लभ्य" इति मल्लि० ।

**अर्थान्तरन्यास** पु० अर्थान्तरं न्यस्यतेऽत्र । अर्थालङ्कारभेदे "सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते ॥ साधर्म्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः" । क्रमेणोदाहरणानि । "बृहत्सहायःकार्य्यान्तं क्षोदीयानपि गच्छति । सम्भूयाम्भोधिमभ्येति महानद्या नगापगा" ॥ अत्र द्वितीयार्द्धगतः सामान्योऽर्थः श्रोपपत्तिकः क्रियते । "यावदर्थपदां वाचमेवमाधाय माधवः । विरराम महीयांसः प्रकृत्या मितभाषिणः" अत्र सामान्येन विशेषसमर्थनम् । "पृथ्वि ! स्थिरा भव भुजङ्गम ! धारयैनां त्वं कूर्मराज ! तदिदं द्वितीयं दधीथाः । दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम्" अत्राततज्याकरणं पृथ्व्यादेः कार्य्यस्य समर्थकम् । "सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" इत्यादौ सम्पद्वरणं कार्य्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम् । एतानि साधर्म्म्ये उदाहरणानि वैधर्म्म्ये यथा "इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् । शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः" ॥ अत्र सामान्यं विशेषस्य समर्थकम् । "सहसा विदधीतेति' अत्र सहसा विधानाभावस्यापत्पदत्वं विरुद्धं कार्य्यं समर्थकम्" सा०द० ।

**अर्थापत्ति** स्त्री अर्थस्य अनुक्तार्थस्य आपत्तिः सिद्धिः । शब्देनानुपस्थापितार्थस्य सिद्धिरूपे मीमांसकोक्ते १प्रमितिभेदे । यथा पीनोदेवदत्तोदिवा न भुङ्क्ते इत्यादौ पीनत्वविशिष्टस्य देवदत्तस्य रात्रिभोजित्वरूपार्थस्य शब्दानुक्तस्यापि सिद्धिः । अर्थस्यापत्तिर्यतः । २तत्साधने च यथोक्तं वे० प० । "उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः । तत्रोपपाद्यज्ञानं करणम् उपपादकज्ञानं फलम् । येन विना यदनुपपन्नं तत्तत्रोपपाद्यम् यस्याभावे यस्यानुपपत्तिः तत्तत्रोपपादकं यथा रात्रिभोजनेन विना दिवाभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृशं पीनत्वमुपपाद्यं यथा वा रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकं रात्रिभोजनकल्पनारूपायां प्रमितौ, अर्थस्यापत्तिः कल्पनेति षष्ठीसमासेनार्थापत्तिशब्दोवर्त्तते । कल्पनाकरणे पीनत्वादिज्ञाने तु अर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहिसमासेन वर्त्तते इति फलकरणयोरुभयोस्तत्प्रयोगः । नवेयमर्थापत्तिरनुमानेऽन्तर्भवितुमर्हति अन्वयव्याप्त्यज्ञानेनान्वयिनोऽनन्तर्भावात् । व्यतिरेकिणश्चानुमापकत्वं प्रागेव निरस्तम् अतएवार्थापत्तिस्थलेऽनुमिनोमीति नानुव्यवसायः किन्त्वनेनेदं कल्पयामीति" । "अद्वैतागमनाशीरे साधुसा भुञ्जती परान् । सैवामेवाञ्जवस्त्वर्थापत्तिपत्तिपरम्परा" ख०खा० । सांख्यादिभिस्तु नेयं प्रमाणान्तरमपि तु अनुमानेऽन्तर्भवतीत्युक्तम् यथा "एवमर्थापत्तिरपि न प्रमाणान्तरं तथाहि जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानां साऽनुमानमेव । यदा खलु व्यापकः सन्नेकत्र नास्ति तदान्यत्रास्ति, यदा व्यापकएकत्रास्ति तदान्यत्र नास्तीति सुकरः स्वशरीरे एव व्याप्तिग्रहः । तथाच सति गृहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव । न च चैत्रस्य क्वचि-

द्धिरिति तस्य तथात्वम् । समखण्डवाचित्वे तु न० । "अर्द्धं नपुंसकम्" पा० सूत्रे तथैवोक्तेः । ५समीपे अर्धदेश-शब्दे उदा० समांशवाचिनस्तु एकदेशिसमासः । अर्धर्चः अर्धकायम् अर्धपिप्पली क्वचित् षष्ठीसमासः "एतच्छता-र्द्धमावृत्य त्रैलोक्यविजयी भवेत्" तन्त्रम् । एतत् पूर्व्वकनीयस्त्वान्नतत्पुरुषात् अच् अर्धनावम् खार्य्यास्तु वा अर्धखारम् अर्धखारी । खण्डमात्रवाचित्वे षष्ठी-समासः । "क्रोशार्धं प्रकृतिपुरस्सरेण गत्वा" रघुः । अवयवावयविनोर्भेदात् क्वचित् धर्म्मिपरता । अर्धर्चते वर्धते ऋध्-णिच्-कर्म्मणि अच् । ६ खण्डिते त्रि० जसि अर्धाः अर्धे । [क्रियासमाप्तितोऽर्द्धे कृते ।

**अर्द्धकृत** त्रि० अर्धं कृतम् । असम्पूर्णकृते यस्य यथा करणे

**अ(आ)र्धकौडविक** त्रि० अर्धकुडवपरिमाणमर्हति ठञ् उत्तर पदस्य वृद्धिःपूर्व्वस्य वा। अर्धकुडवपरिमाणार्हे स्त्रियां ङीप्।

**अर्द्धखारी** स्त्री अर्धं खार्य्याः एक०त० वा अच् । खारीपरि माणार्धांशे। अत्र वा अच् । अर्धखारम् तत्रैव न० ।

**अर्द्धगङ्गा** स्त्री अर्द्धं गङ्गायाः एकदेशित०। स्नानादौ गङ्गास्ना-नादेरर्द्धफलदायिन्यां कावेरीनद्याम् ।

**अर्द्धगर्भ** त्रि०अर्द्धं वत्सरस्यार्द्धं मार्गादौ पौषादौ वा तन्मासखण्डस्यार्धे गगने वा गर्भं गर्भस्थानीयमुदकं यस्य । सूर्य्यरश्मिभेदे ते हि मार्गादौ पौषादौ च भूमिस्थम् उदकमाकृष्य गर्भरूपेण गगने धारयन्ति इति ज्योतिषप्रसिद्धम् "तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने इत्यादिना २२४ पृष्ठ दर्शितेन यादववाक्येन तेषां मध्ये शतत्रयस्य गर्भधारण स्रोक्तेस्तथात्वम् गर्भधारणकालश्च वृ० स० उक्तम् यथा । "मार्गशिरःशुक्लपक्षप्रतिपत्प्रभृति क्षपाकरेऽषाढाम् । पूर्वां वा समुपगते गर्भाणां लक्षणं ज्ञेयम् । यन्नक्षत्रमुपगते गर्भं चन्द्रे भवेत् स चन्द्रवशात् । पञ्चनवते दिनशते तत्रैव प्रसवमायाति । सितपक्षभवाः कृष्णे, शुक्ले कृष्णा द्युस-म्भवाः रात्रौ । नक्तंप्रभवाश्चाहनि, सन्ध्याजाताश्च सन्ध्या-याम् । मार्गशीर्षाद्यागर्भामन्दफलाः पौषशुक्लजाताश्च । पौषस्यकृष्णपक्षेण निर्दिशेच्छ्रावणस्य सितम् । माघसितोद्भवा गर्भाः श्रावणकृष्णे प्रसूतिमायान्ति । माघस्य कृष्णपक्षेण निर्दिशेद्भाद्रपदशुक्लम् । फाल्गुनशुक्लसमुत्था भाद्रपदस्या सिते विनिर्देश्याः ।तस्यैव कृष्णपक्षोद्भवास्तु ये तेऽश्वयुक्शुक्ले। चैत्रसितपक्षजाताः कृष्णेऽश्वयुजस्य वारिदा गर्भाः । चैत्रासितसम्भूताः कार्त्तिकशुक्लेऽभिवर्षन्ति" इति । "सप्तार्द्धगर्भा भुवनस्य रेतः" ऋ० १,१६४,३६ । "वत्-सरस्यार्द्धे गर्भस्थानीयमुदकं धारमाणाः" भा० । [हारभेदे

**अर्द्धगुच्छ** पु०। अर्द्धः चन्द्रसमः गुच्छः । चतुर्विंशतिलतिके

**अर्द्धगुञ्जा** स्त्री अर्द्धं गुञ्जायाः । गुञ्जायास्तुल्यार्धपरिमाणे "तुल्या यवाभ्यां कथितात्र गुञ्जा" लीला० उक्तेः यव-द्वयार्द्धे एकयवरूपे तत्परिमाणे । तदर्हति ठञ् । उत्तर-पदस्य वृद्धिः पूर्व्वस्य वा । अ(आ)र्द्धगौञ्जिकः तत्परि-माणार्हे त्रि० । स्त्रियां ङीप् ।

**अर्द्धचन्द्र** पु० अर्द्धं चन्द्रस्य एक०त० । १चन्द्रस्यार्द्धे, तदाकारे- २नखक्षते, ३गलहस्ते, ४बाणभेदे, "रावणेन हृता सीता-अर्द्धचन्द्रार्द्धभास्करा" महाना० "सार्द्धचन्द्रं बिभर्त्ति यः" कुमा० "अर्द्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम्" रघुः "भृगालाः सर्व्वे गलेऽर्द्धचन्द्रं दत्त्वा निस्सारिताः"। "तद्दीयतां द्रागेतस्यार्द्धचन्द्रः" इति च पञ्च०त० । गल-हस्तस्तु तर्ज्जन्यङ्गुष्ठविस्ताररूपा हस्तसन्निवेशविशेष-मुद्रा । (नेओडोनि) ख्यातायां ५त्रिवृति स्त्रीणां ६तिलक-भेदे च । स्त्री । स्वार्थे कन् । ह्रस्वे अतइत्त्वे । अर्द्धच-न्द्रिका १कर्णस्फोटलतायां २चित्रपर्ण्याञ्च ।

**अर्द्धचन्द्रक** पु० अर्द्धचन्द्र इव कायति कै-क । १मयूर-पिच्छस्यार्द्धचन्द्राकारे पदार्थे ।

**अर्द्धचन्द्राकृति** पु० अर्द्धचन्द्रस्याकृतिरिवाकृतिर्यस्य । गलहस्ते तर्ज्जन्यङ्गुष्ठविस्ताररूपे गले हस्तसन्निवेशविशेषे ।

**अर्द्धचोलक** न० अर्द्धं चोलस्य एकदेश त० संज्ञायां कन् । (काञ्चोलि) ख्याते कुर्पासकवस्त्रे ।

**अर्धजरतीय** पु० अर्द्धं जरतीव इवार्थे कन् । अर्द्धवृद्धातुल्ये न्यायभेदे स च अर्द्धं कुक्कुट्याः पाकाय अर्द्धं प्रसवाय यथा न प्रभवति एवमेकभागस्यान्यपरत्वमन्यभागस्यान्यपरत्वं न युक्तमित्येवं परः न्यायः । "न च जानीमो विषयसप्तावा मित्यान्तरालेऽवस्थानमर्द्धजरतीयकौशलम्" इ० उ० भा० । यथा न जागर्त्ति न स्वपितीति विषयप्रहणमिति अन्त-रालेऽवस्थानं दुर्घटं यथा चार्द्धं कुक्कुट्याः पाकार्थमर्धञ्च प्रसवायेति कौशलं नोपलभ्यते" शा० शि०। जरत्या एव पाकः युवत्यास्तु प्रसवार्थत्वं नत्वेकस्या एव द्विविधकार्य्य करत्वमित्यर्थः "तुल्ययोर्विज्ञानार्थयोः प्रश्नप्रतिवचनयोः प्रकरणस्य विज्ञानार्थत्वादर्द्धजरतीयोन्यायो न युक्तः कल्पयितुम्" छा० भा० ।

**अर्द्धजाह्नवी** स्त्री अर्द्धगङ्गावत् । कावेर्य्यां नद्याम् ।

**अर्द्धतिक्त** अर्द्धः असम्पूर्णस्तिक्तः । नेपालनिम्बे । [त्रके काले ।

**अर्द्धदिन** अर्द्धं दिनस्य । दिनस्य तुल्यांशे सार्द्धसप्तमुहूर्त्ता

अर्द्धदेव पु० अर्द्धे समीपे तद्वर्त्ती देवानाम् । देवसमीपे वर्त्तमाने। "इन्द्रं न वृत्रतुरमर्द्धदेवम्" "दवद्वयं ददथुरर्द्धदेवम्" ऋ० १,४२,८,६। "अर्द्धदेवं देवानामर्द्धे समीपे वर्त्तमानम्" भा०

अ(आ)र्द्धद्रौणिक त्रि० अर्द्धद्रोणमर्हति ठञ्। उत्तरपदस्य वृद्धिः पूर्व्वस्य वा। अर्द्धद्रोणपरिमाणार्हे वस्तुनि स्त्रियां ङीप्।

अर्द्धधार न० अर्द्धं धाराऽस्य। सुश्रुतोक्ते विंशतिशस्त्रमध्ये शस्त्रभेदे "विंशतिः शस्त्राणि। तद्यथा। मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधारसूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्च्चककुठारिकाव्रीहिमुखारावेतसपत्रवडिशदन्तशङ्क्वेषण्य" इति। "वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रार्द्धधाराणि छेदने भेदने च" सुश्रु०।

अर्द्धनारायण न० अर्द्धमर्द्धमितं स्थानं यस्य तादृशो नारायणो यत्र "प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्। अत्र नारायणः स्वामी नान्यः स्वामी कथञ्चन" इत्युक्ते गङ्गायाः प्रवाहावधिहस्तचतुष्टयात्मके नारायणस्वामिके स्थाने।

अर्द्धनारीश्वर पु० अर्द्धाङ्गे या नारी तस्या ईश्वरः। हरगौरीरूपे शिवमूर्त्तिभेदे तद्रूपादि ध्यानशब्दे वक्ष्यते।

अर्द्धनाव न० अर्द्धं नावः अच् समा०। नौकायास्तुल्यांशे।

अर्द्धनिशा स्त्री अर्द्धं निशायाः एकदेशित०। अर्द्धरात्रे।

अर्द्धपण पु० अर्द्धं पणस्य। "वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः" इत्युक्तपणस्यार्द्धे काकिणीद्वये।

अर्द्धपथ न० अर्द्धं पथः अच् समा०। मार्गस्य तुल्यांशे प्रदेशे।

अर्द्धपाञ्चालिक पु० अर्द्धपञ्चाले भवः ठण् उत्तरपदवृद्धिः। अर्द्धपञ्चालदेशभवे।

अ(आ)र्द्धपादिक त्रि० अर्द्धपादं तच्छेदमर्हति ठञ्। पूर्व्वपदस्य वा वृद्धिः। अर्द्धपादच्छेदार्हे। "गोषु ब्राह्मणसंस्थासु छुरिकायाश्च भेदने। पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः" मनुः अर्धपदं अर्हति ठञ् उत्तरपदस्य वृद्धिः पूर्व्वपदस्य वा। अर्द्धपदप्रमाणार्हे उभयत्र स्त्रियां ङीप्। [पोते (तितिरीति) ख्याते पक्षिणि।

अर्द्धपारावत पु० अर्द्धेन अङ्गेन पारावत इव। चित्रकण्ठक।

अर्द्धपुलायित न० "शताश्वाद्धिक्रमादूर्नैर्मण्डलायितवल्गितैः। उन्मुखस्याश्वमुख्यस्य गतिरर्द्धपुलायितमिति" परिभाषिते अश्वगतिभेदे।

अ(आ)र्द्धप्रस्थिक त्रि० अर्द्धप्रस्थमर्हति ठञ् "मातः" पा० नोत्तरपदस्य वृद्धिः पूर्व्वस्य तु वा। अर्द्धप्रस्थप्रमाणार्हे स्त्रियां ङीप्।

अर्द्धभाग पु० अर्द्धं भागस्य। भागस्यार्द्धे "तदर्द्धभागेन लभस्व काङ्क्षितम्" कुमा०। अर्द्धभागमर्हति ठञ् वा पूर्व्वपदवृद्धिः। अ(आ)र्द्धभागिकः। अर्द्धभागार्हे त्रि० "जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिकम्" या० स्मृतिः।

अर्द्धभाज् त्रि० भज–ण्वि उप० स०। अर्द्धांशहरे "निधीनां तु पुराणां च धातूनामेव च क्षितौ। अर्द्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः" मनुः।

अर्द्धभ्रम न० अर्द्धात् भ्रमो भ्रमणं यत्र। "आहुरर्द्धभ्रमं नाम श्लोकार्द्धभ्रमणं यदीति सर० कण्ठा० उक्ते शब्दालङ्कारभेदे यथा

"स स त्व र ति दे नि त्यं
स द रा म र्ष ना शि नि।
त्व रा धि क क सं ना दे
र म क त्व म क र्ष ति" किरा०

अग्निपुराणे तु "गोमूत्रिकार्द्धभ्रमके" इति कान्ततया पठित्वा "पादार्द्धाद्यैश्चतुर्भिश्च कुर्य्याद्विन्यासमेतयोः। न्यस्तानिह वर्णान् नामधोधः भ्रमभागिनाम्। अधोधःस्थितवर्णानामाचतुर्थपदं नयेत्। तुर्य्यपादं नयेदूर्द्धं पादार्द्धमातिलोम्यत" इति तल्लक्षणमुक्तम्। अयमर्थः तिर्य्यग्गताः पञ्चरेखाः ऊर्द्ध्वगताश्च नव रेखालेख्याः एवं द्वात्रिंशत् कोष्ठानि भवन्ति तत्र प्रथमादिपङ्क्तिक्रमेण एकैककोष्ठगैकैकाक्षरकाश्चत्वारः पादाः क्रमेण पङ्क्तिचतुष्के लेख्याः एवं लेखने द्वात्रिंशद्वर्णा एकैककोष्ठगा भवन्ति। तत्र प्रथमपादार्द्धगता आद्याश्चत्वारोवर्णाः क्रमशोऽधोवर्त्तिनीषु प्रथमादिपङ्क्तिषु यथा भवन्ति यथा च तस्यापरार्द्धगताश्चत्वारो वर्णा अन्तिमादिपङ्क्तिषु ऊर्द्धोर्द्धक्रमेण अन्त्य कोष्ठगा भवन्ति तथा वर्णाः श्लोके निवेश्याः। एवं द्वितीयपादार्धगा आद्याश्चत्वारो वर्णा अधोऽधःक्रमेण प्रथमादिपङ्क्तिद्वितीयकोष्ठगाः अपरार्धघटकाश्चत्वारश्च वर्णा ऊर्द्धोर्द्धक्रमेण अन्तिमादिपङ्क्तिषु सप्तमकोष्ठगाः। तृतीयपादार्धगाः आद्याश्चत्वारो वर्णाः प्रथमादिपङ्क्तिषु अधोऽधःक्रमेण तृतीयकोष्ठगा उत्तरार्धगाश्चत्वारो वर्णाश्च ऊर्द्धोर्द्धक्रमेण अन्तिमादिषु षष्ठकोष्ठगाः चतुर्थपादार्धगा आद्याश्चत्वारोवर्णाः अधोधःक्रमेण प्रथमादिषु पङ्क्तिषु चतुर्थकोष्ठगाः उत्तरार्धगताश्चत्वारो वर्णाश्च ऊर्द्धोर्द्धक्रमेण अन्तिमादिषु पञ्चमकोष्ठगाः यथा भवेयुस्तथा वर्णविन्यासो विधेयः। एवं सति यथा प्रथमादिपङ्क्तिक्रमेण चत्वारः पादाः पठितुं शक्यन्ते एवमुक्तप्रकारेण अधोधःक्रमेण च प्रथमादिकोष्ठगवर्णग्रहणेन एवं अन्तिमादिषु ऊर्द्धोर्द्धक्रमेण अन्तिमकोष्ठस्थवर्णग्रहणेन, उक्तरीत्या प्रथमादिपङ्क्तिषु द्वितीयादिकोष्ठस्थवर्णग्रहणेन

अन्तिमादिषु उपान्तिमकोऽगमसर्वमङ्घ्येन च चक्रादिया पाठे द्वितीयादिपादा भवन्ति। सर्वतोभद्रस्यैवास्य सर्वतोऽनुलोमविलोमपाठासम्भवेन अर्धभ्रमत्वम् अयञ्च बन्धः अनुष्टुप्छन्दस्येव नान्यत्र छन्दसीति ज्ञेयम्। एवम् "अभीकमतिकेनेद्धे भीतानन्दस्य नाशने। कनत्सकामसेनाके मन्दकाममकमस्तुति" माघश्लोकोऽपि ज्ञेयः।

**अर्द्धमाणवक** पु० अर्धं माणवकस्य। द्वादशलतिके हारभेदे माणवकारस्य चतुर्विंशतिलतिकत्वात्तस्यार्धमानतयास्य तथात्वम्।

**अर्द्धमात्रा** स्त्री अर्धं मात्रायाः। १ बिन्दर्धचन्द्राकारव्यञ्जनायां ब्रह्मरूपायाम् वाचि २तदाख्यायां देव्याञ्च। "अर्धमात्रा स्थिता नित्यं यानुच्चार्य्या विशेषतः" देवीमा० "अकारो भगवान् ब्रह्मा उकारो विष्णुरुच्यते मकारो भगवान् रुद्रोऽप्यर्धमात्रा महेश्वरी। उत्तरोत्तरभावेनाप्युत्तमत्वं स्मृतं बुधैः। अतः सर्वेषु शास्त्रेषु देवीसर्वोत्तमा स्मृता" देवीपुरा०। अर्धमात्रा उच्चारणकालोऽस्य। ३हल्वर्णे त्रि० "व्यञ्जनं चार्धमात्रक"मित्युक्तेस्तथात्वम्।

**अर्द्धमास** पु० अर्धं मासस्य एकदे०त०। पञ्चदशाहात्मके मासस्यार्धरूपे पक्षात्मके काले "दर्शेन चार्धमासान्ते पौर्णमासेन चैव हि" मनुः "पञ्चदश वा अर्धमासस्य रात्रयः" इति शत०ब्रा०। "तस्मिं शता भवेन्मास" इत्युक्तेर्मासस्य त्रिंशत्तिथ्यात्मकतया तदर्धस्य पञ्चदशत्वम् "ऐरण्डतैलं वा मासमर्धमासं वा पाययेत्" सुश्रुतः।

**अर्द्धयाम** पु० अर्द्धं यामस्य प्रहरस्य। दिनरात्र्योः अष्टधा विभक्ते काले यावद्दिनमानं रात्रिमानं वा तस्याष्टधाविभागे यः कालस्तस्मिन्। तस्यैव वारवेलाकालवेलासंज्ञा तस्य च वारविशेषेषु वर्ज्जता ज्योतिषोक्ता। "कृतमुनियमशरमङ्गलत्तुभास्कराद्दिवामार्द्धे। प्रभवति वारवेला न शुभा शुभकार्य्यकरणाय"। ज्यो०त०। तथाच रवौ चतुर्थोऽर्द्धयामः वारवेला एवं चन्द्रे सप्तमः। कुजे द्वितीयः, बुधे पञ्चमः, गुरौ अष्टमः, भृगौ तृतीयः, शनौ षष्ठः वारवेला। "कालस्य वेला रवितः शराग्निकालानलागाश्वयो गजेन्द्र दिने, निशायामृतुवेदनेत्रनगेषुरामा विधुदन्तिनौ च" ज्यो० त०। यथा दिने रवौ पञ्चमः कालवेला एवं चन्द्रे द्वितीयः, कुजे षष्ठः, बुधे तृतीयः, गुरौ सप्तमः, भृगौ चतुर्थः, शनौ अष्टमः आद्यश्च॥ रात्रौ रवौ षष्ठः कालवेला। एवं चन्द्रे चतुर्थः। कुजे द्वितीयः। बुधे सप्तमः, गुरौ पञ्चमः भृगौ तृतीयः, शनौ आद्यः अष्टमश्च कालवेला॥ एवं दिने वारवेलाकालवेलाद्वयसमावेशेन द्वयोर्वर्ज्यता यथोक्तं "रवौ वर्ज्यं चतुःपञ्च सोमे सप्तद्वयं तथा। कुजे षष्ठं द्वितीयञ्च बुधे याम(?)तृतीयकम्। गुरौ सप्ताष्टकञ्चैव त्रिचत्वारि च भार्गवे। शनावाद्यं च षष्ठञ्च अष्टमं परिवर्जयेत्"॥ एवञ्च रात्रौ न वारवेला किन्तु कालवेलैव। तद्दोषोऽप्युक्तः "यात्रायां मरणं काले (कालवेलायाम्) वैधव्यं पाणिपीड़ने। व्रते ब्रह्मवधः प्रोक्तः सर्वं कर्म ततस्त्यजेत्" ज्यो०त०। दिनविशेषे तद्दोषविशेषोऽपि ज्यो०त० उक्तः। "वारेशाद्दर्द्धयामेषु रात्रावह्नोः पञ्च षट् क्रमात्। अधिपाःस्युर्दिवात्र यथार्काद्वे भवन्ति हि। रवीज्येन्दुभृगुच्छ्राजशनिस्तरवयो निशि। रविशुक्रगुरौ शशिशनीज्यकुजभास्कराः। दिने तृतीया : परेष्वेवम्" अयमर्थः यस्मिन् दिवसे यो वारेशः सएव प्रथमयामार्द्धाधिपः। ततो द्वितीयेशस्तु रात्रौ वारेशापेक्षया पञ्चमः, पुनस्तदपेक्षया पञ्चमस्तृतीयेश एवं क्रमेण ज्ञेयः। दिने तु वारेश एव आद्याधिपः द्वितीयेशस्तु वारेशापेक्षया षष्ठस्तदपेक्षया पुनःषष्ठस्तृतीयेश इत्येवंक्रमेण ज्ञेयः॥ एतच्च पताकीवेधे पापस्वामिकस्य रिष्टसूचकताविवेचनार्थम् अन्यत्र शुभकर्मसु वर्जनार्थञ्च।

**अर्द्धरथ** पु० रथोऽप्यस्य अच् रथः रथी अर्द्धः असंपूर्णोरथः। असम्पूर्णे रथिनि। "सखा ते दयितो नित्यं य एष रणकर्कशः। उत्साहयति राजंस्त्वां विग्रहे पाण्डवैः सह। एष विकत्थनो नीचः कर्णो वैकर्त्तनस्तव। मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः। एष नैव रथः कर्णो न चाप्यतिरथो रणे। वियुक्तः कवचेनैष सहजेन विचेतनः। कुण्डलाभ्याञ्च दिव्याभ्यां वियुक्तः सततं घृणी। अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात्। करणानां वियोगाच्च तेन मेऽर्द्धरथोमतः। नैष फाल्गुनमासाद्य पुनर्जीवन् विमोक्ष्यते। ततोऽब्रवीत् पुनर्द्रोणः सर्वशस्त्रभृतां वरः। एवमेतत् यथात्थ त्वं न मिथ्याऽस्ति कदाचन। रणे रणेऽभिमानी च विमुखश्चापि दृश्यते। घृणी कर्णः प्रमादी च तेन मेऽर्द्धरथो मतः" इति भा० उ०प०।

**अर्द्धरात्र** अर्द्धं रात्रेः अच्समा०। रात्रेस्तुल्यार्द्धभागे यामद्वयपूर्त्तिकाले "अर्द्धरात्रे त्वसम्पूर्णे दिवा पुण्यमनाक्रमेत्" "अर्द्धरात्रे व्यतीते तु विज्ञेयं चापरेऽहनि" "सम्पूर्णे चार्द्धरात्रे चेति" च देवी पु०। "कलान्यूनार्द्धरात्रे तु यदि संक्रमणं भवेत्" गर्गः। "अर्द्धरात्रे कलाधिक्ये यदा संक्रमते रविः"। "अर्द्धरात्रे तु संपूर्णे यदा संक्रमते रविः भु०भी०। "पूर्णे चेदर्द्धरात्रे तु रविसंक्रमणं भवेत्"

शाता०ब्रा० । "प्रभाते चार्द्धरात्रे वा स्नानं कुर्यात् परेऽहनि" भविष्य पुरा० । "अथार्द्धरात्रे स्तिमितप्रदीपे" रघुः "मध्यन्दिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिषम्" मनुः ।

**अर्द्धर्च** पु०न० अर्द्धम् ऋचः एकदेशित० अच् समा० । ऋचोऽर्द्धभागे "अर्द्धर्चेऽर्द्धर्चे प्रतिष्ठद्गृणीयात्" शत०ब्रा० । "ऋचः पादं मात्रया कल्पयन्तोऽर्द्धर्चेन" अथ०९,१०,१९, अस्य परिमाणवाचकत्वात् वीप्सायां शस् । अर्द्धर्चशः । अर्द्धर्चमर्द्धर्चमिति वीप्सावृत्तौ कारकभूते अर्द्धर्चे "तस्य वाससा पाणिभ्यां पाणी संमृह्य सावित्रीमन्वाह पच्छोऽर्द्धर्चशः सर्वाम्" कात्या० १०,१,१८, "तस्मादर्द्धर्चशः शंसेत्" शत०ब्रा० "अथार्द्धर्चशोहोता द्वमौ प्राणौ" शत०ब्रा० ।

**अर्द्धर्चादि** पु० ६त० । "अर्द्धर्चाः पुंसि चेति" पाणिन्युक्ते पुंनपुंसकलिङ्गानुशासननिमित्ते शब्दसमूहे स च गणः १२, १३ पृष्ठे दर्शितः ।

**अर्द्धलक्ष्मीहरि** अर्द्धं लक्ष्म्या आकारोऽस्य तादृशो हरिः । लक्ष्मीनारायणात्मके विष्णोर्मूर्त्तिभेदे तद्रूपं यथा "उद्यत्प्रद्योतनशतरुचिं तप्तहेमावदातं पार्श्वद्वन्द्वे जलधिसुतया विश्वधात्र्या च जुष्टम् । नानारत्नोल्लसितविविधाकल्पमापीतवस्त्रं विष्णुं वन्दे दरकमलकौमोदकीचक्रपाणिमिति"

**अर्द्धविसर्ग** पु० अर्द्धं विसर्गस्य तदङ्गकत्वादुपचारः । विसर्गसदृशाकारार्द्धरेखया व्यञ्जनीये कखयोःपरत जिह्वामूलीयाख्ये पफयोःपरतः उपाध्मानीयाख्ये च वर्णभेदे अर्द्धविसर्जनीयादयोऽप्यत्र ।

**अर्द्धवीक्षण** न०अर्द्धमसंपूर्णं वीक्षणम् । कटाक्षदर्शने ।

**अर्द्धवैनाशिक** पु० अर्द्धोऽसम्पूर्णः वैनाशिकः बौद्धभेदः । वैशेषिकशास्त्रकारे तस्य च सर्वस्य क्षणिकतावादितया वैनाशिकसमवत् परिणामभेदेन देहादेराशुविनाशस्वीकारेण आत्मनस्तु स्थायित्वाङ्गीकारेण च ततो वैलक्षण्यात् अर्द्धवैनाशिकत्वम् इति वेदान्तिनो वदन्ति । वैशेषिकादयस्तु वेदान्तिनोऽर्द्धवैनाशिकत्वं कल्पयन्ति "तर्हि वैनाशिकवत् सर्वेषां पदार्थानां चिद्रूपब्रह्मात्मकतया स्वीकारेण चित एव स्थायित्वाङ्गीकारमात्रेण ततो वैलक्षण्यमित्यर्द्धवैनाशिकत्वमिति । यथा च नैषां तथात्वं तथा विवरणप्रमेयोपन्यासे प्रपञ्चितम् विद्यारण्येन ।

**अर्द्धवैशस** न० अर्द्धस्य वैशसं वधः । अर्द्धवधे "विधिना कृतमर्द्धवैशसम्" "अर्द्धो वा आत्मनो यत् पत्नी" इति श्रुतेस्तस्य नाशे पत्न्या अर्द्धनाशोयुक्त इति तथोक्तम् ।

**अर्द्धशत** न० अर्द्धं शतस्य एकदे०त० । १पञ्चाशत्संख्यायां २तत्संख्यान्विते च । "वैश्योऽप्यर्द्धशतं द्वे च" मनुः । क्वचित् द्वित० । तत्रैवार्थे न० "एतच्छतार्द्धमावर्त्त्य त्रैलोक्यविजयी भवेत्" तन्त्रम् । [शतभषज ।]

**अर्द्धशन** एकदेशित० शक० । अर्द्धभोजने रत्नावली० अर्द्धा-

**अर्द्धशफर** पु०अर्द्धः शफरः । (दाड़का) इति ख्याते मत्स्यभेदे

**अर्द्धश्लोक** पु० अर्द्धं श्लोकस्य एकदेशित० । श्लोकस्यार्द्धे प्रथम पादद्वये

**अर्द्धसम** त्रि०अर्द्धेन समः । १अर्द्धेन तुल्ये पदार्थे "प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणोभवेत् द्वितीयस्तुर्यवद्वृत्तं तदर्द्धसममुच्यते" वृत्तरत्नाकरोक्ते २वृत्तभेदे न० यथा "अयुजि न युगरेफतोयकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" एवमुपचित्रादीनि ।

**अर्द्धसीरिन्** पु० अर्द्धं सीरस्य हलकृष्टशस्यादिफलस्य सोऽस्यास्ति इनि १हलसाध्यकृष्यशस्यस्यार्द्धभाजि । "शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः । भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत्" या०स्मृतिः अत्र निकृष्टार्थपरत्वम् मिताक्षराकृतोक्तं पराशरेण तु तस्य पारिभाषिकत्वम् दर्शितं यथा" दासनापितगोपालकुलमित्रार्द्धसीरिणः एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्" इत्युक्त्वा "वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः । आर्द्धिकः स तु विज्ञेयो भोज्यं विप्रैर्न संशयः" इत्युक्तम् तेन वैश्यागर्भजो ब्राह्मणेनोत्पादितः संस्कारवान् वर्णसङ्करभेदः आर्द्धिकः अर्द्धसीरीति । तेन २तदर्थेऽपि ।

**अर्द्धहार** पु०अव–हृञ् अच् अर्द्धः सम्पन्नः हारः । चतुःषष्टिलतिके हारभेदे ।

**अर्द्धांश** पु० एकदेशित० । अंशस्य सजातीयोचितभागस्य १तुल्यार्द्धभागे २सर्वद्रव्यस्यार्द्धभागे च ।

**अर्द्धार्द्ध** पु० अर्द्धम् अर्द्धस्य तुल्यांशस्य एक० त० । तुल्यभागरूपस्यांशस्य तुल्ये अर्द्धभागे चतुर्थांशे । "शरीरार्द्धार्द्धभागाभ्यां तामयोजत्वालभे" रघुः । "पञ्चाधिकस्य वा नाशे ततोऽर्द्धार्द्धं तु तत्सुताः ततोऽर्द्धार्द्धविनाशे तु सृजेत् पुत्रादिमस्तकम्" । काश्या० ख० ।

**अर्द्धासन** न०अर्द्धमासनस्य । आसनस्यार्द्धभागे "यो विसर्जनावसरे मम हि दिवौकसां समक्षमर्द्धासनोपवेशितस्य" शकु० । "अर्द्धासनं गोत्रभिदोऽधितष्ठौ" रघुः । "अर्द्धासनं गोत्रभिदोऽध्ययासीत्" भट्टिः । अर्द्धं सम्यगसनं त्यागः विश्लेषश्च । २स्नेहेन दाने ३अकृत्स्नने च धरणिः ।

**अर्द्धिक** त्रि०अर्द्धमर्हति ठिञ् स्त्रियां ङीप् । १अर्द्धभागार्हे

"तदर्द्धिकं पादिकं स्यात्" मनुः २अर्द्धचोरिगद्धार्थे च उदा० तत्रैव ।

**अर्द्धिन्** त्रि० अर्द्धं ग्राह्यत्वेनास्त्यस्य इनि । अर्द्धग्रहणार्हे "सर्वेषामर्द्धिनोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशास्तुरीयांशाश्च पादिनः" । गोपथभागे श्रुतिः ।

**अर्द्धुक** त्रि० ऋध–वा०उकञ्। सम्यक् ऋद्धिशीले "एकमतिरिक्तं जुहोति तस्मादेकः प्रजास्वर्द्धुकः" शत० ब्रा० ।

**अर्द्धेन्दु** पु० अर्द्धमिन्दोः एकदे०त० । १चन्द्रखण्डांशे "जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम्" दुर्गाध्यानम्। तदाकारत्वात् २नखक्षते ३तर्जन्यङ्गुष्ठविस्ताररूपे गलहस्तमुद्राभेदे ४अर्द्धचन्द्राकारे वाणे च ।

**अर्द्धोक्त** न०अर्द्धमुक्तम् वच–भावे क्त । अर्द्धकथने । "रामभद्रे त्वर्द्धोक्ते महाराज"। इति वीरचरिते कञ्चुकिवाक्यम्।

**अर्द्धोदक** न अर्द्धदेहव्यापकमुदकम् शाक०त० । देहार्द्धव्यापके उदके । "अर्द्धोदके तु जाह्नव्यां म्रियतेऽनशनेन यः । स याति न पुनर्जन्म ब्रह्मसायुज्यमेति च" वह्निपु० । "अर्द्धोदकं चरणाद्याभिषर्थमुदकम्" प्रा०त०रघुनन्दनः ।

**अर्द्धोदय** पु० अर्द्धस्य सकलस्य पुण्यस्य उदयो यत्र । तिथिनक्षत्रादियोगविशेषे "माघे मासि अमावस्या यदि अर्कयुता भवेत् । नक्षत्रे श्रवणे देवि ! व्यतीपातो भवेद्यदा । अर्द्धोदयः स विज्ञेयः सूर्यपर्वशतैःसमः । दिवैव योगः शस्तोऽयं न च रात्रौ कदाचन । अर्द्धोदये तु सम्प्राप्ते सर्वं गङ्गासमं जलम् । शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसन्निभाः । यत् किञ्चित् क्रियते दानम् तद्दानं मेरुसन्निभमिति" निर्णया०। "अमार्कपातश्रवणैर्युता चेत् पौषमाघयोः । अर्द्धोदयः स विज्ञेय, कोटिसूर्यग्रहैः समः" स्क०पु० । "अर्द्धोदये च पुष्यार्के हस्तार्के रोहिणीबुधे" इत्यमरटीका ।

**अर्द्धोदयासन** न० अर्द्धस्य देहस्य उदयेन अर्द्धोपेषासनम् "अर्द्धोदयासनं नाथ ! सर्वाङ्गं खे नियोजयेत् । केवलं हस्तयुगलं भुव्यवष्टभ्य तिष्ठति" रुद्रया० उक्ते आसनभेदे ।

**अर्द्धेन्दुमौलि** पु० अर्द्धेन्दुर्मौलावस्य। चन्द्रशेखरे शिवे ।

**अर्द्धोरुक** न० ०अर्द्धमूरोः अर्द्धोरु तत्र कायते काय-ड । १अर्द्धोरुपर्यन्ताङ्गाच्छादने वस्त्रे, उत्तमस्त्रीणामर्द्धोरुपर्यन्ते चोलकाकारे २परिधेयवस्त्रे च ।

**अर्द्ध्र** त्रि० अर्द्धस्येदम् तत्र भवो वा या यत् १अर्द्धसम्बन्धिनि २अर्द्धभवे च। अर्द्ध-णिच्–यत् ।प्रवृद्धनार्हे "विदुषा चिदर्द्धः स्तोमः । ऋ०१,१५६,१, "अर्द्ध्रं वर्द्धमाईम्, भा० "शविष्ठं वाजं विदुषा चिदर्द्ध्रम्" ऋ०५,४४,१० ।

**अर्पण** न० ऋ–णिच्–पुक् ल्युट् । १निक्षेपे,२ स्वत्वत्यागात्मकव्यापारे ३निवेशने च । "पादार्पणानुग्रहपूतपृष्ठम्" "सेयं स्वदेहार्पणनिष्क्रयेण" "सुखार्पणेषु प्रर्तमगल्भाः" इति च रघुः "ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्" "तत् कुरुष्व मदर्पणमिति" च गीता करणे ल्युट्। ४मन्त्रादौ ५जुहूप्रभृतौ स्त्री । संप्रदाने ल्युटि । ६देवादिषु । अधिकरणे ल्युट् । त्यागाधिकरणे ७वह्न्यादौ । कर्म्मणि ल्युटि । ८हविरादौ त्याज्यद्रव्ये

**अर्पित** त्रि० ऋ–णिच्–पुक् च क्त । १दत्ते २निक्षिप्ते ३निवेशिते "तदनुज्वलनं मदर्पितम्" कुमा० ।"मय्यर्पितमनोबुद्धिः" गीता अनर्पितचरीं चिरात् करुणयावततीर्णः कलाविति" हरिभ० "हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्" इति कुमा० ।

**अर्पिस** पु० ऋ–णिच् पुक् च इसन् । १हृदये, अग्रमांसे च ।

**अर्प्य** त्र० ऋ–णिच्-पुक यत् ।१निवेशनीये २देये ३त्याज्ये च।

**अर्व(र्व)** हिंसने भ्वादि०पर०सक० सेट् । अर्व(र्व)ति आर्वी(र्वी)त् आन(र्व)र्व ।

**अर्बु(र्वु)द** न० अर्ब (र्व) विच् तथा उदेति उद्+इण्–ड । (आव् इति) ख्याते १मांसपिण्डाकारे रोगभेदे, स च सुश्रुतोक्त वर्त्माश्रयेषु एकविंशतिरोगेषु मध्ये रोगभेदः "पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः। सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः । विवर्द्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान् । विकारान् जनयन्त्याशु नामतस्तान् निबोधत" इत्युपक्रम्य उत्सङ्गिनीप्रभृतीन् एकविंशति भेदान् उक्त्वा तेषां प्रत्येकलक्षणान्युक्तानि तत्र "वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् । विज्ञेयमर्बुदं पुंसां सरक्तमवलम्बितम्" इत्यर्बुदलक्षणोक्तम् अर्बुदञ्च नानाविधं मांसार्बुदशोणितार्बुदादिभेदात् । "कृष्णस्फोटीसरक्तैश्च पिड़काभिश्च पीड़ितम् । यस्य वस्तिरुजशोणा चेयं तच्छोणितार्बुदम् । मांसदोषेण जानीयादर्बुदं मांससम्भवम्" एवं मेदोऽर्बुदादयोऽपि तत्रोक्ता रोगभेदा ज्ञेयाः। २दशकोटिसंख्यायां ३तत्संख्यातेषु च एकादिकोटिसंख्या दशगुणोत्तरा उक्ता अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्" लीला० "इमा मेऽग्न ! इष्टका धेनवः सन्त्वेका च दश च दश च शतं

च शतं चेत्युपक्रम्य "अर्बुदं न्यर्बुदञ्च इति यजु० १७,२। ४पर्व्वतभेदे ५असुरभेदे च पु० । "महान्तं चिदर्बुदं निक्रमी पदा" ऋ० १,५१,६, ६काद्रवेये सर्पभेदे पु०पञ्च-मेऽहनीत्युपक्रम्य "अर्बुदः काद्रवेयो राजेत्याह तस्य सर्पा विशः" इति शत० ब्रा०। अम्बूनि ददाति दा—क वेदे मस्य रः । ७मेघे "न्यर्बुदं वावृधानो अस्तुः" ऋ० २,११, २०, "अम्बूनि ददातीत्यर्बुदो मेघः" भा० अर्बुदाकारत्वात् गर्भस्य ८मांसपिण्डभेदे" "यदि पिण्डः पुमान्, स्त्री चेत् पेशी,नपुंसकेऽर्बुदमिति" सुश्रु० द्वितीयमासिकगर्भमात्रे न० "प्रथमे मासि संक्लेदभूतो धातुविमूर्च्छितः । मास्यर्बुदं द्वितीये तु तृतीयेऽङ्गेन्द्रियैर्युतः" या० स्मृ० "द्वितीये तु मासि अर्बुदमीषत्कठिनं मांसपिण्डरूपं भवति" मिता०।

अर्बुदि पु० अर्बुदमिवाचरति अर्बुद+क्विप् इन् । सर्व्वव्यापके ईशाने । "अर्बुदिर्नाम योदेवईशानश्च न्यर्बुदिः । याभ्या-मन्तरिक्षमावृतमियं च पृथिवी मही" अथ० ११,९,४ ।

अर्भ पु० ऋ—भ १बालके। २अल्पे च । "नार्भादीषते न महो-विभाती । ऋ०१,१२४,६, "अर्भात् अल्पात्" भा० । "इन्द्रमर्भे हवामहे" ऋ०१,७।५ । अर्भे स्वल्पेऽपि धने निमित्तभूते" भा० । "यूयं महेन एनसोयूयमर्भात्" ऋ०८,४७,८, "अर्भात् अल्पात् एनसः" भा० ।

अर्भक पु० अर्भएव स्वार्थे कन् । १बालके, "महद्भ्यो नमो अर्भकेभ्यो नमोयुवभ्यः" ऋ० १,२७,१३। "हृतमप्युचितनिद्र-मर्भकम्" माघः "अर्भकोन कुमारकोऽधितिष्ठन्वं रथम्" ऋ०८,६९,१५ । २मूर्खे च ३कृशे, ४अल्पे, "नमो "नमोमहद्भ्योऽर्भकेभ्यो नमोवः" यजु० १६,२६ । त्रि० "अर्भकौकस्त्वात्तद्व्यपदेशाच्च" शा० सू० । अर्भकमल्पम् भा० "यथा सर्व्वगतमपि सद्व्योम सूचीपाशाद्यपेक्षयाऽर्भ-कौकः एवं ब्रह्मणोऽपि अर्भकौकस्त्वम्" भा० ५सदृशे च त्रि०

अर्भग त्रि० अर्भकत्वं गायति गै शब्दे च । बालके । "यावर्भ-गाय विमदाय" ऋ० १,११६,१ ।

अर्म्म न० ऋ—मन् । चिरन्तनग्रामनगरादौ "अर्म्मे चावर्णं द्व्यच् त्र्यच्" पा० गुप्तार्म्मं कुक्कुटार्म्मं अवर्णं किम् बृहदर्म्मं द्व्यच् त्र्यच् किम् कज्जलार्म्मम् अमहन्नवमित्येव । महानवा-र्म्मम्। नेत्ररोगभेदे पु०न० । स च पञ्चविधः प्रस्तार्य्यर्म-शुक्लार्म्मरक्तार्म्ममांसार्म्मस्नाय्वर्म्मभेदात् । तल्लक्षणं नाना-र्म्मशब्दे वक्ष्यते सुश्रुते तु नानतया पठितम् । अर्य्यते गम्यते कर्म्मणि मन् ।२गन्तव्यदेशे ।कुत्सिते कन्। अर्म्मकः अरणीये कुत्सितस्थाने ४श्मशानादौ "वैलस्थानके अर्म्मके महारवयस्ये अर्भके" ऋ० १,१३३,३। "अर्म्मके श्मशानादौ" भा० ।

अर्म्मग पु० ऋ—बा०मन् । वैद्यकोक्ते दोषपरिपाके।

अर्म्मन् न० ऋ+मनिन् । नेत्ररोगभेदे "प्रस्तारिशुक्लक्षतजाधि मांसस्नाय्वर्म्मसंज्ञाः खलु पञ्च रोगाः। शुक्तिका चार्ज्जुन पिष्टकौ च जालं सिराणां पिडकाश्च याः स्युः। रोगा बला सम्भवितेन सार्द्धमेकादशाक्ष्णोः खलु शुक्लभागे । प्रस्तारि प्रथितमिहार्म्म शुक्लभागे विस्तीर्णं तनुरुधिरप्रभं सनीलम् । शुक्लाख्यं मृदु कथयन्ति शुक्लभागे सश्वेतं समभिह वर्द्धते चिरेण । यन्मांसं प्रचयमुपैति शुक्लभागे पद्माभं तदुपदिशन्ति लोहितार्म्म । विस्तीर्णं मृदु बहलं यकृत्प्रकाशं श्यावं वा तदधिकमांसजार्म्म विद्यात् । शुक्ले यत् पिशितमुपैति वृद्धिमेतत्, इति सुश्रु० । अर्म्म यज्जालवद्वापि तदप्युक्तार्द्धलम्बितम् । अर्म्म चाल्पन्दधिनिभश्चोलं रक्तमथापि वा । छेद्यमेव तदर्म्म-स्यात् कृष्णमण्डलगञ्च यत्" । अर्म्म वन्मण्डलाप्येव वडि-शेनावलम्बिना । अर्म्मापि पिडकां कृत्वास्थिरजालानि तेन वै" इति च सुश्रु० ।

अर्य्य त्रि० ऋ—यत् ।१स्वामिनि २वैश्ये पुंस्त्री । स्त्रियां टाप् । अर्य्या वैश्यजातिस्त्रियां स्वामिन्याञ्च । पत्न्यान्तु ङीप् । अर्य्याणी । वैश्यपत्न्याम् तत्र आनुक् ङीप् चार्य्याणीत्यपि "अर्य्यः स्वामिवैश्ययोः"पा० "अर्य्यक्षत्रियाभ्यां वा"वार्त्ति०। अर्य्याणी अर्य्या स्वामिनी वैश्या वा पुंयोगे तु ङीप् सि० कौ०। ३श्रेष्ठे त्रि० । "प्र तत्ते अद्य शिपिविष्ट नामार्यः ऋ० ७,१००,५, "सुभद्रमर्य्यभोजनं बिभर्षि" ८,१,२४, अर्य्यते पूज्यते वा० यत् । ४पूजनीये । "हस्ताद्र-दस्यादर्या" ऋ० १,१२१, १ । "अर्य्या अरणीया पूजनीया" भा०।

अर्य्यमन् पु० अर्य्यं श्रेष्ठं मिमीते मा—कनिन् । १सूर्य्ये, तद्देवताके २उत्तरफल्गुनीनक्षत्रे, ३अर्कवृक्षे, ४पितॄणां राजनि "पितॄणामर्य्यमा चास्मि" गीता । द्वादशा-दित्यमध्ये ५आदित्यभेदे च । "धातार्य्यमा च मित्रश्च वरुणोंऽशुर्भगस्तथा । इन्द्रोविवस्वान् पूषा च पर्ज्जन्यो-दशमः स्मृतः । ततस्त्वष्टा ततो विष्णुरजघन्योज-घन्यजः इति विष्णु ध० पु० एते एव कश्यपाददित्यां जाताः । भारते तु "अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः । ये राजन्नामतस्तांस्ते कीर्त्तयिष्यामि भारत । धाता मित्रोऽर्य्यमा शक्रः वरुणस्त्वंशुरेव च ।

भगोविवस्वान् पूषा च सविता दशमःस्मृतः एकादश स्तथा त्वष्टा द्वादशोविष्णुरुच्यते" । कल्पभेदाच्चाभेद इत्यविरोधः । तद्रूपम् ध्यानशब्दे वक्ष्यते । "यथा नरोऽर्य्यमणोमरुतः कवन्धिनः" ऋ० ५,५४,८ । "अर्य्यमणे स्वाहेति तदेनमस्य सर्वस्यार्य्यमणं करोति शत०ब्रा० ।

**अर्य्यमिक** पु० अनुकम्पितः दत्तः अर्य्यमदत्तः अनुकम्पायाम् ठन् "घेवलसुपरिविशालवरुणार्य्यमादीनां तृतीयात्" पा० अन्त्यलोपः । अनुकम्पिते अर्य्यमदत्ते ।

**अर्य्यम्य** पु० अर्य्यमैव स्वार्थे वेदे यत् । सूर्य्ये "अर्य्यम्यं वरुणमित्रं वा सखायं वा सदमिद्भ्रातरं वा" ऋ०५,८५,७ ।

**अर्वन्** पु० ऋ—वनिप् । १घोटके, २इन्द्रे, ३गोकर्णपरिमाणे च । स्त्रियामर्वती सा च ४वडवायां ५कुट्टिन्यामपि । अस्य सुभिन्ने त्रादेशः अर्वन्तौ अर्वतः । "कृतीकृतप्रपद्ग-मर्वतां व्रजाः" माघः सौ तु अर्वा इत्येव लोकएव त्रादेश इति भाष्यम् वेदे तु अर्वाणौ इत्येव । ४गमनशीले त्रि० स्त्रियां ङीप् वनोरश्च । अर्वरी ।

**अर्व्वाक** त्रि० अवरमकति गच्छति अक—वक्रगतौ अण् पृ०अवरस्यार्वादेशः । समीपे "यच्चासत्या पराके अर्वाके अस्ति भेषजम्" ऋ०८,९,१५ "अर्वाके समीपे" भा० ।

**अर्वाक्काल** पु० अर्वाक् अवरः कालः । अवरकाले तत्रभवः ठञ् न वृद्धिः अर्वाक्कालिकः अवरकालभवे त्रि० "तान्य र्वाक्कालतया निष्फलान्यनृतानि च" मनुः ।

**अर्वाक्स्रोतस्** पु० अर्वाक् अधोगामि स्रोतोरेतोयस्य । जर्द्धरेतोभिन्ने इन्द्रियप्रसक्ते ।

**अर्व्वाग्बिल** पु०अर्वाक् बिलमस्य । चमसे । "अर्वाग्बिलश्च-मस जर्द्धबुभ्रस्तस्मिन् यशोनिहितम्" । शत०ब्रा० ।

**अर्व्वाच्** अव्य० अवरे काले देशे वा अञ्चति अनच्-क्विन् पृषो० अर्वादेशः । १पश्चात्काले २मध्यकाले "अर्वागृद्श-भ्यो वर्षेभ्यः" भुज० ३तत्कालवर्त्तिनि त्रि० "ये केचि-दस्मादर्वाञ्चो लोकाः" का०उ० । "कथं वा दीयतामर्वाङ्-मुनिता धर्मरोधिनी" किरा०स्त्रियां ङीप् अर्वाची "इष्टी-दर्वा "अर्वाचीश पराचीश्चोपदधाति" शत ब्रा० ।२विपर्यस्ते अवाच्+असि तस्य लुक् ।४अवरकालादौ ५मध्ये च अव्य० । ततोभवार्थे ट्युल् तुट् च अर्वाक्तनः । तद्भवे त्रि० स्त्रियां ङीप् ।

[गर्भे यस्य । पर्जन्ये मेघे ।

**अर्वाग्वसु** अर्वाक् अभ्यन्तरे अर्वाचीनं वसु दृष्टिहेतूदक

**अर्वाचीन** त्रि० अर्वाग्भवः ख । अवरकालभवे । "अर्वाचीनं सुते मनो यावा कृणोतु" ऋ०१,८४,२, "यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरीक्षात्" शतब्रा० ।

**अर्व्वावत्** त्रि०,अवरकालोऽस्त्यस्य मतुप् पृ० अर्वादेशः दीर्घः मस्य वः । अर्वाचीने । "अर्वावतो न आगह्यि परावतश्च" ऋ०२,४०८, । "अर्वावतः अर्वाचीनान्" भा० ।

**अर्व्वावसु** पु० देवानां होतृविशेषे "इदमहमर्वावसोः सदने सीदामीति" अर्वावसुर्हाम देवानां होता तस्यैव सदने सीदति" शत०ब्रा० "अर्वाक् वसु धनमस्य पृषो" भा० ।

**अर्व्वुक** पु० अर्व-हिंसने बा० उकञ् । आटविके दक्षिणदेश स्थे नृपभेदे ते च सहदेवेन जिताः "सपीना अर्वुकाश्चैव राजानश्च महाध्वजाः । तांस्तानाटविकान् सर्वान् अजयत् पाण्डुनन्दनः" भा०स०प० सहदेवदिग्विजये ।

**अर्श** त्रि० अश+अच् । अश्लीले पापिष्ठे "अनर्शरातिशब्दे १५१ पृष्ठे उदा० । २अर्शोरोगे न० ।

**अर्श्आदि** पु० अर्शआदिर्येषाम् । अस्त्यर्थे अच्प्रत्ययनिमित्त भूते "अर्श आदिभ्योऽच्" पाणिन्युक्ते शब्दसमूहे । स च गणः अर्शस् उरस् तुन्द—चतुर पलित, जटा घाटा अघ, कर्दम अम्ल, लवण, (स्वाङ्गाद्धीनात्) (वर्णात्) आकृतिगणोऽयम् ।

**अर्श(र्ष)स्** न० ऋ—असुन् शुट् (सुट् दन्तादिरित्यन्ये) । वलिकाकारे गुह्यस्थरोगभेदे यथाह सुश्रुतः "षड-र्शांसि भवन्ति वातपित्तकफशोणितसन्निपातैः सहजानि चेति ॥ तत्रानात्मवतां यथोक्तैः प्रकोपणैर्विरुद्धाध्यशन-स्त्रीप्रसङ्गोत्कटुकासनपृष्ठयानवेगविधारणादिभिर्विशेषैः प्रकु पिता दोषा एकशो द्विशः समस्ताः शोणितसहिता वा यथोक्तं प्रसृताः प्रधानधमनीरनुप्रपद्याऽधोगत्वा गुदमा-गम्य प्रदुष्य वलीर्मांसप्ररोहान् जनयन्ति विशेषतोमन्दा-ग्नेस्तथा तृणकाष्ठोपललोष्टवस्त्रादिभिः शीतोदकसंस्पर्श-नाद्वा कन्दाः परिवृद्धिमासादयन्ति तान्यर्शांसीत्याचक्षते ॥ तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुस्तस्मिन् वल-यस्तिस्रोऽध्यर्द्धाङ्गुलान्तरभूताः प्रवाहणी विसर्जनी संवरणी चेति । चतुरङ्गुलायताः सर्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः॥ शङ्खा-वर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः । गजतालुनिभाश्चापि वर्णतः सम्प्रकीर्त्तिताः ॥ रोमान्तेभ्यो यवाध्यर्द्धं गुदौष्ठः परिकीर्त्तितः ॥ प्रथमा तु गुदौष्ठादङ्गुलमात्रे । तेषान्तु भविष्यतां पूर्वरूपाणि, अन्ने न श्रद्धा कृच्छ्रात्पक्तिरम्लीका सक्थिसदनमाटोपः कार्श्यमुद्गारबाहुल्यमक्ष्णोश्च श्वयथुरन्त्र-कूजनं गुदपरिकर्त्तनमाशङ्का पाण्डुरोगग्रहणी दोषशो-षं कासश्वासौ भ्रमस्तन्द्रा निद्रेन्द्रियदौर्बल्यञ्च । जाते-

श्वेतानि रूपाणि प्रव्यक्ततराणि भवन्ति ॥ तत्र मारुतात्परिशुष्कारुणवर्णानि विषममध्यानि कदम्बपुष्पतुण्डिकेरीनाडीमुखसूचीमुखाकृतीनि च भवन्ति । तैरुपद्रुतः सशूलं संहतमुपवेश्यते कटीपृष्ठपार्श्वमेढ्रगुदनाभिप्रदेशेषु चास्य वेदना गुल्माष्ठीलाप्लीहोदराणि चास्य तन्निमित्तान्येव भवन्ति, कृष्णत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति। पित्तान्नीलाग्राणि तनूनि विसर्पीणि पीतावभासानि यकृत्प्रकाशानि शुकजिह्वासंस्थानानि यवमध्यानि जलौकोवक्त्रसदृशानि प्रक्लिन्नानि च भवन्ति तैरुपद्रुतः सरुधिरमतिसार्य्यते ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति, पीतत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति । श्लेष्मजानि श्वेतानि महामूलानि स्थिराणि वृत्तानि स्निग्धानि पाण्डूनि करीरपनसास्थिगोस्तनाकाराणि न भिद्यन्ते न स्रवन्ति कण्डूबहुलानि च भवन्ति तैरुपद्रुतः सश्लेष्माणमनल्पं मांसधावनप्रकाशमतिसार्य्यते शोफशीतज्वरारोचकाविपाकशिरोगौरवाणि चास्य तन्निमित्तान्येव भवन्ति, शुक्लत्वङ्नखनयनदशनवदनमूत्रपुरीषश्च पुरुषो भवति ॥ रक्तजानि न्यग्रोधप्ररोहविद्रुमकाकणन्तिकाफलसदृशानि पित्तलक्षणानि च यदावगाढपुरीषप्रपीडितानि भवन्ति तदात्यर्थं दुष्टमनल्पमसृक् सहसा विसृजन्ति तस्यैवातिप्रवृत्तौ शोणितातियोगोपद्रवा भवन्ति ॥ सन्निपातजानि सर्व्वदोषलक्षणयुक्तानि ॥ सहजानि दुष्टशोणितशुक्रनिमित्तानि तेषां दोषत एव प्रसाधनं कर्त्तव्यं विशेषतश्चात्र दुर्दर्शनानि परुषाणि पाण्डूनि दारुणान्यन्तर्मुखानि तैरुपद्रुतः कृशोऽल्पभुक् सिरासन्ततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निर्घ्राणशिरोऽक्षिश्रवणरोगवान् सततमन्त्रकूजाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते ॥" "अर्श आद्या महारोगा अतिपापाद्भवन्ति हि" । शाता०स्म०। पृषो०सलोपः । अर्शमप्यत्र न० ।

**अर्शस** त्रि० अर्शस्–अस्त्यर्थेऽच् । वलिकाकारगुह्यव्याधियुते । "हीनक्रियं निष्पुरुषं निश्छन्दोरोमशार्शसम्" मनुः ।

**अर्शसान** त्रि०ऋश–असानच् रुट् च । बाधके हिंसके "अव प्रियमर्शसानस्य" ऋ०२,२०६ "अर्शसानस्य बाधमानस्य" भा० न्यर्शसानमोषति ऋ०१०१३०,८ २मन्देहासुरे "इन्द्रः सूर्य्यस्य रश्मिन्यर्शसानमोषति ८,१२८, "अर्शसानं बाधमानं मन्देहाख्यमसुरम्" भा० । [ङीप् ।

**अर्शिन्** त्रि० अर्शमस्त्यस्य इनि । अर्शोरोगयुक्ते स्त्रियां

**अर्शोघ्न** पु०अर्शो हन्ति हन–टक् । (ओल) १सूरणे, २भल्लातके च ३ अमनुष्यकर्तृकार्शोहननकारकमात्रे त्रि० "अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम्" "यच्चान्यदपि स्निग्धमर्शोघ्नमुष्टमूत्रपुरीषञ्च तदुपसेवेत" इति च सुश्रुतः । स्त्रियां ङीप् । सा च तालमूल्याम् मेदि०

**अर्शोहित** पु० अर्शसि हितः सेवनेन तन्नाशकत्वात् ७त० । १भल्लातके । २अर्शोरोगहितकारकमात्रे त्रि० अहित इति च्छेदे ।३तत्राहितकरे त्रि० ।

**अर्षण** न० ऋष–गतौ भावे ल्युट् । १गमने करणे ल्युट् । २गमनसाधने स्त्रियां ङीप् । "याः सीमानं विरुजन्ति मूर्द्धानं प्रत्यर्षणीः" अथ० ९,१८,१२ ।

**अर्ह** योग्यत्वे भ्वा० पर० अक० सेट् । अर्हति आर्हीत् आनर्ह लोके, वेदे तु आनर्हे । प्राप्तियोग्यतार्थे गतौ च सक० । अर्हीं अर्हितः अर्हितुम् अर्हित्वा अर्हणम् अर्हन् "हिताग्रहान्यर्हसि सोढुमर्हन्!" रघुः। "गुरोर्गुरौ सन्निहिते गुरुवन्मानमर्हति" मनुः । "दण्डमर्हति मापकम्" मनुः । स तस्माल्लब्धुमर्हति" स्मृतिः "तथापि त्वं महाबाहो नैनं शोचितुमर्हसि" गीता । क्वचिदात्मनेपदित्वम् आर्षत्वेन । "सलिलं नार्हसे प्राज्ञ ! दातुमेषां हि लौकिकम्" "रावणो नार्हते पूजाम्" इति च रामायणम् ।

**अर्ह** पूजने चुरा०उभ०सक०सेट् ।अर्हयति ते आर्जिहत् त । "राजार्जिहत्त मधुपर्कपाणिः" भट्टिः । अर्हयामास । अर्हणा अर्हयन् अर्हयितुम् अर्हयित्वा । "स्रग्विणं तल्पमासीनमर्हयेत् प्रथमं गवा" मनुः । पूजनं च स्तुतिनतिप्रभृतिभिः सम्माननम् । अभि+आभिमुख्येन सम्मानने । "अभ्यर्हितञ्च" का० वार्त्ति० ।

**अर्ह** पु०अर्हते चु०अर्ह-कर्म्मणि यत् । पूजास्तुत्यादिभिराराध्ये १ईश्वरे २शक्रे च । ३पूजनीये त्रि० "अर्हानभोजयन् विप्रो दण्डमर्हति मापकम्" मनुः ४ विष्णौ पु० । "अभिप्रायः प्रियार्होऽर्हः" विष्णु स० । "पूजास्तुतिनमस्कारादिभिः पूजनीय इत्यर्हः" भा० । भावे घञ् । ५पूजने । अर्हति ब्रा० अर्ह-कर्त्तरि अच् । ६योग्ये त्रि० । "तस्मान्नार्हा वयं हन्तु धार्त्तराष्ट्रान् स्वबान्धवान्" गीता । "अर्होऽसि कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम्" रामा०। "नियुक्तायामपि पुमान् नार्य्यां जातोऽविधानतः । नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः" मनुः आर्षत्वात् कर्म्मणि न षष्ठी "पूजार्हावरिसूदन" गीतायान्तु "कर्म्मण्यण्" अण् उप० स० । भावे घञ् । ७गतौ ८योग्यत्वे धातूनामनेकार्थत्वात् द्रव्यक्रययोग्यत्वाच्च अर्ह–कर्म्मणि घञ्

द्रमूल्ये "महार्हशय्यापरिवर्त्तनच्युतैः" कुमा० "महानर्हो मूल्यमस्यास्तादृशी शय्या" इति मल्लि०।

**अर्हण** न० अर्ह-भावे ल्युट्। १पूजने। "शिष्यवर्गपरिकल्पितार्हणम्" रघुः अर्ह्यतेऽनेनकरणे ल्युट्। २सम्मानसाधने द्रव्ये। "अर्हणं तत् कुमारीणामानृशंस्याय केवलम्" मनुः भावे युच्। "अर्हणा पूजायां स्त्री। "अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे" रघुः पूर्व्वदेवारिपुरर्हणां हरिः" माघः।

**अर्हणीय** त्रि० च० अर्ह-कर्मणि अनीयर्। १पूजनीये। अर्ह्यतेऽनेन करणे अनीयर् अर्हणे साधु छ वा। २पूजासाधनद्रव्ये "अर्हणीयगवानुमन्त्रणे विनियोगः" भवदेवः।

**अर्हत्** त्रि० "अर्हः प्रशंसायां कर्म्मणि शतृ। १पूज्ये "अर्हणामर्हते चक्रुः" हिलाशस्त्रान्यर्हसि सोढुमर्हन्" इति च रघुः "सर्व्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः। यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः" इत्युक्तलक्षणे जैनदेवे पु०। तन्मतं सर्व्वदर्शनसंग्रहात् संगृह्यते।

"ननु न कश्चित् पुरुषविशेषः सर्व्वज्ञपदवेदनीयः प्रमाणपद्धतिमध्यास्ते सद्भावग्राहकस्य प्रमाणपञ्चकस्य तत्रानुपलम्भात् तथाचोक्तं तौतातितैः "सर्व्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः। दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत्॥ न चागमविधिः कश्चिन्नित्यसर्व्वज्ञबोधकः। न च तत्रार्थवादानां तात्पर्य्यमपि कल्प्यते॥ न चानुवदितुं शक्यः पूर्व्वमन्यैरबोधितः॥ अनादेरागमस्यार्थो न च सर्व्वज्ञ आदिमान्। कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते॥ अथ तद्वचनेनैव सर्व्वज्ञोऽन्यैः प्रतीयते। प्रकल्प्येत कथं सिद्धिरन्योन्याश्रयतस्तयोः॥ सर्व्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता। कथं तदुभयं सिध्येत् सिद्धमूलान्तरादृते॥ असर्व्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात्। सर्व्वज्ञमवगच्छन्तस्स्ववाक्योक्तं न जानते॥ सर्व्वज्ञसदृशं किञ्चिद्यदि पश्येम सम्प्रति। उपमानेन सर्व्वज्ञं जानीयाम ततो वयम्॥ उपदेशोऽपि बुद्धस्य धर्म्माधर्म्मादिगोचरः। अन्यथा नोपपद्येत सार्व्वज्ञ्यं यदि नाभवदित्यादि"॥ अत्र प्रतिविधीयते यदभ्यधायि सद्भावग्राहकस्य प्रमाणपञ्चकस्य तत्रानुपलम्भादिति तदयुक्तं तत्सद्भावावेदकस्यानुमानादेः सद्भावात्। तथा हि कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययत्वात् यत् यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययं तत् तत्साक्षात्कारि यथा अपगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारि। तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च कश्चिदात्मा तस्मात् सकलपदार्थसाक्षात्कारीति। तावदशेषार्थग्रहणस्वभावत्वमात्मनः सिद्धं चोदनाबलान्निखिलार्थज्ञानात् नाथन्यथानुपपत्त्या सर्व्वमनेकान्तात्मकं सत्त्वादिति व्याप्तिज्ञानोत्पत्तेश्च। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयतीत्येवं जातीयकैरध्वरमीमांसागुरुभिर्विधिप्रतिषेधविचारणानिबन्धनं सकलार्थविषयकज्ञानं प्रतिपद्यमानैः सकलार्थग्रहणस्वभावकत्वमात्मनोऽभ्युपगतम्। न चाखिलार्थप्रतिबन्धकावरणप्रक्षयानुपपत्तिः सम्यग्दर्शनादित्रयलक्षणस्यावरणप्रक्षयहेतुभूतस्य सामग्रीविशेषस्य प्रतीतत्वात् अनया पुनरन्येऽपि क्षुद्रोपद्रवा विद्राव्याः। नन्वावरणप्रक्षयवशादशेषविषयं विज्ञानं विशदं मुख्यप्रत्यक्षं प्रभवतीत्युक्तं तदयुक्तं तस्य सर्व्वज्ञस्यानादिमुक्तत्वेनावरणस्यैवासम्भवादिति चेन्न अनादिमुक्तत्वस्यैवासिद्धेः सर्व्वज्ञोऽनादिमुक्तः मुक्तत्वादितरमुक्तवत् बद्धापेक्षया च मुक्तव्यपदेशः तद्रहिते चास्याप्यभावः स्यादाकाशवत्। नन्वनादेः क्षित्यादिकार्य्यपरम्परायाः कर्त्तृत्वेन तत्सिद्धिः तथाहि क्षित्यादिकं सकर्त्तृकं कार्य्यत्वाद्घटवदिति तदप्यसमीचीनं कार्य्यत्वस्यैवासिद्धेः। न च सावयवत्वेन तत्साधनमित्यभिधातव्यं यस्मादिदं विकल्पजालमवतरति। सावयवत्वं, समवेतद्रव्यत्वं, किमवयवसंयोगित्वं अवयवसमवायित्वम् अवयवजन्यत्वम् ३समवेतद्रव्यत्वम् समवेतबुद्धिविषयत्वं वा। न प्रथमः, आकाशादावनैकान्त्यात्। न द्वितीयः सामान्यादौ व्यभिचारात्। न तृतीयः साध्याविशिष्टत्वात्। न चतुर्थः विकल्पयुगलार्गलग्रस्तत्वात् समवायसम्बन्धवत्त्वे सति द्रव्यत्वं समवेतद्रव्यत्वम्, अन्यत्र समवेतद्रव्यत्वं वा विवक्षितं हेतूक्रियते। आद्ये गगनादौ व्यभिचारः तस्यापि गुणादिसमवायवत्त्वद्रव्यत्वयोः सम्भवात्। द्वितीये साध्याविशिष्टता अन्यशब्दार्थेषु समवायकारणभूतेष्ववयवेषु समवायस्य साधनीयत्वात्। अभ्युपगम्यैतदभाणि वस्तुतस्तु समवाय एव न समस्ति प्रमाणाभावात्। नापि पञ्चमः आत्मादिनानैकान्त्यात्तस्य सावयवबुद्धिविषयत्वेऽपि कार्य्यत्वाभावात्। न च निरवयवत्वेऽप्यस्य सावयवार्थसम्बन्धेन सावयवबुद्धिविषयत्वमौपचारिकमित्येष्टव्यं निरवयवत्वे व्याप्तित्वविरोधात् परमाणुवत्। किञ्च किमेकः कर्त्ता साध्यते किं वा स्वतन्त्रः प्रथमे प्रासादादौ व्यभिचारः स्थपत्यादीनां बहूनां पुरुषाणां तत्र कर्त्तृत्वे-

पक्षमाद् तेनैव सकलजगज्जननोत्पत्त्यादिकर्तृत्वमयुक्तञ्च । तदुक्तं वीतरागस्तुतौ "कर्त्तास्ति नित्यो जगतः स चैकः स सर्वगः सन् स्ववशः स सत्यः । इमाः कुहेवाकविडम्बनाः स्युस्तेषां न येषामनुशासकस्त्वमिति" ॥ अन्यत्रापि । "कर्त्ता न तावदिह कोऽपि यथेच्छया वा दृष्टोऽन्यथा कटकृतावपि तत्प्रसङ्गः । कार्यं किमत्र भवतापि च तक्षकाद्यैराहत्य च त्रिभुवनं पुरुषः करोतीति" तस्मात् प्रागुक्तकारणत्रितयवशादावरणप्रलये सार्वज्ञ्यं युक्तम् । न चाप्तोपदेशान्तराभावात् सम्यग्दर्शनादित्रितयानुपपत्तिरिति भणनीयं पूर्वसर्वज्ञप्रणीतागमप्रभवत्वाद्-मुख्याशेषार्थज्ञानस्य । न चान्योन्याश्रयतादिदोषः आगमसर्वज्ञपरम्पराया बीजाङ्कुरवदनादित्वाङ्गीकारादित्यलम् । रत्नत्रयपदवेदनीयतया प्रसिद्धं सम्यग्दर्शनादित्रितयमर्हत्प्रवचनसङ्ग्रहपरे परमागमसारे प्ररूपितं "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति । विवृतञ्च योगदेवेन "येन रूपेण जीवाद्यर्था व्यवस्थितास्तेन रूपेणार्हता प्रतिपादिते तत्त्वार्थे विपरीताभिनिवेशरहितत्वाद्यपरपर्यायं श्रद्धानं सम्यग्दर्शनं तथा च तत्त्वार्थसूत्रम् "तत्त्वार्थं श्रद्धानं सम्यग्दर्शनमिति" । अन्यदपि "रुचिर्जिनोक्ततत्त्वेषु सम्यक् श्रद्धानमुच्यते । जायते तन्निसर्गेण गुरोरधिगमेन वेति" ॥ "परोपदेशनिरपेक्षमात्मस्वरूपं निसर्गः" व्याख्यानादिरूपपरोपदेशजनितं ज्ञानमधिगमः । येन स्वभावेन जीवादयः पदार्थाः व्यवस्थिताः तेन स्वभावेन मोहसंशयरहितत्वेनावगमः सम्यग्ज्ञानम् । यथोक्तम् "यथावस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा । योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः" इति ॥ तज्ज्ञानं पञ्चविधं मतिश्रुतावधिमनःपर्यायकेवलभेदेन । तदुक्तम् "मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानमिति" । अस्यार्थः ज्ञानावरणक्षयोपशमे सति इन्द्रियमनसी पुरस्कृत्य व्यापृतः सन् यथार्थं मनुते सा मतिः । ज्ञानावरणक्षयोपशमे सति मतिजनितं स्पष्टं ज्ञानं श्रुतम् । असम्यग्दर्शनादिगुणजनितक्षयोपशमनिमित्तम् अवच्छिन्नविषयं ज्ञानमवधिः । ईर्ष्यान्तरायज्ञानावरणक्षयोपशमे सति परमनोगतस्यार्थस्य स्फुटं परिच्छेदकं ज्ञानं मनःपर्यायः । तपःक्रियाविशेषान् यदर्थं सेवन्ते तपस्विनस्तज्ज्ञानमन्यज्ञानासंस्पृष्टं केवलम् । तत्राद्यं परोक्षं प्रत्यक्षमन्यत् । तदुक्तम् "विज्ञानं स्वपराभासि प्रमाणं बाधवर्जितम् प्रत्यक्षञ्च परोक्षञ्च द्विधा मेयविनिश्चयादिति" ॥ अन्तर्गणि-

कभेदस्तु सविस्तरस्तत्रैवागमेऽवगन्तव्यः । संसरणकर्मोच्छित्तावुद्यतस्य श्रद्दधानस्य ज्ञानवतः पापगमनकारणक्रियानिवृत्तिः सम्यक्चारित्रम् । तदेतत् सप्रपञ्चमुक्तमर्हता "सर्वथावद्ययोगानां त्यागश्चारित्रमुच्यते । कीर्त्तितं तदहिंसादिव्रतभेदेन पञ्चधा । अहिंसासूनृतास्तेयब्रह्मचर्यापरिग्रहाः ॥ न यत्प्रमादयोगेन जीवितव्यपरोपणम् । चराणां स्थावराणाञ्च तदहिंसाव्रतं मतम् ॥ प्रियं पथ्यं वचस्तथ्यं सूनृतव्रतमुच्यते । तत्तथ्यमपि नो तथ्यमप्रियञ्चाहितञ्च यत् ॥ अनादानमदत्तस्यास्तेयव्रतमुदीरितम् । बाह्याः प्राणा नृणामर्थो हरता तं हता हि ते ॥ दिव्यौदारिककामानां कृतानुमतकारितैः । मनोवाक्कायतस्त्यागो ब्रह्माष्टादशधा मतम् ॥ सर्वभावेषु मूर्च्छायास्त्यागः स्यादपरिग्रहः ॥ यदसत्स्वपि जायेत मूर्च्छया चित्तविप्लवः ॥ भावनाभिर्भावितानि पञ्चभिः पञ्चधा क्रमात् । महाव्रतानि लोकस्य साधयन्त्यव्ययं पदमिति" ॥ भावनापञ्चकप्रपञ्चनञ्च प्रकल्पितम् "हास्यलोभभयक्रोधप्रत्याख्यानैर्निरन्तरम् । आलोच्य भाषणेनापि भावयेत् सूनृतं व्रत"मित्यादिना ॥ एतानि सम्यग्दर्शनज्ञानचारित्राणि मिलितानि मोक्षकारणं न प्रत्येकं यथा रसायनज्ञानं श्रद्धानाचरणानि सम्भूय रसायनफलं साधयन्ति न प्रत्येकम् । अत्र संक्षेपतस्तावज्जीवाजीवाख्ये द्वे तत्त्वे स्तः तत्र बोधात्मको जीवः अबोधात्मकस्त्वजीवः । तदुक्तं पद्मनन्दिना "चिदचिद्द्वे परे तत्त्वे विवेकस्तद्विवेचनम् । उपादेयमुपादेयं हेयं हेयञ्च कुर्वतः ॥ हेयं हि कर्तृरागादि तत् कार्यमविवेकिनः । उपादेयं परं ज्योतिरुपयोगैकलक्षणमिति" ॥ सहजचिद्रूपपरिणतिं स्वीकुर्वाणस्य ज्ञानदर्शने उपयोगः स परस्परप्रदेशानुप्रदेशबन्धात् कर्मणैकीभूतस्यात्मनोऽन्यत्वप्रतिपत्तिकारणं भवति । सकलजीवसाधारणं चैतन्यमुपशमक्षयक्षयोपशमवशादौपशमिकक्षायात्मकक्षायोपशमिकभावेन कर्मोदयवशात् कलुषान्याकारेण च परिणतजीवपर्यायजीवविवक्षायां स्वरूपं भवति यदवोचद्वाचकाचार्यः "औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ चेति" । अनुदयप्राप्तिरूपे कर्मण उपशमे सति जीवस्योत्पद्यमानो भावः औपशमिकः यथा पङ्के कलुषतां कुर्वति कतकादि द्रव्यसम्बन्धादधः पतिते जलस्य स्वच्छता । कर्मणः क्षयोपशमे सति जायमानो भावः क्षायिकः यथा मोक्षः । उभयात्म-

भावो मिश्रः यथा जलस्यार्द्धस्वच्छता । कर्म्मोदये सति भवन् भाव औदयिकः । कर्म्मोपशमाद्यनपेक्षः । सहजो भावश्चेतनत्वादिः पारिणामिकः । तदेतत् सत्त्वं यथासम्भवं भव्यस्याभव्यस्य वा जीवस्य तत्त्वं स्वरूपमिति सूत्रार्थः । तदुक्तम् स्वरूपसम्बोधने "ज्ञानाद् भिन्नो नचाभिन्नो भिन्नाभिन्नः कथञ्चन । ज्ञानं पूर्व्वापरीभूतं सोऽयमात्मेति कीर्त्तितः" इति ॥ ननु भेदाभेदयोः परस्परपरिहारेणावस्थानादन्यतरस्यैवावास्तवत्वादुभयात्मकत्वमयुक्तमिति चेत्तदयुक्तं बाधे प्रमाणाभावात् अनुपलम्भो हि बाधकं प्रमाणं न सोऽस्ति समस्तेषु वस्तुष्वनेकान्तात्मकत्वस्य स्याद्वादिनो मते सुप्रसिद्धत्वादित्यलम् । अपरे पुनर्जीवाजीवयोरपरं प्रपञ्चमाचक्षते जीवाकाशधर्म्माधर्म्मपुद्गलास्तिकायभेदात् । एतेषु पञ्चसु तत्त्वेषु कालत्रयसम्बन्धितया स्थितिव्यपदेशः अनेकप्रदेशत्वेन शरीरवत् कायव्यपदेशः । तत्र जीवा द्विविधाः संसारिणो मुक्ताश्च । भवाद् भवान्तरप्राप्तिमन्तः संसारिणः । ते च द्विविधाः समनस्का अमनस्काश्च तत्र संज्ञिनः समनस्काः । शिक्षाक्रियाकलापग्रहणरूपा संज्ञा तद्विधुरास्त्वमनस्काः । ते चामनस्का द्विविधाः त्रसस्थावरभेदात् तत्र द्वीन्द्रियादयः शङ्खगण्डोलकप्रभृतयश्चतुर्विधास्त्रसाः पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः । तत्र मार्गगतधूलिः पृथिवी इष्टकादिः पृथिवीकायः पृथिवीकायत्वेन येन गृहीता स पृथिवीकायिकः पृथिवीं कायत्वेन यो ग्रहीष्यति स पृथिवीजीवः । एवमबादिष्वपि भेदचतुष्टयं योज्यम् । तत्र पृथिव्यादिकायत्वेन गृहीतवन्तो ग्रहीष्यन्तश्च स्थावरा गृह्यन्ते न पृथिव्यादिपृथिवीकायादयः तेषां जीवत्वात् । ते च स्थावराः स्पर्शनैकेन्द्रियाश्च । भवान्तरप्राप्तिविधुरा मुक्ताः । धर्म्माधर्म्माकाशास्तिकायास्ते एकत्वशालिनो निष्क्रियाश्च द्रव्यस्य देशान्तरप्राप्तिहेतवः । तत्र धर्म्माधर्म्मौ प्रसिद्धौ कालोकेनाविच्छिन्ने नभसि लोकाकाशपदवेदनीये सर्व्वत्रावस्थितिगतिस्थित्युपग्रहो धर्म्माधर्म्मयोरुपकारः अतएव धर्म्मास्तिकायः प्रवृत्त्यनुमेयः अधर्म्मास्तिकायः स्थित्यनुमेयः अन्यवस्तुप्रदेशमध्येऽन्यस्य वस्तुनः प्रवेशोऽवगाहः तदाकाशकृत्यम् । स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ते च द्विविधाः अणवः स्कन्धाश्च भोक्तुमशक्या अणवः द्व्यणुकादयः स्कन्धाः । तत्र द्व्यणुकादिस्कन्धभेदादण्वादिरुत्पद्यते अण्वादिसंघातात् द्व्यणुकादिरुत्पद्यते कचिद्भेदसंघाताभ्यां स्कन्धोत्पत्तिः । अत एव पूरयन्ति गलन्तीति पुद्गलाः । कालस्यानेकप्रदेशत्वाभावेनाऽस्तिकायत्वाभावेऽपि द्रव्यत्वमस्ति तल्लक्षणयोगात् तदुक्तं गुणपर्य्यायवद्द्रव्यमिति । द्रव्याश्रया निर्गुणाः गुणा यथा जीवस्य ज्ञानत्वादिसामान्यरूपाः पुद्गलस्य रूपत्वादिसामान्यस्वभावाः धर्म्माधर्म्माकाशकालानां यथासम्भवं गतिस्थित्यवगाहहेतुत्वादिसामान्यानि गुणाः । तस्य द्रव्यस्योक्तरूपेण भवनमुत्पादस्तद्भावः परिणामः पर्य्यायः इति पर्य्यायाः यथा "जीवस्य घटादिज्ञानसुखक्रोधादयः पुद्गलस्य मृत्पिण्डघटादयः धर्म्मादीनां गत्यादिविशेषाः अतएव षट् द्रव्याणीति प्रसिद्धिः । केचन सप्त तत्त्वानीति वर्णयन्ति तदाह जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षास्तत्त्वानीति" । तत्र जीवाजीवौ निरूपितौ आस्रवो निरूप्यते औदारिकादिकायादिचलनद्वारेणात्मनश्चलनं योगपदवेदनीयमास्रवः यथा सलिलावगाहिद्वारं नद्यास्रवणं कारणत्वादास्रव इति निगद्यते तथा योगप्रणाडिकया कर्म्मास्रवतीति स योग आस्रवः । यथा आर्द्रं वस्त्रं समन्ताद्वातानीतं रेणुजातमुपादत्ते तथा कषायजलार्द्र आत्मा योगानीतं कर्म्म सर्व्वप्रदेशैर्गृह्णाति यथा वा निष्टप्तायःपिण्डे जले क्षिप्ते अम्भः समन्ताद्गृह्णाति तथा कषायोष्णो जीवो योगानीतं कर्म्म समन्तादादत्ते । कषति हिनस्त्यात्मानं कुगतिप्रापणादिति कषायः क्रोधो मानो माया लोभश्च । स द्विविधः शुभाशुभभेदात् तत्राहिंसादिः शुभः काययोगः सत्यमितहितभाषणादिः शुभो वाग्योगः । तदेतदास्रवभेदप्रभेदजातं कायवाङ्मनःकर्म्मयोगः स आस्रवः शुभः पुण्यस्य, अशुभः पापस्येत्यादिना सूत्रसन्दर्भेण ससंरम्भमभाणि । अपरे त्वेवं मेनिरे आस्रवयति पुरुषं विषयेष्विन्द्रियप्रवृत्तिरास्रवः, इन्द्रियद्वारा हि पौरुषं ज्योतिर्विषयान् स्पृशद्रूपादिज्ञानरूपेण परिणमत इति । मिथ्यादर्शनाविरतिप्रमादकषायवशाद्योगवशाच्चात्मा सूक्ष्मैकक्षेत्रावगाहिनामनन्तानन्तप्रदेशानां पुद्गलानां कर्म्मबन्धयोग्यानामादानमुपश्लेषणं यत् करोति स बन्धः । तदुक्तं "सकषायत्वाज्जीवः कर्म्मभावयोग्यान् पुद्गलानादत्ते स बन्ध" इति । तत्र कषायग्रहणं सर्व्वबन्धहेतूपलक्षणार्थम् । बन्धहेतून् पपाठ वाचकाचार्य्यः "मिथ्यादर्शनाविरतिप्रमादकषाया बन्धहेतवः" इति । मिथ्यादर्शनं द्विविधं मिथ्याकर्म्मोदयात् परोपदेशानपेक्षं तत्त्वाश्रद्धानं नैसर्गिकमेकम् अपरं परोपदेशजम् । पृथिव्यादिषट्कायोपादानकं षडिन्द्रियासंयमनञ्च अविरतिः ।

पञ्चसमितिगुप्तिष्वनुत्साहः प्रमादः । कषायः क्रोधादिः । तत्र कषायान्ताः स्थित्यनुभावबन्धहेतवः प्रकृतिप्रदेशबन्धहेतुर्योग इति विभागः । बन्धश्चतुर्विध इत्युक्तं प्रकृतिस्थित्यनुभावप्रदेशास्तु तद्विधय इति यथा निम्बगुडादेस्तिक्तत्वमधुरत्वादिस्वभावः एवमावरणीयस्य ज्ञानदर्शनावरणत्वमादित्यप्रभोच्छेदकाम्भोधरवत् प्रदीपप्रभातिरोधायककुम्भवच्च सद्वेद्यस्य सुखदुःखोत्पादकत्वमसिधारामधुलेहनवद् दर्शनमोहनीयस्य तत्त्वार्थाश्रद्धानकारित्वं दुर्जनसङ्गवच्चारित्रमोहनीयस्यासंयमहेतुत्वं मद्यमदवदायुषो देहबन्धकर्तृत्वं जलवत् नाम्नो विचित्रनामकारित्वं चित्रिकवद्गोत्रस्योच्चनीचकारित्वं कुम्भकारवद्दानादीनां विघ्ननिदानत्वमन्तरायस्य स्वभावः कोषाध्यक्षवत् । सोऽयं प्रकृतिबन्धोऽष्टविधः द्रव्यकर्मावान्तरभेदमूलप्रकृतिवेदनीयः । तथावोचदुमास्वातिवाचकाचार्यः "आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रान्तराया" इति तद्भेदस्य समस्तत्वात् पञ्चनवाष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चदशभेदा यथाक्रममिति । एतच्च सर्वं विद्यानन्दादिभिर्विवृतमिति विस्तरभयान्न प्रस्तूयते । यथा अजागोमहिष्यादिक्षीराणामेतावन्तमनेहसं माधुर्यस्वभावादप्रच्युतिस्थितिः तथा ज्ञानावरणादीनां मूलप्रकृतीनामादितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटिकोट्यः परा स्थितिरित्याद्युक्तं कालदुग्धेनवत् स्वीयस्वभावादप्रच्युतिस्थितिः । यथा अजागोमहिष्यादिक्षीराणां तीव्रमन्दादिभावेन स्वकार्यकारणे सामर्थ्यविशेषोऽनुभावः । तथा कर्मपुद्गलानां कार्यकरणे सामर्थ्यविशेषोऽनुभावः कर्मभावपरिणतपुद्गलस्कन्धानामनन्तानन्तप्रदेशानाम् आत्मप्रदेशानुप्रवेशः प्रदेशबन्धः । आस्रवनिरोधः संवरः येनात्मनि प्रविशत् कर्म प्रतिषिध्यते स गुप्तिसमित्यादिः संवरः । संसारकारणाद्योगादात्मनो गोपनं गुप्तिः । सा त्रिविधा कायवाङ्मनोनिग्रहभेदात् । प्राणिपीडापरिहारेण सम्यगयनं समिति सा ईर्याभाषादिभेदात् पञ्चधा । प्रपञ्चितञ्च हेमचन्द्राचार्यैः "लोकातिवाहिते मार्गे चुम्बिते भास्वदंशुभिः । जन्तुरक्षार्थमालोक्य गतिरीर्या मता सताम् ॥ आपद्य रागतः सर्वजनीनं मितभाषणम् । प्रिया वाचंयमानां सा भाषासमितिरुच्यते ॥ द्विचत्वारिंशता भिक्षादोषैर्नित्यमदूषितम् । मुनिर्यदन्नमादत्ते सैषणासमितिर्मता ॥ आसनादीनि संवीक्ष्य प्रतिलिख्य च यत्नतः । गृह्णीयान्निक्षिपेद्वा यत् सादानसमितिः" स्मृता ॥ कफमूत्रमलप्रायैर्निर्जन्तुजगतीतले । "यत्नाद्यदुत्सृजेत् साधुः सोत्सर्गसमितिर्भवेत्" ॥ अत एव "आस्रवस्रोतसो द्वारं संवृणोतीति संवरः" इति निराहुः । तदुक्तमभियुक्तैः "आस्रवो भवहेतुः स्यात् संवरो मोक्षकारणम् । इतीयमार्हती मुष्टिरन्यदस्याः प्रपञ्चनम्" । अर्जितस्य कर्मणस्तपःप्रभृतिभिर्निर्जरणं निर्जराख्यं तत्त्वं चिरकालप्रवृत्तकषायकलापं पुण्यं सुखदुःखे च देहेन जरयति नाशयति केशोल्लुञ्चनादिकं तप उच्यते । सा निर्जरा द्विविधा यथाकालौपक्रमिकभेदात् तत्र प्रथमा यस्मिन् काले यत् कर्म फलप्रदत्वेनाभिमतं तस्मिन्नेव काले फलदानाद्भवन्ती निर्जरा कामादिपाकजेति च सा गीयते । यत् कर्म तपोबलात् स्वकामनयोदयावलिं प्रवेश्य प्रपद्यते तत् कर्म निर्जरा । यदाह "संसारबीजभूतानां कर्मणां जरणादिह । निर्जरा सम्मता द्वेधा सकामा कामनिर्जरा ॥ स्मृता सकामा यमिनामकामा त्वन्यदेहिनामिति" । मिथ्यादर्शनादीनां बन्धहेतूनां निरोधः अभिनवकर्माभावात् निर्जराहेतुसन्निधानेनार्जितस्य कर्मणो निरसनादात्यन्तिककर्ममोक्षणं मोक्षः बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्ष इति तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रमुपरतेऽपि तस्मिन् तद्बलादेवासंस्कारक्षयं भ्रमति तथा भवस्थेनात्मना अपवर्गप्राप्तये बहुशो यत् कृतं प्रणिधानं मुक्तस्य तदभावेऽपि पूर्वसंस्कारादालोकान्तं गमनमुपपद्यते यथा वा मृत्तिकालेपकृतसङ्गमलाबुद्रव्यं जलेऽधःपतति पुनरपेतमृत्तिकाबन्धमूर्ध्वं गच्छति तथा कर्मरहित आत्मा असङ्गत्वादूर्ध्वं गच्छति बन्धच्छेदादेरण्डबीजवच्चोर्ध्वगतिस्वभावाच्चाग्निशिखावत् । अन्योन्यं प्रदेशानुप्रवेशे सत्यविभागेनावस्थानं बन्धः परस्परप्राप्तिमात्रं सङ्गः । तदुक्तं "पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथा गतिपरिणामाच्चाविद्धकुलालचक्रवद्व्यपगतलेपालाबुवदेरण्डबीजवदग्निशिखावच्चेति" । अतएव पठन्ति "गत्वागत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तन्ते त्वलोकाकाशमागता" इति । अन्ये तु गतसमस्तक्लेशतद्वासनस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरिदेशावस्थानं मुक्तिरित्यास्थिषत । एवमेतानि सुखदुःखसाधनाभ्यां पुण्यपापाभ्यां सहितानि नव पदार्थान् केचनाङ्गीचक्रुः । तदुक्तं सिद्धान्ते "जीवाजीवौ पुण्यपापयुतावास्रवः संवरो निर्जरणं बन्धो

मोक्षं नवतत्त्वानीति"। सङ्क्षेपे प्रवृत्ता वयमुपरताः स्म। अत्र सर्व्वत्र सप्तभङ्गिनयाख्यं न्यायमवतारयन्ति जैनाः "स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च। स्यादवक्तव्यः स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यः स्यादस्ति च नास्ति चावक्तव्य इति"। तत्सर्व्वमनन्तवीर्य्यः प्रत्यपीपदत् "तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्। स्यान्नास्तीति प्रयोगः स्यात्तन्निषेधे विवक्षिते॥ क्रमेणोभयवाञ्छायां प्रयोगः समुदायभाक्। युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः॥ आद्योवाच्यविवक्षायां पञ्चमो भङ्ग इष्यते। अन्त्योवाच्याविवक्षायां षष्ठोभङ्गसमुद्भवः॥ समुच्चयेन युक्तश्च सप्तमो भङ्ग उच्यत इति"। स्याच्छब्दः खल्वयं निपातः तिङन्तप्रतिरूपकोऽनेकान्तद्योतकः। यथोक्तम् "वाक्येष्वनेकान्तद्योति गम्यं प्रति विशेषणम्। स्यान्निपातोऽर्थयोगित्वात्तिङन्तप्रतिरूपक" इति॥ यदि पुनरेकान्तद्योतकः स्याच्छब्दोऽयं स्यात्तदा स्यादस्तीति वाक्ये स्यात्पदमनर्थकं स्यात् अनेकान्तद्योतकत्वे तु स्यादस्ति कथञ्चिदस्तीति स्यात् स्यात्पदात् कथञ्चिदिति अयमर्थो लभ्यते इति नानर्थक्यम्। तदाह "स्याद्वादः सर्व्वथैकान्तत्यागात् किं वृत्तचिद्विधेः। सप्तभङ्गिनयापेक्षो हेयादेयविशेषकृदिति"॥ यदि वस्त्वस्त्येकान्ततः सर्व्वथा सर्व्वत्र सर्व्वात्मनास्तीति न उपादित्साजिहासाभ्यां क्वचित् कदा केनचित् प्रवर्त्तेत निवर्त्तेत वा प्राप्तप्रापणीयत्वहेयहानानुपपत्तेश्च। अनेकान्तपक्षे तु कथञ्चित् केनचित् सत्त्वेन ज्ञानोपादाने प्रेक्षावतामुपपद्येते। किञ्च वस्तुनः सत्त्वं स्वभावः असत्त्वं वेत्यादि प्रष्टव्यं न तावदस्तित्वं वस्तुनः स्वभाव इति सम्भवति घटोऽस्तीत्यनयोः पर्य्यायतया युगपत्प्रयोगायोगात् नास्तीति प्रयोगविरोधाच्च एवमन्यत्रापि योज्यम्। यथोक्तम् "घटोऽस्तीति न वक्तव्यं सन्नेव हि यतो घटः। नास्तीत्यपि न वक्तव्यं विरोधात् सदसत्त्वयोरित्यादि" तस्मादित्थं वक्तव्यं सदसत्सदसदनिर्व्वचनीयवादभेदेन प्रतिवादिनश्चतुर्विधाः पुनरप्यनिर्व्वचनीयमतेनाञ्चितानि सदसदादिमतानीति त्रिविधाः तान् प्रति किं वस्त्वस्तीत्यादिपर्य्यनुयोगे कथञ्चिदस्तीत्यादिप्रतिवचनसम्भवेन ते वादिनः सर्व्वे निर्व्विण्णाः सन्तः तूष्णीमासत इति सम्पूर्णार्थविनिश्चायिनः स्याद्वादमङ्गीकुर्व्वतस्तत्र तत्र विजय इति सर्व्वमुपपन्नम्। यदवोचदाचार्य्यः स्याद्वादमञ्जर्याम् "अनेकान्तात्मकं वस्तु गोचरः सर्व्वसंविदाम्। एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः॥ न्यायानामेकनिष्ठानां प्रवृत्तौ श्रुतवर्त्मनि। सम्पूर्णार्थविनिश्चायि स्याद्वस्तु श्रुतमुच्यते" "अन्योन्यपक्षप्रतिपक्षभावाद्यथापरे मत्सरिणः प्रवादाः। नयानशेषानविशेषमिच्छन्न पक्षपाती समयस्तथार्हतः" इति॥ जिनदत्तसूरिणा जैनं मतमित्थमुक्तम्। "बलभोगोपभोगानामुभयोर्दानलाभयोः। अन्तरायस्तथा निद्रा भीरज्ञानं जुगुप्सितम्। हिंसा रत्यरती रागद्वेषौ रतिररतिस्मरः। शोको मिथ्यात्वमेतेऽष्टादश दोषा न यस्य सः। जिनो देवो गुरुः सम्यक् तत्त्वज्ञानोपदेशकः। ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्त्मनि। स्याद्वादस्य प्रमाणे द्वे प्रत्यक्षमनुमापि च। नित्यानित्यात्मकं सर्व्वं नव तत्त्वानि सप्त वा। जीवाजीवौ पुण्यपापे चास्रवः संवरोऽपि च। बन्धो निर्जरणं मुक्तिरेषां व्याख्याधुनोच्यते। चेतनालक्षणो जीवः स्यादजीवस्तदन्यकः। सत्कर्म्मपुद्गलाः पुण्यं पापं तस्य विपर्य्ययः। आस्रवः कर्म्मणां बन्धो निर्जरस्तद्वियोजनम्॥ अष्टकर्म्मक्षयान्मोक्षोऽथान्तर्भाव्य कैश्चन। पुण्यस्य संवरे पापस्यास्रवे क्रियते पुनः॥ लब्धानन्तचतुष्कस्य लोकागूढस्य चात्मनः। क्षीणाष्टकर्म्मणो मुक्तिर्निर्व्यावृत्तिर्जिनोदिता॥ सरजोहरणा भैक्षभुजो लुञ्चितमूर्द्धजाः। श्वेताम्बराः क्षमाशीलाः निःसङ्गा जैनसाधवः॥ लुञ्चिताः पिच्छिकाहस्ताः पाणिपात्रा दिगम्बराः। ऊर्द्ध्वाशिनो गृहे दातुर्द्वितीयाः स्युर्जिनर्षयः॥ भुङ्क्ते न केवली न स्त्री मोक्षमेति दिगम्बरः। प्राहुरेषामयं भेदो महान् श्वेताम्बरैः सहेति"॥

**अर्हन्त** पु० अर्ह+वा० झ। जैनदेवे अर्हति।

**अर्हन्ती** स्त्री अर्हतः पूज्यस्य भावः ष्यञ् नुम् ङीष् यलोपः। पूज्यतायाम्—"शौलार्हन्तीचबर्गुणैः" सि०कौ०।

**अर्हा** स्त्री चु० अर्ह—अङ्। पूजायाम्। युच् क्तिनएव बाधकः

**अर्हित** त्रि० अर्ह—क्त। पूजिते। "अभ्यर्हितश्च" का०वा०

**अर्ह्य** त्रि० चु०अर्ह—कर्म्मणि यत्। १प्राप्तुं योग्ये २स्तोतुं योग्ये च। चु० अर्ह—यत्। ३पूज्ये।

**अल** भूषणे, वारणे, भ्वा० उभ०सक० पर्य्याप्तौ अक० सेट्। अलति ते आलीत् आलिष्ट।

**अल** न० अल—अच्। १वृश्चिकपुच्छस्थे कण्टकाकारे पदार्थे। हेम०। २हरिताले रत्नमा०।

**अलक** पु० अलति भूषयति मुखम् अल—क्वुन्। १ललाटस्थे छिन्नाग्रे कुटिलकेशे, "अलकलोऽलकलोलदृशाऽन्यया" माघः "ललाटिकाचन्दनधूसरालका" कुमा० "अलसदालके-

ह्नौ" "अलकेषु चमरेशुच्छ र्प्रतिनिधीकृतः" इति च रघुः। "अङ्गुलिप्रकुञ्चैः" च। क्षिपकादित्वात् कापि नेत्त्वम्। अलका। अष्टवर्षावधिदशवर्षपर्य्यन्तवयस्कायां ३कन्यायां ४कुबेरपुर्य्याञ्च स्त्री। साच पुरी मेरुशिखरोपरिस्थेति अग्निलोकशब्दे दर्शितम्। तस्याः स्वरूपस्तु "सभा वैश्रवणी राजन्! शतयोजनमायता। विस्तीर्णा सप्रतिश्चैव योजनानि सितप्रभा। तपसा निर्ज्जिता राजन्! स्वयं वैश्रवणेन सा। शशिप्रभा प्रावरणा कैलासशिखरोपमा। गुह्यकैरुह्यमाना सा खे विषक्तेव शोभते। दिव्या हेममयैरुच्चैः प्रासादैरुपशोभिता। महारत्नवती चित्रा दिव्यगन्धा मनोरमा। सिताभ्रशिखराकारा प्लवमानेव दृश्यते। दिव्या हेममयैरङ्गैर्विद्युद्भिरिव चित्रिता। तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः। स्त्रीसहस्रैर्वृतः श्रीमानास्ते ज्वलितकुण्डलः। दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते। दिव्यपादोपधाने च निषण्णः परमासने। मन्दाराणामुदाराणां वनानि परिलोडयन्। सौगन्धिकवनानाञ्च गन्धं गन्धवहो वहन्। नलिन्या चालकाख्याया नन्दनस्य वनस्य च। शीतो हृदयसंह्लादी वायुस्तमुपसेवते" भा०स०प०। गन्धवर्तीं नाम वायुपुरीं वर्णयित्वा काशी० ख० "ततःपरं कुबेरस्य श्रीमत्येषालका पुरी शुभा"। "अलकामतिवाह्यैव" कुमा०।

**अलकनन्दा** स्त्री अलति पर्य्याप्नोति कुन् अलका नन्दयतीति अच् नन्दा कर्म्म०। १गङ्गायाम्। "विष्णुपदी विष्णुपदात् पतिता मेरौ चतुर्द्दिशात्। विष्कम्भाचलमस्तकसरःसङ्गता गता वियता। सीताख्या भद्राश्वं चालकनन्दा च भारतं वर्षम्" सि०शि०। "तथैवालकनन्दा दक्षिणेन ब्रह्मसदनाद्बहूनि गिरिकूटान्यतिक्रम्य हेमकूटहिमकूटान्यतिरभसरंहसा लुठन्ती भारतमभि वर्षं दक्षिणस्यां दिशि लवणजलधिमभिप्रविशति" भा०५स्क०। अलकैर्नन्दति अच्। २कन्यायाम्। सा हि अलकैस्तुष्यति।

**अलकप्रभा** स्त्री अलका पर्य्याप्ता प्रभा यस्याः। कुबेरपुर्य्यामलकाख्यायाम्। [(पियासाल) पीतसालवृक्षे।

**अलकप्रिय** पु० अलकान् प्रीणाति चिक्कणीकरोति प्री—क।

**अलकाधिप** पु० अलकाया अधिपः ६त०। कुबेरे। अलकेश्वरादयोऽप्यत्र। "अयुञ्जीयदमरालकेश्वरौ" रघुः।

**अलक्त** पु० न रक्तोऽस्मात् ५ब० रस्य लत्वम्। १लाक्षारसे, स्वार्थे कन्। अलक्तकोऽप्यत्र २वद्धेतौ लाक्षायाञ्च। "अलक्तकाङ्कां पदवीं ततान" कुमा० रघुश्च। "चिरोज्झितालक्तकपाटलेन" कुमा० गोरचनालक्तककुङ्कुमेनेति" तन्त्रम्।

**अलक्षण** न० लक्षणमनुमापकं सुचिह्नं न०त०। १अननुमापके, सुचिह्नभिन्ने २दुर्लक्षणे च। लक्षणञ्च इतरभेदानुमापकं लिङ्गम् यथा पृथिव्यागन्धवत्त्वम् जलस्य स्नेहवत्त्वम्। शुभसूचकं चिह्नविशेषश्च लक्षणं तच्च लक्षणशब्दे वक्ष्यते। तदुभयभिन्नमलक्षणम् "आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्" मनुः। नास्ति लक्षणं अनुमापकोऽव्यभिचारिहेतुः अशुभसूचकहेतुश्च यस्य। २तद्वति त्रि० "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" मनुः। "क्लेशावहा भर्त्तुरलक्षणाहम्" रघुः। "अलक्षणा भवन्ति यद्वै नास्ति तदलक्षणमसन्तम्" शत० ब्रा०। "निकृतीः कृष्णास्तुपकाश्चित्रोऽलक्षणाः" कात्या० १७,२४,२२।

**अलक्षित** त्रि० लक्ष—क्त न०त०। १अज्ञाते २लक्षणेनाननुमिते "अलक्षिताभ्युत्पतनो नृपेण" रघुः "वपुर्विरूपाक्षमलक्षिता जनिः" काव्य०प्र०। ३अकृतचिह्ने च। "दक्षिणेन द्वारं सोमक्रयणी तिष्ठत्यलक्षिता व्यङ्गा" कात्या० ७,६,१४, "अलक्षिता अनङ्किता" कर्क०।

**अलक्ष्मी** स्त्री विरोधार्थे नञ् त०। लक्ष्मीविरुद्धायां निर्ऋतौ "आलक्ष्मीति" ख्यातायाम्। "अलक्ष्मीः कालकर्णी च" पुरा० "अलक्ष्मीरपक्रामति" श्रुतः।

**अलक्ष्य** त्रि० न लक्ष्यते लक्ष—कर्म्मणि यत् न०त०। १अदृश्ये २दुर्ज्ञेये। "वपुर्विरूपाक्षमलक्ष्यजन्मता" कुमा०। न लक्ष्या लक्षणया बोध्या। ३लक्षणाबोध्यभिन्ने "न वाच्यत्वादिकं तस्य" इत्यस्य व्याख्याने 'आदिशब्दादलक्ष्यत्वादि' सा०द०। नास्ति लक्ष्यं व्याजोयस्य। ४व्याजशून्ये त्रि०।

**अलगर्द्द** पु० लगति सृशति क्विप् लग् अर्द्दयति अर्द्द—अच् अल् सृशन् सन् अर्दौ न भवति। १विषशून्ये जलव्याले पृषो० षत्वम् अलः पर्य्याप्तो गर्द्दोऽस्ति वा गर्ध—अच् वा। अलगर्द्धोऽप्यत्र। दर्वीकरगणनायां सुश्रुतः "महाशिरा अलगर्द्द आशीविष" इति। २जलायुकाभेदे स्त्री। "अथ जलायुका वक्ष्यन्ते। जलमासामायुरिति जलायुका जलमासामोक इति जलौकसः। ता द्वादश तासां सविषाः षट् तावत्य एव निर्विषाः। तत्र सविषाः कृष्णा कर्व्वुरा अलगर्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति। "रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा" इति च सुश्रु०।

**अलग्न** त्रि०न लग्नः संसृष्टः। लग्नभिन्ने असंसृष्टे "अलग्नमिव ह वै वागवदेदन्वनो न स्यात्" शत०ब्रा० "अलग्नमिव यज्ञव्यपदार्थेन सहासंसृष्टम्" भा०। अलग्नमित्यपाठः।

भाष्यानुक्तेः । ज्योतिषोक्ते पापाक्रान्तादिदुष्टलग्ने न० ।

**अलघु** त्रि० न लघुः विरोधे न०त० । लघुवर्णभिन्ने १गुरुवर्णे आकारादौ २गौरवयुक्ते लाघवशून्ये । "जघनमलघुपीवरोरुकच्छा" माघः २दीर्घे च "अलघुप्रसारितविलोचनाञ्जलिः" माघः । स्त्रियां वा ङीप् ।

**अलङ्करण** न०अलम्+कृ—भावे ल्युट् । १भूषायाम् । करणे ल्युट् । २वलयादौ भूषणे । "आवसथोन्मर्दनालङ्करणदन्तप्रक्षालनान्यध्वर्यौरदोचितस्य" कात्या० ८,६,२८, । न चालङ्करणं धार्यं क्वचिद्द्वेते तया पुनः" विधवाधर्मे पुरा० ।

**अलङ्करिष्णु** त्रि० अलम् कृ—इष्णुच् । भूषके मण्डनकरणशीले । "अलङ्करिष्णवस्ते च शब्दमर्थं शुभौ त्रिधा" अग्निपु० ।

**अलङ्कर्त्तृ** त्रि०अलम्+कृ—तृच् । भूषणकर्त्तरि स्त्रियां ङीप् ।

**अलङ्कर्मीण** त्रि० अलं समर्थः कर्म्मणे ख । कर्म्मक्षमे ।

**अलङ्कार** पु०अलम्+कृ—भावे घञ् । १भूषायाम् । करणे घञ् । २हारादौ भूषणे,साहित्यविषयदोषगुणप्रतिपादके ३ग्रन्थे, ४शब्दभूषणे—अनुप्रासादौ, ५शब्दार्थभूषणे—उपमादौ च । "शब्दार्थयोरस्थिरा ये धर्म्माः शोभातिशायिनः । रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्" सा०द० उक्तम् शब्दार्थयोः शोभाकारित्वम् तल्लक्षणम् । ते च बहवः शब्दनिष्ठा अर्थनिष्ठाः उभयनिष्ठाश्च । तत्र जात्यादयः शब्दनिष्ठाः उपमादयोऽर्थनिष्ठाः पुनरुक्तवदाभासादय उभयनिष्ठाः तत्तदन्वयव्यतिरेकाभ्यां यथायम् शब्दनिष्ठास्तु बहवस्तेषु केचित् तत्तच्छब्दे उक्ताः केचित् वक्तव्याश्च तद्भेदाश्च तत् समासेनात्राभिधीयन्ते तत्र जात्यादयश्चतुर्विंशतिः शब्दालङ्काराः सरस्वतीकण्ठाभरणे दर्शिताः यथा "ये व्युत्पत्त्यादिना शब्दानलङ्कर्त्तुमिह क्षमाः । शब्दालङ्कारसंज्ञास्ते ज्ञेयाजात्यादयोबुधैः" । "जातिर्गतोरीतिवृत्तिच्छायामुद्रोक्तियुक्तयः । भणितिर्गुम्फना शय्या पठितिर्यमकानि च । श्लेषानुप्रासचित्राणि वाकोवाक्यं प्रहेलिका । गूढप्रश्नोत्तराध्येयश्रव्यप्रेक्ष्याभिनीतयः । चतुर्विंशतिरित्युक्ताः शब्दालङ्कारजातयः" । तेषां लक्षणादीनि क्रमेण यथा तत्र १जातिः "तत्र संस्कृतमित्यादिर्भारती जातिरिष्यते । सा त्वौचित्यादिभिर्वाचामलङ्काराय जायते संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन । साधारण्यादिभिःकेचित् केचन म्लेच्छभाषया । न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । संकीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् । देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः । पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः । संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः । शक्योरचयितुं कश्चिदपभ्रंशेन जायते" । तत्र जातिरपि षोढा यथोक्तं तत्रैव । "शुद्धा साधारणी मिश्रा सङ्कीर्णा रूप्यगामिनी । अपभ्रष्टेति साचार्यैर्जातिः षोढा निगद्यते" । इति जातिः १

२ गतिः । "गद्यं पद्यं च मिश्रं च वाक्यं यत् सा गतिः स्मृता । अर्थौचित्यादिभिः साऽपि वागलङ्कार इष्यते । कश्चिद्गद्येन पद्येन कश्चिन्मिश्रेण शक्यते । कश्चिदेकेन च द्वाभ्यां काव्योऽर्थः कश्चन त्रिभिः । द्रुता विलम्बिता मध्या साथ द्रुतविलम्बिता । द्रुतमध्या च विज्ञेया तथा मध्यविलम्बिता । सा लघूनां गुरूणाञ्च बाहुल्याल्पत्वमिश्रणैः । गद्ये पद्ये च मिश्रे च षट् प्रकारोऽपि जायते । तत्र वृत्तं च जातिश्च पद्यमाहुरथो पृथक् । समञ्चार्द्धसमं चेति विषमञ्च प्रचक्षते" । "वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेदिति" वृ०र० । "गद्यमुत्कलिकाप्रायं पद्यगन्धीति च द्विधा । द्विधैव गद्यपद्यादिभेदान्मिश्रमपीष्यते । ललितं निष्ठुरं चूर्णमाविद्धं चेति योऽपरः । विशेषः स तु गद्यस्य रीतिवृत्त्योर्विशिष्यते" । गतिः २ ।

३ रीतिः यथा "वैदर्भ्यादिगतः पन्थाः काव्ये मार्ग इति स्मृतः । रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते । वैदर्भी साथ पाञ्चाली गौडीयावन्तिका तथा । लाटीया मागधी चेति षोढा रीतिर्निगद्यते । तत्रासमासा निःशेषश्लेषादिगुणगुम्फिता । विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते" । दर्पणे तु "माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते" लक्षिता । "समस्तपञ्चषपदामोजःकान्तिविवर्जिताम् । मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः । समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम् गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः । अन्तराले तु पाञ्चालीवैदर्भ्यो र्याऽवतिष्ठते । सावन्तिका समस्तैः स्याद् द्वित्रैस्त्रिचतुरैस्तथा । समस्तरीतिव्यामिश्रा लाटीया रीतिरिष्यते । पूर्वरीतेरनिर्वाहे खण्डरीतिस्तु मागधी" । रीतिः ३ ।

४ वृत्तिः यथा । "या विकाशेऽथ विक्षेपे संकोचे विस्तरे तथा । चेतसो वर्त्तयित्री स्यात् सा वृत्तिः सापि षड्विधा । कौशिक्यारभटी चैव भारती सात्वती परा । मध्यमारभटी चैव तथा मध्यमकौशिकी । सुकुमारार्थसंदर्भा कौशिकी तासु कथ्यते । याहु प्रौढार्थसंदर्भा वृत्तिरारभटी तु सा । कोमलप्रौढसन्दर्भा कोमलार्था च भारती । प्रौढार्थकोमलप्रौढसंदर्भां सात्वतीं विदुः । कोमलप्रौढसन्दर्भा या सा

मध्यमकौशिकी। प्रौढार्थकोमलैर्वर्णैर्मध्यमारभटीष्यते। ४

५ छाया। अन्योक्तीनामनुकृतिश्छाया सापीह षड्विधा। लोकच्छेकार्भकोन्मत्तप्रोढ़ामत्तोक्तिभेदतः"। ५

६ मुद्रा। "स्वाभिप्रायस्य वाक्ये यद्वचसापि निवेदनम्। मुद्रां तां मुत्प्रदायित्वात् काव्यमुद्राविदो विदुः। साक्रिन् पदस्य वाक्यस्य विभक्तेर्वचनस्य च। समुद्रयस्य संहत्या मोदा न्यासेन जायते"। मुद्रा ६

७ उक्तिः। "विधिद्वारेण वा यत्र निषेधेनाथवा पुनः। प्रतीयते विशिष्टोऽर्थः सोक्तिरत्राभिधीयते। विधेश्च निषेधात् स्यादधिकारात् विकल्पनात्। नियमात् परिसंख्याया उपाक्षेः सेह षड् विधा"। उक्तिः ७

८युक्तिः। "अयुज्यमानस्य मिथः शब्दस्यार्थस्य वा पुनः। योजना क्रियते यासौ युक्तिरित्युच्यते बुधैः। पदं चैव पदार्थश्च वाक्यं वाक्यार्थ एव च। विषयोऽस्याः प्रकरणं प्रबन्धश्चाभिधीयते। योगकारणपर्यायाङ्गाङ्गिभावपरम्पराः। पदयुक्तेर्निमित्तं स्युर्निरूढ़ाः पदसिद्धये। विरुद्धानां पदार्थानां गत्यादीनां परस्परम्। योजनायेह तां युक्तिं पदार्थविषयां विदुः। गर्भैः सह निगर्भैश्च संहतिः समसङ्गता। हेतवो वाक्ययुक्तीनां क्रियन्तामेवमादयः। यत्तदादेरुपादानं क्रियाभ्यासससङ्गयौ। क्रियासमभिहारश्च वाक्यार्थान् युङ्क्ते मिथः। यदथहेतर्थैक्यादिविवर्णनाध्युपपत्तये। वाक्यं सेह प्रकरणविषया युक्तिरिष्यते प्रबन्धविषयाप्येवं युक्तिरुक्ता मनीषिभिः"। युक्तिः ८

९ भणितिः। "उक्तिप्रकारो भणितिः सम्भवेऽसम्भवे च सा। विशेषसंहत्याश्चर्यं कल्पनासु च कल्पते"। भणितिः९

१० गुम्फना। "वाक्ये शब्दार्थयोः सम्यग्रचना गुम्फना स्मृता। शब्दार्थसमपर्यायपदवाक्यक्रता च सा"। गुम्फना१०

११ शय्या। "लम्बेलाङ्कः पदार्थानां घटना या परस्परम्। सा प्रक्रान्तेन कस्मिंश्चिदप्रक्रान्तेन कुत्रचित्। अतिक्रान्तेन कुत्रापि यथार्थवर्णयोः क्वचित्। क्वचित् वाच्यार्थयोः क्वापि प्रकीर्णानां च दृश्यते"। शय्या ११

१२ पठितिः "काकुस्वरपदच्छेदभेदाभिनयकान्तिभिः पाठोयोऽर्थविशेषाय पठितिः सेह षड् विधा"। पठितिः१२

१३ यमकम्। "विभिन्नार्थैकरूपाया यावृत्तिर्वर्णसंहतेः। अव्यपेतव्यपेतात्मा यमकं तन्निगद्यते। तदव्यपेतयमकं व्यपेतयमकं तथा। स्थानास्थानविभागाभ्यां पादभेदाच्च भिद्यते। तत्र पादादिमध्यान्तस्थानान्तेषु प्रकल्पते। यदव्यपेतमन्यद्वा तत्स्थानयमकं विदुः। चतस्त्रिद्व्येकपादेषु यमकानां विकल्पना। आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः। अत्यन्तं बहवस्तेषां भेदाः संभेदयोनयः सुकरा दुष्कराश्चैव," अग्निपुराणे तु। अनेकवर्णावृत्तिर्या भिन्नार्थप्रतिपादिका। यमकं सा व्यपेत चाव्यपेतेति द्विधा मता। आनन्तर्यादपेता स्यात् व्यपेता व्यवधानतः। द्वैविध्येनानयोः स्थानपादभेदाच्चतुर्विधम्। आदिपादादिमध्यान्तेष्वेकद्वित्रिनियोगतः। सर्वथा पूर्वपूर्वेण चेत्यादिनोत्तरोत्तरम्। एकद्वित्रिपदारम्भात्तत्पादात्तद्पदात् परम्। तृतीयं त्रिविधं पादस्यादिमध्यान्तगोचरम्। पादान्तयमकं चैव कोटीयमकमेव च। संसर्गयमकं चैव विक्रान्तयमकं तथा। यमकं चक्रवालं च संदष्टयमकं तथा। पादादियमकं चैव तत् मैलीयमेव च। दशधा यमकं चैवं तद्भेदाबहवोऽपरे" इत्युक्तम्। तत्रास्थानयमकमुक्तं "नादौ न मध्ये नान्ते यत् सन्धौ वा यत् प्रकाशते। अव्यपेतव्यपेतं तदस्थानयमकं विदुः। पादे श्लोके च तत्प्रायः पादसन्धौ च बध्यते। स्वभेदे च चान्यभेदे च सूत्रं सूत्रमं च सूरिभिः"। अन्यदग्निपुराणादौ ज्ञेयम्। यमकम् १३

१४ श्लेषः "एकरूपेण वाक्येन द्वयोःकारणमर्थयोः। तन्त्रेण यत् स शब्दज्ञैः श्लेष इत्यभिधीयते। प्रकृतिप्रत्ययोत्थौ द्वौ विभक्तिवचनाश्रयौ। पदभाषोद्भवौ चेति शब्दश्लेषा भवन्ति षट्"। १४ श्लेषः

१५ अनुप्रासः। "आवृत्तिर्या तु वर्णानां नातिदूरान्तरस्थिता। अलङ्कारेषु विद्वद्भिरनुप्रासः स दर्श्यते" "श्रुतिभिर्वृत्तिभिर्वर्णैः पदैर्नामभिरुक्तिभिः। लाटानामुक्तिभिश्चायं षट्प्रकारः प्रकाश्यते" तत्र वृत्त्यनुप्रासः १७८पृष्ठे दर्शितः। स च त्रिविधः ग्राम्योनागर उपनागरश्चेतिभेदात्। ग्राम्योऽपि चतुर्विधः मसृणोऽमसृणो वर्णोत्कटो वर्णानुत्कटश्चेति भेदात्। इत्यादीनां लक्षणानि तत्रैव। "सुकुमारवर्त्मानेषु यः स्वर्गेषु वर्त्तते। काव्यव्यापी स संदर्भो वृत्तिरित्यभिधीयते। कार्णाटी कौन्तली कौङ्गी कौङ्कणी वानवासिका। द्राविड़ी माथुरी मात्सी मागधी ताम्रलिप्तिका। औड्री पौण्ड्रीति विद्वद्भिः सा द्वादशविधोच्यते"। तत्र कवर्गेणानुप्रासवती कार्णाटी एवं चवर्गेण कौन्तली, टवर्गेण कौङ्गी, तवर्गेण कौङ्कणी, पवर्गेण वानवासिका, यवर्गेण, द्राविडी। शवर्गेण माथुरी, द्वित्रिवर्गानुप्रासवती मात्सी। द्वाभ्यां गर्भितैककवर्गानुप्रासवती मागधी। स्वान्त्यसंयोगिकवर्गानुप्रासवती ताम्रलिप्तिका।

स्वरूपसंयोगिग्रथिता चौडी । असरूपसंयोगिग्रथिता पौण्ड्री । अन्ये तु "सवर्णादीनामसम्बन्धः सम्बन्धोवापि योमिथः स्फुटादिबन्धसंमिश्रा सेह वृत्तिर्निरुच्यते । सौकुमार्य्यमथ प्रौढिर्मधुरत्वञ्च तद्गुणौ । गम्भीरौजस्विनी प्रौढ़ा मधुरा निहुरा तथा । कठोरा कोमला मिश्रा परुषा ललिता मिता। इति द्वादशधा भिन्ना कविभिः परिपद्यते" इत्याहुः । "यथा चम्पकपुष्पादिस्रगादेर्वर्ण उच्यते वर्णावृत्तिस्तथा वाचां वर्णानुप्रास उच्यते । स तु स्तवकवान् स्थानी गर्भोविहृतसंहृतः । गृहीतमुक्तः क्रमवान् विपर्य्यस्तोऽथ संपुटम् । मिथुनं वेणिका चित्रोविचित्रश्चापि वर्ण्यते"। स्थानेस्थाने वर्णस्तवकस्य विन्यासात् स्तवकवान्। नियतविवक्षितस्थानविशेषे विन्यासशाली स्थानी । आवृत्तौ वर्णान्तरावेशे गर्भः । स्थानेस्थाने विकाशसङ्कोचाभ्यां विहृतसंहृतः । चक्रवालवद्धानोपादानाभ्यां गृहीतमुक्तः । क्रमेण द्वित्रवर्णानां संयोगस्वराणामावृत्तिः क्रमवान् । स्वरसंयोगवर्णानां क्रमेणावृत्तिश्च क्रमवान् । विपर्य्ययोपन्यासात् विपर्य्ययः । आद्यवर्णवर्त्तिना स्वरेण सह पादमध्यान्तयोरनुप्रासः संपुटम् । अन्तःपादमुपसंहारोपक्रमयोर्विवक्षितस्वरानुप्रासे मिथुनम् । आ वाक्यसमाप्तेः वर्णानुप्रासनिर्वाहो वेणिका । उक्तलक्षणेभ्योऽन्यश्चित्रः । एकवर्णावृत्तेर्यत्रानुप्रासस्यवर्णान्तरवैचित्र्येण विचित्रः । "समयमसमय" वा यत्रिरावर्त्तते पदम् । पदान्वयेन स प्रायः पदानुप्रास उच्यते । विसर्गविन्दुसंयोगस्वरस्थानाविवक्षया । अनिर्वाहाय स प्रायो यमकेभ्यो विभिद्यते" "मसृणोदन्तुरः श्लक्ष्णः संपुटं सम्पुटावली । छिन्नः स्तवकवान् स्थानी मिथुनं मिथुनावली । गृहीतमुक्तनामान्यस्ततोऽन्यः पुनरुक्तिमान् । इति द्वादशभेदोऽयं मनीषिभिरिहोच्यते"। असंयुक्त वर्णावृत्तेः पदानुप्रासो मसृणः । संयोगाधिक्ये दन्तुरः । स्वरेण सहावृत्तेः श्लक्ष्णः । पदाव्यवधाने संपुटम् । तेषामावली संपुटावली । रीतेरनिर्वाहात् छिन्नः ॥ वर्णानुप्रासवत् पदानुप्रासोऽपि स्थाने स्थाने निवेशे स्तवकवान् । स्थाननियमात् पदानुप्रासः स्थानी । प्रतिपादं द्वयोर्द्वयोः पदानुप्रासयोः निरन्तरमावृत्तिर्मिथुनं तदावली मिथुनावली । चक्रपालवत् पदानुप्रासो गृहीतमुक्तः पदानां पुनः पुनरावर्त्तने पुनरुक्तिमान् । "स्वभावतश्च गौण्या च वीप्साऽभीक्ष्ण्यादिभिश्च सा । नाम्नां द्विरुक्तिर्योक्ते तु नामानुप्रास उच्यते" । आदिना विमूलसंभ्रमादि गृह्यते । "अर्थभेदे पदावृत्तिः प्रवृत्त्या भिन्नयाय वा । स सूरिभिरनुप्रासोऽथाटोप इति गीयते । सचाव्यवहितो व्यस्तः समस्त उभयः पुनः । उभयं चक्रवालञ्च गर्भश्चेत्याभिधीयते" ॥ अनुप्रासः १५ ।

१६ चित्रम् "वर्णस्थानस्वराकारगतिबन्धान् प्रतीह यः । नियमस्तद्बुधैः षोढ़ा चित्रमित्यभिधीयते" ॥ स्वरस्य पृथक् निर्द्देशात् वर्णा अत्र व्यञ्जनानि एकव्यञ्जनद्विव्यञ्जनत्रिव्यञ्जनादिभेदात् नानाविधः एवमेकद्वित्र्यादिस्वरचित्रम् । स्थानचित्रम् । निष्कण्ठ्यनिस्तालव्यादिभेदात् बहुविधम् आकारचित्रम् पद्माद्याकारेण चित्रम्। तत्राष्टदलपद्मचित्रम् "कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च। प्रवेशनिर्गमौ दिक्षु कुर्य्यादष्टदलाम्बुजे" प्रकारान्तरं यथा । "अष्टधा कार्णिकावर्णाः पत्रेष्वष्टौ तथाऽपरे। तेषां सन्धिषु चाष्टावष्टपत्रसरोरुहे" । प्रकारान्तरं यथा । "आकर्णिकं पुनः पर्णपर्णान्तात् पर्णकर्णिके । प्रतिपत्रं व्रजेद्धीमानिह त्वष्टदलाम्बुजे" इति चतुर्द्दलं यथा "कर्णिकातो नयेदूर्द्ध्वं पत्राकाराक्षरावलीम् । प्रवेशयेत् कर्णिकायां पद्ममेतच्चतुर्द्दलम्"। षोड़शदलं यथा "गोमूत्रिकाक्रमेणास्य वर्णाः सर्व्वे समासतः । मध्ये त्वेकाक्षरन्यासात् पद्मोऽयं षोड़शच्छदः" अष्टपत्रं कविनामाङ्कं यथा "निविष्टाष्टदलन्यासमिदं पादार्द्धभङ्गिभिः । अस्त्येकवर्णिकं कोणैः कविनामाङ्कमम्बुजम् । एतानि चित्राणि अनुष्टुप्छन्दस्येव । चक्रबन्धो यथा "पुरः पुरोलिखेत् पादानत्र लीलकरीलतान् । तुर्य्यन्तु भ्रमयेन्नेमौ नामाङ्कचक्रसंविधः" । अस्योद्धारोदर्शितो माघव्याख्यायां मल्लिनाथेन । दशमण्डलरेखाङ्के नवमण्डलान्तरालवति चक्रे नाभिस्थानेन सहैकविंशति कोष्ठं प्रत्येकं द्व्यरवत् पङ्क्तित्रयं समरेखया लिखित्वा तत्रैकस्यां पङ्क्तौ वामपार्श्वक्रमेण आद्यपादमालिख्य तथा प्रादक्षिण्येन द्वितीयायां तृतीयायां च पङ्क्त्यां द्वितीयतृतीयौ पादौ लिखित्वा नेमिस्थाने वाह्यवलये साक्षरकोष्ठषट्केन सहाष्टादशकोष्ठवति तृतीयकोष्ठान्तवर्त्तिवर्णमारभ्य प्रादक्षिण्येन तुर्य्यपादं लिखित्वा तत्रैव समापयेत् । तत्रैव माद्यन्तवर्णैः तुर्य्यपादोद्धारः तन्नेमिस्थाने आद्यपादत्रयदशमाक्षरसंवादः । तृतीयान्तकोष्ठे तुर्य्याद्यन्तवर्णयोः संवादः" यथा "सत्त्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो लब्धावष्टयशुद्धिरुद्धतरश्रीवत्सभूमिर्मुदा । मुक्त्वा काममपास्तभीः परमृगव्याधः स नादं हरेरेकोधैः समकालमभ्रमुदयी रोपैस्तदा तस्तरे"। अत्र तृतीयवलये "माघकाव्यमिदम्"। "षड्वलये, शिशु·

पालवधः इति काव्यनामाङ्कयोगः । एवमन्यत्रापि यथायथमूह्यम् गतिचित्रं गत्याविलोमगत्या तुरङ्गादिगत्या वा चित्रं तच्च यमकभेद एव यथोक्तं दण्डिना । "आवृत्तिः प्रातिलोम्येन पादार्द्धश्लोकगोचरा । यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम्" तत्र पादगता विलोमावृत्तिर्यथा "यामताश्च कृतायासा सायाता कृशता मया" । रमणारकता तेऽस्तु स्तुतेताकरणामर" अर्द्धगता यथा । "सा रमानन्दरारोहा नगेभागमना हि या । याहि नामग भागेन हारोरा दनमार सा" श्लोकगा यथा । "यान मानय माराविकशोनानजनासना । यासदारयताधीना मायामायमनादि सा । सादिनामयमायामा नाधीता यरदाऽसुया । नासना जनना शोकविरामाय न मानया" ॥ तथाच पादविलोमावृत्तौ अयुक्पादयोर्गतिः युक्पादयोः प्रत्यागतिः । अर्द्धावृत्तौ प्रथमपादाभ्यां गतिः शेषाभ्यां प्रत्यागतिरिति गतिप्रत्यागतिरूपचित्रमित्यवधेयम् । श्लोकावृत्तौ तु पादचतुष्टयेन गतिः प्रतिगत्या श्लोकान्तरमिति भेदः । इत्येवं गतिचित्रम् । तुरङ्गगतिचित्रं यथा "क्रमात् पादचतुष्कस्य पङ्क्तिशः परिलेखने । तुरङ्गपादायातेन श्लोकोऽन्यश्चोपजायते" स०क० । यथा ।

चा१ ला३० सु९ का२० ल३ चा२४ ता११ सा२६
का१६ नि१९ ला२ ल२९ कं१० ला२७ वि४ ता२३
व२१ सा८ शु१७ त१४ व२१ तौ६ सा२५ रा१२
द१८ पिं१५ का३२ त्र७ त२८ ग१३ र्द्धि२२ त५

अत्र तुरङ्गगत्या "चालाललिततीक्ष्णा शुकला रागतर्पिका । सुदन्तिका वर्द्धिता ता वा सा साला तवलासका इति दत्ताङ्कानुसारेण क्रमशो वर्णग्रहणे श्लोकोऽयं जायते । अर्द्धभ्रमगतिचित्रं सर्व्वतोभ्रमतिगचित्रञ्च यथा । "आवृत्तार्द्धभ्रमं नाम श्लोकार्द्धभ्रमणं यदि । तदिष्टं सर्व्वतोभद्रं सर्व्वतोभ्रमणं यदि" स०क० । तत्रार्द्धभ्रममुक्तं २६५ पृष्ठे । सर्व्वतोभद्रं तु—

दे वा का नि नि का वा दे
वा हि का स्व स्व का हि वा
का का रे भ भ रे का का
नि स्व भ व्य व्य भ स्व नि

अत्रार्द्धभ्रमणवत् सर्व्वं किन्तु पादानामपि अनुलोमविलोमाभ्यां तथैव सर्व्वतोभ्रमणेन सर्व्वतोभद्रम् एवमन्ये दर्शयिष्यमाणगोमूत्रिकाबन्धोऽपि गोमूत्रगतिमत्त्वात् गतिचित्रमपि । बन्धेन बन्धविशेषेण चित्रम् बन्धचित्रं तच्च नानाविधं तत्र

द्विचतुष्कचक्रबन्धो यथा "इह शिखरिसन्निभानां विभवादर्द्धं समान्वितैर्वर्णैः । द्विचतुष्कचक्रबन्धे नेमिविधौ चापरं भ्रमयेत्" । द्विशृङ्गाटकबन्धः । "शृङ्गग्रन्थः शृङ्गं व्रजेदिति द्विशृङ्गाटकबन्धोऽस्त्रिनेमिः" । निर्विड़ितचक्रबन्धः । "शिखरादन्यतरस्मात् प्रतिपद्य भ्रमति रेखा चाद्यर्द्धम् । नेमौ तदितरमर्द्धं निर्विड़ितचक्राभिधे बन्धे" । स०क० एतेषामुद्धारोदाहरणे तत्रैव ज्ञेये । गरपत्रबन्धः "चतुर्ष्वपि च पादेषु पङ्क्तिशोलिखितेष्विह । आदेरादेस्तुरङ्गस्य पादैः पादः समाप्यते" । यथा

न१ म१८ स्रो३ ज२० ग५ तां२२ गा५ ल२४
म९ दा२६ न११ व२८ कु१३ ब३० चा१५ य३२
स१७ म२ स्रो१९ ज४ स२१ तां६ ना२३ ल८
सु२५ दा१० म२७ वा१२ न२९ ल१४ च३१ या६

अत्र तुरङ्गगत्या स एव श्लोकः । व्योमबन्धः । "अष्टादशशिखरचरीं गोमूत्रिकया चतुष्पदीं न्यस्येत् । पत्राद्यन्तर्द्धेदः स ज्ञेयो व्योमबन्धोऽत्र"

मुरजबन्धः । "अत्र पादचतुष्केऽपि क्रमशः परिलेखिते । श्लोकपादक्रमेण स्याद्यस्य मुरजत्रयी" ।

सा१ से१० ना११ ग२८ म२९ ना१९ र१८ भो८
र९ से२ ना२७ सो१२ द२० ना३० र७ ता१७
ता१६ र२६ ना३ द१३ ज२१ ना६ म३१ त्त२४
धी२५ र२५ ना१४ ग४ म५ ना२२ म२३ या३२

तदुद्धारस्तु मल्लिनाथेन दर्शितः "तिर्य्यगेवालिखेत् पञ्च नवोर्द्धास्तत्र पङ्क्तयः । अष्टकोष्ठायतस्तासु श्लोकं लिखेत् क्रमात् । तत्राद्यद्वित्रितुर्य्यास्तु तुर्य्यत्रिद्व्याद्यपङ्क्तिषु । आद्यद्वित्रिचतुःपञ्चषट्सप्ताष्टमकोष्ठगः । दृश्यते प्रथमः पादश्चतुर्ष्वेवमेव हि । चतुर्थपङ्क्तिप्राथम्यात्प्रथमावधिशोधनात् । द्वितीयादावाद्यद्वित्रौ द्वि तुर्य्ये त्रितुरीयके । तुर्य्यत्रिद्व्योस्तृतीयाद्ये दृष्टव्योऽङ्घ्रिर्द्वितीयकः । तृतीयोऽङ्घ्रिर्द्वितीयान्ते आद्यसप्तमषष्ठयोः । द्वित्रिपञ्चमयोस्तुर्य्यमष्टसप्तमयोः क्रमात् । तृतीयान्त्ये च लक्ष्योऽयमथान्त्यः क्रम उच्यते ॥ आद्यन्तयुग्मयोः पङ्क्त्योर्विन्यासो गोमूत्रिकाक्रमः । तत्रैकं च द्वितीयं द्वे द्वयमेकमिति क्रमात् । यद्वा द्वितयमेकं च द्वयमेकं द्वयं पुनः । स्वपङ्क्तिप्रक्रमादेव विन्यासद्वितयं भवेत् ॥ यद्वा प्रथमतुर्य्याङ्घ्री स्वपङ्क्त्योरनुक्रमात् । द्वितीयोऽङ्घ्रिर्द्वितीयस्यां क्रमादाद्यचतुष्टये । व्युत्क्रमाच्च तृतीयस्यामाद्यमेव चतुष्टये । व्युत्क्रमेण द्वितीयस्यां तृतीयस्यां क्रमेण च ।

द्रष्टव्यो हि तृतीयोऽङ्घ्रिरन्त्यकोष्ठचतुष्टये॥ विन्यासभेदादन्येऽपि सन्त्येव बहवोऽत्र हि। विस्तरात्तु न लिख्यन्ते स्वयमूह्या विचक्षणैः"॥ एकाक्षरमुरजो यथा। "श्लोकस्यैकस्य पादेषु लिखितेषु चतुर्ष्वपि। लिखेदङ्ककरीह स्यात्तुरेकाक्षरावली"। मुरजप्रस्तारो यथा। "क्रमेणैकस्य पादेषु प्रस्तेषु चतुर्ष्वपि। तुर्यान् मुरजमार्गेण श्लोकोऽयमुपजायते"। गोमूत्रिकाबन्धः। "गतिरश्वावचा यत्र मार्गे मूत्रस्य गोरिव। गोमूत्रिकेति तत् प्राहुः दुष्करं चित्रवेदिनाम्। स०क० तत्र नानाविधं दर्शितम्। "दुष्करत्वात् कठोरत्वात् दुर्बोधत्वादिना विधेः। दिङ्मात्रं दर्शितं चित्रं स्वयमूह्यं महात्मभिः" स०क०। "अनेकधा वृत्तवर्णविन्यासैः शिल्पकल्पना। तत्तत्प्रसिद्धवस्तूनां चित्रमित्यभिधीयते इति सामन्यतः सर्ववस्त्वाकारकल्पनया चित्रं भवतीत्युक्तम् अग्निपु०।१६

१७ वाकोवाक्यम् "उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यं विदुर्बुधाः। द्वयोर्बह्वोस्तदिच्छन्ति बहूनामपि सङ्गमे। ऋजूक्तिरथ वक्रोक्तिर्वैयात्योक्तिस्तथैव च। गूढप्रश्नोत्तरोक्तिश्च तद्विदा त्रिविधैव तु" वाकोवाक्यम् १८।

१८ प्रहेलिका। "प्रहेलिका सकृत्प्रश्नः सापि षोढा च्युताक्षरा। दत्ताक्षरोभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि। क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। परव्यामोहने चापि सोपयोगा प्रहेलिका"। तत्र "च्युताक्षरा "पयोधरभराक्रान्ता सन्नमन्ती पदे पदे। पदमेकं न का याति, यदि हारेण वर्जिता"। अत्राहारेणेत्याकारच्युतिः दत्ताक्षरा यथा। "कान्तयानुगतः कोऽयं पीनस्कन्धो मदोद्धतः। मृगाणां घ्नतो याति, शम्बरो रूढयौवनः"। शबर इति वक्तव्ये मकारो दत्तः। च्युतदत्ताक्षरा च्युतमन्यत् दत्तञ्चान्यदक्षरं यत्र सा यथा "विदग्धः सरसो रागी नितम्बोपरि संस्थितः। तरुण्यालिङ्गितः कण्ठे कलं कूजति को, विटः। अत्र घट इति वक्तव्ये घकारस्य च्युतिः विकारस्य दानमिति तथात्वम्। बिन्दुमत्यादीनामुदाहरणानि स०क०दृश्यानि। प्रहेलिका१८।

१९ गूढम्। "क्रियाकारकसम्बन्धपदाभिप्रायवस्तुभिः। गोपितैः षड्विधं प्राहुर्गूढं गूढार्थवेदिभिः। "पाण्डवानां सभामध्ये दुर्योधन उपागतः। तस्मै गाञ्च हिरण्यञ्च सर्वाण्याभरणानि च"। अत्र क्रियापदम् गूढम्। योऽधन उपागतस्तस्मै गवादिकमदुरित्यर्थः। गूढम् १९

२० प्रश्नोत्तरम्। "यस्तु पर्यनुयोगस्य निर्भेदः क्रियते पदैः। विदग्धगोष्ठ्यां वाक्यैर्वा तं हि प्रश्नोत्तरं विदुः अन्तःप्रश्नबहिःप्रश्नबहिरन्तःसमाश्रयैः। जातिगोत्रोत्तराभिन्नैः प्रश्नैस्तदपि षड्विधम्। प्रश्नोत्तरम्।२०

२१ अध्येयम् "यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम्। तदध्येयं विदुस्तेन लोकयात्रा प्रवर्त्तते"। अध्येयम् २१

२२ श्रव्यम् "श्रव्यं शास्त्रेतिहासौ च काव्यं शास्त्रं तथैव च। काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्"। यथा रघुवंशादि। श्रव्यम्।२२

२३ प्रेक्ष्यम् "यदाङ्गिकैकनिवर्त्त्यमुज्झितं वाचिकादिभिः। नर्त्तकैरभिनीयेत प्रेक्ष्यं तत् क्ष्वेडितादिवत्। तत्रास्यं ताण्डवं चैव छलिकं शम्पया सह। हल्लीसकञ्च रासं च षट्प्रकारं प्रचक्षते"। शृङ्गाररसप्रधानत्वे लास्यं वीररसप्रधानत्वे ताण्डवं, शृङ्गारवीररसप्रधानत्वे छलिकमिति किन्नरविषयं छलिकमेव शम्पा। "मण्डलेन च यत् स्त्रीणां नृत्यं हल्लीसकं तु तत्। तत्रायको भवेदेको गोपस्त्रीणां हरिर्यथा। तदिदं हल्लीसकमेव तालबन्धविशेषयुक्तो रासः। प्रेक्ष्यम् २३।

२४ अभिनयः "अङ्गवाक्सत्त्वसंहार्य्यैः सामान्याच्चित्ररूपसौ। षड्‌धा अभिनयात्तदभिनेयं वचो विदुः"।२४

"चत्वारो विंशतिश्चैताः शब्दालङ्कारजातयः। शब्दसंदर्भमात्रेण हृदयं हर्त्तुमीशते" सर० कण्ठा०। एतेषामुदाहरणानि विस्तरभयात् न लिखितानि तत एवावगन्तव्यानि। अर्थालङ्कारास्तु मतभेदेन बहवः तथाहि तेषां समष्टिः दण्डिना दर्शिता यथा। "स्वरूपाख्यानमुपमा रूपकं दीपकावृती। आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना। समासोऽतिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः। प्रेयोरसवदूर्जस्वि पर्यायोक्तं समाहितम्। उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता। विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने। सहोक्तिः परिवृत्त्याशीःसङ्कीर्णमथ भाविकम्। इति वाचामलङ्कारा दर्शिताः पूर्वसूरिभिः"। सरस्वतीकण्ठाभरणे तु हैराज्ञेन तेषां समष्टिरभिहिता यथा "अलमर्थमलङ्कर्त्तुं यत् व्युत्पत्त्यादिवर्त्मना। ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालङ्कारसंज्ञया। जातिर्विभावना हेतुरहेतुः सूक्ष्ममुत्तरम्। विरोधसम्भवान्योन्यं परिवृत्तिर्निदर्शना। भेदः समाहितं भ्रान्तिर्वितर्को मीलितं स्मृतिः। भावः प्रत्यक्षपूर्वाणि प्रमाणानि च जैमिनेः"। प्रत्यक्षानुमानोपमानार्थापत्त्यभावरूपाणि षट् इति चतुर्विंशतिः। एते

तु अर्थमात्रनिष्ठाः । "शब्देभ्योयः पदार्थेभ्य उपमादि-प्रतीयते विशिष्टोऽर्थः कवीनां सा उभयालङ्क्रिया मता । उपमा रूपकं साम्यं संशयोक्तिरपह्नुतिः । समाध्युक्तिः समासोक्तिरुत्प्रेक्षाऽप्रस्तुतस्तुतिः । सतुल्ययोगितोल्लेखः ससहोक्तिः समुच्चयः । आक्षेपोऽर्थान्तरन्यासो विशेषोक्तिः परिष्कृतिः । दीपकक्रमपर्य्याया विषमश्च प्रभाविकः संसृष्टिरिति निर्द्दिष्टास्तावच्चतुर्विंशतिर्बुधैः" इत्युक्ता तेषां लक्षणानि सभेदं तत्रैव दर्शितानि चन्द्रालोकदर्पण रुद्रादिभिश्च सामान्यतोऽगणयित्वा नानाविधा दर्शिताः न संक्षेपतो गणिताः । अथार्थालङ्कारा एकत्र संगृह्य सोदाहरणलक्षणा अकारादिक्रमेण तेषु केचित् दर्शिता अपि क्रमानुरोधात् सर्वएवात्र प्रदर्श्यन्ते ।

१ अक्रमातिशयोक्तिः "अक्रमातिशयोक्तिः स्यात् सहत्वे हेतु-कार्य्ययोः" च० । "आलिङ्गन्ति समं देव ! ज्यां परांश्च शराश्च ते" ।

२ अतद्गुणः "सङ्गतानुगतानङ्गीकारमाहुरतद्गुणम्" च०। "चिरं रागिणि मच्चित्ते निहितापि न रज्यसि" ।

३ अतिशयोक्तिः १०५ पृष्ठे उक्तलक्षणोदाहरणा ।

४ अत्यन्तातिशयोक्तिः "अत्यन्तातिशयोक्तिस्तु कार्य्यं हेतुप्रसक्ति-जा" च०। "वाससामोल्युदिते तन्व्या वलयोऽभवदूर्म्मिका"। ऊर्म्मिका वलयोऽभवदित्यर्थः क्रयत्वात्तथात्वम् ।

५ अत्युक्तिः "अत्युक्तिरद्भुताऽतथ्यशौर्य्यौदार्य्यादिवर्णनम्" च० "त्वयि दातरि राजेन्द्र ! याचकाः कल्पशाखिनः"।याचकानां राजतोधनलाभेन कल्पतरुतुल्यताकथनमौदार्य्यं स्यात्युक्तिः।

६ अधिकम् १२५ पृष्ठे लक्षणोदाहरणभेदाः उक्ताः ।

७ अनन्वयः १४८ पृष्ठे उक्तलक्षणोदाहरणः ।

८ अनुकूलम् "अनुकूलं प्रतिकूलमानुकूल्यानुबन्धि चेत्" च० । "कुपिताऽसि यदि तन्वि । निधाय करजक्षतम् । बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा" ।

९ अनुगुणः "प्राक्सिद्धः स्वगुणोत्कर्षोऽनुगुणः परसन्निधेः" च०। "नीलोत्पलानि दधते कटाक्षैरतिनीलताम्" ।

१० अनुज्ञा "दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्" च० । "भूयासमेव जीर्णतां यातु यत्त्वयेह कृतं हरे ! । नरः प्रत्युप-काराथीं विपत्तिमभिकाङ्क्षति" ।

११ अनुमानम् "अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साध-नात्" च०। "यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः । तच्चापरोपितशरो धावत्यासां पुरःस्मरो मन्ये" । सा०द० विशेष उक्तः । यथा "त्रिङ्गाद्याद्विङ्गिनोज्ञानमनु-मानं तदुच्यते । पूर्ववच्छेषवच्चैव दृष्टं सामान्यतश्च तत् । फलसामर्थ्यभेदेन द्विधैतत् भिद्यते पृथक्" । तेषु यत्र कार-णं दृष्ट्वा कार्य्यमनुमीयते तत् पूर्ववत् । "अविरलविलोलजल-दालकुटजार्जुननीपसुरभिवनवातः । अयमायातः कालो हन्त हताः पथिकगेहिन्यः" अत्र वर्षर्त्तोः कारणभूतात् कार्य्यं विरहिणीमरणमनुमीयते । यत्र कार्य्यं दृष्ट्वा कारणमनुमीयते तच्छेषवत् । "मामागमिष्यच्छूनं पतितोऽसि पादयोस्तस्याः । कथमन्यथा ललाटे याव-काङ्कतिलकपङ्क्तिरियम्" । अत्र कार्य्यभूतया यावकतिलक-पङ्क्त्या कारणं पादपतनमनुमीयते । यदुभयविधभिन्नं तत् सामान्यतो दृष्टम् "मत्ता मदान्धस्य शिखण्डियूनो-दृष्टेः पुरस्तादचिरप्रभेव" । सेयं विद्युदिव दृष्टेः प्रथमसु-पलभ्यमाना कामन्दकी अविनाभावेन मालत्यागमनं गमयतीति सामान्यतो दृष्टम् । फलसामर्थ्ययोरुदाहर-णानि तत्र दृश्यानि ।

१२ अन्योन्यम् "अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्" च० । "त्रियामा शशिना भाति शशी भाति त्रियामया"। सा०द० भेद उक्तः । "अन्योन्यस्योपकारोयस्तदन्योन्यं त्रिधा च तत् । वाच्यं प्रतीयमानं च तृतीयमुभयात्मकम् । अन्योन्यचूलिकान्योन्यभ्रान्तिरन्योन्यरूपता । अन्योन्याल-ङ्कृतावन्त्यत्रयमेतादृशेष्यते" । तत्र वाच्यम् । "कण्ठस्य तस्याःस्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्यो-न्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः । प्रती-यमानन्तु अत्रैवान्योन्यपदानुपादाने । अन्योन्यचूलिका अन्योन्यरूपपरिवृत्तिः सा च व्यत्ययेन विनिमयेन च भवति । यथा "लोचनाधरकृताहृतरागा वासितानन विशेषितवासा । वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयञ्च वितेने" । अत्र वारुण्या यदधररागोऽपहृत्य चक्षुषि निक्षिप्तस्तेन व्यत्ययः । यच्च मुखामोदवासितया तया स्वामोदो विशेषितस्तेन विनिमयः तेन परिवृत्तिर्विनि-मयाख्यालङ्कारावत्रान्तर्भूताविति द्रष्टव्यम् ।

१३ अपह्नुतातिशयोक्तिः "रूपकातिशयोक्तिः स्यात् निगीर्य्याध्य-वसानतः । यदाऽपह्नुतिगर्भत्वम् सैव सापह्नवा मता ।"च० "त्वत्सूक्तिषु सुधा राजन् ! भ्रान्ताः पश्यन्ति तां विधौ"।

१४ अपह्नुतिः २४१ पृष्ठे उक्तलक्षणोदाहरणा । सा०काव्या० अन्यथोक्तम् । "अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्श-नम्, औपम्यवत्यनौपम्या चेति सा द्विविधोच्यते" तत्र औपम्यवती यथा "न केतकीनां विलसन्ति सूचयः प्रवा-

सिनी हन्त ह्ननयं विधिः । तडिल्लतेयं न चकास्ति चञ्चला पुरःस्मरज्योतिरिदं विजृम्भते "तत्र केतकीसूचीनां विधिहासतः प्रतीयमानसादृश्येन तडिल्लतायाः स्मरज्योतिषापह्नुतिः । अनौपम्या यथा "राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः । अवगच्छेयुराज्ञातमहो शीतानिलं वनम्" नचात्र सादृश्यमस्ति ।

१५ अप्रस्तुतप्रशंसा २६४ पृष्ठे उक्तलक्षणोदाहरणा ।

१६ अभावः । "असत्ता या पदार्थानामभावः सोऽभिधीयते । प्रागभावादिभेदेन स षड्विध इहेष्यते । स०क० प्रागभावः ध्वंसः अत्यन्ताभाव मिथ्यापदार्थाभाव इतरेतराभावः अभावाभावश्च तत्र ध्वंसो यथा "धतिरस्तमिता गतिश्च्युता विरतं गेयमृतुर्निरुत्सवः । गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे" । इतरेतराभावो यथा । "कर्णोत्पलं न चक्षुस्ते न चक्षुः श्रवणोत्पलम् । इति जानन्नपि जनो मन्यते नेत्रदीर्घताम्" अत्यन्ताभावः यथा "प्रसीद सद्यो मुञ्चेमं चण्डि ! मानं मनोगतम् । इष्टमात्रेऽपि ते तत्र रोषः खकुसुमायते" । सामग्र्याभावो यथा । "मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः । न प्रभातरलज्योतिरुदेति वसुधातलात्" अन्योदाहरणानि तत्रैव द्रष्टव्यानि ।

१७ अभिदाहेतुः "अभेदेनाभिदाहेतुर्हेतोर्हेतुमता सह" । च० "लक्ष्मीविलासो भवतः कटाक्षवेक्षणं प्रभो" !

१८ अर्थान्तरन्यासः, २७१ पृष्ठे उक्तोदाहरणलक्षणः ।

१९ अर्थापत्तिः, २७२ पृष्ठे उक्तलक्षणोदाहरणा । स०कण्ठा० "प्रत्यक्षादिप्रतीतोऽर्थोऽर्थोऽन्यथा नोपपद्यते । अर्थान्तरञ्च गमयत्यर्थापत्तिं वदन्ति ताम् । सर्वप्रमाणपूर्वत्वादेकशोऽनेकशश्च सा । प्रत्यक्षपूर्विकेत्यादिभेदैः षोढा निगद्यते । प्रत्यक्षपूर्विका यथा "निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ! । अन्यथानुपपत्त्यैव पयोधरभरस्थितेः" । अनुमापूर्विका यथा "कपोलपुलकेनास्याः सूचितो मदनज्वरः । मनो निरन्तरासक्तं सद्यः कथयति प्रिये" योऽयं कपोलपुलकेनानुमितो मदनज्वरः स प्रिये मनसः निरन्तरासक्तिं विनानुपपद्यमानः अनुरागं कल्पयतीत्यनुमानपूर्विकार्थापत्तिः एवमन्या उदाहार्याः ।

२० अल्पम् "अल्पन्तु सूक्ष्मयादाधेयाद्यदाधारस्य सूक्ष्मता" । "मणिमालोर्म्मिका तेऽद्य करे जपवटायते" ।

२१ अवज्ञा "इद्धिहानो न चेत् स्यातामवज्ञालङ्कृतिश्च सा न । "स्वल्पमेवाम्बु लभते पान्थः प्राप्यापि सागरम्" "मीलन्ति यदि पद्मानि का हानिरम्बरद्युतेः" ।

२२ असङ्गतिः "विरुद्धभिन्नदेशत्वं कार्य्यहेत्वोरसङ्गतिः१ । अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च या२ । अन्यत् कर्त्तुं प्रवृत्तौ च तद्विरुद्धकृतिश्च या३" च० । क्रमेणोदाहरणानि । "विषं जलधरैः पीतं मूर्च्छिता पथिकाङ्गनाः१" । "अपारिजाताम् वसुधां चिकीर्षन् द्यां तथाऽकृथाः"२ । अपगतपारिजातं यस्याः नास्ति पारिजातो यत्र इति च । "गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्धारं पुराऽकरोः३ । गोत्रा पृथ्वी गोत्रः पर्वतश्च ।

२३ असम्भवः "असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम् ।" च० "कोवेद गोपशिशुकः शैलमुत्पाटयिष्यति" ।

२४ आक्षेपः "आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्१ । निषेधाभासमाक्षेपं बुधाः केचन मन्वते२ । आक्षेपोऽन्योविधौ व्यक्ते निषेधे च तिरोहिते३" । च० "चन्द्र ! सन्दर्शयात्मानमथवास्ति प्रियामुखम्"१ । "नायं दूति ! तनो स्तापस्तस्याः कालानलोपमः२" । "गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" । ३

२५ आगमः "यदाप्तवचनं तद्धि ज्ञेयमागमसंज्ञया । उत्तमं मध्यमं चाथ जघन्यं चेति तत् त्रिधा" । स०क० तत्रोत्तमं विधिरूपं निषेधरूपञ्च । विधिरूपं यथा "दर्शं दानं दद्यां शिवे"रित्यादौ दाम्यत दत्त दयध्वं इति विधिः । निषेधरूपं यथा "निवार्य्यतामालि ! किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः । न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्" । तथाच महान्तो नापभाषितव्या इति वाक्यार्थमर्य्यादया निषेधरूप उपदेशः । तदेतदुभयमप्यवश्यानुष्ठेयत्वादुत्तमम् । मध्यममपि द्विधा निर्दिष्टवक्तृकमनिर्दिष्टवक्तृकञ्च तत्राद्यं यथा "कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे । एति जीवन्तमानन्दो नरं वर्षशतादपि" अत्र जीवन्नरः पश्यति भद्रमित्यर्थो निर्दिष्टवक्तृकतया निर्दिष्टः तत्र जीवनाय यतितव्यमिति रूपमाप्तवचनम् । "अक्षे वसति पिशाचो पिचुमर्दे दिनपतिर्वटे यक्षः । विश्राम्यति पद्मे श्रीस्तिष्ठति गौरी मधूकतरौ" तदिदमनिर्दिष्टवक्तृकमनादिलोकप्रसिद्धपारम्पर्य्यमैतिह्यम् । अत्र सर्ववाक्यानां निषेधपर्य्यवसानात् अक्षं न सेवेत, पिचुमर्दं न निन्देत, वटं न छिन्द्यात्, पद्मं मूर्ध्नि न बिभृयात्, मधूकं न पदा स्पृशेत्" इति निषेधचतुष्टयरूपआगमः । जघन्यं द्वेधा काम्यं निषिद्धं च । तत्र निषिद्धविषयविधिर्यथा "वयं बाल्ये बालांस्तरुणि-

मपि सूनः परिक्षतानमोक्षामो हन्ता, परिष्कार्यविधानस्थितिरियम्। त्वदारब्धं जन्म क्षपयितुमकाण्डेन विधिना न नो गोत्रे पुत्रि! क्वचिदपि सतीलाञ्छनमभूत्" तदेतन्निषेधरूपम् निषिद्धविषयमाप्तवचनमसतीवचनरूपम्।

२६ आशीः "आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा"। दण्डी "पातु वः परमं ज्योतिरवाङ्मनसगोचरम्"।

२७ उत्तरम् "किञ्चिदाकूतसहितं यद्गूढोत्तरमुत्तरम्" च०। "अत्रासौ वेतसो पान्थ। तत्रासौ सुतरा सरित्"।

२८ उत्प्रेक्षा "सम्भावनाः स्युरुत्प्रेक्षावस्तुहेतुफलात्मनाः पुनः। उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे"। च० "धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्" "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" "रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद् ध्रुवम्"। "त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी" "मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः" "प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति"। दर्पणे तु अन्यथा विभज्य उदाहृतम् यथा "भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना। वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः। जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि। तदष्टधापि प्रत्येकं भावाभावाभिमानतः। गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः। द्वात्रिंशद्विधतां यान्ति"। तत्र वाच्योत्प्रेक्षायासुदाहरणं दिङ्मात्रं यथा॥ "ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति। सपताकः कनकमयोविजयस्तम्भः स्मरस्येव"॥ अत्र विजयस्तम्भस्य जातिवाचकत्वाज्जात्युत्प्रेक्षा॥ "ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः। गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव"॥ अत्र सप्रसवत्वं गुणः॥ "गङ्गाम्भसि सुरत्राण! तव निःस्वानः। स्नातीवारिवधूवर्गगर्भपातनपातकी"॥ अत्र स्नातीति क्रिया॥ "मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः"॥ अत्र चन्द्रशब्दस्यैकव्यक्तिवाचित्वाद्द्रव्यम्। एते भावाभिमाने च। अभावाभिमाने यथा॥ "कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ। अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ"॥ अत्रापश्यन्ताविति क्रियाया अभावः। एवमन्यत्। निमित्तस्य गुणक्रियारूपत्वे यथा गङ्गाम्भसीत्यादौ स्नातीवेत्युत्प्रेक्षानिमित्तं पातकित्वं गुणः। अपश्यन्तावित्यादौ क्षामतागमनरूपं निमित्तं क्रिया एवमन्यत्। प्रतीयमानोत्प्रेक्षा यथा॥ "तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्। हाराय गुणिने स्थानं न दत्तमिति लज्जया"॥ अत्र लज्जयेवेति इवाद्यभावात् प्रतीयमानोत्प्रेक्षा एवमन्यत्। अत्र वाच्योत्प्रेक्षायां षोडश भेदेषु मध्ये विशेषमाह "तत्र वाच्याभिदाः पुनः। विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः" तत्तोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षयोः षोडशभेदास्तेषु जात्यादीनां त्रयाणां ये द्वादशभेदास्तेषां प्रत्येकं स्वरूपफलहेतुगतत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः द्रव्यस्य स्वरूपोत्प्रेक्षणमेव संभवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः। अत्र स्वरूपोत्प्रेक्षा यथा पूर्वोदाहरणेषु "स्मरस्य विजयस्तम्भ" इति सप्रसवा इवेत्यादयः जातिगुणरूपाः। फलोत्प्रेक्षा यथा॥ "रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः। विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्"॥ अत्राख्यातुमिति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम्॥ हेतूत्प्रेक्षा यथा। "सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्। अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्"॥ अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः। एवमन्यत्। "उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः"। तेषु चत्वारिंशत्संख्याकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः। तत्र निमित्तस्योपादाने यथा पूर्वोदाहृते स्नातीवेत्युत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम्। अनुपादाने यथा "चन्द्र इवापरः" इत्यत्र तथाविधसौन्दर्याद्यतिशयो नोपात्तः। हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव तथाहि विश्लेषदुःखादिवेत्यत्र यन्निमित्तं बद्धमौनत्वम्, आख्यातुमिवेत्यत्र च भूप्रवेशस्तयोरनुपादाने असङ्गतमेव वाक्यं स्यात्। प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह "प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः"। यथोदाहृते तन्वङ्ग्याः स्तनयुग्मेनेत्यत्र लज्जयेवेति हेतूत्प्रेक्षितः अस्यामपि निमित्तस्यानुपादानं न सम्भवति इवाद्यनुपादाने निमित्तस्य च कीर्तने उत्प्रेक्षणस्य प्रमाणनिष्ठेतुमशक्यत्वात्। स्वरूपोत्प्रेक्षाप्यत्र न भवति धर्म्यन्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् यथा॥ "अयं राजाऽपरः पाकशासन" इति॥ विशेषणाभावे च रूपकस्य, यथा "राजा पाकशासन" इति तदेवं द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा। "उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा"। ता उत्प्रेक्षाः। उक्तौ यथा॥ "ऊरुः कुरङ्गकदृश" इति॥ अनुक्तौ यथा

प्रभावत्वात् । "इह हि संप्रति दिगन्तमाच्छादयता तिमिरपटलेन । घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः । ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम्,,॥ अत्राञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयो व्याप्तत्वं नोपात्तं यथा वा ॥ "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" । अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः अञ्जनवर्षणस्य तमःसंपातः, अनयोरुत्प्रेक्षानिमित्तञ्च तमसोऽतिबहुलत्वं धारावर्षणाधःसंयोगश्च यथासंख्यम् । केचित्तु लेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनञ्च निमित्तम् एवं नभोऽपि वर्षणक्रियाकर्तृत्वेनेत्याहुः । "अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं वहेत्" तत्र सापह्नवोत्प्रेक्षा यथा । "अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः । अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव" । श्लेषहेतुगा यथा । मुक्तोत्करः सङ्कटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः । जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद् गुणवत्त्वमाप" । अत्र गुणवत्त्वे श्लेषः कम्बुग्रीवाधिवासादिवेति हेतूत्प्रेक्षाया हेतुः । अत्र जानीमहे इत्युत्प्रेक्षावाचकम् एवम् 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः" । क्वचिदुपमोपक्रमोत्प्रेक्षा यथा । 'पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराजीः । वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः"। इत्यत्राभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा पर्यवसाने तु जलधितीरे शैवालस्थितेः संभवानुपपत्तेः संभावनोत्थानमित्युत्प्रेक्षा एवं विरहवर्णने । "केयूरायितमङ्गदैरिव" "विकासिनीलोत्पलमिव कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः" इत्यादौ च ज्ञेयम् । भ्रान्तिमदलङ्कारे "मुग्धा दुग्धधियेत्यादौ भ्रान्तानां वल्लवादीनां विषयस्य चन्द्रिकादेर्ज्ञानं नास्ति तदुपनिबन्धनस्य कविनैव कृतत्वात् । इह तु संभावनाकर्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः । सन्देहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः इह तूत्कटा संभाव्यभूतैका कोटिः । अतिशयोक्तौ विषयिणः प्रतीतस्य पर्यवसानादसत्यता प्रतीयते इह तु प्रतीतिकाल एवेति भेदः । "रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु । पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण" इत्यत्र तर्कादौ तिमिराक्रान्ततारञ्जनादिरूपेण सन्दिह्यत इति सन्देहालङ्कार इति केचिदाहुः । तत्र एकविषये समानबलतयानेककोटिस्फुरणस्यैव सन्देहत्वात् इह तु तर्कादिव्याप्तेः प्रतिसम्बन्धिभेदव्यापनादेर्निमित्तेन रञ्जनादेः स्फुरणञ्च । अन्ये त्वनिर्द्धारणरूपविच्छित्त्याश्रयत्वेनैककोट्यधिकोऽपि भिन्नोऽयं सन्देहप्रकार इति वदन्ति स्म तदयुक्तं निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना तस्याश्चात्र स्फुटतया सद्भावात् नुशब्देन चेवशब्दवत्तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता अलमदृढसन्देहप्रकारकल्पनया । "यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा । अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्" इत्यत्र मन्येशब्दप्रयोगेऽपि उक्तरूपायाः सम्भावनाया अप्रतीतेर्वितर्कमात्रम्" नासावपह्नवोत्प्रेक्षा ।

२९ उदात्तम् "लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्" सा० द० । "अधः कृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् । ज्योत्स्नानिपातात् क्षरतां पयोभिः केलीवनं वृद्धिमरीकरोति" । "नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा । अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते" ।

३० उपमा "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" सा० द० । रूपकादिषु साम्यस्य व्यङ्ग्यत्वं व्यतिरेके च वैधर्म्यस्याप्युक्तिः उपमेयोपमायां वाक्यद्वयम् अनन्वये च एकस्यैव साम्योक्तिरित्यस्या भेदः । 'सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च । उपमेयं चोपमानं भवेद्वाच्यम्" सा उपमा साधारणो धर्मो द्वयोः सादृश्यहेतुर्गुणक्रियामनोज्ञत्वादि, औपम्यवाचकमिवादि, उपमेयं मुखादि, उपमानं चन्द्रादि । "इयं पुनः । श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि । आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः" । यथेववादयः शब्दा उपमानान्तरप्रयुक्ततुल्यादिपदसाधारणा अपि श्रुतिमात्रेणोपमानोपमेयगतसादृश्यलक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौती उपमा । एवं "तत्र तस्येवेत्यनेन" इवार्थे विहितस्य वतेरुपादाने । तुल्यादयस्तु "कमलेन तुल्यं मुखमित्यादौ" उपमेय एव । "कमलं मुखस्य तुल्य"-मित्यादावुपमान एव "कमलं मुखञ्च तुल्य"मित्यादावुभयत्रापि विश्राम्यन्तीति तत्सद्भावे आर्थी । एवं "तेन तुल्यमित्यादिना" तुल्यार्थे विहितस्य वतेरुपादाने । द्वे श्रौती, आर्थी च । उदाहरणम् "सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ । हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले! ॥"अत्र क्रमेण त्रिविधा श्रौती । "मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः । चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः" ॥ "अत्र क्रमेण त्रिविधा आर्थी

"पूर्णा षडेव तत् । "लुप्ता सामान्यधर्म्मादेरेकस्य यदि वा द्वयोः । त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्व्ववत्॰ ॥ सा लुप्ता । तद्भेदमाह । "पूर्णावद्धर्म्मलोपे सा विना श्रौतीन्तु तद्धिते" । सा लुप्तोपमा धर्म्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्व्वोक्तरीत्या षट्प्रकारा, किन्त्वत्र तद्धिते श्रौत्या असम्भवात् पञ्चप्रकारा । उदाहरणम् । "मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये ! । वाचः सुधा इवौष्ठस्ते बिम्बतुल्यो मनोऽश्मवत्" ॥ "आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि । कर्म्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः" ॥ धर्म्मलोपे लुप्तेत्यनुषज्यते । क्रमेणोदाहरणम् । "अन्तःपुरीयसि रणेषु, सुतीयसि त्वं पौरं जनं, तव सदा रमणीयते श्रीः । दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्रसञ्चारमत्र भुवि सञ्चरसि क्षितीश !" ॥ अत्रान्तःपुरीयसीत्यत्र सुखविहारास्पदत्वस्य "सुतीयसीत्यत्र" स्नेहनिर्भरत्वस्य च साधारणधर्म्मस्य लोपः । एवमन्यत्र इह च यथादितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति । इदञ्च केचित् औपम्यप्रतिपादकस्य वतेर्लोपे उदाहरन्ति तदयुक्तम् क्यङादेरपि तदर्थविहितत्वेनौपम्यप्रतिपादकत्वात् । ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति प्रत्ययत्वेनास्वतन्त्रत्वात् इवादिप्रयोगाभावाच्चेति चेन्न कल्पवादावपि तथा प्रसङ्गात् । न च कल्पवादीनामिवादितुल्यतयौपम्यस्य वाचकत्वं, क्यङादीनान्तु द्योतकत्वम्" इवादीनामपि वाचत्वे निश्चयाभावात् । वाचकत्वे वा समुदितं पदं वाचकं "प्रकृतिप्रत्ययौ स्वस्वार्थबोधकाविति च" मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति । यच्च केचिदाहुः "वत्यादय इवाद्यर्थेऽनुशिष्यन्ते क्यङादयस्त्वाचारार्थे इति" तदपि न । न खलु क्यङादय आचरमात्रार्था अपि तु सदृशाचारार्था इति । तदेवं धर्म्मलोपे दशप्रकारा लुप्ता । "उपमानानुपादाने द्विधा वाक्यसमासयोः" । उदाहरणम् । "तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्" । अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः । अत्रैव च "मुखेन सदृशम्" इत्यत्र मुखं यथेदमिति" "नयनतुल्यमित्यत्र" "दृगिवेति" पाठे श्रौत्यपि सम्भवतीत्यनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्वसम्भवेऽपि प्राचीनरीत्या द्विप्रकारत्वमेवोक्तम् । "औपम्यवाचिनो लोपे समासे क्विपि च द्विधा" । "वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्" "गर्द्दभति श्रुतिपरुषं व्यक्तं निनदन्महात्मनां पुरतः" ॥ अत्र "गर्द्दभतीत्यत्र" औपम्यवाचिनः क्विपो लोपः । न चेह उपमेयस्यापि लोपः । "निनदन्निति" अनेनैव निर्द्देशात् । "द्विधा समासे वाक्ये च लोपे धर्म्मोपमानयोः" । "तस्या मुखेनेत्यादौ" "रम्यमिति" स्थाने "लोके इति" पाठेऽनयोरुदाहरणम् । "क्विप्समासगता द्वेधा धर्म्मेवादिविलोपने" । उदाहरणम् । "विधवति मुखाब्जमस्याः" । अत्र "विधवतीति" मनोहरत्वधर्म्मलोपः । केचित्त्वत्रापि क्विप्प्रत्ययलोपमाहुः । "मुखाब्जमिति" अत्र समासगा । "उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि" । "अरातिविक्रमालोकविकस्वरविलोचनः । कृपाणोदग्रदोर्द्दण्डः स सहस्रायुधीयति" ॥ अत्र स सहस्रायुधमिव आत्मानमाचरतीति वाक्ये उपमेयस्यात्मनो लोपः । न चेह औपम्यवाचकलोपः उक्तादेव न्यायात् । अत्र केचिदाहुः सहस्रायुधेन सह वर्त्तत इति ससहस्रायुधः स इवाचरतीति वाक्यात् ससहस्रायुधीयतीति पदसिद्धेः विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोप इति तन्न विचारसहम् । कर्त्तरि क्यचोऽनुशासनविरुद्धत्वात् । "धर्म्मोपमेयलोपेऽन्या" यथा "यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्व्वे" । अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्म्मः शुक्लता च लुप्तौ । "त्रिलोपे च समासगा" । यथा । "राजते मृगलोचना" । अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादकसाधारणधर्म्मोपमानानां लोपः । "तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः" । पूर्णा षड्विधा लुप्ता चैकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकारोपमा । एषु चोपमाभेदेषु मध्ये अलुप्तसाधारणधर्म्मेषु भेदेषु विशेषः प्रतिपाद्यते "एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः । भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा" ॥ तत्र एकरूपे यथा "मधुरः सुधावदधरः" इत्यादि । बिम्बप्रतिबिम्बो यथा । "भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् । तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव" ॥ अत्र "श्मश्रुलैरित्यस्य" "सरघाव्याप्तैरिति" च दृष्टान्तवत्प्रतिबिम्बनम् । शब्दमात्रेण भिन्नत्वे यथा । "स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा । कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम्" ॥ अत्र एके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्दभेदेन निर्द्दिष्टे । "एकदेशविवर्त्तिन्युपमावाच्यत्वगम्यते । भवेतां यत्र साम्यस्य" यथा ॥ "नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव"

अत्र नेत्रादीनां उत्पलादिसादृश्यं वाच्यं, सरःश्रीणाङ्गनासादृश्यं गम्यम् । "कथिता रसनोपमा । यथोर्ध्वमुपमेयस्य यदि स्यादुपमानता" ॥ "चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता । कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः" ॥ "मालोपमा यदेकस्योपमानं बहु दृश्यते" । यथा । "वारिजेनेव सरसी शशिनेव निशीथिनी । यौवनेनेव वनिता नयेन श्रीर्मनोहरा" ॥ क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं दृश्यते ॥ "हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा । विमलाः कुमुदानीव तारकाः शरदागमे" ॥ "अस्य राज्ञो गृहे भान्ति भूपानीता विभूतयः । पुरन्दरस्य भवने कल्पवृक्षभवा इव" ॥ अत्रोपमेयभूतविभूतिभिः कल्पवृक्षवैभवा इवेति" उपमानभूता विभूतय आक्षिप्यन्त इति आक्षेपोपमा । अत्रैव "गृहे इवस्य" "भवने इत्यनेन प्रतिनिर्देशात् प्रतिनिर्देश्योपमा इत्यादयश्च न लक्षिताः एवंविधवैचित्र्यस्य सहस्रधा सन्दर्शनात्" सा॰द॰ । "प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः । भूयोऽवयवसामान्ययोगः सेहोपमा मता" स॰कण्ठा॰ ।

२१ उपमानम् । "सदृशात् सदृशज्ञानमुपमानं द्विधेह तत् । स्यादेकमनुभूतार्थेऽननुभूते द्वितीयकम्" ।स॰कण्ठा॰ तत्रानुभूतार्थे यथा "सर्वं प्राणप्रवणमधवन्मुक्तमाहत्य वक्षस्तत्संक्रान्ता द्विघटितदृढत्वक्खण्डमुद्यद्गरोचिः । एवं वेगात् कुलिशकरोत् व्योम विद्युत्सहस्रं भर्त्तुर्वज्रज्वलनकपिशास्ते च रोषाट्टहासाः" ॥ अननुभूते "तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले । समूहस्तारकाणां यः शकटाकारमाश्रितः" ॥

२२ उपमेयोपमा "पर्य्यायेण द्वयोरेतदुपमेयोपमा मता" दर्पणे । "कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः"

२३ उल्लासः "एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि" । च॰। तत्र गुणे "अपि मां पावयेत् साध्वी स्नात्वेतीच्छति जाह्नवी । दोषे, "काठिन्यं कुचयोर्दृष्टं वाञ्छन्त्यः पादपद्मयोः । निन्दन्ति विधातारं त्वद्धाटीष्वरियोषितः" ।

२४ उल्लेखः "क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित् । एकस्यानेकधोल्लेखः यः स उल्लेख इष्यते" सा॰द॰ "प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः । नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः" । "गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्वतः" ।

२५ ऊर्जस्वि "ऊर्जस्वि रूढाहङ्कारम्" इति "अपकर्त्ताहमस्मीति हृदि ते मा स्म भूद्भयम् । विमुखेषु न मे खड्गः प्रहर्त्तुं जातु वाञ्छति एवमुक्त्वा परीयुद्धे निरुद्धोदर्पशालिना । पुंसा केनापि तज्ज्ञेयमूर्जस्वीत्येवमादिकम्" इति च दण्डी ।

२६ एकावली "पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् । स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधा" । सा॰द॰ स्थापने । "सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् । भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम्" । वर्जने । "न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् । न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः" ।

२७ कारकदीपकम् "क्रमिकैकगतानान्तु गुम्फः कारकदीपकम्" । च॰ अत्र कारकः क्रिया कर्त्तृत्वादिसंज्ञाकारित्वात् "गच्छत्यागच्छति पुनः पान्थः पश्यति पृच्छति" ।

२८ कारणमाला "परंपरं प्रति यदा पूर्वपूर्वस्य हेतुता । तदा कारणमाला स्यात्" । सा॰द॰ "श्रुतं कृतधियां सङ्गाज्जायते, विनयः श्रुतात् । लोकानुरागो विनयान्न किं लोकानुरागतः" ॥

२९ काव्यलिङ्गम् "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" । सा॰द॰ "जितोऽसि मन्द! कन्दर्प! मच्चित्तेऽस्ति त्रिलोचनः" अत्र पदार्थस्य हेतुता । वाक्यार्थस्य यथा । "यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं मेघव्यन्तरितं प्रिये तव मुखच्छायानुकारी शशी । येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते" । अत्र चतुर्थपादार्थे आद्यपादत्रयार्थानां हेतुता ॥

३० काव्यार्थापत्तिः "कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते" । च॰ "स जितस्त्वन्मुखेनेन्दुः का वार्त्ता सरसीरुहाम्" ।

३१ कैतवापह्नुतिः "कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते पदैः" । च॰ "निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात्" । इयम् व्याजापह्नुतिरित्यन्ये अपह्नुतिशब्दे विवृतिः ।

३२ गूढोक्तिः "गूढोक्तिरन्योद्देश्या गीर्यदन्यं प्रति गद्यते" । च॰ "वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः" । जारोद्देशेन इयं प्रत्युक्तिः ।

३२ चपलातिशयोक्तिः चपलातिशयोक्तिस्तत् पौर्वापर्य्यव्यतिक्रमः" । च॰ "अये मानोगतः पश्चादनुनीता प्रियेण सा" ॥

३४ छेकापह्नुतिः "छेकापह्नुतिरन्यस्य शङ्कातस्तस्य निह्नवे" ।

च० "प्रजल्पन् मत्पदे लग्नः कान्तः किं? न हि नूपुरः"

४५ तद्गुणः "तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः"। च० "नयत् मधुलिहः श्वैत्यमुदंशुदशनांशुभिः" ॥

४६ तुल्ययोगिता "वर्ण्यानामितरेषां वा धर्म्मैक्यं तुल्ययोगिता" "सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च"। सा त्रिधा। हिताहिते वृत्तितौल्यादपरा तुल्ययोगिता। "प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया"। परा श्रेष्ठा भूतिरैश्वर्यं पराभूतिः पराभवश्च "गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता" च०। "लोकपालो यमः पाशी श्रीदः शक्रो भवानपि"। यमादिभिरुत्कृष्टैः लोकपालत्वेन समीकृतिरत्र।

४७ दीपकम् "वदन्ति वर्ण्यावर्ण्यानां धर्म्मैक्यं दीपकं बुधाः"। च० दर्पणे तु "अथ कारकमेकं स्यादनेकासु क्रियासु चेत्। "सती च योषित् प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि" अत्र अनुगमनरूपैकक्रियासम्बन्धः वर्ण्यावर्ण्ययोः।

४८ दीपकावृत्तिः "त्रिविधा दीपकावृत्तिर्भेदावृत्तिहेतुतः वस्तुनो वा स्वभावेन शक्तेर्वा हानिहेतुना। बहुतालीयकार्य्यः स्याद्धेतुर्व्याहतस्तु यः" स०क०। "न विरचिता ललाटतटन्दस्य करोभ्रुकुटी न परुषहुङ्कृतेन स्फुरितमन्तरितम्। न तव निशुम्भसंभ्रमवशादपि दारुणया भगवति! चेष्टया कलुषितं वदनाम्बुजम्"। अत्र कालुष्यस्य कारणे सत्यपि तज्जनने यदसामर्थ्यं तत्र तन्मुखाम्बुज वस्तुनः स्वभावोनिमित्तमतो न विशेषोक्तेरभेदः। शक्तिहानितोयथा। "अनुरागवती सन्ध्या दिवसस्य पुरस्सरः। अहो दैवगतिश्चित्रा तथापि न समागमः"॥ अत्र दैवगत्या विद्यमानस्यापि समागमसामर्थ्यस्य कुण्ठीकरणात् हेतुशक्तिहानिकृतम् दीपकम्। पदपदार्थोभयावृत्तिभेदात्त्रैविध्यमुक्तं चन्द्रालोके। यथा। "वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः। माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः"

४९ दृष्टान्तः दृष्टान्तस्तु सधर्म्मरः वस्तुनः प्रतिबिम्बनम्। सा०द०। स च साधर्म्यवैधर्म्याभ्यां द्विधा। "तत्र साधर्म्ये अविदितं गुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्। अनधिगत परिमलापि हि हरति दृशं मालतीमाला,,। वैधर्म्ये। त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा। दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः,,।

५० निदर्शना "सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना" ॥ सा०द०। अत्र सम्भवद्वस्तुसम्बन्धनिदर्शना यथा। "कोऽत्र भूमिवलये जनान् मुधा तापयन् स्थिरमेति सम्पदम्। वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः" ॥ अत्र रवेरीदृशार्थवेदनक्रियायां कर्त्तृत्वेनान्वयः सम्भवत्येव ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपधर्म्मवत्त्वात्, स च रवेरस्ताचलगमनस्य परतापिनां विपत्प्राप्तेश्च बिम्बप्रतिबिम्बभावं बोधयति। असम्भवद्वस्तुसम्बन्धनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा। तत्रैकवाक्यगा यथा। "कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः। अधरः किसलयलीलामाननमस्याः कलानिधेर्विलासम्" ॥ अत्रान्यस्य धर्म्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालादिगतललितादीनां वहनमसम्भवत् तल्ललितादिसदृशं ललितादिकमवगमयत् कटाक्षविक्षेपादेः कुवलयमालादेश्च बिम्बप्रतिबिम्बभावं बोधयति यथा वा। "प्रयाणे तव राजेन्द्र! मुक्ता वैरिमृगीदृशाम्। राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः" ॥ अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स चासम्भवन् राजहंसगतिमिव गतिं बोधयति। अनेकवाक्यगा यथा। "इदं किलाव्याजमनोहरं वपुस्तपः क्षमं साधयितुं य इच्छति। ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति" अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताच्छेदनेच्छेवेति बिम्बप्रतिबिम्बभावे पर्य्यवस्यति।

५१ निरुक्तिः "निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्"। "ईदृशैश्चरितैर्जाने सत्यं दोषाकरो विभो"। दोषाकरस्य रात्रिकरस्य दोषाणामाकरत्वरूपान्यार्थकल्पनमिह।

५२ निश्चयः "अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः"। च० "वदनमिदं न सरोजं नयने नेन्दीवरे एतौ। इह सविधे मुग्धदृशो मधुकर! न मुधा परिभ्राम्य"।

५३ निषेधाभासः। आक्षेपभेदः विध्याभासे ४०ष्ठ विवृतिः।

५४ परिकरः "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः"। च० "सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः"।

५५ परिकराङ्कुरः "साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुरः"। च० "चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः"

५६ परिणामः "विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि। परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा"। सा०द०। "स्मितेनोपायनं दूरादागतस्य कृतं मम। स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया" अन्यत्र पर्णौपायने वसनाभरणादिना

उपयुज्यते अत्र तु नायकसम्भावनं कितवपायनम् द्यूते च हृदतया आक्षेपरूपपणनम् । अत्र प्रथमार्द्धे वैयधिकरण्येन द्वितीयार्द्धे सामानाधिकरण्येनेति भेदः ।

५७ परिवृत्तिः "परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्" च० "दत्त्वा कटाक्षलक्ष्मीं सा जग्राह हृदयं मम । मयास्यै हृदयं दत्तं गृहीतो मदनज्वरः" "पूर्व्वार्द्धे समेन शेषार्द्धे न्यूनेन" "येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः" अन्योन्याल्पभाविनीति स० कण्ठा० ।

५८ परिसंख्या "परिसंख्या निषिध्यैकमेकस्मिन् वस्तु यन्त्रणम्" च० । "स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम्" ।

५९ पर्य्यस्तापह्नुतिः "अन्यत्र तस्यारोपार्थः पर्य्यस्तापह्नुतिस्तु सा" च० । नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्" ।

६० पर्य्यायः "क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् । भवति क्रियते वा चेत्तदा पर्य्याय इष्यते ॥" सा० द० क्रमेण यथा । "स्थिताः क्षणं पक्ष्मसु ताड़िताधराः पयोधरोत्सेधनिपातचूर्णिताः । वलीषु तस्याः स्खलिताः प्रपेदिरे क्रमेण नाभिं प्रथमोदविन्दवः" ॥ "विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः । वृककाकशिवास्तत्र धावन्त्यरिपुरे तव" ॥ "विसृष्टरागादधरान्निवर्त्तितः स्तनाङ्गरागादरुणाच्च कन्दुकात् । कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः" । "यत्रोरारोपितस्तारो हारस्तेऽरिवधूजनैः ॥ निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुविन्दवः" ॥ एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च । क्वचिदाधेयमपि यथा "स्थिताः क्षणमित्यत्र" उदविन्दवः पक्ष्मादावसंहतरूप आधारे क्रमेणाभवन् । "विचरन्ति" इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन्।

६१ पर्य्यायोक्तम् "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" सा० द० "स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः । सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः" ।

६२ पिहितम् "पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम्" च० । "प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत्" । प्रिये गृहागते परनारिकया सह रात्रिजागरणेन प्रातःशयनमुचितमिति ज्ञापनार्थं कान्तया तल्पकल्पनं साकूतं चेष्टितम् ।

६३ पुनरुक्तवदाभासः "आपाततो यदर्थस्य पौनरुक्त्यावभासनम् । पुनरुक्तवदाभासः स भिन्नाकारशब्दगः" सा० द० "भुजङ्गकुण्डली व्यक्तः शशिशुभ्रांशुशीतगुः । जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः" । अत्र भुजङ्गकुण्डल्यादिशब्दानाम् आपातमात्रेण सर्पाद्यर्थतया पौनरुक्त्यप्रतिभासनम् । पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम् । पायादित्यस्यापायादित्यत्र पर्य्यवसानम् । भुजङ्गकुण्डलीतिशब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम् । हरः शिव इत्यत्र द्वितीयस्यैव । शशिशुभ्रांशुपदयोः द्वयोरपि । शब्दपरिवृत्तिसहत्वासहत्वाभ्याम् अस्योभयालङ्कारत्वम् । "भाति सदा न त्याग इति" अत्र तु न द्वयोरपीति शब्दालङ्कारत्वमिति भेदः ।

६४ पूर्व्वरूपम् "पुनः स्वगुणसंप्राप्तिः पूर्व्वरूपमुदाहृतम् । पूर्व्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि" । च० "हरकण्ठांशुलिप्तोऽपि शेषस्तद्यशसा सितः" । "दीपे निर्वापितेऽप्यासीत् काञ्चीरत्नैर्महन्महः" ।

६५ प्रतिवस्तूपमा "प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्म्मः सामान्यो यत्र निर्द्दिश्यते पृथक्" सा० द० "धन्यासि वैदर्भि ! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि । इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति" । अत्र समाकर्षणमुत्तरलीकरणञ्च क्रिया एकैव पौनरुक्त्यनिरासाय भिन्नरूपतया निर्द्दिष्टा । इयं मालयापि दृश्यते यथा । "विमल एव रविर्विशदः शशी प्रकृतिशोभन एव हि दर्पणः । शिवगिरिः शिवहाससहोदरः सहजसुन्दर एव हि सज्जनः" ॥ अत्र विमलविशदादिरर्थ एक एव । वैधर्म्म्येण यथा । "चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि" ॥

६६ प्रतिषेधः "प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्त्तनम्" । च० "न द्यूतमेतत् कितवाः ! क्रीडनं निशितैः शरैः" ।

६७ प्रतीपम् "प्रतीपमुपमानस्याप्युपमेयत्वकल्पनम्१ । अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत्२ । वर्ण्योपमानलाभेन तथान्यस्याप्यनादरः३ । वर्ण्यनान्यस्योपमाया अनिष्पत्तिर्वचश्च तत्४ । प्रतीपमुपमानस्य कैमर्थ्यमपि मन्यते"५ च० "क्रमेण यथा । "त्वल्लोचनसमं पद्मम्"१ "अलं गर्व्वेण ते वक्त्र ! कान्त्या चन्द्रोऽपि तादृशः"२ "कः क्रौर्य्यदर्पस्ते मृत्यो ! त्वत्तुल्याः सन्ति हि स्त्रियः" ३ । "मिथ्यावादोऽस्ति मुग्धाक्षि ! त्वन्मुखाभं किलाम्बुजम्" । ४ । "दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना" । ५।

६८ प्रत्यक्षम् । "प्रत्यक्षमक्षजं ज्ञानं मानसं चाभिधीयते । स्वानुभूतिभवं चैवमुपचारेण कथ्यते" । स० कण्ठा० । तच्च युगपदेकशो वा तत्र युगपत् यथा । "कान्ताकान्तवदनप्रतिबिम्बे मग्नवालसहकारसुगन्धौ । स्वादुनि प्रण-

दिताखिलि गीते निर्व्वार मधुनोन्द्रियवर्गः" एकगो यथा। "मन्दमन्दविगलच्चपमोषश्लथस्खलितपक्ष्मदृष्ट्या। वीक्ष्यते स्म शनकैर्नवबध्वा कामिनो मुखमधोमुखयैव"। सुखादिविषयं मानसं यथा "अस्तोकविस्मयमविश्रुत पूर्व्वहत्तसङ्गतनूतनभयज्वरजर्ज्जरं नः। एकत्वमत्रुटित संघटितप्रमोदमानन्दमेकमवलम्बयतीति चेतः"।

६९ प्रत्यनीकम् "प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः" च० "जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ"।

७० प्रस्तुताङ्कुरः "प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः"। च० किं भृङ्ग! सत्यां मालत्यां केतक्या कण्टकस्पृशा"।

७१ प्रहर्षणम् "उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम्१ वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्२। यत्नाद्‌पायसिद्ध्यर्थात् साक्षाल्लाभः फलस्य तत्३" च०। क्रमेण "तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका"। "दीपमुद्योपयेद्यावत्तावदभ्युदितो रविः" २ "निध्यञ्जनौषधीमूलं खनताऽऽसादितो निधिः"। ३।

७२ प्रेयः "प्रेयः प्रियतराख्यानम्" दण्डी "अद्य या मम गोविन्द! जाता त्वयि गृहागते। कालेनैषा भवेत् प्रीतिस्तवैव गमनात् पुनः। इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः। भक्तिमात्रसमाराध्यः स प्रीतश्च ततो हरिः" इदञ्च दर्पणकारादिभिरनुक्तमपि काव्यादर्शादावुक्तम्।

७३ प्रौढोक्तिः "प्रौढोक्तिरुत्कर्षहेतौ तद्धेतुत्वप्रकल्पनम्" च०। "कचाः कलिन्दजातीरतमालस्तोममेचकाः"।

७४ भावः। "अभिप्रायानुकूल्ये तु प्रशस्तिर्भाव उच्यते सोद्भेदोऽथ निरुद्भेदस्तयोरेकतराभितश्च सः सूक्ष्मं सूक्ष्मश्च भिद्येत न हि भावात् कथञ्चन" तत्र प्रार्थनावेदनाभ्यामुद्भिद्यमानः सोद्भेदो भावो हृद्यमित्युच्यते। "निरुद्भेदस्तु यो भावः स सूक्ष्मस्तु निगद्यते। इङ्गिताकारलक्ष्यात् स सूक्ष्मात् स्याद्भूमिकान्तरमिति" स०कण्ठा०। स भावः भूमिकान्तरमवस्थान्तरम। तत्र सूक्ष्मभावयोरुदाहरणे तत्रैव दृश्ये सूक्ष्मस्य सूक्ष्मालङ्कारे वक्ष्यते।

७५ भाविकम् "अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः। यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम्" २। सा०द० तत्र भूतस्य "मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ"। भाविनः "आसीदञ्जनमत्रेति पश्यामि तव लोचने। भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम्"।

७६ भेदकातिशयोक्तिः "भेदकातिशयोक्तिः स्यात् तस्यैवान्यत्वकल्पनम्" च०। "अन्यदेवास्य गाम्भीर्य्यमन्यद्धैर्य्यञ्च भूपतेः।

७७ भ्रान्तापह्नुतिः "अन्यस्य शङ्कया भ्रान्तापह्नुतिः भ्रान्तिवारणे"। च० "तापं करोति सोत्कम्पं ज्वरः किम्? सखे! स्मरः"।

७८ भ्रान्तिमान् "साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता" सा०द० "मुग्धा दुग्धधिया गवां विदधते कुम्भानधो वल्लवाः कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि। कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाशङ्कया सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका" प्रतिभोत्थितविशेषणात् स्वरससिद्धे शुक्तिकायां रजतभ्रमे न। साम्यादित्युक्तेः "सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः। सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे" इत्यादौ त्रिभुवनवर्त्तियावद्वस्तुनः साम्याभावाच्च भ्रान्तिमान्। अयं भ्रान्तिरित्यन्ये।

७९ मालादीपकम् "मालादीपकं पुनः। धर्म्मिणामेकधर्म्मेण सम्बन्धोयत् यथोत्तरम्" सा०द०। "त्वयि सङ्गरसंप्राप्ते धनुषासादिताः शराः। शरैररिशिरस्तेन भूस्तया त्वं, त्वया यशः" अत्रासादनक्रियाधर्म्मस्य यथोत्तरं सम्बन्धः।

८० मिथ्याध्यवसितिः "किञ्चिन्मिथ्यार्थसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् मिथ्याध्यवसितिर्वेश्यां वशयेत् खस्रजं वहन्" च० मिथ्यापह्नुतिस्तु अपह्नुतिभेदः।

८१ मीलितम् "मीलितं यदि सादृश्याद्भेद एव न दृश्यते" च० "रसोनालक्षि लाक्षायाश्चरणे सहजारुणे"।

८२ मुद्रा "सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः"। च० "नितम्बगुर्व्वी तरुणी दृग्युग्मविपुला च सा"।

८३ यथासंख्यम् "यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः" च० "शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय"। क्रम इत्यन्ये

८४ युक्तिः "युक्तिः पराभिसन्धानं क्रियया मर्म्मगुप्तये" च०। "त्वामालिखन्ती दृष्ट्वान्यां धनुः पौष्पं करेऽलिखत्"।

८५ रत्नावली "क्रमिकप्रकृतार्थानां न्यासं रत्नावलीं विदुः" च०। "चतुरास्यः पतिर्लक्ष्म्याः सर्व्वज्ञस्त्वं महीपते!"। चत्वारि आस्यानि चतुरं निपुणञ्चास्यमास्यव्यापारो वचनं च यस्य।

८६ रसवत्। "रसवद्रसपेशलम्" दण्डी "रसेन पेशलं साक्षान्निबद्धशृङ्गं रसवत्। "मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम्। सैषा तन्वी मया लब्धा कथमत्रैव जन्मनि" तदुक्तवर्णनञ्च तत्रैव "प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता। रूपबाहुल्ययोगेन तदिदं रसवद्वचः। वाच्यस्यावाच्यतायोनिर्माधुर्यं दर्शितोरसः।

इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम्" । दण्डी ।

८७ रूपकम् "रूपकं रूपितारोपात् विषये निरपह्नवे । तत् परम्परितं साङ्गं निरङ्गमिति च त्रिधा"। तत्र "यस्य कस्यचिदारोपः परारोपणकारणम्। प्रत्येकं केवलं मालारूपञ्चेति चतुर्विधम्" सा०द०। तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा। "आहवे जगदुद्दण्डराजमण्डलराहवे। श्रीनृसिंह! महीपाल! स्वस्त्यस्तु तव बाहवे" ॥ अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहोराहुत्वारोपे निमित्तम्। तदेव मालारूपं यथा। "पद्मोदयदिनाधीशः सदागतिसमीरणः। भूभृदावलिदम्भोलिरेक एव भवान् भुवि" ॥ अत्र पद्माया उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनं भूभृतो राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्य्यत्वाद्यारोपे निमित्तम्। अश्लिष्टशब्दनिबन्धनं केवलं यथा "पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः। त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः" । अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम्। अश्लिष्टमालारूपं यथा। "मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः। विराजति व्योमसरःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्" अत्र मनोजादेराजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्। एषु च "राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलत्वारोपे निमित्तमिति" केचित्। "अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्। समस्तवस्तुविषयमेकदेशविवर्त्ति च"। तत्र "आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम्"। प्रथमं समस्तवस्तुविषयं, यथा। "रावणावग्रहक्लान्तमिति वागमृतेन सः। अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे" ॥ अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वाद्यारोपितत्वम्। "यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्"। कस्यचिदारोप्यमाणस्य। यथा। "लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्। लोकलोचनरोलम्बकदम्बैः कैर्न पीयते" ॥ अत्र लावण्यादौ मध्वाद्यारोपः शाब्दो मुखे पद्मत्वारोप आर्थः। न चेयमेकदेशविवर्त्तिन्युपमा विकस्वरत्वधर्म्मस्यारोप्यमाणे पद्मे मुख्यतया वर्त्तनात् मुखे चोपचरितत्वात्। "निरङ्गं केवलस्यैव रूपणं तदपि द्विधा। माला केवलरूपत्वात्" तत्र मालारूपं निरङ्गं यथा। "निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम्। क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा" ॥ केवलं यथा। "दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि! नात्र दूये। उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैर्यत् खिद्यते मृदु पदं ननु सा व्यथा मे" ॥ "तेनाष्टौ रूपके भिदाः"। चिरन्तनैरुक्ता इति शेषः। क्वचित् परम्परितमप्येकदेशविवर्त्ति यथा। "खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य"। अत्रार्थः क्ष्माया महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे हेतुः। अस्य भेदस्य पूर्व्ववन्मालारूपत्वेऽप्युदाहरणं मृग्यम्। "दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके"। तत्रैकदेशविवर्त्ति श्लिष्टं यथा। "करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य। विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः" समस्तवस्तुविषयं यथा। अत्रैव "विचुम्बतीत्यादौ" "चुचुम्ब हरिदबलामुखमिन्दुनायकेन इति" पाठे। न चात्र श्लिष्टपरम्परितम् तत्र हि। "भूभृदावलिदम्भोलिरित्यादौ" राजादौ पर्वतत्वादिरूपणं विना वर्णनीयस्य राजादेर्दम्भोलित्वादिरूपणं सर्व्वथैव सादृश्यासम्भवादसङ्गतम्। तर्हि कथं "पद्मोदयदिनाधीश इत्यादौ" परम्परितं, राजादेः सूर्य्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य सम्भवादिति न वाच्यम् तथा हि राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं सादृश्यं न तु प्रकृते तद्विवक्षितं पद्मोदयादेरेव द्वयोः साधारणधर्म्मतया विवक्षितत्वात्, इह तु महीधरादेः स्तनादिना सादृश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेवेति न श्लिष्टपरम्परितम्। क्वचित् समासाभावेऽपि रूपकं दृश्यते। यथा। "मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा"। क्वचिद्वैयधिकरण्येऽपि। यथा। "विदधे मधुपश्रेणीमिह भ्रूलतया विधिः"। क्वचिद्वैधर्म्येऽपि यथा। "सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुणज्योत्स्नाकृष्णचतुर्द्दशी सरलतायोगश्वपुच्छच्छटा। यैरेषापि दुराशया कलियुगे राजावली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम्" ॥ अत्र च केषाञ्चिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपकविशेषत्वादर्थालङ्कारमध्ये गणनम्। एवं वक्ष्यमाणालङ्कारेषु बोद्धव्यम्। "अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्"। तदेवाधिकारूढवैशिष्ट्यरूपकम्। यथा। "इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः सुधाधाराधारश्चिरपरिणतं बिम्बमधरः। इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये तनुर्लावण्यानां जलधिरवगाहे सुखतरः" ॥ कलङ्कराहित्यादिनाधिकम्।

८८ रूपकातिशयोक्तिः "रूपकातिशयोक्तिः स्यान्निगीर्य्याध्यवसानतः" च० "पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः"

८९ ललितम् "प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम्"। ललितं" निर्गते नीरे सेतुमेषा चिकीर्षति च० ।

९० लेशः "लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्"। च० "अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु। शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम्" । स०क०तु लवत्वेनायमुक्तः ।

९१ लोकोक्तिः "लोकप्रवादानुकृतिर्लोकोक्तिरिति" कथ्यते च०। "सहस्व कतिचिन्मासान् मीलयित्वा विलोचने" ।

९२ विकल्पः "विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः" च०। "सद्यः शिरांसि चापान् वा नमयन्तु महीभुजः" ।

९३ विकस्वरः "यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः"। च० "स न जिग्ये महान्तोहि दुर्जयाः सागरा इव" ।

९४ विचित्रम् "विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् च०। "प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः कोमूढः सेवकादन्यः" ।

९५ वितर्कः "ऊहो वितर्कः सन्देहनिर्णयान्तरधिष्ठितः । द्विधासौ निर्णयान्तश्चानिर्णयान्तश्च कीर्त्यते । तत्त्वानुपात्यतत्त्वानुपाती यथोभयात्मकः" स०कण्ठा० । तेषु निर्णयान्तस्तत्त्वानुपाती यथा। "मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहता शक्तिस्तस्य कुतः ? स वज्रपतनाद्भीतो महेन्द्रादपि । तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणमा ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति"। स एवातत्त्वानुपाती यथा । "अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः शृङ्गारैकनिधिः स्वयं नु मदनो मासोनु पुष्पाकरः। वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेत् मनोरममिदं रूपं पुराणो मुनिः" चन्द्रादिष्वन्यतमेन प्रजापतिना भवितव्यमित्यतत्त्वानुपाती निर्णयान्तोवितर्कः । स एव उभयात्मा यथा "चित्ते निवेश्य परिकल्पितसत्त्वयोगाद्रूपोच्चयेन रचिता मनसा कृता नु । स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः" अत्र तत्त्वातत्त्वानुपातित्वादुभयात्मा निर्णयान्तो वितर्कः । अनिर्णयान्तो मिथ्याविषयो यथा । "अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः" । स एवाभिप्रायरूपो यथा । "अयमसौ भगवानुत पाण्डवः स्थितमवाङ्मुनिना शशिमौलिना । समधिरूढमनेन च जिष्णुना स्विदिति वेगवशान्मुमुदे गणैः"। स एव उभयात्मा यथा । माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्य्यमथाहमन्यः । गाण्डीवमुक्ता हि यथा पुरा मे पराक्रमन्ते न शराः किराते"।

९६ विधिः "सिद्धस्यैव विधानं यत् तामाहुर्विध्यलङ्कृतिम्" च०। "पञ्चमोदञ्चने काले कोकिलः कोकिलोऽभवत्" ।

९७ विध्याभासः वस्तुनोवक्तुमिष्टस्य तु विशेषप्रतिपत्तये । निषेधाभास आक्षेपो वक्ष्यमाणोक्तगोद्विधा । अनिष्टस्य तथार्थस्य विध्याभासः परोमत इति" सा०द० । उदाहरणं तत्र ज्ञेयम् । आक्षेपभेद इत्यन्ये ।

९८ विनोक्तिः "विनोक्तिः स्याद्विना किञ्चित् प्रस्तुतं हीनमुच्यते। तच्चेत् किञ्चिद्विना रम्यं विनोक्तिः सापि कथ्यते"। च०हीनत्वे "विद्या हृद्यापि सावद्या विना विनयसम्पदम्" । रम्यत्वे "विना खलैर्विभात्येषा राजेन्द्र ! भवतः सभा"। विनार्थसम्बन्धतायामपि सा०द०। "निरर्थकं जन्मगतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् । उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन" ।

९९ विभावना "विभावना विनापि स्यात् कारणं कार्य्यजन्म चेत्१ हेतूनामसमग्रत्वे कार्य्योत्पत्तिश्च सा मता२। कार्य्योत्पत्तिस्तृतीया स्यात् सत्यपि प्रतिबन्धके३ अकारणात् कार्य्यजन्म चतुर्थी स्याद्विभावना४ । विरुद्धात् कार्य्यसम्पत्तिर्दृष्टा काचिद्विभावना५। कार्य्यात् कारणजन्मापि दृष्टा काचित् विभावना६" च०। क्रमेण यथा। "अपि लाक्षारसासिक्तं रक्तं ते चरणद्वयम्"१ । "अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः"।२। "नरेन्द्रानेव ते राजन् दशत्यसिभुजङ्गमः"।३। नरेन्द्रोऽत्रपो गारुडविद्याभिज्ञश्च दंशनप्रतिबन्धकगारुडविद्यासन्निधानेऽपि दंशनोत्पत्तेस्तृतीया विभावना" "शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम्" ।४। "शीतांशुकिरणास्तन्वीं हन्त सन्तापयन्ति ताम्" ।५। "यशःपयोराशिरभूत् करकल्पतरोस्तव" ।६। दर्पणे तु "विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते । उक्तानुक्तनिमित्तत्वात् द्विधा सा परिकीर्त्तिता" इति लक्षयित्वा "विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्तं तच्च कारणान्तरं क्वचिदुक्तं क्वचिन्नेति" व्यवस्थाप्य उदाहृतम् "अनायासकृशं मध्यमशङ्कतरले दृशौ । अभूषणमनोहारि वपुर्वयसि सुभ्रुवः" । अत्र वयोरूपं निमित्तमुक्तम् "वपुर्भाति मतभ्रुव इति पाठे तदनुक्तमिति भेदः ।

१०० विरोधः "जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः।

क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः । विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः" । सा०द०क्रमेण यथा। "तव विरहे मलयमरुद्दावानलः शशिरुचोऽपि सोष्माणः । हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः"। "सन्ततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते । द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः"। "अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः । स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव:"। "वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः । राकाविभावरीजानिर्विषज्वालाकुलोऽभवत्"। "नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम्। रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे" । "त्वद्वाजिराजीत्यादि" "वल्लभोत्सङ्गेनेत्यादि" श्लोके चतुर्थपादे "मध्यन्दिनदिनाधिप" इति पाठे द्रव्ययोर्विरोधः । अत्र "तव विरह"इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दावानलोष्णहृदयभेदनसूर्य्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते। विरहहेतुकत्वेन समाधानम् । अजस्येत्यादौ अजत्वादिगुणस्य जन्मग्रहणादिक्रियाविरोधः । भगवतः प्रभावस्यातिशयितत्वात्तु समाधानम् । "त्वद्वाजीत्यादौ" "हरोऽपि शिरसा गङ्गां न धत्ते" इति विरोधः। "त्वद्वाजीत्यादिकविप्रौढोक्त्या तु समाधानम् । स्पष्टमन्यत् । विभावनायां कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते । विशेषोक्तौ च कार्य्याभावेन कारणमेव । इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः ।

१०१ विरोधाभासः ।"आभासत्वं विरोधस्य विरोधाभास इष्यते चन्द्रा० "अमिलज्जिनुभिर्निजिद्दोजसा स यत् विचार दृक्चारदृगप्यवर्त्तत"नैषधम् ।

१०२ विवृतोक्तिः "विवृतोक्तिः श्लेषगुप्तं कविनाविष्कृतं यदि" च० । "वृषापेहि परक्षेत्रादिति वक्ति ससूचनम्" ।

१०३ विशेषः "यदाधेयमनाधारमेकञ्चानेकगोचरम् । किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा । कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः"। सा०द०क्रमेण यथा । "दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् । रमयन्ति जगन्ति गिरः कथमपि कवयो न ते वन्द्याः" । "कानने सरिदुद्देशे गिरीणामपि कन्दरे । पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः"। "गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ । करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्?" ।

१०४ विशेषोक्तिः "सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा" सा०द० । तथेत्युक्तानुक्तनिमित्तत्वात् । तत्रोक्तनिमित्ता यथा ।"धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः" अत्र महामहिमशालित्वं निमित्तमुक्तम् । अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठे त्वनुक्तम् । अचिन्त्यनिमित्तत्वं च अनुक्तनिमित्तस्यैव भेद इति पृथग्नोक्तम् यथा "स एक स्त्रीणि जयति जगन्ति कुसुमायुधः । हरतापि तनुं यस्य शम्भुना न हृतं बलम्" । अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम् । इह च कार्य्याभावः कार्य्यविरुद्धसद्भावमुखेनापि सा०द० ।

१०५ विषमम् ।"गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः । यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः । विरूपयोः सङ्घटना या च तद्विषमं मतम्"।सा०द०क्रमेण यथा। "सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा । तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते" । अत्र कारणरूपासिलतायाः "कारणगुणा हि कार्य्यगुणमारभन्ते" इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः । "आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम्। विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे" । अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः । "अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया । धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः" । अत्र केवलं काङ्क्षितधनलाभो नाभूत् प्रत्युत क्षारवारिभिर्वदनपूरणम् । "क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता । नियतं प्रतिकूलवर्त्तिनो बत धातुश्चरितं सुदुःसहम्" । अत्र वनराजश्रियोर्विरूपयोः सङ्घटना ।

१०६ विषादनम् "इष्यमाणविरुद्धार्थसंप्राप्तिश्च विषादनम्" च० । "दीपमुद्दीपयेद्यावत्तावन्निर्वाण एव सः"।

१०७ व्यतिरेकः "आधिक्यमुपमेयस्योपमानान्न्यूनताथवा । व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा॥ चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः । आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा । प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः" ॥ सा०द० उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणमुपमानगतं निकर्षकारणञ्च । तयोर्द्वयोरप्युक्तावेकः" प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधोऽप्यपिशब्दादुपमानोपमेयस्य निवेदनं शब्देनार्थेनाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषेऽपिच-

ष्वादृष्टे भेदेऽपि चतुर्विंशतिप्रकारः। उपमानान्न्यूनतायामनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वाऽष्टचत्वारिंशत्प्रकारो व्यतिरेकः। उदाहरणम्। "अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा"। अत्रोपमेयगतमकलङ्कत्वमुपमानगतञ्च कलङ्कित्वं द्वयमप्युक्तम्। यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम्। अत्रैव "न कलङ्कि विधूपममिति" पाठे आर्थम् "जयतीन्दुं कलङ्किनमिति" पाठे तु इवादितुल्यादिपदविरहादाक्षिप्तम्। अत्र चाकलङ्कपदत्यागे चोपमानगतनिकर्षकारणस्यानुक्तिः" द्वयोरनुक्तौ द्वयोरनुक्तिः। श्लेषे यथा। "अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः"। अत्र इवार्थे वतिरिति शाब्दमौपम्यम् उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः। गुणशब्दः श्लिष्टः। अन्ये भेदाः पूर्ववदूह्याः। एतानि चोपमेयस्योपमानादाधिक्ये उदाहरणानि। न्यूनत्वे दिङ्मात्रम्। यथा। "क्षीणः क्षीणोऽपि शशी भूयोभूयोऽभिवर्द्धते नित्यम्। विरम प्रसीद सुन्दरि! यौवनमनिवर्त्ति यातं तु"॥ "अत्रोपमेयभूतयौवनास्थैर्यस्याधिक्यं तेनात्र "उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेक इति" केषाञ्चिल्लक्षणे "विपर्य्यये वेति पदमनर्थकमिति" यत् केचिदाहुः तन्न विचारसहम्। तथा ह्यत्राधिक्यन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव। अस्तु वात्रोदाहरणे कथञ्चिद्गतिः। "हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः"॥ इत्यादिषु का गतिरिति सुष्ठूक्तं "न्यूनताथ वेति"।

१०८ व्याघातः "व्याघातः स तु केनापि वस्तु येन यथा कृतम् तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा१। सौकर्य्येण च कार्य्यस्य विरुद्धं क्रियते यदि२। सा० द० "दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः"। "इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः समागन्ता कान्ते! मृदुरसि न चायाससहना। मृदुत्वं मे हेतुः सुभग! भवता गन्तुमधिकं न मृद्वी सोढा यद्विरहकृतमायासमसमम्"॥ अत्र विदेशं जिगमिषुणा नायकेन नायिकायाः मृदुत्वं सहगमनाभावहेतुत्वेनोक्तं नायिकया तु प्रत्युत सहगमने ततोऽपि सौकर्य्येण तदेव हेतुतयोक्तम्।

१०९ व्याजनिन्दा "निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते" च०। "विधेः स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः"। अत्र एकशिरोहर्त्तुर्विधेर्निन्दाव्याजेन विधेर्निन्दाया व्यक्तिः।

११० व्याजस्तुतिः "उक्ता व्याजस्तुतिः पुनः। निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः"। सा० द०। निन्दाया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः। क्रमेण यथा। "स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव!। त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः"॥ "व्याजस्तुतिस्तव पयोद! मयोदितेयं यज्जीवनाय जगतस्तव जीवनानि। स्तोत्रन्तु ते महदिदं घन! धर्म्मराजसाहाय्यमर्जयसि यत् पथिकान्निहत्य"॥

१११ व्याजोक्तिः "व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम्" च०। "सखि! पश्य गृहारामपरागैरस्मि धूसरा"।

११२ शुद्धापह्नुतिः "शुद्धापह्नुतिरन्यस्यारोपार्थो धर्म्मनिह्नवः"। च० "नायं सुधांशुः किं तर्हि? व्योमगङ्गासरोरुहम्"।

११३ श्लेषः शाब्दोऽलङ्कारः आर्थश्च शाब्दस्तूक्तः ३८९ पृष्ठे आर्थो यथा "शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम्" सा० द०। स्वभावादेकार्थैरिति शब्दश्लेषाद्व्यवच्छेदः। "सर्व्वदो माधवः पायात् स यो गङ्गामदीधरत्"।

११४ संसृष्टिः "यद्येत एवालङ्काराः परस्परविमिश्रिताः। तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा" सा० द० "देवः पायादपायान्नः स्मेरेन्दीवरलोचनः। संसारध्वान्तविध्वंसहंसः कंसनिषूदनः"। अत्र पायादपायादिति यमकम् स्मेरेन्दीवरेत्यादौ चानुप्रास इति शब्दालङ्कारयोः, संसारध्वान्तेत्यत्र उपमा, हंस इत्यत्र रूपकमित्यर्थालङ्कारयोः, शब्दार्थालङ्कारयोश्च परस्परानपेक्षयैवात्र संसर्गः।

११५ सङ्करः "अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितेः। सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः" सा० द०। तत्राङ्गाङ्गिभावे यथा। "आकृष्टवेगविगलद्भुजगेन्द्रभोगनिर्मोकपट्टपरिवेष्टनयाम्बुराशेः। मन्थव्यथाव्युपशमार्थमिवाशु यस्य मन्दाकिनी चिरमवेष्टत पादमूले"॥ अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः। सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम्। श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम् अतिशयोक्तिश्च "मन्थव्यथाव्युपशमार्थमिव" इत्युत्प्रेक्षाया अङ्गम्। उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम्। यथा वा। "अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः। अहो दैवगतिश्चित्रा तथापि न समागमः"॥ अत्र समासोक्तिर्विशेषोक्तेरङ्गम्। सन्देहसङ्करो यथा। "इदमाभाति गगने भिन्दानं सन्ततं तमः। अमन्दनयनानन्दकरं मण्डलमैन्दवम्"॥ अत्र किं मुखस्य

चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकं, अथ वा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्म्माभिसम्बन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकं किं वा विशेषणसाम्याद-प्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः, यद्वा ऽप्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्य्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्य्यायोक्तिरिति बहूनामलङ्काराणां सन्देहात् सन्देहसङ्करः। यथा वा मुखचन्द्रं पश्यामीत्यत्र किं मुखं चन्द्र इवेत्युपमा उत चन्द्र एवेति रूपकमिति सन्देहः साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे पुनर्न सन्देहः। यथा "मुखचन्द्रं चुम्बति" इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम्। चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम्, "मुखचन्द्रः प्रकाशते" इत्यत्र प्रकाशाख्यो धर्म्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः। "राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्"। अत्र योषित आलिङ्गनं नायकस्य सदृशेनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसम्भवादुपमाबाधकं नारायणे सम्भवाद्रूपकम्। "एवं वदाम्बुजमेणाक्ष्या भाति चञ्चललोचनम्"। अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासम्भवाद्रूपकस्य बाधकता। एवं "सुन्दरं वदनाम्बुजम्" इत्यादौ साधारणधर्म्मप्रयोगे, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति वचनादुपमासमासो न सम्भवतीति उपमाया बाधकः। एवञ्चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव। एकाश्रयानुप्रवेशो यथा। "कटाक्षेणापीषत् क्षणमपि निरीक्षेत यदि सा तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः। सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः परीरम्भारम्भः क इव भविताम्भोरुहदृशः"॥ अत्र "कटाक्षेणापीषत्क्षणमपि" इत्यत्र छेकानुप्रासस्य "निरीक्षेत" इत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः। एवं चार्थानुप्रासार्थापत्त्यलङ्कारयोः। यथा वा। "कुरवका रवकारणतां ययुरिति" अत्र रवकारवका इत्येकं वकारवकार इत्येकमिति यमकयोः। सा०द०।

११६ सन्देहः "स्यात् स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयम्" च० "पङ्कजं वा सुधांशुर्वा अस्माकन्तु न निर्णयः"॥

११७ समम् "समं स्यादानुरूप्येण श्लाघायोग्यस्य वस्तुनः"। सा०द० "शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा"। आनुरूप्यञ्च कारणानुरूप्यं तदन्यानुरूप्यम् इष्टपदार्थस्यायत्नसिद्धिहेतुकत्वञ्च। "सरूपमपि कार्य्यस्य कारणेन समं विदुः। विना यत्नेन तत्सिद्धिर्यदर्थं कर्त्तुमुद्यममिति" च०उक्तेः तत्र कारणानुरूप्यमुक्तम् कारणानुरूप्यं यथा "नीचप्रवणता लक्ष्मि! जलजायास्तवोचिता"। तृतीयं यथा "युक्तोवारणलाभोऽयं भूपतेर्वारणार्थिनः"।

११८ समाधिः "समाधिः सुकरे कार्य्ये दैवाद्वस्त्वन्तरागमात्" च०। "मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः। उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्"। स० कण्ठा० तु "समाधिमन्यधर्म्माणामन्यत्रारोपणं विदुः। निरुद्भेदोऽथ सोद्भेदः स द्विधा परिपठ्यते" इति लक्षितम्। उदाहरणं मृग्यम्।

११९ समासोक्तिः "समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः" सा०द०॥ तत्र समेन कार्य्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः यथा। "व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः। आलिङ्गसि प्रसभमङ्गमशेषमस्या धन्यस्त्वमेव मलयाचलगन्धवाह!"। अत्र गन्धवाहे दृष्टकामुकव्यवहारसमारोपः। लिङ्गसाम्येन यथा। "असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः। अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः"॥ अत्र पुंस्त्रीलिङ्गमात्रेण रविसन्ध्ययोर्नायकनायिकाव्यवहारः। विशेषणसाम्यन्तु श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च त्रिधा। तत्र श्लिष्टतया यथा। "विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः। जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः"॥ अत्र मुखरागादि श्लिष्टता। अन्यदुदाहार्य्यम् सा०द०।

१२० समुच्चयः "समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके। खलेकपोतिकान्यायात्तत्करः स्यात् परोऽपि चेत्॥ गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये" सा०द०। यथा "हंहो धीर! समीर! हन्त जननं ते चन्दनक्ष्माभृतो दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः। प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निवन्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः"॥ अत्र दाहे एकस्मिंश्चन्दनभूस्पृत्ककरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम्। अत्र सर्व्वेषामपि हेतूनां शोभनत्वात् सद्योगः। अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः। सदसद्योगो यथा।

"शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतःसज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे"॥ "अरुणे च तरुणि ! नयने तव मलिनञ्च प्रियस्य मुखम् । मुखमानतञ्च सखि ! ते ज्वलितश्चास्यान्तरे स्मरज्वलनः" ॥ अत्राद्येऽर्द्धे गुणयोर्यौगपद्यं द्वितीये क्रिययोः । उभयोर्यौगपद्यं यथा । "कलुषञ्च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः । पतितञ्च महीपतीन्द्र ! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ "धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादावैकाधिकरण्येऽप्येष दृश्यते ।

१२१ सम्बन्धातिशयोक्तिः "सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनम् १ योगेऽप्ययोगसम्बन्धातिशयोक्तिरितीर्य्यते"२ च० "सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्"।१। "त्वयि दातरि राजेन्द्र ! स्वर्द्रुमान्नाद्रियामहे" ।

१२२ सम्भवः "प्रभूतकारणालोकात् स्यादेवमिति सम्भवः । स विधौ१ वा निषेधे२ वा द्वये३ वा नद्वयेऽपि वा"४ स०क० क्रमेण यथा "त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे न स्यात् सिन्धोः पृथुरपि ततो दूरभावात् प्रवाहः । प्रेक्षिष्यन्ते गगनगतयो न्यूनमावर्ज्य दृष्टीरेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम्" । अत्र उक्तक्रमेण दृश्योभविष्यतीति विधेः सम्भाव्यमानत्वादयं विधिरूपसम्भवः अत्रैव पूर्व्वार्द्धे सिन्धुप्रवाहस्य दृश्यत्व निषेधरूपसम्भवश्च एवंविधिनिषेधतदुभयानात्मकसम्भवयो रुदाहरणे ऊह्ये ।

१२३ सम्भावनम् "सम्भावनं यदीदं स्यादित्यूहोऽन्यस्य सिद्धये" च०। "यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारेपरार्द्धं गणितं यदि स्याद् गणेयनिःशेषगुणोऽपि स स्यात्"।

१२४ सहोक्तिः "सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः । सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्" सा०द०। अतिशयोक्तिरपत्राभेदाध्यवसायमूला कार्य्यकारणपौर्व्वापर्य्यविपर्य्ययरूपा च । अभेदाध्यवसायमूलापि श्लेषनिमित्ता अन्यथा च क्रमेणोदाहरणम् । "सहाधरदलेनास्या यौवने रागभाक् प्रियः" अत्र रागपदे श्लेषः । "सह कुमुदकदम्बैः काममुल्लासयन्तः सह घनतिमिरौघैर्धैर्य्यमुत्सादयन्तः । सह सरसिजषण्डैः स्वान्तमामीलयन्तः प्रतिदिशममृतांशोरंशवः सञ्चरन्ति" ॥ अत्रोल्लासादीनां सम्बन्धिभेदादेव भेदो न तु श्लिष्टतया ।

१२५ सामान्यम् "सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः" । च० "मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः । अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ।

१२६ साम्यम् "द्वयोर्यत्रोक्तिचातुर्य्यादौपम्यार्थोऽवगम्यते । उपमारूपकाद्यन्ये साम्यमित्यामनन्ति तत् । तदानन्त्येन भेदानां संख्यानं तस्य दुष्करम् । दृष्टान्तोक्तिः प्रपञ्चोक्तिः प्रतिवस्तूक्तिरेव च । तत्रेवादेः प्रयोगेण दृष्टान्तोक्तिं प्रचक्षते । इवादेरप्रयोगेण प्रपञ्चोक्तिं मनीषिणः । वस्तु किञ्चिदुपन्यस्य न्यसनात् तत् सधर्म्मणः । साम्यप्रतीतिरस्तीति प्रतिवस्तूक्तिरुच्यते । तत्र क्रियाजातिगुणद्रव्ययोगादिहेतुके । साम्ये पूर्व्वादिभेदेन दृष्टान्तोक्तिर्विधीयते" स०क० ॥ तत्र क्रियानिमित्तम् "स्थितः स्थितामुच्चलितःप्रयातां निषेदुषीमासनबन्धधीरः । जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत्" ॥ इदं पूर्व्वम् । उत्तरं यथा । "रूपं तदोजस्वि तदेव वीर्य्यं तदेव नैसर्गिकमुन्नतत्वम् । न कारणात् स्वाद्विभिदे कुमारः प्रवर्त्तितो दीप इव प्रदीपात्" । अन्यान्युदार्य्याणि ।

१२७ सारः "उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते" । च० "मधुरं मधु, पीयूषं तस्मात्, तस्मात् कवेर्वचः" ।

१२८ सूक्ष्मम् "संलक्षितस्तु सूक्ष्मार्थ आकारेणेङ्गितेन वा । कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते" । सा०द० सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । तत्राकारेण यथा । "वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे । पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख" अत्र कयाचित् कुङ्कुमभेदेन संलक्षितं कस्याश्चित् पुरुषायितं रतं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितम् । इङ्गितेन यथा । "सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया । हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्" ॥ अत्र विटस्य भ्रूक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनिकालभाविना पद्मनिमीलनेन प्रकाशितः ।

१२९ लोकोक्तिः "लोकोक्तिर्यत्र लोकोक्तिः स्यादर्थान्तरगर्भिता" । च० "भुजङ्ग एव जानीते भुजङ्गचरणं सखे" ।

१३० स्मरणम् "सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते" । सा०द० "अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् । स्मरामि वदनं तस्याश्चारुचञ्चललोचनम्" । स० कण्ठा० तु भेदो दर्शितः । "सदृशादृष्टचिन्तादेरनुभूतार्थवेदनम् । स्मरणं प्रत्यभिज्ञानस्वप्नावपि न तद्भिदः" । तत्र सदृशवस्तुदर्शनजन्यं स्मरणमुक्तोदाहरणे । अदृष्टहेतुकं यथा "सुमिसुताप्रणय-

स्मृतिरोधिना मम वियुक्तमिदं तमसा मनः। मनसिजेन सखे! प्रहरिष्यता धनुषि चूतशरश्च निवेशितः"। अत्र कस्तुरता गह्वलतामयत्वस्मृतिविरोधिना अधानेन मम मनो वियुक्तमित्यदृष्टकृतं स्मरणम् न सदृशवस्तुदर्शनजन्यम्। चिन्ताजन्यम् यथा "पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां विपर्य्यासं यातो घनविरलभावः क्षितिरुहाम्। बहोः दृष्टं कालादपरमिव जातं वनमिदं निवेशः शैलानां तदिदमिति बुद्धिं जनयति,,। अत्र प्रत्यक्षेषु स्रोतस्तरुवनादिषु चिन्ताजन्यत्वात् चिन्तोद्भूतं स्मरणम् आदिमपक्षात् परप्रयत्नादपि यथा "दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन। स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता"। अत्र परप्रयत्नजन्यत्वात्तथात्वम्। प्रत्यभिज्ञानं यथा। "सर्गः पुरा परिचितो नियतं स एष संजीवनश्च मनसः परिमोहनश्च"। अत्र य एव पूर्व्वानुभूतः स एवैषः इति प्रत्यभिज्ञा स्मरणम्। स्वप्नरूपं यथा। नागानन्दे "अद्य खलु स्वप्ने जानामि सैव प्रियतमा अत्र चन्दनलतामण्डपे चन्द्रकान्तमणिशिलातलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा" जीमूतवाहनेन विदूषकसमीपे स्वप्नस्य वर्णनम्। स्वप्नप्रत्यभिज्ञयोः पूर्व्वानुभूतसंस्कारजातत्वात् स्मरणत्वम्।

१२१ स्वभावोक्तिः "नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती। स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्मता" दण्डी "तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः। त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः"। "कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः। पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम्"। "बध्नन्नङ्गेषु रोमाञ्चं कुर्व्वन् मनसि निर्वृतिम्। नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्त्तते"। "कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः। जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः"। "जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम्। शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्"। इयं जातिरपि।

१२२ हेतुः "हेतोर्हेतुमता सार्द्धं वर्णनं हेतुरुच्यते १। हेतुहेतुमतोरैक्यवर्णनं हेतुरुच्यते२,,। "च॰ असावुदेति शीतांशुर्मानच्छेदेन सुभ्रुवाम्,,१। "लक्ष्मीविलासो भवतः कटाक्षावेक्षणं प्रभो !२।

१२३ छेकापह्नुतिः "युक्त्या स एव पूर्व्वश्चेदुच्यते छेकापह्नुतिः।" च॰ स एव धर्म्मनिह्नव एव। "नेन्दुसोमो न निष्कर्षः सिन्धोरीर्व्योऽवतारितः"। अन्येऽलङ्कारा एव वाल्मभूताः। देहभूषणानि च शिरस्कादीनि तानि च प्राधान्यादष्टौ"शिरस्कं मुकुटं हारः कुण्डलं चाङ्गदं तथा। कङ्कणं वलयश्चैव मेखलेत्यष्टधा वरम्,, इदं प्रधानं तेन अप्रधानानि पादकटकादीन्यपि। तत्र भूषणद्रव्याणि "पद्मरागश्च वज्रश्च गोमेदो विजयस्तथा। मुक्ता वैदूर्य्यनीलानि तथा मरकतादयः। सुवर्णेनापि घटना सर्व्वेषामुपदृश्यते। प्रधानभूषणेष्वेवमप्रधाने न निश्चयः। प्रधानभूषणं प्रायः शिरसोऽङ्ग विधीयते,,। ज्यु॰ "सुखदा मणयः शुद्धा दुःखदा दोषशालिनः" युक्ति क॰ नवालङ्कारधारणे विहितनक्षत्रादि यथा "रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु। गुरुशुक्रबुधाहेषु वस्त्रालङ्कारधारणम्" ज्योति॰ तत्रापवादः "उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मतौ। अनिष्टेष्वपि निर्द्दिष्टं वस्त्रालङ्कारधारणम्"। ३नायकयोरङ्गजादिभावभेदेषु ते च यथा "यौवने सत्वजास्तासामष्टाविंशतिसंख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता। औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः। लीला विलासो विच्छित्तिर्बिब्बोकः किलकिञ्चितम्। मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः। विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्। हसितं चकितं केलिरित्यष्टादशसंख्यकाः। स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि"। पूर्व्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति किन्तु सर्व्वेऽप्यमी नायिकाश्रिता एव विच्छित्ति विशेषं पुष्णन्ति" सा॰ द॰ उक्ताः। एषां लक्षणानि तत्तच्छब्दे वक्ष्यन्ते। ४कान्तगुरौ चतुष्कले"॥५कल्याकारे गणभेदे च॥ [समर्थे धनादौ।

**अलङ्कुमारि** त्रि॰ अलंकुमार्य्यै तद्वरणाय। कुमारीभरण-

**अलङ्कृत** त्रि॰ अलम्+कृ–कर्म्मणि क्त। भूषिते मण्डिते। "अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्" सा॰ द॰ "सत्कृतालङ्कृतां कन्यां योददाति स कूकुदः" इत्यमरः।

**अलङ्कृति** स्त्री अलम्+कृ–भावे क्तिन्। १भूषणे करणे क्तिन्। २भूषणसाधने अलङ्कारशास्त्रोक्ते ३उपमाद्यलङ्कारे च "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनःक्वापि" काव्य॰ प्र॰ "यो विद्वान् मन्यते काव्यं शब्दार्थावनलङ्कृती। असौ न मन्यते कस्मादनुष्णमनलङ्कृती" चन्द्रा॰।

**अलङ्क्रिया** स्त्री अलम्+कृ–भावे श। भूषायाम्।

**अलङ्गामिन्** त्रि॰ अलं पर्य्याप्तं गच्छति णिनि स्त्रियां ङीप्। गमनसमर्थे रिपुं प्रति गन्तरि।

**अलङ्घनीय** त्रि॰ न लङ्घनीयः। अनतिक्रमणीये। "तदन्यमितरा नाद्रौ नेदं सिन्धावगाधता। अलङ्घनीयताहेतुरुभयं तन्मनस्विनि" माघः।

**अलङ्घ्य** त्रि॰ न लङ्घ्यः । अनतिक्रमणीये । "विलङ्घयिषतो लोकानलङ्घ्यानलघीयसः" माघः ।

**अलजी** स्त्री अलं पर्य्याप्तं यथा तथा जायते जन—ड गौरा॰ ङीष् । सुश्रुतोक्ते सन्धिगतरोगभेदे यथा । "पूयालसः सोपनाहः स्रावा पर्व्वणिकालजी । क्रिमिग्रन्थिश्च विज्ञेया रोगाः सन्धिगता नव" । तल्लक्षणं तत्रैव "जाता सन्धौ शुक्लकृष्णेऽलजी स्यात्तस्मिन्नेवास्थापिता पूर्व्वलिङ्गैः" इति।

**अलज्जा** स्त्री न लज्जा विरोधे न॰ त॰ । १धार्ष्ट्ये अभावे न॰त॰। २लज्जाभावे । न॰ब॰ । ३लज्जाशून्ये त्रि॰।

**अलञ्जर** पु॰ अलं सामर्थ्यं जृणाति जॄ—अच् पृ॰ उत्। मणिके अलिञ्जरे बहुजलाधारे(जाला)ख्यमये पात्रे । [धमादौ ।

**अलञ्जीविक** त्रि॰ अलं जीविकायै ४त॰ । जीविकापर्य्याप्ते

**अलञ्जुष** त्रि॰ अलं जुष्यते कर्म्मणि वा॰क । भक्षणपर्य्याप्ते मांसादौ । "अथ तच्छूतस्य परिशिन्ष्टि तदलञ्जुषम्" शत॰ब्रा॰"मांसं हि जीवाय भक्षणायालं पर्य्याप्तं भवति"भा॰

**अलति** पु॰ अल—वा अतिच् । गीतिमातृकायाम् स्वरसाधनार्थं सारिगामादिस्वरभेदे तदुपक्रमेणैव हि गीतेः प्रारम्भात्तेषां गीतिमातृकात्वम् ।

**अलन्धन** त्रि॰अलं प्रभूतं धनमस्यस्य अच्। पर्य्याप्तधने धनाढ्ये। "निरादिष्टधनश्चेत्तु प्रतिभूःस्यादलन्धनः" मनुः ।

**अलन्तराम्** अव्य॰ अलम्+अतिशये तरप् आमु । अत्यर्थपर्य्याप्त्यादावर्थे। "पुरोडाशभुजामिष्टमिष्टं कर्त्तुमलन्तराम्" माघः। एवं तमप् आमु । अलन्तमाम् तत्रैवार्थे अव्य॰।

**अलन्धूम** पु॰ अलमत्यर्थो धूमः। धूमसमूहे जटाध॰। [श्रीधरः।

**अलब्ध** त्रि॰न लब्धः। प्राप्तभिन्ने "अलब्धस्य प्राप्त्युपायोयोगः"

**अलभ्य** त्रि॰ न लभ्यः । अप्राप्ये । "रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च । यद्ददाति मलद्दिष्टं पूर्व्वतापि न दुष्यति" कालमा॰ मरी॰ "अलभ्ययोगे पुनरप्राप्यसम्बन्धनिमित्ते अयौचान्तदिवसे पूर्व्वस्य मलमासे" शु॰त॰रघु॰।

**अलम्** अव्य॰ अल—बा॰ असु १भूषणे "जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम्" अस्य उपपदसंज्ञा अलङ्कृत्य "अलङ्कृत्य सुतादानं दैवं धर्म्मं प्रचक्षते" मनुः । २सामर्थ्ये शक्तौ "विनाप्यस्मदलम्भूष्णुरिज्यायै तपसः"सुतः "कथा हि खलु पापानामलमश्रेयसे यतः" इति च माघः "वरेण शमितं लोकानलं दग्धुं हि तत्तपः" कुमा॰ ३पर्य्याप्तौ ४संपूर्णतायां ५प्राचुर्य्ये "प्रतिभूः स्यादलन्धनः" मनुः अलमत्यस्य धनम् अच् बहुधनइत्यर्थः कुल्लु॰ । ७वारणे, "अलं विवादेन यथा श्रुतं त्वया" कुमा॰"अलं विवादेन यमोविधीयताम्"महाना॰८निषेधे "आलमालमिदं बभ्रोर्यत् स दारानपाहरत्" माघः ९निरर्थकत्वे १०अस्त्यर्थे ११अवधारणे१२अलमर्थे च गणर॰। "विजयायेत्यलमन्वयान्मुनिर्माम्" किरा॰ "अलं भूषः" मल्लि॰। लक्ष्य वा रः अरम् । तत्रार्थे अरङ्कृतशब्दे उदा॰ ।

**अलम्पशु** पु॰अलं यज्ञे निरर्थः पशुः।"अप्रशस्ते पशौ "अलम्पशोरपशोश्च" कात्या॰ १८,१,४, पशुर्योग्यः सन् यो नाम पन्थविन्दते सोऽलम्पशुरपशुः" कर्क॰ ।

**अलम्पुरुषीण** पु॰ अलं समर्थः पुरुषाय "अषडक्षेत्यादिना" पा॰ स्वार्थे ख । युद्धादिसमर्थे प्रतिमल्लादौ पुरुषे ।

**अलम्बुद्धि** स्त्री अलम् व्यर्था बाधितविषयत्वात् पर्य्याप्ता वा बुद्धिः । मिथ्याबुद्धौ, पर्य्याप्तबुद्धौ च । "परुषस्यपि नालम्बुद्धिमगाय" किरा॰ १२,३८, श्लोक॰व्या॰ मल्लि॰ ।

**अलम्बुष** पु॰ अलं बुष्णाति बुष—क पृ॰षस्य बः । १वमने छर्द्दने । २प्रहस्ते रावणमन्त्रिराक्षसे ३घटोत्कचहते राक्षसभेदे च "अलम्बुषं तथा युद्धे विचरन्तमभीतवत् । हैडिम्बिः प्रययौ तूर्णम्" इत्युपक्रम्य "रिपुं निहत्याभिननन्द वै तदा ह्यलम्बुषं पक्वमलम्बुषं यथा" भा॰द्रो॰प॰ । अलम्बुषनामानौ च द्वौ राक्षसौ कुरुक्षेत्रयुद्धे समागतौ अयमेको घटोत्कचेन निहतः भी॰प॰ अपरोपि निहतः इत्यविरोधः । ४अप्सरोभेदे तच्छब्दे विवृतिः । ५मुण्डीर्य्याम् मेदि॰ ६लज्जालुलतायाम् ७अन्याप्रवेशार्थं दत्तजलरेखायाञ्च स्त्री राज॰। तस्याः फलम् अण् लुप् तत्फले न॰ । "ह्यलम्बुषं पक्वमलम्बुषं यथा"भा॰द्रो॰प॰।

**अलम्भूष्णु** त्रि॰अलम्+सामर्थ्ये भू-ष्णु । "समर्थे "विनाप्यस्मदलम्भूष्णुरिज्यायै तपसः सुतः" माघः ।

**अलय** पु॰न लयः विरोधे न॰त॰। १लयविरोधिनि उद्भवे । "शक्रादिष्वपि लोकेषु श्रूयमाणौ लयालयौ"रामा॰अभावे न॰त॰। २विनाशाभावे। नास्ति लयोयस्य ३अवस्थानशून्ये भ्रमणशीले "स्थानमानमति कालिमालया" माघः "लयो लयनं कचिदवस्थानं नास्ति यस्याः" मल्लि॰ ४विनाशशून्ये च त्रि॰।

**अलम्बुसा** पु॰ ब॰व॰ । देशभेदे ।

**अलर्क** पु॰ अलमर्कतेऽर्च्यते वा अर्क—अच् अर्च—घञ् वा शक॰। १श्वेतार्कवृक्षे २क्षिप्तकुक्कुरे ३कृमिभेदे च स च भा॰शा॰प॰ दर्शितः यथा "अथ कृमिः श्लेष्ममेदोमांसशोणितभोजनः। दारुणो दारुणस्पर्शः कर्णस्याभ्यासमागतः । स तस्योरु-

सवासाद्य बिभेद रुधिराशनः। न चैनमशकत् क्षेप्तुं हन्तुं वापि गुरोर्भयात्। स दश्यमानस्तु तथा कृमिणा तेन भारत!। गुरोः प्रबोधनाशङ्की तमुपैक्षत सूर्य्यजः। कर्णस्तु वेदनां धैर्य्यादसह्यां विनिगृह्य ताम्। अकम्पयन्नव्यथयन् धारयामास भार्गवम्। तदाऽस्य रुधिरेणाङ्गं परिस्पृष्टं भृगूद्वहः। तदाऽबुध्यत तेजस्वी सन्तप्तश्चेदमब्रवीत्। अहोऽस्म्यशुचितां प्राप्तः किमिदं क्रियते त्वया। कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम। तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणम्। ददर्श रामस्तं चापि कृमिं सूकरसन्निभम्। अष्टपादन्तीक्ष्णदंष्ट्रं सूचिभिरिव संवृतम्। रोमभिः सन्निरुद्धाङ्गमलर्कं नाम नामतः। स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत्। तस्मिन्नेवासृजि क्लिन्नस्तदद्भुतमिवाभवत्। ततोऽन्तरीक्षे ददृशे विश्वरूपः करालवान्। राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः। स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः। स्वस्ति ते भृगुशार्दूल। गमिष्यामि यथागतम्। मोक्षितो नरकादस्माद्भवता मुनिसत्तम!। भद्रञ्च तेऽस्तु वन्दे त्वां प्रियं मे भवता कृतम्। तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान्। कस्त्वं कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत्। सोऽब्रवीदहमासं प्राग्दंशो नाम महासुरः। पुरा देवयुगे तात! भृगोस्तुल्यवया इव। सोऽहं भृगोः सुदयितां भार्य्यामपहरं बलात्। महर्षेरभिशापेन कृमिभूतोऽपतं भुवि। अब्रवीद्धि स मां क्रोधात्तव पूर्वपितामहः। मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे। शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रुवम्। भविता भार्गवाद्रामादिति मामब्रवीद्भृगुः"।

**अलपस्** न०न रपः पापम् न०त० रस्य लः। अपापे पुण्ये।

**अलवाल** न० लवमालाति ला–क न०त०। वृक्षसेकार्थं वृक्षमूले कृदादिकृते जलाधारे वेष्टने स्वार्थेऽण्। आलवालमप्यत्र।

**अलस** त्रि० न लसति व्याप्रियते लस–अच्। अवश्यकर्त्तव्येषु शरीरापाटवमभिनीय १कृतायासे, "मृदुतरतनवोऽलसाः प्रकृत्याः" माघः अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः। २क्रियामन्दे च (पाकुँड़) ३पादरोगभेदे, ४वृक्षभेदे च पु०। ५हंसपदीलतायां स्त्री। पादरोगो यथा "क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ। दुष्टकर्दमसंस्पर्शादलसं च विभावयं" पादौ सिक्त्वाऽऽरनालेन लेपनं कारयेद्धितम्" इति च सुश्रुतः। शर्गादिगणपाठात् ४मुनिभेदे ततः अपत्ये यञ् आलस्यस्तदपत्ये लोहिता॰ यूनि ष्फ आलस्यायनः। अलसस्य भावः ष्यञ्। आलस्यम् न० तल् अलसता स्त्री त्व अलसत्वं न०। क्रियाकरणाय अप्रयत्ने।

**अलसक** पु० न लसति अनेन लस करणे–बा० वुन्। १रोगभेदे। यथाह सुश्रुतः "अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम्। विसूच्यलसकौ तस्माद्भवेताम्" इत्युपक्रम्य "कुक्षिरानह्यतेऽत्यर्थं ताम्यत्यल्पर्थं च कूजति। निरुद्धोमारुतोऽपि कुक्षावुपरि धावति। वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि। तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु"। तच्चिह्नान्तरमपि अन्यत्र दर्शितं "प्रयाति नोर्द्ध्वं नाधस्तादाहारो न च पच्यते। आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः"। अलस+स्वार्थे कन्। २अलस शब्दार्थे त्रि०।

**अलात** पु० न०। ला–क्त न०त०। (कोयाला) इति ख्याते (आङ्गार) इति ख्याते च अर्द्धदग्धकाष्ठे। "निर्वाणालातलाघवम्" कुमा०।

**अलातृण** त्रि० अलमत्यर्थमातृणा आतर्द्दनाः अलम्+आ+तृद नि० दस्य न मलोपश्च। आतर्द्दनशीले। "अलातृणासो विदथेषु सुष्टुताः" ऋ० १, १६६, ७, "अलातृणासः अलमत्यर्थं शत्रूणामातर्द्दनाः" भा०।

**अला(बु)बू** स्त्री न लम्बते न+लबि–उ णित् नलोपश्च वृद्धिः। (लाउ), तुम्ब्याम्। वा ऊङ्। अलाबूपात्र। "अलाबूं वर्त्तुलाकारां वार्त्ताकुं कुन्दसन्निभाम् स्मृतिः"।

**अलाबुमय** त्रि० अलाबु+विकारे मयट्। शुष्कालाबुत्वङ्निर्मिते पात्रे "यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च। सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणम्" या० स्मृतिः।

**अलाबूकट** न० अलाबूनां रजः अलाबू+रजोऽर्थे कटच्। तुम्बीरजसि।

**अलाभ** पु० न लाभः अभावे न०त०। १लाभाभावे "नायं नलः खलु तवातिमहानलाभः" नैष० "सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ" गी० "अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत्" स्मृतिः "अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्" मनुः। न०ब०। २लाभशून्ये त्रि०।

**अलाय्य** त्रि० ऋ–आय्य–रस्य लः। १गमनशीले २अभिगन्तरि शत्रौ च। "अलाय्यस्य परशुर्ननाश" ऋ० ८, ६०, ३०, "अलाय्यस्य अभिगमनशीलस्य शत्रोः" भा०।

**अलार** न० अराय्यते ऋ–यङ् लुक् अच् रस्य लः। कपाटे शब्दरत्ना०।

**अलास** पु० न लस्यति अनेन लस–करणे घञ् न०त०।

जिह्वागतरोगभेदे यथाह सुश्रुतः । “जिह्वागतास्तु कण्टकास्त्रिविधास्त्रिभिर्दोषैरलास उपजिह्विका च” इत्युक्त्वा “जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा । पित्तेन पीता परिदह्यते च चिता सरक्तैरपि कण्टकैश्च । कफेन गुर्वी बहुलाचिता च मांसोद्गतैः शाल्मलिकण्टकाभैः । जिह्वातले यः श्वयथुः प्रगाढ़ः सोऽलाससंज्ञः कफरक्तमूर्त्तिः । जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम्” । स तु असाध्यरोगः यथोक्तं तत्रैव । “असाध्या अपि वक्ष्यन्ते रोगा ये यत्र वाहया” इत्युपक्रम्य “जिह्वागतेष्वलासस्तु तालव्येष्वर्वुदं तथा” इत्याद्यभिधाय “असाध्याः कीर्त्तितास्त्वेते रोगा नव दशैव च”

**अलि** पु॰ अलति दंशे, कूजिते, गन्धिते, वा समर्थो भवति अल–इन् । १भ्रमरे, “अलमलेरिव गन्धरसावम्” माघः । “श्यामीभूताः कुसुमसमूहैरलीनाम्” “मङ्क्षु दधाति पटलैरलीनाम्” इति च माघः “अलिपङ्क्तिरनेकशस्त्वया” कुमा॰। २वृश्चिके, ३काके, ४कोकिले, ५वृश्चिकराशौ च स च द्वादशधा विभक्तराशिचक्रस्याष्टमो भागः विशाखाद्यपादानुराधाज्येष्ठारूपः । ६सुरायां च ।

**अलिक** न॰ अल्यते भूष्यते अल–कर्म्मणि इकन् । ललाटे । “असंस्कृतालकिनीमलिकलेखाम्” काद॰ ।

**अलिकुलसङ्कुल** पु॰ अलिकुलेन सङ्कुलः व्याप्तः । १कुलकवृक्षे राजनि॰ । २भ्रमरकुलव्याप्ते त्रि॰“अलिकुलसङ्कुल कुसुम निराकुल नवदलमालतमाले” जयदेवः ।

**अलिगर्द** पु॰ अलिरिव वृश्चिक इव गर्दति स्तौति गर्द–अच् । (आलय) इतिख्याते सर्पभेदे श॰र॰ ।

**अलिगु** पु॰ अलिरिव दुःसहा गौर्वाणी अस्य । गर्गादिगण पठिते ऋषिभेदे । ततः गोत्रे यञ् आलिगव्यः । तदपत्ये पुंस्त्री॰स्त्रियां तु लोहिता॰ ष्फः । आलिगवायनी ।

**अलिङ्ग** त्रि॰नास्ति लिङ्गं ज्ञापकहेतुश्चिह्नं वा यस्य । १अनुमापकहेतुशून्ये २चिह्नशून्ये च । वेदान्तिमतसिद्धे परमात्मनि पु॰। न॰त॰। लिङ्गभिन्ने ३अननुमापके तच्च सांख्यमते “हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितम् लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्” सां॰का॰ उक्तमव्यक्तम् । “अकार्य्यं नित्यं व्यापि अक्रियम् एकमनाश्रितमलिङ्गमनवयवं स्वतन्त्रमव्यक्तमिति” सां॰त॰कौ॰ । तद्धि न कस्यापि लिङ्गम् कार्य्येण कारणानुमानमिह विवक्षितं तेन सहव्यभिचारित्वेन परार्थतया तस्य पुरुषानुमापकत्वेऽपि न क्षतिरिति च तत्रानुसन्धेयम् “तदलिङ्गमेकद्रव्यत्वात् कर्म्मणः” वै॰सू॰ । “कर्म्म न तावत् समवायिकारणतया आकाशमनुमापयति कर्म्मण एकद्रव्यत्वात् एकमात्रमूर्त्तसमवायिकारणत्वात्” वै॰सू॰ उ॰ । ४दुष्टचिह्ने च । [भिन्ने ब्रह्मचारिप्रभृतौ ।

**अलिङ्गिन्** त्रि॰ न लिङ्गी वेषधारी । कपटवेशधारि-

**अलिजिह्वा** स्त्री अलिरिव क्षुद्रा जिह्वा । जिह्वामूलस्थायां क्षुद्र जिह्वायाम् (आलजिभ) स्वार्थे कन् अत इत्त्वम् । तत्रैव ।

**अलिञ्जर** पु॰ अलनमलिः अल–इन् तं जरयति जृ–अच् इषो॰ मुम् । (जाला) इति ख्याते कुम्भतुल्ये जलाधारे पात्रभेदे मणिके । “उदकान्नमुपानीय मत्स्यं वैवस्वतो मनुः । अलिञ्जरे प्राक्षिपत्तं चन्द्रांशुसदृशप्रभम्” भा॰व॰प॰।

**अलिदूर्व्वा** स्त्री अलिरिवाकारेण दूर्व्वा । मालादूर्व्वायाम् ।

**अलिन्** पु॰ अलं वृश्चिकपुच्छस्थकण्टकं विद्यतेऽस्य इनि, अल–इनि वा । १वृश्चिके, २भ्रमरे च । “मलिनिमाऽलिनि माधवयोषिताम्” माघः स्त्रियां ङीप् अलिनी “रमतालिनी शिलीन्ध्रे” माघः ।

**अलिन** त्रि॰ अल–वा॰ इनन् । पर्य्याप्ते तपोभिरतिमहत्ते । “आ पक्थासो भलानसो भनन्तालिनासो विषाणिनः” ऋ॰ ७।१८।७। “अलिनाः तपोभिरतिहृद्धाः” भा॰।

**अलिन्द** पु॰ अल्यते भूष्यते अल+कर्म्मणि किन्दच् । १द्वारप्रकोष्ठे २बहिर्द्वारवर्त्तिनि चत्वराकारे प्रदेशे । “यस्यामलिन्देषु न चक्रुरेव मुग्धाङ्गना गोमयगोमुखानि” माघः ३बहिर्द्वारभागमात्रे ३देशभेदे ४बहुयतासिनि ५तद्राजनि च ब॰व॰। “अलिन्दाः कालवाचैव कुण्डकाः करटा सता” भा॰ उ॰ प॰ जम्बुखण्डविभागे प्राच्यजनपदकथने । गौरादिगणपाठात् स्त्रियां ङीष् । अलिन्दी ।

**अलिपक** पु॰ कुत्सितवर्णेन लिप्यते लिप–बा॰ कर्म्मणि वुन् । १कोकिले २भृङ्गे ३कुक्कुरे च मेदि॰ ।

**अलिपत्रिका** स्त्री अलिर्वृश्चिक इव पत्रमस्याः वा कपि अत इत्वम् । वृश्चिकपत्राख्यलतायाम् । अलिपर्ण्यत्र ।

**अलिप्रिय** न॰६त॰ । १कोकनदे रक्तोत्पले २भ्रमरप्रिये त्रि॰ ३पाटलावृक्षे राजनि॰।

**अलिमक** पु॰ अलिरिव मकते–मकक अच् पृ॰कलोपः । १भेके २कोकिले ३भृङ्गे ४मधुकवृक्षे ५पद्मकेशरे च मेदि॰।

**अलिमोदा** स्त्री अलीन् मोदयति मुद+णिच् अच् । गणिकारीवृक्षे

**अलिम्पक** पु॰ कुत्सितं लिप्यते वर्णेन लिप–वा कर्म्मणि श न॰त॰ संज्ञायां कन् । १भृङ्गे २कोकिले ३मधुकवृक्षे ४भेके ५पद्मकेशरे च ।

**अलिल्** पु० अ–इलच् रस्य लः। वेदान्तप्रसिद्धे गगनचारिणि पक्षिभेदे—"अलिलः पक्षिणः पुत्रो गगनाद्याति भूतलम्। स्वबोधाभावतः, स स्वबोधे यात्यम्बरं पुनः"। वेदा० वा०। अनिल इति पाठस्तु सम्यक्।

**अलिवल्लभ** पु० ६त०। १फलेन्द्रुवृक्षे २पाटलौ।

**अलिवाहिनी** स्त्री अलिं वाहयति गन्धेन वह–णिच–णिनि ङीप्। कोङ्कणदेशप्रसिद्धे काकाङ्ग्यां।

**अलीक** न० अल–ईकन् १अप्रिये, २ललाटे, च। अलति गच्छत्यधोऽनेन। ३असत्ये। मिथ्यावचने हि नरकपातः। तत्र अप्रिये "गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया" मनुः "तद्यथा स महाराजो नालीकमधिगच्छति" रामा०। विशेष्ये अलीकम् व्यलीकम् अत्र नाप्रिये "व्यलीकनिश्वासमिवोत्ससर्ज" कुमा०। अलीकमस्त्यस्य सुखा० इनि न ठन्। अलीकी तद्वति त्रि० स्त्रियां ङीप्। अलीके भवः दिगा० यत् अलीक्यः। मिथ्याभूतभवे त्रि०।

**अलीकमत्स्य** पु० "माषपिष्टिकयालिप्त्वा नागवल्लीदलैर्दृढ़म्" तत्तु संस्वेदयेद्युक्त्या स्थाल्यामङ्गारकोपरि। ततोनिष्काथितं खण्डं तिलतैलेन भर्जयेत्। अलीकमत्स्यएकोऽयं प्रकारः पाकपण्डितैः। तं हन्त्याक भटिलेष वास्तुकेन च भक्षयेत्" राजनि० उक्ते पिष्टकभेदे।

**अलु** स्त्री अल–उन्। क्षुद्रकलश्याम्।

**अलुक्समास** पु० नास्ति विभक्तेः लुक्–यत्र। विभक्तेर्लुक्शून्ये समासे यथा मनसिजः सरसिजमित्यादि।

**अलुब्ध** त्रि० न लुब्धः। निर्लोभे लोभशून्ये।

**अलूक्ष** त्रि० न रूक्षः वेदे रस्य लः। रूक्षभिन्ने स्निग्धे "अलूक्षाधर्मकायाः" तैत्ति० उ०।

**अलेपक** त्रि० नास्ति लेपः संबन्धोयस्य वा कप्। निःसम्बन्धे परात्मनि पु०। लिप–ण्वुल् न०त०। लेपकभिन्ने त्रि०।

**अलोक** पु० न लोक्यते लोक–कर्मणि घञ्। अस्मदादिभिरदृश्ये १पातालादौ २अदृश्यमाने त्रि० "लोकालोकइवाचलः" रघुः। लोकालोकशब्दे विवृतिः। ३लोकशून्ये निर्जने त्रि० ३लोकशून्ये रहसि च न० "इत्र सर्वानिमान् लोकान् नालोकं कर्तुमर्हसि" रा०। लोकस्याभावः अभावे अव्ययी०। ४लोकाभावे अव्य०। नास्ति लोकोभोग्यलोको यस्य। ५कृतपुण्ये त्रि० ६अग्निगादौ ६अलोका वाहिताः शत० ब्रा०। तेषां दक्षिणाग्रहणेन पुण्यभागित्वाभावात् च भोग्यलोकशून्यत्वम्। ७इष्टकाभेदे स्त्री अलोका इष्टका उपदधाति"। लोकते कर्तरि अच्। ८दर्शकभिन्ने।

**अलोक्य** त्रि० लोकाय स्वर्गादिलोकप्राप्तये हितः तत्र साधु वा यत् न०त०। स्वर्गादिलोकासाधने। "यदलोक्यामग्निचित्याहुरथ किमर्थमेतदिति" "सहोवाच किं तु लोक्यं किमलोक्यम् लोक्या शतायुतेऽथवाऽचलादुह पुरायुषः स्वःकामी न प्रेयादलोक्यं हि तत्" शत०ब्रा० "यथास्यो द्विजते वाचा नालोक्यां तामुदीरयेत्" मनुः।

**अलोभ** पु० लोभः धनादिस्पृहाभावे न०त०। धनादिस्पृहाभावे। लोभोहि सत्यास्तेयापरिग्रहविरोधी १सति हि लोभे सत्यादयो लुप्यन्ते। "लोभस्य पुरतः कोऽपी सत्यास्तेयापरिग्रहाः" प्रवो च०। "लोभात् सद्यः प्रणश्यन्ति सत्यास्तेयापरिग्रहाः" पुरा०। अतएव "लोभस्य यमादिप्रतिपक्षत्वं पातञ्जले उक्तम् "वितर्कबाधने प्रतिपक्षभावनम्" एतेषां यमनियमादीनां वितर्कैः हिंसादिसंकल्पैः "हनिष्याम्येनम्" "अनृतं वक्ष्यामि" "परस्वमादास्ये" इत्येवंरूपैः बाधने प्राप्ते सति यमपरः ब्राह्मणः प्रतिपक्षभावनं कुर्यादित्यर्थः।

**अलोभिन्** त्रि० अलोभोऽस्त्यस्य इनि लोभोऽनुपदं व्याख्यातः। तच्छून्ये "अलोभी स्यात् प्रजावित्ते स्वदृष्टीवात् संस्मितं करम्" भा०शा०प०।

**अलोल** त्रि० न लोलः। १अचञ्चले २विरक्ते च।

**अलोलुप** त्रि० न०त०। लोभनीयद्रव्यस्येन्द्रियसन्निधानेऽपि अविक्रिये लोभशून्ये पुरुषे।

**अलोह** पु० पाणिन्युक्ते नडादिगणीये ऋषिभेदे। गोत्रापत्ये नडा० फक् आलोहायनः। तस्य गोत्रापत्ये पु० स्त्री०।

**अलोहित** न०त०। १लोहितभिन्ने रक्ताम्बुन्ये। नास्ति लोहितं यस्मात्। २रक्तपद्मे रत्नमाला।

**अलौकिक** त्रि० लोके विदितः ठक् न०त०। लोकेषु अविदिते स्त्रियां ङीप्। "अधिहरि हरि ङि इत्यलौकिकं विग्रहवाक्यम्" सि०कौ०। इन्द्रियादिलौकिकसन्निकर्षाभावेऽपि २सामान्यलक्षणाद्यधीने प्रत्यक्षे न० इति नैयायिकाः तथाहि प्रत्यक्षं द्विविधं लौकिकमलौकिकञ्च। आद्यं चक्षुरादिजन्यमन्यं तदजन्यम्। तत्र सामान्यलक्षणादिसन्निकर्षजन्यमलौकिकम् ते च सन्निकर्षा अनुपदं वक्ष्यन्ते।

**अलौकिकसन्निकर्ष** पु० लोकेषु अविदितः सन्निकर्षः। "अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः। सामान्यलक्षणा ज्ञानलक्षणा योगजोमत" इति भाषा० उक्ते प्रत्यक्षसाधनसन्निकर्षभेदे सामान्यलक्षणादिलक्षणे

च तत्पक्षद्वे वक्ष्यते तथाहि यत्किञ्चिद्घटादौ चक्षुःसन्निकर्षे घटत्वसामान्यधर्म्मज्ञानेन सकलघटादिज्ञानं सामान्यलक्षणाधीनं घटादिज्ञाने न घटादिज्ञानं ज्ञानलक्षणाधीनम्, योगविशेषजनितं सकलघटज्ञानं च एतत्त्रयमलौकिकं प्रत्यक्षं तस्य च अलौकिकत्वात् तदुत्तरं तत्तद्विषये साक्षात्करोमीति नानुव्यवसायः किन्तु जानामीत्येवानुव्यवसाय इति भेदः ।

**अल्प** त्रि॰ अल–प । १क्षुद्रे, २ईषदर्थे, ३सूक्ष्मे, ४मरणार्हे । "अथ यदल्पं तन्मर्त्यम्" छा॰ उ॰ । स्वार्थे कन् अल्पकमप्यत्र । ५यवासे पु॰ । अल्पत्वञ्च यस्य वस्तुनः यावती इयत्ता उचिता ततोऽन्यूनत्वम् तच्च परिमाणभेदः अपेक्षाबुद्धिविशेषविषयत्वमपकर्षाधायकधर्म्मविशेषो वा तेन द्रव्यगुणादिधर्म्मत्वं तस्य । तच्च जातिगुणक्रियाद्रव्येषु भवति अल्पा नदी अल्पः ग्रामः अल्पं ज्ञानं अल्पः पाकः अल्पोऽवकाशः । "क्वचाल्पविषया मतिः" रघुः । "अल्पप्रयोजनकृतोरुतरप्रयासैः" माघः । "प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते" मनुः । अस्य गुणपरतापि "करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्येति" पाणिन्युक्तेः अल्पान्मुक्तः अल्पतया मुक्त इत्यर्थः । वीप्सार्थे शस् । अल्पशः अव्य॰ । "पतितापत्यस्तोरल्पशः" पा॰ । अस्य संख्यावद्गुणवचनत्वात् अतिशायने इष्ठन् ईयसुन् च । अल्पिष्ठः अल्पीयान् स्त्रियां ङीप् । "संख्याया अल्पीयस्याः" वार्त्ति॰ अल्प प्रकृतेर्वा कन् । कनिष्ठः कनीयान् "कनीयान् ध्वमनुव्रजेत्" स्मृतिः "भ्राता ज्येष्ठः कनिष्ठो वा" स्मृतिः । भावे इमनिच् अल्पिमा पु॰ ष्यञ् आल्प्यम् पु॰ स्त्री तल् अल्पता । स्त्री त्व अल्पत्वं न॰ क्षुद्रपरिमाणे ।

**अल्पकेशी** स्त्री अल्पः केश इव पत्रमस्याः । भूतकेशीवृक्षे ।

**अल्पगन्ध** न॰ अल्पो गन्धोऽस्य । १रक्तकैरवे । २स्वल्पगन्धयुक्तमात्रे त्रि॰ । एकान्तसम्बन्धे इच् समा॰ । अल्पगन्धिः तत्रैव त्रि॰ ।

**अल्पतनु** त्रि॰ अल्पा क्षुद्रपरिमाणा तनुः शरीरं यस्य १खर्व्वे, २दुर्बले, ३स्वल्पास्थियुक्ते च । पत्नौ २हयमाले च ।

**अल्पपत्त्र** पु॰ अल्पं पत्त्रं यस्य । १क्षुद्रपत्त्रवृक्षतुलसीभेदे स्वल्प-

**अल्पपद्म** न॰ अल्पमसम्पूर्णं पद्मम् । रक्तकमले रत्नमा॰ ।

**अल्पप्रमाण** पु॰ अल्पं प्रमाणमस्य वा कप् । (तरमुज) (खरमुज) वा इति ख्याते वृक्षे । २अल्पप्रमाणयुक्ते त्रि॰ ।

**अल्पप्राण** पु॰ अल्पः प्राणः प्राणनक्रिया यस्मिन् । वर्णभेदे यस्योच्चारणे अल्पप्राणवायोर्व्यापारस्तस्मिन् । स च शिक्षायामुक्तः "अयुग्मवर्गयमगायणश्चाल्पासवः स्मृताः" इति तथा च वर्गेषु प्रथमतृतीयपञ्चमवर्णाः यमगाः यरलवाश्च अल्पासवः । कर्म्म॰ । २ताडगवर्णोच्चारणबाह्यप्रयत्ने । बाह्यप्रयत्नास्तु एकादशधा "विवारः संवारः श्वासोनादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति" सि॰कौ॰ । अल्पः प्राणः प्राणहेतुकं बलमस्य । ३अल्पबले त्रि॰ । [शाके ।

**अल्पमारिष** पु॰ अल्पः मारिषः शाकः कर्म्म॰ । (नटिया)

**अल्पमेधस्** त्रि॰ अल्पा मेधाऽस्य असिच् समा॰ । अल्पधारणायुक्तबुद्धौ धारणा च दृढसंस्कारः ।

**अल्पम्पच** त्रि॰ अल्पं पचति पच–खश् मुम् उप॰स॰ १मितम्पचे आत्मम्भरौ कृपणे । करणस्य कर्त्तृत्वविवक्षायाम् । २अल्पपाकसाधने पात्रादौ ।

**अल्पशमी** स्त्री कर्म्म॰ । क्षुद्रायां शम्यां शम्याकारे क्षुद्रवृक्षे ।

**अल्पसरस्** न॰ अल्पं सरः कर्म्म॰ । (डोवा) क्षुद्रजलाशये ।

**अल्पायुस्** पु॰ अल्पमायुः जीवनकालो यस्य । १छागे पशुषु तस्यैवाल्पायुष्कत्वात् तथात्वम् । २अल्पजीवनकाले त्रि॰ । "दुराचारोहि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च" मनुः वा कप् अल्पायुष्कोऽप्यत्र । कर्म्म॰ । यस्य यावदायुरुचितं ततोऽल्पमिते । जीवनकाले ३आयुश्च जीवनकालः "शतायुर्वै पुरुष" इति श्रुतेः शतवर्षावच्छिन्नजीवनकालो नराणामाहुः । एवमन्येषामायुःपरिमाणमायुःशब्दे वक्ष्यते । तत्र विशेषकालतायां ज्योतिषोक्तग्रहयोगस्य सूचकता यथा जातकालङ्कारे । "आयुर्मूलं जन्मिनां जीवनं स्यादाजीवानां निर्जराणां सुधेव । एवमाहुः पूर्व्वमाचार्य्यवर्य्यास्तस्मादायुर्योगजातं प्रवक्ष्ये । लग्नाधीशोऽतिवीर्य्यो यदि शुभविहगैर्वीक्षितः केन्द्रयातैर्दत्ते ह्यायुः सुदीर्घं गुणगणसहितं श्रीयुतं मानवानाम् । सौम्याः खेटालयस्था जनुषि च रजनीनायके स्वीयतुङ्गे वीर्य्याढ्ये लग्ननाथे वपुषि च शरदां षष्टिरायुर्नराणाम् । सौम्याः केन्द्रालयस्थाः वपुषि सुरगुरौ लग्नतो वा सुधांशोरायुर्दत्तं न दृष्टं न च गगनगतैः सप्ततिर्वत्सराणाम् । याता मूलत्रिकोणे शुभगगनचराः स्वीयतुङ्गे सुरेज्ये लग्नाधीशोऽतिवीर्य्यो गगनवसु ८० समासंख्यमायुर्नराणाम् । सौम्ये केन्द्रेऽतिवीर्य्ये यदि निधनपदं खेटहीनं समाः स्युर्विंशत् सौम्योदितं चेद्गगनहिमकरैः संयुतोऽथ स्वभे चेत् । स्वल्पांशे चामरेज्ये मुनिनयन २७ मितं सर्व्वगो लग्नगो वा चन्द्रोद्युते शुभवेद्-

गगनरसमितं ६० कोणगाः सौम्यखेटाः ॥ कोटे लग्ने सुरेज्ये यदि भवति तदा खाष्ट ८०तुल्यं लवेशे धर्माङ्के-शाङ्गनाथे निधनभवनगे क्रूरदृष्टेऽब्धुहस्ताः २४ । लग्नाधो शाष्टनाथौ व्ययभवनगतौ सप्तविंशत् २७ विलग्ने क्रूरैक्यौ चन्द्रदृष्टौ यदि निधनगतः कथनास्ते द्विपक्षाः २२॥ लग्नेन्दू क्रूरहीनौ वपुषि सुरगुरौ रन्ध्रभं खेटहीनं केन्द्रे सौम्ये खशैलाः ७० सितविबुधगुरू स्थाच्छतं १०० केन्द्रगौ चेत् । वागीशे कर्कलग्ने शतमिह भृगुजे केन्द्रगेऽथार्कसूनौ धर्माङ्कस्थे सुधांशौ व्ययनवमगते हायनानां शतं स्यात् ॥ धीकेन्द्रायुर्नवस्था यदि खलखचरा नो गुरोर्भे विलग्ने केन्द्रे काव्ये गुरौ वा शतमथ निधनं सौम्य दृष्टं शतं स्यात् । लग्नादिन्दोर्भे खेटा यदि निधनगता वीर्यभाजौ सितेज्यौ पूर्णायुः स्वोच्चराशौ शुभगगनचराः षष्टिरङ्गोङ्गगेज्ये ॥ कोदण्डान्त्यार्द्धमङ्कं यदि सकलखगाः स्वोच्चगा चे निजांशे गोस्थे पूर्णे च केन्द्रे सुरगुरुभृगुजौ लाभगेऽब्जे परायुः । शुक्रे नीचे तनुस्थे निधनपदगते सौम्यदृष्टे सुधांशौ जीवः केन्द्रे शतं स्यादथ तनुगृहपञ्चिद्रगः पुष्करेऽब्जे॥ वागीशोशोर्य्यंदुक्तो नवमभवनगाः सर्वखेटाःशतायुः कर्कोऽङ्के चन्द्रजीवौ सहजरिपुभगे स्यात् कविज्ञौ च केन्द्रे । केन्द्रे सूर्य्यारमन्दागुरुनवलवगा वाक्पतौ लग्नयाते व्यष्टस्थानेषु शेषाः शरगज ८५ कथितं स्यान्नराणां तदायुः ॥ क्रूराः सौम्यांशयाता उपचयगृहगाः ३,६,१०,११, कातराः कण्टक १,४,७,१०स्थाः सौम्या व्योमार्कसङ्ख्य १२०यदि तपनकुजौ रन्ध्रगौ नो परायुः । केन्द्रे लग्नेशजीवौ नवसुतनिलये कण्टके१४,७१०,नो च लाभ्याःसम्पूर्णं पापखेटायदि गुरुलवगा जीवभागे च सौम्याः।युग्मलांशे गता वा व्ययधनगृहगास्तेकुनाः शीतभानुः सम्पूर्णौ लग्नयायी शतमिह हि स्वक्षामिन्दिरामन्दिरं स्यात्। लग्नेशः सौम्ययुक्तो वपुषि च लयपो रन्ध्रगो नाम्यदृष्टो विंशत् केन्द्रे लवेशे बलवियुजि तथा लग्नपे त्रिंशदायुः॥ इन्द्रावापोक्लिमस्थे ३,६,९,१२, तदनु तनुपतौ निर्बले पापदृष्टे दन्तैस्तुल्यं३२ततोऽर्कोऽशुभखगविवरेलग्नतोऽर्कानुसंख्यम्।रिष्फेकेन्द्रे सुरेज्ये गुरुरिपुसहजे स्यात् स पापोऽङ्गनाथो रामाब्दं कर्कलग्ने कुजतुहिनकरौ केन्द्ररन्ध्रे षष्ठो ना रामाब्दं रस्वाक्षवेशो वपुषि च निधनं सौम्यहीनं खवेदाः ४०लग्ने शोरन्ध्रयातो वपुषि निधनपः स्यात्स्वां वाणसंख्यमू५ । नक्रे तिग्मांशुमन्दौ सहजरिपुगतौ कण्टके१,४,७,१०रन्ध्रनाथः पारावाराब्धिसंख्यं ४४ तदनु शुभखगाः स्वांशगास्त्रिंशदायुः॥ चक्रेशे सौम्यदृष्टे यदि शुभविहगाशोर्य्यबलखादानीम् यातः सौम्ये गषेऽब्जो गुण सनिगषितं ७२ रन्ध्रगैर्मध्यमायुः । स्याच्चन्द्रादङ्कि पादैरथ तपनसुते द्यूनलग्नं प्रयाते रिष्फेशोवायुरोज्यौ यदि बलरहितं कड्डपक्षाबसंख्यम् ५५ ॥ कर्काङ्के चक्रधामा खलविहगयुतः पुष्करे चो द्विजेन्द्रो वागीशोऽनलयायी विशिखपवनयुक्७५स्याच्चतुर्थास्तदस्यः । सौम्यः पीयूषधामान्वितनुविवक्षे संस्थितोऽर्को कवीज्यावेकलं पुष्कराशं ५० व्ययरिपुनिधने मूर्तिपचन्द्रयुक्तः ॥ मन्दांशे लग्ननाथो भुजगशरमितं ५८ स्यादथो सौम्यखेटा रन्ध्रे नो देहनाथो व्ययरिपुनिधने पापयुक् षष्टि ६०रायुः। रायोशोलग्ननाथो दिनमणिसहितो स्वशुगोवासवेज्यौ नो केन्द्रे षष्टिरायुर्व्वपुषि दिनकरः शत्रुनीभान्वितश्चेत् ॥ वागीशोहोनवीर्य्यो व्ययतनुजगते यामिनीशे खशैला ७० धर्मे सर्वैः परायुः खलखगलवगैः केन्द्रयातैरशीतिः ८० । क्रूरैः क्रूरर्क्षयातैः शुभभवनगतैः सौम्यखेटैः सवीर्य्य लग्नेशे स्यात् परायुः सुतभवनगतैः षष्टिरायुर्नराणाम्॥ सारङ्गस्यान्त्यभागे यदि वपुषि गते चाद्यभागे च केन्द्रे सौम्याः खेटाः शतं स्यादथ ८ सहज ३सुखे ४स्याच्चिरायुः समस्ताः । लग्नात् प्रालेयधाम्नो निधनसदनपोरिष्फकेन्द्रेऽष्टविंशत् २८ केन्द्रे सौम्यपहीने यदि क्षतिभवने कश्चिदास्ते खरामाः ३० ॥ क्षीणे प्रालेयभानौ यदि खलखचरो रन्ध्रगोरन्ध्र नेता केन्द्रस्थो लग्ननाथो निजबलरहितः स्यात्त्रि २० तुल्यं तदायुः । सौम्यैरापोक्लिमस्थैर्दिनमणिजविधू वैरिरन्ध्रालयस्थौ तुल्यं कामाङ्गैः२२स्यादथ धनलयगौ रिष्फगौ पापखेटौ ॥ हीनौ स्वभानुना वा यदि हिममहसाकाशबाहु २० प्रमाणं केन्द्रस्थौ सूर्य्यमन्दो यदि वपुषि कुजः पुष्पवाणाद्भुवः २५ स्यात् । शुक्रेज्यावङ्कयातौ तनयभवनगौ भानुपापावनायुर्जन्मेशः सार्कलग्ने खलखगसहितो वेष्टितः स्यादनायुः ॥ यत् सम्मोक्तं योगजातम्पुराणैर्होरापारावारपारप्रयातैः । तस्मादायुः सारभूतं गृहीत्वा पुंसामुक्तम्पुष्टभाजामभेदम् ।बलाबलविवेकेन पुनरागमयायिनाम् । कुरुणोभिरिदं देयमायुर्धर्मादिशालिनाम्" ॥

"पापस्त्रिकोणकेन्द्रे सौम्याः षडष्टमव्ययगताः । सूर्य्योदये प्रसूतः सद्यः प्राणांस्त्यजति जन्तुः" । सूर्य्यरिष्टम् । "षष्ठेऽष्टमे च चन्द्रः सद्योमरणाय पापसंदृष्टः । अष्टाभिश्च शुभैर्दृष्टोवर्षैर्मिश्रैस्तदर्द्धेन" । चन्द्ररिष्टम् । "शुन

षड्नवगान्त्यलग्नरन्ध्रे ष्वशुभयुतोमरणाय शीतरश्मिः । अशुभगतशशिपुत्रदेयपूर्व्वैर्यदि बलिभिर्न युतोऽवलोकितो-वा" । पापयुतचन्द्रारिष्टम् । "द्यूनचतुरस्रसंस्थे पाप-द्वयमध्यगे शशिनि जातः । विलयं प्रयाति नियतं देवैरपि रक्षितोबालः" । पापमध्यगचन्द्रारिष्टम् । "क्षीणे शशिनि विलग्ने पापैः केन्द्रेषु मृत्युसंस्थैर्वा । भवति विपत्तिरवश्यं अयनाधिपतेर्मतञ्चैतत्" । क्षीणचन्द्रारिष्टम् । "नागदगो१ सिंह२४ आतो२२ घु१ क्षमा१ क्ति४ तरुश्वि २२ धृति१८ नेत्राः २० । क्षमाग्नि२१ दिक्१० वेल्वजा द्यांशे तत्तुल्याब्दैर्विधौ व्यसुः" । मेषादीनां त्रिंशांश-विशेषस्थचन्द्रारिष्टम् । "भौमे विलग्ने शुभदृरदृष्टः षष्ठेऽष्टमे वार्कसुतेन युक्तः । सद्यः शिशुं हन्ति यदेन्दुनोन्द्रः खरे यमारौ न शुभेक्षितो च" । त्रिविधभौमारिष्टम् । "कर्कटधामनि सौम्यः षष्ठाष्टमराशिगोविलग्नस्थात् । चन्द्रेण दृष्टमूर्त्तिर्वर्षचतुष्टयेन मारयति" । बुधारिष्टम् । "वृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्य्येन्दुभौमार्कजदृष्टमूर्त्तिः । वर्षैस्त्रिभिर्भार्गवदृष्टिहीनोलोकान्तरं प्रापयति प्रसूतम्" वृहस्पतिरिष्टम् । "रविशशिभवने शुक्रोद्वादशरिपुरन्ध्रगोऽशुभैः सर्व्वैः । दृष्टः करोति मरणं षड्भिर्वर्षैः किमिह विचित्रम्" । शुक्रारिष्टम् । "मारयति षोडशाहात् शनैश्चरः पापवीक्षितोलग्ने । संयुक्तोमासेन वर्षाच्चन्द्रस्तु मारयति" । त्रिविधशनिरिष्टम् । "राहुश्चतुष्टयस्थोमरणाय वीक्षितोभवति पापैः । वर्षैर्दन्तिद्वशभिः षोडशभिः केचिदाचार्य्याः । षट्सिंहद्दृश्चिकोदयकृतस्थितिर्जीवितं हरति राहुः । पापैर्निरीक्ष्यमाणः सप्तमितैर्निश्चितं वर्षैः" । राहुरिष्टम् । "केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन् प्रसूयते जन्तुः । रौद्रे सर्पवृक्षे प्राणैः संत्यज्यते चाशु" । केतुरिष्टम् । "लग्ने ये द्रेक्काणा निगडाहिविहङ्गमपाशधरसंज्ञाः । मरणाय सप्तवर्षे क्रूरयुताः स्वपतिदृष्टाः" । द्रेक्काणरिष्टम् । "मीनकर्कटयोरन्त्यौ दृश्चिकस्याद्यमध्यमौ । सर्पाश्चत्वार एवैते द्रेक्काणा निगडाश्च ते । तुलामध्यान्त-सिंहाद्य कुम्भाद्याः पक्षिणः स्मृताः । दृषाद्यमकराद्यान्त्या द्रेक्काणाः पाशधारिणः" । लग्नाधिपजन्मपती षष्ठाष्टमरिपुफगौ प्रसवकाले । अस्तमितौ मरणकरौ राशिप्रमितैर्वर्द्वेद्वर्षैः । जन्मपतिर्जन्मराश्यधिपः । लग्नाधिपजन्माधिपरिष्टम् "सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपगतैर्दृष्टाः । मासेन मृत्युदास्ते यदि न शुभैस्तत्र संदृष्टाः" । सौम्यग्रहरिष्टम् । "एकः पापोऽष्टमगः शत्रुक्षेत्रो शत्रुवीक्षितोवर्षात् । मारयति नरं प्रसूतं सुधारसोऽपि पीतोऽपि" । पापग्रहरिष्टम् । "होरायाः सप्तमे सौरिर्हिबुकस्थश्च भास्करः । अस्मिन् योगे तु योजातः सोऽल्पायुर्भवति ध्रुवं । दशमषष्ठगते जीवे समसप्तगते शनौ । द्वादशस्थोयदा भानुर्वर्षमेकं न जीवति । "प्रतिपद्युत्तराषाढा नवम्यामेव कृत्तिका । पूर्व्वभाद्रपदाष्टम्यामेकादश्याञ्च रोहिणी । द्वादश्याञ्च यदाश्लेषा त्रयोदश्यां यदा मघा । एभिर्जातो न जीवेत यदि शक्रसमोभवेत्" । एवमन्येऽपि अल्पायुर्योगा आकरे दृष्टव्याः । मनुना तु "अनभ्यासेन वेदानामाचारस्य तु वर्ज्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" इति अन्न-दोषादेरपि अल्पायुर्हेतुतोक्ता । अन्नदोषश्च अभक्ष्यभक्षणादि तच्चाभक्ष्यशब्दे उक्तम् आचारश्च आचारशब्दे वक्ष्यते ।

**अल्पाल्प** त्रि॰ अल्पप्रकारः अतिशयेन वा अल्पः अल्प+प्रकारादौ द्विरुक्तिः । अल्पाल्पे पादादौ "फलं चाल्पाल्पकं तस्य धर्म्मस्यार्द्धवयो भवेत्" ति॰त॰ स्मृ॰ ।

**अल्पिका** स्त्री अल्पा प्रमाणेन कन् । १शूद्रपर्ण्याम् । अल्पार्थे कन् २अल्पमात्रायाम् ।

**अल्पित** त्रि॰ अल्पं क्रियते स्म अल्प+कृतार्थे णिच्-कर्म्मणि क्त । अल्पीकृते "त्वया न यत्रोऽल्पितकल्पपादपः" नै॰ ।

**अल्पिष्ठ** त्रि॰ अतिशयेन अल्पः इष्ठन् । अतिशयिताल्पे ।

**अल्पीयस्** त्रि॰ अतिशयेन अल्पः ईयसुन् स्त्रियां ङीप् । अतिशयिताल्पे ।

**अल्ला** स्त्री अल्यते इ्यल् क्विप् अले भूषार्थं लाति गृह्णाति ला-क३त॰ । १मातरि । अलतीति अल् पर्य्याप्तः सन् लाति सर्व्वानक्ति गृह्णाति जानाति वा ला-क । २सर्व्वाधारायां सर्व्वभक्षिकायां परमात्मदेवतायाम् सा च अथर्व्ववेदे अल्लोपनिषद्याद्युक्ता प्रसिद्धा ।

**अव** रक्षणे, गतौ, स्पृहायां, तृप्तौ, शोभायां, श्रवणे, व्याप्तौ, आलिङ्गने, प्रार्थने, प्रवेशे, सत्तायां, दृद्धौ, ग्रहणे, वधे, सामर्थ्ये, अवगमे, करणे, इच्छोत्पादने च यथायथं सक॰ अक॰ च भ्वादि॰ सेट् पर॰ । अवति आवीत् । आव । अव्यात् । अविता । अवितः । अवन् । अविषः । "अवतु शोणिरसुता शशिभृतः प्रियतमा" उद्भ॰ । "अरिसमुदयादवतः" सप्तोदयः । "प्रविष्टोमिनमाविशुः" । य॰ २३,२८, तत्र तर्पणे "न मामवति सद्दीपा रत्नसूरपि मेदिनी" रघुः । रक्षणे "यदाविथ सख्रीयतो यदाविथ" ऋ॰ १,१३१,५, "आविथ रक्षसि अन्तत तपर्यसि" भा॰ गतौ च आनो "वर्हिः सदताविता" ७,५८,६, "अविता

आगच्छत्" भा०। भक्षणे च "प्रोषद्श्वो न यवसेऽविष्यन् यदा"। ७,३,२, "अविष्यन् भक्षयिष्यन्" भा० "हव्यविष्यन्तमेषु तिष्ठति" १,४८,२,"अविष्यन् भक्षयिष्यन्" भा० एवमन्यार्थेष्वूदाहार्य्यम् ।

**अव** अव्य० अव–अच्। १निश्चये,२व्याप्तौ,३अनादरे,४असाकल्ये ५आलम्बने,६शुद्धौ,७परिभवे,८नियोगे,९निम्नतायां च । अयं चादिः प्रादिश्च "अव ज्ञानावज्ञालम्बशुद्धीषदर्थव्याप्ति पराभवातियोगेषु" गण०र० ज्ञाने अवगतोऽर्थः। अवज्ञायामवजानाति । आलम्बने आलम्ब्य यष्टिं गच्छति शुद्धौ अवदातम् । ईषदर्थे अवहन्ति अल्पं हन्ति, व्याप्तौ अवकीर्णः । परिभवे अवज्ञन्ति । अतियोगे अवघात इत्युदाहृतञ्च । अनादरे "अवजानासि मां यस्मात्" रघुः अवमानः । व्याप्तौ अवकाशः अस्यां व्याप्तौ न सर्व्वतः प्रवेशः इति तस्य व्याप्त्यर्थकता । अवगाहते । निश्चये अवगच्छति अवसायः अवधारयति। निम्नतायाम् अवनमति अवतरति अवक्षिपति अवाचीनः इत्यादि । असाकल्यमीषदर्थः । व्रीहीनवहन्ति अवघातश्च वितुषीकरणार्थ एकदेशमात्रे घातः न तु सर्व्वावयवे इति असाकल्यद्योतकता पराभवे यथा अवहन्ति पराभवतीत्यर्थः नियोगे अवक्लृप्तिः "एवेचानियोगे" वा० अनियोगोऽनवक्लृप्तिः सि०कौ अवकल्पते । अस्य वातौ लोपः वगाह्यः । "अवादयः क्रुष्टाद्यर्थे तृतीयया" वा० उक्तेः क्रोशार्थेऽपि अवक्रुष्टं कोकिलया अवकोकिलः ।

**अवकट** अव+स्वार्थे कटच् । १अवगताद्यर्थे अतिशयिताधरे ततः स्वार्थे कन् तत्रैव । [पु० ।

**अवकम्पित** अव+कपि कर्त्तरि–क्त । १विचलिते २वृक्षभेदे

**अवकर** पु० अव+कृ–अप्। १उपहृतौ "श्रोभानवकरगन्धहि" ता०ब्रा० "अवकर उपहृतिः" भा० । २सम्मार्ज्जन्यादिक्षिप्ते धूल्यादौ । "अवकरशोधनेन" ५,१२४,मनुष्या०कृत्य० ।

**अवकर्षण** न० अव+कृष–ल्युट् । बलपूर्ब्बकाकर्षणे स्थानान्तरनयनार्थं बलेनाकर्षणे ।

**अवकलित** त्रि० अव+कल–क्त । १दृष्टे २ज्ञाते ३स्वीकृते च

**अवका** स्त्री अव–प्रहृणे कर्म्मणि क्वुन् क्षिपका० न इत्त्वम् । शैवाले "तदु' करोत्यवकामुपदधाति अवकाभिः प्रच्छादयति आपोवा वा अवकाः" शत०ब्रा० "अरत्निमात्रेऽपादां दक्षिणेनावकाञ्चपरिष्टाच्च" कात्या० १७,४,२८ "अवकासु शैवालेषु कर्क०। "भण्डुकावकावेतसशाखावेण्या ब्रह्मावकर्षति" का० १,२,१०, ।

**अवकाश** पु० अव+काश–घञ् । अवस्थितियोग्यतासम्पादके काले, देशे च । तत्र कालिकोऽवकाशः क्रियान्तरस्थितियोग्यतासम्पादकः स चावसर इत्युच्यते, "हत्यावकाशे रुचि संकृतम्" इति भट्टिः । द्रव्यान्तरस्थितिप्रवेशयोग्यतासम्पादको दैशिकः स चावकाश इत्येव "अवकाशं किलोदन्वानिति" रघुः ।

**अवकीर्ण** त्रि० अव+कृ–क्त । १व्याप्ते "चतुष्कपुष्पप्रकारावकीर्णः कुमा०। २चूर्णिते३ध्वस्ते च" भावे क्त। ४ "अवकीर्णित्वे, ब्रह्मचर्य्यव्रतभङ्गे । अवकीर्णनिमित्तं तु ब्रह्महत्याव्रताचरेत्" । प्रायश्चि० ।

**अवकीर्णिन्** पु० अवकीर्णमनेन इष्टा० इनि । अवशस्ते ब्रह्मचारिणोऽयदुव्रतमुक्तं स्त्रीसङ्गमादिवर्जनं तस्य भ्रंशेऽवकीर्णता । "अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे । पाकयज्ञविधानेन नैर्ऋतं निशि याजयेत्" प्रायश्चि० "कुशीलवोऽवकीर्णी च वृषलीपतिरेव च" मनुः अवकीर्णिलक्षणञ्च—"कामतोरेतसः सेकं व्रतस्थस्य द्विजन्मनः । अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः "अवकीर्णी भवेद् गत्वा ब्रह्मचारी तु योषितम् । गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति" या० स्मृ० स्त्रियं विनाऽपि रेतसः स्रावे व्रतलोपः "ब्रह्मचारी चेत् स्त्रियमुपेयात् अरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत नैर्ऋतं वा चरुं निर्वपेत् तत्र जुहुयात् कामाय स्वाहा कामकामाय स्वाहा निर्ऋत्यै स्वाहा रक्षोदेवताभ्यः स्वाहेति एतदेव रेतसः प्रयत्नोत्सर्गे" इति वशिष्ठोक्तेः तेन कामतोरेतस उत्सर्गेऽपि अवकीर्णित्वम् । अकामतस्तु नावकीर्णित्वं किन्तु प्रायश्चित्तान्तरं यथोक्तं मनुना "स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्" ।

**अवकुञ्चन** न० अव+कुञ्च–ल्युट्। १आकुञ्चने आकुञ्चनञ्च सत् स्वावयवानामारम्भकसंयोगेषु परस्परमवयवानामनारम्भकसंयोगोत्पादकं वक्राद्यवयवकौटिल्योत्पादकं च कर्म्म यतो भवति सङ्कुचति पद्मं सङ्कुचति वस्त्रं सङ्कुचति चर्म्मेति प्रत्ययः, तादृशं कर्म्म" वै०सू०उ० । करणे ल्युट् "अतऊर्द्ध्वं सर्वेदनाभवन्ति उपक्रम्य" "तोदनभेदनस्तम्भनस्वापावकुञ्चनाकुञ्चिका भवन्तीति" सुश्रुतोक्ते २रोगभेदे च ।

**अवकीर्णिव्रतम्** अवकीर्णिनो व्रतम् प्रायश्चित्तम्। "अथातोऽकार्णि प्रायश्चित्तं व्याख्यास्यामः ब्रह्मचारी यद्यवकीर्य्येत स चतुर्थकालमब्दं भैक्ष्यं चरेदेवं पूतो भवतीति"

शातातपोक्ते "एतस्मिन्नेव संप्राप्ते वसित्वा गर्द्दभाजिनम्। सप्तागारं चरेत् भैक्ष्यं स्वकर्म्म परिकीर्त्तयन्। तेभ्यो लब्धेन भैक्ष्येण वर्त्तयन्नेककालिकम्। उपस्पृशंस्त्रिषवणमेनस स विशुध्यति" मनूक्ते अवकीर्णिव्रतमुपक्रम्य "तत्र प्रायश्चित्तं महाव्याहृतिभिर्जुहुयात् ओङ्कारपूर्व्विकाभिः। संवत्सरं वा नक्तं भैक्ष्यं चरेत् चतुर्थकाले मितभुग्गायत्रीं वत्सराज्जपेदिति" शङ्खलिखितोक्ते च "अवकीर्णिनिमित्तन्तु ब्रह्महत्याव्रतञ्चरेत्। खरचर्म्मवासा षण्मासांस्तथा मुच्येत किल्विषात्" अङ्गिरसोक्ते च व्रतभेदे। एतस्य विषयभेदः प्रायश्चित्तविवेकतोऽवसेयः।

**अवकुटार** त्रि० अव+स्वार्थे अतिशये वा कुटारच्। अवनतनासादौ १अवनतार्थे २वैरूप्ये न०।

**अवकृष्ट** त्रि० अव+कृष-क्त। १दूरीकृते २अपसारिते, ३बहिष्कारिते च। अवकृष्टं स्वक्षावकरादेरवकर्षणमस्त्यस्य अर्श० अच्। ४स्वक्षावकरमार्जके दासभेदे पु०। "पणो देयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम्। षाण्मासिकस्तथाच्छादो धान्यद्रोणस्तु मासिकः" मनुः। "अवकृष्टस्य स्वक्षादिसंमार्जकोदकादिवाहादेः कर्म्मकरस्य कुल्लू०"।

**अवकृष्य** त्रि० अव+कृष कर्म्मणि क्यप्। १आकर्षणीये २दूरीकार्य्ये अव+कृष ल्यप्। ३आकृष्येत्यर्थे अव्य०।

**अवक्लृप्ति** स्त्री अव+क्लृप-क्तिन्। सम्भावनायाम् "अनवक्लृप्त्यमर्षयोः" पा० "अनवक्लृप्तिरसम्भावना" सि० कौ० "केव भोक्ष्यसे अनवक्लृप्तावेव" सि० कौ०।

**अवकेशिन्** त्रि० अवच्युतं कं सुखं यस्मात् प्रा० ब० अवकं फलशून्यतामोषितं शीलमस्य अवक+ईश-णिनि। १अफले वृक्षे। अवनताः केशा विद्यन्ते अस्य इनि। २अल्पकेशयुक्ते। [लया क्रुष्टे।

**अवकोकिल** त्रि० अवक्रुष्टः कोकिलया प्रा० स०। कोकि-

**अवक्तव्य** त्रि० न वक्तव्यः। १वक्तुमनर्हे अश्लीलादौ वाक्ये २निषिद्धवचने ३मिथ्याभूते च।

**अवक्र** त्रि० नास्ति वक्रं यत्र। सुश्रुतोक्ते शोणितादिनिःसारणसुखमूर्य्ये व्रणादौ "अन्तःपूयेष्ववक्रेषु तथैवोत्सङ्गवत्स्वपि। नेत्रवर्त्मगुदाद्यास्यनाड्योऽवक्राः समीरिताः"।

**अवक्र** त्रि० विरोधे न०त०। वक्रताविरोधिनि सारल्ययुक्ते।

**अवक्षिन्** त्रि० अव+क्षप णिनि उ०। अपकर्षणशीले "अवक्षिणं वृषभं यथा जुरम्" ऋ०८,१,२, "अवक्षिणमपकर्षणशीलम्" भा०।

**अवक्रन्द** त्रि० अव+क्रन्द कर्त्तरि अच्। १नीचैः क्रन्दनशीले "क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा" य० २२,७। भावे घञ्। नीचैः २क्रन्दने पु०। भावे ल्युट् अवक्रन्दनमप्यत्र न०।

**अवक्रम** पु० अव+क्रम-भावे घञ्। अवक्रमणे निम्नगतौ।

**अवक्रय** पु० अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन अव+क्री-अच्। ग्राह्यस्य प्रतिरूपत्वेन देये १मूल्ये २भाटके च भाटकञ्च गृहवस्त्रादिवस्तुनः एतावत् उपभोगे धनं ग्राह्यमिति समयेन परायत्तीकरणम् करणेऽच्। ३तत्साधने द्रव्ये शुल्कादिस्थाने वणिग्भिर्न्देयाय देये (माहुल) ४करे च।

**अवक्रान्ति** स्त्री अव+क्रम-क्तिन्। निम्नक्रमणे अधोगमने।

**अवक्रुष्ट** त्रि० अव+क्रुश-कर्म्मणि क्त। कृताक्रोशे यमुद्दिश्य क्रोशः कृतस्तस्मिन्। "अवक्रुष्टः कोकिलया" सि० कौ०।

**अवक्लिन्न** त्रि० अव+क्लिद-क्त। पाकादधस्तात् १क्लिन्ने (पचा) १फलादौ जलादिना २अल्पार्द्रे च। पूर्व्वं पक्वं ततोऽवक्लिन्नं राज० पूर्व्वनि०। अवक्लिन्नपक्वम्।

**अवक्लेद** पु० अव+क्लिद-भावे घञ्। पाकोत्तरं क्लेदे (पचाइओया) क्लेदश्च जलविशेषसंयोगेन वस्तुनो नाशजनकः अवयवसंयोगशैथिल्यसंपादको व्यापारः।

**अवक्षय** पु० अव+क्षि-भावे अच्। वृद्ध्युत्तरं नाशोन्मुखावस्थायां भावविकारभेदे।

**अवक्षयण** न० अव+क्षि-णिच्-भावे ल्युट्। अवक्षयसाधने व्यापारभेदे। "ब्राह्मणा उक्थ्यस्यावक्षयणमकुर्वत" शत० ब्रा०। [यस्यावक्षेपः कृतस्तस्मिन्।

**अवक्षिप्त** त्रि० अव+क्षिप-कर्म्मणि क्त। कृतावक्षेपे वस्तुनि

**अवक्षीण** त्रि० अव+क्षि-क्त। १अवक्षयप्राप्ते विनाशोन्मुखे पदार्थे। भावे क्त। २अवक्षये न०।

**अवक्षुत** त्रि० अव+क्षु-क्त। उपरि कृतक्षुते। यस्योपरि क्षुतं कृतं तस्मिन्। "द्विषदन्नं नगर्य्यन्नं पतितान्नमवक्षुतम्" मनुः।

**अवक्षेपण** अव+क्षिप-भावे ल्युट्। अधःसंयोगानुकूले क्रियाभेदे। "मुसलमवक्षिपामीतीच्छाजनितेन प्रयत्नेन प्रयत्नवदात्मसंयोगरूपादसमवायिकारणात् हस्ते क्रिया जायते ततोऽवक्षेपणविशिष्टहस्तनोदनादसमवायिकारणात् हस्तसंयुक्तमुसलेऽप्यवक्षेपणं कर्म्म युगपदा जायते" वै० सू० उ० उक्तं भेयम्। "उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि" वैशे० "उत्क्षेपणं तथावक्षेपणमाकुञ्चनं तथा। प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च" भाषा०। भावे घञ्। अवक्षेपोऽप्यत्रार्थे। करणे ल्युट् ङीप्। २श्लाघायामौषधौ स्त्री।

**अवखात** न० निम्नः खातः। गभीरगर्त्ते।

**अवखाद** पु० अवज्ञातः निन्दितः खादः खाद्यम् प्रा०स०। निन्दितखाद्ये "नावावखादो अस्ति वः" ऋ० १,४६,४ "अवखादः अवज्ञातः खादः जुगुप्सितहविर्विशेषः" भा०

**अवगणन** न० अव+गण–भावे ल्युट्। १अवज्ञायां २निन्दने ३तिरस्कारे ४परिभवे च। [च ३तिरस्कृते ४पराभूते च।

**अवगणित** त्रि० अव+गण–कर्म्मणि क्त। १अवज्ञाते २निन्दिते

**अवगण्ड** पु० अव+गम+ड डकारस्य नेत्त्वम्। गण्डस्थव्रणभेदे गण्डोपरिजाते रोगभेदे (गरगण्ड)।

**अवगत** त्रि० अव+गम–क्त। १निम्नगते, २ज्ञाते च। "तस्मान्नावगतब्रह्मात्मभावस्य यथापूर्व्वं संसारित्वं यस्य तु यथापूर्व्वं संसारित्वं नासावगतब्रह्मात्मभाव" इति शा० भा०।

**अवगति** स्त्री अव+गम–भावे क्तिन्। १ज्ञाने २निश्चयात्मकज्ञाने च "आवगतिपर्य्यन्तं ज्ञानं सन्प्रत्ययवाच्याया इच्छायाः कर्म्मफलविषयत्वादिच्छायाः ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म" "ब्रह्मावगतिर्हि पुरुषार्थः" ब्रह्मावगतिस्त्वप्रतिज्ञातेति" च शा०भा०। [उक्थ०।

**अवगथ** पु० अव+गा–कर्त्तरि थ नि०ह्रस्वः। प्रातःस्नाते

**अवगदित** त्रि० अव+गद–कर्म्मणि क्त। १अपवादयुक्ते २निन्दिते

**अवगम** पु० अव+गम–भावे घञ्। १ज्ञाने २निश्चयात्मकज्ञाने "प्रत्यक्षावगमं धर्म्यं सुसुखं कर्त्तुमव्ययम्" गीता।

**अवगाढ** त्रि० अव+गाह–क्त। १निबिडे, २अन्तःप्रविष्टे, ३निमग्ने। यस्मिन् अवगाढः कृतस्तस्मिन् ४जलादौ ५विषयभूते पदार्थे च। यथा घटज्ञानेन घटत्वविशिष्टघटात्मकसंसर्गश्च अवगाढः। अस्य वा अल्लोपे वगाढोऽप्युक्तार्थेषु

**अवगाह** पु० अव+गाह–घञ्। १स्नाने, २अन्तःप्रवेशे ३ज्ञानेन विषयीकरणे च। आधारे घञ्। ४स्नानस्थाने। वा अल्लोपे वगाहोऽप्युक्तार्थे। ल्युटि। अवगाहनमप्यत्र न०।

**अवगाह्य** त्रि० अव+गाह–कर्म्मणि ण्यत्। १अवगाहनादियोग्ये जलादौ २अन्तःप्रवेश्ये ३विषयीकार्य्ये च। अव+गाह–ल्यप्। ४अवगाहनं कृत्वेत्यर्थे अव्य०।

**अवगीत** त्रि० अव+गै–क्त। १निर्व्वादे जनापवादे २दुष्टे ३गर्हिते ४मुहुर्दृष्टे मेदि०भावे क्त। ४निन्दायाम् ५लोकापवादे च न०।

**अवगुण** पु० अव+गुण–क। दोषे। "परावगुणसम् अन्यदोषमिति किरा० १३।४८। श्लोकव्या० मल्लि०।

**अवगुण्ठन** न० अव+गुण्ठ–ल्युट्। योषितां १शिरःप्रावरणक्रियायाम्। करणे ल्युट्। २मुखाद्याच्छादने वस्त्रे। "अवगुण्ठनसंवीता कुलजाभिसरेद्यदि" सा०द० "चण्डालतिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः" सा०द०। "स्रस्तावगुण्ठपटलाञ्चललक्ष्यमाणः" माघः। ३आच्छादनमात्रे च "हुमित्यवगुण्ठनं कृत्वेति" तन्त्रम्।

**अवगुण्ठनमुद्रा** स्त्री अवगुण्ठनाय मुद्रा। "सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्ज्जनी। अवगुण्ठनमुद्रेयमभितो भ्रमिता मता" तन्त्रसारोक्ते मुद्राभेदे।

**अवगुण्ठिका** स्त्री अवगुण्ठयति आवृणोति अव+गुण्ठ-ण्वुल् स्त्रीत्वात् टापि अत इत्वम्। स्त्रीणां १मुखावरणशाट्याम्, २जवनिकायाञ्च। अव–गुण्ठ–भावार्थे ण्वुल्। ३अवगुण्ठनक्रियायाम्।

**अवगुण्ठित** त्रि० अव+गुण्ठ–क्त। १कृतावगुण्ठने आवृते "रजनीतिमिरावगुण्ठिते" कुमा०। २चूर्णिते च।

**अवगुम्फित** त्रि० अव+गुन्फ–कर्म्मणि क्त। ग्रथिते।

**अवगूर्य्य** अव्य० अव+गुरी–उद्यमे ल्यप्। वधार्थं दण्डमुद्यम्येत्यर्थे "अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने" मनुः।

**अवगृह्य** न० अव+ग्रह–क्यप्। व्याकरणसिद्धे प्रगृह्यसंज्ञके पदे। पाणिनीये प्रगृह्यमिति संज्ञा प्रातिशाख्ये तु अवगृह्यमिति संज्ञा। यस्यावग्रहः विशेषेण ग्रहः विच्छेदवशेन भवति न सन्धिकार्य्यं तत् पदं प्रगृह्यमवगृह्यमिति च भण्यते। यथा हरी एतौ इत्यादि।

**अवगोरण** न० अव+गुर–उद्यमे ल्युट्। वधायास्त्राद्युद्यमे। दण्डनिपातनप्रायश्चित्तेन नान्तरीकतया प्रसङ्गेन अवगोरणनिमित्तप्रायश्चित्तस्य सिद्धिः" प्रा० वि०।

**अवग्र(ग्रा)ह** पु० अव+ग्रह–घ १घञ् वा। १वृष्टिजलप्रतिबन्धे "वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम्" "रावणावग्रहक्लान्तमिति वागमृतेन सः"। नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे" इति च रघुः २अनादृष्टौ च "इयेष सीतां तदवग्रहक्षताम्" कुमा०। ३निग्रहे "स्वयं विधाता सुरदैत्यरक्षसामनुग्रहावग्रहयोर्यदृच्छया" माघः। व्याकरणोक्ते सन्धिराहित्यरूपे ४विच्छेदे "इन्द्रोऽसि विशौजाः य० १०, २८ मन्त्रे विड़ौजा इति प्राप्ते विशौजास्त्वान्इन्द्रसमतएव पदकारो नावग्रहं चकार" वेददी०। ५प्रतिबन्धमात्रे "अवग्रहभ्योऽप्यनवग्रहग्रहा यथा दिशा धावति वेधसः स्पृहा" नै०। ६गजकुम्भे हारा० ७गजललाटे मेदि०। ८स्वभावे त्रिका० अवग्राहस्तु ९शापे। [मेदि० २ज्ञाने च।

**अवग्रहण** न० अव+ग्रह–भावे ल्युट्। १प्रतिरोधे २अनादरे

**अवघट्ट** पु० अव+घट्ट–आधारे घञ्। भूमिरन्ध्रे। छिद्रे त्रिका०।

करणे घञ् । २घरट्टे (याँता) पेषणयन्त्रभेदे । भावे घञ् । ३चालने घट्टनक्रियायाम् भावे ल्युट् । अवघट्टनं तत्रैवार्थे न० । "प्रदेशस्य बहुशोऽवघट्टनाद्योहि व्यथा" सुश्रुतः । युच् । तत्रैवार्थे स्त्री ।

**अवघट्टित** त्रि० अव+घट्ट–कर्म्मणि क्त । चालिते ।

**अवघर्षण** न० अव+घृष–ल्युट् । अधःस्थापयित्वा १घर्षणे सर्वतो २ घर्षणे "दुर्न्यासात् व्रणवर्त्माविघर्षणम्" सुश्रुतः ३मार्जने च मलावघर्षणम् पात्रावघर्षणम्" सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणात्" या० स्मृ० ।

**अवघात** पु० अव+हन–घञ् । १अवहनने तण्डुलादेर्वितुषी-करणव्यापारे । अवघातश्च व्रीहिसंस्कारार्थः व्यापारभेदः तदकरणे यज्ञासिद्धिः "व्रीहीन् प्रोक्षति व्रीहीनवहन्ति" इत्यादौ प्रोक्षणादिजन्यः । कालान्तरभाव्यवघातजनको व्यापारो व्रीहिनिष्ठः कल्प्यते प्रोक्षिता व्रीहय एवावघाताय कल्प्यन्ते" कुसु० तथाचावघातजन्यः- संस्कारः व्रीहिनिष्ठ इति मीमांसकाः । नैयायिकास्तु "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिषु"कुसु० उक्तेः पुरुषएव संस्का-रोऽदृष्टविशेषो जन्यत इत्याहुः अवघातश्च धर्म्मिणि सत्येव तदीयवितुषीकरणरूपपरिष्काररूपः २हननमात्रे ३ताडन-मात्रे च "कर्णावघातैरपि ताड्यमाना दूरीकृताकरि-वरेण" "अधरे दत्तदन्तावघाते" सा०द० ।

**अवघातिन्** त्रि० अव+हन–णिनि । अवघातके स्त्रियां ङीप् ।

**अवघुष्ट** त्रि० अव+घुष–क्त । घोषणया प्रचारिते ।

**अवघूर्णन** न० अव+घूर्ण–भ्रमणे भावे ल्यु । सर्व्वतोभ्रमणे ।

**अवघोटित** अव+घुट–परिवर्त्ते क्त । सर्व्वतोवेष्टिते सम-न्तात् परिवृते । सह "शिबिकया प्रासादवघोटितया स्वन-गरमनुप्राप्य" भा०व०प० । [युच् । अवघोषणाप्यत्र स्त्री ।

**अवघोषण** न० अव+घुष–भावे ल्युट् । सर्व्वजनज्ञानायोच्चैर्घोषणे

**अवघ्राण** न० अव+घ्रा–भावे ल्युट् । आघ्राणे "पिण्डपितृ-यज्ञवद्दानप्रभृति प्रागवघ्राणात्" का० २०५,११ "अवघ्रा-णमितरेषु"का०२२,१०,४। इदन्तु भोजनानुकल्पतया शिष्टै-रुक्तम् । अतएव श्राद्धशेषभोजनस्यावश्यकतया उपवास-दिने तदवघ्राणमात्रम् विहितम् "आघ्राय पितृसेवित-मिति" स्मृतेस्तथाचरणम् ।

**अवचक्षण** त्रि० अव+चक्ष–ल्यु । निन्दिताख्यानकर्त्तरि "कुत्साभीक्ष्ण्ययोरर्थे एतस्य तिङःपरत्वे अनुदात्तत्वम् ।

**अवचन** न० न वचनं कुत्सायां न०त० १निन्दायाम् । अभावे न०त० । २ वचनाभावे "प्रकृतौ चावचनात्" कात्या० । २०,७,२१, "अवचनेऽग्निष्टोमः" । कात्या० २२,१,२ । न०ब० । ३वचनशून्ये त्रि० "शकुन्तला साध्वसादवचना तिष्ठति" । शकु० ।

**अवचनीय** त्रि० वक्तुमनर्हः वच–अर्हार्थे अनीयर् न०त० । १वक्तुमनर्हे अश्लीलादौ शब्दे "वाद्येष्ववचनीयेषु तदेव द्विगुणं भवेत्" मनुः १वचनीयं निन्द्यम् न०त०। २निन्द्यभिन्ने त्रि०

**अवचय** पु० अव+चि–अच् । पुष्पफलाद्यादाने । "ततः प्रवि-शतः कुसुमावचयमभिनयन्त्यौ सख्यौ" शकु० ।

**अवचाय** पु० अव+चि "हस्तादाने चेरस्तेये" पा० अचोबाधको घञ् । हस्तेन पुष्पफलाद्यादाने । "अविरतकुसुमा-वचायखेदा" माघः । अव+चि–णमुल् अवचायम् । अभी-क्ष्णमवचित्येत्यर्थे अव्य० ।

**अवचारण** त्रि० अव–चर–णिच्–ल्युट् । १प्रचारणे सुश्रुतोक्ते २क्षारपाकविधौ च "विशेषक्रियावचारणाच्च" "चित्राणि व्यहणं जातीः शोधनं सावचारणम्" "शुक्रदोषक्षयकरं यथास्वमवचारणम्" सुश्रुतः ।

**अवचूड़(ल)** पु० अवनता चूड़ाग्रं यस्य वा डोलः । १ध्वजा-धोबद्धे वस्त्रे । "पिच्छावचूड़कलनामिवोरः" "पिच्छाव-चूड़मनुमाधवधाम जग्मुः" इति च माघः "अस्योच्चूडाव-चूड़ाख्यौ मूर्द्धाधोमुखचूड़योरिति" हला० उक्तेः २ध्वजा-धोमुखाङ्गे चामरादौ च ।

**अवचूर्णन** न० सुश्रुतोक्ते १व्रणरोगभेदे । "तत्र व्रणस्य षष्टिरु-पक्रमा भवन्ति" इत्युपक्रम्य "सर्पिस्तैलं रसक्रियावचूर्णन-व्रणधूपनम्" इत्युक्त्वा "तेषु कषायो वर्त्तिः कल्कः सर्पि-स्तैलं रसक्रियावचूर्णनमिति शोधनरोपणानीति" । अव+चूर्ण–भावे ल्युट् । २पेषणे । चूर्णैरध्वंसते अवचूर्ण-यति अव+चूर्ण+अवध्वंसार्थे णिच्–भावे ल्युट् । ३चूर्णेनावध्वंसे ।

**अवचूर्णित** त्रि० अव+चूर्ण–पेषे कर्म्मणि क्त । १पिष्टे । अवचूर्णयतेर्णिभधातोः क्त २चूर्णेन नावध्वस्ते ।

**अवचूल** न० अवचूड़वत् विग्रहः । ध्वजाधःस्थे १चामरादौ ध्वजाद्यङ्गे "दिवसकरवारणस्यावचूलचामरकलाप इव" काद० । [चामरे त्रिका०

**अवचूलक** न० अवचूलमिव इवार्थे कन् संज्ञायां वा कन् ।

**अवच्छिन्न** त्रि० अव+छिद्–क्त । अवच्छेदः विशेषणोपा-धिना विशेषकरणम् । उपाध्यादिना विशेषिते अव-च्छेदकतानिरूपिते च "प्रतियोग्यसमानाधिकरणयत्-समानाधिकरणात्यन्ताभावप्रतियोगिताच्छेदकावच्छिन्न" यत्र

"भवतीति" चिन्तामणिः। अवच्छेदकता हि स्वरूपसम्बन्धविशेषः अनतिरिक्तवृत्तित्वं वा तन्निरूपितत्वमवच्छिन्नत्वं यथा दण्डादीनां घटकारणतावच्छेदकं दण्डत्वादिकं तस्य तदतिरिक्तदेशेऽवृत्तित्वात् एवं घटादीनामत्यन्ताभावप्रतियोगितायाः तदतिरिक्तदेशेऽवृत्तित्वात् घटत्वादिकमवच्छेदकम् अतः प्रतियोगितायां घटाद्यवच्छिन्नत्वम्। परिमाणादौ च अवच्छिन्नत्वमियत्ताकरणम् यथा द्रोणावच्छिन्नो व्रीहिः द्रोणपरिमाणेन कृतपरिच्छेदो व्रीहिरित्यर्थः। सीमाकरणमप्यवच्छेदः। मठावच्छिन्न आकाशः मठाकाशः कर्णशष्कुल्यवच्छिन्न आकाशः श्रोत्रमित्यादि। एवमन्तःकरणावच्छिन्नं चैतन्यं जीव इति वेदान्तिनः।

**अवच्छिन्नवाद** पु॰ अवच्छिन्नतया अन्तःकरणावच्छिन्नतया जीवस्य वादो व्यवस्थापनम्। वेदान्तिमतप्रसिद्धे चैतन्यस्य अन्तःकरणावच्छिन्नतया व्यवस्थापके मतभेदे। तथा हि तेषां मतद्वैधम् केचित् अन्तःकरणे प्रतिबिम्बितं चैतन्यं जीव इति प्रतिपेदिरे केचिच्च तदवच्छिन्नं चैतन्यं जीव इति। तत्र नीरूपस्य चैतन्यस्यान्तःकरणे प्रतिबिम्बासम्भवेन प्रतिबिम्बस्य च मिथ्यात्वेन जीवस्य सत्यत्वानुपपत्तेः बन्धमोक्षयोः सामानाधिकरण्याभावापत्तेः प्रतिबिम्बवादं दूषयित्वाऽवच्छिन्नवादं समर्थयाञ्चक्रिरे। यथा च नैयायिकादीनामेकस्यापि नभसः कर्णशष्कुल्यादिभेदेन उपाधिकृतं नानात्वं न वस्तुकृतमेवमेकस्यापि चैतन्यस्यान्तःकरणोपाधिभेदेनावच्छिन्नतया नानात्वं तेन "तद्गुणसारत्वात्" शा॰ सू॰ "घटसंवृत आकाशे नीयमाने यथा घटे। घटो नीयेत नाकाशस्तद्वज्जीवो नभोपमः" इत्युक्तेश्च जीवस्य न स्वत इहलोकपरलोकगामित्वमपि तु बुद्धिरूपाधिभेदेन तथा व्यवहारः अतो न बन्धमोक्षव्यवस्थानुपपत्तिः यस्मिंस्तूपाधौ अज्ञानाधीना संसारप्रवृत्तिस्तस्य जीवभावात्मकतया बन्धः, यत्र च तन्निवृत्तिः न तत्र तथा, किन्तु मोक्षः। विस्तरस्त्वाकरे।

**अवच्छुरित** न॰। अव+छुर–भावे क्त। १अट्टहासे–स्वार्थे कन् तत्रैव। कर्मणि क्त। २मिश्रिते त्रि॰।

**अवच्छेद** पु॰ अव+छिद–भावे घञ्। १छेदने २सीमाकरणे ३विशेषकरणे ४अवधारणे "शब्दार्थानामवच्छेदे विशेषस्मृतिहेतवः" वाक्य प॰ ५इयत्ताकरणे ६व्याप्तौ च। अवच्छिद्यतेऽनेन करणे घञ्। इयत्ताकरणसाधने ७एकदेशे अवयवादौ। यः कश्चित् पदार्थः कस्मिंश्चिदाधारे एकदेशे तिष्ठति तत्रैव प्रदेशान्तरे चेन्न तिष्ठतीति स अव्याप्यवृत्तिः तस्याव्याप्यवृत्तितायाः निरूपकोऽवयवादिः। यथा वृक्षे अग्रदेशे कपिसंयोगः मूलदेशे तदभावः अतः कपिसंयोगः अव्याप्यवृत्तिः तादृशाव्याप्यवृत्तिताया नियामकश्च मूलादिप्रदेशः तत्रावच्छेदशब्देनाभिधीयते। तादृशावच्छेदश्च द्विविधः देशः कालश्च। तत्र देशस्तु कालविशेषे तदभावात् कालएव तत्राव्याप्यवृत्तितायानियामकः। यथा आत्मनि जाग्रदादौ ज्ञानं सुषुप्तौ तदभावः। देशरूपस्तूक्तः। अवच्छेदावच्छेदेन साध्यसिद्धौ सामानाधिकरण्यसिद्धिः प्रतिबन्धिका इति शिरोमणिः। अवच्छेदाः यावन्तः साध्यसिद्धौ प्रदेशास्तावतामेवावच्छेदेन साध्यसम्बन्धव्यापकत्वेनेति तदर्थः।

**अवच्छेदक** त्रि॰ अवच्छिनत्ति अव+छिद–ण्वुल्। १छेदके २इयत्ताकारके ३सीमाकारके ४अवधारके ५अव्याप्यवृत्तितानिरूपके च। अवच्छिन्नशब्दे विवृतिः। "प्रतियोगितावच्छेदकावच्छिन्नमिति" चिन्तामणिः। अवच्छेदकत्वं च अवच्छेदके इव तदवच्छेदकेऽपि स्वीक्रियते यथा वह्निमान् पर्वत इति बुद्धौ वह्न्यभाववान् पर्वत इति निश्चयः प्रतिबन्धकः तत्र प्रतिबन्धकतावच्छेदकं निश्चयत्वमिव तत्तद्विषयताऽपि तदवच्छेदिका तथा च वह्नित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानत्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यतासमानाधिकरणप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वे निश्चयत्वस्येव तत्तद्विषयताया अपि तत्प्रतिबन्धकतावच्छेदकत्वं तथा तादृशज्ञानत्वस्येव तत्तद्विषयताया अपि प्रतिबध्यतावच्छेदकत्वम्। इयांस्तु भेदः अनुगम्यमानजातेः स्वरूपतोऽवच्छेदकत्वं न तदवच्छेदकताया अवच्छेदकमस्ति तेन घटवद्भूतलमिति बुद्धौ घटत्वनिष्ठप्रकारतावच्छेदकताया नान्यदवच्छेदकम् तथा च यथा घटनिष्ठप्रकारताया अवच्छेदकम् घटत्वम् एवं घटत्वनिष्ठप्रकारतायानान्यदवच्छेदकमतस्तन्निरवच्छिन्नावच्छेदकता अननुगम्यमानेष्वनुगम्यमानजातेर्न स्वरूपतोऽवच्छेदकत्वं तेन घटत्ववान् देश इत्यादौ घटत्वप्रकारताया अवच्छेदकमस्तीति। अत्रायं विशेषः धर्म्यंशे भासमानः धर्मः विशेष्यतावच्छेदकः प्रकारांशे भासमानः प्रकारतावच्छेदक एवं सर्वत्र। किन्तु प्रतियोग्यंशे भासमानधर्मस्य न प्रतियोगितावच्छेदकत्वमपि तु अतिप्रसक्त्याद्यनापादकस्यैव धर्मस्य तथात्वं यथा कम्बुग्रीवादिमान्नास्ति इत्याद्यभावबुद्धौ घटत्वस्यैव प्रतियोगितावच्छेदकत्वम् "सम्भवति लघौ

धर्म्मे गुरौ तदभावात्” दीधित्युक्तेः भक्ष्यतावच्छेदकत्व विषयतावच्छेदकत्ववत् गुरुधर्म्मस्यापि स्वीकृतमाकरे ।

**अवच्छेदकत्वनिरुक्ति** स्त्री रघुनाथशिरोमणिकृते अवच्छेदकतापदार्थनिर्णायके अनुमानखण्डान्तर्गते ग्रन्थभेदे ।

**अवच्छेद्य** त्रि॰ अव+छिद्-ण्यत् । १छेदनार्हे २अवधार्य्ये विशेषणीये ३अवच्छेदार्हे च पदार्थे यथा दण्डत्वेनावच्छेद्या घटादिकारणता घटत्वेनावच्छेद्या घटप्रतियोगिता ।

**अवजय** पु॰ अव+जि-अच् । पराजये “येनेन्द्रलोकावजयाय दृप्तः” रघुः ।

**अवज्ञा** स्त्री अव+ज्ञा-अङ् । अनादरे । “आत्मन्यवज्ञां शिथिलीचकार” रघुः । “गत्वर्थमन्यतेर्द्वे चेष्टावज्ञयोः” मुग्ध॰ । “अविज्ञावज्ञेयं परितपति नोच्चैरपि बुधम्” उद्भटः ।

**अवज्ञात** त्रि॰ अव+ज्ञा क्त । १अनादृते २तिरस्कृते ३कृतावमाने च

**अवज्ञान** न॰ अव+ज्ञा-भावे ल्युट् । १अवमाने २तिरस्कारे ३अनादरे “ईप्सितं तदवज्ञानात् विद्धि सार्गलमात्मनः” रघुः

**अवज्ञेय** त्रि॰ अव+ज्ञा-कर्म्मणि यत् । १अनादरणीये २तिरस्कार्य्ये “विप्रा हि क्षत्रियात्मानो नावज्ञेयाः कदाचन” या॰स्मृ॰ ।

**अवट** पु॰ अव+अटन् । १गर्त्ते, २कूपे । “रक्षसां गतसत्त्वानामेष धर्म्मः सनातनः । अवटे ये निधीयन्ते” रामा॰ । “भूतोदनो निवेद्यश्च स्कन्दापस्मारिणोऽवटे” सुश्रु॰ “अवटेष्ववनयति” शत॰ब्रा॰ । ३देहस्थनिम्नस्थाने कण्ठमूलादौ च “अवटश्चैवमेतानि स्थानान्यत्र शरीरके” या॰स्मृ॰ “शरीरे यः अवटः कश्चिन्निम्नोदेशः कण्ठमूलकक्षादि” मिता॰ ४ऐन्द्रजालिकजीविकावति च गर्गा॰ यञ् आवट्यः । अवटभवे त्रि॰ । [आधारे ल्युट् । नरकभेदे नरकशब्दे विवृतिः ।

**अवटनिरोधन** पु॰ अवटे गर्त्ते निरुध्यतेऽत्र अव+नि+रुध

**अवटि** स्त्री अव+अटि । १गर्त्ते २कूपे च वा ङीप् अवटीत्यपि ।

**अवटीट** त्रि॰ अवनता नासिका प्रा॰स॰ नतार्थे नासायाः टीटादेशः अर्श आदित्वादच् । (थाँदा) नतनासिके जने ।

**अवटु** पु॰ अव+टीक-मितद्वा॰डु । १गर्त्ते, २वृक्षभेदे, ३कूपे च । ४ग्रीवापश्चाद्भागे, ५ग्रीवाया उन्नतभागे च स्त्री ४देहस्थे निम्नदेशे “अवटुश्चैवमेतानि स्थानान्यत्र शरीरके” इति या॰स्मृ॰ पाठान्तरम् “अवटावघ कृन्तेत मन्दस्रोतः मयेन्नरम्” सुश्रु॰ । न॰त॰ ५वटुभिन्ने पु॰ ।

**अवटुज** पु॰ अवटौ जायते जन-ड ७त॰ । शिरःस्थचरमकेशे घाटास्थकेशे “रागवानवटुजेष्वलक्ष्य” माघः ।

**अवटोदा** स्त्री न॰त॰ अवटस्य कूपस्योदकमिव उदकमस्याः उदादेशः । भारतवर्षीये नदीभेदे ।

**अवडङ्क** पु॰ अवगतो डङ्कः शब्दो यस्मात् । हट्टस्थाने जटा॰ ।

**अवडीन** न॰ अव+डी-भावे क्त । अवरोहणरूपे पक्षिगतिभेदे ।

**अवत** पु॰ अव-अटच् वेदे पृ॰ टस्य तः । अवटरूपे कूपादौ निरु॰ “सिञ्चमवतम्” ऋ॰१,१२०,२ “अवतमवटमिति” भा॰ “अवते न कोशम्” ऋ॰४,१७,१६ ।

**अवतंस** पुंन॰ अव+तनुस-घञ् । १कर्णपूरे, २शिरोभूषाभेदे च । “कर्णावतंसद्विगुणावलम्बम्” “स्वाङ्गनशोभक्षलावतंसाः” “गणा नामेरुप्रसवावतंसाः” इति च कुमा॰ ।

**अवतंसित** त्रि॰ अव+तनुस-क्त । भूषिते “समदनमवतंसितेऽधिकर्णम्” माघः । वा अल्लोपे वतंसितोऽप्यत्र ।

**अवतमस** न॰ अवततं व्याप्तं तमः प्रा॰स॰अच् समा॰ । व्याप्तान्धकारे । “अवतमसभिदायै भास्वताभ्युद्गतेन” माघः ।

**अवतरण** अव+तॄ-भावे ल्युट् । तीरादिप्रदेशात् १जलाद्यवगाहाद्यर्थमवरोहणे । २अन्यरूपेण प्राडुर्भावे “अंशावतरणम्” भा॰आ॰प॰ । वस्तुमात्रस्य स्वस्थानात् ३अवरोहणे (नामा) “स्कन्धावतरणे चैव ज्वरोदोषैः प्रवर्त्तते । स्त्रीणामपप्रजातानां स्कन्धावतरणे च यः” सुश्रु॰ । अवतीर्य्यते येन करणे ल्युट् । नद्यादेः सोपानादौ ४तीर्थे ।

**अवतरणी** स्त्री अवतरति ग्रन्थोऽनया अवतॄ करणे ल्युट् । ग्रन्थप्रस्तावार्थं प्रथमम् उपोद्घातरूपायां सङ्गतौ (आभास) इत्याख्यायां २परिपाट्याञ्च स्वार्थे कन् अवतरणिकाऽप्यत्र ।

**अवतान** पु॰ अव+तन-घञ् कर्म्मणि घञ् । १ तनाने २अधोमुखे ३लताप्रताने च “लताशतैरवततामवतानशतैस्तथा” रामा॰ ।

**अवतार** पु॰ अव+तॄ करणे घञ् । १तीर्थे, (पुष्करिण्यादेः सोपानपङ्क्तौ) “रुद्धे गजेन सरितः सरुषाऽवतारे” माघः । भावे घञ् । २प्राडुर्भावे “नवावतारं कमलादिवोत्पलम्” मा भूत् परीवादनवावतारः” इति च रघुः ३देवानामंशावेशवशेन प्रादुर्भावे च । “अवताराह्यसंख्येयाः” इत्युक्तेः तेषां बहुत्वेऽपि प्राधान्याद्दशैव विष्णोरवताराः शास्त्रप्रसिद्धाः यथा “मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः । रामो रामश्च रामश्च बुद्धः कल्की च ते दश” पुरा॰मुण्डमालायां तु प्रकृतेरेव एते अवतारा उक्ताः ‘प्रकृतिर्विष्णुरूपाल पुंरूपश्च महेश्वरः । एवं प्रकृतिभेदेन भेदास्तु प्रकृतेर्दश । कृष्णरूपा कालिका स्यात् रामरूपा च तारिणी । बगला कूर्म्ममूर्त्तिः स्यात् मीनो धूमावती भवेत् । छिन्नमस्ता नृसिंहः स्याद्वराहश्चैव भैरवी । सुन्दरी जामदग्न्यः स्यात् वामनो भुवनेश्वरी । कमला

गौरहरूपा स्यात् मातङ्गी कल्किरूपिणी। स्वयं भगवती काली कृष्णस्तु भगवान् स्वयम्। स्वयं च भगवान् कृष्णः कालीरूपोऽभवद् व्रजे"। भागवते १स्क०३ प्राधान्यतः अन्येऽप्यवतारा उक्ताः यथा "लीलावतारानुरतो देवतिर्य्यङ्नरादिषु" इत्युपक्रम्य। "जगृहे पौरुषं रूपं भगवान् महदादिभिः। संभूतं षोड़शकलमादौ लोकसिसृक्षया। यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः। नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः। यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः। तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्ज्जितम्। पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्। सहस्रमूर्द्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्। एतन्नानावताराणां निधानं वीजमव्ययम्। यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादयः। स एव प्रथमं देवः कौमारं सर्गमाश्रितः। चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम्१। द्वितीयन्तु भवायास्य रसातलगतां महीम्। उद्धरिष्यन्नुपादत्त यज्ञेशः शौकरं वपुः२। तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः। तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्म्मणां यतः३। तुर्य्ये धर्म्मकलासर्गे नरनारायणावृषी। भूत्वात्मोपशमोपेतमकरोद् दुश्चरन्तपः४। पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्। प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्५। षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया। आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्६। ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत सयामाद्यैः सुरगणैरपात् स्वायम्भुवान्तरम्७। अष्टमे मेरुदेव्यान्तु नाभेर्जात उरुक्रमः। दर्शयन् वर्त्म धीराणां सर्व्वाश्रमनमस्कृतम्८। ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः। दुग्धेमामोषधीर्विप्रास्तेन यः स उशत्तमः९। रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे। नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्१०। सुरासुराणामुदधिं मथ्नतां मन्दराचलम्। दध्रे कमठरूपेण पृष्ठ एकादशे विभुः११। धान्वन्तरं द्वादशमं त्रयोदशममेव च१२। अपाययत् सुरानन्यान्मोहिन्या मोहयन् स्त्रिया १३। चतुर्द्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम्। ददार करजैरूरावेरकां कटकृद्यथा१४। पञ्चदशं वामनकं कृत्वागादध्वरं बलेः। पदत्रयं याचमानः प्रत्यादित्सुस्त्रिपिष्टपम् १५। अवतारे षोड़शमे पश्यन् ब्रह्मद्रुहो नृपान्। त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् १६। ततः सप्तदशे जातः सत्यवत्यां पराशरात्। चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः१७। नरदेवत्वमापन्नः सुरकार्य्यचिकीर्षया। समुद्रनिग्रहादीनि चक्रे वीर्य्याण्यतःपरम् १८। एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी। रामकृष्णाविति भुवो भगवानहरद्भरम् १९। २०। ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम्। बुद्धो नाम्नाजिनसुतः कीकटेषु भविष्यति२१। अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु। जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः २२। अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः। यथा विदासिनः कुल्याः सरसः स्युः सहस्रशः। ऋषयो मनवो देवा मनुपुत्रा महौजसः। कलाः सर्व्वे हरेरेव सप्रजापतयः स्मृताः। एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्। इन्द्रारिव्याकुलं लोकं मृड़यन्ति युगे युगे"। "कस्मिन् काले स भगवान् किंवर्णः कीदृशो नृभिः। नाम्ना केन विधानेन पूज्यते तदिहोच्यताम्"। इति प्रश्ने। "कृतं त्रेता द्वापरञ्च कलिरित्येषु केशवः। नानावर्णाभिधाकारो नानैव विधिनेज्यते"। कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः। कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डं कमण्डलुम्। मनुष्यास्तु तदा शान्ता निर्व्वैराः सुहृदः समाः। यजन्ति तपसा देवं शमेन च दमेन च। हंसः सुपर्णो वैकुण्ठो धर्म्मो योगेश्वरोऽमलः। ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते। त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः। हिरण्यकेशस्त्रय्यात्मा स्रुक्स्रुवाद्युपलक्षणः। तं तदा मनुजा देवं सर्व्वदेवमयं हरिम्। यजन्ति विद्यया त्रय्या धर्म्मिष्ठा ब्रह्मवादिनः। विष्णुर्यज्ञः पृश्निगर्भः सर्व्वदेव उरुक्रमः। वृषाकपिर्जयन्तश्च उरुगाय इतीर्य्यते। द्वापरे भगवान् श्यामः पीतवासा निजायुधः। श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः। तं तदा पुरुषं मर्त्त्या महाराजोपलक्षणम्। यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप!। नमस्ते वासुदेवाय नमः सङ्कर्षणाय च प्रद्युम्नाय निरुद्धाय तुभ्यं भगवते नमः। नारायणाय ऋषये पुरुषाय महात्मने। विश्वेश्वराय विश्वाय सर्व्वभूतात्मने नमः। इति द्वापर उर्व्वीश स्तुवन्ति जगदीश्वरम्। नानातन्त्रविधानेन कलावपि यथा शृणु। कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम्। यज्ञैः संकीर्त्तनप्रायैर्यजन्ति हि सुमेधसः। ध्येयं सदापरिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम्। भृत्यार्त्तिहं प्रणतपालभवाब्धिपोतं वन्दे महापुरुष! ते चरणारविन्दम्॥ भा० ११ स्कन्द०। अन्यत्र अवतारभेदास्तत्रोक्ताः "हंसस्वरूप्यवदद्च्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः। विष्णुः शिवाय जगतां कलयावतीर्णस्तेनाहृता मधुभिदा

स्तयोर्हयास्ये। शुभ्रोऽभवे मनुरिलौषधयश्च मात्स्ये क्रौड़े हतो दितिज उद्धरताम्भसः क्ष्माम्। कौर्म्मे धृतोऽद्रिरमृतोन्मथने स्वपृष्ठे ग्राहप्रपन्नमिभराजममुञ्चदार्त्तम्। संस्तुन्वतोनिपतितान् श्रमणानृषींश्च शक्रञ्च वृत्रवधतस्तमसि प्रविष्टम्। देवस्त्रियोऽसुरगृहेपिहिता अनाथा जघ्नेऽसुरेन्द्रमभयाय सतां नृसिंहे। देवासुरे युधि च दैत्यपतीन् सुरार्थे हत्वान्तरेषु भुवनान्यदधत् कलाभिः। भूत्वाथ वामन इमामहरद्बलेः क्ष्मां याच्ञाच्छलेन समदाददितेः सुतेभ्यः। निःक्षत्रियामकृत गाञ्च त्रिसप्तकृत्वो रामस्तु हैहयकुलाप्ययभार्गवाग्निः। सोऽब्धिं बबन्ध दशवक्त्रमहन् सलङ्कं सीतापतिर्जयति लोकमलघ्नकीर्त्तिः। भूमेर्भरावतरणाय यदुष्वजन्मा जातः करिष्यति सुरैरपि दुष्कराणि। वादैर्विमोहयति यज्ञकृतोऽतदर्हान् शूद्रान् कलौ क्षितिभुजो न्यहनिष्यदन्ते। एवंविधानि जन्मानि कर्म्माणि च जगत्पतेः। भूरीणि भूरियशसो वर्णितानि महाभुज!"। सुरासुराद्यंशावतारा भारते आदिपर्व्वणि दर्शिताः यथा "इत्युक्ता स मही देवो ब्रह्मा राजन्! विसृज्यताम्। आदिदेश तदा सर्व्वान् विबुधान् भूतकृत्स्वयम्। अस्या भूमेर्निरसितुं भारं भागैः पृथक् पृथक्। अस्यामेव प्रसूयध्वं विरोधायेति चाब्रवीत्। तथैव च समानीय गन्धर्व्वाप्सरसां गणान्। उवाच भगवान् सर्व्वानिदं वचनमर्थवत्"। इत्युपक्रम्य "स्वैः स्वैरंशैः प्रसूयध्वं यथेष्टं मानुषेषु च। अथ शक्रादयः सर्व्वे श्रुत्वा सुरगुरोर्वचः। तथ्यमर्थ्यञ्च पथ्यञ्च तस्य ते जगृहुस्तदा। अथ ते सर्व्वशोंऽशैः स्वैर्गन्तुं भूमिं कृतक्षणाः। नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः। यः स चक्रगदापाणिः पीतवासाः शितिप्रभः। पद्मनाभः सुरारिघ्नः पृथुचार्व्वञ्चितेक्षणः। प्रजापतिपतिर्देवः सुरनाथो महाबलः। श्रीवत्साङ्को हृषीकेशः सर्व्वदैवतपूजितः। तं भुवः शोधनायेन्द्रः उवाच पुरुषोत्तमम्। अंशेनावतरेत्येवं तथेत्याह च तं हरिः" इत्युपक्रम्य च "अथ नारायणेनेन्द्रश्चकार सह संविदम्। अवतर्त्तुं महीं स्वर्गादंशतः सहितः सुरैः। आदिश्य च स्वयं शक्रः सर्व्वानेव दिवौकसः। निर्जगाम पुनस्तस्मात् क्षयान्नारायणस्य च। तेऽमरारिविनाशाय सर्व्वलोकहिताय च। अवतेरुः क्रमेणैव महीं स्वर्गाद्दिवौकसः। ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च। जज्ञिरे राजशार्दूल यथाकामं दिवौकसः"। इति सामान्यत उक्ता। "मानुषेषु मनुष्येन्द्र! संभूता ये दिवौकसः। प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्व्वशः।

विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः। जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः। दितेः पुत्रस्तु यो राजन्! हिरण्यकशिपुः स्मृतः। स जज्ञे मानुषे लोके शिशुपालो नरर्षभ!। संह्राद इति विख्यातः प्रह्रादस्यानुजस्तु यः। स शल्य इति विख्यातो जज्ञे वाह्लीकपुङ्गवः। अनुह्रादस्तु तेजस्वी योऽभूत् ख्यातो जघन्यजः। धृष्टकेतुरिति ख्यातः स बभूव नरेश्वरः। यस्तु राजञ्छिविर्नाम दैतेयः परिकीर्त्तितः। द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः। वाष्कलो नाम यस्तेषामासीदसुरसत्तमः। भगदत्त इति ख्यातः स जज्ञे पुरुषर्षभ!। अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्य्यवान्। तथा गगनमूर्द्धा च वेगवांश्चात्र पञ्चमः। पञ्चैते जज्ञिरे राजन् वीर्य्यवन्तो महासुराः। केकयेषु महात्मानः पार्थिवर्षभसत्तमाः। केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान्। अमितौजा इति ख्यातः सोऽग्रकर्म्मा नराधिपः। स्वर्भानुरिति विख्यातः श्रीमान् यस्तु महासुरः। उग्रसेन इति ख्यात उग्रकर्म्मा नराधिपः। यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः। अशोको नाम राजाऽभून्महावीर्य्योऽपराजितः। तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः। दैतेयः सोऽभवद्राजा हार्द्दिक्यो मनुजर्षभः। वृषपर्व्वेति विख्यातः श्रीमान् यस्तु महासुरः। दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः। अजकस्त्ववरो राजन्! य आसीद्वृषपर्व्वणः। स शाल्व इति विख्यातः पृथिव्यामभवन्नृपः। अश्वग्रीव इति ख्यातः सत्ववान् यो महासुरः। रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः। सूक्ष्मस्तु मतिमान् राजन्! कीर्त्तिमान् यः प्रकीर्त्तितः। वृहद्रथ इति ख्यातः क्षितावासीत्स पार्थिवः। तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः। सेनाविन्दुरिति ख्यातः स बभूव नराधिपः। इषुपो नाम यस्तेषामसुराणां बलाधिकः। नग्नजिन्नाम राजासीद्भुवि विख्यातविक्रमः। एकचक्र इति ख्यात आसीद्यस्तु महासुरः। प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ। विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः। चित्रधर्म्मेति विख्यातः क्षितावासीत्स पार्थिवः। हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः। सुवाहुरिति विख्यातः श्रीमानासीत्स पार्थिवः। अहरस्तु महातेजाः शत्रुपक्षक्षयङ्करः। वाह्लीको नाम राजा स बभूव प्रथितः क्षितौ। निचन्द्रश्चन्द्रवक्त्रस्तु य आसीदसुरोत्तमः। मुञ्जकेश इति ख्यातः श्रीमानासीत् स पार्थिवः। निकुम्भस्त्वजितः संख्ये

महामतिरजायत । भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृतः । शरभो नाम यस्तेषां दैतेयानां महासुरः । पौरवो नाम राजर्षिः स बभूव नरोत्तमः । कुपथस्तु महावीर्य्यः श्रीमान् राजन्महासुरः । सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः । क्रथस्तु राजन् ! राजर्षिः क्षितौ जज्ञे महासुरः । पार्व्वतेय इति ख्यातः काञ्चनाचलसन्निभः । द्वितीयः शलभस्तेषामसुराणां बभूव ह । प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः । चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः । चन्द्रवर्म्मेति विख्यातः काम्बोजानां नराधिपः । अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गवः । ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः । मृतपा इति विख्यातो य आसीदसुरोत्तमः । पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम ! । गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः । द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः । मयूर इति विख्यातः श्रीमान् यस्तु महासुरः । स विश्व इति विख्यातो बभूव पृथिवीपतिः । सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः । कालकीर्त्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः । चन्द्रहन्तेति यस्तेषां कीर्त्तितः प्रवरोऽसुरः । शुनको नाम राजर्षिः स बभूव नराधिपः । विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः । जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः । दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभ ! । काशिराजः स विख्यातः पृथिव्यां पृथिवीपते ! । ग्रहन्तु सुषुवे यन्तु सिंहिकाऽर्केन्दुमर्द्दनम् । स क्राथ इति विख्यातो बभूव मनुजाधिपः । अनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः । विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृतः । द्वितीयो विक्षराद्यस्तु नराधिप ! महासुरः । पाण्ड्रराष्ट्राधिप इति विख्यातः सोऽभवन्नृपः । बलीन इति विख्यातो यस्त्वासीदसुरोत्तमः । पौण्ड्रमात्स्यक इत्येवं बभूव स नराधिपः । वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः । मणिमान्नाम राजर्षिः स बभूव नराधिपः । क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः । दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ । क्रोधवर्द्धन इत्येव यस्त्वन्यः परिकीर्त्तितः । दण्डधार इति ख्यातः सोऽभवन्मनुजर्षभः । कालेयानान्तु ये पुत्त्रास्तेषामष्टौ नराधिपाः । जज्ञिरे राजशार्द्दूल ! शार्द्दूलसमविक्रमाः । मगधेषु जयत्सेनस्तेषामासीत्स पार्थिवः । अष्टानाम्प्रवरस्तेषां कालेयानां महासुरः । द्वितीयस्तु ततस्तेषां श्रीमान् हरिहयोपमः । अपराजित इत्येवं स बभूव नराधिपः । तृतीयस्तु महातेजा महामायो महासुरः । निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः । तेषामन्यतमो यस्तु चतुर्थः परिकीर्त्तितः । श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः । पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुरः । महौजा इति विख्यातो बभूवेह परन्तपः । षष्ठस्तु मतिमान् यो वै तेषामासीन्महासुरः । अभीरुरिति विख्यातः क्षितौ राजर्षिसत्तमः । समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात् । विश्रुतः सागरान्तायां क्षितौ धर्म्मार्थतत्त्ववित् । बृहन्नामाष्टमस्तेषां कालेयानां नराधिप ! । बभूव राजा धर्म्मात्मा सर्व्वभूतहिते रतः । कुक्षिस्तु राजन् ! विख्यातो दानवानां महाबलः । पार्व्वतीय इति ख्यातः काञ्चनाचलसन्निभः । क्रथनश्च महावीर्य्यः श्रीमान्राजन्महासुरः । सूर्य्याक्ष इति विख्यातः क्षितौ जज्ञे महीपतिः । असुराणान्तु यः सूर्य्यः श्रीमांश्चैव महासुरः । दरदो नाम बाह्लीको वरः सर्व्वमहीक्षिताम् । गणः क्रोधवशो नाम यस्ते राजन् ! प्रकीर्त्तितः । ततः सञ्जज्ञिरे वीराः क्षिताविह नराधिपाः । मद्रकः कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा । सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः । क्रथो विचित्रः सुरथः श्रीमान्नीलश्च भूमिपः । चीरवासाश्च कौरव्य ! भूमिपालश्च नामतः । दन्तवक्रश्च नामासीद्दुर्ज्जयश्चैव दानवः । रुक्मी च नृपशार्द्दूलो राजा च जनमेजयः । आषाढो वायुवेगश्च भूरितेजास्तथैव च । एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः । कारूषकाश्च राजानः क्षेमधूर्त्तिस्तथैव च । श्रुतायुरुद्वहश्चैव बृहत्सेनस्तथैव च । क्षेमोऽग्र्यवीर्य्यः कुहरः कलिङ्गेषु नराधिपः । मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः । गणात् क्रोधवशादेव राजपूगोऽभवत् क्षितौ । जातः पुरा महाभागो महाकीर्त्तिर्महाबलः । कालनेमिरिति ख्यातो दानवानां महाबलः । स कंस इति विख्यात उग्रसेनसुतो बली । यस्त्वासीद्देवको नाम देवराजसमद्युतिः । स गन्धर्व्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः । बृहस्पतेर्बृहत्कीर्त्तेर्देवर्षेर्विद्धि भारत ! । अंशात् द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् । धन्विनां नृपशार्द्दूल ! यः सर्व्वास्त्रविदुत्तमः । महाकीर्त्तिर्महातेजाः स जज्ञे मनुजेश्वर ! । धनुर्वेदे च वेदे च यं तं वेदविदो विदुः । वरिष्ठं चित्रकर्म्माणं द्रोणं स्वकुलवर्द्धनम् । महादेवान्तकाभ्याञ्च कामात् क्रोधाच्च भारत ! । एकत्वमुपपन्नानां जज्ञे शूरः परन्तपः । अश्वत्थामा महावीर्य्यः शत्रुपक्षक्षयावहः । वीरः कमलपत्राक्षः क्षितावा-

भीष्मराधिप!। जज्ञिरे वसवस्त्वष्टौ गङ्गायां शान्तनोः सुताः। वशिष्ठस्य च शापेन नियोगाद्वासवस्य च। तेषामवरजो भीष्मः कुरूणामभयङ्करः। मतिमान् वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः। जामदग्न्येन रामेण सर्व्वास्त्रविदुषां वरः। योऽयुध्यत महातेजा भार्गवेण महात्मना। यस्तु राजन्! कृपो नाम ब्रह्मर्षिरभवत् क्षितौ। रुद्राणान्तु गणाद्विद्धि संभूतमतिपौरुषम्। शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः। द्वापरं विद्धि तं राजन्! संभूतमरिमर्द्दनम्। सात्यकिः सत्यसन्धश्च योऽसौ वृष्णिकुलोद्वहः। पक्षात् स जज्ञे मरुतां देवानामरिमर्द्दनः। द्रुपदश्चैव राजर्षिस्तत एवाभवद्गणात्। मानुषे नृप! लोकेऽस्मिन् सर्व्वशस्त्रभृतां वरः। ततश्च कृतवर्म्माणं विद्धि राजन्! जनाधिपम्। तमप्रतिमकर्म्माणं क्षत्रियर्षभसत्तमम्। मरुतान्तु गणाद्विद्धि सञ्जातमरिमर्द्दनम्। विराटं नाम राजानं परराष्ट्रप्रतापनम्। अरिष्टायास्तु यः पुत्त्रो हंस इत्यभिविश्रुतः। स गन्धर्व्वपतिर्जज्ञे कुरुवंशविवर्द्धनः। धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः। दीर्घबाहुर्म्महातेजाः प्रज्ञाचक्षुर्नराधिपः। मातुर्द्दोषादृषेः कोपादन्ध एव व्यजायत। तस्यैवावरजो भ्राता महासत्त्वो महाबलः। स पाण्डुरिति विख्यातः सत्यधर्म्मरतः शुचिः। अत्रेस्तु सुमहाभागं पुत्त्रं पुत्त्रवतां वरम्। विदुरं विद्धि तं लोके जातं बुद्धिमतां वरम्। कलेरंशस्तु सञ्जज्ञे भुवि दुर्य्योधनो नृपः। दुर्ब्बुद्धिर्दुर्म्मतिश्चैव कुरूणामयशस्करः। जगतो यस्तु सर्व्वस्य विद्विष्टः कलिपूरुषः। यः सर्व्वां घातयामास पृथिवीं पृथिवीपते!। उद्दीपितं येन वैरं भूतान्तकरणं महत्। पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह। शतं दुःशासनादीनां सर्व्वेषां क्रूरकर्म्मणाम्। दुर्म्मुखो दुःसहश्चैव ये चान्ये नानुकीर्त्तिताः। दुर्य्योधनसहायास्ते पौलस्त्या भरतर्षभ!। वैश्यापुत्त्रो युयुत्सुश्च धार्त्तराष्ट्रः शताधिकः” इति। “धर्म्मस्यांशन्तु राजन्! विद्धि राजन्! युधिष्ठिरम्। भीमसेनन्तु वातस्य देवराजस्य चार्ज्जुनम्। अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि। नकुलः सहदेवश्च सर्व्वभूतमनोहरौ। यस्तु वर्च्चा इति ख्यातः सोमपुत्त्रः प्रतापवान्। सोऽभिमन्युर्बृहत्कीर्त्तिरर्ज्जुनस्य सुतोऽभवत्। यस्यावतरणे राजन्! सुरान् सोमोऽब्रवीदिदम्। नाहं दद्यां प्रियं पुत्त्रं मम प्राणैर्गरीयसाम्। समयः क्रियतामेष न शक्यमतिवर्त्तितुम्। सुरकार्य्यं हि नः कार्य्यमसुराणां क्षितौ बधः। तत्र यास्यत्ययं वर्च्चा न च स्थास्यति वै चिरम्। ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा। सोऽर्ज्जुनेत्यभिविख्यातो पाण्डोः पुत्त्रः प्रतापवान्। तस्यायं भविता पुत्त्रो बालो भुवि महारथः। ततः षोड़श वर्षाणि स्थास्यत्यमरसत्तमाः!। अस्य षोड़शवर्षस्य स संग्रामो भविष्यति। यत्रांशा वः करिष्यन्ति कर्म्म वीरनिसूदनम्। नरनारायणाभ्यां तु स संग्रामो विनाकृतः। चक्रव्यूहं समास्थाय योधयिष्यन्ति वः सुराः। विमुखाञ्छात्रवान् सर्व्वान् कारयिष्यति मे सुतः। बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति। महारथानां वीराणां कदनञ्च करिष्यति। सर्व्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति। दिनार्द्धेन महाबाहुः प्रेतराजपुरं प्रति। ततो महारथैर्व्वीरैः समेत्य बहुशो रणे। दिनक्षये महाबाहुर्म्मया भूयः समेष्यते। एकं वंशकरं पुत्त्रं वीरं वै जनयिष्यति। प्रनष्टं भारतं वंशं स भूयो धारयिष्यति। एतत् सोमवचः श्रुत्वा तथाऽस्त्विति दिवौकसः। प्रत्यूचुः सहिताः सर्व्वे ताराधिपमपूजयन्। एवं ते कथितं राजंस्तव जन्म पितुः पितुः। अग्नेर्भागन्तु तं विद्धि धृष्टद्युम्नं महारथम्। शिखण्डिनमथो राजन्! स्त्रीपूर्व्वं विद्धि राक्षसम्। द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ!। विश्वान्देवगणान् विद्धि सञ्जातान् भरतर्षभ!। प्रतिविन्ध्यस्सुतः सोमः श्रुतकीर्त्तिस्तथाऽपरः। नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्य्यवान्। शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत्”। सूर्य्यस्य कर्णरूपेणावतारः यथा “प्रकाशकर्त्ता भगवांस्तस्यां गर्भं दधौ तदा। अजीजनत् सुतं चास्यां सर्व्वशस्त्रभृतां वरम्। सकुण्डलं सकवचं देवगर्भश्रियान्वितम्। दिवाकरसमं दीप्त्या चारुसर्व्वाङ्गभूषितम्। निगूहमाना जातं वै बन्धुपक्षभयात्तदा। उत्ससर्ज्ज जले कुन्ती तङ्कुमारं यशस्विनम्। तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः। राधायाः कल्पयामास पुत्त्रं सोऽधिरथस्तदा”। “पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ। ततो वैकर्त्तनः कर्णः कर्म्मणा तेन सोऽभवत्। आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः। स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः। स तु सूतकुले वीरो ववृधे राजसत्तम!। कर्णं नरवरश्रेष्ठं सर्व्वशस्त्रभृतां वरम्। दुर्य्योधनस्य सचिवं मित्त्रं शत्रुविनाशनम्। दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम्”। “यस्तु नारायणोनाम देवदेवः सनातनः। तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान्। शेषस्यांशश्च नागस्य बलदेवो महाबलः। सनत्कुमारं प्रद्युम्नं विद्धि

राजन्महौजसम्। एवमन्ये मनुष्येन्द्रा बहवोंऽशा दिवौकसाम्। जज्ञिरे वसुदेवस्य कुले कुलविवर्द्धनाः। गणस्त्वप्सरसां यो वै मया राजन् प्रकीर्त्तितः। तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य तु। तानि षोड़श देवीनां सहस्राणि नराधिप!। बभूवुर्मानुषे लोके वासुदेवपरिग्रहाः। श्रियास्तु भागः सञ्जज्ञे रत्यर्थं पृथिवीतले। भीष्मकस्य कुले साध्वी रुक्मिणी नाम नामतः। द्रौपदी त्वथ सञ्जज्ञे शचीभागादनिन्दिता। द्रुपदस्य कुले कन्या वेदिमध्यादनिन्दिता। नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी। पद्मायताक्षी सुश्रोणी स्वसितायतमूर्द्धजा। सर्वलक्षणसम्पूर्णा वैदूर्य्यमणिसन्निभा। पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः। सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते। कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा। इति देवासुराणां ते गन्धर्व्वाप्सरसां तथा। अंशावतरणं राजन्! राक्षसानाञ्च कीर्त्तितम्। ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः। महात्मानो यदूनाञ्च ये जाता विपुले कुले" इति। भा०व०रामावतारकथने। "न स देवासुरैः शक्यो युद्धे जेतुं विभावसो!। विहितं तत्र यत् कार्य्यमभितस्तस्य निग्रहः। तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः। विष्णुः प्रहरतां श्रेष्ठः स तत् कर्म करिष्यति। पितामहस्ततस्तेषां सन्निधौ शक्रमब्रवीत्। सर्वैर्देवगणैः सार्द्धं सम्भवः त्वं महीतले। विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः। जनयध्वं सुतान् वीरान् कामरूपबलान्वितान्। ततो भागानुभागेन देवगन्धर्वदानवाः। अवतर्त्तुं महीं सर्वे मन्त्रयामासुरञ्जसा। तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः। शशास वरदो देवो गच्छ कार्य्यार्थसिद्धये। पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः। मन्थरा मानुषे लोके कुब्जा समभवत्तदा। शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः। वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान्। तेऽन्ववर्त्तन् पितॄन् सर्वे यशसा च बलेन च। भेत्तारो गिरिशृङ्गाणां शालतालशिलायुधाः। वज्रसंहननाः सर्वे सर्वे चातिबलास्तथा। कामवीर्य्यधराश्चैव सर्वे युद्धविशारदाः। नागायुतसमप्राणा वायुवेगसमा जवे। यत्रेच्छकनिवासाश्च केचिदत्र वनौकसः" इति एवमन्येऽप्यवताराः पुराणादौ प्रेक्ष्याः।

अवतरत्यनेन रूपेण करणे घञ्। येन रूपेणाविर्भूतस्तस्मिन् ४रूपे "मत्स्यादिभिरवतारैरवतारवता वताऽवतावसुधाम्। परमेश्वर! परिपाल्यो भवता भवतापभीतोऽहम्" शङ्करः।

**अवतारण** न० अव+तॄ–णिच्–ल्युट्। भूतादीनामावेशनेन १प्रादुर्भावने, (भूतनामान) २अवरोपणे, ३ग्रन्थप्रस्तावने च करणे ल्युट् स्त्री। अवतारणप्यत्र।

**अवतारित** त्रि० अव+तॄ–णिच् क्त। अवरोपिते "सन्तानार्थाय विधये स्वभुजादवतारिता" रघुः।

**अवतीर्ण** त्रि० अव+तॄ–कर्त्तरि क्त। १कृतावगाहने २कृतावरोहणे "कौबेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः" माघः ३अन्यरूपेण प्रादुर्भावे च "तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः" भा०व०प०।

**अवतूलन** न० तूलैरवकुष्णाति तूलेन तथापमवघट्टयति अव+तूल+अवघट्टनार्थे णिच्–भावे ल्युट्। तूलेन तूलापावघट्टने। [स्त्रियाम्।

**अवतोका** स्त्री अवपतितं तोकमस्याः प्रा०ब०। स्रवद्गर्भायां

**अवत्त** त्रि० अव+दो–खण्डने कर्म्मणि क्त। खण्डिते "तद् पयोरवत्तं भवति यत् हृदयस्याग्रेऽवद्यति" शत०ब्रा०।

**अवत्तिन्** त्रि० अवत्तमनेन इष्टा० इनि। कृतखण्डने जने "विविधायजमानाश्चतुरवत्तिनः पञ्चावत्तिनश्चेति" आश्व०श्रौ०

**अवत्सार** पु० ऋषिभेदे स हि "अवत्सारस्य स्पृणवाम" इति ऋ०५,४४,१०, उक्तः।

**अवदंश** पु० अवदश्यते पानरुच्यर्थम् अव+दन्श–कर्म्मणि घञ्। मद्यपानादिप्रीत्युत्साहनसाधने भ्रष्टचणकद्रव्ये "अन्यतमस्मासवं पाययेदङ्गारभृष्टावदंशम्" सुश्रु०।

**अवदरण** न० अव+दृ–भावे ल्युट्। विदारे "हृणयोरवदरणम्" "वेदनाप्रादुर्भावोऽवदरणम्" इति सुश्रु०।

**अवदाघ** पु० अव+दह–भावे घञ् न्यङ्क्वा० हस्य घः। निदाघे।

**अवदात** पु० अव+दै–क्त। १शुभ्रे, २पीते च वर्णे। ३तद्वति ४विशुद्धे "अन्यस्मिन् जन्मनि च न कृतमवदातम्" काद०। ५मनोज्ञे च त्रि०।

**अवदान** न० अव+दो–ल्युट्। १खण्डने, २पराक्रमे ३अतिक्रमे ४शुद्धिकरणे च, अवद्यति रोगमनेन करणे ल्युट्। ५वीरणमूले न०।

**अवदारक** त्रि० अवदारयति अव+दृ–णिच्–ण्वुल्। १विदारके अवयवविभागकारके। २खनित्रे पु०।

**अवदारण** न० अव+दृ–णिच्–भावे ल्युट्। १विदारणे अवयवविभाजने। करणे ल्युट्। २खनित्रे। [विभाजिते।

**अवदारित** त्रि० अव+दृ–णिच् कर्म्मणि क्त। विदारिते

**अवदाह** न० अवसादितो दाहो येन प्रा० ब०। वीरणमूले तस्य सेवने हि तापनिवृत्तिर्दाहके प्रसिद्धा

अव+दह-भावे घञ्। २ज्वरादिहेतुके दाहे।

**अवदाहेष्ट** न० अवदाहे ज्वरादिहेतुके देहतापे तन्निवारणाय इष्टम्। वीरणमूले उशीरे (वेणार मूल)।

**अवदाहेष्टकापथ** न० अवदाहे तन्निवारणाय इष्टकापथं सोपानमिव। वीरणमूले (खस्खस्)।

**अवदीर्ण** त्रि० अव+दॄ-क्त। १द्वैधीभूते २विभक्ते च।

**अवदोह** पु० अवदुह्यते अव+दुह-कर्म्मणि घञ्। १दुग्धे त्रिका०। भावे घञ्। २दोहने आकर्षणपूर्व्वकान्तःस्थित द्रवद्रव्यनिःसारणरूपे व्यापारे।

**अवद्य** त्रि० वद-यत् न०त०। १अधमे, २पापिनि, ३निन्द्ये, ४दोषे ५कथनायोग्ये च। "निरवद्यविद्योद्द्योतेन द्योतितः" दायभा०। "अथ मूकोऽनवद्योऽसि" भट्टिः।

**अवद्योतन** न० अव+द्युत-णिच्-भावे ल्युट्। प्रकाशने।

**अवधातव्य** न० अव+धा-भावे-तव्य। १अवधाने "तदत्र दैवेनावधातव्यम्" प्रबोधच०। कर्म्मणि तव्य। २अवधेये त्रि०

**अवधान** न० अव+धा-ल्युट्। मनोयोगविशेषे, यद्वशात् विषयान्तरतो मनोनिवर्त्तते। "अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने" कुमा० "सावधानावधारय" त०

**अवधार** पु० अव+धृ-णिच्-भावे अच्। निश्चये तदभावाप्रकारकत्वे सति तत्प्रकारके ज्ञाने "तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः" इति भाषा०। "सर्व्वत्र यदवधारेणोच्यते स एकान्तः" सुश्रु०।

**अवधारण** न० अव+धृ-णिच्-ल्युट्। १इयत्तापरिच्छेदे, अयमित्थमेवेति विषयपरिच्छेदके २निश्चये च। संख्यादिना ३इयत्ताकरणे "यावदवधारणे" पा०। ४अन्यतोव्यावर्त्तने च।

**अवधारणीय** त्रि० अव+धृ-णिच्-कर्म्मणि अनीयर्। ईदृक् तया निश्चेतुं योग्ये। "विष्णोरिवास्यानवधारणीयम्" रघु०।

**अवधारित** त्रि० अव+धृ-णिच्-क्त। यस्य संख्यारूपादिना निश्चयः कृतः १तस्मिन् अन्यतः कृतव्यावृत्तियुते २पदार्थे च।

**अवधार्य्य** त्रि० अव+धृ-णिच्-कर्म्मणि यत्। निश्चेतुं शक्ये इदमित्थमेवेति १निश्चेये अव+धृ-णिच्-ल्यप्। २निश्चित्येत्यर्थे अव्य०।

**अवधि** पु० अव+धा-कि। १सीमायां, २काले "सर्व्वे निदाघावधिना विसृष्टाः" रघुः। "निदाघावधिना निदाघकालेन" मल्लि०। ३चित्ताभिनिवेशे च। अपादाने कि। ४अपादाने। "मेयान्तरक्रियापेक्षमवधित्वं पृथक् तयोः" भर्त्तृ०। आधारे कि। ५बिले गर्त्ते। सीमा च द्विविधा पूर्व्वा परा च तत्र "प्रत्याहमवधिं कृत्वा यावद्वर्षचतुष्टयमित्यादौ" पूर्व्वा "सञ्चारोरतिमन्दिरावधीत्यादौ परा" प्रकारान्तरेण सा त्रिविधा कालकृता देशकृता बुद्धिकल्पिता च। पूर्व्वोक्ते दैशिकी। "यामावधि विमोक्षान्तमित्यादौ" पूर्व्वा "यामकालं समारभ्य जपेन्मोक्षावधि प्रिये" इत्यादौ परा कालिकी "सखीकर्णावधि व्याहृतमित्यादौ बुद्धिकल्पिता"। अवधित्वञ्च स्वाभिधेयापेक्षया विभागाश्रयत्वम्। तच्च पञ्चम्याऽपि बोध्यते नद्यावनमित्यादौ वनस्य नद्यपेक्षविभागाश्रयत्वात् तथात्वम्। एवं माघात् पूर्व्वं घट इत्यादौ माघतोविभागाश्रयत्वात् घटादेस्तदवधिकत्वम् तत्र अयमस्मात् पूर्व्वकालवर्त्ती इत्यादौ कालिकम् अयमस्मात् पश्चिमदेशवर्त्तीत्यादौ दैशिकं "माथुराः पाटलिपुत्रेभ्य आढ्यतरा इत्यादौ बुद्धिकल्पितम्। "स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्थेति सि०कौ० "सञ्चारोरतिमन्दिरावधि सखीकर्णावधि व्याहृतं हास्यञ्चाधरपल्लवावधि महामानोऽपि मौनावधि। चेतः कान्तसमीहितावधि पदन्यासावधि प्रेक्षितं सर्व्वं साव-धिनावधिस्तु गतया प्रेम्णः परं केवलमित्यादौ" दैशिकं बुद्धिकल्पितावधित्वम् "करयापावधिदां सरस्वतीम्" कुमा० इत्यत्र कालिकं "जनपदतदवध्योः" पा० इत्यत्र दैशिकम्।

**अवधिमत्** त्रि० अवधिरस्त्यस्य मतुप्। अवधिविशिष्टे अवधिमत्त्वमेव पञ्चम्यर्थ इति नव्यनैयायिकाः तेन तस्य स्वरूपसम्बन्धेन इतरपदार्थेऽन्वयः अवधित्वस्य पञ्चम्यर्थत्व स्वीकारे तु निरूपकतासम्बन्धेनान्यपदार्थेऽन्वयस्य वक्तव्यतया नञ्समभिव्याहारे च तेनैवसम्बन्धेनाभावान्वयस्याभ्युपगम्यत्वेन निरूपकतासंसर्गस्य वृत्त्यनियामकतया तत्सम्बन्धस्य प्रतियोगितानवच्छेदकतयानन्वयः वृत्तिनियामकसम्बन्धस्यैव तथात्वात्। अवधिमत्त्वस्य तदर्थत्वे तु तस्य स्वरूपसम्बन्धेनान्वयात् नञ्समभिव्याहारे अन्वयसम्भवः स्वरूपसम्बन्धस्य वृत्तिनियामकतया तस्य प्रतियोगितावच्छेदकत्वसंभवेन बाधकाभावात् "अतएव व्युत्पत्तिवादे गदाधरेण अवधित्वमवधिमत्त्वं वा पञ्चम्या अर्थ इति प्रथमपक्षोऽस्वरसं सूचनाय तस्यान्ते निवेशः कृतः। "उत्तरादिभ्य एनप् स्यादवध्यवधिमतोः सामीप्ये" सि०कौ०।

**अवधीयमान** त्रि० अव+धा कर्म्मणि शानच्। यस्मिन् विषये चित्ताभिनिवेशः क्रियते तस्मिन् विषये।

**अवधीर** अवज्ञायाम् अद०चुरा० उभय०सक०सेट्। अवधीरयति ते आववधीरत् त। अवेत्यस्योपसर्गत्वे अवादिधीरत् त। अवधीरितः अवधीरी "रसैः कथा यस्य सुधावधी-

रिणी" नै० अवेत्यस्योपसर्गत्वे "इतीव धारामवधीर्य्येति नैषध० ल्यबवयवरूपत्वे तु अवधीरयित्वेति भेदः।

**अवधीरणा** स्त्री अवधीर–भावे युच्। १अवज्ञायां २तिरस्कारे च "कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि" रघुः "अयं स यस्मात् प्रणयावधीरणामशङ्कनीयां करभोरु! मन्यसे" शकु०। भावे ल्युट्। तत्रार्थे न०।

**अवधीरित** त्रि० अवधीर–कर्मणि क्त। १अवज्ञाते २तिरस्कृते च

**अवधूत** त्रि० अव+धू–क्त। १कम्पिते "पवनावधूतवसनान्तयैकया" माघः "विदधेऽवधूतसुरसद्मसम्पदम्" माघः। कृष्णयजुर्वेदान्तर्गते २उपनिषद्भेदे। ३अभिभूते, ४निवर्त्तिते, "अवधूतं रक्षो अवधूता अरातयः" शत० ब्रा० ५अनादृते च। "यो विलङ्घ्याश्रमान् वर्णान् आत्मन्येव स्थितः पुमान्। अतिवर्णाश्रमी योगी अवधूतः स उच्यते" इत्युक्तलक्षणे वर्णाश्रमधर्मत्यागिनि ६सन्न्यासिनि पु०। "अक्षरत्वात् वरेण्यत्वात् धूतसंसारबन्धनात्। तत्त्वमस्यर्थसिद्धत्वादवधूतोऽभिधीयते। यथा रविः सर्वरसान् प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्षकः। तथैव योगी विषयान् प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः" इति च तन्निर्वचनलक्षणे एवमवधूतगीतशब्दे तल्लक्षणं दृश्यम्।

**अवधूतगीत** न० ६त०। भागवते ११ स्क० भगवदुद्धवसंवादे यदुनृपं प्रति कस्यचिदवधूतस्य उपदेशभेदे। यथा "अत्राप्युदाहरन्तीममितिहासं पुरातनम्। अवधूतस्य संवादं यदोरमिततेजसः। अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम्। कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित्। कुतो बुद्धिरियं ब्रह्मन्नकर्त्तुः सुविशारदा। यामासाद्य भवाल्लोकं विद्वांश्चरति बालवत्। प्रायो धर्मार्थकामेषु विवित्सायाञ्च मानवाः। हेतुनैव समीहन्ते आयुषा यशसा श्रिया। त्वन्तु कल्पः कविर्दक्षः सुभगोऽमितभाषणः। न कर्त्ता नेहसे कर्त्तुं जडोन्मत्तपिशाचवत्। जनेषु दह्यमानेषु कामलोभदवाग्निना। न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः। त्वं नः संपृच्छतां ब्रह्मन्! आत्मन्यानन्दकारणम्। ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः" इति यदुनृपेण तल्लक्षणमुक्तम्। एवं यदुना पृष्टः स यदाह तदेव अवधूतगीतम्। तेन च "सन्ति मे बहवो राजन्! गुरवो बुद्ध्युपाश्रिताः। यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु। पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः। कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः। मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः। कुमारी शरकृत् सर्प ऊर्णनाभः सुपेशकृत्। ततो मे गुरवो राजन्! चतुर्विंशतिराश्रिताः। शिक्षावृत्तिभिरेतेषामन्वशिक्षमनुक्रमात्" इत्युपक्रम्य पृथिव्यादिभ्यश्चतुर्विंशतेर्यथा यत् शिक्षितं तद्वर्णितम् तद्विस्तरस्तु ९ नवमाध्यायसमाप्तिपर्य्यन्ते तत्रैवानुसन्धेयः।

**अवधूनन** न० अव+धू–णिच्–नुक् ल्युट्। १चालने। (झाड़ा) इति ख्याते व्यापारे "पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननम्" मनुः। २चिकित्साभेदे च "तत्र तूर्णं गलापीडं कुर्य्याच्चाप्यवधूननम्" सुश्रु०। [ल्युट्। अवचूर्णने।

**अवधूलन** न० धूलिं करोति अव+धूलि–करणार्थे णिच्–भावे

**अवधृत** त्रि० अव+धृ–अन्तर्भूतण्यर्थः कर्म्मणि क्त। १अवधारिते निश्चिते "अनवधृताज्ञानसंशयविपर्य्यासस्तु यं कञ्चित् पुरुषं प्रति प्रवर्त्तमानः" इति सा०कौ०। २कृतनियमे ३विषयविशेषे व्यवस्थापिते ४स्थापिते च।

**अवधृष्य** त्रि० अव+धृष–कर्म्मणि क्यप्। १अवधर्षणीये २तिरस्कार्य्ये। ३निश्चयेनावधार्य्ये "नियतं यत्ते रजसं सह्योऽनवधृष्यम्" श्रुतिः "अनवधृष्योऽहि भवत्यनवधृष्यः" शत० ब्रा०। ५पराभवनीये च। अव+धृष–ल्यप्। ६धर्षित्वेत्यर्थे अव्य०।

**अवधेय** त्रि० अव+धा–यत्। १निवेश्ये २स्थापनीये यत्र चित्ताभिनिवेशः क्रियते तस्मिन् ३ग्राह्ये "प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति" "अनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत" इति च सा०कौ०। ४ज्ञेये च। भावे यत्। ५अवधाने न०।

**अव(ब)भ्र** त्रि० अव+भृ–मूलविभु०क वध–रक् न०त० वा। अहिंसके। "अव(ब)भ्र-ज्योतिरदितेर्ऋतावृधः" ऋ० ७,८२,१०, "अव(ब)भ्रमहिंसकम्" भा०।

**अवध्वंस** पु० अव+ध्वन्स–घञ्। १परित्यागे, २चूर्णिते, ३निन्दायाञ्च "अवध्वंसइवारुणः" ऋ० ५,२२,३।

**अवध्वस्त** त्रि० अव+ध्वन्स–क्त। १नष्टे २निन्दिते ३अवचूर्णिते ४त्यक्ते च।

**अवन** न० अव+ल्युट्। १प्रीणने, २रक्षणे, ३प्रीतौ च "समनिन्दावनाय जनताखिलं यथैव दानवनागम्" नलोद०

**अवनत** त्रि० अव+नम–क्त। १अधोभूते २आनते च। "अवनतशितिकण्ठकण्ठलक्ष्मीम्" माघः। "चतुरर्थ्यां कृशाश्वा० छण् आवनतीयः, अवनतसन्निकृष्टदेशादौ त्रि०।

**अवनति** स्त्री अव+नम–क्तिन्। औद्धत्याभावे, १विनये, २अधोनमने च। "धनुषामवनतिः" कादम्बरी। ३प्रणामे च।

**अवनद्ध** त्रि० अव+नह–क्त। १खचिते, २रोपिते ३वेष्टिते ४बद्धे च "चर्म्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः"

मनुः । ५कदल्यादिशाखे न० । [वकावनम्रा" कुमा० ।

**अवनम्** त्रि० अव+नम–र । अतिशयनम्रे "पर्य्याप्तपुष्पस्त-

**अवनय** पु० अव+नी–भावे अच् । १अधःपातने २निपातने ।

**अवनयन** न० अव+नी–ल्युट् । अवस्थापने । "अवनयना-वसरश्चे चावदयत्" काव्या० ८।५।२४ । "गर्त्तेषु प्रोक्षण-शेषोदकसेचनम्" वेददी० तेन २तदर्थेऽपि ।

**अवनाट** त्रि० अवनता नासिका प्रा० स० नतार्थे नासिकाया-नाटादेशः अर्श आद्यच् । (खांदा) अवनतनासिके जने ।

**अवनाय** पु० अव+नी "अवोदोर्नियः" पा० अचोबाधकः घञ् । १अधोनयने अधःप्रापणे । [नतौ ।

**अवनाम** पु० अव+नम–घञ् । अवनतौ अधोभूत्वा नतायां

**अवनि** (नी) स्त्री अव–अनि । भूमौ । "सुखाधितायामवनौ" इति स्मृ०सि० । वा ङीप् अवनीत्यपि । "दीनदयालुतया-ऽवनिपाल" "सुमनुजवनी इवाऽवनी भुवनी संभवदनु-पिकापि का इति च नैष० । करणे अनि । २अङ्गुलीषु व०व० निरु० । अव प्रीणने कर्त्तरि अनि । ३नद्यां निरु० "सं यं स्तुभोऽवनयः न यन्ति समुद्रं स्रवतोरोध-चक्रा" ऋ० १,१९०,७ । दीर्घान्तः ४लायमाणलतायां राजनि० ।

**अवनिक्त** त्रि० अव+निज–क्त । १क्षालिते २शोधिते च ।

**अवनि(नी)नाथ** पु० ६त० । नृपे भूपतौ अवनी(नि) नायकादयोऽप्यत्र ।

**अवनि(नी)पति** ६त० । नृपे अवनिस्वाम्यादयोऽप्यत्र । "प्रतिर-वनीपतीनां तं सकाले चतुर्भिः" रघुः ।

**अव(नि)नीपाल** ६त० । नृपे "इत्यमसं विलपन्तमसङ्ग-दीनदयालुतयाऽवनिपालः नैष० । "कतिचिदवनिपालः शर्वरीः शर्वकल्पः" रघुः ।

**अवनीश** पु० ६त० । भूपतौ भूमीश्वरे अवनीश्वरादयोऽप्यत्र ।

**अवनेजन** न० अव+निज–ल्युट् ।१प्रक्षालने "न कुर्य्याद्गुरु-पुत्रस्य पादयोश्चावनेजनम्" मनुः । श्राद्धे पिण्डदानार्थं मास्तृतकुशस्य जलेन सेकरूपे २संस्कारभेदे च । "दक्षि-णस्थितप्रागग्रकुशमूलमध्यायेषु मातादिभ्यस्तदुत्तरं मध्य-स्थितप्रागग्रकुशमूलमध्यायेषु पितादिभ्यस्तदुत्तरं स्थित प्रागग्रकुशमूलमध्यायेषु मातामहादिभ्यः प्राङ्मुखेना-वनेजनं कर्त्तव्यम्" श्राद्धप्रदीपः । रघुनन्दनेन मातृप-क्षोनादृत इति भेदः ।

**अवन्ति** पु० अव–झि । मालवदेशे । स च वृ०स० कूर्म्मचक्रविभागे "अथ दक्षिणेन लङ्केत्युपक्रम्य "आक-रवेणावन्तिकदशपुरगोनर्द्दा" इति उक्तः दक्षिणदेशस्थः । तत्र शिप्रा नदी महाकालनामा शिवमूर्त्तिविशेषः उज्ज-यिनी राजधानी । तत्पुरीपरत्वे स्त्री वा ङीप् । "अवन्तिनाथोऽयमुदग्रबाहुरित्युपक्रम्य "असौ महा-कालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः" । "अनेन यूना सह पार्थिवेन शिप्रातरङ्गानिलकम्पि-तासु विहर्त्तुम् ? च रघौ तथावर्णितम् । ज्योतिर्वि० विक्रमवर्णने "यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी । समाश्रिता प्राग्य-पवर्गदायिनी श्रीविक्रमार्कोऽवनिपो जयत्यपि" तस्मिन् सदा विक्रममेदिनीशे विराजमाने समवन्तिकायाम् । सर्व्वप्रजामङ्गलसौख्यसम्पद्बभूव सर्व्वत्र च वेदकर्म्म" । तथाच अवन्ती उज्जयिनी च नामान्तरं यथोक्तं सि०शि० । "यदोज्जयिन्याः कुचतुर्थभागे प्राच्यां दिशि स्याद्यम-कोटिरेव । ततश्च पश्चान्न भवेदवन्ती लङ्कैव तस्याः ककुभि प्रतीच्याम्" । इयञ्च लङ्कास्थानात् मूरुषोडशांशे मेरु पर्य्यन्तगतरेखायां समसूत्रस्थाने स्थिता यथोक्तं तत्रैव । "निरक्षदेशात् क्षितिषोडशांशे भवेदवन्ती गणितेन यस्मात् । तदन्तरं षोडशसंगुणं स्याद्भूमानमस्मात् बहु किं तदुक्तम्" । इंलण्डीयमानचित्रवेदिनस्तु सम सूत्रस्थानात् किञ्चिदन्तरपश्चिमस्थेति वर्णयन्ति । इयञ्च मोक्षपुरी "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" । पुरा० । भा० उ०प०जम्बुखण्डविभागे जनपदगणनायाम् "कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः" इति उक्तेरस्य जन-पदवाचितया इदन्तत्वाच्च ततो भवादौ अण् । आवन्त्यः तद्भवादौ त्रि० । बहुषु च तद्राजनि अणस्य लुक् । अवन्तयः तद्देशवासिषु ब०व० । तद्देशरूपे च । स्वार्थे कन् अवन्तीनगर्य्याम् "काशीकाञ्ची अवन्तिका" पुरा० ।

**अवन्तीपुर** न० अवन्तिः पूः अच् समा० । अवन्तिनगरे उज्जयिन्याम् । [अवन्तिस्थे ब्राह्मणे ।

**अव(न्ति)न्तीब्रह्म** पु० अवन्तिषु ब्रह्मा अच् समा० ।

**अव(न्ति)न्तीसोम** पु० अवन्तिषु सोम इव । काञ्जिके ।

**अवपन्न** त्रि० अव+पद–क्त । १भ्रष्टे २सङ्कपके च "केशकी-टावपन्नञ्च पदा स्पृष्टञ्च कामतः" मनुः । "अवपन्नं संसर्गदूषितम्" कुल्लू० । "केशकीटावपन्नं च स्त्रीभिःस्पृष्टं तथैव च" हारी० अवपन्नं सङ्कपकम् मा०त०रघु० ।

**अवपाक** पु० अव+अपकर्षे पच–घञ् । १अपकृष्टपाके । कर्म्मणि

घञ्। २अपकृष्टपक्वे। "त्वच उत्कर्त्तनमवपाकानां संज्ञपनम्" शत०ब्रा०।

**अवपात** पु० अव+पत-भावे घञ्। अधःपतने। पत-णिच्-भावे अच्। २पातने "गर्भस्यावपाते गर्भस्य पातने "चोत्सर्गेदम:" या०स्मृ०। आधारे घञ्। ३गर्त्ते "अवपातस्तु हस्त्यर्थे गर्त्ते छन्ने तृणादिना" इति यादवोक्ते गजधारणार्थे ४गर्त्तभेदे च "रोधांसि निघ्नन्नवपातमग्नम्" रघुः

**अवपात्र** त्रि०अवरं भोजनायोग्यं पात्रं यस्य। यस्य भोजनेन पात्रे दुष्टेऽन्यस्य भोजनायोग्यता भवति तादृशे पतितचण्डालादौ जने। [अपपात्रितशब्दार्थे।

**अवपात्रित** त्रि० अवपात्र+कृत्यर्थे णिच्-क्त। भिन्नोदकीकृते

**अवपाद** पु० अव+पद-घञ्। अधःपतने "देवा वै आदित्याः स्वर्गाल्लोकादवपादाद्बिभियुः" ता०ब्रा०।

**अवपाशित** त्रि०अवपाशः समन्तात् पाशोजातोऽस्य तार०इतच्। पाशबद्धे "पश्चाम्यैव हि कण्ठे त्वां कालपाशावपाशितम्" रा०

**अवपीड** त्रि०अवपीडयति अव-पीड-अच्। १समन्तात् पीडके "चिकित्साविशेषे पु०२वेगान्तेषु चावपीडं दद्यात्" सुश्रु० "प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनं तथा। शिरोविरेचनं चेति नस्तः कर्म च पञ्चधा" इति चक्रदत्तोक्ते ३नासिकाचिकित्साभेदे च। तल्लक्षणं तत्रैवोक्तं यथा "अवपीड्य दीयते यस्मादवपीडकस्ततस्तु सः। शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः" इति।

**अवपीडन** न० अव+पीड-णिच् ल्युट्। १निष्पीडने। सुश्रुतोक्ते २पीडनदोषभेदे "अतिपीडितता शिथिलपीडिततामूयोभूयोऽवपीडनं कालातिक्रम इति चत्वारः पीडनदोषाः"। युच्। अवपीडना निष्पीडने स्त्री "अङ्गावपीडनायाश्च मयशोणितयोस्तथा" सुश्रु०। [तीर्थे च।

**अवप्लुत** त्रि०अव+प्लु-क्त। समन्तात् सिक्ते १आर्द्रीभूते २अव-

**अवबन्ध** पु० अवबध्यते आच्छाद्यते नेत्रवर्त्मानेन करणे घञ्। सुश्रुतोक्ते नेत्रवर्त्मगदे। "पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः। शिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिता" इत्युपक्रम्य "उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्कराः। तथार्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका। बहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धकः" इत्यादीन्युक्त्वा "न समं छादयेदक्षि भवेद्बन्धः स वर्त्मनि" इति लक्षिते १रोगभेदे वर्त्मावबन्धं, इत्येकं नामैतदुचितम्। भावे घञ्। समन्तात् २बन्धने च। [बन्धे च।

**अवबाधा** स्त्री अव+बाध-अ। १समन्तात् बाधायां २प्रति-

**अवबाहुक** पु० अवबद्धो बाहुर्येन प्रा०ब०। सुश्रुतोक्ते वातरोगभेदे यथा "अंसदेशस्थितोवायुः शोषयित्वांसबन्धनम्। शिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम्"। [ज्ञातरि।

**अवबुद्ध** त्रि० अव+बुध-कर्म्मणि क्त। १ज्ञाते कर्त्तरि क्त।

**अवबोध** पु०अव+बुध-भावे घञ्। जागरणे। "यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ" मनुः। २ज्ञानमात्रे च "स्वभर्त्तुर्नामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोधः" रघु० "भावावबोधकलुषा दयितेव रात्रौ" रघुः। प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते" सा०द०।

**अवबोधक** पु०अवबोधयति अव+बुध-णिच्-ण्वुल्। १अर्के। क्षपायां निद्राभङ्गकारके २स्तुतिपाठकादौ च ३ज्ञापके त्रि०।

**अवबोधन** न०अव+बुध-णिच्-ल्युट्। ज्ञापने। "स्वेतरार्थानन्वितस्वार्थस्यावबोधने" शब्दशक्ति०।

**अवभग्नित** त्रि०अव+भ्रस्ज-क्त भर्ज्जादेशः। १भ्रष्टे २दग्धे च।

**अवभाषण** न० अव+भाष-ल्युट्। कथने "व्यापारान्तरसक्तव्यथावभाषणविलोकनादिकरो" सा०द०।

**अवभास** पु० अव+भास-भावे घञ्। १ज्ञाने २प्रकाशे अन्यस्य अन्यरूपेण प्रकाशरूपे ३मिथ्याज्ञाने च।

**अवभासक** त्रि० अवभासयति अव+भास-णिच् ण्वुल्। १प्रकाशके सर्व्वावभासके कूटस्थे चैतन्ये न०। "यस्य भासा सर्व्वमिदं विभाति" श्रुतेः "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" गीतोक्तेश्च तस्य सर्व्वावभासकत्वम्।

**अवभासित** त्रि०अव+भास+णिच्-कर्म्मणि क्त। प्रकाशिते।

**अवभृथ** पु० अव+भृ-क्थन्। मुख्ययज्ञसमाप्तौ क्रियमाणे १यज्ञशेषकर्म्मणि, यज्ञान्तभूते यज्ञान्ते कार्य्ये २स्नाने च। "नावभृथं सरस्वत्याम्" कात्या०२४,६,२२, "सरस्वत्यां नावभृथं कुर्य्यात्" कर्कः "परिपार्श्वेषूदकेषु" "अवसृष्ट्य ततः" कात्या० २४,६,२३,२४ "मज्जति पात्रे कटाहादौ" कर्कः। अवभृथस्नानविधिश्च तैत्तिरीयब्राह्मणे २अष्टके ६अ०६अनु०. "यद्देवा देवहेडनम्" इत्यारभ्य "समिदसि जगत्योपि" "त्येत्यनुवाकपर्य्यन्ते उक्तः। "स्नातवत्यवभृथे ततस्त्वयि" माघः "सर्वैनोऽपभृथस्नातो हयमेधे विशुध्यति"। "तथाऽश्वमेधावभृथस्नानाद्वा शुद्धिमाप्नुयात्" । या०स्मृ० "भ्रूणं कोण्येन कुब्जोस्मि मेध्येनावभृथादपि" "प्रीत्याश्वमेधावभृथार्द्रमूर्त्तेः" "भ्रातरावभृथाप्लुतो मुनिः" इति च रघुः।

**अवभ्रट** त्रि० अवनता नासिका प्रा०स० नतार्थे नासिकाया-

भट्टादेशः स्वार्थे अच् । अवनतनासिके (खाँदा) ।

**अवम** त्रि॰ अव+अमच् । १रक्षके २पितृगणभेदे पु॰ "अव-मैस्त ऊर्व्वैः काव्यैस्तैः पितृभिर्भक्षितस्य मधुमतोनाराशंसस्य" ता॰ब्रा॰ "त्रिविधाः पितरः अवमाः ऊर्व्वाः काव्याश्चेति अनुसवनं नाराशंसदेवताः । हे सोम ! अवमैः रक्षकैः एतत्संज्ञकैः पितृभिः" भा॰ । अपादानेऽमच् । ३पापे ४गर्हिते ५कुत्सिते च त्रि॰। अवोभवः अवस्माद्भवः "अवोऽधमोर्वोपयोश्चेति" मः अन्त्यलोपः । ६अधमे त्रि॰ "अनव-मानवकानमवमां पुरीम्" रघुः । "या त अङ्गिरवमा या परमा" ऋ॰६,२५,१,"उतावमस्य पुरुहूत बोधि" ऋ॰६, २१,५ "प्रक्षतानां सावनानाञ्चान्द्राणाञ्चान्तरमवमानीच्यते सावनदिनेभ्यश्चान्द्राहा यावद्भिरधिकास्ते दिनक्षयाहा" इति च प्रमिताक्षरोक्ते ७दिनक्षये न॰ । तदानयनप्रकारश्च सि॰शि॰ "अगाङ्कमासोनितसावनेन ०,२८,१० त्रिंशद्गुताः स्वदिनैस्तु चान्द्रैः । रुद्रांशकोनाब्धिरसैः ६२,५४,३२ क्षयाहः स्यात् सावनोऽत्र युगेऽनुपातात्" । युगे चान्द्राणां सावनानां च यदन्तरं तान्यवमानि । तत्र एकस्मिन् मासे चान्द्रसावनान्तरं कुदिनात्मकं स्वहीतम् । तत्र दिवसः न्यूनम् अष्टाविंशतिर्घटिकाः दश पानीयपलानि ०,२८,१० इदमेकस्मिन् चान्द्रमासे त्रिंशत्तिथ्यात्मके कुदिनात्मकमवमखण्डम् । यद्यनेन ०,२८,१०, त्रिंश-द्दिनानि चान्द्राणि लभ्यन्ते तदा संपूर्णैकेनावमेन कियन्तीति त्रैराशिकेन लब्धैः रुद्रांशकोनाब्धिरसैः ६२,५४,३२ एकः क्षयाहो भवति स च सावनः एवं कल्पेऽपि अनुपातात् । "सावनान्यवमानि स्युश्चान्द्रेभ्यः साधितानि चेत् । सावनेभ्यस्तु चान्द्राणि तच्छेषं तद्गता-न्यथा" इति सि॰शि॰ । कल्पेऽवममानञ्च दर्शितं तत्रैव । "दिनक्षयाश्चाल सहस्रनिघ्नाः खखाङ्कनागाब्धयुग्विलेषुदस्राः" २५०८२५५०००० । अन्तरं तरणिचन्द्रचक्रजं यद्भवेत् स विधुमाससंचयः । चन्द्रचक्रदिनसैक्यमूनितं चन्द्रमासभदिनैर्दिनक्षयाः" "अथ चन्द्रचक्रदिनैक्यं चन्द्रमासभदिनैक्येन वर्ज्जिते क्षयाहाः स्युः । अत्र वासना । चन्द्रभगणा रविभगणैरूनाश्चान्द्रमासाः स्युः अतो विपर्य्ययाच्चान्द्रमासैर्ना-चन्द्रभगणा रविभगणा भवन्ति तैरूना भभ्रमाः सावना दिवसा भवन्ति। चान्द्राहाः क्षयाहा भवन्ति" प्रमिता॰ । "तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र तद्भवत्यवम-दिनम्" ज्योति॰ त॰

**अवमत** त्रि॰ अव+मन-क्त । १अवज्ञाते २तिरस्कृते च ।

**अवमताङ्कुश** पु॰ अवमतोऽङ्कुशस्तस्तदाघातोयेन । दुर्दान्ते गजे।

**अवमति** स्त्री अव-मन भावे क्तिन् । १अवज्ञायाम् २अनादरे ३तिरस्कारे च। [क्षया तिथिः" ज्योतिषोक्ते दिनक्षये ।

**अवमतिथि** स्त्री कर्म्म॰। "स्पृशेत्तत्तिथयो वारे एकस्मिन्

**अवमदिन** न॰ कर्म्म॰ । "तिथ्यन्तद्वयमेकोदिनवारो यत्र-तद्भवत्यवमदिनम्" ज्योतिषोक्ते दिनक्षये ।

**अवमन्तव्य** त्रि॰ अव+मन-तव्य । १अवज्ञेये२अनादरणीये- "बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः" मनुः ।

**अवमन्तृ** त्रि॰ अव+मन-तृच् स्त्रियां ङीप् । १अवज्ञातरि- २तिरस्कर्त्तरि च ।

**अवमन्थ** पु॰ अवमथ्नाति अव+मन्थ-अच् । सुश्रुतोक्ते पालीस्थे उपद्रवरूपे १रोगभेदे "अतऊर्द्ध्वं नामलिङ्गं वक्ष्ये पाल्यासु पद्रवान् । उत्पाटकश्चोत्पुटकः श्यावः कण्डुयुतो भृशम् । अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथेति" । "प्रलेपनमिदं दद्याद्वसिच्या वमन्थके" सुश्रु॰। तत्रोक्ते शूक-दोषनिमित्ते २व्याधिभेदे च यथा "लिङ्गवृद्धिमिच्छतामक्रम प्रवृत्तानां शूकदोषनिमित्ता दश चाष्टौ च व्याधयो जायन्ते तद्यथा सर्षिका अष्ठीलिका ग्रथितं कुम्भीका अलजी मृदितं सम्मूढपिडका अवमन्थ"इत्युपक्रम्य । "दीर्घा बह्व्यश्च पिडका दीर्यन्ते मध्यतस्तु याः । सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत्" तत्रैव लक्षितः । "अवमन्थे गते पाकं भिन्ने तैलं विधीयते" सुश्रु॰। ३अवमन्थनकारके त्रि॰

**अवमर्द्द** पु॰ अव+मृद्-घञ् । १पीडने । "मम त्वमासाद्य रणावमर्द्दम्" रामा॰२राज्याङ्गभेदे "अवमर्द्दः प्रतीघात स्तथा चैव बलीयसाम्" इति भा॰ शा॰ राजधर्मे ।

**अवमर्ष** पु॰ अव+मृष-घञ् । १आलोचनायाम्, "मुखं प्रति-मुखं गर्भोऽवमर्ष उपसंहृतिः । इति पञ्चास्य भेदाः स्युः" इत्युपक्रम्य "यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च सोऽवमर्ष" इति लक्षतः सा॰द॰ लक्षिते २नाटकस्य सन्ध्यङ्गभेदे च । विमर्ष इति पाठान्तरम् ।

**अवमान** पु॰ अव+मन-भावे घञ् । १अवज्ञायाम् २अनादरे च "अमृतस्येव चाकाङ्क्षेदवमानस्य सर्व्वदा" मनुः ।

**अवमानना** स्त्री अव+चुरा॰-मन-युच् ।अपमानकरणे "तत्त्व-ज्ञानापदीर्षादेर्निर्वेदः स्वावमानना" सा॰द॰। भावे ल्युट् । अवमानम् तत्रैव न॰ निर्वेदः स्वावमाननम्" हेमच॰ ।

**अवमानित** त्रि॰ अव+चुरा॰ मन-क्त । १कृतापमाने २कृतानादरे च विप्रलब्धा तु सा ज्ञेया नितान्तमवमा-निता" सा॰द॰।

**अवमानिन्** त्रि० अव+मन–णिनि स्त्रियां ङीप् । अवज्ञातरि २अनादृियमाणे च “धिङ्मामुपनतश्रेयोऽवमानिनम्” शकुन्तला । [२अनादरणीये च ।

**अवमाननीय** त्रि० अव+चु०–मन–अनीयर् । १अवज्ञेये

**अवमान्य** त्रि० अव+मन–ण्यत् । १अवज्ञेये २तिरस्कार्य्ये च मातुलाश्चाधिवेत्तव्या नावमान्या च कर्हिचित्” मनुः अव+चु०मन–ल्यप् । २अवज्ञायेत्यर्थे अव्य० ।

**अवमार्जन** न० अव+मृज–भावे ल्युट् । १प्रक्षालने करणे ल्युट् । २तत्साधने जलादौ “इमा ते वाजिन्नवमार्ज्जनानि” ऋ० १,१६२,५, “अवमार्ज्जनानि अङ्गप्रक्षालनसाधनान्युदकानि” भा० ।

**अवमूर्द्धन्** त्रि० अवनतो मूर्द्धाऽस्य । अवनतमस्तके ।

**अवमूर्द्धशय** पु० अवमूर्द्धा सन् शेते शी–अच् । अधोमुखतया शायिनि मनुष्ये । “उत्तानशयादेवा अवमूर्द्धशया मनुष्याः” इत्युक्तेः गर्भादौ तथाशयनाद्वा नरस्य तथात्वम् २तथाभूततया शायिमात्रे त्रि० । [उन्मोचने ।

**अवमोचन** न० अव+मुच–भावे ल्युट् । बन्धनराहित्ये

**अवमोटन** न० अव+मुट्–णिच्–ल्युट् । (मोचड़ान) परिवर्त्तनेनान्यथाभावादनरूपे परिमोटने ।

**अवयजन** न० अव+यज–गतौ करणे ल्युट् । अपगमसाधने “देवकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमस्यात्मकृतस्यैनसोऽवयजनमसि यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि यद्विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमस्येनस एनसोऽवयजनमसि” ताण्ड्यब्रा० “अवयजनम् अपगमनसाधनम्” भा० ।

**अवयव** पु० अवयूयते कार्य्यद्रव्येण संबध्यते अव+यु–कर्मणि अप । १द्रव्यारम्भके द्रव्ये “यथा परमाणुः द्व्यणुकं द्व्यणुकत्रसरेणुमारभते इत्यादिक्रमेण अन्त्यावयविपर्य्यन्तानि सर्वाणि द्रव्याणि स्वान्वितया अवयविद्रव्यान्तरमारभन्ते “द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्” वै०सू० उक्तेः । अन्त्यावयविभिन्नद्रव्याणि विहाय द्रव्याणां सजातीयद्रव्यान्तरारम्भकत्वं तदर्थः अन्त्यावयवी नित्यद्रव्यं च न कस्यचिदारम्भकम् । आरम्भकद्रव्ये च द्रव्यान्तरस्य समवायेनाऽवस्थित्याऽवयवत्वम् । आरम्भकद्रव्यञ्च उपादानकारणतया समवायिकारणतया च व्यवह्रियते अधिकमवयविशब्दे वक्ष्यते “अनित्या च तदन्या स्यात् सैवावयवयोगिनी” भाषा० । अवच्छिन्नपरिमाणवत्त्वम् अवयवत्वमिति केचित् प्रतिपेदिरे तन्न सम्यक्, घटादौ अवच्छिन्नपरिमाणवत्त्वेन तत्रातिव्याप्तेः किन्तु द्रव्यारम्भकद्रव्यत्वमेवावयवत्वम् । यु अमिश्रणे अप् । २देहे तस्यान्त्यावयवितया द्रव्यान्तरानारम्भकत्वेन इतरद्रव्यसमवायशून्यत्वात् तथात्वम् ३करादिषु देहावयवत्वात्तेषान्तथात्वम् । ते च प्राधान्येन पञ्च सुश्रुते दर्शिताः ७२ पृष्ठे अङ्गशब्दे उक्ताः । अङ्गप्रत्यङ्गानि च सूक्ष्मरूपेण गर्भे एव उत्पद्यन्ते क्रमशो विवर्द्धमानानि दृश्यन्ते यथोक्तं सुश्रुते “सर्व्वाङ्गप्रत्यङ्गानि युगपत् सम्भवन्तीत्याह धन्वन्तरिः गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च तद्यथा चूतफले परिपक्वे केशरमांसास्थिमज्जानः प्रत्यक् दृश्यन्ते कालप्रकर्षात्, तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात् । तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति एतेनैव वंशाङ्कुरोऽपि व्याख्यातः एवं गर्भस्य तारुण्ये सर्व्वेष्वङ्गेषु सत्स्वपि सौक्ष्म्यात्तदनुपलब्धिः । तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति” । अधिकं गर्भशब्दे वक्ष्यते । “तृतीये तु मासस्त्वङ्गैरिन्द्रियैश्च संयुक्तो भवतीत्याद्युक्तिस्तु व्यक्ताकृतापरा ।४समुदायस्य एकदेशे “पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च” भर्त्तृहरिः “क्रमेणाहोरात्रावयवाः” पा० । “क्रियापि नामैवमत्यन्तापरिदृष्टा पूर्व्वापरीभूतावयवा न शक्यते पिण्डीभूता निदर्शयितुम्” म०भा० “गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते” वाक्यप० । एकदेशाभिप्रायेणैव नास्तिकादीनां मते परमाण्वादौ अवयवव्यवहारः तैः परमाणुपुञ्जस्यैव घटादिरूपतास्वीकारात् । न्यायादिमतसिद्धपरार्थानुमानसाधनेषु ५वाक्येषु च । ते चावयवाः पञ्च इति बहवः त्रय इत्यन्ये । यथा प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाः पञ्च, प्रतिज्ञाहेतूदाहरणरूपाः हेतूदाहरणोपनयरूपा वा मतभेदेन त्रयः। यथा पर्व्वतो वह्निमान्, धूमात्, योयो धूमवान् स वह्निमान् यथा महानसम्, वह्निव्याप्यधूमवांश्चायम् तस्माद्वह्निमान् । प्रतिज्ञादीनां लक्षणानि च तत्तच्छब्दे वक्ष्यन्ते उपचारात् तत्प्रतिप्रतिपादके चिन्तामणिकृते अनुमानखण्डान्तर्गते ६ग्रन्थे । ७उपकरणमात्रे च ।

**अवयविन्** त्रि० अवयवः कारणत्वेनास्त्यस्य इनि । अवयवजन्ये द्रव्ये। अवयवित्वं च कार्य्यद्रव्यत्वम्। तच्च नैयायिकादिभिरवयविजन्यतया उत्पद्यते इत्यङ्गीकृतम्। तत्र सक्ता० प्रमाणमप्युपन्यस्तम् “ननु अवयविनि किं मानं ? परमाणुपुञ्जैरेवोपपत्तेः न च परमाणूनामतीन्द्रियत्वात् घटादेः प्रत्यक्षं न स्यादिति वा-

क्षम् एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात् यथा एकस्य केशस्य दूरेऽप्रत्यक्षत्वे तत्समूहस्य प्रत्यक्षत्वम् । न च एकः स्थूलो महान् घट इति बुद्धेरनुपपत्तिरिति वाच्यम् एको महान् धान्यराशिरितिवदुपपत्तेः, नैवं परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात् दूरस्थकेशस्तु नातीन्द्रियः सन्निधाने तस्यैव प्रत्यक्षत्वात्। न च तदानीम् अदृश्यपरमाणुपुञ्जात् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वात् न प्रत्यक्षत्वे विरोध इति वाच्यम् अदृश्यस्य दृश्यानुपादानत्वात् अन्यथा चक्षुरूष्मादिसन्ततौ कदाचिद् दृश्यत्वप्रसङ्गात् । न चातितप्ततैलादौ कथमदृश्यदहनसन्ततेः दृश्यदहनोत्पत्तिरिति वाच्यं तत्र तदन्तःपातिभिः दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात् । न च अदृश्यद्व्यणुकेन कथं त्रसरेणोरुत्पत्तिरिति ? वाच्यम् । यतो न वयं दृश्यत्वमदृश्यत्वं वा कस्यचित् स्वभावादाचक्ष्महे परन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवशात् दृश्यत्वं तथा च त्रसरेणोर्महत्त्वात् प्रत्यक्षं न तु द्व्यणुकादेःतदभावात् न हि तन्मतेऽपीदं सम्भवति परमाणौ महत्त्वाभावात् इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षत्वादनित्यत्वं तेषां चावयवावयविधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः । अतः क्वचिद्विश्रामो वाच्यः यत्र च विश्रामस्तस्यानित्यत्वे त्वसमवेतकार्य्योत्पत्तिप्रसङ्गः स्यात् अतस्तस्य नित्यत्वं महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्ति इति तस्य परमाणुत्वसिद्धिः न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ त्रसरेणोरवयवाः सावयवाः महदवयवत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः न चेदमप्रयोजकम् अपकृष्टमहत्त्वं प्रति अनेकद्रव्यवत्त्वस्य प्रयोजकत्वात् नचैवं क्रमेण तदवयवधारापि सिध्येदिति वाच्यम् अनवस्थाभयेन तदसिद्धेः" । अस्यार्थस्तु तत् दिनकर्य्याम् । 'बौद्धः शङ्कते नन्विति नन्वयं घट इत्यादि प्रतीतिरेव तत्र प्रमाणं भविष्यतीत्यत आह परमाणुपुञ्जैरेवेति विलक्षणसंस्थानविशिष्टैः परमाणुभिरेवेत्यर्थः उपपत्तेरिति अयं घट इत्यादिप्रतीतेरुपपत्तेरित्यर्थः । तत् समूहस्य परमाणुसमूहस्य । तत्र दृष्टान्तमाह यथेति । तत्समूहस्य केशसमूहस्य। अनुपपत्तिरिति परमाणुविषयत्वादिति शेषः उपपत्तेरिति तत्र यथा धान्यसमूहस्यैकत्वादेक इति प्रतीतिरेवं संयोगविशेषस्यैव महत्त्वाश्रयतया महानिति प्रतीतिस्तथा परमाणुपुञ्जेऽपीति भावः । प्रत्यक्षायोग्यत्वादिति तथाच स्वभावतोऽयोग्यानां परमाणूनां परस्परसंयोगमात्रेण योग्यत्वं न सम्भवतीति भावः । दूरस्थकेशस्तु स्वभावतो नातीन्द्रिय इति त्वदुक्तदृष्टान्तस्य वैषम्यमित्याह दूरस्थकेशस्त्विति तस्य दूरस्य केशस्य । तस्यैवेति एवकारश्च प्राक्तनसन्निधानपदेनान्वेति तथाच सन्निधान एव तस्य प्रत्यक्षत्वादित्यर्थः तथाच दूरत्वस्य प्रतिबन्धकत्वात्तद्दशायाम् अप्रत्यक्षत्वमात्रं तस्य, न तु स्वाभाविकाप्रत्यक्षत्वमिति भावः । उत्पन्नत्वादिति क्षणभङ्गवादिनां मते परमाणूनामुत्पत्तिस्वीकारादिति भावः । अन्यथा अदृश्यस्य दृश्योत्पादकत्वे। तत्र तादृशदहनोत्पत्तिस्थले । तदन्तःपातिभिः अतितप्ततैलान्तःपातिभिः । स्वभावात् कारणनैरपेक्ष्यात् उद्भूतरूपादीति आदिनालोकादिपरिग्रहः । तदभावे महत्त्वोद्भूतरूपाद्यभावे महत्त्वाभावादित्यर्थः । अत्र नास्तिकमतानुयायिनः परस्परविभक्तपरमाणूनां महत्त्वाभावादप्रत्यक्षत्वेऽपि परस्परसंयुक्तानां पुञ्जात्मनान्तेषां प्रत्यक्षे बाधकाभावः नच महत्त्वाभावएव बाधकः परस्परविलक्षणसंयोगस्यैव महत्त्वरूपस्य प्रत्यक्षजनकत्वात् नच परमाणूनां नित्यत्वाद्घटादावुत्पत्तिनाशयोः प्रतीत्यनुपपत्तिरिति वाच्यम् तन्मते पदार्थमात्रस्यैव क्षणिकत्वात् परमाणूनामप्युत्पत्तिनाशयोः स्वीकारात् नच परमाणुपुञ्जेषु घटत्वाङ्गीकारे कपालाद्घट इति प्रतीतेरनुपपत्तिः परमाणूनां कपालजन्यत्वाभावादिति वाच्यं तन्मते कपालस्यापि परमाणुपुञ्जरूपतया घटरूपपुञ्जेषु कपालरूपपुञ्जजन्यत्वस्वीकारात् पुञ्जात् पुञ्जोत्पत्तिरिति तेषां सिद्धान्तादित्याहुः, तन्न घट इत्यादिप्रतीतिविषयताया अनेकपरमाणुषु कल्पने गौरवात् अवयवातिरिक्तावयविसिद्धिरिति दिक् । मेरुसर्षपयोरपीति अपिशब्दः साम्यप्रसङ्ग इत्युत्तरं सम्बध्यते तेन च द्व्यणुकस्य सावयवारब्धत्वे महत्त्वापत्तिः समुच्चीयते साम्यं परिमाणतारतम्याभावः परिमाणकारणीभूताया अवयवसंख्याया उभयत्र साम्यादिति भावः । नच मेर्ववयवानां न सर्षपतुल्यपरिमाणवत्त्वं, सर्षपावयवानां च न मेर्ववयवतुल्यपरिमाणवत्त्वमित्यवयवपरिमाणविशेषाद्विशेष इति वाच्यम् मेर्ववयवसर्षपावयवयोरप्यनन्तावयवत्वेन तत्परिमाणतारतम्याभावस्याप्यापादनीयत्वात् नच मेरुसर्षपयोरवयवगतप्रचयाख्यसंयोगविशेष इति वाच्यम् प्रचयविशेषस्यापि संख्याविशेषनियम्यत्वेन संख्याविशेषाभावे तद्वि-

शेषानुपपत्तेरिति । ननु तथापि विश्रामाश्रयस्य नित्यत्वे मानाभाव इत्यत आह यत्र त्विति । असमवेतकार्य्योत्पत्ति प्रसङ्ग इति असमवेतभावकार्य्योत्पत्तिप्रसङ्ग इत्यर्थः । ननु तस्य नित्यत्वसिद्धावपि अणुत्वे किं मानमित्यत आह महत्परिमाणेति । चाक्षुषद्रव्यत्वादिति अत्रात्मनि व्यभिचारवारणाय चाक्षुषपदं घटाभावे व्यभिचारवारणाय द्रव्यपदम् तदवयवसिद्धाविति त्रसरेण्ववयवसिद्धावित्यर्थः । तदसिद्धेरिति अवयवधाराया असिद्धेरित्यर्थः । अत्र नव्याः त्रसरेणोरवयवाः सावयवा इत्याद्यनुमानयोरुक्तयोरप्रयोजकत्वेन त्रुटावेव विश्रामः नच चाक्षुषं प्रति महत्त्वं कारणं तथाच त्रुटौ महत्त्वमावश्यकं तच्चावयवसंख्याजन्यमिति अवयवं विना नोत्पद्यते इत्यनुकूलतर्कसत्त्वादप्रयोजकत्वं द्व्यणुकसाधकानुमानस्येति वाच्यम् त्रसरेणुमहत्त्वस्य नित्यत्वस्वीकारेणोक्ततर्कानवतारात् नचाणुव्यवहारस्याणुपरिमाणनिबन्धनतया तदाश्रयद्रव्यसिद्धिरावश्यकीति वाच्यम् तस्यापकृष्टपरिमाणनिबन्धनत्वात् महत्यपि महत्तमादणुव्यवहारात् न चैवं त्रसरेणुपुञ्ज एवास्त्ववयवीति वाच्यम् विप्रकीर्णेष्वपि तेषु घट इत्यादिप्रत्ययप्रसङ्गात् नच तत्संयोगत्वमेव घटत्वं घटोद्रव्यमित्यादिप्रतीतौ च परम्परया तद्भानमिति वाच्यं सम्भवति साक्षात् सम्बन्धविषयत्वे परम्परासम्बन्धविषयकत्वकल्पने गौरवादित्याहुः । ननु परमाणुत्रयेण कुतो न द्रव्यान्तरोत्पत्तिः परमाणुद्वयेन द्व्यणुकवत् द्व्यणुकद्वयेन द्रव्यान्तरोत्पत्त्यापत्तिस्त्रिभिर्द्व्यणुकैस्त्र्यणुकवदिति चेन्न प्रमाणाभावेन तादृशद्रव्यासिद्धौ परमाणुत्रये द्व्यणुकद्वये च द्रव्यारम्भकसंयोगाऽकल्पनात् । अत्रेदं चिन्त्यं त्रिभिः परमाणुभिरेव त्र्यणुकमस्तु परमाणुभ्यामनारम्भे सिद्धान्तिनां द्व्यणुकाभ्यामनारम्भ इव मानाभावात् फलबलेन त्रयाणामेव युगपद्द्रव्यारम्भसंयोगकल्पनात् वस्तुतो गवारम्भे दृश्यमानानां द्व्यणुकत्वमेव युक्तमणुद्व्यारब्धत्वे लाघवादिति"। अयमवयवी कारणात् भिन्नएव कार्य्यकारणयोरैक्याभावात् नियतपूर्ववर्त्तिन एव कारणतया कारणस्य प्राक्सत्त्वनियमेन कार्य्यस्य च तदाऽसत्त्वेन तयोर्भेदात् । अतएव "द्रव्याणि द्रव्यान्तरमारभन्ते" इति वै० सूत्रे अन्तरपदमुपात्तम् इति वैशेषिकादयः स्वीचक्रुः । सांख्यावेदान्तिनश्च कार्य्यस्य कारणैक्यमेव स्वीचक्रुः तथाहि "तदनन्यत्वमारम्भणशब्दादिभ्यः" "युक्तेश्च शब्दान्तराच्च" शा० सू० तद्भाष्ये चोक्तम् । "युक्तेश्च प्रागुत्पत्तेः कार्य्यस्य सत्त्वमनन्यत्वञ्च कारणादवगम्यते शब्दान्तराच्च । युक्तिस्तावद्वर्ण्यते दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते न हि दध्यर्थिभिर्मृत्तिकोपादीयते न घटार्थिभिः क्षीरम् । तच्चासत्कार्य्यवादे नोपपद्यते । अविशिष्टे हि प्रागुत्पत्तेः सर्वत्र सर्वस्यासत्त्वे कस्मात् क्षीरादेरेव दध्युत्पद्यते न मृत्तिकायाः, मृत्तिकाया एव घट उत्पद्यते न क्षीरात् । अथाविशिष्टेऽपि प्रागसत्त्वे क्षीरएव दध्नः कश्चिदतिशयो न मृत्तिकायां, मृत्तिकायामेव घटस्य कश्चिदतिशयो न क्षीरे इत्युच्येत तर्ह्यतिशयवत्त्वात् प्रागवस्थाया असत्कार्य्यवादहानिः सत्कार्य्यवादसिद्धिश्च । शक्तिश्च कारणस्य कार्य्यनियमार्था कल्प्यमाना नान्याऽसती वा कार्य्यं नियच्छेत् असत्त्वाविशेषादन्यत्वाविशेषाच्च । तस्मात् कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्य्यम् । अपिच कार्य्यकारणयोर्द्रव्यगुणादीनां चाश्वमहिषवद्भेदबुद्ध्यभावात्तादात्म्यमभ्युपगन्तव्यम् । समवायकल्पनायामपि समवायस्य समवायिभिः सम्बन्धेऽभ्युपगम्यमाने तस्य तस्यान्योऽन्यः सम्बन्धः कल्पयितव्यः इत्यनवस्थाप्रसङ्गः अनभ्युपगम्यमानेऽत्र विच्छेदप्रसङ्गः । अथ समवायः स्वयं सम्बन्धरूपत्वादनपेक्ष्यैवापरं सम्बन्धं सम्बध्यते, संयोगोऽपि तर्हि स्वयं सम्बन्धरूपत्वादनपेक्ष्यैव समवायं सम्बध्येत । तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवायकल्पनानर्थक्यम् । कथञ्च कार्य्यमवयविद्रव्यं कारणेष्ववयवेषु वर्त्तमानं वर्त्तेत किं समस्तेष्ववयवेषु वर्त्तेतोत प्रत्यवयवम् । यदि तावत् समस्तेषु वर्त्तेत ततोऽवयव्यनुपलब्धिः प्रसज्येत, समस्तावयवसन्निकर्षस्याशक्यत्वात् नहि बहुत्वं समस्तेष्वाश्रयेषु वर्त्तमानं व्यस्ताश्रयग्रहणेन गृह्यते । अथावयवशः समस्तेषु वर्त्तेत तदाप्यारम्भकावयवव्यतिरेकेणावयविनोऽवयवाः कल्प्येरन् यैरवयवैरारम्भकेष्ववयवेष्ववयवी वर्त्तेत । कोशावयवव्यतिरिक्तैर्ह्यवयवैरसिः कोशं व्याप्नोति । अनवस्था चैवं प्रसज्येत तेषु तेष्ववयवेषु वर्त्तयितुमन्येषामन्येषामवयवानां कल्पनीयत्वात् । अथ प्रत्यवयवं वर्त्तेत तदैकत्र व्यापारेऽन्यत्राव्यापारः स्यात् न हि देवदत्तः स्रुघ्ने सन्निधीयमानस्तदहरेव पाटलिपुत्रे सन्निधीयते युगपदनेकत्र वृत्तावनेकत्वप्रसङ्गात् देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः । गोत्वादिवत् प्रत्येकं परिसमाप्तेरदोष इति चेन्न तथा प्रतीत्यभावात् । यदि गोत्वादिवत् प्रत्येकं परिसमाप्तोऽवयवी स्यात् यथा गोत्वं प्रतिव्यक्ति प्रत्यक्षं गृह्यते एवमवय-

ऽपि प्रत्यवयवं प्रत्यक्षेण स्पृश्येत नत्वेवं नियतं स्पृश्यते । प्रत्येकं परिसमाप्तौ चावयविनः कार्य्येणाधिकारात्तस्य चैकत्वात् शृङ्गेणापि स्तनकार्य्यं कुर्य्यात् उरसा च पृष्ठकार्य्यं, न चैवं दृश्यते । प्रागुत्पत्तेश्च कार्य्यस्यासत्त्वे उत्पत्तिरकर्तृका निरात्मिका च स्यात् । उत्पत्तिश्च नाम क्रिया सा सकर्तृकैव भवितुमर्हति गत्यादिवत् । क्रिया च नाम स्यादकर्तृका चेति विप्रतिषिध्येत । घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका किन्तर्ह्यन्यकर्तृकेति कल्प्या स्यात् तथा कपालादीनामप्युत्पत्तिरुच्यमानान्यकर्तृकैव कल्प्येत तथाच सति घट उत्पद्यते इत्युक्ते कुलालादीनि कारणान्युत्पद्यन्त इत्युक्तं स्यात् न च लोके घट उत्पद्यत इत्युक्ते कुलालादय उत्पद्यमानाः प्रतीयन्ते उत्पन्नताप्रतीतेश्च । अथ स्वकारणसत्ता सम्बन्ध एवोत्पत्तिरात्मलाभश्च कार्य्यस्येति चेत् कथमलब्धात्मकं सम्बध्येतेति वक्तव्यं, सतोर्हि द्वयोः सम्बन्धः सम्भवति न सदसतोरसतो र्वा । अभावस्य च निरुपाख्यत्वात् प्रागुत्पत्तेरिति मर्य्यादाकरणमनुपपन्नम् । सतां हि लोके क्षेत्रगृहादीनां मर्य्यादा दृष्टा नाभावस्य । न हि वन्ध्यापुत्रो राजा बभूव प्राक् पूर्णवर्म्मणोऽभिषेकादित्येवं जातीयकेन मर्य्यादाकरणेन निरुपाख्यो वन्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते । यदि च वन्ध्यापुत्रः कारकव्यापारादूर्द्ध्वमभविष्यत् तत इदमप्युपापत्स्यत कार्य्याभावोऽपि कारकव्यापारादूर्द्ध्वं भविष्यतीति । वयन्तु पश्यामो वन्ध्यापुत्रस्य कार्य्याभावस्य चाभावत्वाविशेषात् यथा वन्ध्यापुत्रः कारकव्यापारादूर्द्ध्वं न भविष्यति एवं कार्य्याभावोऽपि कारकव्यापारादूर्द्ध्वं न भविष्यतीति । तन्वेवं सति कारकव्यापारोऽनर्थकः प्रसज्येत, यथैव हि प्राक्सिद्धत्वात् कारणस्य स्वरूपसिद्धये न कश्चिद्व्याप्रियते एवं प्राक्सिद्धत्वात् तदनन्यत्वाच्च कार्य्यस्य स्वरूपसिद्धयेऽपि न कश्चिद्व्याप्रियेत व्याप्रियते च, अतः कारकव्यापारार्थवत्त्वाय मन्यामहे प्रागुत्पत्तेरभावः कार्य्यस्येति । नैष दोषः यतः कार्य्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्यार्थवत्त्वमुपपद्यते । कार्य्याकारोऽपि कारणस्यात्मभूत एव अनात्मभूतस्यानारभ्यत्वादित्यभाणि । न च विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति न हि देवदत्तः सङ्कोचितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति, स एवेति प्रत्यभिज्ञानात् । यथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति, मम पिता मम माता मम भ्रातेति प्रत्यभिज्ञानात् । जन्मोच्छेदानन्तरितत्वात्तत्र तत्र युक्तं नान्यत्रेति चेन्न क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात् । अदृश्यमानानामपि वटधानादीनां समानजातीयावयवान्तरोपचितानामङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा तेषामेवावयवानामपचयवशाददर्शनापत्तावुच्छेदसंज्ञा । तत्रेदृग्जन्मोच्छेदान्तरितत्वेन चेदसतः सत्त्वापत्तिः सतश्चासत्त्वापत्तिः तथा सति गर्भवासिन उत्तानशायिनश्च भेदप्रसङ्गः । तथा बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः पित्रादिव्यवहारलोपप्रसङ्गश्च । एतेन क्षणभङ्गवादः प्रतिवदितव्यः । यस्य पुनः प्रागुत्पत्तेरसत् कार्य्यं तस्य निर्व्विषयः कारकव्यापारः स्यात् अभावस्य विषयत्वानुपपत्तेः आकाशहननप्रयोजनखड्गाद्यनेकायुधप्रसक्तिवत् । समवायिकारणविषयः कारकव्यापारः स्यादिति चेन्न अन्यविषयेण कारकव्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात् । समवायिकारणस्यैवात्मातिशयः कार्य्यमिति चेन्न अतस्तर्हि सत्कार्य्यापत्तिः । तस्मात् क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्य्याख्यां लभन्त इति न कारणादन्यत्कार्य्यं वर्षशतेनापि शक्यं कल्पयितुम् । तथा च मूलकारणमेवान्त्यात्कार्य्यात् तेन तेन कार्य्याकारेण नटवत् सर्व्वव्यवहारास्पदत्वं प्रतिपद्यते । एवं युक्तेः कार्य्यस्य प्रागुत्पत्तेः सत्त्वमनन्यत्वञ्च कारणादवगम्यते । शब्दान्तराच्चैतदवगम्यते । पूर्व्वसूत्रे असद्व्यपदेशिनः शब्दस्योदाहृतत्वात्ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरः "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयमित्यादि।" "तद्धैक आहुरसदेवेदमग्र आसीदिति" चासत् पक्षमुपक्षिप्य "कथमसतः सज्जायेत?" इत्याक्षिप्य "सदेव सोम्येदमग्र आसीत्" इत्यवधारयति। तत्रेदं शब्दवाच्यस्य कार्य्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात् सत्त्वानन्यत्वे प्रसिध्यतः यदि तु प्रागुत्पत्तेरसत्कार्य्यं स्यात् पश्चाच्चोत्पद्यमानं कारणे समवेयात् तदन्यत्कारणात् स्यात् तत्र "येनाश्रुतं श्रुतं भवतीयं प्रतिज्ञा पीड्येत सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते" भा० । "पटवच्च" शा० सू० । "यथा च संवेष्टितः पटो न व्यक्तं गृह्यते किमयं पटः किम्वान्यद्द्रव्यमिति स एव प्रसारितो यत् संवेष्टितं द्रव्यं स पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते यथा च संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते स एव प्रसारणसमयेऽपि विशिष्टायामविस्तारो गृह्यते न संवेष्टितरूपादयं भिन्नः पटः इति । एवं तन्त्वादिकारणावस्थं पटादि

कार्य्यमस्पष्टं सत् तुरीवेमकुविन्दादिकारकव्यापाराभिव्यक्तं स्पष्टं दृश्यते। ततः संवेष्टितपटप्रसारितपटन्यायेनानन्यत् कारणात् कार्य्यमित्यर्थः” भा०।सां०कौ० कारणात् कार्य्यस्यानन्यता दर्शिता यथा “कार्य्यस्य कारणाभेदसाधकानि च प्रमाणानि। न पटस्तन्तुभ्योभिद्यते तद्धर्म्मत्वात् इह यद्यतोभिद्यते तत्तस्य धर्म्मो न भवति यथा गौरश्वस्य। धर्म्मश्च पटस्तन्तूनां तस्मान्नार्थान्तरम्। उपादानोपादेयभावाच्च नार्थान्तरत्वम्। नार्थयोरुपादानोपादेयभावः यथा घटपटयोः उपादानोपादेयभावश्च तन्तुपटयोः। तस्मान्नार्थान्तरत्वमिति। इतश्च नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावात्। पदार्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः” नचेह संयोगाप्राप्ती तस्मान्नार्थान्तरत्वमिति। इतश्च पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरकार्य्याग्रहणात्। इह यद्यस्माद्भिन्नं तस्मात्तस्य गुरुत्वान्तरकार्य्यं दृश्यते यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्य्योऽवनतिविशेषोऽधिकः न च तथा तन्तुगुरुत्वकार्य्यात् पटगुरुत्वस्य कार्य्यान्तरं दृश्यते तस्मादभिन्नस्तन्तुभ्यः पट इति। तान्येतान्यवीतान्यभेदसाधनानि। तदेवमभेदे सिद्धे तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटः, न तन्तुभ्योऽर्थान्तरं पटः। स्वात्मनि क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदाश्च नैकान्तिकं भेदं साधयितुमर्हन्ति एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात्। यथाहि कूर्म्मस्याङ्गानि कूर्म्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति न तु कूर्म्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयोविशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते न पुनरसतामुत्पादः सतां वा निरोधः। यथाह भगवान् कृष्णद्वैपायनः “नासतोविद्यते भावो नाभावो विद्यते सतः” इति यथा कूर्म्मः स्वावयवेभ्यः सङ्कोचिविकाशिभ्योन भिन्नः एवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः। एवञ्चेत् तन्तुषु पट इति व्यपदेशो यथेह वने तिलका इत्युपपन्नः। न चार्थक्रियाभेदोऽपि भेदमापादयति एकस्यापि नानार्थक्रियादर्शनात् यथैक एव वह्निर्दाहकः प्रकाशकः पाचकश्चेति। नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनात् यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्व्वन्ति न तु शिविकावहनं मिलितास्तु शिविकां वहन्ति एवं तन्तवः प्रत्येकं प्रावरणमकुर्व्वाणा अपि मिलिताः आविर्भूतपटभावाः प्रावरिष्यन्ति। स्यादेतत् आविर्भावः पटस्य कारणव्यापारात् प्राक् सन्नसन्वा असंश्चेत् प्राप्तं तर्ह्यसत उत्पादनम्। अथ सन्, कृतं तर्हि कारणव्यापारेण। न हि सति कार्य्ये कारणव्यापारप्रयोजनं पश्यामः। आविर्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः। तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्ते इति रिक्तं वचः। अथासदुत्पद्यत इत्यत्रापि मते केयमसदुत्पत्तिः सती असती वा, सती चेत् कृतं तर्हि कारणैः, असती चेत्तस्या अप्युत्पत्त्यन्तरमित्यनवस्था। अथोत्पत्तिः पटान्नार्थान्तरम् अपि तु पट एवासौ तथापि यावदुक्तं भवति पट इति तावदुक्तं भवत्युत्पद्यत इति न वाच्यं पौनरुक्त्यात् विनश्यतीत्यपि न वाच्यं उत्पत्तिविनाशयोर्युगपदेकत्र विरोधात्। तस्मादियं पटोत्पत्तिः स्वकारणसमवायो वा स्वकारणसत्तासमवायोवा उभयथापि नोत्पद्यते अथ च तदर्थानि कारणानि व्यापार्य्यन्ते एवं सत एव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम्। न च पटरूपेण कारणानां सम्बन्धः, तद्रूपस्याक्रियात्वात् क्रियासम्बन्धित्वाच्च कारकाणाम् अन्यथा कारकत्वाभावात्” व्याख्यातञ्चैतदस्माभिस्तट्टीकायां यथा “तद्धर्म्मत्वात् तेषां तन्तूनां धर्म्मत्वात् अवस्थाविशेषात्मकत्वात् स्वसत्त्वनियतसत्ताकत्वाद्वा। तत्सत्त्वनियतसत्ताकत्वरूपहेतुमध्ये एवाऽन्वयव्याप्तेः प्रवेशात् व्यतिरेकव्याप्तिं दर्शयति यत् यतोभिद्यते इत्यादि तथा च व्यापकस्य धर्म्मत्वाभावस्य निवृत्त्या व्याप्यस्य भेदस्य निवृत्तेरभेदसिद्धिरिति भावः। पक्षे धर्म्मत्वरूपहेतुसत्त्वप्रदर्शनाय उपनयरूपन्यायाङ्गमाह धर्म्मश्चेत्यादि। धर्म्मत्वं च प्रागुक्तम्। निगमयति तस्मान्नार्थान्तरमिति। अन्योऽर्थः पदार्थः अर्थान्तरं मयूरव्यंसकादित्वात् समासे क्लीवता। पटः तन्तुभ्यो न भिन्नः पदार्थः किन्तु अभिन्न एवेत्यर्थः। उपादीयते कार्य्यजननाय विशेषरूपेण गृह्यते इत्युपादानम् कार्य्यस्यानागतावस्थाविशेषाश्रयरूपं कारणं तदाश्रितसूक्ष्मावस्थापन्नं कार्य्यमुपादेयं तद्भावात् कार्य्यकारणविशेषरूपत्वादित्यर्थः तथा च कार्य्यस्यानागतावस्थाश्रयत्वमेवोपादानकारणत्वम्, तच्च अनागतावस्थापन्नकार्य्यरूपमेव अन्यस्य दुर्वचत्वात् अन्यथा सर्व्व एव सर्व्वकार्य्यजननाय उपादीयेरन् न च तथा उपादीयन्ते। उपादीयन्ते च पटादिजननाय तन्तवः न तु मृदादयः। न च प्रागभाव एव तस्य नियामकः, तस्य अभावत्वेन स्वतोविशेषकत्वाभावात्

प्रतियोग्युपरक्तस्य तस्य तदात्मकत्वनन्तु प्रतियोग्यसत्त्वकाले ऽसम्भवात् उत्पत्तेः प्राक् प्रतियोगिनोऽसत्त्वेन तेन सह प्रागभावस्य संबन्धस्यानौचित्यात् इत्यनागतावस्थापन्नकार्य्यात्मकत्वमुपादानस्य युक्तम् तस्मात् पटः न तन्तुभ्यो भिन्न इत्युपेयमिति भावः । संयोगाप्राप्त्यभावादिति । संयोगश्च अप्राप्तिः विभागश्च तयोरभावात् । तथाच संयोगाभावः विभागाभावश्च पृथक् अभेदसाधकः यथा पटस्तन्तुभ्यो न भिद्यते तत्संयोगानाश्रयत्वात् यद्यतो भिद्यते तयोः संयोगोदृष्टः यथा घटपटयोः । न च गुणेषु व्यभिचारः स्वमते तत्र तन्त्वभेदस्येष्टत्वात् द्रव्यत्वे सतीति हेतोर्विशेषणे च व्यभिचाराभावाच्च । अप्राप्तिर्वेति विभागश्चेत्यर्थः तथा च संयोगानाश्रयत्वस्येव विभागानाश्रयत्वस्यापि अभेदसाधकत्वमिति भावः । गुरुत्वान्तरकार्य्याग्रहणादिति । अयमाशयः । अवयवतन्तुपरिमाणेनेव तद्गुरुत्वेन स्वापेक्षयाधिकं महत्परिमाणमिव गुरुत्वम् जन्यते, गुरुत्वञ्च पतन इव स्वाश्रिततुलादण्डादेरवनतिविशेषे हेतुरिति नैयायिकादिभिरभ्युपगम्यते । तत्र यदि पटस्तन्तुभ्योभिद्येत तदा तदाश्रितगुरुत्वविशेषेण स्वाश्रिततुलादण्डादेरवनतिविशेषो ऽत्र गृह्येत यथा एकपलिकस्वर्णापेक्षया द्विपलिकस्वर्णस्य, तथा च पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरप्रयुक्तस्वाश्रिततुलादण्डाद्यवनतिविशेषग्रहणायोग्यत्वात् गुरुत्वान्तरयुक्तस्वर्णादिवत् तुल्यगुरुत्वयुक्तपदार्थे व्यभिचारवारणाय ग्रहणायोग्यत्वादित्युक्तं तस्य च पृथक् तुलादण्डारोपणेऽवनत्यन्तरस्य ग्रहणसम्भवात् तन्तुपटयोश्च न तथासम्भव इति अभिप्रायमित्यन्यत्र विस्तरः। तन्तुगुरुत्वस्य कार्य्यं स्वाश्रिततुलादण्डादेरवनतिविशेषस्तस्मात् कार्य्यान्तरम् अवनत्यन्तरं न दृश्यते न गृह्यते इत्यर्थः । अवीतानि व्यतिरेकव्याप्तियुक्तानि यथा च तत्र तत्र व्यतिरेकव्याप्तिस्तथानुपदं तत्रतत्र दर्शितं प्राक् । पटइति बुद्धिविषयाः व्यपदेशभाजश्चेति शेषः । फलितमाह न तन्तुभ्योऽर्थान्तरमिति । अभेदसाधकहेतोः सत्प्रतिपक्षितत्वमाशङ्कते स्वात्मनीत्यादि । क्रिया उत्पादनक्रिया, निरोधः प्रध्वंसस्तयोर्बुद्धिः तथा च कार्य्यकारणयोरभेदे कार्य्यस्य कारणात्मकत्वेन स्वतः स्वस्योत्पत्तिविनाशबुद्ध्यसम्भव इत्यर्थः । व्यपदेशः व्यवहारः अर्थक्रिया प्रयोजनोत्पादनं क्रियाव्यवस्था प्रावरणादिकार्य्यनियमः तेषां भेदः पश्चात्पुनर्दर्शनः । तथा च कार्य्यकारणयोरभेदे तन्तुषु पट इति कथं भेदव्यपदेशः ? कथं वा प्रयोजनान्तरजनकता, ? प्रयोजनान्तरनियमश्च स्यादित्यर्थः । इत्यस्यात्र प्रयोगः पटस्तन्तुभ्यो भिद्यते तत्कार्य्यत्वेन, तत्र नष्टत्वेन वा प्रतीयमानत्वात्, तन्तुषु पट इति व्यपदेशप्रयोजकसंज्ञाभेदात्, विभिन्नार्थसाधकत्वात्, कार्य्यभेदवत्त्वाच्च । इति पञ्चभिर्हेतुभिः सत्प्रतिपक्षितोऽभेदसाधकहेतुर्नाभेदसाधनायालमित्याशङ्कार्थः । समाधत्ते नैकान्तिकमिति । ऐकान्तिकं वास्तवमित्यर्थः तथा च तत्र तत्रावास्तवएव भेदव्यवहारो न वास्तवाभेदप्रतिहन्तीति भावः । एवञ्च बुद्धिमात्रस्य व्यवहारमात्रस्य वा वास्तविकत्वप्रयोजकत्वे इदं रजतमितिबोधात् व्यवहाराच्च शुक्तिरजतस्यापि वास्तवत्वापत्तिः । तथा अर्थक्रियाक्रियाव्यवस्थाभेदयोश्च न भेदसाधकत्वम् एकस्यैव वह्न्यादेः प्रकाशनपाचनादिरूपनानाकार्य्याणां, विष्टीनां व्यस्तानां मार्गदर्शनादिकार्य्यस्य समस्तानां तु शिविकावाहनादिविभिन्नकार्य्यस्य च सम्पादनस्य दृष्टत्वात् तत्र तत्र हेतोर्व्यभिचाराच्च तयोर्भेदसाधकतेति न सत्प्रतिपक्षितत्वमभेदसाधकहेतोरिति भावः । तदेव क्रमश उपपादयति एकत्वेऽपीति । प्रध्वंसन्ते नश्यन्ति । कूर्म्मेत इत्यनुषङ्गः अस्मिन् पक्षे च कूर्म्मे इत्यर्थः सार्व्वविभक्तिकः सप्तम्यास्तसिल् । यथाहेति भगवद्गीतायामितिशेषः । असतोऽसच्छब्दार्थस्य, भावः सत्त्वम्, सतः सच्छब्दार्थस्य न अभावः असत्त्वम्, सदसतोरेकत्र समावेशाभावादिति शेषः । आपादयति व्यतिरेकव्याप्त्या साधयति तथा च प्रावरणादिक्रियाभेदः कारणभेदं विना अनुपपन्न इति व्यापकः प्रावरणादिप्रयोजनभेदाभावः निवर्त्तमानः व्याप्यं कारणभेदाभावं निवर्त्तयन् कार्य्यस्य कारणाद्भेदम् साधयतीत्यर्थः । इति यन्मतं तदनूद्य नञा दूषयित्वा तत्र हेतुप्रदर्शनाय व्यभिचारं दर्शयति एकस्यापीति तथा च कार्य्यभेदाभावः न कारणभेदाभावव्यापकः एकस्मिन् वह्न्यादौ नानाकार्य्यदर्शनात् तथा च भेदसाधकहेतुर्व्यभिचारीति भावः । एवम् भेदसाधकहेतुषु दूषितेषु इदानीं आविर्भावादेः सदसत्त्वे विकल्पेन दूषयितुं शङ्कते स्यादेतदित्यादि । कर्त्तमित्यव्ययम् अलमर्थकं कारणव्यापारेणेति तृतीयान्तेनान्वयि तथा च कारणव्यापारसाध्यं नास्ति तस्य स्वतएव सिद्धत्वादित्यर्थः । क्रियन्ते उत्पाद्यन्ते पटरूपेण अवस्थाप्यन्ते इत्यपि बोध्यम् । यद्दि उभयवादिनोस्तुल्यदोषत्वं न तद्दूषणमित्याशयेन प्रतिबन्दिरूपदूषणदानायाह अथासदुत्पद्यत इत्यादि। उत्पत्तिः

आद्यक्षणसंबन्धः स च स्वरूपसंबन्धविशेषः न तु संयोगमात्रः गुणक्रिययोस्तदसम्भवात् तयोश्च उत्पत्तिव्यवहारस्य सर्व्वसिद्धत्वात् । प्रकृते स्वरूपसंबन्धविशेषश्च अनुयोगिस्वरूपएव एवञ्च उत्पत्तिः पटरूप एव नार्थान्तरमिति पटस्य उत्पत्तेः प्राक् असत्त्वात् तत्र कारणव्यापारापेक्षा भविष्यतीति शङ्कते अथोत्पत्तिरित्यादि । दूषयति तथापीति । पटादिशब्देन पटत्वविशिष्टस्यैव उत्पत्तिमतोऽप्युक्तत्वात् उत्पद्यते इति न प्रयोक्तव्यम् तद्वाच्यार्थस्योक्तत्वात् तदुक्तौ च पौनरुक्त्यात् घटो घट इतिवत् न तत्र शाब्दबोध इति भावः । पटादिशब्दस्य उत्पत्त्यर्थकत्वे दूषणान्तरमप्याह विनश्यतीत्यादि न वाच्यं प्रयोक्तुं न शक्यम् अयोग्यत्वादिति शेषः । पटशब्देन पटत्वविशिष्टस्यैव उत्पत्तिमतोऽप्यभिधानात् उत्पत्तिमति चैकदा विनाशप्रतियोगित्वासम्भवेनायोग्यत्वादित्यर्थः । अयोग्यत्वे हेतुमाह उत्पत्त्यादीति एकत्र एकस्मिन् धर्म्मिणि युगपदेकदा विरोधात् सहानवस्थानात् । कालान्तरे भवितुमर्हतीति द्योतनाय युगपदिति । विनश्यतीति वर्त्तमानताप्रतीतेर्न विभिन्नकालता तयोरिति भावः। एवमुत्पत्तेः पटस्वरूपत्वाभावासम्भवमुक्त्वा अन्यरूपतास्वीकारेऽपि उत्पत्तेरुत्पत्त्यसम्भव एवेत्याह तत्रादिमं पटोत्पत्तिरित्यादि । स्वकारणसमवायः स्वस्य कारणेषु तन्तुषु समवायः तत्संबन्धविशेषरूपा पटोत्पत्तिः । समवायस्य च सर्वदा विद्यमानत्वात् न तथा उत्पत्तिः । समवायस्य नित्यत्वात् पटस्य कादाचित्कोत्पत्तिः कथं स्यादित्यतः पक्षान्तरमाह स्वसत्तासमवाय इति । स्वसत्तया स्वकारणे विद्यमानतया यः कारणे समवायस्तथा च स्वसत्ताकालिकत्वविशिष्टसमवायस्य पूर्व्वमसत्त्वान्न कादाचित्कत्वव्याघात इति भावः । उभयथापि उत्पत्तेरुभयरूपमध्येऽन्यतररूपत्वेऽपीत्यर्थः न उत्पद्यते उत्पत्तिरिति शेषः । सिद्धस्वरूपत्वेऽपि सर्व्वजनानुभवसिद्धायाः कारणव्यापारापेक्षाया अनौचित्यस्य उभयमतेऽपि तुल्यत्वात् प्रतिबन्दिसमवधानमिति भावः । उत्पत्तेः कार्य्यस्य रूपेण सम्बन्धरूपतां शङ्कते न चेति । पटरूपस्य तन्तुरूपजन्यत्वात् तेन सह कारणानां संबन्धएव कार्य्यस्य उत्पत्तिस्तथा च तस्य जन्यत्वात् कारणव्यापारापेक्षेति न समानं दूषणमिति भावः । दूषयति रूपस्येति । रूपस्य भवन्मते गुणत्वेन क्रियारूपत्वाभावात् उत्पत्तेश्च क्रियारूपतायाः सर्व्वैरिष्यमाणत्वात् कारणानां च क्रियानुबन्धित्वेनैव कारकत्वाभ्युपगमात् । तन्तुभ्यः पटउत्पद्यते इत्यादिषु च तन्त्वादेर्नासत्पत्तिकारकत्वप्रतीतेश्च नोत्पत्तेः पटरूपसंबन्धरूपतेति" भावः ।

**अवयाज्** पु० अव+यज–ण्वि । अपकृष्टयाजके संबुद्धौ अवयाः

**अवयातृ** त्रि० अव+या–तृच् । पृथक् कर्त्तरि । "अदितिर्भवास्यवयाता हरसो दैव्यस्य" ऋ० ८,४८,२। "अवयाता पृथक्कर्त्ता" भा० ।

**अवयान** न० अव+या–ल्युट् । अपगतौ "इयं धीर्भूया अवयानमेषाम्" ऋ० १,१८५,८, "एनां पापानामवयानमपगमम्" भा० ।

**अवयुन** त्रि० वयुनं प्रज्ञा निरु० न०ब० । प्रज्ञाशून्ये । "सदृत्तमोऽवयुनम्" ऋ० २,२१,२,

**अवर** पूजायां कण्ड्वा० प०सक०सेट् । अवर्य्यति पूजयतीत्यर्थः।

**अवर** त्रि० वृ–बा० अप् न०त० । १चरमे, २अधमे, ३काव्ये च ।४पश्चाद्वर्त्तिनि ५देशे ६काले पु० ७दिशि स्त्री ८तद्वर्त्तिनि त्रि०। हस्तिजङ्घायाः ९पश्चाद्देशे न०। "दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय" गी० अस्य व्यवस्थावाचित्वे सर्व्वनामकार्य्यम् ङसिङ्योस्तु वा । "श्रद्दधानः परां विद्यामाददीतावरादपि" मनुः अवरस्मादिति च । व्यवस्था च देशकृता कालकृता बुद्धिकल्पिता च तत्र देशकृता यदवरं कौशाम्ब्याः । कालकृता यदवरमाग्रहायण्याः । बुद्धिकल्पिता अवरादपीतिमानवे । मासेनावरः मासावरः इत्यादौ समासे विभाषावाक्ये च न सर्व्वनामकार्य्यं मासावराय इत्यादि । च "इषुमात्रावरं स्थण्डिलमुपलिप्य" स्मृ० । ५त० । आद्यन्तभेदे त्रि०।

**अवरज** पु० अवरस्मिन् काले जायते जन–ड । १कनिष्ठसोदरे भ्रातरि, २शूद्रे च । मनुष्येषु प्रथमोत्पत्तौ तस्य जघन्यजत्वात् तथात्वम् ३कनिष्ठसोदरभगिन्यां, ४शूद्रायाञ्च स्त्री टाप् । "अस्य चावरजं विद्धि भ्रातरं मां तु लक्ष्मणम्" रामा० "यदि स्त्री यद्यवरजः श्रेयःकिञ्चित् समाचरेत् "मनुः "विदर्भराजावरजा तथैवम्"। "रावणावरजा तत्र राघवं मदनातुरा" इति च रघुः ५पश्चाज्जातमात्रे त्रि० ।"आत्मभूरवरजाखिलप्रजः स्वपतेरवरजत्वमाययौ" माघः ।

**अवरत** त्रि० अव+रम–क्त । विश्रान्ते अनवरतं सततम् ।

**अवरतस्** अव्य० अवर+तसिल् । अवरः अवरस्मिन् अवरस्मादित्यर्थे । अवरतः रमणीयम् आगतः, वसति वा ।

**अवरति** स्त्री अव+रम–क्तिन् । १विरामे, २निवृत्तौ च ।

**अवरवर्ण** पु० कर्म्म० । शूद्रे ।

**अवरवर्णज** पु० अवरवर्णः सन् जायते जन–ड । शूद्रे "न्या तु हतिनिपातेन सर्वेनावरवर्णजः" "ब्राह्मणान् बाधमानन्तु कामादवरवर्णजम्" इति च मनुः ।

**अवरव्रत** पु० अवरं अत्यन्तमेव व्रतमस्य । १सूर्य्ये २अर्कवृक्षे च । अवरम् अधमं व्रतमस्य । ३हीनव्रते त्रि० ।

**अवरशैल** पु० अवरः पश्चाद्वर्त्ती शैलः । अस्ताचले ।

**अवरस्तात्** अव्य० अवर+प्रथमाद्यर्थे अस्ताति । प्रथमा प्रभृतिसप्तम्यन्तेऽवरशब्दस्यार्थे । अवरस्तात् रमणीयम्, आगतः वसति वा । [अत्यन्तनिर्जने ।

**अवरहस** न० अवततं रहः अच् समा० । अवतते रहसि

**अवरार्द्ध** न० कर्म्म० । अपरभागे "सकृत्कर्म्म पितॄणाम-परार्द्धं देवानाम्" इति । "अपरार्द्धतश्च परार्द्धतश्च परि-स्कद्य" शत० ब्रा० २देहस्य पश्चाद्भागे च ।

**अवरार्द्ध्य** त्रि० अवरार्द्धे भवः यत् । शेषभागभवे । न वरत्वेन अर्ध्यते ऋध–णिच्–कर्म्मणि यत् । न्यूने । "नावरार्द्ध्यं ततः कुर्य्यात् पूर्व्वपात्रमिति स्थितिः" छन्दो० परि० । "अवरार्द्ध्य न्यूनम्" स० त० रघु० "दशगवावरार्द्ध्या दक्षिणा" का० श्रौ० ।

**अवरीण** त्रि० अव+रिङ–क्त । तिरस्कृते । [नास्ते ।

**अवरीयस्** त्रि० न वरीयान् न० त० स्त्रियां ङीप् । अस-

**अवरुग्ण** त्रि० अव+रुज–क्त । १भग्ने २रोगान्विते च ।

**अवरुद्ध** त्रि० अव+रुध–क्त । १प्रतिरुद्धे अर्थ्यरसंवलिते २गुप्ते च "अस्ति कश्चिद्राजसूनुरवरुद्धश्चरन्" दशकु० इतर गमननिषेधेन रक्षितायां ३स्त्रियां स्त्री । (राखनी) ।

**अवरुद्धि** स्त्री अव+रुध भावे क्तिन् । १अवरोधने २प्रतिरोधे "इन्द्रियाणां वीर्य्याणामवरुद्धौ" श्रुतिः ।

**अवरूढ़** त्रि० अव+रुह–क्त । १कृतावरोहणे उच्चस्थानात् निम्नगते । २उत्पाटिते वृक्षादौ च ।

**अवरोचक** अवरोचयति रुचिह्रासं करोति अव+रुच–णिच्–ण्वुल् । अवरोचके रोगभेदे "धर्म्मकर्म्मश्लिष्टं तत्र काम-स्यावरोचकः" सुश्रु० ।

**अवरोध** पु० अव+रुध–भावे घञ् । १निरोधे "फेनायमानं स्रोतोऽवरोधः" सुश्रु० बलादि० मतुप् वा ठनौ बाधक इनि अवरोधवान् अवरोधी अवरोधयुक्ते त्रि० । कर्म्मणि घञ् । राजान्तःपुरस्थायां २योषिति, ३राजदारेषु च । "तत्र तृष्णावरोधानां भर्त्तृषु व्यक्तविक्रमम्" । "कलत्रवन्तमात्मानमवरोधे महत्यपि" रघुः आधारे घञ् । ४राजान्तःपुरे । "पश्चावरोधे शतशोऽसदोषैः" इति रघुः । "निभ्ये विनीतैरवरोधदक्षैः" कुमा० । "विलुलितस्रमवरोधवधूपपात" माघः । ल्युट् । अवरोधनं निरोधे न० ।

**अवरोधक** त्रि० अव+रुध–ण्वुल् । १प्रतिरोधके २आवरके च । "सुधन्वा वीर्य्यवान्राजा मिथिलामवरोधकः" रामा० आर्षत्वात् कर्म्मणि न षष्ठी ।

**अवरोधायन** न० ६त० । अन्तःपुरे ।

**अवरोधिक** पु० अवरोधे तद्रक्षणादौ नियुक्तः ठन् । राजान्तःपुररक्षणार्थं नियुक्ते १वामनादौ । अवरोधः स्थानं निवासत्वेनास्त्यस्य ठन् । "नृपान्तःपुरस्थायां स्त्रियां स्त्री । "वधुस्तुरङ्गाधिरूढोऽवरोधिका" माघः ।

**अवरोधिन्** त्रि० अवरुणद्धि अव+रुध–णिनि स्त्रियां ङीप् । १रोधके २आवरके च ।

**अवरोपण** न० अव+रुह–णिच्–पः ल्युट् । उत्पाटने ।

**अवरोपित** त्रि० अव+रुह–णिच्–पः क्त । उत्पाटिते ।

**अवरोह** पु० अव+रुह–घञ् । १अवतरणे, (नामा) ऊर्द्ध्व-देशान्निम्नदेशगमने । कर्त्तरि संज्ञायां घ । तरोर्मूला-दुपपर्य्यन्तमारूढ़ायां २गुडूच्यादिलतायाम् । ३अपादाने घञ् । चन्द्रादिलोके स्वर्गे, ततो हि भोगावसाने सर्व्वेऽवतरन्ति । तत्र देहिनां चन्द्रलोकादवरोह-प्रकारस्तावदुक्तः शा० सूत्रे तद्भाष्ये च यथा "कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च" शा० सू० । "इष्टादिकारिणां धूमादिवर्त्मना चन्द्रमण्डलमारूढ़ानां ततः प्रत्यवरोह आम्नायते "तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथेत" मित्यारभ्य यावत् "रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिमिति" । तत्रेदं विचार्य्यते किं निरनुशया भुक्तकृत्स्नकर्म्माणोऽवरोहन्ति? आहोस्वित् सानुशया? इति । किं तावत् प्राप्तं निरनुशया इति । कुतः? यावत्सम्पातमिति विशेषणात् । सम्पातशब्देनात्र कर्म्माशय उच्यते सम्पतत्यनेनास्माल्लोकादमुं लोकं फलभोगायेति । यावत्सम्पातमुषित्वेति च कृत्स्नस्य तस्य तत्रैव भुक्ततां दर्शयति । "तेषां यदा तत्पर्य्यवैतीति" च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते । स्यादेतत् यावदमुष्मिंल्लोके उपभोक्तव्यं कर्म्म तावदुपभुङ्क्त इति कल्पयिष्यामीति नैवं कल्पयितुं शक्यते यत् किञ्चेत्यन्यत्र परामर्शात् । "प्राप्यान्तं कर्म्मणस्तस्य यत् किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्म्मणे" इति ह्यपरा श्रुतिर्यत्किञ्चेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्म्मणस्तत्र क्षयितां दर्शयति । अपि च प्रायणमनारब्ध-

फलस्य कर्म्मणोऽभिव्यञ्जकं प्राक् प्रायणादारब्धफलेन कर्म्मणा प्रतिबद्धस्य अभिव्यक्तेरनुपपत्तेः । तद्वाविशेषेण यद्यावत् किञ्चिदनारब्धफलं तस्य सर्व्वस्याभिव्यञ्जकं न हि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति नह्य विशिष्टे प्रदीपसन्निधौ घटोऽभिव्यज्यते, न पटस्त्वनुपपद्यते । तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः "कृतात्यये अनुशयवानिति" । येन कर्म्मवृन्देन चन्द्रमसमारूढ़ाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनशोकाग्निसंपर्कात् प्रविलीयते सवितृकिरणसंपर्काद्धिमकरकाइव हुतभुगर्च्चिःसंपर्कादिव च घृतकाठिन्यम् । ततः कृतात्यये कृतस्येष्टादेः कर्म्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममव रोहन्ति । केन हेतुना? दृष्टस्मृतिभ्यामित्याह । तथाहि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वेति" । चरणशब्देनानेनानुशयः सूच्यत इति वर्णयिष्यति । दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमानः आकस्मिकत्वासम्भवात् अनुशयसद्भावं सूचयति अभ्युदयप्रत्यवाययोः सुकृतदुःकृतयोः हेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् । स्मृतिरपि वर्णा आश्रमाश्च स्वकर्म्मनिष्ठाः प्रेत्य कर्म्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त इति सानुशयानामेवावरोहं दर्शयति । कः पुनरनुशयो नामेति केचित्तावदाहुः स्वर्गार्थस्य कर्म्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम भाण्डानुसारिस्नेहवत् यथाहि स्नेहभाण्डं विरिच्यमानं न सर्व्वात्मना विरिच्यते भाण्डानुसार्य्येव कश्चित् स्नेहशेषोऽवतिष्ठते तथानुशयोऽपीति । ननु कार्य्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषेणावस्थानं न्याय्यम् । नायं दोषः न हि सर्व्वात्मना भुक्तफलत्वं कर्म्मणः प्रतिजानीमहे । ननु निरवशेषकर्म्मफलभोगाय चन्द्रमण्डलमारूढ़ः । वाढ़ं तथापि स्वल्पकर्म्मावशेषमात्रेण तत्रावस्थातुं न शक्यते यथा किल कश्चित् सेवकः सकलैः सेवोपकरणैः राजकुलमुपसृप्तः चिरप्रवासात् परिक्षीणबहूपकरणः छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति, एवमनुशयलेशमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति । न चैतद्युक्तमिव न हि स्वर्गार्थस्य कर्म्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते कार्य्यविरोधित्वादित्युक्तम् । नन्वेतदप्युक्तं न स्वर्गफलस्य कर्म्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति । तदेतदपेशलं स्वर्गार्थं किल कर्म्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं जनयति स्वर्गच्युतस्यापि कञ्चित् फलशेषं जनयतीति" न शब्दप्रमाणकानामीदृशी कल्पनावकल्पते । स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते । तथा सेवकस्योपकरणलेशानुवृत्तिर्दृश्यते न त्विह तथा स्वर्गफलस्य कर्म्मणो लेशानुवृत्तिर्दृश्यते नापि कल्पयितुं शक्यते स्वर्गफलत्वशास्त्रविरोधात् । अवश्यञ्चैतदेवं विज्ञेयं न स्वर्गफलस्येष्टादेः कर्म्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्त्तमानोऽनुशय इति यदि हि येन सुकृतेन कर्म्मणेष्टादिना स्वर्गमन्वभूवन् तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत ततो रमणीय एवैकोऽनुशयः स्यान्न विपरीतः । तत्रेयमनुशयविभागश्रुतिरुपरुध्येत "तद्य इह रमणीयचरणाः अथ य इह कपूयचरणा इति" । तस्मादामुष्मिकफले कर्म्मजाते उपभुक्तेऽवशिष्टमैहिकफलं कर्म्मान्तरजातमनुशयः तद्वन्तोऽवरोहन्ति । यदप्युक्तं यत्किञ्चित्यविशेषेण परामर्शात् सर्व्वस्येहकृतस्य कर्म्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति । नैतदेवम् अनुशयसद्भावस्यावगमितत्वात् । यत्किञ्चिदिहकृतमामुष्मिकफलं कर्म्मारब्धभोगं तत् सर्व्वं फलोपभोगेन क्षपयित्वेति गम्यते । यदप्युक्तं प्रायणमविशेषादनारब्धफलं कृत्स्नमेव कर्म्माभिव्यनक्ति तत्र केनचित् कर्म्मणामुष्मिँल्लोके फलमारभ्यते केनचिदस्मिन्नित्ययं विभागो न सम्भवतीति । तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम् । अपि च केन हेतुना प्रायणमनारब्धफलस्य कर्म्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम् आरब्धफलेन कर्म्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात् प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत ततोवक्तव्यं यथैव हि प्राक्प्रायणादारब्धफलेन कर्म्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिरेवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्म्मणः युगपत्फलारम्भासम्भवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति । नह्यनारब्धफलत्वसामान्ये जात्यन्तरोपभोग्यफलमप्यनेककर्म्मैकस्मिन् प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुं प्रतिनियतफलत्वविरोधात् । नापि कस्यचित् कर्म्मणः प्रायणे अभिव्यक्तिः कस्यचिदुच्छेद इति

शक्यं वक्तुम् ऐकान्तिकफलत्वविरोधात्। नहि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्म्मणोऽनुच्छेदः सम्भाव्यते। स्मृतिरपि विरुद्धफलेन कर्म्मणा प्रतिबद्धस्य कर्म्मान्तरस्य चिरमवस्थानं दर्शयति। "कदाचित् सुकृतं कर्म्म कूटस्थमिह तिष्ठति। मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते" इत्येवंजातीयका। यदि च कृत्स्नमनारब्धफलं कर्म्म एकस्मिन् प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत ततः स्वर्गनरकतिर्य्यग्योनिष्वधिकारानवगमात् धर्म्माधर्म्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत ब्रह्महत्यादीनां चैकैकस्य कर्म्मणोऽनेकजन्मनिमित्तत्वं स्मर्य्यमाणमुपरुध्येत। न च धर्म्माधर्म्मयोः स्वरूपफलसाधनतादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं सम्भावयितुम्। न च दृष्टफलस्य कर्म्मणः कारीर्य्यादेः प्रायणमभिव्यञ्जकं सम्भवतीत्यव्यापिकापीयं प्रायणस्याभिव्यञ्जकत्वकल्पना। प्रदीपोपन्यासोऽपि कर्म्मबलाबलप्रदर्शनेनैव प्रतिनीतः। स्थूलसूक्ष्मरूपाभिव्यक्तिवच्चेदं द्रष्टव्यं यथा हि प्रदीपः समानेऽपि सन्निधाने स्थूलरूपमभिव्यनक्ति न सूक्ष्मम्, एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्म्मजातस्य प्राप्तावसरत्वे बलवतः कर्म्मणोवृत्तिमुद्भावयति न दुर्बलस्येति। तस्मात् श्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्म्माभिव्यक्त्यभ्युपगमः। शेषकर्म्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः सम्यग्दर्शनादशेषकर्म्मक्षयश्रुतेः। तस्मात् स्थितमेतदनुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवञ्चावरोहन्तीति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्य्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे सङ्कीर्त्तनात् यथेतंशब्दाच्च यथागतमिति प्रतीयते। रात्र्याद्यसंकीर्त्तनादभ्रादिसंख्यानाच्च विपर्य्ययोऽपि प्रतीयते" भा०। अनतिदूरे च तत्रैव "साभाव्यापत्तिरुपपत्तेः" शा० सू०। "इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन् यावत्सम्पातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम् अथावरोहप्रकारः परीक्ष्यते तत्रेयमवरोहश्रुतिर्भवति "अथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा प्रवर्षतीति"। तत्र संशयः किमाकाशादिस्वरूपमेवावरोहन्तः? प्रतिपद्यन्ते किं वाऽऽकाशादिसाम्यमिति? तत्र प्राप्तं तावदाकाशादिस्वरूपमेव प्रतिपद्यन्ते इति कुतः? एवं हि श्रुतिर्भवति इतरथा लक्षणा स्यात् श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा, तथा च वायुर्भूत्वा धूमो भवतीत्येवमादीन्यक्षराणि तत्स्वरूपोपपत्तावेव कल्पन्ते तस्मादाकाशादिस्वरूपप्रतिपत्तिरित्येवं प्राप्ते ब्रूमः आकाशादिसाम्यं प्रतिपद्यन्त इति। चन्द्रमण्डले यदम्मयं शरीरमुपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति ततो वायोर्वशमेति ततो धूमादिभिः संसृज्यत इति तदेतदुच्यते यथेतमाकाशमाकाशाद्वायुमित्यादिना। कुतः एतत्? उपपत्तेः एवं ह्युपपद्यते। नह्यन्यस्यान्यभावो मुख्य उपपद्यते। आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते। विभुत्वाच्चाकाशेन नित्यसंबन्धान्न तत्सादृश्यापत्तेरन्यस्तत्संबन्धो घटेत। श्रुत्यसम्भवे च लक्षणाश्रयणं न्याय्यमेव अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्य्यते" भा०। "नातिचिरेण विशेषात्" शा० सू० "तत्राकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः किं दीर्घं कालं पूर्व्वपूर्व्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्ति? उताल्पमल्पमिति?। तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्ते इदमाह नातिचिरेणेति। अल्पमल्पकालमाकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति। कुत एतत्? विशेषदर्शनात्। तथा हि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि "अतो वै खलु दुर्निष्प्रपतरमिति"। तकार एकः छान्दस्यां प्रक्रियायां लुप्तोमन्तव्यः दुर्निष्प्रपततरं दुर्निःक्रमतरं दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणम्भवतीत्यर्थः। तदत्र दुःखनिःप्रपतनं प्रदर्शयन् पूर्व्वेषु सुखनिःप्रपतनं दर्शयति। सुखदुःखताविशेषश्चायं निःप्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासम्भवात्। तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति" भा०। "अन्याधिष्ठिते पूर्व्ववदभिलापात्" सू० "तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते "इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते" इति। तत्र संशयः किमस्मिन्नवधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजोऽनुशयिनो भवन्ति? आहोस्वित् क्षेत्रज्ञान्तराधिष्ठितेषु संश्लेषमात्रं गच्छन्तीति? किं तावत् प्राप्तं स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति। कुतः एतत्? जनेर्मुख्यार्थत्वोपपत्तेः स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः पशुहिंसादियोगाच्चेष्टादेः कर्म्मजातस्यानिष्टफलत्वोपपत्तेः। तस्मान्मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्म श्वादिजन्मवत्। यथा श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वेति

सुखमेवानुशयिनां श्वादिजन्म सुखदुःखान्वितम्भवति एवं व्रीह्यादिजन्मापीत्येवं प्राप्ते ब्रूमः । अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते न तत्सुखदुःखभाजो भवन्ति पूर्ववत् । यथा वायुधूमादिभावोऽनुशयिनान्तत्संश्लेषमात्रमेवं व्रीह्यादिभावोऽपि स्थावरैः संश्लेषमात्रम् । कुत एतत्? तद्वदेवेहाप्यभिलापात् कोऽभिलापस्य तद्भावः? कर्मव्यापारमन्तरेण संकीर्त्तनं यथाऽकाशादिषु न कञ्चित् कर्मव्यापारं परामृशति एवं व्रीह्यादिजन्मन्यपि । तस्मान्नास्त्यत्र सुखभाक्त्वमनुशयिनाम् यत्र तु सुखदुःखभाक्त्वमभिप्रैति परामृशति तत्र कर्मव्यापारं "रमणीयचरणाः कपूयचरणा" इति च । अपि च मुख्येऽनुशयिनां व्रीह्यादिजन्मनि व्रीह्यादिषु लूयमानेषु भज्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः यो हि जीवो यच्छरीरमभिमन्यते स तस्मिन् पीड्यमाने प्रवसतीति प्रसिद्धम् । तत्र व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत, अतः संसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति । एतेन जनेर्मुख्यार्थत्वं प्रतिब्रूयात् उपभोगस्थानत्वञ्च स्थावरभावस्य । न च वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे । भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानामेतदुपभोगस्थानं, चन्द्रमसं त्ववरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जत इत्याचक्ष्महे"भा०। "अशुद्धमिति चेन्न शब्दात्" सू० । "यत् पुनरुक्तं पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवानुशयिनो व्रीह्यादिजन्मास्तु तत्र गौणी कल्पनाऽनर्थिकेति तत् परिह्रियते । न, शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य अयं धर्मः अयमधर्म इति शास्त्रमेव विज्ञाने कारणम् अतीन्द्रियत्वात्तयोरनियतदेशकालनिमित्तत्वाच्च । यस्मिन्देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेषु अधर्मो भवति तेन न शास्त्रादृते धर्माधर्मविषयं ज्ञानं कस्यचिदस्ति । शास्त्राच्च हिंसानुग्रहाद्यात्मकोज्योतिष्टोमोधर्म इत्यवधारितः स कथमशुद्ध इति शक्यते वक्तुम् । ननु "मा हिंस्यात् सर्वाभूतानीति" शास्त्रमेव भूतविषयां हिंसामधर्म इत्यवगमयति । वाढं उत्सर्गस्तु सः । अपवादः "अग्नीषोमीयं पशुमालभेतेति" उत्सर्गापवादयोश्च व्यवस्थितविषयत्वम् तस्माद्विशुद्धं वैदिकं कर्म शिष्टैरनुष्ठीयमानत्वादनिन्द्यमानत्वाच्च । तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम् । न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति तद्धि कपूयचरणानधिकृत्योच्यते नैवमिह वैशेषिकः कश्चिदधिकारोऽस्ति । अतश्चन्द्रमण्डलात् स्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्य्यते" भा० "रेतःसिग्योगोऽथ" सू० । "इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावः यत्कारणं व्रीह्यादिभावस्यानन्तरमनुशयिनां रेतःसिग्भाव आम्नायते । "यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवतीति"। न चात्र मुख्योरेतःसिग्भावः सम्भवति चिरजातो हि प्राप्तयौवनोरेतःसिग्भवतीति कथमिवानुपचरिततद्भावमद्यमानान्नानुगतोऽनुशयी प्रतिपद्येत तत्रावश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्यः । तद्वद्व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोधः" भा०॥ "योनेःशरीरम्" सू० ॥ "अथ रेतःसिग्भावस्यानन्तरं योनौ सिक्ते रेतसि योनेरधिशरीरमनुशयिनामनुशयफलोपभोगायतनम् इत्याह शास्त्रम् "तद्य इह रमणीयचरणा" इत्यादि । तस्मादवगम्यते नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति । तस्माद्व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति सिद्धम्"भा०। संज्ञायां कर्त्तरि घञ् "वटादितरोः शाखातो मूलावधि अवतारकेऽप्रभेदे च । "अवरोहशताकीर्णं वटमासाद्य तस्थतुः" रामा० । ज्योतिषोक्ते दशाभेदे स्त्री अवरोहिशब्दे उदा० ।

**अवरोहण** न० अव+रुह भावे ल्युट् । अवतरणे (नामा) "एवमारोहणावरोहणमतः" । काव्या० १८।२।६ ।

**अवरोहशाखिन्** पु० अवरोहति छिन्नोऽपि पुनः प्ररोहति अव+रुह-अच् कर्म०, अवरोहति अधोगच्छति मूलमस्याः तादृशी शाखा कर्म० ततः बाहुल्ये मत्वर्थीय इनिर्वा । वटवृक्षे, तस्य छेदनेऽपि पुनः प्ररोहः तस्य च शाखातोऽपि बहूनि मूलान्यवतरन्तीति तस्य तथात्वम् । श० । अवरोहिशाख्योऽप्यत्र ।

**अवरोहिका** स्त्री अवरोहति अत्यन्तमधोगच्छति अव+रुह-ण्वुल् टाप् कापि अतइत्वम् । अश्वगन्धालतायाम् ।

**अवरोहित** पु० अवरोहितो वर्णः । अल्परक्तवर्णे मध्यादि० अथोबाधकः मतुप् । अवरोहितवान् अल्परक्तवर्णयुक्ते त्रि० स्त्रियां ङीप् ।

**अवरोहिन्** त्रि० अव+रुह-णिनि । १वटवृक्षे । २अवतरणकर्त्तमात्रे त्रि० स्त्रियां ङीप् । सा च ज्योतिषोक्ते ३दशाभेदे तथा हि दशायस्त्येवक्ष्माभस्य "व्यापं कुराजोद्युकेऽपूर्णा"

इत्यादिक्रमस्यानुसारेण जन्मनक्षत्राधिपतत्तद्दशाधिपानामनु-क्रमेण या दशा सा आरोहिणी तेषु चन्द्रादिपर्य्यन्तानां क्रमेण यथासम्भवं तेषामेव भोगेन पुनरवरोहेण सूर्य्यादीनां या दशा सावरोहिणी। तथाहि “आग्नेयादि त्रिरावृत्त्या तानि विंशोत्तरीयके” इत्युक्तदिशा जन्मनक्षत्रानुसारेण दशाधिपे आनीते तदुत्तरं तदुत्तरोत्तरपठितानां ग्रहाणां दशा। तत्र यस्य सूर्य्यदशायां जन्म तस्य आरोहिण्येव दशा यस्य तु चन्द्रादिदशायां जन्म तस्य तदुत्तरारोहक्रमेण कुजादि-दशा आरोहिणी एवं शुक्रान्तदशाः परिसमाप्य सूर्य्या-दीनां या दशा सैव अवरोहिणीति व्यपदिश्यते इति सम्प्रदायविदः। अन्ये तु स्वस्वभोग्यकालस्यार्द्धं प्रथममा-रोहिणी दशा शेषार्द्धं अवरोहिणीत्याहुः। सा च ग्रहविशेषे विशेषफलदा। यथोक्तम् “उच्चाङ्गपञ्चमस्यस्य दशा स्याद-वरोहिणी। तस्यामल्पमवाप्नोति फलं क्लेशाच्छुभं नरः। मित्रोच्चांशगतस्यैषा नूनं मध्यफला भवेत्। सैवानिष्ट-फलानर्था नीचार्य्यंशगतस्य च। नीचाङ्गपञ्चमस्यस्य दशावरोहिणी मता। तस्यां शुभफलं श्रेष्ठमक्लेशादेव जायते। शत्रुनीचांशगस्यैषा किञ्चित्कष्टफलाऽधमा। मित्रोच्चांशगतस्यास्य सैव सम्पूर्णदा मता”। इति सामा-न्यतोऽभिधाय “दशाऽवरोहा दिननायकस्य कृषिक्रिया-वित्तसुहृद्विनाशम्। चौराग्निपीड़ां कलहं विरोधं नरेश-कोपं कुरुते विदेशम्” सू०। “निशाकरस्याप्यवरोहकाले स्त्रीपुत्रमित्राम्बरसौख्यहानिम्। मनोविकारं स्वजनैर्विरोधं चौराग्निभूतैर्भयमेति कष्टम्”।च०। “धरासुतस्याप्यवरोहकाले स्थानार्थनाशं कलिकोपदुःखम्। विदेशवासं स्वजनैर्विरोधं चौराग्निभूपैः सततं करोति”।म०। “शशाङ्कसूनोस्त्ववरोहिणी या दशा महत्कष्टतरं तु दत्ते। विज्ञानहीनं परदारसङ्ग-न्नृपाग्निचौरैर्भयमत्र कष्टम्”।बु०। “देवेन्द्रपूज्यस्य दशाऽ-वरोहा करोति सौख्यं सहसैव नाशम्। सकृद्यशःकान्ति-विशेषजालं नरेश्वरत्वं सहसैव याति”।वृ०। “भृगोः सुत-स्याप्यवरोहकाले प्रचण्डवेश्यागमनं धनाप्तिम्। स्त्रीपुत्र-बन्ध्वार्त्तिमनोविकारम् भूमूत्ररोगं मदनार्त्तिमेति” शु०। “दिनेशसूनोस्त्ववरोहकाले राज्यच्युतिं दारसुतार्थनाशम्। भाग्यक्षयं भूपतिकोपयुक्तं प्रेष्यत्वमायाति गुदाक्षिरोगम्” सर्वार्थचि०। राहुकेत्वोस्त्वारोहावरोहयोर्विशेषो नास्ति

**अवर्ग** पु० अकारसजातीयस्वराणां वर्गः अकार+मातिशा-ख्योक्तः वर्गं वा। १स्वरवर्णमाले, “अकचटतपयशाः वर्गाः” इतिकैरलम्। वर्गः समूहः न०ब०। २वर्गशून्ये त्रि०।

**अवर्ण** पु० अकारैकस्थानिको वर्णः शा०त०। ह्रस्वदीर्घप्लुतो-दात्तानुदात्तस्वरितानुनासिकाननुनासिकभेदेन अष्टादश-संज्ञकेषु (अ)वर्णेषु “अष्टादशानां संज्ञा” सि०कौ०। वर्ण्यतेऽनेन वर्णः प्रशंसा विरोधे न०त०। प्रशंसाविरो-धिनि २अपवादे। “सोढुं न तत्पूर्व्वमवर्णमीशे” “न चावदद्भर्त्तुरवर्णमार्य्या” इति च रघुः।

**अवर्त्तन** न० वृत–ल्युट् अभावे न०त०। १वर्त्तनाभावे २अस्थितौ। वर्त्ततेऽनेन करणे ल्युट् वर्त्तनं जीविका न०ब०। ३जीविकाशून्ये त्रि०। [पदार्थे।

**अवर्त्तमान** त्रि० न०त०। १अस्थिते २भूते ३भविष्यति च

**अवर्द्धमान** त्रि० न वर्द्धमानः विरोधे न०त०। वृद्धिशून्ये क्षयिष्णौ। [शून्ये त्रि०।

**अवर्षण** न० अभावे न०त०। १वर्षणाभावे न०ब०। २वर्षण-

**अवलक्ष** पु० अवलक्ष्यते अव+लक्ष–घञ्। १श्वेतवर्णे अर्श० आद्यच्। २तद्वति त्रि०। अतोलोपे वलक्षोऽप्युभयत्र।

**अवलग्न** पु० अव+लग–क्त नि० इडभावः लस्ज–क्त वा। (माजा) १देहमध्यभागे। २सम्बद्धमात्रे त्रि०। “विपुल-तरोन्नतस्तलोचनावलग्नम्” माघः।

**अवलत्तिका** स्त्री अव+लत–तिकन्। गोधायाम् उज्ज्व०।

**अवलम्ब** पु० अव+लबि–आधारे घञ्। १आश्रये। भावे घञ्। २द्रव्यान्तराश्रयणे। “सावलम्बगमना मृदुस्वना” रघुः। करणे घञ्। ३अवलम्बसाधने दण्डादौ।

**अवलम्बन** न० अव+लबि–भावे ल्युट्। आलम्बने पतना-दिनिवारणाय द्रव्यान्तराश्रयणे “अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि” माघः। “सहिष्यते तत्प्रथमावल-म्बनम्” कुमा०। “प्रस्थानविक्लवगतेरवलम्बनाय” शकु०। आधारे ल्युट्। २आश्रये। करणे ल्युट्। आलम्ब-साधने ३दण्डादौ।

**अवलम्बित** त्रि० अव+लबि–कर्म्मणि क्त। १आश्रिते २आल-म्बिते “अवलम्बितकर्णशष्कुलीकलसीकं रचयन्नवोचत”-नैषध०। ३शीघ्रे न० ४तद्वति त्रि०जटा०। अव+लम्ब–कर्त्तरि क्त। ५अवतीर्णे।

**अवलम्बिन्** त्रि० अव+लबि–णिनि। १आलम्बनकर्त्तरि “यस्या भवानपरधूर्य्यपदावलम्बी” रघुः “स गोपतिं नन्दिभुजावलम्बी” कुमा० “अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम्” रघुः। २अवतारके उच्चस्थानात् अधःपातिनि। “भगवति मरी-चिमालिनि अस्ताचलचूड़ावलम्बिनि” काद०।

**अवलिप्त** त्रि० अव+लिप–क्त। १गर्विते “न मूर्खैर्नावलिप्तैश्च

नाल्यं नान्यायसाविभिः" मनुः। २क्षतलेपने ३समन्तात् लिप्ते च

**अवलीढ** त्रि॰ अव+लिह–क्त। १भक्षिते २कृतावलेहे ३जिह्वाग्रेणास्वादिते ४व्याप्ते च "अक्षज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणः" वेणी॰। "पतत्त्रिणावलीढञ्च शुना संस्पृष्टमेव च" मनुः।

**अवलीला** स्त्री अवरा लीला। १अनायासे २अनादरे च।

**अवलुञ्चन** न॰ अव+लुन्च–ल्युट्। १छेदने २उत्पाटने ३केशादेरवबन्धने ४अपनयने "दूराद्गुणो व्रणोऽस्य सन्निकृष्टेऽवलुञ्चनम्" च। सुश्रु॰। [अक्षतबन्धने च।

**अवलुञ्चित** त्रि॰ अव+लुन्च+क्त। उत्पाटिते अपनीते

**अवलुण्ठन** न॰ अव+लुठि–भावे ल्युट्। भूमौ पतित्वा परिवर्तने (लोटा)।

**अवलेख** पु॰ अव+लिख भेदने भावे घञ्। अवभेदने "दंशावलेखसंयुक्ते मूत्रे चाजाविके भिषक्" सुश्रु॰।

**अवलेप** पु॰ अव+लिप् भावे घञ्। १गर्वे "प्रियसङ्गमेष्वनवलेपमदा" माघः बलावलेपादधुनापि पूर्ववत्" माघः। "ऐरावतमदावलेपलूनापारिजातशाखा" काद॰। २लेपने ३भूषणे ४सम्बन्धे च।

**अवलेपन** न॰ अव+लिप–भावे ल्युट्। १विलेपे, २भूषणे, ३सम्बन्धे ४गर्वे च। करणे ल्युट्। ५चन्दनादौ।

**अवलेह** पु॰ अव+लिह–घञ्। १जिह्वाग्रेणास्वादने। कर्मणि घञ्। २तदास्वाद्ये औषधादौ च। "अतोऽवलेहान्वक्ष्यामः खदिरासननिम्बराजवृक्षशालसारकाथे तत्सारपिण्डान् कल्कपिष्टान् प्रक्षिप्य विपचेत् ततो नातिद्रवं नातिसान्द्रमवतार्य्य तस्य पाणितलपूर्णमप्रातराशोमधुमिश्रं लिह्यादेवं शालसारादौ न्यग्रोधारग्वधादौ च वेहान्कारयेत्" इति सुश्रु॰। [द्ये मधुप्रभृतौ द्रव्ये।

**अवलेह्य** त्रि॰ अव+लिह–कर्मणि ण्यत्। जिह्वाग्रेण आस्वा-

**अवलोक** पु॰ अव+लुक–लोक–वा घञ्। दर्शने चाक्षुषज्ञाने "द्रुम्भाङ्गभङ्गनयनमीलनाद्यावलोककृत्" का॰द॰।

**अवलोकन** न॰ अव+लुक–लोक–वा ल्युट्। १दर्शने, २अनुसन्धाने च। "न बभूवुरवलोकनक्षमाः" रघुः। करणे ल्युट्। ३आलोके, ४नेत्रे च। योगनिद्रान्तविशदैः पावनैरवलोकनैः" रघुः।

**अवलोकित** त्रि॰ अव+लोक–कर्म्मणि क्त। १दृष्टे। भावे क्त। २दर्शने न॰। ततोऽस्त्यर्थे अच्। ३बुद्धभेदे पु॰।

**अवलोकिन्** त्रि॰ अव+लुक–लोक वा णिनि स्त्रियां ङीप्। वीक्षके दर्शके "तव प्रियं बद्धरालोकिणः" कुमा॰।

**अवलोप** पु॰ अव+लुप–घञ्। १खण्डने २नाशने ३विलोपने "यद्धयद्धरावलोपन्त्वत्" माघः। [अनुकूले।

**अवलोम** पु॰ अवनद्धं लोम आनुकूल्यम् प्रा॰त॰ अच् समा॰।

**अवल्गुज** पु॰ अवल्गोरशोभनाज्जायते जन–ड। १सोमराजीलतायाम्। (हाकुच) २असाधुजाते त्रि॰।

**अववर्षण** न॰ अव+वृष–भावे ल्युट्। कृत्स्नवर्षणे। "स्रवं नदीतरणाववर्षणाभिध्यदर्शनप्रयाणेषु तु सकृत्कालद्रव्यकार्य्यत्वात्" कात्या॰ १।७।१२। "तथा नदीं दृष्ट्वा कृत्स्नामेवाभिसन्धाय मन्त्रं प्रयुङ्क्ते न चावान्तरनिदां नाप्येकं स्रोतः, नाप्येकां वर्षधाराम् तस्मात् सकृत्प्रयोगः तत्र नदीमन्तरणे स्रोतसां भेदेऽपि नदीद्रव्यैकत्वात् सकृन्मन्त्रः अववर्षणे कालैकत्वादेव" कर्कः।

**अववाद** पु॰ अव+वद–घञ्। १निन्दायाम्, २विश्वासे, ३अवज्ञायाम्, ४अवलम्बने च।

**अवश** त्रि॰नास्ति वशमायत्तत्वं यस्य। १अस्वाधीने, २कामादिपरवशे, ३पराधीने च। "अगस्त्याहृत्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः" मनुः। कार्य्यतेऽह्यवशः कर्म्म सर्वैः प्रकृतिजैर्गुणैः" "कार्य्यतेऽह्यवशोऽपि सन्" इति च गीता।

**अवशस्** त्रि॰ अव+शन्स–क्विप्। अववादे अवशंसने "अवशसा निःशसा यत् पराशसो पारिम जाग्रतो यत्स्वपन्तः" अथ॰ ६।४५।२।

**अवशातन** न॰अव+शद–णिच्–तङ् ल्युट्। १नाशने २शीर्णताकरणे। "मांसानामवशातनं कषयुर्द्दंशकोश" इति सुश्रुतः

**अवशिरस्** त्रि॰ अवनतं शिरोऽस्य प्रा॰ब॰। अवाङ्मस्तके।

**अवशिष्ट** त्रि॰ अव+शिष–क्त। १अतिरिक्ते, २परिशिष्टे, ३अधिके च। "सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्" या॰ स्मृ॰ "वाजिभ्योवाजिनमिति श्रुतौ वाजिनं आमिक्षावशिष्टं जलमिति रघु॰।

**अवशीभूत** त्रि॰न वशीभूतः। अनायत्ते। अवशीकृतोऽप्यत्र।

**अवशीर्ष(क)** त्रि॰अवनतं शीर्षं यस्य वा कप्। १अवाङ्मस्तके। अवाक्शीर्षाख्ये सुश्रुतोक्ते २शय्यादोषभेदे पु॰ "अवाक्शीर्षं दीर्घन्युब्जोत्तानसङ्कुचितदेहस्थितताद्यविषपार्श्वशायिनः प्रदानमिति सप्त शय्यादोषा" इति। ३नेत्ररोगभेदे नेत्रव्यापदोऽभिधाय "अतिपीड़ितवद्दोषान् विधिं चाप्यवशीर्षके" इति सुश्रुतः।

**अवशेष** पु॰ न॰ अव+शिष–भावे घञ्। १कृतपदार्थस्य शेषे २समाप्तौ च "तोयावशेषेण हिमाभमभ्रम्" भट्टिः कर्मणि घञ्। अवशिष्टे।

**अवशोष** पु० अव+शुष–भावे घञ्। अत्यन्तशोषे।

**अवश्य** त्रि० न वश्यः। अनायत्ते १अनधीने २दुर्दान्ते।

**अवश्यकरण** न० अवश्यं करणं योगविभागात् मलोपः। नियतकरणे अकरणान्निवृत्तौ "अवश्यकरणत्वादकरणान्निवृत्तिः" प्रा०त० रघु०।

**अवश्यपुत्र** पु० अवश्यः पुत्रः। शासितुमशक्ये अवशीभूते पुत्रे। तस्य भावः मनोज्ञा० वुञ्। आवश्यपुत्रकम् तद्भावे न०।

**अवश्यम्** अव्य० अव+श्यै–डमु। १निश्चये २अशक्यनिवारणे च। "अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः" मनुः "अवश्यम्भाविन्यर्थे वै सन्तापो नेह विद्यते" भा०शा०प०। "लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि" इत्युक्तेः कृत्यान्ते मलोपः अवश्यपाच्यम्। "अवश्यभव्येष्वनवग्रहग्रहा" नैष०। अवश्यम् भवः ठञ् अव्ययस्य टिलोपः आवश्यकः। अवश्यम्भवे त्रि०। "एतेष्वावश्यकस्त्वसौ" भाषा०।

**अवश्या** स्त्री अव+श्यै–क। १कुज्झटिकायाम् २अनायत्तायां स्त्रियाञ्च।

**अवश्याय** पु० अव+श्यै–ण। १कुज्झटिकायाम्, "अवश्यायकणाक्लावाचारुमुक्ताफलत्विषः" भट्टिः। २अभिमाने च। पृ० ह्रस्वः अवश्ययोऽपि कुज्झटिकायाम्।

**अवश्रयण** न० अव+श्रि–ल्युट्। चुल्लीतोऽवतार्य्य स्थापने। "अधिश्रयणावश्रयणान्तादिपूर्व्वापरीभूतः व्यापारकलापः पाकादिशब्दवाच्यः" सा०द०।

**अवष्टब्ध** त्रि० अव+स्तम्भ–क्त षत्वम्। १आसन्ने, २आक्रान्ते, ३अवलम्बिते, "अवष्टब्धा यष्टिः" सि०कौ० ४प्रतिरुद्धे च।

**अवष्टभ्य** अव्य० अव+स्तम्भ ल्यप् षत्वम्। अवलम्ब्येत्यर्थे।

**अवष्टम्भ** पु०अव+स्तम्भ–घञ् षत्वम्। १प्रारम्भे २अनम्रतायाम् ३आलम्बने। "अवष्टम्भकरं चापि भवघ्नं दण्डधारणम्"। सुश्रु० कर्म्मणि घञ्। ३स्तम्भे, "रथोरष्टम्भमयेन पत्रिणा" रघुः "न पर्य्यङ्कावष्टम्भपादप्रसारणानि गुरुसन्निधौ कुर्य्यात्" सुश्रुतः ४सुवर्णे च भावे ल्युट्। अवष्टम्भनम्। प्रारम्भे आलम्बने च न०। [स्वान इत्येव।

**अवष्वाण** पु० अव+स्वन–घञ् षत्वम्। भोजने शब्दे अव-

**अवस्** अव्य० अवर+प्रथमायाः पञ्चम्याः सप्तम्या वाऽर्थे असि अवादेशः। १अवरशब्दार्थे २पश्चादर्थे च। अवोरमणीयम्, आगतः, वसति वा। अव–भावे असिच्। १रक्षणे न०। कर्म्मणि असिच्। २यशसि ३अन्ने ४धने च न०। "मित्रस्य चर्षणी धृतोऽवो देवस्य" य०११,६२ "अवोरक्षणं युक्तं ययोऽस्त्वा" वेददी०गमने च "आवां रथोनियुत्वान् वक्षदवसे" ऋ०१,११५,४, "अवसे रक्षणाय गमनाय वा" भा०।

**अवस** पु० अव+असच्। १नृपे २सूर्य्ये सि०कौ० ३अर्कवृक्षे ४पाथेयभेदे च "एतत्ते रुद्रावसं तेन" य०३,६१ "अवस शब्देन देशान्तरं गच्छतो मार्गमध्ये तटागादिसमीपे भोक्तव्य ओदनविशेष उच्यते" वेददी०।

**अवसक्त** त्रि०अव+सन्ज–क्त। १संलग्ने। "अनुजानुमध्यमवसक्तेति" किरा०। भावे क्त। २संसर्गे न०।

**अवसक्थिका** स्त्री अवबद्धे सक्थिनी यया कप्। १पर्य्यङ्कबन्धे "शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम्" मनुः "अद्रिणा अवसक्थिकाबन्धहेतुभूतेन" किरा० १२,२२,टी० मल्लि०।

**अवसण्डीन** न०अव+सम्+डी–क्त। विहगाधःपतनरूपे गतिभेदे।

**अवसथ** पु० अव+सो–कथन्। १निलये, २ग्रामे च। अवस्यति शास्त्रमत्र अव+सो कथन्। ३छात्रनिलये मठे हेम०।

**अवसथ्य** पु० अवसथ+स्वार्थे यत्। अवसथशब्दार्थे।

**अवसन्न** त्रि०अव+सद–कर्त्तरि क्त। १विषादप्राप्ते २विनाशोन्मुखे "अवसन्नतापमतमिस्रमभात्" माघः। ३स्वकार्य्याक्षमे च

**अवसर** पु०अव+सृ–अप्। १प्रस्तावे, जिज्ञासानिवृत्तयेऽवश्यवक्तव्ये २सङ्गतिभेदे सङ्गतयश्च तच्छब्दे वक्ष्यन्ते ४वत्सरे, मन्त्रभेदे, ५वर्षणे, क्रियास्थितियोग्यतासम्पादकरूपे ६कालिकेऽवकाशे च। "शशंस सेवावसरं सुरेभ्यः" कुमा० "अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात्" रघुः "अवसरमधिगम्य तं हरन्त्यः" माघः।

**अवसरालय** पु० अवसराय आलयो यत्र। अर्द्धराले तत्र हि काले सर्व्वैः आलयएव स्थीयते इति तस्य तथात्वम्।

**अवसर्पिन्** त्रि०अव+सृप–णिनि। अधोगन्तरि स्त्रियां ङीप्।

**अवसर्ग** पु० अव+सृज–घञ्। १अप्रतिबन्धे यथेष्टं क्रियतामिति २कामचारानुज्ञायां "अथावसर्गः कामचारानुज्ञा" सि०कौ०। ३स्वतन्त्रतायाञ्च। [चरे।

**अवसर्प** पु० अवसर्पति प्रभुनिदेशात् परम्। अव+सृप–अच्।

**अवसर्पिन्** त्रि० अव+सृप-णिनि। अधोगन्तरि स्त्रियां ङीप्। सा च बौद्धानां कल्पकाले हेम० मत दशकोटिकोटिसागरवर्षमितः।

**अवसाद** पु०अव+सद–घञ्। १नाशे, २विषादे,३स्वकार्य्याक्षमत्वरूपावसन्नतायाञ्च। "विपदेति तावदवसादकरी" किरा० "वैद्यासनावसादो वा रोगी वा स्यादधोमुखः" स्वरावसादो घर्घरक" इति च सुश्रुतः।

**अवसादक** त्रि० अवसादयति अव+सद–णिच्–ण्वुल्। १अवसन्नताकारके २खेदकारके। "एष शोकः परित्यक्तः

सर्वकार्य्यावसादकः" रामा०। २कार्य्याक्षमतासम्पादके च।

**अवसादन** न० अव+सद णिच्–भावे ल्युट्। १विनाशने २कार्य्याक्षमतासम्पादने सुश्रुतोक्ते ३व्रणचिकित्साभेदे च "अपतर्पणमालेप" इत्युपक्रम्य "व्रणधूपनमुत्सादनमवसादनम्" इत्यादिना षष्टिरुपक्रमा दर्शिताः "उत्सन्नमृदुमांसानां व्रणानामवसादनम्" इति च तत्र दर्शितम्।

**अवसान** न० अव+सो–ल्युट्। १विरामे, २समाप्तौ, ३सीमायां, ४समापने ५मृत्यौ च। "न योषिद्भ्यः पृथग्दद्यादवसान दिनादृते" उ०त० स्मृतिः। "विरामोऽवसानम्" पा० "होमावसाने कलहर्य्यनादः" हेमा०दा०ख०पुरा०। "दोहावसाने पुनरेव दोग्ध्रीम्" "तच्छिष्याध्ययननिवेदितावसानाम्"। "दिनावसानोत्सुकबालवत्साम्" इति च रघुः "ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा" मनुः। "दिवावसानच्छायेव" शकु०अवस्यति स्थीयतेऽस्मिन्"आधारे ल्युट्। ६स्थाने। "यदाद्यमोऽवसानं पृथिव्याः य० १२,४५, "अवसानं स्थानमिति" वेददी०।

**अवसाम** न० अवरं साम अच् समा०। अधमसामनि अरण्यादौ अल्पकर्म्मणि च गेये सामनि।

**अवसाय** पु० अव+सो–घञ्। १समाप्तौ, २शेषे, ३निश्चये च। ल्यप्। ४समाप्येत्यर्थे ५निश्चित्येत्यर्थे च अव्य०।

**अवसायक** त्रि० अव+सो–ण्वुल्। १निश्चयकारके २समापके च।

**अवसिक्त** त्रि० अव+सिच–क्त। १कृतसेके २आप्लुते ३स्नाते च

**अवसित** त्रि० अव+सो–क्त। १समाप्ते, "वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः" कुमा०। "अवसितं हसितं प्रसितं मुदा" भट्टिः। २ऋद्धे, ३ज्ञाते, ४परिपक्वे ५निश्चिते, च ६मर्द्दितधान्ये न०। अव+सि–क्त। ७संबद्धे त्रि०।

**अवसृष्ट** त्रि० अव+सृज–क्त। १दत्ते २त्यक्ते ३निःसृते च।

**अवसे** अव्य० अव–तुमर्थे असेन्। रक्षितुमित्यर्थे। "आयात्विन्द्रोऽवस उप" य० २०,४७।

**अवसेक** पु० अव+सिच–भावे घञ्। समन्तात्सेचने। "अवसेको भवेद्यस्मात् दोषान् विवर्ज्जयेदिति सुश्रुतोक्ते नेत्रवर्त्मरोगभेदे च।

**अवसेकिम** पु० अवसेकेन निर्वृत्तः अवसेक+इमन्। वटकभेदे।

**अवसेचन** न० अव+सिच+ल्युट्। १समन्तात्सेचने शोणिताद्योनिस्सारणे "शोणितावसेचनोपाया जलौकसः" सुश्रु० रोगभेदे च तिक्तकाद्रुमपत्राणां कार्य्यः क्वाथोऽवसेचने" सुश्रु०।

**अवसेय** त्रि० अव+सो–कर्म्मणि यत्। १निर्णेये २समाप्ये च

**अवस्कन्द** पु० अव+स्कन्द–आधारे घञ्। जिगीषूणां सैन्यनिवेशस्थाने १शिविरे। भावे घञ्। २अवतरणे, ३आक्रमणे च

**अवस्कन्दन** न० अव+स्कन्द–ल्युट्। १सर्वाङ्गेणावगाहने, २अवतरणे, ३आक्रमणे च।

**अवस्कर** पु० अव+कृ–अप् सुट्। विष्ठादिमले। "वर्चस्कोऽवस्करः" पा० "कुत्सितं वर्चः वर्चस्कमन्नमलम्" सि०कौ। मलमात्रे च। "मूत्रद्वाराशुचिस्थानरथ्यावस्करशोधनम्" मिता०ना० स्मृ०। अस्मिन् पक्षे च पृ० सुट् इति भेदः। १अपादाने अप्। २गुह्यप्रदेशे उपस्थादौ। अवस्करे जातः वुन्। अवस्करकः अवस्करभवे त्रि०।

**अवस्कव** त्रि० अव+स्कु–अच्। हिंसके "अवस्कवं व्यध्वरं कृमीन् अथ० २,३१,४।

**अवस्तरण** न० अव+स्तृ–भावे ल्युट्। १विस्तारे। "अवनयनावस्तरणे चावटवत्" कात्या०५,५,१४।

**अवस्तात्** अव्य० अवरस्मिन् अवरस्मात् अवरमित्यर्थे अस्ताति अवादेशः। अवरकालादौ। अवस्तात् रमणीयम्, आगतः, वसति वा। "अवस्तात् स्वर्गलोकं प्रापयन्तः" शत०ब्रा०

**अवस्तार** पु० अव+स्तृ–कर्म्मणि घञ्। (परदा) इति ख्यातायां १जवनिकायाम्, २आस्तरणे च।

**अवस्तु** न० कुत्सितार्थे न०त०। अपकृष्टे पदार्थे "अवस्तुनिर्बन्धपरे! कथं नु ते" कुमा०।

**अवस्था** स्त्री अव+स्था–अङ्। १कालकृतायां देहादेर्दशायाम् २अवस्थाने च। अवस्था च कालकृतः भावविकारभेदः "जायतेऽस्ति वर्द्धते विपरिणमतेऽपक्षीयते नश्यतीति" यास्कोक्तः षड्विधः। शास्त्रकारैस्तु तत्तद्विषयभेदादन्यो दर्शितः। यथा "यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः" अविद्याऽस्मितारागद्वेषाभिनिवेशाभिप्रायेण योगशास्त्रे पञ्चावस्था दर्शिताः। सांख्यमते कार्य्याणां कारणात्मकतया सूक्ष्मरूपेण कारणे स्थितत्वात् उत्पत्तेः प्राक् याऽवस्था प्रागभावस्थानीया सा अनागतावस्था, ततः कारकव्यापारेण व्यक्ता अभिव्यक्त्यवस्था ततः ध्वंसस्थानीया कारणलयरूपा-तिरोभावावस्था इत्येवं त्रिविधा। वेदान्तिमते जाग्रत् स्वप्न-सुषुप्तिरूपा जीवस्यावस्था मोक्षावस्था चेति चतस्रोऽवस्था इत्यस्तु शा०सू० "मुग्धेऽर्द्धसम्पत्तिः" इत्यनेन मुग्धावस्थायाः सुषुप्त्यावेशान्तर्भावो दर्शितः" "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि। कैशोरमापञ्चदशात् यौवनं तु ततः परम्। आ षोडशाद्भवेद्बालस्तरुणस्तत उच्यते। वृद्धस्तु सप्ततेरूर्द्ध्वं वर्षीयान् नवतेः परम्" इति च स्मृत्युक्ता अवस्था अष्टौ

आपञ्चदशवर्षपर्य्यन्तं बाल्यम् आ त्रिंशद्वर्षं कौमारम्। आ पञ्चाशद्वर्षं यौवनम् ततऊर्द्ध्वं वृद्धत्वमिति वैद्यकोक्तावयवतोऽवस्थाः । जीवमात्रस्य कौमारयौवनवार्द्धकरूपा अवस्थास्तिस्रः एवमन्येषामपि वस्तूनां तत्तल्लक्षणभेदेनावस्थाभेदा ऊह्याः ।सर्व्वेषां पदार्थानां कालादिकृतपरिणामान्तरत्वेऽवस्थेत्युच्यते यथा नायकयोः "श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः । दशाविशेषोयोऽप्राप्तौ पूर्व्वरागः स उच्यते" इत्युपक्रम्य "अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसंलापाश्च । उन्मादोऽथ व्याधिर्जड़ता मृतिरिति दशा कामदशाः" सा॰द॰ उक्ता कामदशा दशविधाः । मल्लिनाथेन तु "दृङ्मनः सङ्गसङ्कल्पौ जागरः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" इत्यन्यविधा दश दशा उक्ताः।एवं दैन्यावस्था-कारुण्यावस्था-शोकावस्था-मदावस्थादयोपि।"रसावस्थः परं भावः स्थायितां प्रतिपद्यते" "भवेदभिनयोऽवस्थानुकारः स चतुर्विधः" इति च सा॰द॰ । "अन्तर्मदावस्थइव द्विपेन्द्रः"रघुः । "अपवित्रः पवित्रो वा सर्व्वावस्थाङ्गतोऽपि" वा पुरा॰ "तस्मात् सर्व्वास्ववस्थासु मान्याः पूज्याश्च पार्थिवाः"रामा॰ २आकारे च । "कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः" रघुः । [२स्थापने च ।

**अवस्थापन** न॰ अव+स्था-णिच्-पुक् ल्युट् । १निवेशने

**अवस्थापित** त्रि॰ अव+स्था-णिच्-कर्म्मणि क्त । १निवेशिते २स्थापिते च। [स्थापयित्वेत्यर्थे अव्य॰।

**अवस्थाप्य** त्रि॰अव+स्था-णिच्-पुक् यत् । निवेशनीये ल्यप्।

**अवस्थायिन्** त्रि॰ अव+स्था-णिनि स्त्रियां ङीप् । अवस्थितियुक्ते ।

**अवस्थित** त्रि॰अव+स्था-क्त । १वर्त्तमाने २स्थिते "अस्थानपि प्रकुर्व्वीत शुचीन् प्रज्ञानवस्थितान्" "आधिश्चोपनिधिश्चैव" इत्युपक्रमे "दीर्घकालमवस्थितौ" इति च मनुः ।

**अवस्थिति** स्त्री अव+स्था-क्तिन् । अवस्थाने

**अवस्यन्दन** न॰ अव+स्यन्द-ल्युट्। क्षरणे गङ्गा॰ छ । अवस्यन्दनीयः तद्भवादौ त्रि॰ ।

**अवस्यु** त्रि॰ अवोरक्षणम् इच्छति-क्यच्-उन्। रक्षणेच्छायुक्ते । "वज्रारिरवस्युरसि दुवस्वान्" ता॰ ब्रा॰ । "देवानामवस्यवे यविष्ठ" ऋ॰२,६,६, "अवस्यवे स्वरक्षणमिच्छवे" भा॰" ।

**अवस्रंसन** न॰अव+स्रन्स-ल्युट्। १अधःपतने, २च्युतौ च ।

**अवस्रंसित** त्रि॰अव+स्रन्स-णिच्-क्त।१दलिते २पातिते च।

**अवस्रस्** त्रि॰ अवस्रंसते क्विप् । १भ्रंसनशीले २खण्डिते च।

**अवस्वत्** त्रि॰ अवोरक्षणमस्त्यस्य मतुप् मस्य वः। रक्षणयुक्ते ।

**अवह** त्रि॰ न वहति वह-अच् न॰ब॰ । नद्यादेःस्रोतःशून्ये १देशे "सव्याहृतो व्रजन्त्यनवेक्षमाणा यत्रोदकमवहं भवति तत् प्राप्य सकृदुन्मज्ज्यैकं जलाञ्जलिमुत्सृज्य नामगोत्रे स्त्र्युत्तीर्णान्यानि वासांसि परिधायेति" आश्व॰ गृ॰ "अवहं यत्र देशे नद्याः स्रोतो नास्ति तदिति" गृ॰त॰रघु॰।२तृतीयस्कन्धस्थे वायुभेदे च विहतिर्वायुशब्दे।

**अवहत** त्रि॰ अव+हन-कर्म्मणि क्त। अल्पाघातेन विदुषीकृते

**अवहति** अव+हन-क्तिन् । अवघाते अल्पावघातेन विदुषीकरणार्थे व्यापारे ।

**अवहनन** न॰अव+हन भावे ल्युट् । अवघाते धान्यादेः वितुषीकरणसम्पादके १व्यापारे । अवहन्यतेऽनेन शोणितम् करणे ल्युट् । देहस्थे शोणितवहे स्थानभेदे २फुप्फुसे च । "वपावसावहननमाभिः क्लोम यकृत् प्लिहा" या॰ स्मृ॰ "अवहननं फुप्फुसः" मिता॰ ।

**अवहरण** न॰ अव+हृ-ल्युट् । १स्थानान्तरनयने सैन्यानां युद्धस्थानात् शिबिरस्थाने २नयने च ।

**अवहस्त** पु॰ अवरं हस्तस्य एक॰ त॰ । हस्तपृष्ठे हेम॰ ।

**अवहार** पु॰ अव+हृ-कर्त्तरि ण । १चौरे, २ग्राहनामके जलजन्तुभेदे (हाङ्गोर) च । भावे घञ् । ३निमन्त्रितविप्रादिभ्यो द्रव्यहरणे।४स्थानान्तरनयने सैन्यानां युद्धस्थानात् ५शिबिरनयने च । "ततोऽवहारं सैन्यानां तव तेषाञ्च भारत !" भा॰भी॰प॰ ६विरामे ७निद्रायां च "क्रियतामवहारोऽस्मात् युद्धाद्ब्राह्मणसंङ्कटात्" भा॰आ॰प॰ ।

**अवहारक** त्रि॰अव+हृ-ण्वुल् । १स्थानान्तरनायके २निवारके ३युद्धात् सैन्यादिनिवारके च । (हाङ्गोर)४जलजन्तुभेदे पु॰ ।

**अवहार्य्य** त्रि॰अव+हृ-ण्यत् । अवहरणीये १स्थानान्तरं नेये २अपहार्य्ये । "आधिश्चोपनिधिश्चैव न कालात्ययमर्हति अवहार्य्यौ भवेतां तौ दीर्घकालमवस्थितौ" मनुः "अवहार्य्यो भवेच्चैव सान्वयः षट्पणो दमः" मनुः। ३समाप्ये च ।

**अवहालिका** स्त्री अवहलति अधःस्थित्वा ऊर्द्धं स्पर्शति अव+हल-विक्षेपे ण्वुल् टाप् अत इत्त्वम् । प्राचीरे हारावली । [{"यच्चावहासार्थमसत्कृतोऽसि" गीता ।

**अवहास** पु॰ अव+हस-घञ् । १मृदुहासे २उपहासे च ।

**अवहास्य** त्रि॰ अव+हस कर्म्मणि ण्यत् । उपहास्ये

**अवहित** त्रि॰ अव+धा-क्त । कृतावधाने सावधाने ।

अव(व)हित्था स्त्री न बहिस्तिष्ठति स्था—क पृषो० । ब्रडत-भावे । "भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था, व्यापारान्तराद्यन्यथावभाषणाविलोकनादिकरी" सा०द०उक्ते व्यभिचारिभावभेदे। "एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी लीलाकमलपत्राणि गणयामास पार्वती" कुमा० । अयं वर्ग्यवमध्यस्तु न्याय्यः । [अनादरे ।

अवहेल स्त्री न० अव+हेड़—अङ् स्त्रियां, घञर्थे क वा डस्य लः।

अवहेलन अव+हेड़ अनादरे भावे ल्युट् डस्य लः । अनादरे ।

अवहेलित त्रि० अव+हेड—कर्म्मणि क्त डस्य लः । अवज्ञाते ।

अवक्कर त्रि० अव+कृ—अच् । कुटिले । [पुष्पिकायाम् ।

अवाक्पुष्पी अवाक् अधोमुखं पुष्पमस्याः । (हुलफा) शत-

अवाक्शाख पु० अवाची शाखाऽस्य । "ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्। छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् । अधश्चोर्द्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः । अधश्च मूलान्यनुसन्ततानि कर्म्मानुबन्धीनि मनुष्यलोके । न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा । ततः पदं तत्परिमार्गितव्यम्" गीतोक्ते संसारवृक्षे । "ऊर्द्ध्वमुत्तरः क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमोमूलं यस्य तम् । अधइति ततोऽर्वाचीनाः कार्य्योपाधयोहिरण्यगर्भादयोऽभिगृह्यन्ते ते तु शाखाइव शाखायस्य तम् । विनश्वरत्वेन न श्वःप्रभातपर्य्यन्तमपि स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः । प्रवाहरूपेणाविच्छेदादव्ययञ्च । काः प्राहुः ? "ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातन" इत्याद्याः श्रुतयः । छन्दांसि वेदायस्य पर्णानि धर्म्माधर्म्मप्रतिपादनद्वारेण छायास्थानीयैः कर्म्मफलैः संसारवृक्षस्य सर्व्वजीवाश्रयणीयत्वप्रतिपादनात् पर्णस्थानीयावेदाः । यस्तमेवम्भूतमश्वत्थं वेद स एव वेदार्थवित् संसारप्रपञ्चवृक्षस्य मूलमीश्वरोब्रह्मादयस्तदंशाः शाखास्थानीयाः स च संसारवृक्षोऽविनश्वरः प्रवाहरूपेण नित्यः वैदोक्तैः कर्म्मभिः सेव्यतामापादितश्च इत्येतावानेव हि वेदार्थः अत एवं विद्वान् वेदविदिति स्तूयते । किञ्च अधश्चेति । हिरण्यगर्भादयः कार्य्योपाधयोजीवाः शाखास्थानीयस्तेनोक्तास्तेषु च ये दुष्कृतिनस्तेऽधः पश्वादियोनिषु प्रसृताविस्तारं गताः सुकृतिनश्चोर्द्ध्वं देवादियोनिषु प्रसृतास्तस्य संसारवृक्षस्य शाखाः । किञ्च गुणैः सत्त्वादिवृत्तिभिर्जलसेचनैरिव यथायथं प्रवृद्धा वृद्धिं प्राप्ताः । किञ्च विषयाश्शब्दादयः प्रवालाः पल्लवस्थानीया यासां शाखास्थानीयाभिरिन्द्रियवृत्तिभिः संयुक्तत्वात् । किञ्च अधः, अपशब्दादूर्द्ध्वञ्च मूलानि अनुसन्ततानि विरूढानि सन्ति । मूलमीश्वर एव इमानि त्ववान्तरालानि मूलानि तत्तद्भोगवासनालक्षणानि । तेषां कार्य्यमाह मनुष्यलोके कर्म्मानुबन्धीनि कर्म्म अनुबन्धि उत्तरभावि येषां तानि ऊर्द्ध्वाधोलोकेष्वपि भुक्तभोगवासनाभिर्हि कर्म्मक्षये मनुष्यलोकप्राप्तानां तत्तदनुरूपेषु कर्म्मसु प्रवृत्तिर्भवति तस्मिन्नेव हि कर्म्माधिकारोनान्येषु लोकेषु अतोमनुष्यलोकइत्युक्तम्। किञ्च न रूपमिति । इह संसारे स्थितैः प्राणिभिरस्य संसारवृक्षस्य तथा ऊर्द्ध्वमूलत्वादि प्रकारेण रूपं नोपलभ्यते । न चान्तोऽवसानमपर्य्यन्तत्वात् । नचादिरनादित्वात् । नच संप्रतिष्ठा स्थितिः कथं तिष्ठतीति नोपलभ्यते । यस्मादेवम्भूतोऽयं संसारवृक्षोदुरुच्छेदोऽनर्थकरश्च तस्मादेनं दृढेन वैराग्येण छित्त्वा तत्त्वज्ञानाय यतेतेत्याह अश्वत्थमेनमिति" श्रीधरः ।

अवाक्शिरस् त्रि० अवाक्शिरोऽस्य । अवनतमस्तके "अवाक्शिरसमुत्पादम्" भट्टिः ।

अवाक्श्रुति पु० नास्तिवाक् च श्रुतिश्च यस्य । वागिन्द्रियश्रवणेन्द्रियशून्ये अनेड्मूके । ( कालावोबा । )

अवाकिन् त्रि० उच्यतेऽनया वच—करणे घञ् वाकः, वागिन्द्रियं नास्ति यस्य इनि न०त० । १वागिन्द्रियशून्ये परात्मनि । "सर्व्वमिदमभ्यात्तोऽवाक्यनादरः" छा०उ० । (बोबा)२मूके च

अवाग्र त्रि० अवनतमग्रमस्य । नम्रमुखे ।

अवाङ्मुख त्रि० अवाङ् मुखमस्य । अधोमुखे । "अवाङ्मुखस्योपरि पुष्पवृष्टिः" रघुः ।

अवाङ्मनसगोचर पु० वाक् च मनश्च वाङ्मनसौ तयोर्गोचरो न भवति । वक्तुमशक्ये मन्तुमशक्ये च निर्गुणे ब्रह्मणि "यद्वाचानाभ्युदितं येन वागभ्युद्यते" "यन्मनसा न मनुते येन मनोऽनुमन्यते" इत्यादि श्रुत्या तस्य तदविषयत्वोक्तेस्तथात्वम् । तज्जन्यवृत्त्यवच्छिन्नचैतन्याविषयत्वञ्च तदविषयत्वं तयोर्वृत्तिविषयत्वस्य तस्मिन्निष्टत्वात् "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" इत्युक्तेः अतएव "मनसैवानुद्रष्टव्यः" "तन्त्वौपनिषदं वेदेत्यादि" श्रुतिषु तद्विषय वृत्तोक्तिः सङ्गच्छते "अखण्डसच्चिदानन्दमवाङ्मनसगोचरम्" वे०सा० ।

अवाच् त्रि० अवाञ्चति अव+अन्च—क्विप् । १अधोमुखगते, "अवाक्शिरससुतपादम्" भट्टिः । अवरे २देशे, ३काले च । ४दक्षिणस्यां दिशि स्त्री ङीप् । नास्ति वाक् यस्य इव० । ५वाक्यरहिते त्रि० वागिन्द्रियशून्ये ६ब्रह्मणि

न० । "अचक्षुष्कमश्रोत्रममनोऽतेजस्कम्" शत० ब्रा०
पूर्वार्थे क्वौ अवाञ्चौ अत्र अवाची इत्यादिभेदः । कालाद्यर्थे
प्रथमादीनां स्थानेऽस्ताति तस्य लुक् । ७अवरकालादावर्थे
अव्य०। अञ्चतेर्गत्यर्थत्वे नलोपः पूजार्थत्वे तु न नलोपः ।
उच्यते प्रशस्यते वाक् स्तुतिः । ८तद्रहिते च "दुष्प्राव्यो-
ऽवहन्ते दवाचः" ऋ० ४,२५,६, अवाचःस्तुति रहिताः
भा० भवादौ च । अवाचीनस्तद्भवादौ त्रि० । तिर्यग्भि-
र्भस्त्रावाचीनविला" ता० ब्रा० "अवाचीनविला अवाङ्मुख-
विला" भा०। दिगा० यत् । अवाच्यस्तद्भवादौ त्रि० ।

**अवाच्य** न० वच-ण्यत् न कुत्वम् न० त० । १दुष्टवचने, "अवा-
च्यवादांश्च बहून् वदिष्यन्ति तवाहिताः" गीता २वचना-
नर्हे,निन्दनीये त्रि० ३अकथनीये च "अवाच्यो दीक्षितो
नाम्ना यवीयानपि योभवेत्" मनुः अवाच्+भवार्थे यत् ।
४अवरकालादौ भवे त्रि०। ५अभिधावृत्त्या बोधयितुम
शक्ये च । "अवाच्यत्यादिकं तस्य वचो व्यङ्गनरूपणे"
सा० द० । यदुद्दिश्य कथ्यते ६तद्भिन्ने च ।

**अवात** त्रि० नास्ति वातो यत्र । १वायुशून्यदेशे वा-क्त न० त० ।
२अन्यैरप्रतिगते च "वन्यन्नवातोऽस्तृतः" ऋ० ६,१६,२० ।
वातव्यापारशोषणशून्ये "न शुष्यन्ते युवतयोऽवाताः"
ऋ० ६,६,७ "अवाताः वातस्य शोषणहेतुत्वात् तच्छून्य-
तया अशुष्काः" भा० ।

**अवाञ्चित** त्रि० अव+अन्च-णिच्-क्त । आनमिते "हय-
वाञ्छया सुदृढवाञ्चितान्" माघः । [देशे त्रिका० ।

**अवाच्यदेश** पु० अवाचि भवः यत् कर्म० । स्त्रीणामधो-

**अवादिन्** त्रि० वद-णिनि न० त० स्त्रियां ङीप् । १अविरोधिनि
२अवदनशीले च। [कादम्बैकमात्रफलं किल" भा० स० प०

**अवान** त्रि० अव+अन-अच् । शुष्कफलादौ "अवानमग्र-

**अवान्तर** त्रि० अवगतमन्तरं मध्यम् प्रा० स० । १प्रधानान्त-
र्वर्तिनि अङ्गादौ,२सामान्यस्य विशेषे ३प्रसङ्गागते च "इयं
फलश्रुतिः निःश्रेयसपरमपुरुषार्थसाधनपरा भवति किन्तु
बहिर्मुखानां मोक्षविवक्षयाऽवान्तर कर्मफलैः कर्मसु रुच्युत्-
पादनमात्रम्" श्रीधरः । यथा "पिब निम्बं प्रदास्यामि खलु
ते खण्डलड्डुकान् । पित्रैवमुक्तः पिबति तिक्तमप्यतिबा-
लकः" पुरा० । "तदेतामवान्तरां दीक्षामपश्यन्" शत० ब्रा० ।

**अवान्तरदिश्** स्त्री अवान्तरा द्वयोर्दिशोर्मध्ये दिक् । अन्त-
रालदिशि ऐशान्यादिदिशि कोणे । "दिशोः पार्श्वेऽ-
वान्तरदिशः पर्शवः" बृ० उ० ।

**अवान्तराम्** अव्य० अवान्तर+मा० आम् । सर्वमध्यवर्त्तिनि ।
"तदेतमवान्तरामाकाशमनुपश्यते" इति शत० ब्रा० ।

**अवापित** त्रि० वप-णिच्-क्त न० त० । यस्य वपनं न कृतं
तादृशे आरोपिते १धान्यादौ २अच्छेदिते केशादौ च ।
अव+आप-णिच्-क्त-३प्रापिते च । "विषमां कुमुदबना-
मवापिता" नैष० ।

**अवाप्त** त्रि० अव+आप-क्त । प्राप्ते । "नानवाप्तमवाप्तव्यं
त्रिषु लोकेषु किञ्चन" गीता । [मवाप्तव्यम्" गीता ।

**अवाप्तव्य** त्रि० अव+आप-तव्य । प्राप्तव्ये । "नानवाप्त-

**अवाप्ति** स्त्री अव+आप-क्तिन् । प्राप्तौ । "तपः किमेदं तद-
वाप्तिसाधनम्" कुमा० "इष्टानवाप्तेरौत्सुक्यम्" सा० द० ।

**अवाप्य** त्रि० अव+आप ण्यत् । १प्राप्ये। "क्लेशता च निवर्त्तेत
क्लेशावाप्यस्य यद्धनम्" मनुः । न वाप्यः। २आरोप्ये
३अच्छेद्ये केशे च अव+आप-ल्यप् । ४प्राप्येत्यर्थे अव्य० ।

**अवाम** न० । न० त० । वामभिन्ने १दक्षिणे "अवामे वामार्द्धे"
नैष० । वामः प्रतिकूलः सुन्दरो वा विरोधे न० त० ।
२अनुकूले सुन्दरभिन्ने ३अशोभने च त्रि० । [ऋ० १०,४,२

**अवाय** पु० अव+इण् घञ् । अवयवे । "अनवायं किमीदिने"

**अवार** न० न वार्य्यते जलेन वृ-कर्मणि घञ् । नद्यादेरर्वाक्-
तीरे । [भावे । न० ब० । तच्छून्ये त्रि० ।

**अवारण** न० वृ-णिच्-ल्युट् अभावे न० त० । निषेधा-

**अवारणीय** त्रि० न वारणीयः वारयितुमशक्यः । वारयि-
तुमशक्ये १रिपुप्रभृतौ २रोगादौ च । अवारणीयाश्च
रोगाः सुश्रुते दर्शिता यथा "अथातोऽवारणीयमध्यायं
व्याख्यास्यामः । उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवा-
र्य्यताम् । रसायनाद्विना वत्स ! तान् शृणुष्वैकमना
मम ॥ वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः । अश्मरी
मूढगर्भश्च तथैवोदरमष्टमम् ॥ अष्टावेते प्रकृत्यैव दुश्चि-
कित्स्या महागदाः ॥ प्राणमांसक्षयश्वासतृष्णाशोषवमि-
ज्वरैः ॥ मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रुताः ।
वर्ज्जनीया विशेषेण भिषजा सिद्धिमिच्छता ॥ शूनं सुप्तत्वचं
भग्नं कम्पाध्मानिपीडितम् । नरं रुजार्त्तिमन्तञ्च वातव्या-
धिर्विनाशयेत् ॥ यथोक्तोपद्रवाविष्टमतिप्रस्रुतमेव वा ।
पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ प्रभिन्नं प्र-
स्रुताङ्गञ्च रक्तनेत्रं हतस्वरम् । पञ्चकर्मगुणातीतं कुष्ठं ह-
न्तीह कुष्ठिनम् ॥ तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम् ।
शोफातिसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥ वातमूत्रपुरी-
षाणि क्रिमयः शुक्रमेव च । भगन्दरात् प्रस्रवन्ति यस्य तं
परिवर्ज्जयेत् ॥ प्रशूननाभिवृषणं रुद्धमूत्रं रुगन्वितम् ।

अश्मरी चापदत्वाप्य सिकताशर्करान्विता ॥ गर्भकोषपराषक्तौ मक्कल्लो योनिसंवृतिः । हन्यात् स्त्रियं मूढ़गर्भं यथोक्ताश्चाप्युपद्रवाः ॥ पार्श्वभक्ताभ्रविद्वेषशोफातिसारपीड़ितम् । विरिक्तं पूर्व्वमामञ्च वर्ज्जयेदुदरार्दितम् । यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा । शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् । नित्यं वक्त्रेण चोच्छ्वसेत् तं ज्वरो हन्ति मानवम् ॥ हिक्काश्वासपिपासार्त्तं मूढ़ं विभ्रान्तलोचनम् । सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥ आविलाक्षं प्रताम्यन्तं निद्रायुक्तमतीव च । क्षीणशोणितमांसञ्च नरं क्षपयति ज्वरः ॥ श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीड़ितम् । विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥ शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीड़ितम् । कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् ॥ श्वासशूलपिपासान्नविद्वेषग्रन्थिमूढ़ताः । भवन्ति दुर्बलत्वञ्च गुल्मिनोऽमृत्युमेष्यतः ॥ आध्मानं बहुनिष्यन्दं छर्दिहिक्काबृंहितम् । रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ॥ पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च मानवः । पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति ॥ लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः । रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति ॥ अवाङ्मुखस्तुन्नको वा क्षीणमांसबलो नरः । जागरिष्णुरसन्देहमुन्मादेन विनश्यति ॥ बहुशोऽपस्मरन्तन्तु प्रक्षीणं चलितभ्रुवम् । नेत्राभ्याञ्च विकुर्व्वाणमपस्मारो विनाशयेत्" ॥

**अवारपार** पु॰ अवारमर्वाक्तीरं पारञ्चोत्तरतीरं च स्तो यस्य अर्शआद्यच् । उभयकूलवति समुद्रे ।

**अवारपारीण** त्रि॰ अवारपारे गच्छति+ख । पारगामिनि ।

**अवारिका** स्त्री नास्ति वारि यत्र । धन्याके, तस्य अतिशुष्कत्वेन जलशून्यत्वात्तथात्वम् ।

**अवारित** त्रि॰ न वारितः । अनिषिद्धे "यामेषु सैन्यैरकरोदवारितः" माघः । [गन्तरि ।

**अवारीण** त्रि॰ अवारं गच्छति ख । नद्यादेरर्व्वाक्पार

**अवार्य्य** त्रि॰ न वार्य्यः । अवारणीये । "उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्य्यताम्" सुश्रु॰ ।

**अवावट** पु॰ "द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते । अवावट इतिख्यातः शूद्रधर्म्मा स जातितः" इत्युक्ते कुण्डगोलकादौ ।

**अवावन्** त्रि॰ ओण्-अपसारणे ड्वनिप् । अपसारके । स्त्रियां ङीप् वनोरश्च । अवावरी ।

**अवासस्** त्रि॰न वासोऽस्य । १वस्त्ररहिते नग्ने २बौद्धभेदे च ।

**अवासिन्** त्रि॰ न वसति वस-णिनि न॰ त॰ । निवासशील भिन्ने । स्त्रियां ङीप् ।

**अवास्तव** न॰ न वास्तवम् । सत्यभिन्ने मिथ्याभूते ।

**अवाह्य** त्रि॰ न॰ त॰ । वोढुमशक्ये ।

**अवि** पु॰ अव-इन् । १सूर्य्ये, २अर्कवृक्षे ३मेषे, ४छागे, "महान्त्यपि समृद्धानि गोजाविधनधान्यतः" जिनकार्म्मुकवस्ताविं पृथक् दद्याद् विशुद्धये" इति च मनुः ५पर्व्वते, ६मूषिककम्बले, ७प्रभौ च । रजस्वलायां स्त्री वा ङीप् । स्वार्थे कन् । अविशब्दार्थे । भावादौ पुरोहिता॰ यक् । आविक्यम् तद्भावादौ न॰ ।

**अविकट** पु॰ अवि+समूहे कटच् । १मेषसंघाते । विकट उग्रः न॰त॰ । २उग्रभिन्ने सौम्ये त्रि॰ ।

**अविकटोरण** पु॰अविकटे मेषसंघे देयः उरणःमेषः । न्याय शुल्करूपेण देये मेषसंघातमध्ये मेषरूपे करे ।

**अविकत्थन** त्रि न॰त॰ । श्लाघाशून्ये "सन्तुष्टाश्च क्षमायुक्ता भवेयुरविकत्थनाः" देवीपुरा॰ ।

**अविकल** त्रि॰न विकलः व्याकुलः । १व्याकुलभिन्ने २अविसंवादिनि च "कलमविकलतालं गायकैर्बोधहेतोः" माघः "अविकलोऽविसंवादी" मल्लि॰ ।

**अविकार** पु॰ अभावे न॰त॰ । विकाराभावे न॰ब॰ । विकारशून्ये । विकारश्च परिणामभेदः भावधर्म्मः ।

**अविकार्य्य** त्रि॰नविकार्य्यः । १विकार्य्यभिन्ने परिणामिगुणशून्ये "अविकार्य्योऽयमुच्यते" गीता । विकार्य्यञ्च द्वेधा "प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्" इति वाक्यप॰ उक्तं यादृशम् यादृशवस्तुनश्च विकार्य्यकर्म्मत्वम् तद्भिन्ने २पदार्थे परात्मनस्तु तदुभयाभावात् सर्व्वथाऽविकार्य्यत्वमेव ।

**अविकृत** त्रि॰न विकृतः । परिणामिगुणशून्ये ।

**अविकृति** स्त्री अभावे न॰त॰ । १विकाराभावे न॰ब॰२विकारशून्ये च । "३सांख्योक्तायां मूलप्रकृतौ स्त्री "मूलप्रकृतिरविकृतिः" सा॰ का॰ ।

**अविक्रिय** त्रि॰ नास्ति विक्रिया यस्य । विकारशून्ये ।

**अविक्रीत** त्रि॰ न विक्रीतः । विक्रीतस्यापि कालविशेषमध्ये पुनः प्रत्याहर्त्तुं शक्ये द्रव्यभेदे । तत्र कालनियमो यथा "क्रीत्वा विक्रीय वा किञ्चित् यस्येहानुशयो भवेत् । सोऽन्तर्दशाहं तद्द्रव्यं दद्याच्चैवाददीत वा" मनुः । क्रीतानुशयकालवत् द्रव्यविशेषे विक्रयानुशयकालविशेषोऽप्याह नारदः । "दर्शैकपञ्च-

प्राङ्मासत्र्यहाद्दैमासिकम्। बीजायोवाह्यरत्नस्त्रीदोह्य पुंसां परीक्षणम्" या० स्मृ०। तथाच बीजे—ब्रीह्यादौ पञ्चाहं, रत्ने—मुक्ताप्रवालादौ सप्ताहं, स्त्रियां—दास्यां मासं, दोह्ये—गोमहिष्यादौ त्र्यहम्, पुंसि—दासे पञ्चदशाहं, व्याप्य परीक्षणं कर्त्तव्यम् तावत्कालमध्ये अनुशये प्रत्यार्पयितुं शक्यते इत्यवगम्यते एवञ्च मनुवचनमेतदतिरिक्तविषयम् एवं विक्रयस्यानुशयकालविशेषोद्रव्यविशेषे बोध्यः।

**अविक्रेय** त्रि० विक्रेतुमनर्हः। स्मृतिनिषिद्धविक्रये लाक्षालवणादौ अपण्यशब्दे विवृतिः। "अविक्रेयस्य विक्रयः" स्मृतिः।

**अविक्षत** विक्षतः नष्टः भोगादिना दुष्टोवा न० त०। १अविनष्टे भोगादिना २अदूषिते च। "विक्रेतुः प्रतिदेयं तत्तस्मिन्ने वाह्न्यविक्षतम्" स्मृतिः।

**अविक्षित** त्रि० नास्ति विशेषेण क्षितम् क्षयोऽस्य भावे क्त। विशेषक्षयशून्ये "अविक्षितास आयुषा सुवीराः" ऋ० ७, १२३४। सा दीर्घतत्वे। अविक्षीणः तत्रैव कर्त्तरि क्त न० त०। अविक्षीण इत्येव।

**अविक्षिप** त्रि० विक्षेप्तुं न शक्तः क्षिप—क—। विक्षेप्तुमशक्ते। स्वार्थे कन् तत्रैव। [अजगन्धाष्टके।

**अविगन्धा** स्त्री अवेश्छागस्य गन्ध इव गन्धः पुष्पादावस्याः।

**अविगर्हित** त्रि० न०त०। १अनिन्दिते

**अविगीत** त्रि० न०त०। अवनिन्दिते "अविगीतशिष्टाचारपरम्पराप्राप्तत्वेनेति" मुक्ता०। [२उद्विग्नभिन्ने त्रि०।

**अविग्न** पु० विज—क्त न०त०। (करमचा) १करमर्द्दकवृक्षे।

**अविग्रह** त्रि०नास्ति विशेषेण ग्रहो यस्य। १विशेषरूपेणाज्ञाते "अविग्रहा गतादिस्था यथा श्यामादिकर्म्मभिः" हरिः। न विग्रहो दर्शितसमानार्थकं वाक्यं यस्य। २व्याकरणोक्ते नित्यसमासे। नास्ति विग्रहो देहो यस्य। ३निरवयवे परमेशे पु० नास्ति मीमांसकोक्ते ४विग्रहशून्ये देवे च। तैर्हि देवानां विग्रहवत्त्वं खण्डितं तच्च शङ्कापूर्व्वकं जै० सू० भाष्ये च दर्शितं यथा—"देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्" सू० "नैतदस्ति,—अग्न्यादयोऽप्रयोजकाः—इति, सर्वा देवताः सर्व्वेषां धर्म्माणां प्रयोजिकाः भवितुमर्हन्ति। कुतः ?। 'भोजनस्य तदर्थत्वात्',—भोजनं हि इदं देवतायाः, यागो नाम, भोज्यं द्रव्यं देवतायै प्रदीयते, सा भोक्ष्यते—इति, देवतासम्प्रदानको हि अयं यागः श्रूयते, सम्प्रदानं च नाम कर्म्मणोऽपि ईप्सिततमादभिप्रेततरम्, तस्मात् न गुणभूता देवता, देवतां प्रति गुणभूते द्रव्यकर्म्मणी। अपि च यागो नाम देवतापूजा, पूजा च पूजनीयं प्रति गुणभूता लोके दृश्यते, तदेतत् 'अतिथिवत्' द्रष्टव्यं, यथा यावत्किञ्चित् अतिथेः परिचरणं, सर्व्वं तत् अतिथिप्रयुक्तम् एवम् इदमपि—इति। आह,—"ननु एवं ब्रुवता, विग्रहवती देवता भुङ्क्ते च—इत्यभ्युपगतं भवति"। उच्यते, वाढं, विग्रहवती देवता भुङ्क्ते च। कुतः ?। स्मृतेः, उपचारात्, अन्यार्थदर्शनाच्च,—एवं हि स्मरन्ति, विग्रहवती देवता—इति, स्मृतिश्च नः प्रमाणम्। तथा विग्रहवतीं देवताम् उपचरन्ति,—यमं दण्डहस्तमालिखन्ति, कथयन्ति च, तथा वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तं, उपचारादपि स्मृतेर्द्दृढिमानं कल्पयामः। तथा अन्यार्थवचनं, विग्रहवतीं देवतां दर्शयति,—"जग्टभ्मा ते दक्षिणम् इन्द्र ! हस्तम्"—इति, पुरुषविग्रहस्य हि दक्षिणः सव्यश्च हस्तो भवति। तथा "इमे चित् इन्द्र! रोदसी अपारे यत् संगृभ्णा मघवन् ! काशिरित्ते,—इति, काशिर्मुष्टिः, सोऽपि पुरुषविग्रहस्य एव उपपद्यते। तथा, "तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे। इन्द्रो वृत्राणि जिघ्नते" इति, ग्रीवा उदरं बाहू इति पुरुषविग्रहदर्शनं भवति। तस्मात् विग्रहवती देवता इति। भुङ्क्ते च। कथम् अवगम्यते ?। स्मृतेः, उपचारात् अन्यार्थदर्शनाच्च, एवं स्मरन्ति, भुङ्क्ते देवता इति। तथा च एनाम् भुञ्जानाम् इव उपचरन्ति, यदस्यै विविधान् उपचारान् उपहरन्ति। तथा च अन्यार्थवचनं भुञ्जानाम् देवतां गमयति,—"अद्धीन्द्र ! पिब च प्रस्थितस्य"—इति, तथा च, "विश्वासनानि जठरेषु धत्ते" इति, 'एकया प्रति धा पिबत्साकं सरांसि त्रिंशतम्" इति। आह, "न देवता भुङ्क्ते, यदि च भुञ्जीत देवतायै हविः प्रत्तं क्षीयेत"। उच्यते, अन्नरसभोजिनी देवता मधुकरीवत् अवगम्यते। कथम्?। देवतायै हविः प्रत्तं नीरसं भवति, तस्मात् अन्नरसं भुङ्क्ते देवता इति गम्यते" भा०। "आर्थपत्याच्च" सू०। "यदि कस्यचित् अर्थस्य ईशाना देवता उपचर्यमाणा च प्रसीदेत् ततः तदाराधनार्थम् इयं देवतापूजा अभिनिर्वर्त्येत, न च एतदुभयम् अपि अस्ति इति, तत् उच्यते, अर्थपतिर्द्देवता इति। कथम् अवगम्यते?। स्मृतेः, उपचारात् अन्यार्थदर्शनाच्च, एवं हि स्मरन्ति, अर्थानाम् ईष्टे देवता इति। तथा, देवग्रामो देवक्षेत्रम् इत्युपचारस्तामेव स्मृतिं दृढयति। तथा अन्यार्थवचनम् ईशानां देवतां दर्शयति, "इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रो अपामिन्द्र इत् पर्वतानाम्, इन्द्रो वृधाम् इन्द्र इन्मेधिराणाम् इन्द्रः

क्षेमे योगे हव्य इन्द्रः' इति, तथा, "ईशानमस्य जगतः स्वर्दृशम् ईशानम् इन्द्र! तस्थुषे" इति। तथा, स्मृत्युपचाराभ्यां प्रसीदति इत्युपगच्छामः, एवं हि स्मरन्ति, प्रसीदति देवता इति। तथा उपचरन्ति, प्रसन्नोऽस्य पशुपतिः, पुत्रोऽस्य जातः, प्रसन्नोऽस्य वैश्रवणो धनम् अनेन लब्धम् इति। तथा अन्यार्थदर्शनं भवति, आहुतिभिरिव हुतादो देवान् प्रीणाति' इति, तस्मै प्रीता इषमूर्जं नियच्छन्ति' इति" भा०। "ततश्च तेन सम्बन्धः" सू०। "'ततो' देवतायाः, तेन फलेन सम्बन्धः परिचरितुर्भवति, यो देवताम् इज्यया परिचरति, तं सा फलेन सम्बध्नाति। कथम् एतत् अवगम्यते? । स्मृत्युपचाराभ्यां स्मरन्ति हि, देवता यष्टुः फलं ददाति इति, तामेव उपचारेण स्तुतिं दर्शयति, पशुपतिः, अनेनउपचरितः पुत्रोऽनेन लब्धः इति। तथा अन्यार्थदर्शनम् इममेव अर्थं दर्शयति, "स, इत् जनेन स विशा स जन्मना स पुत्रैर्वाजम्भरते धना नृभिः। देवानाम् यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्" इति तथा, "तृप्त एवैनम् इन्द्रः प्रजया पशुभिः तर्पयति" इति तस्मात् हविर्दानेन गुणवचनैश्च देवता आराध्यते, सा प्रीता सती फलं प्रयच्छति येन कर्मणा अभिराराधितः, तस्य फलस्य ईष्टे, तत् कर्त्रे प्रयच्छति, न तत् स्वयं प्रदातुमर्हति, वचनादेतत् अवगम्यते। कः किं प्रयच्छति? इति यथा अग्नौ वचनं, न तत् सूत्रे" भा०। "अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः" सू०। "अपि वा इति पक्षो व्यावर्त्त्यते। न चैतदस्ति यदुक्तं देवता प्रयोजिका" इति, "यज्ञकर्म प्रधानं स्यात्" यजतेर्जातम् अपूर्व्वम्। कुतः? । "शब्दपूर्व्वत्वात्", यत् हि फलं ददाति, तत् प्रयोजकम् इदं फलं ददाति इत्येतत् ज्ञानं शब्दपूर्व्वकं न प्रत्यक्षादिभिः अवगम्यते, शब्दश्च यजतिवाच्यात् फलम् आह, न देवतायाः। कथम् अवगम्यते? । दर्शपूर्णमासयोः करणत्वेन निर्द्देशः "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति, तथा, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति, यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः। "ननु द्रव्यदेवताक्रियं यजत्यर्थः"। सत्यमेवं, किन्तु "गुणत्वे देवताश्रुतिः", द्रव्यदेवतं हि भूतं, भावयितव्यो यजत्यर्थः, भूतभव्यसमुच्चारणे च भूतं भव्याय उपदिश्यते, तस्मात् न देवता प्रयोजिका। अथ यदुक्तं "कर्म्मण ईप्सितादभिप्रेततरम्"

इति न अस्य अभिप्रेततामपनुमहे, तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यात् अभिप्रेतता अवगम्यते। फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य। तस्य च श्रुत्या करणता अवगम्यते, न देवतायाः। तत्र यद्यपि देवतार्थता यागस्य गम्यते। फलार्थतापि तेन न प्रतिषिध्यते, फलं च पुरुषार्थः पुरुषार्था च नः प्रवृत्तिः, न च असौ देवतायाः, तस्मात् न देवताप्रयुक्ताः प्रवर्त्तिष्यामहे, या तु सम्प्रदानस्य अभिप्रेतता सा फलवतो यजेः, साधनत्वे सति उपपद्यते। यच्च,—यजिर्देवतापूजा सा पूज्यमानप्रधाना लोके लक्ष्यते—इति, न लोकवत् इह भवितव्यम्, इह पूज्यमानपूजा प्रधानं, यत् हि फलवत् तत् प्रयोजकं, तस्मात् यज्ञकर्म प्रयोजकम्। अपिच, एतस्मिन् पक्षे विग्रहवती देवता भुङ्क्ते च—इति अध्यवसनीयं भवति, न हि अविग्रहायै अभुञ्जनायै च दानं भोजनं वा सम्भवति—इति"। यच्च उक्तं स्मृत्युपचारान्यार्थदर्शनैर्विग्रहवती, भुङ्क्ते च—इति। तत्र, स्मृतेर्मन्त्रार्थवादमूलत्वात्,—मन्त्रेभ्यश्च अर्थवादेभ्यश्च स्मृतिमूलं विज्ञानम् उत्पद्यते—इति प्रत्यक्षम् अवगम्यते, ते च मन्त्रार्थवादा नैवंपराः—इत्येतत् वक्ष्यामः। आह, 'यदि नैवंपरा न तर्हि मन्त्रार्थवादमूलं तद्विज्ञानम्'—इति। उच्यते,—ये आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति, तेषाम् तत् स्मृतिमूलम् ये पुनर्निपुणतः पश्यन्ति, तेषां तत् बाधितम्। अपि च कस्यचित् स्मृतिमूलं भवति। तस्मात् ततः एव स्मृतिः। उपचारोऽपि स्मृतिमूल एव। यत्तु अन्यार्थदर्शनम्, उक्तं—'जग्टम्भा ते दक्षिणम् इन्द्र! हस्तम्'—इति। नैतत् एवम्परं,—इन्द्रस्य हस्तो विद्यते—इति" यःतस्य दक्षिणो हस्तस्तं वयमग्रहीतवन्त इति। तस्मात् वाक्यात् इन्द्रस्य हस्तसत्ता न प्रतीयते। आह, 'यदि त्वसौ नास्ति, वयं ते हस्तं ग्टहीतवन्तः—इत्येवं न अवकल्पते—इति हस्तवत्ता अध्यवसीयते,—अस्त्यसौ हस्तः, वयं यं ग्टहीतवन्तः'—इति। तन्न उपपद्यते यद्यप्यस्य हस्तो भवेत्, तथापि न तम् उपग्टहीतवन्तः—इति प्रत्यक्षमेतत्, तथाप्येतच्च अवकल्पत एव, तत्र एतत् असम्बद्धं वा अवकल्पयितव्यं, स्तुतिर्वा, तच्च मत्पक्षेऽपि तुल्यम्। अथ एवम् उच्यते,—'तस्य एतद्वचनं, यो ग्टहीतवान् तस्य हस्तम्'—इति। उच्यते, नैतत् अध्यवसेयम्, आदिमत्तादोषो वेदस्य प्रसज्येत, न च, ग्टहीतवान् आसीत्—इत्युच्यते, प्रमाणाभावात्। 'एतस्मात् एव वचनात् अर्थात्

कल्प्यते हस्तपद्दीता इति चेत्। तन्न, अयथार्थस्यापि उच्चारणं सम्भवत्येव यतः, यथा, 'दश दाड़िमानि षड़पूपाः' इति। यस्यापि च एष पक्षो, विग्रहवान् इन्द्रः इति, तस्यापि इन्द्रशब्देन आमन्त्रणं सम्बोधनार्थं, सम्बोधनम् अनुवचनाय, तत्र सम्बुद्धः इत्यवगते अनुवचनं न्याय्यम्. न च, असौ केनचित् प्रकारेण सम्बुद्ध इति अवगम्यते, अनवगते सम्बोधनं व्यर्थम्। 'वचनप्रामाण्यात् सम्बुध्यते इत्येवं गम्यते इति चेत् उक्तम् अदृष्टकल्पनायां हस्तादिकल्पनानुपपत्तिरिति। न च, असौ सम्बुद्धः इति अवधार्यते, प्रमाणाभावात्। तस्मात् सम्बोधनवचनं न सम्बोधनाय, निर्देशार्थमेव। अविग्रहपक्षेऽपि तत् निर्देशार्थमेव भविष्यति। तत्र आमन्त्रितविभक्तिवचनं स्तुतये, एवम् इदं देवतात्वं साधयितृतमं, यच्चेतनादिवत् सम्बुध्य साधयति इति चेतनवदिव उपचर्यमाणः सम्बुद्धिशब्देन आमन्त्र्यते, तथा सम्बोधनशब्देन निर्दिश्य उच्यते, गृहीतवन्तो वयं तव हस्तं त्वदाश्रया वयम् इत्यर्थः, अस्माभिः इन्द्रकर्म कर्त्तव्यम् इत्येतत् अनेन स्तूयते। तथा "इमे द्यावापृथिव्यौ उरू ते अपारे यत् संस्थासि मघवन्नहो ते पूजितौ मुष्टिः,, इति मुष्टिमिव मुष्टिं स्तुत्यर्थेन वदति, । तस्यापि भावे न प्रमाणमस्ति, न इदं वचनं, "इत् महान् कार्षिः" अस्ति, किन्तर्हि, यस्तव कार्षिः, स महान् इति, अन्यार्थस्तव कार्षिरस्ति इति, अन्यः तव कार्षिर्महान् इति। "सता हि स्तुतिः उपपद्यते इति चेत्"। नैतत्, नियोगतो यस्यापि पौरुषविधिकैरङ्गैर्नास्ति संयोगः, पौरुषविधिकैरङ्गैः तस्यापि स्तुतिर्भवति, यथा "एते वदन्ति शतवत् सहस्रवत् अभिक्रन्दन्ति हरितेभिरासभिः। विष्टी ग्रावाणः सुकृतः, सुकृत्यया होतुश्चित् पूर्व्वे हविरद्यमाशत" इति। तथा, "सुखं रथं युयुजे सिन्धुरश्विनम्" इति। तस्मात् न स्तुतिवचनात् अर्थापत्तिर्भवति पुरुषविधत्वे देवतायाः। तथा, "तुविग्रीव इन्द्रः, इति नैतत् युक्तं भवति, ग्रीवावान् इन्द्रः इति, किन्तर्हि यास्य ग्रीवा, सा महती, ग्रीवासत्त्वे नास्ति प्रमाणम्। न च, ग्रीवास्तुतिः अर्थापत्तिः, अपुरुषविधेऽपि स्तुत्युपपत्तेः। अपि च, "इन्द्रो वृत्राणि जिघ्नते" इत्येताभ्यां पदाभ्याम् इन्द्रशब्दः सम्बद्धो न शक्नोति तुविग्रीवादिभिः सम्बन्धं यातुं, द्विरुच्चारणम् अस्य प्रसज्यते, तुविग्रीवावान् इन्द्रो वेदितव्यः वृत्राणि च इन्द्रो हन्ति—इति, तथा हि सति भिद्येत, अभिन्नं च वाक्यम् उपलभ्यते, तदेवम् अवकल्पते, यदि तुविग्रीवादयोऽस्य न उपदिश्यन्ते—इति स्तुत्यर्थं सङ्कीर्त्यन्ते तुविग्रीवादिः, 'अस्य सोमदे इन्द्रो वृत्राणि हन्ति'—इति एषा तु वचनव्यक्तिः, वृत्रवधोपदेशपरम् इदं वचनम्—इति। यदपि वचनं,—बाहू ते इन्द्र रोमशौ, अक्षी ते इन्द्र पिङ्गले'—इति, तदपि बाह्वोः रोमशत्वम् अक्ष्णोश्च पैङ्गल्यम् आह, न बाहुसत्तामक्षिसत्तां च। यदपि अक्षिसत्तां वदति—इति गम्यते,—'चक्षुष्मते शृण्वते ते ब्रवीमि'—इति, तदपि न चक्षुःसम्बन्धार्थं, चक्षुष्मते ब्रवीमि—इति वचनसम्बन्धार्थं, तत् सतीमिव चक्षुष्मत्तां स्तुत्यर्थम् उच्चारयति। कुतः एतत् अवगम्यते? । चतुर्थीनिर्देशात्, यदि प्रातिपदिकार्थोऽध्यवसीयते, तथा वाक्यं भिद्येत, चक्षुष्मान्—इत्येवं च उद्दिश्येत, चक्षुष्मते ते ब्रवीमि—इति च। तस्मात् न किञ्चित् अन्यार्थदर्शनं पुरुषविधतां देवतायाम् इदं ख्यापयति—इति, न च, इदं भोजनं, न हि देवता भुङ्क्ते, तस्मात्, भोजनस्य तद्दैवत्यात्—इति तत् असद्वचनम्। यदपि स्मृत्युपचारान्यार्थदर्शनैर्भुङ्क्ते—इति, तत् अविग्रहत्वेन प्रत्युक्तम्। अपि च, भुञ्जानायै देवतायै प्रत्तं हविः क्षीयेत। न च, मधुकरीवत् अम्बरसभोजिन्यो देवताः—इति प्रमाणमस्ति, मधुकरीषु प्रत्यक्षं, न च तद्वत् देवतायाम्। तस्मात् न भुङ्क्ते देवता इति। यदुक्तम् देवतायै हविः प्रत्तं नीरसं भवति—इति। नैषदोषः, वातोपहतं नीरसम्भवति—इति, शीतीभूतं च। न च, असौ कस्यचित् अर्थस्य ईष्टे, अनीशा कथं दास्यति ? ।—इति। यदुक्तं, स्मृत्युपचारान्यार्थदर्शनैः ईशाना देवता—इत्यवगम्यते—इति। तत्र, स्मृतेः मन्त्रार्थवादमूलत्वात्—इत्युक्तम्, उपचारोऽपि,—'देवग्रामो देवक्षेत्रम्'—इति उपचारमात्रम्,—यो यदभिप्रेतं विनियोगमर्हति, तत्तस्य स्वं, न च ग्रामं क्षेत्रं वा यथाभिप्रायं विनियुङ्क्ते देवता। तस्मात् न सम्प्रयच्छति—इति, देवपरिचारकाणान्तु ततो भृतिर्भवति, देवताम् उद्दिश्य, यत् त्यक्तम्। यदुक्तम्, अन्यार्थदर्शनम् ईशानां देवतां ख्यापयति,—'इन्द्रो दिव इन्द्र ईशे'—इत्येवमादीति, तत् प्रत्यक्षाम् अनीशानां देवताम् उपलभ्य अध्यवस्यामः,—भाक्त एव शब्दः—इति। 'तत्र आह,+—वचनप्रामाण्यादेव अस्य ईशानता अवगम्यते, यद्देवत्योक्ता अर्थान् विनियुङ्क्ते, तद्देवताभिप्रायादेव-इत्यध्यवस्यामः'—इति। तत्र,

प्रत्यक्षात् प्रमाणात् देवतापरिचारकाणाम् अभिप्रायः इत्यवगम्यते, स न शक्यो बाधितुम्। येऽपि देवताम् ईशानां वर्णयन्ति, तेऽपि न अपक्रुवते परिचारकाणाम् अभिप्रायम्। किं चाहुः, तथा देवता करोति, यथा परिचारकाणाम् अभिप्रायो भवति इति, न च, स ईशानो भवति, यः पराभिप्रायम् अनुरुध्यते, यस्य न स्वाभिप्रायात् विनियोगो भवति। अपि च, न च एतद्वचनं, वर्त्तमानकालोपदेशत्वात्, प्रत्यक्षविरोधात्, स्तुतिवादोऽवधार्य्यते, स्तुतिवादे च सम्भवति न वचनप्रामाण्यात् ईशिष्यते इति गम्यते। न च, देवता फलेन सम्बध्नाति, या तदर्थं परिचर्य्येत। यदुक्तं, स्तुत्युपचाराभ्यामर्थदर्शनैर्ददाति प्रसीदति च इति। तत्र स्तुत्युपचारयोर्व्यक्तं यत् अन्यार्थदर्शनं तस्मै प्रीता इयमूर्ज्ज स इति,तत्र, अन्यस्य विधेराम्नानात् दक्षिणतः सम्परिहर्त्तव्या इत्याह" तथा "इन्द्र एवैनम् इन्द्रः प्रजया पशुभिस्तर्पयति" इति अत्र ऐन्द्रस्य हविषो विधातारम्। तस्मात् देवता न प्रयोजिका इति" भा०। "अतिथौ तत्प्रधानत्वमभावः कर्म्मणि स्यात्तस्य प्रीतिप्रधानत्वात्" सू०। "यदुक्तम् अतिथिवत् इति तत् परिहर्त्तव्यम् आतिथ्यम् अतिथिप्रयुक्तं स्यात् आतिथ्ये हि तत् प्रीतिर्विधीयते अतिथिः परिचरितव्यः यथा प्रीयते तथा कर्त्तव्यम् इति। भोजनं दानं वा कार्य्यम् इति यद्यत् अतिथये रोचते तत् कर्त्तव्यं यत् तस्मै न रोचते न तत् बलात् कारयितव्यम् इति इह तु कर्म्मणि अभावः प्रीतिविधानस्य। तस्मात् विषमम् अतिथिना" शवरभाष्यम्। तदेतद्वेदान्तिभिर्न मन्यते तैर्हि तेषां विग्रहवत्त्वमङ्गीकृतं तथाच युक्तिपूर्व्वकं देवानां विग्रहवत्त्वं शा०सूत्रे तद्भाष्ये च व्यवस्थापितं यथा। "विरोधः कर्म्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" शा०सू० "स्यादेतत् यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो वर्ण्येत विग्रहवत्त्वादृत्विगादिवदिन्द्रादीनामपि स्वरूपसन्निधानेन योगेऽङ्गभावोऽभ्युपेयते न च सम्भवति। बहुषु युगपदेकस्येन्द्रस्य स्वरूपसन्निधानानुपपत्तेरिति चेन्नायमस्ति विरोधः कस्मात्? अनेकप्रतिपत्तेः एकस्यापि देवात्मनो युगपदनेकस्वरूपप्रतिपत्तिः सम्भवति। कथमेतदवगम्यते? दर्शनात्। तथाहि "कति देवाः" ? इत्युपक्रम्य "त्रयश्च त्री च शता च त्रयश्च त्री च सहस्रेति" निरुच्य" कतमे ते? इत्यस्यां पृच्छायां "महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति। तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण "कतमएको देव इति प्राण" इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति। तथा स्मृतिरपि "आत्मनो वै सहस्राणि बहूनि भरतर्षभ! कुर्य्याद्योगी बलं प्राप्य तैश्च सर्वैर्महीञ्चरेत्। प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रन्तपश्चरेत्। संक्षिपेत्तु पुनस्तानि सूर्य्यो रश्मिगणानिव" इत्येवञ्जातीयका प्राप्ताणिमाद्यैश्वर्य्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति किमु वक्तव्यमाजानसिद्धानां देवानाम्। अनेकरूपप्रतिपत्तिसम्भवाच्चैकैका देवता बहुरूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छति, परैश्च न दृश्यते ऽन्तर्द्धानादिशक्तियोगादित्युपपद्यते। अनेकप्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्या। विग्रहवतामपि कर्माङ्गभावचोदनास्वनेका प्रतिपत्तिर्दृश्यते। क्वचिदेकोविग्रहवाननेकत्र न युगपदङ्गभावं गच्छति यथा बहुभिर्भोजयद्भिर्नैकोब्राह्मणो युगपद्भोज्यते। क्वचिच्चैको विग्रहवाननेकत्र युगपदङ्गभावं गच्छति यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत् परित्यक्ष्यन्तीति विग्रहवत्त्वेऽपि देवानां न किञ्चित् कर्म्मणि विरुध्यते" भा०। "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" सू०। "मा नाम विग्रहवत्त्वे देवादीनामुपगम्यमाने कश्चिद्विरोधः प्रसञ्जि, शब्दे तु विरोधः प्रसज्येत, कथम्? औत्पत्तिकं हि शब्दस्यार्थेन सम्बन्धमाश्रित्यानपेक्षत्वादिति वेदस्य प्रामाण्यं स्थापितम्। इदानीन्तु विग्रहवती देवताऽभ्युपगम्यमाना यद्यप्यैश्वर्य्ययोगाद्युगपदनेककर्म्मसम्बन्धीनि हवींषि भुञ्जीत तथापि विग्रहयोगादस्मदादिवज्जननमरणवती सेति नित्यस्य शब्दस्यानित्येनार्थेनानित्यसम्बन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधःस्यादिति चेन्नायमप्यस्ति विरोधः कस्मात्? अतः प्रभवात् अतएव हि वैदिकाच्छब्दाद्देवादिकञ्जगत् प्रभवति। ननु जन्माद्यस्य यत इति ब्रह्मप्रभवत्वं जगतोऽवधारितं कथमिह शब्दप्रभवत्वमुच्यते?। अपि च यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः कथमेतावता विरोधः शब्दे परिहृतः? यावता वसवोरुद्रा आदित्याविश्वेदेवामरुत इत्येतेऽर्था अनित्या एव, उत्पत्तिमत्त्वात् तदनित्यत्वे तद्वाचकानां वैदिकानां वसा-

दिशब्दानामनित्यत्वं केन वार्य्यते? प्रसिद्धं हि लोके देवदत्तस्य पुत्रे उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियते इति। तस्माद्विरोध एव इति चेन्न गवादिशब्दार्थसम्बन्धनित्यत्वदर्शनात्। न हि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात्। द्रव्यगुणकर्म्मणां हि व्यक्तय एवोत्पद्यन्ते नाकृतयः। आकृतिभिश्च शब्दानां सम्बन्धो न व्यक्तिभिः व्यक्तीनामानन्त्यात् सम्बन्धग्रहणानुपपत्तेः। व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो दृश्यते। तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽपि आकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम्। आकृतिविशेषस्तु देवादीनां मन्त्रार्थवादाभ्यां विग्रहवत्त्वाद्यवगमादवगन्तव्यः। स्थानविशेषसम्बन्धनिमित्ताश्चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत्। ततश्च योयस्तत्तत्स्थानमधितिष्ठति स स इन्द्रादिशब्दैरभिधीयते इति न दोषो भवति। नचेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणत्वाभिप्रायेणोच्यते कथं तर्हि? स्थितिवाचकात्मना नित्यशब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिरतः प्रभव इत्युच्यते” भा०। “ज्योतिषि भावाच्च” सू०। “यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बंभ्रमज्जगदवभासयति तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते लोकप्रसिद्धेर्वाक्यशेषप्रसिद्धेश्च। न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण, चेतनतया अर्थित्वादिना वा योगोऽवगन्तुं शक्यते मृदादिवदचेतनत्वावगमात्। एतेनाग्न्यादयो व्याख्याताः। स्यादेतत् मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदोष इति नेत्युच्यते। न तावल्लोको नाम किञ्चित् स्वतन्त्रं प्रमाणमस्ति प्रत्यक्षादिभ्य एव ह्यव्यभिचरितविशेषेभ्यः प्रमाणेभ्यः प्रसिद्ध एवार्थो लोकात् प्रसिद्ध इत्युच्यते न चात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति। इतिहासपुराणमपि पौरुषेयत्वात् प्रमाणान्तरमूलतामाकाङ्क्षते। अर्थवादा अपि विधिनैकवाक्यत्वात् तत्स्तुत्यर्थाः सन्तोन पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे कारणभावं प्रतिपद्यन्ते। मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्थाःन कस्यचिदर्थस्य प्रमाणमित्याचक्षते। तस्मादभावो देवादीनामधिकारस्य” भा०। “भावन्तु वादरायणोऽस्ति हि” सू०। तुशब्दः पूर्वपक्षं व्यावर्त्तयति। वादरायणस्त्वाचार्य्यो भावमधिकारस्य देवानामपि मन्यते। यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसम्भवोऽधिकारस्य तथाप्यस्ति शुद्धायां ब्रह्मविद्यायां सम्भवः अर्थित्वसामर्थ्याद्यप्रतिषेधापेक्षितत्वादधिकारस्य। न च क्वचिदसम्भव इत्येतावता यत्र सम्भवस्तत्राप्यधिकारोऽपोद्येत। मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः सम्भवति तत्र योन्यायः सोऽत्रापि भविष्यति। ब्रह्मविद्याञ्च प्रकृत्य भवति लिङ्गदर्शनं श्रौतं देवाद्यधिकारस्य सूचकं “तद्योयो देवानां प्रत्यबुध्यत स एव तदभवत्”तथर्षीणामिति “ते होचुर्हन्त तमात्मानमन्विच्छामो यमन्विष्य सर्व्वांश्च लोकानाप्नोति सर्व्वांश्च कामानिति”“इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणामित्यादि” च। स्मार्त्तमपि च गन्धर्व्वयाज्ञवल्क्यसंवादादि। यदप्युक्तं ज्योतिषि भावाच्चेति अत्र ब्रूमः। ज्योतिरादिविषया अप्यादित्यादायो देवतावचनाः शब्दाश्चेतनावन्तमैश्वर्य्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति मन्त्रार्थवादेषु तथा व्यवहारात्। अस्ति ह्यैश्वर्य्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टञ्च तं तं विग्रहं ग्रहीतुं सामर्थ्यम्। तथाहि श्रूयते सुब्रह्मण्यार्थवादे “मेधातिथिं ह काण्वायनमिन्द्रोमेषो भूत्वा जहारेति”। स्मर्य्यते च “आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम स”इति। मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते “मृदब्रवीत्”“आपोऽब्रुवन्”इत्यादिदर्शनात्। ज्योतिरादिभूतधातोरादित्यादिष्वप्यचेतनत्वमभ्युपगम्यते चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम्। यदप्युक्तम् मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामार्थ्यमिति। अत्र ब्रूमः प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं नान्यार्थत्वमनन्यार्थत्वं वा। तथाहि अन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येवं प्रतिपद्यते। अत्राह विषम उपन्यासः तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति येन तदस्तित्वं प्रतिपद्यते अत्र पुनर्विध्युद्देशैकवाक्यभावे स्तुत्यर्थेऽर्थवादेन पार्थगर्थ्येन न वृत्तान्तविषया प्रवृत्तिः शक्याऽध्यवसायितुम्। न हि महावाक्ये प्रत्यायके इवान्तरवाक्यस्य पृथक् प्रत्यायकत्वमस्ति यथा “न सुरां पिबेदिति नञ्वति वाक्ये पदत्रयसम्बन्धात् सुरापाणप्रतिषेध एवैकोऽर्थो गम्यते, न पुनः सुरां पिबेदिति पदद्वयसम्बन्धात् सुरापाणविधिरपीति। अत्रोच्यते। विषमउपन्यासः युक्तं यत् सुरापाणप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणं” विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयं वृत्तान्तविषयमतिपद्यानन्तरं कैमर्थ्यवशेन विधिस्तावकत्वं प्रतिपद्यन्ते।

यथाहि "वायव्यं श्वेतमालभेत भूतिकामः" इत्यत्र विध्युद्देशवर्त्तिनां वायव्यादीनां पदानां विधिना सम्बन्धः "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीति" इत्येषामर्थवादगतानाम् पदानाम् । नहि भवति वायुर्वा आलभेत क्षेपिष्ठा देवता वा आलभेतेत्यादि।वायुस्तावकद्वारेण तत्रान्तरमन्वयं प्रतिपद्य एवंविशिष्टदैवत्यमिदं कर्म्मेति विधिं स्तुवन्ति । तद्यत्र योऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्त्तते । यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन । यत्र तु तदुभयं नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यात् आहोस्वित् प्रमाणान्तराविरोधाद्विद्यमानार्थवाद इति प्रतीतिशरणैर्विद्यमानार्थवाद आस्थेयो न गुणवादः । एतेन मन्त्रो व्याख्यातः । अपि च विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम् । न हि स्वरूपरहिता इन्द्रादयश्चेतसि आरोपयितुं शक्यन्ते । न च चेतस्यनारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते । श्रावयति च "यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वषट्करिष्यन्निति" । न च शब्दमात्रमर्थस्वरूपं सम्भवतीति शब्दार्थयोर्भेदात् तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत् तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम् । इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन्मन्त्रार्थवादमूलत्वात् प्रभवति देवताविग्रहादि प्रपञ्चयितुम् । प्रत्यक्षमूलमपि सम्भवति, भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम् । तथाच व्यासादयो देवताभिः प्रत्यक्षं व्यवहरन्तीति स्मर्य्यते। यस्तु ब्रूयादिदानीन्तनानामिव पूर्व्वेषामपि नास्ति देवादिभिर्व्यवहर्त्तुं सामर्थ्यमिति स जगद्वैचित्र्यमपि प्रतिषेधेत् इदानीमिव च नान्यदापि सार्व्वभौमः क्षत्रियोऽस्तीति ब्रूयात् ततश्च राजसूयादिचोदना उपरुन्ध्यात् इदानीमिव च कालान्तरेऽपि अव्यवस्थितप्रायान् वर्णाश्रमधर्म्मान् प्रतिजानीत ततश्च व्यवस्थाविधायिशास्त्रमनर्थकं कुर्य्यात् । तस्मात् धर्म्मोत्कर्षवशाच्चिरन्तनाः देवताभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपिच स्मरन्ति "स्वाध्यायादिष्टदेवतासम्प्रयोग" इत्यादि योगोऽप्यणिमाद्यैश्वर्य्यप्राप्तिफलकः स्मर्य्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम् । श्रुतिश्च योगमाहात्म्यं प्रख्यापयति "पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरमिति" । ऋषीणामपि मन्त्रब्राह्मणदर्शनात् सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् । तस्मात् समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति सम्भवे निरालम्बनाध्यवसातुं युक्ता । तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः । तश्चार्थित्वादिसम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः । क्रमसुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते इति" भा० ।

विग्रहादिपदेन "विग्रहो हविषां भोग ऐश्वर्य्यञ्च प्रसन्नता । फलप्रदानमित्येतत् पञ्चकं विग्रहादिकमिति" आन० गि० उक्तं पञ्चकं ग्राह्यं तच्च क्रमेण मीमांसाभाष्ये पूर्व्वपक्षे दर्शितम् । शब्दचिन्तामणावपि देवानां विग्रहवत्त्वं चेतनत्वञ्च व्यवस्थापितम् यथा "एवं देवतादावपि इन्द्रमुपासीतेत्यादौ लोके प्रयोगस्यानियमाद्गौणत्वेन व्यवहारात्तथात्वाद्यनध्यवसायेन लौकिके सहस्राक्षादाविन्द्रादिपदशक्तिग्रहः प्रमाणञ्च इन्द्र सहस्राक्ष इत्यादिविधिसमभिव्याहृतोऽर्थवाद एव स्वर्गपदवत् । अथ स्वर्गपदे प्रवृत्त्यन्यथानुपपत्त्या "तत्सुखं स्वःपदास्पदमिति" श्रुतेश्चार्थवादादेव शक्तिग्रहः नचेह तथार्थवादः किन्तु "इन्द्रः सहस्राक्षः इत्यादिस्तावकत्वेन प्रवृत्तिपर इति चेत् न इन्द्रः सहस्राक्षः" इत्यादिप्रसिद्धपदसामानाधिकरण्यश्रुतितो बाधकं विना सहस्राक्षस्यैवेन्द्रादिपदवाच्यत्वावधारणात् प्रसिद्धपदसमन्वयवशेन प्रतीयमानमर्थमबाधितमादायैव तेषां प्रवृत्तिपरत्वात् मन्त्रप्रकाशितशशिशेखराद्युद्देशेन हविस्त्यागेन तत्रैव याज्ञिकानां देवताव्यवहारात् अपि च शिवाय गां दद्यादित्यादौ देवतासम्प्रदानत्वश्रुतेः, शिवादिसहस्रनाम्नां पर्य्यायत्वेन श्रुतेः सम्प्रदानपरिग्रहेण प्रमाणत्वात् आराधितदेवताया वरदातृत्वश्रुतेश्च बाधकं विना चेतनैव देवता । अथ देवताचैतन्ये तत्प्रीतिरेव यागव्यापार इति नापूर्व्वसिद्धिरिति चेत् न प्रीतेः सुखस्य तदनुभवस्य चाशुतरविनाशित्वात् तज्जन्यसंस्कारस्य स्वाविषये फलाहेतुत्वात् फलहेतुस्थायिकृतिव्यापारापेक्षायां लाघवेन कृतिसमानाश्रयस्यैव व्यापारस्य कल्पनात् नानायागेष्वेकदाह्वाने चैकदा सन्निधानं तच्च शक्तिविशेष एव प्रतिष्ठितविधिना प्रतिमादावहङ्कारवत् । अथ राजसूयादिफलत्वेन श्रुतेरिन्द्रादिरचेतन एव । देवता चेतना नास्ति मानाभावात् किन्तु देशनादेशितचतुर्थ्यन्तपदनिर्द्दिष्टत्वं देवतात्वम् इन्द्रायेत्यादिपदमेव देवता । अत एवाग्निप्रकाशकमन्त्रेऽग्निपदावनस्यान्तरम् अग्नये इति नियमतो हविस्त्यागः न पर्य्यायान्तरेण । न चेन्द्रोद्देशेन हविस्त्यागः

इन्द्रनिष्ठफलिङ्गजनकः तत्स्वरूपाजनकत्वे सति तदुद्देशेन क्रियमाणत्वात् ब्राह्मणायदानवदिति वाच्यम् अप्रयोजकत्वात् तदर्थत्वेन क्रियमाणत्वस्योपाधित्वाच्च इन्द्रायस्वाहेत्यत्र न तादर्थ्ये चतुर्थी किन्तु स्वाहादि पद-योगउपपदविभक्तिरेव अन्यथा नमःस्वस्तिस्वाहास्वधेत्यादिसूत्रवैयर्थ्यात् नैवं चतुर्थ्यन्तपदस्य देवतात्वे मानाभावात् चतुर्थीं विनापि इन्द्रो देवतेति व्यवहारदर्शनात् अग्नये कव्यवाहनायेत्यादौ देवताद्वय प्रसक्तात्त्व:" इन्द्र सहस्राच्च इत्यर्थवादस्य "इन्द्रमुपासीत" त्यादिविधिसमभिव्याहारेण ऐकवाक्यतयोपास्यत्वात् देवस्वं नाददीतेत्यत्र देवमुद्दिश्य त्यक्ते शिष्टानां देवस्वत्वेन व्यवहारात् अग्नय इति पदेन नियमतस्त्यागस्य स्तुतिबोधितत्वेन तथात्यागस्य फलहेतुत्वात्। नच बीजाक्षराणां देवतात्वात् तत्रैव शिवादिपदशक्तिग्रह इति वाच्यम् बीजाक्षराणांचतुर्थ्यन्तत्वानियमात् तदप्रतीतावपि प्रकाशितशशिशेखराद्युपेतमुद्दिश्य हविस्त्यागेन तत्रैव याज्ञिकानां व्यवहारः। बीजाक्षराणां हविस्त्यागित्वेनानुद्देश्यत्वात् शिवस्य प्रतिमन्त्रं बीजाक्षराणां नानात्वादननुगमेन तत्तत्पदशक्तिग्रहस्याशक्यत्वाच्च नच मूर्त्तिभेदेन शिवशरीराणामननुगतत्वेन तथापि न शक्तिग्रह इति वाच्यम्-बाल्यादिना भिन्नशरीरेषु चैत्रत्ववच्छिवत्वजातेरदृष्टविशेषोपगृहीतत्वस्य चानुगतत्वात् अदृष्टशून्यस्य चेश्वरस्य न देवतात्वम्। ईशानश्च तद्भिन्न एव"।

**अविघ्न** न० विघ्नं कार्य्यप्रतिबन्धकम् अभावे न०त०। १विघ्नाभावे "अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम्" रघुः "अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव" भा०व०प० न०ब०। २विघ्नशून्ये त्रि० "अविघ्नं गच्छ पन्थानम्" रामा०। अर्थाभावे अव्ययी० ३विघ्नाभावे अव्य०।

**अविचक्षण** त्रि० विरोधे न०त०। विचक्षणभिन्ने मन्दे अपटौ

**अविचार** पु० विचारः अभावे त०त०। १विचाराभावे "अविचारेण कर्त्तव्यम्" स्मृतिः न०ब०। २विचारशून्ये "अविचारपुरे देशे यः पलायति जीवति" हितो०। अयीनां चारो यत्र। ३मेषचारणयोग्ये देशे न विगतश्चारो दूतो यस्य न०ब०। ४चारयुक्ते त्रि०। [विवेकाभावेनाकृते।

**अविचारित** त्रि० न विचारितः। इदं कर्त्तव्यं न वेति

**अविचाल्य** त्रि०न विचाल्यः अन्यथा कार्य्यः। अन्यथाकार्य्यभिन्ने स्थिरैकरूपे। "अविचाल्यमेतदुक्तं तथाद्य भवता वचः" भा०व०प०।

**अविचेतन** विशेषेण चेतना विचेतना प्रा०त० न०ब०। विशेषतोज्ञानशून्ये १संज्ञारहिते २नष्टचैतन्ये। "यद्वाग् वदन्त्यविचेतनानि" ऋ०८,१००,१०।

**अविच्छिन्न** त्रि० न०त०। सन्तते। अविच्छिन्ना तैलधारा।

**अविच्छेद** पु० न विच्छेदः अभावे न०त०। १विच्छेदाभावे सन्ततौ न०ब०। २विच्छेदशून्ये सन्तते। विच्छेदो नाम एकजातीयद्रव्यगुणादीनामन्यजातीयेन व्यवधानम्।

**अविज्ञात** त्रि० न०त०। १विशेषेणाज्ञाते "अविज्ञातं तु यत् क्रीतं क्रेता वा यदि वा सुतः" नाविज्ञाते जलाशये" इति च स्मृतिः अर्थनिश्चयशून्ये त्रि०२यदधीतमविज्ञातं निगदेनैव पठ्यते" इति वेदान्तु०।

**अविज्ञातृ** पु० विज्ञाता जीवस्तद्भिन्नलक्षणः। १परमेश्वरे जीवेन हि आत्मनि कर्त्तृत्वाभिमानेन ज्ञातृत्वं कल्पितमिति तद्वासनया च तेन कुण्ठीभूयते ईश्वरस्तु ततो विलक्षणः। "अविज्ञाता सहस्रांशुः" विष्णुस० २तत्तद्विषयज्ञातृभिन्ने त्रि० स्त्रियां ङीप्।

**अविज्ञेय** त्रि० न०त०। १अवेद्ये २इदन्तया विज्ञातुमशक्ये परमेश्वरे पु० स हि प्रमाणान्तरावेद्यतया स्थूलदृष्ट्या न विज्ञेयः।

**अविडीन** न० न विडीनम्। पक्षिणामाभिमुख्येन गमने

**अवित** त्रि० अव–क्त। रक्षिते पालिते च।

**अवितथ** न० वितथं मिथ्या विरोधे न०त०। सत्ये वचनादौ "तदवितथमवादीर्यन्मम त्वं प्रियेति" माघः "य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ" मनुः २तद्वति त्रि०। "अवितथा वितथा सखि ! मा गिरः" माघः।

**अवितर्क्य** न०तर्कयितुमशक्यः। तर्कयितुमशक्ये १श्रौतार्थे। "अचिन्त्याः खलु ये भावा न तांस्तर्केण बाधयेत्" इत्युक्तेः विपरीततर्केणाबाध्यः श्रौतार्थः। २तर्कमात्रेणाविज्ञेये च।

**अवितारिन्** त्रि० वितारो विगमोऽस्त्यस्य न०त० स्त्रियां ङीप्। अनपायिनि "शुभेधामवितारिणीम्"। ऋ०२८,५,६,। "अवितारिणीम् वितारः विगमनमपायः अनपायिनीम्" भा०।

**अवितृ** त्रि०अव–तृच् स्त्रियां ङीप्। रक्षितरि "सखीयतामविता बोधि सखा" ऋ०४,१७,१८, सा नो बोध्यवित्री" ऋ०७,८६,२।

**अवित्त** त्रि० न०त०। १अविख्याते। न०ब०।२धनशून्ये त्रि०

**अवित्ति** स्त्री विद–क्तिन् अभावे न०त०। १लाभाभावे

"अहमविद्यान्यान्नग्रहि" छा० उ० । "अविद्याऽलाभेन" भा० । २ज्ञानाभावे च । न०ब० । ३आत्मज्ञशून्ये ४ज्ञानशून्ये च त्रि०अव्ययी०।५ज्ञानाभावे ६लाभाभावे च अव्य०

**अवित्यज** पु० न विशेषेण त्यज्यते रसायनादिषु त्यज—कर्म्मणि बा०क न० त० । पारदे राजनि० ।

**अविथुर** त्रि० व्यथ—उरच् कित् तेन संप्रसारणम् वेदे न थस्य धः न०त०। अवियुक्ते । "अनानता अविथुरा ऋजीषिणः" ऋ० १,८७,१। "अविथुरा वियुक्ताः संहृष्टीभूता इति भा० लोके तु अविधुरइत्येव ।

**अविथ्या** स्त्री अवये हिता अवि+यत् । अजाहितायां यूथौ

**अविदुग्ध** न० ६त० । मेषीदुग्धे ।

**अविदित** त्रि०न विदितः।१अज्ञाते ।२परमेश्वरे पु०"अन्यत्र विदितादन्यत्राविदितादन्यत्र कृताकृतादिति" श्रुतिः ।

**अविदाहिन्** त्रि० न विदाही न० त० । १असन्तापके २अदाहके च ।

**अविदूर** न०न०त० । १समीपे अनतिदूरे २तद्वर्त्तिनि त्रि०।

**अविदूस** न०अवेर्दुग्धम् अवि+दुग्धे दूसच् न पत्वम् । मेषीदुग्धे।

**अविद्धकर्णी** स्त्री न विद्धः अच्छिद्रः पर्णरूपः कर्णोऽस्याः । पाठालतायाम् ।

**अविद्या** स्त्री न विद्या विरोधे न०त०। विद्याविरोधिनि १अज्ञाने २ज्ञानाभावे च। अविद्या च न्यायमते ज्ञानाभावः। सांख्यादिमते ज्ञानप्रागभावापरपर्य्यायज्ञानानगतावास्या सा च पञ्चभेदा"अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः" इति पुरा० पञ्च पर्व्वाणि च "अविद्याऽस्मितारागद्वेषाभिनिवेशा" इति पात० सूत्रोक्तानि । तत्र "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" पात० सू० । व्याख्यातञ्च तद्वृत्तौ यथा अविद्या "अतस्मिन् तद्बुद्धिरित्यर्थः अमरा देवा इत्यनित्येषु नित्यत्वभ्रान्त्या देवत्वार्थं कर्म कृत्वा बध्यन्ते, एवमशुचौ स्त्रीकाये शुचित्वभ्रान्त्या बध्यन्ते तदुक्तं भगवता व्यासेन "स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि । कायमाधेयशौचत्वात् पण्डिताह्यशुचिं विदुरिति"विष्ठ त्वसृक् च मातृरुदरं स्थानं, शुक्रशोणितं बीजम्, अन्नपरिणामरसाद्युपष्टम्भः सर्वद्वारैर्मलानां स्रवणं निष्यन्दः। निधनं मरणम्। तेन हि श्रोत्रियकायोऽप्यत्यन्ताशुचिर्भवति आधेयशौचत्वं स्नानानुलेपनादिना शुचित्वापादनम्। तथा परिणामदुःखे भोगे सुखत्वभ्रान्तिः अनात्मनि देहादावात्मख्यातिः अविद्या तत्त्वविद्याविरोधिनीत्यर्थः । यद्यपि शुक्तिरूपाद्या-

विद्याः सन्ति तथापि पञ्चविधैवाविद्या बन्धमूलमितिभावः" इयमविद्याऽदृष्टत्वेन नैयायिकैरङ्गीकृता "इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता"कुसु०"यस्य यस्य सहकारिशक्तिः कारणम् एषा सहकारिरूपा माया असमत्वात् सर्व्वकार्य्यामेलषणीयत्वात् दुरुन्नेयत्वकाठिन्यात् मायापदेऽदृष्टे लक्षणा । मूलत्वात् प्रकृतिः सैव, तत्त्वज्ञानप्रतिबध्यत्वात् सैवाविद्या उदिता उक्ता" हरिदासः । क्षणिकविज्ञानवादिनस्तु "अभिन्नोऽपि हि बुद्ध्यात्मा विपर्य्यासनिदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इत्युक्तदिशा क्षणिकविज्ञानमेवैकं तत्त्वं बाह्यं वस्तु नास्ति तथाहि बाह्यपदार्थाभावेऽपि मिथ्याज्ञानरूपयाऽविद्यया सर्व्वं वस्तु कल्पितमित्याहुः । तदेतत् सांख्ये निराकृतम् । यथा "नाविद्यातोऽप्यवस्तुना बन्धायोगात्"सू०"अविद्यातोऽपि न साक्षाद्बन्धयोगः अद्वैतवादिनां "तेषामविद्याया अवस्तुत्वेन तया बन्धायोगात् न हि स्वाप्नरज्ज्वा बन्धनं दृष्टम् । नच "न निरोधो न चोत्पत्ति र्न बद्धो न च साधकः। न मुमुक्षु र्न वै मुक्त इत्येषा परमार्थता"इति "बन्धमोक्षौ सुखं दुःखं मोहापत्तिश्च मायया । स्वप्ने यथात्मनःख्यातिः संसृतिर्न तु वास्तवी"इतिवोक्तेःबन्धोऽप्यवास्तव इति वाच्यम् विज्ञानाद्वैतश्रवणोत्तरं बन्धनिवृत्तये योगाभ्यासविरोधात् बन्धमिथ्यात्वश्रवणेन बन्धनिवृत्त्यासिद्धत्वनिश्चयात् तदर्थं बह्वायाससाध्ययोगाद्यनुष्ठानासम्भवात्"भा० "वस्तुत्वे सिद्धान्तहानिः"सू०"यदि चाविद्याया वस्तुत्वं स्वीक्रियते तदा स्वाभ्युपगतस्याविद्याद्वैतस्य हानिः" भा० । "विजातीयद्वैतापत्तिश्च" सू० । "किञ्चाविद्याया वस्तुत्वे क्षणिकविज्ञानसन्तानाद्विजातीयम् द्वैतं प्रसज्येत तच्च भवतामनिष्टम् । सन्तानान्तःपातिव्यक्तीनामानन्त्यात् सजातीयं द्वैतमिष्यतएव तैरित्याशयेन विजातीयेति । नन्वविद्याया अपि ज्ञानविशेषत्वादविद्यया कथं विजातीयद्वैतमिति चेन्न ज्ञानरूपाविद्याया बन्धोत्तरकालीनतया वासनारूपाविद्याया एव तैर्बन्धहेतुत्वाभ्युपगमात् । वासना तु ज्ञानाद्विजातीयेतिभावः" भा० । "नासद्रूपा न सद्रूपा माया नैवोभयात्मिका । सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी"त्युक्तिमनुसृत्याशङ्कते "विरुद्धोभयरूपा चेत्" सू० "विरुद्धं यदुभयं सदसच्च ततो विलक्षणं वा तद्रूपैवाविद्या वक्तव्या अतो न तया पारमार्थिकाद्वैतभङ्ग इति चेदित्यर्थः । नग्राह्यग्राहकरूपसदसत्त्वयोः समतत्त्वयोर्विरोधोनास्तीति

सूचनाय विरुद्धेतिपदम्" भा० दूषयति । "न तादृक्पदार्थाप्रतीतेः" सू० । विरुद्धधर्मवत्पदार्थस्यासिद्धेरित्यर्थः। अपि चाविद्यायाः साक्षादेव दुःखयोगाख्यबन्धहेतुत्व ज्ञानेन विद्याक्षयानन्तरं प्रारब्धभोगानुपपत्तिः बन्धपर्य्यायस्य दुःखभोगस्य कारणनाशात् । अस्मदादिमते तु नायं दोषः संयोगद्वारैवाविद्याकर्म्मादीनां बन्धहेतुत्वात् जन्माख्यः संयोगः प्रारब्धसमाप्तिं विना न नश्यति" भा० । पुनः शङ्कते । "न वयं षट्पदार्थवादिनो वैशेषिकादिवत्" सू० "वैशेषिकाद्यास्तिकवच्च वयं षट्षोडशादिनियतपदार्थवादिनः । अतोऽप्रतीतोऽपि सदसदात्मकः सदसद्विलक्षणो वा पदार्थोऽविद्येत्यभ्युपेयमिति भावः" भा०। परिहरति । "अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम्" सू० । "पदार्थनियमोमास्तु तथापि भावाभावविरोधेन युक्तिविरुद्धस्य सदसदात्मकपदार्थस्य संग्रहो भवद्वचनमात्राच्छिष्याणां न सम्भवति । अन्यथा बालकाद्युक्तस्याप्ययौक्तिकस्य संग्रहः स्यादित्यर्थः । श्रुत्यादिकमस्मिन्नर्थे स्फुटं नास्ति युक्तिविरोधेन च सन्दिग्धश्रुतेरर्थान्तरसिद्धिरिति भावः" भा० । एवं क्षणिकविज्ञानवादनिरसनेन वेदान्तिसमुद्भाविताविद्याऽपि प्रकृतिरेवेति तत्रैव व्यवस्थापितम् । यथा "पारम्पर्य्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम्" सू० ॥ "अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽप्येकस्मिन्नविद्यादौ यत्र कुत्रचिन्मूले द्वारे परम्परायाः पर्य्यवसानं भविष्यति पुरुषस्यापरिणामित्वात् । अतो यत्र पर्य्यवसानं सैव नित्या प्रकृतिः । प्रकृतिरिति मूलकारणस्य संज्ञामात्रमित्यर्थः" भा०॥ नन्वेवं अविद्या स्थानीयप्रकृतेर्नित्यत्वानुपपत्तेस्तस्या उत्पत्तिश्रुतेर्नाशनाख्यत्वाच्चेत्याशयेन मूलसमाधानमाह । "समानः प्रकृतेर्द्वयोः" सू० । "वस्तुतस्तु प्रकृतेर्मूलकारणविचारे द्वयोर्वादिप्रतिवादिनोरावयोः समानः पक्षः । एतदुक्तं भवति यथा प्रकृतेरुत्पत्तिः श्रूयते एवमविद्याया अपि । "अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः" इत्यादिवाक्यैः । अत एकस्या अवश्यं गौण्युत्पत्तिर्वक्तव्या । तत्र च प्रकृतेरेव पुरुषसंयोगादिभिरभिव्यक्तिरूपा गौण्युत्पत्तिर्युक्ता । "संयोगलक्षणोत्पत्तिः कथ्यते कर्मज्ञानयोरिति" कौर्मवाक्ये प्रकृतिपुरुषयोर्गौण्युत्पत्तिस्मरणात् । अविद्यायाश्च क्वापि गौणोत्पत्त्यश्रवणात् । तस्या अनादितावाक्यानि तु प्रवाहरूपेणैव वासनाद्यनादित्ववाक्यवद्व्याख्येयानीति । अविद्या च मिथ्याज्ञानरूपा बुद्धिधर्म इति योगे सूत्रितमतो न नित्यत्वहानिः । अथ वा द्वयोः प्रकृतिपुरुषयोः समान एव न्याय इत्यर्थः । "यतः प्रधानपुरुषौ यतश्चैतच्चराचरम् । कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु" इत्यादिवाक्यैः पुरुषस्याप्युत्पत्तिश्रवणादिति भावः । तथा च पुरुषस्येव प्रकृतेरपि गौण्येवोत्पत्तिः नित्यत्वश्रवणात्तदपि समानमिति । तस्मात् प्रकृतिरेवोपादानं जगतः प्रकृतिधर्मश्चाविद्या जगन्निमित्तकारणं तथा पुरुषोऽपीति सिद्धम् । यत् तु । "अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणम्" सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम्" इति मोक्षधर्मे प्रकृतिपुरुषयोरविद्याविद्येति वचनं तत् तदुभयविषयतयोपचरितमेव । परिणामित्वेन हि पुरुषापेक्षया प्रकृतिरसतीति तस्या अविद्याविषयत्वमुक्तम् । एवमेव तस्मिन् प्रकरणे स्वस्वकारणापेक्षया भूतान्तं कार्यजातमविद्येत्युक्तं स्वस्वापेक्षया च स्वस्वकारणंविद्येति । पुरुषस्य परिणामरूपं जगदुपादानत्वं तु प्रकृत्युपाधिकमेव कर्तृत्वादिवच्छ्रुतिस्मृत्योरुपासार्थमेवानूद्यते । अन्यथा "अस्थूलमनण्वह्रस्वमित्यादि"श्रुतिविरोधापत्तेरिति मन्तव्यम् । मायाशब्देन च प्रकृतिरेवोच्यते "मायां तु प्रकृतिं विद्यादिति" श्रुतौ "तस्मान्मायी सृजते विश्वमेतत्" "तस्मिंश्चान्यो मायया सन्निरुद्धः" इति पूर्वप्रक्रान्तमायायाः प्रकृतिस्वरूपतावचनात् । "सत्त्वं रजस्तम इति प्राकृतं तु गुणत्रयम् । एतन्मयी च प्रकृतिर्माया या वैष्णवी श्रुता" ॥ "लोहितशुक्लकृष्णेति तस्यास्त्वाद्बह्वीः प्रजाः" इत्यादिस्मृतिभ्यश्च । न तु ज्ञाननाश्याविद्या मायाशब्दार्थो नित्यत्वानुपपत्तेः । किञ्चाविद्याया द्रव्यत्वे शब्दमात्रभेदो गुणत्वे च तदाधारतया प्रकृतिसिद्धिः पुरुषस्य निर्गुणत्वादिभ्यः । अथ द्रव्यगुणकर्मविलक्षणैवास्माभिरविद्या वक्तव्येति चेन्न तादृक्पदार्थाप्रतीतेरुक्तत्वादिति" भा० । वेदान्तिनस्तु ज्ञानविरोधि अज्ञानापरपर्य्यायं पदार्थान्तरमविद्येति प्रोचुः तच्च विस्तरेण अज्ञानशब्दे ८२ पृष्ठे दर्शितम् । इयञ्चाविद्या मूलाविद्यातूलाविद्याभेदेन द्विविधा । तत्र हिरण्यगर्भोपाधिर्मूलाविद्या तूलाविद्याश्च प्रतिजीवभेदं नाना मायाशब्देनाभिधीयन्ते । "मायोपाधिरयं जीवः अविद्योपाधिरीश्वर" इत्युक्तेः "इन्द्रोमायाभिः पुरुरूपईयते" इतिश्रुतेश्च तथात्वम् । मायानाञ्च मूलाविद्याकार्य्यत्वात् अविद्याशब्दवाच्यताऽपि । अतएव चाविद्यिको जीव इति तत्तत्स्थाने भाष्यकारादिभिरुक्तम् । स्वस्वान्तःकरणरूपाविद्योपाधौ तत्त्वज्ञाने समुत्पन्ने तदीयैवाऽविद्या निवर्त्तते नान्यत्र इत्येकमुक्तौ न सर्वमुक्ति-

रिति बन्धमोक्षव्यवस्था । अधिकमाकरे दृश्यम् । वैशे- षिकास्तु विपर्य्ययसंशयज्ञानमविद्येत्याहुः तत्कारणप्रदर्शनपूर्ब्बकमविद्या लक्षिता वै०सू० उपस्कारे च यथा "इन्द्रियदोषात् संस्कारदोषाच्चाविद्या" ॥ "अविद्येति सामान्यवाच्यपि पदं विपर्य्यये वर्त्तते प्रकरणात् संशयस्वप्नाध्यवसायानामुक्तत्वात्, तत्रेन्द्रियदोषोवातपित्ताद्यभिभवकृतमपाटवम्, संस्कारदोषोविशेषादर्शनसाहित्यं तदधीनं हि मिथ्याज्ञानं जायते" ॥ "तच्च दुष्टज्ञानम्" सू०॥ तदित्यव्ययपदं सर्व्वनामसमानाधिकरणविद्यां परामृशति साऽविद्या, दुष्टज्ञानं व्यभिचारि ज्ञानमतस्मिंस्तदितिज्ञानं व्यधिकरणप्रकारावच्छिन्नविशेष्यताशालिप्रकारकमिति यावत्, दोषस्य ज्ञानस्यानिश्चयरूपत्वमपि, तेनैककोटिसत्त्वेऽपि संशयोदुष्ट एतावधारणात्मकत्वात्, तदनेन संशयोविपर्य्ययस्वप्नानध्यवसायानाञ्चतुर्णामप्युपसंग्रहः" उप० ॥ "विद्याविद्याद्वैविध्यात् संशयः" गौ०सू० । नास्ति विद्या शास्त्रादिज्ञानं यस्य । २शास्त्रादिज्ञानशून्ये त्रि० "अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः" पुरा० । "वेदोऽविद्याय नाकामो दद्यादंशं स्वतो धनात्" दा०भा० स्मृतिः । "अविद्यानान्तु सर्व्वेषामीहातश्चेद्धनं भवेत्" मनुः" ।

**अविद्वेष** पु०अभावे विरोधे वा न०त०। १विद्वेषाभावे २अनुरागे च । न०ब०। ३विद्वेषशून्ये ४अनुरागयुक्ते च त्रि०

**अविधवा** स्त्री विरोधे न०त० । सधवायां पतिवत्न्यां स्त्रियाम् "इमा नारीरविधवाः सपत्नीः" ऋ० १०,१८ ।

**अविधा** स्त्री अभावे न०त०। प्रकाराभावे न०ब०। प्रकारशून्ये

**अविधान** न० अभावे न०त० । १विधानाभावे २इतिकर्त्तव्यताक्रमाद्यभावे । "अविधानेन यत् कुर्य्यात् तत्सर्व्वं विफलं भवेत्" स्मृतिः न०ब० । ३विधानशून्ये त्रि० ।

**अविधि** पु० अभावे न०त० । विध्यभावे इतिकर्त्तव्यताक्रमाद्यभावे न० ब० । विधानशून्ये त्रि० ।

**अविन** पु० अवति यज्ञम् अव—इनन् । अध्वर्य्यौ उज्ज्व० ।

**अविनय** पु०अभावे न०त०।१विनयाभावे । विरोधे न०त०। २दुर्नये। "अविनयमपनय विष्णो" शङ्करा० "बहवोऽविनयान्नष्टा राजानः सपरिच्छदाः" "वेणोविनष्टोऽविनयान्नहुषश्चैव पार्थिवः" इति च मनुः न०ब० । ३विनयशून्ये त्रि० ।

**अविनश्वर** त्रि० विरोधे न०त० । १विनश्वरभिन्ने चिरस्थायिनि, २कूटस्थे परमेश्वरे पु० ।

**अविनाभाव** पु०विना व्यापकस्तेन भावः स्थितिः अल०स०। १व्यापकस्थित्यनुरोधिसत्ताकरूपायां व्याप्तौ । २सम्बन्धमात्रे च "अविनाभावोऽत्र सम्बन्धमात्रम्" काव्यप्र० "अत्र केयमाकाङ्क्षा न तावत् अविनाभावः" इति शब्दचिन्ता० ।

**अविनाभाविन्** त्रि० न विना व्यापकम् भवति भू—णिनि । व्याप्ये "व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते" का०प्र० ।

**अविनाभूत** त्रि० न विना व्यापकस्तेन भूतः । १व्याप्ये २संबन्धमात्रे च "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते" का०प्र० । ["अविनाशी वा अरे अयमात्मा" श्रुतिः ।

**अविनाशिन्** त्रि० न विनाशी स्त्रियां ङीप्। अविनश्वरे नित्ये

**अविनीत** त्रि०न विनीतः। १विनयशून्ये २कुत्सितक्रियानुरते ३उद्धते ४अदान्ते च। "वहते विनीतमविनीतयाशिभिः" माघः । ५अशिक्षिते च "नाविनीतैर्व्रजेद्धुर्य्यैर्न च क्षुद्व्याधिपीडितैः" मनुः । ६कुलटायां स्त्री ।

**अविनीय** पु० विनीयः कल्कः कपटञ्च न०ब० । कपटशून्ये "अविनीयसंभ्रमविकाशिभक्तिभिः" माघः ।

**अविनेय** त्रि० न विनेतुं शक्यः । दुर्दमे अश्वादौ ।

**अविन्ध्य** पु० राक्षसभेदे हरिवंशे विवरणम् ।

**अविपट** अवीनां विस्तारः अवि+पटच् । मेषविस्तारे ।

**अविपश्चित्** पु० विरोधे न०त०। विचारशून्ये तात्पर्य्यज्ञानशून्ये २अविवेकिनि च ।

**अविपाक** पु०विशेषेण पच्यते फलरूपेण वि+पच घञ् न०त०। फलरूपेणापरिणते १धर्म्माधर्म्मादौ । "विपाकश्च जात्यायुर्भोगाः" इति पातञ्जले उक्तः तद्रूपेणापरिणामश्च फलरूपतयाऽनाविर्भावः विहिताविहितकर्म्मणोर्विशिष्टदेशकालनियतत्वात् यदा कर्म्म बलीयसा प्रतिबद्धं तदा तत् कर्म्म अविपाक इत्युच्यते। विपाकः अन्नादेः पाकः अभावे न०त०। सुश्रुतोक्ते १पाकाभावे २"करीरकाविपाकौ तु शर्करात्ते भवन्ति च"। नास्ति विपाको यत्र । अग्निमान्द्यहेतुके ३रोगभेदे च "एतत्कषायसमेतेन जाठर्य्यं न भवति यतोऽग्निराप्यायते दुर्नामशोकपाण्डुकुष्ठरोगाविपाककासश्वासप्रमेहाश्च न भवन्ति" सुश्रुतः ।

**अविपाल** त्रि० अवीन् पालयति पा—णिच् अः उप०स० । मेषपालके ।

**अविपुल** त्रि० विरोधे न०त० । विपुलभिन्ने क्षुद्रे ।

**अविप्रकृष्ट** त्रि० विरोधे न०त० । सन्निकृष्टे ।

**अविप्रिय** पु० अवीन् मेषान् प्रीणाति प्री—क । १श्यामाकतृणे विप्रियमप्रकारः न०त० । २अनप्रकारे ३आनुकूल्ये ।

न०ब० । ४अपकारशून्ये त्रि० । ५श्वेतालतायां स्त्री ।

**अविप्लुत** त्रि० न विप्लुतः नष्टः । अविनष्टे "अविप्लुतब्रह्मचर्य्यः सवर्णां स्त्रियमुद्वहेत्" स्मृतिः ।

**अविभक्त** त्रि० वि+भज–क्त न०त० । १संसृष्टे विभागरहिते २द्रव्ये ३तत्स्वामिनि च । "अविभक्तं स्थावरं यत् सर्व्वेषामेव तद्भवेदिति" "अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः" इति च स्मृतिः । ४अभिन्ने एकभावापन्नेऽर्थे ५अव्याहते अधिष्ठानतया ६सर्व्वत्रानुस्यूते बाधाशून्यत्वेन सर्व्वस्मिन् ७वर्त्तमाने च ।

**अविभावित** त्रि० न विभावितः । १अलक्षिते २अचिन्तिते साक्षिप्रभृतिप्रमाणादिना ३स्वकीयत्वेनानुद्भाविते स्वरूपेण ४अज्ञापिते च ।

**अविमुक्त** त्रि० वि+मुच–क्त न०त० । १मुक्तभिन्ने । "न विमुक्तं शिवाभ्यां यदविमुक्तं ततो विदुः" इत्युक्तलक्षणे २काशीक्षेत्रे न० । ३भ्रूद्वयचिबुकान्तरालस्थाने च । "यएषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः" इति जावा०उ० । "आमनन्ति चैनमस्मिन्" शा०सू० । "आमनन्ति चैनं परमेश्वरमस्मिन् मूर्द्धचिबुकान्तराले" भा० इमामेव श्रुतिं केचित् काशीविषयतया वर्णयन्ति यावधेये "अविमुक्तः कस्मिन् प्रतिष्ठित" इति प्रश्ने नाशीवरणामध्यस्थितत्वप्रत्यभिज्ञानात् । "अपरोक्षवचना देवा इत्युक्तेः असीतिवक्तव्ये नाशीतिवर्णव्यत्यय इति तेषामाशयः । अविमुक्तक्षेत्रञ्च असीवरणयोर्मध्ये गङ्गापश्चिमतटस्थं परितः पञ्चक्रोशात्मकम् । तद्विवरणं काशीखण्डेऽनुसन्धेयम् ।

**अवियोग** पु० अभावे न०त० । १वियोगाभावे । विरोधे न०त० । २संयोगे । न०ब० । ३वियोगशून्ये ४संयुक्ते च । वियोगः विच्छेदः संयोगाभावः विभागश्च ।

**अवियोगव्रत** न० अवियोगार्थं व्रतम् । मार्गशीर्षशुक्लद्वितीयाकर्त्तव्ये स्त्रीणां व्रतभेदे "अवैधव्यप्रदं स्त्रीणामवियोगव्रतं त्विदम् । मार्गशीर्षे सिते पक्षे स्नातो शुक्लाम्बरप्रिया । दृष्ट्वा चन्द्रं द्वितीयायां नक्तं भुञ्जीत पायस"मित्युपक्रम्य कालिकापुराणे दर्शितम् । तद्विधिश्च हेमा० व्र०ख० तृतीयाव्रतप्रकरणे उक्तस्तत एवावसेयः ।

**अविरण** न० विरमणं विनाशः अभावे न०त०भेदे मस्य लुक् । विनाशाभावे "सद्यो बभोऽविरणाय पूर्व्वीः" ऋ० १,१७४,८ "अविरणाय अविनाशाय" भा० ।

**अविरत** न० विरतं विरामः भावे क्त अभावे न०त० । १विरामाभावे नैरन्तर्य्ये । कर्त्तरि क्त न०त० । २विरामशून्ये ३सन्तते द्रव्यादौ त्रि० क्रियाविशेषणत्वे न० । ४कार्य्यादनिवृत्ते त्रि० । "अविरतदयिताङ्गासङ्गसञ्चारितेन" माघः ।

**अविरति** स्त्री विरामो विरतिः भावे क्तिन् अभावे न०त० । १निवृत्त्यभावे २विषयादौ—स्थिरचित्ततायाम् ३विरामाभावे च । न०ब० । ४विरामशून्ये त्रि० ।

**अविरल** त्रि० न विरलः न०त० । घने, निविड़े । विरलता च विच्छित्तिः तद्विपरीतं निबिड़त्वं मध्येऽविच्छेदः ।

**अविराम** पु० अभावे न०त० । १विरामाभावे २विच्छेदाभावे । न०ब० । ३विरामशून्ये ४सन्तते च त्रि० "अनिमिषमविरामा रागिणां सर्व्वरात्रम्" माघः ।

**अविरुद्ध** त्रि० । न० त० । १विरुद्धभिन्ने २विरोधशून्ये ३एकत्रसहावस्थायिनि ४अप्रतिबद्धे च ।

**अविरोध** पु० विरोधः सहानवस्थानमेकदेशे समावेशो वा अभावे न०त० । सहानवस्थानाभावे १एकत्रावस्थाने २एकत्र समावेशे च । "श्रुतिस्मृतिविरोधे च श्रुतिरेव गरीयसी । अविरोधे तयोः कार्य्यं स्मार्त्तं वैदिकवत् सदा, स्मृतिः "सर्वेषामविरोधेन ब्रह्मकर्म्म समारभे" पुरा० "शेषं वाऽविरोधात्" कात्या० २।६।२६। "नाविरोधात्" कात्या०५।११।८ । ३विवादाभावे च ।

**अविलक्षण** त्रि० विलक्षणो भेदकधर्म्माश्रयः विरोधे न०त० । १तुल्यरूपे २भेदकधर्म्मशून्ये ।

**अविलक्ष्य** त्रि० नास्ति विशेषेण लक्ष्यं व्याजः उद्देश्यं शरव्यं वा यस्य । १व्याजशून्ये २उद्देश्यशून्ये ३शरव्यशून्ये ४प्रतिकारशून्ये च "अविलक्ष्यमस्त्रमपरं कतमत्" किरा० । "अविलक्ष्यमसत्प्रतिकारम्" मल्लि० ।

**अविलम्ब** न० अभावे न०त० । १विलम्बाभावे शीघ्रे । न०ब० । २विलम्बशून्ये त्रि० विलम्बश्च कार्य्योत्पत्तिसाधककालप्रागभावः । तच्छून्यः अविलम्बः ।

**अविलम्बित** त्रि० वि+लबि–क्त न०त० । विलम्बशून्ये १त्वरायुक्ते द्रव्यादौ । क्रियाविशेषणत्वे न० । "अविलम्बितो द्वितीयः" कात्या० १०,१,८, ।

**अविला** स्त्री अव–इलच् । मेषाम् १नास्ति विलं यत्र । २गर्त्तशून्ये त्रि० । [न०ब० । ३तच्छून्ये त्रि० ।

**अविलास** पु० अभावे न०त० । १विलासाभावे २अप्रकाशे

**अविवक्षित** त्रि० न विवक्षितः । १वक्तुमनिष्टे २तात्पर्य्याविषयीभूते "वक्तृत्वमविवक्षितमिति रघु० ।

**अविवर** त्रि० नास्ति विवरं छिद्रं यत्र । नीरन्ध्रे, घने ।

**अविवाच्य** न० नास्ति विशेषेण वाच्यो मन्त्रादिः यत्र ।

अत्यग्निष्टोमसंस्थे दशमाहे "अत्यग्निष्टोमोऽविवाच्यं दशमम्" कात्या० १२,२,२१, । "अत्यग्निष्टोमसंस्थमविवाच्यं दशममहर्भवति" कर्कः । "नाश्मिन्नहनि केनचित् कस्यचित् विवाच्यमविवाच्यमित्याचक्षते" आश्व० श्रौ० २,१२,१०। अस्मिन्नहनि केनचित् कस्मैचित् कर्त्रे मन्त्रः कर्म्म वा न विवाच्यं नाख्यातव्यमित्यर्थः कुतः ? यस्मादेतदहः अविवाच्यमिति श्रुतौ प्रसिद्धम् परस्परमविवचनीयमेतस्मिन्नहनीत्यविवाच्यमिदमहर्भवति ।

**अविवाद** पु० विरुद्धो वादः कथनं व्यवहारभेदः विरोधश्च अभावे ३न०त० । १,विरुद्धवादाभावे ऐक्यमत्ये २अव्यवहारे ३विरोधाभावे च न०ब० ४तच्छून्ये त्रि० । [विवाहसंस्कारे ।

**अविवाहित** त्रि० न०त० । विवाहितभिन्ने अनूढे अजात-

**अविविक्त** त्रि० न०त० । १एकीभूते २विवेकशून्ये ३अन्योन्यतादात्म्यापन्ने "तप्तायःपिण्डवदविविक्तं सत् तदेव महावाक्यस्य वाच्यार्थो भवति" वेदान्तसा० ।

**अविवेक** पु० न विवेकः भेदकधर्म्मेण ज्ञानम् अभावे न०त० । अन्योन्यतादात्म्यारोपहेतौ १विशेषज्ञानाभावे इति नैयायिकाः । विरोधे न० २अन्योन्यतादात्म्यज्ञानरूपे मिथ्याज्ञाने "तद्योगोऽप्यविवेकात्" सा०स्रू० । "अयञ्चाविवेकोऽस्मच्छीतासंसर्गकसमयज्ञानमविद्याख्यत्वाभिधिक्तं विवक्षितः" "पञ्चविपर्य्यात्" विपर्य्ययभेदाः पञ्च" इत्यागामिसूत्रद्वयात् "तस्य हेतुरविद्येति" योगसूत्रेऽप्यविद्याया एव पञ्चपर्व्वरूपाया बुद्धिपुरुषसंयोगहेतुतया वचनाद्धान्यशास्त्रात्वनभ्युपगमएव योगतोऽत्र विशेषौचित्यात् । न पुनरविवेकोऽत्राभावमात्रं विवेकप्रागभावो वा मुक्तस्यापि बन्धापत्तेः जीवन्मुक्तस्यापि भाविविवेकव्यक्तिप्रागभावेन धर्म्माधर्म्मोत्पत्तिद्वारा पुनर्बन्धप्रसङ्गाच्च । तथागामिसूत्रतस्तध्वान्तदृष्टान्तानुपपत्तेः अभावस्य ध्वान्तवदावरकत्वाभावात् । तथा ह्यविवेकस्याबुद्धिविवेकस्य श्रूयमाणौ नोपपद्येयातामिति । अपरं च वासनात्मकस्यैवाविवेकस्य संयोगाख्यजन्महेतुतया तमोवदावरकत्वहानिवृद्धिक्रमादिकमञ्जसैवोपपद्यते । "तस्य हेतुरविद्येति" पातञ्जलसूत्रे च भाष्यकारैरविद्याशब्देनाविद्याबीजं व्याख्यातम् ज्ञानस्य 'संयोगोत्तरकालीनत्वेन संयोगाजनकत्वादिति । अपि च "पुरुषः प्रकृतिस्थो हि भुङ्क्ते" इत्यादिवाक्येऽभिमानाख्यसंयोगस्यैव प्रकृतिस्थताख्यसंयोगहेतुतावगम्यते । अत एव चाविद्या नाभावोऽपि तु विद्याविरोधिज्ञानान्तरमिति योगभाष्ये व्यासदेवैः प्रयत्नेनावधृतम् । तस्मादविवेकाविद्ययोस्तु संयोगचेमतया-ऽविवेकस्यापि ज्ञानविशेषत्वमिति सिद्धम् । अयं चाविवेकस्त्रिधा संयोगाख्यजन्महेतुः साक्षात्,धर्म्माधर्म्मोत्पत्तिद्वारा, रागादिदृष्टद्वारा च भवति" सां०प्र०भा० । अधिकमविद्याशब्दे द्रष्टव्यम् । [शून्ये ।

**अविवेचक** त्रि० न०त० । विवेचकभिन्ने कार्य्याकार्य्यविवेचना

**अविवेन** त्रि० "वेनतिः कान्तिकर्म्मा" निरु० वि+वेन-अच् न०त० । विगतेच्छभिन्ने इच्छाशीले । "मनसाऽविवेन' तमित् सखायम्" ऋ० ४,२४,६,। "अविवेनमिच्छाविगमशून्यम्" भा०

**अविशङ्का** स्त्री विशेषेण शङ्का अभावे न०त० । १विशेषशङ्काभावे । न०ब० २विशङ्कारहिते त्रि० ।

**अविशङ्कित** त्रि० वि+शकि-कर्त्तरि क्त, विशङ्का जाताऽस्य इतच् वा न०त० । १विशङ्कारहिते । "विदध्यादविशङ्कितः" स्मृतिः । २अजातशङ्के च ।

**अविशस्तृ** त्रि० न विशस्ता विशसने कुशलः । यज्ञियपशुहिंसनेऽनिपुणे शमितरि "मा ते व्यथ रविशस्तातिहाय" ऋ० १,१६२,२० ।

**अविशुद्ध** त्रि० विरोधे न०त० । विशुद्धभिन्ने सदोषे ।

**अविशुद्धि** स्त्री विरोधे न०त० । शुद्धिविपरीते दोषे "सह्यविशुद्धिक्षयातिशययुक्तः" सां० का० । अविशुद्धिर्हिंसादोषसाधनता यथोक्तम् "अविशुद्धिः सोमादियागस्य पशुवीजादिवधसाधनता यथाह स भगवान् पञ्चशिखाचार्य्यः "स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्ष" इति । स्वल्पसङ्करः ज्योतिष्टोमादिजन्मनः प्राधानापूर्व्वस्य स्वल्पेन पशुहिंसादिजन्मनानर्थहेतुना अपूर्व्वेण सङ्करः । सपरिहारः कियतापि प्रायश्चित्तेन परिहर्त्तुं शक्यः । अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्म्मविपाकसमये च पच्यते तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति। दृश्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम् । न च "मा हिंस्यात् सर्व्वाभूतानीति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेतेत्यनेन" बाध्यत इति युक्तं विरोधाभावात् विरोधे हि बलीयसा दुर्बलं बाध्यते । न चेहास्ति कश्चित् विरोधः भिन्नविषयत्वात् । तथा हि "मा हिंस्यादिति" निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि 'अग्नीषोमीयं पशुमालभेत' इत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते न त्वनर्थहेतुत्वाभावस्तथा सति वाक्यभेदप्रसङ्गात् न चानर्थहेतुत्वक्रतुपकारकत्वयोः कश्चिदस्ति विरोधः । हिंसा

हि पुरुषस्य दोषमावहति अतोऽयोपरिकरिष्यति" शा०कौ०। इति सांख्या मन्यन्ते मीमांसका वेदान्तिनश्च वैधहिंसाया अनर्थहेतुत्वं निराचक्रुः तत्र शा०सूत्रे तद्भाष्ये च प्रपञ्चेनोक्तम् तत्तु ४४२ पृष्ठे उदाहृतम्।

**अविशेष** पु० विशेषोभेदकधर्मः अभावे न०त०। १भेदकधर्माभावे "वायुमन्द्रादविशेषविशेषाभ्याम्" शा०सू०। २अभेदे ऐक्ये च।न०ब०।३विशेषशून्ये तुल्ये त्रि० सांख्यादिमतसिद्धेषु शान्तत्वघोरत्वमूढत्वरूपविशेषशून्येषु स्थूलभूतोपादानेषु ४सूक्ष्मभूतेषु। तानि च तन्मात्राणि यज्जातीयेषु शान्तादिविशेषत्रयं न तिष्ठति तज्जातीयानां शब्दस्पर्शरूपरसगन्धानामाधारभूतानि सूक्ष्मद्रव्याणि स्थूलानामविशेषाणि। "तस्मिंस्तस्मिंस्तु तन्मात्रात्तेन तन्मात्रता स्मृता। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः" इति विष्णुपुराणादिभ्यः। अस्यायमर्थः तेषु तेषु भूतेषु तन्मात्रास्तिष्ठन्तीति कृत्वा धर्मधर्म्यभेदाद्रूपाणामपि तन्मात्रता स्मृता। ते च पदार्थाः शान्तघोरमूढाख्यैः स्थूलगतशब्दादिविशेषैः शून्या एकरूपत्वात्। तथा च शान्तादिविशेषशून्यशब्दादिमत्त्वमेव भूतानां शब्दादितन्मात्रत्वमित्याशयः। अतोऽविशेषिणोऽविशेषसंज्ञिता इति शान्तं सुखात्मकं, घोरं दुःखात्मकं, मूढं मोहात्मकम्। तन्मात्राणि च देवादिमात्रभोग्यत्वेन केवलं सुखात्मकान्येव सुखाधिक्यादिति" सां०प्र०भा०। तन्मात्राण्यविशेषाः" सां०का० तत्तत्त्वे च प्रमाणं तन्मात्रशब्दे दर्शयिष्यते। नित्ययोगे इनि। अविशेषीत्यपि तन्मात्रे।

**अविशेषज्ञ** त्रि० विशेषं न जानाति ज्ञा–क अस०स०। विशेषानभिज्ञे भेदकधर्मानभिज्ञे।

**अविशेषित** त्रि० न विशेषितः भेदकधर्मेण।यस्य इतरस्मात् विशेषणेन व्यावृत्तिर्न कृता तस्मिन् पदार्थे। [२अश्लिष्टे च

**अविश्रान्त** त्रि०वि+श्रम–क्त न०त०। १विरामरहिते २सतते

**अविश्रमणीय** त्रि० वि+श्रम–अनीयर् न०त०। विश्रासकरणायोग्ये। [नेदविश्वस्ते विश्वस्ते नातिविश्वसेत्" हितो०।

**अविश्वस्त** त्रि० न०त०। विश्वासयोग्यताहीने "न विश्व-

**अविश्वास** पु० अभावे न०त०। १विश्वासाभावे न०ब०। २विश्वासानाधारे ३विश्वासायोग्ये पदार्थे च। [कारके।

**अविश्वासिन्** त्रि०न विश्वसिति णिनि स्त्रियां ङीप्। विश्वास-

**अविश्लिष्ट** त्रि० विरोधे न०त०। विश्लिष्टभिन्ने सङ्गते।

**अविष** पु०अव–टिषच्।१समुद्रे,२नृपे च।टित्वात् ङीप्।३नद्यां स्त्री। ४रक्षकमात्रे त्रि०। नास्ति विषं यत्र ।५विषशून्ये त्रि०। "अपश्चोषधीरविषा वनानि" ऋ०६,३९,५, "अविषा विषरहिता निरवकाशा वा वनानि" भा०। विद्यायाम् अतिविषयाम् (आतइच) स्त्री टाप्।

**अविषक्त** त्रि०न०त०। असंलग्ने।

**अविषम** त्रि० विरोधे न०त०। १विषमभिन्ने समे (जोड़) २सुपक्षे ३सुगमे च। [२विषयशून्ये त्रि०।

**अविषय** पु० न०त०। १अगोचरे २अप्रतिपाद्ये। न०ब०।

**अविषह्य** त्रि०न विशेषेण सह्यः न०त०।१सोढुमशक्ये २इतरैरनभिभवनीये "अविषह्यविक्रमः, ३परिच्छेत्तुमशक्ये च "सीमायामविषह्यायाम् स्वयं राजैव धर्मवित्" मनुः।

**अविष्टम्भ** पु० अभावे न०त०। १आलम्बाभावे। न०ब०। २आलम्बशून्ये त्रि०।

**अविष्ठ** त्रि० अतिशयेन अविता अवितृ+इष्ठन् तृचोलोपः। अतिशयेन रक्षके। "यो अर्च्चतो ब्रह्मकृतिमविष्ठः" ऋ०७।२८।५ "अविष्ठः अतिशयेन रक्षिता" भा०।

**अविष्या** स्त्री अव–गतौ इष्णु अविर्गतिमिच्छति क्यच्–भावे अ। गमनेच्छायाम्। "अविष्यामनुव्रतं सवितुः" ऋ०२,३८,२, "अविष्यां गमनेच्छाम्" भा०।

**अविस्** न० अव–भावे इसुन्। १रक्षणे २गतौ च।

**अविसंवाद** पु० विसंवादः प्रमाणाननुसरणाभावः विरोधे न०त०। १प्रमाणानुसरणे २याथार्थ्यविषयकत्वे।

**अविसंवादिन्** त्रि० विरोधे न०त०। प्रमाणान्तरानुसारिणि १यथार्थविषयके २सफले पदार्थे च।

**अविसोढ** न० अवेर्दुग्धम् अवि+सोढच् न सत्वम्। १मेषीदुग्धे। न विसोढः। २असोढे त्रि०।

**अविस्थल** न० भारतोक्ते ग्रामभेदे। "अविस्थलं वृकस्थलं माकन्दीं वारणावतम्। अवसानञ्च गोविन्द! कञ्चिदेकञ्च पञ्चमम्" भा०उ०प०।

**अविस्पष्ट** न० विस्पष्टं श्रुतमात्रे कार्यावबोधकं सुखेन अवगाह्योऽस्य न। वि+स्पश–क्त न०त०। अस्पष्टवाक्ये।

**अविस्मरण** न० अभावे न०त०। १विस्मरणाभावे स्मरणे विस्मरणञ्चानुभूतपदार्थस्य कालरोगादि प्रयोज्यः स्मरणाभावः सच अनुभूतविषयेषूद्भूतसंस्कारस्यापि प्रणिधानादिकारणान्तराभावात् अनुद्बुद्धतया स्मृतिरूपकार्याजनने, रोगादिना नाशने च भवति। तदभावः अविस्मरणं तत्र च प्रणिधानादिसहकृतसंस्कारस्य स्मरणजनकता रोगाद्यनभिभवनीयता च। यथाह गौ०सू०। "प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः" ज्ञानायौगपद्यादयुगपदस्मरणम्"। "प्रणिधानं चित्ते-

काम्यं सुप्तबुद्धेरिति यावत् लिङ्गज्ञानं उद्बोधकम् उद्बोधकानामानन्त्यादादिपदं ज्ञानात्परतोयोजनीयं तस्य क्रमात् स्मरणक्रमः यदि च युगपदुद्बोधकानि तदा तावद्विषयकमेकं स्मरणमिष्यत एव यथा पदज्ञानादाविति मन्तव्यम् वृत्तिः"। प्रणिधानादीनि च स्मृतिकारणानि तत्रैवोक्तानि। "प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रित सम्बन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधान सुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्म्माधर्म्मनिमित्तेभ्यः" "स्मरणमित्यनुवर्त्तते निमित्तशब्दस्य द्वन्द्वात् परं श्रुतस्य प्रत्येकमभेदेनान्वयः। प्रणिधानं मनसोविषयान्तरसञ्चारवारणम्, निबन्धएकग्रन्थोपनिबन्धनं यथा प्रमाणेन प्रमेयादिस्मरणम्, अभ्यासः संस्कारबाहुल्यम्, एतस्य यद्यपि नोद्बोधकत्वं तथापि तादृशे शीघ्रमुद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः। अभ्यासोदृढतरसंस्कारः उद्बोधकत्वेनोक्तइति केचित् लिङ्गं व्याप्यं व्यापकस्य स्मारकं, लक्षणं यथा कपिध्वजादि अर्ज्जुनादेः, सादृश्यं देहादेः। परिग्रहः स्वीकारस्तस्य स्वस्वामिभावोऽर्थः तदेकतरेणान्यतरस्मरणम्, आश्रयाश्रितौ राजादि तत्परिजनौ परस्परस्मारकौ, सम्बन्धोगुरुशिष्यभावादिः,गोवृषन्यायात् पृथगुक्तः। आनन्तर्य्यं प्रोक्षणावघातादेः, वियोगोयथा दारादेः, एककार्य्याः अन्तेवासिप्रभृतयः परस्परस्मारकाः। विरोधादहिनकुलादेरन्यतरेणापरस्मरणम्। अतिशयः संस्कारउपनयनादिराचार्य्यादिस्मारकः, प्राप्तिर्धनादेर्दातारं स्मारयति, व्यवधानमावरणं यथा खड्गादेः कोषादि। सुखदुःखयोरन्यतरेणापरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणम्, इच्छाद्वेषौ तद्विषयकतया गृहीतौ तस्य स्मारकौ, भयं मरणादेर्भयहेतोर्भ्या स्मारकम्, अर्थित्वं दातुः, याचनादेः क्रिया वाय्वादेः, रागात्प्रीतेः पुत्रादेः स्मरणं," धर्म्माधर्म्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिति। तेषु च किञ्चित्,स्वरूपसत्किञ्चिच्च ज्ञातमुद्बोधकं शिष्यव्युत्पादनाय चायं प्रपञ्चः" वृत्तिः। कणादेन तु स्मृतिसाधारणकारणमुक्तं यथा "आत्ममनसोः संयोगविशेषात् संस्काराच्च स्मृतिः" सू० "उत्पद्यत इति शेषः संयोगविशेषः प्रणिधानादिसन्निधानम्, एतस्मादसमवायिकारणादात्मनि समवायिनि स्मृतिर्विद्याविशेष उत्पद्यते, निमित्तकारणमाह संस्कारादिति चकारेण व्यापारी पूर्व्वानुभवः समुच्चीयते, अनुभवव्यापारप्रावाधार्थ्यनियममनुविधत्ते, रज्जुं भुजङ्गतयोपलभ्य पलायितस्य तथैव स्मृतेः नच सततं स्मृतिप्रसङ्गः, संस्कारोद्बोधाधीनत्वात्, तदुक्तं प्रशस्तदेवपादैः "लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद्दृष्टश्रुतानुभूतेषु शेषानुव्यवसायस्मरणेच्छाद्वेषहेतुरतीतविषया स्मृतिः" इति। आर्षं ज्ञानं स्वलक्षणं पृथक् लक्षितं, योगिप्रत्यक्षान्तर्भावितं, पदार्थप्रदेशाख्ये तु प्रकरणे तदुक्तं तद्यथा "आम्नायविधातॄणामृषीणामतीतानागतवर्त्तमानेष्वर्थेषु धर्म्मादिषु ग्रन्थोपनिबद्धेषु वा लिङ्गाद्यनपेक्षादात्ममनसोः संयोगाद्धर्म्मविशेषाच्च प्रातिभं ज्ञानं यदुत्पद्यते तदार्षम्" इति तच्च कदाचिल्लौकिकानामपि भवति यथा कन्यका वदति "श्वो मे भ्राता गन्तेति हृदयं मे कथयतीति" उप०। संस्कारनाशकानि च रोगकालजन्मान्तरादीनि। न० ब०। स्मृतियुक्ते त्रि०

**अविस्मृत** त्रि० न०त०। विस्मृतभिन्ने स्मृते।

**अविहर्य्यतत्रि**० "हर्य्यतिः प्रेप्साकर्म्मेति" यास्कः वि+हर्य्य-अतच् न०त०। अनभिलषिते अनिष्टे "येनाविहर्य्यतक्रतोः" ऋ० १,६३,२। अविहर्य्यत क्रतोरनभिलषित यज्ञस्य" भा०।

**अविहित** त्रि०न शास्त्रेण विहितः न०त०। १निषिद्धे।२अकृतेच

**अविहृत** त्रि०वि+हृ—बा०उतच् कित्च न०त०। अहिंस्ये। "ताहि चत्रमविहृतम्" ऋ०५,६६,२, "अविहुतमहिंस्यम्" भा०।

**अविहल** त्रि० विरोधेन०त०। व्याकुलभिन्ने स्वस्थे।

**अवी** स्त्री अवत्यात्मानं लज्जया अव—ई। ऋतुमत्याम्।

**अवीकाश** पु० वीकाशः प्रकाश उपसर्गदीर्घः अभावे न०त०। २प्रकाशाभावे। न०ब०।२प्रकाशशून्ये। [निर्जने त्रि०।

**अवीक्षण** न० अभावे न०त०। १दर्शनाभावे न०ब०। २दर्श-

**अवीक्षित** त्रि० न०त०। १दृष्टभिन्ने। भावे क्त अभावे न० त०। २वीक्षणाभावे न०।

**अवीचि** पु० नास्ति वीचिः प्रकाशः सुखं वात्र। १नरकभेदे तत्स्वरूपं तत्कारणञ्च भागवते ५स्क० दर्शितं यथा "तामिस्रोन्धतामिस्र" इत्याद्युपक्रम्य "अवीचिरयःपानमित्यादिना अष्टाविंशतिनरकान् विभज्य "यस्त्विहवाऽनृतं वदति साक्ष्ये, द्रव्यविनिमये, दाने वा कथञ्चित्, स वै प्रेत्य नरके अवीचिमत्यधःशिरा निरवकाशे योजनशतोच्छ्रायात् गिरिमूर्द्ध्नः सम्पात्यते। यत्र जलमिव स्थलमश्मपृष्ठमवभासते तदवीचिर्नाम तिलशोविशीर्य्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति"—अवीचिमान् अवीचिमयोऽप्यत्र। २तरङ्गशून्ये जलाशये त्रि०।

**अवीज** त्रि० नास्ति वीजमस्य। वीजशून्ये १फलादौ।

२द्वात्तायां स्त्री।बीजानाधायके त्रि० "अबीजमपि चेत् क्षेत्रं केवलं स्थण्डिलं भवेत्" मनुः। अप्राशस्त्ये न०त०। अङ्कुरोत्पादनायासमर्थे नष्टशस्यादौ ३बीजे च। "अबीजविक्रयी चैव बीजोत्कृष्टं तथैव च" मनुः। "अबीजं प्ररोहासमर्थमिति" कुल्लू०। बीजं शुक्रं न०ब०। शुक्ररहिते ४क्लीबे न०। "न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रं चोन्मादशुक्राभ्यां स क्लीब इति कथ्यते" स्मृतेस्तस्य तथात्वम्। "उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम्" इति मनुः। ५कारणशून्ये त्रि०६योगोक्ते निर्वीजे चित्तवृत्तिपरिणामनिरोधे पु०।

**अवीत** न० अनुमानभेदे तच्च दर्शितं सा०कौ० "तत्र प्रथमं तावत्द्विविधं वीतमवीतञ्च अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम् व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम्" व्याख्यातञ्च तद्व्याख्याभिः यथा "वीतं विशेषेण इतं सङ्गतमन्वितम् अन्वयव्याप्तिहेतुकमित्यर्थः यद्वा विशेषेण इतं ज्ञातं प्रसिद्धसाध्यव्याप्तिकमित्यर्थः तद्भिन्नमवीतम् व्यतिरेकव्याप्तिहेतुकम् अप्रसिद्धसाध्यव्याप्तिकं वेत्यर्थः व्यतिरेकमुखेन तदसत्त्वे तदसत्त्वरूपव्यतिरेकद्वारा साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिद्वारेत्यर्थः। निषेधकं यो यः पृथिवीभेदवान् स गन्धाभाववान् इति व्यतिरेकग्रहणेन व्यापकस्य गन्धाभावस्य पृथिव्यां निवृत्त्या पृथिवीभेदरूपस्य गन्धाभावव्याप्यस्य निवारकम्। तथा च पृथिवी पृथिवीतरभिन्ना गन्धवत्त्वादित्यनुमानमवीतम्"।

**अवीर** त्रि०वीरः पुत्रादिर्नास्ति यस्य। १पुत्रादिशून्ये। न०त० २वीर्य्यवद्भिन्ने त्रि०। "पतिपुत्रवती नारी वीरा प्रोक्ता मनीषिभिः" इति परिभाषिता स्त्री वीरा न०त०। ३पतिपुत्ररहितायां स्त्रियां स्त्री। "अजातपुत्रा विधवा साऽवीरा परिकीर्त्तितेति" स्मृतिः। "मा त्वा वयं रुद्रमावद्मवीराः" ऋ०७,४,६,। "अवीराः पुत्रादिरहिताः" भा०। "अवीरायाश्च योषितः" स्मृतिः।

**अवृक** त्रि० वृ–कक् वृकः आवरकः न०ब०। आवरकशून्ये "ज्योतींषि कृणवदवृकाणि" ऋ०१५५,६, "वृकेणावरकेण रहितानि" भा०।

**अवृत्ति** स्त्री वृत्तिर्जीवनोपायः अभावे न०त०। १जीविकाभावे "आददीताममेवाश्मादवृत्तावेकरात्रिकम्" अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि" अवृत्तिकर्षितः सीदन्निमं धर्म्मं समाचरेत्" इति च मनुः। नास्ति वृत्तिः स्थितिरस्य। २अविद्यमाने। "साध्याभाववदवृत्तित्वम्" साध्यवदन्यावृत्तित्वम्" इति च अनुचिन्ता०। न०ब०। जीविकाशून्ये त्रि०

**अवृद्धिक** न० नास्ति वृद्धिः यत्र कप्। ऋणादौ वृद्धिः लाभरूपा (सुद) तद्रहिते १मूलधने। तच्च स्मृतौ दर्शितं यथा "ऋणं पैतामहं पैत्रं प्रतिभाव्यागतं सुतः। समं दद्यात् ततसुतो च न दाप्याविति निश्चयः"। "समं सवृद्धिकम्" "ऋणमात्मीयवत् पित्र्यं पुत्रैर्देयं विभावितम्। पैतामहं समं देयमदेयं ततसुतस्य च" या०स्मृ०। "समं यावत् गृहीतं तावद्देयं न वृद्धिः" मिता०। "गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते। नष्टोदेयोविनष्टश्च दैवराजकृतादृते" या०स्मृ०।

**अवृध** त्रि० न वर्द्धते वृध–क। १वृद्धिशून्ये। अनभ्रूतमर्थे वृध–क न०त०। अवर्द्धके। "पर्नीरश्वर्धां अवृधा अयज्वान्" ऋ०७,७,२, "अवृधान् स्तुतिभिरग्निमवर्द्धयतः" भा०।

**अवृष्टि** स्त्री अभावे न०त०। १वर्षणाभावे "अथ यदाऽवृष्टिर्भवति बलीयानेव तर्ह्यबलीयस आदत्ते धर्म्माद्धाराप:"। शत०ब्रा०। न०ब०। वृष्टिशून्ये मेघे पु०।

**अवृहत्** त्रि० विरोधे न०त०। वृहद्भिन्ने क्षुद्रे स्त्रियां ङीप्

**अवेक्षक** त्रि० अव+ईक्ष–ण्वुल्। १दर्शके २पर्य्यालोचके ३आयव्ययादिषु अध्यक्षे च।

**अवेक्षण** न० अव+ईक्ष–ल्युट्। १दर्शने, २प्रतिजागरणे, ३अवधाने च "वर्णाश्रमावेक्षणजागरूकः" रघुः "भूषाणामङ्गरचना दृष्टा विम्बगवेक्षणम्" सा०द० "पितृप्रमन्त्रानुहरणे आत्मानमवेक्षेत" आ०त०स्मृ०

**अवेक्षणीय** त्रि० अव+ईक्ष–अनीयर्। १दर्शनीये। "तपस्विसामान्यमवेक्षणीया" रघुः। २आलोचनीये च।

**अवेक्षा** स्त्री अव+ईक्ष–भावे अ। अवेक्षणशब्दार्थे।

**अवेक्षित** त्रि०अव+ईक्ष कर्म्मणि–क्त।१दृष्टे २पर्य्यालोचिते च।

**अवेक्षितृ** त्रि०अव+ईक्ष–तृच् स्त्रियां ङीप्। अवेक्षकशब्दार्थे।

**अवेक्ष्य** त्रि० अव+ईक्ष–कर्म्मणि ण्यत्।१पर्य्यालोच्ये २दृश्ये च ल्यप्। ३दृष्ट्वेत्यर्थे ४पर्य्यालोच्येत्यर्थे च अव्य०।

**अवेदनाज्ञ** त्रि० वेदनां न जानाति ज्ञा–क अस० समा०। वेदनानभिज्ञे "अवेदनाज्ञं कुलिशक्षतानाम्" कुमा०।

**अवेदि** स्त्री वेदिर्वेदनम् अभावे न०त०। ज्ञानाभावे "न चेद् वेदिर्मघवतो विनदिः" ऋ०उ०। परिष्कृतभूमिशून्ये त्रि०

**अवेद्य** त्रि० न वेद्यः ज्ञेयः। १अज्ञेये। विद–लाभे ण्यत्। २अलभ्ये ३अविवाह्यस्त्रियां स्त्री "व्यभिचारेण वर्णानामवेद्यावेदनेन च" मनुः। ४गोवत्से पु० शब्दच०।

**अवेल** त्रि॰नास्ति वेला सीमा यत्र । १सीमारहिते निर्मर्य्यादे २अपलापे पु॰ ३चूर्णगुवाके स्त्री मेदि॰ । अप्राप्तत्वे न॰त॰।४अनुचितकाले स्त्री ।न॰ब॰। ५समयशून्ये त्रि॰ ।

**अवेष्ट** त्रि॰ अव+यज-क्त । नाशिते "अवेष्टादंदन्द्धकाः" य॰१०,१०,"अवयष्ट्योविजतिर्नाशार्थः" वेददी॰ "अवेष्टा इति लौहायसमाविध्यति" कात्या॰१५,५,२२ ।

**अवैध** त्रि॰ विधित आगतम् अण् वैधं न॰त॰ । १विधितः अप्राप्ते २निषिद्धे च। "अवैधं पशुमं कुर्व्वन् राज्ञो दण्डेन शुध्यति" स्मृतिः ।

**अवैधव्य** न॰ विधवाया भावः ष्यञ् वैधव्यं पतिहीनत्वम् अभावे न॰त॰ । पतिशून्यत्वाभावे सपतिकत्वे । "अवैधव्यप्रदं स्त्रीणाम्" कालिकापुरा॰ "अवैधव्यं भवेत्तस्याः सप्तजन्मसु निश्चितम्" पुरा॰ ।

**अवैमत्य** न॰ वैमत्यं विरुद्धमतता अभावे न॰त॰ । १मतद्वैधाभावे ऐकमत्ये ।न॰ब॰ । २तच्छून्ये ।

**अवैयात्य** न॰वैयात्यं धार्ष्ट्यं निर्लज्जता अभावे न॰त॰। धार्ष्ट्याभावे १सलज्जत्वे न॰ब॰। २तच्छून्ये लज्जावति त्रि॰ ।

**अवैर** न॰अभावे न॰त॰। १विरोधाभावे न॰ब॰। २विरोधशून्ये त्रि॰ ।

**अवैराग्य** न॰वैराग्यं विषयवितृष्णा अभावे न॰त॰ । १विषयतृष्णायाम् २सांख्योक्ते धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्यरूपाष्टविधप्रकृतिधर्म्मभेदे च ।

**अवैलक्षण्य** न॰ विलक्षणस्य भावः ष्यञ् वैलक्षण्यं भेदकधर्म्मः अभावे न॰त॰ । १भेदकधर्म्माभावे अभेदे । न॰ब॰ । २तच्छून्ये अभिन्ने त्रि॰ ।

**अवोक्षण** न॰ अव+उक्ष-भावे ल्युट् । तिरश्चा पाणिना सेचने "उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्त्तितम् ।न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्" स्मृतिः ।

**अवोद** पु॰ अव+उन्द-भावे घञ् नि॰नलोपः । १अवक्लेदने ततः अस्त्यर्थे अर्श॰ अच् । क्लिन्ने २आर्द्रे त्रि॰ जटा॰ ।

**अवोदेव** अव्य॰ देवानामवस्तात् अव्ययी॰ । देवानामवरस्मिन् देशादौ "अवोदेवमुपरिमर्त्त्यं कृधि" ऋ॰ ७,१६,१२ ।

**अवोय** पु॰ अव+उष-कर्म्मणि क । उपाये। अपूपा॰हितार्थे यती । अवोयीयम् अवोय्यं तद्धिते वस्तुनि त्रि॰ ।

**अव्द** पु॰ अब्दवत्। वत्सरे । [मन्वादयोऽप्यत्र ।

**अव्दप** पु॰ अब्दपवत् वर्षाधिपे अब्दपशब्दे विवृतिः । अब्द-

**अव्य** त्रि॰ अविभवम् अवि+दिगा॰ यत् । मेषभवे लोमादौ "तिरः पवित्रं विवारमव्यम्" ऋ॰८,१०८,१६, ।

**अव्यक्त** पु॰ वि+अनूज-क्त न॰त॰ । १विष्णौ,२कामे,३शिवे, सांख्यमते सर्व्वकारणे,४प्रधाने, रूपाद्यहीनतया चक्षुराद्यगोचरत्वात्तथात्वम्, वेदान्तमते नामरूपाभ्यामव्याकृते ५अज्ञाने ६सूक्ष्मशरीरे ७सुषुप्त्यवस्थायां च शब्दप्रवृत्तिनिमित्तजातिगुणादिभिर्वर्ज्जिते निराकारे ८ब्रह्मणि न॰ । ९अस्पष्टे वस्तुमात्रे त्रि॰ । "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" सा॰का॰ । हेतुमत्त्वादिभिर्व्यक्तधर्म्मैर्विरहितमव्यक्तम् । "अव्यक्तं त्रिगुणाल्लिङ्गात्" सा॰सू॰ । "तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्" सा॰का॰। "महत्तत्वं सुखदुःखमोहात्मकद्रव्योपादानं सुखदुःखमोहात्मकत्वे सति कार्य्यत्वात् तथाभूतपटादिवत् । महदादिकं स्वोपहितत्रिगुणात्मकोपादानं कार्य्यत्वात् घटवत् इत्यमव्यक्तानुमानम् दर्शितम्" सा॰प्र॰भा॰ । "बुद्धेरिवाव्यक्तमुदाहरन्ति" रघुः । वेदान्तिभिः नामरूपाभ्यामव्याकृतमज्ञानमेव मूलकारणतया अव्यक्ततया च स्वीकृतं तत्रैव प्रकृतिधर्म्माणां सर्वेषामन्तर्भावात् "अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ! । अव्यक्तनिधनान्येव तत्र का परिदेवनेति" गीतोक्तेरपि तत्रैव तात्पर्य्यम् तद्द्वारैव ब्रह्मणः जगज्जन्मादिहेतुत्वम् "व्यक्तकारणमव्यक्तं नित्यं सदसदात्मकम्" मनूक्तावपि तद् प्रधानमेवाव्यक्तशब्देनाभिधीयते तस्य च प्रवाहरूपेणावस्थितत्वात् नित्यत्वम् "महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" श्रुतौ तु अव्यक्तशब्देन सूक्ष्मशरीरमिति शा॰सूत्रे भाष्ये च व्यवस्थापितम् यथा "आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" सू॰। "आनुमानिकमपि अनुमाननिरूपितं प्रधानमेकेषां शाखिनां शब्दवदुपलभ्यते । काठके हि पठ्यते "महतः परमव्यक्तमव्यक्तात् पुरुषः परः" इति तत्र य एव यन्नामानो यत्क्रमकाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धास्त एवेह प्रत्यभिज्ञायन्ते तत्राव्यक्तमिति स्मृतिप्रसिद्धेः शब्दादिहीनत्वाच्च व्यक्तमव्यक्तमिति व्युत्पत्तिसम्भवात् स्मृतिप्रसिद्धं प्रधानमभिधीयते अतस्तस्य शब्दवत्त्वादशब्दत्वमनुपपन्नं तदेव जगतः कारणं श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेन्नैतदेवम् नह्येतत् काठकवाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरम् नह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं प्रधानं तादृशमत्यभिज्ञायते। शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते स च शब्दो न व्यक्तमव्यक्तमिति

यौगिकत्वादन्यस्मिन्नपि रूढ्ये दुर्लक्ष्ये प्रयुज्यते न चायं कश्चिद्‌ रूढः । या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते। न च क्रममात्रसामान्यात् समानार्थप्रतिपत्तिर्भवति तद्रूपप्रत्यभिज्ञाने। न ह्यश्वस्थाने गां पश्यन्नश्वोऽयमित्यमूढोऽध्यवस्यति। प्रकरणनिरूपणायान्त्वत्र न परकल्पितं प्रधानं प्रतीयते शरीर रूपकविन्यस्तस्त्वगृहीतेः । शरीरं ह्यत्र रथरूपकविन्यस्तमव्यक्तशब्देन परिगृह्यते कुतः ? प्रकरणात् परिशेषाच्च । तथाहि अनन्तरातीतो ग्रन्थः आत्मशरीरादीनां रथिरथादिरूपकक्लृप्तिं दर्शयति । "आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति शेषे च "इन्द्रियादिभिरसंयतैः संसारमधिगच्छति। संयतैस्त्वध्वनः पारन्तद्विष्णोः परमं पदमाप्नोतीति" दर्शयित्वा किं तदध्वनः पारम्परमपदमित्यस्यामाकाङ्क्षायान्तेभ्यएव प्रकृतेभ्य इन्द्रियादिभ्यः परत्वेन परमात्मानमध्वनः पारं विष्णोः परमपदं दर्शयति। "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरिति" । तत्र यएवेन्द्रियादयः पूर्व्वस्यां रूपककल्पनायामश्वादिभावेन प्रकृताः त एवेह परिगृह्यन्ते प्रकृतप्रक्रियाऽपरिहाराय । तत्रेन्द्रियमनोबुद्धयस्तावत् पूर्व्वत्रेह च समानशब्दा एव अर्थास्तु ये शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्द्दिष्टास्तेषाञ्चेन्द्रियेभ्यः परत्वम् इन्द्रियाणाञ्च ग्रहत्वं विषयाणामतिग्रहत्वमिति श्रुतिप्रसिद्धेः । विषयेभ्यश्च मनसः परत्वं मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य । मनसस्तु परा बुद्धिः, बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति । बुद्धेरात्मा महान् परः यः सः आत्मानं विद्धीति रथित्वेनोपक्षिप्तः कुतः ? आत्मशब्दात् । भोक्तुश्च भोगोपकरणात् परत्वोपपत्तेः । महत्त्वञ्चास्य स्वामित्वादुपपन्नम्" । "तदेवं पूर्व्वापरालोचनायां नास्त्यत्र परकल्पितस्य प्रधानस्यावकाशः" भा०। "सूक्ष्मन्तु तदर्हत्वात्" सू० "उक्तमेतत् प्रकरणपरिशेषाभ्यां शरीरमव्यक्तशब्दं न प्रधानमिति । इदमिदानीमाशङ्क्यते कथमव्यक्तशब्दार्हत्वं शरीरस्य, यावता स्थूलत्वात् स्पष्टतरमिदं शरीरं व्यक्तशब्दार्हमस्पष्टवचनस्त्वव्यक्तशब्द इति अतउत्तरमुच्यते "सूक्ष्मन्त्विह" कारणात्मना शरीरं विवक्ष्यते सूक्ष्मस्याव्यक्तशब्दार्हत्वात् । यद्यपि स्थूलमिदं शरीरं न स्वयमव्यक्तशब्दमर्हति तथापि तस्य त्वारम्भकं भूतसूक्ष्ममव्यक्तशब्दमर्हति प्रकृतिशब्दश्च विकारे दृष्टः यथा "गोभिः श्रीणीत मत्सरमिति"। तथाच श्रुतिः "तद्धेदं तर्ह्यव्याकृतमासीदिति" इदमेव व्याकृतं नामरूपविभिन्नं जगत्प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थमव्यक्तशब्दयोग्यन्दर्शयति" भा० । परमब्रह्मपरत्वे "ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः" "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इति च गीता । "योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः" मनुः विष्णौ तु "अनेकमूर्त्तिरव्यक्तः शतमूर्त्तिः सनातनः" इति विष्णुस० । अप्रकाशितार्थे "तमशेषमस्याव्यक्तव्यवहारसूचितमर्थं मनसा जग्राह" काद० "ततः स्वयम्भूर्भगवानव्यक्तं व्यञ्जयन्निदम्" मनुः संख्याविशेषेणानवगते गणितशास्त्रोक्ते १०राशिभेदे तच्च बीजनाम्ना व्यवह्रियते "उत्पादकं यत् प्रवदन्ति बुद्धेरधिष्ठितं सत् पुरुषेण सांख्याः । व्यक्तस्य कृत्स्नस्य तदेकबीजमव्यक्तमीशं गणितञ्च वन्दे । पूर्व्वं प्रोक्तं व्यक्तमव्यक्तबीजं प्रायप्रश्नानो विनाऽव्यक्तयुक्त्या" इत्युपक्रम्य "यावत्तावत् कालकोनीलकोऽन्यः वर्णः पीतो लोहितश्चैतदाद्याः । अव्यक्तानां कल्पिता मानसंज्ञास्तत्संख्यानं कर्त्तुमाचार्य्यवर्य्यैः" बीजग० तच्च चतुर्विधं यथोक्तम् तत्रैव "यावत्तावत्कल्प्यमव्यक्तराशेर्मानं तस्मिन् कुर्व्वतो द्दिष्टमेव । तुल्यौ पक्षौ साधनीयौ प्रयत्नात्त्यक्त्वा क्षिप्त्वा वापि सङ्गुण्य भक्त्वा । एकाऽव्यक्तं शोधयेदन्यपक्षाद्रूपाण्यन्यस्येतरस्माच्च पक्षात् । शेषाव्यक्तेनोद्धरेद्रूपशेषं व्यक्तं मानं जायतेऽव्यक्तराशेः । अव्यक्तानां द्व्यादिकानामपीह यावत्तावद्व्यादिनिघ्नं हृतं वा । युक्तोनं वा कल्पयेदात्मबुद्ध्या मानं क्वापि व्यक्तमेवं विदित्वा । तत्र प्रथममेकवर्णसमीकरणं द्वितीयमनेकवर्णसमीकरणं बीजम्। यत्र वर्णस्य द्वयोर्वा बहूनां वा वर्गादिगतानां समीकरणं तन्मध्यमाहरणम् । यत्र भावितस्य तद्भावितमिति बीजचतुष्टयं वदन्त्याचार्य्याः । तत्र प्रथमं तावदुच्यते उद्दिष्टकेन पृष्टे सत्युदाहरणे योऽव्यक्तराशिस्तस्य मानं यावत्तावदेकं द्व्यादिं वा प्रकल्प्य तस्मिन्नव्यक्तराशौ उद्देशकालापवत्त्वर्गघनभजनत्रैराशिकपञ्चराशिकश्रेढीफलच्छेदव्यवहारादिगणनेन कार्य्यम्। तथा कुर्व्वता द्वौ पक्षौ प्रयत्नेन समौ कार्य्यौ । यद्यालापे समौ पक्षौ न स्तः ।

तदैकतरे न्यूने पक्षे किञ्चित्क्षिप्य ततः अधिकपक्षात्ता-वदेव विशोध्य वा न्यूनं पक्षं केनचिद्गुण्य अधिकं पक्षं तावतैव भक्त्वा समौ कार्यौ। ततस्तयोरेकस्य पक्षस्याव्यक्तमन्यपक्षस्याव्यक्ताच्छोध्यम् अव्यक्तवर्गादिकमपि। अन्यपक्षरूपाणि इतरपक्षरूपेभ्यः शोध्यानि। यदि करण्यः सन्ति तदा ता अपि उक्तप्रकारेण शोध्याः। ततोऽव्यक्तराशिशेषेण रूपशेषे भक्ते यल्लभ्यते तदेकस्याव्यक्तस्य मानं व्यक्तं जायते। तेन कल्पितोऽव्यक्तराशिरुत्थाप्यः ॥ यत्रोदाहरणे द्व्यादयोऽव्यक्तराशयोभवन्ति तदा तस्यैकं यावत्तावत्प्रकल्प्य अन्येषां द्व्यादिभिरिष्टैर्गुणितं भक्तं वा इष्टैः रूपैरूनं युतं वा यावत्तावदेव प्रकल्प्यम् ॥ अथ वा एकस्य यावत्तावदन्येषां व्यक्तान्येव मानानि प्रकल्प्यानि। सर्वं विदित्वेति यथा क्रिया निर्वहति तथा बुद्धिमता ज्ञात्वा शेषाणामव्यक्तानि व्यक्तानि वा कल्प्यानीत्यर्थः। उदाहरणम्। एकस्य रूपं त्रिशती षडश्वा अश्वा दशान्यस्य तु तुल्यमूल्याः। ऋणं तथा रूपशतं च तस्य तौ तुल्यवित्तौ च किमश्वमूल्यम्। यदा द्विवित्तस्य दलं द्वियुक्तं तत्तुल्यवित्तोयदि वा द्वितीयः। आद्योधनेन त्रिगुणोऽन्यतोवा पृथक् पृथङ्मे वद वाजिमौल्यम्। अत्राश्वमौल्यमज्ञातं तस्य मानं यावत्तावदेकं प्रकल्पितं या १ तत्र त्रैराशिकं यद्येकस्य यावत्तावन्मूल्यं तदा षण्णां किमिति न्यासः। १। या १। ६। फलमिच्छागुणं प्रमाणभक्तं लब्धं षण्णामश्वानाम्मूल्यं या६ अत्र रूपशतत्रये प्रक्षिप्ते जातमाद्यस्य धनं या६रू३०० एवं दशानां मौल्यं या १० अत्र रूपशते ऋणगते प्रक्षिप्ते जातं द्वितीयस्य धनं या १० रू १०० एतौ समधनाविति पक्षौ स्वत एव समौ जातौ समशोधनार्थं न्यासः या ६ रू ३००

या १० रू १००

अथ एकाव्यक्तं शोधयेदन्यपक्षादिति आद्यपक्षाव्यक्तेऽन्यपक्षाव्यक्ताच्छोधिते शेषं या ४। द्वितीयपक्षरूपेषु आद्यपक्षरूपेभ्यः शोधितेषु शेषं रू ४०० अव्यक्तराशिशेषेण या ४ रूपशेषे रू ४०० उद्धृते लब्धमेकस्य यावत्तावतो-मानं व्यक्तं १०० यद्येकाश्वस्येदं मौल्यं तदा षण्णां किमिति त्रैराशिकेन लब्धे षण्णां मौल्ये ६०० रूपकशतत्रययुते ९०० जातमाद्यस्य धनम्। एवं द्वितीयस्यापि ९००" बीजग०। एवमनेकवर्णादीनामप्युदाहरणादीनि तत्रैव दृष्टव्यानि।

**अव्यक्तमूलप्रभव** पु० अव्यक्तं प्रधानमविद्या वा मूलम् प्रभवकारणं यस्य। अव्यक्तम् मूलम् प्रभवत्यस्मात् प्रभवः अपादाने अप् प्रभवोयस्य। संसारवृक्षे।

**अव्यक्तराग** पु० न व्यक्तोऽल्पव्यक्तोरागोऽरुणिमा। १ईषद्रक्ते अरुणे वर्णे २तद्वति त्रि०।

**अव्यक्तलिङ्ग** न० अव्यक्तस्य लिङ्गमनुमापकम्। सांख्यमतसिद्धे १महत्तत्त्वादौ। अव्यक्तं लिङ्गमस्य। २अस्पष्टचिह्ने रोगादौ त्रि०। न व्यक्तं दम्भाभावेन गुप्तं लिङ्गमस्य। गुप्ताश्रमयुक्ते ३संन्यासिनि पु०।

**अव्यङ्गा** स्त्री अवैरूप्यं अङ्गमिवाङ्गमस्याः। १शूकशिम्ब्याम्। न विकलमङ्गमस्य ६ब०। विकलाङ्गभिन्ने पुंसि त्रि०।

**अव्यङ्गाङ्गी** स्त्री अव्यङ्गमविकलं सम्पूर्णमङ्गं यस्याः ङीप्। सम्पूर्णाङ्गयुक्तायां स्त्रियाम् "अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्"। मनुः।

**अव्यञ्जन** पु० नास्ति व्यञ्जनं शुभलक्षणं शृङ्गे यस्य। १शृङ्गहीनपशौ, २शुभलक्षणशून्ये, ३चिह्नशून्ये च त्रि०।

**अव्यण्डा** स्त्री न विगतमण्डं बीजमस्याः। शूकशिम्ब्याम्।

**अव्यतिकर** पु० अभावे न०त०। १संसर्गाभावे न०ब०। २संसर्गशून्ये त्रि०।

**अव्यतिकीर्ण** त्रि० वि+अति+कॄ-क्त न०त०। असङ्कीर्णे "धाराः प्रसादयितुमव्यतिकीर्णरूपाः" माघः।

**अव्यथ** पु० न व्यथते पङ्क्यां न सञ्चलति व्यथभयचलनयोः अच्। १सर्पे। २व्यथाशून्ये त्रि०। नास्ति व्यथा यस्याः सेवनेन न०ब०। ३हरितक्याम् ४शुष्ठ्यां च स्त्री।

**अव्यथय** पु० न व्यथयति गन्तारमङ्गेन गन्तव्यस्थाननयनात् व्यथ-णिच्-अच् षष्ठा० न०त०। अश्वे निरु०।

**अव्यथा** स्त्री अभावे न०त०। व्यथाभावे।

**अव्यथि** त्रि० व्यथ-इन् न०त०। व्यथाशून्ये अक्लिष्टे "समुद्रमव्यथिर्जगन्वान्" ऋ०१,११७,१५,। [शून्ये च।

**अव्यथिन्** त्रि० न व्यथते व्यथ-इनि न०त० १निर्भये २व्यथा-

**अव्यथिष** न+व्यथ-टिषच्। १सूर्ये २समुद्रे च ३धरायां ४रात्रौ च स्त्री टित्त्वात् ङीप्।

**अव्यथ्य** त्रि० न+व्यथ-णि० कर्त्तरि यत्। व्यथाशून्ये।

**अव्यपदेश्य** त्रि० न व्यपदिश्यते अभिलापवाक्येन वि+अप+दिश-ण्यत् न०त०। १कथयितुमशक्ये न्यायमते निर्विकल्पके २ज्ञाने न० तद्धि अतीन्द्रियत्वेन वस्तुव्यवसायाविषयतया अभिलपितुं न शक्यते। "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" गौ०सू०। जात्यादिशून्यतया १निर्दिश्ये २ब्रह्मणि न०।

**अव्यपेक्षा** स्त्री विशेषणापेक्षा व्यपेक्षा अभावे न०त०।

१विशेषणापेक्षाभावे समर्थसूत्रभाष्योक्ते अवयवार्थानपेक्षया समुदायस्य विशेष्यविशेषणभावानवगाहेग्रकोपस्थिति जनकत्वरूपे २एकार्थीभावे च। "समर्थः पदविधिः" पा० सूत्रे सामर्थ्यं द्विविधं व्यपेक्षा अव्यपेक्षा च प्रपञ्चितमस्माभिः सरलायाम्। तत्र स्वार्थपर्य्यवसायिपदानामाकाङ्क्षादिवशात् यः परस्परं सम्बन्धः सा व्यपेक्षा। राज्ञः पुरुष इत्यादौ वाक्ये सत्यामाकाङ्क्षायां यो यो यस्मिन् सन्निहितो योग्यश्च स तेन तेन सम्बध्यते यथा राज्ञः पुरुषोऽश्व राज्ञो देवदत्तस्य च पुरुषः ऋद्धस्य राज्ञोऽश्वो धनस्येत्यादि वृत्तौ तु नैवम् वृत्तीनामेकार्थीभावात्। एकार्थीभावश्च विशेष्यविशेषणभावानवगाहेग्रकोपस्थितिजनकत्वम्। तथाच राजपुरुषादिशब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे ऋद्धादेरन्वयः पुरुषांशे विशेषणतयोपस्थितस्य च नाश्वादिसम्बन्धिता राजादीनाम्। जनितान्वयात्तु निराकाङ्क्षतया न देवदत्तादेः स्वामितया पुरुषादावन्वय इति द्रष्टव्यम्। देवदत्तस्य गुरुकुलमित्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः सम्बन्धरूपस्थितगुरुद्वारक एव षष्ठ्यर्थः यथोक्तं हरिणा "समुदायेन सम्बन्धो येषां गुरुकुलादिना। संस्पृशावयवांस्ते तु युज्यन्ते तद्वता सहेति"। यद्वा सम्बन्धिशब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव केषाञ्चित् सम्बन्ध्यन्वयः तदुक्तं तेनैव "सम्बन्धिशब्दः सापेक्षो नित्यं सर्व्वः समस्यते। वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयते"। अतएव वार्त्तिककृता "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति वक्तव्यमिति" सामान्यतो वृत्तिमतो विशेषणस्य स्वातन्त्र्येण प्रयोगाभावमभिधाय "अगुरुकुलगुरुपुत्रादीनां वक्तव्यम्" इत्यनेन गुरुकुलगुरुपुत्रादीनां विशेषणत्वेऽपि पृथक्प्रयोगाय नञा पर्य्युदासः कृतः। समानाधिकरणविशेषणस्य तु "समानाधिकरणसमर्थवद्भवती" त्यनेन सर्व्वथा स्वातन्त्र्येण सामर्थ्याभावात् प्रयोगाभावो भक्त्याऽभिहितः। एतन्मूलकमेव प्राचां गाथा "सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन। सापेक्षं तद्विजानीयादसमस्तविशेषणम्। प्रतियोगिपदादन्यत् यदन्यत् कारकादपि। वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते" इति अयायं विशेषः प्रधानस्य सापेक्षत्वेऽपि समास इत्युक्तेः प्रधानस्य वृत्त्युपस्थाप्यविशेष्यस्य राजपुरुषादेः सुन्दरादिविशेषणापेक्षायामपि समासः। समासे चावयवशक्त्यैव तत्तदर्थपदार्थोपस्थित्या विशेष्यविशेषणभावाद्यभ्युपगमे सापेक्षत्वादौ समासाभावादिकं वाचनिकं कल्प्यम् तथान्याप्यधिककल्पना स्यादतः समुदायशक्तिकल्पनम् यथोक्तं हरिणा "बहूनां वृत्तिधर्म्माणां वचनैरेव साधने। स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः। चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्। कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितमिति" तथाहि द्वन्द्वादिविग्रहवाक्ये चकारादि प्रयुज्यते समासे तु न। वचनैरेव तन्निषेधः कल्पनीयः। समुदायशक्तिपक्षे तु उक्तार्थानामप्रयोग इत्युक्तन्यायादेव सिद्धम्। नामार्थयोरभेदान्वयः क्लृप्तः स च राजपदादुपस्थापितराजादेः पुरुषे स्वस्वामिभावसम्बन्धेनान्वये परित्यक्तः स्यात्। सम्बन्धलक्षणायान्तु किमपराद्धम् विशिष्टलक्षणया। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानमिति नियमश्च क्लृप्तः स च प्राप्तानन्दादौ भज्येत आनन्दकर्त्तृकप्राप्तिकर्म्मत्वार्थबोधस्योभयसम्मतत्वेन कर्त्तृविहितक्तान्तार्थस्य कर्त्तुर्विशेष्यतौचित्येन प्रकृते तद्वैपरीत्यात् आनन्दसम्बन्ध्यादिलक्षणास्वीकारे समुदायशक्तिपक्षे एव प्रवेशः। तथा प्राप्त आनन्दोयमिति विग्रहे आनन्दादौ अत्यन्तादिविशेषणयोगवत् समासे तद्वारणाय वृत्तस्य न न विशेषणयोग इति वाचनिकत्वकल्पनाऽधिका एतन्मते न्यायसिद्धा इत्यादिबहुविस्तरापत्तिरतः समुदाये शक्तिः" नास्ति व्यपेक्षा यस्य। ३अनपेक्षे त्रि०।

**अव्यभिचरित** त्रि० वि+अभि+चर–क्त न०त०। १व्यभिचारशून्ये हेतौ "का व्याप्तिः? न तावदभिचरितत्वं तद्धि न साध्याभाववदवृत्तित्वम्" अनुमानचिन्ता०। व्यभिचारश्च द्विविधः अन्वयव्यभिचारो व्यतिरेकव्यभिचारश्चेति भेदात् अन्वयव्यभिचारोऽपि द्विधा। साध्याभाववद्वृत्तित्वं स्वसमानाधिकरणाभावप्रतियोगिसामानाधिकरण्यं चेति भेदात् यथा धूमवान् वह्नेरित्यादौ धूमाभाववति तप्तायःपिण्डे वह्नेर्वृत्तिमत्त्वात्, वह्न्यधिकरणे तप्तायःपिण्डे धूमाभावस्य विद्यमानतया तत्प्रतियोगिना सह समानाधिकरणत्वात् वह्नौ उभयविधव्यभिचारः। साध्याभावव्यापकीभूताभावाप्रतियोगित्वं व्यतिरेकव्यभिचारः यथा धूमवान् वह्नेरित्यादौ धूमाभावरूपसाध्याभावस्य तप्तायःपिण्डे सत्त्वेन वह्न्यभावस्य च तत्रासत्त्वात् वह्नेर्न साध्याभावव्यापकीभूताभाव प्रतियोगित्वम्। इति तत्र उभयविधव्यभिचारः। २अबाधितार्थे च "अव्यभिचरितेभ्यः प्रमाणेभ्यः" शा० भा०।

**अव्यभिचारिन्** त्रि० वि+अभि+चर–णिनि न०त०। केनापि प्रतिकूलहेतुना १निवारयितुमशक्ये। न्यायमते २साध्यसाधकव्याप्तिविशिष्टे हेतौ च। ३अबाधितविषये च

"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारीति गौ॰सू॰ [अव्यभिचरितशब्दे विवृतिः ।

**अव्यभिचार** पु॰अभावे न॰त॰। १व्यभिचाराभावे २नैयत्यरूपे

**अव्यय** पु॰ न॰ वि+इण्—अच् न॰त॰ ।सर्वासु विभक्तिषु सर्ववचनेषु च एकरूपे १शब्दवृत्तिधर्मविशेषे, यथास्वरादयोऽव्ययाः सर्व्वत्नैकरूपाः २शिवे ३विष्णौ च पु॰ । आद्यन्तरहिते ४विकारशून्ये त्रि॰ ५परब्रह्मणि न॰ । "सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु । वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययमिति"श्रुतिः । प्रवाहरूपेण ६सर्व्वदास्थिते च "अश्वत्थं प्राहुरव्ययम्" गीता "मनसाप्यवैः सूक्ष्मं सर्व्वभूतकृदव्ययम्" सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः संभवत्यव्ययादव्ययम्" मनुः ७अव्ययफलदे च "भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः । छन्दोग॰"अव्यया अव्ययफलदा मोक्षदा" इति आ॰त॰रघु॰ । "अव्ययः पुरुषः साक्षी" विष्णुस॰ । [भावे ।

**अव्ययात्मन्** त्रि॰अव्यय आत्मा स्वभावो यस्य। अविनश्वरस्व-

**अव्ययीभाव** पु॰ अनव्ययमव्ययं भवत्यनेन अव्यय+च्वि—भू करणे घञ् । व्याकरणसिद्धे समासविशेषे । तत्र हि उपकुम्भमित्यादौ अनव्ययस्यापि कुम्भादिपदस्याव्ययत्वम् "अव्ययीभावश्चेति" पा॰ सूत्रे तथाभिधानात् । "द्वन्द्वोद्विगुरपि चाहं नित्यं मद्गेहेऽव्ययीभावः । तत्पुरुष! कर्म्मधारय येनाहं स्यां बहुव्रीहिः" उद्भटः ।

**अव्यर्थ** त्रि॰ न व्यर्थः । १सफले २सार्थके च ।

**अव्यलीक** त्रि॰ विरोधे न॰त॰ । १प्रिये सत्ये च "इत्थं गिरः प्रियतमा इव सोऽव्यलीकाः शुश्राव सूततनयस्य तदाऽव्यलीकाः" माघः ।

**अव्यवधान** न॰ अभावे न॰त॰ । १व्यवधानाभावे नैकट्ये "यत् पदार्थस्य यत् पदार्थेनान्वयोऽपेक्षितस्तयोरव्यवधाने नोपस्थितिः कारणम्" आसत्तौ शक्ति॰ । न॰ब॰ । २व्यवधानशून्ये अव्यवधानञ्च द्विविधं देशकृतं कालकृतञ्च। पूर्व्वोत्तरक्षणादौ कालिकं द्रव्यान्तरेणानावरणे दैशिकम्।

**अव्यवसाय** पु॰ व्यवसायः निश्चय उद्यमश्च अभावे न॰त॰ । १निश्चयाभावे२उद्यमाभावे च।न॰ब॰।३व्यवसायशून्ये त्रि॰।

**अव्यवसायिन्** त्रि॰ न व्यवस्यति वि+अव—सो—णिनि न॰त॰ । १उद्यमाभाववति अनुद्यते २निश्चयाभाववति निश्चयशून्ये । "बुद्धयोऽव्यवसायिनाम्" गीता ।

**अव्यवस्था** स्त्री वि+अव+स्था—अङ् अभावे विरोधे वा न॰त॰। "इदं कर्त्तव्यमिदं नेति" १नियमाभावे, २शास्त्रादिविहितायां व्यवस्थायाम् अविधौ च । "किमव्यवस्थाच्छलितोऽपि केशवः" माघः । न॰ब॰ । ३मर्य्यादाशून्ये ४अविहिते ५स्थितिरहिते चले च त्रि॰।"स्फुलारविन्दस्थितिमव्यवस्थामिति" कुमारः "अव्यवस्थां वस्तुधारिणीम्" भट्टि॰ ।

**अव्यवस्थित** त्रि॰वि+अव—स्था+क्त न॰त॰। १शास्त्रादिमर्य्यादारहिते २अनियतरूपे "अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः" नीति॰ ३चञ्चले च ।

**अव्यवहार्य्य** त्रि॰ वि+अव+हृ—ण्यत् न॰त॰ । शयनासनभोजनादौ एकत्रावस्थानायोग्ये पतितादौ "कामतोऽव्यवहार्य्यस्तु वचनादिह जायते"स्मृतिः। अव्यवहार्य्यास्तु पातित्यहेतुकर्म्मकारिणः सूतादुक्ताश्चेद्याश्चेषां संसर्गविशेषोऽपिनिषिद्धः यथा "याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्। कृत्वा सद्यः पतन्त्येते पतितेन न संशयः" देवलः "शरणागतबालस्त्रीहिंसकान् संवसेन्न तु । चीर्णव्रतानपि सदा कृतघ्नसहितानपि" या॰स्मृ॰। स्त्रीघातकस्याव्यवहार्य्यत्वञ्च हीनवर्णोपभुक्ताव्यतिरिक्तविषयम् "हीनवर्णोपभुक्ता या त्याज्या वध्याऽपि वा भवेत्"इह॰स्मृतौ तस्या वध्यत्वोक्तेः अत्र कृतप्रायश्चित्तानामपि अव्यवहार्य्यतोक्तेः अकृतप्रायश्चित्तानां सुतरां तथात्वम् तच्च शङ्कापूर्व्वं प्रा॰त॰ रघुनन्दनेन समर्थितं यथा । "पापाभावे कथमव्यवहार्य्यता" इति चेत् या॰स्मृतौ वचनादिह जायते इत्युक्तेस्तथात्वम् । तथाच किमिव वचनं न कुर्य्यात् नास्ति वचनस्यातिभारः तथाहि पापस्य द्वे शक्ती नरकोत्पादिका व्यवहारविरोधिका च । तत्रैकतरशक्तिविनाशेऽपि व्यवहारविरोधिका शक्तिरस्त्येवेति यथोक्तमापस्तम्बेन "नास्याश्मिन् लोके प्रत्यापत्तिर्विद्यते कल्मषन्तु निहन्यते" इति प्रत्यापत्तिर्भोजनादौ सान्निध्यम्" मिताक्षरायान्तु कामतो व्यवहार्य्य इत्येव पाठः तथैव तेन व्याख्यातं च "प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्य्यस्तु वचनादिह जायते" या॰स्मृ॰। "प्रायश्चित्तैः वक्ष्यमाणैरज्ञानाद्यदेनः पापं कृतं तदपैति अपगच्छति न कामतः कृतम्" किन्तु तत्र प्रायश्चित्तविधायकवचनबलादिह लोके व्यवहार्य्यो जायते इति" समर्थितवायमर्थं आशङ्कापूर्व्वकं तत्रैव यथा "ननु कामकृते प्रायश्चित्ताभावात् कथं व्यवहार्य्यत्वम् ? तदभावश्च "अनभिसन्धिकृतेऽपराधे प्रायश्चित्तमिति" वसिष्ठवचनात्, "इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" इति मनुवचनाच्चावगम्यते । नैतत्।

"यः कामतो महापापं नरः कुर्य्यात् कथञ्चन । न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते" इति । तथा "विहितं यदकामानां कामात्तद्द्विगुणम्भवेदिति" च कामकृतेऽपि प्रायश्चित्तदर्शनात् । यत्तु वशिष्ठवचनम् तस्याप्यकामकृतेऽपराधे प्रायश्चित्तं शुद्धिकरमित्यभिप्रायः, न पुनः कामकृते प्रायश्चित्ताभाव इति । यत्तु मनुवचनम् "इयं विशुद्धिरुदितेत्यादि" तदपीयमिति सर्वनामपरामृष्टद्वादशवार्षिकव्रतचर्य्याया एव "कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" इत्यनेन प्रतिषेधो, न पुनः प्रायश्चित्तमात्रस्य, मरणान्तिकादेः प्रायश्चित्तस्य दर्शनात् । ननु यदि कामकृतेऽपि प्रायश्चित्तमस्ति तर्हि पापक्षयोऽपि कस्मान्न स्यादविशेषात् ? यदि पापक्षयोऽपि नास्ति तर्हि व्यवहार्य्यतापि कथम्भवति? उच्यते उभयत्र प्रायश्चित्ताविशेषः शास्त्रतोऽवगम्यते । अज्ञानकृते सर्व्वत्र पापक्षयः यत्र तु "ब्रह्महासुरापगुरुतल्पगमातृपितृयोनिसम्बन्धागमस्तेननास्तिकनिन्दितकर्म्माभ्यासिपतितात्यागपतितत्यागिनः पतिताः पातकसंयोजकाश्चेति" गौतमोक्तं महापातकादौ व्यवहार्य्यत्वं निषिद्धं तस्मिन् पतनीये कर्म्मणि कामतः कृते व्यवहार्य्यत्वमात्रं न पापक्षय इति । न च पापक्षयाभावे व्यवहार्य्यत्वमनुपपन्नम् । द्वे हि पापस्य शक्ती नरकोत्पादिका व्यवहारविरोधिका च तत्रैकतरशक्तिविनाशेऽपि व्यवहारविरोधिकायाः शक्तेर्विनाशोनानुपपन्नत्वात् पापानपगमेऽपि व्यवहार्य्यत्वं नानुपपन्नम् । यत्तु मनुवचनम् "अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः । कामकारकृतेऽप्याहुरेके श्रुतिनिदर्शनादिति" तदपि कामकृतेऽपि प्रायश्चित्तप्राप्त्यर्थं न पुनः पापक्षयप्रतिपादनपरम् । अपतनीये पुनः कामकृतेऽपि प्रायश्चित्तेन पापक्षयो भवत्येव । "अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैरिति" मनुस्मरणात् । पतनीयेऽपि कर्म्मणि कामकृते मरणान्तिकप्रायश्चित्ते कल्मषक्षयोभवत्येव फलान्तराभावात् । "नास्यास्मिन् लोके प्रत्यापत्तिर्विद्यते कल्मषन्तु निर्हण्यत इत्यापस्तम्बस्मरणात्" इति ।

**अव्यवहित** त्रि० वि+अव+धा-क्त न०त० । व्यवधानरहिते साक्षात्संबद्धे । "सिसाधयिषाविरहविशिष्टसिद्ध्यभावाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्नेति" दीधितिः ।

**अव्यवहृत** त्रि० वि+अव+हृ-क्त न०त० । १अकृतव्यवहारे यस्य व्यवहारो न कृतः तस्मिन् भोगादिना २अदूषिते च

**अव्यसन** न० अभावे न०त० । १व्यसनाभावे न०ब० । व्यसनशून्ये । व्यसनानि च अष्टादश मनुना दर्शितानि यथा "दश कामसमुत्थानि तथाष्टौ क्रोधजानि च । व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् । कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्म्माभ्यां क्रोधजेष्वात्मनैव तु ॥ मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियोमदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्षासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ द्वयोरप्येतयोर्मूलं यं सर्व्वे कवयोविदुः । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ । पानमक्षाःस्त्रियश्चैव मृगया च यथाक्रमम् । एतत् कष्टतमं विद्याच्चतुष्कं कामजे गणे । दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा । सप्तकस्यास्य वर्गस्य सर्व्वत्रैवानुषङ्गिणः । पूर्व्वंपूर्व्वं गुरुतरं विद्याद्व्यसनमात्मवान्" ।

**अव्यसनिन्** त्रि० न०त० स्त्रियां ङीप् । व्यसनशून्ये ।

**अव्यस्त** त्रि० न व्यस्तः विक्षिप्तः विपर्य्यस्तः पृथग्भूतो वा । १अविक्षिप्ते २अविपर्य्यस्ते ३समस्ते च । [अव्ययादयोऽप्यत्र

**अव्याकुल** त्रि० न०त० । निराकुले स्वच्छन्दे स्वस्थे ।

**अव्याकृत** त्रि० वि+आ+कृ-क्त न०त० । वेदान्तमते अप्रकटीभूते १वीजरूपे जगत्कारणेऽज्ञाने २सांख्यादिमते प्रधाने च । "तद्वेदं तर्ह्यव्याकृतमासीत्" श्रुतिः । "सदेव सौम्येदमग्र आसीत्" छा०उ०भा० "इदं नामरूपाभ्यामव्याकृतम्"

**अव्याज** पु० न० अभावे न०त० । १छलाभावे "इदं किलाव्याजमनोहरं वपुः" शकु० । अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता" मालवि० । न०ब० । २तच्छून्ये त्रि० व्याजश्च यथार्थभूतस्य वस्तुनः स्वरूपनिह्नवेन इतररूपेण प्रकाशार्थः व्यापारभेदः ।

**अव्यापक** त्रि० न०त० । १व्यापकभिन्ने २परिच्छिन्ने च । व्यापकश्च स्वाधिकरणनिष्ठाभावाप्रतियोगी तद्भिन्नत्वात्तथाभाव प्रतियोगी अव्यापकः यथा धूमो वह्नेरव्यापकः तस्य वह्न्यधिकरणे तप्तायःपिण्डे वर्त्तमानस्याभावस्य प्रतियोगित्वात् "अव्यापकविषयताशून्यत्वम्" शाभा० गदा० ।

**अव्यापार** पु० अभावे न०त० । १व्यापाराभावे न०ब० । २व्यापारशून्ये । व्यापारश्च करणजन्यः क्रियाया अव्यवहितजनकः । यथा प्रत्यक्षज्ञाने इन्द्रियसन्निकर्षः । सहि इन्द्रियादुत्पन्नः प्रत्यक्षं जनयन् व्यापारो भवति एवं छिदिक्रियायां दात्रच्छेद्यसंयोगः । यथा यागादौ अदृष्टम्, अनुमितौ परामर्शः, शाब्दबोधे पदार्थस्मरणम् इत्यादि यथायथ-

सहाम्। तथा "उत्पादना क्रियाऽपि व्यापारः "व्यापारो-भावना सैवोत्पादना सैव च क्रिया" हरिः।

**अव्यापिन्** त्रि० न व्याप्नोति वि–आप णिनि न०त० स्त्रियां ङीप्। १अव्यापके २परिच्छिन्ने च "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" सां०सू०सा०का०च। "अव्यापित्वं परिच्छिन्नत्वम्" सां०प्र०भा०।

**अव्याप्त** त्रि०न व्याप्तः। १व्याप्तभिन्ने इयत्तया २परिच्छिन्ने च।

**अव्याप्ति** स्त्री अभावे न०त०। १व्याप्तेरभावे। व्याप्तिश्च तदभाववदवृत्तित्वम् व्यापकसामानाधिकरण्यमनौपाधिकत्वं स्वाभेयतादिवत् वस्तुस्वभावविशेषोवा मतभेदेन ज्ञेया। २लक्ष्ये लक्षणस्याप्रवृत्तौ च "अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह" दीधितिः।

**अव्याप्य** त्रि० व्याप्तिविशिष्टोव्याप्यः न०त०। व्याप्तिविशिष्टभिन्ने १व्याप्तिशून्ये यथा वह्निर्धूमस्य अव्याप्यः वह्न्यधिकरणे तप्तायःपिण्डे धूमस्यावृत्तेः तथात्वम्। वि+आप–ल्यप् न०त०। २सर्व्वावच्छेदमप्राप्येत्यर्थे अव्य०।

**अव्याप्यवृत्ति** त्रि० अव्याप्य सर्व्वावच्छेदमप्राप्य वृत्तिर्यस्य। स्वाधिकरणे अंशविशेषे कालभेदे वा अस्थिते पदार्थे यथा संयोगादिर्घटादिश्च न सर्व्वदेशं व्याप्य स्वाधिकरणे वृक्षादौ तिष्ठति। तथा आत्मनि ज्ञानादिकं न सर्व्वदा तिष्ठति। अतः संयोगादीनां स्वाधिकरण एव अंशभेदे कालभेदे च असत्त्वात्तथात्वम्। अव्याप्यवृत्तिनियामकश्च देशः कालश्च तत्र देशे सत्त्वे क्वचित् कालस्य देशभेदस्य वा नियामकत्वं क्वचित् कालसत्त्वे देशस्य इति अव्याप्यवृत्तयश्च संयोगविभागादयो दैशिकाः कालिकाश्च तथा आत्मनि बुद्धिसुखदुःखेच्छाद्वेषयत्नधर्माधर्मभावनाख्यसंस्काराः तेषां देहावच्छेदेन सत्त्वेऽपि घटाद्यवच्छेदेनासत्त्वात् देहावच्छेदेऽपि सर्व्वदाऽसत्त्वाच्च तथात्वम् एवं शब्दस्य दैशिककालिकाव्याप्यवृत्तित्वम् गन्धादयस्तु कालिकाव्याप्यवृत्तयस्ते हि स्वाधिकरणे एव उत्पत्तिकाले मलये च परमाणौ न तिष्ठन्ति। संयोगेन घटादयोऽपि दैशिककालिकाव्याप्यवृत्तयः। "अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते" भाषा० "अव्याप्यवृत्तिसाध्यकसद्धेताविति" दीधितिः।

**अव्यायाम** पु० अभावे न०त०। १व्यायामाभावे परिश्रमसाधनव्यापाराभावे २विशेषेण विस्ताराभावे च न०ब०। ३तच्छून्ये त्रि०।

**अव्यावर्त्तक** त्रि० न व्यावर्त्तयति इतरेभ्यो निवारयति वि+आ+वृत–णिच्–ण्वुल् न०त०। १इतरादव्यवनिवारके २इतरस्माद्भेदासाधके ३अविशेषके च।

**अव्यावर्त्तन** न० वि+आ–वृत–णिच्–ल्युट् अभावे न०त०। इतरस्मादनिवारणे न०ब०। व्यावृत्तिशून्ये त्रि०।

**अव्याहत** त्रि० विशेषेणाहतः प्रतिरुद्धः न०त०। व्याघातशून्ये व्याघातश्च विरोधप्रतिसन्धानेनाप्रसङ्गः २अप्रतिरुद्धे च। "अव्याहताज्ञः सर्व्वत्र" पुरा० व्याहतं मिथ्यार्थकं तद्भिन्ने ३सत्ये वाक्ये न०।

**अव्याहतत्व** न० अव्याहतस्य भावः त्व। १व्याघाताभावे हेमचन्द्रोक्ते २वाक्यगुणभेदे च ते च गुणाः यथा "संस्कारवत्त्वमौदार्य्यमुपचारपरीतता। मेघनिर्घोषगाम्भीर्य्यं प्रतिनादविधायिता॥ दक्षिणत्वमुपनीतरागत्वं च महार्थता। अव्याहतत्वं शिष्टत्वं संशयानामसम्भवः॥ निराकृतान्योत्तरत्वं हृदयङ्गमिताऽपि च। मिथःसाकाङ्क्षताप्रस्तावौचित्यं तत्त्वनिष्ठता॥ अप्रकीर्णप्रसृतत्वमसंश्लाघान्यनिन्दिता। आभिजात्यमतिस्निग्धमधुरत्वं प्रशस्तता॥ अमर्म्मवेधितौदार्य्यं धर्म्मार्थप्रतिबद्धता। कारकाद्यविपर्य्यासोविभ्रमादिवियुक्तता॥ चित्रकृत्त्वमद्भुतत्वं तथानतिविलम्बिता। अनेकजातिवैचित्र्यमारोपितविशेषता॥ सत्त्वप्रधानता वर्णपदवाक्यविविक्तता। अव्युच्छित्तिरखेदित्वमष्टत्रिंशच्च वाग्गुणाः"॥

**अव्युत्पन्न** त्रि० वि+उद्+पद–क्त न०त०। समुदायशब्दस्यावयवयोऽर्थबोधकताशक्तिः व्युत्पत्तिः तच्छून्ये अवयवार्थशून्ये शब्दे "उणादयोऽव्युत्पन्नाः प्रातिपदिकम्" पा०। २शब्दावयवार्थानभिज्ञे अवैयाकरणे च।

**अव्युत्थिति** स्त्री वि+उद्+स्था–क्तिन् अभावे न०त०। उत्थानाभावे २वाक्यगुणभेदे च अव्याहतत्वशब्दे विवृतिः।

**अव्रण** त्रि० नास्ति व्रणोऽस्य। १व्रणशून्ये व्रणश्च क्षतादि "तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम्। कनिष्ठिकापरीणाहमृज्वपायतमव्रणम्" सुश्रु० २नेत्ररोगभेदे "यत् सव्रणं शुक्रमथाव्रणं वा पाकात्ययश्चाप्यजका तथैव। चत्वार एतेऽभिहिता विकाराः कृष्णाश्रयाः संग्रहतः पुरस्तात्" इति विभज्य, तल्लक्षणमुक्तं सुश्रुते "सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रुयुक्तम्। विहायसीवाभ्रदलानुकारि तदव्रणं साध्यतमं वदन्ति" "अनेनापहरेच्छुक्रमव्रणं कुशलोभिषक्" सुश्रु०।

**अव्रत** त्रि० नास्ति व्रतं विहितनियमो यस्य। शास्त्रविहितनियमशून्ये "अव्रतानाममन्त्राणां जातिमात्रोपजी-

विनाम्। नैषां प्रतिग्रहोदेशो न शिला तारयेच्छि-लाम्” मनुः।

**अव्रत्य** त्रि॰ व्रताय हितम् यत् न॰त॰। व्रतकाले-ऽनाचरणीयेऽन्नृतकथनादौ “अव्रत्यं वा व्याहरति तन्मिथ्या करोति व्रतम्” शत॰ब्रा॰।

**अश** संहतौ-व्याप्तौ च स्वादि॰आत्म॰ सक॰ वेट्। अश्नुते आशिष्ट आष्ट आनशे। अशिता—अष्टा अक्ष्यते-अशिष्यते अश्नुवानः अंष्टः व्यष्टिः समष्टिः “स माष्टयेऽश्वैरिव वानरोऽन्दैः” भट्टिः “प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः” रघुः।

**अश** भोजने क्र्यादि॰ पर॰सक॰ सेट्। अश्नाति आशीत्। आश। अशिता अशिष्यति। “त्र्यहं परस्य नाश्नीयात् प्राजापत्यं चरन् द्विजः” मनुः “तदहं भक्त्युपहृतम-श्नामि प्रयतात्मनः” गीता।

**अशकुन** पु॰ न॰अप्राशस्त्ये न॰त॰। दुर्निमित्ते अनिष्टसूचके काकादिदर्शने। अशकुनाश्च द्विविधा औत्पातिकाः साधरणाः काकादिदर्शनादयोऽसाधारणाः। अमङ्गलशब्दे २१७, १८ पृष्ठे विवरणम् “अपयाति सरोषया निरस्ते कृतकं कामिनि चुक्षुवे मृगाक्ष्या। कलयन्निव सव्यथोऽ-वतस्थेऽशकुनेन स्खलितं” किलेतरेण” माघः। “सा-हस नैषाशकुनीभवेन्मे भाविप्रियावेदक एष हंसः” नैष॰।

**अशक्त** त्रि॰ न॰त॰ “समर्थभिन्ने १कार्य्याक्षमे” २पूर्व्वोत्पन्न-मशक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्” सां॰का॰।

**अशक्ति** स्त्री अभावे न॰त॰। १सामर्थ्याभावे “श्रमेण तद-शक्त्या वा न गुणानामियत्तया” रघुः। २अपाटवे सांख्य-मतसिद्धे बुद्धेः ३ज्ञानजननासामर्थ्यभेदे च सा च “एष प्रत्ययसर्गो विपर्य्ययोऽशक्तितुष्टिसिद्ध्याख्यः” इति सामान्यत उक्त्वा “पञ्च विपर्य्ययभेदाः भवन्त्यशक्तिश्च करणवैकल्यात्। अष्टाविंशतिभेदा” इति। अशक्तीर्विभज्य “एकादशेन्द्रिय वधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा। सप्तदश वधा बुद्धेर्विपर्य-यात् तुष्टिसिद्धीनाम्” सां॰का॰ “बाधिर्यं, कुष्ठिताऽन्धत्वं, जडताऽजिघ्रता तथा। मूकता, कौण्यपङ्गुत्वक्लैव्योदा-वर्त्तमन्दताः”। यथासंख्यं श्रोत्रादीनामिन्द्रियाणां वधाः एतावन्त्येव तद्धेतुका बुद्धेरशक्तिः स्वव्यापारे भवति। तथाचैकादशहेतुकत्वादेकादशधा बुद्धेरशक्ति रुच्यते। हेतुहेतुमतोरभेदविवक्षया च सामानाधि-करण्यम्। तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूप-तोऽशक्तीराह सह बुद्धिवधैरिति। कति बुद्धेः स्वरूपतोवधा इत्यत आह सप्तदश वधा बुद्धेः, कुतः? विपर्य्ययात्तुष्टि-सिद्धीनाम्, तुष्टयोनवधेति तद्विपर्य्ययास्तद्विरूपणान्नवधा भवन्ति। एवं सिद्धयोऽष्टाविति तद्विपर्य्ययास्तद्विरूपणात् अष्टौ भवन्तीति” सां॰कौ॰दर्शिता। व्याख्यातञ्च तदस्मा-भिः “पूर्व्वार्द्धे ज्ञानेन्द्रियाणाम् अपाटवमुत्तरार्द्धे कर्मेन्द्रिया-णामिति मनसस्तु उभयेन्द्रियानुकूल्यादन्तेऽभिनिवेश इति भेदः। तत्र बाधिर्य्यं श्रोत्रगतं शब्दग्रहणापाटवम्। कुष्ठिता त्वग्गतं स्पर्शग्रहणापाटवम्। अन्धत्वं नेत्रगतं रूपग्रहणापाटवम्। जडता रसनागतं रसग्रहणा-पाटवम्। मूकता वागिन्द्रियगतं वचनापाटवम्। कौण्यं हस्तगतमादानापाटवम्। पङ्गुत्वं पादगतं चलना-पाटवम्। क्लैव्यमुपस्थगतं मैथुनासामर्थ्यम्। उदावर्त्तः अपानगतं विष्ठोत्सर्गासामर्थ्यम्। मन्दता मनोगतं सुखा-दिविषयग्रहणासामर्थ्यम्। एकादशेति पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेति एकादशेन्द्रियाणां वधाः स्वस्व-कर्म्माक्षमत्वरूपा धर्मभेदाः तद्धेतुकत्वात् बुद्धेः स्वविषयाग्र-हणमिष्यते अतो बुद्धेरशक्तिरेकादशविधैवेत्याह तथा चेत्या-दि। ये बुद्धेः सप्तदश भेदा उत्तरार्द्धे वक्ष्यन्ते तैः सप्तदशभिः सह मिलिता एकादश भेदाः अष्टाविंशतिभेदाः स्युः। तथा च शक्तिरष्टाविंशतिभेदा इति यदुक्तं तत् समर्थितमिति”

**अशकुम्भी** स्त्री अश्नुते व्याप्नोति अश—अच् अशा स्कुभ्नाति जलमाप्नोति स्कुम्भ—बा॰—ड पृषो॰सलोपः टित्त्वात् ङीप् कर्म्म॰। अल्पकालेन जलव्यापके जलोपरिजाते (पाना) इति ख्याते तृणभेदे।

**अशक्य** त्रि॰ न शक्यते शक—यत् न॰त॰। असाध्ये “अश-क्यशङ्कव्यभिचारहेतुर्वाणी न वेदा यदि सन्तु के तु” नैष॰।

**अशङ्का** स्त्री अभावे न॰त॰। १संशयाभावे २त्रासाभावे च न॰त॰। ३तच्छून्ये त्रि॰।

**अशङ्कित** त्रि॰ शकि—क्त न॰त॰। १अभीते २सन्देहरहिते च।

**अशत्रु** पु॰ न शातयति शद्—णिच् तुन् न॰त॰। १चन्द्रे शब्दच॰। विरोधे न॰त॰। शत्रुभिन्ने २मित्रे च।

**अशन** न॰ पु॰ अश्नुते व्याप्नोति अश-ल्यु। १पीतसालवृक्षे दन्त्यमध्योऽप्ययमत्रार्थे। भावे ल्युट्। २व्याप्तौ, ३भोजने च “ऋत्विग्भिर्हि रशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्” ति॰त॰स्मृ॰। कर्म्मणि ल्युट्। ४भोज्ये अन्ने न॰ “पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्। दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्व्वशः। पूजितं ह्यशनं नित्यं बल-मूर्जञ्च यच्छति। अपूजितं च तद्भुक्तम्” मनुः। “एवं

प्रयत्नं कुर्व्वीत यानशय्यासनाशनैः” मनुः “अशनपते ! अशनस्य नोदेहि” शत० ब्रा०।

**अशनपर्णी** स्त्री अशनस्य पीतशालस्य पर्णमिव पर्णमस्याः। (आराटो) इति ख्याते वृक्षभेदे सा हि पीतसालतुल्यपर्णा।

**अशना** स्त्री अशनमिच्छति—अशन+क्यच् क्विप्। भोजनेच्छायाम्। शकाद्यचि अशन इत्यादि। “अशनापिपासे सौम्य ! विजानीहि” छा० उ०।

**अशनाया** स्त्री अशनमिच्छति अशन+क्यच्-स्त्रियाम् भावे अ। भोजनेच्छायाम्। “च्युताशनायः फलवद्विभूत्या” भट्टिः “अन्नाद्वा अशनाया निवर्त्तते पानात् पिपासा” शत० ब्रा०।“अशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुत” बृ० उ०।

**अशनायित** त्रि० अशनमिच्छति अशन+क्यच्-कर्त्तरि क्त। १भोजनेच्छावति क्षुधिते। भावे क्त। २भोजनेच्छायां न०

**अशनायुक** त्रि० अशनमिच्छति अशन+क्यच्-उकञ्, उन् स्वार्थे कन् वा। भोजनाभिलाषुके।“अन्नमेव तन्माध्यतो धीयते ऽशनायुको यजमानो भवत्यशनायुकाः प्रजाः” ता० ब्रा०।

**अशनि** पुं० स्त्री अश्नुते संहन्ति अश-अनि। १मेघोत्पन्ने १ज्योतिषि २इन्द्रे “स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिः कतमः स्तनयित्नुरशनिः” शत० ब्रा० शतुघातके ३अनुयाजे “अशनिरेव प्रथमोऽनुयाज” इत्युपक्रम्य “अशनिरिन्द्रोऽहन्नि” शत० ब्रा० ४इन्द्रास्त्रे वज्रे, प्रस्तरवर्षिणि ५उल्काविशेषे, ६विद्युति च। “अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः कुमा० ७अग्नौ ८विद्युदग्नौ “तमब्रवीदशनिरसीति तद्यदस्य तन्नामाकरोद्विद्युत्तद्रूपमभवद्विद्युद्वा अशनिस्तस्माद्यं विद्युद्धन्त्यशनिरवधीदित्याहुः” शत० ब्रा०। वज्रं च वृत्रासुरवधार्थमिन्द्रेण दधीचोऽस्थीनि गृहीत्वा विश्वकर्म्मणा कारितमिति भाग० ६स्क०। “मघवन् ! यात भद्रं वो दध्यञ्चमृषिसत्तमम्। विद्याव्रततपःसारं गात्रं याचत मा चिरम्। स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम्। यद्वा अश्वशिरो नाम तयोरमरतां व्यधात्। दध्यङ्ङाथर्व्वणस्त्वष्ट्रे वर्म्माभेद्यं मदात्मकम्। विश्वरूपाय यत् प्रादात्त्वष्टा यत्त्वमधास्ततः। युष्मभ्यं याचितोऽश्विभ्यां धर्म्मज्ञोऽङ्गं स दास्यति”। ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्म्मितः। येन वृत्रशिरो हर्त्ता मत्तेजउपबृंहितः”। इति विष्णुनोक्तेनेन्द्रेण तथा कृते स आह “तथाभियाचितो देवैर्ऋषिराथर्व्वणो महान्। मोदमान उवाचेदं प्रहसन्निव भारत !। अपि वृन्दारकायूयं न जानीत शरीरिणाम्। संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः। जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः। क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे” इति दधीचोक्ते देवैः पुनरुक्तम् यथा “किं नु तद्दुस्त्यजं ब्रह्मन् ! पुंसां भूतानुकम्पिनाम्। भवद्विधानां महतां पुण्यश्लोकैककर्म्मणाम्। नूनं स्वार्थपरोलोको न वेद परसङ्कटम्। यदि वेद न याचेत नेति नाह यदीश्वरः। इत्युक्ते दधीचोक्तम् “धर्म्मं वःश्रोतुकामेन यूयं मे प्रत्युदाहृताः। एष वः प्रियमात्मानं त्यजन्तं सन्त्यजाम्यहम्। योऽध्रुवेणात्मना नाथा ! न धर्म्मं न यशः पुमान्। ईहेत भूतदयया स शोच्यः स्थावरैरपि। एतावानव्ययोधर्म्मः पुण्यश्लोकैरुपासितः। योभूतशोकहर्षाभ्यामात्मा शोचति हृष्यति। अहो दैन्यमहोकष्टं पारक्यैः क्षणभङ्गुरैः। यन्नोपकुर्य्यादस्वार्थैर्मर्त्यैः स्वज्ञातिविग्रहैः। श्रीबादरायणिरुवाच। “एवं कृतव्यवसितो दध्यङ्ङाथर्व्वणस्तनुम्। परे भगवति ब्रह्मण्यात्मानं सन्नयन् जहौ। यताक्षासुमनोबुद्धिस्तत्त्वदृग् ध्वस्तबन्धनः। आस्थितः परमं योगं न देहं बुबुधे-ऽगतम्। अथेन्द्रो वज्रमुद्यम्य निर्म्मितं विश्वकर्म्मणा। मुनेः शक्तिभिरुत्सिक्तं भगवत्तेजसान्वितम्”।

**अशब्द** त्रि० नास्ति शब्दो, वेदादौ वाचकशब्दो वा यस्य। १शब्दहीने, वेदे २वाचकशब्दवर्जिते प्रधाने “ईक्षतेर्ना-शब्दमिति” शारीरकसूत्रम् ३शब्दादिगुणहीने ब्रह्मणि च न० “अशब्दमस्पर्शमरूपमव्ययमिति” श्रुतिः

**अशरीर** त्रि०नास्ति शरीरं तदभिमानो वा यस्य। “मत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके। नेतिनेतिस्वरूपत्वादशरीरो भवत्ययम्” इत्युक्तलक्षणे सकलनिषेधरूपे १परमात्मनि,२शरीराभिमानशून्ये जीवन्मुक्ते “अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः” इति श्रुतिः। ३देहशून्ये ४मीमांसकोक्ते देवे ५ईश्वरे च परमात्मस्वरूपत्वात् ईश्वरस्याशरीरत्वम् “तदैक्षत बहु स्यां प्रजायेति श्रुत्या तस्येक्षितृत्वं यदुक्तं तदसङ्गतं शरीरं विना ज्ञानानुपपत्तेरित्याशङ्कापूर्व्वकं शा० भा० तत् समर्थितं यथा “प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसंबन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति न तच्चोद्यमवतरति सवितृप्रकाशवत् ब्रह्मणोज्ञानस्वरूपनित्यत्वेन ज्ञानसाधनापेक्षानुपपत्तेः। अपि च अविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात् न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य। मन्त्रौ चैतावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः।“न तस्य कार्य्यं करणञ्च विद्यते न

तत्समवाय्यधिकश्च दृश्यते।परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति" "अपाणिपादोजवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति" च। ननु नास्ति तव ज्ञानप्रतिबन्धकारणवानीश्वरादन्यः संसारी।"नान्योऽतोऽस्ति द्रष्टेति विज्ञातेति"श्रुतेः तत्र किमिदमुच्यते संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिर्नेश्वरस्येति। अत्रोच्यते सत्यं नेश्वरादन्यः संसारी तथापि देहादिसंघातोपाधिसंबन्ध इष्यतएव घटकरकगिरिगुहाद्युपाधिसंबन्ध इव व्योम्नः, तत्कृतशब्दप्रत्ययव्यवहारो लोकस्य दृष्टश्च, घटच्छिद्रं करकच्छिद्रमित्यादिराकाशाव्यतिरेकेऽपि तत्कृता चाकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा तथेहापि देहादिसंघातोपाधिसंबन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः। दृश्यते चात्मन एव सतोदेहादिसंघातेऽनात्मन्यात्माभिनिवेशो मिथ्याबुद्धिमात्रेण सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः" भा०।मोक्षस्यापि अवास्तविकं सशरीरत्वं तदपि तत्रैव व्यवस्थापितं यथा "शरीरे पतितेऽशरीरत्वं स्यान्न जीवत इति चेत् न सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्। नह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वा अन्यतः सशरीरत्वं शक्यं कल्पयितुम् नित्यमशरीरत्वम् अकर्मनिमित्तत्वादिति चावोचाम। तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेत् शरीरसम्बन्धस्यासिद्धत्वात् धर्माधर्मयोरात्मकृतत्वासिद्धेः। शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गात्। अन्धपरम्परैषाऽनादित्वकल्पना क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः। सन्निधिमात्रेण राजप्रभृतीनां दृष्टं कर्तृत्वमिति चेन्न धनदानाद्युपार्जितभृत्यसंबन्धत्वात् तेषां कर्तृत्वोपपत्तेः। नह्यात्मनोधनदानादिवच्छरीरादिभिः स्वस्वामिसम्बन्धनिमित्तं किञ्चिच्छक्यं कल्पयितुम् मिथ्याभिमानस्तु प्रत्यक्षः सम्बन्धहेतुः" शा०भा०।

**अशरीरत्व** न० अशरीरस्य भावः त्व। १शरीरसम्बन्धराहित्ये २मोक्षे च। यथा मोक्षस्याशरीरत्वं तथोक्तं शा० भा०। "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्य्यत्वं मोक्षाख्यस्याशरीरत्वस्य प्रतिषिध्यत इति गम्यते। धर्मकार्य्यत्वे हि प्रियाप्रियस्पर्शनप्रतिषेधोनोपपद्यते। अशरीरत्वमेव धर्मकार्य्यमिति चेत् तस्य स्वाभाविकत्वात्। "अशरीरं शरीरेषु अनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति" "अप्राणोह्यमनाः शुभ्रः असङ्गोह्ययं पुरुष" इत्यादि श्रुतिभ्यः। अतएवानुष्ठेयफलविलक्षणं मोक्षाख्यमशरीरत्वं नित्यमिति सिद्धम्"। अयं भावः अमावस्याधिकरणानतिरेकेण शरीरसम्बन्धाभावस्य ब्रह्मरूपतया मोक्षस्य तदभिन्नतया च तथात्वम् इति।

**अशरीरिन्** त्रि०न शरीरी।१देहशून्ये ब्रह्मणि २मीमांसकोक्ते देवमात्रे च। शरीरशुश्रूषारविलक्षे नाम्न्यस्य इनि न०त०। ३शरीरेणानुचार्य्ये आकाशशब्दे। उभयत्र स्त्रियां ङीप्। "वागुवाचाशरीरिणी" मा०आ०प०। [शून्ये त्रि०।

**अशर्म्मन्** न०विरोधे न०त०। १शर्म्मभिन्ने दुःखे न०ब०। २सुख

**अशाखा** स्त्री नास्ति शाखा यस्याः। शुचीतृणे राजनि०। २शाखाशून्ये वृक्षमात्रे त्रि०।

**अशान्त** त्रि० विरोधे न०त०। शान्तभिन्ने शमहीने "नास्ति बुद्धिरयुक्तस्य—अशान्तस्य कुतः सुखम्" गीता। [त्रि०।

**अशान्ति** स्त्री अभावे न०त०। १शमाभावे न०ब०। २शमशून्ये

**अशाश्वत** त्रि० न शाश्वतः। अनित्ये अस्थिरे।

**अशासन** त्रि०अभावे न०त०। १शासनाभावे न०त०। २शासनशून्ये। [वेदादिविरुद्धे नास्तिकागमादौ।

**अशास्त्र** न० शास–करणे ष्ट्रन् शास्त्रं वेदादि विरोधे न०त०।

**अशास्त्रीय** त्रि० शास्त्रे विहितः छ न०त०। शास्त्राविहिते निषिद्धे।

**अशास्य** त्रि० शास–वा० ण्यत्। शासितुमशक्ये दुर्दान्ते।

**अशिक्षित** त्रि० विरोधे न०त०। शिक्षाशून्ये शक्तिनैपुण्यशून्ये हयादौ।

**अशित** त्रि० अश–कर्म्मणि क्त। १भक्षिते "आपएव तदशितं नयन्ति" "अन्नमशितं त्रेधा विधीयते" "तेजोऽशितं त्रेधा विधीयते" इति च छा०उ०। कर्त्तरि क्त। २कृतभोजनेन तृप्ते आशितङ्गवीनः भावे "क्त" ३अशने न०।

**अशित्र** पु० अश–संज्ञायां इत्र।१चौरे। भोजनार्थात् कर्म्मणि इत्र। देवभक्ष्ये २चरौ।

**अशिथिल** त्रि० विरोधे न०त०। शिथिलभिन्ने दृढे।

**अशिपद** त्रि०न शिपदः पदरोगभेदः वेदे पृ०सलोपः न०ब०। श्लिपदरोगशून्ये। "शिवा देवीरशिपदा भवन्तु सर्वाः" ऋ० ७,५०,४।

**अशिमिद** त्रि० "शिमिर्वधकर्म्मा" निरु० शिमिं हिंसां ददाति दा–क उप०स०। अहिंसके "अस्मा नद्यो अशिमिदा भवन्तु" ऋ० ७,५०,३।

**अशिर** पु॰ अश–इरच्। १राक्षसे २अग्नौ तस्य सर्व्वभक्षकत्वात्तथात्वम् ३भास्करे ४वायौ च तयोर्व्यापकत्वात्तथात्वम् ईनार्थो स्त्री टाप्।

**अशिरस्** पु॰ नास्ति शिरोऽस्य। १कबन्धे २अमस्तशून्ये त्रि॰।

**अशिरस्स्नान** न॰ न शिरसा स्नानम्। शिरोमज्जनशून्ये स्नाने।

**अशिव** न॰ विरोधे न॰त॰। १मङ्गलभिन्ने २तद्वति त्रि॰ ३[illegible] च पु॰न॰। ४अमङ्गलशब्दोक्ते तत्सूचके त्रि॰।

**अशिशिषा** स्त्री अशितुमिच्छा अश–सन्–भावे अ। भोजनेच्छायाम् "दृश्यते हुतकान्नौ प्राणस्याशिशिषाऽतो व्याददातीति" छा॰उ॰भा॰।

**अशिशु** पु॰ विरोधे न॰त॰। १शिशुभिन्ने तरुणे "जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः" इति स्मृत्युक्तवयोऽतिक्रान्ते २नववर्षवयस्के च। नास्ति शिशुर्यस्य। ३शिशुशून्ये त्रि॰। स्त्रियां ङीप् लोके, वेदेऽपि क्वचित् "आ धेनवो धुनयन्तामशिश्वीः" ऋ॰ ३,५५,१६। "नो मा तुलानोम्हेभ्यो धेनवोऽगुःस्तनाभुजो अशिश्वीः" ऋ॰ १,१२०,८।

**अशिष्ट** त्रि॰ न॰त॰। १उपदिष्टभिन्ने यस्य शासनं न कृतं तस्मिन्। शिष्टः साधुः विरोधे न॰त॰। २असाधौ साधुत्वञ्च वेदार्थे विश्वासवत्त्वमिति दिनकरी ३तद्भिन्ने नास्तिके ४वर्णसङ्करकारके व्यभिचारवति च "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया" वार्त्ति॰।

**अशिष्ठ** त्रि॰ अश्नाति अश–अच् अतिशायने इष्ठन्। १भोक्तृतमे २अग्नौ पु॰ तस्य सर्व्वभक्षकत्वात्तथात्वम्। "अशीतमेत्यशिष्ठो ह्यग्निः" शत॰ब्रा॰।

**अशीत** न॰ विरोधे न॰ त॰। १उष्णस्पर्शे २तद्वति त्रि॰। शीतं हिमं तद्बाधा न॰ब॰। हिमबाधाशून्ये त्रि॰ "अशीताकारवोमाचे" नीतिः। [अशीतकिरणादयोऽप्यत्र।

**अशीतकर** पु॰ अशीत उष्णः करो यस्य। उष्णांशौ सूर्य्ये

**अशीतम** पु॰ अश्नाति अश–बा॰इनि ततः तमप् वेदे दीर्घः। भोक्तृतमे अग्नौ "अशीतमेत्यशिष्ठो ह्यग्निः" शत॰ब्रा॰।

**अशीति** स्त्री दशानामवयवं दशतिः दशकम् अष्टगुणिता दशतिः नि॰ अशीत्यादेशः। अष्टगुणिते दशके (आशी) १संख्याभेदे, २तत्संख्यान्विते च। "अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके" या॰स्मृ॰। "अर्वागष्टादशवर्षीयादशीतेरूर्द्धमेव च" स्मृतिः अशीतिः परिमाणमस्य ठन्। अशीतिकः" तत्परिमिते त्रि॰।

**अशीर्षक** त्रि॰ नास्ति शीर्षं यस्य व्रीह्यादि॰ ठन्। अशीर्षवति १मस्तकशून्ये २अधमगण्ये च।

**अशील** न॰ विरोधे न॰त॰। १दुष्टशीले न॰त॰ २शीलशून्ये त्रि॰

**अशुच्** त्रि॰ नास्ति शुगस्य। शोकशून्ये।

**अशुचि** त्रि॰ विरोधे न॰त॰। १शौचशून्ये २अपवित्रे मूत्रादौ च। स्त्रियां ङीप्। "अशुच्योनैव तावन्त येन वैकारिकं हि तत्" शङ्खः। शुचितत्कालजीविनां कर्म्माधिकारित्वेनाशुचेः पर्य्युदस्तत्वम् "अशुचिद्रव्याणि च अशुद्धिशब्दे वक्ष्यन्ते" कृतानामुपवासानां श्राद्धादीनाञ्च सत्कर्मे। करोति यः चौरकर्म सोऽशुचिः सर्व्वकर्म्मसु" स्मृतिः "त्रिरात्रमशुचिर्भवेत्" स्मृतिः। अशुचित्वं च वैदिककर्म्मानर्हत्वप्रयोजको धर्म्मविशेषः तच्च कर्त्तृनिष्ठं द्रव्यनिष्ठञ्च। सूतकनिमित्तं दुष्टद्रव्यसंसर्गकृतञ्च कर्त्तृनिष्ठम्। द्रव्यनिष्ठन्तु वस्तुस्वभावकृतम् "यथा मलमूत्रपुरीषास्थि निर्गतं ह्यशुचि स्मृतम्। नारं स्पृष्ट्वा तु सस्नेहं सचेलं जलमाविशेदित्यादि स्मृत्युक्तं तत्संसर्गदुष्टद्रव्यनिष्ठञ्च अधिकमशुद्धिशब्दे वक्ष्यते। शुचिः शुभ्रः। तद्भिन्ने ३कृष्णवर्णे पु॰ ४तद्वति त्रि॰ स्त्रियां वा ङीप्। तस्य भावः अण् आशौचम् ष्यञ् आशौच्यम्। अशुचिभावे न॰ "आशौच्यात् विप्रमुच्येत ब्राह्मणान् स्वस्तिवाच्य च" स्मृतिः या पूर्व्वपदवृद्धिः अशौच्यमपि तत्रैव। अशुचौ भवः ष्यञ् वा पूर्व्वपदःदीर्घ अ(आ)शौच्यः तद्भवे त्रि॰।

**अशुद्ध** त्रि॰ विरोधे न॰त॰। १शुद्धभिन्ने सदोषे २अपवित्रे च दोषश्च नानाविधः व्याकरणादिलक्षणाननुसारित्वं शब्दस्य दोषः शास्त्रनिषिद्धतयाऽनुष्ठाने कर्म्मणां दोषः यथा हिंसादेः पापजनकतया सदोषता। स्नानाद्यपनेयमलादेश्च सदोषता विवरणमशुद्धिशब्दे। "सर्व्वतीर्थेष्वपि स्नातोह्यशुद्धः पुनरेव सः" स्मृतिः एतच्च मनःशुद्धिप्रशंसार्थवादः।

**अशुद्धि** स्त्री अभावे न॰त॰। १शुद्ध्यभावे दोषे न॰त॰। २शुद्धिशून्ये दुष्टे। तत्राशुद्धिस्तत्प्रतियोगितया शुद्धिश्च निरूपिता हेमाद्रौ श्रा॰ख॰। ततः सारांशः। अशुद्धिर्नाम कर्त्तृद्रव्यादेः स्पर्शनाद्यनर्हतापादको दोषविशेषः शुद्धिस्तदीयसंस्कारापादिता तच्छक्तिः। शुद्धिमतएव सकलकर्म्मविनियोगयोग्यत्वम् "श्रौतं स्मार्त्तं तथा कर्म्म कर्त्तव्यमधिकारिणा। शुचिना साधनैः शुद्धैः सम्यक् श्रद्धान्वितेन च" ब्रह्मा॰पुरा॰ उक्तेः। अतो यथाश्रद्धं शुचिना शुचिभिरेव द्रव्यैराचरणीयम्। ते चोभे अपि शास्त्रैकगम्ये। ननु किं शास्त्रेण लोकव्यवहारप्रसिद्धेः शुद्धाशुद्धयोः, व्यवहरत्येव हि लोको जुगुप्सितमूत्रपुरीषादिसंसृष्टं द्रव्यमशुद्धमिति प्रक्षालनाद्यपनीतगन्धञ्च शुद्धमिति, सत्यमयं

लोकव्यवहारः क्वचिदेव जुगुप्सितस्पर्शोपहतएव द्रव्ये, न सर्व्वत्र । तत्रापि सामान्यतश्चासौ व्यवहारो न द्रव्यदेशकालावस्थादिभेदकृतो, यथा शुद्ध्यशुद्धितारतम्य विशेषकृतः । अतः सर्व्वत्र विशेषतश्च शुद्ध्यशुद्ध्योः शास्त्रादेव निश्चयः । यस्तु चण्डालादिस्पर्शादावपि विशेषतश्च लोकव्यवहारः स तु शास्त्रमूलप्रसिद्धिमाश्रित्यैव यागदानहोमादिषु श्रेयःसाधनत्ववत् । कथं पुनः कार्य्यार्थपरेण धर्म्मशास्त्रेण शुद्ध्यशुद्धिरूपस्य सिद्धार्थस्यावगतिः ? श्रुतार्थापत्त्येति ब्रूमः । तथाहि यथा दर्शपौर्णमासाभ्यां स्वर्गकामोयजेतेत्यादौ क्षणिकानां यागानां श्रूयमाणकालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या पुरुषे शुभापूर्व्वसिद्धिः, यथा च क्षणिकस्यावगोरणस्य श्रुतकालान्तरभाविशततयातनासाधनत्वान्यथानुपपत्त्या दुरितापूर्व्वसिद्धिः । तथा मूत्रपुरीषादिसंस्पृष्टेन न व्यवहर्त्तव्यम् प्रक्षालनप्रोक्षणादिसंस्कारवता तु व्यवहर्त्तव्यमिति श्रुतव्यवहारनिषेधतदभ्यनुज्ञानान्यथानुपपत्त्या द्रव्यादिगतशुद्ध्यशुद्धिरूपसिद्धार्थकल्पना न विरुध्यते । अथ वा शुद्ध्यशुद्धिस्मृतीनां सिद्धार्थवादपरत्वमेवास्तु तासां च तादृशमेव वेदवाक्यं मूलं कल्प्यते यथा भाष्यार्थानुसारिणी हि वेदकल्पना । नास्ति नियमः कार्य्यार्थपरेणैव वेदेन भाव्यमिति "तद्भूतानां क्रियार्थेन समाम्नायः" इति न्यायेन सिद्धार्थानामपि विध्येकवाक्यतया प्रामाण्यव्यवस्थापनात् । प्रकृते च कर्म्मविधायके प्रायुक्तब्राह्मणवाक्ये अधिकारिविशेषणतया साधनविशेषणतया च शुद्धेः, अशुद्धेश्च पर्य्युदस्ततया सिद्धाया अपि विधिनैकवाक्यतया प्रामाण्यसम्भवः । किञ्च प्रक्षालितेनैव व्यवहर्त्तव्यमिति नियमविधिरुन्नीयते अतो वेदमूलत्वकल्पना । अतः शुद्ध्यशुद्धी उभे अपि शास्त्रादेवावगम्ये । तदुक्तं "शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेते यथाश्रुति" तदेवं यथा शुक्तिभ्यादिभिरशुद्धिवचनैरशुद्धिर्गम्यते जपेनैव विशुध्यतीत्यादिभिश्च शुद्धिर्विधीयते । अतोऽष्टकादिस्मृतिवत् वेदमूले एव शुद्ध्यशुद्धिस्मृती । शुद्धिवचनैश्चाशुद्धिराक्षिप्यते शुद्धिर्हि मलाद्युपघातेनाशुद्धानां द्रव्याणां संस्काररूपा कर्त्तव्यतया विधीयते न पुनः शुद्धानाम्, न हि सुवर्णादयः भावा स्वभावेनाशुद्धाः येन प्रयोगकाले शुद्धिमपेक्षेरन् । अथादृष्टार्थं व्रीहिप्रोक्षणवत् प्रयोगकाले संस्कारोविधीयते इति चेत् न तथात्वे अशुद्धिज्ञापकं वचनं विरुध्येत अतः सिद्धं शुद्ध्यशुद्ध्योः शास्त्रगम्यत्वम् । तत्र शुद्धिर्नानाविधाऽपि संक्षेपात् द्विविधा बाह्या आभ्यन्तरा च । यथा "अथातः शौचाध्यायं व्याख्यास्यामस्तद्द्विविधम् बाह्यमाभ्यन्तरञ्च आन्तरं शौचं नाम तद्यदहङ्कारनिन्दितेभ्यो मनो निवर्त्तते, बाह्यमपि गन्धलेपक्षयोपघातेऽद्भिरनिष्टमुपस्पर्शने प्रोक्षणाच्चुचिरित्यशुचिप्रतिषेधः, हृदयशौचमनुतप्तता साधुता, कर्म्मशौचमगर्हितकर्म्मशयता, शरीरशौचं अद्भिरद्भिश्च, वाचाम् अप्रियानृतनिष्ठुरवर्जनम्, मनसो मिथ्यासंकल्पप्रतिषेधः, बुद्धेर्ज्ञानम् । श्रूयते द्विविधं शौचं यच्छिष्टैः पर्य्युपासितम्" । "बाह्यं निर्लेपनिर्गन्धमन्तःशौचमहिंसनम्" इति च उश० । "अद्भिः शुध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुध्यति । अहिंसया च भूतात्मा मनः सत्येन शुध्यति" इति "कालोऽग्निर्मनसः शुद्धिरुदकाद्युपलेपनम् अविज्ञानञ्च भूतानां षड्विधं शौचमुच्यते । देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च परिज्ञाय यथाविधि । शौचज्ञः कुशलो धर्म्मे धर्म्मेप्सुः शौचमाचरेत्" इति च बौधा० "अनिलानलसोमसूर्य्यकाञ्चनरजतभस्मतोयताम्रैः, अजसुरवालधिगोमयरजआद्यैः स्पर्शगुणैरिह मेध्यतां नयन्ति" हारी० "आत्मयाजिनां शरीरस्याद्भिर्द्भिश्च, ज्ञानेन बुद्धेः, तपसा पापानां, सन्तानजानां मातृपैतृकाणां दोषाणां यमनियममन्त्रप्रतोपवासादिभिः" शङ्खलि० "ज्ञानं तपोऽग्निराहारो मृण्मनो वार्य्युपाञ्जनम् वायुः कर्म्मार्ककालौ च शुद्धिकर्त्तॄणि देहिनाम्" सर्व्वेषामेव शौचानामन्नशौचं परं स्मृतम् । योऽन्ने शुचिर्हि स शुचिर्न मृद्वारि-शुचिः शुचिः । क्षान्त्या शुध्यन्ति विद्वांसोदानेनाकार्य्यकारिणः । प्रच्छन्नपापाजप्येन तपसा वेदवित्तमाः । शोध्यं शुध्यति मृत्तोयैर्नदी वेगेन शुध्यति रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमाः । अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति । मनुः "कालोऽग्निः कर्म्म मृद्वारि मनोज्ञानं तपो जलम् । पश्चात्तापो निराहारः सर्व्वेषां शुद्धिहेतवः । अकार्य्यकारिणां दानम्" क्षेत्रज्ञस्येश्वरज्ञानात् विशुद्धिः परमा मता" या० स्मृ० "सत्यं शौचं तपः शौचं शौचमिन्द्रियसंयमः । सर्व्वभूतदया शौचमद्भिस्तु पञ्चमं मतम्" यमः "गात्रं मृदम्भसा शुध्येद्वित्तं भूताद्यशंसनात् । विद्यया तपसा देही मतिर्ज्ञानेन शुध्यति । स्वाध्यायेनानुतापेन होमेन तपसैव च । ध्यानेन तेलपानेन दानेनेह परिचयः । परापवादाश्रवणं परस्त्रीणामदर्शनम् । एतच्छौचं श्रोत्रदृशो जिह्वाशुद्धिरपैशुनम् । अप्राणिवधमस्तेयं

शुचित्वं पादहस्तयोः । अतंउर्द्ध्वं स्त्रीणां शारीरं शौचमिष्यते” इह० । “उच्छिष्टोपहतोऽभ्युक्षणाच्छुचिर्विण्मूत्रं संस्पृश्योन्मृज्याचम्य प्रयतोभवेत्” पैठी० “प्राणिनामथ सर्व्वेषां मृद्भिरद्भिश्च कारयेत् । अत्यन्तोपहतानाञ्च शौचं नान्यत्” विष्णुः । “विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्य्यादेयमर्थवत् । दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि । वसा शुक्रमसृङ् मज्जा मूत्रविट् प्राणकर्णविट् । श्लेष्माश्रु दूषिकास्वेदो द्वादशैते नृणां मलाः” मनुः “तथा शरीरस्रोतोभ्यो मलनिष्यन्दविस्रवः । कन्यादीनां प्रदेशश्च स्यादशुचिर्विशेषतः । प्रभूताशुच्यमेध्यानां स्पर्शनाच्चाशुचिर्भवेत् । स्वप्नाद्यस्वविपर्य्यासात् क्षुताद्युद्धिपरिभ्रमात् । उक्त्वा वाचमनाच्छुद्धिरन्यतं क्रूरमेव वा। अपविद्धं धनुश्चक्षुर्दृष्ट्वा वा अशुचिर्भवेत् । प्रलेपस्नेहगन्धानामशुचौ चापकर्षणम् । शौचलक्षणमित्याहुर्मृदम्भोगोमयादिभिः । लेपे स्नेहे च गन्धे च व्यपकृष्टे च दूरतः । पश्चादाचमनञ्चैव शौचार्थं वक्ष्यते विधिः” देवलः । “दुष्टाभिशस्तपतिततिर्य्यगधोवर्णोपहतानां संस्पर्शाच्चाशुस्वेदतोयपूयशोणितश्लेष्मलालानिष्ठीवितरेतःकर्दमोच्छिष्टजलविण्मूत्रपुरीषादिभिर्वाह्यशरीरोपघातिभिरुपप्लुताभिरद्भिश्च द्भिच भस्मगोमयौषधिमङ्गलाचारविधिप्रयुक्तैर्वाह्यशरीरोपघातात् पूतोभवति” हारीतः । “चिताधूमसेवने सर्व्वे वर्णाः स्नानमाचरेयुः । मैथुने दुःस्वप्ने रुधिरोपगतकण्ठे वमनविरेकयोश्च । श्मश्रुकर्म्मणि कृते च । शवं शवस्पृशञ्च स्पृष्ट्वा रजस्वलाचाण्डालयूपांश्च । भक्ष्यवर्ज्जं पञ्चनखशवं तदस्थि सस्नेहञ्च । सर्व्वेष्वेतेषु पूर्व्वं वस्त्रं नाप्रक्षालितं बिभृयात् । रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्ध्यति । रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावदश्नीयाद्यावन्न शुद्धा । सवर्णामधिकवर्णां वा स्पृष्ट्वा स्नात्वाऽश्नीयात् । क्षुत्वा सुप्त्वा भोजनाध्ययने पीत्वा स्नात्वा निष्ठीव्य वासः परिधाय रथ्यामाक्रम्य मूत्रपुरीषे कृत्वा पञ्चनखस्य सस्नेहास्थि स्पृष्ट्वा चाचामेत् । चाण्डालम्लेच्छसम्भाषणे च । नाभेरधस्तात् प्रबाह्वोश्च कायिकैर्मलैः सुराभिर्मद्यैरुपहतोम्नृत्तोयैस्तदङ्गं प्रक्षाल्य शुध्यति । अन्यत्रोपहतोम्नृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन । वक्त्रोपहतस्तूपोष्य स्नात्वा पञ्चगव्येन । दशनच्छदोपहतश्च । वसा शुक्रमसृङ्मज्जामूत्रविट्कर्णविड्नखाः । श्लेष्माश्रु दूषिकास्वेदोद्वादशैते नृणां मलाः । गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्व्वा न पातव्या द्विजातिभिः । माधूकमैक्षवं टाङ्कं कौलं खार्ज्जूरपानसे । मृद्वीकारसमाध्वीके मैरेयं नारिकेलजम् । अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च । राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः “स्नानं तपोग्निराहारोमृन्मनोवार्य्युपाञ्जनम् । वायुःकर्म्मार्ककालौ च शुद्धिकर्तॄणि देहिनाम्” विष्णुः । “ऊर्द्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते । तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति । इन्द्रियेऽनुपविष्टं स्यादमेध्यं यदि कर्हिचित् । मुखेऽपि संस्पृश्यमानं तत्र स्नानं विशोधनम्” अङ्गि० । “रथ्या कर्दमतोयेन ष्ठीवनाद्येन वा तथा । नाभेरूर्द्ध्वं नरः स्पृष्ट्वा सद्यः स्नानेन शुध्यति” “शङ्खः “स कर्द्दमेषु वर्षासु प्रविश्य ग्राममध्यरम् । जङ्घाभ्यां मृत्तिकास्तिस्रः पद्भ्यां च द्विगुणाः स्मृताः” यमः । “दिवाकीर्त्तिमुदक्यां च सूतिकां पतितं तथा । शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति । आचम्य प्रयतोनित्यं जपेदशुचिदर्शनात् । सौर्य्यान्मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः । नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रोविशुध्यति । आचम्यैव तु निःस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविम् । वान्तोविरेकी स्नात्वा च घृतप्राशनमाचरेत् आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम्” मनुः । मैथुनिनः स्नानस्मृतौ गर्भशङ्कायामेव “ऋतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत्” शातातपोक्तेः । “अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्म्मणि मैथुने । दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते । शुना चैव श्वपाकेन मृतनिर्हारकेण वा । स्पृष्टमात्रस्तु कुर्व्वीत सेचनं प्लावनं जलैः” मनुः “दुःस्वप्नदर्शने चैव वान्ते वा क्षुरकर्म्मणि । मैथुने कटधूमे च सद्यः स्नानं विधीयते । पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा तु कामतः । स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति । शवस्पृशं दिवाकीर्त्तिं चिताधूमं रजस्वलाम् । स्पृष्ट्वा प्रमादतोविप्रः स्नानं कृत्वा विशुध्यति” इह० । उदक्याशुचिभिः स्नायात्” या० स्मृ० उदक्यादिस्पृष्टैः स्पृष्टः स्नायात् वैमा० । “चण्डालं पतितं व्यङ्गमुन्मत्तं शवमन्त्यजम् । सूतकं सूतिकां नारीं रजसा च परिप्लुताम् । श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः । सचैलं सशिरः स्नातः तदानीमेव शुध्यति । वृद्धशाता० । “श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम् । सूतकमित्यादि शातातपवत्” परा० “अशुद्धान् स्वयमेवैतान् शुद्धश्च यदा स्पृशेत् । विशुध्यत्युपवासेन” “उपस्पृश्याशुचिस्पृष्टं तृतीयमपि मानवः । हस्तौ पादौ च तोयेन

मलत्याचम्य शुध्यति" इति च देवलः। "मानुषास्थि वसाविष्ठामार्त्तवं मूत्ररेतसी। मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्। स्नात्वा मृज्ज्य लेपादीनाचम्य स शुचिर्भवेत्। तान्येव स्वानि संस्पृश्य पूतःस्यात् परिमार्ज्जनात्" देव०। "चैत्यवृक्षचितिर्यूपश्चण्डालः सोमविक्रयी। एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलोजलमाविशेत्" परा०। "श्वपचर्म्मिकप्रेतहारकशवानि संस्पृश्य देवीराप इत्यभिमन्त्रितैर्जलैः स्नातः पूतोभवत्यजीर्णवान्ते श्मश्रुकर्म्मणि पशुदिवामैथुने च" हारीतः "अथ मांसर्षिकं व्याख्यास्यामः "चण्डालश्मशानमृतहारकरजस्वलासूतिकाः संस्पृश्याऽनुदितेऽस्तमिते स्कन्दित्वा चाप्सु स्कन्दित्वाचिस्कन्दने कर्णक्रोशने चिताकरणे यूपसंस्पर्शने" इत्युपक्रम्य 'सचेलं स्नात्वा पुनर्मौनो जपेत्" कश्य०। "श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं यूपं चितिं चितिकाष्ठं मद्यभाण्डं सस्नेहं मानुषास्थि शवस्पृशं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचेलवासा अम्भोऽवगाह्योत्तीर्य्याग्निमुपस्पृशेत्" च्यव० "शुना घ्रातावलीढस्य नखैर्विदलितस्य वा। अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपधूनमम्" शाता०। "अशुचिं संस्पृशेद्यस्तु एकएव स दुष्यति। तं स्पृष्ट्वान्यो न दुष्येत्तु सर्व्वद्रव्येष्वयं विधिः" उशना०। "यस्य स्पर्शे आचमनमात्रं सोऽत्राशुचिः" हेमा०। "श्वराहखरानुष्ट्रान् वृकगोमायुवानरान्। काककुक्कुटभ्यांश्च स्पृष्ट्वा स्नानं समाचरेत्" संव०। "भासवानरमार्जारखरोष्ट्राणां शुनां तथा। शूकराणाममेध्यस्य स्पर्शे स्नानं सचेलकम्" व्यासः "षण्डं कुक्कुटं काकं श्वशृगालविवाहकान्। चितियूपश्मशानानि विड्वराहखराशुचीन्। अवकीर्णिनमन्त्यं च स्पृष्ट्वा स्नानं विधीयते" हारी० "अभोज्यसूतिकाषण्डमार्जाराखुश्वकुक्कुटान्। पतितापविद्धचाण्डालं मृतहारांश्च धर्म्मवित्। संस्पृश्य शुध्यति स्नानात्" मार्क०पु०। "बौद्धान् पाशुपतान् जैनान् लोकायतिककापिलान्। विकर्म्मस्थान् द्विजः स्पृष्ट्वा सचेलोजलमाविशेत्। कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मतः" षट्त्रिं०। "शैवान् पाशुपतान् स्पृष्ट्वा लौकायतिकनास्तिकान्। विकर्म्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत्" ब्रह्मा० पुरा० "शूद्रोच्छिष्टं द्विजः स्पृष्ट्वा उच्छिष्टं शूद्रमेव च। शुचिरप्यवगाह्यैव सचेलं स्नानमाचरेत्" छाग० "स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत्" संव० "रजकश्चर्म्मकश्चैव व्याधजालोपजीविनौ। निर्णेजकः शौण्डिकश्च नटः शैलूषकस्तथा। मुखेभगस्तथा श्वा च वनिता सर्व्ववर्णगा। चक्री ध्वजी व्याधयाजी" इत्युपक्रम्य "एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु। तोयेन क्षालनं कृत्वा आचान्ताः प्रयता मताः" शाता०। "ऊर्द्ध्वं नाभेः करौ मुक्त्वा यदङ्गं स्पृशते खगः। स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुध्यति" जा०। "नीलीं नीलीविकारं च मानुषास्थीन्यपि द्विजः। चण्डालपतितच्छायां स्पृष्ट्वा स्नानं समाचरेत्" संव० "स्पृष्ट्वा रुद्रस्य निर्म्माल्यं सवासा आप्लुतः शुचिः" स्कन्द०पु० "अष्टम्यां च चतुर्द्दश्यां दिवा पर्व्वणि मैथुनम्। कृत्वा सचेलं स्नात्वा च वारुणीभिश्च मार्जयेत्" शाठ्यायनिः। "रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला" अङ्गि० "रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात्" शङ्खः "शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला। दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति" अङ्गि०। "रोगेण यद्रजः स्त्रीणामत्यर्थं तु प्रवर्त्तते। अशुच्योनैव तास्तेन येन वैकारिकं हि तत्" शङ्ख० "अकाले यद्भवेत् स्त्रीणाम् रक्तमाहुर्मनीषिणः। काले तु यद्रजः प्रोक्तं तस्मात्तत्रैव साऽशुचिः" छाग०। एवमन्यान्यपि तद्बोधकान्यनुसन्धेयानि। शुचितत्कालजीविनः कर्म्माधिकारित्वेन शुद्धेः कर्त्तृविशेषणतया कर्म्माङ्गत्वमशुद्धेश्च तदधिकारित्वाभावः एवं तयोः कर्त्तृविशेषणतया कर्म्माधिकाराङ्गानङ्गत्वे निरूपिते। इदानीं द्रव्याणामपि कर्म्माङ्गतया द्रव्यगतशुद्ध्यशुद्धी निरूप्येते तत्र कालरूपद्रव्यस्याशुद्धिः ३८९ पृष्ठे अकालशब्दे उक्तप्राया। पर्य्युदस्तकालानां तु कर्म्मानङ्गत्वेऽपि नाशुद्धत्वम्। "रात्रौ श्राद्धं न कुर्वीत" "आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत्" राक्षसी नाम सा वेला गर्हिता सर्व्वकर्मसु" इत्यादौ तत्तत्कर्मणां तदितरकाले कर्त्तव्यतामात्रं बोध्यते न तु तेषामशुद्धत्वमपि तेन सन्ध्यावन्दनादेः सन्ध्याराव्योः कर्त्तव्यताविधायकं "पश्चिमां तु समासीनोयावत्तारकदर्शनमित्यादि" "दिवोदितं यत् कर्म्मलुक्रम्य शर्व्वर्याः प्रथमे यामे तत् कुर्वीताविचारयन्नित्यादि" च शास्त्रं सार्थकम्। अपरद्रव्यगते शुद्ध्यशुद्धी तावदिदानीं निरूप्येते। तत्रादौ द्रव्यशुद्ध्यशुद्धिसम्पादकं द्रव्यादिकमुच्यते। "शारीरैर्मलैः सुराभिर्मद्यैर्यदुपहतं तदत्यन्तोपहतम्। अत्यन्तोपहतं सर्व्वं लौहभाण्डमग्नौ प्रक्षिप्तं शुध्येत् मणिमयमश्ममयमब्जं च सप्तरात्रं महीनिखननेन शुध्येत् दन्ता-

छिद्रयं संतक्षणेन, दारवं मृण्मयञ्च जह्यात् । अत्यन्तोपहतस्य प्रक्षालितस्य निरवद्य तच्छिन्द्यात्" विष्णुः "अत्यन्तोपहतानां सर्व्वतैजसानामग्निना शौचं मृण्मयचर्म्मणां त्यागः, तन्मात्रच्छेदमित्येके धारणं हि नववाससां शौचमित्याचार्य्याः तस्मात् सर्व्ववाससामाप्लावनादेव शुद्धिः" हारी० "तैजसानां कुणपरेतोमूत्रपुरीषोपहतानामावर्त्तनमुल्लेखनं भस्मना त्रिःसप्तकृत्वः परिमार्जनमुच्छेदनं वा" शङ्खलि० "मूत्रपुरीषासृक्कुणपस्पृष्टानां तैजसानां पात्राणां पूर्व्वोक्तानामन्यतमेन त्रिःसप्तकृत्वः परिमार्ज्जनम्" "क्षौमाणि वासांसि तेषामभावे कार्पासिकान्यौर्णिकानि भवन्ति मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां मृदाद्भिः प्रक्षालनं वासोवद्दूर्व्वावल्कलानां, वल्कलवत् कृष्णाजिनानाम्" इति च बौधा० "मद्यैर्मूत्रपुरीषैश्च ष्ठीवभिरशुभोणितैः । संसृष्टं नैव शुध्येत पुनःपाकेन मृण्मयम् । एतैरेव यदा स्पृष्टं ताम्रसौवर्णराजतम् । शुध्यत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा" शङ्खलिखितकाश्यपाः "अलाबुदारुपात्राणां वैदलानां तथैव च । अत्यन्तोपहतानाञ्च परित्यागो विधीयते । अत्र मूत्रपुरीषाभ्यां रेतसा रुधिरेण च । चेलं यदुपहन्येत पुनः प्रक्षालयेत्तु तत् । यद्यम्भसा न शुध्येत्तु वस्त्रं पोपहतं दृढम् । छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते । क्षत्तिकाचारपातेन अशुद्धं तत् परित्यजेत्" यमः। "वस्त्रवैदलचर्म्मणां शुद्धिः प्रक्षालनं स्मृतम् । अतिदुष्टस्य तन्मात्रं त्यजेच्छित्त्वाकरद्वये" दक्ष० । "दूषितं वर्जितं दूष्यं कश्मलं चेति लिङ्गिनाम् । चतुर्विधममेध्यं च सर्व्वं व्याख्यास्यते पुनः। शुद्धमशुचिसंसृष्टं द्रव्यं दूषितमुच्यते। अभक्ष्यभोज्यपेयानि वर्ज्जितानि हि चक्षते । व्यङ्गः पतितचण्डालौ ग्रामशूकरकुक्कुटौ । श्वा च नित्यं विवर्ज्याःस्युः षडेते धर्म्मतः समाः । सद्यः सूतकी सूती मतोन्मत्तौ रजस्वला । सूतकम्भुरशुद्धश्च पञ्चान्त्यष्टौ स्वकालतः । स्वेदाश्रुविन्दवः फेनो निरस्तं नखरोम च । आर्द्रचर्म्म तथिल्लेतद् दूष्यमाहुर्द्विजातयः । मानुषास्थिकफोविड्रेतोमूत्रार्त्तवानि च । कुणपः पूयमित्येतत् कश्मलं वेदुदाहृतम् । दूषिते प्रोक्षितेनापि शुद्धिरुक्ता विधानतः । दूष्ये मार्ज्जनसंस्कारैः कश्मले सर्व्वथा भवेत्" देवलः । अथ भूमिशुद्ध्यशुद्ध्यपायादि । "प्रसूते गर्भिणी यत्र म्रियते यत्र मानुषः । चण्डालैरुषितं यत्र यत्रोपन्यस्यते शवः । विण्मूत्रे वाहिते यत्र कुणपो यत्र दृश्यते । एवं कश्मलभूयिष्ठा भूरमेध्येति लक्ष्यते । कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी । लक्ष्युया कर्षणैः क्षिप्ता वान्तैर्वा दूष्यतां व्रजेत् । नखदन्ततनूजत्वक्तुषपांशुरजोमलैः । भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् । पञ्चधा वा चतुर्द्धा वा भूरमेध्या विशुध्यति । दूष्या द्विधा त्रिधा वापि शोध्यते मलिनैकधा । दहनं खननं भूमेरुपलेपनवापने । पर्जन्यवर्षणं चेति शौचं पञ्चविधं स्मृतम्" देव०। तथा चनीभूतस्य "संमार्जनेनाञ्जनेन सेकेनोल्लेखनेन च । गवां च परिवासेन भूमिः शुध्यति पञ्चभिः" मनुः । "खननात् पूरणाद्दाहाल्लेपनादभिवर्षणात्। गोभिराक्रमणात् कालाद्भूमिः शुध्यति सप्तभिः" यमः । "घनाया भूमेरुपघाते उपलेपनम् सुषिरायाः कर्षणम् आच्छन्नाया मेध्यमाहृत्य प्रच्छादनम् चतुर्भिः शोध्यते भूमिः गोभिराक्रमणात् खननाद्दहनादभिवर्षणात् पञ्चमाल्लेपनात्" बौधा० "कर्षणमुपलेपनमद्भिरभ्युक्षणं कालोदाहश्च भूमेः" शङ्खलि०शुद्धिरिति शेषः। "खननात् पूरणाद्दाहाल्लेपनादभिवर्षणात् । गोभिराक्रमणात् कालात् भूमिरेभ्यो विशुध्यति" हारी०। "मार्जनोपाञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकम् । मार्ज्जनेनाञ्जनेनापि सेकेनोल्लेखनेन च। दाहेन च भुवः शुद्धिर्वासेनाप्यथ वा गवाम्" विष्णुः "गोचर्म्ममात्रमब्बिन्दुर्गोः (भूमेः) शोधयति पातितः समूढमसमूढं वा यत्र लेपो न दृश्यते" बौधा० मृतौ वर्षादिशेषे कालभेदः । अन्त्यप्रतिताद्यास्त्या मृताश्चेद् द्विजमन्दिरे । शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा । दशरात्राच्छुनि प्रेते मासात् शूद्रे भवेच्छुचिः । द्वाभ्यां तु पतिते गेहे अन्त्ये मासचतुष्टयात् । अत्यन्ते वर्जयेद्गेहमित्येवं मनुरब्रवीत्" इ०मनुः । अन्त्यः श्वपाकः । द्विजस्य मरणे वेश्म विशुध्यति दिनत्रयात् । दिनैकेन बहिर्भूमिरग्निप्रोक्षणलेपनैः" यमः। यथोक्तकालानन्तरं कर्त्तव्यमाह संवर्त्तः "गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते । प्रोत्साय मृण्मयं पात्रं सिद्धमन्नं तथैव च । गृहादपास्य तत्सर्व्वं गोमयेनोपलेपयेत् । गोमयेनोपलिप्याथ छागेनाघ्रापयेद् बुधः । ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिभिः । सर्व्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयः । "दारुवदस्थि भूम्योरावपनं च भूमेः" गौत० "मार्जनाद्वेश्मनां शुद्धिः" क्षितेः शुद्धिस्तु सप्तभिः" शङ्खः। अशुद्ध्यपवादः "आक्कषावसथे भूमिर्देवागारे तथैव च । मेध्या चैव सदा मध्ये गवां गोष्ठे च वा भवेत्" यमः। "रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च। स्पर्शनान्न प्रदुष्यन्ति पक्केष्टकचितानि च" परा०

रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यैश्च वायसैः । मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च । तथैभिश्च विशुध्यन्ति सूर्य्यसोमांशुमारुतैः" विष्णुः । अथ मृत्तिकाशुद्धिः "वल्मीकाद्गुत्करात्तु पांशुलाध्वपविष्टयोः । कृतशौचावशिष्टाश्च न ग्राह्याः सप्त मृत्तिकाः। शुचिदेशे च संग्राह्याः शर्कराश्मादिवर्ज्जिताः" शाता०। अथ पक्वान्नादिशुद्धिप्रकाराः । "केशकीटच्युतन्नात वायसोपहतञ्च यत् श्वाभिपन्नपतितैः सूतिकोदक्यनास्तिकैः । दृष्टं वा स्पृष्टमन्नं तु तस्य निष्कृतिरुच्यते। अभ्युक्ष्य किञ्चिदुद्धृत्य तद्भुक्तौ तु विशङ्कितः । भस्मना वापि संस्पृश्य संस्पृश्य वोल्मुकेन च। सुवर्णरजताभ्यां च भोज्यं स्नातमजेन वा" । एवं सपायसं क्षीरं तथैवेक्षुरसो गुडः । मृद्भाण्डस्थितं तक्रं तथा मधु न दुष्यति" शाता० "त्वक्केशकीटरोमनखाखुपुरीषाणि दृष्ट्वा तद्देशपिण्डमुद्धृत्याद्भिरभ्युक्ष्य भस्मनावकीर्य्याभिवाच्य पुनरपि प्रोक्ष्य वाचा प्रशस्तम् ओं भूर्भुवः स्वरित्युपरि परिशोध्य च पुनरेवोपयुञ्जीत" बौधा० । "मद्यरसायसंयुक्तं तथा पर्य्युषितं च यत् । तत्तु प्रक्षालितं कृत्वा भुञ्जीत हविरभिघारितम्" यमः "माषाराजमाषाः" हेमा० । पर्य्युषितभोजनविधानमापद्विषयम् "शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन । क्षालयित्वा तु निर्दोषाण्यापद्धर्म्मगतो यदा" तस्यैव वचनान्तरात् "मक्षिकाकेशमद्ध्येषु पतितं यदि दृश्यते । मूषिकस्य पुरीषं वा क्षुतं यच्चावधूनितम् । भक्ष्यमाणस्य प्राश्नीयादभ्युक्ष्य सलिलेन वा" यमः। क्षुतेनाक्रान्तमवक्षुतम् अवधूनितं वस्त्रेण । "अवक्षुतं काकपतङ्गकीटैरुदक्यया वा पतितैश्च दृष्टम् । अज्ञातभक्ष्याम्बुहिरण्यभागैः संस्पृष्टमन्नं मनुराह भोज्यम्" यमः। अस्यापवादः "मक्षिका मशका दंशा भृङ्गा सूक्ष्मपिपीलिका। आमिषामेध्यसेवी च नैते कीटा निसर्गतः" यमः "पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति" मनुः । गोघ्राते अन्ने तथा केशमक्षिकाकीटदूषिते। सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये । अत्र मक्षिका पिशाचमक्षिका "केशकीटच्युतनिष्ठीवितं वचोऽभिहतं श्वभिराघ्रातं प्रेक्षितं यच्च पर्य्युषितम् पुनः सिद्धं चण्डालेनावेक्षितमभोज्यमन्नमन्यत्र हिरण्योदकस्पर्शात्" सुमन्तुः "आकरजानां त्वभ्यवहरणीयानां घृतेनाभिघारितानां शुद्धिः पुनःपचनमेव स्नेहानां, स्नेहवद्रसानां संहतानामद्भिः प्रोक्षणमतिद्रवाणामुत्पवनम्, शुष्काणामुद्धृतदोषाणां संस्कारः परिस्रावितानां, दोषाणां तत्त्यागः" शङ्खलि० । "परोक्षमन्नं संस्कृतं अगारार्थं प्रोक्ष्याद्भिः प्रोक्षेत्तदन्नं पवित्रम्" आप०। "अनिष्टगन्धोपघ्राणश्रवणदर्शने केशकीटपिपीलिकाभिरन्नाद्योपघाते काञ्चनरजतवैदूर्य्यप्रवालगोबालाजिनदर्भाणामेकतमेनाद्भिः संसृष्टेन मन्त्रप्रोक्षणं पर्य्यग्निकरणमादित्यदर्शनात् पूतं भवति यज्ञोपघाते ब्राह्मणमत्वा तदन्तरमपनीय अजमनप्राप्य पूतं भवति त्वागोरसमयानाम्" हारी० । सिद्धहविषां महतां श्ववायसप्रभृत्युपहतानां तद्देशपिण्डमुद्धृत्य "पवमानः सुवर्ज्जनः" इत्यनुवाकेनाभ्युक्षणं मधूदके पयोविकारे च पात्रान्तरनयने शुद्धिः एवं तैलसर्पिषी, उच्छिष्टसमन्वारब्धे तदुदकेऽवधायोपयोजयेत्" बौधा० उच्छिष्टसमन्वारब्धे उच्छिष्टसंस्पृष्टे" हेमा० । पयोदधिविकारादि शुचि पात्रान्तरे स्थितम् । प्लावनोत्पवनाभ्यां च पर्य्यग्निकरणेन च" लौगा० "पवनं वस्त्रादिना गालनम् उत्पवनं दर्भपवित्राभ्यां 'सवितुष्ट्वा प्रसव उत्पुनामि' इत्यनेन मन्त्रेण संस्करणम् । "आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः। म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः" यमः "अपणां घृततैलानां प्लावनं गोरसस्य च । भाण्डानि प्लावयेदद्भिः शाकमूलफलानि च । सिद्धमन्नं तथा सर्पिः क्षीरञ्च दधि चाम्बु च । एतेषामवलीढानां तैजसी शुद्धिरिष्यते काकमार्जारनकुलसर्पमूषिकपक्षिभिः । संस्कृतं तु यदाहार्य्यमवलिह्येत केनचित् । सुवर्णवर्णताक्षोष्णं गौवालं रजतेन वा । स्पृष्टमेकतमेनापि भोज्यं स्नातमजेन वा" शङ्ख० । तैजसी शुद्धिः पर्य्यग्निकरणम् । इयं शुद्धिः केशादिकं दूषकमुद्धृत्य कार्य्या" हेमा०। "घृतदधिपयस्तक्राणामाकरस्थितानामदोषः" इः "आधारदोषे तु भवेत् पात्रात् पात्रान्तरं द्रवम् । घृतं तु पायसं क्षीरं तथैवेक्षुरसं गुडम्" द्रवद्रव्याणि भूरीणि परिस्राव्याणि वाम्भसा । शस्यानि व्रीहियवांश्च शाकमूलफलानि च । त्यक्त्वा तु दूषितं भागमाप्लाव्याथ जलेन च । ब्रह्मा० पु० । "द्रोणादभ्यधिकं सिद्धमन्नमुपहतं न दुष्यति । तस्योपहतमात्रमपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भः क्षिपेत् वस्तस्य च दर्शयेदग्नेः" । विष्णुः। "भूतं द्रोणाधिकं चान्नं श्वकाकैरुपघातितम् । न त्याज्यं तस्य शुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत् । कर्त्तव्यं वचनं तेषामन्नसंस्कारकर्म्मणि" "द्रोणाधिकस्य शुद्धिस्तु धर्म्मशास्त्रेषु पठ्यते । श्वकाकैरवलीढं तु द्रोणान्नं न विसर्ज्जयेत् । ग्रासमुद्धृत्य तन्मात्रं यच्च लालाङ्कितं भवेत् । सुवर्णोदकेनाभ्युक्ष्य

सर्वत्र शुद्धता न पुनर्भवेत् । तस्माच्छुद्धं तु कर्त्तव्यं शुचीत्वाद्धर्मनैषिणः। निर्मलं संस्कृतं द्रव्यं क्रियार्हं पूतमुच्यते। वसतिश्चमसोपानं यानं शाखनाम्बु च । कुटी नौरासनं चेति स्वयं शुद्धमिति स्मृतम् । शिशवश्च स्वयंशुद्धा योषितश्चानृतौ तथा । ब्रह्महत्या हि नारीणामृतुकाले न संस्पृशेत् । आकरा हि स्वयं शुद्धा द्रव्याणामिह निर्णयः । भस्म रौद्रं सुवर्णं च सद्भाः कृतपास्तिलाः । अपामार्गशमीकाशाः पद्मामलकं मणिः । माल्यानि सर्षपा दूर्वाः सदा भद्राः प्रियङ्गवः । अक्षतारोचनालाजा हरिद्राचन्दना यवाः । पलाशखदिराश्वत्थतुलसीधातकीतकी । एतान्याहुः पवित्राणि ब्राह्मणा हव्यकव्ययोः । यौक्तिकानि मन्त्राणि शोधनानि च देहिनाम् । तेष्वापोऽग्निगोशकृन्मूत्रं च पवित्राणि विशेषतः । सर्वाशौच विशुध्यर्थं सर्वेषां सर्वतः सदा । अकस्मात्तैः समिद्धोऽग्निर्दुर्मनुष्यैरदूषितः । सर्वेषामप्यशौचानां समर्थः शोधनाय सः । द्रव्याणामपि दग्धानां मेध्यत्वमुपदिश्यते । ज्वालाभिर्दृष्टपात्राणां शुचित्वं नियतं भवेत् । अग्नेर्हुतस्य मध्यं नाश्नन्नापदि । श्वपाको ह्यग्निमस्तु ब्राह्मणोऽग्निरनाहितः । चण्डालाग्नेरमेध्याग्नेः सूतकाग्नेश्च कर्हिचित् । पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम् । गोमयश्च्छुद्धदेशस्था श्मशानाद्यचिता शिवा । अपाम्पा च्छुद्धवेच्छुद्धा लभ्या विण्मूत्रवर्जिता । ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः” देवलः । “ऊर्द्ध्वं वै पुरुषस्य नाभेर्मेध्यमर्वाचीनममेध्यमिति” श्रुतिः । “अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः” विष्णुः ऊर्द्ध्वं नाभेः पुरुषो गौर्मेध्यः पृष्ठे समन्तादश्वः स्त्रियः सर्वतो हृदयमासामशुचि” इत्य० । “मेध्या रहोगता नारी स्त्री मुखे शुचिचारिणी । स्पर्शने तु न दुष्यन्ति वातो गन्धो रसः स्त्रियः । स्त्रीणां मुखरसश्चैव गन्धो निश्वास एव च । मुखतो गौरमेध्यास्तान् मेध्योऽजोऽश्वस्तथा स्मृतः । पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा । नृणां मूत्रपुरीषे तु अमेध्ये मल एव च । गोपुरीषं तु मूत्रं च नित्यं मेध्यमिति स्थितिः । यमः “पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचि । गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् । रोमोद्भेदे शशी भुङ्क्ते गन्धर्वाः कुचदर्शने । अनलस्तु रजोभुङ्क्ते स्त्रियो मेध्यास्तु नान्यथा । बलात्कारोपभुक्ता वा चौरहस्तगतापि वा । स्वयं वा प्रतिपन्ना वा अथवा विप्रमादिता । अत्यन्तदूषितापि स्त्री न परित्यक्तुमर्हति । सर्वेषां निष्कृतिः प्रोक्ता नारीणां तु विशेषतः । स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् । मासिमासि रजस्तासां दुष्कृतान्यपकर्षति। सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरम् । पावकः सर्वभक्षत्वं मेध्या वै योषितो ह्यतः” । ज्योतिषोक्तम् स्वराश्यपेक्षया दुष्टरूपे अनिष्टस्थानस्थरव्यादिकतयानिष्टसूचनमपि अशुद्धिः ज्योतिषोक्तनञः पर्य्युदासप्रसज्यप्रतिषेधोभयपरतायाः सर्वनिबन्धृभिर्व्यवस्थापनात् तत्र निषिद्धकालस्य न केवलं रात्र्यादिकालादिवत् पर्य्युदस्तता किन्तु प्रसज्यप्रतिषेधपरतया अनिष्टविशेषसूचकतापि तेन तत्र तत्र अनिषिद्धकालस्याशुद्धता । अतएव गोचराशुद्धिः कालाशुद्धिरिति च व्यवह्रियते” तथाच ज्योतिषोक्तादिशा तत्तत्कालानां तत्तत्कर्मकरणायोग्यताप्रयोजकतया शुक्रास्तादिकालस्याशुद्धता सा च अकालशब्दे उक्तप्राया । “रविशुद्धौ ग्रहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ” इत्युक्तेः गोचरे शुभस्थानस्थितौ रव्यादीनां शुद्धिस्तद्वैपरीत्ये अशुद्धिः एवं वर्षर्त्तुमासदिवसानामप्यशुद्धिः सा च कन्यकानां दशवर्षाभ्यन्तरे एव विवेचनीया नातः परम् । “षडशुद्धिमब्दशुद्धिं शुद्धिमौघत्तुदिवसानाम् । अर्वाग्दशवर्षेभ्यः प्रवदन्ति कन्यकाना”मित्युक्तेः ।

**अशुभ** न० विरोधे न० त० । १अमङ्गले “यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम्” गीता । २तत्सूचके रव्यादिपापग्रहे “अशुभे दण्डसंयोगे वैधवेत्तेन लभ्यते” ज्योति० अशुभसूचका अमङ्गलसूचकाश्च साधारणा असाधारणाश्च अमङ्गलशब्दे ३१६ पृष्ठादौ दर्शिताः अन्येऽपि अशुभयोगा अरिष्टाध्यायोक्ताः असाधारणा वेदितव्याः । ३अपवित्रे च न० त० । ४शुभाभाववति त्रि० । ५ब० । ६पापे न० ।

**अशुभ्र** पु० विरोधे न० त० । १शुभ्रभिन्ने कृष्णे २तद्युक्ते त्रि० ।

**अशुष** त्रि० न शुष्यति शुष–क न० त० । अशोषके । “रक्षो अग्निमशुषं तूर्वयाणम्” ऋ० १।१७४।३ ।

**अशून्य** त्रि० न० त० । अहीने पूर्णे “अशून्यशयनं भवान्मम जन्मनि जन्मनि” शय्यादानमन्त्रः ।

**अशून्यशयन** न० न शून्यं शयनं यस्मात् । व्रतभेदे । “अस्ति व्रतं महापुण्यमशून्यशयनं नृप!” इत्युपक्रम्य “चातुर्मास्ये भवेद्राजन् वर्षासु व्रतमुत्तमम् श्रावणस्य द्वितीयायां कृष्णपक्षे नराधिप! । श्रावणादिकार्त्तिकान्तं कुर्याद्व्रतमनुत्तमम्” इत्यादिना तस्य विधानमभिधाय “चतुर्वर्षं मकुर्वीत पुरुषो नियतेन्द्रियः । एवं यः कुरुते राजन्

शून्यशयनव्रतम् । न तस्य शून्या शय्या स्यादिति" च हेमा० व्रत० ख० भविष्यपुराणम् ।

**अशृत** त्रि० न शृतं पक्वम् । अपक्वे पक्वभिन्ने १आमाद्यादौ ।

**अशेव** त्रि० शी—वनिप् न०त० । सुखकरे । "व्येत दिद्युद्द्विषामशेवा" ऋ० ७।३४।१२ ।

**अशेष** पु० अभावे न०त० । १शेषाभावे । न०त० । २शेषशून्ये सकले त्रि० "अशेषशेमुषीमोषं माषमश्नामि केवलम्" उद्भटः "ऋतोरशेषेण फलेन युज्यताम्" रघु० "येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि" गीता "तथाविधस्तावदशेषमस्तु सः" कुमा० । "अशेषतीर्थोपहृताः कमण्डलोः" माघः ।

**अशोक** पु० नास्ति शोको यस्मात् ५ब० । १स्वनामख्याते वृक्षे, २वकुलवृक्षे च । ३पारदे न० । ४कटुकवृक्षे स्त्री । वृत० । ५शोकशून्ये त्रि० ६विष्णौ पु० "सत्वनामा भवाशोकः" "अशोकः शोकनाशनः" इति च विष्णुस० । "अशोकमर्थान्वितनामताशया गतान् शरण्यं गृहशोचिनोऽध्वगान् । अमन्यतावन्तमिवैष पल्लवैः प्रतीष्टकामज्वलदस्त्रजालकम्" नैष० "सनूपुररवेण स्त्रीचरणेनाभिताड़नम् । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत्" एतदनुसारेणैव कविभिस्तथा वर्ण्यते यथा "असूत सद्यः कुसुमान्यशोकः स्कन्धात् प्रभृत्येव सपल्लवानि । पादेन नापैक्षत सुन्दरीणां संपर्कमाशिञ्जितनूपुरेण" कुमा० "नवकिसलयरागेणाग्रपादेन बाला स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन । अकुसुमितमशोकं दोहदापेक्षया वा प्रणिहितशिरसं वा कान्तमार्द्रापराधम्" "अनेन तनुमध्यया मुखरनूपुराराविणा नवाम्बुरुहकोमलेन चरणेन सम्भावितः । अशोक ! यदि सद्य एव मुकुलैर्न सम्पत्स्यसे मुधा वहसि दोहदमिति" "सव्याशोकलतानां प्रथमसूचितवसन्तविभवानाम् । निर्वृत्ते दोहदेऽस्मिन् संक्रान्तानीव मुकुलानि" इति च मालवि० । अयमशोकः नवपत्रिकान्तर्गतः "कदली दाड़िमी धान्यं हरिद्रा मानकं कचुः । बिल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिकाः" दु०त० । एतदधिष्ठात्री शोकरहिता "अशोकस्यायै शोकरहितायै" इति दुर्गापूजापद्धतिः । अशोकश्च द्विविधः रक्ताशोकः पीताशोकश्च पीतरक्तपुष्पभेदेन तयोः तथात्वम् । तत्र रक्ताशोकाभिप्रायेण "अशोकनिर्भर्त्सितपद्मरागम्" कुमा० । "रक्ताशोकलताविशेषितगुणो बिम्बाधरालक्तकः" मालवि० पीताशोकवर्णनं तु मालविकाग्निमित्रे तृतीयाङ्के तपनीयाशोकवर्णने दृश्यम् । "अशोकोहेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः । कङ्केलिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा । अशोकः शीतलस्तिक्तो ग्राही वर्ण्यः कषायकः । दोषापचीतृषादाहकृमिशोषविषास्रजित्" भा०प्र० पर्य्यायगुणादि । आन्तः शोकाभावे त्रिका० ।

**अशोकतीर्थ** न० अशोकनामकं तीर्थम् । काशीक्षेत्रान्तर्गते तीर्थभेदे । काशीस्थप्रयागतीर्थमधिकृत्य "अशोकाख्यमिदं तीर्थं गन्धर्वेशस्य एव वै । मोक्षद्वारमिदं श्रेष्ठं स्वर्गद्वारमिदं विदुः" । काशी० ।

**अशोकत्रिरात्र** न० न शोको यत्र तादृशं त्रिरात्रम् । हेमा० व्र०ख० भविष्योत्तरोक्ते व्रतभेदे तत्कालादिस्तत्रैवोक्तः "अस्त्यशोकत्रिरात्राख्यं व्रतं शोकभयापहम् । त्रिरात्रं तत्र कर्त्तव्यं व्रतं शोकविनाशनम्" इत्युपक्रम्य, मासि मार्गशिरे चैव ज्यैष्ठे भाद्रपदे तथा । शुक्लपक्षे पञ्चदश्यामेकभक्तं तु कारयेत्" इत्यादिना आरम्भकालमुक्त्वा "अनेनैव विधानेन प्रतिमासं च पूजयेत् यावत् द्वादश मासान् वै कुर्य्यादुद्यापनं ततः" इत्युक्तम् ।

**अशोकपूर्णिमा** स्त्री नास्ति शोको यस्याः कर्म० । फाल्गुनपौर्णमासावधिवर्षपर्य्यन्तायां हेमा०व्र०ख० विष्णुधर्म्मोत्तरोक्ते १पौर्णमास्यां तत्र प्रतिमासं कर्त्तव्ये २व्रते च यथा "अशोकपूर्णिमामेतां समुपोष्यैकमना मम । उपोष्य न नरः शोकं प्राप्नोति स्त्री तथाऽपि वा । फाल्गुनामलपक्षस्य पौर्णमास्यां नृपोत्तम" इत्युपक्रम्य विधानमुक्त्वा "अनेनैव प्रकारेण चत्वारः फाल्गुनादयः उपोष्या नृपते मासाः" इत्युक्त्वा च "आषाढादिषु मासेषु तद्वत् प्रोक्तं तथाम्बुना । चतुर्ष्वेषु च प्रोक्तं तथा वै कार्त्तिकादिषु" इत्यनेन वर्षसाध्यत्वमस्या उक्तम् ।

**अशोकरोहिणी** स्त्री अशोक इव रोहति रुह—णिनि । कट्कीति ख्यातायाम् कटुकायां कटुकाशब्दे विवृतिः ।

**अशोकषष्ठी** स्त्री कर्म० । चैत्रोभयषष्ठ्याम् तत्र षष्ठीदेवीपूजनविधानात्तथात्वम्, "चैत्रे मासि सिते पक्षे षष्ठ्यां षष्ठीं प्रपूजयेत् । सुखाय पुत्रलाभाय शुक्लपक्षे तथैव च" उत्तरकामाख्यातन्त्रम् ।

**अशोका** स्त्री नास्ति शोकोदुःखं सेवनादस्याम् । १कटुकायाम् (कटकी) शुभ्रा० ढक् आशोकेयस्तद्भवे त्रि० । २चैत्रशुक्लषष्ठ्यां "सुते जाते तथा षष्ठ्यां षष्ठी द्वादशरूपिणी । वैशाखे चान्दनीत्युपक्रम्य चैत्रेऽशोका प्रकीर्त्तिता" ब्र० पु० परिभाषोक्ता ।

**अशोकारि** पु० अशोकं शोकाभावमृच्छति ऋ—इन् ६त० ।

शोकाभावदायके कदम्बवृक्षे शब्दच० कदम्बशब्दे विवृतिः ।

**अशोकाष्टमी** स्त्री नास्ति शोकोयस्याः कर्म्म० । चैत्रशुक्लाष्टम्यां,सा हि अशोककलिकापानादशोकदायिका । यथोक्तं हेमा०व्र०ख० लिङ्गपुरा० । “अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ । चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ।” कूर्म्मपुरा० । चैत्रे मासि सिताष्टम्यां बुधवारे पुनर्वसौ । अशोककुसुमैरुद्रमर्चयित्वा विधानतः । अशोकस्याष्ट कलिका मन्त्रेणोक्तेन भक्षयेत् ।” शोकं नैवाप्नुयान्मर्त्यः” अत्र बुधपुनर्वसुयोगः प्राशस्त्यार्थः हेमा० । “अशोककलिकापानमशोकतरुपूजनम्” शुक्लाष्टम्यां तु चैत्रस्य कृत्वा प्राप्नोति निर्वृतिमिति” लैङ्गे चैत्रशुक्लाष्टमीमात्रस्य निमित्ततोक्तेः । मन्त्रस्तु तत्रैव दृश्यः ।

**अशोच्य** त्रि० शुच–कर्म्मणि ण्यत् न०त० । शोचनानर्हे यमुद्दिश्य शुच्यते तद्भिन्ने । “अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे” गीता ।

**अशोधन** न० अभावे न०त० । १शोधनाभावे । न०ब० । २शोधनशून्ये त्रि० । शोधनञ्चाशुचेर्जलादिना मलाद्यपनयनम् ऋणादेः प्रतिदानञ्च तदभावोऽशोधनम् ।

**अशोधित** त्रि० न०त० । १अप्रक्षालिते जलादिनाऽकृतमलाद्यपनयने २अकृतऋणादिप्रतिदाने च ।

**अशोभन** त्रि० शुभ–कर्त्तरि ल्यु न०त० । १शोभनभिन्ने कुत्सिते । भावे ल्युट् अभावे न०त० । २मङ्गलाभावे ।

**अशोष्य** त्रि० शुष–णिच्–यत् न०त० । शोषयितुमशक्ये । “अच्छेद्योयमदाह्योऽयमक्लेद्योऽशोष्य एव च” गीता ।

**अशौच** न० शुचेर्भावः शौचं न०त० । १शुचित्वाभावे स्मृतिप्रसिद्धे, विहित-तत्कर्म्मानधिकारित्वसम्पादके २अधर्म्मविशेषे च । “जनने मरणे चैव त्र्यहाशौचस्य भागिनः” स्मृतिः । “समानं लघु चाशौचं पूर्व्वेणैव विशुध्यति । असमानं द्वितीयेनेति” यमः । स्वार्थे ष्यञ् आशौच्यमप्यत्र “आशौच्याद्विप्रमुच्येत” स्मृतिः । “अशौचं द्विविधं कालकृतं वस्तुस्वभावकृतञ्च तत्र कालकृतं “सप्तधः सूतकीत्यादिना” अशुद्धिशब्दे ४८० पृष्ठे दर्शितम् तथाच । सपिण्डमरणजननादिकृतं कालविशेषेऽशौचम् कालापगमे च तत्त्यागः । तच्च चेतननिष्ठम् । बहुधा चास्य शुद्धितत्त्वादौ प्रपञ्चः । वस्तूनामशौचं स्वभावात् यथा मलमूत्रादेः, तत्संसर्गादितरवस्तूनामप्यशौचं शुद्ध्यभावः एवं तेषां संसर्गादिकृतं चेतनादेरशौचं यथा उच्छिष्टचण्डालादिस्पर्शे एवमशौचिस्वामिकद्रव्यविशेषाणामप्यशौचम् शुद्ध्यभावः । अथ सपिण्डासपिण्डादिभेदेनाशौचकालविशेषो यथा “जनने मरणे च सप्तमपुरुषपर्य्यन्तं विप्रस्य दशाहः, क्षत्रियस्य द्वादशाहः, वैश्यस्य पञ्चदशाहः, शूद्रस्य मासः । दशमपुरुषपर्य्यन्तं सर्व्ववर्णेषु त्र्यहः चतुर्दशपुरुषपर्य्यन्तं पक्षिणी जन्मनामस्मृतिपर्य्यन्तमेकाहः ततः स्नानमात्रम् । कन्यायाः सापिण्ड्यं त्रिपौरुषम् । अथ विदेशस्थाशौचम् । अशौचकालाभ्यन्तरे विदेशस्थस्याशौचश्रवणे शेषाहैः शुद्धिः । अशौचकालोत्तरश्रवणे तु ज्ञातिजननाशौचं नास्त्येव । पुत्रजनने तु सचेलस्नानात् शुद्धिः । मरणाशौचे तु वर्षाभ्यन्तरश्रवणे त्र्यहात् शुद्धिः । सचेलस्नानादस्पृश्यत्वनिवृत्तिः । वर्षोत्तरश्रवणे स्नानेन शुद्धिः सपिण्डानाम् । पुत्रादीनान्तु मातृपितृभर्तृमरणे वर्षोत्तरमेकाहेन शुद्धिः, द्वितीयवर्षे श्रवणे सद्यः । संपूर्णाशौचातिक्रमे त्र्यहाशौचं न बालाद्यशौचातिक्रमे खण्डाशौचातिक्रमे वा । अथ गर्भस्रावाशौचम् । गर्भस्रावे तु स्त्रीणामेव पक्षाणाभ्यन्तरेऽशौचं तच्च लौकिके कर्म्मणि माससमसंख्यदिनव्यापकं द्वितीयमासावधिमाससमसंख्यदिनाधिकैकदिनात् परं ब्राह्मण्या वैदिककर्म्माधिकारः क्षत्रियाया दिनद्वयात् वैश्याया दिनत्रयात् शूद्रायास्तु दिनषट्कादिति हारलताप्रभृतयः । सप्तमाष्टममासीयगर्भपतने स्त्रीणां संपूर्णाशौचम् निर्गुणसपिण्डानामहोरात्रं यथेष्टाचरणसपिण्डानां त्रिरात्रम् तच्च जातस्य तद्दिनएव मरणे ज्ञेयं द्वितीयदिनादौ तु मरणे नवमादिमासजातबालकवत् । अथ स्त्र्यशौचम् । कन्यायाः जन्मप्रभृतिद्विवर्षाभ्यन्तरमरणे सद्यः शौचं तदुपरि वाग्दानपर्य्यन्तमेकाहः । वाग्दानोत्तरविवाहपर्य्यन्तं भर्त्तृकुले पितृकुले च कन्याया आदन्तजन्ममरणे सद्यः शौचम्, आ चूड़ादेकरात्रकम्, आ प्रदानात्त्रिरात्रं, स्यादिति विशेषः । दत्तकन्यायाः पितृगृहे प्रसवमरणयोः पित्रोः शयनादिसंसर्गशून्ययोरपि त्रिरात्रं तथाविधबन्धुवर्गाणामेकरात्रम् सम्पर्के दशरात्रम् । अथ बालाद्यशौचम् । नवमादिमासजातबालकस्याशौचकालाभ्यन्तरमरणे मातापित्रोरस्पृश्यत्वयुक्तं तदेव जननाशौचं ज्ञातीनान्त्वशौचं नास्ति नवमादिमासकृतजातयोस्तु कन्यापुत्रयोः पित्रादिसपिण्डानां जननाशौचं संपूर्णम् । पुत्रजन्मनि मुखदर्शनात् पूर्व्वं सचेलस्नानं कृत्वा ब्राह्मणेभ्यश्च यथाशक्ति दत्त्वा बालकाय काञ्चनं दत्त्वा मुखं पश्येत् । ततः पुनः सचेलस्नानम् ।

कन्याशौचमध्येऽपि जातकर्म्मषष्ठीपूजे कर्त्तव्ये । पुत्रजन्मनिमित्तकं वृद्धिश्राद्धं नाड़ीच्छेदात् पूर्व्वम् अशौचान्ते वा कर्त्तव्यम् । पुत्रकन्याजनने स्त्रीणां स्वजात्युक्तदशाहादितः परं लौकिककर्म्माधिकारः । पुत्रजनने तु वैदिककर्म्माधिकारो विंशतिरात्रोत्तरं स्नानात्, कन्याजनने तु मासोत्तरं स्नानात् ब्राह्मण्याः । शूद्रायास्त्वयमेव मासोत्तरं स्नानात् शुद्धिः । एतत् सर्व्वं पुत्रकन्ययोर्विद्यमानत्वे बोध्यम् । जननाशौचकालोत्तरं षण्मासाभ्यन्तरमजातदन्तमरणे पित्रोरेकाहः । एवं निर्गुणसोदरस्य, सपिण्डानान्तु सद्यः । षण्मासाभ्यन्तरेऽपि जातदन्तस्य मरणे पित्रोस्त्र्यहः सपिण्डानामेकाहः षण्मासोपरि द्विवर्षपर्य्यन्तं पित्रोस्त्र्यहः । सपिण्डानामकृतचूड़े मृते एकाहः कृतचूड़े त्र्यहः । द्विवर्षोपरि सर्व्वेषामनुपनीतस्य मरणे मासत्रयाधिकषड़्वर्षं यावत् त्र्यहः । पञ्चवर्षोपनीतस्य तदानीमपि दशाहः । मासत्रयाधिकषड़्वर्षोपरि सर्व्वेषां दशाहः । शूद्राणां तु षण्मासोपरि द्विवर्षाभ्यन्तरे पञ्चाहः । अत्रापि कृतचूड़स्य द्वादशाहः । द्विवर्षोपरि षड़्वर्षाभ्यन्तरे द्वादशाहः । अत्रापि दैवात् कृतोद्वाहेऽपि मासः । षड़्वर्षोपरि मासः । अत्र मासवर्षपरिगणना सावनेन "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा । मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता" इति सूर्य्यसिद्धान्तात् । असपिण्डाशौचं गुरु मातामहमरणे त्रिरात्रं भगिनीमातुलानीमातुलपितृष्वसृमातृष्वसृश्वश्रूनामातामहीमरणे पक्षिणी । श्वश्रूश्वशुरयोर्भिन्नग्रामस्थयोर्मरणेऽहोरात्रम् । आचार्य्यपत्नीपुत्रयोरुपाध्यायस्य मातृवंशाल्पवयस्य श्यालकस्य सहाध्यायिनः शिष्यस्य च मरणेऽहोरात्रं मातृष्वस्रीयपितृष्वस्रीयमातुलपुत्रभागिनेयमरणे पक्षिणी । पितामहभगिनीपुत्रपितामहीभ्रातृतद्भगिनीपुत्ररूपपितृबान्धवत्रयमरणे पक्षिणी । मातामहभगिनीपुत्रमातामहीभगिनीपुत्रमातामहीभ्रातृपुत्ररूपमातृबान्धवत्रयमरणेऽहोरात्रम् । एकग्रामवासिगोत्रजमरणेऽहोरात्रम् औरसव्यतिरिक्तपुत्रजननमरणयोः परपूर्व्वभार्य्याप्रसवमरणयोश्च त्रिरात्रम् । सजातीयपुरुषान्तरसंगृहीतस्वभार्य्यामरणे त्रिरात्रम् । मातृष्वसृपितृष्वसृमातुलभगिनीपुत्राणां स्वगृहस्थितानामाचार्य्यस्य च मरणे त्रिरात्रम् । श्वश्रूश्वशुरयोः सन्निधिमरणे त्रिरात्रं श्वश्रूश्वशुरयोरेकग्रामस्थितयोर्मरणे पक्षिणी । प्रथममन्येनोढ़ा तेनैव जनितपुत्त्रा पुत्रसहितैवान्यमाश्रिता पश्चात्तेनापि जनितपुत्रा तयोः पुत्रयोर्यथासम्भवं प्रसवमरणयोर्द्वितीयपुत्रपितुश्च त्रिरात्रं तत्सपिण्डानामेकरात्रं तथाविधपुत्रयोः परस्परप्रसवमरणयोर्मातृजात्युक्तमशौचम् । दौहित्रमरणे पक्षिणी । पितृमातृमरणे ऊढ़ानां कन्यानां त्रिरात्रम् । यदि मातृष्वसृप्रभृतीनां दहनवहने करोति तदा त्रिरात्रम् । मातामहादीनां त्रिरात्राभ्यन्तरमरणश्रवणे तच्छेषेण शुद्धिः । तत्तत्कालोत्तरश्रवणे तु नाशौचं किन्त्वाचारात् स्नानम् । अथ मृत्युविशेषाशौचम् । शास्त्राननुमतबुद्धिपूर्व्वकात्मघातिनो नाशौचादि । शास्त्रानुमत्याऽनशनादिकृतस्य प्रमादादनशनाशनिवह्निजलोद्बन्धनपतनसंग्रामशृङ्गिदंष्ट्रिनखिव्यालविषचाण्डालचौरहतस्य त्रिरात्रम् । शृङ्ग्यादिभिः क्रिया च क्रीड़ां कुर्व्वतः प्रमादहतस्यापि नाशौचादि । नागविप्रियकारित्वेन उद्धतस्य मरणोद्देशेन प्रवृत्तस्य विद्युद्धतस्य च चौर्य्यादिदोषेण राज्ञा हतस्य च कलहं कृत्वा चाण्डालाद्यैरसमानैर्हतस्य च व्याधिजनकौषधस्य विषस्य वह्नेश्च दातुर्मरणे पापक्षयप्रायश्चित्तस्य च नित्यं परापकारिणश्च क्रोधात् स्वयं प्रायोविषवह्निशस्त्रोद्बन्धनजलगिरिवृक्षप्रपातैर्मृतस्य चर्म्ममांसास्थ्यादिमयपात्रनिर्म्मातुर्विप्रादेश्च मनुष्यवधस्थानाधिकारिणश्च कण्ठदेशोत्पन्नभगरोगस्य पुंस्कर्म्मानर्हनपुंसकस्य च ब्राह्मणविषयापराधकरणाभिहतस्य च बुद्धिपूर्व्वकब्राह्मणहतस्य च महापातकिनश्च एवंविधपतितानां न दाहादिकं कार्य्यम् । तत्कृत्वा तप्तकृच्छ्रद्वयं कुर्य्यात् । म्लेच्छतस्करादिभिर्युद्धे स्वाम्यर्थं हतस्य विप्रादेर्दाहादिकमस्त्येव । अकृतप्रायश्चित्तस्य गलत्कुष्ठिनोऽपि दाहादिकं कार्य्यं शस्त्रेणाभिमुखहतस्य सद्यः शौचं दाहादि च । गवार्थे ब्राह्मणार्थे वा दण्डेन युद्धहतस्याहोरात्रमशौचम् । नृपतिरहितयुद्धे लगुड़ादिहतस्य पराङ्मुखहतस्य त्रिरात्रम् । गोविप्रपालनेऽभिमुखपराङ्मुखत्वाभ्यां हतस्य सद्यस्त्रिरात्रे । शस्त्रघातेतरक्षते सप्ताहादूर्द्धं मरणे सम्पूर्णं, शस्त्रघाते त्र्यहादूर्द्धं च प्रकृताशौचम् । शुद्धि०त० । एतत्प्रमाणानि तत्रैवानुसन्धेयानि । "मातृवद्वर्णसङ्कराः" इत्युक्तेर्मूर्द्धावसिक्ताम्बष्ठादीनामनुलोमजानां मातृवर्णानुसारेणाशौचम् प्रतिलोमजानां तु "शूद्रेण तु सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः" इत्युक्तेः शूद्रतुल्याशौचमिति रघुनन्दनादयः । आचारस्तु मातृतुल्यतया दृश्यते अतएव चण्डालादीनां दशाहाशौचाचारः । देवतामन्त्रादिदातुर्मरणे त्रिरात्रम् । वेदाङ्गादि शास्त्राध्यापकस्य तथाविधशिष्यस्य च मरणे एकाहः "गृहीतो देवता मन्त्रः सावित्रीग्रहणं कृतम् । यस्मात्तस्य त्रिरात्रं स्यात् ब्रह्मविद्या पठ्यते" इति "उपनीयाध्यापकीयकाश्चपि

त्रिरात्रकम्। वेदवेदाङ्गशास्त्राणां व्याख्यानं शिक्षितं यतः। ज्ञानं प्रतिष्ठितं येन वेदाभ्यासोद्यतः क्षतः। तस्मिन्मृते चैकरात्रं गुरोःशिष्ये तथैव” च मत्स्यसूक्तोक्तेः दत्तकपुत्रस्य मरणादिकुले त्रिरात्रम् जनककुलेऽशौचाभावः। तत्रायं विशेषः। सपिण्डदत्तकस्यापि त्रिरात्रं वाचनिकं तत्पुत्रादीनां तु संपूर्णमिति। असपिण्डदत्तकस्य तत्पुत्राणाञ्च त्रिरात्रमिति बहवः सपिण्डासपिण्डदत्तकतत्पुत्राणां त्रिरात्रमिति “भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः। जनने मरणे चैव त्र्यहाशौचस्य भागिनः” इत्युक्तेरिति दत्तकमीमांसादयः। शवानुगमनाशौचम्। ब्राह्मणशवस्यानुगमने ब्राह्मणस्य सचेलस्नानाग्निस्पर्शघृतप्राशनैः शुद्धिः। क्षत्रियस्यैकाहेन, वैश्यस्य द्व्यहेन, शूद्रस्य माणायामशतेन दिनत्रयेण च शुद्धिः। प्रमादाच्छूद्रशवानुगमने जलावगाहाग्निस्पर्शघृतप्राशनैः शुद्धिः। अनाथब्राह्मणस्य धर्मबुद्ध्या दहनवहनयोः स्नानघृतप्राशनाभ्यां सद्यः शौचम्। लोभेन सजातीयदाहे स्वजात्युक्ताशौचम्। असजातीयशवस्य दहनवहनस्पर्शैः शवजात्युक्ताशौचम्। स्नेहादसम्बन्धिदाहकविप्रस्य तद्गृहवासे त्रिरात्रं तत्कुलान्नभोजने दशरात्रं तद्गृहवासे तदन्नाभोजने चाहोरात्रं विशेषवचनाभावे सम्बन्धिनोमातुलादेरल्पेनापि अदाहे त्रिरात्रं चिताधूमसेवने सचेलस्नानं कृते शूद्रेऽस्थिसञ्चयनकालाभ्यन्तरे तद्गृहं गत्वाऽश्रुपातने विप्रस्य त्रिरात्रम शौचं, स्नानान्तरे विशेषवचनाभावेऽहोरात्रं तद्गृहे तदूर्द्धं मासाभ्यन्तरेऽहोरात्रं सचेलस्नानञ्च। सजातेर्द्विवर्णैश्च क्षत्रियवैश्ययोर्द्व्यहेन ब्राह्मणः शुध्यति शूद्रस्तु स्पर्शं विनानुगमने सर्वत्र नक्तेन। मृतस्य शूद्रस्य बान्धवैः सह रोदनरहितविलापमात्रेऽहोरात्रेण। अस्थिसञ्चयनकालश्च ब्राह्मणस्य चतुरहः शूद्रस्य दशाहः। त्र्यहाशौचे द्वितीयाहः। मरणाशौचे विप्रस्य चतुर्थाहेऽस्पृश्यतानिवृत्तिः। शूद्रस्य दशमदिने सर्वस्य खण्डाशौचकाले त्रिभागकालेन अतिक्रान्ताशौचे सचेलस्नानेन जनने तु सपिण्डानां स्पृश्यतैव। पुत्रोत्पत्तौ स्नानात् पितुः स्पृश्यत्वं एवं विमातॄणामपि। एवं सूतिकास्पर्शे पितुर्विमातॄणाञ्च सूतिकातुल्यकालास्पृश्यत्वम्। अन्येषां स्नानमात्रं कन्यापुत्रजनने मातुर्दशरात्रमङ्गास्पृश्यत्वं शूद्रायास्तु दशरात्रमस्पृश्यत्वम्। अशौचकालादिविषये च प्रायोनिबन्धकर्तॄणां मतभेदोदृश्यते बाहुल्यभयात् तन्न लिखितम् स्वस्वदेशप्रचलितनिबन्धानुसारेण तदवसेयम्। अशौचे तु वर्णादिविशेषादौ इत्र मध्ये हारलतायां दक्षेणोक्तः यथा “सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा। षड्दश द्वादशाहश्च पक्षोमासस्तथैव च। मरणान्तं तथा चान्यत् दश पक्षास्तु सूतके”। तत्र मरणान्तं जननमरणभिन्ननिमित्तम्। यथा “क्रियाहीनस्य मूर्खस्य महारोगिण एव च। यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्” शु॰त॰ स्मृतिः। “अस्नात्वा चाप्यहुत्वा च अदत्त्वाऽन्नं तथा द्विजः। एवंविधस्य विप्रस्य सर्वदा सूतकं भवेत्” दक्षः “कन्या पूर्वा यस्य गेहे भार्या स्यात्तस्य नित्यशः। अशौचं सर्वकार्येषु देहे भवति सर्वदेति” नि॰सि॰स्मृतिः “मरणान्तपक्षस्तु निन्दार्थवादपरः “नामधारकविप्रस्तु दशाहं सूतकी भवेदिति” माधवधृतवचने नामधारकविप्रस्यापि दशाहाशौचविधानात्” नि॰सि॰। दासाद्यशौचे विशेषः तत्र दासाः पञ्चदशधा दासशब्दे वक्ष्यमाणास्तेषु गर्भदासस्य सपिण्डान्तरजननमरणयोः स्वामिकार्ये सद्यः शौचं भक्तदासस्य त्र्यहः “सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः” नि॰सि॰स्मृत्युक्तेः कर्म्मकरदासानां विशेषः “मूल्यैः कर्म्मकराः शूद्रा दासीदासास्तथैव च। स्नाने शरीरसंस्कारे गृहकर्मण्यदूषिताः” शाता॰ उक्तः। दत्तदासदास्यादीनां तु “दासी दासश्च सर्वोवै यस्य वर्णस्य यो भवेत्। तद्वर्णस्य भवेच्छौचं दास्या मासन्तु सूतकम्” अङ्गि॰ “स्वामिशौचेन दासाद्याः स्पृश्याः मासात्तु कर्म्मसु। योग्याः स्युर्मासतोदासी सूतके स्पृश्यतामियात्” षट्त्रिं॰। दत्तदासादीनां सपिण्डमरणादौ स्वाम्यशौचमप्रसङ्गस्यर्कादिनादूर्द्ध्वम् अल्पपि मासाद्यशौचे स्वामिकार्ये स्पृश्यतेति करदत्तः एवमन्तेवासिनामपि। “दासान्तेवासिभृतकाः शिष्याश्चैकवासिनः। स्वामितुल्येन शौचेन शुध्यन्ति मृतसूतके” ब्रह्म॰ उक्तेः। दासादेः स्वामितत्सपिण्डमरणेऽशौचमाह विष्णुः “पत्नीनां दासानामानुलोम्ये स्वामितुल्यमशौचं मृते स्वामिन्यात्मीयम्” अत्रानुलोम्येनेत्युक्तेः प्रातिलोम्येऽशौचाभाव एव तस्य शास्त्रीयदासत्वाभावात् “वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः” इति याज्ञ॰ स्मृत्या प्रातिलोम्येन दासत्वनिषेधात्। “सूतकानां परिच्छेद इत्यादि मू॰सि॰ प्राप्युक्तवचनात् सावनदिनस्यैव ग्राह्यता। मिताक्षराकृता तु रात्रिं त्रिभागां कृत्वाद्यभागद्वये चेत् पूर्व्वदिनम्, अन्त्ये चेत् परदिनमिति आरम्भकाले विशेष उक्तः। प्रागर्द्धरात्रात् प्राग्वा सूर्य्योदयात् पूर्व्वदिनमिति मतान्तरम्। एतेषु देशाचारतो व्यवस्था। अशौचप्रभवोऽपि तत्तुल्य-

मशौचम् । "अथ ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावदशौचम् यावत्तेषाम्" विष्णुः एतत् ज्ञानतः, अज्ञाने तु "अन्नदशाहेभुक्त्वान्नं सूतके सूतकेऽपि वा तस्याशौचं भवेत्तावद्यावदन्नं व्रजत्यधः" "अङ्गिरसोक्तेश्च" "उभयत्र दशाहानि कुलस्यान्नं न भुज्यते" इति यमः । उभयत्र जननमरणयोः दशाहानीत्यशौचकालोपलक्षणम् । कुलस्य सूतकयुक्तस्य सम्बन्ध्यन्नमसकुल्यैर्नभोक्तव्यम् । सकुल्यानां न पुनर्दोषः "सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत्" इति तेनैवोक्तत्वात् अयञ्च निषेधो दातृभोक्त्रोरन्यतरेण जननमरणे ज्ञाते सति द्रष्टव्यः । "उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेदिति षड्‌त्रिंशन्मतदर्शनात् । तथाविवाहादिषु सूतकोत्पत्तेः प्राक् ब्राह्मणार्थं पृथक्कृतमन्नं भोक्तव्यमेव । "विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसङ्कल्पितार्थेषु न दोषः परिकीर्त्तित" इति बृहस्पतिस्मरणात् तथाऽपरोऽपि विशेषः षड्‌विंशन्मते दर्शितः । "विवाहोत्सवयज्ञेषु त्वन्तरामृतसूतके । परैरन्नं प्रदातव्यम्भोक्तव्यञ्च द्विजोत्तमैः । भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः" नि॰सि॰ इति। तथाऽशौचिपरिग्रहेऽपि केषु चिद्‌द्रव्येषु दोषाभावः । यथाह मरीचिः । "लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च । तिलौषधाजिने चैव पक्वापक्वे स्वयंग्रहः । पण्येषु चैव सर्वेषु नाशौचं मृतसूतके" इति । शाकमभक्ष्य जातम् । अपक्वान्नगुड़ादि। स्वयंग्रह इति स्वयमेव स्वाम्यनुज्ञातो गृह्णीयात् न तद्धस्तात् । एतद्‌व्यामान्नविषयं सत्रमहत्तविषयञ्च । "अन्नसत्रप्रवृत्तानामाममन्नमगर्हितम् । भुक्त्वा पक्वान्नमेतेषां रात्रन्तु पयः पिबेदिति" अङ्गिरः स्मरणात्। अत्र पक्वशब्दोऽभक्ष्यव्यतिरिक्तौदनादिविषयः । शवसंसर्गनिमित्ताशौचे त्वङ्गिरसा विशेष उक्तः । "अशौचं यस्य संसर्गादापतेद्‌गृहमेधिनः । क्रियास्तस्यैव लुप्यन्ते गृह्याण्याञ्च न तद्भवेदिति" । तदशौचञ्चैवञ्च गृहमेधिन एव न पुनस्तद्‌गृहमवानां भार्यादीनान्तद्‌द्रव्याणाञ्च भवेदित्यर्थः । एवमेवातिक्रान्ताशौचेऽपि । "संसर्गाद्यस्य चाशौचं यस्यातिक्रान्तकालता । तदीयस्य पदार्थस्य नाशौचं विद्यते क्वचित्" षट्त्रि॰ नि॰सि॰ । कर्म्मविशेषे कर्म्मारम्भे च तत्तत्कर्त्तृणि अशौचाभावः यथोक्तम् । "कारवः शिल्पिनो वैद्या दासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः" प्रचेताः। लघुविष्णुना च "व्रतयज्ञविवाहेषु श्राद्धे होमार्च्चने जपे । आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । प्रारम्भोवरणं यज्ञे संकल्पो व्रतसत्त्रयोः । नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया" वरणमिति ऋत्विक्परम् तेषाञ्च मधुपर्कग्रहणोत्तरमशौचाभावः। "गृहीतमधुपर्कास्तु यजमानात्तु ऋत्विजः। पश्चादशौचं पतितं न भवेदिति निश्चयः" ब्रह्मपुरा॰ उक्तेः एतन्मूलकमेव त्रिंशच्छ्लोक्यां तत्तत्कार्य्येषु अशौचाभाववचनम् यथा "तत्तत्कार्य्येषु सत्रिव्रतिस्नपनृपगृहीजितर्त्विक्‌स्वदेयश्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्पग्रातुराणाम् । संप्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूड़ातीर्थाख्ययात्राजपपरिणयनाद्युत्सवेष्वेतदेव" "तीर्थेति आकस्मिकतीर्थप्राप्तौ तदङ्गं श्राद्धमशौचे कर्त्तव्यम् "विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्म्मणि । न तत्र सूतकं तद्वत् कर्म्म यज्ञादि कारयेत्" पैठी॰ उक्तेः यात्रा रथयात्रादि । जपः पुरश्चरणादि संकल्पितस्तोत्रपाठादिश्च । व्रती संकल्पेन गृहीतव्रतादिः "गृहीतनियमस्यापि न स्यादन्यस्य कस्यचिदिति" स्मृत्युक्तेः "वरं प्राणान् परित्यज्य सञ्छिन्द्यां शिरसोऽपि वा नत्वनभ्यर्च्य भोक्ष्यं भगवन्तं त्रिलोचनम्" इत्युक्तनियमवतो देवपूजायामधिकारः। कृतनियमविषया "शिवविष्ण्वर्चने दीक्षा यस्य चाग्निपरिग्रहः । श्रौतकर्म्माणि कुर्व्वीत स्नातः शुद्धिमवाप्नुयात्" यमोक्तिः "जपो देवार्च्चनविधिः कार्य्यो दीक्षान्वितैर्नरैः नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम्" सत्रापत्नी च । "अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम् । स्नात्वा निर्व्वर्त्य नित्यञ्च मानस्या क्रियया हि वै । बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्" शारदा। मानसजपे तु अकृतनियमस्यापि अशुचेरप्यधिकारः "अशुचिर्वा शुचिर्वापि गच्छन् तिष्ठन्स्वपन् । मन्त्रैकशरणोविद्वान् मनसैव समभ्यसेत्" रामार्च्चनचन्द्रिकोक्तेः "मानसमप्यशुचोति" वचनं तु पठनपाठनाविषयम् । तारादिविषये तु अकृतनियमस्याप्यधिकारः "तारायाश्चैव काल्याश्च त्रिपुराया विशेषतः । जनने मरणे चैव न त्यजेयुर्जपार्च्चनम्" इति तन्त्रोक्तेः । अथाशौचे नियमाः नि॰सि॰याज्ञवल्क्यः "इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः । विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः । आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान् । प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः" । "प्रवेशनादिकं

कर्म प्रेतसंस्पर्शिनामपि" नि॰सि॰। "क्रीतलब्धाशनाभूमौ स्वपेयुस्ते पृथक्क्षितौ या॰ इदञ्चाद्येऽह्नि। यथाशुद्धितत्त्वे वैजवापः"शमीमालभन्ते "शमी मे पापं शमयत्विति" अश्मानमालभन्ते "अश्मेव स्थिरोभूयासमिति" अग्निम्-"अग्निर्नःशर्म यच्छत्विति"ज्योतिष्मन्तरा गामजमुपस्पृशन्तः क्रीत्वा लब्ध्वाऽन्यगेहादेकान्नमलवणमेकरात्रं दिवाभोक्तव्यं 'त्रिरात्रं च कर्म्मोपरमणम्" क्रीताद्यशनमुपवासाशक्तस्य। आश्वलानस्तु "नैतस्यां रात्र्यामन्नं पचेरंस्त्रिरात्रमक्षारलवणाशिनः स्युर्द्वादशरात्रं चेत्याह महागुरुषु"। अशक्तौ रत्नाकरे आपस्तम्बः "भार्याः परमगुरुसंस्थायां चाकालभोजनानि कुर्वीरन्"यदा क्षतिः परदिने तावत्कालमित्यर्थः। वृहस्पतिः "अधःशय्यासना दीना मलिना भोगवर्जिताः। अक्षारलवणाशाः स्युः सर्व्वे क्रीताशनास्तथा" अक्षारलवणशब्देऽक्षारलवणशब्दार्थ उक्तः। भोगोऽभ्यक्ताम्बूलादिः "तैलाभ्यक्तो बान्धवानामङ्गसंवाहनञ्च यत्। तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्ववान्धवाः मार्क॰पुरा॰ वाक्यन्तु अन्यदिनविषयम्"अशौचान्ते तिलकल्कैः स्नाता गृहं प्रविशेयुरिति विष्णूक्तेः सपिण्डानामस्थिसञ्चयनादूर्द्धं भोगोऽप्युक्तः विष्णु॰पु॰। "शय्यासनोपभोगस्तु सपिण्डानामपीष्यते अस्थिसञ्चयनादूर्द्धं संयोगस्तु न योषिताम्" तिलान् ददत पानीयं दीपं ददत जाग्रतः। ज्ञातिभिः सह भोक्तव्यमेतत् प्रेतेषु दुर्लभम्" भारतम्। भोजनं च दिवैव। दिवैव च भोक्तव्यममांसं मनुजर्षभेत्युक्तेः प्रागुक्तवैजवापोक्तेश्च। "क्रीत्वा लब्ध्वा या दिवान्नमश्नीयुः" पारस्करोक्तेश्च अशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्" आदि पुरा॰ ज्ञातिभिः सह भोजनञ्च तृतीयादिदिनपरम्। प्रथमेऽह्नि तृतीये च सप्तमे दशमे तथा। ज्ञातिभिः सह भोक्तव्यमिति" मरीच्युक्तेः। "मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ" मनुः। लवणक्षीरमाषान्नापूपमांसानि पायसम्। वर्ज्जयेदाहनाद्येषु बालवृद्धातुरैर्विना" देवजानीयकारि॰ "मत्स्यमांसानि न भक्षयेयुरा प्रदानात्" गौत॰ "अधस्तरे त्र्यहमनश्नन्त आसीरन्" वसिष्ठः अशौचे पीठादिनिषेधात् अशकाले उपवेशार्थं कटस्तरः कार्य्यः "प्राणिषु मृण्मयेषु पर्णपुटेषु वा ऽश्नीरन्" हारीतः। "उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य चैव हि" मरीचिः। अन्यदिने विशेषः"यस्य यस्य तु वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः। स तत्र गृहशुद्धिं च वस्त्रशुद्धिं करोत्यपि। ग्रामाद्बहिस्ततोगत्वा प्रेतस्पृष्टे तु वाससी। अन्त्यानामाश्रितानाञ्च त्यक्त्वा स्नानं करोत्यथ" प्राङ्मम् अत्र तिलकल्कादिस्नानं प्रागुक्तम् अशौचाहेषु सर्व्वदिनेषु वर्ज्जनीयधर्म्मान्तरमाह शङ्खः"दानं प्रतिग्रहोहोमः स्वाध्यायः पितृकर्म च। प्रेतपिण्डक्रिया वर्ज्जमशौचे विनिवर्त्तते" अत्र विशेषोमिताक्षरायाम् "अशुचित्वेन सकलश्रौतस्मार्त्तकर्म्माधिकारनिवृत्तौ प्रसक्तायां केषुचिदभ्यनुज्ञानार्थ माह। "वैतानौपासनाः कार्य्याः क्रियाश्च श्रुतिचोदनात्"या॰। वितानोऽग्नीनां विस्तारः तत्र भवावैताना स्त्रेताग्निसाध्याः अग्निहोत्रदर्शपूर्णमासाद्याः क्रिया उच्यन्ते। प्रतिदिनमुपास्यत इत्युपासनो गृह्योऽग्निस्तत्रभवाः औपासनाः सायम्प्रातर्होमक्रिया उच्यन्ते। ता वैतानौपासना वैदिक्यः क्रियाः कार्य्याः कथं वैदिकत्वमिति चेत् श्रुतिचोदनात्। तथाहि। "यावज्जीवमग्निहोत्रञ्जुहुयात्" इत्यादि श्रुतिभिरग्निहोत्रादीनां चोदना स्पष्टैव। तथा "अहरहः स्वाहां कुर्यादन्नाऽभावे केनचिदा काष्ठादिति" श्रुत्यौपासनहोमोऽपि चोद्यते। अत्र च श्रौतत्वविशेषणोपादानात् स्मार्त्तक्रियाणां दानादीनामननुष्ठानङ्गम्यते। अतएव वैयाघ्रपादेनोक्तम्। "स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके। श्रौते कर्म्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति"। श्रौतानाञ्च कार्य्यत्वाभिधानान्नित्यनैमित्तिकानां करणम्। यथाह पैठीनसिः। "नित्यानि निवर्त्तेरन्वैतानवर्ज्जं शालाग्नौ चैके" इति। नित्यानि निवर्त्तेरन् इत्यविशेषेणावश्यकानां नित्यनैमित्तिकानान्निवृत्तौ प्रसक्तायां वैतानवर्ज्जमित्यग्नित्रयसाध्यावश्यकानामपर्य्युदासः। शालाग्नौ चैक इति गृह्याग्नौ भवानामप्यावश्यकानां पाक्षिकः पर्य्युदास उक्तः। अतस्तेष्वशौचं नास्त्येव। काम्यानां पुनःशौचाभावादननुष्ठानम्। मनुनाप्यनेनैवाभिप्रायेणोक्तम्। "प्रत्यूहेन्नाग्निषु क्रिया"इति। अग्निषु क्रिया न प्रत्यूहेदित्यनग्निसाध्यानाम्पञ्चमहायज्ञादीनान्निवृत्तिः। अत एव संवर्त्तः। "होमन्तत्र प्रकुर्व्वीत शुष्कान्नेन फलेन वा। पञ्चयज्ञविधानन्तु न कुर्य्यात् मृत्युजन्मनोरिति"। वैश्वदेवस्य अग्निसाध्यत्वेऽपि वचनान्निवृत्तिः"विप्रोदशाहमासीत वैश्वदेवविवर्ज्जितं" इति तेनैवोक्तत्वात्। "सूतके कर्मणान्त्यागः सन्ध्यादीनां विधीयत"इतियद्यपि सन्ध्याया निवृत्तिः श्रूयते तथाप्यञ्जलिप्रदेपादिकङ्कार्य्यम्। "सूतके सावित्र्या चाञ्जलिम्प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्यादिति"पैठिनसिस्मरणात्। यद्यपि वैतानौपासनाःकार्य्या इति सामान्येनोक्तं तथाप्यन्येन कारयितव्यम्। "अन्य एतानि कुर्युरिति" पैठीनसिस्मर-

षात्। बृहस्पतिनाप्युक्तम्। "सूतके मृतके चैव अशक्तौ श्राद्धभोजने। प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत्" इति। तथा स्मार्त्तेऽपि पिण्डपितृयज्ञश्रावणीकर्माश्वयुज्यादिकश्च नित्यो होमः कार्य्य एव। "सूतके तु सगोत्रस्य स्मार्त्तकर्म्म-कथम्भवेत्। पिण्डयज्ञं चरुं होममसगोत्रेण कारयेदिति" जातूकर्ण्यस्मरणात्। यद्यपि स्मार्त्ते कर्मण्युक्तं तथापि स्वद्रव्यत्यागात्मकप्रधानं स्वयं कुर्य्यात् तस्यान्यनिष्पाद्यत्वात्। अतएवोक्तम्। "श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादिति"। यत्पुनः "दानप्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते" इति होमप्रतिषेधः। स काम्याभिप्रायो वैश्वदेवाभिप्रायो वा व्यवस्थापनीयः" इत्यन्तेन। संध्यादौ नाममयवादमाहापरार्के पुलस्त्यः "संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। न त्यजेत् सूतके वापि त्यजन् गच्छेदधोद्विजः। सूतके मृतके चैव संध्याकर्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः"। यत्तु चन्द्रिकायां जाबालः "सन्ध्यां पञ्च महायज्ञान्नैत्यिकं स्मृतिकर्म च। तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रियेति" यच्च संवर्त्तः "सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते" यच्च विष्णु॰ पुरा॰ "सर्वकालमुपासा तु सन्ध्ययोः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः" इति तत् संपूर्णसन्ध्यापरम् "अर्घ्यान्ता मानसी सन्ध्या कुशवारिविवर्जितेति" शुद्धिदीपे च्यवनोक्तेः। पैठीनसिस्तत्र मन्त्रोच्चारणमप्याह "सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्य्यं ध्यायन्नमस्कुर्य्यात्" प्रयोगपारिजाते भरद्वाजोऽपि "सूतके मृतके कुर्य्यात् प्राणायाममन्त्रकम्। तथा मार्जनमन्त्रांस्तु मनसोच्चार्य्य मार्जयेत्। गायत्रीं सम्यगुच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत्। मार्जनं तु न वा कार्य्यमुपस्थानं न चैव हि" एवं मिताक्षरापारिजातादौ अशौचे सन्ध्याकरणभेदस्योक्तेः गौड़ानां तदनाचरणमनाचार एव तस्य श्रौतत्वेन स्मृत्या बाधानुचितत्वादिति द्रष्टव्यम्। "ग्रहणादावप्यशौचापवादमाह व्याघ्रः "आर्त्तकर्मपरित्यागो राहोरन्यत्र सूतके इति" लैङ्गे "सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते" प्रयोगपारिजाते "बृहस्पतिः "कन्याविवाहसंक्रान्तौ सूतकं न कदाचन"। महागुरुनिपातवर्षमध्ये कर्मविशेषेऽशौचम्। "स्नानं चैव महादानं स्वाध्यायं चाग्नितर्पणम्। प्रथमाब्दे न कुर्वीत महागुरुनिपातने" हेमा॰ स्मृतिः। महागुरवश्च माता पिता भर्त्ता च अतिगुरुशब्देनोक्ताः। "प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न वा पैत्रं यावत् पूर्णो न वत्सरः" देवी पु॰ अग्नितर्पणं ब्रह्महोमादि, न त्वाधानं तस्य प्रथमाब्देऽपि विधानात् यथा "पितुः सपिण्डीकरणं वार्षिकं मृतवासरे। आधानाद्युपसंप्राप्तावेतत् प्रागपि वत्सरात्" हेमा॰ उश॰। अग्नितर्पणमित्यत्र अन्यतर्पणमिति शुद्धितत्त्वे पाठः। आधानादीत्यादिपदेन आवश्यक वृद्धिनिमित्तनित्यकर्मणोर्ग्रहणम्। श्राद्धकौमुद्यां देवी पु॰ "महातीर्थस्य गमनमुपवासव्रतानि च। संवत्सरे न कुर्वीत महागुरुनिपातने" एतदेकवाक्यतया प्रागुक्तवचने स्नानपदं काम्यतीर्थादिस्नानपरम् महादानसाहचर्य्यात् स्वाध्यायपदमपि काम्यवेदपारायणपरम् "तथैव काम्यं यत् कर्म वत्सरात् प्रथमादृते" लघुहा॰ वचनैकवाक्यत्वात् "महागुरुनिपाते तु काम्यं किञ्चित् न चाचरेत्। आर्त्विज्यं ब्रह्मचर्य्यं च श्राद्धं दैवतमेव यत्" कालि॰पु॰ "सपिण्डीकरणादूर्द्ध्वं प्रेतः पार्वणभुग्भवेत्। वृद्धीष्टापूर्त्तयोग्यश्च गृहस्थश्च सदा भवेत्" मत्स्य पु॰। वृद्धीत्यनेन वृद्धिनिमित्तकसपिण्डनाभावे नाधिकारीत्यर्थः गृहस्थश्च सदा भवेदित्यनेन गृहस्थोचितनित्यपञ्चयज्ञेष्वधिकारः। अतएव पितृमरणाशौचोत्तरमेव वैश्वदेवश्राद्धं विहितम्। एवं वृद्धिश्राद्धाभावे वर्षपर्य्यन्तं तत्तत्कर्मण्यशौचमिति स्थिते "प्रेतकर्माण्यनिवर्त्त्य चरेन्नाभ्युदयक्रियाम्। आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेदिति" ज्योतिषवाक्यं शुभदमित्युक्त्या शुद्धैश्चतुर्थाब्दकर्त्तव्यश्राद्धोत्तरं प्राशस्त्यमात्रपरमेव। एतच्चाशौचं वर्षमध्ये आवश्यकदर्शसपिण्डनाभावएव। "अर्वाक् संवत्सरात् वृद्धौ पूर्णे संवत्सरेऽपि वा" इत्यादि स्मृत्यनुसारेण आवश्यकवृद्धिनिमित्तसपिण्डापकर्षे तु काम्यादिकर्मकरणयोग्यता। अत्र विशेषमाह लौगाक्षिः। "अन्येषां प्रेतकर्माणि महागुरुनिपातने। कुर्य्यात् संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत्" प्रेतकर्म दाहाद्येकादशाहान्तं तत्राशौचान्तरस्याप्रतिबन्धकत्वात् "आद्यं श्राद्धमशुद्धोऽपि कुर्य्यादेकादशेऽहनीति निर्ण॰सि॰धृतस्मृतेः। तेन एकं सपिण्डनं वार्षिकादि च। एवं देवी॰ पु॰वचनेऽपि पैत्रपदं पार्वणसपिण्डनवार्षिकपरम्। अत्रापवादः माधवीये काष्ण्य॰ "पत्न्याः पुत्रस्य तत्पुत्रभ्रातृतत्तनयेषु च। स्नुषायाञ्च पितुश्चैव संघातमरणं यदि। अर्वागब्दात् पितृपूर्वं सपिण्डमाचरेत्" लौगा॰ "पत्नीपुत्रस्तथा पौत्रो भ्राता तत्पुत्रकावपि। पितरौ च यदैकस्मिन् म्रियेरन् वासरे तदा। आद्यमेकादशे कुर्य्यात् त्रिपक्षे तु सपिण्डनम्" इदम् एकदिनमरणविषयमेव "महागुरुनिपाते तु प्रेतकार्य्यं यथाविधि। कुर्य्यात् संवत्-

सरादर्व्वागेकोद्दिष्टं न पार्व्वणम्” इति धवलनिबन्धवाक्यात् । “माता चैव तथा भ्राता भार्य्या पुत्रस्तथा स्नुषा । एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः” इति भृगुवचनं भिन्नदिनमरणेऽपि पितुर्न्नामन्यस्य सपिण्डनं न कार्य्यमेषामेव कार्य्यमित्येतत्परमिति नि॰ सि॰ । “पितर्य्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते । मातर्य्यपि च वृत्तायां पितृश्राद्धादृते समाम्” माध॰ धृत॰ वचनन्तु वार्षिकश्राद्धपरम् मातुः ऋते इत्याकर्षः मातरं पितरं च विना अन्यस्य श्राद्धात् वार्षिकश्राद्धात् समां व्याप्य निवर्त्तते इत्यर्थः । “अन्यश्राद्धं पराचन्न गन्धमाल्यञ्च मैथुनम् । वर्ज्जयेद्गुरुपाते तु यावत् पूर्णो न वत्सरः” देवलवचने अन्यपदं भृगुवचनोक्तमात्रादिभिन्नपरम् । अन्नपदञ्च सिद्धान्नपरं “भिस्सोऽस्त्री भक्तमन्धोऽन्नमित्यमरोक्तेः “सिद्धमन्नमुदाहृतम्” इत्युक्तेश्च न तु परस्वामिकामान्नमात्रपरम् अन्नशब्देन रूढ्या परिभाषया च सिद्धान्नस्यैव झटित्युपस्थापकत्वात् आमान्नस्य लक्ष्यार्थतया विलम्बेनोपस्थितेश्च । एवमेवाचारः “विशेषतः शिवापूजां प्रमीतपितृको नरः । यावत् वत्सरपर्य्यन्तं मनसाऽपि न चिन्तयेत्” कालिकापु॰ वाक्यं वार्षिकदुर्गापूजाविषयं नित्यपूजायाः कर्त्तव्यतायाः दशाहमध्येऽपि प्राप्तुक्तेः । “द्वयोरेव महागुर्व्वोरब्दमेकमशौचकम् । नान्येषामधिकाशौचं स्वजातिविहितात् क्वचित्” श्राद्धकौ॰ धृतजात॰ वचनं तु पुरुषविषयम् । स्त्रीणां भर्त्तुर्महागुरुतायाः सर्व्वसम्मतत्वेन तन्मरणे अधिकाशौचस्योचितत्वात् अतएव “महागुरुविपत्तिषु इत्यादिना सामान्यतो बहुवचनमुपात्तम् । “गयाश्राद्धं मृतानां तु पूर्णे त्वब्दे प्रशस्यते” हेमा॰ भवि॰ पु॰ । तीर्थश्राद्धं गयाश्राद्धम् श्राद्धमन्यच्च पैतृकम् । अब्दमध्ये न कुर्वीत महागुरुविपत्तिषु लिख॰ गरु॰ पु॰ । इदं वृद्ध्यर्थसपिण्डनाभावे । वृद्धौ सपिण्डनापकर्षे तु वर्षमध्येऽपि दर्शादिकं कार्य्यमेव “पितुः सपिण्डनं कृत्वा कुर्य्यान्मासानुमासिकम्” छन्दोगप॰ वचनात् “सपिण्डीकरणादूर्द्ध्वं नरः पार्व्वणभुग्भवेत्” मात्स्यात् “ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते । विन्दते पितृलोकं च ततः श्राद्धं प्रवर्त्तते” इति हारीतवचनाच्चेति स्मृत पार्षिः । “उद्वाहश्चोपनयनं प्रथमेऽब्दे महीपते ! । कृते सपिण्डनेऽप्यूर्द्ध्वमस्मू ां चोद्धरणं त्यजेत् । तथापि कर्त्तुमिच्छन्ति तीर्थानि चैतानि वै सुताः । मासिकान्यर्पितानि चापकृष्य चरेत् पुनः” ब्रह्म वै॰ पु॰ । अत्रेदं बोध्यं वृद्धिं विना कुलधर्म्मैकपुत्रत्वादिवशतः वर्षमध्ये सपिण्डनापकर्षेऽपि पितृत्वप्राप्तिर्य्यान्त्येव “कृते सपिण्डीकरणे नरः संवत्सरात् परम् । प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते” विष्णु ध॰ उक्तेः “अर्व्वाक् संवत्सराद्यस्य सपिण्डीकरणं भवेत् । प्रेतत्वमपि तस्यापि विज्ञेयं वत्सरं नृप !” इत्यग्निपु॰ उक्तेश्च । तेन एतद्विषये महागुरूणां प्रेतत्वसत्त्वेन विवाहोपनयनादौ दैवपैत्र्येषु च नाधिकारः वृद्धिनिमित्ते सपिण्डने संवत्सरमप्राप्यापि प्रेतत्वविमुक्तत्वेन सर्व्वत्राधिकारः । “अर्व्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा । ये सपिण्डीकृताः प्रेता न तेषां च पृथक्क्रिया” शाता॰ वाक्ये पूर्णवत्सरस्येव वृद्ध्यारम्भकालस्यापि प्रेतत्वविमोचनहेतुत्वोक्तेः तथात्वम् । यतः सपिण्डीकृता अतो न प्रेताः प्रेतपदप्रतिपाद्या विमुक्तप्रेतभावा इत्यर्थः । तत्र विशेषः । “अस्थिच्छेदं गयाश्राद्धं श्राद्धं चापरपाक्षिकम् । प्रथमेऽब्देऽपि कुर्वीत यदि स्याद्भक्तिमान् सुतः” मदनपारिजातधृतवचनम् । “भक्तिमान् भक्त्याख्यश्राद्धकारीति मदनपारिजातादयः । “भक्तिश्राद्धं तु त्रिस्थलीसेतौ उक्तम् तच्च गयाश्राद्धादिपद्धतौ अस्माभिर्दर्शितं तत एवावगन्तव्यम् । एवं मृताशौचमपि कर्म्मविशेषानर्हत्वप्रयोजकम् । विवरणं मृताशौचशब्दे” ग्रहणेऽशौचं ग्रहणशब्दे वक्ष्यते । रजस्वलाशौचन्तु अशुद्धिशब्दे उक्तप्रायम् । “अष्टादशाद्यशौचाद्यैर्यदि विघ्नं प्रजायते । तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते” तिथि॰ त॰ स्मृतिः ।

**अशौचसङ्कर** अशौचयोः सङ्करः । जननमरणाशौचयोर्मध्ये पुनर्जननामरणाशौचयोः पातेन जनिते अशौचविशेषे । तत्कालभेदो यथा जननाशौचमध्ये जननाशौचान्तरपाते पूर्व्वाशौचकालेन शुद्धिः । पूर्व्वाशौचान्त्यदिने पूर्व्वाशौचान्तरपाते अन्तिमदिनोत्तरदिनद्वयेन शुद्धिः । अन्तिमदिवसोत्तरप्रभाते सूर्य्योदयात् पूर्व्वं तत्पाते सूर्य्योदयावधिदिनत्रयेण शुद्धिः । एवं मरणाशौचेऽपि । वर्द्धितदिनद्वयत्रयाभ्यन्तरे अशौचान्तरपाते पूर्व्वेणैव शुद्धिः । अशौचत्रितयान्तत्वमेकदैव । तद्द्वितीयदिनत्वं तत्परदिने । अत्र दशमदिनतत्प्रभातयोः पितृमातृभर्त्तृमरणे तु न दिनद्वयत्रयाच्छुद्धिः किन्तु स्वावधेरेव सम्पूर्णाशौचमिति । ज्ञातिजननाशौचमध्ये स्वपुत्रजनने पूर्व्वार्द्धे पूर्व्वेण, परार्द्धे परेण शुद्धिः । एवं ज्ञातिमरणमध्ये पितृमातृभर्त्तृमरणे पूर्व्वार्द्धे पूर्व्वाशौचकालेन, परार्द्धे पित्राद्यशौचकालेन शुद्धिः । स्वपुत्रजननाशौचान्तिमदिनतत्प्रभातयोर्ज्ञाति-

जनने पितृमातृभर्तृमरणाशौचान्तिमदिनतत्प्रभातयोर्जातिमरणेऽपि न दिनद्वयत्र्यहवृद्धिः। श्वशुरयोस्तु तथा जनने मातापित्रोस्तु तथा मरणे न द्विनद्वयत्र्यहवृद्धिः। जननाशौचयोस्तु सन्निपाते पूर्व्वार्द्धे जातीयदाऽशौचाभ्यन्तरे मृतजाता सपिण्डानां सद्यः शौचेन पूर्व्वाशौचस्य नाशः। तन्मात्रादेव परार्द्धजातमातापितृव्यतिरिक्तानां परजननाशौचस्य निवृत्तिः। परजातमरणे तु न तथा तस्य पूर्वजननावधिस्थायित्वादिति गुरुचरणाः। एवं द्वितीयजातस्य पित्रोस्तु पूर्व्वार्द्धजातमरणे पूर्व्वाशौचकालावधि अङ्गास्पृश्यत्वयुक्तमशौचं, परार्द्धजातमरणे तु स्वावधिजननाशौचमङ्गास्पृश्यत्वयुक्तमिति। औत्सर्गिकसमसंख्यदिवसीयजननमरणाशौचयोः सन्निपाते मरणाशौचकालेन शुद्धिः। तदन्यकालयोस्तु दीर्घकालाशौचकालेन शुद्धिः। ततश्च पुत्रवत्याविंशतिरात्राशौचान्त्यदिने पत्युर्मरणे बहुकालेन जननाशौचकालेन शुद्धिः तथा सपिण्डद्वयजननजातद्वादशाहान्त्यदिने पितृमातृभर्तृमरणेऽपि बहुकालीनाशौचकालेन शुद्धिः। प्रथमदिने सपिण्डमरणद्वये यावदशौचं सर्वगोत्रास्पृश्यत्वयुक्तम् एवं प्रथमाहे सकुल्यद्वयरणेऽङ्गास्पृश्यत्वयुक्तं त्रिरात्रम्। तेनैतत् त्रिरात्रं गुरु विदेशमरणादौ त्रिरात्रं तु लघु स्नानेनैवाङ्गास्पृश्यत्वनिवृत्तेः। ततश्चोभयोः सन्निपाते गुरुणैव शुद्धिः। एवं विदेशस्थमृतज्ञातित्रिरात्राद्विदेशस्थमृतपितृमातृभर्तृत्रिरात्रं गुरु। संपूर्णाशौचे तु अयज्ञानामपि यावदशौचमक्षारलवणाशित्वदर्शनात्। अत्रापि तावत्कालं तथाविधत्वात्तत्रापि गुरुणैव शुद्धिः। तुल्यत्रिरात्रयोस्तु सन्निपाते पूर्व्वेणैव शुद्धिः। तथा कन्यापुत्रद्वयजोत्पत्तौ मातुर्मासेन शुद्धिः। तयोरशौचमध्ये मातुः कन्यामरणे सद्यः शुद्धिर्न पुत्रमरणात्, अन्येषान्तु प्रथमजातमरणात् शुद्धिः। न परजातमरणात् एवमन्यदूह्यं सुधीभिः" शुद्धितत्त्वम्।

**अशौचान्त** पु० अशौचस्यान्तोऽत्र। स्वजात्युक्ताशौचावसानाधारे दशमादौ दिने "अशौचान्ताद् द्वितीयेऽह्नि शय्यां दद्याद्विचक्षणाम्"। "अशौचान्ताद्द्वितीयेऽह्नि यस्य नोत्सृज्यते वृषः" इति च स्मृतिः। [२तच्छून्ये त्रि०।

**अशौर्य्य** न० अभावे न०त०। १शौर्य्याभावे अपराक्रमे न०ब०।

**अश्न** त्रि० अश्नुते व्याप्नोति अश्नाति वा अश–नन्। १व्यापनशीले २भोजनशीले च "स्वगोनाश्नो अति यज्जुगुर्यात्" ऋ० १।१७३।२ "अश्नो व्यापकः अशनशीलश्च" भा० "कर्म्मणि नन्। ३व्याप्ते "तस्य भ्राता मध्यमो अस्त्यश्नः" ऋ० १।१६४।१। "अश्नः व्याप्तः भा० ४असुरभेदे पु० "सुध्यान्वसः स्वर्थ्येण स्तवानश्नस्य" ऋ० २।२०।५। "अश्नुते स्वतेजसा सर्वं जगदित्यश्नः कश्चिदसुरः भा०। "अध्वर्य्यवो यः स्वश्नं जघान" ऋ० २।१४।५।५। करणे नन्। सोमकण्डनप्रस्तरे। "अभिधूतः सुतोऽश्नैरव्यो वारैः" ऋ० ८।२।२। अश्नैः अश्मभिः करणभूतैः सुतोऽध्वर्युभिरभिषुतः" भा०। अश्नुतेऽध्वरम्। ६मेघे निरु०।

**अश्नीतपिबता** स्त्री अश्नीत पिबत इत्युच्यते यस्यां निर्देशक्रियायाम् मयू०स०। भोजनादिनिर्देशक्रियायाम् "अश्नीतपिबतीयन्ती प्रसृता चरकर्म्मणि" भट्टिः।

**अश्मक** पु० अश्मेव स्थिरः निश्चलत्वात् इवार्थे कन्। १ऋषिभेदे "वेदस्थानेन वात्स्येन तथाश्मकसुमन्तुना" भा० शा० प०। २दक्षिणदेशस्थे देशभेदे। "गन्तव्यो मलयः श्रीमान् पर्व्वतो धातुमण्डितः" इत्युपक्रम्य "तथाश्मका पुलिन्दाश्च कलिङ्गाश्च विशेषतः" रा०कि०का०। वृहत्संहितायान्तु स देशः पश्चिमोत्तरस्यां दिशि। "दिशि पश्चिमोत्तरस्यां माण्डव्यतुषारतालहलमद्राः। अश्मककुलूतलहडस्त्रीराज्यनृसिंहवनखस्थाः" इति कूर्म्मविभागे उक्तम्। अतउभयत्रापि तन्नामको देशः। तस्य जनपदवाचित्वात् तद्देशवासिषु तद्राजनि च ततः कृताणो बहुषु लुक्। ३तद्देशवासिनि ४तद्राजनि च ब०व०। "साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्" पा० सू०। साल्वजनपदावयवत्वोक्तेः ५साल्वदेशावयवे च साल्वदेशश्च वृ०सं० कूर्म्मविभागे नवसु खण्डेषु मध्यखण्डे उक्तः "भारतवर्षे मध्यात् प्रागादिविभाजिता देशाः भद्रारिमेदमाण्डव्यसाल्वनीपोज्जिहानसंख्याताः" इत्युपक्रम्य "गजाह्वयश्चेति मध्यमिदम्" इति नवखण्डे कूर्म्मभागे मध्यखण्डे तस्य स्थितिरुक्ता अतः साल्वावयवनामकोऽश्मकः तदीयदक्षिणप्रदेशस्थः इति गम्यते तेन रामायणवाक्यं तद्विषयकमिति न विरोधः। अश्मके साल्वावयवे भवः इञ् आश्मकिः। तद्देशभवे त्रि० तद्राजनि च बहुषु लुक् आश्मकाः साल्वावयवाश्मकवासिषु तद्राजसु च ब०व०। स्त्रियां न लुक् आश्मक्यः। साल्वशब्देऽस्य विवृतिः।

**अश्मकदली** स्त्री अश्नुते अश–मनिन् कर्म्म०। काष्ठकदल्याम्।

**अश्मकुट्ट** पु० अश्मनि प्रस्तरएव धान्यादिकं कुट्टयति कुट्ट–अण्–उप० स०। वानप्रस्थभेदे, तस्योदूखलादिशून्यत्वेन तण्डुलादेर्वितुषीकरणस्य तथैव विधानात्तथात्वम्। "अश्मकुट्टो भवेद्वापि दन्तोलूखलिकोऽपि वा" मनुः। स्युत्।

अश्मकुट्टकोऽप्यत्र । "दन्तोलूखलिकः कालपक्काशी वाश्मकुट्टकः" वा० स्मृतिः ।

**अश्मकेतु** स्त्री अश्मेव केतुरस्य । क्षुद्रपाषाणभेदवृक्षे ।

**अश्मगन्धा** अश्मन इव गन्धो येषोऽस्याः । पृश्निपर्णीलक्षणायामास्वन्धी लतायाम् । "विशाखशाखाश्मगन्धापृश्निपर्ण्यं श्वगडाय" कात्या० २०,७,१७, "अश्मगन्धा आसन्दिः पृश्निपर्णीलक्ष्येति" कर्क० । "न शरं नाश्मगन्धां नाश्वखण्डां न पृश्निपर्णीं नाश्वत्थस्यान्तिके कुर्य्यात्" शत० ब्रा० । [मरकतमणौ । राजनि० ।

**अश्मगर्भ** पु० अश्मेव क्षतो गर्भोऽस्य । "पन्ना इति" ख्याते

**अश्मगर्भज** पु० अश्मगर्भाज्जायते जन-ड ५त० । मरकतमणौ अश्मयोनिरप्यत्र" राजनि० २प्रस्तरजे वह्नौ पु० ।

**अश्मगुड** पु० अश्मनिर्म्मितो गुडः गोलाकारः पदार्थः । प्रस्तरनिर्म्मिते (गुली) प्रसिद्धे युद्धसाधने अस्त्रभेदे स्त्रीत्वमपि "मूलान् भुशुण्ड्यश्मगुडाः स्थूलाः कार्ष्णायसीस्तथा" भा०द्रो०प० । भुशुण्डीनिर्मुक्ता अश्मगुडास्तदर्थः ।

**अश्मघ्न** पु० अश्मानं हन्ति हन-ड । पाषाणभेदवृक्षे ।

**अश्मज** न० अश्मनो जायते जन-ड ५त० । प्रस्तरजाते १शिलाजतुनि, । अश्मेव जायते जन-ड । २लौहे च ।

**अश्मजतु** न० अश्मनो जायते जन-तुन् डिच्च । शिलाजतुनि स्वार्थे कन् अश्मजतुकं तत्रैव ।

**अश्मजाति** स्त्री अश्मनो जातिः सामान्यमस्य । "पान्ना" ख्याते मरकतमणौ । अश्मन इव जातिरस्य । रत्नमात्रे अमरः रत्नानि च । "वज्रं गारुत्मतं पुष्परागो माणिक्यमेव च । इन्द्रनीलश्च गोमेदस्तथा वैदूर्य्यमेव च । मौक्तिकं विद्रुमश्चेति रत्नान्युक्तानि वै नव" भाव०प्र० । "मुक्ताफलं हीरकं च वैदूर्य्यं पद्मरागकम् । पुष्परागं च गोमेदं नीलं गारुत्मतं तथा । प्रवालयुक्तान्येतानि महारत्नानि वै नव" विष्णुध० । अत्र पुष्परागादीनां क्लीवताऽपि । अत्र चैषां महारत्नतैतोक्तेः तद्भिन्नानामपि रत्नत्वमस्त्येव यथोक्तं गारुडे "तेषु रक्षोविषव्याधिघ्नान्यघहानि च । प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च । वज्रं मुक्ता मणयः पद्मरागाः समरकताश्च प्रोक्ताः । अपि चेन्द्रनीलमणयो वैदूर्य्याः पुष्परागाश्च । कर्केतनकुरुविन्दौ रुधिराक्षसमन्वितं स्फटिकम् । विद्रुममणिश्च" ।

**अश्मदारण** पु० अश्मानं दारयति दृ-णिच्-ल्यु । पाषाणभेदके टङ्कनामास्त्रे ।

**अश्मदिद्यु** त्रि० अतिशयेन द्योतते यङ् लुक् वा० डु दिद्यु आयुधम् अश्म व्यापकं अश्ममयं वा दिद्यु यस्य । अश्ममयायुधयुक्ते । "विद्युन्महसो नरो अश्मदिद्यवः" ऋ० ५,५४,३ । अश्मदिद्यवो व्याप्तायुधाः अश्ममयायुधा वा" भा० ।

**अश्मन्** पु० अश्नुते व्याप्नोति, संहन्यनेन वा कर्त्तरि करणे वा मनिन् । पाषाणे । "अथ यदश्नु संक्षरित मासीत् सोऽश्म पृश्निरभवत्" शत०ब्रा० । "इयत्तकः कुषुम्भकस्तकं भिनद्म्यश्मना" ऋ० १।१९१।१५ । "अश्मिशकिभ्यां छन्दसि" इत्युक्तेः वेदेऽस्य भूरिप्रयोगः क्वचित् लोकेऽपि "नाराचक्षेपणीयाश्मनिष्पेषपतितानलम्" रघुः । दन्तोलूखलिकः कालपक्काशी वाश्मकुट्टकः" वा० "अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् । अन्धायाश्च सुतं मन्ये यस्य माता न पश्यति" जिनेन्द्रः । २मेघे निरु० तस्याम्बरव्यापकत्वात्तथात्वम् ३भूमिव्यापके पर्व्वते पु० । "अश्मानं चिद्ये बिभिदुः" ऋ० ४,१६,६ । "अश्मानं पर्व्वतं मेघं वा" भा० । "अश्मानं चिच्छवसा दिद्युतः" ऋ० ५।२०४ । "अश्मानं पर्व्वतम्" भा० । ४व्यापके त्रि० अश्मदिद्युशब्दे उदा० । त०स० उत्तरपदस्थः संज्ञायां जातौ च टचं समासान्तं लभते । संज्ञायाम् पिण्डाश्मः जातौ अमृताश्मः । नित्यसमा० । अश्मना तुल्यः आश्मनः । अश्मादि० चतुरर्थ्यां क । अश्मकः । अश्मादि० चतुरर्थ्यां रः अश्मरः । उत्करा० चतुरर्थ्यां छ । अश्मीयः । तदर्हतीत्यर्थे अत्र । दि० ठण् । आश्मिकः । तत्र कुशल इत्यर्थे आकर्षादि० कन् । अश्मकः । अपत्ये शुभ्रा०ढक् । आश्मेयः । अश्वा० गोत्रापत्ये फञ् । आश्मायनः । अश्मनोविकारः अण् टिलोपः आश्मः मयट् च अश्ममयः स्त्रियां ङीप् । अवयवार्थे तु न टिलोपः आश्मन इत्येव ।

**अश्मन्त** न० अश्मनोऽन्तोऽत्र शक०पररूपम् । १अशुभे क्षेत्रे, २चुल्ल्याञ्च । अश्मनामन्तः । अश्मान्तोऽप्यत्र ।

**अश्मन्तक** पु०न० अश्मानमन्तयति अन्त-णिच् ण्वुल् शक० । १चुल्ल्याम् २दीपाधारे ३छादने, (आडड़) ख्याते तृणविशेषे च । "मुञ्जालाभे तु कर्त्तव्याः कुशाश्मान्तकवल्वजैः" मनुः । ४अस्फोटकवृक्षे, ५अम्लपत्रे ६कोविदारकवृक्षे च पु० ।

**अश्मन्मय** त्रि० अश्मनोविकारः मयट् वेदे न नलोपः । पाषाणमये स्त्रियां ङीप् । "शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत्" ऋ० ४।३०।२० । "लोके तु अश्ममयः । "अश्ममयमयश्चैव" इति मनुः । [गन्धद्रव्ये ।

**अश्मपुष्प** न० अश्मनः पुष्पमिव । शिलाजतुनि, शैलेये

**अश्मभाल** न० अश्मेव भाजयति चूर्णितं करोति। भज-णिच् अण् पृषो० तस्य लत्वम्। द्रव्यचूर्णकारके (हामानदिस्ता) इति ख्याते लौहपात्रभेदे शब्दचन्द्रिका।

**अश्मभिद्** पु० अश्मानमुद्भिद्य जायते। पाषाणभेदके वृक्षे। क, अश्मभिदः। अण् आश्मभेदः। ण्वुल्। अश्मभेदकोऽप्यत्र पु०।

**अश्मयोनि** पु० अश्मा योनिरस्य। मरकतमणौ।

**अश्मर** त्रि० अश्मन्–चतुरर्थ्याम् र। प्रस्तरसंबन्धिनि।

**अश्मरथ** पु० अश्मेव दुर्भेद्यो रथोऽस्य। ऋषिभेदे गर्गा० यञ्। आश्मरथ्यः। "अभिव्यक्तेरित्याश्मरथ्यः" शा० सू०

**अश्मरी** स्त्री अश्मानं राति रा–क गौरा० ङीष्। मूत्रकृच्छ्ररोगे स हि मूत्रद्वारा प्रस्तरमिव कठिनमांसं रेचयति इति तस्य तथात्वम्। तन्निदानादि सुश्रुते उक्तं यथा। "अथातोऽश्मरीणां निदानं व्याख्यास्यामः॥ चतस्रोऽश्मर्यो भवन्ति श्लेष्माधिष्ठानास्तद्यथा श्लेष्मणा वातेन पित्तेन शुक्रेण चेति॥ तत्रासंशोधनशीलस्यापथ्यकारिणः प्रकुपितः श्लेष्मा मूत्रसम्पृक्तोऽनुप्रविश्य वस्तिम्, अश्मरीं जनयति तासां पूर्वरूपाणि वस्तिपीड़ारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रा ज्वरावसादौ वस्तगन्धित्वं मूत्रस्येति॥ यथास्वं वेदनावर्णं दुष्टं सान्द्रमथाविलम्। पूर्वरूपेऽश्मनः कृच्छ्रान्मूत्रं सृजति मानवः॥ अथ जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमे मेहतोवेदना मूत्रधारासङ्गः सरुधिरमूत्रता मूत्रविकिरणञ्च गोमेदप्रकाशमनाविलं ससिकतं विसृजति धावनलङ्घनप्लवनपृष्ठयानाध्वगमनैश्चास्य वेदना भवति॥ तत्र श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपचित्याधः परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघाताद्दाल्यते भिद्यते निस्तुद्यत इव वस्तिर्गुरुः शीतश्च भवति। अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डप्रतीकाशा मधूकपुष्पवर्णा वा भवति तां श्लैष्मिकीमिति विद्यात्॥ पित्तयुक्तस्तु श्लेष्मा संहातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघातादूष्यते चूष्यते दह्यते पच्यत इव वस्तिरुष्णवातश्च भवति। अश्मरी चात्र सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा मधुवर्णा वा भवति तां पैत्तिकीमिति विद्यात्॥ वातयुक्तस्तु श्लेष्मा संहातमुपगम्य यथोक्तां परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि तस्य मूत्रप्रतिघातात्तीव्रा वेदना भवति तथात्यर्थं पीड्यमानो दन्तान् खादति नाभिं पीड़यति मेढ्रं मृद्नाति पायुं स्पृशति विशर्द्धते विदहति वातमूत्रपुरीषाणि कृच्छ्रेण चास्य मेहतो निःसरन्ति। अश्मरी चात्र श्यावा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता भवति तां वातिकीमिति विद्यात्। प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति। तेषामेवाल्पवस्तिकायत्वादनुपचितमांसत्वाच्च वस्तेः सुखग्रहणाहरणा भवन्ति॥ महतान्तु शुक्राश्मरी शुक्रनिमित्ता भवति। मैथुनाभिघातादतिमैथुनाद्वा शुक्रञ्चलितमनिर्गच्छद्विमार्गगमनादनिलोऽभितः संहृत्य मेढ्रवृषणयोरन्तरे संहरति संहृत्य चोपशोषयति सा मूत्रमार्गमावृणोति मूत्रकृच्छ्रं वस्तिवेदनां वृषणयोश्च श्वयथुमापादयति पीड़ितमात्रे च तस्मिन्नेव प्रदेशे प्रविलयमापद्यते तां शुक्राश्मरीमिति विद्यात्॥ भवन्ति चात्र॥ शर्करा सिकता मेहो भस्माख्योऽश्मरिवैकृतम्॥ अश्मर्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना॥ पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः। सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते॥ हृत्पीड़ा सक्थिसदनं कुक्षिशूलः सवेपथुः। तृष्णोर्द्ध्वगोऽनिलः कार्श्यं दौर्बल्यं पाण्डुगात्रता॥ अरोचकाविपाकौ तु शर्करार्त्ते भवन्ति च। मूत्रमार्गप्रवृत्ता सा सक्ता कुर्यादुपद्रवान्॥ दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकम्। पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीड़नं वमिम्॥ नाभिपृष्ठकटीमुष्कगुदवङ्क्षणशेफसाम्। एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः॥ अलाबा इव रूपेण शिरास्नायुपरिग्रहः। वस्तिर्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम्॥ एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः। मूत्राशयो मलाधारः प्राणायतनमुत्तमम्॥ पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः॥ तर्पयन्ति सदा मूत्रं सरितः सागरं यथा॥ सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः। नाडीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्॥ जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्य्यते। आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्य्यते नवः॥ घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्य्यते। एवमेव प्रवेशेन वातः पित्तं कफोऽपि वा॥ मूत्रयुक्त उपश्लेषात् प्रविश्य कुरुतेऽश्मरीम्। अम्बु स्वच्छमपि यथा निषिक्तं नवे घटे॥ कालान्तरेण पङ्कः स्यादश्मरीसम्भवस्तथा। संहन्त्यपो यथा दिव्या मारुतोऽग्निश्च वैद्युतः॥ तद्वद्बलासं वस्तिस्थमूष्मा संहन्ति सानिलः। मारुते प्रगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते॥ विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि॥ मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च। मूत्रदोषाश्च ये केचिद्वस्तावेव भवन्ति हि" सुश्रु० 'अश्मरी' शब्द-

वस्त्यासु सिकताशर्करान्विताम्” सुश्रु०। अयञ्च महापापजत्वान्महारोगः। “उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासोमधुमेहो भगन्दरः। उदरोऽश्मरीत्यष्टौ महारोगाः” शु०त० नार०।

**अश्मरीघ्न** पु० अश्मरीं मूत्रकृच्छ्रं हन्ति हन–ट। वरुणवृक्षे

**अश्मरीहर** पु० अश्मरीं हरति हृ–ट। (देधान) देवधान्ये।

**अश्मवत्** त्रि० अश्माऽस्त्यत्र मतुप्। पाषाणभूयिष्ठे देशे स्त्रियां ङीप्। तद्विधभूमेर्गुणाश्च। “तत्राश्मवती स्थिरा गुर्व्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया गुणभूयिष्ठा। स्निग्धा शीतलासन्नोदका स्निग्धशस्यतृणकोमलवृक्षमाया शुक्लाम्बुगुणभूयिष्ठा नानावर्णा लघ्वश्मवती प्रविरलाल्प पाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा इति” सुश्रुतः।

**अश्मसार** पु०न० अश्मनः सार इव। लौहे। “फलाद्यशिक दर्भाश्मसारचूर्णकवारिणा” सुश्रु०। “प्राणाः स त्वरमश्मसारकठिना गच्छन्ति गच्छन्त्वमी” सा०द०। ६त०। तत्तुल्यकठिने त्रि०।

**अश्महन्मन्** न० हन्यतेऽनेन हन–मनिन् हन्म आयुधम् अश्मनिर्म्मितं हन्म। लौहनिर्मिते आयुधे “अग्नितप्तेभिर्युवमश्महन्मभिः” ऋ० ७,१०४,५।

**अश्मादि** पु० ६त०। चतुरर्थ्यां पाणिन्युक्तरप्रत्ययनिमित्ते शब्दगणे स च गणः अश्मन्, यूथ, ऊष, मीन, नद, दर्भ, वृन्द, गुद, खण्ड, नग, शिखा, कोट, पाम, कन्द, कान्द, कुल, गड्ड, गुड, कुण्डल, पीन, गुह।

**अश्मार्म** न० अश्मकारकमर्म्म। (पाथुरे) अश्मरीरोगे।

**अश्मीर** पु०न० अश्मास्त्यस्य ईरन्। (पाथुरे) अश्मरीरोगे।

**अश्मोत्थ** न० अश्मनः उत्तिष्ठति उद्+स्था–क ५त०। शिलाजतुनि राजनि०।

**अश्र** न० अश्नुते नेत्रम् अश–रक्। नेत्रजले “सखीभिरश्रोत्तरमीक्षितामिमाम्” कुमा० “नेत्राभ्यामश्रुमुत्सृजन्” रामा०। सुखा० अस्त्यर्थे इनि न मतुप्। अश्री अश्रुयुक्ते त्रि० स्त्रियां ङीप्।

**अश्रद्धा** स्त्री अभावे न०त०। १श्रद्धाभावे विरोधे न०त०। श्रद्धाविरोधिनि २चित्तवृत्तिभेदे। “कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव” श्रुतिः “अश्रद्धया च यद्दत्तं तत्तामसमुदाहृतम्” गीता। न०ब०। ३श्रद्धाशून्ये त्रि०। [न्यून्ये त्रि०।

**अश्रद्धेय** त्रि० न०त०। श्रद्धानर्हे अविश्वसनीये। १श्रम-

**अश्रम** पु० अभावे न०त०। १श्रमाभावे अनायासे न०ब०।

**अश्रवण** न० अभावे न०त०। १श्रवणाभावे न०ब०। २श्रवणशून्ये त्रि० ३श्रोत्रेन्द्रियशून्ये बधिरे त्रि० ४सर्पे पु०।

**अश्राद्धभोजिन्** त्रि० श्राद्धं न भुङ्क्ते भुज–णिनि असमर्थ स०। सति भोजने श्राद्धमेव यो भुङ्क्ते तस्मिन्। “अश्राद्धभोजीत्यत्र सति भोजनेऽश्राद्धमेव भुङ्क्ते न श्राद्धमिति न नियमः तथात्वे व्रतलोपः स्यात्” दुर्गसिंहः प्रा०त०।

**अश्रान्त** त्रि० श्रम–कर्त्तरि न०त०। श्रान्तभिन्ने १श्रमशून्ये २अविरते ३क्रियाविशेषणत्वे न०। “अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवेति नैष०। भावे क्त न०त०। ४अविश्रामे न०।

**अश्रि(श्री)** स्त्री अश्नुते संहन्यतेऽनया अश–क्रि उणा० क्रि। १खड्गादेः कोणे। आश्रीयते संघातार्थम् आ+श्री–“आङि श्रीहनिभ्यां ह्रस्वश्च” उणा० इन् स च डित्। २खड्गादेरग्रभागे उभयत्र वा ङीप्। “हलस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते” कुमा० वाजपेययूप' प्रकृत्य। “स वा अष्टाश्रिर्भवति तस्मादष्टाश्रिर्भवति” शत०ब्रा०। चतुःपूर्व्वादस्मात् अच् समा० चतुरस्रः। “क्लृप्तोपचारां चतुरस्रवेदीम्” कुमा० योगविभागात् अन्यस्मादप्यच्। तेन त्र्यस्र षडस्रमित्यादि “आयताश्चतुरस्राश्च त्र्यस्रा मण्डलिनस्तथा” शस्त्रलक्षणे सुश्रुतः “हस्तान्तस्त्र्यस्रपूर्व्वायां नावाश्रायां पृथक् पृथक्” लीला०। समासान्तविधेरनित्यत्वात् क्वचिन्नाच्। “त्रिरश्रि हन्ति चतुरश्रिरुग्रः” ऋ०१,१५२,२। [कप्। शोभाशून्ये।

**अश्री(क)** नास्ति श्रीर्यस्य सद्गीत्वाभावात् न सुखः तेन वा

**अश्रीर** त्रि० न श्रीः अश्रीः अस्त्यर्थे र। १कुत्सितश्रीके “अश्रीर इव जामाता” ऋ० ८,२,२०। “अश्रीरः गुणैर्हीनः कुत्सितः” भा०। २अमङ्गले च। “कर्म चिदश्रीरम्” ऋ० ६,२८,६। “अश्रीरममङ्गलम्” भा०।

**अश्रु** न० अश्नुते व्याप्नोति नेत्रमदर्शनाय अश–क्रुन्। नेत्रजले “पपात भूमौ सह सैनिकाश्रुभिः” दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः” “तमश्रु नेत्रावरणं प्रमृज्य” इति च रघुः। “श्लेष्माश्रु दूषिका स्वेदः” मनुः।

**अश्रुत** त्रि० न०त०। १श्रुतभिन्ने श्रवणाविषयीभूते “येनाश्रुतं श्रुतं भवति येनामतं मतं भवति” छा०उ० श्रूयते श्रुतं शास्त्रं तज्ज्ञानं न०ब०। २शास्त्रज्ञानशून्ये मूर्खे “भाग विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन्” दा०भा० स्मृतिः।

**अश्रुति** स्त्री अभावे न०त०। १श्रवणाभावे न०ब०। २श्रवणशून्ये त्रि० “अश्रुतिमेव तद्घं गमयति” शत०ब्रा०।

**अश्रुपात** पु० ६त०। नेत्रजलपाते क्रन्दने। “न चाश्रुपातः

पिण्डो वा कार्य्यं श्राद्धादिकं शु॰त॰ क्वचित्” ब्रह्मपुरा॰।

**अश्रुमुख** त्रि॰ अश्रुपूर्णं मुखं यस्य । नेत्रजलप्लुतमुखे स्त्रियां ङीप् । “पतिप्रनाशाश्रुमुखी मधुकर्णी च क्रोशन्” अथ॰ ११,११,७। [स्त्रियां ङीप् नेत्रजलयुक्ते ।

**अश्रुशालिन्** त्रि॰ अश्रुणा शलते शल–णिनि ३त॰ ।

**अश्रेयस्** त्रि॰ न श्रेयान् । हीनतरे । “अश्रेयान् श्रेयसीं जातिं गच्छत्या सप्तमाद्युगात्” मनुः । स्त्रियां ङीप् ।

**अश्रौत** त्रि॰ श्रुतौ विहितः विरोधे न॰त॰ । श्रुतिविहित-विरुद्धे निषिद्धे नास्तिकाचारादौ । २वेदविहितभिन्ने स्मृतिमात्रविहिते च ।

**अश्लाघा** स्त्री अभावे न॰त॰ । विकत्थनाभावे १आत्मगर्व्वाभावे न॰ब॰ । विकत्थनशून्ये गर्व्वशून्ये २विनीते त्रि॰। [च ।

**अश्लिष्ट** त्रि॰ न॰त॰ । १असङ्गते २असम्बन्धे ३श्लेषशून्ये काव्ये

**अश्लीक** त्रि॰ नास्ति श्रीर्ऽस्य कप् रस्य लः । श्रीप्रतिकूले श्रीनाशके । “अश्लीकमेतत् साधूनां यत्र जुह्वत्यमी हविः” मनुः ।

**अश्लील** न॰ श्रियं लाति ददाति ला-क रस्य लः, श्री+ सिध्मादित्वात् ल वा न॰त॰। १लज्जादिसम्पादके वाक्ये २ग्राम्यभाषायाम् । “भास्कराक्षोकनाश्लील परिवादांश्च वर्ज्जयेत्” या॰स्मृ॰ ३काव्यदोषभेदे न॰ तच्च त्रिविधं यथा “दुःश्रवं त्रिविधाश्लीलानुचितार्थ-प्रयुक्तता” सा॰द॰ अश्लीलत्वं व्रीड़ाजुगुप्सामङ्गलव्यञ्जक-त्वात्त्रिधा यथा “दृप्तारिविजये राजन् ! साधनं सुमहत्तव” “प्रससार शनैर्वायुः” । “विनाशे तन्वि! ते सदा”। “अत्र साधनवायुविनाशशब्दा अश्लीलवाचकाः” सा॰द॰। तत्र साधनशब्दस्य शिश्नस्यापि वाचकतया व्रीड़ायाः, वायुशब्दस्यापानवायुवाचकतया जुगुप्सायाः, विनाशशब्दस्य मरणवाचकतयाऽमङ्गलस्य च द्योतकता । यथाक्रमं च प्रकृते सैन्यपवनविरहबोधकतायै प्रयुक्ता अपि ते अश्लीलव्यञ्जक-त्वाद्दुष्टाः। ४निन्दाव्यञ्जके वाक्ये च “यमश्रुत्याश्लीला या प्रच्छतीति” ता॰ब्रा॰“अश्लीला निन्दारूपा वाक्” भा॰ न श्रियं लाति ला–क । ५अश्रीके त्रि॰ । “यदेनमसाव-श्लीलं वाग् वदति” ता॰ब्रा॰ “अश्लीलमश्रीकरम्”भा॰।

**अश्लेषा** स्त्री न श्लिष्यति यत्रोत्पन्नेन शिशुना श्लिष–घञ् न॰ त॰। सप्तविंशतिधा विभक्तराशिचक्रस्य नवमे नक्षत्रे तत्रजात-जातस्य शिशोःपित्रादिभिरायत्सरमा दर्शनाभावस्याश्लेषाया-न्तिमङ्के वक्ष्यमाणस्य सूचकतया तस्या अश्लेषात्वम्। तत्स्वरू-पादि निरूपणाय सर्व्वताराणां स्वरूपं, संख्याविशेषः, योग-ताराश्च प्रसङ्गादत्राभिधीयन्ते यथाह श्रीपतिः । “१तुरग-मुखसदृशं २योनिरूपं ३क्षुराभं ४शकटनिभमथैणस्यो-त्तमाङ्गेन ५तुल्यम् । ६मणि ७गृह ८शर ९चक्राभानि १०शालोपमं च ११शयनसदृशमन्यच्चात्र १२पर्य्यङ्करूपम्। १३हस्ताकारमजस्रमौक्तिकसमं १४ चान्यत् १५प्रवालोप-मम् स्थिरास्यं तोरणवत् १६स्थितं १७बलिनिभं स्यात् कुण्डलाभं १८परम् । क्रुध्यत्केशरिविक्रमेण सदृशं १९शय्या समानं २०परम् चान्यद्दन्तिविलासवत् २१स्थितमतः (अभि-जित्) शृङ्गाटकव्यक्ति च । २२त्रिविक्रमाभञ्च २३मृदङ्ग-रूपं २४वृत्तं ततोऽन्यद्यमलद्वयाभम् २५ । २६पर्य्यङ्करूपं २७मुरजानुकारमित्येवमश्व्यादिभचक्ररूपम्” अत्राश्वान्-साारेश्वादीनां रूपाणि ज्ञेयानि। “वह्नित्रि ऋत्विषुगुणेन्दु कृताग्निभूतबाणाश्विनेत्रशरभूकुयुगाब्धिरामाः । रुद्राब्धि-रामगुणवेदशतद्वियुग्मदन्ता बुधैर्निगदिताः क्रमशोभताराः”। यथा त्रितारोऽश्विनी भरणी च। षट्ताराः कृत्तिका । पञ्च-तारा रोहिणी । त्रितारा मृगशिरा । एकतारा आर्द्रा, चतुस्तारा पुनर्वसुः त्रितारा पुष्या, पञ्चतारा अश्लेषा मघा च त्रितारा पूर्व्वफल्गुनी द्वितारा उत्तरफल्गुनी पञ्चतारा हस्ता, एकतारा चित्रा, स्वातिश्च सप्ततारा विशाखा, त्रितारा अनुराधा ज्येष्ठा च । एकादशतारा मूला, चतुस्तारा पूर्व्वाषाढ़ा त्रितारा उत्तराषाढ़ा, श्रवणा चतुस्तारा धनिष्ठा शततारा शतभिषा । द्वितारा पूर्व्वभाद्रपदा उत्तरभाद्रपदा च द्वात्रिंशत्तारा रेवती” एषां योगतारा सूर्य्य सि॰। “फाल्गुन्योर्भाद्रपदयोस्तथैवाषाढ-योर्द्वयोः । विशाखाश्विनसौम्यानां योगतारोत्तरा” स्मृता एषामष्टनक्षत्राणां प्रत्येकं स्वताराणु मध्या उत्तरा उत्तरदिक्स्था तारा योगतारा । “पश्चिमोत्तर-तारा या द्वितीया पश्चिमे स्थिता । हस्तस्य योगतारा सा श्रविष्ठायाश्च पश्चिमा” सू॰सि॰ । हस्तनक्षत्रं पञ्च-तारात्मकं हस्तपञ्चाङ्गुलिसन्निवेशाकारं ततो नैर्ऋत्यदिग-वस्थिता पश्चिमावस्थितताराया उत्तरदिगाश्रितताराया द्वितीया पूर्व्वोक्तातिरिक्ता पश्चिमे वायव्याश्रिते स्थिता सा हस्तस्य योगतारा ज्ञेया, उत्तरताराशब्दा पश्चिमाश्रिता तारा हस्तस्य योगतारा” धनिष्ठायास्ताराणु या पश्चिम-दिक्स्था सा तस्या योगतारा इति च रङ्गना॰ । “ज्येष्ठा श्रवणमैत्राणां बार्हस्पत्यस्य मध्यमा । भरण्याग्नेयपित्र्याणां रेवत्याश्चैव दक्षिणा” सू॰सि॰ “ज्येष्ठाश्रवणानुराधानां पुष्यस्य च प्रत्येकं तारात्रयात्मकत्वात् मध्यमतारा योग-

तारा" रङ्गना० । "रोहिण्यादित्यमूलानां प्राची सार्पस्य चैव हि । तथा प्रत्वग्गेषाणां स्थूला स्यात् योगतारका" सू०सि० रोहिणीपुनर्वसुमूलानामश्लेषायाश्च प्रत्येकं स्वताराषु पूर्व्वदिक्स्था तारा योगतारा । अवशिष्टानां आर्द्राचित्रास्वात्यभिजिच्छततारायां यथायोग्यं स्वताराषु यात्यन्तं स्थूला सा योगतारा नक्षत्रप्रसङ्गात् ब्रह्मादिनक्षत्राणामपि स्थितिस्थानमुक्तं तत्रैव । "पूर्व्वस्यां ब्रह्महृदयादंशकैः पञ्चभिः स्थितः । प्रजापतिर्वृषान्तेऽसौ सौम्येऽष्टत्रिंशदंशकैः" सू०सि० ब्रह्महृदयस्थानात् पूर्व्वभागे पञ्चभिरंशैः वृषान्तनिकटे एकराशिसप्तत्रिंशदंशैः प्रजापतिस्ताराात्मको ब्रह्मा क्रान्तिवृत्ते स्थितः । अस्य विक्षेपमाह अष्टाविति । असौ ब्रह्मा सौम्ये उत्तरस्यां अष्टत्रिंशैः स्थित इत्यर्थः रङ्गना० । "अपांवत्सश्च चित्रायाउत्तरेऽंशैस्तु पञ्चभिः । वृहत् किञ्चिदतो भागैरापः षड्भिस्तथोत्तरे" सू०सि० । "तिष्यपुनर्वसू इत्ये पा० सू० व्याख्यायां सरलायामस्माभिर्यत् पुनर्वसोर्द्वितारत्वमुक्तं तज्ज्योतिःशास्त्रविरोधात् प्रामादिकमेव । एतज्ज्ञास्त्रालोचनेन पुनर्वसुनक्षत्रस्य चतुस्ताराात्मकत्वं पुष्यस्य त्रितारात्मकत्वं तेन बहुत्वे प्राप्ते द्वित्वविधायकं सूत्रं सार्थकमिति द्रष्टव्यम् ।"पादः पुनर्व्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटे"। ज्योति० नक्षत्राधिपा उक्ताः वृहत्सं० । "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः । योन्यर्य्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राः । शक्रो निरृतिस्तोयं विश्वविरिञ्चौ हरिर्व्वसवः । अजपादोऽहिर्व्वुध्नः पूषा चेतीश्वरा भानाम्" । "चित्राश्लेषास्वातिविशाखाभरणीपित्र्यशक्रत्तिकाः । नातिशस्ताः प्रयाणेषु" ज्यो०त० अस्य क्लीवत्वमपि "अश्लेषर्क्षद्वयमपित्र्यविशाखयुक्तं पूर्व्वात्रयं शतभिषा च नवाप्युडूनि" एतान्यधोमुखसंज्ञानि कथितानि नित्यं विद्यार्थभूमिखननेषु च भूषितानि" ज्यो०त० । तथा च नक्षत्रपरत्वे न० तारापरत्वे स्त्रीत्वम् । एवं मूलाश्रवणादीनामपि द्विलिङ्गत्वम् । इयं तीक्ष्णगणः "तीक्ष्णोऽहिरुद्रेन्द्रयुक्" ज्यो०त० नास्ति श्लेषो यस्य । २असंबन्धे त्रि० । श्लेषः काव्ये नानार्थपरता स नास्ति यत्र । ३श्लेषशून्ये काव्ये न० ।

**अश्लेषाज** पु० अश्लेषानक्षत्रे जायते जन–ड ईत०। केतु ग्रहे तस्याश्लेषाजातत्वात्तथात्वं अश्लेषाजातादयोऽप्यत्र ।

**अश्लेषाशान्ति** स्त्री अश्लेषाजननिमित्ता शान्तिः शाक०त०। अश्लेषाजननिमित्तशान्तौ । तत्र अश्लेषाजनने दोषमाह" ज्यो०त० । "अश्विनीमघमूलानां गण्डान्ताद्याश्च नाडिकाः । अन्त्याः पौष्णोरगेन्द्राणां पञ्चैव यवनाः जगुः" मूलेन्द्रयोर्दिवा गण्डो निशा च पितृसर्पयोः । सन्ध्याद्वये तथा ज्ञेये रेवतीतुरगर्क्षयोः" सन्ध्यारात्रिदिवाभागे गण्डयोगोद्भवः शिशुः । आत्मानं मातरं तातं वित्तं हन्ति यथाक्रमम् । सर्वेषां गण्डजातानां परित्यागो विधीयते । तातेनादर्शनं वापि यावत् षाण्मासिको भवेत्" ज्यो०त० । त्यागासामर्थ्ये षण्मासपर्य्यन्तं मुखं न पश्येत् शान्त्या सर्व्वत्र शुभम् । त्रिपञ्चादिघटिकोक्तिर्दोषबाहुल्यार्था वस्तुतः सर्वचरणेष्वेव दोषविशेषः यथाह नारदः । "आद्ये पिता नाशमुपैति मूलपादे द्वितीये जननी तृतीये । धनं चतुर्थोऽस्य शुभोऽस्य शान्त्या सर्व्वत्र तत्स्यादहिभे विलोमम्" । सन्ध्यादिविशेषोक्तिरधिकदोषार्था । यथाह ज्योतिर्निबन्धः । "मूलाश्विपित्र्यचरणे प्रथमे च नूनं पौष्णेन्द्रयोश्च फणिनश्च तुरीयपादे । मातुः पितुः स्ववपुषोश्च करोति नाशं जातो यदा निशिदिनेऽप्यथ सन्ध्ययोर्वा" । कन्यायां विशेषः विधानपारिजाते । "न बाला हन्ति मूलर्क्षे पितरं मातरं तथा । मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम् । महेन्द्रजाऽग्रजं हन्ति देवरन्तु द्विदेवजा । शान्तिर्वा पुष्कलाख्या चेत्तर्हि दोषो न कश्चन" । द्विदेवजा अश्विनीजाता तस्याः अश्विनीसुतदेवताकत्वेन तयोश्च द्वित्वात् तथात्वम् । तच्छान्तिश्च "अश्लेषायान्तु जातानां शान्तिं वक्ष्याम्यतः परम् जातस्य द्वादशाहे च शान्तिहोमं समाचरेत् । विभवे पञ्च कुम्भांस्तु द्वयं वा तदशक्तितः" इत्यादिना मानवसंहितोक्ता । सा च विधानपारिजाते अश्लेषाशान्तिविधानप्रकरणे दृश्या । तत्फलं च मन्त्रलिङ्गात् ज्ञेयम् मन्त्रो यथा । "अश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च । भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु । योऽसौ वागीश्वरो देवो ह्यधिदेवो वृहस्पतिः । मातापित्रोः शिशोश्चैव गण्डदोषं व्यपोहतु । पितरं सर्व्वभूतानां रक्षन्तु पितरः सदा । सर्पनक्षत्रजातस्य वित्तं ज्ञातिं च बान्धवान्" वि०पा० धृता० ।

**अश्व** पु० अश्नुते व्याप्नोति मार्गम् अश–क्वन् । घोटके "गच्छन्सञ्चलितचामरचारुमश्वम्" माघः । "जितसिंहभया नागा यत्राश्वा विलयोनयः" कुमा० । "अश्वनाद्याश्वतोऽश्वे वेदेभ्योऽश्वाङ्ग गर्भतः । साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्त्तिताः इत्युक्ते साम्नो नाद्युत्पत्तिस्थानम् ।

कुकोत्पत्तिस्थानसंख्यासाम्यात् २षष्ठसंख्यायाम्। "पावहुल्यवपुर्षयो मिथ्याचारश्च निर्भयः। द्वादशाङ्गुलमेढ्रश्च दरिद्रस्तु हयो मत" इत्युक्तलक्षणपुरुषभेदे "पद्मिनी शशके तुष्टा हये तुष्टा च हस्तिनीति" रस०। अत्र प्रसङ्गात् अश्वानामङ्गविभागविशेषसंज्ञालक्षणादिकमुच्यते जयदत्तकृताश्वशास्त्रात् सारांशः "अतिप्रसिद्धा जिह्वा तु तस्याः स्थूला भवेदधः। ऊर्द्ध्वं तालु भवेत्तस्यास्ततोऽग्रे दन्तपीठकम्। ततोदन्ताः समुद्दिष्टा ऊर्द्ध्वं दन्ता भवन्त्यधः। चिबुकं चापरे भागे तेषां प्रोक्तं विचक्षणैः। चिबुकस्योपरिष्टात्तु अधरोष्ठः प्रकीर्त्तितः। चिबुकात्पार्श्वभागे तु हनुर्नामाभिधीयते। सृक्कद्वयं विजानीयात् वक्त्रपार्श्वगतं बुधः। उत्तरोष्ठं प्रथाणाख्यं तदूर्द्ध्वं प्रोथ उच्यते नासाच्छिद्रे तथा पार्श्वे प्रोथस्यैव व्यवस्थिते। नासाच्छिद्रान्तिमध्ये तु घोणाख्या समुदाहृता। घोणापार्श्वगतौ गण्डौ-घोरिके च ततःपरम्। नेत्रयोरुत्तरे भागे अश्रुपात उदाहृतः। कर्णान्ते चैव नेत्रान्तमपाङ्गं प्रवते बुधाः। कनीनिकाख्यो विज्ञेयो यश्च नासासमीपगः। सितासितौ च तन्मध्ये नेत्रयोर्मण्डलं हि तत्। प्रच्छादनं भवेद्वर्त्म चाक्षिकूटमतःपरम्। तस्मादूर्द्ध्वं भ्रुवोर्लेखा ललाटं च तदुत्तरम्। ऊर्द्ध्वं ललाटदेशात्तु केशान्तं च ततः श्रवः। ततः शिरो विजानीयात् श्रवादूर्द्ध्वगतं बुधः। शिरःपार्श्वगतौ कर्णौ तयोर्मूलं सकुन्तलम्। अपाङ्गाद्द्व्यङ्गुले चैव शङ्खं विद्याद्विचक्षणः। शङ्खकर्णान्तरे चैव कटाक्षं समुदाहृतम्। शिरोमर्म्मविदुश्चैव कर्णस्याधः षडङ्गुले। घण्टाबन्धसमीपस्थो निगालः परिकीर्त्तितः। अधस्ते निगालस्य गलमाहुर्मनीषिणः। ततः कण्ठं विजानीयादधोभागे गतं बुधः। ग्रीवा लोकप्रसिद्धा तु तस्याश्चोपरि केशरः। ग्रीवास्कन्धान्तरे चैव वाहं प्राहुर्मनीषिणः। वाहस्योपरि यस्तु स्यात्ककुदं च तत्। ततः पृष्ठं विजानीयादासनं पृष्ठमध्यगम्। अंसकौ ककुदश्चैव निबन्धः परिकीर्त्तितः। स्यातामंसादधोबाहू तयोर्बाह्वग्रे-षडङ्गुले। मन्दिरः पश्चिमोभागः कलापी जानुनोऽग्रिमः। जानुनश्चाधरे भागे जङ्घां विद्याद्विचक्षणः। जङ्घापार्श्वे कलां विद्यात् तन्मध्ये चैषिकसंज्ञकम्। अग्रतः पालिहस्तः स्यात् पश्चात्कूर्च उदाहृतः। किष्कालैश्च मध्यस्थोऽप्यधोभागे च कुष्ठको। खुरसन्धिं ततोविद्यादधोभागे ततः खुरम्। खुरस्य पार्श्वे पार्ष्णिः स्यादग्रभागे नखो भवेत्। खुरस्याधस्तलं चैव मण्डुकी तलमध्यगा। खुरमांसं विजानीयात् चीरकाख्यं विचक्षणः। हृदयात्परतः कुक्षी पार्श्वे तत्र विभागतः। जठरं पार्श्वमध्यस्थं तस्य नाभिश्च मध्यतः। रोमराजीं ततो विद्यान्मूत्रकोशमतःपरम्। आ कक्षाः पश्चिमे भागे पुटौ स्फिचौ च कीर्त्तितौ। पुच्छमूलं च वाहानां भाषते पुच्छमूलतः। तस्याधः कीर्त्तितः पायुः सीवनी च ततः परम्। मुष्कौ च कटिसन्धिं च ततोविद्यात्परं बुधः। अधस्तात्कटिसन्धेस्तु जानुसन्धिरुदाहृतः। सक्थिनी फलसन्धेस्तु ऊरू पादाभिधायके। ततः स्थूरं विजानीयात्तस्याधोमन्दिरं भवेत्। किष्कं चैव ततो विद्यान्मन्दिराख्ये सुसंस्थितम्। ततः परं विजानीयात् कालकूर्चं च कुष्ठिकम्। खुरान्तसंज्ञं मण्डूकं ततो विद्याद्विचक्षणः। अग्रे जङ्घाद्वयं चैव वचो ग्रीवाशिरोमुखम्। पूर्वकायः समुद्दिष्टः पृष्ठदेशस्तु मध्यमः। आ कटेः पश्चिमे भागे खुरान्तमपरं स्मृतम्"।

तेषां लक्षणानि "अशुभैर्लक्षणैर्युक्ता हया न स्पृहणोचिताः। अतो लक्षणमेवादौ तेषां वक्ष्यामि देहजम्। ओष्ठयोः सृक्कणोश्चैव जिह्वायां दशनेषु च। वक्त्रे तालुनि नासायां गण्डयोर्नेत्रयोस्तथा। ललाटे मस्तके चैव केशे कर्णपुटे तथा। ग्रीवायां केशरे चापि स्कन्धे वक्षसि बाहुके। जङ्घायां जानुनोश्चाथ कूर्चे पादे तथैव च। पार्श्वयोः पृष्ठभागे च कुक्षौ कक्षां करावयो। मेहने मुष्कयोश्चापि तथा चैवोरुकद्वये। आवर्त्ते च खुरे पुच्छे गतौ वर्णे स्वरे तथा। महादोषे लजेलात्वच्छायायां गन्धसत्त्वयोः। प्रमाणस्यैर्वाहानां लक्षणं यत्प्रतिष्ठितम्। शुभाशुभविवेकाय तद्विद्याद्धीमान्भिषक्। शालिहोत्रादिभिःसम्यक् त्रिकालज्ञानकोविदैः। आताम्रौ पूजितावोष्ठौ वलिहीनौ मृदुत्वचौ। सुप्रोथोत्तरसंस्थं च विपरीतं विवर्जयेत्। सृक्कणोस्तु द्रुता शस्ता जिह्वायां रक्तता तथा। अतथान्यपि दोषाय न त्वदीर्घा च सा शुभा। घना स्निग्धा सुवृत्ता च समा दन्ताः सुशोभनाः। षट्संख्ये वत्सरे हृष्टे तेषु व्यङ्गसंभवः। आयतं तुङ्गघोणं च निर्मांसं प्रियदर्शनम्। सुबन्धं पूजितं वक्त्रं विपरीतं विगर्हितम्। तालु रक्तं प्रशस्तं च सुपुटे चैव नासिके। नातिनम्रौ समौ गण्डौ वाहानां कीर्त्तितौ शुभौ। अन्तर्निमग्ने चैव सुबद्धे नैव चाविले। प्रशस्ते वाजिनां नेत्रे मध्वाभे मलतारके। स्निग्धायते विशाले च श्रेष्ठे मधुनिभालिनी। कनकप्रतिसंकाशे यस्य वाहस्य लोचने। आवर्त्तं च विशालं च अनिम्नं चैव वाजिनः। ललाटं पूजितं प्राहुर्मुनयः शास्त्र-

कोविदाः। शिरः समं तथा वृत्तमावर्त्तद्वयभूषितम्। केशाश्च मृदवश्चैव बहवश्चैव पूजिताः। ऋजुता कर्णयोश्चैव तीक्ष्णता तनुता तथा। अदीर्घरोमता चैव प्रशस्ता विप्रकीर्त्तिता। मुष्कादुच्छ्रिताञ्चैव धन्यां ग्रीवां विदुर्बुधाः। केशरश्च जटाहीनो मृदुश्चैव प्रशस्यते। सुबद्धश्च दृढश्चैव स्कन्धो-वाहस्य पूजितः। वक्षः प्रशस्तं विपुलं निर्गतं विशदं च तत्। ऋजुवृत्तसमौ बाहू गूढं जानु प्रशस्यते। अवक्रा मांसहीना च वाजिजङ्घा प्रशस्यते। शुभं स्थूलं सुवृत्तं च समं चैव नतोन्नतम्। कूर्चमेवंविधं विद्याद्दुर्गन्धिव्रणवर्जितम्। दृढमण्डलिकायुक्तो वर्त्तुलः स्निग्धसन्धिकः। खुरः खरखुराकारः प्रशस्तः समुदाहृतः। पार्श्वे चैव समे वृत्ते ऊर्द्धमांसोपशोभिते। अविलम्बि सुवृत्तं च उदरं चातिपूजितम्। नातिदीर्घं समं पृष्ठं किञ्चिच्च विनतं शुभम्। सुवृत्ता चैव पीना च कटिर्धन्या प्रकीर्त्तिता। मृदुस्निग्धायतैर्युक्तं वालैः पुच्छं प्रशस्यते। वृषणौ च समौ वृत्तौ दंष्ट्रास्वल्पलोमशौ। अव्रणर्णविहीनं तु ह्रस्वं मेहनमिष्यते। अनुपूर्वं परं चैव शोभनं चोरुकद्वयम्। पूर्वजङ्घे च जङ्घादि खुरान्तं चापि पश्चिमम्। शालिहोत्रादिभिः प्रोक्तं मुनिभिः पूर्ववेदिभिः"।

आवर्त्तलक्षणम् "विंशतिस्तु शुभाः प्रोक्ताः षट्सप्तत्यशुभाः" स्मृताः। उत्तरोत्तमपापस्यास्त्वावर्त्ताः शुभावहाः। स्तनयोश्च या प्रोक्ताः सर्वकामफलप्रदाः। त्रयश्चैवाथ चत्वारो वाजिनो-यस्य रोमजाः। द्वौ वा ललाटजौ यस्य स तु धन्यतमः स्मृतः। आनुपूर्व्या स्थिताश्चोर्द्धं ललाटे रोमजास्त्रयः। त्रिःश्रेणी नाम सा ख्याता भर्त्तुः सर्वार्थसाधिनी। शिरःकेशान्तयोर्मध्ये श्रोनामाभिधीयते। तत्रावर्त्तः स्थितोऽश्वस्य भर्त्तुर्जयविवर्द्धनः। घण्टाबन्धसमीपस्थो निगालः कीर्त्तितो बुधैः। तस्मिन्देवमणिर्नाम रोमजः शुभकृत् स्मृतः। कर्णमूले तथा बाह्वोः केशान्ते मस्तके तथा। आवर्त्ताः पूजिता नित्यं विशेषेण तु मस्तके। आवर्त्ता यस्य चत्वारो वाजिनो वक्षसि स्थिताः। एका कण्ठे भवेत् श्रेष्ठं स धन्यः सर्वकामदः। रन्ध्रे चैव सदा भर्त्तुः शंसितार्थप्रदो मतः। उपरन्ध्रोद्भवश्चैव रोमजश्चाति पूजितः। शङ्खचक्रगदापद्मशुक्तिवज्रोपमाश्च ये। विशेषेण शुभाः प्रोक्ता रोमजाः शुभदेशजाः। अत ऊर्द्धं प्रवक्ष्यामि रोमजानशुभाय यान्। भर्त्तुः क्लेशवहान् सर्वान्नप्राणापहारकान्। नासिकापुटयोर्मध्ये प्रदेशः प्रोथ उच्यते। तत्र भर्त्तुर्विनाशाय रोमजोऽश्वस्य कीर्त्तितः। ऊर्द्धस्थो नासिकाच्छिद्रात् स्वामिनः क्लेशदायकः। गण्डजश्चैव भर्त्तारं हन्त्यावर्त्तो दुरासदः। अश्रुपातः समुद्दिष्टः प्रदेशश्चक्षुषोरधः। तत्रावर्त्तोभवेद्दीनः स्वामिनः कुलनाशनः। अपाङ्गादुदग्भ्रुवे चैव प्रदेशः शङ्ख उच्यते। तत्र भर्त्तुर्विनाशाय भवेद्वाहस्य रोमजः। भ्रुवो देशे शङ्खूत आवर्त्तो नैव पूजितः। तद्वृद्धियोगतस्तस्याद्भर्त्तुरर्थावसादकः। सव्यां ग्रीवां शिरां विद्यात्तत्रावर्त्तस्तु कुत्सितः। कक्षयोश्चापि संग्रामे स्वामिनं चाशु घातयेत्। चिबुकस्य समीपस्थो वामदक्षिणभागतः। प्रदेशस्तु हनुर्नाम तत्रावर्त्तो हि दारुणः। अधरोष्ठस्य चाधस्तु चिबुको हि प्रसिद्धकः। तस्मिन् पापो भवेद्भर्त्तुः कर्णयोश्चापि रोमजः। कण्ठस्याथ निगालस्य मध्ये गलक उच्यते। तत्रावर्त्तः स्थितः पापः स्कन्धसन्धिगतश्च यः। अधस्ताद्वक्षुयोश्चैव सन्धिः कूर्च इति स्मृतः। तत्रावर्त्तः स्मृतो भर्त्तुः संग्रामे जीवितान्तकृत्। कूर्चादष्टाङ्गुलं चोर्द्धं पार्श्वयोः कक्षता स्मृता। तत्र भर्त्तुः शराघाते जीवितान्ताय रोमजः। ककुदं वृषभस्येव सुव्यक्तमुपजायते। वाजिनो यस्य तत्रस्य आवर्त्तस्तु विनाशकृत्। ककुदस्य पुरोभागे समीपे वाह उच्यते। भर्त्तुः कृतघ्नतस्य तस्मिन् नाशाय रोमजाः। काकसे तु हयस्य स्यादावर्त्तो यस्य दारुणः। रणे हतः समं भर्त्ता क्रव्यादैः स विलुप्यते। क्रोडे चैवासने चापि हृदये चैव वाजिनः। आवर्त्ताः स्वामिघाताय भवन्त्येते न संशयः। पार्श्वयोरोमजो यस्य स चाश्वोनयति क्षयम्। सपत्नं चाशु भर्त्तारं नीहाराम्बु यथाम्बुजम्। कूर्चस्याधःप्रदेशस्तु कुटिश्च परिकीर्त्तितः। अधन्यस्तत्र वाहस्य जघन्यो जानुजश्च यः। नाभिजोमुष्कजश्चैव लिङ्गजश्च विशेषतः। पुच्छमूलस्थितश्चापि नैव धन्यः प्रकीर्त्तितः। कुक्षौ व्याधिः, क्षयायेव रोमजाः कुक्षिसंभवाः। पाद्युति-बलिमध्यस्था नैव धन्या प्रकीर्त्तिताः। स्फिक्स्थिजः खुरजश्चैव यस्यावर्त्तो हि वाजिनः। लक्ष्मावर्त्तः स विख्यातो भर्त्तुः सर्वार्थनाशकः। शतपादीति विख्यातस्तथा वै शकुलोऽपरः। आवर्त्तश्चैव संघातः पादुकश्चार्द्धपादुकः। शुक्तिश्चैवावलीढश्च आवर्त्तः कीर्त्तितोऽष्टधा। वाजिदेहगतः सम्यक् शुभाशुभनिवेदकः। शतपादीसमाकारः शतपादीति कीर्त्तितः। जातीमुकुलसंकाशो मुकुलः समुदाहृतः। आवर्त्तौ भ्रमितौ वालैः संघातो रोमपुङ्खकः। शुक्तिश्च शुक्तिसंस्थानै-रोमभिर्व्यक्तलक्षणैः। एतेषामेव लीढस्तु अवलीढः प्रकीर्त्तितः। पादुकः पादुकाकारस्तथा चैवार्द्धपादुकः। वालै-

विशेषसंस्थानैर्निर्द्दिशेत्क्रान्तिमानुभिषक् । शास्त्रमार्गानुसारेण यथा प्रोक्तं तपोधनैः एतेषामेव सर्व्वेषामावर्त्तानां विचक्षणैः । रोमणां तिलकता संज्ञा वाजिलक्षणवेदिभिः । शुभाशुभौ तु यत्र द्वौ तत्रैको न फलप्रदः । एवं चेन्मा दहेत्पापं तेन दोषो न दुष्यति । अथ वा वाजिनो मुख्याः ये चाङ्गादिगुणाधिकाः । दन्ता ग्राह्याः क्रमेणैव दुरावर्त्तस्तु काकुदी । श्रीवत्सो रोमजश्चैव रोचमानस्तथैव च । अङ्गादौ मेचको नाम राजरत्नप्रदाः सदा । प्रपाणे मारुतं विद्याल्ललाटे च हुताशनम् । उरसि चाश्विनौ देवौ चन्द्रासूर्य्यौ च मूर्द्धनि । रन्ध्रे स्कन्दविशाखौ च उपरन्ध्रे हरीहरौ । इत्येवं पूजिताश्चेत्र ते दृशवन्धास्तु वाजिनः । अन्येकेन विहीना ये भवेयुरशुभास्तदा" ।

अथ पुण्ड्रलक्षणम् अत ऊर्द्ध्वं प्रवक्ष्यामि पुण्ड्राणां लक्षणम् शुभम् । शुक्तिशङ्खगदापद्मखड्गचक्राङ्कुशोपमाः । शिरोललाटं वदनं यः पुण्ड्रो व्याप्य तिष्ठति । स धन्यः पूजितोनित्यं मृदुकश्चैव योभवेत् । पर्व्वतेन्दुपताकाभा ये च स्रग्दामसन्निभाः । ते सर्व्वे पूजिताः पुण्ड्रा धनधान्यफलप्रदाः । इति पुण्ड्राः समाख्याताः पूर्व्वशास्त्रानुसारतः । अशुभांश्चैव वक्ष्यामि यथायोगं समासतः । काककङ्कबन्धाहिम्लग्नगोमायुसन्निभाः । असिताः पीतका रक्ताः पुण्ड्रका न च पूजिताः । तिर्य्यग्गताश्चैव विच्छिन्नाः स्रस्तलापाग्रशोभिताः । जिह्वाकृष्णाश्चिह्नाश्चि भस्मवर्णनिभानि च । मूलाग्रा वामदेहस्थाः पुण्ड्रका न शुभप्रदाः । पुण्ड्रकाणि विनश्यन्ति भिन्नवर्णानि वाजिनः" ।

अथ पुष्पलक्षणम् । "आगतं वक्षरन्ध्रे ये भवन्त्यन्यवर्णकाः । विन्दवः पुष्पसंज्ञा वा हिताहितत्वकारकाः । तेषां प्रदेशभेदे च लक्षणं यद्व्यवस्थितम् । तत्तथैव समासेन विस्पष्टं कीर्त्यतेऽधुना । प्रपाणे च ललाटे च कचे मूर्द्धनि कर्णयोः । निगाले चैव केशान्ते पुष्पं धन्यतमं स्मृतम् । स्कन्धे वक्षसि कक्षे च मुष्कयोर्वाङ्क्षये मुखे । कुक्षौ पृष्ठे च वाहानां पुष्पं स्वामिहितप्रदम् । नाभौ केशे तथा कण्ठे दन्ते चैव हि वाजिनाम् । पुष्पं धन्यतमं प्रोक्तं भर्त्तुः सर्व्वार्थसाधकम् । अप्रशस्तानि दृष्टानि मुनिभिर्यानि शास्त्रतः । तानि सम्यक् प्रवक्ष्यामि पुष्पाण्यन्यानि दर्शनात् । अधरोष्ठे करे प्रोथे उत्तरोष्ठे तथैव च । घोणायां गण्डयोश्चैव शङ्खयोश्च तथा भ्रुवोः । ग्रीवायां चैव वाहे च स्कन्धयोस्तुरके स्थिचि । पायौ क्रोडे च पुष्पाणि निन्दितानीति निश्चयः । रक्तं पीतं तथा कृष्णं पुष्पं सर्व्वत्र नेष्यते । शुभप्रदेशे सञ्जातं भवेत्साधारणं ततः । पुत्रलाभधनप्राप्तिमारोग्यं विजयं तथा । विद्यात्पुष्पैः शुभैर्भर्त्तुरशुभैश्च विपर्य्ययम् । सर्व्वाङ्गपुष्पितो वाहो परित्याज्यो न संशयः" ।

अथ गतिशुभादिलक्षणम् "दूरमुत्क्षिप्य यः पादांस्तुप्रांगारान् स्पृशन्निव । पुनं याति शुभं हृष्टो वाजी भद्रगतिस्तु सः । पूजिता वृषमातङ्गसिंहयाद्रूलगामिनः । अतोऽन्यगतयो नेष्टाः सर्व्वशुद्धतुरङ्गमाः । संकीर्णा एकतोभ्रष्टा चङ्क्रमौघ विवर्जिताः । अस्थूला चैव वक्रा च वाजिनां निन्दिता गतिः । घोडशाक्षोटिकाभिस्तु करवेष्टितजानुभिः । शतं द्विगुणितं गत्वा कुत्रानां पुनरेति यः । स शीघ्रगतिरिक्तो वाजी धन्यस्तपोधनैः । दशहीना भवन्त्येते मध्यमाधमगा हयाः ।

अथ वर्णभेदेन नामभेदः "श्वेतः कोकाह इत्युक्तः कृष्णः खुगाह उच्यते । पीतको हरितः प्रोक्तः कषायो रक्तकः स्मृतः । पक्वतालनिभो वाजी कयाहः परिकीर्त्तितः । पीयूषवर्णः सेराहो गर्द्दभाभः खुरूहकः । नीलो नीलक एवाश्वः त्रियूहः कपिलः स्मृतः । शिवाहः कपिशो वाजी पाण्डुकेशः सुवालधिः । हलाहविलकर्वालिपुलाहः श्वेतपीतकः । ईषत्पीतः कुलाहस्तु यो भवेत् कृष्णजानुकः । कृष्णा चास्ये भवेद्रेखा पृष्ठवंशानुगामिनी । उराहः कृष्णजानुस्तु मनाक्पाण्डुस्तु यो भवेत् । सेरुहाख्यः स्मृतो वाजी पाटलो यः प्रकीर्त्तितः । रक्तपीतकषायोत्थो वर्णजो यस्य दृश्यते । दुकुलाहः स विख्यातो वर्णो वाहस्य देहजः । पूर्व्वोक्तानां च वर्णानां सुखपुण्ड्रेण वाजिनाम् । ये भवन्ति परे भेदास्तान् ब्रवीम्यनुपूर्व्वशः । कोकाहः पुण्ड्रिको नाम्नः कोकुराहः प्रकीर्त्तितः । सुराहखरगाहौ च हरिकोहरिराहिकः । कलाहश्चैव वोल्लाहः सिराहः सिलुराहकः । कुलाहः कुलुराहस्तु सराहः शुभराहकः । चाकराहो जयेदश्वो गोकराहो न यः स्मृतः । कुलीहो दुरुणाहस्तु युद्धके नैव कीर्त्तितः । त्रिपुण्ड्रित्रिपुलाहश्च युद्धके नैव कीर्त्तितः । त्रिपुण्ड्रित्रिपुलाहश्च चित्राङ्गश्च यो भवेत्" ।

अथ रोमवर्णभेदेन शुभाशुभलक्षणम् । "यस्य गौराणि पीतानि गात्ररोमाणि वाजिनः । स भर्त्तुः श्रियमाधत्ते यस्य शुक्लासितानि च । यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा । कर्णजङ्घा सिता यस्य तं विद्यादष्टमङ्गलम् । प्रभूतासिततारारश्च प्रशस्ता मुनिभिः स्मृताः । यस्तु पीतासितैस्तारैः स धन्यः कीर्त्तितो हयः । प्रशस्ताः

कृष्णतारस्तु मल्लिकाक्षः प्रकीर्त्तितः । श्वेतजावेष्टितं कृष्णं रेखया तारकं च यत् । मल्लिकाक्षः स विज्ञेयः स्वामिनः सुखवर्द्धनः । सिततयाऽप्रशस्तश्च स्वामिनः क्लेशवर्द्धनः । सर्व्वश्वेतश्च कृष्णश्च रक्तपीतस्तथैव च । एते सांग्रामिकाः प्रोक्तास्तुरगा मुनिसत्तमैः । हरिताः किल जायन्ते वाजिनः पुण्यदर्शनाः । यतो हिता नरेन्द्राणामायुरारोग्यश्रीप्रदाः । रक्ताक्षमेहनः शस्तः श्यामकर्णस्तु यः सितः । कपोतेन च वर्णेन योऽश्वः शुक्लकेशरः । शुक्लपादस्तथो वाजी प्रशस्तः परिकीर्त्तितः । चतुर्णां चैव पादानां शुक्लता यस्य वाजिनः । मुखं सिततरं चैव पञ्चभद्रः स उच्यते । श्वेतमण्डलचित्रश्च भर्त्तुः सर्व्वार्थसाधकः । पाण्डुरा यस्य रेखा स्यात् पृष्ठवंशानुगामिनी श्वेतकृष्णशिरा यश्च नैव धन्यः प्रकीर्त्तितः । अन्यवर्णं शिरो यस्य पुच्छं वा यस्य वाजिनः । पुच्छेन शिरसा वापि नानावर्णेन निन्दितः । अव्यक्तवर्णो योऽवाहस्तथा तित्तिरिसन्निभः । कुत्सितो वानराक्षश्च यो वा व्याघ्रावलोककः"

अथाङ्गविकृतितोऽशुभलक्षणम् । "काकुदी कृष्णजिह्वश्च कृष्णसैकाण्डतालुकः करालो हीनदन्तश्च शृङ्गी चाधिकदन्तकः । एकाण्डश्चैव जाताण्डः कञ्चुकी त्रिकरी तथा । मार्ज्जारपादो व्याघ्राभश्चित्रकर्णो द्विखुरी स्तनी । यमयो वामनश्चैव काकतित्तिरसंनिभः । वानराक्षो बिड़ालाक्षो मुषली चेन्द्रवृद्धिकः । येषां पृष्ठे कृतो भर्त्ताऽ जातदन्तस्तथैव च । एते दोषान्विता वाहास्त्याज्या वै भूतिमिच्छता । धनप्राणहराश्चैते बन्धुविग्रहकारकाः । एषां चिह्नं प्रवक्ष्यामि येन जानन्ति सादिनः । पूर्व्वशास्त्रानुसारेण मुनीनां वचनं यथा । आवर्त्तो यत्र ककुदे काकुदी स उदाहृतः । करालैर्वाधरे दन्तैर्ज्जायते यस्य चोत्तरम् चतुर्भिः पञ्चभिश्चैव हीनदन्तः प्रकीर्त्तितः । सप्तभिश्चाष्टभिर्दन्तैर्ज्जातश्चाधिकदन्तकः । अङ्गुष्ठपर्वसंकाशं छागशृङ्गोपमन्तथा । जम्बूबदररूपं च तथा चामलकोपमम् । आङ्कास्थिसदृशं चापि हरीतक्याः फलोपमम् । दग्धचर्म्मनिभं चापि वालं संस्थानमेव च । कालकृष्णान्तरे यस्य केशान्ते चापि दृश्यते । घोरेयः सर्व्वपापानां वाहः शृङ्गी स कीर्त्तितः । एवंविधेन शृङ्गेण शृङ्गी राष्ट्रे न वासयेत् । एकतोऽप्रमाणेन सप्केकैकाण्डसंज्ञकः । अत्यन्तरोमगात्राभ्यां तु ताभ्यां जाताण्ड उच्यते । स्कन्धे वक्षसि बाह्वोश्च कंसदेशे तथैव च । अन्यवर्णो भवेद्वाजी कञ्चुकी स प्रकीर्त्तितः । यस्यान्यवर्णा रेखा स्यात्पादे कूर्च्चे च वाजिनः । मार्ज्जारपादः प्रोक्तोऽसौ सोऽधन्यः कुलनाशनः । अन्यवर्णस्तु वाहस्य शिरः कृष्णं यदा भवेत् । त्रिकरी नाम स प्रोक्तो भर्त्तुः कुलविनाशनः । द्विखुरं गोखुराकारखुरैर्विद्याद्विचक्षणः । अथ वा त्रिर्वलियुतौ निम्नमध्यैश्च निर्दिशेत् । वृषणाभ्यां सुजाताभ्यां स्तनाभ्यां विहिता स्तनी । त्रिभिः कर्णैश्चित्रकर्णी च व्याघ्राभो व्याघ्रवर्णकः । एकेनाङ्गेन हीनेन निम्नेन च विशेषतः । यमयं वाजिनं विद्याद्वामनं वामनाकृतिम् । वर्णादिकेन पादेन अन्यवर्णेन यो हयः । मुषलीति स विख्यातो भर्त्तुः कुलविनाशनः । विरोधं नैव यो याति दृष्ट्वाश्वान् सुपकर्जितः । इन्द्रवृद्धिः स विख्यातो भर्त्तुः कुलविनाशनः । अथ चेद्बड़वां दृष्ट्वा विरोधमधिगच्छति । निगूढ़वृषणाश्वस्तु स धन्यः सर्व्वकामदः । द्विवर्षं तु समारभ्य यावद्वा पञ्चवार्षिकः । दन्तानां सृक्कयोश्चैव सम्भवो वाजिनः स्मृतः । अत ऊर्द्ध्वं न जायन्ते सृक्कौ दन्ताश्च वाजिनः । अशुभं तु फलं पाश्चप्रभावे न ततस्तथा" ।

अथाश्वाङ्गचेष्टादिशुभाशुभम् । अतःपरं प्रवक्ष्यामि तुरगाणां विभागतः ज्वलितेन यथाङ्गेन फलं वाच्यं शुभाशुभम् । यदा ज्वलति वाहानां सर्व्वगात्रे हुताशनः । तदा विद्याद्दनाद्दृष्टिमद्दर्भकं न संशयः । अन्तःपुरविनाशस्तु मेहने ज्वलिते भवेत् । उदरे वित्तनाशस्तु पायौ पुच्छे पराजयः । उत्तमाङ्गे च वक्त्रे च स्कन्धे चैवासने तथा । भर्त्तुर्जयाय वाहानां ज्वलनं यत्र नेत्रके । धूमं ललाटे बाह्वोश्च तथा वक्षसि निन्दितम् । तत्रैव ज्वलनं शस्तं तथा नासाक्षिसम्भवः । यदा व्याधिं विना वाजी पार्श्वं व्रजति दुर्म्मनाः । अश्रुपातं च कुरुते तदा भर्त्तुरशोभनम् । स्वयमेव यदा वक्त्रं दृष्टो लोकयते हयः । रथहायमदाने तु तदा विद्याज्जयं प्रभोः । सर्व्वदैव शिरोत्रस्तु सर्व्वेषां नैव पूजितः । वामपादाभिघातस्तु प्रभोर्यात्रानिषेधकः । स्वामिनारूढ़मात्रेण दक्षिणं पार्श्वमात्मनः । तुरङ्गमो यदा स्पृशेत्तदा भर्त्तुर्जयो भवेत् । पुच्छं वाहं यदा वाजी वामतो विकिरेद्यदा । तदा भर्त्तुः प्रवासः स्यात् दक्षिणे विजयस्तथा । प्रकिरन्ति यदात्यर्थं सर्व्वमुच्चं तुरङ्गमाः । अकस्मादेव जाता च तेषां भीतिः प्रभोः स्मृता" ।

अथाश्वमानम् "हस्तोऽङ्गुलानां विंशत्या चतुरुत्तरया स्मृतः । चतुर्हस्तस्तु विख्यातः शास्त्रोक्तेनोत्तमो हयः । अर्द्धहस्तेन हीनस्तु भवेन्मध्यस्तुरङ्गमः । हस्तिन्यूनेन हस्तेन हीनश्चाप्यधमः स्मृतः । आर्द्धमानप्रमाणं तु परिणाहं विनिर्दिशेत् ।

उत्तमानाञ्च मध्यानां हीनानां चैव वाजिनाम्। अर्द्धसप्तमहस्तं तु श्रेष्ठं दैर्घ्येण निर्द्दिशेत्। षड्भिश्च मुष्टिभिर्हीनं मध्यमं च विचक्षणः। पञ्चहस्तप्रमाणस्तु जघन्यः समुदाहृतः। द्वात्रिंशदङ्गुलं वक्त्रमुत्तमाश्वस्य कीर्त्तितम्। एवं वक्षः कटौ चैव मुखतुल्यं समादिशेत्। अङ्गुलीद्वयहीनं तु मुखादि मध्यमाधमम्। निर्द्दिशेन्मतिमान् वैद्यः वाजिशास्त्रविशारदः। षण्णाङ्गुलं खुरं चैव उत्तमाश्वस्य कीर्त्तितम्। षडङ्गुलं भवेन्मध्ये जघन्ये चतुरङ्गुलम्। षोड़शाङ्गुलदीर्घा तु जङ्घा चैवोत्तमे हये। चतुर्द्दशाङ्गुला मध्ये हीने च द्वादशाङ्गुला। एवंविधं प्रमाणं तु निर्द्दिष्टं शास्त्रशालिभिः। अपाङ्गात् पुच्छमूलं तु दैर्घ्येणाश्वं प्रमाणयेत्। खुरान्तात् ककुदं यावदूर्द्ध्वमानेन बुद्धिमान्। ह्योभागे तु सर्वेभ्यो रज्ज्वा वा सूत्रकेण च। परिणाहं तुरङ्गस्य मापयेन्मतिमान्भिषक्। एवं प्रमाणभागेन विभक्ताङ्गश्च पूजितः। अतो हीनाधिकाङ्गाश्च हयो नैव पूजिताः"।

आवर्त्तादिकं विशेषयति हेमा० प०ख० ज्योति० पराशरसंहिता।"आवर्त्तौ बहिर्मुखदक्षमण्डलरोमा, दीर्घहस्ताङ्करोमा शुक्तिः। कनकमन्तर्मुखह्रस्वरोमसंघातं, प्रफुल्लविकचरोम पुष्पमिति"। पुष्पं विशेषयति तत्रैव। "श्वेतं स्निग्धमन्यवर्णस्य प्रशस्तं श्वेतस्य कृष्णं पीतं कृष्णं रक्तं वा। अश्वान्यवर्णं ललाटे श्वेतं वालेन्दुतारकसंस्थानं वा पुष्पम्"।

अथाश्वायुर्लक्षणम् 'आयुर्लक्षणमश्वानामतऊर्द्ध्वं प्रवक्ष्यते। शालिहोत्रादिनिर्द्दिष्टं यथा पूर्वं तपोधनैः। सुसंहताश्च ये वाहा ह्रस्वकर्णास्तथैव च। स्वरनेत्रस्वभावेषु न दीनाश्चिरजीविनः। महाघोषा महाकायाश्च ये वाहाः पृथुवक्षसः। तेषां दीर्घं भवेदायुः स्निग्धाङ्गाश्चैव ये सदा। कर्णाग्रे पीड़िते येषां सिन्दूराभस्य दर्शनम्। शोणितस्य भवेत् क्षिप्रं ते मताश्चिरजीविनः। न विस्फिरन्ति ये वालं स्वपाणाय तुरङ्गमाः। न वा जिघ्रन्ति ये चापि तेऽपि दीर्घायुषो मताः। कुटिकाश्च किणा येषां हस्ताग्ने वाजिनां स्फुटाः। प्रतिस्रोतः पिबन्त्यम्भो ये च ते दीर्घजीविनः। पद्मपत्रदलाकारं जिह्वाग्रं यदि वाजिनः। दन्ताश्च मौक्तिकाकारा लिङ्गं येषां च निर्मलम्। सीत्कारं च भवेद्येषां लाङ्गूले चालनं पुनः। प्रस्वेदः शुभगन्धस्तु नखा वा दर्पणोपमाः। येषां च दृढ़रोमाणि ते सर्वे चिरजीविनः। स्निग्धा गम्भीरदीर्घाश्च प्रोथगा यस्य वाजिनः। भवन्ति विपुला रेखास्तं विद्याद्दीर्घजीविनम्। चलचामरभृङ्गारखड्गपद्माङ्कुशनिभाः। शुक्तिकुम्भगदाकारा ध्वजपद्मसमोपमाः। श्रीवृक्षस्वस्तिकाभाश्च प्रोथरेखाश्चिरायुषाम्। ऊर्द्ध्वं प्रोथोत्थिता रेखा यस्य वामेन चानता। हस्वा वा यस्य वाहस्य न चिरं तस्य जीवितम्। ऊर्द्ध्वं प्रोथसमा रेखा दृश्यते यस्य वाजिनः। तस्य स्वायुः समुद्दिष्टो दशमं प्राप्य वत्सरम्। त्र्यङ्गुला चेद्दश द्वे च वर्षाणां तस्य जीवितम्। त्रयोदशाब्दं स जीवेद्यस्यास्ये चतुरङ्गुले। तिर्य्यग्गे प्रोथगे स्यातां द्वे रेखे चैव वाजिनः। प्रोथगे वाथ वाहस्य तस्य विद्याच्चतुर्द्दश। दक्षिणेन च पार्श्वेन यः शेते सर्वदा हयः। बहुमूत्रोऽल्पमूत्रश्च चिरं जीवति नो हयः। विनतः पूर्व्वकायेन स्थूलजानुश्च योऽहयः। न्यूनाधिकूटस्थाक्षः स्वल्पायुः स प्रकीर्त्तितः। जातदन्तद्वयं बाल्ये प्रत्यब्दे तृतीयके। चतुरो दशनान् विद्याच्चतुर्थे पतितोत्थितान्। पञ्चमे पतितोद्भूतान् षट् च दन्तान् मनीषिणः। षडाब्देषु च वर्षेषु कालिकादिसमुद्भवः। कालिका हरिणी शुक्ला कृष्णा काचा समक्षिका। शङ्खा चैव क्रमेणात्र वयसः परिसूचिकाः। षडाब्दे कालिका रेखा कृष्णा दन्ताग्रसंस्थिता। षष्ठे च सप्तमे वर्षे चाष्टमे च भवेत् क्रमात्। आपीता हरिणी ज्ञेया कालिका स्थानमाश्रिता। नवमे दशमे वर्षे भवेदेकादशे तथा। कृष्णा चैव भवेच्छुक्ला दन्ते मूर्द्ध्नि समुद्भवा। द्वादशाब्दं समारभ्य भवेद्यावच्चतुर्द्दशम्। सिता सिद्धार्थकाकारा काचेति परिकीर्त्तिता। पञ्चदशाब्दमारभ्य यावत्सप्तदशादितः। मक्षिका मक्षिकाकारा भवेदष्टादशादिषु। विंशत्यन्तेषु वर्षेषु वाजिनां दशनोद्भवा। त्रयोविंशावसानेषु एकविंशादिषु त्रिषु। शङ्खाकारा भवेच्छुक्ला मुक्तस्थानमाश्रिता। छिद्रं च चलनं चैव तथा पातश्च कथितः"। "अतिवृद्धाः कषायाश्च तनवश्चेति तत्त्रयः। ते भवन्ति द्विवर्षस्य युक्ताश्चैव द्विजन्मना। रेखाश्च शिरसः सूक्ष्मा भवेच्च पतितोत्थिता। खड्गाग्रा विपुला दन्ता भवन्ति पतितोत्थिताः। खलभागे विनापूर्वं व्यञ्जनानां न सम्भवः। पूर्वेषु खलभागेषु जायन्ते कालिकादयः। निम्नं कृष्णं च दन्ताग्रं खलमित्यभिधीयते। पूर्णतां चास्य जानीयात् षडब्दात्तिवत्सरे। खलेषु कालिकाऽऽद्यासि नैव कार्य्या विचारणा। नियता कालिका रेखा सुपूर्णे दन्तमस्तके। द्वयोर्भवति षष्ठे द्वे चतुर्थी सप्तमे तथा। खलमष्टसु वर्षेषु दन्तानां कालिका क्रमात्। कालिकानुक्रमेणैव हरिण्यादिषु बुद्धिमान्। द्वौ द्वौ वर्षेण जानीयाद्वाजिनां व्यञ्जनं प्रति"।

विश्वेहितमिदं नेष्टं क्षतं वाजिनाम्। आरोहणमन्यवाजिनां पर्य्याणादियुतस्य वाजिनः। उपवाह्यतुरङ्गमस्य वा ऽविकलस्यैव विपन्न शोभना। क्रौञ्चवद्रिपुवधाय हेषितं ग्रीवया त्वचलया च सोन्मुखम्। स्निग्धमुच्चमनुनादि हृष्टवद् ग्रासरुद्धवदनैश्च वाजिभिः। पूर्णपात्रदधिविप्रदेवता गन्धपुष्पफलकाञ्चनादि वा। द्रव्यमिष्टमथ वापरं भवेद्धेषतां यदि समीपतो जयः। भक्ष्यपानखलिनाभिनन्दिनः पत्युरौपयिकनन्दिनोऽथ वा। सव्यपार्श्वगतदृष्टयो ऽथवा वाञ्छितार्थफलदास्तुरङ्गमाः। वामैश्च पादैरभिताड़यन्तो महीं प्रवासाय भवन्ति भर्त्तुः। सन्ध्यासु दीप्तामवलोकयन्तो हेषन्ति चेद्बन्धपराजयाय। अतीव हेषन्ति किरन्ति वालान् निद्रारताश्च प्रवदन्ति यात्राम्। रोमत्यजो दीनखरस्वराश्च पांशून् ग्रसन्तश्च भयाय दृष्टाः। समुन्नवद्दक्षिणपार्श्वशायिनः पदं समुत्क्षिप्य च दक्षिणं स्थिताः। जयाय शेषेष्वपि वाहनेष्विदं फलं यथासम्भवमादिशेद्बुधः। आरोहति क्षितिपतौ विनयोपपन्नो यात्रानुगोऽन्यतुरगं प्रति हेषते च। वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं योऽश्वः स भर्त्तुरचिरात् प्रचिनोति लक्ष्मीम्। मुहुर्मुहुर्मूत्रशकृत् करोति न ताड्यमानोऽप्यनुलोमयायी। अकार्य्यभीतोऽस्रुविलोचनश्च शुभं न भर्त्तुस्तुरगोऽभिधत्ते"।

**अश्वतर** पु० तनुरश्वः अश्व+तनुत्वे ष्टरच्। अश्वायामश्वेनोत्पन्नेऽश्वत्वं तस्य तनुत्वञ्चान्यपितृकत्वे। १गर्द्दभेनाश्वायामुत्पन्ने १खचरेऽश्वविशेषे" २सर्पभेदे च। जातित्वेन स्त्रियामुभयत्र ङीप्। "जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथः" इति छा०उ०। दत्तेनोपपन्नतं शत्रुमनुस्मृत्याति योनरः। स मृत्युमुपस्थ्यीयाद्गर्भमश्वतरी यथा" मनुः। "बहुत्वान्नामधेयानि पन्नगानां तपोधन! न कीर्त्तयिष्ये सर्वेषां प्राधान्येन तु मे शृणु। शेषः प्रथमतोजातो वासुकिस्तदनन्तरम्" इत्युपक्रम्य "कम्बलाश्वतरौ चापि नागःकालीयकस्तथा" भा०आ०प०। अयञ्च वरुणलोकेस्थितः" भा०स०प० वरुणसभावर्णने "कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ" ३गन्धर्वभेदे। "तद्यथैवादोधावयतोऽश्वो वा अश्वतरो वा गदायेत" शत०ब्रा०।

**अश्वत्थ** पु० न श्वः स्थास्यति शाल्मलिवृक्षादिवत् तिष्ठति स्था–क पृ०नि०। १स्वनामख्याते वृक्षे, "बोधिद्रुः पिप्पलोऽश्वत्थचलपत्रो गजाशनः। पिप्पलो दुर्जरःशीतः पित्तश्लेष्मव्रणास्रजित्। गुरुस्तुवरको रूक्षो वर्ण्योयोनिविशोधनः" भा०प्र०। "अश्वत्थः सर्ववृक्षाणाम् गीता" तस्य विष्णुरूपित्वेन सर्व्वामङ्गलनाशकत्वम् अश्वत्थोत्पत्तिः "पार्वतीशिवयोर्देवैः सुरतं कुर्वतोः किल। अग्निं ब्राह्मणवेशेन प्रेष्य विघ्नं कृतं पुरा। शशाप पार्वती क्रुद्धा सर्व्वानेव दिवौकसः" इत्युपक्रम्य "तस्मान्मम सुखभ्रंशात् यूयं वृक्षत्वमाप्स्यथ" पार्वतीशापमुक्त्वा "तस्माद्वृक्षत्वमापन्ना ब्रह्मविष्णुमहेश्वराः। तस्मादिमौ विष्णुमहेश्वरावुभौ बभूवतुर्बोधिवटौ मुनीश्वराः!"। बोधिस्त्वयं चार्किदिने विनैव त्वस्पृश्यतामापदलक्ष्मीयोगात्" पद्मपु० क्रिया० १६० अध्या०उक्ता। "तस्य शनिवारमात्रे स्पृश्यताकारणमप्युक्तं तत्रैव १६१ अध्या०। लक्ष्म्या ज्येष्ठभगिन्या अलक्ष्म्या सह उद्दालकस्य विवाहमुक्त्वा पत्या "यावदागमनं मम तावत् अश्वत्थमूले त्वं निषीद" इत्युक्तया अलक्ष्म्या तत्रैव स्थितया बहुतिथे काले गतेऽपि पत्युरागमनमनालोक्य क्रन्दितं, तच्छ्रुत्वा च तस्या कनिष्ठभगिन्या नोदितो विष्णुस्तत्रागत्य तामुवाच यथा। "लक्ष्म्या सह ततो विष्णुस्तत्रागात् कृपयान्वितः। आश्वासयन्नलक्ष्मीं तामिदं वाक्यमथाब्रवीत्। अश्वत्थवृक्षमाश्रित्य सदाऽलक्ष्मीः स्थिरा भव। ममांशसम्भवो ह्येष आवासस्ते मया कृतः। मन्दवारे सदा ह्येनं लक्ष्मीरत्रागमिष्यति। अस्पृश्योऽसौ भवेत्तस्मान्मन्दवारं विना किल" एवञ्च अलक्ष्म्याः सर्वदावासादन्यदिने तस्यास्पृश्यत्वं मन्दवारे लक्ष्मीसमागमाच्च स्पृश्यत्वमिति मर्य्यादा कृता। "अश्वत्थरूपी भगवान् विष्णुरेव न संशयः। रुद्ररूपी वटस्तद्वत् पलाशो ब्रह्मरूपधृक्। दर्शनस्पर्शनादेव ते वै पापहराः स्मृताः" तत्रैवोक्तम् अश्वत्थस्पर्शस्तु शनिवारे एव प्रागुक्तवचनात्। तस्य वैशाखे सेचनफलं पद्मपु० क्रिया० ११ अध्या०। यथा "वैशाखे सेचयेन्नित्यं विष्णुमश्वत्थरूपिणम्। चतुर्वर्गफलावाप्तिहेतवे वैष्णवोजनः। गण्डूषमात्रतोयेन कुर्य्याद्योऽश्वत्थसेचनम्। सोऽपि याति परं स्थानं विमुक्तः पापकोटिभिः" तन्मूलबन्धफलम् तत्रैव "अश्वत्थमूलं विप्रर्षे! यो बध्नाति शिलादिभिः। अश्वत्थरूपी भगवान् किं तस्मै न हि यच्छति"। तत्प्रणामफलं तत्रैव। "अश्वत्थद्रुममालोक्य प्रणामं कुरुते तु यः। आयुर्वृद्धिर्भवेत्तस्य वर्द्धन्ते सर्वसम्पदः"। अत एव दुःस्वप्नदर्शनादौ "अश्वत्थरूपी भगवान् दुःस्वप्नं शमयातु मे" इति मन्त्रेण प्रणामो विहितः। "तन्मूले धर्म्मकर्माचरणप्रशंसा तत्रैव। "यदाश्वत्थतले विप्र! धर्मकर्म विधी-

शते । न्यूनातिरिक्तता न स्यात्तस्मिन् कर्मणि जैमिने ! । तत्र तीर्थानि सर्वाणि तिलोतादीनि सन्ति वै !"। तत्पूजनफलं तत्रैव । "अश्वत्थपूजकोयस्तु सएव हरिपूजकः । अश्वत्थरूपी भगवान् स्वयमेव यतो हरिः" ॥ तस्य तच्छाखायाश्च छेदने निषेधः तत्रैव । "तस्मात् स्थानात् द्विजश्रेष्ठ ! योऽश्वत्थं हन्ति मूढधीः । संसारे नास्ति तत् कर्म यत् कृत्वा स च शुध्यति । अश्वत्थोद्भवराजोऽयं हरिर्मूर्त्तिः प्रकीर्त्तितः । तस्मादश्वत्थहन्तॄणां त्राता कोऽपि न विद्यते । अश्वत्थशाखामेकां च स्वल्पामपि छिनत्ति यः । स कोटि ब्रह्महत्यानां फलं प्राप्नोति मानवः" इति च । अन्यान्यपि तच्छेदने पापानि तत्रैवोक्तानि दृश्यानि । तच्छाखाच्छेदनमयज्ञार्थमेव निषिद्धं यज्ञार्थच्छेदने तु न दोषः पशुहिंसावत्तस्यापि विहितत्वात् "अर्कः पलाशखदिरः अपामार्गोऽथ पिप्पल" इत्यादिना जीवहोमे तस्यैव समिधो विधानात् । २नन्दीवृक्षरूपे अश्वत्थभेदे च "नन्दीवृक्षोऽश्वत्थभेदः प्ररोही गजपादपः । स्थालीवृक्षःक्षयतरुः क्षीरी च स्याद्वनस्पतिः । नन्दीवृक्षो लघुः स्वादुस्तिक्तस्तुवरउष्णकः । कटुपाकरसग्राही विषपित्तकफास्रनुत्" भा॰प्र॰ । ३गर्दभाण्डवृक्षे (बेलियापिप्पल) तद्गुणादि गर्दभाण्डशब्दे दृश्यम् । ४संसारवृक्षे तस्य चिरस्थायित्वाभावात् तथात्वम् । "ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्" गीता तद्विवरणमधःशाखशब्दे । अश्व इव तिष्ठति स्था-क पृ॰ । ५अश्विनीनक्षत्रे तस्याश्वशीर्षाकारत्वात्तेषां शब्दे उक्तत्वात्तथात्वम् । अश्वत्थनक्षत्रेण युक्तः कालः इत्यण् तस्य संज्ञायां लुप् । "अश्वत्थो मुहूर्त्तः" सि॰कौ॰ । असंज्ञायान्तु आश्वत्थमहः आश्वत्थी रात्री । चतुरर्थ्यां काशा॰ इल । अश्वत्थिलः उत्क॰ छ अश्वत्थीयः तत्सन्निकृष्टदेशादौ त्रि॰ । अश्वत्थेन युक्ता पौर्णमासी अण् । तस्य पौर्णमास्यामपि "अणद्धायनत्वश्वत्थाट्ठक्" पा॰ निर्देशात् नि॰ लुप् अश्वत्थयुक्तायां पौर्णमास्याम् । लुपि व्यक्तिवचनोक्तेः पुंस्त्वम् । तत्र भवः ठक् । आश्वत्थिकः । चान्द्राश्विनमासे ।

**अश्वत्थक** पु॰ अश्वत्थस्तत्फलम् तद्युक्तः कालोऽश्वत्थस्तत्र देयमृणम् वुन् । अश्वत्थफलकाले वैशाखादौ १देये ऋणे । स्वार्थे, कन् । २अश्वत्थवृक्षे ।

**अश्वत्थकुण** पु॰ अश्वत्थस्य पाकः पीला॰ कुणच् । अश्वत्थपाके फलादौ । [अश्वत्थशब्दे विवृतिः ।

**अश्वत्थभेद** पु॰ अश्वत्थस्य भेदोविशेषो यत्र । नन्दीवृक्षे

**अश्वत्थामन्** पु॰ अश्वस्येव स्थाम बलमस्य अश्वइव तिष्ठति युद्धे स्थिरत्वात् स्था—क वा पृषो॰ । भारतप्रसिद्धे १द्रोणाचार्य्यकृपीसुते वीरे । "गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः । अश्वत्थाम्नस्तु जननी कृपश्चैव महाबलः । अश्वत्थामा ततो जज्ञे द्रोणादेव महाबलः" भा॰आ॰प॰ । तस्य नामनिरुक्तिरपि दर्शिता भा॰आ॰ १२०अध्या॰ । यथा "शारद्वतीं ततोभार्य्यां कृपीं द्रोणोऽन्वविन्दत । अग्निहोत्रे च धर्मे च दमे च सततं रताम् । अलभद्गौतमी पुत्रमश्वत्थामानमेव च । स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः । तच्छ्रुत्वान्तर्हितं भूतमन्तरीक्षस्थमब्रवीत् । अश्वस्येवास्य यत् स्थाम नदतः प्रदिशो गतम् । अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति" "अश्वस्य स्थाम्नोऽकारः वार्त्ति॰ अकारः । अश्वत्थामः । भवार्थे तु तस्य लुप् अश्वत्थामा तद्भवे । २भारतप्रसिद्धे पाण्डवसैन्यस्थे मालवेशेन्द्रवर्म्मणः ३गजभेदे तत्कथा च "मतिमान् श्रेयसे युक्तः केशवोऽर्जुनमब्रवीत् । नैष युद्धेन संग्रामे जेतुं शक्यः कथञ्चन । सधनुर्धन्विनां श्रेष्ठो देवैरपि सवासवैः । न्यस्तशस्त्रस्तु संग्रामे शक्यो हन्तुं भवेन्नृभिः । आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डवाः ! । यथा नः संयुगे सर्वान्न हन्याद्रुक्मवाहनः । अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम । तं हतं संयुगे कश्चिदस्मै शंसतु मानवः । एतन्नारोचयद्राजन् ! कुन्तीपुत्रो धनञ्जयः । अन्ये त्वरोचयन् सर्वे कृच्छ्रेण तु युधिष्ठिरः । ततो भीमो महाबाहुरनीके स्वे महागजम् । जघान गदया राजन्नश्वत्थामानमित्युत । परप्रमथनं घोरं मालवस्येन्द्रवर्म्मणः । भीमसेनस्तु सव्रीड उपेत्य द्रोणमाहवे । अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह । अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत् । कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा । भीमसेनवचः श्रुत्वा द्रोणस्तत्परमप्रियम् । मनसा सन्नगात्रोऽभूत् यथा सैकतमम्भसि । शङ्कमानः स तन्मिथ्या वीर्य्यज्ञः स्वसुतस्य वै । हतः स इति च श्रुत्वा नैव धैर्य्यादकम्पत" । "सन्दह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम् । अहतं वा हतं वेति पप्रच्छ सुतमात्मनः । स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् । त्रयाणामपि लोकानामैश्वर्य्यार्थे कथञ्चन । तस्मात्तं परिपप्रच्छ नान्यं कञ्चिद्द्विजर्षभः । तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे । ततो निष्पाण्डवामुर्वीं करिष्यन्तं युधाम्पतिम् । द्रोणं ज्ञात्वा धर्मराजं गोविन्दो

व्यथितोऽब्रवीत् । यद्यर्द्धदिवसं द्रोणो युध्यते मन्युमास्थितः । सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति । स भवांस्त्रातु नो द्रोणात् सत्याज्ज्यायोऽनृतं पुनः । अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः । कामिनीषु विवाहेषु गवां भक्ते तथैव च । ब्राह्मणाभ्युपपत्तौ च अनृते नास्ति पातकम् । तयोः संवदतोरेवं भीमसेनोऽब्रवीदिदम् । श्रुत्वैव ते महाराज वधोपायं महात्मनः । गाहमानस्य मे सेनां मालवस्येन्द्रवर्म्मणः । अश्वत्थामेति विख्यातो गजः शक्रगजोपमः । निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रुवम् । अश्वत्थामा हतो ब्रह्मन्निवर्त्तस्वाहवादिति । नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभ । स त्वं गोविन्दवाक्यानि मानयस्व जयैषिणः । द्रोणाय निहतं शंस राजन् ! शारद्वतीसुतम् । त्वयोक्तो नैष युध्येत जातु राजन् द्विजर्षभः । सत्यवान् हि त्रिलोकेऽस्मिन् भवान् ख्यातो जनाधिप ! । तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः । भावित्वाच्च महाराज ! वक्तुं समुपचक्रमे । तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः । अव्यक्तमब्रवीद्वाक्यं हतः कुञ्जर इत्युत । तस्य पूर्व्वं रथः पृथ्व्यां चतुरङ्गुल उत्तमः । बभूवैवन्तु तेनोक्ते तस्य वाहोऽस्पृशन्महीम्" । "अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा" इति वेणीसं० । [चारिणि स्त्रियां ङीप् ।

**अश्वत्थिक** त्रि० अश्वत्थेन चरति पर्पा० ष्ठन् । अश्वत्थफलके

**अश्वत्थी** स्त्री० क्षुद्रोऽश्वत्थः अल्पार्थे ङीप् । क्षुद्रपिप्पले क्षुद्रपत्रे वनजाते अश्वत्थाकारे क्षुद्रवृक्षभेदे स्वार्थे कन् अश्वत्थिकाऽप्यत्र ।

**अश्वदंष्ट्रा** स्त्री अश्वस्य दंष्ट्रेवाकारोऽस्याः । गोक्षुरवृक्षे ।

**अश्वनाय** पु० अश्वं नयति नी–अण् उप०स० । अश्वपालके ।

**अश्वन्त** पु० अश्वस्य व्यापकस्य धर्म्मस्यान्तो यत्र शक० । १अशुभे २देवे ३मृते ४चुल्ल्यां च हेम० प्राणिहिंसास्थानत्वात्तस्यास्तथात्वम् ।

**अश्वप** पु० अश्वं पाति पा–क । हयपालके । [नृपभेदे च ।

**अश्वपति** पु० ६त० । वाजिपालके रामायणप्रसिद्धे कैकेये

**अश्वपत्यादि** पु० प्राग्दीव्यतीयेऽर्थे अण्प्रत्ययनिमित्ते पाणिन्युक्ते शब्दसमूहे स च गणः अश्वपति ज्ञानपति शतपति धनपति गणपति स्थानपति यज्ञपति राष्ट्रपति, कुलपति गृहपति धान्यपति धन्वपति बन्धुपति, धर्म्मपति सभापति प्राणपति क्षेत्रपति, । आश्वपतम् पत्यन्तत्वेऽप्यपवादात् न ण्यः ।

**अश्वपर्ण** त्रि० अश्वानां पर्णं गमनं यत्र । अश्वगमनयुक्ते १रथे अश्वं व्यापि पर्णं पतनं यस्य । २व्यापिगमने मेघे च । "आविद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः" ऋ० १,८८,१ । यथा व्युत्पत्तिर्दर्शिता तथैव भाष्ये उक्ता । [लोपः । हयपादतुल्यचरणे ।

**अश्वपाद** त्रि० अश्वस्य पाद इव पादोऽस्य हस्त्या० नान्त्य

**अश्वपाल** पु० अश्वान् पालयति पा+णिच्–लुक् अण् । घोटकरक्षके । ण्वुल् । अश्वपालकोऽप्यत्रार्थे ।

**अश्वपुच्छी** स्त्री अश्वस्य पुच्छमिव केशरोऽस्य । माषपर्णीवृक्षे ।

**अश्वपेज** पु० ऋषिभेदे । तेन प्रोक्तमधीयते शौनकादि० णिनि । आश्वपेजिनः तत्प्रोक्ताध्यायिषु ब०व० ।

**अश्वपेशस्** त्रि० अश्वेन पेशो रूपं रूपणीयं निरू० यस्य । अश्वेन रूपणीये । "गोअश्वावदश्वपेशसम्" ऋ० २,५,१६ । "अश्वपेशसमश्वेन निरूपणीयां रातिम्" भा० ।

**अश्ववडव** पु० अश्वश्च वडवा च । अश्ववडवरूपसमासार्थे न परवल्लिङ्गम् ।

**अश्ववाल** पु० अश्वस्य वालः केशर इव तदाकारपुष्पत्वात् । (कागा) इति ख्याते १काशे । ६त० अश्वस्य २केशे च ।

**अश्वबाहु** पु० यदुवंश्यचित्रकस्य पुत्रभेदे । "क्रोष्टोस्तु शृणु राजेन्द्र ! वंशमुत्तमपौरुषम् । यदोर्वंशधरस्याथ" इत्युपक्रम्य । "गान्धारी चैव माद्री च क्रोष्टोर्भार्य्ये बभूवतुः" इत्युक्त्वा "माद्र्याः पुत्रौ च जज्ञाते सुतौ वृष्ण्यन्धकावुभौ । जज्ञाते तनयौ वृष्णेः श्वफल्कचित्रकस्तथा" इत्युक्त्वा श्वफल्कवंशमुक्त्वा च । चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च । अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ । अरिष्टनेमिरश्वश्च सुधर्म्मा धर्म्मवित्तथा । सुबाहुर्बहुबाहुश्च श्रविष्ठाश्रवणे स्त्रियौ" हरि० २४,२५, अध्या० ।

**अश्वमहिषिका** अश्वमहिषयोर्वैरम् वुन् । अश्वमहिषयोर्वैरे ।

**अश्वमार** पु० अश्वं मारयति मृ–णिच् अण् । करवीरे ण्वुल् । अश्वमारकोऽप्यत्र ।

**अश्वमुख** पु० अश्वस्य मुखमिव मुखमस्य । अश्वाकारमुखे पुरुषाकारान्याङ्गे किन्नरे । जातित्वात् स्त्रियां ङीप् "भिन्दन्ति मन्दां गतिमश्वमुख्यः" कुमा० अश्ववदनादयोऽप्यत्र ।

**अश्वमेध** पु० अश्वः प्रधानतया मेध्यते हिंस्यतेऽत्र मेध–हिंसने घञ् । यज्ञभेदे स च शत०ब्रा० १३काण्डे पञ्चभिरध्यायैरुक्तः । यजु० २४ अ० तदीययूपपशुविशेषा विहिता अथा । तत्रादौ मन्त्रोपोद्घाते यजु०वे०दी० उक्तम् य-

श्वमेधे एकविंशतिर्यूपा सन्ति तत्र मध्यमोयूपोऽग्निष्ठसंज्ञः तत्र सप्तदश पशवोनियोजनीयाः अश्वः१ तूपरः२ (शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनः छागः) गोमृगः गवयः ३ । द्वौ चाग्नेयौ ४ एकादशावयवयुक्तौ । अग्निमनन्तरं वक्ष्यमाणा रोहितादयः द्वादश गाव इति सप्तदश पशवोमध्यमयूपे बन्धनीयाः। द्वयोरेकादशावयवत्वञ्च मध्ये कृष्णग्रीवः, अश्वस्य रराटे पुरस्तात् ललाटे हन्वोरधस्तात् मेषौ, अधोभागे शुक्लौ छागौ, बाह्वोरश्वस्य पूर्व्वपादयो रेकैकः । अश्वस्य नाभ्यां श्यामश्वेतकृष्णरोमाऽजः श्वेतः छागः दक्षिणपार्श्वे, वामे कृष्णः । बहुरोमपुच्छकौ छागौ पश्चात् पादयोरेकैकः । अश्वस्य पुच्छे श्वेतः, वेहत् गर्भघातिनी, वामनः खर्व्वः पशुः पुच्छे एवम् एकादशानामङ्गावयवतया कल्पयित्वा तथाविधौ एकादशिनौ द्वौ मध्ययूपे बन्धनीयौ अन्येषु एकैक इति भेदः धूम्रलोमादीनां श्वेताः सौर्य्या इत्यन्तानां शतत्रयसङ्ख्यकानां पशूनां मध्ये पञ्चदश पशवः एकैकस्मिन् अश्वादयस्त्रयः एते द्वादश च इत्येते पर्य्यङ्ग्य उच्यन्ते । अतोऽश्वस्य शरीरं तुम्बीफलवत् रज्ज्वा गुम्फनीयम् । ततः कृष्णग्रीव इत्यादयः अश्वस्य शरीरे यथोक्तस्थाने संबद्धा रज्ज्वा बन्धनीयाः ततो रोहितादयः वक्ष्यमाणा द्वादश नियोज्याः इतरेषु विंशतौ यूपेषु पञ्चदश पञ्चदश पशवः प्रत्येकमेकादशिनः इतिषोड़श इति भेदः"।

अश्वादिपशुभेदाः देवसहिताः यजु अ० २४ उक्ता यथा "अश्वस्तूपरो गोमृगस्ते प्राजापत्याः कृष्णग्रीव आग्नेयो रराटे । पुरस्तात्सारस्वती मेष्यधस्ताद्धन्वोराश्विनावधोरामौ बाह्वोः सौमापौष्णः, श्यामोनाभ्यां, सौर्य्ययामौ श्वेतश्च कृष्णश्च, पार्श्वयोस्त्वाष्ट्रौ लोमशसक्थौ, सक्थ्योर्वायव्यः श्वेतः, पुच्छइन्द्राय स्वपस्याय, वेहद्वैष्णवोवामनः१। रोहितोधूम्ररोहितः कर्कन्धुरोहितस्ते सौम्या, बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः, शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः, शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः, पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः२ । शुद्धवालः सर्व्वशुद्धवालो मणिवालस्त आश्विनाः, श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये, कर्णायामा अवलिप्ता रौद्रानभोरूपाः, पार्जन्याः ३ । पृश्निस्तिरश्चीनपृश्निरूर्द्ध्वपृश्निस्ते मारुताः, फल्गूर्लोहितोर्णी पलक्षी ताः सारस्वत्यः, प्लीहाकर्णः शुण्ठाकर्णोऽध्यालोहकर्णस्ते त्वाष्ट्राः, कृष्णग्रीवः शितिकक्षोऽञ्जिसक्थस्तऐन्द्राग्नाः" कृष्णाञ्जिरल्पाञ्जिर्महाञ्जिस्तउषस्याः४। शिल्पा वैश्वदेव्यो, रोहिण्यस्त्र्यवयो वाचे, ऽविज्ञाता अदित्यै, सरूपा धात्रे, वत्सतर्यो देवानां पत्नीभ्यः।५। कृष्णग्रीवा आग्नेयाः, शितिभ्रवो वसूनां, रोहिता रुद्राणां, श्वेता अवरोकिण आदित्यानां, नभोरूपाः पार्जन्याः।६। उन्नत ऋषभो वामनस्त ऐन्द्रवैष्णवाः, उन्नतः शितिबाहुः शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः, शुकरूपा वाजिनाः, कल्माषा आग्निमारुताः, श्यामाः पौष्णाः।७। एता ऐन्द्राग्ना, द्विरूपा अग्नीषोमीया, वामना अनड्वाह आग्नावैष्णवा, वशा मैत्रावरुण्यो, ऽन्यत एन्यो मैत्र्यः।८। कृष्णग्रीवा आग्नेया, बभ्रवः सौम्याः, श्वेता वायव्या, अविज्ञाता अदित्यै, सरूपा धात्रे, वत्सतर्यो देवानां पत्नीभ्यः।९। कृष्णा भौमाः, धूम्रा आन्तरिक्षा, बृहन्तो दिव्याः, शबला वैद्युताः सिध्मास्तारकाः १०। धूम्रान् वसन्तायालभते, श्वेतान् ग्रीष्माय, कृष्णान् वर्षाभ्यो,ऽरुणाञ्छरदे, पृषतो हेमन्ताय, पिशङ्गाञ्छिशिराय ११। त्र्यवयो गायत्र्यै, पञ्चावयस्त्रिष्टुभे,दित्यवाहो जगत्यै, त्रिवत्सा अनुष्टुभे, तुर्य्यवाह उष्णिहे १२। पष्ठवाहो विराजे, उक्षाणो बृहत्या, ऋषभाः,ककुभे, ऽनड्वाहः पङ्क्त्यै, धेनवोऽतिच्छन्दसे १३। कृष्णग्रीवा आग्नेया, बभ्रवः सौम्या, उपध्वस्ताः सावित्रा, वत्सतर्य्यः सारस्वत्याः, श्यामाः पौष्णाः,पृश्नयो मारुता, बहुरूपा वैश्वदेवा, वशा द्यावापृथिवीयाः १४। उक्ताः संचरा एता ऐन्द्राग्नाः, कृष्णा वारुणाः, पृश्नयो मारुताः, कायास्तूपराः १५। अग्नयेऽनीकवते प्रथमजानालभते, मरुद्भ्यः सान्तपनेभ्यः सवात्यान्, मरुद्भ्यो गृहमेधिभ्यो बष्किहान्, मरुद्भ्यः क्रीडिभ्यः संसृष्टान्, मरुद्भ्यः स्वतवद्भ्योऽनुसृष्टान् १६। उक्ताः संचरा एता ऐन्द्राग्नाः, प्राशृङ्गा माहेन्द्रा, बहुरूपा वैश्वकर्म्मणाः१७। धूम्रा बभ्रुनीकाशाः पितॄणां सोमवतां, बभ्रवो धूम्रनीकाशाः पितॄणां बर्हिषदां, कृष्णा बभ्रुनीकाशाः पितॄणामग्निष्वात्तानां, कृष्णाः पृषन्तस्त्रैयम्बकाः १८ । उक्ताः संचराः एता शुनासीरीयाः, श्वेता वायव्याः, श्वेताः सौर्य्याः१९। एवं समाप्ता यूपाः इत्यवाद्याः सौर्य्यान्ताः सप्तविंशत्यधिकशतत्रयमिताः ग्राम्याः पशवः सर्वे उक्ताः । आरण्यानाह । "वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कलविङ्कान्, वर्षाभ्यस्तित्तिरा,ञ्छरदे वर्त्तिका, हेमन्ताय ककरा,ञ्छिशिराय विककरान् २० । समुद्राय शिशुमारानालभते, पर्जन्याय मण्डूका,नद्भ्योमत्स्या,न्मित्राय कुलीपयान्, वरुणाय नाक्रान् २१ । सोमाय हंसानालभते, वायवे बलाका

इन्द्राग्निभ्यां क्रुञ्चान्, मित्राय मद्गून्, वरुणाय चक्रवाकान् २२। अग्नये कुटरूनालभते, वनस्पतिभ्य उलूका,नाग्नीषोमाभ्यां चाषान्, अश्विभ्यां मयूरान्, मित्रावरुणाभ्यां कपोतान् २३। सोमाय लबानालभते, त्वष्ट्रे कौलीकान्, गोषादीर्देवानां पत्नीभ्यः, कुलीका देवजामिभ्यो, ऽग्नये गृहपतये पारुष्णान् २४। अह्ने पारावतानालभते, रात्र्यै सीचापू, रहोरात्रयोः संधिभ्यो जतू, मासेभ्यो दात्यौहान्, संवत्सराय महतः सुपर्णान् २५। भूम्या आखूनालभते, ऽन्तरिक्षाय पाङ्क्त्रान्, दिवे कशान्, दिग्भ्यो नकुलान्, बभ्रुकानवान्तरदिशाभ्यः २६। वसुभ्य ऋश्यानालभते, रुद्रेभ्यो रुरून्, आदित्येभ्यो न्यङ्कून्, विश्वेभ्यो देवेभ्यः पृषतान्, साध्येभ्यः कुलुङ्गान् २७। ईशानाय परस्वत आलभते, मित्राय गौरान्, वरुणाय महिषान्, बृहस्पतये गवयां,स्त्वष्ट्र उष्ट्रान् २८। प्रजापतये पुरुषान् हस्तिन आलभते, वाचे प्लुषी,चक्षुषे मशका,श्रोत्राय भृङ्गाः, २९। प्रजापतये च वायवे च गोमृगो, वरुणायारण्योमेषो, यमाय कृष्णो, मनुष्यराजाय मर्कटः, शार्दूलाय रोहिद्, ऋषभाय गवयी, क्षिप्रश्येनाय वर्तिका, नीलङ्गोः कृमिः, समुद्राय शिशुमारो, हिमवते हस्ती ३०। मयुः प्राजापत्य, उलो हलिक्ष्णो वृषदंशस्ते धात्रे, दिशां कङ्को, धुङ्क्षाग्नेयी कलविङ्को लोहिताहिः पुष्करसादस्ते त्वाष्ट्रा, वाचे क्रुञ्चः ३१। सोमाय कुलुङ्ग, आरण्योऽजो नकुलः शका ते पौष्णाः, क्रोष्टा मायो,रिन्द्रस्य गौरमृगः,पिद्वो न्यङ्कुः कक्कटः, स्तेऽनुमत्यै, प्रतिश्रुत्कायै चक्रवाकः ३२। सौरी बलाका, शार्गः सृजयः शयाण्डकस्ते मैत्राः, सरस्वत्यै, शारिः पुरुषवाक्, श्वाविद्भौमी, शार्दूलो वृकः पृदाकुस्ते मन्यवे, सरस्वते शुकः पुरुषवाक् ३३। सुपर्णः पार्जन्य, आतिर्वाहसो दर्विदा ते वायवे, बृहस्पतये वाचस्पतये, पैङ्गराजो,ऽलज आन्तरिक्षः, प्लवो मद्गुर्मत्स्यस्ते नदीपतये, द्यावापृथिवीयः कूर्मः ३४। पुरुषमृगश्चन्द्रमसो, गोधा कालका दार्वाघाटस्ते वनस्पतीनां, कृकवाकुः सावित्रो, हंसो वातस्य, नाक्रो मकरः कुलीपयस्तेऽकूपारस्य, ह्रियै शल्यकः ३५। एण्यह्नो, मण्डूको मूषिका तित्तिरिस्ते सर्पाणां, लोपाश आश्विनः। कृष्णो रात्र्या, ऋक्षो जतूः सुषिलीका तइतरजनानां, जहका वैष्णवी ३६। अन्यवापोऽर्धमासानामृश्यो मयूरः सुपर्णस्ते गन्धर्वाणा, मपामुद्रो मासां, कश्यपो रोहित् कुण्डृणाची गोलत्तिका तेऽप्सरसां, मृत्यवेऽसितः ३७। वर्षाहूर्ऋतूना,माखुः कशो मान्थालस्ते पितॄणां, बलायाजगरो, वसूनां कपिञ्जलः, कपोत उलूकः शशस्ते निर्ऋत्यै, वरुणायारण्यो मेषः ३८। श्वित्र आदित्याना, मुष्ट्रो घृणीवान् वार्ध्रीणसस्ते मत्या, अरण्याय सृमरो, रुरू रौद्रः, क्वयिः कुटरुर्दात्यौहस्ते वाजिनां, कामाय पिकः ३९। खड्गो वैश्वदेवः, श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसा, मिन्द्राय सूकरः। सिंहो मारुतः, कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः। ४०। एवं षडधिकं शतद्वयमारण्याः पशव उक्ताः। मध्यमयूपे द्वौ एकादशिनौ अन्येषु एकैके एकादशिनः इति एकविंशतियूपेषु द्वाविंशतिरेकादशिनः। अतः सप्तविंशत्यधिकशतत्रयम् अश्वादि सौर्यान्तं द्वाविंशत्या सह मिलिताम् सत् ऊनपञ्चाशदधिकं शतत्रयम्। ताः ग्राम्यापशवः आरण्यास्तु २६० मिलिताः ६०९ पशवोऽश्वमेधे विहिताः तदुक्तं लोके। "षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि। अश्वमेधस्य यज्ञस्य नवभिश्चाधिकानि च"। तेषु ग्राम्या आलभ्या आरण्या बन्धनान्मोच्या न तु हिंस्या इति। एवञ्चात्राश्वस्य प्रधान्यात् अश्वमेधत्वम्। अश्वलक्षणं तु" काकाम्भोधरसङ्काशः स्वर्णवर्णकृष्णोबली। यस्य पार्श्वविभागश्च चन्द्राकारौ सुशोभनौ। मुखं विद्युत्प्रतीकाशमुदरं कुन्दसन्निभम्। पादाश्चैव हरिद्वर्णाः कर्णौ सिन्दूरसन्निभौ। ज्वलदग्निनिभा जिह्वा चक्षुषी भास्करोपमे, विराजितो रोमराज्या सानुलोमविलोमया। विचित्रैर्विविधैर्वर्णैश्चित्रोरजतबिन्दुभिः। यो वेगे वायुतुल्यः स्यादुच्चैःश्रवा यथा। यस्य गात्रोद्भवो गन्धो गन्धर्वमपि मोहयेत्। एवं लक्षणसंयुक्तो वरिष्ठः पशुरुच्यते" यामि०रा०। "गोक्षीरसमवर्णञ्च कुन्देन्दुहिमसन्निभम्। पीतपुच्छं श्यामकर्णं सर्वतोगतिमत्तमम्। श्यामं वापि महीपाल। यज्ञेऽश्वं तुरगं विदुरिति" पुरा०। शत० ब्राह्मणे तु "द्विरूपएवैषोऽश्वः स्यात् कृष्णसारङ्गः प्रजापतेर्वा एषोऽक्ष्णः समभवत् द्विरूपं वा इदं चक्षुः शुक्लं चैव कृष्णं च तदेनं स्वेन रूपेण समर्धयतीति। अथ होवाच सात्ययज्ञिः त्रिरूप एवैषोऽश्वः स्यात्तस्य कृष्णः पूर्वार्धः शुक्लोऽपरार्धः ललत्तिकाङ्गिः पुरस्तात्स्यात् कृष्णः पूर्वार्धो भवति यदेवेदं कृष्णमक्ष्णस्तदस्य तद्रूपं यच्छुक्लोऽपरार्धो भवति यदेवेदं शुक्लमक्ष्णस्तदस्य तद्रूपं यल्लत्तिकाङ्गिः पुरस्तात्स्यात् कनीनिका स एवं रूपसम्पन्नोऽतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा लत्तिकाङ्गस्तमालभेत जवेन त्वेव सम्पन्नः स्यात्"। "लत्तिकाकारं लत्तिकान्तिकरोहिणीशकटा

कारभङ्गिं पुष्पं ललाटे यस्य भा० । ललामम्" । का त्या० २०।१।२२। "नीलपीतइत्युक्तमिति" कर्क० । तस्योत्सर्जनं चोत्तरपूर्व्वदिशि। "पशुवदुत्सर्जनं निरष्टे ऽश्वयते" कात्या० २०।२।१ । "पशुवदित्युत्तरपूर्व्वा दिग् लक्ष्यते निरष्टे निरमणे इह्रतया । अध्वर्युयजमानौ अ-श्वयते शतानामश्वानां मध्ये पशुवदुत्सर्जनं कुरुतः कीदृशे निरष्टे अश्वस्य वयोव्यञ्जनानि एकैकं त्रीणि त्रीणि वर्षाणि अनुवर्त्तन्ते तानि निर्गतान्यस्मादिति निरष्टम् अतीतचतुर्विंशतिवर्षमित्यर्थः" कर्कः । तेन इह्रतया स्कन्दनसामर्थ्यराहित्यं सूचितम् तथा हि तस्याश्वस्य "बड-वाभ्यो वारणम्" "मज्जेयात्रोदकात्" कात्या० २०।२।१। २।३। वाक्येन बड़वाभ्यो निवारणं, मज्जेयात् यथेच्छस्ना-नार्हादुदकाच्च निवारणम् विहितम् । अतएव "प्रजाते वायव्यम्" कात्या० २०।३।२० । बड़वायां रेतःस्कन्दने प्रजातइत्युच्यते तस्मिन् वायव्यपयोनिर्वापोविहितः। तस्य रक्षकाश्च यथारूपाः कर्त्तव्यास्तथाह शत०ब्रा० । "तस्यैते पुरस्ताद्रक्षितार उपक्लृप्ता भवन्ति । राजपुत्राः कवचिनः शतं राजन्या निषङ्गिणः शतं सूतग्रामण्याः पुत्रा इषुवर्षिणः शतं क्षात्तसंग्रहीतॄणां पुत्रा दण्डिनः शतमश्वशतं निरष्टं निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति" अवधिकालमाह "तस्मात् पारिप्लवं पर्व्वाख्यानं दशाह्वा नाचष्टे" इति शत० ब्रा० सावनगणनया संवत्सरे गते दीक्षा । "अश्वापदीक्षा चतुर्भिः साविवम्" इत्यादिना "ऋतेचादर्शने च" इत्यन्तेन कात्या० २०,२,२० । प्रायश्चित्त-विशेषानुक्त्वा "अन्यस्य रशनादानादि करोत्यश्वयुक्तम्" ऋते अश्वस्यादर्शने च" का० २०,४,१। अपुनरागमसम्भवे च अ-न्यस्याश्वस्य रशनादानादि अश्वयुक्तभवसंबन्धि अश्वोपकारकं सर्व्वं कर्म्म पुनः करोति" कर्कः । अश्वमेधारम्भकालश्च । "अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य" कात्या० २०,१,२, फाल्गुनशुक्लपक्षेऽष्टम्यां नवम्यां वा प्रारम्भः । "याऽसौ फाल्गुनी पौर्णमासी भवतीति" प्रक्रम्य "तस्यै पुरस्तात् षड़हे वा सप्ताहे वा ऋत्विज उपसमायन्तीति" शत० ब्रा० यौग्मेत्येके" कात्या० २०,१,२, "ज्यैष्ठाषाढ़-योः शुक्लाष्टम्यां नवम्यां वेत्येके" कर्कः । एकविंशतियूपसन्नि-वेशमानादि यथा "एकविंशतिर्यूपाः सर्व्वे एकविंशत्य रत्नयोराज्जुहाबोऽग्निष्ठो भवति पैतदुदारवावभितः, षड्वैल्वाश्च इत्यान्वय इत्यात्,षट् खादिराश्च एवेत्यान्वय इत्यात्,षट् पालाशाश्च एवेत्यान्वय इत्यात्,

शत० ब्रा० । एतेषां नामनिर्व्वचनं तत्रैव दृश्यम् ।

अश्वमेधस्य यौगिकानि द्वादश नामानि दर्शितानि श-त० ब्रा० १३काण्डे । "एष वै प्रभूर्नाम यज्ञः१ । यत्तेन यज्ञेन यजन्ते सर्व्वमेव प्रभूतं भवति । एष वै विभूर्नाम यज्ञः२ । यत्तेन यज्ञेन यजन्ते सर्व्वमेव विभूतं भवति । एष वै व्यष्टिर्नाम यज्ञः३ । यत्तेन यज्ञेन यजन्ते सर्व्व-मेव व्यष्टं भवति । एष वै विधृतिर्नाम यज्ञः४ । यत्-तेन यज्ञेन यजन्ते सर्व्वमेव विधृतं भवति । एष वै व्यावृ-त्तिर्नाम यज्ञः५ । यत्तेन यज्ञेन यजन्ते सर्व्वमेव व्यावृत्तं भवति । एष वा ऊर्जस्वान्नाम यज्ञः६ । यत्तेन यज्ञेन यजन्ते सर्व्वमेवोर्जस्वद्भवति । एष वै पयस्वान्नाम यज्ञः७ । यत्ते न यज्ञेन यजन्ते सर्व्वमेव पयस्वद्भवति । एष वै ब्रह्म वर्चसी नाम यज्ञः८ । यत्तेन यज्ञेन यजन्त आब्राह्मणो ब्रह्मवर्चसी जायते । एष वा अतिव्याधिर्नाम यज्ञः९ । यत्तेन यज्ञेन यजन्त आराजन्योऽतिव्याधिर्जायते । एष वै दीर्घो नाम यज्ञः१० । यत्तेन यज्ञेन यजन्त्याऽऽदीर्घा-रण्यं जायते । एष वै कॢप्तिर्नाम यज्ञः११ । यत्तेन यज्ञेन यजन्ते सर्व्वमेव कॢप्तं भवति । एष वै प्रतिष्ठा नाम यज्ञः१२ । यत्तेन यज्ञेन यजन्ते सर्व्वमेव प्रतिष्ठितं भवति" । "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" शत० ब्रा० "अश्वमेधेन शुध्यन्ति महापातकिनस्त्विमे" भा० अश्व० प० ।

**अश्वमेध** पु० अश्वमेधोऽस्त्यस्य अर्श० अच् । राजर्षिभेदे । "यो मह्यति मनोवत्यश्वमेधाय सूरये" ऋ० ५,२७,४ । अश्वमेधाय राजर्षये" भा० ।

**अश्वमेधिक** न० अश्वमेधमधिकृत्य कृतः ग्रन्थः ठक् ठञ् वा । महाभारतान्तर्गते चतुर्द्दशे पर्व्वणि । "ततोऽश्वमेधिकं पर्व सर्वपापप्रणाशनम्" "ततोऽश्वमेधिकं पर्व प्रोक्तं तच्च चतुर्द्द-शम्" इति च भा० आ० प० ।

**अश्वमेधीय** पु० अश्वमेधाय हितः "अश्वमेधाच्च च" पा० छ । अश्वमेधयोग्ये पशौ तल्लक्षणम् अश्वमेधशब्दे उक्तम् । चात् ठन् । अश्वमेधिकोऽप्यत्रार्थे ।

**अश्वया** स्त्री अश्वमिच्छति अश्व–क्यच् "न च्छन्दस्यपुत्रस्येति" पा० नेत्त्वदीर्घौ भावे अ । स्वेच्छायाम् "अपुराश्वयेत रथया" ऋ० ८,४६,१०। "अश्वया अश्वेच्छया" भा० ।

**अश्वयु** त्रि० अश्वोऽस्त्यस्य युच् । १अश्वयुक्ते "गव्युरश्वयुरी-यते" ऋ० ३१,१५ । अश्वमिच्छति क्यच् वेदे नि० नेत्त्व दीर्घौ उन् । २अश्वेच्छावति । अश्वयुर्गव्यूरथयुः" ऋ० १,५१,१४ । "अश्वयुरश्वानिच्छन्" भा० ।

**अश्वयुज्** स्त्री अश्वेन हयमुखाकारेण युज्यते युज–क्विप्। १अश्विनीनक्षत्रे तस्य तदाकारत्वमश्लेषाशब्दे उक्तम्। अश्वयुजि जातः अण् तस्य वा लुक्। अश्वयुक् २तन्नक्षत्रजाते त्रि० लुगभावे आश्वयुजः स्त्रियां ङीप्। अश्वेन हयाकारवता नक्षत्रेण युज्यते पौर्णमास्यस्मिन् मासि आधारे क्विप्। ३चान्द्राश्विनमासि "अश्वयुक्कृष्णपक्षस्य श्राद्धं कुर्य्याद्दिनेदिने" स्मृतिः। अश्वेन नक्षत्रेण युक् पौर्णमासी अस्त्यस्य अर्श० अच्। अश्वयुजोऽप्यत्र रत्नमाला०। अश्वयुजा युक्ता पौर्णमास्यस्मिन् प्रज्ञा० अण् आश्वयुजोऽप्यत्र। कर्म्मणि क्विप्। अश्वेन युक्ते ४रथादौ। अश्वेन युनक्ति रथम् कर्त्तरि क्विप्। रथादौ ५अश्वयोजके त्रि०। "वयोदृशो अश्वयुजः परिज्मयः" ऋ०भा०५,५४,२।

**अश्वरक्षक** पु० अश्वं रक्षति रक्ष–ण्वुल्। घोटकपालके।

**अश्वरत्न** न० अश्वोरत्नमिव उपमि०स०। उच्चैःश्रवसि तस्य हयश्रेष्ठत्वात्तथात्वम् "मथ्यमानेऽमृते जातमश्वरत्नमनुत्तमम्" भा० आ०प० १७अ०। हयरत्नादयोऽप्यत्र "हयरत्नमहारि च" कुमा०।

**अश्वरथ** पु० अश्वयुक्तोरथः। १अश्वयुक्ते रथे। गन्धमादनसन्निकृष्टायाम् २नद्यां स्त्री। "पञ्चवर्षाणि पुण्यानि यास्यन्ते भरतर्षभ!। प्रख्यां सर्वभूतानां नदीमश्वरथां प्रति" भा० व०प० १६०अ०।

**अश्वराज** पु० अश्वानां राजा श्रेष्ठत्वात् टच्। उच्चैःश्रवसि "यत्र जज्ञे महावीर्य्यः सोऽश्वराजो महाद्युतिः" भा० आ०प०१७अ०। भगवद्विभूतित्वादपि तस्य श्रेष्ठत्वम् "उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम्" गीता।

**अश्वरोधक** पु० अश्वं रुणद्धि रुध–ण्वुल्। करवीरे वृक्षे।

**अश्वरोह** पु० अश्वं रोहति रुह–अण् उप०स०। अश्वारोहे सादिनि।

**अश्वल** त्रि० अश्वं लाति ला–क ६त०। १हयग्राहके ऋषिभेदे "अथ ह जनकस्य वैदेहस्य होताश्वलो बभूव" वृ०उ०। तदर्थः याज्ञवल्क्यं प्रति प्रश्नप्रतिवचनरूपाख्यायिकाप्रतिपादके २ब्राह्मणे च तत्र "अथ हजनकस्येत्यारभ्य ततो ह होताश्वलोविरराम इत्यन्तम्" वृ०उ०। गोत्रापत्ये नडा० फक्। आश्वलायनः। तद्गोत्रापत्ये येन श्रौतसूत्रं गृह्यसूत्रञ्च कृतम् तस्मिन्।

**अश्वलक्षण** न० अश्वानां शुभाशुभज्ञापकत्वं लक्ष्यतेऽनेन लक्ष–करणे ल्युट् ६त०। अश्वस्य शुभाशुभसूचक चिह्नभेदे अश्वशब्दे तच्चोक्तम्।

**अश्वललित** न० वृत्तरत्नाकरोक्ते त्रयोविंशत्यक्षरपादके वर्णवृत्तभेदे "यदि ह नजौ भजौ भजभलगास्तदाश्वललितं हरार्कयतिमत्"। इदमद्रितनयेति छन्दोम०।

**अश्वशाला** स्त्री अश्वस्य शालेवालया। मन्दुरायां हयालयायां जटाध०। अश्वलोमेति पाठान्तरम्। "अश्वस्य लोमे वालतिरस्य" तत्र विपञ्चः।

**अश्ववक्त्र** पु० अश्वस्य वक्त्रमिव वक्त्रमस्य। १किम्पुरुषे देवयोनिभेदे अश्ववदनहयमुखादयोऽप्यत्र। २हयग्रीवे विष्णुमूर्त्तिभेदे अश्वशिरःशब्दे विवृतिः। तद्ध्यानेन च तन्मूर्त्तिरुक्ता तन्त्रसा०। "शरच्छशाङ्कप्रभमश्ववक्त्रं मुक्तामयैराभरणैः प्रदीप्तम्। रथाङ्गशङ्खाञ्चितबाहुयुग्मं जानुद्वयन्यस्तकरं भजामः"।

**अश्ववत्** त्रि० अश्वोऽस्त्यस्य मतुप् मस्य वः। १अश्वयुक्ते। "दधानो गोमदश्ववत् सुवीर्य्यम्" ऋ० ८,४६,५। मन्त्रे क्वचित् दीर्घः अश्वावत्। "भोजनमश्वावन्तं गोमन्तमाशुं नरः" ऋ० १,८२,४। अश्व इव अश्वस्येव वा वति। २हयसदृशे अव्य०। अश्वेन तुल्यं क्रिया वति। ३हयकृतक्रियातुल्यक्रियायाम् अव्य०। अश्वमर्हति वति। ४हयार्हे अव्य०। [नोह्ये सादिनि।

**अश्ववह** पु० अश्वेन उह्यते वह–कर्म्मणि वा अच्। हये-

**अश्ववार** पु० अश्वं वारयति वृ०ह–अण् उप०स०। हयनिवारके सादिनि "दुःखेन निवक्रधरश्ववाराः" माघः। ण्वुल्। अश्ववारकः तत्रैव। ल्यु अश्ववारणोऽप्यत्र। अश्ववारलक्षणादिकमुक्तमश्वशास्त्रे यथा "ब्राह्मणान् शक्तिदानेन साम्ना चैव तु क्षत्रियान्। वैश्यं दण्डेन शब्देन शूद्रं दण्डेन वाहयेत्। प्रत्यूषे वाहयेद्विप्रं क्षत्रियं प्रहरे गते। वैश्यं संध्यागते काले शूद्रं रात्रौ च वाहयेत्। सत्त्वं च त्रिविधं प्रोक्तमुत्तमाधममध्यमम्। उत्तमं चोपगानेन साम्ना दण्डेन मध्यमम्। शब्दाङ्गेन च दण्डेन वाहयेदधमम्बुधः। सहजे निर्म्मले वाहे तैलदुग्धस्य रूपवान्। शालिश्च द्विविधा प्रोक्ता बलदौर्बल्यसम्भवा। बलिष्ठो दुर्बलत्वेन दुर्बलोऽपि बलेन वा। बलेनोपाधिकायांश्च सत्त्वं ज्ञात्वा च वाहयेत्। सार्द्रां सुकठिनां चैव पाषाणोदकसंयुताम्। तृणकाष्ठसमायुक्तां रङ्गभूमिं तु वर्ज्जयेत्। समां च विपुलां चैव किञ्चित्पांशुसमन्विताम्। एकान्ते विजने रम्ये रङ्गभूमिं तु कारयेत्। स्थूलः क्रोधी च मूर्खश्च चित्तोत्सुकचलासनः। अस्थाने दण्डपाती यो वाजी तस्य न सिध्यति। प्रचलति यस्य कटिरूर्द्ध्वं बाहुर्दण्डपातः। न

तस्य वाहनं वाजी दुर्लभं वाजिवाह्नितम् । दृढासनोऽथ तत्त्वज्ञो जितमुष्टिर्निरालसः । अचिरागी स्थिरयापि पठेते वाजिवाहकाः । चित्तं यो नैव जानाति तुरगस्य समासतः । न वहन्ति हयास्तस्य दण्डपातेन ताड़िताः । क्षेपिते चलिते भीते तथा चोन्मार्गगामिनि । कुपितोद्भ्रान्तचित्ते वा षट्सु दण्डं निपातयेत् । क्षेपिते ताड़येन्मूर्द्धि जानुभ्यां चलिते तथा । क्रुद्धे उरसि हन्तव्यो भ्रान्तचित्ते तथोदरे । भीतं च ताड़येत्पश्चानुमुखे चोन्मार्गगामिनम् । ज्ञात्वा दोषं च रूपं च स्थानेष्वेतेषु ताड़येत् । अस्थानताड़ितो वाजी यावज्जीवं न सिध्यति । नो जहाति च तद्दोषं यावज्जीवत्यसौ हयः । धाराः पञ्च प्रवक्ष्यामि मुनिभिर्याः प्रकीर्त्तिताः । प्रथमा विक्रमा धारा द्वितीया पुलका स्मृता । तृतीया पूर्णकण्ठी तु चतुर्थी त्वरिता स्मृता । पञ्चमी चैव या धारा निरालम्बा प्रकीर्त्तिता । षष्ठी चैव तु या धारा श्रूयते न तु दृश्यते । विक्रमा गतिधारा च चतुष्का पुलका मता । सुखपादसमायुक्ता पूर्णकण्ठी तु सा भवेत् । स्वेच्छया त्वरिता धारा ताड़िता चैव पञ्चमी । षष्ठी चैव तु या धारा स्वर्गलोकेषु गीयते । वल्गाश्च संप्रवक्ष्यामि मुनिभिः परिकीर्त्तिताः । पुष्पवन्ती च गोकर्णी तुलोत्तुला तुला तथा । नागखण्डी पुष्पधारी दुदुष्टी च स्तनस्तनी । द्विहस्ती चैकहस्ती च शुभगा शोभना मता । इत्येता द्वादश वल्गा मुनिभिः परिकीर्त्तिताः” “व्याहृढकर्दमध्ये तु मनो लगति वाजिनः” शनैस्तु वाहयेत्पूर्वं पश्चात्तत्त्वं समादिशेत् । न वक्रो न तथोत्तानो न कुब्जो नाप्यधोमुखः । न भवेत्काञ्चगात्रस्तु स भवेदश्ववाहकः । स्थिरोरुः स्थिरपादश्च त्रिकोन्नतस्थिरासनः । दक्षिणादिवरङ्गस्य चासने तु दृढः सदा । अश्ववाराः समाख्याताः शेषास्तु भयदायकाः । ग्रीष्मादिषु न वर्त्तव्यस्तदृषु त्रिषु वाहनम् । हेमन्तादिषु वर्त्तव्यं सादिभिः शास्त्रवेदिभिः । प्रतिपत्सु त्रयोदश्यां पञ्चम्यां वा सिते दले । इतिसिद्धातियोगेषु वासरे चन्द्रसूर्ययोः । मूलरोहिणीहस्तेषु पुष्ये चैवोत्तरासु च । एवंविधे दिने सादी वाहान् संवाहयेत् शुभे । रङ्गभूमौ च रेवन्तं स्थापयेत् पूजयेत्ततः । पुष्पैर्धूपैः प्रदीपैस्तु चन्दनैः पायसैस्तथा । पक्वान्नैः पञ्चगव्यैश्च प्रातःशुचिशुक्लवाससा । रक्ताम्बरधरोभूत्वा रक्तपुष्पधरस्तथा” । “एकविंशतिवारांश्च ततः पर्य्याणयेद्धयम् । क्रोशमेकं समारुह्य नयेच्छित्वां शनैःशनैः । वल्गाग्रहश्च कर्त्तव्यः सव्यापसव्यमेव च । विक्रमा पुलका पूर्णकण्ठी च त्वरिता तथा । खलीनादौ प्रयोक्तव्या सादिना वाजिनां क्रमात् । नातिस्थूलं नाति लघं न सव्यं नातिकर्कशम् । षण्णाङ्गुलप्रमाणन्तु खलीनं कारयेद्बुधः । खलीनादिषु लोहेषु धारयेद्विक्रमादिषु । क्रमेणैव तुरङ्गाणां कटानि संप्रयोजयेत् । खलीनादौ तु धारासु यदा सुशिक्षितो हयः । तदा कटेषु तं सादी भ्रामयेद्विक्रमादिभिः । शतहस्तादिकां भूमिं सप्तहस्तावसानिकाम् । भ्रामयेद्वाजिनं सादी सव्यं चैवापसव्यकम् । मण्डलं चतुरस्रं च गोमूत्रं चार्द्धचन्द्रकम् । नागपाशं क्रमेणैव भ्रामयेत्कटपञ्चकम् । एवमन्येषु लोहेषु त्रिष्वेव भ्रामयेत्कटे । यएवं वाहयेद्वाहं तस्य कष्टं न जायते । दद्याद्भयमभीतस्य भीतस्यापि हरेद्भयम् । रहस्यं सादिनामेतद्वाहनेऽश्विभिर्वेदितम् । पूर्वोक्तेषु च देशेषु षट्सु दोषेषु ताड़येत् । न जातु सादिनान्यस्मिन् काले दोषशतैरपि । दृश्यमानस्य अश्वस्य यो दोषः सादिदोषतः । जायते ऽसौ निराकर्त्तुं सादिना नैव शक्यते । एवं शास्त्रविधानेन यः सादी वाहयेद्धयान् । हरयस्तस्य सिध्यन्ति भवन्ति फलदायकाः । वाहनं यत्र दुष्टं च धूपलेपनमन्त्रकैः । तदहं संप्रवक्ष्यामि मुनिभिः कीर्त्तितं यथा । अस्थिभिर्द्दगनैश्चैव हुकाणां च यथा बुधैः । विषमक्षिकादंष्ट्राभिः धूमसंवहसर्पिषा । एलागुरुमदोशीरनागकेसरचन्दनैः । सर्ज्जिकातैलसंयुक्तो धूपयेद् दवाजिनम् । विमलोहमदेलाभिर्त्तलाज्यदधिचन्दनैः । निःशेषदोषनाशाय धूप उक्तो हि वाजिनाम् । विलिप्य गोमयैः प्रातर्निशीथे सर्वसन्धिषु । अष्टम्यां च विशेषेण दुष्टाः सिध्यन्ति धूपिताः । काश्मीरं चन्दनं कौतीसिद्धार्थमरिचानि च । सैन्धवं वड़वामूत्रं गोमूत्रं कर्णजं मलम् । कुलिशुम्भानि पिष्टानि कषायाः सवचानि च । अञ्जनं सर्वदुष्टानां देयं पर्वणि पर्वणि । अनेनाभ्यञ्जितो वाजी निर्वाणमधिगच्छति । कोपमोहं भयं त्यक्त्वा वश्यः स्यात्सादिनोऽश्वशम्” ।

**अश्ववाह** पु॰ अश्वं वाहयति चालयति वह–णिच्–अण् । अश्वचालके सादिनि । ल्युट् । अश्ववाहकोऽप्यत्र । ल्यु अश्ववाहनोऽप्यत्र पु॰ ।

**अश्वविक्रयिन्** त्रि॰ अश्वं विक्रेतुं शीलमस्य वि+क्री–शीलार्थे इनि ६त॰ । हयविक्रयाजीविकायुक्ते त्रिका॰ ।

**अश्वविद्** पु॰ अश्वं हयहृदयं वेत्ति विद्–क्विप् ६त॰ । १ नलनृपतौ तस्याश्वहृदयज्ञता वर्णिता” भा॰व॰प॰७२ अध्या॰ । यथा “ऋतुपर्णं प्रति बाहुकरूपस्य नलस्योक्तिः” ‘बाहुकस्तु-

याचाव देहि विद्यामिमां मम। मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ!। ऋतुपर्णस्ततोराजा बाहुकं कार्य्यगौरवात्। हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः। यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम्। निक्षेपोमेऽश्वहृदयं त्वयि तिष्ठतु बाहुक"!। अश्वं विन्दते विद्-क्विप्। २अश्वलब्धरि त्रि॰ "परि यो अश्वमश्वविद्गोमत्"ऋ॰ ८,६१,२। "अश्वविद् अश्वस्य लम्भकः" भा॰।

**अश्ववैद्य** पु॰ ६त॰। घोटकचिकित्सके तच्चिकित्सामकारः। जयदत्तकृतेऽश्वशास्त्रे ऽवसेयः।

**अश्वशङ्कु** पु॰ ६त॰। १अश्वबन्धनार्थे कीले। अश्वस्य शङ्कुरिव। २दनुपुत्रभेदे "चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत"! इत्युपक्रम्य "अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्य्यवान्" भा॰आ॰प॰ ६०अध्या॰।

**अश्वशाला** स्त्री ६त॰। हयस्थाने मन्दुरायां वाजिशालायाम् तत्करणविधिश्चाश्वशास्त्रे। यथा "प्रागुदक्प्रवणे देशे वालुकाकाष्ठवर्जिते। चिताचैत्यविहीने च शालां कुर्वीत पण्डितः। सुगुप्ता सा च कर्त्तव्या दुष्टकीटाद्यसंयुता। शिशिरे स्थापयेद्देवं रेवन्तं पूजयेत्सदा। कार्य्या त्रिहस्तविस्तीर्णा तालाख्या पिण्डिका शुभा। शालाप्रमाणदीर्घा च तस्यां वासं प्रकल्पयेत्। द्वौ हस्तावुच्छ्रये तस्या मानं चैवं प्रकीर्त्तितम्। कर्कन्धूकाष्ठदण्डं च प्रान्तेऽस्याः स्थापयेद्बहिः" वालुका पूरितं कार्यं संस्कृतं चत्वरं तथा। लुण्ठनाय च वाहानां भवेच्चङ्क्रमणाय च" "जय॰अश्व॰शा॰ "इहैव ते गृहं कोषागारमायुधागारमश्वशालां हस्तिशालाश्च मृदुः" भा॰व॰ प॰ १८७ अ॰।

**अश्वशास्त्र** न॰ अश्वलक्षणादिज्ञापकं शास्त्रम्। शालिहोत्रकृते हयलक्षणादिज्ञापके शास्त्रे तन्मूलके जयदत्तकृते २शास्त्रे च।

**अश्वशिरस्** न॰ ६त॰ १वाजिमस्तके। अश्वस्य शिरइव शिरोऽस्य। २दानवभेदे अश्वशङ्कुशब्दे विवृतिः। "अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्य्यवान्। तथागगनमूर्द्धा च वेगवांश्चात्र पञ्चमः। पञ्चैते जज्ञिरे राजन्! वीर्य्यवन्तोमहासुराः। कैकेयेषु महात्मानः पार्थिवर्षभसत्तमाः" भा॰आ॰प॰ ६६अध्या॰। ३हयशिरसि विष्णुमूर्त्तिभेदे, तादृङ्मूर्त्तिधारणकृतम्" भा॰शा॰प॰३४२अध्या॰ "तेऽनुशिष्टा भगवता देवाः सर्षिगणास्तथा। नमस्कृत्य भगवते जग्मुर्देशान् यथेप्सितान्। गतेषु त्रिदिवौकस्सु ब्रह्मैकः पर्य्यवस्थितः। दिदृक्षुर्भगवन्तं तमनिरुद्धतनौ स्थितम्। तं देवो दर्शयामास कृत्वा हयशिरोमहत्। साङ्गानावर्त्तयन् वेदान् कमण्डलुत्रिदण्डधृक्। व्यास उवाच। ततोऽश्वशिरसं दृष्ट्वा तं देवममितौजसम्। लोककर्त्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया। मूर्द्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः। स परिष्वज्य देवेन वचनं श्रावितस्तदा। श्रीभगवानुवाच। लोककार्य्यगतीः सर्वास्त्वं चिन्तय यथाविधि। धाता त्वं सर्वभूतानां त्वं प्रभुर्जगतो गुरुः। त्वय्यावेशितभारोऽहं धृतिं प्राप्स्याम्यथाञ्जसा। यदा च सुरकार्य्यं ते अविषह्यं भविष्यति। प्रादुर्भावं गमिष्यामि तदात्मज्ञानदैशिकम्। एवमुक्त्वा हयशिरास्तत्रैवान्तरधीयत"। "कपर्द्दिने वराहाय एकशृङ्गाय धीमते। विवस्वतेऽश्वशिरसे चतुर्मूर्त्तिधृते सदा" इति च तत्रैव।

**अश्वशृगालिका** स्त्री अश्वशृगालयोर्वैरं इन्द्वात् वैरे वुन्। हयशृगालयोर्वैरे शब्दरत्ना॰।

**अश्वश्चन्द्रा** त्रि॰ अश्वैश्चन्दयति आह्लादयति चदि-णिच् रक् ३त॰ वेदे पृ॰ सुट्। हयेनाह्लादिकायां स्त्रियां "गोमघा जरित्रे अश्वश्चन्द्राः" ऋ॰ ६,३५,४। "अश्वश्चन्द्राः अश्वैराह्लादयन्त्यः" भा॰।

**अश्वषड्गव** न॰ अश्व+षट्के षड्गवच्। हयषट्के।

**अश्वसनि** त्रि॰ अश्वं सनुते ददाति-सन-इन् ६त॰। हयदायके। "यशोऽश्वसनिर्भवः"। यजु॰ ८,१२। अक्षुसनादि॰।

**अश्वसा** त्रि॰ सन-विट-ङा ६त॰। हयदातरि। "गोषणिं धियमश्वसां वाजसामुत" ऋ॰ ६,५३,१०।

**अश्वसाद** पु॰ अश्वं सादयति गमयति सद-गतौ णिच्-अण् उप॰स॰। सादिनि।

**अश्वसादिन्** पु॰ अश्वे सीदति सद-णिनि ७त॰। सादिनि (घोड़सओयार) "प्रतिप्रहाराक्षमभश्वसादी" रघुः।

**अश्वसेन** पु॰ १जिनपितृभेदे २नृपभेदे यस्य पुत्रः सनत्कुमारः कुरुक्षेत्रस्थे कुमतीनदीसमीपवासिनि तक्षकसुते ३नागभेदे च। "तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ। कुरुक्षेत्रे च वसतां नदीमिक्षुमतीमनु" भा॰आ॰प॰३अध्या॰। "अश्वसेनोऽभवत्तत्र तक्षकस्य सुतो बली। स तीव्रमकरोद्यत्नं मोक्षार्थे जातवेदसः"। भा॰आ॰प॰ २२६अध्या॰

**अश्वसेननृपनन्दन** पु॰ ७त॰। सनत्कुमारे त्रिका॰।

**अश्वस्तन** त्रि॰ श्वोभवः श्वस्+ट्यु-तुट् च नञ्तः न॰त॰। परदिनास्थायिनि वर्त्तमानदिनमात्रभवे। "अश्वस्तनविधानेन कर्त्तव्यं मनुरब्रवीत्" मनुः स्त्रियां ङीप्।

**अश्वस्तनिक** त्रि० श्वस्तनमस्त्यस्य मत्वर्थे ठन् न०त०। परदिनास्थायिधने वर्त्तमानदिनपर्य्याप्तधनसञ्चयकारिणि गृहस्थभेदे "कुशूलधान्यको वा स्यात् कुम्भीधान्यक एव वा। त्र्यहैहिको वापि भवेदश्वस्तनिक एव वा" मनुः।

**अश्वस्तोमीय** न० अश्वस्य स्तोमं स्तुतिरस्त्यस्य मत्वर्थे छ। हयस्तुतियुक्ते सूक्तभेदे तच्च सूक्तम्" ऋ० १,१६२। मानोमित्र इत्यादि द्वाविंशत्यृचम्। २ तत्साध्ये होमजाते च। "अश्वस्य वाऽआलब्धस्य मेध उदक्रामत्तदश्वस्तोमीयमभवद्यदश्वस्तोमीयं जुहोत्यश्वमेव मेधसा समर्धयति। आज्येन जुहोति। मेधोवा आज्यं मेधोऽश्वस्तोमीयं मेधमेवास्मिंस्तद्दधात्याज्येन जुहोत्येतद्वै देवानां प्रियं धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्धयति। अश्वस्तोमीयं हुत्वा द्विपदा जुहोति। अश्वोवाऽअश्वस्तोमीयं पुरुषो द्विपदा, द्विपाद्वै पुरुषो द्विप्रतिष्ठस्तदेनं प्रतिष्ठया समर्धयति तदाहुः अश्वस्तोमीयं पूर्वं होतव्यां द्विपदा इति पशवो वा अश्वस्तोमीयं पुरुषो द्विपदा यदश्वस्तोमीयं हुत्वा द्विपदा जुहोति तस्मात् पुरुष उपरिष्टात् पशूनधितिष्ठति षोड़शाश्वस्तोमीया जुहोति" शत०ब्रा०।

**अश्वस्थान** न० ६त०। वाजिशालायाम् "अश्वस्थानात् गजस्थानात् सङ्गमात् वल्मीकात् ह्रदात्" विष्णुध०पुरा०।

**अश्वहनु** पु० अश्वस्य हनुरिव हनुरस्य। दानवभेदे "हरिश्वाश्वहनुश्चैव वीरौ तावसुरर्षभौ" हरिवं० २६ अध्या०।

**अश्वहन्तृ** पु० अश्वं हन्ति हन–तृच् ६त०। १करवीरे "वीजं विड़ङ्गाश्वहन्त्रोर्हरिद्रे बृहतीद्वयम्" सुश्रुतः। २हयनाशके त्रि०।

**अश्वहय** पु० अश्वेन हिनोति गच्छति हि–कर्त्तरि अच्। अश्वेन गतिमति "प्रत्यर्द्धिर्यज्ञानामश्वहयो न रथानाम्" ऋ०१०,२६,५। अश्वेन हीयते व्याप्यते कर्म्मणि अच्। अश्वव्याप्ये। "सजन्यश्वहयैरनिषितं नमोभिः" ऋ०८,८६,,२।

**अश्वहृदय** न० अश्वस्य हृदयं मनोगतभावादि। हयाभिलाषे २तद्वेदकविद्याभेदे च अश्वविच्छब्दे उदा०।

**अश्वाख** पु० अश्वस्याखेव अच् समा०। देवसर्षपवृक्षे।

**अश्वादि** पु० पाणिन्युक्ते शुभाशुभसूचकनिमित्ते संयोगरूपेऽर्थे ठञ्प्रत्ययनिमित्ते १शब्दसमूहे स च गणः अश्व, अश्मन् गण, ऊर्णा उमा भङ्गा वर्षा वसु। गोत्रापत्ये २फञ्प्रत्ययनिमित्ते शब्दसमूहे च स च गणः अश्व, अश्मन् शङ्ख, शूद्रक, विद, पुट, रोहिण, खर्जूर, खञ्जार, वस्त, पिञ्जल, भड़िल, भण्डिल, भड़ित, भण्डित, प्रकृत, रामोद, क्षान्त, काश, तीक्ष्ण, गोलाङ्क, अर्क, स्वर, स्फुट, चक्र, श्रविष्ट, पविन्द, पवित्र, गोमिन्, श्याम, धूम, धूम्र, वाग्मिन्, विश्वानर, कुट, शप (आत्रेये)। जन, जड़, खड़, ग्रीष्म, अर्ह, कित, विशम्प, विशाल, गिरि, चपल, चुप, दासक, वैल्य, प्राच्य, धर्म्म, आनडुह्य, (पुंसि)जात, अर्जुन, प्रहृत, सुमनस्, दुर्म्मनस्, मनस्, प्रान्त, ध्वन, आत्रेय (भरद्वाजे) भरद्वाज, (आत्रेये) उत्स, आतव, कितव, वद, धन्य, पाद, शिव, खदिर अश्वादि।

**अश्वामघ** त्रि० अश्वोमघं धनमस्य वेदे दीर्घः। "अश्वरूपधनस्वामिनि 'अश्वामघा गोमघा वां हुवेम'" ऋ०७,०७१,१

**अश्वायुर्वेद** पु० अश्वस्यायुर्वेद्यतेऽनेन विद–णिच् घञ्। हयायुर्ज्ञापके शास्त्रे तच्च शालिहोत्रेण सुश्रुतनामानं स्वसुतं प्रत्युपदिष्टम् तन्मूलञ्च जयदत्तकृतञ्च अश्वशब्दे विवृतिः।

**अश्वारि** पु० अश्वस्यारिः ६त०। महिषे।

**अश्वारूढ़** पु० अश्वमारूढ़ोऽनेन। सादिनि अश्वारोहिणि।

**अश्वारोह** पु०अश्वमारोहति आ+रुह–अण् उप०स। हयारूढे, हयारोहणेन २युद्धकर्त्तरि च। अश्वगन्धेद्रुमिवारोहोमूलमस्य। ३अश्वगन्धायां स्त्री।

**अश्वावतान** पु० अश्वस्येवावतानोऽस्य। ऋषिभेदे। विदा० अपत्ये अञ्। आश्वावतानः तद्गोत्रापत्ये बहुषु गोपवना० न लुक्। आश्वावतानाः। [गन्धाह्वये ॥

**अश्वावरोहक** पु० अश्वलक्षेद्रुमिवावरोहति ण्वुल्। अश्व-

**अश्विन्** पु० द्वि० अश्वाः सन्ति ययोः इनि, अश्विन्यां नक्षत्रे भवौ "सन्धिवेलाद्यृतुनक्षत्रेभ्यः" पा० अण् "नक्षत्रेभ्योबहुलम्" पा० वा लुक् लुकि स्त्रीप्रत्ययस्य लुक्, अश्वा उत्पत्तिः स्थानत्वेनास्त्यस्य इनि वा। १स्वर्वैद्ययोः। "किमश्विनौ सोमरसं पिपासू" भट्टिः "वामोदचन्द्रसालोक्यमश्विसालोक्यमश्वदः" मनुः। "त्वाष्ट्री तु सवितुर्भार्य्या वड़वारूपधारिणी। असूयत महाभागा सान्तरीक्षेऽश्विनावुभौ" भा०आ०प०। "या वां कशा मधुमत्यश्विना सूनृतावती" यजु० ७,२। अश्वस्थिश्चावर्त्तः अस्त्यर्थे इनि। "कपोलयोस्तथावर्त्तौ विद्येते वाजिनोर्यदि। तावाश्विनाविति प्रोक्तौ राज्यवृद्धिकरौ परौ" इत्युक्तलक्षणयोः २हययोश्च द्वि०व०। ३हययुक्ते त्रि०। स्त्रियां ङीप्। "गोमा अग्नेऽविमाँ अश्वी" ऋ०४,२,५।

**अश्विनी** स्त्री अश्वकादुल्लमाकाकारोऽस्त्यस्य इति ङीप्। १सप्तविंशतिधाविभक्तराशिचक्रस्य प्रथमे भागे। अस्याश्वाकारत्वमश्वमुखपद्दे उक्तम्। "अश्विनीमघमूलानां गण्डा आद्याश्विनाड़िकाः" ज्यो० नक्षत्रपटले न०। "पुष्याश्विहस्ता लघुः" ज्यो० अश्वाया आकारोऽस्त्यस्याः इति ङीप्। हयरूपधारिण्यां त्वष्टृसुतायां २सविहुर्भार्यायामश्वत्थाम्भजशब्दे २६८ पृ० विवृतिः।

**अश्विनीकुमार** पु० द्वि०व०। सूर्येण त्वष्टृसुतायां संज्ञायां वड़वारूपायामुत्पादितयोः स्वर्वैद्ययोः तदुत्पत्तिकथा भा० आ०प० ६६ अध्याये अश्विनीतनयपुत्रसुतादयोऽप्यत्र। अश्वत्थाम्भजशब्दे २६८ पृ० विवरणम्।

**अश्वीय** न० अश्वानां समूहः छ। १हयसमूहे। अश्वस्य हितम् अपूपा० छ। २हयहिते। पक्षे यत्। अश्व्योऽप्यत्रार्थे।

**अश्वीरस** न० अश्वानामुर इव मुख्यम् अच्समा०। मुख्ये हये।

**अष** दीप्तौ अक० गतौ, ग्रहणे च सक० भ्वा०उभ०सेट्। अषति ते आषीत् आषिष्ट।

**अषडक्षीण** त्रि० न सन्ति षड़क्षीणि श्रोत्रेन्द्रियाणि ग्राहकाणि यत्र ख। तृतीयजनकर्णाश्रुते द्वाभ्यामेव कृते मन्त्रादौ।

**अषाढ(षाढ़)** पु० अषाढ(षाढ़)या युक्ता पौर्णमासी आषाढी (षाढ़ी)सा यत्र मासे अण् वा ह्रस्वः। वैशाखादितस्तृतीये चान्द्राषाढ(ड)मासे। आषाढी पूर्णिमा प्रयोजनमस्य प्रयोजनार्थे अण्। २ब्रह्मचारिधार्य्ये दण्डे, तस्य हि आषाढपौर्णमास्यां विहितकर्म्मप्रयोगित्वात् तथात्वम् पृ०हृस्वः। अषाढोऽप्यत्रार्थे। स्वार्थे कन् तत्रैव। सह क्त वेदे-ओत्वाभावः षत्वञ्च न०त०। असोढ़े त्रि० "अषाढ़ं युत्सु पृतनासु पप्रिम्" यजु० ३४,२०। "अषाढाय सहमानाय वेधसे" ऋ० २,२१,२।

**अषाढा(ढ़ा)** स्त्री षाढिः साहनं सह–णिच्+क्तिन् ढत्वम् अर्श आद्यच् न०त० पृषो० वा षत्वं ढत्वञ्च। अश्विन्यवधिके पूर्व्वादिके विंशे, उत्तरादिके एकविंशे च नक्षत्रे।

**अष्टक** न० अष्टौ अध्यायाः परिमाणमस्य अष्टन्+कन्। १पाणिनेरष्टाध्यायीसूत्रे, प्रत्येकमष्टाध्यायात्मके २ऋग्वेदांशभेदे च ३अष्टसंख्यापरिमिते त्रि० "पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" मनुः। "संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" पा० उक्तेः ४अष्टाध्यायाध्ययनेऽपि। अष्टकं विदन्ति अधीयते वा "सूत्राच्च कोपधात्" पा० अध्येतृवेदितृप्रत्ययस्य वाऽस्य लुक्। अष्टकाः पाणिनेः ४सूत्राध्यायिषु व०व०। ५अष्टसंख्यायाम् "ताराष्टकमिदं पुण्यं भक्तिमान् यः पठेन्नरः" तन्त्रम्। गङ्गाष्टकं पठति यः प्रयतः प्रभाते" वाल्मी०। [द्विकर्णत्वात्तथात्वम्।

**अष्टकर्ण** पु० अष्टौ कर्णा अस्य। चतुर्मुखे ब्रह्मणि प्रतिमुखं

**अष्टकर्म्मन्** अष्टौ कर्म्माण्यस्य। "आदाने च विसर्गे च तथा प्रैषनिषेधयोः। पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे। दण्डशुद्ध्योः सदा रक्तस्तेनाष्टगतिकोन्नृपः" उशनसोक्ताष्टविधकर्म्मयुक्ते नृपतौ "अष्टकर्म्मा दिवं याति राजा शक्राभिपूजितः" उश०। अष्टगतिकोऽप्यत्र "तत्रादानं करादीनाम्। विसर्गो भृत्यादिभ्यो धनदानम् प्रैषोऽमात्यादीनां दृष्टादृष्टानुष्ठानेषु। निषेधो दृष्टादृष्टविरुद्धक्रियासु। अर्थवचनं कार्यसन्देहेन राजाज्ञयैव तत्र नियमनम्। व्यवहारेक्षणं प्रजानामृणादिविप्रतिपत्तौ। दण्डः पराजितानां शास्त्रोक्तधनग्रहणम्। शुद्धिः पापे कर्म्मणि जाते तत्र प्रायश्चित्तसम्पादनमिति" कुल्लूकभट्टः। मेधातिथिस्तु। अकृतारम्भः। कृतानुष्ठानम्। अनुष्ठितविशेषणम्। कर्म्मफलसंग्रहः। तथा सामदानभेददण्डाः। एतदष्टविधं कर्म्मेत्याह। अथवा "कृषिः वणिक्पथः। उदकसेतुबन्धनम्। दुर्गकरणम् कृतस्य संस्कारः निर्णयः। हस्तिबन्धनम्। खनिखननम्। सैन्यनिवेशनम्। दारुवनच्छेदनञ्चेत्याह"। तन्त्रान्तरे तु अष्टवर्गशब्दे वक्ष्यते।

**अष्टका** स्त्री अश्नन्ति पितरोऽस्यां तिथौ अश–तकन्। "अष्टका पितृदैवत्ये" इत्यजादिपाठात् न इत्त्वम्। "अष्टका तु समाख्याता सप्तम्यादिदिनत्रयम्" इत्युक्तलक्षणे १सप्तम्यादिदिनत्रये, २दिनत्रयसाध्ये कर्मभेदे च तच्चाश्वलायन सू० दर्शितम् तदपि पौषमाघफाल्गुनानां कृष्णसप्तम्यादिषु कर्त्तव्यं तत्र प्रधानमष्टमी, सप्तम्यामारम्भः अष्टम्यां कृत्यं नवम्यामन्वष्टकेति भेदः। "अमावास्या चतुर्दश्योः पौर्णमास्यष्टकासु च" "अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु" इति च मनुः तत्र न पितृमात्रदैवत्यम् अन्यदैवत्यमपि यथाह "पितृदानाय मूले स्युरष्टकास्तिस्र एव च। कृष्णपक्षे वरिष्ठाहि पूर्व्वा चैन्द्री हि भाष्यते। प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी। आद्या पूपैः सदा कार्य्या मांसैरन्या भवेत्तथा। शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः वायु० पुरा०। मूले प्रधानस्थाने अमावस्या हि श्राद्धस्य प्रधानं कालः तद्वदिति

यावत् रघु० । पश्वभावे स्थालीपाकेन कार्य्यं "अपि वा स्थालीपाकं कुर्व्वीतेति" गोभिलः । एतद्विधानन्तु "स्थालीपाकं पशुस्थाने कुर्य्यात् यद्यानुकल्पिकम् । श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्यनु" छन्दोगपरिशि० । अन्विति ओदनचरोः पश्चात् । अतएव । "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च । तस्माद्दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च" याज्ञ० । तस्मादन्नं प्रधानं पूपादिकन्तूपकरणत्वेन श्राद्धाङ्गानामावश्यकं, सदेति श्रवणात् । "अमावस्याष्टका वृद्धिः कृष्णपक्षेऽयनद्वयम्" । "पौषमासस्य रोहिण्यामष्टकायामथापि वा" या० स्मृ० । अत्रायं भेदः हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका एकस्यां वा" आ० श्व० सू० उक्तेः समर्थासमर्थभेदेन चतुर्षु मासेषु कृष्णाष्टमीषु एकस्यां वा अष्टका कार्य्येति । आपस्तम्बस्त्वा "ऊर्द्ध्वं तिस्रष्वष्टकासु" इत्युत्तरोत्तरमाह । अन्वष्टकाशब्दे विवृतमेतत् । अष्टपरिमाणमस्याः कन् । अजादिपाठा० टाप् पितृदैवत्ये इति अस्य प्रायिकत्वात् क्षिपका० नेत्त्वम् । ४अष्टमीतिथिमात्रे "अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्द्दशी । ब्रह्माष्टका पौर्णमास्यौ तस्मात्ताः परिवर्ज्जयेत्" मनुः एतद्व्याख्यायां क्रियान्तरमष्टका अत इत्यम् ।

**अष्टकाङ्ग** पु० अष्टकमङ्गं यस्य । नयपीठे त्रिका० तानि चाङ्गानि स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि चेत्यङ्गानि अङ्गानि

**अष्टकिक** त्रि० अष्टकाऽस्त्यस्य व्रीह्या० ठन् । अष्टकायुक्ते अत्र वा इनि अष्टकी । अत्र्यार्थे त्रि० स्त्रियां ङीप् ।

**अष्टकृत्वस्** अव्य० अष्टन्+क्रियाभ्यावृत्तौ कृत्वसुच् । अष्टधाभ्यावृत्तक्रियायाम् ।

**अष्टकोण** त्रि० अष्टौ कोणा अस्य । १अष्टकोणयुक्तक्षेत्रे तन्त्रोक्ते २यन्त्रभेदे च "विन्दुत्रिकोणवसुकोणदशारयुग्ममिति" तन्त्रम् "२कुण्डभेदे अष्टकोणमवैशान्यामन्नं च भयप्रदम्" हेमा० व्र० ख० कुण्डप्र० । [क्रीते ।

**अष्टक्य** त्रि० अष्टकेन क्रीतः गवा० यत् । अष्टसंख्यान्वितेन

**अष्टगव** न० अष्टानां गवां समाहारः योगवि० अच् । गवाष्टके तद्युक्ते शकटे तु अष्टागवमित्येव । "अष्टागवं धर्म्महलमिति" स्मृतिः ।

**अष्टगुण** त्रि० अष्टभिर्गुण्यते गुण—अभ्यासे कर्म्मणि क । अष्टभिर्गुणिते अष्टावृत्ते । "मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम्" मनुः । "ददावष्टगुणैश्वर्य्यं तेषां तुष्टस्तु केशवः" भा० व० प० ८२ अध्या० "ततश्चाष्टगुणं पार्थ ! प्राप्स्यसे धर्म्ममुत्तमम्" ८५ अध्या० । अष्टौ गुणा यस्य अष्टविधगुणयुक्ते २ब्राह्मणे ते च गुणा गौतमेनोक्ताः यथा अथाष्टावात्मगुणा दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति । यस्यैते न चत्वारिंशत् संस्कारा न चाष्टावात्मगुणाः न स ब्राह्मणः" । अष्टावृत्तौ गुणोऽस्य इत्यौ अष्टशब्दस्य तदावृत्तपरता । ३अष्टावृत्तगुणके पदार्थे "अन्नादष्टगुणं चूर्णं चूर्णादष्टगुणं पयः । पयसोऽष्टगुणं मांसं मांसादष्टगुणं घृतम् । घृतादष्टगुणं तैलं मर्द्दनेन तु खादयेद्" वैद्यकम् ।

**अष्टगृहीत** त्रि० अष्टकृत्वो गृहीतः इत्यौ सुजर्थोलुप्तः । अष्टवारगृहीते "रसमाज्यं मांसं पायसमिति संवदाष्टगृहीतं गृहीत्वा जुहूयात्" गोभि० अष्टगृहीतं केवलमेतयोनाष्टवारान् गृहीतम्" सं० त० रघुनन्दनः ।

**अष्ट(ष्टा)चत्वारिंशत्** स्त्री अष्टाधिका चत्वारिंशत् शा० त० आत्वम् । (आटचल्लिश) १संख्यायां २तत्संख्येये च । "अष्टचत्वारिंशत्संस्कारैः संस्कृत" इति मिताक्ष० गौत० । तत्र गौतमेन चत्वारिंशदेव संस्काराः अष्टौ गुणाश्च ब्राह्मण्यहेतवो दर्शिताः चत्वारिंशत् संस्काराः गुणसहिता अष्टचत्वारिंशदित्यर्के । ते च "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणान्नप्राशनचौड़ोपनयनम् । चत्वारि वेदव्रतानि स्नानं सहधर्म्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषाञ्चाष्टकाऽन्वष्टकापार्व्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रदर्शपौर्णमासावाग्रयणं चातुर्म्मास्यनिरूढपशुबन्धसौत्रामणीति सप्त हविर्यज्ञसंस्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोड़शी वाजपेयोऽतिरात्रोऽप्तोर्य्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत् संस्काराः । अथाष्टावात्मगुणा दया सर्व्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति यस्यैते न चत्वारिंशत् संस्कारा नचाष्टावात्मगुणा न स ब्राह्मणः सायुज्यं सालोक्यञ्च गच्छति । यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्राह्मणः सायुज्यं सालोक्यञ्च गच्छति अधिकं संस्कारशब्दे वक्ष्यते" गौ० संहितायां तु चत्वारिंशत्संस्कारैः संस्कृत इत्येव पाठः । मिताक्षरोद्धृतपाठस्तु उक्तरीत्या समर्थितः ।

**अष्टतय** त्रि० अष्टावयवा अस्य अष्टन्+तयप् । अष्टावयवे । "टिड्ढाणञिति" पा० सूत्रे तयपोग्रहणात् स्त्रियां ङीप् ।

अष्टतयी । अवयवमात्रे तयप् । २अष्टसंख्यायां न० ।

**अष्टतारिणी** स्त्री ब०व० कर्म० संज्ञात्वान्न द्विगुः । "तारा चोग्रा महोग्रा च वज्रा काली सरस्वती । कामेश्वरी च चामुण्डा इत्यष्टौ तारिण्योमताः" इत्युक्तासु तारादिषु अष्टसु तारिणीरूपदेवीमूर्त्तिषु ।

**अष्टत्रिक** न०अष्टाहतं त्रिकम् । १चतुर्विंशतिसंख्यायां तत्-२संख्याते च "वैश्यस्याष्टत्रिकादब्दात् सावित्रीपतनं भवेत्" मार्कण्डेय पु० । "अष्टत्रिकाच्चतुर्विंशतेः" म०त०रघु० ।

**अष्टत्व** न० अष्टनां भावः त्व । अष्टसंख्यायाम् ।

**अष्टदंष्ट्र** पु० दैत्य० दानवभेदे "अष्टदंष्ट्रचतुर्दंष्ट्रौ मेघनादो जलन्धमः" हरि० २२९ अ० ।

**अष्टदल** न० अष्टौ दलानि यस्य । अष्टपत्रकमले "विलिखेदष्टदलं पद्मं भूतलिकभूषितम्" तन्त्रम् ।

**अष्टदिश्** स्त्री ब०व० । कर्म० संज्ञत्वात् द्विगुः । पूर्व्वाग्नेयदक्षिणनैर्ऋतपश्चिमवायव्योत्तरैशानीरूपासु अष्टसु दिक्षु । "इन्द्रादीन् लोकपालांश्च अष्टदिक्षु च पूजयेत्" तन्त्रम् ।

**अष्टदिक्करिणी** स्त्री ब०व०अष्टदिक्स्थाः करिण्यः ।"करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् । ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावतीत्युक्तासु ऐरावतादीनां प्रियासु अष्टसु हस्तिनीषु इत्यमरः ।

**अष्टदिक्पाल** पु० अष्टौ दिशःपालयन्ति पा-णिच्-अण् उप०स० । "इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानरूपेषु अष्टसु दिक्पालेषु ।

**अष्टदिग्गज** पु० ब०व० अष्टदिक्स्था गजाः । "ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः" इत्युक्तेषु अष्टसु दिक्स्थे ऐरावतादिषु गजेषु एतत्संख्यासाम्याद्गजशब्दस्याष्टसंख्यार्थकत्वम् ।

**अष्टद्रव्य** न० ब०व० कर्मधा० संज्ञात्वान्न द्विगुः । "अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधस्तिलाः । सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ विदुर्बुधाः" इत्युक्तेषु होमसाधनेषु अष्टसु द्रव्येषु । "त्रिस्वादुयुक्तैर्जुहुयाद्वाष्टद्रव्यैर्दशांशतः" तन्त्रसा० ।

**अष्टधा** अव्य० अष्टन्+प्रकारे धाच् । अष्टप्रकारे "भिन्ना प्रकृतिरष्टधा" गीता । "सुरद्विपानामिव सामयोनिर्भिन्नोऽष्टधा विप्रससार वंशः" रघुः ।

**अष्टधातु** पु० ब०व०अष्टौ धातवः कर्म० संज्ञात्वान्न द्विगुः । "स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशदमेव च । सीसं लौहं रसश्चेति धातवोऽष्टौ प्रकीर्त्तिताः" इत्युक्तेषु अष्टसु स्वर्णादिषु रूढ़ते तु रसवर्जिताः सप्तैव धातवोऽभिहिताः किन्तु रसनिरूपणे "ततो रस इति प्रोक्तः स च धातुरपि स्मृतः" इत्युक्तेरष्टधातुताऽपि तस्याभिमता "अष्टधातुमयप्रतिमानिर्माणे तु रसं विहाय पित्तलस्य ग्रहणम् "आरकूटं तथैव चेति" हेमा० भविष्योक्तेरिति भेदः ।

**अष्टन्** त्रि०ब०व०अश—व्याप्तौ कनिन् तुट् च ।(आट)१"संख्याभेदे द्व्येकयोर्द्विवचनैकवचने" पा० निर्द्देशेन संख्यावाचकमात्रस्य संख्यापरत्वनिर्णयात् । २तत्संख्यान्विते च । "अष्टौ तान्यव्रतघ्नानि आपोमूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" स्मृतिः "निन्द्यास्वष्टासु चान्यासु स्त्रियोरात्रिषु वर्ज्जयेत्" मनुः "अष्टानां लोकपालानां वपुर्धारयते नृपः" । "अष्टाविमान् समासेन स्त्रीविवाहान् निबोधत" इति च मनुः । दशविंशतिशब्दयोः परतः समासे आदन्तादेश अष्टादयः । अष्टाविंशतिः त्रिंशदादौ वा अष्टत्रिंशत् अष्टात्रिंशत् अष्ट(ष्टा) चत्वारिंशत् अष्ट(ष्टा) पञ्चाशत् अष्ट(ष्टा)षष्टिः अष्ट(ष्टा)सप्ततिः अष्टाशीतिः अष्ट(ष्टा)नवतिः संख्याव्ययपूर्व्वकात् ततः बहुव्रीहौ डच् । "निरष्टे अश्वयते" शत०ब्रा० सप्ताष्टानि अष्टानि ।

**अष्टप,द(द)** पु० अष्टौ पादा अस्य वा अन्त्यलोपः । १शरभे तच्छन्दे तल्लक्षणम् २लूतायाञ्च हेम० ।

**अष्टपदिका** स्त्री अष्टसु दिक्षु पादा अस्याः अन्त्यलोपः ङीपि पद्भावे संज्ञायां कन् ह्रस्वः । (ह्यापरमालि) लतायाम् १ कनभावे । अष्टपदीत्यप्यत्र स्त्री ।

**अष्टपल** न० अष्टौ पलानि परिमाणमस्य अण् द्विगोर्लुगनपत्ये" पा० तस्य लुक् "जयपालिफलाकल्के वज्रमाले गुडात् पले" । सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत्" चक्रदत्तोक्ते घृतभेदे" ।

**अष्टपुष्पी** स्त्री अष्टनां पुष्पाणां समाहारः । अनिर्ण्णीतसंज्ञकत्वात् द्विगुः । पुष्पाष्टके । "कदाचिद्दुर्न्यस्ताष्टपुष्पिकापातोत्पादितकोधेन" काद० अत्राताऽष्टपुष्पीति कप् । तत्रैव ।

**अष्टभुजा** स्त्री अष्टौ भुजा अस्याः । देवी माहात्म्यस्य तृतीयचरितदेवतायां महासरस्वत्यां तन्मूर्त्तिध्यानशब्दे विवृतिः ।

**अष्टम** त्रि० अष्टानां पूरणः डट् मट् च । येन अष्टसंख्या पूर्य्यते तस्मिन् । "पैशाचश्चाष्टमोऽधमः" "अष्टमं चायुषः स्थानमष्टमादष्टमं च यत् । तयोरपि व्ययस्थानं मारकस्थानमुच्यते" ज्योतिःपरा० "गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम्" मनुः स्त्रियां ङीप् । "सौविदल्लाष्टमी" आश्व० सिद्धिकृत संबन्धिनी अष्टमी व्याकृतिः" कर्क० । सा च चन्द्रस्याष्टमकलाक्रियाकूटाधाररूपे तिथिभेदे" । "चतुर्द्दश्यष्टमी चैव

अमावस्या च पूर्णिमा पर्व्वाण्येतानि राजेन्द्र! रवि-संक्रान्तिरेव च” “अष्टम्यां बलिदानेन पुत्रनाशो भवेद्ध्रुवम्” पुरा०। “अष्टम्याः शेषदण्डे च नवम्या आद्य एव च। अत्र या क्रियते पूजा विज्ञेया सा महाफला” ति०त०पुरा०। “अपरपक्षाष्टम्यामष्टमीस्त्वष्टकाः” आश्व०।

**अष्टमकालिक** त्रि० अष्टमः कालः भोजनेऽस्यस्य ठन्। सार्द्धदिनत्रयोपवासानन्तरं चतुर्थदिवसे रात्रौ भोक्तरि-वानप्रस्थभेदे “नक्तं चान्नं समश्नीयाद्दिवा वाहृत्य शक्तितः। चतुर्थकालिको वा स्यात् स्याद्वाप्यष्टमकालिकः” मनुः। “मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्त्यवासिनां नित्यम्” इत्युक्त्या दिवसे वारद्वयभोजनस्य विधानात् सार्द्धत्रिदिने षष्ठाहार-मतोऽस्य चतुर्थदिवसे रात्रौ भोजने हि तथात्वं भवति।

**अष्टमङ्गल** न० अष्टगुणितं मङ्गलम् शा०त०। “मृगराजो वृषो नागः कलशो व्यजनं तथा। वैजयन्ती तथा भेरी दीप इत्यष्टमङ्गलम्” इत्युक्तेषु “लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः। हिरण्यं सर्पिरादित्य आपोराजा तथाष्टम” इत्युक्तेषु च अष्टसु द्रव्येषु च०व०। अत्र कर्म्म० संज्ञा-त्वान्न द्विगुरिति भेदः।

**अष्टमङ्गलघृत** न० अष्टभिर्द्रव्यैर्मङ्गलार्थं घृतम्। चक्रोदत्तोक्ते घृतभेदे “वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च। शारिवा सैन्धवञ्चैव पिप्पलीघृतमष्टमम्। मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने। दृढस्मृतिः क्षिप्रमेधः कुमारो बुद्धिमान् भवेत्। न पिशाचा न रक्षांसि न भूता न च मातरः। प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम्”।

**अष्टमभाव** पु० अष्टमोभावः। ज्योतिषोक्ते जन्मलग्नावधिके १अष्टमस्थाने तन्वादिद्वादशभावमध्ये २अष्टमे भावे च भावश्च इष्टकालेऽर्कलाविकलादिना स्फुटीकृतलग्नादिः। तदा-नयनं यथा “पूर्वं न तं स्याद्दिनरात्रिखण्डं दिवानिशो-रिष्टघटीविहीनम्। दिवानिशोरिष्टघटीषु शुद्धं द्युरात्रि खण्डं त्वपरं नतं स्यात्। तत्काले सायनार्कस्य भुक्त-भोग्यांशसंगुणात्। स्वोदयात् खाग्निलब्धं यत् भुक्तं भोग्यं रवेस्त्यजेत्। इष्टनाडीपलेभ्यश्च गतगम्यान्निजोदयात्। शेषं खत्र्याहतं भक्तमशुद्धेन लवादिकम्। अशुद्धशुद्धभे हीनयुक् तनुर्व्ययनांशकम्। एवं लङ्कोदयैर्भुक्तं भोग्यं शोध्यं पलोद्गतात्। पूर्व्वपश्चान्नतादन्यत् प्रागुक्तदशमं भवेत्। सषड्भे लग्नभे जाया, तुर्य्यौ, लग्नोनतुर्य्यतः। षष्ठांशयुक् तनोःसन्धिरग्रे षष्ठांशयोजनात्। त्रयः स-सन्धयोभावाः षष्ठांशैनैकयुक् सुखात्। अग्रे त्रयः षड्भेन ते भार्द्धयुक्ताः परेऽपि षट्”। नील०ता०। स्वस्वदेशो-दयमानं देशान्तरयोगादिना आनेयम् लङ्कोदयमानानि तु मेषस्य २७८, वृषस्य २९९, मिथुनस्य २२३, कर्कटस्य२२३ सिंहस्य २९९, कन्यायाः २७८, तुलायाः २७८, वृश्चि-कस्य२९९, धनुषः २२३ मृगस्य २२३, कुम्भस्य २९९, मीनस्य २७८, पलानि। एतदनुसारेण दशमराशेः उदय-मानं गृहीत्वा दशमभावानयनम् “खेटे भावसमे पूर्णं फलं सन्धिसमे तु खम्। हीनेऽधिके द्विसन्धिभ्यां भावे पूर्व्वा-परे फलम्” नील०ता०। “भुक्तं भोग्यं खेटकालान्न शुध्येत् त्रिंशच्छिन्ना स्वोदयाप्तं लवाद्यम्। हीनं युक्तं भास्करे तत्तनुः स्यात् रात्रौ लग्नं भार्द्धयुक्ताद्रवेस्तु। खेटे सन्धिद्वयान्तःस्थे फलं तद्भावजं भवेत्”। नील०ता०। “अष्टमस्थाने च चिन्त्यान्याह दीपिकायाम्” “रन्ध्रायुर्म्मृतयोऽष्टमे” इति। ताजके तु अन्यान्यपि चिन्त्यान्याह। “मृत्यौ चिरन्तनं द्रव्यं मृतवित्तं रणे रिपुः। दुर्गस्थानं मृतिर्नाशः परीवादो मनोव्यथा” एतानि साधारणानि चिन्त्यानि विशेषतस्तत्र ग्रहयोगाद्दिष्टाद्युक्तं जातके यथा। “आयुः स्थानाधीश्वरः पापयुक्तः षष्ठान्त्यस्थः स्वल्पमायुस्तनोति। लग्नेशाद्यचेद्रतिस्वल्पमेव दीर्घायुष्यं चाष्टमस्थः करोति। निधनतनुखभेशाः केन्द्रकोणत्रिलाभे १,२,४,५,७,९, १०,११, दधति हि विपुलायुर्भानुजोऽत्र प्रशस्तः। पनफरचतुरस्रेमध्यमं त्वायुरेते विदधति खलु नेष्टाः प्रान्त्य-षष्ठे बलिष्ठाः। कमलकुलदबन्धू मृत्युरन्ध्रान्तिमाख्ये विपदमथ धराजो द्विद्विवर्षेऽष्टमस्थः। धनलवमथ यच्छेत्सङ्गतस्ते बुधो-ऽब्दे क्षितिसुखदशमस्थे रोगभोगापचारौ। अरिष्टोच्छ्वास निर्यासोच्छ्वासयोरत्र चिन्तनम्। दैवविद्भिः सदा कार्य्यमष्टमे भावचिन्तने” जातकप०। वर्षप्रवेशकाले तु अन्यथा योग-विशेषात् फलमुक्तम् यथा “भौमेऽब्दपे क्रूरहते पत्या पातेऽव-लोकिते। अग्निभीरग्निभे क्रूरमदहिषड्भे क्षतिः। विपत्ति-र्नरपालोत्था रिपुतस्करतोभयम्। तुर्य्ये मातुः पितुर्व्वा द्वा मातुलात्ति स्ततोगुरुः। लग्नेऽन्त्यहापतिसमापतयो मृतीशाश्चेदित्थशालिन इमे निधनप्रदाः स्युः। चेत् पाक-रिष्टसमये मृतिरेव तत्र सार्कं कुजे नृपभयं दिवसेऽब्दगेषे। सूर्य्ये मृशरिफे सितेन जनने वर्षेऽधिकारी यथा केन्द्रे राज गदाह्वयं च दृगस्थस्थानेऽधिकारीन्दुजे। सौम्ये क्रूरदृशा कुजस्य दृगस्थदोषादि नाशस्थिते दग्धे मन्थमृतौ विद्ये-ष्टतइति मार्द्धबुधे तादृशे। भौमस्थानेऽधिकारीन्दौ शुभ्रं नृपभयं रुजः। मन्देऽधिकारी खे चोपहते पीड़ाकरः

मृतः । भौमस्थानेऽधिकहज्ञौ महारो वा व्रणाद्भयम् । आरे खस्थे चतुष्पाद्भिः पातोदुःखरुजोऽसृजः । वित्ताष्टमेज्यो धनहा यद्यदृष्टः शुभेक्षितः । मन्दे दृने दुर्वचनापवादकलिभञ्जनम् । पतिते वा क्रूरदृशाऽऽरेऽत्यशाले क्षतिं वदेत् । कुजदृष्टाश्रिते नाशः सौम्यदृष्ट्या शुभं वदेत् । यत्रर्क्षे जन्मनि कुजः सोऽब्दलग्नपगोयदा । नक्ताधिपोनष्टदृग्भोयोषिद्वादाः शुभान्विते । जन्मन्यष्टमगे जीवे साधिव्याधिकलिः पृथुः । जयः शुक्रे वणाद्भयमथुत्तरवशेन तु । भौमेऽन्त्यगे धने स्वर्य्ये वादक्लेशं विनिर्द्दिशेत् । रिपुगोत्रकलिर्भीतिः खस्थे कुजहतेऽब्दपे । दृष्टोजन्माङ्गपोवर्षेऽष्टमोरोगकर्त्ता दिशेत् । सूर्य्याद्ध्योरधिकृतो भौमस्थाने गुरुश्चेतः । पापैर्वादः स्फुटोऽप्येवं तादृशीन्दौ शनेः पदे । सूर्य्याद्ध्योरधिकृते चन्द्रे बुधपदे हते । क्रूरैर्विदेशगमनं वादः स्वाहिमनस्कता । मेषे सिंहे धनुःस्वारेऽब्दपेऽस्ते सिते भयम् । स्वतौ स्वतोगलग्नेशौ मृत्युदौ पापदृग्युतौ । यत्रर्क्षे जन्मनि कुजः सोऽब्दलग्नपगोयदा । बुधोवर्षपतिर्नष्टवलस्तत्र न शोभनम् । सार्के शनौ भौमयुतेऽष्टस्थे वाहनाद्भयम् । शार्के भौमेऽष्टमस्थे तु पतनं वाहनाद्वदेत् । स्वारेऽब्दपे स्वगे मृत्युचन्द्रेऽन्त्यारिस्थतौ क्षतिः । उदिते क्षतिमद्भागे निर्बले जीविते क्षतिः । पुण्यसद्म स्वरःपुण्यसद्मादष्टमोपगः । मृत्यष्टमेशपुण्येशोमृतिदः पापदृग्युतः । मृत्यष्टमगता राशिः पुण्यसद्मनि नाथयुक् । अब्दलग्नाष्टमर्क्षे तच्चेदित्थं स्यात्तदा क्षतिः । पुण्यभं चाशुभाक्रान्तं क्षतीशोऽन्त्यारिरन्ध्रगः । सुथहेशोऽब्दपोऽपि मृत्युं तत्र विनिर्द्दिशेत् । सक्रूरे जन्मपे मृत्यौ क्षतिर्वेदिन्थिहाकियुक् । भौमयुतेक्षणे तत्र मृत्युः स्यादात्मघाततः । मन्दोऽष्टमोक्षतीशेत्थशालान्मृत्युकरः स्मृतः । शुभेत्थशालात् सर्वेऽपि योगाः स्युः शुभदायकाः । क्षतिरन्ध्रपतिर्मन्दोऽष्टमोऽब्दलग्नपेन चेत् । इत्थशाली क्रूरदृशा तत्कालं मृत्युदायकः, नील० ता० । [अष्टमुष्टिमिते परिमाणभेदे ।

**अष्टमान** न० अष्टौ मुष्टयः परिमाणमस्य । कुडवरूपे

**अष्टमिका** स्त्री वैद्यकोक्ते चतुस्तोलकपरिमाणे ।

**अष्टमी** स्त्री अष्टानां पूरणी । षोडशकलात्मकचन्द्रस्य अष्टमकलाक्रियारूपायां स्वनामख्यातायां तिथौ २अष्टसंख्यापूरण्याञ्च अष्टमशब्दे उदा० । अश्+क्त अष्टं संघातं व्याप्तिं वा माति मा—क गौरा० ङीष् । कोटातकताम् ।

**अष्टमुष्टि** पु० अष्टौ मुष्टयः परिमाणमस्य अण् "द्विगोर्लुगिति" लुक् । कुञ्चिपरिमाणे "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलं" इति हेमाद्रिदानखण्डे परिभाषायां दृश्य० ।

**अष्टमूर्त्ति** पु० अष्टौ भूम्यादयो मूर्त्तयोऽस्य । "क्षितिर्जलं तथा तेजो वायुराकाशमेव च । यष्टार्कश्च तथा चन्द्रः मूर्त्तयोऽष्टौ पिनाकिनः" इत्युक्ताष्टमूर्त्तिधारिणि शिवे । "महेश्वरेण यो राजन्नजीर्णो ह्यष्टमूर्त्तिना । कस्तमुत्सहते वीरो युद्धे जरयितुं पुमान् । भा०व०अ० ४८ "अवैहि मां किङ्करमष्टमूर्त्तेः" रघुः । "स्वमेव मूर्त्त्यन्तरमष्टमूर्त्तिः" "जगाद ताभ्यामङ्गुलिमष्टमूर्त्तिः" इति च कुमा० । क्षित्यादिमूर्त्तिभेदेन तस्य नामभेदः यथा शर्वः क्षितिमूर्त्तिः एवं भवोजलमूर्त्तिः रुद्रोऽग्निमूर्त्तिः । उग्रोवायुमूर्त्तिः भीम आकाशमूर्त्तिः पशुपतिर्यजमानमूर्त्तिः । महादेवः" सोममूर्त्तिः ईशान सूर्य्यमूर्त्तिः । एता एव तस्याष्टौ मूर्त्तयः शाकुन्तले वर्णिताः "या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् । यामाहुः सर्व्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः" । अष्टतन्वादयोऽप्यत्र । कर्म्म०संज्ञात्वान्न द्विगुः । शिवस्य क्षित्यादिषु अष्टसु २मूर्त्तिषु स्त्री ब०व० ।

**अष्टमूर्त्तिधर** पु० ६—त० धरः अष्टानां मूर्त्तीनां धरः । शिवे "अष्टमूर्त्तिधरमूर्त्तिरष्टमी" माघः "तद्व्याख्याने अष्टानां मूर्त्तीनां समाहारः इति वदन् मल्लिनाथः "दिक्संख्ये संज्ञायामिति" सूत्राकरणेन अत एव मूर्त्तीनां प्रकृते क्षित्यादिविशेष संज्ञावाचित्वात् कर्म्मधारयस्यैव तत्र प्रसक्तेः त्रिलोकनाथइत्यादिवत् उत्तरपदद्विगुत्वेनैवोपपत्तौ तत्सूत्रसङ्कोचानुपपत्तेः इत्यलम्

**अष्टरत्नि** त्रि० अष्टौ रत्नयः ऊर्द्ध्वमानमस्य । बहुव्रीहौ इत्सोव्याने "अष्टरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः" भा० क०प० ७२ अध्या० ।

**अष्टलौहक** न० ब०व०कर्म्म० संज्ञात्वान्न द्विगुः । "सुवर्णं रजतं ताम्रं सीसकं कान्तिकं तथा । वङ्गं लौहं तीक्ष्णलौहं लौहान्यष्टौ इमानि तु" इत्युक्तेषु अष्टसु धातुषु ।

**अष्टवर्ग** पु० अष्टानामराङ्करव्यादीना वर्गो यत्र । ज्योतिषोक्ते रेखाविशेषेण शुभाशुभसूचके चक्रभेदे यथा । "जन्मकालग्रहस्थित्या फलं वक्ष्ये शुभाशुभम् । "स्वाहिनकृत् शुभदः क्षितिपजसहुग्लग्नादिकधनुगतो १,२,४,७,८,६,१०,११, ऽथ विभावरिभर्त्तुस्त्र्यङ्कदशेशगतो ३,६,१०,११, अथ कुजाद्रविवत्,१,२,४,७,८,६,१०,११, अथ सौम्यसुतान्नित-

रन्ध्रनवादिषु यातः, ३,५,६,९,१०,११,१२, देवगुरोर्विषयर्त्तुनवेशगतो, ५,६,९,११, ऽथ सुरारिगुरोः समयाचलभास्करयातः, ६,७,१२, तीक्ष्णमरीचिसुतादपि भास्करवत्, १,२,४,७,८,९,१०,११, अथ लग्नभवात्त्रिशताङ्कयादिषु यातः, ३,४,६,१०,११,१२ । रविरेखाः । ४८। "चन्द्रः शुभोऽर्कात्त्रिकालाद्रिदन्तावलाशाशिवस्थः, ३,६,७,८,१०, ११, ततः स्वात्कुरामर्त्तुगवाशाशिवस्थः, १,३,६,७,१०,११, क्षमाजाद्विवह्नीषुषड्गोदिगीशेष्व, २,३,५,६,९,१०,११, ध ज्ञात् कुराब्धिवाणागदन्तावलाशाशिवस्थः, १,३,४,५, ७,८,१०,११, जीवात् कुदृग्वेदशैलेभकाशाशिवस्थो,१,२,४, ७,८,१०,११, ऽथ शुक्रात्त्रिवेदेषुशैलस्पशाशाशिवस्थः, ३,४,५,७,९,१०,११, तीक्ष्णांशुदेहोद्भवाद्रामबाणर्त्तुशम्भुस्थित,३,५,६,११, उदयाद्व्यबाहर्त्तुकाशाशिवस्थः', ३,६, १०,११, चन्द्ररेखाः । ४९। 'कुजोऽर्कात्कुभो वह्निबाणर्त्तुदिक्शम्भुगो,३,५,६,१०,११, ऽथेन्दुतोरामकालेशग, ३,६,११, स्वतः स्वात् कुदृग्वेदसुन्यष्टदिक्शम्भुगः,१,२,४, ७,८,१०,११, ज्ञात्त्रियानाथसुलाद्गुणेष्वङ्करुद्रोपयातः । ३,५,६,११, ततोजीवतः कालकाशाशिवार्कोपयातो, ६, १०,११,१२, ऽथ देवारिपूज्यादनेत्रोगजेशार्कसंस्थः,६,८, ११,१२, ततः सूर्यपुत्रात् कुवेदागनागस्पशाशाशिवस्थो, १,४,७,८,९,१०,११, ऽथ लग्नात् कुरामाङ्कदिक् शम्भुयातः । १,३,६,१०,११,कुजरेखाः ३९ । बुधोऽर्कतः शरर्त्तुगोशिवार्कगो,५,६,९,११,१२, ऽथ चन्द्रतोद्विवेदकालनागदिङ्महेश्वरोपगः । २,४,६,८,१०, ११, भूमिजात्कुदृक्कृतागनागगोदशेशग,१,२,४,७,८,९,१०,११,स्वतः स्वतः कुवह्निपञ्चषड्नवादिकेषुगः,१,३,५,६,९,१०, ११,१२, वाक्पतेरसावशम्भुसूर्यगो, ६,८,११,१२, ऽथ शुक्रतः कुनाङ्गवह्निवेदपञ्चनागगोशिवेषुगः १,२,३,४,५,८,९, ११,पङ्गुतःकुदृक्कृतागनागादिपञ्चकस्थितोऽथ, १,२,४,७, ८,९,१०,११,१२,लग्नतः क्षितिद्विवेदकालनागदिक्शिवेषुगः' । १,२,४,६,८,१०,११,बुधरेखाः ।५५। 'सुरराजगुरुः शुभदोऽरवितः कुयमानलवेदनगादिकपञ्चगतो १,२,३,४,७, ८,९,१०,११, ऽथ विधोर्द्विशराचलगोशिवगो, २,५,७,९, ११, वसुधातनयात् कुयमाब्धिनगाष्टदशेशगतो, १, २, ४, ७,८,१०,११, ऽथ बुधात् क्षितियुग्मकृतेषुरसस्परहर्दिग्गिरिशोपग । १,२,४,५,६,९,१०,११,स्वदत्तु स्वतएककयमानलवारिधिपर्वतनागदशेशगतो, १, २, ३, ४, ७, ८, १०, ११, ऽथ सितादृयमपञ्चरसस्परहर्दिक्शिवगो २, ५, ६, ९, १० ११, रविनन्दनतोदहनेषुरसार्कगत, ३, ५, ६, १२, स्वय लग्नभवात् कुयमाब्धिशरर्त्तुनगस्परहर्दिग्गिरिशोपगतः" । १, २, ४, ५, ६, ७९, १०, ११, गुरुरेखाः, ५६, 'भृगुः शुभोरवेर्गजेशसूर्यगो ८,११,१२, ऽथ चन्द्रतः, क्ष्मादिपञ्चकाष्टगोशिवार्कगः, १, २, ३, ४, ५, ८, ९' ११, १२, कुजात्त्रिवेदकालगोशिवार्कगो, ३, ४, ६, ९, ११, १२, ऽथ बुधात्त्रिकालरन्ध्ररुद्रसंस्थितः, ३, ६, ९, ११, गुरोः शराष्टरन्ध्रदिग्महेशग, स्वतः ५, ८९, १०, ११, स्वतः कुपञ्चकाष्टरन्ध्रदिक्शिवोपगः । १, २, ३, ४, ५ ८, ९, १०, ११, शनेर्गुणाब्धिपञ्चनागगोदशेशगो, ३, ४,५, ८९, १०, ११,ऽथ लग्नतः कुपञ्चकाष्टगोशिवस्थितः शुभः । १, २, ३, ४, ५, ८, ९, ११, शुक्ररेखाः, ५२, 'शुभः पङ्गुरर्कात् यमाम्भोधिशैलाष्टदिक्शम्भुग, १, २ ४, ७, ८, १०, ११, इन्दुतोरामकालेशगतः, ३, ६, १२, क्ष्मासुताद्वह्निबाणर्त्तुकाशाशिवार्कोपगो, ३, ५, ६, १०, ११, १२, ऽथ ज्ञतः कालदन्तावलादिस्थितः ६, ८, ९, १०, ११, १२, जीवतोबाणकालेशमार्त्तण्डयात, ५, ६, ११, १२, स्वतोदैत्यपूज्यादनेत्रः शिवार्कोपयातः । ६, ११,१२, स्वतोवीतिहोत्रेषुकालेशयात, ३, ५, ६, ११, स्वतोलग्नतः क्ष्मागुणाम्भोधिषड्दिङ्महेशस्थितः । १, ३, ४, ६ १०, ११, शनिरेखाः, ३९, । 'राहुःशुभोऽर्कात्भुजवह्निवेदसुरन्ध्रगो, २, ३, ४, ६,९, ऽथ चन्द्रात् कुरामवेदाङ्कग १, ३' ४, ९, स्वतः कुलाद्वह्निबाणाङ्करन्ध्रगतो, ३, ५, ६, ९, ऽथ बुधात्क्ष्मापञ्चवह्निबाणरन्ध्रग, १, २, ३, ५, ९, स्वतोजीवाद्व्यबाहुवेदाङ्करन्ध्रग, ३, ४, ६, ९, स्वतः शुक्रात् पञ्चवह्निबाणरन्ध्रगत, २, ३, ५, ९, स्वतः सौरात् पञ्चबाणर्त्तुग, २,५,६,स्वतः स्वतः शशिवेदबाणरिपुरन्ध्रगो, १,४,५,६,९, ऽथ लग्नाद्वेदरन्ध्रदिग्रुद्रसूर्यगतः, ४, ९,१०,११, १२ । राहुरेखाः, ३९ । सूर्यादेकद्विचतुःसप्ताष्टदशैकादशेषु, १, २, ४, ७, ८, १० ११, सोमात्त्रिषड्दशैकादशेषु, ३, ६, १०, ११, भौमात्त्रिपञ्चषडेकादशेषु, ३, ५, ६, ११, बुधात् षड्ष्टनवदशैकादशेषु, ६,८,९,१०,११, गुरोः पञ्चषडेकादशद्वादशेषु, ५,६,११,१२, शुक्रात्षडेकादशद्वादशेषु,६,११,१२,शनेस्त्रिपञ्चाष्टदशैकादशेषु ३,५,८,१०, ११, लग्नादेकत्रिचतुःषड्दशैकादशेषु, १,३,४,६,१०, ११,लग्नरेखाः ३८ । इति निगदितमिष्टं नेष्टमन्यद्विशेषादधिकफलविपाकं जन्मनो तत्र दद्युः । उपचयगृह-

मित्रस्थोऽशुगः पुष्टमिष्टं लग्नचयगृहनीचारातिभे नेष्टमन्यत् । यावती यावती रेखा ग्रहाणामष्टवर्गके । तावतीं द्विगुणी-कृत्य अष्टाभिः परिशोधयेत् । अष्टोपरि भवेद्रेखा अष्टा-भ्यन्तरबिन्दवः । अष्टाभिस्तु समं यत्र तत्समं परिकीर्त्ति-तम् । रेखा ग्रहाच्छुभे देया बिन्दवश्चेतरत्र तु । रेखाबिन्दु समानौ चेत् समफलं निगद्यते । रेखाधिक्ये शुभं ज्ञेयं तद्बिन्दोरपाशुभम् । श्रीरानन्दस्तथा श्रेयोभोगो राज्यं भवेत्तथा । मलिनोऽथ विपच्चैव हानिर्दुःखं भवेत्तथा । द्व्यादिरेखा द्व्यादिबिन्दोः फलान्येतान्यनुक्रमात् । रेखायां वत्सरो ज्ञेयः सार्द्धमासदिनं समे । अष्टवर्गदशायुः स्यात् दिनं चतुर्थं विन्दुषु" । इत्यष्टवर्गः । "अष्टवर्ग-शुभैः श्रीमान् कर्म्म कुर्य्याच्छुभग्रहैः । गोचरस्थैस्तद-प्राप्तौ तदप्राप्तौ च वेधगैः । व्रतारम्भे विवाहे च यात्रायां क्षुरकर्म्मणि । अविशुद्धाष्टवर्गस्य समस्ता निष्फलाः क्रियाः । सततं दिशति नराणां राशौ मध्येऽष्टवर्गफलं निखिलम् । भावफलं प्रथमार्द्धे दृष्टिफलान्यर्द्धभुक्तेषु" ज्यो॰त॰ ।

अष्टानामकचटतपयशानां वर्गः । ज्योतिषादौ शुभाशुभ-ज्ञापनाय विशेषरूपेण अष्टधा विभक्तेषु स्वरसमूहभेदेषु यथा स्वरवर्णाः १६ । अवर्गः, कादयोमावसानाः पञ्चपञ्चा-त्मकाः कवर्गादयः५ । यरलवाः ४यवर्गः । शषसहा४शवर्गः इत्येवमष्टौ कल्पिताः । तेषां विभागक्रमेण संख्याभेदः । "वर्गवर्णप्रमाणञ्च सस्वरैस्ताड़ितं मिथः । पिण्डसंख्या भवे-त्तस्य गणा भागैस्तु कल्पना" केरलम् । "स्वं वर्गं द्विगुणं विधाय परवर्गेणान्वितं सप्तहृत्" इति ज्योति॰ । तन्त्रोक्ते मन्त्रस्य शुभाशुभज्ञानार्थं अवर्गाद्यनुसारेण २ पक्षिमार्ज्जा-राद्यष्टवर्गं च । यथा आगमकल्पद्रुमे "इदानीं वर्ग-चक्रस्य विधानमभिधीयते । मन्त्रग्रामविशोधार्थं नामा-द्यक्षरपूर्व्वकम् । अष्टौ कोष्ठान् समालिख्य वर्गानष्टौ लिखेत्ततः । पक्षिमार्ज्जारपञ्चास्यश्वानः सर्पाखुदन्तिनः । मेषः क्रमादकारादि वसुवर्गाश्रिता इमे । साध्यसाधकयोः प्रीतिर्ज्ञातव्या जातितः सदा" । इहच्छ्रीक्रमे "वर्णशुद्धिं समा-साद्य मन्त्रं दद्याद्गुरूत्तमः । अवर्गः पक्षिणोज्ञेयो मार्ज्जारश्च कवर्गकः । चवर्गश्च तथा सिंहष्टवर्गश्चैव कुक्कुरः । तवर्गो नाग इत्युक्तो मूषिकश्च पवर्गकः । यवर्गश्च गजोज्ञेयः शवर्गश्चैव मेषकः । पक्षिभुजगयोर्व्वैरं तथा च गज-सिंहयोः । मार्ज्जारमूषिकयोश्चैव तथा कुक्कुरमेषयोः । भुजङ्गसिंहयो मैत्री मेषमूषिकयोस्तथा । लोकादन्यच्च विज्ञेयं व्यवहारप्रयोगतः" इति तन्त्रसा॰ । "जीवकर्षभकौ मेदे काकल्याविद्धिरुद्धिके । अष्टवर्गोऽष्टभिर्द्रव्यैरिति" वैद्यकोक्ते ८जीविका द्यष्टद्रव्ये । "राज्ञामष्टवर्गस्तु यतोऽयमतिदुर्लभः । तस्मादस्य प्रतिनिधिं गृह्णीयात्तद्गुणं भिषक् । मेदाजीव-ककाकोलीऋद्धिद्वन्द्वेऽपि चासति । वरीविदार्य्यश्वगन्धा वाराहीश्च क्रमात् क्षिपेत्" वैद्य॰ । नीतिवेदिनां वर्द्धनीये ५वर्गभेदे च । "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरबलादानं सैन्यानाञ्च निवेशनम् । अष्टवर्गमिमं साधु स्वद्वये परिवर्द्धयेत्" नीतिः ।

**अष्टविध** न॰ अष्ट विधाः प्रकारा अस्य । राज्ञाञ्चाष्टप्रकारे कर्म्मणि तच्च अष्टकर्मशब्दे दर्शितम् । "कृत्स्नं चाष्टविधं कर्म्म पञ्चवर्गञ्च तत्त्वतः" मनुः ।

सुश्रुतोक्ते विषयविशेषविषये छेद्यादौ अष्टप्रकारे शस्त्रकर्म्मणि तानि च यथा "छेद्यभेद्यलेख्यवेध्यैष्याहार्य्यस्राव्यसीव्य-रूपाणि । तेषां विषयविशेषा अपि तत्रैव दर्शिता यथा । "छेद्या भगन्दरग्रन्थिः श्लैष्मिकस्तिलकालकः । व्रणवर्त्मार्बुदा-न्यर्शश्चर्म्मकीलोऽस्थि मांसगम् ॥ शल्यं जतुमणिर्मांससंघातो गलशुण्डिका । स्नायुमांससिराकोथो वल्मीकं शतपोनकः ॥ अध्रुषश्चोपदंशाश्च मांसकन्द्यधिमांसकः । भेद्या विद्रधयोऽन्यत्र सर्वजादग्रन्थयस्त्रयः ॥ आदितो ये विसर्पाश्च वृद्धयः सविदारिकाः । प्रमेहपिड़काशोफस्तनरोगावमन्थकाः । कुम्भीकानुशयीनाड्यौ वृन्दौ पुष्करिकालजी । प्रायशः क्षुद्ररोगाश्च पुप्पुटौ तालुदन्तजौ ॥ तुण्डिकेरी गिलायुश्च पूर्व्वं ये च प्रपाकिणः । वस्तिस्तथाश्मरीहेतोर्म्मेदोजा ये च केचन ॥ लेख्याश्चतस्रो रोहिण्यः किलासमुपजिह्वि-का । मेदोजो दन्तवैदर्भौ ग्रन्थिवर्त्माधिजिह्विका ॥ अ-र्शांसि मण्डलं मांसकन्दी मांसोन्नतिस्तथा । वेध्याः सिरा बहुविधा मूत्रवृद्धिर्दकोदरम् ॥ एष्या नाड्यः सशल्याश्च व्रणा उन्मार्गिणश्च ये । आहार्य्याः शर्कराश्चैते दन्त-कर्णमलाश्मरी ॥ शल्यानि मूढगर्भाश्च वर्चश्च निचितं गुदे । स्राव्या विद्रधयः पञ्च भवेयुः सर्वजादृते ॥ कुष्ठानि वायुः सरुजः शोफो यश्चैकदेशजः । पाल्यामयाः श्ली-पदानि विषजुष्टञ्च शोणितम् ॥ अर्व्वुदानि विसर्पाश्च ग्रन्थयश्चादितस्तु ये । त्रयस्त्रयश्चोपदंशाः स्तनरोगा वि-दारिका ॥ शौषिरो गलशालूकम् कण्टकाः कृमिदन्तकः । दन्तवेष्टः सोपकुशः शीतादो दन्तपुप्पुटः ॥ पित्तासृक्कफ-जाश्चौष्ठाः क्षुद्ररोगाश्च भूरिशः । सीव्या मेदःसमुत्थाश्च भिन्नाः सुलिखिता गदाः ॥ सद्योव्रणाश्च ये चैव चलस-न्धिव्यपाश्रयाः । न क्षाराग्निविषैर्जुष्टा न वा मारुता-

च्छिन्नः ॥ नान्तर्लोहितशल्यांश्च तेषु सम्यग्विशोधनम् ॥ पांशुरोमनखादीनि चलमस्थि भवेच्च यत् । अहृतानि यतोऽमूनि पाचयेयुर्भृशं व्रणम् । रुजश्च विविधाः कुर्युस्तस्मादेतान्विशोधयेत् । ततो व्रणं समुन्नम्य स्थापयित्वा यथास्थितम् ॥ सीव्येत् सूक्ष्मेण सूत्रेण वल्केनाश्मन्तकस्य वा । शणजक्षौमसूत्राभ्यां स्नाय्वा बालेन वा पुनः । मूर्व्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥ सीव्येद्गोफणिकां वापि सीव्येद्वा तुन्नसेवनीम् । ऋजुग्रन्थिमथो वापि यथायोगमथापि वा ॥ देशेऽल्पमांसे सन्धौ च सूची वृत्ताङ्गुलद्वयम् । आयता त्र्यङ्गुला त्र्यस्रा मांसले वापि पूजिता ॥ धनुर्वक्रा हिता मर्मफलकोषोदरोपरि । इत्येतास्त्रिविधाः सूचीस्तीक्ष्णाग्राः सुसमाहिताः । कारयेन्मालतीपुष्पवृन्ताग्रपरिमण्डलाः । नातिदूरे निकृष्टे वा सूचीं कर्म्मणि पातयेत् । दूराद्रुजो व्रणौष्ठस्य सन्निकृष्टेऽवलम्बनम् । अथ क्षौमपिचुच्छन्नं सुस्यूतं प्रतिसारयेत् । प्रियङ्ग्वञ्जनयष्ट्याह्वलोध्रचूर्णैः समन्ततः । शल्लकीफलचूर्णैर्वा क्षौमध्यामेन वा पुनः । ततो व्रणं यथायोगं बद्ध्वाचारिकमादिशेत् । एतदष्टविधं कर्म समासेन प्रकीर्त्तितम्" ।

**अष्टश्रवण** पु० अष्टौ श्रवणान्यस्य । चतुर्मुखे ब्रह्मणि चतुर्मुखस्य प्रतिमुखं द्विकर्णत्वाच्च तथात्वम् अष्टश्रवआदयोऽप्यत्र ।

**अष्टाकपाल** त्रि० अष्टासु कपालेषु संस्कृतः अण् तस्य लुक् । "अष्टनः कपाले हविषि" वार्त्ति० आत् । अष्टसु कपालेषु संस्कृते पुरोडाशादौ "आग्नेयोऽष्टाकपालः पुरोडाशो भवति" । "अष्टाकपालाः मध्ये पुरोडाशा भवन्ति" इति च शत०ब्रा० ।

**अष्टाक्षर** त्रि० अष्टावक्षराणि यत्र पादे । १अष्टाक्षरयुक्तपादके अनुष्टुब्जातिके वर्णवृत्तभेदे । "अष्टाक्षरा वै गायत्री" श्रुतिः गायत्र्याः षडक्षरचतुष्पादत्वेऽपि अष्टाक्षरत्रिपादरूपत्वं सर्व्वत्र प्रसिद्धम् । २वक्त्रनामके मात्रावृत्तविशेषे विषमवृत्ते । "पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः । प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् । लोकेऽनुष्टुबिति ख्यातम् तस्याष्टाक्षरता कृता" छन्दोम० ।

**अष्टाङ्ग** पु० अष्टावङ्गानि यस्य । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपे योगशास्त्रोक्ते १योगविशेषे "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानीति पात० सू०" । "यमो नियम आसनञ्च प्राणायामस्ततः परम् । प्रत्याहारो धारणा च ध्यानं सार्द्धं समाधिना । अष्टाङ्गान्याहुरेतानि योगिनां योगसिद्धये इति" पुरा० । एतेषां लक्षणमष्टाङ्गयोगशब्दे वक्ष्यते । "जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया । शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः" इत्युक्तलक्षणे २प्रणामे "आपः क्षीरं कुशाग्रञ्च दधि सर्पिः सतण्डुलम् । यवः सिद्धार्थकश्चैव अष्टाङ्गोऽर्घः प्रकीर्त्तितः" इत्यष्टद्रव्यघटिते ३पूजोपकरणेऽर्घे, "आपः क्षीरं कुशाग्राणि घृतं मधु तथा दधि । रक्तानि करवीराणि तथा वै रक्तचन्दनम् अष्टाङ्ग एष वा अर्घो भानवे परिकीर्त्तितः" काशीख० उक्ते ४अष्टद्रव्यात्मके सूर्य्यार्घे ५शारीफलके च तस्य प्रत्येकपङ्क्तौ अष्टपदरूपाङ्गवत्त्वात्तथात्वम् । "६शल्याद्यष्टाङ्गके आयुर्वेदे यथा "तद्यथा शल्यं शालाक्यं कायचिकित्सा भूतविद्या कौमारभृत्यमगदतन्त्रं रसायनतन्त्रं वाजीकरणतन्त्रमिति । अथास्य प्रत्यङ्गलक्षणसमासः । तत्र १शल्यं नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिबालनखपूयास्रावान्तर्गर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थञ्च ॥ २शालाक्यं नाम ऊर्द्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादिसंश्रितानां व्याधीनामुपशमनार्थम् ॥ ३कायचिकित्सा नाम सर्व्वाङ्गसंश्रितानां व्याधीनां ज्वरातीसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थम् ॥ ४भूतविद्या नाम देवासुरगन्धर्व्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थम् ॥ ५कौमारभृत्यं नाम कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम् ॥ ६अगदतन्त्रं नाम सर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यञ्जनार्थं विविधविषसंयोगविषोपहतोपशमनार्थम् ॥ ७रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च ॥ ८वाजीकरणतन्त्रं नाम अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनप्रसादोपचयजननिमित्तं प्रहर्षजननार्थञ्च ॥ एवमयमायुर्वेदोऽष्टाङ्ग उपदिश्यते" सुश्रुतः ॥ कर्म० संख्यात्वाद् द्विगुः । अष्टसु तत्तदङ्गेषु न० ब०व० ।

**अष्टाङ्गधूप** पु० कर्म० "पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी । सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम्" इति चक्रदत्तोक्ते ज्वरनाशने धूपभेदे ।

**अष्टाङ्गमैथुन** न॰ कर्म्म॰। "स्मरणं कीर्त्तनं केलिः प्रेक्षणम् गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः" इत्युक्ते स्त्रीणां स्मरणादिषु अष्टसु। तदभावो ब्रह्मचर्य्यम्।

**अष्टाङ्गयोग** पु॰ अष्टावङ्गान्यस्य कर्म॰। यमनियमाद्यष्टाङ्गे योगे स च अङ्गसहितोदर्शितः तन्त्रसारे। "ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः। तत्र ह्येते समाख्याता योगविघ्नकरास्तु ये। कामक्रोधलोभमोहमदमात्सर्य्यसंज्ञकाः। योगाङ्गैरेतान्निर्जित्य योगिनो योगमाप्नुयुः। यमनियमावासनं प्राणायामस्ततःपरम्। प्रत्याहारो धारणाख्यं ध्यानं सार्द्धं समाधिना। योगाङ्गान्यष्टावेतानि योगिनो योगसाधने। यमादयस्तु "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यं दयार्ज्जवम्। क्षमा धृतिर्मिताहारः शौचञ्चेति यमा दश। तपःसन्तोष आस्तिक्यं दानं देवस्य पूजनम्। सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम्। दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः। आसनानि आसनशब्दे वक्ष्यन्ते। "इड़याकर्षयेद्वायुं बाह्यं षोड़शमात्रया। धारयेत् पूरितं योगी चतुःषष्ट्या तु मात्रया। सुषुम्णा मध्यगं, सम्यग्द्वात्रिंशन्मात्रया शनैः। नाड्या पिङ्गलया चैव रेचयेद्योगवित्तमः। प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः। भूयोभूयः क्रमात्तस्य व्यत्यासेन समाचरेत्। मात्रावृत्तिक्रमेणैव सम्यग्द्वादश षोड़श। जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः। तदपेतं निगर्भञ्च प्राणायामं परं विदुः। क्रमादभ्यस्यतः पुंसो देहस्वेदोद्गमोऽधमः। मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः। उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते" इन्द्रियाणां विचरतां विषयेषु निरर्गलम्। बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते। अङ्गुष्ठगुल्फजानूरुसीमनी लिङ्गनाभिषु। हृद्ग्रीवाकण्ठदेशे तु लम्बिकायां तथा नसि। भ्रूमध्ये मस्तके मूर्द्ध्नि द्वादशान्ते यथाविधि। धारणं प्राणमरुतो धारणेति निगद्यते। समाहितेन मनसा चैतन्यान्तरवर्त्तिना। आत्मन्यभीष्टदेवानां ध्यानं ध्यानमिहोच्यते। समत्वभावनां नित्यं जीवात्मपरमात्मनोः। समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम्। इत्यादि कथितं देवि कामादिरिपुनाशनम्"। पात॰सू॰ तु अन्यथोक्तम्।

**अष्टाङ्गावलेहिका** स्त्री कर्म्म॰ "कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी। श्लक्ष्णचूर्णीकृतञ्चैतन्मधुना सह लेहयेत्। एषावलेहिका हन्ति सन्निपातं सुदारुणम्। हिक्काश्वासं च कासञ्च कण्ठरोगं नियच्छति। जर्जरश्लेष्महरणे उष्णस्वेदादिकर्म्मणि। विरोधुर्यो मधु त्यक्त्वा कार्य्या स्यादार्द्रजैरसैः"। चक्रदत्तोक्ते ऽवलेहभेदे।

**अष्टादश** त्रि॰ अष्टादशानां पूरणः डट् स्त्रियां ङीप् अष्टादशसंख्यापूरणे। अष्टौ च दश च अष्टाधिका दश वा अष्टादशन्। १ (आठारो) संख्यायाम् २ तत्संख्याते च त्रि॰। "विद्या ह्यष्टादशैव तु" विष्णुपु॰ "अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम्" नैष॰ "अष्टादश पुराणानि कृत्वा सत्यवतीसुतः" भा॰आ॰प॰।

**अष्टादशधान्य** न॰ब॰व॰कर्म॰संज्ञात्वान्न द्विगुः। अष्टादशविधेषु धान्येषु। तानि च यथा। "यवगोधूमधान्यानि तिलाः कङ्गुकुलत्थकाः। माषा मुद्गा मसूराश्च निष्पावाः श्यामसर्षपाः। गवेधुकाश्च नीवारा आढ़क्योऽथ सतीनकाः। चणकाश्चीनकाश्चैव धान्यान्यष्टादशैव तु" हेमा॰ दा॰ख॰स्क॰ पु॰। धान्यानि, व्रीहयः, गवेधुकाः, कसेरुकाः। नीवाराः आरण्यव्रीहयः सतीनकाः, वर्त्तुलकलायाः। चीनकाः षष्टिकविशेषाः। निष्पावाः शिम्बीभेदाः। हेमा॰।

**अष्टादशपरिशिष्टा** स्त्री ब॰व॰ कर्म॰ संज्ञात्वान्न द्विगुः। यूपादिलक्षणादिषु अष्टादशसु परिशिष्टविद्यासु "परिशिष्टाश्च संख्याता अष्टादश शृणुष्व ताः। यूपलक्षणं छागलक्षणं प्रतिज्ञानुवाकसंख्याचरणव्यूहश्राद्धकल्पसूक्तानि परिषदृग्यजुषमिष्टकापूरणं प्रवराध्यायोक्थशास्त्रं क्रतुसंख्यानिगमा यज्ञपार्श्वं होत्रकम्। प्रसवोत्थानं कूर्म्मलक्षणसंयुतम्। कथिताः परिशिष्टास्तु इत्यूनविंशति संख्यया" हेमा॰दा॰ख॰देवीपु॰।

**अष्टादशपुराण** न॰ब॰व॰कर्म्म॰संज्ञात्वात् न द्विगुः। ब्राह्मादिषु अष्टादशसु पुराणेषु "ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा तथान्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम्। आग्नेयमष्टमं प्रोक्तं भविष्यन्नवमन्तथा। दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं तथा। वाराहं द्वादशं प्रोक्तं स्कान्दञ्चात्र त्रयोदशम्। चतुर्दशं वामनञ्च कौर्म्मं पञ्चदशं तथा। मात्स्यञ्च गारुड़ञ्चैव ब्रह्माण्डमष्टादशं तथा" हेमा॰दा॰ख॰वरा॰पु॰।

**अष्टादशभुजा** स्त्री अष्टादश भुजा यस्याः। देवीमाहात्म्यस्य द्वितीयचरितदेवतायां महालक्ष्म्यां तन्मूर्त्तिर्ध्यानशब्दे वक्ष्यते

**अष्टादशविद्या** स्त्री ब॰व॰ कर्म्म॰ संज्ञात्वान्न द्विगुः। वेदादिषु अष्टादशसु विद्यासु। "अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश। आयुर्वेदो धनुर्वेदो गान्धर्व्वश्चेति ते त्रयः।

अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु" हेमा०व्र०ख० विष्णुपुरा० । अङ्गानि अङ्गशब्दे उक्तानि शिक्षादीनि षट् इति अष्टादशसंख्यापूर्त्तिः ।

**अष्टादशविवादपद** न० ब०व०कर्म०संज्ञात्वान्न द्विगुः। ऋणादानादिषु अष्टादशसु विवादस्थानेषु "तानि च मनुनोक्तानि यथा "तेषामाद्यमृणादानं निःक्षेपोऽस्वामिविक्रयः । सम्भूय च समुत्थानं दत्तस्यानपकर्म च । वेतनस्यैव चादानं संविदश्च व्यतिक्रमः । क्रयविक्रयानुशयो विवादः स्वामिपालयोः । सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके । स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च । स्त्रीपुंधर्मौ विभागश्च द्यूतमाह्वय एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह" ।

**अष्टादशस्मृतिकारिन्** पु० ब०व०कर्म०संज्ञात्वान्न द्विगुः। विष्णुप्रभृतिषु अष्टादशसु स्मृतिकारकेषु "विष्णुः पराशरो दक्षः संवर्त्तव्यासहारिताः । शातातपो वशिष्ठश्च यमापस्तम्बगौतमाः । देवलः शङ्खलिखितौ भरद्वाजोशनोऽत्रयः । शौनको याज्ञवल्क्यश्च दशाष्टौ स्मृतिकारिणः । हेमा० दा०ख०हनुमत्तुः ।

**अष्टादशाङ्ग** पुंन० अष्टादश अङ्गानि यत्र । वैद्यकप्रसिद्धे पाचनभेदे तच्च वातादिभेदेन भिन्नभिन्नप्रकारं दर्शितं चक्रदत्तेन । "दशमूली शटी शृङ्गी पौष्करं सदुरालभम् । भार्गी कुटजवीजञ्च पटोलं कटुरोहिणी । अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः । कासहृद्ग्रहपार्श्वार्त्तिश्वासहिक्कावमीहरः १ । भूनिम्बदारुदशमूलमहौषधाब्दतिक्तेन्द्रवीजधनिकेभकणाकषायः । तन्द्रीप्रलापकसनारुचिदाहमोहश्वासादियुक्तमखिलं ज्वरमाशु हन्ति २ ॥ मुस्तपर्पटकोशीरदेवदारुमहौषधम् । त्रिफलाधन्वयासश्च नीलीकम्पिल्लकं त्रिवृत् । किराततिक्तकं पाठाबलाकटुकरोहिणी । मधूकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते । अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत् । पित्तोत्तरे सन्निपाते हितञ्चोक्तं मनीषिभिः । मन्यास्तम्भे उरोघाते उरःपार्श्वशिरोग्रहे" ३ । अन्यविधमप्यन्यत्रोक्तं विस्तरान्न तदुक्तम् ।

**अष्टादशोपचार** पु० ब०व०कर्म०संज्ञात्वान्न द्विगुः । तन्त्रोक्तेषु आसनादिषु अष्टादशसूपचारेषु यथा "आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीतञ्च भूषणानि च सर्वशः । गन्धपुष्पे तथा धूपदीपावन्नञ्च तर्पणम् । माल्यानुलेपनञ्चैव नमस्कारविसर्जने । अष्टादशोपचारैस्तु मन्त्री पूजां समाचरेत्" तन्त्रसारः ।

**अष्टादशोपपुराण** न० ब०व० कर्म० संज्ञात्वान्न द्विगुः । सनत्कुमारादिषु अष्टादशसु उपपुराणेषु "अन्यान्युपपुराणानि मुनिभिः कथितानि तु । आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् । तृतीयं नारदं प्रोक्तं कुमारेण तु भाषितम् । चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् । कापिलं मानवं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च । माहेश्वरं तथा शाम्बं सौरं सर्व्वार्थसञ्चयम् । पराशरोक्तं प्रवरं तथा भागवतद्वयम् । इदमष्टादशं प्रोक्तं पुराणं कौर्म्मसंज्ञितम् । चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः । हेमा०दा०ख०कूर्म्मपु० ।

**अष्टादिशाब्दिक** पु० कर्म० संज्ञात्वान्न द्विगुः । "इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः" इत्युक्तेषु अष्टसु प्रथमशब्दशास्त्रप्रवर्त्तकेषु इन्द्रादिषु ।

**अष्टापद** पुंन० ब०व० अष्टौ अष्टौ पदानि पङ्क्तावस्य इत्ती संख्याशब्दस्य वीप्सार्थत्वाङ्गीकारः आत्वम् अर्द्धर्चादिः । १शारीफलके । अष्टसु धातुषु पदं प्रतिष्ठा यस्य । २स्वर्णे । "आवर्ज्जिताष्टापदकुम्भतोयैः" कुमा० । "अचेष्टाताष्टापदभूमिरेणुः" माघः । उपचारात् स्वर्णमयेऽपि "अष्टापदेन बलवान् राजा वज्रधरोपमः" इति हरिवंशः ३शरभे ४लूतायाञ्च पु० । तयोरष्टपदत्वात् । अष्ट यथा स्यात्तथा पद्यते । ५कृमौ । अष्टसु दिक्षु आपद्यते ६कीलके । अष्टाभिः सिद्धिभिरापद्यते । आ+पद-अप् ३त० । अणिमाद्यष्टसिद्धियुक्ते ७कैलासे पु० ।

**अष्टापाद्य** त्रि० अष्टभिरापद्यते गुण्यते आ+पद—कर्म्मणि यत् । अष्टभिर्गुणनीये "अष्टापाद्यम् शूद्रस्य स्तेये भवति किल्बिषम्" मनुः ।

**अष्टाविंशति** स्त्री अष्टाधिका विंशतिः शा०त० आदन्तादेशः ।(आटाइस)१संख्याभेदे २तत्संख्यान्विते च । विंशच्छब्देन समासे तत्रैव "अष्टाविंशद्दिनम्" भृगुः ज्यो० । पूरणे डट् । अष्टाविंशः । तत्संख्यापूरणे त्रि० स्त्रियां ङीप् । पूरणे तमप् अष्टाविंशतितमः । तत्रैवार्थे त्रि० ।

**अष्टाविंशतितत्त्व** न० अष्टविंशतौ स्थानेषु तत्त्वं तत्त्वज्ञानं यत्र । रघुनन्दनभट्टाचार्य्यकृते मलमासादिषु अष्टाविंशतिस्थानेषु तत्त्वज्ञापके स्मृतिनिबन्धे । तानि च स्थानानि तेन प्रतिज्ञायां दर्शितानि यथा "मलिम्लुचे दायभागे संस्कारे शुद्धिनिर्णये । प्रायश्चित्ते विवाहे च तिथौ जन्माष्टमीव्रते, दुर्गोत्सवे व्यवहृतावेकादश्यादिनिर्णये । तडागभवनोत्सर्गे वृषोत्सर्गव्रते व्रते । प्रतिष्ठायां परीक्षायां ज्योतिषे

वास्तुयज्ञके। दीक्षायामाह्निके कार्य्ये क्षेत्रे श्रीपुरुषोत्तमे। सामश्राद्धे यजुःश्राद्धे शूद्रकृत्यविचारणे। इत्यष्टाविंशतिस्थाने तत्त्वं वक्ष्यामि यत्नतः"। [आदिकोणादयोऽप्यत्र।

**अष्टार** त्रि० अष्टौ अराः इव कोणा यस्य। अष्टकोणे। अष्टा-

**अष्टारचक्रवत्** पु० अष्टारमष्टकोणं चक्रमस्त्यस्य मतुप् मस्य वः। अष्टकोणचक्रधारके जिनभेदे।

**अष्टाल** पु० घोटकदेशभेदे अश्वशब्दे विवृतिः।

**अष्टावक्र** पु० अष्टकृत्वो वक्रः इत्थं संज्ञा सुजर्थपरा पू०दीर्घः। ऋषिभेदे स च उद्दालकशिष्यकहोडपुत्रः। तदुत्पत्तिकथा भा० व० १३२ अ०। "उद्दालकस्य नियतः शिष्य एको नाम्ना कहोड इति विश्रुतोऽभूत्। शुश्रूषुराचार्य्यवशानुवर्त्ती दीर्घं कालं सोऽध्ययनञ्चकार। तं वै विप्रः पर्य्यचरत् स शिष्यस्तांश्च ज्ञात्वा परिचर्य्यां गुरुः सः। तस्मै प्रादात् सद्य एव श्रुतञ्च भार्य्याञ्च वै दुहितरं स्वां सुजाताम्। तस्यां गर्भः समभवदग्निकल्पः सोऽधीयानं पितरञ्चाप्युवाच। सर्व्वां रात्रिमध्ययनं करोषि नेदं पितः सम्यगिवोपवर्त्तते। वेदान् साङ्गान् सर्व्वशास्त्रैरुपेतानधीतवानस्मि तव प्रसादात्। इहैव गर्भे तेन पितर्ब्रवीमि नेदं त्वत्तः सम्यगिवोपवर्त्तते। उपालब्धः शिष्यमध्ये महर्षिः स तं कोपादुदरस्थं शशाप। यस्मात् कुक्षौ वर्त्तमानो ब्रवीषि तस्माद्वक्रो भविताऽस्यष्टकृत्वः। स वै तथा वक्र एवाभ्यजायदष्टावक्रः प्रथितो वै महर्षिः"। सचाष्टावक्रसंहिताकारी

**अष्टावक्रीय** न० अष्टावक्रमधिकृत्य कृतः ग्रन्थः छ। भा० व० प० १३२ अध्यायमारभ्य अध्यायत्रयात्मके ग्रन्थभेदे यत्र वादेन वन्दिनं जित्वाऽष्टावक्रेण वन्दिपराजितं तेनैव जलेनिमज्जितं पितरं कहोड़नामानं मुनिं मोचयामास तेन प्रसन्नेन पित्रा तस्याष्टवक्रतादूरीकरणेन सौभ्याकारता कृतेति वर्णितम्।

**अष्टि** स्त्री अस्यते भूमौ क्षिप्यते अस–क्तिन् पृषो० षत्वम्। (आंटि) इति ख्याते १बीजे, २षोडशाक्षरपादके छन्दोभेदे च। "अत्यष्टी ततः स्मृते" छ० र०। अश–व्याप्तौ–क्तिन्। ३व्याप्तौ। अश–करणे क्तिन्। ४भोगसाधने देहे "शतशारदाय युष्मान् न जरदष्टिर्यथासम्" यजु० २४,५२। जरतो ष्टिः शरीरं यस्य "वेददी०अष्टेः षोडशाक्षरपादत्वेन तत्संख्यान्वयात् ५षोडशसंख्यायां ६तत्संख्येये च। "मर्मादिषु चाष्टदिने विवाहाद्यप्रवेशोऽष्टिदिनान्तराले। इति मुहू० चि० फलाभ्यन्तरस्थास्थितुल्यकठिनांशवाची तु षकारमध्यः अष्ठिशब्दएव ज्यायान् अस्थितुल्यतया तस्या-

स्थित्वम्। तकारयुक्तः पाठस्तु असमीचीनः। रसमयस्य त्वगस्थ्यादेरभावात् फलमेव रसं पिबतेति भाग०टी०श्रीधरः।

**अष्ट्रा** स्त्री अश्यते व्याप्यतेऽनया अश–करणे ष्ट्रन्। १प्रतोदे "शुनमष्ट्राम्नुदिङ्गय" ऋ०४,५७,४। "अष्ट्रांप्रतोदम्" भा० २रथचक्रावयवभेदे च। "अष्ट्रां पूषा शिथिरामुद्वरीवृजत्" ऋ० ६,५८,२। "अष्ट्रामारामिति" भा०।

**अष्ठीला** स्त्री अस्थिवत् तुल्यकठिनाष्ठानं रा–क रस्य लः दीर्घः "आध्मापयन् वस्तिमष्टं रुद्धा वातबलोन्नताम्"। कुर्य्यात्तीव्रार्त्तिमष्ठीलां मूत्रस्य मार्गरोधिनीमिति वैद्यकोक्तलक्षणयुक्ते वातजे १व्याधिभेदे। २मूत्राघातरोगभेदे सुश्रुतः तल्लक्षणादि तत्र यथा "अथातो मूत्राघातप्रतिषेधमध्यायं व्याख्यास्यामः वातकुण्डलिकाष्ठीला वातवस्तिस्तथैव च" द्वादशभेदानभिधाय लक्षितं यथा "शकृन्मार्गस्य वस्तेश्च वायुरन्तरमाश्रितः। अष्ठीलावद्घनं ग्रन्थिं करोत्यचलमुन्नतम्। विण्मूत्रानिलसङ्गश्च तत्राध्मानं च जायते। वेदना जायते चास्ते वाताष्ठीलेति तां विदुः"। ३वर्त्तुलाकारे पाषाणखण्डे च। तदाकारत्वेन वाताष्ठीलाया अपि तथात्वम् "ततोऽजस्रे मांसपेशी लोहाष्ठीलेव संहता" भा०आ० प०११५ अध्या०। मूत्राघाते कोशत्वमपि "भेदनं दीपनं हृद्यमानाहाष्ठीलनुत्" सुश्रुतः।

**अष्ठीवत्** पु० नास्ति अतिशयितमस्थि यस्मिन् मतुप् पृषो० नि०। (आंटु) इति ख्याते जान्वोः सन्धिस्थाने। "अष्ठीवन्तौ परिकुर्वन्तौ च देहे" ऋ०७,५०,२, "ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम्" अथ०१०,१६२,४, अस्य ऊरुपूर्व्वपदत्वे द्वन्द्वे १अदन्तता ऊर्व्वष्ठीवं न०। "चत्वार्य्यूर्व्वष्ठीवानि" शत०ब्रा०। २अष्ठीवद्युक्ते त्रि०।

**अस** दीप्तौ अक०ग्रहणे गतौ च सक०भ्वादि०उभ०सेट्। असति ते आसीत् आसिष्ट। "लावण्य उत्पाद्य इवास यत्नः" कुमा०।

**अस** विद्यमानतायाम् अदा०अक०पर०सेट्। अस्ति स्तः सन्ति असि स्थः स्थ अस्मि स्वः स्मः। स्यात् स्युः। अस्तु स्ताम् सन्तु एधि–असानि। आसीत्। अस्य असार्वधातुके भूदेशः। तेन भूधातुवद्रूपम्। विद्यमानता च कालसंबन्धधारणं तदुक्तं हरिणा "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते। अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मकः" "अस्त्युत्तरस्यां दिशि देवतात्मा" कुमा० यत्त्वावहासार्थम "सतृप्तोऽसि गीता" "प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दनिरताम्" श्यामास्तवः। "स्वाहा संख्यावतोऽर्थस्य समुदायोऽभिधायकः" कविभा० "ख्यातामसिले मित्रे च सहज

प्राक्तनावधि" माघः कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः" मनुः "दिनेदिने त्वं तनुरेधि रेऽधिकम्" नैष० "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्" मनुः । "नत्वेवाहं जातु नासमिति" गीता । सत् सन्तौ सन्तः । "सदेव सोम्येदमग्र आसीत्" छा० उ० "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते" मनुः । "नासतोविद्यतेऽभावोनाभावो विद्यते सतः" गीता स्त्रियां ङीप् "सती सती योगविसृष्टदेहा" कुमा० "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी हरिः वि+अति+व्यतिहारे परस्परमेकरूपेण स्थितौ "अन्यो व्यतिस्ते तु ममापि धर्म्मः" भट्टिः ।

**अस** क्षेपे दिवा० पर० सक० सेट् । अस्यति अस्येत् अस्यतु आस्यत् आस्थत् आस । असिता–अस्ता असिष्यति । अस्यन् अस्यमानः अस्तः । असितुम्–अस्तुम् । असित्वा–अस्त्वा अभ्यस्य, निरस्य "आरे अस्मद्व्यं हेतो अस्यतु" । ऋ० १,११४,४, "दस्यवे हेतिमस्यार्य्यम्" ऋ० १,१०३,३, अति–अतिदूरक्षेपणे "बहुभिश्चैकमत्यस्यन्नेकेन च बहून् जनान्" भा० अत्यस्तः पा०। वि+अति । वैपरीत्येन स्थापने "व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः" मनुः "व्यत्यास्त्वन्वययोगतः" स्मृतिः अधि–आरोपे आरोपश्च अतस्मिन् तद्बुद्धिः अन्योपरिस्थापनञ्च आद्यार्थे "अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति" "आह कोऽयमध्यासोनाम" उच्यते स्मृतिरूपः परत्रपूर्व्वदृष्टावभासः" शा० भा०। अनु–पश्चात् सह वा क्षेपणे अन्वस्तः। "कुशमेखला वल्कलेनान्वस्ता भवति" शत० ब्रा०। अप–दूरीकरणे "गतिरपास्तसंस्था मतिः" मालतीमा० "किमित्यपास्याभरणानि यौवने" कुमा०। अभि–अभ्यावृत्तौ, "अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः" कुमा० "अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते" गीता । "शैशवेऽभ्यस्तविद्यानाम्" रघुः । अव–अवक्षेपे "तामवास्यतो गच्छति च स्रजम्" शत० ब्रा० समन्तात्क्षेपे "तामवास्यत्यागच्छति शुदम्" शत० ब्रा० उद्–ऊर्द्ध्वक्षेपणे "पुच्छमुदस्यति" सि० कौ०। परि+उद् भिन्नतया बोधने । "प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" मीमां० यथा श्राद्धादौ पर्य्युदस्तकालेरात्र्यादिः "अमावास्यायां पितृभ्योदद्यात्" "रात्रौ श्राद्धं न कुर्वीत" तुनयोरेकवाक्यतया रात्रीतरामावस्यायां श्राद्धं कुर्व्वीतेति हि बोधः तत्र रात्रिः पर्य्युदस्ता एवमन्यत्रापि।परितःक्षेपणे च "अन्याः सर्वे पर्य्युदस्ता ऋषिभिरभिवेशने" भा० स० प० । वि+उद्–निवारणे । "वीराणीव व्युदस्तानि रेजुस्तत्र महावने" "रामा० त्वन्तु हेतुनतौवैतान् कामक्रोधौ व्युदस्य च" । भा० स० प० । उप–समीपस्थापने "तस्याधस्तात्सद्वहिरुपास्यति चमसेषु" कात्या० १०,५, नि–अर्पणे "न मद्विधे न्यस्यति भारमग्र्याम्" । निक्षेपरूपेणार्पणे च "न्यासीकृता स्थानभिदा करेण" कुमा० "राज्यं न्यासमिवाभुनक्" रघुः । उच्चारणपूर्व्वकं तत्र तत्र स्थाने अर्पणीतया ध्याने च । "आदावङ्गादिकन्यासः करशुद्धिस्ततः परम् । अङ्गुलिव्यापकन्यासौ हृदादिन्यास एव च" तन्त्रम् । उप+नि+वाचारम्भणे "उपन्यासस्तु वाङ्मुखम्" अमरः । प्रथमप्रयोगे च "भूतमप्युपन्यस्तं पूर्व्वमावेदितं न चेत् । हीयते व्यवहारेण" स्मृतिः "स तु तत्र विशेष दुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः" किरा० सम्+नि त्यागे "क्रीडादग्धं देवमुदीक्ष्य मन्ये संन्यस्तदेहः स्वयमेव कामः" कुमा० विहितकर्म्मणां विधानेन त्यागे च "दशलक्षणकं धर्म्ममनुतिष्ठन् समाहितः । वेदान्तं विधिवच्छ्रुत्वा सन्न्यसेदनृणो द्विजः" मनुः । "न हि संन्यसनादेव सिद्धिं समधिगच्छति" "मयि संन्यस्य कर्म्माणि" गीता । निस्–निर्–निष्ठीवने दूरीकरणे च । निरस्यति "निष्ठीवति ष्ठिवु निरसने" पा० धातुपा० "निरस्तः परास्तः ष्ठ्यूतनिरसने भवदेवः" "निरस्तगाम्भीर्य्यमपास्तधैर्य्यम्" माघः "निरास भङ्गं कुपितेव पद्मिनी" भट्टिः "कणदलिकलनूपुरा निरासे" किरा०। त्वरितोच्चारणे च "निरस्तं त्वरितोदितम्" अमरः ।

परा–निराकरणे "एतेन खण्डनकारमतमपि परास्तम्" चिन्ता०

परि–परावर्त्तनेन स्थापने "मुखेन पर्य्यस्तविलोचनेन" कुमा०। "पर्य्यस्यन्निह निचयः सहस्रसंख्याम्" किरा०। अर्पणे च "ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य" कुमा०। वि–परि–वैपरीत्ये, परिवर्त्तने भ्रान्तिज्ञाने च "इतरथा पात्रे विपर्य्यस्येते" शत० ब्रा०। "संशयविपर्य्यासनिवारणेनेति" चिन्ता० "विपर्य्यासितदर्शनैः" सौप्तिका० ।

प्र–प्रक्षेपे "अप्सु प्रास्य विनष्टानि गृहीतान्यानि मन्त्रवत्" मनुः "अस्तौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते" गीता ।

अनु–प्र–आनुलोम्येन अनुगततया एकरूपेण निवेशने अनुप्रासः

प्रति–प्रतिरूपक्षेपणे । "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत" शत० ब्रा० ।

वि–विशेषरूपेण सम्यगवबोधनाय निवेशने व्यासः विग्रहवाक्यम् तस्य समस्तवाक्यार्थस्य विशेषावबोधहेतुतया निवेशनात्

तथात्वम् विभागे "विव्यास वेदान् यस्मात् स तस्मात् व्यास इति स्मृतः" भा॰आ॰प॰। पारावारेति व्यस्तं समस्तं विपरीतञ्च" सि॰कौ॰। व्यस्तः "व्यस्तरात्रिन्दिवस्य ते" कुमा॰ पृथक्करणे एवैकशः प्रयोगे व्यस्तः "व्यस्तसमस्तमहाव्याहृतिहोमैर्"भवदेव। निवारणे च "व्यस्तदुर्गा शिशिरैः पयोभिः" भट्टिः। विक्षेपे "व्यस्ताकारागणाद्य" भा॰।

वि–नि–अर्पणे "विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली विन्यस्ता" सि॰मु॰ "विभागविन्यस्तमहार्घरत्नम्" भट्टिः।

सम्–संक्षेपे "समासेन निबोधत" पुरा॰समस्ता। संश्लिष्टान्यसने यथा पीतम् अम्बरमिति समुदायस्य पीताम्बर इति संक्षेपेण प्रयोगः समासः। "सर्व्वोऽप्येकदेशोऽह्ना सह समस्यते" वार्त्ति॰। "समस्यमानपदार्थातिरिक्तपदार्थबोधकत्वं बहुव्रीहित्वमिति सारमञ्जरी। "समासः षड्विधो बुधैः" हरिः साकल्ये च समस्तम् "ज्ञानमस्ति समस्तस्य देवीमा॰ "व्यस्तसमस्त महाव्याहृति होमे विनि॰" भवदे॰ संयोजने च समस्य सम्पादयत गुणैरिमाम्" किरा॰।

**असंयत** त्रि॰ न॰त॰। बन्धनशून्ये "असंयतोऽपि मोक्षार्थी" काद॰। असंयतः अबद्धः अकारे विष्णौ भक्तश्च।

**असंयुक्त** त्रि॰ विरोधे न॰त॰। १वियुक्ते। २व्यञ्जनवर्णामिश्रिते व्यञ्जनवर्णे ३द्रव्यान्तरैरसंसृष्टे च।

**असंयुत** त्रि॰ न॰त॰। संयुतभिन्ने "हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम्। औरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्" पा॰ शिक्षा।

**असंयोग** पु॰ अभावे न॰त॰। १संयोगाभावे न॰ब॰। २संयोगशून्ये त्रि॰। संयोगः क्रियाजन्यः द्रव्याश्रयगुणविशेषः हलवर्णयोरव्यवधानञ्च। "असंयोगोपधात्" पा॰।

**असंलग्न** त्रि॰ न॰त॰। १संलग्नभिन्ने विभक्ते २असंबद्धे च।

**असंवृत** त्रि॰ न संवृतः। १अनावृते "नासंवृतमुखः कुर्य्यात् क्षुतं जिह्मां तथैव च" स्मृतिः "संवृतं संवरणम् न॰ब॰। अत्यन्तावरके २नरकभेदे न॰ "योऽहस्य धर्म्ममाचष्टे यश्चोपदिशति व्रतम्। सोऽसंवृतं नाम तमः सह तेनैव गच्छति" मनुः।

**असंशय** पु॰ अभावे न॰त॰। १सन्देहाभावे न॰ब॰। २सन्देहशून्ये "असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः" शकु॰सन्देहश्च एकस्मिन् धर्म्मिणि विरुद्धकोटिद्वयज्ञानम् यथा पर्व्वतो वह्निमान्नवा इत्यत्र तदभावरूपविरुद्धकोटिद्वयमेकस्मिन् पर्व्वते धर्म्मिणि ज्ञायते "स्थाणुः पुरुषो वेत्यत्र स्थाणुत्वस्य पुरुषत्वव्याप्यतावच्छेदकतया गृहीतधर्म्मवत्त्वेन विरुद्धत्वाज्ज्ञातत्वमिति भेदः ३निश्चये च।

**असंश्रव** त्रि॰ नास्ति संश्रवः सम्यक् श्रवणं यत्र। सम्यक्श्रवणायोग्ये दूरदेशादौ। "असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्त्तयेत्" मनुः।

**असंश्लिष्ट** त्रि॰ न॰त॰। संश्लेषशून्ये १विभक्ते २असङ्गते च।

**असंसर्ग** पु॰ अभावे न॰त॰। १संसर्गाभावे। न॰त॰। २संसर्गशून्ये निःसम्बन्धे।

**असंसर्गाग्रह** पु॰ असंसर्गस्य परस्परसम्बन्धाभावस्याग्रहः। मीमांसकोक्तस्य इदमिति रजतमित्यादि ज्ञानद्वयस्यापि प्रवृत्तिजनकताप्रयोजके परस्परसम्बन्धाभावस्याबोधे। विस्तरः असत्ख्यातिशब्दे अख्यातिपक्षनिरूपणे ५२२पृष्ठे दृश्यः।

**असंसृष्ट** त्रि॰ न॰ त॰। १संसर्गरहिते। संसर्गश्च द्रव्ययोः सम्बन्धः धनिनोरेकत्र द्रव्ये विभागानन्तरं समुदायस्वामित्वसम्पादनञ्च "विभक्तोयः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते" बृह॰ उक्तेः। संसृष्टं द्रव्यमस्यास्ति अर्श॰अच् संसृष्टः। इनि संसृष्टी च विभागानन्तरमेकत्र द्रव्ये ऽन्येन सह सम्बन्धवान् तद्भिन्नः असंसृष्टः असंसृष्टी च "अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यधनं हरेत् असंसृष्ट्यपि चादद्यात् संसृष्टोनान्यमातृजः" या॰स्मृ॰। "तस्माद्विभक्तासंसृष्टिन्यपुत्रे स्वर्याते पत्नी धनं प्रथमं लभेतेति" मिता॰।

**असंस्कृत** त्रि॰ सम्+कृ-क्त सुट् न॰त॰। १गुणान्तराधानमनीते २अपरिष्कृते ३गर्भाधानादिसंस्काररहिते, च। "असंस्कृतः सुतो ज्येष्ठोनापरो वेदपारगः" स्मृतिः "असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः" या॰स्मृ॰। व्याकरणसंस्कारशून्ये ४अपशब्दे पु॰ "संस्कारो हि सतो गुणान्तराधानम् स च लौकिकालौकिकहेतुकः। तत्र यथा गर्भाधानादिना अलौकिकेन हेतुना देहः संस्क्रियते तत्संस्काराच्च तदभिमानी देही। एवं स्नानाचमनादिनाऽपि। लौकिकेन तु पाकादिना द्रव्यान्तरयोगेन वा अन्नादौ गुणान्तरमाधीयते अतएव संस्कृतं भक्ष्याः इति पा॰ सूत्रे भक्ष्यस्य दध्याद्युपसेकेन संस्कार उक्तः। शरावे संस्कृतः शारावः सक्तुः दध्नि संस्कृतः दाधिकः सूपः" सि॰कौ॰।

**असंस्तुत** त्रि॰ न॰त॰। १अपरिचिते। "प्रैयानयसंस्तुत इव परित्यक्तः" काद॰। २सम्यगस्तुते च।

**असंस्थित** त्रि॰ न॰त॰। १असमेते परलोकं प्रति अप्रस्थिते "असंस्थितान् प्राणान् संस्थापयेत्" शत॰ब्रा॰ २असुस्थिते

व्यवस्थितभिन्ने ३चले च। "गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः" इति शकु०।

**असंहत** त्रि० न संहन्यते इतरेण संहन्यते सम्+हन–क्त न०त०। १संघातमनापन्ने २असंलग्ने "मध्यतश्छिद्रतं पश्चाद्धतं वा बहुतमयुग्ममसंहतं प्रागग्रं मूलमाच्छादयन्" गोभि०"असंहतमसंलग्नम्" सं०त० रघु०। सांख्यमतसिद्धे ३पुरुषे पु०। तन्मते हि प्रकृत्यादेः शय्यासनादिवत् संहत्यैव (इतरसापेक्षतयैव) पुरुषार्थकारित्वम् पुरुषस्य तु प्रकाशरूपक्रियायां नेतरापेक्षाऽस्तीति तस्यासंहतत्वम्। संहतपरार्थत्वात् पुरुषस्य" सां०भा०"विवादास्पदं प्रकृतिमहदादिकं परार्थं स्वेतरस्य भोगापवर्गफलकं संहतत्वात् शय्यासनादिवदित्यनुमानेन प्रकृतेः परोऽसंहत एव पुरुषः सिद्ध्यति तस्यापि संहतत्वेऽनवस्थापत्तेः। पातञ्जले च "परार्थं संहत्य कारित्वादिति" सूत्रकारेणानुमानं कृतं तत् तु यथाश्रुतमेवान्वयव्यतिरेकसाधारणम्। इतरसाहित्येनार्थक्रियाकारित्वमेव संहत्यकारितशब्दार्थत्वात्। पुरुषस्तु विषयप्रकाशनरूपायां स्वार्थक्रियायां नान्यदपेक्षते नित्यप्रकाशरूपत्वात्। पुरुषस्यार्थसम्बन्धमात्रे बुद्धिवृत्त्यपेक्षणात्। सम्बन्धस्तु नासाधारणार्थक्रियेति।"संहतपरार्थत्वात्" सां०सू०भा० "अतोऽसंहतः संहतदेहादिभ्यःपरः पुरुषः सिध्यति"।

**असकृत्** अव्य० न सकृत् न०त०। पौनःपुन्ये। "असकृदेकरथेन तरस्विना" रघुः "अन्याद्योनासकृद्यतान् गुणैश्च परिनोदयेत्" "असकृद्गर्भवासेषु वासं जन्म च दारुणम्" इति च मनुः। "आवृत्तिरसकृदुपदेशात्" शा०सू०।

**असक्त** त्रि० सन्ज–क्त न०त०। १आसक्तिशून्ये २फलाभिलाषशून्ये च "असक्तः सुखमन्वभूदि"ति रघुः। "कुर्य्यात् विद्वांस्तथाऽसक्तः" इति गीता "असक्तमाराधयतो यथा यथम्" किरा०। [सक्थिशून्ये

**असक्थ** (क्थि) त्रि० नास्ति सक्थि यस्य वा टच् समा०।

**असक्रा** स्त्री सम्+क्रम–डिट् पृ० सकोऽन्त्यलोपः न०त०। संक्रान्त्यां स्त्रियाम्। "न इथं पिन्वतमसक्राम्" ऋ०६,६१,८, असक्रामसक्रमणीम्" निरु०।

**असखि** पु० न सखा न टच् समा०। सखिभिन्ने रिपौ।

**असगोत्र** त्रि० न समानं गोत्रमस्य वा समानस्य सः। भिन्नगोत्रे "असगोत्रः सगोत्रोवा यदि स्त्री यदि वा पुमान्। यथाग्निदाता प्रेतस्य पिण्डं दद्यात् स एव हि" स्मृतिः पक्षे न सादेशः। असमानगोत्रः "असमानगोत्रार्षेयीम् भार्य्यां विन्देत" स्मृतिः।

**असङ्कल्प** पु० विरोधे न० संकल्पाभावे। न०ब०। संकल्पशून्ये त्रि०।

**असङ्कसुक** त्रि० न०त०। स्थिरमतौ।

**असङ्कुल** त्रि० न सङ्कुलः। १परस्पराविरुद्धे। २राजादिपथे ३विस्तीर्णे पथि च पु०।

**असङ्क्रान्तमास** पु० न संक्रान्तः न राश्यन्तरं प्राप्तोरविर्यत्र चान्द्रमासे। शुक्लप्रतिपदादिदर्शान्ते रविसङ्क्रमणशून्ये मलमासे। "असङ्क्रान्तमासोऽधिमासोनिरुक्तः" विवरणमधिमासशब्दे १३१ पृ०।

**असङ्क्षेप** पु०अभावे न०त०। १संक्षेपाभावे विरोधे न०त०। २विस्तारे न०ब०। ३संक्षेपशून्ये विस्तीर्णे त्रि०।

**असङ्ख्य** त्रि० नास्ति संख्या इयत्ता यस्य। इयत्ताशून्ये। "प्रसह्य तेजोभिरसंख्यतां गतैः" माघः। [संख्यान्विते च

**असङ्ख्यात** त्रि०सम्–ख्या–क्त न०त०। १इयत्ताशून्ये २बहु-

**असङ्ख्येय** त्रि० संख्यातुमशक्यः १इयत्तारहिते २विष्णौ पु० "असंख्येयोऽप्रमेयात्मा" विष्णुस० संख्यार्हभेदादि न विद्यते इत्यसंख्येयः भा०।

**असङ्ग** पु० अभावे न०त०। १सम्बन्धाभावे नास्ति सङ्गोविषयैर्यस्य ३पुरुषे जीवे तस्य सर्वसम्बन्धशून्यत्वात् तथात्वम्। "असङ्गोऽयं पुरुषः" सां०सू०। २सम्बन्धशून्ये ४प्रतिबन्धशून्ये च त्रि०। "असङ्गमद्रिष्वपि सारवत्तया" रघुः। [३असंबद्धे ४सङ्गतिशून्ये च।

**असङ्गत** त्रि० न०त०। सङ्गतभिन्ने १अयुक्ते २युक्तिशून्ये

**असङ्गति** स्त्री अभावे न०त०।१सङ्गत्यभावे। सङ्गतिश्च "सङ्गतिरनन्तराभिधानव्याप्ता, आनन्तर्य्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयोऽर्थः सङ्गतिः,जायते च कार्य्ये कारणे वा ज्ञाते कारणत्वस्य कार्य्यत्वस्य ज्ञानात् किमस्य कारणं कार्य्यं वेति जिज्ञासा"दीधित्युक्ता सा च षोढा तदुक्तमभियुक्तैः "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वम् षोढा सङ्गतिरिष्यते" इति व्याख्यातञ्च तत् जगदीशेन। "निर्द्दिष्टोपपादकत्वमुपोद्घातत्वम् "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इति प्राचीनोक्तौ चिन्तापदं तदभिहितोभाव इति न्यायेन चिन्तनीयपरं तथा च तस्याश्यपि प्रकृतसिद्ध्युपपादकतया चिन्तनीयत्वं प्रकृतसिद्ध्युपपादकत्वपर्य्यवसन्नमित्यर्थः। हेतुत्वं कारणत्वम्। अवसरोऽनन्तरवक्तव्यत्वम् अनन्तरोद्दिष्टत्वम् तथा इति श्रीभास्करकृत्। निर्वाहकं कारणतानिर्वाहकं कार्य्यत्वमिति यावत् एकं कार्य्यं ययोरिति व्युत्पत्त्या एककार्य्य-

कारित्वम् प्रसङ्गत्वन्तु सङ्गतित्वे सत्युपोद्घातादिभिन्नत्वम् "स्मृतस्य उपेक्षानर्हत्वं प्रसङ्ग" इति प्राचादेरपि स्मृतत्वमनन्तराभिधानप्रयोजकस्मृतिविषयत्वम् उपेक्षानर्हत्वञ्च प्रसङ्गलक्षणोपेक्षा एव उपोद्घातादयस्तदन्यत्वं तेन ततोऽपि प्रागुक्तस्यैवार्थस्य लाभः" इति न्यायमतम् । वेदान्तिमते तु सङ्गतिस्त्रिविधा "शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा। शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरुह्यताम्" । शास्त्रप्रतिपाद्यमध्यायप्रतिपाद्यं पादप्रतिपाद्यमर्थमवगम्य शास्त्रसङ्गतिरध्यायसङ्गतिः पादसङ्गतिश्च तिस्रः सङ्गतय ऊहितुं शक्यन्ते इति तदर्थः । तत्र "शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः । समन्वयाविरोधौ द्वौ साधनं च फलं तथा" ब्रह्मविचाराख्यशास्त्रस्य प्रथमेनाध्यायेन समन्वयः, (सर्व्वेषां वेदान्तानां ब्रह्मणि तात्पर्य्यावधारणम्) प्रतिपाद्यते । द्वितीयेन अविरोधः । तृतीयेन साधनम् चतुर्थेन फलम् । इत्येवमध्यायार्थाः एवमेषां प्रतिपाद्यमुक्त्वा षोड़शपादप्रतिपाद्यान्यभिधाय । "ऊहित्वा सङ्गतीस्तिस्रो वाक्यान्तरसङ्गतीः तत्र आक्षेपदृष्टान्तप्रत्युदाहरणादिकाः । पूर्व्वपक्षस्य सिद्धान्तयुक्तिं वीक्ष्य परे नये । पूर्व्वपक्षोक्तयुक्तिं च तत्राक्षेपादि योजयेत्" इति वेदा०न्या०मा० न्यायान्तरसङ्गतिस्त्वनेकधा । आक्षेपसङ्गतिर्दृष्टान्तसङ्गतिः प्रासङ्गिकसङ्गतिरित्येवमादि । उदाहृतञ्च तत्रैव तद्यथा प्रथमाधिकरणे ब्रह्मविचारशास्त्रमारम्भणीयमिति सिद्धान्तः । तत्र युक्तिः ब्रह्मणः संदिग्धत्वमिति । द्वितीयाधिकरणस्य जगज्जन्मादि ब्रह्मलक्षणं न भवतीति पूर्व्वपक्षः तत्र युक्तिः जन्मादेर्जगन्निष्ठत्वादि । तदुभयमवलोक्य तयोराक्षेपसंगतिं योजयेत् । संदिग्धत्वाद्ब्रह्म विचार्य्यमित्युक्तं जन्मादेरन्यनिष्ठत्वेन ब्रह्मणोलक्षणत्वाभावे सति ब्रह्मैव नास्ति कुतस्तस्य संदिग्धत्वं विचार्य्यत्वं वेत्याक्षेपसंगतिः । दृष्टान्तप्रत्युदाहरणसङ्गती अपि योजयितुं शक्येते । यथा संदिग्धत्वहेतुना ब्रह्मणो विचार्य्यत्वं तथा जन्माद्यन्यनिष्ठत्वहेतुना ब्रह्मणो लक्षणं नास्तीति दृष्टान्तसंगतिः । यथा विचार्य्यत्वे हेतुरस्ति न तथा लक्षणसद्भावहेतुं पश्याम इति प्रत्युदाहरणसंगतिः । एते दृष्टान्तप्रत्युदाहरणसंगती सर्व्वत्र सुलभे पूर्व्वाधिकरणसिद्धान्तस्योत्तराधिकरणपूर्व्वपक्षे हेतुमत्त्वसाम्यस्योत्तराधिकरणसिद्धान्ते हेतुन्यत्ववैलक्षण्यस्य च मन्दैरप्युत्प्रेक्षितुं शक्यत्वात् । आक्षेपसंगतिर्यथायोगमुन्नेया। प्रासङ्गिकसंगतिरुदीयते । देवताधिकरणस्याधिकारविचाररूपत्वात् समन्वयाध्याये ज्ञेयब्रह्मवाक्यविषये तृतीयपादे च संगत्यभावेऽपि बुद्धिस्थावान्तरसंगतिरस्ति । तथाहि पूर्व्वाधिकरणेऽङ्गुष्ठमात्रवाक्यस्य ब्रह्मपरत्वादङ्गुष्ठमात्रत्वं ब्रह्मणो मनुष्यमात्रहृदयापेक्षं मनुष्याधिकारत्वाच्छास्त्रस्येति उक्तम् तत्प्रसङ्गेन देवताधिकरणं बुद्धिस्थम् सेयं प्रासङ्गिकी संगतिः । तदेवं न्यायसंगतिर्व्युत्पादिता" । एवं मीमांसासङ्गतिरपि अधिकरणमालायां दृष्ट्वा विस्तरभयान्नोक्ता ईदृशसङ्गत्यभावोऽसङ्गतिः । २असम्बन्धमात्रे ३अर्थालङ्कारभेदे च अलङ्कारशब्दे ३९४ पृष्ठे दृश्यः । [४तद्वत्युन्ये त्रि० ।

**असङ्गम** पु० अभावे न०त०। १सङ्गाभावे मेलनाभावे न०त०

**असङ्गिन्** त्रि०सन्ज-घिनुण् न०त० । सम्बन्धशून्ये "संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्" वे० परि० ।

**असच्छास्त्र** न०असत् असद्विषयकत्वेनानिष्टप्रयोजकम् शास्त्रम्। बौद्धागमे । तस्यासदर्थप्रतिपादकत्वात् वैदिकधर्म्मविरुद्धार्थकत्वाच्च तथात्वम् । "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमित्यादिना तेषामीश्वरानङ्गीकारेण वासत्त्वं ज्ञेयम्"।

**असज्जन** पु० विरोधे न०त० । सज्जनभिन्ने दुर्जने "न मामसज्जनेनार्य्या समानयितुमर्हसि" रामा० ।

**असञ्ज्ञा** स्त्री अभावे न०त०। १संज्ञाभावे न०ब० । संज्ञाशून्ये त्रि० । संज्ञा च ज्ञानं नाम ईङ्गितादिज्ञापनञ्च तेषामभावः । "तेभ्योऽसञ्ज्ञां चकार" शत०ब्रा० ।

**असत्** त्रि० अस+शतृ न०त०। १सद्भिन्ने, निरुपाख्ये निःस्वरूपे निषेधरूपेण प्रतीयमाने, २अभावत्वाश्रये, "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ"ति गीतोक्ते अश्रद्धया कृते ३होमादौ च । ४इन्द्रे पु० । ५दुराचारिणि असाधौ त्रि० "न च सत् नासदुच्यते" गीता। स्त्रियां ङीप् सा च ६कुलटायाम् । "परितस्तार रवेरसत्यवस्तम्" माघः नामरूपाभ्यामव्याकृते कारणात्मनास्थिते सूक्ष्मरूपे ७अव्यक्ते, च "असदेवाग्र आसीत्" कथमसतः सज्जायेत" च इति छा०उप० बौद्धागमसिद्धं सत्त्वमर्थक्रियाकारित्वम् तच्छून्ये ७अकिञ्चित्करे अभावादौ ८अविद्यमाने "नासतो विद्यते भावः" इति वचनात् सदसतोः परमिति च" गीता "विभेदजनकाज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणोऽभेदमसन्तं कः करिष्यति" कं०शा० ।

**असत्कर्म्मन्** न० कर्म्म० । १वेदादिशास्त्रनिषिद्धे दुष्टकर्म्मणि न सत् कर्म्म यस्य । २साध्वाचारशून्ये त्रि०स्त्रियां डाप्

**असत्कृत** त्रि० न०त०। १अपूजिते २असम्मानिते "असत्कृतमवज्ञातम् तत्तामसमुदाहृतम्" गीता। "अवज्ञावहासार्थमसत्कृतोऽसि" गीता।

**असत्ख्याति** स्त्री असतः सत्त्वशून्यस्यानिर्वचनीयस्य ख्यातिर्ज्ञानम्। अनिर्वचनीयस्य रजतप्रपञ्चादेर्ज्ञाने। यथा शुक्तिकायां रजतमनिर्वचनीयमुत्पद्यमानमिव प्रतीयते एवं ब्रह्मणि जगत् अनिर्वचनीयतयोत्पन्नमिव ख्यायते इति हि वेदान्तिनां मतम्। अस्ति हि सर्वलोकेषु प्रसिद्धम् इदं रजतमित्यादिज्ञानं तस्य प्रवर्त्तकतया सर्वैरभ्युपगम्यते। तत्र चतस्रोविधाः अख्यातिः अन्यथाख्यातिः आत्मख्यातिः असत्ख्यातिश्चेति विवरणे स्थितम्। तत्राख्यातिवादिनामयमाशयः। इदं रजतमित्यादौ चक्षुराद्यसन्निकर्षात् पारिशेष्यात् रजतं स्मर्य्यते न तु ज्ञायते इति तस्य स्मरणस्याख्यातित्वमिति। तदेतन्न सम्यक् रजतस्य प्रत्यक्षत्वेनानुभूयमानत्वात् स्मर्य्यमाणस्याप्रवर्त्तकत्वाच्च नचेदमंशस्यैव प्रत्यक्षत्वं न रजतस्येति वाच्यम् यथा सत्यरजतस्थलेषु इदं रजतम् अयं घट इत्यादिषु इतरेतरसंसृष्टौ सामान्यविशेषौ अपरोक्षतयाऽनुभूयेते अत्रापि तथानुभवात्। अथ सामान्यविशेषयोर्निरन्तर्य्येण प्रतिभासात् तथा व्यवहारो न तु संसर्गज्ञानरूपविशिष्टज्ञानसम्भवादिति वाच्यम् सत्यस्थलादौषन्यूनताया अदर्शनात्। अथ पुरोवर्त्तिनि रजतसंसर्गाभाव एव न्यूनतेति चेन्न पुरोवर्त्तिनि रजतसत्त्वासत्त्वयोरेवावयोर्विवादात् तदभावस्य न्यूनता साधकत्वात्। किञ्च पुरोवर्त्तिनि रजतसंसर्गाभावः कथं निश्चीयते किं तद्गोचरज्ञानाभावात्? किं वा नेदं रजतमिति बाधज्ञानात्? नाद्यः तद्गोचरज्ञानाज्ञानयोरेवावयोर्विवादात् अर्थाभावेन ज्ञानाभावनिश्चयेऽन्योन्याश्रयात्। तस्मादपरोक्षज्ञानोदयादेव पुरोवर्त्तिनि रजतसत्ताङ्गीकार्य्या। न च अर्थसत्तानिश्चयाधीनः ज्ञानसत्तानिश्चय इति कल्पनात् प्रकृते चार्थासत्त्वात् न ज्ञानसत्त्वमिति वाच्यम् अर्थसत्तानिश्चयस्यापि निश्चयान्तराधीनतयाऽनवस्थाप्रसङ्गात्। तस्मात् संविन्निश्चयः स्वप्रकाशसाक्षीप्रत्यक्षतया स्वतएव। तदधीनस्तु अर्थसत्तानिश्चयः। नापि द्वितीयः रजतमिति उत्तरज्ञानविरोधिज्ञानसत्त्वे नेदं रजतमिति ज्ञानानुदयेन तेन बाधायोगात्। किञ्च इदं रजतमित्यत्र यथा इदमाकाररजताकारयोरविवेकस्त्वया कल्प्यते तथा नेदं रजतमित्यत्रापि तयोरविवेक एव कल्प्यतां न तु विशिष्टसंसर्गसंविदित्यपि अस्माभिर्वक्तुं शक्यते। अथ विशिष्टज्ञानस्यैव संवादिप्रवृत्तिजनकत्वमिव विशिष्टनिषेधबोधस्यैव निवर्त्तकत्वमिति निषेधस्य विशिष्टसंसर्गविषयकत्वमिति चेन्न प्रवृत्तिनिवृत्तिमात्रं प्रत्येव संसर्गतदभावग्रहस्य हेतुतयैवोपपत्तौ संवादिविसंवादित्वयोः तत्र प्रवेशे गौरवात् किञ्च प्रवृत्तेः संवादित्वमपि वस्तुसत्त्वासत्त्वनिबन्धनम्। तच्च सत्यासत्ययोरुभयत्राप्यस्ति। न च पुरोवर्त्तिनि रजताभावः सर्वसम्मतः। शुक्तिकायां यथावभासमेवासत्यरजतस्य शुक्तिज्ञानेन निरसनयोग्यस्यैवास्माभिः स्वीकारात्। इयांस्तु भेदः तत्र मिथ्यारजताभ्युपगमेऽपि नेदं रजतमिति त्रैकालिकरजतनिषेधः पारमार्थिकरजतविषयत्वान्न विरुध्यते। नचाप्रसक्तनिषेधानुपपत्तिः। मिथ्याभूतेऽपि रजते परमार्थरजतार्थिनां प्रवृत्तिदर्शनेन परमार्थरजतस्य सामान्योपाधिना रजतत्वेन प्रसिद्धिसम्भवात् अन्यथा भूतलादौ घटादिनिषेधोऽपि अप्रसक्तनिषेधः स्यात् तत्र घटादिसत्त्वे तदभावोव्याहन्येत। तदसत्त्वे तु अप्रसक्तनिषेधः स्यात्। ततश्च देशसामान्योपाधिना कालसामान्योपाधिना वा यथा घटादिप्रसक्तिर्न्तु तत्कालिकभूतलत्वादिना तथा परमार्थरजतस्य प्रसक्तिर्भविष्यति। एवञ्च उत्तरकाले नास्त्यत्र रजतमिति प्रत्यक्षं सत्यरजतविषयम् मिथ्यैव रजतमभादिति प्रत्ययश्च मिथ्यारजतविषय इत्युभयमप्युपपद्यते। एतेन रजतापरोक्ष्यं विशिष्टसंसर्गज्ञानं विनाप्यपरोक्षशुक्तिज्ञानाविवेकादुपपद्यते इत्यपि परास्तम्। विवेकज्ञानकालेऽप्येतावन्तं कालं रजतमनेनाविविक्तमित्येव विवेकस्यैव परामर्शप्रसङ्गात् एतावन्तं कालमिदं रजतमित्यभादिति प्रत्यभिज्ञाया अनुपपत्तेश्च। अतश्च पुरोवर्त्तिनि असद्रजतमुत्पद्यते इत्यङ्गीकार्य्यम्। अन्यथा शुक्तिज्ञानात् रजते प्रवृत्तौ अतिप्रसङ्गः स्यात् समानविषयकज्ञानस्यैव प्रवर्त्तकत्वात् ततश्च न स्मर्य्यमाणमिदं रजतं किन्तु स्मर्य्यमाणसदृशमेव तदङ्गीक्रियते। तत्सादृश्यञ्च पूर्व्वानुभवमात्रज्ञानगम्यत्वेन। नह्यननुभूतरजतस्य पुरुषस्य रजतभ्रमोभवति। ज्ञानरूपाध्यासस्य तु संस्कारजन्यत्वेन स्मृतिसादृश्यमिति भेदः।

अथ ज्ञानस्य प्रमाणस्मृतिर्द्विविध्यनियमेन अध्यासस्य बाधितविषयकत्वात् परिशेषात् संस्कारमात्रजन्यज्ञानत्वाच्च स्मृतित्वमेवास्तु। न च स्मृतित्वे अतिसादृश्याच्छुक्त्यन्तरमेव कुतो न स्मर्य्यते इति वाच्यं काचगतरागादिदोषाणामपि तन्निमित्तत्वात् पुरुषान्तरे तदभावात् एवं तैरेव दोषैः स्मरणाभिमानस्य प्रमुषितत्वाच्च रजतस्मरणेऽपि तत्तांश उल्लि-

ष्यते तथा चरमीत्यनुव्यवसायः तथा तैरेव विशेषावभासस्य प्रतिरोधाच्च शुक्तिग्रहणेऽपि तदीयनीलपृष्ठत्वादिविशेषाग्रहः। तथा च इदमंशे ग्रहणं रजतांशे स्मरणमुभयात्मकमपि ज्ञानमविविक्ततया प्रवर्त्तकमिति तादृशग्रहणस्मरणाभ्यां रजतार्थी पुरोवर्त्तिनि प्रवर्त्तते इति चेन्न ग्रहणस्मरणे किं द्वे अपि प्रवर्त्तके आहोस्विदेकैकम् आद्येऽपि किं संभूय प्रवर्त्तके! क्रमेण, वा नाद्यः स्मृतिग्रहणयोः युगपदुदयासम्भवात्। क्रमविशिष्टयोर्द्वयोः प्रवर्त्तकत्वमपि न युक्तम् पूर्व्वज्ञानस्य उत्तरज्ञानेन व्यवधानात् प्रवृत्तिहेतुत्वानुपपत्तेः इदमिति रजतमिति च विरुद्धत्वयोरपि ज्ञानयोः प्रवर्त्तकत्वापत्तेश्च। नाप्येकैकस्य प्रवर्त्तकत्वं व्यवहारस्य विशिष्टविषयकतया विशिष्टप्रवृत्तये विशिष्टसंसर्गग्रहस्यैव हेतुतायाः स्वीकार्य्यत्वादिति।

अत्र ग्रहणस्मरणैरन्यथ्यैवोत्पत्त्या प्रवर्त्तकत्वसम्भवेनासत्ख्यातिर्नाङ्गीकार्य्या अपि तु विशिष्टसंसर्गस्याख्यातिरेवेति अख्यातिवादिनामेकदेशिनः आहुः।

तदपि वेदान्तिभिः निराकृतं यथा केयमख्यातिर्नाम किं ख्यात्यभावः? उत अन्यार्थिनोऽन्यत्र प्रवृत्तिहेतुभूतविज्ञानम्? अथाविविक्तानेकपदार्थज्ञानम्?। आद्ये सुषुप्तावेव सर्व्वज्ञानाभावसत्त्वेन तत्रैव भ्रमःस्यात् नान्यत्र जाग्रत्स्वप्नयोः। द्वितीये झटिति बाधादालस्यादिना वा यत्र प्रवृत्तिर्न जाता तत्र भ्रान्तित्वं न स्यात्। तृतीयेऽप्यविविक्तत्वप्रतियोगिविविक्तत्वं नाम किम् भेदग्रहः? उत अभेदाग्रहः? आहोस्विदितरेतराभावभेदद्वित्वादिसंख्याविशिष्टज्ञानम्? नाद्यः इदमिति रजतमिति च पुनरुक्तशब्दद्वयहेतुत्वेन सामान्यविशेषयोर्भेदग्रहे सत्यपि अविवेकासद्भावात्। न द्वितीयः उत्तरोक्ता भेदस्य गृहीतत्वादेव तद्विरुद्धस्याभेदस्याग्रहे सति तद्ग्रहनिषेधरूपस्याविविक्तत्वस्य दुःसम्पादत्वात्। तृतीयेऽपि द्वित्वादिज्ञानमपेक्षितं किमव्यासज्यवृत्ति उतानुषङ्गिकमपि पर्य्याप्तम् आद्ये गामानय दण्डेनेत्यत्र गोदण्डयोरपि साक्षाद् द्वित्वाद्यप्रतीतेरविवेकः प्रसज्येत। द्वितीये तु पुरोवर्त्तिरजतयोरप्यानुषङ्गिकद्वित्वादिज्ञानस्य सद्भावेन दुष्परिहरणीयत्वात्। नन्वविवेको नाम असंसर्गाग्रहः स च प्रतीयमानयोरिदंरजतयोः संभवति इदंरजते असंसृष्टे इति प्रत्ययादर्शनात् इति चेत् तदापि किं ग्रहणस्मरणयोरेवासंसर्गो विवक्षितः? उत ययोः कयोश्चित्? आहोस्वित् संसर्गज्ञानरहितयोः? आद्ये अहं मनुष्य इति भ्रमो न स्यात् उभयोरपि ग्रहणत्वात्। द्वितीये घटङ्गोर्गौः शुक्लः पटइत्यपि भ्रमःस्यात् असंसर्गप्रतीत्यभावात्। तृतीयेऽपि सएव दोषःस्यात् न हि तत्र संसर्गज्ञानं संभवति तद्विषयस्यैक्याभावात् ऐक्यस्य च तद्विषयत्वस्य प्रत्यभिज्ञायमानत्वात्। यदि गुणगुण्यादिसंबन्ध एव तद्विषययोरैक्यमित्युच्यते तर्हि इदं रजतमित्यत्रापि साधारणतत्सम्बन्धस्तद्विषयइत्यस्यापि वक्तुं शक्यत्वेन संसर्गप्रत्ययोदुरुद्धरः। अथ तत्र नेदं रजतमित्यसंसर्गतत्प्रत्ययेन बाधान्न संसर्गतत्प्रत्ययौ सम्भवतः। तर्हि घटङ्गौरित्यत्रापि गुणगुण्यादेरितरेतराभावज्ञानाख्योऽसंसर्गप्रत्ययोऽस्त्येवेति संसर्गतत्प्रत्यययोरसम्भवात् भ्रमत्वापत्तिस्तदवस्था तस्मान्नासंसर्गाग्रहोऽप्यविवेकः।

अस्तु तर्हि प्रकृतेऽपि संस्कारजन्यैव रजतस्मृतिरिति चेत् न रजतस्य पुरोवस्थितत्वेन प्रतिभासादित्युक्तोत्तरत्वात् न च पुरोऽवस्थितत्वमविवेककृतमिति वक्तुं शक्यम्। अविवेकस्य भ्रमं प्रत्यप्रयोजकत्वात्। तथा हि किं गृह्यमाणयोरविवेकः? किं वा गृह्यमाणस्मर्य्यमाणयोः? किं वा स्मर्य्यमाणयोः? नाद्यः स्वप्नदशायामात्मव्यतिरिक्तस्य कस्याप्यग्रहणेन द्वयोर्गृह्यमाणयोरभावे तदविवेकस्य भ्रमप्रयोजकस्याप्यभावेन भ्रमाभावप्रसङ्गात्। न द्वितीयः स्वप्ने गृह्यमाणेनात्मना स्मर्य्यमाणस्य नीलादेरविवेके सति अहं नील इति प्रतिभासप्रसङ्गात्। तृतीये तु परोक्षमेव सर्व्वभ्रान्तावभासेत, सर्व्वस्यापि स्मर्य्यमाणत्वात् एवं च सति प्रकृतस्य पुरोऽवस्थितरजतज्ञानस्य स्मृतित्वानुमाने परोक्षावभासित्वोपाधिर्द्रष्टव्यः। याथार्थ्यानुमानस्य चायं प्रतिप्रयोगः। विमताः प्रत्यया न यथार्थाः बाध्यमानत्वाद्भ्रान्तिव्यवहारवदिति तस्मात् बोधद्वैराज्यदुराग्रहं परित्यज्य तृतीयं भ्रान्तिज्ञानमङ्गीकर्त्तव्यम्।

अन्यथाख्यातिरिति नैयायिकादयः। ते ह्येवमुररीचक्रुः ननु तर्हि मा भूदख्यातिः अस्त्वन्यथाख्यातिः। तथा हि देशकालान्तरगतं हि रजतं शुक्तिसंप्रयुक्तेन दोषोपहितेनेन्द्रियेण शुक्त्यात्मना गृह्यते न चैवमननुभूतस्यापि ग्रहणप्रसङ्गः। सादृश्यादेर्नियामकत्वादिति”।

तदेतदसत् किं ज्ञानेऽन्यथात्वं? किं वा? फले उत वस्तुनि?। नाद्यः रजताकारं ज्ञानं शुक्तिमालम्बते इति ज्ञानेऽन्यथात्वं वाच्यम्। तत्र शुक्तेरालम्बनत्वं नाम किं ज्ञानं प्रति स्वाकारसमर्पकत्वम् उत ज्ञानप्रयुक्तव्यवहारविषयत्वम् नाद्यः। रजताकारपक्षं ज्ञानं प्रति शुक्तेः स्वाकारसमर्पणासम्भवात्। न द्वितीयः व्याघ्रादिदर्शन

प्रयुक्तव्यवहारविषयस्य खड्गकुन्तचक्षुरादेर्व्यामोहादि ज्ञानालम्बनत्वप्रसङ्गात् । नापि फलेऽन्यथात्वम् फलस्य स्फुरणस्य भ्रान्तौ सम्यग्ज्ञाने वा स्वरूपतो वैषम्यादर्शनात् । वस्तुन्यपि कथमन्यथात्वं किं शुक्तिकायां रजततादात्म्यं किं वा रजताकारेण परिणामः । आद्येऽपि किं शुक्तिरजतयोरत्यन्तभेदः किं वा भेदाभेदौ । नाद्यः । अत्यन्तभिन्नयोर्वास्तवतादात्म्यासम्भवात् अनिर्वचनीयस्य त्वया अनभ्युपगमात् शून्यतादात्म्यप्रतीतौ च गुणगुण्यादावपि तत्सम्भवेन भ्रान्तित्वं दुर्वारम्। समवायस्य च प्रक्रियामात्रसिद्धस्य तादात्म्यानतिरेकात् । भेदाभेदपक्षे तु खण्डो गौरितिवद्भ्रान्तिः स्यात् । परिणामपक्षेऽपि बाधो न स्यात्। विमतं रजतज्ञानमबाध्यं परिणामज्ञानत्वात् क्षीरपरिणामदुग्धज्ञानवत्। अतः क्षीरवदेव शुक्तिर्न पुनर्बाध्येत । ननु कमलमुकुलविकासरूपपरिणामहेतोः सूर्यतेजसोऽपगमे पुनर्मुकुलीभाववद्रजतपरिणामहेतोर्दोषस्यापगमे पुनः शुक्तिभावोऽस्तु इति चेत् नैवं विकसितमेव मुकुलमासीदितिवत् रजतमेव शुक्तिरासीदिति प्रतीत्यभावात् कथञ्चित् तद्भावेऽपि न परिणामपक्षो युक्तः निर्दोषस्यापि रजतप्रतीतिप्रसङ्गात् नचैकमेव क्षीरं दधिरूपेण कञ्चित् पुरुषं प्रति परिणतमन्यं प्रति नेति दृष्टचरं तस्मान्नान्यथाख्यातिः सुनिरूपा । ज्ञानलक्षणया देशान्तरगतरजतभानन्तु साक्षात्करोमीति साक्षात्कारोल्लिखबुद्धेरन्यथानुपपत्त्या न सम्भवतीति द्रष्टव्यम् । किञ्च ज्ञानलक्षणायाः प्रत्यासत्तित्वे तथैव पर्वते वह्निज्ञानसम्भवेनानुमानादेरुच्छेदः स्यात् अनुव्यवसायात्तत्सत्त्वकल्पने तु प्रकृतेऽपि साक्षात्कारानुव्यवसायसत्त्वेन तुल्यत्वात्। आत्मख्यातिरिति बौद्धाः । तथाहि सर्वासां बुद्धीनां विषयमन्तरेणापि तदाकारोल्लेखसम्भवेन रजतज्ञानमपि बुद्धिरूपतया न विषयान्तरमपेक्षते इत्यात्मनः बुद्धेरेव ख्यातिः प्रतिभासः "सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वयः । अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति तेषां सिद्धान्तात् । तथाच विमतं रजतं बुद्धिरूपं चक्षुरादिसंप्रयोगं विनाऽप्यपरोक्षत्वात् सम्मतबुद्धिवत् इत्यनुमानेन रजतादेस्तद्रूपतासिद्धिः । ते हि मन्यन्ते शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाश्च षडपि प्रत्ययाः आलम्बनसमनन्तरसहकार्य्यधिपतिरूपान् प्रत्ययपदवाच्यान् चतुरो हेतूनपेक्ष्यैव उत्पद्यन्ते। तत्र नीलावभासरूपस्य चित्तरूपज्ञानस्य नीलालम्बनवतो नीलाकारता भवति । समनन्तरप्रत्ययात् पूर्व्वतनज्ञानवासनारूपात् बोधरूपता, सहकारिप्रत्ययादालोकात् स्पष्टतावभासः । चक्षुरादेरधिपतिप्रत्ययात् विषयप्रतिनियम इति । तत्रेदमुच्यते प्रकृते न तावत् सहकारिप्रत्ययाख्यादालोकात् रजताकारोदयो भवति तस्य स्पष्टतामात्रहेतुत्वात् । नाप्यधिपतिप्रत्ययाख्याच्चक्षुरादेः सम्भवति तस्य विषयविशेषं प्रत्येव नियमनमात्रहेतुत्वात् । नापि समनन्तरप्रत्ययाख्यात् पूर्व्वज्ञानात् । विजातीयघटादिज्ञानानन्तरं विजातीयरजतभ्रमोदयप्रसङ्गात्, नाप्यालम्बनप्रत्ययाख्याद्बाह्यार्थाद् भवति। विज्ञानवादिभिस्तस्यानङ्गीकारात्।ततश्च रजतादिबाह्यार्थासत्त्वे विज्ञानस्य कथं रजताकारतासमर्पणम्।संस्कारसामर्थ्येन तत्कल्पनेऽपि न निस्तारः संस्कारस्य क्षणिकत्वस्थायित्वविकल्पासहत्वात् । तथाहि स्थायित्वे सिद्धान्तहानिः । क्षणिकत्वे पूर्व्वानुभवोत्तरमुत्पन्नस्य तस्य द्वितीयक्षणे नाशात् रजताकारोल्लेखसमये तस्यासत्त्वात् कथं तेन तदाकारोल्लेखः सम्भवति । किञ्च संस्कारस्य विज्ञानातिरिक्तत्वे क्षणिकविज्ञानमात्रसिद्धान्तहानिः । अथानादिज्ञानसन्ततौ यदा कदाचित् पूर्व्वं रजतज्ञानमुत्पन्नं तदेव संस्कार इत्यङ्गीक्रियते स च यद्यपि विजातीयानेकज्ञानव्यवहितः तथापि कदाचित् सजातीयं ज्ञानान्तरमुत्पादयत्येव यथा व्रीहिबीजमनेकाङ्कुरादिकार्य्यव्यवधानेऽपि कदाचित् सजातीयान्तरमुत्पादयति तद्वत् । अथ न पूर्व्वबीजादुत्तरबीजोत्पत्तिः किन्तु पूर्व्वबीजजन्याङ्कुरसन्तानादेव तदुत्पत्तिरिति चेत् तर्ह्यत्रापि पूर्व्वरजतज्ञानजन्यज्ञानसन्तानएव संस्कारोऽस्तु अतो न सिद्धान्तहानिः । एवं पूर्व्वरजतज्ञानमपि ततः पूर्व्वतररजतज्ञानादुत्पद्यते ततोऽनादिवासनार्पितं रजतं बुद्धिरूपमेव सत् भ्रान्त्या बहिर्वदवभासते इति चेत् अत्रोच्यते वेदान्तिभिः, किं तद्रजतमलौकिकं लौकिकं वा अलौकिकत्वेऽपि किं जन्मरहितम् उत लौकिकरजतवदेव जायते । अलौकिकत्वे जन्मरहितत्वे च जायमानस्य ज्ञानस्य रूपं न स्यात् । द्वितीयेऽपि किं बाह्यार्थात् जायते, उत ज्ञानात् नाद्यः तैर्बाह्यार्थानङ्गीकारात् ज्ञानादेव तदुत्पादाभ्युपगमे दुष्टकरणजन्यज्ञानादुत्पादो वाच्यः तथा च जनकस्य पूर्व्वसत्त्वनियमेन तज्जनिका प्रतीतिः न रजतं स्पृशीयात् वर्त्तमानपदार्थस्यैवाकारार्पकत्वनियमात् क्षणिकयोर्जन्यजनकयोर्भिन्नकालीनत्वेन रजतस्यापरोक्षकाले पूर्व्वज्ञानस्यासत्त्वात्

तेन गृहीतग्रहणत्वात् अतोरजतापरोक्षव्यवहारो विलुप्तः स्यात्। यदि अन्येन केनचित् दुष्टकरणजन्यज्ञानेन तदुत्पादस्तत: स्वात्मकबुद्ध्या तद्ग्रहः स्यादित्यङ्गीक्रियते तदाऽतिप्रसङ्गः किन्तु दुष्टकरणजन्यज्ञानस्यैव तदुत्पादकत्वं वाच्यं तत्र करणस्य दुष्टत्वञ्च अर्थक्रियाकारिताशून्यविषयग्राहित्वेनैव तथा च असति रजते कथं करणस्य दुष्टत्वनिर्णयः। अथ अदुष्टकरणजन्यज्ञानं तदुत्पादयति तदा तस्य घटादिवत् अर्थक्रियाकारित्वरूपसत्त्वसम्भवेन देशान्तरवर्त्ति-रजतविषयकादविशेषः स्यात्। किञ्च रजतस्यानुत्पत्तौ न तस्य ज्ञानविषयता ज्ञानाकारार्पकतयैव विषयत्वस्य त्वया स्वीकारात् अनुत्पन्नस्य कथं ज्ञाने स्वाकारार्पकत्वसम्भवः। तस्मादात्मख्यातिपक्षे रजतमेव ज्ञानेन न प्रतीयेत।

एवमख्यात्यन्यथाख्यात्यात्मख्यातिपक्षेषु निरस्तेषु इदानीमसत्ख्यातिपक्षः वेदान्तिभिरभ्युपगतः आक्षेपपूर्व्वकं प्रदर्श्यते इदं रजतमिति ज्ञानं स्मृतिग्रहणाभ्यामन्यत् अध्यासनामकं ज्ञानं यत्र असतोऽनिर्वचनीयस्य उत्पन्नस्य रजतादेर्भानमीदृशं ज्ञानमसत्ख्यातिपदवेदनीयमस्ति। ननु ज्ञानस्य स्मृतिग्रहणाभ्यामन्यः प्रकारो न सम्भवति इति चेन्न किं विलक्षणसामग्र्यनिरूपणात् तदसम्भवः? उत विलक्षणज्ञानस्वरूपानिरूपणात्? उत विलक्षणविषयानिरूपणात्? नाद्यः संप्रयोगसंस्कारदोषाणामेव तत्सामग्रीतया कल्पनात् न च दोषस्य पूर्व्वप्राप्तकार्य्यानुदयं प्रत्येव हेतुत्वं न पूर्व्वकार्य्योदयं प्रतीति वाच्यं कार्य्यानुदयस्य तत्प्रागभावरूपतयाऽनादित्वेन तत्र दोषहेतुत्वासम्भवात्। वातपित्तश्लेष्मणाञ्चापूर्व्वकार्य्योत्पादकत्वदर्शनाच्च न च दोषस्य संस्कारोद्बोधकत्वेनान्यथासिद्धिः तदुद्बोधस्य तद्व्यापारत्वात् न हि व्यापारेण व्यापारिणोऽन्यथासिद्धिरिति नियमात् नह्युत्पतननिपतने कुर्व्वन् कुठारः छिदिक्रियां प्रति अहेतुर्भवति। ननु इन्द्रियसंप्रयोगस्य इदन्तामात्रे सत्त्वात् रजतांशेऽसत्त्वात् इदन्तावोधनेन तस्योपक्षीणत्वात् एवं संस्कारस्य स्मृतिमात्रजनकत्वनियमेन वेदान्तिमते अध्यासात्मकज्ञानस्य स्मृतित्वानङ्गीकारात्, दोषस्य च स्वातन्त्र्येण ज्ञानहेतुत्वस्य कुत्राप्यदर्शनाच्च कथं रजतावभास इति चेत् उच्यते प्रथमं दोषसहितेनेन्द्रियेण इदन्तामात्रविषयाऽन्तःकरणवृत्तिर्जन्यते तत्र इदन्तायां तद्ग्राहकवृत्तौ च चैतन्यमभिव्यज्यते तच्चैतन्यनिष्ठा शुक्त्यविद्या च दोषवशात् संक्षुब्धा भवति तत्रेदमंशावच्छिन्नचैतन्यस्थाऽविद्या दोषेण क्षुभिता सती सादृश्यादुद्बोधितसंस्कारवशात् रजताकारेण विवर्त्तते। इदमवच्छिन्नचैतन्यस्थाऽविद्या तु रजतग्राहिवृत्तिसंस्कारसहकृता वृत्तिरूपेण विवर्त्तते। तौ च रजततद्वृत्तिरूपविवर्त्तौ स्वाधिष्ठानेन साक्षिचैतन्येनावभास्येते इत्येवं रजतावभासः कल्प्यते। यद्यप्यन्तःकरणवृत्तिरविद्यावृत्तिश्चेति ज्ञानद्वयम् तथापि तद्विषयौ सत्यानृते इदंरजते अन्योन्यात्मकतामापन्नौ इति विषययोरैक्यात् वृत्तिद्वयस्यैक्यम् तत्र विषयावच्छिन्नफलस्याप्येकत्वेन ज्ञानैक्यमुपपद्यते। एवं मिथ्याज्ञानतद्विषययोर्निरूपणेन द्वितीयतृतीयविकल्पौ निरस्तौ वेदितव्यौ। यद्यप्यन्यत्र संप्रयोगसंस्कारौ परस्परं निरपेक्षौ प्रमितिस्मृत्योर्जनने समर्थौ दृष्टौ तथापि क्रमेण स्मृतिप्रमित्योरुत्पत्तौ प्रवर्त्तकत्वानुपपत्तौ प्रवृत्त्यन्यथानुपपत्त्या ताभ्यां प्रत्यभिज्ञावदेकं विशिष्टं मिथ्याज्ञानं जन्यते इति कल्प्यते यथा नैयायिकादिभिः निरन्तरोत्पन्नेष्वपि वर्णज्ञानेषु यौगपद्याभावात् पदार्थज्ञानानुपपत्त्या पूर्व्वज्ञानजन्यसंस्कारसहितमन्त्यवर्णज्ञानमेव पदार्थबुद्धिहेतुत्वेन कल्प्यते तद्वत्। ननु विमतं ज्ञानं नैकं भिन्नकारणजन्यत्वात् रूपरसादिज्ञानवदिति चेत् न अनुमानप्रत्यभिज्ञानयोर्व्यभिचारात् उभयोरपि नानाकारणजन्यत्वात्। अनुमानं हि व्याप्तिज्ञानसंस्कारलिङ्गदर्शनपरामर्शजन्यम्। प्रत्यभिज्ञा च इन्द्रियसंप्रयोगसंस्कारजन्येति सर्व्वैरङ्गीक्रियते न च शुक्तौ अनिर्वचनीयस्य रजतस्योत्पत्तौ तस्य च शुक्तौ संसर्गात् कथं तस्य मिथ्यात्वमसत्त्वञ्च स्यादिति वाच्यम् सत्तात्रैविध्याङ्गीकारेण तत्र व्यावहारिकसत्ताशून्यत्वेनैव तस्य मिथ्यात्वस्य कल्पनात्। तथाहि सत्त्वं त्रिविधं पारमार्थिकं त्रैकालाबाध्यत्वरूपं यथा ब्रह्मणः। व्यावहारिकं ब्रह्मज्ञाननिवर्त्त्यम् यथा आकाशादेःप्रातीतिकम् अधिष्ठानज्ञाननिवर्त्त्यं यथा शुक्तिरजतादेः। न च मिथ्यात्वकल्पनं मानहीनम्" "अथ रथान् रथयोगान् पथः सृजते" इति श्रुतेः मिथ्यैवात्र रजतमभादिति रजततज्ज्ञानयोर्मिथ्यात्वप्रत्यभिज्ञानस्य च मानत्वात्। अतो मतान्तरवत् वेदान्तमते नानुभवविरोधोनिर्मूलत्वं वा। अख्यातिपक्षे अपरोक्षावभासिनः स्मर्य्यमाणत्वं विरुध्यते। ज्ञानद्वयपक्षे रजतस्य पारोक्ष्यं स्मृतौ करणाभिमानमोषादिकम्, अन्यथाख्यातौ रजतस्य चापरोक्ष्यानुभवविरोधः आत्मख्यातिपक्षे विषयाभावेनापरोक्षावभासविरोधः"। प्रमेयविवरणसारांशः।

शुक्तिरजतादि ज्ञानदृष्टान्तेनज्ञाननिवर्त्त्यं तथा सर्व्वेषां घटपटादिज्ञानानामसत्ख्यातित्वं तद्विषयाणां वस्तु-

तोऽसत्त्वात् असत्त्वेऽपि सत्त्वेन व्यवहार्यतामात्रमिति शुक्तिरजतादिभ्यो घटादीनां विशेषः इति अध्याससरूपमिथ्याज्ञानमाश्रित्य तत् समर्थयता च भाष्यकृता तत्रैव व्यवस्थापितम्" यथा "युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्म्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्म्माणाञ्चाध्यासस्तद्विपर्य्ययेण विषयिणस्तद्धर्म्माणाञ्च विषयेऽध्यासो मिथ्येति भवितुं युक्तम् । तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्म्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्म्मधर्म्मिणो मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ॥ आह कोऽयमध्यासो नामेति उच्यते स्मृतिरूपः परत्र पूर्व्वदृष्टावभासः । तं केचिदन्यत्रान्यधर्म्माध्यास इति वदन्ति । केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहणनिबन्धनो भ्रम इति । अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्म्मत्वकल्पनामाचक्षते इति सर्वथापि तु अन्यस्यान्यधर्म्मावभासतां न व्यभिचरति । तथा च लोकेऽनुभवः शुक्तिका हि रजतवदवभासते एकश्चन्द्रः सद्वितीयवदिति । कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयधर्म्माणाम्? । सर्व्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति । युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि । उच्यते । न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात् अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः । नचायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः । तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते । तद्विवेके च वस्तुस्वरूपावधारणं विद्यामाहुः । तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यते । तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्व्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि? शास्त्राणि चेति । उच्यते । देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः । नहीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः संभवति । नचाधिष्ठानमन्तरेण इन्द्रियादिव्यापारः संभवति । नचानध्यस्तात्मभावेन देहेन कश्चित् व्याप्रियते । न चैतस्मिन् सर्व्वस्मिन्नसत्यसङ्गस्यात्मनः प्रमातृत्वमुपपद्यते । न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति । तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति" । चतुर्थसूत्रभाष्ये च जगतो व्यावहारिकत्वे अन्यदीयमतं संवादितम् यथा "गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात् । सद्ब्रह्मात्माहमित्येवं बोधे कार्य्यं कथं भवेत्?" इत्यादिना । "अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः । अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्ज्जितः । देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मऽनिश्चयात्" यथा च लौकिकव्यवहार्य्यपदार्थानां पारमार्थिकसत्त्वाभावेऽपि तत्सत्त्वमङ्गीकृत्य सर्व्वे व्यवहाराः तेषां च व्यवहारिकसत्त्वरक्षणम् तथा प्रपञ्चेन समर्थितं खण्डनकृता खण्डन खण्डखाद्ये । यथा "अथ कथायां वादिनोर्नियममेतादृशं मन्यन्ते प्रमाणादयः सर्व्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम् । तदपरे न क्षमन्ते । तथाहि प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन, तत् कस्य हेतोः? किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसाहित्यनियतस्य तस्य प्रवर्त्तयितुमशक्यत्वात्, उत कथकाभ्यां प्रवर्त्तनीयवाग्व्यवहारं प्रति हेतुभावात्, उत लोकसिद्धत्वात्, अथ वा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वात् । न तावदाद्यः तदनभ्युपगच्छतोऽपि चार्व्वाकमाध्यमिकादेर्वाग्विषयविस्तराणां प्रतीयमानत्वात् तस्यैव वा अनिष्पत्तौ भवतश्चिरासप्रयासानुपपत्तेः । सोऽयमपूर्व्वः प्रमाणादिसत्त्वानभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवताभ्यूहितो नूनं, यस्य प्रभावाद्भगवता सुरगुरुणा लोकायतसूत्राणि न प्रणीतानि, तथागतेन वा मध्यमागमा नोपदिष्टाः भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि । प्रमाणाद्यनभ्युपगमेऽपि प्रवर्त्तन्तां तर्हि ते वाग्भङ्गाः तास्तु साधनबाधनक्षमा न भवन्ति तावतेति ब्रूषे इति चेत् प्रमाणाद्यनभ्युपगम्य प्रवर्त्तितत्वं तदीयसाधनबाधनाक्षमतायां न नियामकं किन्तु सद्दूषणाभासलक्षणयोगित्वमित्यवश्याभ्युपेयं भवता, येनाभ्युपगम्यापि प्रमाणादीनि प्रवर्त्तिताः मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वैस्तान्तरव्यवहारानुसारिभिरपरैस्तथाभूता इति कथ्यन्ते । यदि त्वस्मद्वचसि सद्दूषणाभासलक्षणं न भवान् दर्शयितुमीष्टे तदा अनभ्युपगम्य प्रमाणादि भवताम-

वर्त्तितोऽयं व्यवहारइति मतहानस्त्वयोच्यमानेऽपि नास्माकमादरः। अन्यथाभ्युपगम्य प्रमाणादीनि भवता प्रवर्त्तितोऽयं व्यवहार इत्येतावता भवदीयो व्यवहाराभास इत्यस्माभिरपि वक्तुं शक्यतएव। ननु यदि प्रमाणादीनि न सन्ति व्यवहारएव धर्म्मी कथं सिद्ध्येत् दूषणादिव्यवस्था वा कथं स्यात् सर्व्वविधिनिषेधानां प्रमाणाधीनत्वात्। मैवम्। न ब्रूमोवयं न सन्ति प्रमाणादीनीति, स्वीकृत्य कथारभ्येति। किन्नाम सन्ति न सन्ति वा प्रमाणादीनीत्यस्यां चिन्तायामुदासीनैर्य्यथा स्वीकृत्य तानि भवता व्यवह्रियते तथा व्यवहारिभिरेव कथा प्रवर्त्त्यतामिति। अन्यथा न सन्ति प्रमाणादीनीति मतमस्माकमारोप्य यदिदम्भवता दूषणमुक्तं तदपि न वक्तुं शक्यं कीदृशीं मर्य्यादामालम्ब्य प्रवर्त्तितायां कथायां दूषणमुक्तं किं प्रमाणादीनां सत्त्वमभ्युपगम्योभाभ्यां वादिभ्यां प्रवर्त्तितायां कथायाम् उतासत्त्वमभ्युपेत्य उतैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य। न तावदाद्यः अभ्युपगत प्रमाणादिसत्त्वं प्रति तादृक्पर्य्यनुयोगानवकाशात्। द्वितीये तु स्वतोऽव्यापत्तेः न तृतीयः तथैव कथान्तरस्य प्रसक्तेः उभयाभ्युपगमानुरोधित्वाच्च कथानियमस्य। अन्यथा स्वाभिप्रायमालम्ब्य तेनापि तद्वचसि यत्किञ्चिद्वाग्जालमिति दूषणेऽभिहिते कस्य जयो व्यवतिष्ठताम् प्रमाणाद्यभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात्। तस्मात् प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमे समयं बद्ध्वा कथायां प्रवर्त्तितायां भवतेदं दूषणमुक्तं युक्तमेव तथा सति स्यात्। योऽयं भवान् स्वाभिप्रायमपि नावधारयितुं शक्तोऽतिदूरतरस्मिन् पराभिसन्धानावधारणप्रत्याशा। अथ वादीन्द्र्य दुर्वैतण्डिकं तस्मिन् बाधोऽभिधीयत इत्येव नेष्यते शिष्यादयस्तु तस्य कथानधिकारं ख्यापन्ते अतएव भाष्यकारः "सप्रयोजनमनुयुक्तो यदि प्रतिपद्यत" इत्याद्युक्त न तु प्रतिपद्यस इति। मैवम् शिष्यादीन् प्रत्यपि चार्व्वाकादेर्दोषोऽवश्यमेवाभिधातव्यम्। कथञ्च तथा स्यात् तस्य कथाप्रवेशाप्रवेशयोस्तद्वाधावश्यम्भावात्कथायामेव हि निग्रहः। नापि द्वितीयः तथाहि स्याद्ध्येयं यदि कथकप्रवर्त्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुता तत्सत्त्वानभ्युपगमे निवर्त्तेत नचैवं सम्भवति तथा सति तत्सत्त्वानभ्युपगन्तृणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत हेत्वनुपपत्तेः। उक्तचायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपापलापो न शक्यत इति। अथ मन्यसे कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं सत्त्वाद्याभ्युपगमः यत्सत्तदभ्युपगम्यतइति स्थितेरिति। मैवम्। कथापि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं सत्त्वाद्याभ्युपगमो भवता प्रसाध्यः। कथनात्पूर्व्वं तत्तत्त्वावधारणं वा परपराजयं वा अभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्य्यवस्यति तावदनुरोद्धव्यम् तत्र व्यवहारनियमस्यानुबन्धादेव द्वाभ्यामपि ताभ्यां सम्भाव्यतइति व्यवहारनियमसमयमेव बध्नीतः सच प्रमाणेन तर्केण च व्यवहर्त्तव्योवादिना प्रतिवादिनापि कथाङ्गतत्त्वज्ञानविपर्य्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थानं तस्य दर्शनीयम् तदुत्पादने प्रथमस्य भङ्गोव्यवहर्त्तव्योऽन्यथा द्वितीयस्यैव। तादृशेतरौ च ज्ञेहतया व्यवहर्त्तव्यौ प्रामाणिकपथस्थास्निकतया व्यवहर्त्तव्य इत्यादिरूपः। अतएवं व्यवहारनियमबन्धेऽपि हेतवंशव्यः तथा च सोऽपि हेतुः कथायां प्रवृत्तायामभिधातुं युक्तइति प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवत् प्रत्यवस्थानमनवकाशम्। द्वाभ्यामपि वादिभ्यां विचारप्रवृत्त्याभिलष्यमाणतत्त्वव्यवस्थाजयफलत्वेन व्यवहारनियमस्य स्वेच्छयैव परिगृहीतत्वात् नचैवं प्रमाणानुपपत्तेरप्रामाण्यगृहीतमूलत्वान्मूलापरिशुद्धिसम्भवेन सर्व्वविचारविचार्य्यतत्फलविप्लवापत्तिः स्यात्। अविद्याविद्यमानानादिपारम्पर्य्यायातस्य लोकव्युत्पत्तिगृहीतस्य वादस्य च तस्यान्यथाभावासम्भाव्यतालक्षणस्वतःसिद्धिशुद्धत्वात्। नच प्रमाणादीनां सत्तापीत्थमेव ताभ्यामङ्गीकर्त्तुमुचिता। तादृशव्यवहारनियमगात्रेणैव कथाप्रवृत्त्युपपत्तेः प्रमाणादिसत्तामभ्युपेत्यापि तथा व्यवहारनियमव्यतिरिक्तकथाप्रवृत्तिं विना तत्त्वनिर्णयस्य जयस्य वाभिलषितस्य कथकयोर्विपर्य्यवसानात्। नापि तृतीयः लोकव्यवहारो हि प्रामाणिकव्यवहारो वा स्यात् पामरादिसाधारणव्यवहारो वा। नाद्यः। विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् तदर्थमेव च पूर्व्वं नियमस्य गवेषणात्। नापि द्वितीयः शरीरात्मतादीनामपि तथा सति भवता स्वीकर्त्तव्यतापातात्। पश्चात्तद्विचारबाध्यतया नाभ्युपेयतइति चेत् तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव अन्यथा तूपगन्तव्या इति लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यत इति तावद्भवति। नापि चतुर्थः यादृशोभवता प्रमाणादीन्यभ्युपगम्य व्यवहारनियमः कथायामालम्ब्यते। तस्यैव प्रमाणादिसत्त्वासत्त्वाद्युभयौदासीन्यैरस्माभिरप्यवलम्बनात्। तस्य

यदि मां प्रति फलातिप्रसङ्गकत्वं तदा त्वां प्रत्यपि समानः प्रसङ्गः । स्यादेतन्नियतशास्त्रव्यवहारक्रियासमयबन्धेन कथां प्रवर्त्तयतापि व्यवहारसत्ताभ्युपगन्तव्या नहि सत्तामनभ्युपगम्य व्यवहारक्रियाभिधातुं शक्या । क्रिया हि निष्पादना असतः सद्रूपतापादनमिति यावत् प्रमाणैर्व्यवहर्त्तव्यमिति नियमबन्धने प्रमाणानां कारणभावो नियतः तद्भावश्च नियतपूर्व्वसत्ताक्रूपं कारणत्वम् प्रमाणानामनादाय न पर्य्यवस्येत् । दूषणानाञ्चाक्लित्वेन भङ्गावधारणनियमबन्धने साधनाङ्गानां व्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्तत्स्वरूपताव्यवहारनियमनादौ च कण्ठोक्तमेव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते प्रमाणादीनां सत्तामनभ्युपगम्य कथारम्भाः शक्यन्त इति । मैवम् । एभिरपि बाधकैः कथायामारब्धायामेवाभिमतस्य प्रसाधनीयत्वे पूर्व्वोक्तबाधायामनिस्तारात् । न च व्यवहारनियमस्य स्वेच्छाकृतस्यैव प्रमाणादिसत्तास्वीकारपर्य्यवसायितया नायं दोषः स्यात् । यतः सत्ताज्ञानस्य तदङ्गत्वं न तु सत्तायाः । तत्र किं सत्तावगममात्रात्सत्ताभ्युपगम्येति मन्यसे अबाधितात्तदवगमाद्वा । न तावदाद्यः मरुमरीचिकादौ जलरूपतासत्ताभ्युपगमप्रसङ्गात् । द्वितीयेऽपि किं वादिप्रतिवादिमध्यस्थमात्रस्य तस्यापि किं कथाकालमात्रएव बाधितत्वावगमाभावात् । अथवा कस्यचिदपि कालान्तरेऽपि च बाधितत्वबोधविरहात् । नाद्यः अतिप्रसङ्गात् पुरुषत्रयावगतस्य एकबाधावगतस्य च पुरुषान्तरेण तेनापि कथान्तरे बहुलं बाध्यतादर्शनादिति । नचाबाधितोऽस्त्यपि द्विमादिपुरुषमात्रपूर्व्वजाततत्प्रतीत्यनुरोधाद्बाधदर्शने सत्यपि तथैव सत्त्वमभ्युपगम्यते । तस्माद्द्वितीयः पक्षः परिशिष्यते यत्र सर्व्वप्रकारेण बाधितत्वं नास्ति तत्सदित्यभ्युपगन्तव्यम् । तदिदं यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य दूषणादिसत्तावगमः कथाकालमात्रे तैरबाध्यमानः कथाङ्गत्वेनाभ्युपेयते किमायातं सर्व्वप्रकाराबाधिततत्तत्सत्तावगमाय ततस्तत्सत्त्वाभ्युपगमकथानङ्गताङ्गीकारस्य । कतिपयप्रतिपत्तृकतिपयकालतत्सत्त्वावगमादेव च प्रायेण लौकिकव्यवहारः प्रतीयते तादृशश्चायं सत्त्वावगमः कथाङ्गमेतत्तदुच्यते व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ इति । तस्माद्यादृग्व्यवहारनियमः कृतः तन्मर्य्यादानेन नोल्लङ्घितेति । यद्वादिवाग्व्यवहारे मध्यस्थावगमः स विजयते यस्य च वचसि नैवं तस्यावगमस्तस्य पराजयः । यत्र वाद्युक्तनिग्रहस्थानत्वावगमः स निगृहीतः तदितरस्तु न तथेत्यादिनियम एव कथारम्भाय प्राहुः । अनेन नियमेन व्यवहर्त्तव्यमित्यस्य ह्ययमर्थोऽनेन नियमेनोक्तमनेन नेति मध्यस्थावगमस्य विषयो भवितव्यमिति । नच वाच्यमन्ततस्तदवगमस्यापि सत्ताभ्युपेयेति । तस्यापि सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात् । नचैवमनवस्था तदनुसरणावश्यम्भावानङ्गीकारात् । एवं त्रिचतुरज्ञानजन्मनोनाधिकमतिरिति न्यायात् । नचानिश्चितसत्त्वे पूर्व्वपूर्व्वप्रवाहागतत्वापत्तिकथायावगममादायापि न निस्तार इति वाच्यम् । अस्त्येवं हि तथापि त्रिचतुरज्ञानकलागवेषणमात्रविश्रान्तेन विचारेण ततःपरमननुसरणमर्य्यादयैव समयं बद्धा कथाया मिथःसम्प्रतिपत्त्या प्रवर्त्तनात् । अन्यथा प्रमाणादिसत्ताभ्युपगमेऽपि ज्ञानानवस्थावादुष्परिहरत्वात् । नच वाच्यं मत्पक्षे स्वरूपसता ज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् न ज्ञानस्य परम्परानुसरणमुचितं नत्वेवं त्वत्पक्षे ज्ञानस्वरूपसत्ताङ्गीकारप्रसङ्गादिति । स्वरूपसत्तामादायापि परिहरतोऽनवस्थाप्रसङ्गस्य समकायप्रस्तावे वक्ष्यमाणत्वात् । यथा त्वत्पक्षे स्वरूपसदविशेषेऽपि ज्ञानस्वरूपसत्त्वैव परं व्यवहारोपपादिका न घटादिसत्ता । एवमेवासत्ताऽविशेषेऽपि ज्ञानमेवासद्व्यवहारोपपादकं नान्यत् । असच्चोपपादकञ्चेति व्याहतमिति चेन्न सदुपपादकमिति कुतो न व्याहतम् । नहि सदुपपादकमसच्च नेति क्वचिदावयोः सिद्धम् । ननु तदसत्ताऽविशेषात्तत्कार्य्यं स्यान्यदापि प्रसङ्गः, न कार्य्यं स्यादसत्तायाः इवान्यदापि सामग्रीसत्त्वाविशेषात्तवापि किं नान्यदा कार्य्यजन्म । अथ न मम तदानीन्तनं सामग्रीसत्त्वं तदातनस्य कार्य्यजन्मनो नियामकं किन्तु ततः प्राक् सामग्रीसत्त्वं तथादर्शनात् । तर्हि ममापि कालान्तरस्थमपि तदसत्त्वं तदातनकार्य्यजन्मनोनियामकं तथादर्शनादेव । मम तदव्यवहितोत्तरत्वं तदा कार्य्यजन्मनियामकमिति चेत् न समसमयत्वादागन्तुकत्वाद्वाविशेषेण नियम्यनियामकभावस्यानुपपत्तेः तस्मादन्यदाप्यसौ एव सामग्र्या कदा कार्य्यनियमोऽभ्युपेयः तथादर्शनादित्येव मन्तव्यम् । तथा च समः समाधिः । तथापि कार्य्यजन्मकालस्य कोविशेषः । कार्य्यजन्मैव । अन्यथा यद्विशेषान्तरं तदपि विशेषान्तरवतः कालस्य स्यादिति अपर्य्यवसानमेव पर्य्यवस्येत् । तथापि तत्कालस्यानुगतं किं रूपमिति चेन्न रूपान्तरवतोपि किं रूपमित्यपि पर्य्यनुयोगस्यानुदयात् । किञ्च

‘अन्तर्भावितसत्त्वञ्चेत्कारणं तदसत्ततः ।

कालान्तर्भावितसत्त्वश्चेत्कारणं तदसत्तः ।"

तथाह्यन्तर्भूतसत्त्वे यदि कारणत्वं तदा स्वविशिष्टे खड्गिरसतः स्वाश्रयत्वमापादयति । विशिष्टस्यार्थान्तरत्वेऽपि च स्वस्मिन् खड्गिव्यतिरेकवत् स्वविशिष्टे खड्गिव्यतिरेके नियमदर्शनात् न सैव सत्ता तस्मिन्निति अन्यस्यास्तस्याविशिष्टस्याभ्युपगमे तामसन्निवेश्य कारणत्वमभ्युपगन्तुः सर्व्वं चैव कारणमसत्यमर्थं वक्ष्यति । अपरापरसत्तानिवेशने वा पर्य्यवसानमेव । न च सत्ताभेदादनन्यमस्थ्येवेत्यपि पादप्रसारिका निस्तराय, सत्ताभेदे हि सद्बुद्धिव्यवहारानुगमननिबन्धनलक्षणः प्रथमापि सत्ता न स्यादिति। सत्त्वबुद्धिमिच्छतो मूलमपि ते नष्टमिति कष्टतरम् । न च स्वरूपसत्तोपगमाय स्वस्ति भिन्नानप्यनुगतबुद्ध्याद्याधानपदेऽभिषिञ्चता त्वया जातिमात्राय जलाञ्जलिर्वितीर्यैत । माभूदनुगतिः स्वरूपसत्त्वस्येति च वदन् तद्धर्मिणीं कारणतां कथमनुगमयितासीति । किञ्च स्वरूपसत्त्वं स्वरूपात् घटाद्यात्मनो नाधिकमसतोपि स्वरूपं स्वरूपमेव न ह्यसन् घटादिर्न घटादिः तथा सति घटादिर्नैवापि न स्यात् असतोऽघटादित्वात् । अथ सदपि सत्तामनन्तर्भाव्य कारणं तदानीमसदपि तत्तथास्तु सत्तासत्त्वयोः कारणकोट्यप्रवेशाविशेषात् । अथ न सत्ता कारणकोटिनिविष्टा किन्तु कारणत्वं सत्त्वं नियतपूर्व्वसत्ता हि कारणताम्न्यद्रति मन्यसे, तर्हि सत्त्वे सैव कारणतास्तु तर्हि कारणसत्तामभ्युपगतवानसीति घट्टकुट्यां प्रभातमिति चेन्न भावानवबोधात् सत्तामसतीमभ्युपगच्छतापि सत्ता सयाभ्युपगतैव । अन्यथा कासावसतीति त्वमपि किं सत्तान्तरसत्तामन्तर्भाव्य कारणत्वमिच्छसि । नन्वेवं पूर्व्ववत् क्वापि सत्तात्यागो वा अनवस्थायां पर्य्यवसानं स्यात् । असत्त्वाऽविशेषात् कारणनियमः कथं स्यादिति चेन्न सत्ताविशेषेऽपि तुल्यत्वात । सत्त्वेऽप्यन्वयाद्यनुविधानं तस्य तज्जातीयस्य वा त्वत्पक्षे त्वसत्त्वाविशेषात् व्यतिरेकः परं सोऽप्यनियतो यदा कारणाभावस्तदा कार्य्याभावावश्यम्भावानभ्युपगमात् नित्यासतः कारणस्यासत्त्वएव कदाचित्कार्य्योत्पादात् । अन्वयस्तु न कदाचिदपीति चेन्न तुल्यत्वात् अन्वयो नास्तीत्यभ्युपगच्छतापि अन्वयोपगमात् अन्वयस्यापि सत्तान्तर्भावने कथितदोषापत्तेः । एतेन

"आशामोदकतृप्ता ये ये चोपार्ज्जितमोदकाः ।
रसवीर्य्यविपाकादि तेषां तुल्यं प्रसज्यते" ॥

इत्यस्यापि बाधकत्वमाशामोदकायते । सत्तान्तर्भावानन्तर्भावाभ्यां सत्त्वादेशात् आशामोदकादिनापि च रसवीर्य्यविपाकादिजननात् । तदसत्कथं कार्य्यं स्यादिति चेन्न सत्तामन्तर्भाव्य कार्य्यत्वोपगमे कारणवत्कार्य्येऽपि उक्तदोषस्यानन्तर्भावे वाऽविशेषस्य पूर्व्ववदाहृतेः तस्मात् ।

"पूर्व्वं सम्बन्धनियमे हेतुत्वे तुल्यएव नौ ।"

"हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ।"

आस्तां प्रतिबन्दिग्रहग्रहः कथं पुनरसतः कारणत्वमवसेयं प्राक्सत्त्वनियमस्य विशेषस्यानभ्युपगमात् असत्त्वस्य चाविशेषादिति चेन्न इदमस्मान्नियतं प्राक्सदितिबुद्ध्याविशेषात् । भ्रान्त्यर्थं बुद्धिगोचरेऽतिप्रसङ्ग इति चेन्न यादृश्या हि धिया त्रिचतुरकक्षावगाहनपरोधविश्रान्तया वस्तुसत्त्वनिश्चयस्ते, तादृश्यैव विषयीकृतस्य ममापि कारणतानिश्चयः । कैवलन्ततः परास्वपि कक्षासु बाधात् पूर्व्वपूर्व्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामहे इति विशेषः । परदर्शनसिद्धान्तस्य भूरिकक्षाभाविनोऽपि ततः परकक्षाबाध्यमानत्वेनातथाभावोपगमात् अन्यदैकदर्शनपरिशेषः स्यात् । एतेन सत्त्वाविशेषात् कथं कस्यचित् पक्षस्य त्रिचतुरकक्षाधावित्वमात्राभित्यपि निरस्तम् । अनेवंबुद्धिविषयतादशायां कोविशेष इति चेत् यदा कदापि तादृशबुद्धिविषयतैव । अन्यथा कथय कथमन्यदा तादृशबुद्धिविषयतया अन्यदा सत्त्वं स्यात् । तदा सत्त्वमन्यदास्येन व्यवह्रियत इति चेत् अन्यकालिकमेव तर्हि तत्तदातनकारणत्वोपयोगीति समानम् तदेतत् संवित्तिसत्त्वमिति गीयते असती सा न विशेषिका सती सा नेष्टेत्वभिसन्धानेन द्वैतापत्तेरि संवित्तिरपि सती न वेति पृच्छन् प्रतिवक्तव्यः ज्ञानं तावद्व्यवहारोपपादकतया द्वाभ्यामप्यनुमतं तस्यापि जिज्ञासायां त्रिचतुरकक्षाविश्रान्तगवेषणस्य यदि सत्त्वोपपदा भविष्यति तदा सत्ता, तेनेदमुपपादितम्भविष्यति । अथासत्ता तस्य पर्य्यवस्यति तदा असत्त्वैव तेनेदमुपपाद्यत इति स्वीकर्त्तव्यं भ्रमविपर्य्ययेणैव भ्रमे विशिष्टताव्यवहारः । अविचार्य्यैव तावत्तस्य सदसत्त्वं विचार आरब्धव्यः । अन्यथा प्रथममेव मतिकर्द्दमे कथारम्भमपगच्छामापद्येत। स्वीकृतञ्च भवतापि भविष्यदादिविषये विज्ञाने विशिष्टव्यवहारनिदानत्वमसतो विषयस्य, कारणगतेव विशेषकमसदेव कार्य्यम् । न च कालान्तरसम्बन्धिनी सत्ता तस्य एककालान्यत्र नान्यदापीति वैधर्म्यमेतयोरपीति वक्तव्यम् विशिष्टव्यवहारप्रवृत्तिसमये द्वयोरप्यसत्त्वाऽविशेषात्

प्रयोजनानुपयुक्ते काले तस्य स्वरूपतोऽवस्थानं पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवदसान्तमनुहरति तथापि कालान्तरस्थित्या घटादिकं स्वरूपतो विशेषणतश्च व्यवच्छिन्नं, तद्विधानेन स्वभाववलात् स्वविशेषणत्वेनोपादीयते। नत्वेवमत्यन्तासङ्गविदमर्हति तस्य स्वरूपतो विशेषणतश्च व्यवच्छिन्नतयानङ्गीकारात् कुत स्वभावतोविधानं सम्वन्धि निरूप्यते न।उक्तमत्र असतोऽपि तदेव रूपं तस्य नियतस्वरूपस्यैव नियतविशेषणस्यैवासत्त्वादन्यथातिप्रसङ्गात् भ्रान्तिविषयेण इतोऽसत्त्वाद्वैलक्षण्यमतिविस्तरेण"। खण्डनखण्डखाद्यम्। [२अव्यक्तत्वे च।

**असत्ता** स्त्री असतोभावः तल्। १अविद्यमानत्वे २असाधुत्वे

**असत्त्व** न० असतो भावः त्व। १अविद्यमानत्वे २अव्यक्तत्वे ३असाधुत्वे च सत्त्वं द्रव्यं न०त०। ४द्रव्यभिन्ने "सोऽसत्त्वप्रकृतिर्गुणः" इति फणिभा०। "क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः। असत्त्वरूपता तस्या इयमेवावधार्यताम्" इत्युक्तायां लिङ्गसंख्यानन्वयिन्यां कर्तृकर्मत्वभिन्नकारकत्वशून्यायां साध्यरूपयां ५क्रियायाञ्च। सत्त्वं प्रकाशादिसम्पादकं प्रकृतेर्गुणभेदः न०त०। तद्भिन्ने ६रजसि ७तमसि च न०। सत्त्वं जन्तुमात्रम् न०व०। ८जन्तुशून्ये त्रि०। सत्त्वं सात्त्विकः गुणभेदः। ९तच्छून्ये तामसादिगुणयुते त्रि०। सत्त्वमर्थक्रियाकारित्वम् अभावे न०त०। १०प्रयोजनानुपयुक्ते उदा० असत्ख्यातिशब्दे "सत्त्वासत्त्वकथा वृथा" खण्डनख०।

**असत्पथ** पु० असन् पन्थाः अच् समा०। १शास्त्रादिनिषिद्धे कार्यादौ २दुष्टे वर्त्मनि च। [दुष्टपथालम्बने।

**असत्परिग्रह** पु० असतः पथस्य परिग्रहः स्वीकारः।

**असत्प्रतिग्रह** पु० असतः निषिद्धस्य तिलादेः असद्भ्यो वा शूद्रादिभ्यः प्रतिग्रहः। १निषिद्धद्रव्यप्रतिग्रहे २शूद्रादिभ्यः प्रतिग्रहे च। प्रतिग्रहश्च अदृष्टार्थत्यक्तद्रव्यस्वीकारः। पारितोषिकोपढौकनादिग्रहणे तु न दोषः। विवरणमप्रतिग्राह्यशब्दे दृश्यम्। "शतसहस्रमसत्प्रतिग्रहेष्विति" विष्णु० "असत्प्रतिग्रहेषु उभयतोमुख्यादिप्रतिग्रहेष्विति" शु०त० रघुनन्दनः।

**असत्य** न० विरोधे न०त०। सत्यभिन्ने १मिथ्याभूते। २व्यर्थके वाक्यादौ "अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम्" मनुः। असत्यवादी असत्यभाषी असत्यवचनः। ३ तद्वयोक्तरि मिथ्याभूते ४वस्तुनि च त्रि०। "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इति गीता। असत्यत्वं वस्तुस्वभावविरोधिधर्मभेदः वाक्यस्य तु तथाभूतपदार्थप्रतिपादकत्वेन यथा इदं रजतमितिवाक्यं शुक्तिकायां रजततादात्म्यं प्रतिपादयत् असत्यं भवति एवमन्यदपि। सत्यत्वञ्च त्रैकालिकबाधशून्यत्वम् तच्छून्यमसत्यत्वम्। शंयुप्रजापतेः ५भार्य्याभेदे, स्त्री "शंयोरप्रतिमा भार्य्या सत्याऽसत्याच धर्मजा" भा०व०प०२१९ अध्या०।

**असत्यसन्ध** त्रि० असत्ये सन्धाऽस्य। १मृषार्थाभिसन्धानवति २अन्यथास्थितस्यात्मनोऽन्यथारूपाभिमानवति च। यथा देहादिषु असत्येषु आत्माभिमानोऽसत्यसन्धा। अत एव छा०उप० तस्य अनर्थहेतुत्वं दृष्टान्तेन समर्थितम्। "पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपाहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते॥ अथ यदि तस्याकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते। स यथा तत्र नादह्येतैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो!" "यथा सोम्य! पुरुषं चौर्यकर्मणि सन्दिह्यमानं निग्रहाय परीक्षणाय चोतापि हस्तगृहीतं बद्धहस्तमानयन्ति राजपुरुषाः। किं कृतवानयमिति पृष्टाश्चाहुरपाहार्षीद्धनमस्यायम्। ते चाहुः किमपहरणमात्रेण बन्धनमर्हति। अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गादित्युक्ताः पुनराहुः स्तेयमकार्षीच्चौर्य्येण धनमपाहार्षीदिति। तेष्वेवं वदत्सु इतरोऽपह्नुते नाहं तत्कर्त्ता इति। ते चाहुः सन्दिह्यमानाः स्तेयमकार्षीस्त्वमस्य धनस्येति। तस्मिन्नपह्नुवति आहुः परशुमस्मै तपतेति शोधयत्वात्मानमिति स यदि तस्य स्तैन्यस्य कर्त्ता भवति बहिश्चापह्नुते स एवम्भूतस्तत एवानृतमन्यथा आत्मानं कुरुते स तथानृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं मोहात् प्रतिगृह्णाति स दह्यतेऽथ हन्यते राजपुरुषैः स्वकृतेनानृताभिसन्धिदोषेण। अथ यदि तस्य कर्म्मणोऽकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स तथा स्तैन्याकर्तृतयात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति सत्याभिसन्धः सन्न दह्यते सत्यव्यवधानादथ मुच्यते च मृषाभियोक्तृभ्यः। तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोः,अनृताभिसन्धो दह्यते न तु सत्याभिसन्धः। स यथा सत्याभिसन्धस्तप्तपरशुग्रहणकर्म्मणि सत्यव्यवहितहस्ततलत्वान्नादाह्येत न

दृश्यते इत्येतदेव सद्ब्रह्म सत्याभिसन्धेतरयोः शरीरपातकाले च तुल्यायां सत्सम्पत्तौ विद्वान् सत्सम्पद्य न पुनर्व्याघ्रदेवादिदेहग्रहणायावर्त्तते,, इति भा० ।

**असदध्येतृ** पु० असत् निषिद्धशास्त्रमधीते अधि-इङ् तृच् । स्वशाखां परित्यज्यान्यशाखाध्येतरि शाखारण्डे । "स्वशाखां यः परित्यज्य अन्यत्र कुरुते श्रमम् । शाखारण्डः स विज्ञेयोवर्ज्जयेत् तं क्रियासु चेति" स्मृतिः तथाध्ययननिषेधात्तस्यासदध्येतृत्वम् । स्वशाखाध्ययनोत्तरम् क्रमेणान्यशाखाशास्त्रान्तराद्यध्ययनकर्त्तृत्वे तु न असदध्येतृत्वम् ।

**असदागम** पु० विरोधे न०त०। १सच्छास्त्रभिन्ने नास्तिकादिशास्त्रे २असतः द्रव्यस्यागमे च दुष्टद्रव्यलाभे च कर्म० ३दुष्टे आगमे। "सप्त वित्तागमाधर्म्म्यादायो लाभः क्रयो जयः। विभागः संप्रयोगश्च सत्प्रतिग्रहएव चेत्युक्तधर्म्योपायभिन्नः सदागमस्तद्भिन्नः असदागमः ।

**असदाचार** पु० अभावे न०त० । १सदाचाराभावे न०ब० । २सदाचारशून्ये त्रि० । सदाचारश्च वेदादिशास्त्रानुसारी आचारः सतामाचारश्च ।

**असदृश** त्रि० न०त० । अयुक्तरूपे अननुरूपे । "यदुक्तवत्य सदृशं वैदेही परुषं वचः" भा०व०प० २७८ अ० । स्त्रियां ङीप् ।

**असद्ग्रह** पु० असति अविद्यमाने वस्तुनि ग्रहः आग्रहः । बालादीनाम् (आवदार) इति ख्याते १आग्रहभेदे । कर्म० । २मिथ्याज्ञाने शुक्तिकारजतमित्यादिज्ञाने च ।

**असद्धेतु** पु० असन् व्यभिचारादिदोषवान् हेतुः । न्यायोक्ते व्यभिचारादिदोषयुक्ते हेतौ । यथा धूमवान् वह्नेरित्यादौ धूमाभाववति तप्तायःपिण्डे वह्नेः सत्त्वेन व्यभिचारात् धूमसाधने वह्निहेतोर्दुष्टत्वादसत्त्वम् एवमन्यत्राप्यूह्यम् । हेतुदोषाश्च सामान्यतः पञ्चविधाः "अनैकान्तोविरुद्धश्चाप्यसिद्धः प्रतिपक्षितः । कालात्ययोपदिष्टश्च हेत्वाभासाश्च पञ्चधा" भाषा० विस्तरो हेत्वाभासशब्दे वक्ष्यते ।

**असद्भाव** पु०सतोविद्यमानस्य भावः अभावे न०त० । १असत्त्वे अविद्यमानत्वे सन् भावः अभिप्रायः विरोधे न०त० । २दुष्टाभिप्राये । ब० ३तद्वति त्रि०।

**असद्वृत्ति** स्त्री सती वेदादिविहिता वृत्तिःस्वभावश्च अभावे न०त० । १सदाचाराभावे विरोधे न०त० । २निषिद्धाचारे । न०ब० । ३तद्वति त्रि०। [ ३तद्वति त्रि० ।

**असद्व्यवहार** पु०असन् दुष्टः व्यवहारः । १दुष्टव्यवहारे न०ब०।

**असन** पु० अस-क्षेपे-युच् । पीतसालवृक्षे (पियासाल) "प्रियविमानितमानवतीरुषां निरसनैरसनैरवृथार्थता" माघः तालव्यमध्यतापि "वृन्दावने तु विकसितकन्दलदशनैर्वीक्षति दरीसुखैश कन्दलदशनैः" उज्ज्वल०। भावे ल्युट् । २क्षेपणे न०। "शर्वानिरसने विनियोगः" भवदेवः । धातूनामनेकार्थत्वात् कर्त्तरि युच् । ३चलनशीले त्रि० "श्यानोरस्तु रसनाशुरण्यवः" ऋ० १,१५५,२, "शर्वामसनामस्तु द्यून्" ऋ० १,१४८,४ । [ सालवृक्षे ।

**असनपर्णी** स्त्री असनस्य पर्णमिव पर्णमस्याः गौ० ङीप् ।

**असनि** त्रि०अस-अनि । क्षेपके शस्त्रादि० चतुरर्थ्यां क । असनिकः तत्सन्निकृष्टदेशादौ त्रि० ।

**असन्तति** स्त्री सन्ततिर्धारा अभावे न०त०। तदभावे १विच्छेदे सन्ततिर्धारा वंशश्च न०ब० २तच्छून्ये त्रि० ।

**असन्तान** पु० सन्तानोविस्तारः अभावे न०त० । १विस्ताराभावे सन्तानोवंशोविस्तारश्च न०ब० । २विस्तारशून्ये ३वंशशून्ये च त्रि०। [पशून्ये त्रि०।

**असन्ताप** पु० अभावे न०त० । १सन्तापाभावे न०ब० । २सन्ता-

**असन्तुष्ट** त्रि० न०त०। सन्तोषशून्ये अधिकलाभेऽपि पुनरन्यधनाशावति "असन्तुष्टा द्विजा नष्टाः सन्तुष्टाः पार्थिवास्तथा" नीतिः । [२सन्तोषशून्ये अधिकलाभाशावति ॥

**असन्तोष** पु०अभावे न०त० १सन्तोषाभावे तृष्णाभावे। न०ब०।

**असन्दिग्ध** त्रि० न०त० । १सन्देहाविषये २सन्देहशून्ये च । "स्वल्पाक्षरसन्दिग्धं सारवत् विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदोविदुः" ।

**असन्दित** त्रि० सम्+दो-क्त इत्त्वम् सन्दितं बद्धं न०त० । बन्धनशून्ये अनिरुद्धे "पतङ्गानसंदितो वि सृज" ऋ० ४,४,१, "असन्दितः परैरनिरुद्धः" भा० ।

**असन्दिन्** त्रि० सन्दा बन्धनं मत्वर्थे इनि न०त० । बन्धनशून्ये । "अद्दतं वर्हिस्त्वावसन्दिनम्" ऋ० ८,१०२,१४ "असन्दिनमबन्धनम्" भा० ।

**असन्धि** पु० अभावे न०त० । व्याकरणोक्तसन्धिकार्याभावे सन्धिः पूर्व्वापरवर्णयोः सन्निकर्षविशेषात् वर्णान्यथाभावलोपः उभयोर्मेलनस्थानम् राज्ञाशुपायभेदश्च न०ब० । तच्छून्ये त्रि० ।

**असन्नद्ध** त्रि० न सम्यक् नद्धः स्वकार्ये क्षमः । दृप्ते गर्व्विते पण्डितम्मन्ये तस्य सम्यक्पटुत्वाभावेऽपि दर्पेण तथात्वेनाभिमानात्तथात्वम् ।

**असन्निकर्ष** पु० अभावे न०त०। १सन्निकर्षाभावे विरोधे न०

त० । २दूरत्वे न०ब० । ३सन्निकर्षशून्ये दूरस्थे त्रि० ।

**असन्निकृष्ट** त्रि० विरोधे न०त० । १दूरस्थे ।

**असन्निधि** पु० अभावे न०त० । १नैकट्याभावे" विरोधे न० त० । २दूरत्वे । न० ब० । ३दूरस्थे त्रि० ।

**असन्निहित** त्रि० विरोधे न०त० । १दूरस्थे । २असम्यग्-निवेशिते च ।

**असपत्न** त्रि० विरोधे न०त० । १शत्रुभिन्ने मित्रे न०त० । २शत्रुशून्ये त्रि० "इमं देवा असपत्नम्" यजु०९,४, स्त्रियां शार० ङीप् "असपत्नी सपत्नघ्नी जयन्त्यभिभूवरी" ऋ० १०, १५९,५ । यत्र उपाधीयमाने इष्टकाभेदे "पञ्चम्यामन्तेष्वश्विनीवदसपत्नी" कात्या० १७,११,१ । "असपत्नी इष्टका" कर्क० ।

**असपिण्ड** पुंस्त्री०न समानः पिण्डः देहारम्भकावयवभेदो यस्य । सप्तमपुरुषाद्यनन्तर्गतयोः स्त्रीपुरुषयोः । "असपिण्डा च या मातुरसगोत्रा च या पितुः" मनुः असपिण्डः स-पिण्डो वा स्नातीनयोपनायितः" स्मृतिः । सपिण्डशब्द-निर्वचनेन च सापिण्ड्यं मिताक्षराकृता "अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीमिति" या० स्मृतिव्याख्याने दर्शितम् । असपिण्डां समान एकः पिण्डोदेहो यस्याः सा सपिण्डा न सपिण्डा असपिण्डा ताम् । सपिण्डता चैकशरीरावयवान्वयेन पित्रा सह एकपिण्डता । एव म्पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मात्रा । तथा मातामहादिभि-रपि मातृद्वारेण । तथा मातृष्वसृमातुलादिभिरपि एक शरीरावयवान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि । तथा पत्या सह पत्न्या एकशरीरारम्भकतया । एवं भ्रातृभार्य्याणामपि परस्परमेकशरीरारम्भैः सह एक शरीरारम्भकत्वेन । एवं यत्र यत्र सपिण्डशब्दः तत्र तत्र साक्षात् परम्परया वा एकशरीरावयवान्वयो वेदितव्यः । अनयस्त्वैकशरीरावयवान्वयेन सापिण्ड्यं वर्णनीयम् । "आत्मा हि जज्ञ आत्मन इत्यादि" श्रुतेः तथा "प्रजा-मनु प्रजायसे" इति तथा "स एवायञ्चिरुद्धः पृथक् पृथक् प्रत्यक्षेणोपलभ्यते" इत्यापस्तम्बवचनाच्च । तथा गर्भोप-निषदि । "एतत्षाट्कौषिकं शरीरन्त्रीणि मातृतस्त्रीणि पितृतः अस्थिस्नायुमज्जानः पितृतः । त्वङ्मांसरुधिराणि मातृत" इति । तत्र तत्रावयवान्वयप्रतिपादनात् । निर्व्वाप्यपिण्डान्वयेन तु सापिण्ड्ये मातृसन्ताने भ्रातृ-भ्रात्रादिषु च सापिण्ड्यं न स्यात् । समुदायशक्त्यङ्गीकारेण रूढपरिग्रहे अवयवशक्तिस्तत्र तत्रावगम्यमाना परित्यक्ता स्यात् । "असत्त्वव्ययवाचेषु योऽन्यत्रार्थे प्रयुज्यते । तत्रा नन्यगतित्वेन समुदायः प्रसिध्यति" । एवमारम्भयैकशरीरा-वयवान्वयेन सापिण्ड्ये यथा नातिप्रसङ्गस्तथा वक्ष्यामः" । "असपिण्डामित्यत्र कशरीरावयवान्वयद्वारेण साक्षात् पार-म्पर्य्येण वा सापिण्ड्यमुक्तनाच्च सर्व्वस्य सर्व्वत्र यथाकथ-ञ्चिदनादौ संसारे सम्भवतीत्यतिप्रसङ्ग इत्यत आह" । "पञ्चमात्सप्तमादूर्द्धं मातृतः पितृतस्तथा" या०स्मृ० । "मातृ-तोमातृसन्ताने पञ्चमादूर्द्धम् । पितृतः पितुः सन्ताने सप्तमा-दूर्द्धं सापिण्ड्यं निवर्त्तते इति शेषः । ततश्चायं सपिण्ड-शब्दोऽवयवशक्त्या सर्व्वत्र प्रवर्त्तमानोऽपि निर्मथ्य पङ्कजादि-शब्दवन्नियतविषय एव । तथा च पित्रादयः षट् सपिण्डाः पुत्रादयश्च षडात्मा च सप्तमः । सन्तानभेदेऽपि यतः सन्तान-भेदः, तमादाय गणयेद्यावत्सप्तम इति सर्व्वत्र योज-नीयम् । तथा च मातरमारभ्य तत्पितृपितामहादि-गणनायां पञ्चमपुरुषसन्तानवर्त्तिनी मातृतः पञ्चमीत्युपवर्यते एवं पितरमारभ्य तत्पित्रादिगणनायां सप्तमपुरुषस-न्तानवर्त्तिनो पितृतः सप्तमीति" मिता० । एवमेकगोत्रेऽपि सापिण्ड्यम् पितृपक्षीयं ज्ञेयं अदत्तस्त्रीणां तु त्रिपौरुषं सापिण्ड्यम् दत्तानां तु सगोत्रत्वाभावाच्चाशौचमिति" भेदः दायपक्षोपयोगिसापिण्ड्यं तु दातृत्वभोक्तृ-त्वान्यतरसम्बन्धेनैकपिण्डवत्त्वमिति दायभागानुसारिणः ।

**असभ्य** त्रि० सभायामर्हति यत् न०त० । सभायामनुपयुक्ते १स्त्रीवर्णनादौ, २खले च ।

**असम** त्रि० नास्ति समोयस्य । १अतुल्ये । "संप्रधार्य्याब्रवीद्धाता न समौ नासमाविति" मनुः । समः युग्मसंख्यान्वितः २तद्भिन्ने अयुग्मे विषमे (बिजोड) एकत्रिपञ्चादि संख्यान्विते च यथा मेषादिषु द्वादशराशिषु मेषमिथुनसिंह तुलाधनुःकुम्भाः असमराशयः एवमन्यत्रापि । ३बुद्धभेदे पु० ।

**असमक्ष** न० न समक्षम् । १अप्रत्यक्षे अनुमित्यादिज्ञाने अर्थ० अच् । २तद्विषये त्रि० ।

**असमग्र** त्रि० न०त० । असम्पूर्णे असकले ।

**असमञ्जस** न० समञ्जसं युक्तियुतं न०त० । १असङ्गते । "यद्यपि का नो हानिः परस्य द्राक्षां रासभश्चरति । असमञ्जसमिति मत्वा तथापि तरलायते चेतः" उद्भटः ।

**असमञ्जस्** पु० सम्+अनज्—असुन् न०त० । सगरस्य पट्टोद-पुत्रे अंशुमतः पितरि सूर्य्यवंश्ये क्षत्रियभेदे तत्कथा "अयोध्याधिपतिः श्रीमान् पूर्व्वमासीद्दराधिपः । सगरो-

नाम धर्म्मात्मा प्रजाकामः स चाप्रजाः। विदर्भराजदुहिता केशिनी नाम नामतः। ज्येष्ठा सगरपत्न्यासीद्धर्म्मिष्ठा सत्यवादिनी। अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि। द्वितीया सगरस्यासीत् पत्नी परमधार्म्मिकी” इत्युपक्रम्य। “अथ कालेन महता पुत्रं ज्येष्ठा व्यजायत। असमञ्ज इति ख्यातं काकुत्स्थं सगरात्मजम्” रामा०आ०२०अ०। “असमञ्ज इति ख्यातः सगरस्य सुतोऽह्यभूत्। यं शैब्या जनयामास पौराणां स हि दारकान्। गलेषु क्रोशतो गृह्य नद्यान्निचिक्षेप दुर्बलान्। ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः। सगरञ्चाभ्ययाचन्त सर्वे प्राञ्जलयः स्थिताः। त्वं नस्त्राता महाराज! परचक्रादिभिर्भयात्। असमञ्जोभयाद्घोरात्ततो नस्त्रातुमर्हसि। पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः। मुहूर्त्तं विमना भूत्वा सचिवानिदमब्रवीत्। असमञ्जः पुरादद्य सुतो मे विप्रवास्यताम्। यदि वो मत्प्रियं कार्य्यमेतच्छीघ्रं विधीयताम्। एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप!। यथोक्तं त्वरिताश्चक्रुर्यथा ज्ञापितवान्नृपः। एतत्ते सर्व्वमाख्यातं यथा पुत्रो महात्मना। पौराणां हितकामेन सगरेण विवासितः” भा०व०प० १०७ अ०। असच्। असमञ्जसोऽपि तस्मिन्नर्थे “असमञ्जस इत्युक्तः स केशिन्या नृपात्मजः। तस्य पुत्रोंऽशुमान्नाम पितामहहिते रतः”। “असमञ्जस आत्मानं दर्शयन्नसमञ्जसम्। जातिस्मरः पुरा सङ्गाद्योगी योगाद्विचालितः। आचरन् गर्हितं लोके ज्ञातीनां कर्म्म विप्रियम्। सरय्वां क्रीडतोबालान् प्रास्यदुद्वेजयन् जनान्। एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै। योगैश्वर्य्येण बालांस्तान् दर्शयित्वा ततो ययौ। अयोध्यावासिनः सर्व्वे बालकान् पुनरागतान्। दृष्ट्वा विसिस्मिरे राजन्! राजा चाप्यन्वतप्यत” भाग० ९स० ८अ०।

**असमद** त्रि० सह मदेन गर्वेण समदः कलहःस नास्ति यत्र। कलहरहिते विरोधशून्ये। “तयैभ्योऽसमदं करोति तदभिनयति” “ताभ्यएवैतत्सह सतीभ्योऽसमदं करोति” इति च शत०ब्रा० “असमदमकलहं परस्पराविरोधम्” भा०।

**असमन** त्रि० असममतुल्यत्वं भिन्नवर्णत्वात् नयति नी—ड। विभिन्नवर्णे “असमना अजिरासो रघुष्यदः” ऋ० ११४०,४, असमना भिन्नवर्णाः भा०।

**असमनेत्र** पु० असमानि अयुग्मानि नेत्राण्यस्य। त्रिनेत्रे शिवे असमलोचनादयोऽप्यत्र।

**असमय** पु० अपकृष्टार्थे न०त०। १दुष्टकाले २अयोग्यकाले च “असमये मतिरुन्मिषति ध्रुवम्” नैषधचरिते ४सर्गः।

**असमर्थ** त्रि० समर्थः शक्तः न०त०। १अशक्ते २दुर्बले च। समर्थः सङ्गतार्थः न०त०। असङ्गतार्थे, व्याकरणशास्त्रप्रसिद्धे यत्र यस्यान्वययोग्यता तत्सहचारानपेक्षायुक्ते ३समासे यथा अश्राद्धभोजीत्यादौ असमर्थसमासः नञ्पदस्य श्राद्धेन सहान्वयायोग्यत्वात् भोजनेन च सहचाराभावेऽपि तत्रान्वयस्य अपेक्षणीयत्वात्तथात्वम्।

**असमर्थसमास** पु० कर्म्म०। येन सह यस्य अन्वयस्तद्व्यतिरेकेण अन्यान्वितेन पदेन समासे। यथा अश्राद्धभोजीति असूर्य्यं पश्येत्यादि। [कन्दर्पे असमसायकादयोऽप्यत्र।

**असमबाण** पु० असमा अयुग्मानि बाणा अस्य। पञ्चबाणे

**असमष्ट** त्रि० सम+अश—क्त न०त०। अव्याप्ते। “पितामतीनामसमष्टकाव्यः” ऋ०९,७६,४, “असमष्टकाव्यः अनन्याक्रमीत” भा०।

**असमवायिकारण** न० समवैति सम+अव-इण-णिनि न०त०कर्म्म०। न्यायमते समवायिकारणं द्रव्यं तद्भिन्नं द्रव्यवृत्ति यत् गुणादिकं कारणं तस्मिन्नर्थे। यथा कपालद्वयसंयोगरूपो गुणोघटस्य, द्रव्याश्रिता क्रिया संयोगविभागादेः। “असमवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्”। “यत् समवेतं कार्य्यं भवति ज्ञेयन्तु समवायि जनकं तत्”। “तत्रासन्नं जनकं द्वितीयम्” “गुणकर्म्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम्” इति च भाषा०व्याख्यातञ्च तत् मुक्ता०। “तत्र समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात्, एवं वेगादीनामपि अभिघाताद्यसमवायिकारणत्वं स्यात्, एवं ज्ञानादीनामिच्छाद्यसमवायिकारणत्वं स्यात् तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयं, तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव, एवं वेगादिकं वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्य्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं न देयम्, आत्मविशेषगुणानान्तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव। अत्र समवायिकारणे प्रत्यासत्तं द्विविधं कार्य्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च आद्यं यथा घटादिकं प्रति कपालसंयोगादिकं, तत्र कार्य्येण घटेन सह कारणस्य कपालसंयोगस्य एकस्मिन् कपाले प्रत्यासत्तिरस्ति, द्वितीयं यथा घटरूपं प्रति कारणं घटः तेन सह कपालरूपस्य एकस्मिन् कपाले

प्रत्यासत्तिरस्ति, तथाच कचित् समवायसम्बन्धेन, कचित् स्वसमवायिसमवायसम्बन्धेनेति फलितार्थः । इत्थञ्च कार्य्ये कार्य्यकारणैकार्थान्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्य्यवसन्नम्” ।

कुत्र कुत्र किंकिमसमवायिकारणं? वैशेषिकसूत्रे तदुक्तं ततउद्धृत्य किञ्चित् प्रदर्श्यते ।

“आत्मसंयोगप्रयत्नाभ्यां हस्ते कर्म्म१ । तथा हस्तसंयोगाच्च मुषले कर्म्म२ । अभिघातजे मुषलादौ कर्म्मणि व्यतिरेकादकारणं हस्तसंयोगः३ । तथात्मसंयोगो हस्तकर्म्मणि४ । अभिघातान्मुषलसंयोगाद्धस्ते कर्म्म५ । आत्मकर्म्म हस्तसंयोगाच्च ६ । संयोगाभावे गुरुत्वात् पतनम्७ । नोदनविशेषाभावान्नोर्द्ध्वं न तिर्य्यग्गमनम्८ । प्रयत्नविशेषान्नोदनविशेषः९ । नोदनविशेषादुदसनविशेषः१० । हस्तकर्म्मणा दारकर्म्म व्याख्यातम्११ । तथा दग्धस्य विस्फोटने१२ । यत्नाभावे प्रसुप्तस्य चलनम्१३ । तृणे कर्म्म वायुसंयोगात्१४ । मणिगमनं सूच्यभिसर्पणमदृष्टकारणम्१५ । इषावयुगपत्संयोगविशेषाः कर्म्मान्यत्वे हेतुः १६ । नोदनादाद्यमिषोः कर्म्म तत्कर्म्मकारिताच्च संस्कारादुत्तरं तथोत्तरमुत्तरञ्च१७ संस्काराभावे गुरुत्वात् पतनम्” १८ वै०सू० “संयोगश्च प्रयत्नश्च संयोगप्रयत्नौ आत्मनः संयोगप्रयत्नौ ताभ्यां हस्ते समवायिकारणे कर्म्म, तस्य च कर्म्मणः प्रयत्नवदात्मसंयोगोऽसमवायिकारणम्, प्रयत्नश्च निमित्तकारणम्, इयमेव चेष्टा, प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियायाश्चेष्टात्वात् स्वासमवेतस्वातिरिक्तस्पर्शवद्द्रव्यप्रयत्नजन्यक्रियाया वा१ । तथा हस्तसंयोगादुत्क्षेपणमुषलसंयोगादित्यर्थः अत्र च यत्नवदात्मसंयुक्तेन हस्तेन मुषलस्य संयोगोऽसमवायिकारणम्, मुषलं समवायिकारणम्, प्रयत्नगुरुत्वे निमित्तकारणे २। उदूखलाभिहतमुषलस्याकस्माद् यदुत्पतनं जायते तत्र कारणमाह । तत्र यद्यपि मुषलेन उत्पतता हस्तस्य संयोगोऽप्यस्ति तथाऽपि स संयोगोऽन्यथासिद्धः किन्तु उदूखलाभिघात एव असमवायिकारणम्, कुत एवमित्यत आह व्यतिरेकादिति प्रयत्नस्य व्यभिचारादित्यर्थः । यदि तदा प्रयत्नः स्यात् मुषलस्याकस्मिकमुत्पतनं न भवेत् विधारकेण प्रयत्नेन मुषलस्य धारणमेव भवेत् चेष्टाधीनं मुषलस्य पुनरुत्पतनं वा भवेत् इति भावः३ । मुषलेन सहोत्पततोहस्तस्य कर्म्मणि कारणविशेषमभिधातुं प्रयत्नवदात्मसंयोगस्यासमवायिकारणत्वं निराकर्त्तुमाह । मुषलेन सहोत्पततोहस्तस्य कर्म्मणि आत्मसंयोगः प्रयत्नवदात्मसंयोगस्तथा अकारणमित्यर्थः अकारणमिति पूर्व्वसूत्रस्थं तथेत्यतिदिश्यते४ । कुतस्तर्हि हस्ते तदोत्पतनमत आह । यथा मुषले उत्पतति मुषलमुखस्थं नोदकमुत्पतति तथा हस्तोऽपि तदोत्पतति । अत्राभिघातशब्देन अभिघातजनितः संस्कार उच्यते उपचारात्, उत्पततो मुषलस्य पटुतरेण कर्म्मणा अभिघातसहकृतेन स्वाश्रये मुषले संस्कारोजनितस्तत्कृतं संस्कारमपेक्ष्य हस्तमुषलसंयोगादसमवायिकारणाद्धस्तेऽप्युत्पतनं न तु तदुत्पतनं प्रयत्नवदात्मसंयोगासमवायिकारणकम्, अयमो हि हस्तो मुषलेन सहोत्पततीति भावः५ । ननु शरीरे शरीरावयवे वा यत्कर्म्मोत्पद्यते तत्र प्रयत्नवदात्मसंयोगः कारणं प्रकृते कथं न तथेत्यत आह । आत्मशब्दः शरीरावयवपर उपचारात् अन्यथानुपपत्तिरेवोपचारबीजम् । तथाचात्मनः शरीरावयवस्यापि हस्तस्य यत् कर्म्म तत् हस्तमुषलसंयोगात् चकाराच्च वेगसमुच्चयः, हस्तकर्म्मणि हस्तसंयोगस्यासमवायिकारणं तत्र व्यभिचारो नास्ति स च कचित् प्रयत्नवदात्मसंयोगः कचिद्वेगवन्मुषलादिसंयोगो यथा वातूलस्य शरीरावयवकर्म्मेति भावः ६ ॥ प्रयत्नानधीनकर्म्मप्रकरणमारभते । संयोगपदेन प्रतिबन्धकमात्रमुपलक्षयति तेन प्रतिबन्धकाभावे गुरुत्वादसमवायिकारणात् पतनम् अधःसंयोगफलिका क्रिया जायते, तत्र गुरुत्ववति फलादौ प्रतिबन्धकः संयोगः, विहङ्गमादौ तु विधारकः प्रयत्नः पतनप्रतिबन्धकः, एतेषामभावे गुरुत्वाधीनं पतनमित्यर्थः । अभिध्यानादिना विषादेरन्तरीक्षस्थापने अदृष्टवदात्मसंयोगो मन्त्रादिरेव वा प्रतिबन्धकस्तेषामपि संयोगपदेन संग्रहः७ ॥ ननु गुरुत्वाद् यदि पतनं तदा लोष्टादेरुत्क्षिप्तस्य कचिदूर्द्ध्वं कचिच्च तिर्य्यग्गमनं कथम्भवेदित्यत आह । गुरुत्ववतोऽपि लोष्टकाष्ठादेरूर्द्ध्वं तिर्य्यक् च गमनं तन्नोदनविशेषात् तीव्रतरान्नोदनात् । तथाच फलपत्रिपाषाणादौ संयोगप्रयत्नसंस्काराभावे यत् पतनं तत्र नोदनविशेषो नास्ति तेन न तिर्य्यक्, नचोर्द्ध्वं गमनमिति भावः८ । ननु नोदनविशेष एव कुत उत्पद्यते तत्राह । तिर्य्यक् ऊर्द्ध्वं दूरम् आसन्नं वा क्षिपामीतीच्छाकारणकः प्रयत्नविशेषः तज्जनितो नोदनविशेषस्ततो गुरुत्ववतो द्रव्यस्य लोष्टादेरूर्द्ध्वं तिर्य्यक् च गमनमुपपद्यते उदसनं दूरोत्क्षेपणम् ९,१०॥ उदूखलाभिघातात् मुषलेन सह हस्ते यत्कर्म्म उत्पन्नं तत्तावत् प्रयत्नपूर्व्वकं न भवति नापि पुण्यपापहेतुकमतस्तत्तुल्यतया बालकस्य क्रीडाकरचर-

णादिचालनं यत्नत्वातिदिशति । बालकस्य यद्यपि करचरणादिचालनं प्रयत्नपूर्व्वकमेव तथापि हिताहितप्राप्तिफलकं न भवति न पुण्यपापहेतुकमित्यतिदेशार्थः ११ ॥ इदानीं प्रयत्नपूर्व्वकेऽपि कर्म्मणि यत्र पुण्यपापहेतुकत्वं तत्र दारककर्म्मतुल्यतामतिदिशन्नाह । आततायिना केनाप्यगारे दाह्यमाने तत्र दग्धस्य पुरुषस्य विस्फोटे वर्द्धिते जाते सति तस्याततायिनो वधानुकूलेन प्रयत्नेन खड्गादौ यत्कर्म्म जनितं तन्न पुण्यहेतुकं न वा पापहेतुकं यथाहुः । "नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृच्छति" । "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः" १२ । इदानीं यत्नं विना यानि कर्म्माणि भवन्ति तान्याह । प्रसुप्तस्येति चैतन्याभावदशामुपलक्षयति तेन मूर्च्छितस्य जीवतोऽचैतन्येऽपि वायुकृतं चलनं द्रष्टव्यमत्र १३ ॥ शरीरकर्म्माणि व्याख्याय तदितराण्याह । तृणपदेन वृक्षगुल्मलतावतानादिकं सर्व्वमुपलक्षयति १४ । अदृष्टाधीनं कर्म परिगणयन्नाह । मणिपदेन कांस्यादिकमुपलक्षयति तेनाभिमन्त्रितं मणिकांस्यादि तस्कराभिमुखं यद्गच्छति तत्र गमने मण्यादि समवायिकारणम्, अदृष्टवत्तस्करात्ममणिसंयोगोऽसमवायिकारणम्, तस्करस्य पापं निमित्तकारणम् । सूच्यभिसर्पणमिति सूचीपदेन लौहमात्रं तृणञ्चोपलक्षयति तथा चायस्कान्ताभिमुखं यत्सूच्यादेर्गमनं तृणकान्ताभिमुखं यत् तृणस्य गमनं तत्र सूच्यादि समवायिकारणम्, यस्य हितमहितं वा तेन तृणसूच्यादिगमनेन तददृष्टवदात्मसंयोगोऽसमवायिकारणम्, तददृष्टमेव निमित्तकारणम्, एवमन्यदप्यूह्यम् । तद्यथा वह्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यग्गमनं सर्गादौ परमाणुकर्म्मादि १५ । ननु शरविहङ्गमालातचक्रादीनामुपरमपर्य्यन्तमेकमेव कर्म्म नाना वेति संशये निर्णयहेतुमाह । इषाविति षष्ठ्यर्थे सप्तमी, इदमत्राकूतं वेगेन गच्छतां शरादीनां कुड्यादिसंयोगानन्तरं शरादौ सतोऽर गत्युपरमो दृश्यते चलाश्रयनाशस्यावश्च तन्नाशकः आश्रयस्य विद्यमानत्वात् विरोधिगुणान्तरञ्च नोपलभ्यते तेन स्वजन्यः संयोग एव कर्म्मनाशक इत्युन्नीयते स च संयोगश्चतुर्थक्षणे जातः पञ्चमक्षणे कर्म्म नाशयति । तथा हि कर्म्मोत्पत्तिस्तत्र विभागः अथ पूर्व्वसंयोगनाशः उत्तरसंयोगः कर्म्मनाशः तेनायुगपत्संयोगविशेषाः कर्म्मनानात्वज्ञापका इत्यर्थः संयोगविशेषा इति संयोगे विशेषः स्वजन्यत्वमेव अन्यथा संयोगमात्रस्य कर्मनाशकत्वे कर्म्म क्वचिदपि न तिष्ठेत् १६ । नोदननिष्पाद्यकर्मप्रकरणानन्तरं संस्कारनिष्पाद्यकर्मप्रकरणमारभते । पुरुषप्रयत्नेनाकृष्टया पतञ्चिकया तृणस्येषोराद्यं कर्म जायते तत्र नोदनमसमवायिकारणम्, इषुः समवायिकारणम्, प्रयत्नगुरुत्वे निमित्तकारणे, तेन चाद्येन कर्मणा समनाधिकरणो वेगाख्यः संस्कारो जन्यते न च वेगेन, गच्छतीति प्रत्ययसिद्ध एव तेन संस्कारेण तत्रेषौ कर्म्म जायते तत्रासमवायिकारणं संस्कारः, समवायिकारणमिषुः, निमित्तकारणन्तु तीव्रो नोदनविशेषः, एवञ्च यावदिषुपतनमनुवर्त्तमानेन संस्कारेण उत्तरोत्तरः कर्मसन्तानो जायते स्वजन्योत्तरसंयोगेन कर्मणि नष्टे संस्कारेण कर्मान्तरजननात् एक एव संस्कारः कर्मसन्तानजनकः न तु कर्मसन्तानवत् संस्कारसन्तानोऽप्यभ्युपगन्तुमुचितो गौरवादिति दर्शयितुमाह तथोत्तरमुत्तरञ्चेति तत्कर्मकारिताच्च संस्कारादित्येकवचनञ्च, न्यायनये तु कर्मसन्तानवत् संस्कारसन्तानस्वीकारे गौरवम्, यत्तु युगपत्प्रक्षिप्तशरयोरेकस्य तीव्रो वेगोऽपरस्य तु मन्दस्तत्र नोदनतीव्रत्वमन्दत्वे निमित्तम् १७ । ननु संस्कार एक एव चेत् कर्मसन्तानजनकस्तदा कदाचिदपि शरपातो न स्यात् कर्मजनकस्य संस्कारस्य सत्त्वादित्यत आह । गुरुत्वन्तावत् पतनकारणमनुवर्त्तमानमेव तच्च गुरुत्वं संस्कारेण प्रतिरुद्धं पतनं नाजीजनत् अथ प्रतिबन्धकाभावे तदेव गुरुत्वं पतनं करोतीत्यर्थः" १८ । उपस्कारः ।

"नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म१ । तद्विशेषेणादृष्टकारितम्२ । अपां संयोगाभावे गुरुत्वात् पतनम्३ । द्रवत्वात् स्यन्दनम्४ । नाड्यो वायुसंयोगादारोहणम्५ । नोदनापीडनात् संयुक्तसंयोगाच्च६ । वृक्षाभिसर्पणमित्यदृष्टकारितम्७ । अपां संघातो विलयनञ्च तेजःसंयोगात्८ । तत्र विस्फूर्ज्जथुर्लिङ्गम्९ । वैदिकञ्च१० । अपां संयोगाद्विभागाच्च स्तनयित्नोः११ । पृथिवीकर्मणा तेजःकर्म वायुकर्म च व्याख्यातम्१२ । अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम्१३ । हस्तकर्मणा मनसः कर्म व्याख्यातम्१४ । आत्मेन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे१५ । तदनारम्भ आत्मस्थे मनसि शरीरस्य दुःखाभावः स योगः १६ । अपसर्पणमुपसर्पणमशितपीतसंयोगाः कार्य्यान्तरसंयोगाश्चेत्यदृष्टकारितानि" १७ । वै० सू० नोदनादिनिष्पाद्यकर्मपरीक्षाप्रकरणम् तत्राह । नोदनं संयोगविशेषः येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतु

र्म भवति यः संयोगः शब्दनिमित्तकारणं न भवति सः । यः संयोगः शब्दनिमित्तकारणं भवति यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघातः । ताभ्यामपि प्रत्येकं कर्म जन्यते पङ्काख्यायां पृथिव्यां चरणेन नोदनात् चरणाभिघाताच्च कर्म जायते तत्र पङ्कः समवायिकारणम्, नोदनाभिघातौ यथायथमसमवायिकारणम्, गुरुत्ववेगप्रयत्ना यथासम्भवं निमित्तकारणम् । संयुक्तसंयोगाद्दिति नोदनादभिघाताद्वा पङ्के कर्म तत्पङ्कस्थिते घटादावपि तत्समकालमेव कर्मदर्शनात्१। ननु भूकम्पादौ नोदनाभिघातावन्तरेण जायमाने किमसमवायिकारणमत आह । तदिति पृथिवीकर्म परामृशति पृथिव्यामेव कर्म यदि विशेषेण आगवेन भवति तदाऽदृष्टकारितम्, तेन भूकम्पेन यस्य दुःखं सुखं वा भवति अदृष्टवत्तदात्मसंयोगस्तत्रासमवायिकारणम्, भूः समवायिकारणम्, अदृष्टं निमित्तकारणम्, यद्वा तदा नोदनाभिघातौ परामृशति विशेषो व्यतिरेकः तथा च नोदनाभिघातव्यतिरेकेण यत् पृथिव्यां कर्म तददृष्टकारितमित्यर्थः२ । इदानीं द्रवद्रव्यसमवेतकर्मपरीक्षाप्रकरणम्, तत्राह । अपां यत् पतनं वर्षणरूपं तद्गुरुत्वासमवायिकारणकम्, तत्संयोगस्य मेघसंयोगस्याभावे सति भवति तेन संयोगाभावस्तन्निमित्तकारणमित्यर्थः३ । तेषामेव वृष्टिविन्दूनामन्योन्यसंयोगजनकं कर्म कथमत आह । क्षितौ पतितानामपां विन्दूनां परस्परं संयोगेन महज्जलावयवि स्रोतोरूपं यज्जायते तस्य यत् स्यन्दनं दूरसंसरणं तत् द्रवत्वादसमवायिकारणादुत्पद्यते गुरुत्वान्निमित्तकारणादप्सु समवायिकारणेषु४ । ननु यदि भूमिष्ठानामपाम् ऊर्द्ध्वं गमनं भवति तदा गुरुत्वात् पतनवर्षणं सम्भाव्यते तदेव तु कुत इत्यत आह । कारयन्तीति शेषः यदपामूर्द्ध्वमारोहणं तत् नाड्यः सूर्य्यरश्मयो वायुसंयोगात् कारयन्ति ग्रीष्मे वाय्वभिहताः सूर्य्यरश्मय एव आरोहयन्त्यप इत्यर्थः । क्वचित् पाठो नाडीवायुसंयोगादिति स च नाड्यो नाडीसम्बन्धी यो वायुसंयोग इत्युपपादनीयः५। ननु सूर्य्यरश्मीनां कथमयं महिमा यत् भूमिष्ठा अप ऊर्द्ध्वं नयन्तीत्यत आह । नोदनेन बलवद्वायुनोदनेन आपीडनादाक्रन्दनात् वायुसंयुक्ताः रश्मयस्तत्संयुक्ता अप ऊर्द्ध्वं धावन्ति यथा स्थालीस्था अपः क्वथ्यमानाः वायुनुदद्भिरश्मय ऊर्द्ध्वं नयन्ति, चकार इवार्थस्तत्र च उपमानं स्थालीस्था एवापो

दृष्टव्याः६ । ननु वृक्षे सिक्तानामपां वृक्षाभ्यन्तरेणोर्द्ध्वं गमनम् अभितः, तत्र नोदनाभिघातौ न आदित्यरश्मयः प्रभवन्ति तत्कथं तदित्यत आह । अभितः सर्पणमभिसर्पणं तदभिसर्पणं वृक्षे निषिक्तानामपां वृक्षे तददृष्टकारितं पत्रकाण्डफलपुष्पादिवृद्धिकृतं सुखं दुःखं वा येषामात्मनाम्, अदृष्टवत्तदात्मसंयोगादसमवायिकारणात् अदृष्टान्निमित्तादप्सु समवायिकारणेषु तत् कर्म भवति । येन कर्मणा आप ऊर्द्ध्वं गत्वा वृक्षं वर्द्धयन्तीत्यर्थः७ । नन्वपां सांसिद्धिकद्रवत्वं लक्षणमुक्तं तादृशानामेवापामूर्द्ध्वमधस्तिर्य्यक् च गमनमुपपादितं हिमकरकादेर्नाप्सु शैत्यादप्त्वमविवादसिद्धम्, तत्कथं तेषां संघातः काठिन्यम्, कथञ्च विलयनमित्यत आह । दिव्येन तेजसा प्रतिबन्धादाप्याः परमाणवो द्व्यणुकमारभमाणा द्व्यणुकेषु द्रवत्वं नारभन्ते ततो द्रवत्वशून्यैरवयवैर्द्व्यणुकादिप्रक्रमेण द्रवत्वशून्या हिमकरकादय आरभ्यन्ते तेन तेषां काठिन्यमुपलभ्यते । नन्वेवं हिमकरकादीनामाप्यत्वे किं प्रमाणमत उक्तं विलयनञ्च तेजःसंयोगादिति तेजःसंयोगेन बलवता हिमकरकारम्भकपरमाणुषु क्रिया क्रियातो विभागस्तत आरम्भकसंयोगनाशपरम्परया हिमकरकादिमहावयविनाशस्तत्र द्रवत्वप्रतिबन्धकतेजःसंयोगविगमात् त एव परमाणवः द्व्यणुकेषु द्रवत्वमारभन्ते ततो द्रवत्ववतां हिमकरकादीनां विलयनं तत्र च बलवत्तेजोऽनुप्रवेशो निमित्तम्८। ननु बलवद्दिव्यतेजोऽनुप्रवेशस्तत्र इत्यत्र किं प्रमाणमित्यत आह । तत्र दिव्यास्वप्सु दिव्यानां तेजसामनुप्रवेशे विस्फूर्जथुर्लिङ्गं यन्निर्घोष एव लिङ्गमित्यर्थः आत्यन्तिकविद्युत्प्रकाशस्तावत्प्रत्यक्ष एव तदनुपदञ्च स्फूर्जथुः सोऽपि प्रत्यक्ष एव तेनानुमीयते वज्रान्वेषात् करकाः प्रादुर्भवन्ति तत्र दिव्यन्तेजोविद्युद्रूपमनुप्रविष्टं तदुपष्टम्भेन करकारम्भकाणामपां द्रवत्वप्रतिबन्ध इति९ । अत्रैव प्रमाणान्तरमाह । अपां मध्ये तेजोऽनुप्रवेश आगमसिद्ध एवेत्यर्थः । तथा हि "आपस्ता अग्निं गर्भमादधीरन् या अग्निं गर्भं दधिरे सुवर्णम्" इत्यादि१०। ननु विस्फूर्जथुः कथमुत्पद्यते संयोगविभागौ शब्दयोनी तौ च नानुभूयेते इत्यत आह। विस्फूर्जथुरिति शेषः अद्भिः स्तनयित्नोः संयोगविभागौ निमित्तकारणीभूय स्तनयित्नोरेवाकाशेन संयोगादसमवायिकारणादाकाशे समवायिकारणे, शब्दं गर्ज्जितं जनयतः । क्वचिच्च वायुबलाहकसंयोगविभागौ निमित्तकारणे बलाहकवियत्संयोगविभागावसमवायिकारणे, कर्मकारणाधिकारेऽपि प्रासङ्गिकमिदमुक्तम्,

यद्वा भेर्य्याकाशसंयोगे विभागे वा शब्दासमवायिकारणे कारणम् अथापि नोदनाभिघातजनितं कर्मेति सूचितं कर्मण एवाधिकारप्राप्तत्वात् ११। भूकम्पं प्रत्यदृष्टवदात्मसंयोगः कारणमुक्तं तथैवाकस्मिकदिग्दाहहेतोस्तेजसः आकस्मिकहठादिवीभहेतोश्च प्रभञ्जनस्य कर्म यत् संजायते तत्राप्यदृष्टवदात्मसंयोगोऽसमवायिकारणम्, वायुतेजसी समवायिकारणम्, अदृष्टं निमित्तकारणमित्यर्थः, कर्मशब्दस्य द्वयाद्वर्त्तिर्मुल्कादिकर्मसूचनार्था १२। अदृष्टवदात्मसंयोगासमवायिकारणकं कर्मान्तरमाह। आद्यमिति सर्गाद्यकालीनमित्यर्थः, तदा नोदनाभिघातादीनामभावात् अदृष्टवदात्मसंयोग एव तत्रासमवायिकारणम् आद्यमूर्द्ध्वज्वलनम् आद्यं तिर्य्यक्पवनमिति, इतरेषां ज्वलनपवनकर्मणां वेगासमवायिकारणकत्वमेव मन्तुमुचितं दृष्टे कारणे सत्यदृष्टकल्पनानवकाशात् १३। अनाद्यं कर्माधिकृत्याह। हस्तोत्क्षेपणादौ यथा प्रयत्नवदात्मसंयोगासमवायिकारणकं हस्तकर्म तथाऽभिमतविषयग्राहिणीन्द्रिये सन्निकर्षार्थं यन्मनसः कर्म तदपि प्रयत्नवदात्मसंयोगासमवायिकारणकमेव। यद्यपीन्द्रियं मनो न साक्षात्प्रयत्नविषयस्तथापि मनोवहनाडीगोचरेण प्रयत्नेन मनसि कर्मोत्पत्तिर्द्रष्टव्या, नाड्यास्तु त्वगिन्द्रियग्राह्यत्वमङ्गीकर्त्तव्यम् अन्यथा प्राणवहनाडीगोचरेण प्रयत्नेनाशितपीताद्यभ्यवहरणमपि न सम्भवेत् १४। ननु मनसि कर्म्म उत्पद्यत इत्यत्रैव न प्रमाणमत आह। सुखदुःखे इत्युपलक्षणं ज्ञानप्रयत्नाद्यपि द्रष्टव्यं मनसो विभवं पूर्व्वमेव निराकृतम्, अणुत्वञ्च साधितम्, युगपज्ज्ञानानुत्पत्तिश्च मनसो लिङ्गमित्युक्तं तेन तत्तदिन्द्रियप्रदेशेन मनःसंयोगमन्तरेण सुखदुःखे न स्यातामेव यदि मनसि कर्म्म न भवेत् न भवेच्च पादे मे सुखं शिरसि मे वेदनेत्याद्याकारोऽनुभव इत्यर्थः। यद्यपि मनःसन्निकर्षाधीनः सर्व्वोऽप्यात्मविशेषगुणस्तथापि सुखदुःखे तीव्रसंवेगितयाऽतिस्फुटत्वादुक्ते १५। नन्वेवं यदि चपलं मनस्तदा चित्तनिरोधाभावाद्योगं विना नात्मसाक्षात्कारो न वा तमन्तरेण मोक्ष इति शास्त्रारम्भवैफल्यमतआह विषयेष्वलम्प्रत्ययत उदासीनस्य बहिरिन्द्रियेभ्यो व्यावृत्तं मनो यदात्मन्यात्मनिष्ठं भवति तदा तत्कर्मानुगुणप्रयत्नाभावात् कर्म्म मनसि नोत्पद्यते स्थिरतरं मनो भवति स एव योगः चित्तनिरोधलक्षणत्वाद् योगस्य, तदनारम्भ इति मनसः कर्मानारम्भ इत्यर्थः। यद्वा तत्पदेन सुखदुःखे एवाभिधीयेते प्रक्रान्तत्वात्, दुःखाभाव इति दुःखाभावसाधनत्वाद्योग एव दुःखाभावः "अन्नं वै प्राणाः" इति वत्, यद्वा दुःखस्याभावो यत्रेति बहुव्रीहिः, शरीरस्येति शरीरावच्छिन्नस्यात्मनः, स योग इति प्रसिद्धिसिद्धतया तत्पदम्, अयं स योगः। यद्वात्मपदेनात्र प्राण उच्यते उपचारात् प्राणानुमेयत्वादात्मनः तथा च प्राणवहनाड्यां कर्मणा प्राणकर्मापि जायते यद्वा जीवनयोनियत्नवदात्मप्राणसंयोगासमवायिकारणकं प्राणकर्म, जीवनयोनिश्च यत्नोऽतीन्द्रियः प्राणसञ्चारानुमेयः कथमन्यथा सुषुप्तस्यावस्थायामपि श्वासप्रश्वासगतागतमिति भावः १६। ननु प्राणस्य मनसश्च कर्म यदि प्रयत्ननिमित्तकं तदा प्राणमनसी यदा मरणावस्थायामपसर्पतः देहाद्बहिर्भवतः देहान्तरोत्पत्तौ तत्र पुनरुपसर्पतः प्रविशतः तत्र प्रयत्नाभावात्तदुभयमनुपपन्नम्, अशितपीतं भक्तपानीयादि तस्यापि शरीरावयवोपचयहेतुर्यः संयोगस्तज्जनकं यत् कर्म यच्च गर्भवासदशायां संयोगविभागजनकं कर्म तेषां कथमुत्पत्तिरत आह। अत्र "नपुंसकमपुंसकेनैकवच्चास्यान्यतरस्यामिति" पा० नपुंसकनिर्द्देशः, संयोगपदञ्च तत्कारणे कर्मणि लाक्षणिकम्, अपसर्पणं देहारम्भककर्मक्षये देहादेव प्राणमनसोरुत्क्रमणम्, उपसर्पणञ्च देहान्तरोत्पत्तौ तत्र प्राणमनसोः प्रवेशनम्, अशितपीतादिसंयोगहेतुश्च कर्म, कार्य्यान्तरं गर्भशरीरं तत्संयोगहेतुश्च यत् कर्म तत् सर्व्वमदृष्टवदात्मसंयोगासमवायिकारणकम्, इतिकारेण धातुमलकर्म्मणामप्यदृष्टवदात्मसंयोगासमवायिकारणकत्वं सूचयति" १७ उप०।

**असमवायिन्** त्रि० न समवैति सम्+अव+इन–इनि न० त० स्त्रियां ङीप्। १असंबद्धे अमिलिते न्यायोक्ते २समवायसम्बन्धशून्ये जात्यादौ ३असमवायिकारणे च "कारणान्यसमवायिनो गुणाः" वै० सू० "ननु यद्यमूर्त्तत्वात् गुणाः कर्मसमवायिकारणं न भवन्ति तदा गुणैर्गुणाः कर्माणि च कथमुत्पद्यन्ते न हि समवायिकारणातिरिक्तरूपेणापि कारणता संभवतीत्यत आह गुणा असमवायिकारणं न तु समवायिकारणमपि येन कर्माधाराः स्युः। सा चासमवायिकारणता क्वचित् कार्य्यैकार्थसमवायात् यथाऽऽत्ममनःसंयोगस्यात्मविशेषगुणेषु संयोगविभागशब्दानां शब्दे, क्वचित् कारणैकार्थसमवायात् यथा कपालादिरूपादीनां घटादिरूपादिषु" उपस्कारः।

**असमवृत्त** न० न समानि भिन्नलक्षणकत्वात् न तुल्यानि पदानि यत्र कर्म०। छन्दःशास्त्रोक्ते १विषमवृत्ते तानि च "युक्पादोऽष्टभिर्वर्णैः परेऽक्षान्धकरालयैः क्रमाद्वृताः"

इत्यादीनि वृत्त०उक्तानि ज्ञेयानि। न०। २अनुपमचरिते त्रि०

**असमस्त** त्रि० सम+अस–क्त न०त०। १असंक्षिप्ते २व्यस्ते "एते व्यस्ताः समस्ता वेति" विश्वामित्रवचनव्याख्याने "व्यस्ताः असमस्ताः" प्रा०त० रघु०। ३असमासे व्याकरणोक्तसमासशून्ये विभक्त्यादिकार्य्ययुक्ते ४विग्रहवाक्ये न०।

**असमाति** त्रि० समं साम्यमतति अत–इन् न०त०। अतुल्ये अनुपमे "एवाहि जातो असमात्योजाः" ऋ० ६,२८,६।

**असमान** त्रि० न०ब०। अतुल्ये। "समानं लघु चाशौच पूर्व्वेणैव विशुध्यति। असमानं द्वितीयेन" यमः।

**असमानयानकर्म्मन्** पु० न समानं तुल्यकालिकं यानकर्म्म यत्र। सन्धिभेदे। त्वमपि याहि ततोऽहं यास्यामीति समयं कृत्वा यत्र पूर्व्वोत्तरं जिगीषुभ्यां गम्यते तादृशे यानकर्म्मरूपे सन्धौ। [२समाप्तिशून्ये त्रि०।

**असमापन** न० अभावे न०त०। १संपूर्त्त्यभावे न०ब०।

**असमाप्त** त्रि० न समाप्तः। १असम्पूर्णे "असमाप्ते व्रते चैव नैव कुर्य्यात् व्रतान्तरम्" स्मृतिः। संकल्पपूर्व्वकमङ्गीकृतव्रतस्यासमापने व्रतान्तरस्याकर्त्तव्यताऽत्रोक्ता। आरब्धकर्म्मणः सम्पूर्णता समाप्तिः। २तच्छून्ये च "असमाप्ते परिकर्म्मणि स्मृतः" कुमा०। ३सम्यगप्राप्ते च।

**असमाप्ति** स्त्री अभावे न०त०। १समाप्त्यभावे न०ब०। २समाप्तिशून्ये त्रि०। ३सम्यगप्राप्तौ स्त्री ४तच्छून्ये त्रि०

**असमावृत्त** पु० न०त०। समावृत्तः वेदब्रह्मचर्य्यतया गुरुणानुमतः गुरुकुलादावृत्तः गार्हस्थ्यकर्म्मकरणाय कृतसमावर्त्तनसंस्कारः न०त०। तद्भिन्ने ब्रह्मचारिणि स्वार्थे कन् असमावृत्तकोऽप्यत्रार्थे। "मासिकान्नं तु योऽश्नीयादसमावृत्त(वर्त्त)को द्विजः" मनुः। असमावर्त्तकोऽप्यत्र।

**असमाहार** पु० समाहारो मेलनं संघातः सम्यगाहरणञ्च अभावे न०त०। १तदभावे न०ब०। २तच्छून्ये त्रि०।

**असमाहित** त्रि० न०त०। १समाधिशून्ये चित्तैकाग्रताशून्ये २असन्निवेशिते च।

**असमीक्ष्यकारिन्** त्रि० समीक्ष्य विविच्य न करोतीति कृ+णिनि। १विवेचनामकृत्वैव कर्म्मकारके, २मूर्खे च।

**असमृद्धि** स्त्री ऋद्धेराधिक्यं समृद्धिः अभावे न०त०। १ऋद्ध्याधिक्याभावे "नात्मानमवमन्येत पूर्व्वाभिरसमृद्धिभिः" मनुः। न०ब०। २समृद्धिशून्ये त्रि०।

**असम्पत्ति** स्त्री अनुरूपात्मलाभः सम्पत्तिः लक्ष्मीश्च अभावे न०त०। १सम्पत्त्यभावे। न०ब०। २तच्छून्ये त्रि०।

**असम्पन्न** त्रि०। सम्पन्नः सम्यग्युक्तः अनुरूपात्मस्वरूपप्राप्तश्च न०त०। तद्भिन्ने। [२संबन्धशून्ये त्रि०।

**असम्पर्क** पु० अभावे न०त०। १संबन्धाभावे न०ब०।

**असम्पूर्ण** त्रि० यावत्पर्य्यन्तानुसरणे समाप्तिस्तद्वान् सम्पूर्णः न०त०। तादृशपूर्त्तिशून्ये। यथा असम्पूर्णं चन्द्रमण्डलम् "क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम्" मुद्राराः०

**असम्पृक्त** त्रि० न०। १असंबद्धे २असंयुक्ते।

**असम्प्रज्ञात** त्रि० न सम्यक् ज्ञातः ज्ञेयादिभेदो यत्र। पातञ्जलोक्ते ध्येयज्ञानज्ञातृभेदशून्ये निर्विकल्पके १समाधौ। समाधिस्तावत् द्विविधः सम्प्रज्ञातः असम्प्रज्ञातश्च तत्राद्यः सविकल्पकः ग्राह्यग्रहणग्रहीतृप्रतिभासत्वात् तत्प्रतिभासशून्यो निर्विकल्पकः सर्व्वविकल्पशून्यत्वादसम्प्रज्ञातो द्वितीयः यथाह पात० सूत्रादौ "क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः" यथाऽभिजातस्यातिस्वच्छस्य मणेः स्फटिकादेः कुसुमाद्युपरक्तस्य स्वरूपाभिभवेन रक्ताद्याकारता भवति तथा अभ्यासवैराग्याभ्यां क्षीणवृत्तेरभिभूतरजस्तमोवृत्तिकस्य चित्तस्य स्थूलसूक्ष्मभूतात्मकग्राह्यैः ग्रहणैरिन्द्रियादिवृत्तिभिः ग्रहीत्रा च वितर्कविचारानन्दास्मितानुगमात् तदाकारतापत्तिः समाधिर्भवति सेयं सम्प्रज्ञाताख्या समापत्तिः। तद्भिन्ना च असम्प्रज्ञाता समापत्तिः। संप्रज्ञातभेदादिकं च तच्छब्दे वक्ष्यते। अस्या एव च निर्बीज इति संज्ञान्तरम् "तस्यापि निरोधात् निर्बीजः समाधिः" पात०सू० सत्त्वपुरुषान्यताख्यात्यनन्तरं परवैराग्यसंस्कारप्रचयेन तस्य सम्प्रज्ञातसमाधिसंस्कारस्य तत्प्रत्ययाश्च निरोधे सति सर्व्वस्य सम्प्रज्ञातजन्यसंस्कारप्रवाहस्य निरोधात् समाप्ताधिकारत्वेन चित्तस्य कृतकृत्यता स्यात् निमित्तापाये नैमित्तिकापाय इति न्यायेन निर्बीजः समाधिर्जायते स च "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयेत् प्रज्ञां लभते योगमुत्तमम्" इत्युक्तः आगमेन श्रवणेन अनुमानेन मननेन ध्यानाभ्यासे योरसः परमवैराग्यं तेन प्रज्ञाप्रसादेन प्रज्ञां पुरुषसाक्षात्कारं संपादयन् योगं निर्बीजसमाधिं लभते इति तदर्थः कालक्रमेण निर्बीजसमाधिसंस्कारप्रचये सति स्वप्रकृतौ चित्तं लीयते हेत्वभावात्, कृत्यैवलक्षणाधिकारो हि चित्तस्य स्थितिहेतुः न हि कृतभोगविवेकख्यातिकस्य चित्तस्य कृत्यशेषोऽस्ति येन तदधिक्रियेत। प्रकृतौ चित्तस्य प्रलये च पुरुषः स्वरूपमात्रप्रतिष्ठः केवलो मुक्तो भवतीति" वृत्ति०। २सम्यगज्ञाते च।

**असम्प्रति** अव्य० तिष्ठद्गु० समा० । १ अयोग्ये काले अनुपस्थितकाले च । "यत्रैव सम्प्रति दधात्यत्रैवासम्प्रति" शत० ब्रा० ।

**असम्बद्ध** न० सम्बद्धं परस्परमन्वितं न भवति सम्+बन्ध—क्त न०त० । अर्थानवबोधकेऽनन्वितार्थके १वाक्ये । "असंबद्ध-प्रलापश्च वाङ्मयं स्याच्चतुर्विधम्" मनुः यथा "यावज्जीवमहं मौनीत्यादि" वाक्यम् । २सम्बन्धशून्ये असङ्गते च त्रि० ।

**असम्बद्धप्रलाप** पु० कर्म० । १असङ्गते २अप्रस्तुतस्य वा कथने, ३निष्प्रयोजने कथने च ।

**असम्बन्ध** पु० अभावे न०त० । १सम्बन्धाभावे "व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः" भाषा० २परस्परमन्वयाभावे च "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" जै०सू० न०ब० । ३सम्बन्धशून्ये त्रि० । "असंबद्धकृतश्चैव व्यवहारो न सिध्यति" या०स्मृतिः ।

**असंबाध** त्रि० नास्ति सम्बाधा अन्योन्य पीड़ा प्रतिबन्धो वा यत्र । १परस्परसंघर्षरूपपीड़ारहिते विरले, २बाधारहिते च । "असंबाधा देवनदी स्वर्गसम्पादिनी शुभा" भा०आ० प० । न सम्यग् बाधा अभावे न०त० । ३सम्यग्बाधाभावे ४चतुर्दशाक्षरपादके छन्दोभेदे च स्त्री मृतौ न्सौ गावनुपहविरतिरसंबाधा" छन्दो०र० ।

**असम्भव** पु० अभावे न०त० । १सम्भवाभावे "अन्यदेशाद्धि सम्भवादन्यदाङ्करसम्भवात्" य० ४०.१० "निषिक्रयस्य तदसम्भवात्" सां०सू० न्यायोक्ते लक्ष्यमात्रे २लक्षणानुसरणे । असम्भवारणाय प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवतीति व्याप्तिलक्षणे प्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति कैश्चिदुक्तम् । सम्भवः समावेशः ३तदभावे । सम्भवश्च प्रमाणान्तरमिति अष्टप्रमाणवादिनः पौराणिकाः । सांख्यादिभिस्तु अनुमाने एव तस्य गतार्थत्वमुक्तम् यथाह" सा०कौ० । "सम्भवस्तु यथा खार्यां द्रोणाढकप्रस्थाद्यवगमः स चानुमानमेव खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं सत् द्रोणादिसत्त्वमवगमयति" । व्याख्यातञ्चैतदस्माभिः । "खारीत्वं खारीपरिमाणं महापरिमाणेऽवान्तरपरिमाणसमावेशोऽनुभवसिद्धः तथा च खारीपरिमाणं द्रोणादिपरिमाणव्यापकमिति खारीत्वस्य द्रोणादिपरिमाणाविनाभूततया अनुमानेनैव खारीपरिमाणे द्रोणादिपरिमाणसिद्धिः" ।

**असम्भवत्** त्रि० सम्+भू—शतृ न०त० स्त्रियां ङीप् । असम्भवे वस्तुनि "असम्भवद्गुणरसा शतालीपरिवेष्टिता । करं न सहते राजन् ! भूमिर्नववधूरिव" उद्भटः ।

**असम्भव्य** त्रि० सम्+भू—कर्त्तरि नि० यत् । सम्भवाविषये वस्तुनि "असम्भव्यं न वक्तव्यमिति" नीतिः । सम्+भू—णिच्—कर्मणि यत् असम्भाव्यमप्यत्र त्रि० । "असम्भव्यं पराभवन्" अथ० ५,१८,१२, "तिर्यग्योनावसम्भाव्यमावस्थकमवस्थितः" भा० आदि०प० ।

**असम्भावना** स्त्री अभावे न०त० । सम्भावनाभावे । सम्भावना च यस्य तत्कर्माविष्कर्तुमलक्तिः निश्चयप्रायश्चौत्कव्यापन्नसंशयश्च ।

**असम्भावनीय** त्रि० न०त० । सम्भावनानर्हे वस्तुनि ।

**असम्भूति** स्त्री सम्+भू—क्तिन् अभावे न०त० । १सम्भवाभावे सम्भूतिः कार्योत्पत्तिः सा नास्ति यस्याः । अव्याकृताख्ये प्रकृतिरूपे कारणे "अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते" यजु० ४,६ । "असम्भूतिः प्रकृतिः कारणम्" वेददी० ।

**असम्भृत** त्रि० न०त० । १अयत्नसिद्धे "असम्भृतं मण्डनमङ्गयष्टेः" कुमा० । २असम्यक्पुष्टे च ।

**असम्भेद** पु० सम्भेदो मिलनं संसर्गः अन्योन्यरूपतापत्तिः भेदश्च अभावे न०त० १तदभावे न०ब० । २तच्छून्ये त्रि० ।

**असम्भ्रम** पु० सम्भ्रमः औत्सुक्यहेतुककार्यत्वरा सम्यग्भ्रान्तिः भयहेतुकचित्तक्षोभश्च अभावे न०त० । १सम्भ्रमाभावे "प्रशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम्" रघुः । न०ब० । २सम्भ्रमशून्ये ।

**असम्मत** त्रि० न०त० । सम्मतभिन्ने अननुमते "असम्मतः कस्तव मुक्तिमार्गम्" कुमा० । [२तच्छून्ये त्रि० ।

**असम्मति** स्त्री अभावे न०त० । १सम्मत्यभावे । न०ब०

**असम्मित** त्रि० न०त० । अपरिमिते "तस्मादिमा अतिरिक्ता असम्मिता ओषधयः प्रजायन्ते" शत० ब्रा० ।

**असम्मुग्ध** त्रि० सम्+मुह—क्त न०त० । १अकृतसन्देहे २पाण्डित्याभिमानरहिते च ।

**असम्मूढ** त्रि०न०त० । सम्मूढभिन्ने १स्थिरनिश्चये २भ्रान्तिशून्ये "असम्मूढः स मर्त्येषु" "स्थिरबुद्धिरसम्मूढो ब्रह्मविद् ब्रह्मणि स्थितः" इति च गीता ।

**असम्मृष्ट** त्रि० न०त० । १परस्परसंघर्षशून्ये २बाधाशून्ये च "असंमृष्टो जायसे मात्रोः" ऋ० ५,११,३ । "असम्मृष्टः अबाधितः" भा० । ३संमार्जनशून्ये च । "अग्निमग्नीत्-संमृड्ढीत्यसंमृष्टमेव भवति सम्प्रेषितम्" शत०ब्रा० ।

**असम्मोह** पु० अभावे न०त० । १भ्रमाभावे । विरोधे न०त० भ्रमात्मके यथार्थे २ज्ञाने "बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं

दमः शमः” इत्युपक्रम्य “भवन्ति भावा भूतानां मत्तएव पृथग्विधा” इति गीतायां तेषां भावरूपत्वोक्तेः अयथार्थ-ज्ञानपरत्वम् न०ब० । २तच्छून्ये स्थिरप्रज्ञे त्रि० ।

**असम्यच्** त्रि० न०त० । सम्यग्भिन्ने १अनुचिते २अयुक्ते । “असम्यग्व्ययशीलैश्च” देवीमा० । स्त्रियां ङीप् असमीची

**असर** पु० सरति सृ–उन् न०त० । ( कुकुरमोक्रा ) इति

**असल** न० अस्यते क्षिप्यतेऽनेन अस+कलच् । अस्त्रभेदोपयुक्ते १मन्त्रभेदे २लौहे च ।

**असवर्ण** त्रि० न समानो वर्णोऽस्य समानस्य सादेशः । असजातीये भिन्नवर्णे यथा ब्राह्मणस्य क्षत्रियादिः । “द्विजानामसवर्णासु कन्यासूपयमस्तथा” उद्वा० ।

**असश्चत्** त्रि० सश्चतिर्गत्यर्थः निरु०सश्च–शतृ न०त० । १अगमनशीले स्त्रियां ङीप् “कस्य मजावती गृहेऽसश्चन्ती” ऋ० ८।३१।४ । “असश्चन्ती अगमनशीला” भा० । २अपराजिते च “मधुजिह्वा असश्चतः” ऋ०९।७२।४ । “असश्चतः अपराजितान्” भा० ।

**असश्चुस्** त्रि० सश्च–वा उसुन् न०त० स्त्रियां ङीप् । अप्रतिबद्धे “वाजो दोहते विरूहन्नसश्चुषी क्षुमत्” ऋ०९।८६।१८ । “असश्चुषी अप्रतिबद्धा” भा० ।

**असस्वत्** त्रि० सस–स्वप्ने शतृ न०त० स्त्रियां ङीप् । स्वव्यापारे जागरूके “रेजन्ते असस्वन्तो अजराः” ऋ० १।१४३।३ । “असस्वन्तः स्वव्यापारेष्वस्वपन्तः” भा० ।

**असह** त्रि० न सहते सह–अच् न०त० । अक्षमे असहने

**असहन** पु०न सहति सह–ल्यु न०त० । १शत्रौ । २क्षमाशून्ये त्रि० । भावे ल्युट् अभावे न०त० । ३क्षमाभावे

**असहाय** त्रि० नास्ति सहायोऽस्य । १सहचरशून्ये अन्यसाहाय्यरहिते २सङ्गरहिते च “कपालं वृक्षमूलानि कुचेलमसहायता । समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम्” मनुः । [“स्वजनबन्धुजनेष्वसहिष्णुता” नीतिः

**असहिष्णु** त्रि० न सहिष्णुः । अक्षमे सहनशीलभिन्ने

**असह्य** त्रि० न सह्यः । सोढुमशक्ये “असह्यपीडं भगवन्नृणमन्त्यमवेहि मे” “द्विषामसह्यः सुतरां तरूणाम्” इति च रघुः । “नवैर्व्यथामसह्यवेदनम्” कुमा० ।

**असाक्षात्** अव्य० न०त० । १परोक्षे २इन्द्रियायोग्ये च ।

**असाक्षात्कार** पु० अभावे न०त० । १प्रत्यक्षाभावे विरोधे न०त० । २ परोक्षज्ञाने न०ब० । ३ प्रत्यक्षाविषये ४तच्छून्ये च त्रि० ।

**असाक्षिक** त्रि० नास्ति साक्षी साक्षाद्द्रष्टा अधिष्ठाता वा यस्य कप् । १साक्षिशून्ये “असाक्षिकेषु त्वर्थेषु मिथोविवदमानयोः” मनुः । २अधिष्ठातृशून्ये च असाक्षिका जडप्रकृतिरनुचितेति वेदा०प्रक० ।

**असाक्षिन्** त्रि० न साक्षी । स्मृत्युक्ते वचनतो दोषादितोवा साक्ष्यकर्मसु अग्राह्ये श्रोत्रियादौ । असाक्षिणश्च मिता० दर्शिताः “उक्तलक्षणानां साक्षिणामसम्भवे प्रतिषेधरहितानामन्येषामपि साक्षित्वप्रतिपादनार्थमसाक्षिणो वक्तव्याः ते च पञ्चविधा नारदेन दर्शिताः “असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः । वचनाद्दोषतोभेदात्स्वयमुक्तिर्मृतान्तर” इति । के पुनर्वचनादसाक्षिण इत्याह । “श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः । असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः” या०स्मृ० तापसावानप्रस्थाः । आदिशब्देन पित्राविवदमानादीनां ग्रहणम् । यथाह शङ्खः । “न पित्राविवदमानगुरुकुलवासिपरिव्राजकवानप्रस्थनिर्ग्रन्थयः साक्षिण” इति दोषादसाक्षिणो दर्शिता नारदेन “स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा । असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यत” इति । चण्डाः कोपनाः कितवाद्यूतकृतः । भेदादसाक्षिणाञ्च स्वरूपन्तेनैव दर्शितम् । “साक्षिणां लिखितानां च निर्दिष्टानाञ्च वादिना । तेषामेकोऽन्यथा वादी भेदात्सर्वे न साक्षिण” इति । तथा स्वयमुक्तिस्वरूपञ्चोक्तम् । “स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्य यो वदेत् । सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हतीति” । मृतान्तरस्यापि लक्षणमुक्तम् । “योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि । क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तर” इति । येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्रावयितव्यो भवेत् ययमत्रार्थे साक्षिण इति । तस्मिन्नर्थिनि प्रत्यर्थिनि वा असति मृतेऽर्थे च अनिवेदिते साक्षी क्व कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी न भवति । यत्र तु मुमूर्षुणा स्वस्थेन वा पित्रा पुत्रादयः श्राविताः अस्मिन्नर्थे अमी साक्षिण इति । तत्र मृतान्तरोऽपि साक्षी । यथाह नारदः । “मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताहृते” । तथा । “श्रावितोऽनातुरेणापि यस्त्वर्थो धर्मसंहितः । मृतेऽपि तत्र साक्षी स्यात् षट्सु चान्वाहितादिषु” । तानेतानसाक्षिणो दर्शयति । “स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः” । रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः । पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः । साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः” । स्त्री प्रसिद्धा । बालोऽप्राप्तव्यव-

ष्टारः। वृद्धोऽशीतिकावरः वृद्धपदग्रहणं वचननिषिद्धानामन्येषामपि श्रोत्रियादीनामुपलक्षणम्। कितवोऽक्षदेवी। मत्तः पानादिना, उन्मत्तो ग्रहाविष्टः। अभिशस्तः, अभियुक्तो ब्रह्महत्यादिना। रङ्गावतारी चारणः पाषण्डिनो निर्ग्रन्थिप्रभृतयः। कूटकृत् कपटलेख्यादिकारी विकलेन्द्रियः श्रोत्रादिरहितः पतितः ब्रह्महादिः। आप्तः सुहृत्, अर्थसम्बन्धी विप्रतिपद्यमानार्थसम्बन्धी। सहाय एककार्य्यः रिपुः शत्रुः तस्करः स्तेनः साहसी स्वबलावष्टम्भकारी दृष्टदोषो दृष्टवितथवचनः। निर्धूतो बन्धुभिस्त्यक्तः। आदिशब्दादन्येषामपि स्मृत्यन्तरोक्तानां दोषादसाक्षिणाम्भेदादसाक्षिणां स्वयमुक्तेर्मृतान्तरस्य च ग्रहणम्। एते स्त्रीबालादयः साक्षिणो न भवन्ति" मिता०। अत्रापवादः "सर्व्वः साक्षी संग्रहणे चौर्य्ये पारुष्यसाहसे"। या० स्मृ० संग्रहणादौ सर्व्वे वचननिषिद्धाः श्रोत्रियादयः तपःप्रभृतिगुणरहिताश्च साक्षिणोभवन्ति। दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिवाद्यपि साक्षिणो न भवन्ति सत्याभावादिहेतोस्तेषु विद्यमानत्वादिति" मिता०।

**असाधन** न० अभावे न०त०। १सम्पादनाभावे साधनं हेतुः न०त०। २अकारणे न० ब०। ३कारणशून्ये।

**असाधारण** त्रि०साधारणं सामान्यधर्मयुक्तं न०त०। १तद्भिन्ने, तन्मात्रवृत्तिधर्मयुक्ते विशेषे २अधिके च। न्यायमते "यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मत" इत्युक्ते ३सपक्षविपक्षव्यावृत्ते हेतौ पु०। यथा वह्निसाधने गगनादिर्हेतुः स च पक्षे पर्व्वतादौ, पक्षभिन्ने जलादौ च न विद्यते गगनादेः कुत्रापि विद्यमानत्वाभावात् इति तस्य तथात्वम् "साधारणासाधारणयोर्मध्येऽसाधारणे कार्य्यसंप्रत्यय" इति न्यायः। ४समानस्वत्वास्पदीभूते इतरस्वत्वरहिते धनादौ च। स्त्रियां ङीप् गौरा०। "पिता पुत्रान्तरेष्वपि साधारणः माता त्वसाधारणी" मिता०।

**असाधारणानैकान्तिक** पु० कर्म०। न्यायोक्ते सर्व्वसपक्षव्यावृत्ते हेत्वाभासभेदे यथा शब्दोनित्यः शब्दत्वात् अत्र शब्दत्वं सर्व्वनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्तिरिति तस्य तथात्वम्।

**असाधु** त्रि० न०त०। १साधुभिन्ने, २असच्चरिते, ३दुष्टे "अतोऽर्हसि क्षन्तुमसाधु साधु वा" किरा ४संस्कृतशब्दभिन्ने, अपभ्रंशादौ च। "असाधुरनुमानेन" "असाधूनां प्रयोगे तु प्रत्यवायोऽपि नो तथा इति" च हरिः। स्त्रियां ङीप्। असाध्वी भारती असाध्वी योषित् इत्यादि।

**असाध्य** त्रि० साधयितुमशक्यः। १साधयितुमशक्ये रिपौ रोगादौ च "असाध्यं कुरुते कोपं प्राप्ते कालेगदो यथा" माघः। असाध्यरोगाश्च सुश्रुते उक्ताः ते च अवारणीयशब्दे ४४८ पृष्ठे दर्शिताः "अर्द्धं साध्यमथोयाप्यमसाध्यं युगपद्गत" मित्याद्योऽपि विशेषतोऽसाध्या वैद्यके उक्ताः ततएव ते वेदितव्याः। [समर्थे

**असान्तापिक** त्रि० सन्तापाय न प्रभवति ठञ्। सन्तापाया-

**असान्द्र** त्रि० विरोधे न०त०। अनिविड़े विरले।

**असामञ्जस्य** न०अभावे न०त०।१सामञ्जस्याभावे २अयुक्तत्वे ३सन्निवेशासम्भवे च न०ब० तच्छून्ये त्रि०।

**असामर्थ्य** न० अभावे न०त०। सामर्थ्याभावे अपाटवे। "कालदोषादसामर्थ्यात् सर्व्वं तत् सफलं स्मृतम्" "असामर्थ्यात् शरीरस्य कालशक्त्याद्यपेक्षया। मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः" योगिया०।

**असामयिक** त्रि० समयोऽस्य प्राप्तः ठञ् न०त०। अप्राप्तकाले "किमसामयिकं वितन्वता मनसः क्षोभमुपात्तरंहसः" किरा०।

**असामान्य** त्रि० नास्ति सामान्यं तुल्यता यस्य। अनुपमे। अभावे न०त०। तुल्यत्वाभावे त्रि०। असाम्यमप्यत्र।

**असाम्प्रतम्** अव्य० न साम्प्रतम् युक्तं न०त०। अयुक्ते। "विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्" कुमा० "सम्प्रत्यसाम्प्रतं वक्तुमुक्ते मुसलपाणिना" माघः "अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसाम्प्रतम्" रघुः।

**असार** पु० न०नास्ति १सारो यस्य। सारहीने एरण्डे वृक्षभेदे। २निःसारे त्रि०। "असारः खलु संसारः" इत्युद्भटः। "निदर्शनमसाराणां लघुर्बहुतृणं नरः" माघः "धिगिमां देहभृतामसारताम्" रघुः। ४अगुरुचन्दने न० राजनि०। न०त०। ३सारभिन्ने तुच्छत्वे पु०।

**असावधान** त्रि० न०त०। अवधानहीने प्रमत्ते।

**असाहाय्य** न० अभावे न०त०। १साहाय्याभावे। न०ब०। २साहाय्यशून्ये त्रि०।

**असि** अव्य०अस-दीप्तौ इन् विभक्ति प्रतिरूपकम्। त्वमित्यर्थे "कृतवानसि विप्रियं न मे" कुमा० "धन्यासि वैदर्भि! गुणैरुदारैः" नैष०। "शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक! इति नीतिः।

**असि** पुं स्त्री०अस्यति क्षेपनेन पापानि इन् वा ङीप्। वारणसी दक्षिणस्थे १नदीभेदे वाराणसीशब्दे विवृतिः। अस्यते क्षिप्यते

असु-इन्। २खड्गे पु० "असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपालो नमोऽस्तु ते। इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा"। खड्गपूजामन्त्रः, "सर्व्वाः श्यामाः असिकरा मुण्डमाला विभूषिताः" श्यामाकरणम्। खड्गलक्षणन्तु वृह०उक्तम् "अङ्गुलशतार्द्धमुत्तम ऊनः स्यात्पञ्चविंशतिः खड्गः। अङ्गुलमानाज्ज्ञेयो व्रणोऽशुभो विषमपर्वस्थः॥ श्रीवृक्षवर्द्धमानातपत्रशिवलिङ्गकुण्डलाब्जानाम्। सदृशा व्रणाः प्रशस्ता ध्वजायुधस्वस्तिकानां च॥ कृकलासकाककङ्कक्रव्यादकबन्धवृश्चिकाकृतयः। खड्गे व्रणा न शुभदा वंशानुगाः प्रभूताश्च॥ स्फुटितो ह्रस्वः कुण्ठो वंशच्छिन्नो न दृङ्मनोऽनुगतः। अस्वन इति चानिष्टः प्रोक्तविपर्य्यस्त इष्टफलः॥ क्वणितं मरणायोक्तं पराजयाय प्रवर्त्तनं कोशात्। स्वयमुद्गीर्णे युद्धं ज्वलिते विजयो भवति खड्गे॥ नाकारणं विवृणुयान्न विघट्टयेच्च पश्येन्न तत्र वदनम् न वदेच्च मूल्यम्। देशं न चास्य कथयेत् प्रतिमानयेच्च नैव स्पृशेन्नृपतिरप्रयतोऽसियष्टिम्॥ गोजिह्वासंस्थानो नीलोत्पलवंशपत्रसदृशश्च। करवीरपत्रशूलाग्रमण्डलाग्राः प्रशस्ताः स्युः॥ निष्पन्नो न च्छेद्यो निकषैः कार्य्यः प्रमाणयुक्तः सः। मूले म्रियते स्वामी जननी तस्याग्रतश्छिन्ने॥ यस्मिन् त्सरुप्रदेशे व्रणो भवेत्तद्वदेव खड्गस्य। वनितानामिव तिलको गुह्ये वाच्यो मुखे दृष्टा॥ अथ वा स्पृशति यदङ्गं प्रष्टा निस्त्रिंशभृत्तदवधार्य्य। कोशस्थस्यादेश्यो व्रणोऽस्ति शास्त्रं विदित्वेदम्॥ शिरसि स्पृष्टे प्रथमे ऽङ्गुले द्वितीये ललाटसंस्पर्शे। भ्रूमध्ये च तृतीये नेत्रे स्पृष्टे चतुर्थे च॥ नासौष्ठकपोलहनुश्रवणग्रीवांसकेषु पञ्चाद्याः। उरसि द्वादश संख्ययो-दशे कक्षयोर्ज्ञेयः॥ स्तनहृदयोदरकुक्षिनाभीषु चतुर्दशादयो ज्ञेयाः। नाभीमूले कट्यां गुह्ये चैकोनविंशतितः॥ ऊर्वोर्द्वाविंशे स्याद् ऊर्वोर्मध्ये व्रणस्त्रयोविंशे। जानुनि च चतुर्विंशे जङ्घायां पञ्चविंशे च॥ जङ्घामध्ये गुल्फे पार्ष्णिग्रा पादे तदङ्गुलीष्वपि च। षड्विंशतिकाद्यास्त्रिंशदिति मतेन गर्गस्य॥ पुत्रमरणं धनाप्तिर्धनहानिः सम्पदश्च बन्धश्च। एकाद्यङ्गुलसंस्थैर्व्रणैः फलं निर्दिशेत्क्रमशः॥ सुतलाभः कलहो हस्तिलब्धयः पुत्रमरणधनलाभौ। क्रमशो विनाशवनिताप्तिचित्तदुःखानि षट्प्रभृति॥ लब्धिर्हानिः स्त्रीलब्धयो वधो वृद्धिमरणपरितोषाः। ज्ञेयाश्चतुर्दशादिषु धनहानिश्चैकविंशे स्यात्॥

वित्ताप्तिरनिर्वाणं धनागमो मृत्युसम्पदोऽस्वत्वम्। ऐश्वर्य्यमृत्युराज्यानि च क्रमात्त्रिंशदिति यावत्॥ परतो न विशेषफलं विषमसमस्थास्तु पापशुभफलदाः। केचिदफलाः प्रदिष्टास्त्रिंशत्परतोऽग्रमिति यावत्॥ करवीरोत्पलगजमदघृतकुङ्कुमकुन्दचम्पकसगन्धः। शुभदोऽनिष्टो गोमूत्रपङ्कमेदःसदृशगन्धः॥ कूर्म्मवसास्रक्क्षारोपमश्च भयदुःखदो भवति गन्धः। वैदूर्य्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः॥ इदमौशनसं च शस्त्रपानं रुधिरेण श्रियमिच्छतः प्रदीप्ताम्। हविषा गुणवत्सुताभिलिप्सोः सलिलेनाक्षयमिच्छतश्च वित्तम्॥ वड़वोष्ट्रकरेणुदुग्धपानं यदि पापेन समीहते ऽर्थसिद्धिम्। झषपित्तमृगाश्ववस्तदुग्धैः करिहस्तच्छिदये सतालगर्भैः॥ आर्कं पयो हुडुविषाणमसीसमेतं पारावताखुशकृता च युतं प्रलेपः। शस्त्रस्य तैलमथितस्य ततोऽस्य पानं पश्चाच्छितस्य न शिलासु भवेद्विघातः॥ क्षारे कदल्या मथितेन युक्ते दिनोषिते पायितमायसं यत्। सम्यक् शितं चाश्मनि नैति भङ्गं न चान्यलोहेष्वपि तस्य कौण्ठ्यम्" वृ०स०। हेमा०परि० ख० तु तज्जात्यादिभेदात् फलभेदादिकं दर्शितं यथा "वत्स! पुरा भूतपूर्वैराचार्य्यैरुपदिष्टश्चैव यच्छ्रयात्तत्तदुपदिशामि निबोध खड्गस्य लोहं पञ्चविधं भवति। योनयः पञ्चविधाः संस्थानं चतुर्विधं करणमाकृतिर्द्विधा द्वादश सुस्थानि गौरवं पञ्चदशधा विस्तारस्त्रिविधः वर्णच्छायाव्रणपञ्चगन्धस्वरेण वा यत्र विशेषा भवन्ति तत्कीर्त्यमानं निबोध तीक्ष्णं मृदु स्निग्धं खरं मृदुतीक्ष्णं वज्रं चेति जातयः षड्भवन्ति वालुका कृष्णपाषाणः पञ्चधातुस्थानश्चेति योनयः पञ्चधा भवन्ति। पीतेभ्यस्तीक्ष्णं भवति। नीलेभ्यो मृदु भवति। स्निग्धेभ्यः स्निग्धं खरेभ्यः खरं भवति। रक्तेभ्यो रूक्षेभ्यो मृदुतीक्ष्णं भवति। रक्तसंश्लेषसन्निभैर्हरिद्भिश्चित्रं यदन्तः उत्पद्यते लोहं तद्वज्रायुधनाम भवति। तत्र पाषाण एव पूजित इति। भवन्ति चात्र श्लोकाः। तापं चिरादेव विमूर्च्छितस्य भिन्नाञ्जनाभं बहुरुक्षहीरम् पीतं भवेत् निर्म्मलरुक्मवर्णं सर्वाणि लोहानि भिनत्ति तीक्ष्णम्। सन्नम्यते तापमुपैति चाशु श्वेतं भवत्येव मृद्वावनद्धम्। यत् स्थूलहीरं त्वपुशक्लवर्णं सर्वेषु कार्येष्वपि तन्मृदु स्यात्। श्वेतं भवत्यभ्यधिकं स्थिरञ्च संघट्टनामेति चिराच्च तापम्। संघातलोहेन चिराद्वियोगं स्निग्धञ्च लोहं प्रवदन्ति तज्ज्ञाः। खरं विशीर्य्येत न चैति योगम् सर्व्वत्र योग्यं मृदुतीक्ष्णमाहुः। वज्रातरूपं न च दह्यतेऽग्नौ तद्वज्रलोहं प्रसमीक्ष्य

वाच्यम् । तीक्ष्णस्य मृदुनः खरस्य स्निग्धस्य मृदुतीक्ष्णस्य वज्रलोहस्य च विशेषं कुट्टिमद्रोणगर्भमेककोणगर्भं कुट्टिमकोणगर्भम् । सुतीक्ष्णं करणप्रवरं भवति । मृदुतीक्ष्णं मध्यमगर्भं कुट्टिमञ्च कारयेत् मृदुतीक्ष्णकुट्टिमं कोणगर्भमेकगर्भाख्यं चेति तथा तीक्ष्णं मन्दं चेति विविधमायसं भवति । तीक्ष्णस्य कुलानि उपकुलानि पुनः स्फुटानि वीतकर्णपुष्कलावायेतकं वाबङ्गाशिकमङ्गोलं मयूरं कुमालं वेरकां वरं पुष्करकं पुष्कराङ्कुकोङ्गिनं वर्वरं रौद्रं शालिकं किष्किन्धं विस्फुलिङ्गं वाह्लीकं सुराष्ट्रायसं चेति तीक्ष्णयोनयो भवेयुरेकविंशतिरथ मन्दायसो वक्ष्यन्ते । काम्बोजं कामरुवारं कम्बालं स्थ्यारिङ्गाटमलयं पुन्नागपर्वतं यावतन्द्रं तीक्ष्णं कलिपार्वतीयं सिंहलकं वानवासीसिन्धुकं मूषकं नीलाखण्डं मागधं देवालं भेनकं वाह्लीकं पारवं क्रथं शङ्खाकं शाखिलं पालकं कुकुरतोलकं चित्रपालं नीलासुखं कूर्णराष्ट्रं महेन्द्राष्ट्रं विचर्त्तुकं चेति लोहाः त्रिंशदेका भवन्ति । कुलानां संयत्नाद्विविधा लोहा तन्निबोध सप्त भवन्ति । मार्द्दवस्य खरस्य त्वष्टौ स्नेहान्वितस्य पुनः षड् भवन्ति । मृदुतीक्ष्णस्य दशैवस्युर्व्वायसस्यैकमेवेति कुलान्येतानि संयत्नादुक्तानि तत्र काम्बोजं कामरुवारं इंसुपालं नीलाखण्डं खरस्यैतानि भवन्ति । पायनं वटतीक्ष्णं कालिङ्गं पार्वतीयं सिंहालं लङ्कावालञ्च चेति स्नेहान्वितस्यैतानि कुलानि षड्भवन्ति । नीलासुखं कूर्णराष्ट्रं महेन्द्राष्ट्रं विचर्त्तुकं सौपरं काटमलयं पुन्नागपर्वतं सिन्धुकं मूषिकं दक्षिणासुखं चेति मृदुतीक्ष्णस्य दशैतानि कुलानि भवन्ति । यदन्तु लौहं वेद्यान्तरगुहासु जायते तच्च वज्रलोहमिति विद्यात् । परमेतानि वज्रायसविवर्जितानि त्रिंशदेकाधिकानि । मृदु तीक्ष्णं मृदुतीक्ष्णं स्निग्धं खरं चेति । वीतकादीन्येकविंशतिं कुलानि वक्ष्यन्ते यत्र दृढत्वं बलवत्त्वं स्निग्धतां लाघवङ्गौरवं च विशेषात्तत्र तत्र विविधं भवति कृताशनकर्म्मणि तत्र च्छिन्नपाटलानिभं भवति । यत्र वचस्त्री दृश्यन्ते त्रुटिते चूर्णिते वा कृताशनेऽपि त्रुट्यमानं सकृदेव प्रभज्यते मध्येऽपि च सर्वदक्षिणतो वैवर्ण्यं भजेन्मत्स्यकण्टकच्छाया वा स्यात् विचारशीर्षविभा वा श्वेतहतनिखावतोरहान्यैव तत् मृदुलोहमिति विद्यात् । त्रयाणां चीनकादीनां लक्षणं वक्ष्यते चाकृत्या संस्थानेन वर्णेन गन्धेन शब्देन क्रमशः स्यात् पृथक् वेतसवञ्जुलपत्राणामाकृतिः करवीरपत्राणां वा भवति । वक्रन्द्रैर्युतं मिश्रकैरटाग्रैश्चतुरस्रैर्व्वा वृत्तं विपुलं वा तालमूलाकृतिर्वेति । संस्थानतःपरीक्षणीयम् त्रिगुणलीकृष-

मानामिव यत्र वर्णोऽञ्जनालिकयोर्वा मयूरकण्ठच्छविः शुकपिच्छनिभः । काककोकिलसदृशोमक्षिकाभो वेति । वर्णतः परीक्षणीयं चारुलोहम् । तथा कङ्कोलस्योत्पलस्य मृगनाभिकायाः पद्मस्य मधुकस्य वा गन्ध इति गन्धतः परीक्षणीयम् । तथा कांस्यघण्टाया बलाकानां शब्दइव शब्दो विस्फुलिङ्गायायस्येति शब्दतः परीक्षणीयावि ज्ञातव्याः" । उपकुलादि विस्तरभयान्नोक्तम् "युग्माङ्गुलाः प्रशस्ताः अयुग्माङ्गुला विगर्हिताः खड्गास्ते केऽपि ब्राह्मणस्य परिग्रहाद्धननाशं दिशन्ति क्षत्रियस्यार्थविनाशं कुलक्षयं कुर्व्वन्ति वैश्यस्य तु सद्योवधमावहन्ति शूद्रस्य न कदाचिदपि हानिकराः स्युस्तथा व्रणाः छायास्निग्धवर्णाः पूजिताः छिद्रा रूक्षवर्णाव्यक्तपांशुव्रणाश्च भर्त्तुरपजयाय सततगर्हिताः" । त्रिकोणाःपञ्चकोणाश्चतुरस्राव्रणाः प्रशस्ताः । अनुलोमाश्च प्रतिलोमाश्च प्रशस्तदीर्घतायै खड्गस्य भवन्ति । ते प्रतिलोमावेदितव्याः खड्गस्यानुगता अनुलोमा व्रणापदेशो यच्छते । पूजितोनिन्दितश्च यदि खड्गस्याद्येऽङ्गुले दृश्येत तदा पुत्रमरणम् । द्व्यङ्गुले पुत्रहानिस्त्र्यङ्गुले पुत्रधननाशश्चतुर्थे पुत्रमङ्गलम् पञ्चाङ्गुले मरणंनरपन्नगानाम् । षडङ्गुले कर्म्मसिद्धिः पशुलाभश्च सप्ताङ्गुले कलहेन विनाशं भर्त्तुः करोति । अष्टाङ्गुले मित्रप्राप्तिं धनस्थितिं च कुर्यात् । नवाङ्गुले भ्रातृवधधान्यविनाशमर्थं करोति, दशाङ्गुले मित्रभृत्यानां लाभं सम्पद्वृद्धिञ्च, एकादशाङ्गुले संपत्क्षयं मित्रविरोधञ्च । द्वादशाङ्गुले मित्रलाभमभोगं सुखं च । त्रयोदशाङ्गुले प्रभुविनाशं चतुर्दशाङ्गुले प्रियतां गौरवमनलाभं च, पञ्चदशाङ्गुले शत्रुविवृद्धिम् । षोडशाङ्गुले शत्रुविजयं सप्तदशाङ्गुले भयम्, स्त्रीलाभम् अष्टादशाङ्गुले, शत्रुवधम् ऊनविंशे, हानिं विंशाङ्गुले, मरणम् एकविंशत्यङ्गुले, शत्रुजनितं नाशमयं च । द्वाविंशत्यङ्गुले राष्ट्रपालनं परराष्ट्रविनाशं च त्रयोविंशत्यङ्गुले विंशतिवर्षादेव मरणम् । चतुर्विंशत्यङ्गुले भूपागमनम् । पञ्चविंशत्यङ्गुले, भार्य्याविरामम्, षड्विंशत्यङ्गुले प्रियसुतलाभं, स्वभार्य्याविरागन्तु सप्तविंशत्यङ्गुले, विपुलश्रियोलाभमष्टाविंशत्यङ्गुले, एकोनत्रिंशत्यङ्गुले एडभावे भ्रातृभिर्विग्रहं, त्रिंशदङ्गुले हृद्धिमजिरंचेति खड्गे व्रणः करोति । तथा एकत्रिंशदङ्गुले सम्भ्रमस्त्रीयाहतं भर्त्तारं विनाशयति । द्वात्रिंशदङ्गुले पराजयमरिभिः करोति । त्रयस्त्रिंशदङ्गुले भर्त्तारं पीड़यति नीचस्य च कर्म्मणो वशमुद्दरोति ।

चतुस्त्रिंशदङ्गुले धन्यं दानधर्मभाजनं च पञ्चत्रिंशदङ्गुले मरणं शत्रुः करोति । षट्त्रिंशदङ्गुले विजयं भर्त्तुर्ददाति सप्तत्रिंशदङ्गुले पराभवमरिभिः करोति । अष्टत्रिंशदङ्गुले शत्रुप्रमर्दनं करोति नवत्रिंशदङ्गुले दुर्जनैरेव परिक्लेशं नयति । चत्वारिंशदङ्गुले कन्यालाभमरिजयं च प्राप्नोति व्रणेन खड्गस्थितेन । तथैकचत्वारिंशदङ्गुले शत्रुभ्यः पीडनाद्भयं लभते द्विचत्वारिंशदङ्गुले खराद्ववृद्धिर्मन्त्रिणं-त्रिचत्वारिंशदङ्गुले दुःखं प्राप्नोति सेनापतिरेव भर्त्ता भवति । चतुश्चत्वारिंशदङ्गुले श्रियं विपुलां लभते । पञ्च-चत्वारिंशदङ्गुले व्रणो भयञ्च षट्चत्वारिंशदङ्गुले व्रणाः सुखावाहा भवन्ति । सप्तचत्वारिंशदङ्गुले स्वपक्षं पीडयति परपक्षं वर्द्धयति अष्टाचत्वारिंशदङ्गुले राजश्रियं भुङ्क्ते एकोनपञ्चाशदङ्गुले शत्रोर्विजयं लभते । पञ्चाशदङ्गुले कुलवृद्धिर्भवति” । एकत्रिंशदाद्यङ्गुलिषु व्रणे फलविशेषोऽभि-हितः । अतः परं प्रवक्ष्यामि खड्गलक्षणमुत्तमम् । प्रधान-देहसंभूतैरन्यास्त्रिभिरिन्द्रमः । लोहं प्रधानं खड्गार्थे प्रशस्तं तद्विशेषतः । खटीकटुरलपिकावङ्गसूर्पारकेषु च । विदेहेषु तथाङ्गेषु मध्यमग्रामचेदिषु । सह-ग्रामेषु वीरेषु तथा कालञ्जरेऽपि च । लोहं प्रधानं खड्गानां नवानां शृणु लक्षणम् । खटी कटुरजा ये च दर्शनीयास्ते स्मृताः । कायें दृढाश्च ऋषिकाश्चदवो गुरवस्तथा” तीक्ष्णाच्छेदसहा यङ्गा दृढाः सूर्पारकोद्भवाः । सुदृढाश्च विज्ञेया प्रभवन्ति विदेहजाः । अङ्गदेशोद्भवास्तीक्ष्णाः सहजास्ते दृढास्तथा । वेगवन्तस्तथा तीक्ष्णामध्यमग्राम-सम्भवाः । असारलघवस्तीक्ष्णाश्चेदिदेशसमुद्भवाः । सह-ग्रामोद्भवाः खड्गाः सुतीक्ष्णालघवस्तथा । निर्मला निर्मला खड्गावीरदेशसमुद्भवाः । कालञ्जराभास्तेषां वक्ष्यामि लक्षणम् । शताङ्गुलानां तु श्रेष्ठः खड्गः प्रकीर्त्तितः । तदधोमध्यसंज्ञाभाक् ततोहीनं न धारयेत् । प्रमाणाभ्यधिकं देव ! छिन्नवंशन्तथैव च । दीर्घः सुमधुरः-शब्दोयस्य खड्गस्य भार्गव ! । किङ्किणीसदृशस्तस्य धारणम् श्रेयसुच्यते । खड्गः पद्मपलाशाग्रोमण्डलाग्रश्च शस्यते । करवीरपलाशाग्रसदृशश्च विशेषतः । महीघृतसगन्धश्च पद्मोत्पलसुगन्धिकः । वर्णतश्चोत्पलाकारः सवर्णो गगनस्य च । समाङ्गुलस्थाः शस्यन्ते व्रणाः खड्गेषु भार्गव ! । श्रीवत्सपर्वताकारवंशवक्त्रनिभाश्च ये । महे-श्वराणां तथान्येषां सदृशा ये च भार्गव ! । काकोलूककबन्ध्याभा विषमाङ्गुलसंस्थिताः । वंशानुगाः प्रभूताश्च न प्रशस्ता कदाचन । खड्गे न पश्येद्वदनं वृथा न हणुयादसम् । न चास्य कथयेन्मूल्यं जातिं देशं कथञ्चन । उच्छिष्टो न स्पृशेत् खड्गं निशि कुर्याच्च शीर्षके । दिवा च पूजयदेनं गन्धमाल्यादि सम्पदा । खड्गं प्रशस्तं मणिहेमचित्रं कोशे सदा चन्दन-चर्च्चिताग्रम् । संस्थापयेद्भूमिपतिः प्रयत्नात् यतेत चेह स्वश-रीरवच्च” विष्णुध० । देवीपु० । “खड्गस्य लक्षणं वक्ष्ये लिखि-तस्य तु सुन्दरि ! । नान्यशस्त्रोद्भवं कार्यं मृदुलोहमयन्तथा । स्फुटितं खण्डितं ह्रस्वं सव्रणं साधितं तथा । मृदुलोहे-नचारभ्य खण्डितो मरणं भवेत् । सव्रणेनापि हृद्रोगी रेखायां पातकी भवेत् । भार्य्या माता तथा पुत्रो म्रियते खण्डितेन च । ह्रस्वेन लाघवं लोके दीर्घतापि च्युतसिद्धिदा । अन्यशस्त्रोद्भवेनापि संभवेन्मरणम् ध्रुवम् । पञ्चाशदङ्गुलं खड्गं लिखितव्यं सुरेश्वरि । ईदृशङ्कारयेत्खड्ग माशु सिद्धिफलप्रदम्” । अस्यते क्षिप्यते अस-इन् । २वाणे “तिस्रः पत्न्योऽसिपथान् कल्पयन्त्यश्वस्य सूचीभिः” कात्या० २०।७।१ । “असेः शाकस्य पथः मार्गान्” कर्क० त्रि० । ४छिन्ने असगन्धः । [हेम० ।

**असिक** न० असि-संज्ञायां कन् । अधरचिवुकयोर्मध्यभागे-

**असिक्नी** स्त्री सो-क्त सिता केशादौ शुभ्रा असितो तद्भिन्ना अवृद्धा क्नादेशः ङीप् च । अन्तःपुरचारिण्यामवृद्धायां १प्रेष्यायाम्, २नदीभेदे च । ३रात्रौ निघ० तस्याश्च सूर्य्य-तेजःशून्यतया असितत्वात् तथात्वम् “त्वचमसिक्नीं भूमनो दिवस्परि” ९।७३।५। “त्वद्भिया विशआयन्न-सिक्नीरसमानाः” ऋ० ७।५।२ । असिक्नीरसितवर्णा राजसः” भा० वीरस्य प्रजापतेः ४कन्याभेदे । असिक्नी-मावहत् पत्नीं वीरणस्य प्रजापतेः” इति हरि० ३अ० । “छन्दसि क्नमेके” वार्त्ति० उक्तेः छन्दस्येवायं क्नादेशः लोके तु क्वचित् । “असिक्नी स्यादवृद्धायामित्यमरः” ।

**असिगण्ड** पु० असिः छिन्नोगण्डो यत्र । गल्लोपधाने ।

**असिजीविन्** पु० असिना तद्व्यापारेण जीवति जीव-णिनि । शस्त्रव्यापारेण युद्धादिनाजीविकावति विप्रस्य तथात्वे नि-न्द्यत्वम् “असिजीवी मसीजीवी काण्ड पृष्ठश्च धावक” इत्युक्तेः ।

**असित** पु० सितः शुभ्रः विरोधे न०त० । १शुभ्रवर्णभिन्ने तद्वि-रुद्धे कृष्णवर्णे । २तद्वति त्रि० । ३कृष्णपक्षे पु० । ४नीलोषधौ अन्तःपुरचारिण्यामवृद्धायां ५प्रेष्यायाञ्च स्त्री ङीप् कृष्णवर्णपरतया क्नश्च असिक्नीत्येव । “असितगिरिनिभं स्यात् कज्जलं सिन्धुपात्रम्,, पुष्पदन्तः “तनुमवश्यमचासि तम्” ऋ० ४, १२, ४, ५यमुनायां तस्याः कृष्णवर्णत्वात् तथात्वम्

स्त्री "सितासिते यत्र सरिद्वरे शुभे" काशी०। अस्याः स्त्रीत्वेऽपि छन्दसीत्युक्तेः न क्तः तेन ङीबपि न। ६देवले ऋषिभेदे पु०। "असितोदेवलोव्यासः स्वयञ्चैव ब्रवीषि मे" गीता। असितमुनिश्च हिमवतः एकपर्णां नाम सुतामुपयेमे यथाह हरि० १८ अ०। "तिस्रः कन्यास्तु मेनायां जनयामास शैलराट्। अपर्णामेकपर्णाञ्च तृतीयामेकपाटलाम्। तपश्चरन्त्यः सुमहद्दुश्चरं देवदानवैः। लोकान् सन्तापयामासुस्तास्तिस्रः स्थाणुजङ्गमान्। आहारमेकपर्णेन एकपर्णा समाचरत्। पाटलापुष्पमेकञ्च आदधावेकपाटला। एका तत्र निराहारा तां माता प्रत्यषेधयत्। उमा इति निषेधन्ती मातृस्नेहेन दुःखिता। सा तथोक्ता तदा मात्रा देवी दुश्चरचारिणी। उमेत्येवाभवत् ख्याता त्रिषु लोकेषु सुन्दरी तथैव नाम्ना तेनेह विश्रुता योगधर्म्मिणी"। एवं तिस्रःकुमारीर्वर्णयित्वा। "सर्व्वाश्च ब्रह्मवादिन्यः सर्व्वाश्चैवोर्द्ध्वरेतसः। उमा तासां वरिष्ठा च ज्येष्ठा च वरवर्णिनी। महायोगबलोपेता महादेवमुपस्थिता। असितस्यैकपर्णा तु देवलस्य महात्मनः। पत्नी दत्ता तथा ब्रह्मन्! योगाचार्य्याय धीमते। जैगीषव्याय तु तथा विद्धि तामेकपाटलाम्। एते कन्ये महाभागे योगाचार्य्यमुपस्थिते"। ७अनौच ८अप्सरोभेदे स्त्री "असिता च सुबाहुश्च सुवृत्ता सुरता तथा"। हरि०व०।

**असितकार्च्चिस्** पु० असितयति सित–ण्वुल् सा अर्च्चिः शिखा यस्य। वह्नौ तच्छिखासम्बन्धेन हि सर्व्वेषामसितत्वम्।

**असितगिरि** पु० कर्म्म०। नीलपर्व्वते नीलाचले। "असितगिरिनिभं स्यात् कज्जलं सिन्धुपात्रम्" पुष्पद०। असितनगादयोऽप्यत्र। "असितनगनितम्बश्यामभासां घनानाम्"। किरा०।

**असितग्रीव** पु० असिता ग्रीवा धूमेन यस्य। वह्नौ "असितग्रीवस्त्वाग्नेयः" यजु० २३।१२।

**असितफल** पु० असितं कृष्णं फलं यस्य। मधुनारिकेले।

**असितमृग** पु० कर्म्म०। कृष्णसारमृगे।

**असिताभ्रशेखर** पु०। बुद्धभेदे।

**असिताम्बुज** न० कर्म्म०। नीलपद्मे।

**असितार्च्चिस्** पु० असिता कृष्णा अर्च्चिः शिखाऽस्य। धूमशिखे वह्नौ।

**असितालु** पु० कर्म्म०। नीलालौ आलुभेदे।

**असिताश्मन्** पु०कर्म्म०। जातित्वेऽपि अनित्यत्वात् न०समा०। इन्द्रनीलके मणिभेदे "निलयेषु नक्तमसिताश्मनां चयैः" माघः

**असितृ** त्रि० अस–क्षेपे तृच् स्त्रियां ङीप्। क्षेपके "स वज्रस्वर्णरूपाणामस्त्राणामसितारिषु" भा०भी०प०।

**असितोत्पल** न० कर्म्म०। नीलोत्पले।

**असितोपल** पु० कर्म्म०। इन्द्रनीलमणौ।

**असिदंष्ट्र** पु० असिरिव तीक्ष्णा दंष्ट्रा यस्य। मकराख्ये यादसि। स्वार्थे कन् तत्रैव।

**असिद्ध** त्रि० सिद्धोनिष्पन्नः पक्वश्च न०त०। १अपक्वे, २अनिष्पन्ने च न्यायमते आश्रयासिद्धत्वादिभिर्दोषैर्दुष्टे ३हेतौ पु०। "अनैकान्तोविरुद्धश्चाप्यसिद्धःप्रतिपक्षितः। कालात्ययोपदिष्टश्च हेत्वाभासाश्च पञ्चधा" भाषा० असिद्धिशब्दे विवरणम्। अनुमानेन ४अनधिगते च "तस्मादपि चासिद्धं परोक्षमाप्तवचनात् सिद्धम्" सां०का०। ५सिद्धिशून्ये च "स्वयमसिद्धः कथं परान् साधयेत्" न्यायः।

**असिद्धि** स्त्री सिध–क्तिन् न०त०। १अनिष्पत्तौ, २पाकाभावे ३योगोक्तसिद्ध्यभावे न्यायमते ४आश्रयासिद्धिप्रभृतिहेतुदोषे च। सिद्धयश्च त्रिविधाः। "आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ। व्याप्यतासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा। पक्षासिद्धिर्यत्र पक्षोभवेन्मणिमयोगिरिः। ह्रदोद्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्," इति च भाषा०। नीलधूमत्वं गुरुतया न हेतुतावच्छेदकम् समानाधिकरणव्याप्यतावच्छेदकधर्म्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात् एतासां दूषकताबीजं तु असिद्धिसामान्यविशेषलक्षणकथनपूर्व्वकं दर्शितं मुक्ता० यथा "आश्रयासिद्धाद्यन्यतमत्वमसिद्धित्वम्। आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः। यत्र काञ्चनमयः पर्व्वतो वह्निमानिति साध्यते तत्र पर्व्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमयपर्व्वते परामर्शप्रतिबन्धः फलम्। स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः। यत्र च ह्रदोद्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्। साध्यासिद्धिरपि व्याप्यत्वासिद्धिः। सा च साध्ये साध्यतावच्छेदकाभावः। तथा च काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धःफलम्। सिद्धिः साध्यवत्तानिश्चयः अभावे न०त०। ५साध्यवत्तानिश्चयाभावे "दृष्टान्तासिद्धेश्च" सां०सू०। दृष्टान्ते "क्षणिकत्वासिद्धेश्च न क्षणिकत्वानुमानम्" भा०। "स्थिर-

कार्य्यासिद्धेः अधिकत्वम्" सां सू० ।

**असिधारा** स्त्री ६त० । खड्गस्य तीक्ष्णाग्रभागे । "असिधारापरिक्षुतःकामं चक्रस्य तेन ते" । सुरगज इव दन्तैर्भग्नदैत्यासिधारैः" इति च रघुः ।

**असिधाराव्रत** न० असिधारायां स्थितिरिव दुष्करं व्रतम् । असिधारास्थिति तुल्यदुष्करे व्रते असिधारायां स्थितौ मनाक् स्खलने यथा नाशः एवं मनाक्स्खलने यत्नानिष्टं, तादृशे व्रते तच्च यादवेन दर्शितं यथा । "युवा युवत्या सार्द्धं यन् मुग्धा भर्त्तृवदाचरेत् । अन्तर्निवृत्तसङ्गःस्यादसिधाराव्रतं हि तत् "असिधाराव्रतमिदं मन्ये यदरिणा सह संवासः" हितो० सतां केनोद्दिष्टं विपुलमसिधाराव्रतमिदम्" नीतिः ।

**असिधाव** पु० असिं खड्गं धावयति मार्ज्जयति धाव-अण् । शस्त्राणां मार्ज्जनकरे । ण्वुल् । असिधावकोऽप्यत्र ।

**असिधेनुका** स्त्री असिर्धेनुरिव यस्याः सा कप् । असेर्धेनुतुल्यत्वेन तद्वत्तुल्यायाम् छुरिकायाम् । कवभावे असिधेनुरप्यत्र ।

**असिपत्र** पु० असिरिव तीक्ष्णं पत्रमस्य वा कप् । १इक्षुदण्डे "जातं तमालान्यसिपत्रदृश्यम्" रघुः । २गुण्ड्रनामकतृणे च असेः पत्रमिवाच्छादकम् । ३खड्गकोषे न० । असिपत्राकारोऽस्यस्य अर्श०अच् । इक्षुपत्राकारे ४उभयतोधारे खड्गे च "अव्याचीत् स्वासिपत्रादीनवभासत् परश्वधान्" भट्टिः ।

**असिपत्रवन** न० असिरिव पत्रमस्य तादृशं वनम् । असिपत्रवने नरकभेदे तत्स्वरूपादि भाग०५स्क०। अन्धतामिस्रादिकमुपक्रम्य "कालसूत्रमसिपत्रवनं सूकरमुख" मित्यादिना नरकभेदान् दर्शयित्वा तत्स्वरूपं कारणञ्चोक्तं तत्रैव "यस्त्विह वै निजपथादनापद्यपगतः पाषण्डञ्चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरन्ति तत्रासावितस्ततो धावमान उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वाङ्गोहाहतोऽस्मीतिपरमया वेदनया मूर्च्छितः पदेपदे निपतति स्वधर्म्महा पाषण्डानुगमनफलं भुङ्क्ते" "असिपत्रवनं नाम नरकम् शृणु चापरम् योजनानां सहस्रं वै ज्वलदग्न्यास्तृतावनिः । तप्तार्कर्य्यकरैश्चण्डैः कल्पकालाग्निदारुणैः । प्रपतन्ति सदा तत्र प्राणिनो नरकौकसः । तन्मध्ये च वनं शीतं स्निग्धपत्रं विभाव्यते । पत्राणि यत्र खड्गानि फलानि द्विजसत्तम! । श्वानश्च तत्र शवलाश्चरन्त्यामिषलोभिनः । महावक्त्रा महादंष्ट्रा व्याघ्रा इव महानखाः । ततस्तद्वनमालोक्य शिशिरच्छायमग्रतः । प्रयान्ति प्राणिनस्तत्र तृट्तापपरिपीड़िताः । हा तात ! हा मातरिति क्रन्दन्तोऽतीव दुःखिताः । दह्यमानाङ्घ्रियुगलाधरणिस्थेन वह्निना । तेषां गतानां तत्रासिपत्रव्यापि समीरणः । प्रवाति तेन पात्यन्ते तेषां खड्गास्तथोपरि । छिन्नाः पतन्ति ते भूमौ ज्वलत्पावकसञ्चये । लेलिह्यमाने चातीव व्याप्ताशेषमहीतले । सारमेयास्ततः शीघ्रं शातयन्ति शरीरतः । तेषां खण्डानि रुदतामदन्त्यान नभीषणाः । असिपत्रवनं तात ! मयैतत् परिकीर्त्तितम्" इति मार्क० पु० । "असिपत्रवनं चैव लोहदारकमेव च" मनुः ।

**असिपत्रव्रत** न० अश्वमेधे कर्त्तव्ये व्रतभेदे । [जलजन्तुभेदे ।

**असिपुच्छ** पु० असिरिव धारायुक्तः पुच्छोऽस्य । शिशुमारे

**असिपुत्रिका** स्त्री असेः पुत्रीव स्वार्थे कन् ह्रस्वे अत इत्त्वम् । छुरिकायाम् । कनभावे असिपुत्रीत्यप्यत्र ।

**असिमेद** पु० असिरिव तीक्ष्णः मेदो निर्यासो यस्य । विट्खदिरे

**असिर** त्रि० अस+क्षेपे किरच् । क्षेपके । "यःसूर्य्यस्यासिरेण मृज्यते" ऋ० ८,७६,४ ।

**असिलोमन्** पु० असिरिव तीक्ष्णं लोमास्य । दनोःपुत्रभेदे । "चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारते" त्युपक्रम्य "असिलोमा च केशी च दुर्ज्जयश्चैव दानवः" भा०आ०प० ६५ अध्या० हरिवंशे तु "अभवन् दनुपुत्राश्च शतं तीव्रपराक्रमाः" इत्युपक्रम्य शतपुत्रमध्ये "असिलोमा च केशी च शठश्च बलकोऽमदः" इत्युक्तम् । "असिलोमा पुलोमा च वास्कलः प्रमदोऽमदः" इति च हरि० । स च देवासुरयुद्धे वायुना सह युयुधे "असिलोमाथ बलिना मारुतेन महाहवे" हरिवं २४४ अध्या० । त्रिविक्रमावसरे च स हरिणा सह युयुधे विष्णुना हतश्च "असिलोमा हरिश्चैव जघ्नतुश्च परस्परमित्युपक्रम्य १६१अध्या० "विप्रचित्तिः शिवःशङ्कुरित्युपक्रम्य च "असिलोमा पुलोमाचेत्यादिना बहून् दैत्यान् युद्धधानानभिधाय" "प्रमथ्य सर्वान् दैतेयान् पादहस्ततलैः प्रभुः । जहार त्रिदिवं देवश्रिभिर्विक्रमणैर्हरिः" हरि० २६२ अ० वामनेन तद्धननमुक्तम् । "असिलोम्नोऽपहन्ता वै तथा रावणनाशनः" विष्णुस्तवः ।

**असिहत्य** त्रि० असिना हत्यः घात्यः हन—वा० क्यप् ३त० । खड्गेन हननीये । भवादौ क्यप् असुघातिका० द्विपदवृद्धिः आश्विहात्यः ।

**असिहेति** पु० असिर्हेतिः साधनमस्य । खड्गेन युद्धकर्त्तरि ।

**असु** पु० असूते क्षिप्यते अस—उन् । १चित्ते । कर्त्तरि उन् ।

२तापे। करणे उन्। ३पञ्चवृत्तिषु वायुभेदेषु पु० ब०व०। "मेषे जातो भवेद्यस्तः ज्योति०। "आचम्योदक् परावृत्य त्रिरायम्य शनैरसून्" मनुः। "शरीरेभ्योऽमरारीणामसूनिव विचिन्वति" देवीमा० "त्यजन्त्यसून् शर्म्म च मानिनो वरं त्यजन्ति नत्वेकमयाचितव्रतम्" नैषधम्। प्राणवृत्तीनां भेदविवक्षायामेव बहुत्वम् एकत्वविवक्षायां तु एकवचनान्ततामिच्छन्ति अतएव-"प्राणापानौ समौ कृत्वा" गीता "प्राणोह पिता प्राणोह माते-त्यादौ प्राणशब्दवत् असुशब्दोऽप्येकवचनः" नासदस्' ऋ० १,१४०,८। "उदीर्ध्वं जीवो असुर्न आगादप" ऋ० १,११३,१६, ४दशगुर्व्वक्षरोच्चारणकाले पलषष्ठ-भागे च "गुर्व्वक्षरैः खेन्दुमितैरसुस्तैः षड्भिः पलं तैर्घटिका खषड्भिः" सि०शि० ५प्रज्ञायाम् निरु०।

**असु** उपतापे कण्ड्वा० यक्। असूयति आसूयीत् असूयामास। असूया। असुञ इत्येके असूयति ते।

**असुकर** त्रि० सुखेन क्रियते सु+कृ-खल् विरोधे न०त०। दुष्करे।

**असुख** न० विरोधे न०त०। १दुःखे असुखोदयः असुखावहः असुखोदर्कः "तत्तत् प्राप्य सुखासुखम्" गीता "याभ्यां प्राप्नोति संसृष्टाः प्रेत्येह च सुखासुखम्" मनुः। न०ब०। २सुखशून्ये। [१दुर्गमे २दुर्ब्बोधे च।

**असुगम** त्रि० सुखेन गम्यते सु+गम-खल् विरोधे न०त०।

**असुतृप** पु० असुना परकीयप्राणनाशनेन तृप्यति तृप-क ३त०॥ यमदूतभेदे "उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु" ऋ० १०,१४,१२। [जीवने।

**असुधारण** न० असूनां प्राणादिपञ्चवायुवृत्तीनां धारणम्।

**असुन्दर** त्रि० विरोधे न०त०। सौन्दर्य्यहीने अनुत्कृष्टे कुत्सिते।

**असुन्व** त्रि० सु-अभिषवे वा०श न०त०। सोमाभिषवाकर्त्तरि "असुन्वामिन्द्र! संसदम्" ८,१४,१४। "असुन्वां सोमाभिषवहीनाम्" भा०।

**असुभृत्** त्रि० असून् बिभर्त्ति भृ-क्विप् ६त०। १प्राणिनि

**असुमत्** त्रि० असवःसन्त्यस्य मतुप्। प्राणिनि "सततम-समतामगम्यरूपाः" माघः।

**असुर** पु० अस-दीप्तौ उरन्। १सूर्य्ये। असति क्षिपति देवान् उर विरोधे न०त० वा। सुरविरोधिनि २दैत्ये। ३रात्रौ स्त्री। असुरभेदाश्च भारते आ०प० दर्शिताः "एकएव दितेः पुत्रो हिरण्यकशिपुः स्मृतः। नाम्ना ख्यातास्तु तस्येमे पञ्च पुत्रा महात्मनः। प्रह्लादः पूर्व-जस्तेषां संह्रादस्तदनन्तरम्। अनुह्रादस्तृतीयोऽभूत्तस्माच्च शिविवाष्कलौ। प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्व्वत्र भारत। विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत। विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान्। बलेश्च प्रथितः पुत्रो वाणो नाम महासुरः। रुद्रस्यानुचरः श्रीमान्महाकालेति यं विदुः। चत्वारिंशद्दनोः पुत्राः ख्याताः सर्व्वत्र भारत। तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः। शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः। असिलोमा च केशी च दुर्ज्जयश्चैव दानवः। अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्य्यवान्। तथा गगनमूर्द्धा च वेगवान् केतुमांश्च सः। स्वर्भानुरश्वोऽश्वपतिर्वृषपर्व्वाजकस्तथा। अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः। एकपादेकचक्रश्च विरूपाक्षमहोदरौ। निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा। शरभः शलभश्चैव सूर्य्याचन्द्रमसौ तथा। एते ख्याता दनोर्वंशे दानवाः परिकीर्त्तिताः। अन्यौ तु खलु देवानां सूर्य्याचन्द्रमसौ स्मृतौ। अन्यौ दानवमुख्यानां सूर्य्याचन्द्रमसौ तथा। इमे च वंशाः प्रथिताः सत्त्ववन्तो महाबलाः। दनुपुत्रा महाराज दश दानववंशजाः। एकाक्षोऽमृतपो वीरः प्रलम्बनरकावपि। वातापी शत्रुतपनः शठश्चैव महासुरः। गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः। असंख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत!। सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कमर्द्दनम्। सुचन्द्रं चन्द्रहन्तारं तथा चन्द्रप्रमर्द्दनम्। क्रूरस्वभावं क्रूरायाः पुत्रपौत्रमनन्तकम्। गणः क्रोधवशो नाम क्रूरकर्म्माऽरिमर्द्दनः। दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुङ्गवाः। विक्षरो बलवीरौ च वृत्रश्चैव महासुरः। कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः। प्रविख्याता महावीर्य्या दानवेषु परन्तपाः। विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च। क्रोधः शत्रुस्तथैवान्ये कालकेया इति श्रुताः"। हरिवंशे तु अन्येऽपि बहवोऽसुरभेदा उक्ता यथा। "दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम्। हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्य्यवान्। सिंहिका चाभवत्कन्या विप्रचित्तेः परिग्रहः। सैंहिकेया इति ख्याता यस्याः पुत्रा महाबलाः। गणैश्च सह राजेन्द्र! दशसाहस्रमुच्यते। तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः। असंख्याता महाबाहो हिरण्यकशिपोः सुताः। हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः। अनुह्रादश्च ह्रादश्च प्रह्लादश्चैव वीर्य्यवान्। संह्रादश्च चतुर्थोऽभूत् ह्रादपुत्रो

ह्रदस्तथा। संह्रादपुत्रः सुन्दश्च निसुन्दश्चैव तावुभौ। ह्रदस्य पुत्रो ह्यायुष्मान् शिविः कालस्तथैव च। विरोचनश्च प्राह्लादिर्बलिर्जज्ञे विरोचनात्। बलेः पुत्रशतन्त्वासीद्बाणज्येष्ठं नराधिप। धृतराष्ट्रश्च सूर्य्यश्च चन्द्रमाश्चेन्द्रतापनः। कुम्भनाभो गर्द्दभाक्षः कुक्षिरित्येवमादयः। बाणस्तेषामतिबलो ज्येष्ठः पशुपतिप्रियः। पुराकल्पे हि बाणेन प्रसाद्योमापतिं प्रभुम्। पार्श्वतो विहरिष्यामि इत्येवं याचितो वरः। बाणस्य चेन्द्रदमनो लौहित्यामुदपद्यत। गणास्तथा सुरा राजन् शतसाहस्रसम्मिताः। हिरण्याक्षसुताः पञ्च विद्वांसः सुमहाबलाः। झर्झरः शकुनिश्चैव भूतसन्तापनस्तथा। महानाभश्च विक्रान्तः कालनाभस्तथैव च। अभवन्। दनुपुत्राश्च शतं तीव्रपराक्रमाः। तपस्विनो महावीर्य्याः प्राधान्येन निबोध तान्। द्विमूर्द्धा शकुनिश्चैव तथा शङ्कुशिराः प्रभुः। शङ्कुकर्णो विराधश्च गवेष्ठी दुन्दुभिस्तथा। अयोमुखः शम्बरश्च कपिशो वामनस्तथा। मरीचिर्म्मघवांश्चैव इरा गर्गशिरा वृकः। विक्षोभणश्च केतुश्च केतुवीर्य्यशतह्रदौ। इन्द्रजित्सर्व्वजिच्चैव वज्रनाभस्तथैव च। महानाभश्च विक्रान्तः कालनाभस्तथैव च। एकचक्रो महाबाहुस्तारकश्च महाबलः। वैश्वानरः पुलोमा च विद्रावणमहाशिराः। स्वर्भानुर्वृषपर्व्वा च तुहुण्डश्च महासुरः। सूक्ष्मश्चैव निचन्द्रश्च ऊर्णनाभो महागिरिः। असिलोमा च केशी च शठश्च बलको मदः। तथा गगनमूर्द्धा च कुम्भनाभो महासुरः। प्रमदो मयश्च कुपथो हयग्रीवश्च वीर्य्यवान्। वैसृपः स विरूपाक्षः सुपथोऽथ हराहरौ। हिरण्यकशिपोश्चैव शतमायश्च शम्बरः। शरभः शलभश्चैव विप्रचित्तिश्च वीर्य्यवान्। एते सर्व्वे दनोः पुत्राः कश्यपादभिजज्ञिरे। विप्रचित्तिप्रधानास्ते दानवाः सुमहाबलाः। एतेषां यदपत्यन्तु न तच्छक्यं नराधिपः। प्रसंख्यातुं महीपाल! पुत्रपौत्रमनन्तकम्। स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु सुतात्रयम्। उपदानवी हयशिराः शर्म्मिष्ठा वार्षपर्व्वणी। पुलोमा कालका चैव वैश्वानरसुते उभे। बह्वपत्ये महावीर्य्ये मारीचेस्तु परिग्रहः। तयोः पुत्रसहस्राणि षष्टिं दानवनन्दनान्। चतुर्द्दश शतानन्यान् हिरण्यपुरवासिनः। मारीचिर्जनयामास महता तपसाऽन्वितः। पौलोमाः कालकेयाश्च दानवास्ते महाबलाः। अवध्या देवतानाञ्च हिरण्यपुरवासिनः। कृताः पितामहेनाजौ निहताः सव्यसाचिना। प्रभाया नहुषः पुत्रः सृञ्जयश्च शचीसुतः। पूरुं जज्ञेऽथ शर्म्मिष्ठा दुष्मन्तमुपदानवी। ततोऽपरे महावीर्य्या दानवास्त्वतिदारुणाः। सिंहिकायामथोत्पन्ना विप्रचित्तेः सुतास्तथा। दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः। सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः। वंशः शल्यश्च बलिनो नभश्चैव महाबलः। वातापिर्नमुचिश्चैव इल्वलः खसृमस्तथा। आञ्जिको नरकश्चैव कालनाभस्तथैव च। राहुर्ज्येष्ठस्तु तेषां वै सूर्य्यचन्द्रप्रमर्द्दनः। शुकः पोतरथश्चैव वज्रनाभश्च वीर्य्यवान्। मूकश्चैव तुहुण्डश्च ह्रादपुत्रौ बभूवतुः। मारीचः सुन्दपुत्रश्च ताड़कायां व्यजायत। एते वै दानवाः श्रेष्ठा दनुवंशविवर्द्धनाः। तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः। संह्रादस्य तु दैत्यस्य निवातकवचाः कुले। समुत्पन्नाः सुमहता तपसा भावितात्मनः। तिस्रः कोट्यः सुतास्तेषां मणिमत्यां निवासिनाम्। तेऽप्यवध्याश्च देवानामर्ज्जुनेन निपातिताः। षट्सुताः सुमहासत्त्वास्ताम्रायाः परिकीर्त्तिताः"। "यासेन यस्य जनिताऽसुरभीरयन्त्रीः" नैष०। "समदृश्यतेषासुर इत्युपेयुषा" माघः। "ततः कानीयसा एव देवा ज्यायसा असुराः, त एषु लोकेष्वस्पर्द्धन्त ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति" छा०उ०। "असुषु विषयविषयासु प्राणनक्रियासु रमन्ते रम्—ड। ४ स्वाभाविकायां तम आत्मिकायामिन्द्रियवृत्तौ। "देवासुरा वै यत्र संयेतिरे" छा०उ०। देवाश्चासुराश्च देवादीव्यतेर्द्योतनार्थस्य रूपं शास्त्रोद्भासिता इन्द्रियवृत्तयः। असुरास्तद्विपरीताः स्वेष्वेवासुषु विषयविषयासु प्राणनक्रियासु रमणात् स्वाभाविकास्तम आत्मिका इन्द्रियवृत्तय एव" भा०। स्वार्थे प्रज्ञा० अण् आसुरः तत्रार्थे। तस्येदम् अण् आसुरः तत्सम्बन्धिनि त्रि० स्त्रियां ङीप् "आसुरीरात्रिरन्यत्र तस्मात्ताः परिवर्ज्जयेत्" स्मृतिः "आसुरीं योनिमापन्नाः" गीता। हितार्थे यत्। असुर्य्यः। "असुर्य्यानाम ते लोका अन्धेन तमसा वृताः" कठ०उ०। सुरा सुधा ग्रहीतृत्वेनास्त्यस्य अर्श० अच् न०त०। "सुराप्रतिग्रहाद्देवाःसुरा इत्यभिश्रुताः। अप्रतिग्रहणात्तस्या दैतेयाश्चासुराः स्मृताः इत्युक्तनिर्वचनादपि तेषामसुरत्वम्। जातौ ङीप् असुरी "असुरी जिह्वो देवानां प्रातः सवनमत्यावेट्" ऋच०। ५ कांस्ये तस्यासुराङ्गत्वात्तथात्वम्। मेघे पु० निघ०। [रक्षोघ्ने।

**असुरक्ष** त्रि० सुखेन रक्ष्यते सु+रक्ष-खल् न०त०। सुखेना-

**असुरराज्** पु० असुरेषु राजते राज् क्विप् ७त०। प्रह्राद-

पौत्रे बलिदैत्ये २असुराध्यक्षमात्रे च भा० आ० प० बकासुरवधने। "पुरो मानुषमांसेन दुर्बुद्धिः पुरुषादकः। रक्षत्यसुरराट् नित्यमिमं जनपदं बली"।

**असुररिपु** पु० असुराणां रिपुः। दानवशत्रौ विष्णौ। असुरारिप्रभृतयोऽप्यत्र। [तुलसीभेदे

**असुरसा** स्त्री न सुष्ठु रसो यस्याः ५ब०। (बाबुइतुलसी)

**असुरहन्** त्रि० असुरं हन्ति–हन् क्विप्। असुरनाशके। "प्राग्नये विश्वशुचे धियन्धेऽसुरघ्ने" ऋ०७'१३,१। स्त्रियां नान्तत्वात् ङीप्। असुरघ्नी।

**असुराचार्य्य** पु० ६त०। शुक्राचार्य्ये। [ध्यक्षमात्रे च।

**असुराधिप** पु० ६त०। १प्रह्लादपौत्रे बलिदैत्ये २असुरा-

**असुराह्व** न० असुरस्याह्वा आह्वा यस्य। कांस्ये हेम०।

**असुर्य्य** त्रि० असुराय हितः गवा० यत्। १असुरहिते तत्-सम्भूते च असुरशब्दे उदा०।

**असुष्वि** त्रि० सु–बा०कि द्वित्वम् न०त०। सोमाभिषवाकर्त्तरि "विपृच्छादसुष्वीन् ऋ०४,२४,५। जहत्यसुष्वीन् महता पृषत" ऋ०६,४४,११। "असुष्वीन् अनभिषोतॄन् यजमानान्" भाष्यम्।

**असुलभ** त्रि० न सुलभः विरोधे। दुर्लभे दुःखेन प्राप्ये।

**असुसु** पु०असून् प्राणान् सुवति सू–क्विप्। बाणे "स सायिः सासुसूः सासो येयायेयाययाययः" किरा०। [भृते च।

**असुस्थ** त्रि० विरोधे न०त०। १दुःखेन स्थातरि २रोगाद्यभि-

**असुहृद्** पु० विरोधे न०त०। शत्रुद्विषे रिपौ "शलभतां लभतामसुहृद्गणः" माघः।

**असू** स्त्री न सूते सू–क्विप्। अप्रसवायां स्त्रियाम् "याभिर्धेनुमस्वम्" ऋ०१,११२,३। [अनादरे अवज्ञायाम्

**असू(र्क्ष)चण** न०सू(र्क्ष)व आदरे ल्युट् अभावे न०त०।

**असूक्ष्म** त्रि० विरोधे न०त०। सूक्ष्मताविरोधिस्थूलत्ववति।

**असूत** त्रि० न०त०। अप्रसूते। [दोषारोपणशीले।

**असूयक** त्रि० (असु)असूञ्–कण्ड्वादि० यकि–ण्वुल्। गुणेषु

**असूया** स्त्री असु (असू)–उपतापे कण्ड्वा० यक् अ। परगुणेषु दोषाविष्करणे "पैशुन्यं साहसं द्रोहईर्षासूयार्थ-दूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोदशकोगणः" मनुः। "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः, पा०। "असूया परगुणेषु दोषाविष्करणम्" सि०कौ०।

**असूयु** त्रि० असु(सू)–कण्ड्वा० यक् उन्। असूयाशीले "इदन्तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे" गीता।

**असूर** त्रि० सूरी कर्म्मे धातूनामनेकार्थत्वात् स्तुतौ भावे घञ् न०ब०। स्तोत्ररहिते। "असूरे सन्ति सूरयः" ऋ०८,१०,४। ["असूर्त्ते सूर्त्ते रजसि"यजु०१७,१७।

**असूर्त्त** त्रि० सूरी क्त इडभावः न तस्य नत्वम्। "अप्रेरिते

**असूर्य्यम्पश्या** त्रि० सूर्य्यमपि न पश्यति दृश–खश् मुम् च अस०समा०। अत्यन्तगुप्ते सूर्य्यादर्शिनि राजदारादौ। "असूर्य्यम्पश्यरूपा त्वं किमभीरुररार्य्यसे?" भट्टिः।

**असृक्कर** पु० असृक् शोणितं करोति कृ–ट। शरीरस्थे रसधातौ, अन्नादेरशितस्य प्रथमं रसरूपता, रसस्य रक्त-रूपतेति वैद्यके प्रसिद्धम्। अथ रसस्य यथा रक्तकर-त्वम् तथोक्तं सुश्रुते। "रसाद्रक्तं ततोमांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततोमज्जा मज्ज्ञः शुक्रस्य सम्भवः" तत्पाकप्रकारमाह भाव० प्रका०। "यात्यामाशयमाहारः पूर्व्वं प्राणानिलेरितः। माधुर्य्यं फेनभावञ्च षड्रसोऽपि लभेत सः"। "आहार्य्यं षड्विधं भोज्यं भक्ष्यं चर्व्यं तथैव च। लेह्यं चूष्यं तथा पेयं तदुदाहरणानि तु। भोज्यमोदनयूषादि, भक्ष्यं मोदकमण्डकम्। चर्व्यं चिपिटधानादि-रसलादि तु लिह्यते। चूष्यमाम्रफलेक्ष्वादि पीयते पानकं पयः"। आमाशयमाह चरकः "नाभिस्तनान्तरे जन्तोराहु-रामाशयं बुधाः"। तत्र विशेषमाह। "उरोरक्ता-शयस्तस्मादधःश्लेष्माशयः स्मृतः। आमाशयस्तु तदधस्तदधो-हि मलाशयः"। अनिलेरित इति हृदयाधिष्ठानेन प्राणनाम्ना वायुना मुखंगतेनान्तःप्रवेशितः। तथाह सुश्रुते। "योवायुः प्राणनामासौ मुखं गच्छति देहधृक्। सोऽन्नः प्रवेशयत्यन्नः प्राणांश्चाप्यवलम्बते" इति। तस्माहारमामाशयस्थं क्लेदननामकफः क्लेदयति क्लेदनात्संहतं भिनत्ति च। उक्तं च सुश्रुते। "क्लेदनः क्लेदयत्यन्नं संहतं च भिनत्त्यतः" इति स आहारः षड्रसोऽप्यामाशये माधुर्य्यं लभते आमाशयस्थस्य मधुरस्य कफस्य योगात्। उक्तं च श्लेष्मस्वरूपम् "श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः शीतलस्तथा। तमोगुणाधिकः स्वादुर्विदग्धोलवणो भवेदिति"। "फेनभावं च लभते जठरानलतेजसा"। यतआह वाग्भटः "संधुक्षितः समानेन पचत्यामाशयस्थितम्। औदर्य्योऽग्निर्यथा वाह्यः स्थालीस्थं तोयतण्डुलम्" इति। अथ सएवाहारः प्राणवायुना प्रेरितस्ततः किञ्चित्स्खलितः पाचकाख्यपित्तोष्मणोऽम्लकोऽस्त्नोभवति। उक्तं च। "अथ पाचकपित्तेन विदग्धश्चाम्लतां व्रजेदिति" पाचकपित्तेन पाचकपित्तोष्मणा ततः स एवाहारो नाभिमण्डलाधिष्ठानेन समाननाम्ना वायुना प्रेरितोग्रहणीं प्रति नीयते उक्तञ्च। "ततः समान

मरुता पक्वाशयमभि नीयते"। पक्वाशयलक्षणमाह "षष्ठी पित्तधरा नाम पाचका परिकीर्त्तिता। आमपक्वाशयान्तःस्था पक्वाशयेत्यभिधीयते"। पित्तधरा पाचकाख्यं पित्तं तदग्न्यधिष्ठानं तद्धारयति। तत्र पक्वाशयामाशयपक्वाशयमध्यवर्त्तिपाचकाख्यपित्ताधिष्ठानेनाग्निनाहारः पच्यते स कटुश्च भवति। तथा च "पक्वाशयात्पच्यते कोष्ठवह्निना जायते कटुरिति"। अयमर्थः। आहारो पक्वाशयां कोष्ठवह्निना पक्वाशयस्थितपाचकपित्तेन वह्निना पच्यते पच्यमानः स पक्वाशयस्थितस्य कटुरसस्य पित्तस्य योगात्कटुर्भवति। एतदाहारपाके विशेषमाह। "शरीरं पाञ्चभौतिकम्" तत्र पञ्चसु भूतेषु पञ्चाग्नयः तिष्ठन्ति। उक्तं च चरकेण। "भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः। पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यतु"। अतोष्मपदेनाग्निरुच्यते आहारोऽपि पाञ्चभौतिकः तत्र पाचकपित्तस्थेनाग्निनोत्तेजितेन शरीरवर्त्तिभूभागाग्निनाहारवर्त्तिभूभागः पच्यते पक्वोभूभागः स्वकीयान् गुणानभिवर्द्धयति एवं जलादिभागा अपि पच्यन्ते। तथा च सुश्रुते "पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः। विपक्वः पञ्चधा सम्यक्गुणान् स्वानभिवर्द्धयेदिति"। गुणशब्देनात्र गुणिनः पृथिव्यादय उच्यन्ते तेन गुणान् शरीरवर्त्तिनः पार्थिवादीन् भागानभिवर्द्धयेदित्यर्थः। एवमहोरात्रेण पक्वाहारो मिष्टश्च कटुश्च मधुरोभवति अम्लस्त्वम्लोभवति। कटुस्तिक्तः कषायश्च कटुर्भवति उक्तञ्च "मिष्टःकटुश्च मधुरमम्लोऽम्लं पच्यते रसः। कटुतिक्तकषायाणां विपाको जायते कटुरिति" एवं विपक्वस्याहारस्य सारो निगदितोरसः शेषोपक्वाशयोमलद्रवः। मलद्रवस्य जलभागः शिराभिर्वस्तिंनीतो मूत्रम्भवति। उक्तञ्च "आहारस्य रसःसारः सारहीनो मलद्रवः। शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात्। शेषं किट्टञ्च यत्तस्य तत्पुरीषं निगद्यते। समानवायुनानीतं तत्तिष्ठति मलाशये"। तत्र मलाशयेनापानवायुना प्रेरितं मूत्रं मेढ्रभगमार्गेण, पुरीषं गुदमार्गेण शरीराद्बहिर्याति उक्तञ्च "मूत्रं ह्युपस्थमार्गेण पुरीषं गुदमार्गतः। अपानवायुनाक्षिप्तं बहिर्याति शरीरतः"। उपस्थः शिश्नोभगश्च। रसस्तु समानवायुना प्रेरितोधमनीमार्गेण शरीरारम्भकस्य रसस्य स्थानं हृदयं गत्वा तेन सहमिश्रितोभवति उक्तञ्च "रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्वान्धातून् विवर्द्धयेत्। केदारेषु यथा कुल्याः यान्ति विविधौषधीः तथा कलेवरे धातून् सर्वान्वर्द्धयते रसः"

रसस्तु तत्र तत्र त्रिधा विभिद्यते। उक्तं च चरके "स्थूला एवं मलभेदैस्तत्रतत्र त्रिधा रसः। स्वं स्थूलोंऽशः परं सूक्ष्मस्तन्मलो याति तन्मलम्"। अयमर्थः स्थूलोंऽशः स्वं याति। यथास्थितं तिष्ठति सूक्ष्मस्त्वंशःपरं द्वितीयं धातुं याति तन्मलः रसादिमलस्तन्मलं शरीरारम्भकं तत्तद्धातुमलं यातीत्यर्थः यथा लौकिकाग्निनेक्षुरसः पच्यते तथा शरीरारम्भकस्य रसस्य अग्निनाहाररसः पच्यते पच्यमानः स पञ्चाहोरात्रात्सार्द्धदण्डमेकं च यावत्प्राक्तनरसधातावेव तिष्ठते उक्तञ्च सुश्रुते "स खलु रसस्त्रीणि त्रीणि कलासहस्राणि पञ्चदशकला एकैकस्मिन्धातावेव तिष्ठति" इति। अत्र कलानां विंशतिः मुहूर्त्तः स च दण्डद्वयात्मकः तथा च भोजः "धातौ रसादौ मज्जान्ते प्रत्येकं क्रमतोरसः। अहोरात्रात्स्वयंपञ्च सार्द्धं दण्डं च तिष्ठति"। प्रत्येकम् एकस्मिन्नेकस्मिन्नित्यर्थः ततो यथा पच्यमानादिक्षुरसान्मलोनिर्गच्छति। तथा पच्यमानादाहाररसान्मलो निर्गच्छति सः कफः उक्तञ्च सुश्रुते "कफपित्तमलाः खेषु प्रस्वेदोनखरोम च नेत्रविट्त्वक्षु च स्नेहोधातूनां क्रमशोमलाः"। खेषुमलः कर्णादिस्रोतोमलः। स च कफः प्राणानिलप्रेरितोधमनीमार्गेण शरीरारम्भकं क्लेदनाख्यं कफं गत्वा पुष्णाति। ततः सारभूतस्याहाररसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च तत्र सूक्ष्मोभागः शरीरारम्भकं रसं पोषयति सकलशरीराधिष्ठानेन व्यानवायुना प्रेरितोधमनीभिः सञ्चरन् पोषणस्नेहनजठरानलोद्दीपनसन्तापनिवारणादिभिर्गुणैः सकलं पुष्णाति शरीरम् ततः स्थूलोभागः प्राणवायुना प्रेरितोधमनीमार्गेण शरीरारम्भकस्य रक्तस्य स्थानं गत्वा यकृत्प्लीहरूपमन्त्वा तेन सह मिश्रितो भवति। ततः प्राक्तनरक्तस्याग्निना पुनः पच्यमानः पञ्चाहोरात्रात्सार्द्धदण्डञ्च यावत्प्राक्तनरक्तधातावेव तिष्ठति ततो यथाग्निना पुनःपुनः पच्यमानादिक्षुविकाराद्वारंवारं मलं निर्गच्छति। तथा पुनःपुनः पच्यमानादाहाररसात्प्रतिवारं मलं निर्गच्छति तत्र रक्ताग्निना पच्यमानान्मलं पित्तं निर्गच्छति। तच्च पित्तं समानवायुना प्रेरितं धमनीमार्गेण शरीरारम्भकं पाचकाख्यं पित्तं गत्वा पुष्णाति। ततः सारभूतस्याहाररसस्य द्वौ भागौ भवतः। स्थूलः सूक्ष्मश्च। तत्र सूक्ष्मोभागोरञ्जकाख्येन पित्तेन रक्तीकृतः शरीरारम्भकं रक्तं पोषयन् व्यानवायुना प्रेरितो धमनीभिः सञ्चरन् सकलशरीरगतानि रुधिराणि पुष्णाति। ततः स्थूलोभागो व्यानवायुना-

प्रेरितोधमनीभिः शिराभिश्च शरीरारम्भकाणि मांसानि याति ततो मांसाग्निना पुनः पच्यमानः पञ्चाहोरात्रात् सार्द्धदण्डं यावन्मांसेष्वेव तिष्ठति ततः पच्यमानात्तस्मान्मलं निर्गच्छति तद्व्यानवायुना क्षिप्रं कर्णावागत्य कर्णविड्भवति ततः सारभूतस्य रसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च ततः सूक्ष्मोभागो मांसानि पुष्णाति ततः स्थूलोभागोव्यानवायुना प्रेरितोधमनीभिः शरीरारम्भकस्य मेदसःस्थानमुदरं याति ततोमेदसोऽग्निना पुनः पच्यमानः पञ्चाहोरात्रात्सार्द्धदण्डञ्च यावन्मेदस्येव तिष्ठति ततः पच्यमानात्तस्मान्मलो निर्गच्छति प्रस्वेदरूपः स च शीतः स्रोतस्येव तिष्ठति शरीरोष्मणा तप्तश्च तदा व्यानवायुना प्रेरितः शिरामार्गैं लोमकूपेभ्यो बहिर्याति जिह्वादन्तकक्षामेढ्रादिमलञ्च मेदोमलमित्येके। ततः सारभूतस्य रसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च तत्र सूक्ष्मोभागो मेदः पुष्णाति उदरे तिष्ठन् व्यानवायुना प्रेरितः स्रोतोमार्गैः सूक्ष्मास्थिवान्यपि मेदांसि पुष्णाति स्थूलोभागोव्यानवायुना प्रेरितोधमनीभिः शिराभिश्च शरीरारम्भकाण्यस्थीनि याति ततोस्थ्यग्निना पुनः पच्यमानः पञ्चाहोरात्रात् सार्द्धदण्डं च यावदस्थिष्वेव तिष्ठति ततः पच्यमानात्तस्मान्मलो निर्गच्छति स च व्यानवायुना-प्रेरितः शिराभिर्मार्गैरागत्याङ्गुलिषु नखाःस्तनौ लोमानि भवन्ति ततः सारभूतस्य रसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च तत्र सूक्ष्मोभागोव्यानवायुना प्रेरितः स्रोतोमार्गैर्मज्जस्थानानि स्थूलास्थ्यभ्यन्तराणि याति ततो मज्जाग्निना पुनः पच्यमानः पञ्चाहोरात्रात्सार्द्धदण्डञ्च यावन्मज्जस्येवावतिष्ठति। ततः पच्यमानात् तस्मान्मलं निर्गच्छति। तच्च व्यानवायुना प्रेरितं शिरामार्गैर्नयनयोरागत्य नेत्रविट् चक्षुःस्नेहश्च भवति ततःसारभूतस्य रसस्य द्वौ भागौ भवतः स्थूलः सूक्ष्मश्च। तत्र सूक्ष्मोभागोमज्जानं पुष्णाति ततः स्थूलोभागो-व्यानवायुना प्रेरितोधमनीभिः शिराभिश्च शुक्रस्य स्थानं सकलं शरीरं गत्वा शरीरारम्भकेण शुक्रेण सह मिश्रितो भवति। ततः शुक्रस्याग्निना पुनः पच्यते पच्यमाने तस्मिन्मलं नास्ति स हि सहस्रधाध्मातसुवर्णवत्। उक्तञ्च "स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु। न शुक्रे पच्यमानेऽपि हेमनीवाक्षये मलः"। अन्यच्च "स्वाग्निभिः पच्यमानेषु मज्जान्तेषु रसादिषु। षट्सु धातुषु जायन्ते मलानि मुनयोजगुः। यथा सहस्रधाध्माते न मलं किञ्च-काञ्चने। तथा रसे स्रुतः पक्वे न मलं शुक्रतां गते"। ततः सारभूतस्य रसस्य द्वौ भागौ भवतः। स्थूलःसूक्ष्मश्च तत्र सूक्ष्मस्नेहभागः ओजस्तस्य लक्षणमाह। "ओजः सर्वशरीरस्थं स्निग्धं शीतं स्थिरं सितम्। सोमात्मकं शरीरस्य बल पुष्टिकरं मतम्" बलं चेष्टापाटवं तथा च। "चेष्टासु पाटवं यत्तु बलत्वदभिधीयते इति" यत्तु सुश्रुते रसादीनां शुक्रान्तानां धातूनां यत्परन्तेजस्तत् खल्वोजस्तदेव बलमिति तेजस्तेजोद्रवः"। अत्रायमभिप्रायः। यस्माद्रसादोजो भवति रसः सर्वधातुस्थानगतत्वात्तद्धातुवन्मन्यत इति। सर्वधातूनां स्नेहमोजःक्षीरे घृतमिव तदेव बलमिति" तत्-कार्य्यकारणयोरभेदोपचारात् अभेदकथनं च चिकित्सैक्यार्थम्। "अन्यच्च "गुरु शीतं मृदु स्निग्धं सान्द्रं स्वादु स्थिरंतथा-प्रसन्नं पिच्छलं सूक्ष्ममोजो दशगुणं स्मृतम्"। चरके तु "अर्द्धबिन्दुप्रमाणन्तदीषद्रक्तं सपित्तकम्। अग्निसोमात्मकत्वेन द्विरूपं वर्णितं तु तत्"। वाग्भटश्च "ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम्। हृदयस्थमपि व्यापि देहस्थिति-निबन्धनम्। यस्य प्रवृद्धौ देहस्य तुष्टिपुष्टिबलोदयाः। यन्नाशे नियतोनाशो यस्मिंस्तिष्ठति जीवनम्। निष्पद्यन्ते यतो भावाविविधा देहसंश्रयाः। उत्साहः प्रतिभा धैर्य्यं लावण्यं सुकुमारता"। ततः स्थूलभागो रसोमासेन पुंसां शुक्रं स्त्रीणां त्वार्त्तवं शुक्रं च भवति। उक्तञ्च सुश्रुते "एवं मासेन रसः शुक्रीभवति स्त्रीणामार्त्तवं च भवतीति चेति" चकारात् स्त्रीणामपि शुक्रं भवति। अतएवोक्तं सुश्रुते। "योषितोऽपि स्रवत्येव शुक्रं पुंसः समागमे। तत्र गर्भस्य किञ्चित्तु करोतीति न चिन्त्यते" गर्भस्य शुक्रस्य, विकृतस्य तु गर्भस्य कारणत्वदपि भवति यत उक्तं "यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते" इति। एतेन स्त्रीणां सप्तमोधातुरार्त्तवं शुक्रमपत्य इति बोधितम् आयवाधिक्यवत्। "स्त्रीणां गर्भोपयोगी स्यादार्त्तवं सर्वसम्मतम् तासामपि बलं वर्णं शुक्रं पुष्टिं करोति हि"। एवं रसएव केदारकुल्यान्यायेन सर्वान्धातून् पूरयति मासेन नवदण्डोत्तरेण शुक्रमार्त्तवञ्च भवति इति सिद्धान्तः। एवं सति रसाद्रक्तमिति सङ्गतमेव ततो-मांसन्ततो रक्तोत्पत्तेरनन्तरंमांसं जायते रसादेवेत्यर्थः मांसान्मेदः प्रजायते इति मांसादनन्तरं मेदः प्रजायते रसादेवेत्यर्थः। मेदसोऽस्थि मेदसोऽप्येऽस्थि जायते रसादेवेत्यर्थः। एवं ततोमज्जा मज्ज्ञोऽप्ये शुक्रस्य सम्भव इत्यर्थः। रसःशरीरे त्रिधा सञ्चरति तथाचोक्तम्। "रसः-

शरीरे शब्दार्चिर्जलसन्तानवत् त्रिधा । संचरत्यनुरूपोऽयं नित्यमेव हि देहिनाम्" । अस्यायमभिप्रायः पुरुषास्तीक्ष्णाग्नयो मध्यमाग्नयो मन्दाग्नयश्च भवन्ति तत्र तीक्ष्णाग्नीनां रसः शब्दसन्तानवच्छीघ्रं सञ्चरति । मध्यमाग्नीनामर्चिःसन्तानवन्मध्यवेगेन सञ्चरति । मन्दाग्नीनां जलसन्तानवन्मन्दं सञ्चरति । तेन मासेन रसः शुक्रं भवति यदुक्तं तन्मध्यमाग्नीनधिकृत्योक्तं दीप्ताग्नीनां तु रसः किञ्चिदूनेन मासेन शुक्रं भवति । मन्दाग्नेस्तु किञ्चिदधिकेन मासेनेति सिद्धान्तः" ।

**असृग्धरा** स्त्री असृक् धरति धृ+अच् । शोणितधारिण्यां त्वचि । अत्र असृग्धारायत्न ।

**असृग्वहा** स्त्री असृक् शोणितं वहति अच् । शोणितवहायां नाड्यां तद्विवरणं सुश्रुते "सप्त सिराशतानि भवन्ति । याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यतेऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः ॥ द्रुमपत्रसेवनीनामिव च तासां प्रतानास्तासां नाभिर्मूलं ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्यक् च । भवतश्चात्र ॥ यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम् । नाभ्यां सर्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः ॥ नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिता । सिराभिरावृता नाभिश्चक्रनाभिरिवारकैः ॥ तासां मूलसिराश्चत्वारिंशत्तासां वातवाहिन्यो दश पित्तवाहिन्यो दश कफवाहिन्यो दश दश रक्तवाहिन्यः । तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिशतं १७५ भवति तावत्य एव १७५ पित्तवाहिन्यः पित्तस्थाने, कफवाहिन्यश्च कफस्थाने रक्तवाहिन्यश्च यकृत्प्लीह्नोरेवमेतानि सप्त सिराशतानि ॥ तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः । एतेनेतरसक्थिबाहू च व्याख्यातौ ॥ विशेषतस्तु कोष्ठे चतुस्त्रिंशत्तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ । द्वे द्वे पार्श्वयोः षट् पृष्ठे तावत्य एव चोदरे दश वक्षसि ॥ एकचत्वारिंशज्जत्रुण ऊर्द्ध्वं, तासां चतुर्दश ग्रीवायाम् । कर्णयोश्चतस्रः । नव जिह्वायां । षट् नासिकायां । अष्टौ नेत्रयोः । एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां सिराणां व्याख्यातम् । एष एव विभागः शेषाणामपि ॥ विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश कर्णयोर्द्वे । एवं रक्तवहाः कफवहाश्च । एवमेतानि सप्त सिराशतानि सविभागानि व्याख्यातानि । ताः सिराः सञ्चरद्रक्तं कुर्याच्चान्यान् गुणानपि ॥ यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः । तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः ॥ न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा । श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः ॥ प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम् । ध्रुवमुन्मार्गगमनमतः सर्ववहाः स्मृताः ॥ तत्रारुणा वातवहाः पूर्यन्ते वायुना सिराः । पित्तादुष्णाश्च नीलाश्च शीता गौर्यः स्थिराः कफात् ॥ असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः"

**असृग्विमोक्षण** न० वृद्धस्य दुष्टस्य असृजः शोणितस्य देहाद् विमोक्षणं स्रावणम् ६त० । देहात् वृद्धस्य दुष्टस्य वा रक्तधातोः स्रावणे निःसारणे । तत्प्रकारादिकमुक्तं सुश्रुते "तस्माच्च शीते नात्युष्णे नास्विन्ने नातितापिते । यवागूं प्रतिपीतस्य शोणितं मोक्षयेद्भिषक् । सम्यग्गत्वा यदा रक्तं स्वयमेवावतिष्ठते । शुद्धं तदा विजानीयात् सम्यग्विस्रावितञ्च तत् ॥ लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षयः । सम्यग्विस्राविते लिङ्गं प्रसादो मनसस्तथा ॥ त्वग्दोषा ग्रन्थयः शोफा रोगाः शोणितजाश्च ये । रक्तमोक्षणशीलानां न भवन्ति कदाचन ॥ अथ खल्वप्रवर्त्तमाने रक्ते एलाशीतशिवकुष्ठतगरपाठाभद्रदारुविडङ्गचित्रकत्रिकटुकागारधूमहरिद्रार्काङ्कुरनक्तमालफलैर्यथालाभं त्रिभिश्चतुर्भिः समस्तैर्वा चूर्णीकृतैः सर्षपतैललवणप्रगाढैर्व्रणमुखमवघर्षयेदेवं सम्यक् प्रवर्त्तते । अथातिप्रवृत्ते रोध्रमधुकप्रियङ्गुपत्तङ्गगैरिकसर्जरसरसाञ्जनशाल्मलीपुष्पशङ्खशुक्तिमाषयवगोधूमचूर्णैः शनैः शनैर्व्रणमुखमवचूर्ण्याङ्गुल्यग्रेणावपीडयेत् । सालसर्जार्जुनारिमेदमेषशृङ्गधवधन्वनत्वग्भिर्वा चूर्णिताभिः क्षौमेण वा ध्मापितेन समुद्रफेनलाक्षाचूर्णैर्वा यथोक्तैर्व्रणबन्धनद्रव्यैर्गाढं बध्नीयात् । शीताच्छादनभोजनागारैः शीतैः परिषेकप्रदेहैश्चोपाचरेत् क्षारेणाग्निना वा दहेद्यथोक्तं व्यधनादनन्तरं वा तामेवातिप्रवृत्तां सिरां विध्येत् । काकोल्यादिक्वाथं वा शर्करामधुमधुरं पाययेत् एणहरिणोरभ्रशशमहिषवराहाणां वा रुधिरं क्षीरयूषरसैः सुस्निग्धैर्वाश्नीयादुपद्रवांश्च यथास्वमुपाचरेत्" । उपद्रवास्तत्रोक्ता यथा ॥ "धातुक्षयात् स्रुते रक्ते मन्दः सञ्जायतेऽनलः । पवनश्च परं कोपं याति तस्मात् प्रयत्नतः ॥ तन्नातिशीतैर्लघुभिः स्निग्धैः शोणितवर्द्धनैः । ईषदम्लैरनम्लैर्वा भोजनैः समुपाचरेत् ॥ चतुर्विधं यदेतद्धि रुधिरस्य निवारणम् । सन्धानं स्कन्दनञ्चैव पाचनं दहनं तथा ॥ व्रणं कषायः

सम्यक्त्वे रक्तं स्कन्दयते हिमम्। तथा सन्धापयेद्व्रणं दाहः सङ्कोचयेत् सिराः। अस्कन्दमाने रुधिरे सन्धानानि प्रयोजयेत्। सन्धाने भज्यमाने तु पाचनैः समुपाचरेत्॥ कल्पैरेतैस्त्रिभिर्वैद्यः प्रयतेत यथाविधि। असिद्धिमत्सु चैतेषु दाहः परम इष्यते। सशेषदोषे रुधिरे न व्याधिरतिवर्त्तते। सावशेषे ततः स्थेयं न तु कुर्य्यादतिक्रमम्॥ देहस्य रुधिरं मूलं रुधिरेणैव धार्य्यते। तस्माद्यत्नेन संरक्ष्यं रक्तं जीव इति स्थितिः॥ स्रुतरक्तस्य सेकाद्यैः शीतैः प्रकुपितेऽनिले। शोफं सतोदं कोष्णेन सर्पिषा परिषेचयेत्॥

नृपाढ्यबालस्थविरभीरुदुर्ब्बलनारीसुकुमाराणामनुग्रहार्थं परमसुकुमारोऽयं शोणितावसेचनोपायोऽभिहितो जलौकसः। तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकालाबुभिरवसेचयेत् स्निग्धशीतरूक्षत्वात् सर्व्वाणि सर्व्वैर्वा। भवन्ति चात्र। उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्त्तितम्। तस्माद्वातोपसृष्टे तु हितं तदवसेचने। शीताधिवासा मधुरा जलौका वारिसम्भवा। तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने। अलाबु कटुकं रूक्षं तीक्ष्णञ्च परिकीर्त्तितम्। तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने। तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदाचूषणात्। सान्तर्दीपयाऽलाबा"। जलौकसां विवरणम् अलपादशब्दे वक्ष्यते।

"अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात्। गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्त्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत्। श्लक्ष्णशुक्लार्द्रपिचुप्लोतावच्छन्नां कृत्वा मुखमपावृणुयाद्गृह्णन्त्यै क्षीरविन्दुं शोणितविन्दुं वा दद्याच्छस्त्रपदानि वा कुर्वीत यद्येवमपि न गृह्णीयात्तदान्यां ग्राहयेत्। यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तदा जानीयाद्गृह्णातीति गृह्णतीं चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च। दंशे तोदकण्डुप्रादुर्भावैर्जानीयाच्छुद्धमियमादत्त इति शुद्धमाददानामपनयेत्। अथ शोणितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत्। अथ पतितां तण्डुलकण्डनप्रदिग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलिभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गुष्ठाङ्गुलिभ्यां शनैः शनैरनुलोममनुमार्जयेदा मुखाद्वामयेत्तावद्यावत्सम्यग्वान्तलिङ्गानीति। सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत्। या सीदति न चेष्टते सा दुर्व्वान्ता तां पुनः सम्यग्वामयेत्। दुर्व्वान्तायां व्याधिरसाध्य इन्द्रमदो नाम भवति। अथ सुवान्तां पूर्व्ववत्सन्निदध्यात् शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणान्मधुनावघट्टयेच्छीताभिरद्भिश्च परिषेचयेद्बध्नीत वा व्रणं कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदिह्यादिति। भवति चात्र। क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम्। जलौकसाञ्च यो वेत्ति तत्साध्यान् स जयेद्गदान्"।

**असृज्** न० न सृज्यते इतररागवत् संसृज्यते सहजत्वात् न+सृज्—क्विन्, अस्यते क्षिप्यते इतस्ततो नाडीभिः अस् ऋजि वा। १शोणिते २मङ्गलग्रहे च तस्य रक्तवर्णत्वात्तथात्वम्। कुङ्कुमे, ३विष्कम्भावधिके ४योगभेदे योगे। शोणितोत्पत्ति रुक्ता भाव०प्र०। "यदा रसो यकृद्याति तत्र रञ्जकपित्ततः। रागं पाकञ्च संप्राप्य स भवेद्रक्तसंज्ञकः। रक्तं सर्व्वशरीरे तु जीवस्याधार उत्तमः। स्निग्धं गुरु चलं स्वादु विदग्धं पित्तवद्भवेत्"। तस्योत्तमत्वञ्चोक्तं तत्रैव "जीवोवसति सर्व्वस्मिन् देहे तत्र विशेषतः"। वीर्य्ये रक्ते मले तस्मिन् क्षीणे याति क्षयं क्षणात्"। वीर्य्ये रक्ते मले च शरीरारम्भके वाग्भटोक्तपरिभाषयुक्ते शुद्धे जीवोवसति न तु दुष्टे मलवद्रक्तस्रावणोपदेशस्य विधानात्। पित्तवद्भवेद्दग्धं भवेदित्यर्थः। तस्य स्थानम्" "यकृत् प्लीहा च रक्तस्य मुख्यस्थानं तयोः स्थितम्"। अन्यत्र संस्थितवतां रक्तानां पीतता भवेत्" इति भा०प्रका० सुश्रुते शोणितोत्पादविवरणमन्यथोक्तं यथा "अथातः शोणितवर्णनीयमध्यायं व्याख्यास्यामः। तत्र पाञ्चभौतिकस्य चतुर्व्विधस्य षड्रसस्य द्विविधवीर्य्यस्याष्टविधवीर्य्यस्य वानेकगुणस्योपयुक्तस्य आहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते। तस्य च हृदयं स्थानं स हृदयाच्चतुर्व्विंशतिं धमनीरनुप्रविश्योर्द्धगा दश दश चाधोगामिन्यस्तस्रश्च तिर्य्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्म्मणा। तस्य शरीरमनुधावतोऽनुमानाद्गतिरुपलक्षयितव्या क्षयवृद्धिवैकृतैः। तस्मिन् सर्व्वशरीरावयवदोषधातुमलाशयानुसारिणि रसे जिज्ञासा किमयं सौम्यस्तैजस इति। अत्रोच्यते स खलु द्रवानुसारी स्नेहनजीवनतर्पणधारणादिभिर्विशेषैः सौम्य इत्यवगम्यते। स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैति। भवतश्चात्र॥ "रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम्।

व्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥ रसादेव स्त्रिया रक्तं रजःसंज्ञं प्रवर्त्तते । तद्वर्षाद्द्वादशादूर्द्ध्वं याति पञ्चाशतः क्षयम् ॥ आर्त्तवं शोणितं त्वाग्नेयमग्नीषोमीयत्वाद्गर्भस्य पाञ्चभौतिकञ्चापरे जीवरक्तमाहुराचार्य्याः ॥ "विस्रता द्रवता रागः स्पन्दनं लघुता तथा । भूम्यादीनां गुणा ह्येते दृश्यन्ते चात्र शोणिते" । [याम् ।

**अस्रपाटी** स्त्री अस्रजः पाटी परिपाटी ६त॰ । शोणितधारा-

**असेचनक** त्रि॰ न सिच्यते तृप्यति मनोऽत्र सिच–ल्युट् संज्ञायां कन् । १अत्यन्तप्रियदर्शने यद्दर्शनान्मनो न तृप्यति तत्र "नयनयुगासेचनकम् मानसवृत्त्यापि दुष्प्रापम्" सा॰द॰ । सेचनं सेकः अभावे न॰त॰ स्वार्थे कन् । २सेचनाभावे न॰ब॰ । ३सेचनशून्ये त्रि॰ ।

**असेवन** न॰ अभावे न॰त॰ । १सेवाभावे न॰ब॰ । २सेवाशून्ये

**असौ** अव्य॰ सो–बा॰–डौ न॰त॰ । अदःशब्दार्थे । "असौनामाऽयमिदं रूप इति" शत॰ब्रा॰ । अयञ्च साक्षादादिः इति बहवः । असौलव्य । गणरत्ने तु तत्र गणे अग्नौ इति पठितम् व्याख्यातञ्च अग्नौ इति तीक्ष्णत्वे अग्नौलव्येति" इति । [२सौन्दर्य्यशून्ये त्रि॰ ।

**असौन्दर्य्य** न॰ अभावे न॰त॰ । १सौन्दर्य्याभावे न॰ब॰ ।

**असौम्य** त्रि॰ विरोधे न॰त॰ । सौम्यत्वविरोधिघोरत्वयुक्ते

**असौम्यस्वर** त्रि॰ असौम्यः स्वरोयस्य । १काकतुल्यमन्दस्वरयुक्ते । २कठोरस्वरे च । [२सौष्ठवशून्ये त्रि॰ ।

**असौष्ठव** न॰ अभावे न॰त॰ । १सौष्ठवाभावे न॰ब॰ ।

**अस्कन्न** त्रि॰ स्कन्द–क्त न॰त॰ । अक्षरिते । "अस्कन्नं हविरस्तादिति" शत॰ब्रा॰ ।

**अस्कम्भन** त्रि॰ स्कम्भ–ल्युट् न॰त॰ । १रोधनाभावे न॰ब॰ । २रोधनशून्ये । "अस्कम्भने सविताद्यामदृंहत्" ।१०,१४९,१

**अस्कृधोयु** त्रि॰ कृधः ह्रस्वः निरु॰ न॰त॰ ६॰ साधु । १अविच्छिन्ने २अह्रस्वे च । "अस्मे धत्त यदसदस्कृधोयु" ऋ॰ ७,५३,३ । "युवोर्मित्रावरुणावस्कृधोयु" ऋ॰ ६,६७, ११ । अस्कृधोयुरजरः ६,२२'३ । "अस्कृधोयुरविच्छिन्नः" भा॰ ।

**अस्खलित** त्रि॰ न॰त॰ । १अप्रच्युते स्वकर्त्तव्ये २अप्रमत्ते च "भ्रूभङ्गिरप्यस्खलिता स्वसूतेः" माघः । "स मे चिरायास्खलितोपचाराम्" रघुः ।

**अस्त** न॰ अस्यन्ते सूर्य्यकिरणा यत्र आधारे क्त । १पश्चिमाचले, "अधिरोढुमस्तगिरिमभ्यपतत्" माघः । "विडम्बय त्यस्तनिमग्नसूर्य्यं" रघुः । कर्मणि क्त २क्षिप्ते ३अवसिते च त्रि॰ "निरस्तः पराहतः" भट्टेयः । "गतिरपास्तसंस्था मतिः" मालती॰ । "निरस्तगाम्भीर्य्यमपास्तधैर्य्यम्" माघः । भावे क्त । ४दर्शनायोग्यत्वे ५अवसाने न॰ । आधारे क्त । ज्योतिषोक्ते ६लग्नात् सप्तमे स्थाने न॰ । लग्नात् सप्तमस्थानस्य तथात्वञ्च तस्योदये लग्नस्यादर्शनहेतुत्वात् । तथा हि द्वादशराशिचक्रात्मकस्य प्रवहवायुनानिशं पश्चान्नीयमानस्य भचक्रस्य मध्ये दिवा षट् राशयो रात्रौ च षट् क्रमेणोद्गच्छन्ति तत्रोदितलग्नानां च षण्णामेव दर्शनयोग्यता इतरेषां षण्णां तु भूखण्डेनाच्छादनान्न दृश्यता । तत्र यस्य यस्य राशेरुदयः यस्मिन् समये जायते ततः सप्तमराशेरुदयसमये तस्य तस्यास्तत्वम् अदर्शनयोग्यत्वं भवतीति सप्तमराशेरुदयकालस्यास्तकारित्वम् । "अन्त्यलग्नात् सुखास्तान्त्यरिपुरन्ध्रेष्वशोभना" नील॰ता॰ । ७अदर्शनप्राप्ते रव्यादिग्रहे त्रि॰ सूर्य्यादिग्रहाणामपि प्रागुक्तरीत्या स्वाधिष्ठितराश्यपेक्षया सप्तमराश्युदयेऽस्तत्वम् यथोक्तं सि॰शि॰ । "निजनिजोदयलग्नसमुद्गमे समुदयोऽपि भवेद्गगनसदाम् । भवति चास्तविलग्नसमुद्गमे प्रतिदिनेऽस्तमयः प्रवहक्रमात्" निशोदलग्नादुदयास्तलग्ने न्यूनाधिके यस्य खगः स दृश्यः । दिनेऽपि चन्द्रोरविसन्निधानात् नास्तंगतश्चेत् सति दर्शने भा" । "नक्षत्राणामप्युदयास्तज्ञापनमपि तत्रैव "दृक्कर्मणा पलभवेन तु केवलेन भानां स्फुनेर्क्षगरिपोरुदयास्तलग्ने । कृत्वा तयोरुदयलग्नमिनं प्रकल्प्य लग्नं ततो निजनिजे पठितेष्टकाले" । यत् स्यादसावुदयभानुरथास्तलग्नाद्व्यस्तं विभार्धमपि लग्नकमस्तसूर्य्यः । इष्टोनषष्टि ६॰ घटिकास्वथ वास्तलग्नाल्लग्नं क्रमेण भदलोनितमस्तसूर्य्यः । स्याद्गमो निजनिजोदयभानुतुल्ये सूर्य्येऽस्तभास्करसमेऽस्तमयश्च भानाम् । अत्राधिकोनकलिका रविभुक्तिभक्ता यातैष्यवासरमितिश्च तदन्तरे स्यात् । यस्योदयार्कादधिकोऽस्तभानुः प्रजायते सौम्यशरातिदैर्घ्यात् । तिग्मांशुसान्निध्यवशेन नास्ति धिष्ण्यस्य तस्यास्तमयः कथञ्चित्" । "भानामगस्त्यस्य लुब्धकस्य च पूर्ववदुदयास्तलग्ने साध्ये परन्तु केवलेन पलभवेन दृक्कर्मणा । ध्रुवस्य कृतायनदृक्कर्मकत्वात् पुनरायनं दृक्कर्म न कर्त्तव्यमित्यर्थः । तत्रोदयलग्नमर्कं प्रकल्प्य लग्नं साध्यम् । तच्च स्वकीये पठितेष्टकाले । एवं यल्लग्नं सिध्यति स उदयार्को ज्ञातव्यः । अथ यदस्तलग्नमानीतं तच्चार्कं प्रकल्प्य निजनिजेष्टकाले विलोमं लग्नं साध्यम् । तद्राशिषट्कोनमस्तसूर्य्यंस्य

भवति । अथवेष्टघटिकोनाभिः षष्टिघटिकाभिरस्तलग्नात् क्रमेण लग्नं साधितं तद्भदलोनितमस्तसूर्यो भवति यदोदयभानुसमो भानुर्भवति तदा तस्य नक्षत्रस्योदयो भवति । यदास्तसूर्यसमस्तदास्तमयः । यदागस्त्योदयः कियद्भिर्दिनात् कियद्भिर्दिनैरिति विज्ञातुमिष्यते तदेष्टदिनार्कस्यागस्त्योदयार्कस्य चान्तरकला रविभुक्त्या भाज्याः । लब्धदिनैरगस्त्यस्योदय एष्यः यद्युदयार्को महान् । यद्यूनस्तदा गतः । अत्रोपपत्तिः उदयास्तलग्नसाधने तु पूर्वं कथितैव । उदयलग्नोदये किल भस्योदयः यदोदयलग्नसमो रविर्भवति तदा रविणा सह तन्नक्षत्रमुदेति । तस्मादुदयात् प्राक् पठितेष्टघटिकातुल्यं कालं यावत् तन्नक्षत्रं रविप्रभाभिर्हतं क्षितिजादुपरिस्थमपि न दृश्यते । अथ पठितेष्टकाले यत् क्रमलग्नं तत्स्थानस्थितो रविरुदयार्कतुल्यो भवति तथा रव्यस्तमयादनन्तरं नक्षत्रास्तमयात् पूर्वं प्रत्यक् क्षितिजादुपरिस्थमपि नक्षत्रं पठितेष्टकालं यावन्न दृश्यते । अथ नक्षत्रस्य क्षितिजादुपरिस्थितत्वात् प्रत्यक्क्षितिजस्थेनार्केण न्यूनेन भवितव्यम् । अतोऽस्तलग्नात् पठितेष्टकाले व्यस्तं कार्यम् । तल्लग्नं प्राक्क्षितिजस्थं भवति । अतः षड्भोनितं प्रत्यक्क्षितिजेऽस्तसूर्यो भवतीत्युपपन्नम् । दृष्टोनषष्टि ६०घटिकास्त्विषादौ वासना सुगमैव । यस्य नक्षत्रस्योदयार्कादस्तार्कोऽधिको भवति तस्य नक्षत्रस्यार्कसान्निध्यवशाददर्शनं नास्तीति वेदितव्यम् । इदं कुत इत्यत आह सौम्यशरातिदैर्घ्यात् । यस्य भस्य सौम्यः शरो दीर्घो भवति तस्य पलोद्भवासवो बहवो भवन्ति ॥ तैर्विलोमलग्ने क्रियमाणे उदयलग्नमूनं भवति । अस्तलग्नं क्रियमाणमधिकं भवति । ताभ्यां कुदयास्तार्कौ साध्यौ । तत्रास्तार्केण किल न्यूनेन भवितव्यम् । अस्तार्कसमे रवौ किलादृश्यतारम्भस्ततः कियन्ति च दिनान्यदृश्यं भूत्वोदयार्कसमे रवौ तद्बिम्बमुदेति । अत उदयार्केणाधिकेन भवितव्यम् । यतोऽर्कसन्निधिवशेनैतावुदयास्तौ । यथा यथा सौम्यशरस्य दीर्घत्वं यथा यथाक्षवशेन गोलस्य दक्षिणतो नामनं तथा तथोदयास्तार्कयोरल्पमन्तरं भवति । अल्पान्तरेऽल्पान्येव दिनानि तन्नक्षत्रमदृश्यं भवति । एवं यस्मिन् देशे उदयास्तार्कौ तुल्यौ भवतस्ततः परं तस्मिन् देशे तस्य नक्षत्रस्यार्कासन्नभावेनादृश्यता इति युक्तितः सिद्धम्" प्रमि०। अस्तलग्नसाधनमप्युक्तं तत्रैव "यत्र लग्नमपमण्डलं कुजे तद्गृहाद्यमिह लग्नमुच्यते । प्राचि पश्चिमकुजेऽस्तलग्नकं मध्यलग्नमिति दक्षिणोत्तरे" कुजे भूमिमण्डलगते रेखाहते अपमण्डलं ततो निखरदुन्मण्डलम् । यन्त्राणामुदयास्तांशानाह तत्रैव । "प्राच्यामुदेति क्षितिजोऽष्टदस्रैः २८ शक्रैः १४ गुरुः सप्तकुभिश्च १७मन्दः । स्वस्वोदयांशोनित ३६०चक्रभागैः-३३२ । ३४६ । ३४३ । स्वयो प्रजन्त्यस्तमयं प्रतीच्याम् । नागैः ५० जिनैः २४ चसितयोरुदयः प्रतीच्यामस्तञ्च पञ्चतिथिभिः १५५ मुनिसप्तभूभिः १७७ । प्रागुद्गमः शरनखैः २०५ क्षितिष्टतिप्रमाणैः-१८३ रस्तश्च तत्र दशवह्निभिः ३१० रुद्रदेवैः ३३६ । अवक्रवक्रास्तमयोदयोक्तभागाधिकोनाः कलिका विलग्नाः । द्राक्केन्द्रभुक्त्याप्रदिनैर्गतैष्यैरवक्रवक्रास्तमयोदयाः स्युः" । "बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते । मलमास इवैतानि वर्जयेद्देवदर्शनम् । पक्षं वृद्धस्तु पूर्वेण दशाहं पश्चिमेन तु । प्रत्यग्बालो दशाहन्तु पूर्वेण च दिनत्रयम्" ज्यो०त० पूर्वेणेति प्रातःप्रातः पूर्वदिशि दृष्टा रविकिरणाच्छन्नतया न दृश्यते चेत्पक्षस्तदा प्रागस्तमितः तत्रास्तमितात् प्राक् पक्षं वृद्धः । पश्चिमेनेति । एवं सायंसायं अपरदिशि दृष्टा रविकिरणाच्छन्नतया न दृश्यते चेद्दशाहस्तदा प्रत्यगस्तमितस्तत्रास्तमितात् प्राक् दशाहं वृद्धः" । "हानिं षड्दिवसाद्यास्ते जीवस्य भार्गवस्य च । हासप्रतिमेच्छलसे पादान्ते द्वादश क्रमात्" । इति ज्योतिर्विदुक्तकालानन्तरमपरदिशि दृश्यते चेत्तदा दशाहं प्रत्यग्बालः, पूर्वदिशि चेत्तदा दिनत्रयं प्राग्बाल इति भङ्ग्यन्तरेणाह । "पक्षं वृद्धोभृग्वस्ते तु बालत्वात् दशाह्निकः । पादान्ते तु दशाहानि वृद्धो बालो दिनत्रयम्" इति च ज्यो०त०रघु० ।

**अस्तक** पु० अस्तं अपुनरावृत्तिम् अवसानं वा करोति अस्त+णिच्–ण्वुल् । निर्वाणमोक्षे ।

**अस्तग** त्रि० अस्तमदर्शनं गच्छति गम–ड ६त० । १ सूर्य्यकिरणाच्छन्नतया अदृश्ये ग्रहे २अदर्शनगतमात्रे च । अस्तगतादयोऽप्यत्र ।

**अस्तगमन** न० अस्तस्यादर्शनस्य गमनम् । ग्रहाणां स्वाक्रान्तराश्यपेक्षया सप्तमराश्युदये अदर्शनगमने "भीमसेनं भजेयास्तं प्रागस्तगमनाद्रवेः" भा०आ०प०१५५अ०।

**अस्तम्** अव्य० अस–तमि । १नाशे, २अदर्शने च । "दण्डेनास्तमितत्विषा" कुमा०। "राज्यमस्तमितेश्वरम्" रघुः । "सर्व्वेषु तिलसंबन्धं नाद्यादस्तमिते रवौ" । "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन" चतुरोऽस्तमिते सूर्य्ये

त्रिशुचान्द्रायणं स्मृतम्" मनुः। "धृतिरस्तमिता रतिश्च्युता" रघुः। [ पर्ण्याम्

**अस्तमती** स्त्री अस्तमतति अत-अच्-गौरा० ङीप्। शाल-

**अस्तमन** न० अन-वा-भावेऽप् अस्तम् अस्तस्य अनः गतिः। भगोलकक्षया तिरोधानेन, १ सूर्य्यादेरदर्शनगमने "तिरोधानन्तु यत्तेति तदेवास्तमनं रवेः। नैवास्तमनमर्कस्य नोदयः सर्व्वदा सतः" इति ज्योतिषोक्तेस्तथात्वम् व०। "उदयास्तमने नाथ! दर्शनादर्शने रवेः" पुरा० "उदयास्तमनयोर्हि न हृष्यति न शोचति" भा०व० २५७अ०। सूर्य्यास्तमनवेलायामासेदुस्ते महद्वनम्" भा०आ०प०२अ० "उदयास्तमने भानुः प्रदक्षिणमवर्त्तत" भा०भी०प०। २तत्काले च।

**अस्तमय** पु० अस्तोमीयते ज्ञायते यत्र मिन्-अच् वा न आत्। १प्रलये, २सूर्य्यादेरदर्शने "करोत्यकालास्तमयं विवस्वतः" किरा०। "उदयनाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरापत्तिस्तदत्ययश्चास्तमयः न परमार्थत उदयोऽस्तमयो वा" तन्निवासिनाञ्च प्राणिनामभावे तान् प्रति तेनैव मार्गेण गच्छन्नपि नैवोदेता नास्तमेतेति चक्षुर्गोचरतापत्तेस्तदत्ययस्य च तत्राभावात्" छा०उ०भाष्यम्। तथा च भूवृत्तार्द्धान्तरालस्थानएवोदयास्तमयौ भवतः "लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनार्द्धं यमकोटिपुर्य्याम्। अधस्तदा सिद्धपुरेऽस्तकालःस्याद्रोमके रात्रिदलं तदैव" सि०शि०। भूवृत्तचतुर्थांशे स्थितानां पुरांमध्ये प्रथमपुर्य्यामुदये तृतीयेऽस्तत्वोक्तेस्तथात्वम्। शा० भाष्ये तु यदाऽमरावत्यां मध्याह्नगतः सविता तदा संयामिन्यामुद्यन् दृश्यते तत्र मध्याह्नगोचरोवारुण्यामुद्यन् दृश्यते इत्युक्तम्" नक्षत्राणां च सूर्य्यस्यातिप्रत्यासत्त्या प्रकाशाभावोऽस्तत्वम् तद्वियोगे चोदयः। "रविणास्तमयोयोगो वियोगस्तूदयो भवेत्" इत्युक्तेः अन्यनक्षत्राणां ३ रवियोगे च।

**अस्तरण** न० अभावे न०त०। स्तरणाभावे। तत्र दीयते कार्य्यम् वा व्युष्टा० अण्। आस्तरणम् तत्र देये कार्य्ये च त्रि०।

**अस्ताघ** त्रि० अस्तमस्तं कालुष्य-यत्र। अतिगभीरे हेम०।

**अस्ताचल** पु० अस्तम् क्रियया यत्र आधारे क्त कर्म०। पश्चिमाचले अस्तगिरौ। "अस्ताचलचूडावलम्बिनि भगवति मरीचिमालिनि" काद०। अस्ताद्रिप्रभृतयोऽप्यत्र।

**अस्ति** अव्य० अस्-श्तिप्। १स्थितौ, विद्यमानतायाञ्च "अस्ति नास्ति न जानातीति" वाच०। २तद्वति च अस्तिवीरा अस्तिपरलोक इति मतिर्यस्य आस्तिकः नास्तिकः। चतुरर्थ्यां पक्षा० फक्। आस्तायनः। तत्सन्निकृष्टदेशादौ त्रि०।

**अस्तिकाय** पु० अस्ति कायः स्वरूपं यस्य। जैनमतसिद्धे विद्यमानतास्वरूपे पदार्थभेदे। अस्तिकायाश्च पञ्चविधाः जीवास्तिकायः पुद्गलास्तिकायः धर्म्मास्तिकायः अधर्म्मास्तिकायः आकाशास्तिकायश्चेति अर्हच्छब्दे ३८६ पृष्ठे विवरणम्। शा०भाष्ये तन्मतस्यान्यस्य निराकृतं यथा "सर्व्वेषामप्येषामवान्तरप्रभेदान् बहुविधान् स्वसमयपरिकल्पितान् वर्णयन्ति। सर्वत्र चेमं सप्तभङ्गीनयन्यायमवतारयन्ति। स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यः स्यान्नास्ति चावक्तव्यः स्यादस्ति नास्ति चावक्तव्यश्चेति। एवमेवैकत्वनित्यत्वादावपीमं सप्तभङ्गीनयं योजयन्ति। अत्राचक्ष्महे नायमभ्युपगमो युक्त इति। कुतः "एकस्मिन्नसम्भवात्" सू०। नह्येकस्मिन् धर्म्मिणि युगपत्सदसत्त्वादि विरुद्धधर्म्मसमावेशः सम्भवति शीतोष्णवत्। यएते सप्त पदार्था निर्द्धारिता एतावन्त एवंरूपाश्चेति ते तथैव वा स्युः। नैव वा तथा स्युः। इतरथा हि तथा वा स्युर्न तथा वेत्यनिर्द्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात्। ननु अनेकात्मकं वस्त्विति निर्द्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवन्नाप्रमाणं भवितुमर्हति। नेति ब्रूमः निरङ्कुशं ह्यनेकान्तं सर्व्ववस्तु प्रतिजानानस्य निर्द्धारणफलस्यापि वस्तुत्वाविशेषात् स्यादस्ति स्यान्नास्तीत्यादिविकल्पोपनिपातादनिर्द्धारणात्मकतैव स्यात्। एवं निर्द्धारयितुर्निर्द्धारणफलस्य च स्यात्। पक्षेऽस्तिता स्याच्च पक्षे नास्तितेत्येवं सति कथं प्रमाणभूतः संस्तीर्थकरः प्रमाणप्रमेयप्रमातृप्रमितिष्वनिर्द्धारितासूपदेष्टुं शक्नुयात् कथं वा तदभिप्रायानुसारिणस्तदुपदिष्टेऽर्थेऽनिर्द्धारितरूपे प्रवर्त्तेरन्। ऐकान्तिकफलत्वनिर्द्धारणे हि सति तत्साधनानुष्ठानाय सर्व्वोलोकोऽनाकुलः प्रवर्त्तते नान्यथा। अतश्चानिर्द्धारितार्थं शास्त्रं प्रणयन्मत्तोन्मत्तवदनुपादेयवचनः स्यात्। तथा पञ्चानामस्तिकायानां पञ्चत्वसंख्यास्ति वा नास्ति वेति विकल्प्यमानं स्यादिति तदेकस्मिन् पक्षे। पक्षान्तरे तु न स्यादित्यतोन्यूनसंख्यात्वमधिकसंख्यात्वं वा प्राप्नुयात्। नचैषां पदार्थानामवक्तव्यत्वं सम्भवति अवक्तव्याश्चेन्नोच्येरन् उच्यन्ते चावक्तव्याश्चेति विप्रतिषिद्धम्। उच्यमानाश्च तथैवावधार्य्यन्ते नावधार्य्याश्च इति च तथा तदवधारणफलं सम्यग्दर्शनमस्ति वा नास्ति

वा एवं तद्विपरीतमसम्यग्दर्शनमप्यस्ति वा नास्ति वेति प्रलपन्मत्तोन्मत्तपक्षस्यैव स्यान्न प्रत्ययितव्यपक्षस्य। स्वर्गापवर्गयोश्च पक्षे भावः पक्षे चाभावः तथा पक्षे नित्यता तथा पक्षे चानित्यता इत्यनवधारणायां प्रवृत्त्यनुपपत्तिः। अनादिसिद्धजीवप्रभृतीनाञ्च स्वशास्त्रावधृतभावानामयथावधृतस्वभावत्वप्रसङ्गः। एवं जीवादिषु पदार्थेष्वेकस्मिन् धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयोरसम्भवात् सत्त्वे चैकस्मिन् धर्मेऽसत्त्वस्य धर्मान्तरस्यासम्भवादसत्त्वे चैवं सत्त्वस्यासम्भवाद सङ्गतमिदमार्हतं मतम्। एतेनैकानेकनित्यव्यतिरिक्ताव्यतिरिक्ताद्यनेकान्ताभ्युपगमानिराकृतामन्तव्याः। यत्तु पुद्गलसंज्ञकेभ्योऽणुभ्यः सङ्घाताः सम्भवन्तीति कल्पयन्ति तत् पूर्व्वेणैवाणुवादनिराकरणेन निराकृतम्भवतीत्यतो न पृथङ्निराकरणाय प्रयत्यते"। अस्तिनास्तिकायादयोऽप्युन्नेयाः। अणुवादनिराकरणञ्चारम्भवादशब्दे दृश्यम्।

**अस्तिक्षीरा** स्त्री अस्ति क्षीरं यस्याः। बहुदुग्धवत्यां स्त्रीगव्यादौ।

**अस्तित्व** न० अस्ति भावः त्व। विद्यमानत्वे। "न हि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वज्ञाने लौकायतिकाः बौद्धाश्च प्रतिकूलाः स्युः नास्त्यात्मेति" वृ० उ० भा०। "सर्व्वोह्यात्मास्तित्वं प्रत्येति न नाहमस्मीति" शा०भा०। तल्। अस्तितास्यत्र स्त्री। "गौरस्तितावान् अस्तिपदसमभिव्याहृतगौःपदस्मारितत्वात्" शब्दश०।

**अस्तिमत्** त्रि० अस्ति विद्यमानं धनमस्य मतुप्। धनिनि स्त्रियां ङीप्।

**अस्तु** अव्य० अस–दीप्तौ तुन्। १अनुज्ञायां, २पीडायाम् ३प्रतिषेधे ४असूयायाम्, ५प्रकर्षे, ६अङ्गीकारे, ७प्रशंसायाम्, ८लक्षणे, ९असूयापूर्व्वकाङ्गीकारे च। "अस्तोर्येति वक्तव्यम्" वार्त्ति० मुम्। अस्तुङ्कारः अभ्युपगमः।

**अस्तेन** त्रि० न०त०। चोरभिन्ने।

**अस्तेय** न० अभावे न०त०। १स्तेयाभावे। "लोभस्य पुरतः कोऽसौ सत्यास्तेयापरिग्रहाः" प्रबोधच०। "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहायमाः" पात०सू० उक्ते २यमभेदे च "बलाद्गृहति वा परवित्ताहरणं स्तेयं तदभावोऽस्तेयम्" उक्तेः। तादृशयमानुष्ठानेऽवान्तरफलमपि तत्र दर्शितम्। "अस्तेयप्रतिष्ठायां सर्व्वरत्नोपस्थानम्" पात०सू०। दिव्यरत्नानां स्वयमागत्यनिकटे उपस्थितिरित्यर्थः।

**अस्तोभ** त्रि० नास्ति स्तोभः हुंफडादिः निरर्थकः शब्दो यत्र निरर्थकशब्दशून्ये "अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः" विवरणं स्तोभशब्दे।

**अस्त्य** न० अस्ति विद्यमानतायै स्थितम् यत्। गृहे निरुक्ते पाठान्तरम्।

**अस्त्यान** न० स्त्यै–क्त भावे न०त०। १निन्दायाम्, २भर्त्सने च। कर्त्तरि क्त स्त्यानः संहत न०त०। तद्भिन्ने त्रि०।

**अस्त्र** न० अस्यते क्षिप्यते अस–ष्ट्रन्। १क्षेप्यास्त्रे शरादौ करणे ष्ट्रन्। २चापे, धनुषि ३रिपुक्षेपणसाधने प्रहरणमात्रे खड्गादावपि। "प्रयुक्तमप्यस्त्रमितो वृथा स्यात्" "प्रत्याहृतास्त्रो गिरिशप्रभावात्"। "अतिप्रबन्धप्रहितास्त्रवृष्टिभिः" इति च रघुः। "अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणः" वेणी०।

**अस्त्रकण्टक** पु० अस्त्रं कण्टकइव। वाणे तस्याग्रस्य कण्टकाकारत्वात्तथात्वम्।

**अस्त्रकार** त्रि० अस्त्रं करोति निर्म्मिमीते कृ–अण् उप० स०। शस्त्रनिर्म्माणकारके। ण्वुल्। अस्त्रकारकोऽप्यत्र।

**अस्त्रचिकित्सा** स्त्री अस्त्रेण चिकित्सा। सुश्रुतोक्ते अस्त्रेण चिकित्साभेदे सा च यथा। "अस्मिन् शास्त्रे शस्त्रकर्म्मप्राधान्याच्छस्त्रकर्म्मैव तावत् पूर्व्वमुपदेक्ष्यामस्तत्सम्भारांश्च॥ तत्र शस्त्रकर्म्माष्टविधम्। तद्यथा। छेद्यं भेद्यं लेख्यं वेध्यमेष्यमाहार्य्यं विस्राव्यं सीव्यमिति॥ अतोऽन्यतमं कर्म्म चिकीर्षता वैद्येन पूर्व्वमेवोपकल्पयितव्यानि तद्यथा यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालावूजाम्बवौष्ठपिचुप्रोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि परिकर्म्मिणश्च स्निग्धाः स्थिरा बलवन्तः॥ ततः प्रशस्तेषु तिथिकरणमुहूर्त्तनक्षत्रेषु दध्यक्षतान्नपानरत्नैरग्निं विप्रान् भिषजश्चार्च्चयित्वा कृतबलिमङ्गलस्वस्तिवाचनं लघु भुक्तवन्तं प्राङ्मुखमातुरमुपवेश्य यन्त्रयित्वा प्रत्यङ्मुखो वैद्यो मर्म्मसिरास्नायुसन्ध्यस्थिधमनीः परिहरन्ननुलोमं शस्त्रं निदध्यादापूयदर्शनात् सकृदेवापहरेच्छस्त्रमाशु च। महत्स्वपि च पाकेषु द्व्यङ्गुलं त्र्यङ्गुलं वा शस्त्रपदमुक्तं तत्रायतो विशालः समः सुविभक्त इति व्रणगुणाः भवन्त्यत्र॥ आयतस्तु विशालस्तु सुविभक्तो निराश्रयः। प्राप्तकालकृतश्चापि व्रणः कर्म्मणि शस्यते॥ शौर्य्यमाशुक्रिया शस्त्रतैक्ष्ण्यमस्वेदवेपथू। असंमोहश्च वैद्यस्य शस्त्रकर्म्मणि शस्यते॥ एकेन वा व्रणेनाशुध्यमानेनान्तरा बुद्ध्यावेक्ष्यापरान् व्रणान् कुर्य्यात्। भवति चात्र॥ यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च। तत्र तत्र व्रणं कुर्य्याद्यथा दोषो न तिष्ठति॥ तत्र भ्रूगण्डशङ्खललाटाक्षिपुटौष्ठदन्तवेष्टककक्षाकुक्षिवङ्क्षणेषु तिर्य्यक्छेद उक्तः। चन्द्रमण्डलवच्छेदान् पाणिपादेषु कारयेत्। अर्द्धचन्द्राकृतींश्चापि गुदे मेढ्रे च बुद्धिमान्॥ अन्यथा

तु सिरास्नायुच्छेदनादतिमात्रं वेदना चिराद्व्रणसंरोहो मांसकन्दीप्रादुर्भावश्चेति । मूढगर्भोदराशोंऽश्मरीभगन्दरमुखरोगेष्वभुक्तवतः कर्म्म कुर्व्वीत । ततः शस्त्रमवचार्य्य शीताभिरद्भिरातुरमाश्वास्य समन्तात् परिपीड्याङ्गुल्या व्रणमभिमृज्य प्रक्षाल्य कषायेण प्लोतेनोदकमादाय तिलकल्कमधुसर्पिःप्रगाढ़ामौषधयुक्तां वर्त्तिं प्रणिदध्यात् । ततः कल्केनाच्छाद्य नातिस्निग्धां नातिरूक्षां घनां कवलिकां दत्त्वा वस्त्रपट्टेन बध्नीयाद्वेदनारक्षोघ्नैर्धूपैर्धूपयेद्रक्षोघ्नैश्च मन्त्रै रक्षां कुर्व्वीत । ततो गुग्गुल्वगुरुसर्ज्जरसवचागौरसर्षपचूर्णैर्लवणनिम्बपत्रव्यामिश्रैराज्ययुक्तैर्धूपैर्धूपयेत् । आज्यशेषेण चास्य प्राणान् समालभेत" । "ततः कृतरक्षमातुरमागारं प्रवेश्याचारिकमादिशेत् । ततस्तृतीयेऽहनि विमुच्यैवं बध्नीयाद्वस्त्रपट्टेन नचैनं त्वरमाणोऽपरेद्युर्म्मोक्षयेत् । द्वितीयदिवसे परिमोक्षणाद्विग्रथितो व्रणश्चिराद्रुपसंरोहति तीव्ररुजश्च भवन्ति । अत ऊर्द्ध्वं देशकालबलादीनवेक्ष्य कषायालेपनबन्धाहाराचारान्विदध्यात् । नचैनं त्वरमाणः सान्तर्द्दोषं रोपयेत् स ह्यल्पेनाप्यपचारेणाभ्यन्तरमुत्सङ्गं कृत्वा भूयोऽपि विकरोति ॥ भवन्ति चात्र । तस्मादन्तर्बहिश्चैव सुशुद्धं रोपयेद्व्रणम् । रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् । हर्षं क्रोधं भयञ्चापि यावदास्थैर्य्यसम्भवात् ॥ हेमन्ते शिशिरे चैव वसन्ते चापि मोक्षयेत् । त्र्यहाद्द्व्यहाच्छरद्ग्रीष्मवर्षास्वपि च बुद्धिमान् ॥ प्रदोषागारक्षोघ्नं तत्र कुर्य्यात् प्रतिक्रियाम् ॥ या वेदना शस्त्रनिपातजाता तीव्रा शरीरं प्रदुनोति जन्तोः । घृतेन सा शान्तिमुपैति सिक्ता कोष्णेन यष्टीमधुकान्वितेन ॥ अतिपातिषु रोगेषु नेच्छेद्विधिमिमं भिषक्" शस्त्राकारादि विवरणं तत्रैव "विंशतिः शस्त्राणि ॥ तद्यथा । मण्डलाग्रकरपत्रवृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधारसूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्च्चककुठारिकाव्रीहिमुखारावेतसपत्रकबडिशदन्तशङ्क्वेषण्य इति । तत्र मण्डलाग्रकरपत्रे स्यातां छेदने लेखने च । वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च । सूचीकुशपत्राटीमुखशरारीमुखान्तर्मुखत्रिकूर्च्चकानि विस्रावणे । कुठारिकाव्रीहिमुखारावेतसपत्रकाणि व्यधने सूची च । बडिशोदन्तशङ्कू चाहरणे । एषण्येषणे आनुलोम्ये च । सूच्यः सेवने । इत्यष्टविधे कर्म्मण्युपयोगः शस्त्राणां व्याख्यातः । तेषामथ यथायोगग्रहणसमासोपायः कर्म्मसु वक्ष्यते । तत्र वृद्धिपत्रं वृन्तफलसाधारणे भागे गृह्णीयाच्छेदनान्येवं सर्व्वाणि । वृद्धिपत्रं मण्डलाग्रञ्च किञ्चिदुत्तानपाणिना लेखने बहुशोऽवचार्य्यं वृन्ताग्रे विस्रावणानि । विशेषेण बालवृद्धसुकुमारभीरुनारीणां राज्ञां राजपुत्त्राणाञ्च त्रिकूर्च्चकेन विस्रावयेत् । तत्र प्रच्छादितवृन्तमङ्गुष्ठप्रदेशिनीभ्यां व्रीहिमुखम् । कुठारिकां वामहस्तन्यस्तामितरहस्तमध्यमाङ्गुल्याङ्गुष्ठविष्टब्धयाभिहन्यात् । आराकरपत्रैषण्यो मूले । शेषाणि तु यथायोगं गृह्णीयात् । तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः । तत्र नखशस्त्रैषण्यावष्टाङ्गुले सूच्यो वक्ष्यन्ते बडिशो दन्तशङ्कुश्चानताग्रे तीक्ष्णकण्टकप्रथमयवपत्रमुखे । एषणी गण्डूपदाकारमुखी । प्रदेशिन्यग्रपर्व्वप्रदेशप्रमाणा मुद्रिका । दशाङ्गुला शरारीमुखी सा कर्त्तरीति कथ्यते । शेषाणि तु षडङ्गुलानि । तानि सुग्रहाणि सुलोहानि सुधाराणि सुरूपाणि सुसमाहितमुखाग्राण्यकरालानि चेति शस्त्रसम्पत् । तत्र वक्रं कुण्ठं खण्डं खरधारमतिस्थूलमल्पमतिदीर्घमतिह्रस्वमित्यष्टौ शस्त्रदोषाः । अतो विपरीतगुणमाददीतान्यत्र करपत्रात्तद्धि खरधारमस्थिच्छेदनार्थम् । तत्र धारा भेदनानां मासूरी । लेख्यानामर्द्धमासूरी । व्यधनानां विस्रावणानाञ्च कैशिकी । छेदनानामर्द्धकैशिकीति । तेषां पायना त्रिविधा क्षारोदकतैलेषु । तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु । उदकपायितं मांसच्छेदनभेदनपाटनेषु तैलपायितं सिराव्यधनस्नायुच्छेदनेषु । तेषां निशानार्थं श्लक्ष्णशिला माषवर्णा । धारासंस्थापनार्थं शाल्मलीफलकमिति । भवति चात्र । यदा सुनिशितं शस्त्रं रोमच्छेदि सुसंस्थितम् । सुगृहीतं प्रमाणेन तदा कर्म्मसु योजयेत् ॥ अनुशस्त्राणि तु त्वक्सारस्फटिककाचकुरुविन्दजलौकाग्निक्षारनखगोजीशेफालिकाशाकपत्रकरीरबालाङ्गुलय इति । शिशूनां शस्त्रभीरूणां शस्त्राभावे च योजयेत् । त्वक्सारादिचतुर्व्वर्गं छेद्ये भेद्ये च बुद्धिमान् ॥ आहार्य्यच्छेद्यभेद्येषु नखं शक्येषु योजयेत् । विधिः प्रवक्ष्यते पश्चात् क्षाराग्निजलौकसाम् ॥ ये स्युर्मुखगता रोगा नेत्रवर्त्मगताश्च ये । गोजीशेफालिकाशाकपत्रैर्विस्रावयेत्तु तान् ॥ एष्वेषण्यलाभे तु बालाङ्गुल्यङ्कुरा हिताः । शस्त्राण्येतानि मतिमान् शुद्धशैक्यायसानि तु । कारयेत्करणैः प्राप्तं कर्म्मारं कर्म्मकोविदम् ॥ प्रयोगज्ञस्य वैद्यस्य सिद्धिर्भवति नित्यशः । तस्मात्परिचयः कार्य्यः शस्त्राणामादितः सदा" ॥

**अस्त्रजित्** पु० अस्त्रं तदाघातजं व्रणं जयति निवारकत्वात् । (कशाटवेट्) इक्षुभेदे ।

**अस्त्रजीविन्** पु० अस्त्रेण जीवति णिनि । अस्त्रव्यापारेण जीविकावति शस्त्रजीव्यादयोऽप्यत्र अण् अस्त्रजीवोऽप्यत्र ।

**अस्त्रधारिन्** त्रि० अस्त्रं धारयति धारि–णिनि । अस्त्र धारके । ण्वुल् । अस्त्रधारकोऽप्यत्र ।

**अस्त्रमन्त्र** पु० अस्त्राणां प्रयोगसंहारयोर्मन्त्रः । १शस्त्रप्रयोगादिमन्त्रभेदे । "सम्मोहनं नाम सखे ! ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम्" । "उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रम्" इति च रघुः । तन्त्रोक्ते अङ्गन्यासान्तर्गते फडिति २मन्त्रे च । [ज्ज्वलताकारके । ण्वुल् अस्त्रमार्जकोऽप्यत्र ।

**अस्त्रमार्ज** पु० अस्त्रं मार्ष्टि मृज–अण् उप०स० । शस्त्रो-

**अस्त्रयुद्ध** न० ३त० । अस्त्रेण युद्धे ।

**अस्त्रविद्** पु० अस्त्रं तत्प्रयोगादि वेत्ति विद्–क्विप् ६त० । शस्त्रप्रयोगाद्यभिज्ञे "सोऽस्त्रविदस्त्रमन्त्रम्" रघुः ।

**अस्त्रविद्या** स्त्री ६त० । १अस्त्रप्रयोगसंहारज्ञापकविद्यायाम् २तद्बोधके शास्त्रे च धनुर्वेदशब्दे विवृतिः ।

**अस्त्रवेद** पु० अस्त्रस्य तत्प्रयोगादेः ज्ञापको वेदः शास्त्रम् । धनुर्वेदे तच्छब्दे विवृतिः ।

**अस्त्रसायक** पु० अस्त्रं क्षेप्यं सायकं द्व० । १नाराचास्त्रे तस्य सायकतुल्यतया क्षेप्यत्वात्तथात्वम् । अस्यते धनुरनेन अस–करणे ष्ट्रन् कर्म० । २सर्व्वलौहमये बाणे ।

**अस्त्रहीन** त्रि० अस्त्रेण तत्प्रयोगेण वा हीनः । १अस्त्रशून्ये २शस्त्रव्यापारशून्ये वाग्युद्धादौ ।

**अस्त्रागार** न० ६त० । आयुधागारे शस्त्रादिस्थापनगृहे ।

**अस्त्राघात** पु० ३त० । अस्त्रेणाघाते ।।

**अस्त्राहत** त्रि० अस्त्रेणाहतः । १शस्त्रहते २शस्त्रेण क्षते च ।

**अस्त्रिन्** त्रि० अस्त्रं धनुरस्त्यस्य इनि । १धनुर्द्धरे, २शस्त्रधारिमात्रे च । "अस्त्रीजनः पुनरनेन क्षतः किलास्त्री" उद्भटः ।

**अस्थाग** त्रि० अस्थामस्थितिं गच्छति गम–ड । अगाधे हेम० ।

**अस्थान** न० अप्राशस्त्ये न०त० । अपकृष्टस्थाने अयोग्यस्थाने "अस्थाने पततामतीव महतामेतादृशी स्याद्गतिः" सा०द० ।

**अस्थाने** अव्य० स्थाने युक्तं न०त० । अयुक्ते ।

**अस्थायिन्** त्रि० विरोधे न०त० । अध्रुवे स्त्रियां ङीप् ।

**अस्थावर** त्रि० विरोधे न०त० । स्थावरभिन्ने जङ्गमे । "प्रपौत्रपर्य्यन्तरहितस्य मृतस्य विभक्ताविभक्तस्थावरास्थावरधने पत्नी प्रथममधिकारिणीति दायभागानुसारिणः ।

**अस्थि** न० अस्यते अस–क्थिन् । मांसाभ्यन्तरस्थे (हाड़) इति ख्याते धातुभेदे । अस्थिस्वरूपाद्युक्तं भावप्रका० । "मेदोयत्स्वाग्निना पक्वं वायुना चातिशोषितम् । तदस्थिसंज्ञां लभते स सारः सर्व्वविग्रहे । अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः । अस्थिसारैस्तथा देहाध्रियन्ते देहिनां ध्रुवम् । तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम् । अस्थीनि न विनश्यन्ति सारा एतानि सर्व्वथा" । अथास्थ्नां संख्यामाह । "शल्यतन्त्रेऽस्थिखण्डानां शतत्रयमुदाहृतम् । तान्येवात्र निगद्यन्ते तेषां स्थानानि यानि च । सविंशतिशतन्त्वस्थ्नां शाखासु कथितं बुधैः । पार्श्वयोः श्रोणिफलके वक्षःपृष्ठोदरेषु च । जानीयाद्भिषगेतेषु शतं सप्तदशोत्तरम् ग्रीवायामूर्द्ध्वगां विद्यादस्थ्नां षष्टिं त्रिसंयुताम्" । तत्र शाखागतान्याह । "एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश पादतले पञ्चास्थिशलाकास्तदाधारभूतमेकमस्थि । एवं षट् कूर्च्चे द्वे २ गुल्फे द्वे २ पार्ष्ण्योरेकैकं २ जङ्घयोर्द्वे २ जानुन्येकैकम् २ एवं त्रिंशदेकस्मिन् सक्थिनि भवन्ति । एतेनेतरसक्थि बाहू च व्याख्यातौ । अथ पार्श्वादिगतान्याह । "पार्श्वयोः षट्त्रिंशत् ३६ षट्त्रिंशत् ३६ । शिश्ने भगे वा एकं १ नितम्बयोरेकैकं २ त्रिके एकम् १ वक्षस्यष्टौ ८ पृष्ठे त्रिंशत् अक्षकसंज्ञे द्वे २" योगात् ११७ । अथ ग्रीवोर्द्ध्वगतान्याह । ग्रीवायां नव ९ कण्ठनाड्यां चत्वारि ४ हन्वोरेकैकं २ दन्तेषु द्वात्रिंशत् ३२ नासायां त्रीणि ३ तालुन्येकं १ गण्डयोरेकैकं २ कर्णयोरेकैकं २ शङ्खयोरेकैकं २ शिरसि षट् । एतान्यस्थीनि पञ्चविधानि भवन्ति तानि यथा "तरुणानि कपालानि रुचकानि भवन्ति च । वलयान्यपि तानि स्युर्नलकानि च कानिचित् । अक्षिकोषश्रुति घ्राणग्रीवासु तरुणानि हि । शिरःशङ्खकपोलेषु ताल्व-समीपजादिषु । कपालानि भवन्त्येषु दन्तेषु रुचकानि च । प्रायः पार्श्वयुगे पृष्ठे वक्षोजठरपायुषु । पादयोर्वलयानि स्युर्नलकानि ध्रुवेऽधुना । हस्तपादाङ्गुलितले कूर्च्चे च मणिबन्धयोः । बाहुजङ्घाद्वये चापि जानीयान्नलकानि तु" । अथैषां प्रयोजनमाह "मांसान्यत्राणि बद्धानि शिराभिः स्नायुभिस्तथा । अस्थीन्यालम्बनं कृत्वा न दीर्य्यन्ते पतन्ति न" सुश्रुते । याज्ञ० तु "प्राधान्यात् अन्यथासंख्याऽभिहिता यथा । "स्थालैः सह चतुःषष्टिर्दन्ता वै विंशतिर्नखाः । पाणिपादशलाकाश्च तासां स्थानचतुष्टयम् । षष्ट्यङ्गुलीनां द्वे पार्ष्ण्योर्गुल्फेषु च चतुष्टयम् । चत्वार्य्यरत्निकास्थीनि जङ्घयोस्तावदेव तु । द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे । अक्ष-

तालुषके शोणीफलके च विनिर्दिशेत् । भगास्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च । ग्रीवा पञ्चदशास्थिः स्याज्जत्र्वेकैकं तथा हनुः । तन्मूले द्वे ललाटाक्षिगण्डे नासा घनास्थिका । पार्श्वकाः स्थालकैः सार्द्धमर्बुदैश्च द्विसप्ततिः । द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा । उरःसप्तदशास्थीनि पुरुषस्यास्थिसंग्रहः" "अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचम्" इति श्रुतिः "मलमूत्रपुरीषास्थि निर्गतं त्वशुचि स्मृतम्" मनुः अल्पार्थे कन् । अस्थिकं तत्रार्थे ।

**अस्थिकृत्** पु० कृ—क्विप् ६त० । अस्थिकारके मेदसि धातौ । यथा मेदसोऽस्थिकरत्वं तथोक्तम् अस्थकरशब्दे ५५८पृष्ठे ।

**अस्थिच्छलित** न० "कराटकमश्वकर्णं चूर्णितं पिच्चितमस्थिच्छलितं काण्डभग्नं मज्जानुगतमतिपातितं वक्रं छिन्नं पाटितं स्फुटितमिति द्वादशविधमिति" काण्डभग्नमुपक्रम्य "पार्श्वयोरस्थिहीनोद्गतमस्थिच्छलितमिति" सुश्रुतोक्ते काण्डभग्नरूपरोगनिदानभेदे ।

**अस्थिज** पु० अस्थ्नो जायते जन—ड । अस्थिधातोर्जाते मज्जनि यथा चास्थ्नोमज्जजन्म तथोक्तमस्थकरशब्दे ५५८ पृष्ठे ।

**अस्थिति** स्त्री अभावे न०त० । १स्थित्यभावे अस्थैर्य्ये । "अस्थितेव शरीरस्य पुंसां चैवायुषः क्षयात् । आनन्त्यात् कुलधर्म्माणां द्वादशाहः प्रशस्यते" इति स्मृतिः । अस्थितिः सङ्गीतमुरजध्वनीनाम्" काद० । २मर्य्यादाभावे । न०ब० । ३मर्य्यादाशून्ये ४स्थैर्य्यशून्ये च त्रि० ।

**अस्थितुण्ड** पु० अस्थीव कठिनं तुण्डमस्य । विहङ्गमे ।

**अस्थिधन्वन्** पु० अस्थि अस्थिमयं धनुरस्य अनङ् समा० । शिवे । [पिञ्जराकारे कङ्काले ।

**अस्थिपञ्जर** पु० अस्थि पञ्जर इव । शरीरस्थास्थिसंहते

**अस्थिप्रक्षेप** पु० मृतस्यास्थ्नां गङ्गाजले विधानेन प्रक्षेपः । विधानेन मृतस्यास्थ्नां गङ्गाजले क्षेपणे।तत्प्रकारश्च आदिपु० "भागीरथी यत्र यत्रास्ति तीर्थे कुलद्वये चापि यदा विपन्नः । तदा तदा तत्र तस्यास्थि भक्त्या भावेन चास्थीनि विनिक्षिपेच्च । स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्य । ततस्तु मृत्पिण्डपुटे निधाय पश्यन् दिशं प्रेतगणोपगूढाम् । नमोऽस्तु धर्म्माय वदन् प्रविश्य जलं स मे प्रीत इति क्षिपेच्च । उत्थाय भास्वन्तमवेक्ष्य सूर्य्यं स दक्षिणां विप्रमुखाय दद्यात्" । "एतद्वृद्धं तीर्थचिन्तामणौ अन्यथा पठितम्" तद्यथा । "स्नात्वा तथोत्तीर्य्य च भास्करञ्च दृष्ट्वा प्रदद्यादथ दक्षिणान्तु" इति । "एवं कृते प्रेतपुरस्थितस्य स्वर्गे स्थितिः स्याच्च

महेन्द्रतुल्या" इति च । तत्प्रयोगश्च प्रा० त० द्रष्टव्यः ।

**अस्थिभक्ष** पु० अस्थि भक्षयति भक्ष—अण् । (हाड़गिला) १पक्षिणि, २कुक्कुरे च । भज—क्विप् । अस्थिभुगादयोऽप्यत्र ।

**अस्थिभङ्ग** पु० अस्थ्नो भङ्गः । अस्थिभञ्जने "अस्थिभङ्गे गवाश्वैन लाङ्गूलस्य च भेदने" स्मृतिः ।

**अस्थिमत्** त्रि० अस्थीनि सन्त्यस्य मतुप् । अस्थियुक्ते प्राणिनि "अस्थिमतां तु सत्त्वानां सहस्रस्य प्रमापणे । पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत्" । किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे । अनस्थ्नां चैव हिंसायां प्राणायामेन शुध्यति" मनुः अस्थिमतां कृकलासादीनामनस्थ्नां मत्कुणादीनाम्" कुल्लू० । [निर्म्मिते वस्त्रादौ ।

**अस्थिमय** त्रि० अस्थ्नोविकारः मयट् स्त्रियां ङीप् । अस्थि

**अस्थिमाला** स्त्री अस्थिनिर्म्मिता माला । अस्थिनिर्म्मितगुटिकायां १मालायाम् ६त० । २अस्थिश्रेण्यौ च ।

**अस्थिमालिन्** पु० अस्थिमयी मालाऽस्त्यस्य इनि । शिवे ।

**अस्थियुज्** पु० अस्थि युनक्ति युज—क्विन् । (हाड़जोड़ा) हस्तिशुण्डावृक्षे । [ध्वजनाम्" काद० ।

**अस्थिर** त्रि० न०त० । स्थिरभिन्ने चञ्चले । "अस्थिरत्वं

**अस्थिविग्रह** पु० अत्यन्तकृशत्वात् अस्थिसारो विग्रहो देहो ऽस्य । १शिवानुचरे भृङ्गरीटे । २अतिशीर्णदेहे त्रि० ।

**अस्थिशृङ्खला** स्त्री अस्थ्नां शृङ्खलेव योजनहेतुः । (हाड़जोड़ा) ग्रन्थिमति वृक्षे । "काण्डं त्वगविरहितमस्थिशृङ्खलाया माषार्द्धं द्विदलमकञ्चुकं तदर्द्धम् । सम्पिष्टं सुतनु ! ततस्तिलस्य तैले संपक्वं वटकमतीव वातहारि" वैद्य० ।

**अस्थिशेष** त्रि० अस्थिमात्रं शेषोऽस्य । मांसादिशून्ये अतिकृशे ।

**अस्थिसंहार** पु० अस्थीनि संहरति योजयति सम्+हृ—अण् (हाड़जोड़ा) ग्रन्थिमति वृक्षे । "अस्थिसंहारकः प्रोक्तो वातश्लेष्महरोऽस्थियुक् । उष्णः सारः कृमिघ्नश्च दुर्नामघ्नोऽक्षिरोगजित् । रूक्षः स्वादुर्लघुर्वृष्यः पाचनः पित्तलः स्मृतः" भा० प्र० । [हृ—ण्वुल् । (हाड़जोड़ा) ग्रन्थिमति वृक्षे

**अस्थिसंहारिका** स्त्री अस्थीनि संहरति योजयति सम्+

**अस्थिसञ्चय** पु० मृतस्यास्थ्नां गङ्गाजले प्रक्षेपार्थं सञ्चयः । गङ्गायां प्रक्षेपार्थं प्रथमादिदिने मृतस्य अस्थिसंग्रहे "नान्येद्युर्नास्थिसञ्चयः स्मृतः" ल्युट् । अस्थिसञ्चयनमप्यत्र न० । अस्थिसञ्चयनञ्च प्रथमादिदिनेषु कार्य्यम् । यथाह संवर्त्तः । "प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा । अस्थिसञ्चयनं कार्य्यं दिने तद्गोत्रजैः सह" । कश्चित् "द्वितीये त्वस्थिसञ्चय" इत्युक्तम् । वैष्णवे तु "चतुर्थे दिवसेऽस्थि

सञ्चयनं कुर्य्यात्तेषाञ्च गङ्गाम्भसि प्रक्षेप” इति। अतोऽन्य-तमदिने स्वगृह्योक्तविधिना त्वस्थिसञ्चयनङ्कार्य्यम्” मिता०। अङ्गिरसा चात्र विशेषो दर्शितः। “अस्थिसञ्चयने यागो-देवानाम्परिकीर्त्तितः। प्रेतोभूतन्तमुद्दिश्य यः शुचिं न करोति चेत्। देवतानान्तु यजनन्त्वं यपन्त्यथ देवताः”। देवताश्चात्र श्मशानवासिन्यः भूतपूर्व्वदर्गुधाः। श्मशानवासिनोदेवाः शवानाम्परिकीर्त्तिता” इति तेनैवोक्तम्। अतस्तान्देवान् अचिरस्नातश्च प्रेतमुद्दिश्य धूपदीपादिभिः पिण्डरूपेण चान्नेन तत्र पूजा कार्य्येत्यङ्गमभवति” मिता०प्रा०अध्या०।

**अस्थिसम्भव** पु० सम्भवत्यस्मात् सम्भवः अपादाने अप् ब०। अस्थिजाते १मज्जधातौ यथा च अस्थिजत्वं मज्जशब्दोक्त-मस्तकरशब्दे ५५८पृ०। २वज्रे च तस्य दधीचास्थिज-त्वात् तथात्वम् “तमुवाचेन्द्रमाक्रन्दे गरुड़ः पततां वरः। प्रहसन् श्लक्ष्णया वाचा तथा वज्रसमाहतः। ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसम्भवम्” भा० आ० ३३अ०। यथा चास्य तदस्थिजातत्वं तथोक्तमशनिशब्दे २७४ पृष्ठे ३अस्थिजातमात्रे त्रि०।

**अस्थिसार** पु० अस्थ्नः सारः पाकपरिणामः। अस्थिजाते मज्जधातौ। अस्थ्न्येव सारो यस्य। रक्तमांसशून्यदेहे त्रि०

**अस्थिस्नेह** पु०६त०। मज्जनित स्नास्थिसारभूतत्वात्तथात्वम्।

**अस्थूरि** पु०स्था–बा० कूरि। एकाश्वयुक्तशकटं स्थूरि न०त० तद्विपरीतम्। बहुभिरश्वादिभिर्युते शकटे। “अस्थूरि गार्हपत्यानि सन्तु” ऋ०६,१५,१९।

**अस्थैर्य्य** न० अभावे न०त०। १स्थैर्य्याभावे विरोधे न०त०। २चाञ्चल्ये। न०ब०। ३स्थैर्य्यहीने त्रि०।

**अस्नाविर** त्रि० न०त०। शिरावर्ज्जिते, स्थूलशरीरशून्ये च।

**अस्निग्धदारु** न० अस्निग्धं रूक्षं दारु कर्म०। देवदारुभेदे।

**अस्नेह** पु० अभावे न०त०। १स्नेहाभावे न०ब०। २स्नेह-शून्ये त्रि०। स्नेहस्तैलादेर्गुणभेदः प्रेम च। [शून्ये त्रि०।

**अस्पन्दन** न० अभावे न०त०। १चलनाभावे न०ब०। २क्रिया-

**अस्पर्श** पु० अभावे न०त०। १स्पर्शाभावे न०ब०। २स्पर्श-शून्ये त्रि० “अशब्दमस्पर्शमरूपमव्ययम्” श्रुतिः।

**अस्पर्शयोग** पु०“नास्ति स्पर्शःविषयसंबन्धोयत्र कर्म्म०। विषय प्रतिभासशून्ये निर्विकल्पके ध्याने “अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः। अविवादो विरुद्धश्च देशितस्तं नमाम्यहम्”।

**अस्पष्ट** त्रि० न०त०। अव्यक्ते। “अथेदानीमस्पष्टब्रह्मलिङ्गानि वेदान्तवाक्यानि विचार्य्यन्ते” शा०भा०।

**अस्पृश्य** त्रि० न स्पृष्टुमर्हः अर्हार्थे क्यप् न०त०। स्पर्शायोग्ये मलमूत्रादौ “मलमूत्रपुरीषास्थि निर्गतं ह्यशुचि स्मृतम्” नारं स्पृष्ट्वा तु सस्नेहं सचेलं जलमाविशेत् मनुः। अस्पृश्य स्पर्शने चैव सद्यः स्नानं समाचरेत्” स्मृतिः। अस्पृश्य-द्रव्याणि च प्रायेण अशौचाशुद्धिशब्दयोः उक्तानि।

**अस्पृहा** स्त्री अभावे न०त०। “स्पृहाभावे”। “नास्पृहेतु परस्वेषु साऽस्पृहा परिकीर्त्तिता”। न०ब०। २स्पृहा-शून्ये त्रि०।

**अस्फुट** त्रि० न स्फुटः। व्यक्तभिन्ने। अनलङ्कृती पुनः क्वापीति का०प्र०व्याख्यायां “अनलङ्कृती अस्फुटालङ्कारौ”। “क्वचित्प्रकाशां क्वचिदस्फुटार्थसम्” नैष०।

**अस्फुटवाक्** त्रि० अस्फुटा अव्यक्ता वाक् यस्य। कद्दे।

**अस्मद्** त्रि०अस–मदिक्। अहंप्रत्ययावलम्बनत्वेन वेद्ये १प्रत्य-गात्मनि, २देहाभिमानिनि जीवे च। “अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्” “अहमात्मा गुडाकेश”। गीता “आवां जह्नि न यत्रोर्वी सलिलेन परिप्लुता” देवी माहा० “सर्वं वयमतः परम्” “मान्तु वेद न कश्चन” गीता “यः सर्वं दाश्वानपुषत् स्वपोषम्” भट्टिः “मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्” गीता। अस्य लिङ्गत्रयेऽपि एकविधं रूपम्। आत्मवाचित्वे एवास्य सर्व्वनामता शब्दपरत्वे न गणकार्य्यम् “अस्मदोद्वयोश्च” पा०। द्विवचनपरत्वे अस्मद्–अण्। आस्माकः। खञ् आस्माकीन छ अस्मदीयः। एकवचन परत्वे अण् मामकम् खञ् मामकीनम् छ मदीयम्”। तसिल् अस्मत्तः एकवचने मत्तः “मत्तः परतरं नास्ति” गीता।

**अस्मत्रा** अव्य०अस्मद्+वा० त्राच्। अस्मास्वित्यर्थे। “अस्म-त्रा ते सध्र्यक् सन्तु” ऋ० १,१२२।

**अस्मदीय** त्रि० अस्माकमिदम् छ। अस्मत्सम्बन्धिनि “सहास्मदीयैरपि योधमुख्यैः” गीता।

**अस्मद्र्यञ्च्** त्रि० अस्मानञ्चति अस्मद्+अञ्च–क्विन् अद्र्या-देशः। अस्मदभिमुखे। “तुभ्यमस्मद्र्यञ्चोददतो मघानि” ऋ०७,१८,१० समासादावपि अस्मद्रीच इत्यादि। स्त्रियाम् ङीप् अस्मद्रीची।

**अस्मद्विध** त्रि० अस्माकमिव विधास्य। अस्मादृशे एकवचन परत्वे मद्विधः “न मद्विधे न्यस्यति भारमग्र्यम्” भट्टिः।

**अस्मय्** त्रि० आत्मन अस्मान् इच्छति क्यच् छ वा० व्यत्ययेन एत्वम्। छन्दःस्तोकारार्थम् आत्मनः अस्मान् इच्छति। “उत त्वमस्मयुर्वसो!” ऋ० १,४१,७।

**अस्माक** त्रि०अस्माकमिदम् अण् अस्माकादेशः नि०वेदे अद्वि।

अकृत्सम्बन्धिनि "स रथेन रथीतमोऽस्माकेनाभियुग्वना" ऋ० ६,४५,१५ । लोके तु आस्माकः ।

**अस्मि** अव्य० अस्-मिन् । अहमर्थे, "त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति" सा०द० । "अस्मिता" । "दुडुम-नास्मि सागरम्" रघुः "अहैवास्मि न शोकभाक्" ।

**अस्मिता** स्त्री अस्मि-भावः तल् । अहमिति ममेतिवेत्यभिमाने "अविद्यास्मितारागद्वेषाभिनिवेशाः" पात०सू० सवाभिमानोमोह इत्युच्यते यथाह सां०कौ० । "देवा अष्टविधमैश्वर्य्यमासाद्यामृताभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्ते इति सोऽयमस्मितामोहोऽष्टविधैश्वर्य्यविषयत्वादष्टविधः" तल्लक्षणमुक्तं पात०सू० । "दृग्दर्शनशक्त्योरेकात्मतेवास्मिता" दृक्शक्तिः पुरुषः दृश्यते इति दर्शनं तच्छक्तिः बुद्धिः शक्तिशब्दोयोग्यतार्थः भोक्तृभोग्ययोरत्यन्तविविक्तयोर्द्वयोरविद्याकृता आत्मता तादात्म्यम् इवशब्देन अहमस्मीत्यस्य भ्रान्तिकृतत्वम् तादात्म्यस्य द्योतितम् सास्मितेत्यर्थः इयं हृदयग्रन्थिरित्युच्यते ब्रह्मवादिभिः इति" वृत्तिः ।

**अस्मृति** स्त्री अभावे न०त० । स्मरणाभावे ।

**अस्यवामीय** न० अस्य वामेति शब्दोऽस्त्यत्र सूक्ते मत्वर्थे छ । अस्य वामेति शब्दयुक्ते सूक्ते तच्च सूक्तम् "अस्य वामस्य पलितस्य" इत्यादिकं द्विपञ्चाशदृचम् ऋ० १,१६४, सूक्तम् । "स्तेयं कृत्वा द्विजोमोहात् त्रिरात्रोपोषितः शुचिः । सूक्तं जप्त्वाऽस्यवामीयं क्षिप्रं मुच्येत किल्विषात् "ऋग्विधाने १,२२६, । महाव्रते वैश्वशस्त्रं वैश्वदेवं निविद्धानं द्विप्रतीकं तत्रास्य वामदेवस्येत्यादिकमेकचत्वारिंशदृचं प्रथमं, प्रतीकम् तच्च पञ्चमारण्ये सूचितम् "अस्य वामस्य पलितस्य होतुरिति" दैर्घतमसम् एकचत्वारिंशदृचम् तच्च तस्मिन्नेव सूक्ते "गौरीर्मिमाय सलिलानि" इत्यन्तमेकचत्वारिंशदृचम् । "सकृत् जप्त्वाऽस्यवामीयं शिवसङ्कल्पमेव च अपहृत्य सुवर्णन्तु क्षणाद्भवति निर्मलः" मनुः कुल्लू० एतद्व्याख्याने अस्य वामस्य पतितस्येति पाठः लिपिकरप्रमादकृतः पलितस्येत्येव सूक्ते पाठदर्शनात् ।

**अस्यहत्य** पु० हन-भा क्यप् न०त० असिना अहत्यः ३त० । खड्गेनाहननीये अनुशतिकादिकार्य्यम् । [शतिका० ।

**अस्यहेति** पु० असिरहेतिर्यस्य । खड्गसाधने योधे । अनु-

**अस्युद्यत** त्रि० असिरुद्यतोयेन वा परनि० । उद्धृतखड्गे ।

**अस्र** पु० अस-रन् । १कोणे २केशे च । ३रुधिरे ४चक्षुर्जले च न० अश्रुशब्दे उदा० ।

**अस्रकण्ठ** पु० अस्रः कोण इव कण्ठोऽस्य अस्रयुक्तकण्ठो वास्य । बाणे हारा० तस्य पातने हि शत्रुरुधिराक्तमुखत्वात् कोणाकारसत्त्वाच्च तस्य तथात्वम् ।

**अस्रखदिर** पु० अस्रवर्णः रक्तवर्णः खदिरः । विट्खदिरे ।

**अस्रज** न० अस्रात् रुधिरात् पाकेन जायते । मांसे । तस्य रुधिरजातत्वमसृक्करशब्दे ५५८ पृष्ठे दृश्यम् ।

**अस्रप** पु० अस्रं रुधिरं पिबति पा-क । १राक्षसे २तद्देवताके मूलानक्षत्रे च । "हिरागमं लघुध्रुवे चरेऽस्रपे मृदूडुनि" मुहूर्त्त चि० क्विप् अस्रपाप्यत्र । [ रक्तपाके भिल्लाटके ।

**अस्रपत्रक** पु० अस्रमिव रक्तं पत्रमस्य संज्ञायाम् कन् ।

**अस्रपा** स्त्री अस्रं पिबति पा-क्विप् क वा । (जोंक) जलौकसि । तस्याः भेदादिकं सुश्रुते दर्शितं यथा "अथ जलायुका वक्ष्यन्ते । जलमासामायुरिति जलायुका जलमासामोक इति जलौकसः । ता द्वादश तासां सविषाः षट् तावत्य एव निर्विषाः । तत्र सविषाः कृष्णा कर्बुरा अलगर्द्दा इन्द्रायुधा सामुद्रिका गोचन्दना चेति । तास्वञ्जनचूर्णवर्णा पृथुशिराः कृष्णा । कूर्म्ममत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा । रोमशा महापार्श्वा कृष्णमुख्यलगर्द्दा । इन्द्रायुधवदूर्द्ध्वराजिभिश्चित्रिता इन्द्रायुधा । ईषदसितपीतिका विचित्रपुष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ताभिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरोदाहश्छर्दिर्मदः सदनमिति लिङ्गानि भवन्ति । तत्र महागदः पानालेपननस्यकर्म्मादिषूपयोज्यः । इन्द्रायुधादष्टमसाध्यमित्येताः सविषाः सचिकित्सिता व्याख्याताः ॥ अथ निर्विषाः । कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी सावरिका चेति । तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला, किञ्चिद्रक्ता वृत्तकाया पिङ्गाशुगा च पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी । मूषिकाकृतिवर्णानिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी । स्निग्धा पद्मपत्रवर्णाष्टादशाङ्गुलप्रमाणा सावरिका सा च पश्वर्थे । इत्येता अविषा व्याख्याताः ॥ तासां यवनपाण्ड्यसह्यपोतनादीनि क्षेत्राणि । तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो महाशना निर्विषाश्च विशेषेण भवन्ति ॥ तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः कलुषेष्वम्भःसु च सविषाः ॥ पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालकोथजाता विमलेषु

म्भःसु च निर्विंषाः ॥ भवति चात्र ॥ स्रोतेषु विचरन्त्येताः सलिलेषु सुगन्धिषु । न च सङ्कीर्णचारिण्यो न च पङ्केशयाः सुखाः । तासां प्रग्रहणमार्द्रचर्म चान्यैर्वा प्रयोगैर्गृह्णीयात् । अथैता नवे महति घटे सरस्तडागोदकपङ्कमावाप्य निदध्यात् । भक्ष्यार्थे चासां शैवलं वल्लूरमौदकांश्च कन्दांश्चूर्णीकृत्य, शय्यार्थं तृणमौदकानि च पत्राणि, त्र्यहात्त्र्यहाच्चाभ्यस्तं भक्ष्यं च दद्यात् सप्तरात्रात्सप्तरात्राच्च घटमन्यं संक्रामयेत् । भवति चात्र । स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः । अग्राहिण्योऽल्पपायिन्यः सविषाश्च न पूजिताः"। अधिकमसृग्विमोक्षणशब्दे ५६१ पृष्ठे दृश्यम् ।

**असृक्फला(ली)** स्त्री असृगिव लोहितं फलमस्याः । शल्लकीवृक्षे । भस्त्रादिपूर्वकत्वाभावेन फलान्तस्य प्रामादिकः टाप् जातित्वात् ङीषेव युक्तः ।

**असृङ्मातृका** स्त्री असृजः रुधिरस्य मातेव पोषिका संज्ञायां कन् । अशितान्नादेः रसरूपे देहस्थे प्रथमे धातौ ।

**असृग्रोधिनी** स्त्री असृक् क्षतजमासु रुणद्धि रुध–णिनि । लज्जालुलतायाम् ।

**असृवत्** त्रि० न स्रवति स्रु–शतृ न०त० स्त्रियां ङीप् । १स्रवद्भिन्ने अक्षरिते "अनागसमसृवन्तीमारुहेमाम्" ऋ० १०, ६३,१०, असमस्यास्ति मतुप् मस्य वः । २रुधिरयुक्ते त्रि० स्त्रियां ङीप् असृवती । सौ असृवान् इति भेदः ।

**असृग्बिन्दुच्छदा** स्त्री असृग्बिन्दुः रुधिरबिन्दुरिव छदो दलं यस्याः । लक्ष्मणानामके वृक्षे ।

**असृगार्जक** पु० असृक् रुधिरं सेवनेनार्जयति अर्ज–ण्वुल् । १श्वेततुलसीवृक्षे । २रुधिरोत्पादके रसे च यथाऽस्य रक्तोत्पादकत्वं तयोस्तत्तत्करशब्दे ३शोणितपादकमात्रे त्रि०।

**असृष्टि** स्त्री अस–क्ति । अश्वशब्दार्थे बोधे अश्विशब्दवत् समासान्तभाक् । चतुरस्रयोभीत्यादि तच्छब्दे उदा० दृश्यम् ।

**असृत्** त्रि० न स्रेधते स्रिध्–क्विप् न०त० । अच्योतने "मित्रमदिति दक्षमसिधम्" यजु० २५,१५ ।

**अस्तु** न० अस्यते क्षिप्यते अस–तुन्। चतुर्जेस्ते अस्य तालव्यान्तोऽपि "श्रुत्वाश्रुत्वाश्रुधारां त्यजतीति" कीचकवधः ।

**अस्त्रेमन्** त्रि० स्त्रिव–मनिन् गुणवलोपौ । १प्रशस्ये निरु० । २अयहिते च "अवर्त्तोऽस्त्रेमाणं तरणिम्" ऋ० १,२८,१२ । "अस्त्रेमाणं क्षयरहितम् भा० ।

**अस्व** त्रि० नास्ति स्वं धनमस्य । १निर्द्धने । स्वः स्वकीयः न० त० । २स्वकीयभिन्ने त्रि० । एतदर्थेऽस्य सर्वनामतया अकच् । अस्वकः स्त्रियां तु नित्यमत इत्त्वम् अस्विका ।

**अस्वच्छन्द** त्रि० विरोधे न०त० । स्वच्छन्दभिन्ने पराधीने ।

**अस्वजाति** त्रि० न स्वस्येव जातिर्यस्य । भिन्नजातौ यथा विप्रस्य क्षत्रियादि

**अस्वतन्त्र** त्रि० विरोधे न०त० । स्वाधीनभिन्ने पराधीने । "अस्वतन्त्रा स्त्री पुरुषप्रधाना इति" वसि०। तस्या अस्वातन्त्र्यञ्च तत्रैव दर्शितम् "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति" तथा पुत्रादीनामपि जन्माधीनं स्वत्वमिति स्थावरधनादेर्यथेष्टविनियोगे पित्रादेरस्वातन्त्र्यमिति मिताक्षरायाम् व्यवस्थापितं यथा "तस्मात्पैतृके पैतामहे च द्रव्ये जन्मनैव स्वत्वम् । तथापि पितुरावश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्त द्रव्यविनियोगे स्वातन्त्र्यमिति स्थितम् । स्थावरे तु स्वार्जिते पित्रादिप्राप्ते च पुत्रादिपारतन्त्र्यमेव । "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितम् । असंभूय सुतान्सर्वान् न दानञ्च च विक्रयः"।"ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः । वृत्तिञ्च तेऽभिकाङ्क्षन्ति न दानञ्च च विक्रयः" इत्यादि स्मरणात् । अस्यापवादः "एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम् । आपत्काले कुटुम्बार्थे धर्म्मार्थे च विशेषतः" इति । अस्यार्थः । अप्राप्तव्यवहारेषु दानानुज्ञानादावसमर्थेषु वा तथाविधेष्वविभक्तेष्वपि सर्वकुटुम्बव्यापिन्यामापदि तत्पोषणे चावश्यकर्त्तव्ये स्थावरस्य दानाधमनविक्रयमेकोपि समर्थः कुर्यादिति" । यत्तु वचनम् । "अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः । एकोह्यनीशः सर्व्वत्र दानाधमनविक्रये" इति । तदप्यविभक्तेषु द्रव्यस्य मध्यस्थत्वादेकस्यानीश्वरत्वात्सर्व्वाभ्यनुज्ञा अवश्यं कार्या विभक्तेषु तु तदुत्तरकालं विभक्ताविभक्तसंशयव्युदासाय व्यवहारसौकर्य्याय च सर्वाभ्यनुज्ञानं न पुनरेकस्यानीश्वरत्वेन अतो विभक्तानामनुमतिव्यतिरेकेणापि व्यवहारः सिध्यत्येवेति व्याख्येयम्" मिता० व्य०अ० ।

**अस्वन्त** न० असूनाम् अन्तो यस्मात् ५ब०।१ चुल्ल्यां तस्याः प्राणिवधहेतुतया सूनास्थानरूपत्वात् तथात्वम् । सुष्ठु न अन्तो यस्य । २अशुभोदर्के त्रि० । ६त० । ३मरणे पु० ।

**अस्वप्न** पु० नास्ति स्वप्नो निद्रा यस्य । १देवे । २निद्रारहिते त्रि०। देवानां स्वप्नावस्थाराहित्यकथनम् शत०ब्रा०। यथा "न वै देवाः स्वपन्त्यनवरुद्धो वा एतस्मात्स्वप्नो भवति" दिवास्वप्नाभावेऽपि रात्रौ स्वप्नवतोऽस्वप्नत्वकथनम् भा० शा०प०

२२१३ अ० । "दाननित्यः पवित्रश्च अस्वप्नश्च दिवाऽस्वपन्" ।

**अस्वर** पु० अप्रशस्तः स्वरोऽत्र । १मन्दस्वरयुक्ते "वचनं दीनमस्वरम्" रामा० । २स्वरवर्णरहिते व्यञ्जनवर्णमात्रे पु० । ३उदात्तादिस्वररहिते लौकिकोच्चारणे च ।

**अस्वरूप** त्रि० न स्वस्येव रूपमस्य । समानस्वभावशून्ये "न त्वस्वरूप" इति मुग्धबो० ।

**अस्वर्ग्य** त्रि० स्वर्गाय हितं स्वर्ग+यत् न०त० । स्वर्गासाधने "अस्वर्ग्यं लोकविद्विष्टं तस्मात्तत् परिवर्ज्जयेत्" मनुः "अस्वर्ग्यं लोकविद्विष्टं धर्म्म्यमप्याचरेन्न तु" स्मृतिः ।

**अस्वस्थ** त्रि० न स्वस्मिन् स्वभावे तिष्ठति स्था—क ७त०न०त० । स्वस्थभिन्ने १अप्रकृतिस्थे २रोगादिना उपद्रुते च ।

**अस्वाच्छन्द्य** न० अभावे न०त० । १स्वाच्छन्द्याभावे पराधीनत्वे न०त० । २तद्वति त्रि० ।

**अस्वातन्त्र्य** न० अभावे न०त० । स्वातन्त्र्याभावे पराधीनत्वे न०त० । २तद्वति त्रि० । [अतिबलायां गोक्षुरवृक्षे ।

**अस्वादुकण्टक** पु० अस्वादुरमधुरः कण्टको यस्य । (गोखुरि)

**अस्वाध्याय** त्रि० न स्वाध्यायो वेदाध्ययनमस्य । १वेदाध्ययनहीने "अ(निः)स्वाध्यायवषट्कारमिति" स्मृतिः । न स्वाध्यायो यस्मिन् । २अध्ययननिषिद्धकाले अष्टम्यादौ अनध्यायशब्दे विवृतिः । अधीयते अधि+इङ्—कर्म्मणि घञ् अध्यायः स्वस्य स्ववर्णानुसारेण अध्यायः स्वाध्यायः न०त० । "स्वाध्यायोऽध्येतव्य" इति श्रुत्युक्तस्वाध्यायभिन्ने ३स्वेनापाठ्ये शास्त्रादौ ।

**अस्वामिक** त्रि० न स्वामी यस्य । १स्वामिरहिते "अटव्यः पर्व्वताः पुण्या नद्यस्तीर्थानि यानि च । सर्व्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः" इति स्मृतिः । २निध्यादौ च । "प्रनष्टमस्वामिकमधिगम्य" गौत० ।

**अस्वामिकृत** त्रि० अस्वामिना कृतः । अस्वामिना कृते विक्रयादौ "अस्वामिकृतत्वेन तुच्छत्वादिति" मिता० ।

**अस्वामिविक्रय** पु० अस्वामिना कृतो विक्रयः । १अस्वामिना कृते विक्रये २तद्विषये व्यवहारभेदे च । यथाह नारदः "निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा । विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रय" इति । तत्र किमित्याह या० "स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते । हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः" "स्वमात्मसम्बन्धि द्रव्यं अन्यविक्रीतमस्वामिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात् । अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात् । विक्रीतग्रहणन्दत्ताहितयोरुपलक्षणार्थम् अस्वामिकृतत्वेन तुच्छत्वात् । अतएवोक्तम् । "अस्वामिविक्रयन्दत्तमाधिञ्च विनिवर्त्तयेदिति" क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति । तथा हीनाज्ज्ञद्रव्यागमोपायहीनात् । रहसि चैकान्ते सम्भाव्यद्रव्यादपि हीनमूल्येनाल्पतरेण मूल्येन च क्रये वेलाहीने वेलया हीनो वेलाहीनः क्रयो रात्र्यादौ तत्र कृतः क्रेता तस्करो भवति तस्करवत् दण्डभाग्भवतीत्यर्थः । यथोक्तम् । "द्रव्यमस्वामिविक्रीतम्प्राप्य स्वामी तदाप्नुयात् । प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयादिति" स्वाम्यभियुक्तेन क्रेत्रा किं कर्त्तव्यमित्यत आह । "नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् । देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत्" या० नष्टमपहृतं वान्यदीयं क्रयादिना प्राप्य हर्त्तारं विक्रेतारं ग्राहयेच्चौरोद्धरणकादिभिः आत्मविशुद्ध्यर्थं राजदण्डप्राप्त्यर्थञ्च । "अथाविदितदेशान्तरकृतः कालान्तरे वा विपन्नस्तदा मूल्यसमाहरणायत्तो विक्रेतारमदर्शयित्वैव स्वयमेव तद्धनन्नाष्टिकस्य समर्पयेत् तावतैवासौ शुद्धो भवतीति" श्रीकराचार्य्येण व्याख्यातम् । तदिदमनुपपन्नम् । विक्रेतृदर्शनाच्छुद्धिरित्यनेन पौनरुक्त्यप्रसङ्गात् । अतोऽन्यथा व्याख्यायते । नष्टापहृतमिति नाष्टिकस्येति व्यपदेशः । नष्टमपहृतं आत्मीयन्द्रव्यमासाद्य क्रेतृहस्तस्थं ज्ञात्वा तं हर्त्तारं क्रेतारं स्थानपालादिभिर्ग्राहयेत् देशकालातिपत्तौ देशकालातिक्रमे स्थानपालाद्यसन्निधाने तद्विज्ञापनकालात्प्राक् पलायनाशङ्कायां स्वयमेव गृहीत्वा तेभ्यः समर्पयेत् । ग्राहिते हर्त्तरि किं कर्त्तव्यमित्यत आह । "विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपोदमम् । क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी" या० यद्यसौ गृहीतः क्रेता न मयेदमपहृतम् अन्यसकाशात् प्राप्तमिति वक्ति तदा तस्य क्रेतुर्विक्रेतृदर्शनमात्रेण शुद्धिर्भवति । न पुनरसावभियोज्यः । किन्तु तत्प्रदर्शितेन विक्रेत्रा सह नाष्टिकस्य विवादः । यथाह बृहस्पतिः । "मूले समाहृते क्रेता नाभियोज्यः कथञ्चन । मूलेन सह वादस्तु नाष्टिकस्य विधीयते" इति । तस्मिंश्च विवादे यद्यस्वामिविक्रयनिश्चयो भवति तदा तस्य नष्टापहृतस्य गवादिद्रव्यस्य यो विक्रयी विक्रेता तस्य सकाशात्स्वामी नाष्टिकः स्वीयं द्रव्यमवाप्नोति नृपश्चापराधानुरूपन्दण्डं क्रेता च मूल्यमवाप्नोति । यदासौ देशान्तरङ्गतस्तदा योजनसंख्ययाऽऽनयनार्थं कालो देयः । "प्रकाशं वा क्रयं कुर्य्यान्मूलं वापि समर्पयेत् । मूलानयनकालश्च देयकालाध्वसंख्ययेति"

स्मरणात्। अथाविज्ञातदेशतया मूलमाहर्त्तुं न शक्नोति तदा क्रयं शोधयित्वैव शुद्धो भवति। "असमाहार्य्यमूलस्तु क्रयमेव विशोधयेदिति" मनुवचनात्। यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयति मूलञ्च न प्रदर्शयति तदा स एव दण्डभाग्भवतीति। "अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन्। यथाभियोगन्धनिने धनन्दाप्योदमञ्च स" इति स्मरणात्। स्वं लभेतान्यविक्रीतमित्युक्तम् तस्मिन्नु ना किं कर्त्तव्यमित्यत आह। "आगमेनोपभोगेन नष्टम्भाव्यमतोऽन्यथा। पञ्चबन्धोदमस्तस्य राज्ञे तेना विभाविते" आगमेन रिक्थक्रयादिना उपभोगेन च मदीयमिदन्द्रव्यं तच्चैवं नष्टमपहृतं वेत्यपि भाव्यं साधनीयन्तत्स्वामिना। अतोऽन्यथा तेन स्वामिना अविभाविते पञ्चबन्धो नष्टद्रव्यस्य पञ्चमांशोदमोनादिकेन राज्ञे देयः। अत्रैवायं क्रमः। पूर्व्वं स्वामी नष्टमात्मीयं साधयेत्ततः क्रेताचौर्य्यपरिहारार्थं मूल्यलाभाय च विक्रेतारमानयेत्। अथानेतुन्न शक्नोति तदात्मदोषपरिहाराय क्रयं शोधयित्वा द्रव्यं नाष्टिकस्य समर्पयेदिति। तस्करस्य प्रच्छादकमप्याह। "हृतं प्रनष्टं योद्रव्यम्परहस्तादवाप्नुयात्। अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिम्पणान्" या०। हृतम्प्रनष्टं वा चौरादिहस्तस्थं द्रव्यम् अनेनमदीयन्द्रव्यमपहृतमिति न्पस्यानिवेद्यैव दर्पादिना योऽपहृत्यसौ षड्नवतिम्पणान्दण्डनीयस्तस्करप्रच्छादकत्वेन दुष्टत्वात्। राजपुरुषानीतं प्रत्याह। "शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम्। अर्वाक् संवत्सरात्स्वामी हरेत परतोन्टपः" या०। यदा तु शुल्काधिकारिभिः स्थानरक्षिभिर्वा नष्टमपहृतन्द्रव्यं राजपार्श्वं प्रत्यानीतन्तदा संवत्सरादर्वाक् प्राप्तश्चेन्नाष्टिकस्तद्द्रव्यमवाप्नुयात्। ऊर्द्ध्वं पुनः संवत्सराद्राजा गृह्णीयात्। स्वपुरुषानीतञ्च द्रव्यं जनसमूहेषूद्घोष्य यावद्वत्सरं राज्ञा रक्षणीयम्। यथाह गौतमः। "प्रनष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य संवत्सरं राज्ञा रक्ष्यमिति" यत्पुनर्म्मनुनावध्यन्तरमुक्तम्। प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्। अर्व्वाक् त्र्यब्दाद्ध चेत्स्वामी परतोन्टपतिर्हरेत्" इति। तच्छ्रुतवृत्तसम्पन्नब्राह्मणविषयम्। रक्षणनिमित्तं षड्भागादिग्रहणञ्च तेनैवोक्तम्। "आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः। दशमं द्वादशं वापि सतान्धर्म्ममनुस्मरन्निति"। तृतीयद्वितीयप्रथमवत्सरेषु यथाक्रमं षडादयो भागावेदितव्याः। प्रपञ्चितञ्च तत्पुरस्तात्।

प्रनष्टषड्भागादिग्रहणस्य द्रव्यविशेषे अपवादमाह। "पणानेकशफे दद्याच्चतुरःपञ्च मानुषे। महिषोष्ट्रगवां द्वौ द्वौ, पादम्पादमजाविके" या०। एकशफे अश्वादौ प्रनष्टाधिगते तत्स्वामी राज्ञे रक्षणनिमित्तञ्चतुरःपणान् दद्यात्। मानुषे मनुष्यजातीये द्रव्ये पञ्च पणान् महिषोष्ट्रगवां रक्षणनिमित्तम्प्रत्येकं द्वौ द्वौपणौ, अजाविके पुनः प्रत्येकम्पादम्पादं दद्यादिति सर्व्वत्रानुषज्यते। अजाविकमिति समासनिर्देशेऽपि पादम्पादमिति वीप्सावशात्प्रत्येकं सम्बन्धोगम्यते" मिता०॥ प्रायश्चित्ततत्त्वे तु चौराज्ञाभविषये विशेषोदर्शितो यथा "प्रकाशक्रये तु स्वामिनोपहृथे नारदबृहस्पती। वणिग्वीथीपरिगतं विज्ञातं राजपुरुषैः। अविज्ञाताश्रयात् क्रीतं विक्रेता यदि वा मृतः। स्वामी दत्त्वार्द्धमूल्यन्तु प्रगृह्णीत स्वकन्धनम्। अर्द्धं द्वयोरपहृतं तत्र स्यात् व्यवहारतः। अविज्ञातक्रये दोषस्तथा चापरिपालने। एतद्द्वयं समाख्यातं द्रव्यहानिकरं परम्" इति।

**अस्वाम्य** न० अभावे न०त०। १स्वाम्याभावे स्वत्वाभावे न०ब०। २ स्वत्वशून्ये त्रि०। अस्वाम्यं हि भवेत्तत्र" स्मृतिः

**अस्वावेश** त्रि० स्वकिनु स्वस्थाने स्वभावे वा आविशति आ+विश-अच् ७त०। स्वस्थाने स्वभावे वा अस्थिते "जरद्दृष्टस्वावेशम्" ऋ० ७,२८,७।

**अस्वास्थ्य** न० अभावे न०त०। १स्वास्थ्याभावे "य इत्यमस्वास्थ्यमहर्द्दिवं दिवः" माघः। २रोगादिद्यभिभवे च न०ब०। ३तद्वति त्रि०।

**अस्वीकार** पु० अभावे न०त०। १स्वीकाराभावे न०ब०। २तच्छून्ये त्रि०। स्वीकारोऽङ्गीकारः प्रतिग्रहश्च।

**अस्वीकृत** त्रि० न स्वीकृतः १ग्रहीतभिन्ने २अङ्गीकृतभिन्ने च।

**अस्वैरिन्** पु० स्वैरी स्वाधीनः न०त०। १परतन्त्रे। स्त्रियां ङीप्

**अह** गतौ आत्म०भ्वा०सक० इदित् सेट्। अंहते आंहिष्ट। आनंहे "आनंहिरेऽद्रिं प्रति चित्रकूटम्" "आंहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः" भट्टिः। रि अंह्रिः पादः असुन् अंहः पापम्। इन् वा० नलुक्। अहिःसर्पः केदारश्च। "एवा त इन्द्रोचथमहेम" ऋ० २,१९,७, वेदे तु वा० नलुक्। लटः पञ्चानां लिटः पञ्चकादेशे ब्रुवआहादेशः आह आहतुः आहुः आत्थ आहथुः "इत्याह भगवान् मनुः" इत्यादौ तु चादिगणपठितं विभक्तिप्रतिरूपमाहेति। [आङ्गिहत् त।

**अह** दीप्तौ चुरा० इदित् उभ०अक० सेट्। अंहयति ते

**अह** व्याप्तौ स्वा०प०सक०सेट्। अह्नोति। आहीत् आह।

**अह** अव्य० अहि–घञ् पृ०नलोपः । १प्रशंसायां, २ क्षेपे, ३वियोगे, ४निग्रहे, ५आचारातिशये, ६व्यर्जने च । "अथाह तदिन्द्रोऽनुच्यत देवो हि सः" "इदमहेदं सत्यं क्रियमस्याज्ञमयायम्" शत०ब्रा० ।

**अहंयु** त्रि० अहमहङ्कारोऽस्त्यस्य युस् । १गर्व्वयुक्ते २अभिमानिनि "अहंयुनाथ चितिपः शुभंयुः" भट्टिः ।

**अहंश्रेयस्** त्रि० अहमित्यव्ययम् अहमेव श्रेयान् यत्र । अहंश्रेयानितिनिर्णयप्रयोजने । "अथ ह प्राणा अहंश्रेयसि व्यूदिरेऽहंश्रेयानहंश्रेयानस्मीति" छा०उ० "अथ ह प्राणाः एवं यथोक्तगुणाः सन्तोऽहंश्रेयान् अहंश्रेयान् अहं श्रेयानस्मीति एतस्मिन् प्रयोजने व्यूदिरे नाना विरुद्धं वा उदिरे उक्तवन्तः" भा० । "ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः" बृ०उ० । "ते इमे प्राणा वागादयोऽहंश्रेयसे अहंश्रेयानित्येतस्मै प्रयोजनाय विवदमानाः विरुद्धं वदमाना ब्रह्म जग्मुः" भा० ।

**अहः(हस्क)कर** पु० अहः करोति कृ–ट वा सत्वम् । सूर्य्ये २अर्कवृक्षे च । [रो रः । १सूर्य्ये २अर्कवृक्षे ।

**अहः(हर्)पति** पु० अह्नः पतिः उदयेन प्रवर्त्तकत्वात् । वा

**अहः(हश्शे)शेष** पु० अह्नः शेषः वा सत्वम् । १दिवावसाने अहःशेषो यत्र ब० । २अशौचाद्यन्तिमदिने ।

**अहङ्कार** पु० अहमिति क्रियतेऽनेन कृ–घञ् । १अहमित्यभिमाने आत्मनि उत्कर्षावलम्बने २गर्व्वे ३तदाश्रये अन्तःकरणभेदे "मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम् । संशयोनिश्चयो गर्व्वःस्मरणं विषया इमे" वेदा०परि० । सांख्यमतसिद्धे ४अभिमानकारणे महत्तत्त्वजन्ये पञ्चतन्मात्रादीनां कारणे तत्त्वभेदे च यथोक्तं सां०का० । "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः । तस्मादपि षोड़शकात् पञ्चभ्यः पञ्च भूतानि" इत्युद्दिश्य तल्लक्षणकार्य्ये तत्रैवोक्ते यथा "अभिमानोऽहङ्कारस्तस्मात् द्विविधः प्रवर्त्तते सर्गः । एकादशकश्च गणस्तन्मात्रपञ्चकं चैव" । व्याख्यातं च कौ० "अभिमानोऽहङ्कारः यत् खल्वालोचितं, मतञ्च तत्राहमधिकृतः, शक्तः खल्वहमत्र, मदर्था एवामी विषयाः, मत्तोनान्योऽत्राधिकृतः कश्चिदस्त्यतोऽहमस्मीति योऽभिमानः सोऽसाधारणव्यापारत्वादहङ्कारः तमुपजीव्य हि बुद्धिरध्यवस्यति "कर्त्तव्यमेतन्मयेति" । तस्य कार्य्यभेदमाह तस्मात् द्विविधः प्रवर्त्तते सर्गः । प्रकारद्वयमाह एकादशकश्च गणः इन्द्रियाह्वयः तन्मात्रपञ्चकञ्चैव द्विविधएव सर्गोऽहङ्कारात् न त्वन्यस्मादित्येवकारेणावधारयति" । "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्च तन्मात्राण्युभयमिन्द्रियम्" सां०सू० । अहङ्कारसत्त्वे प्रमाणमपि दर्शितम् "बाह्याभ्यन्तराभ्यां तैश्चाहङ्कारस्य" सां०सू० "बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च कार्य्यैस्तत्कारणतयाहङ्कारस्यानुमानेन बोधः इत्यर्थः । अहङ्कारश्चाभिमानवृत्तिकमन्तःकरणद्रव्यं नत्वभिमानमात्रं द्रव्यस्यैव लोके द्रव्योपादानत्वदर्शनात् । सुषुप्त्यादावहङ्कारवृत्तिनाशेन भूतनाशप्रसङ्गाद्वासनाश्रयत्वेनैवाहङ्कारारव्यद्रव्यसिद्धेश्चेति । अत्रेत्यमनुमानम् । तन्मात्रेन्द्रियाणि अभिमानवद्द्रव्योपादानकानि अभिमानकार्य्यद्रव्यत्वात् । यन्नैवं तन्नैवम् । यथा पुरुषादिरिति । नन्वभिमानवद्द्रव्यमेवासिद्धमिति चेदहं गौर इत्यादिवृत्त्युपादानतया चक्षुरादिवत् तत्सिद्धेः । अनेन चानुमानेन मन आद्यतिरेकमात्रस्य तत्कारणतया प्रमाप्यत्वात् । अत्र चायमनुकूलस्तर्कः । "बहु स्यां प्रजायेय" इत्यादि श्रुतिस्मृतिभ्यस्तावद्भूतादिसृष्टेरभिमानपूर्व्वकत्वाद्बुद्धिवृत्तिपूर्व्वकसृष्टौ कारणतयाभिमानः सिद्धः । तत्रचैकार्थसमवायप्रत्यासत्त्यैवाभिमानस्य सृष्टिहेतुत्वं लाघवात् कल्प्यत इति । नन्वेवं कुलालाहङ्कारस्यापि घटोपादानत्वापत्त्या कुलालमुक्तौ तदन्तःकरणनाशे तन्निर्म्मितघटनाशः स्यात् न चैतद्युक्तम् पुरुषान्तरेण स एवायं घट इति प्रत्यभिज्ञायमानत्वादिति चेन्नैवम् मुक्तपुरुषभोगहेतुपरिणामस्यैव तदन्तःकरणमोक्षोत्तरमुच्छेदात् । न तु परिणामसामान्यस्यान्तःकरणस्वरूपस्य वोच्छेदः "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति" योगसूत्रे मुक्तपुरुषोपकरणस्याप्यन्यपुरुषार्थसाधकत्वसिद्धेरिति । अथ वा घटादिष्वपि हिरण्यगर्भाहङ्कार एव कारणमस्तु न कुलालाद्यहङ्कारस्तथापि सामान्यव्याप्तौ न व्यभिचारः समष्टिबुद्ध्याद्युपादानिकैव हि सृष्टिः पुराणादिषु सांख्ययोगयोश्च प्रतिपाद्यते न तु तदंशव्यष्टिबुद्ध्याद्युपादानिका यथा महापृथिव्या एव स्थावरजङ्गमाद्युपादानत्वं न तु पृथिव्यंशलोष्टादेरिति" सां०प्र०भा० । मनुनाप्युक्तम् "मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्" । "अहङ्कारश्च वीररसे व्यभिचारिभावः । अस्याधिष्ठाता" शङ्करः । निरहङ्काररूपत्वाद्दयावीरादिरेष नः" सा०द० "नाहङ्कारात् परो रिपुः" । "अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" गीता ।

**अहङ्कारिन्** त्रि० अहमभिमानं करोति कृ–णिनि । १अभिमानवति २गर्वयुक्ते ।

अहङ्कृत त्रि० अहमिति कृतं येन । १ सगर्वे २अभिमानवति च । "जातिरूपवयोवृत्तिविद्यादिभिरहङ्कृतः" वाग्भ० । "यस्य नाहङ्कृतोभावो बुद्धिर्यस्य न लिप्यते" गीता।

अहङ्कृति स्त्री अहम्+कृ–क्तिन् । अहङ्कारशब्दार्थे ।

अहत न० हन–क्त न०त० । "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् पावनं सर्वकर्मसु" १इत्युक्तलक्षणे "निर्णेजकाक्षालितं यदहतं तत् प्रचक्षते २इत्युक्तलक्षणे च वस्त्रे "अहतैरेव वासोभिर्माल्यै रत्नाद्यैरपि" भा०स०प० ४ अ० । अहतवासा इत्यादौ करकङ्कणादिवत् तत्काले अहतत्वादिबोधनाय । ३भोगेनानाश्रिते "पञ्चद्रौणिक एवैकः सुवर्णस्याहतस्य वै" भा०स०प० ४९ अ० ४हतभिन्ने च त्रि० ।

अहति स्त्री अभावे न०त० । १हननाभावे अविनाशे "अजीवातवेऽहतवे वचस्य" ऋ०९,९६४ न०त०। २हननशून्ये विनाशशून्ये त्रि० ।

अहन् न० न जहाति न त्यजति सर्वथा परिवर्त्तनम् । न+हा–कनिन् । १दिवसे । "अहनि च तमस्विन्यां सार्द्धप्रहरयामान्तः" स्मृतिः । "अन्योन्यसंसक्तमहस्त्रियामम्" रघुः । अहःशब्दश्च दिवसएव प्रसिद्धः "अह्नो अह्नोभिर्महिमा हिमागमे" नैष० क्वचित्तु दिनरात्रिपरः यथा "मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते" सू०सि० । "विप्रः शुध्येत् दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन" मनुः । "अघाहेषु निवृत्तेषु" "द्वादशाहः प्रशस्यते" स्मृतिः तत्परिमाणमुक्तं कालमाध० विष्णुध०। "लघ्वक्षरसमामात्रा निमेषः परिकीर्त्तितः । ततः सूक्ष्मतरः कालोनोपलभ्योभृगूत्तम ! नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः । द्वौ निमेषौ त्रुटिर्ज्ञेयः प्राणः पञ्चत्रुटिः स्मृतः । विनाडिका तु षट्प्राणा तत्षष्टिर्नाडिका स्मृता । अहोरात्रं तु तत्षष्ट्या नित्यमेतत् प्रकीर्त्तितम् । त्रिंशन्मुहूर्त्ताश्च तथा अहोरात्रे प्रकीर्त्तिताः । तत्र पञ्चदश प्रोक्ता राम ! रात्रौ दिवा तथा । उत्तरां तु यदा काष्ठां क्रमादाक्रमते रविः । तदा क्रमाद्भवेद्वृद्धिर्दिवसस्य महाभुज ! । तदाश्रितमुहूर्त्तानां तदा वृद्धिः प्रकीर्त्तिता । दिनवृद्धिर्यदा राम ! दोषाहानिस्तदा भवेत् । तदाश्रितमुहूर्त्तानां हानिर्ज्ञेया तथा तथा । यदा तु दक्षिणां काष्ठां क्रमादाक्रमते रविः । दिवसस्य तदा हानिर्ज्ञातव्या तावदेव तु । क्षीयन्ते तस्य हानौ च तन्मुहूर्त्तास्तथैव च । रात्र्याश्रिताश्च वर्द्धन्ते रात्रयश्च क्रमेण तु । यदा मेषं सहस्रांशुस्तुलाञ्चैव प्रपद्यते । समरात्रिन्दिवः कालो मुहूर्त्तैश्च तदा समः" । मुहूर्त्तानां स्त्रौतपार्त्तं ज्यौतिषाणि नामानि त्रिविधानि तत्र श्रौतानि कालमा० द्रष्टव्यानि। ज्यौतिषाणि आह कश्यपः "गौरोयन्नभसर्पमित्रपितरो वस्वम्बुविश्वाह्वया ब्रह्माब्जोद्भवशक्रवेन्द्रहुतरद्वेयनक्राञ्जुराः । तोयेशार्य्यमयोनयोदश तथा पञ्चाष्टमी वासरे" । रुद्राजाहिर्बुध्नपूषाश्विनाः स्युः कीनाशोऽग्निर्धातृचन्द्रादितीज्यः । विष्णुर्भानुस्त्वष्टृवाता मुहूर्त्ता रात्रौ क्रूरास्त्वन्तकाशाग्निरुद्राः" । कात्र्तनामानि तु "रौद्रश्चैव मैत्रश्च तथा सारस्वतः स्मृतः । सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्ततः । रौहिणस्तिलकश्चैव विभवोनिर्ऋतिस्तथा । शम्बरोविजयश्चैव दिवा पञ्चदश स्मृताः । शङ्करश्चाजपादश्च तथाहिर्बुध्नमैत्रकौ अश्विनौ याम्य आग्नेयो वैधात्रश्चान्द्र एव च । आदितेयोऽथ जैवश्च वैष्णवः सौर एव च । ब्राह्मोनाभस्तथैव मुहूर्त्ताः क्रमशोनिशि" । एतदनुसारेणैव "ब्राह्मे मुहूर्त्ते किल तस्य देवीति" रघुः "मैत्रे मुहूर्त्ते शशलाञ्छनेन" कुमा० "आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः" इत्यादि प्रयोगः । अह्नश्च द्विधा त्रिधा चतुर्द्धा पञ्चधा पञ्चदशधेति पञ्चधा विभागकल्पनापि दृश्यते । तत्र द्विधा विभागाभिप्रायेण । "यथा चैवापरः पक्षः पूर्वपक्षात् विशिष्यते । यथा श्राद्धस्य पूर्व्वाह्णादपराह्णो विशिष्यते" मनुः त्रिधा विभागे "ऊर्द्ध्वं सूर्य्योदयात् प्रोक्तं मुहूर्त्तानां तु पञ्चकम् । पूर्व्वाह्णः पञ्चकं प्रोक्तं मध्याह्नस्तु ततः परम् । अपराह्णस्ततः प्रोक्तं मुहूर्त्तानां तु पञ्चकम्" । "तस्माद्दक्षः पूर्व्वाह्णे देवा अशनमभ्यवहरन्ति मध्यन्दिने मनुष्याः अपराह्णे पितरः" गौत० "पूर्व्वाह्णोवै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणाम्" श्रुतिः चतुर्द्धा विभागे गोभिलः । "पूर्व्वाह्णः प्रहरं यावत् मध्याह्नःप्रहरस्ततः । आतृतीयादपराह्णः सायाह्नश्च ततः परम्" । पञ्चधा विभागमाह व्यासः । "मुहूर्त्तत्रितयं प्रातस्तावदेव तु सङ्गवः । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः । सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धकार्य्ये सुरस्कृतः" एवमेव दशोक्तविभागः तत्राहः नवविधम् "ब्राह्मं दिव्यं तथा पैत्रं प्राजापत्यं गुरोस्तथा । सौरञ्च सावनञ्चान्द्रमार्क्षं मानानि वै नव" सू०सि० । तत्र ब्राह्मम् "इत्थं युगसहस्रेण भूतसंहारकारकः । कल्पो ब्राह्ममहःप्रोक्तं शर्वरी तस्य तावतीति" । दिव्यमुक्तं तत्रैव "मासैर्द्वादशभिर्वर्षंदिव्यं

तदहरुच्यते”। सुरासुराणामन्योन्यमहोरात्रं विपर्य्ययात् यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात्। पित्र्यमाह “त्रिंशत्तिथ्यात्मको मासश्चान्द्रः पित्र्यमहः स्मृतम् निशा च मासपक्षान्तौ तयोर्मध्ये विभागतः”। “भचक्रभ्रमणं नित्यं नाक्षत्रं दिनमुच्यते। मन्वन्तरव्यवस्था च प्रजापत्यमुदाहृतम् इति संक्रान्त्या सौरमुच्यते इति च सू०सि० वार्हस्पत्यमब्दशब्दे उक्तम् तेषु नवसु मध्ये चतुर्भिरेव व्यवहारः “चतुर्भिर्व्यवहारोऽत्र सौरचान्द्रार्क्षसावनैः” वार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः। सू० सि० तत्र सौरनाक्षत्रादिप्रमाणमुक्तम्। “नाडीषष्ट्या तु नाक्षत्रमहोरात्रं प्रकीर्त्तितम्। तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा”इति चान्द्रमाह “अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी तच्चान्द्रमसमंशैस्तु ज्ञेया द्वादशभिस्तिथिः” एतेषां कार्य्यभेदे ग्रहणमाह स एव “तिथिः करणमुद्वाहः क्षौरं सर्व्वाः क्रियास्तथा। व्रतोपवासयात्राणां क्रिया चान्द्रेण गृह्यते। उदयादुदयः भानोः सावनं परिकीर्त्तितम्। सावनानि स्युरेतेन यज्ञकालावधिस्तु तैः। सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेनैव गृह्यते। अस्य तत्पुरुषान्ते टच् समा० पुंस्त्वञ्च एकाहः दीर्घाहः पुण्याहं तु न०। अव्ययादिपूर्व्वपदत्वे एकदेशिसमासे द्विगौ च टच् अह्नादेशश्च अत्यह्नः मध्याह्नः पूर्व्वाह्णः”पु०। उत्तरपदद्विगावेव अह्नादेशः न समाहारद्विगौ द्व्यहः त्र्यहः। उत्तरपदे तु द्व्यह्नप्रिय एवं तद्धितार्थे नाह्नादेशः द्व्यहीनः इत्यादि। कालत्वात् भवादौ ठञ् अह्नादेशः आह्निकः ख अहीनः दिनभवे त्रि०। २विष्णौ तस्य सर्व्वदा प्रकाशमानत्वात् तथात्वम्” “अहः संवत्सरो व्यासः” विष्णुस०। अर्च्चिरादिमार्गे आतिवाहिके ३अहरभिमानि देवे—च। “ते अर्च्चिषमभिसम्पद्यन्ते अर्च्चिषोऽहः अह्न आपूर्य्यमाणपक्षम्” छा०उ०। एतदधिकृत्य “आतिवाहिकास्तल्लिङ्गात्” शा०सूत्रे आतिवाहिकत्वमेषां निर्णीतम् ४रात्रौ च। “यामवत्यारथारोभिन्नाना महनी उभे”। “अयने अहनी प्राहुरिति च” भा०२स्क०

**अहना** स्त्री अहर्मुखत्वेनास्त्यस्याः अच् नि० टिलोपाद्यभावः। उषायाम् निरु०। “व्हरंव्हरमहना याव्यच्छा” ऋ०१,१२३,४ “अहना उषेति” भाष्यम्।

**अहन्ता** स्त्री अहमित्यव्ययमस्मदर्थे तस्य भावः तल्। अस्मदर्थभावे २ममतायाञ्च।

**अहम्** अव्य० अह-अम्। अहङ्कारार्थे, अस्मदर्थे “अहमर्थोदयो योऽयं चित्तात्मा वेदनात्मकः। एतच्चित्तद्रुमस्यास्य वीजं विद्धि महामते” वाशि०। अहंप्रत्ययः। अहङ्कारः

**अहमहमिका** स्त्री अहमहंशब्दोऽस्त्यत्र वीप्सायां द्वित्वम् ठन् न टिलोपः। १परस्पराहङ्कारे २अहमेवाग्रे यास्यामीति रूपायामन्योन्योक्तौ च।

**अहम्पूर्व्विका** स्त्री अहं पूर्व्वोऽहं पूर्व्व इत्यभिधानं यत्र। योधादीनां औत्सुक्यात् अहमेव पूर्व्वं यास्यामीत्यध्यवसायेनोक्तौ “जवादहंपूर्व्विकया यियासुभिः” किरा०।

**अहम्प्रत्यय** पु० अहमित्याकारकः प्रत्ययः। अहमस्मि सुखीत्याद्याकारे बोधे। “अहम्प्रत्ययलिङ्गानि च वैदिकानि” वृ०उ०भा०। “नचायमेकान्तेनाविषयः अहम्प्रत्ययविषयत्वात्” शा० भा०। अहंशब्दालम्बनश्चात्मा स च देह एवेति चार्व्वाकाः। क्षणिकविज्ञानमेवेति बौद्धाः देहादिव्यतिरिक्त इति आस्तिकदर्शनानुसारिणः।

**अहम्भद्र** त्रि० अहमेव भद्र इति निर्द्देशोयत्र। अहंश्रेयः शब्दार्थे “अथातोमनसश्च वाचश्च अहंभद्र उदितम् मनश्च ह वै वाक्चाहं भद्र ऊदाते। तद्ध मन उवाच अहमेव त्वच्छ्रेयोऽस्मि न मया त्वं किञ्चनानभिगतं वदसि यन्ममत्वं कृतानुवर्त्मा त्वमेव त्वच्छ्रेयोऽस्मीति अथ ह वागुवाच अहमेव त्वच्छ्रेयस्यस्मि यद्वै त्वं वेत्थाहं तद्विज्ञापयाम्यहं संज्ञापयामीति” शत०ब्रा०।

**अहम्मति** स्त्री अहमित्याकारा मतिः ज्ञानं मन+क्तिन्। १अविद्यायाम् अन्यस्मिन्नन्यधर्म्मावभासके २अज्ञाने।

**अहर** त्रि० न हरति अच् न०त०। १हारकभिन्ने हरोहारकः न०ब०। २हारकशून्ये गणितोक्ते शुद्धे ३राशौ ४असुरभेदे पु० असुरशब्दे उदा०।

**अहरादि** पु० अह्नः आदि। प्रभाते “शशधरमहरादौ रागवानुच्चरश्मिः” माघः। वार्त्तिकोक्ते पत्यादिशब्दे परे रोःस्थाने रेफादेशनिमित्ते अहन् गिर्-धुर् इति शब्दगणे।

**अहर्गण** पु० अह्नां गणः। दिनद्वन्द्वे दिनसमूहे। यज्ञानां मध्यभागादिज्ञानसाधनानि सृष्ट्यवधि श्वेतवराहकल्पावधि कल्पारम्भावधि वा इष्टदिनपर्य्यन्तं यानि दिनानि गतानि तेषां समूहे। तत्र सृष्ट्यहर्गणसत्त्वात् “इत्थं युगसहस्रेण भूतसंहारकारकः। कल्पोब्राह्ममहःप्रोक्तं शर्व्वरी तस्य तावती। परमायुः शतं तस्य तयाहोरात्रसंख्यया। आयुषोऽर्द्धमितं तस्य शेषे कल्पोऽयमादिमः। कल्पादस्माच्च

मनवः षट् व्यतीताः ससन्धयः। वैवस्वतस्य च मनोर्युगानां त्रिघनो गतः। अष्टाविंशाद्युगादस्माद्यातमेतत् कृतं युगम्। अतः कालम् प्रसंख्याय संख्यामेकत्र पिण्डयेत्"। सू०सि० तदानयनप्रकार उक्तः। तत्र सृष्ट्यादिकस्य अहर्गणस्यानयनमित्थम्। ब्राह्मदिनमानं मनुष्यपरिमाणेन ४३२००००००० वर्षाः रात्रिमानञ्च तथा, इत्यहोरात्रमानम् ८६४००००००० वर्षाः ब्राह्माहोरात्रमानम् ३६० गुणितं तस्य वर्षमानम् ३११०४०००००००० एवं वर्षशतं ब्रह्मणः परमायुः ३११०४०००००००००० तस्यायुषोऽर्द्धम् १५५५२०००००००००० वर्षा गताः। मन्वन्तरसंख्या ३०६७२०००० षड्भिर्गुणिताः १८४०३२०००० एते वर्षाः षण्णां मनूनां गताः। तथा सन्धयश्च सप्त कृतयुगप्रमाणा गतास्तत्र युगसन्धिमानम् १७२८००० कृतप्रमाणवर्षाः सप्तभिर्गुणिताः १२०९६००० वर्षाः। सप्तमस्य वैवस्वतमनोः २७युगानि गतानि तेषां समष्टिः ११६६४०००० वर्षाः सत्यादीनां त्रयाणां गतानां युगानां मानम् ३८८८०००। एवमादिसृष्टितः वर्त्तमानयुगान्तर्गतद्वापरयुगपर्य्यन्तम्। १५५५२१९७२९४४००० वर्षाः गताः परार्द्धतः १९७२९४४००० वर्षा गताः। वर्त्तमान महायुगात् ३८८८००० वर्षा गताः। एवमब्दपिण्डं कृत्वा तत्र कलियुगगताब्दपिण्डं योज्यम्। एतानि च सौरकृपाणीति ३६० गुणितानि सौरदिनवृन्दानि गतानि भवन्ति। "मध्यमग्रहभुक्तिश्च सावनेन इत्युक्तेः सावनैरेव ग्रहमध्यभावज्ञानमतस्तेभ्यः सि०शि० चान्द्रसावनानयनं दर्शितम्। यथा "कथितकल्पगतोऽर्कसमागणो रविगुणो गतमाससमन्वितः। खदहनै ३०र्गुणितस्तिथिसंयुतः पृथगतोऽधिकमास १५९३३००००० समाहतात्। रविदिनानि १५५५२००००००००० गताधिकमासकैः कृतदिनैः सहितो द्युगणो विधोः। पृथगतः पठितावम २५०८२५५०००० संगुणाद्विधुदिना १६०२९९९०००००० प्तगतावमवर्जितः। भवति भास्करवासरपूर्वको दिनगणो रविमध्यमसावनः। अधिकमासदिनक्षयशेषतो घटिकादिकमत्र न गृह्यते"। "अत्र वासना। कल्पगताब्दा द्वादशगुणिता रविमासा जातास्ते चैत्रादिगतचान्द्रतुल्यैः सौरैरेव युतास्त्रिंशद्गुणा दर्शमासप्रतिपदादिगततिथितुल्यैः सौरैरेव दिनैर्युताः। एवं ते सौरा जातास्तेभ्यः पृथक्स्थितेभ्योऽधिमासानयनं त्रैराशिकेन। यदि कल्पसौरदिनैः कल्पाधिमासा लभ्यन्ते तदैभिः किमिति। फलं गताधिमासाः। तैर्दिनीकृतैः पृथक् स्थितः सौराहर्गणैः सहितश्चान्द्रो भवति। यतः सौरचान्द्रान्तरमधिमासदिनान्येव। अथ चान्द्राद् द्युगणादवमानयनं त्रैराशिकेन। यदि कल्पचान्द्राहैः कल्पावमानि लभ्यन्ते तदैभिः किमिति। फलं गतावमानि। तैरूनश्चान्द्रोऽहर्गणोऽतः कर्त्तव्यः। यतः सावनचान्द्रान्तरेऽवमान्येव। एवं कृते सति रवेर्मध्यमः सावनाहर्गणो भवति न स्फुटः। मध्यमस्फुटाहर्गणयोर्भेदो गोले कथितः। स चाहर्गणोऽर्कादिः। यतः कल्पादौ रविवासरः। अत्राऽधिमासानयनेऽधिमासशेषं न ग्राह्यम्। न पुनस्तस्मादिनाद्यवयवा ग्राह्याः। एवमवमशेषमपि। न तस्माद्घटिकादिकं ग्राह्यम्। नन्वनुपातः सावयवो भवति कुतस्तदवयवा न ग्राह्याः। तत्कारणं गोले कथितं व्याख्यातं च" प्रमिता०। मध्यमग्रहादप्यहर्गणानयनं तत्रैवोक्तम्। "साग्रात् स चक्राच्च खगात् कदम्नात् तत्कल्पचक्राप्तमहर्गणः स्यात्"। निरग्रचक्रादपि कुट्टकेन वक्ष्येऽग्रतोऽग्राच्च तथाग्रयोगात्। "ग्रहस्य भगणराशिभागकला विकला अन्ते विकलाशेषं च कुदिनैः संगुण्य स्वच्छेदेन विभज्योपर्युपरि निक्षिपेत्। तद्यथा। भगणादिग्रहे विकलाशेषावधि कल्पकुदिनगुणे विकलाशेषस्थाने कुदिनैर्विभज्य विकलास्थाने फलं प्रक्षिप्य तत्र षष्ट्या ६० विभज्य कलास्थाने निक्षिप्यैवं भगणान्तं यावत्। तत्र कल्पभगणैर्हृतेऽहर्गणः स्यात्। अत्रोपपत्तिर्विलोमगणितेन। तथा निरग्रचक्रादपि ग्रहात् तथा केवलादग्रादपि तथा शेषयोः शेषाणां वा योगादहर्गणानयनमग्रत इति प्रश्नाध्याये कुट्टकविधिना वक्ष्यते" प्रमि०। कलिगतादप्यहर्गणानयनं तत्रैव। "कलिगताद्य वा दिनसञ्चये दिनपतिर्भृगुजप्रभृतिस्तदा। कलिमुखध्रुवकेण समन्वितो भवति तद्द्युगणोद्भवखेचरः"। "अत्र कलिगताहर्गणेऽयं विशेषः। शुक्रादौ वारो गणनीयः। यतः कल्पगताहर्गणात् कलिमुखे शुक्रवारो भवति। तत्र च ये ग्रहास्ते ध्रुवसंज्ञाः कल्पिताः। तद्द्युगणभवः खेचरश्च कलिमुखध्रुवकेण समन्वितः कार्य्य इत्यत्र वासनापि सुगमा" प्रमि०। कुट्टकविधिश्च बीजगणिते दर्शितो यथा। "अस्य गणितस्य ग्रहगणिते महानुपयोगः। तदर्थं किञ्चिदुच्यते। "कल्प्याथ शुद्धिर्विकलावशेषं षष्टिश्च भाज्यः

कुदिनानि हारः । तज्जं फलं स्युर्विकला गुणस्तु लिप्ताग्रमस्माच्च कला लवाद्यम् । एवं तदूर्ध्वं च तथाधिमासावमाग्रकाभ्यां दिवसा रवीन्द्वोः" । "ग्रहस्य विकलावशेषाद्ग्रहाहर्गणयोरानयनम् । तद्यथा । षष्टिर्भाज्यः । कुदिनानि हारः । विकलावशेषं शुद्धिरिति प्रकल्प्य साध्ये गुणाप्ती । तत्र लब्धिर्विकलाः स्युर्गुणस्तु कलावशेषम् । एवं कलावशेषं शुद्धिः षष्टिर्भाज्यः कुदिनानि हारः । फलं कलाः । गुणोऽंशशेषम् । एवमंशशेषं शुद्धिस्त्रिंशद्भाज्यः कुदिनानि हारः । फलं भागाः । गुणो राशिशेषम् । एवं राशिशेषं शुद्धिर्द्वादश भाज्यः । कुदिनानि हारः । फलं गतराशयो गुणो भगणशेषम् । एवं कल्पभगणा भाज्यः । कुदिनानि हारः । भगणशेषं शुद्धिः । फलं गतभगणाः । गुणोऽहर्गणः स्यादिति । अस्योदाहरणानि त्रिप्रश्नाध्याये । एवं कल्पाधिमासा भाज्योरविदिनानि हारोऽधिमासशेषं शुद्धिः । फलं गताधिमासाः । गुणो गतरविदिवसाः । एवं युगावमानि भाज्यश्चन्द्रदिवसा हारोऽवमशेषं शुद्धिः । फलं गतावमानि । गुणो गतचन्द्रदिवसा इति" प्रमि० ।

अहर्गणानयने अधिमासावमपरित्यागे कारणमाह" सि० शि० "अहर्गणस्यानयनेऽर्कमासाश्चैत्रादिचान्द्रैर्गणकान्विताः किम् । कुतोऽधिमासावमशेषके च त्यक्ते यतः सावयवोऽनुपातः । दर्शावधिश्चान्द्रमसो हि मासः सौरस्तु संक्रान्त्यवधिर्यतोऽतः । दर्शाद्यतः संक्रमणात् प्राक् सदैव तिष्ठत्यधिमासशेषम् । दर्शान्ततो यावतिथिप्रमाणैः सौरैस्तु सौरा दिवसाः समेताः । यतोऽधिशेषोत्थदिनाधिकास्ते त्यक्तं तदस्मादधिमासशेषम् । तिथ्यन्तसूर्योदययोस्तु मध्ये सदैव तिष्ठत्यवमावशेषम् । अत्यक्तेन तेनोदयकालिकः स्यात् तिथ्यन्तकाले द्युगणोऽनुपातः" । "मध्यममानेन यावत्यमावास्या तदन्ते चान्द्रमासान्तः । मध्यमार्कस्य यस्मिन् दिने संक्रान्तिस्तत्र संक्रान्तिकाले रविमासान्तः । तयोः रविचन्द्रमासान्तयोरन्तरे यावत्यस्तिथयः सावयवास्ता अधिमासशेषतिथयः । यतः सौरचान्द्रान्तरमधिमासाः । अहर्गणानयने गताब्दा रविगुणास्ते सौरा मासा जाताः । अतस्तेषु चैत्रादिचान्द्रतुल्याः सौरा एव मासा योजितास्ते संक्रान्त्यवधयो जातास्तेषु त्रिंशद्गुणेषु गततिथितुल्याः सौरा एव दिवसा योजिताः । अतः सौरचान्द्रान्तरेणाधिका जातास्तदन्तरमधिमासशेषदिनानि भवन्ति सौरचान्द्रान्तरत्वात् । अतोऽधिमासशेषदिनान्येभ्यः शोध्याः । अथ चाधिमासानयनेऽनुपातलब्धैरधिमासैर्दिनीकृतैस्तच्छेषदिनैश्च युक्ताः सौराह्नाश्चान्द्राह्ना भवितुमर्हन्ति । एवमत्राधिमासशेषदिनानि क्षेप्याणि । तत्र शोध्यानि । अतः कारणादधिमासशेषं त्यक्तम् । अथावमशेषत्यागकारणमुच्यते । तिथ्यन्तानन्तरं यावतीभिर्घटीभिः सूर्योदया अवमशेषघटिकाः सतश्चान्द्रसावनान्तरमवमानि । यद्यवमशेषं न त्यज्यते तत्रावमैरवमशेषघटिकाभिश्च तिथय ऊनीक्रियन्ते तदा तिथ्यन्ते सावनोऽहर्गणो भवति । अथ च सूर्योदयोऽवधिः साध्यः । तिथ्यन्ताहर्गणोऽवमशेषघटीभिर्युक्तः सन् उदयावधिर्भवति । अतोऽवमशेषे त्यक्ते स्वतः सूर्योदयावधिर्भवति" प्रमि० । "अहर्गणो मध्यमसावनेन कृतश्चलत्वात् स्फुटसावनस्य । तदूनखेटा उदयान्तराद्य कर्मोद्भवेनोनयुताः फलेन" सि० शि० अहर्गणे विशेषमाह सि० शि० । "अभीष्टवारार्थमहर्गणश्चेत् सैको निरेकस्तिथयोऽपि तद्वत् । तदाधिमासावमशेषके च कल्पाधिमासावमयुक्तहीने" । "इह किल स्थूलतिथ्यानयने यस्यां तिथौ यो वार आगतः स चेदहर्गणे नागच्छति तदाहर्गणं सैकं निरेकं कृत्वा ग्रहाः साध्या इति ज्योतिर्विदां संप्रदायो युक्तियुक्त एव । यतोऽहर्गणस्य वारो नियामकः । एवं कृते यो विशेषः सोऽभिधीयते । तिथयोऽपि तद्वदित्यादि । अत्रैतदुक्तं भवति । यदा वारार्थं सैकोऽहर्गणः कृतस्तदाधिमासावमशेषाभ्यां चन्द्रार्कानयने कोष्ठाहतैरङ्कहृतेन्दुविश्वैरित्यादौ द्वादशगुणास्तिथयोऽर्कभागेषु याः क्षेप्यास्ताः सैकाः कृत्वा द्वादशगुणाः क्षेप्याः । यदा निरेकोऽहर्गणः कृतस्तदा निरेकम् । तथा यदि सैकोऽहर्गणस्तदाधिमासशेषं कल्पाधिमासैर्युतं कार्य्यम् । अवमैरवमशेषं च । यतः सैकासु तिथिषु सैकोऽहर्गणो निरेकासु निरेकः । तथा प्रतिदिनमधिमासशेषस्याधिमासैरुपचयोऽवमैरवमशेषः स्यात् युक्तमुक्तम्" इति प्रमिता० ।

अहर्जर पु० अहोभिः परिवर्त्तमानो लोकान् जरयति जॄ-णिच्-अच्, अहानि वाऽस्मिन् जीर्य्यन्ति आधारे अप् वा । "संवत्सरे" "यथापः प्रवता यन्ति यथा मासा अहर्जरम्" तै०उ०।

अहर्दिव न० अहश्च दिवा च समा० द्व० तुल्यार्थकतया वीप्सा गम्यते । प्रतिदिने इत्यर्थे "य इत्थमस्मास्त्रमहर्दिवं"

दिवः” माघः अर्थे आद्यच् । २तद्वृत्तौ त्रि० । “अह-र्दिवाभिरूतिभिः” । [दयोऽप्यत्र ।
**अहर्नाथ** पु० ६त० । १दिनपतौ २अर्कवृक्षे चाहरधिपा-
**अहर्निश** न० अहश्च निशा च समा०द्व० । अहोरात्रयोः “तयोः समुच्चयो मासः पितृणां तदहर्निशम्” भा० ६स्क० । “तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते” मनुः
**अहर्बान्धव** पु० अह्नि बान्धव इव प्रकाशकत्वात् । १सूर्य्ये । २अर्कवृक्षे च ।
**अहर्भाज्** स्त्री इष्टकाभेदे । “रात्रिसहस्रेण रात्रिसहस्रेणैकैकां परिश्रितं सम्पद्यानुपासीताहःसहस्रेणाहःसहस्रेणैकै-कामहर्भाजम्” । शत०ब्रा० । [वृक्षे च ।
**अहर्मणि** पु० अह्नि मणिरिव प्रकाशकत्वात् । १सूर्य्ये २अर्क-
**अहर्लोक** पु० इष्टकाभेदे । “ततोयाः षष्टिश्च त्रीणि च शतान्यहर्लोकास्ता अग्नावेव आप्तिः क्रियते” शत०ब्रा० ।
**अहर्विद्** पु० अहः एकाहसाध्यम् अग्निष्टोमं वेत्ति विद्–क्विप् । एकाहसाध्याग्निष्टोमवेत्तरि “सुतसोमा अहर्विदः” ऋ० १,२,२ ।
**अहल्य** त्रि० न हलेन कृष्यम् । १हलाकृष्टे क्षेत्रे । २देशभेदे पु० । ३गौतमर्षिपत्न्यां स्त्री । अहल्योत्पत्तिर्यथा । “मौद्गल्यस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः । इन्द्रसेना यतोगर्भं वध्र्यश्वं प्रत्यपद्यत । वध्र्यश्वान्मिथुनं जज्ञे मेनकायामिति श्रुतिः । दिवोदासश्च राजर्षिरहल्या च यशस्विनी । शरद्वतश्च दायादमहल्या समसूयत । शतानन्दमृषिश्रेष्ठम् तस्यापि सुमहायशाः” हरि०३२अ० शरद्वतः इति गौतमस्य नामान्तरम् । यद्वंशजातः कृपाचार्य्यः शारद्वत इति गौतम इति चाख्यायते । तस्या गौतमशापकथा अफलशब्दे २६८ पृष्ठे दृश्या । तस्याः शापविमोचनमुक्तम् । “तस्मात् प्रविश्य रामाशु गौतमस्याश्रमं विभो! । तारयैनां महाभागामहल्यां शापविद्धुताम् । विश्वामित्रवचः श्रुत्वा रामः सौमित्रिणा सह । विश्वामित्रं पुरस्कृत्य प्रविवेशाश्रमं ततः । स ददर्श महाभागां तपसा द्योतितप्रभाम् । सेन्द्रैरपि सुरैः साचादनालक्ष्यां समागतैः । प्रयत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव । धूमेनापि परीताङ्गीं दीप्तामग्निशिखामिव । तुषारेणावृतां साभ्रां पूर्णचन्द्रप्रभामिव । मध्येऽम्भसो दुराधर्षां दीप्तां सूर्य्यप्रभामिव । सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह । त्रयाणामपि लोकानां यावद्रामस्य दर्शनम् । दृष्ट्वैव राघवौ तस्याः पादौ जगृहतुस्तदा । सा च तौ पूजयामास स्मृत्वा गौतमभाषितम् । पाद्यार्घ्यासनसत्कारैर्यथावत् प्रीतमानसा । प्रतिजग्राह रामस्य पूजां तां विधिवत् तदा । नस्तदुन्दुभिवाद्यानि पुष्पवृष्टिः पपात खात् । गन्धर्वाप्सरसां चैव महानासीत् समागमः । साधु साध्विति देवाश्च तदाहल्यामपूजयन् । विशुद्धां तपसोग्रेण तदा रामसमागमे । गौतमोऽथ महातेजा दृष्ट्वा दिव्येन चक्षुषा । स्वमाश्रमपदं राममागतं प्रत्यपूजयत् । समेत्य भार्य्यया चैव पूतयाऽहल्यया तदा । तत्रैव सहितोभूयस्तपस्तेपे महायशाः” इति रामा०आ० । “अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा । पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्” प्रातःस्मरणीये पुरा० ।
**अहल्याजार** पु० ६त० । इन्द्रे तत्कथा अफलशब्दे २६८पृष्ठे ।
**अहल्यानन्दन** पु० ६त० । शतानन्दे ऋषौ । तस्योत्पत्ति-कथा अहल्याशब्दे उक्ता अहल्यासुतादयोऽप्यत्र ।
**अहल्याह्रद** पु० ६त० । गौतमाश्रमस्थे स्वनामख्याते तीर्थ-भेदे “ततोगच्छेत राजेन्द्र गौतमस्य वनं प्रियम् । अहल्याया ह्रदे स्नात्वा व्रजेत परमां गतिम्” भा०वन ८४अ० ।
**अहल्लिक** पु० अहनि लीयते ली–ड नि० संज्ञायां कन् । प्रेते । प्रेताहि रात्रौ चरन्तो दिवा लीयन्ते इति प्रसिद्धम् । “अहल्लिकेतिहोवाच याज्ञवल्क्यः” बृ०उ० । “अहल्लिकेति होवाच याज्ञवल्क्यो नामान्तरेण संबोधनं कृतवान्” भा० । “नामान्तरेण अहनि लीयते इति प्रेत-वाचिनेति शेषः आनन्दगिरिः ।
**अहस्कर** पु० अहः करवत् । १सूर्य्ये, “अलङ्कारास्य बभू-रहस्करः” माघः । २अर्कवृक्षे च ।
**अहस्त** त्रि० न स्तः हस्तौ यस्य । हस्तशून्ये प्राणिनि १कागादौ “अहस्ताश्च सहस्तानां शूराणां चैव भीरवः” मनुः २छिन्नहस्ते च । “अपादहस्तो अपृतन्यदिन्द्रम्” ऋ० १,३२,७ ।
**अहस्पति** पु० अहःपतिवत् । १सूर्य्ये २अर्कवृक्षे च ।
**अहह** अव्य०अहं जहाति अहम्+हा–क पृषो० ॥ १सम्बो-धने २आश्चर्य्ये, ३खेदे, ४क्लेशे, ५प्रकर्षे च । “अहहारे त्वा मृद” छा०उ० “अहह महतां निःसीमानश्चरित्रविभूतयः” वीरच० “अहह कष्टमपण्डितता विधेः” नैषध० ।
**अहहा** अव्य० अहं जहाति हा–डा । “अहहेत्यद्भुते” “भिक्षित्वाऽपि बुभुक्षितं यदहहा” नैषध० ।
**अहार्य्य** पु० हृ–ण्यत् न०त० । १पर्वते । २हर्त्तुमशक्ये २अभेद्ये च त्रि० । “तत्रात्मभूतैः कालज्ञैरहार्य्यैः परि-

चारकैः" मनुः अहार्य्यैरभेद्यैः" कुमा०। "अहार्य्यमेवं वचनाभिपद्मम्" गणरत्न०। "अहार्य्यं ब्राह्मणद्रव्यं राज्ञां नित्यमिति स्थितिः" मनुः।

**अहि** पु० आहन्ति आ+हन+डिन् टिलोपः आङो ह्रस्वश्च। १सर्पे, लोकप्रसिद्धसर्पभेदादि सुश्रुते दर्शितम्। "अशीतिस्त्वेव सर्पाणां भिद्यते पञ्चधा तु सा"। "दर्व्वीकरा मण्डलिनो राजिमन्तस्तथैव च। निर्व्विषा वैकरञ्जाश्च त्रिविधास्ते पुनः स्मृताः॥ दर्व्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः। तेषु दर्व्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः। द्वाविंशतिर्मण्डलिनो राजिमन्तस्तथा दश। निर्व्विषा द्वादश ज्ञेया वैकरञ्जास्त्रयस्तथा। वैकरञ्जोद्भवाः सप्त चित्रामण्डलिराजिलाः। पदाभिहृष्टा दुष्टा वा क्रुद्धा ग्रासार्थिनोऽपि वा। ते दशन्ति महाक्रोधास्तद्धि त्रिविधमुच्यते। सर्पितं रदितं वापि तृतीयमथ निर्व्विषम्। सर्पाङ्गाभिहतं केचिदिच्छन्ति खलु तद्विदः। पदानि यत्र दन्तानामेकं द्वे वा बहूनि च॥ निमग्नान्यल्परक्तानि यान्युद्वृत्य करोति हि। चञ्चुमात्रकयुक्तानि वैकल्यकरणानि च। सङ्क्षिप्तानि सशोफानि विद्यात्तत् सर्पितं भिषक्। राज्यः सलोहिता यत्र नीलाः पीताः सितास्तथा। विज्ञेयं रदितं तत्तु ज्ञेयमल्पविषञ्च तत्। अशोफमल्पदुष्टासृक् प्रकृतिस्थस्य देहिनः। पदं पदानि वा विद्यादविषं तच्चिकित्सकः। सर्पस्पृष्टस्य भीरोर्हि भयेन कुपितोऽनिलः। कस्यचित् कुरुते शोफं सर्पाङ्गाभिहतन्तु तत्। व्याधितोद्विग्नदष्टानि ज्ञेयान्यल्पविषाणि तु। तथातिवृद्धबालातिदष्टमल्पविषं स्मृतम्। सुपर्णदेवब्रह्मर्षियक्षसिद्धनिषेविते॥ विषघ्नौषधियुक्ते च देशे न क्रमते विषम्। रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः॥ ज्ञेया दर्व्वीकराः सर्पाः फणिनः शीघ्रगामिनः। मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः॥ ज्ञेया मण्डलिनः सर्पा ज्वलनार्कसमप्रभाः। स्निग्धा विविधवर्णाभिस्तिर्य्यगूर्द्ध्वञ्च राजिभिः॥ चित्रिता इव ये भान्ति राजिमन्तस्तु ते स्मृताः। मुक्तारूप्यप्रभा ये च कपिला ये च पन्नगाः॥ सुगन्धिनः सुवर्णाभास्ते जात्या ब्राह्मणाः स्मृताः। क्षत्रियाः स्निग्धवर्णास्तु पन्नगा भृशकोपनाः॥ सूर्य्यचन्द्राकृतिच्छत्रलक्ष्म तेषां तथाम्बुजम्। कृष्णा वज्रनिभा ये च लोहिता वर्णतस्तथा। धूम्राः पारावताभाश्च वैश्यास्ते पन्नगाः स्मृताः॥ महिषद्वीपिवर्णाभास्तथैव परुषत्वचः। भिन्नवर्णाश्च ये केचिच्छूद्रास्ते परिकीर्त्तिताः॥ कोपयन्त्यनिलं जन्तोः फणिनः सर्व्व एव तु। पित्तं मण्डलिनश्चापि कफञ्चानेकराजयः॥ अपत्यमसवर्णाभ्यां द्विदोषकरलक्षणम्। ज्ञेयौ दोषैश्च दम्पत्योर्विशेषश्चात्र वक्ष्यते॥ रजन्याः पश्चिमे यामे सर्पाश्चित्राश्चरन्ति हि। शेषेषूक्ता मण्डलिनो दिवा दर्व्वीकराः स्मृताः॥ दर्व्वीकरास्तु तरुणा वृद्धा मण्डलिनस्तथा। राजिमन्तो वयोमध्ये जायन्ते मृत्युहेतवः॥ नकुलाकुलिता बाला वारिविप्रहृताः कृशाः। वृद्धा मुक्तत्वचो भीताः सर्पास्त्वल्पविषाः स्मृताः। तत्र दर्व्वीकराः। कृष्णसर्पो महाकृष्णः कृष्णोदरः श्वेतकपोतो महाकपोतो बलाहको महासर्पः शङ्खपालो लोहिताक्षो गवेधुकः परिसर्पः खण्डफणः ककुदः पद्मो महापद्मो दर्भपुष्पो दधिमुखः पुण्डरीको भ्रुकुटीमुखो विष्किरः पुष्पाभिकीर्णो गिरिसर्प ऋजुसर्पः श्वेतोदरो महाशिरा अलगर्द्द आशीविष इति॥ मण्डलिनस्तु। आदर्शमण्डलः श्वेतमण्डलो रक्तमण्डलश्चित्रमण्डलः पृषतो रोध्रपुष्पो मिलिन्दको गोनसो वृद्धगोनसः पनसो महापनसो वेणुपत्रकः शिशुको मदनः पालिन्दिरः पिङ्गलस्तन्तुकः पुष्पपाण्डुः षडङ्गोऽग्निको बभ्रुः कषायः कलुषः पारावतो हस्ताभरणश्चित्रक एणीपद इति॥ राजिमन्तस्तु। पुण्डरीको राजिचित्रोऽङ्गुलराजिर्बिन्दुराजिः कर्द्दमकस्तृणशोषकः सर्षपकः श्वेतहनुर्दर्भपुष्पश्चक्रको गोधूमकः किक्किसाद इति॥ निर्व्विषास्तु। गलगोली शूकपत्रोऽजगरो दिव्यको वर्षाहिकः पुष्पशकली ज्योतीरथः क्षीरिकापुष्पकोऽन्धाहिकोऽहिपताको गौराहिको वृक्षेशय इति। वैकरञ्जास्तु त्रयाणां दर्व्वीकरादीनां व्यतिकराज्जाताः। तद्यथा। माकुलिः पोटगलः स्निग्धराजिरिति। तत्र कृष्णसर्पेण गोनस्यां वैपरीत्येन वा जातो माकुलिः। राजिलेन गोनस्यां वैपरीत्येन वा जातः पोटगलः। कृष्णसर्पेण राजिमत्यां वैपरीत्येन वा जातः स्निग्धराजिरिति। तेषामाद्यस्य पितृवद्विषोत्कर्षो द्वयोर्मातृवदित्येके। त्रयाणां वैकरञ्जानां पुनर्दिव्येलकरोध्रपुष्पकराजिचित्रकाः पोटगलः पुष्पाभिकीर्णो दर्भपुष्पो वेल्लितकः सप्त तेषामाद्यास्त्रयो राजिलवत् शेषा मण्डलिवत्। एवमेतेषां सर्पाणामशीतिरिति। तत्र महानेत्रजिह्वास्यशिरसः पुमांसः, सूक्ष्मनेत्रजिह्वास्यशिरसः स्त्रियः। उभयलक्षणा मन्दविषा अक्रोधा नपुंसका" इति। तेषां

बहूनि पुराणे नामान्युक्तानि तेषां प्राधान्यतो भारते कतिचिदुक्तानि "बहुत्वान्नामधेयानि पन्नगानां तपोधन!। न कीर्त्तयिष्ये सर्वेषां प्राधान्येन तु मे शृणु। शेषः प्रथमतो जातो वासुकिस्तदनन्तरम्। ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ। कालियो मणिनागश्च नागश्चापूरणस्तथा। नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः। नीलानीलौ तथा नागौ कल्माषशवलौ तथा। आर्य्यकश्चोग्रकश्चैव नागः कलशपोतकः। सुरामुखो दधिमुखस्तथा विमलपिण्डकः। आप्तः करोटकश्चैव शङ्खो वालिशिखस्तथा। निष्टानको हेमगुहो नहुषः पिङ्गलस्तथा। बाह्यकर्णो हस्तिपदस्तथा मुद्गरपिण्डकः। कम्बलाश्वतरौ चापि नागः कालीयकस्तथा। वृत्तसंवर्त्तकौ नागौ द्वौ च पद्माविति श्रुतौ। नागः शङ्खमुखश्चैव तथा कुष्माण्डकोऽपरः। क्षेमकश्च तथा नागो नागः पिण्डारकस्तथा। करवीरः पुष्पदंष्ट्रो विल्वको विल्वपाण्डुरः। मूषकादः शङ्खशिराः पूर्णभद्रो हरिद्रकः। अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा। कौरव्यो धृतराष्ट्रश्च शङ्खपिण्डश्च वीर्य्यवान्। विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्य्यवान्। हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः। कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः। कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा। कर्द्दमश्च महानागो नागश्च बहुमूलकः। कर्कराकर्करौ नागौ कुण्डोदरमहोदरौ। एते प्राधान्यतो नागाः कीर्त्तिता द्विजसत्तम!। बहुत्वान्नामधेयानामितरे नानुकीर्त्तिताः। एतेषां प्रसवो यश्च प्रसवस्य च सन्ततिः। असंख्येयेति मत्वा तान् न ब्रवीमि तपोधन!। बहूनीह सहस्राणि प्रयुतान्यर्बुदानि। च। अशक्यान्येव संख्यातुं पन्नगानां तपोधन!" भा॰आ॰ ३५ अ॰। "अहिपरिकरभाजो भास्वरैरङ्गरागैः" माघः। "महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते" "न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम्" "लूताहिशरटानाञ्च तिरश्चां चाम्बुचारिणामिति" च मनुः। २सूर्य्ये, इन् ४राहौ, ५पथिके, अह-व्याप्तौ इन्। ६वृत्रासुरे तस्य सर्व्वलोकव्यापकत्वात्तन्नामकत्वम् स च विश्वरूपपितुस्त्वष्टुःसुतः तदुत्पत्तिकथा भाग॰ ६स्क॰ ९अ॰ "हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे। इन्द्रशत्रो! विवर्द्धस्व मा चिरं जहि विद्विषम्। अथान्वाहार्य्यपचनादुत्थितो घोरदर्शनः। कृतान्त इव लोकानां युगान्तसमये यथा। विष्वग्विवर्द्धमानं तमिषुमात्रं दिने दिने। दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्च्चसम्॥ तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम्। देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी॥ नृत्यन्तमुन्नदन्तञ्च चालयन्तं पदा महीम्। दरीगम्भीरवक्त्रेण पिबता च नभस्तलम्॥ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम्। महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः। वित्रस्ता दुद्रुवुर्लोकावीक्ष्य सर्व्वे दिशोदिश॥ येनावृता इमे लोकास्तपसा त्वाष्ट्रमूर्त्तिना। सवृत्र इति प्रोक्तः पापः परमदारुणः"॥ ७खले, ८वञ्चके, ९सर्पस्वामिके अश्लेषानक्षत्रे च। "रुद्रगणस्त्वोद्योऽहि रुद्रेन्द्रयुक्" ज्यो॰। "हृतं धनुःखण्डमिवाहिविद्विषः" किरा॰। "अहिपक्षद्रवता निशम्यताम्" माघः। १०आहन्तरि त्रि॰ "अहिरसि बुध्न्यः" ताण्ड्य॰। "अहिराहन्तारिप्रभृतीनाम्" मा॰। अह-व्याप्तौ इन्। ११जले महीव्यापित्वात्तत्त्वम् १२ व्यापके १३व्याप्ते च त्रि॰। १४द्यावापृथिव्योः द्वि॰व॰ १५पृथिव्यां १६स्त्रीगव्याञ्च स्त्री वा ङीप् नागनामत्वात् तज्जातत्वाच्च १७सीसे धातौ। तस्योत्पत्त्यादिकम् भावप्र॰ "दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु व्यमोचयत्" वीर्य्यं जातस्ततो नागः सर्व्वरोगापहोत्तमम्" सीसं वङ्गं तथा वङ्गं योगेष्टं नागनामकम् (नागोभुजगः) सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम्। नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवनमातनोति। वह्निं प्रदीपयति कामबलं करोति मृत्युं च नाशयति सन्ततसेवितः सः। पाकेन हीनौ किल वङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टम्। पाण्डुप्रमेहानिलमाद्यशोथभगन्दरादीन् कुरुतः प्रभक्तौ" तस्य पाकविधिमाह तत्रैव। ताम्बूलरससंपिष्टशिलालेपात् पुनः पुनः। द्वात्रिंशद्भिः पुटैर्नागो निरुत्थं भस्म जायते। (शिला मनःशिला) अन्यच्च। "अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निक्षिपेत्। तत्पात्रे विद्रुतो नागो लौहदर्व्या प्रचालितः। यामैकेन भवेद्भस्म तत्तुल्या स्यान्मनःशिला। काञ्जिकेन द्वयं दत्त्वा पचेत् दृढपुटेन तम्। स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च। पुनः पचेत् समेताभ्यामेवं षष्टिपुटैर्मृतिः"।

**अहिंसक** त्रि॰ न हिनस्ति हिन्स-ण्वुल् न॰त॰। हिंसारहिते

**अहिंसा** स्त्री हिन्स-अङ् न॰त॰। १वाङ्मनःकायैः परपीड़ाभावे, २प्राणिपीड़ानिवृत्तौ, ३अशास्त्रीयप्राणिपीड़नाभावे च "अहिंसापरमो धर्म्म" इति स्मृतिः। "या वेद विहिता हिंसा नियतास्मिंश्चराचरे। अहिंसामेव तां विद्यात् वेदाद्धर्मो हि निर्बभौ" मनुना वैधहिंसायां दोषाभावउक्तः एतच्च मीमांसकादिनये सांख्यनये तु

शास्त्रीयहिंसायामपि दोषः यथोक्तं सां॰का॰ । "दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः" । अविशुद्धिर्हिंसादोषसंसर्गः यथा च वैधहिंसायां दोषसंसर्गस्तथोक्तमशुद्धिशब्दे ४७६ पृष्ठे। एतस्याश्च भावरूपत्वं गीतायामुक्तम् "बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः । अहिंसा समता तुष्टिः" इत्युपक्रम्य "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" । इयञ्च साधारणधर्म्मः । "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । एतत् सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः" इति मनूक्तेः "क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः । अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया, आर्जवं ह्रीरलोभश्च देवब्राह्मणपूजनम् । अनभ्यसूया च तथा धर्म्मः सामान्य उच्यते" विष्णूक्तेः "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं शमो दया क्षान्तिः सर्वेषां धर्म्मसाधनमिति" याज्ञ॰उक्तेश्च "सर्वेषां पुरुषाणां ब्राह्मणाद्याचण्डालान्तं धर्म्मसाधनमिति" "साधारणधर्मश्चाहिंसादिः" "न हिंस्यात् सर्वाभूतानीति" श्रुत्युक्तः आचाण्डालं साधारणधर्मः" मिता॰। इयञ्च "अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः" पात॰उक्तो यम भेदः, "अहिंसा नाम मनोवाक्कायैः सर्वदा सर्वभूतानामपीड़नं सा परमः शुद्धो धर्मः "अहिंसा परमोधर्म" इत्युक्तेः अन्ये सत्यादय एतस्या एव शुद्धार्थाः तथा चोक्तं "स खल्वयं ब्राह्मणो यथा यथा तानि व्रतानि समादित्सति तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोतीति" वृत्तिः । तस्याश्च कथंकर्त्तव्यता तदपि "वितर्कबाधने प्रतिपक्षभावनम्" पात॰सू॰ दर्शितम् "एतेषां यमनियमानां वितर्कैर्हिंसादिसंकल्पैः ह्यनिष्टत्त्येनमसत्यं वदिष्यामि परस्वमादास्ये इत्यादिभिः बाधने प्राप्ते सति यमपरो ब्राह्मणः प्रतिपक्षभावनं कुर्य्यात् घोरेषु संसाराङ्गारेषु पच्यमानेन येन मया शरणमुपगतः सर्वभूताभयप्रदानेन यमादिधर्म्मः स खल्वहं त्यक्त्वा हिंसादीन् पुनस्तानाददानस्तुल्यः शुना । यथा श्वा वान्ताशी तथा त्यक्तस्य पुनरादाने इति वितर्क प्रतिपक्षान् भावयेदित्यर्थः" वृत्तिः । वितर्काणां स्वरूपप्रकारकारणावान्तरभेदफलानि पञ्चभिः पदैः क्रमेण वदन् प्रतिपक्षभावनं स्फुटयति । "वितर्काः कृतकारितानुमोदिता लोभक्रोधमोहपूर्ब्बका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्" पात॰सू॰ । "वितर्क्यन्त इति वितर्काहिंसादयः इति स्वरूपोक्तिः । तत्र-हिंसा त्रिप्रकारा स्वयंकृता, कुर्विति कारिता, साधुसाध्वित्यनुमोदिता चेति तत्रैकैका पुनस्त्रिविधा भवति कारणभेदात् मांसादिलोभेन, अपकृतमनेनेति क्रोधेन, धर्मो भविष्यतीति मोहेन च । एवं नवविधा जाता हिंसा । लोभक्रोधमोहा अपि प्रत्येकं त्रिविधा भवन्ति मृदुमध्याधिमात्रत्वेन । तत्पूर्व्वकाहिंसादयोऽपि मृदवोमध्या अधिमात्राश्च भवन्ति । तथा कृतकारितानुमोदिताश्च प्रत्येकं नवधा भवन्तीति हिंसायाः सप्तविंशतिर्भेदा भवन्ति । मृदुमध्याधिमात्रा अपि प्रत्येकं त्रिधा भवन्ति मृदुमृदुर्मध्यमृदुस्तीव्रमृदुः मृदुमध्यो मध्यमध्यस्तीव्रमध्यः मृदुतीव्रोमध्यतीव्रस्तीव्रतीव्रश्चेति एवं लोभो नवविधः एवं क्रोधमोहाविति तत्पूर्व्वकृताहिंसा सप्तविंशतिभेदाभवन्ति तथा कारितानुमोदिता चेत्यमेकाशीतिभेदा हिंसा भवति" वृत्तिः । तेषां फलान्याह दुःखाज्ञानानन्तफला इति । मनुनापि "अनुमन्ता विशसिता नियन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च षड़ेते घातकाः स्मृताः" इत्यनेन अनुमत्यादीनां हिंसासाधनत्वमुक्तम् यममध्येऽहिंसाफलमप्याह पात॰सू॰। "अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः"। अहिंसासिद्धौ सत्यां तस्याऽहिंसकस्य मुनिवर्य्यस्य सन्निधौ स्वभावविरुद्धानामपि अहिनकुलादीनां वैरत्यागः अस्याएव प्रभावात् । अतएव कविभिः अहिंसायमप्रभावादेव शान्ताश्रमः "विरोधिसत्त्वोज्झितपूर्ब्वमत्सरमित्यादि" वर्ण्यते ।

**अहिंसान** त्रि॰ न हिनस्ति हिन्स—शीलार्थे चानश् न॰त॰। हिंसाशीलभिन्ने "धर्म्मणाहिंसानस्य सस्रिरे" ऋ॰५,६४,२ ।

**अहिंस्र** त्रि॰ न हिंस्रः । १हिंसाशीलभिन्ने । "अहिंस्रोदमदानाभ्यां जयेत् स्वर्गं तथा व्रतः" मनुः "हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते । यद्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत्" मनुः । "हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते । ते एव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः" शा॰भा॰ स्मृतिः । (कुलेखाड़ा) २कुलिकवृक्षे पु॰ राजनि॰ ।

**अहिका** स्त्री अहिरिव कायति प्रकाशते दुराक्रमत्वात् । १शाल्मलिवृक्षे शब्दच॰ । २भुवनमले पु॰ ।

**अहिकान्त** पु॰ अहेः कान्तः भक्ष्यत्वात् । वायौ सर्पस्य पवनाशनत्वेन वायोस्तत्कान्तत्वम् ।

**अहिक्षेत्र** पु॰ अहेः क्षेत्रमिव। प्राग्देशवर्त्ति देशभेदे । भा॰व॰ २५२ अ॰ कर्णदिग्विजये । "अवतीर्य्य ततः शैलात् पूर्वां दिशमभिद्रुतः । अङ्गान् वङ्गान् कलिङ्गांश्च" इत्युपक्रम्य

"श्रावस्तीरांश्च वीरांश्च अहिच्छत्रं च वीर्यवान् । पूर्वां दिशं विनिर्जित्य वत्सभूमिं तथाऽगमत्" ।

**अहिगण** पु० १छन्दःशास्त्रप्रसिद्धे पञ्चमात्रात्मके आद्यगुरुके अन्त्यलघुत्रयरूपे सप्तमभेदे । ६त० । २सर्पाणां समूहे ।

**अहिच्छत्र** पु० अहेः फणाकारः छत्रम्छादकः । १मेषशृङ्गीवृक्षे, २नगरीभेदे स्त्री । ३देशभेदे पु० । स च देशः पार्थेन निर्जित्य द्रोणाय दत्तः । "अहिच्छत्रं च विषयं द्रोणः समभिपद्यत । एवं राजन्नहिच्छत्रा पुरी जनपदायुता युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता" भा०आ०प० १३९ अ० । तत्र द्रुपदराज्यं पूर्व्वमासीत् यथोक्तं हरिवंशे २०अ० "अहिच्छत्रं स्वकं राज्यं पित्र्यं प्राप महाद्युतिः । द्रुपदस्य पिता राजन् ! ममैवानुमते तदा । ततोऽभूद्द्रुपदो राजा द्रोणस्तेन निराकृतः । ततोऽर्ज्जुनेन तरसा निर्जित्य द्रुपदं रणे । अहिच्छत्रं सकाम्पिल्यं द्रोणायापवर्ज्जितम् । प्रतिगृह्य ततो द्रोणः उभयं जयतांवरः । काम्पिल्यं द्रुपदायैव प्रायच्छद्विदितं तव" हरि०२०अ० तत्सीमावस्थ भा० आ० प० १३७अ० उक्तः । "माकन्दीमथ गङ्गायास्तीरे जनपदायुताम् । सोऽध्यवात्सीद्दीनमनाः काम्पिल्यञ्च पुरोत्तमम्" । दक्षिणांश्चापि पञ्चालान् यावच्चर्म्मण्वतीं नदीम् । द्रोणेन चैवं द्रुपदं परिभूयाथ पालिता" । अहिच्छत्रस्य नामान्तरं प्रत्यग्रथः हेम० । अहिच्छत्रे भवः अण् आहिच्छत्रः । स्त्रियां ङीप् गुरूपोत्तमत्वेऽपि गोत्रार्थभिन्नत्वात् न ष्यङ् आहिच्छत्री" सि०कौ० ।

**अहिजित्** पु० अहिं सर्पं वृत्रासुरं वा जितवान् जि–क्विप् तुक् च । १कृष्णे, २इन्द्रे च । तत्र कृष्णस्य कालियदमनात्तथात्वम् तत्कथा हरि०६८अ० । "कृष्ण कृष्ण ! महाबाहो ! गोपानां नन्दिवर्द्धन ! । दृश्यतामेष वै क्षिप्रं सर्पराजो विषायुधः । इमे नो बान्धवास्तात ! त्वां मत्वा मानुषं विभो ! । परिदेवन्ति करुणं सर्वे मानुषबुद्धयः । तच्छ्रुत्वा रौहिणेयस्य वाक्यं संज्ञासमीरितम् । विक्रीड्याऽऽस्फोटयन् बाहू भित्त्वा तं भोगबन्धनम् । तस्य पद्भ्यां समाक्रम्य भोगराशिं जलोत्थितम् । शिरस्तु कृष्णो जग्राह स्वहस्तेनावनाम्य च । तस्यारुरोह सहसा मध्यमं तन्महच्छिरः । सोऽस्य मूर्द्धि स्थितः कृष्णः ननर्त्त रुचिराङ्गदः । मृद्यमानः स कृष्णेन श्रान्तमूर्द्धा भुजङ्गमः" । इति । इन्द्रस्य वृत्रासुरजयकथा भाग० ६स्कन्धे ८अ० "अथेन्द्रो वज्रमुद्यम्य निर्म्मितं विश्वकर्म्मणा । मुनेः शक्तिभिरुत्सिक्तं भगवत्तेजसान्वितम्" इत्युपक्रम्य इन्द्रवृत्रासुरयुद्धं वर्णयित्वा "भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः उच्चकर्त्त शिरः शत्रोर्गिरिशृङ्गमिवौजसा" इत्युक्तम् । [जिह्वाख्यलतायाम् ।

**अहिजिह्वा** स्त्री अहेर्जिह्वेव तदाकारशिखत्वात् । नाग-

**अहिण्डुका** स्त्री हिण्ड–ण्वुल् न०त० । सुश्रुतोक्ते कीटभेदे कीटशब्दे विवृतिः "अहिण्डुकाभिर्दष्टे तोददाहकण्डूश्वयथवो मोहश्च" । "अहिण्डुकाभिर्दष्टानामापदो विषनाशनम्" इति च सुश्रुतः ।

**अहित** पु० न०त० । १शत्रौ । २पथ्यभिन्ने त्रि० । सुश्रुतोक्तानि अहितानि अपथ्यशब्दे २२६ पृष्ठे उक्तानि "अहिताननिलोद्धूतैस्तर्ज्जयन्निव केतुभिः" रघुः "रामनाम इति तुल्यनामजे वर्त्तमानमहिते च दारुणे" रघुः "निन्दन्तस्तव सामर्थ्यं वदिष्यन्ति तवाहिताः" गीता । "चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् । अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत" मनुः । "अहितो देहजोऽप्याधिर्हितमारण्यमौषधम्" ।

**अ(आ)हितुण्डिक** पु० अहेस्तुण्डं मुखं तेन दीव्यति ठन् ठञ् वा । १व्यालग्राहिणि, २सर्पखेलके च ।

**अहिद्विष्** पु० अहिं सर्पं वृत्रासुरं वा द्विष्टवान् द्विष–भूते क्विप् । १गरुडे, २मयूरे, ३नकुले, ४इन्द्रे गरुडमयूरनकुलानां स्वभावसिद्धं तथात्वम् इन्द्रस्य वृत्रासुरहेतुत्वमहिजिच्छब्दे उक्तम् "अहिद्विषस्तद्वता नियम्यताम्" माघः । क । अहिद्विषोऽप्युक्तार्थेषु । [स्वभावसिद्धे वैरे ।

**अहिनकुलिका** स्त्री अहिनकुलयोर्वैरम् वुन् । सर्पनकुलयोः

**अहिनिर्मोक** पु० अहिना निर्मुच्यते निर्+मुच–कर्म्मणि घञ् ६त० । सर्पकञ्चुके (खोलस) इति ख्याते ।

**अहिनिर्लयनी** स्त्री अहिर्निर्लीयतेऽस्याम् निर्+ली–ल्युट् ङीप् । (खोलस) इति ख्याते सर्पनिर्मोके । "तद्यथाऽहिनिर्लयनी वल्मीके मृता प्रत्यस्ता शेते" वृ०उ० ।

**अहिपताक** पु० अहिषु पताका तदाकारोऽस्त्यस्य अच् । सर्पभेदे अहिशब्दे ५८१ पृष्ठे सुश्रुतोक्तवाक्ये दृश्यः ।

**अहिपति** पु० ६त० । वासुकिनागे । अहिनाथादयोऽप्यत्र ।

**अहिपुत्रक** पु० अहेः पुत्रः इव कायति प्रकाशते कै–क । सर्पाकारे नौकाविशेषे (छिप्) ।

**अहिपूतन** न० सुश्रुतोक्ते क्षुद्ररोगभेदे यथा "समासेन चतुस्त्रिंशत् क्षुद्ररोगा भवन्ति" इत्युपक्रम्य "निरुद्धगुदोऽहिपूतनं वृषणकच्छूर्गुदभ्रंशश्चेति" तान् गणयित्वा" "शकृन्मूत्र-

समायुक्तो ऽधीतेऽपाने शिशोर्भवेत् । खिद्यस्याकाम्यमानस्य कण्डूरक्तकफोद्भवा । कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते । एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम्" इति तस्य लक्षणाद्युक्तम् । अस्य स्त्रीत्वमपि ॥ "धात्र्याः स्तन्यं शोधयित्वा बाले साध्याहिपूतना" । "पटोलपत्रत्रिफला-रसाञ्जनविपाचितम् । पीतं घृतं नाशयति कच्छ्रामप्यहिपूत-नाम्" "चिकित्सन् शुष्ककच्छ्वाद्यप्यहिपूतनपानवत्" सुश्रु० ।

**अहिफेन** पु० अहेः फेनः गरलमिव तीक्ष्णगुणत्वात् । (आफिङ्) इति ख्याते १वृक्षनिर्यासभेदे । ६त० २सर्पलालायाञ्च ।

**अहि(बु)बुध्न** पु० अहेरिव बुध्नो मूलं यस्य । १रुद्रभेदे,२तद्देव-ताके २उत्तरभाद्रपदनक्षत्रे ३मुहूर्त्तभेदे च । पृ० अहिर्बु-(र्बु)ध्नोऽहि(र्बु)बुध्न्योऽप्यत्र । तत्स्वरूपं ध्यानशब्दे वक्ष्यते । "अजैकपादहिर्बुध्नः विरूपाक्षश्च रैवतः" विष्णुध० । मुहूर्त्तभेदश्च अहःशब्दे ५७६ पृष्ठे उक्तः तन्नक्षत्रस्य तद्देव-ताकत्वञ्च नक्षत्रशब्दे ४६८ पृष्ठे उक्तम् ।

**अहिभय** न० अहेः, स्वरूपत्वात् आहताकारत्वाच्च अहि-तुल्यात् स्वपक्षात् भयम् । राज्ञां स्वपक्षजनिते १भये ६त०।२सर्पभये च। [भयनाशिकायाम् भूम्यामलक्याम् ।

**अहिभयदा** स्त्री अहिभयं द्यति खण्डयति दो-क । सर्प

**अहिभानु** पु० अहिर्व्याप्तो भानुर्द्युतिरस्य । स्वर्गगतिहेतौ वायौ प्रवाहानिलेनैव स्वर्गं गतेर्ज्योतिषोक्तेस्तथात्वम् । "मरुतो अहिभानवः" ऋ० १,१७२,१ ।

**अहिभुज्** पु० अहिं भुङ्क्ते क्विप् ।१गरुड़े, २मयूरे, ३नकुले च

**अहिभृत्** पु० अहिमाभूषणतया बिभर्त्ति भृ—क्विप् । १शिवे

**अहिम** न० विरोधे न०त० । १उष्णस्पर्शे २तद्वति त्रि० ।

**अहिमद्युति** पु० अहिमा उष्णा द्युतिरस्य । १सूर्य्ये २अर्क-वृक्षे च अहिमकरादयोऽप्यत्र ।

**अहिमन्यु** त्रि० अहिरिव हिंस्रोमन्युरस्य । १हननशीले २अहितस्याहिंस्रक्रोधे च "शवसाऽहिमन्यवः" ऋ० १, ६४,८ । ६त० । ३सर्पक्रोधे च । [कुलीनामलतायाम् ।

**अहिमर्द्दनी** स्त्री अहिर्मर्द्द्यतेऽनया मृद—ल्युट् । गन्धना-

**अहिमाय** त्रि० अहेरिव कुटिला मायाऽस्य । वृत्रासुरादौ "इन्द्रस्तैरहिमायान् अभि द्यून्" ऋ० १,१६०,४ ।

**अहिमार** पु० अहिं मारयति मृ—णिच्—अण् । १अरिमेदक-वृक्षे सर्पमारके २गरुड़े ३मयूरे ४वृत्रासुरनाशके इन्द्रे च । [अरिमेदवृक्षे ।

**अहिमेद(क)** पु० अहिराहन्ताऽरिरिव मेदोऽस्य वा कप् ।

**अहिरिपु** पु० ६त० । १गरुड़े २मयूरे ३नकुले ४कृष्णे च ५इन्द्रजितौ इन्द्रे च । अहिजिच्छब्दे विवृतिः ।

**अहिलता** स्त्री अहिलोकस्य पातालस्य लता शाक०त० अहिरिव लता वा दीर्घाकारत्वात् । १ताम्बूल्याम् २अहि-हेड्ग्नी लता शा०त० । ३गन्धनाकुल्याम् ।

**अहिविद्विष्** पु० ६त० । १गरुड़े २मयूरे ३नकुले ४कृष्णे ५गन्धनाकुलीवृक्षे इन्द्रजितौ ६इन्द्रे च "द्रुतं धनुःखण्ड-मिवाहिविद्विषः" किरा० । क । अहिविद्विषोऽप्यत्र ।

**अहिशुष्म** त्रि० अह—व्याप्तौ इन् अहि व्यापि शुष्मं यस्य व्यापकबले । "आकाञ्जम्यादहिशुष्म !" ऋ०५,२२,५ ।

**अहिसक्थ** त्रि० अहिरिव दीर्घं सक्थि यस्य । १सर्पतुल्य-दीर्घसक्थियुक्ते उपचारात् २तदाधारदेशे पु० । तद्देश-स्यादूरभवम् सुवास्त्वा० अण् । आहिसक्थः । तद्देशा-दूरभवे देशादौ त्रि० ।

**अहिहत्य** न० हत्या हननं भावे क्यप् वेदे न० । १वृत्रासुर-हनने "अर्कमहिहत्ये ऊचुः" ऋ० १,६१, । लोके स्त्रीत्वम् । २सर्पहनने स्त्री । [२इन्द्रे च ।

**अहिहन्** पु० अहिं सर्पं वृत्रासुरं वा हतवान् क्विप् । १गरुड़े

**अहीन** पु० अहोभिः साध्यते ख । अह-समूहसाध्ये द्विरा-त्रादियागभेदे । स च ताण्ड्य०ब्रा० भाष्ये षोडश ऋत्विज उपक्रम्य "एतेऽहीनैकाहैर्याजयन्ति" आपस्त०उक्तः "तएते होत्रादिनामका षोड़शर्त्विजोद्विरात्रादिभिरहीन-संज्ञकैरग्निष्टोमादिभिरेकाहसंज्ञकैर्याजयन्ति" भा० "अहीन यजनमशुचिकरमिति" श्रुतिः "अभिचारमहीनस्य त्रिः कृत्वेह विशुध्यति" मनुः । अहीनामिनःस्वामी । २सर्पराजे वासुकौ पु० । न हीनः । ३अन्यूने त्रि० न न महीन महीन पराक्रमम् रघुः "वेदयज्ञैरहीनानां प्रशस्तानां स्वक-र्मसु" मनुः "त्वत्तः सुतमहीनकीर्त्तेः" भा०आ०प० ।

**अहीनगु** पु० सूर्य्यवंश्ये नृपभेदे "अहीनगुर्नाम स गां समग्रा महीनबाहुद्रविणः शशास" रघुः "रामस्य तनयोजज्ञे कुश इत्यभिविश्रुतः । अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चा-त्मजः । निषधस्य नलः पुत्रोनभः पुत्रोनलस्य तु । नभस्य पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः । क्षेमधन्वसुतस्त्वासी-द्देवानीकः प्रतापवान् । आसीदहीनगुर्नाम देवानीकात्मजः प्रभुः । अहीनगोस्तु दायादः सुधन्वा नाम पार्थिवः" । हरि०व०१६अ० ।

**अहीनवादिन्** त्रि० न हीनः वादी । "अन्यवादी क्रिया-द्वेषी नोपस्थाता निरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" इति स्मृत्युक्तहीनभिन्ने वादिनि ।

**अहीमती** स्त्री अहिरस्त्यस्याम् मतुप् शरादि० दीर्घः । नदीभेदे

**अहीर** पु० आभीरस्य पृषो० साधुत्वम् । आभीरे । [उक्तः ।

**अहीरणादि** पु० अरोहणादिगणे पाठान्तरम् स च गणः तच्छब्दे

**अहीरणि** पु० अहीन् ईरयति दूरीकरोति ईर–अनि । द्विमुखसर्पे तद्दर्शनाद्धीतरे सर्पाः पलायन्ते ।

**अहीश्रुव** पु० अहिरिव श्रूयते श्रु–क बा० दीर्घः । शत्रौ “पिप्रुं दासमहीश्रुवम्” ऋ० ८,३२,२ । “अहीश्रुवं शत्रुम्” भा० ।

**अहु** त्रि० अह–व्याप्तौ उन् । व्यापके स्त्रियां ङीप् “पर उर्वीर्वा अन्या उपसदः परोऽह्वीरन्याः” शत० ब्रा० । अंहते आधारे उन् अंहु भगे न० । “यदस्य अंहुभेद्या कृधु” य० २३,२८, “अंहुभगं भेद्यं विदार्य्यं यस्याः” दीपः ।

**अहुत** पु० नास्ति हुतं हवनं यत्र । धर्मसाधनत्वेऽपि अहोमे १वेदपाठे । “अहुतं च हुतञ्चैव तथा प्रहुतमेव च । ब्राह्म्यं हुतं प्राशितञ्च पञ्च यज्ञान् प्रचक्षते” जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः । ब्राह्म्यं हुतं द्विजाग्र्यार्च्चा प्राशितं पितृतर्पणम्” मनुः यस्य हवनं न कृतं तादृशे २हविरादौ त्रि० । “अथ यत् पुराणा नाश्नन्ति यथा अहुतस्य हविषो नाश्नीयात् एवं तस्याहीचितस्य नाश्नीयात्” शत० ब्रा० ।

**अहृणान** त्रि० हृणी–रोषणे कण्ड्वा० ताच्छील्ये चानश् वेदे नि० न० त० । अक्रोधने । “किं मे हव्यमहृणानो जुषेत” ऋ० ७,८६,२ । लोके कचित् वेदे च अहृणीयमानः । “राजाना क्षत्रमहृणीयमाना” ऋ० ५,६२,६ ।

**अहे** अव्य–अह+ए । १क्षेपे, वियोगे च । “अहे राम ! घनश्याम ! चुम्बामि मुखपङ्कजम् । यदि जीवामि शोकेन पुनः पश्यामि ते मुखम्” ।

**अहेड** त्रि० हेड–अनादरे अच् न० त० । अवज्ञाशून्ये

**अहेडमान** त्रि० हेड–शानच् न० त० । आद्रियमाणे अवज्ञाशून्ये “अहेडमानो वरुण” ऋ० १,२४,११ ।

**अहेतु** पु० न० त० । १हेतुभिन्ने न० ब० । २हेतुशून्ये त्रि० वा कप् अहेतुकोऽप्युक्तार्थे । हेतुः कारणशब्देऽस्य च । कारणञ्च कार्य्याव्यवहितक्षणे कार्य्याधिकरणे स्थितिशाली यथा घटादिकं प्रति मृत्तिकादि कटकादिकं सुवर्णादि । तयोस्तदधिकरणे तत्पूर्व्वं स्थितत्वात् तथात्वम् । कारणताग्राहकौ च अन्वयव्यतिरेकौ । मतभेदे तद्ग्राहकाणि कारणशब्दे वक्ष्यन्ते

**अहेरु** पु० न हिनोति हि–रु न० त० । शतमूल्याम् ।

**अहेतुक** त्रि० हेतुत आगतम् ठञ् न० त० । १हेतुतोऽप्राप्ते २उद्दिश्यान्तराभावतयाऽकृते । ३उपपत्तिशून्ये च । “यत्तु कृत्स्नवदेकस्मिन् कार्य्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पञ्च तत्तामसमुदाहृतम्” गीता ।

**अहो** अव्य० न+हा–डो । १शोके, २धिगर्थे, ३विषादे, ४दयायां, ५सम्बोधने, ६विस्मये, ७प्रशंसायाम्, ८वितर्के, ९असूयायाञ्च “अहो महत्त्वं महतामपूर्व्वम्” नीतिः “कुसुमधनुषोमन्दिरमहो” श्यामाकवः । “अहो अहोभिर्महिमाहिमागमे” नैष० ।

**अहोरात्र** पु० अहश्च रात्रिश्च टच् समा० । सूर्य्योदयद्वयमध्यवर्त्तिकाले षष्टिदण्डात्मके मानुषे दिने पित्र्यादाहोरात्रमानन्तु–अहन्शब्दे ५७६पृष्ठे उक्तम् । त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रस्तु तावतः । अहोरात्रे विभजते सूर्य्यो मानुषदैविके” मनुः । “रात्राह्नाहाः पुंसि” पा० उक्तेः पुंस्त्वेऽपि आर्षत्वात् क्लीवम् “रात्रिञ्च तावतीमेव तेऽहोरात्रविदो विदुः” मनुः । [दिवसे गेये रथन्तरनामकसामभेदे ।

**अहोरथन्तर** न० अह्नि गेयं रथन्तरम् सामभेदः न रो रः ।

**अहोरूप** न० अह्नो रूपम् न रो रः । दिवसरूपे ।

**अहोवत** अव्य० अहो च वत च द्व० । १खेदे, २सम्बोधने ३अनुकम्पायाञ्च । “अहोवत महत् कष्टम्” गणरत्न० “अहोवत महत् पापम्” गीता “अहोवतासि स्पृहणीयवीर्य्यः” कुमा०

**अह्नवाय्य** त्रि० ह्नु–बा० आय्य न० त० । निह्नवाकर्त्तरि । “सत्यं तत् तुर्वशे यदौ विदानो अह्नवाय्यम्” ऋ० ८,४५,२७

**अह्नाय** अव्य० ह्नु–घञ् वृद्धिः पृषो० वस्य यत्वं न० त० । शैघ्र्ये । “अह्नाय सा नियमजं क्लममुत्ससर्ज” कुमा० “अह्नाय तावदरुणेन तमो निरस्तम्” रघुः स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा–मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः” का० प्रा० ।

**अह्रयु** त्रि० अह्रिमाहन्तारं शत्रुमयति अय–उ । शत्रुं प्रति आभिमुख्येन गन्तरि “अह्रयूणां चिद्रयां अविद्याम्” ऋ० २।३८।३ ।

**अह्रय** त्रि० न जिह्रेति ह्री–अच् न० त० । निर्लज्जे “ईशीमहे अह्रयं वाजमग्मियम्” ऋ० ३,२,४, ।

**अह्रयाण** त्रि० ह्री–बा० शानच् न० त० । निर्लज्जे “अस्य एति युवतिरह्रयाणा” ऋ० ७,८०,२ । [ऋ० ९,५४,१ ।

**अह्रि** पु० हृ–क्रि न० त० । कवौ । “शुक्रं दुदुह्रे अह्रयः”

**अह्रुत** त्रि० ह्रु–क्त न० त० पृ० । अकुटिले “सुमेनमह्रुत इमा गिरः” ऋ० ८,२४,६ ।

**अह्रीक** पु० नास्ति ह्रीर्यस्य । १क्षपणके तस्य दिगम्बरत्वेन लज्जाहीनत्वात्तथात्वम् २निर्लज्जे त्रि० ।

**अह्वल** त्रि॰ न ह्वलति चलति ह्वल–अच् न॰त॰ १भल्लातके। २विह्वलभिन्ने त्रि॰।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये बृहदभिधाने अकारादिशब्दसमूहः समाप्तः।

# आ

**आ** अव्य॰ आप–क्विप् पृ॰ पलोपः। १वाक्ये (वाक्यस्यान्यथात्वद्योतने पूर्व्वमेवममंस्था इदानीमेवमिति प्रतिपादने) २स्मृतौ (आ एवं मन्यसे इति स्मृतस्यान्यथा प्रतिपादने) ३अनुकम्पायाम्। ४समुच्चये, ५अङ्गीकारे, ६ईषदर्थे ७क्रियायोगे, ८सीमायां ९व्याप्तौ च। वाक्यस्मृतिभिन्नेऽस्य ङित्त्वमिच्छन्ति अङितोऽस्य एकाजन्निपातत्वात् प्रगृह्यसंज्ञा ङितस्तु न। अतएवोक्तम् "मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः। य आकारः स ङित् प्रोक्तः वाक्यस्मरणयोरङित्" तत्र सीमायाम् आ–आत्मबोधात् आत्मबोधात् "लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्"। व्याप्तौ ब्रह्माप्यासकलात्। सकलं व्याप्येत्यर्थः। एतदर्थे विकल्पेन अव्ययीभावः। आत्मबोधम्। आसकलम्। धातुयोगे उपसर्गः। यथा आगच्छत् ग्रामात्। ईषदर्थे आकम्पः आकेकरः। वाक्यस्य वाक्यार्थद्योतकता। स्मरणं प्रमाणान्तरावगतस्य नतु शब्दमात्रेणावगतस्येति तयोर्भेदः।

**आकन** पु॰ आ+कन–अच्। ऋषिभेदे कर्ण्वा॰ फिञ्। आकनायनिः तदपत्ये आनक इति वा पाठः।

**आकम्प** पु॰ आ+ईषदर्थे कपि–घञ्। ईषत्कम्पे।

**आकम्पन** त्रि॰ आकम्पते आ+कपि–युच्। १ईषत्कम्पनशीले। २भावे ल्युट्। ईषत्कम्पे न॰। आ+कपि–णिच्–ल्यु। ३ईषच्चालके त्रि॰। ततएव भावे ल्युट्। ४ईषच्चालने न॰।

**आकम्पित** त्रि॰ आ+कपि–कर्त्तरि क्त। १ईषत्कम्पिते "अनोकहाकम्पितपुष्पगन्धी" रघुः। भावे क्त। २ईषत्कम्पने न॰। णिच्–कर्म्मणि क्त। ३ईषच्चालिते त्रि॰।

**आकत्य** न॰ न कतः स्वच्छताकारी अकतस्तस्य भावः ष्यञ्। अस्वच्छन्दकारित्वे। "न नञ्पूर्व्वात्तत्पुरुषादित्यादि" पा॰ सूत्रे तस्य पर्य्युदासात् तत्पुरुष एव ष्यञ्। बहुव्रीहौ तु तलादि। अकतता अकतत्वम्।

**आकम्प्र** त्रि॰ आ+कपि–र। ईषत्कम्पशीले।

**आकर** पु॰ आकुर्व्वन्ति संभूय कुर्व्वन्ति व्यवहारमत्र आ+कृ–घः। १समूहे "शब्दाकरकरग्राममर्थमखण्डलमण्डलम्" कविकल्पद्रु॰ "बभूव वज्राकरभूषणायाः रघुः"। २श्रेष्ठे च। आकीर्य्यन्ते धातवोऽत्र कॄ–अप्। ३रत्नाद्युत्पत्तिस्थाने "आकरे पद्मरागाणां जन्म काचमणेः कुतः" हितो॰ "शुचीनाकरकर्म्मान्ते भीरूनन्तर्निवेशने" "आयव्ययौ च नियतावाकरान् कोषमेव च" "सर्व्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम्" मनुः। "दिलीपसूनुर्मणिराकरोद्भवः" रघुः। ४स्थानमात्रे च कमलाकरः पद्माकरइत्यादि। "हरिदश्वः कमलाकरानिव" रघुः "शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान्" रामा॰। "आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदां सहवासः" नैष॰।

**आकरिक** त्रि॰ आकरे नियुक्तः ठञ्। स्वर्णाद्युत्पत्तिस्थानेषु राज्ञा नियुक्ते तत्र हि नियुक्तस्य लोभाधिक्येन पापसम्भवात् तत्राधिकारस्य मनुना उपपातकमध्ये परिगणना कृता। "सर्व्वाकरेष्वधीकार इति"।

**आकरिन्** त्रि॰ आकरः उत्पत्तिस्थानं प्राशस्त्येनास्त्यस्य इनि स्त्रियां ङीप्। प्रशस्ताकरजाते। "दधतमाकरिभिः करिभिः क्षतैः" किरा॰।

**आकर्णं** अव्य॰ कर्णपर्य्यन्तम् अव्य॰। कर्णपर्य्यन्ते "आकर्णमुल्लसितमस्य विकाशिकाशम्" माघः।

**आकर्णन** न॰ आ+कर्ण–ल्युट्। श्रवणे "सदा तदाकर्णन तत्पराभूत्" नैष॰।

**आकर्ष** पु॰ आकृष्यते विषयान्तरतोऽनेन आ+कृष–घञ्। १पाशके, २शारिफलके, ३द्यूते, ४इन्द्रिये धन्विनो ५धनुरभ्यासे च। भावे घञ्। ६आकर्षणे। आधारे घञ्। ७निकषे उपले। खलादिगतं धान्यमाकृष्यतेऽनेन करणे घञ्। अङ्कुशाकारे (आकुड़ा) इति ख्याते ८काष्ठभेदे। "आकर्षः स्वेव आकर्षस्थः" सि॰कौ॰। आकर्षति कर्त्तरि अच्। ९आकर्षके त्रि॰। "मध्विवाकर्षैः कृमैः" कात्या॰ १२,३,२०। "मध्वाकर्षैः कुम्भैः" कर्क॰ "आकर्षकोऽवाक्फलः सुप्रणीतोहृदि सोढोमन्त्रपदः समाधिः" भा॰ स॰ ६अ॰ आकर्षकः हृदयाकर्षकः समाधिः चिन्तनम् अवाक्फलः नीचफलः। आकर्षै (र्षे) ण चरति ठक् आकर्षिकः। आकर्षचारिणि त्रि॰ स्त्रियां ङीप्।

आकर्षक पु० आकर्षति सन्निकृष्टस्थं लौहं आ+कृष-ण्वुल्। (चुम्बक) इति ख्याते १अयस्कान्ते। २आकर्षणकर्त्तरि त्रि०। आकर्षे नियुक्तः आकर्षादि० कन्। आकर्षनियुक्ते "आकषः निकषोपल इति रेफरहितः पाठः युक्तः" सि०कौ०।

आकर्षण न० आ+कृष-ल्युट्। अन्यत्र स्थितस्य वस्तुनः १बलेन अन्यत्र नयने "योषिदाकर्षणे चैव विनियोगः प्रकीर्त्तितः" तन्त्रम्। आकृष्यतेऽनेन करणे ल्युट्। २आकर्षणसाधने तन्त्रोक्ते षट्कर्मान्तर्गते विधानभेदे च। यथा "अथाकर्षणविधानानि कथयामि समासतः। यदुक्तं त्रैपुरे तन्त्रे यच्चोक्तं भूतडामरे। श्रीबीजं मान्मथं बीजं लज्जाबीजं समुद्धरेत्। प्रथमं प्रणवं दत्त्वा त्रिपुरादेविपदन्ततः। अमुकीति पदं द्वन्द्वमाकर्षयेति द्विधा पदम्। स्वाहान्तं मन्त्रमुद्धृत्य जपेद्दशसहस्रकम्। षट्कोणञ्च समालिख्य रक्तचन्दनकुङ्कुमैः। षड्ङ्कारयेन्मन्त्री लज्जाबीजसमन्वितम्। षड्दीर्घभाक्स्वरैश्चैव नादबिन्दुविभूषितम्। रक्तपुष्पाक्षतधूपनैवेद्यैः परिपूज्य ताम्। भावयेच्चेतसा देवीं त्रिनेत्रां चन्द्रशेखराम्। बालार्ककिरणप्रख्यां सिन्दूरारुणविग्रहाम्। पद्मञ्च दक्षिणे पाणौ जपमालाञ्च वामके। मन्त्रस्यास्य प्रसादेन रम्भामपि तथोर्वशीम्। आकर्षयेन्न सन्देहः किं पुनर्मानुषीमिह। भूर्जपत्रे समालिख्य कुङ्कुमालक्तवारिणा। काश्मीरागुरुकस्तूरीरोचनामिलितेन च। अनामारक्तमिश्रेण कामलाक्षीमनुं जपेत्। (ओं श्रीं कामलाक्षि अमुकीमाकर्षय आकर्षय हुँ फट्)। इमं मन्त्रं जपेदादौ सहस्रैकं जपेत् पुनः। भूर्जपत्रं समादाय गुलिकां कारयेत् सुधीः। तेनैव साध्यपादोत्थमृत्तिकापङ्कवेष्टितम्। शोषितं तेजसा भानोर्वेष्टयेत् कटुभिस्त्रिभिः। प्रतिमां स्त्रीनिभां कृत्वा तस्यां क्षिपेत्तथोदरे। गुलिकां पातयेत् पात्रे प्रतिमां साध्यरूपिणीम्। तापयाभिमुखो भूत्वा निर्जने निशि साधकः। यावद्गच्छति चित्तञ्च तावद्रूपं जपेन्मनुम्। यावदायाति संत्रस्ता मदनानलविह्वला" तन्त्रसा०। तत्र होमसाधनद्रव्यमुक्तं तत्रैव। "आकर्षणे तथा क्षौद्रं सतिलं मधुरान्वितम्"।

आकर्षणी स्त्री आकृष्यतेऽनया आ+कृष-ल्युट् टित्त्वात् ङीप्। उच्चस्थपुष्पाद्याहरणार्थे (आङ्शि) १यष्टिकाभेदे। २मुद्राभेदे च मुद्राशब्दे विवरणम्।

आकर्षा(षा)दि पु० पाणिन्युक्ते कन् प्रत्ययनिमित्ते शब्दगणभेदे आक(ष)र्ष, त्सरु, पिशाच, पिचण्ड, अशनि, अश्मन्, चय, निचय, विजय, जय, आचय, नय, पाद, दीप, ह्रद, ह्राद, ह्लाद, गद्गद, शकुनि "आकर्षा(षा)दिभ्यः कन्" पा०।

आकर्षिन् त्रि० आ+कृष-णिनि। आकर्षकारके स्त्रियां ङीप्। समपूर्व्वात् त। दूरगामिनि गन्धे। स हि दूरादेव नासिकां प्राप्य घ्रातपुरुषं स्वग्रहणायानुकूलयन् समाकर्षतीवेति तस्य तथात्वम्।

आकलन न० आ+कल-ल्युट्। १आकाङ्क्षायाम्, २ग्रहणे ३संग्रहे ४गणने ५अनुसन्धाने च "सैव्यापि सानुनयमाकलनाय यन्त्रा" माघः।

आकलित त्रि० आ+कल-क्त। १अनुस्मृते २गणिते च। "प्रहितभुजाऽऽकलितस्तनेन निन्ये"। "कुचस्थलाकलिताधराम्बराम्" इति च माघः।

आकल्प पु० आ+कृप-णिच्-घञ्। १वेशरचनायाम्, २भूषणे च "रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्" शिवध्यानम्। "आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधकाः" "अनतकविधिसर्व्वाङ्गीणमाकल्पजातम्" रघुः। ३कल्पपर्य्यन्ते अव्य०। "आकल्पं नरकं भुङ्क्ते" इति स्मृतिः

आकष पु० आकष्यते यत्र कष-अच्। स्वर्णादिकषणसाधने (कोष्टि) प्रस्तरभेदे। आकषे नियुक्तः कन्। आकषकः तत्रनियुक्ते त्रि०। तेन चरति ठक् आकषिकः तेन चारिणि। स्त्रियां ङीप्।

आकस्मिक त्रि० अकस्मादित्यव्ययं कारणाभावे कारणं विना भवः विनया० ठक् टिलोपः। अकस्माद्भवे। स्त्रियां ङीप्। जगत आकस्मिकत्ववादिनश्चार्वाका इत्थमाहुः। अकस्मादेव भवति कार्य्यं न किञ्चिदपेक्ष्यमिति तदेतन्मतम् गौ०सू० उक्तम्। "अनिमित्ततोभावोत्पत्तिः कण्टकतैक्ष्ण्यादिवत्" एतद्व्याख्यानिकायां वृत्तिः। यदि कार्य्याणामाकस्मिकत्वं तदा न परमाण्वादीनामुपादानत्वं न चेश्वरस्य निमित्तत्वमत आकस्मिकत्वनिराकरणाय प्रकरणमारभते तत्र पूर्व्वपक्ष सूत्रम् अनिमित्तत इत्यादि। प्रथमार्थे तसिल्। अनिमित्ता भावोत्पत्तिरित्यर्थः तथा च घटाद्युत्पत्तिर्न कारणनियम्या उत्पत्तित्वात् कण्टकतैक्ष्ण्यमयूरचित्रताद्युत्पत्तिवत् इति सूत्रतात्पर्य्यम्" कुसुमा० हरि० "अकस्मादिति किं हेतुनिषेधपरं वा स्वातिरिक्तहेतुनिषेधपरं पारमार्थिकहेतुनिषेधपरं वा। अलोभयत्वाद्धेतुकत्वमन्त्येऽलीकहेतुकत्वं पर्य्यवस्यति"। तथा च आकस्मिकशब्दस्य ताडयार्थचतुष्टयपरता। "स्वभावा-

दित्यर्थं परं वेत्युक्तेः स्वाभाविकार्थताऽपि तु सर्व्वद०सं० "नन्वदृष्टानिष्टौ जगद्वैचित्र्यमाकस्मिकं स्यादिति चेन्न तद्भद्रं स्वभावादेव तदुपपत्तेः" अतएवोक्तम् "अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः। केनेदं चित्रितं तस्मात् स्वभावादेव तत्स्थितिरिति चार्व्वाकमतम् तस्यायुक्तत्वपरीक्षणं चार्व्वाकशब्दशेषे दृश्यम्।

**आकाङ्क्षा** स्त्री आ+काङ्क्ष—अङ्। १अभिलाषे, न्यायमते २वाक्यार्थज्ञानहेतौ यत्पदं विना यत्पदस्यानन्वयस्तत्पदे तत्पदवत्त्वरूपे, संबन्धे ३ पदान्तरव्यतिरेकेणान्वयाभावे च "यत्पदेन विना यस्यानुभावकता भवेत् आकाङ्क्षा" भाषा० शब्दचिन्तामणौ तु "अथ केयमाकाङ्क्षेत्याशिष्य उच्यते अभिधानापर्य्यवसानमाकाङ्क्षेति" कथयित्वा स्वयमेव तद्विवृतं यथा "यस्य येन विनास्वार्थान्वयाननुभावकत्वं तस्य तदपर्य्यवसानं नाम,विभक्तिधात्वाख्यातक्रियाकारकपदानां परस्परं विना परस्परस्य न स्वार्थान्वयानुभावकत्वम्।परमते नीलोघटोनास्तीति नीलं घटमानयेत्यादौ नामार्थानां कारकाणाञ्च न परस्परमन्वयबोधः। विशेषणान्वितविभक्त्यर्थानन्वयादिति विशिष्टवैशिष्ट्येनैवान्वयः। किन्त्वार्थः समाजः। अस्माकन्तु नीलघटयोरभेदानुभवबलादभेद एव संसर्गः। विशेषणविभक्तिः साधुत्वार्था। यद्वा समानविभक्तिकयोरभेदानुभवबलाद्विशेषणान्वितविभक्तेरभेदार्थकत्वम् अतोविशेषणविशेष्यभावानुभावकत्वं तत्तत्पदयोर्न परस्परं विना। द्वारमित्यध्याहारं विना प्रतियोग्यलाभान्न स्वार्थान्वयानुभावकत्वम् विश्वजिता यजेत"भवेदं कार्य्यमिति प्रवर्त्तकं तात्पर्य्यविषयज्ञानं नाधिकारिणं विनेति तदाकाङ्क्षा। यद्वा कर्त्तुरिवाधिकारिणोऽप्याक्षेपादेव लाभ इति तदन्वयोन शाब्दः किन्त्वानुमानिकः। गौणलाक्षणिकयोरननुभावकत्वपक्षे तदुपस्थापितस्याप्यध्याहृतस्येवेतरपदं विना नानुभावकत्वम् घटः कर्मत्वमानयनं कृतिरित्यादावभेदेन नान्वयबोधोऽयोग्यत्वात् तत्तत्पदेभ्यस्तात्पर्य्यविषयतत्तत्पदार्थस्वरूपज्ञानस्य पदान्तरं विनैव घटमानयतीत्यत्रेव क्रमेण तथान्वयतात्पर्य्येऽपि क्रियाकारकभावेन नान्वयबोधः नामविभक्तिधात्वाख्यातक्रियाकारकपदार्थानामन्वयबोधे तान्येव समर्थानि न तु तदर्थकानि पदान्तराणि अग्निः करणत्वमोदनः कर्म्मता पाकः कृतिरिष्टसाधनता इति पदेभ्योऽग्निनौदनं पचेतेत्यत्रेवान्वयाबोधनात् अग्निकरणकौदनकर्मकपाकविषयकृतिरिष्टसाधनमिति वाक्यं न पदम्। अतएव द्वारमित्यत्र पिधेहीति पदाध्याहारः। क्रियापदार्थस्यान्यत उपस्थितावपि कारकानन्वयात्। असामर्थ्यन्तु स्वभावात्। अनासन्नमप्यासन्नदशायामासत्तिभ्रमेणैवान्वयबोधसमर्थमेव। वह्निना सिञ्चतीत्यत्र क्रियाकारकपदयोरन्वयबोधसामर्थ्येऽप्ययोग्यताज्ञानं प्रतिबन्धकं दाहे समर्थस्याग्नेर्मणिरिव। अतएव योग्यताभ्रमात् प्रतिबन्धकाभावे ततोऽप्यन्वयबोधः। न हि स्वभावतोऽसमर्थमारोपितसामर्थ्यमिह भवति पचतिवेति प्रकृते तु पदार्थस्वरूपज्ञानं न त्वन्वयभ्रमोऽपि। पुरुषपदं विनापि राज्ञ इत्यस्य पुत्रेण समं स्वार्थानुभावकत्वमिति न तदाकाङ्क्षा यद्वा तथात्वं करणेऽजनितान्वयबोधदशायां पुरुषान्वयतात्पर्य्याभावान्नान्वयबोध इत्यपेऽपि तथा। न च पुत्रस्योत्थिताकाङ्क्षत्वात्तेनैवान्वयबोध इति वाच्यं तात्पर्य्यवशात् क्वचित् पुरुषेणैव प्रथममन्वयबोधात् अतएवान्वयबोधसमर्थत्वे सत्यजनिततात्पर्य्यविषयान्वयबोधकत्वमाकाङ्क्षेति केचित्। प्रकृतिप्रत्ययाभ्यामन्वयबोधे जनितेऽपि वाक्यैकवाक्यतावत् क्रियाकारकपदयोरजनितान्वयबोधकत्वमाकाङ्क्षा। नन्वास्तु पदविशेषजन्या पदार्थोपस्थितिः, घटः कर्मत्वमानयनं कृतिरित्येवंविधपदाजन्यपदार्थोपस्थितिर्वाऽऽसत्तिरन्वयबोधाङ्गमित्यासत्त्यभावादेवं विधशब्दान्नान्वयबोधः तथाप्येवंविधपदार्थोपस्थितेनाकाङ्क्षाहेतुत्वेनावश्यमुपेयत्वात् जनितान्वयबोधान्नान्वयान्तरबोधस्तात्पर्य्याभावादित्याकाङ्क्षायाः कारणत्वमेव नास्ति किन्तु स्वजनकोपस्थितेः परिचायकत्वमिति"। अत्र दिङ्मात्रं माथुरी व्याख्या प्रदर्श्यते प्रपञ्चस्तु तत एवावगन्तव्यः। "सिद्धान्तयति अभिधानेति अभिधानपदं करणव्युत्पत्त्या शब्दोच्चारणपरम् अभिधत्ते यतस्तस्यापर्य्यवसानं फलानुत्पादस्तथा च तदुच्चारणजन्यतादृशशाब्दबुद्धौ तदुच्चारणजन्यतादृशशाब्दधीप्रागभाव आकाङ्क्षा इति फलितं तच्च पूर्व्वोक्तरूपेण दुष्टम्। न चाभिधानपदं भावव्युत्पत्त्या शाब्दबोधपरं तस्यापर्य्यवसानम् अभावः तथा च तादृशशाब्दबोधे तादृशशाब्दबोधाभाव आकाङ्क्षा इति फलितमिति वाच्यं घटः कर्मत्वमित्यादावतिव्याप्तेरित्यतः पारिभाषिकमभिधानापर्य्यवसानपदार्थमाह यस्येति। यत् पदेति यत्पदं विनेत्यर्थः। न स्वार्थान्वयानुभावकत्वमिति न यादृशान्वयबोध इत्यर्थः तस्य तदिति तत्पदस्य तत्पदवत्त्वमित्यर्थः। अपर्य्यवसानं तादृशान्वयबोधेऽभिधानापर्य्यवसानं तथा च यत्पदनिष्ठयत् पदव्यतिरेकप्रयुक्तयादृशबुद्ध्यभावः तत्पदस्य तत्पदवत्त्वं तादृशान्वयबुद्धेरभिधानापर्य्यवसानमिति फलितार्थः। पदत्वमत्र शब्दत्वम्।

प्रयुक्तत्वञ्च कारणाभावात् कार्य्याभाव इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः तत्प्रतियोगिजन्यतादृशप्रतियोगिकत्वं तत्प्रयुक्तत्वम्। भवति चाव्यवहितपूर्ब्ववर्त्तितारूपसमभिव्याहारसम्बन्धेन घटपदनिष्ठस्यानुस्वारपदस्य व्यतिरेकप्रयुक्तो घटवत्कर्म्मत्वमिति भेदान्वयबुद्ध्यभाव इति। घटपदस्यानुस्वारपदवत्त्वं तादृशान्वयबोधस्याकाङ्क्षा। एवं विनिगमनाविरहेणाव्यवहितोत्तरवर्त्तितारूपसमभिव्याहारसम्बन्धेनानुस्वारपदनिष्ठस्य घटपदव्यतिरेकप्रयुक्तोऽपि घटवत् कर्म्मत्वमिति भेदान्वयबुद्ध्यभाव इति तादृशशाब्दबोधेऽनुस्वारपदस्य घटपदवत्त्वमपि आकाङ्क्षा। अव्यवहितपूर्ब्ववर्त्तितारूपसमभिव्याहारसम्बन्धेन घटपदस्य कर्म्मत्वपदवत्त्वम्, अव्यवहितोत्तरवर्त्तितारूपसमभिव्याहारसम्बन्धेन कर्म्मत्वपदस्य घटपदवत्त्वञ्च न घटवत् कर्म्मत्वमिति भेदान्वयबोधे आकाङ्क्षा। अव्यवहितपूर्ब्ववर्त्तितारूपसमभिव्याहारसम्बन्धेन घटपदनिष्ठस्य कर्म्मत्वपदस्याव्यवहितोत्तरवर्त्तितारूपसमभिव्याहारसम्बन्धेन कर्म्मत्वपदनिष्ठस्य घटपदस्य च व्यतिरेकयोर्घटवत् कर्म्मत्वमिति भेदान्वयबुद्ध्यभावाप्रयोजकत्वात्। कारणाभावस्यैव कार्य्याभावप्रयोजकत्वात् अव्यवहितपूर्ब्ववर्त्तितासम्बन्धेन घटपदनिष्ठस्य कर्म्मत्वपदस्याव्यवहितोत्तरवर्त्तितासम्बन्धेन कर्म्मत्वपदनिष्ठस्य घटपदस्य भेदान्वयबुद्धावहेतुत्वात्"।

"वेदान्तपरिभाषायान्तु अन्यथोक्तं यथा तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करणश्रवणे इतिकर्त्तव्यतायाश्च जिज्ञासाविषयत्वात्। अजिज्ञासोरपि वाक्यार्थबोधात् योग्यत्वमुपात्तं तदवच्छेदकञ्च क्रियात्वकारकत्वादिकमिति नातिव्याप्तिः। अभेदान्वये च समानविभक्तिकपदप्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः। एतादृशाभिप्रायेणैव बलाबलाधिकरणे "सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन"मित्यत्र वैश्वदेवयागस्यामिक्षान्वितत्वेन न वाजिनाकाङ्क्षेत्यादिव्यवहारः। ननु तत्रापि वाजिनस्य जिज्ञासाविषयत्वेऽपि तद्योग्यत्वमस्त्येव, प्रदेयद्रव्यत्वस्य यागनिरूपितजिज्ञासाविषयतावच्छेदकत्वात् इति चेन्न स्वसमानजातीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य स्वसमानजातीयामिक्षाद्रव्यान्वयबोधसहकृतत्वेन तादृशावच्छेदकत्वाभावात्। आमिक्षायान्तु नैवं, वाजिनान्वयस्य तदानुपस्थानात्। उदाहरणान्तरेष्वपि दुर्ब्बलत्व-प्रयोजकाकाङ्क्षाविरह एवमेव द्रष्टव्यः"। "आकाङ्क्षेयं तनुरुतया नैव गन्तुं समर्थैति" पदाङ्कदूतम् "साकाङ्क्षशब्दैर्यो बोधः पदार्थान्वयगोचरः" इति "योग्यतार्थगताकाङ्क्षा शब्दनिष्ठानुभाविका" इति शब्दशक्ति०। "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा०द० "आकाङ्क्षाप्रतीतिपर्य्यवसानविरहः स च जिज्ञासारूपः" सा०द०।

**आकाङ्क्षित** त्रि० आ+काङ्क्ष–कर्म्मणि क्त। इच्छाविषये।

**आकाङ्क्षिन्** त्रि० आकाङ्क्षति आ+काङ्क्ष–णिनि। इच्छावति "अफलाकाङ्क्षिभिर्यज्ञोविधिदृष्टोय इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्विकः" गीता। स्त्रियां ङीप्। "तं भावार्थप्रसवसमयाकाङ्क्षिणीनां प्रजानाम्" रघुः।

**आकाय** पु० आ+चि-कर्म्मणि घञ् चितौ कुत्वम्। १चीयमानेऽग्नौ "आकायमग्निं चिन्वीत" सि०कौ०उ० २निवासे इति केचित् तत्र कुत्वं चिन्त्यमूलम्।

**आकार** पु० आ+कृ–घञ्। १ मूर्त्तौ, २अवयवसंस्थानविशेषे च। आक्रियते आविष्क्रियते हृद्गतोभावोऽनेन आ–कृ–करणे घञ्। ३हृद्गतभावावेदके मुखप्रसादवैवर्ण्यरूपे प्रीत्यप्रीतिसूचके देहचेष्टने। भावे घञ्। ४हृद्गतभावावेदने, ५इङ्गिते च। "आकारश्छाद्यमानोऽपि न शक्योविनिगूहितुम्। बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्" "आकारसदृशप्रज्ञः" रघुः। "तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च" रघुः। इङ्गितं हृद्गतोभावो बहिराकार आकृतिः"। सज्जनः। ६तादात्म्ये ७अभेदोपगमे च। आकारश्च सांख्यादिमतसिद्धः अभेदस्थानीयः पदार्थभेदः विषयिताविशेषो वा। "यत् संबद्धं सत् तदाकारोल्लेखि विज्ञानं तत् प्रत्यक्षमिति" सां०सू०। "सम्बद्धं भवत् सम्बद्धवस्त्वाकारधारि भवति यद्विज्ञानं बुद्धिवृत्तिस्तत् प्रत्यक्षम् स्वार्थसन्निकर्षजन्याकाराश्रयो वृत्तिः प्रत्यक्षमिति फलितम्। "वृत्तिः संबन्धार्थं सर्पती"त्यागामिसूत्रात् वृत्तेर्न सन्निकर्षजन्यत्वमित्याकाराश्रयग्रहणम् चक्षुरादिद्वारकवृत्तिश्च प्रदीपस्य शिखावत्या बाह्यार्थसन्निकर्षानन्तरमेव तदाकारोल्लेखिनी भवतीति नासम्भवः" भा०। वेदान्तिभिरपि अन्तःकरणस्य सावयवत्वस्वीकारेण बुद्धिवृत्तेस्तदाकारत्वमुररीकृतं यथोक्तं वेदा०परिभा०। "यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। स एव परिणामो वृत्ति-

रित्युच्यते। अनुमित्यादिस्थले तु अन्तःकरणस्य न वह्न्यादिदेशगमनं वह्न्यादेश्चक्षुराद्यसन्निकर्षात् तथा चायं घटइत्यादि प्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवस्थानात् तदुभयावच्छिन्नं चैतन्यमेकमेव विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थितत्वेन भेदाजनकत्वात्"। सचाकारस्तेषां मते वाह्यवस्तुविषयत्वेन तत्सन्निकर्षेण सम्भवति। वाह्यवस्तुसत्त्वानङ्गीकर्त्तृमते तु अनादिवासनयैव तदाकारोल्लेख इति यथोक्तं सर्व्वदर्शन सं०"। "तस्मात् स्वव्यतिरिक्तग्राह्यविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम्। तदुक्तम् "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः। ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते" इति। ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यत् येन वेद्यते तत्ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते ज्ञानेन नीलादयः। भेदे हि सत्यधुना अनेनार्थस्य सम्बन्धित्वं न स्यात् तादात्म्यस्य नियमहेतोरभावात् तदुत्पत्तेरनियामकत्वात् यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिंश्चन्द्रमसि द्वित्वावभास इव भ्रमः अत्राप्यनादिरविच्छिन्नप्रवाहाऽभेदवासनैव निमित्तम्। यथोक्तम् "सहोपालम्भनियमादभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति। अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते इति" च। न च रसवीर्य्यविपाकादि समानमाशामोदकोपार्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्त्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्षाणां केशेन्द्रनाडीज्ञानाभेदवदनाद्युपप्लववासनासामर्थ्याद्व्यवस्थोपपत्तेः पर्य्यनुयोगायोगात्। यथोक्तम् "अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते। विभक्तलक्षणग्राह्यग्राहकाकारविप्लवाः। तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत्। यदा तदा न सञ्चोद्या ग्राह्यग्राहकलक्षणेति"। तस्माद् बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति सिद्धम्"। "अन्येतु न तन्मन्यन्ते तथा हि यदुक्तं ग्राह्यं वस्तुजातं नास्तीति तदयुक्तं प्रमाणाभावात्। न च सहोपालम्भनियमः प्रमाणमिति वक्तव्यं वेद्यवेदकयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजकत्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात्। ननु भेदे सहोपालम्भनियमात्मकं साधनं न स्यादिति चेन्न ज्ञानस्यान्तर्मुखतया च भेदेन प्रतिभासमानतया एकदेशत्वैककालत्वलक्षणसंहत्वनियमासम्भवाच्च। नीलाद्यर्थस्य ज्ञानाकारत्वे अहमिति प्रतिभासः स्यात् नत्विदमिति प्रतिपत्तिः प्रत्ययादव्यतिरेकात्। अथोच्येत ज्ञानस्वरूपोऽपि नीलाकारो भ्रान्त्या बहिर्वद्भेदेन प्रतिभासत इति न तत्राहमुल्लेख इति। यथोक्तं "परिच्छेदान्तराद्योऽयं भागो बहिरिव स्थितः। ज्ञानस्याभेदिनो बाह्य प्रतिभासोऽप्युपप्लवः" इति "यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासत" इति च। तदयुक्तं बाह्यार्थाभावे तदुत्पत्तिरहिततया बहिर्वदित्युपमानोक्तेरयुक्तेः न हि वसुमित्रो बन्ध्यापुत्रवदवभासत इति प्रेक्षावानाचक्षीत भेदप्रतिभासस्य भ्रान्तत्वे अभेदप्रतिभासस्य प्रामाण्यं, तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमिति परस्पराश्रयप्रसङ्गाच्च अविसंवादान्नीलतादिकमेव संविदाना बाह्यमेवोपाददते जगत्सुपेक्षन्तेऽवान्तरमिति व्यवस्थादर्शनाच्च। एवञ्चायमभेदसाधको हेतुर्गोमयपायसीयन्यायवदाभासतां भजेत्। अतो बहिर्वदिति वदता बाह्यं तद्ग्राह्यमेवेति भावनीयमिति भवदीय एव बाणो भवन्तं प्रहरेत्। ननु ज्ञानाभिन्नकालस्यार्थस्य बाह्यत्वमनुपपन्नमिति चेत् न तदनुपपन्नम् इन्द्रियसन्निकृष्टस्य विषयस्योत्पादे ज्ञाने स्वाकारसमर्पकतया समर्पितेन चाकारेण तस्यार्थस्यानुमेयतोपपत्तेः अतएव पर्य्यनुयोगपरिहारौ समग्रहीषाताम्। "भिन्नकालं कथं ग्राह्यमिति चेत् ग्राह्यतां विदुः। हेतुत्वमेव च व्यक्तेर्ज्ञानाकारार्पणक्षमम्मिति"। तथा च यथा पुष्ट्या भोजनमनुमीयते यथा च भाषया देशः यथा वा सम्भ्रमेण स्नेहः तथा ज्ञानाकारेण ज्ञेयमनुमेयम्"। आकारे कुशलः ठञ् आकारिकः। तत्र निपुणे त्रि०।

**आकारगुप्ति** स्त्री गुप-क्तिन् आकारस्य हृद्गतभावस्य गुप्तिर्गोपनम्। रत्यादिजनितसुखप्रसादस्य भयजनितविषादादेश्च अन्यहेतुकत्वप्रख्यापनेन वास्तविकत्वापह्नवे गोपने।

**आकारणा** न० आ+कृ-णिच् ल्युट्। १आह्वाने। युच् स्त्रीत्वात् टाप्। आकारणाप्यत्र।

**आकाल** अव्य० कालपर्य्यन्तम् अव्ययी०। यत्काले निमित्तं पूर्व्वदिने जातम् तत्परदिने तत्कालपर्य्यन्ते "भार्य्याः परमगुरुसंस्थायां चाकालमभोजनं कुर्व्वीरन्निति" आपस्त०।

**आकालिक** त्रि० अकाले भवं ठञ्। १असमयोत्पन्ने वस्तुनि। स्त्रियां ङीप् "आकालिकीं वीक्ष्य मधुप्रवृत्ति"मिति कुमारः। समानकालौ आद्यन्तौ यस्य समानकालस्य आकल्लादेशः

ठक्ञ् च नि॰ इति मल्लि॰। २आशुविनाशिनि, आद्यन्तयोरभावात्, । आकालं व्याप्नोति ठञ्। ३पूर्व्वदिवसे यत्समये उत्पत्तिः परेद्युस्तत्समयपर्य्यन्तव्यापके काले "आकालिकमनध्यायमेतेष्विति" "एतानाकालिकान् विद्यादनध्यायानृतावपि" "आकालिकमनध्यायं विद्यात् सर्व्वाद्भुतेषु च" इति च मनुः। आशुविनाशित्वात् ४विद्युति स्त्री।

आकाश पुंन॰ समन्तात् काशन्ते सूर्य्यादयोऽत्र। १स्वनामख्याते द्रव्यभेदे। स च न्यायादिमते नित्यः सर्वमूर्त्तसंयोगी शब्दमात्रविशेषगुणकः संख्यापरिमाणपृथक्त्वसंयोगविभागरूपसामान्यगुणकश्च। तत्सत्त्वे प्रमाणञ्च मुक्ता॰ दर्शितम् यथा "शब्दोविशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात्, स्पर्शवत्। शब्दोद्रव्यसमवेतः गुणत्वात् संयोगवत् इत्यनुमाने शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्व्वकप्रत्यक्षत्वात्, सुखवत्। पाकजरूपादौ व्यभिचारवारणाय सत्यन्तं, पटरूपादौ व्यभिचारवारणाय अकारणगुणपूर्व्वकेति, जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति। शब्दोन दिक्कालमनोगुणः विशेषगुणत्वात्, नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् रूपवत् इत्यञ्च शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यतीति। न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्व्वकः शब्दउत्पद्यतामिति वाच्यम् अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात्"। "व्याख्यातञ्च दिनक॰ "शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् इत्येवंरूपं बोध्यम्। दर्शितं सूचितम्। अत्रानुमाने स्वरूपासिद्धिं परिहर्त्तुमाह शब्दइति घटादौ व्यभिचारवारणाय चक्षुर्ग्रहणायोग्येति आत्मनि व्यभिचारवारणायबहिरिन्द्रियग्राह्येति रसत्वादौ व्यभिचारवारणायजातिमदिति एतच्चानुमानमग्निमद्रव्यसमवेतत्वसाधकानुमाने स्वरूपासिद्धिनिरासायेति बोध्यम्। गुणत्वादिति एतदनुमानेनोक्तपरिशेषानुमानहेतौ विशेष्यासिद्धिर्निरस्ता। विशेषणासिद्धिं वारयितुमाह शब्दोन स्पर्शवद्विशेषगुण इति। न स्पर्शवतोद्रव्यस्य पृथिव्यादिचतुष्टयस्य विशेषगुण इत्यर्थः। अकारणगुणपूर्व्वकप्रत्यक्षत्वादिति अकारणगुणपूर्व्वकत्वे सति प्रत्यक्षत्वादित्यर्थः। हेतुसत्त्वं प्रतिपादयितुं पाकज इति। जलपरमाणुष्विति अनित्यानां पार्थिवरूपादीनां केषाञ्चिदग्निसंयोगासमवायिकारणत्वात् केषाञ्चित्कारणपूर्व्वकत्वादत्रोपेक्षा। न दिक्कालेति शब्द इत्यनुवर्त्तते बहिरिन्द्रियेति। मनसोऽन्यदिन्द्रियं बहिरिन्द्रियं तेन प्रत्यक्षत्वादित्यर्थः। एतेनात्मगुणग्राहकेन्द्रियत्वं बाह्येन्द्रियत्वं तच्च मनस्यतिप्रसक्तं तेनापि रूपादिग्रहणादिति निरस्तम्। इत्यञ्च अनेन प्रकारेण पृथिव्याद्यष्टद्रव्यानाश्रितत्वसिद्धौ च। सिध्यति इति पूर्व्वोक्तपरिशेषानुमानेन सिध्यतीत्यर्थः। नन्वेतत्सर्वं तदोपपद्येत यदि शब्दस्य विशेषगुणत्वे किञ्चित्प्रमाणं स्यात् तत्रैव च न मानं पश्याम इति चेत् न शब्दोविशेषगुणः लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणयोग्यतारहितत्वे च सति गुणत्वव्याप्यजातिमत्त्वादित्यनुमानस्यैव तत्र प्रमाणत्वात् प्रभात्वमादाय व्यभिचारवारणाय गुणत्वव्याप्येति गुरुत्वत्वमादाय व्यभिचारवारणाय प्रथमं सत्यन्तं, संख्यात्वमादाय व्यभिचारवारणाय द्वितीयं सत्यन्तम्। सांसिद्धिकद्रवत्वस्नेहधर्माधर्मभावनासु प्रकृतहेतोरभावेऽपि तत्र हेत्वन्तरेणैव विशेषगुणत्वं साधनीयमिति भावः। पूर्व्वोक्तानुमाने बाधं स्वरूपासिद्धिं च आशङ्कते न चेति। वायाविति तथा च स्पर्शवद्वायुगुणत्वस्य तत्र सत्त्वात्तदभावसाधने बाध इति भावः। कारणगुणपूर्व्वकत्वकथनं तु अकारणगुणपूर्व्वकत्वघटितहेतोरसिद्धिप्रदर्शनार्थम्। अयावद्द्रव्यभावित्वेनेति स्वाश्रयनाशजन्यनाशप्रतियोगि यद्यत् तद्भिन्नत्वेनेत्यर्थः। ननु तथाप्याकाशे प्रत्यक्षमेव प्रमाणं किमिति नोपन्यस्तमिति चेन्न चाक्षुषत्वे प्रयोजकस्य महत्त्वे सत्युद्भूतरूपवत्त्वस्याकाशेऽसंभवेन चक्षुषः प्रमाणत्वासम्भवात्। ननु यदि आकाशे न चाक्षुषस्तदेह पक्षीति चाक्षुषेऽधिकरणत्वेन किं भासत इति चेदालोक एवेति कल्पद्रुम"। निष्क्रमणप्रवेशनाद्युत्क्षेपणधर्म्मवत्त्वादाकाशसिद्धिरिति सांख्यादयोमन्यन्ते" सांख्यमताभिप्रायेणैव सुश्रुते। "आन्तरीक्षास्तु शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता चेत्युक्तम्"। "शब्दःश्रोत्रेन्द्रियञ्चापि छिद्राणि च विविक्तता। वियतोदर्शिता एते गुणा गुणविचारिभिरिति" च वेदान्तिभिरुक्तमिति वेदितव्यम्। तदेतन्मतं वै॰ सूत्रे निराकृतम् यथा "निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम्२०। तदलिङ्गमेकद्रव्यत्वात् कर्म्मणः२१। कारणान्तरानुक्लृप्तिवैधर्म्याच्च२२। संयोगादभावः कर्म्मणः२३। कारणगुणपूर्व्वकः कार्य्यगुणो दृष्टः२४। कार्य्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः२५ परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणो न मनोगुणः२६।

परिशेषाल्लिङ्गमाकाशस्य २७ । द्रव्यत्वनित्यत्वे वायुना व्याख्याते २८ । तत्त्वम्भावेन २९ । शब्दलिङ्गाविशेषाद्विशेषलिङ्गाभावाच्च ३० ।" सू० "इतिशब्दः प्रकारार्थः उत्क्षेपणादीन्यपि कर्म्माणि संगृह्णाति स्पर्शवद्द्रव्यसञ्चारो, निष्क्रमणं, प्रवेशनञ्च तत्कार्य्यमाकाशस्य लिङ्गमिति सांख्याः २० । तदेतद् दूषयितुमाह । निष्क्रमणप्रवेशनादिकर्म्म न तावत् समवायिकारणतया आकाशमनुमापयति कर्म्मण एकद्रव्यत्वात् एकमात्रमूर्त्तसमवायिकारणकत्वात् न कर्म्मापि व्यासज्यवृत्तीत्युक्तं न वाऽमूर्त्तवृत्तीति २१। ननु चासमवायिकारणतयैवाकाशमनुमापयिष्यति निष्क्रमणप्रवेशनादीत्यत आह । अनुकॢप्तिलक्षणम् अनुकल्प्यते ज्ञाप्यतेऽनेनेति व्युत्पत्त्या, कारणान्तरस्य असमवायिकारणस्य याऽनुकॢप्तिर्लक्षणं तद्वैधर्म्यादित्यर्थः । द्रव्यन्तावदसमवायिकारणं न भवत्येव असमवायिकारणता च कारणैकार्थप्रत्यासत्त्या कार्य्यैकार्थप्रत्यासत्त्या च, प्रथमा तन्तुरूपाणां पटरूपं प्रति, इयञ्चासमवायिकारणता महतीति संज्ञां लभते गुरुप्रतिपत्तिकत्वात्, द्वितीया च यथा आत्ममनःसंयोगस्य ज्ञानादिकं प्रति, इयञ्चासमवायिकारणता लघ्वीति संज्ञां लभते लघुप्रतिपत्तिकत्वात्, आकाशस्य तु निष्क्रमणप्रवेशनादौ कर्म्मणि न समवायिकारणता नाप्यसमवायिकारणता तथाच न कर्म्माकाशसत्त्वे लिङ्गमिति २२ । ननु निमित्तकारणमस्तु कर्म्मण्याकाशम्, दृश्यते ह्याकाशे पत्रिकाण्डादीनां सञ्चारमत आह । मूर्त्तसंयोगेन कर्म्मकारणस्य वेगगुरुत्वादेः प्रतिबन्धात् कर्म्मणोऽभावोऽनुत्पादो न त्वाकाशाभावात् तस्याव्यापकत्वात्, तस्मादाकाशान्वयोऽन्यथासिद्ध एव नाकाशनिमित्ततां साधयतीत्यर्थः २३। एवं सांख्यमते दूषिते शब्दमाकाशे लिङ्गमुपपादयिष्यन् परिशेषानुमानाय पीठमारचयन्नाह । पृथिव्यादिचतुष्के कार्य्ये ये विशेषगुणा रूपादयस्ते कारणगुणपूर्व्वका दृष्टाः शब्दोऽपि विशेषगुणः जातिमत्त्वे सति बाह्यैकेन्द्रियमात्रग्राह्यत्वात् रूपादिवत् तथाच तादृशं कार्य्यं नोपलभ्यते यत्र कारणगुणपूर्व्वकः शब्दः स्यादित्यर्थः २४। ननु वीणावेणुमृदङ्गशङ्खपटहादौ कार्य्ये शब्द उपलभ्यते तथाच तत्कारणगुणपूर्व्वकः स्यादत आह । भवेदेवं यथा तन्तुकपालादिषु रूपरसाद्यनुभूयते तज्जातीयञ्च रूपरसाद्यन्तरं पटघटादावुपलभ्यते तथा वीणावेणुमृदङ्गाद्यवयवेषु यः शब्द उपलब्धस्तत्सजातीयश्चेत् वीणावेणुमृदङ्गादावप्युपलभ्येत नचैवम्, प्रत्युत निःशब्दैरेवावयवैर्वीणाद्यारम्भदर्शनात् नोत्कर्षस्तु तन्तुकपालादिभिः पटघटाद्यारम्भस्यादर्शनात् किञ्च यदि शब्दः स्पर्शवतां विशेषगुणः स्यात् तदा तत्र तार-तारतर-मन्द-मन्दतरादिभावो नानुभूयेत नह्येकावयवव्यापिता रूपादयो वैचित्र्येणानुभूयन्ते तस्मान्न स्पर्शवद्विशेषगुणः शब्दः २५ । नन्वात्मगुणो मनोगुणो वा शब्दो भविष्यतीत्यत आह । शब्दो यद्यात्मगुणः स्यात् तदाऽहं सुखी यते जाने इच्छामीत्यादिवत् अहं पूर्य्ये अहं वाद्ये अहं शब्दवानित्यादि धीः स्यात् नत्वेवमस्ति, किन्तु शङ्खः पूर्य्यते, वीणा वाद्यते इति प्रतियन्ति लौकिकाः । किञ्च शब्दो नात्मगुणः बाह्येन्द्रियग्राह्यत्वात् रूपादिवत् अपि च शब्दो यद्यात्मयोग्यविशेषगुणः स्याद्बधिरेणाप्युपलभ्येत दुःखादिवत् । तस्मात् सूक्तं परत्र समवायादिति, अमनोगुणत्वे हेतुमाह प्रत्यक्षत्वादिति, नात्ममनसोर्गुण इति समासे कर्त्तव्ये यदसमासकरणं तेन तुल्यन्यायतया प्रत्यक्षत्वादित्यनेनैव हेतुना दिक्कालयोरपि गुणत्वं शब्दस्य प्रतिषिद्धमिति सूचितम् २६ । यद्धर्मकं परिकरस्तदाह शब्द इति शेषः । अत्रापि शब्दः क्वचिदाश्रितो गुणत्वात् रूपादिवदिति सामान्यतोदृष्टाद्दृष्टद्रव्यातिरिक्तद्रव्यसिद्धिः । गुणश्चायं बाह्यैकेन्द्रियग्राह्यजातीयत्वात् रूपादिवत् अनित्यत्वे सति विभुसमवेतत्वात् ज्ञानादिवत् अनित्यत्वञ्च साधयिष्यते । परिशेषसिद्धस्य द्रव्यस्यावयवकल्पनायां प्रमाणाभावान्नित्यत्वं, सर्व्वत्र शब्दोपलब्धेर्विभुत्वम् २७ । शब्दलिङ्गस्य द्रव्यस्य द्रव्यत्वनित्यत्वे अतिदेशेन साधयन्नाह । अद्रव्यवत्त्वाद्यथा वायोर्नित्यत्वं तथाकाशस्यापि, गुणवत्त्वाद्यथा वायोर्द्रव्यत्वं तथाकाशस्यापीत्यर्थः २८। तत् किं बहून्याकाशानि एकमेव वेत्यत आह । व्याख्यातमिति विपरिणतेनान्वयः । भावः सत्ता सा यथैका तथाकाशमप्येकमेवेत्यर्थः २९ । नन्वनुगतप्रत्ययमहिम्ना सत्ताया एकत्वं सिद्धम् आकाशे कथमेकत्वं तद्दृष्टान्तेन सेत्स्यतीत्यत आह । तत्त्वमाकाशस्य सिद्धमित्यर्थः । वैभवे सति सर्व्वेषां शब्दानां तदेकाश्रयतयैवोपपत्तावाश्रयान्तरकल्पनायां कल्पनागौरवप्रसङ्गः अन्यदपि यदाकाशं कल्पनीयं तत्रापि शब्द एव लिङ्गं तच्चाविशिष्टं न च विशेषसाधकं भेदसाधकं लिङ्गान्तरमस्ति । आत्मनां यद्यपि ज्ञानादिकमविशिष्टमेव लिङ्गं तथापि व्यवस्थातो लिङ्गान्तरादात्मनानात्वसिद्धिरिति वक्ष्यते" ३०उप० । इत्थं च तस्य नित्यत्वं

निरवयवद्रव्यत्वादिति सिद्धम् । सांख्यादयस्तु शब्दतन्मात्रतस्तदुत्पत्तिं स्वरीचक्रुः "प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राणि" इत्युपक्रम्य "पञ्चभ्यः पञ्चभूतानि" इत्युक्तेः । वेदान्तिनस्तु अविद्यासहकृतब्रह्मण एव सकाशात्तदुत्पत्तिमङ्गीचक्रुः तस्य चोत्पत्तिमत्त्वे "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" इति श्रुतिर्मानम् । यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुत्या ब्रह्मणः सर्व्वभूतकारणत्वान्यथानुपपत्त्याऽपि तस्योत्पत्तिमत्त्वम् । श्रुतेर्गौणोत्पत्तिपरत्वं च आशङ्कापूर्व्वकं शा०सूत्रभाष्ययोर्निराकृतं यथा । "नवियदश्रुतेः सू० "वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते । केचिदाकाशस्योत्पत्तिमामनन्ति केचिन्न । तथा केचिद्वायोरुत्पत्तिमामनन्ति केचिन्न । एवं जीवस्य प्राणानाञ्च । एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषु लक्ष्यते । विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितं तद्वत् स्वपक्षस्यापि विप्रतिषेधादेवानापेक्षितत्वमाशङ्क्यतेत्यतः सर्व्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्म्मलत्वाय परः प्रपञ्च आरभ्यते । तदर्थनिर्म्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव । तत्र प्रथमं तावदाकाशमाश्रित्य विचिन्त्यते किमस्योत्पत्तिरस्त्युत नास्तीति । तत्र तावत् प्रतिपद्यते । न वियदश्रुतेरिति न खल्वाकाशमुत्पद्यते कस्मात् अश्रुतेः नह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति । छान्दोग्ये हि "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति" सच्छब्दवाच्यं ब्रह्म प्रकृत्य "तदैक्षत तत्तेजोऽसृजतेति च पञ्चानां महाभूतानां मध्यमं तेजआदिं कृत्वा त्रयाणां तेजोऽबन्नानामुत्पत्तिः श्राव्यते । श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ । न चात्र श्रुतिरस्त्याकाशोत्पत्तिप्रतिपादिनी तस्मान्नास्त्याकाशस्योत्पत्तिरिति" भा० "अस्ति तु" सू० । तुशब्दः पक्षान्तरपरिग्रहे । मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः श्रुत्यन्तरे त्वस्ति । तैत्तिरीयकाः समामनन्ति "सत्यं ज्ञानमनन्तं ब्रह्मेति" प्रकृत्य "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति । ततश्च श्रुत्योर्विप्रतिषेधः क्वचित्तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्रमुखेति । नन्वेकवाक्यताऽनयोः श्रुत्योर्युक्ता । सत्यं युक्ता न तु साऽवगन्तुं शक्यते कुतः "तत्तेजोऽसृजतेति" सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन सम्बन्धानुपपत्तेः तत्तेजोऽसृजत तदाकाशमसृजतेति । ननु सकृच्छ्रुतस्य कर्त्तुः कर्त्तव्यद्वयेन सम्बन्धो दृश्यते यथा सूपं पक्त्वौदनं पचतीति । एवं तदाकाशं सृष्ट्वा तेजोऽसृजतेति योजयिष्यामः । नैवं युज्यते प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते तैत्तिरीयके त्वाकाशस्य । नचोभयोः प्रथमजत्वं सम्भवति । एतेनेतरश्रुत्यक्षरविरोधोऽपि व्याख्यातः । तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यत्रापि तस्मात् आकाशः सम्भूतस्तस्मात्तेजः सम्भूतमिति सकृच्छ्रुतस्यापादानस्य सम्भवनस्य च वियत्तेजोभ्यां युगपत्सम्बन्धानुपपत्तेः । वायोरग्निरिति च पृथगाम्नानात् । अस्मिन् विप्रतिषेधे कश्चिदाह । "गौण्यसम्भवात्" सू० । नास्ति वियत उत्पत्तिः अश्रुतेरेव । या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता सा गौणी भवितुमर्हति । कस्मात् ? असम्भवात् । नह्याकाशस्योत्पत्तिः सम्भावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु । ते हि कारणसामग्र्यसम्भवादाकाशस्योत्पत्तिं वारयन्ति । समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्व्वमुत्पद्यमानमुत्पद्यते । द्रव्यस्य चैकजातीयमनेकञ्च द्रव्यं समवायि कारणम्भवति । नचाकाशस्यैकजातीयमनेकञ्च द्रव्यमारम्भकमस्ति यस्मिन् समवायिकारणेऽसमवायिकारणे च तत्संयोगे आकाशमुत्पद्येत । तदभावात्तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति ।, उत्पत्तिमतां हि तेजःप्रभृतीनां पूर्व्वोत्तरकालयोर्विशेषः सम्भाव्यते प्रागुत्पत्तेः प्रकाशादिकार्य्यं न बभूव पश्चाच्च भवतीति । आकाशस्य पुनर्न पूर्व्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यते । किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम् । पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः । तस्माद्यथा लोके आकाशं कुरु आकाशो जात इत्येवं जातीयको गौणः प्रयोगो भवति यथा च घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो भवति । वेदेऽपि आरण्यानाकाशेष्वालभेरन्निति । एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या भा० "शब्दाच्च" सू० । शब्दःखल्वप्याकाशस्याजत्वं ख्यापयति । यत आह "वायुश्चान्तरिक्षञ्चैतदमृतमिति" न चामृतस्योत्पत्तिरुपपद्यते । "आकाशवत् सर्व्वगतश्च नित्य इति" आकाशेन ब्रह्मणो नित्यत्वसर्व्वगतत्वाभ्यां धर्म्माभ्यामुपमिमानः आकाशस्यापि तौ धर्म्मौ सूचयति । न च तादृशस्योत्पत्तिरुपपद्यते । यथाऽनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्य इति चोदाहरणम् । आकाशशरीरं ब्रह्म आकाशआत्मेति । नह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मण-

स्त्वेन विशेषणं सम्भवति नीलेनेवोत्पलस्य । तस्मादित्य मेवाकाशेन साधारणं ब्रह्मेति गम्यते" भा०। "स्याच्चैकस्य ब्रह्मशब्दवत्" सू० । इदंपदोत्तरं सूत्रम् । स्यादेतत् कथं पुनरेकस्य सम्भूतशब्दस्य तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्त्तमानस्य मुख्यत्वं आकाशे च गौणत्वमिति । अत उत्तरमुच्यते । स्याच्चैकस्यापि सम्भूतशब्दस्य विषयविशेषवशाद्गौणो मुख्यश्च प्रयोगः ब्रह्मशब्दवत् । यथैकस्यापि ब्रह्मशब्दस्य "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म" इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोग आनन्दे च मुख्यः यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दोभक्त्या प्रयुज्यते अञ्जसा तु विज्ञेये ब्रह्मणि तद्वत् । कथं पुनरनुत्पत्तौ नभसः "एकमेवाद्वितीय" मितीयं प्रतिज्ञा समर्थ्यते । ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति, कथञ्च ब्रह्मणि विदिते सर्वं विदितं स्यादिति । तदुच्यते । एकमेवेति तावत्कार्य्यापेक्षयोपपद्यते । यथा लोके कश्चित् कुम्भकारकुले पूर्व्वेद्युर्मृदं दण्डचक्रादींनि चोपलभ्यापरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात् मृदेवैकाकिनी पूर्व्वेद्युरासीदिति । स च तयावधारणया मृत्कार्य्यजातमेव पूर्व्वेद्युर्नासीदित्यभिप्रेयात् न चक्रदण्डादि तद्वत् । अद्वितीय श्रुतिरधिष्ठात्रन्तरं वारयति यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते नैवं ब्रह्मणोजगत्प्रकृतेरन्योऽधिष्ठातास्तीति । न च नभसापि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते । लक्षणान्यत्वनिमित्तं हि नानात्वं न च प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति । क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वामूर्त्तत्वादिधर्म्मसामान्यात् । सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते स्तिमितमितरत्तिष्ठति तेनान्यत्वमवसीयते । तथाकाशशरीरं ब्रह्मेत्यादि श्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः । अतएव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः । अपि च सर्वं कार्य्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते ब्रह्मणा चाव्यतिरिक्तदेशकालमेवाकाशं भवतीत्यतो ब्रह्मणा तत्कार्य्येण च विज्ञातमेवाकाशं भवति यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति । न हि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते एवं ब्रह्मणा तत्कार्य्यैश्चाव्यतिरिक्तदेशकालत्वाद्गृहीतमेव ब्रह्मग्रहणेन नभो भवति । तस्माद्भाक्तं नभसः सम्भवश्रवणमिति एवं प्राप्ते इदमाह । "प्रतिज्ञाऽहानिरव्यतिरेकात्शब्देभ्य" ।सू० "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति" "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमिति" "कस्मिन्नु भगवोविज्ञाते सर्वमिदं विज्ञातं भवतीति" "न काचन मद्बहिर्धा विद्यास्तीति" "चैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात् यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात् । व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत । सचाव्यतिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्मात् ब्रह्मण उत्पद्यते । शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते । तथा हि "येनाश्रुतं श्रुतं भवतीति" प्रतिज्ञाय मृदादिदृष्टान्तैः कार्य्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते । तत्साधनायैव चोत्तरे शब्दाः "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं ब्रह्म" "तदैक्षत तत्तेजो सृजते" इत्येवं कार्य्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति "ऐतदात्म्यमिदं सर्व्वम्" इत्यारभ्या प्रपाठकपरिसमाप्तेः । तद्यद्याकाशं न ब्रह्मकार्यं स्यात् न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत ततश्च प्रतिज्ञाहानिः स्यात् । न च प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्त्तुम् । तथा च प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति "इदं सर्वं यदयमात्मा" "ब्रह्मैवेदममृतं पुरस्तात्" इत्येवमादयः । तस्मात् ज्वलनादिवदेव गगनमप्युत्पद्यते । यदुक्तमश्रुतेर्न वियदुत्पद्यत इति तदयुक्तं वियदुत्पत्तिविषयस्य श्रुत्यन्तरस्य दर्शितत्वात् "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति । सत्यं दर्शितं विरुद्धन्तु "तत्तेजोऽसृजत" इत्यनेन श्रुत्यन्तरेण । न एकवाक्यत्वात् सर्वश्रुतीनाम् । भवत्वेकवाक्यत्वमविरुद्धानाम् इह तु विरोध उक्तः। सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वय सम्बन्धासम्भवात्, द्वयोश्च प्रथमजत्वासम्भवाद्विकल्पासम्भवाच्चेति । नैष दोषः तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात् "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निरिति" । अशक्या हीयं श्रुतिरन्यथा परिणेतुम् । शक्या तु परिणेतुं छान्दोग्यश्रुतिः तदाकाशं वायुञ्च सृष्ट्वा "तत्तेजोऽसृजतेति" । न हीयं श्रुतिस्तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति एकस्य वाक्यस्य व्यापारद्वयासम्भवात् । स्रष्टा त्वेकोऽपि क्रमेणानेकं स्रष्टव्यं सृजेत् इत्येकवाक्यत्वकल्पनायां सम्भवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या । नचास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वय

सम्बन्धोऽभिप्रेयते श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात्। यथा च "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति। ननु शमविधानार्थमेतद्वाक्यं "तज्जलानिति शान्त उपासीतेति" श्रुतेः नैतत्सृष्टिवाक्यं न तस्मादेतत्प्रदेशान्तरप्रसिद्धं क्रममनुरोद्धुमर्हति। "तत्तेजोऽसृजते"त्येतत्सृष्टिवाक्यं तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्य इति। नेत्युच्यते। न हि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति पदार्थधर्मत्वात् क्रमस्य। अपि च तत्तेजोऽसृजतेति नात्र क्रमस्य वाचकः कश्चित् शब्दोऽस्ति अर्थात्तु क्रमो गम्यते स च वायोरग्निरित्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्य्यते। विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयौ असम्भवानभ्युपगमाभ्यां निवारितौ। तस्मान्नास्ति श्रुत्योर्विप्रतिषेधः। अपि च छान्दोग्ये "येनाश्रुतं श्रुतं भवती"त्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातामपि वियदुत्पत्तावुपसंख्यातव्यं किमङ्ग पुनस्तैत्तिरीयके समाम्नातं न संगृह्यते। यच्चोक्तमाकाशस्य सर्वेणानन्यदेशत्वात् ब्रह्मणा तत्कार्य्यैश्च सह विदितमेव तद्भवति अतो न प्रतिज्ञा हीयते। न च "एकमेवाद्वितीयमिति" श्रुतिकोपो भवति क्षीरोदकवत् ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति। अत्रोच्यते न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्व्वविज्ञानं नेतव्यम्। मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते। क्षीरोदकन्यायेन सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात्। न हि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्ज्ञानगृहीतत्वमस्ति। न च वेदस्य पुरुषाणामिव मायालोकवञ्चनादिभिरर्थावधारणमुपपद्यते। सावधारणा चेयम् "एकमेवाद्वितीयमिति" श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत। न च स्वकार्य्यापेक्षयैवेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेकाद्वितीयतावधारणञ्चेति न्याय्यम्। मृदादिष्वपि हि तत्सम्भवात्तदपूर्व्ववदुपन्यसितव्यं भवति "श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतम्भवती"त्यादिना। तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्य्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम्। यत् पुनरेतदुक्तमसम्भवाच्छ्रौती गगनस्योत्पत्तिश्रुतिरिति। अत्र ब्रूमः "यावद्विकारन्तु विभागो लोकवत्" सू०। तु शब्दोऽसम्भवाशङ्काव्यावृत्त्यर्थः। न खल्वाकाशोत्पत्तावसम्भवाशङ्का कर्त्तव्या यतो यावत् किञ्चित् विकारजातं दृश्यते घटघटिकोदञ्चनादि वा कटककेयूरकुण्डलादि वा सूचीनाराचनिस्त्रिंशादि वा तावानेव विभागो लोके लक्ष्यते नत्वविकृतं किञ्चित् कुतश्चिद्विभक्तमुपलभ्यते। विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते तस्मात् सोऽपि विकारो भवितुमर्हति। एतेन दिक्कालमनःपरमाणूनां कार्य्यत्वं व्याख्यातम्। नन्वात्मापि आकाशादिभ्यो विभक्त इति तस्यापि कार्य्यत्वं घटादिवत् प्राप्नोति, न "आत्मन आकाशः सम्भूत इति श्रुतेः। यदि ह्यात्मापि विकारः स्यात्तस्मात् परमन्यन्न श्रुतमित्याकाशादि सर्व्वं कार्य्यं निरात्मकमात्मनः कार्य्यत्वे स्यात् तथा च शून्यवादः प्रसज्येत। आत्मत्वादेवात्मनो निराकरणशङ्कानुपपत्तिः। न ह्यात्मागन्तुकः कस्यचित्, स्वयंसिद्धत्वात्। न ह्यात्मात्मनः प्रमाणमपेक्ष्य सिध्यति। तस्य हि प्रत्यक्षादीनि प्रमाणान्यन्यसिद्धये उपादीयन्ते। न ह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः स्वयंसिद्धाः केनचिदभ्युपगम्यन्ते। आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यति। न चेदृशस्य निराकरणं सम्भवति। आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम्। य एव हि निराकरणकर्त्ता तदेव तस्य स्वरूपम्। न ह्यग्नेरौष्ण्यमग्निना निराक्रियते। तथाहमेवेदं जानामि वर्त्तमानं वस्तु अहमेवातीतमतीततरञ्चाज्ञासिषम् अहमेवानागतमनागततरञ्च ज्ञास्यामीत्यतीतानागतवर्त्तमानभावेनान्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति सर्वदा वर्त्तमानस्वभावत्वात्। तथा भस्मीभवत्यपि देहे नात्मन उच्छेदो वर्त्तमानस्वभावत्वादन्यस्वभावत्वं वा न सम्भावयितुं शक्यम्। एवमप्रत्याख्येयस्वभावत्वादेवाकार्य्यत्वमात्मनः कार्य्यत्वञ्चाकाशस्य। यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति तत्प्रत्युच्यते। न तावत् समानजातीयमेवारभते न भिन्नजातीयमिति नियमोऽस्ति न हि तन्तूनां तत्संयोगानाञ्च समानजातीयत्वमस्ति द्रव्यत्वगुणत्वाभ्युपगमात्। न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति। स्यादेतत् समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न कारणान्तरविषय इति तदप्यनैकान्तिकम्। सूत्रगोवालैर्ह्यनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते। तथा सूत्रैरूर्णादिभिश्च विचित्रान् कम्बलान् वितन्वते। सत्त्व-

द्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यम् सर्वस्य सर्वेण समानजातीयत्वात्। नाप्यनेकमेवारभते नैकमिति नियमोऽस्ति अणुमनसोराद्यकर्मारम्भाभ्युपगमात्। एकैकोहि परमाणुर्मनश्चाद्यं स्वकर्मारभते न द्रव्यान्तरैः संहत्येत्यभ्युपगम्यते। द्रव्यारम्भ एवानेकद्रव्यारम्भकत्वनियम इति चेन्न परिणामाभ्युपगमात्। भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते तच्च क्वचिदनेकं परिणमते मृद्वीजाद्यङ्कुरादिभावेन क्वचिदेकं परिणमते क्षीरादि दध्यादिभावेन। नेश्वरशासनमस्ति अनेकमेव कारणं कार्यं जनयतीति। अतः शास्त्रप्रामाण्यादेकस्माद्ब्रह्मण आकाशादि महाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते। तथा चोक्तं "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धीति"। यच्चोक्तमाकाशोत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः सम्भावयितुं शक्यत इति तदयुक्तं येनैव हि विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवदिदानीमध्यवसीयते स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते। यथा च न ब्रह्म स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत् "अस्थूलमनण्वित्यादि" श्रुतिभ्यः एवमाकाशस्वभावेनापि न स्वभाववत् अनाकाशमिति श्रुतेरवगम्यते। तस्मात् प्रागुत्पत्तेरनाकाशमच्छिद्रमिति स्थितम्। यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमिति तदप्यसत्। श्रुतिविरोधे सत्युत्पत्त्यसम्भवानुमानस्याभासत्वोपपत्तेः उत्पत्त्यनुमानस्य च दर्शितत्वात् अनित्यमाकाशमनित्यगुणाश्रयत्वात् घटादिवदित्यादिप्रयोगसम्भवाच्च। आत्मन्यनैकान्तिकमिति चेन्न तस्यौपनिषदं प्रति अनित्यगुणाश्रयत्वासिद्धेः। विभुत्वादीनाञ्चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात्। यच्चैतदुक्तं शब्दाच्चेति। तत्रामृतत्वश्रुतिस्तावद्वियति "अमृता दिवौकस इतिवद्द्रष्टव्या उत्पत्तिप्रलययोरुपपादितत्वात्। "आकाशवत् सर्वगतश्च नित्यः" इत्यपि प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते निरतिशयमहत्त्वाय नाकाशसमानत्वाय। यथेषुरिव सविता धावतीति क्षिप्रगतित्वायोच्यते नेषुतुल्यगतित्वाय तद्वत्। एतेनानन्तत्वोपमानश्रुतिर्व्याख्याता। "ज्यायानाकाशादिति" श्रुतिभ्यश्च ब्रह्मणः सकाशादाकाशस्योनपरिमाणत्वसिद्धिः। "न तस्य प्रतिमास्तीति च ब्रह्मणोऽनुपमानत्वं दर्शयति। "अतोऽन्यदार्त्तमिति" च ब्रह्मणोऽन्येषामाकाशादीनामार्त्तत्वं दर्शयति। तपसि ब्रह्मशब्दवदाकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसम्भवश्रुत्यनुमानाभ्यां परिहृतम्। तस्माद्ब्रह्मकार्यं वियदिति सिद्धम्"।

तस्य जन्यत्वेऽपि आप्रलयस्थायित्वात् गौणनित्यत्वम्। वैशेषिकाणां नित्यत्वानुमानं तु बलवदागमविरुद्धत्वात् नरककपालशुचित्वानुमानवत् बाधितमिति द्रष्टव्यम्। सांख्यमते दिक्कालयोराकाश एवान्तर्भावः अतएव सां० कौमुद्याम् कालरूपतत्त्वान्तरं निराकृतं यथा "कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रतिपद्यते सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्य्याः तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति" अत्र तु आकाशप्रकृतिकत्वं तयोरुक्तम् यथा "दिक्कालावाकाशादिभ्यः" सू०। नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव। अतो दिक्कालयोर्विभुत्वोपपत्तिः। "आकाशवत् सर्वगतश्च नित्य" इत्यादि श्रुत्युक्तं विभुत्वं चाकाशस्योपपन्नम्। यौ तु खण्डदिक्कालौ तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः। आदिशब्देनोपाधिग्रहणमिति। यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ तथापि विशिष्टस्यातिरिक्तताभ्युपगमवादेन वैशेषिकनयेनास्य कार्य्यतावत् तत्कार्य्यत्वमत्रोक्तम्" सां०भा०। पदार्थखण्डने शिरोमणिना अस्य ईश्वरस्वरूपानतिरेक उक्तः "दिक्कालावीश्वरान्नातिरिच्येते गगनमपि तथेति"। सौगतमतसिद्धे आवरणाभावरूपे निरुपाख्ये २ पदार्थभेदे च। तदेतत् मतम्" शा०सू०भाष्ययोर्निराकृतम् "आकाशे चाभावात्" सू०। "यच्च तेषामेवाभिप्रेतं निरोधद्वयमाकाशञ्च निरुपाख्यमिति तत्र निरोधद्वयस्य निरुपाख्यत्वं पुरस्तान्निराकृतम् आकाशस्येदानीं निराक्रियते। आकाशे चायुक्तो निरुपाख्यत्वाभ्युपगमः प्रतिसंख्याप्रतिसंख्यानिरोधयोरिव वस्तुत्वप्रतिपत्तेरविशेषात् आगमप्रामाण्यात्तावदात्मनः आकाशः सम्भूत इत्यादि श्रुतिभ्यः आकाशस्य वस्तुत्वसिद्धिः। विप्रतिपन्नानपि प्रति शब्दगुणानुमेयत्वं वक्तव्यं गन्धादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनात्। अपि चावरणाभावमात्रमाकाशमिच्छतस्तव एकस्मिन् सुपर्णे पतत्यावरणस्य विद्यमानत्वात् सुपर्णान्तरस्य पित्सतोऽनवकाशत्वप्रसङ्गः यत्रावरणाभावस्तत्र पतिष्यतीति चेत् येनावरणाभावो विशिष्यते तर्हि वस्तु भूतमेवाकाशं स्यान्नावरणाभावमात्रम्

अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत । सौगते हि समये पृथिवी-भगवन् ! किंसन्निश्रयेत्यस्मिन् प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते वायुः किंसन्निश्रय इत्यस्य प्रश्नस्य प्रतिवचनं भवति वायुराकाशसन्निश्रय इति तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात् तस्मादप्ययुक्तमाकाशस्यावस्तुत्वम् । अपि च निरोधद्वयमाकाशञ्च त्रयमप्येतन्निरुपाख्यमवस्तु नित्यञ्चेति विप्रतिषिद्धं नह्यवस्तुनो नित्यत्वमनित्यत्वं वा सम्भवति वस्त्वाश्रयत्वाद्धर्म्मधर्म्मिव्यवहारस्य । धर्म्मधर्म्मिभावे हि घटादिवद्वस्तुत्वमेव स्यात् न निरुपाख्यत्वम्" भा० । आ समन्तात् काशते अच् । "रतिमाकाशभवा सरस्वती" कु० "आकाशगङ्गापयसः पतेताम्" माघः आकाशात्तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः मनुः" "घटसंवृतमाकाशे नीयमाने यथा घटे" शां०प०भा० "आकाशो जायते तस्मात् तस्य शब्दगुणः स्मृतः" मनुः । रूपादिषु मध्ये शब्दमात्रग्राहकतया श्रोत्रस्याकाशात्मकत्वेऽपि कर्णशष्कुलीरूपोपाधिभेदाद्वानात्वमौपाधिकमेकस्यादिशः प्राचीत्वादिवत् एकस्य कालस्य क्षणादित्ववच्च । २परब्रह्मणि "आकाशोहवै नामरूपयोर्निर्व्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इत्यादि "तद्विजिज्ञासितव्यम्" श्रुतिः "यावानयमाकाशस्तावानयमन्तर्हृदयाकाश" इति छा०उ० । "आकाशस्तल्लिङ्गात्" शा०सू० । "आकाशवत् सर्व्वगतश्च नित्यः" श्रुतिः गीता च । ३छिद्रे गणितादिप्रसिद्धे ४शून्याङ्के च ।

**आकाशकक्षा** स्त्री ६त० । ब्रह्माण्डपुटवेष्टने लोकालोकपर्व्वतरूपसीमापर्य्यन्तव्यापके सूर्य्यकिरणसञ्चारावधिभूते वृत्ताकारे गगनस्थे गोलचक्रे । तन्निरुक्ता" सि०शि० "कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजगेन्दुभिर्ज्योतिःशास्त्रविदोवदन्ति नभसः कक्षामिमां योजनैः १८७१२०६९२००००००००। तद्ब्रह्माण्डकटाहसम्पुटतटे केचिज्जगुर्वेष्टनम् केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः । करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम् । दिनकरकरनिकरकरम्बिततमसो नभसः परिधिरुदितस्तैः ।" तथा च सूर्य्यकिरणप्रचारावधिस्थानस्य नभःकक्षात्वेन कल्पितम् । वस्तुतोऽपरिच्छिन्नत्वादाकाशस्य ततोऽपि सत्त्वात् न तन्मात्रमानम् । अतएव "ब्रह्माण्डमेतन्मितमस्तु नो वेति" ब्रह्माण्डस्यानिर्द्धारितप्रमाणकत्वं तत्रोक्तम् । व्याख्यातं च प्र०मि० "एभिस्तुल्यां गणकाः नभसः कक्षामाकाशपरिधिं वदन्ति तत्र कथमनन्तस्याकाशस्येयत्ता वक्तुं शक्यते इत्याशङ्क्य अहर्पतिद्युतिभाजोनभसः परिधेरिदं मानं वदन्ति अतएव पौराणिका-गणकाः ब्रह्माण्डपरिधिं वदन्ति केचिल्लोकालोकं वदन्ति यतस्तदन्तर्वर्त्तिन एवार्करश्मयः । एवमन्ये वदन्तीति नास्माकं मतमित्यर्थः प्रमाणशून्यत्वात्" । करतलकलितसकलब्रह्माण्डगोला एवं वक्तुं शक्नुवन्ति न वयम्" । तेन पौराणिकमतमेतत् सूर्य्यकिरणसञ्चारस्थानपर्य्यन्तत्वोपाधिना तत्कल्पनमिति द्रष्टव्यम् ।

**आकाशकल्प** पु० ईषदूनमाश. आकाशः आकाश+कल्पप् । ब्रह्मणि "निःसङ्गत्वाद्विभुत्वाच्च तथाऽनश्वरभावतः । ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम्" इत्युक्तेः व्योमगतजडतान्यूनतया ततोवैलक्षण्यात् तस्य तत्कल्पत्वम् ।

**आकाशगङ्गा** स्त्री आकाशपथवाहिनी गङ्गा । मन्दाकिन्याम् । "उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम्" माघः । आकाशनद्यादयोऽप्यत्र । आकाशस्यावलम्बनत्वाभावेऽपि मेरुशिखरस्थोच्चतया स्वर्गताकल्पनेन तस्यैवाकाशतुल्यता ततएव वहने आकाशे वहनोत्प्रेक्षणात् तथात्वम् । अतएव गङ्गाया त्रिपथगामित्वं पुराणेषूक्तम् यथा च गङ्गायास्त्रिपथगत्वं तथा गङ्गाशब्दे वक्ष्यते

**आकाशगा** स्त्री आकाशे अत्युच्चस्थाने सुमेरुशिखरे गच्छति गम—ड । १स्वर्गगङ्गायाम् २आकाशगामिमात्रे त्रि० ।

**आकाशजननी** स्त्री आकाशस्य छिद्रस्य जननीव पोषिका । छिद्रवत्यां प्रगण्ड्याम् । दुर्गमध्यस्थितानां जनानां बाह्यार्थदर्शनार्थं छिद्रवती भित्तिः प्रगण्डी तद्द्वारैव हि रिपुमध्यस्तौ आग्नेयास्त्रं स्वयमलक्षिततया बहिः सैन्यैः क्षिप्यते। दुर्गनिर्म्माणोपदेशे "प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तथा । आपूरयेच्च परिखां स्थाणुनक्रझषाकुलाम्" शा०भा० प०६९ अ० "सञ्चारो यत्र लोकानां दूरादेवावबध्यते प्रगण्डी सा च विज्ञेया बहिःप्राकारसंज्ञिता" प्रगण्डीं परिभाष्य "दुर्गप्राकारभित्तौ शूराणामुपवेशस्थानानि प्रगण्डी । आकाशजननी तत्रैव एककक्षायां भित्तौ तत्स्थानां रक्षणभूतायां बाह्यार्थदर्शनानि क्षुद्रच्छिद्राणि यद्द्वाराग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते इति" नीलक० ।

**आकाशदीप** पु० आकाशे दीयमानोदीपः । "तुलायां तिलतैलेन सायंसन्ध्यासमागमे । आकाशदीपं यो दद्यात् मासमेकं निरन्तरम्" ब्रह्माण्डपु० उक्ते तुलास्थरवौ सायसन्ध्यास्थाने दीयमाने दीपे ।

**आकाशभाषित** न० आकाशे भाषितम् । अदृश्यशरीराणां

ऽदृश्यानां देवादीनां गगनोद्भवे वचने आकाशवाण्याम् ।

**आकाशमण्डल** न० आकाशोमण्डलमिव । १नभोमण्डले आकाशस्य निरवयवत्वेन अनवच्छिन्नत्वेन च वेष्टनाकार मण्डलाभावेऽपि भूगोलवृत्तोपाधिकत्वं तदीयं मण्डलमिव भवति । योहि नभोभागो भूगोलेनानावृतः सन् दृष्टिप्रचार पथमध्यालोकवान् तस्यैव भूगोलोपाधिना गोलाकारत्वं कल्प्यते । एतेनापि प्रमाणेन भूमेर्गोलाकारत्वानुमानम् यदि भूमिर्गोलाकारा न स्यात् कथं तदाऽनन्तानवच्छिन्नस्याकाशस्य गोलाकारत्वमुपलभ्येत कस्यचिदुपाधेरेव च स्वभावात् तस्य गोलाकारत्वमुपलभ्यते इति कल्प्यम् अन्यस्य च परिधेरदर्शनात् परिशेषात् भूमेरेव तथात्वसिद्धिरिति तस्या गोलाकारता तद्वशाच्चाकाशस्य तथात्वकल्पनमिति "आकाशमण्डलमध्यमध्यास्ते" काद० नभोमण्डलादयोऽप्यत्र "नैतन्नभोमण्डलमम्बुराशिः" सा०द० तन्त्रोक्ते भूतशुद्धौ चिन्तनीये भ्रूमध्यावधिब्रह्मरन्ध्रान्तस्थिते वृत्ताकारे स्वच्छे २नभोमण्डले च "वृत्तं द्विवृत्तं षड्बिन्दुलाञ्छितं मातरिश्वनः" तन्त्र० । पदार्थादर्शे, भूतशुद्धौ वायोराकाशे विलापनमभिधाय "ततोभ्रूमध्यादि ब्रह्मरन्ध्रपर्य्यन्तं स्वच्छं वर्त्तुलमाकाशमण्डलम्" इत्युक्तम् । तदेव मण्डलं विशेषे चिन्तनीयम् यथोक्तं "जलस्य मण्डलं प्रोक्त"मित्युपक्रम्य "वृत्तं द्विवृत्तहितेषे" मन्त्रमहो० ।

**आकाशमय** पु० आकाश+प्रायार्थे मयट् । आकाशप्राये आत्मनि । "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयः चक्षुर्मयः श्रोत्रमय आकाशमयो वायुमयस्तेजोमयः अम्मयः पृथिवीमयः" शत०ब्रा० । "योऽयमात्मनः संसारसंबन्धः स वास्तवो न भवति किन्त्वौपाधिक एवेति तदुपायोन् दर्शयितुमात्मनो वास्तवरूपमाह स वा इति । स प्रकृतः संसारी अयमविद्यावत्काम्य विनिर्मुक्तः स्वप्रकाशोऽपरोक्षः आत्मा कूटस्थःसाक्षी चिद्धातुरेवम्भूतः सोऽयमात्मा वै ब्रह्म अशनायाद्यतीतः परमात्मैव । ब्रह्मैव सन्नयमात्माऽविद्ययाऽब्रह्मवत् प्रतिपन्नः पुनः सम्यग्ज्ञानात्तत्प्रध्वंसे ब्रह्मैवावतिष्ठतइति भावः । इदानीं यत्प्रयुक्तमेवं विधब्रह्मात्मनो बन्धस्तानुपाधीनाह, विज्ञानमय इति विज्ञानं बुद्धिस्तत्प्रायः बुद्धेरैक्याध्यासाद्धि तद्धर्मस्य कर्त्तृत्वादेरात्मनि आरोपितत्वं तत्प्रायत्वम् । अस्मिन् प्रकरणे सर्वोऽपि मयट् प्रायार्थे न तु विकारार्थे तत्र तदसम्भवात्" शा०भाष्यम् । [ राजनि० ।

**आकाशमांसी** स्त्री आकाशभवा मांसी । क्षुद्रजटामांस्याम्

**आकाशमूली** स्त्री आकाशे भूमिशून्यदेशे मूलमस्याः ङीप् । कुम्भिकायाम् (पाना) ।

**आकाशयान** न० आकाशे यायते ऽनेन या-करणे ल्युट् ७त० । आकाशगमनसाधने विमाने ।

**आकाशरक्षिन्** पु० आकाशे इव अत्युच्चप्राचीरोपरि स्थितः सन् रक्षति रक्ष-णिनि । दुर्गबहिःप्राचीरोपरिस्थिते रक्षके । "सञ्चारोयत्र लोकानां दूरादेवावबुध्यते । प्रगण्डी सा च विज्ञेया बहिःप्राकारसंश्रिता । प्रणिधिस्तत्र यत्नेन कर्त्तव्यो भृतिमिच्छता । स एवाकाशरक्षीति तूच्यते शास्त्रकोविदैः" । भा०शा०अ०६९ व्या०नी०क० ।

**आकाशवचन** न० आकाशे वचनम् । पात्राप्रवेशेऽपि तदीयवाक्यं प्रविष्टपात्रेण श्रुत्वा आकाशवाक्यत्वेन कल्प्यते नाटकाङ्गे १वाक्यभेदे "नेपथ्योक्तं श्रुतं तत्र आकाशवचनं तथा । समाश्रित्यापि कर्त्तव्यमाकुलं नाटकादिषु" सा०द० । अलक्षितशरीरतया देवादिभिरुच्चार्य्यमाणे २वाक्ये च ।

**आकाशवत्** त्रि० आकाशः गम्यतयाऽस्त्यस्य मतुप् मस्य वः स्त्रियां ङीप् । आकाशगामिनि "प्रतिस्थन्दा दक्षिणमूरुमपाच्छाद्य तस्मिन् सादयित्वाऽकाशवतीभिरङ्गुलीरपिदध्यात्" आश्व० श्रौ०सू० । [पथि ।

**आकाशवर्त्मन्** न० आकाशोवर्त्मैव गम्यत्वात् । आकाशरूपे

**आकाशवल्ली** स्त्री आकाशस्य वल्ली शाखेव अत्युच्चशिखत्वात् । (अमरवेल इति) ख्यातायां लतायाम् राजनि० ।

**आकाशवाणी** स्त्री आकाशे भवा वाणी । अदृश्योत्पादकपुरुषत्वेनाकाशादिवोत्पन्नायां देवादिवाचि ।

**आकाशसलिल** न० आकाशात् पतितं सलिलम् । आकाशात् पतिते जले । तच्च चतुर्विधं मेघादिधारानिस्सृतं धारं, चन्द्रकरतश्चागतं कारम्, तुषारकृतं तौषारम्, संहृतहिमखण्डेननिर्वृत्तं च हैमम् । तच्च सुश्रुते दर्शितम् अम्बुशब्दे ३२० पृष्ठे उक्तम् ।

**आकाशस्फटिक** पु० आकाशेभवः स्फटिकइव । वर्षोपले करकाख्ये संहतजलखण्डे । तदुत्पादविधयौ श्रीपतिराह । "उद्धूतैः पांसुभिर्भूमेः प्रचण्डपवनोद्धयात् । मेघमण्डलमानीतैर्मालिन्यपरिवर्ज्जितैः । मिश्रणाज्जलबिन्दूनां पिण्डभावोभवेदिह । इषद्धिमपतन्त्येते इवन्ते च पुनश्चितौ" ।

**आकाशास्तिकाय** पु० कर्म० अर्हन्मतसिद्धे जीवभिन्ने आवरणाभावरूपे पदार्थभेदे । सच अर्हच्छब्दे ३८३ पृष्ठे दर्शितः

अपि चावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत । सौगते हि समये पृथिवी- भगवन् ! किंसन्निश्रयेत्यस्मिन् प्रश्नप्रतिवचनप्रवाहे पृथिव्यादीनामन्ते वायुः किंसन्निश्रय इत्यस्य प्रश्नस्य प्रतिवचनं भवति वायुराकाशसन्निश्रय इति तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात् तस्मादप्ययुक्तमाकाशस्यावस्तुत्वम् । अपि च निरोधद्वयमाकाशञ्च त्रयमप्येतन्निरुपाख्यमवस्तु नित्यञ्चेति विप्रतिषिद्धं नह्यवस्तुनो नित्यत्वमनित्यत्वं वा सम्भवति वस्त्वाश्रयत्वाद्धर्मधर्मिव्यवहारस्य । धर्मधर्मिभावे हि घटादिवद्वस्तुत्वमेव स्यात् न निरुपाख्यत्वम्" भा० । आ समन्तात् काशते काश–अच् । "रतिमाकाशभवा सरस्वती" कु० "आकाशगङ्गापयसः पतेताम्" माघः आकाशात्तु विकुर्वाणात् सर्वगन्धवहः शुचिः मनुः" "घटसंवृतमाकाशे नीयमाने यथा घटे" सां०प्र०भा० "आकाशो जायते तस्मात् तस्य शब्दगुणः स्मृतः" मनुः । रूपादिषु मध्ये शब्दमात्रग्राहकतया श्रोत्रस्याकाशात्मकत्वेऽपि कर्णशष्कुलीरूपोपाधिभेदाद्यानात्वमौपाधिकमेकस्यादिशः प्राचीत्यादिवत् एकस्य कालस्य क्षणादित्ववच्च । २परब्रह्मणि "आकाशोह्वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदाय विजिज्ञासितव्यम्" श्रुतिः "यावानयमाकाशस्तावानयमन्तर्हृदयाकाश" इति छा०उ० । "आकाशस्तल्लिङ्गात्" शा०सू० । "आकाशवत् सर्वगतश्च नित्यः" श्रुतिः गीता च । ३छिद्रे गणितादिप्रसिद्धे ५शून्याङ्के च ।

**आकाशकचा** स्त्री ६त० । ब्रह्माण्डपुटवेष्टने लोकालोकपर्वतरूपसीमापर्यन्तव्यापके सूर्यकिरणसञ्चारावधिभूते वृत्ताकारे गगनस्थे गोलवेले । तन्मितिरुक्ता" सि०शि० "कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजगेन्दुभिर्ज्योतिःशास्त्रविदोवदन्ति नभसः कक्षामिमां योजनैः १८७१२०६९२००००००००। तद्ब्रह्माण्डकटाहसम्पुटतटे केचिज्जगुर्वेष्टनम् केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः । करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम् । दिनकरकरनिकरकरम्बिततमसो नभसः परिधिरुदितस्तैः ।" तथा च सूर्यकिरणप्रचारावधिस्थानस्य नभःकक्षात्वेन कल्पितम् । वस्तुतोऽपरिच्छिन्नत्वादाकाशस्य ततोऽपि सत्त्वात् न तन्मात्रमानम् । अतएव "ब्रह्माण्डमेतन्मितमस्तु नो वेति" ब्रह्माण्डस्यानिर्धारितप्रमाणकत्वं तत्रोक्तम् । व्याख्यातं च प्र०मि० "एभिस्तुल्यां गणकाः नभसः कक्षामाकाशपरिधिं वदन्ति तत्र कथमनन्तस्याकाशस्येयत्ता वक्तुं शक्यते इत्याशङ्क्य अहर्पतिद्युतिभाजोनभसः परिधेरिदं मानं वदन्ति अतएव पौराणिकागणकाः ब्रह्माण्डपरिधिं वदन्ति केचिल्लोकालोकं वदन्ति यतस्तदन्तर्वर्त्तिन एवार्करश्मयः । एवमन्ये वदन्तीति नास्माकं मतमित्यर्थः प्रमाणशून्यत्वात्" । करतलकलितसकलब्रह्माण्डगोला एवं वक्तुं शक्नुवन्ति न वयम्" । तेन पौराणिकमतमेतत् सूर्यकिरणसञ्चारस्थानपर्यन्तत्वोपाधिना तत्कल्पनमिति द्रष्टव्यम् ।

**आकाशकल्प** पु० ईषदसमाप्त आकाशः आकाश+कल्पप् । ब्रह्मणि "निष्कलत्वाद्विभुत्वाच्च तथाऽनश्वरभावतः । ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम्" इत्युक्तेः व्योमगतजडतान्यूनतया ततोवैलक्षण्यात् तस्य तत्कल्पत्वम् ।

**आकाशगङ्गा** स्त्री आकाशपथवाहिनी गङ्गा । मन्दाकिन्याम् । "उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम्" माघः । आकाशनद्यादयोऽप्यत्र । आकाशस्यावलम्बनत्वाभावेऽपि मेरुशिखरस्यात्युच्चतया स्वर्गताकल्पनेन तस्यैवाकाशतुल्यता ततएव वहने आकाशे वहनोत्प्रेक्षणात् तथात्वम् । अतएव गङ्गाया स्त्रिपथगामित्वं पुराणेषूक्तम् यथा च गङ्गायास्त्रिपथगत्वं तथा गङ्गाशब्दे वक्ष्यते

**आकाशगा** स्त्री आकाशे अत्युच्चस्थाने सुमेरुशिखरे गच्छति गम–ड । १स्वर्गगङ्गायाम् २आकाशगामिमात्रे त्रि० ।

**आकाशजननी** स्त्री आकाशस्य छिद्रस्य जननीव पोषिका । छिद्रवत्यां प्रगण्ड्याम् । दुर्गमध्यस्थितानां जनानां बाह्यार्थदर्शनार्थं छिद्रवती भित्तिः प्रगण्डी तद्द्वारैव हि रिपुसत्त्वासत्त्वौ आग्नेयास्त्रं स्वयमलक्षिततया बहिः सैन्यैः क्षिप्यते। दुर्गनिर्माणोपदेशे "प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तथा । आपूरयेच्च परिखां स्थाणुनक्रझषाकुलाम्" भा०शा० प०६९ अ० "सञ्चारो यत्र लोकानां दूरादेवावबुध्यते प्रगण्डी सा च विज्ञेया बहिःप्राकारसंस्थिता" प्रगण्डीं परिभाष्य "दुर्गप्राकारभित्तौ शूराणामुपवेशस्थानानि प्रगण्डी । आकाशजननी तत्रैव एककक्षायां भित्तौ तत्रत्यानां रक्षणभूतायां बाह्यार्थदर्शनानि क्षुद्रच्छिद्राणि यद्द्वाराग्नेयास्त्रगुलिकाः मोक्ष्यन्ते इति" नीलक० ।

**आकाशदीप** पु० आकाशे दीयमानोदीपः । "तुलायां तिलतैलेन सायंसन्ध्यासमागमे । आकाशदीपं यो दद्यात् मासमेकं निरन्तरम्" ब्रह्माण्डपु० उक्ते तुलास्थरवौ सायमुच्चस्थाने दीयमाने दीपे ।

**आकाशभाषित** न० आकाशे भाषितम् । अलक्ष्यशरीराणां

ऽदृश्यानां देवादीनां गगनोद्भवे वचने आकाशवाण्याम् ।

**आकाशमण्डल** न॰ आकाशोमण्डलमिव । १नभोमण्डले आकाशस्य निरवयवत्वेन अनवच्छिन्नत्वेन च वेष्टनाकार मण्डलाभावेऽपि भूगोलवृत्तोपाधिकृतं तदीयं मण्डलमिव भवति । योहि नभोभागो भूगोलेनानावृतः सन् दृष्टिप्रचार पथवर्त्तिलेकानां तस्यैव भूगोलोपाधिना गोलाकारत्वं कल्प्यते । एतेनापि प्रमाणेन भूमेर्गोलाकारत्वानुमानम् यदि भूमिर्गोलाकारा न स्यात् कथं तदाऽनन्तानवच्छिन्नस्याकाशस्य गोलाकारत्वमुपलभ्येत कस्यचिदुपाधेरेव च स्वभावात् तस्य गोलाकारत्वमुपलभ्यते इति कल्प्यम् अन्यस्य च परिधेरदर्शनात् परिशेषात् भूमेरेव तथात्वसिद्धिरिति तस्या गोलाकारता तद्द्वाराकाशस्य तथात्वकल्पनमिति “आकाशमण्डलमध्यमध्यास्ते” कादं॰ नभोमण्डलादयोऽप्यत्र “नैतन्नभोमण्डलमम्बुराशिः” सा॰द॰ तन्त्रोक्ते भूतशुद्धौ चिन्तनीये भ्रूमध्यावधिब्रह्मरन्ध्रान्तस्थिते वृत्ताकारे स्वच्छे २नभोमण्डले च “वृत्तं द्विवस्तत् षड्विन्दुलाञ्छितं मातरिश्वनः” तन्त्र॰। पदार्थादर्शे, भूतशुद्धौ वायोराकाशे विलापनमभिधाय “ततोभ्रूमध्यादि ब्रह्मरन्ध्रपर्य्यन्तं स्वच्छं वर्त्तुलमाकाशमण्डलम्” इत्युक्तम् । तदेव मण्डलं विहेषे चिन्तनीयम् यथोक्तं “नभस्य मण्डलं प्रोक्तं”मित्युपक्रम्य “वृत्तं द्विवस्विहेषे” मन्त्रमहो॰ ।

**आकाशमय** पु॰ आकाश+प्रायार्थे मयट् । आकाशप्राये आत्मनि । “स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयः चक्षुर्मयः श्रोत्रमय आकाशमयो वायुमयस्तेजोमयः अम्मयः पृथिवीमयः” शत॰ब्रा॰ । “योऽयमात्मनः संसारसंबन्धः स वास्तवो न भवति किन्त्वौपाधिक एवेति तदुपाधीन् दर्शयितुमात्मनो वास्तवरूपमाह स वा इति । स प्रकृतः संसारी अयमविद्यातत्कार्य्य विनिर्मुक्तः स्वप्रकाशोऽपरोक्षः आत्मा कूटस्थःसाक्षी चिद्धातुरेवभूतः सोऽयमात्मा वै ब्रह्म अशनायाद्यतीतः परमात्मैव । ब्रह्मैव सन्नयमात्माऽविद्याऽब्रह्मवत् प्रतिपन्नः पुनः सम्यग्ज्ञानात्तत्प्रध्वंसे ब्रह्मैवावतिष्ठतइति भावः । इदानीं वक्ष्यमाणमेवं विधस्यात्मनो बन्धस्तानुपाधीनाह विज्ञानमय इति विज्ञानं बुद्धिस्तत्प्रायः बुद्धेरैक्याध्यासाद्धि तद्धर्मस्य कर्त्तृत्वादेरात्मनि आरोपितत्वं तत्प्रायत्वम् । अस्मिन् प्रकरणे सर्वोऽपि मयट् प्रायार्थे न तु विकारार्थे तत्र तदसम्भवात्” शा॰भाष्यम् । [ राजनि॰ ।

**आकाशमांसी** स्त्री आकाशभवा मांसी । क्षुद्रजटामांस्याम्

**आकाशमूली** स्त्री आकाशे भूमिशून्यदेशे मूलमस्याः ङीप् । कुम्भिकायाम् (पाना) ।

**आकाशयान** न॰ आकाशे यायते ऽनेन या–करणे ल्युट् उत॰ । आकाशगमनसाधने विमाने ।

**आकाशरक्षिन्** पु॰ आकाशे इव अत्युच्चप्राचीरोपरि स्थितः सन् रक्षति रक्ष–णिनि । दुर्गबहिःप्राचीरोपरिस्थिते रक्षके । “सञ्चारोयत्र लोकानां दूरादेवावबुध्यते । प्रगण्डी सा च विज्ञेया बहिःप्राकारसंश्रिता । प्रणिधिस्तत्र यत्नेन कर्त्तव्यो भृतिभिक्षता । स एवाकाशरक्षीति कथ्यते शास्त्रकोविदैः” । भा॰शा॰अ॰६९ व्या॰नी॰क॰ ।

**आकाशवचन** न॰ आकाशे वचनम् । पात्राप्रवेशेऽपि तदीयवाक्यं प्रविष्टपात्रेण श्रुत्वा आकाशवाक्यत्वेन कथिते नाटकाङ्के १वाक्यभेदे “नेपथ्योक्तं श्रुतं तत्र आकाशवचनं तथा । समाश्रित्यापि कर्त्तव्यमाकृष्यं नाटकादिषु” सा॰द॰ । अलक्षितशरीरतया देवादिभिरुच्चार्य्यमाणे २वाक्ये च ।

**आकाशवत्** त्रि॰ आकाशः गम्यतयाऽस्त्यस्य मतुप् मस्य वः स्त्रियां ङीप् । आकाशगामिनि “प्रतिस्थिता दक्षिणमूरुमपाच्छाद्य तस्मिन् सादयित्वाऽकाशवतीभिरद्भिरपि-दध्यात्” आश्वला॰श्रौ॰सू॰ । [पथि ।

**आकाशवर्त्मन्** न॰ आकाशोवर्त्मेव गम्यत्वात् । आकाशरूपे

**आकाशवल्ली** स्त्री आकाशस्य वल्ली शाखेव अत्युच्चशिखत्वात् । (अमरवेल इति) ख्यातायां लतायाम् राजनि॰ ।

**आकाशवाणी** स्त्री आकाशे भवा वाणी । अदृश्योत्पादकपुरुषत्वेनाकाशादिवोत्पन्नायां देवादिवाचि ।

**आकाशसलिल** न॰ आकाशात् पतितं सलिलम् । आकाशात् पतिते जले । तच्च चतुर्विधं मेघादिधारानिःसृतं धारं, चन्द्रकरतश्चागतं कारम्, तुषारकृतं तौषारम्, संहतहिमखण्डेननिर्वृत्तं च हैमम् । तच्च सुश्रुते दर्शितम् अम्बुशब्दे ३३० पृष्ठे उक्तम् ।

**आकाशस्फटिक** पु॰ आकाशेभवः स्फटिकइव । वर्षोपले करकाख्ये संहतजलखण्डे । तदुत्पादविषये श्रीपतिराह । “उद्धूतैः पांसुभिर्भूमेः प्रचण्डपवनोच्चयात् । मेघमण्डलमानीतैर्मालिन्यपरिवर्ज्जितैः । मिश्रणाज्जलविन्दूनां पिण्डभावोभवेदिह । इयहृच्चिपतन्त्येते इवन्ते च पुनःक्षितौ” ।

**आकाशास्तिकाय** पु॰ कर्म्म॰ अर्हन्मतसिद्धे जीवभिन्ने आवरणाभावरूपे पदार्थभेदे । सच अर्हच्छब्दे ३८२ पृष्ठे दर्शितः

**आकाशीय** त्रि॰ आकाशस्येदं छ। नाभसे "वायव्यमिदमाकाशीयमिति"। "शब्दवहुलमाकाशीयं तच्चार्दवलौघिरलाघवमिति" च सुश्रुतः। दिगा॰यत् आकाश्यमप्यत्र त्रि॰।

**आकाशे** अव्य॰ आ+काश–के। "दूरस्थाभाषणं यत् स्याद्शरीरनिवेदनम्। परोक्षान्तरितं वाक्यं तदाकाशे निगद्यते" भरतोक्ते नाटकाङ्गे वाक्यभेदे "कञ्चुकी (इति आकाशे) विहङ्गिके। अपि श्वशूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती" (कर्णं दत्त्वा) किं कथयसि आर्या एषा भानुमतीत्यादि" वेणीस॰।

**आकिञ्चन्य** न॰ अकिञ्चनस्य भावः ष्यञ्। दरिद्रतायाम्।

**आकिदन्ति** पु॰ १देशभेदे २तद्देशवासिनि च। दामन्या॰ आयुधजीविसंघार्थे छ। आकिदन्तीयः तद्देशीयायुजीविसंघे। बहुषु अस्य लुक्। आकिदन्तयः।

**आकीर्ण** त्रि॰ आ+कॄ–क्त। १व्याप्ते, २विक्षिप्ते च। "आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः" रघुः। "स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो" श्यामास्तवः।

**आकीम्** अव्य॰ आ–कन्–वा॰ ईमि। १वर्ज्जने २वितर्के च चादिगणे माकीमित्यत्र आकीम् इति पाठान्तरम् "आकीं सूर्य्यस्य रोचनाद्विश्वाद्देवाँ उषर्बुधः" ऋ॰१,१४,९,।

**आकुञ्चन** न॰ आ+कुचि–ल्युट्। सङ्कोचे, प्रसारितस्य संक्षिप्तत्वसम्पादनसाधने क्रियाभेदे "आकुञ्चनन्तु सत्स्वेवावयवानामारम्भकसंयोगेषु परस्परमवयवानामनारम्भकसंयोगोत्पादकं वस्त्राद्यवयविकौटिल्योत्पादकं कर्म, यतो भवति सङ्कुचति पद्मं सङ्कुचति वस्त्रं सङ्कुचति चर्मेति प्रत्ययः" वै॰सू॰ उप॰। स च कर्मभेदः कर्म च पञ्चविधम्। "उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि" वै॰सू॰। अत्र च उत्क्षेपणत्वावक्षेपणत्वाकुञ्चनत्वप्रसारणत्वगमनत्वानि कर्मत्वसाक्षाद्व्याप्याः पञ्च जातयः" वै॰सू॰उ॰। कर्म च "एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्" वै॰सू॰ उक्तलक्षणकम्। विवृतञ्च उप॰ "एकमेव द्रव्यमाश्रयो यस्य तदेकद्रव्यं न विद्यते गुणोऽस्मिन्नित्यगुणम्" संयोगविभागेष्वनपेक्षकारणमिति स्वोत्पत्त्यनन्तरोत्पत्तिकभावभूतानपेक्षमित्यर्थः तेन समवायिकारणापेक्षायां पूर्व्वसंयोगाभावापेक्षयाञ्च नासिद्धत्वम्। स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षत्वं वा विवक्षितम् पूर्व्वसंयोगध्वंसस्यापि स्वोत्पत्त्यनन्तरानुत्पत्तिकत्वेन अभावत्वेन तस्याद्यक्षणे सम्बन्धाभावात्, तेन नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्मत्वम्। प्रचलतीति प्रत्ययासाधारणकारणतावच्छेदकजातिमत्त्वं वा गुणान्यनिर्गुणमात्रवृत्तिजातिमत्त्वं वा स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिविभागकारणतावच्छेदकजातिमत्त्वं वा" "उत्क्षेपणं तथावक्षेपणमाकुञ्चनं तथा। प्रसारणञ्च गमनं कर्माण्येतानि पञ्च च" भाषा॰ "सन्धिगतः पीड्यमानो न प्रवर्त्तेत आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणीय स्यति" "प्रसारणाकुञ्चनबन्धनपीडनैर्भृशमुपचरेत्" अनुमल्लृते चाकुञ्चनप्रसारणादिभिर्विशेषैः" इति च सुश्रुतः।

**आकुञ्चित** त्रि॰ आ+कुचि–क्त। १आभुग्ने २सङ्कोचिते च। "नतांसमाकुञ्चितसव्यपादम्" भट्टिः।

**आकुल** त्रि॰ आ+कुल–क। व्यग्रे। "तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्" गीता "त्रासाकुलः परिपतन् परितो निकेतान् पुम्भिः" "अभिचोद्य प्रतिवासुरासीत् कार्य्यद्वयाकुलः" इति च माघः। निराकुलः पर्य्याकुलः व्याकुलः समाकुलः। आकुलत्वञ्च मनचाञ्चल्यसम्पादकमानसावस्थाभेदः, स्वक्रियाऽसामर्थ्यञ्च। कृत्यर्थे णिच् आकुलयति अभूततद्भावे च्वि कृभ्वस्त्यनुप्रयोगः आकुलीभूतः आकुलीकृतः "द्रविणं परिमितमधिकव्ययिनं जनमाकुलीकुरुते"

**आकुलाकुल** त्रि॰ आकुल+प्रकारे द्वित्वम्। १आकुलप्रकारे २अत्यन्ताकुले च।

**आकुलि** पु॰ आ+कुल–इन्। व्याकुलत्वे।

**आकुलित** त्रि॰ आ+कुल–क्त। व्याकुलीभूते आकुल+कृत्यर्थे णिच् कर्म्मणि क्त। आकुलीकृते "मारीचलव्यतिकराकुलितेव सिन्धुः" कुमा॰।

**आकुलीकृत** त्रि॰ अनाकुलः आकुलः कृतः आकुल+च्वि–कृ कर्म्मणि क्त व्याकुलतां प्रापिते। [भूते।

**आकुलीभूत** त्रि॰ आकुल+च्वि–भू–क्त। स्वयं तथा-

**आकूत** न॰ आ+कू–भावे क्त। आशये अभिप्राये। "स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्" सा॰ का॰ यथा याष्टीकादयः–"कृतसङ्केताः पराक्रन्दने प्रवृत्ताः तत्रान्यतमस्याकूतमवगम्यान्यतमः प्रवर्त्तते तथा अन्यतमस्य करणस्याकूतात् स्वकार्य्यकरणाभिमुख्यादन्यतमं करणं प्रवर्त्तते" इति सां॰ कौ॰ "इतीरिताकूतमनीलवाजिनः" किरा॰। [वेदनाकूणितत्रिभागेण" काद॰।

**आकूणित** आ+कूण–क्त। ईषत्सङ्कुचिते। "मदनशरशल्य-

**आकूति** स्त्री आ+कू–भावे क्तिन्। अभिप्राये। "आकूतीनाञ्च चित्तीनां प्रवर्त्तक! नमामि ते" भा॰व॰ २६२

ख० । द्रौपदीकृतकृष्णस्तवः । "आकूतिः सत्या मनसो मे अस्तु" ऋ० १०,१२८,४ । "सं म आकूतिर्ध्यात्" ऋ० ४,२६,२ । संज्ञायां क्तिच् । स्वायम्भुवमनोः शतरूपायां पत्न्यामुत्पादिते कन्याभेदे तत्कथा यथा । "कस्य रूपमभूद्द्वेधा यत् कायमभिचक्षते।ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत । यस्तु तत्र पुमान् सोऽभून्मनुः स्वायम्भुवः स्वराट्। स्त्री यासीत् शतरूपाख्या महिष्यस्य महात्मनः । तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे । स चापि शतरूपायां पञ्चापत्यान्यजीजनत् । प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च भारत !। आकूतिर्देवहूतिश्च प्रसूतिरिति सत्तम !। आकूतिं रुचये प्रादात् कर्दमाय तु मध्यमाम् । दक्षायादात् प्रसूतिञ्च यतआपूरितं जगत्" भा० ३स्क०।

**आकृति** स्त्री आक्रियते व्यज्यते जातिरनया करणे क्तिन् । जातिव्यञ्जकेऽवयवसंस्थानभेदे । "आकृतिग्रहणा जातिः" महाभा० । "जात्याकृतिव्यक्तयस्तु पदार्थः" गौ०सू० तत्राकृतिलक्षणं तत्रैवोक्तम् "आकृतिर्जातिलिङ्गाख्या" गौ० । "जातेर्गोत्वादेः सास्नादिः संस्थानविशेषो हि लिङ्गमिति । "इयमाकृतिरेव शक्यार्थः इति केचिन्मन्यन्ते । तदभिप्रायेण, महाभा०। "येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्द इति" अनाकृतिः संज्ञा आकृतिमन्तः संज्ञिन" इति । "लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते" इति च महाभा० । गौतमेन तु इतरपक्षनिराकरणेन त्रयाणामेव शक्यार्थत्वमुररीकृतं यथा।"आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः" सू०। आकृतिः पदार्थः कुतः सत्त्वस्य प्राणिनोगवादेर्व्यवस्थानसिद्धेर्व्यवस्थितत्वसिद्धेः तदपेक्षत्वादाकृत्यपेक्षत्वात् अयमश्वोगौरयमित्यादि व्यवहारस्याकृत्यपेक्षत्वात् आकृतिरेव शक्यार्थः । इति यन्मतं तद्दूषयितुं जातेः पदार्थत्वमाह "व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः" सू० । मृद्गवके व्यक्त्याकृतियुक्तेऽपि प्रोक्षणादीनामप्रसङ्गात् जातिः पदार्थः।इतरथा मृद्गवकस्यापि व्यक्तित्वात् गवाकृतिमत्त्वाच्च वैधप्रोक्षणादिप्रसङ्ग इति भावः। एवं जात्याकृतिव्यक्तीनां प्रत्येकस्य शक्यत्वपक्षं निराकृत्य त्रयाणामेव शक्यत्वमित्याह । "जात्याकृतिव्यक्तयस्तु पदार्थः" सू० "तुशब्देन एकमात्रपदार्थत्वव्यवच्छेदः एकवचनं तु तिसृष्वेकैव शक्तिरिति सूचनाय, विभिन्नशक्तौ कदाचित् कस्यचिदुपस्थितिः स्यात् । शक्तेस्तुल्यत्वेऽपि व्यक्तेर्विशेष्यत्वं तथैव शक्तिग्रहात् । नचाकृत्यादिसाधारणशक्यतावच्छेदकाभावात् न शक्त्यैक्यम् इति वाच्यम् तथा नियमे मानाभावात् इदं गवादिपदमभिप्रेत्याह तेन पश्वादिपदस्य जात्यवाचकत्वेऽपि न क्षतिः जातिपदं वा धर्म्मपरं तथैव लक्षणस्य वक्ष्यमाणत्वादिति" वृत्तिः । एवं शक्यत्वं व्यवस्थाप्य आकृतेर्लक्षणञ्च "आकृतिर्जातिलिङ्गाख्या" सू० प्रायच्छितम्। एतेनाकृतिशब्दस्य जातिव्यक्त्योः संबन्धपरत्वकल्पनमर्वाचीनानां परास्तम् सम्बन्धस्य जातिलिङ्गत्वाभावात् तस्य शक्यतावच्छेदकसम्बन्धत्वेन शक्यत्वाभावाच्च। शा०भा० आकृतीनां नित्यत्वोक्तिः तुल्याकृतिप्रवाहनित्यत्वाभिप्रायेण द्रष्टव्या "यत्राकृतिस्तत्र गुणा वसन्ति" नीतिः "न ह्यविषये तवाकृतिः" "त्वदुदाहरणाकृतौ गुणाः" इति च नैष० २आकारे "इङ्गितं हृद्गतोभावो बहिराकार आकृतिरिति" सज्जनोक्तेः ३आकृतियुक्ते देहे "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" शकु० । "स्वष्टाकृतिः पत्ररथेन्द्रकेतोः" रघुः । "स्फुरितं मनोगतमिवाकृतयः" "गोवर्द्धनस्याकृतिरन्वकारि" इति च माघः । "नाकृतिसुलभा सुभगता" उद्भटः । ४आकारे भूलम्न्यादौ च आकृतिगणः ।

**आकृतिगण** पु० आकृतौ आकारप्रसिद्धोगणः शाक०त० । पाणिन्युक्ततत्तत्कर्म्मनिमित्ते शब्दसमूहे । यथा स्वरादिराकृतिगणः कण्ड्वादिरित्यादि गणपाठे भूरिप्रयोगः ।

**आकृतिच्छत्रा** स्त्री छादयति छद–णिच् कर्त्तरि ष्ट्रन् ह्रस्वः २त० । (घोषा) घोषातकीलतायाम् ।

**आकृष्ट** त्रि० आ+कृष–क्त । कृताकर्षणे । "नाकृष्टं न च टङ्कितं न नमितं नोत्थापितं स्थानतः" महाना० ।

**आकृष्टि** स्त्री आ+कृष–क्तिन् । आकर्षणे ।

**आंके** अव्य० आ+कन–डे । १अन्तिके २दूरे च निरु० । "त्वमग्ने ऋभुराके नमस्य" ऋ०२,१,१०

**आकेकरा** स्त्री आके अन्तिके कीर्य्यते कॄ–कर्म्मणि अप् । "दृष्टिराकेकरा किञ्चित्स्फुटापाङ्गे प्रसारिता । मीलितार्द्धाऽपरा लोके तारा व्यवर्त्तनोद्भवा" इत्युक्तलक्षणे दृष्टिभेदे नेत्रादिविशेषणत्वे न० "निमीलदाकेकरलोलचक्षुषा" माघः।

**आकेनिप** त्रि० आकेऽन्तिके निपतन्ति नि+पत–ड । अन्तिकपातिनि "आकेनिपासो अहभिर्दविध्वतः" ऋ० ४,४५,६,

**आकोकेर** पु० ज्योतिषोक्ते मकरराशौ । "क्रियतावुरिजिश्च मकुलीरलेयपाथेययूककौर्पाख्याः । तैक्षिक आकोकेरोहृ-

द्रोगश्चान्वभं चेत्यम्" ज्यो० । [पूर्ब्वस्य वा । अपाटवे ।

**आ(अ)कौशल** न० अकुशलस्य भावः ष्यञ् । द्विपदद्वृद्धिः

**आक्रन्द** आ+क्रन्द-घञ् । १सारवे रोदने, २आह्वाने, ३शब्दे, च । कर्म्मणि घञ् । ४मित्रे, ५भ्रातरि च । आधारे घञ् । ६दारुणे युद्धे, दुःखिनां ७रोदनस्थाने च । आक्रन्दयति अच् । ८पार्ष्णिग्राहपश्चाद्वर्त्तिनि नृपभेदे । अरिशब्दे ३५५ पृष्ठे विवृतिः "आक्रन्दे चाप्यपेक्षेति न दण्डं मनुरब्रवीत्" मनुः पार्ष्णिग्राहञ्च संप्रेक्ष्य तथाक्रन्दञ्च मण्डले" मनुः ।

**आक्रन्दन** न० आ+क्रन्द्-ल्युट् । १सारवरोदने २आह्वाने च ।

**आक्रन्दिक** त्रि० आक्रन्दे दुःखिनां रोदनस्थानं धावति ठञ् ठक् वा । दुःखिनां रोदनस्थानधावके ठञि स्त्रियां ङीप् ।

**आक्रन्दिन्** त्रि० आक्रन्दति आ+क्रदि+णिनि । रोदनपूर्व्व-काह्वायके । "परस्पराक्रन्दिनि चक्रवाकयोः" कुमा० ।

**आक्रन्दे** अव्य० आ+क्रन्द्-आधारे के । युद्धे निरु० ।

**आक्रम** पु० आ+क्रम-घञ् अवृद्धिः । १बलेनातिक्रमणे । ल्युट् । आक्रमणमप्यत्र न० । आक्रम्यते परलोकोऽनेन करणे घञ् । परलोकप्राप्तिसाधने २विद्याकर्म्मादौ । "अथ यथाक्रमोऽयं परलोके स्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति" बृ०उप । "अयं पुरुषः परलोकस्थाने प्रतिपत्तव्ये निमित्ते यथाक्रमो भवति यादृशेन परलोकप्रतिपत्तिसाधनेन विद्याकर्म्म पूर्व्वप्रज्ञा-लक्षणेन युक्तोभवति तमाक्रमं परलोकस्थानायोन्मुखीभूतं प्राप्ताङ्कुरीभावमिव बीजं तमाक्रममाक्रम्यावष्टभ्य" भा० "अथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते" शत०ब्रा० । ३सताक्रमणे ४अभिभूते ५व्याप्ते ६व्याघ्रे च । आक्रामति पराभवति क्षुधाम् आ+क्रम-अच् । ७अन्ने "आक्रमोऽस्याक्रमाय त्वा" यजु० १५,९ । "आक्रमोऽन्नम्" वेददीपः ।

**आक्रान्त** त्रि० आ+क्रम-क्त । १पराभूते २स्तोपरिगत्या व्याप्ते समग्रैव समाक्रान्तं द्वयं द्विरदगामिना" रघुः । "नितान्तमाक्रान्त इवाङ्गनानाम्" माघः ।

**आक्रान्ति** स्त्री आ-क्रम भावे क्तिन् । आक्रमणे उपरिस्थानेन प्राप्तौ "आक्रान्तिसम्भावितपादपीठम्" कुमा० ।

**आक्रीड** पु० आक्रीड्यत्र आ+क्रीड-घञ् । क्रीड़ास्थाने उद्यानादौ । "आक्रीड़पर्व्वतास्तेन कल्पिताः स्वेषु वेश्मसु" कुमा० "कमप्याक्रीड़मासाद्य तत्र विश्रिश्रमिषुः" दशकु० । कर्त्तरि अच् । २विहारशीले त्रि० ।

**आक्रीडिन्** त्रि० आ+क्रीड़-णिनि । क्रीड़ाशीले स्त्रियां ङीप् ।

**आक्रुष्ट** त्रि० आ+क्रुश-क्त । १कृताक्रोशे यं प्रति आक्रोशः कृतस्तस्मिन् । २शब्दिते ३निन्दिते च । "भेरीभिराक्रुष्ट-महागुहामुखम्" माघः । भावे क्त । ४परुषभाषणे न० "मार्जारमूषिकास्पर्शे आक्रुष्टे क्रोधसम्भवे" काल्या० "आक्रुष्टे परुषभाषणे" आ०त० रघुनन्दनः ।

**आक्रोश** पु० आ+क्रुश-घञ् । १विरुद्धचिन्तने, २शापे ३निन्दायाञ्च ल्युट् आक्रोशनमप्यत्र न० । ४अपवादे "पूर्व्व-मासीद्दूराक्रोशं स्ववतस्तस्य भूतले" रामा० 'कुलाक्रोश-करं लोके धिक् ते चारित्रमीदृशम्" रामा० ।

**आक्रोशक** त्रि० आ+क्रुश-ण्वुल् । आक्रोशकारके ।

**आक्रोष्टृ** त्रि० आ+क्रुश-तृच् । आक्रोशकारके । आक्रुश्यमानोनाक्रोशेन्मन्युरेव तितिक्षतः ॥ आक्रोष्टारं निर्द्दहति सुकृतं चास्य विन्दति" भा०आ०प० ८६ अ० ।

**आक्ली** अव्य० आ+क्लिद्-डी । विकारे ऊर्य्यादि । आक्लीकृत्य ।

**आक्लेद** पु० आ+क्लिद्-घञ् । आर्द्रीभावे । [जाते वैरे ।

**आक्षद्यूतिक** न० अक्षद्यूतेन निर्वृत्तम् ठक् । आक्रीड़या

**आक्षपाटिक** पु० अक्षपटे क्रीड़ास्थाने व्यवहारस्थाने वा नियुक्तः ठक् । १अक्षक्रीड़ाध्यक्षे २व्यवहाराध्यक्षे प्राड्विवेके च ।

**आक्षपाद** त्रि० अक्षपादस्येदम् अण् । १गौतमसाम्भ्मिमते । तेन प्रोक्तम् अण् । तत्कृते २शास्त्रे च तच्च शास्त्रं प्रमाणादि षोडशपदार्थतत्त्वावेदकं पञ्चाध्यायात्मकम् । प्रमाणप्रमे-येत्यादि सूत्रमारभ्य हेत्वाभासाश्च यथोक्ताः इत्यन्तसूत्र-समुदायात्मकम् । तस्य संक्षिप्तार्थः न्यायशब्दे वक्ष्यते । अक्ष-पादप्रणीतं वेत्ति अण् । न्यायमताभिज्ञे ३नैयायिके च ।

**आक्षार** पु० आ+क्षर-णिच्-घञ् । अगम्यागमनं कृतं त्वयेति पुरुषं प्रति, अगम्यगमनं त्वया कृतमिति स्त्रियं च प्रति दूषणे । ल्युट् आक्षारणमप्यत्र न० । युच् टाप् । तत्रार्थे स्त्री । [ मापवादकेन दूषिते ।

**आक्षारित** त्रि० आ+क्षर-णिच्-क्त । आक्षारोमिथुनविष-

**आक्षिक** त्रि० अक्षेण दीव्यति जयति जितं वेति अक्ष+ठक् । १अक्षेण देवके २अक्षेण जयिनि ३अक्षजिते च । "प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत्" मनुः भारभूतानक्षान् हरति वहत्यावहति वा वंशा० अक्ष पूर्ब्बात् भारात् ठक् । आक्षभारिकः अक्षभारवाहकादौ त्रि० अक्षोऽत्र वंशादिसाहचर्य्यात् कलिद्रुमः ।

**आक्षित्** त्रि० आ+क्षि-क्विप् । "आवर्त्तमाने "आक्षित् पूर्व्वा-स्वपरा" ऋ०३,५५,५ । "आक्षित् आवर्त्तमानः" भा० ।

**आक्षिप्त** त्रि॰ आ+क्षिप-क्त । १कृताक्षेपे यस्याक्षेपः कृतस्तस्मिन् २आकृष्टे च ।

**आक्षीव** पु॰ आ+क्षीव-णिच्-अच् । १शोभाञ्जनवृक्षे । क्षीव-क्त नि॰ क्षीवोमत्तः प्रादि॰ । २ईषन्मत्ते ३सम्यक्प्रमत्ते च त्रि॰ ।

**आक्षेप** पु॰ आ+क्षिप-घञ् । १भर्त्सने, २अपवादे, ३आकर्षणे, धनादिन्यासरूपे, ४निक्षेपे ५अर्थालङ्कारभेदे स च २८४पृष्ठे दृश्यः। ६विन्यासे "गोरोचनाक्षेपनितान्तगौरैः" कुमा॰ ७उपस्थापने "स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम् । उपादानं लक्षणं चेति" काव्यप्र॰ । ८अनुमाने यथा जातिशक्तिवादिनां मते व्यक्तेराक्षेपात् बोधः । सचानुमानमेव । तथा हि गामानयेति वाक्ये गोत्वकर्म्मकानयनं गोकर्म्मकानयनं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानेन गोत्वाश्रयस्य व्यक्तेरनुमानेन भानम् । यथोक्तं शब्दशक्ति॰ "गामानयेत्यादौ गोत्वादिकर्म्मकत्वेनैवानयनादेरन्वयधीः गोत्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यानयनबुद्धिं प्रत्येव हेतुत्वात् गामनयेत्यादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात् गवादिकर्म्मताकत्वेन बोधस्तूत्तरकालमाक्षेपात् । कर्म्मत्वं गोवृत्ति गोत्वनिष्ठकर्मतात्वात्, आनयनं गोवृत्तिकर्मताकम् गोत्ववृत्तिकर्मताकत्वादित्याद्यनुमानसाम्राज्यात्" । ९तिरस्कारवचने च "विरुद्धमाक्षेपवचस्तितिक्षितः" किरा॰ ।

**आक्षेपक** त्रि॰आ+क्षिप-ण्वुल्। १निन्दके २आकर्षके। "यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः । तदा क्षिपत्याशु मुहुर्मुहुर्देहं नभचरः । मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृत" इत्युक्तलक्षणे ३वातरोगभेदे ४व्याधे च पु॰मेदि॰।

**आक्षेपण** न॰ आ+क्षिप-ल्युट् । आक्षेपार्थे "पतनपीडनप्रहाराक्षेपणव्यालदशनप्रभृतिभिरभिघातविशेषैः" सुश्रु॰ ।

**आ(अ)क्षैत्रज्ञ** न॰ अक्षेत्रज्ञ एव ब्राह्मणा॰ स्वार्थे ष्यञ् । द्विपदवृद्धिः पूर्व्वपदस्य वा । अक्षेत्रज्ञे क्षेत्रानभिज्ञे ।

**आक्षेपिन्** त्रि॰आक्षिपति आ+क्षिप-णिनि । १आकर्षके । आक्षेपः स्वेच्छया पर्य्यालोचनमस्त्यस्य इनि । २स्वेच्छया आलोचनपूर्व्वकाकर्षके च । "बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" पात॰सू॰ । प्राणायामशब्दे विवृतिः ।

**आक्षोट** पु॰ आ+अक्ष-ओट । शैलपीलुभेदे ।

**आक्षोड** पु॰ आ+अक्ष-ओड़ । शैलपीलुवृक्षे ( आखरोट ) इति ख्याते । "बिल्वामलकवदीकाफलमाम्रातदाड़िमम् । भव्यं पारावताक्षोडम्" स्मृतिः "आक्षोडन्जम्बुफलकारफलं काश्मीरप्रसिद्धम्" आह्निकतत्त्वे रघुनन्दनः ।

**आख** पु॰ आखनत्यनेन आ+खन-ड । खनित्रे । अच् स्वार्थे कन् गौरा॰ पाठान्तरम् ङीप् । आखकी क्षुद्रखनित्रे स्त्री ।

**आखण्डल** पु॰ आखण्डयति भेदयति पर्व्वतान् आ+खडि-डलच् डस्य नेत्त्वम् । इन्द्रे । "आखण्डलः काममिदं बभाषे" कुमा॰ "तमीशः कामरूपाणामत्याखण्डलविक्रमः" रघुः । [ पूर्व्वपदाद्युदात्तम् ।

**आखण्डि** आ+खण्ड-इन् आखण्डके भेदके पत्न्यादि॰

**आखन** पु॰ आखनत्यनेन आ+खन-घ । खननसाधने खनित्रे । वेदे तु पृ॰णत्वम् । "एवं तथाप्यज्ञानमाखण कृत्वा" शा॰उ॰ । न शक्यते खनितुं कुद्दालादिभिरपि टङ्कैश्छेत्तुं न शक्योऽखणस्तत्कृत्वा" शा॰भाष्यम् ।

**आखनिक** आ+खन-कर्त्तरि इकन्। १चौरे, २शूकरे, ३मूषिके च ४खननकर्त्तरि त्रि॰ ।

**आखनिवक** पु॰आ+खन-करणे कर्त्तरि वा इकवक । खनित्रे १चौरे २शूकरे ३मूषिके च ५खनके त्रि॰। उर । आखरोधत्त । पालेर्ज्जमितादिः युक्तारोह्यादिश्च ।

**आखर** पु॰ आ+खन-करणे ड । खनित्रे ।

**आखरेष्ठ** त्रि॰ आखरे तिष्ठति स्था-क षत्वम् वेदे नित्यमलुक् । आखरे स्थिते "शशोऽप्याखरेष्ठः" सि॰कौ॰ ।

**आखान** पु॰ आ+खन घञ् । समन्तात् खनने ।

**आखु** पु॰ आ+खन-डु । १मूषिके, २चौरे, ३शूकरे च । कर्म्मणि डु । ४देवताडवृक्षे । "विभवे सति नैवास्ति न ददाति जुहोति न। तमाहुराखु"मित्युक्तलक्षणे ५कृपणे च ।

**आखुकर्णपर्णिका** स्त्री आखुकर्णाविव पर्णान्यस्या वा कप् । (उन्दुरकाणी) लतायाम् ।

**आखुकर्णी** स्त्री आखोः मूषिकस्य कर्ण इव पर्णमस्याः ङीप् (उन्दुरकाणी) मूषिककर्णतुल्यपर्णयुक्तायां लतायाम्।

**आखुग** पु॰ आखुना मूषिकेण गच्छति । गम-ड । मूषिकवाहने गणेशे । तस्य यथा मूषिकवाहनत्वं तथा गणेशशब्दे वक्ष्यते आखुवाहनादयोऽप्यत्र ।

**आखुपर्णिका** स्त्री आखुः तत्कर्णाविव पर्णमस्याः वा कप् । (उन्दुरकाणी)वृक्षे । कबभावे ङीप्। आखुपर्णीत्यपि तत्रैव ।

**आखुभुज्** पु॰आखुं भुङ्क्ते भुज-क्विप् । मूषिकभक्षके बिड़ाले । क । आखुभुजोऽप्यत्र ।

**आखुकरीष** न० ६ त०। मूषिकशुष्कपुरीषरूपकरीषे "तस्मादाखुकरीषं सम्भरति" शत० ब्रा०।

**आखुपाषाण** पु० आखुः खनकः पाषाणः कर्म०। "आखुपाषाणनामायं लोहसङ्करकारकः" इत्युक्ते पाषाणभेदे राजनि०।

**आखुविषहा** स्त्री आखुविषं मूषिकविषं हन्ति हन-ड। मूषिकविषहरे १देवताडवृक्षे, २देवतालीलतायाञ्च।

**आखूत्कर** पु० आखुभिरुत्कीर्य्यते उत्+कॄ-कर्म्मणि-अप्। मूषिकैरुत्कीर्य्यमाणेषु पांशुषु। (उन्दुरमाटि)। "छिरणं निधायोखूत्करान्निवपति" कात्या० ४,८,१६।

**आखूत्थ** त्रि० आखुभ्य उत्तिष्ठति उद्+स्था क। १आखूत्थे। भावे क। २आखूनामुत्थाने न० सि० कौ०।

**आखेट** पु० आखिद्यन्ते त्रास्यन्ते प्राणिनोऽत्र आ+खिट-घञ्। प्राणित्रासार्थायां मृगयायाम्। स्वार्थे कन् आखेटकोऽप्यत्र

**आखेटशीर्षक** न०। आखेट इव शीर्षमस्य। "कपिशीर्षं द्रुमशीर्षं तथा चाखेटशीर्षकम्। इति कुट्टिमसंभेदाः स्युः" इत्युक्ते (खडुङ्गा) कुट्टिमभेदे। [२तत्कुशलमात्रे च।

**आखेटिक** पु० आखेटे कुशलः ठक्। मृगयाकुशले १कुक्कुरे।

**आखोट** पु० आखुः खनित्रमिव उटानि पर्णान्यस्य। (आखरोट) इति ख्याते शैलपीलौ।

**आख्या** स्त्री आ+ख्यायते अनेन आ+ख्या-अङ्। संज्ञायां रूढेनाम्नि वाचकशब्दे। "यशादुमाख्यां सुमुखी जगाम" कुमा० नाम च "येन स्वीयपदार्थस्य मुख्यतः प्रतिपादनं। स्वोत्तरप्रथमापेक्षा तन्नाम स्यात्तदर्थकमिति" शब्दश० उक्तलक्षणकम् "यत् प्रातिपदिकं नाम तन्नाम्नो नातिरिच्यते" इति च तत्रोक्तं "यादृशशब्देन स्वोपस्थाप्यपदार्थमुख्यविशेष्यकान्वयबोधार्थं स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते तादृशः शब्द एव तदर्थकं नाम। घटादयो हि शब्दाः प्रथमान्तत्वेन निश्चिता एव स्वार्थमुख्यविशेष्यकं बोधमुत्पादयन्ति नत्वन्यथा न हि घट इत्यादित इव घटादिभ्यादितोऽपि घटादिमुख्यविशेष्यकः सुबर्थसंख्यादेरवगमः। पीतपटेत्यादिकः समासोऽपि स्वोत्तरं प्रथमाप्रतिसन्धानदशायामेव पटादिमुख्यधर्म्मिताकस्य पीताद्यन्वयबोधस्य जनकः अतएव 'नापदं प्रयुञ्जीतेति" वृद्धाः। पदं विभक्त्यन्तं पीतपटरूपमित्यादावपि नानान्तरवाक्यार्थबोधपूर्ब्बको महावाक्यार्थबोधः पटादिनाम्नः प्रथमान्तत्वाभावेन तदर्थे पीताद्यन्वयधियः पूर्ब्बमसम्भवात् विशिष्टवैशिष्ट्यावगाहितया प्रमाणान्तरेण पटधर्म्मिकपीतनिश्चयादपि तत्र सम्भवात्। नचान्योन्यपरस्परादिनामस्वव्याप्तिः "एभ्यः प्रथमा नाभिधीयते" इति वृद्धैः स्मरणादिति वाच्यं मल्लाभ्यामन्योन्यं हन्यत इत्यादौ मल्लयोः परस्परकर्तृकहननकर्म्मत्वान्वयानुरोधेन तेषामपि प्रथमान्तत्वादन्यथा सकर्म्मकस्य हन्तेर्भावाख्यातसाकाङ्क्षत्वानुपपत्तेरकर्म्मकस्यैव धातोस्तथात्वात्"। तेन न्यायमते प्रथमान्तमुख्यविशेष्यकशाब्दबोधस्वीकारेण तथात्वं वैयाकरणादिमते तु न तथा 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति या० उक्तेः भावप्रधानत्वेनैव बोधः तथाच "अर्थवदधातुरप्रत्ययः प्रातिपदिकं" "कृत्तद्धितसमासाश्चेति" पा० उक्तलक्षणं प्रातिपदिकमेव नामेत्यभिधीयते अतएवोक्तम् "उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम्। नामसंज्ञा भवेत्तस्य स्याद्युत्पत्तिस्तदुत्तरम्" तच्च नाम चतुर्विधम् "रूढञ्च लाक्षणञ्चैव योगरूढञ्च यौगिकम्। तत्रत्या परे रूढयौगिकमप्यतोऽधिकम्" शब्दश० व्याख्यातं च स्वयमेव जगदीशेन। "निरुक्तं नामविभजते। रूढञ्चेत्यादि तत् नाम। चत्वयमवधारणार्थं तेन किञ्चिन्नाम क्वचिदर्थे रूढमेव यथा गोप्रभृतौ गवादि, गमेर्डोः डाभ्यां तुर्घटश्चेत्यादेरौणादिकप्रत्ययस्य शक्तिविरहेण यौगिकत्वविरहात्। किञ्चिल्लाक्षणकमेव यथा तीरादौ गङ्गादि, आद्यव्युत्पत्त्या पूर्ववर्त्तीरे शक्तिग्रहस्यानिर्णयस्याजानिकप्रयोगाभावेन तदभावाध्यवकल्पनात् शक्तेः पूर्ब्बपूर्ब्बप्रयोगनियतत्वात्। किञ्चिद्योगरूढमेव यथा पङ्कजातपद्मादौ पङ्कजादि "किञ्चित् यौगिकमेव यथा पाककर्त्तादौ पाचकादि। रूढयौगिकमप्यधिकं नाम यथा मण्डपमङ्गारजतादि तद्धि कदाचिदवयवशक्त्या योगार्थमेव कदाचिच्च समुदायशक्त्या रूढार्थमेवाभिधत्ते इत्यपरेषाम्मतम्। गौर्वाहीक इत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधकतया गौणं गवादिपदं गोसदृशादौ लाक्षणिकमेव न तु ततोभिद्यते" तत्र रूढादिलक्षणानि तत्रैवोक्तानि यथा "रूढं सङ्केतवन्नाम सैव संज्ञेति कीर्त्त्यते। नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्भिदा। यन्नाम यादृशार्थे सङ्केतितमेव न तु यौगिकमपि तद्रूढं योगरूढन्तु पङ्कजादिकं न तथा रूढनामैव च संज्ञापदेनाभिलप्यते न तु रूढादिवत् संज्ञापि नाम्नोऽवान्तरभेदः, येन विभागव्याघातः स्यात्। संज्ञायाश्च त्रयोभेदाः नैमित्तिकी पारिभाषिकी औपाधिकी चेति। पाचकपाठकादयस्तु न संज्ञाः सङ्केतशून्यत्वादिति ये तु रूढस्य नाम्नश्चतुर्व्विधत्वमाहुस्तन्मतमुन्दर्शयति। जातिद्रव्यगुणस्पन्दैर्धर्मैः सङ्केतवत्तया। जातिशब्दादिभेदेन चातुर्व्विध्यं परे जगुः। गोशब्दादीनां गोत्वादि

जात्या पश्वादीनां लाङ्गूलधनादिद्रव्येण धर्म्मपिशुनादीनां पुण्यद्वेषादिगुणेन चलचपलादीनाञ्च शब्दानां कर्म्मणावच्छिन्नशक्तिमत्त्वाच्चातुर्व्विध्यमेव रूढानामिति । यदुक्तं दण्ड्याचार्य्यैः "शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्व्विध्यादमीषान्तु शब्द उक्तश्चतुर्व्विध" इति तदेतत्कण्डूमूकमूर्खादीनामन्मुन्यादीनाञ्च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः । नैमित्तिकसंज्ञां लक्षयति । जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता । जातिमात्रे हि सङ्केताद्व्यक्तेर्भानं सुदुष्करम् । यन्नाम जात्यवच्छिन्नसङ्केतवत् सा नैमित्तिकी संज्ञा यथा गोचैत्रादिः सा हि गोत्वचैत्रत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते न तु गोत्वादिजातिमात्रं गोपदं गोत्वे सङ्केतितमित्याकारकग्रहात् गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुपपत्तेः एकशक्तत्वपक्षस्यान्यानुभावकत्वेऽतिप्रसङ्गात् । ननु गामानयेत्यादौ गोत्वादिकर्मताकत्वेनैवानयनादेरन्वयधीर्गोत्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यन्वयबुद्धिं प्रत्येव हेतुत्वात् सुवर्णकर्मत्वादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात् गवादिकर्मताकत्वेन बोधस्योत्तरकालमाक्षेपात् कर्मत्वं गोवृत्ति गोत्वनिष्ठकर्मतात्वात् आनयनं गोवृत्तिकर्मताकं गोत्ववृत्तिकर्मताकत्वादित्याद्यनुमानसाम्राज्यात् । न च वस्तुगत्या यद्गोत्वशक्तत्वं तज्ज्ञानस्य हेतुत्वे गोपदं जातिशक्तमित्येवं ग्रहादपि शुद्धगोत्वस्यान्वयबोधापत्तिः गोत्वत्वावच्छिन्नशक्तत्वप्रकारकज्ञानत्वेन तथात्वे च लाघवाद्गोत्वावच्छिन्नशक्तताप्रकारकज्ञानत्वेनैव हेतुत्वं गोत्वत्वाद्यप्रवेशादिति वाच्यम् गोपदं गोत्वशक्तमित्याकारज्ञानत्वेन हेतुतायां शुद्धस्यैव गोत्वस्य विषयितासम्बन्धेन शक्यंशे विशेषणत्वेन गोत्वत्वादिप्रवेशगौरवस्यायोगात् । न हि समवायान्यसम्बन्धेन जातेः प्रकारतायां धर्म्मावच्छिन्नत्वनियमे मानाभावात् अयं गौरित्यादिव्यवसायोत्तरमिमं गोत्वेन जानामीत्याकारे तस्य ज्ञाततालिङ्गकानुमानेऽनुव्यवसाये वा व्यभिचाराच्च प्रागनुपस्थित्या गोत्वत्वादेस्तत्रोपनयायोगात् । एतेन जातेर्निरवच्छिन्नप्रकारत्वस्य समवायसंसर्गावच्छिन्नत्वनियमात् केवलस्य गोत्वादेः शक्यंशे विषयतया सुवर्णकर्मत्वांशे च परम्परया प्रकारत्वायोग इत्यपि प्रत्युक्तम् उक्तस्थल एव व्यभिचारात् । नचैवं कालोगौः पदं गौरित्यादिप्रत्यययोरपि प्रमा स्यात् कालिकादिसम्बन्धेन गोत्वादिमति तत्प्रकारकत्वादिति वाच्यं कालिकादिसम्बन्धेन गोत्वादेः प्रामाण्यस्य गोत्वत्वाद्यवच्छिन्नप्रकारतागर्भत्वेन तादृशमतेः प्रमात्वायोगात् अन्यथा घटत्वादिजातेः संस्थानसमवेतत्वमते संयोगे घट इत्यादिप्रतीतेः समवायेन प्रमात्वस्य दुर्वारत्वापत्तेः शाब्दस्येव प्रत्यक्षस्यापि कालोगौरित्यादिबोधस्य नियमतोगवाद्यभेदावगाहित्वेनैवाप्रमात्वसम्भवाच्चेति भट्टमतानुवर्त्तिनः । तन्मन्दं विनाप्याक्षेपं गामानयेत्यादितोगवादिकर्म्मताकत्वेनानयनादेरन्वयबोधस्यानुभविकत्वात् गौर्गच्छतीत्यादौ शुद्धगोत्वे गतिमत्त्वाद्यन्वयस्यानुभवेनास्पर्शनात् गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्याद्यनुभवस्यासम्भवात् स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्त्वादिहेतुना गवादौ साक्षात्सम्बन्धेन गतिमत्त्वाद्याक्षेपस्य व्यभिचारादिदोषेण दुःशकत्वाच्च । एतेन कर्मत्वादौ गोत्वादेः स्वाश्रयवृत्तित्वसम्बन्धेनान्वयबोधोत्तरं कर्मत्वस्य गोत्ववृत्तित्वं गोवृत्तित्वं विनानुपपन्नमित्यनुपपत्तिधीसहकृतेन गामित्यादिवाक्येनैव कर्मत्वं गवीयमित्यौपादानिकोगवादिव्यक्तिबोध इति श्रीकरमतमप्यनादेयं मिथोविरुद्धाभ्यां शाब्दत्वार्थापत्तित्वाभ्यामवच्छिन्नबोधस्यालीकत्वेन शब्दानुपपत्तिभ्यां सम्भूय तथाविधौपादानिकबोधस्य जननायोगाच्च । यत्तु गौर्ज्ञायते गौर्नश्यति सर्व्वत्र गोत्वादिजातिशक्तेनैव गवादिपदेन लक्षणया गोत्वादिविशिष्टा व्यक्तिर्बोध्यते व्यक्तीनां बहुत्वेनानन्त्यभयेन च तत्र शक्तेरकल्पनात् तात्पर्य्यानुपपत्तेरपि लक्षणाया बीजत्वात् यदाहुर्मण्डनाचार्य्याः "जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति । नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे" इति तदपि तुच्छं व्यक्तिविशेष्यतायां गोत्वादिजातौ गवादिपदस्य सुस्थप्रयोगाभावेन तत्कालस्यावश्यत्वे तद्वति गवादौ लक्षणाया वक्तुमशक्यत्वात् शक्यसम्बन्धस्यैव लक्षणात्वात् । न च गोरन्यो महिष इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे वा स्वावच्छेद्यत्वसम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविधस्थल एव जातौ सुस्थप्रयोगः तत्र पञ्चम्याः स्वार्थेऽवधित्वादौ स्वनिष्ठगोत्वावच्छेद्यत्वसंसर्गेण प्रकृत्यर्थस्य गवादेरन्वयबोधकत्वात् अन्यथा गोगोत्वयोर्भक्तिशक्तिभ्यां गोपदेन बोधने वृत्तिद्वययौगपद्यापत्तेः वस्तुतः शुद्धस्य गोत्वादेः शाब्दधीप्रकारतायाः समवायावच्छिन्नत्वनियमात्तस्यावधित्वादौ स्वावच्छेद्यत्वादिसम्बन्धेनान्वयोदुर्घटएव । द्रव्यं घट इत्यादिप्रतीतेः समवायेन प्रमात्वानुरोधाद्घटत्वजातेर्नानात्वोपगमादिति । प्रभाकरास्तु गोत्वशक्तत्वेन

ज्ञातं पदं ताद्रूप्येण गोशाब्दत्वावच्छिन्नं प्रत्येव हेतुरतो गोत्वशक्तिग्रहाच्च गोत्वेन गवयादेः न वा द्रव्यत्वादिना गोरन्वयधियोऽतिप्रसङ्गः। नचैवं जातेरिव व्यक्तेरपि शक्यत्वमावश्यकं न हि गवादिपदस्य शक्यत्वं जन्यत्वमपि तु जन्यशाब्दधीविषयत्वं तच्च गोत्वस्येव गोरप्यविशिष्टमिति वाच्यं गवादिपदधर्म्मिकस्वशक्तताज्ञानत्वावच्छिन्नशाब्दधीजनकतावच्छेदकत्वेन गोत्वादेरेव गवादिपदशक्यत्वात् गोत्वशक्ततापेक्षया गोशक्तत्वस्य गुरुतया तज्ज्ञानत्वस्य शाब्दं प्रति जनकतानवच्छेदकत्वात्। अतएवान्वयबुद्धेराकाङ्क्षादिघटितत्वेऽपि न तेषां पदशक्यत्वम्। अस्तु वा गोत्वादिशक्तत्वेन ज्ञातं पदं गोत्वादिशाब्दत्वावच्छिन्नं प्रत्येव हेतुर्व्विशेष्यतया तादृशशाब्दं प्रति समवायेन गोत्वस्य नियामकत्वकल्पनाच्च नातिप्रसङ्गः गोत्वादिना गवादेरिव गवयादेर्गोत्वादिनान्वयबोधत्वावच्छिन्नं प्रत्यपि विनिगमकाभावेन गोत्वादिशक्तिज्ञानत्वेन हेतुत्वमपेक्ष्य गोत्वशाब्दत्वावच्छिन्नं प्रत्येव गोत्वस्य तच्छक्तत्वज्ञानस्य च द्वयोः कारणतायामेव लाघवात् वस्तुतो गोत्वशाब्दं प्रति गोत्वशक्तिज्ञानमेव हेतुर्नतु गोत्वमपि जातिव्यक्त्योस्तुल्यवित्तिवेद्यत्वनियमादेव गोव्यक्तीनामन्तर्विषयत्वसिद्धेः प्रमाणविरहादेव गोत्वादिना गवयादिविषयत्वस्य तत्रासिद्धेश्च। यद्यपि जातेर्व्विषयत्वं तत्समवायिव्यक्तिविषयतया निरूपितमिति न व्याप्तिर्गोत्वाद्यालोचने कालो गोत्ववानित्यादिबोधे च व्यभिचारात् नापि जातेर्निरवच्छिन्नप्रकारतायास्तथात्वनियमः गौरयमित्यादिज्ञानस्य मन्मते गोत्वेनेमं जानामीत्याकारे तथात्वात्तथाप्यन्वयबोधस्य निरवच्छिन्नगोत्वादिप्रकारत्वं गवादिविशेष्यतानिरूपितमेवेति व्याप्तिस्तादृशविशेष्यताकत्वं विना शुद्धस्य गोत्वादेरन्वयबोधेनास्पर्शनात् गुरूणां गोत्वेन गवयादिबोधस्यालीकत्वात्। अतएव गवाद्यंशे गोत्वादिप्रकारकबोधः समवायेनैव सम्बन्धान्तरेणापि तत्प्रकारकः स्याद्गोत्वप्रकारतायां गोविशेष्यताकत्वस्येव समवायावच्छिन्नत्वस्यापि व्याप्तिबलेन सिद्धावपि सम्बन्धान्तरावच्छिन्नत्वस्य प्रमाणविरहेणासिद्धेः। एवञ्च गोत्वादिशक्तिज्ञानत्वेन जनकतायां विषयतावच्छेदकत्वाद्गोत्वादिरेव गवादिपदस्यार्थः गवादौ तद्व्यवहारस्तु तादृशावच्छेदकधर्म्मवत्त्वप्रयुक्तो गौणः। नचैवं गम्यादिधातोरपि गत्यादौ शक्तिर्न स्याद्गतित्वादिशक्तिज्ञानादेव ताद्रूप्येण गत्यादेर्गम्यादिधातुतो बोधसम्भवादिति वाच्यं गुरूणां गतित्वादेः संस्थानाद्यव्यङ्ग्यत्वेन जातित्वासम्भवात् उत्तरसंयोगाद्यवच्छिन्नक्रियात्वाद्युपाधिरूपे च तत्र स्वरूपतः शक्तिग्रहायोगात् सखण्डस्य निरवच्छिन्नप्रकारत्वाभावात् निरुक्तक्रियात्वत्वावच्छिन्नशक्तताज्ञानत्वेन हेतुतामपेक्ष्य लघुतया तादृशक्रियात्वावच्छिन्नशक्तिमत्त्वज्ञानत्वेनैव तथात्वौचित्यात् गुरुत्वादिप्रयोज्यस्य पतनत्वादेरखण्डत्वे पतत्यादिधातूनां तत्र शक्तत्वेऽपि चान्यभावाच्च पश्वादिपदानामपि लोमवल्लाङ्गूलादिपर्य्यवसिते पशुत्वादिमात्रे न शक्तिस्तत्र शक्तिग्रहोत्तरं तन्मात्रस्यैवानुभवेन तदाश्रयस्यालाभात् लोमादीनां स्वाश्रयतुल्यवित्तिवेद्यत्वस्य लोमवल्लाङ्गूलवान् देश इत्याद्यनुभवे व्यभिचारादिति प्राहुः” तत्र पारिभाषिकी औपाधिकी च तत्रैव दर्शिता यथा “उभयाद्यवृत्तिधर्म्मेण संज्ञा स्यात् पारिभाषिकी। औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते। उभयाद्यवृत्तिधर्मावच्छिन्नसङ्केतवती संज्ञा पारिभाषिकी यथाकाशडित्थादिः सा हि द्वितीयाद्यवृत्तिनैव शब्दादिना रूपेण तदाश्रयमभिधत्ते नचाकाशादिपदस्य गगनादौ निरवच्छिन्नैव शक्तिः घटादिपदस्यापि घटादौ तादृशशक्त्यापत्तेः घटे शक्तमपि घटपदं न घटत्वावच्छिन्ने शक्तिमदित्यादिग्रहोत्तरं ततः घटत्वविशिष्टस्याननुभवादवश्यं तच्छक्तिरवच्छिन्नेति चेत् शब्दवति शक्तमप्याकाशपदं न शब्दवत्त्वावच्छिन्नशक्तिमदित्येवं ग्रहदशायामाकाशादिपदाच्च शब्दवत्त्वेन गगनस्य प्रतीतिरतस्तस्यापि शब्दवत्त्वावच्छिन्नैव तत्र शक्तिरिति विभाव्यताम्। एतेन घटत्वाद्युपलक्षिते धर्म्मिण्येव शक्तिग्रहस्य ताद्रूप्येण घटाद्यनुभवं प्रति हेतुत्वान्मास्तु घटादिपदस्यापि घटत्वाद्यवच्छिन्ने शक्तिः। परन्तु घटत्वाद्युपलक्षितव्यक्तिष्वेवेति शिरोमण्युक्तमपि प्रत्युक्तं शब्दोपलक्षिते धर्म्मिणि शक्तिग्रहादेवाकाशादिपदात्तदंशे निर्व्विकल्पकात्मकस्मरणमन्वयानुभवश्चोत्पद्यत इति तु नानुभविकं न वा यौक्तिकम्। या चानुगतोपाध्यवच्छिन्नसङ्केतवती संज्ञा सा त्वौपाधिकी यथा भूतद्रूतादिः सा हि सचेतनाद्यवृत्तिविशेषगुणवत्त्ववात्ताङ्गारकत्वाद्यनुगतोपाधिपुरस्कारेणैव प्रवर्त्तते शब्दादिस्तु सखण्डत्वेनोपाधिरपि नानुगतो द्वितीयाद्यवृत्तित्वादतः पारिभाषिके गगनादिपदे नातिप्रसङ्गः। घटत्वादेः संस्थानव्यङ्ग्यत्वमते यदि घटादिपदं विलक्षणसंस्थानवत्त्वेन शक्तं तदौपाधिकमेव यदि च परम्परया वैलक्षण्यवत्त्वेन। तदा नैमित्तिकमेव। वस्तुतः सामान्यस्य शाब्दबुद्धौ स्वरूपतः

प्रकारत्वं समवायेनैवेत्यभिहितं प्रागिति" । लक्षकलक्षण मुक्तं तत्रैवं 'शाब्दबोधार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत् । तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदि । शाब्दबोधार्थसम्बन्धवति यन्नाम सङ्केतितं तदेव शाब्दबोधार्थे लक्षकं यदि शाब्दबोधार्थे शक्तिशून्यं भवेत् । सैन्धवादयश्च शब्दास्तुरगादिसम्बन्धिनि लवणा द्यपि लवणादाविव तुरगादावपि शक्ता एव।गङ्गादयस्तु तीरादावसङ्केतिताः तत्सम्बन्धिनीरादिशक्तत्वेन ग्टहीता एव तीराद्यन्वयं बोधयन्तीति तत्र लक्षका एव । शक्तत्वे पूर्व्वपूर्व्वप्रयुक्तत्वापत्तेः तस्य तद्व्याप्यत्वात् कथञ्चित्तीरादिसम्बन्धित्वेन ग्टहीतादपि गङ्गादिपदात्तीरादेरन्वयबोधेन तीराद्यशक्तत्वे सति तत्सम्बन्धितामात्रन्तु न लक्षणा गङ्गागङ्गायां घोष इत्यादावपि गङ्गागङ्गेतिभागस्य निरूढलक्षणायाः सत्त्वेन वैयर्थ्याभावप्रसङ्गाच्च । एतेन तीराद्यशक्तत्वे सति तीरादिपरत्वं तीरादिसम्बन्ध्यनुभावकत्वं वा तल्लक्षकत्वमित्यपि प्रत्युक्तम् अपभ्रंशस्यापि लक्षकतापाताच्च नचेष्टापत्तिः शक्तिलक्षणान्यतरवृत्तिमत्त्वे तस्य साधुतापत्तेः पदसाधुतायां वृत्तिमत्त्वस्यैव तन्त्रत्वात् । किञ्चानुभावकत्वं यद्यनुभवस्योपधायकत्वं तदा घोषादिपदसाकाङ्क्षस्य गङ्गादिपदस्य तीरलक्षकता न स्यात् तेन तीरसम्बन्धिनो नीरस्यानुभवानर्जनात् स्वरूपयोग्यत्वन्तु गङ्गायामिति वाक्यस्य दुर्वारं तस्याधाधेयताधर्म्मिकनीरानुभवं प्रति नीरार्थकनामोत्तरसप्तमीत्वेन तथात्वात् नीराधेयत्वस्य च नीरसम्बन्धित्वानपायात् । ननु वाक्यमपि लक्षकं भवत्येव कथमन्यथा चित्रगुसमुदायस्य लक्षणया चित्रगोस्वामिनां बोधः कथं वा गभीरायां नद्यां घोष इत्यादौ गभीरनदीतीरस्य न हि तत्र नदीपदं तीरलक्षकं गभीरायामित्यस्यानन्वयापत्तेः न हि तीरं गभीरं नापि गभीरपदम् । तथा नद्यामित्यस्यायोग्यतापत्तेः नापि तीरं नदी तस्माद्वाक्यमेव तत्र गभीरनदीतीरलक्षकमिति मीमांसकाः तन्न गभीरायां नद्यामिति विभक्त्यन्तभागस्य तादृक्तीरलक्षकत्वे घोषाद्याधेयत्वेन तदन्वयानुपपत्तेः समासादन्यत्र नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात् । एतेन तादृशतीरवृत्तितायामेव तद्भागस्य लक्षणयापि न निस्तारः तादृशतीरवृत्तेरेव लक्ष्यत्वे घोषादावभेदेन तदन्वयायोगः समासभिन्नस्थले नामार्थयोरभेदान्वये तयोः समानविभक्तिकत्वस्य तन्त्रत्वात् । न च गभीरायां नद्यामिति भागस्यैव तादृक्तीरलक्षकत्वम् । तदर्थविभक्त्यर्थस्यानन्वयापत्तेर्नहि स भागः प्रकृतिर्येन तदर्थविभक्त्यर्थस्यान्वयः स्यात् गभीरायां नद्यां व्रजेत्यादितोऽपि गभीरनदीतीरकर्म्मकत्वादिबोधापत्तेस्तद्भागस्य वाक्याद्यन्यत्वाच्च तस्माद्गभीरापदं नदीपदं वा तत्र गभीरनदीतीरलक्षकं पदान्तरन्तु तत्र तात्पर्य्यग्राहकमिति सिद्धान्तविदः । चट्पटाद्यनुकरणस्य डुंभाड़ादिक्षोभस्य च स्वानुभावकत्वमपभ्रंशानामिव शक्तिभ्रमादेव । गौर्वाहीक इत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधकतया गौणं गवादिपदं गोसदृशादौ लक्षकमेव न ततोभिद्यते" । तस्य विभागोऽपि दर्शितस्तत्रैव । "अजहत्स्वार्थाजहत्स्वार्थं निरूढाध्वनिकादिकाः । लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा । काचिल्लक्षणा शक्याद्वृत्तिरूपेण बोधकतया अजहत्स्वार्थेत्युच्यते यथा तीरत्वादिना गङ्गादिपदस्य । काचिच्छक्यलक्ष्योभयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वादजहत्स्वार्था यथा द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य । काचित्तल्लक्ष्यतावच्छेदकीभूततद्रूपेण पूर्व्वपूर्व्वं प्रत्यायकत्वात् निरूढा यथा आरुण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वादरुणादिपदस्य । काचित्तु पूर्व्वपूर्व्वं तादृप्येणाप्रत्यायकत्वादाधुनिकी यथा घटत्वादिना पटादिपदस्य । आदिना शक्यसदृशत्वप्रकारेण बोधकतया गौणत्वपस्थाने यथा अग्निर्माणवक इत्यादावग्निसदृशत्वादिना अग्न्यादिपदस्य । तदेवं विविधलक्षणावत्त्वाल्लक्षकं नामापि अजहत्स्वार्थादिभेदादनेकविधमित्यर्थः । स्यादेतत् यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवेत्तर्हि भवेदुपदर्शितक्रमेण लक्षकाणां विभागः नत्वेतदस्ति तीराद्यन्वयबोधं प्रति तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतुतया लक्षकाणामननुभावकत्वात् गुरूणाम् अग्नौ शैत्यं स्पृशेदित्यादौ शक्त्येन दहनादिनेव गङ्गायां घोष इत्यादौ लक्षितेन तीरादिना सार्द्धं सङ्गृहीतासंसर्गकस्यैव सप्तम्यर्थाधेयत्वादेरन्वयबोधप्रविष्टत्वादिति चेन्न प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्मान्तरेऽन्वयबुद्धेर्व्युत्पन्नतया तीराद्यविशेषितस्य कुत्रचिदाधेयत्वादेर्घोषादावान्वयबोधायोगात् । न च शक्त्यैव पदस्य स्वसाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्म्मिकान्वयबोधं प्रति हेतुत्वात्तुनान्वयबुद्धौ लक्ष्यार्थस्य प्रवेशः कुन्ताः प्रविशन्तीत्यादौ लक्ष्यस्य कुन्तधरादेरन्यविशेष्यतानुपपत्तेः कुमतिः पशुरित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यानुभविकत्वाच्च तस्माच्छक्तेरिव भक्तेरपि शाब्दानुभावकं भवत्येव कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभिचारः" ।

लक्षणाभेदेन तदवयवभेदा बहवः लक्षणाभेदाश्च सा० द० दर्शिताः लक्षणाशब्दे विवृतिः । तत्र योगरूढ़लक्षणन्तु शब्द्श० । "स्वान्तर्निविशिष्टशब्दार्थस्वार्थयोर्बोधकत्रिधः । योगरूढ़ं न यदेवं विनान्यस्यास्ति शाब्दधीः । यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकं तन्नाम योगरूढं यथा पङ्कजकृष्णसर्पाश्वकर्णादि तद्धि स्वान्तर्निविष्टानां पङ्कादिशब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना समं स्वार्थस्य पद्मादेरन्वयानुभावकम् । पङ्कजमित्यादितः पङ्कजनिकर्तृ पद्ममित्यनुभवस्य सर्वसिद्धत्वात् । इयांस्तु विशेषोयद्रूढमपि मण्डपरथकारादिपदं योगार्थविनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकं, मण्डपे शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेरप्योग्यत्वेनान्वयाबोधात् । योगरूढन्तु पङ्कजादिपदमवयवशक्त्या रूढ्यर्थमेव समुदायशक्त्या चावयवलभ्यार्थमेवानुभावयति नत्वन्यं व्युत्पत्तिवैचित्र्यात्तथैव साकाङ्क्षत्वात् । अतएव पङ्कजं कुमुदमित्यत्र पङ्कजनिकर्तृत्वेन, भूमौ पङ्कजमुत्पन्नमित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षणयैव कुमुदस्थलपद्मयोर्बोध इति वार्त्तिकम् । ननु पुष्पं पङ्कजमित्यादौ पङ्कजादेरन्वयस्याबोधात् बोधाच्च पङ्कजपुष्पमित्यादौ निर्विभक्तिकेन पङ्कजादिपदेनोपस्थाप्यार्थस्यान्वयधीसामान्यं प्रत्येव तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्यत्वं तन्त्रम् एवं पुष्पं पङ्कजमित्यादौ अन्वयबोधदर्शनात्तदनुरोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वयबोधं प्रति समानविभक्तिकपदोपस्थाप्यत्वञ्च अतस्तदुपस्थापितस्य पङ्कजातादेः कथं पदान्तरानुपस्थापिते पद्मादावन्वय इति चेदपङ्कजवृत्तिः मत्तेत्यादौ स्वसन्दर्भरसंयोगि तरुण्या सुखपङ्कजमित्यादौ च व्यभिचाराद्युक्तव्युत्पत्तेः सङ्कोचेनेति स्वहाय । न च धेनुपदस्य धानकर्त्तृत्वविशिष्टायां गवीव पङ्कजादिपदस्यापि पङ्कजातत्वादिविशिष्टपद्मादौ रूढिरेवास्तु न तु योगरूढिरिति साम्प्रतम् अन्यत्र क्लृप्तशक्तिकेभ्यः पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कजनिकर्तृत्वादेर्लाभसम्भवे तद्विशिष्टस्य पद्मस्य गुरोः समुदायाशक्यत्वादनन्यालभ्यस्यैव शब्दार्थत्वात् । यद्यपि कर्तृवाचकडप्रत्यय एव पद्मत्वविशिष्टस्य लक्षणया लाभसम्भवाच्च पङ्कजभागस्य तत्र शक्तिर्वाचिता प्रकारान्तरालभ्यस्यैव शब्दशक्यत्वमितियुक्तत्वात् क्लृप्तिवर्त्तमानत्वयोरिवैकपदार्थयोरपि कर्तृपद्मयोर्मिथोऽन्वयस्य सम्भवित्वात् तथाप्यवयवानां शक्तेरपक्षे पक्षेऽपि वा पद्मादौ तदर्थस्यान्वयबोधविरोधिधीदशायां पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभावार्थमवश्यम्पद्मत्वादिविशिष्टे पङ्कजादिभागस्य रूढिरेषा इतरथा प्रत्ययार्थावच्छिन्नस्यैव प्रत्ययार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया प्रत्ययोपस्थापितस्यापि पद्मस्यास्तीत्यादिना सहान्वयानुपपत्तेः अतएव पङ्कजादिपदादुद्बुद्धोत्तशक्तिकस्य पुंसः पङ्कजमस्तीत्यादितो जात्वपि कर्त्तास्तीत्याकारकोनान्वयबोधः प्रत्ययमात्रोपस्थाप्यस्य कर्त्तुरन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते । किञ्चैवमेकाक्षरकोषानवधृतशक्तिकानां कखादिप्रत्येकवर्णानामेव निरूढलक्षणया तत्तदर्थानुभावकत्वसम्भवादकमलादिसमुदायस्यापि तत्तदर्थे शक्तिर्विलीयेत कादिप्रत्येकवर्णस्य शक्तिग्रहं विनापि अकादिशब्दादकादेरनुभवार्थं तत्र समुदाये शक्तिरिति तु प्रकृतेऽपि समानं डादिप्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वाग्रहेऽपि पङ्कजादिसमुदायात् पद्मादेरनुभवस्य सर्वसिद्धत्वात् । नचैवं चित्रगुरित्यादावपि चित्रगोस्वाम्यादौ समुदायस्य शक्तिप्रसङ्गः समासत्वस्याविशिष्टत्वादिति वाच्यम् अगृहीतावयववृत्तिकस्य पुंसस्ततोऽर्थानधिगमेनावयवानां वृत्तेरवश्यापेक्षायां तेषामेव तथाविधार्थबोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति" योगरूढभेदस्तत्रैवोक्तः । "सामासिकं तद्धितान्तमिति तत् द्विविधं भवेत् । योगरूढं कृदन्तस्य समासत्वव्यवस्थितेः । तत् योगरूढं सामासिकं समासात्मकं कृष्णसर्पादि तद्धितान्तं वासुदेवादि । कृदन्तस्य पङ्कजादियोगरूढस्य सामासिक एवान्तर्भाव इति नाधिक्यम् । यौगिकलक्षणविभागौ तत्रैव । "योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम् । समासस्तद्धितान्तञ्च कृदन्तञ्चेति तत्त्रिधा । यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रति हेतुस्तन्नाम तादृशार्थे यौगिकम् । योगरूढन्तु कृष्णसर्पादिपदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं न तु तन्मात्रस्य तच्च यौगिकं त्रिविधं समासस्तद्धितान्तं कृदन्तञ्चेति । इन्द्रोऽपि समासः स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वयबोधकतया यौगिकएव । सर्वं ह्येतद् रूढान्यत्वेन विशेषणीयं नातः कृष्णसर्पादौ वासुदेवादौ पङ्कजादौ च योगरूढेऽतिप्रसङ्गः । ब्राह्मणी वध्रूः न्यूद्रे त्यादौ ङीबादेः स्त्रीत्वसाचित्वे तादृशं नाम यौगिकमेव अन्यथा तु स्त्रीत्वादिमति तत्तदर्थे रूढमेव नातोविभागस्य व्याघातः" ।

वैयाकरणमते समासानां योगरूढ़त्वमेव यथोक्तं" वै०भू० । "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् । बहूनां वृत्तिधर्म्माणां वचनैरेव साधने । स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः । चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् । कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः । अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना । कृप्ता यस्यास्ति तत्र तत् किं शक्तिं न कल्पयेः । समास इति वृत्तिमात्रोपलक्षणम् । "समर्थः पदविधिः" इत्यत्र पदमुद्दिश्य योविधीयते समासादिः स समर्थः विग्रहवाक्याभिधानशक्तः सन् साधुरिति सूत्रार्थस्य भाष्यालाभात् । पदोद्देश्यकविधित्वञ्च तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चस्वपि वृत्तिष्वस्त्येव । विशिष्टशक्त्यस्वीकर्त्तृणां मते दूषणं शक्तिसाधकमेवेत्याशयेनाह पङ्कजशब्दवदिति । पङ्कजनिकर्त्तुरपि योगादेवोपस्थितौ तत्रापि समुदायशक्तिर्न सिध्येत् । न च पद्मत्वरूपेणोपस्थितये सा कल्प्यत इति वाच्यम् । चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये तत्कल्पनावश्यकत्वात् । लक्षणयैव तयोपस्थितिरिति चेत् पङ्कजपदेऽपि सा सुवचा । एवं रथकारपदेऽपि तथा च "वर्षासु रथकारोऽग्निमादधीत" इत्यत्रापि विना शक्तिं लक्षणयोगेन ब्राह्मणादिविषयतयैवोपपत्तौ तत्कल्पनं कृत्वा जातिविशेषस्याधिकारित्वं प्रकल्प्यापूर्व्वकल्पनमयुक्तं स्यादिति भावः । साधकान्तरमाह बहूनामिति वृत्तिधर्म्मा विशेषणलिङ्गसंख्याद्ययोगादयस्तेषां वचनैरेव साधने गौरवमित्यर्थः । अयं भावः विशिष्टशक्त्यस्वीकारे राज्ञः पुरुष इत्यत्रेव राजपुरुष इत्यत्रापि स्याद्विशेषणाद्यन्वयः राजपदेन स्वतन्त्रोपस्थितिसत्त्वात् । विभाषावचनञ्च समासनियमवारणाय कार्य्यमिति । ननु "सविशेषणानामिति" वचनाद्य विशेषणाद्यन्वयः विभाषावचनञ्च कृतमेवेत्याशङ्क्य समाधत्ते वचनैरेवेति । न्यायसिद्धमेव सूत्रम् । व्यपेक्षाविवक्षायां वाक्यस्य एकार्थीभावे समासस्येति स्वभावत एव प्रयोगनियमसम्भवात् । सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैकदेशतयान्वयासम्भवात् न्यायसिद्धमिति भावः । अतएव व्यपेक्षापक्षमङ्गाक्ष्य चार्थेतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इति भाष्यकारेण दूषणमप्युक्तम् । तथा धवखदिरौ, निष्कौशाम्बिर्गोरथो घृतघटो गुड़धानाः केशचूड़ः सुवर्णालङ्कारो द्विदशाः सप्तपर्ण इत्यादावितरेतरयोगादिकान्तमुक्तापूर्वमिश्रसङ्घातविकारसुच्प्रत्ययलोपो, वी-

प्साद्यर्थौवाचनिको वाच्य इत्यतिगौरवं स्यादिति । दूषणान्तरमाह । चकारादीति आदिना धनश्यामः हंसगमन इत्यादाविवादीनां पूर्व्वोक्तानाञ्च संग्रहः । दूषणान्तरमाह । बहुव्युत्पत्तिभञ्जनमिति । अयमाशयः चित्रगुरित्यत्र स्वाम्यादिप्रतीतिरनुभवसिद्धा । न च तत्र लक्षणा प्राप्तोदकोग्राम इत्यादौ तदसम्भवात् । प्राप्तिकर्त्तृभिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामप्युदककर्त्तृकप्राप्तिकर्म्मग्राम इत्यर्थालाभात् । प्राप्तेति क्तप्रत्ययस्यैव कर्त्तृकस्य कर्म्मणि लक्षणेति चेत्तर्हि समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरुदकाभिन्नप्राप्तिकर्म्मेति स्यात् । अन्यथा समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः प्राप्तेर्धात्वर्थतया कर्त्तृतासम्बन्धेन भेदेनोदकस्य तत्रान्वयासम्भवाच्च । अन्यथा देवदत्तः पच्यत इत्यत्र कर्त्तृतासम्बन्धेन देवदत्तस्यान्वयसम्भवेनानन्वयानापत्तेः । अथोदकाभिन्नकर्त्तृका प्राप्तिरिति बोधोत्तरं तत्सम्बन्धीग्रामो लक्ष्यत इति चेन्न प्राप्तेर्धात्वर्थतया क्तार्थकर्तारं प्रति विशेष्यतया असम्भवात् । प्रकृतिप्रत्यययोः प्रत्ययार्थप्राधान्यमिति व्युत्पत्तेः । प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्याएव नामार्थत्वेनोदकेन समसभेदान्वयापत्तेश्च । एवमूढ़रथः उपहृतपशुः उद्धृतौदना बद्धपाचिकेत्यादावपि द्रष्टव्यम् । अत्र हि रथकर्म्मकवहनकर्त्ता, पशुकर्म्मकोपहरणोद्देश्यः, ओदनकर्म्मकोद्धरणावधिः बद्धपाककर्त्त्रधिकरणमिति बोधाभ्युपगमात् अतिरिक्तशक्तिपक्षे च घटत्वविशिष्टे घटपदस्येवोदककर्त्तृकप्राप्तिकर्म्मत्वविशिष्टे प्राप्तोदक इत्यादिसमुदायशक्त्यैव निर्वाह इति भावः । साधकान्तरमाह । अषष्ठ्यर्थेति । अयं भावः चित्रगुरित्यादिषु चित्रगवस्वाम्यादिप्रतीतिर्न विना शक्तिमुपपद्यते । न च तत्र लक्षणा सा हि न चित्रपदे चित्रस्वामी गौरिति बोधापत्तेः । गवादिमात्रस्य लक्ष्यैकदेशत्वेन तत्र चित्रादेरन्वयायोगात् । न च चित्राभिन्ना गौरिति शब्दप्रस्वाम्ययोरन्वयबोधोत्तरं तादृशगवस्वामी गोपदेन लक्ष्यतेइति वाच्यम् । गोपदस्य चित्रपदस्य वा विनिगमनाविरहेण लक्षकत्वासम्भवात् । न च गोपदे साक्षात् सम्बन्धएव विनिगमक इति वाच्यम् । एवमपि प्राप्तोदकः कृतविश्व इत्याद्यषष्ठ्यर्थबहुव्रीहौ विनिगमकाप्राप्तेः । यौगिकानां कर्त्राद्यर्थकतया साक्षात्सम्बन्धाविशेषात् । न च पदद्वये लक्षणेति नैयायिकोक्तं युक्तम् बोधावृत्तिप्रसङ्गात् । न च परस्परं तात्पर्य्यग्राहकत्वादेकस्यैवैकदा लक्षणा न द्वयो-

रिति न बोधापत्तिरिति वाच्यम् एवमपि विनिगमनाविरहतादवस्थ्येन लक्षणाया असम्भवात्। नच चरमपदे एव सा प्रत्ययार्थान्वयानुरोधात् प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेरिति वाच्यम् एवं हि बहुव्रीह्यसम्भवापत्तेः "अनेकमन्यपदार्थे" इत्यनेकसुबन्तानामन्यपदार्थप्रतिपादकत्वे तद्विधानात्। किञ्च एवं सति घटादिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात् पूर्व्ववर्णानां तात्पर्य्यग्राहकत्वेनोपयोगसम्भवात् एवं सति चरमवर्णमात्रश्रवणेऽर्थबोधापत्तिरिति चेदत्राप्युदकपदमात्रश्रवणादर्थप्रत्ययापत्तिस्तुल्येत्यन्यत्र विस्तरः। एवञ्च अथवाऽर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना उक्तयुक्तेः अगत्या शक्त्यन्तरकल्पनेत्यर्थः क्लृप्तत्यागः इत्यस्य क्लृप्तशक्त्योपपत्तिरिति व्युत्पत्तित्यागश्च तवास्ति तत्किम् सर्व्वत्र समासे शक्तिं न कल्पयेरिति वाक्यार्थः। यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः न समासे शक्तिः राजपुरुष इत्यादौ राजपदादेः सम्बन्धिलक्षणयैव राजसम्बन्ध्यभिन्नः पुरुष इति बोधोपपत्तेः। अतएव राज्ञः पदार्थैकदेशतया न तत्र शोभनस्येत्यादिविशेषणान्वयः। न वा घनश्यामनिष्कौशाम्बिर्गोरथ इत्यादौ इवादिप्रयोगापत्तिः उक्तार्थतया इवक्रान्तादिपदप्रयोगासम्भवात्। न वा "विभाषेति" सूत्रानावश्यकत्वम् लक्षणया राजसम्बन्ध्यभिन्न इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्येत्यादिप्रयोगनियमसम्भवात्। नापि पङ्कजपदप्रतिबन्दी शक्तिसाधिका तत्रावयवशक्तिमजानतोऽपि बोधात्। नच शक्यपदे लक्षणया तेभ्यो विशिष्टार्थप्रत्ययः सम्भवति। अतएव राजादिपदशक्यपदे राजपुरुषचित्रगुरित्यादौ न बोधः। नच चित्रगुरित्यादौ लक्षणासम्भवेऽप्यर्थबहुव्रीहौ लक्षणाया असम्भवः बहुव्रीहिव्युत्पत्तिभङ्गापत्तेरिति वाच्यम् प्राप्तोदक इत्यादावुदकपदे एव लक्षणास्वीकारात्। पूर्व्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च। घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते विशिष्टस्यैव सङ्केतितत्वात्। बोधकत्वस्यापि प्रत्येकं वर्णेष्वसत्त्वात्। प्रकृते चाव्यवहितसन्निधानेन प्रत्ययार्थान्वयलोभायोत्तरपदे एव सा कल्प्यत इति विशेषः स्वीकृतञ्च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकम्मन्यैरित्याहुः। अत्रोच्यते। समासे शक्त्यस्वीकारे तस्य प्रातिपदिकसंज्ञादिकं न स्यात् अर्थवत्त्वाभावात् "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यस्याप्रवृत्तेः। न च "कृत्तद्धितसमासाश्च" इत्यत्र समासग्रहणात् सा। तस्य नियमार्थतया भाष्यसिद्धतया वैयाकरणभूषणे स्पष्टं प्रतिपादितत्वात्। समासवाक्ये शक्त्यभावेन शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवात्। अथ तिप्तस्झि इत्यारभ्य ङ्योस्सुबिति तिप्प्रत्याहारो भाष्यसिद्धः तमादायातिप्प्रातिपदिकमित्येव सूत्र्यताम् कृतमर्थवदादिसूत्रद्वयेन। समासग्रहणञ्च नियमार्थमस्तु तथा च सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थात्समासस्यापि सा स्यादिति चेत्तथापि प्रत्येकं वर्णेषु संज्ञावारणायार्थवत्त्वावश्यकत्वेन समासाव्याप्तितादवस्थ्यमेव। तथा च प्रातिपदिकसंज्ञारूपं कार्य्यमेवार्थवत्त्वमनुमापयति धूम इव वह्निम्। किञ्चैवं चित्रगुमानयेत्यादौ कर्म्मत्वाद्यनन्वयापत्तिः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात्। यत्तु सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरेव कल्प्यत इति तन्न उपकुम्भं अर्द्धपिप्पलीत्यादौ पूर्व्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्। न च तत्रापि सन्निधानमेव आनुशासनिकसन्निधेर्विवक्षितत्वात् तथा च यत्पदोत्तरं यानुशिष्टा सा तदर्थगतं स्वार्थं बोधयति। समासे च समस्यमानपदोत्तरमेवानुशासनमिति वाच्यम् अर्थवत्सूत्रेण विशिष्टस्यैव विभक्त्यनुशासनात्। अथ प्रकृतित्वाश्रये विभक्त्यर्थान्वय इत्येव कल्प्यत इति चेत्तर्हि पङ्कजमानय दण्डिनं पश्य स्थूलिनं पूजयेत्यादौ पङ्कदण्डस्थूलेष्वानयनदर्शनपूजनादेरन्वयप्रसङ्गात् अघटमानयेत्यत्र घटेऽप्यानयनान्वयापत्तेश्च। न च दण्डादीनां विशेषणतया न तत्रानयनाद्यन्वयः। पाकाद्वोकः धर्म्मात्सुखी इत्यादौ पाकधर्म्मादिहेतुताया रूपसुखादावनन्वयप्रसङ्गात्। यच्च प्रकृत्यर्थत्वं तज्जन्यज्ञानविषयत्वमात्रं तच्चात्राविरुद्धमिति तन्न घटं पश्येत्यत्र घटपदात्समवायेनोपस्थिताकाशवारणाय वृत्त्या प्रकृत्यर्थत्वस्यावश्यकत्वात्। अथ प्रत्ययप्राग्वर्त्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वमिति चेन्न गामानयति कृष्णोदण्डेनेत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात्। अथ समस्यमानपदार्थबोधकत्वं समासोत्तरविभक्तेः कल्प्यत इति चेन्न अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागञ्चापेक्ष्य समुदायशक्तिकल्पनस्यैव युक्तत्वादिति दिक्। अपि च समासे विशिष्टशक्त्यस्वीकारे राजपुरुषः

चित्रगुः नीलोत्पलमित्यादौ सर्वत्रान्वयप्रसङ्गः। राजपदादेः सम्बन्धिनि लक्षणायामपि तण्डुलः पचतीत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुतायाः आवश्यकत्वात् पुरुषादेस्तथात्वाभावात्। तण्डुलः शुक्ल इत्यादौ च प्रातिपदिकार्थैकप्रथमार्थे तण्डुलादेस्तस्य च शुक्ले अभेदेनैवान्वयः। शुभ्रेण तण्डुलेनेत्यादौ च विशेषणविभक्तिरभेदार्था पार्ष्णिकोवान्वय इति नातिप्रसङ्गः। तथा च समासे परस्परमन्वयासम्भवादावश्यकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः। किञ्च राजपुरुषइत्यादेः सम्बन्धिनि सम्बन्धे वा लक्षणा। नाद्यः राज्ञः पुरुष इति विवरणविरोधात् समानार्थकवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्याकाङ्क्षानिर्णयोन स्यात् नान्त्यः राजसम्बन्धरूपः पुरुष इति बोधप्रसङ्गात् विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपञ्चितं वैयाकरणभूषणे। अतएव “वषट्कर्त्तुः प्रथमभक्षः” इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तम् एकप्रसरत्वभङ्गापत्तेरिति तृतीये, “अङ्गैः स्विष्टकृतं यजति” इत्यत्राङ्गानुवादेन न त्रित्वविधानं युक्तम् एकप्रसरत्वभङ्गापत्तेरिति दशमे च निरूपितं सङ्गच्छते। सङ्गच्छते चारुणाधिकरणारम्भः। अन्यथा “अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यत्रारुणपदवदितरयोरपि एकत्वादिगुणमात्रवाचकतया अमूर्त्तत्वात् क्रीणातौ करणत्वासम्भवस्य तुल्यत्वादारुण्यस्यैव वाक्याद्भेदशङ्काया असम्भवादिति प्रपञ्चितं भूषणे। तस्मात्समासशक्तिपक्षो जैमिनीयैरवश्याभ्युपेय इत्यास्तां विस्तरः”।

**आख्यात** त्रि॰ आ+ख्या–कर्मणि क्त। कथिते। आख्यायतेऽनेन वा॰ करणे क्त। तिङ्रूपे प्रत्यये तल्लक्षणमाह शब्दश॰ “धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने। समर्थः स्वार्थयत्नस्य शब्दोवाख्यातमुच्यते” इति। व्याख्यातं चैतत् तेनैव “धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकान्वयबोधसमर्थः शब्दो वाख्यातं तदेव च तिङ् इत्यर्थाल्लभ्यते तिङाख्यातयोः पर्य्यायत्वात्। पाकयत्नस्य इत्यादौ नामार्थेनैव विशिष्टस्वार्थकत्वे तस्याभिधायकः षष्ठ्यादिकोन तु धात्वर्थेन विशिष्टस्य। चैत्रः पचतीत्यादौ धात्वर्थावच्छिन्नस्य यत्नस्य विधेयतया बोधकावपि नामधातू न स्वार्थस्य। चैत्रः पाचक इत्यादौ तु धात्वर्थविशेषितस्य यत्नस्य न विधेयता किन्तु कर्त्तुरेव कृतां धर्म्मिपरत्वात्, अन्यथा पाचकश्चैत्र इत्यादिकम् योग्यमेव प्रातिपादकार्थयोः पाचकचैत्रयोर्भेदेनान्वयस्याव्युत्पन्नतया तदर्थकृतेश्चैत्रादावन्वयायोगाच्च। अयं पक्तुं कालइत्यादौ तुमादिना धात्वर्थावच्छिन्नोऽनुकूलत्वादिः, इयं चिकीर्षत्यादौ च सनादिनेच्छादिरेव विधेयत्वेनानुभाव्यते इति न तेष्वतिप्रसङ्गः। अत्रेदं तत्त्वम्। जीवनयोन्यादिनिखिलयत्नगतं यत्नत्वमेव तिङः शक्यतावच्छेदकं न तु चेष्टाया जनकत्वस्य चिकीर्षाया वा जन्यत्वस्यावच्छेदकतया सिद्धं प्रवृत्तित्वम्। चैत्रोनिश्वसितीत्यादितोऽपि श्वासाद्यनुकूलप्रयत्नस्य प्रतीतेः। तिङर्थकृतौ च धात्वर्थस्य तं करोमीतिप्रतीतिनियामकः साध्यत्वाख्यविषयता प्रभेदस्त्विष्टफलोपधायकत्वलक्षणमनुकूलत्वं वा संसर्गमर्य्यादया भासते तथैव काकाङ्ख्यादतोगत्यादिगोचरनिष्पत्तिदशायां गच्छतीत्यादिको न प्रयोगः। “तत्र निश्वासश्वमात्रप्रतीतावपि प्रयत्नत्वमेव तिङः शक्यतावच्छेदकं न तु प्रवृत्तित्वं पचतीत्यतः पाककृतिमानिति प्रतीतेः नहि प्रवृत्तित्वमेव कृतित्वं पाके प्रवृत्तोऽस्मीत्यस्याप्यनुभवस्य पाकं करोमीत्यतीविषयवैलक्षण्यस्य सर्वसिद्धत्वात् नित्यकृतौ रागप्रयोज्यस्य प्रवृत्तित्वस्य बाधादीश्वरः करोतीत्यादिवाक्यस्यायोग्यतापाताच्च। निविड़निखातस्तु पुरुषः समुत्थानगोचरप्रयत्नवानपि न तदुपधायकप्रयत्नवान् अतस्तत्रायमुत्तिष्ठतीत्यादिकोन प्रयोगः नचैवमीश्वरः पचतीत्यपि स्यात् तस्यापि पाकानुकूलप्रयत्नवत्त्वादिति वाच्यं तिङर्थकृतेरवच्छेदकत्वेनैव संसर्गेण नामार्थान्वयस्य व्युत्पन्नत्वादक्लृप्तौ पचतीत्यादिप्रयोगस्येष्टत्वात् अन्यान्वयविनिवारकच्छेदकत्वस्यैव तादृशतिङर्थकृतेः संसर्गत्वे प्रमाणाभावाच्च। नित्यप्रयत्नव्यावृत्तसंसर्गवत्त्वानुकूलत्वविशेषस्य तिङर्थकृतौ धात्वर्थस्य संसर्गत्वमित्यप्याहुः”। ईश्वरो जानातीच्छति रथोगच्छतीत्यादौ च ज्ञानादिमत्त्वमात्रप्रतीतेः समवायित्वे, चैत्रोजानातीत्यादावनवच्छेदकत्वे, बुद्धिरवगाहते घटोभासत इत्यादौ दैशिकाश्रयत्वे, नश्यतीत्यादौ च प्रतियोगित्वे, तिङोनिरूढ़लक्षणा। कृतित्वावच्छिन्नत्वादेरखण्डत्वे तदवच्छिन्नेऽपि ज्ञानेच्छादेरपि तिङः शक्तिरेव। कृत्यादिकस्त्ववयवः प्रयत्नस्यैवावच्छेदको न तु ज्ञानेच्छादेरपि प्रमाणाभावादतः करोजानातीत्यादिको न प्रयोगः। प्रागुक्तैव वा रीतिरत्रापि। पयः पतति स्यन्दते इत्यादावपि पतनादेः समवायित्वमेव तिङानुभाव्यते न तु तदनुकूलं गुरुत्वद्रवत्वादि येन कम्पितुल्यशरीरेषु तेष्वपि तिङः शक्तिरापाद्यते। पटानां शतं पततीत्यादौ च शतपदार्थस्यैकदेशएव शतत्वसंख्यायां

प्रत्ययार्थयोर्म्रेरन्वयात् संख्यायाः पतनादिसमवायित्व-विरहेऽपि न क्षतिः घटानां शतं संख्या इत्याद्यनुरोधेनैव शतादेर्गुणवाचित्वसम्भवात् ।

तत्र कृत्यादिकं नाख्यातस्यार्थः किन्तु कालः संख्या च तयोः प्रकारान्तरालभ्यत्वात् चैत्रः पचति रथो गच्छतीत्यादौ धात्वर्थस्यैव पाकगत्यादेः कृतिमत्त्वाश्रयत्वादि-सम्बन्धेन चैत्रादौ प्रकारत्वात् मैत्रः पच्यत इत्यादितो मैत्रादेः कर्तृत्वादिना तण्डुलः पचतीत्यादौ तण्डुलादेः कर्मत्वादिना संसर्गेण पाकादावनन्वयेन धात्वर्थ एव धर्मिणि नामार्थस्य भेदेनान्वयोऽव्युत्पन्नो न तु नामार्थेऽपि धात्वर्थस्य । नचैवं ज्ञानं चैत्र इत्यादितोऽपि बोधरूपस्य धात्वर्थस्याश्रयत्वसम्बन्धेन चैत्रे धर्मिण्यन्वयप्रसङ्गः, तत्र ज्ञानादिपदस्य व्युत्पादकनामतया तदर्थस्य नामान्तरार्थे भेदेनान्वयस्याव्युत्पन्नत्वादेव तदसम्भवात् इति प्राभाकराः ।

तदसत् धात्वर्थानुविद्धस्वार्थकर्तृतायामेव लडादेः स्वोपस्थाप्यवर्त्तमानत्वाद्यनुभावकत्वव्युत्पत्तेः कृत्यादेस्तिङर्थत्वं विना तदनुपपत्तेः अन्यथातिप्रसङ्गात् । न च प्रकृत्यर्थ एव तिङः स्वार्थवर्त्तमानत्वाद्यनुभावकत्वनियमः पाकमनिष्पाद्य क्रियान्तरव्यासक्तेऽपि पुरुषे पचतीतिप्रयोगापत्तेः तदानीमपि पाकस्यानुवर्त्तमानत्वात् तिङाद्यन्तधात्वर्थस्य पाकादेर्वर्त्तमानकृत्यादिसम्बन्धेनैव प्रथमान्तस्य नाम्नोऽर्थे साकाङ्क्षत्वात्तथैवमिति चेत् किं कालस्यापि तिङर्थत्वम-त्याशया संसर्गविधयैव तस्य लभ्यत्वात् । पचतीत्यादितो वर्त्तमानत्वादिवत्कृतिप्रकारकप्रतीतेरानुभविकत्वाच्च । किञ्च धात्वर्थस्यैव कृत्यादिसम्बन्धेन चैत्रादावन्वये पचत्यपि चैत्रे नायं पचतीतिप्रयोगप्रसङ्गः संयोगादिसम्बन्धेन पाकाद्यभावस्य तत्र सत्त्वात् कर्तृत्वादेर्वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नपाकाद्यभावस्यालीकत्वेन प्रसेतुमशक्यत्वात् । एतेन मण्डनमते फलस्य धात्वर्थत्वात् तदनुकूलक्रियैवाख्यातेन चैत्रादावनुभाव्यते इति कृतेस्तिङर्थत्वाभावादुक्त-लक्षणमसम्भवीत्यपि प्रत्युक्तं फलस्य धात्वर्थत्वे संयोगो गुण इतिवद्गतिर्गुणोऽनेकाश्रिता इत्यादिप्रयोगापत्तेश्च न हि भावकृतामपि क्रियार्थः प्रमाणाभावात् । ननु यदि स्वार्थकर्तृत्वएव लडादिना वर्त्तमानत्वमनुभाव्यते इति नियमः कथं तर्हि केवलात् पच्यत इत्यादितः पाकादौ वर्त्तमानत्वधीरिति चेत् कएवमाह तत्राप्येकपदोपात्तत्वेन कर्माख्यातोपस्थापिते कर्तृत्वएव वर्त्तमानत्वस्यान्वयात् । इयान् परं विशेषोयत् कर्तृविहितेन लटा धात्वर्थस्य विशेष्यत्वेन, कर्मविहितेन तु तस्य विशेषणत्वेन स्वार्थकर्तृत्वमनुभाव्यते तथैव साकाङ्क्षत्वात् । एतेन चैत्रेण पक्वमित्यादाविव चैत्रेण पच्यते इत्यत्रापि तृतीयैव कर्तृत्वमनुभाव्यते नत्वाख्यातेन, तिङर्थकृतेर्धात्वर्थविशेष्यत्वनियमादिति दीधितिकृन्मतमप्यनादेयम् एकपदोपात्तत्वेन स्वार्थएव कर्तृत्वे शत्रानजादेरिव लडादेर्वर्त्तमानत्वबोधकतया सुबर्थकृतौ तदन्वयासम्भवात् सुबर्थे तिङर्थान्वयस्यादृष्टचरत्वाच्चेति । माल्लिकास्तु चैत्रः पचतीत्यादितः पाकादिकृतिमत्तयैव तत्कर्तृभेदेनापि चैत्रादेरन्वयस्यानुभविकत्वात् कृतिरिव कर्त्तापि तिङर्थः कृतित्वमपेक्ष्य कर्तृत्वस्य गुरुत्वाच्च तदाख्यातस्य शक्यतावच्छेदकमिति तु रिक्तं वचः लक्ष्यतावच्छेदके लक्षणाया इव शक्यतावच्छेदकेऽपि शक्तेरसत्त्वमते तद्गुरुत्वस्याकिञ्चित्करत्वात् एकैकात्मनिष्ठानामनन्तकृतीनां शक्यत्वमपेक्ष्य निखिलात्मनामेव कर्तृत्वे शक्यतायां विपरीतलाघवाच्च । न च कर्त्रनुभवजनकतया सङ्केतितत्वरूपं कर्तृशक्तत्वमेव तिङामसिद्धं, कर्त्रन्वयानुभवजनकतासत्त्वे तत्प्रकारकेश्वरसङ्केतस्य तत्रावश्यम्भावादीश्वरेच्छायाः सदर्थविषयकत्व-नियमादन्यथा कर्त्रनुभवस्वरूपायोग्यत्वादेव तिङां कर्त्तर्य्यशक्तत्वसम्भवे लघ्वपेक्षया कर्त्तरि गुरुत्वोपन्यासस्योन्मत्तप्रलपितत्वापत्तेः । अथैवं घटपदस्यापि लक्षणादिना घटाद्यन्वयानुभावकत्वात् तत्प्रकारकनित्यसङ्केतवत्त्वेन तदपि घटशक्तं स्यात्, न स्यात् घटपदं घटे न शक्तमित्यादिव्यवहारस्य प्रामाणिकत्वेन घटादिपदनिष्ठस्यैव घटानुभावकतया नित्यसङ्केतितत्वस्य घटशक्तित्वात् इत्याख्यातं न कर्तृशक्तमित्येवं व्यवहारस्याप्यसत्त्वात् प्रत्युत पाणिन्यादिप्रामाणिकैस्तिङः कर्तृशक्तत्वेन व्यवहृतत्वात् । एतेन गुणवचनस्य नीलादेर्गुणिशक्तत्वमपि व्याख्यातम् इति प्राहुः" ।

आख्यातार्थस्य धात्वर्थादौ विशेषणतयैवान्वय इति तु वैयाकरणाः यथाह वै०भू०सा०। "फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः । फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्" इति । अस्य व्याख्यायाम् 'कर्त्तरि कृत्' "लः कर्मणि च" पा०सूत्राभ्यां चकारेण कर्त्तरि कर्मणि च तिङः शक्तिरिति लाभे तत्र व्यापाराश्रयः कर्ता फलाश्रयः कर्मेति फलव्यापाररूपयोः विशेषणयोर्धातुनैवोपस्थाप्यत्वात् अनन्यलभ्यस्याश्रयस्यैव तिङर्थत्वम् इत्येवं व्यवस्थापयन्नाह । "पदार्थं निरूप्य वाक्यार्थं निरूपयति

फले इत्यादि। विक्लित्त्यादि फलं प्रति। तिङर्थः कर्तृकर्मसंख्याकालाः। तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणं, संख्या कर्तृप्रत्यये कर्त्तरि, कर्मप्रत्यये कर्म्मणि, समानप्रत्ययोपात्तत्वात्। तथाचाख्यातार्थसंख्याप्रकारकबोधं प्रत्याख्यातजन्यकर्तृकर्म्मोपस्थितिर्हेतुरिति कार्य्यकारणभावः फलितः। नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थ एवान्वयादाख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो वाच्यः सोऽपि चन्द्र इव मुखं दृश्यते, देवदत्तोभुक्त्वा व्रजतीत्यादौ चन्द्रक्त्वार्थयोः आख्यातार्थानन्वयादितराविशेषणत्वघटित इत्यतिगौरवम्। इदमपि कर्तृकर्मणोराख्यातार्थत्वे मानमिति स्पष्टं भूषणे। कालस्तु व्यापारे विशेषणम्। तथा हि "वर्त्तमाने लट्" इत्यत्राधिकाराद्धातोरिति लब्धम् तच्च धात्वर्थं तत्प्राधान्याद्व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः। न च संख्यावत् कर्तृकर्मणोरेवान्वयः शङ्क्यः अतीतभावनाके कर्त्तरि पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च। नापि फले तदन्वयः फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्चेत्यवधेयम्। न चामवातजडीकृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिः। परयत्नस्याभानादप्रयोगात्। किञ्चिच्चेष्टादिनावगतौ चायमुत्तिष्ठति यत्नभावात् फलन्तु न जायत इति लोकप्रतीतेरिष्टत्वात्। एतच्च तिङर्थो विशेषणमेव भावनैव प्रधानम्। यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं, तथापि "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति" निरुक्तोक्तेः भूवादिसूत्रादिस्थक्रियाप्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते। अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः सममभेदान्वयात्प्रथमान्तस्य प्राधान्यापत्तिः। तथा च पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यता न स्यात् प्रथमान्तमृगस्य धावनक्रियाविशिष्टस्य दर्शिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः। न चैवम् अप्रथमासामानाधिकरण्यात् शतृप्रसङ्गः। एवमपि द्वितीयायादुर्व्वारत्वेन पश्य मृगइत्यादिवाक्यस्यैवासम्भवापत्तेः। न च पश्येत्यत्र तमिति कर्माध्याहार्य्यम्। वाक्यभेदप्रसङ्गात् उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयान्वयस्य प्रतिपिपादयिषितत्वात् अध्याहारे अनन्वयापत्तेश्च। एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम् किन्तु आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्य्यकारणभावोद्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु तज्जन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतुः पश्य मृगोधावति, पचति भवतीत्याद्यनुरोधादिति दिक्। इत्थञ्च पचतीत्यत्रैकाश्रयिका पाकानुकूला भावना, पच्यते इत्यत्रैकाश्रयिका या विक्लित्तिस्तदनुकूला भावनेति बोधः। देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वयः। घटोनश्यतीत्यत्रापि घटाभिन्नैकाश्रयकोनाशानुकूलोव्यापार इति बोधः। स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम्। अतएव तस्यां सत्यां नश्यति, तदन्वये नष्टः, तत्प्रागित्वे नङ्क्ष्यतीति प्रयोगः। देवदत्तोजानातीच्छतीत्यादौ च देवदत्ताभिन्नैकाश्रयकोज्ञानेच्छाद्यनुकूलोवर्त्तमानो व्यापार इति बोधः स चान्तत आश्रयतैवेति रीत्योह्यम्"। एवञ्च वैयाकरणमते सुब्भिन्नत्वे सति संख्याबोधकप्रत्ययत्वमाख्यातत्वमिति लक्षणम् "सुपां कर्म्मादयोऽप्यर्था संख्या चैव तथा तिङामित्युक्तेः" यद्यपि आख्यातसामान्यस्य संख्यासामान्यशक्तत्वज्ञापकं सूत्रं नास्ति तथापि लडादेशैकवचनादीनां तत्तत् संख्याशक्तताज्ञापकसूत्रेण आदेशगतं तथात्वं स्थानिनि लकारे कल्पितमिति संख्याबोधनयोग्यत्वमादाय लक्षणसमन्वय इति बोध्यम् "आख्यातमाख्यातेन क्रियासातत्ये" मयूर० गणसूत्रम् तत्र आख्यातपदं च तदन्तपरम् "प्रत्ययग्रहणे तदन्तग्रहणम्। इति नियमात् ३आख्यातान्ते च।

**आख्याति** स्त्री आ+ख्या–क्तिन्। कथने।

**आख्यातृ** त्रि० आ+ख्या–तृच्। उपदेशके। "आख्यातोपयोगे" पा०।

**आख्यान** न० आ+ख्या–भावे ल्युट्। १कथने। २पूर्व्ववृत्तकथने "आख्यानं पूर्व्ववृत्तोक्तिः" सा० द०। "यथा देशः कोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः" वेणी० ३प्रतिवचने च। प्रश्नाख्यानयोः" पा० "विभाषाख्यानपरिप्रश्नयोरिञ्" पा०। करणे ल्युट्। ४भेदके धर्मे। "लक्षणेत्थम्भूताख्यानेत्यादि" पा० इत्थम्भूतः कञ्चित् प्रकारं प्राप्त आख्यायते अनेन इति व्युत्पत्तेः कञ्चित्प्रकारं प्राप्तस्य भेदकोधर्म्म इति सूत्रार्थः यथा भक्तोविष्णुमभि। ५आर्षे महाकाव्यान्तर्गतसर्गभेदे तेन हि कथाविशेषेण वर्ण्णनीयचरिताख्यानात्तथात्वम् महाकाव्यं वर्णयित्वा

तदीयसर्गनामकरणे विशेषमाह" सा० द० 'नामास्य सर्गोपादेयकथया सर्गनाम तु" इत्यभिधाय "अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः" यथा भारते रामोपाख्यानम्। नलोपाख्यानं शकुन्तलोपाख्यानमित्यादि आख्यान+अस्त्यर्थे अर्श० अच्। ६प्रसिद्धाख्यानसंज्ञकसर्गयुक्ते आर्षमहाकाव्यभारतादौ। "स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च" मनुः साङ्गोपनिषदान् वेदान् चतुराख्यानपञ्चमान्" भा०व०। स्वार्थे कन् तत्रैव "नाटकाख्यानकादेशव्याख्यानादिक्रियानिपुणैः" काद०।

**आख्यानकी** स्त्री "आख्यानकी तौ जगुरू गश्चोजे जतावनोजे जगुरू गुरुश्चेदिति" वर्णिते विषमवृत्तभेदे।

**आख्यायक** पु० आ+ख्या–ण्वुल्। परोक्तस्यान्यत्र कथके १दूते "आख्यायकेभ्यः श्रुतसूनुवृत्तिः भट्टिः" २कथकमात्रे त्रि०।

**आख्यायिका** स्त्री आ+ख्या–ण्वुल् "आख्यायिका कथावत् स्यात् कवेर्वंशादिकीर्त्तनम्। अस्यामन्यकवीनाञ्च वृत्तम् गद्यं क्वचित् क्वचित्। कथांशानां व्यवच्छेद आश्वास इति बध्यते। आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्। अन्यापदेशेनाश्वासः मुखे भाव्यर्थसूचनम्" सा०द० उक्ते कथाभेदे कथा च "कथायां सरसं वस्तु गद्यैरेव विनिर्म्मितम्। क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके। आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनमि"त्युक्तलक्षणयुक्ता तत्र आख्यायिका यथा हर्षचरितादि" कथा कादम्बर्यादिः। २उपलब्धार्थबोधककथायाञ्च" अमरः।

**आख्यायिन्** त्रि० आ+ख्या–णिनि। १कथके। २आवेदके दूतादौ च "रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः" शकु०। "रहस्याख्यायिनाञ्चैव प्रणिधीनाञ्च चेष्टितम्" याज्ञ०

**आगत** त्रि० आ+गम–क्त। १आयाते, २उपस्थिते, ३प्राप्ते च। "हेयं दुःखमनागतम्" पात० "क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यत्" स्मृतिः। "पितृत आगतम् पित्र्यमिति" दायभा०। "तत आगतः" पा०। आगता वत जरैव हिमानी सेव्यतां सुरतरङ्गिणी" उद्भटः भावे क्त। ४आगमने न० "गतागतं कामकामा लभन्ते" गीता।

**आगति** स्त्री आ+गम–क्तिन्। १आगमने "लोकस्यास्य गतागतिम्" रामा०। २प्राप्तौ च तासामध्वर्युरागतौ यवो दधीव मोदते" ऋ०२,५,६। वेदैः शास्त्रैः सविज्ञानैर्जन्मना मरणेन च। आर्त्तो गत्या तथाऽऽगत्या" याज्ञवल्क्यः।

**आगत्य(म्य)** अव्य० आ+गम–ल्यप् वा मोलोपे तुक्। आगमनं कृत्वेत्यर्थे तत्रमागत्य सत्येन" याज्ञ०। "आगम्य विल्वशाखायां चण्डिके! कुरु सन्निधिम्" पुरा०।

**आगन्तव्य** त्रि० आ+गम–तव्य। १आगम्ये प्राप्ये 'आगन्तव्यं तु नोद्रष्टुं पुनराश्रममण्डलम्" भावे तव्य। २अवश्यागमने न० आगन्तव्यं झटितिमथुरामण्डलात् गोपकान्ते! पदाङ्कदूतम्।

**आगन्तु** पु० आ+गम–तुन्। १अनियतस्थायिनि अतिथौ "वैदर्भमागन्तुमजं गृहेशम्" रघुः। २हठादुपस्थिते च आगन्तुना सह मैत्री न कर्त्तव्या" हितो०। ३आगमनशीले त्रि०। स्वार्थे कन्। आगन्तुकोऽप्यत्र।

**आगन्तुज** त्रि० आगन्तोः हठादुपस्थितात् जायते जन–ड। हठोपस्थितजाते रोगादौ। "आगन्तुजे भिषग्रोगे शस्त्रे घोत्क्रम्य यत्नतः"। "दोषागन्तुजमृत्युभ्योरसमन्त्रविशारदौ" सुश्रुतः।

**आगम** पु० आ+गम–घञ्। १आगतौ २प्राप्तौ ३उत्पत्तौ च "आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत!" गीता, आगम्यते प्राप्यतेऽनेन करणे घञ्। ४साधनोपाये "आगमैः सदृशारम्भ आरम्भसदृशोदयः" रघुः आगम्यते स्वत्वमनेन। स्वत्वप्रापके ५क्रयप्रतिग्रहादौ "आगमोनिष्फलस्तत्र भुक्तिःस्तोकापि यत्र नो" या० स्मृतिः "अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि" स्मृतिः" यादृशागमस्य प्रामाण्यं तन्निरूपितम् मिता०। "भोगमात्रस्य स्वत्वव्यभिचारात् कीदृशोभोगः प्रमाणमित्यत आह। "आगमोऽभ्यधिकोभोगाद्विना पूर्वक्रमागतात्" या० स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः। स भोगादभ्यधिकोबलीयान् स्वत्वबोधने भोगस्यागमसापेक्षत्वात्। यथाह नारदः। "आगमेन विशुद्धेन भोगोयाति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छतीति"। न च भोगमात्रात्स्वत्वावगमः परकीयस्यापहारादिनोपभोगसम्भवात्। अतएव "भोगं तु केवलं यस्तु कीर्त्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्कर" इति स्मर्यते। अतश्च सागमोदीर्घकालो निरन्तरो निराक्रोशः प्रत्यर्थिप्रत्यक्षश्चेति पञ्चविशेषणयुक्तो भोगः प्रमाणमित्युक्तम्भवति। तथा च स्मर्यते। 'सागमो दीर्घकालश्चाविच्छेदोऽन्यरवोज्झितः। प्रत्यर्थिसन्निधानश्च परिभोगोऽपि पञ्चधेति"। कश्चिदागमनिरपेक्षस्यापि भोगस्य प्रामाण्यमित्याह। विना पूर्वक्रमागतादिति।

पूर्व्वेषां पित्रादीनां त्रयाणां क्रमः पूर्व्वक्रमस्तेनागतो यो भोगस्तस्माद्विना आगमोऽभ्यधिक इति सम्बन्धः । स पुनरागमादभ्यधिकः आगमनिरपेक्षः प्रमाणमित्यर्थः तत्राप्यागमज्ञाननिरपेक्षो न सत्त्वनिरपेक्षः सत्ता तु तेनैवावगम्यत इति बोद्धव्यम् । विना पूर्व्वक्रमागतादित्येतच्च स्मार्त्तकालप्रदर्शनार्थम् । "आगमोऽभ्यधिकोभोगादिति" च स्मार्त्तकालविषयम् । अतश्च स्मरणयोग्ये काले योग्यानुपलब्ध्यागमाभावनिश्चयसम्भवादागमज्ञानसापेक्षस्यैव भोगस्य प्रामाण्यम् । स्मार्त्ते तु काले योग्यानुपलब्ध्यभावेनागमाभावनिश्चयासम्भवादागमज्ञाननिरपेक्ष एव सन्ततो भोगः प्रमाणम् । एतदेव स्फुटीकृतं कात्यायनेन । "स्मार्त्तेकाले क्रिया भूमेः सागमा भुक्तिरिष्यते स्मार्त्तेऽनुगमाभावात् क्रमात् त्रिपुरुषागता" । स्मार्त्तश्च कालो वर्षशतपर्य्यन्तः "शतायुर्वै पुरुष इति" श्रुतेः । अनुगमाभावादिति योग्यानुपलब्ध्यभावेनागमाभावनिश्चयाभावादिति । अतश्च वर्षशताधिको भोगः सन्ततोऽप्रतिरवः प्रत्यर्थिप्रत्यक्षतयागमाभावे चानिश्चिते अव्यभिचारादाक्षिप्तागमः स्वत्वं गमयति । स्मार्त्तेऽपि कालेऽनागमस्मृतिपरम्परायां सत्यां न भोगः प्रमाणम् । अतएव "अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तम्पापं दण्डयेत् पृथिवीपति"रित्युक्तम् । न चानागमन्तु यो भुङ्क्त इत्येकवचननिर्द्देशाद्बहून्यब्दशतान्यपीत्यपिशब्दप्रयोगात् प्रथमस्य पुरुषस्य निरागमे चिरकालोपभोगेऽपि दण्डविधानमिति मन्तव्यं द्वितीये तृतीये वा पुरुषे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गात् नचैतदिष्यते "आदौ तु कारणन्दानं मध्ये भुक्तिस्तु सागमेति" नारदस्मरणात् । तस्मात् सर्व्वत्र निरागमोपभोगे "अनागमन्तु योभुङ्क्त इत्येतद्द्रष्टव्यम् यदपि "अन्यायेनापि यद्भुक्तं पित्रा पूर्व्वतरैस्त्रिभिः । न तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतमिति"। पित्रा सह पूर्व्वतरैस्त्रिभिरिति योज्यम् । तत्रापि क्रमात् त्रिपुरुषागतमित्यस्मार्त्तकालोपलक्षणम् । त्रिपुरुषविवक्षायामेकवर्षाभ्यन्तरेऽपि पुरुषत्रयातिक्रमसम्भवाद्द्वितीये वर्षे निरागमस्य भोगस्य प्रामाण्यप्रसङ्गः तथा सति "स्मार्त्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यत" इति स्मृतिविरोधः । "अन्यायेनापि यद्भुक्तमित्येतच्चान्यायेनापि भुक्तमपहर्त्तुं न शक्यं किम्पुनर्न्यायागमनिश्चय इति व्याख्येयमपिशब्दश्रवणात् । यच्चोक्तम् । "यद्विनागममत्यन्तम्भुक्तं पूर्व्वैस्त्रिभिर्भवेत् । न तच्छक्यमपाकर्त्तुं क्रमात् त्रिपुरुषागतमिति" तत्राप्यत्यन्तमागमं विनेत्यत्यन्तमुपलभ्यमानमागमं विनेति व्याख्येयम् । न पुनरागमस्वरूपं विनेति आगमस्वरूपाभावे भोगशतेनापि न स्वत्वं भवतीत्युक्तं क्रमात्त्रिपुरुषागतमित्येतदुक्तार्थम् । ननु स्मरणयोग्ये काले भोगस्यागमसापेक्षस्य प्रामाण्यमनुपपन्नम् । तथाहि । यद्यागमः प्रमाणान्तरेणावगतस्तदा तेनैव स्वत्वावगमान्न भोगस्य स्वत्वे आगमे वा प्रामाण्यम् अथ प्रमाणान्तरेण नागमोऽवगतः कथन्तद्विशिष्टोभोगः प्रमाणम् । उच्यते । प्रमाणान्तरेणावगतागमसहित एव निरन्तरोभोगः कालान्तरे स्वत्वङ्गमयति । अवगतोऽप्यागमोभोगरहितो न कालान्तरे स्वत्वङ्गमयितुमलं मध्ये दानविक्रयादिना स्वत्वापगमसम्भवादिति सर्व्वमनवद्यम् । आगमसापेक्षो भोगः प्रमाणमित्युक्तम् । आगमस्तर्हि भोगनिरपेक्ष एव प्रमाणमित्यत आह । "आगमेऽपि बलं नैव भुक्तिस्तोकापि यत्र नो" या॰ यस्मिन्नागमे स्तोकापि भुक्तिर्नास्ति तस्मिन्नागमे बलं सम्पूर्णं नैवास्ति । अयमभिसन्धिः स्वत्वनिवृत्तिपरस्वत्वापादनञ्च दानम् । परस्वत्वापादनं च परो यदि स्वीकरोति तदा सम्पद्यते नान्यथा । स्वीकारस्त्रिविधोमानसो वाचिकः कायिकश्चेति । तत्र मानसो ममेदमिति संकल्परूपः । वाचिकस्तु ममेदमित्याद्यभिव्यवहारोल्लेखी सविकल्पकः प्रत्ययः । कायिकः पुनरुपादानाभिमर्शनादिरूपोऽनेकविधः तत्र च नियमः स्मर्य्यते "दद्यात्कृष्णाजिनम्पुच्छे गां पुच्छे करिणङ्करे । केशरेषु तथैवाश्वन्दासीं शिरसि दापयेदिति" । आश्वलायनोऽप्याह । "अनुमन्त्रयेत् पाणिनाभिस्पृशेत् प्राणिनं कन्यां चेति" । तत्र हिरण्यवस्त्रादावुदकदानान्तमेवोपादानादिसम्भवात् त्रिविधोऽपि स्वीकारः सम्पद्यते । क्षेत्रादौ पुनः फलोपभोगव्यतिरेकेण कायिकस्वीकारासम्भवात् स्वल्पेनाप्युपभोगेन भवितव्यम् । अन्यथा दानक्रियायाः सम्पूर्णता न भवतीति फलोपभोगलक्षणकायिकस्वीकारविकलस्यागमो दुर्ब्बलो भवति तत्सहितादागमात् । एतच्च द्वयोः पूर्व्वापरकालापरिज्ञाने । पूर्व्वापरकालज्ञाने तु विशुद्धोऽपि पूर्व्वकालागम एव बलीयानिति । अथ वा "लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृत"मित्युक्तम् । एतेषां समवाये कुत्र कस्य प्राबल्यमित्यत्रेदमुपतिष्ठते । "आगमोऽभ्यधिको भोगाद्विनापूर्व्वक्रमागतात् । आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो" इति अयमर्थः । आद्ये पुरुषे साक्षिभिर्भावितयागमो भोगादभ्यधिकोबलवान् पूर्व्वक्रमागताद्भोगाद्विना । स पुन पूर्व्वक्रमागतो भोगश्चतुर्थे पुरुषे लिखितेन भावितादागमात्बलवान् मध्यमे तु भोगरहितादागमात् स्तोकभोगसहितोऽप्यागमो बलवानिति । एतदेव

नारदेन स्पष्टोक्तं "आदौ तु कारणन्दानं मध्ये भुक्तिस्तु सागमा । कारणं भुक्तिरेवैका सन्तता या चिरन्तनीति" "पश्यतो ब्रुवत इत्यत्र विंशतिवर्षभोगादूर्द्ध्वं भूमेर्द्धनस्यापि दशवर्षभोगादूर्द्ध्वं फलानुसरणं न भवतीत्युक्तम् । तत्र फलानुसरणवद्दण्डानुसरणमपि न भविष्यतीत्याशङ्क्य पुरुषव्यवस्थया प्रमाणव्यवस्थया च दण्डव्यवस्थां दर्शयितुमाह । "आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् । न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी" या० । येन पुरुषेण भूम्यादेरागमःस्वीकारः कृतः । स पुरुषः कृतस्ते स्वेनादिकमित्यभियुक्तस्तमागमं प्रतिग्रहादिकं लिखितादिभिरुद्धरेत् भावयेत् । अनेनचाद्यपुरुषस्यागममनुद्धरतोदण्ड इत्युक्तं भवति तत्सुतो द्वितीयोऽभियुक्तोनागममुद्धरेत्, किन्तु अविच्छिन्नाप्रतिरवसमक्षभोगम् । अनेनचागममनुद्धरतो द्वितीयस्य न दण्डोऽपि तु विशिष्टभोगमनुद्धरतो दण्ड इति प्रतिपादितम् । तत्सुतस्तृतीयोनागमं नापि विशिष्टभोगमुद्धरेदपि तु क्रमागतभोगमात्रम् । अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डोनागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेत्यभिहितम् । तत्र तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी । तत्रापि द्वितीये गुरुः तृतीये गरीयसीति विवेक्तव्यम् । त्रिष्वप्यागमानुद्धरणेऽर्थहानिः समानैव दण्डे तु विशेष इति तात्पर्यार्थः । उक्तञ्च । "आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् । न तत्सुतस्तत्सुतो वा भोगहानिस्तयोरपि" । अस्मार्त्तकालोपभोगस्यागमज्ञाननिरपेक्षस्य प्रामाण्यमुक्तं विना पूर्वक्रमागतादित्यत्र तस्यापवादमाह । "योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् । न तत्र कारणम्भुक्तिरागमेन विनाकृता" या० यदा पुनरागमकर्त्तादिरभियुक्तोऽकृतव्यवहारनिर्णय एव परेतःस्यात्परलोकगतोभवेत्तदा तस्य रिक्थी पुत्रादिस्तमागममुद्धरेत् । यस्मात्तत्र तस्मिन् व्यवहारे भुक्तिरागमरहिता साक्ष्यादिभिः साधितापि न प्रमाणम् ।" व्यव०त०रघुनन्दनेन तु षष्ट्यब्दएव स्मार्त्तकालतया उक्तः । यथा तद्धृतं व्यासवाक्यम् "वर्षाणि विंशतिं भुक्ता स्वामिनाऽव्याहता मही । भुक्तिः सा पौरुषी भूमेर्द्विगुणा तु द्विपौरुषी । त्रिपौरुषी तु त्रिगुणा न तत्रान्वेष्य आगम" इति । त्रिपुरुषभोगे विशेषमाह तत्रैव व्यासः । प्रपितामहभुक्तं यत् तत्पुत्रेण विना च तम् । तौ विना यस्य पिता च तस्य भोगस्त्रिपौरुषः । पिता पितामहोयस्य जीवेच्च प्रपितामहः । त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपुरुषः" इति एवञ्च शतषष्टिवर्षयोः स्मार्त्तकालत्वं देशभेदात् व्यवस्थापनीयम् । अत्रापवादः । "भुक्तिस्त्रैपौरुषी सिध्येदपरेषां न संशयः । अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति । अस्वामिना च यद्भुक्तं गृहक्षेत्रापणादिकम् । सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते । विवाह्यश्रोत्रियैर्भुक्तं राज्ञाऽमात्यैस्तथैव च । सुदीर्घेणापि कालेन तेषां स्वत्वं न सिध्यति" बृह० । अत्रापि विशेषमाह तत्रैव "स्त्रीधनञ्च नृपेन्द्राणां कदाचन न जीर्य्यति । अनागमं भुज्यमानमपि वर्षशतैरपि" आगम्यते तत्त्वमनेन । ६ तत्त्वावेदकशास्त्रे "तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्" सां०का० । "सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र वा आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थवेदिनः" इत्युक्ते ७शास्त्रमात्रे "श्रद्दधतां जायते भक्तिस्ततो गुरुरुपास्यते । स च विद्यागमात् वक्ति विद्यायुक्त्यान्वितो नृप!" देवीपु० । स च गुरुः विद्यासाधनमागमं वक्ति उपदिशतीत्यर्थः । ८वेदे च "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" "आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गोवेदोऽध्येयः ज्ञेयश्चेति" म०भा० । "आगमः प्रयोजकः प्रवर्त्तकः नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति प्रयोजनशब्देन फलं प्रयोजकञ्चेति कैयटः । "आगमपदेन श्रुतिरिति" उद्योतः । "बहवोप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः" रघुः । ९ मन्त्रे च "सर्ववेदः क्रियामूलं ऋषिभिर्बहुधोदितः । कालोदेशः क्रिया कर्त्ता कारणं कार्य्यमागमः । द्रव्यं फलमिदं ब्रह्मन्नवधोक्तोऽजयाहरिः" । भा०१२,११अध्या० "तत्र कालः प्रातरादिः देशः समादिः क्रियाऽनुष्ठानं कर्त्ता ब्राह्मणादि, कारणं स्रुवादि कार्य्यं यागादि आगमोमन्त्रादिः द्रव्यं व्रीह्यादि फलं स्वर्गादि" इति श्रीधरः ।

आ+गम–गत्यर्थत्वात् ज्ञाने भावे घञ् । १०शब्दजन्यबोधे "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्य्यं धर्मशुद्धिमभीप्सुना" मनुः । विविधानां धर्म्माणामागमोयस्मात् विविधागमम् । करणे घञ् । ११शाब्दबोधसाधने शब्दरूपप्रमाणे च "ऐन्द्रियमनुमानञ्च प्रत्यक्षमपि चागमम् । ये तु सम्यक् परीक्षन्ते कुतस्तेषामबुद्धिता" रामा० "आगतः शिववक्त्रेभ्यो गतञ्च गिरिजानने । मतञ्च हृदयाम्भोजे तस्मादागम उच्यते" यामलोक्ते ११ तन्त्रशास्त्रे पुंन० तथा च आगतादीनामाद्याक्षरयुक्तत्वात् तथात्वम्

रुद्रयामले तु मतं श्रीवासुदेवस्येति पाठः क्लीवत्वेन "आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः न हि देवाः प्रसीदन्ति कलौ चान्यविधानतः । पञ्चवक्त्रैर्महेशोक्ता ह्यागमोक्ताः शृणु प्रिये ! । यां कृत्वा कलिकाले च सर्वाभीष्टं लभेन्नरः" तन्त्रसारे यामलम्" प्रसङ्गात् तन्त्ररूपागमस्य प्रामाण्यं तदुपासनादिषु कलौ अधिकारिविशेषस्य कर्त्तव्यता च प्रदर्श्यते। निजनिजकर्मवासनारूपपाशबद्धान् अनात्मज्ञान् जन्ममरणादिक्लेशभाजः संसारपारं गन्तुमसमर्थान् प्राणिनो विलोक्य परमेश्वरः वेदेन कर्मकाण्डोपासनाकाण्डब्रह्मकाण्डात्मकार्थान् समुपदिदेश । तत्र वेदानाम् उच्छिन्नप्रायतया क्रमशो रागबाहुल्येन तदुक्तधर्मेषु उच्छिन्नप्रायेषु सत्सु अनुच्छिन्नानामप्यर्थस्य दुर्बोधत्वामिदानीन्तनादीनां दुरधिगमतया आयासबाहुल्येन च तत्राप्रवर्त्तमानानां क्रमशोविप्लवेषु श्रौतधर्मेषु करुणाकरस्ततः स्वादित्याकलय्य कारुण्योदयेन वेदार्थप्रकाशनार्थं सुगमोपायेन जैमिनिव्यासनारदादिरूपोपाधिभिरुपहितः सन् तत्तद्ग्रन्थान् प्रणीतवान् । तत्र कर्मकाण्डार्थो जैमिना मन्वादिभिश्च सम्यक्तया व्याहृतः उपासनाकाण्डार्थः स्वयं शिवमूर्त्त्या तन्त्रशास्त्रं, नारदादिमूर्त्त्या च पञ्चरात्रादिकं विधाय विवृतः ब्रह्मकाण्डार्थश्च वेदव्यासमूर्त्त्येति विवेकः । ततश्च धर्मे वेदस्यैव स्वतःप्रामाण्येन वेदमूलकत्वादन्येषां प्रामाण्यं तत्र स्मृतीनामिव आगमस्यापि वेदमूलकत्वमनुमीयते । वेदएव रामतापनीयनृसिंहतापनीयाद्यात्मके आगमोक्तोपसनादिसंवादात् तन्मूलकत्वाधिगमात् येषां च मूलानि नाधिगम्यन्ते तेषामपि प्रामाण्यं स्मृति वाक्यवत् अनुमातव्यम् भ्रमप्रमादादिशून्यत्वहेतोः स्मृतिकर्त्तॄणामिव आगमकर्त्तुः शिवस्य सत्त्वात् तन्त्रवाक्यस्य स्मृतिवाक्यवत् प्रामाण्यम् न च बौद्धागमादिवत् विप्रलम्भकवाक्यत्वं रागद्वेषादेस्तत्रासत्त्वात्। तत्र कर्मकाण्डार्थे सर्वेषामपर्य्युदस्तानामधिकारः मुमुक्षोरपि तत्त्वज्ञानपर्य्यन्तं चित्तशोधनार्थं प्रत्यवायपरिहारार्थं च कर्म्मणां कर्त्तव्यतोपदेशात् "तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन तपसेत्यादि" श्रुतेः "आरुरुक्षोर्मुनेर्योगम् कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते" गीतावाक्याच्च । ततोऽन्येषामपि ईश्वरार्पणेन फलानभिसन्धानेन च कृतानां कर्म्मणां बन्धाहेतुत्वात् क्रमशोमुक्तिः फलम्। एवमुपासनाकाण्डार्थेऽपि सर्वेषामधिकारः श्रुतौ तथैव निर्द्देशात् "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत स क्रतुं कुर्व्वीतेति" श्रुत्या सोपाधिकस्यैवोपासनाविधानाच्च । उपासना च मानसी क्रिया ध्यानपरपर्य्याया तत्र निराकारस्य ब्रह्मणोऽसम्भवात् सोपाधिकेश्वरविषयैवोपासना कर्त्तव्या। सा च गुणोपाधिविशिष्टस्यैव तत्तदाकारोपहितस्यापि सम्भवति "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणोरूपकल्पना" इत्युक्तेः । कल्पना च न स्वेच्छया किन्तु शास्त्रादिसिद्धैव । तथा चागमपुराणादिषु यानि यानि रूपाणि वर्णितानि तद्रूपेणैव उपासना कर्त्तव्या । ब्रह्मकाण्डार्थे तु कर्मभिश्चित्तशुद्धौ साकारोपासनेन तदैकाग्र्यवतः वेदान्तोक्तसाधनचतुष्टयवत एवाधिकार इति भेदः । तत्र तान्त्रिकोपासने कर्त्तव्येऽपि "देवोभूत्वा देवं यजेत्" इत्युक्तेः भूतशुद्ध्यादिना आत्मानं शोधयित्वा उपास्यदेवेनैकीभूतमात्मानं ध्यात्वैवोपासनं कार्य्यम् "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुरेव स देवानामिति" श्रुत्या भेदेनोपासनाया निन्दनात् तान्त्रिकोपासनेऽपि कर्त्तव्ये वैदिककर्मसु सावित्रजन्मरूपोपनयनसंस्कारस्येव तन्त्रोक्तदीक्षाया एवाधिकारप्रयोजकत्वम् तत्र दीक्षायाञ्च सर्वेऽपि वर्णा अनुलोमप्रतिलोमजाश्चाधिकारिणः "मां हि पार्थ ! व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिमिति" गीतायां भगवदुपासने सर्वेषामधिकारस्य प्रतिपादनात् । अत्र "पुराणादौ कश्चित् विशेषो दर्शितः यथा "यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च । श्रुतिस्मृतिविरुद्धानि तेषां निष्ठा तु तामसी। करालभैरवञ्चापि यामलं वाममाश्रितम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु। मया सृष्टानि चान्यानि मोहायैव भवार्णवे" इति देवीपुराणवचने वाममाश्रितमिति विशेषणात् श्रुतिस्मृति विरुद्धानीति निर्द्देशाच्च श्रुतिस्मृतिविरुद्धवाममार्गस्यैव निन्दनात् तत्रैवाधिकारिविशेषस्यानधिकारो न तु तन्त्रोक्तेष्वपि इतरांशेषु वेदाविरुद्धेषु इति निर्णयः । वस्तुतः "सौत्रामण्यां सुरां पिबेत्" इति श्रुत्या विहितस्य सौत्रमण्यां सुरासेवनस्येव वामदेव्यसामोपासकस्य "न काञ्चन परिहरेदिति" सर्वस्त्रीगमनस्येव अधिकारिविशेषविषये तस्यापि व्याहृतता । अतएव मनुना "न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेति" सामा-

न्यतो विहितमद्यादौ न दोष इत्युक्तम्। कुलाचारशब्दे वक्ष्यमाणस्य कुलाचारधर्मस्य प्रायेणेदानीन्तनानां दुष्करत्वेन सुतरां तन्मार्गस्य तन्त्रनिर्द्दिष्टाधिकारिणामिदानीमसत्त्वात् नैव कर्त्तव्यता। अथ कश्चित् प्राग्भववासनावशादधिकारी सम्भवति तथापि कुलचूडामणौ "यत्रासवं तु देयं स्यात् ब्राह्मणस्तु विशेषतः। तत्रार्द्रकरसं दद्यात् ताम्रे वा विसृजेन्मधु। देव्यास्तु दक्षिणे भागे चक्रपार्श्वे निवेदयेत्। मद्यद्रव्यं तु शूद्रस्य नान्येषान्तु कदाचन"। "वैश्यस्य माक्षिकं शुद्धं क्षत्रियस्य तु माध्वकम्। ब्राह्मणस्य गवां क्षीरं ताम्रे वा विसृजेन्मधु। नारिकेलोदकं कांस्ये सर्वेषां चैव शोधनम् इति" च द्विजातीनामासवदाननिषेधेन गौणकल्प एवाधिक्रियते न मुख्यकल्पे। "पीत्वा पीत्वा पुनः पीत्वा पतितोधरणीतले। उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते" इति वचनन्तु चतुर्थाश्रमविषयमिति तन्त्रसारः। "निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध" इत्युक्ते चतुर्थाश्रमस्य विधिनिषेधातिक्रान्तत्वेऽपि परमहंसाश्रमस्यैव दोषाभाव इति युक्तमुत्पश्यामः। "वरं प्राणाः प्रगच्छन्तु ब्राह्मणोनार्पयेत् सुराम्" ब्राह्मणो मद्यदानेन ब्राह्मण्यादेव हीयते" इत्युत्पद्ममतन्त्रम्। अतएव कालिका पु० "अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः। नारिकेलोदकं कांस्ये ताम्रे वा विसृजेन्मधु" इत्यनुकल्पो गृहस्थद्विजातिमात्रे विहितः एवं मत्स्यमांसयोर्निषिद्धयोरपि वाममार्गिणां दानादिकं न स्मृतिविरुद्धं "देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्" इति मनुना देवार्चनावशिष्टमांसभोजनस्य विधानात्। एतदपि दिव्यभावविषयमिति तन्त्रसारः "मादकं सर्वदा वर्ज्यं मद्यं मांसं सुलोचने!। ज्ञानेन संस्कृतं तत्तु महापातकनाशनमिति" कुलार्णवोक्तेः। ज्ञानेन सर्वनरेषु आत्मत्वज्ञानेनेत्यर्थः। तदपि न श्रुतिविरुद्धं विश्वनरेषु आत्मदृष्टिमतो वैश्वानरसाम्योपासकस्य सर्वान्नभक्षणविधानवत् तस्यापि तादृशज्ञानमाहात्म्येन तत्र पापानुत्पत्तिसम्भवात् यथा वैश्वानरसाम्योपासकं प्रकृत्य "न किञ्चनानन्नं भवति श्वाश्वभ्य आशकुनिभ्य इति" छा०उ० सर्वान्नभोजनं विहितमेवमस्यापि ज्ञानेन पूतत्वान्न तद्भक्षणं दोषावहमिति। "कृते श्रुत्युदितोमार्गस्त्रेतायां स्मृतिनोदितः। द्वापरे तु पुराणोक्तः कलावागमसम्मतः" इत्यागमवचनं तु प्रशंसापरम् रागादिबाहुल्येन श्रौतादिधर्मस्य कलावसम्भवइति तादृशानां तन्त्राधिकारित्वसूचनार्थञ्च "चकार मोहशास्त्राणि केशवः सशिवस्तथा। कापिलं नाकुलं वामं भैरवं पूर्व्वपश्चिमम्। पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः", कूर्म पु० "शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्। येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि। प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्" पद्मपु० इत्यादिवचनैरागमस्य तामसत्वेन मोहशास्त्रत्वेन निषिद्धत्वेऽपि वेदाविरुद्धांशस्य ग्राह्यतैव। "तथापि योऽंशोमार्गाणां वेदेन न विरुध्यते। सोऽंशः प्रमाणमित्युक्तः केषाञ्चिदधिकारिणाम्" सूतसंहितावचनात् अत्र केषाञ्चिदित्युक्तेः न सर्वेषामधिकारितेति सूचितम् तत्राधिकारिणः शाम्बपु० दर्शिताः। "श्रुतिभ्रष्टः स्मृतिप्रोक्तप्रायश्चित्तपराङ्मुखः। क्रमेण श्रौतसिद्ध्यर्थं ब्राह्मणस्तन्त्रमाश्रयेत्" "पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम्। वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान्" इति च। ततश्च इदानीन्तनानां विशेषतो गौड़देशवासिनां श्रौतधर्म्माग्निहोत्रादिधर्म्मोच्छेददर्शनेन तत्पापनाशाय प्रायश्चित्तपराङ्मुखतादर्शनेन च श्रौतमार्गभ्रष्टतया क्रमेण श्रौताधिकारस्य प्राप्त्यर्थं तन्त्रोक्तोपासनादिषु वेदाविरुद्धेषु अधिकारः। वेदविरुद्धेषु वाममार्गेषु तु चतुर्थाश्रमस्य तन्त्रोक्ताद्भुताश्रमस्यैवाधिकारः न गृहस्थद्विजानाम् प्रागुक्तैः वचनजातैर्ब्राह्मणादिषु मुख्यमद्यदानसेवनयोर्निषेधात् गृहस्थशूद्रस्य तु मुख्येऽप्यधिकारः द्विजानामनुकल्पाचरणेन तन्मार्गाश्रयणेऽप्यधिकार इतिविवेकः। तल्लक्षणन्तु "सृष्टिश्च प्रलयश्चैव देवानां च तथार्च्चनम्। साधनञ्चैव सर्व्वेषां पुरश्चरणमेव च। षट्कर्म्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदोविदुः" इति आगमभेदाश्च तन्त्रशब्दे वक्ष्यन्ते। अतएव कलिधर्म्मप्रकरणे" एवं क्रियायोगपरैः पुमान् वैदिकतान्त्रिकैः। अर्च्चन्नुभयतः सिद्धिम् मत्तोविन्दत्यभीप्सितम्" भाग० ११स्कन्धे२७अध्याये तान्त्रिकपथेनाप्यर्च्चनं विहितम्। "अथ सूतकिनः पूजां वक्ष्याम्यागमनोदिताम्" शा०ति०। आगच्छति प्रकृतिप्रत्ययावनुपहत्य उत्पद्यते कर्त्तरि संज्ञायां च। १२ व्याकरणोक्ते प्रकृतिप्रत्ययानुपघातके अट् इट् इत्यादौ शब्दभेदे "आगमादेशयोर्मध्ये बलीयानागमोविधिः" व्याकरणान्तरपरि० "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते"। "आगमशास्त्रमनित्यम्" इति च परिभा०। "आगमा आद्युदात्ताः" "आगमा अविद्यमानवद्भवन्तीति" च शा०वा०

**आगमन** न॰ आ+गम–भावे ल्युट्। १ किञ्चिद्देशावधिकविभागजनकक्रियायामागतौ। "संवत्सरे व्यतीते तु पुनरागमनाय च" दुर्गाविसर्ज्जनमन्त्रः। २ प्राप्तौ "एतत्ते सर्व्वमाख्यातं वैरस्यागमनं महत्" रामा॰। ३ उत्पत्तौ च "आगमापायिनोऽनित्याः" गीता। [आगमयुक्ते

**आगमवत्** त्रि॰ आगमः अस्त्यर्थे मतुप् मस्य वः स्त्रियां ङीप्।

**आगमवृद्ध** त्रि॰ आगमेन तज्ज्ञानेन वृद्धः। शास्त्रालोचनाजनितपरिणतज्ञाने "प्रतीप इवागमवृद्धसेवी" रघुः।

**आगमवेत्तृ** त्रि॰ आगमं वेत्ति विद्–तृच् ६त॰ स्त्रियां ङीप्। आगमाभिज्ञे।

**आगमवेदिन्** त्रि॰ आगमं वेत्ति विद्–णिनि ६त॰। १ आगमवेत्तरि २ शङ्कराचार्य्यपरमगुरौ गौड़पादाचार्य्ये पु॰।

**आगमापायिन्** त्रि॰ आगमश्च अपायश्च तौ विद्येते अस्य इनि स्त्रियां ङीप्। उत्पत्तिविनाशशीले "आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत!" गीता।

**आगमावर्त्ता** स्त्री आगममात्रेण प्राप्तिमात्रेण आवर्त्तते कण्डूयनमस्याः आ+वृत–अपादाने घञ्। वृश्चिकाख्यां (विछाति) क्षुपभेदे।

**आगमिक** त्रि॰ आगमादागतः ठञ्। आगमप्राप्ते।

**आगमित** त्रि॰ आ+गम–स्वार्थे–णिच्–क्त। अधीते ज्ञाते २ पठिते। प्रेरणे णिच् क्त। यापिते ३ प्रापिते च।

**आग(गा)मिन्** त्रि॰ आ+गम–भविष्यति णिनि गम्यादीनामुपसंख्यानमित्युक्तेः वा ह्रस्वः। भविष्यदागमने "आगमी" सि॰कौ॰। "यद्यागामिक्रियासुक्तकालस्याप्यन्तरालवत्" काव्या॰द॰ "आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी" अमरः स्त्रियां ङीप्। "आगामिनीं जगृहिरे जनतास्तरूणाम्" माघः।

**आगर** पु॰ आगोर्य्यते उद्गिरितुमारभ्यते चन्द्रमा अत्र आ+गॄ–आधारे अप्। अमावास्यायां तत्र शेषयामे भक्षिता हि चन्द्रकलाः देवैः उद्गिरितुमारभ्यन्ते इति तस्यास्तथात्वम्। "चतुर्द्दश्यष्टमांशे च क्षीणो भवति चन्द्रमाः। अमावास्याष्टमांशे च ततः किल भवेद्युवा" इत्युक्तेस्तस्यास्तथात्वम्।

**आगवीन** त्रि॰ गोः प्रत्यर्पणपर्य्यन्तं कर्म्म करोति मर्य्यादायामव्ययीभा॰ आङ्+कर्म्मकारकार्थे ख। गोःप्रत्यर्पणपर्य्यन्तकर्म्मकरे गोपालकभेदे। गोपालकश्च द्विविधः दिवामात्रं गोःप्रचारणे नियुक्तः। दिवारात्रं योगक्षेमे नियुक्तश्च। "दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे। योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात्" मनुना दिवारात्रभेदेन पालकद्वयविषये दोषभेदविधानात् तथा विभागः। तत्र दिवापालकविषये याज्ञ॰ "यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथा। प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतन" इति।

**आगस्** न॰ "इण आग अपराधे" उणा॰ इण्–असुन् आगादेशः। १ अपराधे "मदीये हृदये नूनं सखि! नागो न विद्यते। वदन्तो सर्पसर्पेति किं नालिङ्गसि मामिति" उज्ज्वलदत्तोक्ते। "सहिष्ये शतमागांसि सूनोस्त इति यत्त्वया" माघः। "अभ्यर्णमागस्कृतमस्पृशद्भिः" रघुः। "दासे कृतागसि भवत्युचितः प्रहारः" सा॰द॰ अपराधश्च स्वकर्त्तव्यकर्म्मणः स्खलनम्। अपराधशब्दे २२२पृ॰ विवृतिः आगस्कर्त्ता आगस्कारी। २ पापे ३ दण्डे च।

**आगस्ती** स्त्री अगस्त्येयम् अण् स्त्रियां ङीप् यलोपः। दक्षिणस्यां दिशि। [अगस्त्यहितकारके।

**आगस्तीय** त्रि॰ अगस्तये हितम् अण् यलोपः।

**आगस्त्य** त्रि॰ अगस्त्यस्येदम् यञ् यलोपः। अगस्त्यसम्बन्धिनि दक्षिणदिग्भागे "कौवेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः" माघः "अगस्त्यस्य स्थितिस्थानमुक्तम्" सू॰सि॰ "अशीतिभागैर्याम्यायामगस्त्यो मिथुनान्तगः"। स्वकीयक्रान्तिविभागस्थानात् दक्षिणस्यामशीत्यंशैः साराक्तकः अगस्त्यः मिथुनान्तगः कर्कादिभागे स्थितः" रङ्गनाथः। एवञ्च तस्य दक्षिणदिग्भागगतत्वेन तद्भागस्यागस्त्यसम्बन्धित्वम् अगस्तेरपत्यं गर्गा॰ यञ्। २ अगस्तेरपत्ये पुंस्त्री॰ अगस्त्य+कण्वादि॰ अण्। ३ तद्गोत्रापत्ये पुंस्त्री उभयत्र स्त्रियां ङीप् यलोपः।

**आगाध** त्रि॰ अगाध एव स्वार्थे अण्। १ अतलस्पर्शे २ दुरधिगमे च। [न्तकशब्दार्थे च।

**आगान्तु** पु॰ आ+गम–तुन् नि॰ वृद्धिः। १ अतिथौ २ आग-

**आगामक** त्रि॰ आगमयति भविष्यद्वस्तु बोधयति आ+गम–णिच्–ण्वुल्। भविष्यद्वेदके। "मतिरागामिका ज्ञेया बुद्धिस्तत्कालदर्शिनी"। [कालहर्त्तौ च।

**आगामिन्** त्रि॰ आगमिवत्। १ आगन्तुके २ भविष्यत्-

**आगामुक** त्रि॰ आ+गम–उकञ्। आगमनशीले। "सुग्रीवस्वार्जितं मित्रं सर्व्वांश्चागामुकान् द्रुतम्" भट्टिः।

**आगार** न॰ अग–कुटिलायां गतौ घञ् आगमृच्छति ऋ–अण् उप॰स॰। गृहे भवने।

**आगारगोधिका** स्त्री ७त॰। गृहगोधिकायाम्(टिकटिकि)।

**आगारधूम** पु॰ आगारं गृहं धूमयति धूमान्वितं करोति

धूम+णिच्–अण् । (भुत्र) १स्थूलधूमे । ७त०।२सूक्ष्मतिधूमे च

**आगुर्** स्त्री आ+गुर्–क्विप् । प्रतिज्ञायाम् "अस्य यज्ञस्यागुर उद्धचमगीय" श्रुतिः । [ उद्यमेच ।

**आगुरण** न० आ+गुर–ल्युट् । उद्यमे पृ० दीर्घः आगूर-

**आगू** स्त्री आ+गम–क्विप् "ऊ च गमादीनाम् मलोपे ऊकारादेशः प्रतिज्ञायाम् । वधूवद्रूपम् ।

**आगूर्ण** त्रि०आ+गुर–क्त । १उद्यते । भावे क्त २उद्यमे न०।

**आगूर्त्त** त्रि०आ+गुर–क्त "नसत्तेत्यादिना" पा०नि० वेदे नत्वाभावः १उद्यते । भावे क्त । २उद्यमे न० ।

**आगूर्त्तिन्** त्रि०आगूर्त्तमनेन इष्टा०इनि । कृतोद्यमे "आगूर्त्ती वा एष भवति यो दर्शपौर्णमासाभ्यां यजते" श्रुतिः ।

**आग्नापौष्ण** त्रि० अग्निश्च पूषा च द्व०आनङ् अग्नापूषणौ तौ देवते अस्य अण् द्विपदवृद्धिः वा०नेत् । अग्नापूषदेवताके हविरादौ । "आग्नापौष्ण ऐन्द्रापौष्णः" कात्या०१५,२।

**आग्नावैष्णव** त्रि० अग्निश्च विष्णुश्च द्व०आनङ् अग्नाविष्णू तौ देवते अस्य अण् द्विपदवृद्धिः "इद्वृद्धौ"पा०इत्त्वेप्राप्ते "विष्णौ न" वार्त्ति०नेत्त्वम् । अग्नाविष्णुदेवताके हविरादौ । "अथ-श्वोभूते आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति" "तस्मादाग्नावैष्णव एकादशकपालः पुरोडाशो भवति" इति च शत०ब्रा० । "आग्नावैष्णव ऐन्द्रावैष्णवः" कात्या० १५,२ अग्नाविष्णुशब्दौ विद्येते यत्र विमुक्ता० अण् । अग्नावैष्णवशब्दयुक्ते १अध्याये २अनुवाके च ।

**आग्निक** त्रि०अग्नेरिदं वा०ठक् । अग्निसम्बन्धिनि । "प्रक्रान्त्योद्वमभवानि कृत्वा सप्राग्निकान्याकृतिमिति" कात्या० १६,५। "द्विव स्याल्याः सुवेषेत्येतद्याग्निके भवति"कर्क-धृता श्रुतिः । [ दत्तसन्निकृष्टदेशादौ ।

**आग्निदात्तेय** त्रि० अग्निदत्त+चतुरर्थ्यां सख्या०ढक् । अग्नि-

**आग्निपद** त्रि० अग्निपदे दीयते कार्य्यं वा व्यु्टा० अण् । अग्निस्थाने १दीयमाने २कार्य्ये वा पदार्थे ।

**आग्निमारुत** त्रि० अग्निश्च मरुतश्च द्व० आनङ् अग्नामरुतौ तौ देवते अस्य अण् द्विपदवृद्धिः इद्वृद्धौ"पा०इत् । अग्नामरुतदेवताके १शस्त्रे स्तोत्रभेदे २हविरादौ च ।

**आग्निवारुण** त्रि० अग्निश्च वरुणश्च द्व० ईत् अग्नीवरुणौ तौ देवते अस्य अण् द्विपदवृद्धिः "इद्वृद्धौ"पा०इत् । अग्नी-वरुणदेवताके हविरादौ ।

**आग्निवेश्य** पुंस्त्री अग्निवेशस्य ऋषेरपत्यम् गर्गा० यञ् । तद्दषेरपत्ये "पुरोहितञ्च कौरव्य ! वेदवेदाङ्गपारगम् । आग्निवेश्यञ्च राजानम्"भा०आनु०प०६४अ० स्त्रियां ङीप् यलोपः । आग्निवेशी तद्गोत्रजस्त्रियाम् ।

**आग्निशर्म्मि** पुंस्त्री० अग्निशर्म्मणोऽपत्यं बाह्वा० इञ् । तदपत्ये ततः गोत्रे फक् । आग्निशर्म्मायणः तद्गोत्रजे पुंस्त्री०आग्निशर्म्मौ भवः गहा०छ । अग्निशर्म्मीयः तद्भवे त्रि०

**आग्निष्टोमिक** पु० अग्निष्टोमं क्रतुं वेत्ति तत्प्रतिपादकग्रन्थमधीते वा ठक् । १अग्निष्टोमयज्ञाभिज्ञे २तत्प्रति-पादकग्रन्थपाठके च । अग्निष्टोमग्रन्थस्य व्याख्यानः ग्रन्थः ठञ् । अग्निष्टोमयज्ञव्याख्याने ३ग्रन्थे ४भिवृत्ती स्त्री ङीप् । [अग्निष्टोमदक्षिणायाम् ।

**आग्निष्टोमिकी** स्त्री० अग्निष्टोमस्य दक्षिणा ठञ् ङीप् ।

**आग्नीध्र** न० अग्निमिन्धे अग्नीत् तस्य शरणम् "अग्नीधः शरणे रण् भञ्च" वार्त्ति० रण् भत्वाच्च जश् । अग्नीधो-यजमानस्य स्थाने उपचारात् २ साग्निके द्विजे सि०कौ० । अग्निं धारयति धृ–मूल०क पूर्व्वपददीर्घश्च स्वार्थे अण् इति वा । साग्निके यजमाने द्विजे । "प्रति वीहि प्रस्थितं सौम्य' मधु पिबाग्नीध्रात्" ऋ० २,३६,१ । अग्नीध्र+स्वार्थे अण् । ३अग्नीध्रस्थाने स्त्रियां ङीप् अग्निध्री तदाधारभूमौ स्त्री । स्वार्थे गहा० छ आग्नी-ध्रीयः । अग्निस्थाने "गार्हपत्याद्वा अग्नीध्रीयमागच्छति" श्रुतिः आग्नीध्रस्येदम् इद्धात् छः । आग्नीध्रसम्बन्धिनि त्रि० । "आग्नीध्रीयं प्रथमं चिनोति" श्रुतिः ।

**आग्नीध्रा** स्त्री अग्नीध्रस्थानमर्हति यत् । अग्निस्थानार्ह-शालायाम् ।

**आग्नेन्द्र** त्रि० अग्निश्च इन्द्रश्च द्व०आनङ् तौ देवते अस्य अण् "नेन्द्रस्य परस्य" इति पा० नोत्तरपदवृद्धिः इद्वृभावात् नेत् । अग्नेन्द्रदेवताके हविरादौ स्त्रियां ङीप् । "या वा आग्नेन्द्रैन्द्राग्नी सा" श्रुतिः ।

**आग्नेय** त्रि०अग्नेरिदम् अग्निर्देवता वास्य ढक् । अग्निदेव-ताके १हविरादौ "आग्नेयः पुरोडाशो भवति"शत०ब्रा० २अग्निसम्बन्धिनि च ३कृत्तिकानक्षत्रे न० तस्य अग्नि-देवताकत्वात्तथात्वम् "आग्नेयाद्यमतिर्देवतेति" ज्योति० । अग्निना प्रोक्तं पुराणं ढक् । "आग्नेयं वेदसम्मितम्" इत्युक्ते अग्निप्रोक्ते महापुराणभेदे अग्निपुराणशब्दे विवृतिः ४प्रतिपदि तिथौ स्त्री तस्याः तद्देवताकत्वमुक्तं यथा "अग्निः प्रजापतिः गौरी गणेशोऽहिर्गुहोरविः । शिवोदुर्गायमोविश्वोहरिः कामोहरः शशी । पितरः प्रतिपदादीनां तिथीनामधिपाः क्रमात्" । "५स्वर्णे तस्य तद्वीर्य्यजातत्वात् तथात्वम् । अग्निरेतःशब्दे विवृतिः ।

६ कार्त्तिकेये पु० तस्य वह्नीजजातत्वात् तथात्वम् अग्निकुमारशब्दे विवृतिः। ७ रुधिरे न० जठरानलजायमानत्वात् देहस्थपित्तरूपाग्नेर्विकारत्वात् वाऽस्य तथात्वम्। अग्नये हितम् ढक्। जठरानलादिवृद्धिकरे वैद्योक्ते ८ द्रव्यभेदे त्रि० ९ वाह्याग्निवर्द्धके जतुप्रभृतौ च १० अग्निपर्व्वते ११ देशभेदे च पु० तस्य देशस्याग्न्यधिष्ठितत्वात् तथात्वम् स च देशः। दक्षिणापथवर्त्तिविदर्भकिष्किन्ध्यादेशसमीपस्थः माहिष्मतीपुरीयुक्तः तत्र हि वह्निः नीलराजकन्यासौन्दर्य्येण मोहितःतामुकमेऽथ तामोढ्वा तत्साहाय्यार्थं तत्रैव पुर्य्यां स्वयं स्थितः यथोक्तम् भा० स० प० "तत्र माहिष्मतीवासी भगवान् हव्यवाहनः। श्रूयते हि गृहीतो वै पुरस्तात् पारदारिकः। नीलस्य राज्ञो दुहिता बभूवातीव शोभना। साग्निहोत्रमुपातिष्ठद्बोधनाय पितुः सदा। व्यजनैर्धूयमानोऽपि तावत् प्रज्वलते न सः। यावच्चारुपुटौष्ठेन वायुना न विधूयते। ततः स भगवानग्निश्चकमे तां सुदर्शनाम्। नीलस्य राज्ञः सर्व्वेषामुपनीतश्च सोऽभवत्। ततो ब्राह्मणरूपेण रममाणो यदृच्छया। चकमे तां वरारोहां कन्यामुत्पललोचनाम्। तन्तु राजा यथाशास्त्रमशिषद्धार्म्मिकस्तदा। प्रजज्वाल ततः कोपाद्भगवान् हव्यवाहनः। तं दृष्ट्वा विस्मितो राजा जगाम शिरसावनिम्। ततः कालेन तां कन्यां तथैव हि तदा नृपः। प्रददौ विप्ररूपाय वह्नये शिरसा नतः। प्रतिगृह्य च तां सुभ्रूं नीलराज्ञः सुतां तदा। चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः। वरेण च्छन्दयामास तं नृपं स्विष्टिकृत्तमः। अभयञ्च स जग्राह स्वसैन्ये वै महीपतिः। ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः। जिगीषन्ति बलाद्राजंस्ते दह्यन्ते स्म वह्निना। तस्यां पुर्य्यां तदा चैव माहिष्मत्यां कुरूद्वह!। बभूवुरनतिग्राह्या योषितश्छन्दतः किल। एवमग्निर्व्वरं प्रादात् स्त्रीणामप्रतिवारणे। स्वैरिण्यस्तत्र नार्य्यो हि यथेष्टं विचरन्त्युत। वर्ज्जयन्ति च राजानस्तत्पुरं भरतर्षभ। भयादग्नेर्म्महाराज! ततः प्रभृति सर्व्वदा। सहदेवस्तु धर्म्मात्मा सैन्यं दृष्ट्वा भयार्दितम्। परीतमग्निना राजन्नाकम्पत यथाऽचलः। उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत् पावकं ततः। सहदेव उवाच। त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन्नमोऽस्तु ते। मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक!। पावनात् पावकश्चासि वहनाद्धव्यवाहनः। वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि। चित्रभानुः सुरेश अनलस्त्वं विभावसो!। स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी। वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरितेजसः। कुमारसूस्त्वं भगवान् रुद्रगर्भो हिरण्यकृत्। अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे। पृथिवी बलमादध्याच्छिवञ्चापो दिशन्तु मे। अपां गर्भ! महासत्त्व! जातवेदः! सुरेश्वर!। देवानां मुखमग्ने! त्वं सत्येन विपुनीहि माम्। ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि। नित्यं सुहुतयज्ञेषु सत्येन विपुनीहि माम्। धूमकेतुः शिखी च त्वं पापहानिलसम्भवः। सर्व्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम्। एवं स्तुतोऽसि भगवन् प्रीतेन शुचिना मया। तुष्टिं पुष्टिं श्रुतिञ्चैव प्रीतिञ्चाग्ने! प्रयच्छ मे। वैशम्पायन उवाच। इत्येवं मन्त्रमाग्नेयं पठन् यो जुहुयाद्विभुम्। ऋद्धिमान् सततं दान्तः सर्व्वपापैः प्रमुच्यते। सहदेव उवाच। यज्ञविघ्नमिमं कर्त्तुं नार्हस्त्वं हव्यवाहन!। एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य्य मेदिनीम्। विधिवत् पुरुषव्याघ्रः पावकं प्रत्युपाविशत्। प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत। न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः। तमुपेत्य शनैर्वह्निरुवाच कुरुनन्दनम्। सहदेवं नृणां देवं सान्त्वपूर्व्वमिदं वचः। उत्तिष्ठोत्तिष्ठ कौरव्य! जिज्ञासेयं मया कृता। वेद्मि सर्व्वमभिप्रायं तव धर्म्मसुतस्य च। मया तु रक्षितव्येयं पुरी भरतसत्तम। यावद्राज्ञो हि नीलस्य कुले वंशधरा नृपाः" १२ अग्न्युपासने मन्त्रे १३ अग्निसम्बन्धिधारणाभेदे स्त्री "आग्नेय्या धारणया देहं दग्ध्वेति भूतशुद्धिः। "देहं धारणयाग्नेय्या दग्ध्वा धामाविशत् स्वकम्" भाग० १४ दक्षिणपूर्व्वायां दिशि स्त्री। अग्नेर्भक्तः ढक्। १५ अग्निभक्ते "आग्नेयो वै ब्राह्मणो देवतया" श्रुतिः अग्नेरपत्यम् अग्नेरागतम् अग्नौ भवः अग्निना दृष्टं सामेति वा ढक्। १६ अग्नेरपत्ये १७ अग्नितआगते १८ त्रि० अग्निना दृष्टे सामनि न० "मन्त्रं भौमं तथा तथाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसञ्चैव सप्त स्नानानि चक्षते" इति विभज्य "आग्नेयं भस्मना स्नानमिति" पराशरोक्ते भस्ममर्द्दनपूर्व्वके १९ स्नाने न०। "प्रतापयुक्तस्तेजस्वी नित्यं स्यात् पापकर्म्मसु दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतमिति" मनूक्ते २० नृपतिचरितभेदे न० अग्नौ अग्न्युद्दीपने साधु ढक्। २१ अग्न्युद्दीपनसाधने जतुप्रभृतौ त्रि० "जिघांसोऽस्य वसागन्धं सर्पिर्जतुविमिश्रितम्। कृतं हि व्यक्तमाग्नेयमिदं वेश्म परन्तप!" "यदीदं वेश्माग्नेयं विहितं मन्यते भवान्"

इति च भा॰आ॰प॰१४४ अध्या॰। २२ अग्न्युद्दीपन साधने घृते २३अस्त्रविशेषे च न॰। तत आगतः ठक्। अग्निप्रकृतिके २४कीटभेदे ते च चतुर्विंशतिविधाः यथाह सुश्रुतः। "कौण्डिन्यकः करभको वरटी पत्र-वृश्चिकः। विनाशिका ब्रह्मणिका बिन्दुलोभ्रमरस्तथा। बाह्यकी पिच्चिटः कुम्भी वर्च्चःकीटोऽरिमेदकः। पद्मकीटो दुन्दुभिश्च मकरः शतपादकः। पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी। क्लीतः कृमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः। एते ह्यग्निप्रकृतयश्चतुर्विंशतिरेव च। तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः। "अ-ग्नायी देवताऽस्य ढक् पुंवद्भावः। २५स्थालीपाकदेवताके स्थाली-पाके। [अग्न्याधानदक्षिणायाम्।

**आग्न्याधानिकी** स्त्री अग्न्याधानस्य यज्ञस्य दक्षिणा ठञ्।

**आग्रभोजनिक** पु॰ अग्रभोजनं नियतं दीयतेऽस्मै ठञ्। नियतम् अग्रभोजनदानसम्प्रदाने विप्रभेदे। (अग्रदानी)।

**आग्रयण** त्रि॰ अग्रे अयणं भोजनं यस्मादेर्येन कर्म्मणा पृ॰ ह्रस्वदीर्घः व्यत्ययः। नवान्नागमननिमित्ते वाग्निककर्त्तव्ये यज्ञभेदे तत्प्रकारः आश्वलायनश्रौतसूत्रे दर्शितो यथा "आग्रयणं व्रीहिश्यामाकयवानाम्१। यस्य नाश्नीयादग्नि-होत्रमहुत्वा२। यदा वर्षस्य तृप्तः स्यादथाग्रयणेन यजेत३। अपि हि देवा आहुस्तृप्तो नूनं वर्षस्याग्रयणेन हि यजत इति अग्निहोत्रीं वै नानादयित्वा तस्याः पयसा जुहुयात्४। अपि वा क्रिया यवेषु५। इष्टिस्तु राज्ञः६। सर्वेषां चैके७। श्यामाकेष्वग्नौ सौम्यश्चरुः८। सोम! यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यामित्यथान्तरे-डाया नित्यं जपमुक्त्वा सव्ये पाणौ कृत्वेतरेणाभिमृशेत् प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रिये मह्यं यश-से मह्यमन्नाद्यायेति९। भद्रान्नः श्रेयः समनैष्ट देवास्त्वया-वसेन समशीमहि त्वा। स नो मयोभूः पितराविशे ह शन्नो भव द्विपदे शं चतुष्पद इति प्राश्याचम्य नाभिमालभेतामोऽसि प्राण! तदृतं ब्रवीम्यमासि सर्व्वानसि प्रविष्टः। स मे जरां रोगमपनुद्य शरीरादमा म एधि मास्मधाम इन्द्रेति१०। एतेन भक्षिणो भक्षान् सर्वत्र नवभोजने११। अथ व्रीहियवानां धान्ये विराजौ१२। अग्नीन्द्राविन्द्राग्नी वा विश्वे देवाः सोमो यदि तत्र श्यामाको द्यावापृथिवी१३। आद्या ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषग्येषामिन्द्रो युवा सखा। ... विश्वे देवास आगत ये के च ज्मा महिनो अहिमाया मही द्यौः पृथिवी च नः प्रपूर्वजे पितरा नव्यसीभिरिति१४।

"अग्रे अयनं भक्षणं येन कर्म्मणा तदाग्रयणम्। प्रथम-द्वितीययोर्ह्रस्वदीर्घत्वव्यत्ययः। एषामन्नयानां द्रव्याणां संवत्सरे प्रथमनिष्पन्नानाम् आग्रयणं नाम कर्म कर्त्तव्यमि-त्यर्थः। व्रीहिशब्दस्य प्रथमनिपातो व्रीहीणां प्राधान्य-ख्यापनार्थम्। तेन कालचोदना व्रीह्याग्रयणस्यैव भवति। श्यामाकशब्दस्य मध्यनिपातो व्रीहिकालाद्-यवकालो भिन्न इति ज्ञापयति१। सस्यं नवनिष्पन्नं, तन्नाश्नीयात् आग्र-यणेनानिष्ट्वा। यद्याग्रयणेनानिष्टवतो नवनिष्पन्नेनाशनेन विना निर्वाहो न स्यात् तदा तेषां द्रव्याणां तत्काल-निष्पन्नेन सायम्प्रातरग्निहोत्रं हुत्वाऽश्नीयात्। ततः काले आगते त्वाग्रयणं कुर्यात्। अग्निहोत्रमहुत्वा नाश्नीयादितिवचनादाग्रयणेनानिष्ट्वाप्यग्निहोत्रं हुत्वाऽ-श्नतो न दोष इति गम्यते। सस्यग्रहणं व्रीह्याद्यन्यदपि यन्निष्पन्नं तस्य सर्वस्य प्रतिषेधार्थम्२। यदा वर्षतृप्तिर्लोकस्य भवति तदाग्रयणेन यजेत। अनेन प्रकारेण व्रीह्या-ग्रयणस्य शरत्काल उक्तो भवति। एतमेव कालं श्रुत्या समर्थयति३। अथाग्रयणेन यजेतेति इष्टिरेवाग्रयणशब्दे-नोक्ता, इदानीमिदमुच्यते। अग्निहोत्रहोमार्था धेनुर-ग्निहोत्रीत्युच्यते। तां व्रीहिश्यामाकयवानामन्यतमम् आशयित्वा तस्याः पयसा सायंप्रातरग्निहोत्रं जुहुयात्। इष्टिः प्रथमकल्पः, तदसम्भवेऽयमनुकल्पः इति द्वावेवाग्र-यणकल्पावत्रोच्येते४। यवैराग्रयणस्य क्रिया भवेत् अक्रिया वेति विकल्पः५।। त्रयाणां वर्णानामविशेषेण कल्पद्वये प्राप्ते राज्ञो विशेष उच्यते इष्टिरेव नान्य इति६। सर्वेषामपि वर्णानामिष्टिरेवेत्येके मन्यन्ते७। श्यामाकाग्रयणे इष्ट्यां सोमदेवत्यश्चरुर्भवति। कालो वर्षा ऋतुः, शास्त्रान्तरे दर्शनात्८। इतिकाराध्याहारेण सूत्रच्छेदः। नित्यजप-शब्देनेडे भागमिति मन्त्र उच्यते। तस्य नित्यत्वे सत्यपि नित्यवचनम् एतेन भक्षिण इति विध्यतिदेशे तद्वर्जितस्य प्रापणार्थम्९। स्मृतिप्राप्तस्याचमनस्य विधानं यस्मिन् देशे आचमनं कृतं तस्मिन्नेव देशे स्थितस्य च नाभ्यालम्भन-सिद्ध्यर्थम्१०। एतेन विधानेन सर्वभक्षेषु सर्वे भक्षिणः सर्वान् भक्षान् भक्षयेयुः। सर्वत्रवचनं प्रकरणोत्कर्षार्थम्। नवभोजनवचनं लौकिकेऽपि नवभोजने प्रापणार्थम्। सर्वत्रवचनात् प्रकरणादुत्कृष्टमपि नवभोजनवचनाल्लौकिक एव व्यवतिष्ठते। वैदिकेऽग्निहोत्रहोमे "नाग्रायां हवनी-यान्, इत्यत्र न प्राप्नुयात्, तत्रापि प्रापणार्थं भक्षण-वचनम्११। अथानन्तरं व्रीहीणां यवानां चाग्रयणेष्टि-

च्यते । तत्र व्रीह्याग्रयणस्य काल उक्तः, वसन्तो यवाग्रयणस्य । तत्र हि तेषां प्रथमः पाक इति तन्त्रे विशेषाभावात् उभयोः सहवचनं तयोर्धाय्ये विराजौ च भवतः । "इतरत् पौर्णमासं तन्त्रं वैराजम्" इत्येतावतैवोक्तेऽपि तावन्मात्रविकारसिद्धौ सत्यां धाय्याविराजग्रहणं विकल्पेन इध्मवतोरपि प्रापणार्थम् ११ । आद्ययोर्विकल्पेनैता देवता इज्यन्ते । यदि श्यामाकाग्रयणस्यामेवेष्टौ समानतन्त्रेण क्रियते तदा सोमस्तृतीयो भवति १२ । इन्द्राग्न्योः सोमस्य चोक्ता याज्यानुवाक्यावृत्तिः" १४ । "य आहिताग्निराग्रयणेनानिष्ट्वा प्राश्नीयात्" श्रुतिः अतोऽकरणे दोषश्रवणान्नित्यत्वम् । अतएव कर्मपद्धतौ नित्यानि तु अग्निहोत्रदर्शपौर्णमासदाक्षायणाग्रयणपशुचातुर्मास्याष्टौनि अवश्यं कर्त्तव्यानीत्युक्तम् । २तन्निमित्तकेष्टौ नवशस्येष्टौ स्त्री गौरा० ङीप् । "इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम् । अग्निराग्रयणोनाम भानोरेवान्वयस्तु स इत्युक्ते ३सूर्य्यान्वयजे वह्निभेदे पु० । उपचारात् ४आग्रयणकाले "व्रीह्याग्रयणानन्तरं यवाग्रयणादर्वाग्व्रीहिभिरेव दर्शपौर्णमासौ कार्य्यौ यवाग्रयणानन्तरं प्राग्व्रीह्याग्रयणाद्यवैरेव । अथवा व्रीहिभिरेव इति" कर्कः । "शस्यान्ते नवशस्येष्ट्या तथर्त्वन्ते द्विजोऽध्वरैः" मनुव्याख्यायां पूर्व्वार्ज्जितधान्यादिशस्ये समाप्ते यदि यवानामिति सूत्रकारवचनात् असमाप्ते पूर्व्वशस्ये नवशस्योत्पत्तौ आग्रयणेन यजेतेति शस्यक्षयस्यानियतत्वात् धनिनां बहुहायनजीवनोचितशस्यसम्भवाच्च" कुल्लू० आग्रयणन्तु कर्म्माशुद्धकाले न कर्त्तव्यम् यथोक्तम् "वाप्यारामतड़ागकूपेष्ट्यादिनोपक्रम्य" "गोदानाग्रयण प्रपाप्रथमकोपाकर्म्म वेदव्रत"मित्यादीन्युद्दिश्य "अवश्योर्वैधं परीक्षां त्यज इद्रत्याक्तगिगुरु इज्यसितयोर्न्यूनामासे तथा" मुहू०चि० उक्तेः । "सोमयोगादिकर्म्माणि त्याज्यानि स्युर्मलिम्लुचे । तथैवाग्रयणाधानचातुर्म्मास्यादिकान्यह्यपि" स्मृ०परि०उक्तेः । "बाले वा यदि वृद्धे शुक्रे वास्तं गते गुरौ । मलमासइवैतानि वर्ज्जयेत्" वृद्धगर्गोक्तेः ।

**आग्रह** पु० आ+ग्रह–अप् । १आवेशे आसक्तौ अभिनिवेशे "चलेऽपि काकस्य पदार्पणाग्रहः" नैष० । २आक्रमे ३अनुग्रहे ४ग्रहणे च ।

**आग्रहायण** पु० अग्रहायण्या मृगशीर्षनक्षत्रेण युक्ता पौर्णमासी आग्रहायणी अस्त्यत्र मासे ज्योत्स्ना० अण् । १चान्द्रमार्गशीर्षे मासि अग्रहायण्या युक्ता पौर्णमासी अण् । २चान्द्रमार्गशीर्षमासपौर्णमास्यां स्त्री । "आग्रहायण्या ऊर्द्ध्वं तिस्रोऽष्टकाः" स्मृतिः । "कार्त्तिक्या आग्रहायणी मासे" सि०कौ० । यथा च मृगशीर्षनक्षत्रसम्बन्धात् मासस्य मार्गशीर्षत्वं तथोक्तम् सू०सि० "नक्षत्रनाम्ना मासास्तु ज्ञेयाः पर्व्वान्तयोगतः" इति "पूर्णमास्यां मृगशीर्षनक्षत्रयोगात् मार्गशीर्षश्चान्द्रमासः मृगशीर्ष एव अग्रहायणीनामा पौर्णमास्यां तत्सम्बन्धयोग्यत्वमेव तदर्थः अत एव "कार्त्तिकादिषु संयोगे कृत्तिकादि द्वयं द्वयम् । अन्त्योपान्त्यौ पञ्चमश्च त्रिधा मासत्रयं स्मृतम्" सू०सि० तेन कृत्तिकारोहिणीभ्यां कार्त्तिकी मृगार्द्राभ्यां मार्गशीर्ष इत्यादि क्रमेण नक्षत्रद्वयसम्बन्धस्तत्रोक्तः ।

**आग्रहाय(णा)णिक** न० आग्रहायण्यां देयमृणं वुञ् ठञ् वा । आग्रहायण्यां देये ऋणे ।

**आग्रहायणिक** पु० आग्रहायणी पूर्णिमाऽस्मिन्मासे ठक् । चान्द्रमार्गशीर्षे मासि । [ ( अग्रदानो ) विप्रे ।

**आग्रहारिक** त्रि० अग्रहारोऽग्रभागो नियतं दीयतेऽस्मै ठञ् ।

**आग्रायण** पुंस्त्री अग्रनामकस्य ऋषेः गोत्रापत्यम् नडा० फक् । अग्रनामर्षेः गोत्रापत्ये १अग्रेऽयनं शस्यस्यास्य ज्योत्स्ना० अण् । २नवशस्येष्टौ ।

**आघट्टक** पु० आघट्टयति रोगान् ण्वुल् । रक्तापामार्गे राजनि० चालके त्रि० । [नया नभस्वतः" माघः ।

**आघट्टना** स्त्री आ+घट्ट–युच् । चालनायां "रणद्भिराघट्ट-

**आघट्टित** त्रि० आ+घट्ट–क्त । चालिते ।

**आघमर्षण** न० अघमर्षणे विहितम् अण् । अघानां नाशनाय विहिते सूक्तभेदे अघमर्षणशब्दे तच्च दर्शितम् ।

**आघर्ष** पु० आ+घृष–घञ् । मर्द्दने "गण्डस्थलाघर्षगलन्मदोदक" माघः । भावे ल्युट् । आघर्षणमप्यत्र न० ।

**आघाट** पु० आ+हन–कर्त्तरि, संज्ञायां घञ् पृ० नि० तस्य टः । १अपामार्गे २आघातके त्रि० । "यत्राघाटाः कर्क्कर्य्यः संवदन्ति" श्रुतिः ।

**आघाटिन्** त्रि० आ+हन–णिनि पृ०नि० । आघातके "आघाटिभिरिव धावयन्" ऋ० १,०,१४६,२ ।

**आघात** पु० आ+हन–घञ् । १वधे २आहनने ३ताड़ने च "तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः" मेघ० । "अभ्यस्यन्ति तटाघातं निर्जितैरावतागजाः" कुमा० । "कृताघातःस उच्यते" सुश्रुतः । आधारे घञ् । ४वधस्थाने । "आघातं नीयमानस्य बध्यस्य" ।

**आघातन** न० आहन्यतेऽत्र आ+हन–स्वार्थे णिच्–आधारे

ल्युट् । १वधस्थाने हारा० भावे ल्युट् । २हनने ।

**आघार** पु० आ+घृ-णिच्-कर्मणि अच् । १घृते । भावे अच् । आहितवह्नेः वायव्यकोणादारभ्याग्नेयं यावत् नैर्ऋतीमारभ्य ऐशानीं यावच्चाविच्छिन्नधारया २घृतसेचने । "तूष्णीमाघारावाघार्य्याज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहा" आश्व०गृ० । "तूष्णीं मन्त्रवर्जम् उत्तरपश्चिमाया आरभ्य दक्षिणपूर्व्वाम् प्रत्यविच्छिन्नामाज्यधारां हरेत् तथा दक्षिणपश्चिमामारभ्य उत्तरपूर्व्वां प्रत्याघारयेत्" तद्वृत्तिः इति ऋग्वेदिनाम् । यजुर्वेदिनान्तु मन्त्रोच्चारपूर्व्वकं तत्सेचनमिति भेदः उभयवेदिनामपि आघारकाले प्रजापतीन्द्रयोर्मनसा ध्यानम् आज्यं च स्रुवे चतुर्व्वारं ग्राह्यमिति विवेकः ।

**आघूर्णित** त्रि० आ+घूर्ण-क्त । १चलिते, २भ्रान्ते च ।

**आघृणि** पु० आगतो घृणिर्दीप्तिरस्य । सूर्य्ये । "एहि वां विमुचो न पादाघृणे ! संसचावहै" । "रायोधारास्याघृणे वसो !" ऋ० ६,५५,१,२ । आघृणे ! आगतदीप्ते ! हे पूषन् !" भा० ।

**आघोषण** न० आ+घुष-ल्युट् । सर्व्वत्र प्रचारणायोच्चैःशब्दकरणे । णिच्-युच् । आघोषणाप्यत्र स्त्री ।

**आघ्राण** त्रि० आ+घ्रा-क्त । १गृहीतगन्धे पुष्पादौ नासिकया यस्य गन्धज्ञानं जातं तस्मिन् २तृप्ते च भावे क्त । ३ गन्धग्रहणे ४ तृप्तौ च न० ।

**आघ्रात** त्रि० आ+घ्रा-क्त वा तस्य नत्वाभावः । १गृहीतगन्धे पुष्पादौ २तृप्ते ३ आस्पृष्टे च "शुम्भाद्यनाघ्राततिथिविषयम्" ति०त० रघुनन्दनः ।

**आघ्रेय** त्रि० आ+घ्रा-यत् । घ्राणेन ग्राह्ये "आघ्रेयः सर्व्वदेवानाम्" धूपदानमन्त्रः ।

**आङ्** अव्य० अत-बा० डाङ् प्रयोगे तस्य ङित्त्वम् । आगन्त्वर्थे तच्छब्दे विरतिः तत्र ईषदर्थे आताम्रः आपिङ्गलः अभिव्याप्तौ आब्रह्मास्तम्बकलात् । सीमायाम् "आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्" रघुः धातुविशेषयोगेनार्थविशेषे आगच्छति आतिष्ठते आक्रम्यते "तलं यदारोहति दन्तवाससा" अभ्यासे आवृत्तिः अभ्यावृत्तः । प्रत्यावृत्तौ प्रत्यागच्छति । समन्तादृत्तौ आचितः आकीर्णः ।

**आङ्गुशायन** त्रि० अङ्गुशेन निर्वृत्तादि सङ्काशा० चतुरर्थ्याम् फक् । अङ्गुशनिर्वृत्तादौ । [ रथयुक्ते ।

**आङ्कुशिक** त्रि० अङ्कुशः प्रहरणमस्य ठक् । अङ्कुशप्रह-

**आङ्ग** न० अङ्ग+स्वार्थे अण् । १कोमलाङ्गे अङ्गादागतः अण् । व्याकरणप्रसिद्धे २अङ्गाधिकारविहिते कार्य्ये "वर्णादाङ्गं बलीयः" परिभाषा अङ्गदेशे भवः अण् । ३अङ्गदेशभवे त्रि० बहुवचने तु तस्य लुक् अङ्गाः । अङ्गानां राजा अण् । ४अङ्गदेशस्य राजनि बहुषु लुक् अङ्गाः तद्राजसु । स्त्रियां प्राच्यत्वान्न लुक्, आङ्गी ।

**आङ्गक** त्रि० अङ्गेषु जनपदेषु भवः वुञ् । १अङ्गदेशभवे । अङ्गाः क्षत्रियाः तद्देशाधिपतयो भक्तिरस्य वुञ् । अङ्गदेशक्षत्रिया यस्य सेव्याः तस्मिन् २बहूनामङ्गदेशक्षत्रियाणां सेवके । अङ्गा जनपदोभक्तिरस्य वुञ् । ३बहुत्ववदङ्गजनपदसेवके च त्रि० ।

**आङ्गविद्य** त्रि० अङ्गविद्यां वेद "अङ्गक्षत्रधर्म्मत्रिपाराडिद्यान्ताच्चेति वक्तव्यम्" वार्त्ति० ठको निषेधात् अण् । १व्याकरणाद्यङ्गविद्यावेत्तरि । तद्व्याख्यानो ग्रन्थः ऋगयनादि० अण् । २अङ्गविद्याव्याख्याने ग्रन्थे अङ्गविद्यायां भवः अण् । ३तद्विद्याभवे । [ समूहे ।

**आङ्गार** न० अङ्गाराणां समूहः भिक्षादि० अण् । अङ्गार-

**आङ्गिक** त्रि० अङ्गेन अङ्गचालनेन निर्वृत्तम् अध्यात्मा०ठक् । भावव्यञ्जके अङ्गनिष्पन्ने नटादीनां १भ्रूविक्षेपादौ । "भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आङ्गिकोवाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" सा०द० । स्त्रीणां चेष्टाविशेषे २हावादौ । "यौवने सत्त्वजास्तासामष्टाविंशति सङ्ख्यकाः । अलङ्कारास्तत्र हावभावहेलास्त्रयोऽङ्गजाः" सा०द० । हावादयश्च तत्तच्छब्दे वक्ष्यन्ते "अङ्गं मृदङ्ग तद्वाद्यं शिल्पमस्य ठक् । मृदङ्गवादनशिल्पके त्रि० ।

**आङ्गिरस** पुंस्त्री० अङ्गिरसोऽपत्यम् अण् । १अङ्गिरस ऋषेरपत्ये "अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः" मनुः । बहुत्वेऽस्यो लुक् । अङ्गिरसः स्त्रियां न लुक् ङीप् । "आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत" अथ० ८,५,९ । २बृहस्पतौ तस्य तदपत्यत्वम् भा० आ०प० ६६अ० । "अङ्गिरसस्त्रयः पुत्राः लोके सर्व्वत्र विश्रुताः । बृहस्पतिरुतथ्यश्च संवर्त्तश्च धृतव्रतः" । अङ्गिरसा दृष्टम् अण् । अथर्ववेदोक्ते ३सूक्तभेदे "अथर्व्वाङ्गिरसं नीलरुद्रं देव्यपराजिता । मधु सूक्तं रौधसञ्च शान्तिकाध्यायमेव च । अथर्व्वाणौ द्वारपालौ पठेतामुत्तराश्रितौ" दानपारि० पुरा० । तच्च सूक्तं अथर्वसंहितायां १८,१,५८,५९,६०, ६१ मन्त्र चतुष्कात्मकम्, "अङ्गिरसो नः पितरः" इत्यादिकम् । तच्च तुलादानादिपद्धतौ अस्माभिः १८५पृ० दर्शितम् अङ्गिनामङ्गानां रसः सारः स्वार्थे अण् ।

४आकमि। "सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः" इति छ॰ उ॰। "आङ्गिरस आत्मा कार्य्यकरणानाम् कथमाङ्गिरसः?। प्रसिद्धं हि यदङ्गिनामङ्गानां रसस्तं तदपायेशोषप्राप्तेरिति वक्ष्यामः यस्मात्तायमङ्गिरसत्वात् विशेषानाश्रयत्वाच्च कार्य्यकरणानां साधारण आत्मा विशुद्धश्च तस्माद् वागादीनपास्य प्राण एवात्मत्वेनाश्रयितव्य इति वाक्यार्थः" शं॰भा॰।

**आङ्गिरसेश्वर** पु॰ आङ्गिरसेन प्रतिष्ठितः ईश्वरः। काशीक्षेत्रस्थे आङ्गिरसप्रतिष्ठिते शिवलिङ्गभेदे।

**आङ्गुरि(लि)क** पु॰ अङ्गुलि (रि) व इवार्थे कन्। वा इत्वम्। अङ्गुल्याकृतौ पदार्थे।

**आङ्गूष** पु॰ अङ्गति गच्छति देवान् अगि—ऊषच् अङ्गूषः ततः स्वार्थे अण्। स्तोत्रे। "तिरः पुरू चिदश्विना रजांस्याङ्गूषः" ऋ॰ २,५८,५। "आङ्गूषं स्तोत्रम्" भा॰। "प्रमन्दिने शवसानाय शुष्ममाङ्गूषम्" यजु॰ ३४,१६। "अच्छा इद्रुमय इव ययंसि भराम्याङ्गूषं बाधे सुवृक्ति" ऋ॰ १,६१,२। [भवसन्धिकटदेशादौ।

**आङ्ग्य** त्रि॰अङ्गे भवः आङ्गः चतरर्थ्यां संकाशा॰यत्। अङ्ग-

**आचके** अव्य॰आ+चक ए—विभक्तिप्रतिरूपकम्। कामनायाम् निरु॰। "त्वामवस्युराचके" यजु॰ २१,१। आचके कामये" वे॰दी॰। "इन्द्रातुरुद्रोवसुभिराचके"य॰४,२१।

**आचक्षाण** त्रि॰ आ+चक्ष—शानच्। आख्यानं कुर्व्वति।

**आचतुर** अव्य॰ चतुःपर्य्यन्तम् अव्ययी॰ अच् समा॰। चतुःपर्य्यन्ते "आचतुरं हीमे पशवोद्वन्द्वं मिथुनायन्ते"। माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेण "तत्पुत्रादिनापीति मर्य्यादार्थः" सि॰कौ॰।

**आचक्षुस्** त्रि॰ आ+चक्ष—बा॰ उसि। आख्यानकर्त्तरि।

**आचतुर्य्य** न॰अचतुरस्य भावः "न नञ्पूर्व्वात् इत्यादि" पा॰ सू॰चतुरादिपर्य्युदासात् भावे ष्यञ् प्रत्ययः। अनैपुण्ये

**आचम** पु॰ आ+चम—घञ् वा ह्रस्वः। आचमनशब्दार्थे "दृष्ट्वा सह पर्लकन्तु शुद्धं वारि तथाचमे" तन्त्रसा॰।

**आचमन** न॰आ+चम—भावे ल्युट्। १जलादेः पाने कल्युक्ते कर्म्माङ्गे २कर्त्तृसंस्कारके ३क्रियाभेदे च, आ॰तत्त्वे "आचमने उदकपरिमाणप्रकारपरिमाणञ्चाह भरद्वाजः। 'आयतं पर्वेषां कृत्वा गोकर्णाकृतिमत्करम्। संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः। मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत्। माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः। पाणिना दक्षिणेन "त्रिःपिबेद्-त्रिरेणापः" इति आदिपुराणोक्तेः। मार्कण्डेयः। "अपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम्। नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत्"। मदनपारिजाते हारीतः। "ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनञ्चरेत्"। ग्रन्थना ग्रन्थिरिति समुद्रकरोऽपि। आचमनानुवृत्तौ देवलः। 'न गच्छन् न शयानश्च न क्रमन् न परान् स्पृशन्। न हसन् नैव संजल्पन् नात्मानञ्चैव वीक्षयन्'। क्रमन् कम्पमान इति रत्नाकरः। आत्मानं आत्मस्थानं हृदयं वीक्षयन् इति स्वार्थे णिच्। नेत्यनुवृत्तौ। 'केशान्नीवीमधःकायं संस्पृशन् धरणीमपि। यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करम्"। अधःकायं नाभेरधः प्रदेशम्। करं दक्षिणम्। आचमनानुवृत्तौ गोभिलः। 'नान्तरीयैकदेशेन कल्पयित्वोत्तरीयकम्" इति। अन्तरीयमधःपरिधानं तदेकदेशेन उत्तरीयं कृत्वा। मरीचिः। 'न बहिर्जानुरुत्थया नासनस्थो नचोत्थितः। न पादुकास्थो नाचिक्षः शुचिः प्रयतमानसः। उपस्पृश्य द्विजो नित्यं शुद्धः पूतो भवेन्नरः। भुक्तासनस्थोऽप्याचामेत् नान्यकाले कदाचन"। जलस्थलोभयकर्म्मानुष्ठानार्थं जलस्थलैकचरणेनाचमनं कर्त्तव्यमित्याह पैठीनसिः। 'अन्तरुदके आचान्तोऽन्तरेव पूतोबहिरुदके आचान्तो बहिरेव शुद्धो भवति तस्मादन्तरेकं बहिरेकं च पादं कृत्वा आचामेत् सर्वत्र शुद्धो भवति" इति। जानुनऊर्द्धं जलेषु तिष्ठन्नेवाचामेत्। 'जानोरूर्द्धं जले तिष्ठन्नाचान्तः शुचितामियात्। अधस्तात् शतकृत्वोऽपि समाचान्तो न शुध्यति" इति विष्णूक्तेः। हारीतः। "आर्द्रवासा जले कुर्य्यात् तर्पणाचमनं जपम्। शुष्कवासा स्थले कुर्य्यात् तर्पणाचमनं जपम्। कात्यायनः। 'स्नानमाचमनं होमं भोजनं देवतार्च्चनम्। प्रौढपादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम्। आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिको यस्तु प्रौढपादः स उच्यते"। आसनरूढपादः आसनारूढपादतलः। जानुनोर्जङ्घयोः कृतावसक्थिकः वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः तद्द्वयेन भेदप्रतीतेः। अत्र च "अनेको द्वाह्ये दारशिखे भूमिसमे इष्टकाश्च संकीर्णभूता" इति बोधायनवचनात् तथाविधपादोऽपि कुर्य्यात्। व्यासः। "शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्। अपः पाणिनखाग्रेषु आचामेद्यस्तु वै द्विजः। सुरापाणेन तत्तुल्यमित्येवम्परिब्रवीत् संदलेति"। मुखं संहृत्य अलोम-

ल्युट् । १वधस्थाने करण० भावे ल्युट् । २हनने ।

**आघार** पु० आ+घृ–णिच्–कर्मणि अच् । १घृते । भावे अच् । आहितवह्नेः वायव्यकोणादारभ्याग्नेयं यावत् नैरृतीमारभ्य ऐशानीं यावद्वाविच्छिन्नधारया २घृतसेचने । “तूष्णीमाघारावाघार्य्याज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहा” आश्व०गृ० । ‘तूष्णीं मन्त्रवर्जम् उत्तरपश्चिमाया आरभ्य दक्षिणपूर्व्वाम् अव्यवच्छिन्नामाज्यधारां हरेत् तथा दक्षिणपश्चिमामारभ्य उत्तरपूर्व्वां प्रत्याघारयेत्’ तद्वृत्तिः इति ऋग्वेदिनाम् । यजुर्वेदिनान्तु मन्त्रोच्चारपूर्व्वकं तत्सेचनमिति भेदः उभयवेदिनामपि आघारकाले प्रजापतीन्द्रयोर्मनसा ध्यानम् आज्यं च स्रुवे चतुर्व्वारं ग्राह्यमिति विवेकः ।

**आघूर्णित** त्रि० आ+घूर्ण–क्त । १ चलिते, २भ्रान्ते च ।

**आघृणि** पु० आगतो घृणिर्दीप्तिरस्य । सूर्ये । “एहि वां विमुचो न पादाघृणे ! संसचावहै” । ‘रायोधारास्याघृणे वसो !” ऋ० ६,५५,१,२ । आघृणे ! आगतदीप्ते ! हे पूषन् !” भा० ।

**आघोषण** न० आ+घुष–ल्युट् । सर्व्वत्र प्रचारणायोद्घोषकरणे । णिच्–युच् । आघोषणाप्यत्र स्त्री ।

**आघ्राण** त्रि० आ+घ्रा–क्त । १गृहीतगन्धे पुष्पादौ नासिकया यस्य गन्धज्ञानं जातं तस्मिन् २तृप्ते च भावे क्त । ३ गन्धग्रहणे ४ तृप्तौ च न० ।

**आघ्रात** त्रि० आ+घ्रा–क्त वा तस्य नत्वाभावः । १गृहीतगन्धे पुष्पादौ २तृप्ते ३ अभ्युष्टे च “पुष्पाद्यनाघ्राततिथिविषयम्” ति०त० रघुनन्दनः ।

**आघ्रेय** त्रि० आ+घ्रा–यत् । घ्राणेन ग्राह्ये “आघ्रेयः सर्व्वदेवानाम्” धूपदानमन्त्रः ।

**आङ्** अव्य० अत–बा० डाङ् प्रयोगे तस्य ङित्त्वम् । आगन्त्रर्थे तच्छब्दे विवृतिः तत्र ईषदर्थे आताम्रः आपिङ्गलः अभिव्याप्तौ आब्रह्मस्थावरात् । सीमायाम् “आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्” रघुः धातुविशेषयोगेनार्थविशेषे आगच्छति आतिष्ठते आलम्बते ‘तुलां यदारोहति दन्तवाससा” अभ्यासे आवृत्तिः अभ्यावृत्तः । प्रत्यावृत्तौ प्रत्यागच्छति । समन्तादृत्तौ आचितः आकीर्णः ।

**आङ्कुशायन** त्रि० अङ्कुशेन निर्वृत्तादि सङ्काशा० चतुरर्थ्याम् फक् । अङ्कुशनिर्वृत्तादौ । [ रथयुक्ते ।

**आङ्कुशिक** त्रि० अङ्कुशः प्रहरणमस्य ठक् । अङ्कुशप्रहं-

**आङ्ग** न० अङ्ग+स्वार्थे अण् । १कोमलाङ्गे अङ्गादागतः अण् । व्याकरणप्रसिद्धे २अङ्गाधिकारविहिते कार्य्ये “वर्णादाङ्गं बलीयः” परिभाषा अङ्गदेशे भवः अण् । ३अङ्गदेशभवे त्रि० बहुवचने तु तस्य लुक् अङ्गाः । अङ्गानां राजा अण् । ४अङ्गदेशस्य राजनि बहुषु लुक् अङ्गाः तद्राजसु । स्त्रियां प्राच्यत्वान्न लुक्, आङ्गी ।

**आङ्गक** त्रि० अङ्गेषु जनपदेषु भवः वुञ् । १अङ्गदेशभवे । अङ्गाः क्षत्रियाः तद्देशस्वपतयो भक्तिरस्य वुञ् । अङ्गदेशक्षत्रिया यस्य सेव्याः तस्मिन् २बहूनामङ्गदेशक्षत्रियाणां सेवके । अङ्गा जनपदो भक्तिरस्य वुञ् । ३बहुत्ववदङ्गजनपदसेवके च त्रि० ।

**आङ्गविद्य** त्रि० अङ्गविद्यां वेद “अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तादिति वक्तव्यम्” वार्त्ति० ठको निषेधात् अण् । १व्याकरणाद्यङ्गविद्यावेत्तरि । तद्व्याख्यानो ग्रन्थः ऋगयनादि० अण् । २अङ्गविद्याव्याख्याने ग्रन्थे अङ्गविद्यायां भवः अण् । ३तद्विद्याभवे । [ समूहे ।

**आङ्गार** न० अङ्गाराणां समूहः भिक्षादि० अण् । अङ्गार-

**आङ्गिक** त्रि० अङ्गेन अङ्गचालनेन निर्वृत्तम् अध्यात्मा० ठञ् । भावव्यञ्जके अङ्गनिष्पन्ने नटादीनां १भ्रूविक्षेपादौ । “भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा” सा०द० । स्त्रीणां चेष्टाविशेषे २हावादौ । “यौवने सत्त्वजास्तासामष्टाविंशति सङ्ख्यकाः । अलङ्कारास्तत्र हावभावहेलास्त्रयोऽङ्गजाः” सा०द० । हावादयश्च तत्तच्छब्दे वक्ष्यन्ते “अङ्गं मृदङ्गं तद्वाद्यं शिल्पमस्य ठक् । मृदङ्गवादनशिल्पके त्रि० ।

**आङ्गिरस** पुंस्त्री० अङ्गिरसोऽपत्यम् अण् । १अङ्गिरस ऋषेरपत्ये “अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः” मनुः । बहुत्वेऽणो लुक् । अङ्गिरसः स्त्रियां न लुक् ङीप् । “आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजाउत” अथ० ८,५,९ । २बृहस्पतौ तस्य तदपत्यत्वम् भा० आ०प० ६६अ० । “अङ्गिरसस्त्रयः पुत्राः लोके सर्व्वत्र विश्रुताः । बृहस्पतिरुतथ्यश्च संवर्त्तश्च धृतव्रतः” । अङ्गिरसा दृष्टम् अण् । अथर्ववेदोक्ते ३सूक्तभेदे ‘अथर्वाङ्गिरसं नीलरुद्रं देव्यपराजिता । मधु सूक्तं रौधसञ्च शान्तिकाध्यायमेव च । अथर्व्वाणौ द्वारपालौ पठेतामुत्तराश्रितौ” दानपारि० पुरा० । तच्च सूक्तं अथर्वसंहितायां १८,१,५८,५९,६०, ६१ मन्त्र चतुष्कात्मकम्, “अङ्गिरसो नः पितरः” इत्यादिकम् । तच्च तुलादानादिपद्धतौ अस्माभिः १८५पृ० दर्शितम् अङ्गिनामङ्गानां रसः सारः स्वार्थे अण् ।

४आत्मनि। "सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः" इति छ०उ०। "आङ्गिरस आत्मा कार्य्यकरणानाम् कथमाङ्गिरसः ?। प्रसिद्धं हि यदङ्गिनामङ्गानां रसत्वं तदपायेशोषप्राप्तेरिति वक्ष्यामः यस्मादयमङ्गिरसत्वात् विशेषानाश्रयत्वाच्च कार्य्यकरणानां साधारण आत्मा विशुद्धश्च तस्माद् वागादीनपास्य प्राण एवात्मत्वेनाश्रयितव्य इति वाक्यार्थः" शं०भा०।

**आङ्गिरसेश्वर** पु० आङ्गिरसेन प्रतिष्ठितः ईश्वरः। काशीक्षेत्रस्थे आङ्गिरसप्रतिष्ठिते शिवलिङ्गभेदे।

**आङ्गुरि(लि)क** पु० अङ्गुलि (रि) व इवार्थे कन्। वा रत्वम्। अङ्गुल्याकृतौ पदार्थे।

**आङ्गूष** पु० अङ्गति गच्छति देवान् अगि—ऊषच् अङ्गूषः ततः स्वार्थे अण्। स्तोत्रे। "तिरः पुरू चिदश्विना रजांस्याङ्गूषः" ऋ०२,५८,५। "आङ्गूषं स्तोत्रम्" भा०। "प्रमन्महे शवसानाय शूषमाङ्गूषम्" यजु०३४,१६। "अस्मा इदुप्रय इव प्रयंसि भराम्याङ्गूषं बाधे सुवृक्ति" ऋ० १,६१,२। [ भवसन्निकृष्टदेशादौ।

**आङ्ग्य** त्रि०अङ्गे भवः आङ्गः चतुरर्थ्यां संकाशा०यत्। अङ्ग-

**आचके** अव्य०आ+चक ए-विभक्तिप्रतिरूपकम्। कामनायाम् निरु०। "त्वामवस्युराचके" यजु० २१,१। आचके कामये" वे०दी०। "इन्द्रादुरुद्रोवसुभिराचके"य०४,२१।

**आचक्षाण** त्रि० आ+चक्ष—शानच्। आख्यानं कुर्व्वति।

**आचतुर** अव्य० चतुःपर्य्यन्तम् अव्ययी० अच् समा०। चतुःपर्य्यन्ते "आचतुरं हीमे पशवोद्वन्द्वं मिथुनायन्ते"। माता पुत्रेण मिथुनं गच्छति पौत्रेण प्रपौत्रेण "तत्पुत्रादिनापीति मर्य्यादार्थः" सि०कौ०।

**आचक्षुस्** त्रि० आ+चक्ष—वा० उसि। आख्यानकर्त्तरि।

**आचतुर्य्य** न०अचतुरस्य भावः "न नञ्पूर्व्वात् इत्यादि" पा० सू०चतुरादिपर्य्युदासात् भावे ष्यञ् प्रत्ययः। अनैपुण्ये

**आचम** पु० आ+चम-घञ् वा ह्रस्वः। आचमनशब्दार्थे "दर्भा सह पर्ब्बकन्तु शुद्धं वारि तथाचमे" तन्त्रसा०।

**आचमन** न०आ+चम-भावे ल्युट्। १जलादेः पाने स्वल्पके कर्म्माङ्गे २कर्त्तृसंस्कारके ३क्रियाभेदे च, आ०तत्त्वे "आचमने उदकग्रहणप्रकारपरिमाणमाह भरद्वाजः। 'आयतं पर्व्वणां कृत्वा गोकर्णाकृतिमत्करम्। संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः। मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं चरेत्। माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदपः'। पाणिना दक्षिणेन "त्रिःपिबेद्-चिखेमापः" इति आदिपुराणोक्तेः। मार्कण्डेयः। "सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम्। नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत्'। मदनपारिजाते हारीतः। 'ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनञ्चरेत्'। ग्रन्थिना ग्रन्थिरिति समुद्रकरोऽपि। आचमनानुष्ठानौ देवलः। 'न गच्छन् न शयानश्च न क्रमन् न परान् स्पृशन्। न हसन् नैव संजल्पन् नात्मानञ्चैव वीक्षयन्'। क्रमन् कम्पमान इति रत्नाकरः। आत्मानं आत्मस्थानं हृदयं वीक्षयन् इति स्वार्थे णिच्। नेत्यनुवृत्तौ। 'केशान्नीवीमधःकायं संस्पृशन् धरणीमपि। यदि स्पृशति चैतानि भूयः प्रक्षालयेत् करम्"। अधःकायं नाभेरधः प्रदेशम्। करं दक्षिणम्। आचमनानुष्ठाने गोभिलः। 'नान्तरीयैकदेशेन कल्पयित्वोत्तरीयकम्" इति। अन्तरीयमधःपरिधानं तदेकदेशेन उत्तरीयं कृत्वा। मरीचिः। 'न बहिर्जानुरत्नरया नासनस्थो नचोत्थितः। न पादुकास्थो नाचिन्तः शुचिः प्रयतमानसः। उपस्पृश्य द्विजो नित्यं शुद्धः पूतो भवेन्नरः। भुक्तासनस्थोऽप्याचामेत् नान्यकाले कदाचन"। जलस्थलोभयकर्म्मानुष्ठानार्थं जलस्थलैकचरणेनाचमनं कर्त्तव्यमित्याह पैठीनसिः। 'अन्तरुदके आचान्तोऽन्तरेव पूतो बहिरुदके आचान्तो बहिरेव शुद्धो भवति तस्मादन्तरेकं बहिरेकं च पादं कृत्वा आचामेत् सर्व्वत्र शुद्धो भवति" इति। जानुनऊर्द्ध्वं जलेषु तिष्ठन्नेवाचामेत्। 'जानोरूर्द्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात्। अधस्तात् शतकृत्वोऽपि समाचान्तो न शुध्यति" इति विष्णूक्तेः। हारीतः। "आर्द्रवासा जले कुर्य्यात् तर्पणाचमनं जपम्। शुष्कवासा स्थले कुर्य्यात् तर्पणाचमनं जपम्। कात्यायनः। 'स्नानमाचमनं होमं भोजनं देवतार्च्चनम्। प्रौढपादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम्। आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिको यस्तु प्रौढपादः स उच्यते"। आसनरूढपादः आसनारूढपादतलः। जानुनोर्जङ्घयोः कृतावसक्थिकः वस्त्रादिना कृतपृष्ठजानुजङ्घाबन्धः तद्द्वयेन भेदप्रतीतेः। अत्र च "अनेको द्वाश्रो दारुशिले भूमिसमे इष्टकाय संकीर्णभूता" इति बोधायनवचनात् तथाविधपादोऽपि कुर्य्यात्। व्यासः। "शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्। अपः पाणिनखाग्रेषु आचामेद्यस्तु वै द्विजः। सुरापाणेन तत्तुल्यमित्येवमृषिरब्रवीत् संहत्यैति"। मुखं संहत्य अलोम-

कौष्टस्पर्शो यथा न भवतीति तात्पर्य्यम् । तथाच वशिष्ठः । "आचान्तः पुनराचामेत् वासोविपरिधाय च । ओष्ठौ संस्पृश्य च तथा यत्र स्यातामलोमकौ"। एवञ्च प्रागुक्तहारीतवचने यत् ओष्ठयोर्मार्जनमुक्तं तल्लोमकयोरेवेति । एतदनन्तरं वामहस्तं पादौ शिरश्च दक्षिणेन पाणिना जलेनाभ्युक्षेत् । तथाच कामधेनावापस्तम्बः । "त्रिराचामेत् छन्दताभिरद्भिस्त्रिरोष्ठौ परिमृजेत् । द्विरित्येके दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्च" । गोभिलः । 'त्रिराचामेत् द्विः प्रमृजीत पादावभ्युक्ष्य शिरोऽभ्युक्षेत् इन्द्रियाण्यद्भिः स्पृशेत् अक्षिणी नासिके कर्णाविति" । इन्द्रियाणि इन्द्रियायतनानि इन्द्रियाणाममूर्त्तत्वात् तिसृभिरिति तर्ज्जनीमध्यमानामिकाभिः 'तर्ज्जन्यनामामध्याभिर्मुखं पूर्वं स्पृशेदिति ब्रह्मचारिकाण्डछतभविष्यात् ।'घ्राणं नासापुटद्वयं "तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम्"इति यज्ञात् । एवं पुनःपुनरिति चक्षुःश्रोत्रद्वयाभिप्रायेण श्रोद्रसोऽप्येवम् । तेन दक्षिणं स्पृष्ट्वा वामं स्पृशेत् । व्यक्तं कामधेनावाचारचिन्तामण्यावापस्तम्बः । 'चक्षुषी नासिके कर्णौ सकृत् सकृदुपस्पृशेत्" । द्विरित्येके द्विरिति शाखान्तरीयम् अत्र गोभिलीयापस्तम्बीयपाठक्रमो न ग्राह्यः तत्क्रमस्य "श्रुत्यर्थपठनस्थानमुख्यप्रावर्त्तिकाः' इति जैमिनिसूत्रात् 'घ्राणं पश्चादनन्तरमिति" दक्षोक्तयज्ञक्रमेण बलवता बाधात् । अतएव दक्षेणैव प्रतिज्ञातम् । "उक्तं कर्म क्रमो नोक्तः न कालस्तत एव हि । द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत्"। अतश्छन्दोगपरिशिष्टेन गोभिलाष्टक्रमः स्पष्टीकृतः । यथा 'त्रिःप्राश्यापोद्विरुन्मृज्य मुखमेतान्युपस्पृशेत् । आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोंऽसकान्' । अत्र नासाद्युत्क्रमम् । सर्वाङ्गुष्ठयोगेन करणमाह पैठीनसिः । "अग्निरङ्गुष्ठस्तस्मात्तेनैव सर्व्वाणि स्थानानि स्पृशेत्" । नाभिस्पर्शानन्तरं जलस्पर्शमाह व्यासः । 'ततः स्पृशन्नाभिदेशं पुनरपश्च संस्पृशेत्' । इन्द्रियस्पर्शानन्तरं भविष्ये । "यद्ब्रूमावुदकं वीर ! समुत्सृजति मानवः । वासुकिप्रमुखान् नागान् तेन प्रीणाति मानवः' । पैठीनसिः । "स्पृष्ट्वा प्राणान् यथासंख्यं पादौ प्रोक्ष्य पयः शुचिः । सव्ये पाणौ ततः शेषा अपोविनिनयेदिति" प्राणान् इन्द्रियाणीति रत्नाकरः । शेषा आचमनावशिष्टाः इति मदनपारिजातः । एतत्परमेव 'अन्ततः प्रत्युपस्पृश्य शुचिः' इति गोभिलसूत्रम् । अस्यादिस्पर्शसहितमाचमनं कृत्वा उदकं स्पृष्ट्वा शुचिरिति सरला । अन्तत उपस्पर्शनात् पाणिना उदकस्पर्शं कृत्वा शुचिर्भवतीति भट्टभाष्यम् । अतएवोपस्पर्शमभिधाय ततो जलशेषं वामहस्ते त्यजेदिति पितृदयिता । एतेन द्विजातीनामपि द्विराचमने ओष्ठजलस्पर्शमात्रं शास्त्रार्थः "प्रत्युपस्पृश्यान्ततः शुचिर्भवति" इति गोभिलष्टकृदादिति छन्दोगाह्निकं निरस्तम् । "हृदयं स्पृशंस्त्वेवमेवाचामेत्" इति तदनन्तरस्त्रेण हृदयस्पृग्जलनियमात् । "उच्छिष्टोऽत्रैवातोऽन्यथा भवत" इति सूत्रान्तरेण छन्दत्वाभावे "उच्छिष्टत्वाभिधानात् एतदनन्तरमेवाथ मत्युपस्पर्शनम्" इत्यादिना द्विराचमनादिविधानाच्च । वायुपुराणे ।'निष्ठीवने तथाभ्यङ्गे तथा पादावसेचने । उच्छिष्टस्य च संभाषात् अशुच्युपहृतस्य च । सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च । विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् । उष्ट्रवायससंस्पर्शे दर्शने चान्त्यवासिनाम्" । प्रागर्द्धे कृत इति शेषः । सन्देहेषु अप्रायत्यस्येति शेषः । शिखां मुक्त्वा अनन्तरं बद्धा यज्ञोपवीतेन विना स्थित्वा पुनः परिधाय चाचामेदित्यर्थः । हारीतः । "स्त्रीशूद्रोच्छिष्टसंभाषणे मूत्रपुरीषोत्सर्गदर्शने देवमभिगन्तुकाम आचामेदिति" । देवलः । "उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं चापि तथाविधम् । तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुद्ध्यति" । तथाविधमुच्छिष्टम् । याज्ञवल्क्यः । "स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे । आचान्तः पुनराचामेत् वासोविपपरिधाय च" । ब्रह्मपुराणम् "होमे भोजनकाले च सन्ध्ययोरुभयोरपि । आचान्तः पुनराचामेत् अन्यत्रापि सकृत् सकृत् । द्विराचम्य ततः शुद्धः स्मृत्वा विष्णुं सनातनम्" स्मृतिः । "क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने । कर्म्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत्" । शाङ्खायनः । "आदित्यावसवोरुद्रा वायुरग्निश्च धर्म्मराट् । विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः" । अत्र हेतुमाह पराशरः । "प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । विप्रस्य दक्षिणे कर्णे वसन्ति मनुरब्रवीत्" । मार्कण्डेयपुराणम् । "कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् । कुर्व्वीतालम्भनञ्चापि दक्षिणश्रवणस्य च । यथाविभवतोह्येतत् पूर्व्वाभावे ततः परम् । न पूर्व्वस्मिन् विद्यमाने उत्तरप्राप्तिरिष्यते" । पुराणसारवायुपुराणयोः । "यः कर्म कुरुते मोहादनाचम्यैव नास्तिकः । भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न संशयः" । इत्यन्तम् ।

मदनपारिजातेऽत्र विशेष उक्तः । वृद्धशातातपः "कृत्वाथ शौचं प्रक्षाल्य स्नात्वैव इन्द्रियोपहतस्पृश्य स्नात्वा" "कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः । निबद्धशिखकच्छस्तु द्विज आचमनं चरेत्" प्रचेताः । "अनुष्णाभिरफेनाभिराचामेदिति" । आतुराणामुष्णोदकमप्यविरुद्धम् । तथाचापस्तम्बः "उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनामिति" । अत्राचमनं भवतीति शेषः । योगीश्वरः "अन्तर्जानु शुचौ देशे उपविष्टउदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् । तथा "कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्" । दक्षः । "प्रक्षाल्य पादौ हस्तौ च त्रिःपिबेदम्बु वीक्षितम् । संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततोमुखम् । वीक्षितमित्येतद्दर्विषयम् । "रात्रावनीक्षितेनैव शुद्धिरुक्ता मनीषिभिरिति" यमस्मरणात् मनुः । त्रिराचामेदपः पूर्वं द्विःप्रमृज्यात्ततोमुखम् । खानि चोपस्पृशेदद्भिरात्मानं शिरएव च" गौतमः । "त्रिश्चतुर्वा अप आचामेदिति" चतुर्ग्रहणं पित्र्यपक्षेति केचित् । त्रिर्ग्रहणेन तुष्णीभाव इत्यन्ये । भरद्वाजः । संहताङ्गुलिभिस्तोयं गृहीत्वा दक्षिणेन तु । मुक्ताङ्गुष्ठकनिष्ठे तु शेषेणाचमनं चरेत् । ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन । कायं प्राजापत्यं त्रैदशिकं दैवम् । यस्मिन् आचमनप्रयोगे च येन ब्राह्मादितीर्थं स्वीकृतं तेनैव स प्रयोगः कार्यो न तीर्थान्तरेण । दक्षः । "संहताङ्गुलिभिः पूर्वं आस्यमेवमुपस्पृशेत् । अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् । अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनः पुनः । नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयन्तु तलेन वै । सर्वाभिश्च शिरः पश्चात् बाहू चाग्रेण संस्पृशेत् । याज्ञवल्क्यः । "अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः । त्रिःप्राश्याप द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्" । अत्र विशेषमाह पैठीनसिः । "सव्ये पाणौ शेषा अपो निनयेदिति" । शेषा आचमनावशिष्टाः । बृहत्शङ्खस्तन्वयोपस्पर्शनमाह । "तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेत् स्तनद्वयन्ततः । अङ्गुष्ठस्यानामिकाया योगेन श्रवणे स्पृशेत् । कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः । नाभिञ्च हृदयं तद्वत् स्पृशेत् पाणितलेन तु । संस्पृशेच्च तथा शीर्षमिति" । शङ्खस्तु "ततोऽङ्गुलिचतुष्केण स्पृशेन्मूर्द्धानमादितः । तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं पृथक् । मध्यमानामिकाभ्यान्तु स्पृशेन्नासापुटे क्रमात् । अङ्गुष्ठेन कनीयस्याः कर्णौ संयोगतः स्पृशेत् । तर्ज्जन्यङ्गुष्ठयोगेन नाभिं हृदि तु संस्पृशेत्" । पैठीनसिः । "अग्निरङ्गुष्ठस्थस्तेनैव सर्व्वाणि स्थानानि स्पृशेदिति" । अत्र स्वस्वशाखानुसारेण व्यवस्थितो विकल्पः । यत्र शाखायामङ्गमेव नाम्नातम् अङ्गुष्ठादिविशेषो वा नाम्नातः । तच्छाखीयानां स्वैच्छिको विकल्पः येषान्तु स्वशाखायां कतिपयाङ्गस्पर्शनं नाम्नातम् । तेषान्तु स्वशाखोक्तक्रमानुसारो शाखान्तरोक्तक्रमः अनुक्ताङ्गस्पर्शे भवतीति व्यवस्था । उदकपरिमाणमाह याज्ञवल्क्यः । हृत्कण्ठतालुगाभिश्च यथासंख्यं द्विजातयः । शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः" । अन्ततस्तालुगाभिः । हृदङ्गमापरिमाणमाह उशनाः । "माषमज्जनमात्रा हृदयङ्गमा भवन्ति" । आचमनप्रसङ्गात् सपवित्राचमने कश्चन विशेषः प्रदर्श्यते । तत्र मार्कण्डेयः । "सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम् । नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत् । एतद्दक्षिणकराभिप्रायम् । हारीतेन वामे निषेधात् । "वामहस्ते कुशान्कृत्वा समाचामति योद्विजः । उपस्पर्शो भवेत्तेन रुधिरेण मलेन चेति" । एतत् केवलवामहस्ताभिप्रायम् । हस्तद्वयाश्रयस्पर्शने गोभिलेन फलस्मरणात् । "उभयत्र स्थितैर्दर्भैः समाचामति योद्विजः । सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेदिति" । अत्र विशेषमाह हारीतः । सव्यापसव्यौ कुर्व्वीत सपवित्रकरौ बुधः । ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं भवेदिति । पवित्रलक्षणमाह कात्यायनः । "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" । मार्कण्डेयः । "चतुर्भिः कुशपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् । एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् । त्रिभिर्दर्भैः शान्तिकर्म्म पञ्चभिः पौष्टिकं तथा । चतुर्भिश्चाभिचाराख्यं कुर्व्वन् कुर्य्यात् पवित्रकमिति" । अथाचमननिमित्तानि तत्र मनुः । "उक्तोर्थ्योदकमाचामेदवतीर्य्य तथैव च" । हारीतः । "स्त्रीशूद्रोच्छिष्टाभिभाषणे मूत्रपुरीषोत्सर्गदर्शने देवतामभिगच्छंस्तु काम आचमेत्" । अथ द्विराचमननिमित्तानि । तत्र याज्ञवल्क्यः । "स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे । आचान्तः पुनराचामेद्वासोविपरिधाय च" बौधायनः । "भोजने हवने दाने उपहारे च प्रतिग्रहे । हविर्भक्षणकाले वा तद्वद्विराचमनं स्मृतम्" । ब्रह्मपुराणे । होमे भोजन-

काले च सन्ध्ययोरुभयोरपि । आचान्तः पुनराचामेत् अन्यत्र च सकृत् सकृत्" । अङ्गिराः । "चण्डालादीन् जपे होमे दृष्ट्वाचम्य विशुद्ध्यति । श्वादीन् दृष्ट्वापि वाचामेत् कर्णं वा दक्षिणं स्पृशेत् । जानुनोरधस्तात्श्वादिस्पर्शे आचमनमन्यत्र स्नानविधानात् । उदकाभावेऽसामर्थ्ये वा दक्षिणश्रवणस्पर्शः । अनेनैवाभिप्रायेण बृहस्पतिः । "पितृमन्त्रोच्चारे रौद्रे आत्मालम्भेऽधमेक्षणे । अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे । मार्जारमूषिकस्पर्शे प्रहासेऽनृतभाषणे । निमित्तेषु च सर्वेषु दक्षिणं श्रवणं स्पृशेत्" । तथा "आर्द्रं तृणं गोमयं वा भूमिं वा संस्पृशेद्द्विजः" । शाङ्खायनः । क्षुते निष्ठीवने इत्यादि प्रागुक्तम् । आचारसागरे । अपःपीत्वौषधं जग्ध्वा कृत्वा ताम्बूलचर्वणम् । सौगन्धिकानि सर्वाणि नचाचामेद् विचक्षणः । अपोजग्ध्वेति अमृतोपधानमसीत्यादिभिर्मन्त्रैरपोजग्ध्वानन्तरं नित्यं नाचामेदित्यर्थः । बौधायनः । "पादप्रक्षालनशेषेण नाचामेद्वारिणा द्विजः । शुभाभावे पिबेत् किञ्चित्क्षिप्त्वा भूमौ जलं स्पृशेत्" । आपस्तम्बः । "सन्ध्यार्थे भोजनार्थे वा पित्रर्थे वा तथैव च । शूद्राहृतेन नाचामेत् जपेष्वाहवनेषु च" । यमः । तावन्नोपस्पृशेत् विप्रो यावद्वामेन संस्पृशेत् । उदके चोदकस्थस्तु स्थलस्थस्तु स्थले शुचिः । पादौ स्थाप्योभयत्रापि आचान्तोभयतः शुचिः" । जले स्थले चैकैकं पादं कृत्वाचान्त उभयत्र जलकर्मणि स्थलकर्मणि च शुद्धो भवतीत्यर्थः । "अकृत्वा पादयोः शौचं तिष्ठन्मुक्तशिखोऽपि वा । विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत्" । तिष्ठन्निति स्थलविषयम् । विष्णुना तिष्ठतोपि जलेऽभ्यनुज्ञानात् । "जान्वोरूर्द्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् । अधस्तात् शतकृत्वोपि समाचान्तो न शुद्ध्यति" । अधस्तान्निषेधाज्जानुदघ्नेऽप्यविरुद्धम् । तथा च स्मर्य्यते । "जानुमात्रे जले तिष्ठन्निति" अत्राचान्तः शुचिरिति वाक्यशेषः । तथा "सोपानत्कोनचोष्णीषी पर्य्यङ्कशयनागतः । इदृशे प्रपतंश्चैव नाचमन् शुद्धिमाप्नुयात् । नरगोखरयानाश्वहस्त्यरोहकस्तथा । आचान्तः कर्मशुद्धः स्यात्ताम्बूलौषधजग्धिकृत् । भुक्तासनस्थोऽप्याचामेत् नान्यकाले कदाचन । न पादुकास्थो न त्वरितो नचायज्ञोपवीतवान् । स्पृशन्ति बिन्दवः पादौ जङ्घे चामतः परान् । भौमिकैस्ते समाज्ञेया नचैवाप्रयतो भवेत् । परेषामाचमनोदके दीयमाने ये बिन्दवः पादयोः पतन्ति ते नाऽशुद्धा इत्यर्थः" । "न तिष्ठन्नुद्धृतोदकेनाचामेन्न शूद्राशुच्येकपाण्यावर्ज्जितेन" गौ० सू० । क्रमः काशीखण्डे उक्तः । "प्रागास्य उदगास्यो वा सूपविष्टः शुचौ भुवि । उपस्पृशेद्विहीनायां तुषाङ्गारास्थिभस्मभिः । अनुष्णाभिरफेनाभिरद्भिर्जुष्टाभिरत्वरः । ब्राह्मणो ब्राह्मतीर्थेन दृष्टिपूताभिराचमेत् । कण्ठगाभिर्नृपः शुध्येत्तालुगाभिस्तथोरुजः । स्त्रीशूद्रावास्यसंस्पर्शमात्रेणापि विशुध्यतः । समस्ताङ्गुलिनोद्धृत्य पाणिना दक्षिणेन तु । मुक्ताङ्गुष्ठकनिष्ठाभ्यां शेषेणाचमनं विदुः । शिरः प्रावृत्य कण्ठं वा जले मुक्तशिखोऽपि वा । अप्रक्षालितपद्द्वन्द्व आचान्तोऽप्यशुचिर्मतः । त्रिःपीत्वाम्बु विशुद्ध्यर्थं ततः खानि विशोधयेत् । अङ्गुष्ठमूलदेशेन द्विर्द्विरोष्ठाधरौ स्पृशेत् । अङ्गुलीभिस्त्रिभिः पश्चात् पुनरास्यं स्पृशेत् सुधीः । तर्ज्जन्यङ्गुष्ठकोष्ठौ च घ्राणरन्ध्रे पुनः पुनः । अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः । कनिष्ठाङ्गुष्ठयोगेन नाभिरन्ध्रमुपस्पृशेत् । स्पृष्टा तलेन हृदयं समस्ताभिः शिरः स्पृशेत् । अङ्गुल्यग्रैस्तथा स्कन्धौ साम्बु सर्वत्र संस्पृशेत् । आचान्तः पुनराचामेत् क्षुते रथ्योपसर्पणे । स्नात्वा भुक्त्वा पयः पीत्वा प्रारम्भे शुभकर्मणाम् । सुप्त्वा वासः परीधाय तथा दृष्ट्वाप्यमङ्गलम् । प्रमादादशुचिं स्पृष्ट्वा द्विराचान्तः शुचिर्भवेत्" । सन्ध्याङ्गाचमने शाखिभेदे मन्त्रविशेषोऽपि स्मर्य्यते । "सायमग्निश्च मेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत् । आपः पुनन्तु मध्याह्ने ततश्चाचमनं चरेत्" एभिराचमनं चरेदिति शौनकीये पाठः । मैत्रायणीयगृह्यपरि० । "प्रातः सूर्य्यश्चमेत्युक्त्वा सायमग्निश्च मेति च । आपः पुनन्तु मध्याह्ने कुर्य्यादाचमनं ततः" । "ततः प्राणायामानन्तरमिति" आ०त० रघु० "प्राणायामं कृत्वा आचामेत् प्रयतोऽपि सन् । अन्तरं छिद्यते यस्मात्तस्मादाचमनं स्मृतम्" योगि०या० । मदनपारिजाते । "सन्ध्याचमने बौधायनः अथातः सन्ध्योपासनविधिं व्याख्यास्यामः तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रक्षालितपाणिपादः अप आचम्याग्निश्च मा मन्युश्चेति सायमपः पीत्वा, सूर्य्यश्च मामन्युश्चेति प्रातरपः पीत्वेति" अग्निश्च सूर्य्यश्चेति यजुर्वेदिनामिमौ मन्त्रौ छन्दोगानां तु सन्ध्याचमने गौतमोक्तौ मन्त्रौ द्रष्टव्यौ "अहश्च मादित्यश्च पुनात्विति प्रातः रात्रिश्च मा वरुणश्च पुनात्विति सायमिति" "एतौ च मन्त्रौ प्रजापतिदृष्टौ लिङ्गोक्तदैवतौ चेति" अनयोश्च मन्त्रयोः सामविदिविषयकत्वेन तत्रोक्तावपि तयोः सम्यगज्ञानात् "यजुः सर्वत्र पीयते" इत्युक्तेश्च यजुर्वेदोक्ता-

ेव प्रागुक्तौ सामवेदिभिः प्रयुज्येते । तज्ज्ञाने तु तावेव प्रयोक्तव्यौ । काशीखण्डे तु “इमं मन्त्रं ततोक्त्वा कुर्य्यादाचमनं द्विजः । आचार्य्याः केचिदिच्छन्ति शाखाभेदेन चापरे । अन्तश्चरसि भूतेषु गुहायां विश्वतोमुख ! । त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम्” । आचमने मन्त्रान्तरमुक्तम् । तदपि शाखिभेदाद्व्यवस्थाप्यम् । मधुपर्कानाङ्गाचमने वेदिभेदेन मन्त्रभेदा भवन्ति तुलादानादिमहतौ दृश्याः । विस्तरभयात्तेऽत्रनोक्ताः । तान्त्रिकाचमनन्तु शाक्तवैष्णवभेदात् द्विधा तत्र । शाक्ताचमनं यथा । “आत्मविद्याशिवैस्तत्त्वैराचामेत् साधकाग्रणीः । वह्निकान्तां परे दत्त्वा शुद्धेन पायसाचमेत्” स्वतन्त्रतन्त्रम् “आचामेदात्मतत्त्वाद्यैः प्रणवाद्यैर्द्विठान्तकैः” मालिनीत । तथा च ओँ आत्मतत्त्वाय स्वाहा ओँ विद्यातत्त्वाय स्वाहा ओँ शिवतत्त्वाय स्वाहेति मन्त्राः । काल्यादौ विशेषः तन्त्रसारे “कालिकाभिस्त्रिभिः पीत्वा काल्यादिभिरुपस्पृशेत् । द्वाभ्यामोष्ठौ द्विरुन्मृज्य चैकेन क्षालयेत् करम् । मुखप्राणेक्षणश्रोत्रनाभ्युरस्कं भुजौ क्रमात् । आचम्यैवं भवेत् काली वत्सराच्चां प्रपश्यति” भैरवीत० । काल्यादयश्च “काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी । विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता ततःपरम् । नीला घना वलाका च मात्रा मुद्रा मिता च ताः” इत्युक्ताः प्रयोगस्तु क्रीमित्यादिमूलमन्त्रेण त्रिरपः पीत्वा ओँ काल्यै नमः कपालिन्यै नमः इति द्विरुन्मृजेत् । ओँ कुल्लायै नमः करं क्षालयेत् ओँ कुरुकुल्लायै नमः मुखस्य स्पर्शः । ओँ विरोधिन्यै नमः ओँ विप्रचित्तायै नमः दक्षवामनासिकयोः । ओँ उग्रायै नमः ओँ उग्रप्रभायै नमः नेत्रयोः । ओँ दीप्तायै नमः ओँ नीलायै नमः श्रोत्रयोः । ओँ घनायै नमः इति नाभेः । ओँ वलाकायै नमः वक्षसः, ओँ मात्रायै नमः शिरसः । ओँ मुद्रायै नमः ओँ मितायै नमः इत्यंसौ स्पृशेत् । ताराचमनं तु “ताराभेदैस्त्रिभिः पीत्वा मायया क्षालयेत् करम् । स्त्रीँ हूँमोष्ठौ द्विरुन्मृज्य फट्कारैः क्षालयेत् करम् । आस्यं नासे दृशौ श्रोत्रे नाभिवक्षःशिरोभुजान् । वैरोचनादिभिः स्पृष्ट्वा सर्वपापैः प्रमुच्यते आचम्य भैरवो भूत्वा वत्सराच्चां प्रपश्यति” भैरवीत० । यथा ओँ उग्रतारायै नमः ओँ एकजटायै नमः ओँ नीलसरस्वत्यै नमः इति त्रिरपः पीत्वा ह्रीमिति बीजेन करं क्षालयेत् । स्त्रीँ हूँ इत्येताभ्यामोष्ठौ द्विरुन्मृज्य फडिति करं क्षालयेत् । ओँ वैरचनाय नमः इति मुखम् ओँ शङ्खपाण्डराय नमः ओँ पद्मनाभाय नमः दक्षवामनासिके । ओँ तावकाय नमः ओँ मामकाय नमः नेत्रे । ओँ पाण्डवाय नमः तारकाय नमः श्रोत्रे, ओँ अमिताभाय नमः नाभिम् ओँ पद्मान्तकाय नमः वक्षः । ओँ यमान्तकाय नमः शिरः । ओँ विघ्नान्तकाय नमः ओँ नरान्तकाय नम इति अंसौ स्पृशेत् ।

वैष्णवाचमनं तु “केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत् करौ । द्वाभ्यामोष्ठौ च संमृज्य द्वाभ्यां स्पृश्यात् मुखं ततः । एकेन हस्तं प्रक्षाल्य, पादावपि तथैकयः । संप्रोक्ष्यैकेन मूर्द्धानं ततः सङ्कर्षणादिभिः । आस्यनासाक्षिकर्णांश्च नाभ्युरस्कं भुजौ क्रमात् । स्पृशेदेवं भवेदाचमनन्तु वैष्णवाग्रणे” गौत० “सचतुर्थीनमोऽन्तैश्च नामभिर्विन्यसेत् सुधीः” निबन्धे । ततश्च ओँ केशवाय नमः इत्यादि नामभिराचमनम् । केशवादयश्च “केशवनारायणमाधवगोविन्दविष्णुमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरसङ्कर्षणवासुदेवप्रद्युम्नानिरुद्धपुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्द्दनोपेन्द्रहरिविष्णवः” तन्त्रसा० एताश्च चतुर्विंशतिविष्णुमूर्त्तयः । विष्णोर्द्विशोत्कीर्त्तनं मूर्त्तिभेदाभिप्रायेण चतुर्विंशतिमूर्त्तिशब्दे च तद्विवरणम् । अन्यदेवतानान्तु मूलमन्त्रेणाचमनमिति विवेकः । आचम्यते अनेन करणे ल्युट् । २आचमनसाधने देवतार्च्चनोपचारभेदे । “जातीफललवङ्गकङ्कोलतोयञ्च षट्पलम् । प्रोक्तमाचमनमिति” तन्त्रसारोक्ते जातीफलादिचूर्णमिश्रिते षट्पलमिते जले तत्साधने ३जलमात्रे च भावे ल्युट् । पूजायां दत्ताचमनीयजलस्य ४पाने च । “सुवर्णकलशेनैवाचमनं कुरु केशव ! । पद्मचक्रधरो देव ! कृपालो ! परमेश्वर !” विष्णुपूजाचमनदानमन्त्रः ।

**आचमनक** न० आचमनस्य कं जलमत्र । १ पतद्ग्रहे (पिकदानि) (डावर) आचम्यतेऽनेन करणे ल्युट् । स्वार्थे कन् । २आचमनीयजलादौ ।

**आचमनीय** न० आचमनाय दीयते छ्वात् क आ+चम–करणे बा० अनीयर् वा । आचमनीयार्थे द्रव्ये जातीफलादिचूर्णमिश्रिते षट्पलमिते १जले आचमनशब्दे प्रमाणमुक्तम् । “आचमनीयमाचनीयमाचमनीयं प्रतिगृह्यतामिति” भवदे० कर्मणि अनीयर् । पेयजले २स्वार्थे कन् तत्रैव । अर्घ्यमाचनीयकम्” षोडशोपचारः “उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः । शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम्” गौतमीयम् ।

**आचम्य** अव्य० आ+चम–ल्यप् । १आचमनं कृत्वेत्यर्थे आ+चम–कर्मणि यत् । २आचमनीये जलादौ त्रि०।

**आचय** पु० आ+चि–अच् । दूरस्थस्य पुष्पादेश्चयने । हस्तेन चयने तु घञ् आचाय इत्येव । तत्र नियुक्तः आकर्षादि० कन् । आचयकः आचितौ नियुक्ते त्रि० ।

**आचरण** न० आ+चर–ल्युट् । १आचारे "अधीतिबोधाचरणप्रचारणैः" नैष० । "आचरत्यनेन करणे ल्युट् । २रथे ३शकटे च त्रि०। "यथा प्रयोग्य आचरणे युक्तः एवमस्मिन् शरीरे युक्तः" छा०उ०। "प्रयुज्यते इति प्रयोग्यो-ऽश्वोबलीवर्द्दो वा आचरत्यनेन आचरणो रथोऽनो वा तस्मिन् आचरणे युक्तः तदाकर्षणाय, एवमस्मिन् शरीरे रथस्थानीये प्राणः पञ्चवृत्तिः इन्द्रियमनोबुद्धियुक्तः प्रज्ञात्मा विज्ञानरूपक्रियामूर्च्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः ईश्वरेण राज्ञेव सर्वाधिकारे दर्शनश्रवणचेष्टाव्यापारेऽधिकृत" इति शं०भा०।

**आचरित** न० आ+चर–भावे क्त । १आचारे "वाग्देवताचरितचित्रितचित्तसद्मा" जयदेवः। २ऋणिकादृण ग्रहणोपायभेदे। "धर्मेण व्यवहारेण छलेनाचरितेन च । प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च" मनुः । "तत्र ऋणिको यदि निःस्वो व्यवहारेण दापयितव्यः अन्यत् कर्मोपकरणं धनं दत्त्वा कृषिवाणिज्यादिना व्यवहारयितव्यः तदुत्पन्नं धनं तस्मात् स्वकृणीयादिति" मेधा० । छलाचरितबलान्याह वृह० । "छद्मना याचितं चार्थमानीय ऋणिकाद्धनी। अन्याहृतादि व्याहृत्य दाप्यते तत्र सोपधिः । दारपुत्रपशून् हृत्वा कृत्वा द्वारोपवेशनम्। यत्रार्थोदाप्यतेऽर्थं स्वं तदाचरितमुच्यते । बद्धा स्वगृहमानीय ताडनाद्यैरुपक्रमैः । ऋणिकोदाप्यते यत्र बलात्कारः स उच्यते" कुल्लू० धृता । कर्मणि घञ् । ३अनुष्ठिते त्रि० । "जलं वामकरे कृत्वा या सन्ध्याऽऽचरिता द्विजैः" काशी० ।

**आचरणीय** त्रि० आ+चर–अनीयर् । अनुष्ठेये "यद्यपि शुद्धं लोकविरुद्धं नाचरणीयं नाचरणीयमिति" स्मृतिः । तव्य । आचरितव्यमप्यत्र त्रि० ।

**आचर्य्य** न० आचर्य्यतेऽत्र आ+चर–आधारे यत् । अनुष्ठानयोग्ये देशे "आचर्य्यमनित्ये" पा० सू० उक्तेः आचर्य्यम् । अद्भुते त्रि० ।

**आचान्त** त्रि० आ+चम–क्त । आचमनकर्त्तरि "१आचान्तः पुनराचामेत्" काशी० स्मृतिश्च । कृतमाचमनं यस्य तादृशे २जलादौ च "आचान्तोदकाय गौ-रिति नापितस्त्रिर्ब्रूयात्" संत० गोभिलसूत्रम् ।

**आचाम** पु० आ+चम–भावे घञ् वा वृद्धिः । १आचमने कर्मणि घञ् । २भक्ष्ये ३भक्तनिस्रावे मण्डे (माड़) "पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् । एकरात्रोपवासः स्यात् कृच्छ्रः सौम्योऽयमुच्यते" या० । पिण्याकः निष्कृततैलस्तिलः अदननिस्रावोदश्विदुदकसक्तूनां पञ्चानामेकैकं प्रतिदिवसमुपभुज्य षष्ठेऽह्नि उपवसेदिति" मिता०। "पिण्याकः खलिः आचामः भक्तमण्डः" प्रा०वि० । "आचाममथ पिण्याकं तक्रञ्चोदकसक्तुकान् । त्र्यहं त्र्यहं प्रयुञ्जानोवायुभक्ष्यस्त्र्यहद्वयम् । एकविंशतिरात्रस्तु तुला पुरुष उच्यते" यमः । ४सौत्रामणीयागाङ्गे सुरासाधने भक्तमण्डे च "कृत्वा तांश्च व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति नग्नाशरम्" कात्या० १९,१,२० । "दक्षिणेन द्वारेण प्रवेश्याग्न्यागारं नग्नहुचूर्णानि कृत्वा । नग्नहुः किण्व उच्यते । तांश्च शष्पादीं चूर्णयित्वा व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति नग्नाशरमुच्यते । व्रीहियवाभ्यां सुरा निष्पाद्यते सा च यागसाधनम् तेन सा तद्धर्मैरभिसंबध्यते । अतस्तयोश्चतुर्मुष्टिमवहणपूर्वकं पृथगोदनौ निष्पाद्येते । नग्नहुद्रव्याण्याह । "सत्वक्त्रिफला चैव शुण्ठी चैव पुनर्नवा । चतुर्ज्जातकसंयुक्ता पिप्पली गजपिप्पली । वंशोऽवका वृहच्छत्रा चित्रकं चेन्द्रवारुणी । अश्वगन्धां समुत्पाद्य मूलान्येतानि निर्द्दिशेत् । धान्यकं च यवानी च जीरकं कृष्णजीरकम् । द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवाः" । अथयानन्तरं शष्पादीन्यादाय दक्षिणेन द्वाराग्न्यागारं प्रवेश्य नग्नहुचूर्णानि कृत्वा सत्वगाद्यौषधानि तूर्णीं पिष्टा तान् शष्पतोक्मलाजान् चूर्णीकृत्य दर्शपार्श्वमासधर्मेण पात्रासादनादि । श्यामाकचतुर्मुष्टिकमवहणपूर्वकं फलीकरणान्तं समन्त्रकं कृत्वा बहुतरोदके पृथक् पृथक् चरू पक्त्वा स्रुतान्वस्रुतानां व्रीहिश्यामाकौदनयोः पृथगाचामौ परिषिच्य पृथग्भिन्नयोः पात्रयोश्चर्वोर्मध्यादतिरिक्तमुष्णोदकम् ( मण्डम् ) अवस्राव्य तदुदकं (मण्डम्) नग्नहुप्रभृतिभिश्चतुर्भिश्चूर्णैः संसृज्य निदधाति स्थापयति नग्नाशरं तस्य चूर्णसंसृष्टस्याचामस्य नाशरमिति संज्ञा" "एवामाचामयोश्चूर्णसंसर्गानन्तरमिति" च कर्कः । सौत्रामणीशब्दे तदीयसुरासाधनसंस्कारप्रकारोवक्ष्यते

**आचार** पु० आ+चर–भावे घञ् । १आचरणे अनुष्ठाने स च

अनुष्ठाननिवृत्त्यात्मकभावाभावरूपः तत्र सदाचारः वेदस्मृत्यादिविहितः तत्र निषिद्धश्च कदाचारः इति भेदात् द्विविधः। सदाचारलक्षणोक्तं काशी०। "सदाचारे हि सर्वोऽर्थो नाचारात् रिष्यते पुनः। तस्मात् विप्रेण सततं भाव्यमाचारशालिना। विद्वेषरागरहिता अनुतिष्ठन्ति यं द्विजाः। विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः"। प्रसङ्गादाचारपदार्थो निरूप्यते तत्र शा०सू०भा०। "चरणादितिचेन्नोपलक्षणार्थेति कार्ष्णाजिनिः" सू०। "अथापि स्यात् या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता "तद्य इह रमणीयचरणा इति" सा खलु चरणाद्योन्यापत्तिं दर्शयति नानुशयात्" अन्यच्चरणमन्योऽनुशयः" चरणं चारित्रम् आचारः शीलमित्यनर्थान्तरम्। अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्माभिप्रेतम्। श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति "यथाऽऽचारी तथा भवतीति यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नेतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानीति च"। तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरितिचेन्नैष दोषः यतोऽनुशयलक्षणार्थैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते" भा०। "आनर्थक्यमिति चेन्न तदपेक्षत्वात्" शा०सू०। "स्यादेतत्कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते। ननु शीलस्यैव तु श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति अवश्यञ्च शीलस्यापि किञ्चित् फलमभ्युपगन्तव्यम् अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेन्नैष दोषः कुतः तदपेक्षत्वात् इष्टादि हि कर्मजातं चरणापेक्षं न हि सदाचारहीनः कश्चिदधिकृतः स्यात्। "आचारहीनं न पुनन्ति वेदा" इत्यादि स्मृतिभ्यः पुरुषार्थत्वादप्याचारस्य नानर्थक्यम्। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कञ्चिदतिशयमारप्स्यते कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः। तस्मात्कर्मैव च शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्। न हि कर्मणि संभवति शीलाद्योन्यापत्तिर्युक्ता न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति" भा०। "सुकृतदुष्कृते एवेति बादरिः" शा०सू० "बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते चरणमनुष्ठानं कर्मेत्यनर्थान्तरम्। तथा ह्यविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते यो हि इष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते धर्मं चरत्येष महात्मेति। आचारोऽपि धर्मविशेष एव। भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते। तस्माद्रमणीयचरणाः पुण्यकर्माणः कपूयचरणा निन्दितकर्माण इति निर्णयः" भा०। अत्र शीलाचारयोः पर्यायत्वोक्त्या "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" मनुवचने शीलस्य पृथगुक्तिर्ब्राह्मणपरिव्राजकन्यायेनेति बोध्यम्। अतएवानन्तरं मनुनैव "वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्" शीलस्याचारान्तर्भावाभिप्रायेण चतुष्कस्य धर्ममूलत्वमुक्तम्। शीलञ्च "ब्रह्मण्यता देवपितृभक्तता, सौम्यता अपरोपतापिता अनसूयता मृदुता, अपारुष्यं मैत्रता, प्रियवादित्वं कृतज्ञता, शरण्यता, कारुण्यं प्रशान्तिश्चेति त्रयोदशविधं शीलमिति" हारीतोक्तं तच्चाचारभेद एव। मेधातिथिस्तु शील समाधाविति धातोरूपमुक्त्वा "शीलं समाधानम् समाधानञ्च मानसोव्यापारः यच्चेतसोऽन्यविषयेषु विक्षेपपरिहारेण शास्त्रार्थनिरूपणप्रवणता तच्छीलमुच्यते" इत्याह। तदप्याचार एवान्तर्भवति। तत्र सदाचाराणां वेदस्मृतिमूलकत्वेन तयोरेव तन्मूलत्वं स्वाचाराणामित्याशङ्क्य यादृशाचारस्य धर्ममूलत्वं तमाह मेधातिथिः। "आचारोव्यवहारोऽनुष्ठानम्। यत्र श्रुतिस्मृतिवाक्यानि न सन्ति शिष्टाश्च धर्मबुद्ध्याऽनुतिष्ठन्ति तदपि वैदिकवत् प्रतिपत्तव्यम् यथा विवाहादौ कङ्कणधारणादि माङ्गलिकत्वेन यत् क्रियते। याच विवाहयिष्यमाणायाः कन्यायाः प्रख्यातचत्वरचतुष्पथादिपूजा देशभेदेनेत्यादि" एवं होलकाद्याचरणम्। ग्रन्थादौ देवतास्तुतिनमस्कारादिमङ्गलाचरणञ्च बोध्यम्। स्पष्टमुक्तं प्रयोगपारिजाते स्मृत्यन्त०। "न यत्र साक्षाद्विधयो न निषेधाः श्रुतौ स्मृतौ। देशाचारकुलाचारैस्तत्र धर्मो निरूप्यते" अत्र न निषेधा इत्युक्तेः श्रुतिस्मृत्योर्विरोधे आचारस्य न प्रामाण्यमिति गम्यते। तच्चानुपदं विवेक्तव्यम्। स च देशभेदात् कुलभेदात् पुरुषभेदाच्च नानाविधः प्रातिस्विकरूपेण गणयितुमशक्यः। श्रुतिस्मृत्यविरुद्धः सर्वोऽपि सदाचारः धर्ममूलमतएवास्यात्याज्यत्वमुक्तम् 'देशानुशिष्टं कुलधर्ममग्र्यं स्वजातिधर्मं न हि संत्यजेच्च"। एवं पितृाद्याचारोऽपि धर्ममूलतया माहुः "येनास्य पितरो याता येन याताः पितामहाः ।

तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यते” मनूक्तेः । अत्र सन्मार्गमिति विशेषणात् कदाचारो न धर्म्ममूलमिति गम्यते अतश्च षोड़शिग्रहणाग्रहणयोरुदितानुदितहोमयोः वैकल्पिकयोरेव पित्राद्याचारस्य प्रामाण्यं तदज्ञाने आत्मतुष्टेः इति द्रष्टव्यम् । तदयं निर्गलितार्थः । यत्र श्रुतिस्मृतिद्वैधम् तत्र सदाचारदर्शनेन शास्त्रार्थं निश्चित्य सद्भिराचरितमार्गेणाचरणं प्रथमः कल्पः । तदसम्भवे तु पित्राद्याचारदर्शनेन एकतरपक्षाश्रयणं तस्याप्यज्ञाने आत्मतुष्ट्यैव तदेवाचरितव्यमिति । यत्र साक्षात् श्रुतिस्मृती मूलं नोपलभ्येते एवं विरुद्धार्थश्रुतिस्मृती वा नोपलभ्येते तत्रापि सदाचारस्य धर्ममूलत्वम् “न यत्र साक्षाद्विधयो न निषेधाः श्रुतौ स्मृतौ” इति प्रागुक्तस्कान्दवाक्यात् यत्र तु विरुद्धार्थश्रुतिस्मृती उपलभ्येते तत्र न सदाचारः प्रमाणम् यथा दाक्षिणात्यानां शिष्टानां मातुलकन्यादिपरिणयनाद्याचारः । स त्वनाचारोऽपि तद्देशीयानां स्वल्पदोषायेति व्यवस्थापितमनाचारशब्दे १५७ पृष्ठे द्रष्टव्यम् । सदाचारस्य च स्मृतेरिव न साक्षात् श्रुतिकल्पकता किन्तु स्मृतिद्वारैवेति जैमिनीयन्यायमालायां प्रथमाध्याये निरूपितं तत्रैव विस्तरो द्रष्टव्यः । एवञ्च श्रुतेः स्मृत्युपजीव्यत्ववत् आचारस्य स्मृत्युपजीव्यतया ततोदुर्व्बलत्वम् दुर्बलेन च तेन बलीयसोबाधायोगाच्च नाचारेणोपजीव्यजातीयस्मृतिबाधोयुक्तः अतएव जैमिनिना “विरोधे त्वनपेक्षमसति ह्यनुमानमिति” सूत्रे उपजीव्योपजीवकयोर्विरोधे उपजीवकस्यानपेक्षता अननुष्ठानम् असति तु विरोधे उपजीवकेन स्मृत्याचारपदार्थेन उपजीव्ययोः श्रुतिस्मृत्योरनुमानमित्युक्तम्” ततश्च स्मृतिविरोधे आचारस्य न प्रामाण्यमिति स्थितम् । अतएव दुर्बलत्वाभिप्रायेणैव भा० आ० प० । ‘धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः । द्वितीयं धर्मशास्त्रञ्च तृतीयं लोकसंग्रहः” इति लोकाचारस्य तृतीयत्वं, श्रुतेः परमत्वोक्त्या च स्मृतेर्द्वितीयत्वमुक्तम् । अप्युक्तम्” प्रयो० पा० स्मृतौ । “स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेत् । तथैव लौकिकाचारं स्मृतिबाधे परित्यजेत्” “तदलाभे शिष्टाचारः प्रमाणम्” इति वशिष्ठेन शास्त्रालाभे एव शिष्टाचारस्य प्रामाण्यताऽभिहिता । शिष्टाचारश्च यद्यपि देशभेदात् नानाविधः तथापि मनुना ब्रह्मावर्त्तदेशीयानामेव पारम्पर्य्यागताचारस्यैव सदाचारतया व्यवस्थापनात् तत्रत्यपारम्पर्य्यक्रमागताचारएव सदाचारः । ब्रह्मावर्त्तं परिभाष्य यथाह मनुः ‘तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः । वर्णानां सान्तरालानां स सदाचार उच्यते” इति तथा “कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः एष ब्रह्मर्षिदेशोवै ब्रह्मावर्त्तादनन्तरम् । एतद्देशप्रसूतस्य । सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः” इति मनुना ब्रह्मर्षिदेशवासिविप्रसकाशात् सदाचारस्य शिक्षणीयत्वोपदेशात् तद्देशीयाचारोऽपि सदाचार इति गम्यते । सदाचारोऽपि न केवलं शास्त्रामूलकः किन्तु शास्त्रमूलकोऽपि तच्च शास्त्रं मानवादिसंहितादि । तत्र काशीखण्डे शास्त्रमूलकाः सदाचाराः सफलत्वप्रशंसापूर्व्वं केचित् दर्शिता यथा ।

“लक्षणैः परिहीनोऽपि सम्यगाचारतत्परः । श्रद्धावाननसूयश्च नरोजीवेत्समाः शतम् । दुराचाररतोलोके गर्हणीयः पुमान् भवेत् । व्याधिभिश्चाभिभूयेत तथाल्पायुः सुदुःखभाक् । त्याज्यं कर्म्म पराधीनं कार्य्यमात्मवशं सदा । दुःखी यतः पराधीनः सदैवात्मवशः सुखी । यस्मिन् कर्म्मण्यन्तरात्मा क्रियमाणे प्रसीदति । तदेव कर्म्म कर्त्तव्यं विपरीतं न च क्वचित् । प्रथमं धर्म्मसर्वस्वं प्रोक्ता यन्नियमा यमाः । अतस्तेष्वेव वै यत्नः कर्त्तव्योधर्म्ममिच्छता । सत्यं क्षमार्ज्जवं ध्यानमानृशंस्यमहिंसनम् । दमः प्रसादोमाधुर्य्यं मृदुतेति यमा दश । शौचं स्नानं तपोदानं मौनेज्याध्ययनं व्रतम् । उपोषणोपस्थदण्डौ दशैते नियमाः स्मृताः । कामं क्रोधं मदं मोहं मात्सर्य्यं लोभमेव च । अमून् षट् वैरिणो जित्वा सर्व्वत्र विजयी भवेत् । शनैः शनैः सञ्चिनुयाद्धर्म्मं वल्मीकशृङ्गवत् । परपीडामकुर्व्वाणः परलोकसहायकः । धर्म्म एव सहायी स्यादत्र न परिच्छदः । पितृमातृसुतभ्रातृयोषिद्बन्धुजनादिकः । जायेत चैकलः प्राणी म्रियेत तथैकलः । एकलः सुकृतं भुङ्क्तेऽश्नीयाद्दुष्कृतमेकलः । देहं पञ्चत्वमापन्नं त्यक्त्वासौ काष्ठलोष्ठवत् । बान्धवाविमुखायान्ति धर्म्मोयान्तमनुव्रजेत् । नित्यं सञ्चिनुयाद्धर्म्मं ततोऽत्र सहायिनम् । धर्म्मं सहायिनं लब्ध्वा सन्तरेद्दुस्तरं तमः । सम्बन्धानाचरेन्नित्यमुत्तमैरुत्तमैः सुधीः । अधमानधमांस्त्यक्त्वा कुलमुत्कर्षतां नयेत् । उत्तमानुत्तमानेव कुर्व्वन् हीनांश्च वर्ज्जयन् । ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् । अनध्ययनशीलञ्च सदाचारविलङ्घिनम् । अलसं च दुरान्नादं ब्राह्मणं बाधतेऽन्तकः ।

ततोऽभ्यसेत्प्रयत्नेन सदाचारं सदा द्विजः । तीर्थान्यप्यभिलषन्ति सदाचारसमागमम्” इति । प्रयस्य “रजनीप्रान्त्ययामार्द्धं ब्राह्मः समय उच्यते । स्वहितं चिन्तयेत् प्राज्ञस्तस्मिंश्चोत्थाय सर्व्वदा । गजास्यं संस्मरेदादौ ततश्चेशं सहाम्बया । श्रीकान्तं श्रीसमेतन्तु ब्रह्माणञ्च कमलोद्भवम् इन्द्रादीन् सकलान्देवान् वशिष्ठादीन् मुनीनपि । गङ्गाद्याः सरितः सर्व्वाः श्रीशैलाद्यखिलान् गिरीन् । क्षीरोदादीन् समुद्रांश्च मानसादिसरांसि च । वनानि नन्दनादीनि धेनूः कामदुघादिकाः । कल्पवृक्षादिवृक्षांश्च धातून् काञ्चनमुख्यतः । दिव्याः स्त्रीरुर्व्वशीमुख्या गरुडादीन् पतत्त्रिणः । नागांश्च शेषप्रमुखान् गजानैरावतादिकान् । अश्वानुच्चैःश्रवान् मुख्यान् कौस्तुभादीन् मणीन् शुभान् । स्मरेदरुन्धतीमुख्याः पतिव्रतवतीर्वधूः । नैमिषादीन्यरण्यानि पुरीः काशीपुरीमुखाः । विश्वेशादीनि लिङ्गानि वेदानृक्प्रमुखानपि । गायत्रीप्रमुखान् मन्त्रान् योगिनः सनकादिकान् । प्रणवादि महाबीजं नारदादींश्च वैष्णवान् । शिवभक्तांश्च बाणादीन् प्रह्लादादीन् दृढव्रतान् । वदान्यांश्च दधीच्यादीन् हरिश्चन्द्रादिभूपतीन् । जननीचरणौ स्मृत्वा सर्व्वतीर्थोत्तमोत्तमौ । पितरं च गुरुञ्चापि हृदि ध्यात्वा प्रसन्नधीः । ततश्चावश्यकं कर्त्तुं नैरृतीं दिशमाश्रयेत् । ग्रामाद्धनुःशतं गच्छेन्नगराच्च चतुर्गुणम् । तृणैराच्छाद्य वसुधां शिरः प्रच्छाद्य वाससा । कर्णोपवीतुदग्वक्त्रो दिवसे सन्ध्ययोरपि । विण्मूत्रे विसृजेन्मौनी निशायां दक्षिणामुखः । न तिष्ठन्नाप्सु नो विप्रगोवह्न्यनिलसंमुखः । न फालकृष्टे भूभागे न रथ्यासेव्यभूतले । नालोकयेद्दिशो भागान् ज्योतिश्चक्रं नभोऽमलम् । वामेन पाणिना लिङ्गं धृत्वोत्तिष्ठेत् प्रयत्नवान् । अथो मृदं समादत्ते जन्तुकर्करवर्जिताम् । विहाय मूषिकोत्खातां शौचोच्छिष्टाञ्च नाकुलाम् । गुह्ये दद्यान्मृदन्त्वेकां पायौ पञ्चाम्बुसान्तराः । दश वामकरे चापि सप्त पाणिद्वये मृदः । एकैकां पादयोर्दद्यात्तिस्रः पाण्योर्मृदः स्मृताः । इत्थं शौचं गृही कुर्य्याद्गन्धलेपक्षयावधि । क्रमाद्द्विगुणमेतत्स्याद्ब्रह्मचार्य्यादिषु त्रिषु । दिवा विहितशौचानां रात्रावर्द्धं समाचरेत् । रात्र्यर्द्धं च तदर्द्धं च पथि चौरादिगर्हिते । तदर्द्धं योषितां सुस्थेन्यूनं चातो न कारयेत् । अपि सर्व्वनदीतोयैर्मृत्कूटैश्चापि गोमयैः । आपादमाचरन् शौचं भावदुष्टो न शुद्धिभाक् । आर्द्रधात्रीफलोन्माना मृदः शौचे प्रकीर्त्तिताः । सर्व्वाश्चाहुतयोऽप्येवं ग्रासाश्चान्द्रायणेऽपि च” ततः आचमनप्रकारोऽभिहितः स च ६२८ पृष्ठे दर्शिताः । “अथो मुखविशुद्ध्यर्थं गृह्णीयाद्दन्तधावनम् । आचान्तोऽप्यशुचिर्यस्मादकृत्वा दन्तधावनम् । प्रतिपद्दर्शषष्ठीषु नवम्यां रविवासरे । दन्तानां काष्ठसंयोगे दहत्यासप्तमं कुलम् । अलाभे दन्तकाष्ठानां निषिद्धेऽथाथ वासरे । गण्डूषा द्वादश ग्राह्या मुखस्य परिशुद्धये । कनिष्ठाग्रपरिमाणं सत्वचं निर्व्रणं दृढम् । द्वादशाङ्गुलमानञ्च सार्द्रं स्याद्दन्तधावनम् । एकैकाङ्गुलिह्रासेन वर्णेष्वन्येषु तूदितम् । आम्राम्रातकधात्रीजमह्लोठखदिरोद्भवम् । शम्यपामार्गखर्ज्जूरीशेलुश्रीपर्णिपीलुजम् । राजादनं च नारङ्गं कषायं कटुकण्टकम् । क्षीरवृक्षोद्भवं चापि प्रशस्तं दन्तधावनम् । जिह्वोल्लेखनिकां चापि कुर्य्याच्चापाकृतिं शुभाम् । “अन्नाद्याय व्यूहध्वं सोमो राजायमागमत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च । आयुर्बलं यशोवर्च्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते” । मन्त्रावेतौ समुच्चार्य्य यः कुर्य्याद्दन्तधावनम् । वनस्पतिगतः सोमस्तस्य नित्यं प्रसीदति । मुखे पर्य्युषिते यस्माद्भवेच्चाशुचिभाङ्नरः । ततः कुर्य्यात्प्रयत्नेन शुद्ध्यर्थं दन्तधावनम् । उपवासेऽपि नो दुष्येद्दन्तधावनमञ्जनम् । गन्धालङ्कारसद्वस्त्रपुष्पमाल्यानुलेपनम् । प्रातः सन्ध्यां ततः कुर्य्याद्दन्तधावनपूर्व्विकाम् । प्रातः स्नानं चरित्वाथ शुद्धे तीर्थे विशेषतः । प्रातः स्नानाद्यतः शुद्ध्येत्कायोऽयं मलिनः सदा । छिद्रितो नवभिश्छिद्रैः स्रवत्येव दिवानिशम् । उत्साहमेधासौभाग्यरूपसम्पत्प्रवर्त्तकम् । मनःप्रसन्नताहेतुः प्रातः स्नानं विशिष्यते । प्रस्वेदलालाद्याक्लिन्नो निद्राधीनो यतो नरः । प्रातः स्नानात्ततोऽर्हः स्यान्मन्त्रस्तोत्रजपादिषु । प्रातः प्रातस्तु यत् स्नानं संजाते चारुणोदये । प्राजापत्यसमं प्राहुस्तन्महापापघातकृत् । प्रातः स्नानं हरेत्पापमलक्ष्मीं ग्लानिमेव च । अशुचित्वञ्च दुःस्वप्नं तुष्टिं पुष्टिं प्रयच्छति । नोपसर्पन्ति वै दुष्टाः प्रातः स्नायिजनं क्वचित् । दृष्टादृष्टफलं तस्मात्प्रातःस्नानं समाचरेत्” । अन्यत्राध्याये च “अथवा प्रातरुत्थाय कृत्वावश्यकमेव च । शौचाचमनमाधाय भक्षयेद्दन्तधावनम् । विशोध्य सर्व्वगात्राणि प्रातः सन्ध्यां समाचरेत् । वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च । अध्यापयेच्छुचीन् शिष्यान् हितमेधासमर्द्धितान् । उपेयादीश्वरं चापि योगक्षेमार्थसिद्धये । ततो मध्याह्नसिद्ध्यर्थं पूर्व्वोक्तं स्नानमाचरेत् । स्नात्वा माध्याह्निकीं सन्ध्यामुपासीत विचक्षणः । देवतां परिपूज्याथ

नैत्यिकं विधिमाचरेत् । पचनाग्निं समुज्ज्वाल्य वैश्वदेवं समाचरेत् । निष्पावान् कोद्रवान् माषान् कलायांश्चनकांस्त्यजेत् । तैलपक्वं च पक्वान्नं सर्वं लवणयुक् त्यजेत् । आढ़कांश्च मसूरांश्च वर्त्तुलान् वर्वटीस्तथा । भुक्तशेषं पर्य्युषितं वैश्वदेवे विवर्ज्जयेत् । दर्भपाणिः समाचम्य प्राणायामं विधाय च । पुष्पोदेवेति मन्त्रेण पर्य्युक्षणमथाचरेत् । प्रदक्षिणञ्च पर्य्युक्ष्य त्रिः परिस्तीर्य्य वै कुशान् । एषोहदेवमन्त्रेण वह्निं कुर्य्यात् सुसंमुखम् । वैश्वानरं समभ्यर्च्य आज्यं पुष्पाक्षतैरथ । भूराद्याश्चाहुतीस्तिस्रः स्वाहान्ताः प्रणवादिकाः । ओँ भूर्भुवः स्वः स्वाहेति विप्रोदद्यात्तथाहुतिम् । तथा देवकृतस्याद्याज्जुहुयाच्च षड़ाहुतीः । यमाय तूष्णीमेकाञ्च तथा स्विष्टकृते ह्ययम् । विश्वेभ्यश्चापि देवेभ्योभूमौ दद्यात्ततो बलीन् । सर्वेभ्यश्चापि भूतेभ्योनमोदद्यात्तदुत्तरे । तद्दक्षिणे पितृभ्यश्च प्राचीनावीतिकोददेत् । निर्णेजनोदकार्थं चैशान्यां वै यक्ष्मणार्पयेत् । ततो ब्रह्मादिदेवेभ्यो नमोदद्यात्तदुत्तरे । निवीतो सनकादिभ्यः पितृभ्यस्तपसश्च्यवान् । इत्त षोड़शभिर्ग्रासैश्चतुर्भिः पुष्कलं स्मृतम् । ग्रासमाला भवेद्भिक्षा गृहस्थस्य कृतप्रदा । अध्वगः क्षीणवृत्तिश्च विद्यार्थी गुरुपोषकः । यतिश्च ब्रह्मचारी च षड़ेते धर्मभिक्षुकाः । अतिथिः पान्थकोत्तेयोऽनूचानः श्रुतिपारगः । मान्यावेतौ गृहस्थानां ब्रह्मलोकमभीप्सताम् । अपि श्वपाके शुनि वा नैवान्नं निष्फलं भवेत् । अन्नार्थिनि समायाते पात्रापात्रं न चिन्तयेत् । शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् । काकानाञ्च कृमीणाञ्च बहिरन्नं किरेद्भुवि । "ऐन्द्रावरुणवायव्याः सौम्या वै नैर्ऋताश्च ये । प्रतिगृह्णन्त्विमं पिण्डं काका भूमौ मयार्पितम् । द्वौश्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ । ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ । देवा मनुष्याःपशवो रक्षोयक्षोरगाः खगाः । दैत्याः सिद्धाः पिशाचाश्च प्रेताभूताश्च दानवाः । तृणानि तरवश्चापि मद्दत्तेनाभिलाषुकाः । कृमिकीटपतङ्गाद्याः कर्म्मबन्धा बुभुक्षिताः । तृप्त्यर्थमन्नं हि मया दत्तं तेषां मुदेऽस्तु वै" । इत्थं भूतबलिं दत्त्वा कालं गोदोहमात्रकम् । प्रतीक्ष्यातिथिमायान्तं विशेद्भोक्तुमद्दं ततः । अदत्त्वा वायसबलिं नित्यश्राद्धं समाचरेत् । नित्यश्राद्धेषु सामर्थ्यात्त्रीन् द्वावेकमथापि वा । भोजयेत् पितृयज्ञार्थं दद्यादुद्धृत्य दुर्बलः । नित्यश्राद्धं देवहीनं नियमादि विवर्ज्जितम् । दक्षिणारहितञ्चैतद् दातृभोक्तृव्रतोज्झितम् । पितृयज्ञं विधायेत्थं स्वच्छबुद्धिरनातुरः । अदुष्टासनमध्यास्य भुञ्जीत शिशुभिः सह । सुगन्धिः सुमनाः स्रग्वी शुचिवासोद्वयान्वितः । प्राङ्मुखो उदङ्मुखोवाभुञ्जीत पितृसेवितम् । विधायाचमनन्तद्वदुपरिष्टादधस्तथा । आपोशानविधानेन तत्त्वाऽश्नीयात् सुधी द्विजः । प्रदद्याद्भुवःपतये भुवनपतये तथा । भूतानां पतये स्वाहेत्युक्त्वा भूमौ बलित्रयम् । सकृच्चाप उपस्पृश्य प्राणाद्याहुतिपञ्चकम् । दद्याज्जठरकुण्डाग्नौ दर्भपाणिः प्रसन्नधीः । दर्भपाणिस्तु योभुङ्क्ते तस्य दोषो न बाधते । केशकीटादिसंभूतं तदश्नीयात् सदर्भकः । यावत्तदन्नमश्नीयान्न ब्रूयात्तद्गुणागुणान् । भुञ्जते पितरस्तावद्यावन्नोक्ता गुणागुणाः । अतोमौनेन योभुङ्क्ते स भुङ्क्ते केवलामृतम् । अनुपीय ततः क्षीरं भक्ष्यं पानीयमेव वा । अमृतापिधानमसीत्येवं प्राश्योदकं सकृत् । पीतशेषं क्षिपेद्भूमौ तोयं मन्त्रमिमं पठन् । सुप्रक्षालित हस्तस्य दक्षिणाङ्गुष्ठमूलतः । "रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम् । उच्छिष्टोदकमिच्छूनामक्षय्यमुपतिष्ठताम्" । पुनराचम्य मेधावी शुचिर्भूत्वा प्रयत्नतः । हस्तेनोदकमादाय मन्त्रमेतदुदीरयेत् । "अङ्गुष्ठमात्रः पुरुषस्तङ्गुष्ठञ्च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" । इत्यर्थं परिसंकल्प्य प्रक्षाल्य चरणौ करौ । ततोऽन्नपरिपाकार्थं मन्त्रानेतानुदीरयेत् । "अग्निराप्याययेद्धातून् पार्थिवान् पवनेरितः । दत्तावकाशोनभसा जरयत्वस्तु मे सुखम् । प्राणापानसमानानामुदानव्यानयोस्तथा । अन्नं पुष्टिकरं चास्तु ममास्त्वव्याहतं सुखम् । समुद्रोवड़वाग्निश्च ब्रह्मोब्रह्मस्य नन्दनः । ममाऽभ्यवहृतं यत्तदशेषं जरयन्त्विमे" । मुखशुद्धिं ततः कृत्वा पुराणश्रवणादिभिः । अतिवाह्य दिवाशेषं ततः सन्ध्यां समाचरेत् । गृहे गोष्ठे नदीतीरे सन्ध्या दशगुणा क्रमात् । संभेदे स्याच्छतगुणा ह्यनन्ता शिवसन्निधौ । उपासिता बहिः सन्ध्या दिवामैथुनपातकम् । शमयेदनृतोक्तार्थं मद्यगन्धजमेव च । पश्चिमास्योजपेत्तावद्यावन्नक्षत्रदर्शनम् । अतिथिं सायमायान्तमपि वा भूतृणोदकैः । सम्भाव्य परिकल्प्यैत्यं निशः प्राक् प्रहरं सुधीः । इत्थं दिवा कर्म्म कृत्वा श्रुतेः पठनपाठनैः । एककाष्ठमयीं शय्यां नातिक्षुण्णोऽथ संविशेत् । उद्देशतः समाख्यात एष नित्यतनोर्विधिः । इत्थं समाचरन् विप्रोनावसीदति कर्हिचित्" । इत्थं नित्यधर्म्माचरणमुक्ता गृहस्थवर्ज्यावर्ज्यविशेषकालैर्योक्तः

"ऋतुकालाभिगमनं धर्म्मोऽयं गृहिणः परः। स्त्रीणां वर मनुस्मृत्य यथाकाम्यथ वा भवेत्। दिवाभिगमनं पुंसामनायुष्यं परं मतम्। श्राद्धाहः सर्व्वपर्व्वाणि यत्नात् त्याज्यानि धीमता। तत्र गच्छन् स्त्रियं मोहात् धर्म्मात् प्रच्यवते परात्। ऋतुकालाभिगामी यः स्वदारनिरतश्च यः। स ब्रह्मचारी धर्म्मज्ञो विज्ञेयः स गृहाश्रमी। ऋतुःषोड़शयामिन्यश्चतस्रस्तासु गर्हिताः। पुत्रास्तास्वपि या युग्माः अयुग्माः कन्यकाप्रजाः। त्यक्त्वा चन्द्रमसं दुःस्थं मघां मूलां विहाय च। शुचिः संनिर्विशेत्पत्नीं पुंनामर्क्षे विशेषतः। शुचिं पुत्रं प्रसूयेत पुरुषार्थप्रसाधकम्। आर्षे विवाहे गोद्वन्द्वं यदुक्तं तन्न शस्यते। शुल्कमण्वपि कन्यायाः कन्याविक्रयपापकृत्। अपत्यविक्रयी कल्पं वसेद्विट्कृमिभोजने। अतोनाण्वपि कन्यायाः उपजीवेत्पिता धनम्। स्त्रीधनान्युपजीवन्ति ये मोहादिह बान्धवाः। न ते परं निरयगास्तेषामपि हि पूर्व्वजाः। पत्या तुष्यति यत्र स्त्री तुष्येद्यत्र स्त्रिया पतिः। तत्र तुष्टा महालक्ष्मीर्निवसेद्दानवारिणी" "वाणिज्यं नृपतेः सेवा वेदानध्ययनं तथा। कुविवाहः क्रियालोपः कुले पतनहेतवः। कुर्य्याद्वैवाहिके वह्नौ गृह्यं कर्म्मान्वहं गृही। पञ्चयज्ञक्रियां चापि पक्तिं दैनन्दिनीमपि। गृहस्थाश्रमिणः पञ्चसूनाकर्म्म दिनेदिने। कण्डनी पेषणी चुल्ली उदकुम्भस्तु मार्ज्जनी। तासाञ्च पञ्चसूनानां निराकरणहेतवः। क्रतवः पञ्च निर्द्दिष्टा गृहिश्रेयोऽभिवर्द्धनाः। पठनं ब्रह्मयज्ञः स्यात्तर्पणञ्च पितृक्रतुः। होमो दैवो बलिर्भौतोऽतिथ्यर्च्चा क्रतवः क्रमात्। पितृप्रीतिं प्रकुर्व्वाणः कुर्व्वीत श्राद्धमन्वहम्। अन्नोदकपयोमूलफलैर्व्वापि गृहाश्रमी। गोदानेषु च यत्पुण्यं पात्राय विधिपूर्व्वकम्। सत्कृत्य भिक्षवे भिक्षां दत्त्वा तत्फलमाप्नुयात्। तपोविद्यासमिद्धाग्नौ हुतं विप्रास्यपावके। तारयेद्विप्रसंघेभ्यः पापाब्धेरपि दुस्तरात्। अनर्च्चितोऽतिथिर्गेहात् भग्नाशो यस्य गच्छति। आजन्म सञ्चितात् पुण्यात् तत्क्षणात् स बहिर्भवेत्। सान्त्वपूर्व्वाणि वाक्यानि यथार्थं भक्तपोदकैः। एतान्यपि प्रदेयानि सदागन्तुकतुष्टये। गृहस्थः परपाकाढ्यः प्रेतः सन् पशुपतां व्रजेत्। श्रेयः परार्थपुष्टस्य गृह्णीयादन्नदोषतः। आदित्योढोऽतिथिः सायं सत्कर्त्तव्यः प्रयत्नतः। असत्कृतोऽन्यतोगच्छन् दुष्कृतं भूरि यच्छति। भुञ्जानोऽतिथिशेषाग्रमिहायुर्धनभाग्भवेत्। प्रणोद्यातिथिमश्नाशी किल्विषी च गृहाश्रमी। वैश्वदेवान्तसंप्राप्तः सूर्य्योढो वाऽतिथिः स्मृतः। न पूर्व्वकाल आयातो न च दृष्टचरः क्वचित्। बलिपात्रकरे विप्रे यद्यन्योऽतिथिरागतः। अदत्त्वा तं बलिं तस्मै यथाशक्त्यन्नमर्पयेत्। कुमाराश्च सुवासिन्योगर्भिण्योऽतिरुजान्विताः। अतिथेरादितोऽप्येते भोज्या नात्र विचारणा। पितृदेवमनुष्येभ्योदत्त्वाश्नात्यमृतं गृही। स्वार्थं पचन्नघं भुङ्क्ते केवलं स्वोदरम्भरिः। माध्याह्निकं वैश्वदेवं गृहस्थः स्वयमाचरेत्। पत्नी सायं बलिं दद्यात् सिद्धान्नैर्मन्त्रवर्जितम्। एतत्सायन्तनं नाम वैश्वदेवं गृहाश्रमे। सायं प्रातर्भवेद्देवं वैश्वदेवं प्रयत्नतः। वैश्वदेवेन ये हीना आतिथ्ये न विवर्ज्जिताः। सर्व्वे ते वृषला ज्ञेया प्राप्तवेदा अपि द्विजाः। अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजाधमाः। इह लोकेऽन्नहीनाः स्युः काकयोनिं व्रजन्त्यथ। वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः। तद्धि कुर्व्वन् यथाशक्ति प्राप्नुयात् स्वर्गतिं पराम्। षष्ठ्यष्टम्योर्व्वसेत्पापं तैले मांसे सदैव हि। पञ्चदश्यां चतुर्द्दश्यां तथैव च भगे क्षुरे। उद्यन्तं न वेक्षेत नास्तं यान्तं न मध्यगम्। न राहुणोपसृष्टं च नाम्बुसंस्थं दिवाकरम्। न वीक्षेतात्मनोरूपमप्सु धावेन्न वर्षति। नोल्लङ्घयेद्वत्सतन्त्रीं न नग्नो जलमाविशेत्। देवतायतनं विप्रं धेनुं मधु घृतं मृदम्। जातिवृद्धं वयोवृद्धं विद्यावृद्धं तपस्विनम्। अश्वत्थं चैत्यवृक्षं च गुरुं जलभृतं घटम्। सिद्धान्नं दधि सिद्धार्थं गच्छन् कुर्व्वीत प्रदक्षिणम्। रजस्वलां न सेवेत नाश्नीयात् सह भार्य्यया। एकवासा न भुञ्जीत न भुञ्जीतोत्कटासने। नाश्नतीं स्त्रीं समीक्षेत तेजस्कामो द्विजोत्तमः। असन्तर्प्य पितॄन् देवान् नाद्यादन्नं नरः क्वचित्। पक्वान्नं वापि नो मांसं दीर्घकालं जिजीविषुः। न मूत्रं गोव्रजे कुर्य्यान्न वल्मीके न भस्मनि। न गर्त्तेषु ससत्त्वेषु न तिष्ठन्न व्रजन्नपि। गोविप्रसूर्य्यवाय्वग्निचन्द्रार्काम्बुगुरूनपि। अभिपश्यन् कुर्व्वीत मूत्रोच्चारविसर्ज्जनम्। तिरस्कृत्यावनीं लोष्ट्रकाष्ठपत्रतृणादिभिः। प्रावृत्य वाससा मौलिं मौनी विण्मूत्रमुत्सृजेत्। यथासुखमुखो रात्रौ दिने छायान्धकारयोः। भीतिषु प्राणबाधायां कुर्य्यान्मलविसर्ज्जनम्। मुखेनोपधमेन्नाग्निं नग्नां नेक्षेत योषितम्। नाङ्घ्री प्रतापयेदग्नौ न वस्तु शुचि निक्षिपेत्। प्राणिहिंसां न कुर्व्वीत नाश्नीयात्सन्ध्ययोर्द्वयोः। न संविशेच्च सन्ध्यायां प्रत्यक्सौम्यशिरा अपि। विण्मूत्रशोधनं नाप्सु कुर्य्याद्दीर्घं जिजीविषुः। नाचक्षीत धयन्तीं गां नेन्द्रं चापं प्रदर्शयेत्। नैकः सुप्यात् क्वचित् शून्ये न शयानं प्रबोधयेत्। पन्थानं

नैकको यायाद्वा वाय्वञ्जलिना पिबेत्। न दध्युद्धृतसारं च भक्षयेद्दधि नो निशि। स्त्रीधर्म्मिणीं नाधिवसेत् नाद्यादाद्यपि रात्रिषु। तीर्थंस्तिकप्रियोनस्यात् कांस्ये पादौ न धावयेत्। न धारयेदन्यभुक्तं वासश्चोपानहावपि। न भिन्नभाजनेऽश्नीयान्नाग्न्यादिपरिदूषिते। आरोहणं गवां पृष्ठे प्रेतधूमं सरित्तरम्। बालातपं दिवास्वापं त्यजेद्दीर्घं जिजीविषुः। स्नात्वा न मार्ज्जयेद्गात्रं विसृजेन्न शिखां पथि। हस्तौ शिरोन धुनुयान्नाकर्षेदासनं पदा। श्राद्धं कृत्वा परश्राद्धेऽश्नीयात् ज्ञानविवर्ज्जितः। दातुः श्राद्धफलं नास्ति भोक्ता किल्विषभुग्भवेत्। नोत्पाटयेल्लोमनखं दशनेन कदाचन। करजैः करजच्छेदं तृणच्छेदं विवर्ज्जयेत्। शुभाय न यदायत्यां त्यजेत्तत्कर्म यत्नतः। अपद्वारे न गन्तव्यं स्ववेश्मपरवेश्मनोः। क्रीड़ेन्नाक्षैः सहासीत न धर्म्मघ्नैर्न रोगिभिः। न शयीत क्वचिन्नग्नः पाणौ भुञ्जीत नैव च। आर्द्रपादकरास्योऽश्नन्दीर्घकालं स जीवति। संविशेन्नार्द्रचरणोनोच्छिष्टः क्वचिदाव्रजेत्। शयनस्थोन चाश्नीयान्न पिबेन्न जपेद्द्विजः। सोपानत्कश्च नाचामेन्न तिष्ठन् धारया पिबेत्। सर्वं तिलमयं नाद्यात्स्नायं धर्म्माभिलाषुकः। न निरीक्षेत विण्मूत्रे नोच्छिष्टः संस्पृशेच्छिरः। नाधितिष्ठेत्तुषाङ्गार भस्मकेशकपालिकाः। पतितैः सह संवासः पतनायैव जायते। श्रावयेद्वैदिकं मन्त्रं न शूद्राय कदाचन। ब्राह्मण्याद्धीयते विप्रः शूद्रोधर्म्माच्च हीयते। धर्म्मोपदेशः शूद्राणां स्वश्रेयः प्रतिघातयेत्। द्विजशुश्रूषणं धर्म्मः शूद्राणां हि परोमतः। कण्डूयनं न शिरसः पाणिभ्यां शुभदं मतम्। न ताडयेत् कराभ्यां च शोणितं केशलुञ्चनम्। अशास्त्रवर्त्तिनोभूपाल्लोभात् कृत्वा प्रतिग्रहम्। ब्राह्मणः सान्वयोयाति नरकानेकविंशतिम्। अकालविद्युत्स्तनिते वर्षर्त्तौ पांशुवर्षणे। महावाताध्वनौ रात्रावनध्यायाः प्रकीर्त्तिताः। उल्कापाते च भूकम्पे दिग्दाहे मध्यरात्रिषु। सन्ध्ययोर्वृषलोपान्ते राजचन्द्रस्य सूतके। दर्शेऽष्टकासु भूतानां श्राद्धिकं प्रतिगृह्य च। प्रतिपद्यपि पूर्णायां गजकुम्भग्रा हतान्तरे। खरोष्ट्रक्रोड़विरुते समवाये रुदत्यपि। उपाकर्म्मणि चोत्सर्गे नावि मार्गे तरौ जले। आरण्यकमधीत्यापि वाणसाम्नोरपि ध्वनौ। अनध्यायेषु चैतेषु नाधीयीत द्विजः क्वचित्। कृतान्तरादौ न पठेत्कालवाहिवसुभिः। भूताष्टम्योः पञ्चदश्योर्ब्रह्मचारी सदा भवेत्। अनायुष्यकरञ्चेह परदारोपसेवनम्। पञ्चर्द्धिभिः परित्यक्तमात्मानं नावमानयेत्। सदो-

द्यमवतां यस्माच्छ्रियोविद्या न दुर्लभाः। सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्म्मो-घटोद्भव !। भद्रमेव वदेन्नित्यं भद्रमेव विचिन्तयेत्। भद्रैरेव हि संसर्गोनाभद्रैश्च कदाचन। रूपवित्तकुलैर्हीनान् सुधीर्नाधिक्षिपेन्नरान्। पुष्पवन्तौ न वेक्षेत स्वशुचिर्ज्योतिषाङ्गणम्। वातवेगं मनोवेगं जिह्वावेगञ्च वर्ज्जयेत्। उत्कोच द्यूतदौत्यार्त्तद्रव्यं दूरात् परित्यजेत्। गोब्राह्मणाग्नीनुच्छिष्टः पाणिना नैव संस्पृशेत्। न स्पृशेदनिमित्तं च खानि खानि स्वनातुरः। गुह्यजान्यपि लोमानि तत्स्पर्शादशुचिर्भवेत्। पादशौचोदकं मूत्रमुच्छिष्टाद्योदकानि च। निष्ठीवनञ्च श्लेष्माणं गृहाद्दूरं विनिःक्षिपेत्। अहर्न्निशं श्रुतेर्जप्याच्छौचाचारनिषेवणात्। अद्रोहत्वाद्गत्या च पूर्व्वजन्म स्मरेद्द्विजः। वृद्धान् प्रयत्नाद्वन्देत दद्यात्तेषां स्वमासनम्। विनम्रधमनिस्तस्मादनुयायाद्यतव्रतान्। श्रुतिभूदेवदेवानां नृपसाधुतपस्विनाम्। पतिव्रतानां नारीणां निन्दां कुर्य्यान्न कर्हिचित्। न मनुष्यस्तुतिं कुर्य्यान्नात्मानमवमानयेत्। अभ्युद्यतं न प्रणुदेत्परमर्म्माणि नोद्धरेत्। अधर्म्मादेधते पूर्व्वं विद्विष्टमपि संजयेत्। सर्व्वतोभद्रं पश्येच्च ततोनश्येच्च सान्वयः। उद्धृत्य पञ्च मृत्पिण्डान् स्नायात् परजलाशये। अनुद्धृत्य च तत्कर्त्तुरेनसः स्यात्तुरीयभाक्। श्रद्धया पात्रमासाद्य यत्किञ्चिद्दीयते वसु। देशे काले च विधिना तदानन्त्याय कल्पते। भूप्रदो मण्डलाधीशः सर्व्वत्र सुखितोऽन्नदः। तोयदाता सदा तृप्तो रूपवान् रूप्यदो भवेत्। प्रदीपदो निर्म्मलाक्षो गोदातार्य्यमलोकभाक्। स्वर्णदाता च दीर्घायुस्तिलदः स्याच्च सुप्रजाः। वेश्मदोऽत्युच्चसौधेशोवस्त्रदश्चन्द्रलोकभाक्। हयप्रदोदिव्ययानोलक्ष्मीवान् वृषभप्रदः। सुभार्य्यः शिविकादाता सुपर्य्यङ्कप्रदोऽपि च। धर्म्मैः सर्व्वर्द्धिभाक् नित्यमभयप्रदर्शिता। ब्रह्मदोब्रह्मलोकेष्वोब्रह्मदः सर्व्वदोमतः। उपायेनापि योब्रह्म दापयेत्सोपि तत्समः। श्रद्धया प्रतिगृह्णाति श्रद्धया यः प्रयच्छति। स्वर्गिणौ तावुभौ स्यातां पततोऽश्रद्धया ह्यधः। अनृतेन क्षरेद्यज्ञस्तपोविस्मयतः क्षरेत्। क्षरेत्कीर्त्तनतोदानमायुर्विप्रापवादतः। गन्धपुष्पकुशान् शय्यां शाकं मांसं पयोदधि। मणिमत्स्यौ गृहं धान्यं ग्राह्यमेतदुपस्थितम्। मधूदकं फलं मूलमेधांस्यभयदक्षिणाम्। अभ्युद्यतानि ग्राह्याणि त्वेतान्यपि निकृष्टतः। दासनापितगोपालकुलमित्रार्द्धसीरिणः। भोज्यान्नाः शूद्रवर्गेऽमी तथात्मविनिवेदकः। दत्त्वानृणमापाद्य दे-

वर्षिपित्तजाड्यात् । माध्यस्थ्यमाश्रयेत् गेही सुते विश्वस्य न्यस्य च । गृहेऽपि ध्यानमभ्यस्येत्काशीं वाथ समाश्रयेत् । सम्यग्ज्ञानेन वा मुक्तिः किं न विन्दे भवेष्वपि ? । सम्यग्ज्ञानं भवेत् पुंसां कुत एकेन जन्मना ? । वाराणस्यां ध्रुवा मुक्तिः शरीरत्यागमात्रतः । अद्यश्वो वा परश्वो वा कालाद्वाथ परागतात् । सत्वरं गत्वरो देहः काश्यां चेदस्ततो भवेत् । सा च वाराणसी लभ्या सदाचारवता सता । मनसापि सदाचारमतो विद्वान्न लङ्घयेत्” । वशिष्ठस्मृतौ च “आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः । छन्दांस्येनं मृत्युकाले त्यजन्ति नीड़ं शकुन्ता इव जातपक्षाः । आचारहीनस्य तु ब्राह्मणस्य वेदाः षड़ङ्गास्त्वखिलाः सयज्ञाः । कां प्रीतिमुत्पादयितुं समर्था अन्धस्य दारा इव दर्शनीयाः । नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम् । तत्राक्षरे सम्यगधीयमाने पुनाति तद्ब्रह्म यथावदिष्टम् । दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभागी च सततं व्याधितोऽल्पायुरेव च । आचारात् फलते धर्म्ममाचारात् फलते धनम् । आचारात् श्रियमाप्नोति आचारो हन्त्यलक्षणम् । सर्व्वलक्षणहीनोऽपि यः सदाचारवान्नरः । श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति । आहारनिर्हारविहारयोगाः सुसंवृता धर्म्मविदा तु कार्य्याः । वाग्बुद्धिवीर्य्याणि तपस्तथैव धनायुषी गुप्ततमे च कार्य्ये । उभे मूत्रपुरीषे तु दिवा कुर्य्यादुदङ्मुखः । रात्रौ कुर्य्याद्दक्षिणास्य एवं ह्यायुर्न रिष्यते । प्रत्यग्निं प्रतिसूर्य्यञ्च प्रति गां प्रति च द्विजम् । प्रतिसोमोदकं सन्ध्यां प्रज्ञा नश्यति मेहतः । न नद्यां मेहनं कार्य्यं न पथि न च भस्मनि । न गोमये नवा कृष्टे नोप्ते क्षेत्रे न शाद्वले । छायायामन्धकारे वा रात्रावहनि वा द्विजः । यथासुखमुखः कुर्य्यात् प्राणबाधाभयेषु च । उद्धृताभिरद्भिः कार्य्यं कुर्य्याच्च स्नानमनुद्धृताभिरपि । न हरेन्मृत्तिकां विप्रः कूलात् ससिकतां तथा । अन्तर्जले देवगृहे वल्मीके मूषिकस्थले । कृतशौचावशिष्टे च न ग्राह्याः पञ्च मृत्तिकाः । एका लिङ्गे करे तिस्र उभाभ्यां द्वे तु मृत्तिके । पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः । एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः । वानप्रस्थस्य त्रिगुणं यतीनान्तु चतुर्गुणम् । अष्टौ ग्रासा मुनेर्भक्तं वानप्रस्थस्य षोड़श । द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः । अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः । भुञ्जाना एव सिध्यन्ति नैषां सिद्धिरनश्नताम् । तपोदानोपहारेषु व्रतेषु नियमेषु च । इज्याध्ययनधर्म्मेषु यो न सक्तः स निष्क्रियः । योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् । विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् । सर्व्वत्र दान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः । प्रतिग्रहे सङ्कुचिता गृहस्थास्ते ब्राह्मणास्तारयितुं समर्थाः । असूयुः पिशुनश्चैव कृतघ्नो दीर्घरोषकः । चत्वारः कर्म्मचाण्डाला जन्मतश्चापि पञ्चमः । दीर्घवैरमसूयाञ्च असत्यं ब्रह्मदूषणम् । पैशुन्यं निर्द्दयत्वञ्च जानीयाच्छूद्रलक्षणम् । किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् । पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे । शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः । हुत्वापि च जपित्वापि गतिमूर्द्ध्वां न विन्दति । शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः । स भवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले । शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति । यस्यान्नं तस्य ते पुत्रा नच स्वर्गार्हको भवेत् । स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम् । स्त्रीषु क्षान्तं धार्म्मिकं गोशरण्यं व्रतैः क्षान्तं तादृशं पात्रमाहुः । आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु । विनश्येत् पात्रदौर्बल्यात्तच्च पात्रं रसाश्च ते । एवं गाञ्च हिरण्यञ्च वस्त्रमन्नं महीं तिलान् । अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत् । नाङ्गनखवादित्रं कुर्य्यात् नचापोऽञ्जलिना पिबेत् । न पादेन पाणिना वा राजानमपि हन्यात् न जलेन जलम् । नेष्टकाभिः फलानि पातयेत् न फलेन फलम् । न कल्कपुटको भवेत् । न म्लेच्छभाषां शिक्षेत । अथाप्युदाहरन्ति । न पाणिपादचपलो न नेत्रचपलो भवेत् । नचाङ्गचपलो विप्र इति शिष्टस्य गोचरः । पारम्पर्य्यागतो येषां वेदः सपरिवृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः । यस्य सन्तं नचासन्तं नाश्रुतं न बहुश्रुतम् । न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः” एवं मन्वादिसंहितादौ बहव आचारा उक्तप्रायाः दर्शिताः । भावापरपर्य्यायः तन्त्रोक्ताचारश्च दिव्याचारवीराचारपश्वाचारभेदात् त्रिविधः यथोक्तं तन्त्रसारे ।

“अथ भावविधिं वक्ष्ये शृणुष्व कमलानने ! । विना येन न सिध्येत्तु जन्मकोटिशतैरपि । भावस्तु त्रिविधो देवि ! दिव्यवीरपशुक्रमात् । दिव्यवीरौ महाभावौ अधमः पशुभावकः । वैष्णवः पशुभावेन पूजयेत् परमेश्वरम् । शक्तिमन्त्रे वरारोहे ! पशुभावो भयानकः । दिव्ये वीरे-

महेशानि। जायते सिद्धिरुत्तमा। दिव्ये वीरे न भेदोऽस्ति ताभ्यां भेदः प्रयोक्ततः। दिव्यवीरौ प्रवक्ष्यामि सर्वभावोत्तमोत्तमौ। विना शक्त्या न पूजास्ति मत्स्यं मांसं विना प्रिये!। मुद्राञ्च मैथुनञ्चापि विना नैव प्रपूजयेत्। स्त्रीभगं पूजनाधारं स्वर्णरूप्यकमेव च। अभावे सर्वद्रव्याणामनुकल्पः कलौ युगे। अथ वा परमेशानि। मानसं सर्व्वमाचरेत्। स्नानन्तु मानसं प्रोक्तं वैदिके मानसं सदा। यत्र भुक्त्वा महापूजा मानसं भोजनन्तु तत्। स्वकीयां परकीयां वा मानसन्तु रमेत् स्त्रियम्। मानसं मद्यमीनादि स्वीकुर्य्यात् साधकोत्तमः। स्वैरन्तु कुसुमं तद्वत् मानसं समुपाचरेत्। मानसं भगरोमादि मानसं भगपूजनम्। सर्व्वन्तु मानसं कुर्य्यात् तेन सिद्धिफलंलभेत्" इति पिच्छिलातन्त्रे पूर्व्वखण्डे दशमःपटलः। तद्विवरणं तत्तच्छब्दे दृश्यम्। आचारचन्द्रिका आचारचिन्तामणिः आचारदीपः आचारमाधवः आचारमयूखः आचारादर्शः आचारार्कः इत्यादायश्च ग्रन्थाः आचारवेदनार्थाः भारतवर्षे देशभेदे च प्रसिद्धाः। तत्र एवाचारभेदा अवसेयाः। निषिद्धाचारश्च अनाचारः स च अनाचारशब्दे २५७ पृष्ठे उक्तप्रायः। अधिकं निषिद्धशब्दे वक्ष्यते।

**आचारदीप** पु० आचारार्थः नीराजनार्थोदीपः। राज्ञां वाजिप्रभृतीनां वा नीराजनार्थे दीपे।

**आचारवत्** त्रि० आचारः शास्त्रोक्तानुष्ठानं कर्त्तव्यतयाऽस्त्यस्य मतुप् मस्य वः। शास्त्रोक्तानुष्ठानयुक्ते स्त्रियां ङीप्।

**आचारवर्जित** त्रि० आचारेण वर्जितः। शास्त्रोक्ताचारहीने आचारहीनादयोऽप्यत्र।

**आचारवेत्तृ** त्रि० आचारं वेत्ति विद्–तृच् स्त्रियां ङीप्। आचाराभिज्ञे। [स्त्रियां ङीप्।

**आचारवेदिन्** त्रि० आचारं विद्–णिनि। आचाभिज्ञे

**आचारवेदी** स्त्री आचारस्य वेदीव। पुण्यभूमौ हेम०।

**आचाराङ्ग** न० आचारमङ्गमिव। दृष्टिवादे द्वादशसु अङ्गेषु मध्ये अङ्गभेदे हेमचन्द्रः।

**आचारिन्** त्रि आचरति शास्त्रोक्तानुसारेण आ+चर–णिनि। शास्त्रोक्तानुष्ठानवर्तिनि स्त्रियां ङीप्।

**आचारी** स्त्री० सम्यक् चारः प्रसरणं यस्याः गौ० ङीष्। (हेलञ्चा) हिलमोचिकालतायाम्।

**आचार्य्य** पु० आ+चर–ण्यत्। "उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः। सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते" इति मनूक्तलक्षणे १ वेदाध्यापयितरि, "आम्नायतत्त्वविज्ञानाच्चराचरसमानतः। यमादियोगसिद्धत्वादाचार्य्य इति कथ्यते" इत्युक्तलक्षणे २ मतप्रस्थापके शङ्कराचार्य्यादौ च। स्त्रियां टाप् आचार्य्या। आचार्य्यपत्न्यान्तु ङीष् आनुक् च आचार्य्यानी न णत्वम्। "अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः। सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते" इत्युक्तः "कस्मादाचार्य्य आचारं ग्राहयत्याचिनोत्यर्थान् आचिनोति बुद्धिमिति वा" निरु० "आचार्य्यस्तु ते गतिं वक्तेति" छा० उप० "आचार्य्यात् पादमादत्ते पादं शिष्यः स्वमेधया। कालेन पादमादत्ते पादं सब्रह्मचारिभिः" नीलकण्ठधृता स्मृतिः। क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रातृकतीर्थिनः" याज्ञ०। यज्ञादौ कर्म्मोपदेशके ३ गुरौ "आचार्य्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः तथा त्वं मम यज्ञे स्मिन्नाचार्य्यो भव सुव्रत! यथा शक्रस्य वागीश आचार्य्यः सर्व्वकर्म्मसु। तथा मया त्वमाचार्य्यः वृतोऽस्मिन् यज्ञकर्म्मणि" इति विधानपारि० पुरा०। ४पूज्यमात्रे त्रि० सुराचार्य्यः दैत्याचार्य्यः ५शिक्षकमात्रे च "लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः" रघुः।

**आचार्य्यक** न० आचार्य्यस्य कर्म भावो वा योपधगुरूपोत्तमत्वात् वुञ्। आचार्य्यकर्मणि। "लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः" रघुः "नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम्। हन्यादाचार्य्यकं दीप्तं संस्मृत्य शरनिर्मितम्" भा० उ० प० १६६ अध्या०। "आचार्य्यकं विजयि मान्मथमाविरासीत्" त्व आचार्य्यत्वं तत्रैव न० तल् आचार्य्यता तत्रैव स्त्री। सोऽचिरेणैव कालेन परमाचार्य्यतां गतः"।

**आचार्य्यभोगीन** त्रि० आचार्य्यभोगाय हितम् ख "आचार्य्यादणत्वम्" वार्तिकोक्तेः न णत्वम्। आचार्य्यभोगपर्य्याप्ते द्रव्यादौ।

**आचार्य्यमिश्र** पु० आचार्य्योमिश्रः। अतिशयपूज्ये।

**आचिख्यासा** स्त्री आख्यातुमिच्छा आ+ख्या–सन–अ। आख्यातुमिच्छायाम्। [आख्यातुमिच्छौ।

**आचिख्यासु** त्रि० आख्यातुमिच्छु आ+ख्या–सन उ।

**आचित** त्रि० आ+चि+क्त। १व्याप्ते, "कचाचितौ विष्वगिवागजौ गजौ" किरा० "फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्द्रुमम्" (बदरीं दद्रुशुः) भा० व० प० १४५ अ०। २गुम्फिते ग्रथिते "अलकाचिता मल्लिकादामलिनायाः" कुमारः ३रचित "तुला पलशतं तासां विंशत्या भार आचितः" इत्युक्ते

भारात्मके २द्विसहस्रपलमाने। आचितं दश भाराः स्यात् शाकटोभार आचित इत्युक्ते ३ दशभारमाने न० शाकटभारे पु०। परिमाणवाचकत्वात् ५तन्मितेऽपि। ६संगृहीते ७ बद्धे च। "आढकाचितपात्रात् खोऽन्यतरस्याम्" पा० "आचितं सम्भवति (खचित् सन्निगयति) अवहरति पचति वा ख ठञ् वा। आचितीनः आचितिकः। आचितपरिमाणद्रव्यस्य खचित् समावेशनार्हे तदवहारके तत्पाचके च त्रि०। ठञि स्त्रियां ङीप्खे टाप्।

**आचितादि** पु० आचित आदिर्यस्य। गतिकारकोपपदात् कृत्स्वान्तोदात्ततायां पाणिना पर्युदस्ते गणभेदे आचित, पर्याचित, आस्थापित, परिगृहीत, निरुक्त प्रतिपन्न, अपश्लिष्ट, प्रश्लिष्ट, उपहित, उपस्थित संहितागवि।

**आचूषण** न० आ+चूष-ल्युट्। ओष्ठसंयोगविशेषेण रसानुभवार्थं रसाकर्षके व्यापारभेदे (चोषा) विषशल्याद्यपकर्षणार्थं २ओष्ठादिसंयोगभेदेनाकर्षणे च। "नाडीयन्त्राण्यनेकप्रकाराणी"त्युपक्रम्य "तानि आचूषणार्थमिति"। सुश्रु० करणे ल्युट् ३तत्साधने(शिङ्गा) "तत्रप्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदाचूषणात्" सुश्रु०।

**आच्छद्** त्रि० आच्छाद्यतेऽनेन आ+छद-णिच्-क्विप् ह्रस्वः। आच्छादने वस्त्रे घञर्थे क। आच्छदोऽप्यत्र पु०।

**आच्छन्न** त्रि० आ+छद्-क्त। आवृते "मेघाच्छन्नेऽह्नि दुर्दिनम्" अमरः। [आवरणे।

**आच्छाद** पु० आच्छाद्यतेऽनेन आ+छद्-णिच्-करणे घञ्।

**आच्छादक** त्रि०आ+छद्-णिच्-ण्वुल्। आच्छादनकर्त्तरि

**आच्छादन** न० आ+छद्-णिच्-करणे ल्युट्। आवरणसाधने १वस्त्रे भावे ल्युट्। २आवरणे न०।

**आच्छादित** त्रि० आ+छद्-णिच्-क्त। आवृते।

**आच्छादिन्** त्रि० आ+छद्-णिच्-णिनि। आच्छादके "स्तनयुगपरिणाहाच्छादिना वल्कलेन" शकु०।

**आच्छाद्य** अव्य० आ+छद्-णिच्-ल्यप्। १आवृत्येत्यर्थे "आच्छाद्य चार्चयित्वा च श्रुतशीलवते स्वयम्" मनुः आ+छद्-णिच्-कर्मणि यत्। २आवरणीये स्तनादौ ३गोप्ये च त्रि०। [च।

**आच्छिन्न** त्रि०आ+छिद्-क्त। १बलेन गृहीते २सम्यक्छिन्ने

**आच्छुक** पु० आ+छो-बा० हु संज्ञायां कन्। (आछुच्) वृक्षे।

**आच्छुरित** न० आ+छुर-क्त। १सशब्दहासे, २नखाघाते ३नखवाद्ये च। स्वार्थे क। आच्छुरितकमप्यत्र।

"कामोन्मुखेनाच्छुरिता प्रियेण दत्तेऽथ काचित् पुलकेन भेदे" भट्टिः। ४मिश्रिते च त्रि०।

**आच्छेद** पु० आ+छिद्-घञ्। १समन्ताच्छेदने २ईषच्छेदने बलात्कारेण ३ग्रहणे च। ल्युट्। आच्छेदनमप्यत्र न०

**आच्छोटन** न० आ+स्फुट-ल्युट् पृ०। अङ्गुलिमोटने (तुड़िदेओया)। [अङ्गुल्यादौ।

**आच्छोटित** त्रि० आ-स्फुट-क्त पृ०। मोटनेन कृतध्वनौ।

**आच्छोदन** न०आच्छिद्यन्तेऽत्र छिद्-ल्युट् पृषो० इत्वोत्। मृगयायाम् अमरः।

**आच्युतदन्ति** पु०अच्युतदन्तस्यापत्यम् इञ्। आयुधजीविभेदे ततः दामन्यादि० स्वार्थे छन् आच्युतदन्तीयः। संघोभूते आयुधजीविभेदे।

**आच्युतन्ति** पु० अच्युतन्तस्यापत्यम् इञ्। आयुधजीविभेदे ततः दामन्यादि० स्वार्थे छन्। आच्युतन्तीयः। संघीभूते आयुधजोविभेदे।

**आच्युतिक** त्रि० अच्युतस्य छात्रः काश्यादि० ठञ् ञिठ् वा। अच्युतच्छात्रे ठञि स्त्रियां ङीप्।

**आछि** आयामे (दीर्घविस्तारे) इदित् भ्वादि० पर०सक० सेट्। आञ्छति आञ्छीत्। आनाञ्छ-आञ्छ आञ्छिता। कर्मणि आञ्छ्यते। णिच् आञ्छयति ते आञ्चिछत्-त। सन् आञ्चिच्छिषति। क्विप् आन् आञ्छौ। छोरिति सूत्रे अनुकोऽपि ग्रहणमिति आन् आंशौ इत्येके। "आञ्छितः आञ्छिता "आञ्छेदतिक्षिप्रम्"। "चक्रयोगेनाञ्छेदूर्ध्वस्थिनिर्गतम्" इति च सुश्रु०।

**आज** न० आज्यतेऽनेन आ+अञ्ज-घञर्थे क। १घृते जटा०। अजस्येदम् अण्। २छागमांसादौ त्रि०। "अलङ्कृतं कुमारं कृमलीकृतशिरसमहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणम्, रौरवेण क्षत्रियम्। आजेन वैश्यम्" आश्व०। गृ० "गव्यमाजं तथा चोष्ट्रमाविकं माहिषञ्च यत्। अश्वायाश्चैव नार्याश्च करेण्वाश्च यत् पयः" सुश्रुतः। अजभावे घञ् न वीभावः। ३विक्षेपे आजानेयः।

**आजक** न० अजानां समूहः वुञ्। छागसमूहे।

**आजकरीण** त्रि० आजकेनोपलक्षिता रोणीनदीभेदः तस्याः सन्निकृष्टदेशादि अण्। अजसमूहोपलक्षितनदीसन्निकृष्टादौ

**आजकार** पु० अजस्यायमाजः कारो यस्य। शिवरूपे त्रिपुरासुरवधकाले विष्णुना वृषभरूपकरणात् तस्य तथात्वम् यथा। "अथ विष्णुर्महायोगी सर्वतोऽङ्गस्ततत्त्वतः। वृषरूपं समास्थाय प्रोज्जहार रथोत्तमम्। समा-

क्रान्तं देवगणैः समस्तबलपौरुषैः । बलवांक्षोभयित्वा तु विषाणाभ्यां महाबलः । ननाद प्राणयोगेन मथ्यमान इवार्णवः । स्तोमं वायुविषयं समाक्रम्य विषाणवान् । ननाद बलवान्नादं समुद्र इव पर्व्वणि” हरि० २२४ अ० ।

**आजगर** न० अजगरं सर्परूपं नहुषमधिकृत्य कृतोग्रन्थः अण् । अगस्त्यशापेनाजगररूपतां प्राप्तस्य नहुषस्य युधिष्ठिरेण संवादरूपे भारतान्तर्गतवनपर्व्वणि अवान्तर पर्व्वभेदे तच्च भा० वनपर्व्वणि १७६ अ० अवधि १८० अध्यायपर्य्यन्ताध्यायपञ्चकात्मकं तत्कथा तत्रैव दृश्या । “निवातकवचैर्युद्धं पर्व्व चाजगरं ततः” भा० आ० प० १अ० ।

**आजगव** न० अजगवमेव प्रज्ञाद्यण् । १शिवधनुषि अजगवशब्दार्थे विवृतिः अजगवं तत्साधम्र्यमस्त्यत्र अण् । तत्तुल्य दृढे २धनुषि च “आजगवं नाम धनुः शराः शङ्खोद्भवाश्च वै” भा० व० प० १२७ अ० “तथेत्युक्त्वा पृथुर्वैन्योऽगृह्णीत्वाजगवं धनुः” भा० द्रो० प० ६९ अ० ।

**आजधेनवि** पुंस्त्री० अजैव धेनुरस्य ब० पुंवत् तस्यापत्यम् बाह्वादेः आकृतिगणत्वादिञ् । छागीरूपधेनुयुक्तमुनेरपत्ये ।

**आजनन** अव्य० आ+जन–ल्युट् । १विख्यातजनने “तेषामाजननं पुण्यं कर्म्मणः प्रीतिमावहेत्” भा० आ० प० सीमायाम् अव्ययी० । २जन्मपर्य्यन्ते अव्य० ।

**आजन्म(न)** अव्य० जन्मनः पर्य्यन्तम् सीमायाम् अव्ययी० वा अच् । जन्मपर्य्यन्ते “सोऽहमाजन्मशुद्धानाम्” रघुः ।

**आजन्मसुरभिपत्त्र** पु० आजन्म सुरभि पत्त्रमस्य । मरुवक वृक्षे राजनि० । [मारापत्ये ।

**आजमार्य्य** पुंस्त्री० अजमारस्यापत्यम् कुर्व्वादि० ण्य । अज-

**आजमीढ** पु० अजमीढो देशभेदस्तत्र भवः अण् । (आजमीर) १देशभवे तस्य राजा अण् । तद्देशाधिपे २नृपे बहुषु तस्य लुक् । अजमीढाः । “सधस्तुतिमाजमीढासोऽग्मन्” ऋ० ४, ४४, ६, “अजमीढासः तत्सम्बन्धिन” भा० । ३यादव नृपभेदे च “भरतस्य कुरोः पूरोराजमीढस्य चानघ ! यादवानामिमं वंशम्” इत्युपक्रान्तम् भा० आ० प० ७५ अ० । “ओमित्येव वशिष्ठोऽपि भारतान् प्रत्यपद्यत । अथाभ्यषिञ्चत् साम्राज्ये सर्व्वक्षत्त्रस्य पौरवम् । विषाणभूतं सर्व्वस्यां पृथिव्यामिति नः श्रुतम् । भरताध्युषितं पूर्व्वं सोऽध्यतिष्ठत् पुरोत्तमम् । पुनर्बलिभृतश्चैव चक्रे सर्व्वमहीक्षितः । ततः स पृथिवीं प्राप्य पुनरीजे महाबलः । आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः” ६४अ० । अजमीढेषु भवः वुञ् । आजमीढकः बहुत्वादामीढभवे त्रि० ।

**आजयन** न० आजीयतेऽत्र आ+जि–आधारे ल्युट् । युद्धे

**आजरस** अव्य० जरापर्य्यन्तम् अव्ययी० अच् जरसादेशः । जरापर्य्यन्ते । आगता जरा यस्य प्रा० ब० अच् जरसादेशश्च । प्राप्तजराभावे “आजरसाय समनक्तु ऐमा” ऋ० १०,८५, ४३, ।

**आजवस्तेय** पुंस्त्री० अजवस्तेर्ऋषेरपत्यम् शुभ्रा० ढक् । अजवस्तिनामकर्षेरपत्ये श्रण्वा० ढञ् । “आजवस्तिकोऽप्यत्र स्त्रियां ङीप् ।

**आजवाह** त्रि० अजोवाह्यतेऽत्र वह–णिच् आधारे घञ् अजवाहोदेशभेदः तत्र भवादि अण् । अजवाहदेशभवादौ । स च देशः बदरिकाश्रमादुत्तरस्यां पर्व्वतोपरिस्थः तत्र हि अजैरेव भारो वाह्यते इति तस्य तथात्वम् ।

**आजातशत्रव** पु० अजातशत्रोरपत्यम् अण् । १युधिष्ठिरापत्ये न जातः शत्रुरस्य । अजातशत्रुनाम्नः नृपभेदस्यापत्ये २भद्रसेने नृपे च । “एतया वै भद्रसेनमाजातशत्रवमारुणिरभिचचार” शत० ब्रा० अजातशत्रुश्च काशीराजः यथोक्तम्” का० उ० “सहोवाचाजातशत्रुः काश्यं ब्रह्म ते ब्रवाणीति” ।

**आजाति** स्त्री० आ+जन–क्तिन् । आजनने जन्मनि “ताडयित्वा तृणेनापि संवादान्मतिपूर्व्वकम् । एकविंशतिमाजातीः पापयोनिषु जायते” । “साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् । विवशः शतमाजातीस्तस्मात् साक्ष्ये वदेदृतम्” इति च मनुः ।

**आजाद** पु० स्त्री० अजमत्ति अद–अण् उप० स० तस्यापत्यम् गर्गा० यञ् । छागभक्षकस्य मुनेरपत्ये स्त्रियां ङीप् यलोपश्च ।

**आजान** अव्य० जनीजननमेव अण् जानः तत्पर्य्यन्तम् अव्ययी० । सृष्टिकालपर्य्यन्ते सृष्ट्ये । “अद्भ्यः सम्भृतः पृथिव्यै रसः विश्वकर्म्मणः समवर्त्तताग्रे तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्त्यस्य देवत्वमाजानमग्रे” यजु० ३१, १७, “पूर्व्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते । “अद्भ्यः जलात् पृथिव्याः सकाशात् पृथिव्यपां ग्रहणं भूतपञ्चकोपलक्षणकम् भूतपञ्चकात् योरसः सम्भृतः पुष्टः तथा विश्वं कर्म्म यस्य विश्वकर्म्मणः कालस्य रसात् प्रीतेः योरसोऽग्रे प्रथमं समवर्त्तत समभवत् भूतपञ्चकस्य कालस्य च सर्व्वं प्रति कारणत्वात् पुरुषमेधयाजिनो लिङ्गशरीरे पञ्चभूतानि पुष्टानि कालश्च ततः पुष्टेभ्यः कश्चिद्रसविशेषफलरूपोत्तमजन्मप्रद उत्पन्न इत्यर्थः । तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा, आ-

दिव्यः एति मन्त्रद्वयं करोति अर्थे प्रथमं मर्त्यस्य मनुष्यस्य शतस्य पुरुषमेधयाजिनः आजानं देवत्वं सुखं देवत्वम् सूर्य्यरूपेण । द्विविधा देवाः कर्मदेवा आजानदेवाश्च कर्म्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः सृष्ट्यादावुत्पन्ना आजानदेवाः ते कर्म्मदेवेभ्यः श्रेष्ठाः "ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्द इति श्रुतेः" वेददी० जननस्थाने २प्रकृतौ च । "न ह्यस्मिन् प्रतिदधीयात् पुरुषाजानो ह्यस्मेति" शत० ब्रा० पुरुषाजानः पुरुषप्रकृतिकः" इति भा० । आ+जन घञ् वृद्धिः" ३उत्पत्तौ पु० ।

**आजानज** त्रि० आजाने जायते । सृष्टिकालादारभ्यजाते देवादौ । द्विविधा हि देवाः केचित् कर्म्मदेवाः केचिदाजानदेवाश्च यत्र "ते ये शतमाजानजानां देवानामानन्दाः स एकः ये कर्म्मणा देवानपियन्ति" ऐत० उ० ।

**आजानदेव** पु० आजानं सृष्टिकालमारभ्य देवः देवत्वमाप्तः । कर्म्मणाऽनुत्पन्नदेवभावे चिरप्रसिद्धे देवे "अथ ये शतं कर्म्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ते शतमाजानदेवानामानन्दाः" वृ० उ० । "आजानदेवानामिक आनन्दः उत्पत्तितएव ये देवास्ते आजानदेवाः" भा० ।

**आजानि** त्रि० आ+जन–अन्तर्भूतण्यर्थे इण् छन्दसीति दीर्घः । १जनके जननकर्त्तरि । "तीव्रायूंषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने !" ऋ० ३,१७,३ । "आजानीः जनयित्र्यो मातरः" भा० । अन्तर्भूतण्यर्थाभावे । २अनुजाते च "तस्यैव पश्चात्तरे आजनयः अनुजाताः उषास इति भाष्यकृता व्याख्यातम् ।

**आजानिक्य** न० आजानो भवः ठन् तस्य भावादौ पुरो० यक् । आजन्मसिद्धपदार्थस्य भावे कर्म्मणि च ।

**आजानेय** पु० आजौ विक्षेपेऽपि आनेयोऽश्ववाहो यथास्थानमस्य । "शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदेपदे । आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः" इत्युक्तलक्षणे उत्तमाश्वे । [स्य ब्रह्मणोऽपत्ये ।

**आजायन** पुंस्त्री० अजस्यापत्यम् नडा० फक् । अजनामकस्य-

**आजि** स्त्री० अजन्त्यस्याम् अज–इण् न वीभवः । १समरभूमौ २संग्रामे, "आजिं न जग्मुर्गिर्वाहो अश्वाः" ऋ० ६,२४,६, "ते तावन्तराजौ तावान् स दृश्य परैः" रघुः । "अश्माजमिन्द्र! दुष्टर पुरोयावानमाजिषु" ऋ० १,३१,७ "आजिषु संग्रामेषु" भा० । ३मर्य्यादायां स्त्री वा ङीप् ।

"अतोयान्यानि वीर्य्यवन्ति कर्म्माणि यथाग्नेर्मन्थनम् आजेः सरणम् दृढस्य धनुष आयमनम्" छा० उ० "आजेः मर्य्यादायाः सरणं धावनम्" शङ्करभा० ५क्षणे ६मार्गे पु० । "धन्वना गां धन्वनाजिं जयेम" यजु० २९,३९ । "धन्वना आजिं मार्गं जयेम अजन्ति गच्छन्ति यस्मिन्नसावाजिर्मार्गः" वेददी० । भावे इण् ७आक्षेपे ।

**आजिनीय** त्रि० अजिन+चतुरर्थ्यां कृशाश्वा० छण् । चर्म्मसन्निकृष्टदेशादौ । [सन्निकृष्टदेशादौ ।

**आजिरि** त्रि० अजिर+चतुरर्थ्यां सुतङ्गमा० इञ् । अङ्गन-

**आजिरेय** त्रि० अजिर+शुभ्रादि० ढक् । अङ्गनभवादौ ।

**आजिहीर्षा** स्त्री० आ+हर्त्तुमिच्छा आ–हृ सन्–भावे अ । आहरणेच्छायाम् । उ । आजिहीर्षुः । आहरणेच्छौ त्रि० ।

**आजीकूप** न० आजीं कूपति आप्नोति यस्मिन् आ+कूप–आधारे क । मर्य्यादावरके देशभेदे ततः धूमादि० भवादौ पथ्यादौ वुञ् । आजीकूपकः । आजीकूपदेशभवे–पथि अध्याये, न्याये, विहारे, मनुष्ये, हस्तिनि, गोमये च ।

**आजीगर्त्ति** पुंस्त्री० अजीगर्त्तस्यापत्यम् बाह्वा० इञ् । अजीगर्त्तस्यापत्ये ।

**आजीव** पु० आजीव्यतेऽनेन आ+जीव–करणे घञ् । १आजीवनोपाये कृष्यादौ २उपाये च । अन्नप्राशनमुपक्रम्य "तस्मिन् काले स्थापयेत्तत्पुरस्तात् वस्त्रं शस्त्रं पुस्तकं लेखनीञ्च । स्वर्णं रौप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा" मु० चि० । तथा जन्मलग्नावधि दशमभावे मेषादीनां द्रेक्काणनवांशद्वादशांशत्रिंशांशरूपैः षड्भिर्वर्गैः क्रमेणाजीवोपायविशेषज्ञानं भवति यथोक्तं जातके "अथ कल्याणवर्म्मोक्तां दशमेऽर्थविभेदजाम् । वृत्तिचिन्तां विलेखकर्म्माजीवोत्कामपि चिन्तयेत् । "वाटिकाक्षविवणिक्पशुसेवाद्यूततोऽजगणतः स्वभे भवेत् । जीवनं हयगणाड्डयम्दैः पञ्चधान्यशकटादिसंग्रहैः । मौक्तिकादिजलजैर्लिपिलेखैर्विड्भ्रमादिकवणिक्क्रियादिभिः । इन्दुभागत अथो कुलीरतो नीरजैर्विषमगाम्बुधकृजैः । तनाद्रिकाऽऽसच्चाप कृत्यात्त्रयैश्च धान्यकैः । कांस्यपाषाणवाणिज्यैर्वृत्तिः सिंहांशतः स्वभे । गान्धर्वशिल्पगकर्म्मलिपिलेखकर्म्म गन्धकर्य्यैर्नभसि षट्कगणैश्च लेख्यैः । हेमाम्बुगोमहिषधान्यकृषिकर्म्मैश्च मूलधनैर्नृपतितोऽपि तुलोत्थवर्गे । स्त्रीकुङ्कुमाम्बुधनचौर्य्यचिकित्सितैश्च निन्द्योद्यमैर्नृपतिसेवनतोऽलिवर्गे । मैत्र्यकृषिगणितादिकयन्त्रविद्याभूपालमन्त्रगिरिदुर्गवशाद्धनुःस्थे ।

वराङ्गना वारिभवोत्थवित्ताः श्वेता रताश्चापि रसायने स्युः । क्रीडासु रामासु महापणेषु स्वर्गाख्यवर्गे दशमेऽतिवित्ताः । शस्त्राग्निभेदखननादिकशौर्य्यभारस्थस्थोपहसिरपि बाहु-बलाद्भटोत्थे । अस्ये गते भवभवे जवगस्त्रवाङ्ययोनि प्रपायनधनानि नरस्य पश्चैः" । भावे घञ् । ३आजीवार्थ-मालम्बने । आजीवति कर्त्तरि अच् । ४आजीवनकारिणि" कर्म्माजीवः न्वपाजीव इत्यादौ तु आ+जीव–अण् । उप०स० इति भेदः ।

**आजीवन** न० आजीव्यतेऽनेन करणे ल्युट् । हत्त्युपाये भावे ल्युट् । हत्त्यर्थसुपायप्रहणे "आजीवनार्थं धर्म्मस्तु दानमध्ययनं यजिः" मनुः "स्त्रीणामाजीवनार्थञ्च प्रदेयं प्रीतिपूर्व्वकम्" । "स्त्रीणामाजीवनञ्चयादिति" च स्मृतिः ।

**आजीविका** स्त्री आजीवयति आ+जीव णिच्–ण्वुल् । जीविकायां हत्तौ जीवनार्थे व्यापारे । आ+जीव–कर्त्तरि ण्वुल् । आजीवकः आजीवनकर्त्तरि त्रि० ।

**आजीव्य** त्रि० आजीव्यतेऽनेन वा० करणे ण्यत् । आजी-वनोपाये १इत्यादौ "आजीव्यः सर्व्वभूतानाम्" रामा० आजीव्यते हत्त्यर्थमालम्ब्यतेऽसौ आ–जीव–कर्मणि अच् । २हत्त्यर्थमालम्बनीये न्वपादौ । आजीव्यतेऽत्र आधारे वा० ण्यत् । ३आजीवनीयदेशे "रम्यमानत सामन्त आजीव्यं देशमावसेत्" मनुः । तेऽपि सर्वे निवर्त्तन्तां येऽपि स्वदानु-यायिनः मया यथोचिताजीव्यैः संविभक्ताश्च हत्तिभिः" भा०व०प० ९३अ० ।

**आजू** स्त्री आजवति आ+जु–क्विप् दीर्घः । भृतिं विना कर्म-कारके । (वेगार) "हठादधतिकः क्रोशैर्द्दिराजुच कीर्त्यते । इत्युक्ते कर्म्मकरभेदे ।

**आजूर्** स्त्री आ+ज्वर–क्विप् ऊठ् । विष्टौ मुकुटः ।

**आज्ञप्त** त्रि०आ+ज्ञा–णिच् पुक् क्त ह्रस्वः । आदिष्टे कृतादेशे

**आज्ञप्ति** स्त्री आ+ज्ञा–णिच् पुक् ह्रस्वः । आज्ञायाम् ।

**आज्ञा** स्त्री आ+ज्ञा–अङ् । १आदेशे आदेशश्च निकृष्टस्य भृत्यादेः कृत्यादौ प्रवर्त्तनव्यापारभेदः । "आज्ञया नरपतेर्द्विजन्मनां दारकर्म्मसुतसूतके तथा । बन्धमोक्षमख-दीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु" ज्योति० । "तथेति शेषामिव भर्त्तुराज्ञाम्" कुमा० । "पश्चात् वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत्" रघुः । "अनतिक्रमणीया दिवस्पतेराज्ञा" शकु० । "दूरापावर्ज्जितच्छत्त्रैस्तस्याज्ञां शासनार्पिताम्" रघुः "शिरोभिराज्ञामपरे महीभुजः" । माघः । २ज्योतिषोक्ते लग्नावधिदशमभावे तन्त्रोक्ते भ्रूमध्यस्थे सुषुम्णानाड्यन्तर्गते ४आज्ञाचक्रे च विवरणमा-ज्ञाचक्रशब्दे । "आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्ति-तेति" तन्त्रम् ।

**आज्ञाकर** त्रि० आज्ञया करोति कृ–अच् ३त० । आज्ञानु-सारेण कर्मकर्त्तरि दासादौ णिनि आज्ञाकारी तत्रैव त्रि० स्त्रियां ङीप् । क्विप् आज्ञाकृत् तत्रैवार्थे त्रि० ।

**आज्ञाचक्र** न० आज्ञासंज्ञकं चक्रम् । तन्त्रप्रसिद्धे देहाव-स्थितसुषुम्णानाडीमध्यगते भ्रूमध्यस्थे द्विदले पद्मा-कारे चक्रभेदे । विशुद्धचक्रमुक्त्वा "आज्ञाचक्रं तदूर्द्धन्तु आत्मनोऽधिष्ठितं परम् । आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तिता" । तत्र निहितचित्तस्य पुरुषस्य सर्वपदार्थसाक्षात् कारेण "एवं भूतम्, एवं वर्त्तते, एवं भविष्यतीति" ज्ञानेन गुरोरीश्वरस्य तदूर्द्ध्वं सहस्रदलकमले स्थितस्याज्ञायाः "इतः परं त्वया इत्थं कर्त्तव्यमिति" नियोगस्य संक्रमणं भवति तेन तदाज्ञाख्यं चक्रमित्यर्थः । यथा च षट्-चक्राणां देहे स्थितिस्तथोक्तं शारदायाम् । "मस्तकाद्यङ्गुला-यामं शरीरमुभयात्मकम् । गुदध्वजान्तरे कन्दस्तु मेढ्रा-द्व्यङ्गुलं विदुः । तस्य द्विगुणविस्तारं विन्दु-रूपेण शोभितम् । नाड्यस्तत्र समुद्भूता मुख्याश्चैताः प्रकी-र्त्तिताः । इडा वामे स्थिता नाडी पिङ्गला दक्षिणे मता । तयोर्म्मध्यगता नाडी सुषुम्णा वंशमाश्रिता । पादाङ्गुष्ठा-दपक्रान्ता शिखाभ्यां शिरसा पुनः । ब्रह्मस्थानं समा-पन्ना सोमसूर्य्याग्निरूपिणी । तस्या मध्यगता नाडी चि-त्राख्या योगिवल्लभा । ब्रह्मरन्ध्रं विदुस्तस्यां पद्मसूत्र-निभं परम् । आधारांश्च विदुस्तत्र मतभेदादनेकधा । दिव्यमार्गमिमं प्राहुरमृतानन्दकारकम् । इडया सञ्च-रेच्चन्द्रः पिङ्गलायां दिवाकरः । वातौ योगनिदानज्ञैः सुषुम्णायाश्च तादृशौ । आधारकन्दमध्यस्थं त्रिकोणमति सुन्दरम् । ज्योतिषां निलयं दिव्यं प्राहुरागमवेदिनः । तत्र विद्युल्लताकारा कुण्डली परदेवता । परिस्फुरति सर्व्वात्मा सुप्ताहिसदृशाकृतिः । बिभर्त्ति कुण्डली शक्तिरा-त्मानं हंसमाश्रिता । हंसः प्राणाश्रयोनित्यं प्राणा नाडी पथाश्रयाः । आधारादुत्थितोवायुर्यथावत् सर्व्वदेहि-नाम् । देहं प्राप्य स्वनाडीभिः प्रयाणं कुरुते बहिः । द्वादशाङ्गुलमानेन तस्मात् प्राण इतीरितः" । तथ्य-चिन्तामणौ षष्ठप्रकाशे । "आज्ञानामाम्बुजं तद्धिमकरस-दृशं ध्यानधाम प्रकाशम् इत्याभ्यां वै कलाभ्यां प्रविल-

सितवर्णयुग्मपत्रं सुशुभ्रम् । तन्मध्ये हाकिनी या शशिसमधवला वक्त्रषट्कं दधाना विद्यामुद्रां कपालं डमरुजपवटीं बिभ्रती शुद्धचित्ता । एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धम्” एतदभिप्रायेणैव “मनोऽपि भ्रूमध्ये निवसत्यानन्दलहर्य्यामुक्तम् । मनसस्तत्र स्थित्या च तदुपहितजीवस्यापि तत्रैव स्थितिः । एवञ्च श्रुतौ हार्द्दविद्यायां “हृद्यं तस्माद्धृदयम्” इत्युक्तिस्तु हृदये ध्यानार्थाद्रव्यविरोधः । महानिर्वाणतन्त्रे शरीर एव चतुर्दश भुवनानि सूक्ष्मरूपेण स्थितानि तानि च तत्रैव ध्येयानीत्युक्तं तत्र कुत्र किं ध्येयमित्याकाङ्क्षायां मूलाधारादिकं भूरादिलोकतया ध्येयमित्युक्तम् तत्र विशुद्धचक्रस्य जनोलोकतया ध्येयतामुक्त्वाह ।

“एतत्पद्मस्योर्द्ध्वदेशे ज्ञानपद्मं सुदुर्लभम् । दलद्वयसमायुक्तं पूर्णचन्द्रस्य मण्डलम् । पद्ममध्ये बीजकोषे वरेऽचिन्त्यामणेः पुरीम् । तन्मध्ये नवकोणञ्च यन्त्रं परमदुर्लभम् । यद्बीजं हि तन्मध्ये साकारं हंसरूपकम् । हंसः परब्रह्मरूपः साकारः शिवरूपकः । तारचतुर्द्दारोच्चे निर्गमागमपल्लवान् । शिवशक्तिपदद्वन्द्वं विन्दुत्रयविलोचनः । विहारश्चास्य हंसस्य हेमपङ्कजपूजिते । एवं हंसोमणिद्वीपे तस्य क्रोडे परः शिवः । वामे तस्य चिद्रूकली सदानन्दस्वरूपिणी । तस्याः प्रसादमासाद्य सर्व्वकर्त्ता महेश्वरः । तपोलोक इदं भद्रे ! सर्व्वलोकस्य दुर्लभम् । यत्र ब्रह्मादयो देवा ध्यानयोगं सदाभ्यसेत् । मनसापि न लभ्येत योगेन तपसा न च । तपोलोकं गोलोकस्य चतुर्लक्षगुणं शिवे ! । ब्रह्मलोकेषु ये देवा वैकुण्ठे ये सुरादयः । शम्भुलोके वसेद्योऽपि तेजोभक्तिपरायणः । तपसापि न लभ्येत तपोलोकगतिं शिवे । तपोलोकसमोनास्ति लोकमध्ये सुलोचने ! । सालोक्यं हि महोलोके सारूप्यं जनलोकके । सायुज्यं च तपोलोके निर्व्वाणं हि तदूर्द्ध्वके । ततो ब्रह्मादयो देवास्तपोलोकार्थिनः सदा । इति ते कथितं कान्ते ! चक्रषट्कस्य लक्षणम् । यज्ज्ञानादमरश्चैव जीवन्मुक्तश्च साधकः । यज्ज्ञात्वा जननीगर्भं न विशेत्तु कदाचन” ।

**आज्ञात** त्रि॰ आ+ज्ञा–क्त सम्यग्ज्ञाते “आज्ञातं यदनाज्ञातं यज्ञस्य क्रियते मिथः” यजु॰ शिवसङ्कल्पः ।

**आज्ञातीर्थ** न॰ ६त॰ । तन्त्रे मानसस्नानाङ्गे ध्येयतयोक्ते आज्ञाचक्राख्ये तीर्थे । “आज्ञाचक्रे सदा ध्यात्वा स्नाति निर्व्वाणसिद्धये” । रुद्रयामलम् ।

**आज्ञान** न॰ आ+ज्ञा–ल्युट् । आज्ञाकरणे मानसवृत्तिभेदे । मानसवृत्तयश्च यथा । “संज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामोवशः इति सर्व्वाण्येवैतानि प्रज्ञानस्य नामधेयानि” ऐ॰ उ॰ । “तदन्तःकरणोपाधिकस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्थो अन्तःकरणवृत्तयो बाह्यान्तर्वर्त्तिविषयविषयास्ता इमा उच्यन्ते । संज्ञानं संज्ञप्तिश्चेतनभावः । आज्ञानम् आज्ञप्तिरीश्वरभावः । विज्ञानं कलादिपरिज्ञानम् । प्रज्ञानं प्रज्ञप्तिः प्रज्ञता । मेधा ग्रन्थधारणे सामर्थ्यम् । दृष्टिरिन्द्रियद्वारा सर्व्वविषयोपलब्धिः । धृतिर्धारणमवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति । धृत्या शरीरमुद्वहन्तीति हि वदन्ति । मतिर्मननम् । मनीषा तत्र स्वातन्त्र्यम् । जूतिश्चेतसोरुजादिदुःखित्वभावः । स्मृतिः स्मरणम् । संकल्पः शुक्लकृष्णादिभावेन संकल्पनम् रूपादीनाम् । क्रतुरध्यवसायः । असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः । कामोऽसन्निहितविषयाकाङ्क्षा । वशः स्त्रीव्यतिकराद्यभिलाष इत्येवमाद्याः अन्तःकरणवृत्तयः” शङ्करभाष्यम् ।

**आज्ञानुग** त्रि॰ आज्ञामनुगच्छति अनु+गम–ड ६त॰ । आदेशानुसारेण गन्तरि दासादौ क्त आज्ञानुगतोऽप्यत्र त्रि॰ ।

**आज्ञानुगामिन्** त्रि॰ आज्ञामनुगच्छति अनु+गम–णिनि ६त॰ स॰ । आज्ञानुगते स्त्रियां ङीप् ।

**आज्ञानुयायिन्** त्रि॰ आज्ञामनुयाति अनु+या–णिनि ६त॰स स्त्रियां ङीप् । आज्ञानुसारेण गन्तरि दासादौ ।

**आज्ञानुवर्त्तिन्** त्रि॰ आज्ञामनुवर्त्तते अनु+वृत–णिनि ६त॰ स्त्रियां ङीप् । आज्ञानुसारेण वर्त्तमाने दासादौ ।

**आज्ञानुसारिन्** त्रि॰ आज्ञामनुसरति अनु+सृ–णिनि ६त॰ स्त्रियां ङीप् । आज्ञानुसारेण कर्म्मकारके दासादौ ।

**आज्ञापक** त्रि॰ आज्ञापयति आदिशति आ+ज्ञा–णिच् ण्वुल् । आज्ञाकारके स्वामिप्रभृतौ । [पत्ने(हुकुमनामा)

**आज्ञापत्र** न॰ आज्ञाज्ञापकं पत्रम् शाक॰त॰ । आदेशज्ञापके

**आज्ञाभङ्ग** पु॰ आज्ञाया आदेशस्य भङ्गः स्वविषयेषु प्रचाराभावः । आदेशस्याकरणेन आदिष्टविषयेषु प्रचाराभावे (हुकुम ना माना) । “दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा नाज्ञाभङ्गं सहन्ते नरप ! नृपतयस्त्वादृशाः सार्व्वभौमाः” इति “चन्द्रगुप्तस्य चेतसः पीडाकुर्वन्त्यता चाणक्येन क्रियमाणे चाज्ञाभङ्गे त्वयोपज्ञोकैरुपश्लोक-

यितव्य" इति च मुद्राराक्षसम् । [आज्ञानुकूले दासादौ

**आज्ञावह** पु॰ आज्ञां वहति वह–अच् । आदेशवाहके

**आज्ञासम्पादिन्** पु॰ आज्ञाम् आदिष्टविषयं सम्पादयति सम्+पद+णिच्–णिनि ६त॰स॰ स्त्रियां ङीप् । आदिष्ट विषयसम्पादके अनुकूले दासादौ ।

**आज्य** न॰ आज्यते आ+अन्ज–क्यप् नलोपः । घृते । "सर्पिर्विलीनमाज्यं स्याद्घनीभूतं घृतं भवेदित्युक्ते २ विलीने सर्पिषि "स्रुवेण दक्षभागादाज्यं गृहीत्वा" भवदेवः "घृतं पवित्रमेवाज्यमापः शुन्धन्तु मैनसः" इ पदमन्त्रः ३ श्रीवासे चन्द्रने पु॰ अजयपालः । "आजिमीयुस्तस्मादाज्यानामाज्यत्वमिति निरुक्ते सामस्तोमभेदे । स च" स्तोमः सामवि॰ब्रा॰भा॰ उक्तः "वहिष्पवमानस्तूक्तस्य आद्यम् अग्न आयाहि वीतये" इत्यादि सूक्तम्, आनो मित्रावरुण इति द्वितीयम् "आयाहि सुष आहत इति" तृतीयम् । "इन्द्राग्नी आगतमित्यादि चतुर्थम्" उत्तरा॰ १प्र॰ २,५,६,७, सूक्तानि तान्येतानि प्रातः सवने गायत्रसाम्ना गीयमानानि आज्यस्तोत्राण्युच्यन्ते तेषु चाज्यस्तोत्रेषु पञ्चदश स्तोमो भवति तस्य स्तोमस्य विष्टुतिरेवमाम्नायते । "पञ्चभ्योहिंकरोति स तिसृभिः स एकया स एकया पञ्चभ्योहिंकरोति स एकया स तिसृभिः स एकया पञ्चभ्योहिङ्करोति स एकया स एकया स तिसृभिः" सामविधानब्राह्मणम् "एवं त्रिरावर्त्त्यं तत्र प्रथमावृत्तौ प्रथमायास्त्रिरावृत्तिः द्वितीयावृत्तौ मध्यायास्त्रिरभ्यासः । तृतीयावृत्तौ उत्तमायास्त्रिरभ्यासः । सोऽयं पञ्चदशस्तोम इति"

**आज्यदोह** न॰ सामवेदिपाठ्ये सूक्तभेदे "वामदेव्यं बृहत्साम ज्येष्ठसाम रथन्तरम् । तथा पुरुषसूक्तञ्च रुद्रसूक्तं ततः परम् । आज्यदोहानि सामानि शान्तिकं भारुण्डानि च । पश्चिमे द्वारपालौ तु पठेतां सामगौ तथा" दानपारि॰ पु॰ तानि च सामानि देवव्रतसंज्ञकानि त्रीणि यथा । "अधि पतायि मित्र पतायि क्षत्रप तायि स्वाः प तायि धनप ता २, यि ना २, माः । मन्युना वृत्रहा सूर्य्येण स्वराड्यज्ञेन मघवा दक्षिणास्य प्रिया तनूराज्ञा विश्वं दाधार । वृषभस्त्वष्टा वृत्रेण शचीपतिरन्नेन पयः पृथिव्या वृष्णिकोऽग्निना विश्वं भूतम् । अभवो वायुना विश्वाः । प्रजा अभ्ययदथा वषट्कारेणाहं भाक् सोमेन सोमपाः समिज्या परमेष्ठी । ये देवादेवाः । दिविषदः । स्थनेभ्यो वो देवादेवेभ्यो नमः । ये देवादेवाः । अन्तरिक्षसदः । स्थनेभ्यो॰ । ये देवा॰ । पृथिवीषदः । स्थनेभ्यो॰ । ये देवा॰ । अप्सुषदः । स्थनेभ्यो॰ । ये देवा॰ दिविषदः । स्थनेभ्यो॰ । ये देवा॰ । आशासदः । स्थनेभ्यो॰ । अवज्यामिव धन्वने विते मन्युं व्यामसि वृहतां नहह अक्षभ्यम् । इडा २, २, भा । यद्दं विश्वं भूतं युयो २, । आउ । वा २,२, ना २,२,४, माः ॥१॥ अधिप तायि मित्रप तायि क्षत्रप तायि । स्वःप तायि धनप ता २, यि । ना २, माः । नम उत्ततिभ्यश्चोत्तन्वानेभ्यश्च नमो नीषङ्गिभ्यश्चोपवीतिभ्यश्च नमोऽस्यद्भ्यश्च प्रतिदधानेभ्यश्च नमः प्रविध्यद्भ्यश्च प्रव्याधिभ्यश्च नमः क्षरद्भ्यश्च क्षारिभ्यश्च नमः श्रीढभ्यश्च आयिभ्यश्च नमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्च नमो यते च वियते च नमः पथे च विपथाय च अवज्यामिव धन्वने इत्यादि प्राग्वत् ॥२॥ अधिप । तायि । मित्रप । तायि क्षत्रप । तायि । स्वःप । तायि । धनप । ता २, यि । ना २, माः । नमोऽन्नाय नमोऽन्नपतय एकाक्षाय चावपन्नादाय च नमो नमः । रुद्राय तीरसदे नमः स्थिराय स्थिरधन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियम्बकाय च कपर्द्दिने च नम आश्वेभ्यश्च प्रत्याश्वेभ्यश्च नमः क्राव्येभ्यश्च विरिम्फेभ्यश्च नमः संहते च विहते च अवज्यामित्यादि पूर्व्ववत् ३ । (सामारण्यौ ५प्र॰ १अ॰ ६,७,८गा॰) गानाशक्तौ अधिपतये इत्याद्यनुवाकं त्रिधा जपेत् अधिपतये मित्रपतये क्षत्रपतये स्वःपतये धनपतये नम इत्येव पठनीयमेवमग्रेऽपि अवज्यामित्यनन्तरं य इदं विश्वं भूतं युयोवे नम इति नीषङ्गीत्यत्र निषङ्गीत्येव पठनीयमन्यत् गानांशं स्तोभं विहाय समानम् ।

**आज्यप** पु॰ आज्यं पिबन्ति आज्य+पा–क उप॰स॰ । पुलस्त्यस्य पुत्रे वैश्यानां पितृदेवेषु । "सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः । वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः" मनुः । "पुलस्त्यस्याज्यपाः पुत्राः" इति भा॰आ॰प॰ । "देवाँ आज्यपाँ आवहेति" "देवा आज्यपा अग्निंहोत्रायावहेति" च शत॰ ब्रा॰ ।

**आज्यभाग** पु॰ आज्यस्य भागः । घृतैकदेशे "सरस्वत्याज्यभागा भवति" शत॰ब्रा॰ । घृतस्य २ वैदिकाहुतिभेदे च स च ऋग्वेदिनामग्नेरुत्तरभागे स्रुवेणाग्नये दीयमान आहुतिविशेषः तद्दक्षिणभागे सोमाय दीयमान आहुतिभेदश्च । "तूष्णीमाघारावाज्यभागौ जुहुयादग्नये स्वाहा सोमाय स्वाहेति" आश्व॰गृ॰ । यजुर्वेदिनान्तु अग्नये स्वाहा इदमग्नये इति उत्तरपूर्व्वार्द्धे . सोमाय स्वाहा इदं

सोमायेति दक्षिणपूर्व्वार्द्ध” इति भेदः । “ता उहैता देवता ऊचुः वाहमा अग्नीषोमावन्वाजग्म् रग्नीषोमौ युवं वै नौ भूयिष्ठभाजौस्थोययोर्व्वामिदं युवयोरस्त्वानन्वाभजतमिति। तौ होचतुः किमावयोस्ततः स्यादिति यस्यै कस्यै च देवतायै हविर्निर्व्वपान्स्तदां पुरस्तादाज्यस्य यजानिति तस्माद्यस्यै कस्यै च देवतायै हविर्निर्व्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति” शत०ब्रा० । इति तयोः सर्व्वदेवानां यज्ञस्यादौ आज्यभागदानं विहितम् । “आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन” कात्या० २,२,१, ।

**आज्यभुज्** पु० आज्यं मन्त्रेण प्रक्षिप्तं विलीनं सर्पिः भुङ्क्ते भुज–क्विप्। १हविर्भुजि वह्नौ तन्मुखेन हविर्भोजि २देवे च।

**आञ्जन** न०आ+अञ्ज–ल्युट्। समन्तादभ्यञ्जने। “तेज वा एतदक्ष्योर्यदाञ्जनम्” ऐ०ब्रा० अञ्जनायां भवः अण् । २हनुमति वानरभेदे स च दाशरथिसहायः“दाशरथिबलैरिवाञ्जननीलनलपरिगतप्रान्तैः” काद० । अञ्जनस्येदम् अण्, । ३अञ्जनसम्बन्धिनि त्रि०।

**आञ्जनिक्य** न० अञ्जनाय हितम् ठन् ततः पुरो० भावे कर्म्मणि च यक् । अञ्जनसाधनत्वे ।

**आञ्जनेय** पु० अञ्जनाया अपत्यं ढक्। अञ्जनागर्भजाते हनूमति वानरे । “अञ्जनागर्भसंभूतो वायुपुत्रो महाबलः” । हनुमत्स्तुतिः । [ अञ्जलिकरणे ।

**आञ्जलिक्य** न० आञ्जलिरेव स्वार्थे कन् ततः पुरो० यक् ।

**आञ्जिनेय** पु० अञ्जिन्यां भवः ढक् ( आजनाइ ) कीटभेदे ।

**आञ्जिहिषा** स्त्री आंहितुमिच्छा आ+अन्हृ–सन्–अ । आगमनेच्छायाम् “आंजिहिष जाताञ्जिहिषः” भट्टिः ।

**आटरूष** पु० अटरूष एव स्वार्थे अण् । वासकवृक्षे स्वार्थे कन् तत्रैव “आटरूषकवर्षाभाह्वयाः यान्त्यनुयायिनाम्” भा०द्रो० प० ।

**आटविक** त्रि० अटव्यां चरति भवो वा ठक् । वनचारिणि ‘प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः” मनुः “दण्डेषु सुहृत्कुमाराटाविकाः सामन्तसैनिकाद्याश्च” सा०द० २“सैन्यभेदे। सैन्यानि च षड्विधानि। यथा “मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्” मल्लिनाथधृतकोषः । तदभिप्रायेणैव “षड्विधं बलमादायेति” रघुः ।

**आटवी** स्त्री अटव्याः सन्निकृष्टा पूः अण् । दक्षिणदिक्स्थयवनपुरीभेदे । सहदेवदिग्विजयवर्णने । “दूतैरेव वशे चक्रे करञ्चैनानदापयत् “पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः । अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान् । आटवीञ्च पुरीं रम्यां यवनानां पुरं तथा” भा०स०प०।

**आटि** पु०आ+अट्–इण् । १शरारिपक्षिणि । २मत्स्यभेदे च जातित्वेन स्त्रियां वा ङीप् । बाह्वादिषु पाठात् शालाशब्दे परेऽक्षोदात्तत्वम् ।

**आटिक** त्रि० आटाय गमनाय प्रवृत्तः ठण् । गमनप्रवृत्ते स्वार्थे ष्यञ् । आटिक्यमप्यत्र न०।

**आटिकी** स्त्री आटम् अटनमर्हति अण्–ङीप् । स्त्रीहाद्दर्शनानुमर्हायामनुपजातपयोधरायां स्त्रियाम् । “मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राण उवास” छा०उ०। आटिक्याऽनुपजातपयोधरादिस्त्रीव्यञ्जनया जायया सह” इति भा०।

**आटीकन** न० आटीक्यत ईषद्गम्यते आ+टीक–ल्युट् । वत्सानां प्रथममल्पगतौ स्वार्थे कन् तत्रैव हारा० आन्तका पाठः प्रामादिकः ।

**आटीमुख** न० आट्याः शरारिभेदस्य मुखमिव मुखमस्य । सुश्रुतोक्ते शस्त्रभेदे “सूचीकुशपत्राटीमुखशरारीमुखेत्यादि विंशतिशस्त्रगणनायाम् सुश्रु० अर्द्धधारशब्दे विवृतिः ।

**आटोप** आ+तुप–घञ् पृषो० टत्वम् । १दर्पे, २संरम्भे, ३आडम्बरे च । “साटोपमुर्व्वीमनिशं नदन्तः” माघः “मदजलदुर्द्दिनान्धकारगजघटितघनघटाटोपपरिपालितापि”काद०“साटोपं परिक्रम्य”वेणी०“कलापरुचिराटोपनिचितान् मुकुटानिव” भा०व०प०। ४वातजन्ये उदरशब्दभेदे “आमाटोपापचिक्ष्ये प्रगुल्मे क्रिमिविकारिणाम्” सुश्रु० ।

**आडम्बर** पु० आ+डबि–क्षेपे, अरन् । १हर्षे, २दर्पे, ३तूर्य्यस्वने, ४आरम्भे ५संरम्भे, ६गजविलोम्नि, घनगर्ज्जिते, ७आयोजने च । मत्वर्थे इनि । आडम्बरिन् तद्युक्ते त्रि० । [भेदे । ततः गोत्रप्रत्ययस्य बहुषु लुक् ।

**आडारक** पु० अड–उद्यमे घञ् ततः आरक् ऋषि-

**आडि** पु० अड–उद्यमे इण् । स्वनामख्याते मत्स्यभेदे । शरारीविहगे च पुंस्त्री० स्त्रीत्वे वा ङीप् स्वार्थे कन् आडिकाप्यत्र ।

**आडू** पु० अल ऊ लस्य डः नि० वृद्धिः । (भेला) उडुपे ।

**आढक** पु० आढौकते आ+ढौक–घञ् पृ० । “अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम् । पुष्कलानि च चत्वारि आढकः परिकीर्त्तित इति” मतभेदे चतुर्विंशत्यधिकसहस्रमुष्टिमाने “द्वादशप्रसृतिभिः कुडवस्तैश्चतुर्गुणैस्तैरप्रस्थाढकद्रोणा, इत्युक्ते द्विनवत्युत्तरशतप्रसृतिमाने च

एतच्च धान्यादेर्माने । सुवर्णादिमाने तु सुश्रुतः । "द्वादश धान्यमाषाः मध्यमाः सुवर्णमाषकः ते षोडश सुवर्णम् । अथ मध्यमनिष्पावा एकोनविंशतिर्द्धरणं तान्यर्द्ध तृतीयानि कर्षं ततश्चतुर्गुणमभिवर्द्धयन्तः पलकुडवप्रस्थाढकद्रोणा इत्यभिनिष्पद्यन्ते इत्युक्ते २५६ पलमाने च । अर्द्धर्चादिपाठात् कोषधादन्तत्वे ऽपि अस्य पु०न०लिङ्गता । अस्य परिमाणवाचकत्वात् आढकोव्रीहिरित्यादौ प्रथमायाः परिमाणमर्थः आढकपरिमाणपरिच्छेद्योव्रीहिरित्यादि बोधः । आढकं सम्भवति अवहरति पचति वा स ठञ् वा । आढकीनः आढकिकः आढकमितधान्यस्थापने तदवहारके च पात्रे तत्पाचके स्थाल्यादौ त्रि० ठञि स्त्रियां ङीप् इति भेदः ।

**आढकजम्बु** पु० आढकमिता जाम्बूर्यत्र देशे । स्थूलजम्बुयुक्तदेशे तत्र भवः वृद्धात्प्राचाम् ठञ् अस्यापवादकः । आढकजम्बुकः । तत्र भवे त्रि० ।

**आढकी** स्त्री आढौकते अच् पृषो०गौ० ङीष् । (अरहर) इति ख्याते शमीधान्यभेदे । "आढकी तुवरी रूक्षा मधुरा शीतला लघुः ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित्" भावप्र० फले अस्य पुंस्त्वमपि "आढकांश्च मसूरांश्च कोद्रवान् लवणं त्यजेत्" काशी०ख० वैश्वदेवे वर्जने ।

**आढ्य** त्रि० आ+ध्यै—क पृषो० । १युक्ते, २विशिष्टे ३सम्पन्ने ४धनिनि च । युक्ते धनाढ्यः पुत्राद्यः विनयाढ्यः । सम्पन्नः सम्यग्युक्तः "आढ्यास्तथाऽव्यसनिनः स्वतुरत्नाय सर्व्वदा" भा०स०प० ५अ० । "आढ्योद्दयति इष्टोधर्म्ममतिक्रामति धर्ममतिक्रामन् पापं करोतीति नीलकण्ठधृता श्रुतिः "चेतुःपञ्चभिराढ्यानाम्" श्रुतिः "आढ्यादिव मार्पणिकादजस्रम्" माघः ।

**आढ्यकुलीन** पु०स्त्री आढ्यकुले भवः खः । आढ्यकुलभवे ।

**आढ्यङ्करण** न० अनाढ्यमाढ्यं करोत्यनेन आढ्य+कृकरणे ख्युन् मुम् उप०स० । अभूताढ्यस्य आढ्यताकरणे ।

**आढ्यचर** त्रि० भूतपूर्व्व आढ्यः चरट् । भूतपूर्व्वाढ्ये स्त्रियां ङीप् ।

**आढ्यतम** त्रि० अतिशयेन आढ्यः तमप् । अतिशयाढ्ये ।

**आढ्यपदि** अव्य० आढ्यं पदं प्रहरणं यत्र द्विदण्ड्या० इच् इजन्तत्वादव्ययत्वम् । आढ्यपदप्रहरणयुक्ते युद्धे ।

**आढ्यम्भवन** न० अनाढ्य आढ्योभवत्यनेन आढ्य+भू-करणे ख्युन् मुम् उप०स० । अनाढ्यस्य आढ्यभवनसाधने ।

**आढ्यम्भविष्णु** त्रि०अनाढ्य आढ्यो भवति आढ्य+भू-खिष्णुच् मुम् उप०स० । अभूतपूर्व्वाढ्ये आढ्यताम् प्राप्ते "आढ्यम्भविष्णुर्यशसा कुमारः" भट्टिः ।

**आढ्यम्भावुक** त्रि० अनाढ्य आढ्योभवति आढ्य+भू-खुकञ् मुम् उप०स० । अनाढ्ये आढ्यतया भूते ।

**आढ्यवात** पु० आढ्योवातोयत्र । "कफमेदोवृतो वायुर्यदोरू प्रतिपद्यते । तदाक्रमर्द्दशैथिल्यरोमहर्षरुजाज्वरैः निद्रया चार्द्दितौ सक्थौ शीतलावप्रचेतनौ । गुरुकावस्थिरावूरू न स्वाविव च मन्यते । तमूरुस्तम्भमित्याढ्यराढ्यवातमथापरे" सुश्रुतोक्तलक्षणे ऊरुस्तम्भरोगे ।

**आणक** त्रि०अणक एव स्वार्थे अण् । १अधमे कुत्सिते सुश्रुतः । "आणकं सुरतं नाम दम्पत्योः पार्श्वसंस्थयोः" इत्युक्तलक्षणे २सुरतभेदे न० ।

**आणव** न० अणोर्भावः पृथ्वादि० वा अण् । अणुत्वे ।

**आणवीन** त्रि० अणुधान्यानां शर्षपादीनां भवनं क्षेत्रम् वा खञ् । (सुनाडाङ्गा) क्षेत्रभेदे यत्र शर्षपाद्यणुधान्यान्युत्पद्यन्ते तस्मिन् । पक्षे यत् अणव्यमप्यत्र ।

**आणि** पुंस्त्री०अण—इण् स्त्रियां वा ङीप् । रथचक्राग्रस्थे १कीलके, २कोटौ ३सीम्नि च । "मयोभुवा सरथा यातमर्वाग्गन्तं निधिं धुरमाणिर्न नाभिम्" ऋ० ४, ४३, ८ । "आणिं न रथ्यममृताधितस्थुः"ऋ० १, ३५, ६, सुश्रुतोक्ते मर्म्मस्थानभेदे, अत ऊर्द्धं प्रत्येकशोमर्म्मस्थानं व्याख्यास्याम" इत्युपक्रम्य । "जानुन ऊर्द्धमुभयतस्त्र्यङ्गुलमाणिर्नाम तत्रशोफाभिवृद्धिः सक्थिस्तब्धता च" उक्तम् ।

**आणीवेय** पुंस्त्री० अणिरन्यस्य वा दीर्घः अणीवः ऋषिभेद तस्यापत्यम् शुभ्रा० ढक् । अणीवर्षेरपत्ये ।

**आण्ड** त्रि० अण्डेभवः अण् । १अण्डसम्भवे पक्षिप्रभृतौ स्त्रियां ङीप् वेदे तु कचित् टाप् । "आण्डेव भित्त्वा शकुनस्य गर्भम्" ऋ० १, ६८, ७, २अण्डजाते हिरण्यगर्भे पु० "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः" इति मनूक्तेस्तस्याण्डजातत्वात् तथात्वम् । "विराड्वहेमावाण्डौ स्वराट् च" शत०ब्रा० । अण्डमेव स्वार्थे अण् । ३मुष्कद्वये स्वार्थिकप्रत्ययस्य कचित् लिङ्गवचनातिक्रमस्योक्तत्वात् पु० "यस्य ह्याण्डौ भवतः रेतः सिञ्चति"शत०ब्रा०।"आनन्दनन्दावाण्डौ मे"यजु० २०, ६, "आण्डौ इषणौ"वेददी० । "अण्डं वृषणोऽस्यास्य अण् । ४उपस्थयुक्ते "आण्डौ वै रेतःसिचौ" शत०ब्रा० । अण्डेन निर्वृत्तः अण् । अण्डनिर्वृत्ते ५कपालरूपे द्युलोके भूलोके च । "तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्

स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा । ताभ्यां स श-कलाभ्याञ्च दिवं भूमिञ्च निर्ममे इति” मनुनाऽण्डशक-लाभ्यां तयोरुत्पत्तिप्रतिपादनात्तयोस्तथात्वम् ।

**आण्डज** पु० अण्डात् जायते जन–ड स्वार्थे अण् । १अण्डजे पक्षिसर्पादौ । २तच्छरीरे न० “तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भि-ज्जम्” इति छा०उ० । “तेषां जीवाविष्टानां ख-ल्वेषां पक्ष्यादीनां भूतानामेषामिति प्रत्यक्षनिर्देशा-त्तु तेजःप्रभृतीनाम् । तस्मात्तेषां खल्वेषां भूतानां पशुपक्षिस्थावरादीनां त्रीण्येव नातिरिक्तानि बीजानि कारणानि भवन्ति । कानि तानीत्युच्यन्ते । अण्डजम-ण्डाज्जातम् अण्डजमेवाण्डजं पक्ष्यादि । पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते । तेन पक्षी पक्षिणां बीजम् सर्पः सर्पाणां बीजम् । तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः ॥ नन्वण्डाज्जातमण्डजमुच्यते ऽतोऽण्डमेव बीजमिति युक्तं कथमाण्डजं बीजमुच्यते । सत्यमेवं स्याद्यदि त्वदिच्छातन्त्रा श्रुतिः स्यात्स्वतन्त्रा श्रुतिर्यत आहाण्डजाद्येव बीजं नाण्डादीति । दृश्यते चाण्डजाद्यभावे तज्जातीयसन्तत्यभावो नाण्डाद्यभावे । अतोऽण्डजादीन्येव बीजान्यण्डजादीनाम्” भा० ।

**आण्डायन** त्रि० अण्डेन निर्वृत्तः पक्षा० फक् । अण्ड-निर्वृत्ते त्रि० । [ण्डीर इत्येव साधुरित्यन्ये ।

**आण्डीर** पु० आण्डमस्त्यस्य ईरच् । दृषणयुक्ते इत्यपरे आ-

**आण्डीवत** पु० राजभेदे । तेन निर्वृत्तम् कर्णा० फिञ् । आण्डीवतायनिः तन्निर्वृत्ते त्रि० ।

**आत्** अव्य० अत–क्विप् । १अनन्तरमित्यर्थे । “आदस्य वातो अनुवाति शोचिः” ऋ० १,१४८,४ २अपिचेत्यर्थे “विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक्” यजु० १७,२६, “आत् अपि च” वेददी० आ+ स्वरूपे तकार । ३आकाररूपे वर्णे पु० “आतश्चोपस-र्गे कः” पाणिनिसूत्रम् ।

**आत** त्रि० आ+अत् अच् । सततगते प्रसृते । “यशोभिः श्रयमाणा उदातैः”यजु०२८,५, “आतैः प्रसृतैः”वेददी०

**आतक** त्रि०अत+ण्वुल् । १सततगन्तरि २सर्पभेदे पु०“वाड्ड-कयाजस्तक्षश्च धूर्त्तकः प्रातरातकौ । कौरव्यकुलजास्तेते प्रयाता हव्यवाहनम्” भा०आ०५७ अ० ।

**आतङ्क** पु० आ+तकि–घञ् । १रोगे, “दीर्घतीव्रामयग्रस्तं ब्राह्मणं गामथापि वा । दृष्ट्वा पथि निरातङ्कं कृत्वा वा ब्रह्महा शुचिः” या० २सन्तापे, “प्रश्नेन च विजानीयाद् देशं कालं जातिसात्म्यमातङ्कं समुत्पत्तिं वेदनासमु-च्छ्रायम्” इत्यादि सुश्रुतः । ३सन्देहे, ४मुरजशब्दे, ५भये च । “पुरुषायुषजीविन्यो निरातङ्का निरीतयः” रघुः ।

**आतञ्चन** न० आ+तन्च–ल्युट् । १वेगे, २प्रापणे, ३आप्या-यने दुग्धादौ दध्यादिभावापादनाय ४अम्लद्रव्यप्रक्षेपे,(दम्बल देओया)५निक्षेपे, ६उपद्रवे, ७द्रवद्रव्यप्रक्षेपेण कठिनद्रव्यस्य चूर्णने गलितस्वर्णादेर्द्रव्यान्तरयोगेण ८जारणे च । करणे ल्युट् । ९दधिसाधन द्रव्ये(दम्बल) । गोभ्योऽष्टदशविधाः दु-ग्धादय उत्पद्यन्ते यथोक्तं श्रुतौ “प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्” शत०ब्रा० । तत्र प्रतिधुक् सद्योदुग्धम् १शृतं पक्वं पयः२। शरः पक्वक्षीर-स्योपरि सारभूतम्३ । घनीभूतं वस्तु दधि४ । दधिभवं सारभूतमुदकं मस्तु ५, । नवनीतघृते ६,७, प्रसिद्धे आत-ञ्चनं दधिभावकारणम् ८। आमिक्षा तप्ते पयसि दध्यानयने सति यत् घनीभूतं वस्तु जायते सामिक्षा९। द्रवात्मकं वाजि-नम्१०”भा० “यत्पूर्व्वेद्युर्दुग्धं हविरातञ्चनं तत्कुर्वीत कात्या० । [स संसदा” रघुः ।

**आतत** त्रि० आ+तन–क्त । विस्तृते “आततज्यमकरोत्

**आततायिन्** त्रि० आततेन विस्तीर्णेन शस्त्रादिना अयितुं शीलमस्य अय–णिनि । वधोद्यते । विषयभेदेन आततायि वधे दोषादोषौ”प्रा०वि०उक्तौ यथा वृह०“नाततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित् । विनाशार्थिनमायान्तं घात-यन्नापराध्नुयात्” । किल्बिषाभावःप्रायश्चित्तनिषेधार्थः अप-राधाभावो दण्डनिषेधार्थः । यतः “सर्वत आत्मानं गोपा-योतेति” श्रुतिमूलमिदम् अतः पलायनादिनापि रक्षणा भावे इदं बोद्धव्यम् । कात्यायनः । “आततायिनमायान्त मपि वेदान्तगं रणे। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्”जिघांसौ सन् हन्याद्धन्तेरित्यर्थः । देवलः । “उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् । निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्”। भ्रूणोब्राह्मणविशेषः । दोष-दर्शनं नियमार्थम् । मनुविष्णू । “गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवावि-चारयन्”एवकारोनियमार्थः । तथा “नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रकाशं वाऽप्रकाशं वा मन्युस्तन्मन्युमृ-च्छति”। यस्माद्धन्तृमन्युर्हन्यमानमन्युं नाशयति न पुनः पुरुषोऽन्ति हन्यते वेति हननविधेरपवादः । आततायिन-

माह वशिष्ठः । "अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः" । विष्णुकात्यायनौ । उद्यतासिविषाग्निञ्च शापोद्यतकरन्तथा । आथर्वणेन हन्तारं पिशुनञ्चैव राजसु । भार्य्यातिक्रमिणञ्चैव विद्यात्सप्तातताथिनः । यशोवित्तहरानन्यानाहुर्धर्म्मार्थहारकान्" । विशेषमाह कात्यायनः । "अनाचारितपूर्व्वोयस्त्वपराधे प्रवर्त्तते । प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता" । अनाचारितोऽनपकृतः । तेन पूर्व्वकृतापकारस्य मारणोद्यतस्य नाततायिता । तेन प्रत्युपकारकवधे दोषएव । ननु आततायिनोरपि गोब्राह्मणयोर्हनने दोषमाह सुमन्तुः । "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणात् यदा हन्यात् प्रायश्चित्तं कुर्य्यात्" । तथा भविष्ये । "घातकानपि गोविप्रान्न हन्याद्वै कदाचनेति" । अतः पूर्व्ववचनविरोधः । सत्यम् । अत्र व्यवस्थामाह कात्यायनः । "आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः । वधस्तत्र तु नैव स्यात् पापे हीने बधोमतः" । जन्मपदेन जातिः कुलञ्चोच्यते । तेन हन्तुरपेक्षया तपोविद्याजातिकुलैरुत्कृष्टोनाततायी बध्यस्तदन्योबध्यएव । अतएव भगवद्गीतायामाह । "पापमेवाश्रयेदस्मान् हत्वैतानाततायिन" इति । एतान् भीष्मादीन् अत्यन्तोत्कृष्टगुणानित्यर्थः । एवंभूताततायिनवाहनने फलमप्याह वृहस्पतिः । "आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् । योन हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्" । यद्यपि "गुरुम्बहुश्रुतं हन्यादिति" । श्रूयते । तथापि गुरोः सकाशात् कृतविद्यातपोभिः शिष्यस्याप्युत्कर्षसम्भवः । एवं बहुश्रुतादावपि । एवमधमवर्णस्योत्तमवर्णो न बध्यः । पूर्व्वकृतापकारविषयं वा सुमन्तुवचनम् । गौराततायप्यपि न बध्यः । "नखिनां शृङ्गिणाञ्चैव दंष्ट्रिणाञ्चाततायिनाम् । हस्त्यश्वानान्तथान्येषां वधे हन्ता न दोषभागिति" कात्यायनवचनं गोव्यतिरिक्तशृङ्गिविषयम् । विशेषमाह कात्यायनः । उद्यतानान्तु पापानां हन्तुर्दोषो न विद्यते । निवृत्तस्तु यदारम्भाद्ग्रहणं न बधःस्मृतः" इत्यन्तेन । तत्रत्यश्रुतपदार्थमाह देवलः "अनूचानो गुणोपेतो यज्ञस्वाध्यायवन्वितः । भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः" । मिताक्षरायामपि "गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन । प्रकाशं वा प्रकाशं वा मन्युस्तन्मन्युमृच्छति" । तथा "आततायिनमायान्तमपि वेदान्तगं रणे । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्" इत्याद्यर्थशास्त्रम् । "इयं विशुद्धिरुदिता प्रमाप्याकामतोद्विजम् । कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" इत्यादि धर्म्मशास्त्रमनयोर्विरोधे धर्म्मशास्त्रं बलवदिति युक्तम् । अनयोरेकविषयत्वासम्भवेन विरोधाभावान्न बलाबलचिन्ता अवतरति । तथाहि "शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मोयत्नोपरुध्यते" इत्युपक्रम्य "आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे । स्त्रीविप्राभ्युपपत्तौ च धर्म्मेण घ्नन्न दुष्यति" आत्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीब्राह्मणहिंसायाञ्च आततायिनमकूटशस्त्रेण घ्नन् न दण्डभागित्युक्त्वा तस्यार्थवादार्थमिदमुच्यते । "गुरुं वा बालवृद्धौ वेत्यादि" । गुर्व्वादीनप्यन्ताबध्यानप्याततायिनोहन्यात् किमुतान्यानिति । वाशब्दश्रवणादपि वेदान्तगमित्यत्राप्यपिशब्दस्य श्रवणाच्च गुर्व्वादीनां बध्यत्वप्रतीतिः "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणवधादिति" सुमन्तुवचनात् । "आचार्य्यं च प्रवक्तारम् पितरम्मातरं गुरुम् । न हिंस्याद्ब्राह्मणान् गाश्च सर्व्वांश्चैव तपस्विन" इति मनुवचनाच्च । आचार्य्यादीनामाततायिनां हिंसाप्रतिषेधेनेदं वचनमर्थवदन्यथा हिंसामात्रप्रतिषेधस्य सामान्यशास्त्रेणैव सिद्धत्वात् । "नाततायिवधे दोषोहन्तुर्भवति कश्चन" इत्येतदपि ब्राह्मणादिव्यतिरिक्तविषयमेव । यतः "अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः" तथा "उद्यतासिर्विषाग्निश्च शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजनि । भार्य्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान् विजानीयात्सर्व्वानेवाततायिन" इति सामान्येनाततायिनो दर्शिताः । अतश्च ब्राह्मणादय आततायिन आत्मादित्राणार्थं हिंसानभिसन्धिना निवार्य्यमाणाः प्रमादाद्यदि विपद्येरंस्तत्र लघु प्रायश्चित्तं राजदण्डाभावश्चेति" । ब्राह्मणाद्याततायिवधे दोष उक्तः । अतएव भीष्मादीनामाततायिनामपि हननेन "अश्वमेधेन शुध्यन्ति महापातकिनस्त्विमे" इति भारते युधिष्ठिरादीनां महापातकित्वमुक्तम् ।

**आतनि** त्रि॰ आ–तन–इन् । आतानके विस्तारके । "त्वं विधिधुरसि यज्ञमातनिः" ऋ॰ २, १, १० ।

**आतप्** त्रि॰ आतपति आ+तप–क्विप् । तापके "परिव्राजमकृशायवोरप्यावरन्त आतपः" ऋ॰५, ७२, ५ । "आतपः आतापिनः" भा॰ ।

**आतप** पु॰ आ–तप–अ । १उद्द्योते, २निबिड़किरणे रौद्रे च । "आतपः कटुकोरूक्षः स्वेदमूर्च्छाभ्रमा-

भेदः । "दाहवैवर्ण्यजननोनेत्ररोगप्रकोपनः" सुश्रुतः । "भवति वपुरवाप्तच्छायमेवातपेऽपि" माघः । "आतपात्ययसंक्षिप्तनीवारासु निषादिभिः" रघुः । "तमातपक्लान्तमनातपत्रम्" रघुः । "शृङ्गाणि यस्यातपवन्ति सिद्धाः" कुमा० । "शीतातपाभिघातांश्च विविधानि भयानि च" मनुः । आतपश्च विरलसंयोगापन्नः सूर्य्यस्य किरणभेदः स एव रौद्रशब्दाभिधेयः प्रकाशस्तु ततोऽपि विरलसंयोगापन्न इति प्रकाशरौद्रयोर्भेदः । अस्य च निविड़तेजस्त्वादुष्णस्पर्शवत्त्वम् तेन दुःखदायकत्वं मनुनोक्तम् । एवं "आतापतापितभूमौ माधव ! माधव ! मा धावेति" यशोदावाक्येऽपि । २ प्रकाशे "छायातपौ ब्रह्मविदो वदन्ति" श्रुतिः ।

**आतपत्र** न० आतपात् त्रायते त्रै-क । छत्रे । स्वार्थे कन् । आतपत्रकमप्यत्र । "तमातपक्लान्तमनातपत्रम्" । "एकातपत्रं जगतः प्रभुत्वम्" । "पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम्" इति च रघुः । "राज्यं स्वहस्तधृतदण्डमिवातपत्रम्" शकु० । "तस्यातपत्रं बिभराम्बभूवे" माघः । "निजातपत्रस्य तलस्थले नलः" नैष० । आतपत्रोत्पत्तिर्यथा भार०आनु०प० ९२,९३ अ० । "यदिदं श्राद्धकृत्येषु दीयते भरतर्षभ ! । छत्रञ्चोपानहौ चैव केनैतत् संप्रवर्त्तितम् । कथञ्चैतत् समुत्पन्नं किमर्थञ्च दीयते । न केवलं श्राद्धकृत्ये पुण्यकेष्वपि दीयते । बहुष्वपि निमित्तेषु पुण्यमाश्रित्य दीयते । एतद्विस्तरतो ब्रह्मन् ! श्रोतुमिच्छामि तत्त्वतः । भीष्म उवाच । शृणु राजन्नवहितश्छत्रोपानहविस्तरम् । यथैतत् प्रथितं लोके यथा चैतत् प्रवर्त्तितम् । यथा चाक्षयतां प्राप्तं पुण्यतां च यथा गतम् । सर्वमेतदशेषेण प्रवक्ष्यामि नराधिप ! । जमदग्नेश्च संवादं सूर्य्यस्य च महात्मनः । पुरा स भगवान् साक्षाद्धनुषाऽक्रीडत प्रभो ! । सन्धाय सन्धाय शरांश्चिक्षेप किल भार्गवः । तान् सर्व्वान् रेणुका क्षिप्तांस्तस्येषून् दीप्ततेजसः । आनीय सा तदा तस्मै प्रादादसकृदच्युत ! । अथ तेन स शब्देन ज्यायाश्चैव शरस्य च । प्रहृष्टः सम्प्रचिक्षेप सा च प्रत्याजहार तान् । ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे । स सायकान् द्विजो मुक्त्वा रेणुकामिदमब्रवीत् । गच्छानय विशालाक्षि ! शरानेतान् धनुश्च्युतान् । यावदेतान् पुनः सुभ्रु ! क्षिपामीति जनाधिप ! । सा गच्छन्त्यन्तरा छायां वृक्षमाश्रित्य भामिनी । तस्थौ तस्य हि सन्तप्तं शिरः पादौ तथैव च । स्थित्वा सा तु मुहूर्त्तं वै भर्त्तुः शापभयाच्छुभा । ययावानयितुं भूयः सायकानसितेक्षणा । प्रत्याजगाम च शरांस्तानादाय यशस्विनी । सा वै खिन्ना सुचार्वङ्गी पद्भ्यां दुःखं नियच्छती । उपाजगाम भर्त्तारं भयाद्भर्त्तुः प्रवेपती । स तामृषिस्तदा क्रुद्धो वाक्यमाह शुभाननाम् । रेणुके ! किं चिरेण त्वमागतेति पुनः पुनः । रेणुकोवाच । शिरस्तावत् प्रदीप्तं मे पादौ चैव तपोधन ! । सूर्य्यतेजोनिरुद्धाऽहं वृक्षच्छायां समाश्रिता । एतस्मात् कारणाद्ब्रह्मंश्चिरायैतत् कृतं मया । एतच्छ्रुत्वा मम विभो ! मा क्रुधस्त्वं तपोधन ! । जमदग्निरुवाच । अद्यैनं दीप्तकिरणं रेणुके ! तव दुःखदम् । शरैर्निपातयिष्यामि सूर्य्यमस्त्राग्नितेजसा । भीष्म उवाच । स विस्फार्य्य धनुर्दिव्यं गृहीत्वा च शरान् बहून् । अतिष्ठत् सूर्य्यमभितो यतो याति ततोमुखः" । इत्येवं क्रोधेन आत्मानं (सूर्य्यं) पातयितुमिच्छते जमदग्नये विप्ररूपं कृत्वागत्य तं च परितोष्य तस्मै छत्रमुपानहौ च सूर्य्योऽददादित्युक्तं ततोऽध्यायान्तरे यथा ।

"एतावदुक्त्वा स तदा तूष्णीमासीद्भृगूत्तमः । अथ सूर्य्योऽददत्तस्मै छत्रोपानहमाशु वै । सूर्य्य उवाच । महर्षे ! शिरसस्त्राणं छत्रं मद्रश्मिवारणम् । प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्म्मपादुके । अद्यप्रभृति चैवेह लोके सम्प्रचरिष्यति । पुण्यकेषु च सर्व्वेषु परमक्षय्यमेव च । भीष्म उवाच । छत्रोपानहमेतत्तु सूर्य्येणैतत् प्रवर्त्तितम् । पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ! । तस्मात् प्रयच्छ विप्रेषु छत्रोपानहमुत्तमम् । धर्मस्तेषु महान् भावी न मेऽत्रास्ति विचारणा । छत्रं हि भरतश्रेष्ठ ! यः प्रदद्याद्द्विजातये । शुभम् शतशलाकं वै स प्रेत्य सुखमेधते" । एतद्विवरणं छत्रशब्दे वक्ष्यते ।

**आतपवत्** त्रि० आतपोऽस्त्यत्र मतुप् मस्य वः । आतपयुक्ते "शृङ्गाणि यस्यातपवन्ति सिद्धाः" कुमा० ।

**आतपवर्ष्य** त्रि० आतपे निमित्ते सति वर्षन्ति वा० कर्त्तरि यत् । वृष्टिजले "अन्तरिक्षात् प्रतिगृह्यातपवर्ष्याः" कात्या० १५,७,५, अन्तरिक्षात् ग्रहीतव्या आतपवर्षणाः या आतपे वर्षन्ति ताः । अन्तरिक्षात् प्रतिगृह्य भूमिपतनात् प्रागेवाकाशात् पतन्तीरादाय ग्रहीतव्या" कर्क० । अतएव वृष्टिजलस्यातपनिमित्तत्वात् नैमित्तिकत्वाभिप्रायेण तासां यज्ञकाले ग्रहणासम्भवेन पूर्व्वं संग्राह्यतोक्ता "यूपशकलैर्नैमित्तिकत्वसम्भवात्" कात्या० १५,४२

"या आपोनिमित्तेन प्राप्यन्ते ता नैमित्तिक्यः यथा गोरुणद्याः आतपवर्षास्तासामन्यस्मिन् काले यत्त्वासम्भवात् अतः पूर्वं गृहीत्वा ऋपश्चात्तरेण पुनर्ग्रहणमिति" कर्कः। अतएव श्रुत्या स्वेदेरातपनिमित्तत्वमुक्तम् "तस्माद्यत्र क्वचित् शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापोजायन्ते" इति छा०उ० पुरुषदेहस्य सन्ताप स्वेदयोरातपनिमित्तत्वात् स्वेदेरातपहेतुकत्वम्। व्यक्तमाह यादवः "तासां शतानि चत्वारि रश्मीनां दृष्टिसर्ज्जने चतुःशतं दृष्टिवाहाः सम्भोगा अमृताः स्त्रियः" इति सूर्य्यरश्मीनां मध्ये चतुःशतस्य दृष्टिसर्ज्जकत्वेन स्वेदेरातपनिमित्तकत्वमत्र व्यक्तमेव।

**आतपवारण** न० आतपं वारयति वृ–णिच् ल्यु। छत्रे। "न्यपतिककुदं दत्त्वा यूने सितातपवारणम्" "अनुदितान्यसितातपवारणम्" इति च रघुः।

**आतपात्यय** पु० ६त०। रौद्रापगमे सूर्य्यकिरणविगमे। "आतपात्ययसंक्षिप्तनीवारासु निषादिभिः" रघुः।

**आतपाभाव** ६त० पु० आतपस्याभावरूपायाम् छायायाम्।

**आतपीय** त्रि० आतपस्य सन्निकृष्टदेशादि उत्करा० छ। आतपसन्निकृष्टदेशादौ।

**आतपोदक** न० आतपे लक्ष्यमाणमुदकम् शा०त०। सूर्य्यमरीचौ–लक्ष्यमाणे उदके मृगतृष्णिकायाम्।

**आतमाम्** अव्य० आ+तमप् आम्। अतिशयाभिमुख्ये अत्यन्तसमन्ताद्भावे च "महोदेवं कथमातमाऽख्यायत आत्मा हि महदुक्थम्" शत०ब्रा०।

**आतर** पु० आतरत्यनेन आ+तॄ–अप्। नद्यादेःतरणार्थं देये शुल्के "आतरस्तायवहेतोर्मुरहर ! तरणिं तवावलम्बे" इत्युद्भटः द्रव्यभेदे आतरमानसत्त्वं मनुना "पणं यानन्तरे दाप्यम्पुरुषोऽर्द्धपणन्तरे। पादम्पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान्। भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः। रिक्तभाण्डानि यत् किञ्चित् पुमांसश्चापरिच्छदाः"

**आतर्पण** न० आ+तृप–ल्युट्। १तृप्तौ। णिच्–ल्युट्। २प्रीणने ३मङ्गलालेपने। कर्त्तरि ल्युट्। ४तृप्तिकारके त्रि०।

**आतव** पु० आ+तु–अप्। १हिंसने कर्त्तरि अच्। २हिंसके त्रि० ३राजभेदे पु० तस्यापत्यम् अश्वा०फक्। आतवायनः तदपत्ये पुंस्त्री०।

**आता** स्त्री आभिमुख्येन अत्यते गम्यते प्राणिभिः आ+अत–कर्मणि घञ्। दिशि निरु०। "प्रवे द्वितादिव अङ्गन्याताः" ऋ०२,४२,६।

**आतान** पु० आतन्यते आ+तन–घञ्। १आभिमुख्येन विस्तारे २दीर्घविस्तारे पटादिवयनार्थं दीर्घविस्तारे (टाना देओया) "यथा लूता आतानवितानाभ्यां जालं विस्तारयतीति" वेदान्तप्र० कर्म्मणि घञ्। ३विस्तार्य्ये ४क्रियमाणे च "एष एव नित्य एकाह्नातानः" शत०ब्रा०।

**आतानक** त्रि० आ+तन–ण्वुल्। विस्तारके।

**आतापि** पु० आ+तप इण्। असुरभेदे स चागस्त्येन भक्षितः "आतापिर्भक्षितोयेन वातापिश्च महासुरः। समुद्रः-शोषितोयेन स मेऽगस्त्यः प्रसीदतु" मन्त्रलिङ्गादवगम्यते।

**आतापिन्** पु० आतपति आ+तप–णिनि। (चिल) पक्षिभेदे क्षीरस्वामी।

**आतायिन्** पु० आ+ताय–णिनि। (चिल्)इतिख्याते पक्षिभेदे।

**आतार** पु० आतीर्य्यतेऽनेन आ+तॄ–वा० घञ्। नावातरणार्थे देये शुल्के।

**आताली** अव्य० आ+तल वा० इण्। विधुरत्वाकुलीकरणे अर्था० "आतालीत्य विधुरमाकुलीकृत्येत्यर्थः" गणरत्नम्।

**आति** पु० अत–इण्। शरारिपक्षिणि। "सुपर्णः पार्ज्जन्य आतिर्वाहसो" यजु० २४,३४। "ता आतयोन तन्वः शुम्भतः स्वा" ऋ० १०,९५। २सततगन्तरि त्रि०।

**आतिथिग्व** पु० अतिथिमभिगच्छति गम–ड अतिथिग्वो-दिवोदासोराजा तस्यापत्यम् अण्। दिवोदासराजपुत्रे। "पराहन्नतिथिग्वाय शस्यं करिष्यन्" ऋ०६,२६,३ "अतिथिग्वाय अतिथीनामभिगन्त्रे दिवोदासाय" भाष्योक्तेः दिवोदास एव ऋग्वेदेऽतिथिग्वत्वेन प्रसिद्धः "सुरथा आतिथिग्वे स्वभीशू रार्क्षे" "षडश्वाँ आतिथिग्व इन्द्रोते वधूमतः" ऋ० ८,६८,१६,१७। "आतिथिग्व एतन्नामकराजस्य पुत्रः तस्मै" भा०।

**आतिथेय** न० अतिथये इदं ढक्। १अतिथिनिमित्तके भोजनादौ। "आतिथेयमनिवारितातिथिः" माघः "दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु" मनुः। तत्र साधु ढञ्। २अतिथिसपर्य्यायां कुशले त्रि०। "प्रययावातिथेयेषु वसन्नृषिकुलेषु सः" रघुः। "शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे" भट्टिः "मधुपर्कमातिथिमातिथेयः" रघुः। स्त्रियां ङीप्। "तमातिथेयी बहुमानपूर्व्वया" कुमा०

**आतिथ्य** न० अतिथेरिदं ञ्य। १अतिथिपरिचर्य्यायाम्। "तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्" रघुः "लघुपतनकस्य यथोचितमातिथ्यं विधाय" हितो०। क्लीबमपि "आतिथ्यायाः प्राक्प्रायणीयम्" शत०ब्रा० भाष्यम्

अतिथिपरिचर्य्याप्रकारश्च परिशिष्टखण्डे वक्ष्यते । स्वार्थे ष्यञ् । २अतिथौ हेम० ।

**आतिदेशिक** त्रि० अतिदेशादागतः ठक् । अतिदेशप्राप्ते । यथा प्रकृतिधर्मस्य विकृतौ आतिदेशिकत्वम् । “आतिदेशिकमनित्यम्” इति व्या० परिभाषा ।

**आतियात्रिक** त्रि० अतियात्रायां नियुक्तः ठक् । आतिवाहिकदेवे विवरणमातिवाहिकशब्दे ।

**आतिरेक्य** न० अरिच्यते कर्मणि घञ् तस्य भावः ष्यञ् । अतिरेके इत्यो स्वपरिणातिरेके ।

**आतिवाहिक** त्रि० अतिवाहे इहलोकात् परलोकप्रापणे नियुक्तः ठक् । एतल्लोकात् परलोकप्रापणे ईश्वरनियुक्ते अर्चिराद्यभिमानिदेवगणे धूमाद्यभिमानिदेवगणे च । “आतिवाहिकास्तल्लिङ्गात्” शा०सू० । अतिवाहने नियुक्ताश्च द्विविधाः दक्षिणमार्गे उत्तरमार्गे च तत्र कर्मिणां दक्षिणमार्गेण ज्ञानिनाञ्चोत्तरमार्गेण गमनात् तत्र नयनाय ईश्वरनियुक्ता धूमादयः अर्चिरादयश्च ते च छा० उ० दर्शिता यथा ।

“अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति” । “इष्टापूर्त्ते इष्टमग्निहोत्रादि वैदिकं कर्म, पूर्त्तं वापीकूपतडागारामादिकरणम् । दत्तं च बहिर्वेदि, यथाशक्त्यर्हेभ्यो द्रव्यसम्भागो दत्तम् । इत्येवंविधं परिचरणमित्याद्युपासते । इतिशब्दस्य प्रकारदर्शनार्थत्वात् । ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामभिसम्भवन्ति प्रतिपद्यन्ते । तयाऽतिवाहिता धूमाद्रात्रिं रात्रिदेवतां, रात्रेरपरपक्षदेवताम्, एवमेव कृष्णपक्षाभिमानिनीमपरपक्षात् यान् षण्मासान् दक्षिणा दक्षिणां दिशमेति सविता तान् मासान् दक्षिणायनान् षण्मासाभिमानिनीर्देवताः प्रतिपद्यन्त इत्यर्थः । सङ्घचारिण्यो हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगस्तासु । नैते कर्म्मिणः प्रकृताः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवन्ति । कुतः पुनः संवत्सरप्राप्तिप्रसक्तिर्यतः प्रतिषिध्यते । अस्ति हि संवत्सरस्य प्रसक्तिरेकस्यावयवभूते दक्षिणोत्तरायणे तत्रार्चिरादिमार्गप्रवृत्तानामुदगयनमासेभ्योऽवयविनः संवत्सरस्य प्राप्तिरुक्ता । अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिं श्रुत्वा तदवयविनः संवत्सरस्यापि पूर्ववत्प्राप्तिरापन्नेत्यतस्तत्प्राप्तिः प्रतिषिध्यते नैते संवत्सरमभिप्राप्नुवन्तीति । मासेभ्यः पितृलोकं, पितृलोकादाकाशमाकाशाच्चन्द्रमसम् । कोऽसौ यस्तैः प्राप्यः चन्द्रमाः य एष दृश्यतेऽन्तरिक्षे सोमो राजा ब्राह्मणानां तदन्नं देवानां तं चन्द्रमसमन्नं देवता इन्द्रादयो भक्षयन्ति । अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्म्मिणो देवैर्भक्ष्यन्ते नन्वनर्थायेष्टादिकरणं यद्यन्नभूता देवैर्भक्ष्येरन् नैष दोषः । अन्नमित्युपकरणमात्रस्य विवक्षितत्वात् । न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते । किं तर्ह्युपकरणमात्रं देवानां भवन्ति ते स्त्रीपशुभृत्यादिवत् । दृष्टश्चान्नशब्द उपकरणेषु स्त्रियोऽन्नं पशवोऽन्नं राज्ञामित्यादि । न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति । तस्मात्कर्मिणो देवतानामुपभोग्या अपि सन्तः सुखिनो देवैः क्रीडन्ते । शरीरञ्च तेषां तदुपभोगयोग्यं चन्द्रमण्डले आप्यमारभ्यते । तदुक्तं “पुरस्ताच्छ्रद्धा शब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा सम्भवन्तीति” । ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगताः द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति । इति” भा० पितृयानःपन्था दर्शितः देवयानस्तु ।

“अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्च्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं, संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते नावर्त्तन्ते” “अथेदानीं यथोक्तब्रह्मविदो गतिरुच्यते यद्यदि उ च एवास्मादेवंविदि शव्यं शवकर्म स्वते कुर्वन्ति यदि च न कुर्वन्ति ऋत्विजः, सर्व्वथाप्येवंविर्त्तेन शवकर्म्मणा अकृतेनापि न प्रतिबद्धो ब्रह्म प्राप्नोति न च कृतेन शवकर्म्मणाऽस्य कश्चनाभ्यधिको लोकः “न कर्म्मणा वर्द्धते नो कनीयानिति” श्रुत्यन्तरात् । शवकर्म्मण्यनादरं दर्शयन् विद्यां स्तौति, न पुनः शवकर्म्म एवंविदो न कर्त्तव्यमिति । अक्रियमाणे हि शवकर्म्मणि कर्म्मणां फलारम्भे प्रतिबन्धः कश्चिदनुमीयतेऽन्यत्र । यत इह विद्याफलारम्भकाले शवकर्म स्याद्वा न वेति विद्यावतोऽप्रतिबन्धेन फलारम्भं दर्शयति । ये सुखाकाशमक्षिस्थं संयद्वामनीत्वेनोपासते प्राणसहितामग्निविद्यां, तेषामन्यत्कर्म्म भवतु मा वा भूत्

सर्व्वथापि तेऽर्च्चिषमेवाभिसम्भवन्त्यर्च्चिरभिमानिनीं देवता-मभिसम्भवन्ति प्रतिपद्यन्त इत्यर्थः । अर्च्चिषोऽर्च्चिर्दैवताया अहरहरभिमानिनीं देवतामह्न आपूर्य्यमाणपक्षं शुक्लपक्षदेवतामापूर्य्यमाणपक्षात् यान् षण्मासानुदङ्ङुत्तरां दिशमेति सविता तान्मासानुत्तरायणदेवतां, तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवतां ततः संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्तत्स्थांस्तान् पुरुषः कश्चिद्ब्रह्मलोकादेत्यामानवो मानव्यां सृष्टौ भवो मानवो न मानवोऽमानवः स पुरुष एतान् ब्रह्म सत्यलोकस्थं गमयति गन्तृगन्तव्यगमयितृत्वव्यपदेशेभ्यः । सत्यात्र ब्रह्मप्राप्तौ तदनुपपत्तेः । "ब्रह्मैव सन् ब्रह्माप्येतीति हि वक्तुं न्याय्यम् । सर्व्वभेदनिरासेन सत्यात्मप्रतिपत्तिं वक्ष्यति । न चादिष्टो मार्गो गमनायोपतिष्ठते । "स एनमविदितो न भुनक्तीति" श्रुत्यन्तरात् । एष देवपथो देवैरर्चिरादिभिर्गमयितृत्वेनाधिष्ठितैरुपलक्षितः पन्था देवपथ उच्यते । ब्रह्म गन्तव्यं तेन चोपलक्षित इति ब्रह्मपथः । एतेन प्रतिपद्यमाना गच्छन्तो ब्रह्म इमं मानवं मनुसम्बन्धिनं मनोः सृष्टिलक्षणमावर्त्तं नावर्त्तन्ते । आवर्त्तन्तेऽस्मिन् जननमरणप्रबन्धचक्रारूढा घटीयन्त्रवत् पुनः पुनरित्यावर्त्तस्तं न प्रतिपद्यन्ते । नावर्त्तन्त इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिदर्शनार्था" भा० ।

यथा चैषामातिवाहिकत्वं तथा निरूपितम् शा० सू०भा० । "आतिवाहिकास्तल्लिङ्गात्" सू० । "तेष्वेवार्चिरादिषु संशयः किमेतानि मार्गचिह्नान्युत भोगभूमयोऽथ वा नेतारो गन्तॄणामिति । तत्र मार्गलक्षणभूता अर्चिरादय इति तावत् प्राप्तं तत्स्वरूपत्वादुपदेशस्य । यथा हि कश्चिल्लोके ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते गच्छेतस्त्वममुं गिरिं ततो न्यग्रोधं ततोनदीं ततोग्रामं ततोनगरं वा प्राप्स्यसीति । एवमिहाप्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमित्याह । अथ वा भोगभूमय एता इति प्राप्तम् । तथा हि लोकशब्देनाग्न्यादीननुबध्नाति अग्निलोकमागच्छतीत्यादि । लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते मनुष्यलोकः पितृलोको देवलोक इति च । तथा च ब्राह्मणम् "अहोरात्रेषु लोकेषु सज्जन्त" इत्यादि । तस्मान्नातिवाहिका अर्चिरादयः । अचेतनत्वादपि तेषामातिवाहिकत्वानुपपत्तिः । चेतना हि लोके राजनियुक्ताः पुरुषाः दुर्गेषु मार्गेष्वतिवाह्यानतिवाहयन्तीत्येवं प्राप्ते ब्रूमः । आतिवाहिका एवैते भवितुमर्हन्ति । कुतः तल्लिङ्गात् । तथा हि चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयतीति सिद्धवद्गमयितृत्वं दर्शयति । यावद्वचनं वाचनिकमिति न्यायात् । तद्वचनं तद्विषये एवोपक्षीणमिति चेन्न प्राप्तमानवत्वनिवृत्तिमात्रपरत्वाद्विशेषणस्य । यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवास्ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति । ननु लिङ्गमात्रमगमकं न्यायाभावात् । नैष दोषः । उभयव्यामोहात्तत्सिद्धेः । एतावदर्चिरादिमार्गगास्ते देहवियोगात् संपिण्डितकरणग्रामा इत्यस्वतन्त्राः । अर्च्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते । लोकेऽपि हि मत्तमूर्च्छितादयः संपिण्डितकरणग्रामाः परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः । न हि रात्रौ प्रेतस्याहःस्वरूपाभिसम्भव उपपद्यते । न च प्रतिपालनमस्तीत्युक्तमधस्तात् । ध्रुवत्वाद्देवतात्मनां नायं दोषो भवति । अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते । अर्चिषोऽहरित्यादि निर्देशस्त्वातिवाहिकत्वेऽपि न विरुध्यते । अर्चिषा हेतुनाहरभिसम्भवन्ति अह्ना हेतुनापूर्य्यमाणपक्षमिति । तथा च लोके प्रसिद्धेष्वप्यातिवाहिकेष्वेवंजातीयक उपदेशो दृश्यते गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति । अपि चोपक्रमे तेऽर्चिषमभिसम्भवन्तीति सम्बन्धमात्रमुक्तं न सम्बन्धविशेषः कश्चित् । उपसंहारे तु "स एतान् ब्रह्म गमयतीति" सम्बन्धविशेषोऽतिवाह्यातिवाहकत्वलक्षण उक्तः तेन स एवोपक्रमेऽपीति निर्द्धार्य्यते । संपिण्डितकरणग्रामत्वादेव च गन्तॄणां न तत्र भोगसम्भवः । लोकशब्दस्त्वनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते अन्येषां तल्लोकवासिनां भोगभूमित्वात् । अतोऽग्निस्वामिकं लोकं प्राप्तोऽग्निनाऽतिवाह्यते वायुस्वामिकलोकं प्राप्तो वायुनेति योजयितव्यम् । कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्सम्भवः विद्युतो ह्यधिवरुणादय उपक्षिप्ताः । विद्युतश्चानन्तरमा ब्रह्मप्राप्तेरमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमित्यत उत्तरं पठति । "वैद्युतेनैव तच्छ्रुतेः" । ततो विद्युदभिसम्भवादूर्द्ध्वं विद्युदनन्तरवर्त्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्तीत्यवगन्तव्यम् । तान् वैद्युतान् पुरुषोऽमानवः स एतान् ब्रह्मलोकं गमयतीति तस्यैव गमयितृत्वश्रुतेः । वरुणादयस्तु

तस्यैवामातिवस्यकरणेन 'शास्त्रचर्य्यानुष्ठानेन वा केनचि-
दनुग्राहकादवगन्तव्यम्। तस्मात् सूत्रमातिवाहिकादेव
मात्मानोऽर्चिराद्य इति" शाङ्करभाष्यम्।
आतिवाहिक आतिवाहे अतिवाहकाले इतोलोकान्तरगतिकाले भवः
ठञ्। मनुष्याणां मृत्युकालभवे २ देहभेदे पु० शरीरविशेष-
णत्वे न०। "तत्क्षणादेव सद्गृह्णाति शरीरमातिवाहिकम्।
ऊर्द्ध्वं व्रजन्ति भूतानि त्रीण्यस्मात्तस्य विग्रहात्"।
विष्णुध०। त्रीणि भूतानि तेजोवाय्वाकाशानि ऊर्द्ध्वं
गच्छन्ति गुरुत्वाभावात् पृथिवीजले तु गुरुत्वादधोगच्छत
इत्यभिप्रायः तत्क्षणात् मृत्युक्षणं प्राप्येत्यर्थः "आति-
वाहिकसंज्ञोऽसौ देहो भवति भार्गव! केवलं तन्मनुष्याणां
नान्येषां प्राणिनां क्वचित्"। इति च तत्रैवोक्तम्। पञ्च-
भूतानामूर्द्ध्वाधोगतिश्च स्थूलभूतविषया सूक्ष्माणान्तु लिङ्ग-
शरीराश्रयतया सर्वजीवानां देहान्तरप्राप्तौ तद्देहारम्भसा-
धनतया सहैव गमनम् यथाह "तदन्तरप्रतिपत्तौ रंहति संपरि-
ष्वक्तः प्रश्ननिरूपणाभ्याम्" शा०सू० व्याख्यातमिदं शङ्करा-
चार्य्यैः "जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽविद्या-
कर्म्मपूर्व्वप्रज्ञापरिग्रहः पूर्व्वदेहं विहाय देहान्तरं प्रति-
पद्यत इत्येतदवगतं "अथैनमेते प्राणा अभिसमायन्ति" इत्येवमा-
देरन्यतरं रूपं कुरुते इत्येवमन्तात् संसारप्रकरणस्थाच्छ-
ब्दात् धर्म्माधर्म्मफलोपभोगसंभवाच्च। स किं देहबीजै-
र्भूतसूक्ष्मैरसंपरिष्वक्तो गच्छति आहोस्वित् संपरिष्वक्त
इति चिन्त्यते किं तावत् प्राप्तं असंपरिष्वक्त इति।
कुतः करणोपादानवत् भूतोपादानस्याश्रुतत्वात्। 'स एता-
स्तेजोमात्राः समभ्याददानः" इत्यत्र तेजोमात्राशब्देन कर-
णानामुपादानं संकीर्त्तयति वाक्यशेषे चक्षुरादिसंकीर्त्तनात्।
नैवं भूतमात्रोपादानसंकीर्त्तनमस्ति सुलभाश्च सर्व्वत्र भूत-
मात्रा यत्रैव देह आरब्धव्यस्तत्रैव सन्तीति तत्र तासां
नयनं निष्प्रयोजनम्। तस्मादसंपरिष्वक्तो यातीत्येवं प्राप्ते
पठत्याचार्य्यः "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" इति।
तदन्तरप्रतिपत्तौ देहात् देहान्तरप्रतिपत्तौ देहबीजैर्भूत-
सूक्ष्मैः संपरिष्वक्तो गच्छतीत्यवगन्तव्यं कुतः प्रश्ननिरूप-
णाभ्याम्। तथा हि प्रश्नः "वेत्थ यथा पञ्चम्यामाहुतावापः
पुरुषवचसो भवन्तीति"। निरूपणञ्च प्रतिवचनं द्युपर्ज्जन्य-
पृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतो-
रूपाः पञ्चाहुतीर्दर्शयित्वा "इति तु पञ्चम्यामाहुता-
वापः पुरुषवचसो भवन्तीति"। तस्मादद्भिः परिवेष्टितो
जीवो रंहतीति गम्यते। नन्वन्या श्रुतिर्जलौकावत् पूर्व्वं देहं
न मुञ्चति यावद्देहान्तरं न क्रामतीति दर्शयति तद्यथा
तृणजलायुकेति तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्म्मोप-
स्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलौ-
कयोपमीयत इत्यविरोधः। एवं श्रुत्युक्ते देहान्तरप्रतिपत्ति
प्रकारे सति याः पुरुषमतिप्रभवाः कल्पनाः व्यापिनां क-
रणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्म्मवशाद्वृत्तिलाभस्तत्र
तत्र भवति केवलस्यैव वाऽऽत्मनो वृत्तिलाभस्तत्र भवति।
इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थान
उत्पद्यन्ते, मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते जीव-
एव वा उत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते शुक इव वृक्षाद्वृ-
क्षान्तरमित्येवमाद्याः, ताः सर्व्वा एवानादर्त्तव्याः श्रुति
विरोधात्। नन्वदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभि-
रद्भिः संपरिष्वक्तो रंहति इति प्राप्नोति अप्शब्दश्रवण-
सामर्थ्यात् तत्र कथं सामान्येन प्रतिज्ञायते सर्व्वैरेव भूत-
सूक्ष्मैः संपरिष्वक्तो रंहतीत्यत उत्तरं पठति। "त्र्यात्मक-
त्वात्तु भूयस्त्वात्" सू०। "तुशब्देन चोदितामाशङ्कामुच्छिनत्ति
त्र्यात्मिका ह्यापः त्रिवृत्करणश्रुतेः तास्वारम्भिकास्वभ्युप-
गतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति त्र्यात्मकश्च
देहः त्रयाणामपि तेजोबन्नानां तस्मिन् कार्य्योपलब्धेः पुनश्च
त्र्यात्मकः त्रिधातुकत्वात् त्रिभिर्वातपित्तश्लेष्मभिर्विधृतत्वात्
न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते।
तस्माद्भूयस्त्वापेक्षोऽयम् "आपः पुरुषवचस इति" प्रश्नप्रतिव-
चनयोरप्शब्दो न कैवल्यापेक्षः सर्व्वदेहेषु हि रसलोहि-
तादिद्रवभूयस्त्वं दृश्यते। ननु पार्थिवो धातुर्भूयिष्ठो देहे-
षूपलक्ष्यते नैष दोषः इतरापेक्षयाऽपां बाहुल्यं भविष्यति
दृश्यते च शुक्रशोणितलक्षणेऽपि देहबीजे द्रवबाहुल्यम्।
कर्म्म च निमित्तं कारणं देहान्तरारम्भे कर्म्माणि चाग्नि-
होत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि क-
र्म्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः सह कर्म्मभिर्द्यु-
लोकाख्येऽग्नौ हूयन्त इति वक्ष्यति तस्मादप्यपां बाहुल्य
प्रसिद्धिः। बाहुल्याच्चाप्शब्देन सर्व्वेषामेव देहबीजानां
भूतसूक्ष्माणामुपादानमिति निरवद्यम्। "प्राणगतेश्च" सू०
"प्राणानाञ्च देहान्तरप्रतिपत्तौ गतिः श्राव्यते "तमुत्क्रामन्तं
प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्व्वे प्राणा अनूत्क्रा-
मन्तीत्यादि" श्रुतिभिः। सा च प्राणानां गतिर्नाश्रयमन्त-
रेण सम्भवतीत्यतः प्राणगतिप्रयुक्तानां तदाश्रयभूताना-
मपामपि भूतान्तरोपसृष्टानां गतिरवगम्यते। न हि निरा-
श्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा जीवतोऽदर्शनात्"

भा०। मनुरपि "यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च। समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति" सूक्ष्मभूतैः संसृष्टस्यैव गतिमाह। अत्र अणुपदं पुर्य्यष्टकोपलक्षणम्। "भूतेन्द्रियमनोबुद्धिवासनाकार्य्यवायवः। अविद्या चाष्टकं प्रोक्तं पुर्य्यष्टकमिदं पुनः" सनन्दोक्तेः "पुर्य्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन वै" ब्रह्मपु० उक्तेश्च संसृतिकाले पुर्य्यष्टकस्य परलोकगामित्वसिद्धेः। आतिवाहिकशरीरसत्त्वेऽन्यथानुपपत्तिरेव प्रमाणम् तत्स्वरूपञ्चोक्तं सांख्यसूत्रभाष्यादौ। "तद्बीजात् संसृतिः" सू०। तस्य शरीरस्य बीजात् त्रयोविंशतितत्त्वरूपात् सूक्ष्माद्धेतोः पुरुषस्य संसृतिर्गतागते भवतः कूटस्थस्य विभुतया स्वतो गत्याद्यसम्भवादित्यर्थः त्रयोविंशतितत्त्वेऽवस्थितो हि पुरुषस्तेनैवोपाधिना पूर्व्वकृतकर्मभोगार्थं देहाद्देहं संसरति। "मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्। वाचा वाचा कृतं कर्म कायेनैव तु कायिकम्" इत्यादिस्मृतिभिः पूर्वसर्गीयकरणैरेवोत्तमगतः सर्गान्तरेषूपभोगसिद्धेः। अतएव ब्रह्मसूत्रम् "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त इति"। संसृतेरवधिमप्याह। "आविवेकाच्च प्रवर्त्तनमविशेषाणाम्" सू०। "ईश्वरानीश्वरत्वादिविशेषरहितानां सर्व्वेषामेव पुंसां विवेकपर्य्यन्तमेव प्रवर्त्तनं संसृतिरावश्यकी विवेकोत्तरं च न सा तत्र हेतुमाह। "उपभोगादितरस्य" सू०। इतरस्याविवेकिन एव स्वीयकर्मफलभोगावश्यम्भावादित्यर्थः। देहसत्त्वेऽपि संसृतिकाले भोगो नास्तीत्याह। "सम्प्रति परिष्वक्तो द्वाभ्याम्" सू०। सम्प्रति संसृतिकाले पुरुषो द्वाभ्यां शीतोष्णसुखदुःखादिद्वन्द्वैः परिष्वक्तो भवतीत्यर्थः। तदेतत्कारिकयोक्तम्। "संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्"। इति। भावा धर्माधर्मवासनादयः। अतः परं शरीरद्वयं विविच्य वक्तुमुपक्रमते। "मातापितृजं स्थूलं प्रायश इतरन्न तथा" सू०। स्थूलं मातापितृजं प्रायशो बाहुल्येनायोनिजस्यापि स्थूलशरीरस्य करणादितरच्च सूक्ष्मशरीरं न तथा न मातापितृजं सर्गादावुत्पन्नत्वादित्यर्थः। तदुक्तं कारिकया। "पूर्व्वोत्पन्नमसक्तं नियतं महदादि सूक्ष्मपर्य्यन्तम्। संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" इति नियतं नित्यं द्विपरार्धस्थायि गौणनित्यं प्रतिशरीरं लिङ्गोत्पत्तिकल्पने गौरवात्। प्रलये तु तन्नाशः श्रुतिस्मृतिप्रामाण्यादिष्यते। गतिकाले भोगाभाववचनन्तूत्सर्गाभिप्रायेण। कदाचित् तु वायवीयशरीरप्रवेशतो गमनकालेऽपि भोगो भवति। अतो यममार्गे दुःखभोगशास्त्राण्युपपद्यन्ते। स्थूलसूक्ष्मशरीरयोर्मध्ये किमुपाधिकः पुरुषस्य द्वन्द्वयोगस्तदवधारयति। "पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य" सू०। पूर्वं सर्गादावुत्पत्तिर्यस्य लिङ्गशरीरस्य तस्यैव तत्कार्यत्वं सुखदुःखकार्यकत्वं कुत एकस्य लिङ्गदेहस्यैव सुखदुःखाख्यभोगात् न त्वितरस्य स्थूलशरीरस्य मृतशरीरे सुखदुःखाद्यभावस्य सर्वसम्मतत्वादित्यर्थः। उक्तस्य सूक्ष्मशरीरस्य स्वरूपमाह। "सप्तदशैकं लिङ्गम्" सू०। सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति तत्र सप्तदश मिलित्वा लिङ्गशरीरं तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः। एकादशेन्द्रियाणि पञ्च तन्मात्राणि बुद्धिश्चेति सप्तदश। अहङ्कारस्य बुद्धावेवान्तर्भावः। चतुर्थसूत्रे वक्ष्यमाणप्रमाणादेतान्येव सप्तदश लिङ्गं मन्तव्यं न तु सप्तदश एकं चेत्यष्टादशपरतया व्याख्येयम्। उत्तरसूत्रेण व्यक्तिभेदस्योपपाद्यतयात्र लिङ्गैकत्वे एकशब्दस्य तात्पर्यावधारणाच्च। "कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते। स सप्तदशकेनापि राशिना युज्यते च सः" इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वसिद्धेश्च सप्तदशावयवा अत्र सन्तीति सप्तदशको राशिरित्यर्थः। राशिशब्देन स्थूलदेहवल्लिङ्गदेहस्यावयवित्वं निराकृतम्। अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात्। स्थूलदेहस्य चावयवित्वमेकताप्रत्ययानुरोधेन कल्प्यत इति। अत्र च लिङ्गदेहे बुद्धिरेव प्रधानेत्याशयेन लिङ्गदेहस्य भोगः प्रागुक्तः। प्राणश्चान्तःकरणस्यैव वृत्तिभेदः। अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भाव इत्यस्य सप्तदशावयवकस्य शरीरत्वं स्वयं वक्ष्यति "लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः" इति सूत्रेण। अतो भोगायतनत्वमेव मुख्यं शरीरलक्षणम्। तदाश्रयतया त्वन्यत्र शरीरत्वमिति पश्चाद्व्यक्तीभविष्यति। "चेष्टेन्द्रियार्थाश्रयः शरीरमिति" तु न्यायेऽपि तस्यैव लक्षणं कृतमिति। ननु लिङ्गं चेदेकं तर्हि कथं पुरुषभेदेन विलक्षणा भोगाः स्युरत आह। "व्यक्तिभेदः कर्मविशेषात्" सू० यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गं तथापि तस्य पश्चाद्व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति। यथेदानीमेकस्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति पुत्रकन्यादिलिङ्गदेहरूपेण। तत्र कारणमाह कर्मविशेषादिति। जीवान्तराणां भोगहेतुकर्मादेरित्यर्थः। अत्र विशेषवचनात् समष्टिसृष्टिर्जीवानां साधारणैः कर्मभिर्भवतीत्यायातम्। अयं

च व्यक्तिभेदो मन्वादिभिरुक्तः। यथा मनौ समष्टिपुरुषस्य षडिन्द्रियोत्पत्त्यनन्तरम्। “तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्। सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे” इति षण्णामिति समस्तलिङ्गशरीरोपलक्षणम्। आत्ममात्रासु चिदंशेषु संयोज्येत्यर्थः। तथा च तत्रैव वाक्यान्तरम्। “तच्छरीरसमुत्पन्नैः कार्यैस्तैः करणैः सह। क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः”। इति नन्वेवं भोगायतनतया लिङ्गस्यैव शरीरत्वे स्थूले कथं शरीरत्वव्यवहारस्तत्राह। “तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः” सू०। तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं तस्याश्रये षाट्कौशिके देहे तद्वादो देहवादस्तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहस्य वादादित्यर्थः लिङ्गसम्बन्धादधिष्ठानस्य देहत्वमधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति पर्यवसितोऽर्थः। अधिष्ठानशरीरं च सूक्ष्मपञ्चभूतात्मकं वक्ष्यते तथा च शरीरत्रयं सिद्धम्। यत् तु “आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः। सर्वासां भूतजातानां ब्रह्मणस्त्वेक एव हि” इत्यादिशास्त्रेषु शरीरद्वयमेव श्रूयते तल्लिङ्गशरीराधिष्ठानशरीरयोरन्योऽन्यनियतत्वेन सूक्ष्मत्वेन चैकताभिप्रायादिति। ननु षाट्कौशिकातिरिक्ते लिङ्गशरीराधिष्ठानभूते शरीरान्तरे किं प्रमाणमित्याकाङ्क्षायामाह। “न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च” सू०। “तल्लिङ्गशरीरं तदृतेऽधिष्ठानं विना स्वातन्त्र्यान्न तिष्ठति। यथा छाया निराधारा न तिष्ठति यथा वा चित्रमित्यर्थः तथा च स्थूलदेहं त्यक्त्वा लोकान्तरगमने लिङ्गदेहस्याधारभूतं शरीरान्तरं सिध्यतीति भावः। तस्य च स्वरूपं कारिकायामुक्तम्। “सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः। सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते” इति। अत्र तन्मात्रकार्यं मातापितृजशरीरापेक्षया सूक्ष्मं यद्भूतपञ्चकं यावल्लिङ्गस्थायि प्रोक्तं तदेव लिङ्गाधिष्ठानं शरीरमिति लब्धं कारिकान्तरेण। “चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया। तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्”। इति। विशेषैः स्थूलभूतैः सूक्ष्माख्यैः, स्थूलशरीरभेदैरिति यावत्। अस्यां कारिकायां सूक्ष्माख्यानां स्थूलभूतानां लिङ्गशरीराद्भेदावगमेन “पूर्वोत्पन्नमसक्तं नियतं महदादि सूक्ष्मपर्यन्तम्”। इत्यादिपूर्वोदाहृतकारिकायां सूक्ष्मभूतपर्यन्तस्य लिङ्गत्वं नार्थः किन्तु महदादिरूपं यल्लिङ्गं तत् स्वाधारसूक्ष्मपर्यन्तं संसरति तेन सह संसरतीत्यर्थः। नन्वेवं लिङ्गघटकपदार्थाः कियन्त इति कथमवधार्यमिति चेत्। “वासनाभूतसूक्ष्मं च कर्माविद्ये तथैव च। दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः इति वाशिष्ठादिवाक्येभ्यः। अत्र लिङ्गशरीरप्रतिपादनेनैव पुर्यष्टकमपि व्याख्येयमित्याशयेन बुद्धिधर्माणामपि वासनाकर्माविद्यानां पृथगुपन्यासः। भूतसूक्ष्मं चात्र तन्मात्रा। दशेन्द्रियाणि च ज्ञानकर्मेन्द्रियभेदेन पुरोद्वयमित्याशयः। यत् तु मायावादिनो लिङ्गशरीरस्य तन्मात्रस्थाने प्राणादिपञ्चकं प्रक्षिपन्ति पुर्यष्टकं चान्यथा कल्पयन्ति तदप्रामाणिकमिति। ननु मूर्त्तद्रव्यतया वाय्वादेरिव लिङ्गस्याकाशमेवासङ्गेनाधारोऽस्तु व्यर्थमन्यत्र सङ्कल्पनमिति तत्राह। “मूर्त्तत्वेऽपि न सङ्घातयोगात् तरणिवत्” सू० मूर्त्तत्वेऽपि न स्वातन्त्र्याद्सङ्घतयावस्थानं प्रकाशरूपत्वेन सूर्यस्येव सङ्घातसङ्घानुमानादित्यर्थः। सूर्यादीनि सर्वाणि तेजांसि पार्थिवद्रव्यसङ्गेनैवावस्थितानि दृश्यन्ते लिङ्गं च सत्त्वप्रकाशमयमतो भूतसङ्गतमिति। लिङ्गस्य परिमाणमवधारयति। “अणुपरिमाणं तत्कृतिश्रुतेः” सू० तल्लिङ्गमणुपरिमाणं परिच्छिन्नं न त्वत्यन्तमेवाणु सावयवस्योक्तत्वात्। कुतः कृतिश्रुतेः क्रियाश्रुतेः। “विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च” इत्यादिश्रुतेर्विज्ञानाख्यबुद्धिप्रधानतया विज्ञानस्य लिङ्गस्याखिलकर्मश्रवणादित्यर्थः। विभुत्वे सति क्रिया न सम्भवति। तद्गतिश्रुतेरिति पाठस्तु समीचीनः। लिङ्गशरीरस्य च गतिश्रुतिः “तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सविज्ञानो भवति सविज्ञानमेवानूत्क्रामतीति” सविज्ञानो बुद्धिसहित एव जायते सविज्ञानं यथा स्यात् तथा संसरति चेत्यर्थः। परिच्छिन्नत्वे युक्त्यन्तरमाह। “तदन्नमयत्वश्रुतेश्च” सू० तस्य लिङ्गस्यैकदेशतोऽन्नमयत्वश्रुतेर्न विभुत्वं सम्भवतीति। विभुत्वे सति नित्यतापत्तेरित्यर्थः। सा च श्रुतिः “अन्नमयं हि सौम्य! मन आपोमयः प्राणस्तेजोमयी वागित्यादिः”। यद्यपि मन आदीनि न भौतिकानि तथाप्यन्नसंसृष्टसजातीयांशपूरणादन्नमयत्वादिव्यवहारो बोध्यः। अचेतनानां लिङ्गानां किमर्थं संसृतिर्देहाद्देहान्तरसञ्चार इत्याशङ्कायामाह। “पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः” सू० यथा राज्ञः सूपकाराणां पाकशालासु सञ्चारो राजार्थं तथा लिङ्गशरीराणां संसृतिः पुरुषार्थमित्यर्थः” प्र०भाष्यम् सूक्ष्मदेहसत्त्वे प्रमाणं सांख्यतत्त्वकौमुद्यामित्थं दर्शितम्।

"स्मादेतद्बुद्धिरेव साहङ्कारेन्द्रिया कस्मान्न संसरति अतं स्क्ष्मशरीरेणाप्रामाणिकेनेत्यत आह । "चित्रं यथाश्रयमृते स्थाण्वादिभ्योविना यथा छाया । तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्" । लिङ्गनात् ज्ञापनात् बुद्ध्यादयोलिङ्गं तत् अनाश्रितं न तिष्ठति । जन्मप्रायणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रिताः प्रत्युत्पन्नपञ्चतन्मात्रवत्त्वे सति बुद्ध्यादित्वात् दृश्यमानशरीरवृत्तिबुद्ध्यादिवत् । विना विशेषैरिति सूक्ष्मैः शरीरैरित्यर्थः । आगमश्चात्र भवति 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमोबलादिति" । अङ्गुष्ठमात्रत्वेन सूक्ष्मतामुपलक्षयति आत्मनोनिष्कर्षासम्भवेन सूक्ष्ममेव शरीरं पुरुषस्तदपि हि पुरि स्थूलशरीरे शेते" । एवञ्च सर्वेषां भूतानां संसरणकाले सूक्ष्मदेहस्यावश्यकत्वे स्थिते मनुष्याणामेव दाहाद्यूर्द्धम् आतिवाहिकदेहान्तरोत्पत्तिरित्यन्येषां प्रागुक्तवचनात् असति तु दाहादौ न्येषां श्माशानिकभूतभावप्राप्तिरिति भेदः यथोक्तम्" शुद्धित० विष्णु० । "आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव ! । केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्" इत्युपक्रम्य प्रेतपिण्डैस्तथा दत्तैर्देहमाप्नोति भार्गव ! । भोगदेहमिति प्रोक्तं क्रमादेव न संशयः । प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोचनम् । श्माशानिकेभ्यो भूतेभ्यो नाकल्पमेव विद्यते । तत्राऽस्य यातना घोरा शीतवातातपोद्भवा इति" अत्र प्रेतकार्य्याकरणे दोषाभिधानम् । निन्दार्थवादो विधेयस्तुत्यर्थम् "न निन्दा निन्दनीयं निन्दति किन्तु विधेयं स्तौतीति" न्यायात् । एतच्च विद्वद्भिन्नविषयम् छा०उ० विदुषः दैवात्तदकरणेऽपि अर्चिरादिप्राप्तेरुक्तेः "अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदि न, अर्चिषमेवाभिसम्भवन्तीति" । एतद्भाष्यञ्च ६५१ पृष्ठे प्राग् दर्शितम् । एवं गयाश्राद्धादावपि "अग्निदग्धाश्च ये जीवा नाग्निदग्धास्तथाऽपरे तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहमिति । मन्त्रलिङ्गेनानग्निदग्धस्याप्युद्धारप्रतिपादनात् । निष्कर्षस्तु संसृतिकाले प्राणिमात्रस्य सूक्ष्मदेहप्राप्तिः तत्र पश्वादीनां दाहादिकर्म्मादिकमन्तरेणापि स्वस्वकर्म्मानुसारेण देहान्तरप्राप्तिः मनुष्याणान्तु विद्वदादिव्यतिरिक्तानां दाहादिकमन्तरेण श्माशानिकभूतभावप्राप्तिः कृते तु दाहादौ आतिवाहिकदेहप्राप्तिः पूरकपिण्डादौ पुनः प्रेतदेहप्राप्तिः सपिण्डीकरणात्परं भोगदेहप्राप्तिः । तीर्थमृतानां न तु प्रेतदेह इति भेदः "कृते सपिण्डीकरणे नरः संवत्सरात्परम् । प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते इत्युक्तेः" "ततः स नरके याति स्वर्गे वा स्वेन कर्मणा" इत्युक्तेश्च विदुषां महातीर्थमृतानां तु दैवात् दाहादिकार्य्याकरणेऽपि अर्चिरादिमार्गेण तत्तत्स्थानयोग्यदेहप्राप्तिरिति ।

**आतिशय्य** न० अतिशय एव स्वार्थे ष्यञ् । अतिशये ।

**आतिश्वायन** त्रि०अतिक्रान्तः श्वानम् नि० न समासान्तः अतिश्वा दासः स्वाधीनत्वात् अतिश्वन्+चतुरर्थ्यां पक्षा० फक् । दाससन्निकृष्टदेशादौ ।

**आतिष्ठ** न० अति+स्था–क पत्वम् अतिष्ठस्तस्य भावः अण् । अतिक्रम्य स्थितौ उत्कर्षे । "आधिपत्याय स्वावश्यायातिष्ठायाऽऽरोहामि" ऐ०ब्रा० ।

**आतु** पु० अत–उण् । भेलके । (भेला) उडुपे ।

**आतुच्** पु० "आतुचिर्गमनार्थ इति"ऋ०भा० आधारे क्विप् । सूर्यस्यास्तगतिकाले तस्य निम्लोचनकाले अस्तकाले"यदद्य उदिते यन्मध्यन्दिन आतुचि" ऋ० ८,२७,२१, "आतुचि सायम्" भा० ।

**आतुजि** त्रि० आ+तुज–हिंसाबलादाननिकेतनेषु इन् । हिंसके बलस्यादायके च । "पिबतं सोममातुजी" ७,६६ ६८, "आतुजी हिंसकौ आदातारौ वा" भा० ।

**आतुर** त्रि० ईषदर्थे आ+अत–उरच् । कार्य्याक्षमे उज्ज्व० "हतमुत्तमं विधिविपक्रमाहितं प्रपिबन्निदं जयति कुतमातुरः" उज्ज्व० वैद्य० २पीड़िते च । "रावणावरजा तत्र राघवं मदनातुरा" रघुः । "न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि" "बालवृद्धातुरैर्विना" "आकाशेशास्तु विज्ञेया बालवृद्धकृशातुरा"इति च मनुः । आतुरे नियमो नास्ति" स्मृतिः । [ धिर्वक्ष्यते ।

**आतुरसंन्यास** न० ६त० । संन्यासभेदे सन्न्यासशब्दे तद्वि-

**आतुरोपक्रमणीय** पु० आतुरमधिकृत्य रोगनिवारणाय उपक्रमणीयम् । आतुरस्य चिकित्सार्थमायुर्व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशानुसारेण उपक्रमणीये । व्यापारभेदे तदधिकृत्य कृतोग्रन्थः छ । २तत्प्रतिपादकग्रन्थे च । स च सुश्रुतान्तर्गतोऽध्यायभेदः । तत्रोक्तविशेषं ज्ञात्वा वैद्यैरातुरस्य रोगनिवारणायोपक्रमणीयम् । स चाध्यायस्तावदृश्यते यथा "अथात आतुरोपक्रमणीयमध्यायम् व्याख्यास्यामः । आतुरमुपक्रममाणेन भिषजातुरस्यादौ परीक्ष्येत । सत्यप्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत । तत्र महापाणिपादपार्श्वपृष्ठस्त-

नाग्रदशनवदनस्कन्धललाटम् दीर्घाङ्गुलिपर्व्वोच्छ्वासप्रेक्षणबाहुम् विस्तीर्णभ्रूस्तनान्तरोरस्कम् ह्रस्वजङ्घामेढ्रग्रीवम् गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णम् पश्चान्मस्तिष्कम् स्नातानुलिप्तमूर्द्धानुपूर्व्व्या विशुष्यमाणशरीरम् पश्चाच्च विशुष्यमाणहृदयम् पुरुषम् जानीयाद्दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत्। एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति॥ भवन्ति चात्र॥ गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः। उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते॥ गर्भात्प्रभृत्यरोगो यः शनैः समुपचीयते॥ शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः॥ मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। अधस्तादक्षिणोर्यस्य लेखाः स्युर्व्यक्तमायताः॥ द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ। नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वलेखाश्च पृष्ठतः॥ यस्य स्युस्तस्य परममायुर्भवति सप्ततिः। जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे॥ ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम्। तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम्॥ ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः। हसतो जल्पतो वापि दन्तमांसम् प्रदृश्यते। प्रेक्षते यश्च विभ्रान्तम् स जीवेत्पञ्चविंशतिम्॥ अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः। तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानीति। तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते। प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरम् पञ्चमभागहीना। चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपद पादतले। पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः। चतुर्द्दशाङ्गुलायतःपादः। चतुर्द्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि। अष्टादशाङ्गुला जङ्घा जानूपरि द्वात्रिंशदङ्गुलमेवं पञ्चाशत्। जङ्घायामसमावूरू। द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलनयनान्तराणि। चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि। द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोड़शाङ्गुलः। चतुर्विंशत्यङ्गुलो हस्तः। द्वात्रिंशदङ्गुलपरिमाणौ भुजौ द्वात्रिंशत्परिणाहावूरू। मणिबन्धकूर्परान्तरं षोड़शाङ्गुलम्। तलं षट्चतुरङ्गुलायामविस्तारम्। अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले। अर्द्धचतुरङ्गुले प्रदेशिन्यनामिके। सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ। चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम्। त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा। नयनत्रिभागपरिणाहा तारका। नवमस्तारकांशो दृष्टिः। केशान्तमस्तकान्तरमेकादशाङ्गुलम्। मस्तकादवटुकेशान्तो दशाङ्गुलः कर्णावट्वन्तरं चतुर्द्दशाङ्गुलम्। पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः। अष्टादशाङ्गुलविस्तीर्णमुरः। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गुलशतं पुरुषायाम इति। भवन्ति चात्र। पञ्चविंशे ततो वर्षे पुमान् नारी तु षोड़शे। समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक्। देहः स्वैरङ्गुलैरेष यथावदनुकीर्त्तितः। युक्तःप्रमाणेनानेन पुमान् वा यदि वाऽङ्गना। दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति। मध्यमं मध्यमैरायुर्व्वित्तं हीनैस्तथाऽवरम्। अथ सारान् वक्ष्यामः। स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्त्वसारं विद्यात्। स्निग्धसंहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण। अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा। महाशिरःस्कन्धदृढदन्तहन्वस्थिनखमस्थिभिः, स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा। अच्छिद्रगात्रं गूढास्थिसन्धिं मांसोपचितञ्च मांसेन। स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन। सुप्रसन्नमृदुत्वग्लोमाणं त्वक्सारं विद्यादित्येषां पूर्व्वं पूर्व्वं प्रधानमायुःसौभाग्ययोरपि। भवति चात्र। सामान्यतोऽङ्गप्रत्यङ्गप्रमाणाच्च सारतः। परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्म्मसु। व्याधिविशेषास्तु प्रागभिहिताः सर्व्व एवैते त्रिविधाःसाध्या याप्याः प्रत्याख्येयाश्च तत्र तान् भूयस्त्रिधा परीक्षेत किमयमौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति। तत्रौपसर्गिको यः पूर्व्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूलएवोपद्रवसंज्ञः। प्राक्केवलो यः प्रागेवोत्पन्नो व्याधिरपूर्व्वरूपोऽनुपद्रवश्च। अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्व्वरूपसंज्ञः। तत्र सोपद्रवमन्योन्याविरोधेनोपक्रमेत बलवन्तमुपद्रवं वा। प्राक्केवलं यथास्वं प्रतिकुर्व्वीत। अन्यलक्षणे त्वादिव्याधौ प्रयतेत। भवति चात्र। नास्ति रोगो विना दोषैर्य्यस्मात्तस्माद्विचक्षणः। अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्। प्रागभिहिता ऋतवः। शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्। कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्। अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया। क्रियाहीना-

ऽतिरिक्ता वा साध्येष्वपि न सिध्यति। या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च। सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्। (अथप्रश्ने) प्रागभिहितोऽग्निरन्नस्य पाचकः। स चतुर्विधो भवति दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्वसाम्यादिति। तत्र यो यथा कालमन्नमुपयुक्तं सम्यक्पचति। स समः समैर्दोषैः। यः कदाचित्सम्यक्पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा। स विषमः। यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते स मुहुर्मुहुः प्रभूतमप्युपयुक्तमाशुतरं पचति पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति। यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्द्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः। विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान्। करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्। तत्र समे परिरक्षणं कुर्वीत, विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्वीत, तीक्ष्णे मधुरस्निग्धशीतैर्विरेकैश्च, एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिर्मन्दे कटुतिक्तकषायैर्वमनैश्च। जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते। प्राणापानसमानैस्तु सर्व्वतः पवनैस्त्रिभिः। ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितैः। वयस्तु त्रिविधम् बाल्यम् मध्यम् वृद्धमिति। तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादाइति तेषु संवत्सरपराः क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति॥ षोडशसप्तत्योरन्तरे मध्यम् वयस्तस्य विकल्पो वृद्धिर्यौवनम् संपूर्णता हानिरिति। तत्र विंशतेर्वृद्धिः, आ त्रिंशतो यौवनम्, आ चत्वारिंशतःसर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता। अतऊर्द्धमीषत् परिहाणिर्यावत्सप्ततिरिति। सप्ततेरूर्द्धं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानम् सर्व्वक्रियास्वसमर्थम् जीर्णागारमिवाभिवृष्टमवसीदन्तम् वृद्धमाचक्षते॥ तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्वीत। भवन्ति चात्र॥ बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु। भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत्॥ अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत्। तत्साध्येषु विकारेषु मृद्वीम् कुर्य्यात्क्रियाम् शनैः॥ देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः। कर्शयेद्बृंहयेच्चापि सदा स्थूलकृशौ नरौ। रक्षणञ्चैव मध्यस्य कुर्व्वीत सततम् भिषक्॥ बलमभिहितगुणम् दौर्ब्बल्यञ्च स्वभावदोषजरादिभिरवेक्षितव्यम्॥ यस्माद्बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम्॥ केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः। तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत्॥ सत्त्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्ववैक्लव्यकरम्। सत्त्ववान् सहते सर्व्वं संस्तभ्यात्मानमात्मना। राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः॥ प्रकृतिम् भेषजम् चोपरिष्टाद्वक्ष्यामः॥ सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति। यो रसः कल्पते यस्य सुखायैव निषेवितः। व्यायामजातमन्यद्वा तत्सात्म्यमिति निर्दिशेत्॥ देशस्त्वानूपो जाङ्गलः साधारण इति॥ तत्र बहूदकनिम्नोन्नतनदीवर्षगहनो मृदुशीतानिलो बहुमहापर्व्वतवृक्षो मृदुसुकुमारोपचितशरीरमनुष्यप्रायःकफवातरोगभूयिष्ठश्चानूपः॥ आकाशसमः प्रविरलाल्पकण्टकिवृक्षप्रायोऽल्पवर्षप्रस्रवणोदपानोदकप्रायउष्णदारुणवातः प्रविरलाल्पशैलः स्थिरकृशशरीरमनुष्यप्रायोवातपित्तरोगभूयिष्ठश्च जाङ्गलः॥ उभयदेशलक्षणः साधारण इति॥ भवन्ति चात्र॥ समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः। दोषाणाम् समता जन्तोस्तस्मात्साधारणो मतः॥ न तथा बलवन्तः स्युर्जलजा वा स्थलाहृताः। स्वदेशे निचिता दोषा अन्यस्मिन् कोपमागताः॥ उचिते वर्त्तमानस्य नास्ति देशकृतम् भयम्। आहारस्वप्नचेष्टादौ तद्देशस्य गुणे सति। देशप्रकृतिसात्म्यर्त्तुविपरीतोऽचिरोत्थितः। सम्पत्तौ भिषगादीनां बलसत्त्वायुषां तथा॥ केवलः समदेहाग्नेः सुखसाध्यतमो गदः। अतोऽन्यथा त्वसाध्यः स्यात् कृच्छ्रो व्यामिश्रलक्षणः॥ क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः॥ गुणालाभेऽपि सपदि यदि सैव क्रिया हिता। कर्त्तव्यैव तदा व्याधिः कृच्छ्रसाध्यतमो यदि॥ एवमेनं विधिमेकरूपं बिभर्त्ति कालादिवशेन धीमान्। स मृत्युपाशान् जगतो गदौघान् छिनत्ति भैषज्यपरश्वधेन॥

आतुरोपद्रव पु० ६त०। आतुरस्य उपद्रवे ते च उपद्रवा संप्रतीकारोपायाः सुश्रुते दर्शिता यथा

"अथात आतुरोपद्रवचिकित्सितं व्याख्यास्यामः । स्नेहपीतस्य वान्तस्य विरिक्तस्य सुतास्रजः । निरूढस्य च कायाग्निर्मन्दो भवति देहिनः ॥ सोऽन्नैरव्यर्थगुरुभिरुपयुक्तैः प्रशाम्यति । अल्पोमहद्भिर्बहुभिः काष्ठादितोऽग्निरिवेन्धनैः ॥ सचाल्पैर्लघुभिश्चान्नैरुपयुक्तैर्विवर्द्धते । काष्ठैरणुभिरल्पैश्च सन्धुक्षित इवानलः । कृतदोषप्रमाणेन सदाहारविधिः स्मृतः । त्रीणि चात्र प्रमाणानि प्रस्थोऽर्द्धाढकमाढकम् ॥ तत्रावरं प्रस्थमात्रं द्वे शेषे मध्यमोत्तमे ॥ प्रस्थे परिस्रुते देया यवागूः स्वल्पतण्डुला । द्वे चैवार्द्धाढके देया तिस्रश्चाढके गते ॥ विलेपीसुचिताङ्गस्य त्वतुर्थांशकृतां ततः । दद्याद्युतेन विधिना क्रिन्नसिक्थामपिच्छिलाम् ॥ अस्निग्धलवणां स्वच्छमुद्गयूषयुतान्ततः । अंशद्वयप्रमाणेन दद्यात्तु स्निग्धमोदनम् ॥ ततः सप्तमकेन हृद्येनेन्द्रियबाधिना । त्रीनंशान् वितरेद्धीक्ष्णमातुरायौदनं मृदुम् । ततो यथोचितं भक्तमभीक्ष्णमस्मै विचक्षणः ॥ लावैणैरिणादीनां रसैर्द्द्यात्तु संस्कृतैः । हीनमध्योत्तमेष्वेव विरेकेषु विधिः स्मृतः ॥ एकद्वित्रिगुणः सम्यगाहारस्य क्रमो हि सः । कफपित्ताधिकान्मद्यनित्यान्हीनविशोधितान् ॥ मेधाभिष्यन्दवत्तेषां तर्पणादिक्रमो हितः । वेदनालाभनियमशोकवैचित्त्यहेतुभिः ॥ नरानुपोषितांश्चापि विरक्तवदुपाचरेत् । आढकार्द्धाढकप्रस्थसङ्ख्या त्रेधा विरेचने ॥ एको विरेकः सम्प्राप्तो न द्वितीयोऽस्ति कश्चन । बलं यत्त्रिविधं प्रोक्तमतस्तत्र क्रमस्त्रिधा ॥ तत्रानुक्रममेकन्तु बलस्थः सकृदाचरेत् । द्विराचरेन्मध्यबलस्त्रीन्वारान्दुर्बलस्तथा ॥ केचिदेवं क्रमं प्राहुर्मन्दमध्योत्तमाग्निषु । संसर्गेण विरुद्धेऽग्नौ दोषकोपभयाद्व्रजेत् ॥ प्राक् स्वादुतिक्तौ स्निग्धाम्ललवणानुकटुकं ततः । स्वाद्वम्ललवणान्भूयः स्वादुतिक्तावतः परम् ॥ स्निग्धरूक्षान्तरांश्चैव व्यत्यासात्सम्यक्ततः । केवलं स्नेहपीतो वा वान्तो यथापि केवलम् ॥ स सप्तरात्रं मनुजो भुञ्जीत लघु भोजनम् । क्षतः सिराव्यधो यस्य कृतं यस्य च शोधनम् ॥ स ना परिहरेन्मासं यावद्वा बलवान्भवेत् । एकैकस्मिन्परिहरेद्वस्तौ त्र्यहं त्र्यहम् ॥ तृतीये तु परीहारे यथायोगं समाचरेत् । तैलपूर्णामत्रकाण्डमधर्माणो व्रणातुराः ॥ स्निग्धशुद्धाश्चिरोगार्त्ता ज्वरातीसारिणश्च ये । क्रुध्यतः कुपितं पित्तं कुर्यात्तांस्तानुपद्रवान् ॥ आयास्यतः शोचतो वा चित्तं विभ्रममृच्छति । मैथुनोपगमाद्घोरान् व्याधीनाप्नोति दुर्मतिः ॥ आक्षेपकं पक्षघातमङ्गप्रग्रहमेव च । गुह्यप्रदेशे श्वयथुं कासश्वासौ च दारुणौ ॥ शुक्रवच्चापि रुधिरं सरजस्कं प्रवर्त्तते । लभते च दिवास्वप्नात्तांस्तान् व्याधीन् कफात्मकान् ॥ प्लीहोदरं प्रतिश्यायं पाण्डुतां श्वयथुं ज्वरम् । मोहं सदनमङ्गानामविपाकं तथाऽरुचिम् ॥ तमसा चाभिभूतस्तु स्वप्नमेवाभिनन्दति । उच्चैः सम्भाषणाद्वायुः शिरस्यापादयेद्रुजम् ॥ आन्ध्यं जाड्यमजिघ्रत्वं बाधिर्यं मूकतां तथा । हनुमोक्षमधीमन्थं मर्द्दितञ्च सुदारुणम् । नेत्रस्तम्भं निमेषं वा तृष्णां कासं प्रजागरम् ॥ लभते दन्तचालं च तांस्तांश्चान्यानुपद्रवान् । यानयानात्तु लभते छर्द्दिमूर्च्छाभ्रमक्लमान् ॥ तथैवाङ्गग्रहं घोरमिन्द्रियाणाञ्च विभ्रमम् । चिरासनात्तथा स्थानाच्छ्रोण्यां भवति वेदना ॥ अतिचङ्क्रमणाद्वायुर्जङ्घयोः कुरुते रुजः । सक्थिप्रशोषं शोफं वा पादहर्षमथापि वा ॥ शीतसम्भोगतोयानां सेवा मारुतदृष्टये । ततोऽङ्गमर्द्दविष्टम्भशूलाध्मानप्रवेपकाः ॥ वातातपाभ्यां वैवर्ण्यं ज्वरं चापि समाप्नुयात् । विरुद्धाध्यशनात्मृत्युं व्याधिं वा घोरमृच्छति ॥ असात्म्यभोजनं हन्यात्तुलवर्णमसंशयम् । अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः ॥ रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि । व्यापदां कारणं वीक्ष्य व्यापत्स्वेतासु बुद्धिमान् ॥ प्रयतेतातुरारोग्ये प्रत्यनीकेन हेतुना ॥ विरिक्तवान्तैर्हरिणैणलावकाः शशश्च सेव्यः समयूरतित्तिरिः । सषष्टिकाश्चैव पुराणशालयस्तथैव मुद्गा लघु यच्च कीर्त्तितम्" ॥ एवमन्योऽपि ततएवावगम्याः ।

**आतुर्य्य** न० आतुरस्य भावः ष्यञ् । १आतुरत्वे २फलनाशके ज्वरांशभेदे च "ज्वरांशाश्च वस्तुभेदेन नानाविधाः" हरि० १८३अध्या० दर्शिताः । "कृष्णउवाच । शृणुष्व ज्वर ! सन्देशं यथा लोके चरिष्यसि । सर्वजातिषु विन्यस्तस्तथा स्थावरजङ्गमे । त्रिधा विभज्य चात्मानं मत्प्रियं यदि काङ्क्षसे । चतुष्पदान् भजैकेन द्वितीयेन च स्थावरान् । तृतीयो यश्चतुर्भागो मानुषेषु प्रपत्स्यसे । त्रिधा भूतं वपुः कृत्वा पक्षिषु त्वं भव ज्वर ! । चतुर्थो यस्तृतीयस्य भविष्यति च ते ध्रुवम् । एकान्ततश्चतुर्भागः स्तोरकश्च चतुर्थकः । मानुषेष्वेकपादेन वस त्वं प्रविभज्य वै । जातिष्वथ विशेषाश्च शिवसत्वं शृणुष्व मे । वृक्षेषु कीटरूपेण तथा सङ्कोचपत्रकः । पाण्डुपत्रश्च विख्यातः फलेष्वातुर्य्यमेव च पद्मिनीषु हिमोभूत्वा पृथिव्यामपि चोषरः । अपान्तु पीलिका विद्याः शिखोद्भेदश्च वर्हिणाम् । गैरिकः पर्वतेष्वेव मत्प्रसादाद्भविष्यसि । गोष्वपस्मारको भूत्वा स्तोरकश्च भविष्यसि । एवं विविधरूपेण भविष्यसि महीतले । दर्शनात्

सर्गनाशेन प्राणिनां बधमेष्यसि । अते देवमनुष्याश्च नान्यस्त्वां विधक्ष्यते" । "आतुर्य्यं जालैकदेशे सङ्कोचः नीलकण्ठः ।

**आतृण्ण** त्रि० आ+तृद्–क्त । १हिंसिते २छिन्ने च । "तत्रा-दातृणात् प्रेरितो हयादिवाहनात्" शत० ब्रा० ।

**आतृप्य** न० आतृप्यत्वेन आ+तृप–बा० करणे क्यप् । (आता) फलभेदे ।

**आतोद्य** न० समन्तात् तुद्यते आ+तुद–ण्यत् । वीणादौ वाद्ये । "सजमातोद्यशिरोनिवेशिताम्" "आतोद्यं प्या-हयामास समव्याजयदायुधम्" इति च रघुः । [ रघुः ।

**आत्त** त्रि० आ+दा–क्त । गृहीते "गामात्तसारां रघुरप्यवेक्ष्य"

**आत्तगन्ध** त्रि० आत्तोऽपहृतोऽरिणा गन्धो गर्वो यस्य । १शत्रुणाभिभूते, २गृहीतगन्धे पुष्पादौ च । "नात्त-गन्धमवधूय शत्रुभिः" माघः आत्तगन्धमनाघ्रातसौरभमन-भिभूतञ्चेति" मल्लिनाथः ।

**आत्तगर्व्व** त्रि० आत्तोऽपहृतोगर्व्वोयस्य । १अभिभूते ।

**आत्मकर्म्मन्** त्रि० ६त० । आत्मनः स्वस्य कर्त्तव्ये कार्य्ये "आत्मकर्म्मक्षमं देहं चात्रोधर्म्म इवाश्रितः" रघुः ।

**आत्मकाम** त्रि० आत्मानं कामयते कम–णिङ् अण् उप० स० । विषयान्तरेच्छानिवर्त्तनेन १आत्ममात्राभिलाषुके २आत्मज्ञानेच्छायुक्ते । "योऽकामोनिष्काम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्ति" बृ० उ० । "आप्ताः कामा येन स आप्तकामः काम्यन्ते कामाः आत्मकाम-त्वेन यस्यात्मैव नान्यःकामयितव्यो वस्त्वन्तरभूतः पदार्थो-भवति । "आत्मैवान्तरोवाह्यः कृत्स्नः प्रज्ञानघन एक-रसोनोर्द्ध्वं न तिर्य्यङ्नाधः" नात्मनोऽन्यत् कामयितव्यं वस्त्वन्तरं यस्य "यस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत् शृणुया न्विजानीयाद्वा" सर्व्वात्मभूतं विजानन् किं कामयेत ज्ञाय-मानोह्यन्यत्वेन पदार्थः कामयितव्यो भवति नचासावन्यो ब्रह्मविद आप्तकामस्यास्ति" भा० । आत्मकामस्यैव यथा-प्रकामता तथाप्तकामशब्दे वक्ष्यते ।

**आत्मकामेय** त्रि० आत्मकामाया इदम् ढक् । आत्मकामास-म्बन्धिनि ततः स्वार्थे राजन्या० वुञ् । आत्मकामेयकःतदर्थे ।

**आत्मगुप्त** त्रि० आत्मना गुप्तः । स्वशक्त्यैव रक्षिते । (आल-कुशी) लताभेदे स्त्री तस्याःस्पर्शने हि अतिकण्डूयनं स्वयं भवति तद्भयाञ्चान्येर्नेसा स्पृश्यते इति तस्या आत्मगुप्तत्वम् ।

**आत्मग्राहिन्** त्रि० आत्मानं आत्मार्थमेव वा गृह्णाति ग्रह-णिनि १उदरम्भरौ २आत्मज्ञे च ।

**आत्मघातिन्** त्रि० आत्मानं देहं हन्ति हन्–णिनि ६त० । "व्यापादयेत् वृथात्मानं स्वयं योऽग्न्युदकादिभिः । अवैधेनैव मार्गेण आत्मघाती स उच्यते" इत्युक्तलक्षणे आत्मनः स्वशरीरस्य प्राणेन सह वियोजयितरि जने आत्मघातश्च द्विविधः वैधोऽवैधश्च अवैधोऽपि द्विविधः ज्ञानपूर्व्वकस्तदपूर्व्वकश्च । तत्र वैधात्मघाते न दोषः तदाहतुः मनुवृद्धगर्गौ "वृद्धः शौचस्मृते लुप्तः प्रत्या-ख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्य-नशनाम्बुभिः । तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थि-सञ्चयः । तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्" हेमाद्रौ अवैधात्मघातनिन्दनेन तत्राधिकारिणमाह विष्णुध० । "नरस्तु व्याधिरहितो न त्यजेदात्मनस्तनुम् असूर्य्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रत्यभि गच्छन्ति ये के चात्महनोजनाः । अरिष्टैरात्मनोज्ञात्वामृत्यु-कालमुपस्थितम् । व्याधितोभिषजा त्यक्तः पूर्णे चायुषि चा-त्मनः । यथायुगानुसारेण संत्यजेदात्मनस्तनुम् । तस्मिन् काले तनुं त्यक्त्वा यथेष्टफलमाप्नुयात्" अपरार्के ब्रह्मगर्भः "यो जीवितुं न शक्नोति महाव्याध्युपपीडितः । सोऽग्न्युदकं महा-यात्रां कुर्व्वन्नपि न दुष्यति" । तेन प्रयागाद्यतिरिक्तेऽपि अचि-कित्स्यरोगादोनामधिकारः । एतच्च वानप्रस्थस्यैवेति विज्ञा-नेश्वरादयः । "आसां महर्षिचर्य्याणां त्यक्त्वाऽन्यतमया तनुम् । वीतशोकभयो विप्रो ब्रह्मभूयाय कल्पते" इति मनुना वान-प्रस्थस्यैव मरणाधिकारप्रतिपादनात् । गृहस्थस्याप्यधिकार इति निर्णयसिन्धुः । प्रयागाद्यतिरिक्ते विप्रस्य तु नाधिकारः "शूद्राश्च क्षत्रिया वैश्या अन्त्यजातास्तथाधमाः । एते त्यजेयुः प्राणान् वै वर्ज्जयित्वा द्विजं नृप । पतित्वा ब्राह्मणस्तु ब्रह्महा चात्मघातकृत्" तद्भूतवचनात् अब्रा-ह्मणोतैः स्वर्गादि महाफलजिगीषया । प्रविशेज्ज्वलनं तोयं करोत्यनशनं तथेति" आदित्य पु० वाक्याच्च । तत्र प्रयागादिषु सर्व्वे वर्णा वैधात्मघाताधिकारिणः यथा "दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि । प्रवि-शेज्ज्वलनं दीप्तं करोत्यनशनं तथा अगाधतोयराशिं च भृगोः पतनमेव च । गच्छेन्महापथं वापि तुषारगिरि-मादरात् । प्रयागवटशाखायां देहत्यागं करोति च । स्वयं-देहविनाशस्य काले प्राप्ते महामतिः । उत्तमान् प्राप्नु-यात्लोकान्नात्मघाती भवेत् क्वचित् । महापापक्षयात् स्वर्गे दिव्यान् भोगान् समश्नुते । एवमत्राधिकारस्तु सर्वेषां सर्व-जन्तुषु । नराणामथ नारीणां सर्ववर्णेषु सर्वदा । देहगं मरणं

येषां जीवानां कुत्रचिद्भवेत्। अशौचं तु त्र्यहं तेषां वज्रानलहतेषु च" आदि० पु० "वाराणस्यां म्रियते यः प्रत्याख्यातभिषक्क्रियः काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः। अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः। प्रणवं तारकं ब्रूते नान्यथा कुत्रचित् क्वचित्" माह्मे, भारते च" न लोकवचनात्तात! न वेदवचनादपि मतिरुत्क्रमणीया ते प्रयागमरणं प्रति" अतएव विष्णुधर्मे रोग्यादिमरणमुक्तोक्तम् "यथायुगानुसारेण संत्यजेदात्मनस्तनुमिति" प्रयागादौ विशेषः त्रिस्थलीसेतौ स्कान्दे "यथा कथंचित्तीर्थेऽस्मिन् प्राणत्यागं करोति यः। तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि। पाद्मे विष्णुः "देहत्यागं तथा धीराः कुर्वन्ति मम सन्निधौ। मत्तनुं प्रविशन्त्येव न पुनर्जन्मिने नराः" कौर्मे "व्याधितो यदि वा दीनः क्रुद्धोवापि भवेन्नरः। गङ्गायमुनमासाद्य यस्तु प्राणान् परित्यजेत् ईप्सितान् लभते कामान्वदन्ति मुनिपुङ्गवाः" तथा "या गतिर्योगयुक्तस्य सत्त्वस्थस्य मनीषिणः। सा गतिस्त्यजतः प्राणान् गङ्गायमुनसंगमे"। वाराहे "तत्र योमुञ्चति प्राणान् वटमूलेषु सुन्दरि! सर्वलोकानतिक्रम्य मम लोकं प्रपद्यते"। तथा "अकामोवासकामो वा वटमूलेषु सुन्दरि! योम्न प्राणान्प्रमुञ्चेत यदीच्छेत्परमां गतिम्" तथा "पञ्चयोजनविस्तीर्णे प्रयागस्य तु मण्डले। व्यतीतान् पुरुषान् सप्त भविष्यांश्च चतुर्दश। नरस्तारयते सर्वान् यस्तु प्राणान्परित्यजेत्" ब्राह्मे "ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्णुतत्परः तनुन्त्यजति वै माघे तस्य मुक्तिर्न संशयः। दुष्कृतोऽपि दुराचारो ब्रह्महत्यादिपातकी। हरिं ध्यात्वा त्यजेद्देहं माघयो मुक्तिभाग्भवेत्" भविष्योत्तरे "समाः सहस्राणि तु सप्त वै जले दशैकमग्नौ पतने च षोडश। महाहवे षष्टिरशीति गोग्रहे अनाशने भारत! चाक्षया गतिः अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः प्रविशन्ति सुखन्ते मे निःसंदिग्धं वरानने! इति सामान्यतोऽपि फलमुक्तम् एवमन्येऽपि विषयोज्ञेयाः। एवं विहितमरणं तु कलौ निषिद्धमेव "भृग्वग्निमरणं चैव वृद्धादिमरणं तथेति माधवीये कलिवर्ज्ये" उक्तेः यत्तु गौडाः प्रयागादिमरणं ब्राह्मणभिन्नविषयमित्याहुस्तत् त्रिस्थलीसेतुकृता दूषितं प्रागुक्तवचनात् "सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च प्रायश्चित्तमनुज्ञातमग्निपातो महापथः। धर्मार्जनासमर्थस्य कर्तुः पापाङ्कितस्य च। ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणमिति" हेमाद्रौ त्रिस्थलीसेतौ च अपरार्के चैवमेव। सहगमनं कलौ भवत्येव "कलौ नान्या गतिः स्त्रीणां सहानुगमनादृते" इति ब्रह्मवैवर्त्तात् एतेन मरणान्तिकप्रायश्चित्तमपि व्याख्यातम् काशीखण्डादौ चातुर्वर्ण्यस्य तनुत्यागविधयस्तु युगान्तरपरा एव प्रयागेऽपि। अवैधात्मघाते तु "आत्मघातिनस्तथक्रम्य" विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रियेति कू० पु० वचनात् नाशौचादि। तस्य च क्रियाकरणे चान्द्रायणद्वयसहितं त्रिंशद्वधप्रायश्चित्तं नारायणबलिं च कृत्वा वत्सरादूर्द्ध्वं क्रिया कर्त्तुं शक्यते। वत्सरान्ते तु सर्वमौर्द्ध्वदेहिकं कुर्यात् इति हेमाद्रिप्रभृतयः। "गोब्राह्मणहतानाञ्च पतितानां तथैव च। ऊर्द्ध्वं संवत्सरात् कुर्यात्सर्वमेवौर्द्ध्वदेहिकमिति हेमाद्रौ षट्त्रिंशन्मतात्, ब्राह्मे "क्रियते पतितानान्तु गते संवत्सरे क्वचित् देशधर्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिः। कातखण्डपादमूले वा श्राद्धं हरिहरौ स्मरन्" स्वर्पद इत्यर्थः तत्र वर्षमध्येऽपि कृत्यमुक्तमपरार्के वायुपुराणे "शुक्लपक्षे तु द्वादश्यां कुर्यात् श्राद्धन्तु वत्सरे। द्वादशाहनि वा कुर्याच्छुक्ले च प्रथमेऽहनि" छागलेयः "नारायणबलिः कार्योलोकगर्हाभयान्नरैः। तदा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः" व्यासः "नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते। तस्य शुद्धिकरं कर्म तद्भवेन्न तदन्यथेति" सचात्मघातादिप्रायश्चित्तं कृत्वा कार्यः तदुक्तं हेमाद्रौ षट्त्रिंशन्मते "कृत्वा चान्द्रायणं पूर्वं क्रिया कार्या यथाविधि। नारायणबलिः कार्यो लोकगर्हाभयान्नरैः। पिण्डोदकक्रियाः पश्चाद्वृषोत्सर्गादिकं च यत्। एकोद्दिष्टानि कुर्वीत सपिण्डीकरणं तथा। इन्द्रियैरपरित्यक्ता ये च मृदाविषादिनः। घातयन्ति स्वमात्मानं शस्त्रजलादिहताश्च ये। तेषां पुत्राश्च पौत्राश्च दयया समभिप्लुताः यथा श्राद्धं प्रतन्वन्ति विष्णुनामप्रतिष्ठितम् तथा ते संप्रवक्ष्यामि समस्तत्य स्वयम्भुवम्" इति हेमाद्रौ तेनैवोक्तेश्च तत्रैव बौधायनोऽपि "अथ नारायणबलिं व्याख्यास्यामोऽभिशस्तपतितदुरापात्मत्यागिनां ब्राह्मणहतानाञ्च द्वादशवर्षाणि लौकिका कुर्वीतेति" गृह्यपरिशिष्टे तु चण्डालादीत्याद्युक्त्वा "दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः। प्रायश्चित्तं तु कर्त्तव्यं पुत्रैश्चान्द्रायणत्रयमित्युक्तम्। प्रमादमरणे तु न दोषः मदनरत्ने ब्राह्मे "प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः चाण्डालैर्ब्राह्मणैश्चौरैर्निहतोयत्र कुत्रचित्। तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः। चान्द्रायणं तप्तकृच्छ्रद्वयं तस्य विशुद्धये। यद्वा कृच्छ्रान् पञ्चदश कृत्वा

तु विधिना दहेत् "बुद्धिपूर्व्वमृतानां तु त्रिंशत्कृच्छ्रं समाचरेदित्युक्तम्" स्मृतिरत्नावल्यां तु द्विगुणं प्रायश्चित्तं कृत्वाशौचमब्दात्पूर्व्वं कार्य्यमित्युक्तम् आत्मनोघातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयं तप्तकृच्छ्रचतुष्कञ्च त्रिंशत्कृच्छ्राणि वा पुनः। अर्वाक् संवत्सरात्कुर्य्याद्दहनादि यथोदितम् कृत्वा नारायणबलिमनित्यत्वात्तदायुष इति" इदञ्चात्मवधनिमित्तं तत्सज्जातिवधप्रायश्चित्तेन समुच्चितं कार्य्यम्। प्रमादमरणे तु "अथ कश्चित् प्रमादेन म्रियेताग्न्युदकादिभिः तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया" इत्युक्तेः सर्व्वं कार्य्यं तत्र तु "गोब्राह्मणहतानाञ्च पतितानां तथैव च" ... "गोयाग्निन्दपयोविप्रैरन्यवक्ष्यात्मघातिनाम्" याज्ञवल्क्येन सद्यःशौचं विहितं प्राशुक्तवचने त्र्यहाशौचमिति तत्र त्र्यहाशौचसद्यःशौचयोर्विकल्पइति भेदः। त्र्यहाशौचमिति रघुनन्दनादयः। सद्यःशौचमिति मिताक्षरा। ण्वुल् आत्मघातकोऽप्यत्र त्रि०।

**आत्मघोष** पु० आत्मानं घोषयति स्वशब्दैः। १काके २कुक्कुटे, च, ताभ्यां हि (का का) (कु कु) स्वस्वध्वनिनैवात्मनामैकदेशो घोष्यते इति तयोस्तथात्वम्।

**आत्मज** पु० आत्मनो मनसो देहाद्वा जायते, आत्मा वा जायते जन–ड। १मनोभवे २पुत्रे च "अङ्गादङ्गात् सम्भवति पुत्रवत् दुहिता नृणामिति" स्मृतिः "आत्मा वै जायते पुत्र इति" श्रुतिः ३कन्यायां, ४मनोजन्यायां बुद्धौ च स्त्री। "वलिताः पुरःपतिमुपैतुमात्मजाः" माघः "वन्द्यं युगं चरणयोर्जनकात्मजायाः" रघुः। क्त। आत्मजातोऽप्यत्र पुंस्त्री०।

**आत्मजन्मन्** पु० आत्मनो जन्म यस्य। अपत्ये "अत आहर्त्तुमिच्छामि पार्व्वतीमात्मजन्मने" कुमा०। "तमात्मजन्मानमजं चकार" रघुः। ६त०। पुत्ररूपात्मोत्पत्तौ न० "तस्यात्मानुरूपायामात्मजन्मसमुत्सुकः" रघुः।

**आत्मज्ञान** न० आत्मनोज्ञानम्। यथार्थरूपेणात्मनो ज्ञाने तज्ज्ञानस्य च मोक्षसाधनत्वं श्रुतावुक्तम् "अभयं वै जनक! प्राप्तोऽसि येनात्मानमेवावेः" "महान्तं विभुमात्मानं मत्वा धीरो न शोचति" श्रुतिः आत्मस्वरूपञ्च आत्मशब्दे वक्ष्यते तस्य इतरस्मात् भेदज्ञानं यथार्थस्वरूपज्ञानञ्चात्मज्ञानम् तच्च साक्षात्काररूपम् तस्यैव मोक्षसाधनत्वात् "आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्"। "सर्व्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्। तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतं यतः" इति च मनुः। ६त०। आत्मबोधादयोऽप्यत्र।

**आत्मतत्त्व** पु० आत्मनस्तत्त्वम्। आत्मनो यथार्थस्वरूपे १चैतन्यरूपे मतभेदे २कर्त्तृत्वादिरूपे। आत्मतत्त्वं च उदयनाचार्य्यैः चार्व्वाकादिमतनिरसनेन आत्मतत्त्वविवेके दर्शितम् यथा "इह खलु निसर्गप्रतिकूलस्वभावं सर्व्वजनसंवेदनसिद्धं दुःखं जिहासवः सर्व्व एव तद्धानोपायमविद्वांसोऽनुसरन्तः सर्व्वाध्यात्मविदेकवाक्यतया तत्त्वज्ञानमेव तदुपायमाकर्णयन्ति न ततोऽन्यम्, प्रतियोग्यनुयोगितया आत्मैव तत्त्वतोज्ञेयः। तथाहि यदि नैरात्म्यं यदि वात्मास्ति वस्तुभूत उभयथापि नैसर्गिकमात्मज्ञानमतत्त्वज्ञानमेवेत्यत्राप्येकवाक्यतैव वादिनाम् अत आत्मतत्त्वं विविच्यते इत्यादिना, विस्तरस्तु तत्रैव अवगन्तव्यः आत्मैव तत्त्वं परमपदार्थः। ३आत्मरूपे परमपदार्थे च।

**आत्मतुष्टि** स्त्री० आत्मन्येव तुष्टिरस्य। आत्ममात्रज्ञानलाभेन १प्राप्ततुष्टौ आत्मज्ञे ब्रह्मविदि। ६त०। २आत्मनः सन्तोषे स्त्री। सा च विकल्पविषये धर्म्मे प्रमाणम् "वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव चेति" मनूक्तेः। [घातिनि आत्मघातिशब्दे उदाहरणम्

**आत्मत्यागिन्** त्रि० आत्मानं देहं त्यजति त्यज-घिनुण्। आत्म-

**आत्मदर्श** पु० आत्मा देहः दृश्यतेऽत्र दृश–आधारे घञ्। १दर्पणे आदर्शे हेम०। "प्रसादमात्मीयमिवात्मदर्शः" रघुः। भावे घञ् ६त०। २आत्मनोदर्शने आत्मसाक्षात्कारे।

**आत्मदर्शन** न० आत्मा दृश्यते साक्षात्क्रियतेऽनेन दृश–करणे ल्युट् ६त०। आत्मसाक्षात्कारसाधने १श्रवणे २मनने ३निदिध्यासने, "आत्मा वा अरे द्रष्टव्यः श्रोतव्योमन्तव्योनिदिध्यासितव्यः" इति श्रुतौ साक्षात्कारसाधनतया श्रवणादीनां त्रयाणां विधानात् तेषां तथात्वम् "श्रोतव्यः श्रुति वाक्येभ्यो-मन्तव्यश्चोपपत्तिभिः" इत्युपक्रम्य "एते दर्शनहेतव" इत्युक्तेश्च तेषां तथात्वम् भावे ल्युट्। २आत्मसाक्षात्कारे "एष वै परमोधर्म्मो यद्योगेनात्मदर्शनम्", ३आत्मत्वेन सर्व्वभूतेषु ज्ञाने च "स्वप्नालोकान्तर्भावगमः सर्व्वभूतात्मदर्शनम्" या०।

**आत्मद्रोहिन्** त्रि० आत्मने द्रुह्यति द्रुह-णिनि। आत्मघातिनि

**आत्मध्यान** न० आत्मनोध्यानम् योगविशेषः। आत्मसाक्षात्कारसाधने मानसवृत्तिभेदे। तत्प्रकारश्च गरुडस्मृतौ दर्शितः "ध्यानं प्रोक्तं प्रवक्ष्यामि सर्व्वसाद्योगतः शुभम्। हृदिस्थादेवताः सर्व्वा हृदि प्राणाः प्रतिष्ठिताः। हृदि ज्योतींषि भूयश्च हृदि सर्व्वं प्रतिष्ठितम्। स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्। ध्याननिर्म्मथनाभ्यासात् विष्णुं पश्येद्धृदि स्थितम्। हृद्यर्कश्चन्द्रमाः सूर्य्यः सोममध्ये हुताशनः। तेजोमध्ये स्थितं तत्त्वं तत्त्वमध्ये स्थितोऽच्युतः। अणो-

रणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् । तेजोमयं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः । वासुदेवस्तमोऽन्धानां प्रत्यक्षो नैव जायते । अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः । एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः । एष धाता विधाता च पुराणो निष्कलः शिवः । वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तन्त्वं विदित्वा न बिभेति मृत्योर्नान्यः पन्था विद्यतेऽयनाय । पृथिव्यापस्तथा तेजोवायुराकाशमेव च । पञ्चैतानि विजानीयान्महाभूतानि पण्डितः । चक्षुः श्रोत्रं स्पर्शनञ्च रसना घ्राणमेव च । बुद्धीन्द्रियाणि जानीयात् पञ्चैतानि शरीरके । शब्दो रूपं तथा स्पर्शो रसो गन्धस्तथैव च । इन्द्रियस्थान् विजानीयात् पञ्चैव विषयान् बुधः । हस्तौ पादावुपस्थञ्च मुखं पायुस्तथैव च । कर्म्मेन्द्रियाणि पञ्चैव नित्यं सन्ति शरीरके । मनोबुद्धिस्तथैवात्मा व्यक्ताव्यक्तं तथैव च । इन्द्रियेभ्यः पराण्याहु चत्वारि प्रवराणि च । तथात्मानं तदग्रतीतं पुरुषं पञ्चविंशकम् । तन्तु ज्ञात्वा विमुच्यन्ते ये जनाः साधुवृत्तयः । इदन्तु परमं शुद्धमेतदक्षरमुत्तमम् । अशब्दमरसस्पर्शमरूपं गन्धवर्जितम् । निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम् । विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । आराग्रगतशोभागः कल्पितस्तु सहस्रधा । तस्यापि शतशोभागाज्जीवः सूक्ष्मउदाहृतः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः । एष सर्वेषु भूतेषु तिष्ठत्यविरतः सदा । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" । जीवात्मपरमात्मनोरैकतया क्वचिदीश्वरधर्मेण क्वचिच्च जीवधर्मेण ध्यानमुच्यते । आत्मस्वरूपसंज्ञा तस्य ध्यान प्रकारः या० स्मृतौ उक्तः यथा । "अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् । ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत् प्रभुः" "आत्मव्यतिरिक्तविषयेभ्यो मनोबुद्धिस्मृतीन्द्रियाणि प्रत्याहृत्यात्मैकविषयाणि कृत्वात्मा ध्येयः योऽसौ प्रभुर्निर्वातस्थप्रदीपवद्दीप्यमानो निष्प्रकम्पो हृदि तिष्ठति एतदेव तस्य ध्येयत्वं यच्चित्तवृत्तेर्बहिर्विषयावभासतिरस्कारेणात्मप्रवणता नाम शरावसम्पुटनिरुद्धप्रभाप्रतानप्रसरस्येव प्रदीपस्य कनिष्ठत्वम्" मिता०।

आत्मन् पु० अत–मनिण् । १स्वरूपे, २यत्ने, ३देहे, ४मनसि, ५बुद्धिस्थे निजे, ६बुद्धौ, ७अर्के, ८वह्नौ, ९वायौ, १०जीवे, ११ब्रह्मणि च । "आत्मानं चेद्विजानीयदहमस्मीति पुरुष इति श्रुतेः अहंप्रत्ययविषयत्वमात्मनः । अहं प्रत्ययविषयत्वे च बहुधावादिविप्रतिपत्तयः शा०भाष्ये दर्शिताः । "देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृताजना लौकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे । मन इत्यन्ये । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्त्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्त्तेत्येके । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे । एवं हि बहवो विप्रतिपन्नाः युक्तिवाक्यतदाभाससमाश्रयाः सन्तः" । विवृतञ्चैतत् विप्रतिपत्तिकारणसामान्यधर्मप्रदर्शनपुरःसरं विवरणोपन्यासे माधवाचार्य्येण "यथा रज्जुद्रव्यस्य दण्डसर्पधारादावनुस्यूतरूपेण प्रतीयमानत्वमेव सामान्यम् तथाऽऽत्मनः शरीरेन्द्रियमनोबुद्धिशून्यकर्त्तृभोक्तृसर्वज्ञब्रह्माख्यपदार्थेषु विप्रतिपत्तिस्कन्धेषु अनुस्यूतत्वेन प्रतीयमानत्वमेव सामान्यं भविष्यति प्रत्यक्षसिद्धेऽपि शरीराद्यर्थे प्रयुज्यमानस्यात्मवाचिनोऽहंशब्दस्य गोशब्दवदर्थविप्रतिपत्तिरुपपद्यते । गोशब्दस्य हि तत्तल्लक्षितव्यक्त्याकृतिजातिक्रियागुणाद्यर्थेषु प्रयुज्यमानस्य जातिरर्थत्वेन वैदिकैः प्रतिपन्ना, व्यक्तिः सांख्यादिभिः, उभयं वैयाकरणैः, स्वावयवसंस्थानाख्याकृतिरार्हतादिभिः । त्रितयमपि नैयायिकाद्यैः । अथ गोशब्दप्रयोगे जात्यादीनामन्वयव्यतिरेकनियमात्तदर्थत्वशङ्का । तर्ह्यहंशब्दप्रयोगेऽपि शरीरादीनामन्वयव्यतिरेकनियमात्तदर्थशङ्कास्तु । तत्र विचारविरहितं प्रत्यक्षमेव प्रमाणमाश्रित्य चेतयमानोऽहमात्मेति प्राकृताः शास्त्रसंस्कारवर्जिता जनाः प्रतिपन्नाः । तथा भूतचतुष्टयमात्रतत्त्ववादिनो लौकायतिकाश्च, मनुष्योऽहं जानामीति शरीरस्याहंप्रत्ययालम्बनत्वेन ज्ञानाश्रयत्वेन चावगम्यमानत्वात्तद्देहात्मेति मन्यन्ते । अन्ये पुनरेवमाहुः सत्यपि शरीरे चक्षुरादिभिर्विना रूपादिज्ञानाभावादिन्द्रियाण्येव चेतनानि । न चेन्द्रियाणां करणतया ज्ञानान्वयव्यतिरेकयोरन्यथासिद्धिः । करणत्व कल्पनादुपादानत्वकल्पनस्याभ्यर्हितत्वात् । अतः अन्धोऽहं काणोऽहं मूकोऽहमित्यहंप्रत्ययालम्बनानि चेतनानीन्द्रियाणि प्रत्येकमात्मत्वेनाभ्युपेयानि शरीरे त्वहंप्रत्ययालम्बनत्वं चेतनत्वञ्चात्मभूतेन्द्रियाश्रयत्वादन्यथासिद्धम् । नन्वेकस्मिन् शरीरे बहूनामिन्द्रियाणां चेतनत्वे य एवाहं पूर्वं रूपमद्राक्षं स एवेदानीं शब्दं शृणोमीति प्रत्यभिज्ञा न स्यात् ।

तथा भोक्तृत्वं रूपादिषु युगपदेव स्याद्र क्रमेणेति चेत् नैवम् न हि चेतनैकत्वं प्रत्यभिज्ञाक्रमभोगयोर्निमित्तं किन्त्वेकशरीराश्रयत्वमेव। ततो यथैकस्मिन् रथे बहूनां पुरुषाणामेकैकस्य विवाहेऽन्येषामुपसर्जनत्वं तथेन्द्रियात्मनामपि एकैकस्योपभोगकालेऽन्येषामुपसर्जनत्वम्। अन्ये तु मन्यन्ते स्वप्ने चक्षुराद्यभावेऽपि केवले मनसि विज्ञानाश्रयत्वमहंप्रत्ययालम्बनत्वं चोपपद्यते। न च रूपादिविज्ञानानां चक्षुराद्याश्रयत्वं, तथासति केवले मनसि रूपादिस्फुरणानुपपत्तेः। ततः करणान्येव चक्षुरादीनि अहंप्रत्ययस्तु तत्र कर्त्तृत्वोपचारात् सिध्यति। न चानेकात्मनामेकशरीराश्रयत्वमात्रेण प्रत्यभिज्ञा युज्यते एकप्रासादमाश्रितानामपि तत्प्रसङ्गात्। तस्माच्चक्षुरादिकरणकं शरीराद्याधारं मनएवात्मेति। विज्ञानवादिनस्तु क्षणिकविज्ञानव्यतिरिक्तवस्तुनः सद्भावमनुभवविरुद्धम् मन्वानास्तस्यैव विज्ञानस्यात्मत्वमाहुः। प्रत्यभिज्ञानं तु ज्वालायामिव सन्ततविज्ञानोदयसादृश्यादुपपद्यते विज्ञानानां हेतुफलसन्तानमात्रादेव कर्म्मज्ञानबन्धमोक्षादिसिद्धिः। माध्यमिकास्तु सुषुप्तौ विज्ञानस्याप्यदर्शनाच्छून्यमेवात्मतत्त्वमित्याहुः यदि सुषुप्तौ विज्ञानप्रवाहः स्यात्तदा विषयावभासोऽपि प्रसज्येत। निरालम्बनज्ञानायोगात् जाग्रत्स्वप्नज्ञानानामेव सालम्बनत्वं न सौषुप्तिकज्ञानानामिति चेत् न विशेषाभावात् विमतं सालम्बनम् प्रत्ययत्वात् संमतवदिति। उत्थितस्य सौषुप्तविषयस्मृत्यभावनियमाच्च तत्र विषय इति चेत्। तर्हि तत्र नियमेनास्मर्य्यमाणत्वादेव ज्ञानमपि मा भूत्। न च शून्ये विवदितव्यं यथा सविकल्पकः स्वविषयविपरीतनिर्विकल्पकजन्यस्तथा सत्प्रत्ययोऽपि स्वविपरीतशून्यजन्य इत्यभ्युपेयत्वात् एवं चोत्थाने सति जायमानस्याहमस्मीति सत्प्रत्ययस्य समनन्तरपूर्वप्रत्ययलक्षणकारणरहितस्य वास्तवत्वायोगाच्छून्यमेव तत्त्वमिति। अपरे पुनः शरीरेन्द्रियमनोविज्ञानशून्यव्यतिरिक्तं स्थायिनं संसारिणं कर्त्तारं भोक्तारमात्मानमाहुः। न च शून्येऽहंप्रत्यय उपपद्यते वन्ध्यापुत्रादावपि तत्प्रसङ्गात्। नापि क्षणिकविज्ञाने क्रमभावी व्यवहारो युज्यते सर्व्वो हि लोकोऽनुकूलं वस्तु प्रथमतो जानाति ततः इच्छति ततः प्रयतते ततस्तत् प्राप्नोति ततः सुखं लभते। यद्येतादृशमेककर्त्तृकतया भासमानं व्यवहारमेकसन्तानवर्त्तिनो बहव आत्मानः परस्परवार्त्तानभिज्ञा अपि निष्पादयन्ति तदा भिन्नसन्तानवर्त्तिनः किन्न निष्पादयेयुः। तस्माद्यएवाहमिदं वस्त्वज्ञासिषं सएवाहमिदानीमिच्छामीत्याद्यबाधितप्रत्यभिज्ञाननिर्वाहाय स्थायी आत्माभ्युपेयः। न चासौ विज्ञानरूपः अहं विज्ञानमित्येकत्वानुभवाभावात्। ममेदं विज्ञानमिति संबन्धोह्यनुभूयते। नचायमनुभवोममात्मेतिवदौपचारिकः बाधकाभावात्। एतेन शरीरेन्द्रियमनसामात्मत्वं प्रत्युक्तम्। तत्रापि संबन्धप्रत्ययस्यानिवार्य्यत्वात् अहङ्कारस्यात्माध्यासिकत्वात्। नचायमात्मा सादिः। शरीरोत्पत्तिसमनन्तरमेव सुखदुःखप्राप्तिमालोक्य तद्धेतुभूतयोः पुण्यपापयोः कर्त्ता पूर्व्वमप्यस्तीत्यवगमात्। नचायमनित्यः विनाशानिरूपणात्। न तावत् स्वतोविनाशः निर्हेतुकविनाशस्यातिप्रसङ्गिनः सुगतेतरैरनङ्गीकारात्। नापि परतः। निरवयवस्य विनाशहेतुसंसर्गासंभवात् संभवे वा न विनाशः सिध्येत्। कर्मनिमित्तोह्यन्यस्य संसर्गः स च तत्कर्म्मफलोपभोगायात्मनोऽवस्थितिमेव साधयेन्न विनाशं तस्मादनादेरविनाशिनोऽनन्तशरीरेषु यातायातरूपः संसारः सिद्धः। निर्विकारस्य भोगासंभवाद्विकारस्य क्रियाफलरूपस्याभ्युपगमे क्रियावेशात्मकं कर्त्तृत्वमनिवार्य्यम्। भोक्तृत्वमप्यनुभूयमानं शरीरादिषु विज्ञानपर्य्यन्तेष्वनुपपन्नत्वादुक्तात्मन्येव पर्य्यवस्यति। तथा हि। शरीरं तावत् पञ्चभूतसंघातरूपम् "पञ्चभूतात्मके तस्मिञ्छरीरे पञ्चतां गत" इत्यादिशास्त्रात्। यत्तु नैयायिका मन्यन्ते मर्त्त्यलोकवासिनां शरीरं पार्थिवमेव तत्र क्लेदनाद्युपलब्धिस्त्वाद्रार्यिव भूतान्तरोपष्टम्भादिति। तदसत्। शोषणादिना जलाद्यपगमेऽपि यथा वस्त्रादिस्वरूपस्य नापचयः। तथा क्लेदनपाचनव्यूहनावकाशानामपगमेऽपि शरीरस्यापचयाभावप्रसङ्गात्। यत्तु वैशेषिकैरुच्यते पञ्चभूतात्मकत्वे शरीरस्याप्रत्यक्षत्वप्रसङ्गः वाय्वाकाशयोरप्रत्यक्षतया प्रत्यक्षाप्रत्यक्षवृत्तित्वादिति तदप्ययुक्तम्। तथासति सर्वस्य विनाशप्रत्यक्षत्वापातात्तेषां प्रत्यक्षाप्रत्यक्षावयववृत्तित्वात्। न हि कुड्याः परभागस्थितास्त्ववयविनोऽवयवाः प्रत्यक्षीकर्त्तुं शक्यन्ते। तस्माद्भूतसंघातः शरीरम्। न च गन्धादिमतां तद्रहितानाञ्च भूतानामेककार्य्याजनकत्वं परस्परविरोधादिति वाच्यम् तथा सति नीलादीनामेकावयविजनकत्वस्य चित्ररूपारम्भकत्वस्य चासम्भवप्रसङ्गात्। अनुभवबलादेव तत्र तथा स्वीकारे प्रकृतेऽपि न तद्व्यवहारितम्। तत्र शरीरस्य भोक्तृतां वदन्तो लौकायतिकाः प्रष्टव्याः किं व्यस्तानां भूतानां प्रत्येकं भोक्तृत्वमुत सम-

क्तानाम्, आद्योऽपि न तावद्युगपत् सर्वेषामभोक्तृता। तदा-स्वार्थप्रवृत्तानां तेषाम् अन्योऽन्यमङ्गाङ्गिभावानुपपत्तौ संघातापत्त्यभावप्रसङ्गात्। अन्तरेणैव संघातम्भोक्तृत्वे देहाद्बहिरप्येकैकस्य भूतस्य भोक्तृतोपलभ्येत। नापि क्रमेण तेषां भोक्तृत्वं संघातानुपपत्तितादवस्थ्यात्। न च वरविवाहन्यायेन गुणप्रधानभावेन तदुपपत्तिः, वैषम्यात्। यथैकैकवरस्यासाधारणत्वेनैकैका कन्या भोग्या न तथा चतुर्णां पृथिव्यप्तेजोवायूनां भोक्तॄणां रूपरसगन्धस्पर्शा भोग्या व्यवस्थिताः। कथं क्रमभोगः। अथ कथञ्चित् व्यवतिष्ठेरन्। तदा युगपत्सर्वविषयसन्निधाने सति क्रमानुपपत्तिः। यथैकस्मिन् मुहूर्त्ते प्रत्येकं भोग्यकन्यावस्तुनि सन्निहिते वराणां क्रमविवाहे गुणप्रधानतया संघातो वा नास्ति तद्वत्। नापि समस्तानां भोक्तृत्वसम्भवः। प्रत्येकमविद्यमानस्य चैतन्यस्य संघातेऽप्यभावाद्भोगानुपपत्तेः। अथ मन्यसेऽग्नौ प्रक्षिप्तेषु तिलेष्वेकैकस्य ज्वालाजनकत्वाभावेऽपि तिलसमूहस्य यथा तज्जनकत्वं तथा संघातस्यैव चैतन्यं स्यादिति तदपि संघातापत्तौ हेतुर्वक्तव्यः। आगामिभोगो हेतुरिति चेन्न यदि तावद्भोगस्य गुणभावः तदा प्रधानभूतानामन्योऽन्यं गुणप्रधानभावरहितानां कथं संघातापत्तिः प्राधान्ये तु भोगस्यानुपपन्नम् भोक्तृशेषत्वात्। न च वाच्यं शेषिणं भोगं प्रति शेषभूतयोः स्त्रीपुंशरीरयोः भोक्त्रोः संघातापत्तिर्दृष्टेति, तत्रापि शरीरे भोक्तृत्वासंप्रतिपत्तेः। ज्वालां प्रति तिलानां संघातापत्तिरिति योऽयं दृष्टान्तः सोऽपि तथासिद्धः संघातानिरूपणात्। न तावत् संघातोनाम भोग्यभोगिनोरनवच्छेदेकदेशतामात्रम् तथा सति तेन न्यायेन व्यापिनां भूतानां सर्वत्र सत्त्वाद्भोग्यभोगयोः सार्वत्रिकत्वप्रसङ्गात्। नापि तदारब्धोऽवयवी संघातः तस्य भूतेभ्योभेदे पञ्चमतत्त्वाभ्युपगमप्रसङ्गात्। अभेदे भूतमात्रतया संघातत्वासम्भवात्। भेदाभेदयोश्चानङ्गीकरणात्। अवयविनः पारतन्त्र्याच्च पञ्चमतत्त्वापत्तिस्तर्हि जलादेः पृथिव्यादितन्त्रत्वात्तु तत्त्वचतुष्टयमपि सिध्येत्। न चैकद्रव्यबुद्धावन्योन्यतापत्तिः संघातः, वस्तुतोऽनेकेष्वेकत्वबुद्धेर्विभ्रममात्रत्वात्। न चैकार्थक्रियायां युगपदन्वयः संघातः, तदानीं काष्ठान्वयेन वह्निना वायुसहकृते जले ताप्यमाने सति तत्र भूतचतुष्टयसंघाताद्भोगप्रसङ्गात्। न चान्योन्यःपिण्डवत्संश्लेषः संघातः, शरीरे वायोस्तथा संश्लेषाभावात्। वह्निव्याप्तेनायःपिण्डेन सन्तापितजले वायुसंयुक्ते भोगप्रसङ्गात्। न चोक्तदोषपरिहारायैकस्यैव भूतस्य भोक्तृत्वनियतिः शङ्कनीया सर्व्वसन्निधानात् कस्य भोक्तृत्वमित्यनिर्द्धारणात्। यत्तु लोकायतैकदेशिनां मतद्वयम् इन्द्रियाणां भोक्तृत्वम्। शरीरेन्द्रियसङ्घातस्य च भोक्तृत्वमिति। तदुक्तन्यायेन निराकरणीयम्। ननु कानि पुनरिन्द्रियाणि येषां भोक्तृत्वं निराक्रियते। तत्र गोलकमात्राणीति सुगताः। तच्छक्तय इति मीमांसकाः। तद्व्यतिरिक्तानि द्रव्यान्तराणीत्यन्ये सर्वे वादिनः। तत्र न तावत् गोलकमात्रत्वं युक्तं कर्णशष्कुल्यादिविरहिणामपि सर्पादीनां शब्दाद्युपलब्धिसद्भावात् वृक्षाणां सर्वगोलकरहितानां विषयोपलम्भसत्त्वाच्च "तस्मात्पश्यन्ति पादपा" इत्यादि शास्त्रात्। न च वृक्षाणामचेतनत्वं हिंसाप्रतिषेधेन प्राणित्वावगमात् एवं गोलकशक्तित्वमिन्द्रियाणाम् न। अथ मन्यसे शक्तिमद्द्रव्यान्तरकल्पनात् प्रतिपन्नस्थानेषु शक्तिमात्रकल्पने लाघवमिति। तर्ह्यत्यन्तलाघवादात्मन एव क्रमकारिसर्वविज्ञानसामर्थ्यं कल्प्यतां किमेभिरिन्द्रियैः। न च सर्वगतस्यात्मनो गोलकप्रदेशेष्वेव ज्ञानपरिणामोऽनुपपन्नः, त्वया तस्यैव शरीरप्रदेशमात्रे ज्ञानपरिणामाङ्गीकारात्। एवं चानिन्द्रियेष्वपि गोलकप्रदेशेषु ज्ञानान्वयव्यतिरेकौ शरीरएवान्यथासिद्धौ। अतो मीमांसकमतमनुपपन्नम्। सन्तु तर्हि द्रव्यान्तराणीन्द्रियाणि तानि गोलके विशेषसंबन्धाच्चक्षुरादिशब्दवाच्यानीति। तदप्ययुक्तम्। तेषु प्रमाणाभावात्। विमताः रूपाद्युपलब्धयः करणपूर्विकाः कर्त्तृव्यापारत्वाच्छिदिक्रियावदिति चेत् करणप्रेरणात्मके कर्त्तृव्यापारे करणान्तराभावात् अन्यथाऽनवस्थानात्। "एतस्माज्जायते प्राणोमनः सर्वेन्द्रियाणि" चेत्यागमगम्यानीन्द्रियाणीति चेत् न आगमसंस्कारविरहिणामपीन्द्रियप्रतिपत्तेः। न च मनोवत्साक्षिवेद्यानीन्द्रियाणि, रूपादिज्ञानाख्यं लिङ्गमनपेक्ष्य साक्षिमात्रेण चक्षुरादीनां प्रतिपत्तेरभावात्। तस्माच्च सन्त्येवेन्द्रियाणीति। अत्रोच्यते। गोलकव्यतिरिक्तानीन्द्रियाणि आगमादेवावगम्यन्ते। न हि तत्संस्काररहितास्तानि जानन्ति किन्तु गोलकान्येव। यत्तु तेषामिन्द्रियाणामहङ्कारकार्य्यत्वं साङ्ख्यैरुच्यते। तत्र किमव्याकृताहङ्कारः कारणं किं वा तत्सूक्ष्मकार्यव्यापिनी काचिदहङ्काराख्या प्रकृतिः उभयत्रापि नास्ति किमपि मानम्। अथ द्वितीयपक्षे नानापुराणवचनानि मानन्तच्च श्रुतिविरोधात्। "अन्नमयं हि सौम्यमन आपोमयः प्राणस्तेजोमयी वागित्यादि" श्रुतौ

भूतविकारत्वावगमात् । अतः पुराणवचनानीन्द्रियाणामहङ्काराधीनतामात्रं प्रतिपादयन्ति । यत्तु शुष्कतार्किकैः भौतिकत्वमिन्द्रियाणामुक्तम् । तदप्ययुक्तम् । तेषामनुमानस्य बहुशमयत्वात् । इन्द्रियाणि भौतिकानि सावयवत्वात् घटादिवत् सावयवत्वं च मध्यमपरिमाणत्वादितिचेत् न, इन्द्रियाणामणुपरिमाणत्वेऽपि बाधाभावात् हेत्वसिद्धेः विषयावभासस्याणुत्वप्रसङ्गोबाध इति चेत् न त्वन्मतेऽणुपरिमाणेनापि मनसा विस्तृताकाशादिवस्तुदर्शनसद्भावात् । चक्षुः रूपगुणवत्प्रकृतिकं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् यस्य यन्नियमेनावभासकं तत्तद्गुणवत्प्रकृतिकं यथा रूपाभिव्यञ्जकरूपवत्प्रकृतिकोदीपः एवमन्यत्राप्यूहनीयमिति चेत् न शब्दस्यैवाभिव्यञ्जके श्रोत्रे शब्दगुणवदाकाशानारब्धेऽनैकान्तिकत्वात् कर्णशष्कुल्यवच्छिन्नाकाशमात्रस्य त्वया श्रोत्रत्वाभ्युपगमात् विशेषव्याप्तौ नानैकान्तिकत्वमिति चेत् । एवमप्यतिप्रसङ्गो दुर्वारः । रूपादिचतुष्टयाभिव्यञ्जकस्य मनसोभूतचतुष्टयारब्धत्वस्य सुसाध्यत्वात् । अभूतस्याप्यात्मादेर्ग्राहकतया मनोन भूतारब्धमिति चेत् तर्हि संख्यापरिमाणादेरपि ग्राहकतया चक्षुरादीनां भूतारब्धत्वं न स्यात् असाधारणविषयारब्धत्वाङ्गीकारे सति भौतिकत्वसिद्धिरिति चेत् तर्हि मनोऽप्यसाधारणविषयेणारभ्येत एकद्रव्यस्यात्मनः सावयवद्रव्यानारम्भकत्वे निरवयवं मनोद्रव्यं प्रत्यारम्भकत्वं किन्न स्यात् । तस्मान्न शुष्कतर्कादिन्द्रियाणां भौतिकत्वसिद्धिः किन्तु आगमादेव । तानि पुनरिन्द्रियाणि सर्वगतानीति योगाः प्रतिपेदिरे तदपि मानहीनम् । आत्मेन्द्रियमनांसि सर्वगतानि सर्वत्रदृष्टकार्यत्वात् आकाशतत्त्ववत् दृश्यते हि ज्ञानं तत्कार्यं च सर्वत्रेति चेत् न सर्वत्रत्वेन तत्तज्जगद्विषयाणामसिद्धिप्रसङ्गात् । यत्र शरीरं तत्र सर्वत्रेति विवक्षायां शरीर एवानैकान्तिकत्वात् । दृश्यते हि यत्र सर्वत्र शरीरं तत्र शरीरकार्यं न च शरीरस्य सर्वगतत्वमस्ति । अथेन्द्रियाणि सर्वगतानि परोपाधिकगमनत्वात् आकाशवत् । यथाऽऽकाशस्य गमनं घटाद्युपाधिकं तथेन्द्रियाणां गमनं शरीरोपाधिकमिति चेत् न शरीरावयवेष्वनैकान्तिकत्वात् । प्राणोपाधिकं हि तेषां गमनम् । किंच इन्द्रियाणां सर्वगतत्वे युगपत्सर्वविषयोपलब्धिः स्यात् । शरीर एव इत्तिलाभान्न दोष इति चेत् तर्हि बहिरिन्द्रियसद्भावकल्पना न प्रमाणं प्रयोजनवती च । तस्मादसर्वगतानीन्द्रियाणि । यत्तु तान्यप्राप्यकारीणीति सुगताः कल्पयन्ति तदप्ययुक्तम् । तत्र किं चक्षुःश्रोत्रयोरप्राप्यकारित्वम् उत तदितरेषामपि न तावदितरेषां दूरत एव स्पर्शरसगन्धोपलब्धिप्रसङ्गात् नापि प्रथमः विमते चक्षुःश्रोत्रे प्राप्यकारिणी बाह्येन्द्रियत्वात् घ्राणादिवत् । तेजसश्चातिदूरशीघ्रगमनदर्शनात् उन्मीलन मात्रेण चक्षुषो ध्रुवादिप्राप्तिरविरुद्धा शब्दस्य च वीचितरङ्गन्यायवत् परम्परया श्रोत्रसमवायप्राप्तिरिति”यत्तार्किकैरुच्यते । तदसत् तथा सति इह श्रोत्रे शब्द इति प्रतीयेत प्रतीयते तु तत्रशब्द इति । तस्माद्यथानुभवं श्रोत्रस्यैव तत्र गमनं कल्पनीयम् । तदेवं भौतिकानि परिच्छिन्नानि प्राप्यकारीणीन्द्रियाणि सन्तीति सिद्धम् । किं तर्हि मनोनाम यस्मिन्नात्मत्वमपरे लौकायतिकैकदेशिनोमन्यन्ते । नित्यं निरवयवमणुपरिमाणं मन इति तार्किकाः । तत्र न तावन्नित्यं परिच्छिन्नत्वात् घटवत् । विमतं नित्यं निरवयवद्रव्यत्वात् आत्मवदिति चेत् न हेत्वसिद्धेः । विमतं सावयवकरणत्वाच्चक्षुरादिवत् । अन्यथा मनसोऽवयवत्वं श्रुत्युक्तं बाध्येत । कथं तर्हि मूर्त्तद्रव्यानभिघात इति चेत् जीवनदशायां देहाद्बहिर्निर्गमनाभावादिति ब्रूमः । मरणदशायां तु सावयवत्वेनाभिमतानां चक्षुरादीनामप्यप्रतिघातोविद्यत एव । अतएव सावयवत्वात् संयोगवत्त्वाच्च घटादिवन्नाणुपरिमाणत्वम् सर्वगतत्वे च युगपत् सर्वेन्द्रियसंयोगात् सर्वज्ञानप्रसङ्गः । मध्यमपरिमाणत्वे तु न कोऽपि दोषः । स्थूलसूक्ष्मेषु हस्तिपुत्तिकादिदेहेषु क्रमेण प्राप्यमाणेषु कथं तद्देहसमानत्वेन वृत्तिरिति चेत् अवयवोपचयापचयाभ्यामिति ब्रूमः । शाक्यास्तु समनन्तरप्रत्ययएवोत्तरज्ञानकारणतया मन इति प्रतिपेदिरे तन्न सङ्गतं व्याप्तिमनपेक्ष्य केवलस्य पूर्वज्ञानस्योत्तरज्ञानजनकत्वायोगात् लिङ्गज्ञानस्य व्याप्तिसापेक्षस्यैव लिङ्गिज्ञानजनकत्वदर्शनात् । शब्दज्ञानं व्याप्तिज्ञानमनपेक्ष्यैवार्थज्ञानजनकमिति चेत् न त्वन्मते शब्दस्यानुमानान्तःपातितयात्रापि व्याप्त्यपेक्षत्वात् । विशेषणज्ञानं व्याप्त्यनपेक्षमेव विशिष्टज्ञानजनकमिति चेत् न विशिष्टज्ञानस्य संप्रयोगजन्यत्वात् । अथ समनन्तरातीतप्रत्ययः उत्तरज्ञानं न जनयति किंतु तस्याकारमात्रं समर्पयतीति चेत् न आकाराकारिणोरभेदात् । आकारस्य स्वाभाविकतयाऽन्यापेक्षितया ऽन्यार्पितत्वाभावात् । तस्मादन्यदेव सावयवं मन इति सिद्धम् । ननु कथायं वाच्य आत्मा योदेहादिषु विज्ञानान्तेषु भ्रान्तैर्वादिभिरारोप्यते । तत्र सर्वगतोऽयं जीव आत्मेति केचित् तदसत् । शुष्कतार्किकाणां साधकाभावात् । अथ मतं देहाद्बहि-

रन्तः सर्वाणि भोगसाधनान्यात्मभोगायैव व्याप्रियन्ते तद्व्यापारश्चाऽदृष्टवदात्मसंयोगापेक्षः । अतोऽसौ सर्वगत इति । तत्र किं यस्मिन्नात्मप्रदेशेऽदृष्टं तत्प्रदेशसंयोगोऽपेक्ष्यते उत अदृष्टोपलक्षितात्मसंयोगः । नाद्यः । देहावच्छिन्नात्मसमवेतादृष्टस्य स्वर्गभोगाहेतुत्वात् । न द्वितीयः मोक्षेऽपि भोगप्रसङ्गात् । तस्मादागमादेव सर्वगतत्वसिद्धिः । नचायमात्मा जड़ः प्रत्यक्षानुमानागमैः स्वप्रकाशत्वावगमात् । तत्र प्रत्यक्षं सौषुप्तमवगन्तव्यम् । अनुमानान्यपि आत्मा स्वप्रकाशः स्वसत्तायां प्रकाशव्यतिरेकरहितत्वात् प्रदीपवत् संवेदनवच्च तथा विषयप्रकाशकर्त्तृत्वात् प्रदीपवत्, विषयप्रकाशाश्रयत्वादालोकवत् । अनिन्द्रियगोचरत्वे सति अपरोक्षत्वात् संवेदनवत् । अयमात्मा सति धर्मिणि अजन्यप्रकाशगुणः प्रकाशगुणत्वादादित्यवत् । आगमश्चात्र "अयं पुरुषः स्वयंज्योतिरित्यादिः । सचायमात्मा सर्वशरीरेष्वेक एव सर्वत्राहमित्येकाकारप्रत्ययवेदनीयत्वात् गोत्ववत् । शरीराणां भिन्नत्वादेवातीतशरीरादाविव न भोगानुसन्धानप्रसङ्गः । ननु तर्ह्येकस्यापि मनुष्यशरीरस्य प्रतिक्षणं परिणामभेदे सत्यत्रापि आत्मनोभोगाननुसन्धानं प्रसज्येतेति चेत् न तदेवेदं शरीरमिति प्रत्यभिज्ञया तदेकत्वावगमात् । न च ज्वालाप्रत्यभिज्ञावद्भ्रान्तत्वम् तत्र स्वच्छदर्शनेन प्रत्यक्षत एव ज्वालानां भेददर्शनात् अत्र तदभावात् । तदेवमेकः स्वप्रकाश आत्मेति सिद्धम् । तमेतमात्मतत्त्वमवैदिका देहादिजड़पदार्थरूपत्वेन प्रतिपन्नाः मीमांसकादयस्तु तस्य देहादिव्यतिरेकं प्रतिपद्यापि कर्त्तारम्भोक्तारमिच्छन्ति । तदेतत् सांख्या न सहन्ते । न तावदात्मनः कर्त्तृत्वं स्वाभाविकम् सर्वगतस्य निरवयवस्यात्मनः परिस्पन्दपरिणामलक्षणक्रियावेशायोगात् । स्वाभाविकत्वे चैतन्यवत् क्रियावेशो न कदाचिदपि व्यभिचरेत् । नापि कर्त्तृत्वमागन्तुकं निरवयवे कर्त्तृत्वहेतूपरागायोगात् । नापि बुद्धेः कर्त्तृत्वमात्मन्यारोपयितुं शक्यं अख्यातिवादे भ्रान्त्यभावात् । तस्मान्नास्ति कर्त्तृत्वम् । न चैवं भोक्तृत्वमपाकर्त्तुं शक्यम् । न हि सुखदुःखान्ययोर्भोगः येन कर्त्तृत्ववत् व्यभिचरेत् । किन्तु चिद्रूपत्वेन द्रष्टृसाक्षित्वम् । तस्माद्भोक्तैवात्मेति सांख्यानां पक्षः । वैशेषिकयोगनैयायिकाः उक्ताद्भोक्तृजीवादतिरिक्तः सर्वज्ञः सर्वशक्तिः ईश्वरः कश्चिदस्तीत्यनुमिमते । विमतं जगत् स्वरूपोपादानाद्भिन्नकर्त्तृकं विविधकार्य्यत्वात् प्रासादादिवत् तत्र कल्पनालाघवेनैककर्त्तृत्वोपादानात् सर्वज्ञत्वादिसिद्धिरिति वैशेषिकाः । विमताः ज्ञानैश्वर्य्यशक्तयः क्वचित् पराकाष्ठां प्राप्ताः सातिशयत्वात् परिमाणवदिति योगाः । विमतं धर्म्माधर्म्मफलं कर्म्म तत्फलभोक्त्रादिभिन्नेन दीयते व्यवहितकर्म्मफलत्वात् सेवाफलवदिति नैयायिकाः । नन्वीश्वरपक्षोपन्यासो न युक्तः यतोऽत्र जिज्ञास्ये प्रत्यगात्मरूपे ब्रह्मणि विप्रतिपत्तिर्दर्शयितुं प्रक्रान्ता, नैष दोषः प्रत्यगात्मा तस्मादीश्वरादन्योऽनन्यो वेति प्रत्यगात्मविप्रतिपत्तावेव पर्य्यवसानात्" इत्यन्तेन । प्रपञ्चस्तु चार्व्वाकादिशब्दे वक्ष्यते । भाषापरिच्छेदे सङ्क्षेपतश्चात्मनिरूपणायेत्थमभ्यधायि "आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्त्तृकम् । शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः । तथात्वञ्चेदिन्द्रियाणामुपघाते कथं स्मृतिः । मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् । धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः । प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः । अहङ्कारस्याश्रयोऽयं मनोमात्रस्य गोचरः । विभुर्बुद्ध्यादिगुणवान्" भाषा० । "आत्मानं निरूपयति आत्मेन्द्रियेति आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिध्यति ईश्वरेऽपि सा जातिरस्त्येव अदृष्टादिरूपकारणाभावाच्च न सुखदुःखाद्युत्पत्तिः नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भाव इति नियमस्याप्रयोजकत्वात् । परे तु ईश्वरे सा जातिर्नास्त्येव प्रमाणाभावात् न च दशमद्रव्यत्वापत्तिः ज्ञानवत्त्वेन विभजनादिति वदन्ति । इन्द्रियादीति । इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसम्पादकः । यद्यप्यात्मनि "अहं जाने अहं सुखीत्यादि" प्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणं दर्शयति करणमिति । कुठारादीनां छिदादिकरणानां कर्त्तारमन्तरेण फलानुपधानं दृष्टम् एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्त्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्त्ता कल्प्यते । ननु शरीरस्यैव कर्त्तृत्वमस्तु अत आह शरीरस्येति ननु चैतन्यं ज्ञानादिकमेव भूतात्मनां तन्मत इव मृतशरीराणामपि तदभावे का क्षतिः प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात् न च पूर्व्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उपपद्यत इति

वाच्यम् अनन्तसंस्कारकल्पने गौरवात् एवं शरीरस्य चैतन्ये बालकस्य स्तनपानादौ प्रवृत्तिर्न स्यात् इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात् मन्मते जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः न च जन्मान्तरानुभूतमन्यदपि स्मर्य्यतामिति वाच्यम् उद्बोधकाभावात् अत्र स्तनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते इत्यञ्च संस्कारस्यानादितया आत्मनोऽपि अनादित्वसिद्धौ अनादिभावस्य नाशासम्भवात् नित्यत्वं सिध्यतीति बोध्यम् । ननु चक्षुरादीनां ज्ञानादौ करणत्वं कर्त्तृत्वं चास्तु विरोधे साधकाभावादत आह तथात्वमिति चैतन्यमित्यर्थः उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव, कथमिति? पूर्व्वं चक्षुषा साक्षात्कृतानाञ्चक्षुषोऽभावे स्मरणं न स्यात् अनुभवितुरभावात् अन्यदृष्टस्य अन्येन स्मरणासम्भवात् अनुभवस्मरणयोः सामानाधिकरण्येन कार्य्यकारणभावादिति भावः । ननु चक्षुरादीनां चैतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यात् अत आह मनोऽपीति न तथा न चेतनम् । ज्ञानादीति । मनसोऽणुत्वात् प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसो ज्ञानसुखादिमत्त्वे तत्प्रत्यक्षानुपपत्तेरित्यर्थः यथा मनसोऽणुत्वं तथा वक्ष्यते । नन्वस्तु विज्ञानमेव आत्मा तस्य स्वतः प्रकाशरूपत्वात् चेतनत्वं ज्ञानसुखादिकन्तु तस्यैवाकारविशेषः तस्यापि भावत्वादेव क्षणिकत्वं पूर्व्वविज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात् सुषुप्त्यवस्थाविज्ञानधारा निराबाधैव स्मृगमदवासनाया वसनइव पूर्व्वपूर्व्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न तस्य जगद्विषयत्वे सार्व्वज्ञ्यापत्तेः यत्किञ्चिद्विषयत्वे विनिगमनाभावात् सुषुप्तावपि विषयावभासप्रसङ्गः । तदानीं निराकारा चित्सन्ततिरनुवर्त्तत इति चेन्न तस्य स्वप्रकाशत्वे प्रमाणाभावात् अन्यथा घटादीनामपि ज्ञानत्वापत्तिः न चेष्टापत्तिः विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यं घटादेरनुभूयमानस्यापलपितुमशक्यत्वात् । आकारविशेष एवायं विज्ञानस्येति चेत् किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत्तर्हि समूहावलम्बने नीलाकारोऽपि पीताकारः स्यात् स्वरूपतो विज्ञानस्याविशेषात्, अपोहरूपो नीलत्वादिर्विज्ञानधर्म्म इति चेन्न नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात् इतरथा विरोधस्यैव दुरुपपन्नत्वात् । न च वासनासंक्रमः सम्भवति मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात् न च उपादानोपादेयभावो नियामक इति वाच्यं वासनायाः संक्रमासंभवात् । उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न तदुत्पादकाभावात् । उत्तरविज्ञानस्यैव उत्पादकत्वे तदानन्त्यप्रसङ्गः । क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेन्न मानाभावात् कल्पनागौरवाच्च । एतेन क्षणिकशरीरेष्वेव चैतन्यमपि प्रत्युक्तं गौरवादतिशये मानाभावाच्च बीजादावपि सहकारिसमवधानादेवोपपत्तेः कुर्व्वद्रूपत्वाकल्पनाच्च अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा “अविनाशी वा अरे अयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म” इत्यादि श्रुतेरिति चेन्न तस्य विषयत्वासम्भवस्य दर्शितत्वात् निर्व्विषयस्य ज्ञानत्वे मानाभावात् सविषयत्वस्याप्यनुभवात् । अतो ज्ञानभिन्नो नित्य आत्मेति सिद्धम् । सत्यं ज्ञानमिति ब्रह्मपरं जीवेषु नोपयुज्यते ज्ञानाज्ञानसुखित्वदुःखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः, अन्यथा बन्धमोक्षानुपपत्तेः, योऽपीश्वराभेदबोधकोवेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन् स्तौति अभेदभावने च यतितव्यमिति वदति । अतएव “सर्व्व एव आत्मनि समर्पिता” इति श्रूयते मोक्षदशायामज्ञाननिवृत्त्यावभेदो जायते इत्यपि न, भेदस्य नित्यत्वे नाशायोगात् भेदनाशेऽपि व्यक्तिद्वयं स्यात्तस्यैव । न च द्वित्वमपि नश्यतीति वाच्यं तत्र निर्द्धर्मके ब्रह्मणि सत्त्वाभावेऽपि सत्यस्वरूपं तदितिवत् द्वित्वाभावेऽपि द्वयात्मकौ ताविति सुवचत्वात् मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्त्वमिति चेत् एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमप्युच्यतां प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्व्वजनसिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादक आगमः सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत् । अतएव “निरञ्जनः परमं साम्यमुपैति दिव्यमिति” श्रूयते ईश्वरो न ज्ञानसुखात्मा किन्तु ज्ञानाद्याश्रयः नित्यं विज्ञानमानन्दं ब्रह्म” इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः, “यः सर्व्वज्ञः” इत्यनुरोधात् आनन्दम् इत्यस्यापि आनन्दवदित्यर्थः अर्श आदित्वान्मत्वर्थीयाच्प्रत्ययात्, अन्यथा पुंलिङ्गत्वापत्तेः आनन्दोऽपि दुःखाभावे उपचर्य्यते भाराद्यपगमे सुखी संवृत्तोऽहमितिवत् दुःखाभावेन सुखित्वप्रत्ययात् । अस्तु वा तस्मिन्नानन्दो न त्वसौ, आनन्दम् इत्यत्र मत्वर्थीयप्रत्ययविरोधात् । “आनन्दं ब्रह्मणो विद्वान्

बिभेति कदाचन" इत्यत्र भेदस्य स्पष्टत्वाच्चेति संक्षेपः। एतेन प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवन्निर्लेपः किन्तु चेतनः कार्य्यकारणयोरभेदात् कार्य्यनाशे कार्य्यरूपतया नाशः स्यादित्यकारणत्वं तस्य, बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम्। बुद्धिश्च प्रकृतेः प्रथमः परिणामः। सैव महत्तत्त्वमन्तःकरणमप्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्त्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात् ममेदं कर्त्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया चेतनप्रतिबिम्बादतात्त्विको दर्पणस्येव मुखोपरागः। इदमिति विषयोपरागः इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निश्वासाभिहतदर्पणस्येव मलिनिमा। कर्त्तव्यमिति व्यापारावेशः। तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते। ज्ञानादिवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मा अपि बुद्धेरेव। कृतिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना परिणामित्वादिति सांख्यमतमपास्तम्। कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्चेतनोऽहं करोमीति प्रतीतेः। बुद्धेः परिणामित्वाच्चैतन्यांशे भ्रम इति चेत् कृत्यंशे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्व्वमसंसारापत्तिः। अचेतनायाः प्रकृतेः कार्य्यत्वात् बुद्धेरचैतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेन्न असिद्धेः कर्त्तुर्जन्यत्वे मानाभावात्। "वीतरागजन्मादर्शनात्" अनादित्वम्। अनादेर्नाशासम्भवान्नित्यत्वम्। तत् किं प्रकृत्यादिकल्पनेन। न च "प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः। अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" इत्यनेन विरोध इति वाच्यम् प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैर्गुणैः इच्छादिभिः कर्त्ताहं कर्त्ताहमेव इत्यस्य तदर्थत्वात् "तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः। धर्म्माधर्म्माश्रयः इति। आत्मेत्यनुषज्यते। शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्म्मणां देहान्तरेण भोगानुपपत्तिः। विशेषगुणयोगत इति। योग्यविशेषगुणसम्बन्धेनात्मनः प्रत्यक्षं भवति न त्वन्यथा अहं जाने अहं करोमि इत्यादि प्रतीतेः। प्रवृत्त्येति। अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते। प्रवृत्तिरत्र चेष्टा ज्ञानेच्छाप्रयत्नादीनां देहे अभावस्योक्तप्रायत्वात् चेष्टायाश्च यत्नसाध्यत्वात् चेष्टया प्रयत्नवानात्माप्यनुमीयत इति भावः। तत्र दृष्टान्तमाह। रथेति यद्यपि रथकर्म्म चेष्टा न भवति तथापि तेन कर्म्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्म्मणा परात्मापीति भावः। अहङ्कारस्येति। अहङ्कारोऽहमिति प्रत्ययः तस्याश्रयो विषयः आत्मा न शरीरादिरिति। मन इति मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः। रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात्। विभुरिति। विभुत्वं परममहत्त्वं तच्च पूर्व्वोक्तमपि स्पष्टार्थमुक्तम्। बुद्ध्यादीति बुद्धिसुखदुःखेच्छादयश्चतुर्द्दश गुणाः पूर्व्वोक्ता वेदितव्याः"। ते च "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा। धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्द्दश" इत्युक्ताः बुद्धिः सुखं दुःखमिच्छा द्वेषः यत्नः संख्या परिमाणं पृथक्त्वं संयोगः विभागः भावनाख्यसंस्कारः धर्मः अधर्म्मश्चेति। एते च गुणा मनस एवेति सांख्यादयः। "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एवेति" श्रुतेः कामादीनां मनोधर्म्मत्वावगमात् तथा ६४२ पृष्ठे आत्मानशब्दोदिता अपि। मिता० "किं पुनर्वैषयिकज्ञानेन्द्रियव्यतिरिक्तात्मसद्भावे प्रमाणमित्याशङ्क्याह। "महाभूतानि सत्यानि यथात्मापि तथैव हि। कोऽन्यथैकेन नेत्रेण दृष्टमन्येन पश्यति। वाचं वा को विजानाति पुनः संश्रुत्य संश्रुताम्" या०स्मृ०। "यथा हि पृथिव्यादिमहाभूतानि सत्यानि प्रमाणप्राप्तत्वात्तथात्मापि सत्यः, अन्यथा यदि बुद्धीन्द्रियव्यतिरिक्तो ज्ञाता ध्रुवो न, तर्ह्येकेन चक्षुरिन्द्रियेण दृष्टं वस्त्वन्येन स्पर्शनेन्द्रियेण को विजानाति। यमहमद्राक्षं तमहं स्पृशामीति। तथा कस्यचित् पुरुषस्य वाचं पूर्व्वं श्रुत्वा पुनः श्रूयमाणां वाचन्तस्य वागियमिति कः प्रत्यभिजानाति तस्मात् ज्ञानेन्द्रियाद्यतिरिक्तो ज्ञाता ध्रुव इति सिद्धम्। किञ्च। "अतीतार्था स्मृतिः कस्य को वा स्वप्नस्य कारकः। जातिरूपवयोवृत्तविद्यादिभिरहंकृतः। शब्दादिविषयोद्योगं कर्म्मणा मनसा गिरा" या०। "यद्यात्मा ध्रुवो न स्यात्तर्हि तु भूतार्थगोचरा स्मृतिः पूर्व्वानुभवभावितसंस्कारोद्बोधनिबन्धना कस्य भवेत्, नह्यन्येन दृष्टे वस्तुन्यन्यस्य स्मृतिरुपपद्यते। तथा कः स्वप्नज्ञानस्य कारकः। नहीन्द्रियाणाम् उपरतव्यापाराणान्तत्कारकत्वम्। तथाहमेवाभिजनत्वादिसम्पन्न इत्येवंविधानुसन्धानप्रत्ययः कस्य भवति स्थिरात्मव्यतिरिक्तस्य" तथा शब्दस्पर्शादिविषयोपभोगसिद्ध्यर्थमुद्योगं मनोवाक्कायैः कः कुर्य्यात्तस्मादपि बुद्धीन्द्रियव्यतिरिक्त आत्मा-

स्थिरः” इत्यन्तेन आत्मविवेके च उदयनाचार्य्यैः अहमिति प्रत्यक्षविषयत्वमादौ आत्मनो व्यवस्थाप्य देहाद्यतिरिक्तविषयत्वं तत्प्रत्ययस्य व्यवस्थापितं यथा ।

“अथात्मसद्भावे किम्प्रमाणं प्रत्यक्षमेव तावत् अहमिति विकल्पस्य प्राणान्त्यकालसिद्धत्वात् । नचायमवस्तुकः सन्दिग्धवस्तुकोवा, अबाध्यत्वादप्रतिक्षेपाच्च न च लैङ्गिकः, अननुसंहितलिङ्गस्यापि संप्रत्ययात् । नच स्मृतिरियम्, अननुभूते तदनुपपत्तेः । अनादिवासनावशादनादिरयमवस्तुकोविकल्पस्त्वपि न युक्तं, नीलादिविकल्पसाधारण्यात् । इह वासनामुपादायानाश्वासे प्रमाणान्तरेऽपि कः समाश्वासः, यतो नीलादिविकल्पेषु समाश्वासः स्यात् । तस्मादात्मानात्मवादं विहायागन्तुकमपि किञ्चित् कारणं वाच्यम् । तच्चात्मानात्मशब्दौ वा लिङ्गतदाभासौ वा प्रत्यक्षतदाभासौ वेति । तत्र यथा प्रथममध्यमप्रकाराभावान्नीलविकल्पस्य चरमं कल्पमालम्बते तथाऽहमिति विकल्पोऽपि, तत्रापि “प्रत्यक्षपृष्ठभावित्वे साक्षादेव सवस्तुकः । तदाभासे तु मूलेऽस्य पारम्पर्य्यात् सवस्तुतेति” । न च बाह्यप्रत्यक्षनिवृत्त्यैव निर्मूलत्वं, बुद्धिविकल्पस्यापि तथात्वप्रसङ्गात् । तत्र स्वसंवेदनं मूलम्, इहापि मानसप्रत्यक्षमिति न कश्चिद्विशेषः । शरीरादिवस्तुको भविष्यतीति चेन्न निरुपाधिशरीरेन्द्रियबुद्धितत् समुदायालम्बनत्वेऽतिप्रसङ्गात् । स्वसम्बन्धिशरीराद्यवं स्यादिति वाच्यं तत्र कः स्वीयइति वचनीयम् । अनन्यत्वं स्वत्वं स्वभावानां, तथा च यदा तेनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्यादव्यतिरेकादहमिति स्यात् । अतएव घटादयोन कदाचिदनन्यानुभवितृका इति न कदाप्यहमास्पदमिति चेत् एवन्तर्हि त्वन्मतेऽप्यहंप्रत्ययः शरीरादावारोपरूपएव ततः प्रत्येतुरन्यत्वात् । बुद्धौ मुख्यएवेति चेन्न तस्याः क्रियात्वेनानुभूयमानाया भिन्नस्य कर्त्तुरहं छिनद्मीतिवदहं जानामीत्यनुभवात् । नीलादिप्रत्ये तत्त्वाकारवत् प्रतिपत्त्राकारोऽपि प्रतिपत्तेरेवायमात्मा तथा भासत इति चेत् तर्हि प्रत्येतव्यप्रतिपत्त्राकारयोस्तुल्ययोगक्षेमत्वात् सिद्धं नः समीहितम् । अस्तु स्वोपादानमात्रमिति चेन्न तत्प्रतिभासने तदाकारस्यापि प्रतिभासप्रसङ्गात् आकारमन्तरेणाकारिणोऽनवभासात् । प्रवृत्तिसन्तानाच्चान्योबुद्धिसन्तानः प्रतिपत्ता, वयं तमालयविज्ञानमाचक्ष्महे इति चेत् अस्तु तर्हि प्रवृत्तिविज्ञानोपादानमनादिनिधनः प्रतिपत्ता । स किं सन्तन्यमानज्ञानरूपः तद्विपरीतोवा इति चिन्तावशिष्यते निःशेषिता चासौ प्रागिति” । स्थानान्तरे च तत्रैव

“ननु सिद्धमिदं विशेषणं देहस्यैव चेतनत्वात् मैवं देहत्वभूतत्वमूर्त्तत्वरूपादिमत्त्वादिभ्यः । नच भूतानां समुदायपर्य्यवसितं चैतन्यं, प्रतिदिनं तस्यान्यत्वे पूर्वदृष्टानुभूतस्यास्मरणप्रसङ्गात् । नच प्राक्पर्य्यवसितं, करचरणाद्यवयवविगमे तदनुभूतस्यास्मरणप्रसङ्गात् । देहस्य चेतनत्वे बालस्य प्रथमप्रवृत्तिप्रसङ्गाच्च इच्छाद्वेषावन्तरेण प्रयत्नानुपपत्तेः इष्टाभ्युपायताप्रतिसन्धानं विना चेच्छानुपपत्तेः । इह जन्मन्यननुभूतस्य प्रतिबन्धस्यास्मृतौ प्रतिसन्धानायोगात्, जन्मान्तरानुभूते चानुभवितरि भस्मसाद्भूते अन्येन स्मरणायोगात् अनुभवादीनां प्रत्यासन्नानाञ्च कार्य्यकारणभावस्य इहैव जन्मनि निश्चितत्वात् । तथा च तदभावे तदभावस्य सुलभत्वात् अन्यथा स्वतन्त्रप्रसङ्गः । अतएव नेन्द्रियाणि चेतयन्ते दर्शनस्पर्शनाभ्यामेकार्थग्रहणाच्च । नच मनस्तथा, तस्य करणत्वेनैवानुभवादिति प्रतिबन्धसिद्धिः परदेहात्मसिद्धिश्च । अनादिश्चासौ वीतरागजन्मादर्शनात्, अनन्तश्च सतोऽनादित्वात्, द्रव्यञ्च समवायिकारणत्वात्, विभुश्च नित्यद्रव्यत्वे सत्यमूर्त्तत्वात्, अमूर्त्तश्च निष्क्रियत्वात्, निष्क्रियश्च नित्यद्रव्यत्वे सत्यस्मदादिप्रत्यक्षत्वात्, प्रत्यक्षधर्म्माश्रयत्वाच्च । तर्काश्चात्र भवन्ति आदिमत्त्वे प्रथमप्रवृत्त्यनुपपत्तौ सर्वदैवाप्रवृत्तिप्रसङ्गः । सान्तत्वेऽनादेः सत्त्वानुपपत्तिप्रसङ्गः । अद्रव्यत्वे निर्गुणत्वप्रसङ्गः अविभुत्वे दहनपवनादेः क्रियानुपपत्तिप्रसङ्गः । नच संयुक्तसंयोगात् तदुत्पत्तिः साक्षात्क्रियाहारकस्य तस्याभावात् अतथाभूतस्य तद्धेतुत्वेऽतिप्रसङ्गात् । मूर्त्तत्वे नित्यद्रव्यस्यास्मदादिप्रत्यक्षधर्म्मानाधारत्वप्रसङ्गः विशेषगुणवतश्चारम्भकत्वप्रसङ्गः, सक्रियत्वे मूर्त्तत्वप्रसङ्ग इति शास्त्रार्थसंग्रहः । अणुरेवासौ विज्ञानासमवायिकारणसंयोगाधारत्वात् मनोवत् “अणीयांसमणोरपीति” बाधविरोधाविति कश्चित् तदयुक्तम् आत्मन्यविभौ सकलोऽणुत्वासिद्धेः तत्संयोगक्रमादेव क्रियाक्रमोपपत्तेः आगमस्तु “महतोऽपि महीयांसमिति” प्रथमपदमपहाय उपन्यस्तवानित्यन्तेन” । स्कन्धपञ्चकस्यात्मत्ववादिनां मतं संघातानुत्पत्त्या शा० सू० भा० निराकृतम् यथा “समुदाय उभयहेतुकेऽपि तदप्राप्तिः” सू० “तत्रैते त्रयोवादिनो भवन्ति । केचित् सर्व्वास्तित्ववादिनः केचिद्विज्ञानास्तित्वमात्रवादिनः अन्ये पुनः सर्व्वशून्यत्ववादिनः इति । तत्र ये सर्व्वास्तित्ववादिनोबाह्यमान्तरञ्च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं चित्तं चैत्तञ्च तान् तावत् प्रति ब्रूमः । तत्र भूतं पृथिवीधात्वादयः । भौतिकं रूपादयश्चक्षुरादयश्च चतुष्टये च पृथि-

व्यादिपरमाणवः खरस्नेहोष्णेरणस्वभावाः ते पृथिव्यादिभावेन संहन्यन्त इति मन्यन्ते तथा रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः तेऽप्यध्यात्मं सर्व्वव्यवहारास्पदभावेन संहन्यन्त इति मन्यन्ते । तत्रेदमभिधीयते । योऽयमुभयहेतुक उभयप्रकारः समुदायः परेषामभिप्रेतोऽणुहेतुकश्च भूतभौतिकसंहतिरूपः स्कन्धहेतुकश्च पञ्चस्कन्धरूपः । तस्मिन्नुभयहेतुकेऽपि समुदायेऽभिप्रेयमाणे तदप्राप्तिः स्यात् समुदायाप्राप्तिः समुदायिनामचेतनत्वात् चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात् अन्यस्य च कस्यचिच्चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संहन्तुरनभ्युपगमात् निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमप्रसङ्गात् । आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात् क्षणिकत्वाभ्युपगमाच्च निर्व्यापारत्वात् तत्प्रवृत्त्यनुपपत्तेः तस्मात् समुदायानुपपत्तिः । समुदायानुपपत्तौ च तदाश्रया लोकयात्रा लुप्येत । "इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्" सू० । यद्यपि भोक्ता प्रशासिता वा कश्चिच्चेतनः संहन्ता स्थिरो नाभ्युपगम्यते तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्यते लोकयात्रा तस्यां चोपपद्यमानायां न किञ्चिदपरमपेक्षितव्यमस्ति । ते चाविद्यादयः अविद्या संस्कारो विज्ञानम् नाम रूपं षडायतनम् स्पर्शो वेदना तृष्णोपादानम् भवो जातिर्जरा मरणं शोकः परिदेवना दुःखं दुर्मनस्त्वमित्येवं जातीयका इतरेतरहेतुकाः सौगते समये क्वचित् संक्षिप्ता निर्दिष्टाः क्वचित् प्रपञ्चिताः । सर्व्वेषामप्ययमविद्यादिकलापोऽप्रत्याख्येयः । तदेवमविद्यादिकलापेऽपि परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्त्तमानेऽर्थाक्षिप्त उपपन्नः संघात इति चेत्तन्न कस्मात्? उत्पत्तिमात्रनिमित्तत्वात् । भवेदुपपन्नः संघातो यदि संघातस्य किञ्चिन्निमित्तमवगम्येत न त्ववगम्यते यत इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्व्वं पूर्व्वमुत्तरस्योत्तरस्योत्पत्तिमात्रनिमित्तं भवत् भवेत् न तु संघातोत्पत्तेः किञ्चिन्निमित्तं सम्भवति । नन्वविद्यादिभिरर्थादाक्षिप्यते संघात इत्युक्तम् अत्रोच्यते । यदि तावदयमभिप्रायः अविद्यादय एव संघातमन्तरेणात्मानमलभमाना अपेक्षन्ते संघातमिति ततस्तस्य संघातस्य किञ्चिन्निमित्तं वक्तव्यं तच्च नित्येष्वप्यणुष्वभ्युपगम्यमानेष्वाश्रयाश्रयिभूतेषु च भोक्तृषु सत्सु न सम्भवतीत्युक्तं वैशेषिकपरीक्षायां किमङ्ग पुनः क्षणिकेष्वणुषु भोक्तृरहितेष्वाश्रयाश्रयिभावशून्येषु चाभ्युपगम्यमानेषु सम्भवेत् । अथायमभिप्रायः अविद्यादय एव संघातस्य निमित्तमिति । कथं तमेवाश्रित्यात्मानं लभमानास्तस्यैव निमित्तं स्युः । अथ मन्यसे संघाता एवानादौ संसारे सन्तत्यानुवर्त्तन्ते तदाश्रयाश्चाविद्यादय इति । तदापि संघातात् संघातान्तरमुत्पद्यमानं नियमेन सदृशमेवोत्पद्येत अनियमेन वा सदृशम्, विसदृशं वोत्पद्येत । नियमाभ्युपगमे मनुष्यपुद्गलस्य देवतिर्य्यग्योनिनारकप्राप्त्यभावः प्राप्नुयात् । अनियमाभ्युपगमेऽपि मनुष्यपुद्गलः कदाचित् क्षणेन हस्ती भूत्वा देवो वा पुनर्मनुष्यो भवेत् इति प्राप्नुयात् । उभयमप्यभ्युपगमविरुद्धम् । अपि च यद्भोगार्थः संघातः स्यात् स जीवो नास्ति स्थिरो भोक्तेति तवाभ्युपगमः ततश्च भोगो भोगार्थ एव स नान्येन प्रार्थनीयः तथा मोक्षो मोक्षार्थ एवेति मुमुक्षुणा नान्येन भवितव्यम् । अन्येन चेत् प्रार्थ्येतोभयं, भोगमोक्षकालावस्थायिना तेन भवितव्यम् । अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः । तस्मादितरेतरोत्पत्तिमात्रनिमित्तत्वमविद्यादीनां यदि भवेत् भवतु नाम न तु संघातः सिध्येत् भोक्त्रभावादित्यभिप्रायः इत्यन्तेन" । एतन्मतमनुसृत्यैव "सर्व्वकार्य्यशरीरेषु मुक्ताङ्गस्कन्धपञ्चकम् । सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृतामिति" माघः ।

आत्मनो देहपरिमाणत्वमार्हता मन्यन्ते । तदेतन्मतमुत्थाप्य दूषितं शा०सू०भा० यथा । "एवं चात्माकार्त्स्न्यम्" सू० । "यथैकस्मिन् धर्म्मिणि विरुद्धधर्म्मासम्भवो दोषः स्याद्वादे प्रसक्तः एवमात्मनोऽपि जीवस्याकार्त्स्न्यमपरो दोषः प्रसज्यते । कथं शरीरपरिमाणो हि जीव इत्यार्हता मन्यन्ते । शरीरपरिमाणतायाञ्च सत्यामकृत्स्नोऽसर्व्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत । शरीराणाञ्चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित् कर्म्मविपाकेन हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नुयात् पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नः पुत्तिकाशरीरे संमीयेत । समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः । स्यादेतत् अनन्तावयवो जीवस्तस्य त एवावयवा अल्पे शरीरे सङ्कुचेयुर्महति विकसेयुरिति । तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिहन्येत वा न वेति वक्तव्यम् । प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे सम्मीयेरन् । अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्व्वेषाम-

वयवानां प्रविशमानुपपत्तेर्जीवस्याणुमात्रत्वप्रसङ्गः स्यात् । अपि च शरीरमात्रपरिच्छिन्नानां जीवावयवानामानन्त्यं नोत्प्रेक्षितुमपि शक्यम् । अथ पर्यायेण बृहच्छरीरप्रतिपत्तौ केचिज्जीवावयवा उपगच्छन्ति तनुशरीरप्रतिपत्तौ च केचिदपगच्छन्तीत्युच्येत । तत्राप्युच्यते । "न च पर्यायादप्यविरोधो विकारादिभ्यः" सू० । न च पर्यायेणाप्यवयवोपगमापगमाभ्यामेव तद्देहपरिमाणत्वं जीवस्याविरोधेनोपपादयितुं शक्यते कुतः ? विकारादिदोषप्रसङ्गात् । अवयवोपगमापगमाभ्यां ह्यनिशमापूर्य्यमाणस्यापक्षीयमाणस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्य्यं विक्रियावत्त्वे चर्म्मादिवदनित्यत्वं प्रसज्येत ततश्च बन्धमोक्षाभ्युपगमो बाध्येत कर्म्माष्टकपरिवेष्टितस्य जीवस्यालाबुवत् संसारसागरे निमग्नस्य बन्धनोच्छेदादूर्द्ध्वगामित्वम्भवतीति । किञ्चान्यत् आगच्छतामपगच्छतां चावयवानामागमापायधर्म्मवत्त्वादेवानात्मत्वं शरीरादिवत् । ततश्चावस्थितः कश्चिदवयव आत्मेति स्यात् । न च स निरूपयितुं शक्यते अयमसाविति । किञ्चान्यत् आगच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्ति, अपगच्छन्तश्च क्व वा लीयन्त इति वक्तव्यम् । न हि भूतेभ्यः प्रादुर्भवेयुः भूतेषु च निलीयेरन्, अभौतिकत्वाज्जीवस्य । नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते प्रमाणाभावात् । किञ्चान्यत् अनवधृतस्वरूपश्चैवं सत्यात्मा स्यात् आगच्छतामपगच्छताञ्चावयवानामनियतपरिमाणत्वात् । अतएवमादिदोषप्रसङ्गान्न पर्यायेणाप्यवयवोपगमापगमावात्मन आश्रयितुं शक्येते । अथ वा पूर्व्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकार्त्स्न्यप्रसञ्जनद्वारेणानित्यतायां चोदितायाम् पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसन्ताननित्यतान्यायेनात्मनो नित्यता स्यात् यथा रक्तपटादीनाम् विज्ञानानवस्थानेऽपि तत्सन्ताननित्यता तद्वद्विसिचामपीत्याशङ्क्यानेन सूत्रेणोत्तरमुच्यते । सन्तानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गः वस्तुत्वेऽप्यात्मनो विकारादिदोषप्रसङ्गादस्य पक्षस्यानुपपत्तिरिति ।

"अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः" सू० । अपि चान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः तद्वत् पूर्व्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषप्रसङ्गः स्यात् एकशरीरपरिमाणतैव स्यात् नोपचितापचितशरीरान्तरप्राप्तिः । अथ वान्त्यस्य जीवपरिमाणस्यावस्थितत्वात् पूर्व्वयोरप्यवस्थयोरवस्थितपरिमाण एव जीवः स्यात् । ततश्चाविशेषेण सर्व्वदैवाणुर्महान् वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः । अतश्च सौगतवदार्हतमपि मतमसङ्गतमित्युपेक्षितव्यम्" । इत्यन्तेन जीवस्याणुपरिमाणत्वं ये स्वीचक्रुः तन्मतमुपन्यस्य शा० सू० भा० दूषितं यथा ।

"उत्क्रान्तिगत्यागतीनाम्" सू० । इदानीन्तु किंपरिमाणो जीव इति चिन्त्यते किमणुपरिमाणः उत मध्यमपरिमाण आहोस्वित् महापरिमाण इति । ननु च नात्मोत्पद्यते नित्यचैतन्यरूपश्चायमित्युक्तमतश्च पर एवात्मा जीव इत्यापतति, परस्य चात्मनोऽनन्तत्वमाम्नातं तत्र कुतो जीवस्य परिमाणचिन्तावतार इति उच्यते सत्यमेतत् उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते तस्य सर्व्वस्यानाकुलत्वोपपादनायायमारम्भः । तत्र प्राप्तं तावदुत्क्रान्तिगत्यागतीनां श्रवणादणुर्जीव इति उत्क्रान्तिस्तावत् "स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्व्वैरुत्क्रामतीति" गतिरपि "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्व्वे गच्छन्तीति" । आगतिरपि "तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मणे" इति आसामुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नस्तावज्जीवः इति प्राप्नोति न हि विभोश्चलनमवकल्पत इति । सति च परिच्छेदे शरीरपरिमाणत्वस्यार्हतमतपरीक्षायां निरस्तत्वादणुरात्मेति गम्यते । "स्वात्मना चोत्तरयोः" सू० । उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या कर्म्मक्षयेणावकल्प्येत उत्तरे तु गत्यागती नाचलतः सम्भवतः स्वात्मना हि तयोः सम्बन्धो भवति गमेः कर्तृस्थक्रियात्वात् । अतोऽमध्यमपरिमाणस्य च गत्यागती अणुत्व एव सम्भवतः । सत्योश्च गत्यागत्योरुत्क्रान्तिरपसृप्तिरेव देहादिति प्रतीयते नह्यनपसृप्तस्य देहाद्गत्यागती स्यातां देहप्रदेशानाञ्चोत्क्रान्तावपादानत्ववचनात् "चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः" इति । "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति शुक्रमादाय पुनरेति स्थानमिति" चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः तस्मादप्यस्याणुत्वसिद्धिः । "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" सू० । अथापि स्यात् नाणुरयमात्मा, कस्मात्, अतच्छ्रुतेः अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः । "स वा एष महानजः" "आत्मा योऽयं विज्ञानमयः प्राणेषु" "आकाशवत्सर्व्वगतश्च नित्यः" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्येवं जातीयका हि श्रुति-

रात्मनोऽणुत्वं विप्रतिषिध्येतेति चेत् नैष दोषः। कस्मात् इतराधिकारात्। परस्य ह्यात्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः, परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात्, "विरजःपर आकाशात्" इत्येवं विधाच्च परस्यैवात्मनस्तत्र तत्र विशेषाधिकारात्। ननु-"योऽयं विज्ञानमयः प्राणेष्विति" शारीरोमहत्त्वसम्बन्धित्वेन प्रतिनिर्दिश्यते। शास्त्रदृष्ट्या त्वयं निर्देशो वामदेववद्द्रष्टव्यः। तस्मात्प्राज्ञविषयत्वात्परिमाणान्तरश्रवणस्य, न जीवस्याणुत्वं विरुध्यते। "स्वशब्दोन्मानाभ्याञ्च" सू॰ इतश्चाणुरात्मा यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते "स एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशेति" प्राणसम्बन्धाच्च जीवएवायमणुरभिहितइति गम्यते तथाचोन्मानमपि जीवस्याणिमानं गमयति "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागोजीवः स विज्ञेय" इति। "आराग्रमात्रोह्यवरोऽपि दृष्ट" इति चोन्मानान्तरम्। नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते दृश्यते च जाह्नवीह्रदनिमग्नानां सर्व्वाङ्गे शैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरितिचेत् उत्तरं पठति। "अविरोधश्चन्दनवत्" सू॰। यथा हि हरिचन्दनविन्दुःशरीरैकदेशे सम्बद्धोऽपि सन् सकलदेहव्यापिनमाह्लादं करोत्येवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति। त्वक्सम्बन्धाच्चास्य सकलशरीरगता वेदना न विरुध्यते। त्वगात्मनोर्हि सम्बन्धः कृत्स्नायान्त्वचि वर्त्तते त्वक् च सर्व्वशरीरव्यापिनीति। "अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदि हि" सू॰। अत्राह यदुक्तम् "अविरोधश्चन्दनवदिति" तदयुक्तं दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात् सिद्धे ह्यात्मनोदेहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति। प्रत्यक्षन्तु चन्दनस्यावस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाह्लादनञ्च। आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं नैकदेशवर्त्तित्वम्। अनुमेयन्तदिति यदुच्येत न चात्रानुमानं सम्भवति। किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः किं विभोर्नभसइव, आहोस्विच्चन्दनविन्दोरिवाणोरेकदेशस्थस्येति संशयाऽनतिवृत्तेरिति। अत्रोच्यते-नायं दोषः। कस्मात् अभ्युपगमात्। अभ्युपगम्यतेऽह्यात्मनोऽपि चन्दनस्येव देहैकदेशवर्त्तित्वमवस्थितिवैशेष्यम्। कथमिति उच्यते। हृदि ह्येष आत्मा पठ्यते वेदान्तेषु 'हृदि ह्येष आत्मा" "स वाएष आत्मा हृदि कतमः? आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुष" इत्याद्युपदेशेभ्यः। तस्माद्दृष्टान्तदार्ष्टान्तिकयोरवैषम्यादुक्तमेवैतदविरोधश्चन्दनवदिति। "गुणाद्वालोकवत्" सू॰। चैतन्यगुणव्याप्तेर्वाणोरपि सतोजीवस्य सकलदेहव्यापि कार्य्यं न विरुध्यते। यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्त्तिनामपि प्रभा अपवरकव्यापिनी सती कृत्स्नेऽपवरके कार्य्यं करोति तद्वत्। स्यात्कदाचिच्चन्दनस्य सावयवत्वात् सूक्ष्मावयवविसर्पणेनापि सकलदेहाह्लादयितृत्वं नत्वणोर्जीवस्यावयवाः सन्ति यैरयं सकलदेहं विसर्पेदित्याशङ्क्य "गुणाद्वालोकव"दित्युक्तम्। कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्त्तेत न हि पटस्य शुक्लोगुणः पटव्यतिरेकेणान्यत्र वर्त्तमानोदृश्यते। प्रदीपप्रभावद्भवेदिति चेन्न तस्या अपि द्रव्यत्वाभ्युपगमात्। निबिडावयवं हि तेजोद्रव्यं प्रदीपः विरलावयवन्तु तेजोद्रव्यमेव प्रभेति अत उत्तरं पठति। "व्यतिरेको गन्धवत्" सू॰ यथा गुणस्यापि सतोगन्धस्य गन्धद्रव्यव्यतिरेकेण वृत्तिर्भवति अप्राप्तेष्वपि कुसुमादिषु गन्धोपलब्धेः एवमणोरपि सतोजीवस्य चैतन्यगुणव्यतिरेकोभविष्यति। अतश्चानैकान्तिकमेतद्गुणत्वात् रूपवदाश्रयविश्लेषानुपपत्तिरिति गुणस्यैव सतोगन्धस्याश्रयविश्लेषदर्शनात्। गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेन्न यस्मान्मूलद्रव्याद्विश्लेषस्तस्य क्षयप्रसङ्गात्। अक्षीयमाणमपि तत्पूर्व्वावस्थातोऽवगम्यते अन्यथा तत्पूर्व्वावस्थैर्गुरुत्वादिभिर्हीयेत। स्यादेतत् गन्धाश्रयाणां विश्लिष्टानामल्पत्वात्सन्नपि विशेषो नोपलक्ष्यते सूक्ष्मा हि गन्धपरमाणवः सर्व्वतो विप्रसृतागन्धबुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्त इति चेन्न अतीन्द्रियत्वात् परमाणूनां स्फुटगन्धोपलब्धेश्च नागकेशरादिषु। न च लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातमिति गन्धएवाघ्रात इति लौकिकाः प्रतियन्ति। रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्ययुक्ताश्रयव्यतिरेक इति चेन्न प्रत्यक्षत्वादनुमानाप्रवृत्तेः। तस्माद्यद्यथा लोके दृष्टं तत्तथैवानुगन्तव्यं निरूपकैर्नान्यथा। न हि रसोगुणोजिह्वयोपलभ्यतइत्यतो रूपादयोऽपि गुणाजिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते। "तथा च दर्शयति" सू॰। श्रुतिर्हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव "आलोमभ्य आनखाग्रेभ्यः" इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति। "पृथगुपदेशात्" सू॰। "प्रज्ञया शरीरं समारुह्येति" चात्मप्रज्ञयोः कर्त्तृकरणभावेन पृथगुपदेशाच्चैतन्येन गुणेनैवास्य शरीरव्यापितावगम्यते। "तदेषां प्राणानां विज्ञानेन विज्ञानमा-

दायेति च" कर्त्तुः शरीराद् पृथग्विज्ञानमेव्यपदेश एतमेवाभिप्रायमुपोद्बलयति तस्मादणुरात्मेत्येवं प्राप्ते ब्रूमः। "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" सू०। तुशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति अणुरात्मेति उत्क्रान्त्याद्यश्रवणात्। परस्यैव तु ब्रह्मणः प्रवेशश्रवणात् तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम्। परमेव चेद्ब्रह्मजीवस्तस्माद्यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति परस्य च ब्रह्मणो विभुत्वमाम्नातं तस्माद्विभुर्जीवः। तथा च "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु, इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्त्ताश्च समर्थिता भवन्ति। नचाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते। त्वक्सम्बन्धात् स्यादिति चेन्न त्वक्कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्त्तते त्वक् च कृत्स्नशरीरव्यापिनीति पादतलएव तु कण्टकनुन्नो वेदनां प्रतिलभन्ते। नचाणोर्गुणस्य व्याप्तिरुपपद्यते गुणस्य गुणिदेशत्वात् गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत। प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम्। गन्धोऽपि गुणत्वाभ्युपगमात् साश्रय एव सञ्चरितुमर्हति अन्यथा गुणत्वहानिप्रसङ्गात्। तथा चोक्तं भगवता द्वैपायनेन "उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः। पृथिव्यामेव तं विद्यादपोवायुञ्च संश्रितमिति"। यदि च चैतन्यं जीवस्य समस्तं शरीरं व्याप्नुयान्नाणुर्जीवः स्यात् चैतन्यमेव ह्यस्य स्वरूपं अग्नेरिवौष्ण्यप्रकाशौ, नात्र गुणगुणिविभागोविद्यत इति। शरीरपरिमाणत्वञ्च प्रत्याख्यातं परिशेषाद्विभुर्जीवः कथं तर्ह्यणुत्वादिव्यपदेश इति अत आह "तद्गुणसारत्वात्तु तद्व्यपदेश" इति। तस्या बुद्धेर्गुणाः तद्गुणा इच्छा द्वेषः सुखं दुःखमित्येवमादयः तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे सम्भवति स तद्गुणसारः तद्भावस्तद्गुणसारत्वम्। न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति बुद्ध्युपाधिधर्म्माध्यासनिमित्तं हि कर्त्तृत्वभोक्तृत्वादिलक्षणं संसारित्वमकर्त्तुरभोक्तुश्चासंसारिणोनित्यमुक्तस्य सत आत्मनः। तस्मात्तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वतः। तथा च "बालाग्रशतभागस्य शतधा कल्पितस्य तु। भागोजीवः स विज्ञेयः स चानन्त्याय कल्पते" इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह तच्चैवमेव समञ्जसं स्यात् यद्यौपचारिकमणुत्वं जीवस्य भवेत् पारमार्थिकं चानन्त्यम्। नह्युभयं मुख्यमवकल्पेत। नचानन्त्यमौपचारिकमिति शक्यं विज्ञातुं सर्व्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात्। तथैतस्मिन्नप्युन्माने "बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रोह्यवरोऽपि दृष्ट" इति बुद्धिगुणसम्बन्धेनैवाराग्रमात्रतां शास्ति न स्वेनैवात्मना। "एषोऽणुरात्मा चेतसा वेदितव्य" इत्यत्रापि न जीवस्याणुपरिमाणत्वं शिष्यते। परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादावगम्यत्वेन च प्रकृतत्वात्, जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः। तस्माद्दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं वा द्रष्टव्यम्। तथा "प्रज्ञया शरीरमारुह्य" इत्येवंजातीयकेष्वपि भेदोपदेशेषु बुद्ध्युपाधिभूतया जीवः शरीरं समारुह्येत्येवं योजयितव्यं व्यपदेशमात्रं वा शिलापुत्रकस्य शरीरमित्यादिवत्। नह्यत्र गुणगुणिविभागो विद्यत इत्युक्तम्। हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात्। तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति "कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि" इति "कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति"। उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते, नह्यनपसृप्तस्य देहाद्गत्यागती स्याताम्। एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वव्यपदेशः प्राज्ञवत् यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः "अणीयान्व्रीहेर्वा यवाद्वा, मनोमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पः" इत्येवं प्रकारः तद्वत्" इत्यन्तेन। इति शाङ्करानुयायिनः रामानुजभाष्यादयश्च जीवस्याणुत्वपक्षमुररीचक्रुः। तत्र पक्षद्वयसत्त्वात्ते द्रष्टव्यः तयोर्युक्तायुक्तत्वं नैयायिकवैशेषिकाङ्गीकृतविभुत्वप्रदर्शकयुक्तीरवलोक्य सुधीभिः समर्थनीयम् न्यायसूत्रकृता चात्मनोदेहाद्यतिरिक्तत्वं प्रदर्शितं यथा "तत्त्वेन्द्रियं ज्ञानवद्वेति संशये करणत्वेन सिद्धानामिन्द्रियाणां चैतन्यमस्तु लाघवात्तथा चात्मशब्दस्य नानार्थत्वादिन्द्रियाणामभौतिकत्वाद्वा न साङ्कर्य्यमितीन्द्रियचैतन्यवादिनस्तन्निराकरणायाह। "दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" १। "न विषयव्यवस्थानात्" २। "तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः" ३। "शरीरदाहे पातकाभावात्" ४। "तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्" ५। "न कार्य्याश्रयकर्तृवधात्" ६। "सव्येन दृष्टस्येतरेण प्रत्यभिज्ञानात्" ७। "नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभि-

मानात्" ८ । "एकनाशे द्वितीयाविनाशात्" ९ । "अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः" १० । "दृष्टान्तविरोधादप्रतिषेधः" ११ । "इन्द्रियान्तरविकारात्" १२ । "न स्मृतेः स्मर्त्तव्यविषयत्वात्" १३ । "तदात्मगुणत्वसद्भावादप्रतिषेधः" १४ । "अपरिसङ्ख्यानाच्च स्मृतिविषयस्य"१५ ।"नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात्"१६ । "ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्"१७ । "नियमश्च निरनुमानः"१८ । "पूर्व्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः" १९ । "पद्मादिषु प्रबोधसम्मीलनविकारवत्तद्विकारः"२० । "नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम्" २१ । "प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्"२२ । "अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम्"२३ । "नान्यत्र प्रवृत्त्यभावात्"२४ । "वीतरागजन्मादर्शनात्" २५ सूत्राणि "एकस्यैव दर्शनस्पर्शनाभ्यामर्थस्य ग्रहणात् दर्शनस्पर्शने ज्ञानविशेषौ तृतीया च प्रकारे तेन चाक्षुषस्पर्शनोभयप्रत्यये नैकस्य धर्म्मिणः प्रतिसन्धानादित्यर्थः । तथा च योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्यनुभवादात्मेन्द्रियव्यतिरिक्त एक इति१ । अत्र शङ्कते चक्षुस्त्वगादीनां रूपस्पर्शादिनियतविषयत्वाच्चक्षुरादेश्चाक्षुषादिसमवायित्वमित्यस्याभेदप्रत्ययोभ्रान्त इति भावः २ । समाधत्ते उक्तप्रतिषेधोन युक्तः उक्तविषयव्यवस्थानादेवात्मसद्भावादतिरिक्तात्मकल्पनादित्यर्थः । अयंभावः तत्तदिन्द्रियाणां तत्तद्विषयकप्रत्यक्षं प्रति समवायित्वं वाच्यं न तु प्रत्यक्षत्वावच्छिन्नं प्रति, अनुमित्यादिजनकत्वे तु विनिगमकाभावात् । तेन जन्यज्ञानत्वावच्छिन्नजनकतावच्छेदकमात्मत्वं चक्षुरादेरनित्यत्वादात्मनश्च नित्यतायावश्यकत्वाच्चक्षुरादिनाशेऽपि स्मरणाच्चक्षुरहमित्याद्यप्रतीतेश्च नेन्द्रियात्मवादोयुज्यत इति ३ । समाप्तमिन्द्रियप्रकरणम् । ननु गौरोऽहं जानामीत्यादिप्रतीतेरस्तु शरीरमात्मेत्याशङ्क्य दूषयति । पातकाभावात् पातकादेरभावप्रसङ्गात् तथाचोत्तरकालिकं दुःखादिकं न स्यादिति । यद्वा दाहेनाशः तथा च शरीरनाशे हते कर्त्तरि शरीरे विनष्टे पातकं न स्यादित्यर्थः । यद्यपि भूतचैतन्यवादिना पातकादिकं नोपेयते तथापि तस्य प्रसाध्याङ्कत्वादेकदेशिनः पूर्व्वपक्षित्वाद्वा न दोष इति भावः ४ । तत्रापि तुल्योदोष इत्याशङ्कते । तदभावः पातकाभावः सात्मकशरीरस्य प्रदाहेऽपि प्रसक्तः तन्नित्यत्वात् तस्य आत्मनोनित्यत्वात् नित्यत्वेन निर्विकारत्वं तेन जन्यधर्म्मानाश्रयत्वमभिमतमितिकेचित् । तन्नित्यत्वात् शरीरनाशे शरीरविशिष्टात्मनाशस्य नियतत्वादित्यपि कश्चित् । किन्तु सात्मकशरीरनाशेऽपि हन्तुः पातकाभावः स्यात् तस्यात्मनोनित्यत्वेन तन्नाशकत्वाभावात् ५ । परिहरति । कार्य्याश्रयस्य चेष्टाश्रयस्य कर्त्तुः ज्ञानावच्छेदकस्य शरीरस्यैव नाशः नत्वात्मन इति न पातकाभावः । यद्वा न हन्तुः पातकाभावः कार्य्याश्रयकर्त्तृबाधात् शरीरस्य नाशात् ब्राह्मणत्वादेः शरीरवृत्तित्वात्तन्नाशादेव पापोत्पत्तिरिति भावः । वस्तुतस्तु अपूर्व्वशरीरावच्छिन्नप्राणसंयोगात्मकोत्पत्तिवत् शरीरावच्छिन्नप्राणसंयोगध्वंसविशेषात्मकं मरणमप्यात्मनः सम्भवति अन्यथा शरीरविनाशनोद्भूतसुखनिरोधादेर्हिंसात्वं न स्यात् पातकानभ्युपगन्तृचार्व्वाकादिमते शरीरभेदसाधनन्तु वक्ष्यमाणयुक्तिभिरिति ध्येयम् ६ । समाप्तदेहभेदप्रकरणम् प्रसङ्गाच्चक्षुरद्वैतप्रकरणमारभते । वामेन चक्षुषा दृष्टस्य दक्षिणेन चक्षुषा प्रत्यभिज्ञानात् स्थिरात्मसिद्धिरिति केषाञ्चिन्मतं तन्निराकरणायैतदुपन्यासः ७ । एतद्दूषयति । मध्यस्थसेतुना तडागस्येव नासास्थिव्यवहितगोलकान्तरावच्छिन्नतया द्वैतप्रत्ययोभ्रम इत्यर्थः ८ । आक्षिपति । चक्षुरैक्ये एकचक्षुर्नाशेऽन्धत्वं स्यादिति भावः ९ । अत्रैकदेशी परिहरति । अवयवस्य शाखादेर्नाशेऽप्यवयविनोवृक्षस्य प्रत्यभिज्ञानाच्चावयवनाशे सर्व्वत्रावयविनाशनियमस्तथा चैकनाशेऽपि नान्धत्वमिति १०। एकदेशिमतस्य पूर्व्वोक्ताक्षेपस्य च समाधानाय सिद्धान्तिनः सूत्रम् । उक्तप्रतिषेधोन युक्तः दृष्टान्तस्य विरोधादयुक्तत्वात् न हि शाखाच्छेदे वृक्षस्तिष्ठति तथा सति वृक्षनाशप्रसङ्गादतोऽवस्थितावयवैस्तत्र खण्डवृक्षोत्पत्तेर्नैकदेशिमतं युक्तम् । एतेनैकनाशे द्वितीयाविनाशाद्भेदसाधनमपि प्रत्युक्तं चक्षुर्नाशेऽपि गोलकान्तरावच्छिन्नावयवैः खण्डचक्षुःसम्भवात् इत्यञ्च लाघवाच्चक्षुरद्वैतमिति टीकाकारसम्मतम् । परे तु चक्षुर्द्वैतमेव सूत्रार्थं मन्यमाना व्याचक्षते सिद्धान्तिनः । सूत्रं सव्येनेति । शङ्कते नैकस्मिन्निति । समाधत्ते एकेति । शङ्कते अवयवेति । निराकरोति दृष्टान्तेति । शाखानाशे वृक्षनाशावश्यकत्वात् दृष्टान्तोन युक्तः । यद्वा दृष्टान्तस्य गोलकभेदस्य विरोधादन्यथानुपपन्नत्वाद्दृष्टं हि मृतस्य चक्षुर्विधानगोलकद्वयं भेदेनैवोपलभ्यत इति वदन्ति ११ । आत्मन इन्द्रियभेदे युक्त्यन्तरमाह । चिरविल्वाद्यम्लद्रव्ये दृष्टे तद्रसस्मरणाद्दन्तोदकसंप्लवरूपरसनेन्द्रियविकारादिन्द्रियव्यतिरिक्त

आत्मा सिद्ध्यति १२। आक्षिपति। स्मृतिर्हि स्मर्त्तव्यविषयिणीति नियमस्तस्याच दर्शनादिना सामानाधिकरण्ये मानाभावात् अस्तु वा विषयतयैव सामानाधिकरण्यमिति भावः १३। समाधत्ते। उक्तप्रतिषेधोन युक्तः धर्म्मिग्राहकमानेन स्मृतेरात्मगुणत्वात्परिशेषेणात्मगुणत्वसिद्धेरहं स्मरामीत्यनुभवात् विषयनिष्ठकार्य्यकारणभावे चैतस्य ज्ञानान्मैत्रस्य स्मरणापत्तेरिति भावः १४। विषयाणां स्मर्त्तव्यानां स्मृतिसमवायित्वम् स्यादित्याशङ्क्य समाधत्ते। अपरिसङ्ख्यानात् आनन्त्यात् तथा च लाघवादतिरिक्तात्मसिद्धिः। इदं न सूत्रं किन्तु भाष्यमिति केचित् १५। समाप्तं चक्षुरद्वैतप्रकरणम्। ननु मनसोनित्यत्वादात्मत्वमस्त्वित्याशङ्कते। नातिरिक्त आत्मा आत्मसाधकमानानां मनसार्थान्तरत्वमिति भावः १६। समाधत्ते। यदि मनसो ज्ञातृत्वं तदा व्यासङ्गाद्युपपादनाय करणान्तरमवश्यं वाच्यं तथा चैकोज्ञाता ज्ञानसाधनं चैकं सिद्धं मन आत्मास्त्विति संज्ञामात्रं किन्तु व्यासङ्गोपपादकतया मनसोऽणुत्वं सिद्धमात्मनश्च प्रत्यक्षोपपादकतया महत्त्वमिति भेद आवश्यक इति भावः १७। ननु रूपादिप्रत्यक्षम् सकरणकमस्तु न तु सुखादिप्रत्यक्षम् एवं परमाण्वन्तरस्यातीन्द्रियत्वेऽपि मनसः मूलकम् स्यादत आह। उक्तोनियमविशेषोनिरनुमानः नियमसाधकः गौरवाद्दर्परीतेश्च विनिगमकाभावाच्चेति भावः १८। समाप्तम् मनोभेदप्रकरणम्। एवं साधितेऽपि देहादिभिन्ने आत्मनि विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिरतः आत्मनित्यताप्रतिपादनाय सूत्रम्। जातस्य बालस्य एतज्जन्माननुभूतेष्वपि हर्षादिहेतुषु सत्सु हर्षादीनां सम्प्रतिपत्तिः उत्पत्तिस्तस्याः पूर्व्वापूर्व्वानुभवाधीन स्मृतिसम्बन्धादेव सम्भवात् इत्थं चेदानीन्तनस्यात्मनः पूर्व्वपूर्व्वसिद्धौ तस्यानादित्वमनादेश्च भावस्य न नाश इति नित्यत्वसिद्धिरिति भावः १९। अत्र शङ्कते। बालस्य हर्षादयोमुखविकासाद्यनुमेया न च तत्सम्भवः पद्मादीनां प्रबोधादिवदृष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरिति भावः २०। सिद्धान्तयति। उक्तं न युक्तं यतः पञ्चात्मकानां पाञ्चभौतिकानां पद्मादीनां ये विकारास्तेषाम् उष्णकालादिनिमित्तत्वात् मनुष्यादीनान्तु हर्षादिनिमित्तका मुखविकासादय इति न तुल्यतेति भावः २१। आत्मनित्यत्वे हेत्वन्तरमाह। प्रेत्य मृत्वा जातमात्रस्य यः स्तन्याभिलाषः स तावदाहाराभ्यासजनितः जन्मान्तरीयाहारेष्टसाधनताधीजन्यजीवनादृष्टोद्बोधितसंस्काराधीनेष्टसाधनताकरणेन हि बालः स्तनपाने प्रवर्त्तत इत्यनेनादित्वमितिर २। शङ्कते। यथाऽयस्कान्तसन्निहितस्यायसोऽयस्कान्ताभिमुखतया गमनं तथैव बालस्यापि स्तनोपसर्पणं न त्विष्टसाधनताज्ञानाधीनप्रवृत्तिजन्या चेष्टेयमित्यर्थः २३। समाधत्ते। स्तनपानएव बालः प्रवर्त्तते नत्वन्यत्रेति नियमः कथं स्यात्। वस्तुतस्तु अन्यत्र अयसि प्रवृत्त्यभावात् प्रवृत्तिर्हि चेष्टानुमिता लिङ्गं न तु क्रियामात्रमतोन व्यभिचार इति भावः २४। हेत्वन्तरमाह वीतरागोरागशून्यस्तावन्नोत्पद्यतेऽपि तु सरागतएव जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्व्वं स्तन्याभिलाषउक्तः सम्प्रति तु पतगादीनां कथादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौनरुक्त्यम् २५" इत्तिः।

वैशेषिकसूत्रोपस्कारयोरात्मसाधनपुरस्सरं तस्य देहाद्यतिरिक्तता साधिता यथा "इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्यो ऽर्थान्तरस्य हेतुः"१। "सोऽनपदेशः"२। "कारणाज्ञानात्"३। "कार्य्येषु ज्ञानात्" ४। "अज्ञानाच्च" ५। अन्यदेव हेतुरित्यनपदेशः" ६। "अर्थान्तरं ह्यर्थान्तरस्याऽनपदेशः" ७ सू॰ "इन्द्रियार्थप्रसिद्धेरात्मपरीक्षायामुपयोगमाह। हेतुर्लिङ्गमर्थान्तरस्य आत्मनः इन्द्रियार्थेभ्य इति इन्द्रियेभ्योऽर्थेभ्यश्च रूपादिभ्यस्तद्भ्यश्च यदर्थान्तरम् आत्मा तस्य लिङ्गमित्यर्थः। यद्यपि ज्ञानमेव लिङ्गमिह विवक्षितं तथापीन्द्रियार्थप्रसिद्धेरूपादिसाक्षात्कारस्य प्रसिद्धतरतया तद्रूपेणैव लिङ्गत्वमुक्तम्। तथाहि प्रसिद्धिः कश्चिदाश्रिता कार्य्यत्वात् घटवत् गुणत्वाद्वा क्रियात्वाद्वा सा च प्रसिद्धिः करणजन्या क्रियात्वात् छिदिक्रियावत् यच्च प्रसिद्धेः करणं तदिन्द्रियं तच्च कर्त्तृप्रयोज्यं करणत्वात् वास्यादिवत् तथा यत्रेयं प्रसिद्धिराश्रिता, यः घ्राणादीनां करणानां प्रयोक्ता स आत्मा १। ननु शरीरमिन्द्रियाणि वा प्रसिद्धेराश्रयोऽस्तु प्रसिद्धिं प्रति तदुभयान्वयव्यतिरेकयोः स्फुटतरत्वात् किं तदन्याश्रयकल्पनया तथाहि चैतन्यं शरीरगुणः तत्कार्य्यत्वात् तद्रूपादिवत् एवमिन्द्रियगुणत्वेऽपि वाच्यमित्याशङ्क्याह। व्यपदेशो हेतुः तदाभासोऽनपदेशः तथाच तत्कार्य्यत्वं प्रदीपजन्यज्ञानादावनैकान्तिकत्वादनपदेशइत्यर्थः२। ननु तत्कार्य्यत्वं चैतन्यत्वावच्छिन्नस्यैव कार्य्यत्वं विवक्षितं प्रदीपादीनाञ्च समस्तमेव चैतन्यं न कार्य्यमिति न व्यभिचार इत्याशङ्क्याह। शरीरकारणानां करचरणादीनां तदवयवानां वा अज्ञानात् ज्ञानशून्यत्वादित्यर्थः। पृथिव्यादि-

विशेषगुणानां हि कारणगुणपूर्व्वकता दृष्टा तथाच शरीरकारणेषु यदि ज्ञानं स्यात्तदा शरीरेऽपि सम्भाव्येत नचैवम्। नन्वस्तु शरीरकारणेष्वपि चैतन्यमिति चेन्न ऐकमत्याभावप्रसङ्गात् न हि बहूनां चेतनानामैकमत्यं दृष्टम्, करावच्छेदेनानुभूतस्य करच्छेदेऽस्मरणप्रसङ्गात् यतः "नान्यदृष्टं स्मरत्यन्यः" इति। किञ्च शरीरनाशे तत्कृतहिंसादिफलानुपभोगप्रसङ्गात् नहि चैत्रेण कृतस्य पापस्य फलं मैत्रो भुङ्क्ते ततश्च कृतहानिरकृताभ्यागमश्च स्यात् ३। ननु शरीरकारणेषु सूक्ष्ममात्रया ज्ञानमस्ति शरीरे तु स्फुटमतो नाऽकारणगुणपूर्व्वकता नचैकमत्यानुपपत्तिरित्याशङ्क्याह। यदि हि शरीरमूलकारणेषु परमाणुषु चैतन्यं स्यात् तदा तदारब्धेषु कार्य्येषु घटादिष्वपि स्यात् किञ्च पार्थिवविशेषगुणानाम् सर्व्वपार्थिववृत्तिताव्याप्तेः कार्य्येष्वपि घटादिषु चैतन्यं स्यान्न च तत्र चैतन्यमुपलभ्यते इत्यर्थः ४। ननु घटादावपि सूक्ष्ममात्रया चैतन्यमस्त्येवेत्याशङ्क्याह। सर्व्वैः प्रमाणैरज्ञानात् कुम्भादौ न चैतन्यमित्यर्थः। सर्व्वप्रमाणागोचरस्याप्यभ्युपगमे शशविषाणादेरप्यभ्युपगमप्रसङ्गः न हि घटादौ चैतन्यं केनापि प्रमाणेन ज्ञायत इति ५। ननु श्रोत्रादिभिः करणैरधिष्ठाताऽनुमीयते इत्युक्तं तदयुक्तं नहि श्रोत्रादिभिरात्मनस्तादात्म्यं तदुत्पत्तिर्व्वा न च ताभ्यामन्तरेणाऽविनाभावसिद्धिः नचाविनाभावमन्तरेणाऽनुमितिरित्यत आह। हेतुः साध्यादन्य एव भवति न तु साध्यात्मा साध्याविशेषप्रसङ्गात् तस्मात्तादात्म्यघटितो हेतुरहेतुरनपदेश इत्यर्थः ६। ननु श्रोत्रादिभिरिन्द्रियैरात्मनो यथा न तादात्म्यं तथा तदुत्पत्तिरपि नास्ति नहि वह्नेर्धूम इव आत्मनः श्रोत्रादिकरणमुत्पद्यते इत्यत आह। हि यतः कार्य्यं धूमादि यथा रासभादेरर्थान्तरम् तथा कारणादङ्गादेरप्यर्थान्तरमेव तथा चार्थान्तरत्वाविशेषात् धूमो रासभं न गमयति किन्तु वह्निमेव गमयतीत्यत्र स्वभावविशेष एव नियामकः स च स्वभावो यदि कार्य्यादन्यस्यापि भवति तदा सोऽप्यपदेशो भवत्येव तथा च कार्य्यमविवक्षितस्वभावभेदम् अनपदेशः, तथा च तादात्म्यतदुत्पत्ती एवाऽविनाभावः तयोरेवाविनाभावपर्य्यवसानम् ताभ्यां समानोपायौ वा तदुभयमात्र यहाणेनग्रहौ वेति स्वशिष्यव्यामोहनाय परिभाषामात्रमिति भावः" ७॥ उपस्क०। अनतिदूरे च तत्रैव "आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्" १८ सू०। "ज्ञानमात्मन्युभयथा लिङ्गम्, ज्ञानं क्वचिदाश्रितं कार्य्यत्वाद्रूपादिवदिति वा, प्रत्यभिज्ञारूपतया वा योऽहमद्राक्षं सोऽहं स्पृशामीति, तत्र ज्ञानगतं कार्य्यत्वं नासिद्धं यन्निष्पद्यत इत्यभिधानात्, न विरुद्धं सामान्यतोदृष्टेऽत्र विरोधाभावात्। नचानैकान्तिकम्, तत एव, तथा च स्वगतकार्य्यत्वगुणत्वद्वारा सामान्यतोदृष्टेन ज्ञानमेवात्मनि लिङ्गम्, प्रत्यभिज्ञानन्तु भिन्नकर्त्तृकेभ्योव्यावर्त्तमानमेककर्त्तृकतायां पर्य्यवस्यति। न च बुद्धिचैतन्येऽपि कार्य्यकारणभावनिबन्धनमेव प्रतिसन्धानम्, शिष्यगुरुबुद्ध्योरपि प्रतिसन्धानप्रसङ्गात्। उपादानोपादेयभावस्तत्र नास्ति स च प्रतिसन्धानप्रयोजक इति चेदुपादानत्वस्य द्रव्यधर्म्मतया बुद्धावसम्भवात्, सम्भवे वा बुद्धीनां क्षणिकतया पूर्व्वानुभूतप्रतिसन्धानानुपपत्तेः, न हि पूर्व्वबुद्ध्या उत्तरासु बुद्धिषु कश्चित् संस्कार आधीयते, स्थिरस्य तस्य त्वयाऽनभ्युपगमात्, क्षणिकबुद्धिधारारूपस्य च कालान्तरस्थतो प्रतिसन्धाने वाऽसामर्थ्यात्। आलयविज्ञानसन्तानः प्रवृत्तिविज्ञानसन्तानादन्य एव कर्त्ता च प्रतिसन्धाता चेति चेत् स यदि स्थिरः तदा सिद्धं नः समीहितम्, क्षणिकबुद्धिधारारूपश्चेत् तदा पूर्व्वदोषानतिवृत्तेः, न हि तत्रापि स्थिरः कश्चित् संस्कारः। किञ्च प्रवृत्तिविज्ञानातिरिक्ते तत्र प्रमाणाभावः। अहमिति बुद्धिधारैव प्रमाणमिति चेत् भवतु तत्र प्रवृत्तिविज्ञानान्यालयविज्ञानमेव चेदुपादत्ते तदा प्रवृत्तिविज्ञानानामनुपादानताविरहे निमित्तताऽपि न स्यात् उपादानताव्याप्तत्वान्निमित्ततायाः, माऽस्तु निमित्तताऽपीति चेत् तर्हि सत्त्वमपि गतम्, अर्थक्रियाकारित्वस्य सत्त्वलक्षणत्वात् प्रवृत्तिसन्तानालयविज्ञानसन्तानाभ्यां सम्भूय सन्तानद्वयमुपादीयत इति चेत् तर्हि किमपराद्धमवयविसंयोगादिभिः, व्यासज्यवृत्तितायास्त्वयाप्यभ्युपगमात्। तस्माज्ज्ञानेनाश्रयतयाऽनुमितमात्मानं प्रतिसन्धानं स्थिरत्वेन साधयतीति न किञ्चिदनुपपन्नम्। यद्वा नित्या बुद्धिर्नात्मानं कारणत्वेन गमयितुमर्हतीति साङ्ख्यमतनिरासाय सूत्रमिदमुपतिष्ठते "आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्" बुद्धितत्त्वं यत्त्वयोच्यते तज्ज्ञानमेव, बुद्धिरुपलब्धिर्ज्ञानमिति हि पर्य्यायाभिधानं, तच्चात्मादिसन्निकर्षादुत्पन्नम्। अन्यदेव त्वदभ्युपगतादन्तःकरणादित्यर्थः तथाच भवति तत् आत्मनो लिङ्गमिति भावः" १८। "प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्" १९। "आत्मन्यनुमानमभिधाय इदानीं परात्मानुमानमाह। प्रत्यगात्मनीति स्वात्मनीत्यर्थः, इच्छाद्वेषजनिते प्रवृत्तिनिवृत्ती

प्रयत्नविशेषौ ताभ्याञ्च हिताहितप्राप्तिपरिहारफलकं शरीरकर्म्म यो चेष्टाख्यं जन्यते तथाच परशरीरे चेष्टां दृष्ट्वा इयं चेष्टा प्रयत्नजन्या चेष्टात्वात् मदीयचेष्टावत् स च प्रयत्न आत्मजन्यः आत्मनिष्ठो वा प्रयत्नत्वात् मदीयप्रयत्नवदिति परात्मात्मानुमानम्" १९ उपस्क०। आह्निकान्तरे "आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्" १। "तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते" २। "प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्" ३। प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि" ४। "तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते" ५। "यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावाद्दृष्टं लिङ्गं न विद्यते" ६। "सामान्यतोदृष्टाच्चाविशेषः" ७। "तस्मादागमिकः" ८। "अहमितिशब्दस्य व्यतिरेकान्नागमिकम्" ९। "यदि दृष्टमन्वक्षमहं देवदत्तोऽहं यज्ञदत्त इति" १०। "दृष्ट आत्मनि लिङ्गे एक एव दृढत्वात् प्रत्यक्षवत् प्रत्ययः" ११। "देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरे प्रत्ययः" १२। "सन्दिग्धस्तूपचारः" १३। "अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरप्रत्यक्षः" १४। "देवदत्तो गच्छतीत्युपचारादभिमानात्तावच्छरीरप्रत्यक्षोऽहङ्कारः" १५। "सन्दिग्धस्तूपचारः" १६। "न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः" १७। "अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेर्नागमिकः" १८। "सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्" १९। "व्यवस्थातो नाना" २०। वैशेषिकसूत्राणि "इदानीमात्मपरीक्षानन्तरम् उद्देशक्रमलङ्घनेन मनःपरीक्षामवतारयन्नाह। मनोगतिमात्मनो लिङ्गं वक्ष्यति तद् यदि मनो ज्ञानकरणत्वेन मूर्त्तत्वेन च परीक्षितं भवति तदा यत्प्रेरितं मनः इन्द्रियान्तरादभिमतविषयग्राहिणि इन्द्रिये सम्बध्यते स आत्मेति सिद्धं भवतीत्येतदर्थं क्रमलङ्घनम्। आत्मेन्द्रियार्थसन्निकर्षे सति यस्मिन् इन्द्रियसन्निकृष्टे ज्ञानस्य भावः उत्पादः, असन्निकृष्टे ज्ञानस्याभावोऽनुत्पादस्तन्मन इत्यर्थः। ननु मनोवैभवेऽपि करणधर्म्मत्वादेव ज्ञानायौगपद्यमुपपद्यते किञ्च मनो विभु विशेषगुणशून्यद्रव्यत्वात् कालवत् ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवत् स्पर्शात्यन्ताभाववत्त्वादाकाशवदित्यादि वैभवसाधकं प्रमाणमिति चेत् मैवं यदि मनो विभु स्यात्तदा सर्व्वेन्द्रियसन्निकृष्टात्ततः सर्व्वेन्द्रियकमेकमेव ज्ञानं स्यात्, कार्य्यविरोधान्नैवमिति चेन्न नहि सामग्री विरोधाविरोधमाकलयति येन चाक्षुषत्वरासनत्वादिविरोधाय बिभ्येत्, चित्ररूपवत् चित्राकारमेव वा स्यात्। भवत्येव दीर्घशष्कुलीभक्षणस्थले इति चेन्न तत्रापि व्यासङ्गदर्शनात्, नहि रूपरसगन्धस्पर्शान् युगपत् प्रत्येमीति कश्चिदनुव्यवसाय इति चेन्न शीघ्रसञ्चारिमनोजनितेषु पञ्चसु त्वगुपनीतज्ञानेषु यौगपद्याभिमानात्। व्यासङ्गोऽपि करणधर्म्माधीन इति चेन्न उक्तोत्तरत्वात्, बुभुत्साधीनो व्यासङ्ग इति चेन्न सर्व्वबुभुत्सायां सर्व्वविषयकसर्व्वोदयप्रसङ्गात्, बुभुत्साया अपि अभिमतार्थग्राहीन्द्रियमनःसम्बन्धमात्रफलकत्वात्, तस्माज्ज्ञानायौगपद्यान्यथानुपपत्त्या सिध्यति अणु मनः। ततो धर्म्मिग्राहकमानबाधिताः वैभवहेतवः। किञ्च मनोवैभवे पादे मे सुखं शिरसि मे वेदनेति प्रादेशिकत्वं सुखादीनां न स्यात्, विभुकार्य्याणामसमवायिकारणावच्छिन्नदेशे उत्पादनियमात्। तथापि सुखादीनामणुदेशापत्तिरिति चेन्न असमवायिकारणं विभुकार्य्यं स्वदेशे जनयत्येवेति नियमात्। तथाच निमित्तचन्दनाद्यवच्छेदादधिकदेशेऽपि जननाविरोधात्। ममापि निमित्तसमवधानानुरोध इति चेन्न उक्तनियमभङ्गप्रसङ्गात् किञ्चात्मना विभुना मनसः संयोगोऽपि कथं स्यात्, अजोऽसाविति चेन्न विभागस्याप्यजत्वप्रसङ्गात्, अवच्छेदभेदेनोभावप्यविरुद्धाविति चेन्न संयोगविभागयोरवच्छेदभेदस्य स्वकारणाधीनत्वात् अजयोस्तु तदभावादिति दिक् १। ननु सुखाद्युपलब्धिः करणसाध्या क्रियात्वात् रूपोपलब्धिवदित्याद्यनुमानात् युगपज्ज्ञानानुत्पत्त्या वा यन्मनः सिद्धं तत्करणतया, तथाच तस्य द्रव्यत्वं नित्यत्वञ्च कुत इत्यत आह। यथाऽवयविद्रव्यानुमितो वायुपरमाणुर्गुणवत्त्वात् क्रियावत्त्वाच्च द्रव्यम्, तथा युगपज्ज्ञानानुत्पत्त्याऽनुमितं मनो गुणवत्त्वाद्द्रव्यं, नहि तस्य इन्द्रियसंयोगमन्तरेण ज्ञानोत्पादकत्वं येन गुणवत्त्वं न स्यात्। किञ्च सुखादिसाक्षात्कारः इन्द्रियकरणकः साक्षात्कारत्वात् रूपादिसाक्षात्कारवदिन्द्रियत्वेन मनः सिद्धम्, इन्द्रियत्वञ्च ज्ञानकारणमनःसंयोगाश्रयत्वमित्ययत्नसिद्धमेव मनसो द्रव्यत्वम्, नित्यत्वञ्च तस्यानाश्रितत्वात्, तस्यावयवकल्पनायां प्रमाणाभावादनाश्रितत्वमिति २। तत् किं प्रतिशरीरमेकमनेकं वेति सन्देहे निर्णायकमाह। मनः प्रतिशरीरमिति शेषः यद्येकैकस्मिन्नपि शरीरे बहूनि मनांसि स्युस्तदा ज्ञानप्रयत्नानां यौगपद्यं स्यात्। यत्तु नर्त्तकीकरचरणाङ्गुलीषु

युगपत् कर्म्मदर्शनाद्युगपदेव बहवः प्रयत्ना उत्पद्यन्ते इति मतं तदयुक्तं मनसः शीघ्रसञ्चारादेव तदुपपत्तेः अविनश्वरस्य योग्यात्मविशेषगुणानां यौगपद्यानभ्युपगमात्। एतेनैकस्मिन्नपि शरीरे पञ्च मनांसि तेषां द्वित्रिचतुःपञ्चानां तत्तदिन्द्रियसंयोगे द्वे त्रीणि चत्वारि पञ्च वा ज्ञानानि युगपज्जायन्ते इति मतं निरस्तं कल्पनागौरवप्रसङ्गात्, यौगपद्याभिमानस्तु समर्थित एव, रसनेन्द्रियावच्छेदेन त्वगिन्द्रियसम्बन्धेन मनस खण्डोगुड इति ज्ञानद्वययौगपद्यापत्तिरपि करणधर्म्मत्वादेव नास्ति, द्विच्छिन्नगोधाभुजगादावपि अवयवद्वये कर्म्म खड्गाद्यभिघाताद्वा मनस आशुसञ्चाराद्वा तदानीमेवादृष्टेन पक्षमनोन्तरप्रवेशाद्वा। यत्तु मनोऽवयव्येव जलौकावत् तत्सङ्कोचविकाशाभ्यां ज्ञानयौगपद्यायौगपद्ये इति तत्, तदवयवकल्पनागौरवप्रतिहतमिति दिक् ३। इदानीं क्रमलङ्घनप्रयोजनमादर्शयन्नेवात्मपरीक्षाशेषं वर्त्तयिष्यन्नाह। प्रसिद्धिज्ञानमेव केवलमात्मनो लिङ्गमिति न मन्तव्यं प्राणादयोऽपि सन्ति आत्मनो लिङ्गानि। तथाहि शरीरान्तर्वर्त्तिनि समीरणे प्राणापानलक्षणे ऊर्द्धाधोगती उत्क्षेपणापक्षेपणे मुषलादाविव प्रयत्नं विनाऽनुपपद्यमाने यस्य प्रयत्नाद्भवतः स नूनमात्मा, नहि तिर्य्यग्गमनस्वभावस्य वायोरेवंस्वभावविपर्य्ययो विना प्रयत्नात्, न च विरुद्धदिक्क्रिययोर्वाय्वोः सलिलयोरिवोर्द्धगतिः स्यादिति वाच्यम् एवं सत्यूर्द्धगमनमेव स्यान्नत्वधोगमनं फुत्कारादौ वा तिर्य्यग्गमनम्, तथाचास्ति कश्चित्, यः प्रयत्नेन वायुमूर्द्धमधो वा प्रेरयति। सुषुप्तिदशायां कथं प्राणापानयोरूर्द्धाधोगती इति चेन्न तदानीं योग्यप्रयत्नाभावेऽपि प्रयत्नान्तरस्य सद्भावात् स एव जीवनयोनिः प्रयत्न इत्युच्यते। एवं निमेषोन्मेषावपि शरीरस्याधिष्ठातारमनुमापयतः। तथा हि निमेषस्तावत् अक्षिपक्ष्मणोः संयोगजनकं कर्म्म उन्मेषस्तयोरेव विभागजनकं कर्म्म, एते च कर्म्मणी नोदनाभिघातादिदृष्टकारणमन्तरेण निरन्तरमुत्पद्यमाने प्रयत्नं विना नोत्पद्येते यथा दारुपुत्रकनर्त्तनं कस्यचित् प्रयत्नात्, तथाऽक्षिपक्ष्मनर्त्तनमपि, तेन प्रयत्नवाननुमीयते। एवं जीवनमप्यात्मलिङ्गं तथाहि जीवनपदेन लक्षणया जीवनकार्य्यं वृद्धिक्षतभग्नसंरोहणादि लक्षयति। तथा च यथा गृहपतिर्भग्नस्य गृहस्य निर्म्माणं करोति, कनीयो वा गृहं वर्द्धयति, तथा देहाधिष्ठाता गृहस्थानीयस्य देहस्याहारादिना वृद्धिमुपचयं करोति क्षतञ्च भेषजादिना प्ररोहयति भग्नञ्च करचरणादि संरोहयति तथा च गृहपतिरिव देहस्याप्यधिष्ठाता सिध्यतीति। एवं मनोगतिरप्यात्मलिङ्गं तथा हि मनस्तावन्मूर्त्तमणु चेति पूर्व्वप्रकरणे साधितम्, तस्य चाभिमतविषयग्राहिणि इन्द्रिये निवेशनम् इच्छाप्रणिधानाधीनम्, तथा च यस्तेच्छाप्रणिधाने मनः प्रेरयतः स आत्मेत्यनुमीयते यथा गृहकोणावस्थितोदारकः कन्दुकं लाक्षागुटकं वा गृहाभ्यन्तर एव इतस्ततः प्रेरयति। ननु दारुपुत्रनर्त्तयिता गृहपति दीरको वा न शरीरादन्यो यो दृष्टान्तः स्यात् किन्तु शरीरमेव चैतन्याश्रयः अहङ्कारास्पदत्वात्, भवति हि गौरोऽहं स्थूलोऽहमित्याद्यहङ्कारसामानाधिकरण्येन प्रत्ययः। यत्तु बाल्येऽनुभूतं यौवने वार्द्धके वा स्मरति तत्र चैत्रमैत्रवच्छरीरभेदेऽपि स्मरणं न स्यात् "नान्यदृष्टं स्मरत्यन्य" इति तत्र चैत्रमैत्रयोर्भिन्नसन्तानत्वेन प्रतिसन्धानं माऽस्तु बाल्यकौमारभेदेऽपि सन्तानैकत्वात् कार्य्यकारणभावेन प्रतिसन्धानमुपपत्स्यत इति। तत्र ब्रूमः पित्राऽनुभूतस्य पुत्रेणापि स्मरणप्रसङ्गः, तत्र शरीरभेदप्रत्यक्षो बाधक इति चेत् दृष्टेन बालशरीराद्भेदेनैव स्वशरीरस्य ग्रहात् प्रतिसन्धानानुपपत्तेः अनुपलब्धपितृकस्य बालस्य शरीरभेदाग्रहस्यापि सत्त्वात्। मम शरीरमिति ममकारसामान्येनाहङ्कारस्य भानात्। ममात्मेत्यत्रापि तथैव चेन्न तत्र ममकारस्यौपचारिकत्वात् राहोः शिर इति वदभेदेऽप्युपपत्तेः। हिंसादिफलञ्च कर्त्तरि न स्यात् शरीरस्यान्यान्यत्वात्, पातकमिच्छतोभूतचैतनिकस्य कृतहानमकृताभ्यागमश्च दोष इति दिक्। इन्द्रियान्तरविकारात् अस्त्यपि दृश्यते हि नागरङ्गस्य चिरबिल्वस्य वा रूपविशेषसहचरितं रसविशेषमनुभूय पुनस्तादृशं फलस्य पश्यमानस्य रसगर्द्धिप्रवर्त्तितो दन्तोदकसंप्लवः, स च नानुस्मरणानुमितिमन्तरेण, अनुमिति र्न व्याप्तिस्मृतिमन्तरेण, सा च न संस्कारं विना, स च न व्याप्त्यनुभवमन्तरेण, स च न भूयोदर्शनमन्तरेणेति इयं ज्ञानपरम्परा नैकं कर्त्तारमन्तरेण कार्य्यकारणभूता सम्भवतीति तथा च गौतमीयं सूत्रम् "इन्द्रियान्तरविकारात्" इति। सुखादयश्च ज्ञानवदेवात्मलिङ्गानि द्रष्टव्याः। तथाहि सुखादिकं क्वचिदाश्रितं द्रव्याश्रितं सामान्यतोदृष्टमेव अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं विषयीकरोति न हि पृथिव्याद्यष्टकानाश्रिता इच्छा द्रव्याश्रितेति प्रतिज्ञा अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं प्रकारमनादाय पर्य्यवस्यति यत्र तु प्रथमं न बाधावता-

त्वत्वादष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं व्यतिरेकिसाध्यमिति भावः । व्यापकतावच्छेदकप्रकारिकैवानुमितिरिति तु तुच्छम्, येन विना प्रतीतिर्न पर्य्यवस्यति तस्यैव तत्र प्रकारत्वात् अन्यथा द्व्यणुकं कार्य्यानाश्रितं सत् क्वचिदाश्रितम् अवयवित्वादित्यादावकार्य्याश्रितत्वप्रकारिकाऽनुमितिर्न स्यात्४ । ननु सिद्ध्यतु आत्मा स्थिरः, स तु नित्य इति कुतः, कुतश्च द्रव्यमित्यत आह । यथा वायुपरमाणोरवयवकल्पनायां न प्रमाणमतोनित्यत्वं तथात्मनोऽपि, यथा गुणवत्त्वाद्वायुपरमाणुर्द्रव्यं तथात्माऽपीत्यर्थः५ । पूर्व्वपक्षमाह । सन्निकर्षे सति अयं यज्ञदत्त इति प्रत्यक्षं नास्ति चेत् तदा दृष्टं प्रत्यक्षतो गृहीतव्याप्तिकं लिङ्गं नास्ति, यथा वह्निना प्रत्यक्षेण सहचरितो गृहीतो धूमो वह्नौ दृष्टं लिङ्गं तथात्मसाधकं लिङ्गं दृष्टं नास्तीत्यर्थः६। ननु प्रत्यक्षादृष्टव्याप्तिकस्य दृष्टलिङ्गस्याभावेऽपि सामान्यतोदृष्टमेव लिङ्गं भविष्यति नहि ततो नानुमितिरित्याशङ्क्य पुनः पूर्व्वपक्षी आह । सामान्यतोदृष्टमपि लिङ्गं भवति न तु तत आत्मत्वेन अष्टद्रव्यातिरिक्तद्रव्यत्वेन वा स्यादात्मसिद्धिः किन्तु तेनेच्छादीनां क्वचिदाश्रितत्वमात्रं सिध्यतु तच्च नात्ममननोपयिकमित्यर्थः तदेतदाह अविशेष इति७। तत् किं "योऽपहतपाप्मा स आत्मा" इत्याद्यागमोऽनर्थक एवेत्याशङ्क्य स एवाह । आगममात्रसिद्ध एवात्मा न त्वनुमेयः दृष्टसामान्यतोदृष्टयोर्लिङ्गयोरभावात् तस्मात् सम्यगुपनिषदां श्रवणात् तत्त्वसाक्षात्कार उत्पद्यते न तु मननप्रणालिकया, तथाच मननप्रयोजनकमिदं तन्त्रमतन्त्रम्, दृष्टं हि भूतदशकनदीसन्तरणादावुपदेशमात्रादेव साक्षात्कारि ज्ञानम्८ । तदेवं त्रिभिः सूत्रैः पूर्व्वपक्षे सिद्धान्तवाद्याह । नागममात्रं प्रमाणमात्मनि, किन्त्वहमिति पदमात्मपदं वा साभिधेयं पदत्वात् घटादिपदवत् इत्यनुमानादप्यात्मसिद्धिः । ननु पृथिव्याद्येव तदभिधेयं स्यादित्यत आह व्यतिरेकादिति. पृथिव्यादितोऽहमिति पदस्य व्यतिरेकाद्व्यावृत्तेरित्यर्थः । नहि भवत्यहं पृथिवी अहमापः अहन्तेजः अहं वायुः अहमाकाशम् अहं कालः अहं दिक् अहं मन इति व्यपदेशः, प्रत्ययो वा । शरीरे भवतीति चेन्न परशरीरेऽपि तत्प्रसङ्गात्, स्वशरीरे भवतीति चेन्न स्वस्वात्मभिन्नस्यानिरुक्तेः मम शरीरमिति वैयधिकरण्येन प्रत्ययाच्च । नन्विदमपि सामान्यतोदृष्टमेव तच्च विशेषापर्य्यवसन्नमिति दूषितमेवेति चेन्न अहम्पदेऽहन्त्वमात्मत्वमेव प्रकारः तथा च पक्षधर्म्मताबलादेवाऽहन्त्वस्य प्रवृत्तिनिमित्तत्वं पर्य्यवसन्नं तच्चानन्यसाधारणमेवेति विशेषसिद्धेः एवं सामान्यतोदृष्टादपि बाधसहकृताद्विशेषसिद्धिः । यच्चोक्तं श्रवणादेव साक्षात्कारः किं मननेनेति तदयुक्तम् नहि मननमन्तरेण सद्युक्तकस्यागमार्थमलचालनम्, नच तदन्तरेण तत्र निदिध्यासनाधिकारः, नच निदिध्यासनमन्तरेण सवासनमिथ्याज्ञानोन्मूलनक्षमस्तत्त्वसाक्षात्कारः, अभ्यासादेव हि कामातुरस्याकस्मात् कामिनीसाक्षात्कारः, नहि शाब्दमानुमानिकं वा ज्ञानं मिथ्याज्ञानोन्मूलनक्षमं दिङ्मोहादौ दृष्टमिति भावः । ननु तथापि परोक्षे आत्मनि कथं सङ्केतग्रह इति चेत् स एवमाह नात्मा प्रत्यक्ष इति, किन्तु मनसा संयोगप्रत्यासत्त्यात्मग्रहः । कथमन्यथाऽहं सुखी जानामीच्छामि यते दुःखीत्यादिप्रत्ययः नचायमवस्तुकः सन्दिग्धवस्तुको वा, नीलादिप्रत्ययवत् अस्यापि निश्चितवस्तुकत्वात्, नच लैङ्गिकः, लिङ्गज्ञानमन्तरेणापि जायमानत्वात्, नापि शाब्दः, तदनुसन्धानानुविधानात्, प्रत्यक्षाभासोऽयमिति चेत्, तर्हि क्वचिदनाभासविषयोऽपि । नह्यप्रमितमारोप्यते इत्यावेदयिष्यते९ । एवञ्चेत् किमनुमानेनेति पूर्व्वपक्षवादी आह । इतिग्रन्थो ज्ञानप्रकारमाह दृष्टमिति भावे-क्तप्रत्ययान्तम्, अन्वयमित्यध्याहार्यं तेनायमर्थः अयं देवदत्तः अयं यज्ञदत्त इति प्रकारकं दृष्टं दर्शनं प्रत्यक्षमेवास्ति यदि किमनुमानप्रयासेन "नहि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः"१० । अत्र सिद्धान्त्याह । दृष्टे प्रत्यक्षेण गृहीते आत्मनि लिङ्गे सम्भूतसामग्रीके सति एक एव एकवैषयिक एव प्रत्ययः । प्रत्यय इति निरस्तसमस्तविभ्रमाशङ्कित्वमाह, कुत एवमित्यत आह दृढत्वात् प्रमाणसंप्लवेनान्यथाभावशङ्कानिवर्त्तनपटुत्वात्, तत्र दृष्टान्तमाह प्रत्यक्षवदिति यथा दूराज्जलप्रत्यक्षे सत्यपि संवादार्थं बलाकालिङ्गेनाऽपि तदनुमानं तदुक्तम् "प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति, इदमत्राकूतम् यद्यात्मा कदाचित् प्रत्यक्षे चेतसि भासत एव तथापि अहं गौरः अहं कृश इत्यादिविरोधिप्रत्ययान्तरतिरस्कृतो न तथा स्थेमानमासादयति विद्युत्प्रकाशसञ्जातज्ञानवत्, तत्र लिङ्गेन अनन्यथासिद्धेन ज्ञानान्तरमुत्पद्यमानं पूर्व्वज्ञानमेव स्थिरीकरोति । किञ्च "श्रोतव्यो मन्तव्य" इत्यादिविधिबोधितस्यात्ममननस्य इष्टसाधनत्वावगतौ अनुमित्स्याऽवश्यमात्मन्यनुमानप्रवृत्तिः तद्व्यतिरेके निदिध्यासनासम्भवे साक्षात्काराभावेऽपवर्गाभावादिति भावः । अहं देवदत्तोऽहं यज्ञदत्त इति प्रती-

तिद्वयाभिधानमात्मनः प्रत्यात्मवेदनीयत्वं सूचयितुम् ११। ननु यदि यज्ञदत्तोऽहमिति प्रत्यय आत्मनि तदा यज्ञदत्तो गच्छतीति गमनसामानाधिकरण्यभानमनुपपन्नमित्यत आह । अस्ति हि अहं गौरः अहं स्थूल इति प्रत्ययः अस्ति च मम शरीरमिति भेदप्रत्ययः तत्र देवदत्तो गच्छतीति गतिसामानाधिकरण्यानुभवो व्यवहारश्च भाक्तः, ममेति प्रत्ययस्य यथार्थत्वात् यद्यपि देवदत्तत्वं शरीरवृत्तिजातिस्तेन देवदत्तो गच्छतीति मुख्य एव प्रयोगे यथार्थ एव च प्रत्ययः । तथापि देवदत्तपदं तदवच्छिन्नात्मनि प्रयुज्यते चेत् तदौपचारिकं बोद्धव्यम् १२। अत्र शङ्कते । तुशब्दः पूर्वपक्षद्योतकः । आत्मशरीरयोस्तावदहमिति प्रत्ययः प्रयोगश्च दृश्यते तत्र क्व मुख्यः क्व औपचारिक इति सन्देहः १३। समाधत्ते। अर्थान्तरमात्मस्वरूपं प्रत्यक्षं यत्र प्रत्यये स प्रत्ययोऽर्थान्तरप्रत्यक्षः । अयमर्थः अहमिति प्रत्ययस्य प्रत्यगात्मनि स्वात्मनि भावात् परत्र परात्मनि अभावात् अर्थान्तरे स्वात्मन्येव मुख्यः कल्पयितुमुचितः यदि तु शरीरे मुख्यः स्यात् तदा बहिरिन्द्रियग्राह्यः स्यात् न हि शरीरं मानसप्रत्यक्षं मानसश्चायमहमिति प्रत्ययः बहिरिन्द्रियव्यापारमन्तरेणापि जायमानत्वात् अहं दुःखी अहं सुखी जाने यते इच्छाम्यहमिति योग्यविशेषगुणोपहितस्यात्मनो मनसा विषयीकरणात्, नायं लैङ्गिको लिङ्गानुसन्धानमन्तरेणापि जायमानत्वात्, न शाब्दः शब्दाकलनमन्तरेणापि जायमानत्वात्, तस्मान्मानस एव । मनसश्च बहिरस्वातन्त्र्येण शरीराद्यप्रवृत्तेरिति भावः । किञ्च यदि शरीरे स्यात्, परशरीरे स्यात्, स्वात्मनि यदि स्यात् तदापि परात्मनि स्यादिति चेन्न परात्मनः परस्यातीन्द्रियत्वात् तद्विशेषगुणानामयोग्यत्वात् योग्यविशेषगुणोपधानेन तस्य योग्यत्वात्, न केवलमात्मन इदं शीलं किन्तु द्रव्यमात्रस्य, द्रव्यं हि योग्यविशेषगुणोपधानेनैव प्रत्यक्षं भवति । आकाशमपि तर्हि शब्दोपधानेन प्रत्यक्षं स्यादितिचेत् स्यादेवं यदि श्रोत्रं द्रव्यग्राहकं भवेत्, आकाशं वा रूपवत् स्यात् । आत्मनोऽपि नीरूपत्वं तुल्यमिति चेत् बहिर्द्रव्यमात्र एव प्रत्यक्षतां प्रति रूपवत्त्वस्य तन्त्रत्वात्, प्रत्यगित्ययं शब्दोऽन्यव्यावृत्तमाह १४ । पुनः शङ्कते । अहङ्कारोऽहमिति प्रत्ययः स च शरीरप्रत्यक्षः शरीरं प्रत्यक्षं विषयो यत्र स शरीरप्रत्यक्षः । देवदत्तो गच्छतीत्युपचारात्तावत् प्रयोगः प्रत्ययो वा त्वया समाहितः सर्वोपचार आभिमानिकः यतोऽहं गौरः अहं कृशः कौभागिनेयोऽहं पुनरुक्तजन्मेत्यादयः प्रत्ययाः प्रयोगाश्चोपचारेण समन्वयितुमशक्या इत्यर्थः १५ । सिद्धान्तमाह । तुशब्दोऽयं सिद्धान्तमभिव्यनक्ति। उपचारोऽयमाभिमानिकः किन्तु शरीर एवायमहम्प्रत्यय इति यदुक्तं तत्रापि सन्देह एवेत्यर्थः तथाच प्रत्ययस्योभयत्रापि कूटसाक्षित्वेन विशेषावधारणाय यतितव्यं तत्र यत्ने क्रियमाणे निमीलिताक्षस्याप्यहमिति प्रत्ययदर्शनात् शरीरभिन्ने बहिरिन्द्रियागोचरे वस्तुनि स मन्तव्यः, शरीरे भवन् परशरीरेऽपि स्यात् चक्षुर्नैरपेक्ष्येण च न स्यात्। अहं कृशः स्थूलो वा सुखीति कथं सामानाधिकरण्यमिति चेन्न सुखाद्यवच्छेदकत्वेनापि तत्र शरीरभानसम्भवात् सिंहनादवदिदं मङ्गलमितिवत्, अहन्त्वमात्रं शरीरे समारोप्यते मनसोपस्थितम्, त्वगिन्द्रियोपनीतमौष्ण्यम् उष्णं जलम् उष्णं शरीरमितिवत् १६ । सिद्धान्तमुपदर्शयन्नाह । ज्ञानमिति योग्यं सुखदुःखादिकमात्मगुणमुपलक्षयति, यथा यज्ञदत्तविष्णुमित्रयोः शरीरं परस्परभिन्नं तथा ज्ञानसुखादिकमपि भिन्नमेव तथा च यथा यज्ञदत्तस्येदं शरीरं तथा यज्ञदत्तस्य ज्ञाने सुखादौ वाऽनुत्पन्ने अहं सुखी जाने यते इच्छामीति ज्ञानादिकं विषयो भवति योग्यशरीरविषयकत्वेन तदीयरूपादिवत्तदीयज्ञानादीनामपि प्रत्यक्षत्वसम्भवात् न च सम्भवति, तस्मात् ज्ञानसुखादीनां शरीरादन्य एवाश्रयो वक्तव्य इति भावः । शरीरविशेषात् शरीरस्य भेदादित्यर्थः तथा च शरीरभेदं प्राप्य ज्ञानं, न तु विषय इति ल्यब्लोपे पञ्चमी १७। नन्वात्मा न प्रत्यक्षः नीरूपद्रव्यत्वात् निरवयवद्रव्यत्वाद्वा आकाशवत्, यथा चाह कृशो गौर इति बुद्धेः शरीरमेव विषयो वाच्यः, कश्चिदहं सुखीत्यादिधीरपि यद्यस्ति, तथाप्याश्रयमन्तरेण भासमानानां सुखादीनां शरीरे समारोप इत्येव कल्पयितुमुचितम्, यथोष्णं सुरभि जलम् इत्याश्रयमन्तरेण प्रतीयमानयोरौष्ण्यसौरभयोर्जले समारोपः, नत्वेतदनुरोधेन जलप्रत्ययस्यापि प्रसिद्धजलमन्तरेणान्यविषयत्वम्, तथाऽहमित्यहन्त्वं शरीर एव वास्तवम्, सुखादिकन्तु कदाचित्तत्रारोप्यते तेनात्मनि प्रत्यक्षाकारं ज्ञानं नास्त्येव सुखाद्याधारत्वेन यत्कल्पनीयं तदागमसिद्धं भवतु न तत्रापि पक्ष इत्यत आह । अयमर्थः अहं सुखी अहं दुःखीति प्रत्ययो नागमिको न शाब्दो नापि लैङ्गिकः शब्दलिङ्गयोरनुसन्धानमन्तरेणापि जायमानत्वात् प्रत्यक्षत्वे च नीरूपत्वं निरवयवत्वाद्वा यद्बाधकमुक्तं तद्बहिरिन्द्रियप्रत्यक्षतायां भवति

तत्र हि रूपवत्त्वानेकद्रव्यवत्त्वयोः प्रयोजकत्वात्, मानसप्रत्यक्षता च तदन्तरेणापि। ननु स्यादेवं यद्यात्मनि प्रमाणं स्यात् तदेव तु नास्तीत्यत आह शब्दवद्व्यतिरेकाव्यभिचाराद्विशेषसिद्धेरिति यथा क्षित्यादिषु द्रव्येषु शब्दस्य व्यतिरेकोऽव्यभिचारी नियतत्वेन तदाश्रयस्याष्टद्रव्यातिरिक्तस्याकाशरूपस्य विशेषस्य सिद्धिः एवमिच्छायाः पृथिव्यादिषु व्यतिरेकस्याव्यभिचारात् तदाश्रयेणापि अष्टद्रव्यातिरिक्तेन भवितव्यम्। नन्वेतावताऽऽनुमानिक एव आत्मा न तु प्रत्यक्ष इत्यत आह अहमिति शब्दयोग्याभ्यामिति अहमितीतिकारेण ज्ञानाकारमाह तेनाहमिति ज्ञानं शब्दलिङ्गानुसन्धानमन्तरेण निर्मीलिताक्षस्य यदुत्पद्यते तत्तस्येन अहन्त्ववता योग्येन प्रमाणसिद्धेन उपपादनीयम्, न तु शरीरादिना, तत्रैवास्या व्यतिरेकस्य व्यभिचारात् अभावात्। शब्दयोग्याभ्यामित्यनन्तरम् उपपादनीयमिति पूरणीयम् आत्मनि प्रमाणानि बहूनिसन्ति ग्रन्थगौरवभिया नोक्तानि मयूखेऽन्वेष्टव्यानि।१८। आत्मपरीक्षाप्रकरणं समाप्य इदानीमात्मनानात्वप्रकरणमारभते तत्र पूर्व्वपक्षसूत्रम्। एक एव आत्मा चैत्रमैत्रादिदेहभेदेऽपि, कुतः सुखदुःखज्ञानानां निष्पत्तेरुत्पत्तेरविशेषात् सर्व्वशरीरावच्छेदेन सुखदुःखज्ञानानामुत्पत्तिरविशिष्टैव यतः यद्यात्मभेदसाधकं लिङ्गान्तरं भवेत्तदा सिद्ध्येदात्मभेदः, न च तदस्ति, यथा तत्तत्प्रदेशावच्छेदेन शब्दनिष्पत्तावपि शब्दलिङ्गाविशेषादेकमेवाकाशम् यौगपद्यादिप्रत्ययलिङ्गाविशेषादेक एव कालः पूर्व्वापरादिप्रत्ययलिङ्गाविशेषादेकैव दिक्।१९। सिद्धान्तमाह। नाना आत्मानः कुतः? व्यवस्थातः व्यवस्था प्रतिनियमः। यथा कश्चिदाढ्यः, कश्चित् रङ्कः, कश्चित् सुखी, कश्चिद्दुःखी, कश्चिदुच्चाभिजनः, कश्चिन्नीचाभिजनः, कश्चिद्विद्वान्, कश्चित् जाड्य इतीयं व्यवस्था आत्मभेदमन्तरेणानुपद्यमाना साधयत्यात्मनां भेदम्, न च जन्मभेदेन बाल्यकौमारवार्द्धक्यभेदेन वा, एकस्याप्यात्मनो यथा व्यवस्था तथा चैत्रमैत्रादिदेहभेदेऽपि स्यादिति वाच्यं कालभेदेन विरुद्धधर्म्माध्याससम्भवात्" २०। उपस्करः सांख्यसूत्रभाष्ययोश्च प्रत्येकं भूतेषु चैतन्यादर्शनेन समुदाये न चैतन्यमित्युक्तं यथा "न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः"१। "प्रपञ्चमरणाद्यभावश्च"२। "मदशक्तिवच्चेत् प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः३" सां०सू० "देहस्य भौतिकत्वेन यत् सिध्यति तदाह। भूतेषु पृथक्कृतेषु चैतन्यादर्शनाद्भौतिकस्य देहस्य न स्वाभाविकं चैतन्यं किन्त्वौपाधिकमित्यर्थः १। बाधकान्तरमाह। प्रपञ्चस्य सर्व्वस्यैव मरणसुषुप्त्याद्यभावश्च देहस्य स्वाभाविकचैतन्ये सति स्यादित्यर्थः। मरणसुषुप्त्यादिकं हि देहस्याचेतनता सा च स्वाभाविकचैतन्ये सति नोपपद्यते स्वभावस्य यावद्द्रव्यभावित्वादिति २। प्रत्येकादृष्टेरिति यदुक्तं तत्राशङ्क्य परिहरति। ननु यथा मादकता शक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितद्रव्ये वर्त्तते एवं चैतन्यमपि स्यादिति चेन्न प्रत्येकपरिदृष्टे सति सांहत्ये तदुद्भवः सम्भवेत्। प्रकृते तु प्रत्येकपरिदृष्टत्वं नास्ति। अतो दृष्टान्ते प्रत्येकं शास्त्रादिभिः सूक्ष्मतया मादकत्वे सिद्धे संहतभावकाले मादकत्वाविर्भावमात्रं सिद्ध्यति। दार्ष्टान्तिके तु प्रत्येकभूतेषु सूक्ष्मतया न केनापि प्रमाणेन चैतन्यं सिद्धमित्यर्थः ननु समुदिते चैतन्यदर्शनेन प्रत्येकभूते सूक्ष्मचैतन्यशक्तिरनुमेयेति चेन्न अनेकभूतेष्वनेकचैतन्यशक्तिकल्पनायां गौरवेण लाघवादेकस्यैव नित्यचित्स्वरूपस्य कल्पनौचित्यात्। ननु यथावयवेऽवर्त्तमानमपि परिमाणजलाहरणादि कार्य्यं घटादौ दृश्यते एवमेव शरीरे चैतन्यं स्यादिति चेत् मैवम् भूतगतविशेषगुणानां सजातीयकारणगुणजन्यतया कारणे चैतन्यं विना देहे चैतन्यासम्भवादिति" भा०। अयमात्मा सांख्यैः पुरुषशब्देनाभिधीयते ते च नाना "जन्मादिव्यवस्थातः पुरुषबहुत्वम्" सां०सूत्रात्। वेदान्तिनस्तु तस्यैकत्वेऽपि उपाधिभेदेन कर्णशष्कुल्यादिभेदेनाकाशभेदवत् नानात्वं वस्तुत एकत्वम् "इन्द्रोमायाभिः पुरुरूप ईयते" "रूपंरूपं प्रतिरूपो बभूवेति" श्रुतेः "अंशो नानाव्यपदेशात्" "तद्गुणसारत्वादिति" च न्यायाच्चेति। एतत्प्रपञ्चस्तु शा०भा० द्रष्टव्यः।

मिताक्षरायाम् देहाद्व्यतिरिक्तात्मास्तित्वे प्रमाणं दर्शितं यथा "भूतचैतन्यवादिपक्षम्परिजिहीर्षुराह"। "वेदैः शास्त्रैः सविज्ञानैर्जन्मना मरणेन च। आर्त्त्या गत्या तथाऽऽगत्या सत्येन ह्यनृतेन च। श्रेयसा सुखदुःखाभ्यां कर्म्मभिश्च शुभाशुभैः। निमित्तशकुनज्ञानग्रहसंयोगजैः फलैः। ताराग्रहक्षसञ्चारैर्जागरैः स्वप्नजैरपि। आकाशपवनज्योतिर्जलभूतिमिरैस्तथा। मन्वन्तरयुगप्राप्त्या मन्त्रौषधिफलैरपि। वित्तात्मानं विद्यमानम् कारणञ्जगतस्तथा" या०। वेदैः "सएष नेति नेतीत्यात्मेति" "अस्थूलमनण्वह्रस्वमपाणिपादम्" इत्यादिभिः। शास्त्रैश्च मीमांसान्वीक्षिक्यादिभिः विज्ञानैश्च ममेदं शरीरमित्यादि देहव्यतिरिक्तात्मगोचरैः। तथा जन्ममरणाभ्यां जन्मान्तरानुष्ठितधर्म्म

नियताभ्यान्देहातिरिक्तात्मानुमानम् । आर्त्वा जन्मान्तर गतकर्म्मानुष्ठाननियततया । तथा गमनागमनाभ्यां ज्ञानेच्छाप्रयत्नाधारनियताभ्यामपि भौतिकदेहातिरिक्तात्मानुमानम् । न हि देहस्य चैतन्यादि सम्भवति यतः कारणगुणप्रक्रमेण कार्य्यद्रव्ये वैशेषिकगुणारम्भोदृष्टः । न च तत्कारणभूतपार्थिवपरमाण्वादिषु चैतन्यादि समवायः सम्भवति तदारब्धस्तम्भकुम्भादिभौतिकेष्वनुपलम्भात् । न च मद्यशक्तिवदुदकादिद्रव्यान्तर संयोगज इति वाच्यम् शक्तेःसाधारणगुणत्वादतो भौतिकदेहातिरिक्तश्चैतन्यादिसमवाय्यङ्गीकर्त्तव्यः । सन्ध्यान्वते प्रसिद्धे । श्रेयो हितप्राप्तिः । सुखदुःखे व्यासुप्तिके । तथा शुभकर्म्मानुष्ठानमशुभकर्म्मपरित्यागः । एतैश्च ज्ञाननियतैर्देहातिरिक्तात्मानुमानम् । निमित्तं भूकम्पादि शकुनज्ञानमिङ्गलादिपतत्रिचेष्टालिङ्गकम् ज्ञानम् ग्रहाःसूर्य्यादयः तत्संयोगजैः फलैः । तारा अश्विन्यादिव्यतिरिक्तानि ज्योतींषि नक्षत्राण्यश्वयुक्प्रभृतीनि एतेषां सञ्चारैः शुभाशुभफलद्योतनैः । जागरैर्जागरावस्थाजन्यैश्च सच्छिद्रादिव्यादिदर्शनैः । तथा स्वप्नैः खरवराहशूकरथारोहणादिज्ञानैः । तथा आकाशाद्यैश्च जीवोपभोगार्थतया सृष्टैः । तथा मन्वन्तरप्राप्त्या युगान्तरप्राप्त्या देहेऽनुपपद्यमानया तथा मन्त्रौषधिफलैः प्रेक्षापूर्व्वकैः क्षुद्रकर्म्माद्यैः साक्षात्परम्परया वा देहेऽनुपपद्यमानैर्विद्यमानं हे मनयो वित्त जानीत । किञ्च । "अहङ्कृतिः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः । इन्द्रियान्तरसञ्चार इच्छा धारणजीविते । स्वर्गः स्वप्नश्च भावनाप्रेरणं मनसो गतिः । निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम् । यत एतानि दृश्यन्ते लिङ्गानि परमात्मनः । तस्मादस्ति परो देहादात्मा सर्वग ईश्वरः" या० । अहङ्कृतिः अहङ्कारः । स्मृतिः प्राग्भवीयानुभवभावितसंस्कारोद्बोधनिबन्धना स्तन्यपानादिगोचरा । सुखमैहिकम् । धृतिर्धैर्यम् । इन्द्रियान्तरेण दृष्टेऽर्थे इन्द्रियान्तरस्य सञ्चारः यमहमद्राक्षं तमहं स्पृशामीत्येवमनुसन्धानरूप इन्द्रियान्तरसञ्चारः । अत्रेच्छाप्रयत्नचैतन्यानां स्वरूपेण लिङ्गत्वम् । पूर्व्वश्लोकेऽनुगमनशब्दवचनादिहेतुतयार्थिकम् लिङ्गत्वमित्यपौनरुक्त्यम् । तथा धारणं शरीरस्य, जीवितं प्राणधारणम् । स्वर्गोनियतदेहान्तरोपभोग्यः सुखविशेषः । स्वप्नः प्रसिद्धः पूर्व्वश्लोके तु स्वप्नस्य शुभफलद्योतकतया लिङ्गत्वमत्र स्वरूपेणेत्यपौनरुक्त्यम् । भावनामिन्द्रियादीनाम्प्रेरणं मनसोगतिश्चेतनाधिष्ठानव्याप्ता । निमेषः प्रसिद्धः तथा पञ्चभूतानामुपादानम् । यस्मादेतानि लिङ्गानि भूतेष्वनुपपन्नानि साक्षात्परम्परया वात्मनोद्योतकानि दृश्यन्ते । तस्मादस्ति देहातिरिक्त आत्मा सर्वग ईश्वर इति सिद्धम्" इत्यन्तेन मिता० ।

देहात्मनोः स्वभावभेदपर्य्यालोचनयाऽपि न यथा तयोरैक्यं तथा दर्शितं विवेकचूड़ामणौ "देहोऽयमन्नभवनोऽन्नमयस्तु कोषश्चान्नेन जीवति विनश्यति तद्विहीनः । त्वक्चर्म्ममांसरुधिरास्थिपुरीषराशिर्नायं स्वयं भवितुमर्हति नित्यशुद्धः । पूर्व्वं जनेरपि मृतेरधुनायमस्ति जातक्षणः क्षणगुणोऽनियतस्वभावः । नैकोजडश्च घटवत्परिदृश्यमानः स्वात्मा कथं भवति भावविकारवेत्ता । पाणिपादादिमान् देहो नात्मा व्यङ्गेऽपि जीवनात् । तत्तच्छक्तेरनाशाच्च न नियम्योनियामकः । देहतद्धर्म्मतत्कर्म्मतदवस्थादिसाक्षिणः । स्वतएव स्वतः सिद्धं तद्वैलक्षण्यमात्मनः । शल्यराशिर्मांसलिप्तो मलपूर्णोऽतिकश्मलः । कथं भवेदयं वेत्ता स्वयमेतद्विलक्षणः । त्वङ्मांसमेदोऽस्थिपुरीषराशावहंमतिं मूढजनः करोति । विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम् । देहोऽहमित्येव जडस्य बुद्धिर्देहे च जीवे विदुषस्त्वहंधीः । विवेकविज्ञानवतोमहात्मनो ब्रह्माहमित्येव मतिः सदात्मनि । अत्रात्मबुद्धिं त्यज मूढबुद्धे! त्वङ्मांसमेदोऽस्थिपुरीषराशौ । सर्व्वात्मनि ब्रह्मणि निर्विकल्पे कुरुष्व शान्तिं परमां भजस्व । देहेन्द्रियादावसति भ्रमोदितां विद्वानहन्तां न जहाति यावत् । तावन्न तस्यास्ति विमुक्तिवार्त्ताप्यस्त्वेष वेदान्तनयान्तदर्शी । छायाशरीरे प्रतिबिम्बगात्रे यत्स्वप्नदेहे हृदि कल्पिताङ्गे । यथात्मबुद्धिस्तव नास्ति काचित् जीवच्छरीरे च तथैव मास्तु । देहात्मधीरेव नृणामसद्धियां जन्मादिदुःखप्रभवस्य बीजम् । यतस्ततस्त्वं जहि तां प्रयत्नात् त्यक्तेऽद्य चित्ते न पुनर्भवाशा" । आत्मस्वरूपमुक्तं विवेकचूड़ामणौ "अस्ति कश्चित् स्वयं नित्यमहंप्रत्ययलम्बनः । अवस्थात्रयसाक्षी सन् पञ्चकोषविलक्षणः । योविजानाति सकलं जाग्रत्स्वप्नसुषुप्तिषु । बुद्धितद्वृत्तिसद्भावमभावमहमित्ययम् । यः पश्यति स्वयं सर्व्वं यं न पश्यति कश्चन । यश्चेतयति बुद्ध्यादिं न तु यं चेतयत्ययम् । येन विश्वमिदं व्याप्तं यन्न व्याप्नोति किञ्चन । आभारूपमिदं सर्वं यं भान्तमनुभात्य-

यम्। यस्य सन्निधिमात्रेण देहेन्द्रियमनोधियः। विषयेषु स्वकीयेषु वर्त्तन्ते प्रेरिता इव। अहङ्कारादिदेहान्ता विषयाश्च सुखादयः। वेद्यन्ते घटवद्येन नित्यबोधस्वरूपिणा। एषोऽन्तरात्मा पुरुषः पुराणोनिरन्तराखण्डसुखानुभूतिः। सदैकरूपः प्रतिबोधमात्रो येनेषिता वागसवश्चरन्ति। अत्रैव सत्त्वात्मनि धीगुहायामव्याकृताकाशउरुप्रकाशः। आकाश उच्चै रविवत् प्रकाशते स्वतेजसा विश्वमिदं प्रकाशयन्। ज्ञाता मनोऽहङ्कृतिविक्रियाणां देहेन्द्रियप्राणकृतक्रियाणाम्। अयोऽग्निवत्ताननुवर्त्तमानो न चेष्टते नो विकरोति किञ्चन। न जायते नो म्रियते न वर्द्धते न क्षीयते नो विकरोति नित्यः। विलीयमानेऽपि वपुष्यमुष्मिन् न लीयते कुम्भ इवाम्बरं स्वयम्। प्रकृतिविकृतिभिन्नः शुद्धबोधस्वभावः सदसदिदमशेषं भासयन्निर्विशेषः। विलसति परमात्मा जाग्रदादिष्ववस्थास्वहमहमिति साक्षात् साक्षिरूपेण बुद्धेः। नियमितमनसामुं त्वं स्वमात्मानमात्मन्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात्। जनिमरणतरङ्गापारसंसारसिन्धुं प्रतर भव कृतार्थो ब्रह्मरूपेण संस्थः। अत्रानात्मन्यहमिति मतिर्बन्ध एषोऽस्य पुंसः प्राप्तोऽज्ञानाज्जननमरणक्लेशसंपातहेतुः। येनैवायं वपुरिदमसत् सत्यमित्यात्मबुद्ध्या पुष्यत्युक्षत्यवति विषयैस्तन्तुभिः कोशकृद्वत्। अतस्मिंस्तद्बुद्धिः प्रभवति विमूढस्य तमसा विवेकाभावाद्वै स्फुरति भुजगे रज्जुधिषणा। ततोऽनर्थव्रातो निपतति समादातुरधिकस्ततो योऽसद्ग्राहः स हि भवति बन्धः शृणु सखे!। अखण्डनित्याद्वयबोधशक्त्या स्फुरन्तमात्मानमनन्तवैभवम्। समावृणोत्यावृतिशक्तिरेषा तमोमयी राहुरिवार्कबिम्बम्। तिरोभूते स्वात्मन्यमलतरतेजोवति पुमाननात्मानं मोहादहमिति शरीरं कलयति। ततः कामक्रोधप्रभृतिभिरमुं बन्धनगुणैः परं विक्षेपाख्या रजस उरुशक्तिर्व्यथयति। महामोहग्राहग्रसनगलितात्मावगमनो धियोनानावस्थां स्वयमभिनयंस्तद्गुणतया। अपारे संसारे विषयविषपूरे जलनिधौ निमज्ज्योन्मज्ज्यायं भ्रमति कुमतिः कुत्सितगतिः। भानुप्रभासञ्जनिताभ्रपङ्क्तिर्भानुं तिरोधाय विजृम्भते यथा। आत्मोदिताहङ्कृतिरात्मतत्त्वं तथा तिरोधाय विजृम्भते स्वयम्"।

शरीरमध्ये आत्मध्यानस्थानं स्वरूपञ्च या०स्मृतौ मिताक्षरायाञ्चोक्तम्। "द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः। हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम्। मण्डलन्तस्य मध्यस्थ आत्मा दीपवदचलः। सज्ञेयस्तं विदित्वेह पुनराजायते न तु" या०। "हृदयप्रदेशादभिनिःसृताः कदम्बकुसुमकेशरवत्सर्व्वतो निर्गता हिताहितकरत्वेन हिताहितेति संज्ञा द्वासप्ततिसहस्राणि नाड्यो भवन्ति। अपरास्तिस्रोनाड्यस्तासामिडापिङ्गलाख्ये द्वे नाड्यौ सव्यदक्षिणपार्श्वगते हृदि विपर्य्यस्ते नासाविवरसम्बद्धे प्राणापानायतने। सुषुम्नाख्या पुनस्तृतीया दण्डवन्मध्ये ब्रह्मरन्ध्रविनिर्याता। तासां नाडीनां मध्ये मण्डलञ्चन्द्रप्रभम्। तस्मिन्नात्मा निवातस्थदीपवदचलः प्रकाशमान आस्ते। सएवम्भूतो ध्यातव्यः। यतस्तस्यात्मनः साक्षात्करणादिह संसारे न पुनः संसरत्यमृतत्वञ्चाप्नोति" मिता०।

आत्मशब्दनिर्वचनञ्च वेदान्तसूत्रव्याख्याम् "यदाप्नोति यदादत्ते यच्चात्ति विषयान् बहून्। यच्चास्य सन्ततोभावस्तस्मादात्मेति कथ्यते" अन्यत्र च "प्रत्यग्रूपः पराग्रूपात् व्यावृत्तोऽनुभवात्मकः। प्रथते यः स आत्मेति प्राहुरात्मविदोजनाः इति"स च पञ्चधा। "भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान्। आत्मा च परमात्मा च त्वमेकः पञ्चधा मत" इत्येकस्यैवात्मनो भूतादिषु अधिष्ठातृत्वेनावस्थितेः पञ्चविधत्वम्। "त्यज्यमानेऽपि न त्यक्तः प्राप्यमाणेऽपि नाप्यते। आगमापायसाक्षी यः स आत्मानुभवात्मक" इति तत्र देहे "भर्त्तृषूपसखि निक्षिपतीनामात्मनोमधुमदोद्यमितानाम्" किरा०। "आत्मनोदेहान्" भट्टि०। "प्रभाविनं भाविनमन्तमात्मनः" माघः। आत्मनोनित्यत्वेन देहस्यैवान्तकत्वमिह विवक्षितम् तदवच्छिन्नचैतन्यस्यात्मशब्दार्थत्वेऽपि विशेष्टे नाशान्वयासम्भवात् विशेषणे तदन्वयः। एवं "व्यापादयेद्व्या आत्मानमित्यादौ" "ये केचात्महनोजना" इत्यादावपि "स्थितः सर्व्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना" रघुः। "आत्मना शरीरेण" मल्लि०। "अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" गीता। यत्ने "कर्म्मात्मा त्वपरोयोऽसौ बन्धमोक्षैः स युज्यते" इति कर्म्मणि आत्मा यत्नीयस्त्वेत्यर्थः। भूतात्मत्वादौ आत्मशब्दः गौणः आत्मोपकरणत्वात् आत्मजन्यत्वाद्वा "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिश्रुत्या भूतानामात्मन उत्पत्तिप्रतिपादनात्। स्वभावे, बुद्धौ च "तमात्मसम्पन्नमनिन्दितात्मा" रघुः। "अनिन्दितात्मा अगर्हितस्वभावः आत्मसम्पन्नं बुद्धिसम्पन्नम्" मल्लि०। १२देहावच्छिन्ने चैतन्ये च "आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः" श्रुतिः। अन्तःकरणे, "आत्मानमात्मना वेत्सि" कुमा०। "तन्नोऽकृतात्मनां स्याम्"

बृ०उ० "अनेनात्मना मनसा आत्मन्वी मनस्वी स्याम्" भा० स्वरूपे" अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" छा०उ० । जीवात्मनि "आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" कठ०उ० । "तत्रात्मानं संसारिणं रथिनं रथस्वामिनं विद्धि" भा० । बुद्ध्यादौ "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः । एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः । यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति यच्छेत्तद्यच्छेच्छान्त आत्मनि" कठ०उप० "ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि बुद्धिर्हि मनआदिकरणानि प्राप्नोतीत्यात्मा तेषां प्रत्यग्ज्ञानम् । बुद्धिमात्मनि महति प्रथमजे यच्छेत् प्रथमजवत् स्वच्छस्वभावमात्मनो विज्ञानमापादयेदित्यर्थः । तञ्च महान्तमात्मानं यच्छेच्छान्ते सर्वविशेषप्रत्यस्तमितरूपे अविक्रिये सर्वान्तरे सर्वबुद्धिप्रत्यक्षिणि मुख्ये आत्मनि" भा० । तत्र पुत्रादौ आत्मशब्दो गौणः ममात्मा भद्रसेन इतिवत् देहादौ तु मिथ्याभिमान इति भेदः एतदभिप्रायेणैव "गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनादिति" शा० भा० उक्तम् । परमात्मनि "तस्माद्वा एतस्मादात्मनः आकाशः संभूतः" । "आत्मा वा अरे द्रष्टव्यः" इति च श्रुतिः स्वरूपे तदात्मा पृथगात्मा "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते" वाक्यप० । बुद्धिविशेषस्यधर्म्मोपलक्षितार्थे स्वशब्दार्थे "धामेष्वात्मविसृष्टेषु" रघुः "देवात्मशक्तिं स्वगुणैर्निगूढाम्" श्रुतिः । भावे त्व आत्मत्वम् आत्मधर्मे न० । "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" उदयनः । तल् तत्त्वार्थे स्त्री 'तदात्मताध्यातधवा रते च का" नै० । ष्यञ् टिलोपः । आत्म्यम् तत्त्वार्थे न० । हितार्थे ख । आत्मनीनः आत्महिते त्रि० । तस्येदं छ आत्मीयः । तत्सम्बन्धिनि त्रि० । गूढात् परत्वेऽस्य पू० वर्णविकृतौ गूढोत्मा "गूढोत्मादयश्च विकृतेरिति" व्या० कारिका "गूढोत्मा न प्रकाशते" इति कठ०उप० । आत्मनः प्रत्यक्त्वं, परात्मनः पराक्त्वमिति भेदः तयोर्भेदाभेदपक्षौ च मद्भेदेन प्राक् दर्शितौ ।

**आत्मनिष्ठ** त्रि० आत्मनि आत्मज्ञाने निष्ठा यस्य । आत्मज्ञानसाधनाभ्यासिनि ब्रह्मनिष्ठे शुकादौ ।

**आत्मनीन** त्रि० आत्मने हितम् ख । १ आत्महिते "तामात्मनीनामुदवोढ रामः" भट्टिः । "अद्यापि नैवात्मनीनं कृतं कर्म यातं जनुः" नीतिः २ पुत्रे ३ श्याले नाटकप्रसिद्धे विदूषके च पु० शब्दच० ४ प्राणधारके वर्त्तिनि त्रि० ।

**आत्मनेपद** न० आत्मने आत्मार्थफलबोधनाय पदम् अलुक् स० । आत्मगामिफलबोधके व्याकरणप्रसिद्धे तङादौ । "तङानावात्मनेपदम्" पा० "अनुदात्तङितः आत्मनेपदम्" । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा० उक्तेः आत्मगामिन्येव क्रियाफले तत्पदस्य विधानात् तथात्वम् तङ् प्रत्याहारः स च "तथातां झथास् आथांध्वम् इड् वहिमहिङ्" पाणिन्युक्तः" एतेषां स्थाने एव लकारभेदे तत्तद्रूपाणि आदिष्टानि ।

**आत्मनेपदिन्** पु० आत्मनेपदं विहितत्वेनास्त्यस्य इनि । पाणिन्युक्ते धातुभेदे ते च गणपाठे अनुदात्तेतोहलन्ताः स्वरान्तङितश्च पठिता धातवः । एवमन्येऽपि धातवः स्वरितेतोञितश्च कर्त्रभिप्राये क्रियाफले एव तथा अर्थविशेषे उपसर्गविशेषयोगेन कर्त्तरि वाच्ये चात्मनेपदिनोऽपि भवन्ति ते च पाणिन्यनुशिष्टाः संक्षिप्य आशुबोधेऽस्माभिर्दर्शिताः यथा । "विपराभ्यां परस्मात्तु जयतेरात्मनेपदम् । परिव्यवेभ्यः क्रीणातेस्तङ् स्यात् कर्त्तरि नेर्विशः । आङो दोऽनास्यविस्तारे शपथे शपतेर्भवेत् । पर्य्यन्ववाङः क्रीडः स्यादकूजार्थात्तु तङ् मतः । आङो नौतेः पृच्छतेश्च समायामागमेर्भवेत् । नाथतेराशिषि भवेत् जिज्ञासायान्तु शिक्षतेः । हृञोऽर्थात् भक्ष्यावकाश लेखनार्थात् किरस्तु तङ् । उपात् कर्त्तरि सुट् तस्य चतुष्पादेऽथ पक्षिणि । प्रतिज्ञायां, निर्णयार्थमाश्रये,ऽभीष्टबोधने । वर्त्तमानात्तिष्ठतेस्तङ् तथा कर्मविवर्ज्जितात् । देवपूजासंगमयोर्मैत्र्यां मार्गगतो तथा । उपात्तङ् लिप्सतेश्चैव मन्त्रसाधनकात्तु तङ् । तथा संप्रपरिभ्यः स्थ उद्यानूर्द्ध्वकर्म्मणि । स्वाङ्गकर्माकर्मकात् तङ्द्विभ्यां तपतेर्भवेत् । हनो यमस्तथाभूताद् आङः कर्त्तरि तङ् भवेत् । समः कर्म्माविवक्षायां गम्यत्तिस्तुदयो भवेत् । उपसर्गाद्ध्वतेश्चाङ्ह्वतेश्च विभाषया । निसंव्युपेभ्यो ह्वयतेः स्पर्द्धायामाङ एव तङ् । सूचने, भर्त्सने, द्रुहे—सहसैव प्रवर्त्तने । सतो गुणान्तराधाने, सेवायां विनियोजने । कथने च कृञस्तङ् स्याद्धेस्तु सहने तथा । वेः शब्दकर्मणस्त्वस्मात् कर्मणा र-

हिताच्च तङ् । शास्त्रार्थवेदनेनैव सम्माने तत्त्वनिश्चये । उत्क्षेपणे मार्गणे च ऋणनिर्यातने तथा । अन्तिकप्रापणे भृत्यां व्यये चापनये तथा । अमूर्त्ते कर्तृगे कर्मण्येव तङ् नयतेर्भवेत् । उत्साहे चाप्रहितौ वृद्धौ च क्रमतेस्तु तङ् । परोपाभ्याञ्चेतरार्थे तङाङोज्योतिरुद्गमे । प्रोपाभ्यां तङ् समारम्भे वेः पादचलनार्थकात् । विभाषया क्रमेस्तङ् स्यादुपसर्गविवर्जितात् । निह्नवे ज्ञोऽकर्मकाच्च संप्रतिभ्यामचिन्तने । यत्ने च ज्ञानपूर्व्वोक्तौ विमतावुपसान्त्वने । प्रार्थने च वदेर्व्यक्तौ संभूयोच्चारणे तु तङ् । अनोरकर्मकाद्रक्तौ सहोक्तौ विमते तु वा । अवाङ्गिरः कर्त्तरि तङ् प्रतिज्ञायां समस्तथा । उदश्चरः कर्म्मयुक्तात् समोयुक्तात् तृतीयया । तृतीया चेच्चतुर्थ्यर्थे दाणः संपूर्व्वकात्तु तङ् । ज्ञाश्रुस्मृदृशस्तेश्च स्यात् सन्नन्तात्कर्त्तरीष्यते । अनोर्जिज्ञासतेनैव प्रत्याङ्भ्याञ्च तथा श्रुवः । स्वराद्यन्तोपसर्गात्तङ् युजे र्न यज्ञपात्रके । अपालने भुजेस्तङ् स्यात् क्ष्णुवः संपूर्व्वकात्तु तङ् । अकर्त्रर्थस्य धातोर्यत् कर्म्माण्यन्तस्य चेद्भवेत् । ण्यन्तस्य कर्त्ता स, तदा तस्मात् ण्यन्तात् भवेत्तु तङ् । णिजन्ताच्च गृधेर्वञ्चेः प्रतारार्थे तु तङ् भवेत् । कविकल्पद्रुमग्रन्थे ञित्त्वेन पठितास्तु ये । णिजन्ताश्चोभयपदास्तेभ्यस्तङ् कर्तृगे फले । अपाद्वदोयमोऽप्यन्ये समुदाङ्भ्यस्तथैव तङ् । उपसर्गोदिते ज्ञश्च तथा तङ् कर्त्तृगे फले । समीपस्थपदेनैव कर्त्तृगस्य फलस्य चेत् । द्योतनं स्यात्तदा तत्र तङ् कर्त्तरि विभाषया" उदाहरणं तत्रैव दृश्यम् । "परस्मैपदमिच्छन्ति आत्मनेपदिनः क्वचित्" व्या०कारिका। [स०। व्याकरणप्रसिद्धे आत्मनेपदशब्दार्थे ।

**आत्मनेभाषा** स्त्री आत्मने तदुद्देशेन भाषा परिभाषा अलुक्

**आत्मन्वत्** त्रि०आत्माऽस्त्यस्य मतुप् वेदे मत्वात् न नलोपः स्त्रियां ङीप् । १आत्मविशिष्टे "तमूहथुर्नौभिरात्मन्वतीभिः" ऋ० १,११६,३ । "आत्मन्वभोदुह्यते घृतं पयः" ऋ० ९,७४,४ । लोके तु आत्मवान् इत्येव । २यत्नवति ३सुमनस्के च त्रि० स्त्रियां ङीप् ।

**आत्मन्विन्** त्रि० आत्मन्+अस्त्यर्थे वा० विनि मत्वम् । मनस्विनि "तनूमनोऽकुरुतात्मन्वी स्यामिति" वृ०उप० "आत्मन्वी मनस्वी" भा०।

**आत्मपुराण** न० आत्मनः पुराणं सृष्ट्यादिकर्तृत्वादिरूपमितिवृत्तमधिकृत्य कृतो ग्रन्थः अण् । आत्मनोजगत्सृष्ट्यादिरूपेतिवृत्ताधिकारेण शङ्करानन्दकृते अष्टादशाध्यायात्मके उपनिषदर्थप्रकाशके ग्रन्थभेदे । तत्र प्रतिपाद्यानि १अ० ऐतरेयोपनिषदर्थविवृतिः । २ अ० वृहदारण्यस्य कौषीतकिब्राह्मणार्थविवृतिः । ३अ० वृ० गार्ग्यजातशत्रुसंवादार्थविवृतिः । ४ अ० वृ० मधुकाण्डार्थविवृतिः । ५अ० वृ० याज्ञवल्क्यकाण्डार्थविवृतिः । ६अ०वृ० याज्ञवल्क्यजनकसंवादार्थविवृतिः । ७अ० वृ० याज्ञवल्क्यमैत्रेयी संवादार्थविवृतिः । ८अ० श्वेताश्वतरोपनिषदर्थविवृतिः । ९ अ० काठकोपनिषदर्थविवृतिः । १० अ० तैत्तिरीयोपनिषदर्थविवृतिः । ११अ० गर्भाद्युपनिषदर्थविवृतिः । १२ अ० छान्दोग्यस्य श्वेतकेतुसंवादार्थविवृतिः । १३ अ० छा० सनत्कुमारनारदसंवादार्थविवृतिः । १४ अ०छा० प्रजापतीन्द्रसंवादार्थविवृतिः । १५अ० तलवकारोपनिषदर्थविवृतिः । १६ अ० मुण्डकोपनिषदर्थविवृतिः । १७अ० प्रश्नोपनिषदर्थविवृतिः । १८अ० माण्डूक्यशाखायास्विप्रभृतीनामुपनिषदां सारांशार्थविवृतिः । एतत्पुराणस्य सुगमोपायेन वेदान्तमतज्ञानार्थमतीवोपयोगि विवृतञ्चैतत् काकारामशास्त्रिणा ततएव तत्रत्याशेषार्थाः सुग्रहाः ।

**आत्मप्रकाश** त्रि०आत्मनः प्रकाशः । आत्मचैतन्यस्य पदार्थावभासनरूपे प्रकाशे । "आत्मनस्तत्प्रकाशत्वं यत्पदार्थावभासनम् । नाग्न्यादिदीपवद्दीप्तिर्भवत्यान्ध्यं यतो निशि" इत्युक्तेः अग्न्यादिप्रकाशविलक्षणनित्यप्रकाशत्वेन तत्प्रकाशेनैव घटादिस्फुरणेन च तस्य तथात्वम् । "वुद्धिवृत्तिचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत्" इत्युक्तेस्तस्य सर्वप्रकाशकत्वम् ।

**आत्मप्रभ** त्रि०आत्मना स्वयमितरनैरपेक्ष्येण प्रभा यस्य । १स्वयंप्रकाशमाने "लोकानात्मप्रभान् पश्यन् फाल्गुनोविस्मयान्वितः" भा०व०प०४२अ०। २परमात्मनि पु० "हृद्यन्तः स्वयं ज्योतिरिति" श्रुतेः "न तद्भासयते सूर्य्यो न शशाङ्को न पावक" इत्युक्तेश्च तस्य भासने इतरापेक्षाभावात्तस्य तथात्वम् । ३त० । ३स्वयंप्रभायां स्वयं प्रकाशे स्त्री ।

**आत्मप्रभव** पु० प्रभवत्यस्मात् प्र+भू—अपादाने अप् आत्मा देहः मनो वा प्रभवो यस्य । १तनुजे पुत्रे मनोभवे २कामे च ३कन्यायां ४वुद्धौ च स्त्री आत्मभवादयोऽप्यत्र । ५आकाशादिषु च च परमात्मनः प्रभवत्वात्तेषां तथात्वम् ।

**आत्मबन्धु** पु० आत्मनो बन्धुः । १आत्ममित्रे "आत्ममातुःस्वसुः पुत्राः आत्मपितुःस्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेयाह्यात्मबान्धवाः २इत्युक्ते" मातृपितृस्वस्रोः २पुत्रे ३मातुलपुत्रे च । "पत्नीदुहितरश्चैव पितरौ भ्रातर-

सखा। तत्सुतो गौतजीवश्चुः पितुः सब्रह्मचारिणः" या० वचने बन्धुपदेन एतेषामात्मबन्धूनां पितृमातृबन्धू-नाञ्च ग्रहणम्। आत्मबान्धवादयोऽप्यत्र। ४आत्मनि च "आत्मैव ह्यात्मनोबन्धुरात्मैव रिपुरात्मनः" इत्युक्तेरात्मन एव आत्मोपकारज्ञानसाधनत्वेन बन्धुत्वात्तथात्वम्।

**आत्मभू** पु० आत्मनोमनसो देहात् वा भवति भू–क्विप् ५त०। मनोभवे १कामे देहभवे २पुत्रे ३कन्यायां ४बुद्धौ च स्त्री। आत्मनैव भवति भू–क्विप्। ५ईश्वरे पु० स हि "बहु स्यां प्रजायेयेति" ईक्षणपूर्व्वकं स्वव्यवस्थाकारेण विवर्त्तनात् तथा। "सर्व्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः" रघुः "आत्मभूरवरजाखिलप्रजः" इति माघः ६शिवे ७विष्णौ च परमेश्वराभेदात्तयोस्तथात्वम्। आत्मनः ब्रह्मणः भवति भू–क्विप्। आदिजीवे ८हिरण्यगर्भे "यो वै ब्रह्माणं विदधाति पूर्व्वम्" इति श्रुत्या "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्म नाम रूपमन्नञ्च जायते इति" श्रुत्या च चतुर्मुखस्यात्मजन्यत्वोक्तेस्तस्य तथात्वम् ब्रह्मेति क्लीवं छान्दसम् "यमामनन्त्यात्मभुवोऽपि कारणम्" "वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः" कुमा० अच् आत्मनो भवति भू+अच् ५त०। आत्मभवादयोऽप्युक्तार्थेषु।

**आत्मभूत** त्रि० आत्मनोदेहात् मनसो वा भूतः। तनुजे १पुत्रे मनोभवे २कामे च। ३कन्यायां ४बुद्धौ च स्त्री ५मनोजन्यमात्रे त्रि०। अनात्मा आत्मा भूतः च्वि० कर्म्म०। अनात्मनि आत्मरूपेण भवितरि ६देहादौ त्रि० "आत्मभूतानीन्द्रियाणीति शा० भा०। ७अनुकूले सेवकभेदे च। "तत्रात्मभूतैः कालज्ञैरहार्य्यैः परिचारकैः" मनुः।

**आत्मभूय** न० आत्मनो भावः भू–भावे क्यप् ६त०। आत्मत्वे ब्रह्मरूपे "आत्मभूयाय कल्पते" पुरा०।

**आत्ममय** त्रि० आत्मात्मकः आत्मन्+मयट्। आत्मस्वरूपापन्ने "सर्व्वमात्ममयं जगत्" पुरा० स्त्रियां ङीप्

**आत्ममानिन्** त्रि० आत्मानमुत्कर्षेण मन्यते मन–णिनि ६त०। १आत्मोत्कर्षाभिमानिनि गर्व्विते २सर्व्वभूतेषु आत्मत्वेन ज्ञातरि च स्त्रियां ङीप्।

**आत्ममूर्त्ति** पु० आत्मनोमूर्त्तिरिव मूर्त्तिरस्य। १भ्रातरि तस्य एकदेहोत्पन्नत्वेन, "भ्राता स्वोमूर्त्तिरात्मनः" इति मनुना भ्रातुः स्वतुल्यमूर्त्तित्वोक्तेस्तथात्वम्। ६त०। वेदान्तिमते आत्मनः स्वरूपे २चैतन्यादौ न्यायमते ३कर्तृत्वादौ च स्त्री।

**आत्ममूली** स्त्री आत्मैव रक्षणे मूलमस्याः दुःस्पर्शतयेतर मर्द्दनतः स्वस्य स्वयं रक्षणात् गौ० ङीष्। १दुरालभायाम्। आत्मा परमात्मा मूलं यस्य। २जगति न०। तस्यात्मप्रभवत्वात् तथात्वम् "ब्रह्म खानिलतेजांसि जलं भूश्चेति धातवः। इमे लोका एष चात्मा तस्माच्च सचराचरम्। मृद्दण्डचक्रसंयोगात् कुम्भकारो यथा घटम्। करोति तृणमृत्काष्ठैर्गृहं वा गृहकारकः। हेममात्रमुपादाय रूपं वा हेमकारकः। निजलालासमायोगात् कोशं वा कोशकारकः। कारणान्येवमादाय तासुतासिह योनिषु। सृजत्यात्मानमात्मा च संभूय करणानि च" या०स्मृतावात्मनो भूतसृष्टिमभिधाय अनतिदूरे "सहस्रात्मा मया योव आदिदेव उदाहृतः। मुखबाहूरुपज्जाःस्युस्तस्य वर्णा यथाक्रमम्। पृथिवी पादतस्तस्य शिरसोद्यौरजायत। नस्तःप्राणा दिशः" इत्युक्तेः जगतामात्ममूलत्वात्तथात्वम् "आत्ममूलमिदं सर्व्वमात्मन्येव प्रलीयते" इति पुरा०।

**आत्मम्भरि** त्रि० आत्मानं बिभर्त्ति भृ–खि मुम् च उप०स०। स्वोदरमात्रपूरके देवातिथ्यनादरणेन आत्मपोषकत्वात्तस्य तथात्वम् "आत्मम्भरिस्त्वं पिशितैर्नराणाम्" भट्टिः। "यथा तस्यात्मम्भरयोऽकल्याणाद्यासङ्गवत्त्वात् प्राणादयः न तथात्मम्भरिर्मुख्यः प्राणः किन्तर्हि सर्व्वार्थः, कथमित्युच्यते तेन मुख्येन यदश्नाति यत्पिबति लोकस्तेनाशितेन पीतेन चेतरान् प्राणादीन् प्रतिपालयति" छा० उ० भा०।

**आत्मयाजिन्** आत्मानं ब्रह्मरूपेण कर्म्मकरणादिकं भावयन् यजते यज–णिनि। "ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्" इत्युक्तरूपभावनया ज्योतिष्टोमादिककर्म्मकर्त्तरि आरुरुक्षौ ब्रह्मनिष्ठे १कर्म्मयोगिनि "सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि। समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छतीति" मनूक्ते आत्मतया २सर्व्वभूतदर्शिनि च

**आत्मयोनि** पु० आत्मा योनिरस्य। १चतुर्मुखे ब्रह्मणि २शिवे ३मनोभवे "प्रहर्त्तुमभ्युद्यतमात्मयोनिम्" कुमा०। ४विष्णौ च "आत्मयोनिः स्वयं जाता" विष्णुस०। आत्मैव योनिरुपादानकारणं नान्यदिति भाष्योक्तेः विष्णौ क्लीवमपि।

**आत्मरक्षा** स्त्री आत्मन एव रक्षा यस्याः। १इन्द्रवारुणीवृक्षे ६त०। आत्मनो रक्षा। २शास्त्रोक्ते विघ्नकर्त्तृभ्य आत्मनो रक्षणे च "आत्मरक्षायां जपे विनियोगः" सन्ध्याप्रयोगः।

**आत्मराम** पु० आत्मनि रमते संज्ञायां कर्त्तरि घञ्। आत्मज्ञानमात्रेण तृप्ते योगीन्द्रे।

**आत्मलाभ** पु० आत्मनोलाभः। आत्मनो यथास्वरूपज्ञानेन

आत्मस्वरूपप्राप्तौ "आत्मलाभात्परोलाभो नास्तीति मुनयो विदुः" पुरा० "आत्मलाभपरिणामनिरोधैः" किरा०।

**आत्मलोक** पु० आत्मैव लोकः प्रकाशः। स्वप्रकाशे आत्मनि।

**आत्मलोमन्** न० ६त०। मुखजाते लोमभेदे १श्मश्रुणि(दाढ़ि) २आत्मलोममात्रे च।

**आत्मवत्** त्रि० आत्मा चित्तं वश्यतयाऽस्त्यस्य मतुप् मस्य वः स्त्रियां ङीप्। १वश्यचित्ते। "उदयादिष्वविकृतिर्मनसः सत्त्वमुच्यते। आत्मवान् सत्त्ववानुक्त" इत्युत्पलमालोक्ते २निर्विकारचित्ते च "प्रकृतिष्वात्मजमात्मवत्तया" रघुः "तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः"। "स्वदेहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः" "पूर्वं पूर्वं गुरुतरं विद्यात् व्यसनमात्मवान्" "ब्रह्महत्याकृतं पापं व्यपोहत्यात्मवत्तया" इति च मनुः। "न त्वामेवंविधोभावः स्पृष्टुमर्हति मानद!। आत्मवन्तमिव व्याधिः पुरुषं हृद्रमेविनम्" भा० व०प० २७९ अ०। आत्मा प्रकाश्यतया विद्यतेऽस्य। आत्मप्रकाशके ३शास्त्रे "सुतमाविष्कृतमात्मवत् त्वया" रघुः। आत्मना तुल्या क्रिया वति। ४आत्मतुल्यक्रियायाम् अव्य०। "आत्मवन्मन्यते जगत्" इति नीतिः "मातृवत् परदारेषु परद्रव्येषु लोष्टवत्। आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः" इति चाणक्यः।

**आत्मवश** त्रि० आत्मनोवश आयत्ततात्। आत्माधीने। "यद्यदात्मवशं तु स्यात्तत्तत् सेवेत यत्नतः" "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" इति च मनुः।

**आत्मवश्य** त्रि० आत्मा मनो वश्योयस्य। वशीभूतमनस्के "आत्मवश्योर्विधेयात्मा प्रसादमधिगच्छति" गीता २आत्मनोवश्ये च।

**आत्मविक्रय** पु० ६त०। स्वदेहविक्रये। स च "गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रय" इति मनूक्तेरुपपातकभेदः।

**आत्मविद्** त्रि० आत्मानं यथार्थरूपेण वेत्ति विद्–क्विप् ६त०। आत्मस्वरूपाभिज्ञे "आत्मविदोजनाः" आत्म शब्दे उदा० "अधीयन्नात्मविद्विद्याम्" भट्टिः "तरति शोकमात्मवित्" श्रुतिः "ध्यानयोगमुपागम्य प्रसन्नमतयः सदा। सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः" भा० आश्व०प०५१अ०। आत्मानं स्वपक्षं वेत्ति क्विप्। २स्वपक्षज्ञातरि "य इहात्मविदो विपक्षमध्ये" माघः।

**आत्मविद्या** स्त्री आत्मनोविद्या। आत्मनो यथास्वरूपावेदकविद्यायाम् "आन्वीक्षिकीञ्चात्मविद्यां वार्त्तारम्भांश्च लोकतः" मनुः। "आत्मविद्या च गौराणी धर्मशास्त्रिका तथा" नन्दिपु० सा च उपनिषद्रूपा तदुपकारिशारीकविद्या च। तदुविद्यासाधने २शास्त्रे च।

**आत्मवीर** त्रि० आत्मा प्राणः वीरइव यस्य। १विशिष्टबलयुक्ते २श्यालके ३पुत्रे विदूषके च पु० मेदिनिः।

**आत्मवृत्ति** स्त्री आत्मनोवृत्तिः। १आत्मनोवर्त्तनोपाये। आत्मनि वृत्तिः स्थितिर्यस्य। २स्ववृत्तौ पदार्थे त्रि०।

**आत्मशक्ति** स्त्री६त०। आत्मानुरूपसामर्थ्ये। "दैवं निहत्य कुरु पौरुषमात्मशक्त्या" नीतिः शक्तिश्च कार्य्यजननानुकूलः सामर्थ्यभेदः सा च देहप्राणादिनिष्ठा। आत्मनः परमात्मनो जगज्जननशक्तौ २मायायाञ्च "देवात्मशक्तिं स्वगुणैर्निगूढाम्" श्रुतिः। [त्म्यांम् राजनि०।

**आत्मशल्या** स्त्री आत्मा स्वरूपं शल्यमिव यस्याः। शताव-

**आत्मशुद्धि** स्त्री आत्मनः देहस्य मनसो वा शुद्धिः। १देहशुद्धौ २चित्तशुद्धौ च शुद्धिश्च अशुद्धिशब्दे व्याख्याता।

**आत्मश्लाघा** स्त्री ६त०। आत्मनोऽसत्यगुणाविष्करणे गर्वभेदे "आत्मश्लाघा विवर्जितः" महापुरुषलक्षणम्।

**आत्मसंयम** पु० आत्मनो मनसः संयमः। चित्तसंयमने "आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते" गीता।

**आत्मसमुद्भव** पु० आत्मा देहोमनः परमात्मावा समुद्भवोऽस्य। १पुत्रे "हताविहस्मेह नरर्षभेण वयं सुरेयात्मसमुद्भवेन" भा०द्रो०प०११८अ०। २मनोभवे कामे च पु० ३मनोजन्ये सुखादौ त्रि० ४कन्यायां ५बुद्धौ च स्त्री परमात्मसम्भूते ६आकाशादौ त्रि०। ७चतुर्मुखे ८शिवे ९विष्णौ १० परमात्मनि च पु०।

**आत्मसम्भव** पु०सम्भवत्यस्मात् सम्+भू–अपादाने अप् आत्मा सम्भवो यस्य। तनूजे १पुत्रे। "एवमात्मरतिरात्मसम्भवान् तान् निवेश्य चतुरोऽपि तत्र सः"। "चकार नाम्ना रघुरात्मसंभवम्" "तदात्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः" इति च रघुः २मनोजन्ये त्रि० ३कामे सुखादौ पु० ४कन्यायां ५बुद्धौ च स्त्री। ६आकाशादौ ७भूते त्रि०। "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवीति" श्रुत्युक्तेस्तेषां तथात्वम् आत्मसंभूतादयोऽप्यत्र। आत्मा परमात्मा सम्भवोऽस्य। ७चतुर्मुखे पु० आत्मना सम्भवति अच्। ८शिवे ९विष्णौ १०परमात्मनि च पु०।

**आत्मसाक्षिन्** त्रि० आत्मनः बुद्धिवृत्तेः साक्षी प्रकाशकः। वेदान्तादिमतसिद्धे बुद्धिवृत्तिप्रकाशके चैतन्ये।

**आत्मसात्** अव्य० कार्त्स्न्येनात्मनोऽधीनो भवति सम्पद्यते

अधीनं करोति वा याति। कात्र्स्न्येनात्माधीनतया सम्पन्ने तथा भूते तथा क्रियमाणे च। अस्य च सम्पद्यादि-योगे एव साधुत्वम् आत्मसाद्भूतः आत्मसात् सम्पन्नः आत्मसात्कृत इत्यादि। "दुरितैरपि कर्त्तुमात्मसात्" रघुः "अग्नीन् वाप्यात्मसात्कृत्य" या०स्मृतिः। [च।

**आत्मसिद्ध** त्रि०आत्मना सिद्धः। १स्वयंसिद्धे २अयत्ननिष्पन्ने

**आत्मसिद्धि** स्त्री आत्मरूपा सिद्धिः। आत्मभावलाभे मोक्षे

**आत्मसुख** त्रि० आत्मैव सुखमस्य। आत्मलाभमात्रेण सुखिनि १आत्मैव सुखं सच्चिदानन्दरूपत्वात्। २आत्म-रूपे परमानन्दे न०।

**आत्मस्थ** त्रि० आत्मने आत्मज्ञानाय तिष्ठते यतते स्था-क ४त०। १आत्मस्वरूपज्ञानाय यतमाने आत्मनि मनसि तिष्ठति स्था-क ७त०। २मनोवृत्तिपदार्थे त्रि०। [ विंयोजने।

**आत्महत्या** स्त्री आत्मनो देहस्य हननम्। देहस्य प्राणै-

**आत्महन्** त्रि०आत्मानं हतवान् हन-क्विप्। "योऽन्यथा स-न्तमात्मानमकर्त्तारं स्वयंप्रभुम्। कर्त्ता भोक्तेति मन्यन्ते तएवात्महनो जना," इत्युक्तलक्षणे आत्मनो यथार्थज्ञान-रहिते, १देहाद्यभिमानिनि, "अन्धं तमस्ते प्रविशन्ति ये के चात्मनोजनाः" कठ०उ० "लब्ध्वा कथञ्चिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम्। यस्त्वात्ममुक्तौ न यतेत मूढधीः स आत्महा स्वं विनिहन्त्यसद्ग्रहात्" विवे०चू०। आत्मनो यथार्थज्ञानाभावे आत्महत्वमुक्तम्। "असुर्य्यानाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभि-गच्छन्ति ये के चात्महनोजनाः" ईशोप०। "मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा" भाग० २आत्मघातिनि जने च। आत्मघातिनृशब्दे विवृतिः।

**आत्माधीन** पु० आत्मनोऽधीनः। १पुत्रे, २श्यालके ३विदू-षके च हेम० ४बलयुक्ते ५स्वाधीने त्रि०।

**आत्मानुरूप** त्रि० आत्मनोऽनुरूपम्। जातिगुणादिना स-दृशे "तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः" रघुः।

**आत्मापहारक** त्रि० आत्मानमपहरति निह्नुते अप+हृ-ण्वुल्। आत्मनो यथास्वरूपनिह्नवकारिणि "योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते। स पापकृत्तमो लोके स्तेन आत्मापहारकः" मनुः। णिनि। आत्मापहारी अप्यत्र "किं तेन न कृतं पापं चौरेणात्मापहारिणा" स्मृतिः स्त्रियां ङीप्।

**आत्माराम** त्रि० आत्मा आराममिव रतिस्थानं रति-साधनं वा यस्य। ज्ञानाय यतमाने योगिनि "आत्मा-रामा विहितरतयो निर्विकल्पे समाधौ" वेणी०। "आत्म-क्रीडस्य सततं सदात्ममिथुनस्य च। आत्मन्येव सुतृप्तस्य योगसिद्धिर्न दूरतः। यथात्मव्यतिरेकेण किञ्चिदिह न पश्यति। आत्मारामः स योगीन्द्रो ब्रह्मभूतो भवे-दिति" काशी० उक्ते २योगीन्द्रभेदे च।

**आत्मालम्भ** पु० ६त०। हृदयस्पर्शे "पित्रा सन्ध्यानुकरणे आत्मा-लम्भे विवर्जयेत्" कात्या०स्मृ० "आत्मालम्भे हृदयस्पर्शे" रघु०।

**आत्माशिन्** पु० आत्मानं स्वकुलमश्नाति अश-णिनि ६त०। स्वकुलभक्षके मीने तस्य स्वकुलभक्षकत्वात् तथात्वम् अतएव "स्वकुलस्यात्माशिनो भयात्" नै० "मत्स्या इव जना-नित्यं भक्षयन्ति परस्परमिति च" रामा० वर्णितम्।

**आत्माश्रय** पु०आत्मानमाश्रयति आ+श्रि-अच् ६त०। १स्वस्य स्वापेक्षित्वहेतुकानिष्टप्रसङ्गरूपे तर्कदोषभेदे। तर्कः पञ्चविधः तर्कशब्दे वक्ष्यते तत्र "स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा यथा यद्ययं घटएत-द्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात्, यद्ययं घटएतद्घटवृत्तिः स्यात् एतद्घटव्याप्योन स्यात्, यद्ययं घटएतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात् एतद्घटभिन्नः स्यादिति वा सर्व्वत्रापाद्यम्" न्यायसूत्रवृत्तिः। २स्वाश्रिते ३चित्ताश्रिते च त्रि०६त०। ४स्वस्वाश्रये पु०।

**आत्मीय** त्रि० आत्मनोऽयम् छ। आत्मसंबन्धिनि। "आ-त्मीयां मतिमादाय कुरु सज्जनरञ्जनम्" सा०द० "किमिदं द्युतिमात्मीयां न बिभर्ति यथा पुरा" कुमा० "प्रसाद-मात्मीयमिवात्मदर्शः" रघुः अहमेनं प्रभावेनात्मीयं करिष्यामि" हितो०।

**आत्मेश्वर** त्रि० आत्मनो मनस ईश्वरः। चित्तविकार-निवारके मनःसंयमकारके "आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवोभवन्ति" कुमा०।

**आत्मोत्पत्ति** स्त्री आत्मन उत्पत्तिः स्वोपाध्यन्तःकरणवृत्ति-कर्म्मणाऽपूर्व्वदेहसंयोगः। स्वोपाधीभूतान्तःकरणवृत्ति-कर्म्मणाऽपूर्व्वदेहसंयोगरूपे आत्मनो जन्मनि। तदुत्पत्ति-प्रकारः मिताक्षरायां दर्शितो यथा।

"निमित्तमक्षरः कर्त्ता बोद्धा ब्रह्म गुणी वशी। अजःशरीर ग्रहणात्स जात इति कीर्त्तितः" "आत्मनः सकलजगत्प्रप-ञ्चाविर्भावेऽविद्यासमावेशवशात्समवाय्यसमवायिनिमित्तभि-न्नेवं स्वयमेव त्रिविधमपि कारणम्। न पुनःकार्य्यकोटि-निविष्टः यस्मादक्षरोऽविनश्वरः। ननु सत्त्वादिगुणविकारस्य सुखदुःखमोहात्मकस्य कार्य्यभूते जगत्प्रपञ्चे दर्शनाद्गुण-

त्याः प्रकृतेरेव जगत्कर्तृतोचिता न पुनर्निर्गुणस्य ब्रह्मणः। मैवं मंस्थाः। आत्मैव कर्त्ता। यस्मादसौ जीवोपभोग्यसुखदुःखहेतुपुण्यापुण्यादेर्बोद्धा नह्यचेतनायाः प्रकृतेर्नामरूपव्याकृतनिखिलभोक्तृवर्गभोगानुकूलभोग्यभोगायतनादियोगिजगत्प्रपञ्चना घटते। तस्मादात्मैव कर्त्ता। तदा स एव ब्रह्म इंहकोविस्तारकः। नचासौ निर्गुणः, यतः तस्य त्रिगुणा शक्तिरविद्या प्रकृतिप्रधानाद्यपरपर्य्याया विद्यते। अतः स्वतोनिर्गुणत्वेऽपि शक्तिमुखेन सत्त्वादिगुणयोगी कथ्यते। नचैतावता प्रकृतेः कारणता यस्मादात्मैव वशी स्वतन्त्रो न प्रकृतिर्नाम स्वतन्त्रतत्त्वान्तरन्ताडृग्विधत्वे प्रमाणाभावात्। न च वचनीयं शक्तिरूपापि सैव कर्त्तृभूतेति। यतः शक्तिमत्कारकं न शक्तिस्तस्मादात्मैव जगतस्त्रिविधमपि कारणम्। तथा अजउत्पत्तिरहितः। अतस्तस्य यद्यपि साक्षाज्जननं नोपपद्यते। तथापि शरीरग्रहणमात्रेण जात इत्युच्यते। अवस्थान्तरयोगितयोत्पत्तिर्गृहस्थोजात इतिवत्” मिता॰ देहोत्पत्तिप्रकारःकायशब्दे वक्ष्यते।

**आत्मोद्भवा** स्त्री आत्मनैवोद्भवति भू—अच्। माषपर्ण्याम् २आत्मा उद्भवो यस्याः। २कन्यायां ३बुद्धौ च ४पुत्रे पु॰। “आत्मोद्भवे वर्णचतुष्टयस्य” रघुः। ६मनोभवे कामे ७चित्तभवे शोकादौ च ८आत्मभवार्थमात्रे च त्रि॰।

**आत्मोपजीविन्** त्रि॰ आत्मना देहव्यापारेण उपजीव्यति उप+जीव—णिनि ३त॰। स्वदेहव्यापारोपजीवके भारिकदासादौ “शूद्रांश्चात्मोपजीविनः” “नैव चारणदारेषु विधिरात्मोपजीविषु” इति च मनुः। [ च त्रि॰।

**आत्मोपम** त्रि॰ आत्मा देहउपमा यस्य १पुत्रे २निजसदृशे

**आत्मौपम्य** न॰ उपमायाभावः ष्यञ् औपम्यम् आत्मन औपम्यम्। आत्मसादृश्ये “आत्मौपम्येन सर्व्वत्र” गीता।

**आत्यन्तिक** त्रि॰ अत्यन्त+भवार्थे ठञ्। अतिशयेन जाते। “आत्यन्तिकासिद्धिरिलक्ष्यसिद्धौः” नै॰ “नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्” मनुः। “विभेदजनकाज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति” वे॰प॰ स्त्रियां ङीप्। “आत्यन्तिकी स्वत्वनिवृत्तिः” मिता॰

**आत्यन्तिकदुःखनिवृत्ति** स्त्री आत्यन्तिकीदुःखनिवृत्तिः। अपवर्गे मुक्तौ। सा च स्वाधिकरणदुःखप्रागभावासमानाधिकरणा दुःखनिवृत्तिः यादृश्या दुःखनिवृत्तेरुत्तरं पुनर्दुःखान्तरं नोत्पद्यते तादृशी दुःखनिवृत्तिः। दुःखञ्च अनागतरूपमावश्यं “हेयं दुःखमनागतमिति” पात॰ सूत्रात् अतीतदुःखस्य नष्टत्वात् वर्त्तमानदुःखस्य च द्वितीयक्षण एव स्वयं नाशात् न तन्निवृत्तेः पुरुषार्थत्वमिति बोध्यम्।

**आत्यन्तिकप्रलय** पु॰ कर्म्म॰। प्रलयभेदे। प्रलयस्तावत् चतुर्विधः” यथाह वेद॰प॰ “स च चतुर्विधः नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति। तत्र नित्यप्रलयः सुषुप्तिः तस्याः सकलकार्य्यप्रलयरूपत्वात् धर्म्माधर्म्मपूर्व्वसंस्काराणाञ्च तदा कारणात्मनावस्थानं तेन सुप्तोत्थितस्य न सुखदुःखाद्यनुपपत्तिः न वा स्मरणानुपपत्तिः। न च सुषुप्तावन्तःकरणस्यापि विनाशे तदधीनप्राणनादिक्रियानुपपत्तिः वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात् सुषुप्तशरीरोपलम्भवत्। नचैवं सुषुप्तस्य परेतादविशेषः, सुषुप्तस्य हि लिङ्गशरीरं संस्कारात्मना तत्रैव वर्त्तते परेतस्य तु लोकान्तरे इति वैलक्षण्यात्। यद्वा अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः न तु क्रियाशक्तिविशिष्टस्येति प्राणनाद्यवस्थानमविरुद्धम्। “यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति अथैनं वाक् सर्वैर्नामभिः सहाप्येति सता सोम्य! तदा सम्पन्नो भवति स्वमपीतोभवतीत्यादि” श्रुतिरुक्त सुप्तौ मानम्। प्राकृतप्रलयस्तु कार्य्यब्रह्मविनाशनिमित्तकः सकलकार्य्यविनाशः। यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रारब्धकर्म्मसमाप्तौ विदेहकैवल्यात्मिका परा मुक्तिः तदा तल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यम् “ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति” श्रुतेः। एवं स्वलोकवासिभिः सह कार्य्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्व्वर्त्तिनिखिललोकतदन्तर्व्वर्त्तिस्थावरादीनां भूतानाञ्च प्रकृतौ मायायां लयः न तु ब्रह्मणि, बाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वादतः प्राकृत इत्युच्यते। नैमित्तिकप्रलयस्तु कार्य्यब्रह्मणोदिवसावसाननिमित्तकः त्रैलोक्यमात्रप्रलयो नैमित्तिकप्रलयः। ब्रह्मदिवसश्चतुर्युगसहस्रपरिमितः “चतुर्युगसहस्राणि ब्रह्मणोदिनमुच्यते” इत्यादिवचनात्। प्रलयकालोऽपि दिवसकालपरिमितः रात्रिकालस्य दिवसकालतुल्यत्वात्। प्राकृतप्रलये नैमित्तिकप्रलये च पुराणवचनानि प्रमाणानि “द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः। तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय हि। एष प्राकृतिकोराजन्! प्रकृतौ यत्र लीयते” इति वचनं प्राकृतप्रलये मानम्।

"एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् । शेतेऽनन्तासने नित्यमात्मसात्कृत्य चात्मभूरिति" वचनं नैमित्तिकप्रलये मानम् । तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः सर्वैकजीववादे युगपदेव नानाजीववादे तु क्रमेण "सर्व एकीभवन्ति" इत्यादि श्रुतेः । तत्राद्यास्त्रयोऽपि लयाः कर्म्मोपरमनिमित्ताः तुरीयस्तु ज्ञानोदयनिमित्तो लयोऽज्ञानेन सहैवेति विशेषः" । अत्र तुरीयः आत्यन्तिकः तत्र विशेषमाह सि॰ शि॰ "दृग्विविधेरक्ष्णि भुवः समन्तात् स्याद्योजनं भूभवभूतपूर्वैः । ब्राह्मे लये योजनमात्रवृद्धेर्नाशो भुवः प्राकृतिकेऽखिलायाः । दिनेदिने यन्म्रियते हि भूतैर्दैनंदिनं तं प्रलयं वदन्ति । ब्राह्मं लयं ब्रह्मदिनान्तकाले भूतानि यद्ब्रह्मतनुं विशन्ति । ब्रह्मात्यये यत् प्रकृतिं प्रयान्ति सर्वोऽत्यतः प्राकृतिकं कृतीन्द्राः । लीनान्यतः कर्मपुटान्तरत्वात् पृथक् क्रियन्ते प्रकृतिर्विकारैः । ज्ञानाग्निदग्धाखिलपुण्यपापा मनः समादाय हरौ परेशे । यद्योगिनो यान्त्यनिवृत्तिमस्मादात्यन्तिकं चेति लयश्चतुर्थः" । "अत्र लयो भूतविनाशः । स तु सन्ततं प्रत्यहमुत्पद्यते स दैनंदिन उच्यते । यो ब्रह्मदिनान्ते चतुर्युगसहस्रावसाने लोकत्रयस्य संहारः स ब्राह्मो लय उच्यते । तत्राक्षीणपुण्यपापा एव लोकाः कालवशेन ब्रह्मशरीरं प्रविशन्ति । तत्र मुखं ब्राह्मणाः, बाह्वन्तरं क्षत्रियाः, ऊरुद्वयं वैश्याः, पादद्वयं शूद्राः । ततो निशावसाने पुनर्ब्रह्मणः सृष्टिं चिन्तयतो मुखादिस्थानेभ्यः कर्मपुटान्तरत्वाद्ब्राह्मणादयस्तत एव निःसरन्ति । तस्मिन् प्रलये भुवो योजनमात्रवृद्धेर्विलयो नाखिलायाः । अथ यदा ब्रह्मण आयुषोऽन्तस्तदा यः प्रलयः स महाप्रलय उच्यते । तत्र ब्रह्मा ब्रह्माण्डे, तत् पाञ्चभौतिके, भूर्जले, जलं तेजसि, तेजो वायौ, वायुराकाशे, आकाशमहंकारे, अहंकारो महत्तत्त्वे, महत्तत्त्वं प्रकृतौ । एवं सकलभुवनलोका अक्षीणपुण्यपापा एवाव्यक्तं प्रविशन्ति । यदा भगवान् सिसृक्षुः प्रकृतिपुरुषौ क्षोभयति । तदा तानि भूतानि कर्मपुटान्तरत्वात् प्रकृतेः स्वत एव निःसरन्ति । यथाह श्रीविष्णुपुराणे पराशरो जगदुत्पत्तिकारणम् । "प्रधानकारणीभूता यतो वै सृज्यशक्तय" इति सृज्यशक्तयस्तत्कर्माणि । तान्येव हरौ मुख्यं कारणम् । इतराणि निमित्तकारणानि । अन्यैरप्युक्तम् । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" । "नह्यात्मनां भवति कर्मफलोपभोगः कायाद्विनेत्यादि" । अस्मिन् प्रलयेऽखिलाया भुवो नाश इत्यर्थः । तथा "ज्ञानाग्निदग्धाखिलपुण्यपापा योगिनो विषयेभ्यो मनः समादाय समाहृत्य तद्धरौ समाहितं कृत्वा यान्ति देहं त्यजन्ति । अनिवृत्तिं यान्ति । स आत्यन्तिको लय इति" प्रमिता॰ ।

**आत्ययिक** त्रि॰ अत्ययः नाशः प्रयोजनमस्य ठक् । नाशप्रयोजनके कर्मणि "अशिश्रवद्गात्ययिकं समेत्य" भट्टिः । "एकाकिनश्चात्ययिके कार्य्ये प्राप्ते भयप्रदे" मनुः । "कश्चिदात्ययिकं श्रुत्वा तदर्थमनुचिन्त्य च । प्रियाण्यननुभवन् शेषे न त्वमन्तःपुरे नृप !" भा॰स॰प॰५ अ॰ ।

**आत्रेय** पु॰ अत्रेरपत्यम् ढक् । अत्रिमुनेरपत्ये तस्यापत्यानि बहूनि तेषु मन्वन्तरभेदे केचित् सप्तर्षिमध्यपातिनः यथा ५ मन्वन्तरे "वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा । हिरण्यरोमा पर्जन्य ऊर्द्ध्वबाहुश्च सोमजः । सत्यनेत्रस्तथात्रेय एते सप्तर्षयोऽन्तरे" । ८ मन्वन्तरे । "रामो व्यासस्तथात्रेयो दीप्तिमानिति विश्रुतः भारद्वाजस्तथा द्रौणिरश्वत्थामा महाद्युतिः । गौतमस्यात्मजश्चैव शरद्वान्नाम गौतमः । कौशिको दानवश्चैव रुरुः काश्यप एव च । एते सप्त महात्मानो भविष्या मुनिसत्तमाः । ब्रह्मणः सदृशाश्चेति धन्याः सप्तर्षयः स्मृताः" । ९ मन्वन्तरे । "मेधातिथिस्तु पौलस्त्यो वसुः काश्यप एव च । ज्योतिष्मान् भार्गवश्चैव द्युतिमानङ्गिरास्तथा । सवनश्चैव वाशिष्ठ आत्रेयो हव्यवाहनः । पौलहः सप्त इत्येते मुनयो रौहितेऽन्तरे" । १० मन्वन्तरे "हविष्मान् पौलहश्चैव सुकृतिश्चैव भार्गवः । आपोमूर्त्तिस्तथात्रेयो वाशिष्ठश्चाष्टकः स्मृतः । पौलस्त्यः प्रमतिश्चैव नभोगश्चैव काश्यपः । अङ्गिरा नभसः सत्यः सप्तैव परमर्षयः" ११ मन्वन्तरे । "हविष्मान् काश्यपश्चापि हविष्मान् यश्च भार्गवः । तरुणश्च तथात्रेयो वाशिष्ठस्त्वनयस्तथा । अङ्गिराश्चोदधिष्णश्च पौलस्त्यो निश्चरस्तथा । पौलहश्चाग्नितेजाश्च भाव्याः सप्त महर्षयः" १२ मन्वन्तरे । "द्युतिर्वसिष्ठपुत्रश्च आत्रेयः सुतपास्तथा । अङ्गिरास्तमसो मूर्त्तिस्तपस्वी काश्यपस्तथा । तपोऽशनश्च पौलस्त्यः पौलहश्च तपोरविः । भार्गवः सप्तमस्तेषां विज्ञेयश्च ततोधृतिः" । १३ मन्वन्तरे । अङ्गिराश्चैव धृतिमान् पौलस्त्यो हव्यपस्तु यः । पौलहस्तत्त्वदर्शी च भार्गवश्च निरुत्सुकः । निष्प्रकम्पस्तथाऽऽत्रेयो निर्मोहः काश्यपस्तथा । सुतपाश्चैव वाशिष्ठः सप्तैते तु महर्षयः" १४ मन्वन्तरे । अग्नीध्रः

काश्यपश्चैव पौलस्त्यो भार्गवस्तथा। भार्गवो ह्यतिबाहुश्च शुचिराङ्गिरसस्तथा। शुक्रश्चैव तथात्रेयः शुक्रो वासिष्ठ एव च। अजितः पौलहश्चैव अन्त्याः सप्तर्षयोमताः" हरिवं०७अ०। तथा च मन्वन्तरभेदे सप्तर्षिमध्ये अत्रिपुत्रा सत्यनेत्रादयः। वैवस्वते तु मन्वन्तरे दत्तः दुर्वासाः सोमश्चेति त्रय आत्रेयाः प्रसिद्धाः। ते च ब्रह्मेशाच्युतांशजाः तथोक्तम्" भाग० ४स्क० १अध्या०। "अत्रेःपत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान्। दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान्। श्रीविदुर उवाच। अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहेतवः। किञ्चिच्चिकीर्षवोजाता एतदाख्याहि मे गुरो। श्रीमैत्रेय उवाच। ब्रह्मणा नोदितः सृष्टावत्रिर्ब्रह्मविदांवरः। सह पत्न्या ययावृक्षं कुलाद्रिं तपसिस्थितः। तस्मिन् प्रसूनस्तवकपलाशाशोककानने। वार्भिः स्रवद्भिरुद्घुष्टे निर्विन्ध्यायाः समन्ततः। प्राणायामेन संयम्य मनो वर्षशतं मुनिः। अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः। शरणं तं प्रपद्येऽहं य एव जगदीश्वरः। प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्। तप्यमानम् त्रिभुवनम् प्राणायामैधसाग्निना। निर्गतेन मुनेर्मूर्द्ध्नः समीक्ष्य प्रभवस्त्रयः। अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः। वितायमानयशसस्तदाश्रमपदं ययुः। तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः। उत्तिष्ठन्नेकपादेन ददर्श विबुधर्षभान्। प्रणम्य दण्डवद्भूमावुपतस्थेऽर्हणाञ्जलिः। वृषहंससुपर्णस्थान् स्वैः स्वैश्चिह्नैः सुचिह्नितान्। कृपावलोकेन हसद्वदनेनोपलम्भितान्। तद्रोचिषा प्रतिहते निमील्य मुनिरक्षिणी। चेतस्तत्प्रवणं युञ्जन्नस्तावीत् संहताञ्जलिः। श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः। अत्रिरुवाच। विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः। ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहम् वस्तेभ्यः क एव भवतां म इहोपहूतः। एकोमयेह भगवान् विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम्। अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिह विस्मयोमे। श्रीमैत्रेय उवाच। इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः। प्रत्याहुः श्लक्ष्णया वाचा प्रहस्य तमृषिं प्रभो!। श्रीदेवा ऊचुः। यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा। सत्सङ्कल्पस्य ते ब्रह्मन् यद्वै ध्यायति ते वयम्। अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः। भवितारोऽङ्ग भद्रन्ते विस्रप्स्यन्ति च ते यशः। एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः। सभाजितास्तयोः सम्यग्दम्पत्योर्मिषतोस्ततः। सोमोऽभूद्ब्रह्मणोऽंशेन दत्तोविष्णोस्तु योगवित्। दुर्वासाः शङ्करस्यांशोनिबोधाङ्गिरसः प्रजाः"। आत्रेयश्च शुक्लयजुःसम्प्रदायप्रवर्त्तकः वंशगणनायाम् "भरद्वाज आत्रेयात् आत्रेयोमाण्टेः" शत०ब्रा० पठितः स्त्रियां ङीप्। "आत्रेय्यस्मि" उत्तरच०। शुक्लयजुषां सम्प्रदायप्रवर्त्तक वंशगणनायाम् "आत्रेयीपुत्रादात्रेयीपुत्र इति" शत० ब्रा०। "पुत्रमन्थनकर्मणः स्त्रीसंस्कारात्वेनोक्तत्वात् तत्प्रविधानादयं वंशः स्त्रीप्राधान्येनोच्यते" भा०। २अत्रिगोत्रमध्ये श्रेष्ठे पु०। "आत्रेयाय चाग्नीध्रवत्सदसःपुरस्तादुपविष्टाय क आत्रेयं क आत्रेयमिति त्रिरुक्त्वा"कात्या०१०,२,२१। "आत्रेयाय अत्रिसगोत्राय अतिप्रवराय"वा कर्कः "आत्रेयाय हिरण्यं ददाति" शत०ब्रा०। बहुषु ढकोलुक् अत्रयः अत्रिपुत्रेषु कश्चित्। "आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः। सर्वस्य जगतः श्रेष्ठाः पूजिता ब्राह्मणास्तथा" भा० व० २१ अ०। तेषां श्रेष्ठत्वं च यज्ञे ऽनिन्द्यत्विज्योऽपि तेभ्यो दक्षिणादानस्य" शत० ब्रा० उक्तेः यथा "आत्रेयाय हिरण्यं ददातीत्युपक्रम्य "अत्रिर्वा ऋषीणां होतासावेतत् स दोऽसुरतमसमभिपुप्लुवे त ऋषयोऽत्रिमब्रुवन्नेहि प्रत्यङ् इदं तमोऽपजहीति स एतत्तमोऽपाहन्नयं वै ज्योतिर्य इदं तमोऽपावधीदिति तस्मा एतद्दक्षिणामनयन् ज्योतिर्हिरण्यं तद्वै स तत्तेजसा वीर्य्येणर्षिस्तमोऽपजघानाथैष एतेनैवतज्ज्योतिषा तमोऽपहन्ति तस्मादात्रेयाय हिरण्यं ददातीति"। अत्रिप्रशंसया च तद्वंशजानां प्रशंसा। सत्रान्तिकेव "आत्रेयाय चाग्नीध्रवदिग्रमन्तरम्" "अत्रिभ्यो दक्षिणां ददातीति कात्या० सूत्रे" अत्रिकर्त्तृविशेषणात् तत्पूर्वस्य अन्तकमिति"कर्कः। ३देहस्थरसभेदे"हेम० ४नदीभेदे स्त्री"करतोया तथात्रेयी लौहित्यश्च महानद" भा०स०प०६अ०वर्णिता। "आत्रेयीं वक्ष्यामो रजस्वलामृतुस्नातामात्रेयीमाहुः अत्र ह्येतापत्यं भवतीत्यात्रेयीमिति" वशिष्ठोक्तनिर्वचनयुक्तायामृतुस्नातायां ५स्त्रियां स्त्री "हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्। राजन्यवैश्यावीजानावात्रेयीमेव च स्त्रियम्"मनुः "आहिताग्नेर्ब्राह्मणस्य हत्वा पत्नीमनिनिन्दिताम्। ब्रह्महत्याव्रतं कुर्य्यादात्रेयीघ्नस्तथैव च" अङ्गि०। "यागस्थक्षत्रविड्घाती चरेद्ब्रह्म-

ह्नोव्रतम् । गर्भहा च यथावर्णं तथात्रेयीनिषूदकः” या० । आत्रेयीयमिति ज्ञात्वा तस्या वधे तु ब्रह्महत्याव्रतद्विगुणव्रतम् कार्य्यम् ब्रह्महत्याव्रतमुक्त्वा “एवं तु समभिज्ञातामात्रेयीं वा निपातयेत् । द्विगुणा ब्रह्महत्या वै आत्रेयीनिधने भवेत्” भा०शा०प० १६५ अ० उक्तेः । अश्वादि० भरद्वाजार्थे फञ् । आत्रेयायणः भारद्वाजरूपे तद्गोत्रजे पुंस्त्री० । छागलशब्दात् आत्रेयार्थे अण् । छागल आत्रेयः अन्यःछागलिः सि०कौ० । आत्रेयी+स्वार्थे कन् । आत्रेयिका ऋतुमत्यामृतुस्नातायां स्त्रियाम् स्त्री ।

**आथर्वण** पु० अथर्वणा मुनिना दृष्टो वेदः अण् आथर्वणः तमधीते वेत्ति वा पुनः अण् । १अथर्ववेदज्ञे ब्राह्मणे, आथर्वणिकस्य धर्म आम्नायो वा अण् इकलोपश्च । २अथर्ववेदधर्मे ३तदाम्नाये च । अथर्वाणं वेदमधीते वेत्ति वा अण् । ४अथर्ववेदस्याध्येतरि ५वेत्तरि च तत्कल्पज्ञातरि ६पुरोहिते पु० । तेषां समूहः अण् । ७अथर्वसमूहे न० । अथर्वणा प्रोक्तमधीयते अण् तस्य तु बहुषु लुक् । अथर्वाण इत्येव । अथर्व्वणि विहितं कर्म अण् । अथर्ववेदविहिते ८अभिचारादौ कर्मणि न “आथर्वणेन हन्ता च” स्मृतिः ९तत्त्वे कर्ममात्रे च “अग्नौ साक्षिण्याथर्वणेन विधिनाऽर्घ्यमथम्” दशकुमा० ।

**आथर्वणिक** त्रि० अथर्व्वाणं वेदमधीते वेत्ति ठक् दाण्ड्या० नि० । अथर्ववेदपाठके विप्रे ।

**आदंश** पु० आ+दन्श-भावे घञ् । दंशने । “आदंशः सर्वलतानामेतदादंशलक्षणम्” सुश्रु० । आदंशश्च दन्तादिसाध्यव्यापारभेदः । आदश्यते अत्र आधारे घञ् । २आदंशस्थाने “आदंशं खेदितं चूर्णैः प्रच्छितं प्रतिसारयेत्” सुश्रु० । करणे घञ् । ३दन्ते

**आददि** त्रि० आ+दा-कि द्वित्व । आदानकर्त्तरि “वीलु द्वेषा अनुवश ऋणमाददि” ऋ० २,२४,१३ ।

**आदर** पु० आ+दृ-अप् । १गौरवहेतुके कर्मणि सम्माने, । “न जातहार्देन न विद्विषादरः” किरा० “दरादराभ्यां दरकम्पिनो पपे” नैष० । “तद्दर्शनादभूच्छम्भोर्भूयान् दारार्थमादरः” कुमा० । २आरम्भे ३आसक्तौ । “तां प्रणामादरस्रस्तजाम्बूनदविभूषणाम्” कुमा० । ४यत्ने च “मरुद्यन्त्रपताकाश्रीरपौरादरनिर्मिता” कुमा० ।

**आदरणीय** त्रि० आ+दृ-अनीयर् । सम्माननीये । तव्य । आदर्त्तव्योऽप्यत्र त्रि० ।

**आदर्श** पु० आदृश्यतेऽत्र दृश-आधारे घञ् । १दर्पणे, तत्र हि बिम्बपदार्थस्य प्रतिबिम्बपतनात्, तत्संयोगेन नयनरश्मीनां परावर्त्तने वा बिम्बग्राहितया बिम्बं दृश्यते इति तस्य तथात्वम् । “आदर्शबिम्बस्तिमितायताक्षी” कुमा० “नेपथ्यदर्शिनश्छाया तस्यादर्शहिरण्मये” रघुः । आदृश्यते सम्यग्रूपेण ज्ञायते अन्यार्थोऽस्मिन् । टीकायां २प्रतिरूपपुस्तकादौ यत्रत्यमक्षरसन्निवेशं दृष्ट्वा तदनुरूपमन्यल्लिख्यते तादृशे पुस्तके । “यथादर्शं तथा लिखित मिति भूरिप्रयोगः । आदर्शोगुणानाम् काद० । तत्र तदीयगुणान् दृष्ट्वा परैस्तथागुणा आध्रीयन्त इति तस्य तथात्वम् ४जनपदसीमाभेदे च । ततोभवादौ वुञ् । आदर्शकः । जनपदावधिसूचकस्थानभवे त्रि० ।

**आदर्शमण्डल** पु० आदर्श इव मण्डलमस्य । आदर्शाकारमण्डलयुक्ते सर्पभेदे सर्पभेदाश्चोक्ता । “मण्डलिनस्तु आदर्शमण्डलः श्वेतमण्डलः” इति सुश्रु०उक्तः । आदर्शमण्डलमिव । २मण्डलाकारे दर्पणे न० ।

**आदहन** न० आ+दह-भावे ल्युट् । १दाहे २हिंसायां ३कुत्सने च । आदह्यतेऽत्र आधारे ल्युट् । ४श्मशाने । “अर्द्धमादहनं प्राप्य आसीनोदक्षिणामुखः” छन्दो०प० । “आदह्यतेऽस्मिन्निति आदहनं श्मशानम्” शु०त०रघु० ।

**आदातृ** त्रि० आ+दा-तृच् । ग्रहीतरि “दाता नित्यमनादाता सर्वभूतानुकम्पकः” या० “आदाननित्याच्चादातुः” मनुः ।

**आदादिक** त्रि० अदादिगणे पठितः ठक् । अदादिगणपठिते धातुभेदे । “आदादिकस्य ग्रहणं” सि०कौ० ।

**आदान** न० आ+दा-भावे ल्युट् । ग्रहणे । “कुशाङ्कुरादानपरिक्षताङ्गुली” कुमा० । “आदानं हि विसर्गाय सतां वारिमुचामिव” रघुः । “आदानमप्रियकरं दानञ्च प्रियकारकम्” “आदाननित्याच्चादातुः” “निन्दितेभ्योधनादानं वाणिज्यं शूद्रसेवनम्” मनुः आदाने नियमविशेषाश्च स्मृतौ दर्शिताः । “भूमेः प्रतिग्रहं कुर्य्याद्भूमेः कृत्वा प्रदक्षिणम्” । विष्णुध० । प्रदक्षिणं न सर्वस्या भूमेः किन्तु तत्रस्थायाः प्रदक्षिणावर्त्तनमात्रं भूमेरसन्निधाने तामुद्दिश्य प्रदक्षिणम् रघु०तत्त्वे । “करे दत्त्वा तथा कन्यां दासदासौ द्विजोत्तमाः ! । करन्तु हृदि विन्यस्य धर्म्यौ ग्राह्येयः प्रतिग्रहः । आरुह्य च गजस्योक्तः कर्णौ चाश्वस्य कीर्त्तितः । तथा चैकशफानाञ्च सर्वेषामविशेषतः । प्रतिगृह्णीत गां पुच्छे पुच्छे कृष्णाजिनं तथा । आरण्याः पशवश्चाप्याज्ञाः पुच्छे विचक्षणैः । प्रतिग्रहमयोद्रस्य आरुह्य च तथा चरेत् । बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः ।

वस्त्रं दद्यात्तमादद्यात् परिधाय तथा पुनः । आरुह्योपनाहौ यानमारुह्यैव च पादुके । ईषायान्तु रथो ग्राह्य च्छत्रदण्डौ च धारयेत् । आयुधानि समादाय तथा भूषं विभूषणम् । धर्म्मध्वजौ तथा स्पृष्टा प्रविश्य च तथा गृहम् । अवतीर्य च सर्व्वाणि जलस्थानानि वै द्विजाः ! । द्रव्याख्यन्यान्यथादाता स्पृष्टा योमाह्मणः पठेत् । प्रतिगृहीता सावित्रीं सर्व्वत्रैव प्रकीर्त्तयेत् । ततस्तु सार्द्धं द्रव्येण तस्य द्रव्यस्य दैवतम्" । भूमिर्विष्णुदेवतेत्यादि कीर्त्तयेदित्यर्थः । "समापयेत्ततः पश्चात् कामस्तुत्या प्रतिग्रहम् । विधिं धर्म्मनयोज्ञात्वा यस्तु कुर्य्यात् प्रतिग्रहम् । दाता सह तरत्येव कालदुर्गाणि वै द्विजः" । विष्णुध० "गां पुच्छे करिणं करे" मिता० वाक्यस्य प्रथमं करे गृहीत्वा पश्चादारोह इत्यर्थः एवमन्यत्र विरोधः समाधेयः । आदीयते औषधार्थं वैद्यैः आ+दा–कर्म्मणि ल्युट् ङीप् । २हस्तिघोषायां स्त्री रत्नमाला ।

**आदाय** अव्य० आ+दा–ल्यप् । गृहीत्वेत्यर्थे "तेषां सर्व्वस्वमादाय राजा राष्ट्रात् प्रवासनम्" मनुः । आ+दा–भावे घञ् । २आदाने पु० ।

**आदायचर** त्रि० आदाय चरति चर–ट उप०स० । गृहीत्वा चारिणि । "हिंसन् वनेचराग्र्याणां त्वमादायचरो वने" भट्टिः ।

**आदायिन्** त्रि० आ+दा–णिनि स्त्रियां ङीप् । ग्रहीतरि "योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणोधनम् । याजनाध्यापनेनापि यथा स्तेनस्तथैव सः" मनुः ।

**आदार** पु० आ+दृ–वेदे बा० घञ् । आदरे "आदारो वा सभानाम्" ऋ० १,४६,४ ।

**आदारिविम्बी** स्त्री आदारिणी विम्बीव नि०पुंवत् । (आनेरी) अश्वेतसतुल्यपुष्पायां लतायां "आदारिविम्बीं कुकद्म्य पुष्पीं विपाच्य सर्पिर्विपचेत् कषाये" सुश्रु० ।

**आदि** पु० प्रथमं दीयते गृह्यते आ+दा–कि । १प्रथमे, २प्राक्सत्तायाम्, ३कारणे, ४सामीप्ये, ५प्रकारे, ६अवयवे च । ७आद्ये त्रि० अमरः । "जगदादिरनादिस्त्वम्" कुमा० । "अपएव ससर्जादौ तासु वीजमवासृजत्" । "वेदशब्देभ्यएवादौ पृथक्संस्थाश्च निर्म्ममे" "मरीच्यादींस्तथा मुनीन्" इति च मनुः । "कथमेतत् विजानीयां त्वमादौ प्रोक्तवानिति" । "अहमादिश्च भूतानाम्" इति च गीता । "भूवादयोधातवः" पा० । भूश्च वाश्च भूवौ आदिश्च आदिश्च आदी भूवौ आदी येषाम् आद्य आदिशब्दः प्रभृत्यर्थः द्वितीयःप्रकारार्थस्तेन भूप्रभृतयो वाप्रकाराः क्रियावाचित्वेन धातवइत्यर्थः । एवमेव वैया० भू० । आदिशब्देन गणोऽपि सूच्यते । "भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च । तुदादिश्च रुधादिश्च तनक्र्यादि चुरादयः" व्या० कारिका । तत्र भवः दिगा० यत् । आद्यः डिमच् । आदिमः । आदिभवे त्रि० ।

**आदिकर** त्रि० आदिं करोति अहेतादावपि ट स्त्रियां ङीप् । प्रथमकारके प्राक्सत्ताकर्त्तरि ।

**आदिकर्त्तृ** पु० आदिः कर्त्ता । आद्यकारके ईश्वरे "कस्माच्च ते न नमेरन् महात्मन् ! गरीयसे ब्रह्मणोऽप्यादिकर्त्रे" गीता ।

**आदिकर्म्मन्** न० कर्म्म०स० । १क्रियाकूटात्मकस्य कर्म्मणोऽवयवभूते प्रथमे कर्म्मणि प्रथममारभ्यमाणक्रियायाम् । "उदुपधाद्भ्वादेर्विभाषा भावादिकर्म्मणोः" "भावादिकर्म्मणोरन्यतरस्याम्" "आदिकर्म्मणि क्तः कर्त्तरि च" पा० । २प्रथमजे कर्म्ममात्रे च । ब० । ३तथाकर्म्मयुक्ते त्रि० ।

**आदिकवि** पु० आदिराद्यःकविः । हिरण्यगर्भे तस्य प्रथमोत्पन्नत्वात् स्वयंप्रतिभातवेदत्वाच्च कवितया तथात्वम् । "तेने ब्रह्म हृदा य आदिकवये" भाग० । २वाल्मीकौ च ।

**आदिकारण** न० आद्यं कारणम् । १परमेश्वरे तदधीनत्वात् इतरकारणानाम् स हि प्रथमं स्वोपाधिभूताविद्यया सृज्यमानजीवादृष्टवशादिदमित्थं कर्त्तव्यमिति ईक्षणपूर्व्वकं सृष्टव्यपदार्थाकारेण विवर्त्तमानः सूक्ष्मभूतानि प्रथममुत्पाद्य ततः स्थूलभूतानि भौतिकानि च सृजतीत्यागमसिद्धम् इति वेदान्तिनः । सांख्यमते २प्रधाने प्रधानं हि मूलकारणं तस्यैव महदाद्याकारेण परिणमनात्तथात्वम् । नैयायिकादिमते कारणशब्दस्य निमित्तार्थत्वे ईश्वरस्यैव तथात्वम् । समवायिकारणार्थत्वे परमाणूनां मूलकारणत्वमिति भेदः इति तेन तन्मते ३ईश्वरे ४परमाणुषु च ।

**आदिकाव्य** न० आदि आद्यं काव्यं पादचतुष्टयरूपच्छन्दोबद्धवाक्यम् । वाल्मीकिरचिते रामायणे तस्य चाद्यकाव्यत्वं दर्शितं तत्रैव आदिका० २सर्गे "ददर्श क्रौञ्चयोस्तत्र मिथुनं चारुदर्शनम् । तस्माच्च मिथुनादेकमागत्यानुपलक्षितः । जघान बद्धानुशयो निषादो मुनिसंनिधौ । तं शोणितपरीताङ्गं चेष्टमानं महीतले । दृष्ट्वा क्रौञ्ची रुरोदार्त्ता करुणं खे परिभ्रमा । तं तथा निहतं दृष्ट्वा निषादेनाण्डजं वने । मुनेः शिष्यसहायस्य कारुण्यं समजायत । ततः करुणवेदित्वादधर्म्मोऽयमिति द्विजोत्तमः ।

निशम्य करुणं क्रौञ्चीं रुदतीं तां जगाविदम्। "मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्। तस्येदं सक्ता वचनं चिन्ताभूत् तदनन्तरम्। शकुनं शोचता ह्येवं किमतेद्व्याहृतं मया। मुहूर्त्तमिव च ध्यात्वा वाक्यं तत् प्रविमृश्य च। शिष्यमाह स्थितं पार्श्वे भारद्वाजमिदं वचः। पादैश्चतुर्भिः संयुक्तमिदं वाक्यं समाक्षरैः। शोचतोक्तं मया यस्मात् तस्माच्छ्लोको भवत्विति"। एवं चिन्तयतस्तस्याश्रमे स्वयं ब्रह्मणागत्योपदिष्टम्। "महर्षे! यदयं प्रोक्तस्त्वया क्रौञ्चवधाश्रयः। श्लोक एवास्त्वयं बद्धस्तव वाक्यस्य शोचतः। स्वच्छन्दादेव ते ब्रह्मन्! प्रवृत्तेयं सरस्वती। रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम"! इत्युपदिष्टस्य वाल्मीकेः रामायणरचनेमतिरभूत् यथाह तत्रैव। "तस्य बुद्धिरभूत् तत्र वाल्मीकेरथ धीमतः। कृत्स्नं रामायणं श्लोकैरीदृशैः करवाण्यहम्" इत्येवमभिनिवेशं कृत्वा कृत्स्नं रामायणं कृतमिति सर्गशेषे तत्रैवोक्तम् "ततः स रामस्य चकार कीर्त्तिमान्। समाक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारधीः परम्"। इह लोके चतुष्पादश्लोकस्यादौ तेनैव प्रचारणात् तत्कृतकाव्यस्यादिकाव्यत्वम्। वेदे तु बहूनामनुष्टुप्छन्दस्कानां श्लोकानां सत्त्वेऽपि लोके प्रथमप्रचाराभावात्तस्याद्यत्वम्। तेन "ईशा वास्यमिदं सर्व्वं यत् किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्" इत्युपक्रमे "असुर्य्यानाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इत्यादयः श्लोकाः शु॰ य॰ वे॰ ४० अध्याये पठिताः। एवम् ऋग्वेदादावपि बहवः तथाविधाः सन्ति" तथा च वेदे सत्त्वेऽपि लोके तेन प्रथमप्रचारणात्तस्याद्यकाव्यत्वम्। यत् तु उत्तरचरिते "चित्रमाम्नायादन्योऽयं नूतनश्छन्दसामवतार" इति वर्णितम् तत् यथाश्रुतार्थेऽसङ्गतमेव। अन्यः लोकविद्वाक्यादित्यध्याहारेण आम्नायात् आम्नायं वेदं मूलत्वेन प्राप्य छन्दसां नवावतार इति व्याख्याने तु न कोऽपि दोष इति युक्तम्।

**आदिकेशव** पु॰ कर्म॰ काशीस्थे केशवमूर्त्तिभेदे "आदिकेशव पूर्व्वेण स्वयमादित्यकेशवः" "आदिकेशवसञ्ज्ञांश्च केशवान् परितोष्य च" इति च काशी॰।

**आदिगदाधर** पु॰ १काशीस्थे विष्णुमूर्त्तिभेदे "दत्तात्रेयेश्वरात् पूर्व्वमेव आदिगदाधरः" इति काशी॰ ३६ अ॰। २गयातीर्थस्थे विष्णुमूर्त्तिभेदे च। "आद्येन गदया चासौ यस्मादैत्यः स्थिरीकृतः। स्थित इत्येव हरिणा तस्मादादिगदाधरः" इति वायु॰ गया॰ २ अ॰ तन्नामनिरुक्तिः उक्ता। "गयाशिरश्छादयित्वा गुरुत्वादास्थिता शिला। कालान्तरेण व्यक्तश्च स्थित आदिगदाधरः। तथा व्यक्तोऽव्यक्तरूपी आसीदादौ गदाधरः। आदिरादौ पूजितोऽत्र देवैर्ब्रह्मादिभिर्यतः। पाद्यार्घगन्धपुष्पाद्यैरत आदिगदाधरः" इति गारु॰ पु॰ निरुक्तिः। "आगत्य विष्णुः क्षीराब्धेः शिलायां संस्थितोऽभवत्। शिलायां निश्चलत्वाय स्वयमादिगदाधरः" वायुपुराणम्।

**आदिजिन** पु॰ कर्म॰ स॰। ऋषभदेवे हेम॰।

**आदितस्** अव्य॰ आदि+तसि। १आदौ इत्यर्थे "पतीन् प्रजानामसृजन्महर्षीनादितोदश" मनुः। आद्या॰ पञ्चम्यास्तसिः। २आदेरित्यर्थे च। "इदं शास्त्रन्तु कृत्वादौ मामेव स्वयमादितः" मनुः आदित आदिमारभ्येत्यर्थः।

**आदिताल** पु॰ कर्म॰। "एकएव लघुर्यत्र आदितालः स लक्ष्यते। गुरुस्तत्परतोवाच्यः प्रायेणैतन्निदर्शनम्" सङ्गीतशास्त्रवर्णिते तालभेदे।

**आदितेय** पु॰ अदित्या अपत्यम् ढक्। १सुरमात्रे २सूर्य्ये च अदितिशब्दे विवृतिः पृ॰ २११। "यदेनमदधुर्यज्ञियासो दिवि देवाः सूर्य्यमादितेयम्" ऋ॰ १०,८८,११।

**आदित्य** पु॰ अदितेरपत्यं ण्य। १देवमात्रे "तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवने संप्रयन्ति" छा॰ उ॰। २सूर्य्ये च "आदित्योब्रह्मेत्यादेशः" छा॰ उ॰ "जिगीषुरेव दिनकृदादित्येषु कल्पते इति" माघः। "असौ च कथमादित्याः प्रतापक्षतिशीतलाः" कुमा॰। ३तदधिष्ठिते गगने दिवानिशं संभ्रम्यमाणे लोकप्रकाशकरे तेजोमण्डले च "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" मनुना अग्निहुतद्रव्याणां हविराज्यादीनां परमाणुमात्रतयाऽवस्थितानां दग्धशेषाणां सूर्य्यरश्मिनाकर्षणेन सूर्य्यलोकप्राप्त्या वृष्टिहेतुत्वमुक्तम् तत्र मण्डलार्थपरत्वएव सम्भवति "अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम" "अथ यदेवैतदादित्यस्य शुक्लं भाः सैव सा, अथ यन्नीलं कृष्णं तदम" इति च छा॰ उ॰। अत्र शुक्लकृष्णाभायुक्ततया मण्डलपरत्वं गम्यते। "असौ वा आदित्यो देवमधु" छा॰ उ॰ अत्र च मण्डलपरत्वम् उत्तरत्र आकाशे रश्मिसम्बन्धकीर्त्तनात् स्पष्टमेव। "ज्योतिश्चरणाभिधानात्" शा॰ सू॰ भाष्ये च चक्षुर्वृत्तेर्निरोधकं शार्व्वरादिकं तमउच्यते तस्या

एवानुग्राहकमादित्यादिकं ज्योतिः” इत्यादित्यस्य चक्षुर्वृत्तेरनुग्राहकतया ज्योतिःपदार्थपरत्वमुक्तम् । ४आदित्यमण्डलान्तर्गते हिरण्मयश्मश्रौ परमपुरुषे” विष्णौ “स्वयंभूः शम्भुरादित्यः” विष्णुस॰ । विष्णोरादित्यशब्दवाच्यत्वे कारणमुक्तं भाष्ये यथा “आदित्यमण्डलान्तःस्थो हिरण्मयः पुरुष आदित्यः, द्वादशादित्येषु विष्णुर्वा, “आदित्यानामहं विष्णुरिति” स्मृतेः, अदितेरखण्डिताया मह्या अयं पतिरिति वा “इयं वा अदितिर्मही” “देवी विष्णुपत्नीति” श्रुतेः यथादित्यएकएवानेकजलेष्वनेकवत् प्रतिभासते एवमनेकेषु शरीरेषु एकएवानेकवत् प्रतिभासत इत्यादित्यसाधर्म्याद्वा आदित्यः” तत्र हिरण्मयपुरुषस्य सूर्य्यमण्डलमध्यवर्त्तित्वे च “य एषोऽन्तरादित्ये हिरण्मयः पुरुषोदृश्यते हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात् सर्वएव सुवर्णः” इति छा॰उ॰ श्रुतिर्मानम् “अथ य एषो ऽन्तरादित्ये आदित्यस्यान्तर्मध्ये हिरण्मयो हिरण्मय इव हिरण्मयो नहि सुवर्णविकारत्वम् देवस्य सम्भवति, ऋक्सामगेष्णत्वापहतपाप्मत्वासम्भवात् । नहि सौवर्णेऽचेतने पाप्मादिप्राप्तिरस्ति येन प्रतिषिध्येत चाक्षुषे चाग्रहणात् । अतो लुप्तोपम एव हिरण्मयशब्दो ज्योतिर्म्मय इत्यर्थः । उत्तरेष्वपि समाना योजना । पुरुषः पुरि शयनात्, पूरयति वा स्वेनात्मना जगदिति । दृश्यते निवृत्तचक्षुर्भिः समाहितचेतोभिर्ब्रह्मचर्य्यादिसाधनापेक्षैः । तेजस्विनोऽपि श्मश्रुकेशादयः कृष्णाः स्युरित्यतो विशिनष्टि हिरण्यश्मश्रुर्हिरण्यकेश इति । ज्योतिर्म्मयान्येवास्य श्मश्रूणि केशाश्चेत्यर्थः” शाङ्करभाष्यम् । उपासकानामतिवाहनाय ईश्वरनियुक्ते अर्च्चिरादिमार्गस्थिते आतिवाहिके ५देवभेदे च “संवत्सरादादित्यमादित्याच्चन्द्रमसम्” छा॰उ॰ । आदित्याश्च द्वादश यथोक्तं विष्णुधर्मोत्तरे भारते च “धाता मित्रोऽर्य्यमा रुद्रो वरुणः सूर्य्यएव च । भगो विवस्वान् पूषा च सविता दशमः स्मृतः । एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते” इति विष्णुध॰ । “धाताऽर्य्यमा च मित्रश्च वरुणोऽंशुर्भगस्तथा । इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः । ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यज” इति भा॰आ॰प॰ कल्पभेदादनयोर्व्यवस्था । मासभेदे आदित्यभेदा आदित्यहृदये दर्शिता यथा “वरुणो माघमासे तु सूर्य्यो वै फाल्गुने तथा । चैत्रे मासि च वेदांशो वैशाखे तपनः स्मृतः । ज्यैष्ठे मासि तपेदिन्द्रः आषाढे तपते रविः । गभस्तिः श्रावणे मासि यमोभाद्रपदे तथा । इषे हिरण्यरेताश्च कार्त्तिके च दिवाकरः । मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः । इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्त्तिताः” । ६अर्कवृक्षे पु॰ । आदित्यस्यापत्यम् यञ् यलोपः । ७आदित्यापत्ये पुंस्त्री॰ ।

**आदित्यकेतु** पु॰ धृतराष्ट्रपुत्रभेदे तद्गणनायां भा॰आ॰प॰ ६७ अ॰ । “आदित्यकेतुर्बह्वाशी नागदत्तानुयायिनौ” ६त॰ । आदित्यस्य केतौ अरुणे ।

**आदित्यकेशव** पु॰ आदित्यपूजितः केशवः । काशीस्थे “केशवमूर्त्तिभेदे “आदिकेशवपूर्व्वेण स्वयमादित्यकेशवः” काशीख॰ ।

**आदित्यपत्र** पु॰ आदित्यस्य अर्कवृक्षस्य पत्रमिव पत्रमस्य । क्षुपभेदे । ६त॰ । अर्कवृक्षपत्रे न॰ ।

**आदित्यपर्णिनी** स्त्री आदित्यवर्णं नित्यं पर्णमस्त्यस्या इनि । “मूलिनी पञ्चभिः पत्रैः सुरक्ता शुककोमलैः । आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी” “आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये” सुश्रुतोक्तलक्षणायामोषधौ ।

**आदित्यपुराण** न॰ आदित्येनोक्तं पुराणम् । उपपुराणभेदे । उपपुराणगणनायाम् “माहेश्वरं तथा साम्बं सौरं पाराशराह्वयम्” । कौर्म्मे सौरत्वेनेदं पठितम् । मत्स्यपुराणे तु “यत्र साम्बं पुरस्कृत्य भविष्योत्थकथानकम् । प्रोच्यते तत् पुनर्लोके साम्बमेव शुचिव्रतम् । एवमादित्यसंज्ञं च तत्रैव परिपठ्यते” आदित्यसंज्ञमित्युक्तं देवीपु॰ “पराशरोक्तमपरं मारीचं भास्कराह्वयम्” भास्करत्वेनोक्तं तथा चादित्यपुराणस्यैव नामान्तरं सौरं भास्करञ्चेत्यादि । अधिकमुपपुराणशब्दे वक्ष्यते । एतदीयप्रतिपाद्यविषयाः सौरशब्दे दृश्याः ।

**आदित्यपुष्पिका** स्त्री आदित्यवर्णं रक्तं पुष्पमस्याः । रक्तपुष्पे अर्कवृक्षे । [ वङ्गभाषायाम् ओषधौ ।

**आदित्यभक्ता** स्त्री आदित्ये भक्ता । ( हुडहुड़िया ) अर्क-

**आदित्यव्रत** न॰ आदित्यस्य तदुपासनार्थं व्रतम् । सूर्य्योपासनार्थे व्रतभेदे । आदित्यव्रतस्य ब्रह्मचर्य्यमस्य ठञ् । आदित्यव्रतिकः तद्व्रतार्थब्रह्मचर्य्ययुक्ते त्रि॰ ।

**आदित्यसूनु** पु॰ ६त॰ । सूर्य्यपुत्रे १सुग्रीवे २कर्णे, ३यमे ४शनैश्चरे च अरुणात्मजशब्दे विवृतिः दृ॰ ।

**आदित्सु** पु॰आ+दा—सन्—उ । ग्रहीतुमिच्छौ, “आदित्सुभिर्नूपुरशिञ्जितानि” कुमा॰ ।

**आदिदेव** पु॰ आदौ दीव्यति स्वयं राजते दिव—अच् ७त॰ । १नारायणे २शिवे । आदिः कारणं देवः । ३आदिकारणे परमात्मनि । “महात्मना मया येन आदिदेव

उदाहृतः" या० स्तृ० । "पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्" गीता । "वासुदेवो हृषङ्गानुरादिदेवः पुरन्दरः" विष्णुस० "आदिः कारणं देव इत्यादिदेवः दानादिगुणवान् वा" भा० "देवोदानात्दीपनात् भवतीति"यास्कोक्तदेवशब्दनिरुक्तिमाश्रित्य भाष्ये तथोक्तम्।

**आदिदैत्य** पु० कर्म० । हिरण्यकशिपौ दैत्ये तस्य दितेः प्रथमजत्वात्तथात्वम् । "एक एव दितेः पुत्रः हिरण्यकशिपुः पुरा" भा० आ०प०६५अ० । आदिदैत्योमहासीर्थो हिरण्यकशिपुः पुरा" भा०व०प० १०३ अ० ।

**आदिन्** त्रि०अत्तीति अद-णिनि । भक्षके । स्त्रियां ङीप् ।

**आदिनव** पु०आदीनवस्य पृ०वेदे दुःखः । आदीनवशब्दार्थे "आदिनवं प्रतिदीव्ने एतेनार्थाँ अभिवर" अथ०७,११०,४ ।

**आदिपर्वन्** न०आदि आद्यं पर्व । महाभारतान्तर्गते आद्ये पर्वणि ।"इत्येतदादिपर्वोक्तं प्रथमस्वङ्कविस्तरम्"भा०आ०।

**आदिपुराण** न० आदि आद्यं पुराणम् कर्म०। पुराणभेदे सर्वेषामष्टादशानां पुराणानामुपपुराणानाञ्चादिभूते चतुर्लक्षात्मके ब्रह्मनिर्मिते पुराणभेदे । नारदपुराणे उपसंहारपादशेषे मरीचिं प्रति ब्रह्मवाक्यम् "अष्टादशमनीषस्य सारात् सारतरं द्विज ! । ब्रह्माण्डञ्च चतुर्लक्षं पुराणत्वेन पठ्यते ।तदेव व्यस्य गदितमत्राष्टादशधा पृथक्। पाराशर्येण मुनिना सर्वेषामपि मानद" । वस्तुपहाय तेनैव मुनीनां भावितात्मनाम् । मत्तः श्रुत्वा पुराणानि लोकेभ्यः प्रचकाशिरे । मुनयो धर्मशीलास्ते दीनानुग्रहकारिणः । मया चेदं पुराणन्तु वसिष्ठाय पुरोदितम् तेन शक्तिसुतायोक्तं जातूकर्णाय ते न च । व्यासोलब्ध्वा ततश्चैतत् प्रभञ्जनमुखोद्गतम् । प्रमाणीकृत्य लोकेऽस्मिन् प्रावर्त्तयदनुत्तमम्" तथा च व्यासोक्तब्रह्माण्डन्तु द्वादशसाहस्रं तस्यैव संक्षेपार्थप्रतिपादकम् । एवञ्च तस्यैव चतुर्लक्षात्मकस्य सर्वपुराणमूलतया आद्यत्वात् आदिपुराणत्वम् । देवलोके तु आदिपुराणस्य शतकोटिश्लोकात्मकता यथोक्तं तत्रैव । प्रथमपादे मरीचिं प्रति ब्रह्मवाक्यम्। "शृणु वत्स ! प्रवक्ष्यामि पुराणानां समुच्चयम् । यस्मिन् ज्ञाते भवेज्ज्ञातं वाङ्मयं सचराचरम् । पुराणमेकमेवासीत् सर्वकल्पेषु मानद ! । चतुर्वर्गस्य बीजञ्च शतकोटिप्रविस्तरम् । प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः । कालेन ग्रहणं दृष्ट्वा पुराणस्य महामतिः । हरिर्व्यासस्वरूपेण जायते च युगे युगे । चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा । तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि । अद्यापि देवलोके तु शतकोटिप्रविस्तरम् अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते" एवञ्च तदानीं लोकप्रसिद्धचतुर्लक्षात्मकस्य ब्रह्माण्डनामकपुराणान्तरस्यैव व्यासप्रणीत चतुर्लक्षात्मकाष्टादशपुराणानामादिभूतत्वादादिपुराणत्वेन प्रसिद्धमासीत् । तच्च क्रमशउच्छिन्नप्रायं संस्कृत शालायान्तु तस्य स्वल्पांशमात्रस्य सत्त्वेऽपि सर्वांशस्य प्रायशः कुत्रापीदानीमलाभात् न तत्स्वप्रतिपाद्यविषया वर्णयितुं शक्याः । हेमाद्रि माधवादिभिरादिप्रपुराणनाम्ना बहूनि वचनानि लिखितानि । तेषां काले च तत्पुराणस्य प्रचार आसीत् क्रमश इदानीमुच्छिन्नप्रचारतया समग्रलाभासम्भवः इति तत्स्वप्रतिपाद्यविषयप्रदर्शनादुपरतमस्माभिः ।

**आदि(पु)पूरुष** पु० आदौ पुरि देहे वसति वस-डपन् स्वेनात्मना पूरयति जगत् पूर-उषन् वा पृ०वा ह्रस्वः । आदिजीवे १हिरण्यगर्भे २नारायणे च । "ते च प्रापुरुदन्वन्तं बुबुधे चादिपु(पू)रुषः"रघुः ।"दैत्येश्वरसभां गत्वा पार्थिवं संसृज्य पार्थिना । दैत्यानामादिपुरुषः सुरारिर्दितिनन्दनः" भा०व०प०२७१अ० । ह्रस्वाभावे पूरुषोऽप्यत्र "तमर्घ्यमर्घादिकयादिपूरुषः" माघः ।

**आदिभव** पु० आदौ भवतीति भू-अच् । १हिरण्यगर्भे "हिरण्यगर्भः समवर्त्तताग्रे" इति श्रुतौ तस्याग्रभवत्वोक्तेः तथात्वम् । २सर्वस्यादिः कारणं भवति । सर्वस्य कारणभूततयाविर्भूते ३विष्णौ च "रसातलादादिभवेन पुंसा" रघुः ४अग्रजमात्रे त्रि०।

**आदिम** त्रि० आदौ भवः आदि+डिमच् । आदौ भवे ।

**आदिमत्** त्रि० आदिरस्त्यस्य मतुप् स्त्रियां ङीप् । आदियुक्ते १सकारणे २ आदिसीमायुक्ते च।

**आदिराज** पु० आदिराद्योराजा टच् समा० । पृथुनामके नृपतौ तस्य राज्ञामादित्वात्तथात्वम् तत्कथा भाग०४स्क० "अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः । बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत । तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः । ऊचुः परमसंहृष्टा विदित्वा भगवत्कलाम् । एष विष्णोर्भगवतः कला भुवनपालिनी । इयञ्च लक्ष्मीसंभूतिः पुरुषस्यानपायिनी । अयन्तु प्रथमो राज्ञां पुमान् प्रथयिता यशः । पृथुर्नाम महाराजोभविष्यति पृथुश्रवाः" । तस्य वेणस्येत्यर्थः ।

**आदिवराह** पु० आदिराद्यो वराहः । यज्ञवराहरूपेणाविर्भूते विष्णोरवतारभेदे तत्कथा "ततो महात्मा मनसा दिव्यं रूपमचिन्तयत् । किं तु रूपमहं

कृत्वा उद्धरेयं वसुन्धराम् । जले निमग्नां धरणीं येनाहं वै समुद्धरे । इति सञ्चिन्त्य मनसा हरिर्नारायणः प्रभुः । जलक्रीडारुचिस्तस्माद्वाराहं वपुरस्मरत् । हरिरुद्धरणे युक्तस्तदाऽभूद्दक्ष भूमिहृत् । अधृष्यं सर्व्वभूतानां वाङ्मयं ब्रह्मसंज्ञितम् । दशयोजनविस्तारमुच्छ्रितं शतयोजनम् । नीलजीमूतसङ्काशं मेघस्तनितनिस्वनम् । गिरिसंहननं भीमं श्वेततीक्ष्णोग्रदंष्ट्रिणम् । विद्युदग्निप्रकाशाक्षमादित्यसमतेजसम् । पीनवृत्तायतस्कन्धं दृप्तशार्दूलविक्रमम् । पीनोन्नतकटीदेशं वृषलक्षणलक्षितम् । रूपमास्थाय विपुलं वाराहममितं हरिः । पृथिव्युद्धरणार्थाय प्रविवेश रसातलम् । वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः । अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणधरो वेदाङ्गश्रुतिभूषणः । आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् । सत्यधर्म्ममयः श्रीमान् क्रमविक्रमसत्कृतः । क्रियासत्रमहाघोषः पशुजानुर्म्महाकृतिः । उद्गात्रन्त्रो होमलिङ्गो बीजौषधिमहाफलः । वाय्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः । वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् । प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरन्वितः । दक्षिणाहृदयो योगी महासत्रमयो महान् । उपाकर्म्मोष्ठरुचकः प्रवर्ग्यावर्त्तभूषणः । नानाच्छन्दोगतिपथो गुह्योपनिषदासनः । छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः । भूत्वा यज्ञवराहोऽसौ द्रागधः प्राविशद्गुरुः । अद्भिः सञ्छादितामुर्व्वीं स तामार्च्छत् प्रजापतिः । रसातलजले मग्नां रसातलतलं गतः । प्रभुर्लोकहितार्थाय दंष्ट्राग्रेणोज्जहार गाम् । ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः । मुमोच पूर्व्वं सहसा धारयित्वा धराधरः । ततो जगाम निर्व्वाणं मेदिनी तस्य धारणात् । चकार च नमस्कारं तस्मै देवाय विष्णवे । एवं यज्ञवराहेण भूत्वा लोकहितार्थिना । उद्धृता पृथिवी देवी सागराम्बुधरा पुरा" हरिवं० २२४ अ० ।

**आदिविदस्** पु० आदिराद्योऽखिलसम्प्रदायप्रवर्त्तकत्वात् विद्वान् । सांख्यशास्त्रकारके सर्वसम्प्रदायप्रवर्त्तके उपासनयासिद्धे जगत्कर्त्तरि कपिले । "आदिविद्वान् सिद्ध" इति कापिलाः" कुसुमा० कपिलशब्दे विवृतिः ।

**आदिशक्ति** स्त्री आदिराद्या शक्तिः । परमेश्वरस्य १मायारूपशक्तौ २देवीमूर्त्तिभेदे च । आद्याशब्दे विवृतिः ।

**आदिशरीर** न० आदि आद्यं शरीरम् । भोगार्थं परमेशसृष्टे आद्ये लिङ्गाख्ये शरीरे । "अयमादिशरीरेण देवसृष्टेन मानवः । शुभानामशुभानाञ्च कुरुते सञ्चयं महत् । आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेवरम् । संभवत्येव युगपद्यतो नास्त्यन्तरा भवः । तत्रास्य स्वकृतं कर्म्म छायेवानुगतम् सदा । फलत्यथ सुखार्हो वा दुःखार्हो वाऽथ जायते" भा० व० प० १८४ अ० । आदि कारणं शरीरं कर्म्म० । १अविद्याख्ये २सूक्ष्मशरीरे च वेदान्तिमते शरीरं त्रिविधं कारणसूक्ष्मस्थूलभेदात् तत्राविद्यायाः कारणशरीरत्वं सर्वकारणत्वात् विद्यया शीर्य्यमाणत्वाच्च अविद्यां प्रकृत्य "सा कारणशरीरं स्यात्" पञ्चद० । [र्थे च ।

**आदिश्य** अव्य० आ+दिश–ल्यप् । १अनुशिष्येत्यर्थे २उक्त्वे-

**आदिष्ट** न० आ+दिश–भावे क्त । १आज्ञायाम्, २उपदेशे च । कर्म्मणि क्त । ३उपदिष्टे, ४व्याकरणप्रसिद्धे स्थानिजाते वर्णे च त्रि० यथा इकः स्थाने यण् आदिश्यते इति इकोयणादिष्ट इत्युच्यते । ५आज्ञप्ते ६उच्छिष्टे ७अनुशिष्टे च त्रि० "उपपातकयुक्तानामनादिष्टेषु चैव हि" विष्णु० ।

**आदिष्टिन्** पु० आदिष्टमादेशोव्रतादेशः अस्त्यस्य इनि । व्रतादेशोयस्य कृतस्तादृशे, ब्रह्मचारिणि । "आदिष्टी नोदकं कुर्य्यादा व्रतस्य समापनात्" मनुः "आदिष्टं व्रतादेशोऽस्त्यस्येति आदिष्टी ब्रह्मचारी" कुल्लू० । आदिष्टमनेन इष्टा० इनि । २आदेशकर्त्तरि त्रि० स्त्रियां ङीप् ।

**आदिसर्ग** पु० कर्म्म० । प्राकृतप्रलयोत्तरं प्रथमसृष्टौ "अव्यक्तात् पूर्व्वमुत्पन्नो महानात्मा महामतिः । आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते । महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्य्यवान् । बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिर्धृतिः स्मृतिः । पर्य्यायवाचकैः शब्दैर्म्महानात्मा विभाव्यते । तं जानन् ब्राह्मणो विद्वान् प्रमोहं नाधिगच्छति । सर्व्वतः पाणिपादश्च सर्वतोऽक्षिशिरोमुखः । सर्व्वतःश्रुतिमान् लोके सर्व्वं व्याप्य स तिष्ठति । महाप्रभावः पुरुषः सर्व्वस्यैव हि निश्चितः । अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः । तत्र बुद्धिविदो लोकाः सद्भावनिरताश्च ये । ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः । ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः । प्रसन्नमनसो धीरा निर्म्ममा निरहङ्कृताः । विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत । आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम् । अहङ्कारात् प्रसूतानि महाभूतानि पञ्च वै । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । तेषु भूतानि युज्यन्ते महाभूतेषु पञ्चसु । ते शब्दस्पर्शरूपेषु रसगन्धक्रियासु च ।

महाभूतविनाशस्तु प्रलये प्रत्युपस्थिते। सर्व्वप्राणभृतां धीरा! महदुत्पद्यते भयम्। स धीरः सर्व्वलोकेषु न मोहमधिगच्छति। विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः। एवं हि यो वेद गुहाशयं प्रभुं परं पुराणं पुरुषं विश्वरूपम्। हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति" भा०आश्व०प०अ०४०। स च सर्गः दशविधः प्राकृतः षड्विधः, वैकृतस्त्रिविधः, उभयात्मक एकविधः इति भेदात् तद्विवरणम्" भाग०३स्क०१०अ०। "विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया। ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्त्तिना १२। यथेदानीं तथाग्रे च पश्चादप्येतदीदृशम् १३। सर्गोनवविधस्तस्य प्राकृतोवैकृतश्च यः। कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः १४। आद्यस्तु महतः सर्गोगुणवैषम्यमात्मनः। द्वितीयस्त्वहमोयत्र द्रव्यज्ञानक्रियोदयः १५। भूतसर्गस्तृतीयस्तु तन्मात्रोद्रव्यशक्तिमान्। चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः १६। वैकारिको देवसर्गः पञ्चमोयन्मयं मनः। षष्ठस्तु तमसः सर्गोयस्त्वबुद्धिकृतः प्रभोः १७। षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु रजोभाजो भगवतोलीलेयं हरिमेधसः १८। सप्तमोमुख्यसर्गस्तु षड्विधस्तस्थुषाञ्च यः। वनस्पत्योषधिलतात्वक्सारावीरुधो द्रुमाः १९। उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः २०। तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधोमतः। अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिनः २१। गौरजोमहिषः कृष्णः सूकरो गवयोरुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम!। खरोऽश्वोऽश्वतरोगौरः शरभश्चमरी तथा एते चैकशफाः क्षत्तः! शृणु पञ्चनखान् पशून् २२। श्वा शृगालोवृकोव्याघ्रोमार्जारः शशशल्लकौ। सिंहः कपिर्गजः कूर्म्मो गोधा च मकरादयः। कङ्कगृध्रवकश्येनभासभल्लूकबर्हिणः। हंससारसचक्राह्वकाकोलूकादयः खगाः २३। अर्व्वाक्स्रोतस्तु नवमः क्षत्तरेकविधोन्नृणाम्। रजोऽधिकाः कर्म्मपरा दुःखे च सुखमानिनः २४। वैकृतास्त्रय एवैते देवसर्गश्च सत्तम!। वैकारिकस्तु यः प्रोक्तः कौमारस्तूभयात्मकः २५। देवसर्गश्चाष्टविधोविबुधाः पितरोऽसुराः। गन्धर्व्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः। भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः। दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः"। "स्वर्व्यतिरिक्तस्रष्ट्रभावं दर्शयन् कालस्य सृष्टिनिमित्ततां दर्शयति विश्वमिति। विष्णुमायया संस्थितं संवृतम्। ब्रह्म तन्मात्रं सत् विश्वं ईश्वरेण कर्त्ता कालेन

निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम्। अव्यक्ता मूर्त्तिः स्वरूपं यस्येति स्वतोनिर्व्विशेषता दर्शिता १२। अप्रतिहतत्वं दर्शयितुं तत्कार्य्यविश्वप्रवाहस्याप्रतिहतत्वमाह यथेदानीमस्ति तथाग्रे पूर्व्वमप्यासीत्। पश्चादपि तथा भविष्यति १३। एवं सामान्यतः कालं निरूप्य विशेषतो निरूपयिष्यन् तन्निमित्तस्य पूर्व्वसर्गस्य पूर्व्वोक्तानेव भेदान् अनुवदति सर्गइति। यस्तु प्राकृतोवैकृतश्च स तु दशमः तन्निमित्तमेव त्रिविधं प्रलयमाह कालेनैव बलेन नित्यप्रलयः द्रव्येण सङ्कर्षणमुखाग्न्यादिना नैमित्तिकः गुणैः स्वस्वकार्य्यं धर्षद्भिः प्राकृतिकः १४। तानेव सर्गान् प्रपञ्चयति। आद्य इत्यादिना यावदध्यायसमाप्ति। महतो लक्षणम् आत्मनोहरेः सकाशात् गुणानां वैषम्यमिति। अहमः अहङ्कारस्य। तस्य लक्षणं यत्रेति। द्रव्यादयो-वक्ष्यमाणास्त्रयः सर्गाः १५ तन्मात्रो भूतसर्गः। ततः-सूक्ष्मसर्ग इत्यर्थः। द्रव्यशक्तिमान् महाभूतोत्पादकः ज्ञानकर्म्मेन्द्रियात्मकश्चतुर्थः १६। पञ्चमोवैकारिकः। इन्द्रियाधिष्ठातारोदेवाः मनश्च। षष्ठस्तु तमसः पञ्चपर्व्वाविद्यायाः। अबुद्धिर्जीवानामावरणम् विक्षेपश्च तां करोतीत्यबुद्धिकृत् तस्य १७। मे मत्तः शृणु अनुद्वेगेन श्रोतव्यतामाह। यद्विषया मेधा संसारं हरति तस्य हरेर्लीला। यद्वा इयमिति तमआदिसर्गरूपा। रजोभाज इति ब्रह्मरूपस्येत्यर्थः। अस्मिन् पक्षेऽबुद्धिकृत इति प्रथमान्तं अनवधानकृत इत्यर्थः १८। कुर्वन्निव प्रथमं कृतःमुख्यः सर्गः। तस्थुषां स्थावराणाम्। षड्विधमेवाह। ये पुष्पं विना फलन्ति ते वनस्पतयः। ओषधयः फलपाकान्ताः। लताः आरोहणापेक्षाः। त्वक्सारा वेणवादयः। लता एव काठिन्येनारोहणानपेक्षा वीरुधः। ये पुष्पैः फलन्ति ते-द्रुमाः १९। तेषां साधारणलक्षणमाह ऊर्द्ध्वंस्रोत आहारसञ्चारो येषाम्। तमःप्राया अव्यक्तचैतन्याः। अन्तःस्पर्शमेव जानन्ति नान्यत् तदप्यन्तरेव न बहिः। विशेषिणः अव्यवस्थितपरिणामाद्यनेकभेदवन्तः २०। तिर्य्यक्स्रोतसां सर्गमाह तिरश्चामिति। स चाष्टविंशतिभेदः। तिरश्चां लक्षणम् अविदः श्वस्तनादिज्ञानशून्याः। भूरितमसः आहारादिमात्रनिष्ठाः। घ्राणज्ञाः घ्राणेनैवेष्टमर्थं जानन्ति हृदि अवेदिनः दीर्घानुसन्धानशून्याः। तथा च श्रुतिः। "अथेतरेषां पशूनाम् अशनापिपासे एवाभिज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकाविति" २१। अष्टविंशतिभेदानाह

गवादयश्चोष्ट्रान्ताः द्विशफाः द्विखुरा नव । खरादयः चर्मान्ता एकशफाः षट् । श्वादयो गोधान्ताः पञ्चनखा द्वादश २२ । एवमेते भूचराः सप्तविंशतिः । मकरादयो जलचराः कङ्कादयश्च खगाः अभूचरत्वेनैकीकृत्य गृहीताः । तदेवमष्टाविंशतिभेदान् वदन्ति । तेषु कृष्णरुरुगौराः मृगविशेषाः अन्येषामपि तिर्य्यक्प्राणिनामेतेष्वेव यथायथमन्तर्भावः २३ । अथ आहारसञ्चारोयस्य सोऽर्व्वाक्स्रोताः । लुब्धमार्षम् । नृणां सर्गः । नृणां लक्षणम् । रजः अधिकं येषु २४ । एते त्रयोवैकृताएव न कौमारवदुभयात्मकाः देवसर्गोवैकृत इत्यनुषङ्गः । वैकारिकस्तु देवसर्गः प्राकृतेषु पूर्व्वमेव प्रोक्तः अयन्तु ततोऽन्यूनत्वाद्वैकृतः देवसर्गएवान्तर्भूतः सनत्कुमारादीनान्तु सर्गः प्राकृतोवैकृतश्च देवत्वेन मनुष्यत्वेन च सृज्य इत्यर्थः २५ । वैकृतश्च देवसर्गोऽष्टविधः अत्र विबुधादयस्त्रयोभेदाः गन्धर्व्वाप्सरसएकः यक्षरक्षांस्येकः । भूतप्रेतपिशाचाएकः सिद्धचारणविद्याध्राः एकः किन्नराएकः आदिशब्दात् किंपुरुषाश्वमुखादयः" श्रीधरव्याख्या ।

एवं सामान्यतः सर्गमुक्त्वा तत्रैव २६ अध्याये विशेष उक्तः "भगवानुवाच १० । यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ११ । पञ्चभिः पञ्चभिः ब्रह्म चतुर्भिर्दशभिस्तथा । एतच्चतुर्व्विंशतिकं गुणं प्राधानिकं विदुः १२ । महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः । तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे । इन्द्रियाणि दश श्रोत्रं त्वग्दृग्रसननासिकाः । वाक्करौ चरणौ मेढ्रं पायुर्दशम उच्यते । १३ । मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम् । चतुर्द्धा लक्ष्यते भेदोवृत्त्या लक्षणरूपया १४ । एतावानेव संख्यातो ब्रह्मणः सगुणस्य च । सन्निवेशोमयाप्रोक्तोयः कालः पञ्चविंशकः १५ । प्रभावं पौरुषं प्राहुः कालमेके यतोभयम् । अहङ्कारविमूढस्य कर्त्तुः प्रकृतिमीयुषः १६ । प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि ! । चेष्टा यतः स भगवान् काल इत्युपलक्षितः १७ । अन्तः पुरुषरूपेण कालरूपेण यो बहिः । समन्वेत्येष सत्वानां भगवानात्ममायया १८ । दैवात् क्षुभितधर्म्मिण्यां स्वस्यां योनौ परः पुमान् । आधत्त वीर्य्यं सासूत महत्तत्वं हिरण्मयम् १९ । विश्वमात्मगतं व्यञ्जन् कूटस्थो जगदङ्कुरः । स्वतेजसा पिबत्तीव्रमात्मप्रस्वापनं तमः २० । यत्तत् सत्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्व्वासुदेवाख्यं चित्तं तन्महदात्मकम् २१ । स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः । वृत्तिभिर्लक्षणं प्रोक्तं यथाऽपां प्रकृतिः परा २२ । महत्तत्वाद्विकुर्व्वाणाद्भगवद्वीर्य्यसम्भवात् । क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत २३ । वैकारिकस्तैजसश्च तामसश्च यतोभवः । मनसश्चेन्द्रियाणाञ्च भूतानां महतामपि २४ । सहस्रशिरसं साक्षात् यमनन्तं प्रचक्षते । सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम् २५ । कर्त्तृत्वं करणत्वञ्च कार्य्यत्वञ्चेति लक्षणम् । शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः २६ । वैकारिकाद्विकुर्व्वाणान्मनस्तत्त्वमजायत । यत्संकल्पविकल्पाभ्यां वर्त्तते कामसम्भवः २७ । यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् । शारदेन्दीवरश्यामं संराध्यं योगिभिः शनैः २८ । तैजसात्तु विकुर्व्वाणाद्बुद्धितत्त्वमभूत् सति ! । द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः २९ । संशयोऽथ विपर्य्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक् ३० । तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः । प्राणस्य हि क्रिया शक्तिर्बुद्धेर्व्विज्ञानशक्तिता ३१ । तामसाच्च विकुर्व्वाणाद्भगवद्वीर्य्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रन्तु शब्दगम् ३२ । अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च । तन्मात्रत्वञ्च नभसो लक्षणं कवयो विदुः ३३ । भूतानां छिद्रदातृत्वं बहिरन्तरमेव च । प्राणेन्द्रियात्मधिष्ण्यत्वं नभसोवृत्तिलक्षणम् ३४ । नभसः शब्दतन्मात्रात् कालगत्या विकुर्व्वतः । स्पर्शोऽभवत्ततोवायुस्त्वक् स्पर्शस्य च संग्रहः ३५ । मृदुत्वं कठिनत्वञ्च शैत्यमुष्णत्वमेव च । एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वतः ३६ । चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः । सर्व्वेन्द्रियाणामात्मत्वं वायोः कर्म्माभिलक्षणम् । वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् । समुत्थितं ततस्तेजश्चक्षू रूपोपलम्भनम् । द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च । तेजस्त्वं तेजसः साध्वि ! । रूपमात्रस्य वृत्तयः ३८ । द्योतनं पचनं पानमदनं हिममर्द्दनम् । तेजसोवृत्तयस्त्वेताः शोषणं क्षुत्तृडेव च । रूपमात्राद्विकुर्व्वाणात्तेजसोदैवचोदितात् । रसमात्रमभूत्तस्मादम्भोजिह्वा रसग्रहः ४० । कषायोमधुरस्तिक्तः कट्वम्ल इति नैकधा । भौतिकानां विकारेण रस एकोविभिद्यते ४१ । क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोद(न्द)नम् । तापापनोदोभूयस्त्वमम्भसो वृत्तयस्त्विमाः ४२ । रसमात्राद्विकुर्व्वाणादम्भसो दैवचोदितात् । गन्धमात्रमभूत्तस्मात् पृथ्वी घ्राणस्तु गन्धगः ४३ । करम्भपूतिसौरभ्यशान्तोदग्रा-

दिभिः पृथक् । द्रव्यावयववैषम्याद्गन्ध एकोविभिद्यते४४। भावनं ब्रह्मणःस्थानं धारणं सद्विशेषणम् । सर्व्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ४५ । नभोगुणविशेषोऽर्थो यस्य तत् श्रोत्रमुच्यते । वायोर्गुणविशेषोऽर्थो यस्य तत् स्पर्शनं विदुः । तेजोगुणविशेषोऽर्थो यस्य तच्चक्षुरुच्यते । अम्भोगुणविशेषोऽर्थो यस्य तद्रसनं विदुः भूमेर्गुणविशेषोऽर्थो यस्य घ्राणः स उच्यते४६ । परस्य दृश्यते धर्म्मो ह्यपरस्मिन् समन्वयात् । अतो विशेषो भावानां भूमावेवोपलभ्यते ४७ । एतान्यसंहत्य यदा महदादीनि सप्त वै । कालकर्म्मगुणोपेतो जगदादिरुपाविशत् ४८ । ततस्तेनानुविद्धेभ्यो युक्तेभ्योऽण्डमचेतनम् । उत्थितं पुरुषो यस्मात् उदतिष्ठदसौ विराट् । एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः । तोयादिभिः परिवृतं प्रधानेनावृतं बहिः । यत्र लोकवितानोऽयं रूपं भगवतोहरेः ५० । हिरण्मयादण्डकोषादुत्थाय सलिलेशयात् । तमाविश्य महादेवो बहुधा निर्बिभेद खम्५१। निरभिद्यतास्य प्रथमं मुखं वाणी ततोऽभवत् । वाण्या वह्निरथो नासे प्राणोतो घ्राण एतयोः ५२ । घ्राणाद्वायुरभिद्येतामक्षिणी चक्षुरेतयोः । तस्मात् सूर्य्योऽन्वभिद्येतां कर्णौ श्रोत्रं ततोदिशः ५३ । निर्बिभेद विराजस्त्वग्रोमश्मश्र्वादयस्ततः । ततः ओषधयश्चासन् शिश्नं निर्बिभिदे ततः । रेतस्तस्मादाप आसन्निरभिद्यत वै गुदम् । गुदादपानोऽपानाच्च मृत्युर्लोकभयङ्करः ५४ । हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् । पादौ च निरभिद्येतां गतिस्ताभ्यां ततोहरिः ५५ । नाड्योऽस्य निरभिद्यन्त ताभ्योलोहितमाभृतम् । नद्यस्ततः समभवन्नुदरं समभिद्यत । क्षुत्पिपासे ततःस्यातां समुद्रस्त्वेतयोरभूत् । अथास्य हृदयं भिन्नं हृदयान्मन उत्थितम् ५६ । मनसश्चन्द्रमाजातोबुद्धिर्बुद्धेर्गिरांपतिः । अहङ्कारस्ततोरुद्रः चित्तञ्चैत्यस्ततोऽभवत्५७ । एते ह्यभ्युत्थिता देवा नैवास्योत्थापनेऽशकन् । पुनराविशुः खानि तमुत्थापयितुं क्रमात् । वह्निर्वाचा मुखं भेजे नोदतिष्ठत्ततोविराट् । घ्राणेन नासिके वायुर्नोदतिष्ठत्ततो विराट् । अक्षिणी चक्षुरादित्यो नोदतिष्ठत्ततो विराट् । हस्ताविन्द्रोबलेनैव नोदतिष्ठत्ततो विराट् । विष्णुर्गत्यैव चरणौ नोदतिष्ठत्ततो विराट् । नाडीर्नद्यो लोहितेन नोदतिष्ठत्ततो विराट् । क्षुत्तृड्भ्यामुदरं सिन्धुर्नोदतिष्ठत्ततो विराट् । बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्ततो विराट् । श्रोत्रेण कर्णौ च दिशोनो-तिष्ठत्ततो विराट् । रेतसा शिश्नमापस्तु नोदतिष्ठत्ततो विराट् । गुदं मृत्युरपानेन नोदतिष्ठत्ततो विराट् । रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्ततो विराट् । चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा । विराट् तदैव पुरुषः सलिलादुदतिष्ठत ५८ । यथा प्रसुप्तं हृदयं प्राणेन्द्रियमनोधियः । प्रभवन्ति विना येन नोत्थापयितुमोजसा । तमस्मिन् प्रत्यगात्मानं धिया योगप्रवृत्तया । भक्त्या विरक्त्या ज्ञानेन विविच्यात्मनि चिन्तयेत्" ६० । व्याख्यातमेतत् श्रीधरेण "दैवाज्जीवादृष्टवशात् क्षुभिता धर्म्मा गुणावस्थाः । योनौ अभिव्यक्तिस्थाने प्रकृतौ वीर्य्यं चिच्छक्तिम् । सा प्रकृतिर्म्महत्तत्त्वमसूत । महतः स्वरूपमाह हिरण्मयं प्रकाशबहुलम् १९ । विश्वं अहङ्कारादिप्रपञ्चं आत्मगतं स्वस्मिन् सूक्ष्मरूपेण स्थितं व्यञ्जन् प्रकटयन् तमोऽपिबत्, कूटस्थः लयविक्षेपशून्यः, आत्मानं प्रस्वापयतीति तथा यत् पूर्व्वं प्रलयसमये महान्तं प्रकृतौ विलापयमासेति २० । प्रसङ्गात् चतुर्व्यूहोपासनमाह यत्तदिति सर्व्वागमप्रसिद्धत्वमाह । स्वच्छं विशदं शान्तं रागादिरहितं भगवतः पदमुपलब्धिस्थानम् । अतएव वासुदेवाख्यं यदाहुः । अयमर्थः अधिभूतरूपेण तत्त्वं महानिति, अध्यात्मरूपेण चित्तमिति, उपास्यरूपेण वासुदेव इति, अधिष्ठाता तत्त्वस्य क्षेत्रज्ञः, एवमहङ्कारे सङ्कर्षण उपास्यः,रुद्रोऽधिष्ठाता, मनसि अनिरुद्ध उपास्य ब्रह्माधिष्ठाता, बुद्धौ प्रद्युम्न उपास्य ब्रह्माधिष्ठातेति ज्ञातव्यम् २१ । स्वच्छत्वं भगवद्विभूत्याहित्वम् अविकारित्वं लयविक्षेपराहित्यं अपांप्रकृतिः फेनतरङ्गादिरहितावस्थापरा भूतसंसर्गात् प्राक्तनी सा यथा मधुरा स्वच्छा शान्ता च तद्वदित्यर्थः २२ अहङ्कारस्योत्पत्तिपूर्व्वकं लक्षणमाह महत्तत्त्वादिति चतुर्भिः । क्रियासु शक्तिर्यस्य स क्रियाशक्तिः २३ । तस्य त्रैविध्यमाह वैकारिक इति । तस्य कार्य्यमाह यतोयस्मान्मनआदीनाम् भवदुत्पत्तिरिति २४ । तस्मिन् प्रादुर्भूतमाह सहस्रशिरसमिति २५ । कर्त्तृत्वं देवतारूपेण, करणमिन्द्रियरूपेण, कार्य्यत्वं भूतरूपेण, शान्तत्वादिकं तत्कारणगुणत्रयरूपेण२६ । मनस उत्पत्तिपूर्व्वकं लक्षणमाह वैकारिकादितिद्वाभ्याम् । संकल्पश्चिन्तनम् विकल्पोविशेषचिन्तनं यस्य मनसः संकल्पविकल्पाभ्यां कामसम्भवोवर्त्तते इति कामरूपा वृत्तिर्लक्षणत्वेनोक्ता न तु प्रद्युम्नोत्पत्तिस्तस्य संकल्पादिकार्य्यत्वाभावात् उपास्यव्यूहस्यानिरुद्धस्योक्तेः २७ । शारदं शरत्कालीनमिन्दीवरं नीलोत्पलं

तद्विव ग्रामं तच्छनैः संराध्यं वशीकर्त्तुमयोग्यं दुर्ग्रहत्वात् २८ । बुद्धेरुत्पत्तिपूर्व्वकं लक्षणमाह तैजसादितिद्वाभ्याम् हे सति ! । द्रव्यस्फुरणरूपं विज्ञानमिति चित्तव्यावृत्त्यर्थमुक्तम् । इन्द्रियाणामनुग्रह इति सविकल्पज्ञाने हृषीकाणामधीश्वर इति यदुक्तं तत्तु निर्व्विकल्पकज्ञाने २९ । द्रव्यस्फुरणस्यैव प्रपञ्चः संशयादिः । विपर्य्यासो मिथ्याज्ञानं निश्चयः प्रमाणज्ञानं स्वापो निद्रा, "प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः" इति पातञ्जलोक्तेः ३० । इन्द्रियाणामुत्पत्तिमाह तैजसाहङ्काराज्जातानि वैकारिकत्वशङ्कानिवृत्त्यर्थमेवकारः द्विविधान्यपीन्द्रियाणि तैजसान्येवेत्यर्थः । तत्र हेतुः प्राणस्येति हि यत आत्मप्राणस्य क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता अतः प्राणस्य तैजसत्वात् तदीयशक्तिमतामिन्द्रियाणां तैजसत्वम् । तथा बुद्धेस्तैजसत्वात् तदीयज्ञानशक्तिमतामपि ज्ञानेन्द्रियाणां तैजसत्वमपीत्यर्थः ३१ । तन्मात्रोत्पत्तिपूर्व्वकमाकाशादिमहाभूतोत्पत्तिलक्षणञ्चाह । तामसादिति पञ्चभिः । श्रोत्रन्तु शब्दगमित्यादिभिर्विषयोत्पत्त्यनन्तरं तत्सम्बन्धमात्रं कथ्यते न तूत्पत्तिः प्रागेवोत्पन्नत्वात् शब्दं गच्छति प्राप्नोतीति शब्दगम् ३२ । शब्दस्य लक्षणमाह अर्थाश्रयत्वं अर्थवाचकत्वं द्रष्टुर्लिङ्गत्वं कुड्यान्तरितस्य द्रष्टुर्ज्ञापकत्वं तदुक्तं "लिङ्गं यद्द्रष्टृदृश्ययोरिति, नभसः तन्मात्रत्वं सूक्ष्मत्वं शब्दस्य लक्षणमित्यन्वयः ३३ । छिद्रदातृत्वमवकाशदातृत्वं वहिरान्तरव्यवहाराश्रयत्वम् आकाशमनः । प्राणादीनामिन्द्रियाणामाश्रयत्वं नाड्यादिच्छिद्ररूपेण वृत्तिः कार्य्यमेतल्लक्षणम् । एवमुत्तरत्रापि एकेन श्लोकेन तन्मात्रमहाभूतयोरुत्पत्तिः द्वितीयेन तन्मात्रलक्षणं तृतीयेन महाभूतलक्षणं इत्यनुसन्धेयम् । आकाशात्त्वक्स्पर्शस्य संग्रहः सम्यग्ग्रहणं यथा पुंस्त्वं नियतलिङ्गत्वात् । यद्वा स्पर्शस्य संग्रहस्ततोभवतीति शेषः । शब्दतन्मात्रादित्यादि तन्मात्राणामुत्तरोत्तरान्वयार्थमुक्तम् ३५ । स्पर्शत्वं स्वरूपलक्षणमित्यर्थः । नभस्वतो वायोस्तन्मात्रत्वञ्च ३६ । चालनं वृक्षशाखादेः । व्यूहनं मेलनं तृणादेः प्राप्तिः संयोगः द्रव्यस्य गन्धवतोघ्राणं प्रति नेतृत्वं यथा शैत्यादिमतः स्पर्शं, शब्दस्य श्रोत्रं प्रति नेतृत्वं सर्व्वेन्द्रियाणामात्मत्वम् उपोद्बलकत्वं कर्म्मणा कार्य्येणाभिलक्षणं भावे ल्युट् । कर्म्मणाभिलक्षणमिति विसर्गे तु करणे ३७ । द्रव्याकृतित्वं द्रव्यस्याकारसमर्पकत्वं गुणता द्रव्योपसर्ज्जनतया प्रतीतिः शब्दस्य तु स्वातन्त्र्येणैव प्रतीतिः । व्यापकवद्द्रव्यस्य स्पर्शादेरपि स्वातन्त्र्येणैव प्रतीतिः रूपस्य तु नैवमिति तस्यायं विशेषउक्तः । व्यक्तिसंस्थात्वं द्रव्यस्य या संस्था सन्निवेशः सैव संस्था यस्य द्रव्यपरिणामतया प्रतीतिरित्यर्थः । तेजसस्तेजस्त्वमसाधारणत्वम् ३८ । द्योतनं प्रकाशनं पचनं तण्डुलादेः क्षुत्तृट् अशनाया पिपासा च तद्द्वारेण पानमदनञ्च ३९ । जिह्वा रसनेन्द्रियं रसोग्टह्यतेऽनेनेति रसग्रहस्ततो भवतीत्यर्थः ४० । कषायादिषु लवणोऽपि द्रष्टव्यः । भौतिकानां संसर्गिद्रव्याणां वश्कोमधुरएव सन् अनेकधा भिद्यते स रसइत्यर्थः ४१ । क्लेदनमार्द्रीकरणं मृदादेः पिण्डीकरणं तृप्तिदातृत्वं प्राणनं जीवनम् "आपोमयः प्राण" इति" श्रुतेः आप्यायनं तृड्वैक्लव्यनिवर्त्तनं उदनं मृदुकरणम् उन्दनमितिपाठे सएवार्थः । भूयस्त्वं कूपादावुद्धृतस्यापि पुनःपुनरुद्गमः ४२ । गन्धगः गन्धं प्राप्नोति ४३ । करम्भोमिश्रगन्धः यथा व्यञ्जनादीनां हिङ्ग्वादिसंस्कारेणैव । पूतिर्दुर्गन्धः सौरभ्यं कर्पूरादेः, शान्तः शतपत्रादेः, उग्रो लशुनादेः, संसर्गिणां द्रव्यावयवानां वैषम्यात् यएवंविभिद्यते स गन्धइत्यर्थः ४४ । ब्रह्मणोभावनं प्रतिमादिरूपेण साकारतापादनं, स्थानं जलादिविलक्षणतया नैरपेक्ष्येण स्थितिः । धारणं जलाद्याधारत्वं सतामाकाशादीनां विशेषणमवच्छेदकत्वं प्राणिनां तत्तद्गुणानाञ्च पुंस्त्वादीनामुतच्छेदः परिणामविशेषैः प्रकटीकरणम् ४५ । श्रोत्रादीनां शब्दादिग्राहकत्वमुक्तं तेषाञ्च लक्षणमेतदेव इत्याशयेनाह पञ्चभिः श्लोकार्द्धैः नभसोगुणविशेषः शब्दोयस्यार्थोविषयः ४६ । गुणविशेषं शब्दव्यावृत्त्यर्थं दर्शयति परस्य कारणस्य धर्म्मः शब्दादिः अपरस्मिन् कार्य्ये वाय्वादौ कारणान्वयाद् दृश्यते अतोभावानामाकाशादीनां विशेषगुणः सर्व्वोऽपि शब्दादिः भूमावेवोपलभ्यते चतुर्णां तत्रान्वयात्, जलादिषु यथान्वयमेव न सर्व्वम् आकाशेऽन्यान्वयाभावेन एकएवेति ४७ । एवं कारणोत्पत्तिमुक्त्वा कार्य्योत्पत्तिमाह सार्द्धैस्त्रिभिः । एतान्यसंहत्य अमिलित्वा यदा स्थितानि तदा जगदादिरीश्वरः प्राविशत् सप्तेति प्राधान्याभिप्रायेणोक्तं प्रवेशस्तु सर्व्वेषामपि विवक्षितएव ४८ । अनुविद्धेभ्यः क्षुभितेभ्यः यस्मादसौ विराट्पुरुष उदतिष्ठत् ४९ । भगवतोरूपमिति पुरुषाभेदाभिप्रायेण ५० । तस्मिन्नध्यात्मादिविभागमाह हिरण्मयादिति नवभिः । उत्थाय औदासीन्यं विहाय, तमाविश्य अधिष्ठाय । मुखाचास्यौ देवस्येति खं छिद्रम् ५१ । वाक्या सह वह्निरभवत् प्राविशत् । नासे निरभिद्येतां प्राणोतः प्राणेन उतः स्यूतः सन् प्राणयतयोर्नासिकयोरभवदित्य-

तुपक्र :५२ । प्राणादनन्तरं वायुः । प्राणोतद्वति विशेषणं सर्वेन्द्रियेष्वपि द्रष्टव्यं न्वभिद्योतामिति अन्वभिद्योतामिति पाठद्वयेऽप्येकएवार्थः । श्रोत्रं दिशः प्राविशन्५३। आदिशब्देन केशाः५४। स्वराट् इन्द्रः । हरिर्विष्णुः५५। आभ्रतं जातम्५६। बुद्ध्यादिषु हृदयमेवाधिष्ठानम् । गिरांपतिर्ब्रह्मा, चैत्यः चेतनः ५७। अन्वयव्यतिरेकाभ्यां चेतनं विवेक्तुं सर्व्वेषां पुनः प्रवेशमाह एत इति नवभिः ५८। विराड्देहस्य व्यष्टिदेहं दृष्टान्तत्वेन दर्शयन् शाङ्ग्रालुकथनस्य प्रयोजनमाह यथेतिद्वाभ्याम्५९। प्रथमं परमेश्वरे-भक्तिः ततोऽन्यत्र विरक्तिः ततोयोगप्रवृत्ता धीः एकाग्रचित्तं ततोयज्ज्ञानं तेन प्रत्यगात्मानं चेतनं स्वस्मिन्नात्मनि कार्य्यकारणसङ्घाते विविच्य चिन्तयेत्" ६०।

वेदान्तिमते अत्र कश्चिद्विशेषः पञ्चदश्यामुक्तः । "चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता । तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा । सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्या च ते मते । मायाबिम्बोवशीकृत्य तां स्यात् सर्व्वज्ञ ईश्वरः । अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा । सा कारणशरीरं स्यात् प्राज्ञस्तत्राभिमानवान् । तमःप्रधानप्रकृतेस्तद्भोगायेश्वराज्ञया । वियत्पवनतेजोऽम्बुभुवोभूतानि जज्ञिरे । सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् । श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते । तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तत् द्विधा । मनोविमर्शरूपं स्यात् बुद्धिः स्यान्निश्चयात्मिका । रजोंऽशैः पञ्चभिस्तेषां क्रमात् कर्म्मेन्द्रियाणि तु । वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे । तैः सर्वैः सहितैः प्राणोवृत्तिभेदात् स पञ्चधा । प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः । बुद्धिकर्म्मेन्द्रियप्राणपञ्चकैर्मनसा धिया । शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते । प्राज्ञस्तत्राभिमानेन तैजसत्वं प्रपद्यते । हिरण्यगर्भतामीशस्तयोर्व्यष्टिसमष्टिता । समष्टिरीशः सर्व्वेषां स्वात्मतादात्म्यवेदनात् । तदभावात्ततोऽन्ये तु कथ्यन्ते व्यष्टिसंज्ञया । तद्भोगाय पुनर्भोग्यभोगायतनजन्मने । पञ्चीकरोति भगवान् प्रत्येकं वियदादिकम् । द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते । तैरण्डस्तत्र भुवनभोग्यभोगाश्रयोद्भवः । हिरण्यगर्भः स्थूलेऽस्मिन् देहे वैश्वानरोभवेत् । तैजसा विश्वतां यातादेवतिर्य्यङ्नरादयः । ते पराग्दर्शिनः । प्रत्यक्तत्त्वबोधविवर्जिताः । कुर्वते कर्म्म भोगाय कर्म्म कर्त्तुञ्च भुञ्जते" ।

एतत्कृतप्रपञ्चस्तु "तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्म्मसहकृतापरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः सन्नामरूपात्मकं निखिलप्रपञ्चं प्रथमं बुद्धावाकलय्य इदं करिष्यामीति सङ्कल्पयति "तदैक्षत बहु स्यां प्रजायेयेति" श्रुतेः । तत आत्मन आकाशादीनि पञ्च भूतानि अपञ्चीकृतानि तन्मात्रपदप्रतिपाद्यानि उत्पद्यन्ते । तत्राकाशस्य शब्दोगुणोवायोस्तु शब्दस्पर्शौ तेजसस्तु शब्दस्पर्शरूपाणि अपान्तु शब्दस्पर्शरूपरसाः पृथिव्यास्तु शब्दस्पर्शरूपरसगन्धाः । न तु शब्दस्याकाशमात्रगुणत्वं वाय्वादावपि तदुपलम्भात् । नासौ भ्रमः बाधकाभावात् । इमानि भूतानि त्रिगुणमायाकार्य्याणि अतस्त्रिगुणात्मकानि । एतैश्च सत्त्वगुणोपेतैः पञ्चभूतैः श्रोत्रत्वक्चक्षूरसनघ्राणानि पञ्चेन्द्रियाणि मनोबुद्ध्यहङ्कारचित्तानि च जायन्ते । श्रोत्रादीनां पञ्चानां क्रमेणैव दिग्वातार्कवरुणाश्विनोऽधिष्ठातृदेवताः मन आदीनां चतुर्णां क्रमेण चन्द्रचतुर्मुखशङ्कराच्युताः अधिष्ठातृदेवताः । एतैरेव रजोगुणोपेतैः पञ्चभूतैर्यथाक्रमेण वाक्पाणिपादपायूपस्थाख्यानि कर्म्मेन्द्रियाणि जायन्ते । तेषाञ्च क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठातृदेवताः । रजोगुणोपेतैः पञ्चभूतैरेव पञ्च वायवः प्राणापानव्यानोदानसमानाख्याजायन्ते । तत्र प्रागगमनवान् वायुः प्राणोनासाग्रस्थानवर्त्ती । अवागगमनवानपानः पाय्वादिस्थानवर्त्ती । विष्वग्गमनवान् व्यानः अखिलशरीरवर्त्ती । ऊर्द्ध्वगमनवानुदानः कण्ठस्थानवर्त्ती । अशितपीतान्नादिसमीकरणः समानः नाभिस्थानवर्त्ती । तैरेव तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतभूतानि जायन्ते "तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति" त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणार्थत्वात् । पञ्चीकरणप्रकारश्चेत्थम् । आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्द्धा विभज्य तेषां चतुर्णामंशानां वाय्वादिषु चतुर्भूतेषु संयोजनम् । एवं वायुं द्वेधा विभज्य तयोरेकं भागं पुनश्चतुर्द्धा विभज्य तेषाम् आकाशादिषु संयोजनम् । एवं तेजोऽप्पृथिव्यंशानामपि । तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकं अर्द्धान्तरञ्च चतुर्व्विधभूतमयमिति पृथिव्यादौ स्वांशाधिक्यात् पृथिव्यादिव्यवहारः । तदुक्तम् । "वैशेष्यात्तद्वादस्तद्वाद" इति शा॰ सू॰ । पूर्व्वोक्तैरपञ्चीकृतभूतैर्लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्षपर्य्यन्तस्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रियपञ्चककर्म्मेन्द्रियपञ्चकप्राणादिपञ्चकसंयुक्तं जायते । तदुक्तम् । "पञ्चप्राणमनोबुद्धि

दशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति" । तच्च द्विविधं परमपरञ्च । परं हिरण्यगर्भलिङ्गशरीरम् । अपरमस्मदादिलिङ्गशरीरम् । तत्र हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वम् अस्मदादिलिङ्गशरीरञ्चाहङ्कारतत्त्वमित्याख्यायते । एवं तमोगुणयुक्तेभ्यः पञ्चीकृतभूतेभ्योभूर्भुवःस्वर्महोजनस्तपःसत्यात्मकस्योर्द्ध्वलोकसप्तकस्य अतलपातालवितलसुतलतलातलरसातलमहातलाख्यस्याधोलोकसप्तकस्य ब्रह्माण्डस्य जरायुजाण्डजस्वेदजोद्भिज्जाख्यचतुर्विधस्थूलशरीराणाञ्चोत्पत्तिः । तत्र जरायुजानि जरायुभ्योजातानि मनुष्यपश्वादिशरीराणि । अण्डजानि अण्डेभ्योजातानि पक्षिपन्नगादिशरीराणि । स्वेदजानि स्वेदाज्जातानि यूकमशकादिशरीराणि । उद्भिज्जानि भूमिमुद्भिद्य जातानि वृक्षादिशरीराणि वृक्षादीनामपि पापफलभोगायतनत्वेन शरीरित्वम् । तत्र परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेतलिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौ च साक्षात्कर्त्तृत्वम्, इतरनिखिलप्रपञ्चोत्पत्तौ च हिरण्यगर्भद्वारा "हन्ताहमिमास्तिस्रोदेवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" श्रुतेः । हिरण्यगर्भोनाम मूर्त्तिस्तयादन्यः प्रथमोजीवः "स वै शरीरी प्रथमः स वै पुरुषउच्यते । आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत" "हिरण्यगर्भः समवर्त्तताग्रे इत्यादि" श्रुतेः" । वेदा० प०

सूक्ष्मादिस्थूलभूतान्तोत्पत्तिमुक्त्वा ब्रह्माण्डोत्पत्तिमाह आत्म पु० "उत्पाद्य स्थूलभूतानि भगवान् भूतभावनः नीरेषु स्वात्मनो वीजं सहसैव समाक्षिपत् । क्षिप्तं तेन हि तद्वीर्यं नीराणामुपरिस्थितम् । दधिमण्डोपमम् कालात् काठिन्यमगमद् घनम् । कठिना पृथिवी सेयं रूढा या दृश्यतेऽधुना । तस्याः सारसमुद्भूतो गोलकोऽभून्महालयः । कुक्कुटाण्डसमाकारः सप्तलोकस्य संस्थितिः । अनुसंवत्सरं कालं नीरेष्वासीत्प्रमन्ततः । शुष्ककालानुसमोनित्यं वायुनाभ्याहतोभ्रमम् । स तु संवत्सरे पूर्णे विभिन्नः कुक्कुटाण्डवत् । तदन्तःपुरुषोजज्ञे सप्तलोकशरीरभृत् । इदं सर्वं पुमानेव भूतं भावि स्थितं च यत् । एष भोगस्य मोक्षस्य सर्वदृष्टेर्महेश्वरः । अन्नेन वर्धयत्येष स्थावराणि चराणि च । यत्प्रमाणोऽस्य महिमा विज्ञेयः सर्वदा बुधैः । पादःसर्वाणि भूतानि त्रिपादात्मनि तिष्ठति । महिमाश्रयभूतो यो महिम्नः सोऽधिको यथा । तथैवास्य महिम्नोऽपि पुमानभ्यधिकोमतः । मार्गद्वयस्य कर्त्तायं वैदिकस्य यदा प्रभुः । प्रवृत्तेश्च निवृत्तेश्च स्वर्गमोक्षपरं प्रति । अयमभ्यधिको यस्मात् सर्वस्माद्भौतिकादजः । तस्मात् विराडिति प्रोक्तो विशेषाद्राजते यतः । अधिशाय पुरः सर्वाः स्थिरजङ्गमदेहिनाम् । पूरयत्यात्मना यस्मात् अतोयमधिपूरुषः । यस्मादभ्यधिकः सोऽयं ब्रह्माण्डान्तःस्थितः पुमान् । तस्य कार्य्यमिदं सर्वं गिरिदेहधरादिकम् । अयं यज्ञपुमान् हेतुर्ऋक्सामयजुषामपि । छन्दांस्यपि च सर्वाणि गायत्र्यादीनि जज्ञिरे । अस्मादजादयश्चापि विराजः पुरुषोत्तमात् । इन्द्रश्चाग्निश्च विप्राश्च मुखतोऽस्य विनिर्गताः । क्षत्रियाबाहुतस्तद्वत् ऊर्वोर्वैश्याश्च जज्ञिरे । भूमिःशूद्रास्तथा पद्भ्यां जाता अस्य महात्मनः । चन्द्रमामनसोजातो नेत्रात् तद्वत् दिवाकरः । प्राणात् प्रभञ्जनोजातो नाभेस्तु गगनं महत् । मस्तकात् स्वर्गलोकोऽयं श्रोत्राज् जाता इमा दिशः । एवमन्येऽपिपुंसोऽस्मात् जाता लोका महात्मनः । द्रव्याणि वा तथा कालोवसन्ताद्यात्मको महान् । देवता यजमानो वा क्रियावात:परा न हि । सहस्रमस्तको देवः सहस्रेन्द्रियवानपि । भूतभौतिकजातं स व्याप्यात्मा परःस्थितः । बुद्धिसाक्षिणमात्मानमेतस्मात् परतः स्थितम् । स्वप्रकाशमह वेदसर्वाज्ञानविवर्जितम् । नामरूपात्मकं सर्वं कृत्वाऽस्ते योवदन्निव शक्र ! त्वं धातृवदनात् सम्यक् विद्यास्यते भवान् । दिशोऽपि प्रदिशस्तद्वदध ऊर्द्ध्वं सप्त हि । यतस्ततोऽत्र यज्ञेन यज्ञात्मे तेन तं द्विजाः । धर्मशब्देन तेनैते स्वर्गं यान्ति तच्छिरः । पुंसोऽस्य मूर्द्धा स्वर्गः स्यात् चन्द्रसूर्यौ च चक्षुषी । प्राणः प्रभञ्जनः प्रोक्तो मध्यदेहोऽन्तरिक्षकम् । स्थानानि विविधान्यस्य मूत्राशय उदीरितः । भूर्लोकस्तु समस्तोऽयं पादावस्य प्रकीर्त्तितः । वक्षमाहवनीयस्तु हृदयं चावसथ्यकः । स गार्हपत्यनाभः स्याद्दक्षिणाग्निर्मनोमतम् । उरोवेदिस्तथा दर्भालोमजातमुरःस्थितम् । ओषध्योवनस्पतयः शेषाः केशाः शरीरगाः । किं बहूक्तेन शक्राद्य संक्षेपेणावधारय । यदस्ति यच्च नास्त्यत्र तत्सर्वं स महेश्वरः" ।

काणादादिमते तु आदिसर्गे वायवीयेषु परमाणुषु उद्बुध्यमानजीवादृष्टवशात् क्रियोत्पद्यते सा च क्रिया स्वाश्रयं परमाणुं परमाण्वन्तरेण संयुनक्ति ततो द्व्यणुकादिक्रमेण महान् वायुरुत्पद्यते तेन नोदितेषु तैजसपरमाणुषु क्रियोत्पद्यते तया परमाणवः परमाण्वन्तरेण संहन्यमानाः संयुज्यन्ते इत्येवंक्रमेण महाभूतोत्पत्तिरेवं शरीराणि चेन्द्रियाणि चतुर्द्दश भुवनान्युत्पद्यन्ते सर्वत्र चेश्वरोनिमित्तकारणम् । एतद्विवरणमारम्भवादशब्दे

ष्ठत्वम् । तथा च आदिसर्गे एवैतेषां सर्वेषां सृष्टिः । नैमित्तिकप्रलयोत्तरन्तु न सर्वेषाम् किन्तु येषामेव खण्डप्रलयदशायां नाशस्तेषामेव कतिपयानामिति भेदः । वीजाङ्कुरवत् सृष्टेः प्रवाहरूपेणानादित्वेऽपि एतत्सृष्टेः सादित्वमपि तत्तद्बीजव्यक्तेरङ्कुरव्यक्तेश्च यथा सादित्वमेवमेव वर्त्तमानब्रह्मण आदिसर्गकाले महदादेरुत्पत्तेरादिसर्गत्वमवगन्तव्यम् "यथेदानीमित्यादि" भागवतवचनेन "सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयदिति" मन्त्रलिङ्गेन च प्रवाहस्यैवानादित्वं सूचितं न तु तत्तद्व्यक्तेः । कर्म्मसापेक्षस्यैव ईश्वरस्य स्रष्टृत्वोक्तेः पूर्वं कर्म्मणामभावे विचित्रसृष्ट्यसम्भवः । अन्यथा वैषम्यनैर्घृण्ये ईश्वरस्य प्रसज्येयाताम् जीवस्य च कृतहान्यकृताभ्यागमप्रसङ्गश्चेति दिक् ।

**आदीनव** पु० आ+दी–भावे क्त आदीनस्य वानं प्राप्तिः वा० क १दोषे, २क्लेशे, च । कर्मणि क्त । ३दुर्दर्शे ४परिक्लिष्टे च त्रि० ।

**आदीपक** त्रि० आदीपयति अन्यस्य गृहमग्निना आ+दीप–णिच्–ण्वुल् । १परगृहस्य दाहके । "राज्ञोवधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत् । आदीपकस्य स्तेनस्य वर्णसङ्करिकस्य च" भा० शा० ८९ अ० । २उद्दीपके च ।

**आदीपन** न० आ+दीप–णिच्–ल्युट् । तण्डुलादिचूर्णमिश्रितजलेन गृहादौ १चित्राकारलेपनभेदे (आलिपना) २उद्दीपने च । [ कृतादौ । २उद्दीपिते च ।

**आदीपित** त्रि० आ+दीप–णिच्–क्त । दत्तादीपने १गृहा-

**आदुरि** त्रि० आ+दृ–अन्तर्भूतण्यर्थे कि । दारयितरि "वामं वामं त आदुरे देवोददात्वर्य्यमा" ऋ० ४,३०,२४ । "हे आदुरे ! शत्रूणां दारयितः !" भा० ।

**आदृत** त्रि० आ+दृ–कर्त्तरि क्त । १सादरे कृतादरे । कर्म्मणि क्त । यस्मादरः कृतस्तस्मिन् २सम्मानिते ३पूजिते च ।

**आदृत्य** त्रि० आ+दृ–कर्म्मणि क्यप् । आदरणीये १आदर्त्तव्ये । ल्यप् । २सम्मान्येत्यर्थे अव्य० ।

**आदृष्टि** स्त्री प्रा० स० । त्रिविभागसंकोचितदृष्टौ ।

**आदेय** त्रि० आ+दा–यत् । ग्राह्ये । "पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः" "अनादेयस्य चादानादादेयस्य च वर्ज्जनात्" इति च मनुः ।

**आदेवक** त्रि० आदीव्यति आ+दिव–ण्वुल् । द्यूतकारके

**आदेवन** न० आ+दिव–भावे ल्युट् । १द्यूतक्रीड़ायाम् करणे ल्युट् । २द्यूतसाधने पाशकादौ । आधारे ल्युट् । द्यूतक्रीड़ाधारे (छक) ३द्यूतफलके ।

**आदेश** पु० आ+दिश–भावे घञ् । १उपदेशे २आज्ञायाम् "अथात आदेशोनेति नेतीति" वृ० उ० "उत तमादेशमप्राक्षः" "एत स क आदेशः" । "आदित्योब्रह्मेत्यादेश" इति च छा० उ० "आदेशं देशकालज्ञः शिष्यः शासितुरानतः" रघुः व्याकरणप्रसिद्धे कस्यचित् वर्णादितः ३कस्यचिद्वर्णस्योत्पत्तौ च । आदिश्यते कर्म्मणि घञ् । ४आदिष्टे ५कथिते ६उपदिष्टे कस्यचित् स्थाने जाते कस्मिंश्चिदर्थे च "धातोः स्थान इवादेशं सुग्रीवं सन्न्यवेशयत्" रघुः "आदेशप्रत्यययोः" पा० "आगमादेशयोर्मध्ये वलीयानागमोविधिः" व्या० कारि० "स्थानिवदादेशोऽनल्विधौ" पा० "लोपोऽप्यादेशउच्यते" व्या० का० "ज्योतिर्विदुक्ते ७शुभाशुभफले च "नादेशाकस्य निष्फलाः" वृहत्सं० । [ कारके २आज्ञाकारके ।

**आदेशक** त्रि० आदिशति आ+दिश+ण्वुल् । १आदेश-

**आदेशन** न० आ+दिश–भावे ल्युट् । आदेशे "कृतोपनयनस्यास्य व्रतादेशनमिष्यते" मनुः ।

**आदेशिन्** त्रि० आदिशति आ–दिश–णिनि । १आदेशकारके "कपोलपाटलादेशि बभूव रघुचेष्टितम्" रघुः २दैवज्ञे गणके पु० हेम० । [ ३कथयितरि च ।

**आदेश्य** त्रि० आ+दिश–कर्म्मणि ण्यत् । १उपदेश्ये २आज्ञाप्ये

**आदेष्टृ** पु० आ+दिश–तृच् । ऋत्विजं प्रति अभीष्टसम्पादनार्थं कर्म क्रियतामित्यादेशकर्त्तरि १यजमाने, २आज्ञाकर्त्तमात्रे त्रि० स्त्रियां ङीप् ।

**आद्य** त्रि० आदौ भवः दिगा० यत् । १आदिभवे । "एतदन्ताश्च गतयो ब्रह्माद्याः समुदाहृताः" । "स्वायम्भुवाद्याः सप्तैते मनवो भूरितेजसः" मनुः । अशौचान्तद्वितीयदिनकर्त्तव्ये २प्रेतश्राद्धभेदे न० "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् । प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि" या० स्मृ० । तस्य षोड़शश्राद्धानामादिभूतत्वात् आद्यत्वम् । "श्राद्धमग्निमतः कुर्य्याद्दाहादेकादशेऽहनि । ध्रुवाणि तु प्रकुर्वीत प्रमीतानां च सर्व्वदा । द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा । सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोड़श" छन्दो० प० । निरग्नेस्तु मरणावध्येकादशाहे तत् कर्त्तव्यमिति भेदः । एकादशपदञ्च सजातीयाशौचान्तद्वितीयदिनपरम् । ३प्रधाने श्रेष्ठे त्रि० "आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव" रघुः अद+कर्मणि ण्यत् । ४अदनीयद्रव्यमात्रे त्रि० ५धान्ये न० राजनि० तस्यादनीयत्वात् "अन्नमूलं हि जीवनम्" इत्युक्तेश्च जीवनमूलत्वेन प्रधानत्वाद्वा आद्यत्वम् । [ल्मीकौ च

**आद्यकवि** पु० कर्म० । आदिकवौ चतुर्मुखे १हिरण्यगर्भे २वा-

**आद्यमाषक** पु० मष्यतेऽनेन करणे घञ् कर्म्म० । पञ्चगुञ्जापरिमाणे, (माषा) इति ख्याते "माषकः सप्त कृष्णला" इत्युक्तेराद्यत्वविशेषणम् तस्य कार्य्यविशेषोपयोगितया गौणत्वान्न मुख्यत्वम् अतएव "दशार्द्धगुञ्जं प्रवदन्ति माषमिति"भास्कराचार्य्येण माषस्य पञ्चगुञ्जात्मकत्वमेवोक्तम् ।

**आद्यबीज** न० कर्म्म० । मूलकारणे आदिकारणे, १ईश्वरे सांख्यमते २प्रधाने च ।

**आद्या** स्त्री आदौ भवा दिगा०यत् । १दुर्गायां तन्त्रोक्तायां युगभेदे २सुन्दर्य्यादौ च"सत्ये तु सुन्दरी आद्या त्रेतायां भुवनेश्वरी, द्वापरे तारिणी आद्या कलौ काली प्रकीर्त्तिता" मुण्डमालातन्त्रोक्तेस्तासां तथात्वम्" । आदिभवायां तिथ्यादौ च । "युगाद्या वर्षवृद्धिश्चेति" ति०त०पुरा० ।

**आद्याकाली** स्त्री नित्यस०संज्ञात्वान्न पुंवत् ।"कालसंग्रसनात् काली सर्व्वेषामादिरूपिणी । कालत्वादादिभूतत्वात् आद्याकालीति गीयते" निर्वाणतन्त्रोक्तायां परमप्रकृतौ

**आद्यादि** पु० आदिराद्यो यस्य । पञ्चम्याःस्थाने तसिप्रत्ययनिमित्ते का०वा०उक्ते शब्दगणभेदे । स च आदि, मध्य, अन्त, पृष्ठ, पार्श्व, आकृतिगणः तेन "स्वरतो वर्णतो वेति" सिद्धम् ।

**आद्युदात्त** त्रि० आदिः उदात्तो यस्य । यस्य आदिरुदात्तः तादृशे प्रत्ययादौ । स च पाणिन्यादिभिर्दर्शितः "प्रत्ययः" इत्यधिकारे "आद्युदात्तः"पा० असति अपवादे सर्वोऽपि प्रत्यय आद्युदात्तः । कर्त्तव्य तैत्ति उदात्तः । "स्वपादिर्हिंसामच्यनिटि" पा०अदाद्यन्तर्गतस्वपादेर्हिंसश्च अनिटि अजादौ लसार्वधातुके परे आदिरुदात्तो वा । स्वपन्ति इत्यत्र स्वेत्यस्य वा उदात्तता । "अभ्यस्तानामादिः"पा० पूर्व्वोक्तविषये अभ्यस्तसंज्ञकानामादिरुदात्तः । दधति, इत्यादौ देत्यस्योदात्तता "अनुदात्ते च"पा०अविद्यमानोदात्ते ल सार्वधातुके परे अभ्यस्तानामादिरुदात्तः । दधासि अनजादावपि देत्यस्योदात्तता "आदिर्णमुल्यन्यतरस्याम्" पा० अभ्यस्तानामादिर्णमुलि परे उदात्तो वा । लोलूयं लोलूयम् पक्षे लित्स्वरः । "अचः कर्त्तृयकि" पा० कर्म्मकर्त्तरि यकि परे उपदेशेऽजन्तानामादिरुदात्तो वा । लूयते केदारः स्वयमेव । "सर्वस्य सुपि" पा०सुपि परे सर्वशब्दस्य आदिरुदात्तः सर्वे अत्र सेत्यस्योदात्तता ।"ञ्नित्यादिर्नित्यम्"पा० ञिदन्तस्य निदन्तस्यादिरुदात्तः । यञोञित्त्वात् तदन्तस्यादिरुदात्तः "पथिमथोः सर्वनामस्थाने"पा०अनयोरादिरुदात्तः सर्वनामस्थाने परे । पन्थाः पेत्युदात्तः ।"चयोनिवासे"पा० निवासार्थे चयस्यादिरुदात्तः । "जयः करणम्" पा० करणवाची जयशब्द आद्युदात्तः । "वृषादीनाञ्च" पा० एषामादिरुदात्तः ! वृष जन ज्वर ग्रह हय गय नय ताय तय चय अम वेद सूद अंश गुहा ( शमरणौ संज्ञायाम् ) (संमतौ भावकर्म्मणोः) । मन्त्र शान्ति काम याम तारा धारा कारा वह कल्प पाद । "आकृतिगणत्वात् अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम्"सि०कौ० । "संज्ञायामुपमानम्"पा०चञ्चेव चञ्चा । "निष्ठा च द्व्यजनात्"पा० निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तः नत्वाकारान्त । दत्तः । आकारस्तु त्रातः । "शुष्कधृष्टौ" पा० एतावाद्युदात्तौ असंज्ञायाम् "आशितः कर्त्ता" पा० कर्त्तृवाची आशितशब्द आद्युदात्तः "रिक्ते , विभाषा" पा० रिक्तस्यादिरुदात्तः असंज्ञायाम् । "जुष्टार्पिते च छन्दसि" पा० एतौ आद्युदात्तौ असंज्ञायाम् "युष्मदस्मदोर्ङसि"पा०अनयोः ङसि परे आदिरुदात्तः । "ङयि च"पा०अनयोर्ङयि परे आदिरुदात्तः । "यतोऽनावः"पा०यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तः नावं विना । गव्यम् काम्या । "ईडवन्दवृशंसदुहां ण्यतः" पा० एतद् न्तानामेषामादिरुदात्तः ।"विभाषा वेण्विन्धानयोः" पा० एतयोरादिरुदात्तः । "त्यागरागहासकुहश्वठक्रथानाम्"पा० एषाम् आदिरुदात्तः । फिट्सूत्रे शान्तनवाचार्य्यैरन्येऽपि आद्युदात्ता उक्ता यथा "दक्षिणस्य साधौ" फि० साध्वर्थकदक्षिणशब्दस्यादिरुदात्तो वा दक्षिणोबाहुः "छन्दसि च" फि० "शुक्लगौरयोरादिः"फि० "अनयोरादिरुदात्तः "अङ्गुष्ठोदकवकवशानां छन्दस्यन्तः" फि० लोके तु आदिरुदात्तः ।"अथादिः प्राक् शकटेः"फि०२पादे १सू० । अधिकारोऽयम् शकटिशकट्योरिति यावत् । "ह्रस्वान्तस्य स्त्रीविषयस्य२"। आदिरुदात्तः स्यात् । वलिःतनुः ।"नब्विषयस्यानिसन्तस्य"३। वनं वयः । इसन्तस्य तु सर्पिः । नपु नपुंसकम् ।"तृणधान्यानां च द्व्यषाम्"४। द्व्यचामित्यर्थः। कुशाः, काशाः, माषाः, तिला, बह्वचान्तु गोधूमाः ।"नृः संख्यायाः" ५ । पञ्च, चतस्रः । "स्वाङ्गशिटामदन्तानाम्"६ । शिट् सर्वनाम,"कर्णाभ्यां चुबुकादधि" "ओष्ठाविव मधु" "विश्वो विहायाः"। "प्राणिनां कुपूर्वम्"७। कवर्गात् पूर्व्व आदिरुदात्तः । काकः, वृकः, "शुकेषु मे" । प्राणिनां किम्, "क्षीरसर्पिर्मधूदकम्" । "खय्युवर्ण्णं कृतिमाख्या चेत्"८। खयि परे उवर्णमुदात्तं स्यात्, कन्दूकः, "उनर्व्व नन्तानाम्"९ । उन । "वर्ण्णं वोऽर्

पादसम्" । क्ष । "स्पशारन्धाक्षर्यै" । वन् । "पीवानं मेषम्" । "वर्णानान्तणतिनितान्तानाम्" १० । आदिरुदात्तः, एतः हरिणः, शितिः, पृश्निः, हरित् । "ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये" ११ । ऋद्वर्जं ह्रस्वान्तस्यादिभूतं ह्रस्वमुदात्तं स्यात् । मुनिः । "अक्षस्यादेवनस्य" १२ । आदिरुदात्तः, "तस्य नाक्षः" देवने तु "अक्षैर्मा दीव्य" । "अर्द्धस्यासमद्योतने" १३ । अर्द्धो ग्रामस्य, समेंऽशके तु अर्द्धं पिप्पल्याः । "पीतद्र्वर्थानाम्" १४ । आदिरुदात्तः, पीतद्रुः, सरलः । "ग्रामादीनाञ्च" १५ । ग्रामः, सोमः, यामः । "लुबन्तस्योपमेयनामधेयस्य" १६ । चञ्चेव चञ्चा, स्फिगन्तस्येति पाठान्तरम् । स्फिगिति लुपः प्राचां संज्ञा । "न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम्" १७ । एषामुपमेयनाम्नामादिरुदात्तो न । ताल इव तालः, मेरुरिव मेरुः, व्याघ्रः, सिंहः, महिषः । "राजविशेषस्य यमन्वा चेत्" १८ । यमन्वा वृद्धः, आङ्ग उदाहरणम् । अङ्गाः प्रत्युदाहरणम् । "स्त्रीविषयवर्णाक्षुपूर्व्वाणाम्" २० । एषान्त्रयाणामाद्युदात्तः, स्त्रीविषयः, मल्लिका, वर्णः, श्येनी, हरिणी, अक्षुशब्दात् पूर्वोऽस्येत्यन्ते अक्षुपूर्वाः, तरक्षुः । "शकुनीनाञ्च लघुपूर्वम्" २१ । पूर्वं लघु उदात्तं स्यात्, कुक्कुटः, तित्तिरिः, । "नर्त्तुप्राण्याख्यायाम्" २२ । यथालक्षणं प्राप्तमुदात्तत्वम्, वसन्तः, कृकवाकुः । "धान्यानाञ्च वृद्धक्षान्तानाम्" २३ । आदिरुदात्तः, कान्तानाम्, श्यामाकाः, षान्तानाम्, राजमाषाः । "जनपदशब्दानामषान्तानाम्" २४ । केकयः, "हयादीनामसंयुक्तलान्तानामन्तः पूर्व्वं वा" २५ । हयिति हलःसंज्ञा । पललम्, शललम्, हयादीनां किम् एकलः असंयुक्तेति किं मल्लः । "इगन्तानाञ्च द्व्यषाम्" २६ । आदिरुदात्तः, कृषिः एतानि २पादस्थानि । "मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा" २,९, । एषामादिर्द्वितीयो वा उदात्तः । मकरः वरूढः । "छन्दसि च" १० । अमकराद्यर्थ आरम्भः । लक्ष्यानुसारादादिर्द्वितीयम् वा उदात्तं ज्ञेयम् । "कर्दमादीनाञ्च" ११ । आदिर्द्वितीयं वोदात्तः । "सुगन्धितेजनस्य ते वा" १२ । आदि र्द्वितीयं ते शब्दश्चेति पर्यायेण वोदात्ताः । "नपः फलान्तानाम्" १३ । आदिर्द्वितीयं वोदात्तम् । राजादनफलम् । "ईषान्तस्य हयादेरादिर्वा" १४ । हलीषा लाङ्गलीषा । उशीरदाशेरकपालपलाशशैवालश्यामाकशरीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम्" १९ । "एषामादिरुदात्तः स्यात् । "महिष्याषाढयोर्जायेष्टकाख्या चेत्" २० । आदिरुदात्तः, "महिषी जाया" आषाढा उपदधाति । एतानि ३पादस्थानि । "निपाता आद्युदात्ताः" फि० ४,१२ । स्वाहा "उपसर्गाश्चाभिवर्ज्जम्" फि० ४,१३ । तथा च पाणिनिशान्तनवाचार्यादिभिर्यस्यादेरुदात्तत्वं विहितं ते शब्दा लोके वेदे च आद्युदात्ता भवन्ति ।

**आद्यून** त्रि० आ+दिव–क्त ऊट् नत्वञ्च । औदरिके (पेटुक) जिगीषावर्ज्जिते । जिगीषायान्तु न नत्वम् । आद्यूतः । जिगीषया देवनकर्त्तरि । [ मावधिशेषपर्यन्ते ।

**आद्योपान्त** पु० आद्यावधि उपान्तः अन्तपर्यन्तः । प्रथ-

**आधमन** न० आधीयते आ+धा–कमनन् । बन्धकदाने आधौ, । "योगाधमनविक्रीतं योगदानप्रतिग्रहम् । यस्य वाप्युपधिं पश्येत्तत् सर्वं विनिवर्त्तयेत्" स्मृतिः "एकोऽपि स्थावरे कुर्याद्दानाधमनविक्रयम्" स्मृतिः एकोऽह्यनीशः सर्वत्र दानाधमनविक्रये" कात्या० स्मृतिः आधिशब्देऽस्य विवृतिः ।

**आधमर्ण्य** न० अधमर्णस्य भावः कर्म वा ष्यञ् । ऋणग्रहणे अवश्यदेयद्रव्यस्वामित्वे "आवश्यकाधमर्ण्ययोर्णिनिः" पा० ।

**आधर्म्मिक** त्रि० अधर्मं चरति ठञ् । अधर्मशीले दैववशात् अधर्म्मानुष्ठातरि तु नास्य साधुत्वम् । अधार्म्मिक इत्यत्र तु न धार्म्मिक इति विग्रह इति भेदः ।

**आधर्ष** पु० आ+धृष–भावे घञ् । १तिरस्कारे २बलात्पीड़ने च

**आधर्षण** न० आ+धृष–भावे ल्युट् । १आधर्षे २बलात्पीड़ने ।

**आधर्षित** त्रि० आ+धृष–क्त अर्थयात्ये इट् गुणश्च । १अवमानिते २तिरस्कृते ३बलात्कारेणाभिभूते च "अत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्" या० स्मृतिःधाष्ट्र्यं तु धाष्टर इत्येव ।

**आधर्ष्य** त्रि० आ+धृष–णिच्–यत् । १अवमाननीये २बलात् पीड़नीये ३दुर्बले च भावे यत् । ४ दुर्बलत्वे न० । "आधर्ष्यं पूर्व्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् । विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः" नार० । "आधर्ष्यं दुर्बलत्वम्" व्य० त० रघु० ।

**आधान** न० आ+धा–भावे ल्युट् । संस्कारपूर्वकं वह्न्यादेः स्थापने १अग्न्याधाने २गर्भाधाने च । "आधाने सोमपाने च वपनं सप्तसु स्मृतम्" प्रा० त० पु० "भार्य्यायै पूर्व्वमारिण्यै दत्त्वाग्नीनन्त्यकर्म्मणि । पुनर्दारक्रियां कुर्यात्

पुनराधानमेव च" मनुः। विद्यमानपदार्थेषु गुणान्तरस्य ३करणे "प्रजानां विनयाधानात् रक्षणाद्भरणादपि" रघुः "अतो गुणान्तराधानं प्रतियत्नः" सि॰कौ॰। ४निवेशने "गुणोविशेषाधानहेतुः सिद्धो वस्तुधर्मः" सा॰द॰। ५बन्धकदाने च "आधानं विक्रयञ्चैव दानं नैव समाचरेत्" स्मृतिः "विक्रयावक्रयाधानयाचितेषु पणा दश" या॰स्मृतिः अग्न्याधानञ्च विवाहसमये कर्त्तव्यं यदि तत्काहिताग्नेः प्रमदादिना नाशः तदा पितृमरणोत्तरमेव कर्त्तव्यं सति तु पितरि नैव कर्त्तव्यमिति, तत्र कालनक्षत्रादिविशेषाच निर्णयसिन्धौ दर्शिता यथा "प्राजापत्ये मृगभे वह्निदैवे पुष्यज्येष्ठास्वैन्द्वे कृत्तिकासु। अग्न्याधानं ह्युत्तराणां त्रयेऽपि चित्रादित्ये कीर्त्तितं गर्गमुख्यैः" रत्नमा॰ आश्वलायनः "अग्न्याधेयं कृत्तिकासु रोहिण्यां मृगशिरसि फाल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोरेतेषां कस्मिंश्चिद्वसन्ते पर्वणि ब्राह्मण आदधीत, ग्रीष्मवर्षाशरत्सु क्षत्रियवैश्योपक्रमाः" यस्मिन् कस्मिंश्चिदृतावादधीत सोमेन यक्ष्यमाणो नर्त्तुं पृच्छेन्न नक्षत्रम्" सोमाधाने ऋत्वाद्यनालोचनमात्रपरम् "अथो खलु यदैवैनं श्रद्धोपनमेदथादधीत सैवास्यर्धिरिति सोमेन यक्ष्यमाणोनर्त्तुं पृच्छेन्न नक्षत्रं तदेतदार्त्तस्यातिवेलं वा श्रद्धायुक्तस्य भवतीति" बौधायनोक्तेः मदनरत्ने वृद्धगार्ग्यः "पुष्याश्लेषानुत्तरादित्यपौष्णज्येष्ठाचित्रार्कद्विदैवेषु भेषु। कुर्युर्वह्न्याधानमाद्यं वसन्तग्रीष्मोप्रान्तेष्वेव विप्रादिवर्णाः" कालादर्शे "अग्निहोत्रं दर्शपूर्णमासावप्युत्तरायणे। उपक्रम्य यथाकालमुपासीरन् द्विजातयः। सोमं च पशुबन्धञ्च सर्वाश्च विकृतीरपि। सौम्यायने यथाकालं विदध्युर्गृहमेधिनः" पारस्करः "आवसथ्याधानं दारकाले दायाद्यकाले एकेषामिति"। दायाद्यकालो विभागकालः मदनरत्ने व्यासः "अग्निर्वैवाहिको येन न गृहीतः प्रमादिना। पितर्य्युपरते तेन गृहीतव्यः प्रयत्नतः। योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः"। ज्येष्ठभ्रातरि पितरि वा साग्नौ कनिष्ठस्य पुत्रस्य वाऽग्न्यभावेऽपि न दोषः तदाह तत्रैव गार्ग्यः "पितृपाकोपजीवी वा भ्रातृपाकोपजीविकः। ज्ञानाध्ययननिष्ठो वा न दुष्येत्ताग्निना विना"। इदञ्चाधानं ज्येष्ठेऽकृताधाने न कार्य्यम् "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः" इति मनुशातातपोक्तेः कात्यायनोऽप्येवम् "सोदर्य्ये तिष्ठति ज्येष्ठे न कुर्य्याद्दारसंग्रहम्। आवसथ्यं तथाधानं पतितस्तु तथा भवेदिति" तत्रैव गार्ग्योक्तेः। आज्ञायां तु दोषमाह सुमन्तुः "ज्येष्ठोभ्राता यदा तिष्ठेदाधानं नैव चाचरेत्। अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा" वृद्धवसिष्ठः "अग्रजस्तु यदाऽनग्निरादध्यादनुजः कथम्। अग्रजोऽनुमते कुर्य्यादग्निहोत्रं यथाविधि"। हारीतः "सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत्। दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया"। अधिकारिणोऽपि भ्रातुरनुज्ञया कुर्य्यादिति मदनपारिजातः विवाहस्त्वनुज्ञयापि नेत्यर्थः सोदरोक्तेरसोदराणां सापत्नदत्तकादीनां न दोषः। दत्तकस्यापि सोदरविवाहाभावेऽदोष एव तदाह हेमाद्रौ वसिष्ठः "पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा दाराग्निहोत्रसंयोगे परिविन्दन्न दुष्यति। परनारीसुताः दत्तकादयः। देशान्तरे विशेषमाह स एव "अष्टौ दश द्वादश वर्षाणि वा ज्येष्ठभ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति" क्लीबादावप्यदोषमाह कात्यायनः "देशान्तरस्थक्लीवैकवृषणानसहोदरान्। वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः। जडमूकान्धबधिरकुब्जवामनखञ्जकान्। अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च। धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा। कुटिलोन्मत्तचौरांश्च परिविन्दन्न दुष्यति" अपरार्केऽपि "उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीवएव वा। राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम्" एवं ज्येष्ठे च्छिन्नहस्तादावपि न परिवेत्तृत्वम् तदाह त्रिकाण्डमण्डनः "दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम् अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थिते। न कुर्य्याज्जनके ज्येष्ठे सोदरेऽप्याप्यकुर्वति। क्षेत्रजादावनौजाते विद्यमानेऽपि सोदरे। नाधिकारविघातोऽस्ति भिन्नोदर्य्येऽपि चौरसे। पङ्ग्वन्धमूकबधिरपतितोन्माददूषणे। संन्यस्तेच्छिन्नहस्तादौ यद्वा षण्डादिदूषणे। जनके सोदरे ज्येष्ठे कुर्य्यादेवेतरः क्रियामिति" "आरोहणं दशतं शर्करीमेमित्याधानमन्त्रवर्णाच्च शर्करीरङ्गुलीःस्मरतेऽप्युक्तम्" अङ्गवैकल्यात्पूर्वमाहिताग्नित्वेऽधिक्रियेतैव नित्येषु। आधानन्तु न कुर्य्यात्तस्य नैमित्तिकत्वादिति"। एवं चतुरङ्गुलेऽपि, षडङ्गुलकाणविवर्णादेरप्यधिकारः एकादशस्य दशान्तर्गतेः शरीरकार्श्यं वा विप्रतिषिद्धमिति" हिरण्यकेशिसूत्रे कर्माशक्तिहेतोरेवाङ्गवैकल्यस्य निषेधात् अतएव द्राह्यायणसूत्रे ज्ञानञ्च प्रथमैस्त्रिभिर्गुणैरिति न्यूनाङ्गस्याप्यधिकार उक्तः। अपरार्के उशनाः "पिता पितामहोयस्य अग्रजो वाथ कस्यचित्। तपोग्निहोत्रमन्त्रेषु न दोषः परिवेदने" "पितुराज्ञाया-

सम्बदोषमाह मदनरत्ने सुमन्तुः "पिता यस्य तु नाधानं कथं पुत्रस्तु कारयेत्। अग्निहोत्रेऽधिकारोऽस्ति पुत्रस्य वचनं यथेति" नाधानं कृतमित्यर्थः एतदाज्ञायामेवेति हेमाद्रिः यत्तु "पितुः सत्यप्यनुज्ञाने नादधीत कदाचनेति" तत्त्वनधिकारे ज्ञेयम्"। एवं स्मृतिश्रुत्योराधानाकरणे प्रत्यवायश्रवणादाधानं नित्यमेव। एतेन कलिवर्ज्येषु आदित्यपुराणेऽग्निहोत्रस्योत्कीर्त्तनदर्शनेन गौड़ानां तदनाचरणमनाचार एव स्मृतितः पुराणस्य दुर्ब्बलतया स्मृतिविहिताधानस्य बाधकत्वायोगात् "नैवानाहिताग्निर्म्रियेतेति" श्रुतेः सर्व्वापेक्षया बलवत्त्वाच्च। तेन मृत्युकालात् पूर्व्वमप्याधानं कर्त्तव्यमिति प्रतीयते व्यक्तं भविष्यति चैतदुपरिष्टात्। आधानस्वरूपादिकम् आश्व०श्रौ०सू० नारायणीयवृत्त्योर्दर्शितं यथा "अग्न्याधेयप्रभृतीन्याह वैतानिकानि" सू०१२। अग्न्याधेयप्रभृतिरादिरुपक्रमो येषां तान्यग्न्याधेयप्रभृतीनि अग्निहोत्रादीनि कर्म्माणि, आधानं कृत्वैव कर्त्तव्यानीत्यर्थः। तत्र हेतुमाह, वैतानिकानीति। वितानेषु भवानि वैतानिकानि, वितानसाध्यानीत्यर्थः। वितानशब्दोऽस्मिन् सूत्रे भावसाधनोऽग्नीनां विस्तारवाची, पूर्व्वस्मिंस्त्वधिकरणसाधनोऽग्निहोत्रादिकर्म्मवचनः। एतदुक्तं भवति, गार्हपत्यादिभिस्त्रिभिः साध्यानि श्रौतानि कर्म्माणि, अग्नयस्त्वाधानसाध्याः, तस्मादाधानप्रभृतित्वं सिद्धं श्रौतानां कर्म्मणाम्। बहुवचनं सर्व्वश्रौतपरिग्रहार्थं सर्व्वाणि श्रौतान्याधानादूर्द्ध्वमेव कर्त्तव्यानि न किञ्चिदपि, श्रौतमाधानादर्व्वागित्यनेन प्रकारेणाधानस्य कर्म्मार्थत्वनिराकरणेनाग्न्यर्थत्वमर्थात् साधितं भवति। तद्यदि कर्म्मार्थं स्यात् प्रति कर्म्म क्रियेत, तत्र कस्यचित् परस्तादपि स्यात्, यस्य परस्तादाधानं स्यात् तस्याग्न्याधेयप्रभृतित्वं विहन्येत। आधानस्याग्न्यर्थत्वे च नायं दोषः। अतो बहुवचनेनाधानस्याग्न्यर्थत्वं साधितं भवति। तस्मादनाहिताग्नेः श्रामणकादयो न भवन्ति, अवकीर्णिना पश्वाद्यर्थं चाधानं न कर्त्तव्यं, साधितं भवति न परस्तात्" इति वृत्तिः "अग्न्याधेयम्" १,२,८, सू० प्रथमप्राप्तमाधानमुच्यते। विशिष्टकाले विशिष्टदेशे विशिष्टपुरुषेण विशिष्टैर्मन्त्रैर्गार्हपत्याद्यग्न्युत्पत्त्यर्थं यदङ्गाराणां निधानं तदग्न्याधेयमुच्यते। अग्नीनामाधेयमग्न्याधेयं, तत्कर्त्तव्यमित्यर्थः ८ वृत्तिः। कस्मिन् काल इत्याह। "कृत्तिकासु रोहिण्यां मृगशिरसि फल्गुनीषु विशाखयोरुत्तरयोः प्रोष्ठपदयोः" १०सू०। एतेषां कस्मिंश्चित् ११। वसन्ते पर्व्वणि ब्राह्मण आदधीत" १२। ग्रीष्मवर्षाशरत्सु च क्षत्रियवैश्योपकुष्टाः १३। यस्मिन् कस्मिंश्चिदृतावादधीत" १४। सूत्राणि एषां नारायणीया वृत्तिः "फल्गुन्याविति पूर्व्वे उत्तरे च गृह्येते, अविशेषाद्बहुवचनाच्च। प्रोष्ठपदास्तूत्तरे एव। अतः सप्त एतानि नक्षत्राणि, तेषामेकस्मिन्नक्षत्रेऽग्न्याधेयं कर्त्तव्यमित्यर्थः १०। एतेषां कस्मिंश्चित् पर्व्वणि। एवमेतत्सूत्रमर्थतो द्रष्टव्यम्। उत्तरञ्च सूत्रं "वसन्ते पर्व्वणि ब्राह्मण आदधीत" इति। एवं कृते सर्व्वमनुगुणं भवति एतेषां नक्षत्राणां कस्मिंश्चिन्नक्षत्रे पर्व्वणि वाग्न्याधेयं कर्त्तव्यमितीदं सूत्रं पर्व्वनक्षत्रसमुच्चयमग्न्याधेयस्य कालत्वेन विदधाति। पूर्व्वसूत्रन्तु केवलं नक्षत्राणामेवाधानसम्बन्धं विदधाति। अतो द्वौ पक्षौ स्तः। समुच्चयस्तत्र प्रथमः कल्पः। तदसम्भवे केवलं नक्षत्रमेवेति विनियोगो युक्तः। इदं कल्पद्वयं सोमाधानवर्जितेषु सर्व्वेष्वाधानेषु भवति ११। इदमपि सूत्रमर्थत एवं भवति। अनेन वसन्ते ब्राह्मणगुणकमाधानं विधीयते १२। वैश्यस्त्वत्रकर्म्मोपजीवी उपकुष्ट इत्युच्यते। अस्मिन् सूत्रे त्रीण्याधानानि विधीयन्ते। ग्रीष्मे क्षत्रियगुणकं, वर्षासु वैश्यगुणकं, शरदि उपकुष्टगुणकञ्च। एते वसन्तादयः शब्दा ऋतुवाचकाः। ऋतवो नाम षट्। वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिराः। ते च चैत्रमासमारभ्य द्वौ द्वौ मासावृतवः। वसन्तादयो मासाश्चैत्रादय एव १३। आदधीतेति स्थिते पुनरादधीतेतिवचनं आपत्कल्पोऽयमाधानविधिरिति दर्शयति। अत्रापदि सम्पूर्णः सर्व्वेष्वृतुषु आधानं कर्त्तव्यं "नैवानाहिताग्निर्म्रियेतेति"। इदञ्चापरमाधानं, पूर्व्वोक्तानि चत्वारि, तेषु सर्व्वेषु पर्व्वनक्षत्रविधय उपसंहर्त्तव्याः, न पर्व्वर्तुस्वातन्त्र्येणाधानस्य कालविधयो भवेयुः। अत एव सूत्रकारः पर्व्वनक्षत्रविधीनामृतुविधिभिः सम्बद्धानामेवाधानकालतामदर्शनार्थमेवैतेषां कस्मिंश्चिद्वसन्त इति पर्व्वनक्षत्रसमुच्चयविधिपरे सूत्रे उत्तरसूत्राय पठितव्यम् ऋतुशब्दं व्यतिषज्य पठितवान्। पर्व्वनक्षत्रविध्योर्ऋतुविध्युपसंहारे न्यायविरोधश्च नास्ति, तत्रैव तयोरन्तर्भावदर्शनादिति १४। "अश्वत्थाच्छमीगर्भादरणी आहरेदन्वेतमाधः १६। यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा। तं त्वाहरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति, पूर्णाहुत्यन्तमग्न्याधेयम् १७। शम्या गर्भः शमीगर्भः। शमीगर्भादश्वत्थादरण्याहरणं कुर्यात्। तच्चाधानार्थम्, आहरणे कृते अध्वर्युणा अरण्याहरणे क्रियमाणे तेन सह यजमानो-

ऽध्ययनेन मन्त्रेणाहरेत्। अनपेक्षमाणः इत्ततोऽनपेक्षमाणः। अयञ्चापरोऽर्थः कुर्यां न कुर्यामिति नान्यदपेक्षमाणः, अध्यवसिताधान इत्यर्थः १६। पूर्णाहुतिरन्ते यस्य तत् पूर्णाहुत्यन्तम्, अग्न्याधेयं कर्त्तव्यम्। तत्राग्न्याधेयमरण्याहरणादि पूर्णाहुत्यन्तं भवतीत्यर्थः। अस्य सूत्रस्य प्रयोजनं पूर्णाहुत्यन्ते आहिताग्नित्वप्राप्तिः। कथमिति चेत्। श्रुतावेवमाम्नातम्। "अग्नयः पुरुषार्थसाध्याः" इति प्रस्तुत्य "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्येवमादीनि वसन्तादिकालानि ब्राह्मणादिकर्तृकाणि कर्तृगामिक्रियाफलयुक्तानि निरधिकाराणि आधानानि विधाय, "ततोऽरणी आहरेत्, सम्भारान् सम्भरेत्, अग्न्यायतनानि कुर्यात्, केशश्मश्रु वपेत्, ब्राह्मौदनिकमौपासनिकं निदध्यात्, तस्मिन् ब्रह्मौदनं पचेत्, समिध आदध्यात्, आयतनेषु सम्भारान्निदध्यात्, ब्राह्मौदनिकमरण्योः समारोप्य मथित्वा गार्हपत्यादीनादध्यात्, तत्र काचित्, समिध आदध्यात्, अग्निहोत्रं जुहुयात्, पूर्णाहुतिं जुहुयात्, तत आग्नेयमष्टाकपालं निर्वपेत् तदहरेव, तदहरादिसंवत्सरान्तानां कालानां कस्मिंश्चित् काले पवमानहवींषि निर्वपेद् ततश्चान्यानि हवींषि" इति १७। एवञ्च विवाहप्रसादपुस्तके बौधायनवचने अन्यतराभावे कार्य्या प्रागग्न्याधेयेति पाठं दृष्ट्वाऽन्यथा मया व्याख्यातम् प्रागग्न्याधेयादिति पाठे तु अग्न्याधेयात् अग्न्याधानात् प्रागित्यर्थः इति बोध्यम् अयमेव पाठः समीचीनः प्रतिभाति एतच्च उद्वाहशब्दे विस्तरेण प्रपञ्चयिष्यामः। आधानप्रयोगश्च शाखिभेदेन पद्धतिविशेषे विस्तरतोज्ञेयः। सोमाधाने विशेषश्च विस्तरभयान्नोक्तः आश्व॰ श्रौतसूत्रादौ ज्ञेयः। कात्या॰ श्रौ॰ सूत्रे आधाने रथकारस्याप्यधिकारमाह "रथकारस्याधाने" कात्या॰ १, १, ९। आधान पूर्व्वकत्वादन्यत्रापि तस्याधिकारः यथोक्तं मिता॰ "क्षत्रियेण वैश्यायामुत्पादितोमाहिष्यः वैश्येन शूद्रायामुत्पादिता करणी तस्यां माहिष्येणोत्पादितो रथकारोनाम जात्या भवति तस्य चोपनयनादि सर्वं कार्य्यं वचनात् यथा ह यज्ञः। "क्षत्रियवैश्यानुलोमानन्तरोत्पन्नोरथकारस्याध्ययनेज्यादानोपनयनसंस्कारक्रियाश्चाप्रतिषिद्धाः" एवमेव कर्कष्टतौ स्थितम्। [हत्येत्यर्थे भावे घञ्। २आधाने पु॰

**आधाय** अव्य॰ आ+धा–ल्यप्। १स्थापयित्वेत्यर्थे २आधानं

**आधायक** त्रि॰ आ+धा–ण्वुल्। आधानकारके।

**आधानिक** पु॰ आधानं गर्भाधानं प्रयोजनमस्य ठञ्। गर्भाधाननिमित्ते वेदविहिते गर्भपात्रसंस्कारभेदे।

**आधार** पु॰ आ+धृ–आधारे घञ्। १अधिकरणे, आश्रये, "अपामिवाधारमनुत्तरङ्गम्" कुमा॰ "चराचराणां भूतानां कुक्षिराधारतां गतः" कुमा॰ "वस्त्वाधारस्नेहयोगाद्यथा दीपस्य संस्थितिः" या॰ स्मृतिः। २व्याकरणप्रसिद्धे औपश्लेषिकवैषयिकाभिव्यापकाख्ये ऽधिकरणकारके, ३वृक्षसम्पादनार्थं जलरोधनार्थे ३बन्धने इत्यसेकार्थं जलधारणार्थे ४आलवाले च। "आधारबन्धप्रमुखैरिति रघुः"। "आधारोऽधिकरणम्" पा॰ अधिकरणञ्च साक्षात्परम्परया वा क्रियाश्रयः अधिकरणशब्दे विवृतिः तच्च त्रिविधम् औपश्लेषिकवैषयिकाभिव्यापकभेदात्। तत्र औपश्लेषिक एकदेशसम्बन्धः यथा कटे आस्ते। वैषयिकः मोक्षे इच्छास्ति। अभिव्यापकः तिलेषु तैलमस्ति। मुग्धबोधकारस्तु "सामीप्यश्लेषविषयैर्व्याप्त्याधारश्चतुर्विध इति सामीप्यसम्बन्धेनाप्याधारतेत्याह। तच्चिन्त्यम् "गङ्गायां घोषोवसतीत्यादाविव लक्षणयैव गङ्गासमीपतीरस्योपस्थितौ न तस्य विभक्त्यर्थत्वमिति" पाणिनीयाः। ५तन्त्रोक्ते षट्चक्रमध्ये आद्यचक्रस्याधारे "आधारे लिङ्गनाभौ तदनु च हृदये तालुमूले ललाटे" आनन्दलहरी। आधारस्य भावः तल् आधारता सम्बन्धविशेषेण पदार्थविशेषस्याधेयतासम्पादके धर्मविशेषे तथा च आधारता आधेयतायाः निरूपिका आधेयता च आधारताया इति तयोः परस्पर निरूप्यनिरूपकभावः आधारताया अनतिरिक्तवृत्तिधर्म्म आधारतावच्छेदकः। एवमाधेयताया अनतिरिक्तवृत्ति धर्म्म आधेयतावच्छेदकः यथा संयोगेन घटाधारे भूतले भूतलत्वमाधारतावच्छेदकं भूतलाधेये घटे च घटत्वमाधेयतावच्छेदकम् तयोरवच्छेदकत्वात् ताभ्यामाधारताऽऽधेयता चावच्छिद्यते यथा घटत्वावच्छिन्ना घटनिष्ठाऽऽधेयता तथा भूतलत्वावच्छिन्ना भूतलनिष्ठाऽऽधारता इति नव्यनैयायिकानां रीतिः आधार+त्व। तदर्थे न॰।

**आधारशक्ति** स्त्री आधारस्य शक्तिः। सर्व्वाधारशक्तिरूपायां परमेश्वरशक्तौ १मायायां २प्रकृतौ च तन्त्रोक्तायां मूलाधारस्थायां कुण्डलिन्यां ३परदेवतायाम्। ४पीठपूजनीय देव भेदे च "आधारशक्तिं प्रकृतिमित्यादि" प्रक्रम्य "प्रणवादिनमोऽन्तेन पीठशक्तीः प्रपूजयेत्" तन्त्रसा॰ पीठशक्तिशब्देऽस्य विवृतिः।

**आधाराधेयभाव** पु॰ आधारश्चाधेयश्च तयोर्भावः। एकस्य यदपेक्षया आधारत्वम् अपरस्य तदपेक्षयैव यत्र

आधेयत्वं तादृशे सम्बन्धभेदे । यथा घटभूतलयोः ।

**आधि** पु० आधीयतेऽभिनिवेश्यते प्रतीकाराय मनोऽनेन आ+धा–कि । मानसदुःखकारके व्यथाभेदे "नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः" भा०प्र० । "यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः" शकु० । आधिर्दैविकशब्देऽस्य विवृतिः । ईषत् अधिक्रियते उत्तमर्णोऽत्र आ+ईषदर्थे धा–अधिकारार्थे आधारे कि आधीयते ऋणशोधनार्थम् आ+धा–कर्मणि किवा १ऋणशोधनार्थं प्रतिभूस्थानीयतया बन्धकत्वेन उत्तमर्णसमीपे अधमर्णेनाधीयमाने उत्तमर्णस्य ईषत्स्वत्वहेतुभूतव्यापारविशिष्टे २द्रव्येऽस्य विवृतिः मिता० । "धनप्रयोगे द्वौ विश्वासहेतू प्रतिभूराधिश्च । यथाह नारदः । "विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव चेति" । तत्र प्रतिभूर्निरूपित इदानीमाधिर्निरूप्यते । आधिर्नाम गृहीतस्य द्रव्यस्योपरि विश्वासार्थमधमर्णेनोत्तमर्णाधिक्रियार्थं आधीयत इत्याधिः स च द्विविधः कृतकालोऽकृतकालश्च पुनश्चैकैको द्विविधः गोप्यो भोग्यश्च । यथाह नारदः । "अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः । कृतकालोऽपनेयश्च यावद्देयोद्यतस्तथा । स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव चेति" । कृतकाल आधानकाल एवास्मिन् काले दीपोत्सवादौ मयायमाधिर्मोक्तव्योऽन्यथा तवैवाधिर्भविष्यतीत्येवं निरूपिते कालेऽपनेयः आत्मसमीपे नेतव्यो मोचयितव्य इत्यर्थः । देयं दानं देयमनतिक्रम्य यावद्देयम् उद्यतो नियतः स्थापित इत्यर्थः । यावद्देयम् उद्यतो यावद्देयोद्यतः गृहीतधनप्रत्यर्पणावधिरनिरूपितकाल इत्यर्थः गोप्यो रक्षणीयः । एवञ्चतुर्विधस्याधेर्विशेषमाह । "आधिः प्रणश्येत् द्विगुणे धने यदि न मुच्यते । काले कालकृतो नश्येत् फलभोग्यो न नश्यति" या० । प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्विगुणीभूते यद्याधिरधमर्णेन द्रव्यदानेन न मोच्यते तदा नश्यत्यधमर्णस्य धनं प्रयोक्तुः स्वं भवति । कालकृतः कृतकालः आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः स तु काले निरूपिते प्राप्ते नश्येत् द्वैगुण्यात्प्रागूर्द्ध्वं वा । फलभोग्यः फलं भोग्यं यस्यासौ फलभोग्यः क्षेत्रारामादिः स न कदाचिदपि नश्यति । कृतकालस्य गोप्यस्य भोग्यस्य च तत्कालातिक्रमे नाशउक्तः "काले कालकृतो नश्येदिति । अकृतकालस्य भोग्यस्य नाशाभावउक्तः "फलभोग्यो न नश्यतीति" पारिशेष्यादाधिःप्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते । द्वैगुण्यातिक्रमेण निरूपितकालातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्त्तव्यम् वृहस्पतिवचनात् "हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधौ । बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य च । तदन्तरा धनन्दत्त्वा ऋणी बन्धमवाप्नुयादिति" । नन्वाधिःप्रणश्येदित्यनुपपन्नम् अधमर्णस्य स्वत्वनिवृत्तिहेतोर्दानविक्रयादेरभावात् मनुवचनविरोधाच्च "नचाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः" इति । कालेन संरोधः कालसंरोधश्चिरकालमवस्थानं तस्मात्कालसंरोधाच्चिरकालावस्थानादाधेर्न्निसर्गोऽस्ति नान्यत्राधीकरणमस्ति न च विक्रयः एवमाधीकरणविक्रयप्रतिषेधाद्धनिनः स्वत्वाभावोऽवगम्यत इति, उच्यते आधीकरणमेव लोके सोपाधिकस्वत्वनिवृत्तिहेतुः । आधिस्वीकारश्च सोपाधिकस्वत्वापत्तिहेतुः प्रसिद्धः । तत्र धनद्वैगुण्ये निरूपितकालप्राप्तौ च द्रव्यदानस्यात्यन्तनिवृत्तेरनेन वचनेनाधमर्णस्यात्यन्तिकी स्वत्वनिवृत्तिरुत्तमर्णस्य चात्यन्तिकं स्वत्वम्भवति । न च मनुवचनविरोधः यतः "नत्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयादिति" भोग्याधिं प्रस्तुत्येदमुच्यते "नचाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रय" इति भोग्यस्याधेश्चिरन्तनकालावस्थानेऽप्याधीकरणविक्रयनिषेधेन धनिनः स्वत्वन्नास्तीति । इहाप्युक्तं "फलभोग्यो न नश्यतीति" । गोप्याधौ तु पृथगारम्भस्तुना । "न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेदिति" । इहापि वक्ष्यते "गोप्याधिभोगे नो वृद्धिरिति" आधिःप्रणश्येद्द्विगुण इति तु गोप्याधिं प्रत्युच्यत इति सर्वमनिवद्यम् । किञ्च "गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते । नष्टो देयो विनष्टश्च दैवराजकृतादृते" या० । गोप्याधेस्ताम्रकटाहादेरुपभोगे न वृद्धिर्भवति । अल्पेऽप्युपभोगे महत्यपि वृद्धिर्हातव्या समयातिक्रमात् तथा सोपकारे उपकारकारिणि बलीवर्द्दताम्रकटाहादौ भोग्याधौ सवृद्धिके हापिते हानिं व्यवहाराक्षमत्वं गमिते नो वृद्धिरिति सम्बन्धः नष्टो विकृतिङ्गतस्ताम्रकटाहादिश्छिद्रभेदादिना पूर्ववत् कृत्वा देयः तत्र गोप्याधिर्वर्द्धेत् पूर्ववत् कृत्वा देयः । उपभुक्तोऽपि चेद्वृद्धिरपि हातव्या भोग्यादिर्यदि नष्टः तदा पूर्ववत् कृत्वा देयः । वृद्धिसद्भावे वृद्धिर्वा हातव्या विनष्ट आत्यन्तिकं नाशं प्राप्तः सोऽपि देयो मूल्यादिद्वारेण तद्दाने सवृद्धिकं मूल्यं लभते यदि न ददाति तदा मूलनाशः "विनष्टे मूलनाशः स्याद्दैवराजकृतादृते" इति नारदवचनात् । दैवराजकृतादृते दैवमग्न्युदकदेशोपप्लवादि ।

दैवकृतादिनाशाद्विना । तथा स्वापराधरहिताद्राजकृतात् । दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्यमधमर्णेनाध्यन्तरं वा यथाह । "स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते । आधिरन्योऽथ कर्त्तव्योदेयं वा धनिने धनमिति" । तत्र स्रोतसापहृत इति दैवकृतोपलक्षणम् । अपि च "आधेः स्वीकरणात्सिद्धीरक्ष्यमाणोऽप्यसारताम् । यातश्चेदन्य आधेयोधनभाग्वा धनी भवेत्" या० । आधेर्गोप्यस्य भोग्यस्य च स्वीकरणादुपादानादाधिग्रहणसिद्धिर्न साक्षिलिखनमात्रेण नाप्युद्देशमात्रेण । यथाह नारदः । "आधिस्तु द्विविधः प्रोक्तोजङ्गमःस्थावरस्तथा । सिद्धिरस्योभयस्यापि भोगोयद्यस्ति नान्यथेति" । अस्य च फलम् । "आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरेति" । या स्वीकारान्ता क्रिया सा पूर्वा बलवती स्वीकाररहिता तु पूर्वापि न बलवतीति । सचाधिः प्रयत्नेन रक्ष्यमाणोऽपि कालवशेन यद्यसारतामविकृत एव सवृद्धिकमूल्यद्रव्यापर्याप्ततां गतस्तदाधिरन्यः कर्त्तव्यः । "धनिने वा धनन्देयं रक्ष्यमाणोऽप्यसारतामिति" वदताऽऽधिः प्रयत्नेन रक्षणीयो धनिनेति ज्ञापितम् । आधिःप्रणश्येद्द्विगुण इत्यस्यापवादमाह । "चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् । सत्याङ्कारकृतन्द्रव्यं द्विगुणम्प्रतिदापयेत्" या० । चरित्रं शोभनाचरितम् चरित्रेण बन्धकम् चरित्रबन्धकम् तेन यत् द्रव्यमात्मसात्कृतम्पराधीनं वा कृतम् । एतदुक्तम्भवति धनिनः स्वच्छाशयत्वेन बहुमूल्यमपि द्रव्यमाधीकृत्याधमर्णेनाल्पमेव द्रव्यमात्मसात्कृतम् । यदि वाऽधमर्णस्य स्वच्छाशयत्वेनाल्पमूल्यमाधिं गृहीत्वा बहुद्रव्यमेव धनिनाधमर्णाधीनं कृतमिति तद्धनं वृद्ध्या सह दापयेत् । अयमाशयः एवंरूपं बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति किन्तु द्रव्यमेव द्विगुणन्दातव्यमिति । तथा सत्यङ्कारकृतं करणङ्कारः भावे घञ् सत्यस्य कारः सत्यङ्कारः "कारे सत्यागदस्येति" पा० मुम् सत्यङ्कारेण कृतं सत्यङ्कारकृतम् । अयमभिसन्धिः यदा बन्धकार्पणसमय एवेत्थं परिभाषितं द्विगुणीभूतेऽपि द्रव्ये मया द्विगुणं द्रव्यमेव दातव्यम् नाधिनाश इति तदा तद्द्विगुणन्दापयेत् इति । अन्योऽर्थः । चरित्रमेव बन्धकञ्चरित्रबन्धकम् । चरित्रशब्देन गङ्गास्नानाग्निहोत्रादिजनितमपूर्वमुच्यते यत्र तदेवाधीकृत्य यद्द्रव्यमात्मसात्कृतम् । तत्र तदेव द्विगुणभूतन्दातव्यन्नाधिनाश इति । "आधिप्रसङ्गादन्यदुच्यते । सत्यङ्कारकृतमिति क्रयविक्रयादिव्यवस्थानिर्वाहाय यदङ्गुलीयकादि परहस्ते कृतं तद्व्यवस्थातिक्रमे द्विगुणन्दातव्यं तत्रापि येनाङ्गुलीयकाद्यर्पितं सएव चेद्व्यवस्थातिवर्त्ती तेन तदेव हातव्यम् । इतरश्चेद्व्यवस्थातिवर्त्ती तदा तदेवाङ्गुलीयकादिद्विगुणम्प्रतिदापयेदिति । किञ्च "उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् । प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात्" या० । धनदानेनाधिमोक्षणायोपस्थितस्याधिर्मोक्तव्योधनिना वृद्धिलोभेन न स्थापयितव्यः । अन्यथा अमोचने स्तेन चौरवद्दण्ड्यो भवेत् । असन्निहिते पुनःप्रयोक्तरि कुले तदाप्तहस्ते सवृद्धिकं धनं निधायाधमर्णः स्वीयं बन्धकं गृह्णीयात् । अथ प्रयोक्ताप्यसन्निहितस्तदाप्ताश्च धनस्य ग्रहीतारो न सन्ति यदि वा असन्निहिते प्रयोक्तरि आधिविक्रयेण धनदित्साऽधमर्णस्य तत्र किं कर्त्तव्यमित्यपेक्षिते आह । "तत्कालकृतमूल्योवा तत्र तिष्ठेदवृद्धिकः" या० । तस्मिन् काले यत्तस्याधेर्मूल्यन्तत्परिकल्प्य तत्रैव धनिनि तमाधिं वृद्धिरहितं स्थापयेत् तत ऊर्द्धं धनं वर्द्धते यावद्धनी धनं गृहीत्वा तमाधिं मुञ्चति यावद्वा तन्मूल्यद्रव्यमर्थिने । प्रवेशयति यदा तु द्विगुणीभूतेऽपि धने द्विगुणन्धनमेव ग्रहीतव्यम् नत्वाधिनाश इति विचारितम्ग्रहणकालएव तदा द्विगुणीभूते द्रव्ये असन्निहिते वाऽधमर्णे धनिना किं कर्त्तव्यमित्यत आह । "विना धारणकाद्वापि विक्रीणीत ससाक्षिकम्" या० । धारणकादधमर्णाद्विना असन्निहिते साक्षिभिस्तदाप्तैश्च सहतमाधिं विक्रीय तत् धनं गृह्णीयाद्धनी वाशब्दो व्यवस्थितविकल्पार्थः । यदर्णग्रहणकाले द्विगुणीभूतेऽपि धने धनमेव ग्रहीतव्यम् नत्वाधिनाश इति न विचारितम् । तदा आधिः प्रणश्येत् द्विगुण इत्याधिनाशः । विचारिते त्वयं पक्ष इति । भोग्याधौ विशेषमाह । "यदा तु द्विगुणीभूतमृणमाधौ तदा खलु । मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने" या० । यदा प्रयुक्तं धनं स्वकृतया वृद्ध्या द्विगुणीभूतन्तदाधौ कृते तदुत्पन्ने आध्युत्पन्ने द्विगुणे धनिनः प्रविष्टे धनिनाधिर्मोक्तव्यः यदि वादावेवाधौ दत्ते द्विगुणीभूते द्रव्ये त्वयाधिर्मोक्तव्य इति परिभाषया कारणान्तरेण वा भोगाभावेन यदा द्विगुणीभूतमृणन्तदाधौ भोगार्थं धनिनि प्रविष्टे तदुत्पन्ने द्रव्ये द्विगुणे सत्याधिर्मोक्तव्यः । अधिकोपभोगे तदपि देयम् । सर्वथा सवृद्धिकमूलर्णापाकरणार्थोप्युपभोगविषयमिदं वचनम् । तमेनं सत्याधिमाचक्षते लौकिकाः यत्र तु वृद्ध्यर्थे

एवाध्युपभोग इति परिभाषा तत्र द्वैगुण्यातिक्रमेऽपि यावन्मूलदानं तावदुपभुङ्क्ते एवाधिम् एतदेव स्पष्टीकृतं वृहस्पतिना "ऋणी बन्धमवाप्नुयात्। फलभोग्यं पूर्णकालं दत्त्वा द्रव्यन्तु सामकम्। यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी। ऋणी च न लभेद्बन्धं परस्परमतं विना" अस्यार्थः। फलभोग्यं यस्यासौ फलभोग्यः बन्ध आधिः स च द्विविधः सवृद्धिकमूलापाकरणार्थो वृद्धिमात्रापाकरणार्थश्च तत्र सवृद्धिमूलापाकरणार्थं बन्धं पूर्णकालं पूर्णः कालो यस्यासौ पूर्णकालस्तमाप्नुयादृणी। यदा सवृद्धिकं मूलं फलद्वारेण धनिनः प्रविष्टन्तदा बन्धमवाप्नुयादित्यर्थः वृद्धिमात्रापाकरणार्थन्तु बन्धं सामकन्दत्त्वा प्राप्नुयादृणी। समं मूलं समेव सामकम्। अस्यापवादमाह। यदि प्रकर्षितं तत्स्यात्तद्बन्धकं प्रकर्षितमतिशयितं वृद्धेरप्यधिकफलं यदि स्यात्तदा न धनभाग्धनी। सामकं न लभेद्धनं, मूलमदत्त्वैवर्णी बन्धमवाप्नुयादिति यावत्। अथाप्रकर्षितं तद्बन्धकं वृद्धेऽप्यपर्याप्तन्तदा सामकं दत्त्वापि बन्धम् न लभेतमर्णः वृद्धिशेषं दत्त्वैव लभेतेत्यर्थः। पुनरुभयत्रापवादमाह। परस्परमतं विना उत्तमर्णाधमर्णयोः परस्परानुमत्यभावे यदि प्रकर्षितमित्याद्युक्तम्। परस्परानुमतौ तूत्कृष्टमपि बन्धकं यावन्मूलदानन्तावदुपभुङ्क्ते धनी निकृष्टमपि मूलमात्रदानेनैवाधमर्णो लभत इति"।

**आधिकरणिक** पु॰ अधिकरणे विचारस्थाने नियुक्तः ठक्। विचारस्थाने नियुक्ते प्राड्विवेकादौ।

**आधिक्य** न॰ अधिकस्य भावः ष्यञ्। अधिकतायाम् अतिशयितायाम्। "यदावगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः" मनुः "युग्मायामपि रात्रौ चेत् शोणितं प्रचुरं तदा। कन्या च पुंवत् भवति शुक्राधिक्ये पुमान् भवेत्" ज्योतिस्तत्त्वम् "प्रातिपदिकमात्रे लिङ्गमात्राद्याधिक्ये" सि॰कौ॰ "एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये व्यवस्थितम्" सुश्रु॰।

**आधिज्ञ** त्रि॰ आधिं मनःपीडां जानाति अनुभवति ज्ञा-क ६त॰। व्याधानुभावके व्यथिते अजयपालः।

**आधिदैविक** त्रि॰ अधिदेवं भवः देवान् वातादीन् अधिकृत्य प्रवृत्तः वा ठञ् अनुशतिका॰ द्विपदवृद्धिः। देवाधिकारेण प्रवृत्ते, १शास्त्रे "अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च" मनुः देवताऽधिकारेण प्रवृत्तवेदभागस्तु उपनिषत्प्रसिद्धः। वातादिनिबन्धने २दुःखे च। दुःखं हि त्रिविधमाध्यात्मिकादिभेदात् तेषां स्वरूपकारणविभागादिः सुश्रुते दर्शितः यथा "तच्च दुःखं त्रिविधमाध्यात्मिकमाधिभौतिकमाधिदैविकमिति। तत्तु सप्तविधे व्याधावुपनिपतति। ते पुनः सप्तविधा व्याधयः। तद्यथाऽऽदिबलप्रवृत्ता जन्मबलप्रवृत्ता दोषबलप्रवृत्ताः संघातबलप्रवृत्ताः कालबलप्रवृत्ताः दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ता इति। तत्रादिबलप्रवृत्ता ये शुक्रशोणितदोषान्वयाः कुष्ठार्शःप्रभृतयः। तेऽपि द्विविधा मातृजाः पितृजाश्च॥ जन्मबलप्रवृत्ता ये मातुरपचारात्पङ्गुजात्यन्धबधिरमूकमिन्मिनवामनप्रभृतयो जायन्ते तेऽपि द्विविधा रसकृता दौहृदापचारकृताश्च॥ दोषबलप्रवृत्ता य आतङ्कसमुत्पन्ना मिथ्याहाराचारभवाश्च तेऽपि द्विविधा आमाशयसमुत्थाः पक्वाशयसमुत्थाश्च पुनश्च द्विविधाः शारीरा मानसाश्च त एत आध्यात्मिकाः॥ संघातबलप्रवृत्ता य आगन्तवो दुर्बलस्य बलवद्विग्रहात्तेऽपि द्विविधाः शस्त्रकृता व्यालादिकृताश्च। एत आधिभौतिकाः॥ कालबलप्रवृत्ता ये शीतोष्णवातवर्षाप्रभृतिनिमित्तास्तेऽपि द्विविधा व्यापन्नर्तुकृता अव्यापन्नर्तुकृताश्च॥ दैवबलप्रवृत्ता ये देवद्रोहादभिशप्तका अथर्वकृता उपसर्गकृताश्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च द्विविधाः संसर्गजा आकस्मिकाश्च॥ स्वभावबलप्रवृत्ताः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयस्तेऽपि द्विविधाः कालकृताश्चाकालकृताश्च तत्र परिरक्षणकृताः कालकृता अपरिरक्षणकृता अकालकृता एत आधिदैविकाः"। एतदभिप्रायेणैव "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति सा॰सू॰ "दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ" सा॰का॰ दुःखत्रयमुक्तं विवृतञ्च सां॰त॰ कौ॰। "दुःखानां त्रयं दुःखत्रयं तत् खलु आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च। शारीरं वातपित्तश्लेष्मणाम् वैषम्यनिमित्तं, मानसं कामक्रोधलोभमोहभयेर्ष्याविषादविषयविशेषादर्शननिबन्धनम्। सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम्। बाह्योपायसाध्यञ्च दुःखं द्वेधा आधिभौतिकमाधिदैविकञ्च तत्राधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम्। आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनम्"। "तापत्रयोन्मूलनम्" भाग॰ १स्क॰ उक्तम्। दुःखञ्चात्मधर्म इति वैशेषिकादयः। अन्तःकरणादि धर्म इति सांख्यादयः। अन्तःकरणादेः त्रिगुणात्मकप्रकृतिकार्य्यत्वात् मोहप्रीतिविषादानां त्रिगुणधर्माणां स्वस्वकार्य्ये संक्र-

मात् सर्वेषां विषयाणामेव दुःखादिमत्त्वमिति भेदः ।

**आधिपत्य** न० अधिपतेर्भावः कर्म्म वा पत्यन्तत्वात् यक् । स्वामित्वे "अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् । गीता । "राष्ट्रस्याधिपत्यं मे देहि" ऋ० १०, १२४, ५ । "तदेनमासां प्रजानामाधिपत्याय राज्याय" शत० ब्रा० "सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति" इति मनुः "यक्षाणामाधिपत्यञ्च राजराजत्वमेव च" भा० व० २७४ अ० । २राजकार्य्ये प्रजापालनादौ । "दुर्य्योधनं त्वहितं वै निरस्य पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये । अजातशत्रुर्हि विमुक्तरागो धर्म्मेणेमां पृथिवीं शास्तु राजन्" भा० उ० प० ४अ० ।

**आधिबन्ध** पु० आधिः बहुप्रजानां कथं पालनं स्यादिति चिन्ता एव बन्धः । बहुप्रजारक्षणार्थचिन्तारूपबन्धे । "कथं राजन् ! प्रजारक्षाधिबन्धेन युज्यते" युधिष्ठिरप्रश्ने तच्चिन्ताधिरूपबन्धनिवारणाय यथा राज्ञाचरणीयं तथोक्तं तं प्रति भीष्मेण भा० शा० ७० अ० "समासेनैव ते राजन् ! धर्म्मान् वक्ष्यामि शाश्वतान् । विस्तरेणेह धर्म्माणां न जात्वन्तमवाप्नुयात् । धर्म्मनिष्ठान् श्रुतवतो देवव्रतसमाहितान् । अर्च्चयित्वा यजेथास्त्वं गृहे गुणवतो द्विजान् । प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च । अथ सर्व्वाणि कुर्व्वीथाः कार्य्याणि सपुरोहितः । धर्म्मकार्य्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च । ब्राह्मणान् वाचयेथास्त्वमर्थसिद्धिजयाशिषः । आर्ज्जवेन च सम्पन्नो धृत्या बुद्ध्या च भारत ! । यथार्थं प्रतिगृह्णीयाः कामक्रोधौ च वर्ज्जयेः । कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति । न स धर्म्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः । मा स्म लुब्धांश्च मूर्खांश्च कामार्थेषु प्रयूयुजः । अलुब्धान् बुद्धिसम्पन्नान् सर्वकर्म्मसु योजयेः । मूर्खो ह्यधिकृतोऽर्थेषु कार्य्याणामविशारदः । प्रजाः क्लिश्नात्ययोगेन कामक्रोधसमन्वितः । बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् । शास्त्राणि तेन लिप्सेथा वेतनेन धनागमम् । दापयित्वा करं धर्म्यं राष्ट्रं नीत्या यथाविधि । तथैतं कल्पयेद्राजा योगक्षेममतन्द्रितः । गोपायितारं दातारं धर्म्मनित्यमतन्द्रितम् । अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः । मा स्माधर्म्मेण लोभेन लिप्सेथास्त्वं धनागमम् । धर्म्मार्थावध्रुवौ तस्य यो न शास्त्रपरो भवेत् । अर्थशास्त्रपरो राजा धर्म्मार्थौ नाधिगच्छति । अस्थाने चास्य तद्वित्तं सर्व्वमेव विनश्यति । अर्थमूलो हि हिंसाञ्च कुरुते स्वयमात्मनः । करैरशास्त्रदृष्टैर्हि मोहात् सम्पीडयेत् प्रजाः । ऊधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी न लभेत् पयः । एवं राष्ट्रमयोगेन पीडितं न विवर्द्धते । यो हि दोग्ध्रीमुपास्ते च स नित्यं विन्दते पयः । एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् । अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम् । जनयत्यतुलां नित्यं कोषवृद्धिं युधिष्ठिर ! । दोग्ध्री धान्यं हिरण्यञ्च मही राज्ञा सुरक्षिता । नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः । मालाकारोपमो राजन् ! भव माङ्गारिकोपमः । तथा युक्तश्चिरं राज्यं भोक्तुं शक्ष्यसि पालयन् । परचक्राभियानेन यदि ते स्याद्धनक्षयः । अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् । मा स्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः । अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत । धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः । सान्त्वयन् परिरक्षंश्च स्वर्गमाप्स्यसि दुर्ज्जयम् । एवं धर्म्मेण वृत्तेन प्रजास्त्वं परिपालय । स्वन्तं पुण्यं यशो नित्यं प्राप्स्यसे कुरुनन्दन ! । धर्म्मेण व्यवहारेण प्रजां पालय पाण्डव ! । युधिष्ठिर ! यदा युक्तो नाधिबन्धेन योक्ष्यसे । एष एव परो धर्म्मो यद्राजा रक्षति प्रजाः । भूतानां हि यदा धर्म्मो रक्षणं परमा दया । तस्मादेव परं धर्म्मं मन्यन्ते धर्म्मकोविदाः । यो राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् । यदङ्गा कुरुते पापमरक्षन् भयतः प्रजाः । राजा वर्षसहस्रेण तस्यान्तमधिगच्छति । यदङ्गा कुरुते धर्म्मं प्रजा धर्म्मेण पालयन् । दश वर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि । स्विष्टिः स्वधीतिः सुतपा लोकान् जयति यावतः । क्षणेन तानवाप्नोति प्रजा धर्म्मेण पालयन् । एवं धर्म्मं प्रयत्नेन कौन्तेय ! परिपालय । ततः पुण्यफलं लब्ध्वा नाधिबन्धेन योक्ष्यसे" ।

**आधिभोग** पु० आधेर्बन्धकद्रव्यस्य भोगः । बन्धकद्रव्यस्य भोगे "गोप्याधिभोगे नो वृद्धिः" आधिशब्दे उदा० आधेर्मनोव्यथाया अनुभवरूपे २भोगे च ।

**आधिभौतिक** त्रि० भूतानि व्याघ्रसर्पादीन्यधिकृत्य जातम् । अधिभूत+ठञ् द्विपदवृद्धिः । व्याघ्रसर्पादिजनिते दुःखे । आधिदैविकशब्दे विवृतिः ।

**आधिमन्यव** अधिमन्यवे हितः अण् । ज्वराग्नौ हारा० ज्वरसन्तापे हि अधिकव्यथोद्भवात्तस्य तथात्वम् ।

**आधिरथि** पु० अधिरथः धृतराष्ट्रसारथिः तस्यायम् इञ् । सूतपुत्रे कर्णे "हिरण्यकण्ठीः प्रमदाः ग्रामान् वा बहुगोकुलान् । किं ददानीति तं विप्रमुवाचाधिरथिस्ततः भा०

भ॰ प॰ ३०८ अध्या॰ । तस्याधिरथपुत्त्रत्वप्राप्तिकथा स हि कन्यावस्थायां सूर्य्येण कुन्त्याम् उत्पादितः पश्चाच्च तया खजनभयात् जले त्यक्तः अधिरथेन गृहीतो वर्द्धितश्च यथोक्तं “निगूहमाना जातं वै बन्धुपक्षभयात्तदा। उत्ससर्ज्ज जले कुन्ती तं कुमारं यशस्विनम् । तमुत्सृष्टं जले गर्भं राधाभर्त्ता महायशाः । राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा । चक्रतुर्नामधेयञ्च तस्य बालस्य तावुभौ । दम्पती वसुषेणेति” भा॰आ॰६७अ॰ ।

**आधिराज्य** न॰ अधिराजस्य भावः कर्म्म वा ष्यञ् । आधिपत्ये “बभौ भूयः कुमारत्वादाधिराज्यमवाप्य सः” रघुः ।

**आधिवेदनिक** त्रि॰ अधिवेदनाय विवाहोपरिविवाहाय हितं ठक् तत्र काले दत्तं ठञ् वा । अधिवेदनार्थं तत्र काले च स्त्रियै पत्या दीयमाने स्त्रीधनभेदे । “पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम्”या॰स्मृ॰ “यत्र द्वितीयविवाहार्थिना पूर्वस्त्रियै पारितोषिकं धनं दत्तं तदाधिवेदनिकमधिकस्त्रीलाभार्थत्वात्तस्येति”दायभा॰। मिताक्षरायां तु “आधिवेदनिकाद्यञ्चेति” पठितम् आधिवेदनिकम् अधिवेदननिमित्तमिति व्याख्यातञ्च आद्यपदेन क्रयरिक्थादिप्राप्तस्य ग्रहणमित्युक्तम् । तत्र अधिवेदननिमित्तदाने विशेषः या॰ स्मृत्युक्तः “अधिविन्नस्त्रियै देयमाधिवेदनिकं समम् न दत्तं स्त्रीधनं यस्या दत्ते त्वर्द्धं प्रकल्पयेत्” “एतदपि सामर्थ्ये असामर्थ्ये तु यत् किञ्चित् भरणपर्य्याप्तं दत्त्वा परितोषयेदिति भेदः । “एकामूढ्वा तु कामार्थमन्यां वोढुं यदृच्छति । समर्थस्तोषयित्वार्थैः पूर्व्वोढामपरां वहेत्” स्मृतौ समर्थपदस्यारस्यात्तथात्वम् । एवमेव मदनपारिजातविधानपारिजातादयः ।

**आधिस्तेन** पु॰ आधेर्गोप्याधेर्भोगात् स्तेनइव । गोप्याधेर्बलात्कारेण भोक्तरि । “न भोक्तव्यो बलादाधिर्भुञ्जानोवृद्धिमुत्सृजेत् । मूल्येन तोषयेदेनमाधिस्तेनोऽन्यथा भवेत्”मनुना तद्भोगे स्तेनत्वस्योक्तेस्तथात्वम् ।

**आधीकरण** न॰ अनाधिराधिक्रियते आधि+च्वि+कृ-ल्युट् । बन्धकीकरणे आधिशब्दे मिताक्षरावाक्ये उदा॰” क्त आधीकृतः । दत्तबन्धके द्रव्यादौ त्रि॰ ।

**आधुत** त्रि॰आ+धु-क्त । चालिते । [अप्राचीने च स्त्रियां ङीप्

**आधुनिक** त्रि॰अधुना भवः ठञ् । १साम्प्रतभवे २अर्वाचीने

**आधृष्टि** त्रि॰ आ+धृष-भावे क्तिन् । १परिभवे २बलाद् निग्रहे च ।

**आधेय** त्रि॰ आ+धा-कर्म्मणि यत् । १उत्पाद्ये । “आधेयश्च क्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः” व्या॰का॰। यस्य सतो गुणान्तरमुत्पाद्यम् २तादृशे उत्पाद्यगुणान्तरे विद्यमाने एव यत्र घटादिपदार्थे पाकादिना रक्ततागुणान्तरमाधीयते तादृशे घटादौ । आधानविधिना ३स्थापनीये वह्नौ पु॰। ४अधिकरणेऽभिनिवेशनीये “अधिकं पृथुलाधाराद्दाधेयाधिक्यवर्णनम्” चन्द्रा॰। ५स्थापनीये द्रव्ये च । भावे यत् । ६आधाने न॰। “अग्न्याधेयम्” आश्व॰ श्रौ॰सू॰ । “अन्यतराभावे कार्या प्रागग्न्याधेयात्” बौधा॰सू॰ ।

**आधोरण** पु॰ आ+धोर-गतिचातुर्य्ये ल्यु । हस्तिगतिचातुर्य्ययुते हस्तिपके । स्वल्पबलेनापि महाबलस्य हस्तिनः सङ्केतादिनैव चालनात्तस्य गतिचातुर्य्यवत्त्वात्तथात्वम् ।

**आध्मात** त्रि॰ आ+ध्मा-क्त । १शब्दिते, २दग्धे, ३वातदोषजातोदरस्फीततासम्पादकरोगयुक्ते “साटोपमत्युग्ररुजमाध्मातमुदरं भृशम्” सुश्रु॰ । भावे क्त ४आध्माने न॰ ।

**आध्मान** पु॰ आ+ध्मा-आधारे ल्युट् । “आध्मानमिति जानीयाद्दोषं वातनिरोधकृत्”इत्युक्ते १वातव्याधौ । “मूत्रस्य मूलं समुपैति सङ्गः: मर्दात्तिं वस्तितोदमाध्मानञ्च” सुश्रु॰ भावे ल्युट् । २उदरस्फीततायाम् । ३अग्निसंयोगजे शब्दभेदे न॰ । करणे ल्युट् । ४नलिकानाम्गन्धद्रव्ये स्त्री॰ङीप् ।

**आध्मापन** न॰ आ+ध्मा-णिच्-पुक्-भावे ल्युट् । १शब्दनिष्पादने २आध्माननिष्पादने सुश्रुतोक्ते ३शल्यापचारणीयव्यापारभेदे च । “अभ्यन्तरशल्यानि परिषेचनाध्मापनैर्वालवस्त्रपाणिभिः प्रमार्ज्जयेत्” सुश्रु॰ ।

**आध्यक्ष्य** न॰ अध्यक्षस्य भावः ष्यञ् । १अधिष्ठातृत्वे २अधिकर्त्तृव्यापारे ३प्रत्यक्षत्वे च । [ स्मृतौ

**आध्या** स्त्री आ+ध्यै-भावे अङ् । १चिन्तने २औत्सुक्येन

**आध्यात्मिक** त्रि॰ आत्मानं मनःशरीरादिकमधिकृत्य भवः ठञ् । शोकमोहज्वरादिरूपे दुःखे । आधिदैविकशब्दे दृश्य विवृतिः । [र्व्यकस्मरणे च ।

**आध्यान** न॰ आध्यै+-ल्युट् । १चिन्तायाम्, २उत्कण्ठापू-

**आध्यापक** पु॰अध्यापकएव स्वार्थेऽण् । अध्यापके शब्दरत्ना॰

**आध्यायिक** पु॰ अधीयतेऽध्यायोऽध्येयोवेदस्तमधीते ठञ् । अधीतवेदे “युवा स्यात् साधुयुवाध्यायिकः” तैत्ति॰उ॰ । “आध्यायिकोऽधीतवेदः”भा॰ ।

**आध्यासिक** त्रि॰ अध्यासेन कल्पितः ठक् । वेदान्तिमते अध्यासेन कल्पिते अतद्वति तत्त्वारोपेण कल्पिते पदार्थे यथा शुक्तिकादौ रजतादि कल्पितम् एवं ब्रह्मणि जगदादि

आरोपितमिति तस्याध्यासिकत्वमिति वेदान्तिसिद्धान्तः ।

**आध्र** पु॰ आ+धृ–क । आधारे । "आध्रस्य चित् प्रमतिरुच्यसे" ऋ॰ १,३१,१४ । "आध्रेण चित्तद्वेकं चकार" ऋ॰७,१८,१७ ।

**आध्वनिक** त्रि॰ अध्वनि कुशलः ठञ् । पथिकुशले "कान्तारेष्वपि विश्रामे जनस्याध्वनिकस्य वै" भा॰ आ॰ ।

**आध्वरायण** पुंस्त्री॰ अध्वरोयज्ञाभिज्ञस्तस्य गोत्रापत्यम् नडा॰ फक् । यज्ञविद्गोत्रापत्ये ।

**आध्वरिक** पु॰ अध्वरस्य व्याख्यानो ग्रन्थः ठञ् । अध्वरव्याख्याने १ग्रन्थे । अध्वरं यज्ञं वेत्ति तत्प्रतिपादकग्रन्थमधीते वा ठञ् । २यज्ञवेत्तरि २तत्प्रतिपादकग्रन्थाध्येतरि च त्रि॰।

**आध्वर्य्यव** त्रि॰ अध्वर्य्योर्यजुर्वेदविद इदम् अञ् । अध्वर्य्युसम्बन्धिनि कर्म्मादौ ।"यदि वाध्वर्य्यवं राजा नियुनक्ति पुरोहितम्" अथ॰१०,५२,२ । "ऋग्वेदेन हौत्रमकुर्व्वत यजुर्वेदेनाध्वर्य्यवं सामवेदेनोद्गीथम्"शत॰ब्रा॰ ।

**आन** पु॰ आनित्यनेन आ+अन–करणे क्विप् आ प्राणवायुः ततः स्वार्थे प्रज्ञा॰वा अदूरभवादौ अण् । सम्यग्जीवनसाधनस्य अन्तःस्थितस्य प्राणवायोर्नासिकया वहिर्निस्सारणे उच्छ्वासे

**आनक** पु॰ आनयति सोत्साहान् करोति अन–णिच् ण्वुल् । १पटहे, २मृदङ्गे, "ततः शङ्खाश्च भेर्य्यश्च पणवानकगोमुखाः सहसैवाभ्यहन्यन्त" गीता ३सगर्ज्जमेघे च । ४उत्साहके त्रि॰ । कर्णादि॰ चतुरर्थ्यां फिञ् । आनकायनिः । तत्सन्निकृष्टदेशादौ त्रि॰ ।

**आनकदुन्दुभि** पु॰ आनकः प्रोत्साहकोदुन्दुभिर्देववाद्यविशेषो यस्य । १कृष्णपितरि वसुदेवे । कृष्णजन्मोत्सवे हि तथा वाद्यं तद्गृहे जातमिति तस्य तथात्वम् । २इहुडुकायां स्त्री वा ङीप् ।

**आनकस्थली** स्त्री आनकप्रधाना स्थली शा॰त॰ । आनकप्रधानस्थल्यां देशभेदे तस्यां भवः अदूरदेशादौ धूमा॰ वुञ् । आनकस्थलकः तत्सन्निकृष्टदेशादौ त्रि॰ ।

**आनडुह** न॰ आनडुह इदम् अण् । १वृषसम्बन्धिनि गोमय चर्म्मादौ । "आनडुहोगोमयः शकरःस्थालीपाकः" गोभि॰ "चर्म्मण्यानडुहे रक्ते स्थाप्यं भद्रासने तथा" या॰स्मृ॰ । अनडुहा कृतम् अण् । २स्वनामख्याते तीर्थभेदे तच्च तीर्थं सह्यगिरिसन्निकृष्टदेशस्थितम् यथा क्रौञ्चपुरं वर्णयित्वा । "तमहंव राजानं निवासाय गतेऽहनि । तीर्थमानडुहं नाम गमिष्यामः सनातनम् । ततश्च तं गमिष्यामः सह्यस्य विवरे गिरिम्" । गोमन्तमिति विख्यातम्"हरिवं॰८६अ॰।

**आनडुहक** त्रि॰ अनडुहा कृतम् संज्ञायां कुलला॰ वुञ् । अनडुत्कृते गोमयादौ ।

**आनडुह्य** पु॰ अनडुहोगोत्रापत्यम् गर्गा॰ यञ् । अनडुन्नामकस्य मुनेर्गोत्रापत्ये । ततः पुनः गोत्रापत्ये अश्वा॰ फञ् । आनडुह्यायनः तदपत्ये पुंस्त्री॰ । चतुरर्थ्यां कर्णा॰ फिञ् । आनडुह्यायनिः तत्सन्निकृष्ट देशादौ त्रि॰ ।

**आनत** त्रि॰ आ+नम–क्त । १कृतप्रणामे, २अधोमुखे, ३विनयेन नते च "तं व्यासस्तुतमग्र्यं मुनिमानतोऽस्मि" भा॰ ४नम्रे ।"स यन्तुरेवानतपूर्व्वकायम्"रघुः ।

**आनति** स्त्री आनमति प्रवणीभवत्यनया आ+नम–करणे क्तिन् । आनुगत्यजन्ये १सन्तोषे "यत्र चिरावस्थितेर्व्यभिचारात् न प्रतिपक्षकारणत्वमानतेरिति" "आनतिद्वारा न प्रतिपक्षार्थत्वं द्रव्यस्येत्युक्तं तस्मान्दृतरम् आनतिद्वारेण चिराश्रयणादीनां प्रतिपक्षकारणत्वादिति" "आनतेरनियतोपायपरिणामादिति" च दाय॰भा॰ । भावे क्तिन् । २नम्रीभावे, ३अधोभवने, ४नम्रतायाञ्च "आत्मजातिसदृशीं क्रियानतिम्" किरा॰।

**आनद्ध** न॰ आ+नह+क्त । चर्म्मणा बद्धमुखे १पटहमुरजादौ वाद्यभेदे, । २ग्रथिते, ३व्याप्ते, ४बद्धे केयूरादिके च त्रि॰ । "मूलबद्धे द्वे तयोर्मूलं वक्षिमेढ्रस्य तत्र विज्ञानद्धवक्षिता" सुश्रु॰

**आनन** न॰ अनित्यनेन आ+अन–करणे ल्युट् । मुखे मुखेन हि जलपानादिना प्राणादेः स्थितिस्तस्य तथात्वम् "सारसैः कलनिर्ह्रादैः क्वचिदुन्नमितानना" "तदाननं मृत्सुरभि क्षितीश्वरः" नृपस्य कान्तं पिबतः सुताननम्" इति च रघुः ।

**आनन्तर्य्य** न॰ अनन्तरमेव चतुर्व॰ स्वार्थे ष्यञ् । १अव्यवहिते अनन्तरस्य भावः ष्यञ् । २अव्यवधाने ।"आनन्तर्य्यात् स्वयोन्यासु तथा बाह्येष्वपि क्रमात्"मनुः "पयसः कालानन्तर्य्यधर्मानुपहेभ्यः" कात्या॰ ४,२,१६ ।

**आनन्त्य** न॰ अनन्तएव स्वार्थे अञ् । १अनन्ते २असीमे अनन्तस्य भावः ष्यञ् । ३सीमाशून्यत्वे ४नाशराहित्ये "हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते" मनुः । "लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः"या॰स्मृतिः ।"आनन्त्यात् कुलधर्म्माणां द्वादशाहे विधीयते"त्रा॰त॰पु॰प्रायश्चित्तायाञ्च "यस्तु नित्यं कृतमतिर्धर्म्ममेवाभिपद्यते । अशङ्कमानः

कल्याणि ! मोऽत्यन्तमानन्त्यमश्नुते" भा०व०प०३१अ० ।

**आनन्द** पु० आ+नन्द–घञ् । १हर्षे सुखे, २दुःखाभावे, ३ब्रह्मणि च । अर्श आद्यच् । ४आनन्दवति त्रि० "सत्यं ज्ञानमानन्दं ब्रह्मेति श्रुतिः । नैयायिका आनन्दशब्दः दुःखाभावे लाक्षणिकइत्याहुः ब्रह्मणि आनन्दाभावेऽपि दुःखाभावरूपानन्दस्य तत्र सत्त्वात् आनन्दवत्त्वमिति ते मन्यन्ते वेदान्तिनस्तु आनन्दमं नपुंसकमिति आनन्दस्वरूपत्वमेव ब्रह्मणः दुःखाभावरूपस्यानन्दस्याधिकरणस्वरूपत्वादित्याहुः एतदभिप्रायेणैव विवरणे "आनन्दोविषयानुभवो नित्यत्वञ्चेति सन्ति धर्म्मा अपृथक्त्वेऽपि पृथगिवावभासन्ते इत्युक्तम्" यथा च ब्रह्मण आनन्दप्रचुरत्वादानन्दमयत्वं तथा "आनन्दमयोऽभ्यासात्" शा०सू०भा० व्यवस्थापितम् तैत्ति०उप० आनन्दमयं प्रकृत्य "तस्य प्रियमेव शिरो मोदोदक्षिणः पक्षः प्रमोद उत्तरःपक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा" । "तस्यानन्दमयस्यात्मन इष्टपुत्रादिदर्शनजं प्रियं शिर इव शिरः प्राधान्यात् । मोद इति प्रियलाभनिमित्तो हर्षः । स एव च प्रकृष्टो हर्षः प्रमोदः । आनन्द इति सुखसामान्यम्, आत्मा प्रियादीनां सुखावयवानां तेष्वनुस्यूतत्वादानन्द इति परं ब्रह्म । तद्धि शुभकर्म्मणा प्रत्युपस्थाप्यमाने पुत्रमित्रादिविषयविशेषोपाधावन्तःकरणवृत्तिविशेषे तमसा प्रच्छाद्यमाने प्रसन्नेऽभिव्यज्यते तद्विषयसुखमिति प्रसिद्धं लोके । तद्वृत्तिविशेषप्रत्युपस्थापकस्य कर्म्मणोऽनवस्थितत्वात् सुखस्य क्षणिकत्वम् । तद्यदन्तःकरणं तपसा तमोघ्नेन, विद्यया, ब्रह्मचर्य्येण, श्रद्धया च निर्म्मलत्वमापद्यते यावत्तावद्विविक्ते प्रसन्नेऽन्तःकरणविशेष आनन्द उत्कृष्यते विपुलोभवति । वक्ष्यति च "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति एष ह्येवानन्दयाति" "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति"श्रुत्यन्तरात् एवञ्च कामोपशमोत्कर्षापेक्षया शतगुणोत्तरोत्तरोत्कर्ष आनन्दस्य वक्ष्यते । एवञ्चोत्कृष्यमाणस्यानन्दमयस्यात्मनः परमार्थब्रह्मविज्ञानापेक्षया ब्रह्म परमेव यत्प्रकृतं सत्यज्ञानानन्दलक्षणं यस्य च प्रतिपत्त्यर्थं पञ्चान्नादिमयाः कोषा उपन्यस्ताः । यच्च तेभ्योऽभ्यन्तरं येन च ते सर्वे आत्मवन्तस्तद्ब्रह्म पुच्छं प्रतिष्ठा:" भा० ब्रह्मण आनन्दरूपत्वमपि तत्रैव दर्शितं यथा "यद्वैतत् सुकृतं रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" तै० उ० । "कुतो रसत्वप्रसिद्धिर्ब्रह्मण इत्यत आह । यद्वैतत्सुकृतं रसो वै सः । रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादिः प्रसिद्धो लोके । रसमेवायं लब्ध्वा प्राप्यानन्दी सुखी भवति नासत आनन्दहेतुत्वं दृष्टं लोके । बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसो नूनम् । ब्रह्मैव रसस्तेषाम् तस्मादस्ति तेषामानन्दकारणं रसवद्ब्रह्म । इतश्चास्ति कुतः । प्राणनादिक्रियादर्शनात् । अयमपि हि पिण्डो जीवतः प्राणेन प्राणिति अपानेनापानिति । एवं वायवीया ऐन्द्रियकाश्च चेष्टाः संहतैः कार्य्यकारणैर्निर्वर्त्त्यमाना दृश्यन्ते । तच्चैकार्थवृत्तित्वेन संहननम् संहन्यमानं च नान्तरेण चेतनं संहतं सम्भवति अन्यत्रादर्शनात् । तदाह यद्यदि एष आकाशे परमे व्योम्नि गुहायां निहित आनन्दो न स्यान्न भवेत्को ह्येव लोकेऽन्यादपानचेष्टां कुर्य्यादित्यर्थः । कः प्राण्यात् प्राणनं कुर्य्यात्तस्मादस्ति तद्ब्रह्म । यदर्थाः कार्य्यकारणप्राणनादिचेष्टाः? तत्कृत एवानन्दो लोकस्य । कुतः ! एष ह्येव पर आत्मा आनन्दयाति आनन्दयति सुखयति लोकं धर्म्मानुरूपम् । स एवात्मानन्दरूपोऽविद्यया परिच्छिन्नो विभाव्यते प्राणिभिरित्यर्थः" भा० । सर्वानन्दापेक्षया ब्रह्मरूपानन्दस्योत्कर्षस्तत्रैव दर्शितो यथा "सैषानन्दस्य मीमांसा भवति । युवा स्यात् साधुयुवाध्यायिकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितॄणां चिरलोकानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः स एकः कर्म्मदेवानामानन्दः ये कर्म्मणा देवानपि यन्ति, श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्म्मदेवानामानन्दाः स एको देवानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं

देवानामानन्दाः स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एक प्रजापतेरानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे यश्चासावादित्ये स एकः । स य एवं-वित् अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसङ्क्रामति, एतं प्राणमयमात्मानमुपसङ्क्रामति, एतं मनोमयमात्मानमुपसङ्क्रामति, एतं विज्ञानमयमात्मानमुपसङ्क्रामति, एतमानन्दमयमात्मानमुपसङ्क्रामति" तैत्ति०उप०

"तस्यास्य ब्रह्मण आनन्दस्यैषा मीमांसा विचारणा भवति किमानन्दस्य मीमांस्यमित्युच्यते । किमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवदाहोस्वित्स्वाभाविक इत्येवमेषानन्दस्य मीमांसा । तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसम्पत्तिनिमित्त उत्कृष्टः । स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थम् । अनेन हि प्रसिद्धेनानन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते । लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्राऽविद्यया तिरस्क्रियमाणोऽविज्ञाने उत्कृष्यमाणायां चाविद्यायां ब्रह्मादिभिः कर्मवशाद्यथाविज्ञानं विषयादिसाधनसम्बन्धवशाद्विभाव्यमानश्च लोकेऽनवस्थितो लौकिकः सम्पद्यते स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते शतगुणोत्तरोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मण आनन्द इति । निरस्तेऽविद्याकृते विषयविषयिविभागे विद्यया स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैते भवतीत्येतमर्थं विभावयिष्यन्नाह । युवा प्रथमवयाः साधुयुवेति । साधुश्चासौ युवा चेति यूनो विशेषणम् । युवाप्यसाधुर्भवति साधुरप्ययुवाऽतो विशेषणं युवा स्यात्साधुयुवेति । आध्यायिकोऽधीतवेदः । आशिष्ठ आशास्तृतमः । दृढिष्ठो दृढतमः । बलिष्ठो बलवत्तमः । एवमाध्यात्मिकसाधनसम्पन्नः । तस्येयं पृथिवी उर्वी सर्वा वित्तस्य वित्तेनोपभोगसाधनेन दृष्टार्थेन च कर्मसाधनेन सम्पन्ना पूर्णा । राजा पृथिवीपतिरित्यर्थः । तस्य च य आनन्दः स एको मानुषो मनुष्याणां प्रकृष्ट एक आनन्दः । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः । मनुष्यादानन्दाच्छतगुणेनोत्कृष्टो मनुष्यगन्धर्वाणामानन्दो भवति । मनुष्याः सन्तः कर्मविद्याविशेषाद्गन्धर्वत्वं प्राप्ताः मनुष्यगन्धर्वाः ते ह्यन्तर्धानादिशक्तिसम्पन्नाः सूक्ष्मकार्यकारणाः । तस्मात्प्रतिघाताल्पत्वं तेषां द्वन्द्वप्रतिघातशक्तिसाधनसम्पत्तिश्च । ततोऽप्रतिहन्यमानस्य प्रतीकारवतो मनुष्यगन्धर्वस्य स्याच्चित्तप्रसादः । तत्प्रसादविशेषात्सुखविशेषाभिव्यक्तिः । एवं पूर्वस्याः पूर्वस्या भूमेरुत्तरस्यामुत्तरस्यां भूमौ प्रसादविशेषतः शतगुणेनानन्दोत्कर्ष उपपद्यते । प्रथमन्त्वकामहताग्रहणं मनुष्यविषयभोगकामनाभिहतस्य श्रोत्रियस्य मनुष्यानन्दाच्छतगुणेनानन्दोत्कर्षो मनुष्यगन्धर्वेण तुल्यो वक्तव्य इत्येवमर्थं साधुयुवाध्यायिक इति श्रोत्रियत्वावृजिनत्वे गृह्येते । ते ह्यविशिष्टे सर्वत्र । अकामहतत्वं तु विषयोत्कर्षापकर्षतः सुखोत्कर्षापकर्षाय विशिष्यते । अतोऽकामहतग्रहणम् । तद्विशेषतः शतगुणात् सुखोत्कर्षोपलब्धेरकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थम् । व्याख्यातमन्यत् । देवगन्धर्वा जातित एव । चिरलोकानामिति पितॄणां विशेषणम् । चिरकालस्थायी लोको येषां पितॄणां ते चिरलोका इति । आजान इति देवलोकस्तस्मिन्नाजाने जाता आजानजा देवाः स्मार्तकर्मविशेषतो देवस्थानेषु जाताः । कर्मदेवा ये वैदिकेन कर्मणाग्निहोत्रादिना केवलेन देवानपि यन्ति । देवा इति त्रयस्त्रिंशद्धविर्भुजः । इन्द्रस्तेषां स्वामी तस्याचार्यो बृहस्पतिः प्रजापतिर्विराट् त्रैलोक्यशरीरो ब्रह्मा । समष्टिव्यष्टिस्वरूपः संसारमण्डलव्यापी । यत्रैत आनन्दभेदा एकतां गच्छन्ति । धर्मश्च तन्निमित्तं ज्ञानञ्च तद्विषयमकामहतत्वं च निरतिशयं यत्र स एष हिरण्यगर्भो ब्रह्मा तस्यैष आनन्दः श्रोत्रियेणावृजिनेनाकामहतेन च सर्वतः प्रत्यक्षमुपलभ्यते । तस्मादेतानि त्रीणि साधनानीत्यवगम्यते । तत्र श्रोत्रियत्वावृजिनत्वे नियते अकामहतत्वं तूत्कृष्यते इति प्रकृष्टसाधनतावगम्यते । तस्य तस्याकामहतत्वं प्रकर्षतश्चोपलभ्यमानः श्रोत्रियप्रत्यक्षो ब्रह्मण आनन्दो यस्य परमानन्दस्य मात्रा एकदेशः । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति" श्रुत्यन्तरात् । स एष आनन्दो यस्य मात्रा समुद्राम्भस इव विप्रुषः प्रविभक्ता यत्रैकतां गताः स एष परमानन्दः स्वाभाविकोऽद्वैतत्वात् । आनन्दानन्दिनोश्चाविभागोऽत्र । तदेतन्मीमांसाफलमुपसंह्रियते स यश्चायं पुरुष इति । गुहायां निहितः परमे व्योम्न्याकाशादिकार्यं सृष्ट्वाऽन्नमयान्तं

तद्देशानुप्रविष्टः स य इति निर्दिश्यते । स एकोऽसावयं पुरुषे यश्चासावादित्ये यः परमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टो यस्यैकदेशं ब्रह्मादीनि भूतानि सुखार्हाण्युपजीवन्ति स यश्चासावादित्ये इति स एकः । तं मीमांसया च सिद्धमुपसंहृतं भिन्नप्रदेशस्थघटाकाशाकाशैकत्ववत् । नन्वानन्दस्य मीमांसा प्रकृता तस्या अपि फलमुपसंहर्त्तव्यम्, अभिन्नः स्वाभाविक आनन्दः परमात्मैव न विषयविषयिसम्बन्धजनित इति । ननु तदनुरूप एवायं निर्देशः स यश्चायं पुरुषे यश्चासावादित्ये स एक इति भिन्नाधिकरणस्थविशेषोपमर्देनेन । नन्वेवमप्यादित्यविशेषग्रहणमनर्थकम् । नानर्थकम् । उत्कर्षापकर्षापोहार्थत्वात् । द्वैतस्य हि यो मूर्त्तामूर्त्तलक्षणस्योत्कर्षः सवितर्यभ्यन्तरगतः स चेत् पुरुषगतविशेषोपमर्द्देन परमानन्दमपेक्ष्य समो भवति न कश्चिदुत्कर्षोऽपकर्षो वा तां गतिं गतस्येत्यभयं प्रतिष्ठां विन्दत इत्युपपन्नम्"।"स यः कश्चिदेवं यथोक्तं ब्रह्मोत्सृज्योत्कर्षापकर्षमद्वैतं सत्यं ज्ञानमनन्तमस्मीति । एवमछब्दस्य प्रकृतपरामर्शार्थत्वात् । स किम् ? अस्माल्लोकात् प्रेत्य दृष्टादृष्टविषयसमुदायो ह्ययं लोकस्तस्मादस्माल्लोकात्प्रेत्य प्रत्याहृत्य निरपेक्षो भूत्वा एतं यथा व्याख्यातम् अन्नमयमात्मानमुपसङ्क्रामति विषयजातमन्नमयात्पिण्डात्मनो व्यतिरिक्तं न पश्यति सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः । ततोऽभ्यन्तरमेतं प्राणमयं सर्वान्नमयात्मस्थमविभक्तम् । अथैतं मनोमयं विज्ञानमयमानन्दमयमात्मानमुपसंक्रामति । अथाऽदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते तत्रैव नान्यत्र च" शाङ्करभाष्यम्

अत्र प्रसङ्गात् सुखदुःखादीनां स्वरूपकारणादिकं तावन्निरूप्यते प्रकृतेः सुखदुःखमोहात्मकसत्त्वरजस्तमोगुणरूपत्वात् सुखादीनां सत्त्वादिकार्य्यत्वम् । यथोक्तं सां०का० "प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" अस्याः सां०कौ० व्याख्या ।

"प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः, अप्रीतिर्दुःखं अप्रीत्यात्मकोरजोगुणः, विषादो मोहः विषादात्मकस्तमोगुण इति । ये तु मन्यन्ते न प्रीतिं दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मग्रहणम् । नेतरेतराभावाः सुखादयः अपि तु भावाः आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः । एवमन्यदपि व्याख्येयम् । भावरूपता चैषामनुभवसिद्धा परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः । स्वरूपमेषामुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनियमार्थाः अत्रापि यथासंख्यमेव । रजः प्रवर्त्तकत्वात्सर्वत्र लघु सत्त्वं प्रवर्त्तयेत् यदि तमसा गुरुणा न नियम्येत । तमोनियतन्तु क्वचिदेव प्रवर्त्तयतीति भवति तमो नियमार्थम् । प्रयोजनमुक्त्वा क्रियामाह अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च वृत्तिः क्रिया सा च प्रत्येकमभिसम्बध्यते । अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते । तथा हि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्वतमसी अभिभूय घोराम्, एवं तमः सत्त्वरजसी अभिभूय मूढामिति" ।

"प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योन्यं वैधर्म्यम्" सां० सू० । "गुणानां सत्त्वादिद्रव्यत्रयाणामन्योन्यं सुखदुःखविषादाद्यैर्वैधर्म्यम् कार्य्येषु तद्दर्शनादित्यर्थः सुखादिकं च घटादिविषयाणामपि रूपवदेव धर्मोऽन्तःकरणोपादानत्वात् सर्व्वकार्य्याणां, तत्तद्गुणत्वौचित्यात् एतच्चानुपदं निरूपयिष्यते । मनसः संकल्पात्मकतावत् सत्त्वादीनां सुखाद्यात्मकता धर्म्मधर्म्यभेदात्" सा०प्र०भा० ।

"हेयं दुःखमनागतम्" इत्युपक्रम्य "द्रष्टृदृश्ययोः संयोगो हेयहेतुः" पात०सू० हेयस्य दुःखस्य कारणं द्रष्टृदृश्ययोः संयोगमुक्त्वा "प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्" पा०सूत्रे दृश्यपदार्थो निरूपितः । अयमर्थः प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, प्रकाशक्रिययोः प्रतिबन्धरूपस्थितिशीलं तमः । तत्र सत्त्वं सुखत्वात् तथ्यं, तापकं रजः रञ्जकत्वात् । एवं सत्त्वरजसोस्तथ्यतापकभावे सति तमसा मोहः मम ताप इत्येवं रूपभ्रान्तिरूपोमोहः पुरुषस्य भवति । तदिदं गुणत्रयं स्वस्वकार्य्यैर्मिथः सहायमविवेकिभोग्यं विवेकिनाञ्च परस्पराश्रयं परस्पराभिभाव्याभिभावकभावञ्च गच्छति" इत्येवं स्थिते सति कारणान्तरे रजस्तमसी अभिभूय सत्त्वं यदा प्रवर्द्धते तदा सत्त्वोद्रेकात् सुखं जायते । सत्त्वतमसी अभिभूय सति कारणान्तरे यदा रजः प्रवर्द्धते तदा रज उद्रेकात् दुःखं भवति सत्त्वरजसी अभिभूय यदा तम उद्रिक्तं भवति तदा मोहविषादादिकं जायते इति सुखादिसमुद्भवप्रकारः । तत्र कारणं धर्म्माधर्म्मादिसचिवोरागादिरेव । यथाह "सुखानुशयी रागः" दुःखानुशयी द्वेषः" पा०सू०

सुखानुभवे सति स्मृत्वा तज्जातीयसुखान्तरे तत्साधने वा तृष्णा स रागः सुखमनुशेते विषयीकरोति सुखानुशयोत्यर्थः एवं दुःखानुभवितुः स्मृत्वा दुःखे तत्साधने वा यः क्रोधः स द्वेष इत्यर्थः। एतञ्च सुखस्य स्वरूपात्मकज्ञानात् सुखे इच्छा नान्येच्छाधीना इति तस्य स्वतःप्रयोजनत्वम् अन्येच्छानधीनेच्छाविषयस्यैव तथात्वात्। तत्साधने तु सुखसाधनत्वज्ञानादेवेच्छा अतस्तस्य गौणप्रयोजनत्वम्। स्वरूपात्मकदुःखज्ञानाच्च दुःखे द्वेषः तत्साधने तु तत्साधनत्वज्ञानात् द्वेषः यथाह भाषा० "सुखन्तु जगतामेव काम्यं धर्मेण जन्यते। अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम्। निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते। इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि। चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत्। तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत्। बलवद्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका। तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते। द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम्"। इच्छया च तत्साधने प्रवृत्तिः। द्वेषाच्च तत्साधने निवृत्तिः। यत्र सुखनान्तरीयकविधया दुःखमुत्पद्यते तादृशे कर्मणि द्विष्टसाधनत्वज्ञाने सत्यपि इच्छातत्कार्ययोर्दर्शनात् बलवद्विष्टासाधनत्वज्ञानस्यैव इच्छायां प्रवृत्तौ च कारणत्वेन तस्य तन्नान्तरीयकत्वान्न बलवद्द्विष्टत्वम्। अतएव कण्टकिमत्स्यभक्षणादौ सतुषधान्यादिग्रहणे च प्रवृत्तिः। कामुकादेः परदारादिगमने नरकसाधनत्वं विदुषोऽपि प्रवृत्तिस्तु तत्काले ऐहिकसुखापेक्षया कालान्तरभाविनि नरकादौ बलवद्द्वेषाभावेन बलवद्विष्टासाधनत्वज्ञानादेवेति न विरोधः।

तत्र सुखं प्रथमं द्विविधं ज्ञानप्रसादलभ्यं ब्रह्मानन्दाद्यपरपर्य्यायं निरतिशयम्, वैषयिकं सातिशयञ्च" तत्र तैत्तिरीयश्रुतौ मनुष्यादारभ्य ब्रह्मपर्य्यन्तानाम् ७१७पृष्ठे प्रान्दर्शितम् सातिशयञ्च सुखं विवेकिनां दुःखमेव। यथोक्तम् विषयतृष्णाराहित्यरूपोपरतिस्वरूपतुष्टिप्रदर्शने" सां०कौ०। "अर्ज्जनरक्षणक्षयभोगहिंसादोषदर्शनहेतुजन्मान उपरमाः पञ्च भवन्ति। तथा हि सेवादयोधनोपार्ज्जनोपायास्ते च सेवकादीन् दुःखाकुर्वन्ति। दुष्टेश्वरद्वाःस्थदण्डदत्तघक्काहचन्द्रजां वेदनां भावयन् प्राज्ञः कः सेवासु प्रसज्जते?। एवमन्येऽप्यर्ज्जनोपाया दुःखा इति विषयोपरमे या तुष्टिः सैषा पारमुच्यते। तथार्जितं धनं राजकामारिकाग्निजलौघादिभ्योविनङ्क्ष्यतीति तद्रक्षणे महद्दुःखमिति भावयतोविषयोपरमे या तुष्टिः सा द्वितीया सुपारमुच्यते। तथा महतायासेनार्जितं धनं भुज्यमानं क्षीयते इति तत्क्षयं भावयतोविषयोपरमे या तुष्टिः सा तृतीया पारपारमुच्यते। एवं शब्दादिभोगाभ्यासादर्द्धन्ते कामास्ते च विषयाप्राप्तौ कामिनं दुःखयन्तीति भोगदोषं भावयतो विषयोपरमे या तुष्टिः सा चतुर्थी अनुत्तमाम्भ उच्यते। एवं नानुपहत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्चमी उत्तमाम्भ उच्यते"। "परिणाम तापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" पात०सूत्रे चोक्तम्। अयमर्थः परिणामोऽन्यथाभावः तापः वर्त्तमानः, संस्कारोभूतः एतान्येव दुःखानि तैरिति विग्रहः तथा च विषयसुखभोगात् कामानलो वर्द्धते "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" इति भारतोक्तेः तद्वृद्धौ च सत्यां कदाचित् काम्यालाभे दुःखमवश्यं भावि कदाचिल्लाभेऽपि कुतश्चिद्भोगसङ्कोचे दुःखम् ततः सङ्कोचके द्वेषः ततः कामद्वेषाभ्यां पापस्योपचयात् दुःखमवश्यं भावि। असङ्कोचे व्याधिः पापञ्च ततोदुःखम् एवं भोगस्य परिणामदुःखता। तथा सुखभोगस्य तत्साधनस्य नाशे तापः अनुतापः स च दुःखमेवेति तस्य तापदुःखता। तथा भोगनाशेऽपि तत्संस्कारः तिष्ठत्येव सति तस्मिन् तज्जातीये पुनः रागः रागे च पुण्यापुण्यसाधनावश्यम्भावः ततः पुनः सुखदुःखभोगः ततः पुनः संस्कार इत्यनन्तदुःखसन्ततिः तथा च यथा भोगनाशे न संस्कारो भवेत् तथा यतितव्यमिति अतएवोक्तम् "अशक्तः सुखमन्वभूत्" सर्व्वमेव विषयभोगसाधनं विषयजन्यं सुखं च दुःखपक्षे निक्षेप्तव्यम्। तत्र हेतुः गुणवृत्तिविपर्य्ययादिति गुणानां चित्तात्मना परिणतानां सत्त्वरजस्तमसां वृत्तीनां सुखदुःखमोहानां विरोधात् परस्पराभिभाव्याभिभावकत्वरूपविरोधात् इति। तथा च त्रिगुणचित्तस्य यदा रजस्तमसी सत्त्वात् किञ्चिदूने भवतः तदा ते मिथुनीभूय सत्त्वाभिभवाभिमुखे भवतः। तदानीञ्च तमसा सत्त्वापिधाने कृते रजसैश्वर्यं कामयमानेन विषयः प्रियो भवति तदा तेन सत्त्वाच्छादनेन चित्तं विक्षिप्तं भवति। यदा तु तमः प्रधानं तदा चित्तं मूढं भवति सत्त्वोद्रेके तु सुखम् इत्येवमेकस्यैव चित्तस्य सत्त्वादिकारणोद्रेकभेदेन सुखदुःखादिरूपता।

सुखादिकञ्च अन्तःकरणधर्मः धर्माधर्मफलत्वात् "या-

“शास्त्रविहितं फलमनुष्ठातरीति” न्यायेन कृत्यादीनामन्तःकरण-धर्म्मत्वेन तद्धर्म्मत्वौचित्यात् पुरुषे तु तानि तदविवेकादौ-पाधिकानि “प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः । अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते” गीतोक्तेः प्रकृतिगुणानां वास्तविककर्त्तृत्वसिद्धेः । “तस्मात् संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्त्तृत्वे च तथा कर्त्ता भवत्युदासीन” इति सां॰का॰ राजमहक्तेः अन्तः-करणस्यैव वास्तविककर्त्तृत्वोक्तेश्च क्रियाफलस्य सुखादेरपि तत्सामानाधिकरण्यम् । एतदाशयेनैव “तत्र जरा-मरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः । लिङ्गस्या-विनिवृत्तेस्तस्माद् दुःखं स्वभावेन सां॰का॰ उक्तिः पुरुषे चौपाधिकदुःखस्य सद्भावपरा” । किञ्च अन्तः-करणस्य तावत् सुखादिभिरन्वयव्यतिरेकौ सर्व्वसम्मतौ इत्यन्वयव्यतिरेकाभ्यां सिद्धकारणभावस्य तस्योपादानत्वमेव सांख्यादिभिः कल्प्यते न पुनस्तस्य निमित्तत्वं प्रकल्प्य आत्मनस्तत्र समवायिकारणत्वकल्पनं गौरवपराहतत्वात् निर्गुणत्वादिश्रुतिविरोधाच्च । यद्यपि तस्य स्वाभाविकाकर्त्तृत्वे भोक्तृत्वमस्त्येवेति सांख्या आहुः यथोक्तं सांख्यसूत्रभाष्ययोः “चिदवसानो भोगः” सू॰ । “पुरुषस्वरूपे चैतन्ये पर्य्यवसानं यस्य तादृशो भोगः सिद्धिरित्यर्थः । बुद्धेर्भोगस्य व्यावर्त्तनाय चिदवसान इति । चितः परिणामित्वरूपधर्म्मत्वादि-शङ्कानिरासायावसानपदम् । चितौ भोगस्य स्वरूपे पर्य्यव-सितत्वाच्च कौटस्थ्यादिहानिरित्याशयः । तथाहि प्रमाणा-वृत्त्यारूढं प्रकृतिपुरुषादिकं प्रमेयं वृत्त्या सह पुरुषे प्रतिबिम्बितं सद्भासते । अतोऽर्थोपरक्तवृत्तिप्रतिबिम्बाव-च्छिन्नं स्वरूपचैतन्यमेव भानं पुरुषस्य भोगः प्रमाणस्य च फलमिति । तत्र प्रतिबिम्बरूपेणार्थसम्बन्धे द्वारतया वृत्तीनां करणत्वमिति । तदुक्तं विष्णुपुराणे । “गृही-तानिन्द्रियैरर्थानात्मने यः प्रयच्छति । अन्तःकरणरूपाय तस्मै विश्वात्मने नमः” इति । राज्ञो हि करणवर्गः स्वामिने भोग्यजातं समर्पयतीति दृष्टमिति । भोग-शब्दार्थश्चाभ्यवहरणम् आत्मसात्करणमिति यावत् । स च देहादिचेतनान्तेषु साधारणः । विशेषस्त्वयम् । अपरिणामित्वात् पुरुषस्य विषयभोगः प्रतिबिम्बादान-मात्रम् । अन्येषां तु परिणामित्वात् पुष्ट्यादिरपीति । अयमेव च परिणामरूपः पारमार्थिको भोगः पुरुषे प्रतिषिध्यते “बुद्धेर्भोग इवात्मनीत्यादिभिरिति” मन्तव्यम् । अस्मिन् स्थले पुरुषस्यापि फलव्याप्यता सिद्धा चिद-वसानतया एवात्र भोगत्ववचनादिति ननु कर्त्तुरेव लोके क्रियाफलभोगो दृष्टः । यथा सञ्चरत एव सञ्चारोत्थ-दुःखभोग इति तत् कथं बुद्धिकृतधर्म्मादिफलस्य सुखा-द्यात्मिकाया अर्थोपरक्तबुद्धिवृत्तेर्भोगः पुरुषे घटेतेत्या-शङ्कायामाह । “अकर्त्तुरपि फलोपभोगोऽन्नाद्यवत्” सू॰ । बुद्धिकर्म्मफलस्यापि वृत्तेरुपभोगस्तदकर्त्तुरपि पुरुषस्य युक्तः अन्नाद्यवत् । यथान्यकृतस्यान्नादेरुपभोगो राज्ञो भवति तद्वदित्यर्थः । अविवेकस्य स्वस्वामिभावस्य वा भोगनियामकत्वात् तु नातिप्रसङ्गः । सुखदुःखादेः कर्म्म-फलत्वमभ्युपेत्य बुद्धिगतं कर्म्मफलं पुरुषो भुङ्क्त इत्यु-क्तम् । इदानीं पुरुषगतभोगस्यैव कर्म्मफलत्वं स्वीकृत्य बुद्धिकर्म्मणा पुरुष एव फलमुत्पद्यत इति मुख्यसिद्धान्त-माह । “अविवेकाद्वा तत्सिद्धेः कर्त्तुः फलावगमः” सू॰ । अथवा कर्त्तरि फलमेव न भवति सुखं भुञ्जीयेत्यादि-कामनाभिर्भोगस्यैव फलत्वात् । अतो भोक्तृनिष्ठमेव फलं भवति “शास्त्रविहितं फलमनुष्ठातरीति” शास्त्रेण कर्त्तुः फलावगमस्तु तत्सिद्धेरकर्त्तृनिष्ठाया भोगाख्यसिद्धेः कर्त्तृबुद्ध्यविवेकादित्यर्थः । योऽहं करोमि स एवाहं भुञ्जे इति हि लौकिकानुभव इति । या च सुखं मे भूयादित्यादिकामना सा पुत्रो मे भूयादितिवत् फलसाधनत्वेनैवोपपद्यते । भोगस्तु नान्यस्य साधनम् । अतः स एव फलमिति मुख्यः सिद्धान्तः । भोगस्य पुरुषस्वरूपत्वेऽपि वैशेषिकाणां मते ज्ञानवत् कार्य्यता बोध्या सुखाद्यवच्छिन्नचितेरेव भोगत्वात् । अपि च भोगस्य फलत्वपक्षे दुःखभोगाभाव एवापवर्गो बोध्यः । अथवा भोग्यतारूपस्वत्वसम्बन्धेन सुखदुःखाभावयोरेव फलत्वमस्तु तेन सम्बन्धेन धनादेरिव सुखादेरपि पुरुषनिष्ठ-त्वादिति” प्र॰भा॰युक्तञ्चैतत् “कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्व्वं मन एवेति” श्रुत्या कामादेरन्तःकरण-धर्म्मत्वोक्तेस्तत्फलस्य सुखादेस्तद्-धर्म्मौचित्यात् तेषां मनोधर्म्मत्वमिति सांख्यादीनां मतमेव वेदान्तिनाम् “तद्गुणसारादिति” शा॰सू॰ तत्रैव भाष्यकृता निर्णीतत्वात् । इयांस्तु विशेषः सांख्यैर्विषयेष्वपि त्रिगुण-कार्य्यत्वात् सुखादिकमस्तीति मन्यन्ते यथोक्तम्” सां॰कौमु-द्याम् । “सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति । तेषाञ्च परस्परमभिभाव्याभिभावकभावान्नानात्वम् । तद्यथा एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति तत्

कस्य हेतोः? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीर्दुःखाकरोति तत्कस्य हेतोः? ताः प्रति तस्या दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दत् सैव मोहयति तत्कस्य हेतोः? तत्प्रति तस्या मोहरूपसमुद्भवात्। अनया च स्त्रिया सर्वे भावा व्याख्याताः। तत्र यत् सुखहेतुस्तत् सुखात्मकं सत्त्वं, यत् दुःखहेतुस्तद्दुःखात्मकं रजः, यन्मोहहेतुस्तन्मोहात्मकं तमः, सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सहदर्शनात्। तस्मात् सुखदुःखमोहैरिव विरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते एवं दुःखोपष्टम्भकत्वप्रवर्त्तकत्वैरेवं मोहगुरुत्वावरणैरिति सिद्धं त्रैगुण्यमिति"। सां॰सूत्रे प्र॰ भाष्ये चोक्तम्।

"सुखदुःखमोहधर्म्मिणी बुद्धिः सुखदुःखमोहधर्म्मात्मकद्रव्यजन्या कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदिति कारणगुणानुसारेणैव कार्य्यगुणौचित्यं चात्रानुकूलतर्कः श्रुतिस्मृतयोऽपीति मन्तव्यम्। ननु विषयेषु सुखादिमत्त्वे प्रमाणं नास्ति। अहं सुखीत्याद्येवानुभवात् तत् कथं कान्तादिर्विषयो दृष्टान्त इति चेन्न सुखाद्यात्मकबुद्धिकार्य्यतया स्रक्सुखं चन्दनसुखमित्याद्यनुभवेन च विषयाणामपि सुखादिधर्मकत्वसिद्धेः श्रुतिस्मृतिप्रामाण्याच्च। किञ्च यस्यान्वयव्यतिरेकौ सुखादिना सह दृश्येते तस्यैव सुखाद्युपादानत्वमपरिकल्प्यान्यस्योपादानत्वकल्पने कारणद्वयकल्पनागौरवम्। अपि चान्योऽन्यसंवादेन प्रत्यभिज्ञया च विषयेषु सर्वपुरुषसाधारणस्थिरसुखसिद्धिः। तत्सुखग्रहणायाश्चये वृत्तिनियमादिकल्पनागौरवं च फलमुखत्वान्न दोषावहम्। अन्यथा प्रत्यभिज्ञयावयव्यसिद्धिप्रसङ्गात् तत्कारणादिकल्पनागौरवादिति। विषयेऽपि सुखादिकं च मार्कण्डेये प्रोक्तम्। "तत् सन्ति चेतस्यपरापि देहे सुखानि दुःखानि च किं ममात्र" इति। अहं सुखीत्यादिप्रत्ययस्तु अहं धनीत्यादीप्रत्ययवत् स्वस्वामिभावाख्यसम्बन्धविषयकस्तेषां प्रत्ययानां समवायसम्बन्धविषयकत्वभ्रमनिरासार्थं तु सुखिदुःखिमूढेभ्यः पुरुषो विविच्यते शास्त्रेष्विति। शब्दादिषु च सुखाद्यात्मताव्यवहार एकार्थसमवायात्। अस्तु वा शब्दादिषु साक्षादेव सुखसत्त्वप्रमाणेभ्यः। विषयगतसुखादेव बुद्धिमात्रग्राह्यत्वं फलबलात्। यत् तु विषयासम्प्रयोगकाले शान्तिसुखं सात्त्विकं सुषुप्त्यादौ व्यज्यते तदेव बुद्धिधर्म्म आत्मसुखमुच्यत इति"।

वैशेषिकादयस्तु सुखादिकमात्मन एव धर्म्माः "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा। धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्द्दश" इति भाषा॰ उक्तेः। मनसोऽणुत्वाङ्गीकारेण तेषां तद्गुणत्वे ज्ञानसुखादीनामप्रत्यक्षत्वापत्तेः। प्रत्यक्षे चाश्रयमहत्त्वस्य हेतुत्वात् मनसश्च ज्ञानायौगपद्येनाणुत्वेन महत्त्वाभावादिति युक्तिं प्रदर्श्य श्रुतौ मनोधर्म्मत्ववचनन्तु आयुर्घृतमित्यादिवदौपचारिकमित्यङ्गीचक्रुः। तदेतन्मतमसमीचीनम् एकदा हृदावगाहे सकलदेहव्यापिशैत्योपलब्धेः नृत्यगीताभिनयादेरेकदा श्रवणदर्शनादेर्दर्शनात् मनसोऽणुत्वासिद्धेः श्रौतमनोधर्म्मत्वस्य निमित्तपरत्वकल्पनेऽपि "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं यन्मध्यमं तन्मांसं योऽणिष्ठस्तन्मन" इति छा॰उ॰श्रुत्या "अन्नमयं हि सौम्य! मन" इत्युक्तस्य मनसोऽन्नविकारत्वस्य समर्थनाय प्रवृत्तया बोधितस्य मनसोऽन्नजन्यत्वस्य अन्नभोजनोपचयापचयाभ्यां तद्वृद्धिह्रासावगतेर्नाणुमानता मनस इति आगमविरोधे अनुमानाप्रवृत्तेः अङ्गीकृतञ्च तैरपि शङ्खदृष्टान्तेन प्राण्यङ्गत्वहेतुना नरकपालशुचित्वानुमाने "नारं स्पृष्ट्वास्थि संस्नेहं सचेलं जलमाविशेत्" मनुस्मृत्या बाधादप्रामाण्यमतः प्रकृतेऽपि तथेति। मनसोऽनणुत्वाभिप्रायेणैव "क्रमशोऽक्रमशश्च वृत्तयः" सां॰ सूत्रे मनसोऽनणुत्वनिराशेन युगपद्वृत्तयोऽङ्गीकृताः। तथा सांख्यकारिकाकौमुद्योरुक्तम्। "युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्द्दिष्टा। दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः" का॰ "दृष्टे यथा यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद्व्याघ्रमभिमुखमतिसन्निहितं पश्यति तदा खल्वस्यालोचनसङ्कल्पाभिमानाध्यवसाया युगपदेव प्रादुर्भवन्ति, यतस्तत उत्पत्य तत्स्थानादेकपदेऽपसरति। क्रमशश्च यदा मन्दालोके प्रथमं तावद्वस्तुमात्रं सम्मुग्धमालोचयति अथ प्रणिहितमनाः कर्णान्ताकृष्टसशरः कुञ्चितपादः शिञ्जितज्यामण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोऽयमिति निश्चिनोति अथ च मां प्रत्येतीत्यभिमन्यते अथाध्यवस्यति अपसरामीतः स्थानादिति। परोक्षे तु अन्तःकरणत्रयस्य बाह्येन्द्रियवर्ज्जं वृत्तिरित्याह अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः। अन्तःकरणत्रयस्य युगपत् क्रमेण च वृत्तिर्दृष्टपूर्विकेति। अनुमानागमस्मृतयोहि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्त्तन्ते नान्यथा। यथा दृष्टे तथा, अदृष्टेऽपीति योजना" कौ॰ आकरेऽस्य प्रपञ्चः। तच्च सुखं त्रिविधम्"। यथा

"सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ! ३६ । अभ्यासाद्रमते यत्र दुःखान्तञ्च निगच्छति । यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ३७ । विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् । परिणामे विषमिव तत्सुखं राजसं स्मृतम् ३८ । यदग्रे चानुबन्धे च सुखं मोहनमात्मनः । निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ३९ । न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ४०" गीतोक्तेः । "सुखस्य त्रैविध्यं प्रतिजानीते सुखन्त्विति । स्पष्टोऽर्थः ३६ । तत्र सात्त्विकं सुखमाह अभ्यासादिति सार्द्धेन । यत्र यस्मिन् सुखे अभ्यासाद्रमते न तु विषयसुखइव सहसा रतिं प्राप्नोति यस्मिन् रममाणश्च दुःखस्यान्तमवसानं नितरां गच्छति प्राप्नोति । कीदृशं, यत्तत् किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वाद्दुःखावहमिव भवति परिणामे त्वमृतसदृशं आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसादो रजस्तमोमयत्यागेन स्वच्छतयावस्थानं ततोजातं यत् सुखं तत्सात्त्विकं प्रोक्तं योगिभिः ३७ । राजसं सुखमाह विषयेति । विषयाणामिन्द्रियाणाञ्च संयोगात् यत्तत् प्रसिद्धं स्त्रीसंसर्गादिसुखं अमृतमुपमा यस्य तादृशं भवति । अग्रे प्रथमं परिणामे च विषतुल्यं इहामुत्र च दुःखहेतुत्वात् तत् सुखं राजसं स्मृतम् ३८ । तामसं सुखमाह यदिति । अग्रे च प्रथमक्षणे अनुबन्धे च पश्चादपि यत्सुखमात्मनो मोहकरम् । तदेवाह निद्रा च आलस्यञ्च प्रमादश्च कर्त्तव्यावधानराहित्येन मनोव्यापारमेतेभ्य उत्तिष्ठति यत्सुखं तत्तामसमुदाहृतम् ३९ । अनुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति न तदिति त्रिभिः । एभिः प्रकृतिसंभवैः सत्त्वादिभिर्गुणैर्मुक्तं हीनं सत्त्वं प्राणिजातम् अन्यद्वा यत् स्यात् तत् पृथिव्यां मनुष्यादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः" श्रीधरः ।

वैषयिके सुखदुःखे च इष्टानिष्टविषयेन्द्रियसन्निकर्षजज्ञानात् जायमाने अनुभूयेते क्षणिके च "मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः । आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत !" इति गीतोक्तेः । वैषयिकसुखस्य च क्षणिकत्वात् परिणामादिदुःखरूपत्वाच्च विवेकिभिः त्याज्यत्वमेव "त्याज्यं सुखं विषयसङ्गमजन्म पुंसाम्" इत्युक्तेः प्रागुक्तपातञ्जलसूत्राच्च विषयेन्द्रियसंयोगाज्जातन्तु सुखं राजसं प्रागुक्तगीतावाक्यात् । तत्र विषयाश्च शब्दस्पर्शरूपरसगन्धाः यथायथं तद्भिन्नश्च तत्र शब्दविशेषरूपगीतादिषु श्रवणेन्द्रियसंबद्धेषु यत् सुखं तत् वैषयिकमेव किन्तु आत्मोपासनाङ्गत्वेन गीतादिकमपि चित्तैकाग्रतासम्पादनद्वारा मोक्षसाधनं भवति तदुक्तं या० स्मृतौ मिताक्षरायाञ्च ।

"यस्य पुनश्चित्तवृत्तिर्निराकारालम्बनतया समाधौ नाभिरमते तेन शब्दब्रह्मोपासनं कार्य्यमित्याह । 'यथाविधानेन पठन् सामगानमविच्युतम् । सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति' या० 'स्वाध्यायावगतमार्गानतिक्रमेण सामगानं साम्नोगानात्मकत्वेऽपि गानमिति विशेषणम् अगीतमन्त्रव्युदासार्थम् । अविच्युतमस्खलितम् । सावधानः सामध्वन्यनुस्यूतात्मैकाग्र्यचित्तवृत्तिः पठन् तदभ्यासवशात्तत्र निष्णातः शब्दाकारब्रह्मण उपासने परब्रह्माधिगच्छति । तदुक्तम् । "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति" । यस्य पुनर्वैदिक्याङ्गीतौ चित्तं नाभिरमते तेन लौकिकगीतानुस्यूतात्मोपासनङ्कार्य्यमित्याह । 'अपरान्तकमुल्लोप्यं मद्रकम्प्रकरीन्तथा । औवेणकं सरोविन्दुमुत्तरङ्गीतकानि च । ऋग्गाथापाणिकादक्षविहिता ब्रह्मगीतिका । गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम्' या० । अपरान्तकोल्लोप्यमद्रकप्रकर्य्यौवेणकसरोविन्दुसहितमुत्तरमित्येतानि प्रकरणाख्यानि सप्त गीतकानि । चशब्दादासारितवर्द्धमानकादिमहागीतकानि गृह्यन्ते । गाथाद्याश्चतस्रोगीतिका गृह्यन्ते । ऋग्गाथाद्याश्चतस्रोगीतिकाश्चैतदपरान्तकादिगीतजातमध्यारोपितात्मभावमोक्षसाधनत्वान्मोक्षसंज्ञितं मन्तव्यम् तदभ्यासस्यैकाग्रतापादनद्वारेणात्मैकतापत्तिकारणत्वात् । किञ्च । 'वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः । तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति' या० । भरतमुनिप्रतिपादितवीणावादनतत्त्ववेदी श्रूयत इति श्रुतिर्द्वाविंशतिविधा सप्तस्वरेषु । तथा हि षड्जमध्यमपञ्चमाः प्रत्येकं चतुःश्रुतय ऋषभधैवतौ प्रत्येकन्त्रिश्रुती । गान्धारनिषादौ प्रत्येकं द्विश्रुती इति । जातयस्तु षड्जादयः सप्त शुद्धाः सङ्करजातयश्च कादगेत्येवमष्टादशविधास्तासु विशारदः प्रवीणः ताल इति गीतप्रमाणमुच्यते तत्स्वरूपज्ञश्च तदनुविद्धब्रह्मोपासनतया तालादिभङ्गभयाच्चित्तवृत्तेरात्मैकाग्रतायाः सुकरत्वादल्पायासेनैव मुक्तिपथं नियच्छति प्राप्नोति । चित्तविक्षेपाद्यन्तारायोपेतस्य गीतज्ञस्य फलान्तरमाह । "गीतज्ञोयदि योगेन नाप्नोति परमम्पदम् ।

रुद्रस्यानुचरोभूत्वा सह तेनैव मोदते" या०। गीतज्ञोयदि-कथञ्चिद्योगेन परमम्पदम् प्राप्नोति। तर्हि रुद्रस्य सचिवोभूत्वा तेनैव सह मोदते क्रीडति"मिता०। विवृतिर्गानशब्दे।

सुखं दुःखञ्च न प्रतिनियतविषयजन्यं व्यक्तिभेदेन कालभेदेन देशादिभेदेन च सुखहेतोरपि दुःखहेतुत्वं दुःखहेतोरपि सुखहेतुत्वम्। तथा हि खलादिं प्रति साधुभिरुक्तस्य विनयवाक्यस्यापि तं प्रति दुःखहेतुत्वं कथमन्यथा तस्य श्रवणात् खलादेरहितकर्म्मणि प्रवृत्तिः स्यात् एवं वैरिणं प्रत्यपि सामवादस्य दुःखहेतुत्वम् एतदाशयेनैव "सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः" इति माघे वर्णितम्। तथा चन्द्रकिरणनलिनभ्रमरध्वन्यादेरन्यत्र सुखकरस्यापि विरहिणं प्रति दुःखहेतुत्वम्,। एवं दुःखहेतोर्विष्ठाहारादेरपि शूकरं प्रति सुखकरत्वम् इति तत्र न वस्तु नियमः। अतएवोक्तम् "विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया। हिमसेकविपत्तिरत्र मे नलिनी पूर्व्वनिदर्शनं मता" रघुः एवं कालभेदेऽपि सुखदुःखकरयोर्विपर्य्ययः यथा शीतकाले दुःखहेतोः ग्रीष्मे सुखहेतुत्वम् एवमग्न्यादितापस्य शीतकाले सुखकरस्य ग्रीष्मे दुःखकरत्वम् एवं देशभेदेऽपि यथा तिन्तिड्यादेरन्यत्र सेवने रोगादि दुःखदत्वं खारदेशे तु सुखकरत्वम् अतएवोक्तं "किमाश्चर्य्यं खारदेशे प्राणदा यमदूतिकेति" यथा च वस्तुमात्रस्य त्रिगुणात्मकत्वात् व्यक्तिभेदेन कालादिभेदेन च सत्त्वरजस्तमसां समुद्रेकात् विपर्य्ययरूपतापत्तिः तथा प्रागुक्तसांख्यतत्त्वकौमुदीवाक्ये स्पष्टैव। अत एव रसादौ लोकसिद्धकारणविपर्य्ययः" सा०द०उक्तः यथा "हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्। शोकहर्षादयो लोके जायन्तां नाम लौकिकाः। अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्। सुखं सञ्जायते तेभ्यः सर्व्वेभ्योऽपीति का क्षतिः। ये खलु रामवनवासादयो लोके दुःखकारणानि इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं विहायालौकिकविभावशब्दवाच्यत्वं भजन्ते। तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते। अतश्च लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते इति लोक एव प्रतिनियमः। काव्ये पुनः "सर्व्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते" इति नियमान्न कश्चिद्दोषः। कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते। अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः"।

वैषयिकसुखेषु काव्यादिरसास्वादसुखमतीवचमत्काराधायकतया ब्रह्मानन्दतुल्यमित्यालङ्कारिका मन्यन्ते यथोक्तम्" सा०द०। "सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः। वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः। लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः। स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः। रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते। इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्म्मः सत्त्वं तस्योद्रेकः रजस्तमसी अभिभूयाविर्भावः। अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम्। अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्र हेतुं वक्ष्यामः। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्यायः"। "रसे सारश्चमत्कारः सर्व्वत्राप्यनुभूयते। तच्चमत्कारसारत्वे सर्व्वत्राप्यद्भुतो रसः"। "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिमिति"। यद्यपि "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वमुक्तं तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्म्मकर्त्तरि वा प्रयोगः। तदुक्तम्। "रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रस" इति च। "आनन्दजाश्रुभिरनुश्रियमाणमार्गान्" "स तमानन्दमविन्दत द्विज" इति च नैषधम् एवं तत्रत्यसर्व्वसर्गेषु उपान्त्यश्लोकेषु उदा०। "आनन्दाद्ध्येव प्रजाः प्रजायन्ते आनन्देन जीवन्ति आनन्दे प्रविलीयन्ते" इति श्रुतिः। ५विष्णौ। "आनन्दोनन्दनोनन्द" विष्णुस०। ६आदिगुरौ त्रिकले दगणे ७अङ्कुशैर्गणैः रचिते दण्डकच्छन्दोभेदे। आनन्दयति आ+नदि-णिच्-अच्। ८आनन्दकरे त्रि०। षष्टिसंवत्सरमध्ये अष्टाचत्वारिंशे ९वर्षभेदे पु०। "निष्पत्तिः सर्व्वशस्यानां सर्व्वशस्यमहार्घता। हन्तं तेवं समं याति आनन्दे नन्दिनी प्रजा" ज्योति०तत्त्वधृतम्। १०मद्ये न०। ११स्कन्धभेदे च तल्लक्षणं स्कन्धशब्दे वक्ष्यते। १२विष्णुगणभेदे पु०।

**आनन्दकानन** न० आनन्दहेतुः काननम्। अविमुक्ते काशीक्षेत्रे आनन्दवनादयोऽप्यत्र। तस्यानन्दवननामनिरुक्तिः काशीखण्डे २६ अ० दर्शिता यथा अविमुक्तप्रस्तावे। "अस्यानन्दवनं नाम पुराऽकारि पिनाकिना। क्षेत्रस्यानन्दहेतुत्वादविमुक्तमनन्तरम्। आनन्दकन्दवीजानामङ्कुराणि यतस्ततः। ज्ञेयानि सर्व्वलिङ्गानि तस्मि-

आनन्दकानने"। तस्य चानन्दहेतुत्वं तत्र मरणेन तत्त्वज्ञानसम्पादनद्वारा ब्रह्मस्वरूपानन्दप्राप्तिहेतुत्वात् यथोक्तं जाबालोपनिषदि अविमुक्तं प्रकृत्य "तत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूय मोक्षी भवति"।

**आनन्दज** त्रि० आनन्दात् जायते जन–ड ५त०। आनन्दजातेऽश्रुपातादौ सत्त्वगुणोद्रेके हि चेतसो द्रुतत्वात् नेत्रादिद्वारेण तत्प्रेरितस्य जलबिन्दोः क्षरणं भवति यथोक्तम् सा०द० "अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः" "आनन्दजाश्रुभिरनुस्रियमाणमार्गान्" नैष०।

**आनन्दथु** पु० आ+नदि–भावे अथुच्। आनन्दे सुखे नन्दथुरप्यत्र "यस्यासौ तस्य नन्दथुः" भट्टिः।

**आनन्ददत्त** पु० आनन्दो दत्तो येन। मेहने शब्दचि० मेहनाद्धि प्रचुरानन्दो भवतीति तस्य तथात्वम्।

**आनन्दन** न० आनन्द्यतेऽनेन आ+नदि–णिच् करणे ल्युट्। यातायातकाले मित्रादेः १आरोग्यस्वागतादिप्रश्ने २तात्कालिकालिङ्गने च। भावे ल्युट्। ३सुखजनने।

**आनन्दपट** पु० आनन्दजनकः पटः। नवोढावस्त्रे हारा०।

**आनन्दपूर्ण** पु० आनन्देन पूर्णस्तृप्तः। सदाप्तकामत्वेन काम्यान्तराभावात् परितृप्ते परमात्मनि। २अतिशयितानन्दयुक्ते त्रि०॥ आनन्दप्रचुरादयोऽप्युभयत्र। नैयायिकादिमते तु आनन्देन दुःखाभावेन पूर्णः अपरिच्छिन्नतया विभुत्वात् इति इति भेदः।

**आनन्दप्रभव** पु० आनन्दः प्रभवः प्रभवापादनं यस्य। १वीर्य्ये रेतसि तस्य सात्त्विकानन्दोदयादेव प्रवृत्तेस्तथात्वम्। २भूतादिप्रपञ्चे "आनन्दाद्ध्येव प्रजाः प्रजायन्ते आनन्देन जीवन्ति आनन्दे प्रविलीयन्ते" इति श्रुत्या भूतानां ब्रह्मस्वरूपानन्दभवत्वात् तथात्वम्।

**आनन्दभुज्** पु० आनन्दं भुङ्क्ते भुज–क्विप्। सुषुप्त्यवस्थापन्ने प्राज्ञे जीवभेदे "आनन्दभुक् चेतोमुखः प्राज्ञः" इति श्रुतिः यथा लोके आयासशून्यः सुखी आनन्दभुगुच्यते तथा सुषुप्तोऽपि सर्व्वायासशून्यतया आनन्दभुगित्युच्यते।

**आनन्दभैरव** पु० कर्म०। शिवमूर्त्तिभेदे तस्य पत्नी ङीप्। प्रकृतिस्वरूपायां परदेवतायाम् तत्पत्न्यां स्त्री अनयोरेव रुद्रयामले प्रश्नप्रतिवचनकर्त्तृत्वम्।

**आनन्दमय** पु० आनन्दः प्रचुरोऽस्य प्राचुर्य्ये मयट्। प्रचुरानन्दस्वरूपे परमात्मनि "आनन्दमयोऽभ्यासात्" शा०सू०। यथा च आनन्दप्रचुरत्वात् तस्य आनन्दमयत्वं तथा तद्भाष्ये निर्णीतम् यथा "तैत्तिरीयकेऽन्नमयं मनोमयं विज्ञानमयं चानुक्रम्याम्नायते "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय" इति तत्र संशयः किमिहानन्दमयशब्देन पर एवात्मोच्यते यत्प्रकृतं "सत्यं ज्ञानमनन्तं ब्रह्मेति" किं वान्नमयादिवत् ब्रह्मणोऽर्थान्तरमिति। किन्तावत्प्राप्तं ब्रह्मणोऽर्थान्तरममुख्य आत्मानन्दमयः स्यात्कस्मात्? अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वात्। अथापि स्यात्सर्वान्तरत्वादानन्दमयो मुख्य एवात्मेति, न स्यात्प्रियाद्यवयवयोगाच्छारीरत्वश्रवणाच्च। मुख्यश्चेदात्मा स्यात् न प्रियादिसंस्पर्शः स्यात् इह तु "तस्य प्रियमेव शिर" इत्यादि श्रूयते। शारीरत्वञ्च श्रूयते। "तस्यैष एव शारीर आत्मा यः पूर्वस्येति"। तस्य पूर्वस्य विज्ञानमयस्यैष एव शारीर आत्मा य एष आनन्दमय इत्यर्थः। न च सशरीरस्य सतः प्रियाप्रियसंस्पर्शो वारयितुं शक्यः। तस्मात् संसार्य्येवानन्दमय आत्मा इत्येवं प्राप्ते इदमुच्यते। पर एव आनन्दमयो भवितुमर्हति कुतः? अभ्यासात्परस्मिन्नेव ह्यात्मन्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते आनन्दमयं प्रस्तुत्य "रसो वै स" इति तस्यैव रसत्वमुक्त्वोच्यते "रसं ह्येवायं लब्ध्वानन्दी भवति को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यादेष ह्येवानन्दयाति सैषानन्दस्य मीमांसा भवति"। "एतमानन्दमयमात्मानमुपसंक्रामति" "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" "आनन्दो ब्रह्मेति व्यजानादिति" च। श्रुत्यन्तरे च "विज्ञानमानन्दं ब्रह्मेति" ब्रह्मण्येवानन्दशब्दो दृष्टः। एवमानन्दशब्दस्य बहुकृत्वो ब्रह्मण्यभ्यासादानन्दमय आत्मा ब्रह्मेति गम्यते। यत्तूक्तम् अन्नमयाद्यमुख्यात्मप्रवाहपतितत्वादानन्दमयस्याप्यमुख्यात्मत्वमिति। नासौ दोषः आनन्दमयस्य सर्वान्तरत्वात्। मुख्यमेव ह्यात्मानमुपदिदिक्षु शास्त्रं लोकबुद्धिमनुसरदन्नमयं शरीरमनात्मानमत्यन्तमूढानामात्मत्वेन प्रसिद्धमनूद्य मूषानिषिक्तद्रुतताम्रादिप्रतिमावत् ततोऽन्तरमन्तरं पूर्वेण पूर्वेण समानमुत्तरमुत्तरमनात्मानमात्मेति ग्राहयत् प्रतिपत्तिसौकर्य्यापेक्षया सर्वान्तरं मुख्यमानन्दमयमात्मानमुपदिदेशेति श्लिष्टतरम्। यथारुन्धतीनिदर्शने बह्वीष्वपि तारास्वमुख्यास्वरुन्धतीषु दर्शितासु यान्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति एवमिहाप्यानन्दमयस्य सर्वान्तरत्वान्मुख्यमात्मत्वम्। यत्तु ब्रूषे प्रियादीनां शिरस्त्वादिकल्पनानुपपन्ना मुख्यस्यात्मन इति अतीतानन्तरोपाधिजनिता सा न स्वाभाविकीत्य-

दोषः। शारीरत्वमप्यानन्दमयस्यान्नमयादिशरीरपरम्परया प्रदर्श्यमानत्वात् न पुनः साक्षादेव सशरीरत्वं संसारिवद्‌ तस्मादानन्दमयः पर एवात्मा। "विकारशब्दान्नेति चेन्न प्राचुर्य्यात्" सू०। अत्राह नानन्दमयः परात्मा भवितुमर्हति कस्मात्? विकारशब्दात्। प्रकृतिवचनादयमन्यः शब्दो विकारवचनः समधिगत आनन्दमय इति मयटोविकारार्थत्वात् तस्मादन्नमयादिशब्दवद्विकारविषय एवायमानन्दमयशब्द इति चेन्न प्राचुर्य्यार्थेऽपि मयटः स्मरणात् "तत्प्रकृतवचने मयडिति" (पा०) प्रचुरतायामपि हि मयट् स्मर्य्यते। यथान्नमयो यज्ञ इति अन्नप्रचुर उच्यते। आनन्दप्रचुरत्वञ्च ब्रह्मणः मनुष्यत्वादारभ्योत्तरस्मिन्नुत्तरस्मिन् स्थाने शतगुण आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणात् तस्मात्प्राचुर्य्यार्थे मयट्। "तद्धेतुव्यपदेशाच्च" सू०। इतश्च प्राचुर्य्यार्थे मयट् यस्मादानन्दहेतुत्वं ब्रह्मणोव्यपदिशति श्रुतिः "एष ह्येवानन्दयातीति"। आनन्दयतीत्यर्थः। योहि अन्यानानन्दयति स प्रचुरानन्द इति प्रसिद्धं भवति यथा लोके योऽन्येषां धनित्वमापादयति स प्रचुरधन इति गम्यते तद्वत्। तस्मात्प्राचुर्य्यार्थेऽपि मयटः सम्भवादानन्दमयः परएव आत्मा। "मान्त्रवर्णिकमेव च गीयते" सू०। इतश्चानन्दमयः परएवात्मा यस्मात् "ब्रह्मविदाप्नोति परम्" इत्युपक्रम्य हि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यस्मिन्मन्त्रे यद्‌ब्रह्म प्रकृतं सत्यज्ञानानन्तविशेषणैर्निर्धारितं, यस्मादाकाशादिक्रमेण स्थावरजङ्गमानि भूतान्यजायन्त, यच्च भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थितं सर्वान्तरं, यस्य विज्ञानायाऽन्योऽन्तर आत्मेति प्रक्रान्तं, तन्मान्त्रवर्णिकमेव ब्रह्मेह गीयते "योऽन्योऽन्तर आत्मानन्दमय" इति। मन्त्रब्राह्मणयोश्चैकार्थत्वं युक्तम् अविरोधात्। अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्यातां, न चान्नमयादिभ्य इवानन्दमयादन्योन्तर आत्माऽभिधीयते एतन्निष्ठैव च सैषा भार्गवी वारुणी विद्या "आनन्दो ब्रह्मेतिव्यजानादिति"। तस्मादानन्दमयः परएवात्मा" शा०भा०।

२आनन्दप्रचुरे त्रि०सर्व्वासामनूम्यसुषुप्त्यवस्थापन्ने ३आनन्दमयकोषाभिमानिनि जीवे च। "काचिदन्तर्मुखा वृत्तिरानन्दप्रतिबिम्बभाक्। पुण्यभोगे भोगशान्तौ निद्रारूपेण जायते। कादाचित्कीत्वतोनात्मा स्यादानन्दमयोऽप्ययम्। बिम्बभूतोय आनन्द आत्मासौ सर्व्वदा स्थितः" पञ्चद०। उक्तेः जीवस्य पारमार्थिकानन्दरूपपरात्मस्वरूपत्वेऽपि सुषुप्तौ तस्य स्फुरणेऽपि च स्वल्पकालिकत्वात् ब्रह्मानन्दवैलक्षण्यम्। स्त्रियां ङीप्। सा च ४दुर्गामूर्त्तिभेदे स्त्री०।

**आनन्दमयकोष** पु० आनन्दमयस्य परमात्मनः कोष इवावरकः। वेदान्तिमतसिद्धपञ्चकोषमध्ये पञ्चमे कोषे अविद्यास्वरूपे कारणशरीरे। आनन्दमयकोषस्वरूपादिकमुक्तं विवे० चू०।

"आनन्दप्रतिबिम्बचुम्बिततनुर्वृत्तिस्तमोजृम्भिता स्यादानन्दमयः प्रियादिगुणकः स्वेष्टार्थलाभोदयः। पुण्यस्यानुभवे विभाति कृतिनामानन्दरूपः स्वयं भूत्वानन्दति यत्र साधुतनुभृन्मात्रः प्रयत्नं विना। आनन्दमयकोषस्य सुषुप्तौ स्फूर्त्तिरुत्कटा। स्वप्नजागरयोरीषदिष्टसन्दर्शनादिना। नैवायमानन्दमयः परात्मा सोपाधिकत्वात् प्रकृतेर्विकारात्। कार्य्यत्वहेतोः सुकृतक्रियायां विकारसङ्घातसमाहितत्वात्। पञ्चानामपि कोषाणां निषेधे युक्तितः श्रुतेः। तन्निषेधावधिः साक्षी बोधरूपोऽवशिष्यते। योऽयमात्मा स्वयंज्योतिः पञ्चकोषविलक्षणः। अवस्थात्रयसाक्षी सन् निर्व्विकारो निरञ्जनः। सदानन्दः स विज्ञेयः स्वात्मत्वेन विपश्चिता"।

आनन्दमयशब्देऽधिकमुक्तम्। "गुहाहितं ब्रह्म यत्तत् पञ्चकोषविवेकतः। बोद्धुं शक्यं ततः कोषपञ्चकं प्रविविच्यताम्। देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरं मनः। ततः कर्त्ता ततोभोक्ता गुहा सेयं परम्परा" पञ्चद०।

**आनन्दसम्भव** पु० आनन्दस्य ब्रह्मानन्दस्य सम्भवः प्रकाशः। तत्त्वज्ञानप्रयोज्ये ब्रह्मानन्दस्फुरणे। "आनन्दसम्भवे लीनोनापश्यत्तुभयं मुने!" पुरा०। सम्भवत्यस्मात् अपादानेऽप् आनन्दः सम्भवोऽस्य। २भूतादौ त्रि० आनन्दप्रभवशब्दे विवृतिः।

**आनन्दा** स्त्री आनन्दयति सेवनात् आ+नदि–णिच्–अच्। विजयायाम् (सिद्धि) राजनि०।

**आनन्दार्णव** पु०आनन्दः अर्णव इव असीमत्वात्। ब्रह्मानन्दे अखण्डानन्दरूपत्वादपरिच्छिन्नत्वाच्चास्य तथात्वम्। प्रमोदार्णवादयोऽप्यत्र। "ब्रह्म प्रमोदार्णवमिति" नैष०।

**आनन्दि** पु०आ+नदि–इन्। १हर्षे "कौशल्यानन्दिवर्द्धनोराम" इति रामायणम्। २कौतुके च।

**आनन्दित** त्रि०आ+नदि–क्त। १हर्षयुक्ते हर्षिणि, आ+नदि–णिच्–क्त। यस्यानन्दो जनितस्तस्मिन् २अभिनन्दिते त्रि०।

**आनन्दिन्** त्रि० आ+नदि–णिनि। १आनन्दयुक्ते णिच्–

णिनि । २आनन्दकारके त्रि० उभयत्र स्त्रियां ङीप् ।

**आनन्दी** स्त्री आनन्दयति आ+नदि–णिच्–अच्–गौरा० ङीष् (आकन्द पाता) वृक्षभेदे शब्दच० ।

**आनमन** न० आनम्यते वशीक्रियतेऽनेन करणे ल्युट् । मन्त्रोपायानुगम्यादौ १आनतौ । भावे ल्युट् । २सम्यग्नमने । णिच्+ल्युट् । नम्रतापादके ३व्यापारे ।

**आनमित** त्रि० आ+नम–णिच्–क्त । आवर्जिते आनतीकृते अनुकूलीकृते ।

**आनम्य** त्रि० आ+नम–णिच्–कर्म्मणि यत् । १नम्रीकार्य्ये आ+नम–ल्यप् । २नमस्कृत्यर्थे अव्य० वा मलोपे तुकि आनत्येत्यप्यत्र अव्य० ।

**आनय** पु० आ+नी–भावे अच् । देशात् देशान्तरनयने । आनीयते वेदाद्यध्ययनायात्र आधारे अच् । उपनयनसंस्कारे हेम० । भावे ल्युट् । आनयनमप्युभयत्र न० ।

**आनर्त्त** पु० आनृत्यन्त्यत्र आधारे घञ् । १नृत्यशालायां २युद्धे च तत्र हि वीरैर्हर्षात् नृत्यमिव क्रियते इति तस्य तथात्वम् । ३सूर्य्यवंश्ये राजभेदे "मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः । इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्य्यातिरेव च" इत्युपक्रम्य "शर्य्यातेर्मिथुनं त्वासीदानर्त्तोनाम विश्रुतः । पुत्रः, कन्या सुकन्याख्या या पत्नी च्यवनस्य ह । आनर्त्तस्य तु दायादोरेवोनाम महाद्युतिः । आनर्त्तविषयश्चासीत् पुरी चास्य कुशस्थली । रेवस्य रैवतः पुत्रः ककुद्मीनाम धार्म्मिकः । ज्येष्ठः पुत्रशतस्यासीद्राज्यं प्राप्य कुशस्थलीम् । स कन्यासहितं श्रुत्वा गान्धर्वं ब्रह्मणोऽन्तिके । मुहूर्त्तभूतं देवस्य गतं बहुयुगं प्रभो ! । आजगाम जुवैर्वाथ स्वां पुरीं यादवैर्वृताम् । कृतां द्वारवतीं नाम्ना बहुद्वाराङ्कतोरणाम् । भोजवृष्ण्यन्धकैर्गुप्तां वासुदेवपुरोगमैः । ततस्तद्रैवतोज्ञात्वा यथातत्त्वमरिन्दम ! । कन्यां तां बलदेवाय सुव्रतां नाम रेवतीम् । दत्त्वा जगाम शिखरं मेरोस्तपसि संशितः" हरिवं०१०अ० । तत्कृते ४देशभेदे आनर्त्तनामकसूर्य्यवंश्यकृतत्वात्तस्य देशस्य आनर्त्तनामत्वम् । तत्रैव देशे च इक्ष्वाकुपुत्रहर्य्यश्वस्य पश्चात् राज्यमासीत् यथोक्तम्

"आनर्त्तो नाम ते राष्ट्रं भविष्यत्यायतं महत् । तद्विष्यमहं मन्ये कालयोगेन पार्थिव ! । अध्यास्स्यतां यथाकालं पार्थिवं वृत्तमुत्तमम् । यायातमपि वंशस्ते समेष्यति च यादवम् । अनुवंशस्तु वंशस्ते सोमस्य भविता किल । एष मे विभवस्तात तमेतं विषयोत्तमम् । दत्त्वा यास्यामि तपसे सागरं वरुणालयम् । तपसेन समायुक्तस्त्वमिमं विषयोत्तमम् । पालयस्वाखिलं तात ! स्वस्य वंशस्य वृद्धये । वाढमित्येव हर्य्यश्वः प्रतिजग्राह तत्पुरम् । स च दैत्यस्तपोवासं जगाम वरुणालयम् । हर्य्यश्वश्च महातेजा दिव्ये गिरिवरोत्तमे । निवेशयामास पुरं वासार्थममरोपमः । आनर्त्तं नाम तद्राष्ट्रं सुराष्ट्रं गोधनायुतम् । अचिरेणैव कालेन समृद्धं प्रत्यपद्यत । अनूपविषयश्चैव वेलावनविभूषितम् । निविष्टं क्षेत्रसस्याढ्यं प्राकारग्रामसंकुलम् । शशास स नृपः स्फीतं तद्राष्ट्रं राष्ट्रवर्द्धनः" ९४अ० । अत्र च समुद्रवेलादिकं तच्छोभादिकमुक्तम् । ५तद्देशवासिजनेषु ६तद्राजेषु च ७चन्द्रवंश्ये राजभेदे पु० । "वर्षकेतोस्तु दायादो विभुर्नाम प्रजेश्वरः । आनर्त्तस्तु विभोः पुत्रो सुकुमारस्ततोऽभवत्" हरिवं० ३२ । तत्र तद्देश राजपरत्वे "आनर्त्तान् कालकूटांश्च कुलिन्दांश्च विजित्य सः" भा०स०२४अ० । देशवासिपरत्वे । "उक्तवांश्च महाबाहो ! कासौ वृष्णिकुलाधम : । वासुदेवः स मन्दात्मा वसुदेवसुतो गतः । तस्य युद्धार्थिनोदर्पं युद्धे नाशयिताऽस्म्यहम् । आनर्त्ताः ! सत्यमाख्यात तत्र गन्ताऽस्मि यत्र सः" इति आनर्त्तवासिनः प्रति शाल्ववाक्यम् देशपरत्वे । "आनर्त्तेषु विमर्द्दश्च क्षेपश्चात्मनि कौरव ! इति भा०व० १४ अ० "आनर्त्तमेवाभिमुखाः शिवेन गत्वा धनुर्वेदरतिप्रधानाः" भा०व० १८३ अ० । कृत्तिकादिभिस्त्रिभिस्त्रिभिर्नक्षत्रैः क्रूरग्रहपीड़ितैः क्रमेण देशविशेषराजाद्यशुभस्य वृ०सं० प्रतिपादनात् स्वात्यादिभिस्त्रिभिर्नक्षत्रैः क्रूरपीड़ितैस्तद्देशनृपस्याशुभं भवति यथा वृ०स० कूर्म्मवि० । "वर्गैराग्नेयाद्यैः क्रूरग्रहपीड़ितैः क्रमेण नृपाः । पाञ्चालोमागधिकः कालिङ्गश्च क्षयं यान्ति । आवन्तोऽथानर्त्तो मृत्युं चायाति सिन्धुसौविरः । राजा च हारहौरोमद्रेशोऽन्यश्च कौणेन्द्रः" । आनृत्यतीति कर्त्तरि अच् । ८जले न० तस्य तरङ्गरूपेण नृत्यस्येव करणात्तथात्वम् ९नर्त्तके त्रि० भावे घञ् । १०नर्त्तने पु० ।

**आनर्त्तक** त्रि० आनर्त्तदेशे भवः धूमा० वुञ् । १आनर्त्तदेशभवे । आनृत्यति आ+नृत–ण्वुल् । २समन्तान्नर्त्तके त्रि० ।

[पुर्य्याम् ।

**आनर्त्तपुर** न० आनर्त्तदेशस्य प्रधानं पुरम् । द्वारवत्याम्

**आनर्त्तीय** त्रि० आनर्त्तदेशे भवः वृद्धत्वात् छ । आनर्त्तदेशभवे ।

**आनर्थक्य** न० अनर्थस्य भावः ष्यञ् । १निष्प्रयोज-

न्ते प्रयोजनाभावे। "तुल्यानर्थक्यमिति चेत्" कात्या० ७१,८,५, "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" जै०सू०। अनेन क्रियाप्रतिपादकभिन्नवेदभागानामानर्थक्योक्तेः वेदान्तवाक्यानां न स्वार्थे प्रामाण्यं सप्तद्वीपा वसुमतीत्यादिवाक्यवत् तेषां भूतार्थोपदेशकत्वात् तथा च उपासनाविधिविशेषतयैव तेषां प्रामाण्यम् इति मीमांसका मन्यन्ते। तदेतन्मतम् पूर्व्वपक्षत्वेनोपन्यस्य "तत्तु समन्वयादिति" शारीरकसूत्रभाष्ये निराकृतं यथा "यद्यपि शास्त्रप्रमाणकं ब्रह्म तथापि प्रतिपत्तिविधिविषयतयैव शास्त्रेण ब्रह्म समर्प्यते। यथा यूपाहवनीयादीन्यलौकिकान्यपि विधिविशेषतया समर्प्यन्ते तद्वत्। प्रवृत्तिनिवृत्तिप्रयोजनत्वाच्छास्त्रस्य। तथा हि शास्त्रतात्पर्य्यविद आहुः। "दृष्टो हि तस्यार्थः। कर्मावबोधनञ्चोदनेति क्रियायाः प्रवर्त्तकं वचनम्। तस्य ज्ञानमुपदेशः। तद्भूतानां क्रियार्थेन समाम्नायः"। "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति च"। अतः पुरुषं क्वचिद्विषयविशेषे प्रवर्त्तयत् कुतश्चिद्विषयविशेषान्निवर्त्तयच्चार्थवच्छास्त्रम्। तच्छेषतया चान्यदुपयुक्तम्। तत्सामान्याद्वेदान्तानामपि तथैवार्थवत्त्वं स्यात्। सति च विधिपरत्वे यथा स्वर्गादिकामस्याग्निहोत्रादि साधनं विधीयते एवममृतत्वकामस्य ब्रह्मज्ञानं विधीयत इति युक्तम्। नन्विह जिज्ञास्यवैलक्षण्यमुक्तम्। कर्मकाण्डे भव्यो धर्मो जिज्ञास्यः इह तु भूतं नित्यवृत्तं ब्रह्म जिज्ञास्यमिति। तत्र धर्म्मज्ञानफलादनुष्ठानापेक्षाद्विलक्षणं ब्रह्मज्ञानफलं भवितुमर्हति। नार्हत्येवं भवितुम्। कार्यविधिप्रयुक्तस्यैव ब्रह्मणः प्रतिपाद्यमानत्वात्। "आत्मा वा अरे द्रष्टव्यः" "योऽयमात्माऽपहतपाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः"। "आत्मेत्येवोपासीत"। "आत्मानमेव लोकमुपासीत" "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिषु हि विधानेषु सत्सु कोऽसावात्मा ब्रह्मेत्याकाङ्क्षायां तत्स्वरूपसमर्पणेन सर्वे वेदान्ता उपयुक्ताः नित्यः सर्वज्ञः सर्व्वगतो नित्यतृप्तो नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानानन्दं ब्रह्मेत्येवमादयः। तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यति। कर्त्तव्यविध्यननुप्रवेशेन वस्तुमात्रकथने हानोपादानासम्भवात् "सप्तद्वीपा वसुमती" "राजासौ गच्छति" इत्यादि वाक्यवद्वेदान्तवाक्यानामानर्थक्यमेव स्यात्। ननु वस्तुमात्रकथनेऽपि रज्जुरियं सर्प इत्यादौ भ्रान्तिजनितभीतिनिवर्त्तनेनार्थवत्त्वं दृष्टं तथेहाप्यसंसार्यात्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्त्तनेनार्थवत्त्वं स्यात्। स्यादेवं यदि रज्जुस्वरूपश्रवणइव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्त्तेत न तु निवर्त्तते श्रुतब्रह्मणोऽपि यथापूर्व्वं सुखदुःखादिसंसारित्वधर्म्मदर्शनात्। "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति च श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्दर्शनात्। तस्मात्प्रतिपत्तिविधिविषयतयैव शास्त्रप्रमाणकं ब्रह्माऽभ्युपगन्तव्यमिति"(पूर्व्वपक्षः)। "यदपि शास्त्रतात्पर्य्यविदामनुक्रमणम्। दृष्टो हि तस्यार्थः कर्मावबोधनमित्येवमादि। तत् धर्मजिज्ञासाविषयत्वाद्विधिप्रतिषेधशास्त्राभिप्रायं द्रष्टव्यम्। अपि च "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्येतदेकान्तेनाभ्युपगच्छतां भूतोपदेशानामानर्थक्यप्रसङ्गः। प्रवृत्तिनिवृत्तिव्यतिरेकेण भूतञ्चेत् वस्तूपदिशति भव्यार्थत्वेन, कूटस्थं नित्यं भूतं नोपदिशतीत्यत्र को हेतुः?। न हि भूतमुपदिश्यमानं क्रिया भवति। अक्रियात्वेऽपि भूतस्य क्रियासाधनत्वात् क्रियार्थ एव भूतोपदेश इति चेन्नैष दोषः। क्रियार्थत्वेऽपि क्रियानिर्वर्त्तनशक्तिमद्वस्तूपदिष्टमेव। क्रियार्थत्वन्तु प्रयोजनं तस्य, न चैतावता वस्त्वनुपदिष्टं भवति। यदि नामोपदिष्टं किं तव तेन स्यादिति उच्यते। अनवगतात्मवस्तूपदेशश्च तथैव भवितुमर्हति। तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः प्रयोजनं क्रियत इत्यविशिष्टमर्थवत्त्वं क्रियासाधनवस्तूपदेशेन। अपि च "ब्राह्मणो न हन्तव्यः" इति चैवमाद्या निवृत्तिरुपदिश्यते। न च सा क्रिया नापि क्रियासाधनम्। अक्रियार्थानामुपदेशोऽनर्थकश्चेत् "ब्राह्मणो न हन्तव्यः" इत्यादिनिवृत्त्युपदेशानामानर्थक्यं प्राप्तं तच्चानिष्टम्। न च स्वभावप्राप्तहन्त्यर्थानुरागेण नञः शक्यमप्राप्तक्रियार्थत्वं कल्पयितुं हननक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण। नञश्चैष स्वभावो यत् स्वसम्बन्धिनोऽभावं बोधयति। अभावबुद्धिश्चौदासीन्यकारणम्। सा च दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति। तस्मात्प्रसक्तक्रियानिवृत्त्यौदासीन्यमेव ब्राह्मणो न हन्तव्य इत्यादिषु प्रतिषेधार्थं मन्यामहे अन्यत्र प्रजापतिव्रतादिभ्यः। तस्मात् पुरुषार्थानुपयोग्युपाख्यानादिभूतार्थवादविषयमानर्थक्याभिधानं द्रष्टव्यम्" भा०। (सिद्धान्तः) वाक्यादेः २ अर्थबोधकताभावे च। मीमांसकमते कार्य्यान्वित एव शब्दानां शक्तिग्रहनियमात् लिङादेश्च कार्य्यताबोधकतया तच्छून्यवाक्यस्यार्थबोधकत्वाभाव इति प्राभाकरा मन्यन्ते।

आनव लि० अनिति अन-उण् आनुः प्राणी तस्येदम् अण्।

प्राणिसम्बन्धिनि बलादौ। "आनवस्य ह्यत्सवे गयम्" ऋ०७,१८,१३। "आनोः सम्बन्धिनो बलस्य" भा०। "विद्वस आनवाय" ऋ०६,६२,६ स्त्रियां ङीप्।

**आनव्य** न० आनोर्नरस्य इदं यत्। नरसम्बन्धिनि तन्त्रोक्ते मलद्वये। "मायिकं नाम योगोत्थम् पौरुषं कार्म्मणं मलम्। आनव्यं तद्द्वयं प्रोक्तं निषिद्धं तन्मलत्रयम्" तन्त्रसारे प्रपञ्चसारः।

**आनस** त्रि० अनसः शकटस्य पितुर्वा इदम् अण्। १शकट सम्बन्धिनि। "इयानि वै वानसत्यानि चक्राणि रथ्यानि चानसानि" शत०ब्रा०। २पितृसम्बन्धिनि च।

**आनाथ्य** न० अनाथस्य भावः ष्यञ्। स्वामिशून्यत्वे।

**आनाम्य** त्रि० आ+नम–कर्म्मणि ण्यत् अनिट्कत्वात् न ह्रस्वः। नमस्कार्य्ये।

**आनाय** पु० आनीयते मत्स्योऽनेन आ+नी–करणे "जाल-मानायः" पा० उक्तेः घञ्। मत्स्यधारणार्थे शण-सूत्रादिनिर्म्मिते जाले। अन्यत्र अच्। आनय इत्येव।

**आनायिन्** त्रि० आनयति आ+नी–णिनि। १देशाद्देशान्तर प्रापके। आनायोजालमस्यास्ति आनाय+इनि।२जालिके धीवरे "आनायिभिस्तामपकृष्टनक्राम्" "आनायिनस्तद्वि-चये नदीष्णान्" इति च रघुः। उभयत्र स्त्रियां ङीप्।

**आनाय्य** पु०आनाय्यते गार्हपत्यादानीय संस्क्रियतेऽसौ आ+नी–ण्यत् नि०आयादेशः। वैदिकप्रसिद्धे दक्षिणाग्निभेदे। "आनाय्योऽनित्ये" पा० "दक्षिणाग्निविशेष एवेदं निपा-तनम् स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्व-लनात् वैश्यादिकुलयोनिकत्वेन वैकल्पिकत्वाच्च। अन्यत्र तु यत् आनेयो घटादिः" सि०कौ० वैश्यकुलादेरानीतो दक्षिणाग्निस्तु आनेयएव "वैश्यकुलात् विप्रतोभ्राष्ट्रात् गार्हपत्याद्वा" आश्व०सूत्रे अग्नियोनिविकल्पश्रवणात् गार्हपत्यादानेयस्यैव आनाय्यत्वं नान्यस्य।

**आनाह** पु०आ+नह–घञ्। १बन्धे दैर्घ्ये आनह्यते अपसरण प्रतिरोधेन बध्यते विण्मूत्रादि अनेन आ+नह+करणे घञ्। २विण्मूत्ररोधसाधने वैद्यकोक्ते रोगभेदे "आमं शकृद्वा निचितं क्रमेण भूयोविबद्धम् विगुणानिलेन। प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति" मा०नि०। वातादिदोषाणुक्त्वा स्थानविशेषाश्रयत्वेन तेषां रोगविशेषजनकत्वमुक्तं सुश्रु०। "अत ऊर्द्धं स्थानसंश्रयं वक्ष्यामः। एवं कुपितास्तांस्तान् शरीर-प्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति। ते यदोदर-सन्निवेशं कुर्व्वन्ति तदा गुल्मविद्रध्युदराग्निसङ्गानाह-विसूचिकातिसारप्रभृतीन् जनयन्ति"। "आनाहार्त्तं ततो-दृष्ट्वा तत्सैन्यमसुखार्दितम्। पितरं दुःखितं दृष्ट्वा सुक-न्येदमथाब्रवीत्" भा०व०प०१२२अ०।

**आनाहिक** पु० आनाहे तत्प्रतीकारे विहितः ठक्। आ-नाहरोगोपशमनीये विधौ। "आस्थापनं मारुतजे, स्निग्धे स्निग्धे विधिष्यते। पुरीषजे तु कर्त्तव्यो विधिरानाहिको-भवेत्" सुश्रु०।

**आनिचेय** त्रि० समन्ताच्चिचीयते आ+नि+चि–कर्म्मणि यत्। समन्तात् सञ्चयनीये स्त्रियां शार्ङ्ग०पाठात् ङीन्।

**आनिरुद्ध** पुंस्त्री० अनिरुद्धस्यापत्यम् वृष्णित्वात् अण्। अनिरुद्धस्य उषापतेरपत्ये स्त्रियां ङीप्। निरुद्धभिन्नस्या-पत्ये तु इञ्। आनिरुद्धिरित्येव।

**आनिर्हत** पु० अनिर्हत एव स्वार्थे अण्। देवहृदयतया प्रधाने देवभेदे "नम आनिर्हतेभ्य इत्येते ह्येभ्यो लोकेभ्यो ऽनिर्हताः" शत०ब्रा०"एतानि देवहृदयानि यथा हृदयं प्रधानं तथैतेऽपि प्रधानानि" भा०।

**आनिल** त्रि० अनिलस्येदम् अण्। १वायुसम्बन्धिनि अनि-लोदेवताऽस्य अण्। २वायुदेवताके हविरादौ स्त्रियामुभयत्र ङीप्। सा च स्वातितारायाम् सा हि अनिलाधिष्ठातृका

**आनिलि** पु० अनिलस्यापत्यम् इञ्। भीमे स हि पाण्डोः क्षेत्रे कुन्त्यां वायुनोत्पादितः यथा "ततस्तथोक्ता भर्त्रा तु वायुमेवाजुहाव सा। ततस्तामागतो वायुर्मृगारूढोमहा-बलः। किन्ते कुन्ति! ददाम्यद्य ब्रूहि यत्ते हृदि स्थितम्। सा सलज्जा विहस्याह पुत्रं देहि सुरोत्तम!। बलवन्तं महाकायं सर्वदर्पप्रभञ्जनम्। तस्माज्जज्ञे महाबाहुर्भीमो-भीमपराक्रमः" भा०आ०प० १२२ अ०। २हनूमति च तस्य केशरिक्षेत्रे अञ्जनायां वायुना जनितत्वात् तथा-त्वम् तत्कथा संक्षिप्ता यथा "अहं केशरिणःक्षेत्रे वायुना जगदायुना। जातः कमलपत्राक्ष! हनूमान्नाम वानरः" भा०व०प० १४०अ०। भीमं प्रति हनूमद्वाक्यम्। अत-एव तयोः क्षेत्रभिन्नोत्पन्नत्वेऽपि एकेनोत्पादनात् भ्रातृ-त्वम् तेन "तद्रूपं दर्शयामास यद्वै सागरलङ्घने। भ्रातुः प्रियमभीप्सन् वै चकार सुमहद्वपुः" "भ्राता मम गुण-श्रेष्ठो बुद्धिसत्त्वबलान्वितः रामायणेऽतिविख्यातः श्रीमान् वानरपुङ्गव" इति च तत्रैवाध्याये तयोर्भ्रातृ-त्वेनोक्तिः। अनिलसुतादयोऽप्युभयत्र।

**आनीत** त्रि० आ+नी–कर्म्मणि क्त। देशाद्देशान्तरं नीते।

"आनीता भवता यदा पतिरता साध्वी धरित्रीसुता" नाटकम् । [प्रियानोतिं रामोरचोवधे स्थित:"सुग्धं० ।

**आनीति** स्त्री आ+नी-क्तिन् । आनयने "चङ्क्रमित्वा

**आनील** पु० ईषदर्थे आङ् प्रा०स० । १ईषन्नीलवर्णे २तद्वति त्रि०। ३नीलघोटके पु०हेम०। ४तज्जातिस्त्रियां स्त्री ङीप्

**आनु** त्रि० अन-उण् । प्राणिनि आनवशब्दे उदा० ।

**आनुकल्पिक** त्रि० अनुकल्पं वेत्ति तद्बोधकग्रन्थमधीते वा उकथा० ठक् १अनुकल्पाभिज्ञे २तद्बोधकग्रन्थाध्येतरि च अनुकल्पेन प्राप्तः ठक् । ३अनुकल्पेन प्राप्ते । अनुकल्पाय हितम् ठक् । ४अनुकल्पसाधने । [वर्त्तमाने ।

**आनुकूलिक** त्रि० अनुकूलं वर्त्तते ठक् । आनुकूल्येन

**आनुकूल्य** न०अनुकूलस्य भावः कर्म्म वा ष्यञ् । अनुकूलताचरणे १साहाय्ये २अनुगुणतायाञ्च । "यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते" या०स्मृ० "रमतश्चानुकूल्येन ययुः संवत्सरा इव" रामा० । [ पश्चाङ्गवादौ ।

**आनुगङ्ग** त्रि० अनुगङ्गं भवः परिमुखा० अञ् । गङ्गा-

**आनुगतिक** त्रि० अनुगतमनुगमनं भावे क्त तेन निर्वृत्तः अक्षद्यूता० ठक् । अनुगमेन निर्वृत्ते सन्तोषादौ ।

**आनुगत्य** न० अनुगतस्य भावः कर्म्म वा ष्यञ् । १अनुगमनरूपाचरणे २अनुगतत्वे च । [स्वार्थे ठक् । पश्चात्कथके ।

**आनुगादिक** त्रि०अनुगदतीति अनुगादी स एव अनुगादिन्+

**आनुगुणिक** त्रि० अनुगुणमधीते वेद वा वसन्ता० ठक् । १अनुगुणाभिज्ञे २तद्बोधकग्रन्थाध्येतरि च । स्त्रियां ङीप् ।

**आनुगुण्य** न० अनुगुणस्य भावः कर्म्म वा ष्यञ् । १अनुकूलताचरणे २अनुकूलत्वे च । [ स्त्रियां ङीप् ।

**आनुग्रामिक** त्रि० अनुग्रामं भवः ठञ् । ग्रामपश्चाद्भवादौ

**आनुचारक** न० अनुचारकस्य धर्म्म्यं महिष्यादि० अण् । अनुचरधर्म्म्ये आचरणे ।

**आनुति** पुंस्त्री० आनुतस्यापत्यम् इञ् । आनुतनाम्नोमुनेरपत्ये । "इञः प्राचाम्" ततः युवप्रत्ययस्य लुक् तु तौल्वल्यादित्वात् न । आनुतिः पिता आनुतायनः पुत्रः । आ+नु-क्तिन् । सम्यक्स्तवने स्त्री । [पश्चाङ्गवादौ ।

**आनुतिल्य** त्रि० अनुतिलं भवः परिमुखा०अञ् । तिलस्य

**आनुदृष्टिनेय** पुंस्त्री अनुदृष्टेर्भवः शुभ्रा०ढक् कल्या०आनङ् च । अनुदृष्टिभवे । [ ध्वंसपश्चाद्भवे स्त्रियां ङीप् ।

**आनुनाश्य** त्रि०अनुनाशं विनाशस्य पश्चाद् भवः संका०ण्य ।

**आनुनासिक्य** न० आनुनासिकस्य भावः ष्यञ् । अनुनासिकधर्म्मे नासासहिततत्तत्स्थानोच्चार्य्यत्वे "प्रतिज्ञानु-

नासिक्याः पाणिनीयाः" व्याकरणीया परिभाषा ।

**आनुपथ्य** त्रि०अनुपथं भवः परिमु०अञ् । मार्गस्य पश्चाद्भवादौ

**आनुपदिक** त्रि० अनुपदं धावति ठक् । अनुपदं १धावमाने पदस्य वेदपाठविशेषस्य पश्चात् अनुपदं तद्वेत्ति तद्बोधकग्रन्थं वाऽधीते उकथा० ठक् । २पदग्रन्थाध्येतरि ३तदभिज्ञे च स्त्रियां ङीप् । [ पश्चाङ्गवादौ ।

**आनुपद्य** त्रि० अनुपदं भवः परिमुखा० अञ् । पदस्य

**आनुपूर्व्वी** स्त्री पूर्व्वमनुक्रम्य अनुपूर्व्वं तस्य भावः ष्यञ् ततो वा ङीषि यलोपः । परिपाट्याम् मूलावधिके क्रमे "षड़ानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्" मनुः । ङीषभावपक्षे आनुपूर्व्व्यमप्यत्र न० । "वसीरन्नानुपूर्व्व्येण शाणक्षौमाविकानि च" मनुः ।

**आनुमानिक** त्रि०अनुमानादागतः ठक् स्त्रियां ङीप् । अनुमानप्राप्ते १युक्तिसिद्धे २व्याप्तिविशिष्टलिङ्गज्ञानादवगते अनुमिते पदार्थे यथा धूमदर्शनात् वह्निरनुमीयते स च वह्निः स्वव्याप्तिविशिष्टधूमज्ञानेनैवावगत इति तस्य तथात्वम् । अनुमानमात्रेणावगम्ये वेदे वाचकशब्दशून्ये सांख्यमतसिद्धे ३प्रधाने न० । "ईक्षतेर्नाशब्दमिति" शा०सूत्र भाष्ये तस्य च वेदशब्दप्रतिपाद्यत्वं निराकृत्य "रचनानुपपत्तेर्नानुमानम्" सू० भा० अनुमानगम्यत्वमपि निराकृतम् । तस्य च यथानुमानिकत्वं तथा ४६६,६७ पृष्ठे अव्यक्तशब्दे दर्शितम् "आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च" शा०सू० ।

**आनुमाष्य** त्रि० अनुमाषं भवः परिमुखा० अञ् । माषस्य पश्चाद्भवादौ । [ द्भवादौ ।

**आनुयव्य** त्रि० अनुयवं भवः परिमुखा० अञ् । यवस्य पश्चा-

**आनुयूप्य** त्रि० अनुयूपं भवः परिमुखा० अञ् । यूपस्य पश्चाद्भवादौ । [२आनुगत्ये च ।

**आनुरक्ति** स्त्री आ+अनु+रन्ज-क्तिन् । १अनुरागे

**आनुराहति** पुंस्त्री० अनुरहतोऽपत्यम् बाह्वा० इञ् अनुश० द्विपदवृद्धिः । मुनिभेदे युवापत्ये तु ततः फक् तौल्वल्या० न लुक् । आनुराहतायनः । तस्य युवापत्ये । आनुहारति इति पाठान्तरम् ।

**आनुरोहति** पुंस्त्री० अनुरोहतोपत्यम् बाह्वा० इञ् । अनुरोहन्मुनेर्गोत्रापत्ये तस्य युवापत्ये फक् तस्य तौ०न लुक् । आनुरोहतायनः तदीययुवापत्ये ।

**आनुलेपिक** त्रि०आनुलेपिकायाः स्त्रिया धर्म्म्यम् महिष्या० अण् । अनुलेपिकाया धर्म्ये कर्म्मणि ।

**आनुलोमिक** त्रि॰ अनुलोमं वर्त्तते अनुलोम+ठक् । अनुलोमाचारवति । स्त्रियां ङीप् ।

**आनुलोम्य** न॰ अनुलोमस्य भावः कर्म्म वा ब्राह्म॰ ष्यञ् । १अनुक्रमे "आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते । "एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ तथा स्मृतौ" इति च मनुः अनुकूलत्वे "क्रियाणामानुलोम्यञ्च करोत्यकुपितोऽनिलः" सुश्रु॰। [पश्चाद्भवादौ ।

**आनुवंश्य** त्रि॰ अनुवंशं भवः परिमुखा॰ ञ्य । वंशदृत्तस्य

**आनुवेश्य** त्रि॰ "अनुवेशं वसति "अव्ययीभावाच्च" पा॰ ञ्य प्रातिवेश्यसन्निकृष्टगृहवासिनि । "प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे" मनुः ।"निरन्तरगृहवासी प्रातिवेश्यः तदनन्तरगृहवासी आनुवेश्यः इति कुल्लू॰ अव्ययीभावाच्चेति सूत्रे परिमुखादिभ्य एवेष्यते इति नियमस्तु प्रायिकत्वेनात्रापीति बोध्यम् । [गतिकसम्बन्धिनि ।

**आनुशातिक** अनुशतिकस्येदम् अण् द्विपदवृद्धिः । अनु-

**आनुशासनिक** त्रि॰अनुशासनाय हितं ठक् । १अनुशासनसाधने नीतिशास्त्रादौ २राज्ञनीतेरनुशासनार्थे भारतान्तर्गते पर्व्वभेदे । "ततः पर्व्व परिज्ञेयमानुशासनिकं परम्" भा॰ आ॰ १अ॰।

**आनुश्रविक** त्रि॰गुरुपाठादनुश्रूयते अनुश्रवोवेदस्तत्र विहितः ठक । स्वर्गादिसाधनतया वेदविहिते कर्म्मसमूहे "दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः" सां॰ का॰ । "नानुश्रविकादपि तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम्" सां॰ सू॰ ।

**आनुषङ्गिक** त्रि॰ अनुषङ्गात् आगतः ठक् स्त्रियां ङीप् । उद्देश्यान्तरप्रवृत्तस्य तत्कर्म्मनान्तरीयकतया प्राप्ते प्रासङ्गिके अनुद्देश्ये "अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः" सि॰कौ॰ यथा भो वटो ! भिक्षामट यदि गां पश्येः तां चानयेत्यादौ भिक्षार्थप्रवृत्तस्य दैवात् गोदर्शनात्तस्या आनयनमानुषङ्गिकं तत्रोद्देश्यत्वाभावात् । [पूर्व्वाम् ।

**आनुषज्** अव्य॰ आ+अनु–सन्ज–क्विप् स्वरा॰ । आनु-

**आनुषण्ड** त्रि॰ अनुषण्डे देशभेदे भवः कच्छा॰ अण् । अनुषण्डदेशभवे ।

**आनुष्टुभ** त्रि॰ अनुष्टुप् छन्दोऽस्य उत्सा॰ अञ् । १अनुष्टुप्छन्दस्के मन्त्रादौ ऋचि स्त्री ङीप् । "अनुष्टुभास्त्रष्टुभेोगते आनुष्टुभे स्तवे भवत" इति सामसं॰ भा॰ धृता श्रुतिः । अष्टुभ इदम् अञ् । २अनुष्टुप्सम्बन्धिनि । अनुष्टुप् सरस्वती देवताऽस्य अण् । ३सारस्वते हविरादौ" आनुष्टुभस्य हविषोयत्" ऋ॰ १०,१८१,१ । "आनुष्टुभोवा अश्वः" आनुष्टुभेषादिक्" शत॰ब्रा॰ । अत्र छान्दसोङीबभावः स्वार्थे अण् । ४अनुष्टुप्छन्दसि न॰ स्वार्थिकस्य क्वचित् प्रकृतिलिङ्गातिक्रमस्य देवतावदिष्टत्वात्लिङ्गान्यत्वम् ।

**आनुसाय्य** त्रि॰ अनुसायं भवः परिमुखा॰ ञ्य । सायस्य पश्चाद्भवादौ ।

**आनुसीत्य** त्रि॰ अनुसीतं भवः परिमुखा॰ ञ्य । लाङ्गल पद्धतेः पश्चाद्भवे । [पश्चाद्भवादौ ।

**आनुसीर्य्य** त्रि॰ अनुसीरं भवः परिमुखा॰ ञ्य । लाङ्गल-

**आनुसूय** त्रि॰अनुसूयया अत्रिपत्न्या दत्तम् अण् । अनुसूयया दत्ते "स्फुरत्प्रभामण्डलमानुसूयं सा बिभ्रती शाश्वतमङ्गरागम्" रघुः । [इनङ् च । अनुसरणभवे ।

**आनुसृतिनेय** त्रि॰ अनुसृतौ भवः शुभ्रा॰ढक् कल्याण्या॰

**आनुसृष्टिनेय** त्रि॰ अनुसृष्टौ भवः शुभ्रा॰ ढक् कल्या॰ इनङ् च । अनुसर्जनभवे ।

**आनुहारति** त्रि॰ अनुहरति भवः बाह्वा॰ इञ् अनुशति॰ द्विपदवृद्धिः। अनुहरणकर्त्तृति भवे ।

**आनूप** त्रि॰अनूपदेशेभवः कच्छा॰ अण् । अनूपदेशभवे स्त्रियां ङीप् । २जलानुगतदेशभवे प्राणिवर्गे च तत्तत्प्राणिनस्तन्मांसगुणाश्च सुश्रुते दर्शिता यथा "आनूपवर्गस्तु पञ्चविधः । तद्यथा कूलचराः प्लवाः कोशस्थाः पादिनो मत्स्याश्चेति । तत्र गजगवयमहिषरुरुचमरसृमररोहितवराहखड्गिगोकर्णकालपुच्छकोद्रन्यङ्कुरङ्गगवयप्रभृतयः कूलचराः पशवः । वातपित्तहरा वृष्या मधुरा रसपाकयोः । शीतला बलिनः स्निग्धा मूत्रलाः कफवर्द्धनाः । विरूक्षणो लेखनश्च वीर्य्योष्णः पित्तदूषणः । स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः । गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् । विपाके मधुरं चापि व्यवायस्य तु वर्द्धनम् । स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः । वातपित्तोपशमनं गुरु शुक्रप्रवर्द्धनम् । तथा चमरमांसन्तु स्निग्धं मधुरकासजित् । विपाके मधुरं चापि वातपित्तप्रणाशनम् । सृमरस्य तु मांसञ्च कषायानुरसं स्मृतम् । वातपित्तोपशमनं गुरु शुक्रविवर्द्धनम् । स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु । स्निग्धं श्रमानिलहरं वाराहं बलवर्द्धनम् । कफघ्नं खड्गिपिशितं कषायमनिलापहम् । पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम् । गोकर्णमांसं मधुरं स्निग्धं मृदु कफा-

वहम्। विपाके मधुरश्चापि रक्तपित्तविनाशनम्। हंससारसक्रौञ्चचक्रवाककुररकादम्बकारण्डवजीवञ्जीवकबकबलाकापुण्डरीकप्लवशरारीमुखनन्दीमुखमद्गुत्क्रोशकाचाक्षमल्लिकाक्षशुक्लाक्षपुष्करशायिकाकोनालकाम्बुकुक्कुटिकामेघरावश्वेतवारणप्रभृतयः प्लवाः सङ्घातचारिणः। रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः। सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः। गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः। वृंहणः शुक्रलस्तेषां हंसो मारुतनाशनः।

शङ्खशङ्खनखशुक्तिशम्बूकभल्लूकप्रभृतयः कोशस्थाः। कूर्म्मकुम्भीरकर्कटकणकृष्णकर्कटशिशुमारप्रभृतयः पादिनः। शङ्खकूर्म्मादयः स्वादुरसपाका मरुन्नुदः। शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्द्धनाः। कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः। शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा। मत्स्यास्तु द्विविधा नादेयाः सामुद्राश्च। तत्र नादेयाः रोहितपाठीनपाटलाराजीववर्म्मिगोमत्स्यकृष्णमत्स्यवागुञ्जारमुरलसहस्रदंष्ट्रप्रभृतयो नादेयाः। नादेया मधुरा मत्स्या गुरवोमारुतापहाः। रक्तपित्तकराश्चोष्णा वृष्याः स्निग्धाल्पवर्चसः। कषायानुरसस्तेषां शष्पशैवालभोजनः। रोहितो मारुतहरो नात्यर्थं पित्तकोपनः। पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः। दूषयेद्रक्तपित्तन्तु कुष्ठरोगं करोत्यसौ। मुरलो वृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा। सरस्तडागसम्भूताः स्निग्धाः स्वादुरसाः स्मृताः। महाह्रदेषु बलिनः स्वल्पेऽम्भस्यबलाः स्मृताः। तिमितिमिङ्गिलकुलिशपाकमत्स्यनिरालकनन्दिवारलकमकरगर्गरकचन्द्रकमहामीनराजीवप्रभृतयः सामुद्राः। सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः। उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्द्धनाः। बलावहा विशेषेण मांसाशित्वात् समुद्रजाः। समुद्रजेभ्योनादेया वृंहणत्वाद्गुणोत्तराः। तेषामप्यनिलघ्नत्वाच्चौण्ट्यकौप्यौ गुणोत्तरौ। स्निग्धत्वात् स्वादुपाकत्वात् तयोर्वाप्या गुणोत्तराः। नादेया गुरवो मध्ये यस्मात् पुच्छास्यचारिणः। सरस्तडागजानान्तु विशेषेण शिरो लघु। अदूरगोचरा यस्मात्तस्मादुत्सोदपानजाः। किञ्चिन्मुक्त्वा शिरोदेशमत्यर्थं गुरवस्तु ते। अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः। उरोविचरणात्तेषां पूर्व्वमङ्गं लघु स्मृतम्। इत्यानूपो महाभिष्यन्दिमांसवर्गो व्याख्यातः" "मनुष्यतत्स्थयोर्वुञ्" पा० मनुष्ये तत्स्थे हसितादौ वाच्ये तु वुञ्। आनूपक इत्येव

**आनृत** त्रि० अनृतं शीलमस्य छत्रा० अण्। सततमिथ्यानुशीलनकर्त्तरि स्त्रियां ङीप्।

**आनृण्य** न० अनृणस्य भावः कर्म्म वा ष्यञ्। ऋणान्मुक्तौ ऋणशोधने। "वक्तव्यं सर्व्वदा सद्भिरप्रियञ्चापि यद्धितम्। आन्टण्यमेतत् स्नेहस्य सद्भिरेव कृतं पुरा" नरसिंहपु०।

**आनृशंसि** पुंस्त्री० अनृशंसस्यापत्यम् इञ्। द्वाजौरपत्ये गहा० भवादौ छ। आनृशंसीयः तद्भवादौ त्रि०।

**आनृशंस्य** न० अनृशंसस्य भावः कर्म्म वा ष्यञ्। १अनिष्ठुरतायां २कारुण्ये "आरोढुं सुमहाप्राज्ञ आनृशंस्यात्त्वया विना" भा०आश्व० २अ०। "आनृशंस्यात् प्राह्मणस्य भुञ्जते होतरे जनाः" मनुः। ३अनुकम्पायाञ्च। "अर्हेयं तत्कुमारीणामानृशंस्यं हि केवलम्" उद्वा०त० स्मृतिः। "आनृशंस्यमनुकम्पा" रघु०। स्वार्थे ष्यञ् ४कारुण्ययुक्ते त्रि० "एष धर्म्मपरोनित्यमानृशंस्यश्च पाण्डवः" भा०व०प०७१ अ०।

**आनेतृ** त्रि० आ+नी—तृच्। आनयनकर्त्तरि स्त्रियां ङीप्।

**आनेय** त्रि० आ+नी—कर्म्मणि यत्। देशाद्देशान्तरमानेतव्ये १घटादौ वैश्यकुलात् विप्रतोभ्याद्याहा आनेतुं योग्ये २दक्षिणाग्नौ पु० आनाय्यशब्दे विवृतिः "आनेयो घटादिवैश्यकुलादेरानेयोदक्षिणाग्निश्च" सि०कौ०।

**आ(अ)नैपुण** न० अनिपुणस्य भावः अण् उत्तरपदवृद्धिः पूर्व्वपदस्य वा। अपाटवे नैपुण्याभावे ष्यञ्। पूर्व्ववत् वृद्धिः आ(अ)नैपुण्यमप्यत्र।

**आ(अ)नैश्वर्य्य** न० अनीश्वरस्य भावः ष्यञ्। उत्तरपदवृद्धिः पूर्व्वस्य पदस्य वा। १ऐश्वर्याभावे २ऐश्वर्य्यविरोधिनि सांख्यादिमतसिद्धे बुद्धेर्धर्म्मभेदे धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्यरूपा अष्टौ बुद्धेर्धर्मास्ते च भावरूपा एव तैरभावानङ्गीकारात् तत्र ज्ञानभिन्नानां सप्तानां बन्धहेतुत्वम् ज्ञानेन मोक्ष इति तेषां सिद्धान्तः यथाह सांका०कौमुद्योः" "रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः। सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण" तत्त्वज्ञानवर्ज्जं वध्नाति धर्म्मादिभिः सप्तभिः रूपैरिति पुरुषार्थं प्रति भोगापवर्गौ प्रति आत्मनात्मानमेकरूपेण तत्त्वज्ञानेन विवेकख्यात्या विमोचयति पुनर्भोगापवर्गौ न करोतीत्यर्थः"।

**आन्त** त्रि० अम+क्त नि०वा इडभावः उपधादीर्घः। पीड़िते इटपक्षे अमितोऽप्यत्र। [नान्तरोधर्म्मः सत्यम्" शा०द०

**आन्तर** त्रि० अन्तर्मध्ये भवः अण्। आभ्यन्तरे। "कथ-

**आन्तरतम्य** न॰ अन्तरतमस्य अत्यन्तसदृशस्य भावः ष्यञ्। सौसादृश्ये "बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्ते" सि॰कौ॰।

**आन्तरागारिक** त्रि॰ अन्तरागारस्य धर्म्म्यम् ठक्। अन्तरागारनियुक्तपुरुषस्य धर्म्म्ये अवरोधरक्षणादौ।

**आन्तरप्रपञ्च** पु॰ कर्म्म॰। आध्यात्मिके आभ्यन्तरे द्वैतविस्तारे स चान्नमयादिकोषपञ्चकं शरीरत्रयम् जन्मास्थित्यादयः षड्भावविकाराः त्वङ्मांसादिषाट्कौशिकस्थूलदेहः अशनायापिपासादि षडूर्म्मयः श्रोत्रादिज्ञानेन्द्रियपञ्चकं वागादिकर्म्मेन्द्रियपञ्चकं प्राणादिवायुपञ्चकं मनआद्यन्तःकरणचतुष्टयं सङ्कल्पाद्यन्तःकरणवृत्तयः जागराद्यवस्थात्रयं तदभिमानिविश्वतैजसप्राज्ञाः समाधिमूर्च्छादयः क्रोधाद्यरिषड्वर्गः साधनचतुष्टयं सत्वादिगुणत्रयं सुखदुःखज्ञानाज्ञानादि अविद्यादिक्लेशपञ्चकम् मैत्र्यादिभावनाचतुष्टयं यमाद्यष्टाङ्गम् प्रत्यक्षादिप्रमाणवर्गः रोगारोग्यसदायोग्यायोग्यं विविधनामरूपगुणधर्मादयः भोगापवर्गौ च। एवमन्यमतेऽप्यूह्यम्।

**आन्तराल** त्रि॰ अन्तरालं मध्यस्थितिं वेत्ति अण्। देहाभ्यन्तर एवात्मनः स्थितिवेत्तरि जीवस्याणुत्ववादिनि पूर्णप्रज्ञे माध्वे स हि आत्मनोविभुत्वखण्डनेन देहाभ्यन्तरे एव स्थितिं मन्यमानस्तस्याणुत्वम् प्रतिपेदे आत्मशब्दे तन्मतमुक्तप्रायम् अधिकं माध्वशब्दे वक्ष्यते। "अणुं वदन्त्यान्तरालाः सूक्ष्मनाडीप्रचारतः। रोम्णः सहस्रभागेन नाडीषु प्रचरत्ययमिति" तस्य सिद्धान्तः "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेय इति" श्रुतिमनुसृत्य तथा तेनाङ्गीकृतम्। दुर्विज्ञेयत्वेन सूक्ष्मत्वमौपचारिकमिति तु वेदान्त्यादयः।

**आन्तरि(री)क्ष** त्रि॰ अन्तरि(री)क्षे भवः अण्। आकाशभवे १उत्पातादौ "उत्पातांस्त्रिविधान् प्राह नारदो भगवान् प्रभो! दिव्यांश्चैवान्तरीक्षांश्च पार्थिवांश्च पितामह!" ज्यो॰। २अन्तरीक्षभवे जले च। अम्बुशब्दे ३२॰ पृष्ठेऽस्य विवृतिः।

**आन्तरीपक** त्रि॰ अन्तरीपे भवः धूमा॰ वुञ्। अन्तरीपभवे धूमादिगणे द्वीपशब्दपर्य्यात् देवपाठित्वाच्च अन्तरीपशब्दएव बोध्यः अन्तरीय इति पाठस्तु प्रामादिकः।[ङीप्।

**आन्तर्गणिक** त्रि॰ अन्तर्गणं भवः ठञ्। गणमध्यभवे स्त्रियां

**आन्तर्गेहिक** त्रि॰ अन्तर्गेहं भवः ठञ्। गेहमध्यभवे स्त्रियां ङीप्। अन्तर्वैश्मिकान्तर्वैश्मकादयोऽप्यत्र।

**आन्तर्य्य** न॰ अन्तरस्य भावः ष्यञ्। अन्तर्वर्त्तित्वे।

**आन्तिका** स्त्री अन्तिकेव अण् अजा॰ टाप्। ज्येष्ठायाम् भगिन्याम्।

**आन्त्र** न॰ अमत्यनेन अम–गतौ क्त उपधादीर्घः। १वायुवाहकनाडीभेदे। अन्त्रस्येदम् अण्। २अन्त्रसम्बन्धिनि त्रि॰ स्त्रियां ङीप्।

**आन्दोल** दोलने मुङ्खालने अद॰ चुरा॰ उभय॰ सक॰ सेट्। आन्दोलयति ते आन्दुदोलत् त। क्त आन्दोलितः।

**आन्दोलक** पु॰ आन्दोलयति ण्वुल्। दोलनकर्त्तरि।

**आन्दोलन** न॰ आन्दोल–भावे ल्युट्। १पुनःपुनर्दोलने, २मुङ्खालने "किल्यासामविन्दकुन्दरुचां द्राक् चामरान्दोलनात्" उद्भटः ३अनुसन्धाने च।

**आन्धसिक** त्रि॰ अन्धो भक्तं शिल्पमस्य ठक्। पाचके सूदे।

**आन्धीगव** न॰ अन्धीगुना ऋषिभेदेन दृष्टं साम–अण्। तृतीयसवने गेये आर्भवपवमानस्तोत्रगते स्तोत्रभेदे तच्च स्तोत्रम् ऊहगाने १प्र॰ १क॰ पठितम् तच्च साम॰ स॰ भा॰ दर्शितम् यथा "श्यावाश्वान्धीगवेऽनुष्टुब्वानेते यश्यतेऽथ वा। पुरेव त्रिक्रं जगती चतुर्विंशति-कीर्त्तनम्। इदमाम्नायते "पञ्चछन्दा आवापः आर्भवः पवमानः सप्तसामा, गायत्रसंहिते गायत्र्योः तृचे भवतः, श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः, उष्णिहि शफम्, ककुभि पौष्कलम्, कावमन्त्यं जगतीषु" इति। अयमर्थः अस्ति तृतीयसवने पवमानः आर्भवसंज्ञकः, तस्मिन् पञ्च सूक्तानि, सप्त सामानि, "स्वादिष्ठया मदिष्ठा" इत्येकं सूक्तम् (उ,२प्र,१५), तस्मिन् गायत्र्यस्तिस्र ऋचः तासु "गायत्रम्" "संहितम्" (ऊ,१प्र,८) चेति द्वे सामानी, "पुरोजिती वो अन्धसः" इति सूक्तान्तरम् (उ,१प्र,१८) तत्रैकानुष्टुबुत्तरे द्वे गायत्र्यौ तासु "श्यावाश्वम्" (ऊ,१प्र,११) "आन्धीगवम्" (ऊ,२प्र,११) चेति द्वे सामनी, "इन्द्रमच्छ सुता" इत्यपरं सूक्तम् (उ,१प्र,१८), तस्मिन्नुष्णिहस्तिस्रः तासु "शफम्" साम, "पवस्व मधुमत्तम" इति प्रगाथः (उ,१प्र,१६), तस्मिन् पूर्वा ककुप्, उत्तरा पङ्क्तिः। तत्र "पौष्कलम्" (ऊ,१प्र,६) साम, "अभिप्रियाणि पवते च नोहित" इत्यन्यं सूक्तम् (उ,१प्र,१६), तत्र तिस्रोजगत्यः तासु "कावम्" (ऊ,१प्र,१२) साम"।

**आन्ध्य** न॰ अन्धस्य भावः ष्यञ्। दृष्टिशक्तिराहित्ये यत्र प्रतिघाते तद्भवति तद्दर्शितं सुश्रु॰। शिरानाडीरूपकस्य "भूसु-

ह्वान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम तत्रान्ध्यं दृष्ट्युपघातो वा इति" तत्कारणञ्चोक्तम् "शोणितमतिनिर्हृत्य यमानं कण्डूशोफरागदाहपाकवेदना जनयेत् । अल्पं त्वाभिच्छिन्नातिविद्धेष्वन्तं विंशावितमतिप्रवर्त्तते अतिप्रवृत्तं शिरोऽभितापमान्ध्यमधिमन्थं तिमिरप्रादुर्भावमित्यादि चापादयति" सुश्रु०। २प्रकाशन्यूनत्वे "जगदान्ध्यप्रसङ्गः" वे०प्र०

**आन्ध्र** पु० आ+अन्ध–रन् । १देशभेदे २तद्देशवासिनि ३तन्नृपे च ब०व०। "आन्ध्राःशका पुलिन्दाश्च यवनाश्च नराधिपाः" भा०व०प०१८८अ०। स च देशः वृ०स०कूर्म्मविभागे आग्नेय्यां दिशि वर्णितः यथा "आग्नेय्यां दिशि कोशलकलिङ्गवङ्गोपवङ्गजठराङ्गाः शौलिकविदर्भवत्सान्ध्रचेदिकाश्चोर्द्ध्वकण्ठाश्च" षड्भक्तौ च तत्रैवोक्तम् "द्रविडविदेहान्ध्राश्मकभासापुरं कौङ्कणाः समान्त्रीषकाः । कुन्तलकेरलदण्डककान्तिपुरम्लेच्छसङ्करजाः । नासिक्यभोगवर्द्धनविराटविन्ध्याद्रिपार्श्वगा देशाः । ये च पिबन्ति सुतोयां तापीं ये चापि गोमतीसलिलम्" । तेन विन्ध्याद्रिपार्श्वगः गोमतीतापीनद्योःसन्निकृष्टोऽयं देश इति गम्यते ।

**आन्न** त्रि० अन्नं लब्धा अन्न+ण । अन्नं लब्धरि ।

**आन्यतरेय** पुंस्त्री० अन्यतरस्यापत्यम् शुभ्रा० ढक् । अन्यतरस्यापत्ये स्त्रियां ङीप् ।

**आन्यभाव्य** न० अन्योभावोयस्य अन्यभावः तस्य भावः ब्राह्म० ष्यञ् । अन्यरूपत्वे । [स्त्रियां ङीप्

**आन्वयिक** त्रि० अन्वये प्रशस्तकुले भवः ठञ् । प्रशस्तकुलजाते

**आन्वष्टक्य** न० अन्वष्टका+स्वार्थे ष्यञ् । अन्वष्टकाशब्दार्थे "अपरेद्युरान्वष्टक्यम्" आश्व०गृ० ।

**आन्वाहिक** त्रि० अहनि अहनि अन्वहम् तत्र भवः ठञ् अनुश० द्विपदवृद्धिः । प्रतिदिनसाध्ये पाकादौ "वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि । पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही" मनुः ।

**आन्वीक्षिकी** स्त्री श्रवणादनु ईक्षा पर्यालोचना सा प्रयोजनमस्याः ठञ् । तर्कविद्यायाम् गौतमप्रणीतायाम् आत्मविद्यायाम् । तत्प्रतिपादकग्रन्थश्च अक्षपादेन पञ्चाध्यायी रचितः तत्रादिमं सूत्रं "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति अन्तिमसूत्रञ्च "हेत्वाभासाश्च यथोक्ताः" इति । तत्र प्रतिपाद्यविषयाश्च पदार्थतत्त्वज्ञानानुकूलं फलं तत्र क्रमोक्तिः । प्रत्यक्षानुमानोपमानागमरूपप्रमाणचतुष्टयम् तेषां लक्षणविभागादि । आत्मदेहेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गरूपप्रमेयविभागः । इच्छाद्वेषप्रयत्नसुखदुःखज्ञानानि आत्मलिङ्गानि । चेष्टावदन्त्यावयवित्वमिन्द्रियाश्रयत्वं वा देहलक्षणम् । घ्राणरसनचक्षुस्त्वक्श्रोत्ररूपेन्द्रियविभागः तेषां पृथिव्यादिभ्यः क्रमेणोत्पत्तिः । तत्कारणानि च क्रमेण पृथिव्यप्तेजोवाय्वाकाशात्मकानि पञ्च भूतानि । गन्धरसरूपस्पर्शरूपविषयपञ्चकं पृथिव्यादीनां विशेषगुणास्तेषां च क्रमेण घ्राणादिभिर्ग्राह्यता । महत्तत्त्वापर्य्यायाया बुद्धेर्ज्ञानरूपत्वम् । मनसो लक्षणम् । प्रवृत्तिलक्षणम् रागद्वेषाभिनिवेशरूपदोषत्रयलक्षणम् । पुनरुत्पत्तिरूपप्रेत्यभावलक्षणम् प्रवृत्तिजनितार्थरूपफललक्षणम् । बाधनारूपं दुःखलक्षणम् । दुःखात्यन्तनिवृत्तिरूपापवर्गलक्षणम् । एकस्मिन् धर्म्मिणि भावाभावविरुद्धकोटिद्वयज्ञानत्वं संशयलक्षणम् तत्र साधारणधर्म्मवद्धर्म्मिज्ञानमसाधारणधर्म्मवद्धर्म्मिज्ञानं विप्रतिपत्तिवाक्यजन्यकोटिद्वयोपस्थितिश्च कारणम् । प्रवृत्तिहेत्विच्छाविषयत्वं प्रयोजनलक्षणम् । वादिप्रतिवादिनोः साध्यसाधनद्वयप्रकारकतदभावद्वयप्रकारकान्यतरनिश्चयविषयत्वं दृष्टान्तलक्षणम् प्रतिवादिनिरसनेन निःसन्दिग्धतया अर्थनिश्चयरूपत्वं सिद्धान्तलक्षणम् । सर्वतन्त्रसिद्धान्तः, प्रतितन्त्रसिद्धान्तः, अधिकरणसिद्धान्तः अभ्युपगमसिद्धान्त इति सिद्धान्तचतुष्टयविभागाः तल्लक्षणानि च । प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपावयवविभागः । भाष्ये तु जिज्ञासा, संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति अधिकाः पञ्चावयवा उक्तास्तेन दशावयवा इति स्थितम् । तात्पर्य्यटीकायां तद्व्याख्यातञ्च तत्र जिज्ञासाऽज्ञातादिबुद्धिसिद्धये प्रवर्त्तिका इच्छा जिज्ञासा । तज्जन्यश्च संशयः शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यं संशयव्युदासस्तर्कः इति । जिज्ञासा विप्रतिपत्तिरिति केचित् । एतेषां न्यायावयवत्वं नास्तीति वृत्तौ स्थितम् । साध्यविशिष्टतया पक्षस्य निर्देशः प्रतिज्ञालक्षणम् व्याप्तिविशिष्टहेतुबोधकः शब्दो हेतुरूपावयवः । व्याप्तिश्च अन्वयव्यतिरेकभेदेन द्विविधा तथा च ज्ञातान्वयव्याप्तिकहेतुबोधकः अज्ञातव्यतिरेकव्याप्तिकहेतुबोधकश्च । साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोऽवयवः साध्यसाधनव्याप्तिप्रदर्शकः उदाहरणम् तत्र व्याप्तिश्च द्विविधा अन्वयोव्यतिरेकश्च । प्रकृतोदाहरणोपदर्शितव्याप्तिमद्धेतुविशिष्टपक्षबोधक उपनयावयवः व्याप्तिश्च अन्वयव्यतिरेकभेदेन द्विधा

प्रविष्टा । व्याप्तिविशिष्टस्य हेतोः पक्षवृत्तिताकथनपूर्वकसाध्यविशिष्टपक्षबोधकवाक्यत्वं निगमनलक्षणम् । व्यापकाभाववत्त्वेन निर्णीते धर्म्मिणि व्याप्यस्याहार्यारोपात् व्यापकस्याहार्यारोपः तर्क इति तर्कलक्षणम् यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपः निर्वह्निःस्यान्निर्धूमःस्यादित्यादि । सन्दिग्धपक्षस्य साधनयुक्त्या प्रतिपक्षस्य बाधनयुक्त्या च अर्थावधारणं निर्णय इति तल्लक्षणम् । इत्येते १म अ० १म आह्निके पदार्था दर्शिताः । वादादिलक्षणानि । तत्र प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः इति वादलक्षणं प्रमाणतर्काभ्यां स्वपक्षस्य साधनं विपक्षस्योपालम्भो दूषणं च यत्र । पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी तयोः परिग्रहः तत्साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवाक्यविशेषो वाद इति तदर्थः । छलजातिनिग्रहस्थानादिकं विपक्षे समुद्भाव्य तस्य दूषणेन स्वपक्षस्थापन वाक्यत्वं जल्पलक्षणम् । स्वपक्षस्थापनाराहित्येन परपक्षनिराकरणवाक्यत्वम् वितण्डालक्षणम् । सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालरूपान् पञ्च हेत्वाभासान् विभज्य तेषां लक्षणानि । वाद्युक्तवचनस्य अर्थान्तरपरत्वकल्पनेन युक्त्या तत्खण्डनं छलमिति छललक्षणम् । तच्च वाक्छलार्थच्छलोपचारच्छलभेदेन त्रिविधम् । व्याप्तिनिरपेक्षतया दूषणोक्तिर्जातिः तद्भेदाश्चतुर्विंशतिः ५ अ० वाच्याः । उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वं निग्रहस्थानलक्षणमिति १ अ० २ आह्निके एते पदार्था उक्ताः । संशयकारणादिनिरूपणम् प्रमाणात् प्रमेयसिद्धिः । प्रत्यक्षप्रमाणलक्षणे परिशिष्टविवेचनम् । मनसोऽणुत्वे ज्ञानायौगपद्यस्य हेतुतयोक्तिः । प्रत्यक्षस्य कचिदनुमित्यात्मकताशङ्कायां तन्निराकरणम् । अवयवेभ्योऽवयविनोऽतिरिक्तता साधनम् । अनुमानाप्रामाण्यशङ्कातन्निरासौ । वर्त्तमानावस्थानिराकरणतत्स्थापने । उपमानाप्रामाण्यशङ्का निराकरणे । अनुमाने उपमानस्य गतार्थत्वमाशङ्क्य शाब्दबोधस्यानुमानेऽन्तर्भावमाशङ्क्य च तद्विचारणम् । सय-ज्ञिकत्वेन शब्दस्य बोधकत्वव्यवस्थापनम् । दृष्टादृष्टार्थकत्वेन शब्दद्वैविध्यम् । तत्रादृष्टार्थकस्य वेदशब्दस्य अनृतत्वव्याघातपुनरुक्तदोषेभ्यः अप्रामाण्यमाशङ्क्य युक्त्या प्रामाण्यसमर्थनम् । विध्यर्थवादानुवादभेदात् ब्राह्मणरूप वेदभागस्य त्रैविध्योक्तिः । विधिलक्षणम् । स्तुतिः निन्दा परकृतिः पुराकल्प इति भेदादर्थवादचातुर्विध्योक्तिः

विधिविहितस्यानुकथनमनुवाद इत्यनुवादलक्षणम् । वेदैकदेशविषहरमन्त्रादेः आरोग्यार्थौषधादिप्रतिपादकायुर्वेदभागस्य संवादिफलकत्वेन तद्दृष्टान्तेन इतरवेदभागस्य प्रामाण्यव्यवस्थापनम् । २ अ० १ आह्निके एते पदार्थाः । ऐतिह्यार्थापत्तिसम्भवाभावरूपाणामतिरिक्तप्रमाणत्वमाशङ्क्य ऐतिह्यस्य शब्देऽन्तर्भावः अर्थापत्तिसम्भवाभावानाञ्चानुमानेऽन्तर्भाव इति समर्थनम् । अभावस्य प्रमेयत्वव्यवस्थापनम् । शब्दस्यानित्यताव्यवस्थापनम् । शब्दस्य घटाद्यात्मकत्वनिराकरणम् । व्याकरणविधौ वर्णानां विकारपक्षनिराकरणेनादेशपक्षव्यवस्थापनम् । वर्णानामविकारित्वेऽपि गुणान्तरापत्त्युपमर्द्दह्रासवृद्धिलेशश्लेषैः विकारव्यवहार इति व्यवस्थापनम् । तत्र उदात्तेऽनुदात्तत्वं गुणान्तरापत्तिः । उपमर्द्दो धर्म्मिनिवृत्तिः यथा अस्तेर्भूः । ह्रासः दीर्घस्य ह्रस्वता, वृद्धिर्ह्रस्वस्य दीर्घता, लेश एकदेशविकृतिः यथा अस्तेरल्लोपः । श्लेषः आगम इडादि । एतैर्विकारव्यवहारः । पदलक्षणम् । जात्यादीनां प्रत्येकं पदार्थत्वपक्षं निराकृत्य जात्याकृतिव्यक्तीनां समुदितानां पदार्थत्वव्यवस्थापनम् । व्यक्त्याकृतिजातीनां लक्षणानि एते २ अ० २ आह्निक गतार्थाः । इन्द्रियचैतन्यवादनिराकरणम् । भूतचैतन्यवादनिराकारणम् उभयगोलकेनेत्रैक्यव्यवस्थापनम् । आत्मन इन्द्रियभेदे युक्तिप्रदर्शनम् । मनस आत्मत्वनिराकरणम् । आत्मनित्यतासाधनम् । मनुष्यदेहस्य पार्थिवत्वसाधनम् । तस्य पार्थिवाप्यतैजसत्वमतोपन्यासः चातुर्भौतिकत्वमतोपन्यासः पाञ्चभौतिकत्वमतोपन्यासः । इन्द्रियाणां गोलकातिरिक्तत्वस्य व्यवस्थापनम् । तेषामाहङ्कारिकत्वनिराकरणेन भौतिकत्वव्यवस्थापनम् । इन्द्रियाणामप्रत्यक्षत्वेऽप्यनुमेयताव्यवस्थापनम् । चक्षुषः प्राप्यकारित्वसाधनम् । इन्द्रियैकत्वमाशङ्क्य तेषां पञ्चत्वसाधनम् । भूतानां विशेषगुणाः तेषाञ्चैकैकेन्द्रियग्राह्यतेति निरूपणम् । प्राणादीनामनुद्भूतत्वादिसाधनम् । ३ अ० १म आह्निकगतार्थाः । सांख्यमतसिद्धबुद्धेर्नित्यत्वनिराकरणम् मनसोऽणुत्वेन ज्ञानानां क्रमिकत्वसाधनम् । मनसो विभुत्वे गत्यभावप्रसङ्गेन सर्वेन्द्रियैः सर्वदासम्बन्धापत्त्या च सर्वविषयकज्ञानापत्तिदोषात् विभुत्वनिरासः । भावानां नियमेन क्षणिकत्वपक्षखण्डनम् । परिणामवादखण्डनम् । इन्द्रियार्थयोरन्वयव्यतिरेकसत्त्वेऽपि ज्ञानस्य न तयोर्धर्म्मत्वं किन्तु आत्मधर्म्मत्वमिति समर्थनम् । ज्ञानाऽनित्यत्वसाधनम् कारणायौगपद्ये कारणप्रदर्शनम् । ज्ञानवत् इच्छादीनामात्मधर्म्म-

त्वव्यवस्थापनम्। इतरगुणत्वनिवारणेन घ्राणादेरात्मधर्मत्वव्यवस्थापनम्। स्मरणोपयोगिप्रणिधानादिकारणानि। बुद्ध्यादेः आशुविनाशित्वव्यवस्थापनम्। रूपादेरिव यावद्द्रव्यभावित्वाभावेन ज्ञानादिविशेषगुणानां देहधर्मत्वनिरासेनात्मधर्मत्वसमर्थनम्। केशनखादिषु सुखाद्यनुत्पत्तेः त्वक्पर्य्यन्तस्यैव देहस्य सुखाद्यवच्छेदकत्वसाधनम्। प्रतिदेहं मनसो नानात्वखण्डनम्। एकत्वेऽपि मनसः शीघ्रसञ्चारः। ज्ञानायौगपद्यस्य अणुत्वसमर्थनेन मनोऽणुत्वसाधनम्। देहस्य अदृष्टसापेक्षोत्पत्तिकत्वसाधनम्। अदृष्टसहकारेणैव मातापित्राहारस्य तदारम्भकत्वसमर्थनम्। अदृष्टाभावे नित्यात्मनः संयोगेऽपि न देहोत्पत्तिरिति निरूपणम्। आत्मनोविभुत्वे सर्वशरीरैः संयोगे सत्यपि तददृष्टजन्यदेह एव तस्य विशेषसंयोगः भोगसाधक इति नियमनम्। परमाणुगताऽदृष्टाङ्गीकर्त्तुरार्हतस्य मतनिराकरणम् अदृष्टस्य मनोगुणत्वस्यापि तन्मतसिद्धस्य निराकरणम्। ३अ० २आ० गतार्थाः। प्रवृत्तिसाधनरागद्वेषाभिनिवेशात्मकदोषत्रैविध्यकथनम्। तत्र मोहस्य सर्व्वानर्थमूलत्वेन पापीयस्त्वसमर्थनम्। आत्मनोनित्यत्व एव प्रेत्यभावसिद्धिः अनित्यत्वे न तत्सिद्धिस्तथा च एकजातीयशरीरेन्द्रियाद्यःसम्बन्ध उत्पादः तत्र चरमसम्बन्धनाशोमरणं तयोरेकस्मिन् आत्मनि नित्ये एव सम्भवः शरीरादेर्नष्टत्वात् न तदाश्रयत्वमिति समर्थनम्। उत्पत्तिप्रकारनिरूपणम्। बीजानामुपमर्द्दनादङ्कुरोत्पत्तिदर्शनात् अभावादेव भावोत्पत्तिरिति अभावोपादानत्वमतनिराकरणम्। कर्म्मनिरपेक्षस्य ईश्वरस्यैव जगत्कारणत्वमतखण्डनेन कर्म्मसापेक्षस्य तस्य जगत्कारणत्वव्यवस्थापनम्। परमाण्वादिवदीश्वरस्य नोपादानत्वमिति व्यवस्थापनम्। भाष्ये तु गुणविशिष्टमात्मान्तरमीश्वर इतीश्वरलक्षणकृतम्। तद्यथा "गुणैर्नित्यज्ञानेच्छाप्रयत्नरूपविशेषगुणैः सामान्यगुणैश्च संयोगादिभिर्विशिष्टम् आत्मान्तरं जीवेभ्यो भिन्न आत्मा जगदाराध्यः सृष्ट्यादिकर्त्ता वेदद्वारा हिताहितोपदेशकोजगतः पितेति" इत्याद्युक्तः। कण्टकतैक्ष्ण्यवज्जगतामाकस्मिकत्वखण्डनम्। सर्व्वानित्यत्वखण्डनम्। सर्वनित्यत्वखण्डनम्। घटादीनां परमाणुपुञ्जात्मकतावादखण्डनेन एकावयविसाधनम् सर्वभूतानामभावरूपतानिराकरणम्। संख्यैकान्तवादनिराकरणम्। संख्यैकान्तवादाश्च भाष्ये बहवो दर्शिताः। "सर्वमेकं सदविशेषात्, सर्वं द्वेधा नित्यानित्यभेदात्, सर्वं त्रेधा ज्ञाता ज्ञेयं ज्ञानमिति, सर्वं चतुर्द्धा प्रमाता प्रमाणम् प्रमितिः प्रमेयमिति, एवमन्येऽपि"। तत्र यथा नित्यत्वानित्यत्वाभ्यां द्वैधं तथा सत्त्वेनैक्यम् घटः सन् पटः सन्नित्येकाकारसत्प्रतीतेः। अन्ये तु एकमित्यद्वैतमाहुस्तथा च ब्रह्मैवैकं निर्विशेषं सत् सर्वकल्पनाश्रयः। अन्येऽपीति रूपसंज्ञासंस्कारवेदनानुभवाः पञ्च स्कन्धाः षट्पदार्थाः सप्तपदार्थास्त्वादि मतभेदाः। तत्राद्वैतपक्षनिराकरणं यथा ब्रह्माद्वैतस्वीकारे तत्साधकप्रमाणस्यासिद्धिः प्रमाणसत्त्वे तु न सर्वैकत्वसिद्धिरित्थं दूषणेन सर्वैकत्ववादनिराकरणम्। यथा वृक्षमूलसेकात् तदीयावयवोपचयद्वारत्वेन फलोत्पत्तिस्तथा यागादेर्नाशेऽपि तज्जन्यादृष्टरूपद्वारसत्त्वात् स्वर्गाद्युत्पत्तिरिति व्यवस्थापनम्। स्वर्गादेः सरूपेण फलत्वसाधनम्। फलस्य उत्पत्तेः प्रागसत्त्वेन शशशृङ्गादेरिव उत्पत्त्यसम्भवः सत्त्वे च उत्पत्त्ययोग्यतया कारणव्यापारानर्थक्यं सदसत्त्वाङ्गीकारे च विरोध इत्याशङ्क्य फलस्य उत्पत्तेः प्राक् असत्त्वव्यवस्थापनम् असत उत्पत्तौ इह तन्तुषु पटो भविष्यतीति प्रागभावज्ञानस्यैव प्रवर्त्तकतयाऽनियमवारणम्। कर्म्मकर्तृदेहादेर्नाशेऽपि अदृष्टस्यात्मस्थत्वेनोत्पत्तेः तेनैव चादृष्टेन जायमाने स्वर्गादिदेहे सुखभोगे सामानाधिकरण्यसम्बन्धेनादृष्टजन्यस्वर्गादिफलस्यात्मनिष्ठत्वव्यवस्थापनम्। सुखदुःखयोरेव मुख्यफलत्वं स्त्र्यादेस्तु तत्साधनत्वादौपचारिकफलत्वमिति नादृष्टसामानाधिकरण्यव्याघात इति समर्थनम्। देहसम्बन्धस्यैव विविधबाधनायोगहेतुत्वाद् दुःखरूपत्वकथनम् विविधदुःखयुक्ततया शरीरस्य दुःखत्वेन भावनाकथनम् दुःखमध्ये सुखस्याप्युत्पत्तेस्तत्प्रत्याख्यानानौचित्येऽपि तदुपार्ज्जनादौ दुःखबाहुल्यात् देहकं सर्वं दुःखमित्येव भावनीयमिति निरूपणम्। प्रतिषिद्धभोजनमैथुनादौ प्रवृत्तिनिवारणार्थमपि दुःखस्य हेयत्वोक्तिः। आर्षदैवपैत्रऋणापाकरणानुबन्धेनापवर्गकालाभावमाशङ्क्य आयुषश्चतुर्थभागेऽपवर्गसाधनकालत्वसाधनम् तथा कामनाशून्यस्य विरक्तस्य ततोऽर्वागपि तत्सेवनव्यवस्थापनम्। तत्त्वज्ञानोत्पत्तौ प्रारब्धातिरिक्तकर्म्मजन्यादृष्टमात्रनाशेन न स्वर्गफलकादृष्टेन प्रतिबन्ध इति कथनम्। क्लेशानुबन्धत्वादपवर्गाभावमाशङ्क्य सुषुप्तस्य सर्व्वक्लेशाभाववदपवर्ग इति सुषुप्तिदृष्टान्तेन हेत्वभावेनाऽपवर्गे दुःखाभावसाधनम्। रागानुबन्धस्याहेतुत्वेः रागादीनां च मिथ्याज्ञाननिमित्तकत्वेन तत्त्वज्ञानेन च मिथ्याज्ञाननिवृत्तौ दुःखनिवृत्तिरिति

क्रमकथनम् ४अ० १आ० गतार्थाः। देहात्मबुद्धेर्दोषजन्यतया दोषस्य च मिथ्याज्ञानाधीनत्वेन तत्त्वज्ञानात् आत्मनो देहादिभ्यो भेदज्ञाननिवृत्तौ तदभेदज्ञाननिरासेन मिथ्याज्ञाननिवृत्तिः तस्यां च सत्यां क्रमेण प्रवृत्तिनिवृत्त्या दुःखनिवृत्तिरूपापवर्गसिद्धिः अतोऽपवर्गसाधनं तत्त्वज्ञानमित्येवं प्रतिपादनम्। साधुतया भावितानां रूपादिविषयाणां दोषहेतुत्वकथनम्। सौन्दर्यं पश्यतो रागादिर्दुर्लक्ष्योऽयमुक्तपरिहार इत्याशङ्क्य तत्र सौन्दर्यबुद्धे रागाधीनतया तद्रूपादिदेहे सौन्दर्याभिमानस्य त्याज्यताकथनम्। भाष्ये तु "परिष्कारबुद्धिरनुरञ्जनसंज्ञा सा हेया दोषदर्शनमशुभसंज्ञा सा भावनीया" इत्युक्तम्। तथा च "खेलत्खञ्जननयना परिणतबिम्बाधरा पृथुश्रोणी। कमलमुकुलस्तनीयम् पूर्णेन्दुमुखी सुखाय मे भवितेति" अनुरञ्जनसंज्ञा। "चर्म्मनिर्म्मितपाञ्चालीयं मांसासृक्पूयपूरिता। अस्यां रज्यति यो मूढः पिशाचः कस्ततोऽधिकः" अशुभसंज्ञा एवं स्वदेहादावपि चिन्तनम्। परमाणुपुञ्जस्यैव घटादिरूपतायतोनास्ति अतिरिक्तोऽवयवीति सौत्रान्तिकवैभाषिकयोर्मतस्य पूर्वं दूषितस्यापि स्वमतदार्ढ्याय पुनर्दूषणम्। परमाणोस्त्रुटिपरत्वव्यवस्थापनम्। आकाशस्य सर्वगतत्वं सर्वमूर्त्तसंयोगित्वं तत्र संयोगस्याव्याप्यवृत्तितया तदवच्छेदकभेदं विनाऽनुपपत्त्या सावयवत्वापत्तिमाशङ्क्य मूर्त्तपदार्थस्यैवावयवानां तदवच्छेदकत्वम् इत्युक्त्वा तस्य निरवयवत्वसमर्थनम्। सर्वत्र शब्दोत्पत्त्या तज्जनकसंयोगानुमानात् आकाशस्य सर्वमूर्त्तसंयोगित्वसमर्थनम् आकाशे च प्रतिहतस्य परावर्त्तनरूपव्यूहस्य उत्तरदेशगतिप्रतिबन्धरूपविष्टम्भस्याभावात् विभुत्वव्यवस्थापनम्। परमाणोः संयोगवत्त्वान्यथानुपपत्त्या सावयवत्वापत्तिः संयोगस्य अव्याप्यवृत्तितया अव्याप्यवृत्तेश्चावच्छेदकभेदं विना असम्भवादित्याशङ्क्य तदवयवानामपि संयोगसिद्धये सावयवत्वकल्पनायामनवस्थापत्तिरतो दिग्विभागानामेव संयोगावच्छेदकत्वकल्पनेन परमाणोर्निरवयवत्वसमर्थनम्। ज्ञानातिरिक्तो बाह्यपदार्थो नास्तीत्यत्र यदि प्रमाणमस्ति तदा ज्ञानातिरिक्तप्रमाणरूपबाह्यस्य सत्त्वान्न बाह्याभावः अथ तत्र प्रमाणं नास्ति तदा निष्प्रमाणकत्वान्न तत्सिद्धिरित्येवं रूपेण बाह्यार्थाभावाङ्गीकर्त्तृमतनिराकरणम्। स्वप्नस्य स्मृतिविशेषरूपत्वं व्यवस्थाप्य शुक्तिरजतविज्ञाने रजतांशस्य ज्ञानलक्षणया उपनीतस्य संसर्गमात्रबोध इति व्यवस्थापनेन स्वप्नदृष्टान्तेन ज्ञानमात्रस्याबाह्यविषयकत्वादिमतनिराकरणम्। इत्येवं बाह्यार्थभङ्गनिराकरणम्। ज्ञानसामान्यात् तत्त्वज्ञानस्यापि क्षणिकत्वात् तन्नाशे प्रतिबन्धकाभावे पूर्ववासनावशात् मिथ्याज्ञानं पुनरुत्पद्येतेति तत्त्वज्ञानस्य न मिथ्याज्ञानोच्छेदकतेत्याशङ्कायां तन्निरासः। समाधिविशेषाभ्यासात् तत्त्वज्ञानस्य विवृद्धिः। तद्वृद्ध्या च मिथ्याज्ञानवासनातिरोभावान्न तत् फलायालमिति समर्थनम्। ततश्च तत्त्वज्ञानसंस्कारः अन्यसंस्कारप्रतिबन्धी भवतीति व्यवस्थापनम्। तत्र प्रतिबन्धश्च कार्याक्षमत्वसम्पादनं विनाशो वेति। स्वाभाविकविषयरागादिना प्रतिबन्धात् समाध्यसम्भवमाशङ्क्य पूर्वकृतेश्वराराधनादिना अभ्यासपाटवे जनिते तत्संस्कारात् समाधिसिद्धिरिति समर्थनम्। तथा च पूर्वकृतेश्वरानुध्यानादिसहकारेणैव तत्त्वज्ञाने जननीये न रागादेः प्रतिबन्धकत्वम्। अरण्यगुहापुलिनादिषु योगाभ्यासस्थानत्वकथनम्। अपवर्गे प्रारब्धकर्म्मानुसारेण देहादेः सत्त्वेन तदनुरूपार्थोपभोगस्याप्यकथनम्। प्रारब्धकर्म्मावसाने देहाभावे विदेहकैवल्यप्राप्तिकथनम्। समाधिसिद्धये यमनियमाद्यष्टाङ्गयोगाभ्यासस्यावश्यकर्त्तव्यतोक्तिः। श्रवणमनननिदिध्यासनैरात्मसाक्षात्कारोत्पत्तिकथनम्। एतच्छास्त्राभिज्ञैः सह स्वनिश्चितार्थदार्ढ्याय एतच्छास्त्रोदितार्थनिर्णयस्य संवादः कर्त्तव्य इति प्रतिपादनम्। संवादश्च शिष्यगुरुसब्रह्मचारिश्रेयोर्थिभिः जिगीषाहीनैः सह कार्य्य इति निरूपणम्। तन्निर्णयार्थं प्रतिकूलपक्षहीनतया संवादः करणीयः न जिगीषयेति निरूपणम्। तत्त्वनिश्चयसंरक्षणार्थं बीजप्ररोहसंरक्षणार्थं कण्टकावरणवत् त्रयीबाह्यैः सह जल्पवितण्डे आश्रयणीये न वाद इत्येतत्कथनम् तथा च यदि त्रयीबाह्यैः स्वपक्ष आक्षिप्यते तदा जल्पवितण्डाभ्यां तेषां मतं खण्डनीयम्। एते अर्थाः ४अ० २आ० उक्ताः।

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाश्चतुर्विंशतिं जातीर्विभज्य तल्लक्षणान्युक्तानि। कथाभासप्रकरणम्। ५अ० १आ० गतार्थाः। प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वन्तरमर्थान्तरम् निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रह-

स्थानानि इति निग्रहस्थानानि विभज्य तेषां क्रमेण लक्षणानि उक्तानि ५अ०२आ० गतार्थाः। यथा पदार्थतत्त्वज्ञानादपवर्गस्तथा तन्मतं सर्व०द० समग्राहि। यथा "ननु तत्त्वज्ञानान्निःश्रेयसम्भवतीत्युक्तं तत्र किं तत्त्वज्ञानादनन्तरमेव निःश्रेयसं सम्पद्यते, नेत्युच्यते तत्त्वज्ञानाद्दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभाव इति। तत्र मिथ्याज्ञानं नामानात्मनि देहादावात्मबुद्धिः तदनुकूलेषु रागः तत्प्रतिकूलेषु च द्वेषः वस्तुतस्त्वात्मनः प्रतिकूलमनुकूलं वा न किञ्चित् समस्ति परस्परानुबन्धित्वात्तु रागादीनां, मूढो रज्यति रक्तो मुह्यति मूढः कुप्यति कुपितो मुह्यतीति ततस्तैर्दोषैः प्रेरितः प्राणी प्रतिषिद्धानि शरीरेण हिंसास्तेयादीन्याचरति वाचा अनृतादीनि, मनसा परद्रोहादीनि, सेयं पापरूपा प्रवृत्तिरधर्ममावहतीति। शरीरेण प्रशस्तानि दानपरपरित्राणादीनि, वाचा हितसत्यादीनि, मनसा अहिंसादीनि, सेयं पुण्यरूपा प्रवृत्तिर्धर्मम्। सेयमुभयी प्रवृत्तिः ततः स्वानुरूपं प्रशस्तं निन्दितं वा जन्म पुनः शरीरादेः प्रादुर्भावः तस्मिन् सति प्रतिकूलवेदनीयतया बाधनात्मकं दुःखं भवति त इमे मिथ्याज्ञानादयो दुःखान्ता अविच्छेदेन प्रवर्त्तमानाः संसारशब्दार्थो घटीयन्त्रवन्निरवधिरनुवर्त्तन्ते। यदा कश्चित् पुरुषधौरेयः पुराकृतसुकृतपरिपाकवशादाचार्योपदेशेन सर्वमिदं दुःखायतनं दुःखानुषक्तञ्च पश्यति तदा तत्सर्वं हेयत्वेन बुध्यते ततस्तन्निवर्त्तकमविद्यादि निवर्त्तयितुमिच्छति तन्निवृत्त्युपायश्च तत्त्वज्ञानमिति कस्यचिच्चतसृभिर्विद्याभिर्विभक्तं भावयतः सम्यग्दर्शनपदवेदनीयतया तत्त्वज्ञानं जायते तत्त्वज्ञानान्मिथ्याज्ञानमपैति, मिथ्याज्ञानापाये दोषाः अपयान्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखमत्यन्तं निवर्त्तते सात्यन्तिकी निवृत्तिरपवर्गः। निवृत्तेरात्यन्तिकत्वं नाम निवर्त्त्यसजातीयस्य पुनस्तत्रानुत्पाद इति तथा च पारमर्षसूत्रम् "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग" इति। ननु दुःखात्यन्तोच्छेदोऽपवर्ग इत्येतदद्यापि कफोणिगुडायितं वर्त्तते तत्कथं सिद्धवत्कृत्य स्वीक्रियत इति चेन्मैवं सर्वेषां मोक्षवादिनामपवर्गदशायामात्यन्तिकी दुःखनिवृत्तिरस्तीत्यस्यार्थस्य सर्वतन्त्रसिद्धान्तसिद्धतया घण्टापथत्वात् नह्यप्रवृत्तस्य दुःखं प्रत्यापद्यते इति कश्चित् प्रपद्यते तथा हि आत्मोच्छेदो मोक्ष इति माध्यमिकमते दुःखोच्छेदोऽस्त्येवेतावत्तावदविवादम्। अथ मन्येथाः शरीरादिवदात्मापि दुःखहेतुत्वादुच्छेद्य इति तन्न सङ्गच्छते विकल्पानुपपत्तेः किमात्मा ज्ञानसन्तानो विवक्षितः तदतिरिक्तो वा। प्रथमे न विप्रतिपत्तिः कः खल्वनुकूलमाचरति प्रतिकूलमाचरेत्। द्वितीये तस्य नित्यत्वे निवृत्तिरशक्यविधानैव प्रवृत्त्यनुपपत्तिश्चाधिकं दूषणं न खलु कश्चित् प्रेक्षावान् "आत्मनस्तु कामाय सर्वं प्रियं भवतीति" सर्वतः प्रियतमस्यात्मनः समुच्छेदाय प्रयतते सर्वो हि प्राणी मुक्त इति व्यवहरति। ननु धर्मिनिवृत्तौ निर्मलज्ञानोदयो महोदय इति विज्ञानवादिवादे सामग्र्यभावः सामानाधिकरण्यानुपपत्तिश्च भावनाचतुष्टयं हि तस्य कारणमभीष्टं तच्च क्षणभङ्गपक्षे स्थिरैकाधारासम्भवात् लङ्घनाभ्यासादिवदनासादितप्रकर्षं न स्फुटमभिज्ञानमभिजनयितुं प्रभवति सोपप्लवस्य ज्ञानसन्तानस्य बद्धत्वे निरुपप्लवस्य च मुक्तत्वे यो बद्धः स एव मुक्त इति सामानाधिकरण्यं न सङ्गच्छते। आवरणमुक्तिर्मुक्तिरिति जैनजनाभिमतोऽपि मार्गो न निर्गतो निरर्गलः। अङ्ग भवान् पृष्टो व्याचष्टां किमावरणम्? धर्माधर्मभ्रान्तय इति चेत् इष्टमेव। अथ देहमेवावरणं तथा च तन्निवृत्तौ पञ्जरान्मुक्तस्य शुकस्येवात्मनः सततोर्द्ध्वगमनं मुक्तिरिति चेत्तदा वक्तव्यं किमयमात्मा मूर्त्तोऽमूर्त्तो वा। प्रथमे निरवयवः सावयवो वा निरवयवत्वे निरवयवो मूर्त्तः परमाणुरिति परमाणुलक्षणापत्त्या परमाणुधर्मवदात्मधर्माणामतीन्द्रियत्वं प्रसज्येत्। सावयवत्वे यत् सावयवं तदनित्यमिति प्रतिबन्धबलेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमौ निष्प्रतिबन्धौ प्रसज्येयाताम्। अमूर्त्तत्वे गमनमनुपपन्नमेव चलनात्मिकायाः क्रियायाः मूर्त्तप्रतिबन्धात्। पारतन्त्र्यं बन्धः स्वातन्त्र्यं मोक्ष इति चार्वाकपक्षेऽपि स्वातन्त्र्यं दुःखनिवृत्तिश्चेदविवादम्। ऐश्वर्यं चेत् सातिशयतया सदृशतया च प्रेक्षावतां नाभिमतम्। प्रकृतिपुरुषान्यत्वख्यातौ प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति सांख्याख्यातेऽपि पक्षे दुःखोच्छेदोऽभ्युपेयते विवेकज्ञानं पुरुषाश्रयं प्रकृत्याश्रयं वेति एतावदवशिष्यते तत्र पुरुषाश्रयमिति न श्लिष्यते पुरुषस्य कौटस्थ्यात् स्थानविरोधापातान्नापि प्रकृत्याश्रयः अचेतनत्वात्तस्याः। किञ्च प्रकृतिः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वा आद्ये अनिर्मोक्षः स्वभावस्यानपायात् द्वितीये सम्प्रति संसारोऽस्तमियात्। नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरिति भट्टसर्वज्ञाद्यभिमतेऽपि दुःखनिवृत्तिरभिमतैव परन्तु नित्यसुखं न प्रमाणपद्धतिमध्यास्ते। श्रुतिस्तत्र प्रमाणमिति

चेन्न योग्यानुपलब्धिबाधिते तदनवकाशादवकाशे वा या-वद्भावेऽपि तदभावप्रसङ्गात्। ननु सुखाभिव्यक्तिर्मुक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः चोरं विहायारोचकग्रस्तस्य सौवीररुचिमनुहरतीति चेत्त-देतन्नाटकपक्षपतितस्वहृदय इत्युपेक्ष्यते। सुखस्य साति-शयत्वेन प्रत्यक्षतया बहुप्रत्यनीकाक्रान्ततया साधनप्रार्थना-परिक्लिष्टतया च दुःखाविनाभूतत्वेन विषानुषक्तमधुवत् दुःखपक्षनिक्षेपात्। नन्वेकमनुसन्धित्सतोऽपरं प्रच्यवते इति न्यायेन दुःखवत् सुखमप्युच्छिद्यत इति अकाम्यो-ऽयं पक्ष इति चेन्मैवं मंस्थाः सुखसम्पादने दुःखसा-धनबाहुल्यानुषङ्गनियमेन तप्तायःपिण्डे तपनीयबुद्ध्या प्रवर्त्तमानेन साम्यापातात् तथा हि न्यायोपार्ज्जितेषु विषयेषु कियन्तः सुखखद्योताः कियन्ति दुःखदुर्दि-नानि, अन्यायोपार्ज्जितेषु तु यद्भविष्यति तन्मनसापि चि-न्तयितुं न शक्यमित्येतत् स्वानुभवमप्रच्छादयन्तः सन्तोविदां-कुर्व्वन्तु विदांवरा भवन्तः। तस्मात् परिशेषात् परमेश्वरा-नुग्रहवशाच्छ्रवणादिक्रमेणात्मतत्त्वसाक्षात्कारवतः पुरुषधौ-रेयस्य दुःखनिवृत्तिरात्यन्तिकी निःश्रेयसमिति निरवद्यम्। नन्वीश्वरसद्भावे किं प्रमाणं प्रत्यक्षमनुमानमागमो वा न तावदत्र प्रत्यक्षं क्रमते रूपादिरहितत्वेनातीन्द्रियत्वात् ना-प्यनुमानं तद्व्याप्तिलिङ्गाभावात् नागमः विकल्पासहत्वात् किं नित्योऽवगमयत्यनित्यो वा। आद्ये अपसिद्धान्तापातः द्वितीये परस्पराश्रयापातः। उपमानादिकमशक्यशङ्कमनि-यतविषयत्वात्। तस्मादीश्वरः शशविषाणायते इति चेत्त-देतन्न चतुरचेतसां चेतसि चमत्कारमाविष्करोति। विवा-दास्पदं नगसागरादिकं सकर्त्तृकं कार्य्यत्वात् कुम्भवत्। न चायमसिद्धो हेतुः सावयवत्वेन तस्य सुसाधत्वात्। ननु किमिदं सावयवत्वम् अवयवसंयोगित्वम् अवयवसमवा-यित्वं वा नाद्यः गगनादौ व्यभिचारात् न द्वितीयः तन्त्वा-दावनैकान्त्यात्। तस्मादनुपपन्नमिति चेन्मैवं वादीः समवेतद्रव्यत्वं सावयवत्वमिति निरुक्तेर्वक्तुं शक्यत्वात्। अवा-न्तरमहत्त्ववत्त्वेन वा कार्य्यत्वानुमानस्य सुकरत्वात्। नापि विरुद्धो हेतुः साध्यविपर्य्ययव्याप्तेरभावात्, नाप्यनैकान्तिकः, पक्षादन्यत्र वृत्तेरदर्शनात्। नापि कालात्ययोपदिष्टः, बाध-कानुपलम्भात्। नापि सत्प्रतिपक्षः, प्रतिभटादर्शनात्। ननु नगादिकमकर्त्तृकं शरीराजन्यत्वात् गगनवदिति चेन्नैतत् परीक्षाक्षममीक्ष्यते नहि कठोरकण्ठीरवस्य कुरङ्गशावः प्र-तिभटो भवति अजन्यत्वस्यैव समर्थतया शरीरविशेषणवैय-र्थ्यात्। तर्ह्यजन्यत्वमेव साधनमिति चेन्नासिद्धेः नापि सोपाधिकत्वशङ्काकलङ्काङ्कुरः सम्भवी अनुकूलतर्कसम्भवात् यद्ययमकर्त्तृकः स्यात् कार्य्योऽपि न स्यादिह जगति नास्त्येव तत्कार्य्यं नाम यत्कारकचक्रमवधीर्य्यात्मानमासादयेदित्ये-तदविवादम्। तच्च सर्वं कर्त्तृविशेषोपहितमर्य्यादं कर्त्तृत्वं चेतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वलक्षणं ज्ञानचिकीर्षाप्रयत्नाधारत्वम्। एवञ्च कर्त्तृव्यावृत्तेस्तदुप-हितसमस्तकारकव्यावृत्तावकारणककार्य्योत्पादप्रसङ्ग इति स्थूलः प्रमादः। तथा निरटङ्कि शङ्करकिङ्करेण। "अनुकूलेन तर्केण सनाथे सति साधने। साध्यव्यापकताभङ्गात् पक्षे नोपाधिसम्भव" इति। यदीश्वरः कर्त्ता स्यात्तर्हि शरीरी स्यादित्यादिप्रतिकूलतर्कजातं जागर्त्तीति चेदीश्वरसिद्ध्य-सिद्धिभ्यां व्याघातात् तदुदितदूषणेन। "आगमादेः प्रमाणत्वे बाधनादनिषेधनम्। आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता" इति। न च विशेषविरोधः शक्यशङ्कः ज्ञातत्वाज्ञातत्वविकल्पपराहतत्वात्। तदेतत् परमेश्वरस्य जगन्निर्म्माणे प्रवृत्तिः किमर्था स्वार्था परार्था वा आद्येऽपीष्टप्राप्त्यर्था अनिष्टपरिहारार्था वा नाद्यः अवाप्तसकलकामस्य तदनुपपत्तेः अतएव न द्वितीयः। द्वितीये प्रवृत्त्यनुपपत्तिः कः खलु परार्थं प्रवर्त्तमानं प्रेक्षावानित्याचक्षीत। अथ करुणया प्रवृत्त्यु-पपत्तिरित्याचक्षीत कश्चित् तं प्रत्याचक्षीत तर्हि सर्व्वान् प्राणिनः सुखिन एव सृजेदीश्वरः न दुःखशबलान् करुणाविरोधात्। स्वार्थमनपेक्ष्य परदुःखप्रहरणेच्छा हि कारुण्यं तस्मादीश्वरस्य जगत्सर्जनं न युज्यते। तदुक्तं भट्टाचार्य्यैः। "प्रयोजनमनुद्दिश्य न मन्दो हि प्रवर्त्तते। जगच्च सृजतस्तस्य किं नाम न कृतं भवेदिति"। नास्ति-कशिरोमणे! तावदीर्ष्याकषायिते चक्षुषी निमील्य परि-भावयतु भवान् करुणया प्रवृत्तिरस्त्येव न च निसर्गतः सुखमयसर्गप्रसङ्गः, सृज्यप्राणिकृतसुकृतदुष्कृतपरिपाकविशे-षाद्वैचित्र्योपपत्तेः न च स्वातन्त्र्यभङ्गः शङ्कनीयः स्वाङ्गं स्वव्यवधायकं न भवतीति न्यायेन प्रत्युत तन्निर्वाहात् एक एव रुद्रो न द्वितीयोऽवतस्थे" इत्यादिरागमस्तत्र प्रमाणम्। यद्येवं तर्हि परस्पराश्रयबाधव्याधिं समाधत्स्वेति चेत् तस्यानुत्थानात् किमुत्पत्तौ परस्पराश्रयः शङ्क्यते ज्ञप्तौ वा। नाद्यः आगमस्येश्वराधीनोत्पत्तिकत्वेऽपि परमेश्वरस्य नित्यत्वेनोत्पत्तेरनुपपत्तेः नापि ज्ञप्तौ परमेश्वरस्य आगमा-धीनज्ञप्तिकत्वेऽपि तस्यान्यतोऽवगमात् नापि तदनित्यत्व

प्राप्तौ आगमानित्यत्वस्य तीव्रादिधर्म्मोपेतत्वादिना सुगमत्वात् । तस्माच्चिरन्तनधर्म्मानुष्ठानवशादीश्वरप्रसादसिद्धावभिमतेष्टसिद्धिरिति सर्व्वमवदातम्” । अस्याश्चात्मतत्त्वज्ञानहेतुत्वादात्मविद्यात्वम् । “त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ ! दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः” भा० प० ५९ अध्या० । “त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम् । आन्वीक्षिकीञ्चात्मविद्यां वार्त्तारम्भांश्च लोकतः” मनुः “तत्त्वौपनिषदं तात परिशेषन्तु पार्थिव । मथ्नामि मनसा तत्त्वं दृष्ट्वा चान्वीक्षिकीं पराम्” भा० शा० प० । “आन्वीक्षिकी कौशलानामिति” गीता । “सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाना । प्रदीपः सर्व्वविद्यानामुपायः सर्व्वकर्म्मणाम् । आश्रयः सर्व्वधर्म्माणां विद्योद्देशे परीक्षिता” पक्षिलस्वामी । अन्वीक्षा शील-मस्याः तस्यै हितं वा ठक् । २दुर्गायाञ्च “आत्मवेदनशीलत्वादन्वीक्षणपराऽथ वा । अन्वीक्षाकारणत्वाद्वा तस्मादान्वीक्षिकी स्मृता” देवीपु० तन्निरुक्तिः ।

**आन्वीपिक** त्रि० अन्वीपं वर्त्तते ठक् । अनुकूले ।

**आप** प्राप्तौ वा चुरा० उभ० पक्षे स्वादि० प० सक० अनिट् । आपयति ते आपिपत् त । पक्षे आप्नोति आप्नुतः आप्नुवन्ति आप्नुयात् आप्नोतु आप्नोत् आप्नुवन् । आपत् आप आपतुः आपुः आपिथ । आप्ता आप्यात् आप्स्यति आप्स्यत् । आप्तव्यः आप्यम् आपनीयम् आप्ता आप्तः आप्तिः आप्त्वा अवाप्य । क्विप् ह्रस्वः आपः अपः अद्भिः । अतन् आपः । शतृ आप्नुवन् ताच्छील्ये चानश् आप्नुवानः । “अवशोमहदाप्नोति” “इहाग्र्यां कीर्त्तिमाप्नोति” मनुः । “नत्वेवार्थी सोपकारे कौपीदीं वृद्धिमाप्नुयात्” या० स्मृतिः “पुत्रमेवंगुणोपेतं चक्रवर्त्तिनमाप्नुहि” शकु० “येन श्रेयोऽहमाप्नुयाम्” गीता “स दुष्प्रापयशाः प्रापत्” रघुः । “शतं क्रतूनामपविघ्नमाप सः” रघुः । “यदिदं सर्वं मृत्युनाप्तम्” श्रुतिः “नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि” गीता । कर्म्मणि आप्यते आपि । प्रेरणे णिच् । आपयति ते आपिपत् त । सन् ईप्सति ईप्सितः । [प्राप्तिःसंयोगः स उदाहृतः” भाषा० ।

प्र–प्रकर्षेणाप्तौ प्राप्नोति प्राप्तः प्राप्तिः “अप्राप्तस्य च या

सम्+संपूर्णतायां समाप्तः समाप्तिः समापनम् । [साधनं” कुमा० ।

अव+प्राप्तौ, “अनवाप्तमवाप्तव्यम्” गीता “तपः क्विदं तदवाप्ति

परि+प्रचुरत्वे समर्थत्वे समुदितत्वे पर्य्याप्तः पर्य्याप्तिः । “सन्ति धर्मैः सुपर्य्याप्तिः सर्वस्य पदवेदने” गीताभा० । “अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् । पर्य्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्” गीता ।

अनु+प्रा–पश्चात्प्राप्तौ “नदीं गङ्गामनुप्राप्ताः” भा० आ० प० ।

वि+विशेषेण आप्तौ व्याप्तिः व्याप्तः, व्याप्यः व्यापकः व्यापनम् “व्याप्तस्य पक्षधर्मत्वधीःपरामर्श उच्यते” । “व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः” भाषा० । “यस्मात्मनेपदित्वमपि स्वाराज्यं प्राप्स्यते भवान्” इति दुर्गादासः ।

**आप** पु० आप्यते आप–कर्म्मणि घञ् । अष्टसु वसुषु मध्ये ४र्थे वसौ “धरो ध्रुवः सोमनामा तथापोऽप्यनिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः” विष्णु प० । “सव्यदक्षौ वसोर्यस्य चोर्द्धौ हस्तौ सपद्मकौ । सीराङ्कुशान्वितौ चाधः स भवेदापसंज्ञकः” इति तद्ध्यानम् “आपश्चैवानिलश्चैव ववर्षतुररिन्दमौ” हरिवं० २४५ अ० देवासुरयुद्धे । “आपस्य दुहिता भार्य्या सहस्य परमा प्रिया ! भूपतिर्भुवभर्त्ता चाजनयत् पावकं परम्” भा० व० २२१ अ० । भा० आ० प० ६६ अ० तु “धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः । धूम्रायास्तु धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा । चन्द्रमास्तु मनस्विन्याः श्वासायाः श्वसनस्तथा । रताऽयाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः । प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ” इति आपस्थाने अह इति नामान्तरत्वेन कीर्त्तितम् कल्पभेदादविरुद्धम् । प्रभासस्यैव द्युनामता अष्टमस्य वसोः आपगेयशब्दे दर्शयिष्यमाणे भा० ९९ अध्याये द्युनामतोक्तेः अपां समूहः अण् । २जलसमूहे न० । ३आकाशे निरुक्त० । तस्य सर्व्वमूर्त्तसंयोगित्वात्तथात्वम् ।

**आपक** त्रि० आप–ण्वुल् । प्रापके । गौरा० स्त्रियां ङीष् ।

**आपकर** त्रि० अपकरे भवः अण् अञ् च । अपकरजाते स्त्रियां ङीप् ।

**आपक्व** न० ईषत् पक्वम् आ+पच–क्त । १ईषत्पक्वे कलायादौ भर्ज्जिते हरितयवादौ ( हडापोडा ) २ईषत्पक्ववस्तुमात्रे त्रि० । [पत्ये स्त्रियां कौड्या० ष्यञ् । आपचित्या ।

**आपचिति** पु० अपचितस्यापत्यम् इञ् । अपचयापत्यस्य-

**आपगा** स्त्री आपेन जलसमूहेन गच्छति वहति ड । नद्याम् । “फेनायमानं पतिमापगानाम्” “सम्भूयाम्भोधिमभ्येति महानद्या नगापगा” माघः । “सिन्धुरिवाभिसागरमापगाः” रघुः ।

**आपगेय** पु० आपगायां गङ्गायां भवः ढक् । गाङ्गेये भीष्मे तस्य

तत उत्पत्तिकथा भा० आ० ९८ अ० शान्तनुप्रार्थने गङ्गावाक्यं यथा। "एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च। वसूनां समयं स्मृत्वाऽथाभ्यगच्छदनिन्दिता। उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा। भविष्यामि महीपाल! महिषी ते वशानुगा। यत्तु कुर्य्यामहं राजन्! शुभं वा यदि वा शुभम्। न तद्वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियम्। एवं हि वर्त्तमानेऽहं त्वयि वत्स्यामि पार्थिव!। वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम्"। वैश० उक्तिः "तथेति राज्ञा सा तूक्ता तदा भरतसत्तम। प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम्। आसाद्य शान्तनुस्ताञ्च बुभुजे कामतो वशी। न प्रष्टव्येति मन्वानो न स तां किञ्चिदूचिवान्। स तस्याः शीलवृत्तेन रूपौदार्य्यगुणेन च। उपचारेण च रहस्तुतोष जगतीपतिः। दिव्यरूपा हि सा देवी गङ्गा त्रिपथगामिनी। मानुषं विग्रहं कृत्वा श्रीमन्तं वरवर्णिनी। भाग्योपनतकामस्य भार्य्या चोपनताऽभवत्। शान्तनोर्नृपसिंहस्य देवराजसमद्युतेः। सम्भोगस्नेहचातुर्य्यैर्हावलास्यैर्मनोहरैः। राजानं रमयामास यथा रेमे तथैव सः। स राजा रतिसक्तत्वादुत्तमस्त्रीगुणैर्हृतः। संवत्सरानृतून् मासान् बुबुधे न बहून् गतान्। रममाणस्तया सार्द्धं यथाकामं नरेश्वरः। अष्टावजनयत् पुत्रांस्तस्याममरसन्निभान्। जातं जातञ्च सा पुत्रं क्षिपत्यम्भसि भारत। प्रीणाम्यहं त्वामित्युक्त्वा गङ्गास्रोतस्यमज्जयत्। तस्य तन्न प्रियं राज्ञः शान्तनोरभवत्तदा। न च तां किञ्चनोवाच त्यागाद्भीतो महीपतिः। अथैनामष्टमे पुत्रे जाते प्रहसन्तीमिव। उवाच राजा दुःखार्त्तः परीप्सन् पुत्रमात्मनः। मा वधीः कस्य काऽसीति किं हिनस्सि सुतानिति। पुत्रघ्नि! सुमहत्पापं सम्प्राप्तं ते सुगर्हितम्"। स्त्र्युवाच। "पुत्रकाम! न ते हन्मि पुत्रं पुत्रवतां वर!। जीर्णोऽस्तु मम वासोऽयं यथा स समयः कृतः। अहं गङ्गा जह्नुसुता महर्षिगणसेविता। देवकार्य्यार्थसिद्ध्यर्थमुषिताऽहं त्वया सह। इमेऽष्टौ वसवो देवा महाभागा महौजसः। वशिष्ठशापदोषेण मानुषत्वमुपागताः। तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते। मद्विधा मानुषी धात्री लोके नास्तीह काचन। तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता। जनयित्वा वसूनष्टौ जिता लोकास्त्वयाऽक्षयाः। देवानां समयस्त्वेष वसूनां संश्रुतो मया। जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति। तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः। स्वस्ति तेऽस्तु गमिष्यामि पुत्रं पाहि महाव्रतम्। एष पर्य्यायवासो मे वसूनां सन्निधौ कृतः। मत्प्रसूतं विजानीहि गङ्गादत्तमिमम् सुतम्"। इति निजधेनुकान् वसून् प्रति गङ्गया वशिष्ठशापस्तत्रैवोक्तः ९९ अ०। "अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः। न चापश्यत्स गां तत्र सवत्सां काननोत्तमे। ततः स मृगयामास वने तस्मिंस्तपोधनः। नाध्यगमच्च मृगयंस्तां गां मुनिरुदारधीः। ज्ञात्वा तथाऽपनीतां तां वसुभिर्दिव्यदर्शनः। ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा। यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिम्। तस्मात्सर्वे जनिष्यन्ति मानुषेषु न संशयः। एवं शशाप भगवान् वसूंस्तान् भरतर्षभ!। वशं क्रोधस्य सम्प्राप्त आपवो मुनिसत्तमः। शप्त्वा च तान्महाभागस्तपस्येव मनो दधे। एवं स शप्तवान् राजन्! वसूनष्टौ तपोधनः। महाप्रभावो ब्रह्मर्षिर्देवान् क्रोधसमन्वितः। अथाश्रमपदं प्राप्तास्ते वै भूयो महात्मनः। शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः। प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ!। लेभिरे न च तस्मात्ते प्रसादमृषिसत्तमात्। आपवात् पुरुषव्याघ्र! सर्वधर्म्मविशारदात्। उवाच च स धर्म्मात्मा शप्ता यूयं धरादयः। अनुसंवत्सरात्सर्वे शापमोक्षमवाप्स्यथ। अयन्तु यत्कृते यूयं मया शप्ताः स वत्स्यति। द्यौस्तदा मानुषे लोके दीर्घकालं स्वकर्म्मणा। नानृतं तच्चिकीर्षामि क्रुद्धो युष्मान् यदब्रवम्। न प्रजास्यति चाप्येष मानुषेषु महामनाः। भविष्यति च धर्म्मात्मा सर्वशास्त्रविशारदः। पितुः प्रियहिते युक्तः स्त्रीभोगान् वर्जयिष्यति। एवमुक्त्वा वसून् सर्वान् स जगाम महानृषिः। ततो मामुपजग्मुस्ते समेता वसवस्तदा। अयाचन्त च मां राजन्! वरं तच्च मया कृतम्। जातान् जातान् प्रक्षिपास्मान् स्वयं गङ्गे! त्वमम्भसि। एवं तेषामहं सम्यक् शप्तानां राजसत्तम!। मोक्षार्थं मानुषाल्लोकाद्यथावत्कृतवत्यहम्। अयं शापादृषेस्तस्य एक एव नृपोत्तम। द्यौराजन्! मानुषे लोके चिरं वत्स्यति भारत!। वैशम्पायन उवाच। एतदाख्याय सा देवी तत्रैवान्तरधीयत। आदाय च कुमारं तं जगामाथ यथेप्सितम्। स तु देवव्रतो नाम गाङ्गेय इति चाभवत्। द्युनामा शान्तनोः पुत्रः शान्तनोरधिको गुणैः"।

"अथापनेयं भीष्मं तं रामेणेच्छामि धीमता। रणे विनिर्जितं द्रष्टुं कुर्य्याद्यदपि भार्गवः" "यदि त्वामापगेयो वै

न नवेद्गजमात्रयम्" इति च भा०उ०प०७७अ०।

**आपचिक** त्रि० आपदं चिकृति हन्ति चिक–अच् पृ० कलोपः। आपत्कर्त्तरि। गौरा०स्त्रियां ङीष्।

**आपटव** न० न सन्ति पटवोऽस्य तस्य भावः अण्। पटुत्वाभावे। न पटुरपटुरिति तत्पुरुषात्तु ष्यञि उत्तरपदस्यैव वृद्धिः। अपाटवम्। "अपाटवाद्यशौचाद्यैर्यदि विघ्नं प्रजायते" स्मृतिः।

**आपण** पु० आपण्यायन्ते विक्रीयन्त्यत्र आ+पण-नि०आधारे घ। १हट्टे, २क्रयविक्रेयद्रव्यशालायाञ्च। "शकटापणवेशाश्च वणिजो वन्दिनस्तथा। नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः" भा०व०प० २३८। "भक्ष्यमाल्यापणानाञ्च ददृशुः श्रियमुत्तमाम्" भा०स०प० ४अ०। "अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम्। सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते" दा०त०वृ०। "आपणः पण्यवीथिका" रघु० व्य०त० "आपणो विक्रयस्थानम्" तेनैवोक्तम्। "पूर्णापणाविपणिनो विपणीर्विभेजुः" माघः। भावे घञ् आपाणः। क्रयविक्रयव्यवहारे पु०।

**आपणिक** त्रि०आपणादायस्थानादागतः ठक्। १हट्टस्थानादागते राजकरादौ। आपणस्य धर्म्यम् ठक्। २हट्टस्य वणिग्धर्मे। आपणस्यावक्रयः राजग्राह्यः ठक्। ३हट्टस्य राजग्राह्ये द्रव्ये (तोला) आ+पण–इकन्। ४वणिग्जने उज्ज्वलदत्तः।

**आपतन** न०आ+पत–भावे ल्युट्। १आगमने २प्राप्तौ ३ज्ञाने "क्वचित् प्राकरणिकादर्थादप्राकरणिकार्थस्यापतनम्" सा०द०। दैववशात् ४पतने च।

**आपति** पु० आपतति आ+पत–इन्। सततगामिनि वायौ "आपतये त्वा परिपतये गृह्णामि" य० ५,५, आपतिः सततगतिर्वायुः" वेददी०। [२दैवायत्ते त्रि० उज्ज्वलदत्तः।

**आपतिक** पु० आपतति शीघ्रम् आ+पत–इकन्। १श्येने

**आपतित** त्रि०आ+पत–क्त। १हठादागते२दैवायत्तपतने च

**आपत्कल्प** पु० आपद्युचितः कल्पोविधिः शा०त०। आपत्कालिकविधौ स च विधिर्गौतमेनोक्तः यथा "आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषाऽसमाप्तेर्ब्राह्मणोगुरुः याजनाध्यापनप्रतिग्रहाः सर्वेषां पूर्वः पूर्वोगुरुस्तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिः तस्यापण्यं गन्धरसकृतान्नतिलशाणक्षौमाजिनानि रक्तनिर्णिक्ते वाससी क्षीरञ्च सविकारं मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि पशवश्च हिंसासंयोगे पुरुषवशाकुमारीवेहतश्च नित्यं भूमिव्रीहियवाजाव्यश्व ऋषभधेन्वनडुहश्चैके। विनिमयस्तु रसानां रसैः पशूनाञ्च न लवणकृतान्नयोः, तिलानाञ्च समेनामेन तु पक्वस्य संप्रत्यर्थे सर्वथा वृत्तिरशक्तावशूद्रेण तदप्येके प्राणसंशये, तद्वर्णसङ्करोऽभक्ष्यनियमस्तु प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत राजन्यवैश्यकर्म, राजन्यो वैश्यकर्म"

**आपत्काल** पु० आपद्युक्तः कालः शा०त०। आपद्युक्ते समये "अब्राह्मणादध्ययनमापत्काले विधीयते" मनुः "आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि। मनस्तापेन शुध्येत्तु द्रुपदां वा शतं जपेत्" प्रा०त०स्मृ०।

**आपत्कालिक** त्रि०आपत्काले भवः काला०ठञ् ञित् वा। आपत्कालभवे ठञि स्त्रियां ङीप् ञिति तु टाबिति भेदः।

**आपत्ति** स्त्री आ+पद–क्तिन्। आपदि आपन्न रोगाद्यभिभूततावस्था सम्यग्वर्त्तनोपायानुपलब्धश्च। आपदि धर्माचरणञ्च या० स्मृ० दर्शितम् यथा

"क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः। निस्तीर्य तामथात्मानं पावयित्वा न्यसेत् पथि। फलोपलक्षौमसोममनुष्यापूपवीरुधः। तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम्। शस्त्रासवमधूच्छिष्टमधुलाक्षाश्च बर्हिषः। मृत्कुम्भपुष्पकुतपकेशतक्रविषक्षितीः। कौशेयनीललवणमांसैकशफसीसकान्। शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च। वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन। धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः। लाक्षालवणमांसानि पतनीयानि विक्रये। पयोदधि च मद्यञ्च हीनवर्णकराणि च। आपद्गतः सम्प्रगृह्णन् भुञ्जानो वा यतस्ततः। न लिप्येतैनसा विप्रोज्वलनार्कसमो हि सः। कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः। सेवाऽनूपं नृपोभैक्षमापत्तौ जीवनानि तु। बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्। प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः। तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः। ज्ञात्वा राजा कुटुम्बञ्च धर्म्यां वृत्तिं प्रकल्पयेत्"। विस्तरस्तु भा०शा०प०आपद्धर्मपर्वणि दृश्यः। २प्राप्तौ। "स्थानापत्तेर्द्व्येषु धर्मलाभः" कात्या० ३,२,१८. "इतरेतरभावापत्तिः" शा०भा० व्यतिरेकव्याप्त्या ३अर्थादेः सिद्धौ। अर्थापत्तिः ४अनिष्टप्रसङ्गे स च व्याप्यस्याहार्यारोपात् व्यापकस्याहार्य्यारोपः। यदि निर्वह्निः स्यात् निर्धूमः स्यादित्येवं रूपः।

**आपत्य** पु० अपत्याधिकारे विहितः अण्। पाणिन्यादिभिः

तस्यापत्यमित्यधिकारे विहिते प्रत्यये । "आपत्यस्य च तद्धितेऽनाति" पा० ।

**आपथि** पु० अभिमुखः पन्थाः यस्य वेदे नि० इत् समा० । अभिमुखमार्गसम्बन्धिनि "आपथयोविपथयोऽन्तस्पथा अनुपथाः" ऋ० ५.५२ १० । आपथयः अभिमुखा मार्गा येषां ताडशाः" भा० स्त्रियां वा ङीप् "हिरण्ययेभिः पविभिः पयोवृधः उज्जिघ्नन्त आपथ्यो न पर्व्वतान्" ऋ० १, १६४ ११ ।

**आपद्** स्त्री आ+पद–सम्पदा० क्विप् । विपत्तौ आपत्तिशब्दे विवृतिः" दैवीनां मानुषीणाञ्च प्रतिहर्त्ता त्वमापदाम्" रघुः । "सम्पदो मे निरापदः"रघुः "अविवेकः परमापदां पदम्"किरा०"मन्त्रशक्तिविनिवारितापदः"माघः।"आपत्कल्पः आपत्कालः । आपत्प्राप्तः । आपद्गतः । आपद्ग्रस्तः । आपद्धर्मः" हलन्तत्वाद्वा टाप् । आपदाप्यत्र । आपत्काले न्यूनादपि विद्याधिगन्तव्या यथा छा०उ० "वाचा स्म वै पूर्व्वं उपयन्ति सहोपायनकीर्त्त्योवास" अत्र भाष्यम् "वाचा स्म किल पूर्व्वे ब्राह्मणाः विद्यार्थिनः सन्तः क्षत्रियान् वैश्यान् वा क्षत्रिया वैश्यानुपयन्ति शिष्यवृत्त्या उपगच्छन्ति नोपायनशुश्रूषाभिः अतः स गौतम उपायनकीर्त्त्या उपगमनकीर्त्तनमात्रेणैव उवास ऋषिवान् नोपायनं चकार"। "आपदि समादधिकाद्वा विद्याप्राप्त्यसम्भवावस्थायाम् उपायनमुपगमनं पादोपसर्पणम्" आन० ।

**आपदकाल** पु०आपदा क्वतोऽकालः । आपदा क्वते दुष्टे काले "पीड़ा चापद्कालश्च पत्निज्ञानञ्च पाण्डव !" भा० शा० प० ५८ अ० ।

**आपदेव** पु० आपस्य जलसमूहस्य देवः । वरुणे ।

**आपद्धर्म** पु० आपदि कर्त्तव्यो धर्मः । १आपद्यनुष्ठेये धर्म्मे आपद्धर्ममधिकृत्य क्वतोग्रन्थः अण् । भारतान्तर्गतशान्तिपर्वमध्यगते व्यासक्वते २अवान्तरपर्वभेदे न० तच्च भा०शा०प० १३१ अध्यायावधि १७२अध्यायपर्य्यन्तम् ।

**आपन** न०आप+भावे ल्युट् । १प्राप्तौ । कर्मणि ल्युट् । २मरीचे शब्दच० । [मणौ २किराते च उज्ज्वलदत्तः ।

**आपनिक** त्रि० आ+पन–स्तुतौ कर्मणि इकन् । १इन्द्रनीले

**आपनेय** त्रि० आ+अप+नी–कर्मणि यत् । समन्तादपनेये दूरीकार्य्ये "नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ !"कठोप० । "येयमागमप्रतिपाद्यात्मनि मतिः नैषा तर्केण स्वबुद्ध्यभ्यूहमात्रेण नापनेया नापनेतव्या न हन्तव्या । तार्किकोह्यनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किञ्चिदेव कथयति अतएव च येयमागमप्रसूता मतिः तार्किकादन्येनैवागमाभिज्ञेनाचार्य्येणैव प्रोक्ता सती सुज्ञानाय भवति" भा० ।

**आपन्न** आ+पद–क्त । २आपद्गमते"आपन्नः संसृतिं घोरां यन्नाम विवशोऽगृणेत् । ततः सद्योविमुच्येत यद्बिभेति स्वयं भयम्" भाग० "आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः" शकु० "आत्मापराधादापन्नस्तत् किं भीमं जिघांससि"भा०स्त्री०प०१२अ०१प्राप्ते मेदि०आपन्नसत्वा

**आपन्नसत्वा** स्त्री आपन्नं प्राप्तं गर्भरूपेण सत्वं प्राणी यया । गर्भिण्यां स्त्रियाम् "सममापन्नसत्वास्ता रेजुरापाण्डुरत्विषः" रघुः । [निमयं दत्त्वा क्रीते ।

**आपमित्यक** त्रि०अपमित्य परिवर्त्त्य निर्वृत्तम् कक् । वि-

**आपया** स्त्री आपेन जलपूरेण याति या+क । १जलपूरवाहि नदीभेदे "दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि" ऋ०३,२३,४, ।"आपया नाम काचित् नदी" भा० २आपगारूपनदीमात्रे च ।

**आपयितृ** त्रि० आप+णिच्–तृच् । प्रापयितरि "आपयिता ह वै कामानां भवति यएवं विद्वानक्षरमुद्गीथमुपास्ते" छा०उ० । "आपयिता ह वै कामानां यजमानस्य भवति" भा० । स्त्रियां ङीप् ।

**आपराधय्य** न० अप+राध–णिच्वा०य तस्य भावः ब्राह्मण्यञ् । अपराधकर्तृत्वे ।

**आपराह्णिक** त्रि० अपराह्णे भवः ठञ् । १अपराह्णभवे २तद्व्यापके च स्त्रियां ङीप् । "पित्र्ये चापराह्णिकी" स्मृतिः ।

**आपर्त्तुक** पु० ऋतुमधिकृत्य अध्यायः तत्र विहितः कल्पः । ऋतावध्यायबोधके छान्दसे कल्पग्रन्थभेदे । "ऋतावध्यायश्छान्दसः कल्प आपर्त्तुकः"कौषीतकिसूत्रम् ।

**आपव** पु०आप्नोति सर्वमात्मेन आप् जलं तदधिष्ठाता वरुणोऽपि आपूः तस्यापत्यम् । कल्पभेदे वरुणस्यापत्ये १वशिष्ठे मुनौ तस्य तत उत्पत्तिकथा यथा भा०आ०प० ९९ अ० "यं लेभे वरुणः पुत्रं पुरा भरतसत्तम ! वशिष्ठनामा स मुनिःख्यात आपव इत्युत" "तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः" इति च आपवेयशब्दे विवृतिः । आपं जलपूरं वाति प्राप्नोति व्याप्यत्वेन वा–क । २नारायणे परमपुरुषे । "आपोनारा इति प्रोक्ता आपोवै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारा-

यशः स्मृतः" इत्युपक्रम्य । "उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे । आपवस्य प्रजासर्गं सृजतो हि प्रजापतेः" स सृष्ट्वा तु प्रजास्त्वेवमापवो वै प्रजापतिः" इति च हरिवं० १,२अ० ।

**आपस्** न० आप–असुन् । जले । "आपोभिर्मार्ज्जनं कृत्वा" स्मृतिः । "अन्नमयं हि सौम्य ! मन आपोमयः प्राणस्तेजोमयी वाक्" छा०उप० "सर्व्वमापोमयं जगत्" देवीमा० । "श्रुवते क्वतमेऽपि नपुंसकमाप" इति उत्तिष्टतकोषात् क्लीवत्वम् । तुडभावे ह्रस्वः अप इत्येव । तट् पक्षे अप्न इत्यपि । कर्मणि ।

**आपस्तम्ब** पु० ऋषिभेदे स च कल्पसूत्रकारः धर्म्मशास्त्रकर्त्ता च "यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती" इत्याद्यभिधाय "धर्म्मशास्त्रप्रयोजकाः" या० स्मृ०। तदीय संहिता च दशाध्यायी तस्यां प्रायश्चित्तविधानमात्रमुक्तम् ।तस्यापत्यम् विदा० अञ् आपस्तम्बः तदपत्ये पुंस्त्री स्त्रियां ङीप्। आपस्तम्बस्येदम् छ । आपस्तम्बीयः । तत्सम्बन्धिनि त्रि० आपस्तम्बेन प्रोक्तमधीयते अण् तस्य लुक् । आपस्तम्बप्रोक्तशाखाध्येतृषु ब०व०। आपस्तम्ब्यां भवः ढक्। आपस्तम्बेयः । आपस्तम्ब्यापत्यस्त्रीभवे त्रि० ।

**आपस्तम्भिनी** पु०आपः स्तम्भानि स्तम्भ–णिनि । त्रिङ्गिन्यां लतायाम् ।

**आपाक** पु०समन्तात् परिवेष्य पच्यतेऽत्र आ+पच–आधारे घञ् । १कुम्भकारस्य मृण्मयपात्रपचनस्थाने (पोयान) । भावे घञ् । २ईषत्पाके ३सम्यक्पाके ४पुटपाके च ।

**आपाङ्ग्य** न० अपाङ्गे देयम् अञ् । अपाङ्गे देये अञ्जने । "शलाकया दक्षिणेन विमेत्कानीनमञ्जनम् । आपाङ्ग्यं वा यथायोग्यं कुर्य्याच्चात्र गतागतम्" सुश्रु० ।

**आपात** पु० हठात् अविवेकात् कारणान्तरसाचिव्याभावेऽपि आगत्य पातः । अविविच्यावगतौ "आपाततोयदर्थस्य पौनरुक्त्यावभासनम्"सा०द०२अतर्कितागमने ।"गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः" रघुः । "तदापातभयात् पथि"कुमा० आपतत्यत्राधारे घञ् । ३तत्काले वर्त्तमानकाले"आपातरम्या विषयाः पर्य्यन्तपरितापिनः"किरा० "आपातरम्याकालकालरमणीयाः" मल्लि० । ४उपक्रमे च "मध्वापातोविषास्वादः स धर्मप्रतिरूपकः" मनुः । "मध्वापातो मधुरोपक्रमः"कुल्लू० ।

**आपातलिका** स्त्री छन्दः० उक्ते मात्राभेदे "कथितेयं भात् गुरुकावथ पूर्व्वमन्यत्" तल्लक्षणं अन्यत् वैतालीयगतम् तत्र "षड्विषमेऽष्टौ समे कलास्तास्तु समे स्युर्नोनिरन्तराः । न समात्र पराश्रिता कला"इत्येव प्रथमं निवेश्यान्ते जगणं दत्त्वा गुरुद्वयं चतुर्षु चरणेषु देयमित्यर्थः ।

**आपाततस्** अव्य० आपात+तसिल् । १कारणं विनेत्यर्थे २अकस्मादित्यर्थे ३अनवधार्य्येत्यर्थे च । "एतच्चापाततः" जगदी०"आपाततो यदर्थस्येति" सा०द०।

**आपात्य** त्रि० आपतति स्वयमाक्रमितुमागच्छति । "भव्यगेयेत्यादि" पा०नि० कर्त्तरि यत् । १स्वयमाक्रमितुमागामिनि । "आपात्यसैनिकनिराकरणाकुलेन" माघः । भावे यत् । २कर्त्तव्यापतने ३कर्मणि यत् । आपात्ये देशादौ त्रि० आ+पत–णिच् ल्यप् । ४समन्तात्पातयित्वेत्यर्थे अव्य०।

**आपाद** पु० आ+पद– घञ् । फललाभे "ध्यानापादांश इव" ह०उ० "ध्यानस्यापादनमापादः ध्यानफललाभः" इति भा० २आगतौ च पादपर्य्यन्तम् अव्ययी० । ३पादपर्य्यन्ते अव्य० ।

**आपादन** न० न० आ+पद–णिच्–ल्युट् । १आपत्तिविषयीकरणे आपादकप्रानेन आपद्यनिश्चये" पद–भावे णिच्–ल्युट् । २सम्पादने "द्रव्यस्य संख्यान्तरापादने" सि० कौ० ।

**आपान** न० आपीयते सम्भूय सुरा पीयतेऽत्र आधारे ल्युट् । सुरापानाय सम्भूयोपवेशनस्थाने । पानार्थसभायाम् (चक्र) "गन्धर्वाप्सरसोभद्रे ! मामापानगतं सदा" भा०व०प०२८०अ० । "आपाने पानकलिता दैवेनाभिप्रणोदिताः" ददर्श यदुवीराणामापाने वैशसं महत्" इति च भा०आ०प० २अ० । भावे ल्युट् । २सम्भूय सुरापाणे । "ताम्बूलीनां दलैस्तत्र रचितापानभूमयः" रघुः । "यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु" कुमा० । स्वार्थे कन् । आपानकमप्यपि पानगोष्ठ्याम् । सुरापाणे च "आपानकमुत्सवः !"काद० । [कर्त्तरि स्त्रियां ङीप् ।

**आपायिन्** त्रि० आपिवति आ+पा–णिनि । सुरापाणे

**आपालि** पु० आ+पा–क्विप् तदर्थमलति अल–इन् । केशकीटे (उकुन्) सहि शीर्षस्थरुधिरापानप्रसक्तः

**आपि** पु० आप+णिच्–इन् । १धनादिप्रापके । "इमे देवा सूर्य्यमिदापयः" ऋ०२,२६,४ । "आपयः धनस्य प्रापयितारः" भा० । आप्यते कर्म्मणि इन् । २आप्ते बन्धौ तस्य भावः आपित्वं बन्धुत्वे "आपित्वे नः प्रपित्वे" ऋ०८,७,२ । "आपित्वे बन्धुत्वे" भा० ।

**आपिञ्जर** न॰ ईषत्पिञ्जरं प्रा॰स॰। १स्वर्णे राजनि॰। २ईषत्पिञ्जरवर्णे पु॰ ३तद्वति त्रि॰ "आपिञ्जराबद्धरजः-कणत्वात्" रघुः।

**आपिशलि** पु॰ अपिशलस्य मुनेरपत्यम् इञ्। आदिशाब्दिके मुनिभेदे। "इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्राजयन्त्यष्टादिशाब्दिकाः" कवि क॰ "वा सुप्यापिशलेः" पाणिनिनोक्तेस्ततोऽप्यस्यादित्वम् स्त्रियां क्रौड्या॰ष्यञ्। आपिशल्या तस्यस्त्र्यपत्ये स्त्री। आपिशलिना प्रोक्तम् अण्। आपिशलम्। तदीये शास्त्रे न॰।

**आपी** त्रि॰ आ+प्याय-क्विप् पीभावः। १आपीने वृद्धिमति।

**आपीड** पु॰ आ+पीड-अच्। १शिखामाल्ये, २शिरोभूषणे, "तस्मिन् कुलापीडनिभे विपीड़ितम्" रघुः। "विचित्रमुकुटापीड़ा विचित्रकवचध्वजाः" भा॰व॰प॰ १७२ अ॰ "बद्धापीड़ांशारुरूपांश्च यूनो व्यूढोरस्कांस्तालमात्रान् ददर्श" भा॰ आ॰प॰१८७अ॰। २स्तवहिर्निःसृतकाष्ठे च। ३आपीडकमाले त्रि॰।

**आपीडा** स्त्री आ+पीड-अ। सम्यक्पीड़ने "तत्र तूर्णं गलापीडं कुर्यात्ताप्यधमनम्" सुश्रु॰ गलस्यापीडा मर्द्दनं यत्रेति तदर्थः।

**आपीड़ित** त्रि॰ आ+पीड-क्त। १निष्पीडिते २निर्मृष्टे।

**आपीत** न॰ ईषत् पीतम् प्रा॰त॰। माक्षिके धातौ। २ईषत्पीतवर्णे पु॰ ३तद्वति त्रि॰। ईषत् पानं कृतं यस्य तादृशे ४जलादौ त्रि॰।

**आपीन** न॰ आ+प्याय-क्त पीभावः तस्य नत्वम्। (मेड़) १गवादेः ऊधसि "आपीनभारोद्वहनप्रयत्नात्" रघुः २कूपे पु॰। "आपीनमूधः आपीनोऽन्धुः" मुग्ध॰। अन्योपसर्गपूर्ब्बकत्वे तु संप्यानद्ध्येव आङ्पूर्ब्बकस्यापि अन्धू धसो रेवार्थयोःपीभावो नान्यत्र।

**आपूपिक** त्रि॰ अपूपः शिल्पमस्य ठक्। १अपूपपाचके अपूपे अपूपभक्षणे साधु गुड़ा॰ठक्। २अपूपभक्षणसाधने गुड़ादौ। अपूपो भक्तिरस्य अचित्तत्वात् ठक्। ३अपूपभक्ष्यासेवके। अपूपःपण्यमस्य ठक्। ४अपूपविक्रेतरि। अपूपस्तद्भक्षणं शीलमस्य ठक्। ५अपूपभक्षशीले। अपूपस्तद्भक्षणं हितमस्य ठक्। ईहितत्वेन अपूपभक्षणकर्त्तरि। अपूपानां समूहः अचित्तत्वात् ठक्। ७अपूपसमूहे न॰।

**आपूप्य** पु॰ अपूपाय साधुः वा ज्य। अपूपसाधने चूर्णे त्रि॰

**आपूर** पु॰ आपूर्य्यतेऽनेन आ+पूर-घञ्। जलादि प्रवाहे "स्वेदापूरोयुवतिसरितां व्याप गण्डस्थलानि" माघः भावे घञ्। २सम्यक्पूरणे ३ईषत्पूरणे "४अभिव्याप्तौ च।

**आपूरण** न॰ आ+पूर-भावे ल्युट्। १"समन्तात्पूरणे आपूरयति ल्यु। २सम्यक्पूरणकर्त्तरि त्रि॰ ३नागभेदे पु॰ "कालिको मणिनागश्च नागश्चापूरणस्तथा" भा॰ आ॰प॰ ३५अ॰। [ २अभिव्याप्तौ च।

**आपूरित** त्रि॰ आ+पूर-क्त। यस्यापूरणं कृतं १तस्मिन्

**आपूर्य्यमाण** त्रि॰ आ+पूर-कर्म्मणि शानच्। सम्यक् पूर्य्यमाणे २समन्तात्प्रसृते "आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्" गीता। आधारे शानच्। सूर्य्यकिरणैः पूर्य्यमाणचन्द्रस्याधारे पक्षे। "उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चूड़ोपनयनगोदानविवाहाः" आश्व॰गृह्य॰। "अर्च्चिषोऽहरह्न आपूर्य्यमाणं पक्षम्" छा॰उप॰।

**आपूष** आ+पूष-वृद्धौ करणे घञ्। रङ्गे (राङ्) धातुभेदे, तस्य शुद्धिसाधनतादिकमुक्तं भा॰ प्र॰ "रङ्गं वङ्गं लघु प्रोक्तं तथा पिच्चटमित्यपि। खुरकं मिश्रकं चापि द्विविधं रङ्गमुच्यते। उत्तमं खुरकं प्रोक्तं मिश्रकं गर्हितं भवेत्। रङ्गं लघु सरं रूक्षमुष्णमेहकृमीनपि। निहन्ति पाण्डुं सश्वासं चक्षुष्यं पित्तलं मनाक्। सिंहो यथा हस्तिगणं निहन्ति तथैव वङ्गो ऽखिलमेहवर्गम्। देहस्य सौख्यम् प्रबलेन्द्रियत्वं नरस्य पुष्टिं विदधाति नूनम्"।

**आपृच्** त्रि॰ आ+पृच-क्विप्। संसर्गयुक्ते। "मित्रक्रुवोयच्छसान न गावः पृथिव्या आपृगमुया स यन्ति" ऋ॰१॰, ८९,१४।

**आपृच्छा** स्त्री आ+प्रच्छ-अङ्। १आलापे, २जिज्ञासायाम् ३आभाषणे गतागतकाले ४शुभप्रश्ने ५आनन्दने च।

**आपृच्छ्य** त्रि॰आ+प्रच्छ-वेदे नि॰क्यप्। जिज्ञास्ये। "आपृच्छ्यं धरुणं वाज्यर्षति" सि॰कौ॰धृता श्रुतिः। आ+प्रच्छ-ल्यप्। २जिज्ञासित्वेत्यर्थे अव्य॰।

**आपेक्षिक** त्रि॰ अपेक्षात आगतः ठक्। अपेक्षया प्राप्ते "किन्तु मध्यत्वमापेक्षिकम्" सि॰कौ॰ "अस्तमन्तु ते ह्स्वापेक्षिकमस्तत्वम्" छा॰उ॰भा॰। स्त्रियां ङीप्।

**आपोक्लिम** न॰ ज्योतिषोक्ते जन्मलग्नावधिकतृतीयषष्ठनवमद्वादशस्थानेषु। "तृतीयं षष्ठनवममन्त्यञ्चापोक्लिमं विदुः" ज्यो॰त॰। "आपोक्लिमे यदि खगाः स किले-

ब्रुवाणेन साम्बुभं कचन तान्त्रिकशास्त्रगीतम्" नी०ता०।

**आपोमय** त्रि० आपस्+विकारे प्राचुर्य्ये वा मयट्। १जलविकारे "आपोमयः प्राणस्तेजोमयी वाक्" छा०उ०। "आपोमयाः सर्व्वरसाः सर्व्वमापोमयं जगत्" भा० आ० १८०अध्या०। "भूमेर्गन्धगुणान् भुङ्क्ते पिबत्यापोमयान् रसान्" भा०आश्व० २८अ०। "मन्युजोऽग्निर्दहत्यापो लोकाश्चापोमयाः स्मृताः" भा०आ०१८०। जलव्याप्ते २जलप्रचुरे "विलोक्य ताभ्यां गदितः सर्व्वमापोमयं जगत्। आवां जहि न यत्रोर्व्वी सलिलेन परिप्लुता" देवीमा०।

**आपोमूर्त्ति** पु० स्वारोचिषस्य मनोः १पुत्रभेदे। "हविघ्नः सुकृतिर्ज्योतिरापोमूर्त्तिरयस्मयः। प्रथितश्च नभस्यश्च नभ ऊर्ज्जस्तथैव च। स्वारोचिषस्य पुत्रास्ते मनोस्तात! महात्मनः" हरिवं० ६अ०। दशमे मन्वन्तरे भाविनि सप्तर्षिमध्ये २ऋषिभेदे च "दशमे त्वथ पर्य्याये द्वितीयस्यान्तरे मनोः। हविष्मान् पौलहश्चैव सुकृतिश्चैव भार्गवः। आपोमूर्त्तिस्तथात्रेयो वाशिष्ठश्चाष्टकः स्मृतः" इति हरिवं० ७अ०।

**आपोऽशान** न० आपसा जलेन अशानं अश—व्याप्तौ भावे वा० आनच्। जलेन उपरिष्टादधस्ताच्चाच्छादनरूपे अन्नाच्छादनार्थे कर्म्मणि। "आपोऽशानेनोपरिष्टादधस्तादश्नता तथा। अनग्नममृतञ्चैव कार्य्यमन्नं द्विजन्मना" या०स्मृ०। "भुञ्जानेन द्विजन्मना उपरिष्टादधस्ताच्च आपोऽशानाख्येन कर्म्मणा अन्नमनग्नममृतं च कार्य्यम्" मिता०। "आपोऽशानक्रिया पूर्व्वं सत्कृतान्नमकुत्सयन्" या०स्मृ०। "आपोऽशानक्रियापूर्व्वम् अमृतोपस्तरणमसि स्वाहेत्यादिकं कृत्वा" मिता०। "आपोऽशानं कर्म्म कुरु" भवदेवः।

**आप्त** त्रि० आप—क्त। १प्राप्ते २प्रत्ययिते विश्वस्ते। ३यथार्थज्ञानयुक्ते ४युक्तियुक्ते च "आप्तश्रुतिराप्तवचनं तु" सां०का०। "आप्ता प्राप्ता युक्तेति यावत् आप्ता चासौ श्रुतिश्चेति आप्तश्रुतिः श्रुतिर्वाक्यजनितं वाक्यार्थज्ञानं तच्च स्वतःप्रमाणम् अपौरुषेयवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तत्वेन युक्तं भवति एवं वेदमूलकस्मृतीतिहासपुराणजनितज्ञानमपि युक्तम्। कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः सुप्तप्रबुद्धस्येव पूर्व्वेद्युरवगतार्थानामपरेद्युः। आप्तग्रहणेन चायुक्ताः शाक्यभिक्षुनिर्ग्रन्थिकसंसारमोचकादीनामागमाभासा निराकृता भवन्ति अयुक्तत्वञ्चैतेषां विगानात् छिन्नमूलत्वात् प्रमाणविरुद्धाभिधानात् कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाच्चबोध्यम्" सा०त०कौ०। "तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्" सां०का०। यथार्थज्ञानविशिष्टरूपाप्तोक्तत्वनिश्चयस्य शाब्दबोधहेतुत्वमिति मीमांसकाः नैयायिकास्तु मन्यन्ते यथोक्तं शब्दश०प्र० "साकाङ्क्षत्वादिधीरिव वाक्यार्थगोचरज्ञानवदुक्तत्वरूपस्याप्तोक्तत्वस्यापि निश्चयः शाब्दधीहेतुरतोऽनेकपदार्थधर्म्मिकोऽपरपदार्थस्यान्वयबोधोऽनुमितिः सिद्धिसत्त्वे विनानुमित्सां तदसम्भवात् परन्त्वनुमितेरन्यएव किन्त्वसौ स्मृहीतग्राहित्वान्न प्रमा यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानकारनिश्चयोत्तरत्वं तज्जातीयान्ययथार्थज्ञानस्य वास्मृहीतग्राहित्वेन प्रमात्वात् अतएव धारावाहिकप्रत्यक्षव्यक्तीनां समानाकारग्रहोत्तरवर्त्तित्वेऽपि न तासां प्रमात्वहानिः हानिस्तु समानाकारानुभवसमुत्थानां स्मृतीनामिति जरन्मीमांसकानां समाधानं निरस्यति। नाप्तोक्तता तु वाक्यार्थगर्भा ज्ञातोपयुज्यते। वाक्यार्थानामपूर्व्वत्वात् संशयेऽप्यन्वयोदयात्। यद्ध्येकपदार्थेऽपरपदार्थपर्य्यवसन्नस्य वाक्यार्थस्य ज्ञानवदुक्तत्वरूपाया आप्तोक्ततायाः निश्चयः शाब्दमतेः कारणं स्यात् स्यादपि तेनैव रूपेण साध्यनिश्चयेन प्रतिबन्धादेकपदार्थपक्षिकाया अपरपदार्थानुमितेरनुत्पादो नचैवं, शाब्दधियः पूर्व्वं वाक्यार्थस्योपस्थित्यनियमेन तद्गर्भस्याप्तोक्तत्वस्यापि मतेरनावश्यकत्वात् अन्यथा वेदस्याप्यनुवादकतापत्तेः एकपदार्थेऽपरपदार्थस्य शब्दे वाक्यार्थज्ञानवदुक्तत्वस्य संशयेऽपि शाब्दमतेरुत्पादाच्च। अतएवाप्तोक्तत्वस्य संशये व्यतिरेकनिश्चये वान्वयबुद्धेरनुत्पादादवश्यन्तन्निश्चयस्तत्र हेतुरित्यपि प्रत्युक्तम् असिद्धेः"। ५कुशले "प्राजकश्चेद्भवेदाप्तः" मनुः। "आप्तः कुशलः" कुल्लू०। ६सम्पूर्णे "यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः" मनुः ७लब्धे "निग्रहात् स्वसुराप्तानां वधाच्च धनदानुजः" रघुः ८जटायां स्त्री हारा० ९सम्बद्धे १०लब्धे च त्रि० हेम०।

**आप्तकाम** त्रि० आप्तः प्राप्तः कामो येन। १ब्रह्मात्मैक्यावगन्तरि यथा चास्याप्तकामत्वं तथोक्तं वृ०उप०भाष्ययोः। "तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपम्। तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्। तद्वा अस्यैतदाप्तकाममात्मकामं रूपं शोकान्तरम्। अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदाः। अत्र स्तेनो-

ऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पापेन तीर्णो हि तदा सर्व्वाञ्छोकान् हृदयस्य भवति" इ०उ० "इदानीं योऽसौ सर्वात्मभावो मोक्षो विद्याफलं क्रियाकारकफलशून्यं स प्रत्यक्षतो निर्द्दिश्यते। यत्राविद्याकामकर्म्माणि न सन्ति तदेतत्प्रस्तुतं "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यतीति"। तद्वा अस्य रूपम्। यः सर्वात्मभावः सोऽस्य परमो लोक इत्युक्तस्तदतिच्छन्दा अतिच्छन्दमित्यर्थः रूपपरत्वात्। छन्दः कामोऽतिगतः छन्दोऽस्मिन् रूपे तदतिच्छन्दं रूपम्। अन्योऽसौ स्वरान्तः छन्दःशब्दो गायत्र्यादिच्छन्दोवाची। अयन्तु कामवचनोऽतः स्वरान्त एव। तथाप्यतिच्छन्दा इति पाठः स्वाध्यायधर्म्मो द्रष्टव्यः। अस्ति च लोके कामवचनप्रयुक्तः छन्दशब्दः स्वच्छन्दः परच्छन्द इत्यादौ। अतोऽतिच्छन्दमित्येवमुचितं कामवर्ज्जितमेतद्रूपमित्यस्मिन्नर्थे। तथाऽपहतपाप्मा पाप्मशब्देन धर्म्माधर्म्मावुच्येते। "पाप्मभिः संसृज्यते" "पाप्मनो विजहाति" इत्युक्तत्वात्। अपहतपाप्म धर्म्माधर्म्मवर्जितमित्येतत्। किञ्चाभयम् भयं हि नामाविद्याकार्य्यम् "अविद्यया भयं मन्यत" इति ह्युक्तम्। तत्कार्य्यद्वारेण कारणप्रतिषेधोऽयम् अभयं रूपमित्यविद्यावर्जितमित्येतत्। यदेतद्विद्याफलं सर्वात्मभावस्तदेतदतिच्छन्दापहतपाप्माभयं रूपं सर्व्वसंसारधर्म्मवर्ज्जितमतोऽभयं रूपमेतत्। इदञ्च पूर्व्वमेवोपन्यस्तमतोतानन्तरब्राह्मणसमाप्तौ। "अभयं वै जनक प्राप्तोऽसि" इत्यागमतः। इह तु तर्कतः प्रपञ्चितम् दर्शितागमार्थप्रत्ययदार्ढ्याय। अयमात्मा स्वयंचैतन्यज्योतिःस्वभावः सर्व्वं स्वेन चैतन्यज्योतिषावभासयति। "स यत्तत्र किञ्चित्पश्यति रमते चरति जानाति च" इत्युक्तम्। अतः स्थितञ्चैतन्न्यायतो नित्यस्वरूपं चैतन्यज्योतिष्ट्वमात्मनः। स तथाभूतोऽविनष्टः स्वेनैव रूपेण वर्त्तते कस्मादयमहमस्मीत्यात्मानं वा बहिर्वेमानि भूतानीति जाग्रत्स्वप्नयोरिव न जानातीत्यत्रोच्यते। शृणु तत्राज्ञानहेतुम् एकत्वमेवाज्ञानहेतुस्तत्कथम्? इत्युच्यते। दृष्टान्तेन हि प्रत्यक्षीभवति विवक्षितोऽर्थ इत्याह। तत् तत्र यथा लोके प्रियवेष्टया स्त्रिया सम्परिष्वक्तः सम्यक् परिष्वक्तः कामयन्त्या कामुकः सन्न बाह्यमात्मनः किञ्चन किञ्चिदपि न वेद मत्तोऽन्यदस्तीति। न चान्तरमयमहमस्मि सुखी दुःखी वेति। अपरिष्वक्तस्तु तया प्रविभक्तो जानाति। सर्व्वमेव बाह्यमाभ्यन्तरञ्च। परिष्वङ्गोत्तरकालन्त्वेकत्वापत्तेर्न जानाति। एवमेव यथादृष्टान्तोऽयं पुरुषः क्षेत्रज्ञो भूतमात्रासंसर्गतः सैन्धवखिल्यवत् प्रविभक्तो जलादौ चन्द्रादिप्रतिबिम्बवत्कार्य्यकरण इह प्रविष्टः सोऽयं पुरुषः प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनात्मना परेण ज्योतिषा सम्परिष्वक्तः सम्यक् परिष्वक्त एकीभूतो निरन्तरः सर्वात्मा न बाह्यं किञ्चन वस्त्वन्तरं नाप्यान्तरमात्मन्ययमहमस्मि सुखी दुःखी वेति वेद तत्र चैतन्यज्योतिःस्वभावत्वे कस्मादिह न जानातीति यदप्राक्षीत्तत्रायं हेतुर्मयोक्तः। एकत्वं यथा स्त्रीपुंसयोः सम्परिष्वक्तयोः। तत्रार्थान्नानात्वं विशेषविज्ञानहेतुरित्युक्तं भवति। नानात्वे च कारणमात्मनो वस्त्वन्तरस्य प्रत्युपस्थापिकाविद्येत्युक्तं तत्र चाविद्याया यदा प्रविविक्तो भवति तदा सर्व्वैकत्वमेवास्य भवति। ततश्च ज्ञानज्ञेयादिकारकविभागेऽसति कुतो विशेषविज्ञानप्रादुर्भावः कामो वा सम्भवति स्वाभाविके स्वरूपस्य आत्मज्योतिषि। यस्मादेवं सर्व्वैकत्वमेवास्य रूपमतस्तद्वा अस्यात्मनः स्वयंज्योतिःस्वभावस्यैतद्रूपमाप्तकामं यस्मात्समस्तमेतत्तस्मादाप्ताः कामा अस्मिन् रूपे तदिदमाप्तकामं यस्य ह्यन्यत्वेन प्रविभक्तः कामस्तदनाप्तकामं भवति। यथा जागरितावस्थायां देवदत्तादिरूपम्। न त्विदं तथा कुतश्चित्प्रविभज्यतेऽतस्तदाप्तकामं भवति। किमन्यस्माद्वस्त्वन्तराच्च प्रविभज्यते आहोस्विदात्मैव तद्वस्त्वन्तरमत आह। नान्यदस्त्यात्मनः। कथम्? यतः आत्मकाममात्मैव कामा यस्मिन् रूपे येऽन्यत्र प्रविभक्ता इवान्यत्वेन काम्यमाना यथा जाग्रत्स्वप्नयोस्तेऽस्यात्मैवान्यत्वप्रत्युपस्थापकहेतोरविद्याया अभावादात्मकाममत एवाकाममेतद्रूपं काम्यविषयाभावाच्छोकान्तरं शोकच्छिद्रं शोकशून्यमित्येतच्छोकमध्यमिति वा सर्व्वथाप्यशोकमेतद्रूपं शोकवर्ज्जितमित्यर्थः। प्रकृतः स्वयंज्योतिरात्मा अविद्याकामकर्म्मविनिर्मुक्त इत्युक्तम्। असङ्गत्वादात्मन आगन्तुकत्वाच्च तेषां, तत्र चाशङ्का जायते चैतन्यस्वभावत्वे सत्यप्येकीभावान्न जानाति स्त्रीपुंसयोरिव सम्परिष्वक्तयोरित्युक्तम्। तत्र प्रासङ्गिकमेतदुक्तं कामकर्म्मादिवत् स्वयं ज्योतिष्ट्वमप्यस्यात्मनो न स्वभावः। यस्मात् सम्प्रसादे नोपलभ्यत इत्याशङ्कायां प्राप्तायां तन्निराकरणाय स्त्रीपुंसयोर्दृष्टान्तोपादानेन विद्यमानस्यैव स्वयंज्योतिष्ट्वस्य सुषुप्तेऽग्रहणमेकीभावाद्धेतोर्न तु कामकर्म्मादिवदागन्तुकम्। इत्येतत्प्रासङ्गिकमभिधाय यत्प्रकृतं तदेवानुप्रवर्त्तयति। अत्र चैतत्प्रकृत-

मविद्याकामकर्मविनिर्मुक्तमेव तद्रूपम्। यत्सुषुप्त आत्मनो गृह्यते प्रत्यक्षत इति तदेतद्यथाभूतमेवाभिहितं सर्वसम्बन्धातीतमेतद्रूपमिति। तस्मादत्रैतस्मिन् सुषुप्तस्थानेऽतिच्छन्दापहतपाप्माभयमेतद्रूपं तस्मादत्र पिता जनकः तस्य च जनयितृत्वाद्यत्पितृत्वं पुत्रं प्रति तत्कर्मनिमित्तं तेन च कर्मणाऽयमसम्बद्धोऽस्मिन् काले, तस्मात् पिता पुत्रसम्बन्धनिमित्तस्य कर्मणो विनिर्मुक्तत्वात् पिताऽपिता भवति। तथा पुत्रोऽपि पितुरपुत्रो भवतीति सामर्थ्याद्गम्यते उभयोर्हि सम्बन्धनिमित्तं कर्म। तदयमतिक्रान्तो वर्त्ततेऽपहतपाप्मेति ह्युक्तम्। तथा माताऽमाता। लोकाः कर्मणा जेतव्या जिताश्च तत्कर्मसम्बन्धाभावाल्लोका अलोकाः। तथा देवाः कर्माङ्गभूतास्तत्कर्मसम्बन्धात्ययाद्देवादेवाः। तथा वेदाः साध्यसाधनसम्बन्धाभिधायकाः ब्राह्मणलक्षणा मन्त्रलक्षणाश्चाभिधायकत्वेन कर्माङ्गभूता अधीता अध्येतव्याश्च कर्मनिमित्तमेव सम्बध्यन्ते पुरुषेण। तत्कर्मातिक्रमणादेतस्मिन् काले वेदा अवेदाः सम्पद्यन्ते। न केवलं शुभकर्मसम्बन्धातीतः। किन्तर्हि अशुभैरप्यत्यन्तघोरैः कर्मभिरसम्बद्ध एवायं वर्त्तत इत्येतमर्थमाह अत्र स्तेनो ब्राह्मणसुवर्णहर्त्ता भ्रूणहासहपाठादवगम्यते। स तेन घोरेण कर्मणैतस्मिन् काले विनिर्मुक्तो भवति। येनायं कर्मणा महापातकी स्तेन उच्यते तथा भ्रूणहाऽभ्रूणहा तथा चाण्डालो न केवलं प्रत्युत्पन्नेनैव कर्मणा विनिर्मुक्तः। किं तर्हि सहजेनाप्यत्यन्तनिकृष्टजातिप्रापकेणापि विनिर्मुक्त एवायम्। चण्डालो नाम शूद्रेण ब्राह्मण्यामुत्पन्नः चण्डाल एव चाण्डालः स जातिनिमित्तेन कर्मणाऽसम्बद्धत्वादचाण्डालो भवति। पौल्कसः पुल्कस एव पौल्कसः शूद्रेणैव क्षत्रियायामुत्पन्नः। तथा सोऽप्यपौल्कसो भवति। तथा शुभलक्षणैश्च कर्मभिरसम्बद्धो भवतीत्युच्यते। श्रमणः परिव्राट् यत्कर्मनिमित्तो भवति स तेन विनिर्मुक्तत्वादश्रमणः। तथा तापसो वानप्रस्थोऽतापसः। सर्वेषां वर्णाश्रमादीनामुपलक्षणार्थमुभयोर्ग्रहणं किं बहुना। अनन्वागतं न अन्वागतमनन्वागतमसम्बद्धमित्येतत् पुण्येन शास्त्रविहितेन कर्मणा। तथा पापेन विहिताकरणप्रतिषिद्धक्रियालक्षणेन रूपपरत्वान्नपुंसकलिङ्गम्। अभयं रूपमिति ह्यनुवर्त्तते। किं पुनरसम्बद्धत्वे कारणमिति तद्धेतुरुच्यते। तीर्णोऽतिक्रान्तो हि यस्मादेवंरूपस्तदा तस्मिन् काले सर्वाञ्छोकान् शोकाः कामा इष्टविषयप्रार्थनाः ते हि तद्विषयवियोगे शोकत्वमापद्यन्ते। इष्टं हि विषयमप्राप्तं वियुक्तं चोद्दिश्य चिन्तयानस्तद्गुणान् सन्तप्यते पुरुषोऽतः शोको रतिः काम इति पर्यायाः। यस्मात् सर्वकामातीतो ह्यत्रायं भवति। न कञ्चन कामं कामयते अतिच्छन्दा इति ह्युक्तं तत्प्रक्रियापतितोऽयं शोकशब्दः कामवचन एव भवितुमर्हति। कामश्च कर्महेतुर्वक्ष्यति हि। "स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते" इति अतः सर्वकामातितीर्णत्वाद्युक्तमुक्तमनन्वागतं पुण्येनेत्यादि। हृदयस्य हृदयमिति पुण्डरीकाकारो मांसपिण्डस्तत्स्थमन्तःकरणं बुद्धिर्हृदयमित्युच्यते तात्स्थ्यात्मञ्चाक्रोशनवत्। हृदयस्य बुद्धेर्ये शोका बुद्धिसंश्रया हि ते। "कामः संकल्पो विचिकित्सेत्यादि" "सर्वं मन एव" इत्युक्तत्वात् वक्ष्यति च "कामा येऽस्य हृदि श्रिताः" आत्मसंश्रयभ्रान्त्यपनोदाय हीदं वचनम्। "हृदि श्रिता हृदयशोका" इति च। हृदयकारणसम्बन्धातीतश्चायमस्मिन् कालेऽतिक्रामति मृत्यो रूपाणीति ह्युक्तम्। हृदयसम्बन्धातीतत्वात्तत्संश्रयकामसम्बन्धातीतो भवतीति युक्ततरं वचनम्। ये तु वादिनः हृदि श्रिताः कामा वासनाश्च हृदयसम्बन्धिनमात्मानमुपसर्प्योपश्लिष्यन्ते। हृदयवियोगेऽपि चात्मन्यवतिष्ठन्ते पुटतैलस्थ इव पुष्पादिगन्ध इत्याचक्षते। तेषां "कामः संकल्पः" "हृदये ह्येव रूपाणि" "हृदयस्य शोका" इत्यादीनां वचनानामानर्थक्यमेव। हृदयकरणोत्पाद्यत्वादिति चेत् न हृदि श्रिता इति विशेषणात्। न हि हृदयस्य करणमात्रत्वे हृदि श्रिता इति वचनं समञ्जसम्। हृदये ह्येव रूपाणि प्रतिष्ठितानीति च। आत्मविशुद्धेश्च विवक्षितत्वाद्धृदयश्रयवचनं यथार्थमेव युक्तम्। "ध्यायतीव लेलायतीवेति च" श्रुतेरन्यार्थासम्भवात्। "कामा येऽस्य हृदि श्रिता" इति विशेषणादात्माश्रया अपि सन्तीति चेत् न अनाश्रितापेक्षत्वात् न चाश्रयान्तरमपेक्ष्यते हृदीति विशेषणं किन्तर्हि? ये हृद्यनाश्रिताः कामास्तानपेक्ष्य विशेषणम्। ये त्वप्ररूढा भविष्या भूताः स्वप्रतिपक्षतो निवृत्तास्ते नैव हृदि श्रिताः, सम्भाव्यन्ते च ते। अतो युक्तं तानपेक्ष्य विशेषणम्। ये प्ररूढा वर्त्तमानादिविषये ते सर्वे प्रमुच्यन्ते इति। तथापि विशेषणानर्थक्यमिति चेत् न तेषु यत्नाधिक्याद्धेयार्थत्वात्। इतरथाऽश्रुतमनिष्टञ्च कल्पितं स्यादात्माश्रयत्वञ्च कामानाम्। "न कञ्चन कामं कामयत" इति

प्राप्तप्रतिषेधादात्माश्रयत्वं कामानां श्रुतमेवेति चेत् न "सुधीः स्वप्नो भूत्वेति" परनिमित्तत्वात् कामाश्रयत्वप्राप्तेः असङ्गवचनाच्च। न हि कामाश्रयत्वेऽसङ्गवचनमुपपद्यते। सङ्गश्च काम इत्यवोचाम। आत्मकाम इति श्रुतेरात्मविषयेऽस्य कामो भवतीति चेत् न व्यतिरिक्तकामनाभावार्थत्वात्तस्याः, वैशेषिकादितन्त्रन्यायोपपन्नमात्मनः कामाद्याश्रयत्वमिति चेत् न हृदि श्रिता इत्यादिविशेषश्रुतिविरोधादनपेक्ष्यास्ता वैशेषिकादितन्त्रोपपत्तयः श्रुतिविरोधे न्यायाभासत्वोपगमात् स्वयंज्योतिष्ट्वबाधनाच्च। कामादीनाञ्च स्वप्ने केवलसाक्षिमात्रविषयत्वात् स्वयंज्योतिष्ट्वं सिद्धम् स्थितञ्च बाध्येतात्मसमवायित्वे। चक्षुर्वदनुपपत्तेश्चक्षुर्गतविशेषवत्। द्रष्टुर्हि दृश्यमर्थान्तरभूतमिति द्रष्टुः स्वयंज्योतिष्ट्वं सिद्धम् तद्बाधितं स्याद्यदि कामाद्याश्रयत्वं परिकल्प्येत। सर्वशास्त्रप्रतिषेधाच्च। परस्यैकदेशकल्पनायां कामाद्याश्रयत्वे च सर्वशास्त्रार्थजातं कुप्येत। एतच्च विस्तरेण चतुर्थेऽवोचाम। महता हि प्रयत्नेन कामाद्याश्रयत्वकल्पनाः प्रतिषेद्धव्याः। आत्मनः परेणैकत्वशास्त्रार्थसिद्धेः। तत्कल्पनायां पुनः क्रियमाणायां शास्त्रार्थ एव बाधितः स्यात्। यथेच्छादीनामात्मधर्मत्वं कल्पयन्तो वैशेषिका नैयायिकाश्चोपनिषच्छास्त्रार्थेन न सङ्गच्छन्ते तथेयमपि कल्पनोपनिषच्छास्त्रार्थबाधनान्नादरणीया"।

"काममय एवायं पुरुष इति यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म कुरुते यत् कर्म कुरुते तदभिसम्पद्यते" इत्युपक्रम्य "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य। प्राप्यान्तं कर्मणस्तस्य यत् किञ्चेह करोत्ययम्। तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे" इति श्लोकमुदाहृत्य "इति नु कामयमान" इत्युक्त्वा कामयमानस्यैव जन्मादिहेतुत्वमुक्त्वा

"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" वृ० उप०। "इति नु एवं नु कामयमानः संसरति यस्मात् कामयमान एवैवं संसरत्यथ तस्मादकामयमानो न क्वचित् संसरति फलासक्तस्य हि गतिरुक्ता। अकामस्य हि क्रियानुपपत्तेः अकामयमानो मुच्यते। एवं कथं पुनरकामयमानो भवति?। योऽकामो भवत्यसावकामयमानः। कथमकामता? इत्युच्यते। यो निःकामो यस्मान्निर्गताः कामाः सोऽयं निष्कामः। कथं कामा निर्गच्छन्ति?। य आप्तकामो भवति। आप्ताः कामा येन स आप्तकामः। कथमाप्यन्ते कामाः? आत्मकामत्वेन यस्यात्मैव नान्यः कामयितव्यो वस्त्वन्तरभूतः पदार्थो भवति। आत्मैवानन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एकरसो नोर्ध्वं न तिर्यङ्नाधः। आत्मनोऽन्यत्कामयितुम् "यस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् शृणुयान्मन्वीत विजानीयाद्वा" एवं विजानन् किङ्कामयेत्?। ज्ञायमानो ह्यन्यत्वेन पदार्थः कामयितव्यो भवति। न चासावन्यो ब्रह्मविद आप्तकामस्यास्ति। य एवात्मकामतयाऽऽप्तकामः स निष्कामोऽकामोऽकामयमानश्चेति मुच्यते। न हि यस्यात्मैव सर्वं भवति तस्यानात्मा कामयितव्योऽस्ति। अनात्मा चान्यः कामयितव्यः। सर्वञ्चात्मैवाभूदिति प्रतिषिद्धम् सर्वात्मदर्शिनः कामयितव्याभावात् कामानुपपत्तिः। ये तु प्रत्यवायपरिहारार्थं कर्म कल्पयन्ति ब्रह्मविदोऽपि तेषां नात्मैव सर्वं भवति। प्रत्यवायस्य जिहासितव्यस्यात्मनोऽन्यस्याभिप्रेतत्वात्। येन चाशनायाद्यतीतो नित्यं प्रत्यवायासम्बद्धो विदित आत्मा तं वयं ब्रह्मविदं ब्रूमः। यश्च नित्यमेवाशनायाद्यतीतमात्मानं पश्यति। यस्माच्च जिहासितव्यमन्यमुपादेयं वा यो न पश्यति तस्य कर्म न शक्यत एव सम्बद्धुम्। यस्त्वब्रह्मवित्तस्य भवत्येव प्रत्यवायपरिहारार्थं कर्मेति न विरोधः। अतः कामाभावादकामयमानो न जायते मुच्यत एव। तस्यैवमकामयमानस्य कर्माभावे गमनकारणाभावात् प्राणा वागादयो नोत्क्रामन्ति नोर्ध्वं क्रामन्ति देहात्। स च विद्वानाप्तकाम आत्मकामतया इहैव ब्रह्मभूतः। सर्वात्मनो हि ब्रह्मणो दृष्टान्तत्वेन प्रदर्शितमेतद्रूपम्। "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपमिति"। तस्य हि दार्ष्टान्तिकभूतोऽयमर्थ उपसंह्रियते। अथाकामयमान इत्यादिना। स कथमेवम्भूतो मुच्यते? इत्युच्यते। यो हि सुषुप्तावस्थमिव निर्विशेषमद्वैतमलुप्तचिद्रूपज्योतिःस्वभावमात्मानं पश्यति तस्यैवाकामयमानस्य कर्माभावे गमनकारणाभावात् प्राणवागादयो नोत्क्रामन्ति। किन्तु विद्वान् स इहैव ब्रह्म भवति यद्यपि देहवानिव लक्ष्यते। स ब्रह्मैव सन् ब्रह्माप्येति। यस्माद्धि तस्याब्रह्मत्वपरिच्छेदहेतवः कामाः सन्ति। तस्मादिहैव ब्रह्मैव सन् ब्रह्माप्येति न शरीरपातोत्तरकालम्। न हि विदुषो मृतस्य भावान्तरापत्तिर्जीवतोऽन्यो भावः देहान्तरप्रतिसन्धानाभावमात्रेणैव तु ब्रह्माप्येतीत्युच्यते। भावान्तरापत्तौ हि मोक्षस्य सर्वोपनिषद्विवक्षितोऽर्थ आत्मैकत्वाख्यः स बाधितो

भवेत् । कर्म्महेतुकश्च मोक्षः प्राप्नोति न ज्ञाननिमित्त इति । स चानिष्टः अनित्यत्वञ्च मोक्षस्य प्राप्नोति । न हि क्रियानिर्वृत्तोऽर्थो नित्यो दृष्टः । नित्यश्च मोक्षोऽभ्युपगम्यते । “एष नित्यो महिमेति” मन्त्रवर्णात्” वृ०उ०भा० । २परमात्मनि तस्य सर्व्वेषामात्मत्वेनान्यकामयितव्याभावात् आप्तकामत्वम्” आप्तः युक्तः उचितः कामः इच्छा यस्य इति विग्रहे तु । नैयायिकमतसिद्धे ३ईश्वरे च सद्विषयकेच्छाश्रयत्वादीश्वरस्य तथात्वम् ।

**आप्तकारिन्** त्रि० आप्तं युक्तं करोति कृ–णिनि ईत० । १युक्तकारके आप्तचारी कारो । २प्रत्ययिते आज्ञाकारके भृत्यादौ । “अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः” मनुः । “भोप्नादीनाञ्च सर्व्वेषां सुहृदामाप्तकारिणाम्” “अन्विष्य दाहयामास पुरुषैराप्तकारिभिः” भा० । भा० आश्व० प० ११अ० ।

**आप्तगर्भा** स्त्री आप्तोगर्भो यया । गर्भिण्याम् स्त्रियाम् ।

**आप्तवाच्** स्त्री आप्ता युक्ता प्रमादादिदोषशून्या वाक् । १वेदे तन्मूले २स्मृतीतिहासपुराणादौ च “आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा” रघुः आप्तवचनाप्तवाक्यादयोऽप्यत्र न० । आप्ता युक्ता वाग् यस्य । प्रमादशून्यवाक्ये महर्षिप्रभृतौ त्रि० । आप्तवचनाप्तवाक्यादयोऽप्यत्र त्रि०

**आप्तश्रुति** स्त्री कर्म्म० । १वेदे २स्मृत्यादौ च आप्तशब्दे उदा० ।

**आप्ति** स्त्री आप–क्तिन् । १संयोगे, २संप्राप्तौ ३स्त्रीसंयोगे” मेदि० ४संबन्धे, ५लाभे हेम० ६समाप्तौ “कामस्याप्तिं जगतः प्रतिष्ठाम्” कठोप० । कामस्याप्तिं समाप्तिम् तत्र हि सर्व्वे परिकामाःसमाप्ताः” भा० ७सम्पदि च “सैवास्याप्तिर्या सम्पत्” शत० ब्रा० । तत्र संबन्धे “स्वघोराप्तिमतिरुच्यते” शत० ब्रा० । लाभे “सर्व्वावाप्तैव सर्व्वस्यावरुद्धौ” शत० ब्रा० “तपः किमेदं तदवाप्तिसाधनम्” कुमा० “दीक्षां विवेश धर्मात्मा वाजिमेधाप्तये ततः” भा० आश्व० ।८८अ० । ८उत्तरकाले आयतौ च त्रिकाण्ड० ।

**आप्त्र** त्रि० आप–तन् वेदे नि० । १आप्तव्ये “पनित आप्त्रं यजतः” ऋ० ५,४१,८ । “आप्त्रः आप्तव्यः” भा० लोके तु आप्तव्य इत्येव । आप्तिमर्हति यत् । २आप्तियोग्ये त्रि० ।

**आप्नवान** पु० अप्नवानएव स्वार्थे अण् । अप्नवानशब्दार्थे वत्सगोत्र प्रवरे ऋषिभेदे ।

**आप्य** त्रि० अपामिदम् अण् वाऽगु० स्वार्थे ष्यञ् । १जलसम्बन्धिनि अपां विकारे तु अप्मयमित्येव” सि०कौ० आप–यत् । २प्राप्ये त्रि० “योनोनेदिष्ठमाप्यम्” ऋ० ७,१५,२, ३चाक्षुषमन्वन्तरीये देवभेदे च । “चाक्षुषस्यान्तरे तात ! मनोर्देवानिमान् शृणु । आप्याः प्रसूता ऋभवः पृथुकाश्च दिवौकसः । लेखानाम महाराज पञ्च देवाः प्रकीर्त्तिताः” हरिवं १७अ० । “मानुषा आशापाला अर्चन्ते देवाश्चाप्याः साध्याः अन्वाध्या मरुतः” इति शत० ब्रा० कर्म्मभिराप्तत्वात्तेषामाप्यत्वम् द्रष्टव्यम् । ४(कुड)इति पु० रावत्तकूटः ।

**आप्यान** न० आ+प्याय–भावे क्त । १प्रीतौ २वृद्धौ च । कर्त्तरि क्त । ३प्रीते ४वृद्धे च त्रि० ।

**आप्यायन** न० आ+प्याय–ल्युट् । १वृद्धौ, २प्रीतौ च । णिच् ल्युट् । ३तर्पणे प्रीणने ४वर्द्धने च “अग्नेः सोमयमाभ्यां च कृत्वाप्यायनमादितः” मनुः । ल्यु । ५प्रीणनकर्त्तरि त्रि० । “पितृप्रसादमिच्छेयं तप आप्यायनं पुनः” भा० व० प० ८३अ० । “दैवं हि पितृकार्य्यस्य पूर्व्वमाप्यायनं स्मृतम्” मनुः तन्त्रोक्ते ६दीक्षणीयमन्त्रसंस्कारभेदे “मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धदायिनः । जननं जीवनं पश्चात्ताडनं बोधनं तथा । अथाभिषेको विमलीकरणाप्यायने तथा । तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंक्रियाः” इति विभज्य । “कुशोदकेन मन्त्रेण प्रत्यर्णं प्रोक्षणं मनोः । तेन मन्त्रेण विधिवदेतदाप्यायनं मतम्” शा० ति० उक्तम् ।

**आप्यायित** त्रि० आ+प्याय–णिच्–क्त । १प्रीणिते २पूरिते ३वर्द्धिते च । “एषा सूर्य्यस्य वीर्य्येण सोमस्याप्यायिता तनुः । पौर्णमास्यां स दृश्येत संपूर्णो दिवसक्रमात्” कू० पु० । ४आनन्दिते च ।

**आप्र** त्रि० आ+पृ मूल० क । १पूरके । “स्तर्जेषे भर आप्रस्य वक्मभिः” ऋ० १,१२२,२ “चतुर्भिलस्य वरुणस्याग्ने राप्रा द्यावा” सूर्य्योपस्थानमन्त्रः ।

**आप्रच्छन** न० आ+प्रच्छ–ल्युट् । गमनागमनसमये १बन्धूनामन्योन्यकुशलजिज्ञासायाम् २आनन्दसम्पादने च ।

**आप्रच्छन्न** त्रि० आ+प्र–च्छद–क्त । १अत्यन्तगुप्ते २ईषद्गुप्ते च अस्याप्रच्छनार्थत्वोक्तिः शब्दकल्पद्रुमे प्रामादिकी हेमचन्द्रे आप्रच्छनमित्येव पाठः द्वित्वनकारयुक्तपाठस्तु प्रमादिकः ।

**आप्रपद्** अव्य० प्रपदं पदाग्रं तत्पर्य्यन्तम् अव्ययी० । पादाग्रपर्य्यन्ते

**आप्रपदीन** त्रि० आप्रपदं पादाग्रान्तं व्याप्नोति ख । पादाग्रान्तं लम्बमाने वस्त्रादौ । [ईषद्द्रवणे ।

**आप्रवण** त्रि० ईषत् प्रवणः । ईषदर्थे आ+प्रु–ल्युट् ।

**आप्री** स्त्री आप्रीणात्यनया आ–प्री–क गौरा० ङीष् । प्रयाजयाज्यायाम् “प्रैषेभिः प्रैषैराप्नोत्याप्रीभिराप्रीर्यज्ञस्य” यजु० १९,१९ । “आप्रीभिः प्रयाजयाज्याभिः”

वेददी० तात्र याज्याः सूक्तविशेषात्मिका गोत्रभेदेन भिन्नरूपाः "एकादश प्रयाजाः तेषां प्रैषाः प्रथमं प्रैषसूक्तं द्वितीये। अध्वर्युप्रेषितोमैत्रावरुणः प्रेष्यति प्रेष्यैर्होतारम्। होता यजत्याप्रोभिः प्रैषलिङ्गाभिः" इत्युपक्रम्य "समिद्धो अग्निरिति" शुनकानां "जुषस्व नः समिधमिति वशिष्ठानां, "समिद्धो अद्येति"सर्व्वेषाम् यथाऋषि वा"इति आश्व० श्रौ० गोत्रभेदेन सूक्तभेदस्योक्तेः। अत्र नारायणवृत्तिः। "यो यस्य ऋषिस्तदानुगुण्यं यथार्षिशब्देनोच्यते तथा वाऽऽप्रीसूक्तं ग्रहीतव्यम्। स्वयं वा ऋषिनामधेयस्यानुगुण्या आप्रः कर्त्तव्या इत्यर्थः। तत्र भगवता शौनकेन यथाऋषिपक्षे आप्रीविवेकार्थमेव श्लोक उक्तः।"कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च। वशिष्ठः कश्यपो वाध्र्यश्वो जमदग्निरथोत्तमः"। तत्र दशानां सूक्तानां प्रथमं कण्वानाम् "सुमिद्धो न आवह" इति। द्वितीयं तद्वर्जितानामङ्गिरसाम्, "समिद्धो अग्न आवह"इति। तृतीयमगस्त्यानाम्, "समिद्धो अद्य राजसि" इति। चतुर्थं शुनकानाम्, "समिद्धो अग्निर्निहितः" इति। पञ्चमं विश्वामित्राणाम्, "समित्समित्सुमनाः" इति। षष्ठमत्रीणाम्, "ये समिद्धाय शोचिषे" इति। सप्तमं वशिष्ठानाम्, "जुषस्व नः समिधं" इति। अष्टमं कश्यपानाम् "समिद्धो विश्वतस्पतिः"इति। नवमं वाध्र्यश्वानाम्, "इमां मे अग्ने समिधं जुषस्वेड" इति। शुनकवाध्र्यश्वानाम् भृगूणां दशमं, "समिद्धो अद्य मनुषो दुरोणः" इति यथार्षिपक्षे विवेकोऽयम्"।

**आप्रीत** त्रि० आ+प्री–क्त। १सम्यक्प्रीते २ईषत्प्रीते च। भावे क्त। सम्यक्प्रीतौ न०।

**आप्रीतप** पु० आप्रीतं पाति पा–क। विष्णौ "अथ यद्याप्यायमानः किञ्चिदापद्येत विष्णवआप्रीतपाय स्वाहेति जुहुयात् विष्णुर्हि स तद्वाप्रीतपा भवत्यपपायमानं हुत उपैनं यज्ञोनमतीति"शत० ब्रा०। क्विप्। आप्रीतपा अप्यत्र।

**आप्लव** पु० आ+प्लु–वज्रभावपक्षे अप्। १स्नाने, जलानां सर्व्वतः सम्प्लवने। ल्युट् आप्लवनम् तत्रैव न०।

**आप्लवव्रतिन्** पु० आप्लवः समावर्त्तनस्नानमेव व्रतमस्यस्य इनि। स्नातके गृहस्थभेदे यस्तु वेदानधीत्य दारपरिग्रहार्थं कृतसमावर्त्तनस्नानः दारलाभात् प्राक् आर्त्तं व्रतविशेषमाचरति तादृशे द्विजे "अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत्" स्मृत्युक्तं व्रतं च दर्शितं विधानपा० यथा "स्नात्वैवं विधिना काले मासमात्रमपि द्विजः। अनाश्रमी न तिष्ठेत्तु गृहस्थस्तु प्रयत्नवान्। निःस्रोरोगादितोभीत आपद्योऽन्यैव कारणैः। स्नातकः प्रयतो वह्निं न त्यजेदिति वै श्रुतिः। नित्यदा ब्रह्मचारी स्यात् पञ्चयज्ञपरायणः। जपतीर्थरतोवा स्यात् स्नातकोत्रौव्य वर्ज्जितः। श्राद्धे निमन्त्रितो गच्छेत् कुर्य्यात् षट्कर्म्म च द्विजः। येन केनाप्युपायेन व्रतचर्य्यां न लोपयेत्। सकृत्तान् जुहुयात् प्रातः" स्मृतिः अत्र प्रातरितिविशेषणात् न सायम्। तेन प्रातः सन्ध्यामुपास्याग्निकार्य्यं कृत्वा शकलहोमः कार्य्यः तन्मन्त्राश्च तैत्तिरीयारण्ये पठिताः "देवकृतस्यैनसोऽवयजनमसि स्वाहेत्यादिकाः। तदीय होमद्रव्यविशेषोबौधायनेनोक्तः "स एष उपनयनप्रभृति व्याहृतिभिः वह्निभरेव समिद्भिः आ समावर्त्तनात्। समावर्त्तनप्रभृति आज्येनैव आ पाणिग्रहणात्। पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा व्यस्तेनैकेन पञ्चाहुतो र्जुहुयात्" "वैश्वदेवं गृहस्थस्य प्रत्यहारम्भणं भवेत्। स्नातकेनापि तत्कार्य्यं पृथक्पाको गृहे यदि" शौनकः। "यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम्। छत्रञ्चोष्णीषमाले च पादुके चाप्युपानहौ। रौक्मे च कुण्डले वेणुं कृत्तकेशनखः शुचिः। स्वाध्याये नित्ययुक्तः स्यात् बहिर्माल्यञ्च धारयेत्। शुक्लाम्बरधरोनित्यं सुगन्धः प्रियदर्शनः। न जीर्णमलवद्वासा भवेच्च विभवे सति। न रक्तमुल्वणं चान्यधृतं वासो न कण्टिकाम्" कूर्म्मपु०। "उपानहौ च वासश्च धृतमन्यैर्न धारयेत्। उपवीतमलङ्कारं स्रजं करकमेव च" मनुः। "स्नातः समुद्वहेत् कन्यां प्रव्रजेत्तदनिच्छकः। वनस्थो वा भवेद्विप्रः गृहस्थो विधिना शुचिः। अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः। आश्रमेण विना तिष्ठन् प्रायश्चीयते हि सः"इति विधा पा० धृता स्मृतिः। तस्य कन्यालाभार्थं काम्यजप उक्त ऋग्विधाने "सुषुमं प्रजपेत् सूक्तमथ सम्यक् शिवालये। अयुतं तु जपेत् कन्यां षण्मासात् लभते नर" इति।

अत्रानाश्रमदोषविषये किञ्चिदुच्यते स्नातको हि गृहस्थभेदोद्विजातिमात्रः समावर्त्तनस्नानस्य तेषामेव सम्भवात्। अतस्तद्विषयकमेवानाश्रमादिदोषोत्कीर्त्तनम्। तथा हि विधानपारिजातधृतयोः स्मृत्योः "स्नात्वैवं विधिना काले" इत्यादौ स्नातः समुद्वहेत् कन्यामित्यादौ चोपक्रमे द्विजातिविषयकत्वावगमेन उपसंहारे अनाश्रमदोषकीर्त्तनं तद्विषयकमेव उपक्रमोपसंहारयोरेकविषयकत्वौचित्यात्। एतेन "स्वीकरोति यदा वेदं चरेद्वेद-

व्रतानि च । ब्रह्मचारी भवेद्दूर्द्धं ततः स्नातो भवेद्गृही । द्विविधो ब्रह्मचारी तु स्मृतः शास्त्रे मनीषिभिः । उपकुर्व्वाणकस्त्वाद्यो द्वितीयो नैष्ठिकः स्मृतः । योऽगृहाश्रममस्थाय ब्रह्मचारी भवेत् पुनः । न यतिर्न वनस्थश्च सर्व्वाश्रमविवर्ज्जितः । अनाश्रमो न तिष्ठेत्तु दिनमेकमपि द्विजः । आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः । जपे होमे तथा दाने स्वाध्याये च रतस्तु यः । नासौ तत्फलमाप्नोति कुर्व्वाणोऽप्याश्रमाच्युतः । त्रयाणामानुलोम्यं हि प्रातिलोम्यं न विद्यते । प्रातिलोम्येन योयाति न तस्मात् पापकृत्तमः" इत्यवचनमपि वेदाध्ययनोत्तरस्नातकानामेवोपक्रमे कीर्त्तनात् अन्ते च त्रयाणामाश्रमाणामानुलोम्यविधानाच्च द्विजमात्रविषयकम् यत्तु तद्वाक्यैकदेशमादाय रघुनन्दनेन अनाश्रमी न तिष्ठेच्चित्यादि वाक्यं शूद्रोपलक्षणपरत्वेन तद्युक्तमुपक्रमोपसंहाराभ्यां द्विजमात्रविषयकत्वनिश्चयात् । किञ्च त्रयाणामानुलोम्योक्तेरपि न शूद्रविषयकत्वं तत्प्रदर्शितवामनपुराणवचने शूद्रस्यैकमात्राश्रमावगतेः तथा च येषामेव आश्रमचतुष्टयं तत्त्रयं तद्द्वयं वा सम्भवति तेषामेवानुलोम्यप्रातिलोम्यसम्भव एकमात्राश्रमस्य शूद्रस्य कथन्तरामानुलोम्यप्रातिलोम्यसम्भवः । एतेन "व्रतेषु लोपकोयश्च आश्रमाद्विच्युतश्च यः । संदंशयातनामध्ये पततस्तावुभावपि" इति भविष्यपुराणवचनेन दक्षस्मृतेः सङ्कोचनमपि परास्तम् "श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते । तत्र श्रौतं प्रमाणं तु तयोर्द्वैधे स्मृतिर्वरेति" विधान पा० धृतव्यासवाक्येन पुराणापेक्षया स्मृतेर्वरत्वकीर्त्तनेन पुराणेन स्मृतेर्बाधस्यायोग्यत्वात् "विरोधे त्वनपेक्षमसति ह्यनुमानमिति" जैमिनिसूत्रेण श्रुतिस्मृत्योर्विरोधे स्मृतेराप्रमाण्यस्येव स्मृतिपुराणयोर्विरोधेऽपि पुराणस्याप्रमाण्यस्यैवोचितत्वात् वस्तुतः नात्र विरोधः "स्पष्टस्य तु विधेर्नान्यैरुपसंहार इष्यते" इतिन्यायेनार्थेक स्मृतौ द्विजपदस्य स्पष्टतया अन्योपसंहारकत्वासम्भवेन पौराणिकयच्छब्दस्यास्पष्टार्थकतया तत्परत्वकल्पनेनैवोपपत्तौ विरोधाभावात् तथा च भविष्यपुराणवचनमेव द्विजातिविषयकं न शूद्रविषयकमित्येव कल्पनीयमिति । अत्रेदं विवेक्तव्यं किं पौराणिकास्पष्टार्थकयच्छब्दस्य यावद्वर्णविषयकत्वमुत स्पष्टार्थकस्मृत्येकवाक्यतया त्रैवर्णिकमात्रविषयकत्वं तत्र पुराणेन स्मृतेर्बाधायोगेन पौराणिकयच्छब्दस्यैव स्मृत्युक्तलिङ्गपरत्वकल्पनं युक्तमित्युत्पश्यामः । यदपि 'चत्वार आश्रमाश्चैव ब्राह्मणस्य प्रकीर्त्तिताः । ब्रह्मचर्य्यञ्च गार्हस्थ्यं वानप्रस्थञ्च भिक्षुकम् । क्षत्रियस्यापि कथिता आश्रमास्त्रय एव हि । ब्रह्मचर्य्यञ्च गार्हस्थ्यमाश्रमद्वितयं विशः । गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणमाचरेत्" वाम० पु० वाक्यं तत् शूद्रस्य गार्हस्थ्यमात्राधिकारबोधकम् । न तु तदकरणे पापजनकताबोधकमपि उचितमिति पदस्वारस्यात् उचितपदस्य योग्यार्थकत्वात् तेनैव उद्वा० त० क्षणमुत्सवमिति व्याख्यानेन तदीयगृहस्थाश्रमस्योत्सवार्थकत्वोक्त्या काम्यत्वसूचनात् "चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि । स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः । अष्टाचत्वारिंशदूर्द्धं वयोयावन्न पूर्य्यते । भार्य्यापुत्रवियुक्तस्य नास्ति यज्ञेऽधिकारितेति" भविष्यपुराणवचनमपि यज्ञेऽधिकारिताप्रतिषेधात् द्विजविषयकमेव शूद्रस्य यज्ञेऽनधिकारात् । द्विजातीनामेव यज्ञीयाज्यावेक्षणादेः पत्नीसाध्यतया पत्न्यभावे कथमाज्यावेक्षणाद्यङ्गसिद्धिरिति युक्तः तेषामनधिकारः" यज्ञाधिकारे शूद्रस्य पर्य्युदस्ततया तदधिकाराभावकथनमनर्थकं स्यात् । अतो येषामेव यज्ञाधिकारस्तेषामेव भार्य्याराहित्ये अनधिकारिताप्रतिपादने वचनं सार्थकम् । तेन तद्द्विजविषयकमेव । एवं प्रागुक्तदक्षवचने जपेहोमे तथा दाने स्वाध्याये निष्फलत्वकथनमपि उपक्रमोपसंहाराभ्यां होमस्वाध्याययोर्द्विजातीनामेव सम्भवाच्च द्विजातिविषयकमेव । अतः शूद्राणां विवाहस्य उत्सवार्थतया काम्यत्वेनाकरणे न प्रत्यवाय इति सुस्थितम् । एतेन बहुविवाहवादे मया दक्षवचनस्य द्विजपदस्योपलक्षणार्थकत्वं यत् खण्डितं तत् सुस्थितमेवेति द्रष्टव्यम् ।

**आप्लाव** पु० आ+प्लु–घञ् । आप्लवशब्दार्थे । [व्याप्ते ।

**आप्लावित** त्रि० आ+प्लु–णिच्–क्त । जलादिप्रवाहेनाभि-

**आप्लाव्य** त्रि० आ–प्लु–णि० कर्त्तरि यत् । १आप्लवनकारके । भावे यत् । २कर्त्तव्याप्लवने न० । कर्मणि यत् । जलादिना ३अभिव्याप्ये त्रि० ।

**आप्लुत** त्रि० आ+प्लु–क्त । १स्नाते २आर्द्रीभूते च ३स्नातके गृहस्थभेदे पु० । भावे क्त । ४स्नाने न० ।

**आप्लुतव्रतिन्** पु० आप्लुतस्य स्नातस्य व्रतमस्त्यस्य इनि । स्नातके गृहस्थभेदे । आप्लवव्रतिशब्दे विवृतिः ।

**आप्लुत्य** अ० आ+प्लु–ल्यप् । स्नात्वेत्यर्थे, २उत्प्लुत्य उल्लम्फ्येत्यर्थे च ।

**आप्लुष्ट** त्रि० आ+प्लुष–क्त । १ईषद्दग्धे २सम्यग्दग्धे च ।

**आपु** पु० आप-वन् । वायौ सि०कौ० कण्ठस्थाने उज्ज्वल० वनुप्रत्ययाधिकारे उणादौ निपा० अदन्तएवायम् । शब्दकल्पद्रुमे नान्तत्वकल्पनं चिन्त्यम् । [वैद्यकम् ।

**आफूक** न० ईषत् फूत्कारइव फेनोऽस्य पृ० तलोपः । अहिफेने

**आबद्ध** न० सम्यक् आबद्धम्+बन्ध-भावे क्त । दृढबन्धने।१आ-धारे क्त ।२प्रेम्णि। कर्मणि क्त। ३बद्धे ४आप्ते ५प्रति-रुद्धे च त्रि० । "पयोधिमाबद्धचलज्जलाविलम्" माघः "आबद्धभीमभ्रुकुटीकरालम्" भट्टिः । "स्यन्दनाबद्ध-दृष्टिषु" रघुः । ६भूषणे च । बा०करणे क्त ।७योक्त्रे ।

**आबन्ध** पु० आ+बन्ध-घञ् । १दृढबन्धे, करणे घञ् । २योक्त्रे आधारे घञ् । ३प्रेम्णि च । ल्युट् आबन्धनमप्यत्र न० ।

**आबर्ह** पु० आ+बर्ह-हिंसायां घञ् । १उत्पाटने २हिं-सने च ल्युट् । आबर्हणमप्यत्र न० ।

**आबर्हिन्** त्रि० आबर्होऽस्यास्ति इनि । उत्पाटनयुक्ते "मूलमस्याबर्हि" पा० आबर्ह आबर्हणं तदस्यास्ति आबर्हि सि०कौ० ।

**आबाध** पु० आ+बाध-घञ् । पीड़ायां "आबाधे" पा० "आबाधे पीड़ायाम्" सि०कौ० "यथासुखमुखः कु-र्यात् प्राणाबाधभयेषु च" "न चैनं पादतः कुर्यान्न प्राणा-बाधमाचरेत्" मनुः "तत्र मनःशरीराबाधकराणि श-ल्यानि" सुश्रु०नास्ति बाधा यस्य । २पीड़ाशून्ये त्रि० ।

**आबाधा** स्त्री आ+बाध-भावे अ । १पीड़ायाम् २तापत्रये क्लेशे च । "आबाधामरणभयार्चिषा चिराय" किरा० लीलावत्युक्ते ३अबाधाशब्दार्थे ३२८पृष्ठे विवृतिः ।

**आबिल** त्रि० आ+बिल-भेदने क । १अस्वच्छे कालुष्ययुक्ते अ-स्वच्छस्य हि जलादेः सम्यग्दृष्टिप्रसारभेदनात्तथात्वम् । "पयोधिमाबद्धचलज्जलाविलम्" माघः । २भेदके त्रि०

**आबिलकन्द** पु० आबिलोभूमेराभेदकः कन्दो मूलमस्य । मालाकन्दे क्षुपभेदे तस्य मालाकारकन्दतया भूमेः सम्यग्भेदनात्तथात्वम् ।

**आवृत्त** पु० आवनमाप् क्विप् आवे प्राप्ते उत्ताम्यति उद्+तम-ड । नाट्योक्तौ भगिनीपतौ । बङ्गप्राप्तौ सन्तोषाभावेन दुःखितात्तस्य तथात्वम् । [२मेघसम्बन्धिनि च ।

**आब्द** त्रि०अब्दे मेघे भवः तस्येदम् इति वा अण् ।१ मेघभवे

**आभग** पु०सम्यक् भगं भाग्यं यस्य । आभाग्ये देवे "सोमो-मूत्यावपानेन्ना भगोदेवोदेवेष्वाभगः" ऋ० १,२६,४

**आभण्डन** न० आ+भण्ड-ल्युट् । निरूपणे शब्दचि० ।

**आभयजात्य** पुंस्त्री अभयजातस्यापत्यं गर्गा० यञ् । अभयजातस्यापत्ये स्त्रियां ङीप् यलोपः । ततः कण्वा० अण् यलोपः । आभयजातः तदपत्ये पुंस्त्री स्त्रियां ङीप्

**आभरण** न० आ+भृ-कर्मणि ल्युट् । भूषणे । "किमित्यपा-स्याभरणानि यौवने" कुमा० "वेषाभरणसंशुद्धाः स्पृशेयुः सुसमाहिता" "वाहनानि च सर्वाणि शस्त्राण्याभरणानि च" मनुः "पाण्डवानां सभामध्ये दुर्योधन उपागत । तस्मै गाश्च हिरण्यञ्च सर्वाण्याभरणानि च" विदग्धमु० भावे ल्युट् । २सम्यक्पोषणे न० ।

**आभरित** त्रि० आभर आभरणं जातोऽस्य इतच् आ+भृ-बा० इतच् इट् च १पूरिते २अलङ्कृते । "हस्ताभरणपूर्णेन केयूराभरितेन च" हरिवं०१६अ० ।

**आभर्मन्** न०आ+भृ+मनिन् । १सम्यग्भरणे गर्भादेः २पोषणे

**आभा** स्त्री आ+भा-अङ् ।१दीप्तौ,२शोभायाम् कान्तौ,३उप-माने,आभा "बकुलपर्य्यायः कथितः कोविदैरिह" भा० प्र० उक्ते ४बकुले च । "आभाफलत्रिकैर्व्योषैः सर्वैरेभिः समीकृतैः तुल्यगुग्गुलुरायोज्योभग्नसन्धिप्रसाधकः" चक्रद० ।

**आभाति** स्त्री आभाति तुल्यरूपतया आ+भा-क्तिच् । प्रतिबिम्बे राजनि०। तस्य बिम्बतुल्यतया दीप्तेस्तथात्वम् ।

**आभाषण** न० आ+भाष-ल्युट् । परस्परकथने २आलापे "सम्बन्धमाभाषणपूर्व्वमाहुः" रघुः । ३सम्बोधने च ।

**आभाष्य** त्रि० आ+भाष-ण्यत् । आमन्त्रणीये १संबोध्ये २आलाप्ये च "जनमाभाष्यमिमं न मन्यसे" रघुः । आ+भाष-ल्यप् । ३संबोध्येत्यर्थे अव्य० ।

**आभास** पु० आभासते आ+भास अच् । उपाधितुल्यतया भासमाने १प्रतिबिम्बे "आभासोरूपकश्च कवत्" शा०सू० "बुद्धितत्त्वचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्रा-ज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत्" वेदा०का० । २दुष्टे हेत्वादौ "हेत्वाभासाश्च पञ्चधा" भाषा० । "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वा-भासाः" गौ० सू० । पक्षसत्त्वसपक्षसत्त्वविपक्षा-सत्त्वाबाधितत्वासत्प्रतिपक्षितत्वोपपन्नोहेतुर्गमकः स एता-भावत इति हेत्वाभासस्तेन तद्भिन्नत्वे सति तद्धर्म्म-वत्त्वम् पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेणाभासमानत्वं हेत्वाभासत्वमिति फलितार्थः "हेत्वाभासाश्च यथोक्ताः" गौ०सू० । एवं प्रमाणाभासः युक्त्याभासः आग-माभासइत्यादावपि प्रामाण्याद्यभाववत्त्वे सति प्रमा-णादिरूपेणाभासमानत्वमर्थः । "एवं बहवो विप्रतिप-न्नायुक्तिवाक्यतदाभाससमाश्रयाः सन्तः" शा०भा० ।

तथा च यद्वाचकपदोत्तरमाभासशब्दः प्रयुज्यते तस्य दुष्टत्वं तेन गम्यते। रसाभासादावपि तिर्य्यग्योन्यादिगतत्वेन परनायकगतत्वेन च दुष्टत्वाद्रसाभासत्वम्। पुनरुक्तवदाभासादौ च न दुष्टत्वम् किन्तु पुनरुक्ताभिन्नत्वेनाभासमानत्वात् वस्तुतोऽपुनरुक्तत्वमेव गम्यते इत्येव तत्र विशेषः। "रस्यत इति रस इति व्युत्पत्तिदर्शनात् भावतदाभासादयोऽपि रस्यन्ते" सा॰द॰ तत्र रसाभासः "मधु द्विरेफः कुसुमैकपात्रे" इत्यादि। "अत्र हि सम्भोग शृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासत्वम्" सा॰द॰। "आपाततोयदर्थस्य पुनरुक्तावभासनम्। पुनरुक्तवदाभासः" सा॰ द॰। भावे घञ्। ३तुच्छप्रकाशे। आभास्यतेऽनेन आ+भास–णिच्–करणे अच्। ग्रन्थावतारणार्थं ४ग्रन्थाभिप्रायवर्णने व्याख्यानांशभेदे च।

**आभासुर** त्रि॰ आ+भास–घुरच्। सम्यग्दीप्तिशीले।

**आभास्वर** त्रि॰ आ+भास–वरच्। १सम्यग्दीप्तिशीले चतुःषष्टिमिते २गणदेवभेदे "आत्मा ज्ञाता दमो दान्तः शान्तिर्ज्ञानं शमस्तपः। कामः क्रोधो मदो मोहो द्वादशाभास्वरा इमे" इत्युक्ते ३द्वादशमिते गणभेदे च पु॰। एषाञ्च स्वस्वदृष्ट्याभास्वरत्वात्तथात्वम्।

**आभिचरणिक** त्रि॰ अभिचरणं प्रयोजनमस्य ठञ्। कृष्णयजुर्वेदादिप्रोक्ते शत्रुप्रभृतेर्मारणोच्चाटनवशीकरणादिरूपाभिचारसाधने १मन्त्रादौ तत्साधने २विधानभेदे च। "रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदपः" कात्या॰ १,१०,१४, "अभिचरणम् अभिचारः प्रयोजनमस्यासावाभिचरणिकः प्रयोजनमित्यर्थे ठञ्। "वधान देव! सवितः परमस्यां पृथिव्यां शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक्" यजु॰ १,२५, "द्विषतो वधोऽसि य॰ १२८ इत्यादि तत्र शत्रुनामादिसंयुक्तः अभिचारार्थमेव प्रयुज्यमान आभिचरणिक इत्युच्यते तेनाभिचरणमुद्राभावे मन्त्रस्याभिचरणप्रयोजनाभावान्नाभिचरणिकत्वम् अतस्तदुच्चारणे उदकस्पर्शाभाव" कर्कः। एवमन्येऽपि मन्त्रा अथर्ववेदोक्ता ज्ञेयाः। तद्विधानञ्च अथर्ववेदान्तर्गते आङ्गिरसकल्पे विस्तृतम्। एवं तन्त्रोक्ताभिचारविधानम् तन्त्रसारादौ विस्तृतम्। अभिचार+प्रयोजनार्थे ठञ्। आभिचारिकोऽप्यत्र। स्त्रियामुभयत्र ङीप्।

**आभिजन** त्रि॰ अभिजनादागतः अभिजनस्येदं वा अण्। अभिजनाद्वंशादागते "तां पार्वतीत्याभिजनेन नाम्ना" कुमा॰। २वंशसम्बन्धिनि च। [शिष्टत्वे ३सौन्दर्य्ये च।

**आभिजात्य** न॰ अभिजातस्य भावः ष्यञ्। १कौलीन्ये २पा-

**आभिजित** त्रि॰ अभिजिति नक्षत्रे जातः अण्। अभिजिन्नक्षत्रे जाते तस्य वा लुक्। अभिजिदपि तत्रार्थे। अभिजित इदम् अण्। गवामयनान्तर्गताभिजिन्नामकदिनसम्बन्धिनि सामादौ त्रि॰। [अभिजिद्भवे।

**आभिजित्य** त्रि॰ अभिजिति भवः अण् ततः स्वार्थे यञ्।

**आभिधा** स्त्री अभिधैव स्वार्थेऽण्। अभिधाशब्दार्थे १शब्दवृत्तिभेदे २कथने च

**आभिधातक** न॰ आभिधां तकति सहते अच्। शब्दे

**आभिधानीयक** न॰ अभिधानीयस्य भावः योपधगुरूपोत्तमत्वात् वुञ्। कथनीयत्वे

**आभिप्लविक** त्रि॰ अभिप्लवे विहितः ठक्। अभिप्लवविहित स्तुतसामादौ। अभिप्लवशब्दार्थश्च अभिप्लवशब्दे दृश्यः। तच्च साम "ज्योतिर्गौरायुर्गौरायुर्ज्योतिरित्यादि"स्तुतं गेयम्। अभिप्लवाय हितः ठक्। गवामयनान्तर्गतषडहभेदे पु॰।

**आभिमानिक** त्रि॰ अभिमानेन निर्वृत्तः ठक्। सांख्यमतसिद्धे अभिमानोत्पादिते उभयेन्द्रिये शब्दादिपञ्चतन्मात्रे च। यथैषामाभिमानिकत्वं तथोक्तं सां॰प्र॰भा॰ "तन्मात्रेन्द्रियाण्यभिमानवद्द्रव्योपादानकान्यभिमानकार्य्यद्रव्यत्वात् यन्नैवं तन्नैवम् यथा पुरुषादिरिति। नन्वभिमानवद्द्रव्यमेवासिद्धमिति चेत् अहं गौर इत्यादिवृत्त्युपादानतया चक्षुरादिवत् तत्सिद्धेः। अनेन चानुमानेन मन आद्यतिरेकिमात्रस्य तत्कारणतया प्रसाध्यत्वात्। अत्र चायमनुकूलस्तर्कः "बहु स्यां प्रजायेयेत्यादि" श्रुतिस्मृतिभ्यस्तावद्भूतादिसृष्टेरभिमानपूर्ब्बकत्वाद् बुद्धिपूर्ब्बकसृष्टौ कारणतयाभिमानः सिद्धः। तत्र चैकार्थसमवायप्रत्यासत्त्यैवाभिमानस्य सृष्टिहेतुत्वं लाघवात्"

**आभिमुख्य** न॰ अभिमुखस्य भावः ष्यञ्। अभिमुखत्वे आनुकूल्यार्थसम्मुखीभवने "प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते" वाक्यप॰। "अनुकूलत्वे २विशेषादाभिमुख्येन चरन्तोव्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्विदः" सा॰द॰। तत्र यात्रादौ राहोराभिमुख्यनिषेधः ज्यो॰त॰ "पश्चादर्के विधौ वह्नौ सौम्यां च वायवे कुजे। रवोऽधीशे भृगौ याम्यां गुरावीशे शनौ दिने। राहुर्व्रजति यामार्द्धादृक्गत्या च वामतः। प्रतीच्यां वह्निकोणे तु ततः सौम्यामतोऽस्तमे। ततः प्राच्यामतोवायौ तस्माद्याम्यां ततः शिवे। रवावेवमन्यवारेषूह्यमेवं क्रमेण हि

द्यूते युद्धे विवादे च यात्रायां सम्मुखस्थितम्। राहुं विवर्ज्जयेत् यत्नाद्यदीच्छेत् कर्म्मणः फलम्"। एवं योगिन्याभिमुख्येऽपि गमनं न शस्तम् यथा "प्रतिपन्नवमी पूर्व्वे रामा रुद्राश्च पावके। शरस्त्रयोदशी याम्ये वेदा भानाश्च नैर्ऋते। षष्ठी चतुर्द्दशी पश्चात् वायव्यां मुनिपूर्णिमे। द्वितीया दशमी चैवे ऐशान्यामष्टमी कुहूः। योगिनी भवदश्चाश्च षेया वर्ज्या विशेषतः। दक्षसम्मुखयोगिन्यां गमनं नैव कारयेदिति" ज्यो॰त॰। पीयूषधारायान्तु "पृष्ठतोदक्षिणे वापि योगिनीगमने हिता। वामसम्मुखयोर्नैव वायुमेवं चिन्तयेत्" जयकल्पलता वाक्ये तन्मूलके मुहूर्त्त॰ चि॰वाक्ये च "नवभूम्यः शिववह्नयोऽक्षविश्वेऽर्कऋताः शक्रसुरङ्गतिथ्यः। द्विदशामावसवश्च पूर्व्वतः सुतिथयः सम्मुखवामगा न शस्ताः" वामगाया अशुभत्वमुक्तम्। अनयोर्व्यवस्था देशभेदेन। कालपाशयोराभिमुख्येन यानमपि न शस्तम् "कौवेरीतो वैपरीत्येन कालो वारेऽर्काद्ये सम्मुखे तस्य पाशः। यात्रायुद्धे सम्मुखे वर्ज्जनीयावेतौ रात्रौ व्यस्तसंस्थौ विचिन्त्यौ" मुहू॰। स्वर रत्नसारे "रवावुत्तरतः कालः सोम्ये वायव्यभागके। भौमे तु पश्चिमे भागे बुधे नैर्ऋतकोणके। जीवे च याम्यदिग्भागे भृगौ चाग्नेयकोणके। शनौ तु पूर्व्वदिग्भागे कालचक्रं प्रकीर्त्तितम्। पाशस्तत्सम्मुखदिशि" कालापेक्षया सप्तमदिशि पाश इत्यर्थः यथा रवौ दक्षिणस्यां, सोमे आग्नेय्यां, भौमे पूर्व्वस्यां, बुधे ऐशान्यां, गुरावुत्तरस्यां, शुक्रे वायव्यां, शनौ पश्चिमायाम्। कालपाशयोराभिमुख्यं यात्रादौ निषिद्धं वामदक्षिणयोस्तु शुभाशुभफलकत्वं यथाह स्वरो॰ "दक्षिणस्तु शुभः कालः पाशोवामदिगाश्रयः। यात्रायां समरे श्रेष्ठस्ततोऽन्यत्र न शोभनः" "अन्यत्र सम्मुखपृष्ठभागयोः" पी॰धा॰। रात्रौ तु कालपाशयोर्विपर्य्यासेन स्थितेस्तदनुसारेणैव फलम्। पूर्व्वादिदिगभिमुखानि नक्षत्राणि। "पूर्व्वादिषु चतुर्द्दिक्षु सप्त सप्तानलर्क्षतः" मुहू॰ तेन कृत्तिकादीनि सप्त पूर्व्वदिङ्मुखानि। मघादीनि सप्त दक्षिणाभिमुखानि। अनुराधादीनि साभिजित्कानि सप्त पश्चिमाभिमुखानि। धनिष्ठादीनि भरण्यन्तादीनि सप्त उत्तराभिमुखानि। तैर्नक्षत्रैस्तत्तद्दिगभिमुखगमनकरणं तत्प्रवेशश्च शुभाय। "यद्दिग्द्वारं मन्दिरं तद्दिगस्थैर्ऋक्षैः स्यात् सन्निवेशो न सर्व्वैः" वशि॰। पूर्व्वादिदिगभिमुखा राशयो यथा। "पूर्व्वादिदिक्षु मेषाद्याः क्रमाद्दिग्द्वारराशयः। दिग्द्वारराशयः सर्व्वे तद्दिग्यातुः शुभप्रदाः। तद्वर्गाश्च तदंशाश्च तद्दिग्यातुस्तथाविधाः" वशिष्ठः। "दिग्द्वारभे लग्नगते प्रशस्ता यात्रार्थदात्री जयकारिणी च। हानिं विनाशं रिपुतोभयञ्च कुर्य्यात् तथा दिक्प्रतिलोमलग्ने" इति मुहू॰। शुक्राभिमुख्यं त्रिविधम् "उदयति दिशि यस्यां, याति गोलभ्रमाद्वा, विचरति च भचक्रे यत्र दिग्द्वारभेषु। त्रिविधमिह सितस्य प्रोच्यते सम्मुखत्वं सुनिभिरुदयएव त्यज्यते तत्र यत्नात्" श्रीपतिः। "उदेति यस्यां दिशि यत्र याति गोलभ्रमाद्वाथ ककुब्भचक्रे। त्रिधोच्यते सम्मुखएव शुक्रो यत्रोदितस्तां तु दिशं न यायात्" मुहू॰। "शुक्रः यस्यां दिशि प्राच्यां प्रतीच्यां वा कालवशेनोदयं करोति तत्र गन्तुः पुंसः शुक्रः सम्मुखः अयमेकः प्रकारः। अथ गोलभ्रमात् उत्तरदक्षिणगोलभ्रमणवशेन यस्यां दिशि उत्तरस्यां दक्षिणस्यां वा याति तत्र गन्तुः शुक्रः सम्मुखः स्यादिति द्वितीयः प्रकारः। प्राच्यादिदिग्द्वारकृत्तिकादिर्गतिवशेन यद्दिङ्नक्षत्रे शुक्रश्चरति तत्र दिशि गन्तुः शुक्रः सम्मुखःस्यादिति तृतीयःप्रकारः। तत्रोदयशुक्रे दोषाधिक्यमिति" पी॰ धा॰। अतएव वशिष्ठः "पश्चादभ्युदिते शुक्रे प्रतीचीं दक्षिणां दिशम्" इति उदयदिग्गतस्यैव शुक्रस्याभिमुख्ये यात्रादि न्यषेधत्। अत्रापवादः "बुधोऽनुकूलो यदि तत्र संचलन् रिपून् जयेदेव जयः प्रतीन्दुजे" मुहू॰। शुक्राभिमुख्यादिदोषशङ्का। "एवं विधेऽप्यास्फुजिते च यायाद्बुधोयदि स्यादनुकूलवर्त्ती" श्रीपतिः। अनुकूलः पृष्ठदिक्संस्थ" इति पी॰धा॰। अपवादान्तरम् "नीचगोऽरिगृहस्थो वा वक्रगोवा पराजितः। यातुर्भङ्गप्रदः शुक्रः स्वोच्चस्थश्चेज्जयप्रदः" इति नारदः। प्रतिशुक्रादिदोषोक्तिर्यां प्रथमयात्रायां राज्ञां च विजययात्रायामेव यथाह रैभ्यः। "प्रतिशुक्रादिदोषोऽयं नूतने गमने स्मृतम्। राज्ञां विजययात्रायां नान्यदा दोषमावहेत्" चन्द्रस्य नक्षत्रविशेषस्थितौ तदपवादः। "यावच्चन्द्रः पूषभात् कृत्तिकाद्ये पादे शुक्रोऽन्धो न दुष्टोऽग्रदक्षे" मुहू॰। "पौष्णादिवह्निभाद्यांघ्रिं यावत्तिष्ठति चन्द्रमाः। तावच्छुक्रो भवेदन्धः सम्मुखे गमनं हितम्" पराशरः। राज्ञां विजययात्रायां विशेषः। "मध्येमार्गं भार्गवास्तेऽपि राजा तावत्तिष्ठेत् सम्मुखत्वेऽपि तस्य" मुहू॰। अत्रान्तरापदि शान्तिं कृत्वा यायात्। शान्तिश्च पी॰धा॰ यात्राप्रकरणे दर्शिता ततएव ज्ञेया।

नृपविजययात्रायां बुधकुजशुक्राभिमुख्यमपि निषिद्धम् । "प्रतिशुक्रं प्रतिबुधं प्रतिभौमं गतोनृपः । बलेन शक्रतुल्योऽपि हतसैन्योनिवर्त्तते" इति वशिष्ठः ।

एतदभिप्रायेणैव कुमा॰वर्णितम् । "दृष्टिप्रपातं परिहृत्य तस्य कामः पुरःशुक्रमिव प्रयाणे" इति । दिगीशाभिमुख्येगमनंशस्तं प्रातिकूल्येऽशस्तम् । तत्र दिगीशाः "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी । सौम्यस्त्रिदशमन्त्री च पूर्व्वादीनां दिगीश्वराः । दिगीशाहे शुभा यात्रा पृष्ठाहे मरणं ध्रुवम्" ज्यो॰त॰ ।

नववध्वागमनेऽपि शुक्राभिमुख्यनिषेधः सप्रतिप्रसवः ज्यो॰ त॰ दर्शितो यथा ।

दीपिकायां "स्त्रीशुद्धालिघटाजसंगतरवौ काले विशुद्धे भृगुं संत्यज्य प्रतिलोमगं शुभदिने यात्रा प्रवेशोचिते । त्यक्त्वाहस्तु निरंशकं नववधूयात्राप्रवेशौ पतिः कुर्य्यादेकपुरादिषु प्रतिभृगोर्नेच्छन्ति दोषं बुधाः" । पैत्रागारे कुचकुसुमयोः सम्भवो वा यदि स्यात् कालः शुक्रेन भवति यदा संमुखोवापि शुक्रः । मेषे कुम्भेऽलिनि च न भवेत् भास्करस्थेत्तथापि स्वामी भद्रेऽह्नि नववधूं वेशयेन्मन्दिरं स्वम् । भर्त्तुर्गोत्रगेमने दिनपतौ नास्तं गते भार्गवे सूर्य्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे । हित्वा च प्रतिलोमगौ बुधसितौ जीवस्य शुद्धौ तथा चानीता गुणशालिनी नववधूर्नित्योत्सवा मोदते । एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे । पतिना नीयमानायाः पुरः शुक्रोन दुष्यति" । तथा "काश्यपेषु वशिष्ठेषु भृग्वत्र्याङ्गिरसेषु च । भारद्वाजेषु वात्स्येषु प्रतिशुक्रोन दोषकृत्" शम्भोराभिमुख्यं पूजने निषिद्धं यथा "न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंस्थिताम् । न प्रतीचीं यतःपृष्ठमतोदक्षं समाश्रयेत्" रुद्रया॰ । "यजमानः शम्भोः प्राचीमवस्थितये न समाश्रयेत् । शम्भोर्जगत्संहारकस्याग्रतः सांमुख्यात् पञ्चवक्त्रपक्षे प्रधानं वक्त्रं प्राच्यवस्थितम् एकवक्त्रपक्षे सुतरां तथा" ति॰त॰ रघु॰ ।

**आभिरूपक** न॰ अभिरूपस्य भावः मनो॰ वुञ् । सौन्दर्य्ये

**आभिरूप्य** न॰ अभिरूपस्य भावः ष्यञ् । सौन्दर्य्ये "आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति" हय॰रा॰ ।

**आभिषिक्त** त्रि॰ अभिषिक्तमभिषेकः तेन निर्वृत्तः सङ्का॰ अञ् । अभिषेकनिर्वृत्ते ।

**आभिषेचनिक** त्रि॰ अभिषेचनं राज्ञाभिषेकः प्रयोजनमस्य ठञ् राजाभिषेकसाधने द्रव्यभेदे "आभिषेचनिकं यत्ते रामार्थमुपकल्पितम् । भरतस्तदवाप्नोतु" भा॰व॰२७५अ॰ । तत्तत्द्रव्यादिविधानानि भा॰शा॰प॰४॰अ॰पुराकल्पव्याजेनोक्तानि यथा "ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम् । ददृशुर्धर्मराजानमादाय बहुमङ्गलम् । पृथिवीञ्च सुवर्णञ्च रत्नानि विविधानि च । आभिषेचनिकं भाण्डं सर्वसम्भारसम्भृतम् । काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः । पूर्णाः कुम्भाः सुमनसोलाजा बर्हींषि गोरसम् । शमीपिप्पलपालाशसमिधो मधुसर्पिषी । स्रुव औदुम्बरः शङ्खास्तथा हेमविभूषितः । दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्य पुरोहितः । प्रागुदक्प्रवणे वेदीं लक्षणेनोपलिख्य च । व्याघ्रचर्म्मोत्तरे शुक्ले सर्वतोभद्र आसने । दृढपादप्रतिष्ठाने हुताशनसमत्विषि । उपवेश्य महात्मानं कृष्णाञ्च द्रुपदात्मजाम् । जुहाव पावकं धीमान् विधिमन्त्रपुरस्कृतम् । ततउत्थाय दाशार्हः शङ्खमादाय पूजितम् । अभ्यषिञ्चत्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम् । धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा । अनुज्ञातोऽथ कृष्णेन भ्रातृभिः सह पाण्डवः । पाञ्चजन्याभिषिक्तश्च राजाऽमृतमुखोऽभवत् । ततोऽनु वादयामासुः पणवानकदुन्दुभीन् । धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्मतः । पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः । ततो निष्कसहस्रेण ब्राह्मणान् स्वस्ति वाचयन् । वेदाध्ययनसम्पन्नान् धृतिशीलसमन्वितान्" । एतानि द्रव्यादीनि राजाभिषेचनिकानि ज्ञेयानि अधिकं राजाभिषेकशब्दे वक्ष्यते स्त्रियां ङीप् । अभिषेचनमधिकृत्य कृतोग्रन्थः ठक् । अभिषेकाधिकारेण कृते २भारतान्तर्गते अवान्तरपर्वभेदे "आभिषेचनिकं पर्व धर्मराजस्य धीमतः" भा॰आ॰१अ॰ । अभिषेचनं स्नानं प्रयोजनमस्य ठञ् । ३स्नानार्थे विधाने तत्रत्ये ४द्रव्यमन्त्रादौ च स्नानविभाग पूर्वकं तत्तद्द्रव्यविधानमन्त्रा उच्यन्ते । तत्र स्नानं तावत् सप्तविधम्" मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च । वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् । "आपोहिष्ठादिभिर्मान्त्रम् मृदालम्भस्तु पार्थिवम् । आग्नेयं भस्मना स्नानं वायव्यं रजसा कृतम् । अद्भिरातपवर्षाभिः स्नानं तद्दिव्यमुच्यते । वारुणञ्चावगाहश्च मानसं विष्णुचिन्तनम्" योगिया॰ तत्र विशेषस्तेनैवोक्तः" "शन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम् । एतैस्तु पञ्चभिर्मन्त्रैर्मन्त्रस्नानं तदुच्यते" मन्त्राणां समुच्चयोविकल्पोवा यथापेक्षया । तत्र वारुणं स्नानं मुख्यमसामर्थ्ये अन्यानि

स्नानानि "स्नानन्तु द्विविधं प्रोक्तं गौणमुख्यप्रभेदतः । तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं स्मृतम् । नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् । क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम्" व्यासोक्तेः तत्र नित्यादीन्यनुपदं वक्ष्यन्ते । "असामर्थ्याच्छरीरस्य देश कालाद्यपेक्षया । मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः जा० स्मृ० । "गृहेऽपि च द्विजातीनां मन्त्रवत् स्नानमिष्यते । विधिलोपं न ते कुर्युः सामर्थ्ये सति कर्म्मसु" जैमि०स्मृ० "अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः" कात्या०स्मृ०। "प्रातः संक्षेपतः स्नानं शौचार्थं तु तदिष्यते । मन्त्रैस्तु विधिनिष्पाद्यं मध्याह्ने तु सविस्तरम्" वशि० । अत्यन्ताशक्तौ । "अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्म्मिणाम् । आर्द्रेण वाससा वापि मार्जनं कापिलं विदुः । कृताभिमन्त्रितैस्तोयैः प्रोक्षयेन्मूर्द्ध्नि सर्व्वतः । अनुकल्पमिदं स्नानं सर्व्वपापहरं नृणाम्" जावा०स्मृ० । एकवाससाऽपि स्नानं कर्त्तुं शक्यते "एकेन वाससा स्नायाद्द्वाभ्यामनियमः स्मृतः । बहुवासोनिषेधश्च स्नाने फलमभीप्सतः" विष्णूक्तेः नैकवासाः क्रियां कुर्य्यात् स्नानं कर्म्म विना क्वचित्" तदुक्तेश्च "अस्पृश्यस्पर्शने चैव वार्त्तायां पुत्रजन्मनि । एतद्द्विवाससा कार्य्यमन्यत्रैकेन वाससा" वसि० "न नग्नो नान्यदीयेन नार्द्रेण न सूच्या ग्रथितेन न विकृतेन च स्नायात्" इत्याचारतिलकः । तत्र नित्यं प्रातःस्नानम्, "प्रातः समाचरेत् स्नानं तच्च नित्यमिति स्मृतम्" मार्क०पु०। चन्द्रसूर्य्योपरागे अशौचादौ अस्पृश्यस्पर्शने च स्नानं नैमित्तिकम् । "पुष्येऽर्के जन्मनक्षत्रे व्यतीपाते च वैधृतौ । अमावास्यां नदीस्नानं पुनात्या सप्तमात् कुलम्" इत्याद्युक्तं स्नानं काम्यम् । धर्म्मकर्म्म कर्त्तुं यत् पूर्व्वस्नानं तत्क्रियाङ्गम् । "मलापकर्षणं नाम स्नानमभ्यङ्गपूर्व्वकम् । मलापकर्षणायैव तत्प्रवृत्तिस्तु नान्यथा ।" तत्र स्नानविधिश्च आश्व०गृ०परि०उक्तः यथा ।

"अथ स्नानविधिस्तत्र प्रातर्मध्याह्ने च गृहस्थः कुर्यादेकतरत्र वा प्रातरेव, ब्रह्मचारी यतिस्त्रिषु सवनेषु द्विः त्रिर्वा वानप्रस्थः । तत्र प्रातः सकृद्गोमयेन कुर्यात् मृदा मध्यन्दिने सायं शुद्धाभिरद्भिः । न प्रातःस्नानात् प्राक्सन्ध्यामुपासीत प्रातरुत्सृष्टं गोमयमन्तरिक्षस्थं सङ्गृह्य भूमिं वोपर्य्यधश्च संत्यक्तं तीर्थमेत्य धौतपादपाणिमुख आचम्य सन्ध्योक्तवदात्माभ्युक्षणादि च कृत्वा द्विराचम्य दर्भपाणिः संयतप्राणः कर्म सङ्कल्प्य गोमयं वीक्षितमादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणं भागं प्रणवेन दिक्षु विक्षिप्योत्तरं तीर्थे क्षिप्त्वा मध्यमं "मानस्तोक" इत्यृचाभिमन्त्र्य "गन्धद्वाराम्" इत्यनया मूर्द्धादिसर्वाङ्गमालिप्य प्राञ्जलिः "वरुणं हिरण्यशृङ्गमिति" द्वाभ्याम् "अव ते हेड" इति द्वाभ्यां "प्रसम्राजे बृहद्वेति" सूक्तेन प्रार्थ्य "हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः । यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् । तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः" इत्यथ "याः प्रवतो निवत उद्वत" इत्येतया तीर्थमभिमन्त्र्यावगाह्य स्नातो द्विराचम्य मार्जयेत् "अम्बयो यन्त्यध्वभिः" इत्यष्टाभिः "आपो हि ष्ठे"ति च नवभिरथ तीर्थमङ्गुष्ठेन "इमं मे गङ्गे" इत्यृचा त्रिःप्रदक्षिणमालोड्य प्रकाशपृष्ठमग्नौ अघमर्षणसूक्तं त्रिरावर्त्य निमज्ज्योन्मज्ज्यादित्यमालोक्य द्वादशकृत्व आप्लुत्य पाणिभ्यां शङ्खमुद्रया योनिमुद्रया वोदकमादाय मूर्ध्नि मुखे बाह्वोरुरसि चात्मानञ्चायत्याभिषिच्य "त्वन्नो अग्ने वरुणस्य विद्वानिति" द्वाभ्याम् "तरत्समन्दीधावतीति" च सूक्तेन पुनः स्नायान्मूर्ध्नि चाभिषिञ्चेत् "तद्विष्णोः परमम्पदम्" "अग्नेरक्ष्णो अंहसो यत्किञ्चेदं वरुणदैव्ये जने" इत्येता जपेत् स्रोतोऽभिमुखः सरित्सु स्नायादन्यत्रादित्याभिमुखोऽथ स्नानाभिरद्भिः प्राङ्मुख उपवीती दैवतीर्थेन व्याहृतिभिर्व्यस्तसमस्ताभिर्ब्रह्मादीन्देवान् सकृत्सकृत्तर्पयित्वायोदङ्मुखः निवीती सव्याभिरद्भिः प्राजापत्येन तीर्थेन सत्यद्वैपायनादीन् ऋषींस्ताभिर्व्याहृतिभिर्व्यस्ताभिस्तर्पयित्वाथ दक्षिणाभिमुखः प्राचीनावीती पितृतीर्थेन सतिलमद्भिर्व्याहृतिभिरेव सोमः पितृमान् यमो अङ्गिरस्वानग्निष्वात्ताः कव्यवाहन इत्यादीं स्त्रींस्त्रींस्तर्पयेदेतत्स्नानाङ्गतर्पणमथ तीरमेत्य दक्षिणाभिमुखः प्राचीनावीती "ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकमिति वस्त्रं निष्पीड्य यज्ञोपवीत्यप उपस्पृश्य परिधानीयमभ्युक्ष्य परिधाय द्वितीयञ्चोत्तरीयं यद्युचितं प्रावृत्य द्विराचामेद्योक्तसन्ध्यामुपासीतेदं प्रातःस्नानविधानम् ।

अथ मध्यन्दिने तीर्थमेत्य धौतपाणिपादमुखो द्विराचम्यायतप्राणः स्नानं सङ्कल्प्य दर्भपवित्रपाणिः शुचौ देशे खनित्रेण भूमिङ्गायत्र्यस्त्रेण खात्वोपरिस्थमृदमुद्धृत्याङ्गुलमादाय तस्मात्सामृदं तथा खात्वा गायत्र्यादाय शर्करादासितया

कदा परिपूर्य कदसपात्रां शुचौ देशे तोरे निधाय गायत्र्या प्रोक्ष्य तच्छिरसा त्रेधा विभज्यैकेन मूर्ध्नं आनाभेरपरेण चाधस्तादङ्गमनुलिप्यापस्वाङ्गत्वा चाचमयित्वादित्यञ्चिरीक्ष्य तं ध्यायन् स्नायादेतन्मलस्नानमाङ्करप्य तीरे द्विराचम्य तृतीयमत्स्तेषादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रेधा विभज्य दक्षिणभागमस्त्रेण दिक्षु दशसु विनिक्षिप्योत्तरन्तीर्थे चित्वा तृतीयन्नायत्र्याभिमन्त्रितमादित्याय दर्शयित्वा तेन मूर्ध्नि आपादात् गायत्र्या प्रणवेन वा सर्वाङ्गमनुलिप्य "सुमित्रियान आप ओषधयः सन्त्विति" सकृदद्भिरात्मानमभिषिच्य "दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म" इति कक्षेपमद्भिः चालयेदेव वरुणप्रार्थना तर्पणान्तेनोक्तेन विधिना स्नायात् । नास्मिन् प्राक् ब्रह्मयज्ञतर्पणाद्वस्त्रं निष्पीड़येदपुनादयो ह्यन्ते तर्पां इत्येव स्नानविधिस्तदेतद् सम्भवेऽद्भिरेव कुर्यान्नैमित्तिकादिषु च न स्नुहे कदा स्नायाच्च च शीतोदकेन शीतोष्णोदकेन स्नुहे स्नायान्मन्त्रविधिं वर्जयेद्वह्निर्वा शुचौ देशे सर्वं यथावत्कुर्यादिति । अथात्मनस्तु मन्त्रस्नानं शुचौ देशे शुचिराचान्तः प्राणानायम्य दर्भपाणिः सव्ये पाणावपः कृत्वा तिसृभिरापो हिष्ठेत्यादिभिः पच्छः प्रणवपूर्वं दर्भोदकैर्मार्जयेत् । पादयो मूर्ध्नि हृदये मूर्ध्नि हृदये पादयोर्हृदये पादयोः मूर्ध्नि चार्धर्चशो मूर्ध्नि हृदये पादयोर्हृदये पादयोर्मूर्ध्नि चाय ऋक्शो हृदये पादयोर्मूर्ध्नि चाय कृत्स्नेन मूर्ध्नीति मार्जयित्वा गायत्र्या दशधाभिमन्त्रिता अपः प्रणवेन पीत्वा द्विराचामेदेतन्मन्त्रस्नानम्"। शाखिभेदेनान्यविधविधानं तत्तत्स्थलेषु द्रष्टव्यम् । तत्र स्नानाद्युक्तद्रव्याणां तत्तत्मन्त्राणां तद्विधानानाञ्चाभिषेचनिकत्वं बोध्यम् कर्मान्ते ५यजमानाभिषेकार्थे मन्त्रे च । ते च मन्त्राः वैदिकाः पौराणिकाश्च । तत्र मन्त्रास्तु मत्कृततुलादानादिपद्धतौ २०६ पृष्ठादौ द्रष्टव्याः । पौराणिकतान्त्रिकतत्तत्कर्माधिकारसिद्ध्यर्थस्याभिषेकस्य साधने ६मन्त्रादौ ७तद्द्रव्यभेदे ८तद्विधाने च तत्र पौराणिकाभिषेकद्रव्यविधानादि "शिवमन्त्राभिषेकं यः कुर्याच्छिष्यादिकन्प्रिये" इत्यारभ्य "वत्सराभिषेक" इत्यन्तेन अग्निपुराणे दर्शितम् । राज्ञाभिषेकद्रव्यविधानानि च तन्त्रे ज्ञेयानि । ९रुद्राभिषेक द्रव्ये १०तद्विधाने च तद्द्रव्यविधानादि च विधानपारिजाते रुद्रकल्पपद्धतौ च द्रष्टव्यम् ११ देवाभिषेकादिसाधनद्रव्यादौ

**आभिहारिक** त्रि० अभिहरणेन हारः अभिहारः प्रयोजनमस्य तत्र साधुर्वा ठञ् । अभिहारसाधने उपढौकनीये ( भेटी ) इति जगतीप्रसिद्धे द्रव्ये ।

**आभीक** न० अभीकेन दृष्टं साम अण् । अभीकर्षिदृष्टे सामभेदे "आभीकमभिनिधनमाभीशवानि चैके कात्या० २५,१४,१५ । एके आचार्या आभीकादान्यपि सामान्यावपन्ति" कर्क० ।

**आभीक्ष्ण्य** न० अभीक्ष्णस्य भावः ष्यञ् । सातत्ये पौनःपुन्ये आभीक्ष्ण्यञ्च अविच्छेदेनैकरूपक्रियोत्पादनम् । "नित्यवीप्सयोः" पा० सूत्रे "आभीक्ष्ण्ये वीप्सायाञ्च द्योत्ये" सि०कौ० । "बहुलमाभीक्ष्ण्ये" पा० "आभीक्ष्ण्यग्रहणम्" पा० । "जङ्किर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति" पा०म०सू० ।

**आभीर** पु० समन्तात् भियं राति रा–क । गोपे सङ्कीर्णजातिभेदे स हि अल्पभीतिहेतोरप्यधिकं बिभेतीतितस्य तथात्वम् "आभीरवामनयनाहृतमानसाय दत्तं मनोयदुपते ! तदिदं गृहाण" उद्भटः स च सङ्कीर्णवर्णः । "ब्राह्मणा दुग्रकन्यायामावृतोनाम जायते । आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः" इति मनूक्तः । "श्रीकोङ्कणादधोभागे तापीतः पश्चिमे तटे । आभीरदेशोदेवेशि ! विन्ध्यशैले व्यवस्थित" इति शक्तिसङ्गम० उक्ते २देशभेदे ३तद्देशवासिनि ४तद्देशराजे च ब०व० । "एकादशकलधारि कविकुलमानसहारि । इदमाभीरमवेहि जगणमन्त्यमःसुभेहि" इत्युक्तलक्षणे ५मात्रावृत्तभेदे न० ।

**आभीरपल्लि(ल्ली)** स्त्री ६त० वा ङीप् । गोपप्रधाने ग्रामे घोषे (गोयालपाड़ा) ।

**आभीरी** स्त्री आभीरस्य पत्नी आभीरजातिर्वा स्त्री ङीप् । १आभीरभार्य्यायाम् २गोपजातिस्त्रियां महाशूद्राम् ।

**आभील** न० समन्तात् भयं लाति ददाति ला–क । १कष्टे २दुःखे ३भयानके तद्वति च अच् । ४तद्वति त्रि० "आभीलानि प्राणिनः प्रलयस्थान्" माघः । "रात्रौ निशीथे साभीले गतेऽर्द्धसमये न्यप" इति भा०व०प०११अ० ।

**आभीशव** अभीशुना दृष्टं साम–अण् । सामभेदे "आभीकमभिनिधनमाभीशवानि चैके" कात्या० २५,१४,१५ । "आभीकादीनि सामान्यावपन्ति" कर्कः ।

**आभु** त्रि० समन्तात् भवतिआ+भू–डु । विभौ व्यापके "तुच्छेनाभ्वपिहितं यदासीत्" ऋ०१०१२९,२ । "आभु व्यापकम्" भा० क्विप् आभूरप्यत्र "आभूभिरिन्द्रः श्रवयन्ननाभुवः" ऋ०१,५१,९ । [६इन्द्रके ।

**आभुग्न** त्रि०आ+भुज कर्म्मकर्त्तरि क्त तस्य नः । १आकुञ्चिते

**आभूति** स्त्री आ+भू-क्तिन् । व्याप्तौ “आभूतिरेषा भूतिः” ऐ०उ०

**आभेरी** स्त्री रागिणीभेदे हलायुधः ।

**आभोग** पु० आ+भुज-आधारे घञ् । परिपूर्णतायां, यस्य यावदपेक्षितं रूपं तत्पूर्णत्वे हि आभोगाधारतेति तस्य तथात्वम् । “अकथितोऽपि ज्ञायत एव यथायमाभोगस्तपोवनस्येति” शकु० “पर्वताभोगवर्ष्माणमतिकायं महाबलम्” भा०व० १७८ अ० “हृदभिहितो भावो द्रव्यवत् प्रकाशते” इति भाष्योक्तेः आभोगवत्पर्वततुल्यदेहमित्यर्थः । “यत्रैव कविनाम स्यात् स आभोग इतीरितः” इति सङ्गीतदामोदरोक्ते गानसमाप्तौ (भणिता) ख्याते२कविनामख्यापने । आभुज्यतेऽनेन करणे घञ् । ३यत्ने यत्नादिनैव हि भोगः सम्यग् सम्पद्यते इति यत्नस्य तथात्वम् । “ना सुखोऽयं नवाभोगो धरणिस्योहि राक्षसः” किरा० “नवाभोगः अभिनवोत्साहः” मल्लि० सम्यक् भोगः प्रा०स० । ४सम्यक्सुखाद्यनुभवे “विषयाभोगेषु नैवादरः” शान्तिशतकम् । ५वरुणस्य छत्रे च मेदि० ।

**आभोगय** त्रि० आभोगं याति या-क । आपूर्णे “आभोगयं प्रयदिच्छन्त ऐतनापाकाः प्राञ्चो मम केचिदापयः” ऋ० १,११०,२ ।

**आभोगि** त्रि० आभोगं करोति आभोग+णिच्-इन् । विषयाभोगकारके “जिह्मश्ये चरितवे मघोन्याभोगय इष्टये” ऋ० १,११३,५ ।

**आभोगिन्** त्रि०आभोगोऽस्त्यस्य इनि । परिपूर्णे स्त्रियां ङीप् ।

**आभ्यन्तर** त्रि० अभ्यन्तरे भवः अण् । मध्यवर्त्तिनि “कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते!” भा०स०प० ५अ०। “वर्णोच्चारणे, प्रयत्नो द्विधा आभ्यन्तरो बाह्यश्च आद्यश्चतुर्द्धा स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम् विवृतमूष्मणां स्वराणाञ्च ह्रस्वस्यावर्णस्य प्रयोगे संवृतं प्रक्रियादशायान्तु विवृतमेव” सि०कौ० । “एतेषाञ्चाभ्यन्तरत्वं वर्णोत्पत्तेः प्राग्भावित्वात् “तथा हि नाभिप्रदेशात् प्रयत्नविशेषप्रेरितः प्राणवायुः ऊर्द्धमाक्रामन् उरःप्रभृतीनि स्थानान्याहन्ति ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वोत्पत्तिः तत्रोत्पत्तेः प्राक् जिह्वाग्रोपाग्रमध्यमूलानि वर्णोत्पत्तिस्थानं ताल्वादि यदा सम्यक् स्पृशन्ति तदा स्पृष्टता, ईषत्स्पर्शे ईषत्स्पृष्टता, समीपावस्थाने संवृतता, दूरावस्थाने विवृतता । अतएव इचुयशानां तालव्यत्वाविशेषेऽपि चवर्गे उच्चारयितव्ये जिह्वाग्रस्य तालुस्थानेन सम्यक्स्पर्शः, यकारे ईषत्स्पर्शः, शकारे, समीपेऽवस्थानम् इवर्णे तु दूरेऽवस्थानम्” मनोरमा ।

**आभ्यवहारिक** त्रि० अभ्यवहाराय हितं ठक् । भोजनयोग्ये अन्नादौ । [ ठक् । कुटुम्बभरणव्यापृते हेम० ।

**आभ्यागारिक** त्रि० अभ्यागारे तत्स्थकुटुम्बभरणे व्यापृतः

**आभ्यादायिक** न० आभिमुख्येनादानमभ्यादानं तत्र नियुक्तः ठक् । पितृमातृकुलादिप्राप्ते स्त्रीधनभेदे ।

**आभ्यासिक** त्रि० अभ्यासे निकटे भवः ठक् । १निकटस्थिते “अलङ्ग्याभ्यासिकैर्युक्तां शुशुभे योधरक्षितम्” भा०आ० २०६ अ० । अभ्यासात् पौनःपुन्यात् आगतः ठक् । २अभ्यासप्राप्ते दृढसंस्कारादौ ।

**आभ्युदयिक** न० अभ्युदयः प्रयोजनमस्य ठक् । २वृद्धिनिमित्ते श्राद्धभेदे तत्र छन्दोगानामाभ्युदयिकश्राद्धविधिर्गोभिलसूत्रछन्दोगपरिशिष्टयोरुक्तः यथा ।

गोभिलः । “अथाभ्युदयिके श्राद्धे युग्मानाशयेत् । प्रदक्षिणमुपचारः ऋजवो दर्भाः यवैस्तिलार्थः सम्पन्नमिति तृप्तिप्रश्नः दधिबदराक्षतमिश्राः पिण्डाः नान्दीमुखाः पितरः प्रीयन्तामिति दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च प्रीयन्तां, न स्वधाञ्च प्रयुञ्जीत” इति । “आभ्युदयिके अभ्युदयनिमित्तके अभ्युदय इष्टलाभः विवाहादिः तदर्थं श्राद्धं आभ्युदयिकम् । तच्च भूतभविष्यद्भेदेन द्विविधं तत्र भूतं पुत्रजन्मादि भविष्यद्विवाहादि एतच्च श्राद्धविवेकादौ आद्यभेदगणने वृद्धिश्राद्धत्वेन कर्माङ्गत्वेन च यदुभयत्वमुक्तं तदुभयमेवाभ्युदयिकत्वेनोपपन्नं तेनाभिलापे आभ्युदयिकश्राद्धमिति प्रयोज्यम् । तत्र यवैस्तिलार्थ इत्यनेन पार्वणश्राद्धमाप्रतिलस्थाने यवविधानादाभ्युदयिकस्यापि पार्वणप्रकृतिकत्वं प्रतीयते । अन्यथा तिलार्थत्वप्रदानं व्यर्थं स्यात् । ततश्च पार्वणप्रकृतिकत्वेन पितृपक्षेऽयुग्मब्राह्मणप्राप्तौ तन्निरासाय पितृपक्षे ब्राह्मणयुग्मत्वोपदेशः । दैवे युग्मत्वस्य पार्वणत्वेन प्राप्तत्वाच्च तदनुपदेशः “अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम्” इति याज्ञवल्क्यवचनेन देवकर्मानन्तरं पितृकर्मकरणे प्राप्तवामोपचारनिरासाय प्रदक्षिणमुपचारस्तेन दैवपितृकर्मकरणाय दक्षिणावर्त्तेन गन्तव्यम् । द्विगुणभुग्नत्वनिरासाय ऋजवो दर्भा इति ऋजुत्वोपदेशः । तृप्ताः स्थ इत्यनेन तृप्तिप्रश्ने सम्पन्नमिति प्रष्टव्यं योगरूढत्वात् सम्पन्नमिति प्राप्ते वक्ष्यमाणछन्दोगपरिशिष्टवचनाच्च सुसम्पन्नमित्यु-

त्तरम् । एतद्दर्भमयश्राद्धपक्षेऽव्यवस्थितत्वादाच्यम् । दधि-बदराक्षतमिश्रादर्घ्यनेन दध्यादिमिश्रणमावश्यकम् । अक्षतो-यवः "अक्षताश्च यवाः प्रोक्ता भ्रष्टा धाना भवन्ति ते" इति भट्टनारायणधृतकोषात् अतएव वक्ष्यमाणच्छन्दोगपरिशिष्ट-वचनेऽक्षतमनुक्त्वा "संयोज्य यवकर्कन्धूदधिभिरिति" निःसन्दिग्धमुक्तम् । स्वधावाचनप्रश्ननिवृत्तये नान्दीमुखाः पितरः प्रीयन्तामित्युपदेशः । तत्र स्वधां वाचयिष्य इति पितृपक्ष एव प्रश्नः । अतएव तन्निवृत्तये दैव इति । देवपक्षे नान्दीमुखाः पितरः प्रीयन्तामिति प्रश्नः । उत्तरञ्च प्रीयन्तामिति । ततः पितृपक्षे स्वधावाचनस्थानीयत्वेन वृद्धप्रमातामहेभ्यश्चेति चकारनिर्द्देशेन च स्वधोच्यतामिति-वत् प्रत्येकमेव प्रीयन्तामिति पृच्छेत् । प्रत्युत्तरञ्च अस्तु स्वधेति वत् तन्त्रेणैव प्रीयन्तामिति । अत्र नान्दीमुखाः पितरइत्यादि नान्दीमुखेभ्यः पितृभ्यः इति निर्द्देशेन च "नान्दीमुखं पितृगणमिति" विष्णुपुराणेन च "मातामहेभ्यश्च तथा नान्दीमुखेभ्य एव चेति" ब्रह्मपुराणे च नान्दीमुखपदश्रुतेस्तद्विशेषणविशिष्टस्यैवाभ्युदयिके देवतात्वं तत्रवाक्येऽपि प्रीयन्तामितिवन्नान्दीमुखेभ्यः प्रपितामहेभ्य इत्यादि वाच्यम्" श्रा० त० रघु०। छन्दोग० "कर्म्मादिषु तु सर्व्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः । प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु । अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः । कुड्यलग्नां वसोर्धारां सप्त धारान् घृतेन तु । कारयेत् पञ्च वारान् वा नातिनीचां नचोच्छ्रिताम् । आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् । वशिष्ठोक्तविधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः । अतःपरं प्रवक्ष्यामि विशेष इह यो भवेत् । प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा । उपवेश्य कुशान्दद्यात् ऋजुनैव हि पाणिना" तथा "निपातोन हि सव्यस्य जानुनो विद्यते क्वचित् । सदा परिचरेद्भक्त्या पितॄनप्यत्र दैववत् । पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् । गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत् । नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते । पात्राणां पूरणादीनि दैवेनैव तु कारयेत् । ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् । कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते । मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् । गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्ज्जितः । नचाश्नत्सु जपेदत्र कदाचित् पितृसंहि-ताम् । अन्यएव जपः कार्य्यः सोमसामादिकः शुभः । प्रकारोऽन्नस्य यस्तत्र तिलवद्यववत्तथा । उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः । सम्पन्नमिति तृप्ताः स्थः प्रश्नस्थाने विधीयते । सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् । प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्व्ववत् । अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः । द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः । मातामहप्रभृतींस्तु एतेषामेव वामतः । सर्व्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च । संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्थितः । अवनेजनवत् पिण्डान् दत्त्वा बिल्वप्रमाणकान् । तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् । उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरम् । भवेदधश्चाधरेषामधोऽधः श्राद्धकर्म्मसु । तस्मात् श्राद्धेषु सर्व्वेषु वृद्धिमत्स्वितरेषु च । मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्व्वपेत् । गन्धादीन्निःक्षिपेत् तूष्णीं तत आचामयेद् द्विजान् । अन्यत्राप्येष एव स्यात् यवादिरहितो विधिः । दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य तु । दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः । अथाग्रभूमिमासिञ्चेत् सुसम्प्रोक्षितमस्त्विति । शिवा आपः सन्त्विति च युग्मानेवोदकेन च । सौमनस्यमस्त्विति च पुष्पदानमनन्तरम् । अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतानपि दापयेत् । अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते । षष्ठ्यैव नित्यं तत् कुर्य्यान्न चतुर्थ्या कदाचन । प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः । पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् । युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा । कृत्वा धूर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः" ।

अत्र षड्भ्य इति कीर्त्तनं छन्दोगानां मातृपक्षनिरासार्थम् अन्यवेदिनां तु मातृपक्षाधिक्यमप्यस्ति "मातृश्राद्धं तु पूर्व्वं स्यात् पितॄणां तदनन्तरम् । ततो मातामहानाञ्च वृद्धौ वृद्धौ भवेत् तथा" श्रा० त० शातातपोक्तेः

तत्र कुत्राभ्युदयिकं कर्त्तव्यं तद्दर्शितं नि० सि० ब्राह्मे "जन्मन्यथोपनयने विवाहे पुत्रकस्य च । पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्व्वकम् । वेदव्रतेषु चाधाने यज्ञपुंसवनेषु च । नवान्नभोजने स्नाने ऊढायाः प्रथमार्त्तवे । देवारामतडागादिप्रतिष्ठासूत्सवेषु च । राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकान् । वनस्थाद्याश्रमं गच्छन् पूर्व्वेद्युःस्वधया पितॄन् । पूर्व्वोक्तविधिना सम्यक् तर्पयेत् कर्म्मसिद्धये" । विष्णुपुराणे "यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोचयोः । पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्" बह्वृचकारिका-

णाम् "स्यादाभ्युदयिकं श्राद्धं वृद्धियुक्तेषु कर्मसु । पुंसवनसीमन्तचौलोपनयनेष्विह । विवाहे चानलाधेयप्रभृतिश्रौतकर्मणि । इदं श्राद्धं प्रकुर्वन्ति द्विजा वृद्धिनिमित्तकम् । अन्यैः षोड़शसंस्कारसरण्यादिषूपेष्यते । वाप्याद्युद्यापनादौ तु कुर्युः पूर्त्तनिमित्तकम्" वोपदेवकालादर्शौ "सोमन्तव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च । पुंस्त्वावसथप्रवेशनसुताद्याखावलोकाश्रमस्वीकारक्षितिपाभिषेकदयिताद्यर्त्तौ च नान्दीमुखम्" श्राद्धकौमुद्यां निर्णयामृते च मात्स्ये "अन्नप्राशे च सोमन्ते पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नववेश्मप्रवेशने । देववृक्षजलादीनां प्रतिष्ठायां विशेषतः । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम् । तत्र गर्भाधाने आभ्युदयिकं छन्दोगेतरपरं यथोक्तं श्राद्धतत्त्वे छन्दो०प० । वृषोत्सर्गे वृद्धिश्राद्धं काम्यविषयम् । अशौचान्तद्वितीयदिनादिविहिते न वृद्धिश्राद्धमिति भेदः । "असकृद्यानि कर्म्माणि क्रियेरन् कर्म्मकारिणा । प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धमेव च । आधाने होमयज्ञे च वैश्वदेवे तथैव च । बलिकर्म्मणि दर्शे च पौर्णमासे तथैव च । नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः । एकमेव भवेत् श्राद्धमेतेषु न पृथक् पृथक् । नाष्टकासु भवेत् श्राद्धं न श्राद्धे श्राद्धमिष्यते । न सोष्यन्तीजातकर्म्म प्रोषितागतकर्म्मसु । विवाहादिः कर्म्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते । विवाहादावेकमेवात्र कुर्य्यात् श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात् । तथागणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् । सकृदेव भवेत् श्राद्धमादौ न पृथगादिषु । यत्र यत्र भवेत् श्राद्धं तत्र तत्रैव मातरः" । इदं चावश्यकम् । "वृद्धौ न तर्पिता वै पितरो गृहमेधिभिः । तद्धीनमफलं ज्ञेयमासुरो विधिरेव स" इति शातातपोक्तेः । "अष्टकामास्वाभ्युदयास्तीर्थयात्रोपपत्तयः । पितॄणामतिरेकोऽयं मासिकाच्चाद्भुवः स्मृत इति देवी०पु०उक्तेश्च ध्रुव आवश्यक इति श्रा०त० रघु० । अत्र श्राद्धत्रयमाह शाता० । "मातृश्राद्धं तु पूर्व्वं स्यात् पितॄणां तदनन्तरम् ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्" तत्कालमाह पृथ्वीचन्द्रोदये गार्ग्यः "मातृश्राद्धं तु पूर्व्वेद्युः कर्म्माहनि तु पैतृकम् । मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्" । अत्राशक्तौ स एव "पृथक्दिनेष्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे । श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवं तु तान्त्रिकमिति" वृद्धमनुरपि "अत्रा-

भेऽभिन्नकालानां नान्दीश्राद्धत्रयं बुधः पूर्व्वेद्युर्वै प्रकुर्व्वीत पूर्व्वाह्णे मातृपूर्व्वकम्" अत्र "मण्डपं पूर्व्वेद्युश्चादृहरत्येषमिति" मदनपारिजातव्यवस्था ज्ञेया । कर्म्मदिवस एवेति गौडाचारः । तच्च प्रातरेव । "पार्व्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकमिति" निर्ण० सि० शातातपोक्तेः । अत्र प्रातःशब्दः सार्द्धप्रहरपरः "प्रहरोऽप्यर्द्धसंयुक्तः प्रातरित्यभिधीत इति" गार्ग्योक्तेरिति पृथ्वीचन्द्रोदयः । "आवर्त्तनसमीपे वैवा वृद्धेः मध्याह्नावधिरिति" गौडाः । इदं च पुत्रजन्मातिरिक्तविषयम् तदाहालिः "पूर्व्वाह्णे वैश्ववद्वृद्धिविना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्व्वीत श्राद्धं तात्कालिकं बुध इति" एतदनियतनिमित्तपरम् "नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् । तेषामनियतत्वे तु तदानन्तर्यमिष्यत" इति लौगाक्षिस्मृतेः । आधानाङ्गं नान्दीश्राद्धं त्वपराह्णे एव "आमश्राद्धं तु पूर्व्वाह्णे पिण्डान्नेन तु मध्यतः । पार्व्वणं चापराह्णे तु वृद्धिश्राद्धं तथाग्निकमिति" निर्णयामृते गालवोक्तेः "नान्दीमुखादयः प्रातराग्निकं त्वपराह्णत" इति विष्णूक्तेश्च । इदं च मातृपितृमातामहादिक्रमेण छन्दोगेतरैः नवदैवत्यं कार्य्यम् तत्र मातामहादयस्तु सपत्नीकाः "मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानामिति" पृथ्वीचन्द्रोदये गद्यरूपेण गारुड़वाक्यात् । हेमाद्रौ मनुः "नान्दीमुखे सत्यवसू संकीर्त्त्यौ वैश्वदेविके" । वृद्धपराशरः "नान्दीखेभ्यो देवेभ्यः प्रदक्षिणकुशासनम् । पितृभ्यश्च नान्दीमुखेभ्यश्च प्रदक्षिणमिति स्मृतिः" । श्राद्धे मालादाननिषेधेऽपि वृद्धौ मालाविशेषदानं विहितम् । "मालत्याः शतपत्राया मल्लिकाकुब्जयोरपि । केतक्याः पाटलाया वा देया माला न लोहिता" कू०पु० उक्तेः । "कुशस्थाने च दूर्व्वाःस्युर्मङ्गलस्याभिवृद्धय" इति हेमा० ब्रह्मा० पु० "ऋजवोदर्भा इति प्रागुक्तं वाक्यं तु छन्दोगविषयम् । अत्राधिकारी निरूप्यते । "जातस्य जातकर्म्माणि क्रियाकाण्डमशेषतः । पिता पुत्रस्य कुर्व्वीत श्राद्धं चाभ्युदयात्मकम्" विष्णु०पु० । "स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु । पिण्डानोद्वहनात् तेषां तदभावेऽपि तत्क्रमात्" छन्दोग० । "जीवत्पितृकस्याप्यत्राधिकारः । अनग्निकोऽपि कुर्व्वीत जन्मादौ वृद्धिकर्म्मणि । येभ्य एव पिता दद्यात् तानेवोद्दिश्य तर्पयेदिति" हारीतोक्तेः "उद्वाहे पुत्रजनने पुत्रेष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः । मैत्रायणपरिशिष्टम् "जीवतः जीवन्त

पितरमनादृत्य उद्वहेदित्यर्थः । प्रथमविवाहे एव पितुरधिकारः द्वितीये तु स्वस्यैवेति भेदः।"नान्दीश्राद्धं पिता कुर्य्यात् आद्ये पाणिग्रहे बुधः । अत ऊर्द्धं प्रकुर्वीत स्वयमेव तु नान्दिकम्"नि॰ सि॰ धृतस्मृतेः । छन्दोग॰ वाक्ये तदभावे तस्य पितुरभावे तत्क्रमात्"असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैरिति"या॰ वः कर्त्तृक्रमः तेन क्रमेण ज्येष्ठभ्राता दद्यात् इति पृथ्वीचन्द्रोदयः । हेमाद्रिस्तु पितुरभावे यः पितृव्यमातुलादिः संस्कुर्य्यात् स तत्क्रमात् संस्कार्य्यपितृक्रमात् न तु स्वपितृभ्य इति व्याचख्यौ । तेन असंस्कृतेति संस्कार्य्यनामाभिधाय पितुरिति प्रयोज्यमेवमेव रघुनन्दनादयः । "वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात् तेभ्यो दद्यात् स्वयं सुतः । कात्या॰ स्मृतेः जीवत्पितृकस्य तीर्थादौ विशेषः पितरि संन्यस्ते प्रोषिते पतिते वा यदाऽन्यस्तत्पुत्रं धर्म्मबुद्ध्या संस्कुर्य्यात् तदा संस्कार्य्यपितुः पित्रादिभ्यो दद्यात् न संस्कार्य्यपित्रादिभ्यः निर्ण॰ सि॰ । एवं जीवन्मातृकेणापि मातरमतिक्रम्य पितामह्यादीनां तिसृणाम् श्राद्धं छन्दोगेतरेण करणीयमिति "यो यो जीवति तमति दद्यादिति" स्मृतौ पुंस्त्वस्याविवक्षितत्वात् । पित्रादित्रिकस्य जीवने तु तद्वर्गश्राद्धनिवृत्तिः किन्तु जीवद्भिरेव तैः तच्छ्राद्धं भोज्यं "पितामहो वा तत्श्राद्धं स्वयं भुञ्जीतेति"मनुवचनात् । एवं मात्रादित्रयेऽपि बोध्यम् तेन जीवद्वर्गपरित्यागेनेतरवर्गश्राद्धं करणीयम् "यदि जीवति वर्गस्तु तं वर्गं तु परित्यजेत्" नि॰ सि॰ वचनात् ।

**आभ्रिक** त्रि॰ अभ्रिया खनति ठक् । काष्ठकुद्दालेन खनके ।

**आभ्र** त्रि॰ अभ्रे आकाशे भवः कुर्व्या॰ ण । आकाशभवे ।

**आम्** अव्य॰ अम-गत्यादिषु णिच्-वा बाहुलः क्विप् । १अङ्गीकारे २निश्चये ज्ञाने ३ स्मृतौ ४प्रतिवचने च ।

**आम** पु॰ । आम्यते ईषत्पच्यते आ+अम-कर्म्मणि घञ् । १ईषत्पक्वे असिद्धे २पाकरहिते । अम-करणे घञ् । ३रोगमात्रे । वैद्यकोक्ते षड्विधे अजीर्णे ४रोगभेदे च "आमाटोपापचोक्ते ग्रगुल्मलर्मिविकारिणाम्" सुश्रु॰ । तल्लक्षणादि यथा निदा॰ "आहारस्य रसः सारः योन पक्वोऽग्निलाघवात् । आमसंज्ञां स लभते बहुव्याधिसमाश्रयः । आममन्नरसं केचित् केचित्तु मलसञ्चयम् । प्रथमदोषदुष्टिं वा वदन्ति बहुपिच्छिलाम् । सादनं सर्व्वगात्राणामाममित्यभिशब्दितम्" "तेनामेन सदा युक्ता दोषा दुष्याश्च धातवः । तदुद्भवा आमयाश्च सामा इति बुधैः स्मृताः" तेनास्य क्लीवत्वमपि । आमस्य निदानस्वरूपभेदादि निदाने उक्तम् "आमं विदग्धं विष्टब्धं तथा पित्तानिलैस्त्रिभिः । अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः । अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च । वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् । तत्रामे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटकः। उद्गारश्च यथाभुक्तमविदग्धं प्रवर्त्तते" । तस्य चामनामत्वे कारणमप्युक्तम् तत्रैव ।"भुक्तमन्नावशेषं यत् रसभूतन्न पाचितम् । गतमामाशये यस्मात्तस्मादामं प्रचक्षते इति ।" अधिकमामाशयशब्दे वक्ष्यते ।

अपाकरूपामात् तृष्णाधिक्यं जायते तदुक्तम् सुश्रु॰ । "तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा" च इत्यादिना सप्तविधा तृष्णा विभज्य "त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादयुक्ताः । स्निग्धं तथाम्लं लवणञ्च भुक्तं गुर्वन्नमेवातितृषं करोति" आमस्यातिसाररोगादिहेतुत्वं सुश्रुते उक्तम् "आमाजीर्णैः प्रद्रुताः क्षोभयन्तः कोष्ठं दोषाः संप्रदुष्टाः सभक्तम् । नानावर्णं नैकशः सारयन्ति कृच्छ्राज्जन्तोः षडेनं वदन्ति । संसृष्टमेभिर्दोषैस्तु मलमप्स्ववसीदति । पुरीषं भृशदुर्गन्धं पिच्छिलं चामसंज्ञितम्"इति आमातिसारं लक्षयित्वा । अतः सर्वातिसारास्तु ज्ञेयाः पक्वामलक्षणैः तत्र लङ्घनमेवादौ पूर्व्वरूपेषु देहिनाम्"। तत्र लङ्घनस्य कर्त्तव्यतामुक्त्वा अनेन विधिना चामं यस्य नैवोपशाम्यति । हरिद्रादिं वचादिं वा पिबेत् प्रातः स मानवः । आमातिसारिणां कार्य्यं नादौ संग्रहणं नृणा"मित्यनेन विशेष उक्तः तेन ४अतिसारभेदे "शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । आमं वितुषमित्युक्तम् स्विन्नमन्नमुदाहृतमिति" स्मृतिपरिभाषिते अपक्वे ५सतुषेऽन्ने च । "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" स्मृतिः । आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा "आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव तु" प्रचे॰ पाकश्च अग्निसंयोगात् कालवशात् वा वस्तुपरिणामविशेषः तत्राद्यादीनामामत्वमग्निविशेषसंयोगाभावात् । यथा आमान्नघटादेः। यद्यत् फलादि यद्यत्काले पच्यते तत्कालात् प्राक् तस्य पाकाभावे आमत्वम् यथाम्रादेः। तथा व्रणादेरपि परिपाकाभावे आमत्वम् कालिकम् । यथा "आमं विपच्यमानं च सम्यक् पक्वं च यो भिषक्" व्रणपाकाभावे" सुश्रुतः ।

**आमगन्धि** त्रि॰ आमस्यापक्वस्य गन्धइव गन्धो यत्र इत् समा॰ । अपक्वमांसादितुल्यगन्धाढ्ये । क्लीवमित्येके ।

**आमज्वर** पु॰ आमोऽपक्वः ज्वरः । अपक्वज्वरे नवज्वरे "खेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति" माघः ।

**आमनस्य** न॰ अप्रशस्तं मनो यस्य तस्य भावः ष्यञ् । दुःखे ।

**आमन्त्र** पु॰ आमादजीर्णात् त्रायते स्वफलतैलेन मलनिस्सारणात् त्रै-क पृषो॰ । १एरण्डवृक्षे राजनि॰ आमण्ड इति वा पाठः । तत्फलतैलपाने हि अजीर्णमलनिस्सारणात्तथात्वम् आ+मन्त्र्-अच् । २आमन्त्रणशब्दार्थे च ।

**आमन्त्रण** न॰ आ+मन्त्र-ल्युट् । १अभिनन्दने, २संबोधने, ३कामचारानुज्ञारूपे क्रियाभेदेषु प्रवर्त्तनव्यापारे च । "विधिनिमन्त्रणामन्त्रणेत्यादि" पा॰ । अवश्यकर्त्तव्ये नियोगो निमन्त्रणं यथा श्राद्धादिभोजने । यस्याकरणे प्रत्यवायोनास्ति तादृशव्यापारे नियोजनमामन्त्रणम् यथा स्वलविशेषे शयनायामन्त्रणम् । नवपत्रिकाप्रवेशपूर्व्व दिवसे सायं बिल्वतरोःसंबोधनरूपे ४व्यापारे च युच् आमन्त्रणाप्यत्र स्त्री

**आमन्त्रित** त्रि॰ आ+मन्त्र्-क्त । १अनावश्यके कर्मणि नियोजिते २व्याकरणपरिभाषितायां सम्बोधनार्थकप्रथमाविभक्तौ न॰ "सामन्त्रितम्" पा॰ "सम्बोधने या प्रथमा सामन्त्रितसंज्ञा स्यात्" सि॰कौ । "आमन्त्रितं पूर्व्वमविद्यमानवत्"नामन्त्रिते समानाधिकरणे सामान्यवचनम्" पा॰। ३ निमन्त्रिते त्रि॰ "प्रातरामन्त्रितान् विप्रान्" छन्दोग॰।

**आमन्त्र्य** अव्य॰ आ+मन्त्र्-ल्यप् । १सम्बोध्येत्यर्थे । "आद्यमामन्त्र्य पूर्व्ववत्" छन्दोग॰ आ+मन्त्र-कर्म्मणि यत् । २संबोधनीये आवश्यककार्य्ये ३नियोज्ये च त्रि॰।

**आमन्द** पु॰ आमं रोगं द्यति दो-ड वा॰सुम् । वासुदेवे।

**आमन्दा** स्त्री आमन्दमीषन्मन्दं करोति आमन्द+णिच्-अच् । खड्गाभेदे ( नेकारेरखाट ) शब्दचि॰ ।

**आमन्द्र** पु॰ ईषन्मन्द्रः प्रा॰स॰ । १ईषद्गम्भीरशब्दे "आमन्द्रमन्यध्वनिदत्ततालम्" भट्टिः । २तद्युक्ते त्रि॰ ।

**आमपाक** पु॰ आमस्य अजीर्णविशेषस्य पाकः । वैद्यकोक्ते शोफरोगाद्युक्ते आमस्य पाकभेदे । तद्विरणमुक्तं सुश्रुते यथा "स यदा बाह्याभ्यन्तरैः क्रियाविशेषैर्न सम्भावितः प्रशमयितुं क्रियाविपर्य्ययाद्बहुत्वाद्वा दोषाणां, तदा पाकाभिमुखो भवति । तस्यामस्य पच्यमानस्य पक्वस्य च लक्षणमुच्यमानमवधारय । तत्र मन्दोष्मता त्वक्सवर्णता शीतशोफता स्थैर्य्यं मन्दवेगताल्पशोफता चामलक्षणमुद्दिष्टम् । सूचिभिरिव निस्तुद्यते, दश्यत इव पिपीलिकाभिः, ताभिश्च संसृप्यत इव, छिद्यत इव शस्त्रेण, भिद्यत इव शक्तिभिः, ताड्यत इव दण्डेन, पीड्यत इव पाणिना, घट्ट्यत इव चाङ्गुल्या, दह्यत इव पच्यत इव चाग्निक्षाराभ्यामोषचोषपरीदाहाश्च भवन्ति वृश्चिकविद्ध इव च स्थानासनशयनेषु न शान्तिमुपैति आध्मातवस्तिरिव । अतश्च शोफो भवति त्वग्वैवर्ण्यं शोफाभिवृद्धिर्ज्वरदाहपिपासा भक्तारुचिश्च पच्यमानलिङ्गम् । वेदनोपशान्तिः पाण्डुताल्पशोफता वलीप्रादुर्भावस्त्वक्परिपुटनं निम्नदर्शनमङ्गुल्यावपीड़िते प्रत्युन्नमनं वस्ताविवोदकसञ्चरणं पूयस्य प्रपीडयत्येकमन्तमन्ते चावपीड़िते मुहुर्मुहुस्तोदः कण्डूरुन्नतता च व्याधेरुपद्रवशान्तिर्भक्ताभिकाङ्क्षा च पक्वलिङ्गम् । कफजेषु तु रोगेषु गम्भीरगतित्वादभिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति मन्यमानो भिषङ्मोहमुपैति यत्र हि त्वक्सवर्णता शीतशोफता स्थौल्यमल्परुजताश्मवद्घनता न तत्र मोहमुपेयादिति । भवन्ति चात्र । आमं विपच्यमानञ्च सम्यक् पक्वञ्च यो भिषक् । जानीयात् स भवेद्वैद्यः शेषास्तस्करवृत्तयः । वाताद्दृते नास्ति रुजा, न पाकः पित्ताद्दृते, नास्ति कफाच्च पूयः, । तस्मात्समस्ताः परिपाककाले पचन्ति शोफांस्त्रय एव दोषाः" ।

**आमपात्र** न॰ कर्म्म॰ । अपक्वे पात्रे (काँचा ) मृण्मयपात्रे "विनाशं व्रजति क्षिप्रमामपात्रमिवाम्भसि" मनुः ।

**आमय** पु॰आमं रोगं यात्यनेन या-करणे घञर्थे क आ+मीञ् हिंसायां करणे अच् वा । रोगे आमशब्दे तद्विवृत्तिर्दृश्या "आमयस्तु रतिरागसम्भवः"रघुः "तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून्" सुश्रुतः । अनामयः निरामयः । "सभौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च" माघः ।

**आमयाविन्** आमयोऽस्त्यस्य विनि दीर्घश्च । रोगयुक्ते । "क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च" "अन्नहर्त्ताऽऽमयावित्वम्" इति च मनुः । [आमशब्दे विवृतिः ।

**आमरक्त** न॰ आममपक्वं रक्तम् । रोगभेदे रक्तातिसारे

**आमरणान्तिक** त्रि॰ आमरणान्तं मरणरूपसीमापर्य्यन्तं व्याप्नोति ठञ् । मरणकालपर्य्यन्तव्यापके "अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः"मनुः ।

**आमर्द** पु॰ आ+मृद-घञ् । बलात् निष्पीड़ने । "आमर्दकाले राजेन्द्र ! व्यपसर्पेत्ततः परम्"भा॰आश्व॰प॰१अ॰। "आर्द्र पीतस्तन माद्गुरामर्द क्लिष्टकेशरम्" शकु॰भावे ल्युट्। आमर्दनमप्यत्र न॰ ।

**आमर्द्दिन्** त्रि० आ+मृद-णिनि । बलान्निष्पीड़के ।

**आमर्श** पु० आ+मृश-स्पर्शे घञ् । सम्यक्स्पर्शे । ल्युट् । आमर्शनमप्यत्र न० ।

**आमर्ष** पु० न+मृष-घञ् "अन्येषामपि" पा० दीर्घः । १कोपे असहने । "निरुद्योगं निरामर्षं निर्वीर्य्यमरिनन्दनम्" नीतिशा० आ+मृष-घञ् । २सम्यग्विवेके च ।

**आमलक** त्रि० आ+मल-क्वुन् स्त्रीत्वे गौरा० ङीष् । (आमला) १धात्रीवृक्षे ।"त्रिष्वामलकमाख्यातं धात्री तिष्यफलाऽमृता । रक्तपित्तप्रमेहघ्नं पथ्यं वृष्यं रसायनम् । हन्ति वातं तदम्लत्वात् पित्तं माधुर्य्यशैत्यतः । कफं रूक्षकषायत्वात् फलं धात्र्यास्त्रिदोषजित् । यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम् । तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत्" भावप्रका०अस्य स्त्रीत्वपक्षेऽपि तस्याः इदम् फलमण् फले लुकि क्लीवत्वमेवेति भेदः । "यः सदामलकैः स्नानं करोति स विनिश्चितम् । वलीपलितनिर्मुक्तोः जीवेद्वर्षशतं नरः"वैद्य०"श्रीकामः सर्व्वदा स्नानं कुर्व्वीतामलकैर्नरः" गरुड़ पु० । गौरादिगणे आमलशब्दपाठात् आमलशब्दोऽप्यत्र स्त्रीत्वे गौरा० ङीष् आमली । ब्रह्म० पुराणे तु अमलात् कात् नेत्रजलादागतम् अण् ङीप् । इत्यभिप्रायेण निरुक्त्यन्तरम् दर्शितं यथा "अजये ! विजये ! देवि ! नायेव स्रुतयोस्तदा । नयनेषु च जातानि अमलान्यम्बुजलानि च । तानि नौ नयनेभ्यश्च निपेतुर्भुवि हे सखि ! । ततो जाताद्रुमाः पृथ्व्यां चत्वारोविमलप्रभाः । ख्याता आमलकी नाम्ना जाता कादम्बाद्यतः । श्यामलच्छदहन्दाक्षो कर्व्बुर-स्कन्धमूलकाः । चिरायचितपत्रालीमालाकलितपत्रकाः" "माघेमासि सितायां तामेकादश्यां समुद्भवाम् इहाख्यागत्य देवोऽत्यद्भुतानन्दयुक्ततुम् । तेन धात्रीति नाम्नापि राजत्यामलकी पुनः" इति च "सर्व्वदामलकी ग्राह्या परित्यज्य रवेर्दिनम्" । "पयोधरैरामलकीवनाश्रिताः" माघः । "बिल्वपत्रं च माघ्यञ्च तमालामलकीदलम् । कह्लारं तुलसी चैव पद्मञ्च मुनिपुष्पकम् । एतत् पर्य्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्" योगि०त० । "न धात्रीकाननं यत्र विष्णोस्तु तुलसीवनम् । तं म्लेच्छदेशं जानीयात् यत्र नो याति वैष्णवः । यत्र मातृपरा मर्त्त्या यत्र द्वादशीव्रतचरः । तुलसीकाननं धात्री तत्र विष्णुः प्रिया सह । दूर्वा हरति पापानि धात्री हरति पातकम्" आह्नि०त०स्कन्द पु० ।

**आमवात** पु०आमोऽपक्वहेतुः वातः । भा०प्र० उक्ते वातव्याधिभेदे तल्लक्षणाद्युक्तं तत्रैव "युगपत्कुपितावेतौ त्रिकसन्धिप्रवेशकौ । स्तब्धञ्च कुरुतो गात्रमामवातः स उच्यते" (एतौ वातश्लेष्माणौ) तस्य लक्षणमुक्तं निदा०।"अङ्गमर्द्दोऽरुचिस्तृष्णा ह्यालस्यं गौरवं ज्वरः । अपचीशूलजङ्गाक्षमामवातः स उच्यते" । तत्र निदानादि यथा "विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च । स्निग्धं भुक्तवतोऽप्यन्नं व्यायामं कुर्वतस्तथा । वायुना प्रेरितोह्यामः श्लेष्मस्थानं प्रधावति । तेनात्यर्थंमपक्कोऽसौ धमनीभिः प्रपद्यते । वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः । स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छलः । जनयत्यग्निदौर्बल्यमिन्द्रियस्य च गौरवम् । व्याधीनामाश्रयोह्येष आमसंज्ञोऽनिलोद्भवम्" ( श्लेष्मस्थानमामाशयसन्ध्यादि ) । तेन श्लेष्मस्थानगमने पाकाभावात् दूषकता पित्तस्थानगमने तु तेन पाकसम्भवान्न दोषजनकतेति । अतिवृद्धस्य लक्षणमुक्तं तत्रैव "स कष्टः सर्वरोगाणाम् यदा प्रकुपितो भवेत् । हस्तपादशिरोगुल्फत्रिकजानूरुसन्धिषु । करोति सरुजं शोफं यत्र दोषः प्रपद्यते । स देशो रुज्यतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः । जनयेत् सोऽग्निदौर्बल्यम् प्रसेकारुचिगौरवम् । उत्साहहानिं वैरस्यं दाहञ्च बहुमूत्रताम् । कुक्षौ शूलं कठिनतां तथा निद्राविपर्य्ययम् । तृट्छर्द्दि-भ्रममूर्च्छाश्च हृद्ग्रहं विड्विबद्धताम् । जाड्यान्त्रकूजनानाहकष्टांश्चान्यानुपद्रवान्" । तत्र दोषभेदे लक्षणानि "पित्तात् दाहं सरागञ्च सशूलं पवनात्मकम् । स्तिमितं गुरु कण्डूकं कफजुष्टं तमादिशेत् । एकदोषानुगः साध्योद्विदोषोयाप्य उच्यते । सर्वदोषगतः शोफः स कष्टः सान्निपातिकः" इति हृद्० ।

**आमश्राद्ध** न०आमेन अपक्वान्नेन श्राद्धम् । "आमन्तु विहितं प्रोक्तमित्युक्तेष विदुषेणापक्वान्नेन कर्त्तव्ये श्राद्धे "आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा । आमश्राद्धं द्विजैः कार्य्यं शूद्रेण च सदैव तु" प्रचे० अत्र विशेषः "निरग्नेरामश्राद्धे तु अन्नं न जापयेत् क्वचित् । वृद्धौ च जापयेदन्नं संक्रमे ग्रहणेषु च, ति०त०पु० ।

**आमहीय** त्रि०आमहाय आगमनाय हितम् छ । आगमनसाधने मन्त्रभेदे "अपाम सोमम्" इत्यस्यामृचि स्त्री "उद्दयमित्युचेतोशीता आमहीयां जपन्नोगच्छन्त्यपाम सोममस्ता अमृताभूम ज्योतिरविदाम देवान् किं नूनमस्मान् कृणवदरातिः किमु धूर्त्तिरमृतमर्त्त्यस्येति" का० १०,८,७,

"वासःपरिधानानन्तरम् उद्वयमित्यनेन मन्त्रेणोदेत्योदीता जलमध्यात् बहिर्निष्क्रामिताः सन्तऋत्विजः सयजमानाः आमहीयामित्येवंसंज्ञकाम् अपामेत्येतामृचं जपन्तः सर्वे देवयजनं प्रति गच्छन्ति" कर्कः ।

**आमहीयव** न० आमहीयुना ऋषिभेदेन दृष्टं साम अण् । सामभेदे तस्ययत्रपाठता तत् सा०सं०भा० दर्शितम् यथा "तृतीयसवने सप्त स्तोत्राणि तेषु नव सामानि गेयानि तत्र प्रथमे स्तोत्रे गायत्रमामहीयवं चेति द्वे सामनी" आमहीयवञ्च साम ऊहगाने ऊहगानारम्भे प्रथमं साम ।

**आमाति(ती)सार** पु० आमकृतोऽति(ती)सारः । आमकृते षष्ठे अतिसाररोगभेदे अतिसारशब्दे तस्य विवृतिः । अस्य निदानादि उक्तं सुश्रुते यथा । "अन्नाजीर्णात् प्रद्रुताः क्षोभयन्तः कोष्ठं दोषा धातुसंघान् मलांश्च । नानावर्णान्नैकशः सारयन्ति शूलोपेतं षष्ठमेनं वदन्ति" आमातिसारे नो कार्य्यमादौ संग्रहणं नृणाम्" सुश्रु० ।

**आमात्य** पु० अमात्य एव स्वार्थे अण् । अमात्ये ।

**आमानस्य** न० अप्रशस्तं मानसमस्य अमानसः तस्य भावः ष्यञ् । दुःखे शब्दरत्ना० ।

**आमावास्य** त्रि० अमावास्यायां भवः सन्धिवेलादि० अण् । अमावास्याभवे "आमावास्येन हविषेष्टा पौर्णमासेन वा" श०ब्रा० । वा वुन् आमावास्यक इत्यपि तत्रैव त्रि० ।

**आमाशय** पु० आमस्यापक्वान्नस्याशयः । देहमध्यस्थे नाभेरूर्द्धस्थाने भुक्तापक्वान्नादिस्थाने । आशयाहि देहस्थाः सप्त सुश्रुते दर्शिता यथा "आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयः मूत्राशयः स्त्रीणां गर्भाशयोऽष्टम इति आमाशयस्थानएव दोषरूप श्लेष्मस्थानं यथोक्तं सुश्रु०। "दोषस्थानान्यत ऊर्द्ध्वं वक्ष्यामः तत्र समासेन वातःश्रोणिगुदसंश्रयः । श्रोणिगुदयोरुपर्य्यधो नाभि पक्वाशयः पक्वाशयमध्यं पित्तस्य । आमाशयः श्लेष्मणः । तस्य स्थानं निर्णीतं भावप्र० यथा "अग्निवेगवहः प्राणोगुदान्ते प्रतिहन्यते । स ऊर्द्धमागम्य पुनः समुत्क्षिपति पावकम् । पक्वाशयस्त्वधोनाभ्यामूर्द्धमामाशयः स्थितः । नाभिमध्ये शरीरस्य प्राणाः नित्यं प्रतिष्ठिताः" चरके तु "नाभिस्तनान्तरं जन्तोराहुरामाशयं बुधाः" इति अत्र विशेषमाह "उरोरक्ताशयस्तस्मादधः श्लेष्माशयः स्मृतः । आमाशयस्तु तदधस्तदधोऽग्न्याशयोमतः" इति अपक्वाशय प्रसङ्गात् आहारपाकप्रकारस्तावदुच्यते भावप्रकाशे सुश्रुतः "यो वायुः प्राणनामासौ सुखं गच्छति देहधृक् सोऽन्तःप्रवेश्य गच्छेत्तं प्राणश्चावलम्बते" इति तमाहारमामाशयस्थः क्लेदननामा कफः क्लेदयति क्लेदनात् संहतिं भिनत्ति च उक्तं च सुश्रुते "स आहारःषड्रसोऽप्यामाशये माधुर्य्यं लभते आमाशयस्थस्य मधुरस्य कफस्य योगात् उक्तं च श्लेष्मस्वरूपं "श्लेष्मा श्वेतो गुरुःस्निग्धः पिच्छिलः शीतलस्तथा । तमोगुणाधिकः स्वादुर्विदग्धोलवणो भवेत् । फेनभावं च लभते जठरानलतेजसा" । अत आह वाग्भटः "संधुक्षितः समानेन पचत्यामाशयस्थितम् । औदर्य्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलमिति" प्राणवायुना प्रेरितस्ततः किञ्चिच्चलितः पाचकाख्यपित्तोष्मणेषत्पक्वो भवति उक्तं च "अथ पाचकपित्तेन विदग्धश्चाम्लतां व्रजेदिति" पाचकपित्तेन पाचकपित्तोष्मणा ततः एषाहारोनाभिमण्डलाधिष्ठानेन समाननाम्ना वायुना प्रेरितोग्रहणीं प्रति याति उक्तं च ।"ततः समानमरुता ग्रहणीमभिधावति" । ग्रहणीलक्षणमाह "षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता । आमपक्वाशयान्तःस्था ग्रहणी साभिधीयते" पित्तधरा पाचकाख्यं पित्तं यदग्न्यधिष्ठानं तद्धारयति तत्र ग्रहण्यामामाशयपक्वाशयमध्यवर्त्तिपाचकाख्यपित्ताधिष्ठानेनाग्निनाहारः पच्यते स कटुश्च भवति तथा च "ग्रहण्यां पच्यते कोष्ठवह्निना जायते कटुरिति" । अयमर्थः आहारोग्रहण्यां कोष्ठवह्निना ग्रहणीस्थितपाचकपित्तस्थेन च वह्निना पच्यते पच्यमानः स ग्रहणीस्थितस्य कटुरसस्य पित्तयोगात्कटुर्भवति एतदाहारपाके विशेषमाह शरीरं पाञ्चभौतिकं तत्र पञ्चसु भूतेषु पञ्चाग्नयस्तिष्ठन्ति उक्तं च चरके "भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यतः" । अत्रोष्मपदेनाग्निरुच्यते आहारोऽपि पाञ्चभौतिकः तत्र पाचकपित्तस्थेनाग्निनोत्तेजितेन शरीरवर्त्तिभूभागः पच्यते पक्वोभूभागः स्वकीयान् गुणानभिवर्द्धयति एवं जलादिभागा अपि पच्यन्ते तथा च सुश्रुते "पञ्चभूतात्मको देह आहारः पाञ्चभौतिकः । विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्द्धयेदिति" गुणशब्देनात्र गुणिनः पृथिव्यादय उच्यन्ते तेन गुणान् शरीरवर्त्तिनः पार्थिवादीन् भागानभिवर्द्धयेदिति एवमहोरात्रेण पक्व आहारोमिष्टः कटुश्च मधुरो भवति अम्लोऽम्लो भवति कटुतिक्तःकषायश्च कटुर्भवति उक्तं च "मिष्टः कटुश्च मधुरोऽम्लोऽम्लः पच्यते रसः । कटुतिक्तकषायाणां विपाको जायते कटुरिति" एवं विपक्वस्याहारस्य सारो रसशेषोग्रहणीस्थो मल इव

मलः। अस्य जलभागः शिराभिर्वस्तिन्नीतोमूत्रं भवति उक्तं च "आहारस्य रसः सारःसारहीनोमलद्रवः। शिराभिस्तज्जलं नीतं वस्तिं मूत्रत्वमाप्नुयात्। शेषं कीट्टं भवेत्तस्य तत् पुरीषं निगद्यते। समानवायुना नीतं तत्तिष्ठति मलाशये" तत्र मलाशयात्तेनापानवायुना प्रेरितं मूत्रं मेढ्रभगमार्गेण, पुरीषं गुदमार्गेण, शरीराद्वहिर्याति। उक्तं च "मूत्रन्तूपस्थमार्गेण, पुरीषं गुदमार्गतः। अपानवायुना क्षिप्तं वहिर्याति शरीरतः"। उपस्थः शिश्नोभगश्च। रसस्तु समानवायुना प्रेरितोधमनीमार्गेण शरीरारम्भकस्य रसस्य स्थानं हृदयं गत्वा तेन सह मिश्रितो भवति उक्तं च "रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्वान् धातून् विवर्द्धयेत्। केदारेषु यथा कुल्या पुष्णाति विविधौषधीः। तथा कलेवरे धातून् सर्वान् वर्द्धयते रसः"। रसस्तु तत्र तत्र त्रिधा भिद्यते उक्तं च चरके "स्थूलसूक्ष्ममलैर्भेदैस्तत्रतत्र त्रिधा रसः"। अधिकमाहारपाकशब्दे वक्ष्यते।

**आमिक्षा** स्त्री आमिष्यते सिच्यते मिष–सक्। तप्ते पक्वे दुग्धे दधियोगाज्जाते (छाना) पदार्थे। "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्योवाजिनम्" श्रुतिः "आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम्" भट्ट का०।

**आमिक्षीय** न० आमिक्षायै हितं छ। आमिक्षोपकरणे दधि "आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधम्" भट्टिः। ख आमिक्षीणमप्यत्र न०। यत् आमिक्ष्यमप्यत्र न०।

**आमितौजि** पुंस्त्री अमितौजसोऽपत्यम् बाह्वा० इञ् सलोपश्च। अमितौजसोऽपत्ये स्त्रियां ङीप्।

**आमित्रि** पुंस्त्री अमित्रस्यापत्यं इञ्। अमित्रापत्ये तत्र भवादि गहा० छ। आमित्रीयः तद्भवादौ त्रि० युवापत्ये तु नडा० फक्। आमित्रायणः अमित्रयुवापत्ये आमित्रेरपत्यम् तिका० फिञ्। आमित्रायणिः तदपत्ये। अमित्रस्येदम् अण्। आमित्रः शत्रोःसम्बन्धिनि त्रि० "न्यसामामित्रो व्यथिरादधर्षति" ऋ० ६,२८,२।

**आमिश्र** त्रि० आ+मिश्र–घञ्। मिश्रिते संश्लिष्टे। "चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्" नैष०। वेदे क्वचित् रस्य लः। आमिश्लः। "स सोम आमिश्लतमः" ऋ० ६,२९,४।

**आमिष्** न० आमिषति सिञ्चति स्नेहम् आ+मिष–क्विप्। मांसे "आयेवयो नवर्त्तन्त्यामिषि" ऋ० ६,४६,१४ "आमिषि मांसे" भा०।

**आमिष** न० आमिषति स्नेहम् आ+मिष–सेचने क अमटियच् दीर्घश्च, वा। १मांसे स्नेहातिरेकात्तस्य तथात्वम् २भोग्यवस्तुमात्रे ३उत्कोचे ४सुन्दररूपादौ ५लोभे ६लोभनीये विषये च। तत्र मांसे "उपानयत् पिण्डमिवामिषस्य" रघुः "आमिषं कलहं हिंसां–वर्षवृद्धौ विवर्जयेत्" स्मृतिः "भुङ्क्ते यश्च निरामिषं स हि भवेज्जन्मान्तरे पण्डितः" ज्योति०। "जन्मान्तरे पाण्डित्यकामो जन्मतिथावामिषं न भुञ्जीतेति" गदाधरः। "कालशाकं महाशाकं खड्गलोहामिषं मधु" इत्य मासांस्तु तृप्यन्ति वराहमहिषामिषैः" मनुः "सात्त्विकी जपयज्ञैश्च नैवेद्यैश्च निरामिषैः" दुर्गो०त० पु० नाधीयीतामिषं जग्ध्वा" "तस्यामिषेण कर्त्तव्यम्" इति च मनुः। लोभनीये "रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ" "आलप्य सद्गुणजुषा सुरसामिषेण" आनन्दवृन्दा०। "प्राणानेवात्तुमिच्छन्ति नराश्चामिषगर्द्धिनः" मनुः। "पलाशमामिषं पर्णं जम्बीरस्य फलेष्वपीति" स्मृतौ निरामिषव्रते आमिषतुल्यतया वर्जनीये ७पत्रे ८ जम्बीरफले च।

**आमिषप्रिय** पु० ६त०। १कङ्कपक्षिणि। २मांसाभिलाषिणि त्रि०।

**आमिषाशिन्** त्रि० आमिषमश्नाति अश–णिनि ६त०। मांसभक्षके "दिनोपवासी तु निशामिषाशी" हारीता०। स्त्रियां ङीप्। आमिषभुगादयोऽप्यत्र।

**आमिषी** स्त्री आमिषं तदाकारोऽस्त्यस्य जटायाम् अर्श०अच् गौरा० ङीष्। जटामांस्याम्। ततः चतुरर्थ्याम् भक्ष्या० यत्। आमिष्यः आमिषीसन्निकृष्टदेशादौ त्रि०।

**आमुक्त** त्रि० आ+मुच–क्त। परिहिते "आमुक्तमुक्ताफलमस्य वक्षः" माघः।

**आमुक्ति** स्त्री आ–मुच–क्तिन्। १परिधाने, मर्यादायाम् वा अव्ययी०। २मुक्तिपर्यन्ते अव्य० "आमुक्ति श्रियमन्विच्छेत्"। समासाभावे आ मुक्तेरित्येव।

**आमुख** न० आमुखयति अभिमुखीकरोति दर्शनार्थं परिषदोऽनेन आमुख+णिच्–करणे अच्। नाटकाङ्गभेदे "तल्लक्षणभेदोदाहरणानि" सा०द०यथा "नटी विदूषकोवापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा। सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते। तस्यानुचरः पारिपार्श्विकः। तस्मात् किञ्चिदूनोनटः"।

तस्य भेदाः पञ्च यथाह तत्रैव "उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा। प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः। तत्र। पदान्यन्यगतार्थानि तदर्थगतये नराः। योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते१। यथा मुद्राराक्षसे सूत्र०। "क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम्। अभिभवितुमिच्छति बलात्"। अनन्तरं नेपथ्ये आः क एव मयि जीवति सति चन्द्रगुप्तमभिभवितुमिच्छति। अत्रान्यार्थवन्त्यपि पदानि हृदिस्थार्थगत्या अर्थान्तरे संक्रमय्य पात्रप्रवेशः। सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा। भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते२। वाक्यं यथा रत्नावल्याम्। "द्वीपादन्यस्मादपि घटयति विधिरभिमुखीभूतः" इत्यादि। सूत्रधारेण पठिते नेपथ्ये एवमेतत् कः सन्देहः द्वीपादन्यस्मादपीत्यादि पठित्वा यौगन्धरायणस्य प्रवेशः। वाक्यार्थं यथा वेण्याम्। "निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन। रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये। आः दुरात्मन्! वृथामङ्गलपाठक! कथं "स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः। ततः सूत्रधारो निष्क्रान्तः भीमसेनस्य प्रवेशः। यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते। तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ३। यथा कुन्दमालायाम्। नेपथ्ये "इत इतोऽवतरत्वार्य्या" सूत्र० कोऽयं खलु आर्य्याह्वानेन साहायकं मे सम्पादयति विलोक्य कष्टमतिकरुणं वर्त्तते। "लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन। निर्वासितां जनपदादपि गर्भगुर्व्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम्"। अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयमिति" सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयानएव प्रयोगः प्रयोजितः। कालं प्रवृत्तमाश्रित्य सूत्रधृक् यत्र वर्णयेत्। तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्त्तकम् ४। यथा "आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तः। उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजीवः"। ततः प्रविशति यथा निर्द्दिष्टो रामः। यत्रैकत्र समावेशात् कार्य्यमन्यत्प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः५। यथा शाकुन्तले। सूत्र० नटीं प्रति "तवास्मि गीतिरागेण हारिणा प्रसभं हृतः। एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा"। ततो राज्ञः प्रवेशः। योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि। अत्र आमुखे उद्घात्यकावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि। नखकुट्टस्तु "नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा। समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु"। एषामामुखभेदानामेकं कञ्चित् प्रयोजयेत्। तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक्। प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत्। तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम्। कथनं कविसंज्ञादेर्नाटकस्याभिधा ततः। रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः। रूपकस्य कवेराख्यां गोत्राद्यपि च कीर्त्तयेत्। ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः। तस्याः प्ररोचना वीथी" ।

**आसुप** पु० आमे पोड़ार्थं उप्यते वप–घञर्थे क। (वेडवाम) वंशभेदे। [ आ० ४,११,८।

**आसुर** त्रि०आ+सुर्व–क्विप्। हिंसके। "राधोवरन्त आसुरः"

**आमुष्मिक** त्रि० अमुष्मिन् परलोके भवः ठक् सप्तम्याः अलुक् टिलोपः। परलोकभवे "कुर्य्यादामुष्मिकं श्रेयः" मनुः। स्त्रियां ङीप्। "नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः" सा०द०।

**आमुष्यकुलक** न०अमुष्यकुलस्य भावः मनोज्ञा० वुञ् अलुक्। प्रख्यकुलत्वे "आमुष्यायणामुष्यपुत्रिकामुष्यकुलिका" इति वार्त्तिकोक्तेः अस्य स्त्रीत्वमपि।

**आमुष्यकुलीन** त्रि० अमुष्यकुले साधुः प्रतिज० खञ् तद्गणपाठात् षष्ठ्या अलुक्। अमुष्यकुले साधौ।

**आमुष्यपुत्रिका** स्त्री अमुष्य पुत्रस्य भावः मनोज्ञा० वुञ् अलुक्। अमुष्यपुत्रस्य भावे। आमुष्यकुलकशब्दे प्रदर्शितवार्त्तिकात् स्त्रीत्वम्।

**आमुष्यायण** न०अमुष्य ख्यातस्यापत्यम् नड़ा०फक् अलुक्। प्रख्यातवंशोद्भवे "आमुष्यायणोवै त्वमसि" श्रुतिः।

**आमृष्ट** त्रि० आ+मृष–क्त। १आघर्षिते २मर्द्दिते च "आमृष्टातिलकरुचः स्रजोनिरस्ताः" माघः। आ+मृज–क्त। ३परिमार्जिते ४विशोधिते च। आ+मृश–क्त ५संस्पृष्टे च

**आमोक** पु० आ+मुच–घञ्। परिधाने। ल्युट्। आमोचनमप्यत्र न०।

**आमोद** पु० आमोदयति आ+मुद–णिच्–अच्। १अतिदूरगे गन्धे "आमोदमुपजिघ्रन्तौ स्वनिश्वासानुकारिणौ" रघुः "आमोदकर्म्मव्यतिहारमीयुः" माघः। उत्तमस्त्रीणां २सुखनिश्वासादिगन्धे च। "मुखामोदं मदिरया हताश"

व्याधकद्रुगिरन्" माघः। आ+मुद–घञ्। २प्रहर्षे ल्युट्। आमोदनमप्यत्र न०।

**आमोदन** त्रि० आ+मुद–णिच् ल्यु। प्रहर्षजनके सुगन्धिसम्पादने "अनुकूलतामोदनमोदनं जनाः" नैष०। भावे ल्युट्। १प्रहर्षसम्पादने २सुगन्धसम्पादने च।

**आमोदित** त्रि० आ+मुद–णिच्–क्त। १प्रहर्षिते २कृतामोदे ३सुरभीकृते च।

**आमोदिन्** त्रि० आमोदयति सुरभीकरोति आमोद+तत्करोत्यर्थे णिच्–णिनि। मुखवासने १कर्पूरादौ। आमोद+अस्त्यर्थे इनि। २आमोदयुक्ते स्त्रियां ङीप्। "नवकुटजवनस्थामोदिनो गन्धवाहाः"।

**आमोष** त्रि० आमुष्णाति–आ+मुष–पचाद्यच्। सम्यगपहारके चौरादौ। आ+मुष–भावे घञ्। २अपहरणे। "यथा विष्यदामोषमीयात्" शत०ब्रा०।

**आम्नात** त्रि० आ+म्ना–क्त। १सम्यगभ्यस्ते २सम्यगधीते वेदादौ। ३कथिते च "समौ हि शिष्टैराम्नातौ" माघः भावे क्त। ४सम्यगभ्यासे न०

**आम्नातिन्** त्रि० आम्नातमनेन इष्टा० इनि। १कृतवेदाद्यभ्यासे २कृतवेदाध्ययने च स्त्रियां ङीप्। "आम्नातिभिर्नीतिषु बुद्धिमद्भिः" भट्टिः।

**आम्नान** न० आ+भावे ल्युट्। १वेदादिपाठे २तदभ्यासे च "विष्णुर्वामावास्यायां चौलाम्नानात्" कात्या० ३,३,२५।

**आम्नाय** पु० आ+म्ना–घञ्। १सम्यगभ्यासे २सम्यक्पाठे च अभ्यासस्य सम्यक्त्वं च नियमधारणपूर्व्वकत्वं गुरुमुखश्रवणपूर्व्वकत्वञ्च। कर्म्मणि घञ्। ३वेदे "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" जैमि०। "आम्नाये स्मृतितन्त्रे च" रघु०धृतपु०। "आम्नायवचनं सत्यमित्ययं लोकसंग्रहः- आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः" भा०शा०२६१अ०। [वुञ्। अम्बरीषपुत्रविषयादौ।

**आम्बरीषपुत्रक** पु० अम्बरीषपुत्र+चतुरर्थ्यां राजन्या०

**आम्बष्ठ** पुंस्त्री० अम्बष्ठस्यापत्यम् शिवा० अण्। अम्बष्ठापत्ये ञ्यङ्। आम्बष्ठ्यः। स्त्रियाम् चाप्।

**आम्बिकेय** पु० अम्बिकाया अपत्यं शुभ्रा० ढक्। विचित्रवीर्य्यस्य क्षेत्रे काशिराजस्य मध्यमकन्यायाम् अम्बिकायां व्यासेनोत्पादिते १धृतराष्ट्रे स हि अकाले दिवं गतस्य विचित्रवीर्य्यस्य अम्बिकाम्बालिकयोःपत्न्योर्मध्ये अम्बिकायां क्षेत्रभार्य्यायां सत्यवत्यानियुक्तेन व्यासेनोत्पादितः तत्कथा यथा "ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः। दीप्यमानेषु दीपेषु शरणं प्रविवेश ह। तस्य कृष्णस्य कपिला जटा दीप्ते च लोचने। बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत्। संबभूव तया सार्द्धं मातुः प्रियचिकीर्षया। भयात् काशीसुता तन्तु नाशक्नोदभिवीक्षितुम्। ततो निष्क्रान्तमागत्य माता पुत्रमुवाच ह। अप्यस्यां गुणवान् पुत्रो राजपुत्रो भविष्यति?। निशम्य तद्वचो मातुर्व्यासः सत्यवतीसुतः। प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः। नागायुतसमप्राणो विद्वान् राजर्षिसत्तमः। महाभागो महौदार्य्यो महाबुद्धिर्भविष्यति। तस्य चापि शतं पुत्रा भविष्यन्ति महात्मनः। किन्तु मातुः स वैगुण्यादन्ध एव भविष्यति" इत्युपक्रम्य पाण्डुविदुरोत्पत्तिमुपवर्ण्य च "एते विचित्रवीर्य्यस्य क्षेत्रे द्वैपायनादृषेः। जज्ञिरे देवगर्भाभाः कुरुवंशविवर्द्धनाः" इत्युक्तम् भा०आ०प०१०६अ०। अम्बिकायाश्च यथा विचित्रवीर्य्यभार्य्यात्वं तथोक्तं अम्बाशब्दे ३२८पृष्ठे "आम्बिकेयेन दृष्टो राज्ञा दुर्य्योधनेन च" भा०व०प०१२अ० "परं श्रेयः पाण्डवेया! यथाह भीष्मस्तव सुतवानाम्बिकेयः" भा०व०प० ५अ०। अम्बिकायाः पार्व्वत्या अपत्यम् ढक्। २कार्त्तिकेये। तस्य तदुत्पत्तिकथा अग्निकुमारशब्दे ६५पृष्ठे दृश्या।

**आम्भसिक** पु० अम्भसा वर्त्तते ठक्। मत्स्ये सि०कौ०।

**आम्भि** त्रि० अम्भसो जातादि बाह्वा० इञ् सलोपश्च। अम्भोजातादौ।

**आम्र** पु० अम–गत्यादिषु रन् दीर्घश्च। १स्वनामख्याते वृक्षे तस्य फलम् अण् तस्य लुक्। २तत्फले च न०। आम्रस्य फलपुष्पादिगुणा उक्ता भा०प्र०। यथा "आम्रपुष्पमतीसारकफपित्तप्रमेहनुत्। असृग्दुष्टिहरं शीतं रुचिकृत् ग्राहि वातलम्। आम्रं बालं कषायाम्लं रुच्यं मारुतपित्तकृत्। तरुणं तु तदत्यम्लं रूक्षं दोषत्रयास्रकृत्। आम्रमामं त्वचा हीनमातपेऽतीव शोषितम्। अम्लं स्वादु कषायं स्याद्भेदनं कफवातजित्। पक्वन्तु मधुरं वृष्यं स्निग्धं शुक्रबलप्रदम्। गुरु वातहरं हृद्यं वर्ण्यं शीतमपित्तलम्। कषायानुरसं वह्निश्लेष्मशुक्रविवर्द्धनम्। तदेव वृक्षसम्पक्वं गुरु वातहरं परम्। मधुराम्लं सरं किञ्चित् भवेत् पित्तप्रकोपणम्। आम्रं कृत्रिमपक्वं यत्तद्भवेत् पित्तनाशनम्। रसस्याम्लस्य हानेस्तु माधुर्य्याच्च विशेषतः। चूषितं तत् परं रुच्यं बलवीर्य्यकरं लघु। शीतलं शीघ्रपाकि स्याद्वातपित्तहरं सरम्। तद्रसो गालितो बल्यो गुरुर्वात

हरः सरः। अहृद्यस्तर्पणोऽतीव बृंहणः कफवर्द्धनः। तस्य खण्डं गुरु परं रोचनं चिरपाकि च। मधुरं बृंहणं बल्यं शीतलं वातनाशनम्। वातपित्तहरं रुच्यं बृंहणं बलवर्द्धनम्। हृद्यं वर्णकरं स्वादु दुग्धाक्तं गुरु शीतलम्। मन्दानलत्वम् विषमज्वरञ्च रक्तामयं बद्धगुदोदरञ्च। आम्रातियोगो नयनामयञ्च करोति तस्मादिति तानि नाद्यात्। एतदम्लाम्रविषयं मधुराम्रपरं न तु। मधुरस्य परं नेत्रहितत्वाद्या गुणा यतः। शुण्ठ्यम्भस्त्वनुपानं स्यादाम्राणामतिभक्षणे। जीरकं वा प्रयोक्तव्यं सह सौवर्चलेन च। आम्रबीजं कषायं स्याच्छर्द्यतीसारनाशनम्। ईषदम्लञ्च मधुरं तथा हृदयदाहनुत्। आम्रस्य पल्लवं रुच्यं कफपित्तविनाशनम्"। पल्लवमत्र नवदलम्। अस्य शाकपाकप्रकारस्तत्रैव "खिन्ना निष्पीड़िताः कामं कोकिलाहारपल्लवाः। घृतसिन्धूत्थसंसिद्धा रुच्या रामठवासिताः। सर्पिषा खण्डयुक्तास्ते तलितास्त्वाम्रपल्लवाः। लवङ्गार्द्रकसंयुक्ता मरीचैः रुचिकारकाः"। अस्य पल्लवमुकुलानां पाकप्रकारस्तत्रैव "आम्रस्य चैव नवतान्मृदुविशालाः खण्डीकृतालवणमिश्रितपिष्टिताश्च। वाह्लीकधूपनजुषो घृतदुग्धसिद्धाः सन्दीपयन्ति पवनस्य सखायमेते। मुहुः मत्कारशालिनः घृतखण्डीकृतसैन्धवान्वितः। दधिमन्थमरीचसंस्कृतश्चिरजातामरुचिं छिनत्ति हि। कफपित्तहरौ हृद्यौ मुखवैरस्यनाशनौ। वह्निसन्दीपनौ रुच्यौ चूतजौ पुष्पपल्लवौ। आम्रमामं जलस्विन्नं मर्द्दितं दृढपाणिना। सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम्। प्रपानकमिदं श्रेष्ठं भीमसेननिर्म्मितम्। सद्योरुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणमिति"। [ शाकभेदे राजनि०।

**आम्रगन्धक** पु० आम्रस्येव गन्धोऽस्य कप्। यमदिकवृक्षे,

**आम्रगुप्त** पु० गोत्रप्रवर्त्तके ऋषिभेदे। तस्यापत्यम् उदीचां मते फिञ्। आम्रगुप्तायनिः पु० स्त्री० प्राचाम्तु मते इञ्। तदपत्ये सि०कौ०।

**आम्रपेशी** स्त्री० आम्रस्य पेशीव। शुष्काम्रकोषे ( आमसी )

**आम्रमय** त्रि० आम्रस्य विकारः अवयवो वा वृद्धत्वात् मयट्। १आम्रविकारे। २तदवयवे च।

**आम्ररसाकृति** स्त्री आम्ररसस्येवाकृतिः स्वादो यस्याः। पीताख्यरसालाभेदे। तत्पाकप्रकारो यथा भा०प्र० "किञ्चित् कुङ्कुमसंयुक्तं त्रिमधुदधिगालितम्। सघृतं भवेत् पीता पक्वाम्ररससन्निभा। पीता शिखरणी या सा बल्यो बलवती हि सा। सुरुच्या मधुरा बल्या वातपित्तहरा मता" अत्र पीताख्यशिखरिण्याः पक्वाम्ररसतुल्यत्वोक्त्या तथात्वम्। [ दायात्मके वने।

**आम्रवण** न० आम्रस्य वनम् नित्यं णत्वम्। आम्रवृक्षसमु-

**आम्रात** पु० आम्रमाम्ररसमतति अत–पचा० अच्। (आमड़ा) १वृक्षे २तत्फले न०। तत्फलस्याम्रतुल्यरसत्वात्तथात्वम्। "आम्रातमम्लं वातघ्नं गुरूष्णं रुचिकृत् परम्। सुपक्वं तुवरं स्वादु रसपाकं हिमं स्मृतम्। तर्पणं श्लेष्मलं स्निग्धं रुच्यं विष्टम्भि बृंहणम्। गुरु बल्यं मरुत्पित्तक्षतदाहक्षयास्रजित्" भा०प्र०।

**आम्रातक** पु० आम्र इवातति आम्रात् किञ्चिदूनरसफलकत्वात् अत–ण्वुल्। (आमड़ा) १वृक्षे २तत्फले न०। आम्रेण तत्फलरसेन तकते प्रकाशते आ+तक–हासे अच्। शुष्काम्ररसनिर्म्मिते ( आमट् ) द्रव्यभेदे तत्करणप्रकारः भावप्र० उक्तः। यथा "आम्रस्य सहकारस्य कटे विस्तारितो रसः। घर्म्मशुष्को मुहुर्दत्त आम्रातक इति स्मृतः"।

**आम्रातकेश्वर** पु० आम्रातक इव ईश्वरः ईश्वरलिङ्गभेदे। सिद्धस्थानभेदे। "आम्रातकेश्वरे सूक्ष्मा सूक्ष्माख्या परमेश्वरी" देवीपु०।

**आम्रावती** स्त्री आम्र आम्ररसो विद्यतेऽस्याः मतुप् मस्य वः शरा० दीर्घः। नदीभेदे। तस्या आम्रतुल्यरसतोययुक्तत्वात्तथात्वम्।

**आम्रावर्त्त** पु० आम्रइव हृद्यरसतया ईषत् वर्त्तते आ+वृत–अच्। १आम्रातकवृक्षे २तत्फले न०। आम्रेण आम्ररसेन आवर्त्त्यते निष्पाद्यते आ+वृत–णिच्–कर्म्मणि घञ्। ( आमट् ) ख्याते २पदार्थे आम्रातकशब्दे तत्करणप्रकार उक्तः "आम्रावर्त्तस्तृणाच्छर्द्दिवातपित्तहरः सरः। रुच्यः सूर्य्यांशुभिः पाकात् लघुश्च स हि कीर्त्तितः" भावप्र०।

**आम्लिमन्** पु० अम्लोरसोऽस्त्यस्य प्रज्ञा० अण् दृढा० गणपाठात् रस्य लः ततोभावे दृढा० इमनिच्। अम्लत्वे रसभेदे वा ष्यञ्। आम्ल्यमप्यत्र न०।

**आम्रेडित** त्रि० आ+म्रेड–उन्मादे अच् आम्रेडेन उन्मत्तेनेवाचर्य्यते आम्रेड+आचारे क्विप् ततः क्त। उन्मत्तेन यथा कथितस्य पुनःपुनः कथनं क्रियते एवं द्विस्त्रिःकथिते "आम्रेडितस्यान्यतरस्य तु वा" पा०।

**आम्लवेतस** पु० आम्लः अम्लरसयुक्तः वेतस इव। १अम्लवेतसवृक्षे राजनि० स्वार्थे संज्ञायां वा कन्। २तिन्तिडीवृक्षे ( तेतुल )।

**आम्ला** स्त्री० सम्यक् अम्लो रसो यस्याः । १तिन्तिडाम् (तेतुल) स्वार्थे कनि आम्लिकाप्यत्र । २अम्लरसयुक्ते त्रि०। मनोज्ञा०भावे वुञ् आम्लिका । २अम्लरसे ३अम्लोद्गारे च शब्दमाला । अम्लरसोऽस्त्यस्य अण् ङीप् । आम्लीत्यपि तिन्तिडाम् ।

**आय** पु० आ–इण–अच् अय–घञ् वा । १लाभे २प्राप्तौ, "आयव्ययविशोधितात्" स्मृतिः आयव्ययौ च नियतावाकरान् कोषमेव च" मनुः। ३धनागमे, ज्योतिषोक्ते लग्नावधिके राश्यवधिके च ४एकादशस्थाने, ४वनितागारपालके च कर्मणि अच् घञ् वा । ग्रामादितः स्वामिग्राह्यभागे,लभ्ये ५धनादौ "तदस्मिन् वृद्ध्यायलाभोपदा दीयते" पा० ग्रामेषु स्वामिग्राह्योभाग आयः" सि० कौ० लग्नावधिकैकादशस्थानस्यायत्वं च तत्स्थाने आयस्य चिन्तनीयत्वात् । तत्र वर्षलग्नावधिकैकादशस्थाने ग्रहविशेषयोगादिभिरायोपायविवेकः । नीलकण्ठता० "अब्दपे चेऽर्थगे लाभो वाणिज्यात् शुभदृग्युते । सैन्थिह्येऽस्मिन् लग्नगे तु लाभः पठनलेखनात् । अस्मिन् षष्ठाष्टान्त्यगते सक्रूरे नीचकर्मतः । क्रूरेत्थशेन लाभोऽस्तंगतेने लिखनादिभिः । जीवेऽब्दपे क्रूरहते लग्ने हानिर्नृपाद्भयम् । अस्मिन्नधिहते द्यूने व्यवहाराद्धनाप्तयः। लग्नाधिपेनेत्थशाले लाभः स्वजनगौरवम् । सर्वेऽपि लाभे वित्ताप्त्यै सबला निर्बला न तु । सवीर्योंऽशः ससुखेलग्ने ऽर्थसद्मे शुभम् । ददाति स्वातद्रव्यस्य लाभः पापदृशा न तु"। आयसद्मन्तु सद्मशब्दे वक्ष्यते आयभावानयनञ्च ५१८४ पृष्ठे अष्टमभावशब्दोक्तदिशावसेयम्। जन्मलग्नावधिकैकादशस्थाने ग्रहस्थित्यादिभिरायविवेकः जातकप०उक्तः यथा"स्वामिसद्ग्रहयुतेक्षित आये सर्वलाभ सहितः शुभवर्गे । क्रूरदृष्टिसहिते खलवर्गे नो शुभं खलशुभे च विमिश्रम्। सर्वखेचरयुतं त्वय दृष्टं लाभमब्धबलाभकरन्तु । तत्र यो बलयुतो निजदृश्या स्वं धनं दिशति सम्यगतुच्छम् । उच्चे स्वमित्रस्यगृहगोबलवांश पूर्णं, शत्रोर्गृहे तु चरचरर्णं ददाति । नीचारिभांशकगतोऽर्द्धफलप्रदः स्यादस्तं गतोऽल्पकफलः खलु लाभभावे । लाभभे रवियुतोच्चवर्गैः संयुते न्टपचतुष्पदचौर्यैः । युद्धतोऽपि हि धनं विधुजैस्त्रीयदन्तियुवतिप्रभवं स्यात् । लाभे कुजे चितयुते कुजवर्गयुक्ते वित्तं प्रवालमणिभूषणकाञ्चनाद्यम् । स्यात् साहसैश्च गमनागमनैस्तथाग्निशस्त्रप्रपञ्चजनितैर्वचनान्नृनीनाम्। बुधदृष्टेऽथ वा युक्ते लाभे बुधगणेऽपि वा । वित्तं लिखनशिल्पाद्यैरङ्कवेसरकाव्यजम् । आये दृग्स्पतियुतोच्चवर्गयुते यज्ञादिहेमसुतविक्रमनागरैः स्वम् । शौक्रे चये गणयुते गमनाङ्गनाभ्यो वाराङ्गनारजतपत्रमयं धनं स्यात् । शनियुक्ते लाभस्टहे शनिदृष्टे शनेर्गणे । महिषी लोहकप्युत्र धनं स्यावरकर्मभिः । निजाब्दकेऽर्कः प्रचुरार्थलाभं लक्ष्मीं कुजोऽजय धनं न्टपाब्दे । गुः पञ्चवेदे धनमिन्द्रपूज्यो लक्ष्मीं सितोऽर्कैं कुजवच्छनिस्तु" । राश्यवधिकैकादस्थाने च गोचरे सर्वे ग्रहाः शुभाः "सर्वेऽप्युपान्त्ये शुभाः"इत्युक्तेः अत्र विशेषो गोचरशब्दे वक्ष्यते ।

**आयःशूलिक** त्रि० अयःशूलेनार्थान् अन्विच्छति+अयःशूल+ठक् । "तीक्ष्णोपायेन योऽन्विच्छेत् स आयःशूलिको जन" इत्युक्ते तीक्ष्णकर्मणार्थकरे ।

**आयजि** त्रि० आभिमुख्येन इज्यते आ+यज–कर्मणि–इन् । १आभिमुख्येन इज्यमाने"आयजे ! त्वामनवे जातवेदसम्" ऋ० ८,२२,१७ भावे इन् । २आभिमुख्येन यागे ।

**आयज्यु** त्रि० आत्मन आयजिमिच्छति क्यच् उण् नि० इलोपः। आभिमुख्येन यागमिच्छति ।"आयज्यवःसुमतिं विश्ववाराः" ऋ० ८,२७,२६ ।

**आयत** त्रि०आ+यम–क्त । १दीर्घे आयामयुक्ते "धनुरायत भोगवासुकिज्या" किरा०। आ+यम–अन्तर्भूतण्यर्थे कर्मणि क्त । २आकृष्टे "आरचितानायतवल्गबन्धैः" माघः । "आयता आकृष्टा वल्गाभ्यायैः" मल्लि०। ३दूरे च आकृष्टे "प्रजविभिरायतन्तुरङ्गैः" किरा० । "आयतं दूरमिति" मल्लि०।"भूयसी तव यदायतायति"माघः ४नियमिते च । त्रिजपैदायतप्राणः" योगिया०। प्राणनियमनञ्च यथेष्टप्राणवृत्तिनिरोधनम् । [त्रिका० ।

**आयतच्छदा** स्त्री आयतः दीर्घश्छदोऽस्याः । कदल्याम्

**आयतन** न० आयतन्तेऽत्र यत–आधारे ल्युट् । १देवादिवन्दनस्थाने, २आश्रये, "स्रोहकदेकायतनं जगाम" कुमा० । "नरेन्द्रमूलायतना दनन्तरम्" रघुः । "रोगायतनमातुरम्" न जीर्णदेवायतने न वल्मीके कदाचन" "सीमासन्धिषु कार्याणि देवतायतनानि" इति च मनुः । ३विश्रामस्थाने ४यज्ञस्थाने च ।

**आयतस्तू** त्रि० आयतं स्तौति स्तु–क्विप् नि० दीर्घः । आयतस्तावके । "क्विचिप्रच्छायतस्तूकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च" वार्त्ति०।

**आयति(ती)** स्त्री०आ+या–क्तिन् वा ङीप् । १उत्तरकाले आगामिकाले २प्रभावे कोषदण्डजे तेजसि ३फलदानकाले च ।

"आयतिं सर्व्वकार्य्याणां तदात्वं च विचारयेत्" मनुः "भूयसी तव यदायतायति" माघः "नियता लघुता निरायतेः" किरा०। आ+यम–क्तिन्। ४आयामे दैर्घ्ये। "सीमानमत्यायतयोऽत्यजन्त" माघः। ५संयमे "केशनखानामायतिभङ्गः" काद०६प्रापणे ७सङ्गमे च अत्र क्तिच्‌न्तत्वात् न कोविति भेदः। ८कर्म्मणि च "हिरण्यभूमिसंप्राप्त्या पार्थिवो न तथैधते। यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम्" मनुः। "आयतिक्षमं कर्म्मक्षमम्" कुल्लू०।

**आयतीगव** अव्य० आयन्ति गावोऽत्र तिष्ठद्गुप्र० अव्ययी० नि०। गोष्ठाद्गवागमनकाले। "आ तिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम्" भट्टिः।

**आयतीसम** अव्य० आयन्ति समा अत्र तिष्ठद्गुप्र० नि० अव्ययी०। वत्सरागमनकाले।

**आयत्त** त्रि०आ+यत–क्त। अधीने १वशीभूते "दैवायत्तं कुले जन्म ममायत्तं हि पौरुषम्" वेणी०। २कृतप्रयत्ने च।

**आयत्ति** स्त्री आ+यत-क्तिन्। १स्नेहे, २वशित्वे, ३सामर्थ्ये, ४सीम्नि, ५शयने, ६प्रभावे ७आगतौ च उपाये च "अनायत्त्या च तत्कल्पनम्" शा० भा०।

**आयथातथ्य** न० न यथातथं तस्य भावः ष्यञ् वा पूर्व्वपदवृद्धिः। अनौचित्ये यस्य यद्रूपं नोचितं तद्रूपे। उत्तरपदवृद्धौ अयाथातथ्यमप्यत्र न०।

**आयथापूर्व्व्य** न० पूर्व्वमनतिक्रम्य यथापूर्व्वं न०त०तस्य भावः ष्यञ् वा पूर्व्वपदवृद्धिः। यथापूर्व्वाननुसारित्वे उत्तरपदवृद्धौ तु अयाथापूर्व्व्यमप्यत्र न०।

**आयन** न० अयनमेव स्वार्थे अण् आ+अयनं वा प्रा०स०। १सम्यगमने "आयने ते परायणे दूर्व्वा रोहन्तु पुष्पिणीः" ऋ० १०,१४२,८। अयनस्येदम् अण्। ग्रहाणां दक्षिणोत्तरगमनरूपायनस्य २सम्बन्धिनि त्रि०तच्च आयनवलनायनदृक्कर्म्मादि ज्योतिषप्रसिद्धं तत्रायनवलनं यथा सि०शि० "युतायनांशोडुपकोटिशिञ्जिनी जिनांशमौर्व्या १३९७ गुणिता विभाजिता। द्युजीवया लब्धफलस्य कार्म्मुकम् भवेद्ग्रहाक्रायनदिक्कमायनम्"। "ग्रहस्य सायनांशस्य कोटिज्या जिनांशज्यया गुणिता द्युज्यया भक्ता फलस्य चापमायनं वलनं भवति यस्मिन्नयने ग्रहोवर्त्तते तद्दिक् भवति" प्रमिता०। आयनदृक्कर्म्म सि०शि०उक्तं यथा। "आयनं वलनमस्फुटेषुणा संगुणं द्युगुणभाजितं हृतम्। पूर्व्वपूर्व्वधृतिभिर्द्दृगाश्रितव्यक्षभोदयहृदायनाः कलाः। अस्फुटेषुवलनाहतिस्तु वा षट्कृत् फलकलाः स्फुरायनाः। ता ग्रहेऽयनदृषत्कयोः क्रमादेकभिन्नककुभोर्ऋणं धनम्"। "ग्रहस्य यदायनं वलनं तदस्फुटशरेण संगुण्य तद्द्युज्यया भजेत्। फलमष्टादशशतैः १८०० संगुण्य यस्मिन् राशौ ग्रहोवर्त्तते तस्य निरक्षोदयासुभिर्विभजेत्। फलमायनकला भवन्ति। अथ वायनवलनकला अस्फुटेन शरेण संगुण्य षष्ट्या विभजेत्। फलमायनकलाः स्थूलान्तरा भवन्तीत्यनुकल्पः। ग्रहो यस्मिन्नयने वर्त्तते तस्यायनस्य ग्रहशरस्य च यद्येका दिक् तदा ता आयनाः कला ग्रहे ऋणं कार्य्याः। यदि तयोर्भिन्ना दिक् तदा धनं कार्य्याः। एवं कृतायनदृक्कर्म्मको ग्रहो भवति। अत्रोपपत्तिर्गोले सविस्तराभिहिता। अथेहापि किञ्चिदुच्यते। क्रान्तिवृत्ते यद्ग्रहस्थानचिह्नं तद्यदा क्षितिजे लगति न तदा ग्रहः। यतोऽसौ शराग्रे। शराग्रं हि कदम्बाभिमुखम्। यदोत्तरकदम्बः क्षितिजादुपरि भवति तदा तदुन्मुखेन शरेण ग्रहः क्षितिजादुन्नाम्यते। क्षितिजकदम्बयोरन्तरं तदेवोत्तरमायनं वलनम्। यदा क्षितिजादधः कदम्बस्तदा शरेण ग्रहो नाम्यते क्षितिजकदम्बयोरन्तरं तदा दक्षिणं वलनम्। अतो वलनवशेन ग्रहस्योन्नामनं नामनं च। उन्नामितो ग्रह आदावेवोदितः। नामितः पश्चादुदेष्यति। स च कियता कालेनेति तदायनं त्रैराशिकेन। यदि त्रिज्यातुल्ये कर्णे कदम्बक्षितिजयोरन्तरकला वलनसंज्ञा लभ्यन्ते तदा अस्फुटशरतुल्ये किमिति फलं ग्रहादधोऽवलम्बरूपाः कला भवन्ति। ग्रहस्थाने यद्द्युज्यावृत्तं तत्र ता जीवारूपाः। तासां त्रिज्यावृत्तपरिणामायान्योऽनुपातः। यदि द्युज्यावृत्तएतावती ज्या तदा त्रिज्यावृत्ते कियतीत्येवं याः फलकलास्ता एवासवः। फलस्य धनुः स्वल्पत्वान्नोत्पद्यत इति न कृतम्। तैः क्रान्तिवृत्तपरिणामायान्योऽनुपातः। यदि निरक्षोदयासुभी राशिकला अष्टादश शतानि लभ्यन्ते तदैभिरसुभिः किमिति फलं क्रान्तिवृत्तपरिणताः कला भवन्ति। यदोत्तरं किल वलनमुत्तरश्च विक्षेपस्तदा तेन विक्षेपेणोन्नामितो ग्रहो यावत् क्षितिजं नीयते तावत् क्रान्तिवृत्तग्रहस्थानात् पृष्ठतः क्रान्तिवृत्तं क्षितिजे लगति तदेव स्थानं कृतदृक्कर्म्मको ग्रहः। किं बहुना गोले क्रान्तिमण्डले यथास्थानं विमण्डलं विन्यस्य तत्र ग्रहं च दत्त्वा चिह्नं कार्य्यम्। अथ ध्रुवाद्ग्रहोपरि नीयमानं वृत्ताकारं सूत्रं यत्र क्रान्तिवृत्ते लगति तत्र

क्रान्तिकक्षकर्मको यष्टिः। एवं भुजाद्यानीयमानेन स्वल्पेन शरकृतं त्र्यस्रं भवति। क्रान्तिवृत्तप्रदेशस्थानादूर्ध्वतः पृष्ठतो वा आयनवलनतुल्येऽन्तरे तत् स्वल्पं क्रान्तिवृत्ते लगति। अत्र आयनकला भुजः, अस्फुटविक्षेपः कोटिः, शरा-यक्रान्तिवृत्तयोरन्तरे यावत् स्वल्पखण्डं स तत्र कर्णः। एतत् त्र्यस्रं वलनत्र्यस्रसंभवम्। अतस्त्रैराशिकेन वलन-कलानामानयनम्। यदि यष्टिकोट्या वलनकलाभुजो लभ्यते तदा अस्फुटविक्षेपकोट्या किमिति फलमायन-कला इति सर्वमुपपन्नम्" प्रमिताक्षरा।

**आयमन** न० आ+यम–ल्युट्। १दैर्घ्ये णिच्–ल्युट्। २नियमने ३संयतकरणे दृढस्य संकुचितस्याकृष्य ४दीर्घी-करणे च। "यथा दृढस्य धनुष आयमनम्" छा०उ०।

**आयल्लक** पु० आयन्निव लीयते अत्र ली–आधारे बा०ड ततः संज्ञायां कन्। उत्कण्ठायाम् हेम०।

**आयस** त्रि० अयसो विकारः अण् स्त्रियां ङीप्। लौहमये। "शक्तिश्चोभयतस्तीक्ष्णामायसं दण्डमेव वा" "पुमांसं दाह-येत् पापं शयने तप्त आयसे" इति च मनुः। "स चकर्ष-परस्मात् तत् अयस्कान्त इवायसम्" रघुः। "भूरुहर्षिमिवा-त्मानं छैमीभूतमिवायसम्" कुमा०। २लौहमयकवचे च ३अङ्गुलित्राण्यां जालिकायां स्त्री। अयएव स्वार्थे अण्। ४लौहे। ततः विकारे मयट् लौहमये त्रि० स्त्रियां ङीप्।

**आयसीय** त्रि० अयसः सन्निकृष्टदेशादि० कृशा० छण्। लौहसन्निकृष्टदेशादौ।

**आयस्कार** पु० अयस्कार एव स्वार्थे अण्। लौहकारे त्रिका०

**आयस्त** त्रि० आ+यस–क्त। १क्षिप्ते "आयस्तसिंहाक्त-तिरुत्पपात" किरा०२क्लेशिते ३प्रतिहते ४तीक्ष्णीकृते ५आयासयुक्ते च।

**आयस्थान** न०६त०। १लाभस्थाने, राज्ञां २शुल्कग्रहणस्थानाद्याकरस्थाने "ठञ् ठगावायस्थानेभ्यः" पा०। ज्योतिषोक्ते ३लग्नादेकादशस्थाने च।

**आयस्थूण** त्रि० अयोमयी स्थूणायस्य तस्यापत्यं शिवा० अण्। अयस्थूणापत्ये स्त्रियां ङीप्।

**आयस्य** अव्य० आ+यस–ल्यप्। आयासं कृत्वा भृशं यति- [त्वेत्यर्थे।

**आयात** त्रि० आ+या–क्त। आगते स्थानात् स्थाना-न्तरं प्राप्ते। "यामोयातस्तथापि नायातः" सा०द०। "आयाता मधुयामिनी" उद्भटः। "आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते" देवीमा०।

**आयाति** पु० आ+या+क्तिच्। "यातिर्ययातिः संयाति रायातिः पश्चिमोमतः" हरि० ३०अ० "यातिर्ययातिः संयातिरायातिः सयतिस्तथा। नहुषोजनयामास षट् सुतान् प्रियवादिनः" इति च हरि० उक्ते १नहुषसुतभेदे आ+या–भावे क्तिन्। २आगमने स्थानान्तरगमने।

**आयान** न० आ+या–ल्युट्। १आगमने आयाति याव-द्द्रव्यम् आ+या–ल्यु। २स्वभावे जटा० स्वभावस्य याव-द्द्रव्ययायित्वात्तथात्वम्।

**आयाम** पु० आ+यम–भावे घञ्। दीर्घपरिमाणभेदे "अणु-महद्ह्रस्वदीर्घभेदात् परिमाणचातुर्विध्यमिति वैशेषि-कादयः स्वीचक्रुः। अणुमहद्रूपं परिमाणद्वयमिति साङ्ख्याः ह्रस्वदीर्घयोर्महत्त्वएवान्तर्भावात्। तत्र अल्प-संख्यकावयवत्वमणुत्वम् अधिकावयवजन्यत्वं महत्त्वम् तेषु च अवयवप्रचयेषु ययोः पार्श्वयोराधिक्यं तत्र दीर्घत्व-व्यवहारः यत्र च पार्श्वयोरल्पत्वं तत्र विस्तीर्णत्वं ह्रस्वत्वं च व्यवह्रियते "अस्थूलमनण्वह्रस्वमदीर्घमिति" श्रुतौ च अवान्तरभेदमाश्रित्यैव परिमाणचातुर्विध्योक्तिर्दृष्ट्वा अस्य गुणमात्रवर्त्तित्वम् न तु अणुमहदादिवत् गुणगुणद्भयवा-चकत्वमपि इति भेदः। "आयामवद्भिः करिणां घटायतैः" माघः "यावानुरु बाहुकः पुरुषस्तावदायामः" आश्व०सू० "यस्य चायामः" पा० "शीतङ्कतरायामास्त्रियामा यान्ति साम्प्रतम्" रामा०। आ+यम+णिच्–अच्। २नियमने प्राणायामः प्राणवायोर्नियमनम् "प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति" "एकाक्षरं परं ब्रह्म प्राणा-यामः परं तपः" मनुः। आयामोऽस्त्यस्य बला० वा इनि पक्षे मतुप्। आयामी आयामवान् आयामयुक्ते त्रि० स्त्रियां ङीप्। यामपर्य्यन्ते मर्य्यादायाम् अव्ययीभावः। ३प्रहरपर्य्यन्ते अव्य०।

**आयास** पु० आ+यस–घञ्। अतियत्ने "स्नेहमूलानि दुःखानि देहजानि भयानि च। शोकहर्षौ तथायासः सर्वं स्नेहात् प्रवर्त्तते" भा०व० २०० अ० "रत्यायास मनस्तापक्षुत्पिपासादिसम्भवा" सा०द०।

**आयासक** त्रि० आ+यस–ण्वुल्। १आयासयुक्ते। णिच्–ण्वुल्। २आयाससम्पादके च।

**आयासिन्** त्रि० आयस्यति आ+यस–णिनि। आयासयुक्ते "कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि" शकु०।

**आयिन्** त्रि० आयोलाभोऽस्त्यस्य इनि। १लाभयुक्ते मतुप् आयवानप्यत्र त्रि०इण–णिनि। २गन्तरि स्त्रियां ङीप्।

**आयु** त्रि० "छन्दसीणः" उणा०इण–उण्। गमनशीले "ता अस्य

वर्द्धमायुवोनेट्ः सचन्त धेनवः" ऋ०२,५,५ । "आयुवोगन्त्राः" भा० उत्तङ्क् छान्दसः "अभि सोमास आयवः पवन्ते मद्यं मदम्" ऋ० ९,२३,४ । २आयुषि न० "कालः-क्रीड़ति गच्छत्यायुरित्युक्तेः कालगत्यैव तस्य गामित्वात्तथात्वम् । जीवनस्य कालरूपत्वे तु कालस्य सततगामित्वात्तथात्वं युक्तमेव "अग्ने जरस्व स्वापत्य आयुन्यूर्जा" ऋ०२,२,७ । "वत्सं न पूर्व्वं आयुनि जातं रिहन्ति मातरः" ऋ० ९,१००,१ आयुनि आयुषि" भा० बाहुलकात् भाषायामपि उण् उज्ज्व०। तेन "वायुना जगदायुना" वर्णिविवेकः । "मा वधिष्ठा जटायुं माम्" भट्टिः । "तटीं विन्ध्यस्याद्रेरभजत जटायोः प्रथमजः" इति अभिनन्दः।

**आयुक्त** त्रि० आ+युज-कर्म्मणि क्त । १सम्यग्व्यापारिते । "आयुक्तकुशलाभ्यां चासेवायाम्" पा० "आयुक्तः व्यापारितः" सि०कौ० । "कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्म्मणि" भट्टिः २ईषद्युक्ते च "आसेवायां किम् ? आयुक्ता गौः शकटे ईषद्युक्तः" सि०कौ० । भावे क्त । ३सम्यग्नियोजने न०। आयुक्तमनेन इष्टा० इनि । आयुक्ती सम्यग्नियोजनकर्त्तरि त्रि० स्त्रियां ङीप् ।

**आयुध** न० आयुध्यतेऽनेन आ+युध-करणे घञर्थे क । शस्त्रमात्रे । तस्य भेदाः समासतस्त्रिधा प्रहरणहस्तमुक्तयन्त्रमुक्तभेदात् । तत्र हस्तस्थितैर्यैः प्रह्रियते तानि प्रहरणानि यथा खड्गादीनि । हस्तमुक्तानि चक्रादीनि, यन्त्रमुक्तानि शरादीनि । तेषां सर्व्वेषां युद्धसाधनत्वादायुधत्वम् । "न मे त्वदन्येन विसोढमायुधम्" रघुः । "येऽपीन्द्रपाणितुलितायुधलूनपक्षाः" माघः । "न शुष्कं न विसन्नाहं न नग्नं न निरायुधम्" मनुः ।

**आयुधधर्म्मिणी** स्त्री आयुधस्येव धर्मोऽस्त्यस्या इनि ङीप् । जयन्तीवृक्षे शब्दच०। सा हि रोगनाशने आयुधसमा

**आयुधन्यास** पु० आयुधानां न्यासः तत्तत्स्थानस्पर्शपूर्व्वकं तत्तन्मन्त्राणामर्पणबुद्ध्या स्थापनम् । श्रीविद्यापूजाङ्गे "एवं कामकलारूपं देवतामयमात्मनः । वपुर्विचिन्त्य मितयोरायुधन्यासमाचरेत्" इत्यादिना तन्त्रसारोक्ते न्यासभेदे । तन्त्रसारे श्रीविद्यापूजाप्रकरणे विस्तृतिरस्य ।

**आयुधागार** न० ६त० । राज्ञां प्रहरणस्थापनार्थे गृहे । "सन्नद्धमायुधागारमिदं तस्य दुरात्मनः" । "आयुधागारमादीप्य" इति च भा०आ०प०१४७,४८ अ०। "कोष्ठागारायुधागारदेवतागारभेदकान्" मनुः । आयुधागारे नियुक्तः ठक् । आयुधागारिकः तत्रनियुक्ते त्रि० । तत्ररक्षणसक्तं मानुषे । "स्थापनाजातितत्त्वज्ञः सततं प्रतिजाग्रतः । राज्ञः स्यादायुधागारे दक्षः कर्म्मसु चोद्यतः"।

**आयुधिक** पु० आयुधेन तद्व्यवहारेण जीवति ठञ् । शस्त्राजीवे पक्षे छ आयुधीयोऽप्यत्र । आयुधाजीवादयोऽप्यत्र ।

**आयुधिन्** पु० आयुधमस्त्यस्य इनि । शस्त्रधारके ।

**आयुध्य** न० युध्यति युध-क न०त० ततो भावे ब्राह्मणादिपाठात् ष्यञ् न त्वतलौ । १योद्धृभिन्नत्वे । आ+युध-ल्यप् । २सम्यग्युद्धं कृत्वेत्यर्थे अव्य० ।

**आयुर्दाय** पु० आयुषोदायः दानम् । ग्रहविशेषस्थितियोगादिभिः ज्योतिषोक्ते रव्यादिभिः आयुषोदाने तद्विवरणं श्रीपतिपद्धतौ यथा

"आयुर्ज्ञानादेव होराफलानां कर्त्तुं यस्मान्निर्णयः शक्यतेऽत्र । आयुर्दायः संप्रदायागतोऽयं सच्छिष्याणां प्रीतये कथ्यतेऽत्र । एकोनदीधितिसमादिह गच्छतो यद्रूपादिरूपचयसंकलितद्वयं स्यात् । चेष्टोद्भवस्त्विजमथ समरीचिभक्तं तज्जायतेऽत्र गुणकद्वितयं तदाख्यम् । जने भवे तां निजदीधितिभ्यः शेषीफले ते यदि रश्मियुक्ते । तदर्द्धिते स्वांशुभिरुद्धृते ते तद्धातमूलं गुणकः स्फुटः स्यात्"। इति गुणकानयनमत्राय भेदस्तट्टीकायामुक्तः । "अत्यार्थे तु किरणाः सैकास्तदर्द्धभक्ता भवेद्गुणः । अधिकार्थे द्विरेकाप्ते दलिता गुणको भवेत्" "वर्गोत्तमे स्वभवने स्वनवांशके च स्वत्र्यंशके च गुणकोद्वितयं निरुक्तः । अध्यर्द्धरूप ३/२ मधिमित्रगृहे सुहृद्दे नवांशकं ४/३ समगृहे खलु रूपमेव । त्र्यंशोनितं २/३ रिपुगृहेऽप्यरिभे दलं १/२ स्यादेभ्योगुणोभवति यः खलु कश्चिदेकः । चेष्टोद्भवः समगुणोगुणकैः प्रदिष्टो होरादिवर्गगुणकस्तु भवेत्तदर्द्धम् । एतेऽपि गुणवर्गादितामचक्रिरपेक्षयानन्तर ताड़कानाम् । ७नवांशका ११रुद्रमितास्त्वभीष्टराशौ सुहृदे प्रमानि मूर्च्छनांशाः ।१८नवाश्विनो ९रूपमुदासराशौ २१कुद्यंशका १३विश्वसमा द्विपक्षे । त्रयो नवांशा अधिमत्रराशावेते भसंख्याश्च राशिवर्जम् । वर्गोत्तमात्मीयभ नवविभागस्थिते षष्ठे तु द्वितयं २गुणयेत् । एतैरभीष्टादिगुणैर्निहन्यादुदीरितैराशिगुणं पुनश्च । गृहादिके वर्गगणे स्वकीये द्विकोगुणश्चांशविवर्जितः स्यः । अभीष्टभे मित्रगृहे नवांशा त्रिघ्नेऽथ रूपञ्च समस्य भे । नवांशकाः पञ्च विरोधराशौ गुणांशकः स्यादधिवैरिणोभे । पूर्वमपूर्वागुणकाय उक्ता वर्गेषु सप्तस्विह गुणसंज्ञाः । गुणागुणैस्तैरधिकारलब्धैरुक्तै गुणैः स्यादथ मिश्रितैस्तैः । स्फुटोग्रहैरायुरसंचितोऽयमस्य स्फुटस्यापि

वधो भवेद्व यः । तस्यैव मूलं खलु कर्मतोऽस्य आयुर्विधाने गुणकार उक्तः । ग्रहस्य लिप्ताः खखमिद्व २४००भक्ताः प्रोक्ताः कलाः शेषमिहायुषोऽत्र । लग्नं ग्रहोनं यदि षड्गृहेभ्यो हीनं तदानीं हरसंभवः स्यात् । नैवाधिके तत्र खगोनलग्ने लिप्तीकृते राशिकला १८०० विभक्ते । आयुःकलानां स हरः स्फुटः स्यात् रूपाद्यदाप्यः सहरस्तदानीम् । रूपाद्विशुद्धोगुणकस्तु तासामेवं हि पापद्युचरोनलग्ने । शुभोनलग्ने तु हरोद्विनिघ्न आयुः कलाभ्योहरलब्धलिप्ताः । विशोधनीया यदि रूपकोनोहरस्तदानीं गुणकेन गुण्यः । चक्रार्द्धहानौ बहुषु द्वयोर्वा द्युचारिणोरेकगृहस्थयोस्तु । सत्याभिधानस्य मतेन सत्यं स्वांशं हरत्येव बलोत्कटोयः । एवं कार्य्या चक्रपातार्द्धहानिरायुर्दाये ह्यंशजे पिण्डजे च" इत्यंशायुः "नैसर्गाख्ये जीवशर्मोदिते च हारं कृत्वा चैककोनोगुणः स्यात्" निसर्गायुषिविशेषः । "आयुर्लिप्ताः स्वगुणगुणिता व्योमशून्याश्वि २०० भक्ता अब्दामासादिवसघटिकाः स्युर्विनाद्यः क्रमेण" "एवं यथावच्च गुणकगुणिता आयुर्लिप्ताः २०० भक्ता अब्दा भवन्ति शेषं विकला द्वादशभिर्गुणयित्वा षष्ट्या विभज्य लब्धं कलासु संयोज्य पुनरपि ताः कला द्विशत्या विभजेत् तेन मासा भवन्ति । पुनःशेषं त्रिंशता गुणयित्वा कलासु संयोज्य द्विशत्या भागे दिवसा भवन्ति पुनःशेषं षष्ट्यागुणयं कलासु संयोज्य द्विशत्या विभज्य लब्धं घटिका भवन्ति । एवं पलानि च" । "एवं सर्वं द्युचरजनितं ह्यायुरत्नीय लग्नादायुः साध्यं कथितविधिना किन्तु लग्ने विशेषः"। "एवं द्युगणजनितमिति रव्यादिग्रहस्थचितं तेन तत्तद्ग्रहदत्तायुरुच्यते इत्यर्थः"। "लग्ने तु वीर्य्याभ्यधिके भतुल्यैर्वर्षैर्युतं तत्र विधेयमायुः । भागादिकादप्यनुपातलब्धं मासादिना संयुतमेव कार्य्यम्"वीर्य्याधिके षड्धिके इत्यर्थः। अनुपातस्तु लग्नभागादि द्विगुणं कृत्वा पञ्चभिर्भक्ता लब्धं मासाः शेषं त्रिंशतागुणयं पञ्चभिर्भक्तं लब्धं दिनानि शेषं षष्ट्यागुणयं पञ्चभिर्भक्ता लब्धं घटिका एवं पलादिकमवसेयम् । एवं लग्नायुः" अथ रव्यादीनां पिण्डायुः । "मन्देन्द्वो १९ वाणयमाः२५ शरच्छा१५ दिवाकराः १२ पञ्चभुवः१५ कुपक्षाः २१ । नखाश्च२० भास्वत्प्रमुखग्रहाणां पिण्डायुषोऽब्दा निजतुङ्गगानाम् । निजोच्चशुद्धः खचरोविशोध्योभमण्डलात् षड्भवनोनकश्चेत् । तथा स्थिताः षड्भवनाधिकस्तु विलिप्तितः संगुणितो निजाब्दैः । तत्र खाभ्ररसचन्द्रविलोचनैः २१६०० हृते इति यदाप्यते फलम् । वर्षमासदिननाडिकाद्युतं तद्धि पिण्डभवमायुरिष्यते" इति पिण्डायुः । "त्र्यंशमुक्तं हरति शत्रुभे ग्रहः स्वायुषोऽत्र न तु वक्रचारगः । सूर्य्यलुप्तकिरणोऽर्द्धहारकः प्रोज्झ्य भार्गवदिनेशनन्दनौ । व्ययचरोजायते योऽर्द्धत्र्यंशयोरपहारकः । आयुषः स हरेदर्द्धं त्र्यंशं शुक्रशनैश्चरौ । प्राग्वत्फलानि सहरैर्विधाय तदैक्यतो यत्ग्रहसंख्ययाप्तम् । तदत्र ह्रासं बलिनो ग्रहस्य जगौ मणित्थोहरिरित्यमेव । हरयुतिर्विहृताग्रहसंख्यया स च हरोपचयश्च ततः फलम् । अधिकवीर्य्यवतोऽम्बरचारिणो निगदतीति मुनिः किल देवलः। लिप्तीभूतैर्लग्नभागैर्निहन्यादादायुर्दायं खेचराणां पृथक् स्थम् । व्योमाकाशर्त्विन्दुपक्षै२१६००र्भजेत्तं स्वायुर्दायात् शोध्यमब्दादि लब्धम् । एवं क्रूरे लग्नगे सौम्यदृष्टे तस्मिन्दाये तत्फलार्द्धं विशोध्यम् । एतद्दाये नांशसंज्ञे विधेयं पिण्डायुर्वत् कर्म नैसर्गिकेऽपि, अत्र विशेषो लघुपद्धतौ । "लग्नेऽदृशुभस्वादोदयप्रहात् छित्वांशनिघ्नं फलं क्रूरस्योदय भावजं यदि तनौ द्वौ तद्बलिष्ठस्य च । चेत् साम्येऽधिक भावजेन बलयोस्तेन ग्रहायुः कला निघ्नाः खाभ्ररसेन्दुदस्र २१६००विहृता लब्धं त्यजेत् स्वायुषः" । लग्नगपापस्य लग्ने सत्त्वे तु न त्यागः "योयो भावः स्वामिदृष्टो युतो वेत्यादिना" तस्य पुष्टत्वाभिधानात्, "क्रूरःसोऽपि शुभेक्षितो यदि तदा लब्धस्य खण्डं त्यजेत् नैतत् कर्म विलग्नपे तनुगते क्रूरेऽपि नांशायुषीत्युक्तेश्च" ग्रहाणां बलं च बलशब्दे वक्ष्यते । नखाः २०शशी १द्वौ २ नवकं ९धृतिश्च१८ कृतिः २० खबाणा५० रविपूर्वकाणाम् इयं निरुक्ताक्रमशोग्रहाणां नैसर्गिके ह्यायुषि वर्षसंख्या"। इति नैसर्गिग्रहदत्तायुः इदानींमंशायुःप्रभृतीनां कस्य कुत्र प्राधान्यता तदाह । "अंशोद्भवं लग्नबलात् प्रसाध्यमायुश्च पिण्डोद्भवमर्कवीर्य्यात् । नैसर्गिकं चन्द्रमसोबलेन ब्रूमस्त्रयाणामथ वीर्य्यसाम्ये । अंशोद्भवं लग्नबलेन हन्यात् पिण्डाख्यमायुश्च बलेन भानोः । नैसर्गिकं चन्द्रमसो बलेन सर्वाण्यथैकत्र विधाय तानि । विलग्नतिग्मांशुहिमद्युतीनां हरेद्बलैक्येन ततो यदाप्तम् । वर्षाद्यमायुस्त्विह स्फुटं स्यात् श्रीनीलकण्ठादय एवमूचुः । लग्नस्थर्यशशिनोबलशून्याः स्युर्यदात्र परमायुरशांशम्" हीनबलत्वमाह दामोदरः रूपत्रयाल्पं किल षड्बलैक्यं भवेद्विलग्नस्य खगस्य यस्य । स्वस्वामिना नो सहितो न दृष्टः स हीनवीर्य्यः कथितो-

मुनीन्द्रैः" । केशवोऽपि "लग्ने हीनबली बली यदधिके वीर्यं यमुखोदयः" । "सर्व एव खचरा ददतीदं जीवशर्मगदितं हि तदायुः । यद्गः स्वोच्चहीनः स चेत् षड्भहीनो भचक्राद्विशोध्योऽथ भागीकृतः सन् । कुवेदर्त्तुनागैः ८६४१ हृतो वेदखाक्षैः ५०४ विंभक्तोदितान्यब्दवर्ष्येवमायुः" अङ्गेभ्यः खरामैः ३० हृते तेभ्योऽधिमासाः पलक्षं च तेभ्योभवेयुस्तदाब्दाः । भचक्रार्द्धहान्यादिकोऽन्योविधिर्यः स पिण्डोद्भवायुर्वदेवात्र कार्यः इति । आयुःस्वर्थेतेषु बलाढ्यलग्ने विहाय राशीन् कृतलिप्तिकोऽत्र भक्ते द्विशत्या २०० फलमब्दपूर्वं यत्स्यात् विलग्नायुषि तच्च योज्यम् । लग्नार्कयोरंकशशाङ्कयोश्च लग्नोडुपत्योरपि वीर्यसाम्ये । तदायुषोरैक्यदलं भवेद्यत् तत् श्रीधराद्यैः स्फुटमायुरुक्तम्" इति लग्नायुः ।"ये धर्मकर्मनिरता विजितेन्द्रियाये वै पथ्यभोजनजुषोद्विजदेवभक्ताः । लोकोत्तरन्दधति ये कुलशीललीलां तेषामिदङ्गदितमायुरुदारधीभिः"। अष्टवर्गादपि आयुर्दायज्ञानं भवति तच्चाष्टवर्गशब्दे वक्ष्यते । ५२२ पृष्ठे दृश्यम् नक्षत्रायुःकेन्द्रायुःप्रभृतीनां विस्तरभयादिहानुक्तिराकरे तच्च दृश्यम् ।

आयुर्द्रव्य न० आयुःसाधनं द्रव्यम् शा०त० । १औषधे रत्नमा० २आयुःसाधने घृते च "आयुर्वै घृतमित्युक्तेः घृतस्यायुर्जनकत्वात्तथात्वम् ।

आयुर्योग पु० उचितस्यायुषोज्ञापकः योगः । ज्योतिषोक्ते यज्ञयोगभेदे सचायुःशब्दे दृश्यः ।

आयुर्वृद्धि स्त्री आयुषो वृद्धिः । द्रव्यविशेषसेवनेनायुषो वृद्धौ तानि च द्रव्याणि कतिचिदुच्यन्ते । रस एव तावत् सर्वेषामायुर्वृद्धिकरः "अभ्रकं तव बीजन्तु मम बीजन्तु पारदः । अनयोर्मेलनं देवि ! मृत्युदारिद्र्यनाशनम्" इति सर्व०द०गौरीं प्रति शिववाक्यम्"कर्मयोगेन देवेशि ! प्राप्यते पिण्डधारणम् । रसश्च पवनश्चेति कर्मयोगो द्विधा स्मृतः । मूर्च्छितो हरति व्याधीन् मृतो जीवयति स्वयम् । बद्धः खेचरतां कुर्य्याद्रसो वायुश्च भैरवि !" इति सर्व०द० तन्त्रवाक्यम् । यथा च वायोर्निरोधेनैव आयुर्वृद्धिः । तथोक्तं काशी० "संनियम्येन्द्रियग्रामं नातिनीचोच्छ्रितासनः । अधममध्योत्तमं चाथ प्राणायाममुपक्रमेत् । चलेऽनिले चलं सर्वं निश्चलं तत्र निश्चले । स्थाणुत्वमाप्नुयाद्योगीततोऽनिलनिरोधनात् । यावद्देहे स्थितः प्राणो जीवितं तावदुच्यते । निर्गते तत्र मरणं ततःप्राणं निरोधयेत् । प्राणायामेन युक्तेन सर्व्वव्याधिक्षयोभवेत् अयुक्ताभ्यासयोगेन सर्वव्याधिसमुद्भवः" ततश्च प्राणायामस्य सर्वव्याधिहरत्वादप्यायुर्वृद्धिकरत्वम् । अस्यचायुर्वृद्धिकरत्वेऽन्यदपि कारणम् तथा हि "षट्श्वासैर्भवेत् प्राणः षट्प्राणा नाडिका मता । षष्टिनाड्यस्त्वहोरात्रो जपसंख्याक्रमोमतः । एकविंशतिसाहस्रं षट् शतानि महेश्वरि ! । जपति प्रत्यहं प्राणीति"तन्त्रोक्त्या २१६००एतन्मिताः श्वासरूपाः प्राणक्रियाः अहोरात्रे भवन्ति वत्सरसंख्यया ३६०गुणितास्ताः ७७७६०००एतन्मिता वत्सरे भवन्ति । "शतायुर्वै पुरुष" इति श्रुत्या मनुष्याणां स्वाभाविकशतायुष्ट्वोक्तेः शतेन गुणितास्ताः ७७७६००००० एतन्मिताः प्राणक्रिया मनुष्याणां जीवनकाले भवितुमर्हन्ति तत्र प्राणायामादिना प्राणवायोर्निरोधे प्राणक्रियानुत्पत्तेः प्राणक्रियारोधकाले च यावत्यः प्राणक्रिया भवितुमर्हन्ति तावन्तःकाला आयुषो वर्द्धन्ते इति । उक्ताः प्राणक्रियाश्च सुस्थस्यैव भवन्ति रोगाद्युपसर्गे शीघ्रधावनादिपरिश्रमे च प्राणक्रियाधिक्यं भवति तेन स्वल्पकालमध्ये यावत्प्राणक्रिया अपेक्षिताः तेनोन्यूनकालमध्ये तासामुत्पत्तावायुःक्षयः । शतायुष्ट्वञ्च स्वाभाविकं कर्म्मवशात् ततोन्यूनताऽपि जात्यायुर्भोगानां कर्म्मविपाकत्वस्य योगशास्त्रे उक्तेः । तादृशाल्पायुष्ट्वादिसूचको ग्रहविशेषयोगादिर्ज्योतिषे उक्तः । अन्नदोषादीनाञ्चाल्पायुष्ट्वप्रयोजकत्वं स्वल्पुक्तमदृष्टद्वारैव । वैद्योक्तापथ्यभोजनस्य तथात्वञ्च रोगोत्पत्तिद्वारेति भेदः। रोगोपसृष्टदेहं च जीवो दुःखहेतुत्वात् वस्त्राद्युपहृतदेशवत् शीघ्रं परिजिहीर्षति । तथा च देहो यथा न रोगादिभिरुपसृज्येत" तथा यतितव्यमित्येतदर्थं शास्त्रेषु पथ्योपदेशः इति बोध्यम् । एवं खेचरीमुद्रादीनामप्यायुर्वृद्धिकरत्वम् काशी० उक्तम् । "कपालकुहरे जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी । न पीड्यते स रोगेण न च लिप्येत कर्म्मणा । बाध्यते न स कालेन योमुद्रां वेत्ति खेचरीम् । चित्तं चरति खे यस्माज्जिह्वा चरति खे गता । तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता । यावद्बिन्दुः स्थिरोदेहे तावन्मृत्युभयं कुतः । यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति । उड्डीनं कुरुते यस्मादहोरात्रं महाखगः । उड्डीयानं ततः प्रोक्तं तत्र बन्धोऽभिधीयते । जठरे पश्चिमं जानु नाभेरूर्द्ध्वञ्च धारयेत् । उड्डीयानं ह्ययं बन्धोमृत्योरपि भयं जयेत् । बध्नाति हि शिराजालं अधोगामि न भोजनम् । एष जालन्धरोबन्धः कण्ठे दुःखौघनाशनः । जलन्धरे कृते बन्धे कण्ठसंकोचलक्षणे ।

न पीयूषं पतत्यग्नौ न च वायुः प्रधावति । पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदम् । अपानमूर्द्ध्वमाकृष्य मूलबन्धोऽभिधीयते । अपानप्राणयोरैक्यं क्षये मूत्रपुरीषयोः । युवा भवति वृद्धोऽपि सततं मूलबन्धनात्" । एवमन्यान्यपि शास्त्रीणि कर्म्माणि आयुर्वृद्धिकराणि "मत्स्यान् मोचयतो द्विजाय ददतोऽप्यायुश्चिरं वर्द्धते" "आयुष्यं प्राङ्मुखोभुङ्क्ते" इत्यादीनि ।

रसवत् अन्यान्यपि द्रव्याणि सेवितानि आयुर्वृद्धिकराणि सुश्रुते दर्शितानि तानि रसतुल्यतया रसायनानि यथा

"अथातः सर्व्वोपघातशमनीयं रसायनं व्याख्यास्यामः । पूर्व्वे वयसि मध्ये वा मनुष्यस्य रसायनम् । प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा । नाविशुद्धशरीरस्य युक्तो रासायनो विधिः । न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः । शरीरस्योपघाता ये दोषजा मानसास्तथा । उपदिष्टाः प्रदेशेषु तेषां वक्ष्यामि वारणम् । शीतोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः । त्रिशः समस्तमथ वा प्राक् पीतं स्थापयेद्वयः । तत्र विडङ्गतण्डुलचूर्णमाहृत्य यष्टीमधुयुक्तं यथाबलं शीततोयेनोपयुञ्जीत शीततोयं चानुपिबेदेवमहरहर्म्मासं तद्वेव मधुयुक्तं भल्लातककाथेन वा मधुद्राक्षाक्वाथयुक्तं वा मध्वामलकरसाभ्यां वा गुडूचीक्वाथेन वा । एवमेते पञ्च प्रयोगा भवन्ति जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात् । एते खल्वर्शांसि क्षपयन्ति क्रमीनुपघ्नन्ति ग्रहणधारणशक्तिं जनयन्ति मासेमासे प्रयोगे वर्षशतमायुषोऽभिवृद्धिर्भवति । विडङ्गतण्डुलानां द्रोणं पिष्टपचने पिष्टवदुत्स्वेद्य विगतकषायं स्विन्नमवतार्य दृषदि पिष्टमायसे दृढे कुम्भे मधूदकोत्तरं प्रक्षिप्य भस्मराशावन्तर्गृहे चतुरो मासान्निदध्यात् वर्षाविगमे चोद्धृत्योपसंस्कृतशरीरः सहस्रसम्पाताभिहुतं कृत्वा प्रातः प्रातर्यथाबलमुपयुञ्जीत, जीर्णे मुद्गामलकयूषेणालवणेनाल्पस्नेहेन घृतवन्तमोदनमश्नीयात् पांशुशय्यायां शयीत । तस्य मासादूर्द्ध्वं सर्व्वाङ्गेभ्यः क्रमयो निःक्रामन्ति तानणुतैलेनाभ्यक्तस्य वंशविदलेनापहरेत् । द्वितीये पिपीलिकास्तृतीये यूकास्तथैवापहरेत् चतुर्थे दन्तनखरोमाण्यवशीर्य्यन्ते पञ्चमे प्रशस्तगुणलक्षणानि जायन्ते । अमानुषं चादित्यप्रकाशं वपुरधिगच्छति दूराच्छ्रवणानि दर्शनानि चास्य भवन्ति रजस्तमसी चापोह्य सत्त्वमधितिष्ठति । श्रुतिनिगाद्यपूर्व्वोत्पादी गजबलोऽश्वजवः पुनर्युवा द्वौ वर्षशतान्यायुरवाप्नोति । तस्याणुतैलमभ्यङ्गार्थे । अजकर्णकषायमुत्सादनार्थे सौवीरं, कूपोदकं स्नानार्थे, चन्दनमुपलेपनार्थे, भल्लातकविधानवदाहारः परिहारश्च । काश्मर्य्याणां निष्कृती कृतानामेष एव कल्पः पांशुशय्याभोजनवर्ज्जम् । अत्र हि पयसा घृतेन भोक्तव्यम् आशिषश्च पूर्व्वाः समानाः । शोणितपित्तनिमित्तेषु विकारेषु तेषामुपयोगः । यथोक्तमागारं प्रविश्य बलामूलार्द्धपलं पलं वा पयसालोड्य पिबेत् । जीर्णे पयः सर्पिरोदनइत्याहारः । एवं द्वादशरात्रमुपयुज्य द्वादश वर्षाणि वयस्तिष्ठति । एवं द्विरष्टरात्रमुपयुज्य वर्षशतं वयस्तिष्ठति । एवमेवातिबलानागबलाविदारीशतावरीणामुपयोगः । विशेषतस्त्वतिबलामुदकेन, नागबलाचूर्णं मधुना, विदारीचूर्णं वा क्षीरेण, शतावरीमप्येवं, पूर्व्ववान्यत् समानमाशिषश्च समाः । एतास्त्वौषधयो बलकामानां शोणितं छर्दयतां विरिच्यमानानां चोपदिश्यन्ते । वाराहीमूलतुलाचूर्णं कृत्वा ततोमात्रां मधुयुक्तां पयसालोड्य पिबेत् जीर्णे पयःसर्पिरोदनइत्याहारः । प्रतिषेधोऽत्र पूर्व्ववत् क्रियाप्रयोगमुपसेवमानो वर्षशतमायुरवाप्नोति स्त्रीषु चाक्षयताम् । एतेनैव चूर्णेन पयोऽवचूर्णशृतशीतमभिमथ्याज्यमुत्पाद्य मधुयुतमुपयुञ्जीत सायम्प्रातरेककालं वा जीर्णे पयःसर्पिरोदन इत्याहारः । एवं मासमुपयुज्य वर्षशतायुर्भवति । जीर्णे पयः सर्पिरोदन इत्याहारः । चक्षुःकामः प्राणकामो वा चीनकसाराग्निमन्थमूलं निःक्वाथ्य माषप्रस्थं साधयेत् तस्मिन् सिध्यति चित्रकमूलानामक्षमात्रं कल्कं दद्यादामलकरसचतुर्थभागं ततः स्विन्नमवतार्य सहस्रसम्पाताभिहुतं कृत्वा शीतीभूतं मधुसर्पिर्भ्यां संसृज्योपयुञ्जीत यथाबलं लवणं परिहरन् भक्षयेत् जीर्णे मुद्गामलकयूषेणालवणेन घृतवन्तमोदनमश्नीयात् पयसा वा माषलवणमेवमाभ्यां प्रयोगाभ्यां चक्षुःसौपर्णं वज्रवलनत्वको बलवान् स्त्रीषु चाक्षयो वर्षशतायुर्भवतीति । भवति चात्र । पयसा सह सिद्धानि नरः सनफलानि यः । भक्षयेत् पयसा सार्द्धं वयस्तस्य न शीर्य्यते ।

अथातो मेधायुष्कामीयं रसायनं चिकित्सितं व्याख्यास्यामः । मेधायुःकामः श्वेतवल्गुजफलान्यातपपरिशुष्काण्यादाय सूक्ष्मचूर्णानि कृत्वा गुडेन सह समालोड्य स्नेहकुम्भे सप्तरात्रं धान्यराशौ निदध्यात् सप्तरात्रादुद्धृत्य कृतदोषस्य यथाबलं पिण्डं प्रयच्छेदुदिते सूर्य्ये उष्णोदकं चानुपिबेत् । भल्लातकविधान-

वस्त्रागारप्रवेशो जीर्णौषधश्चापराह्णे हिमाभिरद्भिः परिषिक्तगात्रः शालीनां षष्टिकानां च पयसा शर्करामधुरेणौदनमश्नीयादेवं षण्मासानुपयुज्य विगतपाप्मा बलवर्णोपेतः श्रुतिनिगादी स्मृतिमानरोगो वर्षशतायुर्भवति। कुष्ठिनं पाण्डुरोगिणमुदरिणं वा कृष्णाया गोर्मूत्रेणालोड्यार्द्धपलिकं पिण्डं विगतसौहित्ये सवितरि पाययेत्, अपराह्णे चालवणेनामलकयूषेण सर्पिष्मन्तमोदनमश्नीयात्। एवं मासमुपयुज्य स्मृतिमानरोगो वर्षशतायुर्भवति एष एवोपयोगश्चित्रकमूलानां, रजन्याश्चित्रकमूले विशेषो द्विपलिकं पिण्डं परं प्रमाणं शेषं पूर्ववत्।

कृतदोष एव प्रतिसंसृष्टभक्तो यथाक्रममागारं प्रविश्य मण्डूकपर्णीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलं पयसालोड्य पिबेत् पयोऽनुपानं वा तस्यां जीर्णायां यवान्नं पयसोपयुञ्जीत तिलैर्वा सह भक्षयित्वा त्रीन्मासान् पयोऽनुपानं जीर्णे पयः सर्पिरोदन इत्याहारः। एवमुपयुञ्जानः ब्रह्मवर्चसी श्रुतनिगादी भवति वर्षशतमायुरवाप्नोति त्रिरात्रोपोषितश्च त्रिरात्रमेनां भक्षयेत्। त्रिरात्रादूर्द्ध्वं पयःसर्पिरिति चोपयुञ्जीत। बिल्वमात्रं पिण्डं वा पयसालोड्य पिबेदेवं द्वादशरात्रमुपयुज्य मेधावी वर्षशतायुर्भवति। कृतदोष एवागारं प्रविश्य प्रतिसंसृष्टभक्तो ब्राह्मीस्वरसमादाय सहस्रसम्पाताभिहुतं कृत्वा यथाबलमुपयुञ्जीत जीर्णौषधश्चापराह्णे यवागूमलवणां पिबेत् क्षीरसात्म्यो वा पयसा भुञ्जीत। एवं सप्तरात्रमुपयुज्य ब्रह्मवर्चसी मेधावी भवति। द्वितीयं सप्तरात्रमुपयुज्य ग्रन्थमीप्सितमुत्पादयति। नष्टञ्चास्य प्रादुर्भवति। तृतीयं सप्तरात्रमुपयुज्य द्विरुच्चारितं शतमप्यवधारयति। एवमेकविंशतिरात्रमुपयुज्यालक्ष्मीरपक्रामति मूर्त्तिमती चैनं वाग्देव्यनुप्रविशति सर्वाश्चैनं श्रुतय उपतिष्ठन्ति। श्रुतधरः पञ्चवर्षशतायुर्भवति। ब्राह्मीस्वरसप्रस्थद्वये घृतप्रस्थं विडङ्गतण्डुलानां कुडवं द्वे द्वे पले वचात्रिवृतयोर्द्वादश हरीतक्यामलकविभीतकानि अक्षपिष्टान्यावाप्य कध्यं साधयित्वा स्वनुगुप्तं निदध्यात्। ततः पूर्वविधानेन मात्रां यथाबलमुपयुञ्जीत जीर्णे पयःसर्पिरोदन इत्याहारः। एतेनोर्द्ध्वमधस्तिर्य्यक् कृमयो निःक्रामन्ति अलक्ष्मीरपक्रामति। पुष्करवर्णः स्थिरवयाः श्रुतनिगादी त्रिवर्षशतायुर्भवत्येतदेव कुष्ठविषमज्वरापस्मारोन्मादविषभूतग्रहेष्वन्येषु च महाव्याधिषु च संशोधनमादिशन्ति। कृतदोष एवागारं प्रविश्य हैमवत्या वचायाः पिण्डमामलकमात्रमभिहुतं पयसालोड्य पिबेत् जीर्णे पयःसर्पिरोदन इत्याहारः। एवमाद्वादशरात्रमुपयुञ्जीत ततोऽस्य श्रोत्रं विव्रियते द्विरभ्यासात् स्मृतिमान् भवति त्रिरभ्यासाच्छ्रुतमादत्ते चतुर्द्वादशरात्रमुपयुज्य सर्व्वं तरति किल्बिषं तार्क्ष्यदर्शनमुत्पद्यते शतायुश्च भवति। द्वे द्वे पले इतरस्या वचाया निःक्वाथ्य पिबेत् पयसा समानं भोजनं समाः पूर्व्वेणाभिषश्च। वचाशतपाकं वा सर्पिर्द्रोणमुपयुज्य पञ्चवर्षशतायुर्भवति गलगण्डापचीश्लीपदस्वरभेदांश्चापहन्तीति।

अथायुःकामीयं वक्ष्यामः। मन्त्रौषधसमायुक्तं संवत्सरफलप्रदम्। बिल्वस्य चूर्णं पुष्ये तु हुतं वारान् सहस्रशः। श्रीसूक्तेन नरः कल्ये ससुवर्णं दिने दिने। सर्पिर्मधुयुतं लिह्यादलक्ष्मीनाशनं परम्। त्वचं बिल्वस्य मूलस्य मूलकार्थं दिने दिने। प्राश्नीयात् पयसा सार्द्धं स्नात्वा हुत्वा समाहितः। दशसाहस्रमायुष्यं हुतं युक्तरथं भवेत्। हुत्वा शिग्राकाक्षन्तु मधुलाजैः संयुतम्। अमोघं शतसाहस्रं युक्तं युक्तरथं स्मृतम्। सुवर्णपद्मबीजानि मधुलाजाः प्रियङ्गवः। गव्येन पयसा पीतमलक्ष्मीं प्रतिषेधयेत्। नीलोत्पलदलक्वाथो गव्येन पयसा स्मृतः। ससुवर्णतिलैः सार्द्धमलक्ष्मीनाशनः स्मृतः। गव्यं पयः सुवर्णञ्च मधूच्छिष्टञ्च माक्षिकम्। पीतं शतसहस्राभिहुतं युक्तरथं स्मृतम्। वचाघृतसुवर्णञ्च बिल्वचूर्णमिति त्रयम्। मेध्यमायुष्यमारोग्यपुष्टिसौभाग्यवर्द्धनम्। वासामूलगुडूचीकाथे तैलमावाप्य साधितम्। हुत्वा सहस्रशोयान्मेध्यमायुष्यमुच्यते। यावकांस्तावकाश्वेदभिन्नय यवांस्तथा। पिप्पलीमधुसंयुक्तान् भिक्षाचरणवद्भवेत्। मध्वामलकचूर्णानि सुवर्णमिति च त्रयम्। प्राश्यारिष्टगृहीतोऽपि मुच्यते प्राणसंशयात्। शतावरीघृतं सम्यगुपयुक्तं दिने दिने। सक्षौद्रं ससुवर्णं च नरेन्द्रं स्थापयेद्वशे। गोचन्दनामोहनिकामधूकं माक्षिकं मधु। सुवर्णमिति संयोगः श्रेष्ठः सौभाग्यमिच्छता। पद्मनीलोत्पलक्वाथे यष्टीमधुकसंयुते। सर्पिरासाधितं गव्यं ससुवर्णं सदा पिबेत्। पयसा चानुपिबेत् सिद्धं तेषामेव समुद्भवे। अलक्ष्मीघ्नं सदायुष्यं राज्याय सुभगाय च। यत्र नोदीरितो मन्त्रो योगेष्वेतेषु साधने। शस्ता तत्र सर्व्वत्र गायत्री त्रिपदी भवेत्। प्राणान्नाद्ययन्त्येता दद्युश्चौषधयः श्रियम्। कुर्य्युर्नागबलं चापि मनुष्यममरोपमम्। सतताध्ययनं वादः परतन्त्रावलोकनम्। तद्विद्याचार्य्यसेवा च बुद्धिमेधाकरो गणः। आयुष्यं भोजनं जीर्णे वेगानाञ्चाविधा-

रणम्। ब्रह्मचर्य्यमहिंसा च साहसानाञ्च वर्जनम्"। एवम् "सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकं चैव सद्यः प्राणकराणि षट्" इत्याद्युक्तानि सुश्रुते हिताहितीयाध्याये हिततया चोक्तानि च आयुर्वृद्धिकराणि।

**आयुर्वेद** पु० आयुर्विद्यते लभ्यतेऽनेन विद्–लाभे करणे घञ् आयुर्वेत्त्यनेन चिह्नज्ञापनेन विद्–ज्ञाने करणे घञ् वा। चिकित्साशास्त्रे तन्निरुक्त्यादिकं सुश्रुते दर्शितं यथा। "शल्यं शालाक्यमित्यादि अष्टाङ्गशब्दे ५२३पृष्ठे उक्त्वा उपक्रम्य 'इह खल्वायुर्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधिपरिमोक्षः स्वस्थस्य रक्षणञ्च। आयुरस्मिन् विद्यतेऽनेन वा आयुर्विन्दतीत्यायुर्वेदः। तस्याङ्गवरमाद्यमागमप्रत्यक्षानुमानोपमानैरविरुद्धमुच्यमानमुपधारय। एतद्ध्यङ्गं प्रथमं प्रागभिघातव्रणसंरोहाद्यज्ञशिरःसन्धानाच्च। श्रूयते हि यथा रुद्रेण यज्ञस्य शिरश्छिन्नमिति ततो देवा अश्विनावभिगम्योचुः। भगवन्तौ नः श्रेष्ठतमौ युवां भविष्यथः। भवद्भ्यां यज्ञस्य शिरःसन्धातव्यम्। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रयज्ञभागेन प्रासादयन्। ताभ्यां यज्ञस्य शिरःसंहितमिति। अष्टास्वपि चायुर्वेदतन्त्रेष्वेतदेवाधिकमभिमतमाशुक्रियाकरणाद्यन्त्रशस्त्रक्षाराग्निप्रणिधानात् सर्वतन्त्रसामान्याच्च। तदिदं शाश्वतं पुण्यं स्वर्ग्यं यशस्यमायुष्यं वृत्तिकरञ्चेति। ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे तस्मादश्विनावश्विभ्यामिन्द्र इन्द्रादहं मया त्विह प्रदेयमर्थिभ्यः प्रजाहितहेतोः। भवति चात्र। अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम्। शल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम्"।

स चाथर्ववेदस्योपवेदः "विधाताथर्व्वसर्व्वस्वमायुर्वेदं प्रकाशयन्। स्वनाम्ना संहितां चक्रे लक्षश्लोकमयीमृजुम्" इति भावप्रकाशोक्तेः। चरणव्यूहमते ऋग्वेदस्योपवेदः आयुर्वेदः अथर्ववेदस्य तु शस्त्रशास्त्राण्युपवेदः। स च षोडशर्षिप्रणीतत्वात् षोडशविधः यथोक्तं ब्रह्मवै०पु० "ऋग्यजुःसामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः। विचिन्त्य तेषामर्थं चैवायुर्वेदं चकार सः। कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः। स्वतन्त्रं संहितां तस्मात् भास्करश्च चकार सः। भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम्। प्रददौ पाठयामास ते चक्रुः संहितास्ततः। तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च। व्याधिप्रणाशबीजानि साध्वि! मत्तो निशामय। धन्वन्तरिर्दिवोदासः काशीराजोऽश्विनीसुतौ। नकुलः सहदेवार्की च्यवनो जनको बुधः। जावालो जाजलिः पैलः करथोऽगस्त्य एव च। एते वेदाङ्गवेदज्ञाः षोड़श व्याधिनाशकाः। चिकित्सातत्त्वविज्ञानं नाम तन्त्रमनोपमम्। धन्वन्तरिश्च भगवान् चकार प्रथमे सति!। चिकित्सादर्पणं नाम दिवोदासश्चकार सः। चिकित्साकौमुदीं दिव्यां काशीराजश्चकार सः। चिकित्सासारतन्त्रञ्च भ्रमघ्नं चाश्विनीसुतौ। तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः। चकार सहदेवश्च व्याधिसिन्धुविमर्द्दनम्। ज्ञानार्णवं महातन्त्रं यमराजश्चकार सः। च्यवनो जीवदानञ्च चकार भगवानृषिः। चकार जनको योगी वैद्यसन्देहभञ्जनम्। सर्वसारं चन्द्रसुतो जावालस्तन्त्रसारकम्। वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः। पैलो निदानं करथस्तन्त्रं सर्वधरं परम्। द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः। चिकित्साशास्त्रबीजानि तन्त्राण्येतानि षोड़श। व्याधिप्रणाशबीजानि बलाधानकराणि च। मथित्वा ज्ञानमन्थानैरायुर्वेदपयोनिधिम्। ततस्तन्त्राण्युज्जहृर्नवनीतानि कोविदाः। एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम्। आयुर्वेदं सर्व्वबीजं सर्वं जानामि सुन्दरि!। व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः। एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः। आयुर्वेदस्य विज्ञाता चिकित्सासु यथार्थवित्। धर्म्मिष्ठश्च दयालुश्च तेन वैद्यः प्रकीर्त्तितः"। तस्य लक्षणं यथा भा०प्र०। "आयुर्हिताहितं व्याधिनिदानं शमनं तथा। विद्यन्ते यत्र विद्वद्भिः स आयुर्वेद उच्यते" तस्य निरुक्तिस्तत्रैव। "अनेन पुरुषो यस्मात् आयुर्विन्दति वेत्ति च। तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः"। "देहजीवयोर्योगो जीवनं तेनावच्छिन्नः काल आयुः आयुर्बोधद्वारा आयुष्याण्यनायुष्याणि द्रव्यगुणकर्म्माणि ज्ञात्वा तेषां सेवनत्यागाभ्याम् आरोग्येणायुर्विन्दति तेनैव हेतुना परस्यायुर्वेत्ति च येन तद्बोधद्वारा स आयुर्वेदः" भा०प्र०। अथायुर्वेदवंशप्रादुर्भावस्तावदभिधीयते यथा भावप्र० "विधाताऽथर्व्वसर्वस्वमायुर्वेदं प्रकाशयन्। स्वनाम्नासंहिताञ्चक्रे लक्षश्लोकमयीमृजुम्। ततः प्रजापतिं दक्षं दक्षं सकलकर्मसु। विधिर्धीनीरधिः साङ्गमायुर्वेदमुपादिशत्। अथ दक्षप्रादुर्भावः। अथ दक्षः क्रियादक्षः सर्वद्योदेववल्लभः। वेदयामास विद्वांसौ स्वर्व्वैद्यौ सुरसत्तमौ।

अथाश्विनप्रादुर्भावः "दक्षादधीत्य दस्रौ वितेनतुः संहितां स्वीयाम्। सकलचिकित्सकलोकप्रतिपत्तिविवृद्धये धन्याम्। ब्रह्मणः शिरश्छिन्नं भैरवेण रुषा च तत्। अश्विभ्यां संहितं तस्मात्तौ जातौ यज्ञभागिनौ। देवासुररणे देवा दैत्यैर्ये सक्षताः कृताः। अक्षतास्ते कृताः सद्योदस्राभ्यामद्भुतं महत्। वज्रिणोऽभूद्भुजस्तम्भः स दस्राभ्यां चिकित्सितः। सोमे निपतिते चेन्द्रस्ताभ्यामेव सुखीकृतः। विशीर्णद-शनाः पूष्णो नेत्रे नष्टे भगस्य च। शशिनो राजयक्ष्माऽभू-द्दस्राभ्यान्ते चिकित्सिताः। भार्गवश्च्यवनः कामी वृद्धः सन् विकृतिं गतः। वीर्य्यवर्णस्वरोपेतः कृतोऽश्विभ्यां पुनर्युवा। एतैश्चान्यैश्च बहुभिः कर्म्मभिर्भिषजां वरौ। बभूवतुर्भृशं पूज्याविन्द्रादीनां दिवौकसाम्। अथेन्द्रप्रादु-र्भावः। संहृष्य दस्रयोरिन्द्रः कर्म्माण्येतानि यत्नवान्। आयु-र्वेदं निरुद्वेगं तौ ययाचे शचीपतिः। नासत्यौ सत्यसन्धेन शक्रेण किल याचितौ। आयुर्वेदं यथाधीतं ददतुः शत-मन्यवे। नासत्याभ्यामधीत्यैव आयुर्वेदं शतक्रतुः। अध्या-पयामास बहूनात्रेयप्रमुखान् मुनीन्। अथात्रेयप्रा-दुर्भावः। एकदा जगदालोक्य गदाकुलमितस्ततः। चिन्तयामास भगवानात्रेयो मुनिपुङ्गवः। किं करोमि क गच्छामि कथम् लोका निरामयाः। भवन्ति, सामयानेतान्न शक्नोमि निरीक्षितुम्। दयालुत्वममत्वं मे स्वभावो दुरति-क्रमः। एतेषां दुःखतो दुःखं ममापि हृदयेऽधिकम्। आयु-र्वेदं पठिष्यामि नैरुज्याय शरीरिणाम्। इति निश्चित्य गतवानात्रेयस्त्रिदशालयम्। तत्र मन्दिरमिन्द्रस्य गत्वा शक्रं ददर्श सः। सिंहासनसमासीनं स्तूयमानं सुरर्षिभिः। भासयन्तं दिशोभासा भास्करप्रतिमत्विषा। आयु-र्वेदमहाचार्य्यं शिरोधार्य्यं दिवौकसाम्। शक्रस्तु तं निरीक्ष्यैव त्यक्तसिंहासनो ययौ। तदर्घ्ये पूजयामास स्वयं भूरितपस्विनम्। कुशलं परिपप्रच्छ तथाऽऽगमन-कारणम्। स मुनिर्वक्तुमारेभे निजागमनकारणम्। व्याधिभिर्व्यथिता लोकाः शोकाकुलितचेतसः। भूतले सन्ति, सन्तापं तेषां हर्त्तुं कृपां कुरु। आयुर्वेदोपदेशं मे कुरु कारुण्यतो ध्रुवम्। तथेत्युक्तः सहस्राक्षोऽध्यापया-मास तं मुनिम्। मुनीन्द्र इन्द्रतः साङ्गमायुर्वेदमधीत्य सः। अभिनन्द्य तमाशीर्भिराजगाम पुनर्म्महीम्। अथात्रेयो मुनिश्रेष्ठो भगवान् करुणापरः। स्वनाम्ना संहितां चक्रे-नरचक्रानुकम्पया। ततोऽग्निवेशं भेडञ्च जातूकर्णं पराश-रम्। क्षीरपाणिं च हारीतमायुर्वेदमपाठयत्। तन्त्रस्य कर्त्ता प्रथममग्निवेशोऽभवत् पुरा। ततो भेडादयश्चक्रुः स्वस्व-तन्त्रं कृतानि तु। श्रावयामासुरात्रेयं मुनिवृन्देन वन्दितम्। श्रुत्वा च तानि तन्त्राणि हृष्टोऽभूदत्रिनन्दनः। यथावत्सू-त्रितत्वात्तु हृष्टास्ते मुनयोऽभवन्। दिवि देवर्षयो देवाः श्रुत्वा-साध्विति तेऽब्रुवन्"। अथ भरद्वाजप्रादुर्भावः "एकदा हिमव-त्पार्श्वे दैवादागताः मुनयो बहवस्तांश्च नामभिः कथयाम्यहम्। भरद्वाजो मुनिवरः प्रथमं समुपागतः। ततोऽङ्गिरास्ततो गर्गो मरीचिर्भृगुभार्गवौ। पुलस्त्योऽगस्तिरसितो वशिष्ठः सपरा-शरः। हारीतो गौतमः सांख्यो मैत्रेयश्च्यवनोऽपि च। जमदग्निश्च गार्ग्यश्च काश्यपः कश्यपोऽपि च। नारदो वामदेवश्च मार्कण्डेयः कपिष्ठलः। शाण्डिल्यः सह कौण्डिन्यः शाकुनेयश्च शौनकः। आश्वलायनसांकृत्यौ विश्वामित्रः परीक्षितः। देवलो गालवो धौम्यः काप्यकात्या-यनावुभौ। काङ्कायनो वैजवापः कुशिको बादरायणिः। हिरण्याक्षश्च लौगाक्षिः शरलोमा च गोभिलः। वैखान-सा बालखिल्यास्तथैवान्ये महर्षयः। ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च। तपस्तेजसा दीप्यमाना हुताग्नयः। सुखोपविष्टास्ते तत्र सर्वे चक्रुः कथामिमाम्। धर्म्मार्थकाम-मोक्षाणां मूलमुक्तं कलेवरम्। तच्च संसिद्धये शक्तं भवेद्यदि निरामयम्। तपःस्वाध्यायधर्म्माणां ब्रह्मचर्य्यव्रतायुषाम्। हर्त्तारः पुरतो रोगा यत्र तत्र च सर्व्वतः। रोगाः कार्श्यक-राबलक्षयकरा देहस्य चेष्टाहरा दृष्टादीन्द्रियशक्तिसंक्षय-कराः सर्वाङ्गपीड़ाकराः। धर्म्मार्थाखिलकाममुक्तिषु महा-विघ्नस्वरूपा बलात् प्राणानाशु हरन्ति सन्ति यदि ते क्षेमं कुतः प्राणिनाम्। तत्तेषां प्रशमाय कश्चन विधिश्चिन्त्यो भवद्भिर्बुधै-र्योग्यैरित्यभिधाय संसदि भरद्वाजं मुनिन्तेऽब्रुवन्। त्वं योग्यो भगवन्! सहस्रनयनं याहि हि शीघ्रं क्षमादायुर्वेदमधीत्य य-द्भयान्मुक्ता भवामो वयम्। इत्थं स मुनिभिर्योग्यैः प्रार्थितो विनयान्वितैः। भरद्वाजो मुनिश्रेष्ठो जगाम त्रिदशालयम्। तत्रेन्द्रभवनं गत्वा सुरर्षिगणमध्यगम्। दृष्टवान् वृत्रह-न्तारं दीप्यमानमिवानलम्। सोऽभिगम्य जयाशीर्भिर-भिनन्द्य सुरेश्वरम्। ऋषीणां वचनं सम्यक् श्रावयामास सत्तमः। व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः। तेषां प्रशमनोपायं यथावद्वक्तुमर्हसि। तमुवाच मुनिं साङ्गमायु-र्वेदं शतक्रतुः। जीवेद्वर्षसहस्राणि देही नीरुक्क्रियस्य यम्। सोऽनन्तपारन्त्रिस्कन्धमायुर्वेदं महामतिः। यथावदचिरा-त्सर्वं बुबुधे तन्मना मुनिः। तेनायुः सुचिरं लेभे भरद्वाजो निरामयम्। अन्यानपि मुनींश्चक्रे नीरुजः सुचिरायुषः।

तत्तन्त्रजनितज्ञानचक्षुषा ऋषयोऽखिलाः। गुणान् द्रव्याणि कर्माणि दृष्ट्वा तद्विधिमाश्रिताः। आरोग्यं लेभिरे दीर्घमायुश्च सुखसंयुतम्। आयुर्वेदोक्तविधिनाऽन्येऽपि स्युर्मुनयो यथा"।

अथ चरकप्रादुर्भावः "यदा मत्स्यावतारेण हरिणा वेद उद्धृतः। तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान्। अथर्वान्तर्गतं सम्यगायुर्वेदं च लब्धवान्। एकदा स महीवृत्तं द्रष्टुं चर इवागतः। तत्र लोकान् गदैर्ग्रस्तान्व्यथया परिपीड़ितान्। स्थलेषु बहुदुःखाढ्यान् म्रियमाणांश्च दृष्टवान्। तान् दृष्ट्वा तु दयायुक्तस्तेषां दुःखेन दुःखितः। अनन्तश्चिन्तयामास रोगोपशमकारणम्। संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह। यतश्चर इवायातो न ज्ञातः केनचिद्यतः। तस्माच्चरकनाम्नाऽसौ विख्यातः क्षितिमण्डले। स भाति चरकाचार्यो देवाचार्यो यथा दिवि। सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः। आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन्। मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम्। तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता। चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः। अथ धन्वन्तरिप्रादुर्भावः। एकदा देवराजस्य दृष्टिर्निपतिता भुवि। तत्र तेन नरा दृष्टा व्याधिभिर्भृशपीड़िताः। तान् दृष्ट्वा हृदयं तस्य दयया परिपीड़ितम्। दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह। धन्वन्तरे! सुरश्रेष्ठ! भगवन्! किञ्चिदुच्यते। योग्योऽभवसि भूतानामुपकारपरो भव। उपकाराय लोकानां केन किं न कृतं पुरा। त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान्। तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव। प्रतीकाराय रोगाणामायुर्वेदं प्रकाशय। इत्युक्त्वा सुरशार्दूलः सर्वभूतहितेप्सया। समस्तमायुषोवेदं धन्वन्तरिमुपादिशत्। अधीत्य चायुषोवेदमिन्द्राद्धन्वन्तरिः पुरा। आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि। नाम्ना ततोऽभवत् ख्यातो दिवोदास इति क्षितौ। बाल एव विरक्तोऽभूच्चचार च महत्तपः। यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम्। ततो धन्वन्तरिर्लोकैः काशीराजोऽभिधीयते। हिताय देहिनां स्वीया संहिता विहिताऽमुना। अयं विद्यार्थिनो लोकान् संहितां तामपाठयत्"। अथ सुश्रुतप्रादुर्भावः। अथ ज्ञानदृशा विश्वामित्रप्रभृतयोऽवदन्। अयं धन्वन्तरिः काश्यां काशीराजोऽयमुच्यते। विश्वामित्रो मुनिस्तेषु पुत्रं सुश्रुतमुक्तवान्। वत्स! वाराणसीं गच्छ विश्वेश्वरवल्लभाम्। तत्र नाम्ना दिवोदासः काशीराजोऽस्ति बाहुजः। स हि धन्वन्तरिः साक्षादायुर्वेदविदांवरः। आयुर्वेदं ततोऽधीष्व लोकोपकृतिहेतवे। सर्वप्राणिदयातीर्थमुपकारो महामखः। पितुर्वचनमाकर्ण्य सुश्रुतः काशिकाङ्गतः। तेन सार्द्धं समध्येतुं मुनिपुत्रशतं ययौ। अथ धन्वन्तरिं सर्वे वानप्रस्थाश्रमे स्थितम्। भगवन्तं सुरश्रेष्ठं मुनिभिर्बहुभिः स्तुतम्। काशीराजं दिवोदासं तेऽपश्यन् विनयान्विताः। स्वागतं च इति प्राह दिवोदासो यशोधनः। कुशलं परिपप्रच्छ तथाऽऽगमनकारणम्। ततस्ते सुश्रुतद्वारा कथयामासुरुत्तरम्। भगवन्मानवान्दृष्ट्वा व्याधिभिः परिपीड़ितान्। क्रन्दतो म्रियमाणांश्च जाताऽस्माकं हृदि व्यथा। आमयानां शमोपायं विज्ञातुं वयमागताः। आयुर्वेदं भवानस्मानध्यापयितुमर्हति। अङ्गीकृत्य वचस्तेषां नृपतिस्तानुपादिशत्। व्याख्यातं तेन ते सम्यग्जगृहुर्मुनयो मुदा। काशीराजं जयाशीभिरभिनन्द्य मुदान्विताः। सुश्रुताद्याः सुसिद्धार्था जग्मुर्गेहं स्वकं स्वकम्। प्रथमं सुश्रुतस्तेषु स्वतन्त्रं कृतवान् स्फुटम्। सुश्रुतस्य सखायोऽपि पृथक् तन्त्राणि तेनिरे। सुश्रुतेन कृतं तन्त्रं सुश्रुतं बहुभिर्यतः। तस्मात्तत् सुश्रुतं नाम्ना विख्यातं क्षितिमण्डले" चरके तु आयुर्वेदनिरुक्तिस्तत्प्रणेतृवंशोऽन्यथाभ्यधायि यथा "ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः। जग्राह निखिलेनादावश्विनौ तु पुनस्ततः। अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम्। ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्" ब्रह्मादिभारद्वाजान्तवंशमुक्त्वा ततो यथा भरद्वाजस्य प्राप्तिस्तदपि तत्रैवोक्तम्। यथा कतिचिन्नीरुपक्रम्य 'ब्रह्मज्ञानस्य निधयो यमस्य नियमस्य च। तपसस्तेजसा दीप्ता हूयमाना इवाग्नयः। सुखोपविष्टास्ते तत्र पुण्यां चक्रुः कथामिमाम्। धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्। रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च। प्रादुर्भूतो मनुष्याणामन्तरायो महानयम्। कः स्यात्तेषां शमोपाय इत्युक्त्वा ध्यानमास्थिताः। अथ ते शरणं शक्रं ददृशुर्ध्यानचक्षुषा। स वक्ष्यति शमोपायं यथावदमरप्रभुः। कः सहस्राक्षभवनं गच्छेत् प्रष्टुं शचीपतिम्। अहमर्थे नियुज्येयमत्रेति प्रथमं वचः। भरद्वाजोऽब्रवीत्तस्मादृषिभिः स नियोजितः। स शक्रभवनं गत्वा सुरर्षिगणमध्यगम्। ददर्श बलहन्तारं दीप्यमानमिवानलम्। सोऽभिगम्य जयाशीर्भिरभिनन्द्य सुरेश्वरम्। प्रोवाच भगवान्धीमान् ऋषीणां वाक्यमुत्तमम्। व्याधयो हि समुत्पन्नाः सर्वप्राणिभयङ्कराः। तद्ब्रूहि मे शमोपायं यथावदमरप्रभो!।

तस्मै प्रोवाच भगवानायुर्वेदं शतक्रतुः। पदैरल्पैर्मतिं बुद्ध्वा विपुलां परमर्षये। हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम्। त्रिसूत्रं शाश्वतं पुण्यं बुबुधे यं पितामहः। सोऽनन्तपारं त्रिस्कन्धमायुर्वेदं महामतिः। यथावदचिरात् सर्व्वं बुबुधे तन्मना मुनिः। तेनायुरमितं लेभे भरद्वाजः सुखान्वितम्। ऋषिभ्योऽनधिकं तच्च शशंसानवशेषयन्। ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम्। दीर्घमायुश्चिकीर्षन्तो वेदं वर्द्धनमायुषः। तेनर्षयस्ते ददृशुर्यथावज्ज्ञानचक्षुषा। सामान्यञ्च विशेषञ्च गुणान् द्रव्याणि कर्म च। समवायञ्च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः। लेभिरे परमं शर्म जीवितञ्चाप्यनश्वरम्। अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः। शिष्येभ्योदत्तवान् षड्भ्यः सर्व्वभूतानुकम्पया। अग्निवेशश्च भेडश्च जातूकर्णः पराशरः। हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः। बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः। तन्त्रस्य कर्त्ता प्रथममग्निवेशो यतोऽभवत्। अथ भेडादयश्चक्रुः स्वं स्वं तन्त्रं। कृतानि च। श्रावयामासुरात्रेयं सर्षिसङ्घं सुमेधसः। श्रुत्वा च सूत्रमर्थानामृषयः पुण्यकर्म्मणाम्। यथावत् सूत्रितमिति प्रहृष्टास्तेऽनुमेनिरे"। एवमायुर्वेदवंशस्तथा तस्य निरुक्तिस्तत्र दर्शिता यथा "हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्। मानञ्च तच्च यत्रोक्तमायुर्वेदः स उच्यते। शरीरेन्द्रियसत्त्वादिसंयोगधारिजीवितम्। नित्यगश्चानुबन्धश्च पर्य्यायैरायुरुच्यते। तस्यायुषः पुण्यतमो वेदो वेदविदां मतः। वक्ष्यते यन्मनुष्याणां लोकयोरुभयोर्हितः"।

एवं बहूनामायुर्वेदानां सत्त्वेऽपि तेषां विरलप्रचारतया लुप्तप्रायत्वात् सुश्रुतचरकयोर्लोके प्रचाराच्च तन्मतविषयास्तावत् संक्षेपेणोच्यन्ते। तत्र सुश्रुतस्यायुर्वेदस्याष्टाङ्गत्वम् तच्च अष्टाङ्गशब्दे ५२३ पृष्ठे शल्यं शालाक्यमित्यादि दर्शितम्। तच्छास्त्रस्य प्रयोजनं रोगचिकित्सा सा च पुरुषविषयैवेति पुरुषस्वरूपतदुत्पत्तिगर्भादिक्रमेणाभिधाय तदीयशरीरसंस्थानं रोगनिदानरोगोपशमनद्रव्यादीनि क्रमेणोक्तानि। तदेतत् संक्षेपेण सुश्रुते उक्तम् "अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते। यस्मिन् क्रिया सोऽधिष्ठानम्, कस्मात्? लोकस्य द्वैविध्यात्। लोको हि द्विविधः स्थावरो जङ्गमश्च। द्विविधात्मक एवाग्नेयः सौम्यश्च तद्भूयस्त्वात्। पञ्चात्मको वा। तत्र चतुर्व्विधो भूतग्रामः स्वेदजाण्डजोद्भिज्जजरायुजसंज्ञः। तत्र पुरुषः प्रधानं तस्योपकरणमन्यत्। तस्मात् पुरुषोऽधिष्ठानम्। तद्दुःखसंयोगा व्याधय इत्युच्यन्ते। ते चतुर्व्विधा आगन्तवः शारीरा मानसाः स्वाभाविकाश्चेति। तेषामागन्तवोऽभिघातनिमित्ताः। शारीरास्त्वन्नपानमूला वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः। मानसास्तु क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्य्यकामलोभप्रभृतय इच्छाद्वेषभेदैर्भवन्ति। स्वाभाविकाः क्षुत्पिपासाजरामृत्युनिद्राप्रभृतयः। त एते मनःशरीराधिष्ठानाः। तेषां संशोधनसंशमनाहाराचाराः सम्यक् प्रयुक्ता निग्रहहेतवः। प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च। स षट्सु रसेष्वायत्तो रसाः पुनर्द्रव्याश्रयाः। द्रव्याणि पुनरोषधयस्ताः द्विविधाः स्थावरा जङ्गमाश्च। तासां स्थावराश्चतुर्व्विधाः। वनस्पतयो वृक्षा वीरुध ओषधय इति। तास्वपुष्पाः फलवन्तो वनस्पतयः। पुष्पफलवन्तो वृक्षाः। प्रतानवत्यः स्तम्बिन्यश्च वीरुधः। फलपाकनिष्ठा ओषधय इति। जङ्गमास्त्वपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र पशुमनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः। तत्र स्थावरेभ्यस्त्वक्पत्रपुष्पफलमूलकन्दनिर्य्यासस्वरसादयः प्रयोजनवन्तो जङ्गमेभ्यश्चर्म्मनखरोमरुधिरादयः। पार्थिवाः सुवर्णरजतमणिमुक्तामनःशिलामृत्कपालादयः। कालकृतास्तु प्रवातनिवातातपच्छायाज्योत्स्नातमःशीतोष्णवर्षाहोरात्रपक्षमासर्त्त्वयनादयः संवत्सरविशेषाः। त एते स्वभावत एव दोषाणां सञ्चयप्रकोपप्रशमप्रतीकारहेतवः प्रयोजनवन्तश्च। भवन्ति चात्र। शारीराणां विकाराणामेष वर्गश्चतुर्व्विधः। चये कोपे शमे चैव हेतुरुक्तश्चिकित्सकैः। आगन्तवश्च ये रोगास्ते द्विधा निपतन्ति हि। मनस्यन्ये शरीरेऽन्ये तेषान्तु द्विविधा क्रिया। शरीरपतितानान्तु शारीरवदुपक्रमः। मानसानान्तु शब्दादिरिष्टो वर्गः सुखावहः। एवमेतत् पुरुषो व्याधिरौषधं क्रियाकाल इति चतुष्टयं समासेन व्याख्यातम्। तत्र पुरुषग्रहणात्तत्सम्भवद्रव्यसमूहो भूतादिरुक्तस्तदङ्गप्रत्यङ्गविकल्पाश्च त्वङ्मांससिरास्नायुप्रभृतयः। व्याधिग्रहणाद्वातपित्तकफशोणितसन्निपातवैषम्यनिमित्ताः सर्व्व एव व्याधयो व्याख्याताः। औषधिग्रहणात् द्रव्यगुणरसवीर्य्यविपाकप्रभावाणामादेशः। क्रियाग्रहणाच्छेद्यादीनि स्नेहादीनि च कर्म्माणि व्याख्यातानि। कालग्रहणात्सर्व्व-

क्रियाकालानामादेशः । भवति चात्र । वीजं चिकित्सितस्यैतत्समासेन प्रकीर्त्तितम् । सविंशमध्यायशतमस्य व्याख्या भविष्यति । तच्च सविंशमध्यायशतं पञ्चसु स्थानेषु । तत्र सूत्रस्थाननिदानशारीरचिकित्सितकल्पेषु अर्थवशात्संविभज्योत्तरे तन्त्रे शेषानर्थान् व्याख्यास्यामः"। चरके तु त्रिस्कन्धमित्युक्तम् तच्च हेतुलिङ्गौषधरूपस्कन्धत्रयं बोध्यम् । अयञ्चायुर्वेद अष्टादशविद्यान्तर्गतः । "आयुर्वेदो धनुर्वेदो गान्धर्व्वश्चेति ते त्रय" इति ५२५ पृष्ठे अष्टादशविद्याशब्दे उक्तवाक्यात् । अस्मिन् शास्त्रे द्विजानामेवाधिकारोनान्येषां यथाह सुश्रुतः । "अथातः शिष्योपनयनीयमध्यायं व्याख्यास्यामः । ब्राह्मणक्षत्रियवैश्यानामन्यतममन्वयवयःशीलशौर्य्यशौचाचारविनयशक्तिबलमेधाधृतिस्मृतिमतिप्रतिपत्तियुक्तं तनुजिह्वौष्ठदन्ताग्रमृजुवक्त्राक्षिनासं प्रसन्नचित्तवाक्चेष्टं क्लेशसहञ्च भिषक् शिष्यमुपनयेत् । अतो विपरीतगुणं नोपनयेत्" ।

विशेष वैश्यकन्यायामुत्पन्नस्याम्बष्ठस्यापि द्विजधर्म्मतया उपनयनादिसंस्कारवत्त्वात् "अम्बष्ठस्य चिकित्सितम्" इति मनूक्तेश्च तत्राधिकार इति भेदः । तत्रायं विवेकः द्विजमात्राणां चिकित्सितेऽधिकारेऽपि तत्तद्वृत्तिपक्षे तु तेषां निन्द्यतैव । "पूयं चिकित्सकस्यान्नमिति" मनुना निन्दितत्वात् । अम्बष्ठानां तु तद्वृत्तौ दोषाभावः मनुना "सूतानामश्वसारथ्यमम्बष्ठस्य चिकित्सितम्" इत्यनेन तेषां चिकित्सावृत्तिकत्वेनाभिधानात् अम्बष्ठस्य च यथोपनयनेऽधिकारस्तथाऽम्बष्ठशब्दे ३२८ पृष्ठे निरूपितम् । अतएव "भिषक् केशवनन्दनः । वोपदेवश्चकारेदं विप्रोवेदपदास्पदम्" । विप्रवोपदेवस्य पितुः केशवस्य भिषक्त्वं स्वयमेव तेनोक्तम् । तस्य निन्दितत्वे तच्चोच्येत इति द्रष्टव्यम् । अन्यत्र चायुर्वेदस्य चतुर्व्यूहत्वमुक्तं रोगरोगनिदानरोगनिवृत्तितदुपायरूपविषयचातुर्विध्यात् । "सचायुर्वेदः नरगजाश्वगोवृक्षाधिकारभेदेन पञ्चविधः तत्र नरायुर्वेदः चरकसुश्रुतादिर्लोकप्रसिद्धः गजायुर्वेदोऽश्वायुर्वेदोऽपि शालिहोत्रकृतः तयोश्च लोके प्रचाराभावात् अग्निपुराणतः सङ्गृह्यात्र तौ दर्श्येते तत्र गजायुर्वेदो यथा

"गजलक्ष्म चिकित्सां च लोमपाद ! वदामि ते" इत्युपक्रम्य "पाकलेषु तु सर्वेषु कर्त्तव्यमनुवासनम् । घृततैलपरीपाकं स्नानं वातविवर्ज्जितम् । स्कन्धेषु च क्रिया कार्य्या तथा पाकल-नृप ! । गोमूत्रं पाण्डुरोगेषु रजनीभ्यां घृतं द्विज ! । आनाहे तैलसिक्तस्य निषेकस्तस्य शस्यते । लवणैः पञ्चभिर्मिश्रा मतिपानाय वारुणी । विडङ्गत्रिफलाव्योषसैन्धवैः कवलान् कृतान् । मूर्च्छासु भोजयेन्नागं चौद्रतोयञ्च पाययेत् । अभ्यङ्गः शिरसः शूले नस्यञ्चैव प्रशस्यते । नागानां स्नेहकटुकैः पादरोगानुपक्रमेत् । पश्चात्कल्ककषायेण शोधनञ्च विधीयते । शिखितित्तिरिलावानां पिप्पलीमरिचान्वितैः । रसैः सम्भर्धयेन्नागं वेपथुर्यस्य जायते । बालं विल्वं तथा लोध्रं धातकी सितया सह । अतीसारविनाशाय पिण्डीं भुञ्जीत कुञ्जरः । नस्यं करग्रहे देयं घृतं लवणसंयुतम् । मागधीनागराजाजीयवागूर्मुद्गकान्विताः । उत्कर्णके तु दातव्यो वाराहश्च तथा-रसः । दशमूलकुलत्थाम्लकाकमाचीविपाचितम् । तैलमाग्नसंयुक्तं गलग्रहगदापहम् । अष्टाभिर्लवणैः पिष्टैः प्रसन्नं पाययेद्घृतम् । मूत्रसंशेखरावीजं कथितं त्रपुषस्य च । त्वग्दोषेषु पिबेच्चैवं वृषं वा कथितं द्विपः । गवां मूत्रविडङ्गानि कृमिकोष्ठेषु शस्यते । शृङ्गवेरकणाद्राक्षाशर्कराभिः शृतं पयः । क्षतक्षयकरं पानं तथा मांसरसः शुभः । अन्नोदनं व्योषयुतमरुचौ तु प्रशस्यते । त्रिवृद्रोधाग्निदन्त्यर्कश्यामाचीरैभपिप्पली । एतैर्गुल्महरः स्नेहः कृतश्चैव तथा रसः । भेदनद्रावणाभ्यङ्गस्नेहपानानुवासनैः । सर्वानेव समुत्पन्नान् विद्रवान् समुपाहरेत् । षष्टिकं मुद्गयूषेण सारदेन तथा पिबेत् । बालविल्वैस्तथा लेपः कुष्ठरोगे प्रशस्यते । विडङ्गेन्द्रयवौ हिङ्गु सरलं रजनीद्वयम् । पूर्वाह्णे पाययेत् पिण्डान् सर्व्वशूलोपशान्तये । प्रधानभोजने तेषां षष्टिकव्रीहिशालयः । मध्यमौ यवगोधूमौ शेषा दन्तिनि चाधमाः । यवश्चैव तथेक्षुर्नागानां बलवर्द्धनः । नागानां यवसं शुष्कं तथा वातप्रकोपणम् । मदक्षीणस्य नागस्य पयः पानं प्रशस्यते । दीपनीयैस्तथा द्रव्यैः शृतो मांसरसस्ततः । वायसः कुरभ-चोभौ काकोलूककुलाहविः । भवेत् क्षौद्रेण संयुक्तं पिण्डोयुक्ते मदाय हि । कटुमत्स्या विडङ्गानि क्षीरकोषातकीपयः । हरिद्रा चेति धूमोऽयं कुञ्जरस्य जयावहः । पिप्पली तण्डुलास्तैलं माध्वीकं माक्षिकन्तथा । नेत्रयोः परिषेकोऽयं दीपनीयः प्रशस्यते । पुरीषं च कषायाश्च तथा पारावतस्य च । क्षीरवृक्षकरीरश्च प्रसन्नायैरमञ्जनम् । अनेनाञ्जितनेत्रस्तु करोति कदनं रणे । उत्पलानि च नीलानि मुस्तं तगरमेव च । तण्डुलोदकपिष्टानि नेत्रनिर्वापणं परम् । नखवृद्धौ नखच्छेदः तैलसेकश्च मासशः । शय्यास्थानं भवेच्चास्य करीषैः पांशुभिस्तथा । शरन्निदा-

वयोः सेकः सर्पिषा च तथाप्यति" । इति गजायुर्वेदः

अथाश्वायुर्वेदः तत्रैव"अश्ववाहनसारं च वक्ष्येऽश्वस्य चिकित्सितम्" इत्युपक्रम्य "इयो निम्बव्हत्यौ च गुडूची च समाक्षिका । सिंहानकहरी पिण्डी स्वेदश्च शिरसस्तथा । हिङ्गुपुष्करमूलञ्च नागरं साम्लवेतसम् । पिप्पलीसैन्धवयुतं शूलघ्नमुष्णवारिणा । नागराऽतिविषा मुस्ता सानन्ता बिल्वमालिका । क्वाथमेषां पिबेद्वाजी सर्व्वातीसारनाशनम् । प्रियङ्गुलोध्रमधुभिः पिबेद्दधिरसं हयः । क्षीरं वा पञ्चकोलाद्यं कासनादिप्रशस्यते । विष्कम्भेषु च सर्व्वेषु श्रेय आदौ विशोषणम् । अभ्यङ्गावर्तनिस्नेहनस्यवस्तिक्रमः-स्मृतः । त्वरितानां तुरङ्गाणां पयसैव क्रियाक्रमः । लोध्रकरञ्जयोर्मूलं मातुलाङ्गाग्निनागराः । कुष्ठं हिङ्गुवचारास्ना लेपोऽयं शोथनाशनः । मञ्जिष्ठा मधुकं द्राक्षाबृहत्यौ रक्तचन्दनम् । त्रपुषीबीजमूलानि शृङ्गाटककशेरुकम् । अजापयःशृतमिदं सशीतं शर्करान्वितम् । पीत्वा निरशनोवाजी रक्तमेहात् प्रमुच्यते । मन्याहनुनिगालस्यशिरःशोफोगलग्रहः । अभ्यङ्गः कटुतैलेन तत्र तैरेव शस्यते । प्रत्यक्पुष्पी तथा वह्निः सैन्धवं सौरसो रसः । कृष्णाहिङ्गुयुतैरेभिः कृत्वा नस्यं न सीदति । निशे ज्योतिष्मती पाठा कृष्णाकुष्ठं वचा मधु । जिह्वास्तम्भे च लेपोऽयं गुडमूत्रयुतोहितः । तिलैर्यष्ट्या रजन्या च निम्बपत्रैश्च योजिता । क्षौद्रेण शोधनी पिण्डी सर्पिषा व्रणरोपणी । अभिघातेन खञ्जन्ति येऽप्यश्वास्तीव्रवेदनाः । परिषेकक्रिया तेषां तैलेनाशु रुजापहा । दोषकावाभिघाताभ्यां तनुजे त्रिड़्गिते तथा । शान्तिमेतृखाम्बुवस्ताभ्यां पक्वमव्रणमथ क्रमात् । अश्वत्थोडुम्बरप्लक्षमधूकवटवल्कलैः । प्रभूतनलिकाकाथः सुखोष्णो व्रणशोधनः । शताह्वा नागरं रास्नामञ्जिष्ठाकुष्ठसैन्धवैः देवदारुवचायुग्मरजनीरक्तचन्दनैः । तैलं सिद्धं कषायेण गुडूच्या पयसा सह । स्वञ्चयं वस्तिनस्ये च योज्यं सर्व्वत्र विङ्गिते । रक्तस्रावो जलौकाभिर्नैवान्ते पित्तरोगिणः । खादिरोडुम्बराश्वत्थकषायेण च साधितम् । धात्रीदुरालभातिक्ताप्रियङ्गुकुसुमैःसमैः । गुडूच्या च कृतः क्वाथः कल्कीयुक्तो विलम्बिते । उत्पाते शिशिरे चाथ्ये सप्तकषाये तथैव च । त्रिप्रकारित्रिदोषे च सद्योवेधनमिष्यते । गोशकृन्मल्लिकाकुष्ठरजनीतिलसर्षपैः । गवां मूत्रेण पिष्टैश्च मर्द्दनं कण्डुनाशनम् । शीतोमधुयुतः क्वाथो नासिकायां सशर्करः । रक्तपित्तहरः पानाद्यकण्डोस्तथैव च । सप्ताहे सप्ताहे देयमश्वानां लवणं दिने । तथा भुक्तवतां देया अतिपाते तु वारुणी । जीवनीयैः समधुरैर्मृद्वीकाशर्करायुतैः । सपिप्पलीकैः शरदि प्रतिपानं सपद्मकैः । विडङ्गपिप्पलीधान्यशताह्वालोध्रसैन्धवैः । सचित्रकैस्तुरङ्गाणां प्रतिपानं हिमागमे । लोध्रप्रियङ्गुकायुक्ता पिप्पली विश्वभेषजैः । सक्षौद्रैः प्रतिपानं स्यादसन्ते कफनाशनम् । प्रियङ्गुपिप्पलीलोध्रयष्ट्याह्वैः समहौषधैः । निदाघे सगुड़ा देया मदिरा प्रतिपानके । लोध्रकाढं सलवणं पिप्पल्योविश्वभेषजम् । भवेत्तैलयुतैरेभिः प्रतिपानं घनागमे । निदाघोद्धृतताहाराः शरत्सु हृष्टशोणिताः । प्राहविभक्तपुरीषाश्च पिबेयुर्वाजिनोघृतम् । पिबेयुर्वाजिनस्तैलं कफवायुधिकास्तु ये । स्नेहव्यापद्भवो येषां तेषां कार्य्यं विरूक्षणम् । त्र्यहं यवागूस्त्वा स्याद्भोजनं तक्रसंयुतम् । शरन्निदाघयोः सर्पिस्तैलं शीतवसन्तयोः । वर्षासु शिशिरे चैव वस्तौ यमकमिष्यते । गुरूं भिष्यन्दिभक्तानि व्यायामं स्नानमातपम् । वायुवेगञ्च वाहस्य स्नेहनीयस्य वर्जयेत् । स्नानं पानं सकृत्तृष्णमश्वानां सलिलागमे । अत्यर्थं दुर्दिने काले पानमेकं प्रशस्यते । युक्तं शीतातपे काले द्विः पानं प्रवनं सकृत् । ग्रीष्मे त्रिः स्नानपानं स्याच्चिरं तस्यावगाहनम् । निस्तुषाणाञ्च दातव्या यवानाञ्चतुराढकी । चणकव्रीहिमौद्गाणां, कलायान् वापि दापयेत् । अहोरात्रेण वाहस्य यवस्य तुला दश । अष्टौ शुष्कस्य दातव्या चतस्रोऽथ बुषस्य वा । दूर्व्वा पित्तं, यवः कासं, बुषञ्च श्लेष्मसंचकम् । नाशयत्यर्जुनःश्वासं, तथा शालिर्बलक्षयम् । वातिकाः पैत्तिकाश्चैव श्लेष्मजाः सान्निपातिकाः । न रोगा पीड़यिष्यन्ति दूर्व्वाहारं तुरङ्गमम् । द्वौ रज्जुबन्धौ दुष्टानां पश्चयोरुभयोरपि । पश्चाद्बन्धश्च कर्त्तव्यो दूरकीलव्यपाश्रयः । वसेयुस्ताकृते स्थाने कृतधूपनभूमयः । यवोपन्यस्तयवसाः सप्रदीपाः सुरक्षिताः । कृतबन्धाश्च कपयोधार्य्याश्चावसद्धे खगाः" इत्यश्वायुर्वेदः अधिकं जयदत्तकृतेऽश्वशास्त्रे दृश्यम् ।

अथ गवायुर्वेदः अग्निपु० "गवाश्चाद्याश्च शान्तिं हि चिकित्सात्र तथा शृणु" इत्युपक्रम्य । "शृङ्गामयेषु धेनूनां तैलं दद्यात् ससैन्धवम् । शृङ्गवेरवलामांसीकल्कसिद्धं समाक्षिकम् । कर्णमूलेषु शूलेषु मञ्जिष्ठाहिङ्गुसैन्धवैः । सिद्धं तैलं प्रदातव्यं रसोनेनाथ वा पुनः । बिल्वमूलमपामार्गो धातकी च सपाटला । कुटजं दन्तमूलेषु लेपोद्दन्तशूलनाशनः । दन्तशूलहरैर्द्रव्यैर्घृतं

यापि विपाचितम्। मुखरोगहरं ज्ञेयं जिह्वारोगेषु सैन्धवम्। शृङ्गवेरं हरिद्रे द्वे त्रिफला च गलग्रहे। हृच्छूले वस्तिशूले च वातरोगक्षये तथा। त्रिफला घृतमिश्रा च गवां पाने प्रशस्यते। अतीसारे हरिद्रे द्वे पाठाञ्चैव प्रदापयेत्। सर्वेषु कोष्ठरोगेषु तथा शाखागतेषु च। शृङ्गवेरञ्च भार्गीं च कासश्वासे च दापयेत्। दातव्या भग्नसन्धाने प्रियङ्गुर्लवणान्विता। तैलं वातहरं पित्ते मधुयष्टिविपाचितम्। कफे व्योषञ्च समधु संपिष्टकरजोऽक्षजे। तैलाक्तं हरितालञ्च भग्नक्षतक्षतं ददेत्। माषास्तिलाः सगोधूमाः पशुक्षीरं घृतन्तथा। एषां पिण्डी सलवणा वत्सानां पुष्टिदा त्वियम्। बलप्रदा वृषाणां स्यात् ग्रहनाशाय धूपकः। देवदारुवचामांसीहिङ्गुगुग्गुलसर्षपाः। ग्रहादिगदनाशाय एष धूपोगवां हितः। घण्टा चैव गवां कार्य्या धूपेनानेन धूपिता। अश्वगन्धातिलैः शृङ्गेन गौः क्षीरिणी भवेत्"। इति गवायुर्वेदः

अथ वृक्षायुर्वेदस्तत्रैव "वृक्षायुर्वेदमाख्यास्ये प्लक्षश्चोत्तरतः शुभः। प्राग्वटोयाम्यतश्चाम्र आप्ये ऽश्वत्थः क्रमेण तु। दक्षिणादिसमुत्पन्नाः समीपे कण्टकिद्रुमाः। उद्यानं गृहवासे स्यात्तिलानश्वथ पुष्पितान्" इत्युपक्रम्य "अरिष्टाशोकपुन्नागाः शिरीषाः सप्रियङ्गवः। अशोककदलीजम्बुस्तथा बकुलदाडिमाः। सायं प्रातस्तु घर्म्मान्ते शीतकाले दिनान्तरे। वर्षर्त्तौ तु भुवः शोषे सेक्तव्या रोपिताद्रुमाः। उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम्। स्थानात् स्थानान्तरं कार्य्यं वृक्षाणां द्वादशान्तरम्। विफलाः स्युर्घनाद्वृक्षाः शस्त्रेणादौ हि शोधनम्। विडङ्गघृतपङ्काक्तान् सेचयेच्छीतवारिणा। फलनाशे कुलत्थैश्च माषैर्मुद्गैर्यवैस्तिलैः। घृतशीतपयःसेकः फलपुष्पाय सर्व्वदा। आविकाजशकृच्चूर्णं यवचूर्णं तिलानि च। गोमांसमुदकञ्चेति सप्तरात्रं निधापयेत्। तत्सेकः सर्व्ववृक्षाणां फलपुष्पादिवृद्धिदः। मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनः। विडङ्गतण्डुलोपेतं मत्स्यं मांसं हि दोहदम्। सर्व्वेषामविशेषेण वृक्षाणां रोगमर्द्दनम्"। वृहत्संहितोक्तो वृक्षायुर्वेद आरामशब्दे दृश्यः। आयुर्वेदमधीते वेद वा उक्था० ठक्। आयुर्वैदिकः आयुर्वेदाभिज्ञे त्रि०। आयुर्वेदे साधु कथा० ठक्। आयुर्वैदिकः आयुर्वेदे साधौ त्रि०। [ स्त्रियां ङीप्।

**आयुर्वेदमय** पु० आयुर्वेदेन प्रचुरः प्राचुर्य्ये मयट्। धन्व-

**आयुर्वेदिन्** त्रि० आयुर्वेदोवेद्यतया विद्यतेऽस्य इनि। आयुर्वेदाभिज्ञे चिकित्साशास्त्रस्य वेत्तरि वैद्ये।

**आयुषज्** त्रि० आयुषा सजते सस्ज–क्विप् षत्वम्। आयुःसम्बन्धे "सोमः पवत आयुषक्" ऋ०६,२५,५। "पवस्व देवायुषगिन्द्रं गच्छतु ते मदः" ऋ०६,६३,२२।

**आयुष्क** पु० आयुषा कायति कै–क। आयुषा प्रकाशमाने प्रशस्तायुष्के।

**आयुष्काम** त्रि० आयुः कामयते काम–णिङ्–अण् उप०स०। आयुरभिलाषुके "अथात आयुष्कामीयं रसायनम्" इति सुश्रुतः। "आयुष्कामेन वप्तव्यं न जातु परयोषिति" मनुः।

**आयुष्कृत्** त्रि० आयुः करोति कृ–क्विप् तुक्०। आयुर्वृद्धिकरे रसरसायनादौ आयुर्वृद्धिशब्दे ७७५ पृष्ठे तान्युक्तानि। ट। आयुष्कर इत्यप्यत्र त्रि० स्त्रियां ङीप्।

**आयुष्टोम** पु० आयुः साधनं स्तोमः शाक०त० षत्वम्। १आयुःसाधने ऋक्समुदायात्मके स्तोमभेदे २तत्स्तोमयुक्तेयागभेदे च।

**आयुष्मत्** त्रि० आयुर्विद्यतेऽस्य मतुप्। १चिरजीविनि "आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने" "आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम्" मनुः स्त्रियां ङीप्। २विष्कम्भावधिके तृतीये योगे पु०। "विष्कम्भः प्रीतिरायुष्मान्" ज्यो०त०। आयुरिति शब्दोऽस्त्यस्य मतुप्। ३आयुःशब्दयुक्ते मन्त्रभेदे "आयुष्मानिति शान्त्यर्थं जप्त्वा चैव समाहितः" कृ०प०। तच्च आयुष्यसूक्तशब्दे दृश्यम्। भवदादिषु पाठात् तस्मिन् परे प्रथमार्थेऽपि तसिलादि। ततआयुष्मान् तत्रायुष्मान्।

**आयुष्य** त्रि० आयुः प्रयोजनमस्य "खर्गादिभ्यो यत्" पा०भा० यत्। आयुःसाधने आयुर्वृद्धिशब्दोक्ते रसरसायनद्रव्यकर्म्मादौ। "आयुष्यं प्राङ्मुखोभुङ्क्ते यशस्यं दक्षिणामुखः" "इदं यशस्यमायुष्यमिदं निःश्रेयसं परम्" "धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वातिथिपूजनम्" इति च मनुः "आयुष्योऽहवा यस्यैव आत्मनिष्क्रयणो भवति" शत०ब्रा०।

**आयुष्यसूक्त** न० कर्म्मधा०। "आयुष्मानिति शान्त्यर्थं जप्त्वा तत्र समाहितः" कृ०प० उक्ते "आभ्युदयिकश्राद्धादिषु जप्ये सूक्तभेदे तच्च सूक्तम्। "आयुर्विश्वायुर्विश्वमायुरशीमहि। प्रजात्वष्टधार निधेह्यस्मे शतं जीवेम शरदां वयन्ते। आयुषे पवस्व वर्च्चसे मे पवस्व विदुः पृथिव्या दिवोजनित्राः शृखन्त्वापोऽध्वक्षरन्तो सोमोक्षोदुगाय ममायुषे मम ब्रह्मवर्चसाय यजमानस्यार्द्धा अस्य राज्याय" भव-

देवभट्टकृतम् अत्रासुष्ये यत्र षड्गुन्नं संख्यायेनामोक्षेत्वम् । सामवेदिनाश्चैतत् पाठ्यं वेदभेदेऽन्यदाकरे ज्ञेयम् ।

**आयुस्** न० इण–उसि णिच्च । जीवितकाले "आयुरारोग्यमतुलं देहि देवि ! नमोऽस्तु ते" देवीस्तुतिः। "आयुर्देहातिगैः पीतं रुधिरं च पतत्रिभिः" रघुः । "चतुर्थमायुषोभागमुषित्वाद्यं गुरौ द्विजः । द्वितीयमायुषोभागं कृतदारो गृहे वसेत्" मनुः "समाहरत्तुदिवमायुषः क्षये" रघुः । "आयूंषि त्वत्तु निर्भिद्य प्राभञ्जनिरमोचयत्" भट्टिः। "अष्टमं चायुषः स्थानमष्टमादष्टमञ्च यत्" इति पराशरोक्तेः जन्मलग्नावधिके अष्टमस्थाने तृतीयस्थाने च तद्विवेच्यम् । स्थानविशेषे च ग्रहविशेषयोगदृष्ट्यादिवशात् आयुर्विशेषः अष्टमस्थाने चिन्तनीयपदार्थसहितः "सर्वा० चिन्ता० दर्शितः। यथा "मरणाज्जीवितमरणं शुभस्थानं च मरणहेतुञ्च । अन्तसुखमरणदेशं परिभवमपि चिन्तयेत् प्राज्ञः। रन्ध्रेश्वरे पापयुतेऽन्यराशावल्पायुरस्येति वदन्ति षष्ठे । तत्रापि लग्नेश्वरयोगजाते त्वल्पायुरस्येति वदन्ति सन्तः । स्वोच्चसंस्थे सति रन्ध्रनाथे दीर्घायुराहुर्मुनयोमहान्तः । मन्देन वा चिन्त्यमशेषमायुः स्वक्षेत्रमित्रोच्चगृहस्थितेन । रन्ध्रेश्वरेणापि युते विलग्ननाथे रिपौ वा व्ययराशियुक्ते । षष्ठान्त्यपे वा यदि लग्नयुक्ते दीर्घायुरस्येति शुभैश्चिन्तयेत् । कर्मेश्वरेणापि विचिन्त्यमायुर्दीर्घं स्वतुङ्गस्वोच्चयुतेन तेन । केन्द्रस्थितैः कर्मविलग्नरन्ध्रनाथैस्तथैवायुरुदाहरन्ति । प्रोक्तग्रहैर्व्योमचरैस्त्रिभिर्वा समानुजैः केन्द्रगतैस्तथैव । स्वोच्चत्रिकोणादिगतैर्विशेषाद्वदन्ति दीर्घायुरुदारचित्ताः । चतुरस्रे शुभैर्युक्ते लग्नेशे शुभसंयुते । गुरुणा दृष्टिसंयोगे पूर्णमायुर्विनिर्दिशेत् । केन्द्रान्विते विलग्नेशे गुरुशुक्रसमन्विते । ताभ्यां निरीक्षिते वापि दीर्घमायुर्विनिर्दिशेत् । त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः । लग्नेशे बलसंयुक्ते पूर्णमायुर्विनिर्दिशेत् । षट्सप्तरन्ध्रभावेषु शुभग्रहसहितेषु च । त्रिषडायेषु पापेषु पूर्णमायुर्विनिर्दिशेत् । रन्ध्राधिपे विलग्नस्थे गुरुशुक्रेक्षिते युते । लग्नेशे केन्द्रराशौ वा दीर्घमायुर्विनिर्दिशेत् । रन्ध्राधिपे तु केन्द्रस्थे गुरुशुक्रेक्षिते युते । लग्नेशे बलसंयुक्ते दीर्घमायुर्विनिर्दिशेत्। लग्नाधिपो यदा केन्द्रे लग्नादेकादशालये । सर्वग्रहकृतं रिष्टमेकोऽपि विलयं नयेत् । उच्चान्वितैस्त्रिभिः खेटैर्लग्नरन्ध्रेशसंयुतैः । रन्ध्रे पापविहीनैश्च दीर्घमायुर्विनिर्दिशेत्। रन्ध्रस्थैस्त्रिभिः खेटैः स्वोच्चमित्रस्वगेहगैः । लग्नेशे बलसंयुक्ते दीर्घमा०। पारावतादिभागस्थाः पापाः सर्वे शुभास्तथा । केन्द्रत्रिकोणनिलयाः पूर्णमायुर्विनिर्दिशेत् । षष्ठाष्टमव्यये पापा लग्नेशे दुर्बले यदि । अल्पायुरनपत्यो वा शुभदृग्योगवर्जिते । क्रूरषष्ठांशके वापि रन्ध्रेशे भानुजेऽपि वा । पापान्विते पापदृष्टे त्वल्पमायुर्विनिर्दिशेत्। चतुष्टयगते पापे शुभदृष्टिविवर्जिते । बलहीने विलग्नेशे त्वल्पमायुर्विनिर्दिशेत् । व्ययारी पापसंयुक्तौ शुभदृष्टिविवर्जितौ । क्रूरषष्ठांशगौ वापि स्वल्पमायुर्विनिर्दिशेत् । आयुर्योगास्त्रिधा प्रोक्ताः स्वल्पमध्यचिरायुषः । द्वात्रिंशत्पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् । सप्तत्याः प्राक्, ततः पूर्णमायुरत्र वदन्ति हि । अल्पायुर्दिननाथस्य शत्रौ लग्नाधिपे यदा । समत्वे मध्यमायुः स्यान्मित्रे दीर्घायुरादिशेत् । बलहीने विलग्नेशे जीवे केन्द्रत्रिकोणगे । षष्ठाष्टमव्यये पापे मध्यमायुरुदाहृतम् । शुभे केन्द्रत्रिकोणस्थे शनौ बलसमन्विते । षष्ठे वाप्यष्टमे पापे मध्यमायुरुदाहृतम् । लग्ने त्रिकोणे केन्द्रे वा मध्यमायुश्च निश्चिते । अल्पायुर्योगजातानां विपत्पाके मृतिप्रदः । मध्यमे प्रत्यरिभेशान्मृतिं दद्याद्विशेषतः । अष्टमेशदशा कष्टा पूर्णायुर्योगसंभवे । योगायुरिति निश्चित्य जातस्यैवं वदेद्बुधः । आयुर्विलग्नाधिपती बलेन हीनौ धराभृन्नहितेशयुक्तौ । युद्धे मृतिं तस्य वदन्ति तज्ज्ञाः शस्त्रेण वा तन्मरणं विशेषात् । रन्ध्राङ्गनाथौ यदि वा रिपुस्थौ राह्वन्वितौ केतुयुतौ सहन् । ग्रहेन युद्धे मृतिमाहुरार्याः शस्त्रेण वा तन्मरणं विशेषात् । रन्ध्राङ्गनाथौ यदि वा रिपुस्थौ राह्वन्वितौ केतुयुतौ समन्दौ । तद्भुक्तिकालेऽथ वा विपाके शस्त्रेण चौरैर्मरणं प्रयाति । रन्ध्राङ्गपौ वाहननाथयुक्तौ तस्मात् मृतिं तस्य वदन्ति तज्ज्ञाः । मृतिं त्वजीर्णाद्गुरुसंयुतौ तौ देहेशजीवौ रिपुगावजीर्णात् । लग्नेश्वरे वाहननाथयुक्ते वागीश्वरेणापि युते त्वजीर्णात् । देहेश्वरे वाहनवित्तभावनाथान्विते वा मरणं त्वजीर्णात् । रन्ध्रेशयोगान्मरणं दशायामन्तर्दशायामथ वा वदन्ति । पित्रादिभावाधिपयोगदृष्ट्या पित्रादिकानां मरणं तथैव । मृत्युक्षपौ भानुसुतेन युक्तौ दुःस्थानगौ वा विषभक्षणेन । राहुध्वजाभ्यां सहितौ च दुःस्थावुद्बन्धनात्तस्य मृतिं वदन्ति । षष्ठेश्वरे भानुसुते सराहुकेतौ मृगाद्भीतिमुदाहरन्ति । जीवेन युक्ते शशभीतिमस्य जातस्य चन्द्रेण युतेऽश्वभीतिम्। सूर्यान्विते तादृशभानुपुत्रे मृगात्तु-व्रङ्गात् शुनकात् सभौमे । षष्ठस्थिते भानुसुतेऽपि चैवं विना स्वतुङ्गस्वगृहे सखेटे । सुखेशभाग्येशविलग्ननाथास्त्रिकोणगाः केन्द्रगताश्च सर्वे । भुक्तौ यदा तत्परिपाककाले

पित्रा सहैवाशु मृतिश्च मातुः । रन्ध्रे शशाङ्के फणिनाथयुक्ते हीने त्वपस्मारयुतः समन्दे । तत्र स्थिते हीनबले शशाङ्के पिशाचपीड़ा च जलाद्द्विपाच्च । भौमाहि-मन्दान्यतमेन युक्ते क्षीणे शशाङ्के निधनस्थितेऽपि । दुःस्थे त्वपस्मारभयान्मृतिःस्यात्पिशाचबाधादथ वा मृतिस्तु । रन्ध्रे सराहौ यदि वा सकेतौ चातुर्थिका-पीड़नमाशु तस्य । रन्ध्रेश्वरेणापि युते तथैव क्रूरादि-षष्ठांशयुते तु सत्यम् । नीचस्थिते वाऽमरनायके वा षष्ठाष्टमस्थे यदि पापदृष्टे । राज्ञां प्रकोपान्मरणं विहुष तत्पीडया वित्तविनाशमेति" । अधिकमल्पायुः-शब्दे ४१२पृष्ठे उक्तम् । अस्य पुरुषादिपूर्व्वपदकत्वे अच् समा० "पुरुषायुषजीविन्यः" रघुः त्र्यायुषम् मनुष्यायुषमित्यादौ वा० अच् समासान्तः ।

आयुर्योगश्च सर्व्वा०चि०दर्शितः यथा "अथायुर्योगः । केचिद्योगं प्रशंसन्ति दशां केचिद्वदन्ति हि । तद्विना चायुषां ज्ञानं न शक्यन्तु मनीषिभिः । त्रिविधश्चायुषो योगः स्वल्पायुर्मध्यमोत्तमः । द्वात्रिंशत्पूर्व्वमल्पन्तु तदूर्ध्वं मध्यमं भवेत् । आ सप्ततेस्तदूर्ध्वन्तु दीर्घायुरिति सम्मतम् । उत्तमायुः शतादूर्ध्वं स्वनेः शंसन्ति तद्विदः । आ द्वादशाब्दाज्जन्तूनामायुर्ज्ञानं न शक्यते । जपहोमचिकित्साद्यैर्बालरक्षां तु कारयेत् । पित्रोर्दोषैर्मृताः केचित्केचिद्बालग्रहैरपि । अपरे रिष्टयोगाच्च त्रिविधाःकालमृत्यवः । जन्मतः प्रयत्नेनैव बालानां पुष्टिवर्द्धनम् । कथयेदशेषं तु तथा योगोनिरूपितः । अल्पायुर्लग्नपे भानौ शत्रौ मध्यं तु मध्यमे । मित्रे लग्नेश्वरे तस्य दीर्घमायुरुदाहृतम् । अल्पायुर्योगजातस्य विपत्तारे मृतिं वदेत् । जातस्य मध्यमे योगे प्रत्यरौ तु मृतिर्भवेत् । दीर्घायुर्योगजातानां वधभे तु मृतिर्भवेत् । त्रिषु योगेषु सर्व्वेषु प्रत्येकं त्रिविधं भवेत् । अल्पायुरल्पमध्यं तु पूर्णायुस्त्रिविधं स्मृतम् । मध्यमादल्पमध्यं तु पूर्णायुस्त्रिविधं भवेत् । दीर्घायुषोऽल्पमध्ये तु पूर्णायुस्त्रिविधं भवेत् । एवन्नवविधं प्रोक्तमायुषां तु विनिर्णयः । पञ्चम्यारादृशा मृत्युं दद्यात् षष्ठी गुरोस्तथा । शनेश्चतुर्थान्मृत्युः स्याद्दृशा राहोश्च सप्तमी । विपद्भेशदशा कष्टा प्रत्यरीशदशा तथा । वधभेशदशा कष्टा पापा स्यादशुभेक्षिता । नीचारातिविमूढस्था विपत्प्रत्यरिनैधनाः । दशा दद्युर्मृतिं तस्य पापैर्युक्ता विशेषतः । राशिसन्धिषु ये जातास्ते बाला मृतजीविनः । पापदृष्टो युतो वाऽपि निःसंशयमृतिप्रदः । गण्डान्तेषूद्भवो मर्त्यः पितृमातृवधावहः । यदि जीवेत्स-ण्पाक्तो गजवाजिसमन्वितः । हतोयगौ भानुनिशाकरौ वा क्रूरर्क्षगौ क्रूरनिरीक्षितौ च । व्याधिं नरस्यापि वदन्ति तज्ज्ञास्त्रिवर्षमात्रं त्वविलम्बमेतत् । चन्द्रात् करेणामरनाथभौमौ कुजादथो वा मरणं दशाहात् । उद्यद्रेखाश्च जामित्रे यस्य स्याद्दारुणो ग्रहः । क्षीणचन्द्रे विलग्नस्थे सद्योहरति जीवितम् । आपोक्लिमे स्थिताः सर्व्वे ग्रहा बलविवर्जिताः । एकमासं द्विमासं वा तस्यायुः समुदाहृतम् । विलग्नाधिपतिर्नीचे निधने चार्कसंयुते । हृचक्रेण जीवनं विन्देन्मृतप्रायो भविष्यति । केतोरुदयः पूर्व्वे पश्चादुल्काग्निपवननिर्घातः । रौद्रे सति च मुहूर्त्ते प्राणैर्वियुज्यते जन्तुः । ग्रहणपरिवेशकाले जातः पापान्विते विलग्नस्थे । लग्नेशे बलहीने जीवति पक्षत्रयं त्रिमासं वा । अंशाधिपतिर्जन्मपतिर्लग्नपश्चास्तमुपागतो यस्य । लग्नावसानमरणं भवेत् कतिपयाहेन । सन्धिचतुष्टयकाले जाते मृत्युं समादिशेत्तज्ज्ञः । पापयुते दृष्टे वा शीघ्रैः सौम्यैरदृष्टयुते । राहौ केन्द्रे पापयुक्तेक्षिते वा क्षिप्रं नाशं याति सौम्यैरदृष्टे । पापैः केन्द्रे वार्कलग्ने त्रिकोणे सौम्यैः षष्ठे चाष्टमेऽन्त्ये वदन्ति । जातः क्षीणे शीतगौ लग्नसंस्थे पापैर्दृष्टे नाशमाशु प्रयाति । उच्चस्थत्वे मेषराशिं च हित्वा राहुर्युक्तस्त्वेष्वपि प्राणनाशः । लग्नात्स्वान्त्यौ पापयुक्तौ यदि स्तस्तत्षष्ठान्त्ये वा विनश्येत् क्षणेन । लग्नाद्द्यूने चाष्टमे पापचारैः सोमे क्षीणे त्वष्टमाब्दं च जीवेत् । केन्द्रैश्चन्द्रात्पापयुक्तैरसौम्यैः स्वर्गं यानं प्रोच्यते वत्सरेण । जन्माधिपे लग्नगे क्रूरयुक्ते पञ्चत्वाकिंचाष्टमे जीववर्गे । षष्ठे वर्षे द्वादशे वाऽष्टमे वा सप्तौ राशेर्जातको मृत्युमेति । षष्ठेऽष्टमे वा हिमगौ च यस्य क्षीणे चन्द्रे पापयुक्तेऽथ वापि । सौम्यैर्दृष्टे त्वष्टमाब्दश्च जीवेत् पापैः सौम्यैर्मिश्रितैस्तादृशं स्यात् । जीवे विलग्ने मिथुने तुलायां शुक्रेण युक्ते शशिसूनुना च । पापैर्दृष्टे मृत्युराशिस्थिते वा जीवेद्वर्षं चाष्टमं चैव बालः । लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः पापान्तःस्थे निधनहिबुके द्यूनयुक्ते च चन्द्रे । एवं लग्ने भवति मदनच्छिद्रसंस्थे च पापे माता सार्धं यदि च न शुभैर्वीक्षितः शक्तिमद्भिः । राहुग्रस्ते शीतरश्मौ विलग्ने क्रूरे युक्ते चाष्टमे भूमिपुत्रे । माता सार्द्धं चन्द्रवद्भास्करेण ग्रस्तो वा तेनाशु मृत्युं प्रयाति । अस्तङ्गते दिनपतौ रविजे विलग्ने भौमेऽथ वापि निधनं व्रजति त्रिवर्षात् । एवं स्थितेऽपि हिमगावशुभैरदृष्टे राहुग्रहे च नियत

भवतोह चाटो । वृहस्पतिर्भौमस्टेऽष्टमस्थः स्वर्येन्दुभौमार्कजऽष्टमूर्त्तिः। अन्यैस्त्रिभिर्गतवहृष्टिहीनो लोकान्तरं प्रापयति प्रसूतम् । वक्रो शनिर्भौमगृहं प्रयातश्चन्द्रे च षष्ठे च चतुष्टये वा । कुजेन संप्राप्तबलेन दृष्टो वर्षद्वयं जीवयति प्रजातम् । सौरिस्मरस्थे यदि वा विलग्ने जन्मस्थलग्ने शशिवृश्चिके वा । सौम्येषु केन्द्रोपगतेषु सद्यो जातस्य मृत्युर्यवनोपदिष्टः । नोचस्थे देवपूज्ये तु भौमक्षेत्रगतेऽथ वा । सन्धिस्थेऽपि जातस्तु मासान्मृत्युं स गच्छति । नक्षत्रसन्धौ तिथिराशिसन्धावेकत्र तावत्प्रसवस्थितत्वात् । जातस्य मृत्युं समुपैति सद्यः शुक्रेऽह्नि जीवेदिति नन्दिकोक्तम् । षष्ठ्यां जातश्चार्कलग्ने कुजे वा गण्डान्ते वा मृत्युयोगेऽथ वापि । भौमे हन्ति प्राणिनां तत्क्षणेन जीवेक्षिते चेन्न भवेत् प्रजातः । भौमोदये तद्दिवसे क्षणेन्दौ होरेश्वरे वारतुते शशाङ्के । जातः सुखी ब्रह्मपदं प्रयाति प्रसाधनाद्यैरिह मन्त्रविद्या । वर्गोत्तमे लग्नगते कुलीरे केन्द्रे गुरौ भूमिसुते कलत्रे । सिंहासनांशे भृगुजे विशेषाद्वसायनाद्यैरमितायुरेति । कर्कान्त्यलग्ने सबुधे कलत्रे जीवे यदा गोपुरभागयुक्ते । स्वङ्गंशके वा दिननाथपुत्रे जातस्त्वसंख्यायुरुपैति मृत्युः । देवलोकांशके शुक्रे केन्द्रस्थे धरणोसुते । सिंहासनांशके जीवे केन्द्रे जातस्त्वसंख्यकः । उत्तमांशे भृगौ केन्द्रे शनौ पारावतांशके । स्वर्गलोके गुरौ केन्द्रे त्वौषधाधारसंज्ञकः । गोपुरांशे गुरौ केन्द्रे शुक्रे पारावतांशके । त्रिकोणे कर्किलग्ने तु युगान्तं स तु जीवति । चापांशे कर्किलग्ने च तस्मिन् देवेन्द्रपूजिते । त्रिचतुर्भिर्ग्रहैः केन्द्रे जातो ब्रह्मपदं लभेत् । तृतीयैकादशे शुक्रे गोपुराख्यांशकान्विते । हर्ये वर्गोत्तमे लग्ने ब्रह्मणः परमं पदम् । लग्ने शुक्रे गुरौ कामे कर्मांशेऽमरनायके । चापमेषांशके लग्ने जातो याति परं पदम् । पञ्चमे बुधसंयुक्ते गोपुराख्यांशकान्विते । गुरौ षष्ठे विलग्नेऽस्मिन् जातो ब्रह्मपदं लभेत् । केन्द्रे गुरौ लाभगतेऽर्कपुत्रे धने रवौ मन्दसुते कलत्रे । भाग्ये धरासूनुयुतेऽत्र जातो युगान्तकालं समुपैति मर्त्यः । त्रिकोणगो जीवबुधौ विशेषाल्लग्ने वृषे तत्र युते धराजे । निशाकरे गोपुरभागयुक्ते जातः सहस्रद्वयवर्षमेति । घने सिते जन्म वदाङ्गि काले केन्द्रे गुरौ वा शशिभे विलग्ने । द्वारे कुजे भानुसुते सुखस्थे जातस्तु जीवेदयुतान्दसंख्यम् । जीवमन्दारशुक्राणामन्योन्यं केन्द्रसंभवे । त्रिकोणे वा यदा याते जातस्त्वयुतवत्सरः । शुभैर्युते चतुष्केन्द्रे पापैः षट्त्रिभवान्वितैः । सिंहलग्ने यदा जातो जीवेत् षडयुतानि सः । कर्कादिस्थैर्ग्रहैः सर्वैर्गुरुचन्द्रादिभिर्यदा । शश्वन्नैः परमोच्चस्थैर्मुनितुल्यो भवेन्नरः । शन्यादिभौमपर्यन्ता लग्नादौ खचराः स्थिताः । वैशेषिकांशसंयुक्ता जातस्त्वमरसन्निभः । आकल्पं जीवति नरो मृगे लग्ने कुजादिकाः । रव्यन्ताः खचराः सर्वे स्वोच्चे जीवेऽह्नि जन्मनि । मेषान्त्यलग्ने सगुरौ भृगौ वा निशाकरे गोधनमध्यमांशे । सिंहासनांशे यदि वा धराजे जातस्त्वसंख्यायुरुपैति मर्त्यः । स्थिरे रवौ सोमसुतेन युक्ते चन्द्रे वृषस्थे मिथुने च शुक्रे । गुरौ कुलीरे यदि वा विलग्ने शनौ तुलायां मुनिसाम्यमेति । देवलोकांशके मन्दे भौमे पारावतांशके । सिंहांशके गुरौ लग्ने जातो मुनिसमो भवेत् । मेषलग्ने रवौ माने जीवे स्वोच्चसमन्विते । त्रिषडायगते पापे जातो मुनिसमो भवेत् । इति चिन्तामणौ प्रोक्ता आयुःसंख्या मनीषिणाम् यदुक्तं पूर्व्वकैः सर्व्वैस्तद्देव मयाऽधुना" । पारिजातांशाद्यास्तु सर्व्वा०चिन्त दर्शिताः । "मूलत्रिकोणकोणोच्चस्वर्क्षकेन्द्रोत्तमांशकाः । सप्तवर्गोद्भवाः स्वांशस्वाधिमित्रांशमित्रकाः । वर्गा इमे दश प्रोक्ताः पूर्व्वाचार्य्यैर्महर्षिभिः । वर्गद्वयादिसंयोगे पारिजातादिसंज्ञकाः । उत्तमं तु त्रिवर्गैक्यं चतुर्वर्गे तु गोपुरम् । वर्गपञ्चकसंयोगे सिंहासनमिहोच्यते । वर्गद्वयं पारिजातं षट्कं पारावतांशकम् । सप्तकं देवलोकाख्यं स्वर्गलोकमथाऽष्टकम् । ऐरावतन्तु नवकं फलं तेषां पृथक् पृथक्" । जातकपद्धतौ तु रिष्टभङ्गसहितायुर्योगविशेषः गजाद्यायुःप्रमाण सहित उक्तः यथा

"लग्नसप्तमगौ पापौ चन्द्रः पापयुतो यदा । शुभपक्षे मै दृष्टः स्याद्चिरान्मृत्युकारकः । क्षीणेन्दौ व्ययगे पापैर्लग्नाष्टमनिवासिभिः । केन्द्राणि शुभहीनानि यदि स्युः तदा मृतिः । पापयुक्तः शशी लग्नसप्ताष्टद्वादशस्थितः । केन्द्रात्यस्थानगैः सौम्यैर्न दृष्टो मृत्युदायकः । पापे राश्यन्तगे सन्ध्याकाले होरा विधोर्यदा । मृत्युर्वा स्याच्चन्द्रपापैर्युते सर्व्वचतुष्टये । कर्कान्त्यगे चक्रपूर्व्वे पश्चार्द्धे पापदृष्युते । मृत्युर्वाष्टमकेन्द्रस्थैः पापैः क्षीणे विधौ तनौ । षष्ठद्वादशगः पापैरथवा द्वयष्टसंस्थितैः । लग्ने वा पापमध्यस्थे सप्तमे वा मृतिं व्रजेत् । चन्द्रे षष्ठेऽष्टमे वापि मरणं पापवीक्षिते । शुभैरवेक्षिते वर्षाष्टकान्मिश्रैः स्यादर्द्धतः । शुभैः षडाष्टगे पापैर्वलिभिः प्रविलोकिते । मासान् मृत्युः

सप्तमे वा लग्नेशे पापसंयुते। तुर्य्यसप्ताष्टगचन्द्रः पापान्तःस्थो मृतिप्रदः। क्षीण एवं लग्नगोऽपि पापे सप्ताष्टगे सति। शुभादृष्टे विधौ भान्ते केन्द्रकोणोपगैः खलैः। मृतिराशु सचन्द्रेऽङ्गे पापैर्वा सप्तमैः स्थितैः। सपापोऽङ्गे विधौ यस्तो समात्मकाशियोर्वधः। भौमेऽष्टमे रवावेवंविधे लग्ने तु शस्त्रजः। चन्द्रार्कौ वा तनौ पापैः सबलैरष्टकोणगैः। शुभैर्न युक्तदृष्टश्चेन्मरणं बालकस्य हि। लग्नाष्टनवमान्त्येषु कुजचन्द्रार्कसूर्य्यजैः। बलिष्ठगुर्व्वदृष्टैः स्याच्चजातस्य मरणं ध्रुवम्। पापयुक्तो विधुर्लग्नसप्तकोणान्त्यमृत्युगः। मरणाय बलिष्ठोच्चस्निकयुग् वीक्षितो न चेत्। योगकर्त्तबलिष्ठेनाधिष्ठिते च बली विधुः। खभे वा लग्नभेऽङ्गान्तः पापदृष्टस्तदा मृतिः। मेषालिगो गुरुर्मृत्यौ विशुक्रैरवलोकितः। त्रिवर्षान्मृत्युदो मन्दः स सूर्य्येन्दुर्नवाब्दतः। हस्ताऽस्रे सौम्यपापैर्लग्नेऽन्नाविषुभिर्मृतिः। बुधः सार्कविधुः पापदृष्ट एकादशाब्दतः। लग्नेशो रिपुगोराशिमितैर्वर्षैर्मृतिप्रदः। मासैर्द्रेक्काणनाथस्तु दिवसैरंशनायकः। लग्ने शनिः षोडशाहात् पापदृष्टोऽथ संयुतः। मासादिशुद्धौ वर्षान्तु शिशोर्मृत्युकरः स्मृतः। लग्नेऽर्ककुजमन्दाश्चेत् षष्ठे वा सप्तमे विधुः। क्षीणो न दृष्टो गुरुणा सप्तवर्षान् मृतिप्रदः। राशिलग्नेश्वरावस्तं यातौ षष्ठाष्टरिष्फगौ। राश्यङ्गतुल्यवर्षैस्तु मरणाय शिशोः स्मृतौ। राहुःपापेक्षितः केन्द्रसंस्थो मृत्युकरः शिशोः। वत्सरैर्दशभिः केचित् स्मृतः षोडशवत्सरैः। एकोऽपि पापो मृत्युस्थः शत्रुगेहे खलेक्षितः। अमरार्भकमप्येवं वर्षान्मृत्युवशं नयेत्। शुक्रः कर्कमृगारस्थो व्ययाष्टारिस्थितैः खलैः। सर्वैः प्रदृष्टः षड्वर्षैर्जातस्यारिष्टकारकः। बुधः कर्कस्थितः षष्ठेऽष्टमे वा चन्द्रवीक्षितः। वर्षैश्चतुर्भीरिष्टस्य कारकः कथितो बुधैः। सूर्य्यः कर्म्मणि शन्यारश्चेत्तत्स्थः पापवीक्षितः। मरणाय शिशोः केतूदयभं जन्मभं तथा। षष्ठाष्टमस्थाः शुभदाश्च पापाधर्म्मात्मजस्थाश्च यदा भवन्ति। पापैः प्रदृष्टा न शुभा प्रदृष्टा वर्षाष्टकान्मृत्युकराः प्रदिष्टाः। लग्नपः पापयुक् द्यूनेरिष्टकृद्धोधनस्थितः। नवाब्दैः सबलोऽङ्गांशे व्यये चेन्दोः खलेक्षितः। सूर्य्यशुक्रशनीनाञ्च योगो भवति जन्मनि। गुरुदृष्टोऽपि रिष्टाय प्रदिष्टो नववत्सरैः। गजैरङ्कैर्नवनेत्रैर्द्विपक्षैः शरैरेककेनाब्धिभिर्वह्निनेत्रैः। गजाक्षैर्भवैः खगसंस्थैश्च दिग्भिर्विधोर्मेषतो भागवर्षैर्मृतिः स्यात्। कर्कलग्ने गुरौ सेन्दौ शशुक्रौ केन्द्रगौ यदा। त्रिलाभारिगताः शेषा दद्यायुरमितं स्मृतम्। आयुषो योगजस्यापि रिष्टं बाधकमत्र हि। तद्बाधकोरिष्टभङ्गः स चेद्बलिकतो भवेत्। शुभाश्चन्द्रात् षष्ठसप्ताष्टमस्था नो खलान्विताः। रिष्टनाशाय गदिताः प्रणामोन्दहरैर्यथा। शुभद्रेक्काणगैः सर्वैः शुभैर्युक्तोविधुः शिशोः। रिष्टहा परिपूर्णो वा द्वादशांशे शुभे स्थितः। सम्पूर्णाङ्गः शर्व्वरीनायकश्चेत् सर्वैर्दृष्टोरिष्टहा संप्रदिष्टः। उच्चस्थो वा मित्रभागस्थितो वा चन्द्रारिष्टं नाशयेत् शुक्रदृष्टः। केन्द्रे शशुरुशुक्राणामेकः कोणेऽथ वीर्य्यवान्। अरिष्टनाशकः केन्द्रे पापोऽपि परमोच्चगः। मित्रराशिगताः पापाः शुभाश्च नवपञ्चमाः। नाशं नयन्ति रिष्टानि कृष्णोरिष्टाहरं यथा। बली जन्मेश्वरोमित्रशुभदृष्टो हि रिष्टहा। स सर्वग्रहदृष्टो हि सद्यो रिष्टविनष्टिकृत्। वर्गोत्तमे शुभाः सर्वे खभे चारिष्टहानिदाः। शुभवर्गगता दृष्टाः सद्दृष्टा रिष्टच्छिदाः। कृत्तिकापुष्यदास्रेषु चन्द्रोवाच त्रिपुष्करे। पूर्णोवर्गोत्तमगतः स्वीयरिष्टविनाशकृत्। मेषकर्कगतश्चन्द्रः केन्द्रे शुभनिरीक्षितः। अशुभं नाशयत्याशु हरिर्मत्तगजं यथा। शुक्लपक्षे निशायाञ्चेत् कृष्णे जन्म यदा दिवा। शुभाशुभेक्षितश्चन्द्रः षष्ठाष्टस्थोऽवकः शिशोः। व्यतीपातेऽथ गण्डान्ते वैधृतौ रिष्टिमध्ययोः। जातस्य रिष्टं नास्त्येव स्मृतिकर्तुर्मतं यथा"। इति चन्द्ररिष्टभङ्गः। "सवीर्य्ये गुरौ लग्नगे राशियुक्ते विनाशं तदन्याशुभं सर्व्वमेति"। बलिष्ठैः शुभैश्चाशुभैर्वीर्य्यहीनैः शुभर्क्षं तनुः सद्ग्रहैर्वीक्षितं वा। त्रिषड्कादशे राहुः शुभदृष्टो यदा भवेत्। मृत्युनाशाय स विभुर्मृत्युञ्जय इवापरः। मेषोक्षकर्कलग्नस्थो राहुश्चाप्युदयो मुनेः। अगस्त्यस्य मुनीनां च सप्तानां रिष्टनाशकः। शीर्षोदयगतैः सर्वैर्भृगुदोषो विनश्यति। पक्षैः कुखदैश्चापि नभोदिग्वह्निशायुभिः। मृत्युभं ग्रहहीनं चेत् केन्द्रे पूर्णबले शुभे। त्रिंशद्वर्षं तदायुः स्याच्चत्वारिंशच्छुभेक्षिते। गुरुः स्वभे स्वद्रेक्काणे सप्तविंशतिवर्षकम्। स्वभस्थिताः शुभाश्चन्द्रे स्वोच्चेऽङ्गस्थे खषट्समाः। लग्ने गुरौ शुभैः केन्द्रस्थितैस्त्वौ यशोऽन्विते। सप्ततिर्द्वं भवेदायुरष्टाङ्के तद्वीक्षिते। कर्कोऽङ्गगे गुरौ कोणस्थितैः सर्वशुभग्रहैः। अशीतिरायुषः काष्ठा केन्द्रे शुक्रे शतं समाः। सूर्य्ये बलिष्ठे पित्र्यायश्चन्द्रे स्यात्तु निसर्गजम्। लग्नेऽशायुर्जीवबले त्रिकेऽस्मिन् जीवशर्म्मजम्। मन्देन्दुतत्त्वतिथ्यर्कतिथिखगनखा रवेः। वर्षायुष्ये ग्रहे नीचे त्र्यंशं मध्येऽनुपाततः। नक्षत्रद्वादशतयो विंशत्खाब्धा निस-

मेजाः। समाः स्वर्यात् पूर्ववत् स्वादेभ्योऽप्यायुरथांशजे। इष्टपड्लवाप्तिभ्रा दशभक्ताश्च यत् फलम्। वर्षमासादिकं ज्ञेयं भवेद्द्वादशभिः स्फुटम्। जैने परायुः सप्तांशो यच्चायुः परमोऽङ्गगे। लग्नमाससमन्वायुर्दद्याद्दोर्वर्युतं च भैः। सर्वमर्द्धं व्ययोऽशः प्राद्‌ः पश्चाङ्कभागकौ। व्ययादाम विभीयेत पापे त्वर्द्धं शुभप्रदे। एकभावगतानां यो बली भागहरस्तु सः। अङ्गमस्तं गतोऽन्ति त्वक्त्वा शुक्रशनैश्चरौ। कुजन्यवक्ता यत्नुमस्यैस्त्रिभागो नाश्यते निजः। लग्ने सपापैः लग्नस्थनवांशप्राद्ध्रायुषः। अष्टोत्तरः शतांशः स्याद्दीनः सौम्येक्षिते दलम्। उच्चचक्रगताश्चिन्नं द्विघ्नं स्वांशोत्तमादिगाः। दद्युरायुर्यद्दाप्ते चेदृष्टौ नित्यं स्वरादिगाः। अपि त्रिद्वेत्र कगुणदाः केन्द्रादाविति केचन। लग्ने सपापे ह्यानियों नाशार्द्धमथायुषि। हानिद्वयेऽधिकैव स्याद्बलोऽप्येवं वराहगोः। खाक्ताःपरायुर्नरदन्तिनोः १२० स्वाद्दन्ता ३२ हयानां च जिना २४ इमादेः। खरोष्ट्रयोस्तत्समाः २५ शुनोऽर्का १२ व्याघ्राद्यजादेर्द्विन्द्रपाः १६ परायुः। आयुर्द्दात् समानीय स्वस्वपूर्णायुषा हतम्। स्वपरायुर्हृतं स्पष्टं गजाद्यायुर्भवेदिति। दीपस्नेहादियुक्तोऽपि यथा वाते विनश्यति। अजितेन्द्रियतापथ्यैरेवमायुर्विनश्यति"।

अत्र हयानां दन्तैर्यथायुर्ज्ञानं तथोक्तमश्वशब्दे ५०२ पृष्ठे जयदत्तकृतादश्वशास्त्रात्तद्विशेषोऽत्र गन्तव्यः। दन्ताद्दान्विंशद्वर्षा इतीह क्रम्

इत्थमायुश्च सदाचारादेव, अपथ्याजितेन्द्रियादिभ्यस्तु आयुःसत्त्वेऽपि नाशः उक्तजातकपद्धतिवचनात् अतएव भा० आनु०प० १०४ अध्याये सदाचारादितएव आयुर्वृद्धिरुक्ता "शतायुरुक्तः पुरुषः शतवीर्य्यश्च जायते। कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह!। आयुष्मान् केन भवति अल्पायुर्वाऽपि मानवः। केन वा लभते कीर्त्तिं केन वा लभते श्रियम्। तपसा ब्रह्मचर्य्येण जपहोमैस्तथौषधैः। कर्म्मणा मनसा वाचा तन्मे ब्रूहि पितामह!। भीष्म उवाच। अत्र तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि। अल्पायुर्य्येन भवति दीर्घायुर्वाऽपि मानवः। येन वा लभते कीर्त्तिं येन वा लभते श्रियम्। यथा वर्त्तयन् पुरुषः श्रेयसा सम्प्रयुज्यते। आचाराल्लभते ह्यायुराचाराल्लभते श्रियम्। आचाराल्लभते कीर्त्तिं पुरुषः प्रेत्य चेह च। दुराचारो हि पुरुषो नेहायुर्विन्दते महत्। त्रसन्त्यस्मान्ति भूतानि तथा परिभवन्ति च। तस्मात् कुर्य्यादिहाचारं यदीच्छेद्भूतिमात्मनः। अपि पापशरीरस्य आचारो हन्त्यलक्षणम्। आचारलक्षणो धर्म्मः सन्तश्चारित्रलक्षणाः। साधूनाञ्च यथा वृत्तमेतदाचारलक्षणम्। अप्यदृष्टं श्रवादेव पुरुषं धर्म्मचारिणम्। भूतिकर्म्माणि कुर्व्वाणं तं जनाः कुर्व्वते प्रियम्। ये नास्तिका निष्क्रियाश्च गुरुशास्त्राभिलङ्घिनः। अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः। विशीला भिन्नमर्य्यादा नित्यं सङ्कीर्णमैथुनाः। अल्पायुषो भवन्तीह नरा निरयगामिनः। सर्व्वलक्षणहीनोऽपि समुदाचारवान्नरः। श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति। अक्रोधनः सत्यवादी भूतानामविहिंसकः। अनसूयुरजिह्मश्च शतं वर्षाणि जीवति। लोष्टमर्द्दी तृणच्छेदी नखखादी च यो नरः। नित्योच्छिष्टः सङ्कुसुको नेहायुर्विन्दते महत्। ब्राह्मे मुहूर्त्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्। उत्थायाचम्य तिष्ठेत पूर्व्वां सन्ध्यां कृताञ्जलिः। एवमेवापरां सन्ध्यां समुपासीत वाग्यतः। नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कदाचन। नोपसृष्टं न वारिस्थं न मध्यं नभसोगतम्। ऋषयो नित्यसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन्। तस्मात्तिष्ठेत्सदा पूर्व्वां पश्चिमाञ्चैव वाग्यतः। ये न पूर्व्वामुपासीरन् द्विजाः सन्ध्यां न पश्चिमाम्। सर्व्वांस्तान् धार्मिको राजा शूद्रकर्म्माणि कारयेत्। परदारा न गन्तव्याः सर्व्ववर्णेषु कर्हिचित्। नहीदृशमनायुष्यं लोके किञ्चन विद्यते। यादृशं पुरुषस्येह परदारोपसेवनम्। यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्म्मिताः। तावद्वर्षसहस्राणि नरकं पर्य्युपासते। प्रसाधनञ्च केशानामञ्जनं दन्तधावनम्। पूर्व्वाह्णएव कार्य्याणि देवतानाञ्च पूजनम्। पुरीषमूत्रे नोदीक्षेताधितिष्ठेत् कदाचन। नातिकल्यं नातिसायं न च मध्यन्दिने स्थिते। नाज्ञातैः सह गच्छेत नैकोन वृषलैः सह। पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च। वृद्धाय भारतप्ताय गर्भिण्यै दुर्ब्बलाय च। प्रदक्षिणं प्रकुर्व्वीत परिज्ञातान् वनस्पतीन्। चतुष्पथान् प्रकुर्व्वीत सर्व्वानेव प्रदक्षिणान्। मध्यन्दिने निशाकाले अर्द्धरात्रे च सर्व्वदा। चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च। उपानहौ च वस्त्रञ्च धृतमन्यैर्न धारयेत्। ब्रह्मचारी च नित्यं स्यात् पादं पादेन नाक्रमेत्। अमावास्यां पौर्णमास्यां चतुर्द्दश्याञ्च सर्व्वशः। अष्टम्यां सर्वपक्षाणां ब्रह्मचारी सदा भवेत्।। वृथा मांसं न खादेत पृष्ठमांसं तथैव च। आक्रोशं परिवादञ्च पैशुन्यञ्च विवर्ज्जयेत्। नारुन्तुदः स्याच

न्यधर्मवादी न हीनतः परमभ्याददीत । ययाऽस्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोक्याम् । वाक्सायका वदनान्निष्पतन्ति तैराहतः शोचति रात्र्यहानि । परस्य नो मर्म्मसु निपतन्ति तान् पण्डितो नावसृजेत् परेषु । रोहते सायकैर्विद्धं वनं परशुना हतम् । वाचा दुरुक्तया विद्धं न संरोहति वाक्क्षतम् । कर्णिनालिकनाराचान्निर्हरन्ति शरीरतः । वाक्शल्यस्तु न निर्हर्त्तुं शक्यो हृदिशयो हि सः । हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् विगर्हितान् । रूपद्रविणहीनांश्च सत्त्वहीनांश्च नाक्षिपेत् । नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम् । द्वेषस्तम्भाभिमानञ्च तैक्ष्ण्यञ्च परिवर्ज्जयेत् । परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैनं निपातयेत् । अन्यत्र पुत्राच्छिष्याच्च शिष्टार्थं ताड़नं स्मृतम् । न ब्राह्मणान् परिवदेत् नक्षत्राणि न निर्द्दिशेत् । तिथिं पक्षस्य न ब्रूयात्तथाऽस्यायुर्न रिष्यते । कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः । पादप्रक्षालनं कुर्य्यात् स्वाध्याये भोजने तथा । त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते । संयावं कृशरं मांसं शष्कुलीं पायसन्तथा । आत्मार्थं न प्रकर्त्तव्यं देवार्थन्तु प्रकल्पयेत् । नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा । वाग्यतो दन्तकाष्ठञ्च नित्यमेव समाचरेत् । न चाभ्युदितशायी स्यात् प्रायश्चित्ती तथा भवेत् । मातापितरमुत्थाय पूर्व्वमेवाभिवादयेत् । आचार्य्यमथ वाप्यन्यं तथायुर्व्विन्दते महत् । वर्ज्जयेद्दन्तकाष्ठानि वर्ज्जनीयानि नित्यशः । भक्षयेच्छास्त्रदृष्टानि पर्व्वस्वपि विवर्ज्जयेत् । उदङ्मुखश्च सततं शौचं कुर्य्यात् समाहितः । अकृत्वा पादशौचञ्च नाचरेद्दन्तधावनम् । अकृत्वा देवपूजाञ्च नाभिगच्छेत् कदाचन । अन्यत्र तु गुरुं वृद्धं धार्मिकं वा विचक्षणम् । अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः । न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन । उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च । प्राक्शिरास्तु स्वपेद्विद्वानथवा दक्षिणाशिराः । न भग्ने नावशीर्णे च शयने प्रस्वपीत च । नान्तर्द्धाने न संयुक्ते न च तिर्य्यक्कदाचन । न चापि गच्छेत् कार्य्येण समयाद्वाऽपि नास्तिकैः । आसनन्तु पदाकृष्य न प्रसज्जेत्तथा नरः । न नग्नः कर्हिचित् स्नायाच्च निशायां कदाचन । स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः । न चानुलिम्पेदस्नात्वा स्नात्वा वासो न निर्द्धुनेत् । न चैवार्द्राणि वासांसि नित्यं सेवेत मानवः । स्रजश्च नावकृष्येत न बहिर्द्धारयीत च । उदक्यया च संभाषां न कुर्व्वीत कदाचन । नोत्सृजेत पुरीषञ्च क्षेत्रे ग्रामस्य चान्तिके । उभे मूत्रपुरीषे तु नाप्सु कुर्य्यात् कदाचन । अन्नं बुभुक्षमाणस्तु त्रिर्मुखेन स्पृशेदपः । भुक्त्वा चान्नं तथैव त्रिर्द्विः पुनः परिमार्ज्जयेत् । प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् । प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् । । आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । धन्यं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः । अग्निमालभ्य तोयेन सर्व्वान् प्राणानुपस्पृशेत् । गात्राणि चैव सर्व्वाणि नाभिं पाणितले तथा । नाधितिष्ठेत्तुषं जातु केशभस्मकपालिकाः । अन्यस्य चाप्यवस्नातं दूरतः परिवर्ज्जयेत् । शान्तिहोमांश्च कुर्व्वीत सावित्राणि च धारयेत् । निषण्णश्चापि खादेत न तु गच्छन् कदाचन । मूत्रं नोत्तिष्ठता कार्य्यं न भस्मनि न गोव्रजे । आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् । आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् । त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन । अग्निं गां ब्राह्मणञ्चैव तथा ह्यायुर्न हीयते । त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन । सूर्य्याचन्द्रमसौ चैव नक्षत्राणि च सर्व्वशः । ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । अभ्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते । अभिवादयेत वृद्धांश्च दद्याच्चैवासनं स्वयम् । कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात् । न चासीतासने भिन्ने भिन्नकांस्यञ्च वर्ज्जयेत् । नैकवस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति । स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् । उच्छिष्टो न स्पृशेच्छीर्षं सर्व्वे प्राणास्तदाश्रयाः । केशग्रहं प्रहारांश्च शिरस्येतान् विवर्ज्जयेत् । न संहताभ्यां पाणिभ्यां कण्डूयेतात्मनः शिरः । न चाभीक्ष्णं शिरःस्नायात्तथाऽस्यायुर्न रिष्यते । शिरःस्नातश्च तैलेन नाङ्गं किञ्चिदपि स्पृशेत् तिलपिष्टं न चाश्नीयात्तथाऽस्यायुर्न रिष्यते । नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन । वाते च पूतिगन्धे च मनसाऽपि न चिन्तयेत् । अत्र गाथा यमोद्गीताः कीर्त्तयन्ति पुराविदः । आयुरस्य निकृन्तामि प्रजास्तस्याददे तथा य उच्छिष्टः प्रद्रवति स्वाध्यायञ्चाधिगच्छति । यश्चानध्यायकालेऽपि मोहादभ्यस्यति द्विजः । तस्य वेदः प्रणश्येत आयुश्च परिहीयते । तस्माद्युक्तो ह्यनध्याये नाधीयीत कदाचन । प्रत्यादित्यं प्रत्यनलं प्रति गाञ्च प्रति द्विजान् । ये मेहन्ति च पन्थानं ते भवन्ति

शतायुषः। उभे मूत्रपुरीषे तु दिवा कुर्य्यादुदङ्मुखः। दक्षिणाभिमुखो रात्रौ तथा ह्यायुर्न रिष्यते। त्रीन् कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः। ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः। दहत्याशीविषः क्रुद्धो यावत् पश्यति चक्षुषा। क्षत्रियोऽपि दहेत् क्रुद्धो यावत् पश्यति तेजसा। ब्राह्मणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च। तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः। गुरुणा चैव निर्ब्बन्धो न कर्त्तव्यः कदाचन। अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर!। सम्यङ्मिथ्याप्रवृत्तेऽपि वर्त्तितव्यं गुराविह। गुरुनिन्दा दहत्यायुर्म्मनुष्याणां न संशयः। दूरादावसथान्मूत्रं दूरात् पादावसेचनम्। उच्छिष्टोत्सर्ज्जनं चैव दूरे कार्य्यं हितैषिणा। रक्तमाल्यं न धार्य्यं स्यात् शुक्लं धार्य्यन्तु पण्डितैः। वर्ज्जयित्वा तु कमलं तथा कुवलयं प्रभो!। रक्तं शिरसि धार्य्यन्तु तथा वानेयमित्यपि। काञ्चनी याऽपि माला या न सा दुष्यति कर्हिचित्। स्नातस्य वर्णकं नित्यमार्द्रं दद्याद्विशाम्पते!। विपर्य्ययं न कुर्व्वीत वाससो बुद्धिमान्नरः। तथा नान्यधृतं धार्य्यं न चापदशमेव च। अन्यदेव भवेद्वासः शयनीये नरोत्तम!। अन्यद्रथ्यासु देवानामर्च्चायामन्यदेव हि। प्रियङ्गुचन्दनाभ्याञ्च बिल्वेन तगरेण च। पृथगेवानुलिम्पेत केशरेण च बुद्धिमान्। उपवासञ्च कुर्व्वीत स्नातः शुचिरलङ्कृतः। पर्व्वकालेषु सर्व्वेषु ब्रह्मचारी सदा भवेत्। समानमेकपात्रे तु भुञ्जेन्नान्नं जनेश्वर!। आलीढया परिहृतं न शयीत कदाचन। तथा नोद्धृतसाराणि प्रोक्षितं नाप्रदाय च। न संक्लिष्टो मेधावी नाशुचेर्न च सक्तु च। प्रतिषिद्धान्न धर्म्मेषु भक्ष्यान् भुञ्जीत पृष्ठतः। पिप्पलञ्च वटञ्चैव शणशाकं तथैव च। उडुम्बरं न खादेच्च भवार्थी पुरुषोत्तम!। आव्यं गव्यं तथा मांसं मायूरञ्चैव वर्ज्जयेत्। वर्ज्जयेच्छुष्कमांसञ्च तथा पर्य्युषितञ्च यत्। न पाणौ लवणं विद्वान् प्राश्नीयान्न च रात्रिषु। दधिसक्तून् भुञ्जीत वृथामांसञ्च वर्ज्जयेत्। सायं प्रातश्च भुञ्जीत नान्तराले समाहितः। वालेन तु न भुञ्जीत परश्राद्धं तथैव च। वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन। भूमौ सदैव नाश्नीयान्नानासीनो न शब्दवत्। तोयपूर्व्वं प्रदायान्नमतिथिभ्यो विशेषतः। पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः। समानमेकपङ्क्त्यान्तु भोज्यमन्नं नरेश्वर!। विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने। पानीयं पायसं सक्तुं दधि सर्पिर्म्मध्वपि।

निरस्य शेषमेतेषां न प्रदेयन्तु कस्यचित्। भुञ्जानो मनुजव्याघ्र! नैव शङ्कां समाचरेत्। दधि चाप्यनुपानं वै कर्त्तव्यञ्च भवार्थिना। आचम्य चैकहस्तेन परिस्राव्यं तथोदकम्। अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत्। पाणिं मूर्द्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः। ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः। अद्भिः प्राणान् समालभ्य नाभिं पाणितले तथा। स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना। अङ्गुष्ठस्यान्तराले च ब्राह्मं तीर्थमुदाहृतम्। कनिष्ठिकायाः पश्चात्तु देवतीर्थमिहोच्यते। अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत!। तेन पित्र्याणि कुर्व्वीत स्पृष्ट्वापो न्यायतस्तथा। परापवादं न ब्रूयान्नाप्रियञ्च कदाचन। न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना। पतितैस्तु कथां नेच्छेद्दर्शनञ्च विवर्ज्जयेत्। संसर्गं न च गच्छेत तथायुर्विन्दते महत्। न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम्। न चास्नातां स्त्रियं गच्छेत्तथायुर्विन्दते महत्। स्वे स्वे तीर्थे समाचम्य कार्य्ये समुपकल्पिते। त्रिः पीत्वापो द्विः प्रमृज्य कृतशौचो भवेन्नरः। इन्द्रियाणि सकृत् स्पृश्य त्रिरभ्युक्ष्य च मानवः। कुर्व्वीत पित्र्यं दैवञ्च वेददृष्टेन कर्म्मणा। ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव!। पवित्रञ्च हितञ्चैव भोजनाद्यन्तयोस्तथा। सर्व्वशौचेषु ब्राह्मेण तीर्थेन समुपस्पृशेत्। निष्ठीव्य तु तथा क्षुत्वा स्पृष्ट्वापो हि शुचिर्भवेत्। वृद्धो ज्ञातिस्तथा मित्रं दरिद्रो यो भवेदपि। गृहे वासयितव्यास्ते धन्यमायुष्यमेव च। गृहे पारावता धन्याः शुकाश्च सहसारिकाः। गृहेष्वेते तु पापाय तथा वै तैलपायिकाः। उद्दीपकाश्च गृध्राश्च कपोता भ्रमरास्तथा। निविशेयुर्यदा तत्र शान्तिमेव तदाचरेत्। अमङ्गल्यानि चैतानि तथोत्क्रोशा महात्मनाम्। महात्मनोऽतिगुह्यानि न वक्तव्यानि कर्हिचित्। अगम्याश्च न गच्छेत राज्ञः पत्नीं सखीं तथा। वैद्यानां बालवृद्धानां भृत्यानाञ्च युधिष्ठिर!। बन्धूनां ब्राह्मणानाञ्च तथा शारणिकस्य च। सम्बन्धिनाञ्च राजेन्द्र! तथायुर्विन्दते महत्। ब्राह्मणस्थपतिभ्याञ्च निर्म्मितं यन्निवेशनम्। तदावसेत् सदा प्राज्ञो भवार्थी मनुजेश्वर!। सन्ध्यायां न स्वपेद्राजन्! विद्यां न च समाचरेत्। न भुञ्जीत च मेधावी तथायुर्विन्दते महत्। नक्तं न कुर्य्यात् पित्र्याणि भुक्त्वा चैव प्रसाधनम्। पानीयस्य क्रिया नक्तं न कार्य्या भूतिमिच्छता। वर्ज्जनीयाश्च वै नित्यं सक्तवो निशि भारत!। शेषाणि चाव-

दारानि पानीयञ्चापि भोजने । सौहित्यं न च कर्त्तव्यं रात्रौ न च समाचरेत् । द्विजच्छेदं न कुर्व्वीत भुक्त्वा न च समाचरेत् । महाकुले प्रसूताञ्च प्रशस्तां लक्षणैस्तथा । वयस्थाञ्च महाप्राज्ञः कन्यामावोढुमर्हति । अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं ततः । पुत्त्राः प्रदेया ज्ञानेषु कुलधर्मेषु भारत ! । कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते । पुत्त्रा निवेश्याश्च कुलाद्भृत्या लभ्याश्च भारत ! । शिरःस्नातोऽथ कुर्व्वीत दैवं पित्र्यमथापि वा । नक्षत्रे न च कुर्व्वीत यस्मिन् जातो भवेन्नरः । न प्रोष्ठपदयोः कार्य्यं तथाग्नेये च भारत ! । दारुणेषु च सर्व्वेषु प्रत्यरिञ्च विवर्ज्जयेत् । ज्योतिषे यानि चोक्तानि तानि सर्व्वाणि भारत ! । प्राङ्मुखः श्मश्रुकर्माणि कारयेत् सुसमाहितः । उदङ्मुखो वा राजेन्द्र ! तथायुर्व्विन्दते महत् । परिवादं न च ब्रूयात्परेषामात्मनस्तथा । परिवादो ह्यधर्माय प्रोच्यते भरतर्षभ ! । वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम ! । समार्षां व्यङ्गिताञ्चैव मातुः सकुलजां तथा । वृद्धां प्रव्रजिताञ्चैव तथैव च पतिव्रताम् । अयोनिञ्च वियोनिञ्च न च गच्छेद्विचक्षणः । पिङ्गलां कुष्ठिनीं नारीं न त्वमावोढुमर्हसि । अपस्मारिकुले जातां निहीनाञ्चैव वर्जयेत् । श्वित्रिणाञ्च कुले जातां क्षयिणां मनुजेश्वर ! । लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः । मनोज्ञा दर्शनीया च तां भवान् वोढुमर्हति । महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ! । अपरा पतिता चैव न ग्राह्या भूतिमिच्छता । अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः । वेदे च ब्राह्मणैः प्रोक्तास्ताश्च सर्व्वाः समाचरेत् । न चेर्ष्या स्त्रीषु कर्त्तव्या रक्ष्या दाराश्च सर्व्वशः । अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्ज्जयेत् । अनायुष्यं दिवा स्वप्नं तथाऽभ्युदितशायिता । प्रगे निशामाशु तथा ये चोच्छिष्टाः स्वपन्ति वै । पारदार्य्यमनायुष्यं नापितोच्छिष्टता तथा । यत्नतो नैव कर्त्तव्यमभ्यासश्चैव भारत ! । सन्ध्यायां न च भुञ्जीत न स्नायाच्च पठेत्तथा । प्रयतश्च भवेत्तस्यां न च किञ्चित् समाचरेत् । ब्राह्मणान् पूजयेच्चापि तथा स्नात्वा नराधिप ! । देवांश्च प्रणमेत् स्नातो गुरूंश्चाप्यभिवादयेत् । अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत दर्शकः । अनर्च्चिते ह्यनायुष्यं गमनं तत्र भारत ! । न चैकेन परिव्रज्यं न गन्तव्यं तथा निशि । अनागतायां सन्ध्यायामागत्य च गृहे वसेत् । मातुः पितुर्गुरूणाञ्च कार्य्यमेवानुशासनम् । हितं वाऽप्यहितं वाऽपि न विचार्य्यं कथञ्चन । धनुर्वेदे च वेदे ऽथ यत्नः कार्य्यो नराधिप ! । हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्य्यासु चैव ह । यत्नवान् भव राजेन्द्र ! यत्नवान् सुखमेधते । अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च । प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित् । युक्तिशास्त्रञ्च ते ज्ञेयं शब्दशास्त्रञ्च भारत ! । गान्धर्व्वशास्त्रञ्च कलाः परिज्ञेया नराधिप ! । पुराणमितिहासाश्च तथाख्यानानि यानि च । महात्मनाञ्च चरितं श्रोतव्यं नित्यमेव च । पत्नीं रजस्वलां या च नाभिगच्छेन्न चाह्वयेत् । स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः । पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान् भवेत् । एतेन विधिना पत्नीमुपागच्छेत पण्डितः । ज्ञातिसम्बन्धिमित्राणि पूजनीयानि सर्व्वशः । यष्टव्यञ्च यथाशक्ति यज्ञैर्विविधदक्षिणैः । अत ऊर्द्ध्वं मरण्यञ्च सेवितव्यं नराधिप ! । एष ते लक्षणोद्देश आयुष्याणां प्रकीर्त्तितः । शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्य्यो युधिष्ठिर ! । आचारो भूतिजनन आचारः कीर्त्तिवर्द्धनः । आचाराद्वर्द्धते ह्यायुराचारो हन्त्यलक्षणम् । आगमानां हि सर्व्वेषामाचारः श्रेष्ठ उच्यते । आचारप्रभवो धर्म्मो धर्म्मादायुर्विवर्द्धते । एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् । अनुकम्प्य सर्व्ववर्णान् ब्रह्मणा समुदाहृतम्" । अन्ये चाचारा आचारशब्दे ६२०पृष्ठे उक्तास्तेऽपि आयुर्वृद्धिकराः। आयुःकालश्च स्वाभाविकः जीवभेदेन भिन्नः । तथा हि "ब्रह्मणोवर्षशतमिति" श्रुतेः ब्रह्मणोनिजपरिमाणेन वर्षशतायुः तच्च" सि०शि० दर्शितम् "चतुर्युगसहस्रेण ब्रह्मणो दिनमुच्यते । नित्येनैव तु मानेन आयुर्व्वर्षशतं स्मृतम् । तत् पराख्यं तदर्द्धं तु परार्द्धमभिधीयते" "सूर्य्याब्दसंख्यया द्वित्रिसागरैरयुताहतैः संध्यासन्ध्यांशसहितं विज्ञेयं तच्चतुर्युगम् । कृतं युगसहस्रेण भूतसंहारकारकः । कल्पोब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती । परमायुः शतं तस्य तयाहोरात्रसंख्यया" सू०सि०। तेन सौरैः४३२०००० वर्षैः चतुर्युगं तेन सहस्रगुणितेन ब्राह्ममहः ४३२००००००० रात्रिश्च तावतीति ८६४००००००० वर्षात्मकस्याहोरात्रमानं तस्य ३६० गुणने तस्य वर्षमानम् ३११०४०००००००० एतच्छतगुणितं तस्यायुर्मानम् अयमेव महाकल्पः "शतायुः सदानन्द एवं प्रदिष्टस्तदायुर्महाकल्प इत्युक्तमाद्यैः" सि०शि० उक्तेः । जैगीषव्यस्य च दशमहाकल्पजीविता "दशसु महाकल्पेषु

विपरिवर्त्तमानेन भवेति” मा०कौ० “तद्वाक्यात् तेन ब्राह्मायुःकालो दशगुणिताः” २१०४४००००००००००० तस्यायुः। अथ मनूनामायुःप्रमाणम् । “युगानां सप्ततिः सैका मन्वन्तरमुदाहृतम्” सू० सि० । चतुर्युगमानञ्च ४३२०००००तच्च७१गुणितम् ३०६७२००००सौरवर्षाः एकैकमनूनामायुःकालः। मार्कण्डेयस्य सप्तकल्पान्तजीवितेत्युक्तेः ४३२०००००००० सप्तभिर्गुणितम् ३०२४०००००००० तस्यायुः कालः । देवानामायुस्तु ब्राह्मदिनमानम् “यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति” मनूक्तेः ब्राह्मदिनपर्य्यन्तं तेषां स्थायित्वम् “कर्म्मात्मनाञ्च देवानां सोऽसृजत् प्राणिनां प्रभुः” इति मनुना कल्पादौ तेनैव तेषां सृष्टत्वोक्तेः प्रतिकल्पेऽपि तथैव सृष्टत्वमिति । एवं युगभेदेन नराणामायुर्भेदः मनुनोक्तः । “अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः । कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः” तेन सत्ययुगे ४०० वर्षाः। त्रेतायां ३००वर्षाः। द्वापरे २००वर्षाः। कलौ शतं वर्षाः। पुराणान्तरे सत्यादिषु लक्षायुतसहस्रशतवर्षायुष्ट्वोक्तिः मनुविरोधादप्रमाणैव । सत्कर्म्मभिस्तु प्राणायामतपस्यादिभिः रसायनादिभिश्चायुर्वर्द्धते तच्चायुर्वृद्धिशब्दे ७७५पृष्ठे उक्तम् । तेन दशरथादीनां दशवर्षसहस्रराज्यकरणं रामायणोक्तं सङ्गच्छते । सत्कर्म्माभिप्रायेणैव पुराणवचनं लक्षाद्यायुष्ट्वबोधकं मन्तव्यमिति तु युक्तम् ।

तत्र जातकप० उक्तेः नरगजयोः,१२० वर्षाः। अश्वस्य दन्तसंख्यया । ३२वर्षा वा । गोमहिषादेः२४ वर्षाः खरोष्ट्रयोः २५ वर्षाः। शुनः १२ वर्षाः व्याघ्रादेः १६वर्षाः परमायुः । तत्र नरस्य शतायुष्ट्वस्य श्रुत्युक्तावपि विंशोत्तरीयविभागार्थमिह १२० वर्षोक्तिरिति बोध्यम् ।

**आयोग** पु० आ+युज–घञ् । १गन्धमाल्योपहारे, २व्यापारे ३रोधे ४सम्यक्सम्बन्धे च “शरैः कर्णिकारैश्च किंशुकैश्च सुपुष्पितैः । स देशोऽभ्रमरायोगःप्रदीप्त इव लक्ष्यते” रामा०

**आयोगव** पुंस्त्री० अयोगव एव स्वार्थे अण् । वैश्यकन्यायां शूद्रेणोत्पादिते जातिभेदे । “शूद्रादायोगवः क्षत्ता चाण्डालश्चाधमो नृणाम् । वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः” “आयोगवोऽयं क्षत्ता च चाण्डालश्चाधमो नृणाम् । प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः” इति च मनुः “मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्येति” मनूक्तम् काष्ठतक्षणं तस्य वृत्तिः। स्त्रियां जातित्वात् ङीप्

**आयोजन** न० आ+युज–ल्युट् । १उद्योगे, २आहरणे च ।

**आयोजित** त्रि० आ+युज–णिच्–क्त । १कृताहरणे २सम्यक् सम्पादिते च “कुसुमायोजितकार्मुकं मधुः” कुमा० ।

**आयोद** पु० अयोदस्यापत्यम् वा० अण् । धौम्ये मुनौ । “एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यनामायोदस्तस्य शिष्यास्त्रयो बभूवुरुपमन्युरारुणिर्वेदश्चेति” भा०आ०३अ० ।

**आयोधन** न० आ+युध+आधारे ल्युट् । १युद्धस्थाने । “आयोधने स्थायुकमस्त्रजातम्” भट्टिः “आयोधने कृष्णगतिं सहायम्” रघुः । “आयोधनाग्रसरतां त्वयि वीर ! याते” रघुः । भावे ल्युट् । २योधने, युद्धक्रियायाम् ।

**आर** पु० आ+ऋ–कर्त्तरि संज्ञायां घञ् । १मङ्गलग्रहे, २शनिग्रहे, “आरे स्वस्थे चतुष्पाद्भ्योभयम्” नील०ता० तत्र मङ्गलस्य वक्रगत्वात् शनेश्च स्वभावेन मन्दगतित्वात् तथात्वम् कुजस्य त्रिकोणाकारत्वादपि तथात्वम् ३मधुराम्लफले वृक्षभेदे च । ४प्रान्तभागे ६कुशलोहे ७पित्तले च न० । आरा इव स्वार्थे वा अण् । ८कोणे । कोणस्य चक्राकारसदृशाकारवत्त्वात् तथात्वम् । द्वादशारचक्रं षोडशारचक्रम् । “बिन्दुत्रिकोणवसुकोणदशारयुग्मम्–श्रीचक्रमेतदुदितं परदेवतायाः” तन्त्रम् । “आरान्तरेष्वावपतत् संश्रित्याङ्गं वधेन ह” इति भा०आ०२३अ० । भावे घञ् । ९गमने पु० । आ+ऋ–कर्म्मणि घञ् । १०दूरे च दूरस्य च बहुयत्नेन प्राप्यत्वात् तथात्वम् । “इषुधिस्तवारेऽस्मन्निधेहि” यजु०१६,१२, “आरे दूरे” वेददी० । “आरेबाधस्व दुच्छुनाम्” य०१९,३८,

**आरकूट** पु०न० । आरं पित्तलं कूटयति रूपीकरोति अच् १पित्तलाभरणे । “किमारकूटाभरणेन न श्रियः” इति नैषधम् । आरमतिशयं कूट्यते दंदह्यते कूट–दाहे कर्म्मणि घञ् । २पित्तलमात्रे च तस्यातिशयदाह्यत्वात् तथात्वम् ।

**आरक्त** पु० ईषत् रक्तः प्रा०स० । १ईषद्रक्तवर्णे २तद्वति ३सम्यगनुरक्ते च त्रि०। भावे क्त । ४अनुरागे न०

**आरक्ष** पु० आ+रक्ष–अच् । १हस्तिकुम्भाधःस्थले, “आरक्षमग्नमवमत्य सृणिं शिताग्राम्” माघः २हस्तिमस्तक चर्म्मणि, ३सैन्ये च । ४रक्षके त्रि० । “शतशाङ्कुमारक्षं मध्यगं रक्षसां कपिः” भट्टिः । “तेषामारक्षभूतन्तु पूर्वं दैवं नियोजयेत्” मनुः । भावे घञ् । ४रक्षायाम् पु० “रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम् । भावे अ । आरक्षा तत्रार्थे स्त्री रक्षा च वैदिककर्म्मादौ श्वेतसर्षपादिक्षेपेण

मन्त्रसूक्तादिपाठेन विघ्नकारकनिवारणार्थो व्यापारः ।

**आरग्वध** पु० आ+रुजे-शङ्कायां क्विप् आरुजं रोगशङ्कामपि हन्ति अच् वधादेशश्च । (सों दाल) इति ख्याते वृक्षे । “आरग्वधो गुरुः स्वादुः शीतलः स्रंसनोत्तमः । ज्वरहृद्रोगपित्तास्रवातोदावर्त्तशूलहृत् । तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहम् । ज्वरे तु सततं पथ्यं कोष्ठशुद्धिकरं परम्” इति भावप्रकाशे तद्गुणा उक्ताः ।

आरग्वधाद्यतैलं श्वित्रहरं यथा । “आरग्वधं धवं कुष्ठं हरितालं मनःशिला । रजनीद्वयसंयुक्तं पचेत् तैलं विधानवत् । एतेनाभ्यङ्गयोगेन क्षिप्रं श्वित्रं विनश्यति” चक्रद० ।

आरग्वधतैलं रोमहरम् । “आरग्वधमूलं कर्षद्वितयं शङ्खचूर्णस्य । हरितालस्य च खरजे मूत्रप्रस्थे कटुतैलं पक्वम् । तैलं तदिदं शङ्खहरितालचूर्णितं लेपात् । निर्मूलयति च रोमाण्यन्येषां सम्भवो नैव” चक्रद० ।

आरग्वधादिपाचनम् तत्रैव यथा “आरग्वधग्रन्थिकमुस्ततिक्ता हरीतकीभिः क्वथितः कषायः । सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च” ।

**आरट** त्रि० आरटति आ+रट-अच् । १सम्यक् शब्दकारके २नटे पु० स्त्रियां गौरा० ङीष् ।

**आरट्ट** पु० आरट्यते विख्याप्यते आ+रट टच् टस्य नेत्त्वम् । विशिष्टाश्वोत्पत्तिस्थाने (आरब) देशे । अश्वशब्दे विवृतिः ।

**आरट्टज** पु० आरट्टे देशे जायते जन-ड । (आरब) देशजाते घोटके । “आरट्टजचटुलनिष्ठुरपातमुच्चैः” माघः अश्वशब्दे ५०४ तद्देशाश्वधर्मा ज्ञेयाः ।

**आरणि** पु० आ+ऋ-अनि । जलानां स्वयं भ्रमणे आवर्त्ते ।

**आरणेय** पु० अरण्यां भवः अरणी+ढक् । १शुकदेवे तस्यारणीसम्भवकथा अरणीसुतशब्दे ३१९पृष्ठे विवृता । अरणिमरणिहरणमधिकृत्य कृतोग्रन्थः ढक् । भारतवनपर्वान्तर्गते अरणिहरणाधिकारेण व्यासेन कृते अवान्तरपर्व्वभेदे तच्च पर्व्व, वनपर्वणि ३११ अध्यायावधि ३१४ अध्यायपर्य्यन्तम् “आरणेयं ततः पर्व” भा० आ० १अ० अरण्या इदं, स्वार्थे वा ढक् । अरणीसम्बन्धिनि ३अग्न्यभेदे ४अरण्यां च “आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने । भा० व० ३१४अ० ।

**आरण्य** त्रि० अरण्ये भवः ण । वनभवे १पशुभक्ष्ते पशवश्च द्विविधा ग्राम्या आरण्याश्च यथाह पैठी० “ग्राम्यारण्याश्चतुर्दश गोरविरजोऽश्वोऽश्वतरोगर्द्दभोमनुष्यश्चेति सप्त ग्राम्याः पशवः, महिषवानरऋक्षसरीसृपरुरुपृषन्मृगाश्चेति सप्तारण्याः” एते च कर्मविशेषोपयुक्ता एतद्भिन्ना अन्येऽपि पशवः ग्राम्या आरण्याश्च अश्वमेधशब्दे ५०८ पृष्ठादौ उक्ताः । पशुत्वञ्चेह यागार्थालभ्यमानत्वमात्रात् शकुनादीनामपि “उष्ट्रो वा यदि मेषश्छागो वा यदि हयः । पशुस्थाने नियुक्तानां पशुशब्दो विधीयते” इति यज्ञपार्श्वोक्तेः । अत एव अश्वमेधे “वसन्ताय कपिञ्जलानालभेत ग्रीष्माय कलविङ्कान्” इत्यादौ पक्षिणामपि य०वे० २४अ० मन्त्रव्याख्याने “अथारण्याः पशव उच्यन्ते” वेददीपे उपक्रान्तम् अन्ते च कपिञ्जलादयः पृषतान्ताः आरण्याः पशव इत्युक्तं तच्च अश्वमेधशब्दे ५१०पृष्ठे दृश्यम् तत्र स्त्रीपशूनामहिंस्यत्वम् “अवध्याश्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतामपीति” शास्त्रात् ति०त० यदुक्तं तत् अश्वमेधातिरिक्तविषयं तत्र स्त्रीपशूनां बहूनामालम्भनविधानात् तच्च अश्वमेधशब्दे दृश्यम् । “आरण्यानाञ्च सर्वेषां मृगाणां माहिषं विना” । “आरण्यांश्च पशून् सर्वान्” इति च मनुः । “आरण्याःसुमनसईषिरे न भृङ्गैः” माघः “सप्त ग्राम्या ओषधयः सप्तारण्याः” तैत्ति०ब्रा० तद्विशेषा ओषधिशब्दे वक्ष्यन्ते २अकृष्टपच्यधान्यभेदे च । “यदकृष्टे पच्यते तेनारण्यम्” शत०ब्रा० । ज्योतिषोक्ते ३मकरादिमार्द्धे ४सिंहे दिवसे ५मेषे ६वृषे च राशौ च स “मकरादिमार्द्धसिंहौवन्यौ दिवसेऽजवृषभौ च” ज्यो० त० उक्तः ७अरण्यभवे गोमये पु० सि०कौ० । अरण्यमरण्यवासमधिकृत्य कृतोग्रन्थः अण् । युधिष्ठिरादीनां वनवासाधिकारेण व्यासेन कृते भारतान्तर्गते पर्वभेदे । रामस्य वनवासाधिकारेण वाल्मीकिकृते रामायणान्तर्गते ८काण्डभेदे च ।

**आरण्यक** त्रि० अरण्ये भवः मनुष्यादिः वुञ् । १अरण्यभवे पथि अध्ययने न्याये विहारे मनुष्ये हस्तिनि च एष्वर्थेषु वुञः साधुत्वं तद्भिन्ने न वुञ् किन्तु ण एव । आरण्यः पशुः गोमये तु वा आरण्यकः पक्षे णः । तत्र मनुष्ये “आरण्यकोपात्तफलप्रसूतिः” रघुः । अध्ययने ऐतरेयारण्यकम् तैत्तिरीयारण्यकं वृहदारण्यकम् “अरण्येऽध्ययनादेव आरण्यकमुदाहृत” मित्युक्तेरारण्यकत्वमेषाम् । तानि च तत्तद्वेदभागभेदाः । “आरण्यकमधीत्य च” मनुः । “आरण्यकञ्च वेदेभ्य ओषधिभ्योऽमृतं यथा” भा० १अ० । “शाक्ये चारण्यके गुरुः” भा० उद्यो० १७४ अ० । “अनुसृत्य तु शास्त्राणि कवयः समवस्थिताः । अपीह स्यादपीह स्यात् सारकार्यदिदृक्षया । वेदवादानतिक्रम्य

ख्याख्यारण्यकानि च। विगाह्य कदलीस्तम्भं सारं ददृशिरे न ते" इति भा०शा० १८अ०। ४आरण्यगेये साममेदे च। स्वार्थे कन्। उक्तार्थे भारतान्तर्गते ५वन-पर्व्वणि "एतदारण्यकं पर्व्व भा०आ०प०१अ०। आर-ण्यककाण्डम्। रामायणान्तर्गते ६काण्डभेदे

**आरण्यकुकुट** पुंस्त्री० अरण्ये भवः आरण्यः कुकुटः कर्म्म०। वनकुकुटे "आरण्यकुकुटः स्निग्धो वृंहणः श्लेष्मणो गुरुः। वातपित्तक्षयवमीविषमज्वरनाशनः"इति भा० प्र०तन्मांसगुणा उक्ताः। स्त्रियां जातित्वात् ङीप्।

**आरण्यगान** न० आरण्यं वनगेयं गानम्। सामवेदान्तर्गते गानग्रन्थभेदे तस्यारण्ये गेयत्वात् तथात्वम्।

**आरण्यपशु** पु० कर्म्म०। स्मृत्युक्ते महिषादौ सप्तविधे १पशौ आरण्यशब्दे विवृतिः।

**आरण्यमुद्ग** पु०नि०कर्म०। वनमुद्गे। आरण्यमुद्गस्येवाकारः पर्णोऽस्यस्याः अच् टाप्। (मुगानी) क्षुद्रपर्ण्यां स्त्री राजनि०

**आरण्यराशि** पु०नि०कर्म्म०। आरण्यशब्दोक्ते १सिंहे २मक-रादिमार्धे द्विवसि ३मेषे ४वृषे च राशौ।

**आरति** स्त्री आ+रम–क्तिन्। १उपरमे, २निवृत्तौ च।

**आरत** त्रि० आ+रम–क्त। १उपरते२विरते च "अनारतं तेन पदेषु लम्भिताः"किरा०। [(एका)(वगी) प्रभृतौ।

**आरथ** पु० द्वैमद्रथः शा०स०। एकाङ्गेन गमनसाधने रथे

**आरद्ध** त्रि० आ+रध–क्त। संसिद्धे तिका० फिञ्। आर-द्धायनिः तदपत्ये पुंस्त्री०।

**आरनाल** न० आर्च्छति आ+ऋ–अच्, आरः नल–गन्धे घञ् आरो नालोगन्धो यस्य। काञ्जिके। "आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः। पक्वैर्वा सञ्चितैस्तैस्तु सौवीरसदृशं गुणैः" भा०प्र०। "आरनालं दधि क्षीरं कन्दुपक्वं च सक्तवः। स्नेहपक्वञ्च तक्रञ्च शूद्रस्यापि न दुष्यति"अत्रिस०। स्वार्थे कप्। आरनालकमप्यत्र।

**आरब्ध** त्रि० आ+रभ–क्त। कृतारम्भणे "प्रारब्धादन्य-कार्य्याणां करणं परिवर्त्तकः" सा०द० "अनारब्धकार्य्ये एव तु" इत्यादि शा०सू०। यस्य कियदंशं कर्त्तुमारेभे तादृशः पदार्थः आरब्धः। भावे क्त। २आरम्भे न०'व्रत-यज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्याद्-नारब्धे तु सूतकम्" तिथि०त० विष्णुः।

आरब्धफलयोः सुकृतदुष्कृतयोः तत्त्वज्ञानोत्पत्तावपि यावत्फलसमाप्ति न नाशः इत्येतत् शा०सू०भा०स्वीकृतम् यथा "बन्धहेतोर्विद्यासामर्थ्याद्येषविनाशसिद्धेरवश्यं भावि-नो विदुषः शरीरपाते मुक्तिरित्यवधारयति।"अनारब्धकार्य्ये एव तु पूर्व्वे तदवधेः" शा० सू० "पूर्व्वयोरधिकर-णयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः स किमविशेषेणारब्धकार्य्ययोर्भवत्युत विशेषेणानारब्धकार्य्य-योरेवेति विचार्य्यते तत्र "उभे उ हैवैष एतेन तरतीत्येव-मादि" श्रुतावविशेषश्रवणादविशेषेणैव क्षय इत्येवं प्राप्ते प्रत्याह अनारब्धकार्य्ये एव त्विति। अप्रवृत्तफले एव पूर्व्वे जन्मान्तरसञ्चिते, अस्मिन्नपि च जन्मनि प्राक्ज्ञानोत्पत्तेः सञ्चिते च सुकृतदुष्कृते ज्ञानाधिगमात् क्षीयेते नत्वारब्धकार्य्ये सामिभुक्तफले, याभ्यामेतद्ब्रह्म-ज्ञानायतनंजन्म निर्मितम्। कुत एतत्? "तस्य तावदेव चिरं यावन्न विमोक्ष्ये इति" शरीरपातावधिकरणात् क्षेमप्राप्तेः। इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावात् ज्ञानप्राप्त्यनन्तरमेव क्षेममश्नुवीत तत्र शरीरपातप्रतीक्षां ना-चक्षीत। ननु वस्तुबलेनैवायमकर्त्रात्मावबोधः कर्म्माणि क्षपयन् कथं कानिचित् क्षपयेत् कानि चिदुपेक्षेत नहि समानेऽग्निबीजसम्पर्के केषाञ्चिद्बीजशक्तिः क्षीयते केषाञ्चिन्न क्षीयते इति शक्यमङ्गीकर्त्तुमिति, उच्यते न तावदनाश्रित्यारब्धकार्य्यं कर्माशयं ज्ञानोत्पत्तिरुप-पद्यते। आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेग-स्यान्तराले प्रतिबन्धासम्भवाद्भवति वेगक्षयप्रतिपालनम्। अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्म्माण्यु-च्छिनत्ति। बाधितमपि मिथ्याज्ञानं द्विचन्द्रज्ञानवत् संस्कारवशात् कञ्चित् कालमनुवर्त्तत एव। अपि च नैवात्र विवदितव्यं ब्रह्मविदां कञ्चित् कालं शरीरं ध्रियते न ध्रियत इति। कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणञ्चापरेण प्रतिक्षेप्तुं शक्येत। श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्द्देशेनैतदेव निरुच्यते। तस्मादनारब्धकार्य-योरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात् क्षय इति निर्णयः" भा०। "चक्रभ्रमणवद्धृतशरीरः" सांख्यसूत्रे च फलजनकस्य कर्मणोनाशेऽपि चक्रजन्यवेगस्य चक्रनाशेऽपि स्थितिवत् देहरूपस्य कर्मफलस्य संस्कारात्मना स्थितिरित्यवधारितम्। यथा च आरब्धफलस्य कर्म्मणो यावदधिकारस्थितिस्तथा निर्णीतं शा०सू०भा० ३अ०३पादे यथा "यावदधि-कारमवस्थितिराधिकारिकाणाम्" शा०सू० "विदुषो वर्त्त-मानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते। ननु विद्यायाः साधनभूतायाः सम्पत्तौ कैवल्यनिर्वृत्तिः स्यान्नवेति नेयं चिन्तोपपद्यते। न हि पाकसाधनसम्पत्ता-

चोदनोभवेन्नवेति चिन्ता सम्भवति नापि भुञ्जानस्तृप्यति न वेति चिन्त्यते। उपपन्ना त्वियं चिन्ता ब्रह्मविदामपि केषाञ्चिदितिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात्। तथा-ह्यपान्तरतमा नाम वेदाचार्य्यः पुराणर्षिः विष्णु-नियोगात् कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः सम्ब-भूवेति स्मरन्ति। वशिष्ठश्च ब्रह्मणोमानसः पुत्रः सन्-निमिशापादपगतपूर्व्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां, भृग्वादीनामपि ब्रह्मण एव मानसानां पुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः स्मर्य्यते। सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वे-न प्रादुर्बभूव। एवमेव दक्षनारदप्रभृतीनामपि भूयसी देहान्तरोत्पत्तिकथा तेन तेन निमित्तेन भवति स्मृतौ, श्रुता-वपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते। ते च काचित् पतिते पूर्व्वदेहे देहान्तरमाददते, कश्चित्तु स्थितएव तस्मिन् योगैश्वर्य्यवशादनेकदेहादानन्यायेन। सर्वे चैते समधिगत-सकलवेदार्थाः कथ्यन्ते। तदेतेषां देहान्तरोत्पत्ति-दर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्व-महेतुत्वं वेत्यत उत्तरमुच्यते। न, तेषामपान्तरतमःप्रभृ-तीनां वेदप्रवर्त्तनादिकलोकस्थितिहेतुष्वधिकारेषु नियुक्ता-नामधिकारतन्त्रत्वात् स्थितेः। यथासौ भगवान् सविता सहस्रयुगपर्य्यन्तं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति "अथात ऊर्द्ध्वं उदेत्य नैवोदेता नास्तमेतैकलएव मध्ये स्थातेति" श्रुतेः। यथा च वर्त्तमाना ब्रह्मविदः प्रारब्धभोगक्षये कैवल्यमनु-भवन्ति "तस्य तावदेव चिरं यावन्न विमोक्ष्ये ऽथ सम्पत्स्ये" इति एवमपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते तदव-साने चापवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि तेऽधि-कारफलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येण गृहादिव गृहान्तरमन्यमन्यं देहं सञ्चरन्तः स्वाधिका-रनिर्वर्त्तनायापरिमुषितस्मृतयएव देहेन्द्रियप्रकृतिवशि-त्वान्निर्म्माणकायबलेन युगपत् क्रमेण वाऽधितिष्ठन्ति। नचैते जातिस्मरा इत्युच्यन्ते तएव त इति स्मृतिप्रसिद्धेः। यथा सुलभा ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहं, जानकं देहमाविश्य व्युद्य तेन, पश्चात् स्वमाविवेशे ति स्मर्य्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्म्मणि कर्मा-न्तरं देहान्तरारम्भकारणमाविर्भवेत् ततोऽन्यदप्यदग्ध-बीजं कर्म्मान्तरं तद्वदेव प्रसज्यतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वाशङ्क्येत न त्वेषमाशङ्का युक्ता ज्ञानात् कर्म्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्। तथा हि श्रुतिः "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" "स्मृतिलम्भे च सर्वग्रन्थीनां विप्रमोक्ष" इति च। स्मृतिरपि "यथैधांसि समि-द्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन !। ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथेति"। "बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुन-रिति" चैवमाद्या। नचाविद्यादिक्लेशदाहे सति क्लेश-बीजस्य कर्माशयस्यैकदेशदाहएकदेशप्ररोहश्चेत्युपपद्यते न ह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते। प्रवृत्त-फलस्य तु कर्माशयस्य मुक्ते शरीरवेगक्षयान्निवृत्तिः "तस्य तावदेव चिरमिति" शरीरपातक्षेपकरणात्। तस्मादुप-पन्ना यावदधिकारमाधिकारिकाणामवस्थितिः" भा०। अतएव वाचस्पत्ये उक्तम् "उपासनादिसंसिद्धितोषिते-श्वरनोदितम्। अधिकारं समाप्यैव प्रविशन्ति परं पदम्" ३खवष्टे "ध्वान्तं घनारब्धमिवार्द्धरात्रः" किरा०। "घनारब्धम् मेघावरुद्धम्" मल्लि०। घनारुद्धइत्येव ज्यायान् पाठः तेनास्य अवरुद्धार्थकत्वे प्रमाणाभावेऽपि न क्षतिरिति

**आरभटी** स्त्री० आरभ्यतेऽनया आ+रभ–अटि ङीप्। नाट्ये अर्थविशेषयुक्ते सा०दर्पणोक्ते रचनाभेदे सा च भेदो-दाहरणसहिता सा०द० उक्ता यथा

"मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः। संयुक्ता वध-बन्धाद्यैरुद्धताऽऽरभटी मता। वस्तूत्थापनसंफेटौ संक्षिप्ति-रवपातनम्। इति भेदास्तु चत्वार आरभट्याः प्रकी-र्त्तिताः। मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते। यथो-दात्तराघवे। "जीयन्ते जयिनोनिशान्ततिमिरव्रातैर्वि-यद्व्यापिभिर्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मा-दमी। एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरामुञ्च-न्त्याननकन्दरानलमुचस्तीव्रान् रवान् फेरवः" इत्यादि। संफेटस्तु समाघातः क्रुद्धत्वरयोर्द्वयोः। यथा मालत्यां माधवाघोरघण्टयोः। संक्षिप्ता वस्तुरचना शिल्पैरित-रथाऽपि वा। संक्षिप्तिः स्यात् निवृत्तौ च नेतुर्नेत्रन्तर-ग्रहः। उदयनचरिते किलिञ्जहस्तिप्रयोगः। द्वितीयं यथा। बालिनिवृत्त्या सुग्रीवः यथा वा परशुरामस्यौद्धत्य-निवृत्त्या शान्तत्वापादानं "पुण्या ब्राह्मणजातिरन्वयगुणः शास्त्रं चरित्रं च मे येनैकेन हृतान्यभूनि हरता चैतन्य-मात्रामपि। एकः सन्नपि भूरिदोषगहनं सोऽयं त्वया

मैदसा वत्स! ब्राह्मणत्वेन शमितः क्षेमाय दर्पोमम”। प्रवेशस्थाननिष्क्रान्तिहर्षविप्लवसम्भवम्। अवपातनमित्युक्तम्। यथा तत्वरावणे घटेऽङ्कि। प्रविश्य खड्गहस्तः पुरुष इत्यतः प्रभृति निष्क्रमणपर्य्यन्तम्। सर० क० उक्ते शब्दालङ्काररूपे २वृत्तिभेदे च सा च २८८पृष्ठे दृश्या। आरः सामर्थ्येन गामी भटः। ३शूरे वीरे पु० हेमचन्द्रः।

**आरभ्य** अव्य० आ+रभ–ल्यप्। १उपक्रम्येत्यर्थे “आरभ्य तस्यां दशमीञ्च यावत् प्रपूजयेत् पर्व्वतराजपुत्रीम्” दुर्गो०त०पु०। अनारभ्याधीतत्वात्”मीमांसा। कर्मणि क्यप्। २आरम्भणार्हे आरम्भणीये त्रि०।

**आरमण** न० आ+रम–भावे ल्युट्। १आरामे, विरामे आरम्यतेऽनेन करणे ल्युट्। आरतिसाधने “स आत्मनारमणं नाविन्दत्” तैत्ति० चक्षुषोरेवैते आरमणे कुरुतः” शत० ब्रा०।

**आरम्बण** न० आ+लबि–ल्युट् वेदे लस्य रः। आलम्बने “तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परियन्ति” छा०उ० अनारम्बणानि अनालम्बनानि”भा०“यदिदमन्तरिक्षमनारम्बणमिव केनाक्रमेण यजमानःस्वर्गलोकमाक्रमेत्” वृ०उ०।

**आरम्भ** पु०आ+रभ घञ् मुम्। १उद्यमे २त्वरायां स्वार्थं परार्थं वा ३स्वेहादिसम्पादनव्यापारे ४उपक्रमे प्रथमकृतौ ५प्रस्तावने ६वधे ७दर्पे च। “अनारम्भोऽपि परस्वहस्तघी दर्पवत्” भा०स्व०“आरम्भे कर्मणां विप्र! पुण्डरीकं स्मरेद्धरिम्” स्मृतिः “न कर्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते”गीता “मौनादिस्योरविर्विषामारम्भःप्रथमक्षणे। इति म०त० व्यासः “अयथावलमारम्भः” माघः। “आगमैः सदृशारम्भा आरम्भसदृशोदयः” इति रघुः क्रियाकूटात्मकपाकादिक्रियायां प्राथमिकव्यापारोपक्रमआरम्भः। श्रौतस्मार्तकर्मविशेषे अङ्गविशेषारम्भेऽपि प्रकृतकर्मारम्भत्वेन आरब्धत्वाच्च सूतकादेः प्रतिबन्धकत्वम्। यथा “आरम्भोवरणं यज्ञे संकल्पोव्रतजप्ययोः। नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया। तथा निमन्त्रणं श्राद्धे आरम्भः स्यादिति श्रुतिः आरब्धे सूतकं नस्यादिति”ति०त०विष्णुः। द्रव्याणां द्रव्यान्तरेण गुणानां गुणान्तरेणोत्पादने वैशेषिकोक्ते ८व्यापारे “द्व्यारम्भश्चतुर्षु स्यात्” भाषा० कर्मणि घञ्। ९आरभ्यमाणे“फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव” रघुः। “चित्रार्पितारम्भइवावतस्थे” कुमा०।

**आरम्भक** त्रि० आरभते आ+रभ–ण्वुल् मुम्। १आरम्भकारके वैशेषिकादिमतसिद्धे महत्त्वाद्युपचयाय अवयवानां २विजातीयसंयोगे च। “तत आरम्भकसंयोगनाशः” मुक्ता० आरम्भवादशब्दे शा०भा०उदा०।

**आरम्भण** न० आ+रभ–ल्युट् मुम्। २आरम्भशब्दार्थे कर्मणि ल्युट्। २आरभ्यमाणे च। यथा “सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वमिदं मृण्मयं विज्ञातं भवति वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यम्”छा०उ० “तदनन्यत्वमारम्भणशब्दादिभ्यः”शा०सू०आरम्भणं प्रयोजनमस्य अनुप्रवचना० अण्। ३आरम्भणप्रयोजनपदार्थे त्रि०। आरभ्यतेऽनेन करणे ल्युट्। ४उपादानकारणे”किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित्कथासीत्” यजु० १७,१८। “लोके हि घटादि चिकीर्षुः कुलालो गृहादिकं स्थानमधिष्ठाय मृद्रूपेणारम्भकद्रव्येण चक्राद्युपायैर्निष्पादयति ईश्वरस्य तदाक्षिप्यते। स्विदिति वितर्के द्यावाभूमी सृजतोविश्वकर्मणोऽधिष्ठानं किमासीत् निवासस्थानम् अद्यतना निरधिष्ठानाः किमपि न कुर्वन्ति। स्विदिति वितर्के आरम्भणं कतमत् किमासीत् आरभ्यतेऽनेनेति आरम्भणमुपादानकारणम् मृदिव घटानाम्” वेददी०।

**आरम्भणीय** त्रि० आ+रभ–शक्यार्थे अनीयर् मुम्। यस्य आरम्भःकर्त्तुं शक्यते तस्मिन् प्रयोजनादियुक्ते पदार्थे “तत्पुनः शास्त्रमारम्भणीयमिति” विवरणोपन्यासः।

**आरम्भवाद** पु० आरम्भस्य वादः परीक्षापूर्व्वकः कथाभेदः। वैशेषिकाद्यभिमते परमाणुभ्य एव जगदुत्पत्तिनिर्णायके वादे। स च “द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरमिति”वै०सू०दर्शितः “आत्माकाशाणुसुखतः कारणं पूर्व्वमिष्यते। कुलालादिवदण्डन्तु घटवज्जन्मनाशभाक्। पृथिव्यम्भोऽग्निवायूनां कर्मसंयोजिताणवः। द्व्यणुकादि क्रमेणाण्डमारभन्ते इदं महदिति” हि तेषां वादः। शा०भाष्ये तु तदेतन्मतमुत्थाप्य निराकृतं यथा “परमाणुकारणवाद इदानीं निराकर्त्तव्यः। तत्रादौ तावद्योऽणुकारणवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्रतिसमाधीयते। तत्राय वैशेषिकाणामभ्युपगमः कारणद्रव्यसमवायिनोगुणाः कार्य्यद्रव्यसमानजातीयं गुणान्तरमारभन्ते शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्य प्रसवदर्शनात्तद्विपर्य्ययाऽदर्शनाच्च। तस्माच्चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्य्येऽपि जगति चैतन्यं समवेयात् तददर्शनात्। न चेतनं ब्रह्म जगत्कारणमभिलषमर्ह-

तीति। इदमभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति। "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" सू०। "एषा तेषां प्रक्रिया परमाणवः किल किञ्चित्कालमनारब्धकार्या यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणास्तिष्ठन्ति। ते च पश्चाददृष्टादिपुरःसराः संयोगसचिवाश्च सन्तोद्व्यणुकादिक्रमेण कृत्स्नं कार्यजातमारभन्ते कारणगुणाश्च कार्ये गुणान्तरम्। यदा द्वौ परमाणू द्व्यणुकमारभेते तदा परमाणुगता रूपादिगुणविशेषाः शुक्लादयोद्व्यणुके शुक्लादीनारभन्ते। परमाणुगुणविशेषस्तु पारिमाण्डल्यम् न द्व्यणुके पारिमाण्डल्यमपरमारभते द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात्। अणुत्वह्रस्वत्वे हि द्व्यणुकवर्त्तिनी परिमाणे वर्णयन्ति। यदापि द्वे द्व्यणुके चतुरणुकमारभेते तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम्। अणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात्। यदापि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्य्यमारभन्ते तदापि समानैषा योजना। तदेवं यथा परमाणोः परिमण्डलात्मनोऽणु ह्रस्वञ्च द्व्यणुकं जायते महद्दीर्घञ्च त्र्यणुकादि न परिमण्डलम्। यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतोमहद्दीर्घञ्च त्र्यणुकादि जायते नाणु नोत ह्रस्वम् एवं चेतनाद्ब्रह्मणोऽचेतनं जगज्जनिष्यत इत्यभ्युपगमे तव किं छिन्नम्। अथ मन्यसे विरोधिना परिमाणान्तरेणाक्रान्तं कार्य्यद्रव्यं द्व्यणुकादि ततोनारम्भकाणि कारणगतानि पारिमाण्डल्यादीनि इत्यभ्युपगच्छामि न तु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति येन कारणगता चेतना कार्य्ये चेतनान्तरं नारभेत। नह्यचेतनानां चेतनाविरोधी कश्चिद्गुणोऽस्ति चेतनाप्रतिषेधमात्रत्वात्। तस्मात् पारिमाण्डल्यादिवैषम्यात् प्राप्नोति चेतनाया आरम्भकत्वमिति, मैवं मंस्थाः यथा कारणे विद्यमानानामपि पारिमाण्डल्यादीनामनारम्भकत्वमेवं चैतन्यस्यापीत्यस्यांशस्य समानत्वात्। न च परिमाणान्तराक्रान्तत्वं पारिमाण्डल्यादीनामनारम्भकत्वे कारणं प्राक् परिमाणान्तरारम्भात् पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः आरब्धमपि कार्य्यं द्रव्यं प्राग्गुणारम्भात् क्षणमात्रमगुणं तिष्ठतीत्यभ्युपगमात्। न च परिमाणान्तरारम्भे व्यग्राणि पारिमाण्डल्यादीनीत्यतः स्वसमानजातीयं परिमाणान्तरं नारभन्ते परिमाणान्तरस्यान्यहेतुकत्वाभ्युपगमात्। "कारणबहुत्वात् प्रचयविशेषाच्च महत्" "तद्विपरीतमणु"। "एतेन दीर्घत्वह्रस्वत्वे व्याख्याते" इति हि काणभुजानि सूत्राणि। न च सन्निधानविशेषात् कुतश्चित् कारणबहुत्वादीनि एवारभन्ते न पारिमाण्डल्यादीनीत्युच्यते द्रव्यान्तरे गुणान्तरे वाऽऽरभ्यमाणे सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात्। तस्मात् यथा स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वं तथा चेतनाया अपि द्रष्टव्यम् संयोगाच्च द्रव्यादीनां विलक्षणानामुत्पत्तिदर्शनात् समानजातीयोत्पत्तिव्यभिचारः। द्रव्ये प्रकृते गुणोदाहरणमयुक्तमिति चेन्न दृष्टान्तेन विलक्षणारम्भमात्रस्य विवक्षितत्वात्। न च द्रव्यस्य द्रव्यमेवोदाहर्त्तव्यं गुणस्य वा गुण एवेति कश्चिन्नियमे हेतुरस्ति। सूत्रकारोऽपि भवतां द्रव्यस्य गुणमुदाजहार "प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात् संयोगस्य पञ्चात्मकत्वं न विद्यते" इति। यथा प्रत्यक्षाप्रत्यक्षयोर्भूम्याकाशयोः समवयन् संयोगोऽप्रत्यक्षः एवं प्रत्यक्षाप्रत्यक्षेषु पञ्चसु भूतेषु समवयत् शरीरमप्रत्यक्षं स्यात् प्रत्यक्षन्तु शरीरं दृश्यते तस्मान्न पाञ्चभौतिकमिति। एतदुक्तं भवति गुणश्च संयोगोद्रव्यं शरीरम्। दृश्यते त्विति चात्रापि विलक्षणोत्पत्तिः प्रपञ्चिता। नन्वेवं सति तेनैवैतद्गतम्, नेति ब्रूमः तत् सांख्यं प्रत्युक्तं एतत्तु वैशेषिकं प्रति। नन्वतिदेशोऽपि समानन्यायतःकृतः "एतेन शिष्टापरिग्रहा अपि व्याख्याताः" इति सत्यमेतत् तस्यैव त्वयं वैशेषिकपरीक्षारम्भे तत्प्रक्रियानुगतेन निदर्शनेन प्रपञ्चः कृतः। "उभयथापि न कर्माऽतस्तदभावः" सू०। इदानीं परमाणुकारणवादं निराकरोति। स च वाद इत्थं समुत्तिष्ठति। पटादीनि हि सावयवानि द्रव्याणि स्वानुगतैः संयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि तत्सामान्येन यावत्किञ्चित् सावयवं सर्वन्तत् स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते। स चायमवयवावयविविभागोयतो निवर्त्तते सोऽपकर्षपर्य्यन्तगतः परमाणुः। सर्वञ्चेदं गिरिसमुद्रादिकं जगत् सावयवं सावयवत्वादाद्यन्तवत् न चाकारणेन कार्य्येण भवितव्यमित्यतः परमाणवोजगतः कारणमिति कणभुगभिप्रायः। तानीमानि चत्वारि भूतानि भूम्यप्तेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते। तेषाञ्चापकर्षपर्य्यन्तगतत्वेन परतोविभागासम्भवाद्विनश्यतां पृथिव्यादीनां परमाणुपर्य्यन्तोविभागो भवति स प्रलयकालः। ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते तत्कर्म स्वाश्रयमणुमण्वन्तरेण संयुनक्ति ततो

द्व्यणुकादिक्रमेण वायुरुत्पद्यते एवमग्निः एवमापः एवं पृथिवी एवं शरीरं सेन्द्रियमित्येवं सर्वमिदं जगदणुभ्यः सम्भवति। अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि सम्भवन्ति तन्तुपटन्यायेनेति काणादा मन्यन्ते। तत्रेदमभिधीयते विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः कर्मवतां तन्त्वादीनां संयोगदर्शनात्। कर्मणश्च कार्य्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम् अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात्। अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा यथादृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत तस्यासम्भवान्नैवाणुष्वाद्यं कर्म स्यात् न हि तस्यामवस्थायामात्मगुणः प्रयत्नः सम्भवति शरीराभावात्। शरीरप्रतिष्ठे हि मनस्यात्ममनःसंयोगे सत्यात्मगुणः प्रयत्नो जायते। एतेनाभिघाताद्यपि दृष्टनिमित्तं प्रत्याख्यातव्यम्। सर्गोत्तरकालं हि तत्सर्वं नाद्यस्य कर्मणो निमित्तं सम्भवति। अथादृष्टमाद्यस्य कर्मणो निमित्तमित्युच्येत तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा उभयथापि नादृष्टनिमित्तमणुषु कर्मावकल्पेत अदृष्टस्याचेतनत्वात्। नह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्त्तते प्रवर्त्तयति वेति साङ्ख्यपरीक्षायामभिहितम्। आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात्। आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यात् असम्बन्धात्। अदृष्टवता पुरुषेणास्त्वणूनां सम्बन्ध इति चेत् सम्बन्धसातत्यात् प्रवृत्तिसातत्यप्रसङ्गः नियामकान्तराभावात्। तदेवं नियतस्य कस्यचित् कर्मनिमित्तस्याभावान्नाणुष्वाद्यं कर्म स्यात् कर्माभावात् तन्निबन्धनः संयोगो न स्यात् संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादि कार्य्यजातं न स्यात्। संयोगश्चाणोरण्वन्तरेण सर्वात्मना वा स्यादेकदेशेन वा, सर्वात्मना चेदुपचयानुपपत्तेरणुमात्रत्वप्रसङ्गो दृष्टविपर्य्ययप्रसङ्गश्च प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वात्। एकदेशेन चेत् सावयवत्वप्रसङ्गः। परमाणूनां कल्पिताः प्रदेशाः स्युरिति चेत् कल्पितानामवस्तुत्वादवस्त्वेव संयोग इति वस्तुनः कार्य्यस्यासमवायिकारणं न स्यात् असति चासमवायिकारणे द्व्यणुकादि कार्य्यद्रव्यं नोत्पद्येत। यथा चादिसर्गे निमित्ताभावात् संयोगोत्पत्त्यर्थं कर्म नाणूनां सम्भवति एवं महाप्रलयेऽपि विभागोत्पत्त्यर्थं कर्म नैवाणूनां सम्भवेत्। न हि तत्रापि किञ्चिन्नियतं तन्निमित्तं दृष्टमस्ति। अदृष्टमपि भोगप्रसिद्ध्यर्थं न प्रलयप्रसिद्ध्यर्थमिति अतोनिमित्ताभावान्न स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थञ्च कर्म। अतश्च संयोगविभागाभावात्तयोः सर्गप्रलययोरभावः प्रसज्येत। तस्मादनुपपन्नोऽयं परमाणुकारणवादः। "समवायाभ्युपगमाच्च साम्यादनवस्थितेः" सू०। समवायाभ्युपगमाच्च तदभाव इति प्रकृतेनाणुवादनिराकरणेन सम्बध्यते। द्वाभ्याञ्चाणुभ्यां द्व्यणुकमुत्पद्यमानमत्यन्तभिन्नमणुभ्यामण्वोः समवैतीत्यभ्युपगम्यते भवता न चैवमभ्युपगच्छता शक्यतेऽणुकारणवादः समर्थयितुम्, कुतः? साम्यादनवस्थितेः। यथैव ह्यणुभ्यामत्यन्तभिन्नं सत् द्व्यणुकं समवायलक्षणेन सम्बन्धेन ताभ्यां सम्बध्यते एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् समवायलक्षणेनान्येनैव सम्बन्धेन समवायिभिः सम्बध्येत अत्यन्तभेदसाम्यात् ततश्च तस्य तस्यान्योऽन्यः सम्बन्धः कल्पयितव्य इत्यनवस्था प्रसज्येत। नन्विह प्रत्ययग्राह्यः समवायो नित्यसम्बन्ध एव समवायिभिर्गृह्यते नासम्बद्धः सम्बन्धान्तरापेक्षो वा ततश्च न तस्यान्यः सम्बन्धः कल्पयितव्यो येनानवस्था प्रसज्येत। नेत्युच्यते। संयोगोऽप्येवं सति संयोगिभिर्नित्यसम्बन्ध एवेति समवायवन्नान्यं सम्बन्धमपेक्षेत। अथार्थान्तरत्वात् संयोगः सम्बन्धान्तरमपेक्षते, समवायोऽपि तर्ह्यर्थान्तरत्वात् सम्बन्धान्तरमपेक्षेत। स च गुणत्वात् संयोगः सम्बन्धान्तरमपेक्षते न समवायोऽगुणत्वादिति युज्यते वक्तुम् अपेक्षाकारणस्य तुल्यत्वात् गुणपरिभाषायाश्चातन्त्रत्वात्। तस्मादर्थान्तरं समवायमभ्युपगच्छतां प्रसज्येतैवानवस्था। प्रसज्यमानायां चानवस्थायामेकासिद्धौ सर्वासिद्धेर्द्वाभ्यामणुभ्यां द्व्यणुकं नैवोत्पद्येत तस्मादप्यनुपपन्नः परमाणुकारणवादः। "नित्यमेव च भावात्" सू०। अपि चाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वा उभयस्वभावा वा अनुभयस्वभावा वाऽभ्युपगम्येरन् गत्यन्तराभावात् चतुर्द्धापि नोपपद्यते। प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात् प्रलयाभावप्रसङ्गः। निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात् सर्गाभावप्रसङ्गः। उभयस्वभावत्वञ्च विरोधादसमञ्जसम्। अनुभयस्वभावत्वे तु निमित्तवशात् प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसन्निधानान्नित्यप्रवृत्तिप्रसङ्गः। अतन्त्रत्वेऽप्यदृष्टादेर्नित्यप्रवृत्तिप्रसङ्गः तस्मादप्यनुपपन्नः परमाणुकारणवादः। "रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात्" सू०। सावयवानां द्रव्याणामवयवशो विभज्यमानानां यतः परो विभागो न सम्भवति ते चतुर्विधा रूपादिमन्तः परमाणवश्चतुर्विधस्य रूपा-

दिमतो भूतभौतिकस्यारम्भका नित्याश्चेति यद्वैशेषिका अभ्युपगच्छन्ति स तेषामभ्युपगमो निरालम्बन एव यतो रूपादिमत्त्वात् परमाणूनामणुत्वनित्यत्वविपर्य्ययः प्रसज्येत परमकारणापेक्षया स्थूलत्वमनित्यत्वञ्च तेषामभिप्रेत विपरीतमापद्येतेत्यर्थः । कुतः ? एवं लोके दृष्टत्वात् । यद्धि लोके रूपादिमद्वस्तु तत् स्वकारणापेक्षया स्थूलमनित्यञ्च दृष्टं तद्यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति । तथा चामी परमाणवो रूपादिमन्तस्तैरभ्युपगम्यन्ते तस्मात्तेऽपि कारणवन्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति । यच्च नित्यत्वे कारणं तैरुक्तं "सदकारणवन्नित्यमिति" । तदप्येवं सत्यणुषु न सम्भवति उक्तेन प्रकारेण कारणवत्त्वोपपत्तेः यदपि नित्यत्वे द्वितीयं कारणमुक्तम् "अनित्यमिति च विशेषतः प्रतिषेधाभाव" इति । तदपि नावश्यं परमाणूनां नित्यत्वं साधयति असति हि यस्मिन् कस्मिंश्चिन्नित्ये वस्तुनि नित्यशब्देन नञः समासो नोपपद्यते न पुनः परमाणुनित्यत्वमेवापेक्षते तच्चास्त्येव नित्यं परमकारणं ब्रह्म । न च शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति प्रमाणान्तरसिद्धयोः शब्दार्थयोर्व्यवहारावतारात् । यदपि नित्यत्वे तृतीयं कारणमुक्तम् । "अविद्या चेति" । तद्यद्येवं विव्रियेत सतां परिदृश्यमानकार्य्याणां कारणानां प्रत्यक्षेणाग्रहणमविद्येति ततो द्व्यणुकनित्यताप्यापद्येत । अथाद्रव्यत्वे सतीति विशेष्येत तथाप्यकारणवत्त्वमेव नित्यतानिमित्तमापद्येत तस्य च प्रागेवोक्तत्वादविद्या चेति पुनरुक्तं स्यात् । अथापि कारणविभागात् कारणविनाशाच्चान्यस्य तृतीयस्य विनाशहेतोरसम्भवोऽविद्या सा परमाणूनां नित्यत्वं ख्यापयतीति व्याख्यायेत । नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनंष्टुमर्हतीति नियमोऽस्ति संयोगसचिवे ह्यनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्यारम्भकेऽभ्युपगम्यमाने एतदेवं स्यात् यदा त्वपास्तविशेषं सामान्यात्मकं कारणं विशेषवदवस्थान्तरमापद्यमानमारम्भकमभ्युपगम्यते तदा घृतकाठिन्यविलयनवत् मूर्त्त्यवस्थाविलयनेनापि विनाश उपपद्यते । तस्माद्रूपादिमत्त्वात् स्यादभिप्रेतविपर्य्ययः परमाणूनां, तस्मादप्यनुपपन्नः परमाणुकारणवादः । "उभयथा च दोषात्" सू० । गन्धरसरूपस्पर्शगुणा स्थूला पृथ्वी, रसरूपस्पर्शगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं सूक्ष्मतरं तेजः, स्पर्शगुणः सूक्ष्मतमो वायुरित्येवमेतानि चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मतारतम्योपेतानि च लोके लक्ष्यन्ते तद्वत् परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन् न वा । उभयथापि तद्दोषानुषङ्गोऽपरिहार्य्य एव स्यात् । कल्प्यमाने तावदुपचितापचितगुणत्वे उपचितगुणानां मूर्त्त्युपचयादपरमाणुत्वप्रसङ्गः । नचान्तरेणापि मूर्त्त्युपचयं गुणोपचयो भवतीत्युच्येत कार्य्येषु भूतेषु गुणोपचये मूर्त्त्युपचयदर्शनात् । अकल्प्यमाने तूपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत् सर्व्व एव एकैकगुणा एव कल्प्येरन् ततस्तेजसि स्पर्शस्योपलब्धिर्न स्यात् अप्सु रूपस्पर्शयोः, पृथिव्यां रूपरसस्पर्शानां, कारणगुणपूर्ब्बकत्वात् कार्य्यगुणानाम् । अथ सर्वे चतुर्गुणा एव कल्प्येरन् ततोऽप्स्वपि गन्धस्योपलब्धिः स्यात् तेजसि च गन्धरसयोः, वायौ च गन्धरसरूपाणां, न चैवं दृश्यते । तस्मादप्यनुपपन्नः परमाणुकारणवादः" । एतेनादृष्टस्य सातत्येऽपि कालवशात् नियमसमर्थनम् परेषामकिञ्चित्करम् । महाकालस्यैकत्वेन नियामकत्वाभावात् खण्डकालस्य च तदानीं क्रियाद्यभावेन विशेषकत्वासम्भवात् क्रियायाः मूर्त्तद्रव्याधीनत्वान्मूर्त्तस्य चावयवसंयोगाधीनत्वेन सर्गोत्तरमेवोत्पत्तेस्तदाऽसत्त्वात् । यच्च निरवयवस्य परमाणोर्दिगवच्छेदेन संयोगसम्भवसमर्थनं तदप्यकिञ्चित्करं नित्यायादिगवच्छेदकत्वासम्भवात् दिग्विभागस्यैवावच्छेदकत्वस्य लोके दृष्टत्वात् दिग्विभाजकस्य चावयवभेदस्य परमाणोरसम्भवेन तस्यायोगात् । किञ्च "षट्केन युगपद्योगात् परमाणोः षडंशतेत्यापत्तिश्च तथा हि दिगवच्छेदेन संयोगे हि पूर्व्वादिचतुर्दिग्भेदेन ऊर्द्धाधोदिग्भेदेन च षट्सु दिक्षु विनिगमनाभावेन युगपद्योगापत्त्या परमाणोः षडंशतापत्तिस्तेन निरवयवत्वं तस्य न सिध्येत् । वस्तुतः प्राच्यादिव्यवहारस्य उदयगिर्य्यादिसम्बन्धाधीनत्वेन तस्य च सर्गोत्तरकालीनतया तदानीं तद्व्यवहारः सर्वथा न सम्भवत्येवेति दिगवच्छेदेन परेषां संयोगकल्पनं सर्व्वथाऽयुक्तमेव । अधिकम् अवयविशब्दे ४२२पृष्ठादौ दृश्यम्

**आर(रा)व** पु० आ+रु–अप् पक्षे घञ् । सम्यक्शब्दे । "वानराश्चक्रुरारवम्" रामा० । "उच्चावचान् ननारासौ वानरं जलदारवम्" भट्टिः ।

**आरस्य** न० अरसस्य भावः चतुरादि० ष्यञ् । रसभिन्नत्वे नास्ति रसोयस्य बहु० तु त्वतलौ न ष्यञ् । अरसत्वमरसता वेत्येव "उच्चैरस्यति मन्दतामरसतामिति" चन्द्रा० ।

**आरा** स्त्री आ+ऋ–अच् । चर्म्मभेदकास्त्रभेदे । (टेको) इति

ख्याते २लौहास्त्रे । "आराग्रमात्रो ह्यवरोऽपि दृष्टः" श्रुतिः ३प्रतोदे च "या पूषन् ब्रह्मचोदनीमारां बिभर्ष्याघृणे" ऋ० ६,५३,८, । "उद्यम्यारामप्रकायोल्लिखितस्य" माघः । "आरां प्रतोदम्" मल्लिनाथः ।

**आराग्र** न० आरायाः अग्रम् । १आरायाः अग्रे "आराग्रमात्रोह्यवरोऽपि दृष्टः" श्रुतिः । "अर्द्धचन्द्रक्षुरप्रादिधाराग्रं मुखमुच्यते । आराग्रन्तु मुखं तेषां क्षुप्रभल्लादिभेदतः" इति हलायुधोक्ते २अर्द्धचन्द्राकारक्षुरप्राद्यस्त्रमुखे च ।

**आराज्ञी** स्त्री सम्यक् राजते आ+राज–कनिन् ङीप् । देशभेदे धूमा० देशवाचित्वात् वुञ् । आराज्ञकः । तद्देशभवे त्रि० ।

**आरात्** अव्य० आ+रा बा० आति । १दूरे, २समीपे च । "आदार्द्रं दयितमिवावगाढ़मारात्" माघः । "तमर्च्यमारादभिवर्त्तमानम्" रघुः "विचलत्स्वैः प्लवमानमारात्" भट्टिः

**आराति** पु० आ+रा–क्तिच् । शत्रौ । द्विरूपकोषः ।

**आरातीय** त्रि० आराद्भवः जातः आगतो वा छन्दत्वात् छ आराच्छब्दवर्ज्जनात् नाव्ययस्य टिलोपः । १निकट-दूरयोर्भवे २तत्र जाते ३ताभ्यामागते च ।

**आरात्रिक** न० अरात्रावपि निर्वृत्तं ठञ् । (आरति) नीराजनकर्म्मणि । दीपो हि रात्रावेव प्रदर्श्यते इदं दिनेऽपि दर्श्यते इति तस्य तथात्वम् "ततश्च मूलमन्त्रेण दत्त्वा पुष्पाञ्जलित्रयम् । महानीराजनं कुर्य्यात् महावाद्यजयस्वनैः । प्रज्वालयेत्तदर्थञ्च कर्पूरेण घृतेन वा । आरात्रिकं शुभे पात्रे विषमानेकवर्त्तिकम्" हरि० विलासे तद्विधानादि । तस्य देवाङ्गभेदे भ्रामणप्रमाणमपि तत्रोक्तं यथा "आदौ चतुः पादतले च विष्णोर्द्वौ नाभिदेशे मुखमण्डलैकम् । सर्वेषु चाङ्गेषु च सप्त वारान् आरात्रिकं भक्तजनस्तु कुर्य्यात्" । "शिरसि निहितभारं पात्रमारात्रिकस्य भ्रमयति मयि भूयस्ते कृपार्द्रः कटाक्षः" चतुःषष्ट्युपचारे शङ्करा०

**आराधन** न० आ+राध–ल्युट् । १पाके, २संसिद्धौ णिच्–ल्युट् । ३साधने ४अवाप्तौ ५तोषणे ६सेवने तोषणसेवनयोः संसिद्धिहेतुत्वात् तथात्वम् "साध्वमाराधनमपि रमणीयमस्याः" शकु० । "आराधनायास्य सखी समेताम्" कुमा० । आराध्यतेऽनेन णिच्–करणे ल्युट् । ७सेवासाधने "इदं तु ते भक्तिनम्रं सतामाराधनं वपुः" कुमा० । "सर्व्वत्र दैत्याः ; समतामुपेत समत्वमाराधनमच्युतस्य" भाग० प्रह्लादोक्तिः । [ सेवायाम् ।

**आराधना** स्त्री आ+राध–णिच्–युच् स्त्रीत्वात् टाप् ।

**आराधनीय** त्रि० आराधयितुम् शक्यः आ+राध–णिच्–शक्यार्थे अनीयर् । आराधनयोग्ये "सोऽहं कथं नाम तवाचरेयमाराधनीयस्य धृतेर्विघातम्" रघुः ।

**आराधय** पु० आ+राध–णिच्–बा० य । आराधनकारके ब्राह्म०भावादौ ष्यञ् । आराधय्यम् आराधनकर्त्तृत्वे न० ।

**आराधयितृ** त्रि० आ+राध–णिच्–तृच् । १परिचारके । २सेवके "नन्वयमेवाराधयिता जनस्तव समीपे वर्त्तते" शकु० ।

**आराधित** त्रि० आ+राध–णिच्–क्त । सेविते । "नाराधितोयैः पुरुषः प्रधानः तेषां वृथा जन्म नराधमानाम्" भाग० ।

**आराम** पु० आरम्यतेऽत्र आ+रम–आधारे घञ् । कृत्रिमवने १उद्याने "आत्मारामाविहितरतयोनिर्विकल्पे समाधौ" वेणी० आत्माऽऽरामइव । घञन्तस्य पुंस्त्वात् शासनात् क्लीवत्वोक्तिः प्रामादिकी । "वाप्यारामतड़ागकूपभवनारम्भप्रतिष्ठाव्रतेत्यादि" मुहू० चि० । "क्षेत्रकूपतड़ागानामारामस्य गृहस्य च" "गृहं तड़ागमारामं क्षेत्रं वा भीषया हरन्" "तड़ागारामदाराणामपत्यस्य च विक्रयः" इति च मनुः "जलाशयारामसुरप्रतिष्ठा सौम्यायने जीवशशाङ्कशुक्रे । दृश्ये मृदुक्षिप्रचरध्रुवे स्यात् पक्षे सिते स्वर्वतिथिक्षये वा रिक्तारवर्ज्ये दिवसेऽतिशस्ता" इत्तर०टी०उक्ते षोड़शभिश्च रगणैराराम इत्युक्ते २दण्डकभेदे च । आ+रम–भावे घञ् । ३आरतौ "योऽन्तःसुखोऽन्तराराम:" गीता । अन्तरात्मनि आरामोयस्येति विग्रहः "अघायुरिन्द्रियारामोमोघं पार्थ ! स जीवति" गीता । आरामकरणप्रकारः" वृहत् सं० उक्तः यथा "प्रान्तच्छायाविनिर्मुक्ता न मनोज्ञा जलाशयाः । यस्मादतो जलप्रान्ते ह्यारामान् विनिवेशयेत् । मृद्वी भूः सर्वदृक्षाणां हिता तस्यां तिलान् वपेत् । पुष्पितांस्तांश्च मृद्नीयात् कर्म्मैतत्प्रथमं भुवि । अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः । मङ्गल्याः पूर्वमारामे रोपणीया गृहेषु वा । पनसाशोककदलीजम्बूलकुचदाडिमाः । द्राक्षापालीवताश्चैव बीजपूरातिमुक्तकाः । एते द्रुमाः काण्डरोप्या गोमयेन प्रलेपिताः । मूलच्छेदेऽथवा स्कन्धे रोपणीयाः प्रयत्नतः । अजातशाखाञ्छिशिरे जातशाखान् हिमागमे । वर्षागमे च सुस्कन्धान् यथादिक् प्रतिरोपयेत् । घृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः । आमूलस्कन्धलिप्तानां कुङ्कुमेन विरोपणम् । शुचिर्भूत्वा तरोः पूजां कृत्वा स्नानानुलेपनैः । रोपयेद्रोपितश्चैव पत्रैस्तैरेव जायते । सायं प्रातश्च

घर्म्मान्ते, शीतकाले दिनान्तरे । वर्षासु च भुवः शोषे सेक्तव्या रोपिता द्रुमाः । जम्बूवेतसवानीरकदम्बोदुम्बरार्जुनाः । बीजपूरकमृद्वीकालकुचाश्च सदाडिमाः । वञ्जुलो नक्तमालश्च तिलकः पनसस्तथा । तिमिरोऽम्रातकश्चैव षोडशानूपजाः स्मृताः । उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम् । स्थानात् स्थानान्तरं कार्य्यं वृक्षाणां द्वादशान्तरम् । अभ्यासजातास्तरवः संस्पृशन्तः परस्परम् । पत्रैर्मूलैश्च न फलं सम्यग्यच्छन्ति पीड़िताः । शीतवातातपैरोगो जायते पाण्डुपत्रता । अवृद्धिश्च प्रवालानां शाखाशोषो रसस्रुतिः । चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम् । विड़ङ्गघृतपङ्काक्तान् सेचयेत् क्षीरवारिणा । फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः । घृतशीतपयःसेकः फलपुष्पाभिवृद्धये । अविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम् । सक्तुप्रस्थो जलद्रोणो गोमांसं तुलया सह । सप्तरात्रोषितैरेतैः सेकः कार्य्यो वनस्पतेः । वल्लीगुल्मलतानां च फलपुष्पाय सर्वदा । वासराणि दश दुग्धभावितं बीजमाज्ययुतहस्तयोजितम् । गोमयेन बहुशो विरूक्षितं क्रौड़मार्गपिशितैश्च धूपितम् । मत्स्यशूकरवसासमन्वितं रोपितं च परिकर्म्मितावनौ । क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् । तिन्तिडीत्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः । पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया । कपित्थवल्लीकरणाय मूलान्यास्फोतधात्रीधववासकानाम् । पलाशिनीवेतससूर्य्यवल्लीश्यामातिमुक्तैः सहिताष्टमूली । क्षीरे शृते चाप्यनया सुशीते तालाशतास्थं तु कपित्थबीजम् । दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्यम् । हस्तायतं तद्द्विगुणं गभीरं खात्वाऽवटं प्रोक्तजलावपूर्णम् । शुष्कं प्रदग्धं मधुसर्पिषा तत् प्रलेपयेद्भस्मसमन्वितेन । चूर्णीकृतैर्माषतिलैर्यवैश्च प्रपूरयेन्मृत्तिकयान्तरस्थैः । मत्स्यामिषाम्भःसहितं च हन्याद् यावद्घनत्वं समुपागतं तत् । उप्तं च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलैश्च सिक्तम् । वल्ली भवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति । शतशोऽङ्कोलसम्भूतफलकल्केन भावितम् । एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा । वापितं करकोन्मिश्रं मृदि तत्क्षणजन्मकम् । फलभारान्विता शाखा भवतीति किमद्भुतम् । श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत्प्राज्ञः । अङ्कोलद्भिरद्भिश्छायायां सप्त कृत्वैवम् । माहिषगोमयघृष्टान्यस्य करीषे च तानि निक्षिप्य । करकाजलमृद्योगे न्युप्तान्यह्ना फलकराणि । ध्रुवमृदुमूलविशाखा गुरुभं श्रवणस्तथाश्विनी हस्तम् । उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि" ।

**आरामशीतला** स्त्री आरामे तन्मध्ये शीतला । सुगन्धिपत्रयुक्ते वृक्षभेदे राजनि० "आरामशीतला तिक्ता शीतला पित्तहारिणी" वैद्य० ।

**आरामिक** त्रि० आरामे तद्रक्षणे नियुक्तः ठक् । उद्यानपाले

**आराल** त्रि० ईषदरालम् प्रा०स० । ईषत्कुटिले तारका० इतच् । आरालितः ईषत्कुटिलिते त्रि० ।

**आरालिक** त्रि० अरालं कुटिलं चरति ठक् । १पाचके २कुटिलचारिणि च । धनलोभेन परप्रेरितोहि पाचकोविषादिसंसृष्टं पचतीति तस्य कुटिलचारित्वम् । अतोराज्ञा यथाभूता पाचकानियोज्यास्तदुद्दर्शितम् सुश्रुते यथा "रिपवो विक्रमाक्रान्ता ये च स्वेऽकल्यतां गताः । सिद्धजयः क्रोधविषं विवरं प्राप्य तादृशम् । विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः । स्त्रियो वा विविधान् योगान् कदाचित् सुभगेच्छया । विषकन्योपयोगाद्वा क्षणाज्जह्यादसून्नरः । तस्माद्वैद्येन सततं विषाद्रक्ष्यो नराधिपः । यस्माच्च चेतोऽनित्यत्वमश्ववत् प्रथितं नृणाम् । न विश्वसेत्ततो राजा कदाचिदपि कस्यचित् । कुलीनं धार्म्मिकं स्निग्धं सुभृतं सततोत्थितम् । अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् । क्रोधपारुष्यमात्सर्य्यमदालस्यविवर्जितम् । जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् । मेधाविनमसंश्रान्तमनुरक्तं हितैषिणम् । पटुं प्रगल्भं निपुणं दक्षं मायाविवर्ज्जितम् । पूर्व्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहितागदम् । महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् । । प्रशस्तदिग्देशकृतं शुचिभाण्डं महच्छुचि । सजालकं गवाक्षाढ्यमाप्तवर्गनिषेवितम् । विकक्षसृष्टसंसृष्टं सवितानं कृतार्च्चनम् । परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम् । तत्राध्यक्षं नियुञ्जीत प्रायोवैद्यगुणान्वितम् । शुचयो दक्षिणा दक्षा विनीताः प्रियदर्शनाः । संविभक्ताः सुमनसो नीचकेशनखाः स्थिराः । स्नाता दृढं संयमिनः कृतोष्णीषाः सुसंयताः । तस्य चाज्ञाविधेयाः स्युर्विविधाः परिकर्म्मिणः । आहारस्थितयश्चापि भवन्ति प्राणिनो यतः । तस्मान्महानसे वैद्यः प्रमादरहितो भवेत् । माहानसिकवोढारः सौपौदनिकपौपिकाः । भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन । इङ्गितज्ञो मनुष्याणां

मार्कटाद्युद्भवैः । विद्यादिदातारमेभिर्लिङ्गैश्च बुद्धिमान् । न ददात्युत्तरं पृष्टो विवक्षन् मोहमेति च । अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत् । स्फोटयत्यङ्गुलीर्भूमिमकस्माद्विलिखेदपि । वेपथुर्जायते तस्य त्रस्तश्चान्योऽन्यमीक्षते । क्षामो विवर्णवक्त्रश्च नखैः किञ्चिच्छिनत्त्यपि । आलभेतासकृद्दीनः करेण च शिरोरुहान् । निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः । वर्त्तते विपरीतस्तु विषदाता विचेतनः । केचिद्भयात् पार्थिवस्य त्वरिता वा तदाज्ञया । असतामपि सन्तोऽपि चेष्टां कुर्वन्ति मानवाः । तस्मात् परीक्षणं कार्यं भृत्यानामादितो नृपैः । अन्ने पाने दन्तकाष्ठे तथाभ्यङ्गेऽवलेखने । उत्सादने कषाये च परिषेकेऽनुलेपने । स्रक्षु वस्त्रेषु शय्यासु कवचाभरणेषु च । पादुकापादपीठेषु पृष्ठेषु गजवाजिनाम् । विषजुष्टेषु चान्येषु नस्यधूमाञ्जनादिषु । लक्षणानि प्रवक्ष्यामि चिकित्सामप्यनन्तरम् । स्वपभक्ताद्बलिं न्यस्तं सविषं भक्षयन्ति ये । तत्रैव ते विनश्यन्ति मक्षिकावायसादयः । हुतभुक् तेन चान्नेन भृशं चटचटायते । मयूरकण्ठप्रतिमो जायते चापि दुःसहः । भिन्नार्चिस्तीक्ष्णधूमश्च न चिराच्चोपशाम्यति । चकोरस्याक्षिवैराग्यं जायते क्षिप्रमेव तु । दृष्ट्वान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः । कोकिलः स्वरवैकृत्यं क्रौञ्चस्तु मदमृच्छति । हृष्येन्मयूर उद्विग्नः क्रोशतः शुकसारिके । हंसः क्ष्वेडति चात्यर्थं भृङ्गराजस्तु कूजति । पृषतो विसृजत्यश्रु विष्ठां सृजति मर्कटः । सन्निकृष्टांस्ततः कुर्य्याद्राजस्तान् मृगपक्षिणः" ।

**आराविन्** त्रि॰ आरौति आ+रु–णिनि । सम्यक्शब्दकारके उच्चैःशब्दकारके स्त्रियां ङीप् ।

**आरित्रिक** त्रि॰ अरित्रे भवादि काश्या॰ ठञ् ञिठ् वा । अरित्रभवादौ स्त्रियां ठञि ङीप् ञिठि टाप् ।

**आरिन्दमिक** त्रि॰ अरिन्दमे भवादि ठञ् ञिठ् वा । अरिन्दमभवादौ स्त्रियां ठञि ङीप् ञिठि टाप् ।

**आरिष्टीय** त्रि॰ रिष–हिंसे मन् न॰त॰ अरिष्टः अहिंसकः तस्य सन्निकृष्टदेशादौ कृशा॰ छण् । अहिंसकसन्निकृष्टदेशादौ ।

**आरीहणक** त्रि॰ अरीहणेन निर्वृत्तं अरीहणादि॰ वुञ् । शत्रुघातकनिर्वृत्ते अरीहणेति गणपाठे निर्द्देशात् दीर्घः ।

**आरु** पु॰ ऋ–उण् । १वृक्षभेदे, २कर्कटे, ३शूकरे, च ।

**आरुज** त्रि॰ आरुजति आ+रुज–क । १सम्यक्पीडके, २आभिमुख्येन हन्तरि च "भिन्धि विश्वा अप द्विषः परिबाधो जही मृधः । वसुं स्पार्हं तदा भर" "दृढा चिदारुजम्" ऋ॰८ ४५,१२ । "आरुजं शत्रूणामाभिमुख्येन भङ्क्तारम्" भा॰ । रावणपक्षीये ३राक्षसभेदे पु॰ । "पर्व्वणः पतनोजम्भः खरः क्रोधवशो हरिः । प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः" भा॰व॰ २८४अ॰ ।

**आरुणक** त्रि॰ अरुणदेशे भवादि धूमा॰ वुञ् । अरुणदेशभवादौ ।

**आरुणि** पु॰ अरुणस्यापत्यम् इञ् । १उद्दालके गोतमे मुनौ "उद्दालकोहारुणिः श्वेतकेतुं पुत्रमुवाच" छा॰उ॰ । २वैशम्पायनान्तेवासिभेदे । तस्यान्तेवासिनश्च आलम्ब लङ्ग कमल ऋचाभारुणि ताण्ड्यश्यामायन कठ कलापिनोनवेति बोध्यम् । तेनाधीतं णिनि । ब्राह्मणे तस्य लुक् । आरुणिः । ३सामवेदब्राह्मणभेदे आयोदधौम्यशिष्ये ४मुनिभेदे आयोदयब्दे उदा॰ ५अरुणमुनेरपत्ये पुंस्त्री स्त्रियां ङीप् । "यदारुणीषु तावषीरयुग्ध्वम्" ऋ॰१,६४,७ । अरुणस्येदम् इञ् । ६अरुणसम्बन्धिनि अरुणस्य सूर्यस्यापत्यम् इञ् । ७अरुणतनये अरुणसुतशब्दोक्ते यमादौ । अरुणस्यायमनुजातत्वात् इञ् । अरुणानुजे विनतायाः ८सुतभेदे । "तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः । अरुणश्चारुणिश्चैव विनतायाः सुताः स्मृताः" हरिवं॰ २२६ अ॰ "अरुणश्चारुणिश्चैव तस्य प्राञ्जलयः स्थिताः" हरिवं॰ २६१अ॰ । अरुणस्य गरुडाग्रजस्यापत्यम् इञ् । ९गरुडाग्रजस्यापत्ये पुंस्त्री । स्त्रियां ङीप् ।

**आरुणिन्** पु॰ ब॰व॰ आरुणिना वैशम्पायनान्तेवासिना प्रोक्तमधीयते णिनि । वैशम्पायनान्तेवासिविशेषेण आरुणिना प्रोक्ताध्यायिषु ।

**आरुणेय** पु॰ आरुणेरुद्दालकस्यापत्यम् ढक् । उद्दालकपुत्रे श्वेतकेतौ । "उद्दालकोहारुणिः श्वेतकेतुं पुत्रमुवाचेति" छा॰ उ॰ "श्वेतकेतोरुद्दालकपुत्रत्वोक्तेस्तथात्वम्" "श्वेतकेतुरारुणेयः कं स्विदेवापरीषु" "श्वेतकेतुरारुणेयोब्रह्मचारी" "श्वेतकेतुनारुणेयेन" इति च शत॰ब्रा॰ ।

**आरुत** न॰ आ+रु–भावे क्त । आरावे "शकुनं वायसारुतम्" शकुनशा॰ । कर्त्तरि क्त । २आरावयुक्ते त्रि॰ ।

**आरुद्ध** त्रि॰ आ+रुध–क्त । प्रतिरुद्धे निरुद्धे वादिना कृतगति प्रतिरोधे प्रतिवादिनि ।

**आरुरुक्षु** त्रि॰ आरोढुमिच्छति आ+रुह–सन्–उ । आरोढुमिच्छौ "आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते" गीता "कैलासगौरं वृषमारुरुक्षोः" । "समारुरुक्षुर्दिवमायुषः क्षये" इति च रघुः ।

**आरुषी** स्त्री मनोः कन्याभेदे च्यवनपत्न्याम्। तत्कथा "तस्मिन्निवृत्ते विधिना योगक्षेमाय भार्गवे। अन्वसृत्पादयामास पुत्रं भृगुरनिन्दितम्। च्यवनं दीप्ततपसं धर्मात्मानं यशस्विनम्। यः सरोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत!। आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः। और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः" भा॰आ॰६६अ॰।

**आरुषीय** त्रि॰ अरुषः व्रणस्य सन्निकृष्टदेशादिः कृशा॰छण्। व्रणसन्निकृष्टदेशादौ।

**आरुह** त्रि॰ आ+रुह–क। आरोहणकर्त्तरि।

**आरू** पु॰ ऋ–ऊ–णिच्च। १पिङ्गलवर्णे २तद्युक्ते त्रि॰। आरुशब्दार्थे ३कर्कटम्लुकरादौ च। ततः संज्ञायां कन्। (आड़ु) हिमाचलप्रसिद्धौषधीभेदे च।

**आरूढ़** त्रि॰ आ+रुह–कर्त्तरि क्त। १आरोहणकर्त्तरि "आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः। प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा" स्मृतिः "योगारूढस्य तस्यैव शमः कारणमुच्यते" गीता। "अत्यारूढो हि नारीणामकालज्ञो मनोभवः" रघुः। २उत्पन्ने "तदागमारूढगुरुप्रहर्षः" रघुः "आरूढ उत्पन्नः" मल्लि॰। कर्मणि क्त। यत्रारोहणं कृतं तस्मिन् ३कृतारोहणे प्रासादादौ "आरूढकविताशाखं वन्दे वाल्मीकिकोकिलम्" रामा॰ भावे क्त। ४आरोहणे न॰ "अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः" रघुः।

**आरूढ़ि** स्त्री आ+रुह–क्तिन्। आरोहणे। "अत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा" शकु॰।

**आरेक** पु॰आ+रिच–घञ्। १आकुञ्चने २अतिरेके च।

**आरेचित** त्रि॰ आ+रिच–णिच्–क्त। ईषदाकुञ्चिते "आरेचितभ्रूचतुरैः कटाक्षैः" कुमा॰।

**आरेवत** पु॰आरेवयति रेचयति मलं आ+रेव–णिच्–अतच्। अम्लसारकफलके (सोन्दाल) १आरग्वधवृक्षे तस्य फलम् अण् तस्य लुक्। २तत्फले न॰। तयोर्गुणादि आरग्वधशब्दे ७८४ पृष्ठे उक्तम्।

**आरोग्य** न॰ अरोगस्य भावः ष्यञ्। रोगशून्यत्वे "आरोग्यं चित्तसम्पत्तिर्गङ्गाचरणजं फलम्" प्रा॰त॰पु॰ "वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च" मनुः। "धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः" वैद्य॰।

**आरोग्यव्रत** न॰आरोग्यार्थं व्रतम्। वराहपुराणोक्ते माघशुक्लसप्तमीमारभ्य वत्सरपर्य्यन्तं प्रतिशुक्लसप्तमीतिथि कर्त्तव्ये सूर्य्यव्रतभेदे। यथा "अतःपरं महाराज! व्रतमारोग्यसंज्ञितम्। सितायां माघमासस्य सप्तम्यां समुपोषितः" इत्युपक्रम्य "षष्ठ्याञ्चैव कृताहारः सप्तम्यामुपवासकृत्। अष्टम्याञ्चैव भुञ्जीत एष एव विधिर्मतः। अनेन वत्सरं पूर्णं विधिना योऽर्च्चयेद्रविम्। तस्यारोग्यं धनं धान्यमिह जन्मनि जायते" हेमा॰व्र॰ वरा॰पु॰ इदमारोग्यसप्तमीव्रतत्वेन तत्रोक्तम्।

**आरोग्यशाला** स्त्री आरोग्यार्था शाला शा॰त॰। चिकित्सार्थं राजादिकारिते ग्टहभेदे तत्करणप्रकारो वैद्यके उक्तो यथा "धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः। अतस्त्वारोग्यदाता च नरो भवति सर्वदः। आरोग्यशालां कुर्वीत महौषधपरिच्छदाम्। विदग्धवैद्यसंयुक्तां बहुभृत्यसमंयुताम्। वैद्यस्तु शास्त्रवित् प्राज्ञो दृष्टौषधपराक्रमः। ओषधीमूलतत्त्वज्ञः समुद्धरणकालवित्। बलवीर्य्यविपाकज्ञः शालिमांसौषधीगणे। त्यागिवद्धेहिनां तद्वदकुलःप्रियंवदः"

**आरोग्यस्नान** न॰आरोग्ये रोगशून्यत्वे तन्निमित्तकं स्नानम्। रोगनिर्मुक्तौ कर्त्तव्ये स्नाने तत्र नक्षत्रादिकमुक्तं ज्यो॰त॰। "आदित्येषु चरेषु शक्रदिनकृत्पुष्योपचन्द्रेषु च क्रूराहव्यतिपातविष्टिदिवसेष्विन्द्रावशक्ते तथा। केन्द्रस्थेष्वशुभेषु कामतिथिषु स्नानं गदोन्मुक्तितः शस्तं तत्र न शोभनारविभुजङ्गर्क्षेन्दुमद्वासराः" भुज॰भीम॰ प॰।

**आरोधन** न॰आ+रुध–भावे ल्युट्। १अवरोधने २निरोधे "मध्य आरोधनं दिवः" ऋ॰१,१०५,११। ल्यु। ३आरोधके त्रि॰ आरुध्यते कर्मणि ल्युट्। ४आरोधनीये। करणे ल्युट्। ५आरोधनसाधने "विदुष्टरोदिव आरोधनानि" ऋ॰४,७,८। "आरोधनानि आरोधनसाधनानि" भा॰।

**आरोप** पु॰ आ+रुह–णिच् करणे ल्युट्। अन्यपदार्थे अन्यधर्म्मस्यावभासरूपे मिथ्याज्ञाने। यस्मिन् यो धर्मोनास्ति तादृशधर्मस्य तत्र बुद्ध्या अर्पणाद्बुद्धेस्तथात्वम्। यथा शुक्तौ रजतत्वं तत्तादात्म्यं वा नास्ति बुद्ध्या च तत्र तयोरवगाहनेन तद्धर्मस्यारोपणं क्रियते इति तस्या आरोपत्वम्। तथा च अतद्वति तत्प्रकारकज्ञानमारोपः इति नैयायिकाः स चाध्यास इति वेदान्तिनः अध्यासे कारणमेव तत्र कारणम् तच्च अध्यासशब्दे १४०पृष्ठे विवृतम् स च द्विविधः आहार्यः अनाहार्य्यश्च यत्र बाधनिश्चयसत्त्वेऽपि इच्छया तथाज्ञानम् स आहार्य्यः। स च इच्छाप्रयोज्य एव इतरन्तु बाधनिश्चयप्रतिबध्यत्वात्। स च प्रत्यक्षइव शाब्दोऽपि यथा मुखं चन्द्र इति रूपकयुक्तवाक्यजबोधः तत्र हि मुखे चन्द्रत्वाभावनिश्चयेऽपि चन्द्राभेदेन मुखस्य बोधनादाहार्य्यत्वम्।

"परोक्षज्ञानमनाहार्यं निश्चयश्चेति सिद्धान्त" इति प्रवादस्तु शाब्दबोधातिरिक्तपरः। एतदभिप्रायेणैव "रूपकं रूपितारोपादित्यादिकं रूपकलक्षणम्" आरोपात्मकलक्षणाभेदकथनञ्च सा०दर्पणोक्तं वेदितव्यम् यथा। "विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् सारोपा स्यात्" इति सा०द०। "विषयस्यारोप्यस्य चानिगीर्णस्य स्फुटतया प्रतिभासमानस्यान्यतादात्म्यस्याभेदस्य प्रतीतिजनकत्वेन लक्षणायाः सारोपात्वम्। "आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः इति" चिन्ता०। "एवं वस्तुन्यवस्त्वारोपः इति" वेदान्तसारः।

**आरोपक** पु० आ+रुह-णिच्-ण्वुल्। वृक्षादीनां वापके "गृहसंवेशको दूतो वृक्षारोपक एव च" मनुः।

**आरोपण** पु० आ+रुह-णिच्-ल्युट्। १आरोपशब्दार्थे २आरोहणसम्पादने च। "आर्द्राक्षतारोपणमन्वभूताम्" कुमा० रघुश्च।

**आरोपित** त्रि० आ+रुह-णिच्-क्त। यस्यारोहणं कारितं १तादृशे पदार्थे। "आरोपितं यद्गिरिशेन पश्चात्" "तं देशमारोपितपुष्पचापः" इति च कुमा० २आसञ्जिते च। "आरोपितपर्याणञ्च त्वरिततुरगपरिचारकोपनीतमिन्द्रायुधम्" काद०। [आरोप्ये वस्तुनि

**आरोपणीय** त्रि० आ+रुह-णिच्-अनीयर्। आरोपार्हे

**आरोप्य** त्रि० आ+रुह-णिच्-कर्मणि यत्। १आरोपणीये यथा मुखं चन्द्र इत्यादौ मुखे चन्द्रत्वमारोप्यम्। २अध्यासविषये च इयांस्तु भेदः आरोप्यसन्निकृष्टस्थाने अन्यथाख्यातिः यथा जवासन्निकृष्टे स्फटिकादौ लौहित्यस्य भ्रान्तिः तदसन्निकृष्टस्थले तु अध्यासः असत्ख्यातिरेव यथा इदं रजतमित्यादौ वेदान्तिनः। वे०प० विवरणं दृश्यम्। नैयायिकास्तु उभयत्रान्यथाख्यातिः।

**आरोह** पु० आ+रुह-घञ्। १आक्रमणे २नीचस्थानादूर्द्ध्वदेशगमने ३अङ्कुरादिप्रादुर्भावे शब्दच० ४गजवाजिनामुपरिगमने ५दीर्घत्वे ६उच्चत्वे च ७नितम्बे। "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्यमरः "स्मरमानवरारोहा" उद्भटः। "आरोहैर्निविडबृहन्नितम्बबिम्बैः" माघः।

**आरोहक** त्रि० आ+रुह-ण्वुल्। आरोहण कर्त्तरि।

**आरोहण** न० आ+रुह-ल्युट्। १नीचस्थानादूर्द्ध्वस्थानगमने "आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम्" कुमा० २अङ्कुरादिप्रादुर्भावे च आरुह्यतेऽनेन करणे ल्युट्। सोपाने च "आरोहणं स्यात् सोपानम्" अमरः।

**आरोहणीय** त्रि०। आरोहणं प्रयोजनमस्य अनुप्र० छ। १आरोहणसाधने पदार्थे। आ+रुह-कर्मणि अनीयर्। आरोढुं योग्ये २हयादौ।

**आरोहवत्** त्रि० आरोहो विशिष्टनितम्बस्थानमस्त्यस्य मतुप् पक्षे इनि। प्रशस्तनितम्बयुक्ते स्त्रियां ङीप्।

**आरोहिन्** त्रि० आ+रुह-णिनि। १आरोहणकर्त्तरि नीचादूर्द्ध्वस्थानगामिनि स्त्रियां ङीप्। सा च ग्रहाणां १नक्षत्रदशाभेदे। सा च अवरोहिशब्दे ४४२पृष्ठे लक्षितलक्षणा। ग्रहविशेषाणामारोहिण्याः दशायाः फलमुक्तं सर्वार्थचि० यथा।

सूर्य्यस्य "आरोहिणी वासरनायकस्य दशा महत्त्वं कुरुते च सौख्यम्। परोपकारं सुतदारभूमिं गोवाजिमातङ्गकृषिक्रियादीन्"।

चन्द्रस्य "आरोहिणी चन्द्रदशा प्रपन्ना स्त्रीपुत्रवित्ताम्बरसौख्यकान्तिम्। करोति राज्यं सुखभोजनञ्च देवार्चनं भूसुरतर्पणञ्च"।

कुजस्य "आरोहिणी भूमिसुतस्य सौख्यं दशा तनोत्यत्र नरेशपूजाम् प्रधानतां धैर्य्यमनोभिलाषं भाग्योत्तरं गोगजवाजिसंघम्"

बुधस्य "आरोहिणी सौम्यदशा प्रपन्ना यशोऽतुलं गोहयवाजिसंघम्। मृदन्नभूषाम्बरपानलाभं वाणिज्यभूस्वर्णपरोपकारम्"

गुरोः "आरोहिणी देवगुरोर्महत्त्वं दशा प्रपन्ना कुरुतेऽर्थभूमिम् गानक्रियास्त्रीसुतराजपूजां स्वर्णार्थतः प्राप्तयशःप्रतापम्"।

शुक्रस्य "आरोहिणी शुक्रदशा प्रपन्ना धामाम्बरालङ्कृतिकान्तिपूजाम्। प्रशक्तिसिद्धिं स्वजनैर्विरोधं मातुर्विनाशं परदारसङ्गम्"। कुरुते इत्यनुषङ्गः सर्वत्र।

शनेः "आरोहिणी वासरनायकसूनोर्दशा विपाके नृपलब्धभाग्यम्। वाणिज्यलाभं कृषिभूमिलाभं गोवाजिलाभं सुतदारलाभम्"।

**आर्कलूष** पु० अर्कलूषस्य ऋषिभेदस्यापत्यम् विदा० अञ्। अर्कलूषापत्ये स्त्रियां ङीप्। ततो यूनि अपत्ये हरिता० फक्। आर्कलूषायणः। तद्गोत्रे यून्यपत्ये। [र्षेरपत्ये।

**आर्कलूषि** पुंस्त्री अर्कलूषस्यापत्यं बाह्वा० इञ्। अर्कलूष-

**आर्कायण** त्रि० अर्कस्य गोत्रम् हरिता० फक्। अर्कस्य १गोत्रे। ततः चतुरर्थ्यां अश्वा० फिञ्। आर्कायणिः तत्सन्निकृष्टदेशादौ त्रि० अर्कस्यायनाय सूर्य्यलोकस्य प्राप्तये हितम् अण् पूर्वपदादिति णत्वम्। सूर्य्यलोकगतिसाधने २यज्ञादौ। "आर्कायणैः षोडशभिश्च प्रह्वंस्तेषां फलेनेह च नागतोऽस्मि" भा० आनु० १०४अ०।

**आर्कि** पु० अर्कस्यापत्यम् इञ्। अर्कपुत्रे १यमे २मनौ, ३वैवस्वतमनौ ४सुग्रीवे ५कर्णे च अर्कसुतशब्दे तत्सुतत्वकथा।

**आर्चीद** पु० ऋचीदः पर्वतोऽभिजनोऽस्य अण्। ऋचीद-पर्वतस्थाने पित्रादिक्रमेण वासिनि द्विजभेदे सि०कौ०।

**आर्च** त्रि० ऋचस्येदम् अण्। नाचत्रदिनादौ स्त्रियां ङीप्।

**आर्च्य** त्रि० ऋचे भवः गर्गा० यञ्। नचत्रभवे स्त्रियान्तु लोहिता० षफः स्त्रित्वात् गौरा० ङीष्। आर्च्यायणी

**आर्गय(ा)न** त्रि० ऋगयनस्य व्याख्यानोपन्यः तत्र भवो वा अण् गिरिनद्या० वा णत्वम्। १ऋगयनव्याख्याने ग्रन्थे २तत्रभवे च।

**आर्गल** स्त्री०न० अर्गलमेव स्वार्थे अण् स्त्रीत्वे ङीप्। अर्गल शब्दार्थे द्वाररोधककाष्ठभेदे हिरूपकोषः। [शब्दच०।

**आर्गवध** पु० आरग्वध+पृषो०। आरग्वधवृक्षे (सोन्दाल)

**आर्घा** स्त्री आ+अर्घ–अच्। पीतवर्णायां दीर्घतुण्डायां षट्पदाभायां मधुमक्षिकायाम् राजनि०आर्घ्यशब्दे विवृतिः।

**आर्घ्य** न० आर्घया निर्वृत्तं यत्। १आर्घाख्यमक्षिका-निष्पादिते २जरत्कार्व्याश्रममधूकवृक्षनिर्यासरूपे च मधुनि। तद्विवृतिः भाव०प्र० "मधूकवृक्षनिर्यासं जरत्-कार्व्याश्रमोद्भवाः। स्रवन्त्यार्घ्यं तदाख्यातं ह्येतकं माक्षवे पुनः। तीक्ष्णतुण्डास्तु याः पीता मक्षिकाः षट्पदोपमाः। आर्घास्तास्तत्कृतं यत् स्यादार्घ्यमित्यपरे जगुः। आर्घ्यं मध्वतिचाक्षुष्यं कफपित्तहरं परम्। कषायकटुकं पाके तिक्तञ्च बलपुष्टिदम्"।

**आर्च** त्रि० अर्चाऽस्यस्य "प्रज्ञार्चाभ्योणः" पा०ण। अर्चायुक्ते

**आर्चभिन्** पु०ब०व०ऋचाभेन वैशम्पायनान्तेवासिभेदेन प्रोक्त-मधीयते णिनि। ऋचाभेन 'प्रोक्ताध्यायिषु। "कार्त्त-कौजपादि० आर्चाभिनोमौद्गला इत्यत्र पूर्वपद-प्रकृतिस्वरत्वम्।

**आर्चायण** त्रि० ऋचिभवः नडा०फक्। ऋचिभवे सामादौ।

**आर्चिक** त्रि० ऋचि भवः ऋचो व्याख्यानो ग्रन्थो वा ठञ्। ऋचिभवे १सामभेदे २तद्ग्रन्थभेदे च तत्र हि ऋचि योनौ तत्तत् साम गीतमिति तस्य तथात्वम् यथा आर्चिकः उत्तरार्चिकः एव च सामवेदग्रन्थभेदः। ३तद्व्याख्याने ग्रन्थे च।

**आर्चीक** त्रि० ऋचीके पर्वते भवः अण्। १ऋचीकपर्वतभवे स्वार्थे अण्। २तत्पर्वते च। स च पर्वतः पुष्करतीर्थ सन्निकृष्टः यथोक्तं भा०व०१२५अ०।

"पुष्करेषु महाराज! सर्वेषु च जलं स्पृश। स्थाणो मन्त्राणि च जपन् सिद्धिं प्राप्स्यसि भारत!। सन्धिर्द्वयोर्नरव्याघ्र! त्रेताया द्वापरस्य च। अयं हि दृश्यते पार्थ! सर्वपाप प्रणाशनः। अत्रोपस्पृश चैव त्वं सर्वपापप्रणाशने। आर्चीकः पर्वतश्चैव निवासोऽत्र मनीषिणः। सदाफलः सदा-स्रोतो मरुतां स्थानमुत्तमम्। चैत्याश्चैते बहुविधास्त्रिद-शानां युधिष्ठिर!। एतच्चन्द्रमसस्तीर्थमृषयः पर्युपासते। वैखानसा बालखिल्याः पावका वायुभोजनाः। शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रस्रवणानि च। सर्वाण्यनु परि-क्रम्य यथाकाममुपस्पृश। शान्तनुश्चात्र राजेन्द्र! शुन-कश्च नराधिपः। नरनारायणौ चोभौ स्थानं प्राप्ताः सना-तनम्। इह नित्यशया देवाः पितरश्च महर्षिभिः। आर्चीकपर्वते तेपुस्तान् यजस्व युधिष्ठिर!। इह ते वै चरून् प्राश्नन्नृषयश्च विशाम्पते!। यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः। यमौ च भीमसेनश्च कृष्णा चामित्र कर्षण!। सर्वे चात्र गमिष्यामस्त्वयैव सह पाण्डव!। एतत् प्रस्रवणं पुण्यमिन्द्रस्य मनुजेश्वर!। यत्र धाता विधाता च वरुणश्चोर्द्ध्वमागताः। इह तेऽवसन् राजन्! क्षान्ताः परमधर्म्मिणः। मैत्राणामृजुबुद्धीनामयं गिरिवरः शुभः। एषा सा यमुना राजन्! महर्षिगणसेविता। नाना-यज्ञचिता राजन्! पुण्या पापभयापहा"

**आर्जव** न० ऋजोर्भावः अण्। १सरलतायां "दूरं यात्युदरञ्च रोमलतिका नेत्रार्जवं धावति" सा०द०२परप्रतारणाराहित्ये सारल्यं च दैहिकं मानसञ्च। तत्र दैहिकं कुटिलसंयोग-राहित्यम्। मानसञ्च बाह्याभ्यन्तरे विहितनिषिद्धयो रेकरूपप्रवृत्तिनिवृत्तिमत्त्वम् बाह्ये यथा प्रवृत्तिनिवृत्ती अन्तरेऽपि तथैव न पुनः अन्तरस्थं भावमप्रकाश्य बाह्ये अन्यथापादनम्। तथा स्वाधिगतार्थागोपनेन यथार्था-तार्थप्रकाशनञ्च मानसं सारल्यं वाचिकमार्जवमपि मनोधीनत्वात् मानसमेव आर्ज्जवं च समचित्तत्वेन उचि-तम् आ०त० भारतवाक्येन। "क्षमा इन्द्वसहिष्णुत्व-मार्जवं समचित्तता"। आर्जवञ्च सत्त्वसमुद्रकोगुण-विशेषः यथोक्तं भा० १प्र० १६ अ० "सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोषआर्ज्जवम्। शमोदमस्तपः साम्यं तितिक्षोपरतिः श्रुतम्। ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजोबलं स्मृतिः। स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मा-र्द्दवमेव च। प्रागल्भ्यं प्रश्रयः शीलं सहओजोबलं भगः। गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्त्तिर्मानोऽनहङ्कृतिः। एते चान्ये च भगवन्नित्या यत्र महागुणाः। प्रार्थ्या महत्त्वमिच्छद्भिः"

एतच्च ज्ञानसाधनं यथोक्तं गीतायाम् "अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम्। आचार्य्योपासनं शौचं स्थैर्य्यमात्मविनिग्रहः। इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च। जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्। असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु। मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि। अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्। एतज्ज्ञानमिति प्रोक्तम्" ज्ञानं ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानसाधनमित्यर्थः स्वार्थे अण्। ३सरलेऽपि। "सर्वं जिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम्" "किं व्याजेनार्जवे जने" रामा०।

**आर्जीक** त्रि० ऋजीकस्येदम् अण्। ऋजीकदेशसम्बन्धिनि "सुषोमे शर्य्यणावत्यार्जीके" ऋ० ८,७,२९। "ऋजीकोदेशभेदस्तत्सम्बन्धिनि" भा०।

**आर्ज्जुनायान** पुंस्त्री० अर्ज्जुनस्य गोत्रापत्यम् अश्वा० फञ्। अर्ज्जुनगोत्रापत्ये स्त्रियां टाप्। तस्य विषयो देशः। राजन्या० वुञ्। आर्ज्जुनायनकः। तद्विषये देशे।

**आर्ज्जुनावक** त्रि० अर्ज्जुनावे देशे भवः धूमा० वुञ्। अर्ज्जुनावनामदेशभवे।

**आर्ज्जुनि** पु० अर्ज्जुनस्यापत्यं बाह्वा० इञ्। अर्ज्जुनापत्ये अभिमन्यौ। तदुत्पत्तिकथा "ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा। जयन्तमिव पौलोमी ख्यातिमन्तमजीजनत्। दीर्घबाहुं महोरस्कं वृषभाक्षमरिन्दमम्। सुभद्रा सुषुवे वीरमभिमन्युं नरर्षभम्। अभीश्च मन्युमांश्चैव ततस्तमरिमर्द्दनम्। अभिमन्युमिति प्राहुरार्ज्जुनिं पुरुषर्षभम्" भा० आ०प० २२१ अ०। स च वर्चोनामसोमपुत्रस्यावतारः यथोक्तं भा० आ० ६७अ०। "यस्तु वर्च्चा इति ख्यातः सोमपुत्रः प्रतापवान्। सोऽभिमन्युर्बृहत्कीर्त्तिरर्ज्जुनस्य सुतोऽभवत्। यस्यावतरणे राजन्! सुरान् सोमोऽब्रवीदिदम्। नाहं दद्यां प्रियं पुत्रं मम प्राणैर्गरीयसम्। समयः क्रियतामेष न शक्यमतिवर्त्तितुम्। सुरकार्यं हि नः कार्य्यमसुराणां क्षितौ वधः। तत्र यास्यत्ययं वर्च्चा न च स्थास्यति वै चिरम्। ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा। सोऽर्ज्जुनेत्यभिविख्यातो पाण्डोः पुत्त्रः प्रतापवान्। तस्यायं भविता पुत्रो बालोभुवि महारथः। ततः षोडशवर्षाणि स्थास्यत्यमरसत्तमाः!। अस्य षोडशवर्षस्य स संग्रामो भविष्यति। यत्रांशा वः करिष्यन्ति कर्म वीरनिसूदनम्। नरनारायणाभ्यां तु स संग्रामो विना कृतः। चक्रव्यूहं समास्थाय योधयिष्यन्ति वः सुराः!। विमुखाञ्छात्रवान् सर्वान् कारयिष्यति मे सुतः। बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति। महारथानां वीराणां कदनञ्च करिष्यति। सर्व्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति। दिनार्द्धेन महाबाहुः प्रेतराजपुरं प्रति। ततो महारथैर्व्वीरैः समेत्य बहुशो रणे। दिनक्षये महाबाहुर्मया भूयः समेष्यति। एकं वंशकरं पुत्त्रं वीरं वै जनयिष्यति। प्रनष्टं भारतं वंशं स भूयोधारयिष्यति। एतत् सोमवचः श्रुत्वा तथाऽस्त्विति दिवौकसः। सर्व्वे सम्पूजयामासुः ताराधिपमपूजयन्। एवं ते कथितं राजंस्तव जन्म पितुः पितुः" अभिमन्युशब्देऽस्य युद्धचर्य्या २९५ पृष्ठे उक्ता।

**आर्ज्जुनेय** पु० अर्ज्जुन्या अपत्यं ढक्। अर्ज्जुनीपुत्रे "कौत्से ऋषौ" "अहं कुत्समार्ज्जुनेयं न्यृञ्जेऽहम्" ऋ०४,२६,१ "आर्ज्जुनेयमर्ज्जुन्याः पुत्रं कुत्सम्" भा०। आर्ज्जुनी च गाभीः कुत्सस्य गाभ्या प्रतिपालितत्वेन तत्पुत्रत्वात् तथात्वम्।

**आर्त्त** त्रि० आ+ऋ—क्त। १पीड़िते, २दुःखिते, ३अस्वस्थे च। अप्राप्तलिङ्गसंज्ञकस्यैव धातोर्वृद्धिं वदन् दुर्गादासः आर्त्तपदसिद्धिं कर्त्तुमशक्नुवन् मत्याख्येयः। आर्त्तरवः आर्त्तनादः इत्यादि। "द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्" "तुमुलेनार्त्तरवेण वेजिताः"। "वलमार्त्तभयोपशान्तये" "तदीयमाक्रन्दितमार्त्तसाधोः"। "राजापि यद्वियोगार्त्तः" "अभिपेदे निदाघार्त्तां" इति च रघुः। "न दुर्बहश्रोणिपयोधरार्त्ता" कुमा० "विदितवार्त्तावार्त्तौ" दश० अत्र विदित वार्त्तौ आर्त्तौ इत्येव च्छेदः साधुः तद्व्याख्यानेऽनाभिर्यिदन्यथाच्छेदमभिप्रेत्य व्याख्यातं न तत् साधु। "नार्त्तोऽप्यपवदेद्विप्रान्" मनुः। "सुस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात्" शु०त०स्मृतिः "आर्त्तार्त्ते मुदिता हृष्टे प्रवासे मलिना कृशा:" शु०त० स्का० पु० "आर्त्तिनाशोऽस्यस्य अच्"। ४विनाशिनि "अतोऽन्यदार्त्तम्" वृह०उ०। "अतएतस्मादु ब्रह्मणोऽशनायाद्यतीतात्मस्वरूपाद्विलक्षणाद्यदन्यदविद्याविषयमेषणास्वरूपं वस्त्वन्तरम् तद् आर्त्तं विनाशि, आर्त्तिपरिगृहीतम्" शाङ्क०भा०।

**आर्त्तगल** पु० आर्त्त इव गलति गल—अच्। नीलझिण्ट्याम्

**आर्त्तपर्णि** पु० ऋतपर्णस्यापत्यम् इञ्। ऋतपर्णनृपस्यापत्ये सुदासे सूर्य्यवंश्ये नृपभेदे। "भगीरथसुतो राजा श्रुत इत्यभिविश्रुतः। नाभागस्तु सुतस्यासीत् पुत्रः परमधार्मिकः। अम्बरीषस्तु नाभागिः सिन्धुद्वीपपिताऽभवत्। अयुताजित्तु दायादः सिन्धुद्वीपस्य वीर्य्यवान्। अयुताजित्सुतादा-

सीहतपर्णो महायशाः । दिव्याश्वहृदयज्ञो वै राजा नलसखो बली । ऋतपर्णस्य तस्यासीदार्त्तपर्णिर्महीपतिः । सुदासस्तस्य तनयो राजा इन्द्रसखोऽभवत्" हरिवंशे १५ अ०

**आर्त्तभाग** पुंस्त्री ऋतभागस्य ऋषेर्गोत्रापत्यम् विदा० अञ् । ऋतभागर्षेर्गोत्रापत्ये । स्त्रियां ङीप् ।

**आर्त्तव** त्रि० ऋतुरस्य प्राप्तः अण् । ऋतुभवे १पुष्पादौ "आर्तवान्यपभुञ्जना पुष्पाणि च फलानि च" रामा० "स्वयमङ्केषु ममेदमार्त्तवम्" कुमा० स्त्रियां ङीप् । "अभिभूय विभूतिमार्त्तवीम्" रघुः । ऋतुर्मासद्वयात्मकः हेमन्तादिः कालः "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" इति मनूक्तः स्त्रीणां मध्यस्थशोणितदर्शनयोग्यः षोडशरात्रिकः कालश्च । स कालोऽस्य प्राप्तः तादृशे स्त्रीणां २रजसि च । "नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने" । तस्मात् युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्" मनुः । स्त्रीणामार्त्तवं (शोणितविशेषः) पुंसः शुक्रमिव मासेन रसपाकेन जायते यथोक्तं सुश्रुते । "एवं मासेन रसः शुक्रीभवति स्त्रीणामार्त्तवम्" । यथा च रसस्य पाकस्तथाऽसृक्शब्दे ४६२पृष्ठे उक्तम् । बाल्ये तस्य सत्त्वेऽपि बालस्य शुक्रप्रादुर्भावाभाववत् न तस्यामवस्थायामभिव्यक्तिर्यथोक्तं सुश्रुते "यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नैव नास्तीत्यथवास्ति सतां भावानामभिव्यक्तिरिति ज्ञात्वा केवलं सौक्ष्म्यान्नाभिव्यज्यते स एव गन्धो विवृतपत्रकेशरैः कालान्तरेणाभिव्यक्तिं गच्छत्येवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति रोमराज्यादयोऽथार्त्तवादयश्च विशेषा नारीणां रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिः"

"तदभिव्यक्तिकालादिकं तद्दर्शने दम्पत्योरितिकर्त्तव्यतावहितम्" भाव० प्र० दर्शितं यथा ।

"द्वादशाद्वत्सरादूर्द्ध्वमापञ्चाशत्समं स्त्रियः । मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत् । आर्त्तवस्रावदिवसादृतुः षोडश रात्रयः । गर्भग्रहणयोग्यस्तु स एव समयः स्मृतः । सर्वेषामेव वर्णानां स्त्रीणां सर्वादिसंमतः" । स एव पूर्व्वोक्तः समयः । ग्रन्थान्तरे वर्णभेदात् विशेषः । तद्यथा "स्नानदिवसादूर्द्ध्वं द्वादशरात्रावधिर्ब्राह्मण्याः दशरात्रावधिः क्षत्रियायाः । अष्टरात्रावधिर्वैश्यायाः षड्रात्रावधिः शूद्रायाः गर्भधारणशक्तिः" । अथ स्त्रीणां नियममाह "आर्त्तवस्रावदिवसात् त्र्यहं सा ब्रह्मचारिणी । शयीत दर्भशय्यायां पश्येदपि पतिं न च । करे शरावे पर्णे वा हविष्यं त्र्यहमाचरेत् । अश्रुपातं नखच्छेदमभ्यङ्गमनुलेपनम् । नेत्रयोरञ्जनं स्नानं दिवास्वापं प्रधावनम् । अत्युच्चशब्दश्रवणं हसनं बहुभाषणम् । आयासं भूमिखननं प्रवातं च विवर्जयेत् । एतस्यानियमाकरणे दोषमाह । "अज्ञानाद्वा प्रमादाद्वा लौल्याद्वा दैवतश्च वा । सा चेत् कुर्याद्विषिद्धानि गर्भो दोषांस्तदाप्नुयात् । एतस्या रोदनाद्गर्भो भवेद्विकृतलोचनः । नखच्छेदेन कुनखी कुष्ठी त्वभ्यङ्गतो भवेत् । अनुलेपात्तथा स्नानाद्दुःखशीलोऽञ्जनादन्धः । स्वापशीलो दिवास्वापात् चञ्चलः स्यात्प्रधावनात् । अत्युच्चशब्दश्रवणाद्बधिरः खलु जायते । तालुदन्तौष्ठजिह्वासु श्यावो हसनतो भवेत् । प्रलापी भूरिकथनादुन्मत्तस्तु परिश्रमात् । खलतिर्भूमिखननादुन्मत्तो वातसेवनात् । अथ रजस्वलाकृत्यम् "ततश्चतुर्थे दिवसे स्नाता सद्वसनादिभिः । भूषिता सुमनाः पश्येद्भर्त्तारं समलङ्कृतम् । पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत्पुत्रं ततः पश्येत्पतिं प्रियम् । प्रियमिति भर्त्तुर्नासन्ने पुत्रादिकमपि पश्येत् । चतुर्थदिवसेऽपि रजोनिवृत्तौ स्त्री पत्या सङ्गच्छेत न तु रजोऽनुवृत्तौ यत आह । "प्रवहत्सलिले क्षिप्तं द्रव्यं गच्छत्यधो यथा । तथा वहति रक्ते तु क्षिप्तं वीर्य्यमधोव्रजेत् । अथ भर्त्तृकृत्यम् । अथ गर्भाधाने निषिद्धं विहितञ्च कालं तयोः फलञ्चाह । "आयुःक्षयभयाद्भर्त्ता प्रथमे दिवसे तथा । द्वितीयेऽपि दिने भर्त्ता व्रजेदृतुमतीं स्त्रियम् । तत्र यथाहितो गर्भो जायमानो न जीवति । आहितो यस्तृतीयेऽह्नि स्वल्पायुर्विकलाङ्गकः । अतश्चतुर्थी षष्ठी स्यादष्टमी दशमी तथा । द्वादशी चापि या रात्रिस्तस्यां तां विधिना भजेत् । विधिना गर्भाधानविधिना । अतोत्तरोत्तरं विद्यादायुरारोग्यमेव च । प्रजाः सौभाग्यमैश्वर्य्यं बलं चाभिगमात् फलम् । युग्मायुग्मरात्रीणां फलमाह । "युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु" । तत्र दम्पत्योः संभोगे यादृक् पुमान् युक्तस्तादृगुच्यते "स्नातश्चन्दनलिप्ताङ्गः सुगन्धसुमनोऽन्वितः । भुक्तवान् सुवसनः सुवेशः समलङ्कृतः । ताम्बूलवदनस्तस्यामनुरक्तोऽधिकस्मरः । पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे" । तत्रायोग्यं पुरुषमाह "अत्याशितोऽधृतिः क्षुद्वान् सव्यथाङ्गः पिपासितः । बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् । तत्र स्त्री यादृशी योग्या तादृगुच्यते । "पुरुषस्य गुणैर्युक्ता विहितस्नानभोजना । नारी ऋतुमती पुंसा सङ्गच्छेत सुतार्थिनी । तत्रायोग्यां स्त्रियमाह । "रजस्वला व्याधि-

मतो विशेषाद्योनिरोगिणी । वयोऽधिका च निष्कामा मलिना गर्भिणी तथा । एतासां सङ्गमात् पुंसां वैगुण्यानि भवन्ति हि" तत्र रजस्वला दिनत्रयं यावद्गता निषिद्धा यत उक्तम् । "प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी पुंसा यथा वर्ज्या तथाङ्गना । व्याधिमती वर्ज्या तत्र स्त्रीणां व्याधयः । प्रदरादयः तद्युक्ता निषिद्धा तत्रापि विशेषाद्योनिरोगिणी" भावप्रकाशः ।

आर्त्तवदोषाश्च सचिकित्साः सुश्रुते दर्शिता यथा ।
"आर्त्तवमपि त्रिभिर्दोषैः शोणितचतुर्थैः पृथग्द्वन्द्वैः समस्तैश्चोपसृष्टमबीजं भवति तदपि दोषवर्णवेदनादिभिर्विज्ञेयम् । तेषु कुणपग्रन्थिपूतिपूयक्षीणमूत्रपुरीषप्रकाशमसाध्यं साध्यमन्यद्भवति । भवन्ति चात्र । तेष्वाद्यान् शुक्रदोषांस्त्रीन् स्नेहस्वेदादिभिर्जयेत् । क्रियाविशेषैर्मतिमांस्तथा चोत्तरवस्तिभिः । पाययेत नरं सर्पिर्भिषक् कुणपरेतसि । धातकीपुष्पखदिरदाडिमार्जुनसाधितम् । पाययेदथ वा सर्पिः शालसारादिसाधितम् । ग्रन्थिभूते शटीसिद्धं पालाशे वापि भस्मनि । परूषकवटादिभ्यां पूयप्रख्ये च साधितम् । भागुक्तं वक्ष्यते यच्च तत् कार्य्यं क्षीणरेतसि । विट्प्रभे पाययेत् सिद्धं चित्रकोशीरहिङ्गुभिः । स्निग्धं वान्तं विरिक्तञ्च निरूढमनुवासितम् । योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना । विधिमुत्तरवस्त्यन्तं कुर्य्यादार्त्तवशुद्धये । स्त्रीणां स्नेहादियुक्तानां चतसृष्वार्त्तवार्त्तिषु । कुर्य्यात् कल्कान् पिचूंश्चापि पथ्यान्याचमनानि च । ग्रन्थिभूते पिबेत् पाठां त्र्यूषणं वृक्षकाणि च । दुर्गन्धे पूयसङ्काशे मज्जतुल्ये तथार्त्तवे । पिबेद्भद्रश्रियः क्वाथं चन्दनक्वाथमेव च । शुक्रदोषहराणाञ्च यथास्वमवचारणम् । दोषाणां शुद्धिकरणं शेषास्वप्यार्त्तवार्त्तिषु । अन्नं शालियवं मद्यं हितं मांसञ्च पित्तलम् । स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च । शुक्रमिच्छन्ति केचित्तु तैलक्षौद्रनिभन्तथा । शशासृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमम् । तदार्त्तवं प्रशंसन्ति यद्वासो न विरञ्जयेत् । तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि । असृग्दरं विजानीयादतोऽन्यद्रक्तलक्षणात् । असृग्दरो भवेत् सर्वः साङ्गमर्दः सवेदनः । तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा तमस्तृषा । दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः । तरुण्या हितसेविन्यास्तदल्पोपद्रवं भिषक् । रक्तपित्तविधानेन यथावत्समुपाचरेत् । दोषैरावृतमार्गत्वादार्त्तवं नश्यति स्त्रियाः । तत्र मत्स्यकुलत्थाम्लतिलमाषसुरा हिताः । पाने मूत्रमुदश्विच्च दधि शुक्तञ्च भोजने । क्षीणं प्राणीरितं रक्तं सशल्यचिकित्सितम् । तयाप्यत्र विधातव्यं विधानं नष्टरक्तवत्" ।

इत्थं दोषापसारणेन शुद्धे आर्त्तवे भोजनादिनियमवत्यां दिवसविशेषे स्त्रिया सह संवेशादि कर्त्तव्यं यथोक्तं सुश्रुते । "एवमदुष्टशुक्रः शुद्धार्त्तवा ऋतौ प्रथमदिवसात्प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत् । किङ्कारणम्—दिवा स्वपन्त्याः स्वापशीलोऽञ्जनादन्धो रोदनाद्विकृतदृष्टिः । स्नानानुलेपनाद्दुःखशीलस्तैलाभ्यङ्गात् कुष्ठी नखापकर्त्तनात् कुनखी प्रधावनाच्चञ्चलो हसनाच्छ्यावदन्तौष्ठतालुजिह्वः प्रलापी चातिकथनादतिशब्दश्रवणाद्बधिरोऽवलेखनात् खलतिर्मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत् । दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं त्र्यहञ्च भर्त्तुः संरक्षेत् । ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससमलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्त्तारं दर्शयेत् । तत् कस्य हेतोः? । पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः । ततो विधानं पुत्रीयमुपाध्यायः समाचरेत् । कर्मान्ते च क्रमं ह्येनमारभेत विचक्षणः । ततोऽपराह्णे पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामादिभिरभिविश्वास्य विकल्प्यैवञ्चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां चोपेयादिति पुत्रकामः । एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च । प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै । अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च स्त्रीकामः । त्रयोदशीप्रभृतयो निन्द्याः । तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति । यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते । द्वितीयेऽप्येवं सूतिकागृहे वा तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति । न च प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति यथा नद्यां प्रतिस्रोतःप्लावि द्रव्यं प्रतिक्षिप्तं प्रतिनिवर्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यम् । तस्मान्नियमवतीं त्रिरात्रं परिहरेत् अतःपरमुपेयात्" ।

दिनविशेष आर्त्तवकालगमने पुत्रादिविशेषजननमुक्तम्" नि॰सि॰ व्यासेन "रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः । पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ।

सप्तम्यां प्रजा योषिदष्टम्यामीश्वरः पुमान्। नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः। एकादश्यामधर्म्मा स्त्री द्वादश्यां पुरुषोत्तमः। त्रयोदश्यां सुता पापा वर्णसङ्करकारिणी। धर्म्मज्ञश्च कृतज्ञश्च आत्मवेदी दृढव्रतः। प्रजायते चतुर्द्दश्यां, पञ्चदश्यां पतिव्रता। आश्रयः सर्व्वभूतानां षोड़श्यां जायते पुमान्"। मनुवचने स्वाभाविक इत्युक्तेः रोगादन्यत्र कालेऽप्यार्त्तवं भवति तेन तत्राशुद्धौ विशेषः नि॰ सि॰ व्यवस्थापितो यथा "प्रथमरजोदर्शनात् सप्तदशदिनपर्य्यन्तं पुनारजोदर्शने स्नानमात्रम्, अष्टादशे एकरात्रम्, एकोनविंशे द्व्यहं, विंशतिप्रभृतिदिनेषु त्रिरात्रमशुचिर्भवति। "ऊर्द्ध्वं चतुर्दशदिनादशुचित्वं न विद्यते" इति वाक्यन्तु स्नानदिनावधिचतुर्दशदिनमध्ये पुनारजोदर्शनेऽशुचित्वाभावपरम्" "रोगेण यत् रजः स्त्रीणामन्यत्र हि प्रवर्त्तते। नाशुचिस्तु भवेत्तेन यस्माद्वैकारिकं मतमिति" वचनात्। रोगजे रजसि शुद्धावपि धर्माधिकारिता रजोनिवृत्तावेव। "साध्वाचारा न तावत् स्यात् स्नातापि स्त्री रजस्वला। यावत् प्रवर्त्तमानं हि रजोनैव निवर्त्तते इति" हेमा॰ श्रा॰ ख॰ शङ्खोक्तेः।

**आर्त्ति** स्त्री आ+ऋ—क्तिन्। १पीड़ायाम् २मनोव्यथायाञ्च। "आर्त्तिं न पश्यसि पुरूरवसस्तदर्थाम्" विक्रमो॰। "पार्ष्णिकद्य तथौर्य्यार्त्तिं प्रतिरुद्धकमारुषैः" नारदः। "यदि दीक्षितमार्त्तिर्विन्देत्" शत॰ ब्रा॰। "न विद्यमानेष्वर्थेषु नार्त्त्यामपि यतस्ततः" "नचार्त्तिमृच्छति क्षिप्रम्" इति च मनुः "दाहातिसारपित्तासृङ्मूर्च्छामद्यविषार्त्तिषु" सुश्रु॰ ३विनाशे च।

**आर्त्नि(र्त्नी)** स्त्री आ+ऋ—बा॰ नि आर्त्तभावश्च वा ङीप्। गतिकर्त्र्याम्। "संविदाने आर्त्नी इमे" ऋ॰ ६, ७५, ४। "अत्रेव योऽपिनह्याम्युभे आर्त्नी इव ज्यया" ऋ॰ १०, १६६, ३।

**आर्त्विज** त्रि॰ ऋत्विज इदम् अण्। ऋत्विक्सम्बन्धिनि।

**आर्त्विजीन** पु॰ ऋत्विजं तत्कर्माऽर्हति खञ्। स्वयं यजमाने" सि॰ कौ॰। "दक्षिणत्विष्टं कृतमार्त्विजीनैः" भट्टिः "वयं वा आर्त्विजीनाः स्मोवयं दक्षिणीयाम्" शत॰ ब्रा॰।

**आर्त्विज्य** न॰ ऋत्विजोभावः कर्म वा ष्यञ्। ऋत्विक्कर्म्मणि याजने "स मा सर्व्वैरार्त्विज्यैर्वृणीते" "सहोवाच भगवन्तं वा सर्व्वैरार्त्विज्यैः" इति च" छा॰ उ॰।

**आर्थ** त्रि॰ अर्थादागतः अण्। अर्थतः प्राप्ते वाक्यार्थमर्य्यादया प्राप्ते" स्त्रियां ङीप्। सा च अलङ्कारोक्तायामर्थसम्भवायां २व्यञ्जनायाम्। तल्लक्षणादि सा॰ द॰। यथा एवं शाब्दीं व्यञ्जनामुक्त्वा आर्थीं व्यञ्जनामाह "वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः। प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च। वैशिष्ट्यादन्यमर्थं या बोधयेत्सार्थसम्भवा"। व्यञ्जनेति सम्बध्यते तत्र वक्तृवाक्यप्रस्तावदेशकालवैशिष्ट्ये यथा। "कालोमधुः कुपितएष च पुष्पधन्वा धीरावहन्ति रतिखेदहराः समीराः। केलीवनीयमपि वञ्जुलकुञ्जमञ्जु दूरे पतिः कथय किं करणीयमद्य"। अत्रैतं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रेष्यतामिति सखीं प्रति कयाचित् द्योत्यते। बोद्धव्यवैशिष्ट्ये यथा। "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरोनेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः। मिथ्यावादिनि! दूति! बान्धवजनस्याज्ञातपीडागमे! वापीं स्नातुमितोगतासि, न पुनस्तस्याधमस्यान्तिकम्"। अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया लक्ष्यं तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्यदूतीवैशिष्ट्याद्बोध्यते। अन्यसन्निधिवैशिष्ट्ये यथा "उय्य णिच्चल णिप्पन्दभिसिणीपत्तम्मि रेहइ बलाआ। णिम्मलमरगअभाअण-परिट्ठिआ संखसुत्ति व्व"। उत्र बलाकाया निस्पन्दत्वेन विश्वस्तत्वं तेनास्य देशस्य विजनत्वमतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्नकामुकं प्रत्युच्यते। अत्रैव स्थाननिर्ज्जनत्वरूपव्यङ्ग्यार्थवैशिष्ट्यं प्रयोजनम्। भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते। इत्युक्तप्रकारायाः काकोर्भेदाः आकरादिभ्योज्ञातव्याः। एतद्वैशिष्ट्ये यथा। "गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतोगन्तुम्। अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ"। अत्र नैष्यति अपि तर्हि एष्यत्येवेति काक्वा व्यज्यते। चेष्टावैशिष्ट्ये यथा। "सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया। हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्"। अत्र सन्ध्यासङ्केतकाल इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते। एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम्। त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता। अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्व्वा अप्यनन्तरोक्ताव्यञ्जनास्त्रिविधाः तत्र वाच्यार्थस्य व्यञ्जना यथा। कालोमधुरित्यादि। लक्ष्यार्थस्य यथा। निःशेषच्युतचन्दनमित्यादि। व्यङ्ग्यार्थस्य यथा उय्य णिच्चलेत्यादि"।

भाट्टमते ३भावनाभेदे। भावना हि भावयितुर्व्यापारः सा च द्विविधा शाब्दी आर्थी च। तत्र प्रयोजनसाधनतया तदिच्छाविषयनिष्पादको व्यापारःआर्थी भावना सा चाख्यातेनोच्यते आख्यातसामान्यस्य व्यापारवाचित्वात्। सा चां-

शब्दयवती किं भावयेत्, केन भावयेत् कथं भावयेदित्याकाङ्क्षात्रयोदयात्। तत्रपौरुषेयमंशत्रयञ्च साध्यं साधनमितिकर्त्तव्यता चेति। तथा च किंभावयेदिति साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति, साधनाकाङ्क्षायां यागादिःसाधनत्वेन, इतिकर्त्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्त्तव्यतात्वेन। तेन प्रयाजाद्यङ्गजातेतिकर्त्तव्यताकेन यागेन स्वर्गादिफलं साधयेदिति विशिष्टवाक्यार्थबोधः इति भाट्टा मन्यन्ते ।

**आर्थिक** त्रि॰ अर्थं गृह्णाति ठक्। १अर्थग्राहके। अर्थश्चेह अभिधेयं प्रयोजनं धनञ्च। अर्थादागतः ठक्। २अर्थादागते वाक्यार्थमर्य्यादया प्राप्ते च। [ ङीप्।

**आर्द्द** त्रि॰ आ+अर्द्द–अच्। सम्यक्पीड़के स्त्रियां गौरा॰

**आ(अ)र्द्धकंसिक** त्रि॰ अर्द्धकंसेन क्रीतम् ठक् "अर्द्धात् परिमाणस्येति" पा॰ उत्तरपदस्य वृद्धेः "पूर्व्वपदस्य वेति" च प्राप्तौ "नातः परस्येति" पा॰ निषेधात् नोत्तरपदवृद्धिः "कंसाट्टिठन्" पा॰ इति तु न प्रवर्त्तते समासे तदन्तविधिप्रतिषेधात्। अर्द्धकंसक्रीते। एवं आ(अ)र्द्धप्रस्थिकः। अर्द्धप्रस्थक्रीते आ(अ)र्द्धकौड़विकः आ(अ)र्द्धद्रौणिकः इत्यादौ अदन्तत्वाभावात् उत्तरवृद्धिः। अर्द्धकुड़वादिक्रीते त्रि॰।

**आर्द्धधातुक** न॰ "आर्द्धधातुकं शेषः" पा॰ परिभाषिते तिङ्शिद्भ्योभिन्ने धात्वधिकारविहिते प्रत्ययभेदे "आर्द्धधातुकस्येड्वलादेः" "सार्व्वधातुकार्द्धधातुकयोः" इति च पा॰।

**आर्द्धपुर** न॰ अर्द्धं पुरस्य एकदेशित॰ स्वार्थे अण्। पुरस्य समानेऽर्द्धे प्रतिपूर्व्वस्य तत्पुरुषे अर्द्धादि॰ नान्तोदात्तता।

**आर्द्धरात्रिक** त्रि॰ अर्द्धरात्रे भवः ठञ्। अर्द्धरात्रभवे।

**आर्द्धवाहनिक** त्रि॰ "अर्द्धवाहनेन जीवति वेतना॰ ठक्। अर्द्धवाहनेन जीविनि।

**आर्द्धिक** पुं स्त्री "वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः। आर्द्धिकः स तु विज्ञेयो भोज्यो विप्रैर्न संशयः" इति पराशरोक्ते १अम्बष्ठवर्णे स्त्रियां जातित्वात् ङीप्। अर्द्धं वेतनसस्यार्द्धमर्हति ठक्। वेतनसस्यार्द्धस्य वेतनरूपतया स्वामिसकाशात् ग्राहके २कर्षकभेदे पु॰। "आर्द्धिकः कुलमित्रं च गोपालो दासनापितौ। एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेदिति" मनुनाऽऽर्द्धिकस्य शूद्रत्वेन कीर्त्तनात् अम्बष्ठस्य च शूद्रभिन्नत्वेनास्य पराशरोक्तार्द्धिकाद्भिन्नत्वं प्रतीयते। एतदभिप्रायेणैव" मिता॰कृता अर्द्धसीरिशब्दे दर्शित याज्ञवल्क्यस्मृतिव्याख्याने कृषिफलस्यार्द्धहारिण एव शूद्रेषु भोज्यान्नतोक्ता।

**आर्द्र** त्रि॰ अर्द्द–रक् दीर्घश्च। १क्लिन्ने २सरसे ३सजले वस्तुनि तद्भेदाश्च वैद्य॰दर्शिताः। "आर्द्रं द्रव्यं द्विधा प्रोक्तं सरसं नीरसं तथा। सदुग्धं सुप्ररसकं द्विधा नीरसमुच्यते। वास्तूकं सार्षपं शाकं निर्गुण्ड्यैरण्डमार्षकम्। धत्तूराद्यमिदं सर्व्वमार्द्रं सरसमुच्यते। वटाश्वत्थकरीराद्यमार्द्रं द्रव्यं तु नीरसम्। सदुग्धं तु द्विधा प्रोक्तं मृदु तीक्ष्णमिति क्रमात्। शाल्मलाश्वत्थसीहुण्डक्षीरिण्याद्यास्तु तीक्ष्णकाः। दुग्धिकाक्षीरिण्याद्याश्च मृदुदुग्धाः प्रकीर्त्तिताः"। "आर्द्राञ्चतारोपणमन्वभूताम्" कुमा॰रघुश्च। "तेषां गुर्वी स्वादु शीता पिप्पल्यार्द्रा कफावहा" "आर्द्रा कुस्तुम्बरी कुर्य्यात् स्वादुसौगन्ध्यहृद्यताम्" सुश्रु॰ "धूमोष्मणा त्याजितमार्द्रभावम्" कुमा॰ "४काठिन्यशून्ये आनुगुण्ययुक्ते च "धनुर्भृतोऽप्यस्य दयार्द्रभावम्" रघुः। अश्विन्यवधिके राशिचक्रस्थे मिथुनराशिघटके ५षष्ठे नक्षत्रे स्त्री न॰। "कन्यायां लग्नपक्षे तु पूजयित्वार्द्रभे दिवा। नवम्यां बोधयेद्देवीं यथाविभवविस्तरैः" दु॰त॰ लिङ्ग पु॰। "इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः" बोधनमन्त्रः। "आर्द्राद्यादि विशाखान्तं रविचारेण वर्षति" ज्यो॰ "मृगशिरसोऽर्द्धं चार्द्रा पुनर्वसुत्रिपादं मिथुनम्" ज्यो॰ आर्द्रास्वरूपयोगताराादिकम् अश्लेषाशब्दे ४६७ पृष्ठे उक्तम् अस्याधिष्ठाता शिवः।

**आर्द्रक** न॰ अर्द्दयति रोगान् अर्द्द–अन्तर्भूतण्यर्थे रक् दीर्घश्च संज्ञायां कन् आर्द्रायां भूमौ जातं वा वुन् आर्द्रयति जिह्वां आर्द्र+णिच्–कुन् वा। (आदा) मूलप्रधाने वृक्षभेदे आर्द्रिकाप्यत्र स्त्री। "आर्द्रिका भेदिनी गुर्व्वी तीक्ष्णोष्णा दीपनी च सा। कटुका मधुरा पाके रूक्षा वातकफापहा, ये गुणाः कथिताः शुण्ठ्यास्तेऽपि सन्त्यार्द्रकेऽखिलाः। भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्। अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम्। कुष्ठे पाण्ड्वामये कृच्छ्रे रक्तपित्ते कफज्वरे। दाहे निदाघे शरदि नैव पूजितमार्द्रकम्" भा॰प्र॰। "चक्षुष्यं रोचनं स्वर्य्यं विकाशि विशदं सरम्। लव्माटोपाग्निमान्द्यघ्नं लवणार्द्रकभक्षणम्। गुड़ार्द्रकं वातहरं चक्षुष्यं पित्तनाशनम्। ज्वरघ्नं चातिलघ्वस्य वर्च्चोभेदिकफापहम्। सम्यक्चारहितमङ्कुरतः सत् चालितं विमलकैर्जलतोयैः। मिश्रितं लवणनिम्बुपयोभिर्वालकमार्द्रकमर्पति योग्यताम्। तैलासुरीरजनिनिम्बुजपङ्कलिप्तप्रस्यन्दमाननवनिम्बुरसप्रसक्तम्। स्वादूत्तरं शिशिरवासरभोजनेषु कस्यैति वस्तु न परं खलु शृङ्गवेरम्"। इत्योष्ठ्यं दीपनं हृद्यं सस्नेहं

लघु पाचनम् । रोचनं तर्पणं बल्यं चार्द्रकं परिकीर्त्तितम् । वातपित्तकफेभानां शरीरवनचारिणाम् । एक एव निहन्तास्ति यथार्द्रककेशरी" वैद्य० ।

**आर्द्रपदी** स्त्री आर्द्रौ पादौ यस्याः कुम्भपद्या० नि०पाद्भावः ङीप् च पदादेशः । आर्द्रचरणायां स्त्रियाम् । [ राजनि० ।

**आर्द्रमाषा** स्त्री० नित्यकर्म० । ( माषाणी ) माषपर्ण्याम्

**आर्द्रम्** अव्य० आ+अर्द्द-वा० रमु साक्षादादिगणपाठात् नि० मान्तत्वं वा । सरसत्वे । आर्द्रङ्कृत्य आर्द्रं कृत्वा ।

**आर्द्रशाक** न० आर्द्रं शाकमस्य । आर्द्रके ।

**आर्द्रवृत्त** पु० कर्मधा० । सरसवृत्ते ततः उत्करा० चतुरर्थ्यां छ । आर्द्रवृत्तीयः तद्वृक्षसन्निकृष्टदेशादौ त्रि० ।

**आर्द्रालुब्धक** पु० आर्द्रानक्षत्रे तत्सन्निकृष्टस्थाने लुब्धकइव । केतुभेदे हलायुधः ।

**आर्भव** पु० ऋभुणा दृष्टं साम ऋभुर्देवतास्य वा अण् । तृतीयसवने गेये पञ्चसूक्तात्मके सप्तसामात्मके पवमानभेदे । "आग्नीगवशब्दे ७२२ पृष्ठे विवृतमेतत् । "अथ तृतीयसवने आर्भवे पवमान उद्गातारमन्वारभमाणाः ऋभुरसि जगच्छन्दाः" शत०ब्रा० । "पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा" सा०सं० भा० धृता श्रुतिः ।

**आर्य्य** पु० ऋ-ण्यत् । १स्वामिनि, २गुरौ, ३सुहृदि च । ४श्रेष्ठकुलोत्पन्ने ५पूज्ये, ६श्रेष्ठे, ७सङ्गते, नाट्योक्तौ ८मान्ये, ९उदारचरिते, १०शान्तचित्ते "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः" इत्युक्तलक्षणे ११जने च त्रि० । "यज्ञीतमार्य्यान् परिचर्य्यया सङ्गः" माघः । "त्यजेदकस्मात् पतिरार्य्यवृत्तः" "वर्णापेतमविज्ञातं नरं कलुषयोनिजम् । आर्य्यरूपमिवानार्य्यं कर्म्मभिः स्वैर्विभावयेत्" "जातो नार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद्गुणैः । जातोऽप्यनार्य्यादार्य्यायामनार्य्य इति निश्चयः" । "अनार्य्यमार्य्यकर्म्माणमार्य्यं चानार्य्यकर्म्मिणम्, । संप्रधार्य्याब्रवीद्धाता न समौ नासमाविति" इति च मनुः ।

आर्य्यत्वेन सम्भाषणे नाटके नियमविशेषाः सा०द० उक्ता यथा "राजन्निति ऋषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च । स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः" विप्रेतरैर्विप्रः आर्य्येति वाच्यः "वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम्" । नद्या सूत्रधारः आर्य्येति वाच्यः सूत्रधारेण च नटी आर्य्या इति वाच्या । "वयस्येत्युत्तमैर्वाच्यो मध्यैरार्य्येति चाग्रजः" । "आर्य्य बालचरितप्रस्तावनाडिण्डिम" इति वीरच० रामचरितवर्णने लवणोक्तिः । "वत्स ! पुत्रक तातेति संज्ञागोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चेतरैः" इतरैरमात्य आर्य्येति वक्तव्यः "वृत्तेन हि भवत्यार्य्यो न धनेन न विद्यया" भा० उ० ८९ अ० उक्तेः सदाचारेणैव नराणामार्य्यत्वम् । "आर्य्याऽप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति" कुमा० १२प्राकृतभाषायां स्त्री "मुखबाहूरुपज्जानां या लोके जातयो बहिः । म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः" मनुः । १३श्वशुरे पु० । आर्य्यपुत्रः पतिः "आर्य्यौ ब्राह्मणकुमारयोः" पा० उक्तेः कर्म्मधारये ब्राह्मणकुमारयोः परतः प्रकृतिस्वरः ।

**आर्य्यक** त्रि०आर्य्य+स्वार्थे कन् । आर्य्यशब्दार्थे स्त्रियां टापि वा अत इत्वम् आर्य्यका-आर्य्यिका । संज्ञायां कन् । २पितामहे पु० । "ददौ मामार्य्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तिकाम् । अदाच्च कुन्तिभोजाय सखा सख्ये महात्मने" भा०उ०प०८९अ० तुभ्यमार्य्यकः तवार्य्यकः पितामह इत्यर्थः । कृष्णं प्रति तत्पितृष्वसुः कुन्त्या वाक्यमिदम् ।

**आर्य्यगृह्य** त्रि० आर्य्यस्य गृह्यः पक्ष्यः । आर्य्यपक्षीये । "तमार्य्यगृह्यं निगृहीतधेनुः" रघुः ।

**आर्य्यदेश** पु० आर्य्याणां वासार्होदेशः । आर्य्यावर्त्तादौ देशे

**आर्य्यधर्म्म** पु० आर्य्यस्य धर्म्मः । सदाचारे ।

**आर्य्यपथ** पु० आर्य्याणां पन्थाः अच् समा० । सदाचारे आर्य्यमार्गादयोऽप्यत्र । [ पुत्रे च ।

**आर्य्यपुत्र** पु० आर्य्यस्य श्वशुरस्य पुत्रः । १भर्त्तरि २मान्यस्य

**आर्य्यप्राय** पु० आर्य्यः प्रायो बहुलोऽत्र । आर्य्यावर्त्तादौ देशे "जाङ्गलं शस्यसम्पन्नमार्य्यप्रायमनाविलम् । रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत्" मनुः ।

**आर्य्यभट्ट** पु० ज्योतिषग्रन्थविशेषकारके विद्वद्भेदे सहि "प्रणिपत्यैकमनेकं सत्यां देवतां परं ब्रह्म । आर्य्यभट्टस्त्रीणि वदति गणितं कालक्रियां गोलम्" इत्युपक्रम्य गणितकालक्रियाभूगोलं निर्णीतवान् । भूगोलखगोलशब्दयोः तन्मतमुदाहरिष्यते । तस्य च जन्मकालः स्वग्रन्थे एव तेनोक्तः "षष्ट्यब्दानां षष्टिर्यदा व्यतीतास्त्रयश्च युगपादाः । अधिका विंशतिरब्दास्तदिह मम जन्मनोऽतीताः" । तेन कलेः ३६२० वर्षेषु गतेषु तस्य जन्म । तन्मतमुत्थाप्य च सि०शि० क्वचित् क्वचित् दूषितमिति तस्य भास्कराचार्य्यात् प्राचीनत्वम् । [ पत्न विज्ञापयामि" प्रबो० ।

**आर्य्यमिश्र** पु० कर्म० । गौरवान्विते "एवमार्य्यमिश्रान् प्रणि-

**आर्य्यवृत्त** न० आर्य्यस्य वृत्तम् । १सदाचारे "सत्यधर्म्मार्य्यवृत्तेषु

च शौचे चैवारमेत् सदा" मनुः । आर्य्यं श्रेष्ठं वृत्तमस्य । २सदाचारयुते त्रि० "रक्षणादार्य्यवृत्तानां कण्टकानाञ्च शोधनात्" मनुः । [वेशोऽस्य । २आर्य्यलिङ्गधारिणि त्रि०

**आर्य्यवेश** पु० आर्य्यस्य वेशः । १साधूनां वेशे । आर्य्यस्येव

**आर्य्यव्रत** न० आर्य्यस्य व्रतं नियमः । आर्य्यस्य कर्त्तव्ये १नियमभेदे । आर्य्यस्येव व्रतमस्य । २श्रेष्ठव्रतधारिणि "आर्य्यव्रतश्च पाञ्चाल्यो न स राजा धनप्रियः" भा० आ० २०१ अ० ।

**आर्य्यश्वेत** पु० आर्य्यं श्रेष्ठं श्वेतं चरितं यस्य । श्रेष्ठचरिते ततः शिवादि० अपत्ये अण् । आर्य्यश्वेतस्तदपत्ये पुंस्त्री स्त्रियां ङीप् ।

**आर्य्यहलम्** अव्य० आर्य्यं हन्ति हन–ड तस्मिन् लीयते ली–बा० डु । बलात्कारे बलात्कारस्य आर्य्यहन्तरि समाश्रयनियमात् तथात्वम् स्वरा० अव्ययत्वम् ।

**आर्य्या** स्त्री ऋ–ण्यत् । पार्व्वत्याम् आर्य्याशतकम् । २श्वश्र्वां श्रेष्ठायां ३स्त्रियाञ्च ४मात्रावृत्तभेदे "लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः । षष्ठोऽयञ्च नलघू वा प्रथमेऽर्द्धे नियतमार्य्यायाः । षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयति पदनियमः । चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः" वृत्त० र० उक्ते ५छन्दोभेदे स्त्री । साचार्य्या नवविधा यथा "पथ्या विपुला चपला मुखचपला जघनचपला च । गीत्युपगीत्युद्गीतय आर्य्यागीतिश्च नवधा चार्य्या" इति । तासां लक्षणम् वृत्तर० । "त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः । पथ्येति १नाम तस्याः प्रकीर्त्तितं नागराजेन । उल्लङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्तां पिङ्गलनागो विपुलामिति २ समाख्याति । उभयार्द्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः । चपलेति ३नाम तस्याः प्रकीर्त्तितं नागराजेन । आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः । शेषे पूर्व्वजलक्ष्मा मुखचपला ४सोदिता मुनिना । प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे तु चपलायाः । लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ५सा । आर्य्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं६ गीतवान् भुजङ्गेशः । आर्य्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत् स्यात् । उभयोरपि दलयोरुपगीतिं७ तां मुनिर्ब्रूते । आर्य्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः । सोद्गीतिः८ किल गदिता तद्वद्यंशभेदसंयुक्ता । आर्य्यापूर्व्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् । इतरत्तद्वन्निखिलं यदीयस्तदितेयमार्य्यागीतिः" ९ । "पादे द्वादश विषमे मात्राष्टादश द्वितीये हि । पञ्चदश चेत् तुरीये कथिता गाथा तथैवार्य्या" ग्रन्थान्तरे यथाकथञ्चिद्द्वादशाष्टादशपञ्चदशादिमात्रात्मकपादत्वोक्तावपि वृत्तरत्नाकरोक्तगणनियमोऽस्त्येव सामान्यशास्त्रतोऽपवादशास्त्रस्य प्रबलत्वात् । तेन यथाकथञ्चित्तन्मात्रानिवेशोऽनुचितएव । "शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्य्याभिः । संक्षिप्तमार्य्यमतिना सम्यग्विज्ञाय सिद्धान्तम्" सां० का० "क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके" सा० द० कथालक्षणम् । "आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्" सा० द० । "स्फुटवर्णस्वरसंस्कारवत्या गिरा राजानमुद्दिश्यार्य्यामिमां पपाठ" काद० । [भेदे आर्य्याशब्दे तल्लक्षणमुक्तम् ।

**आर्य्यागीति** स्त्री आर्य्या गीतिरिव । वृत्तर० उक्ते मात्रावृत्त-

**आर्य्यावर्त्त** पु० आर्य्या आवर्त्तन्ते अत्र आ+वृत–आधारे घञ् । देशभेदे स च देशोमनुना दर्शितः । "आ समुद्रात्तु वै पूर्व्वादा समुद्राच्च पश्चिमात् । तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः" इति तयोः विन्ध्यहिमाचलयोः" कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः" मनुः ।

**आर्य्याविलास** पु० आर्य्याणां प्राकृतभाषायुतमात्रावृत्तानां विलासो बाहुल्यम् यत्र । प्राकृतभाषया रचिते "भाषाविभाषानियमात् काव्यं सर्गसमुज्झितम् । एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्ज्जितमिति" सा० दर्पणोक्तलक्षणयुक्ते प्राकृतकाव्यभेदे । ईत० । आर्य्याया दुर्गाया विलासे च ।

**आर्ष** त्रि० ऋषेरिदम् अण् । १ऋषिसम्बन्धिनि तत्कृतपुराणकाव्यादौ । "धर्मो यस्याभि शङ्कः स्यादार्षं वा दुर्बलात्मनः । वेदात् शूद्र इवापेयात् स लोकादजरामरात्" भा० व० प० २१अ० । आर्षं मन्वादिमतं यस्याभिशङ्क्यमित्यर्थः "अस्मिन्नार्षे पुनःसंज्ञा भवेदाख्यानसंज्ञका" सा० द० । "इत्यार्षे रामायणे" इत्येवं रामायणसर्गसमाप्तौ भूरिप्रयोगः । ऋषिणा जुष्टम् । २ऋषिसेविते वेदे पु० । "आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" मनुः ।

ऋषिर्वेदस्तस्येदम् अण् । ३वैदिके । "सम्बुद्धौ शाकल्यस्येतावनार्षे" पा० "अनार्षे अवैदिके" सि० कौ० । "आर्षं प्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन्" भा० व० प० २१अ० । ऋषेरयं वाचकः अण् । ५ऋष्यभिधायिनि "ण्यक्षत्रिय-ञितोयूनि लुगणिञोः" पा० (आर्षात्) "ऋष्यभिधायिनः" सि० कौ० संस्कारहीनत्वेऽपि ऋषिणा प्रयुक्तः अण् ।

व्याकरणोक्तानुशासनमुल्लङ्घ्य ऋषिणा प्रयुक्ते असाधुन्यपि साधुत्वेनाभिमते ५शब्दभेदे । आर्षः प्रयोगः। ऋषीणां समूहः प्रवरगणभेदः अण्। गोत्रप्रवर्त्तकमुनीनां ७व्या-वर्त्तकप्रवरर्षिसमूहे न० "अरोगिणीं भ्रातृमतीमसमानार्ष-गोत्रजाम्" या०। मिता० तु ऋषेरिदमार्षं नाम प्रवर इति व्याख्यातम् ऋषिर्वेदस्तत्र विहितः अण्। ७विवाहभेदे "यज्ञस्यार्त्विजे दैव आर्षं आदाय गोयुगम्। चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट्" या० "अष्टाविमान् समासेन स्त्रीविवाहान् निबोधत। ब्राह्मो दैवस्तथैवार्षः प्राजापत्य-स्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः" इत्युपक्रम्य "एकं गोमिथुनं द्वे वा वरादादाय धर्मतः। कन्या-प्रदानं विधिवदार्षो धर्मः स उच्यते" मनुस्मृतौ धर्म इत्युपादानात् कन्यान्तर्यंस्यार्थं गोयुगपक्षेऽपि न दोषः। अतएव मनुना तादृशस्य गोमिथुनग्रहणस्य स्वभोगसाधन त्वाभावेन शुल्कत्वमेव निराकृतम् "आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तदिति" "आर्षोढाजः सुतस्त्रीन् त्रीन्" मनुः।

गोत्रभेदे प्रवरभेदाच विवाहार्थं दर्शिता यथा। "अत्र गोत्रप्रवराणां स्वरूपं महाप्रवरपाठादवगन्तव्यम्। तत्र महान्तः प्रवरा एकद्वित्रिपञ्चार्षेया जनपञ्चार्षेयदेव ते च सप्तानां गोत्राणां गणश उच्यन्ते। तावतैवापेक्षित-सिद्धेः। यथा वत्सानां भार्गवच्यावनाप्नवानौर्वजामदग्न्येति १ विदानां भार्गवच्यावनाप्नवानौर्वविदेति २। आर्ष्टिषेणानां भार्गवच्यावनाप्नवानौर्वार्ष्टिषेणेति३। जामदग्न्यानां भार्गव-च्यावनाप्नवानौर्वजामदग्न्येति ४। एते समानप्रवराः। त्र्यार्षाधिकर्षितुल्यत्वात्। यास्कानां भार्गववीतहव्यसा-वेदसेति ५। मित्रयुवाणां भार्गववाध्र्यश्वदैवोदासेति६। वैणानां भार्गववैण्यपार्थेति७। एते भार्गवानुवृत्तावपि न मिथः समानप्रवराः भृगुं सर्वत्रेति वचनात्। शुन-कानां शौनकेति वा गार्त्समदेति वा। अत्र गोत्र प्रवरभेदोपयोगित्वेन पक्षे प्रवरैक्यादविवाहः। एते सप्त भृगवः। अथाङ्गिरसो गौतमा भारद्वाजाः शुद्धाश्चेति त्रि-विधाः। तेषु गौतमास्तावत्। आयास्यानामाङ्गिरसायास्य गौतमेति १। शारद्वतानामाङ्गिरसशारद्वतगौतमेति२। कौमण्डकानामाङ्गिरसौदथ्यकाक्षीवत गौतमकौमण्डेति३। दीर्घतमानामाङ्गिरसौदथ्यकाक्षीवतगौतमदैर्घतमेति४। का-रेणुपालानामाङ्गिरस गौतमकारेणुपालेति ५। वामदेवा-नामाङ्गिरसगौतमवामदेवेति६। औशनसानामाङ्गिरसौशन-सगौतमेति७। एते सप्त गौतमाङ्गिरसाः समानप्रवराः त्र्यार्षाधिकर्षितुल्यत्वात्। भारद्वाजानामाङ्गिरसबार्हस्पत्य-भारद्वाजेति १। रौक्षायणानामाङ्गिरसबार्हस्पत्यभारद्वाज वान्दनमातवचसेति। गर्गाणामाङ्गिरसबार्हस्पत्यभार-द्वाजगार्ग्यशैन्येति। आङ्गिरसगार्ग्यशैन्येति वा ३। त्रय एते भरद्वाजाङ्गिरसाः समानप्रवराः त्र्यार्षाधिक-र्षितुल्यत्वात्। गार्ग्याणां त्र्यार्षेयपक्षेऽर्द्धाधिकर्षितुल्यत्वा-भावेऽपि पक्षे समानप्रवरत्वाद्भारद्वाजैरविवाहः। विष्णु-वृद्धानामाङ्गिरसपौरुकुत्सजामदग्न्येति १। काण्वानामा-ङ्गिरसाजमीढकाण्वेति २। हरितानामाङ्गिरसाम्बरीष यौवनाश्वेति ३। संकृतीनामाङ्गिरससांकृत्यगौरवीतेति४। रथीतराणामाङ्गिरसवैरूपरथीतरेति५। मुद्गलानामाङ्गिरस भार्म्याश्वमौद्गल्येति ६। कपीनामाङ्गिरसामहय्यवोरुक्ष्येति७। एते सप्त शुद्धाङ्गिरसः भिन्नप्रवराः आङ्गिरसानु-वृत्तावपि आङ्गिरसमुक्त्वेति वचनात्। अत्रीणामात्रेया-र्चनानसश्यावाश्वेति १। गविष्ठिराणामात्रेयार्चनानस गविष्ठिरेति२। वभ्रुटकानाम् आत्रेयार्चनानसवभ्रुटकेति३। मुद्गलानामात्रेयार्चनानसपौर्वतिथेति" ४। एते चत्वारः समानप्रवराःतुल्यर्षित्वात्। काश्यपानां काश्यपावत्सा-रनैध्रुवेति १। रेभाणां काश्यपावत्साररैभेति २। शाण्डि-ल्यानां काश्यपावत्सारशाण्डिल्येति३। काश्यपावत्सार-दैवेति वा काश्यपावत्सारासितेति वा शाण्डिल्या-सितदेवलेति वा इति चतुर्धा प्रवराः। लौगाक्षीणां काश्यपावत्सारवासिष्ठेति५। एते समानप्रवराः। काश्य-पानुवृत्तेः चतुर्थप्रवरे काश्यपानुवृत्त्यभावेऽपि त्रिभिः प्रवरैः समानप्रवरत्वात् काश्यपैरविवाहः। लौगाक्षीणां वासिष्ठपदानुवृत्त्या द्व्यामुष्यायणत्वाद्वसिष्ठैरविवाहः। वसि-ष्ठानां वासिष्ठेति १। कुण्डिनानां वासिष्ठमैत्रावरुण कौ-ण्डिन्येति २। उपमन्यूनां वासिष्ठेन्द्रप्रमदाभारद्वस्विति३। पराशराणां वसिष्ठशक्तिपराशरेति ४। एते वासिष्ठाश्च-त्वारः समानप्रवराः वसिष्ठानुवृत्तेः। कुशिकानां वैश्वा-मित्रदैवरातौदलेति १। रौहितानां वैश्वामित्राष्टकरौहि-तेति २। रौक्षकानां विश्वामित्ररौक्षकरैवतेति ३। विश्वा-मित्राणां वैश्वामित्रारसदैवतरसेति ४। मौद्गायनानां विश्वामित्रमधुच्छन्दमौद्गेति५। धनञ्जयानां वैश्वामित्र-माधुच्छन्दसधनञ्जयेति ६। कतकानां वैश्वामित्रकात्याक्षी-लेति ७। इन्द्रकौशिकानां विश्वामित्रेन्द्रकौशिकेति ८। अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति९। पौराणां

वैश्वामित्रपौराणेति१०। एतेषां दशानां कुशिकानां विश्वामित्रपदानुवृत्तेर्मिथः समानप्रवरत्वम्। अगस्तीनामगस्तिदार्ढ्यच्युतेध्मवाहेति। दार्भवाहानामगस्त्यागस्त्यदार्ढ्यच्युतदार्भवाहेति१। साम्भवाहानामागस्त्यदार्ढ्यच्युतसाम्भवाहेति२। सोमवाहनानामागस्त्यदार्ढ्यच्युतसोमवाहेति ३। यज्ञवाहानामागस्त्यदार्ढ्यच्युतयज्ञवाहेति४। चतुर्णामगस्तीनामागस्त्यपदानुवृत्त्या मिथः समानप्रवरत्वमिति प्रवरनिर्णयः। अत्र संग्रहश्लोकाः। "एकोऽपि च मुनिर्येषां प्रवरेष्वनुवर्त्तते। सगोत्रास्ते मिथोज्ञेया भृग्वङ्गिरसं विना। शुनकाः स्युर्गृत्समदैः काश्यपैः शाण्डिला अपि। भारद्वाजास्तथा गर्गाः पञ्च त्वर्षिदर्शनात्"। यद्वा। "च्यवनो गौतमोऽगस्त्योभरद्वाजोऽत्रिकश्यपौ। विश्वामित्रोवशिष्ठश्च यद्यप्रवरेष्वमी। वर्त्तन्ते ते सगोत्राः स्युः कश्यपैः शाण्डिलास्तथा। शुनकाः स्युर्गृत्समदैर्भारद्वाजैश्च गर्गकाः" इति। अत्र प्रमादेन समानगणगोत्रप्रवरकन्योद्वाहे ज्ञानोत्तरकालं मातृवदेनाम्बिभृयात्। गर्भश्चेदुत्पन्नः स न दुष्यति। काश्यपो भवति गोत्रेण। ज्ञात्वा गच्छन् गुरुतल्पगः। तदुत्पन्नश्चण्डालवद्भवति। आहमपि सगोत्रप्रवराय न देयमित्याहुः। प्रवरविज्ञानात् विहीनो भवति एतत्समस्तं संप्रधार्य निश्चितं दास्यामीति तेषामुक्ते गृह्णन्ति"।

तत्रैव च अथ मतान्तरम्। "सर्वे समानगोत्राः स्युरिति गाणगारिः। कथं ह्यामोष्यायणानि भवेयुः। कथं प्रयाजा इत्यपि। नानागोत्राः स्युरिति शौनकः। तन्त्राणां व्याप्तित्वात् गृहपतिगोत्रान्वयाविशेषात्। तस्य राद्धिरनुराद्धिः। सर्वेषां प्रवरास्तावर्त्तेरन् आवापधर्मित्वात्। जामदग्न्या वत्सादयः पञ्चार्षेयाः। यथा भार्गवाप्नवानौर्वजामदग्न्येति। वत्सश्रीवत्सयोश्च तथैव। आर्ष्टिषेणानां भार्गवच्यवनाप्नवानौर्वार्ष्टिषेणेति। बिदानां भार्गवच्यवनाप्नवानौर्वबिदेति। यास्कवाधूलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनदैवन्त्यायनानां भार्गववैतहव्यसावेदेति। शैन्यानां भार्गवशैन्यपार्थेति। मित्रयूनां भार्गवदैवोदासवाध्र्यश्वेति। शुनकानां भार्गवशौनकगार्त्समदेति। गौतमानामाङ्गिरसायास्यगौतमेति उतथ्यानामाङ्गिरसौतथ्यगौतमेति। राहूगणानामाङ्गिरसराहूगणगौतमेति। सोमराजिकीनामाङ्गिरससौमराजिगौतमेति। वामदेवानामाङ्गिरसवामदेवगौतमेति। बृहदुक्थानामाङ्गिरसबार्हदुक्थगौतमेति। पार्षदश्वानामाङ्गिरसपार्षदश्ववैरूपेति। अष्टादंष्ट्रा इत्येके ब्रुवते अतीत्याङ्गिरसम्। अष्टादंष्ट्रापौरुकुत्सत्रासदस्यवेति। कण्वानामाङ्गिरसबार्हस्पत्यभरद्वाजवान्दनमातवचसेति। कक्षीवतामाङ्गिरसगौतमौशिजकाक्षीवतेति। दीर्घतमसामाङ्गिरसौतथ्यदैर्घतमसेति। भारद्वाजाग्निवेश्यानामाङ्गिरसबार्हस्पत्यभारद्वाजेति। मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति। तार्क्ष्यं इत्येके ब्रुवते अतीत्याङ्गिरसं तार्क्ष्यभार्म्यश्वमौद्गल्येति। विष्णुवृद्धानामाङ्गिरसपौरुकुत्सत्रासदस्यवेति। गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यशैन्येति। आङ्गिरसशैन्यगार्ग्येति वा। हरितकुत्सपिङ्गशङ्खदर्भभैमगवानाम् आङ्गिरसाम्बरीषयौवनाश्वेति सङ्कृतिपूतिमाषतण्डिशम्बुशैवगवानाम् आङ्गिरसगौरिवीतसांकृत्येति। शाक्तिगौरिवीतसांकृत्येति वा। काण्वानामाङ्गिरसाजमीढकाण्वेति। घोरमित्येके ब्रुवते अतीत्याजमीढम्। आङ्गिरसघोरकाण्वेति। कपीनामाङ्गिरसामहय्यवार्चय्येति। अथ शौङ्गशैशिरयः। भरद्वाजाः स्युः शुङ्गाः कताः शैशिरयः। तेषामुभयतः प्रवृणीते एकमितरोद्वावितरः त्रीनितरः। न हि चतुर्णां प्रवरोऽस्ति न पञ्चानाम्। आङ्गिरसबार्हस्पत्यभारद्वाजेत्यादि। कपी प्रसिद्धावुदिताविह द्वौ स्वतन्त्र एकस्त्वपरोऽस्वतन्त्रः। तत्र स्वतन्त्रस्य कर्मविवाहं मिथो भरभाजकुलेन चाहुः। अथात्रीणामात्रेयार्चनानसश्यावाश्वेति। गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति। विकितगालवकालवमनुतन्तुकुशिकानां वैश्वामित्रदेवरातौदलेति। श्रौमतकामकायनानां वैश्वामित्रदैवश्रवसदैवोदासेति। धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति। अजानां वैश्वामित्रमाधुच्छन्दसरौहिणेति। पूरणवारिधापयन्तानां वैश्वामित्रदेवरातपौराणेति। कतानां वैश्वामित्रकात्याक्षीलेति। अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति। रेणूनां वैश्वामित्रगाथिनरैणवेति। वेणूनां वैश्वामित्रगाथिनवैणवेति। शालङ्कायनशालाक्षलोहिताक्षलोहितजह्नूनां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति शालङ्कायनकौशिकेति वा। काश्यपानां काश्यपावत्सारासितेति। निध्रुवाणां काश्यपावत्सारनैध्रुवेति। रेभाणां काश्यपावत्साररैभ्येति। शाण्डिलानां काश्यपावत्सारदैवलेति शाण्डिलासितदैवलेति वा। वासिष्ठवसिष्ठानां योऽन्यउपमन्युपराशरकुण्डिनेभ्यः। उपमन्यूनां वासिष्ठाभरद्वसिन्द्रप्रमदेति। पराशराणां वासिष्ठशाक्त्यपराशरेति। कुण्डिनानां वासिष्ठमैत्रावरुण-

कौण्डिन्येति । अगस्तीनामागस्त्यदार्ढ्यच्युतेध्मवाहेति । सोमवाहानामागस्त्यदार्ढ्यच्युतसोमवाहेति । पुरोहितप्रवरो राज्ञाम् । अथ यदि सार्व्वं प्रवृणीरन् । मानवैड़पौरूरवःक्रमेति शस्त्राणि । तान्यदक्षिणानि । तेषामन्ते ज्योतिष्टोमः पृष्ठ्यशमनीयसहस्रदक्षिणः । अन्यो वा प्रजातदक्षिणः । दक्षिणायता पृष्ठ्या शमनीयेरनिति विज्ञायते । स एव हेतुः प्रकृतिभावे । “भृगूणां न विवाहोऽस्ति चतुर्णामादितोमिथः । शैनादयस्त्रयस्तेषां विवाहो मिथ इष्यते । यस्मात् वै गौतमादीनां विवाहोनेष्यते मिथः । दीर्घतमस्त्वौतथ्यः कक्षीवांश्चैव गोत्रजः । भरद्वाजाग्निवेश्यर्क्षाः शौङ्गाः कात्याश्च शैशिराः । एते समानगोत्राः स्युर्गर्गानेके वदन्ति वै । पृषदश्वामुद्गला विष्णुवृद्धाः काण्वोऽगस्त्यो हारितः सङ्कृतिश्च । यस्कश्चैषां मिथ इष्टोविवाहः सर्व्वैरन्यैर्जामदग्न्यादिभिश्च । द्व्यार्षेयाणां त्र्यार्षेयसन्निपाते न विवाहः । त्र्यार्षेयाणां पञ्चार्षेयसन्निपाते न विवाहः । “एते समानगोत्राः स्युर्विश्वामित्रोऽनुवर्त्तते । अत्रयश्च वशिष्ठाश्च कश्यपाश्च पृथक् पृथक् । जमदग्निर्गौतमश्च भरद्वाजोऽत्रयस्तथा । विश्वामित्रः कश्यपश्च वसिष्ठोऽगस्त्ययोऽष्टमाः” । सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते “एकएव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते । तावत् समानगोत्राः स्युर्भृग्वङ्गिरसं विना । वसिष्ठा द्वौ च विज्ञेयौ ब्रह्मपुत्त्रोऽथ शापतः । मैत्रावरुणिरित्येव वासिष्ठोविषयान्तरात् । ब्रह्मात्मजाच्छक्तिपराशरव्यासशुकादयः । ज्ञेयो विवेकस्तनयोर्द्वितीयात् कुण्डिनादयः । अतएव भिन्नशरीरत्वात् भिन्नगोत्रप्रवरत्वाच्च वसिष्ठवासिष्ठगणयोर्विवाहः । जामदग्न्यविश्वामित्राणां देवरातवर्जं सर्व्वत्र विवाहः । अत्रिविश्वामित्राणां धनञ्जयवर्जं सर्व्वत्र विवाहः इति” प्रवरनिर्णयः ।

अथ गोत्रप्रवराः तत्रैव “जामदग्न्यावीतहव्यागार्त्समदा वाध्र्यश्वावैन्या गौतमाः भरद्वाजाः कपयोहारीताः काण्वा विरूपा मौद्गला विष्णुवृद्धा आत्रेया विश्वामित्राः कश्यपा वासिष्ठा आगस्त्या इत्यष्टादश गणाः स्युः । आदितः पञ्चगणा भृगवो भवन्ति । भृगुजामदग्न्या वत्सश्रीवत्सच्यवनाप्रवानाः । और्व्वसावर्णिवैर्णिजायाश्वतिशाण्डायनवैरोहित्यावटमण्डुमार्गानयोश्चार्ष्टिषेणानां भृगवो न मिथो विवाह्याः । वीतहव्यवाक्यवाधूलशौनमौनसावेदसा भृगवो न मिथो विवाह्याः । गार्त्समदशौनकौ भार्गवौ न मिथो विवाह्यौ । वाध्र्यश्वमित्रयवौ भार्गवौ न मिथो विवाह्यौ । वैन्यपार्थौ भार्गवौ न मिथो विवाह्यौ । आङ्गिरसायास्यौतथ्यौशिजकाक्षीवतवामदेवबृहदुक्थप्रान्ता गौतमा न मिथो विवाह्याः । आङ्गिरसबार्हस्पत्यभारद्वाजकुक्कुटाग्निवेश्यौज्यापनसैतसामसमस्यशुङ्गकतर्शैशिरिपञ्चिकचक्रान्दनमात्रवचससतन्वकपिगार्ग्यकपिशैन्यान्ता भरद्वाजा न मिथो विवाह्याः । आङ्गिरसकपयमहायोवाज: कपयश्चा न मिथो विवाह्याः । आङ्गिरसमौहपितम्बरीषयौवनाश्वमान्धातृशङ्खपिङ्गदर्भकुत्सहारिताः न मिथो विवाह्याः । आङ्गिरसाजमीढकण्वा न मिथो विवाह्याः । आङ्गिरसविरूपपृषदश्वरथीतराष्टादंष्ट्रा विरूपाः न मिथो विवाह्याः । आङ्गिरसमौद्गल्यतार्क्ष्यभौद्गला न मिथो विवाह्याः । आङ्गिरसविष्णुवृद्धत्रासदस्यवाघमर्षणभद्रणभद्रणवादरायणौपमित्यौपगविसात्यकिसात्यकाम्यारुणिनित्युन्द्याविष्णुवृद्धा न मिथो विवाह्याः आत्रेयार्चनानसश्यावाश्वगविष्ठिरधनञ्जयातिथिसुमङ्गलवामरथ्यबीजवाप्यशुङ्गान्ता आत्रेया न मिथो विवाह्याः । विश्वामित्रदेवरातचिकितमनुदन्वौलकिवालकियज्ञवल्कोलूकलटहृदग्निबभ्रुशालङ्कायनशालङ्कायनकात्यबौद्रव्यौमतकामकायनदैवश्रवसाज्यमाधुच्छन्दसधनञ्जयाष्टकलोहितपूरणपारिधाशाघमर्षणकौशिककतकतुपनसधूम्रजठरवावलीकहव्याग्निदैव्यन्ता विश्वामित्रा न मिथो विवाह्याः । काश्यपावत्सारनैध्रवरैभरैभशाण्डिल्यशाण्डिल्यदैवरातासितान्ता: काश्यपा न मिथो विवाह्याः । वसिष्ठशक्तिपराशरवासिष्ठा न मिथो विवाह्याः । आगस्त्यदार्ढ्यच्युतेध्मवाहदार्भवाहसाम्भवाहसोमवाहयज्ञवाहान्ता अगस्तयो न मिथो विवाह्याः” । एवं प्रवरज्ञानस्य विवाहोपयोगितोक्ता । अस्य होमविशेषोपयोगिताऽपि आर्षेयशब्दे वक्ष्यते । निर्ण्णयसिन्धौ अत्र कश्चिद्विशेष उक्तो यथा । “अथ गोत्राणि प्रवराश्चोच्यन्ते । तत्र बौधायनः गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात्” ।

“तत्र सप्त भृगवः वत्सा विदा आर्ष्टिषेणा यस्का मित्रयवावैन्याः शुनका इति ७। वत्सानां भार्गवच्यवनाप्रवानौर्वजामदग्न्येति१ । भार्गवौर्वजामदग्न्येति वा भार्गवच्यवनाप्रवानेति वा । विदानां पञ्च भार्गवच्यवनाप्रवानौर्वैदेति२ । भार्गवौर्वजामदग्न्येति वा यतौ

द्वौ जामदग्न्यसंज्ञौ। आर्ष्टिषेणानाम् भार्गवच्यवनाप्रवानार्ष्टिषेणानूपेति। भार्गवार्ष्टिषेणानूपेति वा। एषामन्वयानां परस्परमविवाहः। यात्स्यानाम् भार्गवच्यवनाप्रवानेति वत्सपुरोधसयोः पञ्च भार्गवच्यवनाप्रवानवात्स्यपौरोधसेति। वैजवननिमतिथयोः पञ्च भार्गवच्यवनाप्रवानवैजवननैमतिथेति। एते त्रयः कश्चित् एषामपि पूर्वैरविवाहः। अत्र तत्तद्गणस्थाऋषयोऽन्यश्च विशेष स्तत्तत् प्रवरदर्पणे ज्ञेयः। यस्कानाम् भार्गववैतहव्यसावेदसेति। मित्रयूनाम् भार्गववाध्र्यश्वदिवोदासेति। भार्गवच्यवनदिवोदासेति वा वाध्र्यश्वेत्येको वा। वैन्यानां भार्गववैन्यपार्थेति। एतएव श्यैताः। शुनकानां शुनकेति वा गार्त्समदेति वा भार्गवगार्त्समदेति द्वौ वा भार्गवशौनहोत्रगार्त्समदेति त्रयो वा। वेदविश्वज्योतिषां भार्गववेदवैश्वज्योतिषेति। शाठरमाठराणां भार्गवशाठरमाठरेति एतौ द्वौ कश्चित् यस्कादीनां स्वगणान्यत्रा सर्वैर्विवाहः। तदुक्तं स्मृत्यर्थसारे "यस्कामित्रयवावैन्याः शुनकाः प्रवरैक्यतः। स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैरिति"।

'अथाङ्गिरसः ते गौतमाः भरद्वाजाः केवलाङ्गिरसश्चेति त्रिधा। अत्र गौतमा दश आयास्याः शरद्वन्तः कौमण्डा दीर्घतमसः औशनसः कारेणुपालाः राहूगणाः सोमराजकाः वामदेवाः बृहदुक्थाश्चेति तत्रायास्यानाम् आङ्गिरसायास्यगौतमेति शरद्वताम् आङ्गिरसगौतमशारद्वतेति। कौमण्डानां आङ्गिरसौतथ्यकाक्षीवदिति गौतमकौमाण्डेति वा। आङ्गिरसानामायास्यौशिजगौतमकाक्षीवदिति वा आङ्गिरसौतथ्यगौतमौशिजकाक्षीवदिति वा। आङ्गिरसौशिजकाक्षीवदिति त्रयो वा। दीर्घतमसाम् आङ्गिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति आङ्गिरसौतथ्यदैर्घतमसेति त्रयो वा। औशनसानाम् आङ्गिरसगौतमौशनसेति त्रयः। कारेणुपालानाम् आङ्गिरसगौतमकारेणुपालेति त्रयः राहूगणानां आङ्गिरसराहूगणगौतमेति। सोमराजकानाम् आङ्गिरससोमराजकगौतमेति। वामदेवानाम् आङ्गिरसवामदेव्यगौतमेति बृहदुक्थानाम् आङ्गिरसवार्हदुक्थगौतमेति। आङ्गिरसवामदेववार्हदुक्थेति वा। उतथ्यानामाङ्गिरसौतथ्यगौतमेति। औशिजानामाङ्गिरसौशिजकाक्षीवदित्यापस्तम्बः। आङ्गिरसायास्यौशिजगौतमकाक्षीवदिति कात्यायनः। एतौ द्वौ कश्चित् रघुवाणाम्। आङ्गिरसराघुवन गौतमेति केचित्। तत्र मूलं चिन्त्यम्। एषां सर्वेषां गौतमानामविवाहः।

अथ भरद्वाजाः ते चत्वारः। भरद्वाजा गर्गाऋक्षाःकपय इति भरद्वाजानामाङ्गिरसवार्हस्पत्यभारद्वाजेति त्रयः। गर्गाणामाङ्गिरसवार्हस्पत्यभारद्वाजशैन्यगार्ग्येति पञ्च। आङ्गिरसशैन्यगार्ग्येति वा अन्त्ययोर्व्यत्ययो वा। भारद्वाजगार्ग्यशैन्येति वा। गर्गभेदानाम् आङ्गिरसतैत्तिरकापिभुवेति ऋक्षाणां कपिलानां चाङ्गिरसवार्हस्पत्यभरद्वाजवान्दनमात्वचसेति पञ्च। आङ्गिरसवान्दनमात्वचसेति त्रयो वा। कपिलानामाङ्गिरसामहीयवऋचयसेति। आत्मभुवाम् आङ्गिरसभारद्वाजवार्हस्पत्यमन्मथरात्मभुवेति पञ्च। अयं कश्चित् भरद्वाजानां सर्वेषामविवाहः।

अथ केवलाङ्गिरसः हरितानाम् आङ्गिरसाम्बरीषयौवनाश्वेति। आद्योमान्धाता वा। कुत्सानाम् आङ्गिरसमान्धातृकौत्सेति। कण्वानामाङ्गिरसाजमीढकाण्वेति आङ्गिरसघोरकाण्वेति वा। रथीतराणामाङ्गिरसवैरूपराथीतरेति आङ्गिरसवैरूपपार्षदश्वेति वा। अष्टादंष्ट्रपार्षदश्ववैरूपेति वा। अन्त्ययोर्व्यत्ययो वा। मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति आद्यस्थाने तार्क्ष्यौ वा आङ्गिरसतार्क्षमौद्गल्येति वा। विष्णुवृद्धानामाङ्गिरसपौरुकुत्सत्रासदस्यवेति। एषां स्वगणं विहाय सर्वैर्विवाहो भवति। हरितकुत्सयोस्तु न भवति।

अथात्रयः ते चत्वारः आत्रेयाः वाद्भुतकाः गविष्ठिराः मुद्गला इति। आद्यानामात्रेयार्चनानसश्यावाश्वेति। वाद्भुतकानाम् आत्रेयार्चनानसवाद्भुतकेति। धनञ्जयानाम् आत्रेयार्चनानसधानञ्जयेति कश्चित्। गविष्ठिराणामात्रेयार्चनानसगविष्ठिरेति। आत्रेयगाविष्ठिरपौर्वातिथेति वा। मुद्गलानामात्रेयार्चनानसपौर्वातिथेति। वामरथ्यसुमङ्गलवैजवापानामात्रेयार्चनानसतिथेति आत्रेयार्चनानसगाविष्ठिरेति वा। सुमङ्गलानाम् अत्रिसुमङ्गलश्यावाश्वेति केचित्। अत्रेः पुत्रिकापुत्राणाम् आत्रेयवामरथ्यपौत्रिकेति। अत्रीणां सर्वेषामविवाहः।

अथ विश्वामित्राः ते दश कुशिकाः लौहिताः रौक्षकाः कामकायनाः कताः धनञ्जयाः अघमर्षणाः पूरणाः इन्द्रकौशिका इति कुशिकानां विश्वामित्रदेवरातौदलेति। लौहितानां विश्वामित्राष्टकलौहितेति। अन्त्ययोर्व्यत्ययो वा वैश्वामित्रमाधुच्छन्दसाष्टकेति वा। विश्वा-

मित्राष्टकेति द्वौ वा । रौक्षकाणां वैश्वामित्रगाथिनरैवणेति वैश्वामित्ररौक्षकरैवणेति वा । कामकायनानां वैश्वामित्रदेवश्रवसदैवतरसेति वा । अजानां वैश्वामित्रमाधुच्छन्दसाजेति वैश्वामित्राश्मरथ्यवाधूलेति वा अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । पूरणानां वैश्वामित्रपौरणेति द्वौ वा । वैश्वामित्रदेवरातपूरणेति वा इन्द्रकौशिकानां विश्वामित्रेन्द्रकौशिकेति द्वौ । धनञ्जयानां विश्वामित्रमाधुच्छन्दसधानञ्जयेति । वैश्वामित्रमाधुच्छन्दसाघमर्षणेति वा कतानां वैश्वामित्रकात्याक्षीलेति एते बौधायनोक्ताः । रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति । रेणूनां वैश्वामित्रगाथिनरैणवेति । जह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति । आश्मरथ्यानां वैश्वामित्राश्मरथ्यवाधूलेति । वेणूनां वैश्वामित्रगाथिनरैणवेति एते आश्वलायनाद्युक्ताः अन्यैरन्येऽपि षड्गणा उक्ताः तेऽन्यत्र तत्कृतौ ज्ञेयाः एषां विश्वामित्राणामविवाहः ।

अथ कश्यपाः ते पञ्च निध्रुवाः कश्यपाः शण्डिलाः रेभाः लौगाक्षयश्च । निध्रुवाणां काश्यपावत्सारनैध्रुवेति । कश्यपानां काश्यपावत्सारासितेति । रेभाणां काश्यपावत्साररैभेति । शण्डिलानां काश्यपावत्सरशाण्डिल्येति । अन्त्यस्थाने देवलोऽसितो वा । शाण्डिलासितदेवलेति वा । काश्यपासितदेवलेति वा । अन्त्ययोर्व्यत्ययो वा देवलासितेति द्वौ वा । लौगाक्षीन् वक्ष्यामः । एषां कश्यपानामविवाहः ।

अथ वसिष्ठाः ते पञ्च वसिष्ठाः कुण्डिनाः उपमन्यवः पराशराः जातूकर्ण्याश्चेति । वासिष्ठेन्द्रप्रमदाभरद्वस्विति वासिष्ठेत्येक वा । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति । उपमन्यूनां वासिष्ठेन्द्रप्रमदाभरद्वस्विति । वासिष्ठाभरद्वस्विन्द्रप्रमदेति वा । आद्ययोर्व्यत्ययो वा पराशराणां वासिष्ठशाक्त्यपाराशर्येति । जातूकर्ण्यानां वासिष्ठानां सर्वेषामविवाहः । अन्त्यस्याऽत्रिभिश्च ।

अथागस्त्याः ते चत्वारः इध्मवाहाः साम्भवाहाः सोमवाहाः यज्ञवाहाश्चेति आद्यानाम् आगस्त्यदार्ढ्यच्युतैध्मवाहेति आगस्त्येको वा । सोमवाहानाम् आगस्त्यदार्ढ्यच्युतसोमवाहेति । सांभवाहानां साम्भवाहोऽन्त्यः आद्यौ पूर्वकावेव सोमवाहानां तदन्त्याश्रयः दर्भवाहानां तदन्त्याश्रयः ।

अगस्तीनामागस्त्यमाहेन्द्रमायोभुवेति पूर्णमासानाम् आगस्त्यपौर्णमासपारणेति । हिमोदकानाम् आगस्त्यहैमवर्चिहैमोदकेति । पाणिकानामागस्त्यपैनायकपाणिकेति । एते षट् क्वचित् । अगस्तीनां सर्वेषामविवाहः ।

अथ द्विगोत्राः शौङ्गशैशिरीणाम् आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति पञ्च कात्याक्षीलयोः स्थाने शौङ्गशैशिरी वा आङ्गिरसकात्याक्षीलेति त्रयो वा एषां भरद्वाजैर्विश्वामित्रैश्चाविवाहः । एवं कपिलानां कतानाञ्च संकृतिपूतिमाषादीनाम् आङ्गिरसगौरुवीतसांकृत्येति शाक्त्यगौरुवीतसांकृत्येति वा एषां स्वगणस्थैर्वसिष्ठैः शौङ्गशैशिरैर्लौगाक्षिभिश्चाविवाहः । कश्यपैरपीति प्रयोगपारिजाते । लौगाक्षीणां काश्यपावत्सारवासिष्ठेति काश्यपावत्सारासितेति वा एतेऽहर्वसिष्ठा नक्तं कश्यपाः एषां वसिष्ठैः कश्यपैः संकृताद्यैश्चाविवाहः । देवरातस्य जामदग्न्यैर्विश्वामित्रैश्चाविवाह इति प्रयोगपारिजाते यदुक्तं बह्वृचस्मृतौ "यत्रैवाङ्गिरसः सनुषेयात्तत्र पुत्रताम् । आङ्गिरसोऽजनाम्नाजीगर्तिः सुतःकविरित्यङ्गिरसगणस्थत्वेन भार्गवजामदग्न्यत्वस्मृतेर्बाधात् । तेन मत्स्यश्रुत्या हरिवंशादिस्मृतेश्च बलात् तेन द्वौ देवरातौ एक आङ्गिरसः सुतः अन्यो भार्गवः तयोः कल्पभेदेऽप्याङ्गिरसेन देवरातेन जामदग्न्यैर्भवत्येव विवाहः भार्गवेण तु नेति तत्त्वम् । धनञ्जयानां विश्वामित्रैरत्रिभिश्चाविवाहः जातूकर्ण्यानां वसिष्ठैरत्रिभिश्चाविवाहः एवं दत्तकक्रीतकृत्रिमस्वयंदत्तपुत्रिकापुत्रादीनाम् उत्पादकपालकयोः पित्रोर्गोत्रप्रवरा वर्ज्या इति प्रवरमञ्जरीनारायणवृत्तिप्रयोगपारिजातादयः । अत्र सर्वत्रोपपत्तयः मूलं च तत्कृते प्रवरदर्पणे ज्ञेयमिति दिक् । क्षत्रियवैश्ययोस्तु पुरोहितगोत्रप्रवरावेवेति सर्वसिद्धान्तः यद्यपि बह्वृचपरिशिष्टे कपिभरद्वाजयोर्विवाह उक्तस्तथापि "भरद्वाजाः कपयो गर्गा रौक्षायणा इमे । चत्वारोऽपि भरद्वाजगोत्राश्चात्रान्वियुर्मिथः । कपिगर्गभरद्वाजाभिधौरौक्षायणा द्विजाः । नोद्वहेयुः सगोत्रत्वात् प्रवरैक्याच्च कुत्रचिदिति" स्मृत्यर्थसाराद्युक्तेरविवाह एव तयोरिति प्रवरमञ्जर्यां यद्यपीदमुक्तम् तथापि भृग्वाङ्गिरोगणेषु तु भवत्येव यथा बह्वृचपरिशिष्टे बौधायनः "एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते । तावत्समानगोत्रत्वमृते भृग्वाङ्गिरोगणात्" माधवीये स्मृत्यन्तरं "पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः । भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेदिति" एवं निर्णयदर्पणप्रयोगपारिजाताचारमाधवीय-

निर्ध्रुवसिन्धुप्रभृतिषु भृग्वङ्गिरोगणेषु पञ्च प्रवराणां मध्ये त्रिषु साम्ये । त्रिषु प्रवरेषु द्वयोः साम्येऽपि शेषगोत्राणामेकर्षिसाम्येऽपि समानप्रवरत्वादविवाह्यत्वं सिद्धमेतेन अनुमानातिरिक्तसंज्ञार्षस्याकल्पेन समानार्षत्वं यत् रघुनन्दनेनोक्तं तन्निर्मूलत्वादग्राह्यं बौधायनादिस्मृति विरुद्धत्वात्तद्दर्शनविजृम्भितत्वाच्च एवं वत्ससावर्णिगोत्रप्रवरेषु आप्नुवत्प्रवरत्वकथनमपि प्रवराध्यायाज्ञानविलसितम् । अधिकमार्षेयशब्दे वक्ष्यते । ऋषेरयं अण् । ऋषिकृतस्मरणे । वेदे यन्मन्त्रं येन ऋषिणा कल्पादौ स्मृतं तन्मन्त्रस्य तदार्षत्वम् । “आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः” योगिया० । [ शब्दे २उक्तआर्षविवाहे च ।

**आर्षधर्म्म** पु० न० कर्म्म० । १मन्वादिप्रोक्ते धर्म्मे । आर्ष-

**आर्षभ** त्रि० ऋषभस्य वृषस्येदम् अण् । वृषसम्बन्धिनि । “यद्न्यगोषु वृषभो वत्सानां जनयेच्छतम् । गोमिनामेव तत् सर्वं मोघं स्कन्दितमार्षभम्” मनुः ऋषभदेव चरिते न० । [ ऋषभेदे ।

**आर्षभि** पु० ऋषभस्यापत्यम् इञ् । ऋषभदेवपुत्रे चक्रवर्त्तिनि

**आर्षभी** पु० ऋषभस्येयं प्रिया अण् ङीप् । १कपिकच्छाम् राजनि० । ऋषभस्येयम् तस्याकारत्वात् अण् ङीप् । वायुपुराणोक्ते मध्यमार्गस्थवीथीत्रयमध्ये वीथीभेदे ऐरावतीशब्दे विवृतिः

**आर्षभ्य** पु० ऋषभस्य प्रकृतिः ञ्य । वृषभतायोग्ये वत्से वत्सो हि वयःक्रमेण वृषभतां प्राप्नोतीति तस्य वृषभ प्रकृतित्वात् तथात्वम् [यक् । ऋषिधर्म्मे

**आर्षिक्य** न० ऋषिरेव ऋषिकः ऋषिकस्य भावः पुरो०

**आर्षिषेण** पु० स्त्री ऋषिषेणस्य गोत्रापत्यम् विदा० अञ् । ऋषिषेण ऋषेर्गोत्रापत्ये स्त्रियां ङीप् । ऋष्टिषेण इति वा गणे पाठे आर्ष्टिषेणस्तदपत्ये आर्षशब्दे प्रवरनिर्णये उदा० ।

**आर्षेय** न० ऋषीणां समूहः ढक् । ऋषिगणरूपे प्रवर भेदे तज्ज्ञानस्य विवाहोपयोगिता आर्षशब्दे उक्ता । होमभेदोपयोगिताऽपि प्रवराध्याये दर्शिता यथा । “प्रवरान् व्याख्यास्याम आर्षेयं वृणीते बन्धोरेव नैत्यथो सन्तत्या इति विज्ञायते तदुवै न मनुष्यैरार्षेयं वृणीत ऋषिभिरेवार्षेयं वृणीत इति विज्ञायत आर्षेयमन्वाचष्ट ऋषिणा हि देवाः पुरुषमनुबुध्यन्त ” इत्युक्त्वा । ‘योवा अन्तःसदृशान्यस्यार्षेयं प्रवृणीते स वा अस्यत ऋषिरिष्टं वीतं इत्युक्तं इति विज्ञायते । त्रीन् वृणीते मन्त्रकृतो वृणीते यथर्षिमन्त्रकृतो वृणीत इति विज्ञायते

येकेषामेकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिप्रवृणीत इति विज्ञायते । तत ऊर्द्धं नाध्वर्युर्वृणीते सुतरेवाचाहोतेति विज्ञायते । पुरोहितस्य प्रवरेण राजा प्रवृणीत इति विज्ञायते । भृगूणामेवाग्रे व्याख्यास्यामो जामदग्न्यावत्सास्तेषां पञ्चार्षेयः प्रवरो भार्गवच्यावनाप्नवानौर्वजामदग्न्येति जमदग्निवदूर्ववदाप्नवानवच्च्यवनवद्भृगुवदिति त्र्यार्षेयमुहैके भार्गवौर्वजामदग्न्येति जमदग्निवदूर्ववद्भृगुवदित्येष वा विकल्पः । सावर्णिजीवन्तिजाबालेतिशासनवैरोहित्यावटमण्डुप्राचीनयोग्यानामथार्ष्टिषेणानां पञ्चार्षेयो भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति । अनूपवदार्ष्टिषेणवदाप्नवानवच्च्यवनवद्भृगुवदिति त्र्यार्षेयमुहैके भार्गवार्ष्टिषेणानूपेति अनूपवदार्ष्टिषेणवद्भृगुवदिति । अथ वीतहव्या याज्ञवाधूलमौनमौकास्तेषां त्र्यार्षेयो भार्गववीतहव्यसावेदसेति सवेदोवद्वीतहव्यवद्भृगुवदिति । गात्र्समदाः शुनकास्तेषामेकार्षेयो गार्त्समदेति होता वदति गृत्समदवत् इत्यध्वर्युः अथ वाभ्र्यश्वामित्रयवस्तेषामेकार्षेयो वाभ्र्येति होता वदति बभ्र्युवदित्यध्वर्युः । अथ वैन्याः पार्थास्तेषां त्र्यार्षेयो भार्गववैन्यपार्थिव्येति । पृथिवीवद्वेनवद्भृगुवदिति । इमे भृगवोव्याख्याताः । अथातोऽङ्गिरसामायास्यगोतमास्तेषां त्र्यार्षेयआङ्गिरसायास्यगोतमेति । गोतमवदयास्यवदङ्गिरोवदिति । अथौ तथ्यागौतमास्तेषां त्र्यार्षेय आङ्गिरसौतथ्यगौतमेति गोतमवदुतथ्यवदङ्गिरोवदिति । अथौशिजागोतमास्तेषां त्र्यार्षेयः आङ्गिरसौशिजकाक्षीवदिति कक्षीवदुशिजवदङ्गिरोवदिति । अथ वामदेवा गौतमास्तेषां त्र्यार्षेयः आङ्गिरसवामदेववार्हदुक्थेति बृहदुक्थवद्वामदेववदङ्गिरोवदिति । अथ भरद्वाजानां त्र्यार्षेय आङ्गिरसवार्हस्पत्यभारद्वाजेति भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्येष वा विकल्पः । कुक्कुटाग्निवेश्योज्जायनानां सर्वेषां च साम्यसम्भवशब्दानामथ द्व्यामुष्यायणानां कुलानाम् । यथा शुङ्गशैशिरयोः भारद्वाजाः शुङ्गाः कताः शैशिरयस्तेषां पञ्चार्षेयआङ्गिरसवार्हस्पत्यभारद्वाजकात्याक्षीवदिति अक्षीवत्कतवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति त्र्यार्षेयमुहैके आङ्गिरसकात्याक्षीवदिति अक्षीवत्कतवदङ्गिरोवदिति । अथ ऋक्षाणां पञ्चार्षेय आङ्गिरसवार्हस्पत्यभारद्वाजवान्दनमात्वचसेति । मात्वचोवद्वन्दनवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदिति त्र्यार्षेयमुहैके आङ्गिरसवान्दनमात्वचसेति मात्वचोवद्वन्दनवदङ्गिरोवदिति । अथ

कपीनां त्र्यार्षेय आङ्गिरसामहीयवौरुक्षयेति उरुक्षयवदमहीयुवदङ्गिरोवदिति। अथ गर्गाणां त्र्यार्षेय आङ्गिरसगार्ग्यशैन्येति शिनिवद्गर्गवदङ्गिरोवदिति । भरद्वाजस्त्वेकेऽङ्गिरसःस्थाने भरद्वाजगार्ग्यशैन्येति शिनिवद्गर्गवद्भरद्वाजवदिति। अथ हरितानां त्र्यार्षेय आङ्गिरसाम्बरीषयौवनाश्वेति युवनाश्ववदम्बरीषवदङ्गिरोवदिति । मान्धातारस्त्वेकेऽङ्गिरसःस्थाने मान्धात्राम्बरीषयौवनाश्वेति। युवनाश्ववदम्बरीषवन्मान्धातृवदिति । अथ कुत्सानां त्र्यार्षेय आङ्गिरसमान्धात्रकौत्सेति। कुत्सवन्मान्धातृवदङ्गिरोवदिति। अथाजमीढाः काण्वास्तेषां त्र्यार्षेय आङ्गिरसाजमीढकाण्वेति कण्ववदजमीढवदङ्गिरोवदिति। अथ विरूपा रथीतरास्तेषां त्र्यार्षेय आङ्गिरसवैरूपपार्षदश्वेति पृषदश्ववद्विरूपवदङ्गिरोवदिति अष्टादंष्ट्रस्त्वेकेऽङ्गिरसःस्थान आष्टादंष्ट्र वैरूपपार्षदश्वेति पृषदश्ववद्विरूपवदष्टादंष्ट्रवदिति। अथ मुद्गलानां त्र्यार्षेय आङ्गिरसभार्म्यश्वमौद्गल्येति मुद्गलवद्भर्म्यश्ववदङ्गिरोवदिति । तार्क्ष्यस्त्वेकेऽङ्गिरसःस्थाने तार्क्ष्यभार्म्यश्वमौद्गल्येति मुद्गलवद्भर्म्यश्ववत्तृक्षवदिति। अथ विष्णुवृद्धानां त्र्यार्षेय आङ्गिरसपौरुकुत्सत्रासदस्यवेति । त्रसदस्युवत्पुरुकुत्सवदङ्गिरोवदित्येष एव विकृतः । अथमर्षणभद्रणभद्रणबादरायणोपमित्यौपगविसात्यकिसात्यकाम्यारुणिनित्युन्दोनामथात्रेयाणां त्र्यार्षेय आत्रेयार्चनानसश्यावाश्वेति श्यावाश्ववदर्चनानसवदत्रिवदिति । अथ गविष्ठिराणां त्र्यार्षेय आत्रेयार्चनानसगाविष्ठिरेति गविष्ठिरवदर्चनानसवदत्रिवदिति । अथातिथीनां त्र्यार्षेय आत्रेयार्चनानसातिथेति अतिथिवदर्चनानसवदत्रिवदित्येष एव वा विकृतो वामरथ्यसुमङ्गलबीजवापो नाम् । अथ विश्वामित्राणां देवराताऽश्विकितमधुतन्त्यौलकिबालखिल्ययचवस्कोलूकहद्दग्निबभ्रु शालङ्किशालावतशालङ्कायनकालवास्तेषां त्र्यार्षेयो वैश्वामित्रदेवरातौदलेति । उदलवद्देवरातवद्विश्वामित्रवदिति । अथ श्रौमतकामकायनानां त्र्यार्षेयो वैश्वामित्रदैवश्रवसदैवतरसेति देवतरसवद्देवश्रवोवद्विश्वामित्रवदिति । अथाजानां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसाज्येति । अजवन्मधुच्छन्दोवद्विश्वामित्रवदिति । अथ धानञ्जयानां त्र्यार्षेयो वैश्वामित्रमाधुच्छन्दसधानञ्जयेति धनञ्जयवन्मधुच्छन्दोवद्विश्वामित्रवदिति । अथाष्टकालोहितास्तेषां द्व्यार्षेयो वैश्वामित्राष्टकेति । अष्टकवद्विश्वामित्रवदिति । अथ पूरणवारिधापयन्तास्तेषां द्व्यार्षेयो वैश्वामित्रपौरणेति पूरणवद्विश्वामित्रवदिति । अथ कतानां त्र्यार्षेयो वैश्वामित्रकात्यात्कीलेति अत्कीलवत्कतवद्विश्वामित्रवदिति । अथाघमर्षणाः कुशिकास्तेषां त्र्यार्षेयो वैश्वामित्राघमर्षणकौशिकेति कुशिकवदघमर्षणवद्विश्वामित्रवदिति । अथ कश्यपानां त्र्यार्षेयः काश्यपावत्सारनैध्रुवेति निध्रुववदवत्सारवत्कश्यपवदिति। अथ रैभास्तेषां त्र्यार्षेयः काश्यपावत्साररैभेति । रेभवदवत्सारवत्कश्यपवदिति । अथ शाण्डिलानां द्व्यार्षेयो दैवलासितेति । असितवद्देवलवदिति । त्र्यार्षेयस्त्वेके काश्यपदैवलासितेति असितवद्देवलवत्कश्यपवदिति द्व्यार्षेयास्त्वेवं न्यायेनैकार्षेया वसिष्ठा अन्यत्र पराशरेभ्यो वासिष्ठेति होता वसिष्ठवदित्यध्वर्युस्त्र्यार्षेयस्त्वेके वासिष्ठैन्द्रप्रमदाभरद्वसवेति अभरद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदिति । अथ पराशराणां त्र्यार्षेयो वासिष्ठशाक्त्यपाराशर्येति पराशरवच्छक्तिवद्वसिष्ठवदिति अथ कुण्डिनानां त्र्यार्षेयो वासिष्ठमैत्रावरुणकौण्डिन्येति । कुण्डिनवन्मित्रावरुणवद्वसिष्ठवदिति। अथ संकृतिपूतिमाषाणां त्र्यार्षेयःशाक्त्यसांकृत्यगौरुवीतेति । गुरुवीतवत्संकृतिवच्छक्तिवदिति । अथागस्तीनाम् एकार्षेय आगस्त्येति होताऽगस्त्यवदित्यध्वर्युस्त्र्यार्षेयस्त्वेके आगस्त्यदार्ढच्युतैध्मवाहेति इध्मवाहवत् दृढच्युतवदगस्तिवदिति । अथ क्षत्रियाणां यद्ब्राह्मणार्षं प्रवृणीरन्नेष एवैषां प्रवरो मानवैडपौरूरवसेति पुरूरवोवदिडवन्मनुवदिति अथ येषामु ह मन्त्रकृतो न स्युः पुरोहितप्रवरास्ते प्रवृणीरन् अथ येषां स्युः पुरोहितप्रवरास्ते पुरोहितप्रवरार्षें यास्तेषां न्यायेनैकार्षेया एव विशां वात्सप्रेति होता । वत्सप्रीवदध्वर्युः । अथाप्रज्ञातबन्धुराचार्यामुष्यायणमनु प्रब्रवीताचार्यप्रवरं प्रवृणीताद्धृह ताण्डिन एकार्षेयं सार्ववर्णिकं समामनन्ति मानवेति होता मनुवदित्यध्वर्युर्मानव्यो हि प्रजा इति हि ब्राह्मणम्" । एवं प्रवरभेदं निर्णीय होमविशेषोपयोगिता तदुत्तरग्रन्थेनोक्ता । "आर्षेयाणि व्रतपतेः प्रवरित्वाक्षादीनां मुख्यानाम्" आश्व॰श्रौ॰ "आर्षेयवरणे व्रतपतेः प्रथमं वरित्वा आक्षादीनां मुख्यानां प्रवृणीते" इति वृत्तिः । ऋषिं कूटस्थमृषिमारभ्य अयं प्रवर इत्यर्वाक् मूलपुरुषावधिप्रवरविभेदवर्णया एवायः यथोक्तं "अथार्षेयं प्रवृणीते ऋषिभ्यश्चैवैनमेतद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति। तस्मादार्षेयं प्रवृणीते परस्तादर्वाक् प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्तत उ चैवैतं निह्नुत इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक् प्रवृणीते । स आर्षेयमुक्त्वाह" शत॰ब्रा॰ । "होतकर्तॄ

प्रवरो विधीयते। तत्र धर्म्मविशेषमाह परस्तादिति तस्मिन्नार्षेयप्रवरणे कूटस्थमृषिमारभ्य तत्पुत्रपौत्रादिक्रमेणार्वाचीनं वरणं कर्त्तव्यम्। यथा आङ्गिरसबार्हस्पत्यभारद्वाजेत्यादि। तथा च ज्येष्ठस्य पतये एवैतं निह्नुते अनेन प्रवरणेन निवेदयति भा०"। "असमानार्षेयां कन्यां वरयेत्" विष्णुः। "प्रवरस्तु गोत्रप्रवर्त्तकमुनेर्व्यावर्त्तको मुनिगणः" इति माधवाचार्य्यः।
ऋषिरेव स्वार्थे ढक्। २मन्त्रद्रष्टरि ऋषौ "प्रजापतिः प्रथमां चितिमपश्यत्" प्रजापतिरेव तस्या आर्षेयं, देवा द्वितीयां चितिमपश्यन्देवा एव तस्या आर्षेयम्, इन्द्राग्नी च विश्वकर्म्मा च तृतीयां चितिमपश्यंस्त एव तस्या आर्षेयम् ऋषयश्चतुर्थीं चितिमपश्यन्नृषय एव तस्या आर्षेयं परमेष्ठी पञ्चमीं चितिमपश्यत् परमेष्ठ्येव तस्या आर्षेयं स यो हैतदेवं चितीनामार्षेयं वेदार्षेयवत्यो हास्य बन्धुमत्यश्चितयो भवन्ति" इति शत०ब्रा०

**आर्ष्टिषेण** पु० १चन्द्रवंश्ये शलन्यपात्मजे नृपभेदे "अत्र हृद्वात्मजस्तत्र सुनहोत्रो महायशाः। सुनहोत्रस्य दायादास्त्रयः परमधार्म्मिकाः। काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः। पुत्रो गृत्समदस्यापि शुनको यस्य शौनकः। ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च। शलात्मजश्चार्ष्टिषेणस्तनयस्तस्य काश्यपः"। हरि०वं०२०१अ०। "आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः" म०भा०प०। २गोत्रप्रवरभेदे आर्षेयशब्दे उदा०।

**आर्ष्टिषेणाश्रम** न० ६त०। तीर्थभेदे तच्च व०प० १५९अध्याये दर्शितं यथा। "अनेनैव पथा राजन्! प्रतिगच्छ यथागतम्। नरनारायणस्थानं वदरीत्यभिविश्रुतम्। तस्माद्द्रक्ष्यसि कौन्तेय! सिद्धचारणसेवितम्। बहुपुष्पफलं रम्यमाश्रमं वृषपर्व्वणः। अतिक्रम्य च तं पार्थ! आर्ष्टिषेणाश्रमे वसेः"।

**आर्हत** त्रि० अर्हत इदम् अण्। १जैनसम्बन्धिनि। २तन्मते न० तन्मतञ्चार्हच्छब्दे ३८२ पृष्ठे दर्शितम्।

**आर्हन्ती** स्त्री न० अर्हतो भावः ब्राह्म० ष्यञ् नुम् च चित्त्वात् ङीष् यलोपः। योग्यतायाम्। "श्रौतार्हन्तीचणगुणं मर्हर्षिभिरहर्निशम्" सि० कौ०। स्त्रीत्वाभावपक्षे। आर्हन्त्यमित्यपि तत्रार्थे न०।

**आर्हायण** स्त्री अर्हस्यापत्यम् अश्वा० फञ्। अर्हन्नामकर्षेर्गोत्रापत्ये। स्त्रियां ङीप्।

**आर्हीय** पु० अर्हमभिव्याप्य आर्हम् तत्र विहितः तस्येदम् वा इहत्वात् छ। "आर्हात्" इत्यारभ्य "तदर्हति" इत्यन्तसूत्रजातेन तत्तदर्थेषु पाणिनिविहिते १प्रत्ययभेदे। २तद्बोध्ये तत्तदर्थे च। "आर्हीयेष्वर्थेषु" सि०कौ०

**आल** न० आलति भूषयति आ+अल–भूषादौ अच्। १हरिताले तद्धि वर्णोत्कर्षेण स्वयुक्तपदार्थं भूषयतीति तस्य तथात्वम्। "ततो हरिद्राम्लहधमरोधपत्राङ्गचूर्णैः समनःशिलालैः"। "मनःशिलालमधुककुष्ठचन्दनपद्मकैः" "रसाञ्जनं चन्दनसैन्धवञ्च मनःशिलाले लशुनञ्च तुल्यम्" सुश्रु०। हरितालभेदगुणाद्युक्तम् भा० प्र०। "हरितालं तु तालं स्यादालं तालकमित्यपि। हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञितम्। तयोराद्यं गुणश्रेष्ठं ततो हीनगुणं परम्। स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत्। पत्राख्यं तालकं विद्याद्गुणाढ्यं तद्रसायनम्। निष्पत्रं पिण्डसदृशं स्वल्पसत्वं तथा गुरु। स्त्रीपुष्पहारकं स्वल्पगुणं तत् पिण्डतालकम्। हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम्। कण्डूकुष्ठास्यरोगास्रकफपित्तकफव्रणान्। हरति च हरितालं चारुतां देहजातां सृजति च बहुतापानङ्गसङ्कोचपीड़ाः। वितरति कफवातौ कुष्ठरोगं विदध्यादिदमशितमशुद्धं मारितं चाप्यसम्यक्"। आ+अल–पर्य्याप्तौ अच्। २अनल्पे ३श्रेष्ठे च त्रि०।

**आलक्षि** त्रि०आ+लक्ष-इन्। ज्ञातरि स्त्रियां गौरा०ङीष्।

**आलक्षित** त्रि०आ+लक्ष–क्त। १सम्यग्ज्ञाते, २लिङ्गेन ज्ञाते च

**आलक्ष्य** त्रि० आ+लक्ष-यत्। १सम्यग्ज्ञेये २लक्षणेन वेद्ये च "आलक्ष्यपारिप्लवसारसानि" रघुः। आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः भा०व०२०७। ल्यप्। ३सम्यक् ज्ञात्वेत्यर्थे अव्य०।

**आलगर्द्द** पु० अलगर्द्द एव स्वार्थे अण्। जलसर्पे। [ङीष्

**आलजि** त्रि० आ+लज-इन्। आभाषके स्त्रियां गौरा०

**आलब्ध** त्रि० आ+लभ-क्त। १संसृष्टे २संयुक्ते "चन्दनेन समालब्धे कुङ्कुमेन विलिम्पिते" दुर्गार्च्चामन्त्रः। ३स्पृष्टे ४हिंसिते च। [क्तिवन्तत्वेऽपि गौरा० वा ङीप्।

**आलब्धि** स्त्री आ+लभ-क्तिन्। स्पर्शे २हिंसायां च

**आलभन** न० आ+लभ–ल्युट्। १हिंसायां २स्पर्शे। पक्षे नुम् ३मर्द्दने च। "तिला भक्षयितव्याश्च सदा त्वालम्भनञ्च तैः" भा०आ० प०६८अ०। तत्रार्थे "आलम्भनम्" कात्या०६,२,१८।

**आलभनीय** त्रि० आ+लभ–अनीयर्। १स्पृश्ये २हिंसनीये च नुम्। ३मर्द्दनीये "मङ्गलालम्भनीयानि प्राशनीया-

न्युपस्करान्"। यागादौ आलम्भनीयः पशुः।

**आलभ्य** त्रि॰ आ+लभ–यत्। १स्पृश्ये २हिंस्ये आ+लभ–ल्यप्। ३स्पृष्ट्वेत्यर्थे ४हिंसित्वेत्यर्थे च अव्य॰।

**आलम्ब** पु॰ आ+लबि–कर्म्मणि घञ्। आश्रयणीये, "निरालम्बोलम्बोदरजननि! कं यामि शरणम्" जगन्नाथः। "इह हि पततां नास्त्यालम्बो न चापि निवर्त्तनम्" शान्ति॰श॰ "रामे सलक्ष्मणे याते सीतां त्वन्ये यथासुखम्। निरालम्बां हरिष्यामि" रामा॰। २वैशम्पायनान्तेवासिभेदे आरुणिशब्दे ८॰२पृष्ठे विवृतिः। भावे घञ्। ३आश्रयणे

**आलम्बन** न॰ आ+लबि–कर्म्मणि–ल्युट्। १आश्रयणीये "यमाश्रित्य विभावादिसमूहालम्बनात्मकः" सा॰द॰ उक्ते २रसालम्बने नायकादौ। "आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्" इति तस्यालम्बनशब्दार्थत्वे कारणमुक्तं तत्रैव। रसभेदे आलम्बनभेदाश्च सा॰द॰उक्ता यथा शृङ्गारे "परोढां वर्जयित्वा तु वेश्याञ्चाननुरागिणीम्। आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः"। रौद्रे "आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्"। हास्ये "विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः। तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्"। करुणे। "शोच्यमालम्बनं मतम्"। वीरे "आलम्बनविभावास्तु विजेतव्यादयोमताः" भयानके। "यस्मादुत्पद्यते भीतिस्तदेवालम्बनं मतम्"। जुगुप्सायाम्। "दुर्गन्धमांसपिशितन्तदेवालम्बनं मतम्"। विस्मये। "विस्मये च वस्तु लोकातिगमालम्बनं मतम्" शान्ते "अनित्यत्वादिनाऽशेषवस्तुनोऽसारता तु या। परमात्मस्वरूपं वा तस्यालम्बनमिष्यते"। ४बौद्धमतसिद्धे प्रत्ययभेदे च "चत्वारः प्रत्ययाः प्रसिद्धा आलम्बनसमनन्तरसहकार्य्याधिपतिरूपा" इति विभज्य "तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासस्य चित्तस्य नीलोल्लेखिप्रत्ययात् नीलाकारता भवतीति" सर्वदर्श॰। अधिकमालयविज्ञानशब्दे वक्ष्यते।

**आलम्बि** स्त्री आलम्बस्य ऋषिभेदस्यापत्यम् इञ्। वैशम्पायनान्तेवासिन आलम्बर्षेरपत्ये स्त्रियां गौ॰ ङीष्। सा च शुक्लयजुर्वंशान्तर्गतर्षिमाता "आलम्बीपुत्रात् आलम्बीपुत्रः" शत॰ब्रा॰। इञन्तात् यूनि फञ्। आलम्बायनः तस्य यून्यपत्ये स्त्रियां ङीप्। सा च शुक्लयजुर्वेदवंशान्तर्गतर्षिभेदमाता। "आलम्बायनीपुत्रादालम्बायनीपुत्रः" शत॰ब्रा॰

**आलम्बित** त्रि॰ आ+लबि–क्त। १धृते २गृहीते च।

**आलम्बिन्** त्रि॰ आ+लबि–णिनि। आश्रयिणि। "गजाजिनालम्बि दुकूलधारि वा" कुमा॰ "देवस्तभुजालम्बी-जैत्रमध्यास्त राघवः" रघुः। "आलम्बिभिश्चन्द्रकिणां कलापैः" माघः स्त्रियां ङीप्। आलम्बेन वैशम्पायनान्तेवासिभेदेन प्रोक्तमधीयते णिनि। आलम्बिप्रोक्ताध्यायिषु ब॰व॰।

**आलम्भ** पु॰ आ+लभ–घञ् नुम्। संस्पर्शे। वर्ज्जयेदित्युपक्रमे "स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च" मनुः २हिंसने च। "अश्वालम्भं गवालम्भं संन्यासं पलपैतृकम्" आदिपु॰। "तृणजानामोषधीनां जातानाञ्च स्वयं वने। वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतम्" मनुः"। "शाक्रं प्रीताय्यमालम्भायानुमन्यते तयानुमतमालभते" शत॰ब्रा॰। "आलम्भसमये तस्मिन् गृहीतेषु पशुष्वथ। महर्षयो महाभाग! बभूवुः कृपयान्विताः" भा॰आ॰६१ अध्याये। [गौः" सि॰कौ"

**आलम्भ्य** त्रि॰ आ+लभ–नुम् यत्। हिंस्ये। "आलम्भ्यो

**आलय** पु॰ आलीयतेऽस्मिन् आ+ली–आधारे अच्। १गृहे २आधारे च "हिमालयोनाम नगाधिराजः" कुमा॰ "तत्रामरालयमरालमरालकेशी" नैष॰। "न हि दुष्टात्मनामार्य्या निवसत्यालये चिरम्" रामा॰ "आलयं देवशत्रूणां सुघोरं खाण्डवं वनम्" भा॰आ॰ २२३ अ॰। भावे घञ्। ३संश्लेषे मर्य्यादायामव्ययी॰। ४लयपर्य्यन्ते अव्य॰। "पिबत भागवतं रसमालयम्" भाग॰।

**आलयविज्ञान** न॰ आलयं लयपर्य्यन्तस्थायि विज्ञानम्। बौद्धमतसिद्धे अहमास्पदे विज्ञानभेदे। "तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम्। तत् स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्" तेषां मते हि विज्ञानातिरिक्तो बाह्यपदार्थो नास्ति, ज्ञानस्यैवाकारविशेषः अर्थोल्लेखी। आलयविज्ञानस्य सदातनत्वेऽपि कदाचित् नीलाद्युल्लेखिता तथा हि विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखनाः कादाचित्कत्वात् इति विज्ञानस्य कादाचित्कत्व सिद्धिः "तस्मादालयविज्ञानसन्तानातिरिक्तः कादाचित्कः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थो ग्राह्य एव न, वासनापरिपाकप्रत्ययस्य कादाचित्कत्वात् कदाचिदुत्पाद इति वेदितव्यम्। विज्ञानवादिनये हि वासनानामेकसन्तानवर्त्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः तस्याश्च स्वकार्य्योत्पादं प्रत्याभिमुख्यं परिपाकः तस्य च प्रत्ययः कारणं स्वसन्तानवर्त्ति पूर्व्वक्षणः कक्षीक्रियते सन्तानान्तरनिबन्धनानङ्गीकारात्। ततश्च प्रवृत्तिज्ञानजननालयविज्ञानवर्त्तिवासनापरिपाकं प्रति सर्व्वेऽप्यालयविज्ञानवर्त्तिनः

क्षणाः समर्था एवेति वक्तव्यम्। न चैवं कोऽपि न समर्थः स्यादालयविज्ञानसन्तानवर्त्तित्वाविशेषात्। सर्व्वे समर्था इति पक्षे कार्य्यवैषम्यानुपपत्तिः ततश्च कादाचित्कत्वनिर्व्वाहाय शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान् प्रतीत्योत्पद्यन्ते इति चतुरेणानिच्छताप्यच्छमतिना स्वानुभवमनाच्छाद्य परिच्छेत्तव्यम्। ते चत्वारः प्रत्ययाः प्रसिद्धाः आलम्बनसमनन्तरसहकार्य्यधिपतिरूपाः। तत्र ज्ञानपदवेदनीयस्य नीलाद्यवभासस्य चित्तस्य नीलालम्बनप्रत्ययात् नीलाकारता भवति, समनन्तरप्रत्ययात् प्राचीनज्ञानाद्बोधरूपता, सहकारिप्रत्ययादालोकात्, चक्षुषोऽधिपतिप्रत्ययाद्विषयग्रहणप्रतिनियमः। विदितस्य ज्ञानस्य रसादिसाधारण्यप्राप्तौ नियामकं चक्षुरधिपतिर्भवितुमर्हति लोके नियामकस्याधिपत्योपलम्भात्। एवं चित्तचैत्तात्मकानां सुखादीनां चत्वारि कारणानि द्रष्टव्यानि। एवं चित्तचैत्तात्मकस्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः। तत्र रूप्यन्त एभिर्विषया इति रूप्यन्त इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः। प्रागुक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः। गौरित्यादिशब्दोल्लेखिविज्ञानप्रवाहः संज्ञास्कन्धः वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्म्माधर्म्मौ च संस्कारस्कन्धः" सर्व्वद०। विज्ञानानां क्षणिकत्वेऽपि पूर्व्वपूर्व्वक्षणिकविज्ञानसंस्काराणामुत्तरोत्तरविज्ञाने संक्रमः तत्संक्रमाच्च स्मरणं, सुषुप्तौ च आलयविज्ञानस्य सत्त्वात् तत्रैव सर्व्वसंस्काराणामवस्थितेः सुप्तोत्थितस्य स्मरणसम्भव इत्यतो बौद्धैः आलयपर्य्यन्तं क्षणिकविज्ञानव्यक्तिधारायां स्थायित्वमङ्गीक्रियते।

**आलर्क** न० अलर्कस्येदम् अण्। विप्लकुरविषे। "निहन्ति विषमालर्कं मेघवृन्दमिवानिलः" सुश्रु०।

**आलवण्य** न० न लवणं त०न० अलवणस्य भावः ष्यञ्। लवणरसभिन्नत्वे। नास्ति लवणं यत्र बहु० तत्त्व वा न ष्यञ्। अलवणता स्त्री अलवणत्वं तु न० लवणन्यूनत्वे

**आलवाल** न० समन्तात् लवं जललवमालाति आ+ला—क। वृक्षमूले सेकार्थं मृदादिनिर्म्मिते जलाधारे सेतौ। "विश्वासाय विहङ्गानामालवालाम्बुपायिनाम्" रघुः। "विपुलालवालभृतवारिदर्पणः" माघः। पु०वस्तुतः सर्व्वमध्योऽपि "जरद्बृद्धसुनिभिरिव जटालवालकसवल्कलभरैः" (पादपैः) काद०

**आलस** त्रि० आलसति ईषत् व्याप्रियते अच्। १क्रियामन्दे अलसस्यापत्यम् विदा० अञ्। २अलसापत्ये पु०स्त्री०यून्यपत्ये हरिता०फञ्। आलसायनः तस्य यून्यपत्ये पुंस्त्री०।

**आलस्य** न० अलसस्य भावः ष्यञ्। विहितक्रियाकरणायानुत्साहे आलस्यञ्च "किमालस्यं च कः शोकः" इति यक्षप्रश्ने "धर्म्मनिष्क्रियतालस्यं शोकस्त्वज्ञानमुच्यते" भा०व०३१२ अ० युधिष्ठिरेण लक्षितम्। "शक्तस्य चाप्यनुत्साहः कर्म्मस्वालस्यमुच्यते" सुश्रुतेन लक्षितञ्च बोध्यम्" सा०द० उक्ते व्यभिचारिभावभेदे च "आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्" यथा "न तथा भूषयत्यङ्गं न तथा भाषते सखीम्। जृम्भते मुहुरासीना बाला गर्भभरालसा" सा०द० "आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" मनुः। भारतोक्तधर्मक्रियाशून्यत्वरूपम् अलालस्यम्।

**आलात** न० अलातमेव स्वार्थेऽण्। अलाते वह्निदीप्ताङ्गारे।

**आलान** न० आलीयतेऽत्र आ—ली—ल्युट्। १गजबन्धनस्तम्भे करणे ल्युट्। २तद्बन्धनरज्ज्वाम् भावे ल्युट्। ३बन्धनमात्रे च। तत्र स्तम्भे। "अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः" रघुः। "इभमदमलिनमालानस्तम्भयुगलमुपहसन्तमिवोरुदण्डद्वयेन" काद० "तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः" बन्धने "गजालानपरिक्लिष्टैराक्षोटैः सार्द्धमानताः" रघुः।

**आलानिक** त्रि० आलानमिव स्वार्थे विनयादि० ठक्। १आलाने। आलानं बन्धनं प्रयोजनमस्य ठक्। गजबन्धनसाधने काष्ठादौ "आलानिकं स्थाणुमिव द्विपेन्द्रः" रघुः

**आलाप** पु० आ+लप—करणे—घञ्। स्वरसाधनाक्षरे तारिगमादौ (आलापचारी) "आलापैरिव गान्धर्व्वमदीप्यत पदातिभिः" माघः "आलापैः स्वरसाधनैरक्षरविशेषैः" मल्लि०। भावे घञ्। २कथनमात्रे च" "काव्यालापाश्च ये केचित् गीतकान्यखिलानि च" विष्णु पु० आ+लप—णिच्—अच्। ३परस्परकथने। "अये दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते" शकु०। एकस्य कञ्चित् प्रति कथने तेन तत्कथनप्रेरणात् तं प्रति कथ्यते इति परस्परकथनस्य इतरेतरकथनप्रयोज्यत्वात्तथात्वम्।

**आलापन** न० आ+लप—णिच्—करणे ल्युट्। १परस्परकथोपकथने आभाषणे आलापशब्देऽस्य प्रवृत्तिहेतुत्वमुक्तम् "स्यादाभाषणमालापः" इत्यमरः २स्वस्तिवाचने च "मङ्गलालापनैर्होमैः" रामा०। [ २आभाष्ये

**आलाप्य** त्रि० आ+लप—कर्म्मणि ण्यत्। १कथनीये णिच्—यत्।

**आलावु(बू)** स्त्री अलावु पु० पूर्व्वपदोदीर्घः वा ऊङ्। (लाउ) तुम्बाम् शब्दरत्नावली।

**आलावर्त्त** न० आलं पर्य्याप्तमावर्त्त्यते आ+वृत–णिच् कर्म्मणि–अच्। वस्त्रनिर्म्मिते व्यजने हेम०।[सम्यगन्धे न०

**आलास्य** पु० आलं पर्य्याप्तमास्यं यस्य। कुम्भीरे। त्रा०स०।

**आलि** पु० आलति दंशे समर्थो भवति आ+अल–पर्य्याप्तौ इन्। १वृश्चिके २भ्रमरे ३तज्जातिस्त्रियां स्त्री ङीप्। आलयति भूषयति अलभूषणे–णिच्+इन्। ४सख्यां वयस्यायाम् "असम्भवद्घनरसा शतालिपरिवेष्टिता। करं न सहते राजन्! भूमिर्नववधूरिव" उद्भटः वा ङीप्। आलोल्यपत। "आलोव यस्य प्रतिषेधतीयं कपोतहुङ्कारगिरा वनाली" नैष०। "तत्कालमालीभिरहस्यतालम्" नैष० "ममालि! प्राचीनैः मधुरसुकृतैरद्य फलितम्" उद्भटः। "निवार्य्यतामालि! किमप्ययं वटुः" कुमा० "स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितम्" सा०द०। "आलति वारयति जलम् आ+अल–इन् वा ङीप्। आगन्तकस्य चेतस्यस्य च जलस्य निवारके ५सेतौ"। "शतालिपरिवेष्टितेति" आ+अल–पर्य्याप्तौ इन् वा ङीप्। ६सन्ततौ श्रेणौ च वनाली नैष० "तोयान्तर्भास्करालीव रेजे मुनिपरम्परा" कुमा० लीनामालीमिव तरवोविभाषाः"माघः। ७रेखायाञ्च स्त्री वा ङीप् "विषमहरिचन्द्रनालिना" माघः। ८शुद्धान्तःकरणे ९अनर्थे च त्रि० मेदि०।

**आलिगव्य** पुंस्त्री अलिगोरपत्यं गर्गा० यञ्। अलिगुस्तेऽपत्ये स्त्रियां यञन्तत्वात् ष्फः षित्वात् गौरा० ङीष्। आलिगव्यायनी।

**आलिङ्गन** न० आ+लिगि–ल्युट्। आश्लेषे अङ्गेनाङ्गसंयोजनभेदे। "आलिङ्गनान्यधिकृताः स्फुटमापुरेव"माघः "प्रियालिङ्गननिर्वृतिम्" रघुः। तच्च सप्तधा। आमोदालिङ्गनं मुदितालिङ्गनं प्रेमालिङ्गनं मानसालिङ्गनं रुच्यालिङ्गनम् मदनालिङ्गनम् विनोदालिङ्गनमिति भेदात्।

**आलिङ्गित** त्रि० आ+लिगि–कर्म्मणि क्त। १आश्लिष्टे "तरुणालिङ्गितः कण्ठे नितम्बस्थानमाश्रितः" सा०द० टीकाष्टतप्रहेलिका "योगेनाभ्यसितोव्रतं न चरितम्—नालिङ्गिता कामिनी दत्तं जन्म निरर्थकं चिरितवोरयथे यथा मालती" सा०द०। "विंशत्यङ्गुलिदीर्घोयः स्यादालिङ्गितो ह्यसौ" तन्त्रसारोक्ते विंशत्यङ्गुलावधि लिङ्गधरके २मन्त्रभेदे पु०

**आलिङ्गिन्** त्रि० आ–लिगि–णिनि। आलिङ्गनकर्त्तरि स्त्रियां ङीप्।

**आलिङ्ग्य** पु० आ+लिग–ण्यत्। आलिङ्गनीये प्रियादौ २आलिङ्ग्य वादनीये मृदङ्गभेदे पु० स च "हरीतकी-नोऽ द्व्यान्मुखे चैकाङ्गुलेन यः। यवाकृतिः स आलिङ्ग्य आलिङ्ग्य स हि वाद्यते" इति शब्दार्णवोक्तलक्षणः। आ+लिगि–ल्यप्। ३आश्लिष्येत्यर्थे अव्य०

**आलिङ्ग्यायन** पु० आलिङ्ग्यस्य मृदङ्गभेदस्यायनं यत्र। १ग्रामभेदे तस्यादूरभवं नगरम् अण् वरणा० तस्य लुप्। तद्ग्रामस्यादूरभवे नगरे। "लुपि व्यक्तिवचने" पाणिन्युक्तेः नगरेऽपि पुंस्त्वम्। [वृहत्पात्रे त्रिका०।

**आलिञ्जर** पु० अलिञ्जर एव स्वार्थे अण्। (जाला) मृण्मये

**आलिन्द** पु० अलिन्द एव स्वार्थे अण्। १बहिर्द्वारप्रकोष्ठे २गृहाभ्यन्तरस्थप्राङ्गवेद्याञ्च शब्दर० ३गृहैकदेशे अमरमा०। स्वार्थे कन्। आलिन्दकः तेष्वर्थेषु पु०।

**आलिप** त्रि० आ+लिप–क। आलेपनकारके।

**आलिप्त** त्रि० आ+लिप–क्त। १कृतालेपने २दग्धादीपने च

**आलिम्पन** न० आ+लिप–ल्युट् मु०मुम्। तण्डुलचूर्णमिश्रितोदकेन मङ्गलार्थं दीयमाने आलेपने आदीपने। (आलिपना) त्रिका०।

**आलीढ** त्रि० आ+लिह–क्त। १आस्वादिते २ग्रस्ते "सैन्यान्यमालीढमिवासुरास्त्रैः" रघुः। "स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। वितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति। अन्वर्थं स्यात् समपदमालीढं तु ततोऽग्रतः। दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्य्ययः" इत्युक्तलक्षणे अग्रतो दक्षिणं पादं व्यवस्थाप्य वामपादाकुञ्चनेन स्थितिरूपे ३युद्धार्थे धन्विनां स्थानभेदे न०। "अतिप्रदालीढविशेषशोभिना" रघुः। "पायान्नीलोत्पलाभा रविशशिविलसत्कुण्डलालीढपादा" तन्त्रसा० दक्षाकालीध्या० अग्निपुराणे तु समपदादीन्यन्यथा निरुक्तानि यथा "अङ्गुष्ठगुल्फपार्ष्ण्यङ्घ्रि श्लिष्टाः स्युः संहिता यदि। दृष्टं समपदं स्थानमेतल्लक्षणतस्तथा। बाह्याङ्गुलिस्थितौ पादौ स्तब्धजानुकमायतौ। त्रिवितस्त्यन्तरे स्थानमेतद्वैशाखमुच्यते। हंसपङ्क्त्याकृतिसमे दृश्यते यत्र जानुनी। चतुर्वितस्त्या विच्छिन्ने तदिदं मण्डलं स्मृतम्। भुग्नवामपदं पश्चात् स्तब्धजानूरुदक्षिणम्। वितस्त्यः पञ्च विस्तारे तदालीढं प्रकीर्त्तितम्। एतदेव विपर्य्यस्तं प्रत्यालीढं प्रकीर्त्तितम्" विकटादिस्थानं धन्विस्थानशब्दे वक्ष्यते।

"नतांसमाकुञ्चितसव्यपादम्" कुमा० टी० मल्लिनाथेन आकुञ्चितसव्यपादत्वेन आलीढस्थानके स्थितमिति व्याख्यातम्। स्वार्थे कन् तत्रैव। शुभ्रा० पाठात् ढक्। आलीढेयः तद्भवे त्रि०। संज्ञायां कन्। आलीढकम्। वतुमानां स्थलेषु क्रीड़नभेदे न०

**आलीन** त्रि०आ+ली–कर्त्तरि क्त। १आश्लिष्टे भावे क्त। २संश्लेषे न०। तत्र साधु अण्। ३वङ्गे धातुभेदे तस्य धात्वन्तरसंश्लेषकारकत्वात् तथात्वम् संज्ञायां कन्। तत्रैव। तद्गुणादि रङ्गशब्दे वक्ष्यते।

**आलु** पु० आलाति आ+ला–मित० डु। ञ–उ णित्त्व रस्य लः वा।१पेचके २भेलके शब्दरत्ना० स्वल्पवारिधानिकायां सनाले ३जलपात्रभेदे (झारी)स्त्री०। ४कन्दभेदे न०राजनि०। तस्य भेदा नानाविधाः "कन्दो बहुविधो लोके आलुशब्देन भण्यते। कच्चालु चैव घण्टालु पिण्डालु शर्करादिकम् काष्ठालु चैवमाद्यं स्यात् तस्य भेदा अनेकशः"। द्रव्यगु०। आलुकशब्दे विवृतिः।

**आलुक** पु० आ+लाति द्रव्यं कासरोगं वा आ+ला–मित०डु संज्ञायां कन्। १शेषनागे २काष्ठालौ च। आलु+स्वार्थे कन् कन्दभेदे न० तद्भेदगुणादि भा०प्र० उक्तं यथा। "आलुकमप्यालूकं तत् कथितं वीरसेनच। काष्ठालुकशङ्खालुकहस्त्यालुकानि कथ्यन्ते। पिण्डालुकमध्वालुकरक्तालुकानि कथितानि" तत्र काष्ठालुकं काठिन्ययुक्त(कठाल)शङ्खालुकं श्वेततायुक्तं शङ्खाकारम् (शांखआलु) हस्त्यालुकं दीर्घतायुक्तं महाशरीरम् (चुवड़ीआलु)पिण्डालुकं वर्त्तुलाकारं (सुथनी) मध्वालुकं माधुर्य्ययुतं दीर्घसूत्रं शर्करालु(शकरन्द)रक्तालुकं रक्ततायुक्तं(रतालु)तेषां गुणास्तत्रोक्ताः "आलुकं शीतलं सर्वं विष्टम्भि मधुरं गुरु। सृष्टमूत्रमलं रूक्षं दुर्जरम् रक्तपित्तनुत्। कफानिलकरं बल्यं वृष्यं स्तन्यविवर्द्धनम्"। गौरा० ङीष्। दीर्घाकारशङ्खयुक्तरक्तालुके स्त्री। "रक्तालुभेदो वा दीर्घा तन्वी च प्रथितालुकी। आलुकीवलकृत् स्निग्धा गुर्व्वी हृत्कफनाशिनी। विष्टम्भकारिणीतैवे तथितातिरुचिप्रदा" भावप्र०

**आलुञ्चन** न० आ+लुचि ल्युट्। उत्पाटने। केशादेः बन्धरादिश्चे च। [आलुञ्चितमूर्द्धजा"।

**आलुञ्चित** त्रि०आ+लुचि–क्त। उत्पाटिते असंयते केशादौ

**आलुण्टन** आ+लुटि–ल्युट्। बलादपहरणे (लुट्)।

**आलुल** त्रि० आ+लुल–क। उन्मुक्ते चलीभूते। भगा०ञ्यर्थे अड़क्त–आलुलायितः असंयते त्रि०।

**आलू** पु० आलूनाति आ+लू–क्विप्। आलुशब्दार्थे स्वार्थे कन् तत्रैव। "आलुकमप्यालूकमिति"भाव०प्र०। "आलूकं शीतलं सर्व्वमिति" भाव०प्र० पाठान्तरम्।

**आलून** त्रि० आ+लू–क्त। १ईषच्छिन्ने २सम्यक्छिन्ने च "तेनामरवधूहस्तैः सदयालूनपल्लवाः" कुमा०। [लेखपत्रे।

**आलेख** पु०आ+लिख–घञ्। १सम्यक्लेखने। आधारे घञ्।

**आलेखन** न० आ+लिख–भावे ल्युट्। १सम्यग्लेखे। आलिखति ल्यु। २आलेखनकर्त्तरि त्रि०। ३ आचार्य्ये पु० तस्योपदेशकर्त्तृत्वात्तथात्वम्। "संस्थिते ऽप्ययतोऽप्यवर्ध्दं गमयेयुरित्यालेखनः" आश्व०श्रौ०। आलेखन आचार्य्यः"इत्तिः। करणे ल्युट् लेखनसाधने स्त्रियांङीप्

**आलेख्य** त्रि० आ+लिख–ण्यत्। चित्रादौ लेख्यदेवादिप्रतिबिम्बे"विधातुमालेख्यमशक्नुवन्तः"माघः"इति संरम्भिणो वाणीवलस्यालेख्यदेवताः" माघः। "अन्योऽप्यमालेख्यस्य" शकु० २लेखनीये त्रि०। आधारे ण्यत्। ३चित्रे।

**आलेख्यशेष** त्रि० आलेख्यं चित्रमेव शेषो यस्य बहु०। मृते, क्षेम०। मृतस्य हि चित्रे एव प्रकृतिरूपेण अवस्थानात् तथात्वम्। "आलेख्यशेषस्य पितुर्विवेश"। रघुः।

**आलेप** पु० आ+लिप–घञ्। १उपलेपे २आलिम्पने च। (आलिपना) ल्युट् तत्रैवार्थे न०। "जाततात्कारयति चिरं चन्दनालेपनानि" सा०द०। आलिप्यते कर्म्मणि ल्युट्। ३आलिप्यमाने च।

**आलोक** पु० आलोक्यतेऽनेन आ+लुक–लोक–वा करणे घञ्। (आलो) १सूर्य्यादिप्रकाशे, "गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः" भाषा० उक्तेः अलोकसंयोगस्य द्रव्यचाक्षुषप्रत्यक्षे कारणत्वम् इति नैयायिकाः अन्धकारस्य द्रव्यत्ववादिनां मते तद्भिन्नद्रव्यप्रत्यक्षे कारणत्वमिति भेदः। तथाहि पेचकादिचाक्षुषस्य आलोकसंयोगमन्तरेणैव उत्पत्तिदर्शनात् आलोकसंयोगस्य न सर्व्वत्र कारणत्वमित्यतोऽन्धकारेऽपि तथा कल्पनमिति। एतदभिप्रायेणैव"दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथा परे। केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टय इति"देवीमा०केषांचिद्दिवान्ध्योक्तिः। "आलोकमार्गं सहसा व्रजन्त्या" कुमा० रघुश्च। भावे घञ्। २दर्शने। "आलोकमात्रेण सुरानशेषान्"कुमा०। "वतुषालोकप्रवर्त्तिना" रघुः। "वैवर्ण्यं कम्पैरस्पार्श्वालोकास्तेषामपकृत्" सा०द०। "स्त्रीणां प्रियालोकफलो हि वेषः"कुमा०। "मलिनो हि यथादर्शोरूपालोकस्य

स जनः" या० स्रु० "यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलताम्" शकु०। "जनास्तदालोकपथात् प्रतीयुः" रघुः ।

**आलोकन** न० आ+लुक-लोक-वा भावे ल्युट्। दर्शने "ततस्तदालोकनतत्पराणाम्" । "भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते" कुमा० "व्रजति हि सफलत्वं वल्लभालोकनेन" माघः ।

**आलोकनीय** त्रि०आ+लुक-लोक-वा अनीयर्। दर्शनीये द्रष्टुं योग्ये "चित्रन्यस्तादिव गताः प्रकामालोकनीयताम्" कुमा० ।

**आलोकित** त्रि० आ+लोक-क्त । दृष्टे। [ ङीप् ।

**आलोकिन्** त्रि० आ+लुक्-लोक-वा-णिनि । दर्शके स्त्रियां

**आलोक्य** त्रि०आ+लोक-ण्यत् । दर्शनीये ।ल्यप्। दृष्ट्वार्थे अव्य०

**आलोचक** त्रि० आ+लुच-णिच् ण्वुल्। आलोचनाकारके ।

**आलोचन** न०आ+लुच-णिच् भावे ल्युट्। १विशेषधर्म्मादिना १विवेचने नैया० सामान्यविशेषशून्यतया इन्द्रियजन्ये निर्विकल्पकस्थानीये सांख्यमतसिद्धे २अन्तःकरणवृत्तिभेदे। यथोक्तं सां०कौ० आलोचितमिन्द्रियेण भवति इदमिति सम्मुग्धम् । इदंनैवमिति एवं कल्पनया विशेष्यविशेषणभावेन विवेचयतीति यथाहुः । "सम्मुग्धं वस्तुमात्रन्तु प्राक्गृह्णन्त्यविकल्पितम् । तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः"। तथा हि "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्व्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुकमिति। ततःपरं पुनर्वस्तु धर्म्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते सा हि प्रत्यक्षत्वेन सम्मता"। तच्च विशेष्यविशेषणसंसर्गानवगाहि ज्ञानम् "शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः" सां०का० णिच्-युच्। आलोचनाप्यत्र स्त्री ३दर्शने च। "पश्यार्थैश्चानालोचने" इत्येरनालोचने कञ् च" पा०। ४लोचनपर्यन्ते अव्य० "आलोचनान्तं श्रवणं वितत्य" रघुः ।

**आलोचित** त्रि० आ+लुच्-णिच्-क्त । आलोचनाविषयीभूते विशेषदर्शनादिना कृतालोचने "आलोचितमिन्द्रियेणेति" सां०कौ०। इतिकर्त्तव्यतया २अवधारिते च

**आलोच्य** त्रि० आ+लुच्-ण्यत् । आलोचनार्हे आलोचनाविषयीकार्य्ये। आ+लुच्-णिच्-ल्यप्। आलोचनं कृत्वार्थे अव्य० ।

**आलोडन** न० आ+लुड-मन्थे-ल्युट् । १विलोडने २मर्द्दने मन्थने "भावनालोडने चास्य कर्त्तव्ये भेदजं हितैः" सुश्रु० ।

**आलोडित** त्रि०आ+लोड़-क्त । १मथिते २मर्द्दिते ३चूर्णीकृते च "आलोडितः काञ्चनभूपरागः" इति माघः ।

**आलोल** त्रि० ईषत् लोलः प्रा०स० । ईषच्चञ्चले "आलोलपुष्करमुखोल्लसितैरभीक्ष्णम्" माघः । "क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भीषयन्त्यः मेघदूतम् ।

**आलोलित** त्रि० आ+लुल-णिच्-क्त । ईषच्चञ्चलीकृते

**आलोष्टी** अव्य० ईषत् लोष्टमिव करोत्यनेन आलोष्ट+णिच्-बा०ई उणादि । हिंसायां गणर० ।

**आलोहायन** त्रि० अलोहे भवः नड़ा० फक् । अलोहभवे

**आवक** त्रि० अवति अव-ण्वुल् । रक्षके ।

**आवट्य** पुंस्त्री अवटस्य अपत्यं गोत्रापत्यम् गर्गा० यञ् । अवटस्य गोत्रापत्ये स्त्रियाम् "आवट्याच्चाप्" पा० चाप् । आवट्या ।अवटस्य प्रवरभेदः आर्षशब्दे दृश्यः ।

**आवनतीय** त्रि० अवनतस्य सन्निकृष्टदेशादिः कृशा० छण् । अवनतसन्निकृष्टदेशादौ ।

**आवनेय** पु० अवन्या अपत्यं ढक्। मङ्गलग्रहे तस्य महीत उत्पत्तिकथा काशी० १७अ० । "उत्पत्तिं चास्य वक्ष्यामो भूसुतोऽयं यथाऽभवत् । पुरा तपस्यतः शम्भोर्दाक्षायण्या वियोगतः । भालस्थलात् पपातैकः स्वेदबिन्दुर्महीतले । ततः कुमारः संजज्ञे लोहिताङ्गोमहीतलात् । स्नेहसंवर्द्धितः सोऽथ धात्र्या धात्रीस्वरूपया । माहेय इत्यतः ख्यातिं परामयं गतस्ततः" अतएव तस्य कुजभौमेत्यादिसंज्ञा

**आवन्त** पु० अवन्तेरयं राजा अण् । अवन्तिदेशाधिपे चन्द्रवंश्ये नृपभेदे । "कुन्तेष्टैःसुतोजज्ञे रणधृष्टः परान् प्रति । धृष्टस्य जज्ञिरे शूराख्रयः परमधार्म्मिकाः । आवन्तश्च दशार्हश्च बली विषहरश्च यः" हरि०३७अ० । "वृद्धेत्कोसलाजादाञ्ञ्यङ्" पा० ञ्यङ्विधानात् आवन्त्य एवेति पाठः उचितः आवन्त इति तु लिपिकरप्रमादात् ।

**आवन्त्य** त्रि० अवन्तिषु भवः तस्य राजा वा इदन्त्वात् ञ्य । १अवन्तिदेशभवे २तन्नृपे च बहुषु लुक् अवन्तयः । विन्दानुविन्दावावन्त्यौ सैन्येन महतावृतौ" भा० व० प० २०अ० । "विन्दानुविन्दावावन्त्यौ दन्तवक्रश्च वीर्य्यवान्" हरि०व० ९२अ० । व्रात्याद्ब्राह्मणात् सवर्णायामुत्पन्ने ३वर्णभेदे व्रात्यात् तु जायते विप्रात् पापात्मा भूर्जकण्टकः "आवन्त्यवाटधानौ च पुष्पधःशैख एव च" मनुः ।

**आवपन** न० ओप्यते स्थाप्यतेऽत्र आ+वप-आधारे ल्युट् । १धान्यस्थापनपात्रे (पल्ला) इति ख्याते। "गोणी आवपनं चेत्" सि०कौ०आ+वप-भावे ल्युट् ।२भूमौ बीजादेर्निधाने ( बोना ) "अथात आहूतीनामेवावपनस्य" कात्या० ।

प्रभुरग्निः प्रपचते भूमिरावपने प्रभुः" भा०आ०८८ब०। करणे ल्युट्। ४वपनसाधने लि० "भूतानामावपनं सर्व्वेषाम्" शत०ब्रा०स्त्रियां ङीप्। "त्वमस्यावपनी जनानाम्" अथ० १२,१,६१। अन्तर्भूतणर्थे ल्युट्। ५केशादेः सम्यक्मुण्डने।

**आवपनिष्किरा** स्त्री आवप निष्किर इत्युच्यते यस्यां क्रियायां मयूर० स०। आवपननिष्किरणार्थनिर्देशक्रियायाम्।

**आवय** पु० आ+अज–अच् वीभावः। १आगतौ। कर्त्तरि अच्। २आगन्तरि ३देशभेदे पु०। भूमा०वुञ् आवयकः। आवयदेशभवे त्रि०। [आच्छादके वस्त्रादौ।

**आवरक** न० आ+वृ–करणे अप् संज्ञायां वुन्। अपवरके,

**आवरण** न० आव्रियते देहः चैतन्यं वाऽनेन आ+वृ–करणे ल्युट्। (ढाल) १चर्म्मफलके। वेदान्तिमतसिद्धे चैतन्यावरणे २अज्ञाने आवरणशक्तिशब्दे विवृतिः। ३आच्छादनसाधनमात्रे "तमस्तु नेत्रावरणं प्रपन्नः" रघुः "स्फुटमिवावरणं हिममारुतैः" माघः "तस्यान्तरावरणेऽपि गेहे" रघुः पुरादिषु आच्छादनसाधने ४प्राचीरादौ च यथा काश्यां सप्तावरणानि। बेड़ा) ५वेष्टने भावे ल्युट्। ६आवृतौ" "हृदयावरणं नित्यं कुर्य्यान्न मित मध्यगः" सुश्रु०। "स्रोतसां भेदकोयश्च तेषां चावरणे रतः" मनुः। "सूर्य्ये तपत्यावरणाय दृष्टेः" "तस्य सावरण दृष्टिसन्धयः" रघुः "नलिनीदलकल्पितं स्तनावरणम्" शकु०

**आवरणशक्ति** स्त्री आवरणे शक्तिः आवृणोतीति संज्ञायां कर्त्तरि ल्युट् कर्म्म० वा०वा। वेदान्तिमतसिद्धे अज्ञानस्य चैतन्यापिधानशक्तिभेदे यथोक्तं वेदा०सा० आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाच्छादयतीव तथाऽज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यम्। तदुक्तं "घनच्छन्नदृष्टिर्घनाच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढ़ः। तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा" अनयावृतस्यात्मनः कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिसंसारसंभावनाऽपि भवति यथा स्वाज्ञानावृतायां रज्ज्वां सर्पत्वसम्भावना"।

**आवरसमक** न० अवरं समानाम् एक० त० "ग्रीष्मावरसमात् वुञ्" पा०नि० ज्ञुस्मः अवरसमे वर्षस्याद्यकाले देयऋणम् वुञ्। वर्षस्याद्यसमये देये ऋणे।

**आवर्जित** त्रि०आ+वृज–णिच्–क्त। १दत्ते २त्यक्ते "न हि तेन पथा तनुत्यजस्तनयावर्जितपिण्डकाङ्क्षिणः" "नूनमावर्जितं मया" "हविरावर्जितं होतस्त्वया विधिवदग्निषु" इति च रघुः। ३निम्नीकृते च "अधःप्रस्थापिताश्वेन समावर्जितकेतुना" "आवर्जितजटामौलिविलम्बिशशिकोटयः" कुमा०।

**आवर्त्त** पु० आ+वृत–भावादौ घञ्। चक्राकारेण जलस्य भ्रमणे, (घुरणो) प्र,वाच्ये घोटकचिह्ने २रोमसंस्थानभेदे राजावर्त्तनामके ३मणौ ४आवर्त्तने, । ५मेघाधिपभेदे च ६माक्षिकधातौ न०। "रूपं तमावर्त्तमनोज्ञनाभिः" रघुः "तथापि समतावर्त्तैः मोहगर्त्तैः निपातिताः" देवीमा० "लियुते, शाकवर्षे तु चतुर्भिः शेषिते क्रमात्। आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम्। आवर्त्तो निर्जलोमेघः संवर्त्तश्च बहूदकः। पुष्करोदुष्करजलो द्रोणः सस्यप्रपूरकः" ज्यो०त०। "आवर्त्तिनः शुभफलप्रदशुक्तियुक्ता आपन्नदेवमणयोभृतरत्नभागाः। अश्वाःमधुर्वसुमतीमतिरोचमानाक्लृप्तं पयोधय इवोर्म्मिभिरापतन्तः" माघः। "आवर्त्तिनः इत्यावर्त्तयुक्ताः प्रशस्ताश्विनि। ते च "द्वावुरस्यौ शिरस्यौ द्वौ द्वौ द्वौ रन्ध्रोपरन्ध्रयोः। एकोभाले ह्यपाने च इत्यावर्त्ता ध्रुवाः स्मृताः" पयोधिपक्षे जलभ्रमः" मल्लि० अश्वावर्त्तश्च अश्वशब्दे ५०२पृष्ठे उक्तः। ७आवर्त्ताकारे देहिनां रोमसंस्थानभेदे पु० अश्वानामपि उक्तध्रुवरूपावर्त्तोरोमसंस्थानविशेष एवेति बोध्यम्। णिच्–भावे अच्। ८पुनः पुनश्चालने ९परिघट्टने (आलोटान) १० धातूनां द्रावणे (गलान) ११चिन्तायाञ्च चिन्तया हि चित्तं स्वविषयेषु पुनःपुनश्चाल्यते इति तस्याः तथात्वम्। आवर्त्त्यते समन्तात् अनेककोटिषु आ+वृत–णिच्–कर्म्मणि अच्। अनेककोटिस्पर्शिनि १२ संशये "भ्रमं संमोहमावर्त्तमभ्यासाद्विनिवर्त्तयेत्" भा०शा०२७१ अ० आवर्त्तमनेककोटिस्पर्शेन संशयम् अभ्यासात् तत्त्वाभ्यासात्" नीलक०। आवर्त्तते कर्त्तरि अच्। १३आवर्त्तमाने त्रि० "दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतोमया" सा०द०१४ संसारे पु० तस्यानिशमावर्त्तमानत्वात्तथात्वम्। "इममावर्त्तं नावर्त्तन्ते" इति श्रुतिः "शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता। तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता" "शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः। गजतालुनिभाश्चापि वर्णतः संप्रकीर्त्तिताः" इति सुश्रुतोक्ते देहान्तर्वर्त्तिनि आवर्त्ताकारे १२ नाडीसन्निवेशभेदे च।

**आवर्त्तक** पु॰ आवर्त्त एव स्वार्थे कन् । १मेघाधिपभेदे "रजनिकरबिम्बचुम्बितावर्त्तकाम्बुदविडम्बनेन" काद॰। तदीयास्तोयदेष्वद्य पुष्करावर्त्तकादिषु" कुमा॰ "जातं वंशे भुवनविदिते पुष्करावर्त्तकानाम्" मेघदू॰ । आवर्त्त इव कायति कै–क । २आवर्त्ताकारे आवर्त्त शब्दोक्ते अश्वरोमचिह्नभेदे आवर्त्तयति आ–वृत-णिच्-ण्वुल्। ३पुनः पुनरावर्त्तके त्रि॰

**आवर्त्तकी** स्त्री आवर्त्त इव कायति प्रकाशते कै–क–गौ॰ ङीष् । कोङ्कणे (भगतवल्ली) प्रसिद्धे लताभेदे सा तु विषाणाकारा रक्तपुष्पी रक्ताकारा पीतकीलकयुक्ता चर्म्मरञ्जनकारिणी "कषायाम्ला शीतवीर्य्यकारिणी पित्तनाशिनी" वैद्य॰ २भद्रदन्तिकायां च राजनि॰ ।

**आवर्त्तन** न॰ आ+वृत–आधारे ल्युट् । सूर्य्यस्य पश्चिमदिगवस्थितच्छायायाः १पूर्व्वदिग्गमनसमये मध्याह्नकाले "आवर्त्तमास् पूर्व्वाह्णोऽपराह्णस्तु ततःपरम्" स्मृतिः । "आवर्त्तनसमीपे वा ह्यडिम्याद्धुपक्रमेत्" स्मृतिः आ+वृत–णिच्-भावे ल्युट् (आओटान) २आलोडने ३गुणने च धातूनां ४द्रावणे(गलान) । आवर्त्तयति संसारचक्रम् आ+वृत-णिच्-कर्त्तरि ल्यु ।५विष्णौ "आवर्त्तनोनिवृत्तात्मा" विष्णु सह॰ ६जम्बुद्वीपोपद्वीपभेदे च । आवर्त्त्यतेऽनया ल्युट् ङीप् । ७दर्व्वाम् स्त्री आधारे ल्युट् ङीप् । (मुचि) धातुद्रव्यद्रावणाधारे ८मूषायाम् स्त्री करणे ल्युट् । ९वेष्टने प्राचीरादौ न॰।

**आवर्त्तनीय** त्रि॰ आ+वृत–णिच्–अनीयर् । १द्रावणीये धात्वादौ २आलोड्ये दुग्धादौ गुण्ये ३अङ्कादौ च । पुनः पुनः४पाठ्ये पदादौ च।"खिङ्गपदमावर्त्तनीयम्"सा॰कौ॰

**आवर्त्तमणि** पु॰ आवर्त्ताकारोमणिः । राजावर्त्तमणौ ।

**आवर्त्तिक** त्रि॰आवर्त्तः प्रयोजनमस्य ठक् । आवर्त्ताकारधूमसाधने धूपादौ "आवर्त्तिकैर्गुग्गुलुभिर्धूपैरामोदिमन्दिरे" काशी॰ ।

**आवर्त्तित** त्रि॰ आ+वृत–णिच्–क्त । १कृतावर्त्तने दुग्धादौ द्राविते २धात्वादौ, ३गुणिते ४अभ्यस्ते च । आवर्त्तो जातोऽस्य तार॰ इतच् । ५जातावर्त्ते जलादौ ।

**आवर्त्तिन्** त्रि॰आ+वृत–णिनि । १पुनःपुनर्वर्त्तनशीले "आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन" गीता "कालान्तरावर्त्ति शुभाशुभानि" हितो॰ । णिच्–णिनि । आवर्त्तके २द्रावके ३दुग्धादेरावर्त्तनकारके स्त्रियामुभयतो ङीप् ।

**आवर्त्तिनी** स्त्री आवर्त्तः मेषशृङ्गाकारवेष्टनमस्त्यस्याः इनि ङीप् । अजशृङ्गीवृक्षे राजनि॰ ।

**आव(ब)र्हित** त्रि॰ आ+वृह–उद्यमे णिच्–क्त आ+बर्ह–हिंसायां क्त वा । उत्पाटिते उन्मूलिते ।

**आव(लि)ली** स्त्री आ+वल–इन् वा ङीप् । १श्रेणौ सजातीयससदायेन कृतपङ्क्तौ "इत्यावलिः धनावलिरिति । "के वा न सन्ति भुवि तामरसावतंसा हंसावलीवलयिनो जलसन्निवेशाः" उद्भटः । "द्विजावलीबालनिशाकरांशुभिः" माघः । "अलोकयद्गुम्फकोरकावलीः" नैष॰ २परम्परायाञ्च । [ च ।

**आवलित** आ+वल–चलने क्त । ईषच्चलिते सम्यक्चलिते

**आवशीर** पु॰ अवशीरदेशे भवः तस्य राजा वा अञ् । १अवशीरदेशभवे जने २तद्भूपे च ।"आवशीरांश्च योधांश्च अहिच्छत्रं च योधयन्" भा॰ व॰ २५२ । स च देशः वत्सभूमेः पूर्व्वदिग्वर्त्ती "पूर्व्वां दिशं विनिर्ज्जित्य वत्सभूमिं तथागमत्" इत्यनन्तरश्लोके पूर्व्वां दिशमित्यभिधानात् ।

**आवश्यक** न॰ अवश्यं भावः मनोज्ञा॰ वुञ् । १अवश्यभावे नैयत्ये "ण्य आवश्यके" पा॰ अवश्यं भवः वा॰ २वुञ् २नियते त्रि॰ "एतेष्वावश्यकस्त्वसौ" भाषा॰" ३अवश्यकर्त्तव्ये नियमात् कर्त्तव्ये "उत्थायावश्यकं कृत्वा कृतशौचः समाहितः" मनुः । कालमतीत्याराहित्येन ४निरवकाशे च "नैवैतान्न विशेषेत्याभन्यत्रावश्यकाद्विधेः" पु॰ "आवश्यकात् निरवकाशात्" मल॰त॰रघु॰ ।

**आवश्यपुत्रक** न॰न वश्यः अवश्यः पुत्रः तस्य भावः मनोज्ञा॰ वुञ् । पुत्रस्य वश्यत्वाभावे ।

**आवसति** स्त्री वसत्यत्र गृहे वसतिः रात्रिः सम्यक्वसतिः प्रा॰ स॰ । निशीथे वसतेः सम्यक्त्वञ्चावश्यम्गृहवासयोग्यत्वं तस्यार्द्धरात्रेऽवश्यं भवतीति तस्य तथात्वम् ।

**आवसथ** पु॰ आवसत्यत्र आ+वस–अथच् । १वसतिस्थाने, २विश्रामस्थाने ३ग्रामे ४व्रतभेदे च । तत्र वासस्थाने "दूरादावसथान्मूत्रं दूरात् पादावसेचनम्" मनुः विश्रामस्थाने । "आसनावसथौ शय्यामनुव्रज्यामुपासनाम्" मनुः विश्रामस्थाने "स किलाश्रममन्त्यमाश्रितो निवसन्नावसथे पुराद्बहिः" रघुः । ग्रामे "सह-सर्व्वैस्त आवसथान् मापयाञ्चक्रे" आ॰उ॰ । ५आर्य्याछन्दोरचिते कोषभेदे । [ गृहस्थे ।

**आवसथिक** त्रि॰ आवसथे गृहे वसति ठण् स्त्रियां ङीप् ।

**आवसथ्य** पु॰ आवसथस्थायं ञ्य । १गृहसम्बन्धिनि लौकिकेऽग्नौ "आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभम्" भा॰व॰ २१अ॰ । "आवसथ्याधाने" इत्यत्र

अन्वाधानकर्माङ्गे २वह्नौ च। "आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च। अन्वाहार्य्यो गार्हपत्य इत्येते पञ्च वह्नयः" इत्युक्ते यज्ञाङ्गवह्निपञ्चकान्तर्गते ३वह्निभेदे च। स च गृह्याग्निः आवसथशब्दार्थगृहसम्बन्धात्तस्य गृह्यत्वम्। [सीमान्तवासिनि स्त्रियां ङीप्।

**आवसान** त्रि० अवसानमभिजनोऽस्य तक्ष० अञ्। ग्राम-

**आवसानिक** त्रि० अवसाने तत्काले भवः ठञ्। अवसानकाले (शेषकाले) भवे स्त्रियां ङीप्।

**आवसित** न० आ+अव+सो—क्त। १पक्वधान्ये, मर्द्दनानन्तरमपनीततुषे राशीकृते २धान्ये च। ३निर्णीते ४अवधारिते ५समाप्ते च त्रि०।

**आवस्थिक** त्रि० अवस्थायां भवः ठञ्। कालकृतावस्थाभवे "आवस्थिकं क्रमञ्चापि मत्वा कार्य्यं निरूहणम्" सुश्रु०।

**आवह** पु० आवहति आभिमुख्येन गच्छति आ+वह-अच्। सप्तस्कन्धात्मकवायोः प्रथमे स्कन्धे १भूवायौ। "भूवायुरावह इह प्रवहस्तदूर्द्धम्" सि०शि०। अनिलशब्दे १६४ पृष्ठे विवृतिः "आवहः प्रवहश्चैव विवहश्च समीरणः। परावहः संवहश्च उद्वहश्च महाबलः। तथा परिवहः श्रीमान्" हरिवं० २२६ अ०। आवहति प्रापयति आ+वह—अच्। २प्रापके त्रि० "क्लेशावहा भर्त्तुरलक्षणाहम्" रघुः। "फलैधःकुसुमस्तेयमधैर्य्यञ्च मलावहम्" मनुः। "नोत्सृजेत् साहसिकान् सर्वभूतभयावहान्" मनुः।

**आवहमान** त्रि० आ+वह—शानच्। क्रमागते।

**आवाप** पु० आ+वप—आधारे वा घञ्। १आलवाले तत्र हि जलसेकेन वृक्षान् आवपन्तीति तस्य तथात्वम् २धान्यादेः पात्रभेदे (वस्था) भावे घञ्। ३समन्तात् वपने। "शस्यावापे कृषीवलाः" भार० ४धान्यादिस्थापने ५परचिन्तने ६परराष्ट्रचिन्तने, "तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता" माघः। ७प्रधानहोमे च। ८प्रक्षेपे, "आवापोद्वापाभ्याम्" श्रा० द०। प्रक्षेपोत्क्षेपाभ्यामित्यर्थः आ+वप-कर्म्मणि घञ्। ९आवपनीये प्रक्षेपणीये "पञ्चच्छन्दा आवाप चार्षवःपवमान" इति ताण्ड्य०ब्रा० आवापः आवपनीयः आवापस्य स्तोमस्य ऋचे साम्न आक्षेप इति भा० १०वलये च"। ईषद्वप्यतेऽत्र आधारे घञ्। ११निम्नोन्नतभूमौ तत्र हि शस्यादिकं न सम्यक् वप्तुं शक्यते इति तस्यास्तथात्वम्।

**आवापक** पु० आ+वप—कर्म्मणि घञ् संज्ञायां कन्। १प्रकोष्ठाभरणे वलयादौ। कर्त्तरि ण्वुल्। २आवपनकर्त्तरि त्रि०।

**आवापन** न० आ+वप—णिच्-करणे ल्युट्। (ताँत) १सूत्रयन्त्रे। भावे ल्युट्। २केशादेः सम्यग् मुण्डने च।

**आवापिक** न० आवापाय साधु ठक्। आवापे साधौ।

**आवारि** न० समन्तात् व्रियते आच्छाद्यते आ+वृ—बा० इञ्। १समन्तादाच्छाद्ये हट्टस्थाने शब्दचि०। २सम्यग्जलयुक्ते त्रि०।

**आवाल** न० आवाल्यते जलमनेन आ+वल संवरणे णिच् करणे अच्। १आलवाले वृक्षादेरधोभागे मृदादिनिर्म्मिते जलाधारे सेतुभेदे। आ+वन—भावे घञ्। २कह्लारे।

**आवास** पु० आ+वस—आधारे घञ्। १वासस्थाने गृहादौ "आवासोन्मुखबर्हिणान्" रघुः। "आवासमेवोपशमाय शीघ्रम्" भा०आ०११६ अ०। भावे घञ्। २सम्यग्वासे

**आवाहन** न० आ+वह-णिच् ल्युट्। सान्निध्याय देवानामाह्वाने। "चकारावाहनं तत्र भागार्थं सर्वदैवतम्" पुरा० "प्रतिमास्थानेष्वग्नौ नावाहनविसर्ज्जने" ति०त०पुरा०।

**आवाहनी** स्त्री आवाह्यतेऽनया आ+वह—णिच्—करणे ल्युट् ङीप्। देवाह्वानार्थे "हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिका मूलपर्व्वणोः। अङ्गुष्ठौ निक्षिपेद्यत्र मुद्रा सावाहनी स्मृता" तन्त्रोक्तलक्षणे मुद्राभेदे।

**आविक** न० अविना तल्लोम्ना निर्म्मितं ठक्। १कम्बले। "सर्वं तु तान्तवं रक्तं शाणक्षौमाविकानि च" मनुः अवेर्मेषस्य २सम्बन्धिनि त्रि० "आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः"। "वस्त्रवच्चानुपूर्व्येण शाणक्षौमाविकानि च" मनुः। "कौशेयाविकयोरूषैः कुतपानामरिष्टकैः" मनुः।

**आविकसौत्रिक** न० सूत्रमेव सौत्रं कर्म० आविकसूत्रेण निर्म्मितम् ठक्। मेषलोमनिर्म्मिते। "वैश्यस्याविकसौत्रिकम्" मनुः।

**आविक्य** न० आविकानां भावः पुरो० यक्। आविकसम्बन्धित्वे

**आविग्न** पु० आ+विज—कर्त्तरि क्त। उद्विग्ने (पाखिआमला) वृक्षे पु०।

**आविज्ञान्य** न० अविज्ञानमेव चातु० स्वार्थे ष्यञ्। विज्ञानहीने "तदाविज्ञान्यमिव कुर्वीयि" शत०ब्रा० "आविज्ञान्यं विज्ञानविहीनमिव" भा०। [विदूर्य्ये" पा०।

**आविदूर्य्य** न० अविदूरस्य भावः ष्यञ्। सन्निकर्षे। "अभ्या-

**आविद्ध** त्रि० आ+व्यध—क्त। १ताडिते २विद्धे ३छिद्रिते ४क्षिप्ते च "नक्षतोद्युर्यथाऽऽविद्धः" मनुः। [माठायाम्।

**आविद्धकर्णी** स्त्री आविद्धौ कर्णाविव पत्रमस्याः गौ० ङीष्।

**आविध** पु० आविध्यतेऽनेन आ+व्यध— घञर्थे क । काष्ठादि-वेधनसाधने (भमर) (तुरपिन) सूच्याकाराख्ये अस्त्रे ।

**आविर्भाव** पु० आविस्+भू—घञ् । १प्रकाशे सांख्यमतसिद्धे उत्पत्तिस्थानीयेऽभिव्यक्तिरूपे २भावधर्मभेदे तथा हि नैयायिकादयः क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्था-भेदात् कार्यस्य कारणात् भिन्नतया कारणादुत्पत्तिरित्य-ङ्गीचक्रुः तदेव्वतमनूद्य सां०त०कौ० दूषयित्वा सतामेव कार्य्याणामाविर्भावः इति स्थिरीकरणेन कार्य्यकारणयो-रभिन्नत्वं समर्थितम् यथा "आत्मनि क्रियानिरोधबुद्धि-व्यपदेशार्थक्रियाव्यवस्थाभेदाश्च नैकान्तिकं भेदं साधयितु-मर्हन्ति एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषा-मविरोधात् यथा हि कूर्म्मस्याङ्गानि कूर्म्मशरीरे निविशमानानि तिरोभवन्ति निःसरन्ति चाविर्भवन्ति न तु कूर्म्मतस्तदङ्गा-न्युत्पद्यन्ते प्रध्वंसन्ते वा एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयोविशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते न पुनरसतामुत्पादः सतां वा निरोधः ।यथाह भगवान् कृष्णद्वैपायनः 'नासतोविद्यते भावो नाभावो विद्यते सत इति' । यथा कूर्म्मः स्वावयवेभ्यः सङ्कोचिविकाशिभ्योन भिन्नः एवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्योन भिन्नाः । एवञ्चेत् तन्तुषु पटइति व्यपदेशो यथेह वने तिलका इत्यु-पपन्नः । न चार्थक्रियाभेदोऽपि भेदमापादयति एकस्यापि नानार्थक्रियादर्शनात् यथैक एव वह्निर्दाहकः प्रका-शकः पाचकश्चेति । नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः तेषामेव समस्तव्यस्तानामर्थक्रियाव्यवस्थादर्शनात् यथा प्रत्येकं विष्टयो वर्त्मदर्शनलक्षणामर्थक्रियां कुर्व्वन्ति न तु शिविकावहनं, मिलितास्तु शिविकां वहन्ति एवं तन्तवः प्रत्येकं प्रावरणमकुर्व्वाणा अपि मिलिताः आवि-र्भूतपटभावाः प्रावरिष्यन्ति । स्यादेतत् । आविर्भावः पटस्य कारणव्यापारात् प्राक् सन्नसन् वा असंश्चेत् प्राप्तं तर्ह्यसत उत्पादनम् ।अथ सन्, कृतं तर्हि कारणव्यापारेण, न हि सति कार्य्ये कारणव्यापारप्रयोजनं पश्यामः । आवि-र्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः । तस्मादाविर्भू-तपटभावास्तन्तवः क्रियन्त इति रिक्तं वचः। अथासदुत्पद्यत इत्यत्रापि मते कोयमसदुत्पत्तिः सतो असतो वा, सती चेत् कृतं तर्हि कारणैः, असती चेत्तस्या अप्युत्पत्त्यन्तरमित्यनवस्था । अथोत्पत्तिः पटान्नार्थान्तरम् अपि तु पटएवासौ तथापि यावदुक्तं भवति पटइति तावदुक्तं भवत्युत्पद्यतइति । ततश्च पटइत्युक्ते उत्पद्यतइति न वाच्यं पौनरुक्त्यात् विनश्यतीत्य-पि न वाच्यं उत्पत्तिविनाशयोर्युगपदेकत्र विरोधात् तस्मादियं पटोत्पत्तिः स्वकारणसमवायो वा स्वसत्तासम-वायोवा उभयथापि नोत्पद्यते अथ च तदर्थानि कारणानि व्यापार्य्यन्ते एवं पटादेराविर्भावेऽपि कारणापेक्षेत्युपपन्नम् । न च पटरूपेण कारणानां सम्बन्धः, तद्रूपस्याक्रिय-त्वात् क्रियासम्बन्धित्वाच्च कारकाणाम् अन्यथा कारणत्वा-भावात् । तस्मात् सत्कार्य्यमिति सुष्ठुक्तम्" सां०कौ० । प्रपञ्चस्तु अभिव्यक्तिशब्दे २०० पृष्ठादौ दृश्यः । "चाञ्च-ल्यविरुद्धतापादकः कश्चनान्तरो धर्मः सत्त्वं तस्योद्रेकः रजस्तमसी अभिभूयाविर्भावः" सा०द० । देवादीनां मनुष्याद्याकारग्रहणरूपे ३अवतारे च । "तदा मे मनसा-ध्यातो दयासिन्धुर्जनार्द्दनः । भक्तानामनुकम्पार्थं यथा-विर्भावमिच्छति" जैमि०भा० ।

**आविर्भूत** त्रि० आविस्+भू—कर्त्तरि क्त ।१प्रकटिते २अभिव्यक्ते "आविर्भूता महाघोरा योगिनीकोटिभिः सह" योगि०त० "आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्" मेघदू० "आविर्भूतपटभावाः" सा०कौ० ।

**आविल** त्रि० आविलति दृष्टिं स्तृणाति विल—स्तृतौ क । १कलुषे अयं विल भेदने विलप्रकृतिकत्वात् दन्त्यवमध्य-इतिरायमु० "समलक्ष्यत बिभ्रदाबि(वि)लाम्" "तस्याबि-(वि)लाम्भःपरिशुद्धिहेतोः" । "ननन्दुरानन्दजलाबि(वि)लाक्षाः,"रघुः "यथा त्वदीयैश्चरितैरनाबि(वि)लैः" कुमा० ।

**आविष्करण** न०आविस्+कृ—भावे ल्युट् षत्वम् । १प्रकाशने "असूया गुणेषु दोषाविष्करणम्" सि०कौ० करणे ल्युट् । २प्रकाशसाधने स्त्रियां ङीप् । घञ् । आविष्कारोऽप्यत्र पु० "आविष्कारातिशयश्चाभिधेयवत् प्रतीयते" सा०द० ।

**आविष्कर्त्तृ** त्रि० आविस्+कृ—तृच् । प्रकाशके स्त्रियां ङीप् ।

**आविष्कृत** त्रि० आविस्+कृ—कर्म्मणि क्त । प्रकाशिते । "कृतापचारोऽपि परैरनाविष्कृतविक्रियः" माघः "बाष्पा-दनाविष्कृतलाञ्छनेन" कुमा० "आविष्कृतमुदन्वता" रघुः

**आविष्ट** त्रि० आ+विश—क्त । १भूतादिग्रस्ते, २आवेशयुक्ते, ३निविष्टे ४व्याप्ते च ।

**आविस्** अव्य० आ+अव—इसुन् । प्रकाशे । कृभ्वस्तियोगेऽस्य गतित्वम् । एतेन सह भूधातुः प्रकाशार्थे यथा आवि-र्भावः, कृञ्धातुः प्रकाशकरणेऽर्थे यथा आविष्कारः । "स्वरादिपाठात् अव्ययत्वम् "तेषामाविरभूत् ब्रह्मा परि-म्लानमुखश्रियाम्" कुमा० देवानां कार्य्यसिद्ध्यर्थमावि-र्भवति सा यदा" देवीमा०। "आचार्य्यकं विजयि मान्म-

यमाविरासीत्" "सरसनखमखिलतमाविष्कुर्वते भुजामूलम्" सा०द०।

**आविस्तराम्** अव्य० आविस्+तरप् आमु। अतिशयप्रकाशे "आविस्तरां वा अग्निः कर्म्मणा" श०ब्रा०। तमप् आमु आविस्तमाम्। अत्यन्तप्रकाशे।

**आवी** स्त्री अवीरेव स्वार्थे अण् ङीप्। रजस्वलायां १नार्य्यां २गर्भवत्याञ्च। "गर्भस्पन्दनमावीनां प्रणाशःस्रावपाक्षुता" सुश्रु०।

**आवीत** त्रि० आ+व्ये-क्त। १समन्तात्स्यूते उत्तरीय २वृते च। भावे क्त। ३सम्यक् स्यूतौ ४उत्तरीय धारणे च न०।

**आवीतिन्** पु० आवीतमनेन इष्टा० इनि। "उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः। सव्ये प्राचीन आवीती निवीती कण्ठसज्जिते" मनूक्ते सव्यपाणिं बहिष्कृत्य दक्षिणस्कन्धोपरिधृतयज्ञसूत्रे प्राचीनावीतिनि। [नाट्योक्तौ जनके।

**आवुक** पु० अवति रक्षति अव-बा० उण् संज्ञायां कन्।

**आवीरचूर्ण** पु० आ समन्तात् विशेषेण ईर्य्यते क्षिप्यते आ+वि+ईर-घञ् कर्म्मधा०।(आवीर) इति ख्याते फल्गुनि "आवीरचूर्णं रुचिरं गृह्यतां परमेश्वर"। पुरा०

**आवृत्** स्त्री आ+वृत-सम्प० क्विप्। १आवर्त्तने २भ्रमणे ३पुनःपुनरावर्त्तने "सूर्य्यस्यावृतमन्वावर्त्ते दक्षिणामन्वावृतम्" अथ० १०,५,३७, ४पुनःपुनरेकजातीयक्रियाकरणे। आधारे क्विप्। ५परिपाट्याम् अनुक्रमे ६इतिकर्त्तव्यताप्रकारे। "अनयैवावृता कार्य्यं पिण्डनिर्वपणं बुधैः" मनुः। "आवृते सोमपीतये" ऋ० १,३२,२, ७संस्कारे च। "अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः। संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्" मनुः। ८तूष्णीम्भावे च। "आवृतैव पर्य्यग्नि कृत्वोदकं नयन्ति" आश्व०स०। "आवृतैव तूष्णीमेवेत्यर्थः" वृत्तिः। कर्त्तरि क्विप्। ९आवर्त्तमाने त्रि०।

**आवृत** त्रि० आ+वृ-क्त। १कृतावरणे अप्रकाशीकृते आच्छादिते "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" गीता एतज्ज्ञानावृतत्वविषयम् "आवृते तु पुनर्मार्गत्वेऽपि दोष एवेति" मिता०। "ब्राह्मणादुग्रकन्यायामावृतो नाम जायते" मनूक्ते २संकीर्णवर्णभेदे पुंस्त्री स्त्रियां जातित्वात् ङीष्।

**आवृति** स्त्री आ+वृ-क्तिन्। आवरणशब्दार्थे।

**आवृत्त** त्रि० आ+वृत-क्त। १पुनःपुनरभ्यस्ते २आवर्त्तमाने च ३परावृत्ते ४प्रतिनिवृत्ते च "आवृत्तानां गुरुकुलात् विप्राणां पूजकोभवेत्" मनुः। "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" कठोप० "आवृत्तं व्यावृत्तं चक्षुः श्रोत्रादिकमिन्द्रियजातं विषयाद्यस्य" भा०।

**आवृत्ति** स्त्री आ+वृत-क्तिन्। १पुनः पुनरभ्यासे २भूयएकजातीयक्रियाकरणे "आवृत्तिः सर्व्वशास्त्राणां बोधादपि गरीयसी" उद्भटः। "उदयावृत्तिपथेन नारदः" रघुः। "एकद्रव्ये कर्म्मावृत्तौ सर्व्वत्रान्वचनम्" कात्या० १,७,८। "आवृत्तिरसकृदुपदेशात्" शा०सू०। ३प्रत्यावृत्तौ ४"पुनरागतौ "अनावृत्तिः शब्दात्" शा०सू० "तत्र प्राप्तविवेकस्यानावृत्तिः" सां०सू०। "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः" गीता। "गुर्व्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम्" किरा०। "तपोवनावृत्तिपथं गताभ्याम्" रघुः।

**आवृत्तिदीपक** न० आवृत्त्या दीपकम्। दीपकावृत्तिरूपे अर्थालङ्कारभेदे तल्लक्षणं १०० उक्तम्।

**आवृष्टि** स्त्री आ+वृष-क्तिन्। सम्यग्वर्षणे "भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि" देवीमा०।

**आवेग** पु० आ+विज-घञ्। उत्कण्ठाजनके त्वरान्विते च मानसे वेगे। वेगश्च क्रियाजन्यः गुणविशेषः मानसवेगस्योत्कण्ठादिसाधनत्वे आवेगत्वम्। "सावेगमन्याङ्गुलिरस्ततूणौ" किरा०। २व्यभिचारिभावभेदे। व्यभिचारिणस्तु सा०द० दर्शिता यथा "निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः" इत्यादयः। तत्र आवेगः सम्भ्रमस्तत्र वर्षजे पीडिताङ्गता। उत्पातजे स्रस्तताङ्गे धूमाद्याकुलताग्निजे। राजविद्रवजादेस्तु शस्त्रनागादियोजनम्। गजादेः स्तम्भकम्पादिः पांस्वाद्याकुलतानिलात्। इष्टाद्धर्षाः शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम्"।

**आवेगी** स्त्री आवेगोऽस्त्यस्याः अर्श आद्यच् गौरा० ङीष्। वृद्धदारकवृक्षे।

**आवेदक** त्रि० आ+विद-णिच्-ण्वुल्। १विज्ञापके "कृत्वाचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहारपदं हि तदिति" स्मृत्युक्ते व्यवहारोत्थापके २वादिनि च

**आवेदन** न० आ+विद-णिच्-ल्युट्। १विज्ञापने व्यवहा-२रोत्थापने (नालिशकरा) "राज्ञे कुर्य्यात् पूर्व्वमावेदनं यः" इति नारदः। आवेद्यते अनेन करणे ल्युट्। व्यावहारोत्थापके ३भाषापत्रे (आरजी) तल्लक्षणादि स्मृतौ दर्शितं यथा "प्रत्यर्थिनोऽग्रतोलेख्यं यथाऽऽवेदितमर्थिना। समामासतदर्द्धाहर्नामजात्यादि-

चिह्नितम्" या॰स्मृ॰। "निवेश्य कालं वर्षञ्च मासं पक्षं तिथिं तथा। वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः। साध्यं प्रमाणं द्रव्यञ्च संख्यां नाम तथात्मनः। राज्ञां च क्रमशोनाम निवासं साध्यनाम च। क्रमात् पितॄणां नामानि पीड़ामाहर्त्तृदायकौ। क्षमालिङ्गानि चान्यानि पक्षं संकल्प्य कीर्त्तयेत्" कात्या॰। "अर्थवत्-क्रमसंयुक्तं परिपूर्णमनाकुलम्। साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च। प्रसिद्धमविरुद्धञ्च निश्चितं साधनक्षमम्। संक्षिप्तं निखिलार्थञ्च देशकालाविरोधि च। वर्षर्त्तु-मासपक्षाहर्वेलादेशप्रदेशवत्। स्थानावसथसाध्याख्या-जात्याकारवयोयुतम्। साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनाम च। परात्मपूर्व्वजानेकराजनामभिरङ्कितम्। क्षमालिङ्गा-त्मपीड़ावत् कथिताहर्त्तृदायकम्। यदावेद्यते राज्ञे तद्भाषेत्यभिधीयते" नार॰ अत्र विशेषः वीरमि॰। "देशश्चैव तथा स्थानं सन्निवेशस्तथैव च। जातिः संज्ञा निवासश्च प्रमाणं क्षेत्रनाम च। पितृपैतामहञ्चैव पूर्व्वराजानुकीर्त्तनम्। स्थावरेषु विवादेषु दशैतानि निवेशयेत्" कात्या॰ संख्याविशेषनिर्द्देशे "आसनं शयनं यानं ताम्रं कांस्य-मयोमयम्। धान्यमश्ममयं यच्च द्विपदञ्च चतुष्पदम्। मणिमुक्ताप्रवालानि हीरकं रूप्यकाञ्चनम्। यदि द्रव्यसमूहः स्यात् संख्या कार्य्या तदैव तु। यस्मिन् देशे च यद्द्रव्यं येन मानेन मीयते। तेन तस्मिंस्तदा संख्या कर्त्तव्या व्यवहारिभिः" हारी॰ "देशकालविहीनश्च द्रव्यसंख्याविवर्ज्जितः। क्रियामानविहीनश्च पक्षोनादेय इष्यते" कात्या॰। क्रिया प्रमाणं, मानं साध्यपरिमाणम्। भाषादोषाश्च नारदोक्ता यथा। "अन्यार्थमर्थहीनञ्च प्रमाणागमवर्ज्जितम्। लेख्यहीनाधिकं भ्रष्टं भाषादोषा उदाहृताः" इति विभज्य तेषां लक्षणान्याह स एव। "अर्थे साधारणेऽप्येकोऽसम्बन्धोऽथानियुक्तकः। लेखयेत् यन्तु भाषार्थमन्यार्थं तं विदुर्बुधाः। मह्यं हार्य्यमिति द्वेषात् क्रोधाद्वापि वदेत्तु यः। साध्यञ्च मोचयेत् पश्चादर्थहीनन्तु तं विदुः। गणिते लिखिते मेये तथा क्षेत्रगृहा-दिषु। यत्र संख्या न निर्दिष्टा सा प्रमाणविवर्ज्जिता। विद्यया प्राप्तमर्थं वा लब्धं क्रीतं क्रमागतम्। न त्वेवं लिख्यते यत्र सा भाषा स्यादनागमा। समा मासस्तथा पक्षस्तिथिर्वारस्तथैव च। यत्रैतानि न लिख्यन्ते लेख्य-हीनां तु तां विदुः" लेखयित्वा तु तां भाषामनि-र्दिष्टे तयोत्तरे। निर्दिशेत् साक्षिणः पूर्व्वमधिकां तां विनिर्दिशेत्। यत्र स्यात्तु यथापूर्व्वं निर्दिष्टं पूर्व्व-वादिना। सन्दिग्धमेव लेख्येन भ्रष्टां भाषां तु तां विदुः"। भाषादोषान्तरमाह" कात्या॰। "अप्रसिद्धं नि-राबाधं निरर्थं निःप्रयोजनम्। असाध्यं वा विरुद्धं वा पक्षाभासं विवर्ज्जयेत्"। तत्र अप्रसिद्धमाह बृह॰ "न केनचित् कृतोयस्तु सोऽप्रसिद्ध उदाहृतः"। यथा "शशशृङ्ग-कृतं क्षेत्रमपहृतम्" वीरमि॰ "मदीयं शशविषाणं गृहीत्वा न प्रयच्छति" मिता॰ "स्वल्पापराधः स्वल्पार्थो निरर्थक इति स्मृतः" बृह॰ "यथाहमनेन सस्मितमीक्षित इति" स्मृति-चन्द्रिका। "कार्य्यबाधाविहीनस्तु विज्ञेयोनिष्प्रयो-जनः" बृह॰। "यथाऽयं देवदत्तोमदीयगृहसन्निधौ सुस्वरमधीते इत्यादि" मिता॰ निरर्थकनिष्प्रयोजनौ अन्यथाऽपि बृह॰ लक्षितौ यथा "कुसीदाद्यैः पदै-र्हीनोव्यवहारोनिरर्थकः। वाक्पारुष्यादिभिश्चैव विज्ञे-योनिष्प्रयोजनः"। "कुसीदस्थपदानं तत्प्रभृतिभिरष्टा-दशभिरर्थविषयव्यवहारैः हीनो निरर्थकः, पारुष्यादिभि-र्हिंसात्मकैश्चतुर्भिर्हीनोनिष्प्रयोजनः" वीरमि॰। असा-ध्यविरुद्धावाह बृह॰। "ममानेन प्रदातव्यं शशशृङ्गकृतं धनुः। असम्भाव्यमसाध्यं तं पक्षमाहुर्मनीषिणः। यस्मिन्नावेदिते पक्षे प्राड्विवेकोऽथ राजनि। पुरे राष्ट्रे विरोधः स्याद्विरुद्धः सोऽभिधीयते" अन्येऽपि पक्षाभासाः स्मृतिचन्द्रिकायामुक्ता यथा "भिन्न-क्रमोव्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः। अतीत-कालोवा द्विःपक्षोनादेय इष्यते। यथास्थाननिवेशेन नैव पक्षार्थकल्पना। गम्यते तेन पक्षः स भिन्नक्रम उदा-हृतः"। व्यस्ताक्षरसन्निवेशोभिन्नक्रम इत्यर्थः। व्युत्-क्रमार्थो व्यवहितान्वयेनार्थबोधकः। प्रकीर्णार्थोऽस-ङ्कलितार्थः। "मूलमर्थं परित्यज्य तद्गुणोयत्र लिख्यते। निरर्थकः स वै पक्षो मूलसाधनवर्ज्जितः। भूतकालमति-क्रान्तं द्रव्यं यत्र हि लिख्यते। अतीतकालः पक्षोऽसौ प्रमाणे सत्यविस्तृतः। यस्मिन् पक्षे द्विधा साध्यं भिन्नकाल-विमर्शनम्। विलक्ष्यते क्रियाभेदात् द्विपः स इह चोच्यते"। अन्ये च भाषाया दोषास्तत्रैवोक्ताः। "अन्याक्षरनिवेशेन अन्वयागमनेन च। आकुलं तु भवेल्लेख्यं क्रिया चैवा-कुला भवेत्। साधनं सह साध्येन निर्दिष्टं यत्र लेखयेत्। उक्तिक्रमविहीनत्वात् सोऽपि पक्षो न सिध्यति। विरु-द्धार्थविरुद्धच द्वावप्येतौ निवेशितौ। एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत्। परापरविरुद्धानि तु पदानि

निवेशयेत् । विरुद्धपदसंकीर्णा भाषा तस्य न सिध्यति” अनेकपदसंकीर्णस्य दुष्यत्वं च युगपत्तत्साधनायोग्यत्वे एव। क्रमेण तु तत्साधनयोग्यत्वे तदपि ग्राह्यमेव”बहु प्रतिज्ञं यत् कार्य्यं व्यवहारेषु निश्चितम्। कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सयेति”कात्या० उक्तेः भाषापत्रञ्च संस्कृतदेशभाषान्यतरेण यथाबोधं लेख्यम् मूर्खाणामपि वादिप्रतिवादिताद्दर्शनात् अतएव अध्यापनेऽपि तथात्वं विष्णु ध०उक्तम् । “संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः । देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः” इति । येन सर्वेषामवबोधस्तथा लेख्यम् व्य०त० रघु०। तच्च यावदुत्तरं पाण्डुलेखं कृत्वा शोधनीयम् यथोक्तं पूर्व्वपक्षं स्वभावोक्तं प्राड्विवेकोऽभिलेखयेत् । पाण्डुलेखेन फलके ततः पत्रे निवेशयेत्” बृह० । “पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत् । ऊनाधिकं तु संशोध्य पश्चात् पत्रे निवेशयेत् । शोधयेत् पूर्व्ववादन्तु यावन्नोत्तरदर्शनम् । अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत्” नार० ।

**आवेदनीय** त्रि० आ+विद–णिच्–अनीयर् । १विज्ञापनीये यं प्रति ज्ञानाय आवेदनं क्रियते तस्मिन्, यस्य पदार्थस्यावेदनं क्रियते तस्मिंश्च । व्यवहारे २आवेद्ये ऋणादानादौ च ।

**आवेदित** त्रि० आ+विद+णिच्–कर्म्मणि क्त । १विज्ञापिते यं प्रति विज्ञापनं कृतं तस्मिन्, यस्य पदार्थस्य वेदनं कृतं तस्मिंश्च । व्यवहारे आवेदनकाले २निवेदिते पदार्थे च । “लिखितं साक्षिणो वापि पूर्व्वमावेदितं न चेत्” नारदः “यथावेदितमर्थिना” या०स्मृतिः ।

**आवेदिन्** त्रि०आ+विद–णिच्–णिनि । १विज्ञापके । व्यवहारे २वादिनि च।“अनिष्टावेदिनं स्वप्नं दृष्ट्वा”रामा० स्त्रियां ङीप् । आ+विद–णिनि । २आघ्रातरि त्रि०स्त्रियां ङीप्

**आवेद्य** त्रि०आ+विद–णिच्–यत् । १विज्ञाप्ये २आवेदनीयार्थे आ+विद–णिच्–ल्यप् । ३विज्ञाप्येत्यर्थे अव्य० ।

**आवेध्य** त्रि० आ+विध–ण्यत् । आवेधार्हे शक्रादिमणौ ।

**आवेश** पु०आ+विश–घञ् । १अहङ्कारभेदे, २संरम्भे, ३अभिनिवेशे, ४आसङ्गे, ५अनुप्रवेशे, यथा भूतावेशः । ६अपस्मारभये, ७भूताद्यावेशरोगे च । “तस्य स्ययावेशविवर्जिताय” रघुः “तपनं प्रियविच्छेदे स्मरावेशोऽव्यवेष्टितम्” सा०द० । “आवेशमोहौ क्रोधश्च गान्धारीधृतराष्ट्रयोः” भा० आ० प० १अ० “पञ्चानामिन्द्रियार्थानां शोकावेशदवातुरः” भा०व० ११अ०

**आवेशन** न० आ+विश–आधारे ल्युट् । १शिल्पशालायाम् तत्र हि मनोऽभिनिवेशेनैव कार्य्यकरणात्तस्यास्तथात्वम् २भूतावेशादिरोगे ३सूर्य्येन्दुपरिधौ च।“मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः” सा०द० । “जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च” मनुः आवेशशब्दार्थे ४कोपादौ च आधारे ल्युट् । ५गृहे च । आ+विश–णिच्+ल्युट् । ६प्रवेशसम्पादने व्यापारे

**आवेशिक** त्रि० आवेशे गृहे भवः आगतो वा ठञ् तत । १अतिथौ २असाधारणे ३वास्तवादौ च । [२वेष्टके (वेड़ा)

**आवेशित** त्रि० आ+विश–णिच्–क्त । निवेशिते, “न मय्यावेशितधियां कामः कामाय कल्पते” भाग० । “मय्यावेशित चेतसः” गीता ।

**आवेष्टक** पु० आवेष्टयति ण्वुल् । आवरणकारके प्राचीरादौ

**आवेष्टन** न० आ+वेष्ट–भावे ल्युट् । १आवरणे करणे ल्युट् । आवरणसाधने २प्राचीरादौ । (वेड़ा)इति ३पदार्थे च

**आव्दिक** त्रि० अब्दे भवः ठक् । वर्षभवे श्राद्धादौ “आब्दिके पितृकृत्ये च चान्द्रं मासं विनिर्दिशेत्” स्मृतिः “तथा त्वाल्पोपहीतव्योराङ्गाद्दात्राव्दिकः करः” मनुः षट्त्रिंशदाब्दिकं चर्य्यम्”मनुः असंक्रान्तेऽपि कर्तव्यमाब्दिकं प्रथमं द्विजैः”लघुहा०। “एकाहः पुनराब्दिके”स्मृतिः । [मादौ

**आव्य** त्रि०अवेर्मेषस्य विकारः ष्यञ् । मेषसम्बन्धिनि दुग्धलो-

**आव्याध** पु०आ+व्यध–घञ् उपसृष्टत्वात् न अप् । सम्यक्पीड़ने

**आव्याधिन्** त्रि० आ+व्यध–णिनि । सम्यक्पीड़के । स्त्रियां ङीप् । सा च २चोरसेनायाम् “नर्त्तकाः पुरुषव्याघ्राः परिमोषिण आव्याधिन्यस्तस्करा अरण्येष्वाजायेरन्” शत०ब्रा० “आव्याधिन्यः चोरसेनाः” भा० ।

**आव्रश्चन** न० ईषत् व्रश्चनं छेदनम् प्रा०स० । १ईषच्छेदने, “आव्रश्चनाहनस्पतयोऽनुप्रजायन्ते” शत०ब्रा० । आधारे ल्युट् । २छेदनप्रदेशे त्रि० आहुत्या हि यो यूपः संस्कर्तव्यःस्थाणुः आव्रश्चनशब्देनोच्यते “अतस्त्वमित्याव्रश्चने जुहोति”कात्या०६,१,२०। आरुह्यते यूपोऽस्माद्दाव्रश्चनः स्थाणौ छेदनप्रदेशः” वृत्तिः “आव्रश्चनमभिजुहोति” शत०ब्रा० ।

**आव्रस्क** पु० आ+व्रश्च–घञ् कुत्वम् । ईषच्छेदने। आत्मनोऽनाव्रस्काय” तैत्ति०श्रुतिः । [वुञ् । निर्लज्जदेशे ।

**आव्रीडक** पु० अव्रीडस्य निर्लज्जस्य विषयो देशः राजन्या०

**आश** पु०अश–भोजने घञ् । भोजने । प्रातराशः, सायमाशः, कर्म्मणि उपपदे कर्त्तरि अण् उपपदस० । तत्तद्वस्तुभक्षके

यथा कृताशः आम्नयाशः मांसाशः मलाशः हविष्याशः।

**आशंसा** स्त्री आ+शंस–अ। अप्राप्तस्य १प्राप्तीच्छायाम्, २इष्टार्थाशंसने च। "निदधे विजयाशंसां चापे सीताञ्च लक्ष्मणे" रघुः "आशंसायां भूतवच्च" "आशंसावचने लिङ्" पा०। ल्युट् आशंसनमप्यत्र न० "इष्टार्थाशंसन माशीः" रघु०। [भूते। भावे क्त ३आशंसायाम् न०।

**आशंसित** त्रि० आ+शन्स–क्त। १कथिते २इच्छाविषयी-

**आशंसितृ** त्रि० आ+शंस–तृच्। भाविशुभेच्छावति। स्त्रियां ङीप्। [कर्त्तरि स्त्रियां ङीप्।

**आशंसिन्** त्रि० आ+शन्स-णिनि। आशंसी आशंसा

**आशंसु** त्रि० आ+शन्स–उ। इच्छाकारके भाविशुभाशंसावति "लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्" भट्टिः

**आशक** त्रि० अश्नाति अश–ण्वुल्। १भक्षके २भोगयुक्ते। णिच्–ण्वुल्। ३भोगसम्पादके। "तमेतं ब्राह्मणा विविदिषन्ति–तपसाऽनाशकेन" श्रुतिः।

**आशक्त** प्रि० सम्यक् शक्तः प्रा०स०। सम्यक्शक्तियुक्ते

**आशङ्कनीय** त्रि० आ+शकि–अनीयर्। १शङ्कया विषयीकार्ये २अनिष्टतया चिन्तनीये च।

**आशङ्का** स्त्री आ+शकि–अ। १भये त्रासे अनिष्टतया २चिन्तने "अनुद्धताशङ्कमनीचकाशे" माघः। "रत्या च साशङ्कमनुप्रयातः" कुमा०। "सुदर्शरक्तं नमाशङ्का पाण्डुरोगग्रहणीदोष शोषाणाम्" सुश्रु०सम्यक्शङ्कायां ३सन्देहे इत्याशङ्कायामाह इति भूरिशः जगदीशः गदाधरश्च प्राहुः।

**आशङ्कित** त्रि० आ+शकि–कर्त्तरि क्त। १भीते कर्मणि क्त अनिष्टतया २चिन्तिते ३सन्दिग्धे च। भावे क्त। ३भये ४सन्देहे ५अनिष्टतया चिन्तने च न०।

**आशङ्किन्** त्रि० आ+शकि-णिनि। आशङ्कायुक्ते "रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः" रघुः। अशुभाशङ्कि हृदयम्" रामा० कुत्रा मोचतयैव यान्ति पनकैरात्मैवमाशङ्किनः" रत्ना०। स्त्रियां ङीप्।

**आशङ्क्य** त्रि० आ+शकि–कर्मणि यत्। १सन्देहविषयीकार्ये २अनिष्टतया चिन्त्ये ल्यप्। ३संदिह्येत्यर्थे ४अनिष्टतया ज्ञात्वेत्यर्थे च अव्य० "अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह" दीधितिः।

**आशन** पु० अशनएव स्वार्थे अण्। १अशनवृक्षे हिरूपकोषः अश-णिच् ल्यु। २भोजयितरि त्रि०। अशनिः अशनिजीवी स्वार्थे पर्श्वा०अण्। ३तज्जीविनि त्रि०आशनः आशनौ बहुषु तस्य लुक् अशनय इत्येव। अशनिरेव प्रज्ञा० अण्। ४वज्रे स्वार्थिकप्रत्ययस्य प्रकृतिलिङ्गत्वात् पुंस्त्री०।

**आशय** पु०आ–शी–अच्। १अभिप्राये, २आधारे, ३विभवे, ४पनसवृक्षे वैद्यकोक्ते ५स्थानभेदे च। आ फलविपाकात् चित्तभूमौ शेते इति कर्त्तरि अच् कर्मजन्ये ६वासनारूपे संस्कारे, "क्लेशजन्मकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" पात०सू०धर्माधर्मरूपे ७अदृष्टे च। अधारे अच्। आशयवति ८चित्ते। "अहमात्मा गुडाकेश। सर्वभूताशयस्थितः" गीता०। भावे अच्। १०शयने ११स्थाने च "यो यत्रा नेष्टगाशयः" किरा० "पद्मोद्धकामादरिणाशयेन" नैष० "विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः" किरा० "गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्" वैद्यकोक्ताः देहान्तर्वर्त्तिन आशयास्तु सप्त यथा ह" सुश्रुते "त्वचः सप्त, कलाः सप्त, आशयाः सप्त" इति विभज्य आशयास्तु वाताशयः पित्ताशयः श्लेष्माशयः रक्ताशयः आमाशयः पक्वाशयः मूत्राशयः, स्त्रीणां गर्भाशयोऽष्टम" इति। एषां स्थानानि भावप्र०। "उरोरक्ताशयस्तस्मादधः श्लेष्माशयः स्मृतः। आमाशयस्तु तदधः तच्चिह्नं चरकोऽवदत्" नाभिस्तनान्तरं जन्तोराहुरामाशयं बुधाः। आमाशयादधः पक्वाशयादूर्द्ध्वं तु या कला। ग्रहणीनामिका सैव कथितः पावकाशयः। अर्द्धमग्न्याशयो नाभेर्मध्यभागे व्यवस्थितः। तस्योपरि तिलं ज्ञेयं तदधः पवनाशयः। पक्वाशयस्तु तदधः सएव च मलाशयः। तदधः कथिता वस्तिः सा हि मूत्राशयो मतः। पुरुषेभ्योऽधिकाश्चान्ये नारीणामाशयास्त्रयः। एको गर्भाशयः प्रोक्तः पित्तपक्वाशयान्तरे। स्तनौ प्रसिद्धौ तावेव बुधैःस्तन्याशयौ स्मृतौ"। १२कोष्ठागारे १३बौद्धमतसिद्धे आलयविज्ञानरूपे विज्ञानसन्ताने १४आश्रये १५किंपचाने पशुधारणार्थगर्त्तरूपे १६खातभेदे च। "अयत्नु पार्थो बीभत्सुर्वैरिलोकाधिकर्षणे। आस्ते परमसन्तप्तो नूनं सिंह इवाशये" भा०व० ३५अ०।

**आशयाश** पु० आशयमाश्रयमश्नाति अश–अण् उप०स०। वह्नौ क्षीरस्वामी तस्य स्वाश्रयकाष्ठादेर्भक्षकत्वेन तथात्वम्

**आशर** पु० आशृणाति आ+शॄ–अच्। १अग्नौ,२राक्षसे च।

**आशव** न० आशोर्भावः पृथ्वा० वा अण्। शीघ्रत्वे पक्षे इमनिच् आशिमा पु०। त्व आशुत्वम् न०तल् आशुता स्त्री तत्रार्थे।

**आशस्** त्रि०आ+शन्स-क्विप्। १आशंसनकर्त्तरि। भावे क्विप्

आशंसने “नमसा दुरुह्यमानस्तवाशसा जातवेदोयदीदम्” ऋ० ४,५,११, “तवाशसा त्वत्स्तुत्या”भा०।

**आशसन** न० आ+शनुस–भा ल्युट् । १कथने २आशंसायाञ्च । “तस्मा आहननं कृत्वा मेनिराशसनम्” अथ० १२, ५,२८, “छिन्ने ऽस्याशसनं जनिष्यते” शत०ब्रा० ।

**आशस्त** त्रि० आ+शनुस-क्त । स्तुते । “यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि” ऋ० १,२,९१ ।

**आशा** स्त्री समन्तात् अश्नुते आ+अश-अच् । दिशि, “अगस्त्याचरितामाशामनाशास्यजयोययौ” रघुः “करभकण्ठकडारमाशाः” माघः । “गच्छतस्तस्य चित्ररथतनया न केवलमन्तर्बहिरपि सैव सर्व्वाशानिबन्धनमासीत्”काद०। दिक् च नैयायिकादिमते संख्यापरमितिपृथक्त्वसंयोगविभागाश्रयोद्रव्यभेदः दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया तत्सिद्धिः तस्या एकत्वेऽपि उपाधिभेदात् प्राच्यादिव्यवहारः तथा च यत्पुरुषस्य उदयगिरिसन्निहिता या दिक् सा तस्य प्राची, उदयगिरिव्यवहिता प्रतीची तत्पुरुषीयमेरुसन्निहिता दिगुदीची “सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः” इत्युक्तेस्तस्यास्तथात्वम् । तद्व्यवहिता दिक् अवाची । इयञ्च दिक् ईश्वर एवेति रघुनाथः “दिक्कालावीश्वरान्नातिरिच्यते” इति पदार्थखण्डने तस्योक्तेः सां०को० मते यदुपाधिना पूर्व्वापरत्वव्यवहारस्तदुपाधेरेव दिक्शब्दवाच्यत्वं न तदाश्रयत्वेनातिरिक्तदिक्कल्पनम् तथा च गगनात्मकत्वमेव दिशः “दिक्कालावाकाशादिभ्यः” सां०सू० आकाशोपाधिभ्यामेव दिक्कालयोर्नार्थान्तरत्वमिति व्यवस्थापितम् ।

२अशक्योपायार्थविषयायाम् तीव्राकाङ्क्षायाम् ३अप्राप्तप्राप्तीच्छायां तृष्णायां च । “आशा बलवती राजन् ! शल्योजेष्यति पाण्डवान्” “तामाशां हृदये कृत्वा” भा० शल्यप० । “आशा हि परमं दुःखं नैराश्यं परमं सुखम् । यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गला” पुरा० “मनो बभूवेन्दुमतीनिराशम्” । “राघवोरथमप्राप्तां तामाशाञ्च सुरद्विषाम्” रघुः आशायाश्च ब्रह्मरूपेणोपासनं श्रुतौ विहितं यथा “स्मराद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति” प्रश्ने “आशावाव स्मराद्भूयस्याशेद्धोवै स्मरोमन्त्रानधीते कर्म्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुञ्चेच्छत आशामुपास्स्वेति । स य आशां ब्रह्मेत्युपास्ते आशयास्य सर्व्वे कामाः समृध्यन्त्यमोघाः हास्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथा कामचारो भवति य आशां ब्रह्मेत्युपास्ते” छा०उ० व्याख्यातं च भा० । यथा “आशा वाव स्मराद्भूयसी । अप्राप्तवस्त्वाकाङ्क्षा आशा तृष्णा काम इति यामाहुः पर्य्यायैः । सा च स्मरात् भूयसी । कथम् ? आशया ह्यन्तःकरणस्थया स्मरति स्मर्त्तव्यम् । आशाविषयरूपं स्मरन्नसौ स्मरो भवति आशेद्ध आशयाभिवर्द्धितः स्मरभूतः स्मरन् ऋगादीन्मन्त्रानधीतेऽधीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्म्माणि कुरुते तत्फलाशयैव । पुत्रांश्च पशूंश्च कर्म्मफलभूतानिच्छतेऽभिवाञ्छति आशयैव तत्साधनान्यनुतिष्ठन् इमञ्च लोकमाशेद्ध एव स्मरन् लोकसंग्रहहेतुभिरिच्छत्यमुञ्च लोकमाशेद्धः स्मरन् स्मराकाशादिनामपर्य्यन्तं जगच्चक्रीभूतं प्रतिप्राणि, अत आशायाः स्मरादपि भूयस्त्वमित्यत आशामुपास्स्व । यस्त्वाशां ब्रह्मेत्युपास्ते शृणु तस्य फलम् आशया सदोपासितयास्योपासकस्य सर्वे कामाः समृध्यन्ति समृद्धिं गच्छन्त्यमोघा हास्याशिषः प्रार्थनाः सर्व्वा भवन्ति यत् प्रार्थितं सर्व्वं तदवश्यं भवतीत्यर्थः”। ईषद्भेदमादायैव आशाकामतृष्णादेर्भेदः तदभिप्रायेणैव“आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला” इत्यादौ आशादीनां भेदेन वर्णनम् ।

**आशा(ष)ढ** पु० आषाढ+पृ० । आषाढशब्दार्थे द्विरूपकोषः

**आशाढा(षा)** स्त्रीपृ०आषाढानक्षत्रे “मार्गे च फाल्गुने चैव आशा(षे)ढे कार्त्तिके तथा । पक्षयोर्माघमासस्य द्वितीयां परिवर्ज्जयेत्” मल० त० पु० । आषाढा प्रयोजनमस्य अण् । २ब्रह्मचारिधार्य्ये पालाशे दण्डे । आषाढानक्षत्रयुक्ता पौर्णमासी अण् ङीप् । आषाढी चान्द्राषाढपौर्णमास्याम् स्त्री सा यत्र मासि अण् । चान्द्राषाढे पु० ।

**आशादामन्** न० आशा दामेव उपमि० स० । आशारूपबन्धनसाधने दामनि आशारूपशृङ्खले ।

**आशापाल** पु० आशां दिशं पालयति पा–णिच्–अण् उप०स०। १दिक्पाले इन्द्रादौ ते च “इन्द्रोवह्निः पितृपतिर्नैर्ऋतोवरुणोमरुत् । कुवेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात्” इत्यमरोक्ता अष्टौ ऊर्द्धाधोदिशोश्च ब्रह्मानन्तौ चेति दश। २अश्वमेधीयपशुरक्षके राजकुमारभेदे च । तेषां स्वरूपादिकमुक्तं शत०ब्रा० । “आदित्यानेवैनं गमयति देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षतेति शतं वै तल्पा राजपुत्रा आशापालास्तेभ्य एवैनं परिददातीह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहेति संवत्सरमाहुतीर्जुहोति

षोडश नवतीरेता वा अश्वस्य बन्धनं ताभिरेवैनं बध्नाति तस्मादश्वः प्रमुक्तोबन्धनमागच्छति षोडश नवतीरेता वाश्वस्य बन्धनं ताभिरेवैनं बध्नाति तस्मादश्वः प्रमुक्तोबन्धनं जहाति। राष्ट्रं वा अश्वमेधः राष्ट्रएते व्यायच्छन्ते येऽश्वं रक्षन्ति तेषां य उदृचं गच्छन्ति राष्ट्रएव ते राष्ट्रं यन्ति अथ ये नोदृचं गच्छन्ति राष्ट्रात्ते व्यवच्छिद्यन्ते तस्माद्राष्ट्रियोऽश्वमेधेन यजेत परा वा एष सिच्यते योऽबलोऽश्वमेधेन यजते यद्यमित्रा अश्वं विन्देरन् यज्ञोऽस्य विच्छिद्येत पापीयान् स्यात्तस्माच्छतं कवचिनो रक्षन्ति यज्ञस्य संतत्या अव्यवच्छेदाय न पापीयान् भवत्यथान्यमानीय प्रोक्षेयुः, सैव तत्र प्रायश्चित्तिः" शत० ब्रा०। अधिकमश्वमेधशब्दे दृश्यम्।

**आशापुर** न० पुरभेदे यत्र प्रशस्तगुग्गुलुसम्भवस्ताडृशे नगरे।

**आशापुरसम्भव** न० आशापुरे सम्भवति सम्+भू अच्। गुग्गुलुभेदे।

**आशाबन्ध** पु० आशां दिशं बध्नाति अच्। १मर्कटजाले, -बन्ध-घञ् ३त०। २तृष्णाबन्धे ६त०। ३दिशां बन्धे च। ४समाश्वासे। आशा बन्ध इव। ५आशारूपे बन्धे। "आशाबन्धः कुसुमसदृशं प्रायशोह्यङ्गनानाम्" मेघदू०।

**आशावह** त्रि० वह-अच् ६त०। १आशाधायके आशासंपादके। २नृपतिभेदे "आशावहो निरुद्धश्चसमीकः सारिमेजय" भा०आ०१८६अ०। ३दिवः पुत्रभेदे च पु० "दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः। सविता स ऋचीकोऽर्कः भानुराशावहो रविः" भा०आ० १अ०।

**आशास्य** त्रि० आ+शास-ण्यत्। आशीःसाध्ये, आशंसनीये "आशास्यमन्यत् पुनरुक्तमेव" रघुः। "अनाशास्यजयोययौ" रघुः।

**आशित** त्रि० आश्नाति आ+अश-क्त। १सम्यग्भुक्ते, अन्नादौ भावे क्त। २सम्यग्भक्षणे न०। आशितमस्त्यस्य अर्श० अच्। ३अशनेन तृप्ते त्रि० "नातिप्रगे नातिसायं न सायं प्रातराशितः" मनुः।

**आशितङ्गवीन** त्रि० आशिता अशनेन तृप्तागावो यत्र खञ् नि० मुम्। यत्र स्थले घासादिभक्षणेन गावस्तृप्तिमाप्नुवन्ति ताडृशे प्रचुरघासे स्थले "ह्रित्वाशितङ्गवीनानि" भट्टिः।

**आशितम्भव** त्रि० आशितोऽशनेन तृप्तो भवत्यनेन आशित+भू-करणे खच् मुम् उ०स०। १यस्य भोजनेन प्राणिनस्तृप्ता भवन्ति २ताडृशेऽन्नादौ। भावे खच्। ३अशनेन तृप्तभवने न०। "फलैर्येच्चाशितम्भवम्" भट्टिः। [ ङीप्।

**आशितृ** त्रि० आ+अश-तृच्। तृप्त्या भक्षके हेम०। स्त्रियां

**आशिन्** त्रि० अश-भोजने णिनि। भक्षके "श्मशानवासी मांसाशी खर्पराशी मदान्वितः" वटुकस्तोत्रम्। "प्रायश्चित्त-क्रियेदोऽपि सर्व्वाशी सर्वविक्रयी" "भोजनार्थन्तु ते शंसन् वान्ताशीत्युच्यते बुधैः" "आगारदाही गरदः कुण्डाशी सोमविक्रयी" "विघसाशी भवेन्नित्यं नित्यं वाऽमृतभोजनः" इति च मनुः। "दिवोपवासी तु निशामिषाशी" काशी० "एवं कृत्वा हविष्याशी जपेल्लक्षमनन्यधीः" तन्त्रम्।

**आशिन** त्रि० आशिन्+स्वार्थे अण् वेदे नि० न टिलोपः। भक्षके "नमोयुवभ्योनम आशिनेभ्यः" ऋ० १,२७,१३।

**आशिमन्** पु० आशोर्भावः पृथ्वा० इमनिच् डिद्वत्। शीघ्रत्वे।

**आशिर्** त्रि० आश्रीयते पच्यते आ+श्री-क्विप् नि०। पच्यमाने क्षीरादौ "शुक्रा आशिरं याचन्ते" ऋ०८,२,१०। "आशिरं क्षीरादिकं श्रपणद्रव्यम्" भा०। "तां आशिरं पुरोडाशमिन्द्रियम्" ऋ०८,२,१०। "इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु" ऋ०८,५८,६।

**आशिर** त्रि० आशीरेव स्वार्थे अण्। श्रपणीये क्षीरादौ। "अथ यद्वेतुर्भवति साशिरमेवैतत् क्रीणाति" शत० ब्रा० ३,३,१। आ+अश-व्याप्तौ भोजने वा इरच्। २अग्नौ ३सूर्ये ४राक्षसे च पु० सि०कौ०। अग्निराक्षसयोः सर्वभक्षकत्वात्, सूर्यस्य च दीप्त्या सर्व्वव्यापित्वात्तथात्वम्।

**आशिषिक** त्रि० आशिषा चरति ठक् "इसुसुक्तान्तात्" पा०सूत्रे प्रतिपादोक्तस्यैव इसो ग्रहणात् न कः किन्तु ठक एव। आशीर्व्वादेन चारिणि आशीरभिरते।

**आशिष्ट** त्रि० आ+शास-क्त। कृताशीर्व्वादे।

**आशिष्ठ** त्रि० अतिशयेन आशु इष्ठन् डिद्वत्। अत्यन्तशीघ्रे।

**आशिस्** स्त्री आ+शास् क्विप् आङ्पूर्व्वकत्वात् अतइत्वम्। १इष्टार्थाविष्करणे। "यां वै काञ्च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा" शत० ब्रा० १,३,१,२६। "आशीर्नमस्क्रिया वस्तुनिर्देशोवाऽपि तन्मुखे" सा०द०। "जगच्छरण्यस्य निराशिषः सतः" कुमा० "अमोघाः प्रतिगृह्णन्तावर्घानुपदमाशिषः" रघुः। २प्रार्थनायाञ्च "तस्य कामाः समृध्यन्त्यमोघाह्यस्याशिषो भवन्ति" छा०उ०। "आशिषः प्रार्थनाः" भा० "वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम्" मनुः। आशीश्च "वात्सल्याद्यत्र मान्येन कनिष्ठस्याभिधीयते। इष्टावधारकं वाक्यमाशीः सा परिकीर्त्तिता" इत्येवं लक्षणा प्रार्थनावाक् अत्र कनिष्ठस्योपलक्षणम्। "तस्मै जयाशीः ससृजे पुरस्तात् सप्तर्षिभिस्तान् स्मितपूर्व्वमाह" कुमा०। सप्तर्षिकृतमिवाशीर्व्वादवर्णनात्

**आशी** स्त्री आशीर्य्यतेऽनया आ+शॄ क्विप् पृ० । "१सर्प-दंष्ट्रायाम् । आशीविषः । "विषमाशीभिरनारतं वमन्तः माघः । "आशीमिव कलामिन्दोः" राजेश्वरः "आशी उरगदंष्ट्रायाम्" वैद्य० । "आशी तालुगता दंष्ट्रा तया विद्धो न जीवति"आशिस् पृ० । २आशीर्व्वादे द्विरूप-कोषः ३दृष्टिनामौषधौ च । स्त्रियां ङीप् ।

**आशीयस्** त्रि० अतिशयेनाशुः ईयसु डिद्वत् । अत्यन्तशीघ्रे

**आशीर्त्त** त्रि० आ+श्री–क्त वेदे नि०। आश्रयणे पक्वे दुग्धादौ "मध्यत आशीर्त्तः" सि०कौ० धृता श्रुतिः ।

**आशीर्वत्** त्रि० आशीरस्त्यस्य मतुप् वेदे मस्य वः । आशी-र्व्वादयुक्ते "सवनान्याशीर्व्वन्ति" कात्या० २,८,८ लोके तु आशीर्मानित्येव स्त्रियां ङीप् ।

**आशीर्वाद** पु० आशिषो वादः वचनम् । इष्टार्थाविष्करण-वाक्ये "मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत्" मनुः "संजानन्त्यतुलं वीर्य्यमाशीर्वादपरायणाः" भा० आ०प० ८अ० । आशीर्वचनादयोऽप्यत्र । "आशीर्वचनसंयुक्तां नित्यं यस्मात् प्रकुर्व्वते" का०द० ।

**आशीविष** पु० आश्यां विषमस्य । १सर्पे तद्भेदाश्चाहिशब्दे ५८१ पृष्ठे उक्ताः । "गरुत्मदाशीविषभीमदर्शनैः" रघुः २दर्वीकरसर्पभेदे च अहिशब्दे सुश्रुते उदा० "आशीविषैः कृष्णसर्पैर्भीमसेनमदंशयत् । सर्व्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा" भा०व०१२अ० । "नैषिकं भुङ्क्ते यस्तु मणिनागस्य भारत ! । दष्टस्याशीविषेणापि न तस्य क्रमते विषम्" भा०व० ८४अ० । "स्तद्रन् सतः सत्यशीलान् सत्यधर्म्मानुपालिनः । आशीविषानिव क्रुद्धान् पतीन् परिचराम्यहम्"भा०व०२३२अ० ।

**आशु** त्रि० अश–व्याप्तौ उण् । १शीघ्रे "यदाशुभिः पतति योजना पुरः"ऋ०२,१६,२,गुणवचनत्वात् स्त्रियां वा ङीप् । वर्षाभवे २धान्यभेदे पु० (आउस) । तस्य षष्टिदिवसमध्ये पच्यमानतयाऽऽशुपाकात् आशुत्वम् तद्गुणलक्षणानि भाव-प्र० । "वार्षिकाः कथिताः शुक्लाव्रीहयश्चिरपाकिणः । कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि । शालीमुखोजतु मुख इत्याद्याव्रीहयः स्मृताः । कृष्णव्रीहिः स विज्ञेयो यः कृष्णतुषतण्डुलः (कोद्रव) । पाटलः पाटलापुष्प वर्णको व्रीहिरुच्यते (राङ्गिधान्य) कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्ड इहोच्यते । शालीमुखः कृष्णशुकः कृष्णतण्डुल उच्यते । लाक्षावर्णं मुखं यस्य स्योजतुमुखस्तु सः । व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः । अल्पाभि-ष्यन्दिनोबद्धवर्चस्काः षष्टिकैः समाः" "कृष्णव्रीहिर्वर-स्तेषां तस्मादल्पगुणाः परे" ३पाटले व्रीहौ न० । ४क्रियाविशेषणत्वे न० । "प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्" शान्ति नेयं प्रणयिभिरतोवर्त्म भानोस्त्यजाशु"मेघदूतम् "स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः"कुलान्येव नयन्त्याशु ममत्वानि च शूद्रताम्" मनुः

**आशुकारिन्** त्रि० आशु शीघ्रं करोति कृ–णिनि स्त्रियां ङीप् । १शीघ्रकरे"आशुकारी तथाशुत्वाद्वायवत्कामसि तैल-वत्" सुश्रुतोक्ते २द्रवभेदे च । क्विप् । आशुकृदप्यत्र त्रि० ।

**आशुक्रिया** स्त्री आशु यथा तथा क्रिया । शीघ्रकरणे "अष्टा-स्वप्यायुर्वेदतन्त्रेषु एतदेवाधिकमभिमतमाशुक्रियेति"सुश्रु०।

**आशुग** पु० आशु+गम–ड । १वायौ, २सूर्य्ये च । एतयोः शीघ्रगामित्वात् तथात्वम् । "वायुर्वै क्षिपिष्ठा देवतेति"श्रुतौ क्षिप्रगामित्वोक्तेः शीघ्र गतित्वप्रसिद्धत्वाच्च वायोस्तथात्वम् सूर्य्यस्याशुगत्वमनुपदं वक्ष्यते ३वाणे "पथावनास्वादितपूर्व्व-माशुगः""रावणस्यापि रामास्तोभित्त्वा हृदयमाशुगः"रघुः ४शीघ्रगामिनि त्रि० विनीतैस्तु व्रजेन्नित्यमाशुगैर्लक्षणा-न्वितैः" मनुः । "दिशां गजन्तु श्वेताख्यं (ऐरावतम्) श्वेताऽजनयताशुगम्"भा०आ०प०६६अ०।"अवनानाशुगां-श्चैव कराग्रं समुपानयत्" भा०स०प्र०२६३अ० "शोभ-माना रथेयुक्तास्तरिष्यन्त्वाशुगाः" भा०व०प०१६१अ०। आशुगत्वं च अल्पकालमध्ये गन्तव्यदेशगमनात् भवति कालाल्पत्वञ्च आपेक्षिकं तच्च "शीघ्रोऽल्पभागे बहुभाग-मन्दे" इत्यादौ नील०ता० ग्रहाणां शीघ्रमन्दत्वमापेक्षिक-मिति बोध्यम् तथा च स्वस्वकक्षायां ग्रहाणां तुल्यगतित्वे-ऽपि कक्षाणामल्पत्वबृहत्त्वाभ्यां गन्तव्यदेशाल्पत्वाधिकत्वभे-दात् गतिभेदः ग्रहाणां कक्षामानं च ग्रहकक्षाशब्दे वक्ष्यते । तथा च स्वल्पकक्षास्थग्रहस्य बृहत्कक्षा-स्थग्रहापेक्षया शीघ्रगत्वम् तच्च स्वाभाविकम् । अत्र प्रसङ्गात् ग्रहाणां शीघ्रमन्दगतित्वे कारणमुच्यते तथा हि सर्वेषां ग्रहाणां राशिचक्रस्वस्वकक्षासु तुल्यप्राग्गतित्वेऽपि स्वस्वकक्षाणामल्पत्वबृहत्त्वाभ्याम् अल्पाधिककालाभ्यामेव स्वस्वकक्षास्थराशिचक्रस्य स्थान-भोगः इत्यतो यस्य कक्षा लघ्वी स शीघ्रगः यस्य च बृहती स मन्दग इत्युच्यते एतदभिप्रायेणैव ग्रहाणां राशि-भोगे कालभेदो दर्शितः यथा "रविर्मासं निशा-नाथः सपाददिवसद्वयम् । पक्षत्रयं भूमिपुत्रो बुधोऽष्टा-दश वासरान् । वर्षमेकं गुराचार्य्यस्त्वष्टाविंशं दिनं भृगुः ।

शनिः सार्द्धद्वयं वर्षं राहुः सार्द्धसमां तथा" ज्यो॰ सूर्य्यस्य यद्यपि चन्द्रबुधशुक्रापेक्षया मन्दगतित्वम् तथापि कुजगुरुराहुशन्यपेक्षया शीघ्रगतित्वात् आशुगत्वम्। स्वस्वकक्षायां सूर्य्ययोगेन च ग्रहाणां पुनःशीघ्रगत्वं "सूर्य्ययुक्ता ग्रहाः शीघ्रा इत्युक्तेः। ग्रहाणां शीघ्रकेन्द्रशीघ्रफलादिकम्"सि॰शि॰ दर्शितं विस्तरभयान्नोक्तं तत एवावसेयम्। किन्तु सर्व्वग्रहापेक्षया राशिचक्रस्य शीघ्रगतित्वात् प्रतिदिनं स्वगत्यनुसारेण ग्रहाणां प्राग्गतित्वेऽपि राशिचक्रस्य प्रवहवायुना पश्चात् नीयमानतया तदारूढरव्यादेः पश्चाद्गतित्वभ्रमात् तदनुरूपशीघ्रगत्वमारोप्यते। ग्रहाणां राशिचक्रभोगार्थं स्वस्वकक्षासु या प्राग्गतिस्तस्या अल्पकालसाध्यत्वे शीघ्रत्वमिति बोध्यम्। एवं ग्रहाणां स्वाभाविक्यां स्वस्वकक्षासु गतौ स्थितायामपि प्रवहानिलेन पश्चाद्भ्राम्यमाणस्य राशिचक्रस्य प्रतिदिनं पृथिवीभ्रमणात् तद्गतेश्च सर्व्वग्रहापेक्षयाऽतिशीघ्रत्वात् तत्र च संभ्राम्यमाणराशिचक्रस्य गतौ तत्स्थग्रहगतित्वारोपेण नौकागतौ तत्स्थवस्तुगतित्वारोपवत् ग्रहाणां राशिचक्रतुल्यशीघ्रगतित्वं पुराणादावुक्तम् यथा "योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्द्धेन क्रममाण! नमोऽस्तु ते। नवतिर्योजनानाञ्च सहस्राणि च सप्ततिः। यावद्घटिकमात्रेण तावच्चलति भास्करः" आदित्यहृ॰। "यदा चेन्द्र्याः पुर्य्याः प्रचलति पञ्चदशभिर्घटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्द्धद्वादशलक्षाणि साधिकानि चोपयाति" भाग॰ ५स्क॰२०अ॰ "साधिकानि पञ्चविंशतिसहस्राधिकानि" श्रीधरः। तेन पञ्चदशभिर्घटिकाभिर्यदि २३७७५००० योजनानि तदा ६० दण्डात्मके दिने काष्ठोति चतुर्भिर्गुणितानि तानि प्रत्यहं राशिचक्रगतिमानं तदारोपाच्च सूर्य्यादीनां तथागतित्वमिति बोध्यम्। एतदपि पुराणान्वितं वस्तुतोराशिचक्रस्य प्रत्यहं पृथ्वीभ्रमणात् राशिचक्रपरिधिमानमेव अहोरात्रे गन्तव्ययोजनमानमेतच्च खगोलशब्दे वक्ष्यते। तथा च अल्पकालेन गन्तव्यस्थानगामित्वमाशुगत्वमिति सिद्धम्।

**आशुगामिन्** स्त्री आशु गच्छति गम–णिनि। १शीघ्रगामिनि स्त्रियां ङीप्। २सूर्य्ये पु॰ "आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्त्यते" भा॰व॰प॰ ३अ॰ सूर्य्यस्तवः।

**आशुङ्ग** त्रि॰आशु गच्छति वेदे नि॰ खच् मुम्। शीघ्रगामिनि "निर्बाणेव प्रपताशुङ्गः शिशुको यथा" अथ॰६,१४,२

**आशुतोष** पु॰ आशु शीघ्रं तोषो यस्य। १शिवे स्वल्पकालार्चनेनैव तस्य तुष्टत्वात् तथात्वम्। २शीघ्रतोषिणि त्रि॰।

**आशुपत्री** स्त्री आशु पत्रं यस्याः गौ॰ङीष्। शल्लकीलतायाम्

**आशुपत्वन्** पु॰ आशु पतति पत–वनिप्। १शीघ्रगामिनि "श्येनःश्येनेभ्य आशुपत्वा" ऋ॰ ४,६,४। स्त्रियां ङीप् रश्च। आशुपत्वरी।

**आशुमत्** त्रि॰आशु शैघ्र्यं विद्यतेऽस्य मतुप्। शीघ्रतायुक्ते "यथा सूर्य्यस्य रश्मयः परापतन्त्याशुमत्"अथ॰६,१०५,२

**आशुव्रीहि** पु॰ कर्म्म॰। वार्षिके धान्यभेदे (आउश) आशुशब्दे विवृतिः।

**आशुशुक्षणि** पु॰आ+शुष–सन्+अनि।१अग्नौ, २वायौ च। अस्य च वेदएव प्रयोगः लोकेऽपि कश्चित्तेन "मन्त्रपूतानि हवींषि प्रतिग्रहृह्यात्वेतत्प्रीत्याशुशुक्षणिः" काद॰ "अन्तरात्मा ह्ययं साक्षान्निश्चितोह्याशुशुक्षणिः" काशी॰।

**आशुषाण** त्रि॰ आ+शुष–बा॰ कानच्। सम्यक् शुष्यमाणे

**आशुहेषस्** त्रि॰ आशु+हेष–शब्दे–असुन्। शीघ्रं शब्दायमाने। "इन्द्राविष्णू अश्विना वाशुहेषसा"ऋ॰८,१०,२, "आशुहेषसा शीघ्रं शब्दायमानौ" भा॰।

**आशू** त्रि॰ आशु+वेदे पृ॰दीर्घः। शीघ्रे। "इन्द्रः प्राशूभवा सचा" यजु॰२४,५६, "आशुशब्दो दीर्घश्छान्दसः" वेददीपः। [कुटति–णिनि। पर्व्वतभेदे शब्दमाला।

**आशेकुटिन्** पु॰ आशेतेऽस्मिन् आ+शी+विच् स इव

**आशोकेय** त्रि॰ अशोक+चतुरर्थ्यां सख्या॰ ढञ्। अशोकवृक्षसन्निकृष्टदेशादौ। अशोका+शुभ्रा॰ ढक्। अशोकाया अपत्ये। स्त्रियां तु शार्ङ्गरवा॰ ङीन्। आशोकेयी।

**आशौच** न॰ अशुचेर्भावः अण् "नञः शुचीत्या॰" पा॰ पूर्व्वपदस्य वा वृद्धिरुत्तरपदस्य नित्यम्। अशौचशब्दार्थे ४८६ पृष्ठे विवृतिः। "दशाहं शावमाशौचं ब्राह्मणस्य विधीयते" "सर्व्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्" "त्रिरात्रमाहुराशौचमाचार्य्ये संस्थिते सति" मनुः ष्यञ्। आशौच्यमप्यत्र न॰ "आशौच्यात् विप्रमुच्येत ब्राह्मणान् स्वस्तिवाच्य च" शु॰त॰स्मृतिः।

**आश्चर्य्य** न॰ आ+चर–यत् "आश्चर्य्यमनित्ये" पा॰ सुट्। १अद्भुते २विस्मयरसे ३तद्वति त्रि॰। "शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्य्यमतः परम्" भा॰व॰। "आश्चर्य्यवत् पश्यति कश्चिदेनमाश्चर्य्यवत् वदति तथैव चान्यः–आश्चर्य्यवच्चैनमन्यः शृणोति" गीता। "पुष्पमाश्चर्य्यमेघाः" रघुः। "किमाश्चर्य्यं चारदेशे प्राणदा यमदूतिकाः" उद्भटः।

**आश्चो(श्च्यो)तन** त्रि॰ आ+श्चु(श्च्यु)त–ल्यु । १सम्यक्क्षरणशीले भावे ल्युट् । २सम्यक्क्षरणे न॰। "तर्पणैः पुटपाकैश्च धूमैराश्च्योतनैस्तथा" । "हितमक्ष्णोर्दकं सेके तथाश्च्योतनमेव" च । "क्षौमाबद्धं पथ्यमाश्च्योतने वा सर्पिर्दिष्टं यष्टिकाह्वं सरोध्रम्" इति च सुश्रु॰ ।

**आश्म** पु॰ अश्मनोविकारः अण् वा टिलोपः । प्रस्तरविकारे

**आश्मक** पु॰ अश्मना कायति कै–क । शाल्वदेशावयवग्रामभेदे "साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्" पा॰ । तत्र भवः इञ् । आश्मकिः तद्ग्रामभवे त्रि॰ ।

**आश्मन** पु॰ अश्मनोविकार अण् वा टिलोपाभावः । पाषाणविकारे "ययापमाश्मनमस्त्रं सेधुं धत्तेऽन्यदुर्वहम्" भट्टिः । अश्मनः सूर्य्यसारथेरपत्यम् अण् तदपत्ये पुंस्त्री

**आश्मन्य** त्रि॰ अश्मन्+चतुरर्थ्याम् संकाश्या॰ ण्यः । प्रस्तरसन्निकृष्टदेशादौ ।

**आश्मभारक** त्रि॰ अश्मभारं हरति वहति आवहति वा वंशा॰ ठण् । प्रस्तरस्य १हारके २वाहके ३तदावाहके च ।

**आश्मरथ्य** पु॰ अश्मरथस्य मुनेरपत्यम् गर्गा॰ यञ् । अश्मरथर्षेरपत्ये "अभिव्यक्तेरित्याश्मरथ्यः" शा॰ सू॰ । गोत्रापत्ये तु कण्वा॰ अण् । आश्मरथ इत्येव स्त्रियां ङीप् ।

**आश्मरिक** पु॰ अश्मर्य्येव स्वार्थे वा॰ ठञ् । अश्मरीरोगे "भिन्नवस्तिराश्मरिको न सिध्यति" सुश्रुतः ।

**आश्मायन** पुंस्त्री अश्मनोगोत्रापत्यम् अश्वा॰ फञ् । अश्मनामर्षेर्गोत्रापत्ये स्त्रियां ङीप् ।

**आश्मिक** त्रि॰ भारभूतमश्मानं हरति वहति आवहति वा वंशा॰ ठण् । भारभूतप्रस्तरस्य १हारके २वाहके ३आवाहके च ।

**आश्मेय** पुंस्त्री अश्मन्+शुभ्रा॰ ढक् । अश्मनामकर्षेरपत्ये ।

**आश्यान** त्रि॰ आ+श्यै–क्त । घनीभूते शुष्कप्राये "पयसाश्यानकर्दमान्" रघुः । "अन्तरालग्नाश्यानहरिणरुधिरबिन्दुना" काद॰ ।

**आश्र** त्रि॰ अस्रमेव स्वार्थेऽण् । चक्षुर्जले ।

**आश्रपण** न॰ आ+श्रा–णिच् पुक् ह्रस्वे ल्युट् । पाके ।

**आश्रम** पुंन॰ आ+श्रम–आधारे घञ् अवृद्धिः । ब्रह्मचर्य्यादिके शास्त्रोक्ते १धर्मभेदे, "विनाश्रमं न तिष्ठेत्तु दिनमेकमपि द्विजः । आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते द्विजः" दक्षः । अत्र द्विजपदस्योपलक्षणपरता यत् रघुनन्दनेन स्थापितं तदाशुतयन्त्रे निराकृतम् ७५२ पृष्ठे दृश्यम् । मुनीनां २वासस्थाने, ३मठे ४तपोवने "प्रत्युद्ययावाश्रममश्रमेण" "तौ दम्पती वशिष्ठस्य गुरोर्जग्मतुराश्रमम्" । "स किलाश्रममन्त्यमाश्रितः" "स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः" "अभ्युत्थिताग्निपिशुनैः–अतिथीनाश्रमोन्मुखान्" इति च रघुः । "कमलासनमिवाश्रमगुरुम्" इति काद॰ । "कृत्वा देवं तव सहचरो रामगिर्य्याश्रमस्थः" मेघदू॰ । सर्व्वक्लेशहानेन विश्रामस्थाने ५परमेश्वरे च । "आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः" विष्णुसह॰ "आश्रमवत् सर्वेषां संसारारण्ये भ्रमतां विश्रामस्थानत्वादाश्रमः" इति भा॰ तत्र आश्रमेषु कुत्र कस्याधिकार इति तावन्निर्णीयते । "चत्वार आश्रमाश्चैव ब्राह्मणस्य प्रकीर्त्तिताः । गार्हस्थ्यं ब्रह्मचर्य्यञ्च वानप्रस्थं च भिक्षुकम् । क्षत्रिये चापि कथिता आश्रमास्त्रयएव हि । ब्रह्मचर्य्यञ्च गार्हस्थ्यमाश्रमद्वितयं विशः । गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणमाचरेत्" माध॰ धृतवामनपु॰ । "चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिनोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेकोवैश्यशूद्रयोः" नि॰ सि॰ कूर्मपु॰ वर्णक्रमेण चातुराश्रम्यादयः इति । तत्र कलौ दीर्घकालब्रह्मचर्य्यवानप्रस्थाश्रमौ न स्तः गृहस्थभिक्षुकाश्रमावेव । "गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" इति स्मरणात् । तत्र संन्यासे विप्रस्यैवाधिकारः ब्राह्मणाः प्रव्रजन्तीति जाबालश्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत् गृहादिति" या॰ स्मृतेरिति वह्वयः । "ब्राह्मणः क्षत्रियोवाथ वैश्यो वा प्रव्रजेद्गृहादिति" कौर्म्मवाक्यात् क्षत्रियादीनामपि तत्राधिकारः पूर्व्ववचनन्तु कषायादिवस्त्रत्रिदण्डधारणविषयम् "मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम् राजन्यवैश्ययोर्नैव दत्तात्रेयमुनेर्मतम्" बौधा॰ स्मृतेः । अयमेव पक्षो मल्लिनाथेन समर्थितः यथा अत्र यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" इति मनुस्मरणात् 'मुखजानामयं धर्म्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानामयं धर्म्मो न विद्यते" इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादेरिति तथापि "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादिश्रुतेस्त्रैवर्णिकसाधारणत्वात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् "ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद् गृहात्" इति स्मरणात् 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां त्रिदण्डं न विधीयते" इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च कुत्रचिद् ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित्

त्रैवर्णिकाधिकारं प्रमेदिरे । तथा सति "स किलाश्रममन्त्यमाश्रितः" इति अत्रापि कविनाश्यमेव पक्षो विवक्षित इति प्रतीमः । अन्यथा वानप्रस्थाश्रमतया व्याख्याने "विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्धमनग्निमग्निचित्" इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात् अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात्" । अतएव मनुना "अनेन क्रमयोगेण परिव्रजति यो द्विजः" इति द्विजमात्रस्य परिव्रज्याधिकार उक्तः । एवञ्च महता प्रयत्नेन शङ्कराचार्य्येण ब्राह्मणस्यैव संन्यासेऽधिकारस्य समर्थनं लिङ्गखण्डविषयमिति । एतेषु आश्रमेषु ब्रह्मचर्य्यस्य नित्यत्वम् इतराश्रमाणां "यमिच्छेत्तु तमावसेत्" इति मिता० धृतवचनात् इच्छाधीनतया काम्यत्वम् । तत्राश्रमाणां समुच्चयपक्षः कामनावतएव, विकल्पस्तु अकामनावतो विरक्तस्य, । अधिकारिभेदाच्च आश्रम समुच्चयविकल्पपक्षौ मिता०समर्थितौ यथा

"वनात् गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम् । प्राजापत्यान्तदन्ते तानग्नीनारोप्य चात्मनि । अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान् । शक्त्या च यज्ञकृन्मोक्षे मनः कुर्य्यात्तु नान्यथा" या०। यावता कालेन तीव्रतपःशोषितवपुषोविषयकषायपरिपाको भवति । पुनश्च मदोद्भवाशङ्कानोद्भाव्यते । तावत्कालं वनवासं कृत्वा तत्समनन्तरं मोक्षे मनः कुर्य्यात्। वनगृहशब्दाभ्यान्तत्सम्बन्ध्याश्रमोलक्ष्यते । मोक्षशब्देन च मोक्षैकफलकश्चतुर्थाश्रमः । अथ वा गृहात् गार्हस्थ्यादनन्तरं मोक्षे मनः कुर्य्यादनेन च पूर्वोक्तश्चतुराश्रमसमुच्चयपक्षःपाक्षिक इति द्योतयति । तथा च विकल्पो जाबालश्रुतौ श्रूयते । "ब्रह्मचर्य्यम्परिसमाप्य गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति"। तथा गार्हस्थ्येतराश्रमबाधश्च गोतमेन दर्शितः । "एकाश्रम्यन्त्वाचार्य्याः प्रत्यक्षविधानात् गार्हस्थ्यस्येति" । एषाञ्च समुच्चयविकल्पबाधपक्षाणां सर्वेषां श्रुतिमूलत्वादिच्छया विकल्पः । अतो यत्कैश्चित् पण्डितंमन्यैरुक्तम् । श्रौतत्वाच्चैष्टिकत्वादीनाङ्गार्हस्थ्येन श्रौतेन बाधः । गार्हस्थ्यानधिकृतान्धक्लीबादिविषयता वेति । तत्स्वाध्यायाध्ययनवैधुर्य्यनिबन्धनमित्युपेक्षणीयम् । किञ्च । यथा विष्णुक्रमणाज्यावेक्षणाद्यक्षमतया पङ्ग्वादीनां श्रौतेष्वनधिकारस्तथा कार्त्स्न्येषूदकुम्भाहरणभिक्षाचर्य्याक्षमत्वात् कथं पङ्ग्वादिविषयतया नैष्ठिकत्वाद्याश्रमनिर्वाहः । चर्थिंचाश्रमे ब्राह्मणस्यैवाधिकारः । "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" । तथा "एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः" इत्युपक्रमोपसंहाराभ्यां मनुना ब्राह्मणस्याधिकारप्रतिपादनात् । "ब्राह्मणाः प्रव्रजन्तीति" श्रुतेश्चाग्रजन्मन एवाधिकारो न द्विजातिमात्रस्य । अन्ये तु त्रैवर्णिकानाम् प्रकृतत्वात् "त्रयाणाम् वर्णानाम् वेदमधीत्य चत्वार आश्रमा" इति सूत्रकारवचनाच्च द्विजातिमात्रस्याधिकारमाहुः । यदा वनात् गृहाद्वा प्रव्रजति तदा सार्ववेदसदक्षिणाम् सार्ववेदसो सर्वधनसम्बन्धिनी दक्षिणा यस्याः सा तथोक्ता ताम् प्रजापतिदेवताकामिष्टिं कृत्वा तदन्ते तास्त्रैतानानग्नीन् आत्मनि श्रुत्युक्तविधानेन समारोप्य चयन्द्यात् "उदगयने पौर्णमास्याम् पुरश्चरणमादौ कृत्वा शुद्धेन कालेन अष्टौ श्राद्धानि निर्वपेत् द्वादश वा" इति बौधायनाद्युक्तं पुरश्चरणादिकञ्च कृत्वा । तथाऽधीतवेदो जपपरायणोजातपुत्रोऽन्नदोनान्धकृपणार्थिसार्थाय यथाशक्त्यन्नदश्च भूत्वा अनाहिताग्निर्ज्यैष्ठ्यादिना प्रतिबन्धाभावे कृताधानो नित्यनैमित्तिकान् यज्ञान् कृत्वा मोक्षे मनः कुर्य्यात् चतुर्थाश्रमं प्रविशेत् नान्यथा । अनेनानपाकृतर्णत्रयस्य गृहस्थस्य प्रव्रज्यायामनधिकारन्दर्शयति । तथाह मनुः । "ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यध इति" । यदा तु ब्रह्मचर्य्यात् प्रव्रजति तदा न प्रजोत्पादनादिनियमः । अकृतदारपरिग्रहस्य तत्रानधिकाराद्रागप्रयुक्तत्वाच्च विवाहस्य । न च ऋणत्रयापाकरणविधिरेव दारानाक्षिपतीति शङ्कनीयम् । विद्याधनार्जननियमवदन्यप्रयुक्तदारसम्भवे तस्यानाक्षेपकत्वात् । ननु "जायमानोवै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" इति जातमात्रस्यैव प्रजोत्पादनादीन्यावश्यकानीति दर्शयति, नैवम् न हि जातमात्रोऽकृतदाराग्निपरिग्रहो यज्ञादिष्वधिक्रियते । तस्मादधिकारी जायमानो ब्राह्मणादिर्यज्ञादीननुतिष्ठेदिति तस्यार्थः । तत्रश्चोपनीतस्य वेदाध्ययनमेवावश्यकम् । कृतदारपरिग्रहस्य प्रजोत्पादनमपीति" ततश्च ब्रह्मचर्य्याश्रमस्यैव नित्यत्वमितरेषां तु "यमिच्छेत्तु तमावसेत्" इति मिताक्षराधृतवचनात् काम्यत्वमेव । ऋणत्रयापाकरणावश्यकता तु कृतविवाहस्यैवेति सिद्धम् ।

आश्रमाश्च चतुर्विधाः । ब्रह्मचर्य्यगार्हस्थ्यवानप्रस्थभिक्षुकभेदात् । "ब्रह्मचारी गृहस्थश्च वानप्रस्थोय-

तिष्ठ वा । एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः" मनूक्तेः तत्र ब्रह्मचारी द्विविधः । नैष्ठिक उपकुर्वाणश्च मरणान्तं गुरुकुलवासितया कृतब्रह्मचर्य्यः नैष्ठिकः । षट्त्रिंशदब्दादिकं गुरौ वसित्वा गार्हस्थ्यार्थं कृतसमावर्त्तन उपकुर्वाणः । गृहस्थोऽपि द्विविधः । अकृतदारः स्नातकः कृतदारश्च । तत्र कृतसमावर्त्तनोऽपि कन्यालाभात् पूर्व्वं धृतस्मार्त्तधर्म्मभेदः स्नातकः । तद्धर्माश्च आप्लुतशब्दे ७५२ पृष्ठेऽभिहिताः । कृतदारोऽपि द्विविधः साग्निर्निरग्निश्च साग्निरपि द्विविधः श्रौताग्नियुक्तः स्मार्त्ताग्नियुक्तश्च । वानप्रस्थोऽपि द्विविधः सदारोऽदारश्च "पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वा" मनूक्तेः सदारादारत्वपक्षयोः समधिगमात् । तत्र अदारस्य अपचमानाश्मकुट्टकदन्तोलूखलादिसंज्ञा । सदारस्य पचमानसंज्ञा । भिक्षुरपि चतुर्विधः कुटीचक बहूदक हंसपरहंसेतिभेदात् । भिक्षुकोऽपि प्रकारान्तरेण द्विविधः विविदिषासन्यासी विद्वत्संन्यासी च तदेतत् जीवन्मुक्तौ विद्यारण्येन निरूपितं यथा "वक्ष्ये विविदिषान्यासं विद्वन्न्यासञ्च भेदतः । हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात् ॥ संन्यासहेतुर्वैराग्यं यदहर्विरजेत्तदा । प्रव्रजेदिति वेदोक्तेस्तद्भेदस्तु पुराणतः । विरक्तिर्द्विविधा प्रोक्ता तीव्रतीव्रतरेति च । सत्यामेव तु तीव्रायां न्यसेद्योगी कुटीचके ॥ शक्तोबहूदके तीव्रतरायां हंससंज्ञिते । मुमुक्षुः परमे हंसे साक्षाद्विज्ञानसाधने । पुत्रदारधनादीनां नाशे तात्कालिकी मतिः । धिक् संसारमितीदृक् स्याद्विरक्तेर्मन्दता हि सा ॥ अस्मिन् जन्मनि मा भूवन् पुत्रदारादयो मम । इति या सुस्थिरा बुद्धिः सा वैराग्यस्य तीव्रता ॥ पुनरावृत्तिसहितो लोको मे मास्तु कश्चन । इति तीव्रतरत्वं स्यान्मन्दे न्यासोन कोऽपि हि ॥ यात्राद्यशक्तिशक्तिभ्यां तीव्रे न्यासद्वयं भवेत् । कुटीचकोबहूदश्चेत्युभावेतौ त्रिदण्डिनौ । द्वयं तीव्रतरे ब्रह्मलोकमोक्षविभेदतः । तल्लोके तत्त्वविद्बोधो लोकेऽस्मिन् परहंसकः ॥ एतेषान्तु समाचाराः प्रोक्ताः पाराशरस्मृतेः । व्याख्यानेऽस्माभिरत्रायं परहंसो विविच्यते । जिज्ञासुर्ज्ञानवांश्चेति परहंसो द्विधा मतः । प्राप्तुर्ज्ञानाय जिज्ञासोर्न्यासं वाजसनेयिनः । "प्रव्राजिनोलोकमेतमिच्छन्तः प्रव्रजन्ति हि" । एतस्यार्थन्तु गद्येन वच्म्यमन्दविबुद्धये ॥ लोको हि द्विविधः आत्मलोकोऽनात्मलोकश्चेति । तत्रानात्मलोकस्य त्रैविध्यं बृहदारण्यके तृतीयाध्याये श्रूयते । "अथ त्रयोवाव लोकाः मनुष्यलोकः पितृलोको देवलोक" इति । सोऽयं मनुष्यलोकः पुत्रेणैव जय्योनान्येन कर्म्मणा । कर्म्मणा पितृलोको विद्यया देवलोक" इति । आत्मलोकश्च तत्रैव श्रूयते । "योहवा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति सएनमविदितो न भुनक्तीति"। "आत्मानमेव लोकमुपासीत" "सय आत्मानमेव लोकमुपास्ते नहास्य कर्म्म क्षीयत" इति च । षष्ठाध्यायेऽपि "किं प्रजयाकरिष्यामो येषां नोऽयमात्माऽयञ्च लोक" इति । एवञ्च सति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यत्रात्मलोकोविवक्षित इति गम्यते "सवा एष महानज आत्मेति" प्रक्रान्तस्यात्मन एव एतच्छब्देन परामृष्टत्वात् । लोक्यते अनुभूयत इति लोकः । तथा चात्मानुभवमिच्छन्तः प्रव्रजन्तीति श्रुतेस्तात्पर्य्यार्थः सम्पद्यते । स्मृतिश्च "ब्रह्मविज्ञानलाभाय परहंससमाह्वयः। शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितोभवेदिति"। इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया विविदिषया सम्पादितत्वादयं विविदिषा सन्यासो द्विविधः जन्मापादककर्म्मादित्यागमात्रात्मकः प्रैषोच्चारणपूर्व्वकदण्डधारणाद्याश्रमरूप श्चेति । त्यागश्च तैत्तिरीयादौ श्रूयते "न कर्म्मणा न प्रजया न धनेन, त्यागेनैके अमृतत्वमानशुरिति"। अस्मिंश्च त्यागे स्त्रियोऽप्यधिक्रियन्ते । अतएव मैत्रेयीवाक्यमाम्नायते "येनाहं नामृता स्यां किमहं तेन कुर्य्याम् यदेव भगवन्! वेद तदेव मे ब्रूहीति" । ब्रह्मचारिगृहस्थवानप्रस्थानां केनचिन्निमित्तेन सन्न्यासाश्रमस्वीकारे प्रतिबद्धे सति स्वाश्रमधर्म्मेष्वनुष्ठीयमानेष्वपि वेदनार्थो मानसकर्म्मादित्यागो न विरुध्यते श्रुतिस्मृतीतिहासपुराणेषु लोके च तादृशानां तत्त्वविदां बहूनामुपलम्भात् । यस्तु दण्डधारणादिरूपो वेदनहेतुः परमहंसाश्रमः स पूर्व्वैराचार्य्यैर्बहुधा प्रपञ्चित इत्यस्माभिरुपरम्यते । इति विविदिषासंन्यासः ।

"अथ विद्वत्संन्यासं निरूपयामः ॥ सम्यगनुष्ठितैः श्रवणमनननिदिध्यासनैः परतत्त्वं विदितवद्भिः सम्पाद्यमानोविद्वत्संन्यासः । तञ्च याज्ञवल्क्यः सम्पादयामास । तथाहि विद्वच्छिरोमणिर्भगवान् याज्ञवल्क्योविजिगीषुकथायां बहुविधेन तत्त्वनिरूपणेनाश्वलायनप्रभृतीन्मुनीन् विजित्य वीतराग कथायां संक्षेपविस्ताराभ्यामनेकधा जनकं बोधयित्वा मैत्रेयीं बुबोधयिषुस्तस्यास्त्वरया तत्त्वाभिमुख्याय स्वकर्त्तव्यं संन्यासं प्रतिजज्ञे ततस्तां बोधयित्वा संन्यासञ्चकार । तदुभयं मैत्रेयीब्राह्मणस्याद्यन्तयोराम्नायते" "अथ ह

याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् मैत्रेयीति होवाच याज्ञवल्क्यः, प्रव्रजिष्यन् वा अरे अहमस्मात् स्थानादस्मीति, एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेति"॥ कहोले ब्राह्मणेऽपि विद्वत्संन्यास आम्नायते "एतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्तीति"। नचैतद्वाक्यं विविदिषासंन्यासपरमिति शङ्कनीयं" पूर्व्वकालवाचिनोविदित्वेति क्त्वाप्रत्ययस्य ब्राह्मणशब्दस्य च बाधप्रसङ्गात्। नचात्र ब्राह्मणशब्दोजातिवाचकः वाक्यशेषे पाण्डित्यबाल्यमौनशब्दाभिधेयैः श्रवणमनननिदिध्यासनैः साध्यं ब्रह्मसाक्षात्कारमभिप्रेत्याथ ब्राह्मण इत्यभिहितत्वात्। ननु तत्र विविदिषासंन्यासोपेतः पाण्डित्यादौ प्रवर्त्तमानोऽपि ब्राह्मणशब्देन परामृष्टः तस्मात् ब्राह्मणः पाण्डित्यं निर्व्विद्य बाल्येन तिष्ठासेदिति" मैवं भाविनीं वृत्तिमाश्रित्य तत्र ब्राह्मणशब्दस्य प्रयुक्तत्वात्। अन्यथा कथमथ ब्राह्मण इति साधनानुष्ठानोत्तरकालवाचिनमथशब्दं प्रयुञ्जीत। शारीरब्राह्मणेऽपि विद्वत्संन्यासविविदिषासंन्यासौ स्पष्टं निर्द्दिष्टौ "एतमेव विदित्वा मुनिर्भवत्येवमेव प्रव्रजिनोलोकमिच्छन्तः प्रव्रजन्तीति"। मुनित्वं मननशीलत्वम्। तच्चासति कर्त्तव्यान्तरे सम्भवतीत्यर्थात् संन्यास एवाभिधीयते। एतच्च वाक्यशेषे स्पष्टीकृतम् "एतद्ध स्म वैतत् पूर्व्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामोयेषां नोऽयमात्मायं लोक इति" "ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्तीति"। अयं लोक इत्यापरोक्ष्येणानुभूयत इत्यर्थः। नन्वत्र मुनित्वेन फलेन प्रलोभ्य विविदिषासंन्यासं विधाय वाक्यशेषे स एव प्रपञ्चितः अतोन संन्यासान्तरं कल्पनीयं मैवं वेदनस्यैव विविदिषासंन्यासफलत्वात्। न च वेदनमुनित्वयोरेकत्वं शङ्कनीयं विदित्वा मुनिर्भवतीति पूर्व्वोत्तरकालीनयोस्तयोः साध्यसाधनत्वप्रतीतेः। ननु वेदनस्यैव परिपाकातिशयरूपमवस्थान्तरम् मुनित्वम् अतोवेदनद्वारा पूर्व्वसंन्यासस्यैवैतत् फलमितिचेत् बाढम् अतएव साधनरूपात् संन्यासादन्यं फलरूपमेनं संन्यासं ब्रूमः। यथा विविदिषासंन्यासिना तत्त्वज्ञानाय श्रवणादीनि सम्पादनीयानि तथा विद्वत्संन्यासिनापि जीवन्मुक्त्यै मनोनाशवासनाक्षयौ सम्पादनीयौ। एतच्चोपरिष्टात् प्रपञ्चयिष्यामः। सत्यनयोः संन्यासयोरवान्तरभेदे परमहंसत्वाकारेणैकीकृत्य चतुर्व्विधा भिक्षव इति स्मृतिषु चतुःसंख्योक्ता। पूर्व्वोक्तयोः संन्यासयोः परमहंसत्वं जाबालश्रुतावगम्यते। तत्र हि जनकेन संन्यासे पृष्टे सति याज्ञवल्क्योऽधिकारिविशेषविधानेनोत्तरकालानुष्ठेयेन च सहितं विविदिषासंन्यासमभिधाय पश्चादत्रिणा यज्ञोपवीतरहितस्याक्षिप्ते ब्राह्मण्ये पश्चादात्मज्ञानमेव यज्ञोपवीतमिति समादधौ अतोबाह्ययज्ञोपवीताभावात् परमहंसत्वं निश्चीयते। तथान्यस्यां कण्डिकायां तत्र परमहंसोनामेत्युपक्रम्य संवर्त्तकादीन् बहुविधान् ब्रह्मविदोजीवन्मुक्तानुदाहृत्य "अव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः" इतिविद्वत्संन्यासिनोदर्शिताः। तथा "त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतञ्चेत्येतत्सर्वं भूःस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेदिति" त्रिदण्डिनः सत एकदण्डलक्षणं विविदिषासंन्यासं विधाय तत्फलरूपं विद्वत्संन्यासमेवमुदाजहार। "यथा जातरूपधरोनिर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ कृत्वा शून्यागारे देवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतनवास्यप्रयत्नोनिर्म्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्म्मनिर्म्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसोनामेति"। तस्मादनयोरुभयोः परमहंसत्वं सिद्धम्। समानेऽपि परमहंसत्वे सिद्धे विरुद्धधर्म्माक्रान्तत्वादवान्तरभेदोऽप्यभ्युपगन्तव्यः। विरुद्धधर्म्मत्वञ्चारुण्युपनिषत्परमहंसोपनिषदोः पर्य्यालोचनायामवगम्यते। "केन भगवन्! कर्म्माण्यशेषतोविसृजामीति" शिखायज्ञोपवीतस्वाध्यायगायत्रीजपाद्यशेषकर्म्मत्यागरूपे विविदिषासंन्यासे शिष्येणारुणिना पृष्टे सति गुरुः प्रजापतिः "शिखां यज्ञोपवीतम्" इत्यादिना सर्वत्यागमभिधाय "दण्डमाच्छादनं कौपीनञ्च परिग्रहेदिति" दण्डादिस्वीकारं विधाय "त्रिसन्ध्यादौ स्नानमाचरेत्। सन्धिं समाधावात्मन्याचरेदिति" "सर्व्वेषु वेदेष्वारण्यकमावर्त्तयेदुपनिषदमावर्त्तयेदुपनिषदमावर्त्तयेदिति" वेदनहेतूनाश्रमधर्म्माननुष्ठेयतया विधत्ते। "अथ योगिनां परमहंसानां कोऽयं मार्गः" इति विद्वत्संन्यासे नारदेन पृष्टे सति गुरुर्भगवान् स्वपुत्रमित्रेत्यादिना पूर्व्ववत् संन्यासमभिधाय "कौपीनं दण्डमा-

च्छादनन्तु स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेदिति" दण्डादिस्वीकारस्य लौकिकत्वमभिधाय "तन्न मुख्ये नाप्नोति" शास्त्रीयत्वं प्रतिषिध्य "कोऽयं मुख्य इति चेदयं मुख्योऽन दण्डं न शिखां न यज्ञोपवीतं नाच्छादनञ्चरति परमहंसः" इति दण्डादिलिङ्गराहित्यस्य शास्त्रीयतामुक्त्वा 'न शीतं न चोष्णं'मित्यादिना वाक्येन "आशाम्बरो निर्नमस्कार" इत्यादिवाक्येन च लोकव्यवहारातीतत्वमभिधायान्ते "यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति" इत्यन्तेन ग्रन्थेन ब्रह्मात्मानुभवमात्रपर्य्यवसानमाचष्टे । अतोविरुद्धधर्म्मोपेतत्वादन्त्ययोरनयोर्महान् भेदः । स्मृतिष्वयं भेद उक्तदिशा द्रष्टव्यः । "संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः । प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्" इत्यादिविविदिषासंन्यासः । "यदा तु विदितं तत्स्यात् परं ब्रह्म सनातनम् । तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत् । ज्ञात्वा सम्यक्परं ब्रह्म सर्व्वं त्यक्त्वा परिव्रजेदिति" विद्वत्संन्यासः । ननु कलाविद्यादाविव कदाचित्कौतुकमात्रेणापि वेदितुमिच्छा सम्भवत्येव विद्वत्तायाश्चापातदर्शिनः पण्डितंमन्यमानस्याप्यवलोक्यते । न च तौ प्रव्रजन्तौ दृष्टौ अतोविविदिषाविद्वत्ते कीदृश्यौ विवक्षिते इति चेदुच्यते । यथा तीव्रायां बुभुक्षायामुत्पन्नायां भोजनादन्यो व्यापारो न रोचते । भोजने च विलम्बो न सोढुं शक्यते । तथा यदा जन्महेतुषु कर्म्मस्वत्यन्तमरुचिः वेदनसाधनश्रवणादिषु च त्वरा महती सम्पद्यते तादृशी विविदिषा संन्यासहेतुः । विद्वत्ताया अवधिरुपदेशसाहस्र्यामभिहितः । "देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते" इति । श्रुतावपि "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे इति" । परमपि हैरण्यगर्भादिपदमवरं यस्मादसौ परावरः । हृदये बुद्धौ साक्षिणस्तादात्म्याध्यासोऽनाद्यविद्यानिमित्तत्वेन ग्रन्थिवद्दृढसंश्लेषरूपत्वाद्ग्रन्थिरित्युच्यते । आत्मा साक्षी कर्त्ता वा, साक्षित्वेऽप्यस्य ब्रह्मत्वमस्ति न वा, ब्रह्मत्वेऽपि तद्बुद्ध्या वेदितुं शक्यते न वा, शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिरस्ति नवेत्यादयः संशयाः । कर्म्माण्यनारब्धानि आगामिजन्मकारणानि । तदेतत् ग्रन्थ्यादित्रयमविद्यानिमित्तत्वात्तादात्म्यदर्शनेन निवर्त्तते । स्मृतावप्ययमर्थ उपलभ्यते "यस्य नाहंकृतोभावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यत" इति । यस्य ब्रह्मविदो भावः सत्ता स्वभाव आत्मा, नाहं कृतोनाहङ्कारेण तादात्म्याध्यासादाविर्भावितः, बुद्धिलेपः संशयः । तदभावे त्वं लोकत्रयवधेनापि न निबध्यते किमुतान्येन कर्म्मणेत्यर्थः । नन्वेवं सति विविदिषाफलेन तत्त्वज्ञानेनैवागामिजन्मनां निवारितत्वाद्वर्त्तमानजन्मशेषस्य भोगमन्तरेण निवारयितुमशक्यत्वादलमनेन विद्वत्संन्यासप्रयासेनेति चेन्नैवं विद्वत्संन्यासस्य जीवन्मुक्तिहेतुत्वात् । तस्माद्वेदनाय यथा विविदिषासंन्यासः एवं जीवन्मुक्तये विद्वत्संन्यासः सम्पदनीयः इति विद्वत्संन्यासः" ।

'दीर्घकालं ब्रह्मचर्य्यम्' इत्यादित्यपुराणे यद् कलिवर्ज्ये दीर्घकालब्रह्मचर्य्यसंन्यासाश्रमयोरुत्कीर्त्तनम् तत् नैष्ठिकब्रह्मचर्य्यषट्त्रिंशदब्दादिब्रह्मचर्य्ययोर्निषेधपरम् न पुनर्ग्रहणान्तिकब्रह्मचर्य्यमात्रस्य निषेधः दीर्घकालेतिविशेषणसामार्थ्यात् तेन 'षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम् । तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा" इति मनुनोक्तपक्षचतुष्टयमध्ये अल्पकालिकस्यैव कलौ कर्त्तव्यता । "तथाऽग्निहोत्रं गवालम्भं संन्यासं पलपैतृकमिति" निगमवाक्यमपि त्रिदण्डविषयम् "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्त्तते । संन्यासञ्चाग्निहोत्रञ्च तावत् कुर्य्यात् कलौ युगे" देवलस्मरणात् । "चत्वार्य्यब्दसहस्राणि चत्वार्य्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । संन्यासश्च न कर्त्तव्यो ब्राह्मणेन विजानता" इति व्यासवचनन्तु त्रिदण्डविषयम् । महानिर्वाणतन्त्रे तु । "पुरैव कथितं तावत् कलिधर्म्मविचेष्टितम् । तपःस्वाध्यायहीनानां नृणामल्पायुषामपि । क्लेशप्रयासाशक्तानां कुतोदेहपरिश्रमः । ब्रह्मचर्य्याश्रमो नास्ति वानप्रस्थोऽपि न प्रिये । गार्हस्थ्यो भैक्षुकौ चैव आश्रमौ द्वौ कलौ युगे । गृहस्थस्य क्रियाः सर्व्वा आगमोक्ता कलौ शिवे । नान्यमार्गैः क्रियासिद्धिः कदापि गृहमेधिनाम् । भैक्षुकेऽप्याश्रमे वापि वेदोक्तं दण्डधारणम् । कलौ नास्त्येव तत्त्वज्ञे ! यतस्तच्छ्रौतसंस्कृतिः । शैवसंस्कारविधिनाऽवधूताश्रमधारणम् । तदेव कथितं भद्रे ! संन्यासग्रहणं कलौ । विप्राणामितरेषाञ्च वर्णानां प्रबले कलौ । उभये आश्रमे देवि ! सर्व्वेषामधिकारिता । सर्व्वेषामेव संस्कारकर्म्मणी शैववर्त्मना । विप्राणामितरेषाञ्च

कर्म्म लिङ्गं पृथक् पृथक्” । उभावेवाश्रमौ विहितौ एतत्त्वागमाधिकारिणः पतितब्राह्मणादेरकृतप्रायश्चित्तस्यैव बोध्यम् । आगमविधावधिकारिणश्च आगमशब्दे ६१४ पृष्ठे उक्ताः इतरेषान्तु न श्रौतदण्डादिधारणनिषेधः तेषां श्रौत एवाधिकारात् । वस्तुतः आगमवाक्येऽपि प्रबले कलाविति विशेषोक्तेः प्रबले कलौ सर्व्वेषामेव पतित प्रायत्वस्यावश्यम्भावादागमधर्म्मस्यैवावलम्बनीयतया तेषामेव तदानीमागमोक्ताश्रमद्वयेऽधिकार इति भेद इति दिक् ।

**आश्रमगुरु** पु० आश्रमाणां ब्रह्मचर्य्यादीनां गुरुर्नियन्ता । आश्रमनियन्तरि ऋषे । “कर्त्तुमाश्रमगुरुः स नाश्रमत्” माघः ।

**आश्रमधर्म्म** पु० आश्रमविहितोधर्म्मः । ब्रह्मचर्य्यादिविहिते धर्म्मे धर्म्मो हि षड्विधः वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मोसाधारणधर्मश्चेति । तत्र वर्णधर्मो ब्राह्मणो नित्यं मद्यं वर्ज्जयेदित्यादिः । आश्रमधर्म्मोऽग्नीन्धनभैक्ष्यब्रह्मचर्य्यादिः वर्णाश्रमधर्मो ब्राह्मणस्यादि क्रमेण पालाशादिदण्डधारणादि”नैमित्तिकधर्म्मोविहिताकरणनिषिद्धसेवननिमित्तं प्रायश्चित्तम्, साधारणधर्मोऽहिंसादि मांहिंस्यात् सर्व्वाभूतानीत्याचाण्डालं साधारणधर्मः, ऋत्युक्तः इति” मिता० । अन्यत्र चान्ये आश्रमधर्माः दर्शिताः । “ब्रह्मचारिणः स्वाध्यायः, गृहस्थस्य दानं दमो यज्ञश्च, वानप्रस्थस्य तपः, भिक्षुकस्य “अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः” इत्यादिकः तथा च “यस्याश्रमं समाश्रित्य अधिकारः प्रवर्त्तते । स खल्वाश्रमधर्म्मस्तु भिक्षादण्डादिकं यथा । यतीनां तु शमोधर्मोनियमोवनवासिनाम् । दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणामिति”श्रुत्वा स्मृत्या च येये धर्मा यत्र यत्राश्रमे विहितास्तेते आश्रमधर्म्मशब्देनोच्यन्ते ते च धर्म्मास्तत्तच्छब्दे प्रपञ्चेन वक्ष्यन्ते । [वनादौ आश्रमस्थानादयोऽप्यत्र ।

**आश्रमपद** न० आश्रमस्य पदम् । मुन्यादेर्विश्रामस्थाने तपो-

**आश्रमवास** पु० आश्रमे वासः । मुन्यादीनां १तपोवनादौ वासे आश्रमवासमधिकृत्य कृतोग्रन्थः अण् । धृतराष्ट्रादीनामाश्रमवासाधिकारेण व्यासनिर्म्मिते भारतान्तर्गते २पर्व्वभेदे । “एतदाश्रमवासाख्यम्” भा०आ० १अ० ।

**आश्रमवासिक** न० आश्रमवासः प्रतिपाद्यतयास्त्यस्य ठन् । भारतान्तर्गते धृतराष्ट्रादेराश्रमवासप्रतिपादके पर्व्वभेदे ।

**आश्रमसद्** त्रि० आश्रमे सीदति सद–क्विप् । आश्रमवासिनि तपोवनवासनिरते वानप्रस्थादौ ।

**आश्रमिक** त्रि० आश्रमोऽस्त्यस्य ठन् । आश्रमयुक्ते ।

**आश्रमिन्** त्रि० आश्रमोऽस्त्यस्य इनि । आश्रमयुक्ते स्त्रियां ङीप् । “तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिम्” “बहुभिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः” मनुः ।

**आश्रय** न० आश्रीयतेऽसौ आ+श्रि–कर्म्मणि अच् । १आश्रयणीये “महीभृतामाश्रयमनागतमभ्युपैति” “द्रव्याश्रयेष्वपि गुणेषु रराज नीलः” माघः । “चित्रं यथाश्रय मृते स्थाण्वादिभ्यो विना यथाच्छाया । तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम्” सां०का० २आधारे “आसत्तिराश्रयणान्तु सामान्यज्ञानमिष्यते” “हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता “जन्यानां जनकःकालो जगतामाश्रयो मतः” भाषा० “तमाश्रयं दुष्प्रसहस्य तेजसः” रघुः ३गृहे । “मित्रमालाश्रये गच्छ” ४अवलम्बे “विनाश्रयं न तिष्ठन्ति पण्डिता वनिता लता” उद्भटः “निराश्रयं मां जगदीश ! रक्ष” पुरा० ५विषये “बभूव यत् प्रेमपरस्पराश्रयम्” रघुः अरिभिःपीड्यमानेन बलवदाश्रयणरूपे षड्गुणान्तर्गते राज्ञां ६गुणभेदे यथाश्रयः कर्त्तव्यस्तथोक्तमग्निपुराणे “बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षितः । उभयोरपि संघाते सेवेत बलवत्तरम् । यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदौ । तदोपसर्पेत्तच्छत्रुमधिकं वा स्वयं व्रजेत् । उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः । कुलोद्भवं सत्यमार्य्यमासेवेत बलोत्कटम् । तद्दर्शनोपास्तिकता नित्यं तद्भावभाविता । तत्कारितप्रश्रयिता वृत्तं संश्रयिणः स्मृतम्” । भावे अच् । ७अवलम्बने । “योऽवमन्येत ते मूले हेतुशास्त्राश्रयेण च” मनुः । ८आश्रयणे “गुणवदाश्रयलब्धगुणोदये” माघः । त्व । आश्रयत्वम् आधारत्वे न० । “आश्रयत्वविषयत्वभागिनी” सं०शा० तल् । आश्रयता । तत्रार्थे स्त्री आधारशब्दे विवृतिः ।

**आश्रयण** न० आ+श्रि–ल्युट् ।१आसेवायाम् २अवलम्बने च । कर्त्तरि ल्युट् । ३आश्रयकर्त्तरि त्रि० स्त्रियां ङीप् । “अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयणी भवामि ते” कुमा० ।

**आश्रयणीय** त्रि० आ+श्रि–कर्म्मणि अनीयर् । यस्याश्रयः क्रियते १तस्मिन् २अवलम्ब्ये च ।

**आश्रयवत्** त्रि० आश्रयोऽस्त्यस्य मतुप् मस्य वः स्त्रियांङीप् । आश्रययुक्ते सावलम्बे साधारे पदार्थे ।

**आश्रयाश** पु० आश्रयमश्नाति अश–अण् उप०स० ।

१वह्नौ तस्य आश्रयस्य काष्ठादेर्दाहकत्वात्तथात्वम्। "दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये। किं नाम खलसंसर्गः कुरुते नाश्रयाशवत्" उद्भटः २चित्रकवृक्षे ३कृत्तिकानक्षत्रे च। ४आश्रयनाशके त्रि०।

**आश्रयासिद्ध** पु० आश्रयोऽसिद्धोऽस्य। न्यायोक्ते हेत्वाभासभेदे यथा गगनपद्मं सुरभि पद्मत्वात् सरोजपद्मवदित्यादौ गगनपद्मरूपस्य हेतोराश्रयस्याप्रसिद्धत्वात् हेतोर्दुष्टत्वम्।

**आश्रयासिद्धि** स्त्री आश्रयस्य सिद्धिः असिद्धिः न्यायोक्ते हेतोर्दोषभेदे असिद्धिशब्दे ५५४पृष्ठे विवृतिः।

**आश्रयिन्** त्रि० आश्रयति आ+श्रि-इनि। आश्रयकारके आश्रिते। "मयूरपृष्ठाश्रयिणा गुहेन" रघुः "पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतम्" रत्ना०।

**आश्रव** त्रि० आशृणोति वाक्यम् आ+श्रु-अच्। वाक्यस्थिते वाचि प्रवणे वाक्यं श्रुत्वा तदर्थानुष्ठायिनि। "संगवस्तु भिषजामनाश्रवः" रघुः। भावे+अप्। २अङ्गीकारे ३क्लेशे च।

**आश्राव** त्रि० आ+श्रु-णिच्-अच्। १श्रावणे २अङ्गीकारणे च

**आश्रि** स्त्री सम्यक् अश्रिः प्रा०स०। सम्यक्कोणे शब्दच०

**आश्रित** त्रि० आ+श्रि-क्त। आश्रयप्राप्ते, शरणागते, आधेये "प्रायशः गौरवमाश्रितेषु" कुमा० "अथ द्रव्याश्रिता गुणाः"। "अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते इति" च भाषा०।

**आश्रित्य** अव्य० आ+श्रि-ल्यप्। अवलम्ब्येत्यर्थे।

**आश्रिन्** त्रि० आश्रं चक्षुर्जलमस्त्यस्य तुन्दा० इनि। चक्षुर्जलयुक्ते स्त्रियां ङीप्। [क्विप्। २अङ्गीकर्त्तरि त्रि०।

**आश्रुत्** स्त्री आ+श्रु-भावे क्विप्। १अङ्गीकारे। कर्त्तरि

**आश्रुत** त्रि० आ+श्रु-क्त। १अङ्गीकृते, २आकर्णिते च। "एवं सर्व्वत्राश्रुतेषु" कात्या० ३,२,६।

**आश्रुति** स्त्री आ+श्रु-क्तिन्। १अङ्गीकारे २श्रवणे च।

**आश्रेय** त्रि० आ+श्रि-यत्। १आश्रयणीये २अवलम्ब्ये च।

**आश्लिष्ट** त्रि० आ+श्लिष-क्त। १आलिङ्गिते २संबद्धे "शिखाभिराश्लिष्टइवाम्भसांनिधिः" "आश्लिष्टभूमिं रसितारमुच्चैः" इति च माघः।

**आश्लेष** पु० ईषदेकदेशेन श्लेषः संबन्धः आ+श्लिष-घञ्। १एकदेशसंबन्धे। "सामीप्याश्लेषविषयैर्व्याप्त्याधारश्चतुर्विधः" सुग्धबो०। २आलिङ्गने च। "आश्लेषलोलुपवधूस्तनकार्कश्यसाक्षिणीम्" माघः वेदे नि० क्वचित् लस्य रः। आश्रेषोऽप्युक्तार्थे पु० अश्लेषैव स्वार्थे अण्। अश्लेषानक्षत्रे स्त्री। "आश्लेषा नक्षत्रं सर्पा देवताः" तैत्ति०

**आश्व** न० अश्वानां समूहः अण्। १अश्वसमूहे अश्वं वहति शैषिकः अण् अश्वस्येदं वाह्यम् अञ् वा। २अश्ववाह्ये त्रि० सि०कौ०। अश्वस्य भावः कर्म्म वा प्राणभृज्जातित्वात् अञ्। ३अश्वभावे ४तत्कर्म्मणि च न०। अश्वस्येदम् अण्। ५अश्वसंबन्धिनि त्रि०। "आश्वं कफहरं मूत्रं कृमिदद्रुषु शस्यते" सुश्रुतः।

**आश्वतराश्वि** पु० अश्वतराश्वस्यापत्यम् इञ्। बुडिलमुनौ।

**आश्वत्थ** न० अश्वत्थस्य फलमण् प्लक्षा० तस्य न लुक्। १अश्वत्थफले। अश्वत्थस्येदम् अण्। २अश्वत्थसम्बन्धिनि त्रि० स्त्रियां गौ० ङीष्। आश्वत्थी शाखा समिद्वा। "सर्पिरासिच्याश्वत्थीस्तिस्रः समिधः" शत०ब्रा०। तस्मादाश्वत्थे अनुपात्ते स्याताम्" शत०ब्रा० अश्वत्थेन युक्ता अण्। अश्वत्थनक्षत्रयुक्तायां ३रात्रौ स्त्री। गहा०छ। आश्वत्थीयः आश्वत्थसम्बन्धिनि त्रि०।

**आश्वत्थिक** च० अश्वत्थशब्दे ५०७ पृष्ठे विवृत्यादि। चान्द्राश्विने मासि। [सम्बन्धिनि।

**आश्वपत** त्रि० अश्वपतेरिदम् अश्वपत्या० अण्। अश्वपति

**आश्वपस्** त्रि० आशु आप्नोति असुन् ह्रस्वः। शीघ्रप्रापरि।

**आश्वपालिक** पुंस्त्री अश्वपाल्याः अपत्यं रेवत्या० ठक्। अश्वपाल्या अपत्ये। [णिनि। अश्वपेजर्षिप्रोक्ताध्यायिषु।

**आश्वपेजिन्** त्रि० ब०व०। अश्वपेजेन प्रोक्तमधीयते शौनका०

**आश्ववाल** त्रि० अश्ववालाया ओषधेरयम् अण्। अश्ववालोषधेः संबन्धिनि। "आश्ववालः प्रस्तरः, यज्ञोह देवेभ्योऽपचक्राम सोऽश्वोभूत्वा पराङावर्त्त तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्द्धं संन्यासुस्तत एता ओषधयः समभवन् यदश्ववालाः शिरो वै यज्ञस्यातिथ्यं जघनार्द्धो वाला उभयतएवैतद्यज्ञं परिगृह्णाति यदाश्ववालः प्रस्तरोभवति" शत०ब्रा०।

**आश्वभारिक** त्रि० अश्ववाह्यं भारमश्वभूतं भारं वा हरति वहति आवहति वा वंशा० ठञ्। अश्ववाह्यस्य अश्वभूतस्य वा भारस्य १हारके २वाहके ३आवाहके च।

**आश्वमेधिक** त्रि० अश्वमेधाय हितं ठञ्। अश्वमेधसाधने द्रव्यादौ अश्वमेधद्रव्याणि च अश्वमेधशब्दे ५११ पृष्ठे उक्तानि अश्वमेधमधिकृत्य कृतः ग्रन्थः ठञ्। शतपथब्राह्मणान्तर्गते १२ प्रपाठके पञ्चाध्यायीरूपे ग्रन्थभेदे तत्र पञ्चस्वध्यायेषु अश्वमेधस्योत्पत्तिः फलञ्च। तस्य धर्मविधयः आध्वर्य्यवौद्गात्रब्रह्मत्वयाजमानविषयाः तत्र प्रथमाध्यायत्रयेण मन्त्रव्याख्यानेन सह विशेषधर्मा

अनुक्रान्ताः । शेषाध्यायद्वयेन च तएव धर्म्मान्तरसहिता अनुक्रान्ता इति भेदः । अश्वमेधमधिकृत्य कृतोग्रन्थः ठञ् । युधिष्ठिराश्वमेधाधिकारेण व्यासकृते भारतान्तर्गते १पर्व्वभेदे न० । “इत्याश्वमेधिकं पर्व्व प्रोक्तमेतन्महाद्भुतम्” भा०आ० प० १ अ० । अश्वमेधः प्रतिपाद्यतयाऽस्त्यस्य ठन् । अश्वमेधिकमप्यत्र न० । “ततोऽश्वमेधिकं नाम पर्व्व प्रोक्तं चतुर्द्दशम्” भा०आ०प०१अ० ।

**आश्वयुज** पु० आश्वयुजी अश्विनीनक्षत्रयुक्ता पौर्णमासी यस्मिन् मासेऽण् । शुक्लप्रतिपदादिके दर्शान्ते चान्द्रे आश्विने मासे । “त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्व्वसञ्चितम्” मनुः “भाद्रपदाश्वयुजौ वर्षा” “शाकमाश्वयुजे मासि प्रायशोवर्षति” इति च सुश्रु० ।

**आश्वयुजक** त्रि० आश्वयुज्यामुप्तो माषः वुञ् । चान्द्राश्विनपौर्णमास्यामुप्ते माषे स हि तस्यामेव तिथौ उप्तः सन् प्ररोहति वर्द्धते च इति लोकप्रसिद्धिः ।

**आश्वयुजी** स्त्री अश्वयुजा अश्विनीनक्षत्रेण युक्ता पौर्णमासी “नक्षत्रेण युक्तः कालः” पा० अण् । आश्विनमासीयपौर्णमास्याम् “आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुकार्णवात्” वृ०पु० । “तेन यक्ष्यमाणः पञ्चवर्षाण्याश्वयुजीशुक्लेषु चतुस्त्रिंशतं पन्थुनालभते मारुतान्” कात्या० २३,२,४ । “आश्वयुज्या वुञ्” पा० ।

**आश्वरथ** त्रि० अश्वयुक्तो रथः अश्वरथस्तस्येदम् पत्रपूर्व्वकत्वात् अञ् । अश्ववाह्यरथसम्बन्धिनि ।

**आश्वलक्षणिक** त्रि० अश्वलक्षणं वेत्ति तज्ज्ञापकशास्त्रमधीते वा ठक् । १अश्वलक्षणाभिज्ञे २तद्बोधकशास्त्राध्येतरि च

**आश्वलायन** पु० अश्वल+अश्वपादकः मुनिभेदस्तस्यापत्यं नडा० फक् । ऋग्वेदीयश्रौतगृह्यसूत्रकारके ऋषिभेदे “सहस्रकाण्डं स्वकृतं सूत्रं बृाह्मणसङ्ग्रहम् शिष्याश्वलायन प्रोक्तं शौनकेन विपाटितम्” इत्युक्तेः शौनकोपदिष्टेन तेन च “अथैतस्य समाम्नायस्य विताने योगापत्तिं व्याख्यास्यामः” इत्युपक्रम्य“नमः शौनकाय” इत्यन्तम् अध्यायचतुष्टयात्मकं वैतानिककर्मोपयोगि श्रौतसूत्रम् “उक्तानि वैतानिकानि गृह्याणि वक्ष्यामः” इत्युपक्रम्य “नमः शौनकाय” इत्यन्तम् अध्यायचतुष्टयात्मकं गृह्यकर्मोपयोगि गृह्यसूत्रं, तत् परिशिष्टाध्यायचतुष्टयात्मकं सूत्रं शौनकाचार्य्यप्रसादात् रचितम् । तदीयसूत्रोपरि देवस्वामिना भाष्यं कृतं तन्मूलकतया गार्ग्यगोत्रेण नरसिंहपुत्रेण नारायणोपाध्यायेन वृत्तिः रचिता तत्र श्रौतसूत्रे प्रतिपाद्यविषयास्तावदभिधीयन्ते ।

तत्र प्रथमाध्याये प्रधानस्याङ्गसंहतिज्ञानाय सर्वादौ दर्शपूर्णमासयोर्व्याख्यानम् । १अग्निहोत्रादिषु ऋक्समाम्नायस्य प्रयोगस्वरूपकथनप्रतिज्ञा । २ऋक्समाम्नातकर्मसु आहिताग्नेरधिकारकथनम् । ३अङ्गस्वरूपविध्यन्तरज्ञानायादौ दर्शपूर्णमासयोर्व्याख्यान प्रतिज्ञा । ४दर्शपूर्णमासयोर्व्याख्यारम्भः । ५अनोषधिहविष्करूपेऽप्रणीते कर्मणि अपरेणाग्निप्रपदनम् । ६ अपटरूपचात्वालवत्सु पशुसोमादिषु अपरेण चात्वालप्रपदनम् । ७ चात्वालरूपस्याध्वनो वैदिकी तीर्थसंज्ञा । ८ होतुः प्राङ्मुखत्वस्य मनोवाक्कायचक्षुरादीनाञ्च चेष्टाया नित्यता । इति परिभाषा संग्रहः । ९ उरूपस्वीकरणरूपाया अङ्गुधारणाया नित्यत्वम् । १० यज्ञोपवीतग्रहणनियमस्यान्तर्विहारे शौचनियमस्य च नित्यत्वम् । ११ विहारे कर्म कुर्वतस्तत्पृष्ठतः करणनिषेधः । १२ एकाङ्गोल्लेखे दक्षिणप्रतीतिः । १३ सर्व्वदक्षिणातुल्लेखेऽपि दक्षिणप्रतीतिः । १४ कर्त्तृरहिते क्रियाविधौ होतर्य्येव कर्त्तृज्ञानम् । १५ दानविधौ यजमाने कर्त्तृज्ञानम् । १६ जुहोति जपतीति प्रायश्चित्ते ब्रह्मणि कर्त्तृज्ञानम् । १७ ऋचो मूलग्रहणे कृत्स्नग्रहणम् । १८ सूक्तादौ गायत्र्यादिभागरूपे पादे हीने तृचमात्रे सूक्तज्ञानम् । १९ सूक्तादावसूक्तादौ चाधिकपादग्रहणे तृचज्ञानम् । २० अस्मिन् शास्त्रे जपादीनामुपांशुप्रयोक्तव्यत्वम् । २१ मन्त्राणां कर्मकरणानाञ्चोपांशुत्वकथनम् । २२ सामान्यविशेषयोर्विशेषविधेर्बलीयस्त्वम् । २३-२४ होतुरवस्थानकथनम् । २५ कर्त्तुरासनकथनम् । २६ वचनादतिरिक्तस्य कर्त्तव्यत्वम् । २७ सामिधेन्यर्थं प्रेषितस्य होतुर्जपविधानम् । २७सूत्राणि प्रथम कण्डिकायाम् । १सामिधेन्यर्थजपः । २तज्जपानन्तरं सामिधेनीनाम् ऋचामनुवचनम् । ३ हिङ्कारपूर्वकप्रणवान्तव्याहृतित्रयजपविधानम् । ४सजपहिङ्कारस्याभिहिङ्कारसंज्ञाकथनम् । ५ कौत्समते निरोङ्कारव्याहृतित्रयजपानन्तरहिङ्करणदर्शनम् । ६कौत्समते सामिधेन्यर्थोक्तजपस्याकरणम् । ७ऋचामेव सामिधेनीत्वप्रदर्शनम् । ८सामीधेनीनाम् ऋचामैकश्रुत्येन सान्तत्येन चानुवचनम् । ९ऐकश्रुत्यलक्षणम् १०सन्ततलक्षणम् ११सन्ततस्यावसानत्वकथनम् । १२पूर्वोक्तासाविभ्रंशे उत्तरोक्तासारम्भः । १३प्रणवेनावसानकथनम् । १४ विहिते एवावसाने प्रणवस्य चतुर्मात्रत्वेनोच्चारणम् । १५ प्रणवान्तमकारस्य वर्णान्तरापत्तिकथनप्रतिज्ञा । १६ प्रणवान्तमकारेण स्वधात् परस्य यस्य कस्यचित् स्पर्शवर्णस्य तद्वर्गी-

थान्तत्वापादनम्। १७ प्रणवान्तमकारेण यवत्वान्त्यस्य परान्तस्थानामनुनासिकत्वापादनम्। १८ रेफोष्मसु परेषु प्रणवान्तमकारस्यानुस्वारत्वापत्तिः। १९ प्रथमोत्तमे ऋचौ त्रिरभ्यस्य तयोरनुवचनम्। २० अध्वर्योर्ऋचोर्वचनावसानेऽध्वर्युचतुष्कालिकयोर्द्वयोर्ऋचोर्वचनम्। २१ उत्तमायामृचि आदौ द्वे पश्चात् अध्वर्युः। २२ एकादशानामृचां द्वयोस्त्रिरभ्यासयोगेन पञ्चदशसंख्यापूरणनिदर्शनम्। २३ यजत्याद्यादिषु सामिधेनीनां कतिपयधर्मातिदेशः। २४ सामिधेनीभ्योऽन्यत्राध्वर्युकरणप्रतिषेधादयः २५ विहितेऽवसानेऽभिहिङ्काराभ्यासनिषेधः। २६ अस्येव होतृकाणामभिहिङ्कारविधानात् प्रावस्तुतस्वधिषेधसाधनम्। २७ प्रणवेन निगदसन्धानानन्तरं तेनैव तदवसानविधानम्। २७ख० १अ० २क०। १ यजमानस्यार्षेयप्रवरणम्। २ अन्यक्षेत्रजातद्व्यामुष्यायणार्षमार्षेयप्रवरणप्रकारः। ३ राजन्यविशां स्वेष्विकानुलोमस्त्रीजातानाञ्च पुरोहितार्षेयभागित्वम्। ४ राज्ञां राजर्षिप्रवरणं पौरोहित्यप्रवरणं वा ५ प्रवराज्ञाने तत्संशये च वर्णत्रयस्य मानवप्रवरः। ६ चतुर्दशनिवित्पदकथनम्, आवाहननिगदकथनं, सामिधेन्यादीनां चावाहनीयाभिधायित्वम्। ७ अग्निरूपप्रथमदेवतावाहनम्। ८ अग्नीषोमदैवताज्यभागयागयोराख्या। ९ अग्नेरग्नीषोमयोश्च पौर्णमास्यां प्रधानदेवतात्वम्। १० अमावास्यायां दधिपयोभ्यां यागमकुर्वतोऽग्नीषोमयोः स्थाने इन्द्राग्न्योः प्रधानदेवतात्वम्। ११ तद्दिने उक्तयागरूपसन्नयनकारिणोऽग्नीषोमस्थाने इन्द्रमहेन्द्रयोरन्यतरावाहनम्। १२ उभयोरपि पर्वणोरैतरेयिणाम् विष्णुदेवताकोपांशुयागकरणम्। १३ शाखान्तरीयाणाम् उभयोरपि पक्षयोरुपांशुयागभिन्नयागाभावः। १४ पित्राद्यग्नोपांशुयागानाम् आवाहनादिनिगदचतुष्टये आवाहनादीनां पञ्चानां पदानाम् उच्चैरितिसंज्ञाविधानम्। १५ उपांशुयाजवचनानामन्येषाम् परोक्षाणाम् उपांशुत्वानुवादः, विकल्पेनोच्चैः संज्ञाविधानं च। १६ विहितदेवतानामरूपस्य प्रत्यक्षोपांशुत्वम्। १७ प्रतिनोदितदेवतमावाहनभेदः। १८ एकप्रदानानां सर्वासां देवतानामावाहने सकृद्देवादिशब्दप्रयोगः। १९ उत्तरनिगमेषु एकदेवतात्वेन संस्तवः। २० एकप्रयोजनार्थाया देवतायाः कारणवशात् एकवचनेनैव समानता। २१ अपराव्यवहिताया देवताया निगमेषु सकृदेकवचनभाक्त्वम्। २२ आवापोद्धारयोर्व्यासु प्रधानदेवतासु कृतावाहनासु देवाज्यपाग्निस्विष्टकृतामावाहनप्रक्रिया।

२३ आश्रावयिष्यतेऽध्वर्यवेऽनुमन्त्रणं तदनन्तरकरणीयञ्च। २४ उत्थानपूर्वकं यदिचेतिमन्त्रपाठः। २५ अंसे पार्श्वस्थेन पाणिनाध्वर्य्वन्वारम्भणम्। २६ सव्येन पाणिनाङ्गेनोरसा वाऽऽग्नीध्रकर्तृकमन्वारम्भणम्। २७ उक्तोभयान्वारम्भणे साधारणमन्त्रः। २८ इध्मसन्नहनरूपैस्तृणैरासनस्थसंमार्जनम्। २९ संस्कारकर्मावृत्तिमात्रे सकृन्मन्त्रेण द्विस्तूष्णीं संस्करणम्। ३० उदकस्पर्शानन्तरं होतृषदनाभिमन्त्रणम्। ३१ दक्षिणोत्तरिणोपस्थेनोपवेशनं होतृषदनात् तृणनिरसनञ्च। ३२ उक्तयोरेतयोर्निरसनोपवेशनयोः सर्वासनेषु प्रथमप्रयोग एव समानत्वम्। ३३ गौतमाचार्य्यमते द्वितीयेऽपि प्रयोगे तादृशनिरसनोपवेशनयोः सद्भावः। ३३ख० १अ० ३क०। १ अग्न्याधेये ब्रह्मौदनप्राशनकाले ब्रह्मणो द्विर्निरसनोपवेशनकरणम्। २ सर्वेषु सोमेषु वहिष्पवमानात् प्रत्येत्य ब्रह्मणः पूर्व्वासने पुनः करणम्। ३ आसने पश्चार्धउपविष्टस्य होतुः सदःप्रसर्पणानन्तरं तत्रैव पुनः करणम्। ४ पश्वौ स्वाहाकृत्यर्थयोः स्रुगवदापनयोः पुनः करणम्। ५ पत्नीसंयाजार्थोपवेशनाकरणम्। ६ कौत्समते होतृभिन्नानामेतयोर्निरशनोपवेशनयोरकरणम्। ७ उपविष्टानन्तरं देवेत्यादिमन्त्रपाठः। ८ जान्वभ्येत्य बर्हिरुपस्पृश्य अभिहिपेत्यादिमन्त्रजपः। ९ इध्मप्रदीप्ते उक्तजपानन्तरं भूपतये नम इति निगदेनाध्वर्यवे स्रुगावदापनम्। १० अग्निर्होतेति निगदमवसाय होतारमहवा इति मन्त्रजपः ११ अग्निर्होतेत्यादिना सह एतवतीत्यादिकमेकनिगदं विधाय तत्समापनम्। १२ उक्तनिगदे समाप्तेऽध्वर्युकर्तृकमाश्रावणम्। १३ उत्करदेशे तिष्ठत आग्नीध्रं प्रत्याश्रावणप्रकारः। १३ख० १अ० ४क०। १ याज्यलक्षणप्रयाजैर्यजनम्। २ तनूनपान्नराशंसयोरन्यतरेण प्रयाजानां पञ्चसङ्ख्याकत्वम्। ३ सकृत्प्रेषितस्य न सर्वयजनम्। ४ अननुयाजानां सर्वासां याज्यानामादिरागूर्भवतीति। ५ ये यजामहे इति आगूः स्वरूपं, वषट्कारस्वरूपञ्च। ६ याज्याया एव उच्चैस्तरत्वबलीयस्त्वोभयधर्मवत्त्वम्। ७ आगूर्वषट्कारयोराद्योः प्लुतिकरणम्। ८ याज्यान्तस्य प्लावनम्। ९ विविक्तयोः सन्धिजातयोरैकारैकारयोरौकारौकारयो आ इ, इति आउ इत्येवं, व्यञ्जनान्तानां सन्ध्यक्षराणां सर्वदा स्वरूपेणैव च प्लावनम्। १० अनवर्णोपधस्य विसर्जनीयस्य रेफिभावः। ११ रेफिसंज्ञिनोऽवर्णोपधस्य विसर्जनीयस्य रेफिभावः। १२ वषट्-

कारसन्धौ अरेफसंज्ञस्यावर्णोपधस्य विसर्जनीयस्य लोपः। १३ वर्गाणां प्रथमस्य स्ववर्गीयतृतीयवर्णापादनम्। १४मकारे सानुनासिकभावस्य नित्यत्वम्। १५ वौषट्शब्दस्य वषट्कारस्वरूपत्वम्। १६इत्येवंरूपः प्रथमप्रयाजः। १७ वषट्कारोच्चारणपूर्व्वकोऽनुमन्त्रणप्रकारः। १८वषट्कारस्य द्विराकीर्त्तनीयत्वम्। १९ अनुमन्त्रणस्यापि द्विराकीर्त्तनीयत्वम्। २० इत्येवं याज्यास्वरूपम्। २१वसिष्ठादिभिन्नानां तनूनपादित्यादिः द्वितीयप्रयाजः। २२वसिष्ठादीनां नराशंस इत्यादिः द्वितीयप्रयाजः। २३इडो अग्न इत्यादिः सर्वेषां तृतीयप्रयाजः। २४बर्हिरग्न इत्यादिः चतुर्थः स्वाहाग्निमित्यादि पञ्चमप्रयाजः। २५अग्निमन्थनादौ मन्द्रस्वरप्रयोगः। २६शंयुवाकादूर्ध्वं मन्द्रस्वरेण प्रयोगः। २७प्रयाजेभ्य ऊर्द्ध्वमास्विष्टकृतो मध्यमेन प्रयोगः। २८ इडादिशंयुवाकान्तरूपस्य शेषस्योत्तमेन प्रयोगः। २९ पूर्व्वोत्तरयोराज्यभागनामकयागयोरागोरणदेवतादेशयाज्यास्थानपूर्वको यागः। ३० अनुवाक्यावतीनामप्रैषाणां चान्यायाज्याभ्योऽन्यासां देवतानाम् आदेशपूर्व्वकयागः। ३१ अङ्गप्रधानरूपे सोमकर्म्मण्यपि वैश्वानरीयपत्नीसंयाजशब्दबोधितयोः पदार्थयोर्मध्ये तत्नोत्पन्नाभ्यो देवताभ्योऽन्यासाम् आदेशपूर्व्वको यागः। ३२ पौर्णमास्याप्याज्यभागयोः सनिमित्ता वार्त्रघ्नसंज्ञा। ३३ अनुवाक्यातएवविचारावगमादि। ३४याज्यायोरनुवाक्यादेवतानन्यत्वम्। ३५ आदित आरभ्याज्यभागपर्य्यन्तं वाग्यमनम्। ३६याज्यादिभ्योऽन्यदधारभ्यासमाप्तेर्वाग्यमनम्। ३७ यज्ञसाधनवचसोऽन्यत्र वाग्यमननियमः। ३८ वाग्यमननियमातिक्रमे अतो देवा अवन्तु न इति वैष्णव्या ऋचो जपः। ३९उक्तातिक्रमेऽन्यस्या अपि वैष्णव्या ऋचो जपविधानम्। ३९सू०१अ०५क०। १विधिक्रमप्राप्तानां देवतानां वक्ष्यमाणलिङ्गक्रमाभ्यां याज्यानुवाक्यायोजना। २प्रधानानन्तरं स्विष्टकृतो यागः सर्व्वत्र च पूर्व्वमनुवाक्यायाः पश्चाद्याज्याया प्रयोगः। ३ ये यजामहे इत्युक्त्वा षष्ठ्या विभक्त्या देवतामादिश्य प्रिया धामान्ययाडिति मन्त्रपाठः। ४प्रथमदेवतायाः पुरस्तादयाडग्निशब्दस्यक्त्वा उत्तरासामयाट्शब्दस्यैव सर्व्वासामुपरिष्टात् प्रिया धामानिशब्दस्य च सन्ततप्रयोगः। ५ याज्याविशेषेऽनुच्छ्वासस्य कर्त्तव्यत्वम्। ६याज्यापाठे अर्धर्चे वोच्छ्वासकर्त्तव्यता। ६सू०१अ०६क०। १ अध्वर्युणा प्रदेशिनीपर्वाङ्कनपूर्व्वकौष्ठाधरसंशोधने। २ ओष्ठाधरशोधनस्य मन्त्रविशेषः। ३ अध्वर्युणा इडापहरणपूर्व्वकावान्तरेडावदापनप्रकारः। ४ स्वयं यजमानेन इडाया अवान्तरेडापहरणप्रकारः। ५ अध्वर्युकर्त्तृकं वा तद्ग्रहणम्। ६ इडोपह्वानप्रकारः। ७ सह दिवेत्यादिना वर्षिष्ठ उपहूत इत्यन्तेन मन्त्रेण इडोपह्वानम्। ८होतृयजमानपञ्चमानां वा सर्व्वेषामवान्तरेडाभक्षणपूर्व्वकेडाभक्षणम्। ८सू०अ०७क०। १इडाभोक्तृमार्जनपूर्व्वकमनुयाजचरणम्। २मार्जनप्रकारः। ३अनुयाजलक्षणम्। ४ प्रयाजानुयाजयोर्गुणकथनम्। ५अनुयाजानां त्रित्वव्यवस्थापनम्। ६ एकैकं प्रैषितस्य यजनविधानम्। ७ अनुयाजमन्त्राणां स्थलविशेषे क्वचिदवसानपूर्व्वकं क्वचिच्चानवसानपूर्व्वकं यजनविधानम्। ७सू०अ०८क०। १सूक्तवाकाय सम्प्रेषितस्य देवतादेशानन्तरम् इदं हविरित्युपसन्ननम्। २उत्तरा अपि देवता आदिश्येदं हविरित्येवमुपसन्ननम्। ३ द्विदैवतबहुदैवतयोरर्थवशेनाजुषतेत्यस्य स्थाने अजुषेतामजुषन्तेत्यूहस्य कर्त्तव्यता। ४आवह स्वाहेतिनिगदस्य पशुयागेऽपि प्रयोगः। ५आवापिकदेवताक्रमप्राप्त्यर्थम् आवापिकान्तमित्येतदादिकथनम्। ५सू०१अ०९क०। १शंयुवाकाय प्रैषितस्य तच्छंयोरिति मन्त्रपाठे प्रणवनिषेधः। २ तादृशप्रैषितयाध्वर्युणा वेददानम्। ३ वेदग्रहणे वेदोऽसीति मन्त्रपाठः। ४प्रकृतिविकारभावेऽपि तत्तन्मन्त्रप्राप्तिः, आज्येन सोमयाग एव याज्यानुवाक्याव्यवस्थापनं यागएव केवलं देवताविशेषाणामनुवृत्तिकथनं च। ५मन्त्रभेदानां पत्नीसंयाजसंज्ञाविधानम्। ६ प्रजाकामस्य यजमानस्य यागभेदः। ७यजमाने सन्निहितेऽपि होतुरेव कर्तृत्वं याज्यानुवाक्ययोर्होतृकर्तृत्वस्यान्ततः प्रसिद्धिः, कुरुमरुमिति मन्त्रपाठे यजमानस्य स्वयंकर्तृत्वं च। ८पाणितलस्थाज्यरूपेडोपह्वानानन्तरं तद्भक्षणविधिः। ९ आज्येडाया ऊर्द्ध्वं शंयुवाको भवति न वेति संशये इतिकर्त्तव्यताविधानम्। ९सू०१अ०१०क०। १होत्राऽध्वर्युणा वा पत्न्यै वेदं प्रदाय वेदोऽसीत्यादि-कामावेत्येवमन्तमन्त्रवाचनम्। २प्रजाकामायाः पत्न्या वेदशिरसा स्तनाभ्यालम्भनम्। ३कामनाभावे वाचनानन्तरं योक्त्रविमोकः। ४ द्विगुणितं योक्त्रं निधाय तस्योपरिष्टात् वेदतृणानां निधानम्। ५तृणेभ्यः पुरस्तात् वेदतृणसंश्लिष्टस्य पूर्णपात्रस्य निधानम्। ६आत्मानमभिमृशन्तीं पत्नीमभिमृशतः पूर्णमसीति मन्त्रवाचनम्। ७पूर्णपात्रादुदकं गृहीत्वा तदुद्धन् तां चैवं कुर्वतीं वाचयतीत्युक्तिः। ८योक्त्रस्याधस्तात् पत्न्यञ्जलिस्थानमानय सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयन् माहं प्रजा-

मिति तां वाचयतीत्युक्तिः ।९ वेदत्रयाणि स्तुत्वा गार्हपत्या-दारभ्य तत्तु तत्त्वमित्यादिना सन्ततं स्तुवन् आहवनीयं गच्छतीत्युक्तिः । १० सर्व्वाणि वेदत्रयाणि न स्तरितव्यानि नियमेन शेषितव्यान्युत्तरक्रियार्थमित्युक्तिः । ११ श्रौता-तिरिक्तेषु गार्ह्येष्वपि मन्त्रसाध्येषु कर्मसु स्वाहाकारस्यैव कर्त्तव्यत्वं न वषट्कारस्येत्युक्तिः । १२ अविहितविशेषाणां होमाभ्याधानोपस्थानानां, तत्तद्दितिकर्त्तव्यताप्रकारस्य च विधानम् । १३ एकमन्त्राणि कर्म्माणीति न्यायेन व्याहृतिभिरिति बहुवचननिर्देशात् चतुर्णां कर्म्मणां क्रमेणैव करणम् । १४ प्रयोगमध्ये मार्गान्तरेण निष्क्रान्तस्यापि नियमा भवन्त्येवेत्यस्य व्यतिरेकमुखेण व्यवस्थापनम् । १५ संस्थाजपः तस्य च सोमेष्टिपु निषेधः ।१६ होतुरेव केवल-मेतावत्त्वम् आग्नीध्रस्यान्यदपीत्युक्तिः ।१६ सू० १ अ० १ क०। १ ब्रह्माधिकारे विषयः । २ व्याख्यातानां होत्राचमन-यज्ञोपवीतशौचानां ब्रह्माधिकारेऽतिदेशनम् ।३ तत्र कर्म्मसु कश्चिद्गच्छति कश्चित्तिष्ठति तत्र भूयसामेव धर्म्मः स्यादयं ब्रह्मणः इति व्यवस्थापनम् ।४ बहिर्वेदि कत्विजामभिमुखा-यादिशः प्राचीत्युक्तिः । ५ एकस्मिन्नपि प्रयोगे कचिदासनस्य कचित् स्थानस्य च लाभोक्तिः । ६ तिष्ठतां होमेषु अव-षट्कारेषु च स्थानासनयोर्विकल्पः ।७ अनन्तरसूत्रद्वयविष-याद्न्यत्रासनकथनम् । ८ समस्तपाणत्कुशस्याग्रे आहवनीयं परीत्य तस्य दक्षिणतः कुशेषूपवेशनम् । ९ उक्तोपवेशना-नन्तरं मन्त्रभेदजपः । उक्तजपस्य ब्रह्मजपत्वम् । ११ अध्व-र्य्युकर्त्तृकम् उपविष्टातिसर्जनम् । १२ ओं प्रणयेत्येता-दृशातिसर्जनरूपानुज्ञाप्रकारः । १३ कर्म्मानुरूपाणाम् आदेशानां कर्त्तव्यतोक्तिः । १४ उत्तरविवक्षायाम् उच्चैः प्रणवादिकथनम् । १५ प्रणवादूर्द्ध्वं वा उच्चैर्भावोक्तिः । १६ प्रणीताप्रणयनकालादूर्द्ध्वं हविष्कृदाह्वानोच्चारणपर्य्यन्तं वाग्यमनपूर्व्वकमासनम् । १७ पशुयागे चात्वालमार्जन-पर्य्यन्तं वाक्संयमः । १८ सर्व्वसोमेषु धर्म्माभिमर्षा-रम्भपूर्व्वकं सुब्रह्मण्यापर्य्यन्तं वाङ्नियमः । १९ प्रात-रनुवाककालात् परम् अन्तर्यामग्रहयागपर्य्यन्तं वाग्य-मनोक्तिः । २० सवनत्रयेऽपि पुरोडाशप्रचारादि, तदिडा-पर्य्यन्तं वाग्यमनोक्तिश्च । २१ स्तोत्रादौ स्तुध्वमित्यादि-शस्त्रयाज्यावषट्कारपर्य्यन्तं वाग्यमनोक्तिः । २२ पव-मानस्तोत्रेषु उपाकरणादि समाप्तिपर्य्यन्तं वाग्यमनोक्तिः २३ सर्व्वत्र मन्त्रवति कर्म्मणि वाग्यमनोक्तिः । २४ उक्तादन्यत्रापि विषये होतृवद्वाग्यमनभावः । २५ वाग्यमनभ्रेषे प्रायश्चित्तविधानम् । २६ अग्नीषो-मीयप्रणयनावधिवाग्यमनम् । २७ दक्षिणतो व्रजत एवायुःशिवान इति सूक्तजपः । २८ गमनापरिसमाप्तावपि उपवेशनादिकरणं, ब्रह्मजपविधानञ्च । २९ सोमयागे अग्निप्रणयनान्ते ब्रह्मजपनिषेधः । ३० विसृष्टवाक्यस्यापि वशमनस्योक्तिः । ३१ विपर्य्यासान्तरितयोः प्रायश्चित्त-विशेषोक्तिः । ३२ वेदभेदेन श्रेषेऽग्निभेदे प्रायश्चित्तभेदः । ३३ सर्व्वेभ्यो वेदेभ्यो युगपद्भ्रेषापाते समस्ताभि-र्व्याहृतिभिरेकाहुतिरूपप्रायश्चित्तम् । ३४ स्रुगादापनात् प्रागङ्गारस्य बहिःपरिधि पाते कर्म्मभेदः । ३५ तत्र दिग्भेदेन निर्गतो होमभेदः कर्म्मणि स्वाहाकारान्तत्व-भावः । ३६ अध्वर्य्युमहरणोक्तिः ३७ । सहस्रशृङ्ग इत्यादिना सकृदाङ्गारहोमोक्तिः । ३७ सू० १ अ० १२ क० । १ प्राशित्रहरणनिधानपूर्व्वकं तत्प्राशनम् । २ इडाभक्षणमार्जनपूर्व्वकं चतुर्धाकरणे कृते प्राशित्र-हरणे ब्रह्मण आनीतब्रह्मभागस्य निधानम् । ३ प्राशित्र-हरणदेशस्य पश्चात् कुशेषु यजमानभागनिधानम् । ४ प्रजापतेरित्यादि मन्त्रेणान्वाहार्य्यावेक्षणम् । ५ अन्वे-नाङ्गेनान्वाहार्य्यब्राह्मणविधानं ब्रह्मभागे शिष्टभागविधा-नञ्च । ६ प्रस्थास्याम इति अध्वर्य्युमन्त्रपाठानन्तरं प्रति-ष्ठेत्येवानुज्ञोक्तिः । ७ समिदनुज्ञानं, जयन्तीभवतः सर्व्वप्रायश्चित्तहोमः, आग्नीध्रस्य ब्रह्मान्वारम्भणं च । ८ इतरेषां होत्रारम्भणविधिः । ९ उक्तयोरेतयोर्होम एव कार्य्यं अन्वारम्भस्य परस्परभावः । १० सर्व्वेषां होम-कर्त्तृणामन्वारम्भकर्त्तृणां च संस्थाजपेन उपासनविधा-नम् । १० सू० १ अध्याये १३ क० ।

१ पौर्णमासीनेष्टिपशुसोमानामुपदिष्टत्वम् । २ उप-दिष्टैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्यां वा यागस्य कर्त्तव्यत्वोक्तिः । ३ क्षत्रियवैश्ययोः पर्व्वणोरेवाग्नि-होत्रहोमकर्त्तव्यताविधानम् । ४ राजन्यवैश्ययोः पर्व्वेतरेषु कालेषु तपस्विब्राह्मणायौदनदानम् । ५ कृत-सत्यस्वभावस्य सोमयाजिनश्च क्षत्रियस्य वैश्यस्य वा सदा होमविधानं न केवलं पर्व्वणोरित्युक्तिः । ६ बहूनां समानानां पश्वादिविधाने सति क्रमेण सम्बन्धोक्तिः । ७ एकस्या एकस्या देवताया द्वे द्वे ऋचौ याज्यानु-वाक्ये । ८ देवताविशेषस्य तल्लिङ्गयाज्यानुवाक्यानादेशे नित्ययोस्तयोर्न्य होतव्यत्वोक्तिः । ९ कर्म्मानुष्ठानभूता-नामग्न्याधेयप्रभृतीनां मध्ये गार्हपत्याद्यग्न्युत्पत्त्यर्थमङ्गार-

निधानरूपाग्न्याधानम् । १० कृत्तिकादीनां सप्तानां नक्षत्राणामन्यतमेऽग्न्याधानविधानम् । ११ उक्तानां सप्तानां कस्मिंश्चित् नक्षत्रे पर्वणि वाऽग्न्याधानस्य कर्त्तव्यत्वम् । १२ वसन्ते ब्राह्मणपुरुषकाधानविधिः । १३ ग्रीष्मे क्षत्रियपुरुषकं वर्षासु वैश्यपुरुषकं शरदि उपक्रुष्टपुरुषकं चेति आधानत्रयविधानम् । १४ आपदि आधानपक्षे कालनियमाभावः । १५ कृतसोमयागसङ्कल्पस्य आधानमिच्छत आधानकालानपेक्षणम् । १६ आधानार्थमध्वर्युयजमानयोः शमीगर्भादश्वत्थादरण्याहरणविधिः । १७ अग्न्याधेयस्य पूर्णाहुत्यन्तस्य कर्त्तव्यत्वम् । १८ इष्टीनामग्निसाधनत्वोक्तिः । १९ प्रथमायामिष्टौ केवलाग्निपवमानाग्निनामके द्वे देवते । २० पवमानपुरुषकस्य द्वितीयस्याग्नेर्याज्यानुवाक्योक्तिः । २१ स्विष्टकृत्स्वग्निन्योर्याज्यानुवाक्ययोर्ऋचोः संयाज्यात्वसंज्ञा । २२ सर्वत्र देवतागमे प्राकृतीनां सर्वासां देवतानामुद्धारोक्तिः । २३ आज्यभागौ स्विष्टकृतं चान्तरा यष्टव्यानां देवतानामुद्धर्त्तव्यत्वं विकृतौ पुनर्विहितानां तद्धर्मिकत्वञ्चेति । २४ देवताभ्योऽन्यत्रापि अतिदिष्टस्य विधेरेककार्य्यत्वोक्तिः । २५ द्वितीयायामिष्टौ पावकाग्निशुच्यग्निनामिके द्वे देवते । २६ साक्षान्निर्वादेर्ऋग्द्वयस्य संयाज्यात्वकथनं, तृतीयायामिष्टौ अधिकसामिधेनीद्वयोक्तिः । २७ अग्नीषोमाविन्द्राग्नी विष्णुरित्यस्य वैकल्पिकत्वम् । २८ अदितिनामिका इष्टिः । २९ अदितीष्टेर्याज्योक्तिः । ३० प्रेद्धो अग्न इमो अग्न इत्यनयोः संयाज्यात्वोक्तिः विराजौ धाय्ये इत्युक्तिश्च । ३१ आद्योत्तमे इष्टी । ३२आद्या वा इष्टिः। ३३ आद्यायां धाय्याविराजौ । ३४ वैराजतन्त्राया इष्टेर्ज्ञापनम् । ३५ आधानेनेष्टिभिश्च सिद्धा अग्नयो द्वादशाहोरात्रं सर्वे स्वरूपेणैव धार्यन्ते इत्येतदजस्रधारणोक्तिः । ३६ गतश्रियामग्नयो यावज्जीवमजस्रा भवन्ति न द्वादशाहमेवेत्युक्तिः । ३६ख०२अ०१क० । १गार्हपत्यात् ज्वलदाहवनीयोद्धरणम् ।२देवं त्वेति मन्त्रेणाग्निहोत्रार्थमुद्धरणम् ।३आहवनीयं प्रति मन्त्रपूर्वकाग्निप्रणयनमन्त्रः। ४आहवनीयायतनेऽग्निनिधानमन्त्रः।५सायं प्रातरुषःकालेषु निधानात्मकमर्मकरणम् । ६रात्रीं यदेन इति मन्त्रेणाग्निप्रणयनम् । ७ आहिताग्नेर्व्रतचारित्वोक्तिः । ८ अनुदितहोमिन आोदयाद्व्रतचारित्वोक्तिः । ९ अस्तमनसमये होमविधानम् । १० आचमनस्य नित्यत्वम् ।

११ अग्निपर्य्युक्षणमन्त्रोदकादानविधिः पर्य्युक्षणे अग्नीनामुत्पत्तिक्रमस्य होमक्रमस्य वा विधानम् । १२ दक्षिणाग्निगार्हपत्याहवनीयपर्य्युक्षणे क्रमोक्तिः ।१४गार्हपत्यादविच्छिन्नोदकधाराहरणम् ।१५अधिश्रयणार्थं गार्हपत्यात् कतिपयाङ्गारपृथक्करणविधिः।१६होमसाधनभूताग्निहोत्राधिश्रयणम् ।१७अधिश्रयणे मन्त्रविकल्पः ।१८दध्यधिश्रयणानधिश्रयणविकल्पः १८ख०२अ०२क० । १ अकामकर्त्तकस्य नित्याग्निहोत्रहोमस्य पयसा कार्य्यता । २ग्रामाद्येन्द्रियतेजस्कामानां यवाग्वोदनदधिसर्पींषि यथासङ्ख्यमग्निहोत्रद्रव्याणि भवन्तीत्युक्तिः । ३ कालविशेषं विना अधिश्रितमात्र एवावज्वलनविधानम् । ४ अपक्वद्रव्यदध्यादीनामधिश्रितानामप्यवज्वलनविधिः । ५पयसा होमे समन्त्रकं दोहनपात्रप्रक्षालनपूर्वं स्रुवेण प्रतिषेकविकल्पः।६एकस्मिन् पुरुषे प्रतिषेकाप्रतिषेकयोरसङ्करत्वोक्तिः । ७अवज्वलनार्थं मन्त्रपूर्वकं गार्हपत्यात् गृहीतेनोल्मुकेन पुनः परिहरणविधानम् । ८ पच्यमानपयोऽवतारणमन्त्रः । ९ गार्हपत्येऽङ्गाराणां प्रक्षेपमन्त्रः । १० आहिताग्नेरतिसर्ज्जनमन्त्रः । ११ आहिताग्नेः पत्न्याश्च इतिकर्त्तव्यताकलापः । १२ अतिसृष्टस्योन्नयनविधिः । १३ पुत्राणां तारतम्यमिच्छतः सपुत्रस्य यजमानस्य काम्यकल्पः । १४ एकपुत्रस्यापि काम्यकल्पः । १५समिद्धरणानन्तरं समन्त्रकं तदाधानविधानम् । १६ समिदाधानानन्तरम् आचमनपूर्वकं तदवधिहोमविधानम् ।१७पूर्वाहुत्यनन्तरं कुशेषु स्रुक्सादनपूर्वकं गार्हपत्यावेक्षणम् । १८ पूर्वाहुतेः प्रागुदक् उत्तरतो वा उत्तराहुत्यर्थं द्रव्योत्पादनविधानम् ।१९होमेषु सर्व्वत्र प्रजापतिध्यानविधानम् । २० भूयिष्ठद्रव्यपूर्णस्रुक्कम्पनानन्तरं तद्गतलेपवमर्जनं पाणितलगतलेपमार्जनञ्च । २१ लेपनिमार्जनकुशमूलानां दक्षिणत उत्तानाङ्गुलिनिधानम् । २२कुशमूलानां दक्षिणतो जलावनिनयनविधानम् । २३स्रुङ्निधानानन्तरं जलोपस्पर्शनम् ।२४आहिताग्निकर्त्तकानुमन्त्रणविधानम् । २५समन्त्रकमाधीयमानसमिदनुमन्त्रणम् । २६ ता अस्नेत्यृचा पूर्वाहुत्यनुमन्त्रणम् । २७समीपस्थेन सकटाक्षमीक्षित्वाहुत्यनुमन्त्रणम् । २८ याभिः काभिश्च त्वरराभिराग्नेयीभिर्ऋग्भिरुत्तराहुत्यनुमन्त्रणम् ।२९पूर्वस्वोक्तस्य ऋचां त्रयस्य निरूपणम् २९ख०२अ०३क०। १पूर्णे पूर्णे संवत्सरेऽधिकाभिर्ऋग्भिः सकृदनुमन्त्रणम् । २पर्वविहितयवाग्वादिना सायम्प्रातर्होमेषु यजमानस्य स्वयं

कर्त्तव्यम् । ३ पूर्वसंवत्सरेतरकाले येन केनापि ऋत्विजाग्निहोत्रहोमः । ४ पुत्रशिष्ययोरन्यतरेणान्तेवासिना होमस्याङ्गतविशेषश्च । ५ होमकर्त्तुः स्रुग्गतशेषभक्षणप्रकारः । ६ अपरर्त्विजोर्होमपूर्वकं स्रुग्गतशेषभक्षणम् । ७ प्रथमोत्तरभक्षणद्वये मन्त्रभेदौ । ८ समिदाधानपूर्वको गार्हपत्ये होमविधिः । ९ उत्तराहुतेर्नित्यत्वोक्तिः । १० समिदाधानपूर्वकं दक्षिणाग्निहोमप्रकारः । ११ उत्तराहुतेः पूर्ववत् नित्यत्वोक्तिः । १२ उक्तशेषभक्षणानन्तरं स्रुचाऽपां निनयनम् । १३स्रुक्प्रक्षालनानन्तरं प्रागुदीच्योः चतुर्णां पूर्णानां स्रुचां निनयनीयत्वम् । १४ कुशदेशे पञ्चमी स्रुक् गार्हपत्यस्य पश्चात् षष्ठीत्युक्तिः । १५ आहवनीये प्रतापितायाः स्रुचोऽन्तर्वेदिदेशे निधानम् । १६ परिचारकरूपाय परिकर्म्मिणे वा दातव्याः स्रुचोदानम् । १७ उदङ्मुखेन समित्त्रयस्याधानं पर्य्युक्षणादिकरणञ्च । १८तिसृणां समिधां प्रथमायाः समन्त्रकाधानम् । १९आवहनीयगार्हपत्यदक्षिणाग्निषु दीदिहि दीदाय दीदिद्दीति मन्त्राणां क्रमेण स्वाहान्तानां पाठ्यत्वम् । २० उक्तकार्ये पूर्ववत् पर्य्युक्षणविधानम् ।२१पर्य्युक्षणद्वयधर्म्मस्य परिसमूहनद्वयेऽतिदेशः । २२पर्य्युक्षणाभ्यां परिसमूहनयोः पूर्व्वभावोक्तिः ।२३सायंप्रातरुभयत्राग्निहोत्रहोमयोरैकाकारत्वम् ।२४सूर्य्योदयसमीपकालशेषकालादित्योदयकालानां प्रातर्होमस्य प्रधानकालत्वम् ।२५प्रातर्होमे विशेषोक्तिः २ख०४क०। १प्रवत्स्यत आहिताग्नेरग्निप्रज्वालनाचमनाभिक्रमानन्तरं तदुपस्थानम् ।२ दक्षिणाग्न्युपासनानन्तरं समन्त्रकं गार्हपत्याहवनीयेक्षणविधानम् । ३ आहवनीयदक्षिणाग्न्युपासनपूर्वकं गार्हपत्याहवनीयेक्षणं कृत्वाहवनीयसमीपं गत्वा तदुपस्थानम् । ४ ग्रहतोऽग्नीननवेक्षमाणस्याहिताग्नेर्यथेष्टगमनम् । ५ अग्निसमीपं गत्वा वाग्विसर्गविधानम्, इतः प्राक् वाग्यमविधानञ्च । ६ अभिलषितदेशगामिनं पन्थानं प्राप्य भद्रा नः पितुरिति मन्त्रपाठः । ७ यदि दैवात् मानुषाद्वा निमित्तात् अनुपस्थिताग्नेः प्रोषितस्य इहैवेति मन्त्रपूर्व्वकं प्रतिदिशमग्न्युपस्थानम् । ८ प्रोष्य स्वग्रामसमीपं प्राप्य अपि पन्थामिति मन्त्रपाठः । ९ समित्पाणेर्वाग्यतस्याहिताग्निज्वलनत्राणाभिक्रमपूर्वकम् आहवनीयेक्षणम् । १० नानाग्निषु समिध उपनिधायाहवनीयोपस्थानम् । ११ उपनिहितानां समिधामभ्याधानम् । १२ दक्षिणाग्निसमीपे स्थितस्याहिताग्नेः गार्हपत्याहवनीयेक्षणविधानम् । १३ वाग्विसर्गस्य प्रकारभेदः । १४ दशरात्रादूर्द्ध्वं प्रोष्य चतुर्द्धहीतेनाज्येन प्रायश्चित्तहोमः । १५ एकानेकाग्निहोत्रविच्छेदे पूर्वोक्तयाहुत्या होमविधानम् । १६ उक्ताहुतिहोमानन्तरं प्रतिहोमविधानम् । १७अनाहिताग्नेरपि ईक्षणप्रपदनयोः कर्त्तव्यत्वविधानं न केवलमाहिताग्नेरित्युक्तिः ।१८प्रवासादागतस्य तदहनि विदितस्यापत्नीकस्य न निवेदनीयत्वम् । १९ प्रवासादागतस्याहरहरग्निहोत्रहोमोपस्थानं तत्स्थानं तत्प्रयोगक्रमश्च ३ख०५क०। १ अमावास्यायामपराह्णे पिण्डपितृयज्ञविधानम् । २ दक्षिणाग्नेरेकोल्मुकं गृहीत्वा तस्मादेव प्राग्दक्षिणायां दिशि मन्त्रपूर्वकं तत्प्रणयनम् । ३ अविशिष्टदिक्कानां सर्व्वेषां कर्म्मणां प्राग्दक्षिणां दिशमभिकर्त्तव्यत्वम् । ४ उभयोरपि अग्न्योरुपसमाधानपरिस्तरणपूर्व्वकं दक्षिणाग्नेः प्रागुदक् प्रत्यगुदग् वा एकैकशः चरुस्थालीप्रभृतीनां यज्ञपात्राणां सादनम् । ५ अग्निसमीपस्थितं शकटं दक्षिणत आरुह्य शूर्पोपरि व्रीहिपूर्णस्थालीनिमार्जनरूपतदास्यदेशाद्व्रीहिपातनम् । ६ स्थाल्यास्यदेशात् शूर्पोपरि पातितानां व्रीहीणां शकटे निधानम् । ७ कृष्णाजिननिहिते उलूखले स्थाल्यन्तर्गतावशिष्टान् व्रीहीन् कृत्वा यजमानपत्नीकर्त्तृकस्तदवघातः । ८ अवहतानां व्रीहीणां दक्षिणाग्नौ श्रपणम् । ९ दक्षिणाग्न्यतिप्रणीतयोरन्तराले रेखोल्लेखनम् । १०सकृदाच्छिन्नावस्तीर्णाभ्युक्षितरेखायां भ्रुवास्थितमाज्यं दक्षिणतो दक्षिणाग्नेर्निधाय तेनाज्येन अभिघारितस्य स्थालीपाकस्य दक्षिणाग्नेः पश्चादासादनम् । ११ आञ्जनादीनां दक्षिणाग्नेर्दक्षिणतो निधानम् । १२ प्राचीनावीतिनो यजमानस्य उपसमाहितैरिध्मैर्म्मेक्षणेन गृहीतैरवदानसम्पदा होमः । १३ स्वधानमःशब्दस्य स्थाने स्वाहाकारं कृत्वा होमः । १४ अग्नौ मेक्षणानुप्रहरणपूर्व्वकं पिण्डस्थानेषु लेखायां त्रिभिर्म्मन्त्रैर्जलनिनयनम् । १५ रेखायां पिण्डनिपरणम् (दानम्) । १६गाणगारिमते पितादीनां त्रयाणां ये मृताः तेषामेव पिण्डदानं जीवतां प्रत्यक्षार्च्चनम् । १७ तौल्वलिमते पितादिभ्यस्त्रिभ्यः प्रेतेभ्यो जीवद्भ्यश्च सर्वेभ्यो निपरणम् । १८ गौतममते त्रयाणामेकस्मिन् द्वयोः सर्वेषु वा जीवत्सु यावदर्थं परान् पितृन् गृहीत्वा त्रिभ्यः प्रेतेभ्यः पिण्डनिपरणम् । १९ पितादीनां जीवितानां

मृतानाञ्च पिण्डदाने उपायविशेषकथनप्रतिज्ञा ।२०क्रमेण गौतमगार्ग्यगारितौल्वलीनां मतदूषणानि । २१जीवव्यवहितेभ्यः पितृभ्यो न निपरणम् । २२ जीवेभ्यो होमः मृतेभ्यो निपरणम् । २३ सर्वजीविनः सर्वहुतविधाने तत्र पिण्डहोमस्य निपरणमन्त्रेण स्वाहाकारेण कर्त्तव्यत्वम्, अन्येषामपि प्रयोजनानां चिन्त्यनीयत्वञ्च । २४ पित्रादीनां नामाज्ञाने तत्पितामहप्रपितामहशब्दानां नामस्थाने प्रयोगः । २अ० ६क० । १निपृतानां पिण्डानामनुमन्त्रणम् ।२उक्तानुमन्त्रणप्रयोगे नियमोक्तिः । ३तूष्णीमेव चरोः प्राशभक्षणस्य कार्यत्वम् । ४उदकोपनयननिनयनस्य नित्य कर्तव्यत्वम् ।५पिण्डेषु अभ्यञ्जनाञ्जनदानम् ।६पिण्डेषु वासोदानं तत्र विशेषोक्तिः । ७यजमानस्य पितृपासनं तत्र मन्त्रश्च । ८ तिसृभिर्ऋग्भिः पितृपस्थानम् । ९ पिण्डस्थानां पितॄणां प्रवाहणम् । १० यजमानस्य दक्षिणाग्निं प्रति गतिः । ११ दक्षिणाग्निप्रतिगमनानन्तरं यजमानस्य गार्हपत्याग्निं प्रति गतिः । १२यजमानकर्तृकं पिण्डानां मध्यमादानम् । १३ पत्नीकर्तृकं ताडयद्गृहीतमध्यमपिण्डप्राशनम् । १४ अवशिष्टपिण्डद्वयस्याप्सु प्रक्षेपः । १५ अतिप्रणीते वाऽग्नौ प्रक्षिप्य ताडयपिण्डद्वयदाहः । १६ यस्याश्चेच्छाभावोनिर्निमित्तः ताडयेन पिण्डस्य प्राशनम् । १७ क्षयकुष्ठादिमहारोगवतः ताडयपिण्डाशने सद्य एवारोगित्वमरणयोरन्यतरगतिलाभोक्तिः । १८ अनाहिताग्नेरप्येवं पिण्डपितृयज्ञकरणम् । १९ चरुश्रपणानन्तरं तदतिप्रणयनं ततस्तदुपसमाधानतत्परिस्तरणे कृत्वा होमकरणम् । २० स्त्रियः चरुपूर्णपात्राणामुत्सर्गः । २१ एकस्यातिरिक्तस्य तृणेन छिन्नं सम्पाद्य तदुत्सर्गकरणविधानम् । २अ० ७क० । १ दर्शपूर्णमासावारभ्यमानस्यान्वारम्भणीयेष्टिकरणम् । २ अग्नेर्भगीतिगुणोक्तिः । ३ इष्टेर्याज्यानुवाक्योक्तिः । ४ आधानानन्तरं तत्संवत्सरे रोगार्थहानिरूपनिमित्तसद्भावे पुनराधेयस्य, पुनराधेये च यवाग्रयणाया इष्टेः कर्त्तव्यत्वम् ।५ उक्तायामिष्टौ विभक्तिभिः सहिताभ्यां प्रयाजानुयाजाभ्यां यजनम् । ६ नराशंसिनां नराशंसः । ७ आग्नेययोराज्यभागयोरुक्तिः । ८ आज्यभागयोर्गुणद्वयोक्तिः । ९ निगमेषु मनुष्ययोरेवानुद्रुत्युक्तिः । १० याज्यायां देवतादेशरूपाया इज्यायाः कथनम् । ११ चतुर्णामृषीणामाचार्याणां मते पूर्वस्य केवलस्याग्नेः, अग्निर्देवताकोऽनुवाक्यायाश्च नित्यत्वम् । १२एकमते उत्तरस्यापि केवलस्याग्नेरुक्तानुवाक्याया नित्यत्वविधानम् । १३ उत्तरे याज्यामन्त्रे हविःशब्दस्य नित्यत्वोक्तिः । १४ संयाज्यामन्त्रभेदः । २अ० ८ क० । १ व्रीहिश्यामाकयवैः संवत्सरे प्रथमनिष्पन्नैः आग्रयणकर्मकरणम् । २ आग्रयणेनानिष्ट्वा नवनिष्पन्नस्य भोजननिषेधः । ३ वर्षत्रयस्य लोकस्य आग्रयणेन यागविधानं व्रीह्याग्रयणे शरत्कालस्य प्राधान्यम् । ४ आग्रयणाख्या इष्टिः प्रथमः कल्पः, तदसम्भवेऽग्निहोत्रीयां धेनुं व्रीहिश्यामाकयवानामन्यतममाशयित्वा तत्पयसा सायंप्रातरग्निहोत्रहोम इति द्वितीय इति कल्पद्वयम् । ५ यवैराग्रयणस्य क्रियाऽक्रिया वा इति विकल्पः । ६ अविशेषेण वर्षत्रयाणां कल्पद्वये प्राप्ते रात्र इष्टिरेव नान्य इति विशेषोक्तिः । ७ एकेषां मते सर्वेषां इष्टिरेवेति व्यवस्थापनम् । ८ वर्षादां श्यामाकाग्रयणेष्टौ सोमदैवत्यचरुव्यवस्थापनम् । ९ अवान्तरेडाजपानन्तरम् सव्ये पाणौ कृत्वा तदभिमर्शनम् । १० इडाप्राशनानन्तरम् आचमनपूर्वको नाभ्यालम्भः । ११उक्तेन विधिना सर्वभक्षेषु सर्वेषां भक्षिणां सर्वभक्षणम् । १२व्रीहीणां यवानां चाग्रयणेष्टौकालादि तत्र यवाग्रयणस्य वसन्तकालविधानम् श्याम्याविराजमहणाञ्च । १३श्यामाकाग्रयणस्य समानतन्त्रेण करणे सोमस्य तृतीयत्वव्यवस्थापनम् । १४ तत्र इन्द्राग्न्योः सोमस्य च याज्यानुवाक्याः । २अ० ९क० । १चातुर्मास्येभ्यः पूर्वं काम्या इष्टयः । २आयुष्कामेष्ट्यां जीवातुमत्यौ द्वे देवते अग्निरिन्द्रश्च । ३ उक्तयोर्देवतयोरग्नेरायुष्मत्त्वं गुणः, इन्द्रस्य च त्रातृत्वं गुणः । ४ आयुष्कामेष्ट्याम् अग्नीन्द्रयोर्देवतयोः संयाज्ये ।५स्वस्त्ययनीयेष्ट्यां रक्षितवन्तौ देवौ अग्निः सोमश्च । ६ उक्तयोरग्नीषोमयोः संयाज्ये । ८ पुत्रकामेष्टौ अग्निः पुत्री देवता । ९उक्तायामिष्टौ द्वे संयाज्ये । १० वत्राभावयोरिष्ट्योरग्निदेवतात्वम् । ११मूर्धन्वतोऽग्नेर्निष्ठे संयाज्ये । १२ कामदुघकस्याग्नेर्याज्यानुवाक्ये । १३ उत्तरयोरिष्ट्योर्वैमृध्यत्वं, तयोर्याज्यानुवाक्यायुगलयोर्वैमृधयोरिन्द्रदेवतात्वं, तस्य चेन्द्रस्य विमृधस्य गुणकत्वं वैमृधगुणकत्वं वा, अतस्तयोर्वैमृध्यसंज्ञाभाक्त्वञ्च । १४पुष्टिकामस्य याज्यानुवाक्ये । १५ इन्द्रो दाता स पुनर्दाता वा देवता भवति । १६ उभयत्रापि इन्द्रस्य याज्यानुवाक्ये । १७ आमानामाशापालानां वा देवता-

त्वम् । १८ आग्रायणपात्राणां याज्यानुवाक्यासाम्यम् । १९इष्टिविशेषस्य लोकेष्टिसंज्ञोक्तिः ।२०पृथिव्यादीनां पृथग्देवतात्वकथनम् ।२१त्रयाणां हविषां याज्यानुवाक्याद्यर्पाकाितस्य ऋचः। २२त्रयाणां हविषां तिसृणाम् ऋचां विनियोजनम् २अ०१०मक०।१ मित्रवल्लिदेवभूता महावैराजी नामेष्टिः । २महावैराज्यामग्न्यादीनां दशानां देवतात्वम् एकप्रदानत्वञ्च । ३ उक्तानां दशानां देवतानामनुवाक्योक्तिः । ४ प्रतिलोममादिष्टानामुक्तानां दशानां यजनम् । ५ अष्टौ वैराजतन्त्रा इष्टयः । ६ तासां प्रथमा: षडिष्टय एकहविषः । ७ स्रुचाश्वगुरीया नाम आभिचारिकी इष्टिः । ८ स्रुचाश्वगुरीयेष्टौ याज्यानुवाक्यालिङ्गात् देवतायाः कल्पनीयत्वं, स चेन्द्रः, इन्द्रः स्वरगुणो वेति । ९ पूर्वोक्ताया देवतायाः संयाज्ये । १० स्वामिभृत्ययोः सम्मतिकामानां संज्ञानी नाम इष्टिः। ११ संज्ञान्यां चतसृणां गुणानां देवतानाम् एकप्रदानत्वम् । १२ अग्निसोमेन्द्रादित्यानां सगुणानां देवतानां प्रतिपादनम् । १३ भेदकामानाम् ऐन्द्रामारुती इष्टिः । १४ इन्द्रस्य नित्ये याज्यानुवाक्ये । १५ इन्द्रमरुतोर्विकल्पविधानम् । १६ मारुताद्यागादूर्द्धम् ऐन्द्रो यागः । १७ राजविशोरसम्मतिकामानाम् आहिताग्नीनां च प्रकृत्यैव संज्ञानी नामेष्टिः । १८ भ्रातृभिः प्रहृष्यमाणानाम् ऐन्द्राबार्हस्पत्या नाम इष्टिः । १९ अध्वर्यवश्चेत् ऐन्द्राबार्हस्पत्यं निरुप्य इन्द्राय नोदयेयुः यद्वा बार्हस्पत्यं निरुप्य इन्द्राय नोदयेयुः तदा उभयोरपि पक्षयोः याज्यानुवाक्यासाम्यम् १९ सू० । २अ० ११ क० । १ संवत्सरमतिप्रवसतः शुद्धिकामस्य पवित्रेष्टिविधानम् । २पवित्रेष्टौ पावकवत्यौ धाय्ये। ३ पवित्रेष्टौ न याज्ये । ४ पवित्रेष्टौ संयाज्ये । २अ०१२क० वर्षकामाणां कारीरी नामेष्टिः । २ कारीर्यां धाय्याद्वयम् । ३वर्षकामेष्टिमालेऽमृमन्तौ गायत्रौ देवौ । ४ वर्षकामेष्टिमालेऽग्नेः सोमस्य च मन्त्रभेदः । ५ उक्तेष्टिमाले धामच्छद्वत्कोऽग्निः। ६ उत्तरास्तिस्रो मरुद्देवत्या इष्टयः पिष्टीसंज्ञकाः। ७ धामच्छद्वत्कस्याग्नेर्याज्यानुवाक्याद्वयस्य व्यवस्थया योजनीयत्वम् । ८ पिष्टीयागस्य करणम् ९ संस्थितायामिष्टौ सर्वासां दिशाम् उपासनम् २अ० १३क० । १ इष्ट्ययनसंज्ञकानि कर्म्माणि । २ एकानेकसंवत्सरसाध्यानि सांवत्सरिकाणि कर्माणि । ३ सांवत्सरिकाणां कर्म्मणां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा

प्रयोग ।४तुरायणं नाम इष्ट्ययनम् ।५अहन्यहनि अग्निदेवत्या इन्द्रदेवत्या विश्वदेवदेवत्या चैतासाम् इष्टयः त्रिषु सवनेषु यथाक्रमम् एकैकेष्टेः कार्य्यत्वञ्च। ६ त्रिहविष्काया एकस्या एवेष्टेरुक्ताभिर्देवताभिर्युक्तायाः प्रतिदिनम् प्रातःसवन एव कर्त्तव्यत्वम् । ७ दाक्षायणयज्ञे पौर्णमास्यामावास्ययागद्वयम् । ८ आद्यकयोः पूर्व्वे ये ते नित्ये न विकृते । ९ उत्तरयोस्तु एष विकारो यत् पौर्णमास्यां द्वितीयं हविरस्य ऐन्द्रत्वम् । १०अमावस्यायां द्वितीयस्य हविषो मैत्रावरुणत्वम् । ११ प्रतिपर्व्वकर्त्तव्यं प्राजापत्यम् इडादधो नामेष्ट्ययनम् । १२ द्यावापृथिव्योरयनं नामेष्ट्ययनम् । १३ उक्तस्य इष्ट्ययनस्य कालविधानम् ।१४ एतच्छाखानाम्नातास्विष्टिषु पौर्णमासात् तन्त्रान्यत्वविधानम् । १५ यजुर्वेदएव प्रकृतं तन्त्रं नान्यदपरमिति । १६ अग्निमन्थनसंयुक्तायामिष्टौ वैराजमेव तन्त्रम् । १७ अग्निमन्थने सत्यपि धाय्ये एव केवले तन्त्रं न तदन्यत् । १८ याज्यानुवाक्यास्वरूपोक्तिः । १९ अनुवाक्यालक्षणोक्तिः । २० असम्भवे विहितच्छन्दसोऽन्यस्य वा याज्यानुवाक्यानां कर्त्तव्यत्वम् । २१ सर्व्वयाऽनुवाक्यापेक्षया याज्याया न ह्रसीयस्त्वम् । २२उष्णिगक्कुभोर्न याज्यात्वम् ।२३आमनदहतदग्धवतीनां वर्ज्जनम् । २४देवतापदसत्त्वे न लक्षणान्तरान्वेषणम् ।२५ देवतापदेऽव्यक्ते लक्षणस्य गायत्र्यादेराश्रयणीयत्वम् ।२६ देवतानामानधिगमे शाखान्तरादाहर्त्तव्यत्वोक्तिः । २७ सर्व्वथाऽनधिगमे याभ्यां काभ्याञ्चिदृग्भ्यां यागोऽनुवचनञ्च। २८ व्याहृतिभिर्वा यागानुवचने। २९ द्वितीयया विभक्त्या देवतामादिश्य प्रवरणं यजनञ्च । ३० नक्षसंज्ञाभ्याम् ऋग्भ्यां वा प्रवरणयजने ।३१ नक्षसंज्ञके ऋचौ । ३२ देवतापदरहिते ऋचौ भवत इति । २अ० १४क०। १ अग्निदैवत्ये चातुर्मास्याद्यन्यनस्यारम्भार्थं पूर्वेद्युर्वैश्वानरपार्जन्याया इष्टेः कर्त्तव्यत्वम्। २ अग्न्याधेयादीनां उपांशुप्रधानत्वोक्तिः । ३ सोमोत्पन्ना इष्टयः । ४ प्रायश्चित्तप्रकरणोत्पन्ना इष्टयः ।५ अन्वायात्यानाम् एककपालानाञ्च यागानां उपांशुप्रयोक्तव्यत्वम् । ६ सर्वत्र वा वारुणवर्जम् उपांशुत्वम् । ७चातुर्मास्येषु सावित्रयागस्य उपांशुत्वम् । ८वैश्वदेववरुणप्रघासमाहेन्द्रशुनासीरीयेष्वाम् उपांशुत्वम् । ९ तन्त्रयुक्तानां पित्र्योपसत्कामकानामिष्टीनामुपांशुत्वम् । १० उत्तमादनुयाजात् प्राक् पुनराधेयेष्टेः स्वतन्त्रोपांशुत्वम् । ११ स्वतन्त्रोपांशुत्वविशिष्टानां सर्वेषाम-

धेनीष्टीनां सुमन्द्रतन्त्वत्वम् ।१२ आगूःप्रणववषट्काराणां सर्व्वत्र उच्चैर्भावोक्तिः । १३ आग्रयणेष्टौ आग्नेन्द्रस्य ऐन्द्राग्नस्य वा प्रथमस्य हविष उच्चैर्भावकथनम् । १४ उच्चविहितस्य पुरोऽनुवाक्याप्रणवस्य प्राणसन्ततत्वम् ।१५याज्याया आगूर्व्वषट्कारयोः प्राणसन्ततत्वम् ।१६उपांशोस्तन्त्वस्वराणाम् उच्चत्वम् । १७ उपांशुतन्त्राणां तानि उच्चानि मन्द्रस्वराणि भवन्तीत्युक्तिः । २अ०१५क० । १ प्रातर्वैश्वदेव्यां प्रोषितस्याग्निमन्थनीयानुवचनाभिहिङ्कृतिकरणे । २ संप्रैषश्रवणपर्य्यन्तं पूर्व्वऋगवसाने आरामो नोत्तरादानम् । ३ मध्ये ऋगवसाने यत्रारामविधिः तत्राप्यारम्भेणाद्योत्तरारम्भः । ४ मथ्यमानोऽग्निर्यद्य जायते तदाऽग्ने राजन्वन्तः पुनः पुनः अग्ने हंसीति स्तृतावापनम् । ५ अग्निजन्मश्रवणानन्तरम् उक्तस्तृतीयप्रणवेन शिष्टार्धर्चोपसन्ननम् । ६अनावापपक्षे जातश्रवणानन्तरं शिष्टेनार्द्धर्चेन उत्तराया ऋच उपसन्ननम् । ७ यज्ञेनेत्यनया ऋचा समापनम् । ८ सर्व्वत्र यज्ञादिषु उत्तमाया ऋचः समापनीयत्वम् । ९बर्हिरग्न इति प्रयाजानन्तरं प्रयाजान्तरादीनामावपनम् १० देवताष्टकोल्लेखः मरुतां स्वतवस्त्वेति गुणकथनञ्च । ११ प्रकरणपठितानां निर्गुणानां मरुतां धाय्याद्वयकथनम् । १२ अनुयाजानां द्वैधकथनम् । १३अनुयाजाद्यन्यतमे काले वाजिभ्यो यागः । १४ ऊर्द्धजानुनाऽनवानयाज्याप्रयोगः । १५ यत्र क्वच विषये एकस्मिन्नेवाध्वर्युसंप्रैषे तुल्यरूपयोरतुल्यरूपयोर्द्वयोर्वषट्कारयोः समस्तयोर्द्विरनुमन्त्रणम् ।१६याज्याधर्म्मस्य इतरेषु अनुवषट्कारादिषु आगुरः प्रतिषेधः ।१७इष्टशिष्टं वाजिनम् इडामिव भक्षार्थं अञ्जलौ निधाय उपहवयाचनम् ।१८अध्वर्य्युब्रह्माग्नीध्राणां समीपे उपहवयाचनम्। १९ उक्तवाजिनस्य किञ्चिदादाय स्तुतोऽतमन्ते वाचप्राणम्। २०होतुर्भक्षणानन्तरम् अध्वर्य्युब्रह्माग्नीध्राणां क्रमेण वाजिनभक्षणम् । २१यजमानादितरेषां सर्व्वेषां दीक्षितानां गृहपतेरन्येषाञ्च प्रत्यक्षमेव तद्भक्षणम् । २२ वैश्वदेवेष्टिदिवसादपरस्मिन् दिने पौर्णमासेनेष्ट्वा तदानीमेव वक्ष्यमाणानां चातुर्मास्यव्रतानां केशनिवर्त्तनमध्वादिवर्जनरूपाणाम् आचरणारम्भः । २३केशनिवर्त्तनम् । २४ प्रस्तुपनाधःशय्ये कार्य्ये मधुमांसलवणस्त्र्यवलेखनानि वर्ज्यानि। २५ कालविशेषे प्रतिषिद्धस्य प्रतिप्रसवार्थम् ऋतौ भार्य्योपगमनविधानम् । २६ उत्तरविवक्षार्थानुवादरूपं सर्व्वपर्व्वसु वापनम् । २७ आद्योत्तमयोर्वा पर्व्वणोर्वापनं न मध्यमयोरिति ।

२अ०१६क०।१प्रकृतवैश्वदेवेष्टिकायां पौर्णमासीमारभ्य पञ्चम्यां पौर्णमास्यां वरुणप्रघासैर्यागविधानम् । २प्रणीयमानस्याग्नेः पश्चादुपविश्य प्रोषितस्याग्निप्रणयनीया प्रतिपत्तिः । ३ आसीनस्य सप्रणवायाः प्रथमाया उपांश्वनुवचनम् । ४ उपांशुस्वरस्थानां स्वरान्तरस्थानसङ्गमे प्रणवेनावसाय अर्द्धर्चस्य उत्तरस्या ऋच आरम्भः । ५ उक्तावसानानुच्छासपूर्व्वकम् उत्तरारम्भस्य प्राणसन्ततभावित्वम् । ६ प्रणीयमानयोर्द्वयोरुत्तरमग्निमनुव्रजत उत्तरासामृचामनुवचनम् । ७ राजन्यवैश्ययोराद्ये ऋचौ । ८ उत्तरस्या वेदेः पश्चादवस्थाय शेषसमापनम् । ९ सोमेषु उत्तरवेदेः पश्चादवस्थाय समापनम् । १० यस्मिन्नेवासने पूर्व्वोक्तमनुवचनमारब्धं तस्मिन्नुपविश्य व्याहृतिमद्रूपवाग्विसर्जनम् । ११ अन्यत्रापि अनुवचनानुव्रजनयोर्वाग्विसर्गः । १२ तिष्ठतः संप्रैषेषु तिष्ठत एव वाग्विसर्गः । १३ वैश्वदेव्या समानाऽग्निमन्थना नाम इष्टिः । १४पञ्चादीनां तिसृणां हविषाम् ऐन्द्राग्न्यादीनां कर्त्तव्यत्वम् । १५तत्सूक्तगतमन्त्रस्य उपहवयाचने तृतीयत्वम् । भक्षणे चतुर्थत्वम् । उपहवयाजनभक्षणयोश्च विशेषकथनम् । वैश्वदेव्यामपि एवमाश्वलायन। १६इष्टौ संस्थितायामवभृतकर्म्म निमित्तं अध्वर्य्यूणाम् उदकदेशगमनम् । १७अवभृथस्यानित्यत्वात् इच्छाभावेऽन्येषामपि यव-धानादीनां सम्भवश्च । १८चातुर्मास्याङ्गत्वेन द्वयोर्मासयोरैन्द्राग्ननामकपश्वन्तरविधानम् । २अ० १८क० ।

१ वरुणप्रघासेभ्यः परम् ऐन्द्राग्नपशुपरं अनीकवदाद्यादित्यान्तकर्म्मरूपाणां साकमेधानां यजनम् । २ साकमेधीयपौर्णमास्याः पूर्व्वेद्युः सवने सवने एकैका इष्टिः । ३ उक्तानुसवनीयानामिष्टीनां प्रथमायामनीकवान् अग्निः एतदुत्तरस्यां इध्मवन्तौ, मरुतः सान्तपनाः तदुत्तरा आज्यभागप्रभृतीडान्ता इष्टिः । ४ गृहमेधेभ्यो मरुद्भ्यो देवताभ्य आम्नातयोर्द्वयोरुल्लेखः । ५ पुष्टिमतोर्विराजयोर्निगदरहितसंयाज्यात्वम् । ६ गृहमेधीयादन्यत्रापि आवाहनरहिते स्थले अनिगदयोः संयाज्ययोः सम्भवः । ७ पित्र्यायां पशौ चेतीष्टिद्वये आवाहने सत्यपि अनिगदं संयाज्याद्वयम् । । ८समापितेष्टिकायां रात्रौ बहूनां याज्ञिकानाम् अन्नदानम् । ९ रात्रेः पश्चाद्भागे पौर्णदर्व्वनामकस्य होमकर्म्मणः कर्त्तव्यत्वम् । १०वृषभरवे श्रूयमाणे उक्तहोमकालः । ११ मेघध्वनौ श्रूयमाणे तद्धोमकालः । १२ तस्योक्तद्वयस्याप्यभावे ब्रह्मप्रभृत्यन्नेनाग्नीध्रं सम्बोध्य कीर्त्तयेत् रवप्रावर्त्तनम् ।

१३पूर्णादर्व्यादिमन्त्रयोरध्वर्युणा होतृप्रेरणे याज्यानुवाक्यात्वम् । १४ क्रीडिभ्यो मरुद्भ्य उत्तरा इष्टिः ।१५ क्रीडिनां मरुतां पुरोऽनुवाक्यायाज्याभागौ । १६अक्रीडिनां मरुतां याज्यानुवाक्ये । १७ माहेन्द्री इष्टिः । १८ माहेन्द्र्यामिष्टौ अष्टदेवतोक्तिः । १९माहेन्द्र्यां याज्याकथनम् । १९सू०२अ० १८क० । १ दक्षिणाग्नेरग्निमानीय तमन्यत्र स्थापयित्वा तत्र पित्र्याख्यकर्मकरणम् । २ पित्र्याया इष्टेर्लुप्तजपानुमन्त्रणादित्वम् । ३तस्यां पित्र्यायामिष्टौ कर्मणां प्राङ्मुखत्वम् । ४ अन्यस्यामिष्टौ दक्षिणामुखत्वम् । ५ इतरदिङ्मुखानि प्रकृतौ यथान्वयं करणीयानि । ६ अनुक्रमता उपलक्ष्ये तस्या ऋचस्त्रिरनुवचनं तत्र च तासामेव सामिधेनीनां न पुनरभ्यासः । ७ तासां सामिधेनीनामुत्तमेन प्रणवेन प्रतिपत्तिः । ८ आज्यभागान्तदेवतावाहनानन्तरं प्राकृतात् स्विष्टकृदावाहनात् परं कव्यवाहनाख्याग्निसमावाहनम् । ९ उत्तमे च प्रयाजे आज्यपेभ्यः पूर्वं कव्यवाहनाख्याग्निनिगमनम् । १०सूक्तवाके विशेषोल्लेखः । ११कार्यार्थमन्त्रलोपेऽपि कार्यलोपप्राप्तौ कार्यस्य लोपप्रतिषेधः । १२पित्र्यायामिष्टौ अवान्तरेडाभक्षणेडाभक्षणयोरभावः । १३ इडाभक्षणे मार्जनाभावः । १४ सूक्तवाके यजमाननामादेशाभावः ।१५ ईडितः सीद होतरिति शेषस्योपवेशनम् ।१६सव्योपर्युपस्थानां प्राचीनावीतिनां हविर्भिर्जीवानुमदुच्चारणम् । १७ पित्र्यायामाग्नीध्रस्य दक्षिणत्वम् अध्वर्योरुत्तरत्वम्, अनुवाक्याद्वयम्, अध्यर्धायामनवानम् । १८आश्रावणप्रत्याश्रावणसम्बन्धेषु ओं स्वधेत्यादीनां दीर्घान्तानां प्रयोक्तव्यत्वम् । २०श्रुतीनां नित्यत्वव्यवस्थापनम् । २१ पितृणां सोमवत्ता सोमस्य पितृमत्ता बर्हिषदः अग्निष्वात्ताश्चेति गुणोक्तिः । २२पञ्चानां पितृणां तिस्रस्तिस्र ऋच इत्युक्तिः । २३ वैवस्वतस्य चेद्दैवतात्वं तदा उत्तमे लिङ्गे मध्यमाया याज्यात्वं प्रथमोत्तरयोरनुवाक्यात्वम् । २४ स्विष्टकृतो याज्योक्तिः । २५ स्विष्टकृतोऽग्नेः कव्यवाहनसंज्ञा । २६ स्विष्टकृत ऊहे प्रकृतिभावः । २७ मन्त्रलोपादिभिन्नानां सव्योपर्युपस्थतादीनामभावाय प्रकृतिभावविधानम् । २८ प्रकृतिभावादेवानुवाक्याया एकत्वम् । २९ वषट्कारक्रियायामेव संयाज्याद्वयम् । ३० विशेषनियमार्थं दक्षिणाहृतो दक्षिणाग्नेरुपस्थानम् । ३१पित्र्यायामिष्टौ आवर्त्तनविरक्तेणोपस्थानम् । ३२दक्षिणाग्नेरुपस्थानमन्त्रः । ३३गार्हपत्याहवनीययोरुपस्थानम् । ३४ आहवनीयोपस्थानमन्त्रः । ३५ तदन्य इत्येकयर्चा गार्हपत्योपस्थानम् ।३६प्रादक्षिण्येन गार्हपत्यमभितः समागमने मन्त्रः । ३७गार्हपत्यानन्तरं सव्याहङ्गिस्त्र्यम्बककर्मभेदार्थगमनम् । ३८अध्वर्युक्तस्य यजमानैरपि कर्त्तव्यत्वम् । ३९ प्रत्येत्य अदितिदेवताकया ऋचा चरणम् । ४०पुष्टिमत्यौ धाय्ये विराजौ । ४० सू० २अ० १९क० । १ साकमेधकालमारभ्य पञ्चम्यां पौर्णमास्यां शुनासीरीया नामेष्टिः । २ पञ्चम्याः पौर्णमास्या अर्वागपि वा शुनासीरीयारम्भः । ३ नियुत्वानिति वायोर्गुणः शुनासीरीयः शुनयेति इन्द्रस्य गुण इत्युक्तिः । ४एतत्प्रकरणगतानां शाखान्तरीयाणाञ्च देवतानां एतत्प्रकरणाम्नाता एव याज्यानुवाक्या इत्युक्तिः । ५ज्योतिष्टोमप्रकृतिकौ चातुर्मास्याङ्गभूतौ पशुसोमौ ताभ्यां शक्तिभेदेन व्यस्तसमस्ताभ्यां यागः । ६ चातुर्मास्यानां समाप्तौ पुनरभ्यासः ६सू० २अ०२०क० ।

३अध्याये पशुकर्माधिकारः । १प्रायश्चित्तात् पूर्वं पशुगुणकं कर्म । २पशोरुभयतोऽन्यतरतो वा इष्टिकरणम् । ३ पशुयागसम्बन्धिन्या इष्टेरग्निदैवत्याधिकल्पः । ४ पशुयागसम्बन्धिन्या इष्टेः करणपक्षे देवताविकल्पः । ५ एकस्मिन् पशुप्रयोगे आग्नेयी चाग्नावैष्णवी चेति इष्टिद्वयम् । ६ उभयेष्टिकरणपक्षे एकस्याः पुरस्तात् अपरस्या उपरिष्टात् कर्त्तव्यत्वम् । ७ सविधिकस्य वारणप्रायाभिकस्योक्तस्याग्निप्रणयनस्य पुनरुल्लेखः । ८ पशुबन्धयागसम्बन्धिन्या वेदेः पश्चादुपविष्टस्यानुवचनार्थं प्रेषितस्य यूपमञ्जमानमभिधातुम् ऋग्विशेषानुवचनम् । ९ अज्यमानयूपानुवचनपरिधानयोर्मन्त्रभेदौ । १० सपशुकयूपबहुत्वे एकपशुतन्त्रके कर्मणि अन्त्ययूपानुवचनं परिधायान्त्ययूपसंस्तवनञ्च । ११प्रथमोत्तमयोरनभ्यासविधानम् । १२ पशुदेवताभ्योऽनन्तरं वनस्पत्यावाहनम् । १३ संमार्गैः संमार्जनानन्तरं प्रहृताहुतिभिर्होमः । सकृदुपहरणपूर्वकैकाहुतिहवनानन्तरं पुनः सकृदुपहरणपूर्वकपञ्चाहुतिहोमः, मन्त्रविपर्ययणञ्च । १५ सौत्ये पश्वाहनि पूर्वोक्तहोमः । १६ तीर्थेनैव सद्यविहारप्रपदनाय प्रशास्त्रे समन्त्रकदण्डदानम् । १७ प्रशास्तुर्दक्षिणोत्तराभ्यां पाणिभ्यां समन्त्रकदण्डप्रतिग्रहणम् । १८ यावत् प्रैषवचनं नास्ति तावत् उक्तेन दण्डेन स्थपरयोः संस्पर्शननिषेधनियमः । १९ उपयुक्तानामन्येषामपि यज्ञाङ्गानां विहारेण व्यवायनिषेधः ।

२० प्रेषितस्य मैत्रावरुणस्य प्रैषानुवचनप्रकारः । २१मैत्रावरुणस्यानुवाक्यानुवचनम् । २२मैत्रावरुणस्य पर्य्यग्नि क्रियमाणे इतोऽन्यमानसूक्तपाठः । २३आसीनेनैव मैत्रावरुणस्य सोमाधिकरणककर्मान्तरस्य करणम् ।२३खं० ३अ० १क० । १ पशुयागे एकादशप्रयाजनियमः । २ तत्र तेषां प्रयाजानां प्रैषा अपि एकादशसंख्याः । ३ प्रकृतावुक्तमप्राकृतेष्वपि प्रैषेषु स्वादिष्वेवमर्थं पूर्वोक्तस्य प्रैषसूक्तस्य पुनरुपदेशः । ४अध्वर्युप्रैषस्य होतुरनाकाङ्क्षणीयत्वम् । ५ प्रैषलिङ्गाभिराप्रीभिर्यजनम् । ६ शुनकानां, वसिष्ठानां, सर्वेषाञ्चाप्रीसूक्तभेदकथनम् । ७ ऋषिनामधेयस्यानुगुणानामाप्रीणां ग्राह्यत्वम् । ८ प्राजापत्ये तु वसिष्ठशुनकसहितानां सर्वासामाप्रीणां जामदग्न्यत्वम् । ९ दशसु सूक्तेषु प्रेषितस्य मैत्रावरुणस्य प्रैषवचनम् । १० उक्तप्रैषवचनस्य होतुरन्तर्वेदि दण्डनिधानम् । ११ अध्रिगुशब्दवाच्ये दैव्याः शमितार इत्यादिके मन्त्रेऽङ्गादि शब्दानामूहः । १२स्त्रीपुंसयोः समाहारे पुंलिङ्गेनैवोहः । १३स्त्रीदेवतायामभिधेयायां मेधपतिशब्दस्य पुंवद्वचनम् । १४ स्त्रीपशौ मेधशब्दस्य पुंवद्वा स्त्रीवद्वा वचनविकल्पः । १५अध्रिगोरूर्द्धम् अङ्गादिशब्दानामितरेषाञ्चोहनं, स्त्रीपुंसमाहारेषु सर्व्वत्र पुंवद्देवाभिधानञ्च । १६न केवलमस्योहविधेः पशुकर्मार्थत्वं किन्तर्हि सर्वेषु यजुःषु निगदेषु चार्थवशेन कार्य्यत्वम् । १७प्रकृतौ समर्थनिगमेषूहनम् ।१८मन्त्रगतानां शब्दानां प्राकृतत्वेन ऊहनम् । १९प्रतिनिधिष्वपि प्राकृतानां शब्दानामूहनम् । २० उपमार्थानां श्येनादीनां शब्दानामूहनम् । २० खं० ३अ०२क० । १ अध्रिगुनामकमन्त्रविशेषकथनं तत्रस्थानां पदानामूहश्च । २अश्वेत्यादीनां त्रयाणां शब्दानां स्वे स्वे स्थाने उपांशुप्रयोक्तव्यत्वम् । ३षट्विंशतिशब्दस्याभ्यासनियमः । ४मन्त्रविशेषजपानन्तरं विहारादाहव दक्षिणावृत आवर्त्तनम् प्रह्वतः कृत्वा आसनञ्च । ५ मैत्रावरुणस्याप्यत्र प्रह्वतः करणम् । ६पुनरावर्त्तनकाले पराचामेवासनम् ६खं०३अ० ३क० । १वपायां श्रप्यमाणायां तत्संस्कारार्थं प्रेषितस्य स्तोकेभ्योऽनुवचनम् । २स्वाहाकृत्यर्थं स्रुगादापनस्य कर्तव्यत्वम् । ३ उत्तमा आप्रीयाज्या । ४ वपा पुरोडाशोहविरिति पश्वोर्यागाः । ५ नानादैवतेषु पशुषु याज्यानुवाक्याभेदादेव वपायागवत् पृथग्भावः । ६ प्रतिपशु मनोतामन्त्रस्यावर्त्तनम् । ७एकेषां मते मनोताया अनावर्त्तनम् । ८ उक्तप्रदानगतप्रैषाणां समानलिङ्गत्वोक्तिः । ९ प्रदानप्रैषेषु विकृतिषु च या देवतास्तासामेकैकस्या देवताया अग्नीषोमस्थाने निर्दिश्य वक्तव्यत्वम् । १० गोमेषच्छागानामेकैकस्य जातेर्द्वयोर्द्वयोः शब्दयोर्नियमनस्य वैकल्पिकत्वम् । ११ वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु प्रदानप्रैषीयप्रयोगवत् प्रयोगः । १२ सूक्तवाकप्रैषेषु पुरोडाशेन पशुदेवतावर्द्धनम् । १३ हविषां नानारूपत्वात् स्वेन स्वेनैव शब्देन निगमने प्राप्ते पुरोडाशशब्देनैव चर्वादीनां निगमनविधानम् ।१४मेधोरभीयानिष्यतयोः पदयोः पश्वभिधायकत्वम् । १५आम्नायसिद्धानां द्विवचनान्तानाम् एकवचनबहुवचनयोरिष्टकारपरिग्रहार्थं पाठविशेषः १५खं० ३अ० ४क० । १वपाहोमानन्तरं सप्रस्तुकानां बहूचानां सर्व्वेषां सह मार्जनम् । २इदमाप इत्यनयर्चा यजुषा च उभाभ्यां मार्जनम् । ३ मन्त्रभूतायामिष्टौ आतिदेशिकमार्जनस्य प्रत्यर्थस्मयौ मार्जनस्य एतावन्तोक्तिः । ४ पुरोडाशश्रपणपर्य्यन्तं तोष्णीं निष्क्रम्यासनविधिः । ५ प्रधानस्विष्टकृतोर्भेदप्रतिपत्त्यर्थं प्रधानेन चरित्वा स्विष्टकृता चरणविधिः । ६ स्विष्टकृद्धरणावसरे आगन्तुर्यागैरपि पशुपुरोडाशस्विष्टकृतां चरणम् ।७अन्वायत्तदेवतानां हविषां चावाहनादिषु निगमेषु अनुवृत्त्यभावः ।८पुरोडाशानामिति हविर्भेदे प्रैषस्योह्यत्वम् ।१०इडाया ऊर्द्धम् उक्तप्रैषस्योह्यता १०खं० ३अ० ४क०। १इडोपधानानन्तरं मनोतानुचरणम् ।२हविषा चरणम् प्रैषाणां तत्समलिङ्गत्वञ्च । ३हविःप्रैषे कतर एवाग्नीषोमावेवेत्यत्र ऐतरेयाणां सम्मतिः । ४ द्विदैवतादन्यत्र एकदैवते बहुदैवते पशौ मैत्रावरुणयोर्दैवतात्वम् । ५एकदैवतेषु बहुदैवतेषु च प्रैषेषु तथादृष्टत्वम् । ६ प्रकृतिभावे गाणगारिमतोल्लेखः । ७ अर्थभेदरहिते आम्नाये विकारस्य निरार्थकत्वम् । ८वपाहोमे कृते अर्द्धर्चयोर्मध्ये याज्यायाः समापनम् । ९ प्रैषसमाम्नायपठितं वनस्पतिप्रैषमभितो ये ऋचौ तयोर्वनस्पतियाज्यानुवाक्यात्वम् । १० आज्यभागयोः करणे प्रैषे प्रधानदेवताद्वदेवतयोर्निगमनम् । ११ स्विष्टकृति इडोपह्वानानन्तरम् अनुयाजैश्चरणम् । १२ उक्तस्थलेऽनुयाजानामेकादशसङ्ख्याविधानम् । १३प्रकृतिभ्योऽन्यासां वैश्वदेव्यानामाहर्त्तव्यत्वम् । १४प्रैषाधिकारनिवृत्त्यर्थम् अनवानशब्दस्य पुनरावृत्तिः । १५ पुनरनवानस्य व्याख्यानार्थोल्लेखः । १६ सूक्तवाकप्रैषे आज्यभागयोर्ग्रहणम् । १७पशुतन्त्रे पदत्रयस्याभ्यासत्वाभावाय पठितस्यापि पुनरभ्यासः । १८ देवताना-

मेकजातीयपशुकत्वकथनम् । १९ पशुशब्दानामेवावर्त्तनं नान्ययोर्देवयोः ।२० उत्तरे पूर्वोक्तस्योल्लेखः । २१अनवभृथे कर्म्मणि सूक्तवाकप्रैषसमापनानन्तरम् आहवनीये दण्डानुप्रहरणम् । २२ सावभृथे कर्म्मणि अवभृथानुप्रहरणम् । २३ वेदस्तरणोत्तरकल्पः संस्थाजपात् प्राक् निष्क्रम्य उद्दासमानस्य हृदयशूलस्यानुमन्त्रणे मन्त्रश्च । २४ उद्दासमानस्य हृदयशूलस्य उपरिष्टात् अपामुपस्पर्शनमन्त्रः ।२५ अस्य ष्टाडष्टहृदयशूलानाम् अन्योन्यसंस्पर्शावेक्षणमन्तरेणैव सर्वेषामेकैकेन समिन्धनस्य ग्रहणम् । २६ मन्त्रविशेषपूर्वकं प्रथमायाः द्वितीयायाः तृतीयायाश्च समिधोऽभ्याधानम् । २७पूर्वेषच्छोतुरेव पूर्व्वमाभ्याधानं न सर्वेषां युगपत्" । २८संस्थाजपान्तं पशुतन्त्रम् । २८सू० ३अ०६क० । १ प्रदानात्मककर्म्मोक्तप्रैषा एव सर्व्वत्र भवन्ति नान्ये इत्युक्तिः । २ येषां पशूनां यानि प्रदानानि तेषां पशूनां याज्यानुवाक्याकथनप्रतिज्ञा ।३सर्व्वत्र पूर्व्वसूक्ता अनुवाक्याः उत्तरा याज्या इति ज्ञापनम् । ४ याज्यानुवाक्यालिङ्गितदैवतेन वक्ष्यमाणानां पशूनां नानात्वोक्तिः। ५ अग्नेर्याज्यानुवाक्याः। ६सरस्वत्या याज्यानुवाक्याः। ७सोमदेवतायाः याज्यानुवाक्याः। ८पूष्णो याज्यानुवाक्याः। ९ बृहस्पतेर्याज्यानुवाक्याः। १० विश्वेषां देवानां याज्यानुवाक्याः। ११ इन्द्रस्य याज्यानुवाक्याः। १२ मरुतां याज्यानुवाक्याः। १३इन्द्राग्न्योर्याज्यानुवाक्याः। १४सवितुर्याज्यानुवाक्याः ।१५वरुणस्य याज्यानुवाक्याः। १५सू०३अ० ७क० । १ अष्टादशभिर्ऋग्भिः पशुकर्मविधानम्, तासामृचां प्रजापतिदेवताकत्वम् । २ याज्यानुवाक्यालिङ्गकल्पितदैवत्याना-मिष्टिरूपाणां पशूनां विधानं, साकल्येनैतदध्यायगणितानां तासां लिङ्गतुल्यकत्वोक्तिः । ३ खण्डद्वये समाम्नातानां पशूनां मध्ये केषाञ्चित् सोमाङ्गत्वं केषाञ्चित् स्वतन्त्रत्वञ्च। ४ पशूनां प्रकृतिभूतस्य ऐन्द्राग्नस्य निरूढनामकस्य पशोः कर्त्तव्यत्वम् । ५ निरूढस्य पशोः षट्सु षट्सु मासेषु वत्सरे वत्सरे वा कार्य्यता ।६प्राजापत्योपांशुसावित्रसौर्य्यवैष्णववैश्वकर्म्मणरूपपाशुकतन्त्रेषु उपांशुजपविकारोक्तिः । ७प्रैषादेरपि आगुरः स्थानभाजित्वम् । ८ आद्ददादीनां सप्तानां यथास्थानमुपांशुत्वम् । ८सू० ३अ०८क०।१सौत्रामण्याख्य कर्म्माधिकारः। २तत्राश्विनसारस्वतैन्द्राःपशवःबार्हस्पत्यश्चतुर्थः ऐन्द्रसावित्रवारुणाः पशुपुरोडाशाः यथासङ्ख्येन भवन्तीत्युक्तिः।३चात्वालमार्जनानन्तरम् आश्विनसारस्वतैन्द्राणां प्रचरणं तेषाञ्चानुवाक्याप्रैषयाज्यानां कथनम् । ४कुम्भीस्थसुरावेक्षणमन्त्रः ग्रहपात्रस्थसुरावेक्षणप्रकारश्च । ५ सुराग्रहपयोग्रहयोर्भक्षणपविधानम् । ६ सुराग्रहेष्वेव प्राणभक्षविधानम् । ६सू० ३अ०९क०। १विधानान्यथाभावे प्रायश्चित्ताधिकारः । २ विहितस्याभावे प्रतिनिध्युपादानम् । ३ इष्टिमध्यरूपस्याग्न्याहिताग्नेः प्रयाणोपपत्तौ अग्नीनां पृथगुद्वयनम् । ४ समन्त्रकं साज्याहुतिहोमकं समारोपणं कृत्वा गमनविधानम् । ५ समारोपणस्वरूपम् । ६ यजमानकर्त्तृकं गार्हपत्ये पाणिद्वयस्य सकृत्प्रतपनम् । ७उक्तप्रकारेणाहिताग्नेः समारोपणानन्तरमकृत्वागमनविधानम् । ८ यजमानकर्त्तृकं समन्त्रकमरणीमन्थनविधानम् । ९अवदीप्यमानस्याहवनीयस्य शम्यापरासादर्वाक् संवपनम् । १० यदि त्वतीयाद्यमावास्या पौर्णमासी वातीयाद्यदि वाऽन्यस्याग्निषु यजेत यदि वास्यान्योऽग्निषु यजेत यदि वास्यान्योऽग्निरग्नीन् व्यवेयाद्यदि वा साग्निहोत्र उपसन्ने हविषि वा निरुप्ते चक्रीवच्छा पुरुषो वाऽविविहारमन्तरियाद्यदि वाश्वे प्रमीयेत इत्येवं निमित्ते इष्टिविधानम् । ११ उक्ताया इष्टेः पथिकृद्धाकाग्निदेवताकत्वम् । १२ उक्तायामिष्टौ अनडुह्दक्षिणा । १३पूर्वोक्ताया इष्टेः अग्निभिन्नव्यवधाननिमित्तकत्वे विधानभेदः । १४शुना व्यवाये अपदानां भस्मना परिपूरणम् । १५ भस्मराजीदकराज्या च सन्तनने प्रतिराजि मन्त्रावृत्तिः । १६उक्तराजिभ्यां समानं कृत्वाऽऽहवनीयानुगमनानन्तरं ततः प्रणीय तदुपस्थानम् । १७ पथि स्वतस्य अन्यगत्र्येन दोहनीयाया गोः पयसाग्निहोत्रान्तरं प्रातरादौ प्राक् देहाग्निसंस्कारात् कृत्वा दाह इत्युक्तिः। १८ अपरपक्षे आहिताग्नेर्मरणशङ्कायां तत्पक्षावशिष्टाहुतिभिः एतत्पूर्वपक्षनयनम् ।१९आवाहनानन्तरं प्रधानयागादर्वाक् हविर्व्यापत्तौ तस्य प्रधानयागादेः सर्वस्याज्येनेष्टिं समाप्य पुनरिज्या न भवतीत्युक्तिः । २० च्युतकेशनखादिभिरन्यैर्वा बीभत्सैर्हविःषु दुष्टेषु नान्यः प्रत्युक्तः शुद्ध्युपायः । २१ कठिनानां भेदने द्रवाणां क्षरणे हविषां दुष्टत्वम् । २२ दुष्टानां हविषां अप्सु प्रक्षेपः । २३सान्नाय्यस्य दुष्टस्य मध्यमेन पलाशपर्णेन वल्मीकद्वारे प्रतिषेचनम् अप्सु वा तूष्णीमिति विकल्पः । २४ अन्तःपरिधिदेशे विष्यन्दमानस्य हविषो निर्वपणम् । २५प्रातर्दोहे अदुष्टे द्वयोः पात्रयोः कृत्वाऽन्यतरत्

दधिभावाय आतच्च नाभ्यां दधिपयोभ्यां प्रचरणम् । २६ पयसि दुष्टे तत्स्थाने पुरोडाशव्यवस्था । २७ दधिपयोरूपे साम्नाय्यद्वये दुष्टे इन्द्राग्निदेवत्योदनसिद्ध्यर्थं पञ्चशरावपरिमितव्रीहिनिर्वपणम् । २८ इन्द्राग्न्योः पृथक् चरणम् । २९ एकेषां मते केवलमिन्द्रदेवताकपञ्चशरावोत्पादनानन्तरम् इन्द्राग्न्योः पृथक् चरणम् । ३० साम्नाय्यार्थमपाकृतानां वत्सानां पाने वायुदेवत्यया यवाग्वा यजनम् । ३१ गर्भमिति मन्त्रेण स्रवतोऽधिश्रितस्याग्निहोत्रस्याभिमन्त्रणम् । ३१ सू० ३ अ० १० क० । १ उपावसृष्टाया दुह्यमानायाश्च अग्निहोत्र्या गोरभिमन्त्रणम् । २ उक्ताया गोरुत्थापनम् । ३ उक्ताया गोरूधसि मुखे चोदपात्रमुपोद्गृह्य दुग्ध्वा ब्राह्मणाय पामार्यन्तत्प्रदानम् । ४ शब्दायमानायै उक्तायै गवे यवसदानम् । ५ दुग्धस्य शोणिताकारत्वे निरवशेषस्य गार्हपत्ये दाहविधानमन्येन द्रव्येण च होमकरणम् । ६ दोहनोत्तरं पात्रस्य भेदने पाशात् पतने वा विच्छिप्रपतितत्यागेनान्यस्यादुष्टस्याभिमन्त्रणम् । ७ दोहनावस्थायां पयसः स्कन्दने स्कन्नांशाभिमन्त्रणम् । ८ परिशिष्टेन स्थालीस्थेन होमः । ९ होमस्यापर्याप्तौ अभ्यानीयान्येन होमः । १० पयसि स्कन्ने प्रायश्चित्तम् । ११ स्कन्ने स्कन्नाभिमर्शनम् । १२ पयःशेषेण होमविधिः । १३ कुम्भतस्याऽशेषे पुनरुन्नीय होमकरणम् । १४ स्थालीपात्रे शेषाभावे संस्कृतेनाज्येनोन्नीय होमः । १५ प्रधानहोमद्वयपर्यन्तम् उक्तरूपा प्रायश्चित्तिः । १६ पूर्वोक्तहोमे प्राकृतस्य मन्त्रस्यापवादरूपया वारुण्या ऋचा होमः वारुणीजपश्च । १७ वारुणीजपो वारुणीहोमः अनशनमिति त्रयस्य शेषेण होमे प्रायश्चिार्होमे पुनरुन्नीय होमे च कर्त्तव्यता । १८ गार्हगारिमते उक्तपदार्थे पुनर्होमः । १९ सरस्वति शब्दायमानस्याग्निहोत्रद्रव्यस्य अभिमन्त्रणम् । २० उद्वासिते विस्यन्दिते च प्रायश्चित्तान्तरम् । २१ सोमके मध्यमेन पलाशपर्णेन होमः । २२ अभिहृष्टेऽधिकसमिदाधानम् । २३ उत्तरस्या आहुतेः स्कन्दने समिदाधानम् । २३ सू० ३ अ० ११ क० । १ सायं होमस्य प्रदोषान्तकालविधानम् । २ सङ्गवान्तस्य प्रातर्होमकालत्वम् । ३ सायं प्रातर्होमेऽतीते चतुर्गृहीतेनाज्येन होमः । ४ कस्मिन् काले केन मन्त्रेण होमकर्त्तृक्तिः । ५ अग्निहोत्रे समाप्ते वारुणीष्टिः कार्य्या । ६ होमोत्तरकाले प्रातः इष्ट्वान्ते वरदानम् ।

७ अग्निहोत्रसमाप्तौ आहवनीयस्यानुगमनं कृत्वा पुनस्तदुद्धरणम् । ८ तन्निमित्ता मित्रसूर्य्योभयदेवताका इष्टिः । ९ इष्टिसमाप्तौ यतवाचोः पत्नीयजमानयोरग्नीन् ज्वलयतोरनश्नतोरहःशेषस्य पोषणम् । १० द्वयोर्गवोर्दुग्धेन रात्रेः पूर्वचतुर्थभागे सायमग्निहोत्रहोमः । ११ एकस्मिन् पयस्यधिश्रिते द्वितीयमवनीय तेन होमकरणम् । १२ प्रातःकालातिपातनिमित्ता प्रातरिष्टिः । १३ उक्तायामिष्टौ व्रतभृद्वा स्याग्नेर्दैवतात्वम् । १४ स्वकाले एव प्रणीतेष्वग्निषु होमकालातिपत्तौ प्रायश्चित्तोक्तिः । १५ दुःखेनानुपाते प्रायश्चित्तिः । १६ अग्निहोत्रार्थं विधिनानुद्धृते आहवनीये यद्यस्तमियादर्कस्तदा बहुविदुब्राह्मणेन तस्य निधानान्तं कारयेदित्युक्तिः । १७ पूर्ववत् अनुद्धृतेऽभ्युदितो यद्यर्को बहुविदुब्राह्मणेन तत्प्रणयनम् । १८ आज्यस्य होमरजतायनयनरूपकार्य्यान्तरोक्तिः । १९ कालात्ययेन प्रायश्चित्तविशेषोक्तिः । २० उक्तविषये प्रातःकाले विशेषोक्तिः । २१ विद्यमाने आहवनीये गार्हपत्यानुगमने इतिकर्त्तव्यताविधानम् । २२ मथनसमर्थत्वाभावे भस्मनाऽरणी लेपयित्वा तन्मन्थनम् । २३ मन्थनविषये इतिकर्त्तव्यताकलापः । २४ उक्तमन्थनविषये द्वितीयः कल्पः । २५ पुनर्मन्थनविषये कल्पान्तरम् । २६ त्रिगुणयुक्तोऽग्निरेवात्र मन्थनविषये एका देवता । २७ अग्निहोत्रार्थं प्रणीते आहवनीयेऽनुगतप्रायश्चित्तत्वेन इष्टिविशेषोक्तिः । २८ ज्योतिष्मद्गुणकाग्निवरुणयोः प्रकृते देवतात्वोक्तिः । २९ सर्वेष्वग्निष्वनुगतेषु आदित्येऽस्तमिते उदिते वाऽस्याग्नेः पुनराधानरूपप्रायश्चित्तोक्तिः । ३० अरण्योः समारूढेषु अग्निषु अरण्योर्नाशे अग्न्याधेयस्य पुनराधेयस्य वा कर्त्तव्यत्वम् । ३० सू० ३ अ० १२ क० । १ अतःपरं भाविनीनामिष्टीनाम् आग्नेयत्वोक्तिः । २ व्रतातिपाते आग्नेयीष्टिः । ३ हुतेऽग्निकर्म्मविदोषेनेष्टिः किन्तु व्याहृतिहोमः । ४ आगारदाहे क्षामायाग्नये, शावाग्निसंसर्जने च शुचयेऽग्नये, इष्टिः । ५ सर्वेषां द्वयोर्वा अग्न्योः परस्परं संसर्गे विविचयेऽग्नये उक्तेष्टिः । ६ गार्हपत्याहवनीययोः संसर्गे वीतयेऽग्नये इष्टिः ७ पचनाग्निना संसर्गे संवर्गायाग्नये इष्टिः । ८ वैद्युतेऽग्नौ अप्सु मद्यकाय, शवृषामन्नभोजने वैश्वानरनामकायाग्नये चेष्टिकरणम् । ९ पुरोडाशकपाले नष्टेऽनुद्वासिते पूर्वोक्तैवेष्टिः । १० अध्यायावियते चत्वायष्टेः कर्त्तव्यत्वम् । ११ जीवत्येवाहिताग्नौ मृतशब्दोक्तेषु सुभतयेऽग्नये इष्टिः । १२ तत्रेष्टौ मरुतोदेवता ।

१३ आमावास्याख्ये कर्मण्यारब्धे चन्द्रमसः पुरस्ताद-
भ्युदये जाते मरुद्देवताका उक्तेष्टिः। १४ प्रायश्चित्त-
प्रकरणोक्तानां ब्राह्मणोक्तानाञ्चेष्टीनां वैकल्पिकत्वकथ-
नम्। १५ हविषां स्कन्नानामभिमर्शनम्। १६ बहि-
ष्परिधि स्कन्नया आहुत्या आग्नीध्रकर्तृको होमः। १७हु-
तवते आग्नीध्राय पूर्णपात्रदानम्। १८ देवताविपर्य्यास-
रूपव्युत्क्रमे महाव्याहृतिहोमः प्रायश्चित्तं हिरण्यदानञ्च।
१९कस्मिंश्चित् कर्मणि यष्टव्यदेवतावाहनमकृत्वा उत्तरकर्म्म-
प्रवृत्तौ यदा स्मरणम् भवति तदैवोत्थाय तदावाहनं कर्त्तव्यम्
। २० मनसा वा तदावाहनमित्यन्यमतम्। अस्यानिष्ट्याः
देवताया स्मरणक्रमेण यागः। २०सू० ३अ० १३क०।
१ अपक्वहविषा होमे कृते चतुःशरावौदनेन चतुर्ब्राह्मण-
भोजनरूपा प्रायश्चित्तिः। २अदग्धं किञ्चिद्धविरवदानेभ्यो
न पर्य्याप्तञ्चेत्तदा पूर्व्वोक्तप्रायश्चित्तम्। ३ हविष्यशेषे दग्धे
पुनरावृत्तिः कार्य्या। ४ आवाहनात् प्राक् हविर्दोषे
पुनरावृत्तिरेव। ५ गुणभूतानां पुनरावृत्तिकथनम्।
६ स्विष्टकृतः प्राक् प्रधानभूतानां पुनरावृत्तिकथनम्।
७ अवदानदोषे पुनरायतनादवदानोक्तिः। ८नाशे शेषे-
ष्वेष्टा देशे दक्षिणादानं न कृत्विग्भ्य इत्युक्तिः। ९सर्व्वेषु कर्मसु
विहितदक्षिणादाने शक्तस्य सर्व्वभूमिदानम्। १० पुरोडाश-
श्रपणादूर्द्ध्वं प्रायश्चित्ताभावः। ११ श्वादिभिरवलीढ़ानां
तद्दर्शनादिभिरभिच्छिन्नानाम् अन्यथा वाऽशुचिसम्बन्धानां
कपालानामभिन्नानाम् अपामभ्यवहरणम्। १२कपालेभ्यो-
ऽन्येषां स्रुगादीनां भिन्नानामभिन्नानाञ्च अपामभ्यवहर-
णम्। १३स्फुटितोत्पतितपुरोडाशानां निधानाभिमन्त्र-
णे। १४अग्निहोत्रहोमायाग्निप्रणयनकाले मथ्यमाने-
ऽग्नौ न जाते लौकिकमग्निं प्रणीय तत्र होमकरणम्।
१५अन्यादीतुक्ता तेषां पूर्व्वपूर्व्वालाभे उत्तरोत्तरग्रहणम्।
१६ब्राह्मणपाण्यादिषु पञ्चसु आहुतिधारणार्था समिद्ध-
वति इन्धनार्थाः समिधो न भवन्त्येवेति। १७होमानन्तरं
मन्थनमपि भवतीत्युक्तिः। १८ यदि पाणौ जुहुयात् तदा
वासार्थिनो ब्राह्मणस्य नावरोधः करणीय इत्युक्तिः। १९
यद्युदकर्णे जुहुयात् तदा छागमांसवर्जनम्। २० कक्षे
चेत् दर्भाणामनधिशयनम्। २१अप्सु चेत् भोजनीयाभोज-
नीयरूपविवेकाभावः। २२वैश्वानरिकयावद्ध्योर्विकयोर्न्न-
तयोर्विवेकोक्तिः। २३ आहुत्योरन्तराऽन्वागमने सति
निहिते हिरण्ये द्वितीयाहुतिहोमः। ३अ० १४क०
चतुर्थाध्याये सोमयागेतिकर्त्तव्यताकलापः।

१ आधानानन्तरमारम्भयोर्दर्शपूर्णमासयोरनन्तरम् इष्टि-
पशुचातुर्मास्यैरिष्ट्वा सोमेन यजनम्। २ एकेषां मते
दर्शपूर्णमासानन्तरम्, अन्येषां मते ताभ्यां पूर्व्वमपि
सोमेन यजनम्। ३ सोमयागकर्तृणामृत्विजां
संख्यानिरूपणाय प्रतिज्ञा। ४ते च त्रिपुरुषचत्वारस्तेन
तत्र षोड़शर्त्विजः। ५ चतुर्भागक्रमे षोड़शर्त्विजां
मध्ये स्वस्यैवया उत्तरे त्रयः स्वस्वगणभूता इति चतु-
र्णामेव मुख्यत्वमित्युक्तिः। ६ होता मैत्रावरुणोऽ-
च्छावाकोग्रावस्तुत् इत्येकोगणः। अध्वर्युः प्रतिप्रस्था-
ता नेष्टोन्नेता इत्येकोगणः। ब्रह्मा ब्राह्मणाच्छंसी
आग्नीध्रः पोता इत्येको गणः उद्गाता प्रस्तोता प्रतिहर्त्ता
सुब्रह्मण्य इत्येको गण इत्येवं चतुर्षु ऋत्विग्गणेष्वाद्या
चत्वारोमुख्याः। ७एतेषामेव ऋत्विजाम् अहीनैकाहेष्वाजनं
न सदस्यमित्यमध्वर्य्यूणां कर्त्तव्यमिति ज्ञापनम्। ८-
गृहपतिसम्प्रदायानासक्तानां षोड़शानाम् ऋत्विजां सर्व्व-
यजनम्। ९ ऐष्टिके तन्त्रे सत्रिणां पुरुषाणां समानाना-
दिकर्म्मणि यथार्थमूहस्य कर्त्तव्यत्वम्। १० अन-
ग्नीनां दीक्षणात् प्रभृत्येव यथार्थमभिधानमैष्टिके तन्त्रे
इत्युक्तिः। ११ याज्यानुवाक्ययोः अग्निर्मुखमित्यूहः।
१२ दक्षप्रदाने ऊहविधानम्। १३ प्रैषेषु निविस्तु
अप्राप्तस्य ऊहस्य विधानम्। १४ अनैष्टिकत्वात् सूक्-
त्वाञ्च एतयाज्यायामप्राप्तोहविधानम्। १५ब्रह्माद प्राप्तो
कृताञ्जोहविधिः। १६अच्छावाकस्य निगदे उपहवे प्रत्युप-
हवे चोहः। १७आर्षेयप्रवरणे गृहपतिप्रवरणानन्तरम् अ-
न्त्यादीनां मुख्यानां प्रवरणम्। १८ कर्म्माक्रमोदित
एलोक्तक्रमश्च। १९ समानार्षेयाणां समानगोत्राणां
तन्त्रता। २० द्रव्यान्वयानां संस्काराणाम् आवर्त्तनम्।
२१ एकेषां मते अग्निचित्यावत्सु क्रतुषु उखासम्भरणीयम्
ऐष्टिकं कर्म्म। २२ ब्रह्मस्तुत्वत्वत्तुत्वलभ्यहूवकानां
त्वयाणामग्नीनां देवतात्वोक्तिः। २३इदमभ्र्तिकर्म्मणाम्
उत्तरोत्तरं शनैस्तरां भवितव्यत्वम्। २४ उक्तक्षोभसम्भ-
रणीयस्य पौर्णमासात् शनैस्तरत्वोक्तिः। २५ सोमप्रवह-
णस्य प्रायणीयातुल्यत्वोक्तिः। २६ औपवसथ्येऽग्निप्रणय-
नस्य प्रथमाया ऊर्द्ध्वं स्वरेषु नियमाभावः। २७धर्मे मध्य-
मोत्तमयोर्नियमाभावोक्तिः। २७सू० ४अ० १क०।
१दीक्षणीयायामिष्टौ विराजौ धाय्ये। २ दीक्षणी-
यायामग्नाविष्णू देवते। ३ साग्निचित्ये त्रीण्यन्यानि
हवींषि। ४ अन्त्ययोरुभयोराग्नावैष्णवादधिकानि ह-

शीति। ५भुवद्वद्ग आदित्येभ्यः भुवनपतिभ्यो वा आदित्येभ्यो याज्यानुवाक्ये। ६ इदमादिषु उदयनीयायाः प्राक् मार्जनाभावोक्तिः। ७ इड़ायां सूक्तवाके च स्थितानामाशिषां स्थाने आगूर्णात्मकमन्त्रस्य प्रयोगः। ८इड़ानिगदकथनम्। ९सूक्तवाकनिगदोक्तिः। १० नामादेशाभावोक्तिः। ११ शंयुवाकपञ्चिड़ायाः कथनम्। १२ अग्निप्रणयनोत्तरकालं गार्हपत्याहवनीययोर्मध्ये दीक्षितानामासनशयनरूपसञ्चारदेशः। १३सत्रिणां दीक्षाविधानम्। १४महाव्रतसहिते सत्रे विशेषोक्तिः १५ द्वादशाहतापश्चितेषु यत्संख्याः सुत्यास्तत्संख्याएवोपसदो दीक्षाश्च भवन्तीति। १६ विकल्प्येकाहानां कर्माचारः। १७ दीक्षाकालएव विधातव्ये दीक्षोपसत्सहितानामेकाहःप्रयोगकालविधानम्। १८दीक्षाहःसु परिसमाप्तेषु अनन्तरं यदहस्तस्मिन्नहनि सोमक्रयविधानम्। १८सू० ४अ० २ क०। १ सोमक्रयदिवसे प्रायणीयेष्टिकरणम्। २प्रायणीयेष्टेः शंय्वन्तत्वम्, नोदयनीयान्तत्वमिति। ३ उक्ताया इष्टेरनाज्यभागत्वं नोदयनीयत्वमिति। ४ अहर्गणेषु सोमक्रयस्य सकृदेव कर्त्तव्यत्वम्। ४ सू० ४अ० ३क०। १ सोमक्रयरूपं कर्म। २ क्रीतं सोमं प्राग्वंशसमीपं नेष्यत्सु अध्वर्य्युषु अनसः पश्चात् त्रिपदमात्रेऽतीते चक्रवर्त्मनोर्मध्यभागस्य सरलदेशे प्रेषितस्य सतः पार्श्वीअवालयतः प्रपदेन दक्षिणस्यां दिशि त्रिःपांशूद्वपनम्। ३ अन्तरेणैव वर्त्मनी अनुव्रजतएव उत्तराअनुवचनम् न व्रजनविच्छेदे इत्युक्तिः। ४अवस्थितस्थानस्थो दक्षिणपार्श्वेन सोमसमीपं गत्वा तमीक्षमाणस्य तत्रैवावस्थानम्। ५ अवस्थितेऽनसि दक्षिणात् पश्चादभिक्रान्तस्य सोमाभिमुखे अवस्थानम्। आहवनीयस्याप्यतोनुव्रजनञ्च। ६सोमे निहिते तिष्ठतएव परिधानोक्तिः। ७ उपस्पर्शनविषयस्य विकल्पोक्तिः। ७सू० ४ अ० ४ क०।

१ इड़ान्ता आतिथ्या नाम इष्टिः। २ आतिथ्येऽग्निमन्थनरूपाङ्गकथनम्। ३ आतिथ्येष्टौ धाय्याद्वयं, संयाज्याद्वयम्, आतिथ्यं करिष्यतां सदमभिमर्शनम्। ४उदकस्पर्शानन्तरं सोमाप्यायनम्। ५ उपसत्सु उदकस्पर्शे उष्णोदकग्रहणम्। ६ आप्यायनमन्त्रः। ७उदकस्पर्शानन्तरं नमस्काराञ्जलिरूपेण पाणिनिधानस्य कर्त्तव्यत्वम्। ७सू० ४अ० ५क०। १ उदकस्पर्शनानाम् आप्यायननिह्नवप्रस्तराङ्गत्वोक्तिः। २ मधुचमनवानस्यका प्रणवेन तदर्पणम्। ३पूर्वस्याभिष्टवनस्य एतावत्त्वकथनम्

२सू० ४अ० ६क०। १ याज्याव्यवधाने सत्यपेक्षमेवाभिष्टवनम्। २ होत्रादिषु उपविष्टेषु अध्वर्य्युकर्तृकवर्मद्वयाह्वानस्य उत्तरारम्भे हेतुत्वोक्तिः। ३ अभिहिङ्कारवर्जम् उत्तराभिष्टवनविधानम्। ४ उत्तरपटलस्य समष्टिप्रयोजनानि। ५ उत्तमयोः प्रवर्ग्ययोः स्वरूपकथनम्। ५ सू० ४अ० ७क०। १प्रवर्ग्योपसदोः सम्बन्धाय प्रवर्ग्यार्थं प्रपन्नस्य उपसत्करणविधानम्। २ उपसदि पित्र्याया जपलोपः। ३पित्र्ययैव प्रवेशोपवेशनयोर्व्याख्यानम् ४ पित्र्याया उपवेशनातिदेशात् दक्षिणोपर्युपस्थनाविधानम्। ५ उपसद्यायमीदृषे इत्याद्याः तिस्रः सामिधेन्यः। ६तासामुत्तमेन प्रणवेनाग्निं सोमं विष्णुमावाह्योपवेशनम्। ७ एकेषां मते देवतानाम् नावाहनम् अनावाहनेऽपि उक्ता एव देवताः इत्युक्तिः। ८ स्विष्टकृदादिप्रयाजाज्यभागलोपकथनम्। ९ आप्यायननिह्नवयोर्नित्यत्वकथनम्। १०अपराह्णेऽपि कर्त्तव्यायामुपसदि विशेषादिकथनम्। ११तत्र पूर्व्वापराह्णिककर्माणि। १२पौर्व्वाह्णिकीनामुपसदां पूर्व्वाह्णे आपराह्णिकीनाञ्च अपराह्णे कार्य्यत्वोक्तिः। १३पूर्व्वाह्णिक्यापराह्णिक्यावुपसदौ एकीकृत्य एकोपसद्व्यवहारः, तादृश्या उपसदश्च त्रिष्वहःसु कर्त्तव्यत्वम्। १४षट्सु वेति व्यवस्थाविकल्पः। १५अहीनादीनाम् अध्वर्य्युप्रत्ययादुपसन्निश्चयः। १६ एकेषां शाखिनां ज्योतिष्टोमस्य प्रथमप्रयोगे धर्म्मस्याभावोक्तिः। १७ औपवसथ्येऽहनि वर्त्तमानयोरुपसदोः पूर्वाह्णएव कर्त्तव्यत्वम्। १८होता दीक्षितश्चेत् तदा औपवसथ्येऽहनि प्रथमोपसदि समाप्तायां प्रेषितः पुरीष्यचित्यर्थमनुवचनम्। १९होतरि अदीक्षिते यजमानस्यानुवचनम्। २० पश्चात् पदमात्रे स्थित्वाऽभिहिङ्कृत्य पुरीष्यासोऽग्नयः इति समग्रायाः ऋचस्त्रिरनुवचनम्। २१ सुमन्द्रेणैवानुवचनं नोपांश्विति। २२ प्रयत्सु अध्वर्य्युषु अनुव्रजतोऽनुव्रजनम्। २३ तिष्ठत्सु अध्वर्य्युषु अनुवचनारम्भस्थाने स्थित्वा भूर्भुवः स्वरिति वाचं विसृज्य प्रणयतेति सम्प्रैषानुवचनम्। २४ होता दीक्षितश्चेत् प्रणीतकर्मचितस्य अग्नेः अनुगीतस्यागंशनरूपसंस्तुतिः। २५त्रिमर्ध्यमया वाचा पूर्वोक्तमन्त्रानुशंसनम्। २६ अग्निपुच्छस्य पश्चात् वैश्वानरीययजनम्॥ साग्निचित्येषु क्रतुषु पुरीष्यचितिः, अनुशंसनं, वैश्वानरीयमित्येतत् त्रयं भवतीत्युक्तिः। २८ ब्रह्मणो नियमभेदः। २९ उक्तस्याग्निप्रणयनस्य कर्त्तव्यत्वम्। ३० दीक्षितश्चेद्ब्रह्मा तदा तस्य

वसोर्धाराहोमकाले तत्प्रतिगमनविधानम् ३० सू०४अ० ८क०। १हविर्धानयोः शकटयोः अध्वर्युकर्त्तृकं प्रवर्त्तनम्। २उक्तप्रवर्त्तने सोमप्रवहणेन कार्य्यतोक्तिः। ३ पूर्व्वोक्तानुवचने विशेषकथनम्।४रराट्यामवद्यायाम् अधिद्वयोरिन्द्रवन्ता ऋच अर्द्धर्चेऽवसानम्। ५वद्धां रराटीमीक्षमाणस्य ऋग्विशेषानुवचनम्। ६ उपनिहतयोर्मेथ्योः ऋग्विशेषेण परिधानम् ६सू०४अ०८क०। १प्रेषितानुवचने इतिकर्त्तव्यताकलापः। २ अनुप्रजत उत्तरानुवचनम्। ३ ऋग्विशेषसमाप्तौ प्रणवेनोपरमः। ४ आग्नीध्रीयमभिव्रजत्सु अध्वर्य्युषु उत्तरेण तमतिव्रज्य ऋग्विशेषस्यानुवचनम् ऋग्विशेषस्य चार्द्धचे आरामः। ५प्रपद्यमानस्य सोमस्यानुप्रपदनप्रकारः। ६ शालामुखे भक्षोपवेशनप्रकारः।७ब्रह्मकर्त्तृकस्य सोमप्रणयनस्य पाक्षिकत्वकथनम्। ८ सोममप्रणयतो ब्रह्मणः कर्त्तव्यभेदः। ९ आहवनीयस्य दक्षिणतः ब्रह्मोपवेशने नियमः। १० अग्निचित्यासहितायां सोमयागक्रियायाम् अग्निपुच्छस्य दक्षिणत उपवेशनम्। ११ अग्निषोमीये पशौ उक्तब्रह्मासनातिदेशः।१२सौत्ये चाहनि वपाहोमपर्य्यन्तमाहवनीयस्य दक्षिणत आसनम्। १३व्रहस्पतये सोमं प्रदाय हविर्धाने चाप्येष यदि गतः स्यात्तदा प्रपद्यमाने सोमे आसादनार्थं पुनः प्रत्येयादित्युक्तिः। १२सू० ४अ०१०क०। १ अग्निषोमीयेण पशुना चरणम्। २ प्रणयनपर्य्यन्तमुत्तरवेदिसमीपे आदण्डप्रदानस्य कार्य्यभेदाः। ३होतुः स्वस्य धिष्ण्यस्य पश्चादुपवेशने कार्य्यभेदः। ४मैत्रावरुणस्य स्वधिष्ण्यस्य पश्चादवस्थानम्। ५ देवसूनां हवींषीति संज्ञाकथनम्, तत्र सर्व्वासामष्टानां देवतानां सगुणत्वम्, रुद्रस्य गुणविकल्पश्च। ६उक्तदेवतानां याजयानुवाक्याकथनम्। ६सू० ४अ०११ क०। १ सर्व्वपृष्ठानीतिवक्ष्यमाणानां हविषां संज्ञा, तासाञ्चान्वायात्यत्वं तद्देवतोपदेशस्य ध्यानार्थत्वं तासामष्टौ संज्ञाः तत्रादितः षण्णामेकैकस्याश्चत्वारश्चत्वारो गुणशब्दाः ततोविष्णुपत्नी अदितिरित्येका, ततश्चानुमतिरिति हे। उक्तानामष्टानां देवतानां याज्यानुवाक्याकथनम्। वैश्वानरीयस्य नवमत्वं, कायस्य दशमत्वञ्च। ३ औपवाजैरङ्गारैश्च्यावपरिहारे यत्नस्य कार्य्यता। ४ आग्नीध्रस्योत्तरेण होतुर्नयनं दक्षिणे होत्रीये निधानम्।५शामित्रोदाहरणे दक्षिणेन मैत्रावरुणं, होत्रीय एव निधानम्। ६उपोत्थाननिष्क्रमणे तथा वेदग्रहणम्। ७हृदयशूलोद्वासनप्रकारः।

८वसतीवरीणां परिहारे क्रियमाणे दीक्षितानामन्तर्भावः, अदीक्षितानां वहिर्भावश्च। ४अ०१२क०। १ यस्यां रात्रौ पशोः समाप्तिस्तस्याञ्चतुर्थे भागे पक्षिप्रवादनात् प्राक् प्रातरनुवाकायामन्त्रितस्य विधिपूर्व्वकः आहुतिहोमः। २ उक्तविषये द्वितीयाहुतिहोमः। ३ ब्रह्मणश्च होतृवायं विधिः समान इति। ४ हविर्धाने प्राप्य रराट्यभिमर्शनम्। ५ दक्षिणेन पाणिना पर्य्यायेण रराट्यभिमर्शनम्। ६ मन्द्रस्वरेण प्रातरनुवाकानुवचनम्। ७ प्रातरनुवाकार्थमाम्नानविशेषः। ८ अग्निदेवताकक्रतुः ४अ०१३क०। १औषसक्रतुः। २तत्रेतिकर्त्तव्यताकलापः ४अ०१४क०। १आश्विनः क्रतुः। २तत्र प्रातरनुवाकः। ३पूर्व्वोक्तादन्यः प्रातरनुवाकः। ४अन्यैश्छन्दोभिराग्नेयस्य गायत्रस्य छन्दसोनात्यायनम्। ५ राजन्यस्य न त्रैष्टुभं, वैश्यस्य न जागतमिति। ६ अभ्यासवत् एकपदद्विपदानां संहितानामन्ते प्रणवकरणम्। ७माङ्गलादीनां यथाक्रमं वक्तव्यता। ८ प्रैषतः स्वर्गकामस्य माङ्गलकथनम्। ९ तमसोपघातपर्य्यन्तं इडेद्यावीयसूक्तावर्त्तनम्। १० तमसोपघातकाले ईडेद्यावीयस्य उत्तमयर्चा प्रतिप्रियतममिति सूक्तस्योपसन्तननम्। ११ उत्सर्पणस्वरूपकथनम्। ११सू० ४अ० १५क०।

५ अध्याये। १परिधानोत्तरानुवचनप्रकारः। २ तत्र निगदादि। ३ अपोनप्त्रीयायां प्रयोगमन्त्रौ। ४ प्रातःसवनस्य मन्द्रस्वरेण प्रयोगः। ५ अध्वर्युकारस्यानुकाशेन वचनम्। ६ इष्टिकामस्य सामधेनीवत् प्रकृत्यावचनम्। ७ प्रकृतिभावे यथर्चमर्द्धर्चे जिज्ञासा। ८ दशमीप्रहणे मन्त्रानुवादः। ९ एकधनासु अप्सु आवर्त्तनीयर्चकथनम्। १० इष्टिपथमागतासु तासु जप्यमन्त्रः। ११ समीपागतासु तासु जप्यमन्त्रः। १२वसतीवरीषु समागतासु ब्राह्मणोक्तकार्य्यचरणम्। १०तीर्थदेशे होतृचमसे आपां पूर्व्वभागे आपोनदेवीःइति मन्त्रं समाप्य प्रणवेनोपरमः। १४ निगदकथनेन निष्क्रमणविधिः। १५ आसामेकधनानामागच्छन्तीनां सुखतो गत्वा ता। अपरेणातीत्य उत्तरतः स्थितिविधिः। १६ तास्वदूरेणातीतास्वन्यावर्त्तनम्। १७ अन्वारब्ध मन्त्रक्रमेण व्रजनम् स्वगतानपक्षे प्रणवेनसन्तानक्रिया।१८तिसृणाम् उत्तमयानुप्रपदनम्।१९तृणानिरसनेन होमाभिमुखे उपवेशनप्रकारः। १९सू० ५अ० १क०। १ उपांशुनामग्रहे हूयमाने तदभिमुखीभूय प्राणवायोर्नासिकाद्वारेण वहिष्करणम्। २वहिःस्थस्य वायो-

र्नाभिकया द्वे प्रवेशनप्रकारमन्त्रौ । २ उपांशुपश्चार्द्धसोमसवनसाधनपाषाणं व्याप्नाय स्तोत्वमिहृस्य वाग्विसर्गः । ४ मैत्रावरुणब्रह्मणोः कार्य्यभेदः । ५ ताभ्यामितरेषां दीक्षितानां कार्य्यभेदः । ६ विप्रुड्ढोमौ कृत्वा अध्वर्युकृता अन्योन्यं स्तृयन्त आतीर्थदेशात् सर्पन्तीत्युक्तिः । ७ बहिष्पवमानस्तुत्यर्थमुद्गातारमभिमुखीकृत्य ऋत्विजामुपवेशनम् । ८ तत्रैवासीनेन होत्रा तेषामुपविष्टानामनुमन्त्रणे मन्त्रः । ९ होतुर्दीक्षितस्येऽनुमन्त्र याजमानार्थं गमनम् । १० दीक्षितस्य होतुरुत्तरसवनयोः सर्पणमपि । ११ ब्रह्ममैत्रावरुणयोर्विधानभेदः । १२ प्रातःसवने ब्रह्मणः कार्य्यभेदः । १३ तस्यैव द्वितीयतृतीयसवनयोः कार्य्यभेदः । १४ मन्त्रभेदं जप्त्वा मैत्रावरुणं प्रति स्तुध्वमित्युच्चैःस्वरेण नियोजनम् । १४ सू० ५ अ० २ क० । १ सवनीयेन पशुना चरणम् । २ शाखान्तरे या देवता पाशोक्ता तद्दैवतः पशुः कार्य्यः । ३।४ क्रतुभेदे देवताभेदः । ५ अग्नीषोमीयपशुधर्म्मविशेषातिदेशः । ६ परिव्ययणप्रकारः । ७ ऐष्टिकेषु निगमेषु आवाहनप्रकारः । ८ द्वारियोजने विशेषः । ९ विषयभेदे प्रावित्रादिनिषेधः । १० अनिर्दिष्टदेवताकसोमानां देवताः सवनदेवता एवेति तासामावाहनम् । ११ सूक्तवाकेऽपि तासामनुवर्त्तनम् । १२ अच्छावाकं विनाऽन्येषां वषट्कर्त्तृणाम् प्रहुताहुतिहोमः । १३ चात्वालमार्ज्जनप्रभृति पाशुकं कर्म्म कृत्वा सौमिककर्म्मकरणम् आदित्याद्युपस्थानञ्च । १४ आदित्याद्युपस्थानप्रकारः । १५ निर्म्मन्थदेशे यूपादिभिः सह आदित्यादीनामुपस्थानम् । १६ शामित्रोवध्यगोहचात्वालोत्करास्थानां सव्यावृत्तानामुपस्थानम् (आस्तावोवहिष्पवमानस्तुतिदेशः)। १७ आग्नीध्राच्छावाकसदनस्थानदक्षिणमार्जालीयपाहचमससादनदेशरूपस्थानां दक्षिणावृत्ताहृतप्रकारेण उपस्थानम् । १८ आग्नीध्रमुत्तरेण परिव्रज्य सदोद्वारं प्राप्य सदोऽभिमर्शनमन्त्रः १९ द्वारिमध्ये स्थूणे अभिमृश्य शालामुखीयादीनामुपस्थानम् । २० उपस्थितानुपस्थितयोर्दर्शनपूर्ब्बकं सर्व्वतोऽध्या सदसः पूर्ब्बद्वारस्थेनोपस्थानं कार्य्यम् । २१ उरुव्र इत्यृचं सह जपन्तः होता मैत्रावरुणः ब्राह्मणाच्छंसी पोता नेष्टेत्येते पञ्च पूर्ब्बद्वारेण सदः प्रविश्योपतिष्ठेरन्नित्युक्तिः । २२ तेषामुक्तक्रमेण सदःप्रवेशः, व्युत्क्रमेण उपवेशनं ततो मन्त्रविशेषजपः । २३ प्रसर्पकाणामृत्विजामुपस्थानादिजपान्तधर्म्मस्य ब्रह्मण्यतिदेशः । २४ स्वस्वभक्षचमससमीपे तेषामुपवेशनम् । २५ उक्तरूपेणाग्नीध्रस्य शुभकासम् आग्नीध्रीयस्थानप्रवेशः । २६ प्रसर्पिणां तेषां दक्षिणादय उदक् संस्थानानीत्युक्तिः । २७ आद्ययोर्होतृमैत्रावरुणयोर्विपरीत्यं ततश्च मैत्रावरुणदक्षिणतः स्वस्थानतश्चोत्तरतो होतुः स्थानम् । २८ तेषां यथास्थानमुपविष्टानां स्वस्वस्थानस्योत्तरदेशस्य विसंस्थितसंचारसंज्ञा । २९ अनुक्तस्थानानामृत्विजां दक्षिणाधिष्ण्यमुत्तरेण विसंस्थितसञ्चारइत्युक्तिः । २९ सू० ५ अ० ३ क० । १ प्रतिसवनमिन्द्रदैवतैः पुरोडाशैश्चरणम् । २ प्रातःसवने धानावन्तं करम्भिणमित्यनुवाक्या । ३ माध्यन्दिनतृतीयसवनयोः प्रैषभेदः । ४ आदेशपदमुहृत्य तेनैव पदेन यागः । ५ यत्र कचित् कर्म्मणि प्रैषेण यागे कर्त्तव्ये यज योऽस्तु इत्युहृत्य तयोः स्थाने आगूर्वषट्कारौ कृत्वा यागइत्युक्तिः । ६ अनुसवनमनुवाक्याभेदः । ७ अनुवाक्यास्थपुरोडाशस्य बहुवचनान्ततोक्तिः । ८ ऋग्भेदे ऊहनिषेधः । ८ सू० ५ अ० ४ क० । १ द्विदैवत्यग्राज्याप्रैषानुवाक्याभिधरणम् । २ द्विदैवत्ययोरनुवाक्ययोरुक्तिः, तेऽप्यपृथक्प्रयाणे प्रयोज्ये ते च सहानवानम् । ३ प्रैषाणामनवाननिर्णयः । ४ ऋग्भेदे द्वे याज्ये ते च सहानवानम् एकाशुरे पृथक् वषट्कारे च वक्तव्ये इत्युक्तिः । ५ प्रातःसवने इदमादि अनवानं याज्यानुवाक्ययोरिति निर्णयः । ६ प्रैषौ याज्यानुवाक्ये च उत्तरयोर्द्वयोरनवानं भवतीत्युक्तिः । ७ सोमपाहचपात्रमहृत्वा अध्वर्युणा तद्ग्राह्यम् । ८ तत्र च मन्त्रः । ९ तद्ग्रहहोत्वा दक्षिणोरुच्छादनेन तत्र स्थापयित्वा आकाशवतीभिरङ्गुलीभिरपिधानम् । १० एवमुत्तरपात्रयोर्ग्रहणासादनपिधानानि । ११ प्रतिग्रहभक्षणकाले सव्येन पिधानम् । १२ मैत्रावरुणस्यासादने विशेषः । १३ अनुवचनयाज्यासंप्रैषाः नित्यमध्वर्युणा कार्य्याः । १४ अनुसवनं चमसेषून्नीयमानेभ्यः सोमेभ्य एकैकस्यक्रमः । १५ अनुसवनं प्रेषितस्य होतुःस्वाभिः प्रस्थितयाज्याभिर्यजनम् । १६ प्रयाजादीनां नामादेशं प्रेषितानामेव यजनम् । १७ प्रयाजादिप्राशकथनम् । १८ प्रातःसवनीयप्रस्थितयाज्योक्तिः । १९ तृतीयसवनीयानुवषट्कारः । २० मारुत्वतीये द्वारियोजने प्रस्थितयाज्यादिभेदः आश्विने याज्याम्नून्यत्वञ्च । २१ यज्ञगाथा । २२ प्रतिवषट्कारं भक्षणम् । २३ तूष्णीमेवोत्तरभक्षणम् । २४ अध्वर्योराहवनीयदेशात् सदसो गतिः । २५ आगच्छन्तमध्वर्युं प्रति अयभिन्नीद्विति होतुः प्रश्नः । २६ दृष्टस्य तस्य होतारं प्रति अयाड्ढुत्तरोक्तिः ।

२७ ततो होतृजप्यमन्त्रः। २७सू० ५अ० ५क०। १इतरपात्रद्वयं सव्येनापिधाय ऐन्द्रावायव पात्रं दक्षिणहस्तेनोत्तरभागे गृहीत्वा अध्वर्युणापि तस्य ग्रहणाय एष वसुरिति मन्त्रेण होत्रा प्रणयनम्। २ नासिकाभ्यामवघ्राय होत्रा सोमस्य भक्षणे मन्त्रः।३ होत्रा भक्षितमध्वर्युणा च प्रतिभक्षितं होतृचमसे किञ्चिदवनीय अनाचम्यैवोपह्वानादि कृत्वा पुनः सह भुक्त्वा शेषं होतृचमसे आनीय तत्पात्रोत्सर्गः। ४ उत्तरग्रहपात्रे उक्तधर्मातिदेशः। ५ उत्तरग्रहपात्रयोर्न पुनर्भक्षणम्। ६ द्विदेवत्यानां मध्ये कस्यचित् ग्रहस्य होतृचमसे अनवनीतस्य नोत्सर्गः। ७ होत्रा मैत्रावरुणस्य ग्रहपात्रस्याध्वर्यवे पूर्ववत् प्रणयनम्। ८ तस्य दक्षसव्याभ्यां नेत्राभ्यां क्रमेणेक्षणम्। ९ मैत्रावरुणस्योत्सर्गान्तं कर्म्म कृत्वा दक्षहस्तेनाश्विनमपिधाय सव्येन होतृचमसादाने मन्त्रोक्तिः। १० सव्यस्यारत्निना सव्योरुमनमाच्छाद्य तत्र निधायाहताङ्गुलीभिरपिधानम्। ११ होतृचमसं सव्येनापिधाय दक्षिणेनाश्विनं गृहीत्वा पूर्ववत् प्रणामनम्। १२ आश्विनमुत्सृज्य दक्षहस्तेन होतृचमसं निधाय जलं स्पृष्ट्वा इडोपह्वानम्। १३ इडोपह्वानकाले चमसिनः स्वस्वचमसस्येडासमीपे उद्यमनम्। १४ अवान्तरेडां प्राश्याचम्य होतृचमसभक्षणम्। १५ दीक्षितस्य होतुः दीक्षिता उपह्वयध्वमित्युक्त्वा चमसभक्षणम्। १६यजमाना उपह्वयध्वमित्युक्त्वा वा होतृचमस भक्षणम्।१७सख्यान् प्रति पृथक् तत्तन्नामोत्कीर्त्तनेन इतरानसख्यान् प्रति होतका उपह्वयध्वमिति कीर्त्तनेन च चमसभक्षणम्। १८ उक्तरूपेण दीक्षितादीक्षितानां मैत्रावरुणादीनां स्वस्वचमसभक्षणम्। अदीक्षितानां समान भक्षं प्रति पूर्ववत् उपह्वानं कृत्वा चमसभक्षणमिति भेदः २० अचमसानां मुख्यचमसाद्भक्षणम्। २१ द्रोणकलशादुद्धृत्याचमसानां सोमभक्षणम्। २२ सर्व्वत्र सोमभक्षणे वाग्देवीत्यादिमन्त्रजपः। २३ होतुर्वषट्कर्त्तृत्वात् प्रथमभक्षणं पश्चादुद्गात्रादीनां भक्षणमिति गौतममतम्। २४ तौल्वलिमते इतरेषामभक्षणम्। २५ गाणगारिमते सर्वेषां भक्षणम्। २६ सोमभक्षोत्तरं मुखहृदयस्पर्शे मन्त्रः २७ प्रथमद्वितीययोः सवनयोराद्यानां द्वितीयानाञ्च चमसानां जलेनाभिमर्शने मन्त्रद्वयम्। २८तृतीयसवने चाद्यानामेव तथाभिमर्शनम्। २९ जर्त्तपात्राणि विना सर्व्वपात्राणां मुखहृदयाभिमर्शनम्। ३० इत्यमाप्यायनेन

साप्यायितानां चमसानां नाराशंससंज्ञा ३०सू०५अ०६क०। १अस्मिन्काले अच्छावाकस्याग्नीध्रस्योत्तरं सदोगत्वा स्वस्थाने उपवेशनम्। २अध्वर्युणा दत्तं पुरोडाशखण्डमिडामिवोद्यम्य प्रेषितस्याच्छावाकस्य जप्यं तृचम्। ३ यजमानेत्यादिना अन्त्येन प्रणवेनोपसन्तननरूपनिगदः। ४उक्तनिगदसमाप्तौ अध्वर्युणा होतुरुपह्वाकाङ्क्षा।५उपह्वाने प्रकारः।६उन्नीयमानाय प्रत्यष्ठा इति स्वकस्याच्छावाकेनानुवचनपूर्व्वकं यजनम्। ७पुरोडाशखण्डं निधाय जलं स्पृष्ट्वा चमसभक्षणम्। ८असृष्टोदकानां सोमेतरहविषां स्पर्शनिषेधः। ९पुरोडाशखण्डप्राशनप्रकारः।१०यदाच्छावाक उपविष्टस्तदा ब्रह्मा तीर्थेन निष्क्रम्य बहिर्वेद्यामाग्नीध्रीयं प्राप्नोति अच्छावाकश्च इगलरूपं पुरोडाशखण्डं प्राश्य तीर्थेन निष्क्रम्याचम्य तं देशं प्राप्नुयात् इतरे होत्रादयोऽप्यनुपविष्टएवाच्छावाके तं देशं प्राप्नुयुरित्युक्तिः। ११ अस्मिन् काले क्षुधितत्वेऽन्यदपि प्राश्य प्रतिरूप्य उत्तरकाण्डकोक्तं कर्म्म कार्य्यम् ११सू० ५अ०७क०। १ सर्व्वेषु प्रतिसृप्तेषु ऋतुयाजैश्चरणम्। २ तत्र प्रैषाः। ३ प्रैषसमाम्नाये पञ्चमस्कन्धस्य ऋतुयाजानां प्रैषत्वम्। ४स्वस्वप्रैषेण प्रेषि तस्य यजनम्। ५ अध्वर्युगृहपतिभ्यां प्रेषितस्य होतुर्यजनम्। ६ पार्ष्ठिके षष्ठेऽहनि अध्वर्युगृहपतिभ्यां स्वयंयजनम्। ७ तयोर्यजनप्रकारः। ८ वषट्कर्त्तॄणामानानन्त्येण ऋतुपात्रभक्षणम्। ९तत्र अध्वर्य्वोः पृथक्भक्षणम्। १०तत्रैव काले प्रतिभक्षकस्योपह्वानम् ५अ०८क०। १ ऋतुपात्रभक्षोत्तरमध्वर्य्वोः कार्य्यप्रकारः। २प्रातःसवने शस्त्रादिषु पूर्वोक्तप्रकारातिदेशः,पर्य्यासप्रभृतीनां सर्व्वत्रान्तःप्रस्तत्वम्। ३ उक्तेनोपाह्वानेनोत्तरयोरुपसन्तननम्। ४शोंसामोदैवेत्यस्य प्रतिगरसंज्ञा सच शस्त्रस्वरतुल्यस्वरः इत्युक्तिः। ५ आहावे शोंसामोदैवेत्यादेः प्रतिगरसंज्ञा ६प्रणवे प्लुतादि अवसाने अप्लुतादिरिति परिभाषितम्। ७ आहावोत्तरे प्रणवे प्रणवत्वं न प्लुतादित्वम्। ८अवसाने प्रणवस्य प्रतिगरसंज्ञा। ९ प्रणवान्तस्य उक्तविषयद्वय विकल्पः। १०अन्तःशस्त्रप्रणवावसाने प्रतिगरसंज्ञा शस्त्रान्ते तु प्रणवत्वं न प्लुतादित्वम्। ११ त्रिपदषट्पदादौ शंसनावसानविशेषः। १२ निविदो यथापठितमवसानं कर्त्तव्यं तत्रैकत्वञ्च। १३ निविदां आह्वानाभावः। १४ तस्या उपसन्तननाभावश्च। १५ निविदाद्युत्तमेन पदेनाव्यस्ततस्योपसन्तननम्। १६ उक्तप्रकारेण सर्व्वा

निविदः शंसव्या इत्युक्तिः । १७ पदसमाम्नायानामपि निविदां तुल्यशंसव्यत्वम् । १८अस्या निविदोऽन्यासु निवित्सु पदसमाम्नायेषु च उपसन्तननम् । १९ अन्यासु निवित्सु आह्वानस्य भवतीत्युक्तिः । २० यत्र द्वे सूक्ते त्रीणि वा आज्यकार्य्ये विहितानि तत्राद्यस्यैवाद्यायाः त्रिःशंसनं नोत्तरस्येति नियमनम् अर्द्धर्चशोविरतस्य च तथात्वम् । २१ विग्रहे प्राणसन्तानस्य कार्य्यता । २२प्रतिपदामाद्याया ऋचः पूर्वोक्तप्रकारेण शस्यता । आगावानस्य तथात्वञ्च । २३ ब्राह्मणविहितस्य आनुपूर्व्यं विकल्पः ।२४याज्यान्तानां शस्त्रत्वसत्तमाया आह्वानपूर्व्वकपरिधानीयत्वञ्च ।२५सर्व्वासु शस्त्रपरिधानीयासु उक्तधर्म्मातिदेशः । २६उक्थं वाचीत्यादि शस्त्रा जपः तत्र याज्या, उक्थपात्रस्याप्ये भक्षणञ्च २७ सर्व्वेशस्त्रयाज्यान्तेषु चमसिनचमसभक्षणम् । २८आदित्यसावित्रग्रहयोर्वषट्कर्त्तुर्भक्षणाभावः। ५अ०९क० । १शस्त्रात् परं स्तोत्रं भवतीत्युक्तिः । २एवेति प्रोक्ते प्रस्तोता उद्गातुर्हिङ्कार काले प्रातः सवने शस्त्रायाज्ञुयीरन् इत्युक्तिः । ३ उत्तरयोः सवनयोः प्रतिहारकाले तथाह्वानम् । ४ वायुरग्रेगा यज्ञप्रीरित्यादीनां सप्तानामृचां पुरोरुक्संज्ञा तस्यास्तस्या उपरिष्टात् तृचं तृचं तत्र शंसेदित्युक्तिः । वायवायाहि दर्शतेति सप्तानां तृचसंज्ञा ६शस्त्रस्य प्रउगसंज्ञा । तत्र द्वितीयायाश्चिःपाठ्यत्वम् । ७ पुरोरुक्संज्ञकानां सप्तानामृचां मध्ये विद्वान् देवानित्येतस्याः षष्ठ्याः अर्द्धर्चे अर्द्धर्चे त्रिरवसानेनाह्वानम् । ८ पुरोरुचा उत्तमया न शंसेत् तस्या अशंसने ऽपि तृचे आह्वानं कर्त्तव्यम् । ९प्रउगस्य माधुच्छन्दसार्षत्वम् । १०उक्थं वाचि श्लोकायत्येति शस्त्रा जपः । तत्र विश्वेभिः सोम्यं मध्विति याज्या । प्रशस्ता ब्राह्मणाच्छंसी अच्छावाक इत्येते त्रयः शस्त्रिणोहोत्रकाश्च इत्युक्तिः । ११उक्तानां त्रयाणां प्रातः सवने चतुराह्वानानि शस्त्राणि । तृतीयसवने पर्य्यायेषु अतिरिक्तेषु भवन्तीत्युक्तिः। १२माध्यन्दिने पञ्चाह्वानानि । १३स्तोत्रियानुरूपेभ्यः प्रतिपदनुचरेभ्यः प्रगाथेभ्यःधाय्याभ्यश्च पृथगाह्वानं कार्य्यम् । १४होतुरप्येतानि उपह्वानस्य निमित्तानि । १५ तेभ्योऽन्यद्यथानन्तरम् । होता कर्त्तव्यम् । १६आदौ निविद्धानीयानां सूक्तानामनेकत्वे तु प्रथमेष्वाह्वावः । १७आपोहि ष्ठा इत्यादि तृचे आह्वावः कार्य्यः । १८ तेषां शस्त्रादिषु ये तृचास्ते स्तोत्रियानुरूपास्तेषु आह्वावः कार्य्यः । १९ माध्यन्दिने तेषामेव शस्त्रेषु तृतीया आदेशास्ते प्रगाथाः ज्ञेयाः । २०प्रगाथ इत्युक्ते स्तोत्रियोभवति नान्यस्येत्युक्तिः । २१ याज्यान्तानि शस्त्राणि । उक्थं वाचीत्यादि शस्त्रा प्रातः सवने जपः । २३ षोड़शिन ऊर्द्ध्वं यानि शस्त्राणि तेष्वपि अयमेव शस्त्रा जपः कार्य्यः । २४ सषोडशिनि उक्थे उक्थं वाचीत्यादे र्माध्यन्दिने विशेषः । २५ अनन्तरस्य पूर्व्वेण तुल्यविधत्वोक्तिः । २६ छन्दःप्रमाणलिङ्गदैवतैः स्तोत्रियाणां तुल्यता । २९ आर्षेणापि तुल्यतेत्येके-आहुः ।२८आनोमित्रावरुण इत्यादयोयाज्याभेदाः तासां मध्ये कासाञ्चित् स्तोत्रीयानुरूपत्वम् । तासां मध्ये यासु-कासुचिद्यदि छन्दोगाः कुर्वीरन् तदा तिसृभिरेव स्तोत्रियां कृत्वा शिष्टाभिरनुरूपः कर्त्तव्य इत्युक्तिः ५अ०१०क० । १,२,३,४,५ अतिरात्रषोड़शिनि होत्रादीनां निष्क्रमणप्रवेशादिप्रकारः । ६ यजमानस्य पूर्व्वद्वारेण प्रतिसर्पणम् ५अ०११क०।१उक्तकाले प्रावस्तुतः प्रपदनम् ।२तस्य उपसर्पणमपि तद्वैव ।३तस्य हविर्द्धानशकटस्य उत्तरशिरोरूपाक्षशिरोदेशे तृणनिरसनं कृत्वा सोमाभिमुखं स्थितिः । ४तत्रोपवेशने मन्त्राभावः। ५उपविष्टस्य यो अद्य सौम्येति मन्त्रजपः । ६ अध्वर्य्युणा तस्मै उष्णीषदानम् । ७तस्याञ्जलिना पञ्चधेन तेन संसृते शिरसोवेष्टनोत्तरं सोमाभिषवाय ग्रावाभिष्टवनम् ।८इदमादि मध्यमसवनं तत्र मध्यमस्वरेण प्रयोगश्च । ९ अर्बुदनामधेयसूक्तोक्तिः । १० तस्य प्राक्तमायाः आ व ऋञ्जसे इति सूक्तपाठः । ११ उक्त सूक्तयोरुपरिष्टात् शिष्टयाऽर्बुदस्योत्तमया परिधाय वेद्यां यजमानस्योष्णीषं तस्मै देयम् ।१२अन्येषु दिनेषु आदाय पुनर्यजमानाय दानम् । १३ अन्यदिनेषु येन तद्दत्तं तस्मै एव तद्दानम् । १४ गाणगारिमते अपराभिरूपकरणम् । १५आप्यायस्व समेतु ते इत्यादयः द्वादश ऋचस्ताश्चत्वारस्तृचा भवन्ति अर्बुदस्य चतुर्थी उद्वर्त्तव्या तत्र उत्तमा परिधानीया शिष्टा द्वादश ता अपि चत्वारस्तृचा एताः पावमान्यः । १६,१७,१८,१९, एषां चतुर्णां तृचानां क्रमेण कर्म्मभेदे विनियोगज्ञापनम् यथा उदकसेकरूपे आप्यायने प्रथमम् मार्जने द्वितीयम् दोहने तृतीयं अभिषवेण द्रवीकृतस्याधवनीये सम्भरणरूपे आसेचने चतुर्थम् । १०प्रतिदृष्ट्च्छन्दं चतुर्थ्यां विनियोगः ।११ मन्द्रने मा चिदन्यद्वीति ऋचो विनियोगः ।१२अर्बुदपावमानीभ्योऽन्यत् सर्वं समानम् । १४ केषाञ्चिन्मते अर्बुदस्यैव समता १५ अन्यमते प्र वो ग्रावाण इत्यस्य समता १६,१७ स्तुते

माध्यन्दिने पावमाने विङ्काङ्कारान् उपसर्पणम् । ५ अ० १२ क० । १प्रवर्ग्यवति क्रतौ दधिघर्मेण चरणम् । (दधिघर्मः कर्म्मभेदः) । २ आगावानस्य तद्धर्मत्वम् । ३ भक्षिण इज्या । ४होतर्वदस्वेत्युक्तस्य उत्तिष्ठतोऽवपक्षतेत्युक्तिः । ५ शातं हविरित्युक्तौ शातं हविरित्यनुवचनम् इयमनुवाक्या । ६ परि त्वाग्ने इत्यादि मन्त्रजपे निमित्तभेदोक्तिः । ७ दीक्षितस्यैव अनिष्टा जपः । ८सवनीयानां पुरस्तादुपरिष्टाद्वा पशुपुरोडाशेन चरणम् । ९ एकमते तेन नाचरणम् ।१०आश्मरथ्यमते तेनाचरणम् । ११ अहीनैकाहेषु नाराशंसासादनात् परं दक्षिणानयनम् १२अहीनैकाहेषु दीक्षितस्य जपमन्त्रोक्तिः । १३ आग्नीध्रेण उन्नेष्यमाणानां दक्षिणाहुतीनां हवनम् ।१४आहुतिमन्त्रप्रकारौ १५विहारदेशाभिक्रमेण नीतेषु दक्षिणाद्रव्येषु मध्ये प्राणिरूपदक्षिणाद्रव्यप्रतिग्रहे मन्त्रभेदः ।१६अप्राणिद्रव्यस्याभिमर्शनमात्रम् । १७ कन्याया दैवविवाहविधिना दत्ताया आदानेऽभिमर्शनमात्रम् न पाणिग्रहणम् । १८ एवं प्रतिग्रहनियमः सर्वत्र । १९ प्रतिस्थाग्नीध्रीयं प्राश्य उच्छिष्टहविषः सर्वैः प्राशम् । ५ अ० १३ क० । १ मरुद्वतेन ग्रहेण चरणम् । २ तत्प्राशभक्षणे मन्त्रः । मरुद्वतग्रहस्य शंसनम् । ३ माध्यन्दिनसवने शस्त्रादिषु अध्वर्य्योराहावप्रकारः । ४ मरुद्वतौ प्रतिपदनुचरसंज्ञौ तृचौ । इन्द्रनिहवः प्रगाथः । ६ ब्राह्मणस्पत्यप्रगाथः । ७तृचाः प्रतिपदनुचराः, द्वृचाः प्रगाथाः । आज्यमारभ्य ब्राह्मणस्पत्यपर्य्यन्तं सर्व्वमर्द्धर्चशम् । ८ स्तोत्रियानुचराः प्रतिपदनुचराः सर्व्वत्र प्रगाथाः । ९ गायत्र्यादीनि पङ्क्त्यन्तानि अर्द्धर्चशः शस्यानि भवन्तीत्युक्तिः । १०पङ्क्त्या उत्तरेषु त्रिषु या अचतुष्पदास्तासामर्द्धर्चशः शंसनम् । ११ पञ्चपदासु पङ्क्तिषु द्वयोर्द्वयोः पादयोर्द्विरवसानम् । १२ आश्विनशस्त्रे याः पङ्क्तयस्तासामर्द्धर्चशः शंसनम् । पङ्क्तिशंसनं वेति विकल्पः । १३स्तक्तगताया: पङ्क्तेः पच्छः शंसनकथनम् । १४ पङ्क्तेः पच्छः शंसने ये उत्तमे पदे अतिरिच्येते तयोः समं कृत्वा शंसनम् । १५ उक्तादन्यत्र पच्छः शंसनम् । १६अर्द्धर्चान्ते प्रणवं कृत्वा सन्ननम् । १७ तत्र धाय्याभेदाः । १८ मरुद्वतः प्रगाथः । १९ जनिष्ठा उग्र इति सूक्तोक्तिः । २० उक्तसूक्तस्याद्यौ एकाधिकाः शस्त्रा तदन्तराले इन्द्रोमरुत्वान् इत्येतस्या निविद्दोधानम् । ११ माध्यन्दिने अंशुमत्सु तया धानम् । १२तृचे एकां शस्त्रा युग्मासु च अर्द्धां शस्त्रा निविद्धानम् । १३ तृतीयसवने एकां शस्त्रा निविद्धानम् । १४त्रिष्वपि सवनेषु नेत्रे स्वजनात्मनः पापं ध्यायता च निविद्वेया । १५सर्व्वत्र तथैव परिधानातिदेशः । १६शस्त्रा जपमन्त्रः याज्यामन्त्रश्च । ५ अ० १४ क० । १निष्केवल्येति शस्त्रनाम । २यदि पृष्ठकार्य्ये रथन्तरं सामसामगाः कुर्य्युरिन् अभि त्वा शूर ! नोनुमः" अभि त्वा पूर्व्वपीतय इत्येतौ प्रगाथौ स्तोत्रियानुचरौ स्याताम् पृष्ठशब्देनात्र ज्योतिष्टोमाङ्गभूतं सामाभिव्यक्तस्थगचार सम्पाद्य स्तुतिजन्यं शास्त्रकसमधिगम्यं कार्यमुच्यते । ३ अन्ययोरपि प्रगाथयोः स्तोत्रियानुरूपत्वोक्तिः । ४ उक्तानां सर्व्वेषां प्रगाथत्वम् सामगैर्द्विपदोत्तरं तृचाकारतया गानेऽपि बद्धचैरर्द्धर्चत्वेन शंसनम् कार्य्यम् । अनभ्यासेन तृचाकारत्वानेऽपि ता द्वृचा एव न तृचाः कार्य्याः ताभिश्च शंसनं कार्य्यम् । ६बृहतीच्छन्दस्के द्वृचे प्रगाथे चतुर्थषष्ठौ पादौ पुनरभ्यस्य पञ्चमसप्तमयोः पादयोरवसानकरणविधिः । ७ यदि तिस्रोबृहत्य एव चिकीर्षितास्तदा चतुर्थषष्ठौ पादौ द्विरभ्यस्यावसानं कार्य्यम् । काकुभेषु प्रगाथेषु तृतीयपञ्चमौ अभ्यस्यावसानं कार्य्यम् ९ प्रत्यादानेन उत्तरा ककुप् भवति । १० येष्वहःसु बृहद्रथन्तरं वा तयोः संहतिर्वा पृष्ठकार्य्यं भवति तत्र बृहद्रथन्तरस्तोत्रियानुरूपयोः शंसनं यथा भवति तथा इन्द्रनिहवब्राह्मणस्पत्यानां शंसनम् । ११ इतरपृष्ठेषु तेषां बृहतीं कृत्वा शंसनम् । १२ यदा बृहद्रथन्तरे गायत्र्यादिषु अभ्यस्याशु तिसृषु ऋक्षु स्तुवते स्वयोनिषु वा द्विपदोत्तराकारं तदापीन्द्रनिहवब्राह्मणस्पत्यानां बृहतीं कृत्वा शंसनम् । १३येषां होत्रकाणां प्रगाथाः स्तोत्रियानुरूपाःतेऽपीन्द्रनिहवब्राह्मणस्पत्यवच्छस्याः । १४ उक्तभिन्नस्य सर्व्वस्य यथाश्रुतं शंसनम् । । १५ एकस्मिन् दिने सर्व्वधर्म्मभागितया उपदिश्यमानोज्योतिष्टोम एकाहशब्दवाच्यः परिमितशस्त्रः परिपूर्णशंसनयुक्तः । १६स एकाहः यद्युभयसामा बृहद्रथन्तरसामसाध्यः तस्य पवमाने योनिरनुरूपा भवतीति । १७ज्योतिष्टोमभिन्नः यःकश्चिदुभयसामा एकाहः स्यात् तत्र पवमाने यत् कृतं तस्य योनिरनुरूपा शस्या । १८निष्केवल्ये धाय्याया अर्द्धं स्थानं योनिस्थानं तदेव शंसनस्थानम् । १९ अनेकासां सामयोनीनां सह शंसने प्राप्ते आदावेव सर्वासामाहानं सकृत् पृथक् वा कार्य्यम् । २० ब्राह्मणस्पत्यमरुत्वतीयसामप्रगाथानामनेकेषां सहपातेषु इन्द्रनिहवादूर्द्ध्वमाहावः कार्य्यः । २१ तत्र

भाज्यासामप्रगाथयोः प्रदर्शनम् । २२ ऋग्विशेषे ऐन्द्री निविद् धेयेत्युक्तिः । २३ अनुवाक्याष्ट स्वरः उक्थं वाचीत्यस्य शस्त्वा जपः। पिबा सोममित्यादि याज्या । ५अ० १५क०।१होत्रकाणां स्तोत्रियानुरूपौ प्रगाथौ याज्या चेति-निर्णयः । १ तत्रैव याज्यान्तरं तत्काले सवनसंस्थानिमित्तकर्म कार्य्यता ५अ० १६क० । १ उत्तमस्वरेण तृतीयसवनम् २ आदित्यग्रहेण चरणम् । ३ हूयमान ग्रहाणामीक्षणे जप्यमन्त्रः । ४स्तुते आर्भवे पवमाने विहृत्याङ्गारान् मनोतादिपश्विडान्तं पशुकर्म कृत्वा नाराशंससादनपर्य्यन्तं पुरोडाशादिकर्म कार्य्यम् ।५नाराशंसेषु सादितेषु पुरोडाशस्य स्तुतमात् प्रदेशात् गृहीत्वा सर्वे चमसिनः पुरोडाशं तिस्रःतिस्रः पिण्डीकृत्य स्वात् स्वाच्चमसात् दक्षिणतः स्वान् स्वान् पितॄनुद्दिश्य चमसान्तिके अत्र पितर इति मन्त्रे स्व स्व पितृ प्रस्तुतेत्युक्तिः ६सव्याहृतः आग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः । ५अ० १७क०। १सावित्रेण ग्रहेण चरणम् । २तत्र मन्त्रभेदः। ३वषट्कृते होतुः शस्त्रवैश्वदेवशस्त्रोक्तिः । संयता तेन द्वेष्यदिशं विहाय सर्व्वदिग्ध्यानञ्च । ४ माध्यन्दिनसवने शस्त्रादिषु आह्वानमन्त्रः । ५ तत् सवितुरित्यादि नवर्चा वैश्वदेवतोक्तिः तत्र उत्तमायाः परिधानीयत्वम् । ६ वैश्वदेवाग्निमारुतयोः सूक्तेषु सावित्र्यादिनिविद्दोधानम् । ७ तत्र चतस्रो वैश्वदेवशस्त्रे प्रयोज्याः ८ आग्निमारुते शस्त्रे उत्तरास्तिस्रऋचः प्राग्याः । ९ सूक्तानां दैवतस्यैव निविद्दैवतात्वम् । १० दैवतेन सूक्तान्तनानात्वम् तथाच यावतां सूक्तानामेकं दैवतं तावदेक एव सूक्तान्त इत्युक्तिः । ११ वैश्वदेवाग्निमारुतयोरेकपातिन्य एव धाय्याः । १२ सर्व्वत्र प्रकृतौ विकृतौ च वैश्वदेवशस्त्रे द्विः पच्छः अर्द्धर्चशः सकृद् भूम्यृपसर्पणे परिधाने च मन्त्रः १३उक्थं वाचीत्यादि शस्त्वा जपः । विश्वे देवाः शृणुतेत्यादियाज्याः । ५अ०१८क० । १ सौम्यस्य चरुहविष्ककर्मभेदस्य याज्या । २ तस्योभय पार्श्वे घृतयाजाभ्यामुपांशुयागः । ३ तत्रैव विशेषोक्तिः । ४अध्वर्युणाऽऽहृतस्य उद्गातृभ्यः पूर्वं गृहीत्वे चरस्य मन्त्रः। ५ तस्मिंश्चरौ घृतयुते स्वस्वच्छायाऽदर्शने नैमित्तिकः मन्त्रद्वयजपः तौ च मन्त्रौ । ६ अङ्गुष्ठोपकनिष्ठाभ्यामाज्येन नेत्रे अभ्यज्य छन्दोगेभ्यः प्रदानार्थमध्वर्य्यवे दानम् । ७ दर्भैर्घोकामवाग्निषु विहृतेषु पात्नीवतस्य आग्नीध्रस्य उपांशुजप्यमन्त्रः । ८ नेष्टुर्विसंस्थितसञ्चारेण तमनु प्रपद्य तस्यान्तिक उपविश्य पात्नीवतस्य भक्षणम् । ५अ० १९क० । १ सदसोनिष्क्रम्य आग्नीध्रं प्रति गतिः । २ आग्निमारुतं शस्त्रं द्रुतयावृत्त्या प्रयोक्तव्यम् । ३ तस्याद्यामृचं पच्छःऋगावानं शंसेत् यदि सा पच्छः शस्या भवेत् तदा पादेपादेऽनुच्छ्वसन्नेव शंसेत् । ४ यदि सा अर्द्धर्चशःशस्या तदार्द्धर्चेऽवसायानवानम् । ५ उत्तमेन वचनेन द्वितीयायाः सन्तननं कर्त्तव्यम् । ६ स्तोत्रारम्भे प्राकृतमिरस्वत्यादिभूमिस्पर्शान्तगुणोक्तिः । ७ परिधानीयाया उत्तमेन वचनेन भुवमुद्दस्यावसेचनं होतृच मर्षे कार्य्यम् । ८ आग्निमारुते याज्याकथनम् । एतदन्तसोमयागस्याग्निष्टोमसंज्ञा ५अ० २०क० ।

६अध्याये । १ तृतीयसवने होत्रकाणामपि शस्त्राणि भवन्ति । २ तत्र याज्याक्रमशस्त्राणां प्रदर्शनम् । ३ तदन्तस्य उक्थ्यक्रतुत्वम् । ३सू०६अ० १क० । १यदि षोड़शी क्रतुःस्यात् तदा तृतीयसवने होत्रकशस्त्रानन्तरं तस्य कार्य्यता । अथ शस्त्रनाम षोड़शी तस्य विधानाधिकारः । २ तत्र स्तोत्रियानुरूपौ तत्र च षड्ऋचः । ३ तत्र तिस्रोगायत्र्यः । ४ एका द्वृचा पङ्क्ती । ५ तृचौ उष्णिग्वार्हतौ । आघूर्णा इति द्विपदा साच पच्छः शस्या । ६ अन्येषां तृचानां लिङ्गवादीनामुक्तिः । ७ तत्र पूर्वं तृचं द्वेधा कृत्वा शंसेत् एकैकामृचं द्वे द्वे कृत्वा शंसेत् । अस्य तृचस्य सप्तपदात्मकत्वात् एकैकामृचमेकैकामनुष्टुभमेकैकां गायत्रीञ्च सम्पादयेत् तथा च आद्यैश्चतुर्भिश्चतुर्भिः पादैरनुष्टुभः शिष्टैस्त्रिभिस्त्रिभिः गायत्र्यः । अनेन प्रकारेण तृचा अपि षड् भवन्तीति । ९ निविद्दतिपत्तौ अधिकृत्यानुष्टुभे तृचे निविद्धेयेति परिधानीयानुष्टुभस्तृचदर्शनम् । १० उत्तरमस्योत्तमांशिष्टा उत्तमां निविदं दध्यात् । ११निविद्विशेषस्य लिङ्गप्रदर्शनम् । १२ परिधानीया ऋक् । तां जप्त्वा यागः ६ अ० २क० । १ विहृतस्य षोडशिनः इन्द्राजुषस्वेत्याद्याः सूत्रे पठिताः षड्ऋचः स्तोत्रियानुरूपौ भवतः । २ स्तोत्रियानुरूपाभ्यामूर्द्ध्वं विहृते यच्छस्त्रं तदेव गन्तव्यम् । ३ द्वाभ्यां पादाभ्यामनर्द्धर्चान्तेऽवसानम् अनुगन्ते प्रणव इत्यमर्द्धर्चशः शंसनम् । ४ पूर्वार्धां पूर्वपदानां शंसनम् । ५ गायत्रीणां पङ्क्तिभिर्विहरणम् । ६ पङ्क्तीनां द्वे द्वे शिष्येते ताभ्यां प्रणवनम् । ७ उष्णिग्बृहतीभिर्विहरणम् उष्णिहामुत्तमान् पादान् द्वौ कुर्य्यात् । ८ चतुरोभागान् कृत्वा

बृहतीपादैर्विहरणम् तेन अष्टाक्षरमन्त्यमाद्यं चतुरक्षरं यथा भवति तथा विहरणम् । ९ द्विपदाश्च तत्र ताः सर्वाश्चतुर्थी कर्त्तव्याः । प्रथमायां सर्वे भागा व्यूहेनाव्यूहेन च पञ्चाक्षराः उत्तरास्तु चतुरक्षराः । तत्र च प्रथमां त्रिष्टुभा विहरेत् । उत्तराश्चित्रोजगतीभिः । १० उत्तमायाद्विपदाया यच्चतुर्थमक्षरं तत् प्रथमस्य भागस्यान्त्यं तदेव द्वितीयस्याद्यम् । ११ तत्र विहरणप्रकारः । १२उत्तरास्तु इतरान् पादान् पञ्चान् कृत्वाऽनुष्टुभं च कृत्वा शंसनम् । १३ होत्रियानुरूपाभ्यामूर्द्ध्वं प्रोक्ता इत्येवमन्तस्य शस्त्रावयवस्य विहृतसंज्ञा । १४ यत्र यत्र विहृतो भवति तत्र तत्र यौ प्रतिगरौ तयोरुदाहृतिः । १५याज्यायाजप्रेन मिश्रणम् । १६ मिश्रणप्रकारः । १७ विहृतस्य विशेषस्ततोऽन्यत्र सर्वमविहृतेन समानम् । १८ विहृतस्यैव विशेषः । १९ आहुतं षोडशिपात्रं सप्तमहावं भक्षयेत् । २० धर्म्मे ये भक्षियस्तेऽपि भक्षयन्तीत्यतिदेशः । २१ सुब्रह्मण्यवर्ज्जितमैत्रावरुणादयस्त्रयश्छन्दोगाः । २२ षोडशिभक्षमन्त्रः । ६ख० ३क० । १ अतिरात्राधिकारः । २ प्रथमे पर्य्याये ये होत्रियानुरूपास्तेषामाद्यस्याद्यान्त्यं विना अन्यासु सर्वासु ऋक्षु प्रथमानि पदानि द्विरुक्त्वा तत्रावसानम् । ३ शिष्टयोः पादयोः समस्य प्रणवनम् । ४ होत्रादीनां विना मध्यमानि सर्वासां पदानि सकृदुक्त्वाऽवसाय तान्येव प्रत्यादाय शेषगतानि सन्धाय प्रणवनम् । ५ उत्तमे पर्य्याये होत्रियानुरूपेषु सर्वासामृचामुत्तमानि पदानि मध्ये सर्वे शाक्लावाकाः द्विरुक्त्वा तैः प्रणुयुः । ६ उत्तमे पर्य्याये अच्छावाकः अन्त्यचतुरक्षराणि द्विरुक्त्वा प्रणुयात् । ७ शस्त्राणां चतुःपर्य्यायत्वम् । ८तत्राद्यं शस्त्रं होतुः ।९याज्याभ्यः पूर्व्वप्रतीकानि पर्यासस्ंज्ञा ।१०पर्यासोदाहरणम् । तेषां पर्यासंज्ञापि ।११पर्य्यासभिन्नानां गायत्राणामापत्वम् ६ख० १अतिरात्रे पर्य्यायेषु समाप्तेषु छन्दोगा आश्विनशस्त्रेण स्तुवते । २ शंसिष्यन् विसंस्थितसञ्चरेण निष्क्रम्याग्नीध्रीये जानुभङ्गेन षडाहुतीर्जुहुयात् तत्र मन्त्राः तत्राज्यशेषप्राशनं तूष्णीमेव कुर्य्यात् । ३ होमार्थं पृथक्, कृतस्याज्यस्य शिष्टमाज्यं प्राश्य अप उपस्पृशेदाचामेत् अनाचमनेऽपि नाशुद्धिरित्यत्र देवरथ इत्यादिश्रुतिनिदर्शनम् । ४प्राश्य प्रतिप्रसृप्य पश्चात् स्वस्थानस्य, समस्तजङ्घोरुदरत्रिभ्याम् उपस्थं कृत्वा (पादाङ्गुलीभिर्भूमिमालम्ब्य) उत्पतिष्यन् पञ्चैव उपविशेत् । ५कृतोपस्थोपवेशनस्यैव आश्विनशंसनम् । ६ एकपातिन्याः प्रतिपदः पच्छः शंसनम् । ७ प्रतिपदा गायत्र्याग्नेयस्योपसन्तननम् । ८होत्रशंसने प्रातरनुवाकधर्म्मातिदेशः । ९त्रयो वार्हता ऋचा होत्रियाः प्रगाथा वा तान् यथादैवतं यथाश्रुतं शंसेत् । १० अन्येषु छन्दःसु यथादैवतं शंसेत् । ११ द्विपदाः पच्छः शंसेत् । १२ एकपदाः प्रणवेनोपसन्तनुयात् । १३ एकपदाभ्यो याउत्तराः ताः एकपदान्तर्गैः प्रणवैरुपसन्तनुयात् । १४ अर्द्धर्चशस्त्रेषु पच्छः शस्त्राः पच्छः शस्त्रेषु चार्द्धर्चशस्त्रा यास्ता उद्धरेत् । १५ सूक्तन्यायेन वा शंसनम् नोद्धार इति विकल्पः । त्रिष्टुब्जगतीभ्योऽन्यत्र विशेषः । १७ उदिते सूर्य्ये प्रतिप्रियतममित्यस्योत्तमेन प्रणवेन सूर्य्योनोदिव इत्येतत् सन्धाय तदादीनि सौर्य्याणि सूक्तानि शंसेत् । १८ सौर्य्यसूक्तानि सूर्य्योनोदिव इत्यादीनि दर्शितानि । १९ बृहस्पते अति यदर्य इत्यादि परिधानीया । २०प्रतिपदे परिधानीयाया आह्वावत्वविधानम् । २१ यदि बृहत्साम कुर्य्यात् तस्य योनिम् त्वामिद्धि हवामहे इति तृचम् । एतेषु प्रगाथेषु द्वितीयाम् इन्द्रक्रतुमित्यस्योपरिष्टात्, तृतीयाम् अभि त्वेत्यस्योपरिष्टात् शंसेत् । २२तत्र विकल्पः । २३आश्विनपशोष पुरोडाशेन चरणम् । तत्र अनुवाक्या प्रैषः याज्याद्वयम् अध्वर्य्वानवानञ्च क्रमेणोक्तानि । २५आश्विनपुरोडाशस्य स्विष्टकृताचरणे संयाज्याद्वयम् इत्यन्तोऽतिरात्रः क्रतुः । ६ख० ५क० । १ नैमित्तिककार्य्यभेदकथनायोत्तरग्रन्थः यदि सर्व्वे पर्य्यायाः प्रयुक्ता न भवन्ति इत्येवमाशङ्का स्यात् अतिक्रान्तप्राया रात्रिः स्यात् पर्य्यायाणामाश्विनस्य चापर्य्याप्तेति तदा सर्व्वेभ्यःपर्य्यायेभ्यः एकं पर्य्यायं समुद्धृत्य कुर्य्युः । २ तत्र करणप्रकारः । प्रथमात् पर्य्यात् होता स्वं शस्त्रमाददीत । मैत्रावरुणब्राह्मणाच्छंसिनौ द्वितीयात् पर्य्यायात् स्वे शस्त्रे, उत्तमादच्छावाकः स्वमेव शस्त्रमित्येवं प्रकारः । ३ यदा तु प्रथमः पर्य्यायः प्रयुक्तः मध्यमोत्तमावप्रयुक्तौ तयोराश्विनस्य चापर्य्याप्ता रात्रिरित्याशङ्का स्यात् तदेवं कुर्य्युः । द्वौ होतृमैत्रावरुणौ प्रथमात्, ब्राह्मणाच्छंस्यच्छावाकौ तु उत्तमात् शस्त्रमाददीत । ४ सर्व्वेषां वा स्तोमनिर्ह्रासः । ५ स्तोमनिर्ह्रासे शस्त्रनिर्ह्रासप्रकारः । ६ स्तोमनिर्ह्रास सम्भरणयोर्निर्ह्रासविधानम् । ७ एके शाखिनः होतृचर्य्यां स्तोमनिर्ह्रासं कुर्व्वन्ति । ८ अग्ने ! विवस्वदुषस इत्येतत् आश्विनीय एकस्तोत्रियः । ९ आग्नेये क्रतौ तस्य एकस्तोत्रियस्य बृहतीछन्दः । १०स्तोत्रिये षष्टिशतानि

आश्विने पुरस्तात् सक्तशंसनम् यथाश्रुतमनुदैवतं ११ । १२ हिषामहियां वा नद्यादिभिरव्यवधाने सुत्यासन्निपाते सवनीदोषः । १३ तथा दोषसम्भावनायाम् आ सवनदेवतावाहनात् सम्यक्तरां कत्वा कर्म्म कार्य्यम् । १४ सम्भवे दोषे सति मरुत्वतीये शस्त्रं यस्मिन् सूक्ते निविद्धीयते तस्य सूक्तस्य पुरस्तादिदं सूक्तं शंसेत् । १५ निष्केवल्ये योजात इवेति सूक्तशंसनम् । १६ वैश्वदेवशस्त्रे वैश्वदेवसूक्तस्य पुरस्तात् शंसनम् । १७ एतेषु आगन्तुनिविदादध्यात् यस्य पुरस्तात् शस्त्राणि सूक्तानि विहितानि तान्युद्धारेत् । १८ निविदः स्थानं यद्यतिहरेत् तदा यस्मिन् सूक्ते निविदतिपन्ना तत्पूर्व्वापरभूतं समाप्य आगन्तुकात् दैवतात् पुरस्तात् "मा प्रगामेति" सूक्तमखण्डितं शस्त्राऽन्यस्मिन्नागन्तुके तद्दैवतानां निविदं दध्यात् । ६अ० ६क० । १ सवनार्थस्य सोमस्य सवने समाप्ते अतिरेके सोमातिरेकसंज्ञा । स च स्तुतशस्त्रोपजननो भवति तत्र छन्दोगैः स्तोतव्यं, बह्वृचैः शस्तव्यम् । २ तत्र प्रातःसवने स्तोत्रियानुरूपयाज्याकथनम् । ३गायत्र्या वैष्णव्या यजनं नेति विकल्पः । ४ गाणगारिमते इन्द्रावैष्णव्या यजनम् । ५ "ऐन्द्रावैष्णवो" च सं वां कर्म्मणेत्यादि" त्रिष्टुप्छन्दस्कात्र यजने याज्या । ६ माध्यन्दिनसवने स्तोत्रियानुरूपयोः याज्यायाश्च उक्तिः। ७ तृतीयसवने यद्यग्निष्टोमे सोमातिरेकः तदा उक्थ्यं कुर्य्यात् । यद्युक्थ्ये सोमातिरेकस्तदा षोड़शिनं कुर्य्यात् यदि षोड़शिनि तथा स्यात् तदाऽतिरात्रं कुर्य्यात् इत्युक्तिः। ८अतिरात्राश्चेत् सोमातिरेकस्तदा प्रतचे इत्यादि स्तोत्रियानुरूपौ कत्वा माध्यन्दिनसवनवत् शेषकरणम् । ९ माध्यन्दिनीययाज्याख्यानम् ६अ० ७क० । १ क्रीते सोमे नष्टे दग्धे वा प्रायश्चित्तविधिः । २ सदोऽपिधानानि हविर्धानानि अमन्त्रकं कुर्युरिति पूर्व्वपक्षः। ३समन्त्रकं वा तदाचरणमिति सिद्धान्तः।४सोमेन यागसिद्धिरित्यतोऽन्यसोमविधानेन सोमाभिषवः । ५ सोमान्तरालाभे पूतिका फाल्गुनानि वा संसृष्टान्यभिषुणुयुः। (पूतिका सोमसदृशी लताकूपा फाल्गुनानि च सम्बद्धपा ओषधिभेदाः अभियुक्तोपदेशेन स्वरूपतोऽवगेयाः) । ६ फाल्गुनालाभे दूर्वादिसंसृष्टपूतिकाग्रहणम् । ७दीक्षास्वहःसु क्रीतसोमनाशे आ सोमनाशात् दीक्षाकालवर्द्धनम् उपसत्सु जातासु सोमनाशे उपसत्कालवर्द्धनम् । तत्र सर्व्वत्र प्रधानकालानुरोधेन कालवर्द्धनम् । कालवर्द्धनेऽपि सोमालाभे

प्रतिनिधिना प्रधानकालमध्ये यागसमापनम् इत्येकः पक्षः । भूः स्वाहेति प्रायश्चित्तं हत्वारब्धं प्रयोगं विसृज्य सोमं सम्पाद्य पुनर्यागकरणमिति सिद्धान्तपक्षः । ८ सुत्यासु नष्टे सोमे तदलाभे प्रतिनिधिप्रयोगकरणमेव न तत्राहर्वृद्धिः प्रयोगत्यागोवेति सिद्धान्तः । प्रातःसवने सोमे नष्टे प्रतिनिधिद्रव्यमभिषुत्य तद्रसेन प्रतिदुग्धेमिश्रणम् ( सद्योदुग्धं पयः प्रतिधुक् ) । १० माध्यन्दिने तत्र पक्वपयोमिश्रणम् । ११ तृतीयसवने पूर्व्ववत् दधिमिश्रणम् । १२ फाल्गुनानां प्रतिनिधित्वेन ग्रहणे आयन्तीयं साम ब्रह्मसाम भवति वारवन्तीयस्य यज्ञायज्ञीयस्थाने । १३ ब्रह्मसाम तु तद्विषये आयन्तीयं साम यज्ञायज्ञीयं तु यथोक्तमेवेति एकमतम् । १४ प्रतिनिधिना उदवसानीयान्तं यज्ञं समाप्य तस्मादेशादुदवसाय सोमं सम्पाद्य पुनर्यागः कार्य्यः ।१५ पुनः प्रयोगे पुनर्दक्षिणा । १६यद्युपात्तेऽपि प्रतिनिधौ यागात् प्राक् सोमलाभः तदा प्रतिनिधिद्रव्यत्यागेन यथोक्तमेव सोमेन यजनम् प्रतिनिधिनिमित्तानि सोमश्रपणादीनि न भवन्ति । यदा पुनरङ्गशेषु मुख्यासम्भवात् प्रतिनिधिनैवैकमङ्गः क्रियते तदा सत्रप्रयोगं समाप्य उदवसाय तद्देशाङ्गः पुनः प्रयुञ्जीरन् तथा च आरब्धं फलसाधनं यज्ञं प्रयुज्य समाप्यैतत् कर्त्तव्यं नावान्तरमेकस्याङ्गः प्रयोगः एकाहेषु प्रतिनिधावुपात्ते प्रतिनिधिनैवेहा पुनर्यागः ।।१६ ख० ६अ० ८क० । १ दीक्षितानां मध्ये कस्यचित् व्याध्युपतापे प्रायश्चित्तविधानम् । २जीवानामस्मता इत्यादि मन्त्रचतुष्टयेन या ओषधीरिति सूक्तेन च पीड़ितं स्पर्शयित्वानुमार्जनं कार्य्यम् एतत्सर्व्वं ब्रह्मणा कार्य्यम् । ३ अनुमार्जने मन्त्रभेदाः । ४ एवमपतप्तस्य कर्म्मणि कृते सत्येषां यथास्थानं गतिः । ५ तस्मिन्निमित्ते त्रातारमिन्द्रमित्याद्या ऋक् तार्क्ष्यकार्य्या स्वाद्या भवति । ६ तस्मिन् वैश्वदेवसूक्तादिजपः कार्य्यान्तरम् । ७रोगनिवृत्तौ यथोपदिष्टतया प्रकृत्यैव सर्व्वं कार्य्यम् । ७ख०६अ०६क० । १ मृते तस्मिन् अतीर्थेन निर्गमय्य अवभृतार्थं सङ्कल्पिते देशे मृतस्य प्रेतालङ्कारादिकरणम् । २ मृतस्य केशश्मश्रुलोमनखवापनम् । ३ नलदेनानुलेपनम् । ४ नलदमालापरिधापनम् । ५प्रेतस्य देहस्यान्त्राणि निःपुरीषाणि कृत्वा पृषदाज्येन पूरयित्वा पुनर्देहे बध्नीयादित्येकमतम् । ६ मृतस्य वाससा वेष्टनप्रकारः । ७ तस्यैव

यज्ञस्यैकदेशस्य प्रेतक्रियाधिकारिणा ग्रहणम् । ८प्रेतस्याग्नीन् द्वयोररण्योः समारोप्य देवयजनस्य बहिर्वेदिं प्रेतमानीयाग्निं मथित्वा विहृत्य तत्रैव दहेयुः।९अनाहिताग्नेरौपासनरूपेणाऽऽहार्य्येण दाहः । १०दीक्षितस्य पत्नीमरणेऽपि लौकिकाग्निना दाहः । आहिताग्नेरपि सर्वाधाने लौकिकाग्निनैव पत्न्या दाहः । औपसनाग्निसत्त्वे तु तेन दाह इति भेदः । ११प्रेतदाहदेशादागत्य पूर्वापरीभूताहःसमापनं यथाविहितं कुर्य्युः । १२ दीक्षितदहनोत्तरं शास्त्रानुवचनाभिष्टवनसंस्तवनेषु विशेषोक्तिः । १३ श्मशानायतने परितः कर्त्तव्यभेदः । १४ होतुःस्वस्थानात् पश्चादुपवेशनम् । १५तत्र अध्वर्य्योरुपवेशनप्रकारः । १६ तत्र आयं गौरित्यादिषु ऋक्षु उपांशुस्तुतिप्रदर्शनम् । १७ स्तवनोत्तरं होतुः कर्त्तव्यम् । १८ । १९ । तत्र यमदष्टान्ततया प्रेहिप्रेहीत्यादि सूक्तजपः । २० चतुर्द्धपर्य्यावस्थसत्त्वने कृत्वा यथासनमृत्विजामासादनम् । २१ तेषां भक्षणप्रकारादि । २२ दीक्षितस्य मृत्युदिने उक्तप्रकारं कर्म्म समाप्य सप्तदशस्तोमं त्रिवृत्पवमानकं रथन्तरपृष्ठमग्निष्टोमसंस्थं बृहद्रथन्तरं दीक्षितमरणनिमित्तं सत्रमध्ये सत्रिणः कुर्य्युः । २३उक्ते अह्नि समाप्ते एतान्यस्थीनि अभृतकाले अवभृतार्थं संक्लिताखम् कुम्भेन सह क्षिपेयुः एतस्य मृतस्य तद्वरिति वदन्तः सर्वे सत्रिणः कुर्य्युः। २४मृतस्य दाहादारभ्य कार्य्यान्तरोपदेशः ।२५शेषसमापने मृतस्य संख्यापूरणाय तत्सन्निकृष्टं दीक्षयित्वा सत्रसमापनं कुर्य्युः २६ गृहपतौ मृते तदहःप्रवृत्तं समाप्यावभृथं कृत्वा सद्योदगध्वा च सत्रादुत्थानं भवति न पुनः शेषसमापनम् ।२७गृहपतेरपि अस्थिसंचयनादयः पूर्व्वैव द्रष्टाः कार्य्याः । २८ एकाहेषु यजमानस्य पूर्व्वासने तस्य तस्य शयनम् । २९ मृतस्य गृहपतेः वह्नीषु अप्सु अवभृथ कर्म्म कृत्वा प्रेतस्य तत्र निक्षेपः एतमालेखनस्य आचार्य्यस्योक्तिः । ३० आश्मरथ्यमते तस्य यज्ञपात्रैः सह दाहः । ३१ एतत्पक्षे अयमेव अवभृथोनान्यः । ६अ० १०क० । १ सोमयागस्य अग्निष्टोमोऽत्यग्निष्टोम उकथ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त संस्थाः । २तासां मध्ये यास्वपर्य्यन्ति तस्यान्ते यज्ञपुच्छं नाम कर्म्म कर्त्तव्यम् । ३यज्ञपुच्छस्य प्रकारः । तत्र सूक्तवाकप्रैषस्य उत्तमत्वम् । ५तत्र पुरोडाशकरणं तद्देवता च । ६सवनीयस्य पयोःपशुपुरोडाशपक्षे अपीदृशेतां

पुरोडाशैरिति वचनमित्युक्तिः । ७ सवनीयैः काम्यैभिः इन्द्रवद्भिः पशुपुरोडाशेन पशुदेवतार्थवद्भिः । ८ शंयुवाकादूर्द्ध्वं हारियोजनं कार्य्यम् ।९हारियोजनस्य अनुयाज्याप्रैषयाज्याः । १०अहर्गणेषु अन्त्येष्वहःसु उक्ते एव याज्यानुवाक्ये । ११अहर्गणेष्वन्त्येभ्योऽन्यानि, तेषां च प्रतीकोक्तिः । १२ सारस्वतसत्रादिषु यानि सुत्यानि सौत्याहोभिरुत्सरन्ति तेष्वन्त्ये पुनुवाक्या । १३ हारियोजने मैत्रावरुणस्य अनुवषट्कारात् प्राक्व्यतिप्रैषनामकप्रैषकथनम् । १४ अतिरात्रे तेऽन्वः इत्यत्र तेऽद्येति प्रयोगः । १५ वक्ष्यमाणे श्वःसुत्यामित्यत्र अद्य सुत्यामिति प्रयोगः । १६ आग्नीध्रः अतिप्रैषस्यान्तं श्रुत्वा यज्ञः श्वः सुत्यामित्यादि मन्त्रं वदेत् ६ अ० ११क० । १ उद्गेताहूतं द्रौणकलशमिडामिव प्रतिष्ठशोपहूतमिडा द्रोणकलशस्यसोममवपद्येत् । २यस्तुः प्राणभक्ष मन्त्रः हरिवत इत्यादि । द्रोणकलशस्थसोमं उपहोत्वा मन्त्राभ्यां सुस्त्रहृदयमभिमृश्य येन पथा सदोहविर्धानं वा गतः तेन पथा तत्र प्रतिनिवृत्तिः । विनिसृप्राङ्गतिनामकौ होमौ कुर्य्यात् तत्र होममन्त्रौ च । ३ षड्भिर्मन्त्रैः आहवनीये षट्षट्शकलाभ्याधानम् । ते च देवकृतस्यैनसइत्यादयः श्लोकाः षट् । ४ द्रोणकलशाद्धानाग्दहोत्वा पश्येयुः तत्र मन्त्रः आपूर्य्या इत्युक्तिः ४ तुष्णीमवघ्राय ता धानाः अन्तःपरिधिदेशे निवपेयुः । आहवनीयदेशात् सर्वे दक्षिणाद्वतः प्रत्येत्याग्नीध्रीयं गच्छेयुः विनिसृप्राङ्गतिपर्य्यन्तमेतत् सर्वं सर्वे कुर्युः । ७ तांश्चमसान् गत्वा आर्द्रदूर्वाजातीयानि निधाय स्वे स्वे चमसेऽन्तरा प्रविश्य सर्वे चमसिनः स्वान् स्वान् चमसान् दूर्व्वादिरससंयुक्तान् उपहोत्वा प्रोक्षिताभिरद्भिः स्वं स्वमात्मानं दक्षिणैः पाणिभिरप्रदक्षिणं पर्युक्षेरन् । ८सव्यैर्वा पाणिभिः प्रदक्षिणं पर्युक्षेरन् । ९तत्र पर्युक्षणे गाथामन्त्रः । १०पित्रादित्रयजीवने नैता गाथा पाठाः नापि पर्युक्षणं कुर्य्युः तद्वर्जं सर्वं सर्वे कुर्युः । ११ अवघ्राणाभिमर्शनमन्त्राः । १२ सयजमानर्त्विजां परस्परस्य ह्वये मन्त्राः ६अ० १२क० । १पत्नीसंयाजैश्चरित्वा पत्न्यै वेदप्रदानादि पूर्णपात्रनियनान्तं कर्म्म कृत्वा वेदस्तरणं कृत्वाऽकृत्वा वा प्रायश्चित्तानि जुहूयात् । २ पशुभक्तिकस्य शाम्योनिधनरूपाभक्त्यां भक्तिं कृत्वा सर्वेऽवभृथं कुर्युः । ३ जले क्रियमाणा इष्टिरवभृथेष्टिः । तथा चरणम् । ४ ५ अत्र विशेषाः । अत्याग्निष्टौ प्रया-

जाद्यनुयाजान्ता नाखामिड़ा न बर्हिष्मन्तौ प्रयाजानुयाजावप्यमन्तौ तौ च गायत्रौ । ६ तत्र वारुणं हविः हविर्दांये इति यागावसरे हविरेवोत्पाद्य यष्टव्यम् । ७ स्विष्टिकृद्यागे अग्नीवरुणौ देवते अव ते हेडोवरुण नमोभिरिति द्वे ऋचौ तत्र साधनम् । अत्र च निगदाभावात् अग्नीवरुणावादिश्य स त्वं न इत्यृचा यष्टव्यम् । ८अवस्नामिष्टौ नमोवरुणाय इति मन्त्रेण दक्षिणानुपादायुदके निदध्युः । ९ तत्र आचमने मन्त्रत्रयम् । १० आचमनप्रकारः । ११ शौचाङ्गमाचमनं कृत्वा स्नानाङ्गमाचमनं कृत्वा आस्नायुः तत्र मन्त्राः । १२अदीक्षितानामुक्तमन्त्रैराप्लावनं वाऽभ्युक्षणं वा । १३ उन्नेता स्नानोक्तविधिना सर्व्वानुदकादुत्तारयेत् । १४ उन्नेत्रा उन्नीयमानाः उन्नेतरित्यादि मन्त्रं जपेयुः । १५उदकादुत्तीर्य्य उद्वयं तमस इत्यादि मन्त्रं जपेयुः । १६ इत ऊर्द्धं संस्थाजपपर्य्यन्तं हृदयस्थेन समानं तथा च अनवेक्षमाणाः इत्यादयः समिदाधानान्ताः सर्व्वैः कार्य्याः । १७ अपहृतकर्म्माणः संस्थाजपं कुर्य्युः १७सू० ६अ० १२क० । १ गार्हपत्ये उदयनीयया चरणम् । २ सा च प्रायणीयया तुल्या । ३सर्व्वसाम्येऽपि अयं विशेषः । तत्र चरुश्च आज्यहविषोर्देवता अदितिः पञ्चमी चरुर्हविः पथ्या स्वस्तिस्तत्र प्रथमा इह चतुर्थी भवतीति । ४ याज्यानुवाक्ये च विपरीते तत्र या याज्या सा इह अनुवाक्या । तत्रानुवाक्या इह याज्या । ५ प्रायणीयायाः कर्त्तार एवात्र कर्त्तारः । ६ संयाज्यायाः ऐकरूप्यं न याज्यात्वेन वैपरीत्यम् । ७उदयनीयायां समाप्तायां मैत्रावरुणदैवतोऽनूबन्ध्यः पशुः । ८ सदसि आसीनैर्होत्रादिभिः पशुः कार्य्यः स च वारुणीय इत्येके ९ उत्तरवेदिसमीपे आसीनैस्तैः कार्य्य इत्येके । १०तत्र नैमित्तिकः कर्म्मभेदः । अनूबन्ध्यापशोर्वपायां हुतायां यद्येकादशिन्यपशुः कृता तदाऽग्नीषोमीयेण पशुरेण गत्वा गार्हपत्ये त्वाष्ट्रेण पशुना चरणम् । ११ त्वाष्ट्रपशुकरणप्रकारः । त्वाष्ट्रं पशुं यूपाञ्जनादि कृत्वा उत्सृजेत् इत्येकः पक्षः । १२यदि आध्वर्य्यव आज्येन तं पशुयागं समापयेयुः तदा होतापि तथा कुर्य्यात् १३ आज्येन समापने अनेके पक्षाः । ब्राह्मणोक्तदिशा वेद्याः ।१४ आज्येन करणपक्षे पशुवत् मन्त्रप्रयोगः । १५ अथात्र देविका हवींषि अनुनिर्वपेयुः धाताऽनुमतिः राका सिनीवाली कुहूरिति पञ्च देवताः।१६तत्र धातृरूपस्थाने मन्त्रभेदः ।१७एषाञ्च पञ्चानां देव्य इति संज्ञा । देवीत्यपदे सर्व्वः द्यौः उषा गौः पृथिवीति पञ्च देवताः।१८तत्र सूर्यस्य चातुर्मास्येभ्यो याज्यानुवाक्ये ग्राह्ये ।१९अनूबन्ध्यपशुद्रव्यालाभे मैत्रावरुणीया पयस्या कर्त्तव्याः। २०सा च आज्यभागादिः वाजिनान्ता कार्या ।२१ कर्म्मिणो वाजिनं भक्षयेयुः ।सत्रविषये सर्व्वे भक्षयेयुः । २२ उदवसनीयया चरणं तत्करणप्रकारः । २४ प्रकृतेन ज्योतिष्टोमाख्येन सोमेन यजमानदक्षिणीयया दीक्षां प्रविष्टः स सोमेनेष्ट्वा अवभृथेष्टौ दीक्षामोचनं कृत्वा तस्मादुत्थित एवानूबन्ध्यान्तं प्रयोगं समाप्य तदन्तेऽग्न्योररण्योः समारोप्य उदङ् देवयजनात् यो देवयजनमग्न्योर्मथित्वोदवसानीयया यजते इत्येकोऽर्थः । अपरस्तु यदि सर्व्वे दीक्षिताः स्युः सत्रञ्चेति दीक्षिता उत्थिता इति पाठः कर्त्तव्यः समासपाठेऽर्थस्य दुर्गमत्वात् यदि सर्व्वे दीक्षिताः स्युस्तदा पूर्व्ववदेवानूबन्ध्यान्तं कर्म कृत्वा सर्व्वे स्वान् स्वानग्नीन् स्वे स्वे अरणीषु पृथक् पृथक् समारोप्य पूर्व्ववन्मथित्वा पृथगेवोदवसानीयया यजेरन्निति विशेषतोऽर्थः । सैषमुदवसानीया एवंरूपा भवति । पुनराधाने याम्नाता इष्टिस्तद्रूपा । सा च अविकृता अविभक्ताज्यभागविकारा उपांशुत्वरहिता केवलमग्निर्देवता । ६अ० २४क०

इत्थं पूर्व्वार्द्धस्य षडाध्यायीरूपस्य प्रतिसूत्रमभिधेयार्था दर्शिताः उत्तरार्द्धमपि षड़ध्यायीरूपम् बाहुल्यभयात् तत्रत्यप्रतिसूत्रप्रतिपाद्यार्था न दर्शिता मूलग्रन्थे द्रष्टव्याः। संक्षेपेणायमर्थस्तत्रत्यः । सप्तमाष्टमाध्याययोः सत्राधिकारेण इतिकर्त्तव्यतादिदर्शनम् ।नवमे अहीनैकाहाधिकारेण इति कर्त्तव्यताकलापः। दशमे रात्रिसत्रविवरणम् । एकादशे कामना विशेषेण तदाचरणम् गवामयनचरणञ्च । द्वादशे गवामयनस्यैव दिनसङ्कलनादि ।प्रागस्य चतुरध्यायात्मकत्वोक्तिः प्रामादिकी ।

तदीयगृह्यसूत्रे प्रतिपाद्यविषया यावदभिधीयन्ते । तत्र प्रथमाध्याये।स्थालीपाकाद्युपाकर्म्मान्तानि कर्म्माणि । १ गृह्यव्याख्यानप्रतिज्ञा । २ पाकयज्ञप्रकारः । ३ पाकयज्ञप्रकारस्य त्रैविध्योपदेशः । ४ एतान्यपि कर्म्माणि नित्यानि श्रौतैस्तुल्यानि आहिताग्नेरपीत्युक्तिः । ५ पाकयज्ञानामर्थवादरूपं ब्राह्मणम् । १ख० १क० । १ सायम्प्रातःपक्वहविष्यहोमः । २ देवयज्ञः । ३ स्वाहाकारेण बलिहरणम् । ४ बलिप्रदानार्थदेवतानिर्णयः । ५ दिक्षु देवताभ्यो देवतापुरुषेभ्यो बलिहरणम् । ६ मध्ये ब्रह्मणे ब्रह्मपुरुषेभ्यश्च बलिहरणम् । ७ मध्ये विश्वेभ्यो

देवेभ्यो बलिहरणम् । ८ मध्ये, दिवसे, दिवाचारिभ्यो भूतेभ्यो बलिहरणम् । ९ रात्रौ, नक्तञ्चारिभ्यो भूतेभ्यो बलिहरणम् । १० सर्व्वशेषे रक्षोभ्यो बलिहरणम् । ११ पितृयज्ञे प्राचीनावीती अन्यत्र निनयादिषु दक्षिणावीतीत्युक्तिः । १अ० २क० । १वक्ष्यमाणकर्म्मणां होमविधिः । २ पवित्राभ्यामाज्यस्योत्पवनम् । ३पवित्रच्छेदोत्पवनयोर्निर्णयः । आज्यहोमेषु परिस्तरणं कार्य्यं वा न वेति निर्णयः । ५ पाकयज्ञेषु आज्यभागौ कार्य्यौ वा न वेति निर्णयः । ६ धन्वन्तरियज्ञं शूलगवञ्च वर्ज्जयित्वा सर्व्वेषु पाकयज्ञेषु ब्रह्मा कार्य्यो वा नवेति निर्णयः । ७ अनादेशे नामधेयेन होमः । ८ अनादेशे देवतानिर्णयः । ९ एकवर्हिरादियज्ञाः समानकालिकाः । १० पूर्व्वोक्तस्य प्रमाणार्थं यज्ञगाथोदाहरणम् । १अ० ३क० । १चौलकर्म्मादीनां कालविधिः । २एके आचार्य्याः सर्व्वस्मिन् काले विवाहमिच्छन्ति । ३ आज्यहोमः । ४ व्यस्ताहुतयो व्याहृत्याहुतयश्च । ५ उभयाहुतिसमुच्चयपक्षः । एके अनादेशाहुतिमिच्छन्तीत्युक्तिः । ७तेषामाहुतयः । १अ०४क० ।१ वंशपरीक्षा । २ वरगुणकथनम् । ३कन्यागुणकथनम् ।४ परीक्षान्तरम् । ५ क्षेत्रादष्टमृत्पिण्डैः परीक्षा । ६ पिण्डानां स्वविशेषकथनम् । १अ०५क० ।१ब्राह्माद्यष्टविधविवाहोक्तिः । १अ० ६क० । १ विवाहे देशधर्म्मग्रामधर्म्मकुलधर्म्माणां कर्त्तव्यता । २ जनपदादिधर्म्मस्य सर्व्वत्र समानत्वमित्युक्तिः । ३ पाणिग्रहणविधिः । पुत्रकामिना अङ्गुष्ठस्य ग्रहणम् । ४ दुहितृकामिना अङ्गुलीग्रहणम् । ५ उभयकामिना अङ्गुष्ठाङ्गुलिसहितहस्तस्य ग्रहणम् । ६ अग्न्युदकुम्भप्रदक्षिणे वधूजप्यमन्त्रः । ७अश्मारोहणे आचार्य्यजप्यमन्त्रः । ८लाजहोमप्रकारः । भ्रात्रादिर्हि लाजानावपतीत्युक्तिः । ९ वरो जामदग्न्यश्चेत् त्रिर्लाजानावपति । १० लाजेषु हविरवधारणम् । ११ वरकर्त्तृकमवदानम् । १२अवदानस्य सर्व्वत्रातिदेशः । १३ वरकर्त्तृकहोममन्त्राः । १४ अमन्त्रकं शूर्पपुटेन वधूकर्त्तृकं लाजदानम् । १५ एके लाजानोप्य पश्चात्परिणयमाहुरित्युक्तिः । १६शिखाविमोचनम् । १७दक्षिणशिखाविमोचनम् । १८ उत्तरशिखाविमोचनम् । १९ सप्तपदीगमनम् । २० उभयोः शिरसि उदकुम्भसेचनम् । २१ग्रामान्तरगमने अन्तरा वसतिः ।२२ ध्रुवारुन्धत्यादिदृष्टा वाग्विसर्जनम् । १अ०७क० ।१ यानारोहणमन्त्रः ।

२नावारोहणमन्त्रः । ३उदकादुत्तारणमन्त्रः । ४वधूर्यदि रोदिति तदा अग्निशेषं जपेत् । ५विवाहाग्निं गृहीत्वा गन्तव्यम् । ६ देशदक्षचतुष्पथादौ जप्यमन्त्रः । ७पथिका ईक्षकाः सन्ति चेत् तदीक्षणमन्त्रः । ८ गृहप्रवेशमन्त्रः । ९ उपवेशनदधिप्राशनहृदयाञ्जनादयः । १०विवाहावधि ब्रह्मचर्य्यधारणादिः । ११ त्रिरात्रं द्वादशरात्रं वा ब्रह्मचर्य्यधारणम् । १२ संवत्सरं वा ब्रह्मचर्य्यधारणम् । १३व्रतानन्तरं वधूवस्त्रदानम् । १४ब्राह्मणेभ्योऽन्नदानम् । १५ स्वस्तिवाचनम् । १अ० ८क० । १ पाणिग्रहणप्रभृतिगृह्याग्निपरिचरणम् । २ अग्नौ नष्टे प्रायश्चित्तं कृत्वा पुनरग्निपरिग्रहणम् । ३ एके अग्न्युपशान्तौ पत्न्या उपवासं वदन्तीत्युक्तिः । ४तदग्निपरिग्रहणं अग्निहोत्रविधानेनेत्युक्तिः । ५होमादिकालव्यवस्था ।६होमद्रव्याणि । ७ उक्तद्रव्याभावे द्रव्यान्तरप्रतिनिधिः। ८सायम्प्रातर्होमः । १अ०९क०। पार्व्वणस्थालीपाकः । २भोजननियमः । ३ दर्शपौर्णमासयोर्व्रतनम् । ४ तद्देवता । ५ काम्यदेवता । ६ शूर्पमुष्टिनिर्व्वपणम् । ७ शूर्पमुष्टिप्रोक्षणम् । ८ अवघातप्रक्षालनेनानेकत्र श्रपणानि । ९ एकत्र श्रपणं वा ।१०नानाश्रपणप्रकारः । ११ एकत्र श्रपणप्रकारः । १२ आज्योत्पवनादिः । १३ आघाराज्यभागौ स्विष्टकृद्धोमश्च । १४ आग्नेयादिहोमः । १५ आज्यभागयोश्चक्षुष्ट्वम् । १६ यज्ञपुरुषस्य उपवेशननियमः । १७ अग्नेरुत्तरपूर्व्वदेशे होमः।१८हविःस्थापनदेशः ।१९पश्चाद्धविर्होमनिर्णयः । २०स्विष्टकृद्धोमनियमः । २१स्विष्टकृद्धोमे हविःशेषाभावः ।२२स्विष्टकृद्धोममन्त्रः ।२३पूर्णपात्रनिनयनम् । २४ पूर्णपात्रनिनयनकालः ।२५पाकयज्ञतन्त्रम् । २६दक्षिणादानम् । १अ०१०क०। १ पशुकल्पः ।२पश्चुपस्पर्शनम् । ३ पशुप्रोक्षणम् । ४पशुनिनयनम् । ५ मन्त्रवर्जं पशुनिनयनम् । ६ उल्मुकाहरणम् । ७ शामित्रोक्तिः । ८ पश्वन्वारम्भणम् । अन्वारम्भे कर्त्तृकथनम् । १० वपाहोमः । ११स्थालीपाकश्रपणम् । १२ पश्ववदानं स्थालीपाकहोमश्च । १३अवदानसहितहोमो वा । १४ प्रत्येकावदाने द्विर्द्विरवदानम् । १५ तूष्णीं हृदयशूलाचरणम् । १अ०११क० । १ चैत्ययज्ञे स्विष्टकृतः प्राक् बलिहरणम् । २ विदेशस्थचैत्यपक्षे पलाशदूतेन बलिहरणम् । ३ भयसम्भावनायां दूताय शस्त्रदानम् । ४ नद्यन्तरा चेत् प्लवदानम् । ५ धन्वन्तरि-

चैत्यये तुपरोहिताय बलिहरणम् । १अ० १२क० । १ पुंसवनम्, अनवलोभनञ्च । २ तृतीयमासे पुष्यनक्षत्रे उपोष्य तल्पतर्ण्यावत्सायागोर्दधिमात्रया प्राशनम् ।३प्रश्नवचनम् । ४ त्रिःप्राशनम् । ५ दूर्वारसस्य नासिकायां सेचनम् । ६ नस्तःकरणम् । ७ हृदयस्पर्शमन्त्रः। १अ० १३क० ।१ सीमन्तोन्नयनं कर्म्म । २ तस्य कालनिर्णयः । ३ होममन्त्रः ।४सीमन्तव्यूहनम् । ५चतुर्धा व्यूहनम् । ६ वीणागाथकप्रेषणम् । ७गेयगाथाकथनम् ।८ब्राह्मण्यो यद्ब्रूयुस्तदाचरणम् । ९दक्षिणादानम् । १अ०१४क० । १ जातकर्म । २ मेधाजननजपः । ३ अंसस्पर्शनम् । ४ नामकरणम् । ५नामलक्षणम् । ६ चतुरक्षरं वा नाम । ७नाम्नि कामनाभेदेनाक्षरनिर्णयः।८पुंनामधेयानि युग्माक्षराणि । ९ स्त्रीनामधेयानि अयुग्माक्षराणि । १०येन नाम्ना उपनीतः तेनाभिवादनं कुर्य्यात् । ११ मूर्द्धावघ्राणे मन्त्रजपः । १२ कुमार्य्या अमन्त्रकं कर्म्म ।१अ०१५क०। १ अन्नप्राशनम् । २ अजमांसान्नाशनम् । ३तित्तिरिमांसान्नाशनम् । ४ घृतौदनान्नाशनम् । ५ अन्नाशनमन्त्रः । ६ कुमार्य्या अमन्त्रकम् । १अ०१६क०१ चौलं कर्म । २पूर्णपात्राधानम् । ३ कुमारावस्थानं द्रव्यासादनञ्च । ४ कुशपिञ्जूलहस्तकुमारपितृवस्थानम् । ५ब्रह्मा वा कुशपिञ्जूलानि धारयेत् । ६ अपां निनयनमन्त्रः । ७ शिरउन्दनमन्त्रः । ८ कुशपिञ्जूलनिधानमन्त्रः । ९ तेषु ताम्रक्षुरस्थापनमन्त्रः । १० केशच्छेदनमन्त्रः । ११ केशस्थापनम् । १२ द्वितीयस्य तृतीयस्य मन्त्रौ । १३चतुर्थस्य मन्त्रः । १४ एवमुत्तरतस्त्रिर्वारम् । १५क्षुरधारशोधनमन्त्रः । १६ नापितानुशासनम् । १७ केशसन्निवेशकरणम् । १८ कुमार्य्या अमन्त्रकम् । १अ०१७ १ गोदानं कर्म्म । २ तत्र कालनिर्णयः । ३ मन्त्रे केशशब्देषु श्मश्रुशब्दकरणम् । ४ श्मश्रुवपनम् । ५क्षुरधारशोधने विशेषमन्त्रः । ६ नापितानुशासनम् । ७ आचार्य्याय दानप्रार्थना । ८ गोमिथुनदक्षिणादानम् । ९ संवत्सरव्रताचरणादेशः । १अ० १८क० । १ उपनयनम् । अष्टमे वर्षे ब्राह्मणस्य । २ गर्भाष्टमे वर्षे वा । ३ एकादशे वर्षे क्षत्रियस्य । ४ द्वादशे वैश्यस्य । ५ आ षोड़शात् ब्राह्मणस्य नातीतः कालः । ६आ द्वाविंशात् क्षत्रियस्य, आ चतुर्विंशात् वैश्यस्य ।७अत ऊर्द्ध्वम् अचीर्णप्रायश्चित्तान् नाध्यापयेत् । ८ संवीतचर्म्मनियमः। ९ परिधेयवासोनिर्णयः । १० मेखलाधिकारः । ११ जातिभेदे मेखलानिर्णयः । १२ दण्डाधिकारः । १३ जातिभेदे दण्डनिर्णयो दण्डपरिमाणञ्च । १अ०१९ क०। १ सर्वे दण्डाः सर्वेषां वा भवन्ति । २आचार्य्यान्तिके उपवेशननिर्णयः ।३ब्रह्मचारिण उपवेशननिर्णयः। ४ साङ्गुष्ठपाणिग्रहणम् । ५पाणिग्रहणमन्त्रः । ६आदित्यावेक्षणम् । ७ तत्र जप्यमन्त्रः । ८प्रदक्षिणावर्त्तनम् । हृदयस्पर्शनम् । १० अमन्त्रकं समिदाधानम् । १अ० २०क० । १ एकमते मन्त्रेण समिदाधानम् । २ मुखमार्ज्जनम् । ३तेजसा मार्जनम् ।४ सावित्र्युपदेशप्रार्थना । ५सावित्र्युपदेशः । ६सावित्रीवाचनम् । ७ ब्रह्मचारिणो हृदयदेशे ऊर्द्धाङ्गुलिस्थापनं मन्त्रश्च ।१अ०२१क०। १ब्रह्मचर्य्यादेशः । २ ब्रह्मचर्य्यादेशमन्त्रः । ३ वेदब्रह्मचर्य्यकालनिर्णयः । ४ वेदग्रहणान्तं वा ब्रह्मचर्य्यं भवति । ५ भिक्षाकालनिर्णयः । ६ समिदाधानकालनिर्णयः । ७प्रथमभिक्षानिर्णयः । ८भिक्षामन्त्रः । ९भैक्ष्यमाहृत्याचार्य्याय निवेदनम् । १० पाकयज्ञः । ११ आधाराज्यभागान्तहोममन्त्रः । १२ सावित्र्या द्वितीयम् । १३ महानाम्न्यादिहोमः । १४ऋषिभ्यस्तृतीयम् । १५सौविष्टिकृतं चतुर्थम् । १६ वेदसमाप्तिवाचनम् । १७ ब्रह्मचर्य्यव्रतधारणम् । १८ मेधाजननम् । १९ उदकुम्भाभिषेकवाचनम् । २० व्रतादेशशेषः । २१ अनुपेतस्य विधिविशेषः । २२ उपेतस्य विधिः । २३ कृतमकृतञ्च । २४ गोदानमनुक्रम् । २५ कालोऽनिवृत्तः । २६ प्रायश्चित्तार्थं सावित्र्यन्तरम् । १अ० २२क० । १ ऋत्विग्लक्षणम् । २ एके युवानं वदन्ति । ३ वरणनिर्णयः । ४ वरणविशेषनिर्णयः । ५ सदस्यवरणम् । ६ वरणविशेषः । ७ होतृवरणमन्त्रः । ८ ब्रह्मवरणमन्त्रः । ९ अध्वर्य्वादिवरणमन्त्रः । १० होतृप्रतिज्ञा । ११ब्रह्मप्रतिज्ञा ।१२अपरप्रतिज्ञा जप्यमन्त्रश्च ।१३याज्यलक्षणम् ।१४ । १५ । १६ । १७ । १८ छायाच्छ निर्णयः।१९सोमप्रवाकप्रश्नः।२०कल्याणैः सह संप्रयोगः । २१तत्र निषिद्धानि । २२ आज्याहुतिहोमः । २३अनाहिताग्निस्तत्प्रयोगः । १अ० २३क० १ऋत्विजे मधुपर्काहरणम् । २ एवं गृहागताय स्नातकाय, विवाहार्थिने । ३ राज्ञे उपस्थिताय । ४ आचार्य्यश्वशुरपितृव्यमातुलेभ्यः । ५ मधुपर्कस्वरूपनिर्णयः । ६ अलाभे घृतद्रव्यप्रतिनिधिः । ७ आसनपाद्यार्घ्याचमनीयानि गाञ्च त्रिस्त्रिर्वेदयेत् । ८ आसनग्रहणे मन्त्रप्रकारौ ।

९ पादप्रक्षालननिर्णयः । १० वामपादादिप्रक्षालनम् । ११ अर्घ्यग्रहणम् । १२ अर्घ्यग्रहणमन्त्रः । १३ मधुपर्कवीक्षणमन्त्रः । १४ मधुपर्कग्रहणादिमन्त्राः । १५ विरूहरणम् । १६ मधुपर्कभोजनम् । १७ सर्व्वभक्षणनिषेधः । १८ तृप्तिनिषेधः । १९ अवशिष्टमधुपर्कप्रक्षेपः । २० सर्व्वभक्षणं वा । २१ आचमनम् । २२ द्वितीयाचमनम् । २३ आचान्तोदकाय गोदानम् । २४ आलम्भनपक्षे जपोऽनुज्ञा च । २५ उत्सर्गपक्षे उत्सर्गमन्त्रः । २६ मधुपर्काङ्गं भोजनममांसं न भवति । १अ० २४क० ।

२ अध्याये । १ श्रवणाकर्म्मकालः । २ सक्तुकलशदर्व्वीस्थापनम् । ३ दिवाक्षतदानादि । ४ अस्तमिते स्थालीपाकहोमः । ५ अवस्थाननिर्णयः । ६ पुरोडाशोपरिहोमः । ७धानाञ्जलिहोमः । ८हुतशेषस्य प्रतिपत्तिः ९ सर्पबलिहरणम् । १० प्रदक्षिणोपवेशने परिदानमन्त्रश्च । ११ अमात्याय परिदानम् । १२ परिदानान्तरम् । १३ बलिमात्मानं चान्तरा न व्यवेयुरन्ये ।१४सायम्प्रातर्बलिहरणम् । १५ प्रकारान्तरबलिहरणम् । २अ० १क०आश्वयुज्याम् आश्वयुजीकर्म्म । २ स्थालीपाकहोमः । ३ पृषातकहोमः । ४ आहिताग्नेः आग्रहायण्येतायां स्थालीपाकश्च । ५ अनाहिताग्नेर्लौकिकेऽग्नौ । २अ० २क० । मार्गशीर्ष्यां चतुर्दश्याम् प्रत्यवरोहणकर्म्म । २ पौर्णमास्यां वा । ३ पायसहोममन्त्रौ । ४ स्थण्डिलच्छिन्निषेधः । ५ ध्यानं तन्मन्त्रश्च । ६ पुनर्जप्यमन्त्रः । ७अमात्यप्रवेशः । ८द्वद्वद्वतर प्रवेशः । ९ मन्त्रविदो मन्त्रजपः ।१०उत्थाय त्रिर्जप्यमन्त्रः । ११त्रिदिक्षुखानां जपब्राह्मणभोजनस्वस्त्ययनानि, चतुर्थजप्यमन्त्रश्च १२स्वस्त्ययनवाचनम् । २अ० ३क०। १अष्टकाकर्म्मकालः। २ एकस्याम् अष्टम्यां वा । ३ पूर्व्वदिवसे सप्तम्यां पितृभ्यो दानम् । ४ तत्र ओदनकृशरपायसानां श्रपणम् । ५ चतुःशरावपरिमितधान्यं पिष्ट्वा पूपश्रपणम् । ६ मन्त्रा एकैर्होमः, यावद्भिः कामयेत तावद्भिर्वा । ७ परदिने अष्टम्याम् अष्टका, पशुना स्थालीपाकेन वा । ८ अनुडुहो यवसमाहरेद्वा । ९ तदासामप्यसम्भवे अग्निना कक्षं दहेत् । १० यवसदाने कक्षदाहे मनसा ध्यानम् । ११चतुर्णामेकस्याप्यनुष्ठाने नानष्टकः स्यात् । १२ देवताविकल्पप्रदर्शनम् । १३ वपाहोममन्त्रः । १४ सप्त होममन्त्राः । १५ स्विष्टकृति अष्टमहोमः । १६ ब्राह्मणभोजनोत्तरं स्वस्त्ययनवाचनम् । २अ० ४क०। १आन्वष्टक्यं तदुत्तरनवम्यां कार्य्यम् । २मांसकल्पादि ।३ पिण्डपितृयज्ञकल्पप्रदर्शनम् । ४ पितृभ्यः मधुमन्थवर्जं पिण्डनिपरणम् । ५मातृपितामहीप्रपितामहीभ्यः सुराचमेन पिण्डनिपरणम् । ६ अवटसंख्यानिर्णयः । ७पित्रादिपिण्डस्थानम् । ८मात्रादिपिण्डस्थानम् ।९आग्रायरपक्षीयसप्तम्यादिदिनत्रये कर्त्तव्ये साध्यायेषु उक्तधर्म्मातिदेशः । १० कृष्णपक्षे अयुग्मासु तिथिषु आन्वष्टक्यवत् । मासि मासि पितृभ्य एव श्राद्धं कर्त्तव्यं न मात्रादिभ्यः । ११ आन्वष्टक्ये नवावरान् भोजयेत् ।१२अशक्तौ सप्त पञ्च त्रीन् एकं वा । १३ वृद्धिकर्म्मणि पूर्त्तकर्म्मणि च युग्मान् भोजयेत् । १४इतरत्र युग्मब्राह्मणभोजनम् तिलस्थाने यवदानञ्च । २अ० ५क० । १ रथारोहणात् पूर्व्वं तत्स्पर्शनमन्त्रः । २ अश्वस्पर्शनमन्त्रः । ३ आरोहणक्रमस्तन्मन्त्रश्च । ४ रश्मिस्पर्शनमन्त्रः । ५ गमनप्रवर्त्तमानेषु रथेषु जप्यमन्त्रः । ६ शकटाद्यारोहणेऽपि तस्य जपः ।७ शकटाद्यङ्गस्पर्शनमन्त्रः । ८ नावारोहणमन्त्रः । ९ नवरथे विशेषः ।१०कुटुम्बोपयोगिद्रव्याहरणम् ।११स्वगृहसमीपागमनम् ।१२रथावरोहणमन्त्रः।१३नवरथावरोहणमन्त्रः । १४तत्र जप्यमन्त्रः । १५तत्र पुनर्जप्यमन्त्रः । २अ०६क०। १ वास्तुपरीक्षा । २ भूमिलक्षणम् । ३ भूमेरपरलक्षणम् । ४भूमेरन्यलक्षणञ्च ।५ विरूढदुष्टवृक्षोत्पाटनम्। ६भूमेरुच्चनिम्नतानिर्णयः । ७ भोजनगृहस्थाननिर्णयः । ८तत्फलम् । ९ सभागृहस्थाननिर्णयः । १० तत्फलम् । ११ तदपरस्थाननिर्णयः २अ०७क०। १ वास्तुपरीक्षणक्रमः । २तत्र खातखननं तत्पूरणञ्च । ३प्रशस्तमध्यमगर्हितवास्तुनिर्णयः । ४अस्तमितेऽर्के जलैस्तत्पूरणम् । प्रशस्तमध्यमगर्हितनिर्णयः । ६ ब्राह्मणवास्तुनिर्णयः । ७क्षत्रियवास्तुनिर्णयः । ८ वैश्यवास्तुनिर्णयः । ९ बहुहलैः वास्तुकर्षणम् । १० समचतुष्कोणं दीर्घं वा । ११ वास्तुप्रोक्षणम् । १२ अविच्छिन्नधारया मोक्षणे मन्त्रः । १३अवान्तरगृहप्रभेदनिर्णयः। १४स्थूणानां गर्त्तेषु विशेषविधिः ।१५मध्यमस्थूणागर्त्ते विशेषः। १६मध्यमस्थूणागर्त्ते मन्त्रः।२अ०८क०।१वंशाधानानुमन्त्रणम्। २वंशाधानमन्त्रः।३मणिकप्रतिष्ठापनम् । ४तत्रान्यान्तरविधानम् । ५मणिकसेचनमन्त्रः । ६ वास्तुदोषशमनम् । ७ तत्प्रोक्षणम् । ८ अविच्छिन्नजलधारादानम् । ९ स्थालीपाकश्रपणादि शिववाचनञ्च ।२अ०९क०। १गृहप्रपदनम् ।

२शीलवद्दुष्टवृषप्रपदनम् ।३तत्कालनिर्णयः । ४ तत्र होमकर्म्म । ५अनुमन्त्रणम् । ६आयतीनां गवामनुमन्त्रणे मन्त्रः । ७एके अन्यसूक्तमिच्छन्ति । ८आयातीनां गवामनुमन्त्रणे । २अ०१०क०

तृतीयाध्याये पञ्चयज्ञादिसमाह्वान्तानि कर्माणि । १ पञ्चयज्ञप्रतिज्ञा ।२ यज्ञानां नामकथनम् । ३यज्ञानां स्वरूपकथनम् । ४तेषामहरहःकर्त्तव्यता । ३अ०१क०। १ स्वाध्यायविधिः। २ स्वाध्यायाध्ययननियमः । ३ ओं-पूर्व्वा व्याहृतीः समस्ता ब्रूयात् । ४ सावित्र्यध्ययननियमः । ३अ० २क० । १ स्वाध्यायक्रमः । २ अध्ययने देवाहुतिनिर्णयः । ३ अध्ययने पित्राहुतिनिर्णयः । ४ अध्ययने कालावधिनिर्णयः । ३अ० ३क० । १ देवतर्पणम् । २ ऋषितर्पणम् । ३ प्राचीनावीती । ४ आचार्य्यतर्पणम् । ५ पितृतर्पणम् । दक्षिणावीती । ६तिथिविशेषादौ निषेधवचनं नित्यस्वाध्यायस्यैव, न ब्रह्मयज्ञस्य । ७ब्रह्मयज्ञानध्यायः ३अ०४क०। १ अध्ययनप्रारम्भः । २ अध्ययनकालनिर्णयः । ३तत्र कालान्तरम् । ४ आज्यभागाहुतिः । ५ दधिसक्तुहोमः । ६होममन्त्रः ।७तत्रान्ये द्व्यृचा मन्त्राः । ८ एकोमन्त्रः । ९ तत्रापरोमन्त्रः । १० देवताहोमादिमार्जनम् । ११ जपनियमः । १२ व्याहृतिसावित्रीजपोवेदारम्भश्च । १३उत्सर्गविधिः । १४अध्ययनकालनिर्देशः । १५ ब्रह्मचारिधर्म्मयुक्तोऽधीयीत । १६ ब्रह्मचारिणामपि अध्ययनम् । १७ समावृत्तोजायां गच्छेदित्येके । १८प्रजोत्पत्त्यर्थं जायागमनमपरे । १९ उपाकरणकर्म्म । २० माघ्यां पौर्णमास्यां तत्करणम् । २१ तत्र सावित्र्यादितर्पणम् । २२आचार्य्यादितर्पणम् । २३ ततः षण्मासोत्तरमुत्सर्जनकर्म्म । ३अ० ५क० । १ काम्यकर्म्मस्थाने पाकयज्ञः । पुरोडाशस्थाने चरुः । २ कामप्राप्तिफलम् । ४ नैमित्तिकहोमः । ५ होममन्त्रः । ६अशुभस्वप्नदर्शने उपस्थानमन्त्रः । ७ तत्र मन्त्रान्तरम् । ८ जृम्भणादौ जप्यमन्त्रः । ९ अगमनीयगमनादौ आज्यहोमः । १० तत्र समिदाधानं वा । ११ तत्र मन्त्रजपो वा । ३अ०६क०। १अभ्युदितेऽर्के स्वपतः प्रायश्चित्तम् २ तत्र मन्त्रचतुष्टयम् । अभिनिर्मुक्तस्य प्रायश्चित्तहोमः । ३ सन्ध्योपासनम् । ४ तत्र सायङ्काले कर्त्तव्यभेदः । ५ तत्र प्रातर्नियमभेदः । ६ तत्र कालनिर्णयः । ७ कपोतपाते होमजपौ । ८ अर्थार्थं गच्छतो होमजपौ । ९ नष्टं वस्तु लब्धुमिच्छतो होमजपौ । १० महाजनस्थानं गमिष्यतो होमजपौ । ३अ०७क० । १ समावर्त्तनम् । तत्र आचार्य्याय आत्मने वा एकादशद्रव्याहरणम् । २उभयोर्द्रव्यालाभे आचार्य्यायैव दानम् । ३ समिदाहरणनियमः । ४ कामनाविशेषे समिन्निर्णयः । ५उभयकामस्यार्द्रशुष्का समित् । ६ समिदाधानादि गोदानम् ।७मन्त्रान् आत्मवाचकान् कुर्य्यात् ।८करस्योन्मर्दनम् । ९ स्नानाञ्जनविधिः । १० कुण्डलबन्धनम् । ११ अनुलेपनविधिः । १२ स्रग्बन्धनम् । १३ [illegible]विधिः । १४ छत्रादानम् । १५ वैणवदण्डादानम् । १६मणयुष्णीषमिधादानम् । ३अ०८क० ।

तृतीये १ उपदेशमन्त्रः । २ प्रत्यृचं समिदाधानम् । ३ मधुपर्केण पूजनम् । ४ अनुज्ञाते समावर्त्तनस्नानम् । ५ व्रतविशेषः । ६ निषेधविशेषः । ७ निषेधान्तरम् । ८ स्नातकस्य माहात्म्यम् । ३अ०९क० । १ गुरवे नामकथनम् । २ उपवेशनानुज्ञा । ३ उच्चैर्नामकथनम् । ४ उपांशुकथने मन्त्रः । ५ शिष्यस्य उपांशुकथने मन्त्रः । ६आचार्य्यजप्यमन्त्रः । ७जपान्तरम् अनुमन्त्रणञ्च । ८ तत्प्रशंसा । ९ पक्षिणाम् अमनोज्ञा वाचः श्रुत्वा जप्यमन्त्रः । १० मृगस्यामनोज्ञा वाचः श्रुत्वा जप्यमन्त्रः । ११ भयप्राप्तौ जप्यमन्त्रः । ३अ०१०क० । १सर्व्वाभ्योदिग्भ्यो भयप्राप्तौ जप्यमन्त्रो होमश्च । २तत्र जप्यमन्त्रः सूक्तविशेषश्च । ३अ०११क०। १राजसन्नाहनम् । २तत्र जप्यमन्त्रः। ३राज्ञे कवचदाने मन्त्रः । ४ धनुर्दाने मन्त्रः । ५ राज्ञोजप्यमन्त्रः । ६ स्वीयजप्यमन्त्रः । ७इषुधिदाने मन्त्रः । ८रथगमने जप्यमन्त्रः । ९अश्वानुमन्त्रणम् ।१०इषूनवेक्षमाणस्य जप्यमन्त्रः। ११संनह्यमानराजजप्यमन्त्रः । १२सारथिनारोप्यमाणे रथे जप्यमन्त्रः। १३राजेक्षणमन्त्रः । १४तौयर्णमन्त्रः । १५अनुक्रमेण रथगमनम् । १६युद्धप्रदेशनिर्णयः । १७दुन्दुभिवादने मन्त्रः ।१८बाणत्यागमन्त्रः । १९युध्यमाने राजनि पुरोहितजप्यमन्त्रः ।२०तत्रपुनर्मन्त्रः।३अ०१२क०

चतुर्थाध्याये । आहिताग्नेः पीड़ाप्रशमनादिशन्तातीयजपान्तानि कर्म्माणि ।१ व्याधिपीड़ितस्याहिताग्नेः कर्त्तव्यम् ।२ग्रामकामत्वे प्रमाणम् ।३ग्रामे वासव्यत्वे प्रमाणम् । ४अगदः सोमादिभिरिष्ट्वा ग्रामं प्रविशेत् । ५ अनिष्ट्वा वा ग्रामं प्रविशेत् । ६मृतस्याहिताग्नेश्चिताभूमिखननम् । ७खातस्य निम्नोन्नतानिर्णयः। ८खातस्य आयामनिर्णयः ।

९ खातस्य विस्तृतिनियमः । १०खातस्य अधोनिर्णयः ।
११ श्मशानदेशनिरूपणम् । १२ तत्स्थानस्य बहुलौष-
धिकत्वम् । १३ कण्टकिवृक्षाद्युद्वासनम् । १४ दहन-
जलावश्मशानस्य विशेषविधिः । १५प्रेतस्य केशादि-
वपनम् । १६ बर्हिराज्यादिसंस्थापनम् । १७ पृषदाज्य-
नयनम् । ४अ०।क० । १ अग्नियज्ञपात्रादिनयनम् ।
२ प्रेतनयनकर्तृनिर्णयः । ३ शकटादिना प्रेतन-
यनमित्येके । ४अनुस्तरणीपशुस्त्रीनयनम् । ५ अनु-
स्तरणीं गामाहुरेके कृष्णाम् एकवर्णामजामित्यपरे
८ पशोः सव्यबाहुबन्धनं कृत्वा आनयनम् ।९ तदनु-
अमात्यादीनामागमनम् । १० दाहकर्त्तुः कर्त्तव्यभेदः ।
११दक्षिणपूर्वदेशे आहवनीयनिधानम् । १२उत्तरपश्चिमे
गार्हपत्यनिधानम् ।१३दक्षिण पश्चिमे दक्षिणाग्निनिधानम् ।
१४ चिताग्निचयनम् । १५ चितायां प्रेतसंवेशनम् ।
१६ प्रेतपत्नीसंवेशनम् । १७ क्षत्रियप्रेतस्य धनुःसंवे-
शनम् । १८ देवरादिना पत्न्याउत्थापनम् । १९तत्र उत्थ-
उत्थापके कर्त्री, देवरे तेनैव मन्त्रस्य जपः । २०धनुरप-
नयने मन्त्रः । २१ पुनः कर्त्तृत्थापकयोर्मन्त्रजपः ।
२२ धनुर्भङ्गा क्षेपः । ४अ०२क० । १ पात्रयोजनम् ।
२दक्षहस्ते जुहूयोजनम् । ३सव्ये उपभृतानयनम् ।
देवे पार्श्वे स्फ्यस्य सव्येऽग्निहोत्रहवन्या योजनम् ।
५ उरः प्रभृतिषु ध्रुवादिनिधानम् । ६ नासिकयोः
स्रुवाधानम् । ७ एकां स्रुवं भित्त्वा नासिकाद्वये
योजनम् । ८ कर्णयोः प्राशित्राधानम् । ९ एकञ्चेत्
भित्त्वोभयत्र तन्निधानम् । १० उदरे हविः पात्रीनिधा-
नम् । ११ तत्र समवत्तधानचमससंयोजनम् । १२ उपस्थे
शम्यानिधानम् । १३ अरणीमूर्वोः, उदूखलमुषले जङ्घयो
र्निदध्यात् । १४ पादद्वये शूर्पनिधानम् । १५ एकञ्चेत्
छित्त्वा निधानम् पूर्ववत् । १६ आसेचनपात्रे पृषदा-
ज्यपूरणम् । १७ दृषदुपलाद्युपयोगद्रव्यनिधानम् ।
१८ लोहमृण्मयादिनिधानम् । १९अनुस्तरण्या वपामुत्-
खिद्य तत्र प्रेतस्य शिरोमुखाच्छादनं तन्मन्त्रश्च । २०
प्रेतपाण्योर्वृक्कयोर्निधानम् । २१ हृदये हृदयाधानम् ।
२२ प्रेतपाण्योः पिण्डद्वयाधानमित्येके । २३वृक्काभावे
पिण्डद्वयाधानमित्यन्ये । २४प्रणीताप्रणयनानुमन्त्रणे ।
२५दक्षिण जानुपातेन दक्षिणाग्नौ चतुराज्याहुतिहोमः।
२६प्रेतस्योरसि पञ्चमाहुतिहोममन्त्रः।३अ०३क०।१युगप-
दग्निप्रज्वालने प्रेषणम् । आहवनीयस्य प्राक् प्रेतदेहप्राप्तौ

प्रेतस्य स्वर्गलोकगतिः पुत्रविशिष्टर्द्धिश्च फलम् । गार्हप-
त्यस्य तथात्वे प्रेतस्यान्तरिक्षलोकप्राप्तिः पुत्रस्य ऋद्धिश्च
फलम् । दक्षिणाग्नेस्तथात्वे प्रेतस्य मनुष्यलोकप्राप्तिः
पुत्रस्य ऋद्धिश्च फलम् । ५ युगपत्प्राप्तौ सर्वसमृद्धिः फलम् ।
६दहनमन्त्रः । ७ दहनप्रशंसा । ८ जानुमात्रे गर्त्तेऽव-
स्थाय दग्धोत्तरमांसवाहिकशरीरमास्थाय धूमेन सह
स्वर्गलोकगमनम् । ९ दाहकर्त्तृजप्यमन्त्रः पृष्ठतोऽनीक्षित्वा
सर्वेषां गमनञ्च । १० सकृत्स्नात्वा प्रेताय जला-
ञ्जलिं दत्त्वान्यानि वासांसि परिधाय दिवा आ-
नक्षत्रदर्शनात् तत्रावस्थानम् । ११ रात्रौ आदित्यमण्डलं
दृष्ट्वा गृहं प्रविशेत् । १२ गृहप्रवेशे वृद्धादिपूर्व्वापरनिर्णयः
१३ गृहमागत्य अश्मादीनामुपस्पर्शः । १४ तस्मिन् दिने
अन्नं न पचेरन् । १५ क्रीताद्यन्नेन वर्त्तेरन् । १६
सपिण्डानां त्रिरात्रमक्षारलवणान्नाशनम् । १७महागुरु-
मृतौ द्वादशरात्रं तथाशनं दानाध्ययनवर्जनञ्च
१८ सपिण्डेषु दशाहं दानाध्ययनवर्ज्जनम् । १९
उपनेतृगुरौ असपिण्डेऽपि दशाहं द्वादशाहं वाऽशौ-
चम् । २०अदत्तासु स्त्रीषु मृतासु दशाहम् । २१
एकदेशाध्यापकेषु त्रिरात्रम् । २२ असपिण्डज्ञातौ
त्रिरात्रम् । २३दत्तासु स्त्रीषु त्रिरात्रम् । २४ अद
न्तजाते त्रिरात्रम् । २५ अपरिपूर्णगर्भे त्रिरात्रम् ।२६
सहाध्यायिषु मृतेषु एकाहम् । २७ समानग्रामीये
श्रोत्रिये एकाहम् । १ अस्थिसञ्चयनम् । २ स्त्रीपु-
रुषभेदेन कुम्भनियमः । ३ प्रोक्षणमन्त्रः । ४सञ्चयने
पूर्व्वापरनिर्णयः । ५ सञ्चयनानन्तरमवधाननिर्णयः ।
६ पांशुप्रक्षेपः । ७ पांशुप्रक्षेपानन्तरम् उत्तरामृचं
जपेत् । ८कपालपात्रेण कुम्भं पिधाय पृष्ठतोऽनवेक्ष्य प्रत्या
गत्याप उपस्पृश्य प्रेताय श्राद्धदानम् । ४अ०५क० । १मृत-
गुरुकस्यान्यतोवाऽपक्षीयमाणपक्षादिकस्यामावास्यायां शान्ति-
कर्म । २क्रव्यादाग्निहरणम् । ३चतुष्पथे तदग्निपरित्यागः ।
४पृष्ठतोऽनवेक्षणादि कृत्वा प्रत्यागत्याप उपस्पृश्य केशा-
दीन् वापयित्वा नवघटादिकुशपिञ्जूलान्तकल्पनम् ।५मथ-
नतामाग्निजननम् ।६अग्निदीपनम् । ७अग्निसेचनम् ।
८ अनडुच्चर्मणस्थालारोहणम् (कर्ह भिन्नाः सर्व्वे पुमां-
सः स्त्रियश्चामात्याः) । ९परिधिपरिधानम् । १०आहुति
चतुष्टयमन्त्रः ।११अमात्याः स्त्रियः तरुणदर्भैर्नवनीतं गृ-
हीत्वा तेनाङ्गुष्ठोपकनिष्ठाभ्यां चक्षुषी आञ्जीरन् ।१२अञ्ज-
मानानां स्त्रीणां कर्त्रावीक्षणम् ।१३कर्त्तुः अश्माभिमर्शनम्

।१४परिक्रमणजपः । १५स्विष्टकृदादिसमापनम् । १६ अहतवाससाच्छाद्योपवेशनम् । १७ आ उदयादासपन्न आसीरन् ।१८होमसमापनम् । ४अ० ६क०।१ श्राद्धाधिकारः । २पार्व्वणकाम्यवृद्धिश्राद्धैकोद्दिष्टरूपश्राद्धे पात्रविप्रलक्षणसंख्ये ।३सपिण्डीकरणभिन्ने यथेष्टं विप्रसंख्या तत्र तु त्रयाणां त्रय एव कार्य्या इति भेदः। ४पिण्डपितृयज्ञोक्तानां पिण्डनिपरणादीनां श्राद्धेऽतिदेशः। ५ ब्राह्मणाय जलदानम् ।६दर्भासनदानम् ।७पुनर्जलदानम् । ८अर्घपात्रे तिलावपनं तन्मन्त्रश्च। ९ पितॄणां कर्म्म अप्रदक्षिणं कार्य्यम् । १०अर्घदानम् । ११ अर्घदानात् पूर्व्वं जलदानम्। १२अर्घस्थजलनिवेदनम् । १३ अर्घानुमन्त्रणं तन्मन्त्रश्च । १४अर्घ्या आपो यस्मिन् पात्रे एकीकृताः तत् प्रथमपात्रं नोद्धरेत् । ४अ०७क० । १ गन्धादिदानम् । २ अग्नौ करणानुज्ञा । ३ प्रत्यनुज्ञा । ४ अग्नौ करणहोमः । ५ पाणिष्वेव वा होमः । ६ देवपितॄणां क्रमेणाग्निमुखपाणिमुखत्वे । ७ भोजनपात्रेऽन्नदानविधानम् । ८ हुतशेषान्नदानम् । ९ भोजनपात्रे अधिकान्नदानम् ।१०भोजनात् तृप्तेषु पाठ्यमन्त्रः ।११पिण्डार्थमन्नमुद्धृत्य शेषनिवेदनम्। १२ अनाचान्तेषु पिण्डनिपरणम् । १३आचान्तेषु वदित्येके। १४ब्राह्मणानुज्ञानविकिरदानम् । १५अस्तु स्वधेति प्रत्यनुज्ञानम् विसर्ज्जनञ्च ।४अ०८क० । १ अथ शूलगवः । २ तस्य कालादिनिर्णयः । ३ पशुनिरूपणम् । ४पशुलक्षणम् । ५कृष्णबिन्दुयुक्तः पशुरित्येके । ६ जन्तुसदृशं कृष्णं कामं स्पृहणीयात् । ७ पशुभिषेकः ।८शिर आरभ्य पुच्छदेशपर्य्यन्तमभिषेकः ।९पशूत्सर्गः । १० पशोर्वृद्धिपर्य्यन्तं पालनम् । ११ तत्र दिग्निर्णयः । १२ग्रामदर्शनायोग्यदेशे पालनम् । १३अर्द्धरात्रादूर्द्ध्वमुदितेऽर्के वा काले शूलगवः कार्य्यः । १४यूपनिखननं तत्र पशुबन्धनञ्च । १५प्रोक्षणादि पशुकल्पेन समानम् । १६ विशेषस्त्वयं पात्र्या पलाशेन वा वपाहोमः । १७हरादि द्वादशनामकः होममन्त्रः । १८ उग्रादिषड्नामको वा मन्त्रः । १९रुद्रनामको वा मन्त्रः । २०बलिहरणम् । २१चतुर्भिः सूक्तैश्चतुर्दिगुपस्थानम् ।२२सर्व्वरुद्रयज्ञे तस्यातिदेशः । २३स्थालीपाकव्रीहीणां तुषफलीकरणानां पुच्छचर्म्मशिरःपादानामग्नावनुप्रहरणम् । (तुच्छकणाः फलीकरणाः)२४शाम्बव्यमते विशेषः । २५ आह्वानसमये शोणितनिनयनम् । २६ संज्ञपनदेशे भूमौ निपतितं रुधिरं सर्पेभ्य उद्दिशेत् । २७ सर्व्वयज्ञानां रुद्रनामधेयत्वोक्त्या तस्य सर्वात्मत्वम् । २८ अस्यैव सर्व्वा सेनाः । २९ सर्व्वाण्युत्कृष्टान्यस्यैवांशभूतानि । ३० इत्येवं विद् यजमानं रुद्रः प्रीणाति ।३१अस्य कर्म्मणो यजमानस्य रुद्रो न हिनस्ति । ३२अस्य हुतशेषं न प्राश्नीयादेकमतम् । ३३अस्य द्रव्याणि ग्रामं नाहरेयुः । ३४ नात्रागन्तव्यमिति पुत्रादीन् प्रतिषेधयेत् । ३५ नियमेन हुतशेषं प्राश्नीयाति सिद्धान्तः। ३६शूलगवस्य फलानि ३७ शूलगवेनेष्ट्वा अन्यं पशुमुत्सृजेत्। ३८सर्व्वथानुत्सृष्टपशुर्नैव स्यात् ३९शूलगवनामकेन पशुकर्म्मणा रहितो न भवेत् तेन शूलगवस्य नित्यता । ४० शान्तातीयं जपित्वा स्वगृहप्रवेशः । ४१पशूपतापे गोष्ठे अस्यैव रुद्रस्य यजनम् । ४२ स्थालीपाकं निधाय सर्व्वहुतं कुर्य्यात् । ४३ प्रतिधूमं गवानयनम् । ४४ शान्तातीयं जपन् पशूनां मध्यमियात् । ४५समाप्तिज्ञापनार्थं आचार्य्यनमस्कारः । ४अ०४५क०

आश्वलायनगृह्यपरिशिष्टप्रतिपाद्यार्थाः । १ आचमनादि सामान्याङ्गम् । २ सन्ध्योपासनाङ्गाचमनादि । ३ मार्ज्जनम् । ४ पापशोधनम् । ५ गायत्रीस्वरूपादि । ६तस्या ध्यानादि । ७ आचमनमन्त्रादि । ८ मन्त्राणामृषिदैवतच्छन्दांसि । ९ स्नानविधिः । १० माध्यन्दिनस्नानविधानम् । ११ मन्त्रस्नानम् । १२ वैश्वदेवः । १३ स्वस्तिवाचनादि । १४होमे स्थण्डिलादि । १५स्रुक्स्रुवादिसम्मार्गः । १६ ब्रह्मणः पञ्च कर्म्माणि । १७पार्व्वणस्थालीपाकः । १८ नित्यौपासनम् । १९ पुनराधानम् । २० अनेकभार्य्यस्य परतऊढ़ाया धर्म्मभागित्वम् । २१ कन्यावरणम् । २२ उपयमनादि । २३ अन्योन्यावलोकनम् । २४ आर्द्राक्षतारोपणादि । २५ ऋतुमतीकृत्यादि । २६ जातकर्म्मादि । इत्येते १अ० गताः

२अध्याये १ पञ्चयज्ञादि । २ पञ्चयज्ञसम्भारादि । ३ अर्च्चनाङ्गानि । ४अर्च्चनविधिः । ५आवाहनमन्त्राः । ६ षडङ्गन्यासर्षिदैवतादि । ७ गणपत्यादिदेवतावाहनम् । ८ अन्नप्रदानादि । ९ यजमानाभिषेकः । १० होमविधानादि । ११ भोजनविधिः । १२ शयनादिविधिः । १३ श्राद्धानि । १४ ब्राह्मणनियमः । १५ गन्धादिदानादिपिण्डपितृयज्ञान्तं कर्म्म । १६ अग्नौ करणादिकर्म्म । १७ पिण्डदानादिश्राद्धशेषसमापनान्तं कर्म्म । १८ अग्निदग्धपिण्डदानादि । १९ आभ्युदयिके विशेषः । इत्येते २अ०गताः पदार्थाः।

तृतीयाध्याये १पितृमेधः । २ अग्निदाननियमः ।

२ अग्निकार्यसमापनम् । ३कर्तृवृद्धकविधिः । ५ पिण्डक्रिया । ६ नवश्राद्धानि । ७ सञ्चयनम् । ८ दशाहकृत्यम् ९ एकोद्दिष्टम् । १० एकोद्दिष्टविधिः । ११ सपिण्डीकरणम् । १२आमश्राद्धम् । १३ अतीतसंस्कारः । १४पालाशविधिः । १५ नारायणबलिः । १६ नागबलिः । १७ पुराणमेकोद्दिष्टम् । १८वृषोत्सर्गः । ३अ० पदार्थाः । ४अध्याये १पूर्त्तकर्म्मादीनि अग्निकार्य्याख्यानि कर्म्माणि । १पूर्त्तानि । २ मण्डलादिविधिः । ३प्रतिमाद्रव्याणि । ४ प्रासादप्रतिष्ठादि । ५तदनुष्ठानादि । ६अग्निस्थापनादि । ७देवाभिषेकादि । ८शान्तिप्रतिष्ठादि । ९ वाप्यादिविधिः १०आरामादिविधिः । ११ होमविशेषः । १२प्राचीं दिशमन्वावर्त्तते । १३ दक्षिणां दिशमन्वावर्त्तते । १४ प्रतीचीं दिशमन्वावर्त्तते । १५ उदीचीं दिशमन्वावर्त्तते १६ पृथिवीमन्वावर्त्तते । १७ अन्तरिक्षमन्वावर्त्तते १८ दिवमन्वावर्त्तते । १९ रात्रिमन्वावर्त्तते । २० परमन्वावर्त्तते । २१ सर्व्वा दिशोऽन्वावर्त्तते । २२ अग्निकार्य्यफलम् । ४अ० गताः एते पदार्थाः ।

**आश्वायन** पुंस्त्री अश्व+गोत्रे अश्वा० फक् । अश्वर्षेर्गोत्रापत्ये स्त्रियां ङीप् । [अश्वावतानर्षेरपत्ये स्त्रियां ङीप् ।

**आश्वावतान** पुंस्त्री० अश्वावताननामर्षेरपत्यम् विदा० अञ् ।

**आश्वास** पु० आ+श्वस-घञ् ।१निर्वृतौ २आश्रयदाने ३भीतस्य भयनिवारणार्थे व्यापारे ४सान्त्वने च "धारणमाश्वासजननं यमप्रद्र" सुश्रु० । [२सान्त्वनासम्पादके ।

**आश्वासक** त्रि० आ+श्वस-णिच्-ण्वुल् । १आश्वासकारके

**आश्वासन** न० आ-श्वस-णिच्-ल्युट् । १सान्त्वने ।"आश्वासनञ्च कृष्णेन दुःखार्त्तायाः प्रकीर्त्तितम्" भा० आ० १अ० कर्त्तरि ल्यु । २आश्वासकारके "तदिदं द्वितीयं हृदयाश्वासनम्" शकु० । [ तद्भावदर्शनाश्वासि" शकु० ।

**आश्वासिन्** त्रि० आ+श्वस-णिनि । प्रत्याशायुक्ते । "मनस्तु

**आश्वास्य** त्रि० आ+श्वस-णिच्-यत् । १सान्त्वनीये । ल्यप् । २सान्त्वयित्वेत्यर्थे अव्य० ।

**आश्विक** त्रि० अश्वान् भारभूतान् हरति वहति आवहति वा ठञ् । भारभूतस्याश्वस्य १हारके २वाहके ३आवाहके च । अश्वस्य निमित्तं संयोग उत्पातो वा ठञ् । अश्वलाभसूचके ४संयोगे ५उत्पाते ६निमित्ते च ।

**आश्विन** पु० आश्विनी पूर्णिमा यस्मिन् मासे अण् । स्वनामख्याते चान्द्रेमासभेदे"कृष्णपक्षस्याश्विने तद्वत् षष्ठ्यां बोधयाम्यहम्" दुर्गाबोधनमन्त्रः । १अश्विमातृपधान आसामिष्टकानाम् अण् मतोर्लुक् । २इष्टकाभेदे स्त्री ङीप् । "ये हैता आश्विनीरुपदधाति" शत० ब्रा० ८,२,१,११। आश्विनौ देवते अस्य अण् ।३चितिभेदे च "प्र त आश्विनोः पवमान" ऋ० ९,८६,४, पञ्चाश्विन्योऽध्वर्युः यन्त्र वैश्वदेव्यः पञ्च प्राणभृतः पञ्चायस्या एकया न विंशतिर्यस्यास्ता एकचत्वारिंशद्द्वितीया चितिः" शत० ब्रा० । ४यज्ञियकपालभेदे पु० "सौम्येन सद्वाश्विनो द्विकपालः सर्व्वः" कात्या० १२,६,२, "मैत्रावरुणश्च म आश्विनश्च मे इति" यजु० १८,१९, अश्विभ्यां भवः अण् ।५अश्विनीकुमारयोः हि० व० । अश्विनौ देवते अस्य अण् । अश्विनीकुमारदेवताके ६ यज्ञे ७गव्ये च । आश्वलायनशब्दे उदा० ।

**आश्विनी** स्त्री अश्विना अश्वाकारवता नक्षत्रेण युक्ता पूर्णिमा नक्षत्राण् ।१आश्वनपौर्णमास्याम् २आश्विनशब्दोक्तार्थे च ।

**आश्विनेय** पु० द्वि० अश्विन्याः घोटकाकारवत्याः संज्ञायाः अपत्यं ढक् । १अश्विनीकुमारयोः तयोः तस्या उत्पत्तिकथा अरुणात्मजशब्दे ३२८पृष्ठे दृश्या । तस्यापत्यं विदा० अञ् ।२नकुले ३सहदेवे च पु० तयोर्माद्रीमश्विनीकुमाराभ्यामुत्पादितत्वात् तथात्वम् । "जिगाय समरे वीरानाश्विनेयः प्रतापवान्" भा० स० प० ३अ० । अश्वस्यैकाहगमः पन्थाः ढक् । ४अश्वस्यैकाहगम्ये अध्वनि ।

**आश्वीन** पु० अश्वस्यैकाहगमः पन्थाः वा खञ् । अश्वस्यैकाहगम्ये देशे "सहस्राश्वीनो वा इतः स्वर्गो लोकः" ऐत० ब्रा० । चतुश्चत्वारिंशदाश्वीनानि" श्रुतिः ।

**आश्वेय** त्रि० अश्वा देवता अस्य ढक् । १ तद्देवताके हविरादौ अश्वाया अपत्यम् शुभ्रा०ढक् । २अश्वाभवे ।

**आषाढ** पु० आषाढी पूर्णिमाऽस्मिन् मासेऽण् । स्वनामख्याते चान्द्रे १मासभेदे "आषाढस्य प्रथमदिवसे" मेघदू० "शेते विष्णुः सदाषाढे कार्त्तिके प्रतिबुध्यते" इति पुरा० । आषाढी पूर्णिमा प्रयोजनमस्य अण् । व्रतिनां धार्य्ये पालाशे २दण्डे "उपहिताषाढम्" काद० "तत्प्रतेष च स्वीकृतव्रतेनाषाढिना" काद० । "अथाजिनाषाढधरः प्रगल्भवाक्" कुमा० । ३मलयपर्व्वते पु० मेदि० पृ०ढस्य डः । आषाडोऽप्युक्तार्थेषु । स्वार्थे कन् आषाढकोऽप्युक्तार्थेषु ।

**आषाढा** स्त्री आ+सह-क्त "अषाढाषाढेति" पा० निर्देशात् नि० षत्वमोत्वाभावश्च । राशिचक्रस्थे १विंशतितमे २एकविंशे च नक्षत्रे "मूलं पूर्व्वाषाढा प्रथमपादस्तराशकोधन्वी । मकरस्तत्परिशेषं श्रवणा चार्द्धं धनिष्ठायाः" इत्युक्ता च पूर्व्वा उत्तरा च । तत्र पूर्व्वस्याः प्रथमपादस्य

धनूराशिषट्कलस्तुत्तरायाश्च शेषपादत्रिकस्य मकरराशिषट्कलम् तत्राद्यै न० च आषाढभूः” मङ्गलग्रहः तस्य तत्र जातत्वात्तथात्वम् ।

**आषाढाभव** पु० आषाढायां नक्षत्रे भवति भू–अच् । मङ्गलग्रहे आषाढाजातोऽप्यत्र क्विप् । आषाढाभूरप्यत्र ।

**आषाढि** स्त्री आ+सह–क्तिन् नि०न ओत् षत्वञ्च । १सम्यक् सहने “तयाषाढेः सौम्यमतेयस्योपदधुः” शत० ब्रा० ६,२,१,२७ । २ रतिदेव्याः स्थाने च यज्ञार्धेर० ।

**आषाढी** स्त्री आषाढया नक्षत्रेण युक्ता पूर्णिमा “नक्षत्रेण युक्तः कालः” पा० इत्यण् । १आषाढमासीयपौर्णमास्याम् । २यज्ञियेष्टकाभेदे च ।

**आषाढीय** त्रि० आषाढायां भवः “श्रविष्ठाषाढाभ्यामिति” पा० तस्येदम् इत्यत्वात् वा छ । १आषाढानक्षत्रे भवे २आषाढसम्बन्धिनि च ।

**आष्टम** पु० अष्टमोभागः अण् । अष्टमे भागे ।

**आष्ट्र** अश–व्याप्तौ ष्ट्रन् वृद्धिश्च । आकाशे उज्ज्व० ।

**आस** उपवेशनेऽदादि० आ० अक० सेट् । आस्ते आसाताम् आसते आसीत आस्ताम् आस्व आसुम् आस्त आसत आसिष्ट आसांबभूव आसामास आसाञ्चक्रे आसिता आसिष्यते । आसीनः आसितम् आसितवान् आसितुम् आसिता आस्तिः आसः आसनम् आसना “य आस्ते मनसा स्मरन्” गीता “दिवि देवास आसते” ऋ० १,२०,२ । “आसीतामरणात् क्षान्ता” “नासीत गुरुणा सार्द्धं शिलाफलकनौषु च” इति च मनुः । “सुखितमास्व ततः शरदां शतम्” सा० द० । “निबद्धमास्व पिबतात्त शेध्यम्” भट्टिः । “अगन्ति यस्यां सविकाशमासत” माघः । “आसिष्ट नैकत्र शुचा व्यरंसीत्” भट्टिः भावे आस्यते “आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः” मनुः । “इच्छामि नित्यमेवाहं त्वया पुत्र ! सहासितुम्” भा० व० । अ० “जनकोह वैदेह आसाञ्चक्रे” शत० ब्रा० १४,६,१,१ । तूष्णींभूय भवादासाञ्चक्रिरे खगपक्षिणः” भट्टिः “कैलासशिखरासीनम्” तन्त्रम् “आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणाम्” मेघदू० । “आसितं भाषितं चैव मतं यच्चाप्यनुष्ठितम्” रामा० । “जृम्भासितादिकृत्” सा० द० ।

अधि–अध्यारोहणे सक० । गगनमध्यमध्यास्ते दिवाकरः काद० “छायामध्यास्य सैनिकाः” “ययौ मृगाध्यासितशाद्वलानि” इति च रघुः । जम्बूविटपमध्यास्ते परभृता” विक्रमो० । “आचख्यौ दिवसध्यास्य शासनात् परमेष्ठिनः” रघुः । अत्राधारस्य कर्मता ।

अनु–पश्चादुपवेशनेन सेवने सक० । “अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम्” रघुः । “इतः सखायमन्वास्ते सदैव धनदं नृपः” भा० स० १० अ० ।

अभि–आभिमुख्येन स्थितौ नैकट्ये च अक० अभ्यासः अभ्यासोदत्ते कपूयवोनिमापद्येरन्” छा० उ० ।

उद्–औदास्ये प्रकृतकर्म्मणः उपरमे अक० “विधाय वैरं सामर्षे नरोऽरौ य उदासते” माघः । “उदासीनवदासीनः” गीता

उप–सेवने सक० । “नोपास्ते यस्तु पश्चिमाम्” मनुः । “उपासते हरिहरौ ककारोऽस्यते यतः” वाक्यप० । “वायुवत्सानुगच्छन्ति तथा दीनानुपासते” मनुः । “ऋतवस्तमुपासते” कुमा० ।

परि–उप–उपासनस्य प्रकर्षार्थे “यथैव क्षुधिता बाला मातरं पर्य्युपासते” “पितामहं च वै तस्यां सभायां पर्य्युपासते” भा० स० १अ० । (एनम्) “भुजङ्गाः पर्य्युपासते” कुमा० ।

सम्–उप–सम्यगुपासने सक० । “समुपास्यत पुत्रभोग्यया” रघुः

परि–परितः स्थितौ अक० सम्यक् सेवने सक० । तामेतद्देवाः पर्य्यासते ये चेमे आह्नयाः” शत० ब्रा० ।

सम्–सम्यक् स्थितौ उपवेशने च । “भोगिभोगसमासीनम्” “पश्चिमां तु समासीनः” मनुः ।

**आस्** अव्य० आ+अस्–क्विप्–आस+क्विप् वा । १ स्मरणे, २आक्षेपे “आः क एष मयि जीवतीति” मुद्रारा० । “आः दुरात्मन् वृथामङ्गलपाठक !” वेणी० । ३कोपे, ४सन्तापे, ५पीडायां सगर्वगर्जने च । “आः किमेतदिति क्रोधादाभाष्य महिषासुरः” देवीमा० । ६खेदे “विद्यामातरमाः प्रदर्श्य नृपन्नृन् भिक्षामहे निस्त्रपाः” उद्भटः ।

**आस** पु० आस–घञ् । १आसने २स्थितौ ३उपवेशने आस्यतेऽनेन करणे घञ् । ४उपवेशनस्थाने गुह्यपार्श्वभागे “यथा कप्यासं पुण्डरीकमेवमक्षिणी” छा० उ० कान्दसं न० । अस्यते क्षिप्यतेऽनेन अस–करणे घञ् । ५धनुषि “स सासिः सासुसूः सासः” किरा० “सासः सचापः” मल्लि० । इत्यासः अस क्षेपे भावे घञ् । ६ विक्षेपे निरासः ।

**आसक्त** त्रि० आ+सन्ज–क्त । १आसक्तियुक्ते विषयान्तरपरिहारेण तदेकतानतयाभिनिविष्टे ३अनवरते न० जटा० ३सतत इति ४सम्यक्संबद्धे च त्रि० आसक्तचित्तः आसक्तचेताः ।

**आसक्ति** स्त्री० आ+सन्ज–क्तिन् । विषयान्तरपरिहारेणैकविषयावलम्बने “ते देवा आसक्तिमन्न वदन्तः” “आसञ्जन्तं वदन्तः इति च” शत० ब्रा० ८,२,१,११,१२ । नील-

लोहितं भवति तथासक्तिर्व्यज्यते" ऋ॰१०,८५,२८ ।

**आसङ्ग** पु॰ आ+सन्ज–घञ् । १अभिनिवेशे, प्राप्तस्योपस्थितस्य वा नष्टतो वस्तुनः २रक्षणाभिलाषे, ३भोगाभिलाषे, ४ कर्त्तृत्वाभिमाने ५ विषयान्तरपरिहारेण चेतस एकत्राभिनिवेशे च । "नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः" सा॰द॰ । "तेऽसुररक्षसेभ्य आसङ्गाद्विभयाञ्चक्रुः" शत॰ब्रा॰१,१,२,२ "तयोर्हैन स्वयमानमासङ्गो न विन्दति" शत॰ब्रा॰५,२,२,५, "त्यक्त्वा कर्म्मफलासङ्गम्" गीता । ६ सम्यक् सम्बन्धे "सर्व्वत्रासङ्गमपि प्रकाशते" कुमा॰ । आसज्यते कर्म्मणि घञ् । ७आसङ्गनीये उत्तरासङ्गः "त्वगुत्तरासङ्गवतीं निवीतिनीम्" कुमा॰ । ८सौराष्ट्रमृत्तिकायां राजनि॰ ९अनवरते न॰१० तद्वति त्रि॰ जटा॰। सौराष्ट्रमृत्तिकाया गात्रे आसङ्गनीयत्वात्तथात्वम् । अनवरतस्य च सततसम्बन्धात् आसङ्गत्वम् ।

**आसङ्गत्य** न॰ न सङ्गतः तस्य भावः ष्यञ् चतुरादिषु पर्य्युदासात् नोत्तरपदवृद्धिः । साङ्गत्याभावे असम्बन्धे ।

**आसङ्गिनी** स्त्री आसङ्गः सातत्यमस्त्यस्य इनि ङीप् । १वात्यायां त्रिकाण्ड॰। २आसङ्गयुक्ते त्रि॰स्त्रियां ङीप् ।

**आसङ्गिम** पु॰आसङ्गे भवः डिमच् । सुश्रुतोक्ते कर्णवेधाङ्गकर्णबन्धनाकृतिभेदे । "तत्र समासेन पञ्चदश कर्णबन्धनाकृतयोभवन्ति यथा नेमिसन्धानकः" उत्पलभेद्यको वल्लूरक आसङ्गिम" इत्यादिना विभज्य "अभ्यन्तरदीर्घैकपालिरासङ्गिमः" इति सुश्रुते लक्षितः ।

**आसञ्जन** न॰ आ+सन्ज–ल्युट् । १आसङ्गे २सम्यक्सम्बन्धे "प्रतिबन्धयासञ्जनात्" शकु॰। णिच्–ल्युट् । ३योजने

**आसञ्जित** त्रि॰ आ+सन्ज–णिच्–क्त । संयोजिते

**आसत्ति** स्त्री आ+सद–क्तिन् ।१नैकट्यसंबन्धे २प्राप्तौ न्यायमते ३प्रत्यक्षजनकसन्निकर्षे "आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते" भाषा॰ । ४शाब्दबोधोपयोगिन्यामव्यवधानेन पदजन्यपदार्थोपस्थितौ । "आसत्तियोग्यताकाङ्क्षातात्पर्य्यज्ञानमिष्यते । कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते, भाषा॰ "यत्पदार्थस्य यत्पदार्थेनान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः कारणम् । तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दबोधः । आसत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः । ननु यत्र कलौ कुण्डली वासस्वी देवदत्त इत्युक्तं तत्रोत्तरपदश्रवणकाले पूर्व्वपदश्रवणस्य नाशात् अव्यवधानेन उत्तरपदश्रवणासम्भव इति चेन्न प्रत्येकपदसंस्कारैश्चरमतावद्विषयकस्मरणस्याव्यवधानेनोत्पत्तेः नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णकपदस्मरणम् । परन्तु तावत्पदार्थानां स्मरणादेकदैव खलेकपोतन्यायात् तावत्पदार्थानां क्रियाकर्म्मभावेनान्वयबोधरूपः शब्दबोधो भवतीति केचित्" मुक्ता॰ ।

शाब्दबोधहेतोः आसत्तेश शब्दचिन्तामणौ निरूपिता यथा । "आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः सा च स्मृतिर्नानुभवोऽतोनान्योन्याश्रयः अथ नानाविशेषणककर्म्मकर्त्तृकरणाधिकरणक्रियादिपदज्ञानजन्यक्रमिकपदार्थस्मृतीनां न यौगपद्यं सम्भवति आशुतरविनाशिनां क्रमिकाणां मेलकानुपपत्तेरिति कथन्तावत्पदार्थान्वयबोधः विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्येति चेत् प्रत्येकवर्णानुभवजन्यसंस्कारमेलकादेव तावत्पदस्मृतिः तत एकदैव तावत्पदार्थस्मृतौ सत्यां वाक्यार्थानुभवः न चान्यविषयसंस्कारेणान्यस्य न स्मरणमिति वाच्यं वाक्यार्थानुभवानुपपत्त्या फलबलेन संस्काराणां परस्परसहकारेण तत्रैकस्मरणकल्पनात् प्रत्येकवर्णसंस्काराणामिवानन्यगतिकतया पदस्मरणे । अथ "यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते" नचैवमन्वयान्तराभिधानं न स्यात् विरम्य व्यापाराभावादिति वाच्यं एवमपि प्रथमान्वये हेत्वनुपन्यासात् उत्तरस्य हीदं सामग्रीवैकल्यं न पूर्व्वस्येति चेत् अस्तु तावदेवं तथापि चरमतावत्पदार्थघटितवाक्यार्थानुभवे उक्तैव गतिरनन्यगतिकत्वात् । अत्र वदन्ति । सन्निधानंपदजन्यैवान्वयबोधहेतुः द्वारमित्यादावध्याहृतेनापि पिधानादिनान्वयबोधदर्शनात् न च द्वारं पिधेहीतिशब्द एवाध्याह्रियते अनुपयोगात् अर्थस्यैवान्वयप्रतियोगित्वादाकाङ्क्षकत्वाच्च अर्थापत्तेरुपपादकविषयकत्वात् न च शब्दमात्रमुपपादकमपि तु तदर्थः । अवश्यं कल्प्यार्थमात्रेणैव ईदृशसम्बन्धशब्दस्मृतेरन्यथासिद्धेः अन्यथा पदबोधितस्यैवार्थस्यान्वयबोधकत्वमिति नियमशक्तिकल्पनापत्तिः स्वार्थान्वयपरत्वाच्छब्दानां द्वारमिति न पिधानान्वयबोधकमिति तदन्वयबोधार्थमवश्यं शब्दकल्पनमिति चेत् लक्षणायां व्यभिचारात् तत्राक्षेपाविशेषेण कर्म्मान्वयबोधाच्च अथ द्वारपदसहभावमात्रं पिधेहिशब्दस्य कल्प्यते लाघवात् न च पिधानाभिधायकानेकशब्दोपस्थितौ विनिगमकविरहः संस्कारतारतम्यात्-

पदविशेषस्मृतेरिति चेत् न आकाङ्क्षादिमत्प्रतियोग्यन्वितस्वार्थपरत्वस्य क्लृप्तत्वाल्लाघवेनार्थाध्याहारात् न च श्रुतपदानि लक्ष्यप्रयोजनानीति कथमध्याहृते तेषां तात्पर्य्यमिति वाच्यं श्रुतार्थान्वयानुपपत्त्याध्याहृते तात्पर्य्यात् कथन्तर्ह्योदनं पचतीत्यत्र समभिव्याहृतमात्रादन्वयबोधः कलायादेरपि स्मृतत्वादिति चेत् न तात्पर्य्यनियमादित्यवेहि "यत्परः शब्दः स शब्दार्थः" इति न्यायात् अन्यथा तत्रापि दैवात् स्मृतकलायपदोपस्थानेनान्वयबोधः स्यात् अथ देवदत्त ओदनमित्यादिवाक्ये क्रियापदाध्याहाराभावेन कर्त्तुरनभिधानात् तृतीया स्यादिति चेत् न अध्याहृतेनापि पचतिपदेन कर्त्तुरनभिधानात् । कर्तृसंख्याभिहितेति चेत् न, देवदत्तस्य पाकइत्यत्र तृतीयापत्तेः तात्पर्य्यं तत्तत्र व्यवस्थेति चेत् तुल्यं ननु द्वारं पिधेहीत्यादौ पिधानशाब्दानुभवे पिधानोपस्थापकपदत्वेनान्वयबोधजनकत्वमिति चेत् न अन्वयप्रतियोग्युपस्थापकपदत्वेनजनकत्वात् न तु तदुपस्थापकयावत्पदत्वेन गौरवात् एवं पिधानान्वयबोधेऽपि अन्यथा गौणलाक्षणिकयोरन्वयबोधोन स्यात् तयोरननुभावकत्वादिति उच्यते क्रियापदोपस्थापिता क्रिया कारकपदोपस्थापितं च कारकं परस्परमाकाङ्क्षति न तदुपस्थितिमात्रम् अन्यथा द्वारं कर्मता पिधेहि द्वारं पिधानकृतिरित्यत्रापि क्रियाकर्माध्याहार इवान्वयबोधप्रसङ्गः क्रियाकर्मणोरुपस्थितेस्तुल्यत्वात् एवंविधपदोपस्थापिते परस्परमाकाङ्क्षा नास्तीति चेत् तर्ह्याकाङ्क्षायां पदविशेषोपस्थापितत्वं तन्त्रं नतूपस्थितिमात्रम्। अर्थविशेषेऽसाधुत्वात् न तत्रान्वयबोध इति चेत् न पिधेहीति पदं विना द्वारमित्यस्याप्यसाधुत्वात् तदर्थयोगे साधुत्वस्य तुल्यत्वात् साधुत्वज्ञानस्यान्वयबोधेऽप्रयोजकत्वाच्च गोणीत्याद्यपभ्रंशादपि अन्वयबोधाच्च न चात्रासंसर्गाग्रहो बाधकाभावात् । तस्मात् क्रियापदस्य कारकपदेन, कारकपदस्य च क्रियापदेन सहान्वयबोधकत्वं नत्वेकं विनापरस्य । अपि च सकर्मकक्रियापदप्रयोगं विना द्वितीयानुपपत्तिः क्रियापदार्थयोगे द्वितीया चेत् घटः आनयनं कृतिरित्यत्रापि द्वितीयापत्तेः तथा पुष्पेभ्य इत्यत्र स्पृहयतिपदाध्याहारं विना चतुर्थ्यनुपपत्तिः यदि च स्पृहयतिपदार्थयोगे चतुर्थी तदा पुष्पमिच्छतीत्यत्रापि स्यात् स्पृहयतीच्छति पदयोरेकार्थत्वात् । अथ साधुत्वार्थं द्वारं पुष्पेभ्य इत्यत्र पिधेहि स्पृहयति पदाध्याहारोऽनुमन्यते नत्वन्वयबोधार्थं तस्यान्वयप्रतियोगिज्ञानादेवोत्पत्तेरिति चेत् तर्हि क्रियापदप्रयोगं विना न कारकविभक्तिः कारकपदप्रयोगं विना न तदन्वययोग्यं क्रियापदमिति केवलकारके क्रियापदाध्याहारः केवलक्रियायाञ्च कारकपदाध्याहारः साधुत्वार्थमावश्यक इति तज्जन्यैवोपस्थितिरन्वयबोधौपयिकी । तस्मात् क्रियाकारकपदोपस्थापितयोरेव क्रियाकारकयोः परस्परान्वय इति शब्दाध्याहारएव कर्त्तांशेमे वचग्रामः" ।

व्याख्यातं चैतत् मथुरानाथेन दिङ्मात्रमत्रोदाह्रियते "आसत्तिं निरूपयति आसत्तिश्चेति अन्वयप्रतियोगिनोःपदार्थयोरव्यवधानेनोपस्थितिरासत्तिरित्यर्थः स्वाव्यवहितत्वसम्बन्धेन तत्पदार्थोपस्थितिमती तत्पदार्थोपस्थितिस्तत्पदार्थे तत्पदार्थस्यासत्तिरिति फलितार्थः नचैवमासन्नानासन्नविभागव्याघातः समूहालम्बनरूपपदार्थोपस्थितेरेव सर्वत्र शाब्दबोधोपयोगितया गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादावपि शाब्दानुभवाव्यवहितपूर्ववर्त्तिसमूहालम्बनोपस्थितिमादायैवाव्यवधानेनोपस्थिति सत्त्वात् उपस्थितेरैक्येन व्यवधानासम्भवादिति वाच्यं भेदगर्भाव्यवधानस्य पूर्वोक्तलक्षणसाधारणस्यात्र प्रवेशात् तच्च स्वध्वंसाधिकरणभिन्नत्वे सति यः स्वप्रागभावाधिकरणसमयप्रागभावानधिकरणक्षणसदवच्छेदेन स्वसमवायिदेशोत्पत्तिकत्वे सति स्वभिन्नत्वम् । इत्थञ्च प्रथमं या प्रत्येकपदेभ्यः प्रत्येकपदार्थानां क्रमिका स्मृतिःसैवासत्तिरन्वयबोधाव्यवहितपूर्ववर्त्तिसमूहालम्बनरूपोपस्थितिः । अतएवासत्तिज्ञानं हेतुः प्रत्येकपदजन्यपदार्थोपस्थितीनामाशुविनाशिनीनां युगपच्छाब्दबोधात् पूर्वमसम्भवेन स्वरूपसद्धेतुत्वासम्भवात् नचैवं दण्डी कुण्डली खड्गी देवदत्त इत्यादावेकविशेष्यकनानाविशेषणकान्वयबोधस्थले आसत्त्यभावप्रसङ्गः तत्र विशेषणोपस्थितेर्विशेषणान्तरोपस्थित्या व्यवधानादिति वाच्यं प्रकृतान्वयबोधाननुगुणोयः स्वध्वंसाधिकरणक्षणभिन्नत्वस्याव्यवधानघटकीभूतस्यान्तर्दलार्थत्वात् विशेषणान्तरोपस्थितिरत्र च न प्रकृतान्वयबोधाननुगुणः अननुगुणत्वञ्च फलबलकल्प्यं यादृशयादृशत्वेन व्यवधानेऽप्यन्वयबोधोऽनुभवसिद्धस्तत्तद्भिन्नत्वस्यैवाननुगुणत्वरूपत्वात् । अतएव गिरिर्भुक्तमित्यादौ भुक्तादिपदार्थोपस्थितिक्षणोयत्रैकपदोच्चारणानन्तरं चिरतरं विलम्ब्यान्यपदमुच्चारितं तत्र व्यवधायकक्षणोऽपिचाननुगुणस्तत्रान्वयबोधानुत्पत्तेरिति तदुभयत्र नासत्तिः । नचैवं यत्र पदोपस्थितिर्व्यवधानेन, पदार्थोपस्थितिश्चाव्यवधानेन, तत्रास्यासत्त्यापत्तिरिति वाच्यं तत्पदोपस्थित्यव्यवहिततत्पदोपस्थितिजन्या तत्पदार्थौ

पस्थितेरव्यवधानेन तत्पदार्थोपस्थितिस्तत्पदद्वयजन्यतत्पदार्थयोरन्वयबोधे आसत्तिरिति विवक्षितत्वात्। एवञ्च यत्र पदोपस्थितिरव्यवधानेन, पदार्थोपस्थितिश्च व्यवधानेन, यत्र वा पदार्थोपस्थितिरव्यवधानेन, पदोपस्थितिश्च व्यवधानेन, तत्रोभयत्रापि नासत्तिः किन्त्वेकपदोपस्थितिजन्यपदार्थोपस्थितिरपरपदोपस्थितिश्च समूहालम्बनरूपा ततोऽपरपदार्थोपस्थितिः पदान्तरोपस्थितिश्च समूहालम्बनरूपेत्यादिक्रमेण पदार्थोपस्थितिस्तत्रैवासत्तिः पदोपस्थितेरव्यवधानमपि पूर्वोत्तरक्षणसाधारणं प्रकृतान्वयबोधानुकूलक्षणघटितं बोध्यम् ननु आसत्तिभ्रमादन्वयबोध इति सर्वैर्गीयते स कुत्रेति वाच्यं यत्र व्यवहितपदोपस्थितावव्यवहितत्वधीर्व्यवहितायां पदार्थोपस्थितौ अव्यवहितत्वधीर्वा तत्र तत्सम्भवात्। अथैवमासत्तिज्ञानस्य शाब्दबोधहेतुत्वे रूपसत्याः पदजन्यपदार्थोपस्थितेः पृथक्कारणत्वे किं मानं, न च विशेषणज्ञानसाध्यं विशिष्टज्ञानमिति विशेषणज्ञानत्वेन कारणमिति वाच्यम् आसत्तिज्ञानस्यैव पदार्थविषयकत्वेन विशेषणज्ञानत्वादिति चेन्न तद्विलम्बेनापि शाब्दधीविलम्बात् तस्यापि पृथक्कारणत्वात् न च तद्व्यतिरेकस्थाने आसत्तिविलम्बादेव शाब्दधीविलम्ब इति वाच्यं नह्यासत्तिः स्वरूपसती हेतुः किन्तु तज्ज्ञानमेव तद्व्यतिरेकस्थानेऽपि सम्भवादिति निर्णयकृतस्तदसत् एकतदुपस्थाप्यकृतिवर्त्तमानत्वयोरन्वयबोधस्थानेऽव्याप्तेर्यत्नानुमित्यादिना एकदैव पदजातमनुमितं स्मृतं वा ततश्च समूहालम्बनपदार्थस्मरणं जातं तत्राव्याप्तेश्च तत्र प्रत्येकपदार्थोपस्थितेरभावात् नच तत्रापि क्रमिकप्रत्येकपदार्थोपस्थितिः कल्पनीयेति वाच्यम् अनुभवविरोधात् प्रत्येकपदार्थोपस्थितिमन्तरेणापि तत्र शाब्दबोधस्यानुभविकत्वात् किञ्च तस्याः स्वरूपसद्धेतुत्वं स्वयमेव निराकृतं क्रमिकप्रत्येकपदार्थोपस्थितेः शाब्दबोधात् पूर्वं विनष्टत्वात् नाप्येतज्ज्ञानं कारणं मानाभावात् नह्युपस्थितिज्ञानविलम्बात् शाब्दबोधविलम्बस्यानुभविकः न च दैवाददृष्टादिना पदार्थोपस्थितौ पदजन्यत्वभ्रमेण शाब्दबोधानुदयात् तज्ज्ञानस्यापि हेतुत्वमिति वाच्यं इत्था पदजन्यपदार्थोपस्थितेः स्वरूपसतोहेतुत्वात्तद्भ्रमे शाब्दबोधाभावात् अव्यवधानांशवैयर्थ्याच्च न चैतद्भ्रमानन्तरं शाब्दानुभवदर्शनादेतज्ज्ञानं हेतुरिति वाच्यं नहि यत्सत्त्वे यदुत्पद्यते तदेव तत्कारणं, घटाव्यवहितपूर्ववर्त्तियावत्पदार्थानामेव घटहेतुत्वापत्तेः

न च पदजन्यपदार्थोपस्थितौ अव्यवहितत्वाव्यवहितपदजन्यत्वयोः संशये व्यवहितत्वव्यवहितपदजन्यत्वनिश्चये च शाब्दबोधानुत्पत्तेस्तन्निश्चययोर्हेतुः तयोः प्रतिबन्धकत्वकल्पने गौरवादिति वाच्यं तात्पर्यज्ञानसत्त्वे व्यवहितत्वव्यवहितपदजन्यत्वग्रहेऽपि शाब्दबोधदर्शनात्तदनुत्पत्तेरेवासिद्धेः नचैवं व्यवहितपदकदम्बात्मकश्लोकादौ योजनायां कारितायामेवान्वयबोधोनत्वन्यथा इत्यत्र किं बीजमिति वाच्यं योजनायास्तात्पर्यग्राहकत्वात्। अतएव यस्य योजनां विनैव तात्पर्यग्रहस्तस्य न योजनापेक्षा। एतेन अन्वयप्रतियोगिपदं तदुपस्थापकपरं तथा च तदुपस्थापकपदोपस्थित्यव्यवधानेन तदुपस्थापकपदोपस्थितिस्तयोरासत्तिः न तु पदार्थोपस्थितीनामव्यवधानमपेक्षितमिति केषाञ्चिन्मतमप्यपास्तं वक्ष्यमाणान्योन्याश्रयग्रहानुस्थितेः समूहालम्बनोपस्थितिमादाय सर्व्वत्रास्याः सत्त्वेन आसन्नानासन्नार्थविभागव्याघातापत्तेः। न च भेदगर्भमव्यवधानं विवक्षणीयं पूर्व्वोक्तदोषाणामपि इत्तेः। एतज्ज्ञानस्य कारणत्वे उक्तरूपेण मानाभावाच्च। केचित्तु अव्यवधानेनेति विशेषणे तृतीया अन्वयप्रतियोगिपदञ्च अन्वप्रतियोगिन उपस्थितिर्यस्मात् इति व्युत्पत्त्या अन्वयप्रतियोग्युपस्थापकपरं तथा च तत्पदार्थान्विततत्पदार्थशाब्दबुद्धौ तत्पदे तत्पदाव्यवधानमासत्तिः नतूपस्थितीनामव्यवधानं विवक्षितं मौनिश्लोकादौ विभ्रादिरूपदोषविशेषात् अव्यवधानभ्रमेणान्वयबोधः। न चैवं श्लोकादौ योजनायामप्यन्वयबोधो न स्यात् तस्येदं व्यवधानेनोच्चारितमिति विशेषदर्शनेन भ्रमासम्भवात् इति वाच्यं योजनयोपस्थितवाक्यान्तरादेव तत्रान्वयबोधात् न तु श्लोकादितः। अव्यवधानज्ञानतुल्यतद्भेदाभेदसाधारणं स्वपरसाधारणञ्च वाच्यं तेनैकपदाद्युपस्थितयोः कृतिवर्त्तमानत्वयोरन्वयबोधेऽपि न काप्यनुपपत्तिरित्याहुः तदप्यसत् वक्ष्यमाणान्योन्याश्रयग्रहानुस्थितेस्तात् पर्व्यादिज्ञानसत्त्वे अव्यवधानज्ञानाभावेऽपि शाब्दबुद्धेरानुभविकत्वाच्च नव्यास्तु इत्था पदधीजन्यपदार्थोपस्थितिरासत्तिरियञ्च स्वरूपसत्येव हेतुः अतएव लिखनग्राम् आसत्तिस्तु यद्यपि स्वरूपसत्येव प्रयोजिका इत्यादिप्रभाकरोपाध्यायेनोक्तं न च एतस्या अपि कारणत्वे मानाभाव इति वाच्यं तथासति आनयेति वाक्यमाकर्णयतः प्रत्यक्षेण घटं पश्यतोघटस्य शाब्दबोधापत्तेः घटमानयेति वाक्यमाकर्णयतः कारणतया घटपदकारणा

कारणकारणवत आकाशस्य शाब्दबोधापत्तेः नचैवं गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादितो गिरिरग्निमान् भुक्तं देवदत्तेनेत्यन्वयबोधापत्तिरिति वाच्यं तथा तात्पर्य्यग्रहसत्त्वे इष्टापत्तेः कदाचित्तु तत्र तथान्वयबोधस्य सर्व्वैरेव इष्टत्वात् नचैवं क्वचिद्योजनायाः कथमुपयोग इतिवाच्य तात्पर्य्यग्रहार्थं तदुपयोगितेत्युक्तत्वादिति प्राञ्चः अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिरुक्ता सा च शाब्दबोधादेव तथा च तत्रापि आसत्तिः कारणं सा च शाब्दबुद्धिरूपा तस्याञ्च यद्यपरासत्तिः कारणं तदा अनवस्था फलीभूता चेत् अन्योन्याश्रय इत्यतआह सा चेति प्रसङ्गादन्वयबोधनिर्वाहकपदजन्यपदार्थोपस्थितिपरिपाटीं पदार्थविदुषामाशङ्कते अथेति नव्यास्तु ननु इत्त्या पदजन्यपदार्थोपस्थितिश्चेदासत्तिस्तदा नानाविशेषणकस्थाने कथमन्वयबोधः ? सर्व्वासां पदार्थोपस्थितीनाम् एकदाऽसम्भवादित्याशङ्कते अथेति इत्याहुः। मेलकं मेलनम्। विशेषणज्ञानसाध्यत्वादिति विशेषणं पदार्थस्तदुपस्थितिसाध्यत्वात् इत्यर्थः इत्त्या पदधोजन्येत्यादिः। विशिष्टज्ञानस्य शाब्दबोधानुभवस्य। मेलकात् समूहात् एकदैव तावत्पदस्मृतिः न च सकलपदगोचरस्मरणाभावेऽपि प्रत्येकपदानुभवजनितप्रत्येकपदार्थस्मरणाहितसंस्कारेभ्य एव सकलपदार्थगोचरमनेकं स्मरणं सम्भवति तथा च सकलपदगोचरैकस्मरणपर्य्यन्तानुधावनं विफलमिति वाच्यं प्रकारान्तरेण पदार्थोपस्थितेः शाब्दबोधाहेतुत्वात् पदज्ञानजन्यत्वोपपत्तये तदनुधावनात् ननु श्रोत्रेण प्रत्येकपदानुभवोऽपि न सम्भवति तथाहि घादौ घोत्पत्तिस्ततो द्वितीयकाले घत्वनिर्विकल्पकोत्पत्तिः अकारोत्पत्तिश्च अथ तृतीयकाले अकारतत्त्वनिर्विकल्पकघत्वविशिष्टधीटोत्पत्तिघनाशाः ततश्चतुर्थकाले अत्वविशिष्टधी टटत्वनिर्विकल्पकाकारनाशचरमाकारोत्पत्तयः इदानीञ्च घकारभानं न सम्भवति प्रत्यक्षं प्रति विषयस्य हेतुत्वात् ततः पञ्चमकाले टत्वविशिष्टबोधाकारतत्त्वनिर्विकल्पकटकारनाशाः इदानीं प्राथमिकाकारभानं न सम्भवति तदभावात् ततः षष्ठक्षणे अत्वविशिष्टबोधाकारनाशौ इदानीं टकारभानं न सम्भवति तदभावात् तथा च कथं वर्णसमूहात्मकपदगोचरश्रौत्रानुभवः न च पूर्व्वपूर्व्ववर्णोपनयसहितान्त्यवर्णसन्निकर्षात् श्रौत्रानुभवसम्भव इति वाच्यं बहिरिन्द्रियजप्रत्यक्षे उपनीतं विशेषणतयैव भासते इति नियमात् प्रत्येकवर्णसमूहस्य विशेष्यकपदप्रत्यक्षस्योपनयमर्य्यादया असम्भवात् पदप्रत्यक्षे प्रत्येकं सर्व्वस्य वर्णस्य विशेष्यत्वात् न च पूर्व्ववर्णोऽन्त्यवर्णविशेषणतया भासत इति वाच्यं पूर्व्ववर्णेऽन्त्यवर्णविशेषणत्वनियामकस्य तत्सम्बन्धस्याभावात् इति चेत् मैवं घादिसमुदायमात्रं न घटादिपदं टघादेरपि घटपदत्वापत्तेरपि तु अव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवदुत्तरोत्तरवर्ण एव पदं तत्र श्रवणं न दुर्घटं पूर्व्वपूर्ववर्णोपनयसहकारेणाव्यवहितोत्तरत्वसम्बन्धेन उत्तरोत्तरवर्णविशेषणतया पूर्वपूर्ववर्णग्रहसम्भवात्" वैयाकरणास्तु पूर्व्ववर्णज्ञानरूपाया उपनयसामग्र्याः सत्त्वेऽपि पूर्ववर्णस्यैवोत्तरवर्णे विशेषणत्वेन भाने नियामकाभात् विनिगमनाभावेन अव्यवहितपूर्व्वत्वसम्बन्धेनैव उत्तरोत्तरवर्णस्यापि विशेषणतया भानस्य दुर्वारतया अनुतशब्दयोस्तुल्यपदत्वापत्तेः तथा च अनुपदोच्चारणे नपदस्य श्रवसा प्राप्तत्वापत्तिरित्यतोवर्णसमुदयादन्यः स्फोट एव पदमित्याहुः तद्विशेषश्च स्फोटशब्दे वक्ष्यते।

अत्रायं विशेषः। चिन्तामणिमते शब्दाध्याहारएव मदुरानाथेन तु आसत्तिपर्य्यये अर्थाध्याहारोऽपीति व्यवस्थापितम्। यथा "अस्तु वा शब्दाध्याहार एवावश्यकस्तथापि तज्जन्यपदार्थोपस्थितित्वेन कुतो हेतुत्वं लाघवात् पदार्थोपस्थितित्वेन हेतुत्वस्योचितत्वात् तथा च ओदनं पचतीत्यादौ सति तात्पर्य्यग्रहे यथाकथञ्चिदुपस्थितकलायादेरप्यन्वयबोध इत्यर्थाध्याहारपक्ष एव सम्यक्" "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा॰ द॰। "आसत्तिक्रमेणान्वयः" रघु॰।

**आसदन** न॰ आ+सद्–ल्युट्। १प्राप्तौ २नैकट्यसम्बन्धे च।

**आसन** न॰ आस–ल्युट्। १स्थितौ "एकत्रासनभोजनैः" स्मृतिः। २स्वस्थानस्थितिरूपे राज्ञां षड्गुणान्तर्गतगुणभेदे च। तद्विवृतिराग्नेये। "परस्परस्य सामर्थ्यविघातादासनं स्मृतम्। अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम्"। यानस्य पञ्चविधत्वञ्च। "विगृह्य सन्धाय तथा संभूयाथ प्रसङ्गतः। उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतमिति" तत्रैवोक्तम्। "परस्य स्वस्य सैन्यानां साम्यं ज्ञात्वा विचक्षणः। आसनं स्वामिने ब्रूयात् मन्त्री स्वामिहिते रतः" इत्युक्ते ३विजिगीषोर्यात्राभिवर्त्तकव्यापारे च। आस्यतेऽत्र आधारे ल्युट्। ४उपवेशनाधारे कम्बलाद्यासने। "आसनं वसनं शय्या दारापत्यं कमण्डलुः। आत्मनस्तु शुचि प्रोक्तं न परेषां कदाचन" आ॰ त॰ पु॰। "प्रयतसत्कासनया स्वागतः" रघुः। "स्वहस्तदत्ते मुनिमासने मुनिः" माघ॰। "क्रूप्रासनं कौतुके-

दिमध्यम्" कुमा० "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः" गीता "स्थापयेदासने तस्मिन् खिन्नः कार्य्यपथे स्थिताम्" मनुः । "स वासवेनासनसन्निकृष्टम्" "प्राञ्जलिर्जलजासनम्" कुमा० । ५ देवतापूजाङ्गे उपचारभेदे तद्भेदादि कालि० पु०। "आसनं प्रथमं दद्यात् पौष्पं दारुजमेव वा । वास्त्रं वा चार्म्मणं कौशं मण्डलस्योत्तरे सृजेत् । पौष्पासनं यद्विहितं यस्य तद्यदि गर्भकम् । निवेदयेत्तदा पद्मे विपुलं द्वारि चोत्सृजेत् । पौष्पं पुष्पौघरचितं कुशतूलादिसंयुतम् । अतिप्रीतिकरं देव्या ममाप्यन्यस्य भैरव ! । यद्दारुघटितमासनं मङ्गल्यं शुभम् । नोच्छ्रायं नातिविस्तीर्णमासनं विनियोजयेत् । अन्यदारुभवञ्चापि दद्यादासनमुत्तमम् । सकण्टकं क्षीरयुक्तं दारु सारविवर्जितम् । चैत्यश्मशान संभूतं वर्जयित्वा विभीतकम् । वाल्कलं कौषजं फालं वस्त्रमेतत्त्रयं मतम् । रोमजं कम्बलञ्चैव तदनेन चतुष्टयम् । अनेन रचितं दद्यादासनं चेष्टभूतये । सिंहव्याघ्रतरक्षूणां छागस्य महिषस्य च । गजानां तुरगाणाञ्च तथा सारङ्गचर्म्मणा । संमरस्याथ रामस्य मृगाणां नवभेदिनाम् । चर्म्मभिः सर्व्वदेवानामासनं प्रीतिदं स्मृतम् । वास्त्रेषु कम्बलं शस्तमासनं देवतुष्टये । राङ्कवं चार्म्मणं श्रेष्ठं दारवं चन्दनोद्भवम् । यच्चासनं कुशमयं तदासनमनुत्तमम् । सर्व्वेषामपि देवानामृषीणाञ्च यतात्मनाम् । योगपीठस्य सदृशमासनं स्थानमुच्यते । आसनस्य प्रदानेन सौभाग्यं भुक्तिमाप्नुयात् । समरो रोहितो न्यङ्कुः शंबरो बभ्रुणो रुरुः । शशोऽथ हरिणश्चेति मृगा नवविधा मताः । हरिणश्चापि विज्ञेयः पञ्चभेदोऽत्र भैरव ! । ऋष्यः खड्गो रुरुश्चैव पृषतश्च मृगस्तथा । एते बलिप्रदानेषु चर्म्मदाने च कीर्त्तिताः । सर्व्वेषां तैजसानाञ्च आसनं श्रेष्ठमुच्यते । आयसं वर्जयित्वा तु कांस्यं सीसकमेव च । शिलामयं मणिमयं तथा रत्नमयं मतम् । आसनं देवताभ्यस्तु भक्त्या तुल्यं समुत्सृजेत् । अतएव साधकानाञ्च आसनं शृणु भैरव ! । यत्रासीनः पूजकस्तु सर्व्वसिद्धिमवाप्नुयात् । ऐणञ्च चार्म्मणं वास्त्रं तैजसञ्च चतुष्टयम् । आसनं साधकानाञ्च सततं परिकीर्त्तितम् । पूर्व्वोक्तं यच्च देवेभ्य आसनं परिकीर्त्तितम् । तत् सर्व्वमासनं शस्तं पूजाकर्म्मणि साधके । न वेष्टासनो भूयात् पूजाकर्म्मणि साधकः । काष्ठादिकासनं कुर्य्यात् मितमेवं सदा बुधः। चतुर्विंशत्यङ्गुलेन दैर्घ्यं काष्ठासनं मतम् । षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम्। पञ्चाङ्गुलं वा कुर्य्यात्तु नोच्छ्रितं चात्र कारयेत् । पूर्व्वोक्तं वर्ज्जयेद्वर्ज्यमासनं पूजनेष्वपि । वास्त्रं द्विहस्तात्तो दैर्घ्यं सार्द्धहस्तात्त विस्तृतम् । तत्रस्थितः तथोच्छ्रायं पूजाकर्म्मणि संत्यजेत् । यथेष्टं चार्म्मणं कुर्य्यात् पूर्व्वोक्तं सिद्धिदायकम् । पञ्चाङ्गुलाधिकं कुर्य्यान्नोच्छ्राये तु कदाचन । काम्बलं चार्म्मणं चैवं महामायाप्रपूजने । प्रशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च । त्रिपुरायाः सततं विष्णोश्चापि कुशासनम् । बहूच्छ्रायं न चैव स्यात् तथैव बहुविस्तृतम् । दारु भूमिसनं प्रोक्तमन्यत्रापि सर्व्वकर्म्मणि । पृथक् पृथक् कल्पयेच्च शोभनं तादृशासनम् । न पद्ममासनं कुर्य्यात् कदाचिदपि पूजने । न प्राणाङ्गं न मृद्भूतमस्थिजं द्विरदादृते । मातङ्गदन्तसञ्जातमासनं कामिके चरेत्। चर्म्म पूर्व्वोदितं ग्राह्यं तथा गन्धमृगस्य च । सलिले यदि कुर्व्वीत देवतानां प्रपूजनम् । तत्राप्यासनमासीनो नोत्थितस्तु समाचरेत । तोये शिलामयं कुर्य्यादासनं कौशमेव वा । दारवं तैजसं वापि नान्यदासनमाचरेत् । आसनारोपणस्थानस्थानाभावे तु पूजकः । आसनं कल्पयित्वा तु मनसा पूजयेज्जले । यद्यासनस्य संस्थानं तोयमध्ये न विद्यते । अन्यत्र वा तदा स्थित्वा देवपूजां समाचरेत् । इत्येतत् कथितं पुत्र ! पूज्यपूजकसङ्गतम्" । आस्यतेऽनेन करणे ल्युट् । ५ देहस्थैर्य्यसाधने करचरणादिविन्यासभेदरूपे योगाङ्गभेदे "यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयोऽष्टावङ्गानि" विभज्य "स्थिरसुखमासनम्" पात०सू० लक्षितं तस्य वृत्तिः यथा "निश्चलं सुखावहं च यदासनं तद्योगाङ्गम् । आस्यतेऽनेनेत्यासनं तच्च द्विविधम् बाह्यं शारीरं च तत्र चैलाजिनकुशोत्तरं बाह्यं, शारीरं पद्मस्वस्तिकादि। तत्र पद्मासनं प्रसिद्धम् । सव्यमाकुञ्चितचरणम् दक्षिणजङ्घोर्व्वन्तरे, दक्षिणं च सव्यजङ्घोर्व्वन्तरे, निक्षिपेदिति स्वस्तिकासनम् । द्वे पादतले वृषणसमीपे संपुटीकृत्य संपुटोपरिपाणिकच्छपिकां न्यसेदिति भद्रासनम् । योगपट्टेन सोपाश्रयासनम् । जानुप्रसारितबाहोः शयनं पर्य्यङ्कासनं क्रौञ्चोष्ट्रनिषदादिवदुपवेशनं क्रौञ्चाद्यासनं द्रष्टव्यम् । आसनस्थैर्य्योपायमाह । "प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्" पात०सू० । "स्वाभाविकः प्रयत्नचलत्वादासनविघातकः तस्योपरमेणासनं सिध्यति अनन्ते नागनायके स्थिरतरफणासहस्रविधृतविश्वमण्डले चित्तस्य समापत्त्या देहाभिमानाभावेनासनदुःखास्पृष्टेरासनं सिध्यति । तत्सिद्धिफलमाह । "ततो द्वन्द्वानभिघातः" पात०सू० । "आसन-

जयाच्छीतोष्णादिभिरनभिघातो बाधाभावो भवति" इति। इदञ्च राजयोगाङ्गं हठयोगाङ्गानि पुनरन्येऽपि बन्धाः काशी॰ उक्ताः यथा "महामुद्रां नभोमुद्रामुड्डीयानं जलन्धरम्। मूलबन्धन्तु यो वेत्ति स योगी योगसिद्धिभाक्। शोधनं नाडिजालस्य चालनञ्चन्द्रसूर्य्ययोः। रसानां शोषणं सम्यक् महामुद्राभिधीयते। योनिं वामाङ्घ्रिणापीड्य कृत्वा वक्षःस्थले हनुम्। हस्ताभ्यां प्रसृतं पादं धारयेद्दक्षिणं चिरम्। प्राणान् कुक्षौ समापूर्य्य चिरं सञ्चारयेच्छनैः। एषा प्रोक्ता महामुद्रा महारोगविनाशिनी। चन्द्राङ्गे तु समभ्यस्य सूर्य्याङ्गे पुनरभ्यसेत्। या तुल्या भवेत् संख्या ततो मुद्रां विसर्जयेत्। न हि पथ्यमपथ्यं वा रसाः सर्व्वेऽपि नीरसाः। अपि घोरं विषं पीतं पीयूषमिव जीर्य्यति। क्षयकुष्ठगुदावर्त्तगुल्माजीर्णपुरोगमाः। तस्य दोषाः क्षयं यान्ति महामुद्राञ्च योऽभ्यसेत्। कपालकुहरे जिह्वा प्रविष्टा विपरीतगा। भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी। न पीड्यते स रोगेण न च लिप्येत कर्म्मणा। बाध्यते न स कालेन यो मुद्रां वेत्ति खेचरीम्। चित्तञ्चरति खे यस्माज्जिह्वा चरति खेगता। तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता। यावद्बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः। यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति। उड्डीनङ्कुरुते यस्मादविश्रान्तं महाखगः। उड्डीयानं ततः प्रोक्तं तत्र बन्धोऽभिधीयते। जठरे पश्चिमं जानु नाभेरूर्द्धञ्च धारयेत्। उड्डीयानं ह्ययं बन्धो मृत्योरपि भयं जयेत्। बध्नाति हि शिराजालमधोगामि न भोजनम्। एष जलन्धरो बन्धः कण्ठे दुःखौघनाशनः। जलन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे। न पीयूषं पतत्यग्नौ न च वायुः प्रधावति। पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदम्। अपानमूर्द्धमाकृष्य मूलबन्धोऽभिधीयते। अपानप्राणयोरैक्यं क्षये मूत्रपुरीषयोः। युवा भवति वृद्धोऽपि सततं मूलबन्धनात्"।

रुद्रयामलेऽनेकविधान्यासनानि दर्शितानि यथा। "अथासनप्रभेदञ्च शृणुष्व सिद्धिकाङ्क्षिणाम्। यत्र तत्र पूजकानां सिद्धिरत्र महीतले। अधोमुखासनं नाथ! सर्वेषां प्राणिनां सुखम्। ऊर्द्धमार्गेण देवेश! धारयेत् मारुतं सुधीः। सर्व्वासनानां श्रेष्ठं हि ऊर्द्धपादो हि यच्चरेत्। तदैव महतीं सिद्धिं ददाति वायवी कला। पद्मासनं तदा कुर्य्यात् प्राणवायुप्रसिद्धये। शुभासनं सदा ध्यायेत् पूरयित्वा पुनःपुनः। उरुमूले वामपादं पुनस्तद्दक्षिणं पदम्। वामोरौ स्थापयित्वा च पद्मासनमिति स्मृतम्। सव्यापसव्ययोगेन आसनं परिकल्पयेत्। तदैकासनकाले तु द्वितीयासनमारभेत्। दृढे पादद्वयं सीविडाङ्गुष्ठद्वयं सुधीः। कायसङ्कोचमाकृष्य कृत्वा वज्रासनं भवेत्। इति वज्रासनं बद्ध्वा वायुबद्धः पुनःपुनः। चिबुके स्थापयेद्यत्नाद्धृदि तेजश्च भास्करे। इत्यासनं हि सर्व्वेषां प्राणिनां सिद्धिकारणम्। वायुं वशे तु कुर्य्याद्यः स योगी नात्र संशयः। भावसिद्धिकरं नाथ! सर्वेषां दृष्टिकारणम्। वामपादतले कुर्य्यात् पादं दक्षिणमेव तत्। सव्यापसव्ययोगेन आसनद्वयमेव च। सर्व्वत्रैवंप्रकारञ्च कृत्वा नातीव साधयेत्। स्वस्वान्यान्यासनानि द्वात्रिंशत्संख्यकानि च। सव्यापसव्ययोगेन द्विगुणं प्रभवेदिह। चतुःषष्ट्यासनानीह वदामि वायुशोधनात्। द्वात्रिंशद्ग्रन्थिभेदेन कल्पयेत् वायुदृढये। कार्मुकासनमाकृष्य उदरे पूरयेत् सुखम्। तदा वायुर्वशं याति कायेन सूक्ष्मवायुना। बद्धपद्मासनं मन्त्री वेष्टयित्वा प्रधारयेत्। करेण दक्षिणेनैव वामपादाङ्गुलीतटम्। सव्यापसव्यद्विगुणं कार्मुकासनमेव च। कार्मुकद्वययोगेन शरवद्वायुना भवेत्। कुक्कुटासनमावक्ष्ये नाडीनिर्म्मलहेतुतः। सत्कुलागममार्गेण कुर्य्यात् वायुनिवेशनम्। निजहस्तद्वयं भूमौ पातयित्वा जितेन्द्रियः। पद्मं बद्ध्वा करौ देव! कर्परद्वयमध्यतः। सव्यापसव्ययुगलं कुक्कुटं ब्रह्मणाकृतम्। बद्धं कृत्वा अधःशीर्षं यः करोति खगासनम्। खगासनप्रसादेन भ्रमलोपो भवेद्ध्रुवम्। पुनःपुनः भ्रमादेव विषयभ्रमलोपकृत्। लोलासनं सदा कुर्य्यात् वायुलौल्यापघातनात्। स्थिरवायुप्रसादेन स्थिरचेता भवेद्ध्रुवम्। पद्मासनं समाकृष्य पादयोः सन्धिगह्वरे। हस्तद्वयमधोदेशे नियोज्य कुक्कुटाकृति। निजहस्तद्वयं लग्नं निपात्य हस्तनिर्भरम्। तस्मात् शरीरमुत्थाप्य स्थिरपद्मासनेऽनिलम्। स्थित्वैतदासने मन्त्री अधःशीर्षं करोति चेत्। उत्तमं त्वासनं श्रेयं योगिनामतिदुर्लभम्। एतदासनमात्रेण शरीरं शीतलं भवेत्। पुनःपुनः शोधनेन चेतना कुण्डली भवेत्। सव्यापसव्ययोगेन यः करोति पुनःपुनः। पूरयित्वा मूलपद्मे सूक्ष्मवायुं विजृम्भयेत्। कृत्वा कुम्भकमेवं हि सूक्ष्मवायौ वशद्विधौ। मूलादिब्रह्मरन्ध्रान्ते स्थापयेत् गगने पदे। एतत् शुभासनं कृत्वा सूक्ष्मरन्ध्रं प्रवेशतः। सूचीरन्ध्रे यथा सूत्रं पूरयेत् सूक्ष्मवायुना। एवं क्रमेण सन्न्यासात् पूरकस्यापि

लक्षणम् । महासुखं समाप्नोति योगाष्टाङ्गनिषेवणात् । अथ वक्ष्ये महादेव ! पर्व्वतासनमुत्तमम् । यत् कृत्वा स्थिररूपः स्यात् षट्चक्रादिविलोड़नः । योन्यासनं सर्व्वयोगे योगिनामवलम्बनम् । तत्कालं सकलं तावत् खेचरीयावदेव हि । पादमूलेन चाक्रम्य लिङ्गाग्रं योनियोजयेत् । अन्यं पादयुगौ दत्त्वा तत्र योन्यासनं भुवि । एतन्मध्ये महादेव ! बद्धयोन्यासनं शृणु । यत् कृत्वा विचरेत् योगी पृथिव्यामीश्वरो यथा । कृत्वा योन्यासनं नाथ ! लिङ्गगुह्यादिबन्धनम् । मुखनासानेत्रकर्णं कनिष्ठाङ्गुलिभिस्तथा । ओष्ठाधरं कनिष्ठाभ्यामनामाभ्याञ्च नासिके । मध्यमाभ्यां नेत्रयुग्मं तर्जनीभ्यामथ श्रुती । एतत् सिद्धासनं नाम योगिनामतिदुर्लभम् । कृत्वा वायुस्तम्भनं च मूलमारभ्य स्तम्भयेत् । सव्यापसव्ययोगेन सिद्धो भवति साधकः । शनैः शनैः समारभ्य कुम्भयेच्च प्रपूरयेत् । अरुणोदयकालाच्च चतुर्दण्डेन भैरव ! । सव्यापसव्ययोगेन गृहीत्वा बाह्यगानिलम् । द्वितीयप्रहरे कुर्य्यात् बाह्यपूजां मनोरमाम् । एतदासनमाकृत्य सिद्धो भवति साधकः । अथान्यदासनं वक्ष्ये यत् कृत्वा चामरो भवेत् । मत्साधकः शुचिः श्रीमान् कुर्य्याद्भावाभिभावितः । भेकनामासनं योग्यं नाथ ! वक्ष्यामि तद्गुणम् । निधाय पादयुगलं स्कन्धे बाहू पदोपरि । ध्यायेदिष्टपदं श्रीमान् आसनस्थः सुखाय च । यदि सर्व्वाङ्गमुत्तोल्य गगने खेचरासनम् ।महाभेकासनं प्रोक्तं सर्व्वसिद्धिप्रदायकम् । महाविद्या–महामन्त्रं प्राप्नोति जपतीह यः । एतत् प्रभेदं वक्ष्यामि यः करोति सदादरः । एकं पादयुगौ बद्ध्वा स्कन्धेऽन्यपादरक्षणम् । एतत् प्राणासनं नाम सर्व्वसिद्धिप्रदायकम् । वायुं मूले समारोप्य प्रत्याकुञ्च्य प्रसारयेत् । केवलं पादमेकञ्च स्कन्धे चारोप्य यत्नतः । एकपादेन गगने तिष्ठेत् स दण्डवत् प्रभो ! । अपानासनमेतद्धि सर्व्वेषां पूरकाश्रयम् । कृत्वा सूक्ष्मशीर्षपद्मे समारोप्य च वायुभिः । तदा सिद्धो भवेन्मर्त्त्यो नात्र कार्य्या विचारणा । प्राणापानासने कृत्वा मन्त्री योगेश्वरो भुवि ।समानासनमावक्ष्ये सिद्धिमन्त्रादिसाधनम् । एकं पादयुगौ दत्त्वा गुह्येऽन्यं लिङ्गवल्कके । एतद्धीरासनं नाथ ! समानासनसंज्ञकम् । हृत्याकृत्य जपेन्मन्त्रं धृत्वा वायुं चतुर्दले । कुण्डलीं भावयेन्मन्त्री कोटिविद्युल्लताकृतिम् । आत्मचन्द्रामृतरसैराप्लुतां योगिनीं सदा । वीरासनं तु वीराणां योगवायुप्रसाधनम् । योजानाति महावीरः स योगी भवति ध्रुवम् । अथ वक्ष्ये महाकाल ! समानासनसाधनम् । भेदक्रमेण यज्ज्ञात्वा वीराणामधिपो भवेत् । समानासनमाकृत्य बद्धाङ्गुष्ठं करेण च । एतेन साधुकारी स्यात् सर्व्वयोगादिसाधने । आसनं यो हि जानाति वायुना हरणं तथा । कालादीनां निर्णयन्तु स कदाचित् न नश्यति । कालेन लभ्यते सिद्धिः कालरूपो महोज्ज्वलः । साधकैर्योगिभिर्ध्येयः सिद्धवीरासनात्मना । अथ वक्ष्ये नीलकण्ठ ! ग्रन्थिभद्रासनं शुभम् । ज्ञात्वा रुद्रो भवेत् क्षिप्रं सूक्ष्मवायुनिषेवणात् । कृत्वा पद्मासनं मन्त्री जङ्घायाः कुहरे करौ । कर्परस्थलपर्य्यन्तं विभिद्य स्कन्धधारणम् । भित्त्वा पद्मासनं मन्त्री हस्तार्द्धेन विपाटयन् । येन शीर्षं भवेद्बद्धं सर्वाङ्गुलिभिराश्रितम् । ग्रन्थिभेदासनं कुर्य्यात् खेचरादिप्रदर्शनम् । कृत्वा सूक्ष्मवायुलयं परमात्मनि कारयेत् । अथान्यासनमावक्ष्ये योगपूर्वकरक्षणात् । कृत्वा पद्मासनं पादाङ्गुष्ठं जङ्घां हि संस्थितम् । हस्तमेकन्तु जङ्घायां कार्म्मुकं कर्परोर्द्धकम् । पद्मासने समाधाय अङ्गुष्ठं परिधारयेत् । कार्म्मुकासनमेतद्धि सव्यापसव्ययोगतः । पद्मासनं वेष्टयित्वा अङ्गुष्ठं च प्रधारयेत् । यः करोति सदा नाथ ! कार्म्मुकासनमुत्तमम् । रोगादिनाशं शत्रूणां क्षयं नीत्वा सुखी भवेत् । अथ वक्ष्येऽत्र संक्षेपात् सर्वाङ्गासनमुत्तमम् । यत् कृत्वा निपुणो योगी विद्याभिः पण्डितो भवेत् । अधो निधाय शीर्षञ्च ऊर्द्ध्वपादद्वयञ्चरेत् । पद्मासनं तु तत्रैव भूमौ कर्परयुग्मकम् । दण्डे दण्डे तु यः कुर्य्यात् श्वासशान्तिपरः सुधीः । नित्यं सर्वासनं हित्वा न कुर्य्याद्वायुधारणम् । मासेन तस्य सिद्धिः स्यात् सर्व्वरोगविनाशनम्" । अन्यान्यप्यासनानि तत्रोक्तानि विस्तराद्दर्शितानि । निर्वाणतन्त्रे जन्तुसंख्यया चतुरशीतिलक्षसंख्यकान्यासनान्युक्तानि किन्तु तेषां लक्षणविशेषास्तत्र नोक्ताः तेषां मध्ये द्वयोरेव प्राधान्यमित्यपि तत्रैवोक्तम् । यथा "आसनानि कुलेशानि ! यावन्तोजीवजन्तवः । चतुरशीतिलक्षाणि चैकैकं समुदाहृतम् । आसनेभ्यः समस्तेभ्यः साम्प्रतं द्वयमुच्यते । एकं सिद्धासनं नाम द्वितीयं कमलासनम्" । एषां बहुविधानामासनानां मध्ये "सुखेनैव भवेद्यस्मिन्नासने ब्रह्मचिन्तनम् । आसनं तद्विजानीयादितरत् सुखनाशनम्" इत्यभियुक्तोक्तेः पातञ्जलोक्तस्य स्थिरसुखस्यैवासनस्य ब्रह्मचिन्तने प्राद्यतेलेनसेयम् । तत्प्रकारे योगाङ्गासनानि मद्धसलक्षणान्यु-

क्तानि यथा "पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनन्तथा। वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम्। ऊर्वोरुपरि विन्यस्य सम्यक् पादतले उभे। अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः। पद्मासनमिदं प्रोक्तं योगिनां हृदयङ्गमम्। जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे। ऋजुकायो विशेद्योगी स्वस्तिकन्तत् प्रचक्षते। सीमनि पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चलम्। वृषणाधः पार्श्वपादौ पाणिभ्यां परिबन्धयेत्। भद्रासनं समुद्दिष्टं योगिभिः परिकल्पितम्। ऊर्वोः पादौ क्रमान्न्यसेत्तयोः प्रत्यङ्मुखाङ्गुलौ। करौ निदध्यादाख्यातं वज्रासनमनुत्तमम्। एकस्मादमधः कृत्वा विन्यस्योरौ तथेतरम्। ऋजुकायोविशेन्मन्त्री वीरासनमितीरितम्" यत्र महामात्योवसति तस्मिन् ६गजस्कन्धदेशे आस्यतेऽनेन आ+अस–कर्म्मणि ल्युट्। ७सम्यग् विक्षेपणसाधने। असनएव अण्। ८असनद्रुमे पु॰ ९जीवकद्रुमे पु॰। आसनशब्दस्थाने यसादौ तद्धितयाजादौ च परे आसन्नादेशः इति काशिकादयः मनोरमायान्तु तत् दूषयित्वा आस्यशब्दस्थाने एव तदादेश इत्युक्तं यथा "यत्तु आसनशब्दस्य आसन्नादेश इति काशिकायामुक्तन्तत् प्रामादिकम् "आस्तोष्टकस्य वर्त्ति कामभीके" इति मन्त्रे मुखादिव्यर्थस्यौचित्यात् "इकस्य चित् वर्त्ति कामन्तरास्यादिति" मन्त्रान्तरसंवादाच्च याख्यातञ्च तथैव वेदभाष्ये इति। ["निषेदुषीमासनबन्धधीरः" रघुः।

**आसनबन्ध** पु॰ आसनार्थों बन्धः। करचरणादीनामन्योन्यबन्धे

**आसनमन्त्र** पु॰ आसनस्य शुद्ध्यर्थो दानार्थो वा मन्त्रः। तन्त्रोक्ते "आधारशक्तिकमलासनाय नमः" इत्यादिके तत्तत्प्रकरणोक्ते १मन्त्रभेदे २देवेभ्य आसनदानार्थे मन्त्रभेदे च। स च मन्त्रः "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनाभिरोहति" श्रौतः। "शेषमन्त्रं महादिव्यं फणामणिसहस्रकम्। कोटिसूर्य्यप्रतीकाशं गृहाणासनमीश्वर!" इति पौराणिकश्च। एवमन्योऽपि तत्तत्कल्पोक्तो ज्ञेयः। आसनपरिग्रहार्थे ३मन्त्रे च "आसनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्म्मोदेवता आसनपरिग्रहे विनियोगः" तन्त्रसा॰।

**आसना** स्त्री आस–युच्। १स्थितौ २उपवेशने।

**आसनादि** पु॰ आसनमादिर्यस्य। मन्त्रोक्ते पूजाङ्गे आसनप्रभृतौ उपचारगणे "आसनं स्वागतं पाद्यमर्घमाचमनीयकम्" उपचारशब्दे निरुक्तिः।

**आसनी** स्त्री आस–आधारे ल्युट् ङीप्। १ विपणौ २मर्य्यादायाञ्च मेदि॰। [नि॰। वासुदेवे मेदि॰।

**आसन्द** पु॰ आसीदत्यस्मिन् प्रलयकाले आ+सद्–बाहुलकात् अन्दच्। (?) आ+सद्–अन्दादि॰

**आसन्दी** स्त्री आसद्यतेऽस्याम् आ+सद्–अन्दादि॰नि॰गौरा॰ ङीप्। १ उपवेशनयोग्ये आसनयन्त्रे (केदारा) २ क्षुद्रखट्टायाम् (कौँच)। ३सभामध्यवेदिकायाम् "औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राशुताहरन्ति" कात्या॰७,२७। ४उन्नतजघायां पीठिकायाञ्च। आसन्दीशब्दस्य निरुक्तिरपि शत॰ ब्रा॰ दर्शिता। "इयं वा आसन्दी अस्यां हीदं सर्व्वमासन्नम् तस्मादेता आसन्दीमाहरन्ति" इति। स्वार्थे कन्। क्षुद्रासनयन्त्रभेदे स्त्री। "जाम्बूनदमयीमासन्दिकाम्" काद॰। आसन्दी+अस्त्यर्थे मतुप् मध्या॰ मस्य वः। आसन्दीयुक्ते त्रि॰ स्त्रियां ङीप्। "आसन्दीवान् ग्रामभेदः" सि॰कौ॰।

**आसन्न** त्रि॰ आ+सद्–क्त। १निकटस्थे, २उपस्थिते च। "आसन्नपतने कूले कूलं पिपतिषतीति" भा॰ भा॰। ३सन्निधानयुक्ते ४सम्यक्स्थिते च "सर्वमस्मा आसन्नमिति" शत॰ब्रा॰। ६शाब्दबोधसाधनासत्तियुक्ते वाक्ये "आसन्नानासन्नविभागव्याघातः" शब्दचिन्ता॰। ५तमूर्यौ च।

**आसन्नकाल** पु॰ आसीदत्यस्मिन् काले आ+सद्–आधारे क्त कर्म्म॰। मृत्युकाले।

**आसन्य** पु॰ आस्ये भवः यत् आसन्नादेशः। मुखभवे मुखान्तर्विलस्थे मुख्ये प्राणे "अथ हैनमासन्यं प्राणमूचुः" शत॰ब्रा॰।

**आसन्वत्** त्रि॰ आस्यसमानार्थकः आसन्शब्दोऽस्ति ततः अस्त्यर्थे मतुप्। आस्ययुक्ते मुखे। "यद्रूतं यच्च भाव्यमासन्वत्तेन ते वारये विषम्" अथ॰ ६,१२,२।

**आसमञ्ज** पु॰ असमञ्ज एव स्वार्थे अण्। सूर्य्यवंश्ये सगरपुत्रे क्षत्रियभेदे।

**आसम्बाध** त्रि॰ समन्तात् संबाधा यत्र। सङ्कीर्णस्थाने परस्परसंघर्षणेन क्लिष्टे। "आसम्बाधा भविष्यन्ति पन्थानः शरदृष्टिभिः" रामा॰।

**आसव** पु॰ आसूयते आ+सु–कर्म्मणि अप्। १ अभिषवयोग्ये मद्ये (चोयानमद) तल्लक्षणादि भावप्र॰। "यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः। आसवस्य बीजद्रव्यगुणैर्यागुणाः समाः" नवपुराणमद्ययोर्गुणास्तत्रैव। "मद्यं नवमभिष्यन्दि त्रिदोषजनकः परम्। अहृद्यं बृंहणं भाहि दुर्गन्धं विशदं गुरु। जीर्णं तदेव रोचिष्णु क्रमिघ्नं ग्लानिवारणम्। हृद्यं सुगन्धि गुणवल्लघु स्रम-

विशोधनम्"। सात्विकादिपानकर्त्तृभेदेन चेष्टाविशेषाय तत्रोक्ताः "सात्विको गीतिहास्यादि राजसो साहसादिकम्। तामसो निन्द्यकर्म्माणि निद्रां च मदिरां चरन्"। चरन् पिबन् कुर्य्यादिति शेषः। "विधिना मात्रया काले हितैरन्नैर्यथाबलम्। प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा। किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम्" सुश्रुते तु मद्यभेदेन गुणविशेषादिकमुक्तं यथा
"सर्व्वं पित्तकरं मद्यमम्लं दीपनरोचनम्। भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम्। पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्। विकाशि सृष्टविण्मूत्रं शृणु तस्य विशेषकम्। मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा। रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते। मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु। लघुपाकि सरं शोषविषमज्वरनाशनम्। मार्द्वीकाल्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनम्। तदेव विशदं रुच्यं कफघ्नं कर्षणं लघु। कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनम्। कासार्शोग्रहणीदोषमूत्राघातानिलापहा। स्तन्यरक्तक्षयहिता सुरा बृंहणदीपनी। कासार्शोग्रहणीश्वासप्रतिश्यायविनाशिनी। श्वेता मूत्रकफस्तन्यरक्तमांसकरी सुरा। छर्द्द्यरोचकहृत्कुक्षितोदशूलप्रमर्द्दनी। प्रसन्ना कफवातार्शोविबन्धानाहनाशिनी। पित्तलाल्पकफा रूक्षा यवैर्व्वातप्रकोपणी। विष्टम्भिनी सुरा गुर्व्वी श्लेष्मला तु मधूलिका। रूक्षा नातिकफा हृद्या पाचनी चाक्षिकी स्मृता। त्रिदोषो भेद्यपथ्यश्च कोहलो वदनप्रियः। ग्राह्युष्णोऽजगलः पक्ता रूक्षतृट्कफशोफहृत्। हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषहृत्। बक्कसो हृतसारत्वाद्विष्टम्भी वातकोपनः। दीपनः सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः। कषायो मधुरः शीधुर्गौडः पाचन दीपनः। शार्करो मधुरो रुच्यो दीपनो वस्तिशोधनः। वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः। तद्वत् पक्वरसः शीधुर्बलवर्णकरः सरः। शोफघ्नो दीपनो हृद्यो रुच्यः श्लेष्मार्शसां हितः। कर्षणः शीतरसिकः श्वयथूदरनाशनः। वर्णकृज्जरणः स्वर्य्यो विबन्धघ्नोऽर्शसां हितः। आक्षिकः पाण्डुरोगघ्नो व्रणघ्नः संग्राहको लघुः। कषायमधुरः शीधुः पित्तघ्नोऽसृक्प्रसादनः। जाम्बवो बद्धनिस्यन्दस्तुवरो वातकोपनः। तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत्। सुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः। वद्धमध्वासवश्छेदी मेहकुष्ठविषापहः।

तिक्तः कषायशोफघ्नस्तीक्ष्णः स्वादुरवातकृत्। तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत्। कृमिमेदोऽनिलहरो मैरेयो मधुरो गुरुः। बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः। शीधुर्मधूकपुष्पोत्थो विदाह्यग्निबलप्रदः। रूक्षः कषायकफहृद्वातपित्तप्रकोपणः। निर्द्दिशेद्रसतश्चान्यान् कन्दमूलफलासवान्। नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम्। अनिष्टगन्धं विरसमहृद्यञ्च विदाहि च। सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम्। स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम्। अरिष्टो द्रव्यसंयोगसंस्कारादधिको गुणैः। बहुदोषहरश्चैव दोषाणां शमनश्च सः। दीपनः कफवातघ्नः सरः पित्तविशोधनः। शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः। पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः। चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः पृथक्। अरिष्टासवशीधूनां गुणान् कर्म्माणि चादिशेत्। बुद्ध्वा यथास्वं संस्कारमवेक्ष्य कुशलो भिषक्। सान्द्रं विदाहि दुर्गन्धं विरसं कृमिलं गुरु। अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम्। अल्पौषधं पर्य्युषितमत्यच्छं पिच्छिलञ्च यत्। तद्वर्ज्ज्यं सर्व्वदा मद्यं किञ्चिच्छेषन्तु यद्भवेत्। तत्र यत् स्तोकसम्भारं तरुणं पिच्छिलं गुरु। कफप्रकोपि तन्मद्यं दुर्जरञ्च विशेषतः। पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च। अहृद्यं फेनिलं पूति कृमिलं विरसं गुरु। तथा पर्य्युषितञ्चापि विद्यादनिलकोपनम्। सर्व्वदोषैरुपेतन्तु सर्व्वदोषप्रकोपणम्। चिरस्थितं जातरसं दीपनं कफवातजित्। रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम्। तस्यानेकप्रकारस्य मद्यस्य रसवीर्य्यतः। सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकाशित्वाच्च वह्निना। समेत्य हृदयं प्राप्य धमनीरूर्द्ध्वमागतम्। विक्षोभ्येन्द्रियचेतांसि वीर्य्यं मदयतेऽचिरात्। चिरेण श्लैष्मिके पुंसि पानतो जायते मदः। अचिराद्वातिके दृष्टः पैत्तिके शीघ्रमेव तु। सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः। गीताध्ययन सौभाग्यसुरतोत्साहकृन्मदः। राजसे दुःखशीलत्वमात्मत्यागं ससाहसम्। कलहं सानुबन्धन्तु करोति पुरुषे मदः। अशौचनिद्रामात्सर्य्यागम्यागमनलोलताः। असत्यभाषणञ्चापि कुर्य्याद्धि तामसे मदः। रक्तपित्तकरं शुक्तं छेदि भुक्तविपाचनम्। वैस्वर्य्यं जरणं श्लेष्मपाण्डुक्रिमिहरं लघु। तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च। तद्वत्तदासुतं सर्व्वं रोचनञ्च विशेषतः। गौड़ानि

रसयुक्तानि मधुयुक्तानि यानि च। यथापूर्वं गुरुतराण्यभिस्यन्दकराणि च। हृद्यं तु दीपनं हृद्यं हृत्पाण्डुक्रिमिरोगनुत्। यवसक्तयोर्विकारस्तु भेदि सौवीरकं तथा। धान्याम्लं धान्ययोनित्वाद्दीपनं दाहनाशनम्। स्पर्शात्पानात्तु पवनकफतृष्णाहरं लघु। तैक्ष्ण्याच्च निर्हरेदाशु कफं गण्डूषधारणात्। मुखवैरस्यदौर्गन्ध्यमलशोषक्लमापहम्। दीपनं जरणं भेदि हितमास्थापनेषु च। महत्समाश्रितानाच्च जनानां सात्म्यमुच्यते।"

स्मृतौ तु जातिभेदेन मद्यविशेषपाननिषेधार्थं मद्यविभागादि दर्शितं यथा प्रा० वि० मनुहारीतयमैः। "सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्"। तथा च श्रुतिः "सुरा वै मलमन्नानामन्धं पाप्मतमं सुरेति"। यद्यप्यन्नशब्दः स्वकमात्यतण्डुलविकारविशेषे ओदने प्रसिद्धस्तथापि बहुतरवचनात् पिष्टयवान्नादिविकारमपि लक्षयति। तेनान्नविकारविशेषोमदहेतुः सुरा इत्युच्यते। अत्रिः। "गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैरिति" त्रिविधैव सुरेति पनसादिविकारव्यावृत्तस्य त्रितयस्यानुगतस्यैकस्य प्रवृत्तिनिमित्तस्याभावात् न पानक्रियाव्याप्यत्वम् इतरव्यावर्त्तकधर्म्मश्च महापातकहेतुपानकर्मत्वमुपाधिः सुराज्ञानाधीनं महापातकं तज्ज्ञानाधीनञ्च सुराज्ञानम् इतरेतराश्रयापत्तेः- पुलस्त्यवचनविरोधाच्च यथा पुलस्त्यः। "पानसं द्राक्षं माधूकं खार्ज्जूरं तालमैक्षवम्। माक्षिकं टाङ्कं माध्वीकमैरेयं नारिकेलजम्। समानानि विजानीयान्मद्यान्येकादशैव तु। द्वादशन्तु सुरा मद्यं सर्वेषामधमं स्मृतम्"। अनेनैकादशानां सुरात्वं निषेधति। मद्यशब्दस्तु मदहेतुद्रवद्रव्यमात्रवचनः अस्मादेव वचनात् न तु मद्यमात्रं सुराशब्दस्यार्थः तथा च बृहस्पतिः। "गौड़ीं माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत्। तप्तकृच्छ्रं पराकञ्च चान्द्रायणमनुक्रमात्"। त्रयाणां सुरात्वे क्रमेण प्रायश्चित्तत्रयं न स्यात्। तथा भविष्ये "सुरा पैष्टी तु मुख्योक्ता न तस्यास्त्वितरे समे"। पैष्टीति तण्डुलविकारमात्रोपलक्षणम्। इतरे गौड़ीमाध्व्यौ। अतो अन्नविकार एव सुराशब्दस्य मुख्यत्वात् त्रिविधा सुरेति गौड़ीमाध्व्योर्गौणसुरात्वज्ञापनार्थम् तेनैतत्पानेऽपि महापातकत्वमतिदिशति यथैवैका तथा सर्वेति पैष्ट्याः पूर्वप्रसिद्धिं दर्शयति यथा पैष्टी सुरा तथा सर्वा गौड़ी माध्वी च। पूर्ववचनोक्तापि पैष्टी दृष्टान्तत्वेनात्र दर्शिता। न पातव्या द्विजोत्तमैर्ब्राह्मणैरित्यर्थः। त्रैवर्णिकपरत्वे उत्तमपदानर्थक्यात्। न तु बहुवचनानर्थक्यपरीहारार्थं मुख्यप्रातिपदिकानर्थक्यं युक्तं बहुवचनस्य सजातीयोपस्थापकत्वेन चरितार्थत्वात्। अतो ब्राह्मणस्य त्रिविधसुरापानं महापातकम्। "क्षत्रियवैश्ययोस्तु" सुरा वै मलमन्नानामिति वचनेन पैष्ट्येवेति स्थितम् गोविन्दराजमिश्रकृपनीरेन्द्रराधामयमनुमतोऽर्थः। अत एव "एवं माध्वी च गौड़ी च पैष्टी च त्रिविधा सुरा। द्विजातिभिर्न पातव्या कदाचिदपि कर्हिचित्" इतिमनुवचनेऽपि द्विजातिपदं ब्राह्मणपरमेव। अतएव द्विविधसुरापाने क्षत्रियादीनां महापातकं तावदस्तु दोषाभावमेवाह दक्षयाज्ञवल्क्यः। "कामादपि हि राजन्योवैश्यो वापि कथञ्चन। मद्यमेवासुरां पीत्वा न दोषं प्रतिपद्यते" तदेवं पैष्टीनिषेधस्त्रैवर्णिकानाम् गौड़ीमाध्वीनिषेधस्तु ब्राह्मणस्यैव ननु ब्राह्मणराजन्याविति कर्त्तृविशेषणं पुंलिङ्गं तत्र विवक्षितम् अतः कथं ब्राह्मण्याः सुरापानं महापातकम् उच्यते निषिध्यमानक्रियायाविधेयत्वेन तत्कर्त्तुरनुपादेयत्वात्तद्विशेषणं लिङ्गमविवक्षितम् हविरुभयत्ववत्। अतस्तज्जातिस्त्रीणामपि पाननिषेधः। तथा च भविष्ये "तस्मान्न पेयं विप्रेण सुरामद्यं कथञ्चन। ब्राह्मण्यापि न पेया वै सुरा पापभयावहा"। "यद्ब्राह्मणी सुरापी स्यान्न तां देवाः पतिलोकं नयन्तीति" श्रुतिः। "पतत्यर्द्धशरीरेण भार्य्या यस्य सुरां पिबेत्। पतितार्द्धशरीरस्य निष्कृतिर्नोपपद्यते"। न चैवं क्षत्रियवैश्यस्त्रीणामनिषेधः ब्राह्मणीपदस्य निषिद्धसुरापानकर्त्तृभार्य्योपलक्षकत्वात् "भार्य्या यस्य सुरां पिबेदिति सामान्यश्रवणाच्च।

वेदविहितः मद्यसवनप्रकारस्तु सौत्रामणीशब्दे वक्ष्यते। "यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्। तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः" मनुः। "अनासवाख्यं करणं मदस्य" कुमा०। "नानासवमालसङ्कुलम्" काद०। "इक्षुं लाक्षालिप्तं पिबति चषकं सासवमिव" शान्तिश०। "संविदासवयोर्मध्ये संविदेव गरीयसी" तन्त्र०। भावे घञ्। २मद्यादेरभिषवे (मद्चोयान) आसूयतेऽत्र आधारे घञ्। ३अभिषवपात्रे। आ+सु—प्रसवे अच्। ४प्रसवकर्त्तरि त्रि०। "देवस्य सवितुर्मतिमासवं विश्वदेव्यम्" श्रुतिः। [ त० । तालद्रुमे।

आसवद्रु पु० आसवस्य (ताड़ी) मद्यभेदस्य कारणं द्रुः शाक०

आसवनीय त्रि० आ+सु-कर्म्मणि अनीयर्। अभिषवणीये-

**आसा** स्त्री आ+सो–अङ्। अन्तिके निरु॰ "पितुर्न यस्यासया" ऋ॰१,१२७,८, "आसया अन्तिकेन" भा॰। तस्य क्लीवत्वमपि। "आ न इन्द्रो दूरादासात्" ऋ॰४,२०,१, "आसादन्तिकादिति" भा॰।

**आसादन** न॰ आ+सद्–णिच्–ल्युट्। १सन्निधापने, २स्थापने "तल्पोत्तरपरिच्छदादि करोत्याच्छासादनात्" काव्या॰६,२,५, आवना॰ शब्दे उदा॰ ३आसन्नताकम्पादने ४मर्द्दने च "स्वमासादने तस्य दर्पमद्य हरेमहि" भा॰स॰२०अ॰।

**आसादित** त्रि॰ आ+सद्–णिच्–क्त। १निकटीकृते २प्राप्ते च "आसादितप्रकटनिर्म्मलचन्द्रहासः" सा॰द॰ ३आयोजिते ४सन्निधापिते ५सम्पादिते ६कामकेलिपरे च।

**आसाद्य** त्रि॰ आ+सद्–णिच्–यत्। प्राप्ये "अभूदनासाद्यमधिज्यधन्वनः" रघुः। २निकटीकार्य्ये ३अवसादं प्रापणीये आ+सद्–णिच्–ल्यप्। ४प्राप्येत्यर्थे अव्य॰।

**आसार** पु॰ आ+सृ–घञ्। १धारासम्पाते२वेगवृष्टौ, "त्वामासारप्रशमितवनोपप्लवं साधु मूर्द्ध्ना"। "पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः" मेघदू॰ "आसारसिक्तक्षितिवाष्पयोगात्" रघुः। ३प्रसरणे, ४सैन्यानां सर्व्वतो व्याप्तौ च। ५करणे घञ्। सुहृद्बले। ६द्वादशराजमण्डलमध्ये नृपभेदे। द्वादशराजमण्डलञ्चाग्नेये दर्शितम् यथा "आत्ममण्डलमेवात्र प्रथमं मण्डलं भवेत्। समन्तात्तस्य विज्ञेया रिपवो मण्डलस्य तु। उपेतस्तु सुहृत् ज्ञेयः शत्रुर्मित्रमतः परम्। मित्रमित्रमतो ज्ञेयं मित्रमित्ररिपुस्ततः। एतत् पुरस्तात् कथितं पश्चादपि निबोध मे। पार्ष्णिग्राहस्ततः पश्चात् तत आक्रन्द उच्यते। आसारस्तु ततोऽन्यः स्यादाक्रन्दासार उच्यते। जिगीषोः शत्रुयुक्तस्य विमुक्तस्य तथा द्विज!। तत्रापि निश्चयः शक्योऽकर्तुं मनुजपुङ्गव! निग्रहानुग्रहे शक्तो मध्यस्थः परिकीर्त्तितः। निग्रहानुग्रहे शक्तः सर्वेषामपि यो भवेत्। उदासीनः स कथितो बलवान् पृथिवीपतिः। मण्डलं तव संप्रोक्तमेतत् द्वादशराजकम्"। ६षड्विंशत्गणैः रचिते दण्डकच्छन्दोभेदे च।

**आसाव्य** त्रि॰ आ+सु–ण्यत्। अभिषवणीये मद्यादौ।

**आसिक** पु॰ असिः प्रहरणमस्य ठक्। खड्गेन युद्धकारके

**आसिका** स्त्री पर्य्यायेणासनम् आस–पर्य्याये ण्वुल्। पर्य्यायेण उपवेशने। "उद्गासिकाः सुप्यन्ते" पात॰भा॰।

**आसिक्त** त्रि॰ ईषत् सम्यक् वा सिक्तः आ+सिच–क्त। १ईषत् सिक्ते २सम्यक्सिक्ते च।

**आसित** न॰ आस+भावे–क्त। १उपवेशने। आसधातौ उदा॰। आधारे क्त। उपवेशनाधारे स्थाने। असितस्य मुनेरपत्यं शिवा॰ अण्। असितमुनेरपत्ये स च शाण्डिल्यगोत्रे प्रवरः।

**आसिधार** न॰ असिधारा इवास्त्यत्र अण्। "युवा युवत्या सार्द्धं यत् मुग्धभर्त्तृवदाचरेत्। अन्तर्निवृत्तसङ्गः स्यात् आसिधारव्रतं हि तत्" इति यादवोक्ते व्रतभेदे "अभ्यस्यतीव व्रतमासिधारम्" रघुः।

**आसिद्ध** त्रि॰ आ+सिध–क्त। राजाज्ञया वादिना कृतावरोधे प्रतिवादिनि "नासिद्धस्तं विलङ्घयेत्" नार॰।

**आसिनासि** पुंस्त्री आसिरिव तीक्ष्णाग्रा नासा यस्य असिनासः मुनिभेदस्तस्यापत्यम् इञ्। तदपत्ये ततः युवापत्ये फक् तौल्व॰ न लुक्। आसिनासायनः तत्पौत्रे।

**आसिबन्धकि** पु॰ असिबन्धकस्यापत्यम् इञ्। असिबन्धकापत्ये ततः युवापत्ये फक् तस्य तौल्व॰ न लुक्। आसिबन्धकायनः तत्पौत्रे।

**आसीन** त्रि॰आस+शानच्। उपविष्टे आसधातौ उदा॰

**आसीनप्रचलायित** न॰ आसीनेन उपविष्टेनैव प्रचलवत् आचरितम् प्रचल–क्यच् भावे क्त। उपविश्य निद्रावशेन प्रचलनरूपे (बसेढोला) दोलने।

**आसुत्** त्रि॰ आ+सु–क्विप्। कृताभिषवे। तस्येदम् गहा॰ छ। आसुतीयः। तत्सम्बन्धिनि त्रि॰।

**आसुति** स्त्री आ+सु–क्तिन्। सोमादिनिष्पीड़ने १अभिषवे, २मद्यनिष्पादने(चोयान)इति ख्याते मद्यपाके च। "परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय" ऋ॰८,१,२६। आ+सु–प्रसवे क्विप्। २प्रसवे। "सोनाविन्द्र! शुभ्रग्रीव आसुतिं दाः" ऋ॰१,१०४,७। आसुतेः सन्निकृष्टदेशादि चतुरर्थ्यां मध्वा॰ मतुप्। आसुतिमत् तद्देति त्रि॰ स्त्रियां ङीप्।

**आसुतीवल** पु॰ आसुतिरस्त्यस्य वलच् दीर्घः। १शौण्डिके। २सोमाभिषवशालिनि याज्ञिके च।

**आसुर** त्रि॰ असुरस्येदम् अण्। असुरसम्बन्धिनि। "आसुरं तद्भवेत्तोयं पीत्वा चान्द्रायणञ्चरेत्" स्मृतिः "कुलालचक्रनिष्पन्नमासुरं मृण्मयं स्मृतम्। तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्" काल्या॰रु॰। तेन (कलसा) प्रभृतिद्रव्यस्य हस्तघटितत्वेन याज्ञताऽन्येषां तथात्वता। स्त्रियां ङीप्। "आसुरी रात्रिरत्यन्त तस्मात्तां परिवर्जयेत्" स्मृतिः। २असुरवदाचारयुक्ते तदाचारश्च गीतायामुक्तोयथा।

"द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु । प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेषु विद्यते । असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् । अपरस्परसम्भूतं किमन्यत् कामहैतुकम् । एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्म्माणः क्षयाय जगतोऽहिताः । काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः । मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः । चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः । कामोपभोगपरमा एतावदिति निश्चिताः । आशापाशशतैर्बद्धाः कामक्रोधपरायणाः । ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् । इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् । इदमस्तीदमपि मे भविष्यति पुनर्धनम् । असौ मया हतः शत्रुर्हनिष्ये चापरानपि । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी । आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः । अनेकचित्तविभ्रान्ता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ । आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः । यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्ब्बकम् । अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः । मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः । तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम् । त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् । एतैर्विमुक्तः कौन्तेय ! तमोद्वारैस्त्रिभिर्नरः । आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् । यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् । तस्माच्छास्त्रं प्रमाणन्ते कार्य्याकार्य्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्त्तुमिहार्हसि" ।

३ असुरवत् कर्त्तव्ये विवाहभेदे पु० । स च "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः" इति विभज्य "पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन" इति निषिध्य "ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः । कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते" इति मनुना लक्षितः । ब्राह्मादिविवाहेषु प्रशस्तसन्तानरूपफलमुक्त्वा "इतरेषु च शिष्टेषु नृशंसानृतवादिनः । जायन्ते दुर्व्विवाहेषु ब्रह्मधर्म्मद्विषः सुताः" । अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा । निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत्" । "कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च" इति मनुना तस्य निन्दा कृता "आसुरो द्रविणादानात्" या० स्मृ० । आसुरादिविवाहस्तु कर्त्तव्यो ह्यग्निसाक्षिकः" इत्युक्तेः तत्राग्न्याधानं कार्य्यमेव "आसुरादिविवाहेषु पितृगामि भवेद्धनम्" स्मृतिः "अप्रजस्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि । दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्" या० स्मृ० । "शेषेष्वासुरगान्धर्व्वराक्षसपैशाचेषु भार्य्यात्वं प्राप्तायाः" इति मिता० । दायभागकृता तु तत्तद्विवाहकालेषु दत्तं धनमिति व्याख्यातम् । ४ राजसर्षपे (राइसरिषा) स्त्री राजनि० । ५ विड्लवणे न० । स्वार्थे अण् । ६ असुरे । "तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेति" छा० उ० उक्ते ७ अयजनशीले अयजनादिकर्त्तृत्वादस्यासुरत्वम् । अतएव मनुना "अयज्वनां हि यद्वित्तमासुरस्वं तदुच्यते इति" तद्द्रव्यस्यासुरधनत्वमुक्तम् । ततश्च शास्त्रानभ्यनुज्ञातविषयभोगहेतुरागप्रधाना, वैदिकनिषेधातिक्रमेण स्वभावसिद्धरागद्वेषानुसारिसर्व्वानर्थहेतुप्रवृत्तिहेतुभूता च राजसी प्रवृत्तिः आसुरी प्रकृतिः । आसुरी सम्पत्तु असुरभवहेतुभूता रजस्तमोमयी सम्पद् सा च अशुभवासनासन्ततिजन्या तल्लिङ्गं तु "दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानं चाभिजातस्य पार्थ ! । सम्पदमासुरीम्" गीतोक्तम् । "दैवी सम्पद् विमोक्षाय निबन्धायासुरी मता" गीता ८ छेदात्मकचिकित्साभेदे स्त्री शब्दच० ।

**आसुरस्व** न० ६त० । "अयज्वनान्तु यद्द्रव्यमासुरस्वं तदुच्यते" इति मनूक्ते अयाज्ञिकधने ।

**आसुरायण** पु० आसुरेरपत्यं युवा फक् । आसुरेर्युवगोत्रापत्ये स च शुक्लयजुःसम्प्रदायप्रवर्त्तक "आसुरायणाच्च यास्कादासुरायणः" शत० ब्रा० "आसुरेरुपसंख्यानम्" वार्त्ति० उक्तेः स्त्रियां ष्फे षित्त्वात् ङीष् । आसुरायणी ।

**आसुरि** पु० तत्त्वज्ञानोपदेशेन अस्यति संसारम् अस-उरच् असुरः कपिलस्तस्य छात्रः इञ् । साङ्ख्ययोगाचार्य्ये कपिलशिष्ये ऋषिभेदे । "एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ । आसुरिरपि पञ्चशिखाय तेन बहुधा कृतं तन्त्रम्" सा० का० । स एव प्रत्यहं तर्पणीयर्षिगणे पठितः । "सनकश्च सनन्दश्च तृतीयश्च सनातनः । कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथेति" तर्पणे स्मृतिः ।

गुणापत्ये ढ फक् तस्य लौक्० न लुक् । आसुरिः तत्पुत्रः आसुरायणः तत्पौत्रः स च यजुर्वेदसंप्रदायप्रवर्त्तकः आसुरायणशब्दे उदा० ।

**आसुरिवासिन्** पु० आसुरौ तत्समीपे वसति णिनि । आसुरिसुतेऽन्तेवासिनि प्राश्नीपुत्रे शुक्लयजुःसंप्रदायप्रवर्त्तके ऋषिभेदे । "प्राश्नीपुत्रात् आसुरिवासिनः प्राश्नीपुत्रः" शत०ब्रा० । [ २सम्यक्सेके च ।

**आसेक** पु०आ+सिच–घञ् । जलादिना १वृक्षादेरीषत्सेचने

**आसेक्य** पु०आसेकमर्हति यत् आ+सिच–ण्यत् वा ।"पित्रोस्त्वल्पवीर्य्यत्वादासेक्यः पुरुषो भवेत् । स शुक्रं प्राश्य लभते ध्वजोन्नतिमसंशयम्" इति वैद्यकोक्ते नपुंसकभेदे । ध्वजोन्नतये तस्य जन्मोत्तरं शुक्रसेकयोग्यत्वात् तथात्वम् ।

**आसेचन** त्रि० न सिच्यते तृप्यति मनोऽत्र आधारे ल्युट् असेचनः स्वार्थेऽण् । १यद्दर्शने मनो न तृप्यति तस्मिन् मन आनन्दविशेषहेतौ पदार्थे । स्वार्थे कन् । तत्रैव ।"नवनवनासेचनकम्"सा०द० । रायमुकुटस्तु असेचनशब्दमेवाह । आ+सिच–भावे ल्युट् । २सम्यक्सेके न० । "तस्य सर्पिरासेचनं कृत्वा" शत०ब्रा० । करणे ल्युट् । ३आसेचनसाधने पात्रे । "या पात्राणि पूर्ण्णा आसेचनानि" ऋ० १,१६२,१२ ।४ताडृशे क्षुद्रपात्रे स्त्री ङीप् ।

**आसेदिवस्** त्रि० आ+सद–क्वसु । १निकटागते २प्राप्ते च । स्त्रियां ङीप् वसोः संप्रसारणम् इटोनिवृत्तिश्च । आसेदुषी ।

**आसेद्धृ** त्रि० आ+सिध–तृच् । व्यवहारे राजाज्ञया प्रतिवादिनो गमनादिरोधकर्त्तरि वादिनि स्त्रियां ङीप् । आसेधशब्दे उदा० ।

**आसेध** पु०आ+सिध–भावे घञ् । व्यवहारे राजाज्ञया वादिना प्रतिवादिनः स्थानान्तरगमनाद्यवरोधे, तत्कालप्रकारभेदादिः मिता०नारदेनोक्तः । "वक्तव्येऽर्थे न्यतिष्ठन्तमुत्क्रामन्तञ्च तद्वचः । आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् । स्थानासेधः कालकृतः प्रवासात् कर्म्मणस्तथा । चतुर्विधःस्यादासेधो नासिद्धस्तं विलङ्घयेत् । आसेधकाल आसिद्धः आसेधं योऽतिवर्त्तते । स विनेयोऽन्यथा कुर्व्वन्नासेद्धा दण्डभाग्भवेत् । नदीसन्तारकान्तारदुर्द्देशोपप्लवादिषु । आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् । निर्वेष्टुकामोरोगार्त्तो यियक्षुर्व्यसने स्थितः । अभियुक्तस्तथान्येन राजकार्य्योद्यतस्तथा । गवां प्रचारे गोपालाः शस्यावापे कृषीवलाः । शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे" । नासेद्धव्याइति शेषः

**आसेवन** न० सम्यक् सेवनम् । १सततसेवने २पौनःपुन्ये च । "निसत्सपततावनासेवने" पा० । "आसेवनं पौनःपुन्यम्" सि०कौ० ।

**आसेवा** स्त्री आ+सेव–अ । १पौनःपुन्ये "पौनःपुन्यमासेवा" सि०कौ० । २सम्यक्सेवायाञ्च ।

**आसेवित** त्रि० आ+सेव–क्त । १सम्यक्सेविते २पौनःपुन्येन सेविते च भावे क्त । ३आसेवायां न० । ततः इष्टा०इनि । आसेवितिन् । आसेवनकर्त्तरि त्रि० स्त्रियां ङीप् ।

**आस्कन्द** पु० आ+स्कन्द–घञ् । १ उत्प्लवने २आक्रमणे ३संशोषणे ४तिरस्कारे घोटकानामास्कन्दिताख्ये ५गतिभेदे

**आस्कन्दन** न० आस्कन्द्यतेऽत्र आधारे ल्युट् । १युद्धे भावे ल्युट् । २तिरस्कारे ३आक्रमणे"चरणास्कन्दननामिताचलेन्द्रः" किरा० । ४अश्वगतिभेदे च ।

**आस्कन्दित** आ+स्कन्द–स्वार्थे णिच्–क्त आस्कन्दोजातोऽस्य तारका० इतच् वा । १अश्वानां गतिभेदे स च पञ्चविधः तल्लक्षणमुक्तं हेमचन्द्रेण । "गतयः पञ्च धाराख्यास्तुरङ्गाणां क्रमादिमाः । तत्र धौरितकं धौर्य्यं धोरणं धोरितञ्च तत् । बभ्रुकङ्कशिखिक्रोड़गतिवद् वल्गितं पुनः । अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम् । प्लुतं तु लङ्घनं पक्षिमृगयोरनुकारकम् । उत्तेजितं तेरितं स्यात् मध्यवेगेन या गतिः । उत्तेरितमुपकण्ठमास्कन्दितमित्यपि । चतुर्भिश्च पदैः कोपादिव उत्प्लुत्य या गतिः" । संज्ञायां स्वार्थे वा कन् । तत्रैव । तार० इतच् । २आस्कन्दनयुक्तमात्रे त्रि० ।

**आस्क्र** त्रि० आ+क्रम–ड वेदे नि०सुट् । आक्रामके "आनो विश्वा आस्क्रा गमन्तु देवाः" ऋ०१,१८६,२ ।"आस्क्राः शत्रूणामाक्रमितारः" भाष्यम् ।

**आस्त** त्रि० आ+अस+विक्षेपे क्त । सम्यक्क्षिप्ते ।

**आस्तर** पु० आ+स्तृ–कर्म्मणि अप् । १हस्तिपृष्ठस्थकम्बले (झूल) इति ख्याते । २विस्तरणीये कटादौ "वासो वल्कलमास्तरः किसलयः" शा०य० । भावे अप् । ३विस्तारे

**आस्तरण** न० आस्तीर्य्यते कर्म्मणि ल्युट् । १आस्तीर्य्यमाणे कटादौ "दिवास्तरणसंकोचं विक्षोभं गमनोत्तमे" ।"दर्भास्तरणमास्तीर्य्य" भा० प० २५० अ० । २आस्तरणपश्चात् स्त्री ङीप् । भावे ल्युट् । ३विस्तारे ।"निवेशनं पुनर्नवीकृत्य शेयनास्तरणोपस्तरणैः" आश्व०स्०० । आस्तरणे दीयते कार्य्यं वा व्युष्टा०अण् । ४आस्तरणे दीयमाने ५तत्र कार्य्ये च त्रि० ।

आस्तरणिक त्रि० आस्तरणं प्रयोजनमस्य ठक्। आस्तरणसाधने वस्त्रादौ ।"अथास्तरणिकं सर्व्वं हस्त्यश्वं समवेशयन्" रामा० । तस्येदम् इत्यर्थे छ । आस्तरणीय आस्तरण सम्बन्धिनि त्रि० ।

आस्तायन त्रि० अस्तीत्यव्ययम् अस्ति+विद्यमानस्य सन्निकृष्टदेशादि पक्षा० फक् । विद्यमानसन्निकृष्टदेशादौ । [च

आस्तार पु० आस्तीर्य्यते आ+स्तॄ—घञ् । १विस्तार्य्ये २विस्तारे

आस्तारपङ्क्ति स्त्री कर्म०। वैदिके छन्दोभेदे सा च सर्व्वानु० कात्या० दर्शिता यथा "पञ्चमं पङ्क्तिः पञ्चपदा । अथ चतुष्पदाद्या विराट् दशका । अयुजौ जागतौ ततोऽष्टकौयुजौ तद्विपरीताद्यौ चेत् प्रस्तारपङ्क्तिरन्त्यौ चेदास्तारपङ्क्तिराद्यन्त्यौ चेत् संस्तारपङ्क्तिर्मध्यमौ चेद्विष्टारपङ्क्तिः" ।

आस्ताव पु० आस्तुवन्त्यत्र आ+स्तु+आधारे घञ् । यज्ञे स्तोतॄणां १स्तवनाधारे देशे । "तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश" छा०उ० । "उद्गातॄन् उद्गातृपुरुषान् आगत्य आस्तुवन्त्यस्मिन्निति आस्तावस्तस्मिन्नास्तावे" भा० । "उदङ्ङ्गोगत्वाऽऽस्तावचात्वालशामित्रान् उदङ्मुखोनभोऽसंस्पृष्टः" द्राह्यायणः । "उदङ्मुखाक्रान्तः ततः आस्तावदेशं चात्वालं शामित्रं च स्रुच्यादिभिर्मन्त्रैर्यथाक्रममुपतिष्ठेरन्" ताण्ड्यब्रा० भा० । "बहिर्वेद्यास्तावे वा स्थापयेयुः" आश्व० श्रौ० । भावे घञ् । २सम्यक्स्तवे ।

आस्तिक त्रि० अस्ति परलोक इति मतिर्यस्य ठक् । १परलोकास्तित्ववादिनि "आस्तीत्युक्ता गतो यस्मादास्तिकस्तेन कथ्यते" इति निरुक्तसंज्ञके जरत्कारुमुनिसुते २मुनिभेदे आस्तिकोत्पत्तिकथा आस्तीकशब्दे वक्ष्यते । "आस्तिकस्य मुनेर्माता भगिनी वासुकेस्तथा जरत्कारुमुनेः पत्नी मनसादेवि ते नमः" मनसाप्रणाममन्त्रः ।

आस्तिकार्थद पु० आस्तिकायार्थं ददाति दा—क । जनमेजये राजनि शब्दच० ।

आस्तिक्य न० आस्तिकस्य भावः ष्यञ् । आस्तिकत्वे परलोकाद्युपगन्तृत्वे "माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयार्ज्जवम् । विद्वद्भिः कथ्यते लोके पुराणैः कविसत्तमैः । भा०आ० १अ० । "आवितैः करणैः पूर्व्वमास्तिक्यात् कृति दर्शनात्" भा०व० ८५अ० । "आस्तिक्यशुद्धमवतः प्रियधर्म्म धर्म्मम्" किरा० ।

आस्तीक पु० वासुकिभगिन्यां जरत्कारुनाम्न्यां जरत्कारुमुनेःसुते मुनिभेदे तदुत्पत्तिकथा यथा ।

"तत्र तां भैक्षवत्कन्यां प्रादात्तस्मै महात्मने । नागेन्द्रो वासुकिर्ब्रह्मन् स तां प्रत्यग्रहीत । अस्वनामेति वै मत्वा भरणे चाविचारिते । मोक्षभावे स्थितश्चापि द्वन्द्वभूतः परिग्रहे । ततो नाम स कन्यायाः पप्रच्छ भृगुनन्दन ! । वासुकिं भरणं चास्या न कुर्य्यामित्युवाच ह । भा० आ० ४६अ० । "सौतिरुवाच । वासुकिस्त्वब्रवीद्वाक्यं जरत्कारुमृषिं तदा । सनाम्नी तव कन्येयं स्वसा मे तपसाऽन्विता । भरिष्यामि च ते भार्य्यां प्रतीच्छेमां द्विजोत्तम । रक्षणञ्च करिष्येऽस्याः सर्व्वशक्त्या तपोधन ! । त्वदर्थं रक्ष्यते चैषा मया मुनिवरोत्तम ! । ऋषिरुवाच । न भरिष्येऽहमेतां वै एष वै समयः कृतः । अप्रियञ्च न कर्त्तव्यं कृते चैनां त्यजाम्यहम् । सौतिरुवाच । प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति । जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह" इत्युपक्रम्य । "उत्सङ्गेऽस्याः शिरः कृत्वा सुष्वाप परिखिन्नवत् । तस्मिंश्च सुप्ते विप्रेन्द्रे सवितास्तमियाद्गिरिम् । अह्नः परिक्षये ब्रह्मंस्ततः साऽचिन्तयत्तदा । वासुकेर्भगिनी भीता धर्म्मलोपान्मनस्विनी । किन्नु मे सुकृतं भूयाद्भर्त्तुरुत्थापनं न वा । दुःखशीलो हि धर्म्मात्मा कथं नास्यापराध्नुयाम् । कोपो वा धर्म्मशीलस्य धर्म्मलोपोऽथवा पुनः । धर्म्मलोपो गरीयान्वै स्यादित्यत्राकरोन्मतिम् । उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति । धर्म्मलोपो भवेदस्य सन्ध्याऽतिक्रमणे ध्रुवम् । इति निश्चित्य मनसा जरत्कारुर्भुजङ्गमा । तमृषिं दीप्ततपसं शयानमनलोपमम् । उवाचेदं वचः श्लक्ष्णं ततो मधुरभाषिणी । उत्तिष्ठ त्वं महाभाग ! सूर्य्योऽस्तमुपगच्छति । सन्ध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रत ! । प्रादुष्कृताग्निहोत्रोऽयं मुहूर्त्तो रम्यदारुणः । सन्ध्या प्रवर्त्तते चेयं पश्चिमायां दिशि प्रभो ! । एवमुक्तः स भगवान् जरत्कारुर्महातपाः । भार्य्यां प्रस्फुरमाणोष्ठ इदं वचनमब्रवीत् । अवमानः प्रयुक्तोऽयं त्वया मम भुजङ्गमे ! । समीपे ते न वत्स्यामि गमिष्यामि यथागतम् । शक्तिरस्ति न वामोरु ! मयि सुप्ते विभावसोः । अस्तं गन्तुं यथाकालमिति मे हृदि वर्त्तते । न चाप्यवमतस्येह वासो रोचेत कस्यचित् । किं पुनर्धर्म्मशीलस्य मम वा मद्विधस्य वा । एवमुक्ता जरत्कारुर्भर्त्रा हृदयकम्पनम् । अब्रवीद्भगिनी तत्र वासुकेः सन्निवेशने । नावमानात्कृतवती तवाहं विप्रबोधनम् । धर्म्मलोपो न ते विप्र ! स्यादित्येतन्मया कृतम् । उवाच भार्य्यामित्युक्तो जरत्कारुर्महातपाः ।

ऋषिः कोपसमाविष्टस्त्यक्तुकामो भुजङ्गमाम् । न मे वागनृतं प्राह गमिष्येऽहं भुजङ्गमे ! । समयो ह्येष मे पूर्व्वं त्वया सह मिथः कृतः । सुखमस्म्युषितो भद्रे ! ब्रूयास्त्वं भ्रातरं शुभे ! । इतो मयि गते भीरु ! गतः स भगवानिति । त्वं चापि मयि निष्क्रान्ते न शोकं कर्त्तुमर्हसि । इत्युक्ता साऽनवद्याङ्गी प्रत्युवाच मुनिं तदा । जरत्कारुं जरत्कारुश्चिन्ताशोकपरायणा । वाष्पगद्गदया वाचा मुखेन परिशुष्यता । कृताञ्जलिर्वरारोहा पर्य्यश्रुनयना ततः । धैर्य्यमालम्ब्य वामोरूर्हृदयेन प्रवेपता । न मामर्हसि धर्म्मज्ञ ! परित्यक्तुमनागसम् । धर्म्मे स्थितां स्थितो धर्म्मे सदा प्रियहिते रताम् । प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम ! । तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः । मातृशापाभिभूतानां ज्ञातीनां मम सत्तम ! । अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते । त्वत्तो ह्यपत्यलाभेन ज्ञातीनां मे शिवं भवेत् । संप्रयोगो भवेन्नायं मम मोघस्त्वया द्विज ! । ज्ञातीनां हितमिच्छन्ती भगवंस्त्वां प्रसादये । इममव्यक्तरूपं मे गर्भमाधाय सत्तम ! । कथं त्यक्त्वा महात्मा सन् गन्तुमिच्छस्यनागसम् । एवमुक्तस्तु स मुनिर्भार्य्यां वचनमब्रवीत् । यदुक्तमनुरूपञ्च जरत्कारुं तपोधनः । अस्त्ययं सुभगे ! गर्भस्तव वैश्वानरोपमः । ऋषिः परमधर्म्मात्मा वेदवेदाङ्गपारगः । एवमुक्त्वा स धर्म्मात्मा जरत्कारुर्महानृषिः । उग्राय तपसे भूयो जगाम कृतनिश्चयः" । "ततः प्रववृधे गर्भो महातेजा महाप्रभः । यथा सोमो द्विजश्रेष्ठ ! शुक्लपक्षोदितो दिवि । अथ काले तु सा ब्रह्मन् ! प्रजज्ञे भुजगस्वसा । कुमारं देवगर्भाभं पितृमातृभयापहम् । ववृधे स तु तत्रैव नागराजनिवेशने । वेदांश्चाधिजगे साङ्गान् भार्गवाच्च्यवनान्मुनेः । चीर्णव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः । नाम चास्याभवत् ख्यातं लोकेष्वास्तीक इत्युत । अस्तीत्युक्त्वा गतो यस्मात्पिता गर्भस्थमेव तम् । वनं तस्मादिदं तस्य नामास्तीकेति विश्रुतम्" । भा॰आ॰ ४७अ॰ "यो जरत्कारुणा जातो जरत्कारौ महायशाः । आस्तीकः सर्पसत्रे वः पन्नगान् योऽभ्यरक्षत । तं स्मरन्तं महाभागा ! न मां हिंसितुमर्हथ । सर्पापसर्प भद्रं ते गच्छ सर्प ! महाविष ! । जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर । आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्त्तते । शतधा भिद्यते मूर्द्ध्नि शिंशवृक्षफलं यथा" तत्रैव । "आस्तीकस्य कवेः साधोः शुश्रूषापरमात्मनः" भा॰ आ॰१५अ॰ आस्तीकमधिकृत्य कृतो ग्रन्थः अण् । २आस्तीकचरिताख्यापके भारतान्तर्गते अवान्तरपर्व्वभेदे । "पौष्यं पौलोममास्तीकमादिवंशावतारणम्" भा॰ आ॰१अ॰ । "आयुष्मानिदमाख्यानमास्तीकं कथयामि ते" भा॰आ॰ १५अ॰। आस्तीके भोजयेद्राजन् ! दद्याच्चैव गुडौदनम्" भा॰स्वर्गा॰प॰६अ॰ । [जरत्कारुमुनिपत्न्याम् ।

**आस्तीकजननी** स्त्री ६त॰ । मनसादेव्यां वासुकिभगिन्यां

**आस्तीर्ण** त्रि॰ आ+स्तॄ—क्त । विस्तीर्णे कृतप्रसारणे "आस्तीर्णतल्परचितावसथः क्षणेन" माघः । "आस्तीर्णाजिनरत्नासु" रघुः ।

**आस्तृत** त्रि॰ आ+स्तृ—क्त । विस्तीर्णे

**आस्तेय** स्त्री अस्तीत्यव्ययं तत्र विद्यमाने भवः "दृतिकुक्ष्यादि॰" पा॰ ढक् । विद्यमानपदार्थभवे ।

**आस्त्र** त्रि॰ अस्त्रस्येदम् अण् । अस्त्रसम्बन्धिनि । "त्वं त्यमिन्द्रत्यमास्त्रबुध्नाय वेन्यम्" ऋ॰ १०,१७१,२ । "आस्त्रबुध्नाय अस्त्रसम्बन्धिसुखतुल्यमूलाय" भा॰ ।

**आस्था** स्त्री आ+स्था—अङ् । १आलम्बने, २अपेक्षायां, ३श्रद्धायां, ४स्थितौ, ५यत्ने ६आदरे च "अनास्थया सूनकरप्रसारिणीम्" नैष॰ । "स्त्री पुमानित्यनास्थैषा" "अनास्था बाह्यवस्तुषु" इति च कुमा॰ । "मर्त्त्येष्वास्थापराङ्मुखः" "पिण्डेष्वनास्था खलु भौतिकेषु" रघुः । "कास्थाभकेऽस्मिन् तव राम ! रामे" भट्टिः । आधारे अङ् । ७सभायाम् आस्थाने ।

**आस्थान** न॰ आस्थीयतेऽत्र आ+स्था आधारे ल्युट् । १सभायाम् "तदीयमास्थाननिकेतनाजिरम्" किरा॰ "राजानमास्थानमण्डपगतम्" काद॰ । २विश्रामस्थाने । आस्थानीत्यपि सभायाम् । टित्त्वात् ङीप् । आस्थानीधूर्त्तः सभाधूर्त्तः । भावे ल्युट् । ३आस्थायां ४यत्नायाञ्च न॰।

**आस्थापन** न॰ आ+स्था—णिच्—पुक् ल्युट् । १सम्यक्स्थापने । करणे ल्युट् । २सुश्रुतोक्ते व्रणोपक्रमणीयवस्तिभेदे च । "द्विविधो वस्तिः नैरूहिकः स्नैहिकश्च । आस्थापनं निरूह इत्यनर्थान्तरम् । "सदोषनिर्हरणात् शरीररोगहरणाद्वा निरूहः वयःस्थापनादायुःस्थापनाद्वास्थापनम्"

**आस्थापित** त्रि॰ आ+स्था+णिच्—पुक् क्त । सम्यक् स्थापिते आचितादिपाठात् अन्तोदात्तता न ।

**आस्थायिका** स्त्री आ+स्था-धात्वर्थनिर्द्देशे ण्वुल् स्त्रीत्वात् टापि अत इत्त्वम् । १आस्थाने आस्थितौ । "जनकोह वैदेह आसाञ्चक्रे वृ॰उ॰भाष्ये "आसाञ्चक्रे आस्थायिकां दत्त-

वानितिव्युत्क्रमः कर्त्तरि ण्वुल् । आस्थापकः २आस्थान-कर्त्तरि त्रि०। स्त्रियां टाप् अत इत्त्वम् ।

**आस्थित** त्रि० आ+स्था–क्त । १अवस्थाने २प्राप्ते ३आरूढे "एकं स्यन्दनमास्थितौ" रघुः । ४आश्रिते च ।

**आस्थिति** आ+स्था–क्तिन् ।१कृतास्थायां २तात्पर्य्येण वर्त्तने च ।

**आस्थेय** त्रि०आ+स्था–कर्म्मणि यत् । अवलम्ब्ये । "नह्येषा बुद्धि रास्थेया" रामा०।"यत्नान्तरमास्थेयम्" काशिका ।

**आस्नात** त्रि० आ+स्ना–कर्त्तरि क्त । कृतस्नाने कृतावगाहने

**आस्नान** त्रि० आ+स्ना-भावे ल्युट् । प्रक्षालनेन शुद्धौ । "आस्नाने तां नि दध्मसि" अथ०१४,२,६५। [आस्नभवे ।

**आस्नेय** त्रि० आस्ने भवः ढक् आसन्नादेशः अतोलोपः ।

**आस्पद** न०आ+पद–घ सुट् च । १प्रतिष्ठायाम्,२पदे,३स्थाने, "ध्यानास्पदं भूतपतेर्विवेश" स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे"सरागमस्या रशनागुणास्पदम्" इति च कुमा० । "तदास्पदं श्रीर्युवराजसंज्ञितम्" । रघुः"व्योम्नीव भ्रुकुटीच्छलेन वदने केतुश्चकारास्पदम्"माघः ४कृत्ये,५प्रभुत्वे च ६अवलम्बने ७विषये च । "निधनता सर्व्वापदामास्पदम्" किरा० । "तस्मात् केवलप्रकृतास्पदा तवप्र योगितेति" माघस्य ५,२१व्या०मल्लि०। ८अवस्थाने "उपगच्छत्यास्पदञ्चैव" मनुः । ९लग्नावधिदशमस्थाने । "कर्म्मस्थानञ्च दशमं मेषूरणमास्पदं चञ्च" ज्योतिषम् ।

**आस्पन्दन** न० आ+स्पन्द–ल्युट्। १ईषत्कम्पने ईषच्चलने

**आस्पात्र** न० आस्यरूपं पात्रं ष०। आस्यरूपे पात्रे "आस्पात्रं जुहूर्देवानामिति" शत०ब्रा०१,४,२,१२।"आस्यरूपं पात्रम्आस्पात्रम्" भा० ।

**आस्फाल** पु० आ+स्फल–चाले णिच्–अच् स्फुल+घञ् स्फालादेशः वा । १चालने २कर्णाकर्षचालने हारा०

**आस्फालन** न० आ+स्फल–चाले–णिच्–ल्युट् । १ताडने २चालने च।"ऐरावतास्फालनकर्कशेन"कुमा०सुरद्विपास्फालनकर्कशाङ्गुलौ" "ऐरावतास्फालनविश्लथं यः""आसां जलास्फालनतत्पराणाम्" रघुः । "अनवरतधनुर्ज्यास्फालनेति" शकु० । "एलालतास्फालनलब्धगन्धः" माघः । ३आटोपे ४गामलभ्ये च ।

**आस्फालित** त्रि०आ+स्फल+णिच्-क्त । १चालिते २आघट्टिते ३ताड़िते च।"अजस्रमास्फालितवल्लकीगुणः"माघे पाठान्तरम्

**आस्फुजित्** पु०अस्फु जति आ+स्फुज–बा०ड तं जयति जि–क्विप् । शुक्राचार्य्ये । "शुक्रोभृगुर्भृगुसुतः सित आस्फुजिच्च"ज्यो०त०

**आस्फोट** पु० आ+स्फुट–णिच्–कर्त्तरि अच् । १अर्कवृक्षे शब्दरत्ना० २नवमल्लिकायां स्त्री। ३भुजादेर्वाद्यशब्दे (ताल् ठोका ) ४संघर्षजातशब्दमात्रे "बाहूनास्फोटशब्दाश्च चालितः स महागिरिः भा०व० १२अ० ।

**आस्फोटक** पु० आ+स्फुट–णिच्–ण्वुल् । ( आखरोट ) १प्रसिद्धे पर्व्वतपीलुभेदे २वाद्यशब्दकारके त्रि० ।

**आस्फोटन** न० आ+स्फुट–णिच्–भावे ल्युट् । १प्रकाशने २बाह्वादेः शब्दकरणे "आस्फोटननिनादांश्च बालानां खेलतां तथा" रामा० । ३शूर्पादिना धान्यादेस्तुषादिनिरसने ( आचड़ान ) व्यापारे च । "कुञ्चनास्फोटनाध्मानवेपथुव्यथनैः" सुश्रु० ।

**आस्फोटनी** स्त्री आस्फोट्यते विदार्य्यतेऽनया आ+स्फुट–णिच्–करणे ल्युट् स्त्रीत्वात् ङीप् । ( तुरपिन ) वेधनास्त्रे ।

**आस्फोटित** न० आ+स्फुट–णिच्–भावे क्त । बाह्वादेः शब्दे २प्रकाशने च । कर्म्मणि क्त । विदलिते त्रि० ।

**आस्फोत** पु० आ+स्फुट–अच् पृषो० टस्य तत्वम् । १अर्कवृक्षे २कोविदारवृक्षे, ३पलाशवृक्षे च "आस्फोतजातिकरवीरपत्रैः" सुश्रु० । स्वार्थे कन् । आस्फोतकोऽर्कवृक्षे।

**आस्फोता** स्त्री आ+स्फुट–अच् पृषो० । १अपराजितायां, सा च द्विविधा श्वेतपुष्पी नीलपुष्पी च तयोर्गुणपर्य्यायौ भावप्र० "आस्फोता गिरिकर्णी च विष्णुक्रान्ताऽपराजिता । अपराजिते कटुके शीते कण्ठ्ये सुदृष्टिके । कुष्ठगूल्मविदोषामशोथज्वरविषापहे । कषाये कटुपाके च सुतिक्ते स्मृतिबुद्धिदे । २सारिवायाम् ( हापरमाली ) लताभेदे च ।

**आस्माक** त्रि० अस्माकमिदम् अस्मद्+इदमर्थेऽण् अस्माकादेशः । अस्मत्सम्बन्धिनि । स्त्रियां ङीप् । "रामादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य" सा० द० । [ सम्बन्धिनि ।

**आस्माकीन** त्रि०अस्माकमिदम् खञ् अस्माकादेशः । अस्मत्-

**आस्य** न० अस्यते ग्रासोऽत्र+अस–आधारे ण्यत् । १मुखे "तदास्यदास्येऽपि गतोऽधिकारिताम्" नैष० । "तं हि स्वयंभूः स्वादास्यात्" यस्यास्येन सदाश्नन्ति" "प्राच्यास्योहि द्विजः स्मृतः" "नित्यमास्यं शुचि स्त्रीणाम्" इति च मनुः । २तन्मध्ये च । यथादौ तद्धितयाजादौ अस्य स्थाने वा आसन्नादेशः । तदादेशपक्षे आस्ये भवः आसन्यः यथा च अस्यैव आसन्नादेशस्थानिता तथासनशब्दे ८८६ पृष्ठे उक्ता । आस्ये भवः यति वा नासन्नादेशः यलोपः ।

३मुखभवे त्रि० । "तुल्यास्यप्रयत्नम्" पा० "आस्ये भवमास्यं ताल्वादिस्थानम्" सि०कौ० ।

**आस्यन्दन** आ+स्यन्द–भावे ल्युट् । ईषत्क्षरणे ।

**आस्यन्धय** त्रि० आस्यं धयति–धे–ख–मुम्–उप०स० । मुग्ध० । सुखाद्धृतास्वादके मुखचुम्बके ।

**आस्यपत्र** न० आस्यमेव पत्रमस्य । १पद्मे शब्दचन्द्रिका ।

**आस्यलाङ्गल** पु० आस्यं लाङ्गलमिव भूमिविदारकं यस्य । शूकरे । [ (दाड़ि) ।

**आस्यलोमन्** न० आस्यभवं लोम । पुरुषमुखजाते लोम्नि

**आस्यहाल्य** त्रि० असिनाऽऽस्याऽऽहननम् ततः अस्त्यर्थे विमुक्तादि० अण् । अनुपतिका० द्विपदवृद्धिः । खड्गेन हननन्मुख्ये ।

**आस्या** स्त्री आस–भावे क्यप् । १स्थितौ, गतिराहित्ये । "आस्या वर्णकरी स्थौल्यशौकुमार्य्यकरी शुभा" सुश्रु० ।

**आस्यासव** पु० आस्यस्थासव इव । ( लाल ) इति ख्यातायाम् लालायाम् ।

**आस्र** न० अस्रमेव स्वार्थेऽण् । रुधिरे । ततः सुखादि०अस्त्यर्थे इनि । आस्री रुधिरयुक्ते त्रि० स्त्रियां ङीप् ।

**आस्रप** पु० आस्रं रुधिरं पिबति पा–क उप०स० । १राक्षसे तद्देवताके २मूलनक्षत्रे च ।

**आस्रव** पु०आस्रवति मनोऽनेन करणे अप् ।१क्लेशे । कर्त्तरि अच् । २आर्हन्मतसिद्धे पदार्थभेदे । अर्हच्छब्दे ३८४पृष्ठे विवृतिः ।

**आस्राव** पु० आस्रवति रुधिरमस्मात् आ+स्रु–अपादाने घञ् । १क्षते "जातएव तवास्रावस्तन्तु मोक्षाय बुध्यसे" भा०उ०५७अ० । भावे घञ् । २सम्यक्क्षरणे कर्त्तरि ण । सम्यक्क्षरणयुक्ते त्रि० । आस्रवति आ+स्रु–ण । मुखलालायाम्" "च्युतेरास्राववत् विद्यात् शिशिरत्वेव तत् शुचिः" आ०त०गोत० "आस्रावोलाला" रघु० ।

**आस्राविन्** त्रि० आ+स्रु–णिनि । मदादिक्षरणशीले ।"सद्यामजदास्रावी प्रभञ्जन् विविधान् द्रुमान्" भा०व०प०१४६ । आस्रावयुक्ते च "दुष्टशोणितास्रावो दीर्घकालानुबन्धी चेति दुष्टव्रणलिङ्गानि" सुश्रु० ।

**आस्वनित** आ+स्वन–क्त पक्षे इट् । शब्दिते ।

**आस्वाद** पु० आ+स्वद–कर्म्मणि घञ् । १मधुरादिरसे २शृङ्गारादिरसे च । भावे घञ् । ३रसानुभवे । "मध्वापातोविषास्वादः, मनुः "न जायते तदास्वादो विना रत्यादिवासनाम् । "तदास्वादे विभावादेः परिच्छेदो न विद्यते" सा०द० "चूताङ्कुरास्वादकषायकण्ठः" कुमा० । आस्वादश्च माधुर्य्यादिरसानुभवहेतुव्यापारभेदः स च लोके चर्व्वणादिः शृङ्गारादिरसास्वादे अन्यविधएव व्यापारः यथाह सा०द० । "न जायते तदास्वादोविना रत्यादिवासनाम् । वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः तत्र यदि आद्या न स्यात् श्रोत्रियजरन्मीमांसकादीनामपि सा स्यात् यदि द्वितीया न स्यात् रागिणामपि केषाञ्चिद्रसोद्बोधोन दृश्यते तन्न स्यात् उक्तञ्च धर्म्मदत्तेन "सवासनानां सभ्यानां रसस्यास्वादनं भवेत् । निर्व्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः" इति । ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकरत्याद्युद्बोधइत्युच्यते । व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः । तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः । सभ्यानां तदभेदेन स्वात्मानं प्रतिपद्यते । ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोधइत्युच्यते । उत्साहादिसमुद्बोधः साधारण्याभिमानतः । नृणामपि समुद्रादिलङ्घनादौ न दुष्यति । रत्यादयोऽपि साधारण्येन प्रतीयन्ते इत्याह । साधारण्येन रत्यादिरपि तद्वत् प्रतीयते । रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत् परगतत्वेन त्वरस्यतापातः । विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्ते इत्याह । परस्य न परस्येति ममेति न ममेति च । तदास्वादे विभावादेः परिच्छेदोन विद्यते । ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादीनामित्युच्यते । विभावनादिव्यापारमलौकिकमुपेयुषाम् । अलौकिकत्वमेतेषां भूषणं न तु दूषणम् । आदिशब्दादनुभावनसञ्चारणे । तत्र विभावनं रत्यादेर्विशेषेण आस्वादाङ्कुरणयोग्यतानयनम् । अनुभावनमेवंभूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम् । सञ्चारणं तथाभूतस्यैतस्य सम्यक्चारणम् । विभावादीनां यथासंख्यं कारणकार्य्यसहकारित्वे कथं त्रयाणामपि रसोद्बोधे कारणत्वमित्युच्यते कारणकार्य्यसञ्चारिरूपा अपि हि लोकतः । रसोद्बोधे विभावाद्याः कारणान्येव ते मताः । ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभासइत्युच्यते । प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते । ततः संवलितः सर्व्वोविभावादिः सचेतसाम् । प्रपानकरसन्यायाच्चर्व्व्यमाणोरसोभवेत् । यथा खण्डमरिचादीनां संमेलनादपूर्व्व इव कश्चिदास्वादः प्रपानकरसे संजायते विभावादिसंमेलनादिहापि तथेत्यर्थः" "ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः" मेघदू० ल्युट् । आस्वादनमप्यत्र न० उक्त सा०द०वाक्ये उदा० ।

**आस्वादक** न॰ आ+स्वद–ण्वुल्। आस्वादनकर्त्तरि “दर्शयन् नर्त्तकोनैव रसस्यास्वादको भवेत्” सा॰द॰।

**आस्वादित** त्रि॰ आ+स्वद–णिच्–क्त। कृतास्वादे भक्षिते पदार्थे “आस्वादितार्द्रक्रमुकाः समुद्रात्” माघः।

**आस्वाद्य** त्रि॰ आ+स्वद–णिच्–यत्। १आस्वादयोग्ये पदार्थे “घ्राणेन न तदाघ्रेयं नास्वाद्यञ्चैव जिह्वया” भा॰आ॰प॰ २०अ॰। “आस्वाद्यतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः” हितो॰। आ+स्वद+णिच्–ल्यप्। २भक्षयित्वेत्यर्थे अव्य॰।

**आस्वान्त** त्रि॰ आ+स्वन–इडभावे दीर्घः। शब्दिते।

**आह** अव्य॰ ब्रू अच् णि॰ आहादेशः उवाचेत्यर्थे तिपोणलि ब्रुवादेशस्तु वर्त्तमानकथनवाची एतस्माद्भिन्नः तच्च क्रियापदम् अयन्तु क्रियाप्रतिरूपकमव्ययम्। “अथाह वर्णी विदितो महेश्वरः” कुमा॰।

**आहक** पु॰ आहन्ति आ+हन–ड संज्ञायां कन्। वैद्यकोक्ते ज्वरभेदे (नासाज्वर) “तनुना रक्तयोगेन युक्ता नासापुटान्तरे। गात्रस्थूलज्वरकरः स प्रथा आहकोज्वरः” वै॰।

**आहत** त्रि॰ आ+हन–क्त। १ताड़िते, “आह्लादिकह्लारसमीरणाहते” “नयनयुगनिमोलच्छावदेवाहतोऽसौ” माघः। २अभ्याहतोऽहमित्यादौ मृषार्थके वाक्ये न॰। ३ढक्कायाम् पु॰। “ईषद्धौतं नवं शुभ्रं सदशं यन्न धारितम्। आहतं तद्विजानीयात् सर्वकर्म्मसु पावनम्” वसिष्ठोक्तलक्षणे ४वस्त्रे न॰। “आहतेन वसनेन तां परिदध्यात्” गोभि॰। “आच्छादनं तु योदद्यादाहतं श्राद्धकर्म्मणि” वायु॰पु॰। “परिधायाहते शुक्ले वाससी क्षेमकुण्डले” कन्दो॰ ५पुराणवस्त्रे न॰ तस्य उपभोगेन मर्दितप्रायत्वात्तथात्वम्। ६आघातप्राप्ते ७मर्दिते त्रि॰ “पादाहतं यदुत्थाय मूर्द्धानमधिरोहति” माघः। ८आघूर्णिते। ९अभ्यस्ते १०गुणिते च त्रि॰ “सूर्य्याब्धिसंख्यया द्वित्रिसागरैरयुताहतैः” सू॰सि॰।

**आहतलक्षण** पु॰ आहतमभ्यस्तं लक्षणं यस्य। गुणैः प्रसिद्धे अमरः प्रसिद्धगुणानां हि सर्वैर्द्योतत्वेन परिचिततयाभ्यस्तगुणत्वात् तथात्वम्।

**आहति** स्त्री आ+हन–क्तिन्। शब्दहेतुसंयोगभेदे १आघाते २ताड़ने “प्रभातवाताहतिकम्पिताकृतिः” भट्टिः ३आगमने अत्र श्लोके पक्षे आहतिरागतिरित्यर्थः ४गुणने “कंसाहतिस्त्वेदवधेन भक्ता” लीला॰। ५मर्द्दने च।

**आहनन** आ+हन–करणे ल्युट्। १ताडनसाधने दण्डादौ। तत्र भवः यत्। आहनन्यः। आहननदण्डादिभवे “नमो दुन्दुभ्याय चाहनन्याय च” यजु॰ १६,३५। “आहन्यते वाद्यतेऽनेनाहननं वाद्यसाधनं दण्डादि तत्र भवस्तस्मै” वेददी॰। भावे ल्युट्। २आहतिशब्दार्थे।

**आहनस्** त्रि॰ आ+हन–असुन्। १आहननीये २निष्पीड्ये सोमादौ। “तदाहना अभवत् पिप्युषी” ऋ॰ २,२३,१। आहनाः आहननीयः सोमादिः” भा॰ आहनसि साधु यत्। “आहनस्यं तत्साधने त्रि॰। “आहनस्याद्वै रेतः सिच्यते” ऐत॰ब्रा॰।

**आहर** त्रि॰ आहरति आ+हृ–अच्। सङ्ग्रहकारके “वनान्तरादुपावृत्तैः समित्कुशफलाहरैः” रघुः। टचि तु कर्म्मोपपदएव साधुरिति भेदः।

**आहरकरटा** स्त्री आहर करट! इत्युच्यते यस्यां क्रियायां मयू॰। करटं प्रति आहरणार्थायां निदेशक्रियायाम्

**आहरचेटा** स्त्री अहर चेट! इत्युच्यते यस्यां क्रियायाम् मयू॰। चेटं प्रति आहरणार्थनिदेशक्रियायाम्।

**आहरण** न॰ आ+हृ–भावे ल्युट्। स्थानात् स्थानान्तरप्रापणे १आनयने। “मृदाहरणसंघट्टौ प्रतिष्ठाज्ञानमेव च”। देवीपु॰ “करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्” सां॰का॰ “समिदाहरणाय प्रस्थिता वयम्” शकु॰ २आयोजने अनुष्ठाने च “अश्वमेधस्य कौरव्य! चकाराहरणे मतिम्” भा॰ आश्व॰ ७३अ॰। कर्म्मणि ल्युट्। ३आहृत्य समाप्ये पदार्थे ४विवाहादौ उपढौकनद्रव्ये “स्वस्यानुरूपाहरणीकृतश्रीः” रघुः।

**आहरणीय** त्रि॰ आ+हृ–अनीयर्। १आयोजनीये २आन- [ यणीये ३उपढौकनीये च।

**आहरनिवपा** स्त्री आहर निवप इत्युच्यते यस्यां क्रियायाम् मयू॰। आहरणनिवापार्थनिदेशक्रियायाम्।

**आहरनिष्किरा** स्त्री आहर निष्किर इत्युच्यते यस्यां क्रियायाम् मयू॰। आहरणनिष्किरणनियोगक्रियायाम्। एवमाहरवितना आहरवसना आहरसेना इत्यादयोऽपि मयू॰ पठिताः तत्तत्कर्म्मार्थ नियोगक्रियायाम्।

**आहर्त्तृ** त्रि॰ आ+हृ–तृच् स्त्रियां ङीप्। १अर्ज्जके। “आहर्त्ता मोक्षयेत् भुक्तिमागमस्यापि संसदि” दक्ष॰ २आयोजके “आहर्त्ता तस्य सत्रस्य त्वत्तोऽन्योऽस्ति नराधिप!” भा॰आ॰ ५अ॰ ३आनेतरि “आहर्त्ता सर्वरत्नानां सर्वेषां न सुखावहः” भा॰व॰१४अ॰। ४अनुष्ठातरि “आहर्त्ता क्रतूनाम्” काद॰ योगार्थे तृणि तु कर्म्मणि न षष्ठी। “आक्रतो वधमाहर्त्ता कासौ विहगतस्कर” विक्रमो॰।

**आहव** न० आहूयन्तेऽरयोऽत्र आ+ह्वे—अप् संप्रसारणे गुणः । १युद्धे । "एवं विधेनाहवचेष्टितेन" रघुः "प्राविशदाहवमत्ता आहावमुपलिम्पवः" भट्टिः "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे" गीता । "उद्यतैराहवे शस्त्रैः क्षत्रधर्म्महतस्य च" "डिम्बाहवहतानाञ्च विद्युता पार्थिवेन च" इति च मनुः । आहूयतेऽत्र आ+ह्व—आधारे अप् । २यज्ञे "तत्र नाभवदसौ महाहवे" माघः 'आहवोयागः' मल्लि० ।

**आहवन** न० आहूयतेऽस्मिन् आधारे ल्युट् । १यज्ञे "द्रुतमाहवनमयजन्मनाम्" माघः । भावे ल्युट् । २समन्ताद्धवने च "त्वे अग्ने आहवनानि भूरि" ऋ० ७, १, १७ ।

**आहवनीय** पु० आहूयते प्रणीयते प्रक्षिप्यते वा हविरत्र आ+हु—कर्म्मणि आधारे वा० अनीयर् आहवनमर्हति छ वा । १अग्निभेदे । तदुद्धरणप्रकारः आश्व० श्रौ० उक्तः । "उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय विट्कुलादित्तवतो वा वैश्ययोनय इत्येके भ्रियमाणं वा प्रज्वाल्याऽरणीमन्तं वा मथित्वा गार्हपत्यादाहवनीयमुद्धरेत्" सू० द्वितीयेऽपराह्णे गार्हपत्यं प्रादुष्कृत्य दक्षिणाग्निं प्रज्वाल्य च वैश्यगृहात् द्रव्यवतोवान्यस्य गृहात् गार्हपत्याद्वा आनयेत् । तथा च अग्निमन्थनादिनाऽन्यतमप्रकारेण दक्षिणाग्निं साधयित्वा गार्हपत्यात् ज्वलन्तमग्निमाहवनीयार्थमुद्धरेत् पात्रान्तरेण पृथक् कुर्य्यादिति तदर्थः । तत्र मन्त्रादिकविनियोग उत्तरस्तूत्रादावुक्तः । "आहवनीये वैश्वानरं द्वादशकपालमधिश्रयति" तैत्ति० । "यस्य गार्हपत्याहवनीयौ मिथः संसृज्यातामु" ऐत० ब्रा० । "पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः । गुरुराहवनीयस्तु साग्नित्रेता गरीयसी" मनुः । कर्मणि अनीयर् । २सम्यग् होतव्ये हविरादौ त्रि० ।

**आहार** पु० आ+हृ—घञ् । १आहरणे । उपसर्गयोगात् २भोजने "निराहारो यताहारो तन्मनस्को समाहितौ" देवीमा० आहारविधिश्च सुश्रुते उक्तः यथा "अथाहारविधिं वत्स ! विस्तरेणाखिलं शृणु । आप्तान्वितमसंकीर्णं शुचि कार्य्यं महानसम् । तत्राप्तैर्गुणसम्पन्नमन्नं भक्ष्यं सुसंस्कृतम् । शुचौ देशे सुसंगुप्तं समुपस्थापयेद्भिषक् ॥ विषघ्नैरगदैः स्पृष्टं प्रोक्षितं व्यजनोदकैः । सिद्धैर्मन्त्रैर्हतविषं सिद्धमन्नं निवेदयेत् । अतऊर्द्ध्वमतःपरं तत्रेममाहारस्योपकल्पनम् । घृतं कार्ष्णायसे देयं पेया देया तु राजते । फलानि सर्व्वभक्ष्यांश्च प्रदद्याद्वै दलेषु च । परिशुष्कप्रदिग्धानि सौवर्णेषु प्रकल्पयेत् । प्रद्रवाणि रसांश्चैव राजतेषूपहारयेत् । कट्वराणि खडांश्चैव सर्व्वान् शैलेषु दापयेत् । दद्यात्ताम्रमये पात्रे सुशीतं सुशृतं पयः । पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत् । काचस्फटिकपात्रेषु शीतलेषु शुभेषु च । दद्याद्वैदूर्य्यपात्रेषु रागषाडवसट्टकान् । पुरस्ताद्विमले पात्रे सुविस्तीर्णे मनोरमे । सूदः सूपोदनं दद्यात् प्रदेहांश्च सुसंस्कृतान् । फलानि सर्व्वभक्ष्यांश्च परिशुष्काणि यानि च । तानि दक्षिणपार्श्वे तु भुञ्जानस्योपकल्पयेत् । प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः । खड़ान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् । सर्व्वान् गुडविकारांश्च रागषाडवसट्टकान् । पुरस्तात् स्थापयेत्प्राज्ञो द्वयोरपि च मध्यतः । एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम् । भोक्तारं विजने रम्ये निःसम्बाधे शुभे शुचौ । सुगन्धिपुष्परचिते समे देशेऽथ भोजयेत् । विशिष्टमिष्टसंस्कारैः पथ्यैरिष्टैरसादिभिः । मनोज्ञं शुचि नात्युष्णं प्रत्यग्रमशनं हितम् । पूर्व्वं मधुरमश्नीयान्मध्येऽम्ललवणौ रसौ । पश्चाच्छेषान् रसान् वैद्यो भोजनेष्ववचारयेत् । आदौ फलानि भुञ्जीत दाडिमादीनि बुद्धिमान् । ततः पेयांस्ततो भोज्यान् भक्ष्यांश्चित्रांस्ततः परम् । घनम्पूर्व्वं समश्नीयात् केचिदाहुर्विपर्ययम् । आदावन्ते च मध्ये च भोजनस्य तु शस्यते । निरत्ययं दोषहरं फलेष्वामलकं नृणाम् । मृणालबिसशालूककन्देक्षुप्रभृतीनि च । पूर्व्वं योज्यानि भिषजा नतु भुक्ते कथञ्चन । सुखमुच्चैः समासीनः समदेहोऽन्नतत्परः । काले सात्म्यं लघु स्निग्धं क्षिप्रमुष्णं द्रवोत्तरम् । बुभुक्षितोऽन्नमश्नीयान्मात्रावद्विदितागमः । काले भुक्तं प्रीणयति सात्म्यमन्नं न बाधते । लघु शीघ्रं व्रजेत्पाकं स्निग्धोष्णं बलवह्निदम् । क्षिप्रं भुक्तं समं पाकं यात्यदोषं द्रवोत्तरम् । सुखं जीर्य्यति मात्रावद्धातुसाम्यं करोति च । ऋतौवा यतयामास्तु यथा येषु तथा स्मृताः । तेषु तत्प्रत्यनीकाढ्यं भुञ्जीत प्रातरेव तु । येषु चापि भवेयुश्च दिवसा भृशमायताः । तेषु तत्कालविहितमपराह्णे प्रशस्यते । रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः । कृत्वा सममहोरात्रं तेषु भुञ्जीत भोजनम् । नाप्राप्तातीतकालं वा हीनाधिकमथापि वा । अप्राप्तकाले भुञ्जानः शरीरे ह्यलघौ नरः । तांस्तान् व्याधीनवाप्नोति मरणं वा नियच्छति । अतीतकाले भुञ्जानो वायुनोपहतेऽनले । कृच्छ्राद्विपच्यते भुक्तं द्वितीयञ्च न काङ्क्षति । हीनमात्रमसन्तोषं करोति च बलक्षयम् । आलस्यगौरवाटोपसादांश्च कुरुतेऽ-

धिकम् । तस्मात् संस्कृतं भुक्त्वा दोषैरेतैर्विवर्जितम् । यथोक्तगुणसम्पन्नमुपसेवेत भोजनम् । विभज्य कालदोषादीन् कालयोरुभयोरपि । अचोक्षं (अपरिलम्) दुष्टमुच्छिष्टं पाषाणतृणलोष्टवत् । द्विष्टं व्युषितमस्वादु पूति चान्नं विवर्जयेत् । चिरसिद्धं स्थिरं शीतमन्नमुष्णीकृतं पुनः । अशान्तमुपदग्धञ्च तथा स्वादु न लभ्यते । यद्यत् स्वादुतरं तत्त विदध्यादुत्तरोत्तरम् । प्रक्षालयेदद्भिरास्यं भुञ्जानस्य मुहुर्मुहुः । विशुद्धे रसने तस्मै रोचतेऽन्नमपूर्ववत् । स्वादुना तस्य रसनं प्रथमेनापि तर्पितम् । न तथा स्वादयेदन्यत्तस्मात् प्रक्षाल्यमन्तरा । सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखम् । स्वादु सञ्जनयत्यन्नमस्वादु च विपर्य्ययम् । भुक्त्वा च यत् प्रार्थयते भूयस्तत् स्वादु भोजनम् । अपिबतोदकं भुक्त्वा भुञ्जानश्चान्तरा पिबेत् । दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः । कुर्य्यादनाहृतं तद्धि मुखस्यानिष्टगन्धताम् । जीर्णेऽन्ने वर्द्धते वायुर्विदग्धे पित्तमेव तु । भुक्तमात्रे कफश्चापि तस्माद्भुक्ते हरेत्कफम् । धूमेनापोह्य चूर्णैर्वा कषायकटुतिक्तकैः । पूगकक्कोलकर्पूरलवङ्गसुमनःफलैः । कटुतिक्तकषायैर्वा मुखवैशद्यकारकैः । ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः । भुक्त्वा राजवदासीत यावदन्नक्लमो गतः । ततः पदशतं गत्वा वामपार्श्वेन संविशेत् । शब्दरूपरसस्पर्शान् गन्धांश्च मनसः प्रियान् । भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति । शब्दरूपरसस्पर्शगन्धाश्चापि जुगुप्सिताः । अशुच्यन्नं तथाभुक्तमतिहासश्च वामयेत् । शयनं चासनं वापि नेच्छेद्वापि द्रवोत्तरम् । नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् । नचैकरससेवायां प्रसज्येत कदाचन । शाकावराम्नभूयिष्ठमम्लञ्च न समाचरेत् । एकैकशः समस्तान् वा नाभ्यश्नीयाद्रसान् सदा । प्राग्भुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् । पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् । मात्रागुरुं परिहरेदाहारं द्रव्यतश्च यः । पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः । द्विगुणञ्च पिबेत्तोयं सुखं सम्यक् प्रजीर्य्यति । पेयलेह्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् । गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते । द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते । द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते । विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति । पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति । स्रोतस्यवहिते पित्तं पक्तौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते । शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् । आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः । अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः । अत्यम्बुपानाद्विषमाशनाद्वा सन्धारणात् स्वप्नविपर्य्ययाच्च । कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य । ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीड़ितेन । प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति । माधुर्य्यमन्नं गतमामसंज्ञं विदग्धसंज्ञं गतमम्लभावम् । किञ्चिद्विपक्वं भृशतोदशूलं विष्टब्धमाबद्धविरुद्धवातम् । उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य । रसावशेषेण तु सप्रसेकं चतुर्थमेतत् प्रवदन्त्यजीर्णम् । मूर्च्छाप्रलापो वमथुः प्रसेकः सदनं भ्रमः । उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः । तत्रामे लङ्घनं कार्य्यं विदग्धे वमनं हितम् । विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च । वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना । कार्य्यं चानशनं तावद्यावन्न प्रकृतिं भजेत् । लघुकायमतश्चैनं लङ्घनैः समुपाचरेत् । यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा । हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् । बहु स्तोकमकाले वा विज्ञेयं विषमाशनम् । अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते । त्रयमेतन्निहन्त्याशु बहून् व्याधीन् करोति च । अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति । तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् । विदह्यते यस्य तु भुक्तमात्रं दह्येत हृत्कोष्ठगलञ्च यस्य । द्राक्षाभयां माक्षिकसम्प्रयुक्तां लीढ्वाभयां वा स सुखं लभेत । भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले । प्रातः स शुण्ठीमभयामशङ्को भुञ्जीत सम्प्राश्य हितां हितार्थी । स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति । भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति" । "पञ्चभूतात्मके देहे आहारः पाञ्चभौतिकः । विपक्वः पञ्चधा सम्यग्गुणान् स्वानभिवर्द्धयेत् । अविदग्धः कफं पित्तं विदग्धः पवनं पुनः । सम्यग्विपक्वो निःसार आहारः परिवृंहयेत् । विण्मूत्रमाहारमलः सारः प्रागीरितो रसः । स तु व्यानेन विक्षिप्तः सर्व्वान् धातून् प्रतर्पयेत् । कफः पित्तं मलः शेषः स्वेदः स्यान्नखरोम च । नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः । दिवाविबुद्धे हृदये जाग्रतः पुण्डरीकवत् अन्नमक्लिन्नधातुत्वादजीर्णेऽपि हितं निशि । हृदि सम्मीलिते रात्रौ प्रसुप्तस्य विशेषतः । क्लिन्नविस्रस्तधातुत्वादजी-

र्वं न क्षित दिवा" भाव॰प्र॰ भोजनकालदेशपात्रादिभेददर्शनपूर्वमेतद्व्याख्या प्रसङ्गात् कृता यथा। "आहारं पचति शिखी दोषानाहारः पचति। दोषक्षये धातून् पचति पचति च धातुक्षये प्राणान्। आहारः प्राणिनां सद्योबलकृद्देहधारणः। स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्द्धनः। यथोक्तगुणसम्पन्नमुपसेवेत भोजनम्। विचार्य देशकालादीन् कालयोरुभयोरपि"। उभयोःकालयोः प्रातः सायं च। तथा च "सायंप्रातर्मनुष्याणामशनं श्रुतिबोधितम्" नान्तरा भोजनं कुर्य्यादग्निहोत्रसमोविधिः"। प्रातः प्रथमयामादुपरि द्वितीययामादर्वाक् तथा च "याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत्। याममध्ये रसोत्पत्तिर्यामयुग्माद्बलक्षयः" अन्यत्र "जुष्टं भवति पक्वेषु रसदोषमलेषु च। काले वा यदि वाऽकाले सोऽन्नकाल उदाहृतः"। रसादौ पाकज्ञानमाह "उद्गारशुद्धिरुत्साहो वेगोत्सर्गौ यथोचितः। लघुता क्षुत्पिपासा च यदा कालः स भोजने"। स्थानमाह "आहारन्तु नरः कुर्य्यान्निर्हारमपि सर्व्वदा। निर्ज्जने त्वन्यथोपेतः स्याद्भाग्ये हीयते श्रिया। निर्हारो मलमूत्रोत्सर्गः। अन्यत्र "आहारनिर्हारविहारयोगाः सदैव सद्भिर्विजने विधेयाः" इति। भाजनमाह "दोषघ्नमुष्टिदं पथ्यं हैमं भोजनभाजनम्। रौप्यं भवति चाक्षुष्यं पित्तघ्नं कफवातकृत्। कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम्। पैत्तलं वातकृद्रूक्षमुष्णं कृमिकफप्रणुत्। आयसे काचपात्रे च भोजनं सिद्धिकारकम्। शोथपाण्डुहरं बल्यं कामलापहमुत्तमम्। शैलजे मृण्मये पात्रे भोजनं श्रीनिवारणम्। दारुजन्ये विशेषेण रुचिदं श्लेष्मकारि च। पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत्। जलपात्रं तु प्रागुक्तं तदभावे मृदोहितम्। पवित्रं शीतलं पात्रं घटितं स्फटिकेन यत्। काचेन रचितं तद्वत्तथा वैदूर्य्यसंभवम्। (प्रागुक्तं सुश्रुते सौवर्णाद्युक्तं तच्चाम्बुशब्दे ३२० पृष्ठे" दर्शितम्)। "भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम्। अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम्" लवणस्य पित्तजनकत्वादार्द्रकस्य कटुत्वेन पित्तलत्वात् बुभुक्षितस्य वृद्धपित्तस्य कथं प्रथमं लवणार्द्रकभक्षणमुचितम् उच्यते "लवणं सैन्धवं चैवं चन्दनं रक्तचन्दनमिति" वचनाल्लवणमत्र सैन्धवं तच्चित्रदोषघ्नम् यत आह गुणग्रन्थे "सैन्धवं लवणं स्वादु दीपनं पाचनं लघु। स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत्" आर्द्रकं तु पित्तविरोधि मधुरपाकित्वात् यत आह तत्रैव "आर्द्रिका भेदिनी गुर्व्वी तीक्ष्णोष्णा दीपनी च सा। कटुका मधुरा पाके रूक्षा वातकफापहा"। अन्यदपि लवणार्द्रकं च नात्यपित्तविरोधि संयोगस्वभावात् संयोगस्वरूपञ्चैतादृशं भोजनस्य पूर्व्वं लवणार्द्रकभक्षणबोधकवचनमेव प्रमाणयति। भोजनादौ दृष्टिदोषविनाशाय ब्रह्मादीन् स्मरेत्। तद्यथा "अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः। इति संचिन्त्य भुञ्जानं दृष्टिदोषो न बाधते। अञ्जनागर्भसंभूतं कुमारं ब्रह्मचारिणम्। दृष्टिदोषविनाशाय हनूमन्तं स्मराम्यहम्" "अश्नीयात्तन्मना भूत्वा पूर्व्वं तु मधुरं रसम्। मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान्। फलान्यादौ समश्नीयाद्दाडिमादीनि बुद्धिमान्। विना मोचाफलं तद्वद्वर्ज्जनीया च कर्कटी। मृणालबिसशालूककन्देक्षुप्रभृतीन्यपि पूर्व्वमेव हि भोज्यानि न तु भुक्त्वा कदाचन"। मृणालं पद्मनालं, बिसं बिसपण्डकं, शालूककन्दं प्रसिद्धम्। "गुरु पिष्टमयं द्रव्यं तण्डुलान् पृथुकानपि। न जातु भुक्तवान् खादेन्मात्रां खादेद्बुभुक्षितः। घृतपूर्व्वं समश्नीयात्कठिनं प्राक्ततोऽमृदु। अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति" अयमर्थः प्राक् घृतपूर्व्वं कठिनं समश्नीयात् यथाकाङ्क्षादिशालिनः प्रथमं सव्यञ्जनां घृतपूर्णां रोटिकां भुङ्क्ते ततो मृदुलसूपादिकमोदनं भुङ्क्ते अन्ते पुनर्द्रवाशिनः भोजनान्ते दधिदुग्धतक्रादि भुङ्क्ते। "यद्यत् स्वादुतरं तत्तद्विदध्यादुत्तरोत्तरम्। भुक्त्वा यत्प्रार्थ्यते भूयस्तदुक्तं स्वादु भोजनम्"। स्वाद्वन्नस्य गुणमाह। "सौमनस्यं बलं पुष्टिमुत्साहं रसनासुखम्। स्वादु सञ्जनयत्यन्नमस्वादु च विपर्ययम्"। अत्युष्णान्नं बलं हन्ति शीतं शुष्कं च दुर्ज्जरम्। अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं हि भोजनम्। अतिद्रुततवाहारो गुणान् दोषांश्च विन्दति। भोज्यं शीतमहृद्यं च स्याद्धितं स्विन्नमश्नतः। त्रिविधं गुरु तन्निवारयन्नाह "मन्दानलो नरो द्रव्यं मात्रागुरु विवर्जयेत् स्वभावतश्च गुरु यत्तथा संस्कारतो गुरु। मात्रागुरुस्तु सक्त्वादिर्माषादिः प्रकृतेर्गुरुः। संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम्। आहारः षड्विधः चूष्यं पेयं लेह्यं तथैव च। भोज्यं भक्ष्यं तथा चर्व्यं गुरु विद्याद्यथोत्तरम्। चूष्यं इक्षुदाडिमादि, पेयं पानकशर्करोदकादि। लेह्यं रसालाकथितादि ( कढी ) इति लोके प्रसिद्धम्। भोज्यं भक्तसूपादि। भक्ष्यं लड्डुकमण्डकादि (खरं विशदमव्यक्ताखं भक्ष्यमिति पात॰भा॰)। चर्व्यं चिपिटकचणकादि। स्वभावगुरुसंस्कारगुर्वोः स्वभावलघुनश्च भक्ष्यस्य भोजनपरिमाणमाह "गुरूणामर्द्धसौहित्यं

बलनां तृप्तिरिष्यते" अयमर्थः मांसपिष्टाद्यादिभिरर्द्धं सौहित्यं कर्त्तव्यं मुद्गादिभिः स्वाभाविक्या मात्रया तृप्तिः कर्त्तव्येति। "द्रवोद्रवोत्तरश्चापि न मात्रागुरुरिष्यते"। द्रवः पेयादिर्द्रवोत्तरः तक्राद्यधिक ओदनादिः मात्रातोऽधिकोऽपि मात्रागुरुर्न मन्तव्यः पेयस्य सर्वतोलघुत्वात् उक्तञ्च सुश्रुते 'पेयलेह्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरमिति" पेयं क्षीरादि लेह्यं रसालादि आद्यम् ओदनसूपादि भक्ष्यं मोदकादि "द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते। विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति"। अयमर्थः शुष्कमपि स्रोतोरोधकरमपि द्रवाढ्यं सम्यक् पाकं याति। केवलस्य शुष्कान्नस्य दोषमाह विशुष्कमन्नमित्यादि। अपक्वं तत् किं भवतीत्यपेक्षायामाह "पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति" पिण्डीकृतम् अतीवाबद्धतम् असंक्लिन्नमसम्यगार्द्रं विदाहमुपगच्छति विदग्धं भवतीत्यर्थः। शुष्कादीनां वैगुण्यमाह "शुष्कं विरूढं विष्टम्भि वह्निव्यापद्मावहेत्" शुष्कञ्चिपिटादि विरूढं क्षीरमत्स्यादि, विष्टम्भि चणकमसूरादि, वह्निमान्द्याद्यावहेत्। "न भक्ता न रदैश्छित्वा, न निशायां न वा बहून्। न जलान्तरितानद्भिः सक्तूनद्यान्न केवलान्। पुनर्दानं पृथक्पानं सामिषम्पयसा निशि। दन्तच्छेदनमुष्णं च सप्त सक्तुषु वर्जयेत्" विषमाशनस्य लक्षणमाह। "बहु स्तोकमकाले वा ज्ञेयं तद्विषमाशनम्" बहुत्वादस्य भक्षितस्य दोषमाह "आलस्यगौरवाटोपशब्दांश्च कुरुतेऽधिकम्। हीनमात्रमसन्तोषं करोति च बलक्षयम्" अधिकमन्नम्। अकाले भुक्ते दोषमाह 'अप्राप्तकाले भुञ्जानो ह्यसमर्थतनुर्नरः तांस्तान् व्याधीनवाप्नोति मरणञ्चाधिगच्छति" अप्राप्तकाले कालादतिप्राक् भुञ्जानः असमर्थशरीरो भवति तथा सति तांस्तान् व्याधीन् शिरोव्यथाविसूचिकाऽलसकविलम्बिकादीन् आप्नोति तेषामाधिक्ये मरणमपि प्राप्नोतीत्यर्थः "कालेऽतीतेऽश्नतोजन्तोर्वायुनोपहतेऽनले। कृच्छ्राद्विपच्यते भोक्तुर्न स्याद्भोक्तुं पुनः स्पृहा"। कुक्षेर्भागद्वयं भोज्यैस्तृतीये वारि पूरयेत्। वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत्"। "रसेनाद्यस्य रसना प्रथमेनोपतर्पिता। न तथा स्वादुमाप्नोति यथा सेव्याम्बुनान्तरा" "अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः। तस्मान्नरो वह्निविवर्द्धनाय मुहुर्मुहुर्वारि पिबेदभूरि। भक्तस्यादौ जलं पीतं कार्श्यं मन्दाग्निदोषकृत्। मध्येऽग्निदीपनं श्रेष्ठमन्ते स्थौल्यकफप्रदम्। अन्यच्च "समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः" इति वाग्भटः" भुक्तं भोजनम् "तृषितस्तु न चाश्नीयात् क्षुधितो न पिबेज्जलम्। तृषितस्तु भवेद्गुल्मी क्षुधितस्तु जलोदरी। ननु शिष्टा भोजनान्ते दुग्धं पिबन्ति तत्कथमुचितं यतस्त्रिधा विभक्तस्य भोजनकालस्य प्रथमो भागोवातस्य, द्वितीयः पित्तस्य, तृतीयः कफस्य, यत आह "अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम्। मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान्" अस्यायमभिप्रायः भोजने पूर्वं भुक्तो मधुरो रसो बुभुक्षितस्य वातपित्तयोः शमको भवति। भोजनमध्ये भुक्तौ अम्ललवणौ पित्तोपशमनेन वह्निवृद्धिं कुरुतः। भोजनान्त्यसमये भुक्ताः कटुतिक्तकषाया रसाः कफं शमयन्तीति। अतोभोजनावसानसमयस्य कफकालत्वात् तत्र कथं श्लेष्मजनकं दुग्धं पातुमुचितं भवति। यतउक्तम्। "दुग्धं स्वादुरसं स्निग्धमोजस्यं धातुवर्द्धनम्। वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलमिति" उच्यते 'विदाहीन्यन्नपानानि यानि भुङ्क्ते हि मानवः। तद्विदाहोपशान्त्यर्थं भोजनान्ते पयः पिबेत्" अतएव मत्स्यपुराणे "कुर्यात् क्षीरान्तमाहारं न दध्यन्तं कदाचनेति लवणाम्लकटूष्णानि विदाहीन्यपि यानि तु। तद्दोषं हर्त्तुमाहारं मधुरेण समापयेदिति" भोजनावसानसमये दुग्धादिमधुरभोजने वातकफोपशमनेन लवणाम्लकटुभोजनजनितां पित्तस्य वृद्धिं नाशयति पित्तवृद्धिनाशनेन च पित्तवृद्धिवशवीर्या भवतीति कफवृद्धिरग्निमान्द्यादीनुत्पादयितुं न शक्नोति"।

आह्निकतत्त्वेऽन्याऽऽहारविधिरुक्तो यथा विष्णुपु०। "स केवलमघं भुङ्क्ते योभुङ्क्ते त्वतिथिं विना। अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्। इन्द्रियप्रीतिजननं वृथापाकं विवर्जयेत्" तथा 'सुवासिनीर्दुःखितांश्च गर्भिणीवृद्धबालकान् भोजयेत्। संस्कृतान्नेन प्रथमं, चरमं गृही। अभुक्तवत्सु चैतेषु भुञ्जन् भुङ्क्तेऽतिदुष्कृतिम्। अतश्च नरकं गत्वा श्लेष्मभुग्जायते नरः। अस्नात्याशी मलं भुङ्क्ते अजप्ता पूयशोणितम्। अहुत्वा च कृमिं भुङ्क्ते अदत्त्वा विषभोजनम्। असंस्कृतान्नभुङ्मूत्रं बालादिप्रथमं शकृत्। भुञ्जतश्च यथा पुंसः पापबन्धोन जायते। इह चारोग्यमतुलं बलवृद्धिस्तथा नृप"। तथा "प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही। भक्ष्यं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः। न कुत्सिताहृतं नैव जुगुप्सावदसंस्कृतम्"। विष्णुपु० "मन्त्राभिमन्त्रितं शस्तं न च पर्युषितं नृप!। अन्यत्र फलमांसेभ्यः शुष्कशाकादिकात्तथा। तद्वद्धारिकेभ्यश्च गुडपक्वेभ्यएव च।

भुञ्जीतोद्धृतसाराणि न कदाचिन्नरेश्वर ! । नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते ! । मध्वम्बुदधिसर्पिर्भ्यः सक्तुभ्यश्च विवेकवान् । अश्नीयात्तन्मना भूत्वा पूर्वन्तु मधुरं रसम् । लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः । प्रागद्रवं पुरुषोऽश्नन् वै मध्ये च कठिनाशनः । पुनरन्ते द्रवाशी तु बलारोग्ये न मुञ्चति । अनिन्द्यं भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन् । पञ्च ग्रासान् महामौनं प्राणाद्याप्यायनाय तत्" । मन्त्राभिमन्त्रितमिति मन्त्रानादेशे गायत्रीति वचनात् गायत्र्याभिमन्त्रितम् । गारुडे "शाकं सूपश्च भूयिष्ठं व्यत्यस्तञ्च विवर्जयेत् । नचैकरसमेवाद्यं प्रसज्येत कदाचन" । छन्दोग० प० । "मुनिभिर्द्विरशनमुक्तं विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः" । अहनि अचिरोदितास्तमितसूर्य्यान्तरदिनमात्रे । तत्राप्यायुर्वेदोक्ते विशेषः । "याममध्ये न भोक्तव्यं त्रियामन्तु न लङ्घयेत्" । याममध्ये रसोत्पत्तिस्त्रियामे तु रसक्षयः" । तत्रापि पञ्चमयामार्द्धोक्तकालो द्वयवचनात् (तत्राह्निकतत्त्वे ८०६ पृष्ठे धृयते त्रियामन्त्वित्यहियाममित्येवायुर्वेदोक्ते पाठः । द्वयवचनानुरोधात् त्रियाममिति पाठकल्पनं बोध्यम्) । महामौनं हुङ्कारादिरहितम् । तथाचात्रिः "मौनव्रतं महाकष्टं हुङ्कारेणैव नश्यति । तथाचति महान् दोषस्तस्मात्तु नियतश्चरेत् । एष क्रमः पौराणिकत्वात् सर्वसाधारणः । विष्णुः । "न तृतीयमथाश्नीयादापद्यपि कदाचन" । गीतासु । "आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः । यातयामं गतरसं पूतिपर्युषितञ्च यत् । उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्" मनुः । "आयुष्यं प्राङ्मुखोभुङ्क्ते यशस्यं दक्षिणामुखः । श्रियः प्रत्यङ्मुखोभुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः" । नियमे त्वेवम् अनियमे तु नोदङ्मुखः । हारीतः "नोदङ्मुखोऽश्नीयात्" । नित्यकामस्य तु प्राङ्मुखेनैव यथाह देवलः । "प्राङ्मुखोऽन्नानि भुञ्जीत शुचिःपीठमधिष्ठितः । विशुद्धवदनःप्रीतोभुञ्जीत न विदिङ्मुखः" । जीवन्मातृकस्य दक्षिणामुखत्वनिषेधमाह आप० "दक्षिणामुखोन भुञ्जीत एवंविधभोजनमनायुष्यं मातुरुपदिशति" । केचित्तु "कुङ्कुमं गयाश्राद्धं तिलैस्तर्पणमेव च । न जीवत्पितृकः कुर्य्याद्दक्षिणामुखभोजनम्" इत्याचाररत्नाकरधृतात् जीवत्पितृकस्यापि निषेध इत्याहुः । व्यासः "पञ्चार्द्रोभोजनं कुर्य्यात् प्राङ्मुखोमौनमास्थितः । हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता" । व्यासः "अन्नेकपङ्क्त्यां नाश्नीयात् संहतः स्वजनैरपि । कोहि जानाति किं कस्य प्रच्छन्नं पातकं महत् । भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिश्च भेदयेत्" । जलादिना पङ्क्तिभेदाकरणे तु मनुः । "एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने । यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं विवर्जयेत् । मोहात् भुञ्जीत यः पङ्क्त्यामुच्छिष्टसहभोजनम् । प्राजापत्यं चरेद्विप्रः कृच्छ्रः सान्तपनन्तथा" ! । एतत्प्रमाणार्थमभिधायाह गोभिलः । "भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत् । भोजने विघ्नकर्त्तासौ ब्रह्महापि तथोच्यते" । आप० "दिवा पुनर्न भुञ्जीतान्यत्र फलमूलेभ्यः" । मनुः "नातिप्रगे नातिसायं न सायं प्रातराशितः" अतिप्रगेऽचिरोदितसूर्य्ये अतिसायं सूर्य्यास्तमितसमये एवं प्रातराशितः दिनभोजनेनातितृप्तः स सायं न रात्रौ भुञ्जीतेत्यर्थः । आप० "यस्तु भोजनशालायां भोक्तुकामउपस्पृशेत् । आसनस्थोनचान्यत्र स विप्रः पङ्क्तिदूषकः" बौधा० "उपलिप्ते समे स्थाने शुचौ लक्ष्यासनान्विते । चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धचन्द्रकम् । कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्" । "अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः । तेषान्तु यक्षरक्षांसि हरन्त्यन्नानि तद्बलात्" । आप० । "भिन्नकांस्ये तु योविप्रोयदि भुङ्क्ते तु कामतः । उपवासेन चैकेन पञ्चगव्येन शुद्ध्यति" तथा शूद्रादिभोजनेनापरिष्कृतपात्रेऽपि इत्यमनुः "ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले । पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत्" । नव्यवर्द्धमानधृतस्मृतिः "अर्कपत्रे तथा पृष्ठे आयसे ताम्रभाजने । करे कर्पटके चैव भुक्त्वा चान्द्रायणञ्चरेत्" । पृष्ठे कदलीपत्रादिपृष्ठे । पैठी० "ताम्ररजतसुवर्णाश्मपद्मशुक्तिस्फटिकानां भिन्नमभिन्नमिति न दोषः" । अत्र पाषाणपात्रं भोजने विहितम् । "तैजसानां मणीनाञ्च सर्वस्याश्ममयस्य च । भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः" इति मनुना पाषाणपात्रस्य शुद्धिविधानाच्च । प्रचेताः "ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" । अत्रिः "आसने पादमारोप्य योभुङ्क्ते ब्राह्मणः क्वचित् । मुखेन चान्नमश्नाति तुल्यं गोमांसभक्षणैः" । मुखेन हस्तोत्तोलनं विना गवादिवदित्यर्थः । आश्वमेधिके "आर्द्रपादस्तु भुञ्जीत

प्राङ्मुखश्चासने शुचौ । पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः" । बौधा० "भोजनं हवनं दानमुपहारः परिग्रहः । बहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम्" हारीतः "मार्जनार्च्चाबलिकर्म्मभोजनानि दैवतीर्थेन कुर्य्यात्" । पराशरभा० वृद्धमनुः "न पिबेन्नच भुञ्जीत द्विजः सव्येन पाणिना । नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत्" । मार्क० पु० "पादप्रसारणं कृत्वा न च वेष्टितमस्तकः" । मनुः "पूजयेदशनं नित्यं चाद्याच्चैवमकुत्सयन् । दृष्ट्वा हृष्येत् प्रसीदेच्च प्रणमेच्चैव सर्व्वदा । अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः प्रार्थयेत्ततः । अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्" । विष्णु-पु० "नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः । बहिःस्था वायवः पञ्च तेषां भूमौ प्रदीयते । अदत्त्वा चाहरन् वायुभ्यः प्राणादिभ्यो न होमयेत्" । इति शिष्टपठितवचनान्नागादिभ्योबलिदानमिति प्राचीनाचारः । तत्रान्नं देवेभ्योदत्त्वैव भोक्तव्यं तथा च गीता "इष्टान् भोगान् हि वोदेवा दास्यन्ते यज्ञभाविताः । तैर्दत्तानप्रदायैभ्यो-योभुङ्क्ते स्तेन एव सः" । यज्ञैः भाविता संवर्द्धिताः वोयुष्मभ्यं भोगानन्नादीन् वृष्ट्यादिद्वारा दास्यन्ति अतो देवैर्दत्तान् अन्नादीन् तेभ्योऽदत्त्वा योभुङ्क्ते स चौर एव । स्मृतिः "निवेद्य प्राशनात् पूर्व्वं देवपादोदकाञ्जलिः । होतव्या जठरे वह्नौ स्वेन पाणितलेन तु" । तेन पादोदकेनापोशानं कृत्वा प्राणाहुतिर्नैवेद्येन कार्य्या । स्वदत्तनैवेद्यभक्षणन्तु पश्चादुपपादयिष्यते । ब्रह्मपु० "आपोशानञ्च गृह्णीयात् सर्व्वतीर्थमयञ्च यत् । अमृतोपस्तरणमसि विष्णोरन्नमयस्य च । अत्र चास्तरणार्थन्तु प्राश्यते ह्यमृतं सकृत् । अमृतोपस्तरणमसि स्वाहेति च समुद्धरेत्" । मध्यापद्धतौ लिखितवचनं प्रमाणयन्तोऽमीत्येतदनन्तरं स्वाहाकारं कुर्व्वन्ति । ब्रह्मपु० "हस्तेन लङ्घयेच्चान्नं नोदकेन कदाचन । दक्षाद्योवह्नेरभ्युक्षणेनान्नं निहतं भवेत् । हतञ्चान्नमभक्ष्यत्वं तस्य याति दुरात्मनः । प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहाप्रणवसंयुताः । पञ्चाहुतीस्तु जुहुयात् प्रलयाग्निनिभेषु च । प्राणाहुतिमुद्रामाह शौनकः । "तर्ज्जनीमध्यमाङ्गुष्ठैर्लग्ना प्राणाहुतिर्भवेत् । मध्यमानामिकाङ्गुष्ठैरपाने जुहुयात्ततः । कनिष्ठानामिकाङ्गुष्ठैर्व्याने च जुहुयाद्धविः । तर्ज्जनीन्तु बहिष्कृत्वा उदाने जुहुयात्ततः । समाने सर्व्वहस्तेन समुदायाहुतिर्भवेत्" । स्मृत्यर्थसारे । "प्राणाहुतौ घृताभावे पश्चाद्भुञ्जीत नो घृतम्" । देवलः "न भुञ्जीत घृतं नित्यं गृहस्थो भोजनद्वये । पवित्रञ्च जुहुञ्च सर्पिराज्यरघापहम्" । काशी० "दर्भपाणिस्तु योभुङ्क्ते तस्य दोषैर्न बाध्यते । केशकीटादिसम्भूतन्ततोऽश्नीयात् सदर्भकः । यावद्देवान्नमश्नीयान्न ब्रूयात्तद्गुणागुणान् । अतोमौनेन-योभुङ्क्ते स भुङ्क्ते केवलामृतम्" । मनुः "स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्" । उद्धरेद्बस्त्राद्बहिः कुर्य्यादित्यर्थः । बौधा० "आचम्य संवृते देशे उपविश्यान्नं संस्पृश्य सर्व्वाङ्गुलीभिरशब्दमश्नीयात्" । संस्पृश्य अन्नपात्रं सव्यहस्तेनेत्यर्थः । काशी० "प्रदद्याद्भुवः पतये भुवनपतये तथा । भूतानां पतये स्वाहेत्युक्त्वा भूमौ बलित्रयम् । आपोशानं विधानेन कृत्वाश्नीयात् सुधीर्द्विजः" । ब्रह्मपु० "तेजोऽसीति जपंस्तच्च प्रणमेदमृतञ्च यत् । आपोशानञ्च गृह्णीयात् सर्व्वतीर्थमयञ्च यत् । अमृतोपस्तरणमसि विष्णोरन्नमयस्य च" । अन्नमयस्य विष्णोर्यदास्तरणमसीत्यर्थः ततश्च तेजोऽसीति नमस्कृत्य भुञ्जीतेत्यर्थः । भविष्यो० "स्नातस्तु वरुणस्तेजो जुहृतोऽग्निः श्रियं हरेत् । भुञ्जानस्य यमस्त्वायुस्तस्माच्च व्याहरेन्त्रिषु" । मौने विशेषमाह आप० । "तत्र विद्याद्व्रतैर्मुनिभिरन्यैराश्रमिभिर्वहुश्रुतैर्दन्तैर्दन्तानसंस्पृश्यान्तर्मुख एव यावद्ग्रासदयं भाषेत न मन्त्रलोपोभवतीति विज्ञायते इति" मन्त्रलोपोमौनव्रतलोपः । ब्रह्मपु० "यस्तु पाणितले भुङ्क्ते यस्तु फुत्कारसंयुतम् । प्रसृताङ्गुलिभिर्यस्तु तस्य गोमांसवद्भवेत् । करेण च पिबेत्तोयं यावन्मांसं न भक्षयेत् । मांसलिप्तकरे तोयं तुल्यं गोमांसभक्षणैः" । अत्र मांसलिप्तकरेण जलपाननिषेधात् मांसलिप्तकरं प्रक्षाल्यैवापोशनं कर्त्तव्यम् । प्रत्यापोशाने तु हस्तप्रक्षालननिषेधात् मांसलिप्तकरं प्रक्षाल्य पुनरन्नलिप्तकरेण प्रत्यापोशानं कर्त्तव्यम् । षट्त्रिं० "पिबतो यत् पतेत्तोयं भाजने मुखनिःसृतम् । अभक्ष्यं तद्भवेदन्नं भुक्त्वा चान्द्रायणञ्चरेत् । वामपार्श्वे स्थिते तोये योभुङ्क्ते ज्ञानदुर्बलः । ग्रासे ग्रासे मलं भुङ्क्ते पानीयं रुधिरं पिबेत् । विद्यमाने तु हस्ते तु ब्राह्मणोज्ञानदुर्बलः । तोयं पिबति वक्त्रेण श्वादिर्जायेत नान्यथा । उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः । सुरापानेन तुल्यं स्यात् मनुराह प्रजापतिः" । वामहस्तेन केवलवामहस्तेन । अत-एव "पीतशेषन्तु यत्तोयं तत्पिबेच्च द्विजोत्तमः" । "पीतशेषं पिबेन्नैव" इति ब्रह्मपु० अविशेषात् सर्व्वं

निषिद्धम्” । ब्रह्म० “तिलकल्कं जलं क्षीरं दधि क्षौद्रं घृतानि च । न त्यजेदर्द्धजग्धानि सक्तुं शाकं कदाचन” । भारते “पानीयं पायसं सर्पिर्दधिक्षौद्र-घृतान्यपि । निरस्य शेषमेतेषां न प्रदेयन्तु कस्यचित्” । एतच्च त्याज्यं अशक्तौ कस्यचिच्च देयमित्यर्थः । निरस्य निःशेषमशनीयमित्यर्थः । तथा “अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः” । इति प्रागुक्तविष्णुपुराणाद्युक्तेतरभक्षणे दोषमाह मनुः “आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति” । अन्नदोषस्त्रिविधः दृष्टहारकः अदृष्टहारकः दृष्टादृष्टहारकः । दृष्टहारकश्चायुर्व्वेदोक्तः । अदृष्टहारकः स्मृत्युक्तः । उभयत्रोक्तास्तु बालवत्साविवत्सादुग्धादिदोषा दृष्टादृष्टहारकाः । अतएव मनुनैवोक्तम् “स्वाध्याये चैव युक्तः स्यात् नित्यमात्महितेषु च” युक्त उद्युक्तः । हारीतः “पृथक् पानं पुनर्दानमामिषं पायसानि च । दन्तच्छेदनमुष्णञ्च सप्त सक्तुषु वर्जयेत्” ।

सचाहारस्त्रिविधः सात्त्विकराजसतामसभेदात् यथोक्तं गीतायाम् “आहारस्त्वपि सर्व्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु” इत्युपक्रम्य “आयुःसत्त्वेत्यादि” तच्च वाक्यम् आ०त० ९०१पृष्ठे दर्शितम्” । अत्र सर्व्वत्र “तद्भिन्नितोभावोद्रव्यवत् प्रकाशते” इति भाष्योक्तेः आह्रियते भुज्यते कर्म्मणि घञि वा आहारशब्दस्य भक्ष्यपरत्वम् अतएव भावप्र० “आहारः षड्विधश्चूष्यमित्यादि” ८९९पृष्ठे उक्तम् । स च षोढा “आहार्य्यं षड्विधं भोज्यं भक्ष्यं चर्व्यं तथैव च । लेह्यं चूष्यं तथा पेयं तदुदाहरणानि तु । भोज्यमोदनयूषादि भक्ष्यमोदनसक्तुके । चर्व्यं चिपिटधानादि रसालादि तु लिह्यते । चूष्यमाम्रफलेक्ष्वादि पीयते पानकं पयः” भावप्र०उक्तेः । आह्रियते इत्याहरः । २शब्दादिविषयज्ञाने च आहारशुद्धि शब्दे शा०भा० वाक्यम् उदा० ।

**आहारपाक** पु० आहारस्य भक्ष्यस्य पाकः रसादिभावेन परिणामः । वैद्यकोक्ते भुक्तस्याचादेराहारस्य रसादिरूपेण परिणामरूपे पाकभेदे तत्पाकप्रकारः यदा-श्चार्द्धष्टतयशास्त्रवाक्ये उक्तः तच्च अग्निशब्दे ४९पृष्ठे दर्शितम् । भावप्रकाशोक्तस्तत्प्रकारस्तु अन्नकरशब्दे ४१८ पृष्ठे उक्तः ।

**आहारशुद्धि** स्त्री आहारस्य भक्ष्यादेः शुद्धिः । १भक्ष्यादिद्रव्यस्य शुद्धौ सा च शुद्धिः स्मृत्युक्तदिशाऽवसेया । सा च अभक्ष्यभक्षणवर्ज्जनेन भक्ष्यभोजनएव भवति । अभक्ष्याणि च अभक्ष्यशब्दे २७४पृष्ठे उक्तानि । आहारदोषनिवारणार्थायां शुद्धिः ।२दुष्टाहारजन्यदोषनिवारणार्थायां शुद्धौ प्रायश्चित्ते । “आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु । अक्षारलवणं भैक्ष्यं पिबेद्ब्राह्मीं सुवर्च्चसम्” इत्यादिना अत्रिसं० दर्शिता । ३शब्दादिविषयज्ञानशुद्धौ च “आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः” छा०उ० । “आह्रियते इत्याहारः शब्दादिविषयज्ञानम् तद्धि भोक्तुर्भोगायाह्रियते तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिराहारशुद्धिः रागद्वेषमोहदोषैरसंसृष्टविषयविज्ञानमित्यर्थस्तरं तस्याहारस्य शुद्धौ सत्यां तद्वतोऽन्तःकरणसत्त्वस्य शुद्धिर्नैर्म्मल्यं भवति” भाष्यम् । आहारशब्दस्य भक्ष्यार्थतामपहाय तथा व्याख्यानं तु “रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्” इति गीतोक्तिमनुसृत्यैवेति आनन्दगिरिः ।

**आहारसम्भव** पु० आहारात् भोज्यद्रव्यात् सम्भवति सम्+भू–अच् । आहारपाकजे देहस्थे रसधातौ । रसस्य यथाऽऽहारजत्वं तथाऽन्नकरशब्दे ४१८पृष्ठे उक्तम् ।

**आहार्य्य** त्रि० आ+हृ–ण्यत् । १आहरणीये “अथ मूलमनाहार्य्यं प्रकाशकयशोधनम्” मनुः । २आरोप्ये “कार्य्यञ्च तस्य दशधाहार्य्यं धार्य्यं प्रकाश्यञ्च” सा०का० “आहार्य्यं व्याप्यं कर्म्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्यास्ते च यथायथं दिव्यादिव्यतया दशेत्याहार्य्यं दशधेति” सां०कौ० । ३कृत्रिमे “आहार्य्यशोभारहितैरमायैः” भट्टिः । स्वार्थे कन् तत्रैव “आहार्य्यकमपि तस्याः सहजमिवाशोभत” ७,२१, कुमा०मल्लि० । ४लौकिके ५ औपासनिकेऽग्नौ च “आहार्य्येणानाहिताग्निम्” “पत्नीञ्च” आश्व०श्रौ० । “येनाहिताग्निना सर्व्वाधानं कृतं तस्य पत्नीं लौकिकेन, यस्यौपासनवास्ति तस्य पत्नीमौपसनिकेन दहेयुः” नारा० । ६इच्छाप्रयोज्यारोपेण विषयीकार्य्ये बाधनिश्चयकालिके तद्धर्म्माभाववति तद्धर्म्मवत्त्वेन ज्ञेये । भावे क्त । ७तादृशज्ञाने न० । यथा निर्वह्निः पर्व्वतो वह्निमानिति ज्ञानं तच्च वह्न्यभाववति पर्व्वते वह्निप्रकारकत्वात् इच्छाप्रयोज्यत्वाच्च आहार्य्यम् । तच्च प्रत्यक्षमेव तदभाववत्त्वेन निश्चितेऽपि धर्म्मिणि तद्बोधस्य इच्छाप्रयोज्यत्वात् “परोक्षज्ञानम् अनाहार्य्यम् निश्चयश्चेति सिद्धान्तः” चिन्ता० । “शाब्दबोधोऽप्याहार्य्योभवत्यालङ्कारिका यथा अयं मुखमित्यादौ चन्द्रभिन्ने मुखे चन्द्राभेदज्ञानम् तच्चाहार्य्यमेव ८०४पृ०आरो-

प्रयत्नेऽधिकतुलनम् । "भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" सा॰द॰उक्ते नटादिभिरात्मनि कर्त्तव्ये रामाद्यारोपहेतुके ८अभिनयभेदे च । आ+हृ–कर्म्मणि ण्यत् उपसर्गयोगात् ९भक्ष्ये "आहार्य्यं षड्विधं भक्ष्यमित्यादि" भाव॰ प्र॰ ।

आहाव पु॰ आ+ह्वे+घञ् संप्रसारणे वृद्धिः । कूपसमीपे गवादीनां जलपानाय प्रस्तरादिना रचिते(चाल) १क्षुद्रजलाशये निपाने "प्रापिपन्नाहवप्रप्ता आहावस्थपक्षिणः" भट्टिः ।"आहावमुदकाधारम्"जयम॰ "निपानमाहावः" पा॰। २युद्धे। भावे घञ्। ३आह्वाने आ+हु–आधारे घञ्। ४अग्नौ । "नाभिं यज्ञानां सदनं रयीणां महामाहावमभि संनवन्त" ऋ॰ ६,७,२ । आहूयतेऽस्मिन्नाहावमग्निम् इष्ट्युदकधारणमाहावं निपानस्थानीयं वा" भा॰। आ+ह्वे–भावे करणे वा घञ्। ५मन्त्रविशेषेणाह्वाने ६आह्वानसाधने मन्त्रभेदे च "आदौ निविद्धानीयानां सूक्तानामनेकत्वेत् प्रथमेष्वाहावः" आश्व॰श्रौ॰ । "तस्यानेकत्वे प्रथम एवाहावः"वृत्तिः"तृतीयसवने मरुत्वादिष्वाहावः आश्व॰श्रौ॰ । "एषु आहावः प्रातःसवनेन शास्त्रादिषु" आ॰श्रौ॰। "एषु स्थानेषु ऋगन्तरेणाह्वाने विहिते शोंसावोमित्यनेनैवाह्वानं कुर्य्यात् नान्येनेति नियम्यते" वृत्तिः "शोंसावो इत्येवाहावे"आश्व॰ श्रौ॰ प्रतिगरसंज्ञार्थमिमे सूत्रे ।

आहिंसि पुंस्त्री अहिंसस्यापत्यम् इञ् । अहिंसकापत्ये ततः युवापत्ये फक् तौल्व॰ तस्य न लुक् । आहिंसायनः तत्पौत्रे ।

आहिक पु॰ अहिरिव कन् स्वार्थे अण्। १केतुग्रहे हेमच॰ तस्य सर्पतुल्याकारत्वात्तथात्वम् ।२पाणिनिसुनौ च त्रिका॰।

आहिच्छत्र त्रि॰अहिच्छत्रदेशे भवः अण् । अहिच्छत्रदेशे भवे

आहिण्डिक पु॰ निषादेन वैदेह्यां जनिते अन्त्यजवर्णसङ्करभेदे "आहिण्डिको निषादेन वैदेह्यामेव जायते" मनुः । "बाह्यसंरक्षणादावाहिण्डिकानाम्" औशनसस्मृत्योक्ता तद्वृत्तिर्ज्ञेया ।

आहित त्रि॰ आ+धा–क्त ह्यादेशः । १न्यस्ते, २स्थापिते, ३अर्पिते । "आवर्त्तैरहिपतेरयमाहिताङ्कः" किरा॰ ४कृते,५कृताधानसंस्कारे च"प्रणीतायामप्रणीतस्य यथाऽग्निदैवतं स्यात्" मनुव्या॰ "आहितोऽनाहितो वाग्निरिति" कुल्लू॰ । [ विख्याते २न्यस्तचिह्ने च ।

आहितलक्षण त्रि॰ आहितं लक्षणं यस्य । १गुणादिद्वारा

आहिताग्नि त्रि॰ आहितोऽग्निर्येन । वेदमन्त्रादिना कृत संस्कारग्नियुक्ते तदाधानप्रकारः आधानशब्दे ७०८ पृष्ठे उक्तप्रायः । आश्व॰श्रौ॰ २प्र॰ २क॰ विस्तरेणोक्तः । "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" मनुः।"गुरोरपीदं धनमाहिताग्नेः" रघुः । "आहिताग्निः सत्यव्रत्यमिदं चरेत्"तैत्ति॰"न वाऽऽहिताग्निनाऽनृतं वदितव्यम्" शत॰ ब्रा॰ २,२,२,२० । "देवान् वा एष उपावर्त्तते य आहिताग्निर्भवति" ऐत॰ब्रा॰ । आहार्य्येवानाहिताग्निम्"आश्व॰श्रौ॰। वा परनिपाते अग्न्याहितोऽप्यत्र ।

आहिताग्निगण पु॰पाणिन्युक्ते वा परनिपातार्थे शब्दसमूहभेदे । स च गणः आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत मद्यपीत ऊढभार्य्य गतार्थ" "आकृतिगणः तेनान्येऽपि" सि॰कौ॰ ।

आहिति स्त्री आ+धा क्तिन् ह्यादेशः । १स्थापने २आधाने मन्त्रैरग्न्यादेः संस्कारे ३आहुतौ च ।"तस्मिन् यत्किञ्चाध्यादाहितय एव ताः आहितयो ह वै ता आहुतय इत्याचक्षते"शत॰ब्रा॰१०,६,२,२२, । [ (वाघुड़े) ।

आहितुण्डिक त्रि॰अहितुण्डेन दीव्यति ठक् । व्यालग्राहिणि

आहिमत त्रि॰ अहिमतोऽदूरभवः अण्। सर्पविशिष्टदेशादूरभवे ।

आहुक पु॰ यदुवंश्ये क्षत्रियभेदे स च वसुदेवएव । "केशवोऽपि मुदा युक्तः प्रविवेश पुरोत्तमम् । पूज्यमानो यदुश्रेष्ठैरुग्रसेनमुखैस्तथा । आहुकं पितरं दृष्ट्वा मातरञ्च यशस्विनीम् । अभिवाद्य बलश्चैव स्थितः कमललोचनः" इति भा॰ सभा॰२अ॰ । अत्र केशवपितृत्वेन कीर्त्तनात् वसुदेवस्य नामान्तरत्वं तस्य प्रतीयते "एवं आहुकआहुकी चैव ख्यातौ ख्यातिमतांवरौ" हरि॰ ३८अ॰। एवमाहुकिन् तद्वंश्ये क्षत्रिये पु॰ ।

आहुत न॰ उद्देश्यस्याभिमुख्येन साक्षादेव हुतं दत्तम् आ+हु–क्त। महायज्ञकर्त्तव्येषु पञ्चसु यज्ञेषु १मनुष्ययज्ञे, २भूतयज्ञे चेत्यन्ये । कर्म्मणि क्त।३आभिमुख्येन हुते देवादौ त्रि॰

आहुति स्त्री आ+हु–क्तिन्। देवोद्देशेन मन्त्रेणाग्नौ हविःक्षेपे । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते"मनुः । "वेत्थ सौम्य ! यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" छा॰उ॰ । "प्रातराहुत्यां हुतायां पूर्णाहुत्यन्ते वरदानम्" कात्या॰ २०,१,२०। "जुहुयात् सर्पिराहुतीः" मनुः "प्राणाद्याहुतिपञ्चकम्" स्मृतिः। आहूयते कर्म्मणि क्त।२आहूयमाने हवनीयद्रव्ये हविरादौ ।"धुमामं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः" रघुः।"प्रस्ताहुतिहुतं यज्ञ"मनुः।

आहुल्य न० आ+ह्वल–वा०क्यप् संप्रसारणञ्च । काश्मीरादौ (तरवट) इति प्रसिद्धे काञ्चनवर्णपुष्पे चित्लीफले क्षुपभेदे ।

आहुव त्रि०आ+ह्वा–घञर्थे कर्म्मणि क संप्र०उवङ्। आह्वातव्ये "अनुकटीनामन्वाहुवः" ऋ० ८,१२,१८, आहुवः आह्वातव्यः"भा०। [२आहूयमाने च ।

आहू त्रि० आह्वयति आ+ह्वे–क्विप् संप्र० । १आह्वायके ।

आहूत त्रि० आ+ह्वे–क्त । कृताह्वाने १आकारिते "आहूत इव मे शीघ्रम्" भाग०१०स्कन्धे । "नचाहूतोवदेत् किञ्चिद्धीनोदण्डश्च स स्मृतः"या०स्मृतिः। "वियच्चमाणेनाहूतः पार्थेनाथ द्विषन्नरम्"माघः।"आहूतो न निवर्त्तेत द्यूतादपि रणादपि"। आभूत+पृ०भस्य हः। २आभूतप्रलयपर्य्यन्ते "पटोलानि कदम्बानि हन्ताकसहितानि च। न त्यजेत् कार्त्तिके यस्तु यावदाहूतनारकी" ति०त०पु० "आहूतम् आभूतप्रलयपर्य्यन्तम्" रघु० ३नामकृतव्यपदेशे विश्वे च । सृष्टिकाले हि भूतानां तत्तन्नामव्यपदेश इति विश्वव्यपदेशपर्य्यन्तमित्येव तस्यार्थोन्याय्यः । भावे क्त । ४आह्वाने ।

आहूतप्रपलायिन् त्रि०आहूतः विवादनिर्णयाय राज्ञाहूतोऽपि प्रपलायते प्र+परा–अय–णिनि रस्य लः । व्यवहारे हीनवादिभेदे स च पञ्चविधः । "अन्यवादी क्रियाद्वेषी, नोपस्थाता निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः"मिता०स्मृत्युक्तेः ।

आहूतसंप्लव पु० आहूतस्य नाम्ना कृतव्यपदेशस्य विश्वस्य संप्लवोयत्र । प्रलयकाले तत्र हि कृतव्यपदेशस्य विश्वस्य व्यपदेशाभावेन व्यवहार्य्यत्वाभावः।"आहूतसंप्लवस्थानममृतत्वं भाषते"इति पुराणे आभूतेत्यत्राहूतेति पाठान्तरम् ।

आहूति स्त्री आ+ह्वे–क्तिन् । आह्वाने (डाका) ।

आहूय अव्य०आ+ह्वे–ल्यप्। आह्वानं कृत्वेत्यर्थे "आहूय दानं कन्याया ब्राह्मोधर्म्मः प्रकीर्त्तितः"मनुः ।

आहृत त्रि० आ+हृ–क्त । आनीते कृताहरणे ।

आहृति स्त्री आ+हृ–क्तिन् । आहरणे आनयने ।

आहृत्य अव्य० आ+हृ–ल्यप् । आहरणं कृत्वा आनीयेत्यर्थे "समाहृत्यान्यतन्त्राणि" अमरः ।

आहेय त्रि०अहेरिदम् ढक् । सर्पसम्बन्धिनि विषचर्म्मास्थ्यादौ

आहो अव्य०आ+हन–डो ।१प्रश्ने, २विकल्पे, ३विचारे च । "यत्रायं पुरुषोम्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति" शत०ब्रा०१४,६,२,१२, "आहो विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुते" कठो० । "आहो निवत्स्यति समं हरिणाङ्गनाभिः" शाकुन्तले सखीप्रति दुष्मन्तप्रश्नः ।

आहोपुरुषिका स्त्री अहमेव पुरुषः शूरः मयू० अहो पुरुषः तस्य भावः वुञ् स्त्रीत्वात् टाप् । दर्पजन्ये आत्मनि उत्कर्षसम्भावने (बाहादुरी) "आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः" भट्टिः ।

आहोस्वित् अव्य०आहो च स्विद् द्व० । १विकल्पे, २प्रश्ने च "आहोस्वित् शाश्वतं स्थानं तेषां तत्र द्विजोत्तम !"भा०व०५अ० । द्विपदमित्येके ।

आह्न न० अह्नां समूहः खण्डिका० अञ् । दिनसमूहे"अहोरात्रे वा अभिवर्त्तमाने संवत्सरमाप्नुतः संवत्सर इदं सर्व्वमाह्नायैवैतामरिष्टिं स्वस्तिमाशास्ते" शत०ब्रा०६,६,४,२, अह्ना निर्वृत्तादि चतुरर्थ्याम् संकाशादि० अञ् । दिननिर्वृत्तादौ त्रि० ।

आह्निक त्रि० अह्नि भवः अह्ना निर्वृत्तं साध्यं ठञ् स्त्रियां ङीप् । १दिनभवे २दिनसाध्ये च । "भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम्"भा०व०१३७अ०। "कृताह्निकं कुरुश्रेष्ठोजपते समरुद्गणः"भा०व०१४२ अ०। दिनकर्त्तव्यानि आह्निकतत्त्वे आह्निककृत्यप्रदीपादौ उक्तानि । दिवसकर्त्तव्यान्याचारशब्दे ६२१ पृष्ठे उक्तप्रायाणि दिनविभागेषु कर्त्तव्यभेदोद्देशेन संक्षेपात् दर्शितो यथा । "प्रातरुत्थाय कर्त्तव्यं यद्द्विजेन दिने दिने । तत्सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम् । उदयास्तमयं यावन्न विप्रः क्षणिकोभवेत् । नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः । यः स्वकर्म परित्यज्य यदन्यत् कुरुते द्विजः । अज्ञानाद्यदि वा मोहात् स तेन पतितोभवेत् । दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते । द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा । षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् । विभागेष्वेषु यत्कर्म्म तत्प्रवक्ष्याम्यशेषतः । उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत् । ततः स्नानं प्रकुर्वीत दन्तधावनपूर्व्वकम् । अत्यन्तमलिनः कायोनवच्छिद्रसमन्वितः। स्रवत्येव दिवा रात्रौ प्रातःस्नानं विशोधनम् क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च । अङ्गानि समतां यान्ति उत्तमान्यधमैः सह । नानास्वेदसमाकीर्णः शयनादुत्थितः पुमान् । अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन । प्रातरुत्थाय योविप्रः प्रातःस्नायी भवेत् सदा । समस्तजन्मजं पापं त्रिभिर्वर्षैर्व्यपोहति । उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ । प्राजापत्येन तत्तुल्यं महापातकनाशनम् । प्रातःस्नानं प्र-

ध्वंसन्ति दृष्टादृष्टकरं हि तत् । सर्व्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् । स्नानादनन्तरं तावदुपस्पर्शनमुच्यते । अनेन तु विधानेन आचान्तः शुचितामियात् । प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम् । संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततोमुखम् । संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत् । ततः पादौ समभ्युक्ष्य अङ्गानि समुपस्पृशेत् । अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् । अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनःपुनः । कनिष्ठाङ्गुष्ठेन नाभिं हृदयञ्च तलेन वै । सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् । सन्ध्यायाञ्च प्रभाते च मध्याह्ने च ततः पुनः । सन्ध्यां नोपासीत यस्तु ब्राह्मणोहि विशेषतः । स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते । सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु । यदन्यत् कुरुते कर्म्म न तस्य फलमश्नुते । सन्ध्याकर्म्मावसाने तु स्वयंहोमोविधीयते । स्वयं होमे फलं यत्तु तदन्येन न जायते । ऋत्विक् पुत्रोगुरुर्भ्राता भागिनेयोऽथ विट्पतिः । एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि । देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् । देवकार्य्याणि पूर्व्वाह्णे मनुष्याणाञ्च मध्यमे । पितॄणामपराह्णे च कार्य्याण्येतानि यत्नतः । पौर्व्वाह्णिकन्तु यत् कर्म्म यदि तत् सायमाचरेत् । न तस्य फलमाप्नोति बन्ध्यस्त्रीमैथुनं यथा । दिवसस्याद्यभागे तु सर्व्वमेतद्विधीयते । द्वितीये च तथा भागे वेदाभ्यासोविधीयते । वेदाभ्यासोहि विप्राणां परमं तपउच्यते । ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु सः । वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः । तद्दानञ्च शिष्येभ्योवेदाभ्यासोहि पञ्चधा । समित्पुष्पकुशादीनां स कालः समुदाहृतः । तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम् । पिता माता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः । अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गउदाहृतः । ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः । अन्येऽप्यधनयुक्ताश्च पोष्यवर्गउदाहृतः । भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् । नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् । सार्व्वभौतिकमन्नाद्यं कर्त्तव्यन्तु विशेषतः । ज्ञानविद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् । स जीवति यएकोबहुभिश्चोपजीव्यते । जीवन्तो मृतकास्त्वन्ये य आत्मम्भरयो नराः । बह्वर्थे जीव्यते कैश्चित् कुटुम्बार्थे तथा परैः । आत्मार्थेऽन्योन शक्नोति स्वोदरेणापि दुःखितः । दीनानाथविशिष्टेभ्योदातव्यं भूतिमिच्छता । अदत्तदाना जायन्ते परभाग्योपजीविनः । यद्ददाति विशिष्टेभ्योयज्जुहोति दिने दिने । तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति । चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले । नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते । तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा । मलापकर्षणं पश्चान्मन्त्रवत्तु जले स्मृतम् । सन्ध्यास्नानमुभाभ्याञ्च स्नानभेदाः प्रकीर्त्तिताः । मार्ज्जनं जलमध्ये तु प्राणायामोयतस्ततः । उपस्थानं ततः पश्चात् सावित्र्याजपउच्यते । सविता देवता यस्या मुखमग्निस्त्रिधा स्थितः । विश्वामित्रऋषिश्छन्दोगायत्री सा विशिष्यते । पञ्चमे च तथा भागे संविभागोयथार्हतः । पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते । देवैश्चैव मनुष्यैश्च तिर्य्यग्भिश्चोपजीव्यते । गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही । त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते । तेनैव सीदमानेन सीदन्तीहेतरे त्रयः । मूलप्राणोभवेत् स्कन्धः स्कन्धाच्छाखाः सपल्लवाः । मूलेनैव विनष्टेन सर्व्वमेतद्विनश्यति । तस्मात् सर्व्वप्रयत्नेन रक्षितव्योगृहाश्रमी । राज्ञा, चान्यैस्त्रिभिः पूज्योमाननीयश्च सर्व्वदा । गृहस्थोऽपि क्रियायुक्तो न गृहेण गृहाश्रमी । न चैव पुत्रदारेण स्वकर्म्मपरिवर्जितः । अस्नात्वा चाप्यहुत्वा चाजप्त्वाऽदत्त्वा च मानवः । देवादीनामृणी भूत्वा नरकं प्रतिपद्यते । एकएव हि भुङ्क्तेऽन्नमपरोऽन्नेन भुज्यते । न भुज्यते सएवैकोयोभुङ्क्तेऽन्नं समाश्रिता । विभागशीलो योनित्यं क्षमायुक्तोदयापरः । देवतातिथिभक्तश्च गृहस्थः स तु धार्म्मिकः । दया लज्जा क्षमा श्रद्धा प्रज्ञा योगः कृतज्ञता । एते यस्य गुणाः सन्ति स गृही मुख्यउच्यते । संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् । भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् । इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत् । अष्टमे लोकयात्रा तु बहिःसन्ध्या ततः पुनः । होमोभोजनकञ्चैव यच्चान्यद्गृहकृत्यकम् । कृत्वा चैवं ततः पश्चात् स्वाध्यायं किञ्चिदाहरेत् । प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयं शयानोहि ब्रह्मभूयाय कल्पते । नैमित्तिकानि काम्यानि निपतन्ति यथा यथा । तथा तथैव कार्य्याणि न कालस्तु विधीयते । अस्मिन्नेव प्रयुञ्जानोह्यस्मिन्नेव तु लीयते । तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं सुखमिच्छता । सर्व्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत् । भुञ्जानश्च शयानश्च ब्राह्मणोनावसीदति" अह्ना पाकम् ठञ् । २ सूत्रात्मकशास्त्रभाष्यस्य पादांशव्याख्याभेदे न० । यथा कणादगौतमपाणिनिसूत्रभाष्यस्य

पादांशव्याख्यारूपाणि चक्रा पाठत्वात् आह्निकानि "तमधीष्टोभृतो भूतोभावि" पा० ठञ्। दिवसे-सतृत्य-नियोजिते ३अध्यापके ४भृते वेतनेन क्रीते दासादौ ५भूते खसत्तया व्याप्ते ज्वरादौ च।

**आह्लाद** पु० आ+ह्लद-घञ्।। आनन्दे। "नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः" भाग०।

**आह्लादन** न० आ+ह्लद-णिच्-ल्युट्। १आनन्दसम्पादने कर्त्तरि ल्यु। २आनन्दसम्पादके त्रि०। करणे ल्युट्। ३आनन्दसाधने त्रि०स्त्रियां ङीप्।

**आह्लादित** त्रि०आ+ह्लद-णिच्-क्त। १कृतानन्दने। यस्या-नन्दो जनितस्तस्मिन्। आह्लादोजातोऽस्य तार० इतच्। २जाताह्लादे च।

**आह्लादिन्** त्रि० आ-ह्लद-णिनि १आनन्दयुक्ते णिच्-णिनि। २आनन्दकारके। स्त्रियामुभयतो ङीप्।

**आह्व** त्रि० आह्वयति आ+ह्वे-ड। आह्वानकारके।

**आह्वय** पु० आह्वेयीयते प्राप्यते या-घञर्थे क ३त०। १नामनि आह्वायकैर्हि नामोच्चारणेनैव आहूयते इति आह्वायकत्वप्राप्तौ नाम्नःकरणत्वात्तथात्वम्। आ+ह्वे वा० करणे श इत्यन्ये "काव्यं रामायणाह्वयम्," रामा०। गजाह्वयं गताह्वयं नागाह्वयम् इत्यादि। २प्राणिभिर्मेषा-दिभिः सपणद्यूतभेदे च मवाष्टादशविवादान्तर्गतः। "तेषा-माद्यमृणादानम्" इत्युपक्रम्य "द्यूतमाह्वयएव च। पदा-न्यष्टादशैतानि व्यवहारस्थिताविहेति"मनूक्तेः। अस्य सम्-पूर्व्वकतापि "अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः" मनुना तथा प्रयोगात् तत्स्वरूपमुक्तं मिता० नार० "अक्षवध्रशला-काद्यैर्देवनं जिह्मकारितम्। पणक्रीड़ा वयोभिश्च पदं द्यूतसमाह्वयम्" व्याख्यातञ्च मिता० यथा "अक्षाः पाशकाः वध्रश्चर्म्मपट्टिका शलाका दन्तादिमय्यो दीर्घचतु-रस्राः आद्यग्रहणात् चतुरङ्गादिक्रीड़ासाधनकरितुरगा-दिकं गृह्यते। तैरप्राणिभिर्यद्देवनं क्रीड़ा पणपूर्व्विका क्रियते तथा वयोभिः पक्षिभिः कुक्कुटपारावतादिभिः चशब्दान्मल्लमेषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीडा क्रियते तदुभयं द्यूतसमाह्वयाख्यं विवादपदम्। द्यूतञ्च समाह्वयश्च द्यूतसमाह्वयम्। तत्प्रकार; तत्रैव दर्शितो यथा। "तत्र द्यूतसभाधिकारिणो वृत्तिमाह। "ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम्। गृह्णीयाद्धूर्तकितवादितराद्दशकं श-तम्" या०। परस्परं सम्प्रतिपत्त्या कितवैः परिकल्पितः पणोग्लह इत्युच्यते। तत्र ग्लहे तदाश्रया शतिका शतप-रिमितादधिकपरिमाणा वा वृद्धिर्यस्यासौ शतिकवृद्धिः धूर्तकितवात्तस्मात्तथा शतमात्मवृत्त्यर्थं सभिको गृह्णी-यात्। पञ्च पणाआयो यस्मिन् शते तच्छतं पञ्चकं "तद-स्मिन् वृद्ध्यायलाभेत्यादिना" (पा०)कन्। जितस्य ग्लहस्य विंशतितमभागं गृह्णीयादित्यर्थः। सभा कितवनिवासार्था यस्यास्त्यसौ (ठन्) सभिकः कल्पिताक्षादिनिखिलक्रीड़ोप-करणस्तदुपचितद्रव्योपजीवी सभापतिरुच्यते। इतर-स्मात् पुनरपरिपूर्णशतिकवृद्धेःकितवाद्दशकं शतञ्जितद्रव्यस्य दशमभागं गृह्णीयादिति यावत्। एवं क्लृप्तवृत्तिना सभिकेन किङ्कर्त्तव्यमित्यत आह। "स सम्यक्पालितो दद्याद्राज्ञे भागं यथा कृतम्। जितमुद्ग्राहयेज्जेत्रे दद्या-त्सत्यं वचःक्षमी" या०। यएवं क्लृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्त्तकितवेभ्यो रक्षितस्तस्मै राज्ञे यथा कृतं सम्प्रतिपन्नमंशन्दद्यात्। तथा जितं यत् द्रव्यन्तदुद्ग्राह-येद्बन्धकग्रहणेनासेधादिना च पराजितसकाशादुद्धरेदु-द्धृत्य च तद्धनं जेत्रे जयिने सभिकोदद्यात्। तथा क्षमी भूत्वा सत्यञ्च वचोविश्वासार्थं द्यूतकारिणां वदेत्। तदुक्तन्नारदेन। "सभिकः कारयेद्द्यूतन्देयन्दद्याच्च यत्कृत मिति"। यदा पुनः सभिकोदापयितुन्न शक्नोति तदा राजा दापयेदित्याह। "प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले। जितं ससभिके स्थाने दापयेदन्यथा न तु" या०। प्रसिद्धे ऽप्रच्छन्ने राजाध्यक्षसमन्विते ससभिके सभिकसहिते कित-वसमाजे सभिकेन च राजभागे दत्ते राजा धूर्त्तकितव-मविप्रतिपन्नं जितमर्थन्दापयेत्। अन्यथा प्रच्छन्ने सभि-करहिते अदत्तराजभागे द्यूते जितमर्थञ्जेत्रे न दापयेत्। जयपराजयविप्रतिपत्तौ निर्णयोपायमाह। "द्रष्टारो व्यव-हाराणां साक्षिणश्च तएव हि" या०। द्यूतव्यवहाराणां द्रष्टारः सभ्यास्तएव कितवाएव राज्ञा नियोक्तव्याः न पुनःश्रुताध्ययनसम्पन्ना इत्यादिनियमोऽस्ति। साक्षिणश्च द्यूते द्यूतकाराएव कार्य्याः न वा तत्र स्त्रीबालवृद्धकितवेत्या-दि निषेधोऽस्ति। कश्चित् द्यूतविशेषं त्वस्तमाह। "राज्ञा सचिह्ननिर्वास्याः कूटाक्षोपधिदेविनः" या०। कूटै रक्षा-दिभिरुपधिना च मणिमन्त्रौषधादिना ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्वा-सयेत्। नारदेन निर्वासने विशेष उक्तः। "कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत्। कण्ठेऽक्षमालामासज्य सह्येषां विनयः स्मृत" इति। यानि च मनुवचनानि द्यू-

तन्निषेधपराणि "द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा । तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः" इत्यादीनि तान्यपि कूटाद्यदेवनविषयतया राजाध्यक्षमभिकरहितद्यूतविषयतया च योज्यानि । किन्तु "द्यूतमेकमुखं कार्य्यंतस्करज्ञानकारणात्" या०। यत्पूर्वोक्तं द्यूतन्तदेकं मुखं प्रधानं यस्य द्यूतस्य तत्तथोक्तं कार्य्यम् । राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः तस्करज्ञानकारणात् तस्करज्ञानरूपप्रयोजनमप्यालोच्य । प्रायशः चौर्य्यार्जितधना एव कितवा भवन्त्यतश्चौरविज्ञानार्थमेकमुखं कार्य्यम् । द्यूतधर्म्मं समाह्वयेऽतिदिशन्नाह । "एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये" या० । ग्लहे शतिकवृद्धेरित्यादिना योद्यूते धर्म्म उक्तः सएव प्राणिद्यूते मल्लमेषमहिषादिनिर्वर्त्ये समाह्वयसंज्ञके ज्ञातव्यः" ।

आह्वयन न० आह्वयं करोत्यनेन आह्वय+णिच् करणे ल्युट् । नामादेशसाधने शब्दभेदे । कर्त्तरि ल्यु । आह्वानकारके त्रि० "रामस्याह्वयना द्विजाः" रामा० ।

आह्वयितव्य त्रि० आह्वयं करोति आह्वय+णिच्–कर्म्मणि तव्य । आह्वानीये आकारणीये । "नेयमाह्वयितव्या ते शयने वार्षपर्वणी" भा० आ० ८२ अ०।

आह्वर त्रि० आ+ह्वृ–अच् । १कुटिले २उशीनरदेशोत्पन्ने च । तेन कन्थाशब्दस्य षष्ठीसमासे क्लीवत्वम् । आह्वरकन्थम् । अस्योत्तरपदस्थाद्युदात्तत्वम् ।

आह्वा स्त्री आ+ह्वे–अङ् । १आह्वाने । करणे अङ् । २संज्ञायाम् नामनि "लेपश्च शस्यते सिकथयताह्वगौरसर्षपैः" सुश्रु० ।

आह्वान न० आ+ह्वे–ल्युट् । आकारणे (डाका) "दूराह्वाने च गाने च रोदने च प्लुतोमतः" व्या० का० । करणे ल्युट् । २संज्ञायां नामनि नाम्ना ह्याऽऽकारणं हि क्रियते इति तस्य तथात्वम् । करणे ल्युट् । ३आह्वानसाधने राजकीयपत्रे । (तलबनामा) "यावदाह्वानदर्शनम्" भावे ल्युट् । व्यवहारे विवादनिर्णयार्थं ४राज्ञाऽऽकारणे ( तलपकरा ) तत्र वर्ज्यावर्ज्यप्रकारादि मिता० स्मृतिवाक्यात् दर्शितम् । यथा "विरुद्धं कार्य्यं न्याय्यं चेदाह्वानार्थमतः परम् । शुद्धं वा निश्चिमेत्तर्षिन् पुरुषं वा समादिशेत् । अकल्पबालस्थविरविषमस्थक्रियाकुलान् । मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृपः । न हीनपक्षां युवतिं कुलजातां प्रसूतिकाम् । सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः । तदधीनकुटुम्बिन्यः स्वैरिण्योगणिकाश्च याः । निष्कुला याश्च पतितास्तासामाह्वानमिष्यते । कालं देशञ्च विज्ञाय कार्य्याणाञ्च बलाबलम् । अकल्यादीनपि शनैर्यानैराह्वानयेन्नृपः । ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः । तानप्याह्वानयेद्राजा गुरुकार्य्येष्वकोपयन्निति" अत सर्व्वत्र आह्वानं–करोति णिचि आह्वानयेदिति सिद्धम् ।"तत्करोति तदाचष्टे इत्यत्र प्रकृतिवच्च कारकमिति वार्त्तिकं तु नेह प्रवर्त्तते बहुलग्रहणात् ।

आह्वायक त्रि० आ+ह्वे–ण्वुल् युच् । आह्वानकारके आकारके । "आह्वायकेभ्यः श्रुतस्तनुष्टत्तिः" भट्टिः णिनि आह्वायीत्यप्यत्र स्त्रियां ङीप् ।

आह्वारक त्रि० आ+ह्वृ–ण्वुल् । कुटिले ।

आह्वृति स्त्री आ+ह्वृ–क्तिन् । १कौटिल्ये कर्त्तरि क्तिच् । २राजभेदे "रुक्मी चैवाह्वृतिश्चैव नीलोनार्म्मदएव च" हरि० १४१ अ० "रुक्मो चैवाह्वृतिश्चैव तस्यतुर्निचितौ रणे" हरि वं० १४२ अ० "जरासन्धं समाश्रित्य तथैवाह्वृतिभीष्मकौ, हरि० १६० अ० ।

इति श्रीतारानाथतर्कवाचस्पतिसंकलिते वाचस्पत्ये आकारादिशब्दार्थनिर्णयः ।

---

# इ

इ पु० अस्य विष्णोरपत्यम् अ+इञ् । १कामदेवे स हि रुक्मिण्यां विष्णोरंशात् कृष्णात् जातः तत्कथा यथा "रुक्मिण्यां वासुदेवाच्च लक्ष्म्यां कामोधृतव्रतः । शम्बरान्तकरो जज्ञे प्रद्युम्नः कामदर्शनः" हरि० १६२ अ० । एवं व्युत्पत्तिमत्त्वेन कामदेवस्यैव इशब्दार्थता नाभिधानस्येति बहवः । कामदेवदैवत्याच्च अभिलाषे औपचारिक इत्यन्ये । नञर्थकस्य अ इत्यस्येदम् अ+इञ् । २भेदे, ३रोषोक्तौ, ४निराकरणे, ५अनुकम्पायाम्, ६खेदे, ७विस्मये, ८निन्दायाम्, ९सम्बोधने च अव्य० चादि । निपातैकाच्कत्वात् अस्य प्रगृह्यसंज्ञा तेन इ इन्द्र इत्यादौ न सन्धिः

इ गतौ भ्वादि० पर० सक० अनिट् । अयति ऐषीत् इयाय इयतुः इयुः इययिथ इयेथ । अयन् इतः इतिः अयनम् । आयः इत्वा । "उदयति न तदद्युतमाशिभिः" नैष० "अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्" उद्भटः । "उदयति विततोर्द्ध्वरश्मिरज्जौ" माघः । अयञ्च भाष्यः

कटौ गतौ इत्यत्र इ ई इति प्रश्लेषात् लभ्यः सि०कौ०

**इक्** स्मरणेऽधिपूर्व्वक एव किन् कित्करणमधीगर्थेत्यादौ विशेषार्थम् अदादि०पर०सक०अनिट्। अध्येति अध्यैषीत् अध्यगात् इत्यन्ये इण इवास्य तिङि रूपं न भवति। अधीयन्। "स्मरतयोराघवयोरधीयन्" भट्टिः। एतद्योगे कर्म्मणि संबन्धविवक्षायां षष्ठी। मातुरध्येति। प्रतिपदविहिततयाऽनया षष्ठ्या न समासः मातुरध्ययनम्। "किंवत्स्विदिन्द्रो अध्येति कियन्मातुः कियत् पितुः" ऋ०४, १७,१२। "रामस्य दयमानोऽसावध्येति तव लक्ष्मणः" भट्टिः सम्बन्धाविवक्षायां तु द्वितीया।"अग्निं स्वर्ग्यमध्येषि मृत्यो!"कठो०। "अयमात्मर्षिः संमतीममात्मानं वैश्वानरमध्येति" छा० उ०। "अधीहि भगवन्! ब्रह्मेति" छा०उ०।

[ बंगाह्वरे

**इक्कट** पु० एति भूमिसन्निधि गच्छति इ-कटच् वा गुणाभावः।

**इक्कट** पु०ईर्यते इ-क्विप् इत् लभ्यः कटो यस्मात् पृ०तस्य कः। कटसाधने तृणविशेषे त्रिका० इत्कट इति ख्यात०। तस्य सन्निकृष्टदेशादिः कुमुदा० चतुरर्थ्यां ठच्। इक्कटिक तत्सन्निकृष्टदेशादौ त्रि० स्त्रियां ङीप्। ग्रेचा० चतुरर्थ्याम् इनि। तदर्थे स्त्रियां ङीप्।

**इक्कवाल** पु० "चेत् कण्टके (१ ४ ७ १०)पणफरे (२,५,८,११) तु ग्रहाः समस्ताः स्यादिक्कवालइति राज्यसुखाप्ति हेतुः" नील० ता०उक्ते पर्थलग्नतः उक्तस्थानानामन्यतमस्थाने रव्यादिसमस्तग्रहाणां स्थितिहेतुके राजयोगभेदे।

**इक्षु** पु० इष्यतेऽसौ माधुर्य्यात् इष+क्सु। मधुररसयुते असिपत्रे स्वनामख्याते वृक्षे। तद्भेदगुणादिकमुक्तं भावप्र०। इक्षुर्दीर्घच्छदः प्रोक्तस्तथा भूमिरसोऽपि च। गुडमूलोऽसिपत्रश्च तथा मधुतृणः स्मृतः। इक्षवोरक्तपित्तघ्नावल्याष्टय्याः कफप्रदाः। स्वादुपाकरसाः स्निग्धागुरवोमूत्रला हिमाः। अथेक्षुभेदाः "पौण्ड्रकोभीरुकश्चापि वंशकः शतपोरकः। कान्तारस्तापसेक्षुश्च काण्डेक्षुः सूचिपत्रकः। नैपालोदीर्घपत्रश्च नीलपोरोऽथ कोशकृत्। इत्येताजातयस्तेषां कथयामि गुणानपि। तत्र पौण्ड्रकभीरुकयोर्गुणाः वातपित्तप्रशमनोमधुरोरसपाकयोः। सुशीतोवृंहणोबल्यः पौण्ड्रकोभीरुकस्तथा अथ (कुशिया) कोशकृतोगुणाः "कोशकारो गुरुःशीतोरक्तपित्तक्षयापहः। अथ (काजला) कान्तारेक्षुगुणाः कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलोवृंहणः सरः। (बडौवा) वंशकगुणाः "दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः। शतपोरकगुणाः "शतपर्वाभवेत्किञ्चित्कोशकारगुणान्वितः। विशेषात्किंचिदुष्णश्च सक्षारःपवनापहः" सुश्रुते तु काण्डेक्षुरित्यत्र काष्ठेक्षुरिति पाठः इतोऽवशिष्टानां गुणास्तत्रोक्ता यथा "कान्तारतापसाविक्षू वंशकानुकरौ गुणे। एवंगुणस्तु काष्ठेक्षुःस तु वातप्रकोपणः। सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः। वातलाःकफपित्तघ्नाः सकषाया विदाहिनः" भाव०प्र० "बालयुवद्वृद्धेक्षुगुणाः बालइक्षुः कफं कुर्य्यान्मेदोमेहकरश्च सः। युवा तु वातहृत्स्वादुरीषत्तीक्ष्णश्च वातनुत्। रक्तपित्तहरोवृद्धः क्षतहृद्बलवीर्य्यकृत्। अथाङ्गभेदेन गुणभेदः मूले तु मधुरोऽत्यर्थं मध्येऽपि मधुरः स्मृतः। अग्रेष्वथिषु विज्ञेय इक्षूणां लवणोरसः। अथ दन्तपीडितेक्षुरसस्य गुणाः दन्तनिष्पीडितस्येक्षोरसः पित्तास्रनाशनः। शर्करासमवीर्य्यःस्यादविदाही कफप्रदः। अथ यन्त्रपीडितेक्षुरस गुणाः मूलाग्रजन्तुग्रन्थ्यादिपीडनान्मलसङ्करात्। तस्माद्विदाही विष्टम्भी गुरुः स्याद्यान्त्रिकोरसः। अथ पर्य्युषितेक्षुरसगुणाः रसःपर्य्युषितोनेष्टोह्यम्लोवातापहोगुरुर्विकफपित्तकरः शोषी भेदनश्चातिमूत्रलः। अथपक्वेक्षुरसस्य गुणाः इक्षोर्विकाराःतृड्दाहमूर्च्छापित्तास्रनाशनाः। गुरवोमधुरा बल्याः स्निग्धा वातहराःस्मृताः। तृष्णामोहहराःख्याता वृंहणाविषहारिणः। अथ (भेला) फाणितस्य लक्षणं गुणाश्च इक्षोरसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः। सएवेक्षुविकारेषु ख्यातःफाणितसंज्ञया। फाणितं गुर्व्वभिष्यन्दि वृंहणं कफशुक्रकृत्। वातपित्तश्रमान् हन्ति मूत्रवस्तिविशोधनम्। अथ मत्स्यण्डग्याः(सारगुड) (राव) इति ख्यातायाः लक्षणं गुणाश्च इक्षोरसोयः संपक्वोघनः किंचिद्द्रवान्वितः। मन्दंस्रवन्दते यस्मात् मत्स्यण्डीति ततः स्मृता। मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा। मधुरा वृंहणी वृष्या रक्तदोषापहा स्मृता। अथ (ढिमे गुड़) गुड़स्य लक्षणं गुणाश्च इक्षोरसोयः सम्पक्वोजायतेलोष्टवद्दृढः। स गुड़ोगौड़देशे तु मत्स्यण्ड्येव गुड़ोमतः। गुड़ोवृष्योगुरुः स्निग्धोवातघ्नो मूत्रशोधनः। नातिपित्तहरो मेदःकफकृमिबलप्रदः। अथ नवपुराणगुडगुणाः गुड़ोनवः कफश्वासकासकृमिकरोऽग्निकृत्। पित्तघ्नो मधुरः स्निग्धो वातघ्नोऽसृक्प्रसादनः स पुराणोऽधिकगुणो बुधैः पथ्यतमः स्मृतः" द्रव्यभेदेन युक्तस्य गुड़स्य गुणाः श्लेष्माणमाशु विनिहन्ति सदार्द्रकेण पित्तं निहन्ति च तदेव हरीतकीभिः। शुण्ठ्या समं हरति वातमशेषमित्थं दोषत्रयक्षयकराय नमो गुड़ाय" (खांड) खण्डस्य गुणाः

खण्डन्तु मधुरं वृष्यं चक्षुष्यं बृंहणं हिमम्। वातपित्तहरं स्निग्धं बल्यं वान्तिहरं परम्। (चिनि) सितायाः लक्षणं गुणाश्च खण्डन्तु सिकताकारं सुश्वेतं शर्करा सिता। सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत्। मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी। अथ "(मिचरि) सितोपलगुणाः भवेत् पुष्पसिता शीता रक्तपित्तहरी मता। सितोपलनिभा लघ्वी वातपित्तहरा हिमा। शर्करा छर्द्यतीसारतृड्दाहरक्तपित्तनुत्। यथा यथैव नैर्मल्यं मधुरत्वं तथा तथा। स्नेहगौरवशैत्यानि सरत्वं च तथा तथा" इति भावप्र० इक्षुवर्गः। एतत्प्रसङ्गात् सुश्रुते खण्डादिजातद्रव्याणामन्यद्रव्यजातशर्कराणाञ्च गुणा उक्ता यथा। "यो यो मत्स्यण्डिकाखण्डशर्कराणां स्वको गुणः। तेन तेनैव निर्देश्यास्तेषां विस्रावणे गुणाः। सारस्थिता सुविमला निःक्षारा च यथा यथा। तथा तथा गुणवती विज्ञेया शर्करा बुधैः। मधुशर्करा पुनश्छर्द्यतीसारहरी रूक्षा छेदनी प्रह्लादनी कषाया समधुरा मधुरविपाका च। यवासशर्करा मधुरकषाया तिक्तानुरसा श्लेष्महरी सरा चेति। यावन्तः शर्कराः प्रोक्ताः सर्वा दाहप्रणाशनाः। रक्तपित्तप्रशमनाश्छर्दिमूर्च्छातृष्णापहाः। रूक्षं मधूकपुष्पोत्थं फाणितं वातपित्तकृत्। कफघ्नं मधुरं पाके कषायं वस्तिदूषणम्" "मन्दाक्रान्ता वितरति रसं नेक्षुयष्टिः कदाऽपि छन्दो०। भीमवच्चेक्षुदण्डञ्च विप्राणां तु बलिर्मतः" कालिकापु० "कूष्माण्डमिक्षुदण्डांश्च" देवी पु० इक्षोर्विकारः अण्। ऐक्षव गुड़ादौ त्रि०। "ऐक्षवं गुड़वर्जितम्" स्मृतिः। इक्षूणां भवनं क्षेत्रं शाकटच् शाकिनच् च वा तद्भवने क्षेत्रे। इक्षूणां छाया। इक्षुच्छायम् न० "इक्षुच्छायानिषादिन्य" रघुः अत्र छानिषादिन्य इतिच्छेदः सि०कौ० इक्षूणां वनम्। अवनस्पतित्वात् नित्वं णत्वम् इक्षुवणम्। २कोकिलाक्षे च राजनि०। ३इक्षुच्छायायाम् [इक्षुभेदे स्वार्थे कन्। २इक्षुदर्भे

इक्षुक पु० इक्षुप्रकारः स्थूला० कन्। १इक्षुतुल्यस्वादे (नडा)

इक्षुकाण्ड पु० इक्षोः काण्डइव काण्डोऽस्य। १काशतृणे २मुञ्जतृणे (मुज) इक्षुः काण्डइव ३इक्षुदण्डे च। "क्षिप्रं पुरो न जगृहे मुहुरिक्षुकाण्डम्" माघः।

इक्षुकीय त्रि० इक्षवः सन्त्यस्मिन् छ नडा० कुक् च। इक्षुयुक्ते देशे तत्र भवः अण् बिल्व० तस्य लुक्। ऐक्षुकस्तत्र भवे त्रि० स्त्रियां ङीप्।

इक्षुकुट्टक पु० इक्षून् कुट्टयति कुट्ट-णिच् ण्वुल् ईत०। इक्षुच्छेदके गुड़कारके जातिभेदे। [२काशतृणे स्त्री भावप्र०

इक्षुगन्ध पु० इक्षोरिव गन्ध एकदेशावयवो यस्य। १क्षुद्रगोक्षुरे

इक्षुगन्धा स्त्री इक्षोर्गन्ध इव गन्धोऽस्याः। शुक्लविदार्य्याम्,

इक्षुज त्रि० इक्षोस्तद्रसाज्जायते जन-ड ५त०। इक्षुविकारे गुड़ादौ "फाणितञ्चैव मत्स्यण्डी गुड़ः खण्डकमेव च। सिता सितोपलाश्चैते षड्भेदा इक्षुजा मताः। इक्षुशब्दे दृष्टे तद्गुणादिकमुक्तम्। [विशेषे २काशतृणे च।

इक्षुतुल्या स्त्री इक्षुणा तुल्या पत्रादिना। (जनार) १धान्य-

इक्षुदण्ड पु० इक्षुर्दण्ड इव दण्डाकारे दीर्घत्वौ इक्षुयष्टिरप्यत्र स्त्री

इक्षुदर्भा स्त्री इक्षोरिव दर्भोऽस्याः। तृणपत्रिकायाम् राजनि०। [इक्षुरसतुल्यजलवाहिनि नदीभेदे।

इक्षुदा स्त्री इक्षुमिक्षुरसास्वादं ददाति जलेन दा-क।

इक्षुनेत्र न० इक्षुर्नीयते पुनरुत्पादनायारोप्यतेऽनेन नी-ष्ट्रन् इक्षोर्नेत्रमिव वा। इक्षुनेत्राकारे तद्ग्रन्थौ।

इक्षुपत्र पु० इक्षोः पत्रमिव पत्रमस्य। (जनार) धान्यभेदे।

इक्षुपाक पु० इक्षोः पाकः पक्वभावोरसादिः। गुड़ादौ

इक्षुर पु० इक्षुरिव पूर्य्यते पृ-कर्मणि घञर्थे क ह्रस्वश्च नोत्। शरतृणे रत्नमा०।

इक्षुवालिका स्त्री इक्षोर्वालिः केशइव वालः शीर्षस्थपत्रादिरस्याः। इक्षुतुल्यशीर्षे काशतृणे राजनि०।

इक्षुभक्षिती स्त्री इक्षुर्भक्षितो यया जातिवाचकपूर्व्वपदनिपातत्वात् ङीप् परनि०। इक्षुभक्षणकर्त्र्यां स्त्रियाम्

इक्षुमती स्त्री इक्षुः इक्षुरसोऽस्त्यस्याम् नद्यां मतुप् ङीप्। नदीभेदे "कौशिकी चेक्षुमती वेणा देविका च महानदी" भा० आ० ८४अ० [ईत०। इक्षुमूले २तद्ग्रन्थौ न०।

इक्षुमूल पु० इक्षोर्मूलं ग्रन्थिरिव मूलं ग्रन्थिर्यस्य। १वंशहक्षे।

इक्षुमेह पु० इक्षुरसतुल्योमेहः। सुश्रुतोक्ते प्रमेहभेदे तद्भेदा विंशतिर्निदानसंहितायामुक्ता यथा "दिवास्वप्नव्यायामालस्यप्रसक्तं शीतस्निग्धमधुरमद्यद्रवान्नपानसेविनं पुरुषं जानीयात्प्रमेही भविष्यतीति। तस्य चैवं प्रवृत्तस्यापरिपक्वा एव वातपित्तश्लेष्माणो यदा मेदसा सहैकत्वमुपेत्य मूत्रवाहिस्रोतांस्यनुसृत्याधो गत्वा वस्तेर्मुखमाश्रित्य निर्भिद्यन्ते तदा प्रमेहान् जनयन्ति। तेषान्तु पूर्व्वरूपाणि हस्तपादतलदाहः स्निग्धपिच्छिलगुरुता गात्राणां मधुरशुक्लमूत्रता तन्द्रा सादः पिपासा दुर्गन्धश्च श्वासस्तालुगलजिह्वादन्तेषु मलोत्पत्तिर्जटिलीभावः केशानां वृद्धिश्च नखानाम्। तत्राविलप्रभूतमूत्रलक्षणाः सर्व्व एव सर्व्व

दोषसमुत्थाः सह पिडकाभिः। तत्र कफादुदकेक्षुसुरासिकताशनैर्लवणपिष्टसान्द्रशुक्रफेनमेहाः दश साध्या दोषदूष्याणां समक्रियत्वात्। पित्तान्नीलहरिद्राम्लक्षारमञ्जिष्ठाशोणितमेहाः षट् याप्या दोषदूष्याणां विषमक्रियत्वात्। वातात्सर्पिर्वसाक्षौद्रहस्तिमेहाश्चत्वारोऽसाध्यतमा महात्ययिकत्वात्। तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयति वातकफशोणितमेदोभिरन्वितं पित्तं पित्तप्रमेहान्। कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातप्रमेहान्। तत्र श्वेतमवेदनमुदकमेही मेहति इक्षुरसतुल्यमिक्षुमेही, सुरामेही सुरातुल्यं, सरुजम् सिकतानुविद्धं सिकतामेही शनैः सकफ मूत्रं शनैर्मेही, विशदं लवणतुल्यं लवणमेही, हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही, आविलं सान्द्रं सान्द्रमेही, शुक्रतुल्यं शुक्रमेही स्तोकं स्तोकं सफेनं फेनमेही मेहति। अत ऊर्द्धं पित्तनिमित्तान्वक्ष्यामः। सफेनमच्छं नीलं नीलमेही मेहति सदाहं हरिद्राभं हरिद्रामेही, अम्लरसगन्धमम्लमेही, सुत क्षारप्रतिमं क्षारमेही, मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही। शोणितप्रकाशं शोणितमेही मेहति। अत ऊर्द्धं वातनिमित्तान्वक्ष्यामः। सर्पिःप्रकाशं सर्पिर्मेही मेहति वसाप्रकाशं वसामेही, क्षौद्ररसवर्णं क्षौद्रमेही, मत्तमातङ्गवदनुप्रबद्धं हस्तिमेही मेहति। मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्यारोचकाविपाकाः कफप्रसेकच्छर्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः। वृषणयोरवदरणं वस्तिभेदो मेढ्रतोदो हृदिशूलमम्लीकाज्वरातीसारारोचका वमथुः परिधूमायनं दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रनेत्रत्वञ्चेति पैत्तिकानाम्। हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वञ्चेति वातजानाम्। एवमेते विंशतिः प्रमेहाः सोपद्रवा व्याख्याताः। तत्र वसामेदोभ्यामभिपन्नशरीरस्य त्रिभिर्दोषैरनुगतधातोः प्रमेहिणो दश पिडका जायन्ते। तद्यथा। शराविका सर्षपिका कच्छपिका जालिनी विनता पुत्रिणी मसूरिका अलजी विदारिका विद्रधिका चेति। शरावमात्रा तद्रूपा निम्नमध्या शराविका। गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी। सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः। जालिनी तीव्रदाहा तु मांसजालसमावृता। महती पिडका नीला पिडका विनता स्मृता। महत्यल्पाचिता ज्ञेया पिडका सा तु पुत्रिणी। मसूरसमसंस्थाना ज्ञेया सा तु मसूरिका। रक्तासिता स्फोटवती दारुणा त्वलजी भवेत्। विदारी कन्दवद्वृत्ता कठिना च विदारिका। विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका बुधैः। ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तत्कृताः। गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मणि चोत्थिताः। सोपद्रवा दुर्व्वलस्य पिडकाः परिवर्ज्जयेत्। कृत्स्नं शरीरं निष्पीड्य मेदोमज्जवसायुतः। अधः प्रक्रमते वायुस्तेनासाध्यास्तु वातजाः। प्रमेहपूर्व्वरूपाणामाकृतिर्यत्र दृश्यते। किञ्चिच्चाप्यधिकं मूत्रं तं प्रमेहिणमादिशेत्। कृत्स्नान्यङ्गानि वा यस्मिन् पूर्व्वरूपाणि मानवे। प्रवृत्तमूत्रमत्यर्थं तं प्रमेहिणमादिशेत्। पिडकापीड़ितं गाढमुपसृष्टमुपद्रवैः। मधुमेहिनमाचष्टे स चासाध्यः प्रकीर्त्तितः। स चापि गमनात् स्थानं, स्थानादासनमिच्छति। आसनाद्वृणुते शय्यां, शयनात् स्वप्नमिच्छति। यथाहि वर्णानां पञ्चानामुत्कर्षापकर्षकृतेन संयोगविशेषेण शवलबभ्रुकपिलकपोतमेचकादीनाम् वर्णानामनेकेषामुत्पत्तिर्भवति। एवमेव दोषधातुमलाहारविशेषोत्कर्षापकर्षकृतेन संयोगविशेषेण। भवति चात्र। सर्व्वएव प्रमेहास्तु कालेनाप्रतिकारिणः। मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि" तत्रैव चिकित्सास्थाने सर्व्वप्रमेहस्य प्रकारान्तरेण द्वैविध्यमुक्तम्। यथा "द्वौ प्रमेहौ सहजोऽपथ्यनिमित्तश्च भवतः तत्र सहजो मातृपितृबीजदोषकृतः। अहिताहारजोऽपथ्यनिमित्तः। तयोः पूर्व्वेणोपद्रुतः कृशो रूक्षोऽल्पाशी पिपासुर्भृशं परिसरणशीलश्च भवति उत्तरेण स्थूलो बह्वाशी स्निग्धः शय्यासनस्वप्नशीलः प्रायेणेति" "तक्रोदकमेहिनं पारिजातकषायं पाययेत् इक्षुमेहिनं वैजयन्ती कषायम्" च सुश्रु०

**इक्षुयन्त्र** न० इक्षोर्निष्पीड़नं यन्त्रम् शा०त०। इक्षुनिष्पीड़के यन्त्रे ( मङ्गाशाल ) "गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि" स्मृतिः।

**इक्षुयोनि** पु० इक्षोरिव योनिर्यस्य। पुण्ड्रके इक्षौ राजनि०।

**इक्षुर** पु० इष–बा०–क्षुरच्। १कोकिलाक्षे ( कुलेखाडा ) रत्ना० २गोक्षुरे (गोखुरी) ३इक्षौ च शब्दरत्ना० ४काशे राजनि०। संज्ञायां कन्। १कोकिलाक्षे। २काशतृणे ३स्थूलशरे च राजनि०।

**इक्षुरस** पु० इक्षोः रस इव रसो यस्य। ( कशा ) इति ख्याते काशे तृणभेदे। "काशः काशेक्षुरुद्दिष्टः स स्यादिक्षुरसस्तथा। इक्षुवालिकेक्षुगन्धा च तथा पोटगलः स्मृतः। काशः स्यान्मधुरस्तिक्तः स्वादुपाको हिमः सरः। मूत्रकृच्छ्राश्मदाहरक्तक्षयपित्तामरोगहृत्" भाव०प्र०। हेम०।

इक्षोः रसे पु० । तस्य गुणादिकमिक्षुशब्दे उक्तम् ।

इक्षुरसक्काथ पु० इक्षुरसस्य क्काथः पाकभेदः । फाणितादौ ।

इक्षुवल्ली(ल्लरी) स्त्री इक्षुरिव मधुरा वल्ली वल्लरी वा लता । क्षीरविदार्य्याम् । (क्षीरकन्द) । राजनि०

इक्षुवालिका स्त्री इक्षुरिव वलति वल–ण्वुल् । (वालमाकना) इतिख्याते १इक्षौ २काशे च ।

इक्षुवाटी स्त्री इक्षोर्वाटीव । पुण्ड्रके इक्षौ राजनि० । ६त० । २इक्षूत्पादकक्षेत्रे । स्वार्थे कन् । तत्रैव ।

इक्षुविकार पु० ६त० । इक्षुजशब्ददर्शिते षड्विधे गुडादौ

इक्षुवेष्टन पु० इक्षोरिव वेष्टनमस्य । भद्रमुञ्जे । "भद्रमुञ्जः शरो-वाननेजन स्त्विक्षुवेष्टनः । मुञ्जद्वयं तु मधुरं तुवरं शिशिरं तथा । कम्पांसदाहक्षयार्त्तिमूत्रवस्त्यक्षिरोगहृत् । दोष-त्रयहरस्रुष्यं मेखलासूपयुज्यते" भावप्र० ।

इक्षुशर पु० इक्षुरिव शृणाति शृ–अच् । ४काशभेदे तद्धि गन्तुर्गात्रक्षतेर्हेतुत्वात् तस्येक्षुवत् हिंसकत्वम् ।

इक्षुशाकट न० इक्षूणां भवनं क्षेत्रम् इक्षु+शाकटच् । (दोकल) इति ख्याते इक्षुभवनयोग्ये क्षेत्रे । तदर्थे शाकिनच् । इक्षुशाकिनमप्यत्रार्थे न० ।

इक्षुसमुद्र पु० इक्षुरसस्वादूदकः समुद्रः । समुद्रभेदे । "लवणेक्षुसुरा-सर्पिर्दधिदुग्धजलान्तकाः" पुरा० तत्स्थलम् सि०शि० उक्तम् । "भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः । अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये, क्षारक्षीराद्यम्बुधीनां निवेशः" "दध्नोघृतस्येक्षुरसस्य तस्मान्मद्यस्य च स्वादुजलस्य चान्ते" ।

इक्षुसार पु० ६त० । फाणितादौ ।

इक्ष्वाकु पु० इक्षुमिच्छामाकरोति इक्षु+आ+कृ–डु । १कटुतुम्ब्याम् २सूर्य्यवंश्ये आदिराजे च । "यस्येक्ष्वाकुरुपव्रते" ऋ०१०,६,४ । स च वैवस्वतमनोः पुत्रः । "मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः । इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्यातिरेव च । नरिष्यः प्रांशुषष्ठास्ते नाभागारिष्टसप्तमाः करूषश्च पृषध्रुश्च नवैते भरतर्षभ" ।। "इक्ष्वाकुर्ज्येष्ठदायादो मध्यदेशमवाप्नवान्" हरिवं० १०अ० "तस्योत्पत्तिप्रकारस्तत्रैवोक्तः क्षुवतस्तु मनोः पुत्र इक्ष्वाकुरभवत्ततः" । "तस्य पुत्रशतं चासीदिक्ष्वाकोर्भूरिदक्षिणम् । तेषां ज्येष्ठो विकुक्षिस्तु विकुक्षित्वादयोधिनाम्" "इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामचोदयत्" हरि०। इक्ष्वाकोरपत्यम् । अण् दक्षि० नि० । ऐक्ष्वाकस्तदपत्ये बहुषु तस्य लुक् इक्ष्वाकवः- "इक्ष्वाकूणां दुरापेऽर्थे" "गुणितमयशासामिक्ष्वाकूणामिदं हि कुलव्रतम्" "इक्ष्वाकुभिः पुण्यतरीकृतानि" इति च रघुः ।

इक्ष्वारि पु० इक्षुरिव समन्तादृच्छति आ+ऋ–इन् । काशतृणे । [इक्षुरिवालति अल–ण्वुल् वा । काशतृणे भावप्र०

इक्ष्वालिका स्त्री इक्षूणामालिरिव कायति प्रकाशते कै क–

इख गतौ भ्वादि० पर० सक० सेट् । इखति ऐखीत् । इयेख ईखतुः । एखिता एखिष्यति ऐखिष्यत् ।

इखि गतौ इदित् भ्वादि० पर०सक० सेट् । इङ्खति ऐङ्खीत् । इङ्खाम्–बभूव–आस–चकार । इङ्खिष्यति । इङ्खिता ऐङ्खिष्यत् । प्रेङ्खन् प्रेङ्खितम् प्रेङ्खणम् ।

इगि गतौ इदित् भ्वादि०पर०सक० सेट् । इङ्गति ऐङ्गीत् । इङ्गिष्यत् । इङ्गितम् । "त्वया सृष्टमिदं विश्वं यच्चेङ्गं यच्च नेङ्गति" भा०व०४२अ० । तस्याकर्मकत्वेऽपि "योऽवतिष्ठति नेङ्गते" यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता" गीता । अत्र स्पन्दनमात्रपरतायामकर्म्मकत्वम् । णिच्–इङ्गयति चालयतीति प्रेरयतीति वार्थः । उद्–प्रेरणे "शुनमङ्ग्रामुदिङ्गय" ऋ० ४,-५७,५७, । सम्+सम्यक् चालने । "पुष्करिणी समिङ्गयति सर्व्वतः" ऋ०४,७,७,

इङ् अध्ययने अधिपूर्व्व एव ङित् अदा०आत्म०सक०अनिट् । अधीते अधीयीत अध्यैष्ट–अध्यगीष्ट । "अधिजगे, अध्यैष्यत–अध्यगीष्यत "योऽधीते शक्तितोऽन्वहम्" स्मृतिः । "नाधीयीत कदाचन" मनुः । "अध्यैष्ट वेदांस्त्रिदशानयष्ट" भट्टिः शानच् अधीयानः । अर्हार्थेऽपि कर्त्तरि शतृ अधीयन् "अधीयन्नात्मविद्यां धारयन् मस्करिव्रतम्" भट्टिः अध्येतव्यम् "श्रोतव्यमिह शूद्रेण नाध्येतव्यं कदाचन" । "स्वाध्यायोऽध्येतव्यः" श्रुतिः । अध्ययनीयम् । अध्येयः "वेदएव सदाऽध्येयः" स्मृतिः । अध्येता । अधीतः "अधीतवेदवेदाङ्गत्वेन" वेदान्त सा० । ज्ञानार्थत्वात् कर्त्तरि क्त अधीतः "अधीते शतसाहस्रम्" स्मृतिः "अधीतिः "अधीतिबोधाचरणप्रचारणैः" नैष० । अध्येष्यमाणः । "पीत्वापोऽध्येष्यमाणस्तु आचमेत् प्रयतोऽपि सन्" मनुः भावे अधीतम् । अधीतमनेन इनि अधीती । "स्वगुणरागङ्गतीमधीतिनीम्" कुमा० अधीत्य "अनधीत्य द्विजोवेदान् योऽन्यत्र कुरुते श्रमम्" स्मृतिः । "अधीत्य चतुरोवेदान्" पुरा० । अध्ययनम् । "अध्ययनेनाविप्रकृष्टः" पा० । "सत्त्वाखुवैरध्ययनं विनापि" मयूरा० अध्यायः "स्वाध्यायोऽध्येतव्यः" श्रुतिः णिच् अध्यापयति "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" श्रुतिः अध्यापिपत् अध्यजिगपत्

"अध्यापयामास पितॄन्" मनुः णिच्-सन् । अध्यापिपयिषति-ते अधिजिगापयिषति-ते वेत्वात् सन्। अधिजिगांसते । अध्यापकः अध्यापकशब्दे उदा० अध्यापितः "अध्यापितस्योशनसापि नीतिम्" कुमा० । "भृतकाध्यापको यश्च भृतकाध्यापितस्तथा" मनुः ।

इङ्ग पु० इगि भावे घञ् । १चलने कम्पने २इङ्गिते च । कर्त्तरि अच् । ३जङ्गमे "त्वया सृष्टमिदं सर्व्वं यच्चेङ्गं यच्च नेङ्गति" भा०व०४२अ० । ४अद्भुते च लि० मेदि० ।

इङ्गन न० इगि भावे ल्युट् । १इङ्गिते २चलने ३ज्ञाने च । णिच्-ल्युट् । ४चालने । "उपांशुसवनस्यानिङ्गनश्रुतेः" कात्या० १०'१,६, यतउपांशुसवनस्यानिङ्गनमचालनम् श्रूयते "अनिङ्गमानानि दूरे आहतीयसवनात्" श्रुतिः । कर्क० । युच् इङ्गना यत्र स्त्री ।

इङ्गि(ड)ल पु० इगि-इलच् वा लस्य डः । इङ्गुदवृक्षे । "वीरणतूलमिश्रमिङ्गिड़मपुडेन जुहोति" श्रुतिः ।

इङ्गित न० इगि-भावे क्त । १चलने २हृद्गतभावावेदके चेष्टाविशेषे "इङ्गितं हृद्गतो भावः इति" सज्जनोक्ते ३हृदयस्थे भावे । "अगूढ़सद्भावमितीङ्गितज्ञया" कुमा० "बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् । स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च" मनुना तस्य अन्तर्गतभावावेदकत्वमुक्तम् । "तत्र स्वरो गद्गदादिः, वर्णोऽस्वाभाविकः इङ्गितं स्वेदवेपथुरोमाञ्चादि" व्यव०त० रघु० । "स विद्यादस्य कृत्यानि निगूढ़ेङ्गितचेष्टितैः" आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम्" "इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्भवम्" मनुः । "तस्य संवृतमन्त्रस्य गूढ़ाकारेङ्गितस्य च" रघुः। कर्त्तरि क्त ४चलिते त्रि०।

इङ्गु पु० इङ्गति चलत्यनेन इगि-उण् । रोगे ।

इङ्गुद पु० इङ्गुः रोगस्तम् द्यति दो-क । १तापसतरौ "इङ्गुदः कुष्ठभूतादिग्रहव्रणविषक्रमीन् । हन्त्युष्णः श्वित्रशूलघ्नस्तिक्तकः कटुपाकवान्" भाव०प्र०। गौरा० ङीष् इङ्गुदीत्यप्यत्र स्त्री । "तामिङ्गुदीस्नेहकृतप्रदीपम्" रघुः तस्याः फलम् अण् ह्रस्वादि० न लुक् । ऐङ्गुदं तत्फले न०। अस्याः पर्य्यायद्वारा लक्षणं दर्श्यते । हिङ्गुपत्रता विषहारिता वातनाशकता तैलफलत्वम् तीक्ष्णकण्टकता पूतिगन्धिता कोटरफलत्वम् । २ज्योतिष्मतीवृक्षे पु० रत्नमा०।

इङ्ग्रज पु० इङ्ग्यते भोगार्थम् इगि-रन् इङ्ग्रः लण्ड्रदेशस्तत्र जायते जन-ड अलुक् समा०। लण्ड्रस्थजने । "पूर्व्वाम्नाये नवशतं षड़शीतिः प्रकीर्त्तिताः । फिरङ्गभाषया मन्त्रास्तेषां संसाधनात् कलौ । अधिपामण्डलानाञ्च संग्रामेष्वपराजिताः । इङ्ग्रेजाः नवषट्पञ्च लण्ड्रजाश्चापि भाविनः" मेरुत० २३प्रकाशे ।

इच्छक पु० इच्छा+अस्त्यर्थे अच् इच्छकमिव रसोऽस्य कप् । (टावालेबु) इति ख्याते १वृक्षे । अस्त्यर्थे अच् स्वार्थे कन् । २इच्छायुक्ते त्रि० ।

इच्छा स्त्री इष-भावे श । इदं मे भूयादिति वेदान्तादिमते मनोधर्मभेदे सुखतत्साधनविषयचित्तवृत्तौ न्यायमते, सुखादिज्ञानेन तत्साधनत्वज्ञानेन च जायमाने इदं मे भूयादित्येवंरूपे आत्मधर्मे २अभिलाषे च । "आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः । कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत् क्रिया" न्यायसिद्धान्तः। "कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एवेति" श्रुतेः मनोधर्मत्वमिति सांख्यवेदान्तिनः । "विगतेच्छाभयक्रोधाः" गीता "जन्मनि क्लेशबहुले किं न दुःखमतः परम् इच्छासंपद्यतो नास्ति यत्रेच्छा न निवर्त्तते" हिता०। "नीतो रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या" मेघ० । "भर्त्ता भर्त्तेच्छः परिकीर्य्य सूनौ" "विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया" रघुः ।"योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया" "देवदत्तां पतिर्भार्य्यां विन्दते नेच्छयात्मनः" "लब्धं शक्यमृतां वासाद्विद्यामिच्छयात्मनः" इति च मनुः। "स्वेच्छया विभजेत् सुतान्" दायभा०स्मृतिः। सा च द्विविधा फलोपायरूपविषयभेदात् यथाह भाषा० "सुखन्तु जगतामेव काम्यं धर्मेण जन्यते । अधर्म्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् । निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि । चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा च या भवेत् । तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् । बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका। तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते" । व्याख्यातं च मुक्ता० । "इच्छा हि फलविषयिणी उपायविषयिणी च । फलन्तु सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । अतएव स्वतः पुरुषार्थः सम्भवति । यज्ज्ञातं सत् स्ववृत्तितयेष्यते स स्वतः पुरुषार्थ इति तल्लक्षणात् । इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् । कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा पाकं कृत्वा साधयामीति तदनुभवात् ।

चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानञ्च कारणम्। अतएव इच्छां कृतिसाध्यताज्ञानाभावान्न चिकीर्षा। बलवदिति बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकम्। अतो मधुविषसंपृक्तान्नभोजने न चिकीर्षा। बलवद्द्वेषः प्रतिबन्धक इत्यन्ये। कस्यचिन्मत इति। बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः। कृतिसाध्यताज्ञानादिमतो बलवदनिष्टसाधनताज्ञानशून्यस्य बलवदनिष्टजनकत्वज्ञानं विनापि चिकीर्षायां विलम्बाभावात् कस्यचिन्मत इत्यस्वरसो दर्शितः"।

विवृतमेतत् दिनक॰यथा"तत्र तयोर्मध्ये। अतएव फलज्ञानस्य फलेच्छां प्रति हेतुत्वादेव पुरुषार्थः संभवतीति सुखं दुःखाभावश्च पुरुषार्थः संभवतीत्यर्थः। ननु यज्ज्ञानं यदित्यादेः स्वविषयज्ञानजन्येच्छाविषयत्वमर्थस्तथा चोपायेऽतिव्याप्तिः तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वात् अत आह। इतरेच्छेति"।

अत्र ईश्वरेच्छामादायातिव्याप्तिवारणार्थं द्वितीयेच्छायां जन्यत्वं विशेषणीयम्। असम्भववारणाय आद्येच्छायामपि जन्यत्वं विशेषणीयम्। भवति च सुखेच्छायाः इतरविषयकेच्छानधीनत्वम् उपायेच्छायाश्च फलेच्छाधीनत्वञ्च। इष्टसाधनस्य फलेच्छाधीनेच्छाविषयित्वात् न तत्र लक्षणप्रसरः। पुरुषान्तरीयेच्छामादायातिव्याप्तिवारणाय समवायद्वयघटित सामानाधिकरण्यं निवेशनीयम् वस्तुतः स्वसमवायिसमवेतत्वप्रयोज्यत्वोभयसम्बन्धेन स्वव्याप्तभिन्नाया जन्येच्छाविषयत्वं तत्त्वम् स्वपदमिच्छापरम् इत्यन्यत्र विस्तरः। तत्रेदं बोध्यं फलेच्छायां कारणं यत् सुखज्ञानमुक्तं तत् स्मरणानुमित्यादिसाधारणम्। प्रत्यक्षत्वे प्रत्यक्षं प्रतिविषयस्य हेतुतया विषयज्ञानजन्यसुखादेर्वर्त्तमानत्व एव तत्सम्भवेन वर्त्तमानस्य सुखस्य सिद्धत्वात् सिद्धे च इच्छा विरहात् न तद्विषयकेच्छासम्भव इति स्वचितं चैतत् कणादसूत्रोपस्कारयोः" यथा। "सुखाद्रागः" का॰ सू॰। "स्रक्चन्दनवनितासेवनजन्मनः सुखादुत्तरोत्तरं तज्जातीये सुखे तत्साधने वा राग इच्छा जायते" उप॰"तन्मयत्वाच्च"सू॰विषयासङ्गजनितो दृढतरः संस्कारविशेषस्तन्मयत्वम् तद्वशात् कामातुरस्य कामिनीमलभमानस्य सर्वत्र कामिनीदर्शनम्"उप॰। "तन्मयत्वे तत्प्रकाशो बाह्याभ्यन्तरतस्तथा" इत्यन्यत्राप्युक्तम्। अत्र संस्कारादेव इच्छा जायते इत्युक्तेः संस्कारसाध्यस्मृतिद्वारैव संस्कारस्य हेतुत्वमवसीयते। क्वचिददृष्टवशात् क्वचित् जातिभेदवशाच्च इच्छासम्भवः तदुक्तम् तत्रैव "अदृष्टाच्च" "जातिविशेषाच्च" सू॰। 'यद्यप्यदृष्टं साधारणं कारणं तथापि क्वचिदसाधारणकारणतामनुभवति शैशवे तज्जन्मानुभूतकामिनीसेवनसुखस्यापि यौवनोद्भेदे कामिनीरागः" उप॰। न च तत्रापि अद्यप्रसूतबालकस्य स्तन्यपानरागइव जन्मान्तरीयतत्संस्कारजज्ञानस्यैव हेतुत्वमस्तु किमदृष्टस्य साधारणकारणस्यासाधारणकारणताकल्पने नेति चेत् तत्कल्पनेऽपि तत्र जीवनादृष्टस्येव अत्रापि अदृष्टविशेषस्यैवोद्बोधकस्थानीयतया अवश्यकल्पनीयत्वे तस्यैव हेतुत्वौचित्यात्। पदार्थभेदे जातिभेदकृत एव रागः। यथा मनुष्यजातीनामन्नादौ रागः मृगजातीयानां तृणादौ, करभजातीयानां कण्टकादौ, शूकरादेर्विष्ठादौ रागोत्पत्तिः। तथा च विषयविशेषरागं प्रति जातिविशेष एव कारणतया कल्पनीयः। तत्रापि जातिविशेषोत्पादकतयाऽदृष्टस्यकारणत्वेऽपि जातिविशेषस्य कारणत्वमक्षत्येव तमनुत्पाद्याऽदृष्टस्याकारणत्वादिति बोध्यम् सुखं मे भूयादिति दुःखं मे माभूयादित्येवं रूपः सुखदुःखाभिलाषः।

उपायेच्छां प्रति तु इष्टसाधनताज्ञानं हेतुः। भवति च पाके भोजनसाधनतया, भोजने च क्षुन्निवृत्तिसाधनतया ज्ञानात् इच्छा। तदुक्तेखिवाकन्त पाको जायताम् इत्येवं रूपम्। सेयमिच्छा ज्ञानकृत्यादिवत् सविषया तद्विषयश्च द्विविधः बाधिताबाधितभेदात्। यत्र इष्टसाधने वस्तुनि इष्टसाधनत्वज्ञानादिच्छा सा सद्विषयिणी यत्र तु अनिष्टसाधने वस्तुनि इष्टसाधनत्व भ्रमजा असद्विषयिणी। सा च प्राणिमात्रसाधारणी ईश्वरेच्छा तु सदा सद्विषयिणी तस्या बाधितपदार्थविषयकत्वाभावादेव तथात्वम् तेन तस्या नित्यत्वेन इष्टसाधनत्वज्ञानाधीनत्वाभावेऽपि न क्षतिः। योगिनां तु प्राकाम्यकामावसायितारूपैश्वर्ययोगात् कामानुसारिण एव विषया भवन्तीति नासद्विषयिणीति भेदः यथोक्तं सां॰ कौ॰। "प्राकाम्यमिच्छानभिघातः यतो भूमावुन्मज्जति निमज्जति यथोदके। कामावसायित्वं वा सत्यसङ्कल्पता। यथाऽस्य सङ्कल्पो भवति भूतेषु, तथैव भूतानि भवन्ति। अन्येषां निश्चया निश्चेतव्यमनुविधीयन्ते योगिनान्तु निश्चेतव्याः पदार्थाः निश्चयम्"। निश्चेतव्यनिश्चयशब्दौ काम्यकामावुपलक्षयतः तथा च यथाकामं तेषां विषया भवन्तीति न असद्विषयकत्वं तेषां कामानामिति विवेच्यम्। इयमिच्छा

प्रवृत्तौ हेतुः इच्छाया बाधितविषयकत्वे प्रवृत्तिर्विसंवादिनो तदुत्तरं फललाभाभावेन तस्याः विसंवादित्वात्। सद्विषयकत्वे संवादिन्येवेति भेदः तथा च प्राणिमात्राणां प्रवृत्तौ इच्छा हेतुर्नेश्वरस्य प्रवृत्तौ तस्या नित्यत्वात्। गवादीनामपि हरिततृणदर्शनादिना जायमानायाः प्रवृत्तेरुपलम्भात् तत्कारणमिच्छास्तीत्यनुमीयते इयांस्तु भेदः तेषां वस्तुनः सदसद्विवेकशून्यतयाऽसद्विषयेऽपीच्छा जायते। सैवमिच्छा सुबन्तोत्तरविहितकाम्यच्क्यजादिना, धातूत्तरविहितसनादिना च वाच्या। तत्र पुत्रकाम्या, अशनाया, उदन्या इत्यादौ काम्यजादिवाच्या, पिपासा बुभुक्षा लिप्सा इत्यादौ सन्वाच्या। सर्वत्र च इष्टसाधनज्ञानादेव तत्तद्विषयेषु इच्छा जायते सन्प्रत्ययवाच्यायां चिकीर्षायां तु नैवं किन्तु तत्र मतभेदे कारणान्तरमप्यस्ति तथा हि कृतिसाध्यत्वप्रकारकेच्छा चिकीर्षा पाकः कृत्या साध्यतामित्याकारिका। तत्र च कृतिसाध्यत्वज्ञानं कारणमिति गुरवः तेन वृष्टिजलादौ कृतिसाध्यत्वाभावेन न तत्र चिकीर्षा। कृतिसाध्येष्टसाधनत्वज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानञ्च हेतुरिति नैयायिकाः। तेन छयाजलताडनादौ कृतिसाध्यत्वपक्षेऽपि न चिकीर्षा तत्र इष्टसाधनत्वपक्षाभावात्। विषमिश्रितान्नादेरिष्टसाधनत्वपक्षेऽपि बलवदनिष्टसाधनत्वपक्षान्न चिकीर्षा। तदेतत् मुक्ता० उक्तं तच्च प्राक् दर्शितं तत्रत्यदिनकरीयेषो यथा।

"ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः। तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्धर्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न यत्र कृतिसाध्यपाकत्वेनेष्टसाधनत्वं न गृहीतमपि तु गुडपाकत्वेन कृतिसाध्यत्वं गुडपाकत्वेनेष्टसाधनत्वं च गृहीतं तत्रापि पाकगोचरप्रवृत्तेरानुभविकतया तदनुरोधेन चिकीर्षाया आवश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात्। अथ कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वादेव वृष्ट्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति हेतुत्वे मानाभाव इति चेन्न कृतिसाध्यत्वाभाव तद्व्याप्य-तदवच्छेदकधर्मज्ञानानां प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यताज्ञानस्य हेतुत्वे लाघवात्। इष्टसाधनताज्ञानमिति। अन्यथा निष्फलत्वज्ञानेऽपि चैत्यवन्दनादौ चिकीर्षोपपत्तिरिति भावः। अत्रेदमवधेयम्। पाकविशेष्यकेष्टसाधनताज्ञानस्य कार्य्यतावच्छेदकं न कृतिसाध्यपाकगोचरचिकीर्षात्वम् कृतिसाध्यत्वप्रकारकत्वनिवेशे प्रयोजनविरहात् पाकोजायतामितीच्छाया असंग्रहापत्तेश्च किन्तु पाकत्वावच्छिन्नमुख्यविशेष्यकेच्छात्वम् पाकसाध्यं सुखं जायतामितीच्छायां व्यभिचारवारणाय मुख्येति। इष्टसाधनतेत्यत्रेच्छा स्वरूपसती विशेषणम्। तेनेच्छाज्ञानशून्यकालेऽपि चिकीर्षानिर्वाह इति। अतएव कृतिसाध्यताज्ञानस्य हेतुत्वादेव। बलवद्द्विष्टेति। द्विष्टं द्वेषविषयभूतं द्वेषश्च दुःखे तादृश्येन ज्ञानात्, सर्पादौ तत्साधनताज्ञानात्। द्वेषे बलवत्त्वं च जातिविशेषः। प्रतिबन्धकमिति। ननु बलवद्द्वेषविषयसाधनत्वज्ञानस्य प्रतिबन्धकत्वे चैत्रस्यागम्यागमनजन्यनरके यदा बलवान् द्वेषस्तदा मैत्रस्य तादृशद्वेषशून्यस्यागम्यागमने तादृशनरकसाधनत्वज्ञानवतइच्छाप्रवृत्त्योरनुपपत्तिः एवं चैत्रस्यैव कालान्तरे तादृशद्वेषसत्त्वेऽपि। न च तत्कालीनतत्पुरुषीयेच्छां प्रति प्रवृत्तिं प्रति च तत्कालीनतत्पुरुषीयबलवद्द्विष्टजनकत्वज्ञानस्य प्रतिबन्धकत्वं कल्प्यते। यत्पुरुषस्य यदा न कापि द्वेषस्तत्कालपुरुषान्तर्भावेन तादृशप्रतिबन्धकत्वस्याकल्पनाच्च तत्र तादृशप्रतिबन्धकाप्रसिद्धिरतस्तदभावरूपकारणस्याभावात् प्रवृत्त्यनुपपत्तिरिति वाच्यम् यत्पुरुषस्य यदाऽगम्यागमनजन्यनरके बलवद्द्वेषस्तदा तत्पुरुषस्य तत्रेच्छानुत्पादादगम्यागमनगोचरतत्पुरुषीयतत्कालीनेच्छाया अप्रसिद्ध्या तत्पुरुषतत्कालान्तर्भावेन तादृशकार्य्यकारणभावस्याभावेन तत्र तत्पुरुषीयागम्यागमनगोचरेच्छानुत्पादप्रयोजकस्य दुर्भिचापत्तेरिति चेन्न तद्धर्मप्रकारकद्वेषविशिष्टस्य तद्धर्मावच्छिन्नजनकत्वज्ञानस्य तत्र प्रतिबन्धकत्वकल्पनेनोक्तापत्त्यभावात्। तद्धर्मप्रकारकद्वेषानुत्तरतादृशेच्छायां तादृशद्वेषाभावः, तादृशद्वेषोत्तरतद्गोचरेच्छायां तद्धर्मावच्छिन्नजनकत्वज्ञानाभावः कारणम्। बलवद्द्वेष इति। पाकादिगोचरेच्छायां बलवद्द्वेषविषयसाधनत्वज्ञानजन्यः पाकगोचरोद्वेषः प्रतिबन्धकः पूर्वोक्तप्रतिबन्धकत्वद्वयकल्पनापेक्षया लाघवादिति भावः यत्र चोत्कटसुखोत्कटदुःखजनकमेकमन्न कर्म्मपि गृहीतं तत्र सर्वातिपत्तस्थले इच्छाद्वेषयोरनुत्पत्तेस्तन्मते तत्र कार्य्यकाले द्वेषाभावस्य सत्त्वेनेच्छोत्पादापत्तिः। न च यत्र बलवद्द्विष्टसाधनत्वज्ञानेन तृतीयक्षणे द्वेषोजनितस्तदुत्तरक्षणे इच्छोत्पादापत्तिस्तवा-

चेति वाच्यम् । तत्रैच्छोत्पादस्येष्टत्वात् तथाविधस्य पदस्यानिर्णीतत्वादिति अन्यदृत्यनेनास्वरसः सूचितः । बलवदनिष्टाजनकत्वज्ञानमिति । अत्रापि तद्धर्मप्रकारकद्वेषोत्तरेच्छायां तद्धर्मावच्छिन्नाजनकत्वज्ञानं कारणं तादृशद्वेषानुत्तरेच्छायां तु तद्धर्मप्रकारकद्वेषाभावः कारणमिति निष्कर्षो बोध्यः । मूले कश्चित्तु इत्यनेनास्वरसः सूचितः । स च बलवदनिष्टाननुबन्धित्वज्ञानत्वस्य हेतुतावच्छेदकत्वे बलवदनिष्टजनकत्वप्रकारतानिरूपिताभावविशेष्यताशालित्वादेरनुयोगिनिरूप्यनिरूपकभावघटितत्वेन गौरवात्तद्घटितबलवदनिष्टसाधनत्वज्ञानाभावत्वेनैव हेतुत्वं युक्तम् । न चाप्रामाण्यज्ञानानास्कन्दितबलवदनिष्टाननुबन्धित्वज्ञानत्वापेक्षया प्रामाण्यनिश्चयानास्कन्दिततदनुबन्धित्वज्ञानत्वस्य प्रतिबन्धकतावच्छेदकत्वे गौरवमिति वाच्यम् । युद्धादौ बलवदनिष्टसाधनत्वसन्देहेऽपीच्छाप्रवृत्त्योरुदयाद्बलवदनिष्टानुबन्धित्वनिश्चयस्यैवेच्छाप्रतिबन्धकतायास्तदननुबन्धित्वसंशयस्यापि प्रतिबन्धकतायाश्च वाच्यतया च विपरीतगौरवादिति । न च बलवदनिष्टाननुबन्धित्वज्ञानस्याप्रवर्तकत्वे तद्विषयस्य विध्यर्थत्वाभावात् "न कलञ्जं भक्षयेदित्यादि"—वाक्यानामप्रामाण्यापत्तिरिति वाच्यम् । तज्ज्ञानस्य प्रवृत्तिजनकत्वाभावेऽपि प्रवृत्तिप्रतिबन्धकबलवदनिष्टसाधनत्वज्ञानविघटकत्वेन प्रवृत्तिप्रयोजकत्वात् प्रवृत्तिप्रयोजकज्ञानविषयस्य विध्यर्थत्वानपायात् । अत्र यद्यपि यत्र प्रथमक्षणे द्वेषः द्वितीयक्षणे फलेच्छा तृतीयक्षणे फलसाधनताज्ञानं तत्र तृतीयक्षणे द्वेषनाशाद्भवत्येव चतुर्थक्षणे उपायेच्छा । यत्र फलेच्छादिक्रमेणैवानुत्पत्तिस्तत्र फलेच्छाद्युपकारणाभावादेव नोपायेच्छा । एवमन्यत्रापि । आत्मविशेषगुणानां यौगपद्यानङ्गीकारादिति बलवदनिष्टानुबन्धिज्ञानस्य द्वेषस्य वा प्रतिबन्धकत्वं न युक्तं न युक्तञ्च बलवदनिष्टाननुबन्धित्वज्ञानस्य हेतुत्वं तथापि द्वित्रिक्षणान्तरितेऽपि द्वेषे इच्छाप्रवृत्त्योरनुदयस्यानुभविकतया ज्ञानयोरेव वा यौगपद्यमित्यभ्युपगमाद्वा पूर्वोक्तप्रतिबन्धकत्वस्य हेतुत्वस्य वावश्यकत्वमिति ध्येयम्" ।

मञ्चिन्तामणौ तु प्रपञ्चः । तत्र कृतिसाध्यत्वनिश्चयस्य चिकीर्षादिहेतुत्वम् पूर्वपक्षीकृत्य अथोच्यते इत्यादिना स्वमतसिद्धं कारणं दर्शयित्वा सिद्धान्तितं यथा । "विषभक्षणादिव्यावर्तकं कृतिसाध्यत्वज्ञाने इष्टसाधनत्वं विषयतावच्छेदकं लाघवात् न तु स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वं गौरवात् न च सिद्धासिद्धरूपत्वयोः साध्यत्वसाधनत्वयोर्विरोधः निर्विशेषितयोरविरोधात् पाकोऽसिद्धः साध्यः सिद्धः साधनमित्यनुभवात् तदा साध्यत्वं हि तदा साधनत्वविरोधि नियमतस्तेनैव तस्य प्रतिक्षेपात् सहानवस्थाननियमात् न तु साधनत्वस्य अन्यदा साधनत्वस्य वा तयोरप्रतिक्षेपात् अन्यदासाधनत्वेऽपि साधनत्वसत्त्वेन सामान्याभावे विशेषाभावप्रसङ्गात् एवमन्यदासिद्धत्वस्य तदाऽसिद्धत्वेन विरोधः नियमतस्तस्यैव प्रतिक्षेपात् न तु सिद्धत्वमात्रेण अन्यदापि तत्र सिद्धत्वाभावप्रसङ्गात् । निर्विशेषितयोर्विरोधे च सिद्धत्वासिद्धत्वयोरन्यतरदेव पाकादौ स्यान्न तु समयभेदेऽप्युभयम् न च तदा कृतिसाध्यत्वे सति तदिष्टसाधनत्वज्ञानं प्रवर्तकम् । अतएव "वाजपेयेन यजेत" इत्यत्र यागस्य करणावस्थायां सिद्धत्वेन वाजपेयस्य न साध्यता एकदाद्वयविरोधादिति कर्मनामधेयत्वं न तु करणस्य सिद्धत्वेन साध्यत्वविरोधः यागस्वरूपे तयोः सत्त्वात् अथ विरुद्धयोरवच्छेदभेदमादायैकत्र प्रतीतिः स्यात् न च कृतिसाध्यत्वेष्टसाधनत्वयोः समयभेदमादाय प्रतीतिरस्ति तथा लिङ्गाभावादिति चेत् न साध्यत्वसाधनत्वयोरविरोधस्योक्तत्वात् एवं सिद्धासिद्धत्वयोर्भावाभावरूपत्वेऽपि न विरोधः एकधर्मिगतत्वेन मानसिद्धत्वात् । एवं संयोगतदभावयोरिव येन प्रकारेण ययोर्विरोधस्तेन तयोरेकधर्मिगतत्वं न प्रतीयते न तु रूपान्तरेणापीति । अपि च यदि साध्यत्वसाधनत्वयोर्विरोधस्तदापीष्टसाधनत्वेन कार्यं साधनत्वेन वा कार्यत्वं नानुमीयेत हेतुसाध्ययोर्विरोधेन सामानाधिकरण्याभावेन व्याप्त्यसिद्धेः पक्षे साध्यसाधनयोरन्यतरासत्त्वे बाधासिद्ध्योरन्यतरप्रसङ्गाच्च । न च वाच्यमिदानीं मत्कृतिसाध्यत्वं साध्यम् अपि तु मदिष्टसाधनत्वं हेतुः, दैवाद्यनधीनत्वे सति यद्यन्मदिष्टसाधनं तदिदानीं मत्कृतिसाध्यमिति व्याप्तेः तथा च समयभेदमादाय साध्यत्वसाधनत्वयोरविरोध इति । इदानीमभिन्नपदार्थयोर्नानात्वादनुगतरूपाभावेन व्याप्तेरग्रहात् एवं न्यायेनान्यत्रापि तत्तत्समयान्तर्भावेन साध्यत्वसाधनत्वयोरप्रतीतेः । प्रतीतौ वा समापीदानीं कृतिसाध्यत्वे सत्यपि इष्टसाधनत्वज्ञानं प्रवर्तकमस्तु । न च पाकसाध्येष्टत्वेन कृतिसाध्यत्वमनुमेयं असिद्धावस्थायां पाकादिष्टानुत्पत्तेः पाकस्य सिद्धत्वमवगम्य तत्साध्यत्वमिष्टस्यावगन्तव्यम् असिद्धत्वञ्चावगम्य कृतिसाध्यत्वमिति सिद्धत्वासिद्धत्वयोर्विरोधोऽत्रापि दुर्वारः । अपि च स्वविशेषणधीजन्यकार्यताज्ञानाभावात् कथं चिकीर्षा, न हि कृतिसाध्यताज्ञानमात्रात् सा सङ्गतवा-

थस्य विषमभक्षणादौ चिकीर्षाप्रसङ्गात् । अथोपायचिकीर्षायां तत्कारण इच्छाकारणसुखत्वज्ञाने कृतिसाध्यत्वं यदा विषयस्तदा सुखे चिकीर्षा नो चेदिच्छामात्र मिति द्वयमेव चिकीर्षाहेतुरिति चेत् तर्हीच्छाहेतुज्ञाने यदा कृतिसाध्यत्वं भासते तदा चिकीर्षा नो चेदिच्छामात्रमित्येव सुखतदुपायचिकीर्षाकारणमस्तु लाघवात् सुखत्वज्ञानवदिष्टसाधनताज्ञानस्यापीच्छाकारणत्वात् । अतएव पाके इष्टसाधनताज्ञाने कृतिसाध्यत्वं विषय इति चिकीर्षा न तु इच्छादिज्ञाने तद्विषयत्वमितीच्छामात्रं सुख चिकीर्षायामिच्छाकारणज्ञाने कृतिसाध्यताविषयके चिकीर्षाजनकत्वावधारणात् अन्यथा तत्र चिकीर्षानुत्पत्तेः । वस्तुतस्तु उपायचिकीर्षा इष्टसाधनताज्ञानसाध्या उपायेच्छात्वात् इष्टेच्छावत् न च भोगचिकीर्षावत् तेन विनापि स्वादित्वप्रयोजकत्वात् उपायेच्छायास्तदन्वयव्यतिरेकानुविधानात् इष्टेच्छ स्वतोऽसुकरत्वेन इच्छानुत्पत्तेः। अनुगतोपायेच्छायामनुगतस्य प्रयोजकत्वे सम्भवति बाधकं विना त्यागायोगाच्च । न च चिकीर्षान्यत्वे सति उपायेच्छात्वमिच्छात्वं वा तज्जन्यत्वे प्रयोजकं गौरवात् सुखेच्छायां तदभावाच्च । एवञ्चोपायचिकीर्षायामिष्टसाधनताज्ञाने भुक्तेऽतिप्रसङ्गवारणार्थं कृतिसाध्यत्वप्रकारकत्वनिवेशार्थञ्च कृतिसाध्यत्वमपि विषयतावच्छेदकमस्तु न तु तद्विहाय तन्मात्रं क्लृप्तकारणं विना कार्यानुत्पत्तेः। अतएव स्तनपानप्रवृत्तस्य मुपायेच्छाकारणत्वेन स्वगृहीतस्येष्टसाधनताज्ञानस्यापि कल्पनं दृष्टानुरोधित्वात् कारणतायाः । ननु साधनत्वमिच्छाविरोधि तस्य सिद्धधर्मत्वात् इच्छादौ तत्साध्येष्टज्ञानादिरिच्छेति चेत् न निर्विशेषितयोः सिद्धत्वासिद्धत्वयोरविरोधिनेच्छासाधनत्वयोरविरोधात् तदा असिद्धत्वं तत्सिद्धत्वञ्च नेच्छासाधनत्वयोः प्रयोजकमिति तथा न ज्ञायत एव । यत्तु तत्साध्येष्टज्ञानात् इच्छादाविच्छेति तत्तुच्छं असिद्धावस्थादृष्टच्छादेरिष्टानुत्पत्तेरवश्यं सिद्धत्वमवगन्तव्यमिच्छाविरोधित्वाच्चासिद्धत्वमिति तत्रापि विरोधएव दृष्टो सत्यामिष्टं तथा विना नेत्यन्वयव्यतिरेकयुक्तस्य दृष्टिसिद्धत्वमादाय दृष्टिनिरूपितेषु साध्यत्वग्राहकत्वात् । किञ्च चिकीर्षाजन्यकृतिसाध्यं मङ्गलाचरणमित्यर्थप्रतिपादकं मङ्गलं कुर्यादितिवाक्यं प्रमाणं स्यात् विषयाबाधात् । एतेन नवीनमतमपास्तं परस्य हि कृतिसाध्यत्वौदनकामनावत्त्वेष्टसाधनताज्ञानानां ज्ञानं तथान्यस्य ओदनकामनावत्त्वेष्टसाधनताज्ञानस्य

ज्ञानं न प्रवृत्तिकारणं गौरवात् किन्तु मत्कृतिसाध्यत्वे सति मदिष्टसाधनताज्ञानमेव लाघवात् तथा च साध्यसाधनत्वयोर्न विरोधोऽनागतस्य पाकादेः कृतिसाध्यताज्ञानस्य यथा, तथोपपादितं पुरस्तात् । किञ्च स्वकृतिसाध्यत्वमन्तरेणापि स्वकृतिसाध्येष्टसाधनताज्ञानात् स्वकल्पितेत्थ्यादौ, यौवने कामोद्भेदात् संभोगादौ प्रवृत्तेश्च अदृष्टं प्रवर्तकम् । वस्तुतस्तु सिद्धविषयककृतिसाध्यताज्ञानात् कथं "पाकं कृत्वा साधयामीतीच्छा"? सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात् अथ सिद्धविषयादेव कृतिसाध्यताज्ञानादसिद्धविषया कृतिसाध्यत्वेनेच्छा जायते इच्छाया असिद्धविषयत्वस्वभावत्वात् । एकप्रकारकत्वेन ज्ञानचिकीर्षयोः कार्यकारणभावोनत्वेकविषयत्वे सति गौरवात् इच्छाया अनागतविषयत्वात्तस्य चाज्ञानात्तदा कल्पनात् सुखादोच्छायामप्येवमिति चेत् न असिद्धविषयेच्छानुरोधेनानागतोपायज्ञानस्य दर्शितत्वात् । अस्तु चैवं तथापि कृतिसाध्यताज्ञाने इष्टसाधनत्वमेव व्यावर्तकमस्तु स्वपरकीयेष्टसाधनताज्ञानस्य फलकामनाज्ञानापेक्षया लघुत्वात् ज्ञानज्ञानस्य फलकामनाज्ञानस्य हेतुत्वे मानाभावाच्च"।

सेयमिच्छा अन्तःकरणधर्मो नात्मधर्मः इति वेदान्तिनः प्रतिपेदिरे । आत्मनो निर्गुणत्वात् प्रागुक्तया "कामः संकल्पः इत्यादि श्रुत्या मनोधर्मत्वावगमाच्च तथात्वम् । यथा च कामादीनां नात्मधर्मत्वं तथा शङ्कापूर्वकं बृ० उ० भाष्ये समर्थितम् । यथा

"सुखितदुःखित्वादिदर्शनान्नेति चेत् न "न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतेः । प्रत्यक्षादिविरोधादयुक्तमिति चेत् न उपाध्याश्रयजनितविशेषविषयत्वात्प्रत्यक्षादेः "न दृष्टेर्द्रष्टारं पश्येर्विज्ञातारमरे केन विजानीयादविज्ञातं विज्ञातृ" इत्यादिश्रुतिभ्यो नात्मविषयं विज्ञानम्, किन्तर्हि बुद्ध्याद्युपाध्यात्मप्रतिच्छायाविषयमेव सुखितो दुःखितोऽहमित्येवमादिप्रत्यक्षविज्ञानमथमन्यमिति विषयेण विषयिणः सामानाधिकरण्योपचारात् "नान्यदतोऽस्ति द्रष्टृ" इत्यन्यात्मप्रतिषेधाच्च । देहावयवविशेष्यत्वाच्च सुखदुःखयोर्विषयधर्मत्वम् "आत्मनस्तु कामाय" इत्यात्मार्थत्वश्रुतेरयुक्तमिति चेन्न । "यत्र वा अन्यदिव स्यात्" इत्यविद्याविषयात्मार्थत्वाभ्युपगमात् "तत्केन कं पश्येत्" "नेह नानास्ति किञ्चन" "तत्र को मोहः कः शोक" इत्यादि विद्याविषये तत्प्रतिषेधाच्च नात्मधर्मत्वम् । तार्किकसमयविरोधादयुक्तमिति

चेन्न गुणाभ्यामात्मनो दुःखित्वानुपपत्तेः। न हि दुःखेन प्रत्यक्षविषयेणात्मनो विशेष्यत्वं, प्रत्यक्षाविषयत्वात्। आकाशस्य शब्दगुणवत्त्ववदात्मनो दुःखित्वमिति चेन्न एकप्रत्ययविषयत्वानुपपत्तेः। न हि गुणग्राहकेण प्रत्यक्षविषयेण प्रत्ययेन नित्यानुमेयस्यात्मनो विषयीकरणमुपपद्यते। तस्य च विषयीकरणे आत्मन एकत्वाद्विषय्यभावप्रसङ्गः। एकस्यैव विषयविषयित्वं दीपवदिति चेन्न युगपदसम्भवादात्मन्यंशानुपपत्तेश्च। एतेन विज्ञानस्य ग्राह्यग्राहकत्वं प्रत्युक्तम्। प्रत्यक्षानुमानविषययोश्च दुःखात्मनोर्गुणगुणित्वे नानुमानम् दुःखस्य नित्यमेव प्रत्यक्षविषयत्वाद्रूपादिसामानाधिकरण्याच्च मनःसंयोगजत्वेऽप्यात्मनि दुःखस्य, सावयवत्वविक्रियावत्त्वानित्यत्वप्रसङ्गात्। न ह्यविकृत्य संयोगि द्रव्यं गुणः कश्चिदुपयन्नपयन्वा दृष्टः क्वचित्। न च निरवयवं विक्रियमाणं दृष्टं क्वचित् अनित्यगुणाश्रयं वा नित्यम्। न चाकाश आगमवादिभिर्नित्यतयावगम्यते। न चान्यो दृष्टान्तोऽस्ति विक्रियमाणमपि तत्प्रत्ययानिवृत्तेर्नित्यमेवेति चेन्न द्रव्यस्यावयवान्यथात्वव्यतिरेकेण विक्रियानुपपत्तेः। सावयवत्वेऽपि नित्यत्वमिति चेन्न सावयवस्यावयवसंयोगपूर्व्वकत्वे सति विभागोपपत्तेः। वज्रादिष्वदर्शनान्नेति चेन्नानुमेयत्वात्संयोगपूर्व्वत्वस्य। तस्मान्नात्मनो दुःखाद्यनित्यगुणाश्रयत्वोपपत्तिः। परस्यादुःखित्वेऽन्यस्य च दुःखिनोऽभावे दुःखोपशमनाय शास्त्रारम्भानर्थक्यमिति चेन्नाविद्याऽध्यारोपितदुःखित्वभ्रमापोहार्थत्वात्"।

यथा च कामस्य हृदयाश्रितत्वं तथाऽऽप्तकामशब्दे ७।८पृष्ठे दर्शिते इ० भा० वाक्ये प्रपञ्चितम्। एवमेव सांख्याः पातञ्जलाश्च ज्ञानादिवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मा अपि बुद्धेरेव धर्म्मा इत्याहुः। ईश्वरेच्छा तु समूहालम्बनात्मिका सर्व्वं जगत् भूयादित्याकारिका। "सोऽकामयत बहु स्यां प्रजायेयेत्यादि" श्रुतिः। "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः" इति स्मृतिश्च तस्य तत्सत्त्वे प्रमाणम्। सा च नित्येति नैयायिकादयः नित्यत्वाच्च न तत्र कारणापेक्षा। व्योमादिवदनित्येति वेदान्तिनः। नित्यत्ववादिमतेऽपि सृज्यमानजीवादृष्टरूपसहकारिणैव तत्तत्कार्य्योत्पत्तिरिति ईश्वरशब्दे वक्ष्यते। मनोधर्म्मत्ववादिमते मनसस्त्रिगुणात्मकत्वेऽपि रजस एव तत्कारणत्वम् "काम एष क्रोध एष रजोगुणसमुद्भवः" गीतायां कामस्य रजोगुणकार्य्यत्वोक्तेः। ततश्च बुद्धेस्त्रिगुणात्मकत्वेन रजःकार्य्यं कामस्य तद्गुणत्वमेवोचितम्। अतएव इच्छाशक्तिक्रियाशक्तिज्ञानशक्तिस्वरूपिणीत्यादौ प्रकृतेरिच्छाशक्त्यादिरूपत्वकथनमपि सङ्गच्छते शक्तिशक्तिमतोरभेदात् प्रकृतिशक्तित्वाच्च तस्या बुद्धिगुणत्वमवगम्यते। अतएव "या देवी सर्व्वभूतेषु इच्छारूपेण संस्थिता" देवीमा० सर्व्वभूतेषु इच्छारूपेण प्रकृतिस्थितिरुक्ता

ईश्वरोपाधिमायाया इच्छादिमत्त्वेनैवेश्वरस्य तद्वत्त्वं रत्नत्रयपरीक्षायामुक्तं यथा "नित्यं निर्दोषगन्धं निरतिशय सुखं ब्रह्म चैतन्यमेकं धर्म्मो धर्म्मीति भेदद्वितयमपि पृथग्भूय मायावशेन। धर्म्मस्तत्रानुभूतिः सकलविषयिणी सर्व्वकार्य्यानुकूला शक्तिश्चेच्छादिरूपा भवति गुणगुणस्याश्रयस्त्वेक एव। कर्त्तृत्वं तत्र धर्म्मी कलयति जगतां पञ्चकृत्यादिकत्वे धर्म्मः पुंरूपमाप्य सकलजगदुपादानभावं बिभर्त्ति। स्त्रीरूपं प्राप्य दिव्या भवति च महिषी स्वाश्रयस्यादिकर्त्तुः, प्रोक्तौ धर्म्मप्रभेदावपि निगमविदा धर्म्मिवत् ब्रह्मकोटी" इति तथा च एकमेव ब्रह्मानादिसिद्धया मायया कर्म्मी धर्म्म चेति द्विविधमभूदित्यर्थः। तन्त्रोक्ते कालिकायाः २पीठशक्तिभेदे। "इच्छाज्ञानक्रियाचैव कामिनी कामदायिनी। रतीरतिप्रिया नन्दा मध्ये चैव मनोन्मनी" तन्त्रसा० कालिकापीठशक्तिकथने।

इच्छाकृत त्रि० इच्छया कृतः। "कामकृते। १अशीतिभागो वृद्धिः स्यात्" इत्युक्तातिक्रमेण अधमर्णेन यथेष्टं कृतायां २वृद्धौ स्त्री "वृद्धेर्वृद्धिश्चक्रवृद्धिः प्रतिमासन्तु कालिकी। इच्छाकृता कामकृता कायिका कायकर्म्मणा" आह्नि० त० याज्ञवल्क्यवचनत्वेन धृतम्। मिताक्षरायां तु नैतद्वचनं दृश्यते। तत्र कारिता वृद्धिर्नारदवचनेन दर्शिता "वृद्धिः सा कारिता नाम यर्णिकेन स्वयंकृतेति"

इच्छानिवृत्ति स्त्री ६त०। पित्रादीनां धनादिभोगेच्छोपरमे। "पितर्य्युपरतस्पृहे इत्यादि" स्मृतेः तादृशस्पृहानिवृत्तौ पित्रादेः स्वत्वहानिः, पुत्रादेः स्वत्वोत्पत्तिश्च। तेन पुत्रादीनां तत्र पैत्रादिधनविभागः।

इच्छावत् त्रि० इच्छाऽस्त्यस्य मतुप् मस्य वः। धनादिस्पृहायुक्ते स्त्रियां ङीप्। सा च धनादिस्पृहायुक्तायां कामुकायाम् स्त्रियां रमणेच्छायुक्तायां तु कामुकीति भेदः।

इच्छावसु पु० इच्छयैव वसु यस्य। कुबेरे जटा०

इच्छित पु० इच्छा जातास्य तारका० इतच्। स्पृहायुक्ते

इच्छु त्रि० इच्छति इष–उ नि० इच्छादेशः। इच्छायोग्ये "वलचर्म्माणि प्रतीच्छुः" "उभयेच्छुरुभयोः" काशा० १८,५,१२,१२

इज्जल पु० ईयते कर्म्मणि–क्विप् इत् अच्छिद्रस्तया गतं जलमनेन । ( हिजोल ) वृक्षे तस्य जलसन्निकृष्टदेशजातत्वात् तथात्वम् ।

इज्य पु० इज्याऽस्त्यस्य अर्श० अच् । १वृहस्पतौ "जीवार्किभानुजेज्यानां क्षेत्राणि स्वुरजादयः" ज्यो०त० "वित्सितेज्यादिश्मे" मु० चि० । जीवदेवताके २पुष्यनक्षत्रे च "त्वष्टा हराज्ये न्दुकरात्यमैत्रेत्यादि दीपि० ३गुरौ ४परमेश्वरे ५विष्णौ च । "यज्ञइज्यो महेज्यश्च" विष्णु०स० । "वहव्योऽप्यश्रमेवेतोक्तः" ये यजन्ति च सार्वाणि दैवतानि पितॄनपि । आत्मानमात्मना नित्यं विष्णुमेव यजन्ति ते ४हरिसंयोगे:" भा० ६पूज्यमाने त्रि० । सुरेज्यः

इज्या स्त्री० यज–भावे क्यप् स्त्रीत्वात् टाप् । १यज्ञे, "सोऽहमिज्याविशुद्धात्मा" । "जगत्प्रकाशं तदशेषमिज्यया" रघुः यजेर्दानार्थत्वात् २दाने, ३सङ्गमे च । कर्म्मणि क्यप् । ४प्रतिमायाम् ५कुट्टिन्याञ्च । [जूके अमरः ।

इज्याशील पु० इज्या शीलमस्य । सततयजनशीले याय-

इञ्चाक पु० इञ्चा दीर्घाऽस्त्यस्य आकन् पृ० । (चिङ्गिड़ि) मत्स्यभेदे त्रिका० २जलटाविके इति केचित् ।

इट गतौ भ्वादि० पर० सक० सेट् । एटति ऐटीत् । इयेट ईटतुः "त्वं त्यमिटतो रथमिन्द्र प्रावः सुतावतः" ऋ० १०,१७१,१ ।

इटसून न० इट–क इटं स्नं स्यूतं स्वि–क्त पृ० शस्य सः । शाखामये कटे । "वैतसे इटसून उत्तरतोऽध्यासादयन्ति" शत० ब्रा० १२,२,२,१८, "इटसूने शाखामये कटे" भा०

इट्चर पु० इष–संपदा० भावे क्विप् इषा कामेन चरति चर–अच् । गोपतौ (षाँड़) वृषभे

इड् (ल) स्त्री इल–क्विप् वा लस्य डः । १हविषि अन्ने "होता रमिलः प्रथमं यजध्यै" ऋ० २,४,२, "इड़ो हवीरूपाञ्चानि" भा० "इड़स्पतिर्मघवा दक्षवर्चाः" ऋ० ६,५८,४, "इड़ः अन्नस्य पतिः" भा० २भूमौ "इन्द्रपानमूर्म्मिमकृणोतेड़ः" ऋ० ७,४७,१, "इड़ इड़ाया भूमेः" भा० ईड्यते ईड–क्विप् पृ०। ३अन्ने ४वर्त्त्यौ ५प्रजासु दर्शपौर्णमासाङ्गेषु पञ्चसु प्रयाजेषु तृतीये ६प्रयाजे च । प्रयाजाश्च "समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजतीति" श्रुत्युक्ताः पञ्च । तेषां प्रयाजत्वनिर्वचनपूर्वकं पञ्चानामृतुरूपत्वम् यथा "ऋतवो वै प्रयाजाः तस्मात् पञ्च भवन्ति पञ्च ऋतवः" इत्युपक्रम्य "ततो देवा अर्चन्तः श्राम्यन्तश्चेरुस्ते एतान् प्रयाजान् ददृशुस्तैरयजन्त ते ऋतून् संवत्सरं प्रायजंस्तेभ्यः संवत्सरात् सपत्नानन्तरायंस्तस्मात् प्रजया प्रजया ह वै नामैतत् यत् प्रयाजाः इति तथो एवैष एतैर्ऋतून् संवत्सरं प्रजयत्युतेभ्यः संवत्सरात् सपत्नानन्तरेति तस्मात् प्रयाजैर्यजते" इति प्रयाजनिर्वचनेन ऋतुरूपत्वमेषामभिधाय समिदादीनां वसन्तादिरूपत्वमुक्तं तत्रैव यथा "समिधो यजति तद्वसन्तं, समिन्धे स वसन्तः समिद्धोऽन्यानृतून् समिन्धे ऋतवः समिद्धाः प्रजाय प्रजनयन्त्योषधीश्च पचन्ति तद्वै खलु सर्वानृतूनुराहाऽथ यजयजेत्येवोत्तराहाऽजामितायैजामिह कुर्य्याद्यत्तनूनपातं यजेड़ो यजेति ब्रूयात्तस्माद्यज यजेत्येवोत्तरानाह, स वै समिधो यजति । वसन्तो वै समिद्वसन्तमेव तद्देवा अवृञ्जत वसन्तात् सपत्नानन्तरायन् वसन्तं वेष एतद्वृङ्क्ते वसन्तात् सपत्नानन्तरेति तस्मात् समिधो यजति । अथ तनूनपातं यजति । ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासां प्रजानां तनूस्तपति ग्रीष्ममेव तद्देवा अवृञ्जत ग्रीष्मात् सपत्नानन्तरायन् ग्रीष्मं वेष एतद्वृङ्क्ते ग्रीष्मात् सपत्नानन्तरेति तस्मात्तनूनपातं यजति । अथेड़ो यजति । वर्षा वाइड़ इति हि वर्षा इड़ो यदिदं क्षुद्रं सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद्वर्षा ईड़ितमिवान्नमिच्छमानं चरति तस्माद्वर्षा इड़ो, वर्षा एव तद्देवा अवृञ्जत वर्षाभ्यः सपत्नानन्तरायन् वर्षा उ एवैष एतद्वृङ्क्ते वर्षाभ्यः सपत्नानन्तरेति तस्मादिड़ो यजति । अथ बर्हिर्यजति । शरद्वै बर्हिरिति हि शरद्बर्हियां इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता वर्षा वर्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्बर्हिः शरदमेव तद्देवा अवृञ्जत शरदः सपत्नानन्तरायञ्छरदं वेष एतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्यजति । अथ स्वाहास्वाहेति यजति । अन्तो वा एष यज्ञस्य यत् स्वाहाकारोऽन्त ऋतूनां हेमन्तो वसन्ताद्धि परार्द्धोऽन्तो वै तदन्तं देवा अवृञ्जतान्तेनान्तात् सपत्नानन्तरायन्नन्तं वेष एतदन्तं वृङ्क्तेऽन्तेनान्तात् सपत्नानन्तरेति तस्मात् स्वाहास्वाहेति यजति" शत० ब्रा० १,५,३,११ । समिदादीनां निरुक्त्यन्तरं प्रदर्श्य प्राणरूपत्वमिड़ाद्युक्तं यथा "स वै समिधो यजति । प्राणा वै समिधः प्राणानेवैतत् समिन्धे प्राणैर्ह्ययं पुरुषः समिद्धस्तस्मादभिमृशेति ब्रूयाद्यदुपतापी स्यात् स यद्युष्णः स्यादेव तावच्छंसेत समिद्धो हि स तावद्भवति यद्यु शीतः स्यान्नाशंसेत । तत् प्राणानेवास्मिन्नेतद्दधाति तस्मात् समिधो यजति । अथ तनूनपातं यजति । रेतो वै तनूनपाद्रेत एवैतत्सिञ्चति

तस्मात्तनूनपातं यजति । अथेडो यजति प्रजा वा इडो यदा वै रेतः सिक्तं प्रजायतेऽथ तदीडितमिवाप्नुमिच्छमानं चरति तत् प्रैवैतज्जनयति तस्मादिडो यजति । अथ बर्हिर्यजति । भूमा वै बर्हिर्भूमानमेवैतत् प्रजनयति तस्माद्बर्हिर्यजति । अथ स्वाहास्वाहेति यजति । हेमन्तो वा ऋतूनां स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते तस्माद्धेमन्नाम्लायन्त्योषधयः प्र वनस्पतीनां पलाशानि मुच्यन्ते प्रतितरामिव वयांसि भवन्त्यधस्तरामिव वयांसि पतन्ति विपतितलोमेव पापः पुरुषो भवति हेमन्तो ह्हीमाः प्रजाः स्वं वशमुपनयते' । शत० ब्रा० १,५,४,२ । ऋतूनां पञ्चप्रयाजभागित्वमग्नितः प्राप्तमेव जातम् इत्युक्तं तत्रैव "ऋतवो ह वै देवेषु यज्ञे भागमीषिरे आ नो यज्ञे भजत मा नो यज्ञादन्तर्गतास्त्वेव नोऽपि यज्ञे भाग इति । तद्वै देवा न जज्ञुः । त ऋतवो देवेष्वजानत्स्वसुरानुपावर्तन्ताप्रियान्देवानां द्विषतो भ्रातृव्यान् । ते हैतामेधितुमेधाञ्चक्रिरे । यामेषामेतामनुशृण्वन्ति कृषन्तो ह स्मैव पूर्वे वपन्तो यन्ति लुनन्तोऽपरे श्यन्तः शश्वद्धैभ्योऽकृष्टपच्या एवौषधयः पेचिरे । तद्वै देवानामागश्चास । कनीयस्त्वतो द्विषन्द्विषतेऽरातीयति किमेतावनुमाद्रमुपजानीत यथेदमितोऽन्यथा सदिति । ते होचुः ऋतूनेवानुमन्त्रयामहा इति के नेति प्रथमानेवैनान् यज्ञे यजामेति । स होवाचाग्निः । आययस्मां पुरा प्रथमं यजथ काहं भवानीति न त्वामायतनाच्च्यावयाम इति ते यदृतूनभिह्वयमानान्नाग्निमायतनाच्चाव्यावयंस्तस्मादग्निरच्युतोनो ह वा आयतनाच्च्यवते यस्मिन्नायतने भवति य एवमेतमग्निमच्युतं वेद । ते देवा अग्निमब्रुवन् । परे ह्येनांस्त्वमेवानुमन्त्रयस्वेति स हेत्याग्निरुवाच ऋतवोऽविदं वै वो देवेषु यज्ञे भागमिति कथं नोऽविद इति प्रथमानेव वो यज्ञे यक्ष्यन्तीति । त ऋतवोऽग्निमब्रुवन् आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद इति स एषोऽग्निर्ऋतुष्वाभक्तः समिधो अग्ने तनूनपादग्न इडो अग्ने बर्हिरग्ने स्वाहाग्निमिति" शत० ब्रा० १,६,१,७,८ । प्रयाजैश्चरन्तीत्युपक्रम्य "इड अग्न आज्यस्य व्यन्त्विति तृतीयः" आश्व० श्रौ० । "इडस्पदे समिध्यसे" यजु० १५,३० "इडः पृथिव्याः" वेददी० ।

इडा (ला) स्त्री इल–अच् वा डस्य लत्वम् । १गवि, २वाचि, ३भूमौ, "प्रबुध्यते मर्मभिडातलस्थः" भा० व० २३५ अ० । "इला पिन्वते विश्वदानीम्" ऋ० ४,५०,८, "इला भूमिः" भा० । इल+गतौ करणे घञर्थे क । देहस्थे ४नाडीभेदे । "इडा च पिङ्गला चैव सुषुम्णा च सरस्वती अलम्बुषा कुहूश्चैव शङ्खिनी शिशिषी तथा । विश्वोदरी विश्वमुखी व्याप्नुयाद्या चतुर्दश" इति तन्त्रोक्तासु प्रधानासु चतुर्दशसु नाडीषु तिस्रः प्रधानाः तथा हि । "शिराः शतानि सप्तैव" या० "शिराः नाभिसंबद्धाश्चत्वारिंशत् वातपित्तश्लेष्मवाहिन्यः सकलकलेवरव्यापिन्यो नानाशाखाः सत्यः सप्त शतानि भवन्तीति" मिता० । "सप्त शिराशतानि, सुश्रु० । तेन देहमध्ये सप्त शतानि नाड्यः तन्मध्ये एताश्चतुर्दश प्रधानतयोक्ताः । तासु मध्येऽपि तिस्रः प्रधानाः देहस्थनाडीरुपक्रम्य शारदा० "नाड्यस्तत्र समुद्भूतास्तास्वातिस्रः समीरिताः । इडा वामे स्थिता नाडी पिङ्गला दक्षिणे मता । तयोर्मध्यगता नाडी सुषुम्णा च समाश्रिता । पादाद्धृदयं याता शिखाभ्यां शिरसा पुनः । ब्रह्मस्थानं समापन्ना सोमसूर्याग्निरूपिणी । तस्या मध्यगता नाडी चित्राख्या योगिवल्लभा । ब्रह्मरन्ध्रं विदुस्तत्र पद्मसूत्रनिभं परम् । इडायां सञ्चरेच्चन्द्रः पिङ्गलायां दिवाकरः । शातौ योगनिदानशैः सुषुम्णायां तु तावुभौ" तत्स्थानसञ्ज्ञा कार्य्यमाह "इडयाकर्षयेद्वायुं बाह्यं षोडशमात्रया । धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया । सुषुम्णामध्यगं सम्यक् द्वात्रिंशन्मात्रया शनैः । नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः । प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः" २५ पटले । "पिङ्गलायां स्थिता ह्रस्वा इडायां सङ्गताः परे (दीर्घाः) । सुषुम्णामध्यगा ह्येवाश्चत्वारो ये नपुंसकाः" शार० ५ प० । दीर्घादिस्वरभित्त्वके । ५हविरन्ने च "यजमानपशुका इडां भक्षयन्ति" श्रुतिः । इडात्वे यत्नैव "इडां नोमित्रावरुणोत दृष्टिम्" ऋ० ७,६४,२ "इडामन्नम्" भा० "घृतैर्गव्यूतिमुक्षतमिडाभिः" ऋ० ७,६४,४ । "इडाभिरन्नैः" भा० । ६देवीभेदे "श्रुतिः प्रीतिरिडा कान्तिः शान्तिः पुष्टिः क्रिया तथा । शिष्टाश्च देव्यः" इत्युपक्रम्य । "उपतस्थुर्महाभक्त्या बलिमिन्द्रं महारथम्" हरिवं० २५६ अ० "इडा देवी भारती विश्वतूर्त्तिः" ऋ० ५,२,८ । "अभि न इडा यूथस्य माता" ऋ० ५,४१,१९ । "इडामोरूपधरा मनोः पुत्री माध्यमिका वाक् वेति" भा० । बुधस्य जायायां पुरूरवसो मातरि पश्चात् मनुसुतत्वे सुद्युम्नतया ख्यातायां मित्रावरुणयोरंशजातायां कन्यायाञ्च तत्कथा हरिवं० "अकरोत् पुत्रकामस्तु मनुरिष्टिं प्रजापतिः । मित्रावरुणयोस्तत्र पूर्व्वमेव

विशाम्पते ! । अनुत्पन्नेषु नवसु पुत्रेष्वेषु तु भारत ! । तस्मात्तु वर्त्तमानायामिष्ट्यां भरतसत्तम ! । मित्रावरुणयोरंशे मनुराहुतिमाजुहोत् । आहुत्यां हूयमानायां देवगन्धर्वमानवाः । तुष्टिञ्च परमां जग्मुर्मुनयश्च तपोधनाः । अहोऽस्य तपसो वीर्य्यमहो श्रुतमहोऽद्भुतम् । तत्र दिव्याम्बरधरा दिव्याभरणभूषिता । दिव्यसंहनना चैव इड़ा जज्ञे इति श्रुतिः । तामिलेत्येव होवाच मनुर्दण्डधरस्तदा । अनुगच्छस्व मां भद्रे तमिला प्रत्युवाच ह । धर्मयुक्तमिदं वाक्यं पुत्रकामं प्रजापतिम् । इड़ोवाच । मित्रावरुणयोरंशे जाताऽस्मि वदतांवर ! । तयोः सकाशं यास्यामि न मां धर्मो हतोऽवधीत् । सैवमुक्ता मनुं देवं मित्रावरुणयोरिला । गत्वाऽन्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत् । अंशेऽस्मि युवयोर्जाता देवौ ! किं करवाणि वाम् । मनुना चाहमुक्ता वै अनुगच्छस्व मामिति । तां तथा वादिनीं साध्वीमिलां धर्मपरायणाम् । मित्रश्च वरुणश्चोभावूचतुर्यन्निबोध तत् । अनेन तव धर्म्मेण प्रश्रयेण दमेन च । सत्येन चैव सुश्रोणि ! प्रीतौ स्वो वरवर्णिनि ! । आवयोस्त्वं महाभागे ख्यातिं कन्येति यास्यसि । मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि । सुद्युम्न इति विख्यातस्त्रिषु लोकेषु शोभने । जगत्प्रियो धर्म्मशीलो मनोर्वंशविवर्द्धनः । निवृत्ता सा तु तच्छ्रुत्वा गच्छन्ती पितुरन्तिकम् । बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता । सोमपुत्राद्बुधाद्राजंस्तस्यां जज्ञे पुरूरवाः । जनयित्वा सुतं सा तमिला सुद्युम्नतां गता" ।

८ दुर्गायाञ्च "आर्य्यां मदिरां चर्च्चीमिलां मलयवासिनीम्" हरिवं०१७८अ०दुर्गास्तवः । इड़ैव स्वार्थे कन् तत्रार्थे

**इड़ाचिका** स्त्री इड़ावत् सूक्ष्मं मध्यभागम् अचति अच–ण्वुल् इत्वं०टापि अत इत्वम् । वरटायाम्" (बोलता) शब्दच०

**इडिक्क** पु० वनभवे छागे हेम० [ अप् । इषे चोरक्षा०

**इडुर** पु० इष्यतीति इट् इषस्तनी तया ध्रियते धृ–कर्म्मणि

**इडीय** त्रि० इड़ाया अदूरदेशः छत्करा०छ । अत्रस्यादूरदेशादौ

**इण्** चित् इक्कोभेदार्थम् अदा० पर० सक० अनिट् । एति इतः यन्ति । इयात् इहि ऐत् आयत् अगात् इयाय ईयतुः ईयुः इययिथ इयेथ ईयिव । एता एष्यति ऐष्यत् एतव्यम् अयनीयम् इत्यम् । एता, आयकः इतः इतिः अयनम् अयः आयः यत् ईयिवान् ईयुषी । इत्वा इत्वा उपेत्य । 'समयन्नेति नानदत्" ऋ०१,१४०,५, "इतः क्व मैत्रावरुणौ किमेतौ ?" भट्टिः "अहञ्च भाष्यकारश्च कुशाग्रीयधियावुभौ, नैव शब्दाम्बुधेः पारम्" कलापप० "एमीदेषां निष्कृतं जारिणीव" ऋ०१०,३४,५, "आयन्नापोऽयनमिच्छमानाः" ऋ० २,२२,७, "अगात् मराजं जलमभ्ययोध्यम्" "इयुर्भरद्वाजमुनेर्निकेतम्" "ततुप्लवतः प्रथमियाय नक्तः" भट्टिः "सुषद्रथोवर्त्तते यन्" ऋ० १,१८३,२ "यन्ति वा आप एत्यादित्य एति चन्द्रमा यन्ति नक्षत्राणि" शत०ब्रा० ११.५.७,१० "मामेवैष्यत्यसंशयम्" "मामेवैष्यसि कौन्तेय !"इति च गीता "अपोदानीं स धर्म्मात्मा इयात्के दर्शनम् रहः" भा०आ०८२अ० कर्म्मणि ईयते "इन्द्रोमायाभिः पुरुरूप ईयते" श्रुतिः "वनितयाऽनितया" रजनीवधूः" रघुः

अति+अतिक्रमे सक० "नात्येति सकृदाहुता" स्मृतिः "षड्शीतिमुखेऽतीते" "अतीते चोत्तरायणे" स्मृतिः "अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत्" शुद्धित० स्मृतिः अभि+अति+आभिमुख्येनातिक्रमे सक० "योऽस्य स्वर्गोलोकोऽजितो भवेत् तमभ्यत्येति" शत० ब्रा०१२,५,२,८, । वि+अति+विशेषेणातिक्रमे "व्यतीतकालस्त्वहमभ्युपेतः"

अधि+चिन्तने गत्यर्थस्य प्राप्त्यर्थत्वात् ज्ञानार्थत्वाच्च लाभे ज्ञाने च । इकारस्

अनु+अनुगमने सक० । "आदित्यं वा अस्तं यान्तमन्वे देवा अनुयन्ति" शत०ब्रा० ११,६,२,४ । "सुतान्वितो दशरथ इत्युदाहृतः" भट्टिः सन्ततसम्बन्धे अन्वयः । "तदन्वये शुद्धिमति" रघुः शाब्दबोधोपयोगिसम्बन्धभेदे च । "साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः" शब्दशक्ति० सम+अनु सम्यगन्वये । "तत्तु समन्वयात्" पा०सू० ।

अन्तर्+अन्तर्गतौ अन्तरायः अन्तरेति इड़ शब्दे८१८पृ०दृश्य०

अप+अपगमने अपसरणे अक० "अनुमेतमपेतकल्मषम्" भाग० "ध्रुवमपायेऽपादानम्" "अपाये यदुदासीनम्" भर्तृह० "सत्त्वं निर्वियतेऽपैति" भाष्यका० वि+विशेषेण विगमे "व्यपैति इदतः क्षुधा" स्मृतिः "स्कन्धावारमपेतेन मार्गेणापथितः परैः" वा०स्मृतिः ।

अपि+प्राप्तौ सक० "स्वमपीतो भवतीति स्वपितीत्याचक्षते" श्रुतिः "पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः" यज० लये अक० अप्ययः अपीतिः "अपीतौ दर्शनात्" "साम्यात्" शा०सू०

अभि–आभिमुख्येन गतौ सक० "देहान् यथेष्टमभ्येति हित्वेमां मानुषीं तनुम्" अभि+उप+आभिमुख्येन प्राप्तौ सक०।

"व्यतीतकालस्त्वहमभ्युपेतः" रघुः "यद्वेत्ता न गमितं तदिच्छाभ्युपैति" उद्भटः स्वीकारे "अभ्युपेत्य चतुष्पाम्" स्मृतिः

अव–अवगमे, ज्ञाने, सक० "अवैमि ते सारमतः खलु त्वाम्" कुमा०। अधोगतौ अक०। अनु+अव+सन्ततसम्बन्धे। अन्ववायः। वि+अव+व्यवधाने "गार्हपत्याहवनीयौ न व्यवेयात्" कात्या० १,८,२३। "नान्तरा यज्ञाङ्गानि व्यवेयात्" श्रुतिः "अनुमत्या व्यवेयात्" स्मृतिः स्त्रीपुंसयोः संभोगार्थव्यापारे व्यवायः। सम्+अव+सम्यक्सम्बन्धे अयुतसिद्धरूपसंबन्धे। स चावयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः जातिव्यक्त्योश्च सम्बन्धः। समवेतः समवायः। "संयुक्तसमवायतः तत्रापि समवेतानाम्" भाषा०। सम्यक्प्राप्तौ च "एते ह वै रात्रौ सर्व्वा रात्रयः समवयन्ति" शत०ब्रा०११,१,७,४, सांहत्ये, "सेनायां समवेतायां सैन्यास्ते" अमरः "धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः" गीता।

आ–आगमने सक०। "पञ्चाजनां ममितिमेयाय" "लञ्चायाय" तस्माल्लोकात् पुनरेत्यस्मै लोकाय" छा० उ० "पुनः स्थविर आयति" मनुः अनु+आ+अन्वागमने सक०। अभि+आ+अभ्यागमने आभिमुख्येनागतौ "सङ्ग्रामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमाम्" भा०अनु० २६अ०। उद्+आ+उद्गमने। उप+आ। समीपागमने। प्रति+आ+प्रत्यागमने "प्रत्यायन्तीं रात्रौ" शत०ब्रा०२, २,४,२। "नेनमेते रश्मयः प्रत्यायन्ति" शत०ब्रा०१४, ८,६,२।

उद्–उद्गतौ अक०। "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" सा०द०। उदयः। उत्कर्षे अक०। उदेति ह वै सर्वेभ्यः पाप्मभ्योय एवं वेद" छा०उ०। अभि+उद्+आभिमुख्येनोद्गतौ "किञ्चिदभ्युदिते रवौ" म०त०पु०। प्रति+उद् प्रत्युद्यानेन गतौ "प्रत्युदियाय पार्वती" कुमा० सम्+उद् समुदये "यदादित्यः समुद्यन् वै तमः पूर्वं व्यपोहति" भा०व० २०६अ०। "एककार्य्यसमुद्यन्तौ सख्यौ युद्धेऽपराजितौ" भा०सभा०१अ०। सांहत्ये च समुदयः उप+समीपगमने प्राप्तौ च "उपेतुषां मोक्षपथं मनीषिणाम्" माघः "योगी परं स्थानमुपैति दिव्यम्" गीता उपायः दुर्+दुर्गमे। [ "अत्यहत त्वम्" भट्टिः निर्–निर्गमने। "निरयदम्बविभूषितम्" दुर्गाध्यानम्। निरगापरा–प्रेतभावप्राप्तौ परेतः। पलायने च "यः परैति स जीवति" प्रतिपत्तौ "नैव श्रेयो धार्तराष्ट्रः परैति" भा०कर्ण० ५अ०।

परि–व्याप्तौ सक० परीतः "पवित्रं पर्य्येषि विश्वतः" ऋ० ७, १०६,१४, परिक्रमणे "प्रदक्षिणमग्निं परीत्य" स्मृ०। परिपाट्याम् पर्य्यायः "जिह्वा पर्य्येति मे मुखम्" भा० आदि० १५२ अ०। [यन्ति" अथ०१५,१०,८। अनु+परि+परिपाट्या अनुगमने "संवत्सर एतदृतवोऽनुपरि-आ+परि अभिमुख्येन व्याप्तौ वि+परि+व्युत्क्रमप्राप्तौ विपर्य्ययः "विपर्य्ययन्तौ वा एतावग्निं भवतः" शत० ७,२,१,१५। "विपरीतमतोऽन्यथा" ज्योति०। "निमित्तानि च पश्यामि विपरीतानि केशव!" गीता

प्र+परलोकगतौ अक० प्रेतः "प्रेत्य संज्ञास्ति" कठो० अपगतौ च "तस्मात्तदाल्लवणात् प्रैति रसः" बृह०उ०। प्रकर्षेण गतौ सक० "प्रयन्ति सर्वबीजानि रोप्यमाणानि चैव ह" भा०व० १९१ अ०।

अभि+प्र+अभिलाषे "कन्या यमभिप्रैति स सम्प्रदानम्" पा० अभिप्रायः "अभिप्रेतार्थसिद्धिमङ्गलम्" रघु०।

प्रति+प्रतिगमने "सरस्वतीह तरवं प्रतीयुः" "राज्ञः प्रतीयाय गुरोः सकाशम्" रघुः प्रतीयुषा पूर्दरयो जनेन" भट्टिः। ज्ञाने प्रत्ययः प्रतीतिः। "उच्चावचा जानपदधर्म्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्" आश्व० ग० "सर्वोऽहमात्मास्मीति प्रत्येति न नाहमस्मीति" "सर्वोलोको नाहमस्मीति प्रतीयात्" शा०भा० "कलहंसमालाः प्रतीयिरे श्रोत्रसुखैर्निनादैः" भट्टिः। विख्यातौ "सोऽयं वटःश्याम इति प्रतीतः" रघुः "तं प्रतीतं स्वकर्म्मणा" मनुः "चतुर्वर्गफलप्राप्तिर्हि काव्यतः—प्रतीतैव" सा०द० विश्वासे "पतिः प्रतीतः प्रसवोन्मुखीं प्रियाम्" रघुः "बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः" "बलवदपि दूयमानं प्रत्याययतीव मां हृदयम्" शकु० "ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली" रघुः।

सम्+प्रति+सम्यग्ज्ञाने निश्चये सम्यग्विश्वासे च। "किं तत्कदं वेत्युपलब्धसंज्ञा विकल्पयन्तोऽपि न संप्रतीयुः" भट्टिः।

वि+विगमे क्षरणे "पितरः कामं व्येतु कोमानसो ज्वरः" भा० आ० ८६ अ० "अनुमानं द्विविधं वीतमवीतञ्च" सा०कौ० "वीतशोकभयो विप्रो ब्रह्मलोके महीयते" "नियतो वीतमत्सरः" मनुः। "वीतशोकभयक्रोधः" गीता।

सम्+सङ्गमे मेलने अक० "आप्यायस्व समेतु ते विश्वतः सोम! वृष्ण्यम्" ऋ०१,९१,१६, "पार्थिवाः सर्वे समेतु भारत!" भा०आ०१८०अ० "राक्षसौ दारिमुन्ताभ्यां समराय समीयतुः" "किंनर्य्यो राघवैश्चैव समीयुर्मान्मथैः सह" रामा०

अभि+गम् आभिमुख्येन सम्यग्गतौ सक० “तं जातमभिगच्छन्ति देवाः” अथ ११,५,२, णिचि अबोधने गमादेशः । गमयति ते अजीगमत् त बोधनेतु प्रत्या(प)ययति ते प्रत्यापिपत् त-प्रत्याययित् त । सनि अबोधने गमादेशः जिगमिषति बोधे तु प्रतीयियिषति । उपसर्गस्यावर्णान्त् परस्य गुण भावेन एत्वं प्राप्ते वृद्धिरेकादेशः । अध्येति अध्येमि उपैति ।

इण्ड पु०न० इदि-रण् पृ० । उखाकर्षके संदंशाकारे पदार्थे “अथैनमिण्ड्वाभ्यां परिगृह्णाति असौ वा आदित्य एषोऽग्निरहोरात्रे इण्ड्वे अहं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः यद्वेवैनमिण्ड्वाभ्यां परिगृह्णाति असौ वा आदित्य एषो अग्निरिमा उभयलोकाविण्ड्वे अहं तदादित्यमाभ्यां लोकाभ्यां परिगृह्णाति तस्मादेष आभ्यां लोकाभ्यां परिगृहीतः परिमण्डले भवतः परिमण्डलौ होमौ लोकौ मौञ्जे भवतो तस्मो एषोऽप्यो अनतिदाहाय” शत० ब्रा० ६,७,१,२५,२६, “परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति” कात्या०१६, ५,२,२, “उखा याभ्यां गृह्यते तौ इण्ड्वौ” कर्क० ।

इत् त्रि० एति गच्छति इ-क्विप् । गत्वरे व्याकरणोक्ते प्रक्रियाकालोच्चारिते प्रयोगकालेऽस्थायिनि वर्णभेदे यथा तिप् सिप् इत्यादौ पकारादि ते च “उपदेशेऽजनुनासिक इत्” “हलन्त्यम्” “न विभक्तौ तुस्माः” “आदिर्ञिटुडवः” “षः प्रत्ययस्य” “चुटू” “लशक्वतद्धिते” पा०सूत्रेषु सापवाद दर्शिताः तस्य लोप” इत्यनेन तस्य प्रयोगेऽदर्शनञ्च विहितम् “आदिरन्त्येन सहेता” पा० २ अनन्तरार्थे ३ अवधारणार्थे च अव्य० “यदेदन्ता अदर्शन्न पूर्व आदिद्” यजु०१७,२५,, “आत् इत् इति च्छेदः इत् एवार्थे”वेददी० “उपोषेषु मघवन् ! भूय इन्नु”यजु०२,२४, इत् एवार्थे” वेददी० ४इत्थमित्यर्थे च “सचाहिवेचानि वरुणस्य व्रतानि” यजु०४,२०, इदित्थमर्थमित्यमित्यर्थे” वेददी०

इत त्रि० इ-क्त । गते “वनितानितया रजनीवधूः”रघुः भावे क्त । २गतौ “इदितादिवादयो पयः” शत०ब्रा०६,२,१,१२ । ३ज्ञाने च न० । “वीतमवीतञ्चेति” सां०कौ० ।

इतर त्रि० इना कामेन तीर्यते तॄ-अप् तरति पचाद्यच् वा । १नीचे पामरे “इतरदिव परिभूय ज्ञानम्, अविगणय्य तपःप्रभावम्, उन्नतस्य गाम्भीर्यं, मन्मथेन जड़ीकृतः” काद० । ईयतेऽनेन इतः विशेषणं राति रा क । २भेदान्वये । “इतरतापशतानि यथेच्छया वितर तानि सहे चतुरानन !” उद्भटः । “यत्र हि द्वैतमिव भवति तदितर इतरम् पश्यति” श्रुतिः । “ते वतध्वं परं गत्वा विजयायेतराय वा” भा०आ०१०अ० । वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः” या० स्मृ० “इतराणि च रत्नानि सेतुर्वानरकोटिषु” “इतरोदहने स्वकर्मणाम्” रघुः “तमिमं कुरु दक्षिणेतरम्” कुमा० । अस्य सर्वनाम कार्यम् । इतरे इतरस्मै इतरस्मात् इत्यादि । “विजयायेतराय वै इत्यादि छान्दसम् न तत्-कार्यम् । वर्णाश्रमेतराणामित्यत्र बहुव्रीहिः तेन न सर्वनामकार्यम् । एवं “शरं श्वेतरे भुजे” रघुश्लोकेऽपि बहुव्रीहिः । तसिल् इतरतः । “जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्”भाग० । थाल् इतरथा “एवं देवत्वेतरथा मानुषे”शत०ब्रा ६'८'१,८, इतरेण निर्वृत्तम् संकाशादि०अञ् । ऐतरः । इतरनिर्वृत्ते त्रि० इतरस्या पत्यम् शुभ्रा० ढक् । ऐतरेयः तदपत्ये पुंस्त्री ।

इतरेतर त्रि० इतर+द्वित्वं समासवद्भावश्च । अन्योन्यशब्दार्थे । “स्त्रीनपुंसकयोरुत्तरपदस्यामावाविभक्तेराम्भावो वा वक्तव्यः” वार्त्ति० इतरेतराम् इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः”सि०कौ० । समासवद्भावात् वृत्तिमात्रे पुंभावः इतरेतरेण “इतरेतरयोः टाबभावः क्लीबे चाद्विरेफः स्वमोः । समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयमित्युक्तं कार्यं तेन क्लीबे इतरेतरमित्येव । “इतरेषां तु वर्णानामितरेतरकाम्यया”मनुः । “यथा नाभिचरेतां तौ वियुक्तावितरेतरम्” मनुः । परमतदादिवत् सर्वनामकार्यम् । किन्तु नाद्ड इति भेदः“व्यूढावुभौ ताविवतरेतरस्मात्”रघुः

इतरेतरयोगः पु० इतरेतरस्य योगः अन्वयः । प्रत्येकप्राधान्येन सर्वेषामन्वये । तदर्थे हि द्वन्द्वसमास इष्यते प्रत्येकत् प्रत्येकप्राधान्यात् । धवश्च खदिरश्च इति वाक्ये हि धवखदिरौ इत्यत्र भिनत्तीत्यादि क्रियायां प्रत्येकस्य प्राधान्येनैवान्वयः तथा च एकजातीयक्रियान्वयितावच्छेदकविशिष्टे प्रत्येकान्वयबोधकत्वे इतरेतर योगाख्यः द्वन्द्वः संहतिप्राधान्ये तु समाहारद्वन्द्वः इति भेदः । २परस्परसम्बन्धे च ।

इतरेतराश्रय पु० इतरेतरमाश्रयति आ+श्रि-अच् । अन्योन्याश्रये तर्कदोषभेदे अन्योन्याश्रय शब्दे २१७९ पृ० विवृतिः ।

इतरेद्युस् अव्य० इतरस्मिन्नहनि इतर+एद्युस् । इतरदिवसे इत्यर्थे ।

इतश्चेतश्च अव्य० । इतश्च इतश्च । अनियतदिग्भागादौ ।

"इतश्चेतश्च विचरन् तस्मिन् मुनिवराश्रमे" देवीमा०।

**इतस्ततस्** अव्य० द्व०। अनियतस्थाने इत्यर्थे "लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः" कुमा०।

**इतस्** अव्य० इदम्+तसिल् इशादेशः। १अस्मादित्यर्थे "इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्" कुमा०। २अस्मिन्नित्यर्थे च। "इतोनिषीदेति विसृष्टभूमिः" कुमा०। "प्रयुक्तमप्यस्त्रमितो वृथा स्यात्" रघुः।

**इति** अव्य० इण्–क्तिच्। १हेतौ, २प्रकाशने, ३निदर्शने, ४प्रकारे, ५अनुकर्षे, ६समाप्तौ, ७प्रकरणे, ८स्वरूपे, ९सान्निध्ये, १०विवक्षानियमे, ११मते, १२प्रत्यक्षे, १३अवधारणे, १४व्यवस्थायाम्, १५परामर्शे, १६माने, १७इत्थमर्थे, १८प्रकर्षे, १९उपक्रमे च। तत्र स्वरूपद्योतकता त्रिधा शब्दस्वरूपद्योतकता प्रातिपदिकार्थद्योतकता वाक्यार्थद्योतकता चेति भेदात्। तत्र शब्दस्वरूपद्योतकत्वे तद्योगे न प्रथमा। "कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते" पुरा० "अतएव गवित्याह भूसत्तायामितीदृशम्" भर्तृहरिः "रामरामेति रामेति कूजन्तं मधुरं वचः" रामा० "रामेति रामभद्रेति रामचन्द्रेति वा जपन्" रामकवचम्। प्रातिपदिकार्थद्योतकत्वे प्रथमा। "चयस्त्विषामित्यवधारितं पुरस्ततः शरीरीति विभाविताकृतिम्। विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः" माघः। "दशरथ इत्युदाहृतः" भट्टिः। "वदन्त्यपर्णेति च तां पुराविदः" कुमा०। वाक्यार्थद्योतकत्वे न प्रथमा निपातेनाभिहिते प्रातिपदिकार्थे एव प्रथमाविधानात् वाक्यस्य च शक्त्या लक्षणया वा एकार्थबोधकत्वाभावेन प्रातिपदिकत्वाभावात् "भूसत्तायामितीदृशम्" भर्तृ० "श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका" मीमांसका०। तत्र हेतौ "इतीव धारामवधार्य्य नैष० 'इति स्म सा कारुतरेण लेखितम्" नैष०। प्रकारे "इति मदमदनाभ्यां रागिणः स्पष्टरागाः" माघः प्रकाशार्थे इतिहरि इत्यादौ अव्ययी० इदमर्थे "विरोधिसिद्धमितिकर्त्तुमुद्यतम्" प्रकरणे इतिकथमितिकर्त्तव्यम्। इतिवृत्तम्। भावे क्तिन्। २०गतौ २१ज्ञाने च स्त्री "प्रासावीद्द्विपत्प्र चतुष्पदित्यै" ऋ० १।१२४।१"। २२ ऋषिभेदे पु०।

**इतिक** त्रि० इतं गमनमस्त्यस्य ठन्। गतिमति ततः नडा० गोत्रापत्ये फक्। ऐतिकायनः तद्गोत्रापत्ये पुंस्त्री

**इतिकथ** त्रि० इति इत्थं कथा यस्य। अर्थशून्यवाक्यप्रयोक्तरि अश्रद्धेयवचने।

**इतिकथा** स्त्री इति इत्थं कथा। अर्थशून्यवाक्ये मेदि०।

**इतिकर्त्तव्य** त्रि० इति इत्थं कर्त्तव्यम्। इत्थं कर्त्तव्ये परिपाटीयुक्ते कर्त्तव्ये। "एवं सर्वं विधायेदमितिकर्त्तव्यमात्मनः" मनुः "संदिदेशेतिकर्त्तव्यम् वज्रवेगप्रमाथिनौ" भा०व०२८५अ० "स च व्यवहारः कीदृशः कतिविधः कथञ्चेतिकर्त्तव्यताकलापोनाभिहितः" इति मिता० "कथयस्वेति कर्त्तव्यं यःकार्य्यं करवामहे" भा० आ० १९५ अ०। "धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति" पुरा० इतिकृत्यादयोऽप्यत्र। "तेषु त्रिष्वितिकृत्यं हि पुरुषस्य समाप्यते" मनुः। "ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम्" भा० आ०२२० अ०।

**इतिवृत्त** न० इत्थं वृत्तम्। इदंप्रकारान्विते चरिते। "इतिवृत्तं नरेन्द्राणामृषीणाञ्च महात्मनाम्" भा० आ०१अ० उपचारात् तज्ज्ञापके २पुराणादौ च। "समेतिवृत्तं किल गेयमद्भुतम्" रामा०। "दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु" सा०द०।

**इतिश** पु० ऋषिभेदे। तस्य गोत्रापत्यम् नडा० फक्। ऐतिशायनस्तद्गोत्रापत्ये पुंस्त्री।

**इतिह** अव्य० इति एवं ह किल इत्यर्थः। उपदेशपरम्परायाम् यथाऽत्र वटे यक्ष इत्युपदेशपरम्परैव न तु केनापि दृष्टा तथा कथितम्। इति तत्र प्रसिद्धिमात्रता "इति होचुर्वृद्धा" सा०कौ०।

**इतिहास** पु० इतिह पारम्पर्य्योपदेश आस्तेऽस्मिन् आस–आधारे घञ् टी०। "धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्। पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते" इत्युक्तलक्षणे पुरावृत्तप्रकाशके भारतादिग्रन्थे। "इतिहासपुराणाद्यैः षष्ठं सप्तमं नयेत्" दक्षः "स्वाध्यायं श्रावयेत् पित्रे धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च" मनुः। "वाकोवाक्येतिहासपुराणः पञ्चमोवेदानां वेदः" छा० उ० "इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः। पञ्चभ्य इव भूतेभ्योलोकसंविधयस्त्रयः। भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम्। संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम्" भा०आ०१अ० इत्युक्ते, भारतस्येतिहासरूपत्वम्। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" स्मृतिः। २अन्यस्मिन् पुरावृत्ते स च भारते शान्तिप-

आदौ "अथाप्युदाहरन्तीममितिहासं पुरातनम्" इत्यनेन बहुकशो दर्शितः । "नवमेऽहनि तार्क्ष्यो वैपश्यितस्तस्य वयांसि विशस्तानीमान्यासत इति वयांसि ब्रह्मचारिण इत्युपसमानीतास्तानुपदिशतीतिहासो वेदः सोऽयमितीतिहासमाचक्षीत" आश्व०श्रौ० वेदभागविशेषस्यैवेतिहासरूपत्वकथनम् । तत्र पुरावृत्तप्रतिपादकत्वात् तथेति बोध्यम् तदभिप्रायेणैव "वाकोवाक्येतिहासपुराण इति" छान्दोग्यवाक्यमिति द्रष्टव्यम् । पौराणिकमतसिद्धे २ऐतिह्ये प्रमाणे च ।

इतिहासपुराण न० इतिहासावेदकं पुराणम् । आथर्वणवेदभागभेदे सना०द्र० २इतिहासपुराणसमाहारे च ।

इत्काट पु० इतं गन्तारं जनं कटति आवृणोति स्वशिखाग्रफलेन कट–आवरणे अच् ३त० (ओकड़ा) इक्षे तत्समीपगन्तृवस्त्रादौ हि तत्फलसंयोगात् गतिनिरोध इति लोकप्रसिद्धम् ।

इत्किला स्त्री किल–श्वैत्ये क किलः इत् गतः किलः श्वैत्यं यस्मात् । रोचनायाम् गन्धद्रव्यभेदे शब्दच० ।

इत्थम् अव्य०इदम्+थमु । १इदंप्रकारे इत्थम्भावः इत्थम्भूतः । २अनेन प्रकारेणेत्यर्थे च "इत्थमत्र विलपन्तममुञ्चत्" नैष० । "इत्थं रतेः किमपि भूतमदृश्यरूपम्" कुमा० "इत्थं व्रतं धारयतः प्रजार्थम्" रघुः । "इत्थमाराध्यमानोऽपि" कुमा० "इत्थं क्षितीशेन वशिष्ठधेनुः" रघुः । "सिद्धाप्रयोगे एतस्मिन् उपपदे णमुल् । इत्थङ्कारम् इत्थम्भावमित्यादि ।

इत्थम्भाव पु० इत्थं भावः प्राप्तिः भू–प्राप्तौ घञ् । कस्यचित् प्रकारस्य प्राप्तौ ।

इत्थम्भूत त्रि० इत्थं कञ्चित् प्रकारं भूतः प्राप्तः भू–कर्त्तरि क्त । कञ्चित् प्रकारं प्राप्ते "इत्थम्भूतलक्षणे" "लक्षणेत्थम्भूताख्यानभागवीप्सास्विति" च पा० ।

इत्थशाल पु० इत्थं शल–अच् पृ० । नील०ता०उक्ते योगभेदे तद्वृत्तिः यथा "शीघ्रेऽल्पभागैर्बहुभागमन्देऽग्रस्थे निजं तेज उपाददीत स्यादित्थशालोऽयमथो विलिप्ताप्रान्तर्भिन्नोऽपि पूर्णमेतत् । शीघ्रो यदा भान्यदशस्थितः सन् मन्देऽग्रभस्थे निदधाति तेजः । स्यादित्थशालोऽयमथैव दीप्तांशकाधिकांशैरिह मन्दपृष्ठे । तदा भविष्यद्गणनोयमित्थशालं विधिं शास्त्रविदाहुः" । "लग्नेशकार्य्याधिपयोर्यदैव योगस्तदा कार्य्यमुपैति सत्यः । लग्नेशकार्य्याधिपतत्सहाय यत्र ग्रहश्चित् पतितोऽस्त्यदृष्टे । तदा बलाढ्यं कुर्वन्ति योगं विशेषतः क्षेत्रवशात् हितश्चेत् । स्वर्क्षादिमत्स्थानगतः शुभश्चेत् कुतेत्थितोभूद्विलाप्यघाते । तदा शुभं प्रागभवत् सुपूर्णमये भविष्यत्यपवर्त्तते च । व्यत्यस्तमस्माद्विपरीतभावेऽथेष्टे हितोऽनिष्टमहं प्रपद्यः । अभूच्छुभं प्रागशुभं त्विदानीं संयातुकामे न च भावि वाच्यम्" नील०ता० । "प्राशिकशालोऽपर इन्दुवारकथेत्थशालोऽपर ईसराफः" "वेदप्रभेदेन कलेत्थशालः" नील०ता० कम्बूलादौ विशेषः तत्तच्छब्दे वक्ष्यते अरब्यौ इति । इत्थशालो ताजकयोगवति यवै ।

इत्था अव्य०इदम्+थाल्–इदादेशः । १इत्थमित्यर्थे । "क इत्था वेद यत्र सः" कठो० "इन्द्रमित्थागिरोममाच्छाः" ऋ० १०२,४,२ । २सत्ये निरु० इदम्+थम् डादेशः । ३इदंप्रकारेत्यर्थे । "इत्थाधिया यज्ञवन्तः" ऋ० ३,२७,६.

इत्य त्रि० इण–कर्मणि क्यप् । गम्ये । "इत्यः शिष्येण गुरुवत्" भट्टिः । "इत्योऽनभ्यासस्य" वार्त्ति० इण् अनभ्यासमित्यः दूरतः परिहर्त्तव्यः" सि०कौ० । भावे क्यप् । २गतौ स्त्री । "कोनस्येत्यामन्विच्छ तस्करस्य" यजु० १२,६२ "इत्यां गतिम्" वेददी० ।

इत्वक पु० इत्याधि कायति शब्दायते कै–क इत्यायां गतौ राजभवनप्रवेशे अधिकतोवा कन् सुखः । प्रतीहाराधिकारिणि द्वारपाले । [ ईत्वरी ।

इत्वन् त्रि० इण्–क्वनिप् । गन्तरि स्त्रियां ङीप् वनोरच ।

इत्वर त्रि०इण्–करप् । १पथिके, २नीचे, ३क्रूरकर्म्मणि च । ४षण्डे पु० । स्त्रियां करबन्तत्वात् ङीप् । सा चाभिसारिकायां ५स्त्रियाञ्च "अपतत्नीत्वरं त्वा जगत्" ऋ० १०,८८,४ । [इक्षवच्छे इ० ।

इद अव्य० इदि क्विप् वा० नलोपः । इत् इत्यस्यार्थे एवकारार्थे

इदि ऐश्वर्ये इदित् भ्वा० पर० अक० सेट् । इन्दति ऐन्दीत् इन्दाम्–बभूव आस चकार । इन्द्रः ।

इदंयुग न० कर्म० । एतद्युगे । इदंयुगे साधुः प्रतियुगा० खञ् । ऐदंयुगीनः एतद्युगसाधौ त्रि० ।

इदङ्कार्य्या स्त्री इदं कार्य्यं यस्याः । १दुरालभायां शब्दच० २एतद्रूपकार्य्यान्विते त्रि० ।

इदन्तन त्रि०अस्मिन् काले भवः नि०ख्युल् तुट् च । इदानीन्तने "शक्तिभिर्निरदन्तनैः" ब्रह०स्तुतिः ।

इदन्ता स्त्री इदमो भावः । इदंशब्दार्थभावे चक्षुरादिना दर्शनयोग्यतायाम् "अनिदं त्वमिति" श्रुतिपदव्याख्याने "इदन्तयानिर्देश्यमपकाम्" भाष्यम् ।

इदन्द्र पु० इदं पश्यति दृश–बा० ड्रस् ३त० । परमात्मनि तस्य निर्व्वचनमैतरेये दर्शितं यथा "स एतमेव पुरुषं ब्रह्म

ततममपश्यदिदमदर्शमिति तस्मादिदन्द्रोनाम इदन्द्रो-ह वै नामैनमेवमिदभिन्द्र' सन्तमित्याचक्षते परोक्षेण, परोक्ष प्रिया हि देवाः" ऐत० उ० विवृतञ्चैतद्भाष्ये । "यस्मादिदमित्येव वत्साक्षादपरोक्षाद्ब्रह्म सर्व्वान्तरमपश्यदपरोक्षेण । तस्मादिदं पश्यतीति इदन्द्रो नाम परमात्मा । इदन्द्रो-ह वै नाम प्रसिद्धो लोके ईश्वरः । तमेवं इदन्द्रम् । इदमितिपरोक्षाभिधानेनाचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यतमत्वात् प्रत्यक्षनामग्रहणभयात् । तथा हि परोक्षप्रियाः परोक्षनामग्रहणप्रिया एव हि यस्माद्देवाः किमु सर्व्वदेवानामपि देवो महेश्वरः" विवृतमेतदानन्दगिरिणा "तस्येन्द्रनामप्रसिद्धापि तस्य ज्ञानस्याऽपरोक्षत्वमिति वक्तु' तस्मादिन्द्र इति वाक्यम् तद्व्याचष्टे । यस्मादिति । यस्मात् सर्वान्तरं ब्रह्म इदमित्यपरोक्षं प्रत्यगात्मत्वेनाऽपश्यदित्यन्वयः । कथमिदन्द्रनामत्वमत आह । इदन्द्रो ह वा इति । नन्विन्द्रो मायाभिरित्यादाविन्द्रप्रसिद्धेर्न त्विदन्द्र इत्यत आह । तमेवमिति । इदन्द्रस्यैव सतः परोक्षत्वार्थम् अक्षरलोपेनेन्द्र इत्याहुरित्यर्थः । परोक्षोक्तेः प्रयोजनमाह । पूज्येति । पूज्यानां परोक्षतयैव नाम वक्तव्यमित्यत्र प्रमाणमाह । तथा हीति । देवा इति पूज्या इत्यर्थः । अत एवाचार्य्या उपाध्याया इत्युक्तावेव प्रीतिं कुर्व्वन्ति लोके, न तु विष्णुमित्रादिनामग्रहण इति भावः । नाम्नः परोक्षत्वं नाम यथार्थनाम्नो रूपान्तरकरणेन स्वरूपाच्छादनमिति ज्ञेयम्" ।

इदम् त्रि० इदि–कमि नलोपश्च ।पुरोवर्त्तिनि २ हृद्ये ३ बुद्ध्योपस्थापिते "इदमस्तु सन्निकृष्टं समीपतर्त्ति चैतदोरूपम् । अदसस्तु विप्रकृष्टम् तदिति परोक्षे विजानीयात्" इत्युक्तेः सन्निकटवाचित्वमस्य अतएव"अस्येति प्रत्यक्षादिसन्निधापितस्य जगत इदमा निर्देशः"शा० भा० उक्तम् । सन्निकटत्वञ्च बुद्धिमात्रेण, तच्च ज्ञानलक्षणया स्मरणादिना च भवति तेन "कौमुदीयं विरच्यते" इत्यत्र भाविन्यामपि कौमुद्यां बुद्ध्या सन्निधापितत्वेन इदंशब्दप्रयोगः । अतएव तदादेः बुद्धिस्थत्वोपलक्षितधर्म्मावच्छिन्ने शक्तिरिति नैयायिकादयः। तादर्थ्यपरत्वे एवास्य सर्व्वनामता शब्दस्वरूपपरत्वे तु न । "इदमोऽन्वादेशे"पा० "इदमा निर्देशः"शा०भा०"इदमस्तु सन्निकृष्टम्" "अयमुदयति विततोर्द्ध्वरश्मिजालः" माघः ।"अयमस्मि पशुपरानुचरः" सा० द० टी० "इदं किलाव्याजमनोहरं वपुः" शकु० "अयमसौ भगवानुत पाण्डवः" किरा० । "इमं विवस्वते योगम्" गीता "इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्"मनुः । अन्वादेशे एनादेशः द्वितीयाटौस्सु "एनं युवानं पतिं वः" इति कुशोत्सर्गमन्त्रः" । "यद्येनमुच्छसि तदा कतरोवरस्ते" नैष० । "अनेन यूना सह पार्थिवेन" रघुः । अनुक्तौ एनेन । एवम् अनयोः एनयोः । सर्व्वनामकार्य्यम् । इमे अमी अस्मात् एषाम् अकिन् स्त्रियाम् इयम् । "इयं महेन्द्रप्रभृतीनधिश्रियः" कुमा० "इतीयं वैदिकी श्रुतिः" मनुः । अस्यैः अस्याः आसाम् । अत्वाकच् । इमकौ इमकेनेत्यादि प्रत्यक्षविषयतयाऽऽच्छन्दार्थेऽस्य क्वचित् वृत्तिः "अयं जनः प्रष्टुमनास्तपोधने !" "जनोऽयमुच्चैः पदलङ्घनोत्सुकः" "इतः स दैत्यः प्राप्तश्रीर्नेतएवार्हति क्षयम्" कुमा०। इह । यस इत्यम् थाल् इत्था। दानीम् इदानीम् । तस् अत्र तसिल् इतः । अयम् अव्ययमपि । तेन ख्युल् तुट् च । इदन्तनः। मयट् इदम्मयः। स्त्रियां ङीप्। वति इयान् स्त्रियाम् ङीप् इयती ।

इदा अव्य० इदम् दाच् वेदे नि० । इदानीमित्यर्थे "इदा हि ते वे विषतः" ऋ० ६,२१ "इदा इदानीमिति भा० । इत् वा इन्द० । सम्यग्वत्सरादौ तद्युक्ते इत्येवंरूपे । इदावत्सरः। तस्य निरुक्तिस्तच्छब्दे वक्ष्यते ।

इदानीम् अव्य० इदम्–दानीम् इश् च । सम्प्रत्यर्थे । "इदानीमावयोर्मध्ये सरित्सागरभूधराः" उद्भटः । "सा चेदानीं प्रचेतसः" रघुः "इदानीञ्चेन्नातः चिरपरि शमनायेव द तदा"जगन्नाथः। भवार्थे ख्युल् तुट् च्। इदानीन्तनः वर्त्तमानकालभवे त्रि० स्त्रियां ङीप् ।"वासना चेदानीन्तनी प्राक्तनी वेति" सा० द० ।

इदावत्सर पु० इदाचिह्नितः वत्सरः । वत्सरपञ्चकान्तर्गते वत्सरभेदे तदानयनप्रकारो यथा "शकाङ्कात् पञ्चभिःशेषात् समाद्याद्यास्तु वत्सराः । संपरोदानुपूर्व्वास्ते तथोदापूर्व्वका मताः" ज्यो० तथा च एकाङ्के शिष्टे सवत्सरः, द्व्यङ्के परिवत्सरः, त्र्यङ्के इदावत्सरः, चतुरङ्के अनुवत्सरः, पञ्चाङ्के शिष्टे उदावत्सरः । तेषां फलन्तु मत्० त० विष्णु० ।"संवत्सरे तथा दानं तिलस्य तु महाफलम् । परिपूर्व्वे तथा दानं वस्त्राणाञ्च द्विजोत्तम ! । इदापूर्व्वेऽथवस्त्राणां धान्यानाञ्चानुपूर्व्वके । उदासंवत्सरे दानं रजतस्य महाफलम्" उदावत्सरस्थाने इद्वत्सरोऽपि "परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि" राज० स्मृ० "नभोमस्वञ्च सह द्यावापृथिव्योर्भस्त्राभ्यां कात्यायन सह भुञ्जीत तं कालं संवत्सरं परिवत्सरमिदावत्सरमनुवत्सरमुद-

त्सरमिति भानोर्मान्द्यशैघ्र्यसमागतिभिः समामनन्ति" भाग०५स्क०। "मण्डलाभ्यां चन्द्रार्कमण्डलाभ्यां सह- भुङ्क्तीति तेन यदा सूर्य्यस्य शुक्लप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रयोर्मासयोर्युगपदुपक्रमो भवति स संवत्स- रः। ततः सौरमानेन वर्षे षट् दिनानि वर्द्धन्ते चान्द्र- मानेन च षट् ह्रसन्तीति द्वादशदिनव्यवधानादुभयोरप्यप- ख्याद्भावो भवति एवं पञ्च वर्षाणि गच्छन्ति तत्र द्वौ मल- मासौ भवतः। ततः पुनः सः संवत्सरः" श्रीधरः। तथा च समकालारब्धसौरचान्द्रमासयुक्तोवत्सरःसंवत्सरः चान्द्रसौरमासयोरारम्भे समत्वपरिवर्ज्जितमासारब्धोवत्- सरः परिवत्सरः। इद् इत्थं परिवत्, आरम्भे समत्वपरिवर्ज्जनवत्त्वेऽपि अन्ते तयोः समत्वस्यागतिमान् वत्सरः इदावत्सरः। अनुगतः सौरसंक्रान्तिं चान्द्रो- मासो यत्र तादृशोवत्सरः अनुवत्सरः। अस्य वर्षस्या- संक्रान्तमासशून्यतया संक्रान्त्यनुगतचान्द्रमास घटितत्वेन तथात्वम्। उत्क्रान्तो रविसंक्रान्तिं चन्द्रमासोऽत्र पुनः समकालारम्भागतिमांश्च योवत्सरः स उद्वावत्सरः। अ- स्यैव इद्वर्षत्वं चान्द्रसौरयोर्मासयोरारम्भे समकालप्राप्त्यैव। एवमेषामन्वर्थकता द्रष्टव्या। पञ्चमवर्षे मलमासद्वय- पातकथनमपि "पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ। तेषां कालातिरेकेण ग्रहाणामतिचारतः" एतच्च प्रायिकं "द्वात्रिंशद्भिर्गतैर्मासैः दिनैः षोड़शभिस्तथा। घटिकानां चतुष्केण पतति ह्यधिमासकः" काल० धृतसिद्धान्तवाक्यात् तेन प्रागुक्तभारतवाक्यं "मलमासः स विज्ञेयोमासि त्रिंशत्तमे भवेदिति" काठकगृह्यवाक्यञ्च ज्योतिःशास्त्रो- क्तमध्यमानमाश्रित्यैव। सिद्धान्तवाक्यं तु स्फुटमानमा- श्रित्येत्यनयोरविरोधः। एवमेव माघवादयः

इदुवत्सर पु० इद्-उ वत्सरः। इदावत्सरे। "इदुवत्सराय परिवत्सराय संवत्सराय" अथ० ६,५५,३।

इद्ध न० इन्ध-भावे क्त। १आतपे, २दीप्तौ, ३आश्चर्य्ये। च। कर्त्तरि-क्त। ४दीप्ते ५दग्धे च त्रि०। "समिद्धशर- णादीप्ता" भट्टिः। "तमिद्धमाराधयितुं सकर्मकैः" माघः। "इद्धावोधैरिति" सद्दो बोधे इद्धत्वं सर्वशास्त्रस्थाधेया- हितत्वम् शासने इद्धत्वमप्रतिहतत्वम्। [सद्यो इद्धासि" भाग०।

इद्धा अव्य० इन्ध-धाच् नि०। प्राकाश्ये स्वरादिः "समिद्धमिद्धेन।

इध्म न० इध्यतेऽग्निरनेन इन्ध-मक्। १काष्ठे "यस्त इध्मं जभरत् सिष्विदानः" ऋ० ४,२,६, "इध्मं काष्ठभारम्" भा०। २यज्ञियसमिद्भेदे पु०। तत्प्रमाणकरणप्रका- रादि कात्या०श्रौ०दर्शितम्। "अयुग्धातूनि यूनानि" सू०। "इध्मबन्धनबर्हिर्बन्धनार्थानि यूनानि संनहनानि रज्ज- वोऽयुग्धातूनि भवन्ति। धातवस्तृणगुण्ठिप्रक्षेपाः अयुजो विषमा एकत्रिपञ्चसप्तनवादिविषमसंख्या धातवोयेषां तान्ययुग्धातूनि। तथा चापस्तम्बः "त्रिधातु पञ्चधातु वा शुल्बं करोतीति" शुल्बं रज्जुमित्यर्थः। "पञ्चविंशतिकुशमयानि यूनानि" इति यज्ञपार्श्वे। तथा "समूलानाममूलानां वा दर्भाणां पूर्ववत् शुल्बं कृत्वो- दगग्रं निधायेति" इध्मप्रस्तावे। मानवे च "शुल्बं प्रति- दधात्ययुग्धातु प्रदक्षिणमिति"। तित्तिरिश्रुतौ "अप- रिमिताहितं शुल्बं कृत्वेति" कर्क० बर्हिषो बन्धन- प्रकारमाह। "प्रागग्रे यूनउदगग्रं बर्हिराचिनोति" सू०। प्रागग्रे यूने प्रागग्रे संनहने बन्धनार्थायां रज्जौ उद- गग्रं बर्हिराचिनोति बन्धनार्थं स्थापयति" कर्क०। अथे- ध्मबन्धनस्य प्रकारमाह। "उदगग्रे प्रागग्रमिध्मम्" सू०। आचिनोतीत्यनुवर्त्तते उदगग्रे यूने संनहने प्रागग्रमि- ध्ममाचिनोति बन्धनार्थं निदधाति" कर्क०। "प्रत्यगग्र- न्थीनवगूहति" सू०। इध्मबर्हिर्बन्धनार्थानां यूनानां ग्रन्थीन् प्रत्यगवगूहति यूने गाढं बद्धा यूनस्याग्रमूले संकल्प्य प्रदक्षिणमावेष्ट्य इध्मबर्हिषोरग्रभागे प्रोत- यित्वा पश्चादिति तयोर्मूलभागे अवगूहति प्रेरयति प्रत्यक्शब्देन इध्मबर्हिषोःपश्चाद्भागो मूलभाग उच्- यते द्विरवचिनोर्बर्हिरुदगग्रे निहिते असम्भवात्। काठके "ग्रन्थिं कृत्वा पुरस्तात् प्रत्यञ्चमपकर्षतीति"। मानवे "शुल्बस्यान्तौ समायम्य "पूषा ते ग्रन्थिमिति" प्रदक्षिणमावेष्टयति पश्चात् प्रत्यञ्चमपकर्षतीति" तैत्तिरीयेऽपि "पश्चात्प्राञ्चमुपगूहतीति"। आपस्तम्बः "पुरस्तात् प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चाद्वा प्राञ्चमिति"। "अष्टादशेध्मं परिधिवर्ज्याम्" सू०। "परिधीनां इध्माः पलाशखदिरविकङ्कतादयः परिधिवृक्षाः तेषां परिधिवृक्षाणां सम्बन्धिनः अष्टादशसंख्याकाष्ठकमिध्मं कुर्य्यात्। मानवे "समूलैर्दर्भैः पालाशं खादिरं रौहितकं वाष्टादशदार्विध्मं संनह्यति त्रींश्च परिधीन् योवश्चियदस्सेति"। काठके "अष्टादशदारु शुल्बं समानहत्वस्य संनह्यति विंशति- मिध्मे पशुबन्धे चेति"। अतएव सामिधेनीविवृद्धौ काष्ठ- वृद्धिर्भवति ह्रासे च ह्रासो न भवति पित्र्यादौ, तथा- चापस्तम्बः "सामिधेनीविवृद्धौ काष्ठानि विवर्द्धन्ते प्रकृतितो ह्रसमानास्तु प्रकृतिवदिति"। उपदेशस्तु "मात्रावदिध्मा

बर्हिरिति” वचनात् ह्रासः । “इध्मप्रमाणं चारत्निरिति सद्भिः प्रकीर्तितमिति”कात्यायनः(कर्मप्रदीपे) तथा “समित्-पवित्रं वेदं च कुर्य्यात् प्रादेशसंमितम् । इध्मस्तु द्विगुणः कार्य्यः परिधिस्त्रिगुणः स्मृतः” “अरत्निं प्रादेश इध्मो वा द्विगुणः परिधिस्तत” इति । “एकविंशति वा” सू०। अथ वा एकविंशतिमेकविंशतिसंख्याककाष्ठकमिध्मं कुर्य्यात् तथा चापस्तम्बः “खादिरं पालाशं वैकविंशतिदारुकमिध्मं करोति” । “ततः परिधीनेके” सू० । एके आचार्य्यास्तत एकविंशतिसंख्यकाष्ठकादिध्मात्त्रीणि काष्ठान्यरत्निमात्राण्यपोद्धादाय परिधीन् परिदधति “तद्वैकइध्मस्यैवैतान् परिधीन् परिदधतीति” श्रुतेः। अथ वैकमेवेदं सूत्रम् “एकविंशति वा ततः परिधीनेके” इति एके आचार्य्या विकल्पेन एकविंशतिसंख्यकाष्ठमिध्मं कुर्वन्ति तत इति तस्मादेवैकविंशतिकाष्ठकेध्मात् परिधीन् परिदधति च । एतदेव युक्ततरम् आपस्तम्बसूत्रे एकविंशतिकाष्ठानां विभागदर्शनात् । तथा चाहापस्तम्बः “खादिरं पालाशं वैकविंशतिदारुकमिध्मं करोति त्रयः परिधयः पालाशकाष्ठकाः खादिरौदुम्बरबिल्वरोहितकविकङ्कतानां ये वा यज्ञिया वृक्षा आर्द्राः शुष्का वा सत्वचकाः,स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्यो ह्रसिष्ठ उत्तरार्ध्यौ द्वे, आघार समिधावनुयाज समिदेकविंशतिः समूलानाममूलानां वा दर्भाणां पूर्व्ववत्कृत्त्वं कृत्वोदगग्रं निधायेति” । अथ एवंविधमेकीयमतम् यदेकविंशतिकाष्ठकः इध्मः । तस्मिन् पक्षे चेध्मादेव त्रीणि काष्ठान्यादाय परिधिपरिधानमिति । अस्मिन्नन्तरमिध्मबर्हिषोर्भूमौ निधानं न कार्यम् आपस्तम्बसूत्रे अनधोनिदधातीत्युक्तत्वात् । तद्वैक इध्मस्यैवैतान् परिधीन् परिदधतीत्यत्र हरिस्वामिनः तद्यथा न कुर्य्यादनवक्लृप्ता हि तस्यैते भवन्तीति वाक्यमात्रैः परिधिभिरार्द्रैश्च भवितव्यम् । इध्मस्तु शुष्कः इन्धनत्वादेव हिमादेशश्च तेन ते इध्मैकदेशभूताः परिधित्वायासमर्थाः स्युः तदिदमाह अभ्याधानाय होति शुष्को ह्यादावाधेयः यावत्खर माल्याहवनीये खरे सम्भवन्तीत्यभिप्रायः यस्तु परिधिवृक्ष्या आहरति सोऽनध्यवेदनीयार्दाग्निखरादतिरिक्तमेवाहरति अग्निवेष्टनं च दाहभयाच्च शुल्बमिति तदप्यनवक्लृप्ता इति” कात्या० १,२,१४,२१ ।

“अपरमितं प्रणयनीयं त्रिवृतम्”सू०। “प्रणयनस्यायं प्रणयनीयः तं प्रणयनीयमग्निप्रणयनार्थमिध्ममपरिमितमपरिमितकाष्ठकं त्रिवृतं त्रिसृभिः संनहनरज्जुभिर्वेष्टितं कुर्य्यात् त्रीणि वृतानि बन्धनानि यस्य स त्रिवृतः तं त्रिवृतमिति । अपरिमितत्वं च प्रागुक्तेध्मकाष्ठसंख्यापेक्षयातिशयेनाधिकसंख्यकाष्ठकत्वम् । तेन चतुर्विंशतिसामिधेनीको यदष्टकापशुस्तत्र सप्तविंशतिः काष्ठानि भवन्ति । ततश्च प्रणयनीये ततो ऽप्यधिकानि अष्टाविंशतिप्रभृतीनि इष्टकासंख्यानि काष्ठानि भवन्ति”कर्क०।

छन्दोगप० “प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् । एवंमिताः स्युरेवेह समिधः सर्व्वकर्मसु । समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः । दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः । समिदादिषु होमेषु मन्त्रदैवतवर्ज्जिता । पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् । इध्मोऽप्येधार्थमाचार्य्यैर्हविराहुतिषु स्मृतः। यत्र चास्य निवृत्तिः स्यात्तत् स्पष्टीकरवाण्यहम् । अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्मसु । येषां चैतदुपर्य्युक्तं तेषु तत्सदृशेषु च । अक्षभङ्गादिविपदि जलहोमादिकर्मणि । सोमाहुतिषु सर्व्वासु नैतेष्विध्मो विधीयते । “इध्मजातीयकाष्ठाद्ध प्रमाणमेवार्थं भवेत्” । “सुनन्दमीतिरिध्मभृतिः पक्ष्यकैः” ऋ० ६,२०,१३ । “इध्मानां काष्ठानां भृतिः”भा०। तुषितदेवगणभेदे स च भाग० ४स्क०१अ० दर्शितो यथा “तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः । इध्मः कविर्विभुः स्वाह्नः सुदेवो रोचनोद्विषट् । तुषिता नाम ते देवा आसन् स्वायम्भुवेऽन्तरे” भाग० ।

इध्मजिह्व पु० इध्मं काष्ठं जिह्वेवास्य । वह्नौ ।

इध्मवाह पु० लोपामुद्रागर्भजाते अगस्त्यपुत्रे ऋषिभेदे“सहस्रसम्मितः पुत्र एकोऽप्यस्तु तपोधन !” इति लोपामुद्रया प्रार्थितोऽगस्त्यस्तस्यां उत्पादयामास तस्य नाम दृढस्युरिध्मवहनाच्च इध्मवाह इति नामान्तरं तदेतदुक्तं भा०व० । ९९ । “तत आधाय गर्भन्तमगमत् वनमेव सः” “तस्मिन् वनगते गर्भोऽवर्द्धत सप्त शारदान् । सप्तमेऽब्दे गते चाथ प्राच्यवत् स महोज्ज्वलः । ज्वलदग्निप्रभावेन दृढस्युर्नाम भारत ! । साङ्गोपनिषदान् वेदान् जपन्निव महातपाः । तस्य पुत्रोऽभवदृषेः स तपस्वी महाद्विजः । स बाल एव तेजस्वी पितुस्तस्य निवेशने । इध्मानां भारवहनात् इध्मवाहस्ततोऽभवत्” ।

इन्व गतौ तना०पर०सक०सेट् । निरुक्ते इन्वतीति बहुवचनान्त इति केचित् इनोति इनुतः इन्वन्ति इनोषि इन्वः इनुवः इनुयात् इनोतु इनु इनवानि ऐनोत् । ऐनोत् इयेन । निरुक्ते इन्वति इति एकवचनान्तस्तेन इन्वधातुरेवायमिति

चङ्गः स च भ्वादि० प० सेट्। इन्वति ऐन्वीत् इन्वामास तद्रूपम्। "ऋघायमाण इन्वसि" ऋ०१,१७६,१।

**इन** पु० इण-नक्। १ सूर्य्ये, "नन्दन्तिय इन्नमनवद्यपुत्र-व्यया इनाद्दर्पदं सभोज्यम्" नील० ता०। २प्रभौ "स न महीनमहीनपराक्रमम्" रघुः। ३चपविशेषे च।

**इनक्ष** याच गतौ छान्दस इकारोपसर्जनः भ्वा०पर०स०नच-वद्रूपम् इनक्षति "दूरेचतायक्षन्न संहृतं यदिनचत्" ऋ०१,१३२,६, "इनक्षत् व्याप्नोति नक्ष गतौ छान्दस इ-कारोपसर्जन इति भा० "शुक्रेण शोचिषाद्यामिनक्षत्, ऋ०१०,४१,७, [ इचे राजनि०।

**इनानी** स्त्री इनमानयति आन-णिच्-अण् गौरा०। वटपत्री

**इन्थिहा** स्त्री ताजकोक्तायां मुथहायाम्। तदानयन-प्रकारादि नील० ता० उक्तम् यथा "स्वजन्मलग्नात् प्रति-वर्षमेकैकराशिभोगा मुथहा क्रमेण। स्वजन्मलग्नं रवि-तष्टयातं वर्षद्युतं सा भवत्येन्थिहा स्यात्। प्रत्यहं चरलिप्रा-भिर्वर्द्धते सानुपाततः। सार्द्धमंशद्वयं मासद्ध्याङ्कः कोऽपि स्मरदः। स्वामिसौस्थ्येवशात् सौस्थ्यं सुतकस्था भयं रुजः। भावालोकनसंयोगात् फलमस्या निरूप्यते। धर्मलग्नात् तृतीयात्स्यरिपुरन्ध्रेष्वयोभना। पुत्रकर्मायगा स्वास्थ्यं दत्तेऽन्यत्रोद्यमादनम्। मनुदयं मानचतुष्टिलाभं प्रतापवृद्धिं न्वपतेः प्रसादम्। शरीरपुष्टिं विविधोद्यमांश्च ददाति सौख्यं मुथहा तनुस्था। उत्साहतोऽर्थागमनं यशश्च स्वबन्धुसम्मानसुपाश्रयाश्च। मिष्टान्नभोगोबलपुष्टिसौख्यं स्याद्धनभावे मुथहा यदाम्बे। पराक्रमाद्वित्तयशःसुखाप्तिः सौन्दर्य्यसौख्यं द्विजदेवपूजा। सर्वोपकारस्तनुपुष्टिकान्तिर्न्द-पाश्रयश्चेन्मुथहा तृतीये। शरीरपीड़ा रिपुभिः स्ववर्गैर्वैरं मनस्तापनिरुद्यमत्वे। स्यान्मुन्थहायां सुखभावगायां जना-पवादामयवह्निदुःखम्। यदीन्थिहा पञ्चमगाद्दयेषे सद्-बुद्धिसौख्यात्मजवित्तलाभः। प्रतापवृद्धिर्विविधाविलासा देवद्विजार्चा न्वपतिप्रसादः। तामसमङ्गेषु रिपूदयश्च भयं रुजस्तस्करतो नृपाद्वा। कार्य्यार्थनाशो मुथहाऽरिगा चेत् दुर्वुद्धिवृद्धिः स्वकृतेऽनुतापः। कलत्रबन्धुव्यसनारिभीतिरुत्-साहभङ्गो धनधर्मनाशः। स्मरोपगा चेन्मुथहा तनोः स्या-द्रुजा मनोमोहविरुद्धचेष्टा। भयं रिपोस्तस्करतोविनाशो धर्मार्थयोःसुव्यसनामयश्च। मृत्युस्थिता चेन्मुथहा नराणां बलक्षयः स्याद्गमनं विदूरे। स्वामित्वमर्थोपगमो नृपे-भ्योधर्मोत्सवःपुत्रकलत्रसौख्यम्। देवद्विजार्चा परमं यशश्च भाग्योदयो भाग्यगतेन्थिहा स्यात्। नृपप्रसादं च जनोपकारं सत्कर्मसिद्धिं द्विजदेवभक्तिम्। यशोऽभिवृद्धिं विविधार्थलाभं दत्तेऽम्बरस्था मुथहा धनाप्तिम्। यदी-न्थिहा लाभगता विलाससौभाग्यनैरुज्यमनःप्रसादाः। भवन्ति राजाश्रयतोधनाप्तिः सन्मित्रपुत्राभिमताप्तयश्च। व्ययोऽधिको दुष्टजनैश्च सङ्गोरुजस्तथा विक्रमतोऽर्थसिद्धिः। धर्मार्थहानिर्मुथहा व्ययस्था यदा तदा स्वजनतोऽपि वैरम्। क्रूरैर्दृष्टःयुतस्तथा यो भावो मुथहात्र चेत्। शुभं तद्भा-वजं नश्येदशुभञ्चापि वर्द्धते। शुभस्वामियुतेक्षिता वीर्य्य-युक्तेन्थिहा स्वामिसौस्थ्येत्यशालं प्रपन्ना। शुभं भावजं पोषयेच्चाशुभं सा,न्यथात्वेऽन्यथा भाव जश्चोविमृश्य। जनुर्लग्नतोऽस्तान्त्यषष्ठ मृत्युबन्धुस्थितावृद्धे हता क्रूरखेटैस्तु चेत्। विनश्येत् स यत्रेन्थिहा भाव एवं शुभस्वामिदृष्ट्या न नाशः शुभं च। यदोभयत्रापि हतो भावोनश्येत् स स-र्वथा। उभयत्र शुभत्वेऽपि भावोऽसौ वर्द्धतेतराम्। वर्षे त-निष्टगेहस्था यद्भावे जनुषि स्थिता। क्रूरोपघाताद्भावं ना-शयेत् शुभयुक् शुभा। जनुर्लग्नतस्तुर्य्यगा सौम्ययुक्ताद्दृश्ये पितुर्द्रव्यलाभं विधत्ते। नृपाङ्गीतिदा पापयुक्तातिकष्टाष्टमा-दावपीत्थं विमृश्याभिधेयम्। यस्मिन् भावे स्वामिसौस्थ्येक्षिता सा भावोजन्मन्येष यस्तस्य वृद्धिः। एवं पापैर्नाश उक्तस्तु तस्मेष्टुं वीर्य्याद्वर्षतः सौख्यमेव। यदीन्थिहा सूर्य्यगृहे युतेक्षिता सूर्य्येण राज्यं नृपसङ्गमश्च। दत्ते सुखानां परमाप्तिमाप्तिं स्थानान्तरस्या फलदा हर्षेति। कुजेन युक्ता कुजभे कुजेन दृष्टा च पित्तोष्णरुजन्तनोति। शस्त्राभिघातं रुधिरप्रकोपं सौरेक्षिता सौरगृहे विशेषात्। चन्द्रेण युक्ते-न्दुगृहेऽथ दृष्टेन्दुनापि वा धर्मयशोऽभिवृद्धिः। नैरुज्यस-न्तोषमतिप्रवृद्धिं ददाति पापेक्षयतोऽतिदुःखम्। बुधेन शुक्रेण युतेक्षितापि तद्भेऽपि वा स्त्रीमतिलाभसौख्यम्। धर्मं यशश्चाप्यतुलं विधत्ते कष्टं च पापेक्षणयोगतः स्यात्। युतेक्षिता वा गुरुणा गुरोर्भे यदीन्थिहा पुत्रकलत्रसौ-ख्यम्। ददाति हेमाम्बररत्नकोषं सुभेत्य शालादिह रा-ज्यलाभः। शनेर्गृहे तेन युतेक्षितापि यदीन्थिहा वातरुजं विधत्ते। मानक्षयं वह्निभयं धनस्य हानिं च जीवेक्षणतः शुभाप्तिम्। तमोमुखे चेन्मुथहा धनाप्तिर्यशःसुखं धर्मसमु-न्नतिश्च। हितेक्षयोगेक्षणतः पदाप्तिः सुवर्णरत्नाम्बरच-यश्च। भोग्या राहोर्लवास्तस्य सुखं पृष्ठं गता लवाः। ततः सप्तमभं पुच्छं विमृश्येति फलं वदेत्। तत्पुच्छभागेन शुभा यदा स्यात्तत्पुच्छगापद्रिपुभीतिदुःखम्। पापेक्ष-णाद्धनसुखस्य हानिर्वे जन्मनोत्थं क्लहवित्तनाशः। से जन्म-

काले बलिनोऽब्दकाले चेद्वलास्ते शुभं समाप्ते। विपर्य्ययेतूर्ब्बमनिष्टमुक्तं तुल्यं फलं स्यादुभयत्र साम्ये। यद्वेऽष्टमेऽन्त्ये भवि चेन्निहेशोऽस्तगोऽथ वक्रोऽशुभदृष्टयुक्तः। क्रूराश्चतुर्थास्तगतश्च मध्ये न स्याद्गुजं यच्छति वित्तनाशम्। यद्यष्टमेशेन युतोऽथदृष्टःसुताख्यदृष्ट्या न शुभस्तदापि। योगद्वये स्याद्विधनं यदैकोयोगस्तदा स्वल्पसमत्वमाहुः। सुयन्त्रान्तत्पतिर्वापि जन्मनोऽस्तियुक् शुभैः। वर्षारम्भे शुभं दत्तेऽब्देचेदन्तेऽन्यथा शुभम्"।

**इन्दम्बर** इदि–क्विप् इन्द् ऐश्वर्य्यान्वितमम्बरमिव नीलवर्णत्वात्। नीलोत्पले" शब्दमा०।

**इन्दि (न्दी)** स्त्री इदि–इन्। लक्ष्म्याम् वा ङीप् तत्रैव।

**इन्दिन्दिर** पु० इन्दि–किरच् नि०। भ्रमरे त्रिका०।

**इन्दिरा** स्त्री इदि–किरच्। लक्ष्म्याम्"इन्दिरा लोकमाता च लक्ष्मीस्तवः। [ वल्लभः २पद्मे ६त०। ३लक्ष्मीस्थे।

**इन्दिरामन्दिर** न० इन्दिरायामन्दिरमिव। १विष्णौ राज-

**इन्दिरालय** पु०६त०। १पद्मे २नीलोत्पले च। क्लीवत्वमपि।

**इन्दिवर** न०इन्दिर्लक्ष्मीस्तस्यावरं वरणीयम्। नीलोत्पले वा ङीप् इन्दीवरमप्यत्र। "इन्दीवरदलश्याममिन्दिरानन्दवर्द्धनम्" विष्णुस्तवः "इन्दीवरैरुत्पचितान्तरेव" रघुः २उत्पलमात्रे च"नीलेन्दीवरलोचनत्रययुताम्"तन्त्र०[ २तद्युक्तलतायाञ्च।

**इन्दीवरिणी** स्त्री इन्दीवर+समूहे इनि। १उत्पलसमुदाये,

**इन्दीवरी** स्त्री इन्दीं लक्ष्मीं दधाति धृ–अच् गौरा० ङीष्। शतमूल्याम्। मेदि० इन्दूचिर्भिटां टावन्तः राजनि०।

**इन्दीवार** पु० इन्द्यालक्ष्म्यावारो वरणमत्र। नीलोत्पले।

**इन्दु** पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द–उ आदेरिच्च। १चन्द्रे, "दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव"रघुः"तस्याः प्रसन्नेन्दुमुखप्रसादम्" महोदधेः पूरइवेन्दुदर्शनात्"रघुः "रामस्येन्दोरिव श्रियः"रघुः "न नमसाचिव्यमकारि नेन्दुना""चिप्राहवेन्दोः स्वरुचोऽधिवेलम्"माघः"करैरिन्दोरन्तर्म्मुरित इव संभिन्नमुकुलः" वेणी० अमृतकरैः सकलतापनिवारणेनास्य इन्दुत्वम्। २तद्दैवताके मृगशिरोनक्षत्रे "ब्रह्मा हरीश्वरेन्दुकरान्त्यमैत्रे दीर्पिति ३एकसंख्यायुक्ते, नवेन्दुवेदेषुकृताग्रलब्ध्या" सि०शि०। ४कर्पूरे च।

अयं गगनमण्डले राशिचक्रे ग्रहाणां मध्ये सर्व्वेषाम् धस्तात् स्थितः यथाह सू० सि०। "मन्दामरेज्यभूपुत्त्र सूर्य्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः"। तस्य कक्षामानञ्च। सि० शि० यथा "खाब्धिद्विगोमहीगुराश्विमिताक्ककक्षा (४३३१४९७। ३०) चान्द्री सहस्रगुणिता जिनरामसंख्या"(३२४०००)। एतन्मितयोजनानि इन्दुकक्षामानम्। अनुलयं गच्छतां ग्रहाणां राशिचक्रे इष्टसमये कीदृशांशेऽवस्थितिरिति ज्ञानाय अहर्गणेन तस्य स्फुटी करणप्रकारादि तत्रैव दर्शितं यथा।"अभ्रेभिभाङ्गजकुञ्जरगोऽङ्गमिताः (२५९८८९८५०) कक्षां भ्रमन्ति गणका भगणस्य चेमाम्। "अत्र रविकक्षातो भकक्षा षष्टिगुणा, एवं भकक्षायाः षष्ठ्यंशोरविकक्षा" प्रमि० "कल्पोद्भवैः क्षितिदिनैर्गगनस्य कक्षा भक्ता भवेद्दिनगतिर्गगनेचरस्य। "पादोनगोऽश्वाष्टतिभूमितयोजनानि (११-८५८४०) खेटा व्रजन्त्यनुदिनं निजवर्त्मनीमे" सि०शि० "यदि कुदिनैः कक्षामितयोजनानि गच्छन्ति तदैकेन किमिति फलं दिनगतियोजनानि। तानि च स्थूलत्वेन तावत् पादोनगोऽश्वाष्टतिभूमितानि स्युः" प्रमि०। ग्रहानयनमाह। "अहर्गणात् कल्पिनवाङ्कनिघ्नात् (९९२१) नवेन्दुवेदेषुकृताग्रलब्ध्या (३५४१९) लब्ध्या। अहर्गणो गोऽश्वाष्टतीन्दु (११८५९) निघ्नो विवर्जितः स्युर्गतयोजनानि" खयाखया तानि पृथक् च कक्षया हृतानि वा स्युर्भगणादिका ग्रहाः" सि० शि०। "अहर्गणो भूमेत्वनवनन्द ९९२१ गुणे नवगणिस्तुतिवाणाग्निभिः ३५४११ भक्ते यल्लब्धं तेन विवर्ज्जितः कार्य्यः। कः ?। नन्देन्द्रियाष्टतीन्दु ११८ गुणोऽहर्गणः। एवं गतयोजनानि स्युः तेभ्यः पृथक्पृथक् खया खया कक्षया भाजितेभ्यो भगणादिका ग्रहाभवन्ति अत्रोपपत्तिः। दिनगतियोजनैरहर्गणे गतयोजनानि भवन्तीति सुगमम्। अत्र सुखार्थं गोऽश्वाष्टतीन्दुभिः११८५९ संपूर्णैरहर्गणो गुणितः। सोऽधिको जातः। यदधिकं तच्छोध्यम्। तस्याधिकस्य ज्ञानार्थमुपायः। परमोऽहर्गणः कुदिनतुल्यः। तेन गुणकेन गुण्यः। एवं गोऽश्वाष्टतीन्दुनिघ्नः सन् खकक्षातोऽधिको भवति। तस्मात् खकक्षां विशोध्य शेषेणानुपातः। यदि कुदिनतुल्येनाहर्गणेनैतावदधिकं भवति तदिष्टेनाहर्गणेन किमिति। अत्र कुदिनानां तस्य शेषस्य च पञ्चपञ्चयुगवेदैरयुतगुणितैः ४४५५००००रपवर्ते कृते सति शेषस्थाने कल्पिनवाङ्का उत्पन्नाः कुदिनस्थाने नन्देन्दुवेदेषुकृतायाः। एवं त्रैराशिकेन यल्लभ्यते तेन स्थूलगतिगुणितेऽहर्गणे वर्जिते गतयोजनानि भवन्ति। सर्वेषां ग्रहाणां तान्येव गतेस्तुल्यत्वात्। अथ ग्रहार्थमुपपातः। यदि कक्षातुल्यैर्ग-

तयोजनैरेको भगणस्तदंभिः किमिति फलं गतभगणाद्याः सर्वे यहा भवन्तीत्युपपन्नम्” प्रमिता० । “यहस्य कक्षैव हि तुङ्गपातयोः पृथक् च कल्प्यात्र तदोयसिद्धये । अर्कस्य कक्षैव सितज्ञयोः सा च या तयोरानयनार्थमेव । उक्ते तयोर्यै चलतुङ्गकत्ते तत्रैव तौ च भ्रमतोऽर्कगत्या” सि०शि० “चलोच्चस्य पातस्य च या कक्षा गच्छति सा तयोरानयनार्थमेव कल्प्या । अन्यथा या यहस्य कक्षा सैव तयोरपि । यतो यहकक्षाया उच्चप्रदेशस्तोच्चव्यपदेशः । यत्र च विमण्डलेन सह संपातस्तस्य प्रदेशस्य पातसंज्ञेति गोले सम्यक् प्रतिपादितमस्ति । तथा बुधशुक्रयोरत्र ये अर्ककक्षातुल्ये कक्षे आगच्छतस्ते तयोरानयनार्थमेव । किन्तु तयोर्ये चलकक्षे तत्रैव तौ च भ्रमतः परमर्कगत्या । एतदुक्तं भवति भूमध्यादर्कं प्रति नीतं सूत्रं यत्र शीघ्रकक्षायां लगति तत्र बुधो यत्र शुक्रच लकक्षायां लगति तत्र शुक्रो भ्रमतीत्यर्थः” प्रमि०।

अत्र गगनकक्षा च कल्पार्हगणः । यथाहार्यभट्टः । “योयत्र भ्रमति खगस्तद्वृत्तं भवति तस्य कक्षाख्यम् । अम्बरकक्षा कल्पाहर्गणनामा भवेद्द्युगतिः” । स्वस्वकक्षायां स्थितानामपि यहाणां नीचोच्चस्थानस्थितिवशतः परिधिभेदादिकं भवतीति यहगब्दे वक्ष्यते । अत्र बुधशुक्रयोः रविकक्षातुल्यत्वं यदुक्तं तन्मध्यकक्षया फलानयनार्थम् । श्रीपतिना तु यहान्तराणां कक्षामितिरुक्ता यथा ।“अत्युङ्गुणरुतुगजाः (८१४६८१६) क्षितिनन्दनस्य, शुक्रे शरद्न्नतखेन्दुमिताश्च (१०४२२११) ज्ञेयी । रूपाश्विनाग युगशैलगुणेन्दुवाणाः (५१३७४८२१) खाम्नाङ्कसागर रसोतुकृतयः ( २६६४६३० ) सितस्य । भूधराहिगनागरसर्त्तुसुधाधराश्विशशिनः ( १२७६६८७८७ ) शनिकक्षा । एतच्च खगोलशब्दे विस्तरेण वक्ष्यते ।

इन्दुश्च जलमयः सूर्यसम्पर्कात् उज्ज्वलितो भवति तेन च दिने दिने यथा यथा शुक्ले पक्षे रविवियोगभेदात्तेजः सम्पर्कविशेषस्तथा तथा वर्द्धते कृष्णे तु रविमण्डलसन्निकृष्टतया क्रमशो दिने दिने तत्तेजःसम्पर्कविशेषाभावस्तेन क्रमेण दिने दिने चय इत्यादिकमप्युक्तं सि० शि० । “तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति । तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट इव निजमूर्त्तिच्छाययैवातपस्थः । सूर्यादधःस्थस्य विधोरधःस्थमर्धं स्फुटं स्वकलाऽसितं स्यात् । दर्शेऽथ भाञ्चान्तरितस्य शुक्लं तत् पौर्णमास्यां परिवर्त्तनेन । कक्षाचतुर्थे तरणेर्हि चन्द्रःकर्णान्तरे तिर्यगितो यतोऽस्मात् । पादोनषट्काष्ट (८५।४५) लवान्तरेऽतो दलं स्फुटस्यास्य दलस्य शुक्लम् । उपचितिमुपयाति शौक्ल्यमिन्दोस्त्यजत इनं भजतश्च मेचकत्वम् । जलमयजलजस्य गोलकत्वात् प्रभवति तीक्ष्णविषाणरूपतास्य । यद्याम्योदक् तपनशशिनोरन्तरं सोऽत्र बाहुः कोटिस्तूर्ध्वाधरमपि तयोर्यश्च तिर्यक् स कर्णः । दोर्मूलेऽर्कः शशिदिशि भुजोऽस्याश्च कोटिश्च दये चन्द्रः कर्णो रविदिगनया दीयते तेन शौक्ल्यम्” ।

“प्राग्वद्भित्तौ स्वस्यपार्श्वे चन्द्रकक्षां रविकक्षां च विलिख्य तत्रोर्ध्वरेखां तिर्यग्रेखां च कृत्वा चन्द्रकक्षोर्ध्वरेखासंपाते चन्द्रबिम्बं विलिख्येदं दर्शयेत् । तिर्यग्रेखाया उपरि चन्द्रकक्षाव्यासार्धमितेऽन्तरेऽन्यां तिर्यग्रेखां कुर्यात् । सा रेखा प्रत्यग्रविकक्षायां यत्र लग्ना तत्र स्थित एवार्के ऊर्ध्वरेखावच्छिन्नचन्द्रबिम्बार्धं पश्चिमतः शुक्लं भवति । तस्यार्धमधस्तनं मनुष्याऽदृश्यम् । तत्रस्थेऽर्के व्यर्केन्दुसपादचतुर्भागोनं(८५।४५)राशित्रयं भवति । एतावत्येव व्यर्केन्दु भुजे बिम्बार्धं पश्चिमं पूर्वं वा शुक्लं भवितुमर्हतीति प्रमि०“धाम्नां धामनिधेरयं जलमयो भर्त्ते सुधादीधितिः सद्यःक्लृप्त-कृपालकन्दविशदच्छायां विवस्वद्दिशि । दृश्ये धर्मभृतः करे घट इवान्यस्मिन् विभागे पुनर्बालाकुन्तलकालतां कलयति स्वच्छां तनोश्छायया” श्रीपतिः । “भानुश्चेत् प्रतिबिम्बितो जलमये शीतांशुगोले दिवा निस्तेजा निशि सुप्रभः कथमयो किं सूर्यबिम्बासमः । गोलार्धं रविणोज्ज्वलं च सकलं न स्यात् तडागे यथा मासार्धेऽखिलदृश्यतेति गणकान् ज्ञानाश्रयः पृच्छति” ज्ञानराजः ।

इह०सं०शौक्ल्यादि प्रकारादि प्रदर्श्य तद्वारादिफलमुक्तं यथा “नित्यमधःस्थस्येन्दोर्भाभिर्भानोः सितं भवत्यर्धम् । स्वच्छाययान्यदसितं कुम्भस्येवातपस्थस्य । सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः । त्यजतोऽर्कतलं शशिनः पश्चादवलम्बते यथा शौक्ल्यम् । दिनकरवशात्तथेन्दोः प्रकाशते ऽधःप्रभृत्युदयः । प्रतिदिवसमेवमर्कात् स्थानविशेषेण शौक्ल्यपरिवृद्धिः । भवति शशिनोऽपराह्णे पश्चाद्भागे घटस्येव । ऐन्द्रस्य शीतकिरणो मूलाषाढाद्वयस्य वा यातः । शाम्बेन, बीजजलचरकाननहा वह्निभयदश्च । दक्षिणपार्श्वेन गतः शशी विशाखानुराधयोः पापः । मध्येन तु प्रशस्तः पित्र्यस्य विशाखयोश्चापि । षडनागतानि पौष्णाद् द्वादश रौद्राच्च मध्ययोगीनि । ज्येष्ठाद्यानि

मरकतसदृशपतिनातोऽथ युज्यन्ते । उन्नतमीषच्छृङ्गं नौसंस्थाने विशालता चोक्ता । नाविकपीडा तस्मिन् भवति शिवं सर्वलोकस्य । अर्धोन्नते च लाङ्गलमिति पीड़ा तदुपजीविनां तस्मिन् । प्रीतिश्च निर्निमित्तं मनुजपतीनां सुभिक्षं च । दक्षिणविषाणमर्धोन्नतं यदा दुष्टलाङ्गलाख्यं तत् । पाण्ड्यनरेश्वरनिधनकृदुद्योगकरं बलानां च । समशशिनि सुभिक्षक्षेमवृष्टयः प्रथमदिवससदृशाः स्युः । दण्डवदुदिते पीड़ा गवां नृपश्चोग्रदण्डोऽत्र । कार्मुकरूपे युद्धानि यत्र तु ज्या ततो जयस्तेषाम् । स्थानं युगमिति याम्योत्तरायतं भूमिकम्पाय । युगमेव याम्यकोट्यां किञ्चिन्तुङ्गं स पार्श्वशायीति । विनिहन्ति सार्थवाहान् वृष्टेश्च विनिग्रहं कुर्यात् । अभ्युच्छ्रायादेकं यदि शशिनोऽवाङ्मुखं भवेच्छृङ्गम् । आवर्जितमित्यसुभिक्षकारि तद्गोधनस्यापि । अव्युच्छिन्ना रेखा समन्ततो मण्डला च कुण्डाख्यम् । अस्मिन्माण्डलिकानां स्थानत्यागो नरपतीनाम् । प्रोक्तस्थानाभावादुदगुच्चः सस्यवृद्धिवृष्टिकरः । दक्षिणतुङ्गश्चन्द्रो दुर्भिक्षभयाय निर्दिष्टः । शृङ्गेणैकेनेन्दुं विलीनमथवाप्यवाङ्मुखमशृङ्गम् । सम्पूर्णं चाभिनवं दृष्ट्वैको जीविताद्भ्रश्येत् । संस्थानविधिः कथितो रूपाण्यस्माद्भवन्ति चन्द्रमसः । स्वल्पो दुर्भिक्षकरो महान् सुभिक्षावहः प्रोक्तः । मध्यतनुर्वज्राख्यः क्षुद्भयदः सम्भ्रमाय राज्ञां च । चन्द्रो मृदङ्गरूपः क्षेमसुभिक्षावहो भवति । ज्ञेयो विशालमूर्तिर्नरपतिलक्ष्मीविवृद्धये चन्द्रः । स्थूलः सुभिक्षकारी प्रियधान्यकरस्तु तनुमूर्तिः । प्रत्यन्तान् कुनृपांश्च हन्त्युडुपतिः शृङ्गे कुजेनाहते, शस्त्रक्षुद्भयकृद्यमेन, शशिजेनावृष्टिदुर्भिक्षकृत् । श्रेष्ठान् हन्ति नृपान्महेन्द्रगुरुणा, शुक्रेण चाल्पान् नृपान्, शुक्ले याप्यमिदं फलं पक्षकृतं कृष्णे यथोक्तागमम् । भिन्नः सितेन मगधान् यवनान् पुलिन्दान् नेपालभृङ्गिमरुकच्छसुराष्ट्रमद्रान् । पाञ्चालकैकयकुलूतकपूरुषादान् हन्यादुशीनरजनानपि सप्त मासान् । गान्धारसौवीरकसिन्धुकीरान् धान्यानि शैलान्द्रविडाधिपांश्च । द्विजांश्च मासान्दश शीतरश्मिः सन्तापयेद्वाक्पतिना विभिन्नः । उद्युक्तान् सह वाहनैर्नरपतींस्त्रैगर्तकान्मालवान् कौलिन्दान् गणपुङ्गवानथ शिबीनायोध्यकान् पार्थिवान् । हन्यात् कौरवमत्स्यशुक्त्यधिपतीन् राजन्यमुख्यानपि प्रालेयांशुरसृग्ग्रहे तनुगते षण्मासमर्यादया । यौधेयान् सचिवान् सकौरवान् प्रागीशानथ चार्जुनायनान् । हन्यादर्कजभिन्नमण्डलः शीतांशुर्दशमासपीडया । मगधान्मथुरां च पीडयेद्वेणायाश्च तटं शशाङ्कजः । अपरत्र कृतं युगं वदेद् यदि भित्त्वा शशिनं विनिर्गतः । क्षेमारोग्यसुभिक्षविनाशी शीतांशुः शिखिना यदि भिन्नः । कुर्यादायुधजीविविनाशं चौराणामधिकेन च पीड़ाम् । उल्कया यदा शशी ग्रस्त एव हन्यते । हन्यते तदा नृपो यस्य जन्मनि स्थितः । भस्मनिभः परुषोऽरुणमूर्तिः शीतकरः किरणैः परिहीणः । श्यावतनुः स्फुटितः स्फुरणो वा क्षुत्समरामयचौरभयाय । प्रालेयकुन्दकुमुदस्फटिकावदातो यत्नादिवाद्रिसुतया परिमृज्य चन्द्रः । उच्चैःकृतो निशि भविष्यति मे शिवाय यो दृश्यते स भविता जगतः शिवाय । यदि कुमुदमृणालहारगौरस्तिथिनियमात् क्षयमेति वर्धते वा । अविकृतगतिमण्डलांशुयोगी भवति नृपां विजयाय शीतरश्मिः । शुक्ले पक्षे सम्प्रवृद्धे प्रवृद्धिं ब्रह्मक्षत्रं याति वृद्धिं प्रजाश्च । हीने हानिस्तुल्यता तुल्यतायां कृष्णे सर्वं तत्फलं व्यत्ययेन" । "भूमध्यात् चन्द्रादेरुच्छ्रितियोजनमपि" सि॰ शि॰ उक्तं यथा "गगनगाग्निनवाष्टरसा (६८९३७७) रवेः रसरसेषुमहीषुमिता ५१५६६ विधोः । निगदितावनिमध्यत उच्छ्रितिः श्रुतिरियं किल योजनसंख्यया" । अत्रोपपत्तिः कक्षाध्याये चन्द्रार्कयोः कक्षे कथिते किन्तु व्यासौ नोक्तौ तौ त्रैराशिकेनानेयौ । यदि भनन्दाग्निमित ३९२७ परिधेः खबाणसूर्य्यमितो १२५० व्यासः (लीलावत्युक्तदिशा आनीतः तदा) ४३३१४९७ । ३० मितायाः सूर्यकक्षयाः, ३२४००० मितचन्द्रकक्षाया वा कोऽयमित्यनुपातेन व्यास आनेयः तदर्द्धमेव श्रुतिः । इयमेव भूमध्यात् चन्द्रार्कयोः उच्छ्रितिः प्रमि॰" इयं मध्यश्रुतिः, उच्चनीचयोरन्यैव यथा "मन्दश्रुतिर्द्राक् श्रुतिवत् प्रसाध्या" सि॰ शि॰ उच्चनीचवृत्तपरिधिना उच्छ्रितिः साध्या त्रैराशिकेनानेया" प्रमि॰ युक्तञ्चेदम् ग्रहाणां स्वस्वकक्षाया उच्चादिस्थानविशेषाऽस्ति तत्रोच्चस्थानस्थितौ परिधेराधिक्यं नीचस्थाने तु न्यूनता मध्ये मध्यता इति तदनुसारेण परिधिवैलक्षण्यात् उच्छ्रितिवैलक्षण्यमिति । एवमन्येषां ग्रहाणामपि स्वस्वकक्षाभिरनुपातेन व्यासमानीय तदर्द्धं मध्यश्रुतिरित्याद्यवगन्तव्यम् । अत्रेदं सूक्ष्ममीक्षणीयम् अत्र भूमध्यादिति भूपिण्डार्द्धमध्यादित्येवार्थकं न तु भूपृष्ठमध्यात इत्यर्थकम् । तथा च भूव्यासार्द्धस्य तत्तदुच्छ्रितेर्व्यवकलने भूपृष्ठादुच्छ्रितिर्भवति भूपृष्ठात् उक्तः उच्छ्रायो नैव युज्यते ग्रहाणां कक्षारूपपरिधेर्व्यासार्द्धस्य भूगोलार्द्धक्रान्तत्वेन तदर्द्धपर्य्यन्तमेव तद्व्यासार्द्धस्यौचित्यादिति

एवं पौराणमादिभिः इन्दुमण्डलस्य सूर्य्यमण्डलादधः स्थायित्वे सिद्धे” भाग० ५ स्क०। “एवं चन्द्रमा अर्कगभस्तिभ्य उपरिष्टात् लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सरभुक्तिं, पक्षाभ्यां मासभुक्तिं, सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारो द्रुततरगमनो भुङ्क्ते अथापूर्य्यमाणाभिरपक्षीयमाणाभिश्च कलाभिः पितॄणामहोरात्राणि पूर्व्वापरपक्षाभ्यां वितन्वन् सर्व्वजीवनिवहप्राणो जीवश्च एकमेकं नक्षत्रं त्रिंशता मुहूर्त्तैर्भुङ्क्ते य एष षोडशकलः पुरुषो भगवान्मनोमयोऽन्नमयोऽमृतमयो देवपितृमनुष्यपशुपक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात् सर्व्वमय इति वर्णयन्ति”। अत्र अर्कगभस्तिभ्य इत्यत्र हेतौ पञ्चमी अन्वयश्चास्य उपलभ्यमान इत्यत्र। यथा च सूर्य्यकिरणैरेव चन्द्रस्योपलब्धिस्तच्च प्रागुक्तवचनैः समर्थितम्। न तु अपादाने पञ्चमी उपरिष्टात् इत्यत्रान्वयिनी। तथात्वे पौराणविरोधः स्यात्। उपरिष्टात् इत्यत्र भूमेरित्यध्याहार्य्यं लक्षयोजनमिति बहुयोजनपरमिति न काचिदनुपपत्तिः। एवमन्यान्यपि पौराणिकवचनानि व्याख्यातव्यानि। इन्दुपक्षद्वयेन यथा पितॄणां दिनस्य सम्पादनं तदप्युक्तम्” सि० शि०। “विधूर्द्धभागे पितरो वसन्तः स्वाधः सुधादीधितिमामनन्ति। पश्यन्ति तेऽर्कं निजमस्तकोर्द्ध्वे दर्शे यतोऽस्माद् द्युदलं तदैषाम्। भार्द्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम्। कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्” अत्राधःस्थत्वमर्कस्य पितृप्रेक्षया बोध्यम् तद्विषयमेव वा पौराणिकं सूर्य्यस्याधःस्थत्ववचनमिति न किञ्चिदनुपपन्नम्”। चन्द्रस्याधःस्थित्वेन यथा तिथ्यादिसम्भवस्तथोक्तम् कालमाधवीये “अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशीति” वचनव्याख्याने।

“अयमर्थः अधः प्रदेशवर्त्ती शीघ्रगामी चन्द्रः ऊर्द्ध्वप्रदेशवर्त्ती अशीघ्रगामी सूर्य्यः। तथा सति तयोर्गतिविशेषवशाद्दर्शे चन्द्रमण्डलमन्यूनमनतिरिक्तं सत् सूर्य्यमण्डलस्याधो भागे व्यवस्थितं भवति तदा सूर्य्यरश्मिभिः कार्त्स्न्येनाभिभूतत्वाच्चन्द्रमण्डलमीषदपि न दृश्यते। उपरितने दिने शीघ्रगत्या प्राचीं याति राशेर्द्वादशभिरंशैः सूर्य्यतश्चाग्र गच्छति। तदा चन्द्रस्य पञ्चदशसु भागेषु प्रथमभागो दर्शनयोग्यो भवति। सोऽयं भागः प्रथमकलेत्यभिधीयते तत्कलानिष्पत्तिपरिमितकालः प्रतिपत्तिथिर्भवति एवं द्वितीयादितिथिष्ववगन्तव्यमिति”। तदेतद्विष्णुधर्म्मोत्तरे विस्पष्टमभिहितम् “चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत्। तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम्। भगणेन समस्तेन ज्ञेया द्वादश राशयः। त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते। आदित्याद्विप्रकृष्टस्तु भाग-द्वादशकं यदा। चन्द्रमाः स्यात्तदा राम! तिथिरित्यभिधीयते” “मेषं द्वादशभिर्भागैः सूर्य्यमुल्लङ्घितवतो प्रथमा चन्द्रकला शृङ्गद्वयोपेतसूक्ष्मरेखाकारा शौक्ल्यमीषदुपयाति उत्तरोत्तरदिनेषु सूर्य्यमण्डलविप्रकर्षात् तारतम्यानुसारेण शौक्ल्यमुपचीयते। अनयैव रीत्या सन्निकर्षतारतम्येन मेचकत्वमुपचीयते तदेतदुक्तम्” सि० शि०। उपचयमुपयाति शौक्ल्यमिन्दोरित्यादि। ८३१ पृष्ठे उक्तम्। सूर्य्याचन्द्रमसोर्यौ सन्निकर्षविप्रकर्षौ तयोरवसानन्दर्शपूर्णिमयोः संपद्यते तदाह गोभिलः। “यः परो विप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी यः परः सन्निकर्षः सामावास्येति” नन्वत्र चन्द्रकलानां सूर्य्ये प्रवेशनिर्गमौ प्रतीयेते सोमोत्पत्तौ ८३४ पृ० तु वह्न्यादिदेवतासु। नायन्दोषः। अस्मदादिदर्शनापेक्षया ज्योतिःशास्त्रस्य प्रवृत्तत्वात् सोमोत्पत्तौ तु वह्न्यादिदेवतानान्तत्कालप्रयुक्ता तृप्तिर्विवक्षिता तत्र यदि सूर्य्ये प्रवेशनिर्गमौ यदि वा वह्न्यादिदेवतादिषु सर्व्वथापि कलाप्रयुक्ता एव प्रतिपदादितिथयः” कालमा०। ग्रहाणां कक्षानुसारेणैव स्वस्वकक्षास्थराश्यंशादिमानम् तथा च स्वल्पकक्षायां स्थितस्य राश्यंशकलादिकं स्वल्पं महत्यां स्थितस्य महत् यथोक्तमार्य्यभट्टेन। “षष्ट्या सूर्य्याब्दानां प्रपूरयन्ति ग्रहा भपरिणाहम्। दिव्येन भपरिधिं समं भ्रमन्तः स्वकक्षासु। मण्डलमल्पमधस्तात् कालेनाल्पेन पूरयति चन्द्रः। उपरिष्टात् सर्व्वेषां महच्च महता शनैश्चापि। अल्पे हि मण्डलेऽल्पा महति महान्तश्च राशयो ज्ञेयाः। अंशाः कलाश्च एवं विभागतुल्याः स्वकेषु। भानामधः शनैश्चरसुरगुरुभौमार्कशुक्रबुधचन्द्राः। एषामधश्च भूमिर्मेधीभूता च मध्यस्था”। तेन ग्रहाणां प्रागुक्तस्वस्वकक्षा द्वादशभिर्भक्ताः राशिप्रमाणयोजनानि। ते च पुनस्त्रिंशद्भक्ता अंशमानयोजनानि। ते षष्ट्या भक्ता कलामितयोजनानि एवं षष्ठाभागे विकलादियोजनानि। अधिकं ग्रहशब्दे पश्यते। एतन्मण्डलाधिष्ठातृचन्द्रोत्पत्तिरत्रिजातशब्दे ११ पृष्ठे उक्ता।

इन्दुकः पु० इन्दुरिव शुभ्रत्वात् कन्। अश्मन्तकवृक्षे। राजनि०

इन्दुकक्षा स्त्री इत०। चन्द्रस्य राशिचक्रस्थे परिधौ तन्मानमिन्दुशब्दे ८३१ पृ० उक्तम्।

**इन्दुकमल** न० इन्दुरिव शुभ्रं कमलम् । सितोत्पले राजनि० ।

**इन्दुकला** स्त्री ६त० । चन्द्रस्य षोड़शभागैकभागे । कलाश्च षोड़श । अमाशब्दे ३२०पृष्ठे दर्शितास्ताश्च कृष्णपक्षे क्रमेण वह्न्यादिभिः पीयन्ते यथोक्तं कालमा० सोमोत्पत्तिवाक्यम् "प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः । विश्वे देवास्तृतीयां तु चतुर्थीं सलिलाधिपः । पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः । सप्तमीमृषयो दिव्या अष्टमीमजएकपात् । नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम् । दशमीं पिबते वायुः पिबत्येकादशीं उमा । द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः । त्रयोदशीं धनाध्यक्षः कुवेरः पिबते कलाम् । चतुर्दशीं पशुपतिः पञ्चदशीं प्रजापतिः । निष्पीतः कलया शेषश्चन्द्रमा न प्रकाशते । कला षोडशिका या सा अपः प्रविशते सदा । अमायां तु सदा सोमस्त्वोषधीः प्रतिपद्यते । तमोषधिगतं गावः पिबन्त्यनुगतं च यत् । तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः । हुतमग्निषु यज्ञेषु पुनराप्यायते शशी । दिने दिने कलावृद्धिः पौर्णमास्यान्तु पूर्य्यते" इति । "पुनश्च ताः पीताः कलास्तेनैव क्रमेण वह्न्यादिदेवताभ्यो निर्गत्य चन्द्रमण्डलं पूरयन्तीति" माधवः । यथा च कलापानसम्भवस्तथा इन्दुशब्दे दर्शितेन ९३२पृ० कालमा०वाक्येन समर्थितम् । तासां कलानां यद्यपि तिथिविशेषरूपता तथापि नामान्तराणि शारदा० उपासनार्थमुक्तानि यथा । "अमृता मानदा पूषा तुष्टिः पुष्टीरतिर्धृतिः । शशिनश्चन्द्रिका कान्तिः ज्योत्स्ना श्रीः प्रीतिरङ्गदा । पूर्णा पूर्णामृताख्या च कामदा स्वरजाः कलाः" । तथा च षोड़शभ्यः स्वरेभ्य आसामुत्पत्तिरपि ध्येयाः" "शतमिन्दुकलाक्षये" श्रुतिः ।

**इन्दुकलिका** स्त्री इन्दुरिव शुभ्रा कलिका यस्याः । १केतक्याम् । ६त० स्वार्थे कन् । २चन्द्रकलायाम् ।

**इन्दुकान्त** पु० इन्दुः कान्तइव निष्यन्दकारित्वात् प्रियोऽस्य । १चन्द्रकान्ते मणौ इन्दुः कान्तः पतिः स्वोदयेन कारकत्वादीशो यस्याः । २रात्रौ । इन्दुः कान्तइव प्रकाशकत्वात् यस्याः । ३केतक्याम् । ६त० । ४चन्द्रप्रियायाञ्च स्त्री ।

**इन्दुक्षय** पु० । इन्दुः क्षीयतेऽत्र क्षि—आधारे अच् ६त० । १दर्शे तत्र हि इन्दोः कलानां सूर्य्यकिरणासर्गात् क्षयइव भवतीति इन्दुकलाशब्दे दर्शितम् "शतमिन्दुक्षये पुण्यं सहस्रं तु दिनक्षये" मल०त०पु० । कार्य्येऽच् । २चन्द्रस्य क्षये ॥

**इन्दुज** पु० इन्दोर्जायते जन—ड । बृहस्पतिभार्य्यातारागर्भे चन्द्रेणोत्पादिते बुधे तदुत्पत्तिकथा हरिवं० २६अ० सोमस्य राजसूययज्ञकरणानन्तरमैश्वर्य्येण मत्तस्य मतिभ्रान्तिमुपवर्ण्य "बृहस्पतेः स वै भार्य्यां तारां नाम यशस्विनीम् । जहार तरसा सर्वानवमत्याङ्गिरःसुतान्" इत्युपक्रम्य सुरासुराणां तत्र युद्धं वर्णयित्वा तत्र युद्धोपद्रवेण उपद्रुतदेवैः प्रार्थितेन ब्रह्मणा यत् कृतं तदुक्तं तत्रैव "ततोनिवार्य्योशनसं तं वै रुद्रं भयङ्करम् । ददावङ्गिरसे तारां स्वयमेव पितामहः । तामन्तःप्रसवां दृष्ट्वा तारामाह बृहस्पतिः । मदीयायां न ते योनौ गर्भो धार्य्यः कथञ्चन । योनेरुद्धृत्य वै कुमारं दस्युहन्तमम् । इषीकास्तम्बमासाद्य ज्वलन्तमिव पावकम् । जातमात्रः स भगवान् देवानामक्षिपद्वपुः । ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः । सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः । हृच्छमाना यदा देवैर्नाह सा साध्वसाधु वा । तदा तां शप्तुमारब्धः कुमारोदस्युहन्तमः । तं निवार्य्य ततो ब्रह्मा तारां प्रपच्छ संशयम् । यदत्र तथ्यं तद्ब्रूहि तारे ! कस्य सुतोऽयम् । सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं शनैः । सोमस्येति महात्मानं कुमारं दस्युहन्तमम् । तं मूर्द्ध्न्याघ्राय तनयं सोमोधाता प्रजापतिः । बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः" । अस्यैव ग्रहत्वप्राप्तिः काशी०वर्णिता यथा "हरिवंशवत् बुधस्योत्पत्तिं वर्णयित्वा । "ततः सर्वेभ्योदेवेभ्यस्तेजोरूपबलाधिकः । बुधः सोमं समापृच्छ्य तपसे कृतनिश्चयः । जगाम काशीं निर्वाणराशिं विश्वेशपालिताम् । तत्रो लिङ्गं प्रतिष्ठाप्य स्वनाम्ना स बुधेश्वरम् । तपश्चचार चात्युग्रमुग्रं संशीलयन् हृदि" । इति तस्यैवोपवर्णितम् तत्तपसा तोषितश्च महादेवस्तस्मै ग्रहरूपेण गगनेस्थितिरूपं वरं ददौ" यथा "ततः प्राह महेशानस्तत्स्तुत्या परितोषितः । रौहिणेय ! महाभाग्य ! सौम्य ! सौम्यवचोनिधे ! । नक्षत्रलोकादुपरि तव लोको भविष्यति । मध्ये सर्वग्रहाणाञ्च सपर्य्यां लप्स्यसे पराम्" राशिचक्रे तत्स्थानञ्च सू०सि० "मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधराघनाः" इत्यनेन चन्द्रस्थानादुपरि शुक्राच्चाधः प्रदेशे उक्तम् । तत्कक्षामानञ्च । इन्दुशब्दे पृ०९३१श्रीपतिवाक्ये उक्तम् तस्य चारप्रकारः बृहत्संहितायां दर्शिता यथा ।

"नोत्पातपरित्यक्तः कदाचिदपि चन्द्रजो व्रजत्युदयम् । जलदहनपवनभयकृद्धान्यार्घक्षयविवृद्ध्यै वा । विचरन् श्रव-

धनिष्ठाप्राजापत्येन्दुविश्वदैवानि । स्पृशन् हिमकरतनयः करोत्यवृष्टिं सरोगभयाम् । रौद्रादीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीड़ा । शस्त्रनिपातक्षुद्भयरोगानावृष्टिसन्तापैः । हस्तादीनि विचरन् षड्भान्युपपीड़यन् गवामशुभः । स्नेहरसार्घविवृद्धिं करोति चोर्वीं प्रभूतान्नाम् । आर्यमणं हौतभुजं भाद्रपदामुत्तरां यमेशं च । चन्द्रस्य सुतो निघ्नन् प्राणभृतां धातुसङ्क्षयकृत् । आश्विनवारुणमूलान्युपमृद्नन् रेवतीं च चन्द्रसुतः । पण्यभिषग्नौजीविकसलिलजतुरगोपघातकरः । पूर्वात्रितयादेकमपीन्दोः सुतोऽभिमर्दयन् । क्षुच्छस्त्रतस्कारामयभयप्रदायी चरन् जगतः । प्राकृतविमिश्रसंक्षिप्ततीक्ष्णयोगान्तघोरपापाख्याः । सप्त पराशरतन्त्रे नक्षत्रैः कीर्तिता गतयः । प्राकृतसंज्ञा वायव्यवाम्यपैतामहानि बहुलाश्च । मिश्रा गतिः प्रदिष्टा शशिशिवपितृभुजगदैवानि । संक्षिप्तायां पुष्यः पुनर्वसुः फल्गुनीद्वयं चेति । तीक्ष्णायां भाद्रपदाद्वयं सशाक्राश्वयुक् पौष्णम् । योगान्तिकेति मूलं द्वे चाषाढे गतिः सुतस्येन्दोः । घोरा श्रवणस्त्वाष्ट्रं वसुदेवं वारुणं चैव । पापाख्या सावित्रं मैत्रं शक्राग्निदैवतं चेति । उदयप्रवासदिवसैः स एव गतिलक्षणं प्राह । चत्वारिंशत्त्रिंशद्द्विसमेता विंशतिर्द्विनवकं च । नव मासार्धं दश चैकसंयुताः प्राकृताद्यानाम् । प्राकृतगत्यामारोग्यवृष्टिसस्यप्रवृद्धयः क्षेमम् । संक्षिप्तमिश्रयोर्मिश्रमेतदन्यासु विपरीतम् । ऋज्वी अतिवक्रा वक्रा विकला च मतेन देवलस्यैताः । पञ्चचतुर्द्व्येकाहा ऋज्व्यादीनां षड्भ्यस्ताः । ऋज्वी हिता प्रजानामतिवक्रार्थं गतिर्विनाशयति । शस्त्रभयदा च वक्रा विकला भयरोगसञ्जननी । पौषाषाढश्रावणवैशाखेष्विन्दुजः समाघेषु । दृष्टो भयाय जगतः शुभफलकृत् प्रोषितस्तेषु । कार्त्तिकेऽश्वयुजि वा यदि मासे दृश्यते तनुभवः शिशिरांशोः । शस्त्रचौरहुतभुग्गदतोयक्षुद्भयानि च तदा विदधाति । रुद्धानि सौम्येऽस्तमिते पुराणि यान्युद्गते तान्युपयान्ति मोक्षम् । अन्ये तु पश्चादुदिते वदन्ति लाभः पुराणां भवतीति तज्ज्ञाः । हेमकान्तिरथ वा शुकवर्णः सस्यकेन मणिना सदृशो वा । स्निग्धमूर्तिरलघुश्च हिताय व्यत्यये न शुभकृच्छशिपुत्रः" । गगने बुधस्थानमुक्तं भा०५स्क० । "ततो बुधः सोमसुत उपलभ्यमान तत उपरिष्टात् प्रायेण शुक्रवत् । यदार्कात् व्यतिरिच्येत तदातिभयप्रायानावृष्ट्यादिभयमाशंसते" । इन्दुजातेन्दुनन्दनेन्दुपुत्रादयोऽप्यत्र । २नर्मदायां नद्यां स्त्री सा च मेकलकन्यका सोमसुता सुनिशापात् नदीत्वमाप्ता । इयं च प्रतीच्यामवन्तिषु स्थिता प्रत्यक्स्रोतोवहा च यथा । "अवन्तिषु प्रतीच्यां वै कीर्त्तयिष्यामि ते दिशि । यानि तत्र पवित्राणि पुण्यान्यायतनानि च । प्रियङ्ग्वाम्रवणोपेता वानीरफलशालिनी । प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत ! । त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च । सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः । नर्मदायां कुरुश्रेष्ठ ! सह सिद्धर्षिचारणैः । स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत" भा० आ० ८९अ० ।

इन्दुजनक पु० ६त० । १अत्रिमुनौ तस्य ततउत्पत्तिकथा अत्रिजातशब्दे १११ पृष्ठे दृश्या । २समुद्रे ततस्तस्योत्पत्तिकथा "ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात् । प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः" भा०आ०१८अ० । दृश्या । [ जाङ्गलीवृक्षे ।

इन्दुपुष्पिका स्त्री इन्दुरिव शुभ्रं पुष्पमस्याः । (विषलाङ्गला)

इन्दुभ न० इन्दोश्चन्द्रस्य भं नक्षत्रं राशिर्वा । चन्द्रदेवताके १मृगशिरोनक्षत्रे अक्षांशशब्दे ४९८पृष्ठे नक्षत्राणामीशा दर्शिताः । २कर्कटराशौ च "कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम्—क्षेत्राणि सुरजादयः ज्यो० । [ २चन्द्रप्रभायाम् ।

इन्दुभा स्त्री इन्दुना भाति भा—क ३त० । १कुमुद्वत्याम् । ६त० ।

इन्दुभृत् पु० इन्दुं बिभर्त्ति भृ–क्विप् । शिवे । तस्य चन्द्रधारणमिन्दुमौलिशब्दे ९२६पृष्ठे सप्रमाणं दर्शयिष्यते ।

इन्दुमणि पु० इन्दुः कान्तोऽस्य तत्करेण स्यन्दनात् तादृशो मणिः शाक०त० । १चन्द्रकान्तमणौ तस्य चन्द्रोदये निःस्यन्दात् तन्मणित्वम् । तत्प्रियो मणिः स इव शुभ्रो मणिर्वा । २मुक्तायाम् ।

इन्दुमण्डल क्लि० ६त० । चन्द्रस्य बिम्बे मण्डलाकारे पदार्थे "स्नात्वा स्तुत्वा नमस्कृत्य विद्धेदिन्दुमण्डले" तन्त्रसा० । तन्मण्डलमानञ्च सि० शि० दर्शितं यथा । "बिम्बं रवेर्द्विद्विशरर्तु (६५२२) संख्यानीन्दोः खनागाम्बुधि(४८०) योजनानि । भूव्यासहीनं रविबिम्बमिन्दुकर्णाहतं भास्करकर्णभक्तम् । भूविस्तृतिर्लब्धफलेन हीना भवेत् कुभाविस्तृतिरिन्दुमार्गे" "रवेर्योजनात्मकं बिम्बं मध्यमं द्विशराणषट्कतुल्यानि (६५२२) योजनानि । इन्दोस्तु शून्यवसुवेद (४८०)मितानि । अथ राहोरुच्यते । रविबिम्बं भूव्यासेन(१५८१) हीनं (४९४१)कृत्वेन्दुकर्णेन स्फुटेन योजनात्मकेन संगुण्य रविकर्णेन स्फुटेन भजेत् फलेन भूव्यासतो वर्जितचन्द्रकक्षायां भूभाव्यासो भवति ।

कलानि योजनबिम्बानि । अत्रोपपत्तिः यस्मिन् दिने अर्कस्य मध्यतुल्यैव स्फुटा गतिः स्यात् तस्मिन् दिने उदयकाले चक्रकलाव्यासार्धमितेन यष्टिद्वितयेन मूलमिलितेन तत्स्वच्छया तदग्राभ्यां बिम्बप्रान्तौ विध्येत् । या यष्ट्यग्रयोरन्तरकलास्ता रविबिम्बकला भवन्ति मध्यमाः। ताश्च द्वात्रिंशत् किञ्चिदधिकैकत्रिंशद्विकलाधिकाः ३२ ३१ । ३२ । एवं विधोरपि पौर्णमास्यां यदा मध्यैव गतिः स्यात् तदा विध्येत् तस्यैवं द्वात्रिंशत् कलाः ३२ । ० । ८ । उत्पद्यन्ते । बिम्बकलानां योजनीकरणायानुपातः । यदि त्रिज्याव्यासार्धं एतावत्प्रमाणं बिम्बं तदा पठितश्रुतियोजनैः किमित्येवमुत्पद्यन्ते द्विद्विशरर्तु (६५२२)संख्यानि योजनानि । विधोस्तु खनागाम्बुधि (४८०) मितानीति"। प्रमि० । बिम्बमेव गोलस्य व्यासशब्देनाभिधीयते "व्यासारवीन्दुक्षितिगोलकानां क्रमेण तेजोजलमृण्मयानाम् । स्युर्योजनव्यासमिताश्चपड्भिः(६५२२) व्योमाष्टवेदैः (४८०) कुगजेषुचन्द्रैः । (१५८१) इति श्रीपतिना बिम्बस्थाने व्यासशब्दप्रयोगात् । तस्यैव विष्कम्भ इति संज्ञा । "विष्कम्भमानं किल यत्र सप्त" इति लीला० व्यासस्थाने विष्कम्भशब्द प्रयोगात् अतएवार्थभङ्गेन भासनिर्णये । "शशिबिम्बविवर्जितमित्युक्तम् ।"व्यासे भनन्दाग्नि(३९२७) हते विभक्ते खवाणसूर्यैः (१२५० परिधिः स सूक्ष्मः" इति लीला० उक्तदिशा रविचन्द्रयोरुक्तव्यासमानेन परिधिरानेयः । स च रवेः किञ्चिदून (२०४९९) योजनमितः, चन्द्रस्य किञ्चिन्न्यून(१५०८) योजनमितः । तथा च मण्डलशब्दस्य व्यासपरत्वे (४८०) योजनानि परिधिपरत्वे किञ्चिन्न्यून ( १५०८ ) योजनानि इन्दोर्मण्डलस्य मानमित्यवधेयम् ।

**इन्दुमती** स्त्री इन्दुःप्रशस्तोऽस्त्यस्याम् प्राशस्त्ये मतुप् । १पौर्णमास्याम् २अजस्यपत्न्यां विदर्भराजभगिन्याञ्च । "अवेक्षितेषु क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः" रघुः । "मनोबभूवेन्दुमतीनिराशम्" रघुः । सा च हरिणी नाम सुराङ्गना तृणबिन्दुशापात् मानुषजन्मप्राप्ता तदेतत् वर्णितं रघौ । "चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा । प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम् । स तपःप्रतिबन्धमन्युना प्रमुखाविष्कृतचारुविक्रिया । अशपद्भव मानुषीति तां शमवेलाप्रलयोर्म्मिणा भुवि । भगवन् ! परवानयं जनः प्रतिकूलाचरितं क्षमस्व मे । इति चोपनतां क्षितिस्पृशं कृतवानासुरपुष्पदर्शनात् । क्रथकैशिकवंशसम्भवा तव भूत्वा महिषी चिराय सा । उपलब्धवती दिवश्च्युतं विवशा शापनिवृत्तिकारणम्" इति अजं प्रति वशिष्ठसन्देशः ।

**इन्दुमौलि** पु० इन्दुर्मौलावस्य । महादेवे स हि इन्दुतपसा तुष्टस्तत्कलां शिरस्येकां दधारेति काशी० कथा यथा "तुष्टेन देवदेवेन स्वमौलौ या धृता सदा । आदाय तां कलामेकां जगत्संजीवनीम् पराम् । पश्चात् दक्षेण शप्तोऽपि मासान्ते क्षयमाप्य च । आप्याय्यतेऽसौ कलया पुनरेव तया शशी"।

**इन्दुरत्न** न० ६त० इन्दुरिव शुभ्रं रत्नम् वा । मुक्तायां तस्या चन्द्रदेवताकत्वात् चन्द्रदोषोपशान्त्यर्थत्वेन तत्प्रीतये दीयमानत्वात् तद्वच्छुभ्रत्वाच्च तद्रत्नत्वम् । पञ्चशब्दे पञ्चरत्नानि वक्ष्यन्ते ।

**इन्दुलेखा** स्त्री इन्दोर्लेखेव ।१चन्द्रकलायाम् २तदंशजन्यायां ३सोमलतायाम्, तस्याः सोमाङ्गत्वकथा इन्दुवल्लीशब्दे ९३९पृष्ठे दृश्या । तद्वदाप्यायनकारिण्याम् ३अमृतायां, तद्वद्बलगुणत्वात् ४यमानिकायाञ्च । तस्य रः। इन्दुरेखाप्यत्र ।

**इन्दुलोक** पु०६त०। चन्द्रलोके । स हि कर्म्मिणामुपभोगस्थानतया श्रुत्यादिषु कथितः । चन्द्रलोके कर्म्मिणाम् आप्यशरीरं जायते तच्च कर्म्मसमवायिजलरूपाऽऽप्येभ्य एवेति निरूपणाय छा० उ० पञ्चाग्निविद्या प्रस्ताविता यथा "असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्, रश्मयो धूमो,ऽहरर्चि,श्चन्द्रमा अङ्गारा,नक्षत्राणि विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति १। पर्ज्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो, विद्युदर्चिरशनिरङ्गारा, ह्रादनयो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं सम्भवति २। पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो, रात्रिरर्चिर्दिशोऽङ्गारा, अवान्तरदिशो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति ३। पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्, प्राणो धूमो,जिह्वाऽर्चिश्चक्षुरङ्गाराः, श्रोत्रं विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ४। योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो, योनिरर्चिर्यदन्तः करोति तेऽङ्गारा, अभिनन्दा विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ५। इति

तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति" छा० उ० । "असौ वाव लोकोऽग्निर्गौतम! यथाऽग्निहोत्राधिकरणम् आहवनीयम् इह तस्याग्नेर्द्युलोकाख्यस्यादित्य एव समित् तेन हीद्धोऽसौ लोको दीप्यते अतः समिन्धनात् समिदादित्यः । रश्मयो धूमस्तदुत्थानात् समिधो हि धूम उत्तिष्ठति । अहरर्चिः प्रकाशसामान्यात् आदित्यकार्यत्वाच्च । चन्द्रमा अङ्गाराः अह्नः प्रशमेऽभिव्यक्तेः अर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते । नक्षत्राणि विस्फुलिङ्गाश्चन्द्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात् । तस्मिन्नेतस्मिन् यथोक्तलक्षणेऽग्नौ देवाः यजमानप्राणा अग्न्यादिरूपाः अधिदैवतं श्रद्धाम् अग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा आपः श्रद्धाभाविताः श्रद्धा उच्यन्ते "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" त्यपां होम्यतया प्रश्ने श्रुतत्वात् ।"श्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरन्तीति"च विज्ञायते । तां श्रद्धामब्रूपां जुह्वति । तस्या आहुतेः सोमो राजा । अपां श्रद्धाशब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा सम्भवति । यथा ऋग्वेदादिपुष्परसा ऋगादिमधुकरोपनीतास्त आदित्ये यश आदिकार्यं रोहितादिरूपलक्षणमारभन्त इत्युक्तम् । तथेमा अग्निहोत्राहुतिसमवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या आपो द्युलोकमनुप्रविश्य चान्द्रं कार्यमारभन्ते फलरूपमग्निहोत्राहुत्योः । यजमानाश्च तत्कर्तार आहुतिमया आहुतिभावनाभाविता आहुतिरूपेण कर्मणाऽऽकृष्टाः श्रद्धाप्समवायिनो द्युलोकमनुप्रविश्य सोमभूता भवन्ति । तदर्थं हि तैरग्निहोत्रं हुतम् । आहुतिपरिणाम एव पञ्चाग्निसम्बन्धक्रमेण प्राधान्येन विवक्षित उपासनार्थम् । न यजमानानां गतिम् । तां त्वविदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति विदुषाञ्चोत्तरां विद्याकृताम् ॥ द्वितीयहोमपर्यायार्थमाह । पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेषः । तस्य वायुरेव समित्, वायुना हि पर्जन्योऽग्निः समिध्यते पुरोवातादिप्राबल्ये वृष्टिदर्शनात् । अभ्रं धूमो, धूमकार्यत्वाद्धूमवच्च लक्ष्यमाणत्वात् । विद्युदर्चिः प्रकाशसामान्यात् । अशनिरङ्गाराः काठिन्यात् विद्युत्सम्बन्धाद्वा । ह्रादुनयो विस्फुलिङ्गाः । ह्रादुनयो गर्जितशब्दाः मेघानां विप्रकीर्णत्वसामान्यात् । तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत् सोमं राजानं जुह्वति । तस्या आहुतेर्वर्षं सम्भवति । श्रद्धाख्या आपः सोमाकारपरिणता द्वितीये पर्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमन्ते २। पृथिवी वाव गौतमाग्निरित्यादि पूर्ववत् । तस्याः पृथिव्याख्यस्याग्नेः संवत्सर एव समित् संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पत्तये भवति । आकाशो धूमः पृथिव्या इवोत्थित आकाशो दृश्यते यथाऽग्नेर्धूमो, रात्रिरर्चिः, पृथिव्या ह्यप्रकाशात्मिकाया अनुरूपा रात्रिः तमोरूपत्वात् अग्नेरिवानुरूपमर्चिः। दिशोऽङ्गारा उपशान्तत्वसामान्यात् । अवान्तरदिशो विस्फुलिङ्गाः क्षुद्रत्वसामान्यात् । तस्मिन्नित्यादि समानम् । तस्या आहुतेरन्नं व्रीहियवादि सम्भवति ३। पुरुषो वाव गौतमाग्निः । तस्य वागेव समित् वाचा हि मुखेन समिध्यते पुरुषो न मूकः । प्राणो धूमो धूम इव मुखान्निर्गमनात् । जिह्वार्चिर्लोहितत्वात् । चक्षुरङ्गारा भास आश्रयत्वात् । श्रोत्रं विस्फुलिङ्गाः विप्रकीर्णत्वसाम्यात् । समानमन्यत् । अन्नं जुह्वति व्रीह्यादि संस्कृतम् । तस्या आहुते रेतः सम्भवति ४। योषा वाव गौतमाग्निः । तस्या उपस्थ एव समित् तेन हि सा पुत्राद्युत्पादनाय समिध्यते । यदुपमन्त्रयते स धूमः स्त्रीसम्भवादुपमन्त्रणस्य । योनिरर्चिर्लोहितत्वात् । यदन्तः करोति तेऽङ्गारा अग्निसम्बन्धात् । अभिनन्दाः सुखलवा विस्फुलिङ्गाः क्षुद्रत्वात् । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवतीति ५। एवं श्रद्धासोमवर्षान्नरेतोहवनपर्यायक्रमेणाप एव गर्भीभूतास्ताः । तत्रापामाहुतिसमवायित्वात् प्राधान्यविवक्षा आपः पञ्चम्यामाहुतौ पुरुषवचसो भवन्तीति । नत्वाप एव केवलाः सोमादिकार्यमारभन्ते । न चापोऽत्रिवृत्कृताः सन्तीति । त्रिवृत्कृतत्वेऽपि विशेषसंज्ञालाभो दृष्टः पृथिवीयमिमा आप इयमग्निरित्यन्यतमबाहुल्यनिमित्तः । तस्मात् समुदितान्यभूतानि बाहुल्यात् कर्मसमवायीनि सोमादिकार्यारम्भकाण्याप इत्युच्यन्ते । दृश्यते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु बहुद्रवञ्च, शरीरं यद्यपि पार्थिवं तत्र पञ्चम्यामाहुतौ हुतायां रेतोरूपा आपो गर्भीभूताः । इति तु एवन्तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति व्याख्यात एकः प्रश्नः । यत्तु द्युलोकादीनां मन्त्राहुतयोरा-

ज्ञयोः पृथिवीं पुरुषं स्त्रियं क्रमेणाविश्य लोकं प्रत्युत्थायी भवतीति वाजसनेयके उक्तं तत्प्रासङ्गिकमिहोच्यते । इह च प्रथमे प्रश्न उक्तं येन यदितोऽधि प्रजाः प्रयन्तीति । तस्य चायमुपक्रमः । स गर्भोऽपां पञ्चमः परिणामविशेषः आकृतिकस्य समवायिनीनां श्रद्धाशब्दवाच्यानाम्, उल्वावृत उल्वेन जरायुणाऽऽवृतो वेष्टितो दश वा नव वा मासानन्तःशयितः कुक्षौ शयित्वा यावता कालेन न्यूनेनातिरिक्तेनानन्तरं जायते । उल्वावृत इत्यादिर्वैराग्यहेतोरिदमुच्यते । कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्वाऽशुचिपूयावृतस्य लोहितरेतोऽशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन च विवर्द्धमानस्य निरुद्धशक्तिबलवीर्य्यतेजःप्रज्ञाचेष्टस्य शयनम् । ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति । मुहूर्त्तमप्यसह्यं दश वा मासानतिदीर्घकालमन्तः शयित्वेति । स एवं जातो यावदायुषं पुनर्घटीयन्त्रवद्गमनागमनाय कर्म्म कुर्व्वन् कुलालचक्रवद्वा तिर्य्यग्भ्रमणाय यावत्कर्म्मणोपात्तमायुस्तावज्जीवति । तमेवं क्षीणायुषं प्रेतं मृतं दिष्टं कर्म्मणा निर्द्दिष्टं परलोकं प्रति । यदि चेज्जीवन् वैदिके कर्म्मणि ज्ञाने वाधिकृतस्तमेनं मृतमितोऽस्माद्ग्रामादग्नयेऽग्न्यर्थमृत्विजो हरन्ति पुत्रा वान्त्यकर्म्मणे, यत एव इत आगतोऽग्नेः सकाशाच्छ्रद्धाद्याहुतिक्रमेण, यतश्च पञ्चभ्योऽग्निभ्यः सम्भूत उत्पन्नो भवति तस्मा एवाग्नये हरन्ति स्वामेव योनिमग्निमापादयन्तीत्यर्थः" भा० । एवं चन्द्रभावप्राप्तिप्रकारमुक्त्वा तत्प्राप्त्युपायं कर्म्मभेदं प्रदर्श्य तत्र गतिप्रकारमाह "अथ य इमे गृहस्थाः ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति, धूमाद्रात्रिं, रात्रेरपरपक्षम्, अपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति, मासेभ्यः पितृलोकं, पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति । तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते" छा०उ० । "अथेत्यर्थान्तरप्रस्तावनार्थो य इमे गृहस्थाः । ग्राम इति गृहस्थानामसाधारणं विशेषणमरण्यवासिभ्यो व्यावृत्त्यर्थम् । यथा वानप्रस्थपरिव्राजकानामरण्यं विशेषणं गृहस्थेभ्यो व्यावृत्त्यर्थं तद्वत् । इष्टापूर्त्ते इष्टमग्निहोत्रादि वैदिकं कर्म्म पूर्त्तं वापीकूपतडागारामादिकरणम् । दत्तं च बहिर्वेदि यथाशक्त्यर्हेभ्यो द्रव्यसंविभागो दत्तम् इत्येवंविधं परिचरण-परित्राणाद्युपासते इतिशब्दस्य प्रकारदर्शनार्थत्वात् । ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामभिसम्भवन्ति प्रतिपद्यन्ते । तयाऽतिवाहिता धूमाद्रात्रिं रात्रिदेवतां, रात्रेरपरपक्षदेवताम्, एवमेव कृष्णपक्षाभिमानिनीम्, अपरपक्षाद्यान् षण्मासान् दक्षिणा दक्षिणां दिशमेति सविता तान्, मासान् दक्षिणायनान् षण्मासाभिमानिनीर्देवताः प्रतिपद्यन्त इत्यर्थः । सङ्घचारिण्यो हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगस्तासु । नैते कर्म्मिणः प्रकृताः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवन्ति । कुतः पुनः संवत्सरप्राप्तिप्रसङ्गो यतः प्रतिषिध्यते । अस्ति हि संवत्सरस्य प्रसङ्गोऽस्यैकस्यावयवभूते दक्षिणोत्तरायणे तत्रार्च्चिरादिमार्गप्रवृत्तानामुदगयनमासेभ्योऽवयविनः संवत्सरस्य प्राप्तिरुक्ता । अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिं श्रुत्वा तदवयविनः संवत्सरस्यापि पूर्ववत्प्राप्तिराप्रसक्तेत्यतस्तत्प्राप्तिः प्रतिषिध्यते नैते संवत्सरमभिप्राप्नुवन्तीति । मासेभ्यः पितृलोकं, पितृलोकादाकाशमाकाशाच्चन्द्रमसम् । कोऽसौ यस्तैः प्राप्यते चन्द्रमा य एष दृश्यतेऽन्तरिक्षे सोमो राजा ब्राह्मणानां तदन्नं देवानां तं चन्द्रमसमन्नं देवा इन्द्रादयो भक्षयन्ति । अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्म्मिणो देवैर्भक्ष्यन्ते । नन्वनर्थायेष्टादिकरणं यद्यन्नभूता देवैर्भक्ष्येरन्, नैष दोषः अन्नमित्युपकरणमात्रस्य विवक्षितत्वात् । न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते, किं तर्ह्युपकरणमात्रं देवानां भवन्ति ते, स्त्रीपशुभृत्यादिवत् । दृष्टश्चान्नशब्द उपकरणेषु स्त्रियोऽन्नं पशवोऽन्नं राज्ञामित्यादि । न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति । तस्मात्कर्म्मिणो देवतानामुपभोग्या अपि सन्तः सुखिनो देवैः क्रीडन्ति । शरीरञ्च तेषां सुखोपभोगयोग्यं चन्द्रमण्डले आप्यमारभ्यते । तदुक्तं पुरस्ताच्छ्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा सम्भवतीति । ता आपः कर्म्मसमवायिन्य इतरैश्च भूतैरनुगताः द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति । अन्त्यायाञ्च शरीराहुतावग्नौ हुतायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सहोर्द्ध्वं यजमानमावेष्ट्य चन्द्रमण्डलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारम्भिका भवन्ति । तदारब्धेन च शरीरेणेष्टादिफलमुपभुञ्जाना आसते यावत्तदुपभोगनिमित्तस्य क्षयः कर्म्मणः । सम्पतन्ति तेनेति सम्पातः कर्म्मणः क्षयो या-

पञ्चम्यातः यावत्कर्मणः क्षय इत्यर्थः। तावत्तस्मिंश्चन्द्रमण्डले उषित्वा अथाऽनन्तरमेतमेव यथागतमध्वानं मार्गम् पुनर्निवर्त्तन्त इति प्रयोगात्पूर्वमप्यसकृच्चन्द्रमण्डलं गता निवृत्ताश्चेति गम्यते। तस्मादिह लोके इष्टादिकर्मोपचित्य चन्द्रं गच्छन्ति तत्क्षये चावर्त्तन्ते। क्षणमात्रमपि तत्र स्थातुं न लभ्यते स्थितिनिमित्तकर्मक्षयात् स्नेहक्षयादिव प्रदीपस्य। किं तत्र येन कर्मणा चन्द्रमण्डलमारूढस्तस्य सर्वस्य क्षये तस्मादवरोहणं किं वा सावशेष इति। किन्ततः। यदि सर्वस्यैव क्षयः कर्मणश्चन्द्रमण्डलस्थस्यैव मोक्षः स्यात् न वेति तत्र आगतस्येह शरीरोपभोगादि न सम्भवति। ततः शेषेणेत्यादिस्मृतिविरोधश्च स्यात्। नन्विष्टापूर्त्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्माण्यनेकानि सम्भवन्ति न च तेषां चन्द्रमण्डल उपभोगः। अतः क्षयानि यन्निमित्तं चन्द्रमारूढास्तान्येव क्षीणानीत्यविरोधः। शेषशब्दश्च सर्वेषां कर्मत्वसामान्याद्विरुद्धः"भा०। एवं चान्द्रायणादिकं तत्प्राप्तिहेतुः।

इन्दुलौह न० दैत०। इन्दुदेवताके, लोहे धातौ रौप्ये धातुमध्ये तस्येन्दुवर्णत्वात् इन्दुदीप्तिमत्त्वाद्देवत्वाच्च तथात्वम्। स्वार्थे कन्। तत्रैव।

इन्दुवदना स्त्री "इन्दुवदना भजसनैः सगुरुयुग्मैः" वृत्त०र० उक्ते चतुर्दशाक्षरपादके वर्णवृत्तभेदे

इन्दुवल्ली स्त्री ६त०। चन्द्राभिकायां सोमलतायाम्। तत्प्राप्तिस्थानमुक्तं सुश्रुते यथा "मैनाकादिषु शक्या सोमाः सोमसमाख्यया। पीतावशेषममृतं देवैर्ब्राह्मणोत्तमैः। निहितं सोमवीर्याणां सोमे चाप्युपभोगतः। देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे। दृश्यन्ते च जलान्तेषु मध्ये मज्जनचराः" तत्समाच सोमधिमज्जे वल्लन्ते

इन्दुवार पु० "आपोक्लिमे (२,६,८,१२,)यदि भगाः स किलेन्दुवारो न स्याच्छुभः क्वचन ताजकशास्त्रगीतः" नी० ता० उक्ते वर्षलग्नतः (२,६,८,१२,) स्थानानामन्यतमस्थाने सत्त्वचन्द्रस्थितिरूपयोगभेदे।

इन्दुव्रत न० इन्दुलोकप्राप्त्यर्थं व्रतम् शाक०त०। चान्द्रायणे व्रते तस्य चन्द्रलोकप्राप्तिसाधनत्वात् चन्द्रह्रासवृद्धिवद्ग्रासेन भोजने ह्रासवृद्धिमत्त्वाच्च चान्द्रायणत्वम् तदेतत् पञ्चविधं तत्स्वरूपविभागादि प्रा०वि० दर्शितं यथा। "एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत्। उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं चरेत्। एतदेव विधिं कृत्स्नमाचरेद् यवमध्यमे। शुक्लपक्षादि नियतश्चरेच्चान्द्रायणव्रतम्"। "अष्टावष्टौ समश्नीयात् पिण्डान्मध्यन्दिने गते। नियतात्मा हविष्यस्य यतिचान्द्रायणं चरन्। चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः। चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं व्रतम्। अष्टावष्टौ समश्नीयात् पिण्डान्मध्यन्दिने गते। मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्" मनुः। एतत् पञ्चविधं चान्द्रायणम् पिपीलिकातनुमध्यम्, यवमध्यं, यतिचान्द्रायणम्, सर्वतोमुखं शिशुसंज्ञञ्च। यथाह जाबालः "पिपीलिकायवमध्यं यतिचान्द्रायणन्तथा। चान्द्रायणन्तथा चैवं चतुर्थं सर्वतोमुखम्। पञ्चमं शिशुसंज्ञञ्च तच्च पुण्यफलोदयम्"। कृष्णप्रतिपदमारभ्य मासमेकं यदा क्रियते तदा पिपीलिकामध्यं भवति, शुक्लप्रतिपदारम्भे यवमध्यमुभयत्राप्यमावास्यायामभोजनं कृष्णप्रतिपदि चतुर्दशग्रासभोजनारम्भे ह्रासक्रमेण चतुर्दश्यामेकग्रासः अमावास्यायामभोजनम् एवं प्राप्नोति तथा च वशिष्ठः। "मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश"। नन्वेवं क्रमेण पञ्चविंशत्युत्तरं ग्रासशतद्वयं स्यात् न चत्वारिंशद्ग्रासाधिकं शतद्वयम् तच्च याज्ञवल्क्येनोक्तम्" "यथा कथञ्चित् पिण्डानाञ्चत्वारिंशच्छतद्वयमिति"। "यथा कथञ्चित् पिण्डानां तिस्रोऽशीतीः समाहितः" इति मनुनाप्युक्तम्। उच्यते संयमदिवसे पौर्णमास्याम् अमावास्यायां वा पञ्चदशग्रासभोजनेन संख्यापूरणसम्भवात् अथ वा पञ्चदश्यादिकमेवेदं व्रतम् न प्रतिपदादिकं चतुर्दश्यामेव व्रतसङ्कल्पः। यथाह गौतमः पौर्णमास्यां पञ्चदश ग्रासान् भुक्त्वैकापचयेनापरपक्षमश्नीयात् अमावास्यायामुपोष्य एकैकोपचयेन पूर्वपक्षम्, विपरीतमेकेषाम्" शङ्खलिखितौ "अमावास्यायां व्रतोपायनं यवमध्यम् अमावास्यायां पञ्चदश पिण्डानश्नीयात्" उपायनमारम्भः। शुक्लश्चेदम् अमावास्यायामपि पञ्चदशकलात्मकस्य चन्द्रमसः सूर्य्यप्रविष्टत्वात् तत्र एकैककलानिर्गमस्य प्रतिपदादिषु वृद्धिशब्दवाच्यत्वात्। जाबालः "एकैकं वर्द्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत्। अमावस्यां न भुञ्जीत यवमध्यं चरन् द्विजः। एकैकं ह्रासयेद्ग्रासं कृष्णे शुक्ले च वर्द्धयेत्। पौर्णमास्यां न भुञ्जीत पिपीलिकतनुमध्यमम्"। अत्र कल्पतरुव्याख्यानम्। एकैकं ह्रासयेदिति कृष्णप्रतिपदि पञ्चदशग्रासमारभ्य एकैकापचयेनामावास्यायामेको ग्रासः तदनन्तरं शुक्लप्रतिपदि द्वौ ग्रासावेवं वृद्धिक्रमेण चतुर्दश्यां पञ्चदश ग्रासाः सम्पद्यन्ते पौर्णमास्यामुपवास इति" पिपीलिका

तनुमध्यं चान्द्रायणम्”। ऋषिचान्द्रायणमाह यमः “त्रींस्त्रीन् पिण्डान् समश्नीयात् नियतात्मा दृढव्रतः। हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम्”। अत्र चत्वारिंशच्छतद्वयसंख्या नास्ति। ग्रासपरिमाणमाह पराशरः “कुक्कुटाण्डप्रमाणन्तु यावद्वा प्रविशेन्मुखम्। एवं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम्”। सकल चान्द्रायण एव चतुर्द्दश्यामुपवासं कृत्वाऽपरदिने पञ्चदश्यां संयमः कार्य्यः। यथा बौधायनः “शुक्लां चतुर्द्दशीमुपवसेत् कृष्णचतुर्द्दशीं वा केशश्मश्रुनखलोमानि वापयित्वा” इत्याद्यभिधाय “तिथिनक्षत्रादिहोमं प्रत्यहमुक्तवान्” विस्तरभयान्न लिखितम्। अत्र सामान्यव्रतधर्म्मः कर्त्तव्यः। विशेषमाह यमः “आर्द्रवासाश्चरेत् कृच्छ्रं स्नात्वा वस्त्रं न पीड़येत्। अङ्गुल्यग्रस्थितं ग्रासं गायत्र्या चाभिमन्त्रयेत्। भक्षयित्वा उदस्पृश्य पुनरेवाभिमन्त्रयेत्। आयसं तैजसं पात्रं चक्रोत्पन्नं विवर्ज्जयेत्। असुराणां हि तत् पात्रं पानपात्रमचक्रजम्” अचक्रजं कुलालचक्रानिष्पन्नम्। अपरे धर्म्मा बौधायनादिषु द्रष्टव्याः। तेन एकत्रिंशद्दिनसाध्यं चान्द्रायणव्रतम्”। या० स्मृ०। “तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान्। एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन्। यथाकथञ्चित् पिण्डानां चत्वारिंशच्छतद्वयम्। मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्। कुर्य्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा। अनादिष्टेषु पापेषु शुद्धिचान्द्रायणेन तु। धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम्” अत्र (२४०) ग्राससंख्योक्तेर्मध्ये नोपवास इति प्रतीयते तथा हि प्रतिपदादिपञ्चदशसु ग्रासवर्द्धनेन भक्षणे “सैकपदघ्नपदार्द्धमथैकाद्यङ्कयुतिः किल सङ्कलिताख्येति” लीला० उक्तदिशा (१२०) ग्राससंख्या, पुनः कृष्णे ह्रासेन तथैव संख्येति (२४०) भोज्यग्राससंख्या। तथाच समर्थासमर्थभेदेन अनयोर्व्यवस्थेति सिद्धान्तः।

**इन्दुशेखर** पु० इन्दुः शेखरे यस्य। महादेवे इन्दुमौलिशब्दे ९३६पृ० विवृतिः। चन्द्रशेखरादयोऽप्यत्र।

**इन्दूर** पु० उन्दूर+पृ० उत्वम्। मूषिके जटाध०।

**इन्द्र** पु० इदि-रन्। १परमेश्वरे। “इन्द्रोमायाभिः पुरुरूप ईयते” श्रुतिः। द्वादशादित्यमध्ये २आदित्यभेदे। ते च अदित्यां कश्यपेनोत्पादिताः “धाताऽर्य्यमा च मित्रश्च वरुणोंऽशुर्भगस्तथा। इन्द्रोविवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः। ततस्त्वष्टा ततोविष्णुरजघन्यो जघन्यजः” विष्णुध०। भा०आ०६५अ० तु इन्द्रस्थाने शक्रनाम्ना पठितः यथा “अदित्यां द्वादशादित्याः सम्भूता भुवनेश्वराः। ये राजन्नामतस्तांस्ते कीर्त्तयिष्यामि भारत!। धाता मित्रोऽर्य्यमा शक्रो वरुणस्त्वंशुरेव च। भगो विवस्वान् पूषा च सविता दशमः स्मृतः। एकादशस्तथा त्वष्टा द्वादशोविष्णुरुच्यते। जघन्यजस्तु सर्व्वेषामादित्यानां गुणाधिकः”। कल्पभेदान्नामभेद इति न विरोधः। ३कुटजवृक्षे ४रात्रौ च धरणिः। ५भारतवर्षोपद्वीपभेदे शब्दमा०। इन्द्रदेवताके ६ज्येष्ठानक्षत्रे विष्कम्भादिषु योगेषु ७षड्विंशे योगे छन्दोग्रन्थप्रसिद्धे सप्ताक्षरप्रस्तारे आद्यन्तगुरुद्वयेन लघुद्वयमध्येन युते ८चतुर्थे भेदे। ९देवराजे स च मन्वन्तरभेदात् चतुर्द्दशविधः यथा “मन्वन्तरं मनुर्द्देवा मनुपुत्राः सुरेश्वरः। ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यते” भाग०८स्क०१अ०। इत्थं मन्वन्तरे षड्विधकीर्त्तनीयमुपक्रम्य मन्वन्तरभेदेन तत्तन्नामानि कथितानि अतीतानामभेदात्तस्य चतुर्द्दशसंख्या तत्रोक्ता यथा “तुषिता नाम ते देवाः आसन् स्वायम्भुवेऽन्तरे। मरीचिमिश्राऋषयो यज्ञः सुरगणेश्वरः” भाग०८स्क०१अ०। १मन्वन्तरे यज्ञः। “स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत्” इत्युपक्रम्य “तत्रेन्द्रोरोचनस्त्वासीत् देवाश्च तुषितादयः” तत्रैव। २म० रोचनः। “तृतीय उत्तमोनाम प्रियव्रतसुतो मनुः” इत्युपक्रम्य “सत्यावेदश्रुता भद्राः देवा इन्द्रस्तु सत्यजित्” तत्रैव। ३म०सत्यजित्” “चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः” इत्यु० “सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः” तत्रैव। ‘ईश्वरइन्द्रः’ श्रीधरः। ४म०त्रिशिखः। “पञ्चमो रैवतोनाम मनुस्तामससोदरः” इत्यु० “विभुरिन्द्रः सुरगणा राजन्! भूतरयादयः” तत्रैव ५अ०।५म०विभुर्नाम। “षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः” इत्यु० “इन्द्रो मन्त्रद्रुमस्तत्र देवा आप्यादयो मताः” तत्रैव ५अ०। ६म०मन्त्रद्रुमः। “मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः। सप्तमो वर्त्तमानोऽयम्” इत्युप० “आदित्यवसवोरुद्रा विश्वे देवा मरुद्गणाः। अश्विनावृभवो राजन्निन्द्रस्तेषां पुरन्दरः”। तत्रैव अ०१३। ७म०पुरन्दरः। “अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः” इत्यु० “तत्र देवाः सुतपसो विरजा अमृतप्रजाः। तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति” १३अ०। ८म०बलिः। “नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः” इत्युप० “पारामरीचिगर्भाद्या देवा इन्द्रः

सुतः स्मृतः" तत्रैव १३अ०। ९म०सुतः। "दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान्" इत्यु० "सुधामनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः" १३अ०। १०म०शम्भुः। "मनुर्वै धर्मसावर्णिरेकादशम आत्मवान्" इत्यु० "विहङ्गमाः कामगमा निर्वाणरुचयः सुराः। इन्द्रस्तु वैधृतस्तेषां ऋषयश्चारुणादयः" १३अ०। ११म०वैधृतः। "भविता रुद्रसावर्णिर्नाम द्वादशमो मनुः" इत्यु० "ऋतधामा च देवेशो देवाश्च हरितादयः" १३अ०। १२म०ऋतधामा। "मनुस्त्रयोदशो भव्यो देवसावर्णिरात्मवान्" इत्यु० "देवाः सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पतिः" १३अ०। १३म०दिवस्पतिः। "मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यति" इत्यु० "पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति" १३अ०। १४म०शुचिः। पुराणान्तरादौ नामान्तराणि चतुर्दश कल्पभेदादविरुद्धानि। विस्तरभयात्तानि नोक्तानि। एवं शक्रनामसंख्यासाम्यात् १० चतुर्दशसंख्यायाम्। स च शचीपतिः वृत्रादिहन्ता, पूर्वदिक्पालः, वृष्टिदायकः, अमरेशः मेघवाहः तस्य पुत्रो जयन्तः, वनं नन्दनं हयउच्चैःश्रवाः गजऐरावतः, पुरी अमरावती नेत्राणि सहस्रं वज्रमस्त्रम् हरीवाहः। विवृतिस्तत्तच्छब्दे द्रष्टव्या। तस्यानेकविधानि कार्य्याणि पुराणादौ वर्णितानि विस्तरभयान्नोक्तानि मनुकालपर्य्यन्तं तस्याधिकारकालस्तत्समाप्तौ तस्य प्रजापतेः सकाशात् ब्रह्मविद्याप्राप्तेरप्यत्मज्ञानात् कैवल्यप्राप्तिः "योयो देवानां प्रत्यबुध्यत" इत्यादिश्रुतेः। इत्येतत् नानाशास्त्रश्रुतीतिहासेषु प्रसिद्धम् स्वकालमध्येऽपि त्वष्टृपुत्रविश्वरूपवधजनितब्रह्महत्यास्कन्दनभिया तस्य स्वपदच्युतिः। तत्पापस्य विभज्यान्यत्र संक्रामणे पुनः स्वपदप्राप्तिः। असुरादिभिरपि बलाधिक्यवशात् तं युधि निर्जित्य कियत्कालपर्य्यन्तं तत्पदेऽधिकारिता प्राप्ता इत्यपि पुराणादौ प्रसिद्धम् "जित्वा च सकलान् देवान् इन्द्रोऽभून्महिषासुरः" देवीमा० "शताश्वमेधकरणे अन्यस्यापि इन्द्रत्वप्राप्तियोग्यतेत्यत्र इन्द्रलोकशब्दे प्रमाणं वक्ष्यते।

इन्द्रश्च प्रजापतिसकाशात् एकशतवर्षं ब्रह्मचर्य्याचरणेन ब्रह्मविद्यां प्रापेति छा०उ० वर्णितं यथा "यदाहुरेकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवास तस्मै होवाच। मघवन्! मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्ता वै सशरीरः प्रियाप्रियाभ्यामात्तो न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः इत्यादि।

"मघवन्! मर्त्यं वै मरणधर्म्मि शरीरम्। यन्मन्यसेऽक्ष्याधारादिलक्षणः सम्प्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति। शृणु तत्र कारणम्। यदिदं शरीरं वै पश्यसि तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सन्ततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्ते न तथा सन्त्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते इति वैराग्यार्थं विशेष इत्युच्यते आत्तं मृत्युनेति। कथं नाम देहाभिमानतो विरक्तः सन्निवर्त्तेत इति। शरीरमित्यत्र सहेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य सम्प्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रियमनोधर्म्मवर्जितस्येत्येतत्। अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्त्तिमत्त्वे मा भूतामिति। आत्मनो भोगाधिष्ठानम् आत्मनो वा सत ईक्षितुस्तेजोऽबन्नादिक्रमेणोत्पन्नमधिष्ठानम् जीवरूपेण प्रविश्य सद्देवाधितिष्ठत्यस्मिन्निति वाधिष्ठानम्। यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्म्माधर्म्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान् सशरीरो भवति। अशरीरस्वभावस्यात्मनस्तद्देवाऽहं शरीरं शरीरमेव चाहमित्यविवेकादात्मभावः सशरीरत्वम्। अत एव सशरीरः सन्नात्तो ग्रस्तः प्रियाप्रियाभ्याम्। प्रसिद्धमेतत् तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोर्बाह्यविषयसंयोगवियोगयोर्निमित्तयोर्बाह्यसंयोगवियोगौ ममेति मन्यमानस्यापहतिर्विनाश उच्छेदः सन्ततिरूपयोर्नास्तीति। तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्त्तितविज्ञानमशरीरं सन्तं प्रियाऽप्रिये न स्पृशतः। स्पृशिः प्रत्येकं सम्बध्यते प्रियं न स्पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति। न ह्येकाशुच्यधार्म्मिकैः सह सम्भाषेतेति यद्वत्। धर्म्माधर्म्मकार्य्ये हिताहिते, यतोऽशरीरता एतत्स्वरूपमिति। तत्र धर्म्माधर्म्मयोरसम्भवात्तत्कार्य्याभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः। ननु यदि प्रियमप्यशरीरं न स्पृशतीति यन्मघवतोक्तं सुषुप्तस्य विनाशमेवापीतो भवतीति तदेवेहाप्यापन्नम्। नैष दोषो धर्म्माधर्म्मकार्य्ययोः शरीरसम्बन्धिनोः प्रियाप्रिययोः प्रतिषेधस्य विवक्षितत्वात् "अशरीरं न प्रियाप्रिये स्पृशतः" इत्यादिश्रुत्या। आगमापायिनोर्हि स्पर्शशब्दो दृष्टो यथा शीतस्पर्श उष्णस्पर्श इति। न त्वग्नेरुष्णप्रकाशयोः स्वभावभूतयोरग्निना स्पर्श एव भवति। तथाग्नेः सवितुर्वोष्णप्रकाशवत्स्वरूपभूतस्य नित्यस्य प्रियस्यापि

नैष प्रतिषेधो "विज्ञानमानन्दम्" "आनन्दो ब्रह्मेति" श्रुतिभ्यः इहापि "भूमैव सुखम् इत्युक्तत्वात्" भा०। इत्यु-पक्रम्य बहूपदेशः कृतः। प्रपञ्चश्चात्र द्रष्टव्यः।

इन्द्रश्च देवानां मध्येऽतिशयेन ब्रह्मवित्तमः तथाहि। केनोपनिषदि असुरविजये देवानां महिमाभिमाने जाते तदभिमानापनोदनार्थं यक्षभूतेनाविर्भूतेन परब्रह्मणा अ-ग्निवाय्वोरभिमाननिरसने तयोर्निवृत्तौ इन्द्रमभिगमिन्द्रं प्रत्येव हैमवत्युपदेशेन तस्यातिशयमहिमा सूचितः ततो दिग्मात्रं तद्वाक्यमुदर्श्यते। "ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति। तेऽग्निमब्रुवन् जातवेदः! एतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तमभ्यवदत् कोऽसीति अग्निर्वा अहमस्मीत्यब्रवी-ज्जातवेदा वा अहमस्मीति। तस्मिंस्त्वयि किं वीर्य्य-मित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति। तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति" के० उ०। एवं वायोरप्यभिमाननिरसनमुपवर्ण्य "अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे। स तस्मिन्नेवाकाशे स्त्रियमाज-गाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्ष-मिति। सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये मही-यध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति। तस्माद्वा एते देवा अतितरामिवान्यान्देवान् यदग्निर्वायुरिन्द्रस्ते ह्येन-न्नेदिष्ठं पस्पर्शुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति तस्माद्वा इन्द्रोऽतितरामिवान्यान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति" के० उ०। "तथेन्द्र-मब्रुवन्मघवन्नेतद्विजानीहि इत्यादिपूर्ववदिन्द्रः परमेश्वरो मघवान् बलवत्त्वात्तथेति तदभ्यद्रवत्तस्मादिन्द्रादात्मसमीपग-तात्तद्ब्रह्म तिरोदधे तिरोभूतमिन्द्रस्याभिमानोऽतितरां निराकर्त्तव्य इत्यतः संवादमात्रमपि नादात् ब्रह्मेन्द्राय। तद्यक्षं यस्मिन्नाकाशे आकाशप्रदेशे आत्मानं दर्शयित्वा तिरो-भूतमिन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन्नाकाशे आसीत् स इन्द्रस्तस्मिन्नेवाकाशे तस्थौ। किं तद्यक्षमिति ध्या-यन् न निववृतेऽग्न्यादिवत्तस्येन्द्रे भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादुर्भूता स्त्रीरूपा। स इन्द्र-स्तामुमां सर्वेषां हि शोभमानानां शोभनतमां विद्यां तदा बहुशोभमानेति विशेषणमुपपन्नं भवति। हैमवतीं हेमकृताभरणवतीमिव बहुशोभमानामित्यर्थः। अथवा उमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेन ईश्वरेण सह वर्त्तत इति ज्ञातुं समर्था इति कृत्वा तामुपजगाम इन्द्रस्तां ह उमां किलोवाच पप्रच्छ ब्रूहि किमेतद्दर्शयित्वा तिरोभूतं यक्षमिति। सा ब्र-ह्मेति होवाच ह किल ब्रह्मण ईश्वरस्यैव विजये ईश्वरे-णैव जिता असुरा यूयं तत्र निमित्तमात्रं तस्यैव विजये यूयं महीयध्वं महिमानं प्राप्नुथ। एतदिति क्रियाविशेषणार्थम्। मिथ्याभिमानस्तु युष्माकमेव महि-मेति। ततस्तस्मादुमावाक्याद्ध एव विदाञ्चकार ब्रह्मेति इन्द्रोऽवधारणात्ततो हैवेति न स्वातन्त्र्येण। यस्मादग्नि-वाय्विन्द्रा एते देवा ब्रह्मणः संवाददर्शनादिना स-मीपमुपगतास्तस्मादैश्वर्य्यगुणैरतितरामिव शक्तिगुणादि-भिर्महाभाग्यैरन्यान्देवानतितरामतिशयेन शेरते इवैते देवाः। इवशब्दोऽनर्थकोऽवधारणार्थो वा। यदग्निर्वा-युरिन्द्रस्ते हि देवा यस्मादेतद्ब्रह्म नेदिष्ठमन्तिकं समीपं प्रियतमं पस्पर्शुः स्पृष्टवन्तो यथोक्तैर्ब्रह्मणः संवादादि-प्रकारैस्ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमाः प्रधानाः सन्त इत्येतद्विदाञ्चकार विदाञ्चक्रुरित्येतद्ब्र-ह्मेति। यस्मादग्निवायू अपीन्द्रवाक्यादेव विदाञ्चक्रतुः इन्द्रेण ह्युमावाक्यात् प्रथमं श्रुतं ब्रह्मेत्यतस्तस्माद्वै इन्द्रो-ऽतितरामतिशयेन शेते इवान्यान्देवान्, स ह्येतन्नेदिष्ठं पस्पर्श यस्मात् ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति" भा० ११ अन्तरात्मनि "इन्द्रियमिन्द्रलिङ्गमित्यादि" पा० १२ ऐश्वर्य्यान्विते त्रि०। भावे रन्। १३ ऐश्वर्य्ये। १४ इन्द्र-वारुण्यां स्त्री टाप्। राजनि०। "इन्द्रायेन्दो! पवस्व" ऋ० ९,६४,२२। "तदिन्द्रमिन्द्रवदमिन्द्र! यद्वचः" माघः। "हरी इन्द्रस्य" निरु०। १५ उपमाने "महीमहेन्द्रस्तमवेक्ष्य स क्षणम्" नैष०। "राज्ञश्चैतत् कृततमं राज्ञां चैवाभिषेचनम्। अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत" भा० शा० ६७ अ०। "देवताद्वन्द्वे उत्तरपदस्थस्य नेन्द्रस्य परस्य न वृद्धिः आग्ने-न्द्रम् कर्म सि० कौ०। लिङ्गाद्यर्थे घ। इन्द्रियम्। इन्द्रियशब्दे विवृतिः। इन्द्रो जीविकास्य देवपथा० कन् तस्य लुप्। इन्द्रस्य मूर्त्तिर्जीविकार्थत्वात् लुपि व्यक्तिवचन-त्वात् पु०। इन्द्रो देवताऽस्य अण्। इन्द्रदेवताके हविरादौ "ऐन्द्रं दध्यमावास्यायाम्" श्रुतिः। स्त्रियां ङीप्। "ऐन्द्रा गार्हपत्यमुपतिष्ठते" श्रुतिः। "ऐन्द्रीमस्युदेश्वरम्"

ऐवीमा० ऐन्द्री दिक् "उपमितसमासे उत्तरपदस्थः श्रेष्ठत्वद्योतकः मनुजेन्द्रः वारणेन्द्र इत्यादि।

**इन्द्रक** न० इन्द्रस्य राज्ञः कं सुखं यत्र। १सभाभेदे हेम०। ६त०। २इन्द्रसुखे।

**इन्द्रकर्म्मन्** पु० इन्द्रस्येव ऐश्वर्य्यान्वितं कर्म्मास्य। विष्णौ "इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा कृतागमः" विष्णु स०।

**इन्द्रकील** पु० इन्द्रस्य कील इव अत्युच्चत्वात्। १मन्दरपर्व्वते इन्द्रस्य कील इव। २इन्द्रध्वजे न० "विषमेन्द्रकीलबहु-ऽव्यवसायासुपरिष्टात्" सुश्रु०।

**इन्द्रकुञ्जर** पु० ६त०। ऐरावते तस्याऽमृतमन्थनकाले इन्द्रेण गृहीतत्वात् तथात्वम् यथाह "श्वेतैर्दन्तैश्चतुर्भिस्तु महाकायस्ततः परम्। ऐरावणो महानागोऽभवद्वज्रभृता धृतः" भा०आ० १८अ०। इन्द्रगजशक्रगजादयोऽप्यत्र।

**इन्द्रकूट** पु० इन्द्र ऐश्वर्य्यान्वितः कूटोऽस्य। पर्व्वतभेदे "ततस्तु पर्व्वताः सप्त केशवं समुपस्थिताः। जयन्तो वजयन्तोऽथ नीलो रजतपर्व्वतः। महामेरुः सकैलास इन्द्रकूटश्च नामतः" हरि० १७१ अ०।

**इन्द्रकृष्ट** न०कृष्टं कर्षणं भावे क्त ततः अस्त्यर्थे अच् इन्द्रेण इन्द्रहेतुकवर्षणेन कर्षणजातम्। वृष्टिजलसम्पन्ने धान्यभेदे "इन्द्रकृष्टैर्वर्त्तयन्ति धान्यैर्येन नदीमुखैः" भा०स०५अ०।

**इन्द्रकोष** पु० इन्द्रस्य कोषइव सुखदायकत्वात्। १मञ्चे, २खट्वायाञ्च। [पर्य्यङ्कादयोऽप्यत्र।

**इन्द्रगिरि** पु०इन्द्रनामा गिरिः। महेन्द्रपर्व्वते। इन्द्र-

**इन्द्रगुरु** पु० ६त०। वृहस्पतौ इन्द्राचार्य्यादयोऽप्यत्र।

**इन्द्रगोप** पु० इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात्तस्य। वर्षाकालिके कीटभेदे शक्रगोपादयोऽप्यत्र। "अविरलवपुरसुरेन्द्रगोपाः" किरा०। "इन्द्रगोपकवर्णाभां शुक्लवर्णां मनोजवाम्" भा०स०४० अ०। शुक्लतया वर्णनात् "कृड़योवनया शक्रगोपकालोहितरागेणांशुकेन" काद० रक्ततया वर्णनाच्च तस्य कीटस्य द्वैविध्यं रक्तश्वेतभेदात्।

**इन्द्रघोष** पु० इन्द्र इतिशब्देन विस्पष्टं घुष्यते घुष-कर्म्मणि घञ्। इन्द्रे "इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु" यजु० ५,११। [श्वेतचन्दने राजनि०।

**इन्द्रचन्दन** न० इन्द्रप्रियं चन्दनम् शा०त०। हरिचन्दने

**इन्द्रचाप** पु०इन्द्रे इन्द्रस्वामिके मेघे चापइव। १शक्रधनुषि। "विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः" मेघदू०। "विद्युता सहितः खर्व्वः सेन्द्रचापे घने यथा" भा०व०२२०अ०। तदुत्पत्तिप्रकारादि वृह०स०उक्तम् इन्द्रायुधशब्दे विवृतिः ६त०। २शक्रस्य शरासने च

**इन्द्रचिर्भिटी** इन्द्रस्यात्मनःप्रिया चिर्भिटी शा०त०। लताभेदे। सा च इन्द्रतुल्यवर्णकुसुमा पुष्पान्वितमञ्जरीका दीर्घवृन्ता, युग्मफलान्विता कट्वी शीतवीर्य्या पित्तश्लेष्मकासव्रणदोषकृमिनाशिनी चक्षुष्या च राजनि०।

**इन्द्रच्छन्दस्** न० इन्द्र इव सहस्रनेत्रेण सहस्रगुच्छेन छाद्यते छद-असुन् नि०नुट्। सहस्रगुच्छे हारभेदे हेम०।

**इन्द्रजनन** न० इन्द्रस्यात्मनः जननं देहसम्बन्धभेदः। आत्मनोदेहसम्बन्धभेदे। तदधिकृत्य कृतः ग्रन्थः छ। इन्द्रजननीयं तदधिकारेण कृते ग्रन्थभेदे न०।

**इन्द्रजाल** न० इन्द्रेण कौशलाद्यैश्वर्य्येण जालं दृष्टेरावरणं यथास्थितवस्तुदर्शनाक्षमत्वसाधनात्, इन्द्रस्य परमेश्वरस्य जालं मायेव वा। मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसाधने (कुहक) (वाजी) १पदार्थे २मायारूपे जाले च। "अतएव महान्तोऽस्याः प्रवदन्तीन्द्रजालताम्। एतस्मात् किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम्। पर्य्यायेण शिशुत्वयौवनजरावेशैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति। देहवद्दृष्टधानासौ सुविचार्य्यावलोक्यताम्। क धानाः क च वा दृश्यन्त्वान्मायेति निश्चितु" प०द०। "स्थूणाकर्णेन्द्रजालञ्च सौरञ्चापि तथार्ज्जुनः। आग्नेयञ्चापि सौम्यञ्च ससर्ज कुरुनन्दनः" भा० व०२७३अ०। इन्द्रेण इन्द्रकृतेन योगविशेषेण जालम्। ३क्षुद्रोपायभेदे च। इन्द्रजालञ्च द्रव्यविशेषसंयोगेन अद्भुतवस्तुदर्शकव्यापारः (किमियार) इति वङ्गभाषाप्रसिद्धः मन्त्रद्रव्यविशेषेण वस्तुनोऽन्यथा करणञ्च। तच्च दत्तात्रेयतन्त्रे मन्त्रविशेषसाध्यम् विस्तरेणाभिहितम्। इन्द्रजालतन्त्रे तु औषधिविशेषेण तथाकरणं यदुक्तं तदोदिङ्मात्रं प्रदर्श्यते। "अथातः संप्रवक्ष्यामि चेन्द्रजालमनुत्तमम्" इत्युपक्रम्य

"अथातः संप्रवक्ष्यामि औषधीनां विधिं वरे!। येन विज्ञानमात्रेण सर्व्वसिद्धिर्भविष्यति। महाकालस्य बीजानि प्रस्थमेकं समाहरेत्। धात्रीरसेन देवेशि! सप्त वारान् विभावयेत्। कर्त्तव्या गुटिका तां तु मुखे निक्षिप्य पार्व्वति!। अचिरेणैव कालेन स्वयं पारावतो भवेत्। अथातः संप्रवक्ष्यामि शृणु त्वं मम वल्लभे!। काकस्य शीर्षं संच्छेद्य तत्र कृष्णमृत्तिकां पूरयित्वा पुनर्धत्तूरबीजानि वापयेत् यत्काले तानि पुष्पितानि भवन्ति तदा मस्तोपरि

निक्षिपेत् स छागो भवति । मयूरशीर्षमादाय कृष्णचतुर्दश्यां मृत्तिकां पूरयेत् शणबीजानि वापयेत् यदा फलितः पुष्पितो भवति तदा शणबीजानि पीवायां बन्धयेत् मयूरो भवति । कृष्णचतुर्दश्यां मयूरशीर्षमादाय कृष्णमृत्तिकां पूरयेत् कार्पासबीजानि वापयेत् तदा फलिताः पुष्पिता भवन्ति पुष्पफले संगृह्य समस्तं पेषयित्वा अङ्गं विलिप्य पानीयमध्ये प्रविश्य यदा जले तिष्ठति तदा मयूरो भवति । कृष्णकाकशीर्षमादाय काकमाचीबीजानि वापयेत् यदा फलिता पुष्पिता भवति तत्फलं संगृह्य मुखे प्रक्षिप्य काको भवति । काक इव गच्छति मन्त्राकृष्टोर्ध्वे मोक्षः । पारावतशीर्षमादाय कृष्णमृत्तिकां पूरयित्वा तिलबीजानि वापयेत् क्षीरोदकेन सेचनीयं यदा पुष्पितो भवति तदा मुखे संस्थाप्य अन्तर्हितो भवति । तेषां फलानां चूर्णं कृत्वा तेन चूर्णेन यं स्पृशति स किङ्करो भवति । सर्व्वस्वं ददाति । तानि तिलानि संगृह्य नेत्राञ्जनेन सह पिष्ट्वा कपिलादुग्धेन गुटिकां कारयेत् खर्परान्तं पाचयेत् तां गुटिकां मुखे निक्षिप्य अन्तर्हितो भवति देवैरपि न दृश्यते मनुष्याणां का कथा । उड्डीयेऽ पुरुषो भवति । जीवेद्वर्षशतं स्त्रियः सर्वे जनाश्च वश्या भवन्ति । गृध्रशिरः समादाय कृष्णचतुर्दश्यां कृष्णमृत्तिकायां निक्षिपेत् लशुनबीजानि वापयेत् यदा फलं पुष्पं भवति तदा पुष्पनक्षत्रे पुष्पं गृहीत्वा अञ्जनेन सह कपिलाघृतेन कज्जलं पातयेत् चक्षुरञ्जनीयं यावत् तावत् योजनशतं पश्यति मेदिन्यां, दिवा नक्षत्राण्यपि पश्यति । एवं उष्ट्रगर्द्दभमहिषादीनां दृढजीवानां शिरसि यत् यद्बीजं यस्य शिरसि वापयेत् यदा पुष्पितः फलितो भवति तदा यस्य बीजानि मुखे निक्षिपन्ते स जीवो भवति नात्र सन्देहः । मातुलङ्गस्य मूलन्तु धुस्तूरबीजकेन च । पलाशस्य पुष्पमादाय सूक्ष्मचूर्णन्तु कारयेत् । योऽस्य गन्धं समाघ्राति स च स्त्रेहेन पश्यति । दुन्दुभिं पटहांश्चैव शङ्खांश्चैव तु लेपयेत् । एष भूतोपसृष्टानां कुमारीणां ग्रहेषु च । भूपतिं सेवमानानां तथा तत्कर्म्मजीविनाम् । न चाग्निर्दह्यते वेश्म यत्रैष योऽगदो भवेत् । पारावतस्य हृदयं चञ्चुजिह्वा च शोणितम् । अञ्जनं रोचनायुक्तं वनितावश्यकृत् परम् । कपालं मानुषं गृह्य कनकस्य फलानि च । कर्पूरं मधुसंयुक्तं निघृष्य तिलकेन च । नारी वा पुरुषोऽनेन वश्यो भवति निश्चयः ।

एष कापालिको योगो वशित्वस्य शुभं मतम् । नरजिह्वां समुद्धृत्य सूक्ष्मचूर्णन्तु कारयेत् । जलेन च सुपीतेन दापयेत्तद्विचक्षणः । पाने फले च पुष्पे च भक्ष्ये भोज्ये च दापयेत् । प्रजापतिकुलोद्भूता यदि साक्षादरुन्धती सापि रक्ता प्रियं याति नान्यं पुरुषमिच्छति । हरितालं श्मशाने कृष्णचतुर्दश्यां क्षिप्त्वा कुष्ठविमिश्रं न्याद्यम् अवश्यं वशीभवेत् स नरः । नरतैलं प्रेताम्बरवर्त्तिकां कृत्वा पात्रे रात्रौ प्रज्वाल्यार्कदलस्कन्धे कज्जलं कृत्वा चक्षुषी अभ्यञ्जेत् यं पश्यति स वश्यो भवति । कर्पूरं दन्तमलं लाला स्वदेहाश्चिमलत्रयम् । नासिकोद्भवरक्तञ्च चूर्णमेतद्दलायुतम् । एतत् सर्वं समुद्धृत्य गुटिकां कारयेद्बुधः । पानभोजनके देयं वशीकरणमुत्तमम् । काकजिह्वा वचा कुष्ठमात्मनो रुधिरं स्त्रियः । तद्भावाच्चदलं कञ्चिष्ठा तगरं गौरसर्षपाः । शिवनिर्माल्यसंयुक्तं समभागानि कारयेत् । भोज्ये पानेऽथवा देयं स्त्रीणान्तु वशकारकम् । नित्यं पुरुषमिच्छन्ती मृतमप्यनुगच्छति । कृष्णसर्पस्याङ्गुलप्रमाणं शिरश्छित्त्वास्यास्यं सर्षपादिभिः । पूरयित्वा छायाशुष्कं शोषयेत् । परतः सर्षपान् आकृष्य तानि यस्मै दीयते स वश्यो भवति । मृगीफलं गिलित्वाऽपानमार्गेण निर्गतं संगृह्य धुस्तूररसान्तरितं कृत्वा सप्त दिनानि पूजयेत् । पुनः कुङ्कुमचन्दनैरधिवास्य यस्मै दीयते स वश्यो भवति । दर्दुरगुल्मं गृहीत्वा तद्धूमेन दाहयेत् । तद्भस्म सह पानेन वश्यकृत् परमो मतः । अजगन्धस्य पञ्चाङ्गं वचां कुष्ठेन भावयेत् । श्मशानभस्मसंयुक्तं चूर्णं क्षिपेषु दुर्लभम् । अनेनैव तु चूर्णेन योजयेत् तीर्थ पादपान् । पुष्पितं फलितं दृष्ट्वा चूर्णं वृक्षाद्विलग्नयेत् । तत् क्षणात् फलते वृक्षो नरनारीषु का कथा । जिह्वामूले खर्परान्तं सैन्धवेनापि मिश्रितम् । ददाति यस्य पानेषु सोऽपि वश्यो भवेत् क्षणात् । गोपितं सैन्धवञ्चैव वृहतीफलमेव च । लेपमेतत् प्रयोक्तव्यं नरनारीवशङ्करम् । वङ्गातः पद्ममलिन आत्मनो रुधिरान्वितम् । स्त्रीपुंसयोः प्रदातव्यं वशीकरणमुत्तमम् । श्वेतार्कं रोचनायुक्तमात्ममूत्रेण पेषयेत् । ललाटे तिलकं कृत्वा त्रैलोक्यं क्षोभयेत् क्षणात् । दृष्टमात्रेण तेनैव सर्वो भवति किङ्करः । श्वेतार्कं चन्दनेनैव रञ्जयेत् सह लेपयेत् । दीयते कस्य चिद्वापि पश्चात् दासो भविष्यति । मधूकं सह तैलेन शार्षपेण तु पेषयेत् । एतेन पाणिमभ्यज्य भर्त्ता सा वल्लिता क्षपेत् ।

संहस्ते मैथुनीभावे पतिद्वेषो भविष्यति”। “यानि कानि च बीजान्यङ्कोलतैलेन भेदयेत्। सफलो जायते वृक्षः सिद्धियोग उदाहृतः। भगकुले विन्दुमात्रं तत्तैलं निःक्षिपेद् यदि। एकयामं भवेत् जीवो नान्यथा शङ्करोदितम्। शिग्रुबीजस्थितं तैलं पारावत पुरीषकम्। वराहस्य वसायुक्तं गृहीत्वा च समं समम्। गर्दभस्य वसायुक्तं हरितालं मनःशिलाम्। एभिस्तु तिलकं कृत्वा यथा लङ्केश्वरोऽव्ययः। उष्ट्रविष्ठां गृहीत्वा तैरण्डतैलेन पेषयेत्। वस्त्राङ्के निक्षिपेत् विन्दुं सर्पिषो जायते ध्रुवम्। सर्पदन्तं गृहीत्वा तु कृष्णवृश्चिककण्टकम्। तककारकसंयुक्तं सूक्ष्मचूर्णन्तु कारयेत्। वस्त्राङ्के निक्षिपेच्चूर्णं सद्यो याति यमालयम्। सिन्दूरं गन्धकं तालं समं पिष्ट्वा मनःशिलाम्। तन्निप्रवस्त्रं शिरसि अग्निवत् दृश्यते ध्रुवम्। अर्कक्षीरं वटक्षीरं क्षीरं डुम्बरसम्भवम्। गृहीत्वा पात्रके क्षिप्ते जलपूर्णं करोति च। दुग्धं तत्र भवेत् सद्यो महाकौतुककौतुकम्। अङ्कोलतैलदिग्धाङ्गो दृश्यते राक्षसाकृतिः। पलायन्ते नराः सर्वे पशुपक्षिगजा हयाः। अङ्कोलस्य तु तैलेन दीपं प्रज्वालयेन्नरः। रात्रौ पश्यति भूतानि खेचराणि महीतले। बुधे वा शनिवारे वा कृकलां ग्राह्य यत्नतः। यत्र मूत्रयते तत्र कृकलां तत्र निःक्षिपेत्। निखनेद्भूमिमध्ये तु उद्धृते च पुनः सुखो। नपुंसकं भवेत् सत्यं नान्यथा शङ्करोदितम्। गन्धकं हरितालञ्च गोमूत्रञ्च विषं तथा। सूक्ष्मचूर्णमयं कृत्वा किञ्चिद्वह्नौ विनिःक्षिपेत्। विप्राः सर्वे पलायन्ते यथा युद्धेषु कातराः” दत्तात्रेय तन्त्रे ११प०

**इन्द्रजालिक** त्रि० इन्द्रजालं शिल्पतयाऽस्त्यस्य ठन्। इन्द्रजालकारके। स्त्रि इन्द्रजालीत्यत्र स्त्रियां ङीप्।

**इन्द्रजित्** पु० इन्द्रं जितवान् जि—भूते क्विप्। १दितिवंश्ये असुरभेदे चाक्षुषमन्वन्तरे “दित्याः पुत्रद्वयं जज्ञे कश्यपादिति विश्रुतम्। हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्यवान्” । इत्युपक्रम्य तत्पुत्रपौत्रादिवर्णने “इन्द्रजित् सर्वजिच्चैव वज्रनाभस्तथैव च” हरिवं० ३अ०। २रावणपुत्रे मेघनादे च “पुत्रमिन्द्रजितं वीरं रावणः प्रत्यभाषत। जहि राममभित्रघ्न सुग्रीवञ्च सलक्ष्मणम्। त्वया हि मम सत्पुत्र! यशोदीप्तमुपार्जितम्। जित्वा वज्रधरं संख्ये सहस्राक्षम् शचीपतिम्” भा०व० २८७। “तौ वीरौ शरबन्धेन बद्धाविन्द्रजिता रणे” भा०व० २८८ अ०।

**इन्द्रजिद्धन्तृ** पु० इन्द्रजितं हन्ति हन-तृच् ६त०। दशरथात्मजे लक्ष्मणे। तद्धननकथा। “अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्म्मभेदिभिः। सौमित्रिस्त्वनलस्पर्शैरविध्यद्रावणिं शरैः” । इत्युपक्रम्य “एकेनास्य धनुष्मन्तं बाहुं देहादपातयत्। द्वितीयेन शरेणास्य भुजं भूमौ न्यपातयत्। तृतीयेन तु वाणेन पृथुधारेण भास्वता। जहार सुनसञ्चापि शिरो भ्राजिष्णुकुण्डलम्। विनिकृत्तभुजस्कन्धं कबन्धं भीमदर्शनम्। तं हत्वा सूतमप्यस्त्रैर्जघान बलिनां वरः” भा०व०२२८अ०।

**इन्द्रतापन** पु० इन्द्रं तापयति तप+णिच्+ल्यु। १असुरभेदे “इन्द्रतापनवातापी केतुमान् बलदर्पितः” असुरनामोत्कीर्त्तने” हरिवं० २६अ०। २मेघनादे च। दशग्रीवश्च वाली च मेघवासी दशावरः। टिट्टिभोविटभूतश्च संह्रादश्चेन्द्रतापनः” भा०स०प० ०अ० वरुणसभावर्णने।

**इन्द्रतूल** न० इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वात्। आकाशे मरुता चाल्यमाने कार्पासे तूले त्रिका०।

**इन्द्रतोया** स्त्री इन्द्रमैश्वर्यान्वितं तोयमस्याः, इन्द्रेण पूरितं तोयमस्या वा। गन्धमादनसमीपस्थे नदीभेदे। “इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ” भा० अनु० प० २४।

**इन्द्रदमन** पु० “बाणस्य चेन्द्रदमनो लौहित्यामुदपद्यत” हरिवं०३अ० उक्ते बाणासुरपुत्रभेदे।

**इन्द्रदारु** पु० इन्द्रस्य तद्ध्वजस्य साधनं दारु। देवदारुवृक्षे। इन्द्रध्वजशब्दे ९४६ पृष्ठे तस्य तद्ध्वजसाधनत्वम् दृश्यम्। इन्द्रद्रुमादयोऽप्यत्र।

**इन्द्रद्युम्न** इन्द्रस्येव द्युम्नं धनमस्य। आत्मनेवे १ऋषिभेदे २असुरावतारराजभेदे ३राजभेदे च। तत्र असुररूपोन्नृपः कृष्णेन हतः यथा। “इन्द्रद्युम्नोहतः कोपाद्यवनश्च कशेरुमान्। हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम्” भा० व० १२ अध्याये कृष्णं प्रति व्यासवाक्यम्। ऋषिभेदस्तु। “ततस्ते ब्राह्मणाः सर्वे वकं दाल्भ्यमपूजयन्नित्युपक्रम्य “द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः। इन्द्रद्युम्नोभालुकिश्च कृतचेताः सहस्रपात्” इति कतिचित् ब्राह्मणानभिधायाह। “एते चान्ये च बहवोब्राह्मणाः संशितव्रताः। अजातशत्रुमानर्चुः पुरन्दरमिवर्षयः” भा० व० २६ अ०। राजभेदस्तु मार्कण्डेयादपि प्राचीनः तत्कथा भा०व० १९८अ०। युधिष्ठिरं प्रति मार्कण्डेयवाक्यम्। “स तानुवाचाक्षि खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीण-

दुःखन्विदिवात् प्रच्युतः कीर्त्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठद्य प्रत्यभिजानाति मां भवानिति । तमहमब्रवं न वयं रासायनिकाः कार्य्यचेष्टाकुलत्वाच्च प्रत्यभिजानाम्यात्मनोऽर्थानामनुष्ठानं न शरीरोपतापेनात्मनः समारम्भामोऽर्थानामनुष्ठानं स मामुवाच अस्त्यन्यस्त्वत्तश्चिरजात इति तमहमब्रवम् अस्ति खलु हिमवति प्रावारकर्णो नामोलूकः प्रतिवसति स मत्तश्चिरजातो भवन्तं यदि जानीयादितः प्रकृष्टे चाध्वनि हिमवांस्तत्रासौ प्रतिवसतीति । ततः स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः अथैनं स राजा पप्रच्छ प्रतिजानाति मां भवानिति । स मुहूर्त्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि भवन्तमिति । स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः । अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाडीजङ्घो नाम वकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं पृच्छेति । तत इन्द्रद्युम्नो मामुलूकमादाय तत्सरोऽगच्छद्यत्रासौ नाडीजङ्घो नाम वको बभूव । सोऽस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानाति स एवं मुहूर्त्तं ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ततः सोऽस्माभिः पृष्टः कश्चिद्भवतो ऽन्यश्चिरजाततरोऽस्तीति स नोऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति स मत्तश्चिरजाततरः स यदि कथञ्चिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति । ततः स वकस्तमकूपारं कच्छपं विज्ञापयामास । अस्त्यस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति तच्छ्रुत्वा कच्छपस्तस्मात् सरसः उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतञ्चैनं वयमपृच्छाम भवानिममिन्द्रद्युम्नं राजानमभिजानातीति । स मुहूर्त्तं ध्यात्वा वाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् । कथमहमेनं न प्रत्यभिज्ञास्यामीह अनेन सहस्रकृत्वश्चितिषु यूपा आहिताः । सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतम् । अत्र चाहं प्रतिवसामीति । अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्त्तिमानस्यव्यग्रो याहीति" ।

एतत्सरश्चोत्कलाख्ये वर्णितं तत्राधिकृत्य । "इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च । शतशृङ्गं महाराज ! तापसः समतप्यत" इत्युक्तेः शतशृङ्गपर्व्वतसमीपे हंसकूटानन्तरं तत्सरः इति गम्यते । "हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरः प्रति" इति हरिवं० १५७ अ० हंसकूटसन्निकृष्टत्वमस्यावगम्यते । पुरुषोत्तममूर्त्तिप्रकाशकथापरः पुरुषोत्तमशब्दे तद्विवृतिर्द्रक्ष्यते ।

**इन्द्रद्रु** पु० इन्द्रस्य इन्द्रध्वजार्थो द्रुः । १अर्जुनवृक्षे । तस्य तद्ध्वजनिर्माणे प्रथमोपात्तत्वात् तथात्वम् । इन्द्रध्वजशब्दे विवृतिः । इन्द्रनामा द्रुः । २कुटजवृक्षे राजनि० ।

**इन्द्रद्रुम** न० इन्द्रद्रुवत् विग्रहः । अर्ज्जुनवृक्षे शब्दर० ।

**इन्द्रधनुस्** न० इन्द्रे इन्द्रस्वामिके मेघे धनुरिव । इन्द्रायुधशब्दे वक्ष्यमाणे पदार्थे "विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च" मनुः । तस्य ऋजुत्वे रोहितत्वम् । वक्रत्वे इन्द्रधनुरिति भेदः ।

**इन्द्रध्वज** पु० इन्द्रस्य तत्सन्तोषार्थो ध्वजः । भाद्रशुक्लद्वादश्यां स्वराज्ये वृष्ट्यादिशस्यवृद्ध्यर्थं तत्प्रीतये राज्ञा क्रियमाणे ध्वजे तदुत्पत्तितत्करणप्रकारादि दर्शितं वृहत्संहितायां यथा

"ब्रह्माणमूचुरमरा भगवन्नशक्ताः स्म नासुरान् समरे । प्रतियोधयितुमतस्त्वां शरण्य शरणं समुपयाताः । देवानुवाच भगवान् क्षीरोदे केशवः स वः केतुम् । यं दास्यति तं दृष्ट्वा नाजौ स्थास्यन्ति वो दैत्याः । लब्धवराः क्षीरोदं गत्वा ते तुष्टुवुः सुराः सेन्द्राः । श्रीवत्साङ्कं कौस्तुभमणिकिरणोद्भासितोरस्कम् । श्रीपतिमचिन्त्यमसमं समन्ततः सर्वदेहिनां सूक्ष्मम् । परमात्मानमनादिं विष्णुमविज्ञातपर्यन्तम् । तैः संस्तुतः स देवस्तुतोष नारायणो ददौ चैषाम् । ध्वजममरसुरवधूसुखकमलवनतुषारतीक्ष्णांशुम् । तं विष्णुतेजोभवमष्टचक्रे रथे स्थितं भास्वति रत्नचित्रे । देदीप्यमानं शरदीव सूर्यं ध्वजं समासाद्य मुमोद शक्रः । सकिङ्किणीजालपरिष्कृतेन स्रक्छत्रघण्टापिटकान्वितेन । समुच्छ्रितेनामरराट् ध्वजेन निन्ये विनाशं समरेऽरिसैन्यम् । उपरिचरस्यामरपो वसोर्ददौ चेदिपस्य वैणुमयीम् । यष्टिं तां स नरेन्द्रो विधिवत्सम्पूजयामास । प्रीतो मखेन मघवान् प्राहैवं ये नृपाः करिष्यन्ति । वसुवद्धेमवन्तस्ते भुवि सिद्धाज्ञा भविष्यन्ति । मुदिताः प्रजाश्च तेषां भयरोगविवर्ज्जिताः प्रभूतान्नाः । ध्वज एव चाभिधास्यति जगति निमित्तैः फलं सदसत् । पूजा तस्य नरेन्द्रैर्बलहविर्जपादिभिर्यथा पूर्वम् । शक्राज्ञया प्रयुक्ता तामागमतः प्रवक्ष्यामि । तस्य विधानं शुभकरणदिवस-

देशीमा० ऐन्द्री दिक् "उपमितसमासे उत्तरपदस्थः श्रेष्ठत्वद्योतकः मनुजेन्द्रः वारणेन्द्र इत्यादि ।

**इन्द्रक** न० इन्द्रस्य राज्ञः कं सुखं यत्र । १सभागृहे हेम० । ६त० । २इन्द्रसुखे ।

**इन्द्रकर्म्मन्** पु० इन्द्रस्येव ऐश्वर्य्यान्वितं कर्म्मास्य । विष्णौ "इन्द्रकर्म्मा महाकर्म्मा कृतकर्म्मा कृतागमः" विष्णुस० ।

**इन्द्रकील** पु० इन्द्रस्य कील इव अत्युच्चत्वात् । १मन्दरपर्व्वते इन्द्रस्य कील इव । २इन्द्रध्वजे न० "विषमेन्द्रकीलवत्-च्छवज्ञ्भाषासुपरिष्टात्" सुश्रु० ।

**इन्द्रकुञ्जर** पु० ६त० । ऐरावते तस्यामृतमन्थनकाले इन्द्रेण गृहीतत्वात् तथात्वम् यथाह "श्वेतैर्दन्तैश्चतुर्भिस्तु महाकायस्ततः परम् । ऐरावणो महानागोऽभवद्वज्रभृता धृतः" भा०आ० १८अ० । इन्द्रगजशक्रगजादयोऽप्यत्र ।

**इन्द्रकूट** पु० इन्द्र ऐश्वर्य्यान्वितः कूटोऽस्य । पर्व्वतभेदे "ततस्तु पर्व्वताः सप्त कौशन्ं समुपस्थिताः । जयन्तो वजयन्तोऽथ नीलो रजतपर्व्वतः । महामेरुः सकैलास इन्द्रकूटश्च नामतः" हरि० १७१ अ० ।

**इन्द्रकृष्ट** न०कृष्टं कर्षणं भावे क्त ततः अस्त्यर्थे अच् इन्द्रेण इन्द्रहेतुकवर्षणेन कर्षणजातम् । दृष्टिजलसम्भवे धान्यभेदे "इन्द्रकृष्टैर्वर्त्तयन्ति धान्यैर्येच नदीमुखैः" भा०स०५अ० ।

**इन्द्रकोष** पु० इन्द्रस्य कोषइव सुखदायकत्वात् । १मञ्चे, २खट्वायाञ्च । [पर्व्वतादयोऽप्यत्र ।

**इन्द्रगिरि** पु०इन्द्रनामा गिरिः । महेन्द्रपर्व्वते । इन्द्र-

**इन्द्रगुरु** पु० ६त० । वृहस्पतौ इन्द्राचार्य्यादयोऽप्यत्र ।

**इन्द्रगोप** पु० इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात्तस्य । वर्षाकालिके कीटभेदे शक्रगोपादयोऽप्यत्र । "अविरलवपुरःसुरेन्द्रगोपाः" किरा० । "इन्द्रगोपकवर्णाभां शुक्लवर्णां मनोजवाम्" भा०स०४० अ० । शुक्लतया वर्णनात् "हृद्योवनया शक्रगोपकालोहितरागेणांशुकेन" काद० रक्ततया वर्णनाञ्च तस्य कीटस्य द्वैविध्यं रक्तश्वेतभेदात् ।

**इन्द्रघोष** पु० इन्द्र इतिशब्देन विस्पष्टं घुष्यते घुष-कर्म्मणि घञ् । इन्द्रे "इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु" यजु० ५,११ । [श्वेतचन्दने राजनि० ।

**इन्द्रचन्दन** न० इन्द्रप्रियं चन्दनम् शा०त० । हरिचन्दने

**इन्द्रचाप** पु०इन्द्रे इन्द्रस्वामिके मेघे चापइव । १शक्रधनुषि । "विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः" मेघ० । "विद्युता सहितः स्वर्थः सेन्द्रचापो घनो यथा" भा०व०२२०अ० । तदुत्पत्तिप्रकारादि वृह०स०उक्तम् इन्द्रायुधशब्दे विवृतिः ६त० । २शक्रस्य शरासने च

**इन्द्रचिर्भिटी** इन्द्रस्यात्मनःप्रिया चिर्भिटी शा०त०। लताभेदे । सा च इन्द्रतुल्यवर्णकुसुमा पुष्पान्वितमञ्जरीका दीर्घदला, युग्मफलान्विता कट्वी शीतवीर्य्या पित्तश्लेष्मकासव्रणदोषकृमिनाशिनी चक्षुष्या च राजनि० ।

**इन्द्रच्छन्दस्** न० इन्द्र इव सहस्रनेत्रेण सहस्रगुच्छेन छाद्यते छद्-असुन् नि०नुट् । सहस्रगुच्छे हारभेदे हेम० ।

**इन्द्रजनन** न० इन्द्रस्यात्मनः जननं देहसम्बन्धभेदः । आत्मनोदेहसम्बन्धभेदे । तदधिकृत्य कृतः ग्रन्थः छ । इन्द्रजननीयं तदधिकारेण कृते ग्रन्थभेदे न० ।

**इन्द्रजाल** न० इन्द्रेण कौशलाद्यैश्वर्य्येण जालं दृष्टेर्नेत्रावरणं यथास्थितवस्तुदर्शनाक्षमत्वसाधनात्, इन्द्रस्य परमेश्वरस्य जालं मायेव वा । मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसाधने (कुहक) (बाजी) १पदार्थे २मायारूपे जाले च । "अतएव महान्तोऽस्याः प्रवदन्तीन्द्रजालताम् । एतस्मात् किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् । पर्य्यायेण शिशुत्वयौवनजरावेशैरनेकैर्वृतं पश्यत्त्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति । देहवद्दु वटधानासौ सुविचार्य्यावलोक्यताम् । क धानाः क च वा इक्षस्तस्मान्मायेति निश्चितु" प०द० "स्थूणाकर्णेन्द्रजालञ्च सौरञ्चापि तथार्ज्जुनः । आग्नेयञ्चापि सौम्यञ्च ससर्ज्ज कुरुनन्दनः" भा०व०२७४अ० । इन्द्रेण इन्द्रकृतेन योगविशेषेण जालम् । ३शत्रूपायभेदे च । इन्द्रजालञ्च द्रव्यविशेषसंयोगेन अद्भुतवस्तुदर्शकव्यापारः (किमिश्टरि) इति इंलण्डभाषाप्रसिद्धः मन्त्रद्रव्यविशेषेण वस्तुनोऽन्यथा करणञ्च । तच्च दत्तात्रेयतन्त्रे मन्त्रविशेषसाध्यम् विस्तरेणाभिहितम् । इन्द्रजालतन्त्रे तु औषधिविशेषेण तथाचरणं बहुकं ततोदिङ्मात्रं प्रदर्श्यते । "अथातः संप्रवक्ष्यामि चेन्द्रजालमनुत्तमम्" इत्युपक्रम्य

"अथातः संप्रवक्ष्यामि औषधीनां विधिं वरे ! । येन विज्ञानमात्रेण सर्वसिद्धिर्भविष्यति । महाकालस्य बीजानि प्रस्थमेकं समाहरेत् । भावीरसेन देवेशि ! सप्त वारान् विभावयेत् । कर्त्तव्या गुटिका तां तु मुखे निक्षिप्य पार्व्वति ! । अचिरेणैव कालेन स्वयं पारावतो भवेत् । अथातः संप्रवक्ष्यामि शृणु त्वं मम वल्लभे ! । कासस्य शीर्षं संच्छिद्य तत्र लघ्वर्त्तिकां पूरयित्वा तुनर्धत्तूरबीजानि वापयेत् यत्काले तानि पुष्पितानि भवन्ति तदा वस्त्रोपरि

निक्षिपेत् स छागो भवति। मयूरशीर्षमादाय कृष्णचतुर्दश्यां मृत्तिकां पूरयेत् शणबीजानि वापयेत् यदा फलितः पुष्पितो भवति तदा शणबीजानि ग्रीवायां बन्धयेत् मयूरो भवति। कृष्णचतुर्दश्यां मयूरशीर्षमादाय कृष्णमृत्तिकां पूरयेत् कार्पासबीजानि वापयेत् तदा फलिताः पुष्पिता भवन्ति पुष्पफले संगृह्य समस्तं पेषयित्वा अङ्गं विलिप्य पानीयमध्ये प्रविश्य यदा जले तिष्ठति तदा मयूरो भवति। कृष्णकाकशीर्षमादाय काकमाचीबीजानि वापयेत् यदा फलिता पुष्पिता भवति तत्फलं संगृह्य मुखे प्रक्षिप्य काको भवति। काक इव गच्छति मद्यास्वादिते मोक्षः। पारावतशीर्षमादाय कृष्णमृत्तिकां पूरयित्वा तिलबीजानि वापयेत् क्षीरोदकेन सेचनीयं यदा पुष्पितो भवति तदा मुखे संस्थाप्य अन्तर्हितो भवति। तेषां फलानां चूर्णं कृत्वा तेन चूर्णेन यं स्पृशति स किङ्करो भवति। सर्व्वस्वं ददाति। तानि तिलानि संगृह्य नेत्राञ्जनेन सह पिष्ट्वा कपिलादुग्धेन गुटिकां कारयेत् सप्तरात्रं पाचयेत् तां गुटिकां मुखे निक्षिप्य अन्तर्हितो भवति देवैरपि न दृश्यते मनुष्याणां का कथा। उद्धीर्णे पुरुषो भवति। जीवेद्वर्षशतं स्त्रियः सर्व्वे जनाश्च वश्या भवन्ति। गृध्रशिरः समादाय कृष्णचतुर्दश्यां कृष्णमृत्तिकायां निक्षिपेत् लशुनबीजानि वापयेत् यदा फलं पुष्पं भवति तदा पुष्पनाले पुष्पं गृहीत्वा अञ्जनेन सह कपिलाघृतेन कज्जलं पातयेत् चक्षुरञ्जनीयं यावत् तावत् योजनशतं पश्यति मेदिन्यां, दिवा नक्षत्राण्यपि पश्यति। एवं उष्ट्रगर्द्दभमहिषादीनां इष्टजीवानां शिरसि यत् यत्बीजं यस्य शिरसि वापयेत् यदा पुष्पितः फलितो भवति तदा यस्य बीजानि मुखे निक्षिप्यन्ते स जीवो भवति नात्र सन्देहः। मातुलुङ्गस्य मूलन्तु धुस्तूरबीजकेन च। पलाशस्य पुष्पमादाय सूक्ष्मचूर्णन्तु कारयेत्। योऽस्य गन्धं समाघ्राति स च स्नेहेन पश्यति। दुन्दुभिं पटहांश्चैव शङ्खांश्चैव तु लेपयेत्। एष भूतोपसृष्टानां कुमारीणां ग्रहेषु च। भूपतिं सेवमानानां तथा तत्कर्म्मजीविनाम्। न चाग्निर्दह्यते तेषां यत्नैष सोऽगदो भवेत्। पारावतस्य हृदयं चटकजिह्वा च शोणितम्। अञ्जनं रोचनायुक्तं वनितावश्यकृत् परम्। कपालं मानुषं गृह्य कनकस्य फलानि च। कर्पूरं मधुसंयुक्तं निघृष्य तिलकेन च। नारी वा पुरुषोऽनेन वश्यो भवति निश्चयः।

एष कापालिको योगो वशित्वस्य शुभं मतम्। नरजिह्वां समुद्धृत्य सूक्ष्मचूर्णन्तु कारयेत्। जलेन च सुपीतेन दापयेत्तद्विचक्षणः। पाने फले च पुष्पे च भक्ष्ये भोज्ये च दापयेत्। प्रजापतिकुलोद्भूता यदि साक्षादरुन्धती सापि रक्ता प्रियं याति नान्यं पुरुषमिच्छति। हरितालं श्मशाने कृष्णचतुर्दश्यां लिखा कुर्य्याद्विमिश्रं प्राज्ञम् अवश्यं वशीभवेत् स नरः। नरतैलं प्रेताम्बरवर्त्तिकं कृत्वा पात्रे रात्रौ प्रज्वाल्यार्कदलस्कन्धे कज्जलं कृत्वा चक्षुषी अभ्यञ्जेत् यं पश्यति स वश्यो भवति। कर्पूरदलमलं लाला स्वदेहाच्चिमलत्रयम्। नासिकोद्भवरक्तञ्च चूर्णमेतद्दलायुतम्। एतत् सर्वं समुद्धृत्य गुटिकां कारयेद्बुधः। पानभोजनके देयं वशीकरणमुत्तमम्। काकजिह्वा वचा कुष्ठमात्मनो रुधिरं स्त्रियः। तद्वास्तदन्नं कञ्जिका तगरं गौरसर्षपाः। शिवनिर्माल्यसंयुक्तं समभागानि कारयेत्। भोज्ये पानेऽथवा देयं स्त्रीणान्तु वशकारकम्। नित्यं पुरुषमिच्छन्ती मृतमप्यनुगच्छति। कृष्णसर्पस्याङ्गुलप्रमाणं शिरश्छित्त्वास्यास्यं सर्षपादिभिः। पूरयित्वा छायाशुष्कं शोषयेत्। परतः सर्षपान् आकृष्य तानि यस्मै दीयते स वश्यो भवति। पूगीफलं गिलित्वाऽपानमार्गेण निर्गतं संगृह्य धुस्तूररसान्तरितं कृत्वा सप्त दिनानि पूजयेत्। पुनः कुङ्कुमचन्दनैरधिवास्य यस्मै दीयते स वश्यो भवति। दर्दुरयुग्मं गृहीत्वा तद्धूमेन दाहयेत्। तद्भस्म सह पानेन वश्यकृत् परमो मतः। अजगन्धस्य पञ्चाङ्ग वचां कुष्ठेन भावयेत्। श्मशानभस्मसंयुक्तं चूर्णं त्रैलोक्येऽपि दुर्लभम्। अनेनैव तु चूर्णेन योजयेत् तीर्थे पादपान्। पुष्पितं फलितं वृक्षं चूर्णं वृक्षाद्विलग्नयेत्। तत् क्षणात् फलते वृक्षो नरनारीषु का कथा। जिह्वामूले सप्तरात्रं सैन्धवेनापि मिश्रितम्। ददाति यस्य पानेषु सोऽपि वश्यो भवेत् क्षणात्। गोपितं सैन्धवञ्चैव हस्तीफलमेव च। लेपमेतत् प्रयोक्तव्यं नरनारीवशङ्करम्। उद्धातः पद्ममलिन आत्मनो रुधिरान्वितम्। स्त्रीपुंसयोः प्रदातव्यं वशीकरणमुत्तमम्। श्वेतार्कं रोचनायुक्तमात्ममूत्रेण पेषयेत्। ललाटे तिलकं कृत्वा त्रैलोक्यं क्षोभयेत् क्षणात्। दृष्टमात्रेण तेनैव सर्व्वो भवति किङ्करः। श्वेतार्कं चन्दनेनैव रञ्जयेत् सह लेपयेत्। दीयते यस्य चिह्नापि पश्चात् दासो भविष्यति। मधूकं सह तैलेन शर्मेण तु पेषयेत्। एतेन पाणिमभ्यज्य भर्त्ता वा वनिता स्पृशेत्।

कंशुके मैथुनीभावे पतिद्रोषो भविष्यति"। "यानि कानि च बीजान्यङ्कोलतैलेन भेदयेत्। सफलो जायते वृक्षः सिद्धियोग उदाहृतः। शवमुखे विन्दुमात्रं तत्तैलं निःक्षिपेद् यदि। एकयामं भवेत् जीवो नान्यथा शङ्करोदितम्। शिग्रुवीजस्थितं तैलं पारावतपुरीषकम्। वराहस्य वसायुक्तं गृहीत्वा च समं समम्। गर्दभस्य वसायुक्तं हरितालं मनःशिलाम्। एभिस्तु तिलकं कृत्वा यथा लङ्केश्वरोऽन्वयः। उष्ट्रविष्टां गृहीत्वा त्वेरण्डतैलेन पेषयेत्। यस्याङ्गे निःक्षिपेत् विन्दुं सर्षिप्रो जायते ध्रुवम्। सर्पदन्तं गृहीत्वा तु सप्ताहचिकणष्टकम्। ककलासकसंयुक्तं सूक्ष्मचूर्णन्तु कारयेत्। यस्याङ्गे निःक्षिपेत् सः सद्यो याति यमालयम्। सिन्दूरं गन्धकं तालं समं पिष्ट्वा मनःशिलाम्। तन्निप्रवक्षं शिरसि अग्निवत् दृश्यते ध्रुवम्। अर्कक्षीरं वटक्षीरं क्षीरं उडुम्बरस्य वम्। गृहीत्वा पात्रके क्षिप्रे जलपूर्णं करोति च। दुग्धं तत्र भवेत् सद्यो महाकौतुककौतुकम्। अङ्कोलतैललिप्ताङ्गो दृश्यते राक्षसाकृतिः। पलायन्ते नराः सर्वे पशुपक्षिगजा हयाः। अङ्कोलस्य तु तैलेन दीपं प्रज्वालयेन्नरः। रात्रौ पश्यति भूतानि खेचराणि महीतले। बुधे वा शनिवारे वा कृकलां ग्राह्य यत्नतः। यत्र मूत्रयते यत्र कृकलां तत्र निःक्षिपेत्। निखनेद्भूमिमध्ये च उद्धृते च पुनः सुखी। नपुंसकं भवेत् सत्यं नान्यथा शङ्करोदितम्। गन्धकं हरितालञ्च गोमूत्रञ्च विषं तथा। सूक्ष्मचूर्णमयं कृत्वा क्षिप्तिदङ्गे विनिःक्षिपेत्। विघ्नाः सर्वे पलायन्ते यथा युद्धेषु कातराः" इन्द्रजालतन्त्रे ११प०

**इन्द्रजालिक** त्रि० इन्द्रजालं शिल्पतयाऽस्त्यस्य ठन्। इन्द्रजालकारके। इति इन्द्रजालीत्यप्यत्र स्त्रियां ङीप्।

**इन्द्रजित्** पु० इन्द्रं जितवान् जि–भूते क्विप्। १दितिवंश्ये असुरभेदे चाक्षुषमन्वन्तरे "दित्याः पुत्रद्वयं जज्ञे कश्यपादिति विश्रुतम्। हिरण्यकशिपुश्चैव हिरण्याक्षश्च वीर्यवान्"। इत्युपक्रम्य तत्पुत्रपौत्रादिवर्णने "इन्द्रजित् सर्वजिच्चैव वज्रनाभस्तथैव च" हरिवं० ३अ०। २रावणपुत्रे मेघनादे च "पुत्रमिन्द्रजितं वीरं रावणः प्रत्यभाषत। जहि राममितमित्रघ्नं सुग्रीवञ्च सलक्ष्मणम्। त्वया हि मम सत्पुत्र! यशो दीप्तमुपार्ज्जितम्। जित्वा वज्रधरं संख्ये सहस्राक्षम् शचीपतिम्" भा०व० २८७। "तौ वीरौ शरबन्धेन बद्धाविन्द्रजिता रणे" भा०व० २८८ अ०।

**इन्द्रजिद्धन्तृ** पु० इन्द्रजितं हन्ति हन–तृच् ६त०। दशरथात्मजे लक्ष्मणे। तद्धननकथा। "अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्म्मभेदिभिः। सौमित्रिरनलस्पर्शैरविध्यद्रावणिं शरैः"। इत्युपक्रम्य "एकेनास्य धनुष्मन्तं बाहुं देहादपातयत्। द्वितीयेन शरेणास्य भुजं भूमौ न्यपातयत्। तृतीयेन तु वाणेन पृथुधारेण भास्वता। जहार सुनसञ्चापि शिरो भ्राजिष्णुकुण्डलम्। विनिकृत्तभुजस्कन्धं कबन्धं भीमदर्शनम्। तं हत्वा सूतमप्यस्त्रैर्जघान बलिनां वरः" भा०व० २८८अ०।

**इन्द्रतापन** पु० इन्द्रं तापयति तप+णिच्+ल्यु। १असुरभेदे "इन्द्रतापनवातापी केतुमान् बलदर्पितः" असुरनामोत्कीर्त्तने" हरिवं० २६अ०। २मेघनादे च। दशग्रीवश्च वाली च मेघराजो दशावरः। टिट्टिभोविटभूतश्च संह्रादश्चेन्द्रतापनः" भा०स०प० ०अ० वरुणसभावर्णने।

**इन्द्रतूल** न० इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वात्। आकाशे मरुता चाल्यमाने कार्पासे तूले त्रिका०।

**इन्द्रतोया** स्त्री इन्द्रमैश्वर्यान्वितं तोयमस्याः, इन्द्रेण पूरितं तोयमस्या वा। गन्धमादनसमीपस्थे नदीभेदे। "इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ" भा० अनु० प० २४।

**इन्द्रदमन** पु० "बाणस्य चेन्द्रदमनो लौहित्यामुदपद्यत" हरिवं०३अ० उक्ते बाणासुरपुत्रभेदे।

**इन्द्रदारु** पु० इन्द्रस्य तद्ध्वजस्य साधनं दारु। देवदारुवृक्षे। इन्द्रध्वजशब्दे ९४६ पृष्ठे तस्य तद्ध्वजसाधनत्वम् दृश्यम्। इन्द्रद्रुमादयोऽप्यत्र।

**इन्द्रद्युम्न** इन्द्रस्येव द्युम्नं धनमस्य। मात्स्ये १ऋषिभेदे २असुरावतारराजभेदे ३राजभेदे च। तत्र असुररूपोऽन्यपः कृष्णेन हतः यथा। "इन्द्रद्युम्नोहतः कोपाद्यवनश्च कसेरुमान्। हतः सौभपतिः शाल्वस्त्वया सौभं च पातितम्" भा० व० १२ अध्याये कृष्णं प्रति व्यासवाक्यम्। ऋषिभेदस्तु। "ततस्ते ब्राह्मणाः सर्वे वकं दाल्भ्यमपूजयन्नित्युपक्रम्य "द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः। इन्द्रद्युम्नोभालुकिश्च कृतचेताः सहस्रपात्" इति कतिचित् ब्राह्मणानभिधायाह। "एते चान्ये च बहवोब्राह्मणा संशितव्रताः। अजातशत्रुमानर्चुः पुरन्दरमिवर्षयः" भा० व० २६ अ०। राजभेदस्तु मार्कण्डेयादपि प्राचीनः तत्कथा भा०व० १९८अ०। युधिष्ठिरं प्रति मार्कण्डेयवाक्यम्। "स तानुवाचास्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीण-

पुण्यक्षयादिवात् प्रच्युतः कीर्त्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठद्य प्रत्यभिजानाति मां भवानिति। तमहमब्रवं न वयं रासायनिकाः कार्य्यचेष्टाकुलत्वान्न प्रत्यभिजानाम्यात्मनोऽर्थानामनुष्ठानं न शरीरोपतापेनात्मनः समारम्भोऽर्थानामनुष्ठानं स मामुवाच अस्त्यन्यस्त्वत्तश्चिरजात इति तमहमब्रवम् अस्ति खलु हिमवति प्रावारकर्णो नामोलूकः प्रतिवसति स मत्तश्चिरजातो भवन्तं यदि जानीयादितः प्रकृष्टे चाध्वनि हिमवांस्तत्रासौ प्रतिवसतीति। ततः स ममाश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः अथैनं स राजा पप्रच्छ प्रतिजानाति मां भवानिति। स मुहूर्त्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि भवन्तमिति। स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः। अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाडीजङ्घो नाम बकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं पृच्छेति। तत इन्द्रद्युम्नो मामुलूकमादाय तत्सरोऽगच्छद्यत्रासौ नाडीजङ्घो नाम बको बभूव। सोऽस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानाति स एवं मुहूर्त्तं ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ततः सोऽस्माभिः पृष्टः कश्चिद्भवतो ऽन्यश्चिरजाततरोऽस्तीति स नोऽब्रवीदस्ति खल्विहैव सरस्यकूपारो नाम कच्छपः प्रतिवसति स मत्तश्चिरजाततरः स यदि कथञ्चिदभिजानीयादिमं राजानं तमकूपारं पृच्छामिति। ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास। अस्त्यस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति तच्छ्रुत्वा कच्छपस्तस्मात् सरसः उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतञ्चैनं वयमपृच्छाम भवानिममिन्द्रद्युम्नं राजानमभिजानातीति। स मुहूर्त्तं ध्यात्वा वाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत्। कथमहमेनं न प्रत्यभिज्ञास्यामीह ह्यनेन सहस्रकृत्वश्चितिषु यूपा आहिताः। सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतम्। अत्र चाहं प्रतिवसामीति। अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्रथः प्रादुरासीद्वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्त्तिमानस्यव्यग्रो याहीति"।

एतत्सरसोक्तवाक्ये वर्णितं तत्राधिकृत्य। "इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च। शतशृङ्गं महाराज! तापसः समतप्यत" इत्युक्तेः शतशृङ्गपर्व्वतसमीपे हंसकूटानन्तरं तत्सरः इति गम्यते। "हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरः प्रति" इति हरिवं० १५७ उक्तेश्च हंसकूटसन्निकटत्वमस्यावगम्यते। पुरुषोत्तममूर्त्तिप्रकाशकथापरः पुरुषोत्तमशब्दे तद्विवृतिर्वक्ष्यते।

**इन्द्रद्रु** पुं० इन्द्रस्य इन्द्रध्वजार्थो द्रुः। अर्जुनवृक्षे। तस्य तद्ध्वजनिर्माणे प्रथमोपात्तत्वात् तथात्वम्। इन्द्रध्वजशब्दे विवृतिः। इन्द्रनामा द्रुः। २कुटजवृक्षे राजनि०।

**इन्द्रद्रुम** न० इन्द्रद्रुवत् विग्रहः। अर्ज्जुनवृक्षे शब्दर०।

**इन्द्रधनुस्** न० इन्द्रे इन्द्रस्वामिके मेघे धनुरिव। इन्द्रायुध शब्दे वक्ष्यमाणे पदार्थे "विद्युतोऽशनिमेघांश्च रोहितेन्द्र धनूंषि च" मनुः। तस्य ऋजुत्वे रोहितत्वम्। वक्रत्वे इन्द्रधनुरिति भेदः।

**इन्द्रध्वज** पुं० इन्द्रस्य तत्सन्तोषार्थो ध्वजः। भाद्रशुक्लद्वादश्यां स्वराज्ये वृष्ट्यादिशस्यवृद्ध्यर्थं तत्प्रीतये राज्ञा क्रियमाणे ध्वजे तदुत्पत्तितत्करणप्रकारादि दर्शितं वृहत्संहितायां यथा

"ब्रह्माणमूचुरमरा भगवन्नशक्ताः स्म नासुरान् समरे। प्रतियोधयितुमतस्त्वां शरण्य शरणं समुपयाताः। देवानुवाच भगवान् क्षीरोदे केशवः स वः केतुम्। यं दास्यति तं दृष्ट्वा नाजौ स्थास्यन्ति वो दैत्याः। लब्धवराः क्षीरोदं गत्वा ते तुष्टुवुः सुराः सेन्द्राः। श्रीवत्साङ्कं कौस्तुभमणिकिरणोद्भासितोरस्कम्। श्रीपतिमचिन्त्यमसमं समन्ततः सर्वदेहिनां सूक्ष्मम्। परमात्मानमनादिं विष्णुमविज्ञातपर्यन्तम्। तैः संस्तुतः स देवस्तुतोष नारायणो ददौ चैषाम्। ध्वजमसुरसुरवधूमुखकमलवनतुषारतीक्ष्णांशुम्। तं विष्णुतेजोभवमष्टचक्रे रथे स्थितं भास्वति रत्नचित्रे। देदीप्यमानं शरदीव सूर्य्यं ध्वजं समासाद्य मुमोद शक्रः। सकिङ्किणीजालपरिष्कृतेन स्रक्छत्रघण्टापिटकान्वितेन। समुच्छ्रितेनामरराड् ध्वजेन निन्ये विनाशं समरेऽरिसैन्यम्। उपरिचरस्यामरपो वसोर्ददौ चेदिपस्य वैणवीम्। यष्टिं तां स नरेन्द्रो विधिवत्सम्पूजयामास। प्रीतो मखेन मघवान् प्राहैवं ये नृपाः करिष्यन्ति। वसुवद्धेमवन्तस्ते भुवि सिद्धाज्ञा भविष्यन्ति। मुदिताः प्रजाश्च तेषां भयरोगविवर्जिताः प्रभूतान्नाः। ध्वज एव चाभिधास्यति जगति निमित्तैः फलं सदसत्। पूजा तस्य नरेन्द्रैर्वसुहङ्किणयादिभिर्यथा पूर्वम्। शक्राज्ञया प्रयुक्ता तामागमतः प्रवक्ष्यामि। तस्य विधानं शुभकरणदिवस-

सौधर्म्मे षोडशियम् भवेत् । यदा कलानिधिः क्वापि दर्शेऽदृश्यत्वमावहेत् । तदा स्वश्रेयसीं ज्योत्स्नां सौधेषु निगूहयेत् । यद्रत्नभित्तौ लोकस्य स्वमन्ययोषिदिहशङ्किता । सुधा नाशु विवेश्निलमपि स्वां चित्रशालिकाम् । हर्म्येषु नीलमणिभिर्निर्मितेषु निर्भयम् । स्वर्लोकमानमाधाय तमोऽहःस्वपि तिष्ठति । चन्द्रकान्तशिलाजालस्रुतमालामलं जलम् । तत्र चादाय कलशैर्नन्यस्यन्त्यत्र जनाः । कुविन्दा न च सन्त्यत्र न चात्र पट्टतोहराः । चैलान्यलङ्कृताम्यत्र यतः कल्पद्रुमार्पणात् । गणका नात्र विद्यन्ते चिन्ताविद्याविशारदाः। यतश्चिन्तन्ति सर्वेषां चिन्तां चिन्तामणिर्द्रुतम् । सूपकारा न सन्त्यत्र रसपाकविचक्षणाः । दुग्धे सर्वरसानेका कामधेनुरतोऽनिशम् । कीर्त्तिरुच्चैःश्रवायस्य सर्वतो वाजिराजिषु । रत्नरुच्चैःश्रवाः सोऽत्र हयानां पौरुषाधिकः । ऐरावतो दन्तिवरश्चतुर्दन्तोऽत्र राजते । द्वितीय इव कैलासो जङ्गमः स्फटिकोज्ज्वलः । तरुरत्नं पारिजातः स्त्रीरत्नं चोर्वशी त्विह । नन्दनं वनरत्नं च रत्नं मन्दाकिनी ह्यपाम् । त्रयस्त्रिंशत् सुराणां या कोटिः श्रुतिसमीरिता । प्रतीक्षते सावसरं सेवार्थं प्रत्यहं त्विह । स्वर्गेष्विन्द्रपदादन्यस्य विशिष्येत किञ्चन । यदस्ति लोक्याभैश्वर्यं न च तुल्यमनेन हि । अश्वमेधसहस्रस्य लभ्यं विनिमयेन यत् । किन्तेन तुल्यमन्यत् स्यात् पवित्रमथवा महत् । अर्चिष्मती संयमनी पुण्यवत्यमलावती । गन्धवत्यलकैशी च नैतत्तुल्या महर्द्धिभिः । अयमेव महत्वात्त्वयमेव दिवस्पतिः । शतमन्युरयं देवो नामान्यन्येतानि नामतः । यत्रापि लोकपाला ये तदेनं समुपासते । नारदाद्यैश्च निवरैर्यशोगाथाभिरिज्यते । एतत्स्वर्ग्येण सर्वेषां लोकानां श्रेयमिष्यते । पराजयान्महेन्द्रस्य त्रैलोक्यं स्यात् पराजितम् । दनुजा मनुजा दैत्याश्च पन्नगा यमंयमाः । गन्धर्वयक्षरक्षांसि माहेन्द्रपदलिप्सवः । नगराद्यामहीपाला वाजिमेधविधायकाः । शतवन्तो महायत्नं शक्रैश्वर्यलिप्सवः । निष्प्रत्यूहं क्रतुशतं यः कश्चित् कुरुतेऽवनौ । जितेन्द्रियोऽमरावत्यां स प्राप्नोति पुलोमजाम् । अथवाप्यनाथगता वसन्त्यत्र महीभुजः । ज्योतिष्टोमादिभिर्यागैर्यजन्त्यपि ते द्विजाः । तुलापुरुषदानादि महादानानि षोडश । ये यच्छन्त्यमलात्मानस्ते भवन्त्यमरावतीम् । अक्लीवसादिनो वीराः संग्रामेष्वपलायिनः । निःशङ्का वीरशयने तेऽत्र तिष्ठन्ति भूभुजः । इत्यादेशात् समाख्याता महेन्द्रनगरीस्थितिः । वायजूकावमन्यत्र सर्वविद्याविशारदाः'' १० अ० । ''अतिथिस्त्विन्द्रलोकेशः'' इति मनुना अतिथिपरिचर्याभिरपि तत्प्राप्तिरुक्ता । एवं राजसूययज्ञेनापि तत्प्राप्तिः भा०स० उक्ता । शक्रलोकादयोऽप्यत्र ।

इन्द्रवंशा स्त्री ''स्यादिन्द्रवंशा ततजैरसंयुतैः'' वृत्त०र० उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे ।

इन्द्रवज्रा स्त्री ''स्यादिन्द्रवज्रा यदि तौ जगौ गः'' वृत्त०र० उक्ते एकादशाक्षरपादके वर्णवृत्तभेदे ।

इन्द्रवल्ली स्त्री इन्द्रप्रिया वल्ली शाक०त० । पारिजातलतायाम् ''सोमवल्लीमिन्द्रवल्लीं शमीं विल्वस्य कण्टकान्'' सुश्रु० । (राखालशसा) २ इन्द्रवारुण्यां लतायाञ्च इन्द्रवल्लरीत्यप्यत्र ।

इन्द्रवस्ति पु० इन्द्रस्यात्मनो वस्तिरिव । जङ्घामध्यभागे । ''इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोडशाङ्गुलः'' सक्थिमर्म्माणि क्षिप्रतलहृदयकूर्चकूर्चशिरोगुल्फेन्द्रवस्तिजान्वूर्व्वीलोहिताक्षाणि विटपञ्चेति'' विभज्य ''पार्ष्णिं प्रति जङ्घामध्य इन्द्रवस्तिर्नाम तत्र शोणितक्षये मरणम्'' इति च सुश्रु० । अतोऽस्य जीववसतिस्थानत्वात्तथात्वम् ।

इन्द्रवारुणी स्त्री इन्द्रस्यात्मनो वारुणीव प्रिया । (राखालशसा) तिक्तरसायां श्वेतमूलायां पीतपुष्पायां लतायाम् । स्वार्थे कन् । इन्द्रवारुणिकाप्यत्रैवार्थे ।

इन्द्रवीज न० इन्द्रस्य कुटजस्य वीजम् । इन्द्रयवे । ''वत्सेन्द्रवीजं त्रिफलाकपिर्मांसरसाम्बुभिः'' सुश्रु० ।

इन्द्रवृक्ष पु० ६त० देवदारुवृक्षे जटाधरः । तस्य इन्द्रध्वजहेतुत्वात्तथात्वम् । तस्येन्द्रध्वजसाधनत्वं इन्द्रध्वजशब्दे उक्तम् ।

इन्द्रवृद्धा स्त्री ''अथातः क्षुद्ररोगान् व्याख्यास्याम'' इत्युपक्रम्य । ''अजगल्लिकेन्द्रवृद्धेत्यादि विभज्य'' । ''पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम् । इन्द्रवृद्धान्तु तां विद्याद्वातपित्तोत्थितां भिषक्'' सुश्रुतोक्तलक्षणे क्षुद्ररोगभेदे । ''शिरामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्दभम् । इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा । पित्तजस्य विसर्पस्य क्रियया साधयेत् भिषक्'' इति सुश्रु०

इन्द्रव्रत न० इन्द्रस्येव वर्षणे व्रतम् । ''वार्षिकांश्चतुरो मासान् यथेन्द्रोऽप्यभिवर्षति । तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्'' इति मनूक्ते प्रजापालने राजधर्मभेदे ।

इन्द्रशत्रु पु० इन्द्रः शत्रुः शातयिता यस्य । वृत्रासुरे । वृत्रासुरस्य तथात्वकथा यथा ''स त्वष्टा चुक्रोध । कुविन्नोऽनुपहूतः सोममभक्षदिति स स्वयं यज्ञवेशसं चक्रे स योद्रोणकलशे शुक्रः परिशिष्ट आस तं प्रवर्त्तयाञ्चकारेन्द्रशत्रु-

र्द्धस्वेति सोऽग्निमेव प्राप्य सम्बभूवान्तरेव स म्बभूवेत्युहैक आहुः अग्नीषोमावेवाभि सम्बभूव सर्वाविद्याः सर्वं यशः सर्वमन्नाद्यं सर्वां श्रीम् । स यद्वर्तमानः समभवत् । तस्मा-द्वृत्रोऽथ यदपात् समभवत्तस्माद्दहिस्तं दनुश्च दनायुश्च । मातेव च पितेव च परिजगृहतुस्तस्माद्दानव इत्याहुः अथ यदब्रवीदिन्द्रशत्रुर्वर्धस्वेति तस्मादुहैनमिन्द्र एव ज-घानाथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वदु ह स एवेन्द्रमहनिष्यत्" शत० ब्रा० १,६,३,८,९,१०, "इन्द्रशत्रु-रिति पूर्वपदोदात्ततयेन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं कृत्वा मन्त्रं प्रयुक्तवानतस्तमिन्द्रो जघान । यद्यसौ अन्त्यो-दात्ततया तत्पुरुषसमासेन, इन्द्रस्य शत्रुरिति व्यस्तनि-र्देशेन वा ब्रूयात्तदा निश्चितमेव स इन्द्रं हन्यात्" इति मा० भा० तथा च षष्ठीतत्पुरुषेऽन्तोदात्तस्वरः तथात्वे इन्द्रस्य शत्रुरित्यर्थको भवेत् बहुव्रीहौ तु पूर्वपदस्वरतेति तथा तेन प्रयोगात् तमेव इन्द्रोजघान "अतएव वेदे स्वरहीनतयोच्चा-रणे यजमानस्यानिष्टं फलं भवति यथोक्तं शिक्षायाम् । "मन्त्रोहीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थ-माह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" । उक्तश्रुत्यनुसारिणी कथा भाग० यथा त्वष्टुः पुत्रस्य विश्वरूपस्य गुणादिकमुपवर्ण्य "तस्यासन् विश्वरूपस्य शिरांसि त्रीणि भारत । सोमपीथं सुरा-पीथमन्नादमिति शुश्रुम । स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः । अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ! । स एव हि ददौ भागं परोक्षमसुरान् प्रति । यजमानो ऽवहद्भागं मातृस्नेहवशानुगः । तद्देवहेलनं तस्य धर्मा-लीकं सुरेश्वरः । आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिन-द्रुषा । सोमपीथं तु यत्तस्य शिर आसीत् कपिञ्जलः । क-लविङ्कः सुरापीथमन्नादं यत् स तित्तिरिः । ब्रह्महत्या-मञ्जलिना जग्राह यदपीश्वरः । संवत्सरान्ते तदघं भूतानां स विशुद्धये । भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः । भूमिस्तुरीयं जग्राह खातपूरवरेण वै । ईरिणं ब्रह्महत्या-या रूपं भूमौ प्रदृश्यते । तुर्यं छेदविरोहेण वरेण जगृहु-र्द्रुमाः । तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते । शश्वत् कामवरेणांहस्तुरीयं जगृहुः स्त्रियः । रजोरूपेण तास्वं-होमासिमासि प्रदृश्यते । द्रव्यभूयोवरेणापस्तुरीयं जगृहु-र्मलम् । तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् । हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे । इन्द्रशत्रो विवर्द्धस्व मा चिरं जहि विद्विषम् । अथान्वाहार्यपचनादुत्थितो घोरदर्शनः । कृतान्त इव लोकानां युगान्तसमये यथा । विष्वग्विवर्द्धमानं तमिषुमात्रं दिने दिने । दग्धशैल-प्रतीकाशं सन्ध्याभ्रानीकवर्चसम् । तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् । देदीप्यमाने त्रिशिखे शूल आरो-प्य रोदसी । नृत्यन्तमुन्नदन्तञ्च चालयन्तं पदा महीम् । दरीगम्भीरवक्त्रेण पिबता च नभस्तलम् । लिहता जिह्वय-र्क्षाणि ग्रसता भुवनत्रयम् । महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः । वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश । येनावृता इमे लोकास्तपसा त्वाष्ट्रमूर्त्तिना । स वै वृत्र इति प्रोक्तः पापः परमदारुणः भा० ६स्क०८अ०। ततः "स इन्द्रशत्रुः कुपितोभृशं तया महेन्द्रवाहं गदयोरुविक्रमः इति" तयोर्युद्धमभिधाय "भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः । उच्चकर्त्त शिरः शत्रोर्गिरिशृङ्गमिवो-च्छ्रितम्" भाग० ६स्क० १०अ० इन्द्रेण तस्य हननं वर्णितम् ।

**इन्द्रशलभ** पु० इन्द्रजातः वर्षाकालजातः शलभः । इन्द्रगोपे ।

**इन्द्रसारथि** पु० ६त० । इन्द्रस्य सारथौ मातलौ ।

**इन्द्रसावर्णि** पु० चतुर्द्दशे मनौ । "मनुर्वा इन्द्रसावर्णिश्चतु-र्द्दशमएष्यति । उरुगम्भरबुद्ध्याद्या इन्द्रसावर्णिवीर्यजाः । पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति । अग्नि-बाहुः शुचिः शुक्रो मागधाताद्यास्तपस्विनः । सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः । वितानायां महाराज ! क्रिया-तन्तून् वितायिता" भा० ८स्क० १३अ०। हरिवंशे तु "भूत्या-ञ्चोत्पादितो देव्यां भौत्योनाम रुचेः सुतः" इति भौत्योत्पत्ति मुक्त्वा "चतुर्द्दशेऽथ पर्याये भौत्यस्यैवान्तरे मनोः । अग्नीध्रः काश्यपश्चैव पौलस्त्योमागधस्तथा । भार्गवश्चाग्निबाहु शुचिराङ्गिरसस्तथा । युक्तश्चैव तथात्रेयः शुक्रोवासिष्ठ एव च । अजितः पौलहश्चैव मान्त्याः सप्तर्षयश्च ते इति" चोक्त्वा "देवतानां गणाः प्रोक्ताः पञ्च वै भरतर्षभ । तरङ्गभीरु र्वप्रश्च तरस्वानुग्रएव च । अभिमानी प्रवीणश्च सुतः संक्रन्दनस्तथा । तेजस्वी सरयश्चैव भौत्यस्यैते मनोः सुताः । भौत्यस्यैवाधिकारे तु पूर्णं कल्पस्तु पूर्य्यते" । अग्निपु० च "मनुश्चतुर्द्दशो भौत्यः शुचिरिन्द्रोभविष्यति । चाक्षुषाद्याः सुरगणा अग्निबाह्वादयो द्विजाः । चतुर्दशस्य भौत्यस्य पुत्रा उरुमुखा मनोः" इत्युक्तं तेन नामभेदविरोधः कल्पभेदात् समाधेयः ।

**इन्द्रसुत** पु० ६त० । १जयन्ते, २मध्यमपाण्डवे पार्थे, ३अर्जुन वृक्षे, ४वालिनामके वानरे च । इन्द्रपुत्रादयोऽप्यत्र

**इन्द्रसुरस** पु० इन्द्रः कुटजवृक्ष इव सुरसः पर्णरसः । (निसिन्दा)

शिम्बागरे । अमरे इन्द्रसुरिसेति पाठान्तरे पु० । तत्रैव

**इन्द्रसुरा** स्त्री इन्द्रस्यात्मनः सुरेव प्रिया । (राखालशशा) इन्द्रवारुण्याम् राजनि० "वार्त्ताकुशिम्बीन्द्रसुरापटोलेत्यादि" सुश्रु० । "गुडूचीन्द्रसुरा तथा कुक्कसर्षपनागरैः । तैश्चैभिः श्वनैः पक्वं सुराम्लादिरसाप्लुतम्" सुश्रु० ।

**इन्द्रसूक्त** न० इन्द्रदेवताकं सूक्तम् । ऋग्वेदान्तर्गते सूक्तभेदे तच्च "इन्द्रं विश्वा अवीवृधन्" इत्यादि एकादशर्चम् । ऋ० १म० ११सूक्तम् एतच्च तत्तत्कर्मणि इन्द्रस्तुत्यर्थं पठनीयं यथा द्वारपालेन तुलादानादौ मण्डपस्य पूर्वदिशि पाठ्यञ्च "श्रीसूक्तं पावमानञ्च सोमसूक्तं सुमङ्गलम् । शान्त्यध्यायञ्चेन्द्रसूक्तं रक्षोघ्नं चेति बह्वृचौ । पूर्वं द्वारं समाश्रित्य पठेतामिति निश्चयः" विधानपारि०पु० । तच्च सूक्तं तुलादानादिपद्धतौ ९२पृष्ठेऽस्माभिः प्रदर्शितम् ।

**इन्द्रसेन** पु० इन्द्रस्य सेना इव सेना यस्य । १ नृपभेदे स च परिक्षितः पुत्रभेदः "परिक्षितोऽभवत् पुत्राः सर्वे धर्मार्थकोविदाः । कक्षसेनोग्रसेनौ च चित्रसेनश्च वीर्यवान् । इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः" भा०आ०९४अ० अयञ्च प्रसिद्धात् परिक्षितः प्राचीनः कुरुवंश्यएव इन्द्रप्रभवन्दे विहितः । युधिष्ठिरस्य २ भृत्यभेदे । "इन्द्रसेनादयश्चैव भृत्याः परिचतुर्दश । रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः" भा०व०१अ० "इन्द्रसेनो विशोकश्च पुरुश्चार्जुनसारथिः । अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकारिणः" भा०स०३२अ० ।

**इन्द्रसेना** स्त्री ६त० । इन्द्रस्य १सेनायाम् । २वध्र्यश्वमातरि मौद्गल्यस्य स्त्रीरूपपत्न्याम् । "मौद्गल्यस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः । इन्द्रसेना यतोगर्भं वध्र्यश्वं प्रत्यपद्यत" हरि०३२अ० "नारायणीवेन्द्रसेना बभूव वश्या नित्यं मुद्गलस्याजमीढ" भा०व०११३अ० ।

**इन्द्रसेनानी** पु० इन्द्रसेनां नयति नी-क्विप् ६त० । शक्रस्य सेनापतौ कार्त्तिकेये तत्कथा । कार्त्तिकेन पराजितेनेन्द्रेण कार्त्तिकाय इन्द्रत्वपदं दातुमीहमानेन सह तस्य उक्तिप्रत्युक्तिवर्णनेन तेन तत्सेनापत्यमङ्गीकृतमेतत् भा०व०२८अ० वर्णितं यथा "शक्र उवाच भवस्वेन्द्रो महाबाहो! सर्वेषां नः सुखावहः । अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम! । शाधि त्वमेव त्रैलोक्यमव्यग्रो विजये रतः । अहन्ते किङ्करः शक्रोऽनमस्वेन्द्रत्वमीप्सितम् । बलं तवाद्भुतं वीर! त्वं देवानामरीन् जहि । अवज्ञास्यन्ति मां लोका वीर्येण तव विस्मिताः । इन्द्रत्वं तु स्थितं वीरे! बलहीनं पराजितम् । आवयोश्च मिथोभेदं प्रयतिष्यन्त्यतन्द्रिताः । भेदिते च त्वयि विभो! लोकोऽद्वैधमुपैष्यति । द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तदा । विग्रहः संप्रवर्त्तेत भूतभेदान्महाबल! । तत्र त्वं मां रणे तात! यथाश्रद्धं विजेष्यसि । तस्मादिन्द्रो भवानेव भविता मा विचारय । स्कन्द उवाच । त्वमेव राजा भद्रन्ते त्रैलोक्यस्य ममैव च । करोमि किञ्च ते शक्र! शासनं तद्ब्रवीहि मे । इन्द्र उवाच । अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल! । यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया । यदि वा शासनं स्कन्द! कर्त्तुमिच्छसि मे शृणु । अभिषिच्यस्व देवानां सैनापत्ये महाबल । स्कन्द उवाच । दानवानां विनाशाय सैनापत्येऽभिषिञ्च माम्" । भा०व०२२८अ० शक्रसेनापतिशक्रसेनाधिपादयोऽप्यत्र । "शक्रसेनापतिः स्कन्दः" पु० ।

**इन्द्रस्तुत्** पु० इन्द्रः स्तूयतेऽत्र । इन्द्रस्तुत्यधिकरणे उक्थ्ययज्ञे द्वितीयाहे "इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति । इन्द्रोवै सर्व्वे देवाः सर्वेषां देवानामाप्त्यै तस्यैन्द्राग्नचा भवन्त्यैन्द्र्यः पुरोरुचः सर्व्वमैन्द्रमसदिति" शत०,१२,७, १,४, अयमुक्थ्यसाध्यः तदुपक्रमएव कात्या०२१,१,४, । "अथ उक्थ्या अग्निष्टुदिन्द्रस्तुत् सूर्य्यस्तुत्" इत्यभिधानात् ।

**इन्द्रस्तोम** पु० अतिरात्राङ्गे यागभेदे स च कात्या० २४,४,६, । अतिरात्रोपक्रमेण "इन्द्रस्तोमो विश्वजिता" विश्वजितः स्थाने इन्द्रस्तोमः कार्य्यः" कर्क० । पूर्व्वोक्तसूपक्रम्य तत्प्रकारादि तत्र दर्शितम् । अयञ्च राज्ञा कार्य्यः "इन्द्रस्तोमो राजयज्ञः" "सहस्रं दक्षिणा" कात्या० २२,११,१५,१६, स च उक्थ्यसाध्यः "उक्थ्यः" कात्या० १२,११,१७ उक्तेः ।

**इन्द्रहू** स्त्री इन्द्रः हूयतेऽनया ह्वे-क्विप् ६त० । शक्राह्वानसाधने ऋग्भेदे । कर्त्तरि क्विप् । २तदाह्वानकर्त्तृऋषिभेदे च । ततो गर्गा० अपत्ये यञ् । ऐन्द्रहव्यस्तदपत्ये पुंस्त्री ।

**इन्द्रा** स्त्री इदि-रन् । १फणिज्झकवृक्षे (काटाजमीर) मेदिनिः (राखालशशा) २इन्द्रवारुण्याम् । राजनि० ३शच्याम् शब्दर० ।

**इन्द्राग्नि** पु० द्वि०व० । इन्द्रश्चाग्निश्च देवताद्व० । शक्राग्न्योर्मिलितयोर्देवयोः । "इन्द्राग्नी यत्र हूयेते" म०त० स्मृतिः "पुरोहितकामस्येन्द्राग्न्योः स्तोमः" कात्या०२२,११,२०,२१ उक्तेः । तत्र स्तोमे पुरोहितस्य राज्ञो वा सह वाऽधिकारः तत्र ब्राह्मणस्य दक्षिणा चतुर्विंशतिगावः राज्ञः अष्टचत्वारिंशद्गावः" कर्क० तौ देवते अस्य अण् । ऐन्द्राग्नं तद्देवताके हविषि शस्त्रे च । इन्द्रस्य पर्जन्य-

स्याग्निः । मेघभवे विद्युदग्न्यादौ पु० । २इन्द्राग्निधूमः ।

**इन्द्राग्निधूम** पु० इन्द्राग्नेः पर्ज्जन्याग्नेर्धूम इव । हिमे धूमस्य यथाऽग्निप्रभवत्वम् तथा जलमयहिमस्य पर्ज्जन्याग्निसम्पर्कादेव जायमानत्वात् तथात्वम् ।

**इन्द्राणी** स्त्री इन्द्रस्य पत्नी–ङीप् आनुक् च । १इन्द्रपत्न्यां शच्याम् "अदित्यै रास्नासीन्द्राण्या उष्णीषः" यजु० ३८,२ । "नैवेन्द्राणी न रुद्राणी न भवानी न रोहिणी" भट्टिः यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ" भा० आ० १८८ अ० । "आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः" भा० व० ४१अ० । इन्द्रं परमैश्वर्य्यमानयति आ+नी–बा०ड गौ०ङीप् ।"ऐश्वर्य्यं परमं यस्या वशे चैव सुरासुराः। इदि च परमैश्वर्य्ये इन्द्राणी तेन सा स्मृता" इति देवीपु०उक्तनिरुक्तिर्वा । २दुर्गाशक्तिभेदे ।"ब्रह्माणीन्द्राणि ! रुद्राणि ! भूतभव्ये ! यशस्विनि ! त्राहि मां सर्व्वदुःखेभ्यो नारायणि ! नमोऽस्तु ते" हरिवं० १७८अ० "सा च अष्टमातृकान्तर्गता ऐन्द्रीत्यपरपर्य्याया तस्याश्च इन्द्रस्वमातृकात्वादपि तथात्वम् । इन्द्रइव आनयति जीवयति रोगोपशमनेन अन+णिच्–अच् पूर्व्वपदा०णत्वम् । ३स्थूलैलायां राजनि० । ४स्त्रीणां करणे ५नीलसिन्दुवारवृक्षे (शेफाल) मेदि० । (निसिन्दा) ६वृक्षे अमरः, स्वार्थे कन् । इन्द्राणिकाप्युक्तार्थेषु ।

**इन्द्राहश** पु० । इन्द्रस्येवादर्शनमस्य आ+दृश–टक् ६त० । इन्द्रगोपे कीटे ततः ताला० विकारे अञ् । ऐन्द्राहश० । तद्विकारे त्रि० ।

**इन्द्रानुज** पु० ६त० । १वामने स हि अदित्यामिन्द्रजन्मोत्तरं कश्यपेनोत्पादितः तदवतारत्वात् २ नारायणे च "इन्द्रानुजानुचरभूपतयोऽध्यवात्सुः" माघः । इन्द्रावरजादयोऽप्यत्र ।

**इन्द्राभ** पु०कुरुवंश्यधृतराष्ट्रस्य पुत्रभेदे अयञ्च धृतराष्ट्रः आन्विकेयादन्यः तथा हि "ततः संवरणात् सौरी सुषुवे तनयं कुरुम्" इत्युपक्रम्य तस्य "अविक्षितमभिष्यन्तमित्यादिना" अष्टौ अविक्षिदादीन् सुतानुक्त्वा "अविक्षितः परिक्षित्" इत्यादिना तस्यापि परिक्षिदादीनष्टौ सुतानुक्त्वा "जनमेजयस्य तनया भुवि तत्र महाबलाः । धृतराष्ट्रः प्रथमजः पाण्डुर्वाह्लीक एव च । निषधश्च महातेजास्तथा जाम्बूनदो बली" इत्यादिना जनमेजयस्याष्टौ पुत्रानुक्त्वा धृतराष्ट्रोऽथ राजासीत् तस्य पुत्रोऽथ कुण्डिकः हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः । हविश्रवास्तथेन्द्राभः भूमन्युश्चापराजितः" इति भा० आ० ९४अ०उक्तः ।

**इन्द्रायुध** न०६त० । १शक्रस्यास्त्रे वज्रे "सनादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम्" रघुः । इन्द्रे तदधिष्ठितमेघे आयुधमिव । सूर्य्यकिरणसंपर्कात् मेघे जायमाने २धनुराकारे-पदार्थभेदे तल्लक्षणाद्युक्तं वृ०स० "सूर्य्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे । वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः । केचिदनन्तकुलोरगनिःश्वासोद्भूतमाहुराचार्य्याः । तद्यायिनां नृपाणामभिमुखमजयावहं भवति । अच्छिन्नमवनिगाढं द्युतिमत् स्निग्धं घनं विविधवर्णम् । द्विरुदितमनुलोमं च प्रशस्तमम्भः प्रयच्छति च । विदिगुद्भूतं दिक्स्वामिनाशनं व्यभ्रजं मरककारि । पाटलपीतकनीलैः शस्त्राग्निक्षुत्कृता दोषाः । जलमध्येऽनावृष्टिर्भुवि शस्यवधस्तरौ स्थिते व्याधिः । वल्मीके शस्त्रभयं निशि सचिववधाय धनुरैन्द्रम् । वृष्टिं करोत्यवृष्ट्यां वृष्टिं वृष्ट्यां निवारयत्यैन्द्राम् । पश्चात् सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे । चापं मघोनः कुरुते निशायाम् आखण्डलायां दिशि भूपपीडाम् । या म्यापरोदक्प्रभवं निहन्यात् सेनापतिं नायकमन्त्रिणौ च । निशि सुरचापं सितवर्णाद्यं जनयति पीडां द्विजपूर्व्वाणाम् । भवति च यस्यां दिशि तद्देशं नरपतिमुख्यं न चिराद्धन्यात्" । "न दिशीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुधः" मनुः "इन्द्रायुधद्योतिततोरणाङ्कम्" रघुः । ततः ताला० विकारे अञ् । ऐन्द्रायुधस्तद्विकारे त्रि० ।

**इन्द्रारि** पु० ६त० । असुरे ।

**इन्द्रालिश** पु० इन्द्रमिन्द्रधनुरालिशति लिश–तीक्ष्णे–क । इन्द्रगोपे कीटभेदे तस्य विकारः ताला० अञ् । ऐन्द्रालिशस्तद्विकारे त्रि० ।

**इन्द्रावसान** पु० इन्द्रस्य पर्जन्यस्यावसानमत्र । मरुदेशे । ततः उत्सादि० भवार्थे अञ् । ऐन्द्रावसानः मरुभवे त्रि०

**इन्द्राशन** पु०इन्द्राय ऐश्वर्य्याय अश्यते भुज्यते अश–कर्म्मणि ल्युट् । (सिद्धि) १भङ्गायाम् शब्दर० । तत्सेवने हि राज्यमपि तुच्छं भवतीति तस्यास्तथात्वम् । इन्द्रः इन्द्रधनुरिव अश्नुते व्याप्नोति रक्तवर्णफलत्वात् । (कुँच) २गुञ्जावृक्षे हारा० ।

**इन्द्रासन** पु० इन्द्र आत्मा आस्यते विक्षिप्यतेऽनेन अस–क्षेपे करणे ल्युट् । (सिद्धि) १ संविदावृक्षे तत्सेवने हि आत्मनोविक्षिप्तत्वात्तस्य तथात्वम् । पञ्चमात्रिकस्य प्रस्तारे आदिलघुके गणभेदे २ अष्टमे भेदे न० ।

**इन्द्रिय** न० इन्द्रस्य आत्मनो लिङ्गं इन्द्र+घ । ज्ञान-

क्रियासाधने १ चक्षुरादौ २ हस्तादौ च। "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" पा० तस्या नेकविधार्थकता दर्शिता इतिशब्दः प्रकारार्थे इन्द्रेण दुर्जयमिन्द्रियमित्यपि" सि० कौ०। अत्र सूत्रे इन्द्रेण परमात्मना दृष्टमित्युक्तिरपि इन्द्रियस्य चक्षुरादीनां प्रत्यक्षागोचरतां निरस्यति। यद्वा इन्द्रेणात्मना दृष्टत्वात्मत्वेनाभिमतं काणोऽहं बधिरोऽहमित्याद्यभिमतम्। "एतस्माज्जायते प्राणोमनः सर्व्वेन्द्रियाणि चेति" श्रुतेः इन्द्रियस्य ईश्वरसृष्टत्वम्। इन्द्रदत्तमिति इन्द्र ऐश्वर्य्ये दत्तोऽस्मै स्वस्वकार्य्ये हि तेषामैश्वर्य्यमीश्वरेण दत्तम् अतएव तानि बलादिव गृहीत्वा विषयेषु प्राणिनं स्वस्वविषयग्रहणाय प्रवर्त्तयन्ति। असति ह्यैश्वर्य्ये न तद् सम्भवति। चक्षुरादीनामात्मानुमापकत्वञ्चेत्थम्। करणव्यापारः सकर्त्तृकः करणव्यापारत्वात् छिदिक्रियायां वास्यादिव्यापारवदिति करणव्यापारेण कर्त्तुरनुमानसम्भवे तत्साजात्यात् ज्ञानक्रियाकरणमपि सकर्त्तृकं करणत्वादिति चक्षुरादिना ज्ञानसाधनेनात्मनोऽनुमानम्। तथा इन्द्रियस्याप्रत्यक्षत्वेऽपि ज्ञानक्रिया सकरणिका क्रियात्वात् छिदिक्रियावत् इत्यनुमानम् तत्सत्त्वे प्रमाणम्। तत्तन्मतभेदेन इन्द्रियस्य भौतिकत्वाभौतिकत्वसर्वगतत्वासर्वगतत्वप्राप्यकारित्वाप्राप्यकारित्वादिकम् आत्मशब्दे ६६५ पृष्ठे प्रपञ्चेन परीक्षितम्। इन्द्रियञ्च द्विविधं ज्ञानकर्म्मेन्द्रियभेदात् तत्र श्रोत्रादीनि ज्ञानेन्द्रियाणि हस्तादीनि कर्मेन्द्रियाणि। "श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी। पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता" मनुः। "नासिकालोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च। हस्तौ पायुरुपस्थश्च वाक्पादौ च दशैव तु" शारदा०। "बुद्धीन्द्रियाणि श्रोत्रघ्राणरसनत्वगाख्यानि। वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः" सां० का०। एतानि च बाह्येन्द्रियाणि। "उभयात्मकमत्र मनः संकल्पकमिन्द्रियञ्च साधर्म्म्यात्" सां०का० मनस्तूभयविधकरणोपकारित्वात् करणम्। तत्र ज्ञानकर्म्मव्यापारसामान्ये कारणमपि न तत्र करणम् असाधारणकारणस्यैव करणत्वात् रूपादिज्ञाने चक्षुरादीनामिव तस्य असाधारणव्याप्यविशेषाभावात् किन्तु सुखाद्युपलब्धौ असाधारणत्वात् तत्रैवास्य करणत्वमिति नैयायिकादयः। वेदान्तिनस्तु मनसोनेन्द्रियत्वमङ्गीकुर्व्वन्ति तच्च आत्मशब्दे दर्शितम्। अतएव "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति" मनोबुद्ध्योरिन्द्रियात् पृथग्निर्द्देशः। सांख्यमते "सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" सां०का० रजोगुणोपष्टब्धसात्त्विकादेवाहङ्कारात् एकादशेन्द्रियोत्पत्तिरुक्ता तेनाहङ्कारिकाणीन्द्रियाणि। "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" गो०सू० भौतिकानीति नैयायिकाः। "एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि चेति" श्रुतेः आत्मोपादानानीति वेदान्तिनः। अत्र इन्द्रियेभ्यः मनसः पृथग्निर्द्देशादपि मनसोनेन्द्रियत्वम् अतएव कठोपनिषदि गीतायाञ्च "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः" "इन्द्रियाणि हयानाहुर्मनः प्रग्रहमेव चेति" च इन्द्रियमनसोर्भेदनिर्द्देशः"। यथा च तदुत्पत्तिः तथा पञ्चदश्यां दर्शितम् यथा। "तमःप्रधानप्रकृतेस्तद्भोगायेश्वरेच्छया। वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे। सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम्। श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते। तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तत् द्विधा। मनोविमर्शरूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका। रजोंशैः पञ्चभिस्तेषां क्रमात् कर्म्मेन्द्रियाणि तु। वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे" १दीपे। तेषां स्थानकार्य्यादिकमुक्तं तत्रैव २दीपे "श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चेन्द्रियपञ्चकम्। कर्णादिगोलकस्थं तत् प्राप्य धावेत् बहिर्मुखम्। कदाचित् पिहिते कर्णे श्रूयते शब्द आन्तरः। प्राणवायौ जाठराग्नौ जलपानेऽन्नभक्षणे। व्यज्यन्ते ह्यान्तराः स्पर्शा मीलने चान्तरं तमः। उद्गारे रसगन्धौ चेत्यक्षाणामान्तरग्रहः। पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः। कृषिवाणिज्यसेवाद्याः पञ्चस्वन्तर्भवन्ति हि। वाक्पाणिपादपायूपस्थं कर्मेन्द्रियपञ्चकम्। मनो दशेन्द्रियाध्यक्षं हृत्पद्मगोलकस्थितम्। तच्चान्तःकरणं बाह्येष्वस्वातन्त्र्यं विनेन्द्रियैः। अक्षेष्वर्पितेष्वेव गुणदोषविचारकम्। सत्त्वं रजस्तमश्चास्य गुणा, विक्रियते हि तैः। वैराग्यं क्षान्तिरौदार्य्यमित्याद्याः सत्त्वसम्भवाः। कामक्रोधौ लोभयत्नावित्याद्या रजउत्थिताः। आलस्यभ्रान्तितन्द्राद्या विकारास्तमउत्थिताः। सात्त्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः। तामसैर्नोभयं किन्तु वृथायुःक्षपणं भवेत्"। तत्रेन्द्रियाणां कार्य्यभेदा अपि सां०का० दर्शिताः यथा "शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्

स्पर्शान्तानां पञ्चानाम्"। आदिपदात् स्पर्शरूपरसगन्धानां ग्रहणम् तथा च श्रोत्रस्य शब्दग्रहणम्, त्वचः स्पर्शग्रहणम्, चक्षुषो रूपग्रहणम्। जिह्वाया रसग्रहणम्। घ्राणस्य गन्धग्रहणमसाधारणं कार्य्यं भवति। एवं वागादीनां वचनादिकर्म्माण्युक्तानि। "अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्। साम्प्रतकालं बाह्यं, त्रिकालमाभ्यन्तरं करणम्" सां॰ का॰। "अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति। शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसंकल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति। तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्म्मेन्द्रियाणि तु यथास्वं व्यापारेण" सा॰कौ॰। "विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च" मनुः। "शौचमिन्द्रियनिग्रहः" मनुः। "इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ" "इन्द्रियाणि प्रमाथीनि" गीता॰। पञ्च बाह्यानि ज्ञानेन्द्रियाणीति मनुष्याद्यभिप्रायम् क्वचित् जीवे अदृष्टवशात् ततो न्यूनताऽपि। यथा वृक्षाणाम् स्पर्शसाधनत्वगिन्द्रियमात्रम् शङ्खशुक्त्यादीनाम् त्वग्जिह्वे द्वे इन्द्रिये महीलतादीनां त्रीणीन्द्रियाणि। सर्पादीनां चत्वारीन्द्रियाणि तेषां श्रोत्राभावात् कुम्भीरस्य च चत्वारि तस्य जिह्वाभावात् इत्यवधेयम्। एतेषाञ्च जीवानां लिङ्गशरीरसत्त्वेऽपि तत्तद्गोलकस्थानशून्यत्वान्न तत्तत्कार्य्यार्थं वृत्तिः। बौद्धमते गोलकान्येवेन्द्रियाणि। तन्मतं विवरणोपन्यासे दूषितं तच्च ६६६पृ॰ दर्शितम्। २रेतसि ३वीर्य्ये च। "इन्द्रियकामस्य" श्रुतिः "समावदिन्द्रिया भवन्ति" ताण्ड्य॰ "समानसामर्थ्याः" भा॰

**इन्द्रियगोचर** पु॰ इन्द्रियस्य गोचरः विषयः। शब्दादिषु विषयेषु ते हि प्रतिनियतमेकैकस्येन्द्रियस्य ग्राह्या यथा श्रोत्रस्य ग्राह्यः शब्दः, त्वगिन्द्रियस्य स्पर्शस्तद्विशिष्टद्रव्यञ्च, चक्षुषो रूपं तदाश्रयद्रव्यञ्च, रसनायाः रसः, घ्राणस्य गन्ध इत्यादि। एवमन्यान्यपि न्यायादिमते तत्तदिन्द्रियग्राह्याण्युक्तानि यथा "घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः। तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः"। आदिपदात् सुरभिदुर्गन्धत्वयोर्ग्रहणम्। तथा रसत्वमाधुर्य्यादिसहितः। एवं शब्दत्वतारत्वमन्द्रत्वादिसहितः "उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये। विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम्। क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम्। गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः। उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः। रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम्" भाषा॰ सोऽपि उद्भूतस्पर्शोऽपि चकारात् तद्वृत्तिस्पर्शत्वमृदुत्वकठिनत्वादि ग्राह्यम्। एते च बाह्येन्द्रियाणां विषयाः। तेषां मते मनस इन्द्रियत्वात् तद्ग्राह्यास्तत्रैवोक्ता यथा "मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः" एवं सुखत्वदुःखत्वादिकमपि

**इन्द्रियग्राम** पु॰ ६त॰। इन्द्रियसमुदाये "बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति" मनुः। इन्द्रियवर्गादयोऽप्यत्र। "निर्विकार मघुनीन्द्रियवर्गः" माघः।

**इन्द्रियज** त्रि॰ इन्द्रियाज्जायते जन–ड ५त॰। इन्द्रियसन्निकर्षजाते प्रत्यक्षे। "तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्षते" भाषा॰। इन्द्रियजातादयोऽप्यत्र इन्द्रियाणि च विषयसन्निकर्षद्वारा ज्ञाने करणानि विषयसन्निकर्षश्च तत्र व्यापारः व्यापारेणैव तेषां जनकत्वात् ज्ञानानां तज्जन्यत्वम्।

**इन्द्रियज्ञान** न॰ इन्द्रियेण जनितं ज्ञानम्। प्रत्यक्षे ज्ञाने।

**इन्द्रियनिग्रह** पु॰ इन्द्रियाणां निग्रहः यथेष्टं प्रवृत्तानां स्वस्वविषयेभ्यः निवर्त्तनेन निरोधः। इन्द्रियाणां यथेष्टं प्रवृत्तानां स्वस्वविषयेषु प्रसक्तिनिवारणे। स च सर्व्ववर्णसाधारणधर्म्मः "धृतिः क्षमा दयाऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्" मनुः। "इन्द्रियनिग्रहः अप्रतिषिद्धेऽपि विषयेऽनतिप्रसङ्गः" एका॰ त॰ रघु॰। २योगसाधनाङ्गे श्रोत्रादीनां ज्ञानेन्द्रियाणां वागादीनां च कर्म्मेन्द्रियाणां स्वस्वव्यापारेषु अनियोजनरूपे रोधने च। सर्व्वेषामनिरोधे योगसिद्ध्यभावो भङ्ग्या गीतायामुक्तः"। "इन्द्रियाणान्तु सर्व्वेषां यद्येकं क्षरतीन्द्रियम्। तदस्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम्" मनसो निग्रहादेवान्येषां निग्रहो भवति नान्यथा "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि" गीतायां तथोक्तेः। मनोनिग्रहोपायश्च "असंशयं महाबाहो! मनो दुर्निग्रहं चलम्। अभ्यासेन तु कौन्तेय! वैराग्येण च गृह्यते" गीतोक्तेः अभ्यासवैराग्यरूपः। यथेच्छमिन्द्रियप्रसङ्गे पापमप्युक्तम् "विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" या॰स्मृ॰। इन्द्रियजयोऽप्यत्र इन्द्रियजये च शौचमेव हेतुः। यथाह पात॰सूत्रभाष्ययोः "शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः" "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनानि

च” सू० “शुचेः सत्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वम् बुद्धिसत्त्वस्य भवतीति” भा० एष च बाह्य उपायः। आभ्यन्तर उपायस्त्वनेोक्तः। “ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः” पा० सू० “सामान्यविशेषात्मा शब्दादिर्ग्राह्यः तेष्विन्द्रियाणां वृत्तिर्ग्रहणं(१रूपम्)न च तत्सामान्यमात्रग्रहणाकारम् कथमनालोचितः सविषयविशेष इन्द्रियेण मनसानुव्यवसीयेतेति। स्वरूपं पुनः प्रकाशात्मनोबुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिन्द्रियम्। (२रूपम्)तेषां तृतीयं रूपम्। अस्मितालक्षणोऽहङ्कारः तस्य सामान्यस्येन्द्रियाणि विशेषाः। चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः, येषामिन्द्रियाणि साहङ्काराणि परिणामः। पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं संयमः तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः” भाष्यम् तत्फलमपि तत्रोक्तम्। “ततो मनोजवित्वं विकरणभावः प्रधानजयश्च” पा० सू० “कायस्य मनोवदनुत्तमगतिलाभो मनोजवित्वम्। विदेहानाम् (देहानपेक्षाणाम्) इन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभः अतीतानागतदूरस्थबाह्यार्थविषयश्च वृत्तिलाभो विकरणभावः। सर्वप्रकृतिविकारवशित्वं प्रधानभावः इत्येतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते एताश्च करण पञ्चकरूपजयादधिगम्यन्ते” भा० एतासाञ्च बाह्यसिद्धीनां पारम्पर्येण सत्वपुरुषान्यताख्यातिरेव तु मुख्यं फलमिति तत्रैव प्रसिद्धम्।

इन्द्रियवध पु० इन्द्रियाणां वधः स्वस्वकार्य्येषु शक्तिविघातः। इन्द्रियाणां स्वस्वकार्य्यानुकूलशक्तिप्रतिघाते ते च एकादशधा यथाह सां० का० कौमुद्योः “एकादशेन्द्रियबधाः सह बुद्धिबधैरशक्तिरुद्दिष्टा” का० एकादशेन्द्रियबधाः स्वस्वकार्य्यवैकल्यरूपाः तत्र “बाधिर्य्यमित्यादि कौ० वाक्यम् अशक्तिशब्दे ४७२ पृष्ठे उदाहृतम्

इन्द्रियबोधन त्रि० इन्द्रियं बोधयति स्वपानसाध्यवैकल्य बुध+णिच्+ल्यु। स्वपानसाध्यवैकल्यबोधके मद्ये मद्यपाने हि इन्द्रियमात्रस्य स्वस्वकार्य्यव्यापारापाटवकरणात् आत्मवीर्य्याणि बोधयतीति तस्य तथात्वम्। “सर्वं पित्तकरं मद्यम्” इत्युपक्रम्य “पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्”। “कषायमधुरं मद्यं सुगन्धीन्द्रियबोधनम्”। “वातघ्नो मधुरप्रायोहृद्य इन्द्रियबोधनः” सुश्रु०।

इन्द्रियवत् त्रि० इन्द्रियं वश्यतया प्राशस्त्येन वास्त्यस्य मतुप् मस्य वः। १वश्येन्द्रिये २प्रशस्तेन्द्रिये च स्त्रियां ङीप्। इन्द्रियेण तुल्यम् इन्द्रियस्येव इन्द्रिये इव वा वति। इन्द्रियतुल्ये अव्य० इन्द्रियं वीर्य्यमस्त्यस्य मतुप् मस्य वः वेदे पूर्व्वपद नि० दीर्घः। वीर्य्यान्विते। “तेजः पशूनां हविरिन्द्रियावत्” वाज०। “हविष इन्द्रियवान् मदिन्ततम” वाज०। क्वचित् वेदे दीर्घोन। “स इन्द्रमिन्द्रियवत” यजु० १४,२,

इन्द्रियवृत्ति स्त्री ६त०। “शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्” सांख्योक्ते श्रोत्रादीनां शब्दादिषु प्रकाशनार्थे १व्यापारे कर्म्मेन्द्रियाणां २वचनादानादिव्यापारे च। तत्र बुद्धीन्द्रिय वृत्तिश्च इन्द्रियजन्या बुद्धेस्तत्तदाकारेण परिणामः साच निर्विकल्पकस्थानीया इति सा० कौ० समर्थितं तच्च ८२३पृ० आलोचनशब्दे दर्शितम् कर्म्मेन्द्रियवृत्तिश्च वचनादानादिरूपोव्यापारः। मनोरूपेन्द्रियवृत्तिस्तु संकल्पविकल्पाध्यवसायरूपा मनोबुद्ध्योः परिणामभेदः।

इन्द्रियसंप्रयोग पु० इन्द्रियाणां संप्रयोगः स्वस्वविषयेषु प्रयोगःव्यापारणम्। विषयैरिन्द्रियसम्बन्धे असत्ख्यातिशब्दे ५२३पृष्ठे उदा०।

इन्द्रियसन्निकर्ष पु० इन्द्रियस्य स्वस्वविषयैः सह सन्निकर्षः सम्बन्धभेदः। प्रत्यक्षसाधने इन्द्रियस्य स्वस्वविषयैः सम्बन्धभेदरूपे प्रत्यक्षजनकव्यापारे। स च न्यायमते षोढा यथा “विषयेन्द्रियसंबन्धोव्यापारः सोऽपि षड्विधः। द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः द्रव्येषु समवेतानां, तथा तत्समवायतः तत्रापि समवेतानां, शब्दस्य समवायतः। तद्वृत्तीनां समवेतसमवायेन तु ग्रहः। विशेषणतया तद्वदभावानां ग्रहो भवेत्” भाषा०। तथा च द्रव्यस्य प्रत्यक्षे इन्द्रियसंयोगः कारणम् द्रव्यसमवेतगुणकर्म्मजातीनां प्रत्यक्षे इन्द्रियसंयुक्तसमवायः। द्रव्यसमवेतसमवेतानां गुणत्वकर्म्मत्वादीनां प्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवायः। शब्दस्य प्रत्यक्षे श्रोत्रसमवायः शब्दवृत्तिशब्दत्वादेः, श्रोत्रसमवेतसमवायः कारणम्। “अभावप्रत्यक्षे समवायप्रत्यक्षे च इन्द्रियसंयुक्तस्वरूपसम्बन्धविशेषणता हेतुः। वैशेषिकमते तु समवायस्य न प्रत्यक्षम्। अत्र यद्यपि विशेषणता नानाविधा तथा हि भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसम-

वेतसमवेतविशेषणतया। शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया। कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वावच्छिन्नाभावे खत्वाभावादिकं विशेषणविशेषणतया। एवं घटाभावादौ घटाद्यभावः संयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यम् तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्यतेति" मुक्ता०। इन्द्रियसंयोगादयोऽप्यत्र

**इन्द्रियस्वाप** पु० इन्द्रियाणां स्वस्वविषयेषु स्वाप इव अप्रवृत्तिरत्र। १सुषुप्त्यवस्थायाम् तत्र हि मनःसहितसर्व्वेन्द्रियाणामुपरमः श्रुत्यादावुक्तः "सुषुप्तिकाले सकले प्रलीने" इति श्रुत्या "यत्र सुप्तो न कञ्चन पश्यतीति" श्रुत्या इन्द्रियमात्रलयश्रवणात्। इन्द्रियैःस्वस्य स्वकारणभावस्वापः प्राप्यतेऽत्र। इन्द्रियाणां स्वरूपतः स्वकारणलयकाले प्रलये। मरणे तु न स्वरूपतस्तेषां लयः। "तमुत्क्रामन्तं प्राणोऽनुत्क्रामति प्राणमुत्क्रामन्तं मनोऽनुत्क्रामतीत्यादि" श्रुतेः "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधन"मिति स्मृतेश्च प्राणानामाप्रलयस्थायित्वावगतेः। तत्र गोलकाभावेन वृत्तिमात्रं न भवति पुनर्देहान्तरे गोलकोदये वृत्तिलाभ इति भेदः "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त" इति शा० सू० भाष्ययोर्विवृतिः एवं सांख्यमतेऽपि किन्तु तन्मते लिङ्गदेहे प्राणपञ्चकं विहाय पञ्चभूतानां प्रवेश इत्येतावन्मात्रभेदः।

**इन्द्रियात्मन्** पु० इन्द्रियमेवात्मा। १इन्द्रियस्वरूपे कर्म्मधा०। २इन्द्रियेषु।

**इन्द्रियादि** पु० ६त०। सांख्यमतसिद्धे इन्द्रियकारणे अहङ्कारे "सात्विक एकादशः प्रवर्त्तते वैकृतादहङ्कारात्" सा०का०

**इन्द्रियाधिष्ठातृ** ६त०। इन्द्रियाणामचेतनानां स्वस्वकार्य्येषु व्यापारसम्पादनाय ईश्वरनियोजिते देवभेदे। ते च देवाः "दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः"। शारदा० दर्शिताः पदार्थादर्शे एतद्व्या० "एते इन्द्रियाधिष्ठातृदेवाः। यदाहुः वैकारिकादिगाद्याश्च चन्द्रेणैकादश स्मृताः। इन्द्रियाणामधिष्ठातृदेवास्ते सात्विकाः मता" इति तथा च श्रोत्रस्याधिष्ठातृदेवता दिक्। त्वचः वायुः, चक्षुषः अर्कः। रसनायाः प्रचेताः, घ्राणस्याश्विनौ, वचः अग्निः, पाणेः शक्रः, पादस्य उपेन्द्रः (विष्णुः), पायोः मित्रः, उपस्थस्य कः ब्रह्मा। मनसः चन्द्रमाः।

**इन्द्रियायतन** ६त०। श्रोत्राद्याधारे देहे तस्य इन्द्रियाणामायतनत्वम्। स च सूक्ष्मएव देहः। यथाह सा०का० "पूर्व्वोत्पन्नम (स) सक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्। संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्"। "प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् आ चादिसर्गात् आ च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्य्यन्तं महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्य्यन्तम् एषां समुदायः सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः। नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यतआह संसरतीति उपात्तमुपात्तं च शरीरं जहाति हायंहायं चोपादत्ते, कस्मात्? निरुपभोगं यतः, षाट्कौशिकं शरीरं विना सूक्ष्मं निरुपभोगं, तस्मात्संसरति। ननु धर्म्माधर्म्मनिमित्तः संसारः न च सूक्ष्मशरीरस्यास्ति तद्योगः, तत्कथं संसरतीत्यत आह भावैरधिवासितं धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्याणि भावास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पकसम्पर्कादस्त्रं तदामोदवासितम्भवति तस्माद्भावैरधिवासितत्वात्संसरति। कस्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठतीत्यत आह लिङ्गम् लयं गच्छतीति लिङ्गं हेतुमत्त्वेन चास्य लिङ्गत्वमिति" भावः। सा०कौ०। "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" स्मृतिः। पञ्चद० इदमेव वाक्यमुपन्यस्तम्। न्यायादिमते स्थूलदेहएव इन्द्रियायतनं तैः सूक्ष्मदेहानङ्गीकारात् इति भेदः जीवादृष्टवशादेवापूर्व्वदेह एव तत्तदिन्द्रियाण्यपि तत्तद्देहे उत्पद्यन्ते मनांसि तु अनन्तानि तानि च नित्यानि तेषाञ्च अदृष्टवशात् एकैकस्मिन् देहे एकैकस्य प्रवेश इति हि तेषां सम्मतम्। २ आत्मनि च "आत्मेन्द्रियाद्यधिष्ठातो" लिङ्गशरीरशब्दे एतेषां युक्तायुक्तत्वपरीक्षणम् करिष्यते।

**इन्द्रियाराम** त्रि० इन्द्रियेषु आरमति आ+रम-घञ्। इन्द्रियार्थभोगप्रसक्ते "अघायुरिन्द्रियारामो मोघं पार्थ! स जीवति" गीता०।

**इन्द्रियार्थ** पु० ६त०। इन्द्रियगोचरशब्दार्थे शब्दादौ "इन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत कामतः" मनुः। द्वन्द्वः १इन्द्रिये तद्विषये च द्वि०व०। "इन्द्रियार्थसन्निकर्षोत्पन्नम्" गौ०सू०। इन्द्रियेणार्थस्य सन्निकर्ष इत्येव तत्र विग्रहस्तु न्याय्यः।

**इन्द्रियाविन्** त्रि० इन्द्रियं प्रशस्ततया प्रायस्त्वेन वास्त्यस्य आ०

(5) Vol I



विनि वेदे पूर्वपददीर्घः । १चक्षुरिन्द्रिये २प्रत्यक्षेन्द्रिये च । "सएवास्मिन्निन्द्रियं दधा तन्द्रियाव्येव भवति" श्रुतिः ।

इन्द्रियेश पु० ६त० । १जीवे तदधिष्ठानेनैव तेषां प्रवृत्तेस्तथात्वम् २इन्द्रियाधिष्ठातृदिगादिदेवादिषु च ।

इन्द्रेज्य पु० ६त०। वृहस्पतौ शक्रेज्येन्द्रपूज्यादयोऽप्यत्र

इन्द्रेश्वर पु० इन्द्रेण स्थापित ईश्वर ईश्वरलिङ्गम् । महेन्द्रपर्वतस्थे वृत्रासुरवधजनितब्रह्महत्याविघातार्थं शक्रेण स्थापिते शिवलिङ्गभेदे तत्कथा प्रा० वि० कालि० पुराणम् । "हत्वा कृत्वा ततः शक्रो माहेन्द्रे स्थाप्य शङ्करम् । लिङ्गं विमुक्तः पापौघैस्ततः स त्रिदिवं गतः । अद्यापीन्द्रेश्वरं द्रष्टा तथा रामेश्वरं प्रभुम् । मुच्यते ब्रह्महत्याया नरो वै नात्र संशयः"।

इन्ध दीप्तौ रुधा० आ०अक० सेट् निष्ठायामनिट्। वर्त्तमानेचाऽतोनिष्ठा । इन्धे, इन्धाते,इन्धते, "यं त्वां जनास इन्धते ऋ०८,४,२ इन्धीत, इन्धाम् । इनध्धम् । ऐन्ध ऐन्धिष्ट इन्धाम्–बभूव।आस चक्रे इन्धिषीते ऐन्धिषत । इन्धितव्यम् । इन्धिता इन्धनम् । इद्धोवर्त्तते । क्विप् समित् इन्धानः "अग्निमिन्धानो मनसा धियम् सचेत मर्त्तः"ऋ० । भावे इध्यते ऐन्धि । "परो यदिध्यते दिवि का०ऊ०त्त पदगणव्याख्यासः ।

इन्ध पु०इन्ध+करणे–घञ् । १काष्ठे इन्ध–अच् । २दीप्तियुक्ते। ३तन्नामके ऋषिभेदे पु० ततः गोत्रे नडा०फक् । ऐन्धायनस्तद्गोत्रापत्ये पुंस्त्री। दीप्तियुक्ते दक्षिणनेत्रे विशेषेण स्थिते ४परमात्मनि पु० । तच्च तदर्थत्वञ्च समर्थितम् इ०उ०भा० । "इन्धोह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव, परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः"।"इन्धोह वै नाम इन्ध इन्धेवं नामायं "चक्षुर्वै ब्रह्मेति" आदित्यान्तर्गतः पुरुष एषः, योऽयं दक्षिणेऽक्षन् अक्षिणि विशेषेण व्यवस्थितः । स च सत्यनामा तं वा एतं पुरुषं दीप्तिगुणत्वात् प्रत्यक्षं नामास्य इन्ध इति तमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण, यस्मात् परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः प्रत्यक्षनामग्रहणं द्विषन्ति"भा० "इन्धयति दीपयति इन्ध–णिच्–अच् । ५दीपके त्रि०। एतस्मात् पूर्वस्थयोः ! आग्नाग्न्योः समासे इम् । अग्निमिन्धः अग्निमिन्धः । "होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभः" यजु० २५,२८, अग्निमिन्धश्च अग्नीत् नाम ऋत्विक्।

इन्धन न०इध्यतेऽनेन इन्ध+करणे–ल्युट् । १काष्ठे "इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्" माघः । "कामिनीषु विवाहेषु गवां भक्ते तथेन्धने" मनुः । इन्धने इन्धनाहारे इत्यर्थः "इन्धनार्थमशुष्काणाम्"प्रा०वि०स्मृतिः । इन्धयति इन्ध–णिच्–ल्यु । २दीपनकर्त्तरि त्रि०। भावे ल्युट्। ३प्रज्वालने न० ।

इन्धन्वन् त्रि० इन्धन+मत्वर्थीयः । वेदे वनिप् नि० वर्णलोपः । इन्धनयुक्ते । "इन्धन्वभिर्धेनुभीरप्सुदूधभिः" ऋ० २,३४,५, "इन्धन्वभिः समिन्धनवद्भिः" भा०।

इन्व गतौ भ्वा० चिद०। इनधातौ ९२८ पृष्ठे विवृतिः ।

इन्वका स्त्री इन्वति इन्व–क्वुन् स इव कायति कै–क । मृगशिरोनक्षत्रोपरिस्थे इल्वलाख्यतारासु अमरटीका ।

इभ पु० इण्–भ किच्च। १हस्तिनि, "वन्येभदानानिलगन्धदुर्धराः माघः २तत्संख्यातुल्यसंख्याके अष्टसंख्यान्विते च । गजाहि अष्टसु दिक्षु स्थिता ऐरावतादयोऽष्टौ वर्त्तन्ते इति तेषामष्टत्वम् । ते च "ऐरावतः पुण्डरीकः वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः" अमरोक्तक्रमेण पूर्व्वादीशानान्तदिक्षु स्थिताः। अस्य च उत्तरपदस्थत्वे श्रेष्ठार्थद्योतकता व्याघ्रादेराकृतिगणत्वात् उपमितसमासः । स्त्रियां ङीप् । जातित्वात् मोटाशब्देन समासेऽस्य पूर्वनिपातः पुंवद्भावश्च इभमोटा

इभलक्षणविभागादि वृह०सं० "मध्वाभदन्ताः सुविभक्तदेहा न चोपदिग्धाश्च कृशाः क्षमाश्च । गात्रैः समैश्चापसमानवंशा वराहतुल्यैर्जघनैश्च भद्राः॥ वक्षोऽथ कक्षावलयः श्लथाश्च लम्बोदरं त्वग्बृहती गलश्च । स्थूला च कुक्षिः सह पेचकेन सैंही च दृङ्मन्दमतङ्गजस्य ॥ मृगास्तु ह्रस्वाधरवालमेढ्रास्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः। स्थूलेक्षणाश्चेति यथोक्तचिह्नैः सङ्कीर्णनागा व्यतिमिश्रचिह्नाः ॥ पञ्चोन्नतिः सप्त मृगस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम् । एकद्विवृद्धावथ मन्दभद्रौ सङ्कीर्णनागो ऽनियतप्रमाणः ॥ भद्रस्य वर्णो हरितो मदश्च मन्दस्य हारिद्रकसन्निकाशः । कृष्णो मदश्चाभिहितो मृगस्य सङ्कीर्णनागस्य मदो विमिश्रः ॥ ताम्रौष्ठतालुवदनाः कलविङ्कनेत्राः स्निग्धोन्नतापरदनाः पृथुलायताश्याः। चापोन्नतायतनिगूढनिमग्नवंशास्तन्वेकरोमचितकूर्मसमानकुम्भाः । विस्तीर्णकर्णहनुनाभिललाटगुह्याः कूर्मोन्नतद्विनवविंशतिभिर्नखैश्च । रेखात्रयोपचितवृत्तकराः सुवालाः धन्याः सुगन्धिमदपुष्करमारुताश्च । दीर्घाङ्गु-

स्थिरवृत्तपुष्कराः मजलाम्भोदनिनादवृंहिणः। दृढदीर्घतरोच्चकन्धरा धन्या भूमिपतेर्मतङ्गजाः॥ निर्मदाम्यधिकहीननखाङ्गान् कुब्जवामनकमेषविषाणान्। दृश्यकोषफलपुष्करहीनान् श्यावनीलशबलासिततालून्॥ स्वल्पवक्त्ररुहमत्कुणषण्डान् हस्तिनीं च गजलक्षणयुक्ताम्। गर्भिणीं च नृपतिः परदेशं प्रापयेदतिविरूपफलास्ते"॥

हेमा०परि०ख०लक्षणसमुच्चये विष्णु ध०। "नागाः प्रशस्ता धर्मज्ञ! प्रमाणादधिकाश्च ये। दीर्घहस्ता महोच्छ्राया-श्चामनाश्च विशेषतः॥ निगूढवंशाभव्यक्ता व्यूढा व्यूढोरु-मस्तकाः"(व्यूढा विपुलाः)"विंशत्यष्टादशनखाः। शीतकालमदाश्च ये॥ ते प्रशस्ता महानागाः ये तथा सम्प्रकीर्त्तिताः। दन्तच्छेदेषु दृश्येत येषां स्वस्तिकलक्षणम्॥ भृङ्गारचालव्यजना वर्द्धमानाङ्कुशाकृता। धार्य्या मैते तथा धार्या वामना ये च मत्कुणाः॥ हस्तिन्योयाश्च गर्भिण्यो ये च मूढा मतङ्गजाः। अपाकशाश्च कुब्जाश्च षड्दन्ताश्च भार्गव!॥ कुदन्ताश्च तथा वर्ज्या वामकूटाश्च यत्नतः। अनुरूपाश्च कूटाश्च ये षण्डा विकटाश्च ये"॥ राम उवाच वामनाद्याश्च ये नागाः भीकानिन्दितलक्षणाः। तेषां तु श्रोतुमिच्छामि लक्षणं वरुणात्मज!॥ पुष्कर उवाच। आनाहायामसंपूर्णोयोऽधिकस्तो भवेद्गजः॥ वामनः स समाख्यातोमत्कुणोदन्तवर्जितः।(आनाहःस्थूलता) (आयामो दैर्घ्यम्)दशां चतुर्थीं संप्राप्य वर्द्धते यस्य न द्विजौ॥ स्थूलावनायतौ स्यातां स मूढो हि गजोऽधमः। अपाकशो विषाणेन दन्तेनैकेन वारणः॥ संक्षिप्तवदोजघनः पृष्ठमध्यसमुन्नतः। प्रमाणहीननाभिश्च स कुब्जोवारणाधमः॥ अनुन्नताभ्यां षड्दन्तः कुदन्तःस्यात्ततो वहिः। (वहिर्दन्तशीमनि)। वामदन्तोन्नतो नागो वामकूटश्च कथ्यते॥ दन्तावनुन्नतौ यस्य सोऽनुरूपगिति कीर्तितः। एकदन्तस्तथा नागः कूट इत्यभिधीयते॥ पादयोः सन्निकर्षः स्यात् यस्य नागस्य गच्छतः। स षण्डोऽक्षमि युद्धे च वयसा ग्रेन पूजितः॥ अरत्न्यभ्यधिकं यस्य विस्तरेण स्तनान्तरम्। विकटः सविनिर्दिष्टो दुर्गतिनिन्दितोगजः॥ राम उवाच। श्रोतुमिच्छाम्यहम् देव! कुञ्जरं सम्प्रशस्त्कृतम्। यं प्राप्य किल राजानोजयन्ति वसुधां नृपाः॥ पुष्कर उवाच। वर्णः सत्त्वस्य रूपद्वान्तिःसहननजवः। सप्त तानि भद्रा यस्य स गजः सम्प्रशस्त्कृतः॥ ये वामवद्दक्षिणपार्श्वभागेनाशाढकाभाःपिटकोद्भवापि। ते नागमुख्या विजयाय युद्धे भवन्ति राज्ञां न हि संशयोऽत्र" तत्रैव पराशरसंहिता। "हस्तिनां जातिदेशवर्णाकृतिप्रमाणचेष्टादिलक्षणमनुव्याख्यास्यामः। तत्र जातयश्चतस्रो भवन्ति। भद्रा मन्दा मृगा मिश्राश्चेति तत्परिणाममाकृतिचेष्टादिभिरुपदिश्यते। तत्र भद्रजातिश्चारुवृत्तायतमुखोव्यूढोन्नमस्तकः उदग्रसत्त्वोऽनुद्वृत्तकरः श्रोता दीर्घपुष्कराङ्गुलिवालधिः महामन्योरोमशग्रीवः। स्थूलमेढ्रोदरताम्रतालुजिह्वौष्ठः सुपार्श्वः स्निग्धः सवर्णमृदुरोमा कूर्म्मपादः काष्ठस्थितिचितांसः पृथ्वासनः रक्तबिन्दुचित्रोवक्रतरोमोपचितश्रोत्रःसुनखो धनुःपृष्ठवंशो मधुवर्णतालुर्यूथाभिरक्षिता सहिष्णुरत्यर्थवेदी बलवान् कामातुरोरणावमर्दी मृदुनोपायेन साध्य आन्तपदे शय्याही च भवति"। (उदग्रो उच्चः अनुद्वृत्तकरः अनुक्रमेण वृत्तकरः पुष्करः कराग्रं मन्या धमनी अत्यर्थवेदी अग्रे वक्ष्यते)। मन्दजातिः संकीर्णाभिन्नः सुहुलो महोदरकरश्रोताः स्थूलदन्तवातपृष्ठवंशः स्थूलहस्तजिह्वांसग्रीवः, पृथुहस्तमस्तकः सुविभक्तोरःशिराःसुम्हदुवृत्तश्रोत्रः स्थूलास्थिकरकदापीवितपादः सूक्ष्मनाभिस्तनुताम्रलकर्णकटः दीर्घोन्नमेढ्राङ्गुलिवालवालधिर्मुष्करञ्जकचवरकोपदिग्धोद्धर्षः सुवद्धजघनः सहत्तोरस्कोगम्भीरवेदी मन्दजातिः जातमद्धोदिढमन्दभक्तोऽक्ष्यसाध्योयूथानुगामी यद्द्यागतोपि नारिभयमाविशति। (गम्भीरवेदी वक्ष्यते उपदिग्धो लिप्तः) मृगजातीयः पुनर्ह्रस्वपुष्करोष्ठवृत्तहस्तवालमेहनशुदन्तनखपृष्ठवंशग्रीवाक्षोदरमेढ्रतनुविषाणनेत्रश्यावाष्टत्ततनुश्रोत्रः कृशदीर्घो घनायतापकावः संक्षिप्तकरावो व्यक्तमस्तकोदीर्घजिह्वोविषाणोपनीतः शीघ्रोबहुयशोभारसाही मनस्वी दुर्दमः स्वयूथपथ्यन्तानुचारी भिन्नपुरीषोऽतिक्रमणवेदी क्रोधावृतः क्रन्दनश्चेति। मिश्रास्तु तेषां परस्परसंयोगजाः सर्वसंकुललक्षणा इति। भद्रा च्येष्ठा भवन्त्यासां मन्दा मध्या कनीयसी। मृगा मिश्राऽधिकैश्चैषा गुणदोषैः समाश्रयः। अथ वनभेदेन गजभेदाः। तदेषां प्राच्यकारूषदशार्णमार्गचेयककालिङ्गकापरान्तिकसौराष्ट्रपञ्चनदाख्यान्यष्टौ वनानि वासस्थानानि तेषां पृथक् पृथक् कर्म्म लक्षणमुपदेक्ष्यामः तत्र हिमवद्गङ्गाप्रयागलौहित्यान्तरे प्राच्यवनमस्तोत्पन्नाः कपिलाः आव्यपाः कुशकपार्श्वायोद्वारकारक्तपृथुपेचकवंशापिशुङ्काः पृथुहस्ता-मन्दवेगारुणाक्षपाताकृतयो भवन्ति। (पेचकः पुच्छमूलम्) मेकलो मत्स्यो गङ्गावतारश्चेति कारूषावनमध्योत्पन्नाः श्यामावपक्षाः सुचरणाङ्गुलानात्य-

वताः शीघ्रोद्घाटहृद्विहृद्यामैर्दन्तैर्दन्तिनो भवन्ति । महागिरिदशार्णविन्ध्याटवीरावतीनां मध्ये दशार्णं वनमभिख्यातमत्र दीर्घाङ्गुलिपुष्कराः पाण्डुभाः श्यामा वा दुर्पहाः सुवृत्तजघनाग्राः सितसूक्ष्मबिन्दुचिताङ्गुलकमलतुल्यमदगन्धिनो विशालोत्सङ्गदन्ताः स्थूलहस्तास्थिरापीवा मध्यगाः स्वासनाःसत्ववन्तश्च । पारिपात्रवैदिशमल्लावर्त्तवनानामन्तर्मार्गियेयकं वनमत्रोदग्राः शीघ्रदीर्घक्रमेणोपदिग्धाङ्गाः बलवन्तोऽभिजाताः सुप्रमाणाः मध्यमास्तु त्वचः कचाविरलप्राया अल्पमेचकाहारिख्याताश्च खण्डदन्ताः सुहस्ताः स्निग्धरोमाणः स्थिराः सुशरीराः करेणूनामधिपतयः स्वल्पतापाश्च । विपुलमहाद्रिचिपारगयोत्कलानां मध्ये कालिङ्गकं वनमत्र कलविङ्काभाः सर्व्वश्वेताः स्थिरपदाः शीघ्राः मृदुकर्णरोमाणस्तनुत्वगुदरादीर्घकेशवालधयो दीर्घक्रमाः बलवन्तोऽल्पमेचकाः पद्मप्रभा वाहदन्ता धनुःपृष्ठवंशारक्ततालुजिह्वौष्ठाः सुप्रयोगमन्दसुखाःवराहजघनाः नीचहस्तनखाःस्थिरचरणाः आसुखवेदिनो मधुदशनाः पीतहस्वशिरोधराः महोरगहस्तकराः मृदुदीर्घहस्ताहस्तिनो भवन्ति । नर्म्मदोदधिसेव्रदेशान्तोपहारणामन्तरतोऽपरान्तिकं वनमत्र मानिनो धीराः श्यामाःसम्प्रतिष्ठिताः हस्वजघनशिरोधरा पीनायतविषाणाः स्थाङ्गका मृदुत्वच उदपादीर्घरक्तास्योष्ठजिह्वामहोत्सङ्गाः पद्ममदगन्धिनो धनुःपृष्ठवंशाविद्धास्थानान्यवनविचारिणः । द्वारकार्बुदावर्त्तनर्म्मदान्तरतः सौराष्ट्रकं वनमत्राल्पायुषश्चण्डाः पिङ्गायताक्षाः मध्यायताङ्गयोऽल्पमेचका मृदुविभक्तबालाप्रतिलोमलोमशचररणास्तनुत्वक्कर्णनखाः सूक्ष्मदन्ताः शिवाख्याः इति । हिमवत्सिन्धुकुरुजाङ्गलकानामभ्यन्तरे वनं पञ्चनदाख्यं तत्र स्फुटितरुचवर्तांशुदन्ताल्पबिन्दूपचितकराः सुगन्धयो मृदवोमहापेचकदेशाङ्गप्रमाणाःसूक्ष्मदृहत्त्वचोद्विनेयाध्यानशीलाः कनकदृशो भवन्त्यपि । वनेषु तेषु जायन्ते प्रधानामध्यमोत्तमाः । प्रशस्ता निन्दिताश्चापि तेषां वक्ष्यामि लक्षणम् । नष्टजतुकाण्डव्हार्यं हस्वमल्पाङ्गुलिपुष्करं दुर्गन्धं कर्कशमल्परोमाणमातनकाण्डस्थूलविरलपर्वाणं हस्तिनो हस्तमध्यन्यविषातधन्यं पीतं मृदुरोमाणमनुपूर्वपतितं चारुदीर्घाङ्गुलिपीनं पृथुपुष्करंमृदुवलितम् । सुगन्धिवृत्तं पद्मकृष्णायतं हिरक्तं वृहत्स्रोतोपोतकार्यं च । कलस्फुटिताग्रसमविनविषमचक्रकर्ण-

सूक्ष्मदन्तावपूजितौ पूजितौ च स्निग्धश्लक्ष्णमर्दावतीवतामविनसममाहितौ मधुवर्णौ सुकुञ्चिताभ्यावाधमध्यायातावदादशाङ्गुलपरिणाहौ । अथ विरूपविषमे वराहनकुलध्वाङ्क्षवानराभे कृष्णविच्छिन्नेचये सन्निमीलिते लोचने न पूजिते पूजिते च कलविङ्काभसूर्य्यमणिवन्हितुल्ये स्वनुपहिते च । प्रशस्तं समाहितमायतपृथु कालिन्यमदस्थितरक्ततालुजिह्वौष्ठचारुसूक्ष्मलक्ष्मबिन्दूपचितं सर्व्वसंपूर्णम् । मृदुमृदुमिश्रांशपीडितपुष्करं विषममासनात् बहङ्गुलाग्रबन्धनाभावेन नतकुम्भलम्बेनातिरिक्तं प्रमाणं घण्टाघनपिङ्गं रूक्षास्थूलदन्तरोमोपचितमपूजितं शिरोवारणानां पूजितं महोदयस्थानसुपचितसुक्रमनिम्नस्वरनिर्घोषं पृथुपुष्करं स्निग्धमृदुसूक्ष्मयुग्मरोमसुविभक्तोष्ठोपचितानावस्थाङ्गं वा सुखोत्कटोपकटौ हत्तौ तत्र तनुविषमसिराततौ पीडितान्नायतिसुप्रमाणौ संहतच्छिद्रौ सान्द्रमृदुसुप्रमाणसिरालावपाठितपुटसंविड्लमूत्रिकौ, पूर्णच्छिद्रौ दुन्दुभिस्वनौ वा । क्लेशावहाच्छिद्रातिदीर्घातुपचितपीडिका सुतृहतो पृष्ठावस्थनात्युन्नतायतास्थानावपीडिता ग्रीवा वारणस्याप्रशस्ता शस्ता तु मस्तोपरि पिण्डिका हठारचीति वक्ति: कास्तारत्निपरीणाहा द्वादशाङ्गुलायता सर्व्वसम्पूर्णा वा । विषममवाप्तं संक्षिप्तवत्मं संपुटमानसं विगर्हितं स्थिरं च विनतमत्युन्नतं वक्षं पृष्ठवंशसशोभनम् । शोभनमुपचितसूक्ष्मं धनुःप्रमाणमेव संस्थानं विद्यात् । अथ पूर्व्वगात्राच्छिद्रोन्नतांसं विकलितहस्तयोर्वृत्तं शिरालम्बनं आक्ष्याधिदन्तोऽप्यनिर्लग्नं विषमकचावितम् प्रमाणहीनमनिष्टम् वृत्तमनुपूर्वोपचितं स्थिरविभक्ताजिवल्कोटमनुपविष्टसममच्छिद्रमन्योपचितमथोरक्तं वा । अथ जघनं घनसुच्छ्रितास्थि निर्मांसमेचकं कलाहीनातिरिक्तप्रमाणं बालध्यनुयायि समनर्थकरम् । अर्थकरमल्पमेचकं पक्षोपचितमडस्थयुग्मकस्फटचतुरस्रमायतागतं चारुवालधिपरिपूर्णांशकोशायततया नातिराजसवृत्ताकारमेहनमजघनञ्जघनं च श्यावाल्पस्फुटितनखश्लिष्टसन्धि, परुषाचारतत्त्वसहा न पूजिताः पादाः अन्ये भवन्त्यपि च । विंशत्यष्टादशनखाः स्थिराः कूर्म्मसमाहिताः । गजानां पूजिताः पादा ये च सुविकचानिताः । पादाः कचाविता रूक्षविवर्णाः परुषाः कृशाः । वारणानाञ्च शस्ताः सूक्ष्मैर्वा स्निग्धतनूरुहाः । कृष्णबिन्दूचितां स्निग्धां त्वचं शंसन्ति दन्तिनाम् । आलस्यपी

विषाणस्य विषाणौ पार्श्वउन्नतौ । उन्नाहतो विषाणेन दन्तैकेन धारणः । अनुन्नताभ्यां संपन्नः कुदन्तः स्याच्चलावधिः । अर्द्धं मस्तान्तरालस्य प्रतिमानसमौ द्विजौ । क्षुद्रस्थूलादिदोषैश्च दन्तेनैकेन वा शुभाः । वर्ज्यास्ते शुभ कामेन सर्व्व एवातिगर्हिताः । अब्दद्वये नदीजानां पञ्चमेऽब्दे वनौकसाम् । दन्तमूलपरीणाहान् द्विगुणान् कल्पयेत्परे । शरशक्तिधनुश्चक्रमूलपद्मादिसलक्षणाः । दन्ताग्रराजयो यस्य स नृपं वोढुमर्हति । रोमणां तु संधयो यत्र पिटकः स उदाहृतः । स ज्ञेयः सप्तभागोनो मध्यमोऽसौ मतङ्गजः । अन्यः षड्भागहीनः स्यादतोऽन्यो हि न पूजितः । तुल्याय मेचके दैर्घ्यं पृष्ठपार्श्वोदरान्तरम् । आनाहउच्छ्रय पादादिहृदयो यावदासनम्" । वनविशेषेण गजलक्षणं तत्रैव वार्हस्पत्यसंहिता । "वनानां मध्ये प्राच्यं कालिङ्गकमापरान्तिकं च त्रीणि वनान्यतिशोभनानि । त्रयाणामपि प्राच्यं वनं मध्यवनमपरेषामिव शोभनम् । तत्रैरावतकुलप्रसूतिसम्भवाः प्रायेण मृगमिश्रभद्रलक्षणाः महाकायाः करिणो भवन्ति । विनयसत्त्वशक्तिसम्पन्नाः पूगफलप्रभास्तात्त्विषः प्रविरलमदा गजा युद्धे चापकर्षणोपसर्पणनीरवा भवन्ति नातिक्रोधनाः सशुद्धेजिताः सत्त्वं दर्शयन्ति । ते च इक्षैः कवलैः कार्योपचयातातिशयेन मदाभिमुखाः कर्त्तव्याः । कालिङ्गके वाऽपरान्तिके च त्रेतायुगोत्पन्नाः मन्दा महागजान्वयजा मन्दाभिधानाः प्रायशो मृगावयवाः सङ्कीर्णगजाः समुत्पद्यन्ते । नात्युद्यता जलदप्रभा नातिस्थिरा मन्दा युद्धप्रियाश्च गजा भवन्ति । तथा कारूषदाशार्णमार्गेयकाभिधानेषु मध्यमा गजाः समुत्पद्यन्ते मृगमन्दजातयः ते च चार्व्वयवाः मध्यमबलाः मध्यमप्रमाणाः स्थूलरोमाविलशरीराः कलुरदा मन्दगतयः । तथा सौराष्ट्रे पाञ्चनदाभिधाने द्वापरयुगोत्पन्ना मृगमतङ्गजान्वया मृगप्राया गजा भवन्ति भीरवः कुब्जिताङ्गाः नातिचण्डा दुर्मदाः दुर्वृत्ताश्च एवंविधा गजाः समुत्पद्यन्ते वनाच्च वनान्तरे गतेषु दुर्वृत्तेषु गजेषु धेनुकासम्पर्केण शुभ्रवनेऽपि कालिङ्गकेऽपि । त्वगशीलश्च भीरुश्च हृस्व वामनमस्तकः । हीनाग्रभोगो दुःशीलस्त्वसंहतशरीरभृत् । सर्व्वच्छिद्रस्तनायामी परीणाहविवर्जितः । ह्रस्वस्कन्धोऽदीनश्च मृगजातिर्गजाधमः । अतः परं प्रवक्ष्यामि संकीर्णस्य च लक्षणम् । पशुत्वाहारणानां तु मन्दर्ता च विशेषितु । येतु कश्चु भवन्त्येते गजा सङ्कीर्णलक्षणाः । भद्रो मन्दो मृगोवाथ शुद्धजातिः प्रजायते । तस्मात्त्रिश्राणि रूपाणि गदतो मे निबोधत । आनन्त्यान्मिश्रजातानां निश्चयो नोपपद्यते । तथापि किञ्चिदुद्देशान्मिश्रलक्षणमुच्यते । भद्रमन्दो भद्रमृगो भद्रमन्दमृगस्तथा । इह भेदत्रयं मन्दमृगयोरपि जायते । भद्रादीनां च सर्व्वेषां रूपं संकीर्णचेष्टितम् । ऊर्द्ध्वाधः कायभेदेन तज्जानि भिद्यते द्विधा । त्रिधा च भिद्यते भूय एकैकन्तु यथाक्रमम् । एवमष्टादशविधं कीर्त्तितं मिश्रलक्षणम् । शुभाशुभं विभागेन साम्प्रतम् निगदाम्यहम् । भद्रमन्दो भवेद्दिष्टो मृगमन्दस्तथाधमः । भद्रमन्दमृगश्चैव मध्यमः परिकीर्त्तितः । भद्रजातिर्महाकायो गजो मध्ये तु दन्तिनाम् । मन्दोऽवयवलेशेन स सक्तो भवति द्विपः । मृगस्यापि हि रूपेण किञ्चिन्मात्रानुगतेन वै । अशुभत्वं न भद्रस्य जायते शोभनो हि सः । लोचनानां प्रधानत्वं यस्माच्छास्त्रेषु कीर्त्तितम् । तस्मान्मृगाक्षिसंसक्तो भद्रोऽपि हि न शस्यते । भाद्रेणो परिकायेन मान्द्येनाधोगतेन वा । उन्नतो हि गजानान्तु भद्रमन्दो भवेद्गजः । अनेनैव हि रूपेण विपर्य्यासेन यो गजः । सोऽपि शोभन एव स्यान्मन्दभद्र इति स्मृतः । एवं विधात् मृगे चापि लक्षणान्मिश्रलक्षणम् । महावयवबाहुल्यात् मृगरूपस्य लेशतः । भद्रावयवनिर्मुक्तो मध्यमोऽसौ गजो भवेत्" कायेन यो भवेद्भद्रो मन्दो वापि मतङ्गजः । मृगगात्रोऽपरश्चैव स भवेद्दृगवान् गजः । मृगरूपाधिकत्वं च दृश्यते यस्य दन्तिनः । अधमस्तु स विज्ञेयः सत्त्वशक्तिविवर्जितः । करदन्ताक्षिकुम्भैश्च यो मृगो जायते गजः । शेषावयवभद्रोऽपि हीन एव भवेदसौ । एवमुद्देशमात्रेण मिश्रभेदा मयोदिताः । नोदिता येऽपि तेऽत्रापि मिश्रा ज्ञेया मनीषिभिः । मिश्रलक्षणसंयोग उत्कृष्टं यस्य दृश्यते । रूपनामधेयोऽसौ जायते हि मतङ्गजः । अतः परम्प्रवक्ष्यामि लक्षणं गिरिचारिणाम् । तथा नदीचराणां च तथैवोभयचारिणाम् । महाबला महाकायाश्चितांसा गिरिचारिणः । सुपार्श्वाश्चारुदिग्धाङ्गाऽदृढपादा गतक्लमाः । उद्धतानिर्भयाश्चैव सल्लकीकवलप्रियाः । तटाघातविधौ भग्नदन्तदारितमूलकाः । शार्द्दूलादिमहासत्त्वसंस्फोटातहुर्वलिताः । मदस्रावलवोत्साहादुर्दमावारिभीरवः । पांशुक्रीडारता नित्यं दुमोन्मूलनतत्पराः । विषाणवेष्टनाशीलाः स्वेदसन्तापनीरकाः । करास्फोटनिरता सीत्कारकरणप्रियाः । अनुद्धतावनश्यामाः शीकरोद्गिरणप्रियाः । तोयकर्मणि निःशङ्कामतङ्गाश्च नदीचराः । उभयेषु चर-

न्ये ते मदोपम्यं तथाहुषु । ये गजाह्नदमनसस्ते भवन्त्यतिशोभनाः । सर्वेषामेव नागानां छायालक्षणमुत्तमम् । यद्यया जायते यस्य तत्तथैवाभिधीयते । सत्त्वांशकत्वाद्भद्रस्य पाटला भवति प्रभा । नवपल्लवसच्छाया स्निग्धा तनुतनूरुहा । तथा तमोऽंशकत्वाच्च कृष्णा मन्दस्य जायते । तद्यथाम्बुदसंकाशा स्थूलकृष्णकचाविला । रजोऽंशकत्वाच्च तथा मृगस्यापि हि धूसरा । मलिनाम्बुदसंकाशा रूक्षा तनुतनूरुहाः । एवं छायाविशेषाः स्युर्भद्रादीनाम्प्रयोदिताः । छाया संमिश्रभावाच्च मिश्रा भवति दन्तिनाम् । वनजातिगुणैर्भद्रः गजश्रेष्ठो नरोत्तम !। तमोऽंशकत्वं मन्दस्य यद्युक्तं निबोध मे । दुर्मनस्त्वं तथाऽऽलस्यं निद्रालुत्वं च मूढता । गम्भीरवेदिता चेति मन्दस्य तम उत्थितैः । एवं रजोगुणो राजन् मृगस्येन रजोऽंशकः । धैर्यं स्थैर्यं पटुत्वं च विनीतत्वं सुकर्मता । अन्यर्थवेदिता चैव भयस्थानेषु मूढता । सुभगत्वं च धीमत्त्वं सत्त्वस्यैते गुणाः स्मृताः । अतः सत्त्वांशकोराजन् भद्रजातिरुदाहृतः । चित्रत्वं वाक्शिरसोरन्तर्मणिगतं तथा । दन्तयोर्मधुवर्णत्वं नेत्रयोर्मधुपिङ्गता । आसनस्य पृथुत्वञ्च पूर्णता कुक्षिपार्श्वयोः । पृथुत्वं पृष्ठभागस्य घनत्वं समसन्धिता । स्निग्धच्छाया त्वथायामःपरिणाहोच्छ्रयौ तथा । सश्रीकत्वं गुरुत्वं च कायस्यैते गुणाः स्मृताः । सर्वलक्षणसंपूर्णो दृश्यते न मतङ्गजः । प्रधानावयवे लोके यत्नः कार्यो मनीषिभिः । हीनं कृष्णं च कल्माषं पुष्करं न प्रशस्यते । संपूर्णं मांसलं रक्तं सुकुमारं शुभं स्मृतम् । त्वङ्कुलन्तु भवेद्दीनं होनस्पतिविनाशनम् । कृष्णं भर्तृविघातायकल्माषं भर्तृरोगदम् । संपूर्णं सिद्धिदं भर्तुः सुखकरं चतुरङ्गुलम् ॥ सौभाग्यदं मांसलन्तु सुकुमारं तथार्थदम् । रक्तपद्मदलच्छायं तथा मिष्टान्नपानदम् । अतः परं शुभेच्छे ये श्रोतसी पाटलोदरे । पद्माङ्गुलप्रमाणेन वर्त्तुलत्वेन चार्थदे । अवाङ्मुखं च ताल्वं च कर्णतालं सुखप्रदम् । कृष्णा स्थूला च विपुला चित्रिणी श्यामलोमिता । कुञ्चिता च तथा दृष्टिः सप्रभा दन्तिनां मता । तासां तु त्र्यङ्गुलायामा या कृष्णेत्यभिसंस्थिता । कृष्णा करोति नृपतेर्विनाशं शीघ्रमेव हि । स्थूल दुर्भिक्षकरणी श्यामला नृपदुःखदा । करोति चित्रिणोनित्यं तस्यैव तु वधुक्षयम् । भुग्ना दृष्टिर्विनाशाय राष्ट्रोवनविनाशिनी । कुञ्चिताहीनयोश्चैव युद्धकाले रिपोर्जयम् । अतः परं प्रवक्ष्यामि क्रमेण करलक्षणम् । न करं दीर्घमिच्छन्ति वालधेः शास्त्रपण्डिताः । न वालधिसमं ह्रस्वं नातिदीर्घं क्रमायतम् । न तनुं नातिकायं च न रूक्षं न क्षतव्रणम् । नाक्रमेण क्रतोत्सेधं न हीनं दशनान्तरम् । न सुस्थाङ्गुलिसंयुक्तं नातिसंकटपुष्करम् । एतल्लक्षणसंयुक्तं करं शंसन्ति कोविदाः । वालधेः सुसमोहीनः समोवा दन्तिदुःखदः । अतिदीर्घोभवेद्भर्त्तुरायुषः क्षयकारकः । तनुर्व्याधिकरो यातुरतिकायोऽर्थनाशनः । रूक्षोव्याधिप्रदस्तु र्यात्क्षतव्रणक्षतां व्यथाम् । प्रतिलोमेन च स्थूलोगजस्य सुखनाशनः । असमञ्जसहीनश्च असमञ्जसवर्तुलः । दुःखशोकभयायासकर्त्ता भवति नित्यशः । दशनान्तरहीनश्च जायते दन्तिरोगकृत् । कथितं पूर्वमेवेषु पुष्करांगुलिलक्षणम् । अतो मया न कथितं साम्प्रतङ्करलक्षणे । निर्वलीकोदीर्घरोमा क्रमवृत्तत्वसंयुतः । अणुबिन्दुर्विचित्रश्च दैर्घ्येण च शताङ्गुलः । वालधेः पुष्करं यावदायामोजायते यथा । अरत्निश्चयाऽऽनाहश्च हीनहीनतरक्रमात् । युक्तस्तेन मानेन करः पूज्यतमो भवेत् ॥ निर्वलीके च सौभाग्यन्दीर्घरोमार्थदः स्मृतः । क्रमवृत्तोजयं कुर्य्यादणुबिन्दुस्तुतोधनम् । सुप्रमाणं भवेद्राज्ञः करस्य परिवर्द्धनः । आनाहश्चाय सततं राज्यस्फीतिकरोभवेत् । करस्य कीर्त्तितं ह्येतल्लक्षणं शुभसंज्ञितम् । अतःपरं प्रवक्ष्यामि लक्षणं दन्तवेष्टयोः । कचहीनावतिस्थूलौ विषमौ शिथिलौ तथा । दन्तवेष्टौ सदा भर्तुः प्रमाणाभ्यासशोकदौ । दन्तमूले सुसम्बद्धौ सकचौ किञ्चिदुन्नतौ । दृष्टौ सदा तथा भर्त्तुर्हितदौ परिकीर्त्तितौ । अतःपरं प्रवक्ष्यामि लक्षणन्तु विषाणयोः । व्यक्तता सङ्कटत्वं च प्रांशुता भग्नशुभ्रता । वक्रत्वं सुस्थता चैव धूसरत्वं च रूक्षता । सद्रुताऽधोगतित्वञ्च हीनता मूलमध्ययोः । प्रान्तयोः स्थूलता चैव दीर्घता चातिमात्रता । सर्पच्छत्रककान्तित्वं दोषाह्येते चतुर्दश । दन्तयोस्तु समाख्याताः फलं तेषान्निबोध मे । व्यक्तौ च सङ्कटौ दन्तौ मदहानिकरौ तु तौ । दन्तिनस्तनुतायुक्तौ व्याधिदौ परिकीर्त्तितौ । भग्नशुभ्रौ तथा भर्त्तुर्मंहा क्षेमकरौ मतौ । वक्रौ चार्थविनाशाय सुस्थौ च परिकीर्त्तितौ । धूसरौ रूक्षतायुक्तौ गजस्यायुर्विनाशनौ । मृदुत्वयुक्तौ नागस्य मल्पत्वकरौ मतौ । स्थूलाग्राधोगतित्वे च भर्तुर्यातुश्च दुःखदे । अशुभं लक्षणं ह्येतद्दन्तयोः कथितं मया । शुभं च साम्प्रतम्वक्ष्ये यथावदनुपूर्वशः । स्निग्धौ समौ सुनिष्क्रान्तौ संपूर्णौ व्रणवर्जितौ । सकुलाग्रौ दृढौ वापि ताम्रचूडौ फलोपमौ । दक्षिणाभ्युन्नतौ किञ्चित् मृणालकुमुदप्रभौ । मधुकुन्ददलच्छायौ हेमचम्पक-

पिङ्गरौ । मधुपिङ्गौ घृतच्छायौ पीयूषसदृशप्रभौ । केतकीकुसुमाभौ च मृगाङ्ककिरणप्रभौ । अध्यर्द्धारत्निमानौ च तदर्द्धानाहसंयुतौ । अमीभिर्लक्षणैर्युक्तौ दन्तौ नागस्य शस्यतौ । स्निग्धौ धनप्रदौ भर्त्तुरायुषश्च करौ मतौ । अरिघ्नौ तु सुनिष्क्रान्तौ संपूर्णौ राज्यदौ मतौ । निम्नौ राज्यलाभाय शुभ्राभौ जयप्रदौ । दृढौ रोगविनाशाय ताम्रवर्णौ हलोपमौ । अरिसंघविनाशाय कीर्त्तितौ शास्त्रपण्डितैः । दक्षिणाभ्युन्नतौ भर्त्तुः कीर्त्तितौ भाग्यकारकौ । स्थूलाक कुमुदच्छायौ शुभिचारौ व्यकारकौ । हेमचम्पकसच्छायौ वस्त्राभरणदौ स्मृतौ । कुम्भौ मधुपिङ्गौ च निःसपत्नं महीतले । पशुलाभकरौ ज्ञेयौ घृतपीयूषसन्निभौ । केतकीकुसुमाभौ च भर्त्तुर्वंशविवर्द्धनौ । अध्यर्द्धारत्निकौ दन्तौ सुतभ्रूणजयप्रदौ । आनाहमानसंयुक्तौ सदाकीर्त्तिकरौ मतौ । इदं शुभकरं राजन् ! दन्तयोर्लक्षणं मतम् । अतःपरं प्रवक्ष्यामि नेत्रयोरपि लक्षणम् । मार्जारनकुलकौशयाखामृगनिभेक्षणान् । सर्वदोषकरान् राजन् ! गजान् दूरेण वर्जयेत् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे । रक्तपद्मदलच्छाये पद्मरागमणिप्रभे । निर्धूमाग्निशिखाकारे इन्द्रनीलसमप्रभे । सौम्यदृष्टिसमायुक्ते त्र्यङ्गुले लोचने शुभे । स्निग्धे वृद्धिकरे भर्त्तुर्मधुपिङ्गे जयप्रदे । दीप्ते दीप्तिकरे चैव प्रतापायतने तथा । कलविङ्काक्षिरूपे च धनधान्यविवर्द्धने । चामीकरकरे नित्यं रक्तपद्मदलप्रभे । पद्मरागनिभे चैव रत्नालङ्कारकारके । निर्धूमाग्निशिखाकारे प्रतिपक्षभयङ्करे । मानयुक्ते च सौम्ये च लोचने बलवर्द्धने । अक्षिकूटकटोद्देशनिम्नौ राज्यविनाशनौ । संपूर्णौ च बलोत्साहमदवृद्धिकरौ मतौ । दन्ताश्रयं भवेन्नित्यं तालुकं षोडशाङ्गुलम् । षडङ्गुलं पृथुत्वेन वंशमध्यगतं भवेत् । तथा शुभाशुभं चैव लक्षणैः प्रकीर्त्तितम् । कृष्णं परिदग्धञ्च कृष्णं कल्माषमेव वा । चतुर्विधमनिष्टं स्यादुत्पत्तिवशादभिधीयते । कृष्णं मसीसमं ज्ञेयं कल्माषं कृष्णलोहितम् । मांसलं धूम्रवर्णं च परिदग्धं प्रकीर्त्तितम् । कृष्णञ्च तिलच्छायं कथितं शास्त्रवेदिभिः । गर्भस्थस्य यदा पित्तं दीयते तालुकं भृशम् । कृष्णतालुस्तदा नागो जायते पापलक्षणः । व्याधिभिः पीड्यते नित्यं वातपित्तकफोद्भवैः । तृतीयां वा चतुर्थीं वा दशां प्राप्य विनश्यति । संग्रामे वा पलायेत बहुशस्त्रक्षतव्रणः । शस्त्रघातपूर्णाङ्गः कृतान्तभवनं व्रजेत् । वातपित्तकफा यस्य कुर्वन्ति तालुके गदम् । गर्भस्थस्य कल्माषतालुकं तस्य जायते कृष्णतालुनि ये दोषा रक्ते चैव गुणाः स्मृताः । कल्माषतालुनस्तु भवन्ति च द्वयोरपि । रक्तच्छायं यदा वंशे पार्श्वयोः कृष्णितं भवेत् । तदा मध्यफलं ज्ञेयं गुणदोषसमाश्रयात् । यदा वंशे च कृष्णं स्यात्पार्श्वयोस्तु यता भवेत् । भर्त्तुरुद्वेगजनकं कल्माषं तालुकं तदा । किञ्चिद्दीनं तु यत्तालु परिदग्धं तदा भवेत् । नागस्याधोरणस्यापि बलक्षयकरं हि तत् । कृष्णं च भवेत् तालु पित्तकोपसमुद्भवम् । महामात्रविनाशाय वारणस्योपजायते । (महामात्रो हस्तिपकः) कृष्णतालोरपि यदा दक्षिणावर्त्तनं भवेत् । इष्यते नित्यमेवं हि तदासौ दोषवर्जितः । यथा गृह्णाति नो दोषान् कुलीनः कुसमाहितः । गुणान् करोति हृदये न तथा कथितानपि । दोषघ्नं लक्षणं यस्य यदाचार्यैरुदाहृतम् । तत्तथैवागमात्स्यं नान्यथात्वापि भाषितम् । एवं जिह्वापि मन्तव्या तालुनः समलक्षणा । अरत्निमाना दैर्घ्येण विस्तारेऽष्टाङ्गुला मता । अशुभं लक्षणं ह्येतत्तालुकस्य मयोदितम् । शुभं च साम्प्रतं वक्ष्ये लक्षणं शृणु चानघ ! । रक्तं श्वेतं कषायं च तालुकं स्यात् शुभप्रदम् । रक्तं वृद्धिकरं भर्त्तुस्तथा चायुर्विवर्द्धनम् । दन्तिनोऽशोकपुष्पाभं रिपुक्षयकरं स्मृतम् । श्वेतं पुष्टिकरं चापि वा रणस्योपजायते । चम्पकाभं तथा भर्त्तुरारोग्यस्य विवर्द्धनम् । कषायं सर्वदा स्यात् प्रयातुः सौख्यवर्द्धनम् । एवं जिह्वापि रक्ताभा सर्वसौख्यप्रदा मता । अतःपरं प्रवक्ष्यामि सृक्कण्योश्चैव लक्षणम् । दन्तिनो मानहीने च सृक्कणी मानवर्जिते । (सृक्कणी ओष्ठप्रान्तौ) कुक्षरोगकरे नित्यं पण्डितैः परिकीर्त्तिते । सर्वसौख्यप्रदे तस्य संपूर्णे द्वादशाङ्गुले । अतःपरं च प्रवक्ष्यामि लक्षणं चिबुकोष्ठयोः । अरोमशम्बलीयुक्तमातान्नं च तथा लघु । गजस्यौष्ठं न शंसन्ति मुनयो दन्तरोगदम् । दीर्घरोमा सुसंपूर्ण ओष्ठः पद्मदलप्रभः । षोडशाङ्गुलानाहश्च हस्तार्द्धं चायतः शुभः । भर्त्तुरायुःकरो दीर्घो दीर्घरोमा च कीर्त्तितः । पूर्णः पूरयते कोषं रक्तः सौभाग्यदो भवेत् । अरोमशं तथाहीनं चिबुकं न प्रशस्यते । तद्धि वारणनाथस्य कुक्षरोगकरं स्मृतम् । चतुरङ्गुलमानन्तु स्थूलं रोमाचितं च यत् तत्प्रशस्तं गजेन्द्राणां कुलालङ्कारकारकम् । निम्ने च विषमे चैव हीने चैवाशुभे मते । मदहानिकरे नित्यं सगदे कर्णरोगदे । शब्दाभिनादयुक्ते च समे चैव सुखप्रदे । मानं च कर्णपाल्यास्तु मूलादारभ्य गृह्यते । बाहिरायामं कुब्जं च हीनं निम्नं च गर्हितम् । कुक्षरोगकरं नित्यं

बलहानिकरं च तत् । पूर्णं चैवोन्नतं सार्द्धहस्तमात्रायतं भवेत् । तद्धि वारणनाथस्य सुखरोगकरं मतम् । चतुरङ्गुलमानं तु स्थूलम् रोमाविलञ्च यत् । तत् प्रशस्तं गजेन्द्राणां सुखालङ्कारकारकम् । अरत्निपरिणाहञ्च करिणां सत्यसिद्धिदम् । वामनं ह्रस्वहीनञ्च परिणाहविवर्जितम् । अव्यक्तञ्च न शंसन्ति सातकुम्भं विपत्करम् । द्वादशाङ्गुलविस्तारन्दैर्घ्येणाष्टादशाङ्गुलम् । व्यक्तं शुक्तिपुटाकारं तद्शुभर्त्तुर्लाभकारकम् । गर्त्ताकारे च निर्मांसे कठिने चातिकुञ्चिते । शिरसोरोगजनने गजस्यारोहकस्य च । संपूर्णे सुकुमारे च सुप्रशस्ते प्रकीर्त्तिते । राज्यवृद्धिकरे नित्यं भर्त्तुर्विजयकारके । इत्येष हि विज्ञेयं लक्षणं कटपार्श्वयोः । अतःपरं प्रवक्ष्यामि लक्षणं कुम्भयोरपि । विषमत्वमरोमत्वं देहच्छायाविवर्ज्जिता । समता कण्ठपृष्ठाभ्यां समाधिक्यमपूर्णता । व्यक्तता वामनत्वं च परिणाहविहीनता । तनुभावः शिखरयोः कुम्भदोषा दश स्मृताः । भर्त्तुर्नाशकरौ ज्ञेयौ विषमौ रोमवर्जितौ । देहच्छायाविवर्णौ तु शत्रुलोकविवर्द्धनौ । कण्ठपृष्ठसमौ चैव प्रयातुः प्रविनाशनौ । मानाधिकौ च हीनौ च भर्त्तुरुच्छेदकारकौ । व्याप्तौ च वामनौ चैव भर्त्तुः कीर्त्तिविनाशनौ । परिणाहविहीनौ च कोशक्षयकरौ मतौ । शिखरस्य तनुत्वेन युक्तौ कुम्भौ तु रोगदौ । अशुभं लक्षणं ह्येतत्कथ्यतञ्च शुभं शृणु । समौ दीर्घकचाक्रान्तौ विस्तीर्णशिखरौ तथा । कर्णमूलात्समारभ्य हस्तार्द्धजनितोच्छ्रयौ । सुसंहतौ च पीनौ च कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च देहच्छाया समप्रभौ । आरोहकशरीरार्द्धदर्शनावरणक्षमौ । सश्रीकौ च सुहस्तौ च शुभौ कुम्भौ प्रकीर्त्तितौ । समौ च दीर्घरोमाणौ भर्त्तुः श्रीसौख्यकारकौ । समानौ रिपुनाशाय तथैव च समुन्नतौ । सुसंहतौ च पीनौ च वरस्त्रीलाभकारकौ । शत्रुनाशकरौ ज्ञेयौ कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च सुखदौ रोगनाशनौ । आरोहिस्थगितार्द्धौ च सश्रीकौ च जयप्रदौ । एतौ च हस्तिनां कुम्भौ पुण्यालङ्कारकारकौ । अतःपरं प्रवक्ष्यामि कर्णयोरपि लक्षणम् । निर्लोमशौ व्रणाकीर्णौ तनुच्छिद्रौ तनुत्वचौ । (स्वमा सिरा) सङ्कटौ विषमौ रूक्षौ त्रुटिताग्रौ च निष्ठुरौ । लम्बौ च प्रलम्बौ चैव कर्णौ नागस्य निन्दितौ । फलञ्च साम्प्रतं वक्ष्ये यथावदनुपूर्वशः । निर्लोमशौ व्रणाकीर्णौ गजस्य कर्णरोगदौ । निष्ठुरौ त्रुटिताग्रौ च यातु कोपकरौ मतौ । लम्बौ च पटुकौ चैव गजस्यायुर्विनाशनौ । अतःपरं प्रवक्ष्यामि शुभकर्णविनिश्चयम् । हिरत्निमानसंयुक्तौ शिराजालविवर्जितौ । समत्वचौ महाच्छिद्रौ स्निग्धौ दुन्दुभिनिस्वनौ । कपोलमण्डलास्फालाच्चतशब्दौ मुहुर्मुहुः । कर्णौ चामरसंकाशौ मृदुरोमकृतार्च्चनौ । अजर्जरमृदुप्रान्तावीषद्गुप्राग्रचूलिकौ । मयूरतालवृन्ताभौ सुविस्तीर्णसमौ शुभौ । हिरत्निमानसंयुक्तौ भर्त्तुरायुःकरौ मतौ । सिराजालविनिर्मुक्तौ शिरोरोगविनाशकौ । समत्वचौ महाच्छिद्रौ गजलाभकरौ मतौ । स्निग्धौ कान्तिकरौ नित्यं जयदौ दुन्दुभिस्वनौ । शत्रुनाशकरौ प्रोक्तौ मृदुरोमीकृतार्च्चनौ । अजर्जरमृदुप्रान्तौ प्रयातुः सौख्यकारकौ । गजस्योपचयायैव ईषद्गुप्राग्रचूलिकौ । मयूरतालवृन्ताभौ तुरङ्गबलवर्द्धनौ । सुविस्तीर्णौ समौ भर्त्तुर्भिक्षाभकरौ मतौ । कर्णयोस्तु समाख्यातं सर्वतम्शुभलक्षणम् । कण्ठस्य साम्प्रतं वक्ष्ये यथावदनुपूर्वशः । अवक्रोहीनो दीर्घश्च कण्ठश्च शुभदोभवेत् । आरोहकप्रमूणाञ्च क्रमशः कुञ्जरस्य च । अवक्रः परिणाहेन सप्रपञ्चाधिकं शतम् । अङ्गुलानां तथायामे द्वादशैवाङ्गुलानि तु । सम्पूर्णपिण्डितोदग्रवान्तर्मणिविभूषितः । कण्ठोवारणनाथस्य एवं भूतः सुपूजितः । ऋजुः प्रमोदजननः सम्पूर्णःकार्य्यसिद्धिदः । अहस्वोजयलद्भर्त्तुः कीर्त्तितः पूर्णपिण्डकः । उदयोऽर्थवृद्धिं च प्रतापं कुरुते तथा । अन्तर्मणिसमायुक्तोमणिरत्नप्रदो भवेत् । करालञ्चातिनिम्नं च आसनं न प्रशस्यते । करालं यातुरशुभं निम्नं च व्रणकारकम् । दैर्घ्येण हस्तमात्रं तु विस्तीर्णञ्च शुभं स्मृतम् । विस्तीर्णं विस्तृतं राज्यं सम्पूर्णं कुरुते जयम् । वंशस्याथ प्रवक्ष्यामि लक्षणं तु शुभाशुभम् । अत्युच्छ्रितोनिम्नपारः ह्रस्वो वंशोन शस्यते । राज्ञां च पादरोगाणां कर्त्ता च स भवेत्सदा । धनुरवङ्गुलायासमासनात्पश्चिमासनम् । यावत् प्रपूर्य्यते पार्श्ववंशोऽश्वफलकाकृतिः । शुभो ज्ञेयो गजेन्द्राणामायामः कुरुते सुखम् । पूर्णपार्श्वस्तु लाभाय चतुःस्थः श्रियं भवेत् । अरत्निद्वयमानं तु पेचकात्पश्चिमासनम् । घनास्थि विषमं निम्नकुञ्चितं पुच्छरोगदम् । मांसोपचयपूर्णं च विस्तीर्णञ्च शुभं मतम् । जघनोपरि रोमाणां तद्धि नाशकरं मतम् ।(पेचकात्पुच्छमूलात्)। पुच्छोगजस्य नो शस्तो वक्रदीर्घोऽतिलम्बितः । करोति महतीं पीडां राज्ञश्चाधोरणस्य च । ह्रस्वकुस्तु पृथुत्वेन दैर्घ्याष्टादशाङ्गुलः । संपूर्णः पेचकोज्ञेयो गजभर्त्तुः सुखप्रदः ।

वक्रं स्थूलञ्च ह्रस्वं च पुच्छं कचविवर्जितम् । ममानाहं च नागस्य सर्व्वदोषकरं भवेत् । अवक्र ऋजुदीर्घश्च ग्रन्थिहीनः सुपेचकः । गोपुच्छवालप्रतिमकचव्रातविभूषितः । भूमिं तु न स्पृशेत् यस्तु चतुर्भिश्चाङ्गुलैः सदा । स शुभो वाचधिश्चैवो गजभर्त्तुः सुखप्रदः । अतिप्रमाणं ह्रस्वं च कर्व्वूरं विगतप्रभम् । सिराजं चाशुभं मेढ्रं राजहस्तिपदुःखदम् । शस्तं षडङ्गुलायामं नाहतः षोड़शाङ्गुलम् । सिराजालविनिर्मुक्तमाम्रपल्लवसप्रभम् । द्व्यङ्गुलं स्रोतसा युक्तं विन्दुमालविवर्जितम् । मेढ्रं प्रशस्तं विज्ञेयं भर्त्तुर्जीवितवर्द्धनम् । अतःपरं प्रवक्ष्यामि लक्षणं गात्रयोरपि । हीने तनू च दीर्घे च सममांसोच्छ्रये तथा । विषमे च कचाक्रान्ते गात्रे नागस्य निन्दिते । हीने तनू च कुरुतः प्रयातुर्विनिपातनम् । सममांसोच्छ्रये यातुर्विषमे च विपत्करे । कचाचिते गजस्यैव गात्ररोगकरे तथा । अतःपरं प्रवक्ष्यामि गात्रयोः शुभलक्षणम् । सार्द्धहिरत्निस्त्रिरत्निः शताङ्गुलसमानता । एवंमिते स्मृते गात्रे भर्त्तुरारोग्यसौख्यदे । समे च कचहीने च गजलाभकरे तथा । गजस्य पुष्टिदे नित्यं मांसले च घने स्मृते । गात्रे वारणनाथस्य एवंभूते शुभे मते । चिपिटे वा सफलके गात्ररोगकरे सदा । संपूर्णे राज्यदे भर्त्तुर्गजस्य बहुसुप्रदे । तथैव रोमनिर्हिते गजस्य गलरोगदे । अतःपरं प्रवक्ष्यामि नखानाञ्च शुभाशुभम् । हीनाः कृष्णाश्च खण्डाश्च रूक्षाश्च न नखाः शुभाः । सदा च रोगदा हीनाः कृष्णा भर्त्तृविनाशनाः । खण्डा रूक्षा गजस्यैव पादव्याधिविवर्द्धनाः । स्निग्धाश्चन्द्रार्द्धसच्छाया मानेनैव सुरोनखाः । सप्तादिपञ्चसंस्थानि अङ्गुलानि क्रमेण हि । एवं विधा नखाः शस्ता भर्त्तुरारोग्यकारकाः । अतःपरं प्रवक्ष्यामि पादयोरपि लक्षणम् । हीनौ सुवृत्तौ रूक्षौ चरणौ दन्तिदुःखदौ । हस्तप्रमाणौ दैर्घ्येण कूर्म्माकारौ सुखप्रदौ । अतःपरं प्रवक्ष्यामि लक्षणञ्चापराश्रितम् । अत्युच्छ्रिते च हीने च निन्दिते चापरे तनू । सम्पूर्णे च शुभे ज्ञेये त्वपरत्र्यायामसंयुते । निन्दिते रोगदे ज्ञेये पूजिते प्रभुसौख्यदे । द्वादशाङ्गुलहीनं तु आसनात् पश्चिमासनम् । अपरपादयोश्चापि आयामोऽरत्निमात्रकः । नखानां च तथा मानं षड़ादिचतुरङ्गुलम् । प्रधानावयवानान्तु लक्षणं कथितं यथा । उत्सेधायामनाहानां साम्प्रतं कथयाम्यहम् । समतन्तुसमायुक्ततन्तुना वर्त्तितेन च । शुभशस्ते दिने नित्यं मानं कुर्व्वीत मानवित् । सप्तारत्नि गजेन्द्राणां प्रमाणं वनजन्मनाम् ।

आसनं यावदुत्सेधस्तस्य सम्यक् कीर्त्तितः । पेचकात्प्रतिमानन्तु आयामोऽरत्नयो नव । मध्यदेशे तदानाहो दशरत्निः प्रकीर्त्तितः । मानमेतद्धि भद्रस्य मुनिभिः परिप्रकीर्त्तितम् । सप्तमेन तु भागेन हीनं मन्दस्य जायते । मन्दाद्धीनं मृगाख्यस्य षड्भागेन प्रकीर्त्तितम् । एवं क्रमेण वक्तव्यं मानं मानविशारदैः । किञ्चिन्मानाधिके वापि न दोषः संप्रपद्यते । दोषाणां च गुणानाञ्च वृद्धिरेव फलप्रदा । सत्वं हि वारणेन्द्राणां नित्यं तन्त्वेषु संस्थितम् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे । रक्तपद्मदलच्छाये पद्मरागमणिप्रभे । नीलच्छाये अतीक्ष्णे च गजे सत्वं प्रतिष्ठितम् । मार्जारवानरादीनां सदृशे नोवलं गजे । हीनसत्वाश्च जायन्ते गिरिकूटोपमा अपि । अधिकं पुष्करं यस्य मांसलत्वेन जायते । प्रभवाच कषायं स्यान्मानेनाङ्गुलपञ्चकम् । किञ्चिद्दूने च विज्ञेये स्रोतसी चतुरङ्गुले । स्थूलपञ्चाङ्गुलायामा त्र्यङ्गुला नाहमानता । हस्तोऽपि पूर्व्वमानस्य स्थूलत्वेनाधिकोभवेत् । रोमशोनातिदृढश्च पृथुलः षड्भिरङ्गुलैः । आयामेन च हीनः स्यात् पूर्व्वमानात् षड़ङ्गुलैः । नातिगोपुच्छसंस्थानः कृष्णविन्दुविभूषितः । आनाहे रत्निमानौ तु सार्द्धहस्तद्वयायतौ । पीयूषकुसुमच्छायौ किञ्चित्ताम्रकपिङ्गलौ । स्निग्धौ मुग्धतमावेव दन्तौ नागस्य कीर्त्तितौ । दन्तावेटावतिस्थूलौ कचाक्रान्तौ सुनिष्ठुरौ । पञ्चाङ्गुलौ कटौ ज्ञेयौ मांसोपचयपूरितौ । ज्ञेये कटोपरि तथा स्रोतसी द्व्यङ्गुलान्तरे । एकाशीत्यङ्गुलानाहे द्वात्रिंशत्यङ्गुलायते । किञ्चिन्नतं कचाक्रान्तं वाहित्थं परिकीर्त्तितम् । प्रतिमानं तु विज्ञेयं हस्तः सचतुरङ्गुलः । अध्यर्द्धरत्निमानं च प्रमाणान्तरभेदतः । आयामस्तु विज्ञेयस्त्वधरस्तु दशाङ्गुलः । विंशत्यङ्गुलमानस्तु परिणाहोऽभिधीयते । पञ्चाङ्गुलं तु चिबुकं सृक्किणी तु नवाङ्गुले । षड्विंशदङ्गुलायामे सङ्गते परिकीर्त्तिते । अध्यर्द्धरत्निकौ कर्णौ विस्तारेण कचाचितौ । कषायपक्ष्मौ स्थूलौ कृष्णविन्दुविचित्रितौ । सपद्मागकरायामावचलौ कचाचितौ । पञ्चाङ्गुलान्तरौ पीनावुभावोष्ठौ दशाङ्गुलौ । कर्णात् कर्णान्तरं यावत् सप्तत्यङ्गुलं शिरः । वातकुम्भं तथा ज्ञेयं स्थूलं सप्तदशाङ्गुलम् । अङ्गुलानां शतं सार्द्धमानाद्धि द्व्यङ्गुलाधिकम् । आयतत्वं च कण्ठस्य दशाङ्गुलमिति स्मृतम् । भद्रस्यैवासनं ज्ञेयं तयोक्तं सप्ररत्निकम् । षडङ्गुलोच्छ्रितं स्थूलं तुल्यं वाङ्गुलमानतः । पुच्छमूलाद् द्विहस्तान्तु जायते पश्चिमासनम् । उच्छ्रयेण

तु हीनं स्यादासनं षड्भिरङ्गुलैः । मेचकस्याङ्गुलायामोऽलम्बत्वेनाङ्गुलत्रयम् । विंशत्यङ्गुलमानाहे भवेत् पुच्छोऽथ चामरम् । प्रान्तपादक्रमेणैव तथायामोऽङ्गुलत्रयम् । दैर्घ्येण तु स विज्ञेयो भूमेरष्टाङ्गुलोच्छ्रितः । इदं बालधिमानं तु मन्दस्य परिकीर्त्तितम् । सार्द्धद्वयरत्निके मूले अपरे संप्रकीर्त्तिते । उदरे चातिमात्रं स्यान्मेढ्रं हस्तद्वयायतम् । विंशत्यङ्गुलमानाहे तथाच्छायं सदा भवेत् । पञ्च चत्वारि च त्रीणि अङ्गुलानि नखाः क्रमात् । आपाण्डुविवराः कुन्दाभासाश्चापरपादयोः । अनेनैव तु मानेन गात्रपादसमाश्रयाः । तथा मन्दस्य विज्ञेयाश्चरणाश्च कचाबिलाः । अतिस्थूलः पृथुत्वेन सार्द्धहस्ताधिकः करः । अरत्निकं वा, दैर्घ्येण प्रमाणं गात्रयोरपि । उरोमणिस्तथा स्थेयोरत्निमात्रोऽतिमांसलः । विंशत्यङ्गुलमानस्तु अन्तर्गलमणिर्भवेत् । अनेनैव हि मानेन वातकुम्भः प्रकीर्त्तितः । एते प्रशस्ता मन्दस्य नृनाथ ! कथितास्तव । नोक्ता ये तेऽपि भद्रस्य विज्ञेयाः समलक्षणाः । मृगस्य साम्प्रतं वच्मि प्रदेशान् लक्षणान्वितान् । त्र्यङ्गुलं पुष्करं तस्य त्र्यङ्गुले श्रोतसी तथा । अङ्गुलानि च चत्वारि कीर्त्तितान्यस्य चाङ्गुलाः । तनुः करः त्र्यरत्निःस्याद्दानाहे सार्द्धरत्निकः । बाहित्थात् पुष्करं यावन्मानं सङ्क्षिप्तदाहृतम् । तथा तनुतरौ दन्तौ दैर्घ्ये सार्द्धद्वयरत्निकौ । ह्रस्वौ च मस्तकौ स्यातान्तयोः सप्तदशाङ्गुलौ । प्रतिमानं तथा ज्ञेयं निम्नं पञ्चदशाङ्गुलम् । द्व्यङ्गुलं चिबुकं तस्मादधरस्तु षडङ्गुलः । अष्टादशाङ्गुलानाहे स्तनौ तु षडङ्गुले । स्यातामङ्गुलविंशत्यौ कपोलौ निम्नमध्यगौ । कटौ द्व्यङ्गुलमानौ तु निर्याणे चतुरङ्गुले । नेत्रे चापि तथा स्यातां हिम्प्रभे स्थूलतारके । नातिव्यक्तं समांसं स्याद्वातकुम्भं दशाङ्गुलम् । गर्त्ताकारञ्च निम्नं च कटकुम्भं तथैव तु । अष्टाङ्गुलान्तरं कुम्भं आयामे षोड़शाङ्गुलः । विंशत्यङ्गुलकौ कर्णौ स्वल्पौ ह्रस्वौ च वर्त्तुलौ । पञ्चत्र्यङ्गुलानाहा आयामे षोड़शाङ्गुला । ग्रीवा मृगस्य विज्ञेया कराळमासनं भवेत् । सार्द्धद्वयरत्निकायामः कुब्जवक्त्रोऽतिमात्रया । वंशोमृगस्य विज्ञेयो निम्नतलनिभप्रभः । स्थूलास्थि विषमं निम्नं पुच्छमध्यार्द्धरत्निकम् । आसनेन समं चैव मृगस्य पश्चिमासनम् । पञ्चाङ्गुलस्तु विज्ञेयः मेचकोगुदसंस्तृतः । कचाग्रन्थिसमाकीर्णस्थूलोह्रस्वश्च बालधिः । अपरापादपार्ष्णिभ्यां ह्रस्वमात्रयष्टिक्रयः । दैर्घ्यतनुरङ्कच्छ्रोहिषप्रत्यङ्गुलायतः ।

तत्प्रमाणे तथा गात्रे चिपिटे चापि निम्नभे । चरणाश्च गतच्छायैश्चतस्त्रिद्व्यङ्गुलैर्नखैः । संयुक्ताःस्फुटिता निम्ना माने नाष्टादशाङ्गुलाः । एतदुद्देशमात्रेण कथितं मृगलक्षणम् । अतःपरं प्रवक्ष्यामि तेषां बलपरीक्षणम् । गजा न बलहीनेन शुभरूपेणापि शोभनाः गुणेष्वपि बलं श्रेष्ठं तत् परीक्षेत पण्डितः । शरीरान्तर्गतः प्राणो बलशब्देन कीर्त्यते । क्रियते चारुचस्याय तस्योपायैः परीक्षणम् । जाम्बूनदस्य ताम्रस्य पलानां रजतस्य वा । अष्टादशसहस्राणि युक्त्या संवह्य वेगवान् । दशयोजनमध्वानं गच्छति श्रमवर्जितः । यो गजो गजमध्ये तु स उत्तमबलः स्मृतः । यस्तद्दशसाहस्रभारमादाय गच्छति । सप्तयोजनमध्वानं स मध्यमबलोमतः । दशसाहस्रिकं भारं वहीत्वा पञ्चयोजनम् । अध्वानं योऽपि संयाति स हीनबल उच्यते । सप्तभागद्विहस्तेन परिणाहेन संयुतम् । चतुर्हस्तनिखातं तु योभिनत्त्युत्तमोऽपि सः । अथ योत्पाटयेद्वापि बलेन महता युतः । सार्द्धत्रिहस्तखातन्तु सप्तहस्तोच्छ्रितं तथा । पञ्चाशदङ्गुलीकेन परिणाहेन संयुतम् । भिनत्ति योगजः शीघ्रं क्षिपत्युद्धृत्य वा पुनः । स गजानान्तु सर्वेषां मध्ये मध्यबलो मतः । हस्तत्रयनिखातन्तु षड्हस्तोच्छ्रयमेव वा । युक्तं स्थूलतया चैव पूर्वसंख्यार्द्धमात्रया । भिनत्ति हेलया यस्तु उत्खातं वा करोति वा । स्तम्भं कुञ्जरमध्ये तु स हीनबल उच्यते । गुरुत्वं च यतः श्रेष्ठं गुरुत्वादधिकं बलम् । बलादभ्यधिकं सत्वं तस्मात्सत्वं निरूपयेत् । शुद्धस्फटिकसङ्काशं सत्वं हृदि शरीरिणाम् । दुर्लक्ष्यं विद्यते सम्यगुपायैस्तद्धि लक्षयेत् । सुप्रशस्ते दिने लग्ने गजोगैरिकमण्डितः । कक्ष्याचामरघण्टादिस्वाभरणभूषितः । पादान्दोलनसंजातघण्टारवनिभस्वनः । आरोहककरास्फालनतोत्त्राक्रोशिताननः । अनन्तं ढौकयेच्छीघ्रं पार्श्वकोलाहलाकुलः । वेगोत्थानकृतास्फोटदन्तसंघट्टमर्द्दनैः । कृतां कामपि न हस्तस्य वेदनां यो न मन्यते । यो हि मर्द्दःकृतास्फालैः स्वकटं भर्त्तुमिच्छति । नापसर्पति भीत्यानोप्रतिघातं रणात् क्वचित् । कण्ठगर्जितनादेन परिपूरितदिङ्मुखः । निवर्त्तते च दुःखेन स भवेत् सत्ववान् गजः । पदातिमश्वसङ्घं वा गजमालातिभीषणम् । रणोत्थानसमुद्भूतघोरकलहाकुलम् । उद्यत्य समरे गच्छेद्रोषरञ्जितलोचनः । दन्तदारणरागेण प्रतिनागकृतेक्षणः । प्रसारितैरतिस्फीतैर्निःशङ्कं कर्णपल्लवैः । यो गच्छत्यतिवेगेन स भवेत् सत्ववान्-

गजः । शार्दूलाकृतिसत्वानां त्रासवर्जितमानसः। कृतकं च तथा नागं योभिनत्युत्तमो हि सः । दावानलशिखिश्रेणीयन्त्रसंत्रासवर्जितः । वनेषु विचरत्येव स सत्त्वसहितो गजः । कृतमङ्गावशाद्यस्तु न वारोहणमीयते । सङ्कुचन् मस्तकं दीनोमन्दान्मन्दतरो भवेत् । आलोकयति गात्राणि चीत्कारकरणप्रियः । आलोकयति शोभाभ्यां लोचनाभ्यामतिद्विपम् । पदात्यश्वसमूहं वा ज्वलन्तमिव मन्यते । अधमस्तु सविज्ञेयो गज सः श्रमवर्जितः। यस्तु संघटते मन्दं घटितश्चापसर्पति । तथापसर्प्य वेगेन दन्ताघातं प्रयोजयेत् । किञ्चित्तिर्य्यङ्मुखोभूत्वा कृतचीत्कारनिस्वनः । कुरुते दन्तसंघातम् स विज्ञेयोऽधमोगजः” ।

प्रथमादिपञ्चदशासु मदविकारभेदमुक्त्वाह तत्रैव । “तटतरुभञ्जनोन्मूलनरतस्तु पञ्चाङ्गजो भवति । करचरणाञ्चितकटस्थल गलनुमदसलिलसिक्तभूमितलः । संग्रामे रिपुभरकरविमुक्तशरनिकरशल्यसहः । करवीरपुष्पलोहितलोचन: स चारुदारुणाकारः । प्रतिनागसंप्रदारणप्रकृतिरंशस्तु सप्तम्याम् । न शृणोति नैव पश्यति च न भयञ्जानाति सर्वसत्वकृतम् । यश्च घनास्फालितं सुस्फरितं चाननं पतति कारयन् । न सहन्ते तस्य गन्धं सङ्कोचितगात्रकुञ्जकरकटाः करिणः । मर्द्दितनिजबला विमुक्तनादाः प्रणश्यन्ति । न तथा शङ्खाभरणैश्चामरैर्नीचमालाभिः । भवति यथा मदधारैर्मुखस्य शोभा गजेन्द्राणाम् । क्रमविरहिता भवति हि षष्ठी वा पञ्चमी चतुर्थी वा । दीनावस्था करिणां सत्ववतां मदविशेषेण । अतिदृढमदविकारे सहन्ति शिशुमदेऽपि मातङ्गाः । सत्वातिरेकयुक्तावलस्य शोभां परां प्राप्ताः” । स्थलभेदे न मदोद्गमफलं तत्रैवाह ।‘कुरुते नरपतिदृष्टिं दक्षिणगण्डस्थलोद्गतन्दानम् । रोमोद्गतं च वातुर्विशेषसुखदं सदा भवति । उभयकटस्थलसमनिर्गतं च विषयस्य वृद्धिकरम् । शिशिरसुगन्धिपरिमलं सुखप्रदं जायते भर्त्तुः । माङ्गल्यं योजननं सौभाग्यकरं सत्यजननं च । माद्यन्ति यत्र देशे दशाविपाकेन बलकृतानन्दाः । करिणस्मिन् राजा वर्द्धितवंशः सुखं वसति । कतकबहुलैलापरिमलश्च सुखदोमदो भवति । मूत्रपुरीषस्वेदाम्लकफरसोनादितीव्रगन्धधरः । अशुभकरोऽसौ नरपतियात्राङ्गाद्यते मदः । जायन्ते ये भावा राजन् ! मदखण्डमण्डितसत्वस्य । नागस्य मदविशेषात्तांस्तान् प्रवक्ष्यामि । चालयति दुर्गन्धमिवाभाय पुष्करं चिपति प्रेरयति । वेष्टिजिह्वाग्रेण स्तनको विघटितोष्ठपुटः। संपीड्य पुष्कराग्रेण चाङ्गुलिं निःश्वसत्याधोवदनः । तिर्य्यक्प्रेक्षी भवति मीलिताक्षः क्षणं स्थित्वा। तिर्य्यक् चालितवदनमङ्गुल्या पुष्करप्रकम्पेन । किञ्चित्समुन्नताक्षः कर्णकण्डूयनं कुरुते । किञ्चिच्च दर्शयित्वा मेढ्रं नाशयति कोषकुन्तलम् । हृष्टः क्रीडति परिवर्त्तितानन्तो बन्धनस्तम्भं कृतमत्सरः । प्रधावति संवेष्ट्य करं विषाणमुद्यम्य गर्जति सलिलपूरितजलधरगम्भीरनादेन । उद्घासितापहृतः स्वच्छन्दक्रन्दतिकापि । गुरुमर्षिकश्च भवति वनतरुगहनोन्मूलनातुरतः। वागङ्कुशसुखजातं बाधनं न सहते ह्यभिन्नसत्वोयः । तिर्य्यग्विकलत्वाच्च तथा सगजो गुरुमर्षिकोज्ञेयः । रमते च पांशुविकरणकर्द्दमावगाहाद्यैः । एवंविधस्वभावो मदभेदवशाद्गजो भवति । यो यस्मिन्नेव ऋतौ गृह्णाति मदमतङ्गजः सुखदम् । स च तस्मिन्नेव पुनः प्रभिद्यते दानयुक्तश्च। इति मदवृद्धिविशेषाः कथितास्तव भूतयेश ! तत्त्वेन । परिवर्त्तते मदोयैर्हेतुभिरशुभैस्तांस्तव्रवक्ष्ये । प्रतिवारणाभियानाद्दूराध्वगमनात्कुभोजनाच्चापि । बन्धनदोषाच्च तथा तृष्णाक्षुत्पीड़नाच्चापि । शार्दूलादित्रासाद्दावानलोल्कायनिप्रपतनाच्च । (अशनिरत्र विद्युत्)। नश्यति मदोगजानां शीघ्रं वर्ज्यं विमतश्च तथा । मातापितृजैर्दोषैर्मन्दमदानन्दवर्जिताश्च तथा । जायन्ते द्विरदा यैर्यथा तथा साम्प्रतं वक्ष्यामि । मन्दमदेन हि करिणा जातः किञ्चिन्मदोगजो भवति । मदविरहितेन तथा जनितोमदविवर्जितोऽस्त्येव । समदेन तु यो जातोगजो गजेन्द्रेण भवति तस्य मदः । एवं मदप्रकारा मातङ्गानां समुद्दिष्टाः । शृणु साम्प्रतं नरेश्वर ! मदापसरणोद्भवानि चिह्नानि । यानि भवन्ति गजानां मन्दमृदुमदविगलितसमुदयानाम् । कृष्णच्छायायुक्तोनिस्तोषितगण्डस्थलगतश्रीः। कुप्यति येभ्यः शङ्कांकरोति तेभ्योऽपि सत्वस्थः। गण्डस्थलेन जिघ्रति करेणुकां स्पृशति नैव हस्तेन । मूत्रपुरीषाणि च नो जिघ्रति वारणकृतानि यातुर्वा गर्ज्जति । सततं परिमृष्टदानराजिपरीकीर्णकटोद्भवेनातीव कण्डूयनं कुरुते। सुङ्करभिनन्दति निद्रामलसो मनसा न तुष्टिमुपयाति । चिह्नान्येतानि करिणो मदेन मुच्यमानस्य जायन्ते । प्रतिकुञ्जरयुद्धकृतो बलदर्पदयावयोभ्यस्त्वशुभः । भवति मदोनागानां तापादिसमुद्भवश्च शुभः”। “रूपवान्मदसम्पन्नोविन्ध्यशैलसमप्रभः। जायते सत्वहीनस्तु कुञ्जरः केन हेतुना। केन वा रूपहीनोऽपि मदोत्कृष्टविवर्जितः । सत्ववान्

जायते नागो एतदाख्यातमर्हसि” इति नकुलपृष्टो हहस्पतिरुवाच । “यथा जातकयोगेन जन्तूनां च शुभाशुभम् । तथा बन्धनकालोत्यकुञ्जानामपि जायते । सुलग्नावस्थितैः सौम्यग्रहैः पीड़ाविवर्ज्जितैः । बन्धनं यस्य जायेत स भवेत् सत्ववान् गजः । क्षीणचन्द्रेषु रुह्यन्ते ये गजाः क्रूरदृष्टिभिः । ये चालोकितनक्षत्रास्ते भवन्ति भयाकुलाः” । उक्तञ्च शम्भुना “मृगजातयोऽपि हि क्रूरा भवन्ति मधुपिङ्गललोचनाः स्निग्धाः । दर्पसिंहभीमहृदिकलम्भेषु स्वीकृताः करिणः” । पुनर्नकुलप्रश्ने गुरोः प्रत्युक्तिस्तत्रैव । “राजन् पञ्चविधं चैव गजानां विदितं मतम् । अल्पर्थं प्रथमं ज्ञेयं प्रत्यर्थं च तथापरम् । अन्वर्थं चैव गम्भीरमुत्तानं पञ्चमं भवेत् । प्रतोदाङ्कुशदण्डाद्यैर्विद्यादुद्वेजितानि यः । तीव्रमङ्कुशितस्पृष्टः स स्यादल्पवेदिता । स्तोकं बहु बहु स्तोकं क्षतं मन्येत योगजः । वागङ्कुशादिभिर्नित्यं सहि प्रत्यर्थवेदिता । जानात्यङ्कुशतोत्राद्यैर्यथा तत्त्वैव हि । तत्तद्वायभयैर्स्तोऽन्वर्थज्ञः स गजो भवेत् । अङ्कुशादिप्रणान् राजन्! यश्चिरेणावगच्छति । तीव्रानपि स गम्भीरवेदी भवति वारणः । रोमुणामल्पं क्षणेनापि स्पृष्टं वेत्ति तु यो गजः । उत्तानवेदिनं तन्तु गजं विद्धि महाभुज ! सर्वाणि वेदितव्यानि भद्रादीनां भवन्ति वै । प्रकृतिस्तस्य सततं भद्रस्यान्वर्थवेदिता । गम्भीरवेदिता चापि मन्द्रस्यैव प्रकीर्त्तिता । उत्तानवेदिता नित्यं मृगस्यैव भवेन्नृप ! । वेदित्वं गजजातीनां तिसृणामपि जायते । साम्प्रतञ्च यथाशास्त्रं कथ्यते वेगलक्षणम् । तिसृणामपि जातीनां उत्तमाधममध्यमम् । न चाल्पं न च दूरं द्विपञ्चपदसंस्थितम् । गजोत्थानसहोत्थानं नरं प्राप्नोति येन तु । रथाविष्टेन मनसा स वेगउत्तमोमतः। (द्विपञ्चपदसंस्थितं दशपदस्थितं गजोत्थानसहोत्थानं गजधावनसमसवधाविनम् ) येन वेगेन स्पृह्याति नरं सप्तपदान्तरम् । पदानां शतमात्रन्तु स मध्यमजवो भवेत् । येन पञ्चपदस्थं हि नरं स्पृह्याति नोदितः। पदानान्तु शतं सार्द्धं स हीनोजव उच्यते । शतद्वयं वा धनुषां गच्छेदुन्नमितानन: । द्वात्रिंशता च मात्राभिः स उत्तमजवो भवेत् । पञ्चाशता च मात्राभिः यायाद्यस्तु शतद्वयम् । स मध्यमोऽधमोज्ञेयो मात्राषष्ट्या शतद्वयात् । एवं परीक्ष्यते राजन्! वेगो वीथिषु दन्तिनाम् । अतःपरं प्रवक्ष्यामि गजस्य शुभलक्षणम्” ।

तत्र कल्याणशीलः “भाराद्दितोवा त्वषितः क्षीणः श्रान्तोबुभुक्षितः । रात्रौ वा दिवसे वापि निर्विकारस्तु यो भवेत् । कल्याणशीलः स ज्ञेयो समस्तगजलक्षणैः । विकारं कुरुते यस्तु पीड्यमानःक्षुधादिभिः । तमकल्याणिनं राजन् गजन्दुष्टं प्रकल्पयेत् । कोपोऽपि द्विविधोज्ञेयः शिशुश्चैवाशिशुस्तथा । द्विविधस्यापि राजेन्द्र! यथावच्छृणु लक्षणम् । उद्वेजितोऽपि कालेन कोपं बध्नाति निर्भरम् । क्षिप्रं स्पृह्णाति च क्रोधं दुर्निवारं मुहुः सहम् । शिशुक्रोधः स विज्ञेयो गजलक्षणकोविदैः । वार्यमाणोऽपि यत्नेन न शमं याति मुह्यति । स ज्ञेयस्त्वशिशुक्रोधो राजन्! स हि रणप्रियः। साम्प्रतं चैव वक्ष्येऽहमायुर्लक्षणमुत्तमम् । आभ्यन्तरं च बाह्यञ्च लक्षणं द्विविधं स्मृतम् । आभ्यन्तरं योगसाध्यं बाह्यं किञ्चिच्च लक्ष्यते । तेनान्तरं परित्यज्य बाह्यं लक्षणमुत्तमम् । क्षेत्रसत्वसमायोगा । भवन्ति द्वादशैव हि । एकं हस्तगतं क्षेत्रं द्वितीयं वदनाश्रितम् । तृतीयञ्च विषाणस्थञ्चतुर्थं शिरसिस्थितम् । पञ्चमं नयनस्थं च षष्ठं कर्णाश्रितं भवेत् । कण्ठस्थं सप्तमञ्चैव अष्टमङ्गात्रसंस्थितम् । नवमं चरणे ज्ञेयं शेफाङ्गस्थं दशमम् । एकादशञ्च कान्तिस्थं द्वादशं सत्वसंस्थितम् । एवं द्वादश क्षेत्राणि मातङ्गानां भवन्ति हि । द्वादशैव दशाश्चैवाः शेफाङ्गेष्वभिलक्षिताः । विंशोत्तरं वर्षशतम्भद्रस्यायुः प्रकीर्त्तितम् । अष्टाशीतिर्मन्द्रस्य चत्वारिंशत् मृगस्य च । मिश्रस्य चायुषः संख्या जातिभावेन जायते । प्रदेशज्ञानतत्त्वज्ञोजातिं समुपलक्षयेत् । सर्वक्षेत्रैः सुसंपूर्णैः संपूर्णायुर्गजो भवेत् । हीनैश्च हीयते चायुर्यावदभिधीयते । दशाब्दानां क्षयं कुर्य्यात्तल्लक्षणवर्जितः। विंशत्यब्दविनाशश्च हीने क्षेत्रद्वये भवेत् । क्षेत्रत्रयावहीने च त्रिंशदब्दपरिक्षयः । चत्वारिंशत्समाहानिर्हीने क्षेत्रचतुष्टये । (समा संवत्सरः) । पञ्चाशदब्दाहीयन्ते हीने तु क्षेत्रपञ्चके । षट्क्षेत्रहीनतायान्तु षष्टिवर्षविनाशनम् । सप्तत्यब्दविनाशाय सप्तक्षेत्रविहीनता ॥ अशीतिरष्टभिर्हीने वर्षाणाञ्च विनश्यति । नवतिर्नवभिर्हीनैः क्षेत्रैर्नाशं हि प्रयाति । दशभिश्च तथा हीनैर्नश्यत्यब्दशतं ध्रुवम् । दशोत्तरं चाब्दशतं हीना छाया विनाशयेत् । विंशोत्तरं चाब्दशतं हीने सत्वे विनश्यति । एवं दशाब्दनाशं च क्षेत्रं कुर्य्यादलक्षणम् । एवमायुःक्षयं विद्यात् गजस्य गजकोविदः । सामान्यलक्षणं ह्येतत् जीवितस्य परीक्षणे। विशेषलक्षणं यावद् पृहल्लक्षणजातितः । एवमुद्देशमात्रेण गजायुर्लक्षणं तव । कथितं साम्प्रतं राजन्! दोषघ्नं वच्मि लक्षणम् । पादानां लक्षणं सम्यक् दन्तदोषं प्रणाश-

वेत् । दन्तयोर्लक्षणं हन्ति दोषान् वाहित्थसंश्रितान् । वाहित्थलक्षणैः सम्यक् नेत्रदोषक्षयो भवेत् । नेत्रयोर्लक्षणं हन्ति दोषांस्तालुसमाश्रितान् । सृक्कदोषविनाशश्च क्रियते तालुलक्षणैः ॥ सृक्काणां लक्षणं कुर्य्यात् सगद्दोषनाशनम् । कपोलकटदोषघ्नाः सगदस्यागुणा नृप ! । निर्य्याणवातकुम्भानान्दोषघ्नः करयोर्गुणः । कुम्भदोषविनाशाय तयोरेव गुणो भवेत् । कर्णदोषविनाशस्तु क्रियते कुम्भलक्षणैः । कण्ठदोषविनाशाय कर्णलक्षणमेव हि । आसनस्य हि ये दोषास्तान् हरेत्कण्ठजोगुणः । वंशदोषक्षयकर आसनस्य गुणो भवेत् । गुणाघ्नन्ति हि वंशस्य दोषान् तत्स्थलसंश्रितान् । पश्चिमासनदोषघ्नं लक्षणं तत्स्थलाश्रितम् । कुक्षिपेचकदोषघ्नं पश्चिमासनलक्षणम् । गुणाः पेचककुक्षिस्थाः पुच्छदोषविनाशनाः । मेढ्रदोषक्षयं कुर्य्यात् पुच्छलक्षणमेव हि । मेहनस्य गुणा हन्ति दोषांश्चापराश्रितान् । अण्डकोषगतं दोषमपरालक्षणं हरेत् । नाभिदोषक्षयं कुर्य्याद् अण्डकोषस्य लक्षणम् । नाभेर्गुणैश्च हन्यन्ते दोषास्तनसमाश्रिताः । उरोमणिगतान् दोषान् नाशयेत् स्तनलक्षणम् । चिबुकस्य हरेद्दोषान् उरोमणिगतोगुणः । यथा दोषक्षयो राजन् ! लक्षणैः क्रियते शुभैः । दोषातिरेकोऽपि तथा प्रदेशगुणनाशकः । प्रदेशोऽनन्तरस्यैव प्रदेशस्य गुणान्वितः । कुरुते दोषनाशं हि स दोषोगुणनाशनः । करकुम्भविषाणाक्षिकर्णलक्षणसंयुतः । सर्वैरेवाशुभैरन्यैर्हीनलक्षणशुभोगजः । स्थूलं चन्द्रांशुशुभ्रं स्याद्रक्तं च ज्वलनप्रभम् । वज्रं काञ्चनसङ्काशश्चाब्दखड्गःसुपिङ्गलः । एतेषां च समायोगाद्दन्तानां मधुपिङ्गला । यतो गजविषाणानामतो मधुनिभाः शुभाः । भद्रजातेर्गजस्यैतन्मन्दस्य च मृगस्य च । घृतपीयूषकुन्देन्दुश्वेतक्रौञ्चविपञ्चकम् । एवं जातित्रयस्यापि सामान्यं शोभनं मतम् । कपोतधूमभस्मास्थिसर्पच्छत्रकसन्निभाः दन्तयोस्त्वशुभा राजन् ! छाया पञ्चविधा अपि । अध्यर्द्धारत्निकं राजन् ! प्रमाणं दन्तयोः शुभम् ।

अत ऊर्द्ध्वं प्रवक्ष्यामि गजानां वर्णलक्षणम् । आहारस्य विशेषेण वातपित्तकफैस्तथा । देशजन्मगुणैश्चैव वीजयोनिवशेन । मध्यावोकननक्षत्रलग्नराशिवशेन च । पूर्व्वकर्म्मवशाच्चापि धातूनाञ्च विपर्य्ययात् । भवन्ति कारणैरेभिर्वर्णा नानाविधा नृप ! । दिव्यगन्धाः शुभैर्भेदैर्विविधास्ते भवन्ति हि । सिन्दूरगञ्जवैदूर्य्यविद्युज्जाम्बूनदप्रभाः । इन्द्रनीलसमाभाश्च भवन्ति शुभकान्तयः । अतिश्वेताश्च रक्ताश्च शुकवर्हिणसप्रभाः । एते देवगजाः सर्व्वे भूतले न भवन्ति हि । अतिश्वेताश्च रक्ताश्च शुकवर्हिणसप्रभाः । दैवयोगाद्वने प्राप्ते कश्चिदेव भवन्ति हि । वन्दनीयश्च पूज्योऽसौ नासौ ग्राह्यो नराधिपैः । शृङ्गाराङ्गारभस्मास्थिपङ्कमाञ्जिष्ठसन्निभाः । रूक्षाश्च सवर्णाश्च गजास्ते तेऽतिनिन्दिताः । एवं वर्णविशेषास्तु कथितास्तव सुव्रत ! । गजमेकादशगुणं वक्ष्यमाणं निबोध मे । मधुसन्निभदन्तश्च श्यामोमधुनिभेक्षणः । उदरे पाण्डुवर्णश्च वक्त्रे च कमलप्रभः । द्विरेफसमबालश्च कुन्देन्दुसदृशैर्नखैः । स्थूलतारोमयुक्तश्च शेषेष्वङ्गेषु पीतकः । विचित्रञ्च मुखं यस्य रक्तैःश्वेतैश्च विन्दुभिः । स नागोगजयूथानां मध्ये राजाऽत्र जायते । तं प्राप्य नृपतिर्भुङ्क्ते सागरान्तं महीतलम् । नीलसद्वर्णसंस्थानः स गजोयूथनायकः । मुखे मदे च हस्ते च कर्णोदरशिरस्सु यः । केशैः शुभैश्च वलिभिर्विन्दुभिः परिमण्डलैः । सवर्णो यो भवेद्दन्ती कैलासः सोऽभिधीयते । अतःपरं प्रवक्ष्यामि निःश्वासस्य तु लक्षणम् । निःश्वासोद्विविधोज्ञेयः शुभश्चाशुभस्तथा । शुभः सुरभिगन्धः स्यात् पूतिगन्धोऽशुभोमतः । विशेषेण तयोश्चैव लक्षणं भूप ! कीर्त्त्यते । स्वच्छता दीर्घता चैव समता च सुगन्धिता । सौकुमार्य्यं मृदुत्वं च निश्वासस्य तु षड्गुणाः । स्थूलता ह्रस्वता चैव दुर्गन्धत्वं तथोष्णता । पारुष्यं विषमत्वञ्च दोषाश्चापि भवन्ति षट् । दशारत्निप्रमाणं च रेणुकं पित्तलक्षणम् । यो निश्वसिति दीर्घं च स दीर्घायुर्गजो मतः । अतःपरं प्रवक्ष्यामि गजालोकित लक्षणम् । स्निग्धं स्थिरं च सौम्यं च वारिजोत्फुल्लतारकम् । सलक्षं प्रतिनागं तु प्रेक्षितं शुभकारणम् । उद्विग्नञ्चकुलं दीनमविकाशिततारकम् । ऊर्द्धाधःपार्श्वं दृष्टञ्च निर्लक्षं निन्दितं भवेत् । क्षणानां शास्त्रभेदान् वक्ष्यमाणान्निबोध मे । नेत्रयोः पुटपालिस्थाः क्षणाः शुभफलाः स्मृताः । संख्या तस्यैव मानन्तु रोमणां चैव प्रकीर्त्तितम् । देहच्छायासवर्णत्वं मृदुत्वं च तथा परम् । अनाविलत्वं घनता नम्रा च स्फुटिताग्रता । अंशुमत्ता च स्वच्छत्वं रोमणां सप्त गुणाः स्मृताः । दोषाश्च सप्तसंख्याः स्युर्गुणानां च विपर्य्ययात् । शुभानि शुभकर्त्तॄणि दुःखदान्यशुभानि च । अतःपरं प्रवक्ष्यामि लक्षणं पक्ष्मसंश्रयम् । वालोत्तानानि ह्रस्वाणि दीर्घाण्यायतनानि च । मृदूनि पिङ्गवर्णानि पक्ष्माणि करिणः सदा । स्निग्धच्छायानि तन्वानि समानि च दृढानि च । अयनानि सान्द्राणि पक्ष्माण्यतिशुभानि च । गजानां स्वामिनः

सौख्यं कुर्व्वन्ति रमणीयताम् । दृढाः स्निग्धाप्यलम्बाश्च सुदन्ताश्च चन्द्रप्रभाः । तालवृन्तसमाकारा बाला भर्त्तुर्जयप्रदाः । शुनःपुच्छसमा ह्रस्वाः कपिलाः स्फुटितास्तथा । अनल्पातिशयोपेताः सुदन्तास्तेऽतिनिन्दिताः । भर्त्तुरारोहिगणानान्तु नित्योद्वेगकरास्तु ते । अतःपरं प्रवक्ष्यामि केशानामपि लक्षणम् । अभिन्ना ऋजवः स्निग्धा घना मधुकरप्रभाः । केशा वारणनाथस्य क्षेमवृद्धिकरा मताः । रूक्षास्तु निष्ठुराः पिङ्गाः स्फुटिताश्च जुगुप्सिताः । कुर्व्वन्ति दन्तिनां नित्यं स्वस्य नाथस्य चाशुभम् । मध्यवालकेशरोमूणां लक्षणं कथितं मया । ऋषिमार्जारमण्डूकशृगालैश्च समप्रभम् । वानरस्य समं चैव मुखं नागस्य निन्दितम् । स्निग्धान्यापूर्णगण्डानि गिरिकूटनिभानि च । आपूर्णमेघरूपाणि पूजितानि मुखानि वै । मदहीनं क्षणं ह्रस्वं वाह्निघनिःप्रभं तथा । वराहलोचनाक्रान्तमहटचिबुकं तथा । ललाटतटपर्य्यन्तगर्त्ताकृतिभिरन्वितम् । सगदं हीनतायुक्तं मुखं नागस्य निन्दितम् । मुखस्य लक्षणं सम्यक् कथितं तव सुव्रत ! । अतःपरं प्रवक्ष्यामि मातङ्गगतिलक्षणम् । समा च लघुपादा च वेगेऽप्यतिशुभा मता । दीर्घक्रमा मुखोत्क्षिप्ता गात्रसंवरहारिणी । शुभलक्षणसंयुक्ता पुरुषस्य वकस्य च । मातङ्गवृषसिंहानां गतिस्तुल्या शुभा मता । क्षोभचालितगात्रा या विषमा लघुक्रमा । वेगेऽपि मन्दसञ्चाराद्विशेषान्दोलितासना । मृगस्य कृकलासस्य जम्बुकस्य खरस्य च । गमनेन समा या, सा शुभा नो दन्तिनाकृतिः । कथितं तव राजेन्द्र ! गजानां गतिलक्षणम् । स्थितानाञ्च यथायोगं साम्प्रतं लक्षणं शृणु । पञ्चस्थितसप्रस्थित नवस्थित द्वादशस्थिताश्चैव । पुण्यवतां जायन्ते राज्ञां गिरिसन्निभाः करिणः । लक्षणसहितैः स्निग्धैः करकुम्भविषाणकर्णनयनैश्च । संयुक्तो भवति गजो वसुदः पञ्चस्थितो नागः । (वसुदः धनदः) परिणाहायामोच्छ्रयवलविक्रमधैर्य्यकान्तिसम्पन्नः । भर्त्तुः प्रतापजननो ज्ञेयः सप्रस्थितो हस्ती । उत्साहवेगसाहसमदसत्वगुरुत्वदक्षतायुक्तः । करदन्तकर्णस्तु कुशलो नवस्थितः करी भवति । वह्निर्मेधा सत्वं यत्रःकुम्भौ तथाऽक्षिणी हृदयम् । रोमाणि च्छविपादाः तथासनं पुच्छवंशश्च । द्वादश चैतानि यदा स्थितानि दृश्यन्ते यस्य नागस्य । स द्वादशस्थितो वै भवति गजः सर्व्वसौख्यकरः । सञ्चारस्थितभेदाः कथिता गुणसंख्यया गजेन्द्राणाम् । दिव्याभ्रमसत्वानां लक्षणमिह साम्प्रतं वक्ष्ये । निहतद्विपदचतुष्पदकृमपाक्षं स्पृशति च न यो जिघ्रति । न च जिघ्रति मूत्रादीन् स वारणो दिव्यसत्वस्तु । दत्तञ्च योऽत्ति मांसं सत्वानां सर्व्वं तु लोभेन । जिघ्रति मूत्रपुरीषाणि पिशाचसत्वः स विज्ञेयः । एवं सत्वपरीक्षा क्रियते नरनाथ ! वारणेन्द्राणाम् । स्वरलक्षणमिदानीमशुभं शुभञ्च वक्ष्यामि । स्थानान्यष्टौ नृपते ! भवन्ति शब्दस्य वारणेन्द्राणाम् । ताल्वोष्ठशिरउरःकरजिह्वामूलं गलकपोलौ च । गम्भीरसौम्यहृष्टास्तथाप्यमीरितास्तथा स्निग्धाः । नादाः शुभा नराधिप ! षडेव कथिता गजेन्द्राणाम् । चत्वारस्त्वशुभा रौद्राभयशोकसङ्कमोत्पन्नाः । एवं शुभाशुभाश्च दशप्रकाराः स्वरा ज्ञेयाः । अन्येऽपि गलवक्त्रगानिलास्फालनोद्भवा बहवः । शब्दा भवन्ति करिणां शुभाशुभं न तैर्भवति । निम्नोषितचित्रकाषितविरुषितकूजितखरोद्भनादनिभाः । वायसजम्बुकफिकाटभङ्गसदृशारवास्त्वशुभाः । ज्ञेयानि शुभानि सदा मृदङ्गजीमूतदुन्दुभिनिभानि । पातायितगर्जितहसितानि वृंहितानि नागानाम् । पातायितञ्च ताल्वोष्ठसम्भवं गर्जितकं चैव । जिह्वासमुद्भवं च फेनायितमित्यभिख्यातम् । हसितं कपोलजनितं पुष्करविवरोद्भवञ्च नागानाम् । भवति धनधान्यवाहनभूलाभकरं नरेन्द्रस्य । हस्तेन मृदङ्गरवं तु कर्णाभ्यां दुन्दुभिस्वनञ्चैव । दर्दुररवं तु पेचकेन करोति योऽसौ जयकरः । सर्व्वस्थानसमुत्था शब्दा नरनाथ ! वारणेन्द्राणाम् । आचार्य्यैः सर्व्वे वृंहितसंज्ञाश्च रवाः शुभा ज्ञेयाः । एते च जयपराजयकथनसमर्था भवन्ति भूपानाम् । गर्हितशुभप्रदेशस्थानाकृपरिवर्ज्जिता नादाः । शुष्कद्रुमकाककण्टकवल्मीकास्थिश्मशानदुष्टाश्च । पाषाणाङ्गारादिषु भूमिषु यदि संस्थिताः करिणः । वृंहन्ति हीनलक्षणमेतद्भर्त्तुस्तदाऽसुखं भवति । प्रभूतमृदङ्गरवं तु यदि वृंहन्त्यानन्दपूरिताः करिणः । प्रस्थानं भवति तदा नराधिपस्य विजयस्तदा राजन् । ! समामध्ये च यदा वृंहन्ति शार्द्दूलवत् गजाश्चदुष्टाः । भवति कसैन्यस्य तदा विजयः संख्ये नरेन्द्रस्य । (संख्यं संग्रामः) कलहंसनाद मधुरं किञ्चिदिगोत्क्षिप्तपुष्करस्तु यदा । वृंहति सदा च हस्ती तदापि जयो भवेद्भर्त्तुः । सुखविवरकपोलगतं वृंहत्यसकृत् गजो यदा हृष्टः । मधुरञ्च जइसितञ्च जयप्रदं भवति भूपानाम् । त्रीन् वारान् क्रौञ्चरवं हंसरवं वृंहितं यदा कुरुते । एतदपि नागहसितञ्जयप्रदम्भवति भूपानाम् । गर्जति घनवत् सततं यदि वारणः प्रहृष्टमनाः सुखरम्भुविविटकरस्तदाऽरिविजयोऽभवेद्भर्त्तुः । घनदव

स्फीतसवितं ससौत्करं बृंहितं यदा कुरुते । भवति तदा वारणनाथस्य भवति शत्रुनाशः खल्वेव । कथितान्येतानि मया शुभानि गजबृंहितानि नरनाथ ! । अशुभानि च नागानामतःपरं प्रवक्ष्यामि । शङ्काचलितनयनोऽवराह स्फुरितनिःस्वनं कुरुते । तत्प्रतिबलस्य नूनम् तदा जयो भवति । भूपाल ! वेष्टितभूतलहस्तो नदति यदा धरणिप्रकम्पनादसमम् । नरपतिराष्ट्रविनाशो भवति तदा शत्रुसैन्यकृतः। मदहर्षितखरतरसदृशं निःस्वनं यदि करी कुरुते । जनयति विजयविनाशात् पुरराष्ट्रपीडनं च तदा । वल्लिभूर्गनिस्वनसदृशं यदि वा ससत्फाल्य च हस्तम् । वामान्दोलितचरणोयदा करी बृंहति सनिःश्वासम् । आलानगतः कुरुते तदा वधोयातावैरिभिःपार्श्वैः। एवं प्रकृतिस्थायदि मतङ्गजा बृंहितानि कुर्वन्ति । आत्यन्तिकानि राज्ञां चैव भवन्ति नान्यानि" । "यदि रिपुगजाभिमुखो निवार्य्यमाणोऽपि याति रभसेन। विंशतिपदानि नागस्तत्रापि जयो भवत्येव । अमदोत्सृजाति मदं दुर्गन्धमदश्च सुरभिमदम् । दुष्टगजानां प्रथमन्तु लक्षणमेवं सकलम् । ह्रस्वतनुर्मलिनदन्तो हि महाशिराश्चाल्पकर्णयुगलश्च । नातिस्थूलोऽसितवर्णश्च रूक्षाणि च गात्र वदनरोमाणि । व्याघ्रः स भवति हस्ती दुष्टात्मा दुष्टशीलश्च । स्थूलाविषाणकुरूक्षो दीर्घविषाणोऽनामितमुखश्रीः । पृथुपादःश्यावनखो वक्रोन्नतपृष्ठदण्डेन। विकृतकुक्षिस्थोदरश्च लम्बोवराहनयनश्च । ज्ञेयोवकीलनामा ख्यातोऽयं सर्वदोषकरः । अतिह्रस्वापरगात्रो दृहन्मुखः काकश्यामनयनश्च । स्थूलतराधोमुखदन्तदीनहुशलस्फुटित वहिर्नखपादः । स्थूलनखःस्थूलपुष्करकरश्च वामन संज्ञो गजाधमो दुष्टशीलश्च । विषाणे चातिदृढे ह्रस्वे परिमण्डलौ तथा कर्णौ । वदनञ्च मांसलं स्यादधोगतस्थूलनयनञ्च । घनमांसलत्वयुक्तो ह्रस्वो ह्रस्वाङ्गुलिः करो यस्य । नाम्ना च विश्वरूपमुख इति ख्यातो दुष्टमातङ्गः । करकर्णशिरोबालधिविषाणगात्राणि यस्य हीनानि । स्यादन्धभोऽतिवामनाङ्गः पापात्मा स स्वामिनाशकरः । शयनादुत्थाय बलादुद्धावपि पादौ कर्षति लम्बेन । प्रत्युपसि गच्छति पुनः क्वापि समुपस्थापितमुखश्च । अनिभृतगात्रश्छिद्रेऽपि चलति तस्याननं च कर्णाभ्याम् । स ज्ञेयो वातकरः पापात्मा सर्वपापकरः । यस्य च लिङ्गाल्पं मेढ्रं ह्रस्वं ह्रस्वाङ्गुलिस्तनुर्हस्ता । अतिनिम्नञ्च वाहित्यं कर्णौ च तनुत्वचौ ह्रस्वौ । गात्रापरञ्च दीर्घं नखाश्च जनितान्तराश्यामा । सर्वाणि च काकाभपक्षरोमाणि च विदग्धानि ।

उदरञ्चाल्पं स्यात् ग्रीवा तन्वायता च यस्य । वंशिकनामा मतोऽसौ दुष्टगजो वर्जनीयश्च । यस्य करालौ दशनौ स्थूलौ मालान्तरन्तथा ह्रस्वम् । मलिनकषायवर्णःकपिजम्बुकलोचनोऽतिविकृततनुः । पापात्मायं हस्ती राज्ञा हेयः प्रयत्नेन । दिवसमपि यत्र तिष्ठति तं देशं दहति पावकप्रख्यः । राज्ञा विन्ध्याटवने वा परराष्ट्रे वा स मोक्तव्यः। अतिखरपरिषतनुर्नकुलच्छायस्तनूरुहैश्छाद्यैः । यो हस्ती पातारं स पातयित्वा विनाशयति । धन्वासदृशमुखोयः कर्णकषायस्य कर्कशा रूक्षाः। कृष्णा रूक्षान्वयोऽसौ भर्तुर्विपदेव मातङ्गः। रोमभिरधोमुखगतैः काकाक्षो दीर्घवक्त्रश्च । स्थिरह्रस्वकर्णयुगलः स राक्षसो हस्ती रूपेण । तिर्य्यक्प्रेक्षणनिरतोदुर्गन्धः काककुम्भवदनश्च । मूलपुरीषघ्राणे सततको भवति चक्रवालः। कुम्भौ यस्य विशालौ विक्षिप्तस्थूलतारके च नेत्रे । तन्वायतं त्रिकं स्यात् वालधिबालास्तु वक्रह्रस्वाः । रन्ध्रौ पेचककोशौ मेढ्रोपरिसंस्थितोदरञ्च महत् । चलपक्ष्मकस्तु हस्ती स भवति नाम्ना महादुष्टः । अङ्गं प्रसार्य्य वदनं विधूय चाधोरणं निपातयति । स जले स्थले च नागो विवर्जनीयः प्रयत्नेन। ह्रस्वकराङ्गुलिबालतनुदशनश्चाल्पायामगात्रश्च । मत्कुणजातिः स गजः सुदुष्टशीलश्च रुष्टश्च। कालनखो हरिवर्णोऽह्यर्धको ह्रस्वबालधिश्चैव । वक्रपक्ष्मा दुर्गन्धिघर्मविसर्पिमतालुकैरूक्षैः । अतिपिङ्गलकर्णमूलरोमशहस्तो वराहनयनश्च । तनुनखशिरालजङ्घानैकान्तैर्दुष्टचरश्चैव । विकटोनाम गजोऽसौ स्याद्वैः सर्वत्र कर्कशोजान्वोः । बहुपापकर्म्मयुक्तो व्यालानामग्रणीश्चायम् । रूक्षोवाहित्थभागो विषमौ दन्तौ च यस्य नागस्य । धूम्रामेव छाया स निन्दितो वर्जनीयश्च । दन्तौ चातिह्रस्वौ स्थूलौ रूक्षौ च मांसलो हस्तः । चिबुकं मांसविशुष्कं स्थूलतरे तारके यस्य । स्थूलहस्तो दुष्टात्मा नासौ सांग्रामिको भवेद्द्विरदः। अति दुष्टकर्मनिरतो भयालुको वर्जनीयश्च । कृष्णा रूक्षा छाया वायसजङ्घा च दृश्यते यस्य । भूतोदनञ्च कुरुते निःशङ्कं यः करार्येण । निःशेषं शष्पांश्च करोति यः सद्मनिर्य्येयम् । परिहरणीयो राज्ञायाने रणे स महता प्रयत्नेन । अतीवविरलपक्ष्मा ध्यानपरः शब्दकरणनिरतश्च । द्विगुणीकृत्य करायन्तुदति च भूतलन्त नित्यम् । वामेन च लिखति महीम्पादेन कुञ्चिताग्रेण । जर्जरविरूपकर्णः पापात्मा निन्दितो हस्ती । आनाहायामोच्छ्रयसत्वहीनो महाशिरालविकः । ह्रस्वाङ्गुलिबालकरो ह्रस्वापरगात्रकर्णश्च ।

एषोऽपि वामनःस्यादुदग्रपि भवेद्युद्धप्रियोऽसौ द्विरदः।
राज्ञा तथापि लक्षणविवर्जितो वर्जनीयश्च । स्थूलमुखहस्त-
कर्णोविहीनजघनापरस्तनूरुश्च: । महता मेढ्रेण युतो-
नष्टमदः कोशमहांश्च । मन्दालोकननिरतोमहाशिराः
पृथुविषाणनयनश्च । हस्तो नपुंसकोऽसौ विवर्जनीयश्च
संग्रामे । अल्पायुषो भवन्ति हि सह्यावजिह्वोत्ततालुका-
नागाः । नरपतिभिस्ते सततं विवर्जनीयाः प्रयत्नेन !
छायामपरिहीनं सघनाङ्गोच्छ्रायसुखेन नमितम् । उ-
च्छ्रितवक्त्रं कुब्जं विषमकुम्भं कुकुरसमानहीनहस्तं च ।
एवंभूतं तु गजं राजा दूरेण वर्जयेन्मतिमान् । स्पष्ट-
स्याति मन्दबुद्धिर्यस्तस्य कुलक्षयो भवति । लक्षणयुक्तोऽपि
गजो द्वात्रिंशत्त्वेकविंशतिनखश्च । एकोनविंशतिनखः सप्तद-
शनखश्च यो भवति । षोडश पञ्चदश वा नखान् धत्ते युक्तो
वा चतुर्दशभिः । एकादशत्रयोदशनवदशभिर्द्विदशनखै-
र्वा । संयुक्तस्त्वशुभकरः सप्ताष्टाभिश्च पापनखैः । द्विर-
दाश्चाष्टादशनखाः विंशतिनखयुक्ताश्च शुभाः । कुरुते
स्वामिविनाशं द्वाविंशतिनखोयश्च । एकोनविंशतिनखो
युवराजविनाशं कुरुते । सप्तदशनखस्तु गजो नरपतिपात्र
विनाशने समर्थः । षोडशनखमातङ्गोनायकनाशं ध्रुवं
कुरुते । पञ्चदशनखश्च योऽसौ सेनापतिनिधनकृद्गजो भव-
ति । कुरुते चतुर्दशनखोव्याधिं पुरवासिनां हस्ती । त्रयो-
दशनखो राष्ट्रवित्तविनाशङ्करोति भूपस्य । द्वादशनखस्तु
कुरुते पदातितुरगक्षयं संख्ये । एकादशनखयुक्तो
गजहानिकरो भवेत् स गजः । पुरदाहं च दशनखः
करोति हस्ती दुरालोकम् । चतुरङ्गस्य बलस्य ना-
शनन्तु नवनखो गजः कुरुते । अष्टनखश्च पुरोहित
वंशसमुन्मूलनसमर्थः । सप्तनखः प्रतिहारं नाशयति
च षड्नखोऽमात्यम् । पञ्चनखो भक्तिकरं चतुर्नखो द्वार-
पालस्य । त्रिनखोविषयाशेषं द्विनखश्चान्तःपुरानुजन्मस्य ।
एकनखोनखरहितोराष्ट्रविनाशं ध्रुवं कुरुते । एवम्भूत-
लक्षणे नरपतिना न ते गजाग्राह्याः । ताम्रमांस्रला-
भोऽतिलोमशोहीनकर्णकरवालः । हस्तो विवर्जनीयो
हीननखः पूतिलोमा च । ज्वलनक्षतं शस्त्रकृतं दुर्भिक्ष-
कृतं महद्भयं कुरुते । यस्मिन् देशे वसति नाशयति वन
स दुष्टात्मा । यस्य न भवतोदन्तौ ज्वलनकृतं दुर्भिक्षकृतं
महद्भयं कुरुते । यस्मिन्देशे स वसति नाशयति वनं स
दुष्टात्मा । यस्य न भवतो दन्तौ कुलरूपवतोऽपि गर्भ-
दोषेण । स गजोमत्कुणनामा न तं रणे योजयेद्राजा ।

कुम्भरघटागतोऽसौ हरति गजानां बलं च सत्त्वं च । अतएव
समरकाले नराधिपैर्वर्जनीयश्च । तनुहस्वदीर्घदन्तोद्धति-
सङ्कटवक्त्रविघटितविषाणः । एकदशनस्त्वधोमुखरदनश्च गजः
प्रभुं त्यजति । रदनविहीनो हस्ती निःशेषलक्षणयु-
तोऽपि । भवति न नृपतियोग्योमदजलसंसिक्त ग-
ण्डोऽपि । दूषितविरहितदीने भयरहिते विव-
र्णे च । विषमभकुम्भकुहरे राजा नारोहति सन्नाहर-
हिते च । एवम्भूतास्त्याज्याः स्वितनाशका रणे करिणः ।
अविश्रामसुजलं निपतति नागस्य यस्य नित्यं हि ।
नयनव्याधियुक्तस्य तस्य भर्त्ता रणे म्रियते । वर्द्धनशीलाश्च
नखा भर्तुश्चैव संबाधनकराः । जिह्वानखमुखमेहन-
नयनानि भवन्ति यस्य कृष्णानि । बाह्यिर्याचित
कृष्णः स गजोभर्त्तुः क्षयं कुरुते । बाह्यांसफलकपीडी
राजन् ! क्षयेन पृष्ठवंशेन । वदनेन च कपिवदनानुका-
रिणानिन्दितो हस्ती । कर्णौ दन्तौ च समौ न नतौ भवतो
यस्य नरनाथ ! । स नराधिपबलविनाशकरः करी जायते
समरे । चित्रौ रोमचितौ वा स्थूलौ वातिप्रलम्बितास्यौ वा ।
कोषौ कोषविनाशं स करोति नागश्च भूपानाम् । सितबि-
न्दुभिर्विचित्रं श्वेतं वा यस्य जायते मेढ्रम् । स गजः शत्रु-
विनाशङ्करोति भूपस्य संग्रामे । छागस्येव विचित्राणि
यस्य देहे भवन्ति रोमाणि । स गज प्रतिगजबलेन
विकृष्टो निजबलं दहति । सुप्तोत्थितस्य वदनात्
यस्य गजेन्द्रस्य गलति रुधिरजालम् । ज्वलनभयं सृजति
प्रसद्यसौ भर्तृनाशकरः । इति कथितं तव नृपते !
दुष्टमातङ्गलक्षणं सम्यक् । पापकरिणोलक्षणमतः
परं संप्रवक्ष्यामि । यल्लक्षणं भयोक्तमभद्रादीनां शुभं
च दुष्टं च । तत्करिणीष्वपि योज्यं जातिविभागेन च
युक्तास्तु । सुलक्षणेन ललितानि करेणुकानामङ्गानि
भवन्ति । युवतिसदृशानि पुरुषोचितानि च तथा पीनान्य-
ङ्गानि करेणूनाम् । गजसंस्थाना करिणी निम्नतदन्ता
सुपीनकाया च । स्थूलायता च सततं प्रभूतदया मता-
च करिणीनाम् । प्राच्यवनसम्भूताः प्रायेण लक्षणयुता
भवन्ति करिण्यः । सुलक्षणेषु च छाया लक्षणं प्रधानं
तच्च पञ्चविधं भवति । पृथिव्यप्तेजोवाय्वाकाशात्मकम् ।
तत्र पृथिव्यप्तेज आत्मकं प्रशस्तं वाय्वाकाशात्मकमप्र-
शस्तम् । क्रमेण छायाभिधीयते बलोपचयवशेन
समुत्पद्यते । तस्यैव देहोद्द्योतजननी स्थिरा प्रभाऽ-
भिधीयते । छायाफलस्य द्विगुणफलसमाद्नखसमर्था प्रभा

भवति। छाया देहसमाश्रिताः स्थिरप्रभावाऽस्थिरा च्छाया बलोपचयवशेन समुत्पद्यते। नरेन्द्रस्यैवोद्योगकाले शुभकर्मफलसूचनार्थं गजस्य प्रभा प्रकटीभवत्येव। एवं छायागतो भेदोऽवगन्तव्यः। साम्प्रतं छायारूपमभिधीयते। स्निग्धा गम्भीररूपा पार्थिवी च्छाया भवति। स्निग्धाजीमूतसन्निभा च सलिलसम्भूता, स्निग्धा रक्ता च ताम्रा च तैजसी च्छाया। त्रयं चैतल्लक्षणं शुभमशुभलक्षणानि गजस्य स्तम्भयित्वा सुखप्रदं भवति। अथाशुभा कथ्यते निःप्रभा परुषा रूक्षा भस्मनाकुलवर्णा च वायवी। रूक्षा तन्वी कृष्णादिविविधवर्णा आकाशात्मिका। इत्थं छायाद्वयमति गर्हितम् गजलक्षणानि तिरस्कृत्याशुभप्रदम्भवत्यनेन प्रकारेण च्छायालक्षणमुत्तमं भवति। विकटह्रस्वावहृदलक्षणाङ्गहीनाङ्गेषु व्याधिपीड़ितविकलाङ्गेषु गजेषु नारोहति राजा भृत्यार्थैतेष्वारोहन्तीति। यादृशं च समरकाले मातङ्गं राजा समारोहति तादृशस्य लक्षणमभिधीयते। बलं कण्ठे स्थितं नित्यं कुञ्जराणां नरेश्वर!। अतःसंपूर्णकण्ठस्तु स्निग्धपिङ्गललोचनः। घनमांसचितांसस्तु दिशोऽवमाणतत्परः। वराहजघनश्चैव सुविषाणोवराननः। सुप्रतिष्ठितपादस्तु यः स्यादगुरुसन्निभः। प्राजापत्योगजोज्ञेय संग्रामार्हः प्रकीर्त्तितः। मधुपिङ्गलदन्तोयः किञ्चित्पीतकच्छविः। रोमाणि चैव रूपाणि मुखं च कमलप्रभम्। रक्तोत्पलदलच्छाये सूक्ष्मे तीक्ष्णे च लोचने। ऐन्द्रोगजस्तु विज्ञेयोरिपुदन्द्वविनाशनः। ताम्रतालुकजिह्वोष्ठसुजातनिविड़ाधरः। पीनोन्नतशरीरस्तु रक्तकोकनदच्छविः। आयतेन तु दन्तेन करेण सुखशोभिना। पीयूषपिङ्गदन्तो हि गजःकौवेर उच्यते। तरुणाम्बुदसंकाशोद्धतप्रभविषाणभृत्। संपूर्णकण्ठपादस्तु संपूर्णसमस्तकः। मृदङ्गध्वनिगम्भीरनादपूरितदिङ्मुखः। आयतेन च हस्तेन शीकरोत्किरणप्रियः। वारुणोऽयं गजोराजन् संग्रामेषुतिपूजितः। कण्ठस्त्रिवलिसंयुक्तः संपूर्णोयस्य दृश्यते। लोचने ताम्रपिङ्गे च दन्तौ केतकसप्रभौ। पादौ च वलिनौ यस्य पीनगात्रसमांसलौ। पृथुलौ बिन्दुचित्रौ च कर्णौ चाताम्रपल्लवौ। ऐशानोऽयङ्गजो राजन्! रणकर्मणि युज्यते। तालुन्युरसि वक्त्रे च पक्षयोरुभयोरपि। आताम्रा यस्य दृश्येत च्छाया मृदुतनूरुहा। असौ सौम्यस्तु विज्ञेयः कुञ्जरः समरोचितः। अर्चिःपिङ्गलरोमा यः केशैश्च श्वेतपिङ्गलः। पिङ्गाक्षिविषाणश्च रक्तपुष्करतालुकः। आग्नेयः स गजोज्ञेयस्तेजसाग्निसमप्रभः। राज्ञा बुद्धिमता नित्यं धार्य्यः समरकर्मणि। तथ्यवर्णं मुताग्राणि सुखश्रोतांसि लोचने। निर्धूमाग्निसमच्छाये सूक्ष्मन्त्र करस्तथा। कायश्च पीननासःस्याद्देगेवायुसमः शुभः। राजन्! वायव्यमिच्छन्ति तज्ज्ञं शास्त्रकोविदाः। संख्ये नियुक्तश्च गजोनाशयेद्रिपुवाहिनीम्। निरङ्कुशत्वं चण्डत्वं तस्य दोषद्वयं भवेत्। निरङ्कुशत्वं शमयेत् प्रयोगाच्छासनादिभिः। चण्डत्वं च तथा नित्यं सुकुमारक्रियादिभिः। रोमाण्यञ्जनरूपाणि नखाः शङ्खसमप्रभाः। निस्त्रिंशविमलच्छायः स भवेद्दण्वोगजः। स वैरिणं जयेद् राजन्! रिपुसैन्यविमर्द्दनः। कुम्भवक्त्रः कटौ यस्य निस्त्रिंशघनसंनिभौ। बिन्दुभिश्चित्रितं यस्य स विचित्रश्वो गजः। तेन संग्रामकर्माणि कुरुते यो नराधिपः!। नित्यं चारिजयं तेन स राजा फलमश्नुते। सदन्तो दीर्घहस्तश्च दृढदङ्गुलिपुष्करः। घनमांसशरीरश्च कूर्म्माकारोहि सत्तम!। सांग्रामिकोगजोज्ञेय जीवत्यपि समायतम्। संग्रामविजयो नित्यं प्रतापजननक्षमः। महाशिरा महाकायो महामेढ्रो महाकरः। महादन्तोदरश्चैव महानागोवराननः। महानेत्रो महौष्ठ महाकर्णोमहामुखः। महामदो महाकण्ठो भवेत्सांग्रामिकोगजः। यद्गद्लक्षणं पूर्वमुक्तं नृप! तच्छुभमेव हि। मन्दस्यापि हि शस्तं स्यादाद्दद्वावेतौ च महागजौ। संपूर्णलक्षणोपेतो न भवेच्च महीतले। अनयोरेव भेदास्तु नागानां समुदाहृताः। सांग्रामिका द्विपा राजन्! शुभलक्षणलक्षिताः। कथितास्तत्र तत्त्वेन राजसौख्यकरागजाः।" आभिषेचनिकगजलक्षणं तत्रैव।"पीनमांसचितांसश्च कूर्म्माकारनखस्तथा। समवचितमांसस्तु सुदृढः बाल्यनापरः। छागकुक्षिः सुपार्श्वश्च रोमानाढ्यसमन्वितः। ज्वलनोज्वलनेत्रस्तु सुविषाणो महाकरः। संपूर्णचिबुकश्चैव क्रमायामोरयान्वितः। बलसत्वसमायुक्तः स्निग्धच्छविमनोरमः। सांग्रामिको भवेद्राज्ञ आभिषेचनिको गजः।"।

तत्रैव पालकाव्ये गजच्छदे।"आयुः सविंशति शतं मानं स्यात्सामजन्मनाम्। राजपुत्र! दिशाश्वेषमायुष्यादि दशादश। लक्षणानि वदे तेषां श्वेताश्चैवं विषाणिनाम्। लक्षणालक्षणं ज्ञेयमायुष्यादिदशाफलम्। नेत्राणि हस्तोऽस्तकं दन्तौ शीर्षं च चक्षुषी। कर्णौ ग्रीवा च गात्रञ्च वक्षः कार्य्यस्य भेदतः। लक्षणं सन्निकृष्टं यद्विप्रकृष्टञ्च यद्भवेत्। मर्तास्त्रितलक्षणोपेतं प्रभूतञ्च मनीषिभिः। उत्तमे कुले वने जातौ प्रचारे वन्तु लक्षणम्। दशायाञ्च तदाख्यातं

प्रभूतमिति सूरिभिः। दक्षिणन्दक्षिणाङ्गं च हस्तिनः पुष्यदं मतम्। तथा वामं च वामाङ्गं हस्तिनीफलदं मतम्। लक्षणं दक्षिणाङ्गोत्थं फलं भूमिभुजां मतम्। महद्यत्र भवेद्यच्च लक्षणं तन्महाफलम्। यदल्पमप्रकाशञ्च तदल्पफलदं मतम्। मध्यमानफलं मध्यं लक्षणं तु समादिशेत्। शुभाशुभेन मिश्रेण बहुत्वेनादिशेत् फलम्। कदाचित् शुभदं चास्य गजानामप्यलक्षणम्। शुभकर्म्माणमासाद्य राजानमथ वा द्विजम्। यथा हि सर्वसरितः समुद्रं समुपेत्य हि। स्वरसेन वियुज्यन्ते भवन्ति लवणाम्भसः। एवमासाद्य भर्त्तारं बहुलक्षणलक्षितम्। भवन्ति बाधितानीह दुर्लक्षणफलानि च"। इत्युपक्रम्य गजदेहस्थानविभागनामभेदस्तत्रैव दर्शितः। यथा "विषाणयोर्यस्तिर्य्यक्स्था-द्वावताग्रौ पक्षोऽपि सः। किविका च पक्षस्याधःकुम्भोपरि च बिम्बकः। अथ पक्षोपरिस्थोऽपि पुरःकरोऽपि भवेत्तथा। तथा पक्षोपरिस्थे च किविशोपरिभागके। वाहित्थोपरि कोशाश्च मस्तकं च तथा मतम्। स्यातां मस्तकपिण्डौ च मस्तकस्याथ बिन्दुकः। तथा बिन्दूपरि स्यातां वितानौ बिन्दुपार्श्वतः। ततोऽन्तरवितानं च पृष्ठं तत्र विनिर्दिशेत्। बिन्दुवितानयोश्चान्तः पुरस्तात् पाकिलौ किल। नीचे मस्तकपिण्डाद्धि वितानबिन्दुपाकलः। निर्य्याणं च वितानोर्द्ध्वं कर्णौ चापि ततः कटौ। कटयोः स्रोतसी चापि कटस्रावस्तयोरधः। पृष्ठतः कटिसंधी च गण्डौ च कटयोरधः। कटगण्डान्तसङ्गाने घाटसन्धी च घाटके। घाटासन्ध्युपरिष्टाच्च कर्णसन्धिसमीपगे। अवटे गात्रगण्डाधःकपोलौ च तदन्तरे। रोमकूर्चौ च पादौ च कपोलाधस्तथा मतौ। ततः सगदसन्धी च सगदान्तरमत्र च। आसगदात् हन्ववधिः प्रदेशः शिरसो मतः। अक्षिकूटावुच्चावभावुपरि वै तयोः। शुष्केवाक्षोऽधरः स्यात्तु नेत्रस्रावौ तयोरधः। अपाङ्गावक्षिबाह्ये च तत्सन्धी चाक्षिपृष्ठतः। पक्ष्मणोर्मण्डले चाथ तत्सन्धी वर्त्ममण्डलौ। वर्त्ममण्डलसन्धी च ततश्च श्वेतमण्डले। श्वेतमण्डलसन्धी च ततः कृष्णे च मण्डले। तत्सन्धी च ततः कृष्णे सत्सन्धी वर्त्ममण्डले। तयोरपि तथा सन्धी प्राग्भागे चक्षुषोरपि। कनीनिके समाम्नाते सन्धी तत्र तथानयोः। दृक्षिगतदेशानां समुद्देशो भवेदिह। किल चित्तौ च कर्णौ च कर्णयोश्चूलिका ततः। तदधः कर्णपिप्पल्यौ वलिके द्वे प्रदेशगे। कर्णमस्तकसन्धी च पश्चात् कर्णापवर्त्तकः। तदन्तश्च समस्थानावुद्घातौ परिकीर्त्तितौ। कर्णचूलिकयोरग्रे पिङ्गलाख्यौ च भाषितौ। पुरस्तात् कर्णपिप्पल्याः कर्णसंवेशचर्म्मणी। कर्णान्तः कर्णनाड्यौ च सन्धेस्तां तस्य भागतः। तयोर्वीथिःकबन्धश्च सगड्डमध्यकर्णयोः। कर्णसन्ध्योरधस्ताच्च तथाधःसन्धिसंश्रितौ। तदधःकर्णपाल्यौ च प्राक् कर्णोपरितस्तयोः। नाडीपार्श्वगतौ चात्र मध्यकर्णौ तयोरधः। अधःकर्णौ समाख्यातौ बहिःकर्णापवर्त्तयोः। पार्श्वकर्णौ बहिःकर्णौ कर्णयोश्च क्रमाद्बहिः। अन्तरान्तरकर्णौ च पर्य्यन्तकर्णपाशयोः। अधस्तात्त्विति भागाः स्युः कर्णयोः करिणोऽपि च। ग्रीवायाः प्रागधोभागो ग्रीवा सन्धिस्ततस्तथा। ग्रीवापृष्ठं ततः स्याच्च मध्ये तच्च तकाटिका। ग्रीवापृष्ठे तथाधस्तादुगलमाङ्गद्विपस्य च। अधःकण्ठस्तयोश्चोर्द्ध्वं मन्ये ते गलकण्ठयोः। धमन्यौ कण्ठपार्श्वे च तयोश्चावलिपिण्डिका। गलस्य पार्श्वयोरूर्द्ध्वं दर्दुरौ चात्र निर्दिशेत्। शुष्के मन्योपरि स्यातामुपरिष्टात्तयोस्तथा। किविकौ च तथा चोक्तौ पश्चादुपरि चैतयोः। पार्ष्णिघातौ च संख्यातौ पार्ष्णिघातान्तरे तथा। उत्सङ्गावुपरि स्यातां स्कन्धादूर्द्ध्वं तथानयोः। तन्मध्ये पश्चयोर्द्ध्वमिति ग्रीवांशसंग्रहः। (हस्तिपकेन पार्ष्णिभ्यां यौ देशौ हन्येते तौ पार्ष्णिघातौ) गात्रमात्रमायतं च भवेदासनमादितः। तत्पार्श्वयोः प्रतीकाशौ तावंसौ च तयोरधः। तदधःप्रत्यगंसौ च तथैवांसफले तथा। तदधस्तात्ततोबाहू ततोबाहूत्तरं तथा। अवाग्गत्र शुष्के तत्र बाहुपृष्ठोर्द्ध्वके चापि। अपारे च तदूर्द्ध्वं च तयोरुत्सङ्गाविकौ तथा। पार्श्वावथाङ्गादूर्द्ध्वं तु तयोरायामपृष्ठतः। पार्श्वन्ताङ्गपुरस्ताच्च भुजयोरुदितौ यवौ। वक्षभागोपरि तथा पुरस्तात् फलकोच्छ्रितौ। पिण्डिकाधश्च वेमाख्यौ विशेषौ यवयोरधः। उत्सङ्गौ च विशेषाधः प्रष्ठौ चापि तयोरधः। तत्सन्धी च ततः पर्व्वसन्धानौ तदधोमतौ। तदधः पाणिपादौ वै कूर्चौ चानु तयोरधः। तदधो नखकूर्चाश्च ततो नखशिखा दश। पुरःपुरोनखौ नाम्ना सनखौ चैव विश्रुतौ। तत्पश्चात्तु नखग्रीवा शिरोंशाः पार्श्वतोनताः। अन्तःपार्श्वबहिःपार्श्वे स्यातां पार्श्वनखेषु च। अथाच राजयवात्र पादनाडिकास्तथा। तलसन्धी ततः स्यातां तले च तदनन्तरम्। तलप्रदेशपुरतस्तत्परा नखवृन्ततः। तलकर्णौ ततः पश्चात् तलपक्षौ ततःपरौ। तलयोरन्तरं चैव हृदये च करोटके। किंविनोराजयथेति तलसङ्गादिका अपि। पक्षकौ ततः स्यातामन्तर्बाहू ततोऽन्तरे। बहिर्बाहू बहिर्योर्द्ध्वं गात्रं सर्वं ततोऽपि च। कक्षौ गात्र

प्रष्ठोर्द्ध्वञ्च कक्षयोरन्तरं ततः । इति प्रदेशा गदिता गजानां गात्रगोचराः । कण्ठस्यान्तर्गताः पूर्वं ग्रीवायाः समाश्रयः । उरोमणिः समाम्नातस्ततः स्यादुरसः स्थितिः । याऽधोभा पार्श्वगा तत्र गात्रसन्धिसमाश्रिता । आवर्त्तमणिरप्यत्र विज्ञो भास्वरसङ्गतः । ततः सन्धिकरस्तु स्यात्तस्याधः स्तनयोः पुरः । स्तनयोरन्तरं चापि चत्वरस्यान्तरं भवेत् । अधःस्तनौ च स्तनयोरन्तरे चाथ चूचुके । स्तनान्तौ स्तनकूर्चौ च चोरिकौ चापि कूर्चकौ । चत्वरस्यान्तरालं च भवेच्चूचुकयोरधः । स्तनयोरप्यधस्ताच्च पुरस्तात् स्तनयोर्भवेत् । हृदयं चास्य पार्श्वस्यानायामौ च वक्षसयोः । स्यातामायामकाण्डौ च तदधोविवरौ ततः । ततः क्रोड़ं पदाधस्तात् पश्चाद्व्यायामकाण्डयोः । रन्ध्रे चापरवक्त्रस्य स्तनयोरप्यनन्तरम् । जठरे नाभिरित्येते प्रदेशाः किल वक्षसः । आपराह्णपरःशेफोरेतःसावावधिः स्मृतः । ततोऽण्डकोषसन्धिः स्यात् कोषसन्धिश्च शेफतः । क्रमान्मेहनमत्र स्यात् मेद्रसंज्ञो भवेदपि । आनिर्गमात्तथा तस्य वाह्यमार्गौ मतौ मतौ । अपतस्यात्र ककुदं तस्यान्तौ पार्श्वयोरपि । मेहनस्य पुरःस्रोतो वङ्क्षणौ कोषपार्श्वगौ । अपराश्रयिणौ शुक्रे तथा वङ्क्षणमध्यगे । इत्यण्डकोषभागाः स्युः क्रमादासनमुच्यते । तदन्त्यासनस्योर्द्ध्वं वक्रवंशस्य पृष्ठतः । भवेदपरवंशश्च ततोऽन्यच्चाथ आसनम् । पश्चिमासनमध्यस्य पृष्ठतः परगस्य च । अत आस्त्रिप्रदेशश्च ततो वंशश्च वालधिः । (आस्त्रिरासनम्) । आश्वयेत्यभिधानाश्च भागाः पश्चाद्विषादिनः । स्यातां च तत्पश्चाधस्तात् पक्षसन्धी तथा ततः । स्यातान्तु पक्षपार्श्वे च गर्मूकाश्च क्रमादपि । पक्षाधोऽन्तरौ वाहुकौ पक्षसमावृतौ । निम्नाभौ मध्यगौ तत्र षड्चैवोर्द्ध्वमध्यतः । कक्षाभोगौ काकपक्षौ षड्च्छायाकरौ ततः । उत्कटौ कुक्षिपश्चाच्च त्र्यस्थिपार्श्वगतावपि । कालकोत्कटदेशानां पार्श्वगश्च पार्श्वयोः । कालके पिण्डिके चाधो विद्याद्वापरयोः स्थिते । उत्कटपिण्डिका त्र्यस्थिस्थानमेवालम्बनम् । जघनं परतोऽस्याच्च एवं कालवका इव । भवेत् पायुश्च पायोस्तु गुदमभ्यन्तरं तथा । वहिर्गुदस्य वर्त्म स्यात् गुदान्तः कन्दरं विदुः । त्रिकपायन्तरे कक्षौ तथा पिण्डिकयोरपि । अधस्तादन्तरे किञ्चिन्न्यन्तरे तस्य संस्थितिः । पिण्डिकाधश्च मण्डूकाग्रडोलौ पिण्डिकान्तरे"। अवयवप्रमाणभेदाश्चैव । "पिण्डिकारत्निकामाना पुच्छरोऽपि भवेत्तथा । कर्णसन्धिर्भवेच्चापि तच्चारत्निप्रमाणतः । कर्णापर्णौ पाल्यौ च स्यातां हस्तसङ्क्रितौ । कर्णाग्रौ च तथा विद्याद्विस्तारे द्वादशाङ्गुले । कर्णाश्चावपि हस्तौ द्वायायाम परिणाहतः । कर्णवर्त्तिं विद्धि कर्णप्रमाणेन च रत्निकाम् । शिर आसनसङ्दिष्टं मानेन त्रिकहस्तकम् । शिरसस्तु प्रमाणेन स्यात् षडङ्गुलमासनात् । आसनेन समं शीर्षं कल्याणकरमित्यपि । यस्यासनं च नीचेन शिरसः स्यात् षडङ्गुलम् । अशाप्यो नाम स प्रोक्तो गजोनिन्दितलक्षणः । शिरो यस्य भवेदुच्चमासनाद्द्वादशाङ्गुलम् । सोऽभ्युदयाभिधानेन लक्षणादासनं भवेत् । आसनं वङ्क्षणोद्देशाद्याहच पक्षभागतः । मध्यमानफलक उत्कटोऽथोस्थितोऽपि च । अष्टौथैवं समाख्यातं लक्षणादासनं भवेत् । हस्तद्वयप्रमाणेन मेचकात् पश्चिमासनम् । द्वादशाङ्गुलनिम्नं स्यादासनात् पश्चिमासनम् । सार्द्धहस्तत्रयं चाधः प्रमाणमपि वालधेः । सप्ताङ्गुलप्रमाणेन पायुश्च परिमण्डलः । अरत्निपरिमाणेन विद्धस्यद्गुणान्तरम् । अरत्नितोऽधिकं यस्य विस्तारेण स्तनान्तरम् । तिर्य्यग्योमचयं गात्रमरिष्टः शोकदोगजः । अरत्नित्रयमानेन नाभिदेशस्तनान्तरम् । नाभिश्च मूलकोषश्च गुदारत्न्यर्द्धमानतः । अण्डकोषश्च हस्तार्द्धप्रमाणेन समन्वितः । द्वे चारत्नी तथार्द्धं च कोषमानं भवेदपि । सोऽर्द्धहस्तद्वयायामोऽहस्यानाद्युतोमतः । प्रौढे तु परिणाहः स्यादरत्निद्वितयं तथा । हस्तयोश्चार्द्धमानं स्यात् चतुर्भागेण संयुतम् । तनस्य पार्श्वतः प्रौढावरत्निप्रमितौ मतौ । चतुर्भागयुतारत्निर्भवेन्मस्तकोपरि । अष्टाङ्गुलप्रमाणेन स्यातां ततः पुरोनखौ । सप्ताङ्गुलचापनखः पार्श्वे पञ्चाङ्गुलानखाः । चतुर्विंशत्यङ्गुलञ्च भवेद्वालापरे तथा । अपराभ्यां भवेद्यन्थिररत्न्यर्द्धेन मानतः । अरत्निश्च तथायामो भवेच्च करयोरपि । सप्ताङ्गुलास्तु वंशोषाः पाण्योः पार्श्वनखास्तथा । पञ्चाङ्गुलाश्चाङ्गुलाश्च नखाश्चापि नखा मताः । इत्यङ्गमानं नागस्य दिङ्मात्रमिह दर्शितम् । समाङ्गा अपि मातङ्गा दृश्यन्ते दुःखदाः क्वचित् । दृश्यन्ते विषमाङ्गाश्च क्वचित् कल्याणदायिनः । तस्मात् प्रमाणं केषाञ्चिदप्रमाणतया मतम् । प्रमाणं लतमाचार्य्यैः सर्व्वलक्षणवेदिभिः । अथाङ्गभङ्गमात्रावत् मातङ्गानां शुभाशुभाः । भूयोऽन्यगुणदोषाभ्यां प्रसङ्गात् कथिताः पुनः । उपरिक्रमतो दृष्टो नातिस्थलोक्षद्धस्थितिः । हस्तस्निग्धाक्षरोमा च लोहिताङ्गुलिपुष्करः । सर्व्वअङ्गप्रमाणश्च गजः कल्याणकारकः । भाग्यप्रदो वालहस्वस्वायततनूरुहः । वर्णदो हीनविन्दुश्च गजो दुःख-

प्रदो मतः । द्विपाङ्गुलकरा ह्रस्वा हीनपार्श्वाश्च दुःखदाः । दुष्करं हीनमव्यक्तं विद्याद्भर्त्तृविनाशनम् । युक्तमाने नितान्ते च निर्म्मलश्रोतसी शुभे । सुसमाहिते च स्नातावत् पत्राप्यसमद्युती । उन्नतौ क्रमवृद्धौ च स्निग्धावभ्युदितौ समम् । दक्षिणौ च समानौ च प्रहारप्रगुणक्षमौ । ततः प्रदक्षिणावर्त्तावुदात्तौ दन्तिनां रदौ । करस्य गात्रतौ चापि श्वेतास्थिसदृशद्युती । विषाणे च तथा स्यातां चापाभे वारणस्य च । यो दक्षिणैकदन्तस्य श्रिया तु रहितो गजः । वामैकदन्तो दन्ती च दुःखदः स्वामिनो मतः । दृष्ट्वा प्राप्य चतुर्थीं च द्वितीयां यस्य न द्विनौ । स्थूलावनायतौ स्यातां स मूढो नाम दुर्गजः । ऊर्द्धसंस्थानवक्रौ च प्रतिमानगतौ न वा । युयुत्सामिव कुर्व्वाणा यस्य बालाः स दुर्द्विपः । दन्तौ हलोपमौ यस्य दीर्घौ पार्श्वेन चोन्नतौ । दक्षिणेन विषाणेन वामदन्तदरन्तथा । कारयेद्यस्तु मातङ्गो वामदारी स वै भवेत् । तथा दक्षिणदारी च दक्षिणदरणं तथा । वामेन कारयेद्योऽसौ याद्युः स्वामिनएव सः । तथा हलविषाणेन दन्तेनैकेन दन्तिनः । स्थूलेनाखर्व्वदीर्घेण दुःखिताख्योऽपि वर्ज्जितः । अन्तर्नताभ्यां सद्दन्तः कुदन्तोऽपि नताग्रयः । कूपे वामोन्नतिश्चापि रदाभ्यां द्विरदः क्वचित् । दन्तदुर्व्वासकाख्यो हि द्विरदोऽमध्यलक्षणः । बहिर्नतौ हललम्बौ रदौ यस्य स दुर्गजः । लम्बायतौ रदौ मूले विनिहन्ति मदागतिम् । श्यामलाकाररदनाग्रन्थिमद्दशनास्तथा । दुर्जाता विषमा वक्रफलकाश्च कृशास्तथा । स्यातदीर्घातिसूक्ष्माश्च रदनेनाघशंसिनः । त्रिरत्निमितमेढस्य पञ्चरत्निमितोरदः । यदि दन्तोत्तुङ्गायतो राजपुत्र ! मनीषिभिः । प्रपूर्णं प्रतिमानञ्च ताराभं बलिवर्जितम् । सूक्ष्मबिन्दुसमानद्ध मृदुलक्ष्मायरोमशम् । स्वायतं पृथुबाहित्यं सर्व्वगात्रसमाश्रितम् । रक्तोत्तालुदशनविलग्नसुलक्षणस्थितिम् । तं राजा वर्जयेत् युद्धे शुभलक्षणवर्ज्जितम् । बालार्कसदृशे यस्य हरिद्वर्णविलोचने । मनःशिलाप्रभे वापि हर्य्यक्षोऽसौ सुभिक्षदः । मध्वापाङ्गे च विपुले सुप्रसन्ने सितासिते । यस्याक्षिणी सपक्षाभ्यां विभक्ताख्यो स्थितमदः । यस्य तुङ्गे च नयने महती दृष्टिमण्डले । स्निग्धनिर्म्मलपक्ष्मश्च तारकाक्षः स सम्मतः । यस्याक्षिणः समाभासे वृत्ताकारे विलोचने । पारावताक्षं नागं तं प्रशंसन्ति शिवप्रदम् । सूक्ष्मे नात्यायते नेत्रे प्रसन्ने सूक्ष्मदर्शने । यस्य स्यातां मधाक्ष्यो वारणः शुभलक्षणः । ईषद्गैरिकसङ्काशे दृश्येते यस्य चाक्षिणी । ध्वाङ्क्षाक्षः स विनिर्दिष्टो दुर्भिक्षारिभयावहः । कृष्णापाङ्गे शुभे नेत्रे कांस्यकढाससप्रभे । यस्य स्यातां भवेन्नाम शूकराक्षः स गर्हितः । समन्ततो नोपचिते संसृष्टे च मनागृदयौ । प्रौढाक्षिकूटौ यस्यापि विष्वगक्षः स दुर्भगः । वैषम्याद्विषमप्रेक्षी नेत्रो हरितया दृशा । तथा निष्प्रभया दृष्ट्या वर्ज्जितः कालपिङ्गलः । तन्द्रीयस्यातुदक्षेत विरूपं विषमं तथा । तथैव तिर्य्यग्दृक् हस्ती तिर्य्यक्प्रेक्षी स दूषणः । अधःप्रेक्षी च यो यः स्यादूर्द्धगामिविलोचनः । सदृशो बभ्रुमार्जारप्रभलक्ष्मतचक्षुषाम् । स स्यादनिष्टदृक् हस्ती तिर्य्यक्प्रेक्षी च दूषणः । अधःप्रेक्षी च सप्रेयो स्वदूर्द्धगामिदर्शनः । दृष्टिः स्निग्धा प्रफुल्ला च सुस्थितामलतारका । जङ्घपक्ष्म प्रसन्नस्य वारणस्य विलोक्यते । उदग्रतारको नाम्ना शाम्ना पार्श्वविसर्पिणी । विलक्ष्याचलपक्ष्मा तु कुपिताऽनेकपस्य दृक् । सर्व्वाङ्गलक्षणेभ्योऽपि चक्षुर्लक्षणमुत्तमम् । इत्थं लक्षणज्ञानां पूर्व्वेषामनुशासनम् । प्रशस्तनेत्रे द्विरदे सर्व्वाभद्राणि पश्यति” मस्तकादिलक्षणन्तु प्रायेण वार्हस्पत्योक्तलक्षणमभिव्यक्तमेवोक्तं यत्र विशेषस्तदुच्यते । “एककूपप्रजातानि स्निग्धानि च मृदूनि च । रोमाण्योष्ठानि रोमशाश्च मेचको दक्षिणाकृजः । लाङ्गूलस्यैव रोमाणि दृश्यन्ते यस्य हस्तिनः । संहतानि विचित्राणि स पूज्यो वारणोत्तमे ।”

करिणो वामनत्वादौ कारणान्तरं तत्फलञ्चोक्तं तत्रैव “वाय्वाकाशगुणाधिक्यपृथिवीगुणवर्ज्जनात् । जायते किल मातङ्गः कुब्जो वा वामनोऽपि च । यतो भूतगुणोऽन्योन्यमधितिष्ठति मानतः । तैर्गुणै र्जायते सर्व्वा दन्तीति कनयोविदुः । हीनाङ्गोहानिकारी स्यादधिकाङ्गोऽधिकं हरेत् । राज्ञाहितौ भवेताञ्च खञ्जकुब्जाविति स्थितिः । आयाममानाद्ध संयुक्तो ह्रस्वाकारो हि वामनः । नष्टोव्यन्तरनिर्य्याणो महास्थिसगदोऽपि च । अस्थिश्वेतौ च कृष्णौ च दन्तौ यस्याश्रितौ करम् । स नाशयित्वा राजानं हत्वा चाथ पलायते । स्थूलमेढ्राङ्गुलिकरः कोलाभिश्वेतरोमयुक् । कपिकौशिककाकाहिनकुलप्रख्यलोचनः । कालपिङ्गलनेत्रश्च तन्वाननहनुस्तथा । वल्गा समाननिर्य्याणः प्रलम्बपृष्ठमेचकः । मण्डूकाभरुचिस्त्वक् च साम्नानलसकोऽपि च । परिमण्डलकर्णश्च स्फटध्वाङ्क्षनिभध्वजः । प्रौढोन्नताक्षिकूटाश्च सकिलासाङ्घ्रिमेहनः । व्यालदृग्लम्बगल्लश्च निर्म्मदो दन्तिदूषणः । सबली यस्य संहानौ प्रौढौ चापि कषायितौ । चिबुके चायतस्थूले ग्रन्थैश्च तदुराविला । अधोवक्त्राणि रोमाणि

हनू च कपरोमगे। शुकाक्षतयः पादा हिम्वद्रत्यपि विश्रुतः। श्यामौष्ठतालुरसनाः काश कक्ष्मापकान्तयः। कर्णौ कषायचितौ न्यूनौ ताम्रवर्णैश बालधिः। कराभिप्रेषणासक्तौ मानोनाङ्गुलिपुष्करे। स्थूले च पक्ष्मणी नेत्रप्रभे दुष्पर्शके तथा। दुर्बलानि तथाङ्गानि वलीमुखनिभं मुखम्। रेखाद्विरेफालुरूपा मक्षिकाभिश्चिताकृतिः। खरत्निमानौ दन्तौ च शुष्कावध्यनिगूहितौ। कर्णौ च कठिने यस्य नीलगोपक विद्युति। विवर्णं कठिनं रूक्षं भिन्नभिन्नतनुरुहम्। नपुंसकश्च मातङ्गो स दूरे त्यागमर्हति। मञ्जिष्ठारागनाचेन यत्तत्तुर्याम्बरोपमा। स पूतनोऽग्निभयदो यूथहा परिवर्ज्जितः। तिर्य्यक्प्रेक्षी चाधःप्रेक्षी दुर्गन्धमदसंयुतः। कार्णपिङ्गोदरोनेष्टो मातङ्गः स्यात् मतङ्गजः। पुष्करे स्तनमध्ये च वामहस्ते मतङ्गजः। शिलासंराहतः स्याच्च तद्राष्ट्रे दुर्नयं दिशेत्। पश्चात्समुत्थितावापोनित्यमीलितलोचनः। वाह्निलसंचिप्तसश्रोनिबद्धाश्चो मतङ्गजः। न्यूनं विंशतिवर्षस्य दन्तौ यस्य प्रमाणतः। अतिमात्रौ न वै स्यातां नागोनागसमस्तु सः। हीनातिरिक्तदशनो यस्य वै तस्य स्याद्दः" इत्यवयवदोषाः।

"अथ वर्णस्वरावर्त्ताः इष्पाख्याभा खरोगतिः। बलं सत्वमनूकञ्च गन्धोबोधितमिङ्गितम्। स्याद्भूतगुणवैशेष्याद् वर्णवैशेष्यमेव हि। वातादिभ्योऽपि दोषेभ्योवर्णवैशेष्यमिष्यते। रौक्ष्यं परातिरेकेण सर्वं वातस्य वै भवेत्। शोभ्रता शोणितात्, पित्तात् रौद्रता, सौम्यतेन्दुजा" इत्युपक्रम्य "कफो गर्भशयानस्य स्निग्धतां प्रतिपद्यते। पित्तं गर्भशयानस्य साम्यत्वं प्रतिपद्यते। तत्करो कथितः कालस्तथैव स्निग्धदर्शनः। पित्तं कफश्च युगपद् वेविष्टि तु ततस्ततः। श्यामवर्णोऽपि मातङ्गो जायते स्निग्धएव वै। गर्भे च मांससहिते कफरक्ते यदा स्थिते। चिरं गर्भशयानस्य हरिस्निग्धस्ततोऽप्यसौ। रक्तपित्तकफानाञ्च सङ्करत्वगतौ तथा। हरिताकरुणपोताद्या नानावर्णा भवन्ति हि। सर्वत्वानुगवातेन मौलनाद्भूतता भवेत्। पारुष्यं धूसरत्वं च सुस्निग्धत्वं भवेत्तथा। कश्चिद्वर्णविभेदाश्च पूर्वसम्भवकारणात्। यद्दनवालघाराञ्च पित्वबीजवशात्तथा। तत्रापि श्वेतवर्णाश्च शुक्लवर्हिर्मणित्विषः। शुद्धस्फटिकवर्णाभाः सुरेषु प्राणि च कश्चित्। मर्त्यान्तु करयः कृष्णाः श्यामाश्च करिणः स्मृताः। हरिमेघवर्णश्च तथाचाञ्जनसन्निभः। न कालो न हरिर्नागोऽभ्याभः श्याम इष्यते। एतेषु त्रिषु वर्णेषु हरिवर्णोवरोमतः"। इति वर्णभेदकारणादिनिरूपणम्।

"आवर्त्तः षड्विधश्चैव त्वग्जोदशनभङ्गजः। कोषजः पक्ष्मजातश्च बालजो रोमजोऽपि च। कोषरोमभवौ यस्तौ दन्तकल्पनजः शुभः। शोकानर्थप्रदाः प्रोक्तास्त्वग्जपक्ष्मजबालजाः। भूमिदोरोमजावर्त्तः कोषावर्त्तोजयप्रदः। दशनसम्भवावर्त्तः सुतदारप्रदस्तथा। कथितः पक्ष्मजावर्त्तोज्ञातिजातभयप्रदः। प्रशस्तद्वालजावर्त्तः स्वामिहा रोमसम्भवः। प्रशस्तोदक्षिणावर्त्तोवामावर्त्तो विगर्हितः। सतो व्यक्तो मृदुस्निग्धः सवर्णः पीतरोमजः। वामाङ्गे दक्षिणावर्त्तोवामावर्त्तश्च दक्षिणे। आवर्त्तः सम्मतोऽभीष्टो द्विजराजसमप्रभः। शुभोऽप्यश्लेलजातोऽसौ शुभं नैव प्रयच्छति। अशुभश्चेत्तजातश्च नानिष्टफलदः शुभः। अवपन्हे पहतले स्तनयोरन्तरे तथा। ग्रीवाया मणिकूटोर्द्धं कुम्भयोरन्तरे तथा। उत्सङ्गे दन्तवेष्टे च कर्णमध्ये च वक्षसि। आवर्त्ता वारणानां हि सुनिश्चेयाः शुभप्रदाः। स्तनान्तरे शिरोमध्ये कुम्भान्तश्चूलिकान्तरे। वक्षस्यावर्त्तसम्भवः कुञ्जरः पशुमङ्गलः। शीर्षावर्त्तोऽभिषेकाय स्तनावर्त्तोजयाय च। सुखाय चूलिकावर्त्तः कुम्भोरोरोमजः श्रिये। वंशे मौहेऽथ वाहित्थे मन्यास्थगदे कटे। कर्णोऽक्षिकूटे नाभौ च कक्षपक्षांसकूक्षिषु। वालधौ पेचके मेढ्रे रन्ध्रसन्धिकलासु च। आवर्त्ता न प्रशस्यन्ते कर्णभागगताश्च ये। कोषप्रमाणलक्षरोमसर्वप्रदेशगाः। अशुभश्चेतजाताश्च सकिलासान्तरोत्थिताः। मनोनेत्राभिरामो हि सुरुच्छोगदितो महान्। कर्द्ध्वप्रवृत्तोदीर्घश्च रोमजोऽर्थजयावहः। मर्म्मभागेषु नागस्य निष्टाश्चे रोमजादयः। समभागगतावर्त्ताः सर्व्वतः सुखदामताः"। इत्यावर्त्तः।

"स्वस्तिकादिसुसंस्थानं शुभ्रं दर्शनदेहजम्। स्निग्धं भवेत् शुभच्छायमभिच्छन्नं वाञ्छितप्रदम्। कलस्यादिकसंस्थानं विपतन्तुकमं स्फुटम्। रूक्षं तथाच्च कुसुमं नानार्थकसंज्ञकम्। दद्यात् सुतं सितं पुष्पं स्निग्धपीतञ्च हेमदम्। नीलोत्पलाभं शीलाभ्रं स्निग्धकालञ्च हस्तिदम्। यदि स्यात् पूजिते भागे कुसुमं स्निग्धपाण्डुरम्। सुरचापसमाकारं तद्भवेद्भूभुजः शुभम्। शक्रचापनिभं पुष्पं दन्तोपरि च दन्तिनः। द्विगेदिष्टं सुभिक्षं च क्षेमं च क्षितिरक्षिणः। स्तनान्तः स्निग्धरूक्षे च पुष्पे नाम सभे तथा। पुष्पे श्रोत्रान्तःकाले च स्थानिष्टद्धिं विनिर्द्दिशेत्। श्रीवत्सादिनिभाकारे वैजयन्तीध्वजोपमे। शंखप्रा-

सादृश्ये छत्रचामरशोभिभिः । सोमसूर्य्यसमाभासैर्विचित्राकारमूर्त्तिभिः । दिष्टे शुभाय नृपतेर्निन्द्यमहिसमाकृति । श्वक्रव्यादनिभाकारं रणापसरकारणम् । धूमाभं पुष्पमिच्छन्ति स्वल्पेऽग्निभयाय च । अन्यं पुष्पं तथा नेष्टं द्विपक्षोभविवर्द्धनम्" । इति पुष्पम्

'भूखाग्न्यम्बुमरुज्जाता भवेच्छाया विषाणिनाम् । शस्ता भूजलवह्न्युत्था न शस्ता खानिलोद्भवा । छायायाः सम्भवः पूर्वं, परतः परितः प्रभा । छायायाः सम्भवः पूर्वं प्रभा तदुपरज्यते । वर्णमालम्बिता च्छाया प्रभा वर्णस्य नाश्रयः । लक्षणानि तु नागानां पापानि च शुभानि च । छायावशात् फलन्त्येव छाया तेनातिलक्षणम् । यस्य स्याल्लक्षणं भद्रं छाया भद्रा भवेन्न तु । न चासौ शुभदो हस्ती छायोपहतलक्षणः । पापलक्षणयुक्तोऽपि शुभच्छायायुतो गजः । फलं लक्षणजं हित्वा छायाफलमवाप्नुयात् । नीराजनेऽभिषेके च ध्वजोच्छ्राये रणोद्वे । तेषु तेषु च कालेषु भवेच्छाया च शोभना । वक्षसि प्रतिमानेंऽसे कुम्भे कर्णे कटेषु च । निर्य्याणे मस्तकस्थाने वेष्टयोश्च कपोलयोः । पिण्डिकाजघनाभोगे तेषु तेषु पदेषु च । प्रदेशेषु प्रधानेषु छायाया वीक्षणं भवेद् । प्रशस्ता पार्थिवी छाया वह्निजा जलजापि च । नेष्यते व्योमजा छाया मातरिश्वभवापि च । पार्थिवी स्निग्धगम्भीरा सर्ववर्णे विभाव्यते । छाया श्यामा च रक्ता च स्निग्धा जाम्बूनदाग्निजा । छाया नीलाम्बुदाभासा स्निग्धा सलिलसम्भवा । अव्यक्तपरुषा तस्य छाया गगनजा मता । धूम्रा रूक्षा च वायव्या भस्माभा निष्प्रभा तथा । एताश्छायाः परीक्ष्याः स्युर्मातङ्गे राजपूजिते । नीलाम्बुजेन्द्रनीलाभा नीलाञ्जननिभाऽपि च । काम्यता पार्थिवी च्छाया सुभिक्षक्षेमकारिणी । बालार्कपद्मकिञ्जल्कशक्रगोपकसन्निभा । ज्वालाभा तप्तहेमाभा वह्निजा विजयप्रदा । छायाम्मयी पयःशङ्खकुन्दकुमुदनिभद्युतिः । सौम्याख्यया प्रतीता च भर्त्तुरर्थप्रदा सदा । जलबुद्बुदसच्छाया धूम्रद्युतिरतिस्थिरा । निन्द्या च व्योमजा छाया नित्योद्वेगकरी मता । सर्ववर्णसमेताऽपि निष्प्रभा भस्मसन्निभा । विच्छिन्ना विकृता च्छाया वायवी सा भयावहा । वैरिञ्ची वैष्णवी शैवी छाया माघवती तथा । कौमारी राक्षसी सार्पी गान्धर्वी च तथाऽऽसुरी । पैशाची चेति याश्छाया ब्रह्माद्याः काश्चित् शुभाः । भूतोत्थलक्षणे तासां भेदो नेह तु कीर्त्तितः । तेजोऽतिरक्ता भद्रस्य पाटला भवति प्रभा । छाया रक्तकला रुक्मपद्मपूर्णनिभाऽपि वा । तथा च मन्दकरिणश्छाया तु मृगहस्तिनः । मलिनाम्बरधूम्रेव गीर्वाणायुधदर्शना" इति छाया ।

"हस्तिनां त्रिविधा ध्वानाश्छिद्रेभ्यः करतोऽपि च । भवन्ति वायुवशतो गात्राणां वेष्टनेन च । प्रयाणेष्वभिषिक्तेषु ध्वजे जातिकुलेषु च । नागेषु बृंहितं प्राज्ञं मत्तकाले न जातिषु । क्षुधितोऽल्पस्तनिद्रान्तस्तृषितो बृंहति क्वचित् । यदि दन्ती शुभे देशे समये च वसुप्रदः । दर्शयेद्बृंहितं भद्रं तत्फलं स्फीतमादिशेत् । सरोवरे तथाऽऽरामे गोष्ठे विबुधवेश्मनि । निकुञ्जे हृद्यदेशे हि विज्ञेयः शुभदो ध्वनिः । यात्रायामभिषेके च यज्ञादिसमये तथा । समये चैव पुण्ये च बृंहितं स्यादिष्टप्रदम् । श्मशानादिकाष्ठवल्मीकदुष्टस्थाने भयप्रदः । सुनीचे च प्रधूमे च प्रतिश्यायदिनेषु च । अतिशीतेऽतिघर्मे च प्रभाते चाशुभो रवः । भूतले न्यस्तहस्तो हि पर्य्यस्तनयनो गजः । कूजन् निर्व्यवनं कुर्य्यात् यदि वा नश्यतीश्वरः । करेण बृंहितो नागो दुःखिताश्रुपरिप्लुतः । आदिशेत्स्वामिनो नाशमथ वा पृतनापतेः । व्यावर्त्तमानहस्तस्तु भाराधोगतचक्षुषः । जघने वामतो वालं तथा निक्षिपतोऽसकृत् । (वालं वालधिम्) । निषीदतो लङ्घयतो हृष्टरोम्णोविमूर्च्छतः । वामे निक्षिप्य गण्डूषं बृंहितं स्यादनर्थकृत् । श्रेयः स्रवति नागानां भ्रमतां यदि शोणितम् । (श्रेयः छिद्रेभ्यः) तथा मन्यान्तदेशे च प्राणिनां क्षयमादिशेत् । बद्धाग्नेयीमुखीभूत्वा प्राच्यां वाऽर्कोदयं प्रति । दन्ती तीव्ररवं कुर्य्यात्तदा स्यात् पावकाद्भयम् । करेण यदि मातङ्गो बृंहमाणः स्तनं स्पृशेत् । आलाने बध्यमानस्तु संयुतिं क्षयमादिशेत् । (संयुतिं युद्धं) । आलाने बध्यमानस्तु शीत्कुर्वन् कुरुते ध्वनिम् । गात्रं प्रोञ्छोलयन्नागस्ततः प्रस्थानमादिशेत् । क्षिप्त्वा करं विषाणस्थं विषमं कूजते यदि । निरीक्षमाणो गगनं हृतां दृष्टिमुदाहरेत् । यदाम्बुमृतवक्त्रोष्ठस्तनस्थानस्तु जिघ्रतः । तथा कुञ्चितहस्तेन स्वं गात्रं च जिघ्रतः । कुर्वतो दक्षिणं हस्तं शनैर्निक्षिपतोऽपि यत् । बृंहितं स्यात्तदिष्टञ्च तथान्योन्यकरस्पृशः । गृहीत्वा शुभवस्तूनि कुसुमादीनि चेद्द्विपः । कुर्य्याच्छब्दं शुभं तेन फलं शुभतरं भवेत् । उच्चैरभिमुखः शान्तो यदा नदति वारणः । अक्षुण्णध्मानेन तदा तत्र जयो भुवः । हस्तेन मस्तकरदान् कर्षन्तां दुन्दुभिध्वनिम् । करेण सुरजारावान् कुर्वन् कल्याणकारकः । कलभादिसमारावा

विकटाश्च समाः स्मृताः"। इति ध्वनिः। गतिसत्त्वे तु प्रागुक्ते एवात्र प्रायेण दर्शिते नातस्ते अत्रोदाहृते।

"सत्त्वं त्रिविधमिच्छन्ति श्रेष्ठमध्याधमैर्गुणैः। सात्त्विकं राजसञ्चापि तामसञ्च विषाणिनाम्। एषामपि गुणाश्चैषां बहवस्ते न कीर्त्तिताः। सत्त्वस्योक्तागुणाः शौर्य्यं बुद्धिधैर्य्यं सुहर्षता। रजसोऽपि गुणास्ते च क्रोधोत्साहावपि क्वचित्। गुणाश्च तमसस्तन्द्रातमोमोहप्रमादिताः। ह्रीमन्तः कान्तियुक्ताश्च प्राज्ञाश्च चिरजीविनः। क्रियाक्लेशसहाः शान्ताः सात्त्विकाः सामसम्भवाः। मिश्राश्च मध्यमाध्याश्च कीर्त्तितानिर्भयाः क्वचित्। क्रियायोगसहाः किञ्चिद्राजसा मध्यमायुषः। तामसा दुःखिता मूढा विरूपा अल्पजीविताः। युक्तोऽप्यन्यगुणैः सर्व्वैर्युतश्चेत् सात्त्विकैर्गुणैः। श्रेष्ठगुणः स समरे तथाऽध्वनि मतङ्गजः। एषां वागीशनिर्द्दिष्टा विषयापेक्षया स्थितिः। भद्रे सन्निहितं सत्त्वं, रजो मन्द्रे, तमो मृगे। देवगन्धर्व्वयक्षाणां पन्नगासुररक्षसाम्। पिशाचानां नृणां तुल्यं वेद्यं नागस्य चेष्टितम्"। इति सत्त्वम्।

"यत् पूर्व्वमभवं स्पष्टं सत्त्वं रूपं गतिः स्वरः। तस्यानुकरणात् शुक्लमनूकमिति कोविदाः। सत्त्वरूपजवारावैः शुभानुकारिता शुभा। देवर्षिगणगन्धर्व्वनागानूकाः शुभामताः। एवमेव च दुष्टानुकतो दुष्टाः प्रकीर्त्तिताः। दैत्यरक्षःपिशाचानामनूकं परिवर्ज्जितम्। वृषसिंहतुरङ्गादिसमानूकामता द्विपाः। नेष्टाः खरउष्ट्रादिसमानाकृतियोगिनः"। अनूकम्।

"आस्याक्षिकुम्भकर्णेषु मदनिश्वासवायुषु। मलदमूत्रेषु गन्धं समुपलक्षयेत्। इष्टगन्धान्निषेवेत वारणान् धरणीपतिः। दुष्टगन्धान् सदा भूमीपालः परिवर्ज्जयेत्। सर्पिर्मधुपयोलाजदधिक्षीरानुकारकः। माल्यचोचीरमदिरापद्मकाद्यादिसन्निभः। मालतीकेतकीजातीचन्दनाधिकसौरभः। सुरवालकलामोगोगन्धोनागस्य सम्मतः। अस्रङ्मूत्रमलत्पूतिवसाकुणपकुत्सितः। पच्चिनोड़पवाखड्डादिकप्रतिम्बविनिर्म्मितः। खरोष्ट्रसूकरसमः स्मशानधूमसन्निभः। मीनमत्कुणतुल्यश्च गन्धो नागस्य दुःखदः"। इति गन्धः।

"पञ्चधा विदितं स्याच्च विज्ञेयं शामजन्मनाम्। अल्पवैत्तानगम्भीरप्रत्यर्थान्वर्थभेदतः। वस्त्रुहातादुद्विजते दूरादंशादि संकुचेत्। अवर्थं सङ्कुचेत् स्पृष्टः स गजोऽल्पवेदिता। योऽपि त्वक्स्पर्शमात्रेण रोमस्पर्शनेन वा। विद्याद्दण्डाङ्कुशादींश्च स स्यादुत्तानवेदिता। त्वग्भेदात् शोणितस्रावात् तीव्रप्रव्यथनादपि। अङ्कुशादीन् विजानाति स हि गम्भीरवेदिता। शनैर्हतोऽभ्यर्थं वेत्ति शनैर्वेत्ति भृशाहतः। विपरीतमतिर्नागो ज्ञेयः प्रत्यर्थवेदिता। प्रत्येति वार्य्यमाणो यो निगृहीतश्च गच्छति। प्रतिलोमायते संज्ञां सोऽपि प्रत्यर्थवेदिता। शनैर्हतः शनैर्वेत्ति भृशं वेत्ति भृशाहतः। प्रत्येति प्रतिषिद्धश्च नोद्यमानश्च गच्छति। यथासंज्ञं विदध्याच्च सर्व्वकर्म्माणि योऽङ्कुशम्। अन्वर्थवेदिनं प्राज्ञो जानीयात्तं शुभं गजम्" इति विदितम्।

"मतङ्गजेङ्गितं वक्ष्ये शृणु तदवधानतः। शुभञ्चान्यच्च येन स्यात् यात्रादिसमये नृप!। अनुयात्रं गतोऽन्यात् किञ्चिद्रूपं यदि द्विपः। तज्जयः, प्रतियात्रं तु रूपाहत्या पराजयः। दृष्ट्वा रिपूनभिमुखान् वार्य्यमाणोऽपि चेद्गजः। प्रजेत्तद्विजयो नूनं यदि वा प्राप्नवान् वधे। दक्षिणेनाग्रपादेन क्षितिमुत्पाटयेद्यदि। उत्तोलयेद्वामपादं तदा जयमुदीरयेत्। करेण चाग्रहस्तेन यदा पृथ्वीं प्रमार्ज्जयेत्। स्थित्वानेन कर्णौ च तदा सौख्यं समादिशेत्। पेचकं कुटिलं कृत्वा करं जिघ्रति चेत् द्विपः। प्रहृष्टहृदयाङ्क्रिय तदाभ्युदयमादिशेत्। दक्षिणं तु यदा दन्तं दन्ती प्रमुदितेन्द्रियः। परिमृजति हस्तेन तदा स्यात् प्रियसङ्गमः। तथैव गलबन्धिस्तु पुष्करेण परामृशन्। श्रीयोगतप्रयातं तु वारणोविनिवेदयेत्। सङ्कोच्य दक्षिणं पादं वामपादेन वा भुवम्। विलिखेद्वारणः खिन्नसङ्गन्तुः स्यात् पराजयः। यदा तु दुर्मनादन्तं वामं हस्तेन शोधयेत्। तदात्मनोवदेन्नाशं यातुर्वाथ निषादिनः। करेण वामगात्रं च खिन्नगात्रः प्रमार्ज्जयेत्। तदानिष्टं भवेद्भर्त्तुरन्यथा च शुभं भवेत्। व्यथमानः पतेत् त्रस्तः कक्षबन्धे यदा द्विपः। नाभिनन्देत्तु माल्यादि तदा परिभवो भवेत्। अकस्मादेव कुप्यन्ति भ्रमन्ति च पतन्ति च। करिणो यदि तद्विद्यात् विघ्नं समुपस्थितम्। यदा पश्यति मातङ्गोविद्रवञ्च पराजयम्। प्रवासं परराष्ट्रं वा तदा भवति दुर्मनाः। अदंशमणपीड़ायां करेण परिवीजनात्। गण्डूषदेशनिर्मेषात् सव्याजसुपसर्पणात्। अकस्माच्च स्खलद्गत्या धरण्यां प्रणिपातनात्। जलप्रतारवैमुख्यादहितभक्ष्यसेवनात्। आस्यकर्षतया गत्वा पादाग्रवेशनादपि। दुस्तदङ्गादिपीडत्वादकल्याणकरः करी। आत्तयष्टोजनोत्तीर्णौरिपूणां प्रकृषं वदेत्" इङ्गितम्।

"जायते द्विविधः कोपः संज्ञासंज्ञ विषाणिनाम्।

शिष्यक्रोधोऽधमोदः स्याद्‌निष्टोऽशिष्यरोषणः। यः क्रुध्यति चिरेणैव स्वल्पक्रोधो भवेदपि। वाग्दण्डमात्रतश्चैव प्रतिषिद्धो न कुप्यति। अनुयास्यति रोषाच्च स शिष्यक्रोधसंज्ञितः। इष्यते सर्व्वकार्य्येषु शुभजातिर्मतङ्गजः। यः क्रुध्यत्यचिरेणैव स्वल्पक्रोधो भवेदपि। प्रतिषिद्धश्च वाग्दण्डतोऽल्पप्रजनकाङ्क्षया। सह्यत्येव चिरेणापि रोषाद्विरतिमेति च। अशिष्यक्रोधसंज्ञोऽसौ विज्ञेयो वारणाधमः" इति कोपः। विस्तरस्तु पालकाव्यादौ दृश्यः।

**इभकणा** स्त्री॰ इभोपपदा कणा शाक॰त॰। गजपिप्पल्याम्।

**इभकेशर** पु॰ इभमद इव केशरोऽस्य। नागकेशरे "म्लङ्काटकास्गुप्रेभकेशरागुरुचन्दनैः" सुश्रु॰।

**इभगन्धा** स्त्री इभस्य गन्ध एकदेशोदन्त इव पुष्पमस्याः। नागदन्त्याम् सा च स्थावरविषभेदः यथा सुश्रुते "मूलं पत्रं फलं पुष्पं त्वक्‌क्षीरं सारएव च। निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृतः" इत्युपक्रम्य "कुमुदतीरेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्म्मरीभगन्धा सर्पघातिनन्दनसारपाकादीनि द्वादश फलविषाणि" इति विभज्य "शुष्कशेफः फलविषैर्दाहोऽन्नद्वेष एव चेति" तद्विकारो दर्शितः।

**इभदन्ता** स्त्री इभस्य दन्त इव शुभ्रं पुष्पमस्याः। गजदन्तशुभ्रपुष्पवत्यां १नागदन्त्याम्, सा च स्थावरफलविषा।

**इभनिमीलिका** स्त्री इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति। १भङ्गायाम्। इभस्येव निमीलिका। २वैदग्ध्याम्

**इभपालक** पु॰ इभं पालयति। (माहुत) हस्तिपके।

**इभपोटा** स्त्री पोटा पुंलक्षणा इभी परनिपातः पुंवद्भावश्च। पुंगजलक्षणयुक्तायां हस्तिन्याम्।

**इभभर** पु॰६त॰। गजसमूहे [ सिंहे।

**इभमाचल** पु॰ इभमाचलयति आ+चल-णिच्—वा॰ख।

**इभया** स्त्री इभैर्यायते भक्ष्यतया प्राप्यते या–कर्म्मणि यजर्थे क ३त॰। स्वर्णक्षीरीवृक्षे रत्नमाला इभयेति वा पाठः।

**इभयुवति** स्त्री युवतिरिभी पूर्व्वनि॰ पुंवद्भावश्च। युवत्यां हस्तिन्याम् वा ङीप्।

**इभाख्य** पु॰ इभस्याख्याख्या यस्य। नागकेशरे त्रिका॰।

**इभानन** पु॰ इभस्याननमेवाननं यस्य। गजानने गणेशे तस्य यथा तदाननत्वं तथोक्तं "स्वयं गोलकनाथश्च पुण्यकस्य प्रभावतः। पार्व्वतीगर्भजातश्च तव पुत्रो भविष्यति। स्वयं देवगणानाञ्च यश्चादीशः कृपानिधिः। गणेश इति विख्यातो भविष्यति जगत्त्रये। "शनिदृष्ट्या शिरश्छेदात् गजवक्त्रेण योजितः। गजाननः शिशुस्तेन नियतिः केन बाध्यते" ब्रह्मवै॰पु॰ ६अ॰। शनिदृष्ट्या तच्छिरश्छेदकथा तत्रैव १२अ॰। "पार्व्वतीवचनं श्रुत्वा सोऽनुमेने हृदा स्वयम्। पश्यामि किं न पश्यामि पार्व्वतीसुतमित्यहो। यदि बालो मया दृष्टस्तस्य विघ्नो भवेद्ध्रुवम्। अन्यथा मे प्रलापस्तत्परतः स्वात्मरक्षणम्। इत्यालोच्य च धर्म्मिष्ठो धर्म्मं कृत्वा स्वसाक्षिणम्। बालं द्रष्टुं मनश्चक्रे न बालमातरं शनिः। विषण्णमानसः पूर्व्वं शुष्ककण्ठोष्ठतालुकः। सव्यलोचनकोणेन ददर्श च शिशोर्मुखम्। शनिश्च दृष्टिमात्रेण चिच्छेद मस्तकं मुने!। चक्षुर्निवारयामास तस्थौ नम्राननः शनिः" एवं शिरश्छेदमुक्त्वा। "तान् सर्व्वान् मूर्च्छितान् दृष्ट्वा चारुह्य गरुडं हरिः। जगाम पुष्पभद्रां स उत्तरस्यां दिशि स्थिताम्। पुष्पभद्रानदीतीरे ददर्श काननस्थितम्। गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम्। दिश्युत्तरस्यां शिरसं मूर्च्छितं सुरतश्रमात्। परितः शावकान् कृत्वा परमानन्दमानसम्। शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा। स्थापयामास गरुडे रुधिराक्तं मनोहरम्"। गजशिरश्छेदमुक्त्वा तत्पत्न्या स्तुतेन हरिणा तस्य कल्पान्तजीवनं वरोदत्त इत्युपवर्ण्य। "आगत्य बालकस्थानं बालं कृत्वाऽस्य वक्षसि। रुचिरं तच्छिरः कृत्वा योजयामास बालके। ब्रह्मस्वरूपी भगवान् ब्रह्मज्ञानेन लीलया। जीवनं योजयाभास हुङ्कारोच्चारणेन च। पार्व्वतीं बोधयित्वा तु दत्त्वा क्रोडे च तं शिशुम्। बोधयामास तां नाथ आध्यात्मिकविबोधनैः" "शैनावरीभवदिभाननदानवारिवासेन यस्य जनितासुरभीरणश्रीः" नैष॰। इभवक्त्रेभमुखगजाननादयोऽप्यत्र। "तं नमामि गजाननम्" माधवः।

**इभारि** पु॰ ६त॰। सिंहे इभामित्रादयोऽप्यत्र। [यादव॰।

**इभोषणा** स्त्री इभोपपदा उषणा शाक॰त॰। गजपिप्पल्यां

**इभ्य** त्रि॰ इभं गजमर्हति दण्डा॰ यत्। १प्रचुरगजादिधनाढ्ये २नृपे ३हस्तिपके च पु॰। "उपस्थितैं चाश्रायण इभ्यग्रामे प्रद्राणक उवास" छा॰उ॰ तस्य भाष्ये इभो हस्ती तमर्हतीतीभ्य ईश्वरो हस्त्यारोहोवेति। "जाभिः सिन्धूनां भ्रातेव स्वसामिभ्यान्न राजा वनान्यत्ति" ऋ॰१, ६५,४, स्वार्थे कन्। इभ्यकस्तत्रैव स्त्रियान्तु टापि वा अत इत्त्वम् इभ्यका–इभ्यिका। इनाढ्यायां स्त्रियाम्।

**इभ्यतिल्विल** त्रि॰ इभ्यस्तिल्विलः पुष्ट इव। गजादिभिः प्रचुरे आढ्ये। "यदि प्रतीचीयादिभ्यतिल्विल इव भाव्यति-

स्विनो भविष्यतीति विद्यात्" शत० ब्रा० ४,५,८,११,

**इभ्या** स्त्री इभमर्हति सेव्यत्वेन दण्डा० यत् । १हस्तिन्यां २यन्त्रकीटके च मेदि०।

**इमथा** अव्य० इदम्–इवार्थे–थाल् "प्रत्नपूर्वविश्वेमात् थाल् छन्दसि" पा० सू० निर्देशात् नि० इमादेशः । इदानीन्तनवत्त्वे । "तं प्रत्नथा पूर्वथा विश्वथेमथा इव ज्येष्ठतातिं बर्हिषदं स्वर्विदम्" ऋ० ५,४४,१ । "प्रत्नथा पुरातनयजमाना इव पूर्वथाऽस्मदीया पूर्वे यथा । विश्वथा विश्वे सर्वे प्राणिनो यथा । इमथा इदानीं वर्त्तमाना यजमाना इव" भा० "इदक्षक्" यजु०७अ०१२च पठिता ।

**इयक्षु** त्रि० यज+सन उ वेदे नि संप्रसारणम् । यष्टुमिच्छौ "धन्वन्निव प्रपा असि त्वमग्न इयक्षवे" ऋ०१०,४,१, वेदे प्रायेण सर्वत्र नि० संप्रसा०। "शुक्रं वां स्वरिष्टं यथा-वियक्षन्" १,१५२,२, देवानां इयक्षतो यजमान इयक्षति" ऋ०८, २१,११५,

**इयत्** त्रि० इदं परिमाणमस्य इदम्–वतुप् । एतावदर्थे "नीतं यदि नवनीतं कियदिति यशोदया दृष्टः। इयदिति गुरुजनसविधे विधृतधनिष्ठापयोधरः पायात्" उद्भटः। "इयान् वाव किल यज्ञो यावती वपा" ऐत० "इयन्ति वर्षाणि तया सहोग्रम्" रघुः "इदि" निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्" सा० द०। अत्र साधनप्रकारः इदम्+परिमाणार्थे वतुप् वस्य घः इदम इश् "यस्येति" पा०प्रक्रीकारलोपे प्रत्ययमात्रस्थितिः । अतएवात्र वैयाकरणा औपनिषदाश्च पठन्ति । "इदितवति परस्मिन् प्रत्यये यास्ययोनौ गतवति विलयञ्च प्राकृतेऽपि प्रपञ्चे । सपदि पदमुदीतं केवलं प्रत्ययोत्थं तदियदिति मिमीते कोऽद्धा पण्डितोऽपि" । स्त्रियां ङीप् ।

**इयत्तका** स्त्री कुत्सिता इयत्ता कुत्सितार्थे कन् ह्रस्वः । कुत्सितेयत्तायाम् । ततः अर्श आ० अस्त्यर्थे अच् । कुत्सितेयत्तायुते अल्पप्रमाणे "इयत्तकं कुषुम्भकस्तकं भिनद्म्यश्मना" ऋ० १,१९१,१५,

**इयत्ता** स्त्री इयतो भावः तल् । १सीमायां, २परिमाणे, ३संख्यायाञ्च । "न गुणानामियत्तया" "यशः परिच्छेत्तुमियत्तयालम्" "इयत्तया रूपमियत्तया वा" इति च रघुः ।

**इयस्** त्रि० इ–कर्त्तरि असुन् किच्च । १गन्तरि भावे असुन् । २गतौ "तेषां ह्येयसैवास किमिव कर्त्तव्यम्" शत० ब्रा०२, २,३,

**इर**–ईर्षायां कण्ड्वा० यक् उभ० । इर्यति इर्यते ।

**इरज्**–ईर्षायां कण्ड्वादि० यक् प०। इरज्यति । "इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायः" ऋ० १०,१४०,४ । "इरज्यन्त यच्छुरुधो विवाचि" ऋ०७,२२,२, यदेषामग्रं जगतामिरज्यसि" ऋ० १०,७५,२ । "ध्रुवं विप्रस्य मन्मनामिरज्यवः" ऋ०१,१५१,६ ।

**इरण** त्रि० ईरिण+पृ० । ऊषरभूमौ अमरटीका रमा० ।

**इरम्मद** पु० इरया जलेन अन्नेन वा माद्यति वर्द्धते इरा–मद–खच् नि० ह्रस्वः मुम् च । १वज्राग्नौ २वाड़वानले च । "इरम्मदं बृहदुक्थं यदत्र" यजु० ११,७४ । "इरया अन्नेन माद्यति उग्रं पश्येत्यादि" पा० नि० "वेद-दी०। "इष्टते इवाकस्य इत्येतदिरम्मदमितीरया ह्येष मत्तः" शत० ब्रा० ६,६,२,४ ।

**इरस्** इरज्वत् कण्ड्वा० इरस्यति "मातृपुत्राएव इरस्यः" ऋ०७,४०,६ । "यथा इरस्यमीदम्" ऋ० १०,८६,३ ।

**इरा** स्त्री इण्–रक् इं कामं राति रा–क वा । १भूमौ, २वाचि, ३सुरायाम्, ४जले, ५अन्ने च । "इरा विश्वस्मै भुवनाय जायते यत् पर्जन्यः पृथिवीं रेतसावति:" ऋ० ५,८३, ४ । "इरामदा ओदनं पिन्वमानाः" शत० ब्रा० ६,६,२२ । ६कश्यपस्य पत्नीभेदे । "धर्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम् । अदितिर्दितिर्दनुःकाला अनायुः सिंहिका मुनिः । कद्रुः प्राधा इरा क्रोधा विनता सुरभिः खसा" इत्युपक्रम्य "इरा वृक्षलतावल्लीतृणजातीश्च सर्वशः" । असूतेति शेषः । गरुडपु० ।

**इराक्षीर** पु० इरा जलं क्षीरमिवास्य । क्षीरसमुद्रे ।

**इराचर** न० इरायां जले भूमौ वा चरति चर–ट ६त० । १वर्षोपले त्रिका० २भूचरे ३जलचरे च त्रि० स्त्रियां ङीप् ।

**इराज** पु० इरा सुरेव अजति क्षिपति अज–अच् न वी भावः । कन्दर्पे हला० । [ त्रिका० ।

**इराम्बर** न० इरा जलमम्बरमिव यस्य । वर्षोपले करकायाम् ।

**इरावत्** इरा+भूम्नि मतुप् मस्य वः। समुद्रे तत्र भवः अण् ऐरावतः । अर्जुनेन नागकन्यायामुत्पादिते २वीरभेदे तदुत्पत्तिकथा" भा० भी० ९१अ० ।

"अर्जुनस्यात्मजः श्रीमानिरावान्नाम वीर्य्यवान् । सुतायां नागराजस्य जातः पार्थेन धीमता । ऐरावतेन सा दत्ता ह्यनपत्या महात्मना । पत्यौ हते सुपर्णेन कृपणा दीनचेतना । भार्य्यार्थं ताञ्च जग्राह पार्थः कामवशानुगाम् । एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः । स नागलोके संवृद्धो मात्रा च परिरक्षितः । पितृव्येण

परित्यक्तः पार्थद्वेषाद्दुरात्मना । रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः । इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् । सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः । अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः । न्यवेदयत चात्मानमर्जुनस्य महात्मनः । इरावानस्मि भद्रं ते पुत्रश्चाहं तव प्रभो ! । मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् । तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः । परिष्वज्य सुतञ्चापि सोत्मनः सदृशं गुणैः । प्रीतिमानभवत् पार्थो देवराजनिवेशने । सोऽर्जुनेन समादिष्टो देवलोके तदा नृप ! । प्रीतिपूर्वं महाबाहुः स्वकार्यं प्रति भारत । युद्धकाले त्वयास्माकं सह्यं देयमिति प्रभो । वाढमित्येवमुक्त्वा च युद्धकाल इहागतः" ।

"इरावन्तं तु निहतं दृष्ट्वा पार्था महारथाः" भा०भी० ९२अ० । "पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जयः ।" ९५ अ० । २नदीभेदे स्त्री ङीप् । भा० स०प०९अ० वरुणसभावर्णने । "इरावती वितस्ता च सिन्धुर्देवनदी तथा" "इरावत्यां कृतो भोजः कार्त्तवीर्य्यसमो युधि" भा० व० १२अ० "शतद्रु कामहं तीर्त्वा तथा रम्यामिरावतीम्" । भा०क०४४ अ० । "इरावत्यां महाभोजावग्निसूर्य्यसमौ युधि" हरिवं० १६१ । "इरावती धेनुमती हि भूतं" ऋ०७,९९,३ । ४अन्नादियुक्ते त्रि० "वाचिष्टं वर्त्तिरश्विनाविरावत्" ऋ०७,४०,५ । "इरावत् हविरन्नादियुक्तम्" भा० । "सुन्दतावन्तः सुभगा इरावन्तोहतममाः" अथ० ७,६०,६ ।

इरावती स्त्री इरां भूमिम् अवति अव–बा०अत ङीप् । वटपत्र्योषध्ये, सा हि पाषाणभेदनेनापि भूमिमाच्छादनात् पालयतीति तस्यास्तथात्वम् ।

इरिकावन न० इरैव कन् अत इत्त्वम् इरिकाप्रधानं वनम् । क्षुभा० "इरिकादीनि वनोत्तरपदानि संज्ञायाम्" पा० ग०सू० पाठात् न णत्वम् । जलप्रधाने वनभेदे । इरिकादीनि च "इरिका तिमिर समीर कुबेर हरि कर्मार" ।

इरिण न० ऋ–इन किच्च । १ऊषरभूमौ, २निरालम्बे, ३शून्ये च । "यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम्" ऋ०८,४,३ । "यथेरिणे वीजमुप्त्वा न वप्ता लभते फलम्" मनुः ।

इरिन् त्रि० इर–कण्ड्वा० णिनि यलोपः । १प्रेरके । "न येषामिरी सधस्थ ईष्ट आँ" ऋ०५,८७,२ । २ईश्वरे च ।

इरिमेद पु० इरी रोगादीर्ष्यकः मेदोनिर्य्यासो यस्य । विट्खदिरे । "इरिमेदः कषायोष्णो मुखदन्तगदास्रजित् । हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषव्रणान्" भावप्र० ।

इरिविल्लिका स्त्री इरिविल्लैव कन् । "पित्तकाससमाकृत्यां इत्तावृपरुजाज्वराम् । सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिविल्लिकामिति" निदानोक्ते मस्तकस्थे व्रणभेदे । कनभावे इरिविल्लाप्यत्र । "इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा । पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्" सुश्रु० ।

इरेश पु० ६त० । १वरुणे, २वागीशे, ३भूमिपतौ, ४विष्णौ च

इर्गल न०स्त्री अर्गल+पृ० । द्वाररोधके काष्ठभेदे तस्मै हितम् अपूपादि० यत् । इर्गल्यः छ इर्गलीयः । तत्साधने द्रव्ये ।

इर्य्य त्रि० इर–कण्ड्वा० अच् वेदे नि० न यलोपदीर्घौ । प्रेरके । "यूयं राजानमिर्य्यं जनाय विभ्वतष्टम्" ऋ०५,५८,४ ।

इर्वारु स्त्री उर्व्व–आरु पृषो० । (काकुड़) १कर्कट्याम् । २हिंसके त्रि० । "सिंह्व्याघ्रवृकतरक्षुऋक्षद्वीपिमार्ज्जारसृगालमृगेर्व्वारुकप्रभृतयो गुहाशयाः" सुश्रुतः । मृगेर्वारुकः मृगहिंसकः । कालु । इर्व्वारुरप्यत्रार्थे ।

इर्वारु(रु)शुक्तिका स्त्री इर्वारुः(रुः) शुक्तिकेव स्वयंस्फोटनात् । (फुटी) (स्वयं भिन्नविपक्वकर्कट्याम्) ।

इल गमने अक० गतौ क्षेपे च सक०तुदा०पर०सेट् । इलति । ऐलीत् इयेल ईलतुः इलितः इलः ।

इल क्षेपणे चुरा०उभ०सक० सेट् । एलयति ते ऐलिलत् त । ऐलयीत् ऐलिष्ट "कथं वातमेलयति कथं न रमते मनः" अथ० १०,७,३७ । "यासां देवतानां यांयां कामयते सा भूत्वेलयति" शत०ब्रा० १०,३,८,८ ।

इलविला स्त्री पुलस्त्यमुनिपत्न्याम् कुबेरजनन्याम् । एतत्सम्बन्धेनैव कुबेरस्य ऐलविल इति नाम ।

इला स्त्री इल–क । १भूमौ, २गवि, ३वाचि, ४जम्बुद्वीपस्थनववर्षमध्ये वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते । ५ वैवस्वतमनुकन्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तु तामुपगम्य पुरूरवसमुत्पादयामासेति पुराणे प्रसिद्धम् । तच्च इडाशब्दे उक्तप्रायम् ६ स्वप्रशीले त्रि० ।

इ(ए)ला कण्ड्वा० यक् प० अक० सेट् । इ(ए)लायति ।

इलावृत न० इला पृथिवीवावृतं निषधादिभिः । नववर्षात्मकजम्बुद्वीपस्य वर्षभेदे तच्च वर्षम् "पद्मान्माल्यवतः, प्राच्यां गन्धमादनपर्वतः । इलावृतं नीलगिरेर्याम्यतो, निषधादुदक्" इत्युक्तवह्नःसीमावच्छिन्ने देशेऽस्ति । "माल्यवांश्च

यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः । नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम् । निषधनीलयुगन्धमाल्यकैरलमिलावृतमावृतमाबभौ । अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम्' इति सि० शि० । "एतेन भारतमिलावृतवद्ध विभाति" माघः । इलावृतस्थपर्व्वतादिवर्णनम् । भाग० ५स्क० १६अ० ।

"एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सर्व्वतः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्द्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोड़शसहस्रं तावतान्तर्भूम्यां प्रविष्टः । उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयोरम्यकहिरण्मयकुरूणां वर्षाणां मर्य्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रपृथव एकैकशः पूर्व्वस्मात् पूर्व्वस्मादुत्तरोत्तरेण दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति । एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः । अयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम् । तथैवेलावृतमपरेण पूर्व्वेण च माल्यवद्गन्धमादनावानीलनिषधायतौ द्विसहस्रं पप्रथतुः । केतुमालभद्राश्वयोः सीमानं विदधाते । मन्दरो मेरुमन्दरः सुपार्श्वः कुमुद इत्ययुतयोजनविस्तारोन्नाहा मेरोश्चतुर्दिशमवष्टम्भगिरय उपकॢप्ताः । चतुर्ष्वेतेषु चूतजम्बूकदम्बन्यग्रोधाश्चत्वारः पादपप्रवराः पर्व्वतकेतव इव सहस्रयोजनोन्नाहास्तावद्विटपविततयः शतयोजनपरिणाहाः । ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजलाः । यदुपस्पर्शिन उपदेवगणा योगैश्वर्य्याणि स्वाभाविकानि भरतर्षभ ! धारयन्ति । देवोद्यानानि च भवन्ति चत्वारि नन्दनं चैत्ररथं वैभ्राजकं सर्व्वतोभद्रमिति । येष्वमरपरिवृढाः सहसुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरन्ति । मन्दरोत्सङ्ग एकादशशतयोजनोत्तुङ्गदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतन्ति । तेषां विशीर्य्यमाणानामतिमधुरसुरभिगन्धबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्व्वेणेलावृतमुपप्लावयति । यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति । एवं जम्बूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जम्बूनदी नाम मेरुमन्दरशिखरादयुतयोजनादवनितले निपतन्ती दक्षिणेनात्मानं यावदिलावृतमुपस्यन्दयति । तावदुभयोरपि रोधसोर्य्या मृत्तिका तद्रसेनानुविध्यमाना च वाय्वर्कसंयोगविपाकेन सदामरलोकाभरणं जाम्बूनदं नाम सुवर्णं भवति । यदु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्रकुण्डलाद्याभरणरूपेण खलु धारयन्ति । यस्तु महाकदम्बः सुपार्श्वपार्श्वनिरूढ़स्तस्य कोटरेभ्यो विनिःसृताः पञ्चायामपरिणाहाः सुमधुराः सुपार्श्वशिखरात् पतन्त्योऽपरेणात्मानमिलावृतमनुमोदयन्ति । याह्युपयुञ्जानानां मुखनिर्वासितो वायुः समन्ताच्छतयोजनमनु वासयति । एवं कुमुदनिरूढो यः शतवल्शोनाम वटस्तस्य स्कन्धेभ्यो नीचीनाः पयोदधिमधुघृतगुड़ान्नाद्यम्बरशय्यासनाभरणादयः सर्व्व एव कामदुघा नदाः कुमुदाग्रात् पतन्तस्तमुत्तरेणेलावृतमुपयोजयन्ति । यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गन्ध्यजरामयामृत्युशीतोष्णवैवर्ण्योपसर्गाद्यस्तापविशेषा भवन्ति । यावज्जीवं सुखं निरतिशयमेव । कुरङ्गकुररकुसुम्भवैकङ्कत्रिकूटशिखरपतङ्गरुचकनिषधशितिवासकपिलशङ्खवैदूर्य्यजारुधिहंसर्षभनागकाञ्जरनीरदादयो गिरयो मेरोः कर्णिकाया इव केशरभूतामूलदेशे परित उपकॢप्ताः । जठरदेवकूटौ मेरुं पूर्व्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः । एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ । एवमुत्तरतस्त्रिशृङ्गमकरौ । अष्टाभिरेतैः परिसृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः । मेरोर्मूर्द्धनि भगवत आत्मयोनेर्मध्यत उपकॢप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौम्भीं वदन्ति । तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपकॢप्ताः" । भा० भी० ६अ० जम्बूखण्डविभागे तु ।

"धनुःसंस्थे महाराज ! द्वे वर्षे दक्षिणोत्तरे । इलावृतं मध्यमन्तु पञ्च वर्षाणि चैव ह । उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः । आयुःप्रमाणं चारोग्यं धर्म्मतः कामतोऽर्थतः । समन्वितानि भूतानि तेषु वर्षेषु भारत ! । एवमेषा महाराज ! पर्व्वतैः पृथिवी चिता । हेमकूटस्तु सुमहान् कैलासो नाम पर्व्वतः । यत्र वैश्रवणो राजन् ! गुह्यकैः सह मोदते । अस्त्युत्तरेण कैलासात् मैनाकं पर्व्वतम्प्रति । हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः । तस्य पार्श्वे महद्दिव्यं शुभं काञ्चनवालुकम् । रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः । दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः । यूपा मणिमयास्तत्र चैत्याश्चापि हिर-

स्तथाः । तनेदा तु गतः सिद्धिं महत्माथो महायशाः । सदा भूतपतिर्यत्र सर्वलोकैः सनातनः । उपास्यते तिग्मतेजा यत्र भूतैः समन्ततः । नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः । तत्र दिव्या त्रिपथगा प्रथमन्तु प्रतिष्ठिता । ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते । वस्वोकसारा नलिनी पावनी च सरस्वती । जम्बूनदी च सीता च गङ्गा सिन्धुश्च सप्तमी । अचिन्त्या दिव्यसङ्काशाः प्रभोरेवैष संविधिः । उपासते यत्र सत्रं सहस्रयुगपर्य्यये । दृश्यादृश्या च भवति तत्र तत्र सरस्वती । एता दिव्याः सप्त गङ्गा स्त्रिषु लोकेषु विश्रुताः" ।

इलिनी स्त्री चन्द्रवंश्यमेधातिथिनृपकन्यायाम् । "मेधातिथिः सुतस्तस्य यस्मात् कण्वोऽभवद् द्विजः । इलिनी नाम यस्यासीत् कन्या वै जनमेजय !" हरिवं॰३२अ॰ ।

इली स्त्री इल–गतौ क गौरा॰ ङीष् । करवाले (काटार)।

इलीविश पु॰ असुरभेदे "न्यविध्यदिलीविशस्य दृढाविभ्रंशृङ्गिण मभिनच्छुष्णमिन्द्रः" ऋ॰१,३३,१२,

इलीश पु॰ इलीव करवालिकेव शोभते शुभ-ड । करवालिका सदृशावयवे स्वनामख्याते मत्स्यभेदे ।

इलिश पु॰ इलीश+पृ॰ । इलीशमत्स्ये (इलिश) ।

इल्वल पु॰ इल+स्वप्ने वलच्–नि॰ गुणाभावः । १मत्स्यभेदे २असुरभेदे च मेदि॰स च सिंहिकापुत्रभेदः "सिंहिकाया मथोत्पन्ना विप्रचित्तेः सुतास्तथा । दैत्यदानवसंयोगाज्जातास्तीव्रपराक्रमाः । सैंहिकेया इति ख्यातास्त्रयोदश महाबलाः । व्यंशः शल्यश्च बलिनो नभश्चैव महाबलः । वातापिर्नमुचिश्चैव इल्वलः खसृमस्तथा । आञ्जिकोनरकश्चैव (कालनेमि) कालनाभस्तथैव च । राहुर्ज्येष्ठस्तु तेषां वै सूर्य्यचन्द्रप्रमर्द्दनः" हरि॰३अ॰ । तच्चरितं यथा

"इल्वलो नाम दैतेय आसीत् कौरवनन्दन ! । मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः । स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः । पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु । तस्मै स ब्राह्मणो नादात् पुत्रं वासवसन्निभम् । चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् । तदाप्रभृति राजेन्द्र ! इल्वलो ब्रह्महाऽसुरः । मन्युमान् भ्रातरं छागं मायावी ह्यकरोत्ततः । मेषरूपी च वातापिः कामरूपोऽभवत् क्षणात् । संस्कृत्य च भोजयति ततो विप्रं जिघांसति । स चाह्वयति यं वाचा गतं वैवस्वतक्षयम् । स पुनर्देहमास्थाय जीवन् स्म प्रदृश्यत । ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् । तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् । तामिल्वलेन महता स्वरेण वाचमीरिताम् । श्रुत्वाऽतिमायो बलवान् क्षिप्रं ब्राह्मणकण्टकः । तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः । वातापिः प्रहसन्राजन्निश्चक्राम विशाम्पते । एवं स ब्राह्मणान्राजन् ! भोजयित्वा पुनः पुनः । हिंसयामास दैतेय इल्वलो दुष्टचेतनः" भा॰व॰९६अ॰।

३मृगशिरोनक्षत्रशिरःस्थासु पञ्चसु तारासु स्त्रीब॰व॰ । तत्र इन्वका इति पाठान्तरम् । इन्वन्ति प्रीणयन्ति इवि-प्रीणने कुन् इदित्त्वात् नुम् क्षिपकादि॰ न चात इत्वम् इति भानुदीक्षितः । तेन इल्वका इति लकारमध्यपाठकल्पनं प्रामादिकमेव । [ ऐन्वीत् । इन्वकाः ।

इव व्याप्तौ प्रीणने च इदित् भ्वा॰पर॰सक॰ सेट् । इन्वति

इव अव्य॰इन्–निरु॰ क । १सादृश्ये, २उत्प्रेक्षायाम्, ३ईषदर्थे, वाक्यालङ्कारद्योतकता चास्य तत्र उपमायाम् "इवेन नित्यसमासोविभक्त्यलोपश्चेति" वार्त्ति॰ उक्तेर्नित्यसमासः विभक्त्यलोपाभावश्च स च समासस्वरार्थ एव । "वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये" रघुः । "हंसीव कृष्ण ! ते कीर्त्तिः स्वर्गङ्गामवगाहते" चन्द्रालोकः । एतत्प्रयोगे श्रौती उपमा "श्रौती यथेववाशब्दा इवार्थे वा वतिर्यदि" सा॰द॰उक्तेः । उत्प्रेक्षायाम् । "गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव" रघुः । "गङ्गाम्भसि सुरत्राण ! तव निःस्वनः । स्नातीवारिवधूवर्गगर्भपातनपातकी" "मुखमेणीदृशोभाति पूर्णचन्द्र इवापरः" सा॰द॰ इवादिशब्दप्रयोगे उत्प्रेक्षाया वाच्यत्वम् । "वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः" सा॰द॰उक्तेः । वाक्यालङ्कारे "सर्वदा क इव वा सहिष्यते" किरा॰ "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" शकु॰ "स्तजति का कियतीमिव न व्यथाम्" नैष॰ ईषदर्थे "तदक्षि पर्युषितमिव" शत॰ब्रा॰ "आवर्जिता किञ्चिदिव स्तनाभ्याम्" कुमा॰ ४अवधारणार्थे च । "स्थिरे पूषन्निव हते वहेथाः" ऋ॰१,१८४,३। "इषकृतेव इवशब्द एवार्थे" भा॰ । "ज्ञस्त्वेव तु वा ईश्वरा" शत॰ब्रा॰। इवशब्दोऽवधारणार्थे" भा॰ ।

इषीका स्त्री इषीका पृ॰ । इषीकाशब्दार्थे अमरटीका ।

इष गतौ सर्पणे च दिवा॰पर॰सक॰सेट् । इष्यति, ऐष्यत् । ऐषीत् इषितः एषित्वा । "इष्यन् वाचमुपवक्तेव होतुः" ऋ॰ ९,९४,९ । "योऽभिपात इषितः प्रपाति" अथ॰ १०,८,३५ । "स तद्ग्रथीषितश्छ्रमन्ने" अथ॰ ६,३५, ५ । "हिन्वानो वाचमिष्यसि" ऋ॰ ९,६४,९ । इच्छा-

यामपि “अथ इष्य होतरित्यथ इच्छ होतरित्येवैतदाह” शत० ब्रा० ३,८,२,१५। गतौ तुदादिरपि इषति सिद्ध० ।
अनु+अन्वेषणे गवेषणे “अन्विष्यन्नतःसीताम्” रामा० “यावदेनामन्वेष्यामि” शकु० । “न रत्नमन्विष्यति मृग्यते हि तत्” कुमा० । “तस्यान्विष्यन् वेतसगूढं प्रभवं सः” रघुः । स्वार्थे णिच् । तत्रैव “राममन्वेषयामि” सा०द० ।
प्र+प्रेरणे । “अप्रैषीद्राजपुत्री मां सुराहार्थी तवान्तिकम्” भा०व०१६ अ० । “गत्वा प्रैषीच्च रावणम्” भट्टिः “अध्वर्युप्रेषितोमैत्रावरुणः प्रेष्यति” आश्व०श्र० । “श्रौनः शेफं च प्रेष्यति” कात्या०१२,६,१“अग्नीषोमाभ्यां छागस्य वपायै मेदसे प्रेष्य” शत० ब्रा० ३,८,२,२७ । घञ् प्रैषः । ण्यत् प्रैष्यः । स्वार्थे णिच् । प्रेषयति प्रेषयामास । “स च मां प्रेषयामास” रामा० । [ णितः पर्येषणा ।
परि+सत्कारपूर्वकनियोजने पर्येष्यति स्वार्थे णिच् पर्ये-
इष वाञ्छायाम् तुदा०पर०सक०सेट् वेट् क्तः । इच्छति, “इच्छामि संवर्द्धितमाज्ञया ते”कुमा० । इच्छेत् “यदीच्छे-द्विपुलान् भोगान्” मल० त०पु० । “राजान्तेवासि-याज्ञवल्क्यः सीदन्तोच्छेद्धनं क्षुधा” या०स्मृ० । ऐच्छत् ऐषीत् “ऐषीः पुनर्जन्मजयाय यत्नम्”भट्टिः इयेष “इयेष सा कर्तुमवन्ध्यमात्मनः”कुमा०ईषतुः । इच्छन् “किमिच्छन् कस्य कामाय किमर्थमनुसंज्वरेत्” श्रुतिः ।
एषिता—ऐष्टा एषित्वा—इष्टा । भावे श इच्छा“आत्मजन्या भवेदिच्छा”न्यायका० । इष्टः“इष्टोऽसि मे सखा चेति”गीता । कर्मणि इष्यते“त्रिरात्राच्छुद्धिरिष्यते”स्मृतिः। एष्टव्यः एषितव्यः ।“एष्टव्या बहवः पुत्रायद्येकोऽपि गयां व्रजेत्”पु०।
अनु+अन्वेषणे । “तं खलन्त इवान्वीषुः” शत०ब्रा०। “कृत्स्न तमात्मानमन्विच्छामो यमन्वेष्टा” छा०उ० । “अनु-पदमन्वेष्टा” पा०“वयं तत्त्वान्वेषात् मधुकर ! हतास्त्वं खलु कृती” शकु०
प्रति+ प्रतिग्रहे प्रतीच्छति ( प्रतिगृह्णाति ) । “ततः प्रतीच्छ प्रहरेति वादिनी” नैष० “स्नुषां प्रतीच्छ मे कन्याम्” प्राप्तौ च ‘बुद्धौ शरणमन्विच्छ’” गीता । स्वार्थे णिच् वेदे०नि० गुणाभावः । इषयति “इच्छं स्वादा-क्तरायेष मदन्त इषयेम ज्योतिः”ऋ०१,१८५,९। “इषयेम इच्छाम” भा० ।
परि+अन्वेषणे च परीच्छति (अन्विष्यति) “भगवन्तं वा अह-मेभिराशीर्भिः पर्यैषिषम्” छा०उ० ।
अभि+सम्यगिच्छायाम् अभीष्टम् ।

इष आभीक्ष्ण्ये क्र्यादि० पौनःपुन्ये पर०सक० सेट् । इष्णाति इष्णातु इषाण । “इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण” यजु० ३१,२२,भा० । ऐष्णात् ऐषीत् । एषितः एषित्वा । प्रेरणे च । “भिनद्गिरिं शवसा वज्रमिष्णन्” ऋ० ४,१७,३ । इष्णन् प्रेरयन्” भा० । इच्छार्थेऽपि “पूर्वीरिषश्चरति मध्व इष्णन्” ऋ० १,१८१,६ ।“मध्वः मधुनः इष्णन् इच्छन्”भा०। आभी-क्ष्ण्यञ्च क्रियापौनःपुन्यम् । क्रिया च धात्वर्थविशेषः स च वाञ्छागत्यादिरेव तस्यैवाभीक्ष्ण्यद्योतनेऽस्य साधुत्वम्
इष गतौ भ्वा० उभ०सक० सेट् । एषति ते । ऐषीत् ऐषिष्ट अनु—अनुसरणे । अन्वेषति । “अन्वेषन्तोवनं राजन्” “देशमन्यं दुराचारमन्वैषन् वानरास्तथा” रामा० ।
इष् त्रि० इष–इच्छायां क्विप् । १इच्छायुक्ते । इट्चरः । “विदादूर्जं शतक्रतुं विदादिषम्” ऋ२,१२,४ । कर्मणि क्विप् । २इष्यमाणे त्रि०३अन्ने स्त्री “मधुमतीन इषस्कृधि” यजु० ७,२, “आश्विनायज्वरीरिषः १,३,१ । “इषे त्वोर्ज्जे त्वा” यजु० १,१, । इष्यतेइष–अन्तर्भूतण्यर्थे कर्म्मणि क्विप् । ४एषणीये । “इषस्तुतो मङ्गाकृते” ऋ० ५,५०,५, “इषः एषणीयस्य” भा०। इष–गतौ भावे क्विप् । ५यात्रायाम् स्त्री
इष पु० इष–गतौ क्विप्–इट् यत्रा वाश्विन् मासे जिगीषूणा-मस्ति अर्थ आ०अच्। सौरे चान्द्रे च आश्विने १मासि । “आवयो भाद्रमासे युवतिश्च्छगते चार्कभाः प्रदिष्टः” राजमा०उक्तेः“सौराश्विनस्य यात्रायां अर्कलाभदत्वाद्यात्-लम्” । अत एव रघौ‘सरितः कुर्वती गाधाः पथश्चाश्या-नकर्दमान् । यात्रायै नोदयामास तं शक्तेः प्रथमं शरत्’। शरत्कालस्य राज्ञां यात्रार्थत्वमुक्तम्। शरदुक्तव“इषश्चोर्जश्च शरदिति” श्रुत्युक्त आश्विनकार्त्तिकमासरूपःकालः तस्य च सौरत्वमृतुशब्दे वक्ष्यते “आमेखलं सञ्चरतां घनानां छायामिषे सानुगतां निषेव्य”कुमा०पाठान्तरम् । “अनि-मिषेऽनिमेषमभ्यतः”माघः । तत्र चान्द्रे“इषे मासि सिते पक्षे नवम्यामार्द्रयोगतः”तिथि० देवीपु०अत्र चान्द्रोगौणः “यस्करद्युर्ज्जश्च औषधः पच्यन्ते तेनोहैताविषश्चोर्जश्च” शत० ब्रा० ४,३,१,१७, “अन्तर्भूतण्यर्थे भावे घञर्थे क” । २प्रेषणे “इषवान् मम रेजति” ऋ०१,२८,६, “इषवान् प्रेषणवान्” भा० । इष–इच्छायां कर्मणि घञर्थे क ३अन्ने न०निरु० ।
इषणि स्त्री इष–भावे अनि वेदे०नि० गुणाभावः । प्रेषणे

"दुहाना धेनुर्वृजनेषु कारवेत्मना शतिनं पुरुरूपमिषणि" ऋ० २,२,९, इषणि एषणायाम् भा०। सप्तम्या लुक्। लोके तु एषणिः वा ङीप्। इषणिमिच्छति क्यच्। वेदे० नि० इलोपः इषण्यति "ऋतस्य शुभ्र उषसामिषण्यन्" ऋ० २,६१,७, ततः भावे अ। "इषण्या प्रेषणायाम् "इषण्यया नः पुरुरूपमाभर" ऋ० ८,४९,१८।

इषव्य त्रि० इषुणा विध्यति इषौ कुशलो वा यत्। शरवेद्ध्रे, १शरव्ये २शरत्यागकुशले च "आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी" यजु०ऋ० २२,२२ "इषुभिर्विध्यति इषव्यः यद्वा इषौ कुशलः" वेददी० [धातवः" ऋ० ९,७९,१,

इषि त्रि० इष–कि। इच्छावति "विचिदश्नाना इषयोऽव्य-

इषिका स्त्री इष–गत्यादौ क्वुन् अत इत्त्वम्। इषीकाशब्दार्थे तूलशब्दपरे ह्रस्वः इषिकतूलम्" तदीयतूले।

इषीका स्त्री ईष–गत्यादिषु ईकन् कित् ह्रस्वश्च। १गज-नेत्रगोलके। २काशे, ३मुञ्जामध्यवर्त्तितृणे च तदालम्ब्यैव अश्वत्थाम्ना पाण्डववधाय महास्त्रं परित्यक्तम् यथा भा० प० १४अ० "व्यथितात्माऽभवत् द्रौणिः पाप-ञ्चेममन्यत। तत दिव्यमदीनात्मा परमास्त्रमचिन्तयत्। जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना। स तामापदमासाद्य दिव्यमस्त्रमुदैरयत्" इत्युपक्रम्य "तत-स्तस्यामिषीकायां पावकः समजायत। प्रधक्ष्यन्निव लो-कांस्त्रीन् कालान्तकयमोपमः" इत्यामिषीकामधिकृत्य कृतोऽध्यायः अण् ऐषीकं भारतान्तर्गतपर्वभेदे "मुञ्जा-दिषीका वृहमिति" शत०ब्रा० "यदि नडानां यदि वेणूनां यदि वेषीकाणाम्" शत०ब्रा० १,१,४,१९, ४शरशला-कायां ५वीरणकाशिकायाञ्च उज्ज्व० "तस्मिन्नास्थदिषी-कास्त्रं रामोरामावबोधिनः" रघुः।

इषिर त्रि० इष–गतौ किरच्। १गतिशीले। "यं न इषिरो अभिदा रातः" ऋ० ७,२५,४, "इषिरः गतिशीलः" भा० २चलनशीले च "निरामनामिषिरामिन्द्र भूमिम्" ऋ० २, २०,९। "इषिरां चलन्तीम्" भा० ४अग्नौ पु० उज्ज्व०

इषु पुंस्त्री ईष्यते हिंस्यतेऽनेन ईष–उ ह्रस्वश्च। १वाणे "प्रतिसंहरचिषुम्" रघुः। "इषुमति रघुसिंहे दंदशूकान् जिघांसौ" भट्टिः। "इषुभिः प्रतियोत्स्यामि" गीता स्त्रीत्वे "तस्य साक्षीरिषवो याभिरस्यति" ऋ० २,२१,४,८। "यामिषुं गिरिशन्त! हस्ते बिभर्ष्यस्तवे" यजु० १६,२। तत्संख्ये २पञ्चसंख्यान्विते च। पञ्चशरशब्दे वक्ष्यमा-णस्य कामशरस्य पञ्चसंख्याकत्वसात्तुसारेण शरशब्देन हि पञ्चसंख्या बोध्यते। "पञ्चपञ्चाष्टसप्तेषु ज्ञेयमोजः सु राशिषु" ज्योति०। ३ वृत्तक्षेत्रान्तर्गते जीवावधिप-रिधिपर्यन्तऋजुसरलरेखायाञ्च तदानयनप्रकारः सोदा-हरणः लीला० दर्शितो यथा

"ज्याव्यासयोगान्तरघातमूलं व्यासस्तदूनोदलितः शरः स्यात्। व्यासाच्छरोनाच्छरसङ्गुणाच्च मूलं द्विनिघ्नं भवतीह जीवा। जीवार्द्धवर्गे शरभक्तयुक्ते व्यासप्रमाणं प्रवदन्ति वृत्ते" उदा० दशविस्तृतिवृत्तान्तर्यत्र ज्या षण्मिता भवेत्। तत्रेषुं वद बाणाज्ज्यां ज्याबाणाभ्याञ्च विस्तृतिम्" न्यासः। व्यासः १०, ज्या ६, अनयोर्योगः १६, अन्तरं ४ तयो-र्घातो ६४, तस्य मूलं ८, तेनोनोव्यासः २, दलितः शरः १। तेन १०हस्तव्यासके वृत्तक्षेत्रे यदि जीवमितिः ६ तदा शर मानम् १ एकहस्त इति ज्ञेयम्। ज्ञातशरव्यासके वृत्त-क्षेत्रे जीवानयनं यथा व्यासः १० हस्ताः, शरः १ हस्तः तेनोनितः व्यासः ९, तस्य मूलम् ३। द्वाभ्यां गुणितम् ६, जीवामानम्। ज्ञाताभ्यां ज्याबाणाभ्यां व्यासानय-नम्। यथा जीवा ६ तस्यार्द्धं ३, तस्य वर्गः ९। शर-संख्यया १ भक्तो ९। शरसंख्यया १ योगे व्यासमानम् १०। एवमन्यसंख्यकजीवादौ अनया दिशा शराद्या-नयनम्। ग्रहाणां क्रान्तिवृत्तक्षेत्रस्य शरानयनं संक्षेपेण दर्शितम् सि० शि०

"स्वविराशिग्रहद्युज्यानिघ्नस्त्रिज्योद्धृतः शरः। स्फुटोऽसौ क्रान्तिसंस्कारे दृक्कर्मण्यजने तथा" सू०। "अयं संक्षिप्तो गोलप्रकारः। सुखस्तु पूर्वं व्याख्यात एव। तथापीह युक्तिमात्रमुच्यते। विषुवद्वृत्तात् क्रान्तिर्ध्रुवाभिमुखी। क्रान्त्यग्राच्छरः कदम्बाभिमुखः। कथं तेन तिर्यक्स्थेन सा संस्कार्या। अतः क्रान्त्यग्रे यद्द्युज्यावृत्तं तस्य शराग्रस्य चयदन्तरमस्तु तेन संस्कृता सती स्फुटा भवति। तज्ज्या-न्तरं कोटिरूपम्। शरः कर्णरूपः। तद्वर्गान्तरपदं द्युज्या-वृत्ते भुजः। एतत् त्र्यस्रं दिग्वलनजात्यस्रसंभवम्। तत्र स्वविराशिग्रहक्रान्तिः कदम्बध्रुवसूत्रयोरन्तरम्। तज्ज्या भुजः। तद्द्युज्या कोटिस्त्रिज्या कर्णः। यदि त्रिज्य-येयं कोटिस्तदा शरेण केत्युपपन्नम्। कोटिरूपस्यैव शरस्य ध्रुवोन्मुखत्वात्तज्ज्ययाऽयं दृक्कर्म कर्तुं युज्यते" प्रमि० विस्तरस्तत्रैव "विक्षेपलिप्ताः क्षितिजादिकानां खेषा ११० द्विवाणेन्दुमिता १५२ रसाद्याः ७६। षट्त्रीन्दवः १३६, खाग्निभुवः १३० सितज्ञपातौ स्फुटौ स्वचल-केन्द्रयुक्तौ" सू० "क्षितिजस्य खरुद्रमिता ११० मध्यमा

विक्षेपलिप्ताः । बुधस्य द्विबाणेन्दुमिताः १५२ । गुरोः षट्सप्ततिः ७६ । शुक्रस्य षड्विश्व१३६ तुल्याः । शनेः खनीन्दु १२० मिता वेदितव्याः । तथा बुधशुक्रयोर्यौ गणितागतौ पातौ तौ स्वस्वशीघ्रकेन्द्रेण युक्तौ कार्यौ । एवं स्फुटौ स्तः । अत्रोपपत्तिः । मध्यमगतिवासनायां वेधप्रकारेण वेधवलये ग्रहविक्षेपोपपत्तिर्दर्शितैव । किन्त्वन्यफलज्यार्धधनुषा स्वनिरूढेण तुल्यं यदा शीघ्रकेन्द्रं भवति तदा त्रिज्यातुल्यः शीघ्रकर्णो भवति तस्मिन् दिने वेधवलये यावान् परमो विक्षेप उपलभ्यते तावान् ग्रहस्य परमो मध्यमविक्षेपः । एवमेते भौमादीनामुपलब्धाः पठिताः । अथ बुधशुक्रयोः पातस्य स्फुटत्वमुच्यते । भगणाध्याये ये बुधशुक्रयोः पातभगणाः पठितास्ते स्वशीघ्रकेन्द्रभगणैरधिकाः सन्तो वास्तवा भवन्ति । ये पठितास्ते स्वल्पाः कर्मलाघवेन सुखार्थम् । अतः पठितचक्रभवौ स्वशीघ्रकेन्द्रयुतौ वास्तवभगणनिष्पन्नौ स्फुटौ भवतः । तथा चोक्तं गोले ।"ये चात्र पातभगणाः पठिता ज्ञभृग्वोस्ते शीघ्रकेन्द्रभगणैरित्यादि"। इदानीं ग्रहविक्षेपानयनमाह" प्रमि०।"मन्दस्फुटात् खेचरतः स्वपातयुक्ताद्भुजज्या पठितेषुनिघ्नी। स्वशीघ्रकर्णेन हृता शरः स्यात् सपातमन्दस्फुटगोलदिक्कः" सू० । "मन्दस्फुटाद्ग्रहात् स्वपातयुक्ताद्भुजज्या साध्या। सा ग्रहस्य पठितेन शरेण गुण्या स्वशीघ्रकर्णेन भाज्या फलं स्फुटविक्षेपः स्यात् । सपातो मन्दस्फुटो ग्रहो यदि राशिषट्काद्दूनस्तदोत्तरो विक्षेपोऽन्यथा दक्षिणः । अत्रोपपत्तिः । मन्दस्फुटो ग्रहः स्वशीघ्रप्रतिमण्डले भ्रमति । तत्र च तस्य पातोऽपि । पातो नाम प्रतिमण्डलविमण्डलयोः संपातः । तस्मादारभ्य विक्षेपप्रवृत्तिः । इह सुसरलवंशशलाकया कक्षामण्डलं तत्प्रतिमण्डलं च छेद्यकोक्तविधिना विरचय्य तत्र शीघ्रप्रतिमण्डले मेषादेः प्रतिलोमं पातस्थानं च चिह्नयित्वा तत्र विमण्डलं निवेश्यम् । पातचिह्नाद्राशित्रयान्तरे विमण्डलप्रतिमण्डलयोरन्यं सम्पातं कृत्वा पातात् पूर्वं तस्मिन्नन्तरे पतितविक्षेपप्रमाणेन प्रतिमण्डलादुत्तरतो विमण्डलं केनचिदाधारे स्थिरं कृत्वा मेषादेरनुलोमं मन्दस्फुटं ग्रहं प्रतिमण्डले विमण्डले च दत्त्वा विक्षेपोपपत्तिं दर्शयेत् । तत्र तयोर्ग्रहयोर्यावान् विप्रकर्षस्तावांस्तत्र प्रदेशे विक्षेपः । अथ तस्यानयनम् । पातस्थाने हि विक्षेपाभावः । तस्मित्रिभेऽन्तरे परमो विक्षेपः । अन्तरेऽनुपातेन । अतः पातग्रहचिह्नयोरन्तरं तावज्ज्ञेयम् । तच्च तयोर्योगे कृते भवति । यतो मेषादेरनुलोमं ग्रहो दत्तः । पातस्तु प्रतिलोमम् । अतस्तयोर्योगः शरार्थं किल केन्द्रम् । तस्य दोर्ज्या साध्या । यदि त्रिज्यातुल्यया दोर्ज्यया पठितविक्षेपतुल्यं प्रतिमण्डलविमण्डलयोरन्तरं लभ्यते तदाऽभीष्टया ग्रहस्थानभवया दोर्ज्यया किमिति फलं शीघ्रकर्णाग्रे विक्षेपः । अथ द्वितीयोऽनुपातः । यदि शीघ्रकर्णाग्रे एतावान् विक्षेपस्तदा त्रिज्याग्रे क इति । अत्र गुणभाजकयोस्त्रिज्यातुल्ययोस्तुल्यत्वान्नाशे कृते सति दोर्ज्याया; पठितविक्षेपो गुणः शीघ्रकर्णो हरः । फलं कक्षाप्रदेशे विक्षेपो व्यासदलस्य चापं स्फुटविक्षेप इत्यर्थः । भूचिह्ने स्वतस्सकमध्यं बद्धा द्वितीयमध्यं विमण्डले ग्रहस्थाने निबद्धं सूत्रं कर्णः । सूत्रकक्षमण्डलयोरन्तरं स्फुटः शर इत्यादि सर्वं छात्राय दर्शनीयम् । इदानीं विक्षेपस्य क्रान्तिसंस्कारयोग्यतालक्षणमन्यत् स्फुटीकरणमाह" । प्रमि० "चिज्यावर्गाद्यनवलनज्याकृतिं प्रोह्य मूलं यद्विर्यस्या द्युचरशिशिरक्षताडितस्त्रिज्ययाप्तः । यद्वा राशित्रययुतखगद्युज्यकाघ्नस्त्रिमौर्व्या भक्तः स्पष्टो भवति नियतं क्रान्तिसंस्कारयोग्यः" सू० । ग्रहस्य "युतायनांशोडुपकोटिशिञ्जिनीत्यादिनायनं वलनं साध्यम् । अत्र वलनशब्देन वलनज्या ग्राह्या न धनुः । तथा इतः प्रभृति दृग्ज्याभिः कर्म कर्तव्यम् । यतो दृग्ज्याभिः शरज्या शरकलातुल्यैव भवति । तस्यानयनम् । वलनस्य वर्गं त्रिज्यावर्गादपास्य यन्मूलं लभ्यते तद्यष्टिसंज्ञं ज्ञेयम् । तया यष्ट्या ग्रहविक्षेपो गुणितस्त्रिज्यया भक्तः स्फुटः क्रान्तिसंस्कारयोग्यो भवति । अथानुकल्प उच्यते । यद्वा राशित्रययुतखगद्युज्यकाघ्न इति राशित्रययुतस्य ग्रहस्य यावती द्युज्या तया वा गुणस्त्रिज्यया भक्तः स्फुटो भवति । अत्र भाजकस्यैकत्वाद्गुणकस्यान्यत्वात् फलं स्वल्पान्तरमित्यतोऽनुकल्पेनोक्तम् । अत्रोपपत्तिः । क्रान्त्यपात् किल शरो भवति । शराग्रे ग्रहः क्रान्तिः शरेण संस्कृता स्फुटा भवति । अत्र गणितागतेनैव शरेण क्रान्तिः स्फुटा क्रियते तदयुक्तम् । यतः क्रान्तिर्विषुवन्मण्डलात् तिर्यग्ध्रुवाभिमुखी । विक्षेपस्तु क्रान्तिमण्डलात् तिर्यग्रूपः कदम्बाभिमुखः यथोक्तं गोले । "सर्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः । विषुवन्मण्डलमाद्या ध्रुवे साध्या तथोत्तरा" । सर्वतः क्षेपसूत्राणां ध्रुवाच्चिनरयान्तरे। योगः कदम्बसंज्ञोऽयं क्षेपो

वलनवोधकम् । तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा । कदम्बभ्रमवृत्तं चेति" । अतो विक्षेपः कदम्बाभिमुखो भवति । ध्रुवाभिमुख्या क्रान्त्या सह कथं तस्य भिन्नदिकस्य योगवियोगावुचितौ । तयोर्यद्भिन्नदिक्त्वं तदायनवलनवशात् । अथ तद्गोलोपरि प्रदर्श्यते । यथोदितं गोलं विरचय्य क्रान्तिवृत्ते यद्ग्रहचिह्नं तस्मात् परितो नवतिभागान्तरेऽन्यत् त्रिज्यावृत्तं निवेश्यम् । अथ ग्रहचिह्नाद्ध्रुवोपरिगामि सूत्रं तस्मिन् वृत्ते यत्र लगति तत्कदम्बयोरन्तरस्य ज्या त्रिज्या स कर्णः । तयोर्वेगान्तरपदं कोटिः । सा च यष्टिसंज्ञा । क्रान्त्यग्राद्विक्षेपः कदम्बाभिमुखः कर्णरूपः । तस्य कोटिरूपकरणायानुपातः । यदि त्रिज्याकर्णे यष्टिः कोटिस्तदा शरकर्णे का । फलं क्रान्तिसंस्कारयोग्यो विक्षेपो भवति । तेन संस्कृता क्रान्तिः स्फुटा । विक्षेपाग्रस्थस्य ग्रहस्य विषुवन्मण्डलस्य च यद्याम्योत्तरमन्तरं सा स्फुटा क्रान्तिरुच्यते अयानुकल्पेऽपीयमेव वासना । अत्र सविरायिग्रहक्रान्तिज्या भुजस्थाने कल्पिता स भुजः । तद्द्युज्या यष्टिस्थाने कल्पिता सा कोटिः । तत्रापि त्रिज्या कर्ण इति सर्वमुपपन्नम्" प्रमि० । तत्रैव स्थानान्तरेऽप्युक्तम् ।

"नाडिकामण्डलात् तिर्यगन्तरापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः । क्षेपवृत्तावधिस्तिर्यगेव स्फुटो नाडिकावृत्तखेटान्तराखेऽपमः" मू० ।"क्रान्तिवृत्ते यत् स्फुटग्रहस्थानं तस्य नाडिकावृत्तात् तिर्यगन्तरं सा क्रान्तिः अथ विमण्डले च यत् ग्रहस्थानं तस्य क्रान्तिवृत्ताद्यत् तिर्यगन्तरं स विक्षेपः । अथ विमण्डलस्थग्रहस्य नाडीवृत्ताद्यत् तिर्यगन्तरं सा स्फुटा क्रान्तिः" प्रमि० ।

३सामवेदविहिते यज्ञभेदे । "इष्वज्यौ सामवेदे विहितौ" सि०कौ० । इषुप्रकारः स्थूला० कन् । इषुकः शरप्रकारे

इषुकामशमी स्त्री पुरीभेदे "पूर्व्वेषुकामशमी" सि०कौ० ।

इषुकार पु० इषुं करोति कृ—अण् उप० । वाणकारके शिल्पिभेदे "पिङ्गला कुररः सर्पः सारङ्गोऽन्वेषणं विना । इषुकारः कुमारी च षडेते गुरवो मम" अवधूतोक्तं समर्थितं पिङ्गलादीनां यथोपदेशकारित्वात् गुरुत्वं तथा दर्शितम् यथा । "आशा बलवती राजन् ! नैराश्यं परमं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला । सामिषं कुररं दृष्ट्वा बध्यमानं निरामिषैः । आमिषस्य परित्यागे तु कुररः सुखमेधते । गृहारम्भो हि दुःखाय न सुखाय कदाचन । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते । सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिसमाश्रिताः । अयत्नेनैव जीवन्ति सारङ्गा इव पक्षिणः । इषुकारो नरः कश्चिदिषावासक्तमानसः । समीपेनापि गच्छन्तं राजानं नावबुद्धवान्" बहूनां कलहो नित्यं द्वयोः सङ्कथनं ध्रुवम् । "एकाकी विचरिष्यामि कुमारीशङ्खको यथा" भा०शा० प० अ० १७८ इषुकृदादयोऽप्यत्र ।

इषुकृत त्रि० इषुरिव शीघ्रगामी ऋजुगामी वा कृतः । वाणतुल्यं शीघ्रगामितया ऋजुगामितया च कृते । "श्रिये पूषन्निषुकृतेव देवा नासत्या" ऋ०१८४,३ । इषुकृतेव इवशब्द एवार्थे । "आजिधावनाय इषुवच्छीघ्रमृजुगामिनौ कृताविव सन्तौ" भा० इषुकृता इव नासत्या इत्यादौ सर्वत्र छान्दस आ । एतेन इषुकृच्छब्दस्योदाहरणतया एतस्या ऋच उपन्यासः प्रामादिक एव ।

इषुध शरधारणे कण्ड्वा प०अक०सेट् । इषुध्यति ऐषुध्यीत् इषुध्यिता—इषुधिता । याच्ञायामपि "त्रिष्टो राय इषुध्यति द्युम्नं इयीत पुष्यसि" ऋ०६,५०,१ । पतिं वो अघ्न्यानां धेनूनामिषुध्यसि" ऋ० ८,५८,२ । भावे अ । इषुध्या प्रार्थनायां स्त्री । "दिवोशाक्तोम्नकुरस्य वीरैरिषुध्येव मरुतो रोदस्योः" ऋ०१,१२२,१ । उण् इषध्यु मार्थके "इषध्यव ऋतसापः पुरन्ध्रीः" ऋ०५,४१,६ ।

इषुधर पु० इषुं धरति धृ—अच् ६त० । वाणधरे इषुभृदादयोऽप्यत्र । "शरांसि सर्वेषुभृतां निरास्थत्" भट्टिः ।

इषुधि पुंस्त्री० इषवो धीयन्तेऽत्र धा—कि इषुध—इन् वक्षोपे वा । वाणाधारे वाणधारके वा तूणे । स्त्रीत्वे "धनुर्गाण्डीवमादाय तथाऽक्षय्ये महेषुधी" भा०व० ।

२८अ० । निरवमेन इषुधीरसक्तः" ऋ०१,३३,३ । पुंस्त्वे "बद्धाऽऽक्षय्यौ महेषुधी" रामा० । "बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य" । "इषुधिः सङ्काः पृतनाश्च" ऋ० ६,७५,५ । "बहव इषवो धीयन्ते इषूणां निधानत्वात् "इषुधिरिषूणां निधानम्" यास्कः" भा० ।

इषुप पु० इषुं पिबति पा०पाने क उप०स० । असुरभेदे सहि अंशावतारे नग्नजिन्नामा राजासीत् यथाह भा० आ०६७अ० "इषुपोनाम यस्तेषामसुराणां बलाधिकः । नग्नजिन्नाम राजासीत् भुवि विख्यातविक्रमः" ।

इषुपुङ्गा स्त्री इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खावृक्षे ।

इषुपुष्पा स्त्री इषुरिव पुष्पमस्याः । शरपुष्पायाम् ।

इषुमत् पु० इषवः सन्त्यस्य प्राशस्त्येन मतुप् । प्रशस्तबाणधरे । "इषुमति रघुसिंहे दन्दशूकान् जिघांसौ" भट्टिः ।

इषुमात्र न० इषु प्रमाणमस्य इषु+मात्रच्। १शरप्रमाणे अग्निवेदिनां २कुण्डे कुण्डशब्दे विवृतिः। ३इषुप्रमाणमात्रे त्रि० स्त्रियां ङीप्। "यद्येकः पशुः स्यात् एकप्रादेशां कुर्य्यात् अथ यदि पञ्च पशवः स्युः पञ्चप्रादेशां कुर्य्यादिषुमात्रीं वा वीर्य्यं वा इषुवीर्य्यसम्मितैव तद्भवति। पञ्चप्रादेशा त्वेव पुरेषुर्भवति" शत० ब्रा० ६,५,२,१०। इदमुखामधिकृत्य प्रवृत्तम्। उखां करोतीत्युपक्रम्य "पञ्चप्रादेशा त्रिषुमात्री वा तिर्य्यक् पञ्चपशौ" कात्या० १६,२,२५, उक्तेः। इषुमानं च अङ्गुल्यवधिबाहुमूलपर्य्यन्तमानं तच्च प्रादेशत्रयम् याज्ञिकसम्प्रदायप्रसिद्धम्। ४शरगतिपर्य्यन्तमाने च। "अथ यदब्रवीत् वर्द्धस्वेति। तस्मादु ह स्मेषुमात्रमेव तिर्य्यङ् वर्द्धते इषुमात्रं प्राङ्सोऽवैवावरं समुद्रम् दधावब" शत० ब्रा० १,६,३,११ इत्यासुरवर्द्धनप्रकारः। "इषुमात्रं धनुषः सकाशात् बलात् प्रयुक्त इषुर्यावद्दूरं गच्छति तावन्मात्रं प्रतिवर्षं तिर्य्यक् उभयपार्श्वतः अवर्द्धत" भा०। शरविक्षेपप्रमाणञ्च। इषुविक्षेपशब्दे दृश्यम्।

इषुविक्षेप पु० इषोर्विक्षेपयोग्यदेशः। सार्द्धशतहस्तमिते शरविक्षेपयोग्ये देशे तन्मानमाह स्मा० त० पितामहः "मध्यमेन च चापेन प्रक्षिप्तेषुशरत्रयम्। हस्तानाञ्च शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः। तत्प्रमाणदेशातिक्रमेणैव पुरीषोत्सर्गः कार्य्यः। "ततः कक्ष्यं समुत्थाय कुर्य्यात् मैत्रं नरेश्वर! नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः"। मैत्रं मित्रदेवताकपायुसम्बन्धात् पुरीषोत्सर्गं इषुविक्षेपमतीत्य इषुविक्षेपयोग्यदेशाद्बहिः" स्मा० त० रघु०।

इषेत्वक पु० इषे त्वा इतिभागोऽस्त्यत्रानुवाके अध्याये वा गोपथा० वुन्। इषेत्वा इतिशब्दयुक्ते अनुवाके अध्याये च। स च यजुर्वेदीयः प्रथमाध्यायः तत्रादौ इषे त्वोर्ज्जेत्वेति शब्दश्रवणात् तस्य तथात्वम् एवं तदन्तर्गतोऽनुवाकोऽपि तथा।

इष्कर्त्तृ त्रि० निस्+कृ–तृच् "निषश्चबहुलमिति" प्रातिशाख्यसूत्रेणोपसर्गैकदेशनकारलोपः। निष्कर्त्तरि। "इषकर्त्तारमध्वरस्य प्रचेतसम्" ऋ० १०,१४०,५। इषकृदादयोऽप्यत्र।

इष्कृति स्त्री निस्+कृ–क्तिन् इष्कर्त्तृवत् नलोपः। गर्भान् निष्क्रमकारिण्यां मातरि जनन्याम्। "इष्कृतिर्नाम वो माता अथो यूयं स्थ निष्कृतीः" यजु० १२,८३,। "इष्कृतिर्नाम निष्कृतिनाम्नी माता जननी" वेददी०।

इष्ट त्रि० इष–कर्म्मणि क्त। १अभिलषिते, २प्रिये "इष्टोऽसि सखा चेति" गीता० च। यज भावे क्त। ३यज्ञादौ न० कर्म्मणि, क्त। ४पूजिते ५एरण्डवृक्षे पु०। ६संस्कारे न०। "एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्याञ्च यद्दानमिष्टं तदभिधीयते। अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च प्राकुरिष्टमिति स्मृतम्" जातूकर्ण्योक्ते ७धर्म्मकार्य्ये न०। इष्टञ्च इच्छाविषयः तच्च द्विविधं गौणं मुख्यञ्च। तत्र इतरेच्छानधीनेच्छाविषयो मुख्यं तत्साधनं गौणम्। तत्र मुख्यमिष्टं सुखं दुःखाभावश्च। तदिच्छाया इतरेच्छानधीनत्वात्। तत्साधनं पाकभोजनादि गौणं सुखदुःखाभावेच्छयैव तदिच्छायाः समुद्भवात्। अधिकमिच्छाशब्दे ९१२ पृष्ठे उक्तम्। तत्रेच्छाविषये "सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्"। "अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्म्म चोच्यते"। "इष्टं हि वो देवा दास्यन्ते यज्ञभाविताः" इति च गीता। यज्ञे "पुरोडाशभुजामिष्टमिष्टं कर्त्तुमलन्तराम्" माघः इष्टं यागः इष्टमभीष्टं कर्त्तुमलन्तरामित्यर्थः। "इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात्" देवलः। इष्टं यजनम्" शु० त० रघु० दत्तते च "यज्ञैरिष्टं क्रतुशतम्" विक्रमो० स्मृतिपरिभाषिते इष्टकर्म्मणि द्विजातीनामेवाधिकारः न स्त्रीशूद्रयोः यथाह "इष्टन्तु द्विजातीनां धर्मः सामान्य उच्यते। अधिकारी भवेच्छूद्रः पूर्त्ते धर्म्मे न वैदिके" जातूकर्ण्यः "वैदिके वेदसाध्ये अग्निहोत्रादाविति" रत्नाकरः। "पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्यपूर्त्ताभ्याम् वृद्धानाथातिथीन् स्त्रियः" इति बृहस्पतिवचने स्त्रिया पूर्त्तमात्रेऽधिकारविधानात् तत्र जलाशयोत्सर्गरूपपूर्त्ते गोरवतारणानुमन्त्रणयोर्यजमानकर्त्तृकमन्त्रपाठविधानात् तत्र अमन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽपि तयोर्नाधिकारः विशेषोपदेशाभावात्" इति द्वैतनिर्णयानुसारिणः। इष्टोत्सर्गे तदङ्गहोम इव ब्राह्मणद्वारा तन्मन्त्रपाठसम्भवात्तयोरपि तत्राधिकारः इति रघुनन्दनादयः। "अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" वराहपु० "तद्भुतमव्रतश्चाग्नौ न स्त्री जुहुयादनुपेतः" आप० वचनं तु स्वयंहोमविषयम्। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" याज्ञ० श्रौत इव स्मार्त्तेऽपि कर्म्मणि ऋत्विग्वरणोक्तेः। अतएव "ऋत्विग्वादे नियुक्तश्च समौ संपरिकीर्त्तितौ। यज्ञे स्वाम्याप्नु-

यात् पुण्यं हानिं शाद्वेऽय था जयमिति" बृह० उक्ते :६ "श्रौते कर्मणि न० "उद्‌बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्च" यजु० १५,५४ इष्टापूर्त्ते श्रौतस्मार्त्ते कर्मणी" वेददी० । १० इच्छया कल्पिते त्रि० "इष्टहतिरष्टगुणिता व्येका दलिता विभाजिताष्टेन" लीला० ११यत्नेन तोषिते परात्मनि १२विष्णौ च पु० "इष्टोविशिष्टः शिष्टेष्टः" विष्णु स० "इष्टः परमानन्दात्मकत्वेन प्रियः यज्ञेन पूजितो वेति" भा० । यज—कर्म्मणि वा० क्त, भावे क्त बाहुलकात् अच् वा । १३ इष्टकायां न० । "भस्तार्केण शुध्यन्ति पक्वेष्टचितानि च" विष्णु० ।

**इष्टकचित** त्रि० इष्टकया चितः व्याप्तः । इष्टकाभिर्व्याप्ते

**इष्टकर्मन्** न० इष्टप्रसिद्ध्यर्थं कर्म शाक०त० । लीलावत्युक्ते गणितभेदे तत्प्रकारो यथा "अथेष्टकर्मसु करणसूत्रं वृत्तम् 'उद्देशकालापवदिष्टराशिः क्षुण्णो हृतोऽंशैः रहितो युतो वा । इष्टाहतं दृष्टमनेन भक्तं राशिर्भवेत् प्रोक्तमितीष्ट कर्म । अत्रोद्देशकः । पञ्चघ्नः स्वत्रिभागोनो दशभक्तः समन्वितः । राशित्र्यंशार्द्धपादैः, स्यात् कोराशिर्द्व्यूनसप्ततिः । न्यासः गुणः ५ । स्वत्रिभागः १/३ । हरः१० । राश्यंशाः १/३ १/२ १/४ । दृश्यम् । ६८ । अत्र किल कल्पितराशिः ३ । पञ्चघ्नः । १५ । स्वत्रिभागोनः । १० । दशभक्तः । १ । कल्पित ३ राशेस्त्र्यंशार्द्धपादैः ३/३ ३/२ ३/४ समन्वितोहरोजातः १७/४ । अथ दृष्टम् ६८ इष्टेन ३ गुणितम् २०४ । हरेण १७/४ भक्तं जातोराशिः । ४८ । एवं सर्वत्रोदाहरणे राशिः केनचिद्गुणितोभक्तोवा राश्यंशेन रहितोयुतोवा दृष्टस्तत्रेष्टं राशिं प्रकल्प्य तस्मिन्नुद्देशकालापवत्कर्मणि कृते यत्सम्पद्यते तेन भजेद्दृष्टमिष्टगुणं फलं राशिः स्यात् । तत्र इष्टजात्युदाहरणम् । यूथार्द्धं सत्रिभागं वनविवरगतं कुञ्जराणाञ्च दृष्टं षड्भागश्चैव नद्यां पिबति च सलिलं सप्तमांशेन मिश्रः । पद्मिन्या चाष्टमांशः स्वनवमसहितः क्रीडते सानुरागोनागेन्द्रोहस्तिनीभिस्त्रिभिरनुगतः का भवेद्यूथसंख्या । न्यासः

१/२ १/६ १/८ दृश्यम् ४ । एषां सवर्णने
१/३ १/७ १/९ द्वाभ्यामपवर्त्तितं २/३ | ४/२१ |
५/३६ । पुनरेषां सवर्णितानामैक्यं नवभिरपवर्त्तितं २५१/२५२ इष्टोनं १/२५२ अनेन ४ दृष्टे इष्टगुणिते भक्ते जाता हस्तिसंख्या १००८ । अपरोदाहरणम् । अमलकमलराशेस्त्र्यंशपञ्चांशषष्ठैस्त्रिनयनहरिसूर्या येन तुर्येण चार्य्या । गुरुपदमथ षड्भिः पूजितं शेषपद्मैः सकलकमलसंख्यां क्षिप्रमाख्याहि तस्य । न्यासः १/३ १/५ १/६ १/४ दृश्यम् । ६ । अत्रेष्टं राशिम् १ प्रकल्प्य प्राग्वज्जातोराशिः । १२० । अन्यदुदाहरणम् । हारस्तारस्तरुण्यानिधुवनकलहे मौक्तिकानां विशीर्णोभूमौ यातस्त्रिभागः शयनतलगतः पञ्चमांशोऽस्य दृष्टः । प्राप्तः षष्ठः सुकेश्या गणक ! दशमकः संगृहीतः प्रियेण दृष्टं षट्कञ्च सूत्रे कथय कतिपयैर्मौक्तिकैरेष हारः । न्यासः १/३ १/५ १/६ १/१० दृश्यम् । ६ । अत्रेष्टं राशिम् १ प्रकल्प्य प्रागवज्जातोराशिः ३० । अथ शेषजात्युदाहरणम् । स्वार्द्धं प्रादात्प्रयागे नवलवयुगलं योऽवशेषाच्च काश्यां शेषाङ्‌घ्रिं शुल्कहेतोः पथि दशमलवान् षट् च शेषाद्गयायाम् । शिष्टा निष्कत्रिषष्टिर्निजगृहमनया तीर्थपान्थः प्रयातस्तस्य द्रव्यप्रमाणं वद यदि भवता शेषजातिः श्रुतास्ति । न्यासः ।

१/१ दृश्यम् ६३ । अत्र रूपम् १ राशिं प्रकल्प्य
१/२ भागान् शेषान् शेषादपास्य अथवा भागा-
२/९ पवाहविधिना सवर्णिते जातम् । ७/६०
१/४ अनेन इष्टगुणिते ६३ दृष्टे । भक्ते जातं
६/१० द्रव्यप्रमाणम् । ५४० । इदं विलोमसूत्रेणापि सिध्यति । अथ विश्लेषजात्युदाहरणम् । "पञ्चांशोऽलिकुलात्कदम्बमगमत् त्र्यंशः शिलीन्ध्रं तयोर्विश्लेषस्त्रिगुणो मृगाक्षि ! कुटजं दोलायमानोऽपरः । कान्ते ! केतकमालतीपरिमलप्राप्तैककालप्रियादूताहूत इतस्ततोभ्रमति खे भृङ्गोऽलिसंख्यां वद । न्यासः १/५ १/३ ३/५ दृश्यम् । १ । जातमलिकुलमानम् । १५ । एवमन्यत्रापि" ।

**इष्टका** स्त्री इष—तकन् टाप् इष्टकेषीकामालानाम्" पा० निर्द्देशात् ह्रस्वम् । (इट्) मृदादिनिर्म्मिते १स्वनामख्यातखण्डभेदे यज्ञिये अग्निचयनार्थे २मृदादिनिर्मिते द्रव्यभेदे च शत० ब्रा० तु निर्वचनान्तरमुक्तं यथा । "यावद्यावदै जुहवाञ्चकार तावत् भवतीति तद्यस्मा इष्टे समभवंस्तस्मादिष्टका" ६,१,२,२२ । "तं देवा अग्न्योराहुतिभिरभिषज्यन् ते यांयामाहुतिमजुहवुः सासैषं पक्वेष्टका भूत्वा समपद्यत तद्यदिष्टात् समभवंस्तस्मादिष्टकास्तस्मादग्निना इष्टकाः पचन्त्याहुतीरेवैनास्तत् कुर्वन्ति" इति च तत्रैव । इष्टकाकरणकालप्रकारादि" कात्या० श्रौ० १६,२क० दर्शितं यथा । "उखासम्भरणमष्टम्याम्" १६,०। "उखायाः सम्भरणमुखासम्भरणम् तदष्टम्यां भवति "अष्टकायामुखां सम्भरतीति

( ६,२,२,२२ ) शत० ब्रा० वचनात् । उखा चोपलक्षणम् अषाढाद्यपत्र सम्भियतएव ततश्चान्तराले तस्या अपि प्रयोक्तृत्वम् । सम्प्रदायस्तु प्रागनुक्तयाष्टम्याम्” कर्कः “आहवनीयस्य पुरस्तात्खात्वा चतुरश्रे श्वभ्रे मृत्पिण्डमवदधाति भूमिसमम्” २सू० । “भूमिसममन्यूनानतिरिक्तम्”क० । “पिण्डमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति”३सू० । ‘पिण्डाहवनीययोर्व्यध्वे अर्धपथे”क० । ‘व्यध्वे पिण्डाहवनीययोर्मध्ये, वल्मीकवपाम् उपदीकाकृतस्य मृद्भुयस्य वपामिव वपाम् अन्तःशुष्टां छिद्रां छिद्रसंयुक्ताम्” संप० । “आहवनीयं दक्षिणेन तिसृभ्यः प्रञ्चाङ्गीवद्धास्तिष्ठन्ति प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभौमध्येऽश्वपूर्वाः” ४सू० । ‘आहवनीयस्य दक्षिणतः तिसृभिर्मुञ्जमयोभिः पञ्चाङ्गीभिः पञ्चाङ्ग्यो रशनिकाः ताभिर्बद्धास्तिष्ठन्ति प्राङ्मुखाः अश्वगर्दभाजाः पूर्वापरत्वेन रासभौमध्येऽश्वपूर्वाः” क० । “उत्तरत आहवनीयस्यारत्निमात्र उभयतश्छिन्ना वैणवी सुषिराभ्रिः कल्माषभावेऽकल्माषी प्रादेशमात्र्यरत्निमात्री वा” ५सू० । “आहवनीयात्मन्यूनामुत्तरतो मा भूदित्याहवनीयग्रहणम्”क० । “परिपाकवशात्कर्बुरा” संप० । “हिरण्मयीमेके” ६सू० । “एके आचार्या इच्छन्ति, अतश्च विकल्पः” क० । “अष्टगृहीतं जुहोति संततमुद्गृह्णन् युञ्जान इति (११,१) ७सू० । ‘अष्टगृहीतमाज्यद्रव्यं संततं जुहोति” क० । ‘देवस्य त्वेति (११,९) अभ्रिमादाय “हस्त आधायेत्येनामभिमन्त्रयते” । (११,११) ८सू० । “अश्वप्रभृतींश्च प्रत्यृचं प्रतृचं युञ्जायां योगे योगऽइति (११,१२,१४) ९सू० । “अभिमन्त्रयते” क० । “अनुपस्पृशन्नुत्क्रमयत्येनान् प्राचः प्रतिमन्त्रं प्रतूर्त्तमुर्वन्तरिक्षं पृथिव्याः सधस्थादिति” (११,१५,१६ ) १० सू० । “अग्निं पुरीष्यवत्तस्य पिण्डं गच्छन्त्यग्निं पुरीष्यमिति” ( ११,१६ ) । ( ६,३,३,१ ) शत०ब्रा० ११सू० । “दक्षिणतश्च पशवो युगपत्” १२सू० । “गच्छतां च दक्षिणतः पशवः, उत्तरतश्च पुरुषाः युगपद्गमनं कुर्वन्ति”क० । “अन्वग्नि पुरुषमीक्षते देवपितृमनुष्यानर्थकमग्निं पुरीष्यमिति” । (११,१६) १३सू० । ‘यो देवादीन्नावति स देवपितृमनुष्यार्थकः” क० । “वल्मीकवपामादाय छिद्रेण पिण्डमीक्षतेऽन्वग्निरिति” (११,१७) १४सू० । “इहा निदधात्येनाम् । १५सू० । “वल्मीकवपाम्” क० । “आगत्येत्यभिमन्त्रयतेऽश्वम्” (११,१८) १६सू० । “आक्रम्येत्यनेन (११,१९ ) पिण्डमधिष्ठापयति” १७ सू० । ‘एनेनेत्यश्वोऽभिधीयते” क० “द्यौस्त इति (११,२०) पृष्ठस्योपरि पाणिं धारयन्ननुपस्पृशन्नुत्क्रामेत्युत्क्रामयति ( ११,२१ ) १८सू० । “अश्वम्” क० । “उदक्रमीदित्यभिमन्त्रयते (११,२२) १९ क० ।“अश्वमेव”क० ।‘आहवनीयवत् स्थापयति पिण्डस्य” २०सू० । “पशून्” क० “उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति (११,२३ ) ‘व्यतिषक्ताभ्यामृग्भ्यामाहुती ( ११,२२,२३ ) स्रुवेणाश्वपदे” २१सू० । ‘मृत्संस्कारत्वादुपविश्येत्युच्यते, व्यतिषङ्गश्च एकस्याः पूर्वार्धं इतरार्धः इतरयोरप्येवमेव” क० । “अभ्र्या पिण्डं त्रिः परिलिखति परि वाजपतिरिति (११,२५,२७ ) बहिर्बहिरुत्तरयोत्तरयाभ्र्या पिण्डं खनति देवस्य त्वेति (११,२८) २२सू० । “अभ्रिग्रहणमभ्यन्तरनिवृत्त्यर्थम् तथा चाह ‘अत्र ह वै वैष्णव्यभ्रिरत्सीदतीति “(६,५,४,२ शत०ब्रा० उत्तरया परया ऋचा पूर्वलिखिताद्बहिर्बहिर्बाह्यप्रदेशे परिलिखति” । क० ‘कृष्णाजिनमास्तीर्योत्तरतस्मिन् पुष्करपर्णमपां पृष्ठमिति’ (११,२९ ) २३सू० । “तस्मिन्कृष्णाजिने” क० । “शर्मासीत्यदित इति (११,२९ ) २४सू० । “पुष्करपर्णम्” क० “आलभत उभे शर्म्म च स्थइति”(११,३०३१) २५सू० । “उभे कृष्णाजिनपुष्करपर्णे, शक्यत्वाच्च युगपदालम्भनम्” क० । “पिण्डं पुरीष्योऽसीति (११,, ३२) । ”२६ सू० “आलभते” क० । “पाणिभ्यां परिगृह्णात्येनं दक्षिणोत्तराभ्यां दक्षिणः साभिस्त्वामग्नइति” (११,३२ ३८ ) । षड्भिः सर्वं सङ्कृत्वा” २७सू० “षड्ये मन्त्रः “अथैनं परिगृह्णातीति’ शत०ब्रा० (६,४,२,२ ) वचनात्”क० इति द्वितीया कण्डिका ।

“पुष्करपर्णे निदधाति”१सू० । “अपः श्वभ्रेऽपनयत्यपो देवीरिति (११,३८)२सू० । ‘श्वभ्रः पिण्डावटः” क० । सं तदिति ( ११,३९ ) वा तमपक्षिपति ”३सू० । ‘श्वभ्र एव” क० । ‘अनामिकया संवपति पुरस्तात्पश्चाद्दक्षिणत उत्तरतश्च” ४सू० । “संवापश्चावटे पुरीषस्य” क० । “आस्तीर्णयोरन्तावग्रृह्णाति सुजात इति”( ११,४० ) ५सू० । “आस्तीर्णयोः कृष्णाजिनपलाशपर्णयोः” क० । “बन्धनायोभयोः प्रान्तान् सर्वत ऊर्ध्वान् करोति”संप० । ‘त्रिवृता मुञ्जयोक्त्रेणोपनह्यति वासोऽग्नइति । (११,४०) ६सू० । ‘उद्गृहीतानन्तान्” क० । ‘उत्तिष्ठति पिण्डमादायोदु तिष्ठेति” ( ११,४१ ) ७सू० । “ऊर्ध्व बाहुः

प्राञ्च प्रभृत्यान्नुष्व ऊ षु ण इति” (११,४२) ८सू०। “प्रसारितबाहुः पिण्डम्” क०। “अवहृत्योपरि नाभि धारयन्नन्वप्रभृतीनभिमन्त्रयते स जातः स्थिरो भव शिवो भवेति”। (११,४२,४५)” ९सू०। “अवहृत्य पिण्डं नाभेरुपरि धारयन्” क०। “धारयत्येवाससुपरि पिण्डमनुप्रस्य यन् मैतु वाजी दृषाग्निमित्यश्वखरयोः” (११,४६) १० सू०। “एवां पञ्चनाभ्युपरि पिण्डमनुपस्य यन् धारयति मैतु वाजीत्यश्वस्य, वृषाग्निमिति खरस्य” क०। “अग्न आयाहीत्याहृत्य (१६,४६) खराच्छागस्यैवं सत्यमित्यानिधानात्” (११,४७) ११ सू०। “धारयत्यनुपस्य यन्नेव” क०। “आयन्त्यावर्त्य पञ्चनजः पुरस्ताद्रासभो मध्ये” १२सू०। “स्वस्थानस्थितानामेवाहत्तिः” क०। “अनड्वाहमुपमीयते पूर्ववदग्निं पुरीष्यमिति” । ( ११,४७ ) १३ सू०। “अनन्यार्थत्वात् पूर्ववच्छन्देनाग्निषु प्रत्यवत्स्विष्यते (२, ११)” क०। “उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिश्रिते प्राग्द्वारे निदधात्योषधय इति” (११,४७,४८)१४ सू०। “वि पाजसेति” (११,४९) प्रत्यञ्चैनमजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति १५ सू०। “प्रत्यञ्च पिण्डमजलोमानि गृहीत्वा प्रागुदीचीं दिशं प्रति पशूनुत्सृजति” क०। “आपो हि ष्ठेति (११,५०) पर्णकषायपक्वमुदकमासिञ्चति पिण्डे” १६ सू०। “पर्णकषायं पलाशकषायम्” क०। पलाशत्वग्भिःक्वथितमुदकं पलाशकषायपक्वम्” संप०। “फेनं च तूष्णीं ततः कृत्वा” १७ सू०। “तत एवोदकात् पूर्वतरं फेनं कृत्वोदकमासिञ्चति चशब्दात् फेनम्” क०। “अजलोमभिः संसृजति मित्रः संसृज्येति (११, ५३)” १८ सू०। “पिण्डम्”। “शर्करायोरसाश्मचूर्णैश्च रुद्राः संसृज्येति ( ११,५४ )” १९सू०। “शर्करा प्रसिद्धा अयोरसो लोहसिङ्घाणः कीट इति यः प्रसिद्धः अश्मचूर्णैः पाषाणचूर्णैः चशब्दादेतैः पिण्डं संसृजति” क०। “शर्कराः सूक्ष्मकन्दुकाः अयोरसो लोहरसो धम्यमानाल्लोहात्पृथग्भवतीति कीट इति लोके प्रसिद्धः अश्मा दृढपाषाणः तेषां चूर्णैः संसृजति” संप०। “संसृष्टामिति” (११, ५५,५७) संयौति” २०सू०। “पिण्डं मिश्रयति आप्लावयतीत्यर्थः” क०। “अषाढां करोति महिषी प्रथमविन्ना तदाख्या” २१सू०। “अषाढाख्यामिष्टकां महिषी करोति। महिषीशब्दस्यान्यत्राप्रसिद्धत्वादाह प्रथमविन्ना तदाख्या” “तद्वै महिषीति”ब्रा० ( ६,५,२,१ ) क०। ‘भार्याणां मध्ये प्रथमं लब्धा प्रथमपरिणीता या स्त्री सा तदाख्या” संप०। “यजमानपादमात्रीं त्र्यालिखिताम्” २२सू०। “महिषीपादमात्री मा भूदिति यजमानग्रहणम्” क०। “त्रिषु स्थानेषु लिखिताम्”संप०। “यजमान उखां करोति मृदमादाय मखस्य शिर इति (११,५७) २३ सू०। “मृदादाने मन्त्रः”क०। ‘प्रादेशमात्रीं तिर्यगूर्ध्वां च” २४ सू०। “तिर्यगायामप्रमाणे विस्तारप्रमाणे च” क०। “पञ्चप्रादेशामिषुमात्रीं वा तिर्यक्पञ्चपक्षी” २५ सू०। ‘ऊर्ध्वं तु प्रादेशमात्र्येव पञ्चपक्षावपि” क०। “वसवस्त्वेति ( ११,५८ ) प्रथयति” २६ सू०। “आत्तं पिण्डम्” क०। “अनानुव्रीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति” (११,५८) २७सू०। “धातुशब्दानुमृत्प्रक्षेप एव” क०। “प्रथितस्य तत्प्रान्तानुव्रीय ऊर्ध्वान् गमयति, धातुं प्रथमपिण्डिकाम्” संप०। “संक्षिप्य उखां कृत्वोत्तरमादित्यास्त्वेति” (११,५८) २८सू०। “संक्षिप्य शिथिलया मृदा संलिप्य धारिका संश्लक्ष्णां सुकुमारां कृत्वा” संप०। “विश्वे त्वेति (११, ५८ ) समीकरोति” २९सू०। (६,५,२,२) शत० ब्रा०। “त्रितीयउत्तरे वर्तिं सर्वतः करोत्यदित्यै रास्नेति (११,५९ ) ३०सू०। उखाया ऊर्ध्वप्रमाणस्योत्तरे त्रितीये उपरि वर्तमाने तृतीये भागे सर्वतः सर्वासु दिक्षु मण्डलीं वर्तिं रज्ज्वाकारां रास्नां (काञ्ची गुणस्थानीयाम्) करोति”क०। “अष्टौस्तूर्ध्वा प्रतिदिशं” ३१सू०। “वर्तीः करोति चतस्रोऽपरा वर्तिं प्राप्ताः”३२सू०। उखाशब्दस्याक्षतिवचनत्वाद् कौखा भवति” क०। “सर्वासु दिक्षु पार्श्वमध्ये बाह्यप्रदेशे अपराश्चतस्रो दण्डीरूर्ध्वास्तूर्ध्वा करोति क्रियमाणाः मूलत आरभ्य दण्डिं प्राप्ताः तिरश्ची रास्नां यावद्गताः” संप० इति २कण्डिका

“स्तनानिवाग्रे युनयति” १ सू०। “ऊर्ध्ववर्तीनामेकैकस्याः” क०। “आसां चतसृणां दण्डीनामग्रेषु तिरश्च्या दण्डेरुपरि स्तनानिव स्तनसदृशानुन्नद्धवयवानुन्नयति” संप०। “द्विस्तनामष्टस्तनामेके” २सू०। “तां हैके द्विस्तनामष्टस्तनामिति ( ६,५,२, १२) श्रुतेः द्विस्तनपक्षएकस्मिन्नेव वर्त्यग्रे क्रियते अष्टस्तनपक्षे द्वौ द्वाविति क०।“विलं गृह्णात्यदितिष्टइति”(११,५९) ३सू०। “मुखे गृह्णातीत्यर्थः” क०। “कृत्वायेति (११,५९) निदधाति उखाम्” ४सू०। “तिस्रएके” ५सू०। “उखाः

कुर्वन्ति” (६,५,२,१२) श०ब्रा०। “तया च स्वयमातृ-ण्णादयोकैका निधानान्ता क्रियते” क०। “इष्टकास्तु तिस्रो विश्वज्योतिषः पृथगलक्षणास्त्र्यालिखिताः”६सू०। “तयजुषार्थं षगद्वाद्यजमान एव तिस्र इष्टकाः विश्वज्योतिःसंज्ञकाः पृथगलक्षणाः करोति लक्षणकरणं च प्रथमाद्वितीयाप्रस्तप्रत्यर्थमेवोपधानं यथा स्यादिति” क०। “मृदमुपशयां निदधाति” ७सू०। “उखां क्रियमाणामुपर्येतद्रत्नुपशया तां मृदमतिरिच्यमानां निदधाति कार्यार्थम्” क०। “अवशिष्टां मृदमुपशयसंज्ञां निदधाति” संप०। “सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति (११, ६०) प्रतिमन्त्रम् ८सू०। “शकृद्भिरश्वलेण्डैः” संप०। “अभ्रया अभ्रं चतुरस्रं खनत्वदितिष्टेति (११, ६१) ९सू०। “अभ्रिच पूर्वोक्तैव प्रकृतत्वात् अत्र सा वैणव्यभ्रिरुत्सीदतीति (६,५,४,२) श०ब्रा०वचनात्” क०। “अपथमास्तीर्य यथाकृतमवदधाति” १०सू०। अभ्रे, येनैव क्रमेण कृता अषाढाद्याः उखायां तु विशेषः, “देवानां त्वेलुखां (११,६१) न्युजाम्” ११सू०। “अवदधाति” क०। “अपथेनावच्छाद्य दक्षिणाग्निनादीपयति धिषणास्त्वेति (११,६१) १२सू०। “निर्मन्थ्येन वा धूपनश्रपणे” १३सू०। “कर्त्तव्ये” क०। “वरुत्रोदेतीक्षमाणो (११,६१) जपति” १४सू०। “उखाभीक्षमाणः” क०। “आचरति मित्रस्येति (११, ६२) १५सू०। “आचरणं च श्रपणप्रक्षेपः”क०। अषाढादीनामधस्तादुपरिष्टाच्च पुनः श्रपणं प्रक्षिपति” संप० “यावद्वाचरेत्” १६सू०। “यावद्भिः प्रकारैः श्रपणं प्रक्षिपेत्तावद्धानेनैव मन्त्रेणाचरेत्”संप०। “दिवैव प्रदहनोद्धरणे”१७सू०। “कर्त्तव्ये” (६,५,४,१०) श०ब्रा०। “प्रदहनं पचनम् उद्धरणं बहिर्निष्कासनम्” संप०। “उद्वपति श्रपणम्” १८सू०। “पदार्थतया”क०। “भस्मसाद्भूतं पराकरोति” संप०। देवस्त्वेत्युखाम्” १९सू० (११,२३)। “उद्वपति” क०। “उत्तानां करोत्यव्यथमानेति (११,६३) २०सू०। “उद्य-च्छत्वुखाम्” (११,६४) २१सू०। “ऊर्ध्वं यच्छति”क०। “परिष्टाद्य पात्रे करोति भित्वैतां तदृति” (११, ६४, २२सू०। “अजापयसाभिषिञ्चति वसवस्त्वेति” (११,६५) प्रतिमन्त्रम्” २३सू०। “उखाम्। भिन्नपक्षे च उत्तानकरणाद्येकैका अजापयसावसेकान्ता कर्त्तव्या” क०। “इष्टकाक्रियातस्त्र्यालिखितानाम्” २४सू०। “अत ऊर्ध्वमिष्टकास्त्र्यालिखिताः क्रियन्ते” क०। “अपरिमितालिखिता योत्तरयोः” २५सू०। “द्वितीयाचतुर्थ्योः कुत एतत् ते हि प्रकृत्याम्नायते “रसो वै ते चिती अपरिमित उ वै रस इति” (८,७,२,१७), श०ब्रा०। “अतश्च विकल्पोऽयम्”क०। “पूर्ववदग्निः पाके” २६सू०। “इष्टकानां पाके भवति निर्मन्थ्यो दक्षिणाग्निर्वा”क० फाल्गुनामावास्यायां दीक्षाप्रक्षा क्रत्यमेव तदाह। “दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति सङ्कुचायशणकुशायावस्तीर्णाम् अन्तरेणशां म-सु भित्वा इति (११, ६८) तिष्ठन् दङ्प्राङ्” ३१सू०। दण्डोच्छ्रयणान्तमाध्वरिकं कर्म कृत्वा उखामाहवनीयेऽधिश्रयति, सा च सङ्कुचायावस्तीर्णा भवति अन्तरेशणा। प्रागुदीचीं दिशमभिमुखः। अधिकारसुपजीवन्नाह”क०“दक्षप्रतिमोचनविष्णुक्रमवात्सप्रेषु च”३२सू०। प्रागुदीचीं दिशमभिमुखो भवति”क० “अश्मायामूर्द्धे तयोदगास्यां प्रादेशमात्रीः समिधश्चादधाति”३३सू०।“उखायामग्नावारूढे तयोदग समिधश्चादधाति, प्रादेशमात्रीग्रहणं च शिष्टानुकरणप्रसङ्गार्थम्” क०। “अनारोहत्यङ्गारानोर्थेके” ३४सू०। अनारोहत्यग्नावुखायाम् अङ्गारानोर्थेके समिदाधानं कुर्वन्ति” क०। ता इदानीमाह, “इतोऽग्नौ कार्मुकीं दृश इति” (११,७०) ३५सू०। “आदधाति, क्रमुको धमनः तदीया कार्मुकी” क०। “वैकङ्कतीं परस्या इति(११,७१) ३६सू०। “औदुम्बरीं परमस्या इति” (११,७२) ३७सू०।“अपरशुवृक्णां यदग्नइति”(११,७३) ३८सू०। “या परशुना न छिन्ना” क०। “अकुठारच्छिन्नाम्” संप०। “अधःशयां यदत्तीति” (११,७४) ३९सू०।“भूमिसंलग्ना या सदा रूढा भवति” संप०। “पालाशीः मकृचमहरहरिति” (११,७५)। ४०सू०। “आदधाति अथैताःपालाश्यो भवन्तीति (६,६,३,७)श०ब्रा वचनात्, एवं चापरशुवृक्णा अधःशया चौदुम्बर्यैव भवतः वाक्यान्तराविधानात्” क०। “उपोत्तमां क्षत्रियस्यान्त्” ४१सू०। “उत्तमायाः समीपे उपोत्तमा द्वादशी, तां क्षत्रियस्य यजमानस्येच्छयादधाति अन्यस्य क्षत्रियपुरोहितव्यतिरिक्तस्य उभे उपोत्तमोत्तमे इच्छयाधीयेते, एवं हि श्रूयते” श०ब्रा० (६,६,३,१२) क०। “एवं च सति, उत्तमां पुरोहितस्य” ४२सू०। “इच्छयादधाति” क०। “उत्तमाम् बाहुइति” (११,८२) संप०। “अन्यस्योभे” ४३सू०। “अन्यक्षत्रियस्यापुरोहितस्य च

एकादश भवन्ति त्रयोदश वा" क॰ । "चत्रियपुरोहितव्यतिरिक्तस्य द्वादशीत्रयोदश्याविच्छया भवतः" संप॰ "स्वाहाकारः सर्वास्वखायाम्" ४४सू॰ । "उखायामाधीयमानासु समित्सु, अतोऽन्यत्रापि स्वाहाकारो भवति सर्वास्वित्यभिधानात्" क॰ । "उखायां सर्वासु समित्सु स्वाहाकारो भवति" संप॰ । "औदुम्बर्यादि दण्डान्तसमिकें" ४५सू॰ । "एवं सति प्रागौदुम्बर्याहोमादुखाभिश्रयणादि" ताव्यु हैकउखायामेवैतान्यौदुम्बराणि जुहोतीति वचनात्" (६,६,१,२२) क॰ । "अत्रावसरे" संप॰ इति ४ कण्डिका ।

"यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतस्परिनाभि बहिर्निर्बाधं दृशानो रुक्म इति" (१२,१) । "रुक्मं हि प्रत्नयं सर्वमेवैतच्छ्रूयते (६,६,१,२), यजमानग्रहणाच्च स्वयमेव यजमानः प्रतिमुञ्चते, द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयुः अत ऊर्ध्वं मिथुनाद्यन्वारम्भः एवं हि सर्वैः कृतं भवति" क॰ । "परिमण्डलं वर्तुलम्, एकविंशतिपिण्डम् पिण्डं निर्बाधम् निर्बाध्यन्ते उन्नताः निःकाश्यन्ते उन्नताः स्वरूपाद्बहिर्निःसृता भवन्ति, कृष्णाजिन शुक्लकृष्णेषु लोमसु निष्यूतं नितरां स्यूतम्, पुनः कीदृशम् त्रिगुणे त्रिवृति शणमये सूत्रे ओतं प्रोतम् तथा उपरिनाभि, पुनः बहिर्निर्बाधं बहिर्निर्बाधम्" संप॰ । "दण्डशिक्यासन्दीषु कुरुव्यवलम्बिततो रज्जवः" २सू॰ उखा याभ्यां गृह्यते तौ दण्डौ, शिक्यं प्रतिद्रम्, आसन्दी च । चतुरस्रा रज्जवो सूत्रिवा भवन्ति" क॰ । "रज्जवः कर्दमलिप्ताः" संप॰ । "परिमण्डलाभ्यां मिथुनाभ्यामुखां परिगृह्णाति नक्तोषासेति" (१२, २) ३सू॰ । "हरति द्यावाचामेति" (१२,२) ४सू॰ । "तामेवोखाम्" क॰ । "आहवनीयस्य पुरस्तादुद्गात्रासन्दीवदासन्द्यां चतुरस्राङ्ग्यां शिक्यवत्यां निदधाति देवा अग्निमिति (१२,२) ५सू॰ । "उद्गात्रासन्दीवदिति प्रादेशपादी गम्यते" (१२,४,२) क॰ । सा च चतुरश्री सह पादैः, तस्यां शिक्यवत्यामासन्द्यां च निदधाति उखाम्" क॰ । "शिक्यपाशं प्रतिमुञ्चते षड्दामं विश्वा रूपाणीति" (१२,३) ६सू॰ "ग्रीवायाम्" क॰ । "सशिक्यं प्राङ्ं प्रगृह्णाति सुपर्णोऽसीति" (१२,४) पिण्डवत् ७सू॰। "सह शिक्येन प्राङ्मग्निं प्रगृह्णाति, पिण्डवदित्यूर्ध्वबाहुः (२,८) । "धारणं च" ८सू॰ । "पिण्डवदेव उपरिनाभि" क॰ । अत्र द्वाभ्यामङ्काभ्यां शुक्लयजुर्वेदस्याध्यायादि, त्रिभिरङ्कैः कात्यायनश्रौतसूत्रस्याध्ययकण्डिकादि । चतुर्भिरङ्कैः शतपथब्राह्मणस्याध्यायादि ज्ञेयं तेन तत्तत्प्रतीकमात्रग्रहीतमन्त्रसूत्रादि तत्तत्स्थाने द्रष्टव्यम् विस्तरस्तु शत॰ ब्रा॰ ६ अ॰ द्रष्टव्या । लौकिकेष्टरचितप्राचीरादौ इष्टकाघनफलेन इष्टकासंख्यानोपायो दर्शितोलीला॰ यथा "चितौ करणसूत्रं सार्द्धवृत्तम् । उच्छ्रयेण गुणितं चितेः किल चेत्रसम्भवफलं घनं भवेत् । इष्टकाघनहृते घने चितेरिष्टकापरिमितिश्च लभ्यते ॥ इष्टकोच्छ्रयहृदुच्छ्रितिश्चितेः स्युःस्तराश्च दृषदां चितेरपि ॥ उदाहरणम् । अष्टादशाङ्गुलं दैर्घ्यं विस्तारो द्वादशाङ्गुलः । उच्छ्रितिस्त्र्यङ्गुला यासामिष्टकास्ताश्चितौ किल॥ यद्विस्तृतिः पञ्चकराष्टहस्तं दैर्घ्यं च यस्यां त्रिकरोच्छ्रितिश्च । तस्यां चितौ किं फलमिष्टकानां सङ्ख्या च का ब्रूहि कति स्तराश्च ॥ इष्टकायाः घनहस्तमानम् ३/३६ चितेः चेत्रफलम् ४० । उच्छ्रयेण ३गुणितं चितेर्घनफलम् १२० । यथोक्तकरणे लब्धा इष्टका सङ्ख्या २५६० । स्तरसङ्ख्या २४ । एवं पाषाणचयेऽपि" 'व्यामात् षोड़शभागः सर्वेषां सद्मनां भवति भित्तिः । पक्वेष्टकाकृतानां दारुकृतानां च स विकल्पः । इह॰स॰। "नेष्टकारचिते पितॄन् संतर्पयेत्" शङ्खलि॰ । "स्वल्पयात् कोटिगुणितं फलं स्याद्दारुभिः कृतात् । कोटिकोटिगुणं पुण्यं फलं स्यादिष्टकामये" मठ॰त॰ पु॰ । वास्तुयागे 'आकाशपट्टे' इष्टकारोपाचारः वास्तु यागशब्दे दृश्यः ।

**इष्टकाचयन** न॰ इष्टकयाऽग्नेश्चयनम् । इष्टकया अग्नेश्चयने तत्प्रकारः कात्या॰श्रौ॰सू॰।"एतया विकल्पाभिमन्त्र्य केऽन्यचितं चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतःप्रउगः समुह्य पुरीषः" १६,५,८ । "एते ह्यग्निविशेषाः तदाकारांश्चिन्वन्त्येके एके सुपर्णचितम् विकृत्यादस्य विकृतेरग्न्यन्तरेष्वप्राप्तिर्मा भूदित्युच्यते एवं हि श्रूयते "तं हैकएतया विकल्पाभिमन्त्र्यान्यां चितिं चिन्वन्तीति" (६,७,२,८ शत॰ब्रा॰) क॰। "विकल्पा एतया ऋचा अन्यचितं पक्षिवधमन्यमग्निं चिन्वन्ति तमेवाह द्रोणचिदित्यादि" संप॰। "समुह्य पुरीषे प्रतिदिशं पुरीषाकरणम्" १० सू॰ । प्रतिदिशं पुरीषमाहृत्याहृत्य तेनैव चयनम्" क॰ । "विष्णुक्रमान् क्रमते विष्णो-

रिति" (१२,५ यजु०) "प्रतिमन्त्रमन्त्यु दुपभयं च तस्मिं-स्मिन्" ११ सू० । "तस्मिन् क्रमणे" क० । "अक्रम-यतुर्थे"१२सू०। "उदुपहणं तु भवत्येव" क० । दिशो वीक्षते दिशोऽनुविक्रमस्वेति (१२,५) १३सू० "प्रतिदिशं मन्त्रः" क० । "पिण्डवत् प्रागुदञ्च प्रस्तृणात्यक्रन्ददग्नि-रिति" (१२,६) १४ सू० । पिण्डवदित्युक्तं वाक्यः (२,८) क० । "अवरोहत्यग्ने ऽभ्यावर्तिन्निति" (१२,७) १५सू० "प्रत्यवरोहत्यग्निम् यावत्प्रत्य अर्ध्वोऽवरोहतीति" (६,७,२,६) "स्तुतेस्तद्वत्प्रत्यवरोहणम्" कर्कः । "उपरि-नाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते"(१२,११) १६सू०। "अग्निम्"क०। "पाशा उन्मु च्योदुत्तममिति"(१२,१२) "पिण्डवत्प्राग्दक्षिणा प्रस्तृणात्यग्ने बृहन्निति"(१२,१३) १७सू० । "अवहरति हंसः शुचिषदिति" (१२,१४) । १८ सू० । "आसन्द्यां करोति बृहदिति" (१२,१४) १९सू०।"उपतिष्ठते सीद त्वमिति" (१२,१५) २०सू० । "वात्सप्रेण च दिवस्परीत्येकादशभिः" (१२,१८,२८) २१सू०।"उपतिष्ठते"क०।"अनुवाकेनैके" (१२,१८,२९) २२सू०। "उपतिष्ठन्ते" क०। "अत्र दीक्षितोऽयमिति" २३सू०। "अग्निवत्सरे दीक्षितोऽयमित्याह (७,४,११) "दण्डान्ते त्वाभिप्रपणाद्यु क्तम् अतः प्राकृतानुष्ठानमुँ-मिदमुच्यते" क० । "आहत्सिरतः संवत्सरम्" २४सू०। "अत ऊर्ध्वं वदुच्यते तत् संवत्सरं यावदावर्तते" क० । "अत ऊर्ध्वं यत्कर्मोच्यते भस्मोदपनादि तस्य संवत्सरं यावदावृत्तिर्भवति" संप० । ५कण्डिका

"उखायां भस्मोदपनमस्तमिते पात्रे" १सू० । "तत्र प्राप्त्याग्निवर्गात्" "भस्मोदुप्य वाचं विसृजत" इति श्रुतेः (६,७,४,१४) क०। "भस्मोदपनं भस्मोद्धरणम्" संप० । "वाचं विसृज्य समिदाधानं रात्रौ रात्रीमप्रयावभिति" (११,७५) २सू० । "एवमुदिते भस्मोदपनादि" ३सू० । "कर्तव्यम् अयं तु विशेषः"क०। "अहरहरित्याधानम्" (११,७५) ४सू० । "विष्णुक्रमवात्सप्रे चाहव्यत्यामुदिते समिधमाधाय" ५सू० । "अहव्यत्यासेन कर्तव्ये"क० "अविच्छिन्ने विष्णुक्रमाः उत्तरस्मिन्वात्सप्रम् एवं याव-द्दीक्षं कर्तव्यम्" संप० । "रुक्मप्रतिमोचनादि प्राग्वात्स-प्राद्विष्णुक्रमाः" ६सू०। "तयोर्विभागमाह । साग्निके क्रतौ संवत्सरं दीक्षा आम्नाताः संवत्सरमित्युपक्रम्य चिन्वीतेति (१०,२,६,८) पवित्रे क्रतौ दीक्षा आम्नाताः पवित्रवद्दीक्ष इति (१५,१,३) तस्माग्नौ सति चिन्त्य-

ते किमग्निनिमित्ता दीक्षा भवन्तु उत सौमिक्य इति उभयं चैतच्चरितार्थम् पवित्राद्बहिराग्निक्यश्चरितार्था: अनग्निके च पवित्रे सौमिक्य इति तेन साग्निमति प-वित्रं कथं भवन्त्विति नियमकारणाभावादनियमे प्राप्त आह" क० "सोमाविरोधेन वा तत्प्रधान्यात्" ७सू० । "सोमस्य प्रधानभूतत्वात् तद्दीक्षा एव दीक्षा भवन्ति" क० "सोमयागेनाविरोधः सोमाविरोधः तेनाविरोधेनैव दीक्षा भवति वावधारणे कुतः तत्प्रधान्यात् सोमस्य प्राधान्यात् अग्नेश्च तदङ्गत्वात् तेन द्वादशाहे वाजपेये द्वादश त्रयो-दश वा भवन्ति नाग्निप्रयुक्तसंवत्सरदीक्षाः" संप० । "न्यञ्च समिधं व्रते प्रत्ते-प्रत्तेऽचपवत्याधानम् । (११,८३) ८सू० "उख्येऽग्नौ यजमानः करोति" संप० । "संव-त्सरभृतिनोऽसंवत्सरभृतेऽपि" ९सू० । पूर्वं कस्मिं-श्चिद्यज्ञे साग्निके येनैकवारं संवत्सरमुख्योऽग्निर्भृतो भवति स संवत्सरभृतो तस्यासंभृतेऽप्युख्येऽग्नौ चयनं भवति (९,५,१,६५) संप० "संवत्सरं सोष्यतः" १० सू०। "संवत्सरमभिषवं करिष्यतः असंवत्सरभृतेऽपि चयनं भवति (९,५,१ ६६) क० । "संवत्सराहिताग्नेः" ११सू०। "असंवत्सरभृतेऽपि चयनमिष्यते" (९,६,१,६७) क० । "जातस्य च" १२सू० । "संवत्सरे जातस्य च असंवत्-सरभृतेऽपि चयनं भवति" (९,५,१,६८) क० । "गर्भाधानदिनादारभ्य संवत्सरे पूर्णेऽतीते वा यो जात-स्तस्य भवति" संप० । "याच्ञास्य मन्यम्" १३सू० । "अन्यं जघन्यमिदं पक्षान्तरम् यस्तावानुष्ठभरणं क्रमा-ग्निचीयत इति (९,५,१,६३)क०। "याच्ञास्यं यस्तावा-नुष्ठमग्निं भृत्वा चयनं भवति" संप० । "अचयनं वा परस्मै" १४सू० । चयनं वेति विकल्पः एवं हि श्रूयते (९, ५,२,१२) नयो ह वै" इत्युपक्रम्य परस्मै करोतीति निन्दार्थवादः प्रतिषेधार्थः तस्मादप्येवंविद् कामं परस्मा अग्निं चिनुयादिति ९,५,२,१३, प्रतिप्रसवः अतः प्रतिषेधप्रतिप्रसवाभ्यां विकल्पः" संप० । "प्रागमः शफो-त्सूक्षोत्तरतः समिदाधानं समिधाग्निमिति (१२,६०)१५ सू०। "उत्सादुरतः प्राङ्मुखमनः शफोक्ष एव समिदाधा-नम्"क० । "सासन्दीकमुद्यम्योदुत्येति (१२,६१) दक्षिण-तोऽनसि करोति" १६सू० । "सासन्दीकमुख्यमुदुत्यं स्नेहत्-क्षिप्यानसो दक्षिणतोऽवस्थितोऽनसि करोति" कर्कः । "स्थाल्यां गार्हपत्यं प्रचात्" १७सू० । "अनसि करोति दक्षिणाग्निं च वितृतीये करोति"क०। "अनड्वाहौ युक्ता

प्रेदग्न इति (१९,२९ ) प्राङ् यात्वा यथार्थम्” १८सू०। “गच्छेत्” क० । “आरोहेत् पार्श्वतो गच्छेत्”१९सू० । “यजमानः संस्कारात्”क० । “अदे अर्जंत्क्रन्ददग्निरिति (११,२२( जपति” २०सू० । “अर्जनं च शब्दकरणम्” क० । “वाससोऽपहरत्युद्धतावोक्षितउत्तरतः समिदाधानं प्र-प्रायमिति (१२,२४) २१सू० । “यत्र वाससत्नैवापहरणम् न प्रागवसतेः एवं ह्याह (६,८,१,१२) स यदि पुरावसथै विसृजेवानसेवाग्निः स्यादिति” वसत्यां तु उत्तरतोऽग्नीनवतार्य समिदाधानं “प्र-प्रायमिति” । उद्धतावोक्षितपदग्रहणं च परिसमूहनाद्युपसंग्रहार्थमपि स्मार्तं ह्येतदनूद्यते (६,४,४,१८) उद्धते वाऽवोक्षितेऽग्निमादधातीति” एवं च सति तदपचारे स्मार्तं प्रायश्चित्तम्”क० । “शालायैं रथे उत्तरस्यां दिशि अग्निमवतारयति” संप० । “वनीवाहनमेतद्दीक्षासु यदेच्छेत्” २२सू० । “वनीवाहनमिति” संज्ञास्य कर्मणः सा च संव्यवहारार्था “अहं वनीवाहनादिति” ( २५सू० ) अत्र दीक्षासु कर्त्तव्यम् । यदेच्छोपजायते महावीरकरणयूपच्छेदनवनीवाहनानि दीक्षासु क्रियन्ते क्रमस्तु नैषाम् पाठाभावात्” क० “अपृ श्मश्रुवापनं क्रयणीयादौ” २३सू० । उक्तश्मश्रुवापनमस्तु कर्तव्यम् आदौ क्रयणीयस्याह्नः”क०। “अन्यत्र चेच्छन्” २४सू०। “करोति”क०। “ऊर्ध्वं वनीवाहनात् क्रमयोगात्” २५सू० । अन्यत्रेच्छया कुर्वन् वनीवाहनादूर्ध्वं करोति मन्त्राणां पाठक्रमयोगात्” क० । “वनीवाहनादूर्ध्वं सोमक्रयदिने आदौ अन्यत्र दीक्षा श्मश्रुवापनम् । कुतः क्रमयोगात् पूर्वं वनीवाहनमन्त्राः पश्चाद्भवापोऽभ्यवहरणस्य” संप० “पलाशपुटेनापो देवीरित्येकया ( १२,२५ ) २६सू० । “पलाशपुटेन भक्ष गृहीत्वाप्लावयति”क० । “ततो द्वाभ्याम्” (१२,२६-२७) २७सू० । “पुनश्चावपति द्वाभ्यामृग्भ्याम्”क० । “आद्याभ्यां (१२,२५-२६) वा पूर्वम्” २८सू०। “पूर्वमावपनं द्वाभ्यामृग्भ्याम् तत एकया वा” वाशब्दो विकल्पार्थः तत्प्रस्तुतित्वात्” क०। “अनामिकया प्रासादादत्ते मयदेति (१२,२८-४१) २९सू० । “प्रासाद्ब्राह्मणः क्षिपदनामिकयादत्ते” (६,८,२,७) । “मास्कोलामुपतिष्ठते बोधा मदति” (१२,४२) ३०सू० । “यत्तदात्तं भक्ष तस्यास्य” क० । “प्रायश्चित्तं समिधोपहत्य” ३१सू० । देवयाज्ञिका ।

“आज्यं विश्वकर्मन्हविषा ( १२,४२ ) जुहोति” १सू० । “प्रायश्चित्तिरित्यस्य होमस्य संज्ञा उपपूर्वस्य हन्तिर्ग्रहणार्थो दृष्टोऽन्यत्रापि “अथ स्रुचोपहत्याज्यमिति (२,४, १,२५ )” क० । “समिधा करणभूतया स्रुक्स्थानीयया उपहत्य गृहीत्वा” संप० । “उत्थाय दधाति समिधं पुनस्त्वेति ( १२,४४ ) २ सू० । उत्थानग्रहणं च प्रतिपत्तित्वात् गुणार्थं चेति । नैमित्तिकान्यत्रैव प्रकरणे पठ्यन्ते तदर्थमाह” क० “गार्हपत्येऽनुगते निर्मथ्य” ३ सू० । “आदधाति मन्थनं प्राप्तत्वादनाच्यम् उच्यते प्रायश्चित्तार्थम्” । “प्राजहिते उपशान्ते मथित्वा प्रायश्चित्ती करोति” संप० । “तुल्यावाहनीये सांकाशिनेन हुत्वाः” ४सू०। “तुल्यास्तु वर्तमानास्तु आहवनीयेऽनुगते सांकाशिनेन हुत्वा तमादधाति” सांकाशिनशब्दः प्रगुणमेव हुत्वेत्यर्थकः एतच्चोच्यते पूर्ववत्प्रणयनं मा भूदिति” क०। “आहवनीयेऽतिप्रणीतेऽनुगते सांकाशिनेन हुत्वा अञ्जना सद्योहविर्धानमध्यमार्गेणैव हुत्वा” संप० । “आग्नीध्रीयमुत्तरेण सदः” ५सू० । “हुत्वा निदधाति उत्तरेण सदो हुत्वेतीध्माव्युदासार्थः” क० । आग्नीध्रीयमग्निमनुगतं सदस उत्तरेणैव हुत्वा” संप०। “प्रष्टव्यादाहतोत्तरे” ६सू०। “उक्ते चानुगते पूर्ववत्प्रष्टव्यात् अयं तु विशेषः आहता आहवनग्रहणं च मन्त्रनिवृत्त्यर्थम् । “एतयैवाहुत्योपहरन् यजुरिति ( ६,६,४,९) श्रुतेः”क० । “उक्तेऽग्नावनुगते गार्हपत्यादाहवनीयमन्वग्निरित्याहुत्य (११,१७ समितमित्युपस्थाय (१२,५७ आवृता मन्त्ररहितक्रियामात्रेण पूर्ववदुक्तां प्रष्टव्यात् उक्तासाहवनीयेऽधिष्ण्येष्वोक्तमग्निमनुपादयेत्” संप० । “अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां-पूर्वाम्”७सू० । “अध्वरप्रायश्चित्तिं च करोति सर्वेषु निमित्तेषु तां च पूर्वाम् पूर्वां यज्ञश्चादाग्निकीं च । सर्वग्रहणं च भक्षापोऽभ्यवहरणार्थम् । (२२) तत्रापि हि विधीयेते (६,८,२,११) उभे प्रायश्चित्ती “करोतिये एवाग्नावनुगते इति” यथाकालमिति चाध्वरप्रायश्चित्तस्यैवोच्यते आग्निकी तु विकल्पमपदत्येव” क० “सर्वेषु पूर्वोक्तेष्वग्न्यनुगमेषु यथाकालं परमेष्ठ्यादिकालाहुतिं (२६,६,१ ) पूर्वां पूर्वां जुहुयात् पश्चादग्निप्रायश्चित्तिम् चकारात्” संप० “उखाभेदने नवस्याख्यां महासख्याकुलाकपालमवधायावपति” ८सू० । यद्योगोखाभिद्येतेति” (६,६,४,८) मतस्य सर्वमिदमाम्नातम् एतच्चैकोखापक्षे भवति । त्रित्वपक्षे तु द्वयोरेवैकस्यावपनम्”(६,५,२,२२)क०।“उखोपक्षे भिद्य सदा स-

प्रोक्षां करोत्याहृता" ९सू० । "उखासक्तमेकमुखायां प्रक्षिप्तम् द्वितीयमुपधयया सह पिष्टा, आहृता मन्त्रवर्जम्, आहृतशब्देन क्रियामात्रमुच्यते तथा चोक्तम् ( ६,६,४, २ ) एतयैवाहृतानुपहरन् यजुरिति" क० । "आहृता मन्त्ररहितेतिकर्त्तव्यतया" संप० ।"पक्वायामावपति कपालं च १०सू० । "पक्वायामुखायाम् अग्निं कपालं च" क० । "उखोपधये पिष्टा संसृज्य निदधाति" ११सू० । "उखाकपालमुपधयां च पिष्टा संसृज्य स्थापयति" क० ।

इदानीं चयनप्रकारमाह । अभ्यात्मं चयनमुपविश्य" १२सू० । "आत्मन आभिमुख्येन चयनं कर्तव्यम् न परागिति, तथा च नैर्ऋतीषु वचनात्पराक्चयनमुक्तम् (७, २,१,१२) । अपरो विशेषः" "सव्यमाङ्गमन्तरं कृत्वोत्तरलक्षणाभिरिष्टकाभिः" १३सू०" । "चेतव्यः" क० । "नित्ये सादनसूददोहसाउपधानादुत्तरे तया देवतया ता अस्येति (१२, ५३, ५५,) १४सू० । "सर्वास्विष्टकासु एते नित्ये भवतः तया देवतयेति सादनम् ता अस्येति सूददोहसाधिवदनम्" क० । "अविशेषोपदेशात्" १५सू० । "अविशेषेण ह्यनारभ्य कश्चिदिष्टकाविशेषमेते श्रूयेते" क० । "विशेषमनुपादाय सामान्येन तयोरुपदेशात् विधानात्" संप० । "अनाम्नातप्रतिषेधाच्च" १६सू० । "यत्र नैर्ऋत्यादिषु नाम्नायेते नित्ये संहितायां न पठ्येते तत्रापि प्रतिषेधः श्रूयते ( ७,१,१,१४ ) सादनसूददोहसाधिवदतीति" "अतः प्रतिषेधात् सर्वत्रापेते भवतः" संप० । "एकनोदनास्वेकदेशास्तु तन्त्रेण" १७सू० । एकनोदना अपस्या वयस्या इत्येवमादि, एकनोदना अपि यद्येकदेशा भवन्ति, यथा तासामेव देशभेदः अपस्याः पञ्चपञ्चान् कान्तेषु इति ( १७,६,२ ) अतश्च प्रत्यनकं नित्ये, देशभेदे त्वसति तन्त्रेणेति" क० । "एकनोदना एकं विधिवाक्यं यासां ताः । एको देश एकमुपधानस्थानं यासां ताः तत्र तन्त्रेण नित्ये भवतः" संप० । "आत्मनि यजुष्मतीः" १८ सू० । "इष्टका उपदधाति न पक्षपुच्छयोः" क० (८,७,२,२ ) । लोकम्पृणास्तु दशसु दशसु मन्त्रो लोकं पृणेति ( १२, ५४ ) । (९,१,२१२) १९सू० । "आसादनं च" २०सू० । लोकं पृणानाम्, सूददोहसाधिवदनं तु भवति अप्रतिषिद्धत्वात्" क० । "प्रतिचिति द्वे-द्वे उपधाय" २१सू० । लोकं पृणामन्त्रवचनम्, पुनर्दशसु-दशसु । "प्रथमं द्वे-द्वे उपधाय ततो दश-दशोपदध्यात्" संप० । "अक्ष्णयाक्षमध्यमानूके" २२सू० । अक्ष्ण्यो य इष्टकागणो यथा वालखिल्याः सप्त तासां मध्यमानूके उपधेये" क० । "त्रिपञ्चसप्तादिगणः" संप० । "एका च" २३सू० । "या चैकेष्टका साप्यनूक एव, यथा विश्वज्योतिर्हि यजुषेत्येवमादि" क० । "अभितो युग्माः" २४सू० । "अनूकमभितोऽर्धाधिकया युग्मा उपधीयन्ते" क० । "उदञ्चो वर्गाः पूर्वापरे" २५सू० । "यत्र पूर्वापरइति देशव्यपदेशः तत्रोदग्लक्षणा इष्टकावर्गा उपधीयन्ते" क० । "तिर्यगनूकमभितोऽक्ष्णयावधिके पूर्वापरे देशे इष्टकानां वर्गाः समूहाः उदग्लक्षणा उपधेयाः" संप० । "प्राञ्चो दक्षिणोत्तरे" २६सू० । "यत्र तु दक्षिणोत्तरव्यपदेशः तत्र प्राग्लक्षणा इति" क० । "प्रागनूकमितोऽक्ष्णयावधिके दक्षिणोत्तरे प्राञ्चः प्राग्लक्षणाः उपधेयाः" संप० । "भिन्नक्षणयोरचयनम्" (८,७,२, १६ ) २७ सू० । "दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम्" २८सू० । "कर्तव्यम्" क० । "उखास्थानेऽर्धव्यामेन गार्हपत्यस्य परिलिखति" २९सू० । "मण्डलमिति शेषः" क० । "मण्डलाद्वा प्रक्रमणमन्तःपात्यस्य" ३०सू० । "पूर्वार्धाद्व्यामस्य त्रीन् प्राचः प्रक्रमान् प्रक्रामतीति वचनात् (१०,२,३,१) । "पूर्वार्धादेव व्यामस्य प्रक्रमणम् न तस्माद्धि प्रक्रमणमनग्नौ चरितार्थम्" क० । "वावधारणे, मण्डलादेवान्तःपात्यस्य क्रमणम् न पूर्वार्धात् तस्मात्" संप० । "पश्चाद्वा पात्स्यात्यादमात्रे चित्यस्य" ३१सू० । यूपावटे भवः शङ्कुर्यूपानस्य: तस्मात्पश्चात् पद्यालोकमात्रे चित्यस्याग्निक्षेत्रस्य स्थानं भवति" संप० । "यजमानेनोर्ध्वबाहुप्रपदोच्छ्रितेन समस्थितेन वा" ३२सू० । ( १०, २,२,६ ) । "प्रपदोच्छ्रितः पादाग्रे व्यवस्थितः समस्थितः प्रसिद्ध एव, तत्क्रियायानोदितत्वात्प्रक्रमणवदध्वर्युर्मा भूदिति यजमानग्रहणम्" क० । ७कण्डिका ।

"द्विपुरुषां रज्जुं मित्वा" १सू० । "द्विपुरुषां रज्जुं मिनुयेति निगदे व्याख्यातम्" । "उभयतःपाशाम्" २सू० । "मध्ये लक्षणम्" ३सू० । "अभितोऽर्धपुरुषयोश्च" ४सू० । "मध्यमात्लक्षणात् पुरुषपञ्चमे" संप० "अर्धे च" ६सू० । "पुरुषपञ्चमस्यार्धे" क० । "अनुदृश्यामायम्य पाशयोः शङ्कू मध्येऽर्धपुरुषयोश्च" ७सू० । "पाशावन्मुच्यार्धपुरुषीययोः प्रतिमुच्य दक्षिणायाम्य मध्यमे मितोदं करोति" ८सू० । "गतम्" संप० "उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य दक्षिणाधिनितोदमायम्य मध्यमे शङ्कुः" ९सू० । "तस्मिन् पाशं प्रतिमुच्य पूर्वार्धे च दक्षिणायम्य मध्यमे शङ्कुः"

१०सू० । "पश्चादर्धपुरुषे च" ११सू० । "उन्मुच्य पूर्वोक्तात् पश्चार्धे प्रतिमुच्य दक्षिणायस्य मध्यमे शङ्कुः" १२सू० । "अभितोऽर्धपुरुषयोश्च" १३सू० । "एव-मुत्तरोऽन्तः" १४सू० । "दक्षिणे पार्श्वे पूर्ववदायम्य पञ्चमभागीये शङ्कुः"१५सू० । "तस्मिन् पाशं प्रतिमुच्य पूर्वे चार्धपुरुषीये पञ्चमभागीयार्धपुरुषीययोः सन्निपाते तस्मिञ्छङ्कुः" १६सू० । "एवं पश्चात्"१७सू० । "एव-मुत्तरः पक्षः" १८सू० । "तथा पुच्छं वितस्त्या" १९सू० । "इच्छन् पक्षपुच्छाग्रेषु चतुरङ्गुलंचतुरङ्गुलं संकर्षति विकर्षत्वन्ते"२०सू० । "यत्र पक्ष आत्मानमभ्येति स पक्षाप्ययः एवं पुच्छाप्ययः । अप्ययेषु पक्षयोः पुच्छस्य च आत्मसम्बन्धिसमीपे चतुरङ्गुलं चत्वारि-चत्वार्यङ्गुलान्युभयोः पार्श्वयोः सङ्कर्षति सङ्कोचयति, तथा अन्ते पक्षपुच्छप्रान्ते उभयोः पार्श्वयोः चतुरङ्गुलं विकर्षति विस्तारयति" कर्क० । "पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदः सम-विभक्तस्य" २१सू० । "पञ्चारत्नयो यस्य सः पञ्चभिरत्निभिः पुरुषः दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति इतः प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात्, अतएवम् पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः तस्य दशमो भागः पदम्, पदस्य द्वादशो भागोऽङ्गुलम् त्रिभिः पदैरेकः प्रक्रमः इति तु भवति पदस्य सिद्धत्वात्" क० । "परितत्य रज्ज्वा शङ्कितं बहीरक्ष्णेकपदे शते परिश्रितो मिनोति" २२सू० । "रज्ज्वा परितत्य सर्वतोवेष्टयित्वा रज्ज्वाबहिर्भागे शङ्कितं रज्जुसंलग्नं यथा भवति तथा एकपञ्चाधिके द्वे शते परिमिनोति" क० "चतुर्थशतानि वा त्रीणि" २३सू० । चतुर्थ्यन्त्यधिकानि त्रीणि शतानि" क० । "ऊर्ध्वाः शर्कराः खाते" २४सू० । "उत्तरेषु पुरुषीये-ष्वेकशतविधात्" २५सू० । "उत्तरेषु अष्टविधादिषु चयनेषु आ एकशतविधात् एकशतविधचयनं यावत् एकाधिकशतपुरुषात्मकपञ्चनवतितमचयनपर्यन्तम् पुरुषोद्वेध एकैकपुरुषवृद्ध्या अग्निमानं भवति तस्माद् सप्तविधमेव प्रथमं विदधीतेति" (१०,२,३,१८) क० "यथाग्निर्वेदीष्ट-काप्रमाणम्"२६सू० । वेदिश्च इष्टकाश्च वेदीष्टकाः तासां प्रमाणं वेदीष्टकाप्रमाणम् तद्यथाग्नि भवति, अग्निमानमन-तिक्रम्य यथाग्नि, यथाग्निश्चेतव्यः प्रमाणं वर्द्धते तथा वेदि-प्रमाणं वर्धते इष्टकाप्रमाणं च वर्द्धते, न हि वेदिवृद्धिं विना तन्मध्ये वर्धितस्याग्नेर्मानं सम्भवति, नापि इष्टका न वर्धिता वर्धितमग्निक्षेत्रं पूरयितुं शक्नुवन्ति, अतो युक्तमुभयोर्वृद्धिः" क० । "अन्तःपातमगार्हपत्ययोरिच्छन्" २७सू० । "पूर्वार्धाद्यामस्य त्रीन् प्राचः स वेद्यन्तः प्रक्रमः प्रक्रमति" (१०,२,३,१) यः प्रक्रमत्रयपरिमितो देशः सोऽन्तःपात्य उच्यते, तस्यान्तःपात्यस्य गार्हपत्यस्य गार्ह-पत्यचितेश्च इच्छन् इच्छया वृद्धिं कुर्यात् इच्छया न कुर्यात् तदैकउत्तरा" श्रुतेः (१०,२,३,६) क० । "उत्तर-पक्षस्यापरस्यां स्रक्त्यां परिश्रितो मिनोति जङ्घामात्रीं नाभिमात्रीं मुखमात्रीमिति" २८ सू० । "अग्नेरुत्तर-पक्षस्यापरस्रक्त्यां पश्चिमकोणे एतत्प्रमाणास्तिस्रः परिश्रितो मिनोति" क० । अवशिष्टं तु चतुरङ्कैः शतपथब्राह्मणा-ध्यायादि बोध्यम् । त्रिभिः कात्यायनश्रौतसूत्राध्यायादि द्वाभ्यां शुक्लयजुर्वेदाध्यायादि तेन तत्तत्स्थाने अत्रोक्तप्रतीकयुक्तमन्त्रमूलवाक्यादिकं द्रष्टव्यमिति सङ्केतज्ञापनम् । विस्तरस्तु शतपथब्राह्मणे लिखिताच्च सूचिताध्यायादौ द्रष्टव्यः ।

**इष्टकापथ** न० इष्टकायामपि पन्था यस्य अच् समा० इष्टकापथं यस्माधोमुखवायुकरणात् । १वीरणमूले । इष्टकया निर्मितः पन्था अच् समा० । इष्टकानिर्मिते २पथि पु० ।

**इष्टकाव** त्रि० इष्टका अस्त्यर्थे व । इष्टकायुक्ते ।

**इष्टकावत्** त्रि० इष्टका+चतुरर्थ्यां मध्वादि० मतुप् मस्य वः । इष्टकासन्निकृष्टदेशादौ स्त्रियां ङीप् ।

**इष्टगन्ध** पु० कर्मधा० । १सुगन्धौ । इष्टोगन्धोऽस्य । २सुगन्धिद्रव्ये त्रि० ३वालुकायां न० मेदि० ।

**इष्टतम** त्रि० अतिशयेन इष्ट+तमप् । १प्रियतमे २अतिशयाभीष्टे "यद्यदिष्टतमं लोके" गीता । द्वयोर्मध्ये अतिशयेन इष्टः तरप् । इष्टतरः द्वयोर्मध्ये अतिशयेन इष्टे त्रि० ।

**इष्टदेव** पु० इज्यते यज-कर्मणि क्त कर्मधा० । १पूज्ये देवे तन्त्राद्युक्तविधानेन यस्य मन्त्र उपास्यतया गृहीतस्तस्मिन् २देवे च । इष्टदेवतादयोऽप्यत्र स्त्री ।

**इष्टनि** त्रि० यज-तनिक् संप्र० इष-तनिक् वा । १यष्टव्ये २एष्टव्ये च । "तुविग्रभिर्प्रस्ततीर्षूरांसिष्टनिरार्चना सिष्टनिः" ऋ० १,१२७,६ । "इष्टनिरेष्टव्योयष्टव्यो वा" भा० । [व्याकरणोक्तसंस्कारानुसारेण प्रयोगे ।

**इष्टप्रयोग** पु० इष्टस्य शिष्टप्रयुक्ततया निश्चितस्य प्रयोगः ।

**इष्टवत्** न० यज-इष वा क्तवतु स्त्रियां ङीप् । १यजनकर्त्तरि २इच्छायुक्ते च । "इष्टं वेदाध्ययनादिः साध्यतयाऽस्त्यस्य मतुप् मस्य वः । ३इष्टकर्म्म कर्त्तरि । वेदे तु पूर्वपददीर्घः इष्टावान् "इष्टावन्तोरातिषाचोदधानाः" अथ० १८,३,

२० । "इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं स इष्टवान्" व्यासोक्ते ४इष्ट्यादिकारिणि त्रि० । स्त्रियां ङीप् ।

**इष्टव्रत** त्रि० इष्टं व्रतं यस्य । १व्रतयोगे इष्टानि कल्याणानि व्रतानि कर्माणि सिध्यन्ति येन । २इष्टकर्मसाधने यज्ञादौ "इष इष्टव्रता अकः" ऋ० २,५९,९ । "इष्टानि कल्याणानि व्रतानि कर्माणि याभिः सिध्यन्ति ता इषः अन्नानि" भा० ।

**इष्टसाधन** न० ६त० । अभीष्टसाधने इच्छाशब्दे उदाहृतिः । ततो भावे त्व । इष्टसाधनत्व तद्भावे न० । तल् । इष्टसाधनता तद्भावे स्त्री ।

**इष्टा** स्त्री इज्यतेऽनया यज–करणे वा० क्त । शमीवृक्षे राजनि० तत्समिधा होज्यते इति तस्याः तथात्वम् कर्मणि क्त । अभिमतायां स्त्रियाम् ।

**इष्टाकृत** त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्व्यर्थे डाच् कर्मणि क्त । इष्टीकृते "सतामिष्टाकृतं नाम पूर्वापरसहस्त्रिकम्" रामा० ।

**इष्टादि** पु० "इष्टादिभ्यश्च" पा० सूत्रेण तत्कर्तृगमनेनेत्यर्थे विहितेनिप्रत्ययनिमित्तभूतशब्दसमूहे स च गणः । "इष्ट पूर्त उपसादित निगदित परिगदित परिवादित निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित" आकृतिगणत्वेन "हठेन पठितो मास्मिन् खलः खेलतु" नैष० ।

**इष्टापत्ति** स्त्री ६त० कर्मधा० वा । १इष्टस्यापत्तौ इष्टायामापत्तौ च वादिना दर्शितापत्तेः प्रतिवादिन इष्टत्वे हि सा भवति । "इष्टापत्तौ दोषान्तरमाह" जग० ।

**इष्टापूर्त्त** न० इष्टं च पूर्त्तं च द्वयोः समाहारः पूर्वपददीर्घः । इष्टशब्दोक्ते अग्निहोत्रादौ "वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" इति मनूक्ते पूर्त्ते च । "वितथन्तु वदेयुर्वै धर्मं प्रह्लाद पृच्छते । इष्टापूर्त्तञ्च ते घ्नन्ति सप्त सप्तपरावरान्" भा० स० ६८अ० । "इष्टापूर्त्तेन च तथा वक्तव्यमनृतं न तु" आ० प० १८५अ० । "इष्टापूर्त्तफलं न स्यान्न शिष्यो न गुरुर्भवेत्" भा० व० ३२अ० । क्वचित् इतरेतरद्वन्द्वोऽपि द्वि०व० । "इष्टापूर्त्ते संसृजेथामयञ्च" यजु० १०,५४ ।

**इष्टार्थोद्युक्त** त्रि० इष्टे अर्थे उद्युक्तः । उत्सुके इष्टार्थलाभाय त्वरमाणे कात्यायन्यां (?)

**इष्टाश्व** त्रि० इष्टोऽश्वोयस्य । १प्रियहये २राजभेदे पु० । "किमिष्टाश्व इष्टरश्मिरेतः" ऋ० १,१२२,१३ । "इष्टाश्व एतन्नामको राजा" भा० ।

**इष्टि** स्त्री यज–क्तिन् । १यागभेदे । स च कात्या० श्रौ० सू० दर्शितः "कर्मयज्ञो द्रव्यदेवतायुक्तो यजतिः" । ४,२,१,सू० "क्रियाशब्दः आख्यातप्रत्ययान्तो निर्वपत्यादिशब्दो यजतिः प्रत्येतव्यः यागो ज्ञेय इत्यर्थः न निर्वापावघातादिरूपसंस्कारमात्रविधायकः यजतिशब्दोऽत्र तदर्थयागपरः । एवं यागत्वे सिद्धेऽपि इदं संदिह्यते सौर्यं चरुं निर्वपेदग्निषोमीयमजमालभेतेत्यादौ किं यागमात्रं भवति उत धर्मा अपि भवन्तीति यदा च धर्मा भवन्तीति पक्षस्तदापि संदेहः किं पूर्णाहुतिसम्बन्धिनो धर्मा भवन्ति उताग्निहोत्रसम्बन्धिनः, आहोस्विद्दर्शपूर्णमासयोः, अथवा ज्योतिष्टोमस्येति, अथवा दर्शपूर्णमासयोरेवेति, । धर्माणामनाम्नानाद्यथाश्रुतं यागमात्रं कर्तव्यमिति प्राप्ते आह" क० "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात्" २सू० । सौर्यादौ धर्मा भवन्ति न यागमात्रम् एवमेतानि विधिवाक्यानि समर्थान्यर्थवन्ति सप्रयोजनानि भवन्ति अन्यथा साकाङ्क्षत्वादर्थप्रतिपादनाभावेन निरर्थकान्येव स्युः । तथा हि सौर्येण यागेन ब्रह्मवर्चसं भावयेदित्यत्रांशत्रयवती भावना विधीयते किम्, केन, कथमिति, किमंशो ब्रह्मवर्चसम्, तत्र केनांशः सौर्येणेति, कथमंशस्तु वाक्यमध्ये नास्ति तेन कथं भावयेदिति वाक्यं कथमंशसापेक्षम् । यच्च सापेक्षं भवति तदध्याहारेणानुषङ्गेण वा पूरयित्वा निराकाङ्क्षं कर्तव्यम् । अन्यथा तस्यानर्थक्यापत्तेः न च वेदे मात्रामात्रस्य तदिष्यते तस्मादत्र निराकाङ्क्षीकरणाय विध्यन्तेतिकर्तव्यतापरपर्यायः कथमंशोऽत्र कश्चिदनुषञ्जनीय इति सिद्धे आह "दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यादिति" सर्वासु इष्टिषु अग्नीषोमीये पशौ च दर्शपूर्णमासयोरेव धर्मा भवन्ति सामर्थ्यात् पूर्वोक्त एव हेतुरत्रापि योज्यः । दर्शपूर्णमासधर्मा एव सौर्यादिविधीनां शेषीभवितुं समर्थाः चरुपुरोडाशादयो ह्यवघातादिभिरेव सिध्यन्ति नाभिषवादिभिरिति । इष्टिपशुष्विति इष्टिषु सर्वासु अग्नीषोमीये पशौ च पश्वन्तरेषु ह्यग्नीषोमीयधर्मा भवन्ति" क० । इत्यारभ्य पञ्चविंशत्या सूत्रैस्तद्विशेष उक्तस्तत्र विस्तरेणावसेयः । तथा च दर्शपौर्णमासेतिकर्तव्यताको यागभेद इष्टिरग-

न्त्या ।तत्करणप्रकारः आश्वला० श्रौ० सूत्रे दर्शितो "यथा पौर्णमासेनेष्टिसोमा उपदिष्टाः" । २,१,१, प्रथमेऽध्याये दर्शपूर्णमासौ व्याख्यातौ विध्यन्तरसहितौ । उत्तरत्वेष्टयः पशवश्च वक्ष्यन्ते विध्यन्तरविहिताः । तेषां विध्यन्तरापेक्षास्ति" "अतोऽयमर्थः सूत्रस्य, यस्मिन्काले उपदिष्टा इष्टयः पशवश्चापि अविशेषिताज्यभागास्ते सर्वे वार्त्रघ्नाज्यभागा इति"। "पौर्णमासेनेत्यस्यायमर्थः, पौर्णमासेन व्याख्याता इति वार्त्रघ्नाज्यभागा इत्यर्थः । तेन समाम्नातानामिष्टीनां पशूनाञ्च अन्यदेवतागमभाव: सिद्धो भवति । तथा चोक्तमिष्ट्ययनप्रकरणे "असमाम्नातास्तथात् तन्त्रविकारः" नारा० वृत्तिः तस्य कालस्तत्रैव दर्शितः यथा "तैरमावास्यायां पौर्णमास्यां वा यजेत" सू० २,१,२, "तैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्यां वा यागः कर्त्तव्य इति इष्टिपशूनां प्रकृतिप्राप्त एवायं काल: पुनर्विधीयते इत्यहकालतां निवर्त्य सद्यस्कालताप्राप्त्यर्थम् । किन्तु दर्शप्रकृतेरमावास्या पौर्णमासप्रकृतेः पौर्णमासीत्येवं नियमं निवर्त्य अनियमेन उभयकालताप्राप्त्यर्थम् । प्रकृत्यविरोधात् पर्वसन्ध्यहोरात्रे विकृतिः कर्त्तव्या । यद्याह्नः पूर्वभागे पर्व स्यात् तदा प्रकृतिं कृत्वा विकृतिः कार्या । यदा परभागे रात्रौ वा तदा विकृतिं कृत्वा प्रकृतिः कार्य्येति सोमस्याप्रप्राप्तः कालो विधीयते । इष्ट्यादिशब्दसम्बन्धादेव यजेतेत्यपि सिद्धे यजेतेतिवचनं सोमस्य याग एवानयोः कालयोः सम्पादनीयो नान्यत् दीक्षादीति" वृत्तिः । "राजन्यस्याग्निहोत्रं जुहुयात्" ३सू०। "क्षत्रियस्याग्निहोत्रहोमः पर्वणोरेव कर्त्तव्यो नान्यस्मिन् काल इति वचनाद्वैश्योऽप्यनयोरेव कालयोरग्निहोत्रं जुहुयात् नान्यस्मिन्नित्यवगम्यते । तत्र विशेषमाह" वृत्तिः। "तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत्" ४सू०। "तपस्वी कर्मनिरतस्तस्मै ब्राह्मणाय अतपस्विनेऽपि ब्राह्मणायैव दद्यात् न जात्यन्तराय तपस्विनेऽपीति । इतरं कालमिति, इतरेषु सर्वेष्वग्निहोत्रकालेष्वित्यर्थः । भक्तमुपहरेत्, भक्तं पक्वोदनं पक्वान्नमुपहरेत्, दद्यात् । एतदुक्तं भवति । राजन्यवैश्ययोः पर्वण्यग्निहोत्रकालद्वयं वर्जयित्वा इतरेषु कालेषु ब्राह्मणायोदनो दातव्यो न होमः कर्त्तव्य इति । अग्निधारणन्तु क्रियत एव" वृत्तिः । ततोऽग्न्याधानं प्रसङ्गादुक्तं तच्चाधानशब्दे पूर्वं दर्शितम् अग्न्याधानोत्तरं कर्त्तव्यमाह "यदि त्विष्टयः क्रतुयुः" २,१,१८, सू० "अग्नीनेवेति वाक्यशेषः । यद्यनधिकारत्वादाधानविधेर्विनियोजकस्य प्रकरणस्य व्यापारासम्भवादाधानाङ्गमिष्टयो न स्युः, इष्टीनाञ्चानधिकारत्वादिष्ट्यङ्गमाधानं न स्यात्, तथापि न कश्चिद्दोषः, अन्यथात्वेनैवोभयोरप्यनुष्ठानसिद्धेः" । "अस्मिन्नर्थे सूत्रयोजना । यद्यासामिष्टीनामाधानाङ्गता स्यात् तथापि आहवनीयाद्यग्निसम्बन्धात् तानेवाग्नीनिष्टयस्तनुयुः विस्तारयेयुः कुर्युः साधयेयुरित्यर्थः । तुशब्दस्तु साधनादिषु विशेषं दर्शयति । आधानेऽग्नीनां साध्यत्वेन सम्बद्धानामेव साध्यत्वम् । इष्टिषु साधनत्वेन सम्बद्धानामपि कल्पनागौरवभयात् साध्यत्वमिति विशेषं द्रक्ष्यामः एवं यद्याधानेनेष्टिभिश्चाग्नय एवांशतः साध्या इत्यनधिकाराणां कथमनुष्ठानसिद्धिरिति न्यायविदामेव उपालम्भो नास्माकम् । अस्माकं तु साध्यसाधनसम्बन्धेऽवगते तद्दर्शिनां कर्त्तृत्वेनावगतानां ब्राह्मणादीनां कथञ्चिदधिकारकल्पनयानुष्ठानसिद्धिः । अथवाऽनधिकाराणामनन्यशेषाणामपि तत्साधनसाध्यरूपेणोपकारकत्वेन कामं श्रुतिप्रयुक्तैर्वंविधानामनुष्ठानसिद्धिरित्यलमतिविस्तरेण" नारा०वृत्तिः। "प्रथमायामग्निरग्निः पवमानः" १८ सू०। "प्रथमायामिष्टौ द्वे देवते । अग्निः प्रथमः केवलः । द्वितीयः पवमानगुणकोऽग्निः । केवलस्याग्नेर्नित्य एव । "अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः" २०सू०। "एते द्वितीयस्य पवमानगुणकस्य" वृ०। "स हव्यवाडमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृतः संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्" २१सू०। "सौविष्टकृत्योर्याज्यानुवाक्ययोरृचोरनेन संयाज्ये इति संज्ञा विधीयते" वृ०। "सर्वत्र देवतागमे नित्यानामपायः" २२ सू०। "सर्वत्रेति प्रकरणान्तरेऽपीति दर्शयति । देवतागम इत्यत्र समासनिर्देशस्य तुल्यत्वाद्देवतायाः देवतयोर्देवतानां वा आगम इत्येवं भवति । नित्यानां प्राकृतीनामित्यर्थः । अपाय उद्धार इत्यर्थः । एतदुक्तं भवति । विकृतौ देवतायाः एकस्या आगमे द्वयोर्बह्वीनां वा अनागमेऽपि प्राकृतीनां सर्वासामुद्धार इति यां पुनर्विकृतौ इष्टिनोदनां कृत्वा देवतां न विदधाति, तत्र नोद्धारः प्राकृतीनाम् । तत्र ता एव देवता भवन्तीत्यर्थः । यथा गदितः सोमेन पशुना इष्ट्या वा इत्यादौ" वृ०। "याः स्विष्टकृदन्तराज्यभागौ च तास्तत्स्थाने" २३सू०। "नित्यानामपाय उक्तः । तत्र किं सर्वा नित्या उद्धर्तव्याः उत काचिद्देवतेत्येतं संशयं निवर्तयति या आज्यभागौ स्विष्टकृतं चान्तरा देवता यष्टव्यास्ता उद्धर्तव्याः । याः पुनर्विकृतौ विहितास्तास्तत्स्थाने उ-

कृतानां प्राकृतीनां स्थाने भवन्ति" इति वचनात्, तद्धर्मिकाश्च भवन्तीति गम्यते" वृ०। "एष समानजातिधर्मः" २४सू०। "योऽयमतिदिष्टो विधिर्देवताभ्योऽन्यत्रापि स समानजातीयेषु भवति। समानजातीय एककार्य इत्यर्थः" वृ०। "द्वितीयस्यां पृथग्वन्तौ अग्निः पावकोऽग्निः शुचिः स नः पावकदीदिवोऽग्ने पावकरोचिषाग्निः शुचिव्रततम उदग्ने शुचयस्तव" २५ सू०। "एकः पावकगुणकोऽग्निः, अपरः शुचिगुणकः। 'साक्षात् विद्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये तृतीयस्यां सामिधेन्यामावपते प्राग्घोत्तमायाः पृथुपाजा अमर्त्यं इति द्वे"२६सू०। "आवपते इति वचनात् अधिके एते सामिधेन्यौ भवतः। प्रथमायां द्वितीयस्यां तृतीयस्यामिति वचनात् यस्यामिष्टौ यत् तन्त्रं विहितं तस्यामेकदेवतायामपि तत् तन्त्रं भवति न यथोक्तनानादेवतायामेवेति" वृ०। "धाय्ये इत्युक्त एते प्रतीयात् पृष्टिमन्तावग्निना रयिमश्नवद्वयस्तानो अमीवहेति। अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि" २७सू०। "त्रयाणामेको गृह्यते" वृ०। "अदितिः" २८सू०। अदितिश्चान्या, अस्यां द्वे देवते" वृ०। "उत त्वामदिते सुव्रतानामृतस्य पत्नीमवसे हुवेम तुविक्षत्रामजरन्तीमुरूचीं महि महीमू षु मातरं सुशर्माणमदितिं सुप्रणीतिम्" २९सू०। "एषा कल्पजा" वृ०। "प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजावित्युक्त एते प्रतीयादिति तिस्रः" ३०सू०। "इत्येतास्तिस्र इष्टयोऽनुक्रान्ता इत्यर्थः। उक्तानुकीर्त्तनमुत्तरार्थम्। यदाद्योत्तमे चैव स्यातामाद्या वेति पक्षत्रयमपि तिसृणामिष्टीनां यावन्तो देवतास्ताः सर्वा यष्टव्या इत्येवमर्थम्। आद्योत्तमपक्षे मध्यमायां ये देवते ते आद्यायामेव प्रक्षेप्तव्ये। यदा पुनराद्यैव तदा सर्वा देवता आद्यायामेव प्रक्षेप्तव्या इत्येवमर्थम्" वृ०। "आद्योत्तमे वैव स्याताम्" ३१सू०। "इष्टी इति शेषः। "आद्या वा" ३२सू०। "आद्यैवेष्टिर्भवतीत्यर्थः" वृ०। "तथा सति तस्यामेव धाय्ये विराजौ" ३३सू०। "यदाद्यैव भवति तदा द्वितीयतृतीययोरपि देवतास्तत्र भवन्तीत्युक्तम्। अतस्तस्यामेव धाय्ये विराजौ भवतः। धाय्याविराजामनुप्रवेशस्य निमित्तं तृतीयस्या इष्टेर्देवतानुप्रवेश इत्येवमर्थं तथा सतीत्युक्तम्" वृ०। "इतिमात्रे विकारे वैराजतन्त्रेति प्रतीयात्" ३४सू०। "पौर्णमासतन्त्रायामिष्टौ धाय्याविराण्मात्रे विकारे सति सेष्टिर्वैराजतन्त्रेति वेदितव्या" वृ०।

"आधानाद् द्वादशरात्रमजस्राः" ३५सू०। "अत्राधानमिष्टीश्चोक्ता आधानादूर्द्ध्वं द्वादशरात्रमजस्रा इत्युक्तम्। तस्यायमभिप्रायः, यावता कर्मसमुदायेनाग्नीनां सिद्धिर्भवति तावतः कर्मसमुदायस्याधानशब्दो वाचक इति ज्ञापयितुम्। तेनाग्न्याधेयं पुनराधेयं चेत्यत्र सेष्टिकस्याधानस्य ग्रहणं भवतीति सिद्धम्। आधानेनेष्टिभिश्च सिद्धाग्न्योर्द्वादशाहोरात्राणि सर्वे स्वरूपेणैव धार्यन्ते। एतदजस्रधारणमग्निहोत्रपूर्वं एवाधाने भवति, अग्निहोत्रस्यैवानन्तरमुच्यमानत्वात्। अनुष्ठानक्रमेणैव कर्मणां व्याख्यानमित्युक्तत्वाच्च" वृत्तिः। एवमिष्टिसामान्यं प्रदर्श्य विशेषेष्टयस्तत्र दर्शिताः तत्रादौ नवशस्येष्टिः श्यामाकाग्रयणशब्दे दर्शिता तत्र राज्ञ एवाधिकारः त्रयाणां वर्णानामविशेषेणोतिकल्पद्वये प्राप्ते राज्ञो विशेष उच्यते "इष्टिस्तु राज्ञः" "सर्वेषां चैके एके सर्वेषामिष्टिरेवेति मन्यन्ते" २,९,६,७। "श्यामाकेष्वाग्नेयः सौम्यश्चरुः स च वर्षर्त्तौ तत्र याज्यादिकं २,९,८,९,१०, सू० उक्तम्। अन्यनवान्नभोजने जयमन्त्रादिकमुक्तम् १२,१३। एतानित्या इष्टयः अथ काम्याः इष्टयः २,१०,१२, सूत्रादौ। तत्र आयुष्कामेष्टिस्तत्र अग्निगुणभेदजीवातुमद्देवता २,१०,२,३,४, सू०। स्वस्त्ययनेष्टिः रक्षितवद्देवताका तत्र याज्यादिकम् ५,६,७, पुत्रकामेष्टिः पुत्रवद्गुणकाग्निदेवताका तत्र याज्यादि ८,९, १०, वैश्वधेष्टिः विश्वद्गुणकेन्द्रदेवताका तत्र याज्यादिकं १३,१४,१५, सू०। आग्नेष्टिराशापालदेवताका तत्र याज्यादिकम् १७,१८, सू०। लोकेष्टिः पृथिव्यन्तरिक्षदेवताका तत्र याज्यादिकम् २०,२१,२२, सू० मित्रप्राप्तिकामेष्टिः अग्निसोमवरुणमित्रेन्द्रबृहस्पतिसवितृपूषसरस्वतीदेवताका तत्र याज्यादि ११,२,३,४,३। इयमिष्टिः महावैराजीनाम्ना। अभिचारकामेष्टिः सुपाश्वकृशीयनाम्नी क्रूरगुणकेन्द्रदेवताका तत्र याज्यादि ११,७,८,९। विमतसम्प्रतिकामेष्टिः संज्ञानो नाम वसुरुद्रादिगुणकाग्निसोमादिचतुष्टयदेवताका तत्र याज्यादि १०,११। भेदकामेष्टिः। इन्द्रामरुद्देवताका तत्र याज्यादि १३,१४,१५,१६, सू०। सम्पत्तिकामेष्टिः ऐन्द्रामारुती संज्ञानीवत् याज्यादिकम्। १७, सू०। शत्रभिभवनिबर्हिकामेष्टिः ऐन्द्रावार्हस्पत्या तत्र याज्यादि १८।१९ सू०। पवित्रेष्टिः। अग्न्यादिदेवताका तत्र याज्यादि २,१२,१। "वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च। ऋतावृतौ प्रयुञ्जानः पुनाति दशपौरुषम्"। वृष्टिकामेष्टिः कारीरी नाम सा च अग्न्यादि-

नानादेवताका अग्निदेवताका वा तत्र याज्यादि २,१२,१,२,४,५,६,७,८,९,सू० । सर्वाश्च एता दर्शपौर्णमासेतिकर्तव्यताकाः । यज्ञगुणके कर्मणि यमोरुभयतोऽन्यतरतो वा मधुकामेष्टिः सा च आग्नेयी आग्नावैष्णवी वा आश्व० श्रौ०सू० ३,१,२,३,४ सू०। तस्यामितिकर्त्तव्यतायाज्यादि तदुत्तरसूत्रजातैरुक्तम् । विध्यपराधप्रायश्चित्तीष्टिः ३,१०,१,सू० विध्यपराधस्वरूपकारणप्रदर्शनपूर्वकं तत्करणप्रकारादि तदुत्तरसूत्रजातैर्दर्शितम् । वारुणीष्टिः तत्प्रकारादि ३,१२,५, प्रातःकालातिपत्तौ मानरिष्टिः तत्र देवतादि ३,१२,१२, आर्त्त्यांशुपात्रे च सर्वेष्टिः ३,१२,१५ निमित्तभेदैर्थ्य प्रायश्चित्तीष्टौ देवताभेदादि ३,१२,१६, आरभ्य आध्यायात् सूत्रैरुक्तम् । उखासम्भरणीयेष्टिः तद्देवतादि ४,१,२१ २६सू०। दीक्षाप्रयोजनेष्टिः दीक्षणीया नाम तत्रदेवतादि ४,२,१,१८, सू०पर्यन्तेनोक्तम् । प्रायणीयेष्टिः तत्र देवतादि ४,३,१सूत्रादौ। आतिथ्येष्टिः तत्र देवतादि ४,५,१सूत्रादौ । उदयनीयेष्टिः तद्देवतादि ६,१४,१, सूत्रादौ उदवसनीयेष्टिः तद्देवतादि ६,१४,१,२१, सूत्रादौ । अन्याः पुनराधेयेष्टिप्रभृतयोऽपि इष्टयः विस्तरभयान्नोक्ताः आकरेषु द्रष्टव्याः ।

शत०ब्रा० १,६,२,१२, इष्टिकरणप्रकारविशेषो दर्शितःयथा। "स यदीष्टिं कुर्वीत सप्तदश सामिधेनीरनुब्रूयादुपांशु देवता यजति तद्धीष्टिरूपं, मूर्द्धन्वतौ याज्यानुवाक्ये स्यातां वार्त्रघ्नावाज्यभागौ, विराजौ संयाज्ये" "अग्नेरिष्टिमभिधाय अथ पृथक् प्रयोक्तव्याया आग्नेय्येष्टेर्वैशेषिकमङ्गजातमाह । यदीष्टिं दर्शपूर्णमासाभ्यां पृथगेव कुर्वीत प्रधानदेवता उपांशु यजेत तदुपांशुत्वं काम्येष्टि रूपं खलु । मूर्द्धन्वतौ "अग्निर्मूर्द्धा" "भुवो यज्ञस्य" इत्येते। (यजु०१३,१४,१५,) मूर्द्धन् शब्दवत्यौ प्रधानस्य याज्ये स्विष्टकृद्याज्यापुरोऽनुवाक्ये, विराजौ विराट्छन्दस्के "प्रेद्धो अग्ने" "इमो अग्ने" इत्येते (यजु०१७,७६,७७,) भवतः" भा०

दर्शपौर्णमासयागं कृत्वा प्रायश्चित्तेष्टिः कार्या तत्प्रकारः शत०ब्रा० ११,१,३,१,दर्शितो यथा।"पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्ट्यैवं यजतेऽथामावास्येनेष्ट्वाऽदित्यै चरुमनुनिर्वपति तेन यथेष्ट्यैवं यजते १ । स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवतायैतदग्नीषोमीयं पौर्णमासं हविर्भवति तत्र नेन्द्राय स्वेति किं चन क्रियते एतेनो हास्यैतत् ऐन्द्रं हविर्भवत्येतेन सेन्द्रो यज्ञोऽथ यद्विमृधे स्वेति सर्वा उ हि मृधो नाष्ट्राः पौर्णमासेन हन्ति २ । अथ यदामावास्येनेष्ट्वा अदित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तेनैतदनद्धेव हविर्भवति तेनाप्रतिष्ठितमियं वै पृथिव्यदितिः सेयमद्धा सेयं प्रतिष्ठितैतेन हास्यैतदद्धेव हविर्भवत्येतेन नाप्रतिष्ठितमेतत्तु तद्यस्मादनुनिर्वपत्यथ तस्मादनुनिर्वपेत् ३ । स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति सेन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ इन्द्रस्यैव स यत्सर्वो यज्ञ इन्द्रस्यैवैतेनो हास्यैतत् ऐन्द्रं हविर्भवत्येतेन सेन्द्रो यज्ञः ४। अथ यदामावास्येनेष्ट्वा अदित्यै चरुमनुनिर्वपत्यामावास्यं वा अनुनिर्वाप्यं पौर्णमासेन वा इन्द्रो वृत्रमहंस्तस्मा एतद्वृत्रं जघ्नुषे देवा एतद्धविरनुनिरवपन् यदामावास्यं किमनुनिर्वाप्योऽनुनिर्वपेदिति तस्मान्नानुनिर्वपेत् ५ । स यत् पौर्णमासेनेष्ट्वा अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वपति द्विषन्तं ह स भ्रातृव्यं प्रत्युच्छ्रयतेऽथ यः पौर्णमासेनैव पौर्णमासीं यजत आमावास्येनामावास्यामसपत्ना हैवास्यानुपबाधा श्रीर्भवति ६ । पौर्णमासेन वै देवाः पौर्णमासीं यजमाना आमावास्येनामावास्यां क्षिप्रएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान् पौर्णमासेनैव पौर्णमासीं यजत आमावास्येनामावास्यां क्षिप्रएव पाप्मानमपहते क्षिप्रे प्रजायते स यद्यनुनिर्वपेद्याद्दक्षिणां नादक्षिणं हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येषा दक्षिणा यदन्वाहार्य इति न्वनुनिर्वाप्यस्याथाभ्युदितस्य७" ३कण्डिका।"अद्यामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे स हैष दिव्यः श्वा, स यजमानस्य पशूनभ्यवेक्षते तदपशव्यं स्यात्प्रायश्चित्तिकृत एतस्माद्ध्वैतद्भीषायचन्द्रमसादिति" १ । आयासुपकर्षन्ति । एतेनो हैतदुपतपदाचक्षते अदृचितमित्येतस्य हैवैतदाचक्षते २ । भगवान्द्रमस इति । चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽप ओषधीः प्रविशति पशवो वा अप ओषधीरदन्ति तदेनमेतां रात्रिं पशुभ्यः संनयति ३ । सोऽद्यामावास्येति मन्यमान उपवसति । अथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति तदाहुः कथं कुर्यादित्वा यज्ञपथाद्यजेता३ न यजेता३ इति यजेत हैव न ह्यन्यदपक्रमणं भवति श्वः-श्वः एवैष ज्यायानुदेति स आमावास्यविधिनैवेष्ट्वाथेष्टिमनुनिर्वपति तद्धवैव श्वो वा ४ । तस्य त्रीणि हवींषि भवन्ति । अग्नये पथिकृतेऽष्टाकपालं पुरोडाशम्, इन्द्राय वृत्रघ्न एकादशकपा-

लम्, अग्नये वैश्वानराय द्वादशकपालं पुरोडाशम् ५। स यदग्नये पथिकृते निर्वपति। अग्निर्वै पथः कर्त्ता स यस्माद्देशादो यजमानो यज्ञपथादेति तमेनमग्निः पन्थानमापादयति ६। अथ यदिन्द्राय वृत्रघ्ने। पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणकर्मणः साधोस्तमेतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हन्ति तस्मादिन्द्राय वृत्रघ्ने ७। अथ यदग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपति यत्र वा इन्द्रो वृत्रमहंस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वं पाप्मानं समदहत्तथोएवैष एतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हत्वा तमग्निना वैश्वानरेण संदहति तदस्य सर्वं पाप्मानं संदहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्याल्पश्चन पाप्मा परिशिष्यते ८। तस्यै सप्तदश सामिधेन्यो भवन्ति। उपांशु देवता यजति याः कामयते ता याज्यानुवाक्याः करोत्येवमाज्यभागावेवं संयाज्ये ९। तिसृधन्वं दक्षिणां ददाति। धन्वना वै ज्ञानं बाधन्ते तदेतमेवैतद्बाधते यत्तिसृधन्वं दक्षिणां ददाति १०। दण्डं दक्षिणां ददाति। दण्डेन वै ज्ञानं बाधन्ते तदेतमेवैतद्बाधते यद्दण्डं दक्षिणां ददात्येषा ह्न्वादिष्टा दक्षिणा दद्यात्त्वेवाप्यासामप्यन्यद्यादृतरा दक्षिणास्तासां यत् सम्पद्येत सा सा हैषा पथ्येष्टिस्तयाप्यनभ्युदृष्टो यजेतैव” ४ क०। “दर्शयागे पुरस्ताच्चन्द्रदर्शनप्रायश्चित्तेष्टिरुक्ता अथ पश्चात्तद्दर्शने नैमित्तिकीमिष्टिं विधित्सुराह। अथान्तरं सायंकाले एष चन्द्रमाः पश्चात् प्रतीच्यां दिशि दृश्ये दृश्यते। अभ्यवेक्षते अभ्यवहृतुं पश्यति यथा शालावृको वने संचरतो मेषादीन् पशूनभ्यवजिहीर्षति। एतस्मादेव खलु चन्द्रसम्बन्धिरूपेण पूर्वोक्तवत् अकारः समाशान्तः तस्माच्चन्द्रादिति भीषा उक्तरूपया भीत्या, छायामुपगच्छन्ति गवाद्याः पशवः तिरोहिता यजमानस्य भवन्तीत्यर्थः पशूनामुपतापकारि यदेतच्चन्द्रदर्शनं तत् खलु चित्तं शुना रिक्तीकृतमित्याचष्टे २। एतमेव चन्द्रगतं दोषमेवमाचष्टे, चन्द्रमसः सम्बन्धी तन्मण्डलमध्यवर्त्ती शश इति अत एव तस्य शशाङ्क इति प्रसिद्धिः। उपवसथकालातं देशादरूपं चन्द्रमसं पौर्णमासीकाले द्रवीकुर्वन्ति। पशव ओषधीभिर्भक्षा अपश्च पीत्वात्मनि तं चान्द्रमसं कृत्स्नं रसममावास्यायां धारयन्ति तत एनं रसममावास्यासम्बन्धिन्यां रात्रौ पशुभ्यः सकाशात् संनयति सम्यक् पाययति। तत्संनयनं प्रतिपच्चन्द्रदर्शने सति नोपपद्यते। २दर्शयागस्यातिक्रान्तकालत्वे दोषसम्बन्धस्य तन्मातुज्ञानप्रकारमाह। प्रकृतो दर्शयागः शीघ्रं समापनीयः अनन्तरमेवैतद्दोषपरिहाराय प्रायश्चित्तेष्टिः कर्त्तव्या। स आमावास्यविधेनैवेति यथोदितकालेऽनुष्ठितोऽमावास्यायागस्तत्प्रकारेणैव एतर्हि प्रक्रान्तां दर्शेष्टिं समाप्य३। अथास्यामिष्टौ प्रकृतिवद्विकृतिः कर्त्तव्येति नोदकप्राप्तेष्वङ्गेषु विशेषं विधत्ते। प्रकृतौ पञ्चदश अत्र नोदकप्राप्तास्ताः शुल्बाजवल्क्यौ धाय्ये द्वे इति सप्तदश (सामिधान्यः) भवन्ति। प्रकृतौ प्रधानयागे उच्चैर्धर्मः। प्रकृतदेवतालिङ्गयुक्तावत्वः षड्यां दाशतय्यां समाम्नाता या ऋचताः कामयते। आज्यभागयोः स्विष्टकृद्यागे च याथाकाम्यम् ८। तिसृभिरिषुभिर्युक्तं धनुः तिसृधन्वम् पूर्ववदकारः समासान्तः। एतं चन्द्राक्रान्तं दिव्यं ज्ञानम् १०। अदृश्यमानचन्द्रेऽप्यपि” ११ भा०

“इष्टीः पार्वायणान्तीयाः केवला निर्वपेत् सदा” मनुः “प्राजापत्यां निरूप्येष्टिम्”। “हेमन्ते नवशस्येष्ट्या” मनुः “आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः” रघुः। २“यागमात्रे च “कर्त्तुमिष्टिमभिवाञ्छता मया” माघः राजसूययागाभिप्रायमिदम्। इष–क्तिन्। ३इच्छायाम्। इष्टप्रयोगनिर्वाहाय पातञ्जलभाष्यकृतः इच्छाबोधके ४श्लोकाद्यात्मकवाक्यभेदे च। यथा। “द्विपद्यन्तानामेवेष्टिः” सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव” इत्यादि। एतयेष्ट्या “ठक्छसोश्च” वार्त्ति० “एकतद्धिते चेति” सूत्रञ्च गतार्थम्” सि०कौ०। “अनुत्सूत्रपदन्यासेति” माघव्याख्यायाम् अनुत्सूत्रसूत्राक्षरपदसंख्यानैरपेक्ष्येण सूत्रान्तरैरेव” इति मल्लि०।

**इष्टिका** स्त्री इष–तिकन्। इष्टकाशब्दार्थे “उद्वर्त्तनं त्विष्टिकया कण्डूकोठविनाशनम्” सुश्रु०। “इष्टिका वाह्नीचाल चयनार्थं कृताऽभवत्” भा० आश्व० ८८अ०।

**इष्टिकापथिक** न० इष्टिकायाः पथिकं तदुद्देशेनापि प्रभवत्वात्। नामपञ्चकलके राजनि०। [कृतयागे।

**इष्टिकृत्** त्रि० इष्टिं यागं कृतवान् कृ–भूते क्विप् ६त०।

**इष्टिन्** त्रि० इष्टमनेन इष्टा० इनि। कृतयागे “अध्वरेष्विष्टिनां पाता” भट्टिः।

**इष्टिपच** पु० इष्टये इच्छायै अभिलाषार्थं पचति न यज्ञार्थं पच–अच्– ६त०। १कृपणे २दैत्ये च शब्दर०। स हि स्वेच्छापूरणार्थमेव पचति न यज्ञार्थमिति तस्य तथात्वम्।

**इष्टिपशु** पु० ६त०। यज्ञिये पशौ। [त्विका०।

**इष्टिमुष्** त्रि० इष्टिं यागं मुष्णाति मुष–क्विप् ६त०। दैत्ये

**इष्टियाजुक** पु० इष्ट्या याजुकः। “काम्येष्टियजनशीले। “तस्माच्चेष्टियाजुकः स्यात् पशुभ्यः एकं प्रायच्छत्” इ०उ०।

इष्टियाजुकः इष्टियजनशीलः इष्टियज्ञेन काम्या इष्टयः शातपथप्रसिद्धाः ताच्छोल्ययोगात्काम्येष्टि यजनप्रधानो-न स्यात्” भा० ।

**इष्टीकृत** त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्वि-कृ-कर्मणि क्त । अनिष्टे इष्टे कृते । अनिष्टैरिष्टिः कृता । इष्टिभेदे सत्रे न० । “सत्रमिष्टीकृतं नाम समुपास्ते महातपाः” भा०व०२५८अ० ।

**इष्टु** स्त्री इष-भावे तुन् । इच्छायाम् उणादिकोषः ।

**इष्ट्यन** न० इष्ट्यायनं गमनं यत्र । “यागविशेषावरणभेदे” इष्ट्ययनञ्च आश्व० श्रौ०२,१४, सूत्रादौ दर्शितं यथा “अत ऊर्द्धमिष्ट्ययनानि” १।“अत ऊर्द्धं यानि वक्ष्यन्तेऽस्मिन् अध्याये तानि इष्ट्ययनसंज्ञानीति विद्यात् । इष्टिभिरयनं गमनं येषु कर्मसु तानीष्ट्ययनानि” नारा०वृ० । “सांवत्सरिकाणि” २सू० ।“संवत्सरेण क्रियन्ते संवत्सरेण क्रियन्त इत्युभयथा विग्रहः कर्त्तव्यः,दाक्षायणयज्ञचातुर्मास्यानामनेकसांवत्सरिकत्वसिद्ध्यर्थम् वृ०।“तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः”३सू०।“फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी, चित्रया युक्ता चैत्री । तेषां सांवत्सरिकाणां आगन्तुकानामस्मिन् काले प्रारम्भः कार्यः । दर्शपूर्णमासगुणविकाररूपाणां दाक्षायणयज्ञादीनामारम्भे कालनियमो नास्तीति तेषामित्युच्यते” नारा०वृ०। “तुरायणम्” ४सू०। ‘तुरायणं नामेष्ट्ययनमुच्यते” वृ०।“अग्निरिन्द्रो विश्वेदेवा इति पृथगिष्टयोऽनुसवनमहरहः”५सू० ।“अग्निदेवत्या इन्द्रदेवत्या विश्वदेवदेवत्या चैतास्तिस्र इष्टयः त्रिषु सवनेषु यथासङ्ख्येन एकैकेष्टिः कार्याऽहन्यहनि । अहरहरिति वचनं पौर्णमास्यमावास्ययोर्बाधनार्थम्” वृ०। “एका वा त्रिहविः” ६सू० “एताभिरेव देवताभिर्युक्ता एकैवेष्टिस्त्रिहविष्काऽहन्यहनि प्रातः सवन एव कर्त्तव्या वेत्यर्थः” वृ०। “इडादधोनामेष्ट्ययनं तत्र देवतादि २।१४।१-१०” द्यावापृथिव्योरयनं नामेष्ट्ययनं तत्र देवतादि २,१४,१२,१५” “चातुर्मास्यानि इष्ट्ययनानि तद्देवतादि २,१५,१ सूत्रादौ । एवमन्यान्यपि इष्ट्ययनकर्म्माणि आकरे दृश्यानि

**इष्ट्वा** अव्य० यज-क्त्वा । १यागं कृत्वेत्यर्थे । “अश्वमेधेन चेष्ट्वा” अच्छकर्टिकम् । इष-क्त्वा । २अभिलष्येत्यर्थे च ।

**इष्म** पु० इष्यति इष्यतेऽनेन वा इष-गतौ इष-इच्छायां मक् वा । १वसन्तकाले २कामे च भावे मक् ।३गतौ । ततः अस्त्यर्थे इनि । इष्मिन् गतियुक्ते त्रि०स्त्रियां ङीप् ।“ते वायोमना इष्मिणो अभीरवः” ऋ० १,२७,६। “इष्मिणः गतिमन्तः”भा०। इष-इच्छायां कर्म्मणि मक् ।४इष्यमाणे अन्नादौ अस्त्यर्थे इनि अन्नादिमति “हिरण्यवाः स्वायुधास इष्मिणः”ऋ०५,८, ७५। इष्मिणोऽन्नवन्तः”भा० ।

**इष्य** पु० इष्यते इष-क्यप् । वसन्ते ऋतौ हेम० । तस्य ऋतूनां मध्ये इष्टतमत्वात्तथात्वम् “ऋतूनां कुसुमाकरः” गीतायां तस्य भगवद्रूपत्वोक्तेः इष्टत्वम् ।

**इष्व** पु० इष-सर्पणे वन्-गुणाभावः । आचार्ये उद्देशार्थम्-पसर्पणशीलत्वात्तथात्वम् । उज्ज्वलदत्तस्तु ईष दाने इत्यस्यैव रूपं दीर्घादि इत्याह । उपदेशदानाच्च तस्य तथात्वम् ।

**इष्वग्र** न०६त०। वाणाग्रे । गहादिपाठात् भवादौ छ । इष्वग्रीय तद्भवादौ त्रि०। [इष्वनीकीय तद्भवादौ त्रि०।

**इष्वनीक** न० ६त० । वाणावयवे । गहा० भवादौ छ ।

**इष्वसन** पु०इषवोऽस्यन्ते क्षिप्यन्तेऽनेन अस-क्षेपे करणे ल्युट् ६त०। धनुषि ।“राममिष्वसनदर्शनोत्सुकम्” रघुः ।

**इष्वास** पु० इषवोऽस्यन्तेऽनेन अस-क्षेपे करणे घञ् ६त० । १धनुषि “अत्र शूरा महेष्वासा भीमार्जुनसमा युधि” “काश्यश्च परमेष्वासः शिखण्डी च महारथः”गीता । अर्द्धर्चादिपाठात् क्लीवत्वमपि । इषून् अस्यति अस-अण् उप०स० । २शरक्षेपके त्रि०(तीरन्दाज) मेदि०।

**इस्** अव्य० इं कामम् स्यति सो-क्विप् नि० आलोपः । १सन्तापे २कोपे ३दुःखानुभवे च शब्दर०।

**इह** अव्य० इदम्+ह इशादेशः । अस्मिन् काले देशे दिशि वा १इत्यर्थे “एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन” श्रुतिः “इह जन्मनि जन्मान्तरे वा” वे०सा०। “नेह नासत् किञ्चन” “नेहाभिक्रमनाशोऽस्ति” गीता । “तदखिलमिह भूतं भूतनाथा जगत्याः” नैष०।प्रथमार्थे ह । २अनुभूयमाने लोके इहासत्यार्थफलभोग विरागः वेदा० सा० च इहकालः । इह भवः विदितो वा कर्षा० ठञ् । ऐहिक इहभवे इहविदिते च त्रि० । “ऐहिकब्रह्मपूपते-र्दाहादिनिषेधात्” शु०त०रघु०। [ मानकाले ।

**इहकाल** पु०इदम्+प्रथमार्थे ह इह कर्म०। एतत्काले वर्त्त-

**इहतन** त्रि० इहभवं ट्यु,ल् तुट् च । इहभवे स्त्रियां ङीप् ।

**इहत्य** त्रि० इह भवः इह+त्यप् । इहकालादिजाते । स्वार्थे-कन् । इहत्यक तत्रार्थे स्त्रियां नित्यमित्त्वम् । इहत्यिका

**इहद्वितीया** स्त्री मयू०स० । अत्र द्वितीयायाम् ।

**इहपञ्चमी** स्त्री । मयू०स० । अत्रत्यपञ्चम्याम् ।

**इहल** पु० इह भयं लाति ला-क । चेदिदेशे त्रिका० तद्वासिनि ब०व० ।

**इहलोक** पु० इदम्-प्रथमार्थे ह कर्म० । एतल्लोके अनु-

भूयमाने लोके इहलोके भवः ठक् अनुश० द्विपदवृद्धिः ऐहलौकिक तद्भवे त्रि० ।

इहामुत्र अव्य० इह च अमुत्र च द्व०। एतल्लोके परलोके च "इहामुत्रार्थफलभोगविरागः" वेदा०सा० ।

इति वाचस्पत्ये इकारादिवर्णशब्दार्थनिरूपणम् ।

# ई

ई अव्य० ई क्विप् । १ विषादे २ दुःखभावनायाम् ३क्रोधे ४अनुकम्पायाम् ५प्रत्यक्षे ६सन्निधौ ७संबोधने च । मेदिन्यामयं सान्तया पठितः । पृषो०साधुः ।

ई स्त्री अस्य विष्णोः पत्नी ङीप् । लक्ष्म्याम् ।

ई कान्तौ (इच्छायाम्) गतौ व्याप्तौ क्षेपे भोजने सक० गर्भग्रहणे अक० अदादि अनिट् पर० । एति ईतः इयन्ति । ऐत् । ऐषीत् । इयाय इयतुः । एता एष्यति ऐष्यत् । "ईतः । अस्यात्मनेपदित्वमपि "न हि तरणिरुदीते" दिक्पराधीनवृत्तिः" कविक० टी०दुर्गा० ।

ई याचने द्विक० आत्मने० अदादि अनिट् निरु० । ईते इयीत ईताम् । ऐत । ऐष्ट । इये । "आ वोदेवास ईमहे वामं प्रयत्यध्वरे" यजु० ४,५ । "अजस्रं घर्ममीमहे" यजु० २६,६ ।

ई गतौ दिवा०सक० अनिट् आत्म० । ईयते ऐष्ट । ईतः "पक्षैरन्वीतवधूसुखद्युतः" माघः । ईङ्—गतौ मल्लि० ।

ईक्ष दर्शने पर्य्यालोचने च भ्वा० आत्म० सक० सेट् । ईक्षते ईक्षेत ईक्षताम् ऐक्षत ऐक्षिष्ट ईक्षाम्–बभूव आस–चक्रे–ईक्षिता ईक्षिषीष्ट ईक्षिष्यते ऐक्षिष्यत । ईक्षितव्यः ईक्षणीयः ईक्ष्यः ईक्षिता ईक्षितः ईक्षित्वा वीक्ष्य । ईक्षणम् ईक्षा । ईक्षमाणः । कर्म्मणि ईक्ष्यते ईक्ष्यमाणः । भावनिर्देशे ईक्षतिः ईक्षिः । "न धर्मवृद्धेषु वयः समीक्ष्यते" न कामवृत्तिर्वचनीयमीक्षते" कुमा० । "तदैक्षत बहु स्यां प्रजायेय" श्रुतिः । "स प्रजापतिरीक्षां चक्रे" श्रुतिः "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा" गीता । "कथमीक्षामहे सर्वे, दुर्य्योधन! तवेक्षितम्" भा०द०२८८श्लो० । "ऐक्षिष्ट पुंभिः प्रचितान् स गोष्ठान्" भट्टिः वेदे पदव्यत्ययोऽपि "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" कठो० । प्र-एन शुभाशुभालोचने च तद्योगे शुभाशुभसंबन्धिनि चतुर्थी । "राधीक्ष्योर्यस्य विप्रश्नः" पा०। "यदीयः विविधः प्रश्नः क्रियते तस्मिन् चतुर्थ्यर्थः । "कृष्णाय ईक्षते गर्गः पृष्टो गर्गः शुभाशुभं पर्य्यालोचयतीत्यर्थः" सि०कौ०। "ईक्षतेर्नाशब्दम्" शा०सू० । "कारणे ईक्षितृत्वश्रवणात्" भा० ।

अधि+विवेचने अधीक्षते "कुहकचकितोलोकः सत्येऽप्यपायमधीक्षते" हितो० ।

अनु+अनुचिन्तने । "तामन्वीक्षत इयं वै वल्मीकवपेयम्" शत०ब्रा० ६,२,२,५ । "अन्वीक्षमाणोरामस्तु विपश्यं भ्रान्तचेतनम्" रामा० ।

अप–आकाङ्क्षायामनुरोधे अवधिनियमे च । "अपेक्षते प्रत्ययमुत्तमं त्वाम्" कुमा० "अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकारनिरतामणिदीपा इवोत्तमाः" उद्भटः । "किमपेक्ष्य फलम् पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः" किरा० । "द्वित्वादयः परार्थान्ता अपेक्षाबुद्धिजामताः" "अपेक्षाबुद्धिनाशाच्च तेषां नाशः प्रकीर्तितः" भाषा० "शब्दोव्यक्तुकत्वेऽर्थान्तरमपेक्षते" सा०द० । "सापेक्षत्वेऽपि गमकत्वात् समासः" पा०भा० "सा प्रक्रिया या कथमित्यपेक्षा" मीमा० । "नदीशः परिपूर्णोऽपि मित्रोदयमपेक्षते" चन्द्रा० ।

वि+अप+विशेषेणापेक्षायाम् । "न व्यपैक्षत समुत्सुकाः प्रजाः" रघु० । "व्यपेक्षमाणौ सहसीतयागतौ" रामा० "समर्थः पदविधिः" पा०भा० व्यपेक्षाऽव्यपेक्षापक्षद्वयमुपन्यस्तम् । तत्र व्यपेक्षापक्षोमतान्तरेण उपन्यस्तः स च युक्तिविरुद्धत्वात् कैयटविवरणादौ दूषितः "वाक्यवत् सा व्यपेक्षाऽपि वृत्तावपि न हीयते" भर्तृ० । सा च शब्दबोधिपयोगिन्याकाङ्क्षारूपा आकाङ्क्षाशब्दे विवृतिः।

अव+ चाक्षुषदर्शने । "योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः" गीता । "अवेक्षमाणोमहतीं मुहुर्मुहुः" माघ: सम्यक्पर्य्यालोचने च । "यदवोचदवेक्ष्य सुन्दरी" किरा०।

अनु+ अव+पर्य्यालोचने अनुसन्धाने च "सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः" मनुः ।

अभि+अव+भोजनार्थेक्षणे ।"यजमानस्य पशूनभ्यवेक्षते" शत० ब्रा०११,१,५,११, "अभ्यवेक्षते अभ्यवहर्त्तुं पश्यति" भा० ।

परि+अव+समन्तादृर्शने । "ततो वाचस्पतिर्जज्ञे तं मनः पर्य्यवेक्षते भा० आनु०२१अ० ।

प्रति+अव+ प्रतीत्य पर्य्यालोचनया दर्शने । "अथेमां प्रत्यवेक्षमाणो जपति" शत०ब्रा० ५,२,४,२० ।

सम्+अव+सम्यग्दर्शने । "रूपोपमोऽयं समवेक्षते सभाम्" भा० वि० २।८ श्लो०। "यदि दृष्टं बलं सर्वं वयञ्च समवेक्षिताः" भा० आ० २५ अ० । सम्यक्पर्य्यालोचने च "सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा" मनुः ।

आ+सम्यग्दर्शने ।"कथञ्चिदीक्ष्य पाञ्चालीम्" भा० स० २२८०।

उद्+ऊर्द्ध्वदर्शने । "सहस्ररश्मिना साक्षात् सप्रणाममुदीक्षिताः" कुमा० । अपेक्षायाञ्च "त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती" मनुः ।

उप+औदासीन्येन परित्यागे "उपेक्षया स्वत्वहानिः" दाय० भा० टी० "ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत्" भा० व० ११ अ० प्रतिचिकीर्षाभावे "उपेक्षते यः श्लथवल्गिनीर्जटाः" कुमा० "नोपेक्षेत क्षणमपि राजा साहसिकं नरम्" मनुः अपर्य्यालोचने अनुसन्धानाभावे च "गूढेन चरता तत्त्वमुपेक्षितमिदं मया" रामा० ।

सम+उप+सम्यगुपेक्षायाम् । "गत्वा पथं समाधाय यो मोहात् समुपेक्षते" भा० स० १०६० श्लो०।

निस्+निर्+निःशेषेण दर्शने निरयार्थं दर्शने च ।"यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्" गीता ।

परि+तत्त्वानुसन्धाने प्रमाणाद्युपन्यासेन वस्तुतत्त्वावधारणे च "परीक्ष्य लोकान् कर्म्मचितान्" श्रुतिः। न्यायसूत्रवृत्त्यादौ प्रमाणप्रमेयादि परीक्षा बहुशो दर्शिता । सम्यक्विवेचने च ।"नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः। सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते" मनुः । लक्षणादिमत्त्वेन ज्ञाने च "अश्वविद्याविदश्चैव कृता विप्राश्च तद्विदः । मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये" भा० आश्व० ८० २७ श्लो०।"बलात् परीक्षितः पुंस्त्वे" या० स्मृ०। "सर्व्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः" हितो० भक्तिमत्त्वादिना ज्ञाने च ।"भावं मयोद्भाव्य परीक्षितोऽसि" रघुः । विवादे सत्यत्वासत्यत्वादिसंशयनिरासाय स्वपक्षप्रामाण्यव्यवस्थापनाय शपथकरणे तुलापरीक्षादि । परीक्षाशब्दे विवृतिः ।

प्र+प्रकर्षेण दर्शने "प्रेक्षन्ते सर्व्वभूतानि बहुशः पश्य सन्धिषु" भा० व० ११६५७ । "यत् किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी" भा० व० मनुः। "उदायुधानापततस्तान् दृप्तान् प्रेक्ष्य राघवः" रघुः । "पुनः प्रेक्ष्य च शूलिनम्" कुमा०।

अभि+प्र+आभिमुख्येन दर्शने ।"प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत्" भा० व० १६३ अ० । "दह्यमानमभिप्रेक्ष्य द्विदषाः संप्रदद्रुवुः" भा० व० ८८ अ० ।

उत्+प्र+उत्प्रेक्षायां किञ्चिद्धर्म्मसाधर्म्येणान्यस्यान्यरूपताकल्पने उद्भावने च । "उत्प्रेक्षामोऽवयं तावन्मतिमन्तं विभीषणम्" रामा०।"तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसान्" अमरुश०। "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" सा० द०।'अलङ्कारशब्दे ३८५ पृष्ठे विवृतिः।

सम्+प्र+सम्यग्दर्शने । "संप्रेक्ष्य नासिकाग्रं स्वम्" गीता "योगक्षेमं च संप्रेक्ष्य वणिजोदापयेत् करम्" मनुः ।

अभि+सम्+प्र+आभिमुख्येन सम्यग्दर्शने ।"अभिसंप्रेक्ष्य भर्त्तारं क्रुद्धा वचनमब्रवीत्" भा० आदि० प० २०११ ।

प्रति+अनुरोधे अपेक्षायां पूजने च ।"प्रतीक्ष्यं तत् प्रतीक्ष्यायै पितृस्वस्रे प्रतिश्रुतम्" माघः "प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते" भा० आ० २०२२ । नाभिनन्देत मरणं नाभिनन्देत जीवितम् । कालमेव प्रतीक्षेत" मनुः ।"संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः" मनुः ।

सम्+प्रति+सम्यक्प्रतीक्षायाम् "मुहूर्त्तं संप्रतीक्षस्व" भा० आ० २८०२ । "एकवेणीधरा हि त्वां नगरी संप्रतीक्षते" रामा० ।

वि+विशेषेण दर्शने ।"वीक्षन्ते त्वां विस्मिताश्चैव सर्वे" गीता । "सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्य्ययम्" मनुः । "जङ्घीकृतस्त्र्यम्बकवीक्षणेन" रघुः ।

अनु+वि+सन्ततवीक्षणे पश्चाद्वीक्षणे च । "तस्मादुदिशोऽनुवीक्षमाणोऽजपति" शत० ब्रा० ५,२,१,२५ ।

अभि+वि+आभिमुख्येन वीक्षणे।"नचैनं भुवि शक्नोति कश्चिदभिवीक्षितुम्" मनुः ।

उद्+वि+ऊर्द्ध्ववीक्षणे।"उद्वीक्षमाणा भर्त्तारं मुखेन परिशुष्यता" रामा० "पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमच्युत" भा० अनु० २ अ० "उद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः" रघुः ।

सम्+उद्+वि+समन्तादुद्वीक्षणे "निपेतुर्भूमिपाः सर्वे समुद्वीक्ष्य परस्परम्" रामा० ।

प्रति+वि+प्रतिदर्शने वस्तुकर्त्तृकं स्वदर्शनं तस्य स्वेन दर्शने । "ततः स राजा प्रतिवीक्ष्य ताः स्त्रियः" रामा० ।

सम्+वि+सम्यग्वीक्षणे ।

सम्+सम्यग्दर्शने पर्य्यालोच्य दर्शने । "पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात्" शत० ब्रा० ११,५,४,१४ । "समीक्ष्य बहुधा चरेत्" मनुः । "अथपश्चात्सुहृत्तेन वीक्षितेन स नागराट् । समैक्षत गुडाकेशम्" भा० आश्व० २२२१ श्लो०।"तान् समीक्ष्य स कौन्तेयः सर्व्वान् बन्धूनवस्थितान्" गीता "उचितमेवैतत्समीक्ष्यकमतान्मा-

रिच:" हितो॰ "समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्" मनुः ।

प्र+सम्+प्रकर्षेण सम्यगीक्षणे । "सह सर्व्वाः समुत्पन्नाः प्रसमीक्ष्यापदोऽभयम्" मनुः "कुलं ख्यातिञ्च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य च" भा॰ आ॰ ४२७४ श्लो॰ ।

ईक्षण न॰ ईक्ष–भावे ल्युट् । १ दर्शने । करणे ल्युट् । २ नेत्रे । तत्र दर्शने "स्त्रियः कार्य्येक्षणे नृणाम्" मनुः नेत्रे । "अभिमुखे मयि संहृतमीक्षणम्" शकु॰ "सदा संरक्तनयनौ सदा चानिमिषेक्षणौ" भा॰ आ॰ २३ अ॰ । "इत्यद्रिशोभा प्रहितेक्षणेन" रघुः ।

ईक्षणिक त्रि॰ ईक्षणं हस्तरेखादीक्षणेन शुभाशुभदर्शनं शिल्पमस्य ठन् । शुभाशुभफलकथनोपजीविनि सामुद्रिके । स्त्रियां टाप् । "मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह" मनुः"

ईक्षति पु॰ ईक्ष–धात्वर्थनिर्देशे श्तिप् । ईक्षणे । "ईक्षतेर्नाशब्दम्" शा॰सू॰ ।

ईक्षा स्त्री ईक्ष–भावे अ टाप् । ईक्षणे १दर्शने २पर्य्यालोचने च "स ईक्षां चक्रे" श्रुतिः "श्रवणादनु ईक्षा अन्वीक्षा" । न्यायसू॰ वृत्तिः । आन्वीक्षिकीशब्दे विवृतिः ।

ईक्षेण्य त्रि॰ ईक्ष–बा॰ एन्य । ईक्षणीये दृश्ये "ईक्षेण्यासोऽह्योऽन:" ऋ॰ ८,७७,२ । "ईक्षेण्यासः ईक्षणीयाः" भा॰ ।

ईख गतौ इदित् भ्वा॰पर॰सक॰सेट् । ईङ्खति ऐङ्खीत् । ईङ्खाम् बभूव आस चकार । ईङ्खिता ईङ्खिष्यति ऐङ्खिष्यत् । ईङ्खितः "सन्त्रासमवितः शक्रः प्रैङ्खत्र क्षुभिता क्षितिः" भट्टिः "मध्ये समुद्र आ रजसः पार ईङ्खितम्" १०,१४२,५ । णिचि ईङ्खयति । "य ईङ्खयन्ति पर्वतांस्तिरः समुद्रमर्णवम्" ऋ॰१,१६,७ । "ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते" ऋ॰ १०,१५३,१ । "ईङ्खयन् परिजनो पविद्धया" रघुः ।

ईग गतौ इदित् ईखिवत् । ईङ्गति ऐङ्गीत् ईङ्गते इत्येके ।

ईज गतौ निन्दायाञ्च भ्वा॰आत्म॰सक॰सेट् । ईजते ऐजत ऐजिष्ट ईजाम्–बभूव आस चक्रे । ईजिता ईजिष्यते ऐजिष्यत ।

ईञ्ज गतौ निन्दने च इदित् भ्वा॰आत्म॰सक॰सेट् । ईञ्जते ऐञ्जिष्ट । ईञ्जाम्–बभूव आस चक्रे । ईञ्जितम् । अयम् अपाणिनीयः कविकल्पद्रुमे तु पठितः ।

ईजान त्रि॰ यज–ताच्छील्ये कानच् द्वित्वम् । यजमाने यागशीले । "ततोमहद्भिः क्रतुभिरीजानो भरतस्तदा" भा॰ आ॰ ६४ अ॰ । "यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्" कठो॰ ।

ईड स्तुतौ अदा॰ आत्म॰ सक॰ सेट् । ईट्टे ईडिषे ईड्ढ्वे ऐडिष्ट ईडाम्–बभूव आस चक्रे । ईडिता ईडिष्यते ऐडिष्यत । ईड्यः ईडितः ईडनम् ईडा । "अग्निमीडे पुरोहितम्" ऋ॰ १,१,१ । डकारं ळकारतया बह्वृचाः पठन्ति । "अज्मध्यस्थडकारञ्च ळकारं बह्वृचा जगुः । अज्मध्यस्थढकारञ्च ळ्हकारं तु यथाक्रममिति" ऋ॰भा॰ वाक्योक्तेः । वङ्गदेशसम्प्रदायस्तु तयोः अज्मध्यस्थयोः ड़ढ़कारतया पाठः इति भेदः । यास्कस्तु "ईडिरध्येषणाकर्मा पूजाकर्मा चेत्याह" "गन्धर्वाः सुरसङ्घाश्च वस्तवश्च महर्षयः । अन्तरीक्षं गतं देवं गीर्भिरग्र्याभिरीडिरे" रामा॰ "नेडिषे यदि काकुत्स्थम्" भट्टिः "ईळानो देवा इष्टानाम्" ऋ॰ १०,६६,१४ । "भवन्तमीड्यं भवतः पितेव" । "शालीनतामव्रजदीड्यमानः" इति च रघुः । "अग्निः पूर्व्वेभिर्ऋषिभिरीड्योनूतनैरुत" ऋ॰ १,१,२ । णिचि ईडयति ते ऐडिडत् त ।

ईडा स्त्री ईड–भावे अ स्त्रीत्वात् टाप् । स्तुतौ ।

ईडित त्रि॰ ईड–क्त । स्तुते यस्य स्तवः कृतस्तस्मिन् ।

ईडेन्य त्रि॰ ईड–बा॰एन्य । १स्तवनीये २पूजनीये च । "ईडेन्यो नमस्यस्तिरस्तमांसि दर्शतः" ऋ॰ १,१४६,७ ।

ईड्मत् त्रि॰ ईट् अस्त्यस्य मतुप् स्त्रियां ङीप् । मनाद्ये ईड्वति । ईड्वन्तमाचष्टे णिच् मतोर्लुक् । ईडयति ।

ईति पु॰ ईयते ई–क्तिच् । १डिम्बे, २उत्पादिते त्रि॰ ३प्रवासे, "अतिवृष्टिरनावृष्टिः शलभाः मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" इत्युक्ते ४कृषेरुपद्रवभेदे च स्त्री । "निरीतिभावं गमितेऽतिवृष्टयः" नैष॰ "निरातङ्का निरीतयः" रघुः "ईतयो व्याधयस्तन्द्रीर्दोषाः क्रोधादयस्तथा । उपद्रवाश्च वर्त्तन्ते आधयः क्षुद्भयं तथा" भा॰ व॰ १४९ अ॰ ।

ईदृक्ष त्रि॰ अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि क्स इशादेशः दीर्घः । ईदृशे एतद्रूपदर्शने एवंविधे । "ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः" वाजसने॰ १७,८ ।

ईदृश् त्रि॰ अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि–क्विन् इशादेशः दीर्घः । १एतादृशदर्शनवति एवंविधे "ईदृङ् चान्यादृङ् च सदृङ् च प्रति सदृङ्" यजु॰ १७,८१ । "इमं पुरोडाशं स्त्वहोत्या पश्यतीति ईदृङ् वेददी॰ व्याख्यानात् २तदर्थेऽपि । तस्य भावः त्व ईदृक्त्वं तद्भावे न॰ तल् । ईदृक्ता तस्य भावे स्त्री । "विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा" रघुः ।

**ईदृश** त्रि० अयमिव पश्यति इदम्+दृश–कर्मकर्त्तरि कञ् इदम ईशः दीर्घः । एवंविधदर्शनवति । "ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्" चन्द्रा० । "यच्चान्यत् किञ्चिदीदृशम्" । "न हीदृशमनायुष्यं लोके किञ्चन विद्यते" प्रोक्तेह चेदृशा विभागधर्मे ब्रह्मवादिभिः" मनुः । "तानो- न्हाण ईदृशे" ऋ० १,१७,१ । "ईदृशे पदं विधे" भा० । स्त्रियां ङीप् "सर्वेषामीदृशी रसाभिव्यक्तिः" सा० द० । मुग्धबोधकारस्तु अयमिव दृश्यते इति विग्रहं कृत्वादौ चकार तच्च "कर्त्तरि क्विदिति" पा० अनुशासनविरोधा- दुपेक्ष्यम् ।

**ईप्सा** स्त्री आप्तुमिच्छा आप–सन्–अ । १आप्तुमिच्छायाम् २इच्छायाञ्च । "ईप्सैषा पिशुनं गुह्यं ममत्वं परिपालनम्" । भा० आश्व० २७अ० ।

**ईप्सित** त्रि० आप–सन् क्त । १आप्तुमिष्टे क्रियाफलेन आप्तु- मिष्टे "कर्त्तुरीप्सिततमं कर्म" पा० । "निर्वर्त्त्यञ्च विकार्यं च प्राप्यञ्चेति त्रिधा मतम् । तच्चेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम्" भर्त्तृ० "तमव्यङ्ग्यं क्रियोप्सितमात्रे मा भूत्" सि० कौ० । २इच्छाविषये च ।

**ईप्सु** त्रि० आप्तुमिच्छुः । आप+सन्—उ । आप्तुमिच्छौ । "मन्दःकवियशःप्रेप्सुरिति" रघुः पाठान्तरं "शौचेप्सुः सर्वदाचामेत्" मनुः । "धर्मेप्सवस्तु धर्मज्ञाः" मनुः । "सौरभ्यमीप्सुरिव ते मुखमारुतस्य" रघुः ।

**ईम्** अव्य० ई–वा मुक् । १अवधारणार्थे । "एमेनमङ्गधरन्नता" यजु० ३३,६० । "आ ईम् एतौ निपातौ अवधार्थौ" वेददी० २इदमर्थे च । "यत ईमर्यमो अप्रशस्तान्" ऋ० १,१६७, ८ । "इह ब्रवीतु य ईमङ्ग वेदस्य" ऋ० १,१६४,७ । "सोमेभिरीं पृणता भोजमिन्द्रम्" ऋ० २,१४,१० । "ईमिमम्" इति भा० ।

**ईय** त्रि० ई–बा० क्यप् । व्याप्ये । "आयद्दा ईयचक्षसा" ऋ० ५,६७,६ "ईयचक्षसा व्याप्तदर्शनौ" भा० ।

**ईयिवस्** त्रि० इण्–क्वसु । "गतवति । क ईयिवान् सदम्" मुग्धबो० "प्रतीयुषा पूर्द्दशे जनेन" भट्टिः । "उपेयुषो मोक्षपदं मनस्विनः" माघः । "उपेयिवानित्यादि" पा० सू० उपेत्युपलक्षणात् अन्यत्रापि क्वसुः ।

**ईर** गतौ प्रेरणे च चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । ईरयति ते-ईरति ऐरिरत्-त-ऐरीत् । ईरयाम्-ईराम् वा बभूव आस चकार । ईरयिता । ईरिता ईरयिष्यति- ईरिष्यति । ईरणम् । ईरितः ईरयन्-ईरन् । ईरः ईर्य्यः माघः । "आपः समुद्रमैरयन्" ऋ० ८,६,१३ । "अंशो- रूर्म्मिमीरय" ऋ० ९,७९,१४ । "यदस्य शुष्ममैरयन्" ऋ० २,१७,२ "ऐरिरच्च महाक्रमम्" भट्टिः कथने च । "अथ वाचमीरयति" शत० ब्रा० "ब्रह्मा इदन्तरं नाम ईरयति भगान्तिके भा० आनु० १४अ० । विरोध- वाक्यञ्च यदेर्य्यमाणम्" भा० व० १२३ अ० । "दमयन्त्या यदीरितम्" भा० व० २७४२ । "हितं न गृह्णन्ति सुहृद्भि- रीरितम्" रामा० "इतीरिता पत्ररथेन तेन" इतीरयित्वा विरचय्य वाङ्मयम्" नैष० ।

उद् उत्क्षेपणे । "उदीरयामासुःसलीलमश्वान्" रघुः । उच्चारणे कथने च "यद्योकोऽयमुदीरयिष्यति" रघुः । "उदीरयामासुरिवोन्मदानाम्" रघुः ।

अभि+उद्+आभिमुख्येनोच्चारिते । "आलोकलिङ्गलिङ्गेति वाचलिलोऽभ्युदैरयन्" भा० अ० २१७ ।

सम्+उद्+सम्यगुच्चारे समुत्तोलिते च । पांशवोऽपि कुरु- क्षेत्रे वायुना समुदीरिताः" भा० व० ५०७० ।

प्र+प्रेरणे । प्रेरयति । "समीरणः प्रेरयिता भवेति" कुमा० । "अपः प्रेरय सागरस्य बुध्नात्" ऋ० १०,८९,४ । "किमहिम्न कामदेन मत्सकाशमृषयः प्रेरिताः स्युः" शकु० "या- त्रायै प्रेरयामास तं शक्तेः प्रथमं शरत्" रघुः ।

सम्+ सम्यक्प्रेरणे समुच्चारणे सम्यग्गतौ च "समीरणः । "समीरयाञ्चकाराथ राक्षसस्य कपिः शिलाम्" भट्टिः । "ताभिराभरणैः मङ्गलाशिताभिः समीरितः" भा० व० १२।८अ० ।

**ईर** अदा० आत्म० सक० सेट् । ईर्त्ते ईराते ईरते ऐरत ऐरिष्ट ईराम् बभूव आस–चक्रे ईरिष्यति "इषा मधुमन्त ईरते" ऋ० ५,६३,१४ "इमदीर्त्ते पयो गोः" ऋ० ९, ९१,२ । "अच्छे राजान ईरताम्" ऋ० ४,८,७ । वायुमच्युतादिवोदहिरीर्त्ते" तैत्ति० । अस्मात् निष्ठाया नेट् । "न हि रागानुदीर्णानाम्" भा० शा० ५१२८ श्लो० । "उदीर्णरागप्रतिरोधकम् सङ्कः" माघः । अस्यैव पक्षे चुरादित्वं तेन न तस्य आदित्वमित्येके ।

**ईरण** न० ईर–भावे ल्युट् । १प्रेरणे २गतौ च । युच् । ईरणा तत्रैव स्त्री । नन्द्या० ल्यु । ३प्रेरके त्रि० "समी- रणः प्रेरयिता भवेति" कुमा० ।

**ईरामा** स्त्री ईर्ंक्षोभया रम्यतेऽत्र रम–आधारे घञ् ईत० । नदीभेदे । "ईरामाञ्च महानदीम्" भा० व० १८८अ० ।

**ईरिण** त्रि० ईर–इनन् । ऊषरभूमौ । मेदि० "ततश्चदीरिणं

त्मानं सहस्रसंवत्सरिकम्" भा० अनु० ७२५७श्लो० । "शयितस्याश्रमपदं शून्यमासीन्महात्मनः । मुहूर्त्तेनैव निःशब्दमासीदीरिणसन्निभम्" रामा० ।

ईरिन् त्रि० ईर-णिनि । १प्रेरके २गन्तरि च स्त्रियां ङीप् । स्वशब्दादस्य वृद्धिरेका० स्वैरी स्वैरिणी । "रे रे स्वैरिणि ! निर्विचारकविते मास्मत् प्रकाशीभव" चन्द्रा० ३राजभेदे पु० । "धृतराष्ट्राश्च शतमशीतिर्जनमेजयाः । शतञ्च ब्रह्मदत्तानामीरिणाञ्च शतं तथा" भा० स० ८३० श्लो० यमसभासद्वर्णने

ईर्क्ष्य ईर्ष्यायां परवृद्ध्यसहिष्णुतायाम् भ्वा० पर० सक० सेट् । ईर्क्ष्यति ऐर्क्ष्यीत् । ईर्क्ष्याम् बभूव आस चकार । ईर्क्ष्यिता ईर्क्ष्यात् ईर्क्ष्यिष्यति ऐर्क्ष्यिष्यत् । ईर्क्ष्या ।

ईर्त्सा स्त्री ऋध-सन्-अ । वर्द्धितुमिच्छायाम् ।

ईर्त्सु त्रि० ऋध-सन्-उ । वर्द्धितुमिच्छौ ।

ईर्म न० ईर-मक् । व्रणे । ह्रस्वादिरयमिति बहवः प्रमो० ह्रस्वः । अस्य पुंस्त्वमपि । "तदाहुरीर्म इव वा एषां होत्रा यदच्छावाकाः" ता० ब्रा० ४,२,१० । "ईर्म इव वा एषा होत्राणां यदच्छावाकः" "ईर्म इव तुष्टुवानाः" इति शाखा० "तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मौ यथास्य प्रतीची दिक् पुच्छम्" शत० ब्रा० १०,६,५,०,२। तेन 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरे ऽस्त्रियामिति संदंशपाठादुभयत्रान्वेतीति बोध्यम् । दक्षिणशब्दात् लुब्धयोगेन क्षतप्रत्यार्थे अकारात् अनिच् दक्षिणेर्मा व्याधेन क्षतव्रणे मृगे । "मृगयुमिव मृगोऽथ दक्षिणेर्मा" भट्टिः । २प्रेरिते त्रि० "ईर्मान्तासः सिलिकमध्यमानः" ऋ० १,२०३,१० । ईर्मान्तासः ईर्मा ईरिताः प्रेरिता अन्ता येषां ते" भा० ।

ईर्य्या स्त्री इर-ईर्ष्यायां कण्ड्वा० यक् दोषधत्वात् दीर्घः भावे अ स्त्रीत्वात् टाप् । १ईर्ष्यायाम् । ईर्य्यते ज्ञायते परात्माऽनया ईर-गतौ ण्यत् । २भिक्षुचर्य्यायाम् सा च ध्यानमौनादिकरूपा । "चर्य्या चेर्य्यापथे स्थितिः" अमरः । "कल्याणा पुनरियं प्रव्रजितस्येर्य्या" ।

ईर्य्यापथ पु० ईर्य्यारूपः पन्था कर्म्मधा० अच् समा० । ध्यानमौनादिरूपे परिव्राजकस्य ज्ञानसाधनोपायभेदे ।

ईर्वारु पुंस्त्री० ईर-भावे सम्प० क्विप् ईरमीरणं वृणोति वारयति वा उण् । कर्कट्याम् शब्दर० ।

ईर्ष्य परगुणासहने भ्वा० पर० अक० सेट् । ईर्ष्यति ऐर्ष्यीत् । ईर्ष्याम्-बभूव आस चकार । ईर्ष्यिता ईर्ष्यिष्यति ऐर्ष्यिष्यत् । णिचि ईर्ष्ययति ते त ऐर्षियत् ऐर्षिष्यत् त । सनि ईर्षिषिषति । ईर्ष्या ईर्ष्यितः । "पतुर्वाह्निकमीर्ष्यितं प्रसवनं नाशस्य हेतुः स्त्रियाः" हितो० । ईर्ष्यितव्यम् । "तस्मात्त्रिषु दाराणां क्षमत्वेषु नेर्ष्यितव्यमिति" प्रबो० ।

ईर्ष्यक त्रि० ईर्ष्य-ण्वुल् । १ईर्ष्याकारिणि । "दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते । ईर्ष्यकः स तु विज्ञेयः" इति सुश्रुतोक्ते २क्लीवभेदे पु० । "आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा । सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः" सुश्रु० । क्लीवशब्दे विवृतिः ।

ईर्ष्या स्त्री ईर्ष्य-भावे अ स्त्रीत्वात् टाप् । अक्षमायाम् परवृद्ध्यसहिष्णुतायाम् । "पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" मनुः एतेषाञ्च क्रोधप्रभवत्वात् क्रोधजत्वम् अतएव "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" पा० "द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्तेऽतो विशेषणं सामान्येन यं प्रतिकोपः" सि०कौ० । "ईर्ष्याशोकसमायेता मोहमात्सर्य्यवर्ज्जिताः" भा० व० २६० "तस्येर्ष्ययाक्षममन्युश्च क्षयमानोऽब्रवीदिदम्" भा० अनु० २अ० । अयं शब्दो निर्यकार इति केचित् "ईर्ष्यतेस्तृतीयस्येति" वार्त्ति० उक्तेः कविकल्पद्रुमे, पा० गणपाठे च यान्ततया पाठात् निर्यकारपाठे मूलं मृग्यम् । तेन सयकार एव साधीयान् ।

ईर्ष्यालु त्रि० ईर्ष्यां लाति ला-बा० डु । ईर्ष्यायुक्ते ।

ईर्ष्यु त्रि० ईर्ष्य-उण् । अक्षमाशीले "ईर्ष्युर्गन्धर्वराजो वै जलक्रीडासमागतः" भा० आ० १७० अ० । "पर्य्यशङ्कत तामीर्ष्युः सुग्रीवगतमानसाम्" भा० २७९ अ० ।

ईला स्त्री ईड-क डस्य लः । १पृथिव्यां, २वाचि, ३गवि, च । अस्य ह्रस्वादित्वमेवेति बहवोमन्यन्ते शब्दार्थचिन्तामणौ तु दीर्घपाठः । तन्मूलं मृग्यम् ।

ईलि(ली) स्त्री ईर्य्यते ईर-इन् रस्य लः वा ङीप् । १करपालिकायाम् (काटारी) २ह्रस्वगदाकारे हस्तदण्डे च । भरतः ।

ईलित त्रि० ईड-क्त डस्य लः । स्तुते अमरः ।

ईलिन पु० ईड-इनन् डस्य लः । चन्द्रवंश्ये नृपभेदे । "ईलिनं तु सुतं तंसुर्जनयामास वीर्य्यवान्" "ईलिनोजनयामास दुष्मन्तप्रभृतीन् नृपान्" भा० आ० ९३अ० । "तंसुं सरस्वती पुत्रं मतिनारादजीजनत् । ईलिनं जनयामास कालिङ्ग्यां तंसुरात्मजम्" । "ईलिनस्तु रथन्तर्य्यां दुष्मन्ताद्यान् पञ्चपुत्रानजीजनत्" भा० आ० ९५अ० ।

ईवत् त्रि० ई-गतौ भावे क्विप् अस्त्यर्थे मतुप् वेदे नि० मस्य वः । गतिमति "य ईवते ब्रह्मणे गातुमैरत्" ऋ०

४,४,६। "कस्य शवीर ईशतोऽग्नेरीशीत मर्त्यः" ऋ० ४,१५,५ "मन्तू द्विमा गच्छथ ईशतो द्यून्" ऋ०४,४१,२"माय वसुष्य ईशदानमोवः" ऋ०५,४८,५ "अनाय चिद्य ईशत उ लोकं चकार" ऋ० ६,६२,२। "उपश्रोताव ईशतोवचांसि" ऋ० ७,२३,१। लोके तु ईशानिष्येव स्त्रियां ङीप्।

ईश ऐश्वर्य्ये अदा०आत्म० सक०सेट्। ईष्टे, ईशिषे ईशिध्वे ऐशिष्ट। ईशाम्-बभूव आस चक्रे। ईशिता ईशिषीष्ट ईशिष्यते ऐशिष्यत। ईशनम् ईशिता। ईशितः। ईशा। ईशित्वा। "धनानामीशते यत्राः"। "यदीशिषे त्वं न मयि-स्थिते च" भट्टिः। "पुरुषोवै पशूनामैन्द्रस्तस्मात् पशूना-मीष्टे" शत० ब्रा० ४,५,५,७। एतद्योगे कर्म्मणः सम्ब-न्धत्वविवक्षायां षष्ठी। वेदे तु क्वचित् षिचि न षत्वम्। "सहस्र एषां पितरश्च नेशिरे" ऋ० १०,५६,७। ता-च्छील्ये चानश् ईशानः।

ईश् त्रि० ईश-क्विप्। ईश्वरे "ईशावास्यमिदं सर्वम्" यजु० ४०,१, "नमो देवेभ्यो नम ईश एषां कृतं चिदेनोनमसा विवासे" ऋ०६,५१,८। "स देवानामीशां पर्य्येत् स ईशा-नोऽभवत्" अथ० १५,१,५। "सह एवेशामारभ्यानां पशूनामवरुन्धे" शत० ब्रा०१२,७,२,८।

ईश पु०ईश-क। १ईश्वरे"वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योप-तस्थिरे" कुमा०"वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्र-मे" माधवः "इत्थं क्षितीशेन वशिष्ठधेनुः" रघुः २परमे-श्वरे पु०। "लोकेश! चैतन्यमयादिदेव!" प्रातः कृत्ये पुरा०। "ईशस्यैव निवेशितः पदयुगे भङ्गायमानं समत्" न्यायचर्च्चेयमीशस्य मननव्यपदेशभाक्" कुसुमा०। ३महादेवे। "ब्रह्माच्युतेशार्कवनस्पतीनाम्" "समन्ततो-होमचतुष्टयं स्यात्" हेमा० मत्स्यपु०। कल० तु० "ब्रह्माच्युतानवनस्पतीनामिति"पाठः। रुद्रसंख्यातुल्यसं-ख्याकत्वात् ४एकादशसंख्यायाम्। "तारोमाया वर्म्मबीज-मह्रिरीशस्वरान्विता" तन्त्रसारे त्वरितामन्त्रोद्धारे ईशस्वर एकादशस्वर एकार इति कृष्णा० ५तद्वाच्ये आर्द्रानक्षत्रे च। "नेशेज्याग्निविशाखवाव्यहिमघावाम्र्यैः" राजमा०।

ईशकोण पु० ईशस्वामिकः कोणः। पूर्व्वोत्तरायां विदिशि ईशदिगादयोऽप्यत्र। तत्कोणस्य ईशाधिदैवत्वात् तथात्वम्। "इन्द्रोवह्निः पितृपतिर्नैरृतोवरुणोमरुत्। कुबेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात्" इत्यमरोक्तेस्तथात्वम्। इहस्य तेजस्दीशत्वं यात्राद्यर्थतया ज्योति०उक्तम्। "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च पूर्व्वादिकदिगीश्वरा" इति निरूप्य "दिगीशाद्ये शुभा यात्रा पृष्ठाद्ये मरणं ध्रुवमिति" तद्विपरीतदिशि यात्रा निषिद्धा।

ईशन न०ईश-भावे ल्युट्। ऐश्वर्य्ये "य ईशेऽस्य जगतोनित्य-मेव नान्योहेतुर्विद्यत ईशनाय" श्वेताश्व० उ०। ईशे ईष्टे इत्यर्थः। "सर्पिष ईशनमत्र न समासः" सि०कौ०।

ईशपुरी स्त्री ६त०। काश्याम् ईशनगर्य्यादयोऽप्यत्र।

ईशबल न० ईशकृतं बलम्। पाशुपतमतसिद्धे पाशुपतानां द्वितीये पादे "तासां माहेश्वरी शक्तिः सर्व्वानुग्राहिका शिवा। धर्मानुवर्त्तनादेव पाश इत्युपचर्य्यते" इत्युक्तबले पाशुपतशब्दे विवृतिः।

ईशसख पु० ६त० टच्समा०। कुबेरे। बहु० न टच्। ईशसखा इत्येव। ईशमित्रादयोऽप्यत्र। ईशेन यथा ऽस्य सख्यं तथा भारते वर्णितं यथा। "पिता-महो रावणस्य साक्षाद्देवः प्रजापतिः। स्वयम्भूः सर्व-लोकानां प्रभुः स्रष्टा महातपाः। पुलस्त्यो नाम तस्या-सीन्मानसोदयितः सुतः। तस्य वैश्रवणो नाम गवि पुत्रो-ऽभवत् प्रभुः। पितरं स समुत्सृज्य पितामहमुपस्थितः। तस्य कोपात् पिता राजन्! ससर्ज्जात्मानमात्मना। स जज्ञे विश्रवा नाम तस्यात्मार्द्धेन वै द्विजः। प्रतीकाराय स-क्रोधस्ततो वैश्रवणस्य वै। पितामहस्तु प्रीतात्मा ददौ वै-श्रवणस्य ह। अमरत्वं धनेशत्वं लोकपालत्वमेव च। ईशानेन तथा सख्यं पुत्रञ्च नलकूवरम्। राजधानीं नि-वेशञ्च लङ्कां रक्षोगणान्विताम्। विमानं पुष्पकं नाम कामगञ्च ददौ प्रभुः। यक्षाणामाधिपत्यञ्च राजराजत्वमेव च" भा०व० २७३अ०।

ईशा स्त्री ईश-अ। ऐश्वर्य्ये। "ईशायै मन्युं राजानं बर्हिषि-दधुरिन्द्रियम्" यजु० २१,५७। "ईशायै ईशनमीशा" वेददी०ईष्टे ईश-क। २ऐश्वर्य्यान्वितायां स्त्रियां ३दुर्गायां च। ईशस्य पत्नीत्यर्थे तु ङीप्। ईशी ईशपत्न्यां दुर्गायाम्।

ईशान त्रि० ईश-ताच्छील्ये चानश्। १ऐश्वर्य्यशीले २रुद्रमू-र्त्तिभेदे पु०। "तमीशानं जगतस्तस्थुषस्पतिम्" ऋ० १,८९,५। "ईशानसंदर्शनलालसानाम्" कुमा० ३तद्देवताके आर्द्रान-क्षत्रे तत्तुल्यसंख्यायाम् ४एकादशसंख्यायाम्। शिवस्य अ-ष्टसु मूर्त्तिषु सूर्य्यमूर्त्तिरूपतया प्रसिद्धे ५शिवमूर्त्तिभेदे अष्टौ मूर्त्तीरभिधाय "मूर्त्तयोऽष्टौ शिवस्यैताः पूर्व्वादि-क्रमयोगतः। आग्नेय्याः प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत्" ति०त० भविष्य पु०।

ईशानादिपञ्चमूर्ति स्त्री ब०स० ईशानादयः पञ्च मूर्त्तयः । महादेवस्य “ईशानतत्पुरुषाघोरवामदेवसद्योजातरूपेषु पञ्चसु रूपेषु तन्त्रासप्रयोगस्तन्त्रसारे शिवप्रकरणे दृश्यः ।

ईशावास्य पु० ईशा वास्यम् इति पदमस्त्यस्य अच् । “ईशावास्यमिदं सर्वमित्यादिके यजुर्वेदस्य४० अध्यायरूपे ब्रह्मविद्याप्रतिपादके उपनिषद्रूपे ग्रन्थे । “यजुर्वेदोपनिषद्गणनायाम् “ईशावास्य, बृहदारण्यक, जाबाल, हंस, परमहंसेत्यादि मुक्ति० उ० । तत्रोत्तरलोपे ईशापि । “ईशा केन कठप्रश्नः मुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा” मुक्ति०उ० । इयमेवेशावास्योपनिषदित्युच्यते ।

ईशित्व त्रि० ईष्टे ईश-तृच् स्त्रियां ङीप् । ईश्वरे । “न तस्य कश्चित् पतिरस्ति लोके न चेशिता” श्वेता०उ० ।

ईशितव्य त्रि० ईश-तव्य ।१अधीने यं प्रति ऐश्वर्य्यं क्रियते तस्मिन् । भावे तव्य । २ऐश्वर्य्ये न० ।

ईशिता स्त्री ईशिनो भावः तल् । अणिमाद्यष्टैश्वर्य्यमध्ये सर्वेषां स्वामित्वरूपे १ऐश्वर्य्ये । त्व ईशित्वमप्यत्र न० । “ईशित्वञ्च वशित्वञ्च तथा कामावसायिता” सां०कौ० । “ईशित्वञ्च वशित्वञ्च लघुत्वं मनसश्च ते”भा०आ०२८अ० “येन स्थावरादिसर्वभूतानि वशीभूतानि भवन्ति तादृशे योगजन्ये २धर्मभेदे च । ऐश्वर्य्यशब्दे विवृतिः ।

ईशिन् त्रि०ईष्टे ईश-णिनि । १ईश्वरे २प्रभौ ३पत्यौ । “शं-सेद्द्व्याप्रदग्शाय दशेशो विंशतीशिनम्” मनुः स्त्रियां ङीप् । “सर्वाश्चैवानीशिनीभिः” श्वेता० उ० ।

ईश्वर पु०ईश-वरच् । १महादेवे २कन्दर्पे पातञ्जलोक्ते; क्लेश-जन्मकर्मविपाकाशयैरपरामृष्टे पुरुषविशेषे ३चैतन्यात्मनि, “ईश एवाहमत्यर्थं न च मामीशते परे । ददामि च सदैश्वर्य्यमीश्वरस्तेन कीर्त्त्यते” इत्युक्तलक्षणे ४परमेश्वरे, “ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति” गीता प्रभवादिमध्ये ५एकादशे वत्सरे च तत्फलम् ।“सुभिक्षं क्षेमारोग्यं कार्पासस्य महार्घता । श्रवणं मधु गव्यञ्च ईश्वरे दुर्लभं प्रिये !” ज्योति० ६आढ्ये, ७स्वामिनि च त्रि०स्त्रीत्वे गौरा०ङीष् । “ईश्वरीं सर्वभूतानामिति” श्रीसूक्तम् ।

आर्हता नित्येश्वरं न मन्यन्ते तच्च आर्हतशब्दे ३८२पृष्ठे दर्शितम् एवं सांख्यैरपि “ईश्वरासिद्धेः” सा०सू० । “नित्येश्वरो निषिद्धः ईदृशेश्वरसिद्धिः सिद्धा” “उपासासिद्ध्यर्थं प्रयत्नमात्रम्” सा० सूत्राभ्यां प्रकृत्युपासकस्य जन्यैश्वर्य्यं स्वीकृतम्” सां० कौ० च नित्येश्वरस्य कर्त्तृत्वं निरासितं यथा ।

“न च क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन साध्यत्वाच्च साध्येन व्यभिचार इति साम्प्रतं प्रेक्षावत्प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात् ते च जगत्सर्गाद्व्यावर्त्तमाने प्रेक्षावत्प्रवृत्तिपूर्वकत्वमपि व्यावर्त्तयतः नह्यवाप्तसकलेप्सितस्य भगवतोजगत् सृजतः किमप्यभिलषितं भवति नापि कारुण्यादस्य सर्गे प्रवृत्तिः प्राक् सर्गाज्जीवानामिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छा कारुण्यं ? सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयत्वं कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति । अपि च करुणया प्रेरितः ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान् । कर्म्मवैचित्र्यादिति चेत् कृतमस्य प्रेक्षावतः कर्म्माधिष्ठानेन तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्मणः प्रवृत्त्यनुपपत्तेस्तत्कार्य्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् । प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो न वा कारुण्यं प्रयोजकमिति नोक्तदोषप्रसङ्गावतारः” ।

नित्येश्वरस्य यथानुमानं तथा आन्वीक्षिकीशब्दे ७१८ पृष्ठे सर्वदर्शनसंग्रहवाक्येन प्रदर्शितम् ईश्वरसाधनं तु गौ० सूत्रवृत्त्याद्युक्तं यथा “ईश्वरः कारणं पुरुषकर्म्माफल्यदर्शनात्” सू० । “गुणविशिष्टमात्मान्तरमीश्वरः” भा० । “गुणैर्नित्येच्छाप्रयत्नैर्विशेषगुणैः, सामान्यैः संयोगादिभिश्च विशिष्टमात्मान्तरं जीवेभ्यो भिन्न आत्मा जगदाराध्यः सृष्ट्यादिकर्त्ता वेदद्वारा हिताहितोपदेशको जगतः पितेति । अनुमानन्तु क्षित्यादिकं सकर्त्तृकं कार्य्यत्वाद्घटादिवदित्याद्यूह्यम्” वृत्तिः । वात्स्यायनसूत्रे च “संज्ञाकर्म्म त्वस्मद्विशिष्टानां लिङ्गम्” “प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः” सूत्राभ्यामीश्वरसाधनं दर्शितं विवृतमेतदुपस्कारे यथा ।

“तुशब्दः स्वर्गादिलिङ्गव्यवच्छेदार्थः संज्ञा नाम, कर्म्म कार्य्यम्”इत्यादि तदुभयमस्मद्विशिष्टानाम् ईश्वरमहर्षीणां सत्त्वेऽपि लिङ्गम् कथमेतदित्यत आह । अत्रापि संज्ञा च कर्म्म चेति समाहारद्वन्द्वादेकवद्भावः संज्ञाकर्त्तुः कर्त्तृत्वाभेदसूचनार्थः । तथाहि यस्य स्वर्गापूर्व्वादयः प्रत्यक्षाः स एव तत्र स्वर्गापूर्व्वादिसंज्ञाः कर्त्तुमीष्टे नेतरः एवञ्च घटपटादिसंज्ञानिवेशनमपि ईश्वरसङ्केताधीनमेव यः शब्दो यत्रेश्वरेण सङ्केतितः स तत्र साधुः यथा वा काचि-

दोषविनिर्मुक्तदंष्ट्राग्रसृष्टा सा सर्व्वाऽपि सर्पविषं हन्तीत्यै-तादृशी संज्ञा अस्मदादिविशिष्टानां लिङ्गमनुमापकं या-ऽपि चैत्रादिसंज्ञा पित्रा पुत्रे क्रियते साऽपि "द्वादशे-ऽहनि पिता नाम कुर्य्यात्" इत्यादिविधिना नूनमीश्वर-प्रयुक्तैव तथाच सिद्धं संज्ञाया ईश्वरलिङ्गत्वम्। एवं कर्म्मा-ऽपि कार्य्यमपीश्वरे लिङ्गं तथाहि क्षित्यादिकं सकर्त्तृकं कार्य्यत्वात् घटवदिति अत्र यद्यपि शरीराजन्यं जन्यं वा जन्यप्रयत्नाजन्यं जन्यं वा सकर्त्तृकत्वासकर्त्तृकत्वेन विवादाध्यासितं वा सन्दिह्यमानकर्त्तृकत्वं वा क्षित्यादि-त्वेन न विवक्षितम् अदृष्टद्वारा क्षित्यादेरपि जन्यप्रयत्न-जन्यत्वात् विवादसन्देहयोश्चातिप्रसक्तत्वेन पक्षतानवच्छे-दकत्वात् किन्तु सकर्त्तृकत्वमपि यदि कृतिमज्जन्यत्वं तदाऽ-स्मदादिना सिद्धसाधनम् अस्मदादिकृतेरप्यदृष्टद्वारा क्षि-त्यादिजनकत्वात् उपादानगोचरकृतिमज्जन्यत्वेऽपि तथा,-अस्मदादिकृतेरपि किञ्चिदुपादानगोचरत्वात्, कार्य्यत्व-मपि यदि प्रागभावप्रतियोगित्वं तदा ध्वंसे व्यभिचार इति तथापि क्षितिः सकर्त्तृका कार्य्यत्वात् कर्त्तृत्वञ्च सकर्त्तृकत्वम-दृष्टाद्वारककृतिमज्जन्यत्वं कार्य्यत्वञ्च प्रागभावावच्छिन्न-सत्ताप्रतियोगित्वं नवाङ्कुरादौ सन्दिग्धानैकान्तिकत्वं सा-ध्याभावनिश्चये हेतुसत्त्वसन्देहे सन्दिग्धानैकान्तिकत्वस्य दोषत्वात् अन्यथा सकलानुमानोच्छेदप्रसङ्गः, न च पक्षा-तिरिक्ते दोषोऽयमिति वाच्यं राजाज्ञाभावात्: नहि दोष-स्यायं महिमा यत् पक्षं नाक्रामति तस्मादङ्कुरस्यापक्षता-यां निश्चितव्याप्तिकेन हेतुना तत्र साध्यसिद्धेरप्रत्यूहत्वात् न सन्दिग्धानैकान्तिकता तदङ्कुरपक्षतायान्तु सुतरामिति संक्षेपः"।

एवं न्यायकणादसूत्रभाष्यादिषु प्रदर्शितेश्वरानुमानप्र-कारमभिलक्ष्य कुसुमाञ्जलिहरिदासटीकयोः दिङ्मात्रेण किञ्चित् विस्तरतस्तु यथा

"तत्साधकप्रमाणाभावात् इति पञ्चमविप्रतिपत्तिः नन्वी-श्वरे साधकप्रमाणमेव नास्तीत्यत आह" हरि०। "कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः" का०। "क्षित्यादि सकर्त्तृकं कार्य्यत्वात् घटवत् सकर्त्तृकत्वञ्च उपादानगोचरापरोक्षज्ञानचिकीर्षा-कृतिमज्जन्यत्वम्। आयोजनं कर्म्म एवञ्च सर्गाद्यकालीनद्व्य-णुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म्म चेतनप्रयत्नपूर्व्वकं कर्म्मत्वात् अस्मदादिशरीरक्रियावत्। धृतीति ब्रह्मा-ण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियति विहङ्गमधृतकाष्ठवत् धृतिश्च गुरुत्ववतां पतनाभावः। धृत्यादेरित्यादिपदात् नाशपरिग्रहः ब्रह्माण्डादि प्रयत्नव-द्विनाश्यं विनाशित्वात् पाट्यमानपटवत्। पदात् पद्यतेऽ-नेनेतिव्युत्पत्त्या पदं व्यवहारः घटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्य-वहारवत्। प्रत्ययतः प्रामाण्यात् वेदजन्यज्ञानं कारण-गुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत्। श्रुतेर्वेदात् वेदः पौरुषेयो वेदत्वात् आयुर्वेदवत्। किञ्च वेदः पौरुषेयो वाक्य-त्वात् भारतवत् वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्म-दादिवाक्यवत्। संख्याविशेषात्। द्व्यणुकपरिमाणं सङ्ख्या-जन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणकपालद्वयारब्धघटपरिमाणात् प्रकृष्टता-द्यकपालसद्यकपालद्वयारब्धघटपरिमाणवत्। अणुपरि-माणञ्च न परिमाणजनकं नित्यपरिमाणत्वात् अणुपरि-माणत्वाद्वा एवञ्च सर्गादौ द्व्यणुकपरिमाणहेतुपरमाणुनिष्ठ-द्वित्वसंख्या च नास्मदाद्यपेक्षाबुद्धिजा अतस्तदानीन्तनापे-क्षाबुद्धिरीश्वरस्यैवेति। विश्वविदव्यय इति विशिष्टसाध्य-त्वं तेन नित्यसर्व्वविषयकज्ञानसिद्धिः ननु शरीर-विशिष्टस्य कर्त्तृतया विशेषणबाधात्मकोविशिष्टबाध इति कर्त्तृजन्यत्वव्यापकशरीरजन्यत्वाभावात् कर्त्तृजन्यत्वाभाव इति सत्प्रतिपक्षता च। यद्वा कर्त्ता शरीर्य्येवेति व्याप्तिविरोधिनी यद्वा व्याप्त्या यथादर्शनप्रवृत्तया शरीरी कर्त्ता च उपनेयः, पक्षधर्म्मतया च क्षित्यादावशरीरीति साध्याप्रसिद्धिः विशेषणविशेष्यविरोधश्च यद्वा शरीरजन्यत्वा-द्युपाधिना व्याप्यत्वासिद्धिरिति कार्य्यत्वहेतौ पञ्च दोषास्त-त्राह" हरि०। "न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्ब्बलैः। सिद्ध्यसिद्ध्योर्विरोधो न नासिद्धिरनिबन्धना" का०। "ईश्वरे धर्म्मिणि शरीरबाधात् कर्त्तृत्वबाधेन, अधिकरणज्ञानं विना अभावज्ञानासम्भवात् अस्य कार्य्यत्वस्य धर्म्मिसाधकस्यापि करणज्ञानजनकतया अवश्यमपेक्षणीयत्वेन बलवत्त्वात्। एवञ्च न विशेषणबाधात्मकोविशिष्टबाधः प्रत्यक्षात्मकः। ईश्वरो न कर्त्ता अशरीरत्वात् इत्यनुमानबाधोऽपि नेत्यर्थः। क्षि-त्यादौ न सकर्त्तृकत्वं शरीराजन्यत्वात् इति न प्रतिबन्धकं सत्प्रतिपक्षहेतोः शरीराद्यवैयर्थ्यात् व्याप्यत्वासिद्ध्या दुर्ब्ब-लत्वात्। तृतीयेऽपि कार्य्यत्वव्याप्तेः पक्षधर्म्मत्वसह-कारात् विपक्षबाधकतर्कावताराच्च बलवत्त्वम्। उपन्यस्तायाः कर्त्ता शरीर्य्येवेति व्याप्तेर्दुर्ब्बलतया न प्रतिबन्धः। चतुर्थे च यदि पक्षधर्म्मतया अशरीरी उपस्थितस्तदा न विरोधः

कर्तृत्वस्याशरीरत्वसमानाधिकरणस्योपलम्भात् तदनुमस्थाने तु न विरोधः विरोधाश्रयस्यासिद्धेः पक्षुमे च विपक्षबाधकतर्कसत्त्वात् तदभावनिबन्धनाद्धानरूपासिद्धि र्व्याप्यत्वासिद्धिर्वा न शरीरजन्यत्वोपाधेरपि विपक्षबाधकाभावेनाप्रयोजकत्वात्। नतु यदीश्वरः कर्त्ता स्यात् शरीरी स्यादिति प्रतिकूलतर्कावतारसत्वाह" हरि०। 'तर्काभासतया त्वेषा तर्काशुद्धिरदूषणम्। अनुकूलस्तु तर्कोऽत्र कार्य्यलोपो विभूषणम्" का० "प्रतिकूलतर्कास्तावदीश्वरासिद्धा आश्रयासिद्धा इत्याभासाः। कर्त्तारं विना कार्य्यं न स्यादिति तर्कस्तु विभूषणं सहकारकः। "अहं सर्व्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" इत्यागमश्चात्र।'आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतर" इति तर्कानुगृहीतस्यागमस्य बलवत्त्वम्" नतु कार्य्यत्वं प्रयत्नजन्यत्वेऽप्रयोजकम् अत्राह" हरि०। "स्वातन्त्र्ये जड़ताहानिर्नादृष्टं दृष्टघातकम्। हेत्वभावे फलाभावोविशेषस्तु विशेषवान्"का०"न हि कर्त्तारं हेतुं विना कार्यं परमाणोरेव यत्नवत्त्वे चैतन्यानुपपत्तिः अचेतनस्य चेतनप्रेरितस्यैव जनकत्वात् अदृष्टस्य दृष्टकारणसहकारेणैव फलजनकत्वात्। न च चेष्टायामेव भोक्तृप्रयत्नो हेतुः न तु क्रियासामान्ये इति,चेष्टायां विशेषप्रयत्नस्य हेतुत्वेऽपि क्रियासामान्ये प्रयत्नसामान्यस्य कारणत्वानपायात् अन्यथा बीजविशेषस्याङ्कुरविशेषे जनकत्वेनाङ्कुरसामान्यं प्रति बीजत्वेन हेतुताया अपि विलोपापत्तेः नतु धृत्यादीनां प्रयत्नजन्यत्वे किं मानमित्यत्राह" हरि०।"कार्य्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः। विच्छेदेन पदस्यापि प्रत्ययादिव पूर्व्ववत्" ।"धृतिविनाशयोः प्रयत्नजन्यत्वान्निरुपाधित्वं विच्छेदेनान्तरा प्रलयेन आदर्शाद्यभावात् अर्व्वाग्दर्शी नाद्यव्यवहारमूलं व्यवहारानभिज्ञत्वादिति सर्गाद्यकालीन घटादिव्यवहारप्रवर्त्तकः पुरुषः सिध्यति। एवं प्रलयादेर्वेदजन्यभीमांसाद्यादेरपि निरुपाधित्वम्" हरि०।

विस्तरेणेश्वरानुमानग्रन्थस्य प्रायेण लुप्तप्रायतया कुसुमाञ्जलिग्रन्थे दिङ्मात्रेण तत्प्रकारस्य सत्त्वेऽपि न्यायकन्दल्याम् अनुमानचिन्तामणिस्थेश्वरवादे च विस्तरेण वर्णितं तयोश्च प्रायेण लुप्तप्रायतया तयोः प्रचारार्थमिहोपन्यासः क्रियते तत्रादौ

न्यायकन्दली।"किं पुनरीश्वरसद्भावे प्रमाणम् आगमस्तावत् अनुमानञ्च महाभूतचतुष्टयमुपलब्धिमत्पूर्वकं कार्य्यत्वात् यत्कार्य्यं तदुपलब्धिमत्पूर्वकं यथा घटकार्य्यं,कार्य्यञ्च महाभूतचतुष्टयं तस्मादेतदुपलब्धिमत्पूर्वकमिति। ननु प्रसादेन पूर्व्वोक्तानुपलब्धेरसिद्धं पृथिव्यादिषु कार्य्यत्वमिति चेत् तदयुक्तं सावयवत्वात् तत्सिद्धेः यत् सावयवं तत्कार्य्यं यथा घटः सावयवञ्च पृथिव्यादि तस्मादेतदपि कार्य्यमेव॥ ननु व्याप्तिग्रहणादनुमानप्रवृत्तिः कार्य्यत्वबुद्धिमत्पूर्वकत्वयोश्च व्याप्तिग्रहणमशक्यं, घटादिषु कर्त्तृप्रतीतिकाले एवाङ्कुरादिषूत्पद्यमानेषु तदभावप्रतीतेः न चाङ्कुरादीनामपि पक्षत्वमिति न्याय्यं संगृहीतायां व्याप्तावनुमानप्रवृत्तिकाले प्रतिज्ञाद्यपेक्षया पक्षादिप्रविभागः इह तु सर्व्वदैव प्रतिपक्षप्रतीत्याक्रान्तत्वाद्व्याप्तिग्रहणमेव न सिध्यति। अत्र प्रतिसमाधीयते। यदि चैव दृष्टानुपलम्भाद्व्याप्तिग्रहणाभावः तदानीं मीमांसाभाष्यकृतोऽभिमतं सामान्यतो-दृष्टमादित्यगत्यनुमानमपि न सिद्ध्यति तत्रापि देवदत्तगतिपूर्वकदेशान्तरप्राप्तिग्रहणकाल एव नक्षत्रादिप्रदेशान्तरप्राप्तिमात्रोपलम्भात् अथ तेषु देशविप्रकर्षेणापि गतेरनुपलब्धौ सम्भवन्त्यां न तया व्याप्तिग्रहणहेतोर्निरुपाधिप्रवृत्तस्य भूयोदर्शनस्य प्रतिरोधः तुल्यकक्षत्वाभावात् एवञ्चेदशरीरत्वेनाभ्युपेतस्य कर्त्तुः स्वरूपविप्रकर्षेणाप्यङ्कुरादिष्वनुपलम्भसम्भवात् न तेन निरुपाधिप्रवृत्तस्य भूयोदर्शनस्य सामर्थ्यमुपहन्यते इति समानम्। अपि च भोः किमनेन कर्त्तृमात्रं साध्यते पृथिव्यादिनिर्म्माणसमर्थो वा। कर्त्तृमात्रसाधने तावदभिप्रेतासिद्धिः नह्यस्मदादिसदृशः कर्त्ताऽभिप्रेतो भवतां नच तेनेदं पृथिव्यादिकार्य्यमर्वाग्दृशा शक्यनिर्म्माणम्, पृथिव्यादि निर्म्माणसमर्थस्तु न सिद्ध्यति अनन्वयात् अन्वयबलेन हि दृष्टान्तदृष्टकर्त्तृसदृशः सिध्यतीति नायं प्रसङ्गः। कर्त्तृविशेषस्याप्रसाधनात्। व्याप्तिसामर्थ्याद्बुद्धिमत्पूर्वकत्वसामान्ये साध्यमाने पृथिव्यादिनिर्म्माणसामर्थ्यलक्षणोऽपि विशेषः सिध्यत्येव निर्विशेषस्य सामान्यस्य सिद्ध्यभावात्। ननु मा सिध्यतु सामान्यमिति चेत् कार्य्यत्वेन सह तद्व्याप्तेः प्रतिक्षेपात्। यदि हि व्याप्तमपि न सिध्यति धूमादग्निसामान्यं न सिध्येत् अग्निविशेषस्यानन्वितस्यासिद्धेः निर्विशेषस्यानवस्थानात्। अथेदमुच्यते द्वयमनुमानस्य स्वरूपं व्याप्तिः पक्षधर्मता च तत्र व्याप्तिसामर्थ्यात् सामान्यं सिध्यति पक्षधर्म्मताबलेन चाभिप्रेतो विशेषः पर्वताद्यवच्छिन्नवह्निवत्त्वात् वा सिद्धाति अन्यथा पक्षधर्म्मतायाः कोपयोगः कानुमानस्य स्वकीयत्वादिवः सामान्यम्। एवञ्चेत् ईश्वरानुमानेऽपि तुल्यमन्यत्राभिनिवेशात् अथ मतं सिद्ध-

त्वनुमानेऽपि विशेषोऽपि यत्र प्रमाणविरोधोनास्ति। तथाहि धूमात् पर्वतनितम्बवर्त्तिवह्निविशेषसिद्धौ का नामानुपपत्तिः दृष्टो हि देशात् कालाभेदः स्वलक्षणानाम्। ईश्वरानुमाने तु विशेषेण सिद्ध्यति प्रमाणविरोधात्। तथाहि नात्र शरीरपूर्वकत्वं साधनीयं शरीरे सत्यवश्यमिन्द्रियप्राप्तावतीन्द्रियोपादानोपकरणादिकारकशक्तिपरिज्ञानाऽसम्भवे सति कर्त्तृत्वासम्भवात्। अशरीरपूर्वकत्वञ्च अप्रसाधनम् सर्वोऽपि कर्त्ता पूर्वं कारकस्वरूपमवधारयति ततः कारणान्यधितिष्ठति तत इच्छतीदमनेन निर्वर्त्तयामीति ततः प्रवर्त्तते तदनु कायं व्यापारयति ततः करणान्यधितिष्ठति ततः करोतीति। अनवधारयन्ननिच्छन्नप्रयतमानः कायमव्यापारयन्न करोतीत्यन्वयव्यतिरेकाभ्यां बुद्धिवच्छरीरमपि कार्य्योत्पत्तावुपायभूतं निखिलोपाधिविधुरे व्याप्तिग्राहकप्रमाणादेवावधारितं न शक्यते प्रहातुं वह्नेरिवेन्धनविकारदाहसामर्थ्यं धूमानुमाने। तत्परित्यागे च बुद्धिरपि त्यज्यतां प्रभावातिशयादशरीरवद्बुद्धिमानेवायमीश्वरः करिष्यति। उपादानोपकरणादिस्वरूपानभिज्ञोनाशक्नोतीति चेत्। कुत एतत्? तथाऽनुपलम्भादितिचेत् फलितं तर्हि ममापि मनोरथद्रुमेण, न तथा यावदिच्छाप्रयत्नाव्यवहितकार्य्योत्पत्तावुपयुज्यते यथेदमव्यवहितव्यापारं शरीरम्। एवं तर्हि का गतिरत्र, बुद्धिमत्कर्त्तृपूर्वकत्वसामान्यस्य, अगतिरेव उभयोरपि शरीरित्वाशरीरित्वविशेषयोरनुपपत्तेर्निर्विशेषसामान्यस्य सिद्ध्यभावात्। किमनुमानस्य दूषणं न किञ्चित्। पुरुष एवायं विशेषाभावाच्छशविषाणायमाने साधनानर्हसामान्ये साधनं प्रयुञ्जानोनिन्द्यते यथा कश्चिन्निशितं कृपाणं मच्छेद्यमाकाशं प्रति व्यापारयन्। अथानुमानदूषणं विना न तुष्यति भवान् तदिदमशरीरिपूर्वकत्वानुमानं व्याप्तिग्राहकप्रमाणबाधितत्वात् कालात्ययापदिष्टं व्याप्तिबलेन चाभिप्रेतमशरीरित्वविशेषम् विरुन्धत् विशेषविरुद्धं ततश्च विरुद्धावान्तरविशेष एवेति पूर्वपक्षसंक्षेपः"। अत्र प्रतिसमाधिः। किं शरीरित्वमेव कर्त्तृत्वमुत परिदृष्टसामर्थ्यकारकप्रयोजकत्वम् न तावच्छरीरित्वमेव कर्त्तृत्वं सुप्तस्योदासीनस्य च कर्त्तृत्वप्रसङ्गात् किन्तु परिदृष्टसामर्थ्यकारकप्रयोजकत्वं तस्मिन् सति कार्य्योत्पत्तेः। तच्चाशरीरस्यापि निर्वहति यथा स्वशरीरप्रेरणायामात्मनः। अस्ति तत्राप्यस्य स्वकर्मोपार्जितं तदेव शरीरमिति चेत् सत्यमस्ति परं प्रेरणोपयोगो न भवति स्वात्मनि क्रियाविरोधात्। प्रेर्यं तथा-स्तीति चेत् ईश्वरस्यापि प्रेर्यः परमाणुरस्ति। ननु स्वशरीरे प्रेरणायामिच्छाप्रयत्नाभ्यामुत्पत्तेरिच्छाप्रयत्नयोश्च सति शरीरे भावादसत्यभावात् अस्ति तत्र स्वप्रेरणायामिच्छाप्रयत्नजननद्वारेणोपायत्वमिति चेत् न तस्येच्छाप्रयत्नयोरुपजननं प्रत्यकारकत्वात् अवश्यात्मकयोरिच्छाप्रयत्नयोः प्रेरणाकरणकाले तु तदनुपायभूतमेव शरीरमकर्मत्वादिति व्यभिचारः। अनपेक्षितशरीरव्यापारेच्छाप्रयत्नमात्रसचिवस्यैव चेतनस्य कदाचिदचेतनव्यापारसामर्थ्यदर्शनात् बुद्धिमदव्यभिचरितकार्य्यत्वमितीश्वरसिद्धिः। इच्छाप्रयत्नोत्पत्तावपि शरीरमपेक्षणीयमिति चेत् अपेक्षतां यत्र तयोरागन्तुकत्वं यत्र पुनरिमौ स्वाभाविकौ वर्त्तेते तत्रास्यापेक्षणं व्यर्थम्। न च बुद्धीच्छाप्रयत्नानां नित्यत्वे कश्चिद्विरोधः दृष्टा हि गुणानां रूपादीनामाश्रयभेदेन द्वयी गतिः नित्यताऽनित्यता च। तथा बुद्ध्यादीनामपि भविष्यतीति सेयमीश्वरवादे वादिप्रतिवादिनोः परा काष्ठा, अतः परं प्रपञ्चः। आत्माधिष्ठिताः परमाणवः प्रवर्त्तिष्यन्ते इति चेत् न तेषां स्वकर्मोपार्ज्जितेन्द्रियगणाधीनसंविदां शरीरोत्पत्तेः पूर्वं विषयावबोधविरहात्। अस्त्वात्मनामपि सर्वविषयव्यापि सहजचैतन्यमिति चेत् न सहजं शरीरसंबन्धभाजां तत् केन विलुप्तं येनेदं सर्वत्रापूर्ववद्भूनामासयति। शरीरावरणतिरोधानात्तदात्मन्येव समाधीयते न बहिर्मुखं भवतीति चेत् व्यापकत्वेन तस्य विषयसंबन्धानुच्छेदेन नित्यत्वेन च विषयप्रकाशस्वभावस्यानिवृत्तौ का तिरोधानवाचोयुक्तिः? शक्तिप्रतिबन्धश्चैतन्यतिरोधानमिति चेत् कथं तर्हि शरीरिणा विषयग्रहणम्। कश्चिदस्य शक्तयो न निरुध्यन्ते इति चेत् कुतोऽयं विशेषः? इन्द्रियप्रत्यासत्तिविशेषात् यद्येवमिन्द्रियाधीनचैतन्यस्य विषयेषु शक्तिलाभो न सन्निधिमात्रनिबन्धनः सत्यपि व्यापकत्वे सर्वार्थेषु इन्द्रियभावात् इन्द्रियवैयर्थ्यप्रसङ्गाच्च साधूक्तं सशरीरिणामात्मनां न विषयावबोध इति। तथा चैके वदन्ति "पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मेति"। अनवबोधे चैतन्यं नाधिष्ठानमिति तेभ्यः परः सर्वार्थदर्शी सहजज्ञानमयः कर्त्तृस्वभावः कोऽप्यधिष्ठाता कल्पनीयः चेतनमधिष्ठातारमन्तरेणाचेतनानां प्रवृत्त्यभावात्। स किमेकोऽनेको वा? एक इति वदामः बहूनामसर्वज्ञत्वेऽस्मदादिवदसामर्थ्यात् सर्वज्ञत्वे एकस्यैव सामर्थ्यादपरेषामनुपायत्वात् न च संप्रयोगानां भूयसामैकमत्ये हेतुरस्तीति कदाचिदनुत्पत्तिरपि कार्य्यस्य स्यात् एकाभिप्रायानुरोधेन

सर्वेषां प्रवृत्तावेकस्यैवेश्वरत्वं नापरेषां सदःपरिषदामिव, कार्य्यानुपपत्त्यनुरोधे प्रत्येकमनीश्वरत्वम्। तदेवं कार्यविशेषेण सिद्धस्य कर्त्तृविशेषस्य सर्वज्ञत्वाच्च तत्र चिद्वस्तुनि विशेषानुपम्भः। अतो न तन्निबन्धनं मिथ्याज्ञानं मिथ्याज्ञानाभावाच्च न तन्मूलौ रागद्वेषौ तयोरभावाच्च तत्पूर्विका प्रवृत्तिः प्रवृत्त्यभावे च न तत्साध्यौ धर्माधर्मौ तयोरभावात्तज्जयोरपि सुखदुःखयोरभावः सर्वदैव चानुभवसद्भावात् स्मृतिसंस्कारावपि नासाते इत्यष्टगुणाधिकरणं भगवानीश्वर इति केचित्। अन्ये तु बुद्धिरेव तस्याव्याहता क्रियाशक्तिरित्येवं वदन्त इच्छाप्रयत्नावनङ्गीकुर्वाणाः षड्गुणाधिकरणमयमित्याहुः। स किं बद्धो मुक्तो वा न तावद्बद्धो बन्धनसमाधिमस्य बन्धनहेतोः क्लेशादेरसम्भवात् मुक्तोऽपि न भवति बन्धविच्छेदपर्य्यायत्वान्मुक्तेः। नित्यमुक्तः स्यात् यदाह तत्रभवान् पातञ्जलिः "क्लेशजन्मकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषईश्वर" इति।

अनुमानचिन्तामणौ ईश्वरवादो यथा

"एवमनुमाने निरूपिते तस्माज्जगन्निर्मातृपुरुषधौरेयसिद्धिः क्षित्यादौ कार्य्यत्वेन घटवत् सकर्तृकत्वानुमानात्। ननु क्षित्यादि प्रत्येकं न पक्षः तस्य स्वशब्देनाभिधातुमशक्यत्वात् नापि मिलितम् एकरूपाभावात् अत एव सकर्तृत्वविचारारम्भकसंशयविषयः, तथा विवादविषयो वा न पक्षः एकरूपाभावेन तयोस्तावत् पक्षीतुमशक्यत्वात् वादिनोर्निश्चितत्वेन संशयाभावात्। न च वाद्यनुमानयोस्तुल्यत्वेन मध्यस्थस्य संशयः। अनुमानाभ्यां तस्य संशयः मध्यस्थप्रश्नानन्तरञ्चानुमानमिति परस्पराश्रयात्, घटेऽपि कदाचित् तयोः सम्भवात्, प्रत्येकसंशये विवादाभावत्वेनानुमानेऽर्थान्तरतापत्तेश्च। न च शरीराभेदेन कर्त्रा यत्र कृतं शरीराजन्यं जन्यं वा पक्षः जन्यात्मविशेषगुणशब्दफूत्कारसर्गाद्यकालीनवेदघटादिक्षित्यादि संप्रदायाणामीश्वरमात्रकर्तृकत्वासंप्रत्ययात् असिद्धेश्च अदृष्टद्वारा शरीरिणोऽपि क्षित्यादिकर्तृत्वात्। नापि जन्यकृत्यजन्यं जन्यम् उभयसिद्धकृतिजन्यान्यजन्यं वा पक्षः क्षित्यादीनामदृष्टद्वारा जन्यकृतिजन्यत्वात्। नाप्यदृष्टजनककृत्यजन्यं जन्यं कृतिसाक्षादजन्यं वा पक्षः ईश्वरकृतेरदृष्टजनकत्वेन क्षितौ तदभावात् घटादावप्येवं पक्षत्वेनांशतः सिद्धसाधनात्। न च क्षितिरेव पक्षः, अङ्कुरेण सन्दिग्धानैकान्तात्। न च निश्चितविपक्षे हेतुसन्देहात् स इति वाच्यं हेतौ साध्याभाववद्वर्त्तित्वसंशयस्य दूषकत्वात् स च साध्याभाववति हेतुसन्देहात् हेतुमति साध्याभावसन्देहाद्वा उभयथापि दोषः। न चैवं पक्षेऽपि तत्, अनुमानमात्रोच्छेदकत्वेन तदितरत्र तस्य दूषकत्वात्। अङ्कुरे हेतोरनिश्चयेन सन्दिग्धानैकान्तिकं तन्निश्चयेन साध्यसन्देहवति साध्यानुमितिरेव पक्षवत् सामग्रीसत्त्वात्। अत एवाङ्कुरः पक्षसम इति चेन्न तस्यापक्षत्वेन हेतोः पक्षधर्मताविरहेण स्थापनानुमानाविषयत्वात्। तदा तस्यापि पक्षत्वे प्रतिज्ञानुपपत्तिः। अत्र मानान्तराधीनतत्साध्यानुमित्यनन्तरञ्च पक्षेऽनुमितावितरेतराश्रयान्नैकमप्यनुमानम्। तत्रापि क्षित्या सन्दिग्धानैकान्तात्, क्षितेर्विवादविषयत्वेऽङ्कुरे साध्यमाने अर्थान्तराच्च। किञ्चैवमेकैकोपादानाभिज्ञसिद्धावपि नेश्वरसिद्धिः नापि सर्गाद्यकालीनं द्व्यणुकं पक्षः परम्प्रति सर्गाद्यसिद्धेः इति" पक्षाक्षेपः।

"किञ्च सकर्तृकत्वं? न तावत् कृतिमत्सहभावः कृतिमज्जन्यत्वं वा अस्मदादिना सिद्धसाधनात्। उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं तदिति चेत् उपादानगोचरत्वं यदि यत्किञ्चिदुपादानगोचरत्वं तदा अस्मदादिनाऽर्थान्तरत्वं ज्ञानादीनामपि जनकत्वं विवक्षितं न च घटोपादानगोचरज्ञानादीनां क्षितिजनकत्वं सम्भवति व्यभिचारादिति चेन्न क्षितिजनकादृष्टजनकज्ञानादीनाम् उपादानविषयनियमेनादृष्टद्वारा तैरेव सिद्धसाधनात्। न च साक्षात्तज्जन्यत्वं विवक्षितं तद्धि न कृतिजन्याजन्यत्वे सति कृतिजन्यत्वं स्वजनककृत्यव्यवहितोत्तरक्षणवर्त्तित्वं वा घटदृष्टान्तस्य साध्यविकलत्वापत्तेः घटादौ कुलालादिकर्तृकत्वाभावप्रसङ्गाच्च। न च शरीरक्रियादृष्टान्त इति वाच्यं घटेनानैकान्तात् चेष्टात्वस्योपाधित्वाच्च। नापि क्षित्याद्युपादानगोचरत्वं विवक्षितं अप्रसिद्धेः न चोपादानशब्दस्य सम्बन्धिशब्दत्वेन घटक्षित्यादिसमभिव्याहारे तत्तदुपादानगोचरत्वं चैत्रोमातृभक्तोमैत्रवदिति वाच्यं शाब्दे हि बोधे तथा न चात्र शब्दः प्रमाणं वादिनोऽनाप्तत्वात्। अनुमाने त्वनुगतेन व्यापकतावच्छेदकेन रूपेण व्यापकसिद्धिः तच्चोपादानत्वमेवेति कथं नार्थान्तरम्। किञ्चैवं घटादावपि तदुपादानत्वेनैवोपस्थित्यासामान्येन रूपेण कुलाद्यनुपस्थितेर्व्याप्तिरेव न गृह्येत। अपि च सामान्यलक्षणया ज्ञानलक्षणया योगजधर्मरूपया वा प्रत्यासत्त्योपादानगोचरापरोक्षज्ञानतज्जन्यचिकीर्षाकृतिमता अस्मदादिना सिद्धसाधनम् तेषां क्षित्यव्यवहितपूर्वक्षणसमयासत्त्वेऽपि तद्वत्; सत्त्वात् अदृष्टद्वारा

तेषामपि जनकत्वसम्भवाच्च । ज्ञानादिसाक्षाज्जन्यत्वस्य निरस्तत्वात् । अथ योगजधर्माजन्यजन्यसविकल्पकाजन्यसामान्यलक्षणाप्रत्यासत्त्यजन्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यमिति साध्यम् यद्वा अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्यजन्यज्ञानादिमदजन्यं जन्यम् अनागतगोचरसाक्षात्कारजनकप्रत्यासत्त्यजन्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यमिति साध्यम् ज्ञानाव्यवहितोत्तरसमयवर्त्तीच्छाव्यवहितोत्तरक्षणवर्त्ति कृतीनां जनकत्वं विवक्षितं न तु ज्ञानादीनां यौगपद्यं पौर्वापर्यं वाऽतो न साध्याप्रसिद्धिर्नवा क्षित्यादौ बाध इति मैवं योगजधर्मसामान्यज्ञानरूपप्रत्यासत्तीनामनागतगोचरसाक्षात्कारस्य च तज्जनकप्रत्यासत्तीनाञ्च परस्याप्रसिद्धतया तदजन्यस्य साक्षात्कारस्याप्रसिद्धत्वेन पक्षसाध्ययोर्विशेषणासिद्ध्या परं प्रत्याश्रयासिद्धेः साध्याप्रसिद्धेः । तत्सिद्धौ वा पक्षे तदजन्यत्वासिद्धिः क्षितिजनकादृष्टजनककृतिचिकीर्षासाक्षात्काराणां योगजधर्माद्यजन्यानामदृष्टद्वारा क्षितिजनकत्वेन सिद्धसाधनात् न च तादृशसाक्षाज्जन्यत्वं विवक्षितं घटादिदृष्टान्ते तदसम्भवात् । दृष्टान्ते घटादौ जनकेष्टसाधनताज्ञानस्यानुमितित्वेन जन्यसविकल्पकव्याप्तिग्रहजन्यत्वेन साध्याप्रसिद्धेश्च । ननु व्याप्तिबलेन साध्यं सिध्यति व्याप्तिश्च यत्र यत्र कार्यत्वं तत्र तत्र तदुपादानाभिज्ञकर्तृत्वमितिरूपा न तु यद्यत् कार्यं तत्तत् किञ्चिदुपादानाभिज्ञजन्यमिति एवञ्च यत्र कार्यत्वं तत्र तदुपादानाभिज्ञजन्यत्वमिति विशिष्टव्याप्त्या क्षित्यादौ कार्यत्वं क्षित्याद्युपादानाभिज्ञजन्यत्वमेव साधयत्यतो न सिद्धसाधनमितिचेन्न घटे पटे च व्याप्तिग्रहः कार्यत्वस्य किं प्रत्येकं घटोपादानाद्यभिज्ञजन्यत्वेन, तत्तदुपादानाभिज्ञजन्यत्वेन, उपादानाभिज्ञजन्यत्वेन वा आद्ये पटोपादानाभिज्ञजन्यत्वादौ कार्यत्वस्य व्यभिचार एव । द्वितीयेऽननुगमः । तत्तच्छब्दाभिधेयघटाद्युपादानगतानुगतरूपाभावात् कथं व्यापकतापग्रहः । तत्तच्छब्दस्य स्वभावात् समभिव्याहृतपरतया नायं दोष इति चेत् न अनुमाने समभिव्याहारस्याप्रयोजकत्वात् । अतएवेदानीं देवदत्तो बहिरस्ति विद्यमानत्वे सति गृहाभावात् विद्यमानत्वे सति योयदा यत्र नास्ति स तदा तदतिरिक्तदेशेऽस्ति यथाऽहमेव बहिरसन् गृहे प्रतिज्ञामीत्यत्र पक्षे दृष्टान्तसाधारणतत्त्वयोरनुगतयोरभावान्नान्वयी किन्तु व्यतिरेक्युक्तम् । तृतीये सिद्धसाधनमेव । अथ सर्गाद्यकालीनं

द्व्यणुकं ज्ञानेच्छाकृतिसमानकालीनसामग्रीजन्यं कार्यत्वात् घटवत् । अदृष्टसामग्रीजन्यत्वेऽदृष्टत्वापत्तिरिति चेन्न परं प्रति सर्गाद्यसिद्धेः ज्ञानादीनां सिद्धावपि द्व्यणुकाजनकत्वात् तदानीमसिद्धावप्रयोजकत्वाच्च । एतेन सर्गाद्यकालीनं द्व्यणुकं द्व्यणुकासमवायिकारणसमकालीनकृतिजन्यमिति निरस्तं द्व्यणुकासमवायिकारणसमानकालीनकृतित्वेन गौरवाप्रयोजकाभ्यामजनकत्वात्" साध्याक्षेपः । "किञ्च कार्यत्वं ? न तावत् योगोपस्थितकर्तृत्वम् असिद्धेः नापि पूर्वकालासत्त्वे सत्युत्तरकालसम्बन्धः, तत्तत्पूर्वकालस्याननुगतत्वात् सकलपूर्वकालस्याप्रसिद्धेः नापि कादाचित्कत्वं प्रागभावप्रतियोगित्वं ध्वंसेनानैकान्त्यात् । नापि सत्त्वे सति तत्त्वं सत्ताजातेः परं प्रत्यसिद्धेः स्वरूपसत्त्वस्य च ध्वंसेऽपि सत्त्वात् यत्तु अयं घटः एतद्घटजनकानित्यज्ञानचिकीर्षाकृत्यतिरिक्तज्ञानादिजन्यः कार्यत्वात् घटवदित्यादि तन्न विपक्षे बाधकाभावेनाप्रयोजकत्वात् अन्यथाऽयं घटः एतद्घटजनकानित्यादृष्टातिरिक्तनित्यादृष्टजन्यः कार्यत्वात् अपरघटवत् । एतत्सुखदुःखसाक्षात्कारौ एतज्जनकानित्यसुखदुःखसाध्यौ सुखदुःखसाक्षात्कारत्वादित्यादिना नित्यधर्मसुखदुःखाश्रयस्यापि सिद्धिप्रसङ्गात् । अयं घटः स्वजनकानित्यज्ञानाद्यतिरिक्तनित्यज्ञानाद्यजन्यः अपरघटवदित्यादिना सत्प्रतिपक्षाच्च । केचित्तु इष्यते तावदभिमतविषयग्राहिणीन्द्रिये मनोनिवेशवतः पुंसोमनःक्रियानुकूलो यत्नः तथा च सर्गाद्यकालीनशरीरजन्यज्ञानध्वंसानाधारकालाधारज्ञानजनकात्ममनःसंयोगजनिका मनःक्रिया तन्मनोगोचरप्रयत्नानाधारतन्मनोगोचरप्रयत्नतद्व्याप्येतरसकलकारणाधारकालानन्तरकालानाधाराद्यसत्ताका तन्मनःक्रियात्वात् ममतन्मनःक्रियावत् अर्थात् प्रयत्नाधारकालानन्तरकालाधारा सा क्रिया सिद्धप्रतीत्याहुः । तत्र सर्गाद्यकाले ज्ञाने जनकमनःसंयोगजनकक्रियायां मानाभावः पूर्वक्रिययैव संयोगसंभवात् । ईश्वरवादिनां तन्मनोगोचरप्रयत्नाधारकालोऽप्रसिद्धएव क्रियात्वस्यैव हेतुत्वे व्यर्थविशेषणत्वञ्च । किञ्चैवं प्रयत्नानाधारकालानन्तरकालाधारत्वम् अर्थात् तत्सिद्धौ मानान्तरादीश्वरासिद्धावर्थान्तरत्वमिति" क्षेत्राक्षेपः ।

"अत्रोच्यते अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि, अदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि, स्वजनकादृष्टोत्तरोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानि वा अपरोक्षज्ञानचिकीर्षाप्रयत्नविषयीभूतोपादानानि

वा समवेतत्वे सति प्रागभावप्रतियोगित्वात् यद्देवं तद्देवं यथा घटः। तथा चैतानि तस्मात्तथा। उक्तपक्षे कस्यचिदन्तर्भावेऽपि तदादाय निरुक्तस्य पक्षत्वनिर्द्देशे समूहालम्बनरूपैवानुमितिरुत्पत्स्यते। न च जन्यत्वजन्यत्वं तावत् अननुगतैकरूपाभावेन दुर्ग्रहमशक्यमिति वाच्यं जन्यत्वजन्यत्वं हि जन्यकृतिजन्यान्यत्वभिन्नत्वेन रूपेण सामान्यलक्षणया तावतामुपस्थितेः न च जन्यत्वविशेषणव्यावृत्त्याप्रसिद्धिः प्रमेयो घट इति वद्व्यावर्त्तकत्वेनापि तदुपरक्तबुद्धेरुद्देश्यत्वेन तस्योपरञ्जकत्वात्। उक्तान्यतमत्वमेव सकर्त्तृकत्वम् अतएव घटभोक्ता न तत्कर्त्ता व्यवच्छिद्यते एवञ्च शब्दफूत्कारादीनां पक्षत्वेन ज्ञानेच्छादीनामपि पक्षत्वान्न सन्दिग्धानैकान्तः उपादानस्य सिद्धत्वेऽप्युपादेयस्यासिद्धत्वात्सहत्त्वेन तत्रापि चिकीर्षा। यद्वा पक्षे हेतौ च समवेतत्वं न विशेषणं तेन ध्वंसोऽपि पक्षः साध्ये चोपादानपदं कारणमात्रपरमुपादेयमेव वा जन्येच्छाकृत्यजन्यत्वञ्च पक्षे विवक्षितं तेन कृतिध्वंसस्य कृतिजन्यत्वेऽपीच्छाजन्यत्वाभावात् पक्षत्वम्। क्षितिरेव वा पक्षः न चाङ्कुरे सन्दिग्धानैकान्तिकं पक्षपक्षसमनिरपेक्षेण घटादौ निश्चितव्याप्तेर्लिङ्गस्य तयोर्दर्शनेनोभयत्रानुमित्यविरोधात्। नन्वनुमित्योरन्योन्यापेक्षत्वं तेनान्योन्याश्रयः स्यात् प्रतिज्ञाया अविषयत्वात्तत्र पक्षसमव्यपदेशः। न चाङ्कुरस्य पक्षत्वेनानिर्द्देशात्तत्र न पक्षधर्मताज्ञानमिति वाच्यं सिषाधयिषाविरहसहकृतसाधकप्रमाणविरहवति लिङ्गज्ञानस्यानुमितिमात्रकारणत्वात्। तच्च क्षितौ पक्षावयवेनाङ्कुरे स्वत एवेति न कश्चिद्विशेषः। यदि च क्षितौ हेतुनिश्चयदशायां हेतुमत्तयाऽङ्कुरस्य निश्चयस्तदा क्व सन्दिग्धानैकान्तिकम्?। अथ पक्षसमे साध्याभावसामानाधिकरण्यसंशयाद्धेतौ व्याप्तिग्रह एव नोत्पद्यते उत्पन्नोऽपि वा बाध्यत इति चेत्तर्हि महानसे धूमव्याप्तिग्रहो न स्यात् भूतोऽपि वा बाध्येत सन्दिग्धवह्निपर्वतापर्वतधूमवत्तामेकधर्माभावेनापेक्षत्वात् तस्मात्साध्यसन्देहवति हेतुनिश्चयो न दोषः किन्तु गुण एव। अन्यथानुमानमात्रमुच्छिद्येत। पक्षादन्यत्र दूषणमिति यदुक्तं तत्र पक्षान्यत्वं यदि, तदाऽनपेक्षितानुमितिर्न स्यात्। अथ सन्दिग्धसाध्यान्यत्वं साधकबाधकप्रमाणाभावविषयान्यत्वं वा विवक्षितं तदाङ्कुरेऽपि तन्नास्ति अथ प्रतिज्ञाविषयान्यत्वं तदा स्वार्थानुमित्युच्छेदः नियतविषयज्ञानाजन्यत्वेन पक्षविशेषणात् सर्वविषयज्ञानसिद्धिः साध्ये च ज्ञानेच्छाप्रयत्नानां विशेषणत्वेन विशिष्टस्य साधनत्वं विवक्षितं तेन न तद्दोपलक्षितदेहत्वेनार्थान्तरं सामान्यतोऽपि साध्यनिर्देशे पक्षधर्मताबलेनाभिमतविशेषसिद्धेः। नन्वाद्यसाध्यद्वये घटाद्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतीनामेव जनकत्वमायातमित्यर्थान्तरम्। न च तेषां व्यभिचारात् क्षित्यादावकारणत्वमिति वाच्यम्। अनादौ प्रवाहे कस्यचित् कदाचित् क्षितिद्व्यणुकादि पूर्वं घटाद्युपादानगोचरज्ञानादिसत्त्वात्। न च सर्गाद्यकालीनस्यापि पक्षत्वात्तत्रेश्वरसिद्धिः परं प्रति तदसिद्धेरिति चेत् न ज्ञानादीनां त्रयाणां स्वविषयसमवेतकार्यं प्रत्येव जनकत्वावधारणेनैतदनुमानस्य तद्विषयत्वात् अतएवान्योपादानगोचरापरोक्षज्ञानाद्यजन्यत्वेन पक्षविशेषणमपि न युक्तम्। तृतीयसाध्ये तु नार्थान्तरं क्षित्यादेर्घटाद्युपादानासमवेतत्वात्। ननु सामान्यलक्षणादिप्रत्यासत्त्या क्षित्याद्युपादानगोचरं यत् प्रत्यक्षं तज्जन्यमेवास्तु तथाचेश्वरे न प्रत्यक्षं न चेच्छाप्रयत्नौ तयोः समानाधिकरणज्ञानाविषयेऽसत्त्वात्। न च तादृशप्रत्यासत्त्यजन्यत्वं प्रत्यक्षे विशेषणं, परं प्रत्यक्षसिद्धेरिति चेन्न द्रव्यत्वेन ज्ञानलक्षणया वा कपालगोचरप्रत्यक्षेऽपि घटादावकर्त्तृत्वात् क्षित्यादौ कर्त्तृत्वनिर्वाहकं ज्ञानं सिध्यत्तद्विलक्षणमेव सिध्यति न चावयवविभागद्वारा क्षित्यादिपुञ्जलक्षणात् समुद्रादिषु हस्तक्षेपात् परमाणुद्वयसंयोगेन द्व्यणुकेष्वस्मदादिकर्त्तृकत्वादिस्मतः सिद्धसाधनमिति वाच्यं तत्र हि क्षितिनाशे कर्त्तृत्वं न खण्डक्षितौ अवस्थितसंयोगेभ्य एव तदुत्पत्तेः सकलतदुपादानगोचरज्ञानेच्छाकृतीनामभावाच्च अत एव द्व्यणुकेऽपि न कर्त्तृत्वं जलक्षेपादधिकपरिमाणसमुद्रादेः सपक्षत्वमेव घटस्येव। ननु घटे साध्यविकलत्वम् अन्वयव्यतिरेकाभ्यां ज्ञानादेरेव जनकत्वात्, न तु तदाश्रयस्य धर्मिग्राहकस्यान्वयव्यतिरेकस्य वा ग्राहकस्याभावात्। न च घट आत्मजन्य उत्पत्तिमत्त्वात् ज्ञानवदिति वाच्यम् आत्मसमवेतत्वस्योपाधित्वात् घट आकाशजन्य उत्पत्तिमत्त्वात् शब्दवदिति वत् अप्रयोजकत्वाच्चेति चेन्मैवं प्रयत्नवदात्मसंयोगचेष्टाद्वारा घटहेतुरतः प्रयत्नवानात्मापि हेतुः न चात्मसंयोगे सत्यपि प्रयत्नं विना न चेष्टेति प्रयत्न एव तत्कारणम् असमवायिकारणं विना कार्य्यानुत्पत्तेः न चात्मसंयोगस्य कारणत्वेऽपि संयोगपरिचायकमात्मेति वाच्यं संयोगमात्रस्याकारणत्वेन संयोगिविशेषितस्य हेतुत्वात्। आत्मसंयोगव्यतिरेकप्रयुक्तक्रियाव्यतिरेकासिद्धेनात्मसंयोगः कारणमिति चेन्न या क्रिया व्यधिकरणवदीयगुणजन्या सा तत्संयोगासमवायिकारणिका यथा सर्भवद्-

द्रव्यसंयोगजक्रियेति तत्सिद्धेः न च क्रियायामूर्त्तमात्रसमवेतासमवायिकारणत्वनियमः कार्य्यमात्राभिप्रायेण ज्ञानादौ व्यभिचारात् विशेष्याप्रयोजकत्वात् असमवायिकारणसंयोगान्वयस्य तत्कार्य्यजनकत्वनियमाच्च । अन्ये तु अनुकूलकृतिसमवायित्वं कर्त्तृत्वं न तु जनकत्वे सति, गौरवात् कर्त्तरि कारकव्यवहारस्याभियुक्तानां "सविशेषण" इति न्यायेन कृतिपर्य्यवसन्न एव । एवं ज्ञानेच्छाकृतिजन्यत्वमेव साध्यं तदाश्रयत्वमेवेश्वरस्य कर्त्तृत्वम् । अथ घटे कृतिसाध्येष्टसाधनताज्ञानं चिकीर्षाद्वारा हेतुः तच्च न प्रत्यक्षं चिकीर्षाविषयेऽनागते इन्द्रियासामर्थ्यात् किन्त्वनुमितिरूपं तथा च साध्यविकलो दृष्टान्तः साध्याप्रसिद्धिर्वेति चेन्न सिद्धत्वसिद्धविषया हि कृतिः सिद्धविषयप्रत्यक्षे सति भवति न हि सूपौदनयवागूनां संस्थानविशेषे कृतिसाध्येष्टसाधनारम्भकावयवस्य प्रत्यक्षेणोपस्थितिं विना प्रवृत्तिः अतएव यागे शब्दात्तदुपजीविलिङ्गाद्वा कृतिसाध्येष्टसाधनत्वे ज्ञातेऽपि हविरादीनां प्रत्यक्षेणानुपस्थितौ न प्रवृत्तिः न चोपादानप्रत्यक्षं प्रवर्त्तकज्ञानोपक्षीणम् अप्रत्यक्षपरमाणौ तत्क्रियायामिष्टसाधनताज्ञानेऽप्यप्रवृत्तेः प्रवृत्तिविषयस्वदद्भुराद्रेः प्रत्यक्षत्वाच्च शब्दकृतकारादिना व्यभिचारः न चाभिमतपाकेन्द्रियसंयोगाज्जनकसि प्रयत्नजन्यक्रियाप्रदर्शनाद्व्यभिचारः अदृष्टसहकृतत्वगिन्द्रियेण हि मनोवहनाडीनामुपलम्भेन तद्गोचरप्रयत्नाद्धाडीक्रिया ततः सर्वदेहगवहनाड्या नोदनाज्जनकसि क्रिया न तु प्रयत्नात् । अतएव जलाद्यभ्यवहारजलोत्सर्गहेतुनाडीनामनाद्यभ्यासवासनावशाददृष्टसहकृतत्वगिन्द्रियेणोपलम्भात् तद्गोचरः प्रयत्नः । नन्वेवं घटादावनुमितेर्जन्यत्वदर्शनादीश्वरेऽनुमितिरेव न सिद्ध्येत् यथा च प्रत्यक्षस्येन्द्रियजन्यत्वेऽपि नित्यं तदीश्वरे तथानुमितेर्नित्यं जन्यत्वेऽपि सा तत्र नित्यैव अनित्येनानादिद्व्यणुकाद्यजननादिति चेन्न सुखदुःखाभावादिसाधनानुमिते तर्हि घटादौ हेतुत्वं गृहीतं न च तावता शरीराद्यभावेन सुखमपत्यो न विषादौ तत्त्वानुमितिरिष्यर्थायां स्यात् न च तादृशानुमितेरनुमित्यन्तरस्य वाऽनुमितित्वेन घटादौ कृतिविषयत्वमत्र हेतुत्वं गृहीतमतो नेश्वरेऽनुमितिः । नन्वदृष्टजन्यकृतिसाध्ये चिकीर्षाविरहाद्व्यभिचारः तद्दृष्टान्तेन शिवादौ द्वेषसाध्यत्वादीश्वरे द्वेषोऽपि स्यात् द्वेषवतः संसारित्वेन भगवतोऽपि तथा स्यादिति चेन्न न हि सर्वादिद्वेषादेव तत्साधनतानुकूलव्यापारे कृतित्वमर्हतीति प्रयोजनं विना दुःखैकफले प्रेक्षावतां कृतेरनुपपत्तेः किन्तु दुःखसाधनध्वंसं तत्साध्यदुःखानुत्पादं वा फलमुद्दिश्य तत्साधनताज्ञानात्, तथा चेष्टसाधनताज्ञानाद् इच्छाऽपेक्षेति सैव कृतिकारणं क्लृप्तत्वात् द्वेषस्तु परम्परया तदुपक्षीणः, कुतस्तर्हि द्वेषः, यत्तु द्वेष्मीति अबाधितप्रत्ययात् । न चादृश्यकर्त्तुरनुपलब्धिबाधः, अनुपलब्धिमात्रस्य बाधकत्वेऽतीन्द्रियोच्छेदात् योग्यानुपलब्धेरसिद्धेः परात्मनोऽयोग्यत्वनियमात् शशशृङ्गप्रतिबन्द्या च नादृश्यमात्रनिरासः परमाण्वादिस्वीकारात् नाप्ययोग्यकर्त्तृकनिरासः चेष्टया ज्ञानादिमतः परात्मनोऽनुमानात् परं प्रति तस्य योग्यत्वात् । नापि शरीरं पशुत्ववद् प्रयोजकं, कर्त्तुः कार्य्यमात्रे कारणत्वावधारणात् प्रतिबन्दिमात्रस्यादूषणत्वात् । शशे पशुत्वे नायोग्यशृङ्गसिद्धिः कुतो नेति चेत् अर्थान्तरत्वात् विपक्षे बाधकाभावात् व्याप्त्यसिद्धेः शृङ्गत्वस्य योग्यसंस्थानविशेषव्यङ्ग्यत्वे योग्यस्य विरोधेन शङ्कितुमशक्यत्वात् शशे शृङ्गस्यात्यन्ताभाव इति सर्वेषामबाधितप्रत्यक्षबाधितत्वाच्च । अथ कृतिकार्य्ययोर्नान्वयव्यतिरेकाभ्यां व्याप्तिग्रहः नित्यकृते व्यापककृतेः सत्त्वेन देशे समये वा कृतिमात्रव्यतिरेकानिरूपणात् नित्यकृतेरन्वयोऽपि गृहीतो न वह्निमात्रव्यतिरेकोऽस्ति गृह्यते च । न चैवमाकाशात्मनोरप्यसिद्धिः समवायिमात्रस्य व्यतिरेकानिरूपणेन कार्य्यं समवायिकारणजन्यमिति व्याप्तेरसिद्धेरिति वाच्यं समवायिकारणत्वग्रहे हि तस्य संसर्गाभावोऽप्रयोजको निमित्तमात्रसाधारणत्वात् किन्तु यत्समवायि तत्र कार्य्यं यत्र समवायि तत्र नेत्यन्योन्याभावमादाय कार्य्यं समवायिजन्यमिति व्याप्तिग्रहसम्भवात् । समवायित्वेन तयोरन्योन्याभावोऽस्ति गृह्यते च । यद्वा भावकार्य्यं समवेतमिति व्याप्त्या तयोः सिद्धिरिति यथा हि यद्वह्नेरन्वये धूमो गृहीतस्तद्व्यतिरेके धूमव्यतिरेकग्रहात् वह्निधूममात्रयोर्व्याप्तिग्रहः न तु पर्वतीयवह्नेः अन्वयव्यतिरेकग्रहात् । न चान्यान्वयव्यतिरेकाभ्यामन्यव्याप्तिग्रहेऽतिप्रसङ्गः तद्विशेषयोरन्वयव्यतिरेकग्रहः तत्सामान्ययोर्बाधकं विना व्याप्तिग्रहात् न च वह्निधूमव्याप्तिग्रहे उत्पद्यमानः सकलधूमगोचरो धूमत्वपुरस्कारेण प्रसिद्धधूमगोचर एव न भवति । तद्वेहापि कृतिविशेषकार्य्यविशेषयोरन्वयव्यतिरेकग्रहो बाधकं विना कृतिकार्य्यत्वमात्रयोर्व्याप्तिग्रह उपायः न तु पक्षधर्मतावशेन अविशेषान्वयव्यतिरेकग्रहः अनुमानमालो-

च्छेदप्रसङ्गात्। एतेन "कार्य्यत्वस्य विपक्षवृत्तित्ववे सम्भाव्यतेऽतीन्द्रियः कर्त्ता चेद्व्यतिरेकसिद्धिविधुरा व्याप्तिः कथं सिध्यति। दृश्योऽपि व्यतिरेकसिद्धिमनसा कर्त्ता समाधीयते तस्याद्यापि तदा दृशादिकमिति व्यक्तं विपक्षेक्षणमिति"निरस्तम्। ननु यदि कर्त्तृमात्रव्यतिरेकपक्षादृश्यकर्त्तृसिद्धिस्तदा वह्निमात्रव्याप्यधूमाददृश्यजठर्य्यसिद्धिरपि स्यात्, न स्यात् अदृश्यवह्नेर्धूमानुपपत्तेः दृश्यस्यैव तत्र हेतुत्वात्। ननु ज्ञानेच्छाप्रयत्नत्रयव्यतिरेकान्न कार्यव्यतिरेकः किन्तु एकैकव्यतिरेकात् तथा च व्यर्थविशेषणत्वे विशिष्टव्यतिरेको न हेतुव्यतिरेकव्याप्य इति न हेतोर्विशिष्टसिद्धिः साध्याभावव्यापकाभावप्रतियोगिन एव साध्यगमकत्वादिति चेन्न यत एकैकव्यतिरेकात् कार्यव्यतिरेकोऽतएव कार्यत्वादेकैकं सिध्यत्त्रयमपि सिध्यति। चार्थस्तु समाजः।

स्यादेतत् अशरीरसर्वज्ञनित्यज्ञानादिमान् कर्त्ता पक्षे विवक्षितः घटादौ च कार्य्यत्वस्य तद्विपरीतकर्त्तृसहचारादिदर्शनाद्विशेषविरुद्धत्वमिति न हेतोर्विवक्षितसाध्यविपरीतसहचारमात्रस्यादूषणत्वात् अन्यथानुमानोच्छेदप्रसङ्गात्। न चानित्यज्ञानासर्वज्ञशरीरकर्त्तृत्वेन समं कार्य्यत्वस्य व्याप्तिरस्ति येन तद्विपरीतसाधने विरुद्धं स्यात् तादृशव्याप्तिश्च त्वया मया वा नाङ्गीक्रियते अङ्कुरादौ योग्यानुपलम्भेन शरीरिकर्त्तृत्वाभावात्। अथ यथादर्शनपक्षसहचरव्याप्त्याऽनित्यज्ञानादिमान् कर्त्तोपनेयः पक्षधर्म्मतया च नित्यज्ञानादिमान् तथा चोपनेयविशेषयोर्विरोधेन व्याप्तिपक्षधर्म्मतयोर्विरोधात् परस्परसहकारिताविरहाच्चानुमानविशेषविरोधादिति चेन्न अनित्यज्ञानादिकर्त्तृजन्यत्वेन व्याप्त्यभावात् ज्ञानादिमत्कर्त्तृजन्यत्वव्याप्तेः पक्षधर्म्मतावलेभ्यः विशेषाविरोधात् केवलाया व्याप्तेः पक्षधर्म्मतायाश्च दृष्टसुपनायकत्वाभावाच्च एकवैयर्थ्यप्रसङ्गाच्च तथा च निरपेक्षतायां विशेषानुपस्थापनादेव न विरोधज्ञानं सापेक्षतादशायाञ्च सहोपलम्भादेव विरोधप्रतियोगिनोः सिद्ध्यसिद्धिभ्यां विरोधभानज्ञानाभावाच्च। लिङ्गविशेषेण साध्यविशेषेण च एव विरोधे च विशेषविरोधः यथा चन्दनप्रभववह्निमानयं सुरभिधूमवत्त्वात्। ननु ज्ञानत्वनित्यत्वयोः कर्त्तृताशरीरित्वयोश्च परस्परविरुद्धत्वेन एकधर्म्म्यसमावेशात् कथं नित्यज्ञानादिकर्त्तृसिद्धिः, न उपसंहारस्थानाभावात्। तथाहीश्वरे तद्बुद्धौ चाशरीरित्वकर्त्तृबुद्धिनित्यत्वे च उपसंह्रियमाणे विरुद्धे, न तु स्वाश्रयस्थिते उभयोच्छेदप्रसङ्गात्, न चेश्वरत्वाद्बुद्धिर्नोपस्थिता उपस्थितौ वा धर्म्मिग्राहकमानेन तयोर्विरोधापहारात् अनुपस्थिते च तयोर्विरोधज्ञानमकिञ्चित्करमेव स्वाकारादि बुद्धौ व्योमादौ कुविन्दे दृष्टाकाले च उपस्थिते विरोधोपसंहारात्, बुद्धिनित्यत्वयोः कर्त्तृत्वाशरीरित्वयोरनधिगमेऽपि ईश्वरेऽशरीरिकर्त्तृत्वनित्यज्ञानादिसिद्धिरप्रत्यूहैव। अतएव नित्यत्वावयवत्वयोर्विरोधज्ञानमकिञ्चित्करमेवेति परमाणुसिद्धिः। ईश्वरतद्बुद्ध्यादिकं तर्कितमिति चेन्न तर्कस्य प्रसञ्जनस्य संशयस्य वाऽज्ञानेऽसम्भवात्। स्यादेतत् घटादौ कृतिसाध्यता हस्तादिव्यापारादिद्वारैव न तु साक्षात्, न च पितापुत्रयोरेकघटसाधकत्वमिव प्रयत्नहस्तादिव्यापारयोः साधकत्वं वाच्यं घटार्थं हस्तव्यापारादिना व्याप्रियमाणकुलालसमीपदेशस्थस्य हस्तादिव्यापारशून्यस्य तद्घटकर्त्तृत्वापत्तेः न च हस्तादिव्यापारवत्ताऽशरीरस्य सम्भवति अन्यादृशी च कृतिसाध्यता न दृष्टा, शरीरतद्व्यापारौ चाङ्कुरे बाधिताविति कर्त्तुरपि बाधः। अन्यथा तदनुमानात् चेतन एव कर्त्ता क्षितौ च अनुमीयते बुद्ध्यादिमत्परात्मनो योग्यानुपलब्धिबाधाभावात् शरीरव्यापारद्वारैव चेतनस्य हेतुत्वात् शरीरव्यापारस्य चाङ्कुरे बाधात् बाधित इति चेत्तर्हि कर्त्तृमात्रस्यापि तद्द्वारैव चेष्टेतरकार्य्यकर्त्तृत्वदर्शनात् तत्रापि कर्त्तृमात्रे बाधोऽपि। एवञ्च कृतिसाध्यत्वे शरीरव्यापारजन्यत्वं प्रयोजकमिति सपक्षोपाधिः। एवं ज्ञानेच्छयोरपीच्छाकृतिद्वारा जनकत्वमिति कथं द्वारं विना क्षित्यादौ जनकत्वमिति। उच्यते। जन्यमात्रे हस्तादिजनककृतित्वेन न जनकत्वं चेष्टायां क्षित्यादौ च व्यभिचारात् घटादौ च तथा जनकत्वमिति जन्यमात्रे कृतिमात्रस्य जनकत्वविरोधिविशेषयोर्जन्यजनकभावे बाधकं विना सामान्ययोरपि तथाभावनियमात्। न हि विशेषे विशेषप्रयोजकत्वेन सामान्यप्रयोजकत्वविरोधः। चेष्टेतरकार्य्ये शरीरद्वारैव कृतेर्हेतुत्वात् तेन विना क्षित्यादौ न कृतिसाध्यत्वमिति चेत् चेष्टेतरकार्य्यमात्रे शरीरव्यापारकृतित्वेन जनकत्वे क्षित्यादौ व्यभिचारात्। किन्तु तद्विशेषघटादौ प्रयुक्तत्वात्। न चैवमात्मपातजड़ीकृतकलेवरस्य प्रयत्नादेव घटोत्पत्तिः स्यात् हस्तादिव्यापारं विनैव कृतेर्हेतुत्वादिति वाच्यं घटे कृतौ हस्तादिव्यापारस्यापि हेतुत्वात्। यदुक्तं चेतन एव कुतोनानुमीयत इति तत्र हस्तादिव्यापारककृतिमान् यदि चेतनोऽभिमतः तदा हस्तादिव्यापारस्याङ्कुरे योग्यानुपलब्धिबाधात् अथ हस्तादिव्यापाररहितकृतिमानभिमतस्तदोमित्युच्यते स इत

भगवानीश्वरः । अतएव सहभावनिरूपकत्वं नियतपूर्ववर्त्तित्वं कारणत्वं समवाय्यसमवायिनोस्तथात्वेन निमित्तेऽपि तथाभावात् अन्यथा प्रतिबन्धकाभावानन्तरं प्रतिबन्धकसत्त्वे कार्य्यं स्यात् प्रतिबन्धकाभावस्य पूर्वं सत्त्वात् न च कृतेः सहभावनिरूपकत्वं स्वतः कार्य्यसमयेऽभावात् तथा चैतत्परिचायितव्यापारद्वारा तस्याः सहभावनिरूपकत्वमतः शरीरव्यापारद्वारैव कृतेर्जनकत्वं न केवलाया इत्यपास्तम् समवाय्यसमवायिप्रतिबन्धकाभावानामविनश्यदवस्थत्वेन कारणत्वात् तथैवान्वयव्यतिरेकात् तेन तेषामभावे विनाशक्षणे च कार्य्यं मा भूत्, अन्यथा प्रतिव्यक्ति कार्य्यसहभावनिरूपणे कार्य्योत्पत्तेः प्राक्सहभावस्य निरूपयितुमशक्यत्वात् कारणत्वानिश्चये क्वापि प्रवृत्तिर्न स्यादिति, तज्जातीयत्वस्यावश्यवाच्यत्वे विनश्यदवस्थं कथं सहभावेनापि अवच्छेद्यम् अतः स्वरूपयोग्यतारूपा कारणता तत्रापि, कार्य्याभावस्तु सहकारिविरहात् अन्यथा निमित्तानां प्रत्येकं कार्य्यसहभावनिरूपकत्वेन जनकत्वे गौरवं प्रागभावस्य प्रतियोग्यजनकत्वप्रसङ्गात् अन्यथा उत्पन्नोऽपि पुनरुत्पद्येत सामग्रीसत्त्वात् । न च स एव तत्र प्रतिबन्धकः अभावान्तरस्याकारणत्वेन तत्र कारणीभूताभावप्रतियोगित्वरूपस्य प्रतिबन्धकत्वस्य प्रागभावकारणत्व एव विश्रामात् । न चैकसामग्री एकदा एकमेव कार्य्यं जनयति स्वभावादिति वाच्यं सामग्रीतदितरस्य कार्य्यतदभावप्रयोजकत्वेन सामग्र्यां सत्यां कार्य्यस्य, तदभावे सामग्रीविरहस्य कार्य्याभावस्य व्यवस्थापयितत्वात् । स्यादेतत् कर्त्ता शरीर्य्येव ज्ञानमनित्यमेव बुद्धिरिच्छाद्वारैव कृतिद्वारैवेच्छा हेतुरित्यादि प्राथमिकप्राप्तप्रत्यक्षविरोधात् नाशरीरनित्यज्ञानादिकर्त्तृसिद्धिः । अतएव शरीरमनित्यमेवेति नियमाच्च कर्त्तृत्वेन नित्यातीन्द्रियशरीरसिद्धिरीश्वरे । न चाप्रयोजकं निरुपाधित्वेन सकलसहचारदर्शनवतारात् कार्य्यत्वसकर्त्तृकत्वयोर्यदि निरुपाधिकत्वमस्ति तदापि तुल्यबलत्वेन सत्प्रतिपक्षात् तत्प्रतिबन्धोऽस्तु । न च कार्य्यत्वं पक्षधर्म्मतासत्त्वाद्बलीयः कर्त्ता शरीर्य्येवेत्यादौ तन्नास्तीति वाच्यं ज्ञानमनित्यमेवेति व्याप्तेरेव ज्ञानजन्यत्वविरोधित्वात् एवं कार्य्यं ज्ञानजन्यं ज्ञानमनित्यमेवेत्यनयोर्विरोध एव अविरोधे तु द्वयमपि स्यात् तथा च क्षित्यादौ शरीर्य्यनित्यज्ञान पर्य्यवसाने विरोध एव स्यात् । किञ्च ज्ञानमनित्यमेवेत्यादौ नित्यज्ञानादेरप्रसिद्धेः तद्व्यावर्त्तकतया नोपाधिनिश्चयस्तत्संशयो वा कार्य्यत्वसकर्त्तृकत्वव्याप्तिदशायां शरीरव्यापारव्यभिचारात् उपाधेर्निश्चयः संशयो वास्तीति तत्र ज्ञानमनित्यमेवेत्यादिव्याप्तेरसिद्धेः विपक्षे बाधकाभावेनाप्रयोजकत्वात् निरुपाधिसहचारदर्शनव्यभिचारादर्शनादेव व्याप्तिग्रहः । निरुपाधित्वमेव विपक्षे बाधकमिति चेन्न अवयवोपचयानेव तेज उद्भूतरूपमेवेत्यादि व्याप्तिग्रहात् परमाणुनेत्रादेरसिद्धिप्रसङ्गः । अतएव चाक्षुषत्वेऽनेकद्रव्यवत्त्वस्य, साक्षात्कारे विषयेन्द्रियसन्निकर्षस्य हेतुत्वात् तन्मूलकविपक्षबाधकेन परमाण्वादिबाधकस्य बलवत्त्वात् परमाण्वादिसिद्धौ विरोधिव्याप्तेर्बाधः न तु वैपरीत्यं विपक्षे बाधकाभावेन तस्याबलवत्त्वादिति मन्यसे तर्हि ज्ञानादिकार्य्यकारणभावावधारणात् तन्मूलकविपक्षबाधकेन निष्कलङ्कव्याप्तिग्रहात् पक्षधर्म्मतासहकृताच्च नित्यज्ञानादिसिद्धौ व्यभिचाराच्च व्याप्तिः । अन्यथा साध्यं पक्षातिरिक्त एवेत्यादिनिरुपाधिसहचाराद्व्याप्तिग्रहणवत्त्वात् सकलानुमानोच्छेदः । वयन्तु ब्रूमः । पक्षधर्म्मतावलान्नित्यं ज्ञानं सिध्यत् बुद्धिरनित्यैवेति व्याप्तिप्रत्यक्षेण न प्रतिबध्यतेऽस्मदादिबुद्धिविषयकत्वेन भिन्नविषयकत्वात् एकविषयविरोधिज्ञानस्यैव प्रतिबन्धकत्वात् नित्यत्वानित्यत्वयोरेकजातीये द्रव्येऽविरोधात् । बुद्धिमात्रेऽनित्यत्वावगमात् कथं तद्विशेषनित्यत्वबुद्धिरिति चेन्न बुद्धिमात्रस्येश्वरानीश्वरबुद्धिपरत्वे विरोधात् व्यभिचाराच्च अस्मदादिबुद्धिपरत्वे च भिन्नविषयत्वेनाप्रतिबन्धकत्वात् । बुद्धित्वं नित्यावृत्ति वेत्यवगतमतस्तत्र कथं नित्यवृत्तित्वावगम इति चेन्न उभयसिद्धनित्यावृत्तित्वावगतौ विरोधाभावात् । बुद्धित्वमनित्यत्वव्याप्यमवगतं नानित्यत्वाभाववति ज्ञातव्यमिति चेत् अनित्यत्वव्याप्यमनित्यमात्रवृत्तित्वं तत्र चोक्तमेव । एतेन कर्त्ता शरीर्य्येवेत्याद्यपि ज्ञानं प्रतिबन्धकमिति निरस्तम् । ननु कर्त्तृजन्यत्वे जन्यत्वं नावच्छेदकं किन्तु घटत्वादिकमेव तेनैव रूपेणान्वयव्यतिरेकात् आवश्यकत्वाच्च अननुगतमपि जन्यतावच्छेदकं वह्निजन्यतायां धूमत्वादिवत् । अथ घटत्वादिव्याप्यजन्यत्वमवच्छेदकं न हि विशेषोऽस्तीति सामान्यमप्रयोजकं तथा च वह्निजन्यत्वे धूमविशेषः प्रयोज्योऽस्तीति न धूमसामान्यमग्निं गमयेत् तद्विशेषयोः कार्य्यकारणभावः तत्सामान्ययोरपि बाधकं विना तथात्वनियमः । न तत्र बाधकाभावात् अत्र ज्ञानमनित्यमेवेत्यादि प्राथमिकबहुव्याप्तौ बाधात् तुल्यत्वेन व्याप्तिसंशयाधायकत्वात् । न च कार्य्यकारणभावमूलकत्वेन कार्य्यत्वव्याप्तिर्बलीयसीति वाच्यं विरोधिप्रत्यक्षेण कारणभावस्यैवासिद्धेः । एतेन धूमादौ वह्नित्वं जन-

कतावच्छेदकमनुगतं सम्भवतीति कृत्न जन्यत्वमनु-
गतमक्कतो बाधकं विना न मुच्यते इति, निरस्तम् । ज्ञा-
नमनित्यमेवेत्यादिसहचारावसायस्य बाधकं विना पक्षधर्म-
व्याप्तिपर्य्यवसायितत्वेन बाधकत्वादिति मैवम् निरु-
पाधित्वेन सहचारावसायस्य साधकं बाधकं च विना
साधारणत्वे व्याप्तिसंशयाधायकत्वात् । अन्यथा साध्यं
पक्षातिरिक्त एव सुखं दुःखसंभिन्नमेवेत्यादि व्याप्ति-
प्रहस्य कार्य्यकारणभावग्राहकबाधकत्वे तत्संशायकत्वे वा
कारणानुमानोच्छेदनिरीहं जगज्जायेत । तस्माद्विशे-
षयोः कार्य्यकारणभावस्तत्सामान्ययोः कार्य्यकारणभा-
वो बलवता बाधकेनापनीयाते, न चात्र तदस्ति विरो-
धिव्याप्तिसाधकस्य विपक्षबाधकस्याभावात् । नव्यास्तु
कार्य्यं कर्तृजन्यमिति व्याप्तितोऽशरीरनित्यज्ञानकर्त्रुप-
स्थितौ ज्ञानमनित्यमेवेत्यनेन विरोधप्रतिसन्धाने न तु तां
विना प्रतियोग्यनुपस्थितौ विरोधोऽनिरूपणात् तथा चोप-
जीव्यबाधात् ज्ञानमनित्यमेवेति व्याप्तिज्ञानमकिञ्चित्कर-
मेव । अतएव पक्षधर्मताविनाकृतं विरोधिव्याप्तिज्ञानं न हे-
त्वाभासतयोक्तं विरोधिप्रतियोगिसिद्ध्यसिद्धिपराहतत्वादिति

स्यादेतत् अस्तु शरीरजन्यत्वमुपाधिः न च पक्षेतरत्वरू-
पविपक्षमात्रव्यावर्त्तकविशेषणत्वात् साधनविशेषितत्वात् सा-
धनतुल्ययोगक्षेमत्वेन साध्यव्यापकत्वानिश्चयाच्च नोपाधित्वं,
चेष्टेतरकार्य्येषु शरीरव्यापारद्वारैव कर्त्तुः कारणत्वात्
न हि शरीरविनाकृतः कर्त्ता शरीरक्रियां घटादिकं वा
जनयति ! न च यस्य हृतं यज्जनकम् तेन विना तज्जन-
कम् अतोऽस्माच्छरीराज्जन्यमेव कर्तृजन्यमिति साध्यव्या-
पकत्वनिश्चयात् । पक्षेतरत्वादौ च विपक्षबाधकाभावाच्च
साध्यव्यापकतानिश्चय इति तेषामनुपाधित्वे बीजम् । अत
एव बाधोन्नीतं पक्षेतरत्वं वह्निमत्त्वेन धूमवत्त्वे साध्ये आ-
र्द्रेन्धनप्रभववह्निमत्त्वं रसवत्त्वेन गन्धवत्त्वे साध्ये पृथिवी-
त्वमुपाधिः विपक्षबाधकैस्तेषां साध्यव्यापकत्वनिश्चयात् । न
च साधनविशेषितत्वमपि, जन्यत्वं प्रागभावप्रतियोगित्वं श-
रीरजन्यत्वञ्च शरीरकारणकत्वमन्यानिरुक्तेः इतरपदसमभि-
व्याहारेण जन्यपदादितरकारणकत्वस्यैव प्रतीतिकादर्थत्व-
कल्पनादिति विधौ वक्ष्यते । अतएव शरीरिकर्तृकत्वमुपाधिः
शरीरसहकृतस्यैव कर्त्तुः कारणत्वात् व्याप्यव्यापकयोरन्यो-
न्यनिवेशयत एव प्रमाणस्य व्याप्तिग्राहकत्वात् । शरीरिक-
र्तृकत्वकर्तृकत्वयोर्न व्याप्तिपक्ष इति चेन्न विशिष्टा-
विशिष्टभेदेन व्याप्यव्यापकभावाविरोधात् । अत एव जन्यत्वे

कारणजन्यत्वमनुमीयत इति, मैवं कर्तुर्हि शरीरसहका-
रिता किं घटादौ कर्त्तव्ये कार्य्यमात्रे वा स्वकार्य्ये वा आद्ये
कर्त्ता शरीरं विना घटादिकं न करोतीति किमायातं कर्त्तुः
कार्य्यमात्रकरणे । द्वितीये च कार्य्यमात्रं कर्त्तृजन्यमिति
न त्वया स्वीक्रियते स्वीकारे वा शरीराजन्यमपि कार्य्यं
कर्त्तृजन्यमिति साध्याव्यापकत्वम् । तृतीये तु न स्वजन्यत्वं
स्वजन्यतावच्छेदकमात्माश्रयात् । तथापि यत्र कर्तृत्वमस्ति
तत्र शरीरजन्यत्वमावश्यकमिति तस्य साध्यव्यापकत्वं तु-
ल्ययोगक्षेमत्वेन हेतुव्याप्यतासंशयाधायकत्वेन सन्दिग्धो-
पाधित्वं वेति चेन्न लाघवेन बाधकं विना कर्तृजन्यत्वे
सति जन्यत्वमवच्छेदकं न तु शरीरजन्यत्वं गौरवात्
तथा च शरीरजन्यत्वं न सकर्तृकत्वव्यापकं घटादौ
त्वार्थः समाजः,घटत्वेन शरीरजन्यत्वनियमात् न तु व्या-
पकत्वप्रयुक्तं मानाभावात्, शरीरजन्यत्वं न सकर्तृकत्व-
व्यापकं तद्व्याप्यजन्यत्वाव्यापकत्वात् नित्यत्ववदिति बाध-
कात् इच्छादिनापि कर्त्तृत्वनिर्वाहेण शरीरस्याप्रयोजक-
त्वात् साक्षात्प्रयत्ननिर्वेयजन्यत्वस्य साधनव्यापकत्वाच्च ।
शरीरिकर्त्तृकत्वमपि नोपाधिः जन्यमात्रे कर्त्तुः शरीर-
सहकारिताविरहात् । अथ यद्विशेषयोः कार्य्यकारण-
भावस्तत्सामान्ययोरपि बाधकं विना तथा नियम इति
त्वया निरटङ्कि तथा च कर्त्तृविशेषशरीरजन्यविशेषयोः
कार्य्यकारणभावनियमात् कर्त्तृमात्रशरीरजन्यमात्रयो-
रपि तथाभावः तथा च शरीरजन्यत्वं कर्त्तृतावच्छेदक-
मिति भवत्युपाधिः । नचैवं घटवच्छरीरजन्यत्वं सकर्त्तृ-
कत्वव्याप्यं न व्यापकमपीति वाच्यं उभयसिद्धसकलस-
कर्त्तृकत्वव्यक्तित्वेन साध्यव्यापकतानिर्णयात् जन्यत्वेऽपि
सकर्त्तृकत्वव्यापकत्वग्राहकमस्तीति चेन्नहि उभयत्र ग्राह-
कसाम्ये विनिगमकाभावात् व्याप्तिसंशयाधायकत्वेन
सन्दिग्ध उपाधिर्व्याप्यत्वासिद्धिर्वा । हेतुव्याप्यतासंशया-
धायक एव सन्दिग्धोपाधिः न च साध्यव्यापकत्वे साध-
नाव्यापकत्वे वा, उभयथैवासन्देहात् । न च वाच्यं शरीर-
जन्यत्वयोरन्वयव्यतिरेकज्ञाने जन्यत्वसकर्तृकत्वयोस्तद्ग्रह
आवश्यक इति लाघवात् तयोरेव व्याप्तिग्रहो न तूपाधि-
साध्ययोः हेतुसाध्ययोरन्वयव्यतिरेकज्ञानात् शरीरजन्यता-
नवगमेऽपि भवतीति विनिगमकमिति, यतो न कर्तृमात्र-
जन्यमात्रयोरन्वयव्यतिरेकाभ्यां व्याप्तिग्रहः कर्तृमात्रस्य
व्यतिरेकाभावात् । किन्तु विशेषयोरन्वयव्यतिरेकेण का-
र्य्यकारणभावेन वा सामान्ययोरुपाधानुपलब्धौ च तुल्यावे-

चेति चेदुच्यते । अस्तु तावत् घटत्ववत् जन्यत्वशरीरजन्यत्वयोरपि कर्तृजन्यतावच्छेदकत्वेन सकर्तृकत्वव्याप्यत्वं व्यापकसमानत्वात् विनिगमनाभावाद्विरोधाभावाच्च सकर्तृकत्वव्यापकत्वन्तु शरीरजन्यत्वस्य कुतः, घटत्ववद्व्यापकस्यापि जन्यतावच्छेदकत्वात् । उभयसिद्धसकर्तृकेऽन्वयव्यतिरेकाभ्यां शरीरजन्यत्वस्य व्यापकत्वग्रह इति चेन्न शरीरजन्यत्वविनिवेशप्रत्वेन तज्जन्यत्वेन प्रथमं कर्तृजन्यत्वे जन्यत्वमवच्छेदकं क्लृप्तमिति तद्विरोधेन शरीरजन्यत्वस्य सकर्तृकत्वव्यापकत्वानवगमात् । अतएव न संदिग्धोपाधित्वम् । ननु घटादौ शरीरजन्यत्वे कर्तृजन्यत्वमनुगतमवच्छेदकं बाधकाभावात् न च लाघवाद्घटत्वादिकमेव तथा, कर्तृजन्यत्वेऽपि जन्यत्वस्यातथात्वापत्तेः । एवं शरीरजन्यत्वस्य व्याप्यं सकर्तृकत्वं वह्नेर्धूम इवेति भवत्युपाधिः । किञ्च कर्तृजन्यत्वे जन्यत्वं शरीरजन्यत्वे वा सकर्तृकत्वमवच्छेदकमिति संशयेऽपि न हेतोः साध्यव्याप्यतानिश्चय इति चेत्तर्हि घटादौ कर्तृजन्यत्वे गृहीते तस्य शरीरावच्छेदकत्वं ग्रहीतव्यं घटे च घटत्ववज्जन्यत्वमपि बाधकं विना कर्तृजन्यतावच्छेदकं गृहीतमतोजन्यमात्रे कर्तृजन्यत्वाच्च शरीरजन्यत्वे तदवच्छेदकं प्रथमगृहीतोपजीव्यविरोधात् । अतएव न तस्य हेतौ व्याप्तिसंशयाधायकत्वमपि । एतेनानणुत्वचित्त्वावयवत्त्वज्न्यत्वादय उपाधित्वेन निरस्ताः जन्यत्वस्य साध्यव्याप्यत्वेन तेषां साध्याव्यापकत्वात् । तथापि क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात् व्योमवदिति सत्प्रतिपक्षोऽस्त्विति चेत् न अस्य प्रसिद्धकर्तृजन्यत्वाभावविषयकत्वात् अप्रतीत प्रतियोगिकस्याभावस्य निरूपयितुमशक्यत्वात् स्थापनानुमानस्य पक्षधर्मताबलात् प्रसिद्धकर्तृभिन्नकर्तृकत्वसाधकमतोभिन्नविषयकत्वान्न प्रतिबध्यप्रतिबन्धकभावः । अतएव तद्व्यापकरहितत्वादिकमभावसाधकं बाधकमपास्तं तस्य प्रसिद्धाभावविषयकत्वेनाप्रसिद्धाभावाविषयकत्वात् । व्याप्तिसाधकस्य विशेषतोऽप्रसिद्धव्याप्तिसाधकत्वनियमात् अन्यथानुमानवैयर्थ्यात् । कर्तृजन्यत्वमनुगतं घटादौ प्रसिद्धं यत् साध्यं तदभावो मया साध्यत इति चेत् कर्तृजन्यत्वमनुगतमपि पक्षधर्मताबलेन प्रसिद्धं कर्त्तारमादाय पर्य्यवस्यति तदभावस्तु प्रसिद्धस्य कर्त्तुरभावमादाय सिद्ध्यति नाप्रसिद्धस्य अनुगतस्यापि कर्तृजन्यत्वस्य तदभावस्य च, कर्तृव्याप्तिघटितत्वात् अन्यथा व्याप्तितदभावासिद्धिप्रसङ्गात् । नचैवं सत्प्रतिपक्षोच्छेदः तस्य गोत्वाद्येकभावाभावविषयकत्वात् । एतेन ज्ञानत्वं न नित्यवृत्ति ज्ञानमात्रवृत्तिधर्मत्वात् कृतित्ववत्, ज्ञानं न नित्यगुणवृत्तिगुणत्वव्याप्यजातियोगि चेतनविशेषगुणत्वात् सुखवत् "आत्मा न नित्यविशेषगुणाधारवृत्तिद्रव्यत्वापरजातिमान् विभुत्वात् गगनवदित्याद्यपास्तं, प्रसिद्धनित्ये व्योमादौ प्रसिद्धायाश्च रूपत्वत्वत्वादिजातेर्व्यतिरेकविषयत्वात् अप्रयोजकत्वाच्च । किञ्च क्षित्यादौ शरीराजन्यत्वमसिद्धम् अदृष्टद्वारा तज्जन्यत्वात् नचादृष्टाद्वारकजन्यज्ञानाजन्यत्वं हेतुः ज्ञाने जन्यत्वविशेषणस्याव्यावर्त्तकतया वैयर्थ्यात् । न च स्थापनायां पक्षविशेषणेऽप्येष दोषः प्रमेयोघट इतिवत्तदुपरक्तबुद्धेरुद्देश्यत्वात् अपि च शरीराजन्यत्वे व्यर्थविशेषणत्वं लाघवेनाजन्यत्वस्यैव व्याप्यत्वात् । न च निष्प्रयोजनविशेषणमसिद्धं व्याप्तिग्रहोपयुक्तविशेषणवत्, पक्षधर्मतौपयिकविशेषणस्यापि सप्रयोजनत्वात् व्यभिचारवारकस्यापि सार्थकत्वेऽनुमितिप्रयोजकत्वस्यैव बीजत्वात् । व्यभिचारवारकविशेषणवत्त्वेव व्याप्तिग्रह इति चेत् न निर्विशेषणेऽपि गोत्वादौ व्याप्तिग्रहात् । तत्रापि व्याप्तिविशिष्टव्याप्तिग्रह इति चेन्न स्वतोव्यावृत्तगोत्वस्याव्यभिचारात् अन्यथान्योन्याश्रयात् । अपि च व्यभिचारवारकविशेषणवत्त्वेन व्याप्तिग्रहस्याप्रयोजकं सहचारदर्शनादिसत्त्वे तदभावेन व्याप्तिग्रहाविलम्बात् । व्यभिचारवारकविशेषणशून्यत्वएव व्याप्तिग्रह इति चेन्न प्रमेयत्वेन ज्ञायमानेधूमे व्याप्तिग्रहात् । अथ तत्रोपात्तव्यभिचारवारकविशेषणत्वं विवक्षितं न च तत्र प्रमेयत्वं विशेषणमुपात्तमिति चेन्न विरोधात् न हि तत्रोपात्तं तेन शून्यञ्चेति संभवति । यद्विषयकत्वेन परामर्शः कारणमनुमितौ तल्लिङ्गं प्रकृते च व्यभिचारादन्यथासिद्धेर्वा न विशेषणविषयकत्वेन तत्त्वमिति चेन्न धूमस्याप्यतत्त्वापत्तेः व्यभिचाराविषयत्वेनानुमित्यकारणत्वात् । यद्धर्मावच्छेदकमपरत्र व्याप्तिः यद्वा लाघवेन व्याप्यस्वरूपव्यतिरेकैव व्याप्तिरिति विशिष्टव्याप्यर्था तत्र विशेष्यतावच्छेदकस्य व्याप्त्यनवच्छेदकत्वं विशेषणस्य तदवच्छेदकत्वमिति नियमात् । एकवृत्तित्वबाधे सत्येव व्याप्यस्यवृत्तित्वमिति व्याप्तेश्च न शरीरजन्यत्वाभावे नीलधूमादौ च व्याप्तिरिति विशेषमात्रे वा, तथा च स्वरूपासिद्धिः । तद्वारणार्थं विशेषणाभिधाने व्याप्यत्वासिद्धिरिति चेन्न अव्यभिचारस्यानौपाधिकत्वस्य वा विशिष्टे नीलधूमादौ सत्त्वेन तद्व्यतिरेकसाधने बाधात् । न च विशेष्यत्वमुपाधिः साधनव्यापकत्वात् । किञ्च शरीर-

विशेषवह्न्यभावच्छिन्नमिदं चन्दनप्रभववह्निरहितत्वात् निर्धूमोऽयमार्द्रेन्धनप्रभववह्निरहितत्वादित्यादावपि विशेषाभावेन कार्यविशेषानुमानं न स्यात् वह्निरहितत्वादिकञ्चोपाधिर्भवेत् व्यतिरेकिण्यद्रव्यातिरिक्तद्रव्यानाश्रितत्वं हेत्वभावव्याप्यं न स्यात् द्रव्यानाश्रितत्वस्यैव व्याप्यत्वात् स्वमध्ये गन्धस्यैव व्यञ्जकत्वादित्यादौ त्वयाप्यसिद्धिवारकविशेषणस्वीकारात्। अपि च गौरवेण विशिष्टस्य व्यापकतापि न स्यात् तथा च स्थापनानुमाने उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यता धूमेनार्द्रेन्धनप्रभववह्निर्घटत्वेन शरीरजन्यत्वमपि नानुमीयेत। यत्तु जन्यान्यान्याभावापेक्षया शरीरजन्यान्यान्याभावस्याल्पत्वात्तेषामेव व्याप्यत्वमिति विपरीतमेव लाघवमिति तन्न विरोधाभावेन बहूनामल्पस्य च व्याप्यत्वात् क्वचित् शीतस्पर्शवत्त्वजलत्वयोर्गन्धाभावेऽपृथिवीत्वपृथिवीत्वाभावयोरिव। अन्यथा नीलधूमस्यैव व्याप्यत्वे धूममात्रस्याव्याप्यत्वप्रसङ्गः किञ्च त्वन्मते बह्वन्यान्याभावापेक्षया जन्यत्वात्यन्ताभावस्यैव व्याप्यता स्यात् एकत्वात् प्रमेयत्वाद्यनन्तधर्मविशिष्टे व्याप्तावपि प्रयोजनाभावात् तदुपन्यासः। अथ लाघवेन जन्यत्वस्य शीघ्रोपस्थितिकतया जन्यत्वाभावत्वेन शीघ्रं व्याप्तिग्रहः न तु शरीरजन्यत्वाभावत्वेन विलम्बितप्रतीतिकत्वात्। यत्र विशेषणविशेष्यान्यतराभाववति साध्यं तत्र विशिष्टाभावस्यापि व्याप्तिरिति चेन्न एवं सति उत्पत्तिमत्त्वे सति सत्त्वादिकमनित्यत्वं सकर्तृकत्वव्याप्यतया न निर्गृह्येत शीघ्रोपस्थितिकतया घटत्वादेरेव तथात्वात्। यदि च सामान्यविशेषभावाद्विरोधाभावेन उभयस्यापि व्याप्यत्वं तदा शरीराजन्यत्वजन्यत्वाभावयोरपि तुल्यम्॥ किञ्च शरीरं जन्यत्वं विशिंषदभावमपि विशिनष्टि न तु साक्षात्, तथा च शरीरजन्यत्वाभावोऽखण्ड एव हेतुरतो न व्यर्थविशेषणता। न चात्र विशिष्टाभावो विशेष्याभाव एव क्षित्यादावजन्यतापत्तेः। अतएव स्थापनायां शरीरजन्यत्वमुपाधिः साध्याभावव्याप्याभावप्रतियोगित्वेन साध्यव्यापकत्वनियमात्। व्यर्थविशेषणेऽधिकं निग्रहस्थानमिति चेन्न हेतुद्वयोपन्यासे ह्यधिकम्। अत्र तु विशिष्टमेव हेतुरिति विरुद्धस्थल उक्तमिति।

उच्यते। नीलधूमादौ व्याप्तिस्त्वन्मते च अन्यथा विशेषाभावव्याप्यत्वे निराश्रया व्याप्तिः स्यात् नीलत्वमपि न व्याप्यतावच्छेदकं गौरवात् किन्तु धूमत्वमेव दण्डत्वेन कारणत्वे रूपमिव धूमत्वञ्च न नीलिम्नि किन्तु तदाश्रये धूमे इति न नीलधूमस्य हेतुत्वम् नीलधूमे नीलस्य विशेषणत्वे तद्विशिष्टे न धूमत्वम्, उपलक्षणत्वे च धूमत्वमिति। किञ्च। व्याप्यतावच्छेदकस्यैव हेतुतावच्छेदकत्वमिति न नीलधूमत्वं तथा। नचैवं धूमत्वस्यावच्छेदकत्वेऽपि सामग्रीसत्त्वात् नीलधूमादनुमित्युत्पत्तौ हेत्वाभासत्वं न स्यात् अनुमितिप्रतिबन्धकस्य तत्त्वादिति वाच्यं तदभावेऽपि नीलधूमप्रयुक्तसाध्यवत्प्रत्ययस्य भ्रमत्वेन तत्कारणत्वस्याभासत्वस्वभावादितिदिक्। एवञ्च शरीराजन्यत्वेऽपि न शरीरमवच्छेदकं गौरवात् येन विशेषेण विना व्याप्तिर्न गृह्यते तस्यैव व्याप्यतावच्छेदकत्वनियमात्। अतएव गन्धस्यैव व्यञ्जकत्वादित्यत्राप्रसिद्धेन गन्धादिषु मध्ये इति विशेषणं विना व्याप्तिर्ग्रहीतुं न शक्यते इत्यसिद्धिवारकं विशेषणं सार्थकमेव। सुरभिधूमविशेषादौ च चन्दनप्रभवाग्न्यादेः कारणत्वात् कारणाभावस्य कार्याभावप्रयोजकतया व्याप्यत्वनिश्चयः व्यापके च न व्यर्थविशेषणता विशिष्टस्य कारणत्वेन व्यापकत्वात् विशेषव्यतिरेकिस्थले विपक्षबाधकेनानन्यगतिकतया विशिष्टस्य व्यापकत्वात् विशिष्टाभावस्य हेत्वभावव्याप्यत्वं यत्र च विपक्षबाधकं नास्ति तत्र विशिष्टस्य व्यापकतापि न, यथा सकर्तृकत्वे। नापि शरीरजन्यत्वाभावोऽखण्डो हेतुः यदि हि शरीरजन्यत्वं सकर्तृकत्वप्रयोजकं स्यात् तदा तदभावप्रयुक्तः सकर्तृकत्वाभाव इति तस्य साध्यव्याप्यता स्यात् न चैवम्, जन्यत्वं लाघवात्तथा। तथा चाजन्यत्वमेवोपाधिः साध्यव्याप्याभावः साध्याभावव्यापक इति नियमेन तस्य साध्यव्यापकतानिश्चयात् सकर्तृकत्वशरीरजन्यत्वयोर्व्याप्यभावेन तदभावयोरपि व्याप्यभाव इति व्याप्यत्वासिद्धत्वाच्च। अतएव शरीरजन्यत्वाभावस्याकर्तृकत्वव्याप्यत्वात् तदभावयोरपि व्याप्यव्यापकभाव इति निरस्तम् शरीरजन्यत्वस्य सकर्तृकताऽप्रयोजकत्वात् न चाजन्यत्वं पूर्वसाधनव्यतिरेकत्वेन नोपाधिः सत्प्रतिपक्षोच्छेदप्रसङ्गादिति वाच्यं स्थापनायां यत्राभासत्वं तत्र विशेषादर्शनदशायां सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकस्य साध्याव्यापकत्वेनानुपाधिकत्वात् यथा शब्दोऽनित्यो गुणत्वादित्यत्र शब्दो नित्यो व्योमैकगुणत्वादित्यादिना सत्प्रतिपक्षे गुणत्वाभावो नोपाधिः जलपरमाणुरूपे साध्याव्यापकत्वात्। नचैवमनैकान्तिकत्वमेव तदोद्भाव्यं सत्प्रतिपक्षमपेक्ष्य तस्योद्भावनार्हत्वात्। किञ्च मानाभावप्रतियोगित्वे सति समवेतत्वस्य तत्प्रतियोगित्वे इति

जन्यत्वस्य, सत्त्वे सति उत्पत्तिमत्त्वस्य वा हेतुत्वे, एषामन्यतमव्यतिरेक उपाधिरिति न पूर्व्वसाधनव्यतिरेकः। अत एव जन्यत्वस्य नोपाधित्वं ध्वंसे साध्याव्यापकत्वादिति न दोषः। अन्ये तु यद्धर्मे यन्निरूपिता व्याप्तिर्येन विशेषणेन विना न स्फुरति तत्र विशिष्टं व्याप्यतावच्छेदकम् अकर्त्तृकत्वाभावनिरूपितव्याप्तौ च शरीरं विनैव प्रतियोगितया जन्यत्वमवच्छेदकं कल्प्यमिति न शरीरजन्यत्वमवच्छेदकं धूमे नील इव अतो गौरवेण शरीरजन्यत्वं सप्रतियोगितया नावच्छेदकमिति व्याप्यतावच्छेदकाभावाच्च शरीरजन्यत्वाभावोऽकर्त्तृकत्वव्याप्यः। व्यभिचाराभावात्तथेति चेन्न क्षित्यादावव्यभिचारात् अन्यथा क्षित्यादिकं नादृष्टहेतुकं शरीरजन्यत्वाभावादित्यपि स्यात्। नन्वस्तु तावदशरीरनित्यज्ञानादिकर्त्त्रनुमितिस्तथापि सानुमितिरयथार्थैवाशरीरे कर्त्तृत्वज्ञानत्वात् ज्ञानेच्छायत्नेषु नित्यज्ञानत्वात् शरीराजन्ये सकर्त्तृकत्वज्ञानत्वात् घटः कर्त्ता घटज्ञानादिकं नित्यं व्योम सकर्त्तृकमितिज्ञानवदिति साध्यं, नचोपजीव्यबाधः अनुमितिरुपजीव्या न तु तद्यथार्थ्यमपीति चेन्न कर्त्तृकार्य्ययोर्निरुपाधिकार्य्यकारणभावेन तस्याप्रयोजकत्वात् अन्यथा पर्व्वते वह्न्यनुमितिरयथार्था उभयसिद्धवह्निमद्भिन्ने वह्निज्ञानत्वादित्यादिना सकलान्वयव्यतिरेकोच्छेदः। किञ्चानुमितेरयाथार्थ्यमनेन ज्ञाप्यं, न तु कार्य्यं, तथा च दोषादुत्पन्नस्यानेन ज्ञापने तत्रायमेव दोषो दोषान्तरं वा नाद्यः अन्योन्याश्रयात् उत्पन्ने तस्मिन् ज्ञापनं ज्ञापकादेव तस्माद्दोषात्तदुत्पत्तिरिति। नान्त्योऽसिद्धेः। तर्कापरिशुद्धिस्तु न दूषणम्, यदीश्वरः कर्त्ता स्यात् शरीरी स्यात्, प्रयोजनवान् अनित्यज्ञानवान् स्यात्, क्षित्यादि सकर्त्तृकं स्यादिति तर्काणां विपर्य्यये व्याश्रयासिद्ध्यर्थविशेषणतादिना विपर्य्ययापर्य्यवसानेनाभासत्वात्।

ननु क्षित्यादावेककर्त्तृसिद्धिः कुतः? एककर्त्तृकत्वेन व्याप्त्यभावात् न च लाघवात्, तस्याप्रमाणत्वात्। सकर्त्तृकत्वमानादेव तत्सिद्धिरिति चेत् न तावदनुमितिमात्रे लाघवं सहकारि, व्यभिचारात् मानाभावाच्च न हि लिङ्गपरामर्शे सति तद्विलम्बेनानुमितेर्विलम्बो येन तत् सहकारि स्यात्। नापि क्वचिदनुमितौ, अन्योन्याश्रयात् नापि व्याप्त्यनुमितौ धूमेन वह्न्यनुमितावेकत्वादिसंशयाभावापत्तेः। साधकाभावेन नानात्वासिद्धौ कर्त्तृसिद्धेरेवैककर्त्तृसिद्धिरिति चेत् न एकत्वसाधकाभावेनैकत्वासिद्धौ कर्त्तृसिद्धिरेव नानासिद्धिरित्यस्यापि सुवचत्वात्। अथ यमनादिव्यापारानुमितिः पक्षे न साध्यसंसर्गं विषयीकरोति स पक्षधर्मताबलात् सिध्यति न त्वधिकमपि तथा च द्वितीयं कर्त्तारं न विषयीकुर्व्वत्यपि कर्त्तारं विषयीकरोत्येवेति न द्वितीयमवगाहते। एकस्तु कर्त्ता सिध्यति तदविषयत्वेन कर्त्तुर्विषयैव न स्यात् एकविषयत्वाभावेन नानाविषयत्वाभावस्याप्यभावात् तद्घटितत्वात्तस्येति चेदेवं तर्हि कर्त्त्रेकत्वमपि न विषयः स्यात् एकत्वविषयत्वं विनापि कर्त्तृविषयत्वसम्भवात्। वस्तुगत्यैकः सिध्यति नत्वेकत्वेनेति चेन्न एकत्वासिद्ध्या वस्तुगत्यैक इति ज्ञातुमशक्यात् तथा चेश्वरे एकत्वानेकत्वयोर्नित्यसंशय इति।

उच्यते। यत्र प्रमाणे लघुगुरुविषयता सम्भवति तत्र लाघवसहकारेण कार्य्यताव्याप्यताग्रहणे प्रत्यक्षे शक्तिनिमित्तग्राहके उपमाने शब्दशक्तिग्राहकेऽनुमाने च तथाविधप्रमाणमात्रे च सकलतान्त्रिकैः सहकारित्वकल्पनात् एवं लाघवमेवं गौरवमिति ज्ञानानन्तरं बाधकं विना लघूनामेव कारणत्वकार्य्यत्वव्याप्यत्वप्रवृत्तिनिमित्तत्वशब्दशक्यत्वानां ज्ञानदर्शनात्। तत्रापि लाघवानादरे शब्दशक्यत्वादिसंशये तन्मूलकव्यवहारोच्छेदो विनिगमकाभावात्, सोऽयं विचारमारभते लाघवञ्च तदङ्गं नाङ्गीकुरुते इति महासाहसम्। नन्वेवं वस्तुगत्या नानाकर्त्तृकेषु घटत्वेन कुलालकर्त्तृकत्वानुमानेऽपि बाधकानवतारदशायां लाघवादेककर्त्तृसिद्धिः स्यात् न चेष्टापत्तिः अनुमित्यनन्तरं नानात्वैकत्वे संशयादिति चेन्न तत्रापि लाघवेन कर्त्त्रैक्यमेव सिध्यति तत्सन्देहस्तु ज्ञानप्रामाण्यसंशयादिति पश्चान्नानाकर्त्तृकत्वसाधकप्रमाणादेरेककर्त्तृकताज्ञानं तत्र बाध्यते न चैवं क्षित्यादिकर्त्तर्य्यपि प्रामाण्यसंशयादेकत्वानेकत्वसंशयो दुरुच्छेदः एकत्वबाधकस्याभावेन प्रामाण्यनिश्चयात्। नचैकत्वसाधकाभाव एव बाधः, अनुमितेरेव लाघवसहकारेणैकत्वसाधनात्। अन्ये तु क्षितिकर्त्ता अङ्कुरकर्त्तृभिन्नः अशरीरकर्त्तृत्वात् अङ्कुरकर्त्तृवदित्यभेदानुमानादेव कर्त्तृसिद्धिः न च क्षितिकर्त्ता अङ्कुरकर्त्तृभिन्नः अङ्कुराकर्त्तृत्वात् कुलालवदिति सत्प्रतिपक्षः अनित्यज्ञानाद्याश्रयत्वस्योपाधित्वादित्याहुः तत्राप्यप्रयोजकत्वे भेदाभेदयोर्गौरवलाघवे एव शरणम्।

तथापि कथं नित्यसर्व्वविषयज्ञानसिद्धिः। पक्षधर्म्मताबला-

दिति चेत् व्यापकत्वाग्रहात् न च विनानुपपत्तिं सोऽपि विषयः व्यतिरेकित्वापत्तेः। अत्र प्राञ्चः यमर्थमनालम्ब्यमानानुमितिः पक्षे साध्यसम्बन्धं विषयीकरोति स पक्षधर्मताबलात् सिद्ध्यतीति प्रतीत्यनुपपत्तिमूलकोऽन्वयी प्रतीत्यनुपपत्त्या च व्यतिरेकी तदिहानादिद्व्यणुकादिप्रवाहस्य पक्षत्वे तदुपादानस्यानादिज्ञानगोचरत्वं विनानोपादानगोचरज्ञानजन्यत्वमनादिकार्य्यप्रवाहस्यानुमितिरालम्बते अनादित्वेन च नित्यता सर्वसत्त्वावपि तस्यासमनादिभावत्वात् पक्षतदुपादानविषयतैव सर्वविषयता लाघवात्तु तावद्विषयकमनाद्येकमेव ज्ञानं सिद्ध्यति न तु नित्यानि नानाज्ञानानीति। नव्यास्तु अनित्यज्ञानाजन्यत्वेन पक्षविशेषणात् ज्ञानं सिध्यत् नित्यमेव सिद्ध्यति अनित्ये बाधात्। वाचस्पतिमिश्रास्तु लाघवादेकज्ञानसिद्धावुत्पत्तिमतोऽनादिकार्य्यप्रवाहं प्रत्यजनकत्वात् परिशेषेण नित्यज्ञानादिसिद्धिः नियतविषयता च ज्ञानस्य कारणाधीना कारणञ्च नित्यज्ञानान्निवर्त्तमानं नियतविषयतामादाय निवर्त्तत इति सर्वविषयत्वसिद्धिरिति। षट्पदार्थप्रतिपादकवेदकर्त्तृत्वेन ईश्वरस्य षट्पदार्थगोचरसाक्षात्कारवत्त्वेन वा सार्वज्ञ्यं घटाकाशसंयोगं प्रतीश्वरस्य कर्त्तृत्वात् घटादिगोचरमपि ज्ञानं सिद्धमिति केचित्। ननु घटादीनां कथमीश्वरस्य कर्त्तृत्वं घटः ईश्वरकर्त्तृकः कार्य्यत्वात् क्षितिवदिति चेन्न घटस्य द्विकर्त्तृकतया तद्दृष्टान्तेन क्षित्यादेरपि द्विकर्त्तृकतापत्तेः तथा च घटवत् क्षितिः क्षितिवद्घट इतीश्वरानन्यकार्य्यकर्त्तृत्वेन कारणता न तु द्विकर्त्तृकत्वेनेति चेत् तर्हि नेश्वरकर्त्तृकत्वेन कारणता किन्तु कर्त्तृत्वेनेति मैवं ज्ञानादीनां नित्यत्वेन सर्वविषयतया घटाद्युपादानविषयत्वमपीति कथं न तेषां घटादिकारणत्वं कुलालादिज्ञानतुल्यत्वात्। तदाहुराचार्य्याः "परमाण्वधिष्ठातृसिद्धौ ज्ञानादीनां नित्यत्वेन सर्वविषयत्वे घटाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात् न तु तदधिष्ठानार्थमेवेश्वरसिद्धिरिति "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते इत्यागमाद्यायमर्थोऽध्यवसेयः। अथेश्वरस्य सर्वज्ञत्वे सर्वविषयभ्रान्तेर्ज्ञाने ईश्वरोऽपि भ्रान्तः स्यात् भ्रमस्यैव तस्यापि भ्रमविषयविषयकत्वादिति चेत् रजतत्वप्रकारकज्ञानवानयमिति ज्ञानं न भ्रमः अभ्रान्तस्य तथात्वात्। इदं रजतमिति ज्ञाने रजतत्वं प्रकारः तेन स भ्रमः ईश्वरज्ञाने च रजतत्वप्रकारकत्वं प्रकार इति न भ्रमः अतएवास्मदादेरपि भ्रान्तिज्ञो न भ्रान्त इति। स्यादेतत् प्रयोजनं विना कथमीश्वरः प्रवर्त्तते ? सुखस्याभावात् अधर्म्माभावेन निर्दुःखत्वात्। करुणया प्रवर्त्तते इति चेत्तर्हि परसुखदुःखप्रहाणे प्रयोजने तथा च सुखिनमेव सृजेन्न नारकिणम्। धर्माधर्मपरतन्त्रत्वात् तदनुरूपं फलं प्रापयतीति चेत्तर्ह्यावश्यकत्वात् कर्म्मनिर्मितमेव जगद्वैचित्र्यमस्तु किमीश्वरेण अनपेक्षितकीटादिज्ञानवता कर्मनिरपेक्षत्वे चैकदैव सदा च सर्गप्रलयौ स्यातां ज्ञानादीनां नित्यत्वात् किञ्च तत्प्रयत्नस्य करुणाजन्यत्वेन शरीरादिजन्यतापत्तौ संसारितापत्तिः न। ईश्वरानभ्युपगमेन विचारस्याश्रयासिद्धत्वात् तमभ्युपगम्य पृच्छसि चेत् आकर्णय जगतएव तदिच्छाविषयत्वेन स्वेष्टसाधनताज्ञानसत्त्वात्। वस्तुतस्तु क्षित्यादितत्तदसाधारणकर्मिकादृष्टादिसामग्री ईश्वरज्ञानादयो यदा यदा भवन्ति क्षित्यादिकं करोतीति व्यवहारः सर्गप्रलयासाधारणकर्मिकादृष्टादिसामग्रीसमयवर्त्तित्वमेव तदिच्छायाश्चिकीर्षासंजिहीर्षात्वे नचैवं किञ्चिज्जन्यज्ञानादिनेति वाच्यं क्षित्यादीनां कार्य्यत्वेन ज्ञानजन्यतया नित्यज्ञानादीनामपि जनकत्वं सुखादिशब्दयोरात्माकाशादिवत्। नन्वशरीरात् कथं वेदघटादिशब्दव्यवहारसंप्रदायः। उच्यते सर्गादावदृष्टोपगृहीतभूतभेदात्मीनशरीरोत्पत्तावदृष्टवदात्मसंयोगाददृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानादिमदात्मसहितात्मीनकलेवरकण्ठताल्वादिक्रियाजन्यसंयोगाद्वेदोत्पत्तिः। एवं कुलालादिशरीरावच्छेदेनादृष्टसहकृतप्रयत्नवदीश्वरसंयोगात्तद्बुद्धीच्छासहितचेष्टोत्पत्तौ सकलघटानुकूलव्यापारो घटोत्पत्तिः। एवं प्रयोज्यप्रयोजकज्ञानाय व्यापाराभिमतशरीरावच्छेदेनापि अदृष्टसहकृतेश्वरज्ञानेच्छाप्रयत्नादेव शाब्दव्यवहारः, ततस्तद्भीतो बालो व्युत्पद्यते सोऽयं भूतावेशन्यायः। यत्तु यथा शिष्यादिना मौनिश्लोकोऽनुमाय पठ्यते तथा सर्गान्तरोत्पन्नतत्त्वज्ञानवता भोगार्थं सर्गादावुत्पन्नेन मन्वादिना सर्वज्ञेन ईश्वराभिप्रायस्थवेदः साक्षात्कृत्यानूद्यते ततोऽपि संप्रदायः स एव कायव्यूहं कृत्वा शाब्दव्यवहारं करोतीति मतं तन्न प्रतिसर्गाद्यनन्तसर्वज्ञकल्पनायां गौरवात् तेषामेव क्षित्यादिकर्त्तृत्वसम्भावेन ईश्वरानुगमाच्च। एतेन सर्गादौ सर्गान्तरसिद्धयोगिनएव क्षितिकर्त्तारः सन्त्विति निरस्तं सर्गादावनन्तसर्वज्ञसिद्धिश्च किं प्रमाणान्तरात् क्षित्यादिकर्त्तृग्राहकाद्वा नाद्यस्तदभावात् नान्त्यः अनादिद्व्यणुकादिकार्य्यप्रवाहस्य सकर्त्तृकत्वानु-

मानादुक्तावचनसहकृताद्देकस्यैव सर्वज्ञस्य सिद्धेः ॥ अथेश्वरज्ञानमूलकशब्दशक्तिपक्षे प्रयोज्यव्यापारानुमितघटज्ञाने घटशब्दस्य कारणतापक्षेऽभ्रमः स्यात् तदीयज्ञानस्य नित्यत्वात् तथा च तज्जन्यघटशब्दशक्तिपक्षस्य भ्रमत्वे सकलशब्दज्ञानं भ्रमःस्यात् भ्रमपरम्परामूलकत्वात् अनित्यसर्वज्ञमूलकशब्दत्वपक्षे च नायं दोष इति चेन्न व्यापारानुमितमिदं घटज्ञानं घटपदजन्यमिति ज्ञानस्य शब्दशक्तिपक्षकारणस्य भ्रमत्वेऽपि घटपदं घटशक्तमिति ज्ञानस्य यथार्थत्वात् विषयाबाधात् न च भ्रममूलकत्वेन तस्य भ्रमत्वमनुमेयं तदंशे व्याधिकरणप्रकाराभावेनाबाधात् बाधितविषयत्वस्योपाधित्वाच्च । अत्र घटमानयेति शब्दानन्तरं स्वत्वसम्बन्धाधिष्ठितदारुपुत्रस्य घटानयनव्यवहारदर्शनाद्बालो घटपदे व्युत्पद्यते तन्मूलकशाब्दज्ञानमपि न भ्रमः तस्यापि भ्रमत्वे प्रयोज्यव्यवहारादिदानीं व्युत्पत्तिर्न स्यात् किमयं प्रयोज्यचेतन व्यवहाराद्युत प्रयोऽचेतनव्यवहारादिति संशयस्य वज्रलेपायमानत्वात् ॥ "विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात् । सं बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एक इत्यादि श्रुतयः" । "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः" इत्यादयः स्मृतयश्च बहुशोमानत्वेनानुसन्धेया इति" ।

खण्डनकृता तु ईश्वरविषये प्रश्नाद्यनुपपत्त्युपन्यासेन व्यतिरेकमुखेन ईश्वरस्य प्रामाणिकत्वमुररीकृतं यथा 'तथाहीश्वरसद्भावे किं प्रमाणमिति प्रष्टव्य; प्रतिवक्तव्यः किं शब्दोऽयमाक्षेपार्थो वा१कुत्सितार्थो वा२वितर्कार्थो वा३प्रश्नार्थो वा४स्यात् । तत्र यदि प्रथम: पक्षः तदेश्वरसद्भावे नास्ति प्रमाणमित्युक्तं स्यात् तथा च सति न प्रतिज्ञामात्रात्साध्यसिद्धिरिति हेत्वादिकं वाच्यं भवति । तच्च भवता नाभ्यधायि तस्मान्न्यूनत्वं दोषः । अतएव न द्वितीयः, ईश्वरसद्भावे कुत्सितं प्रमाणमित्यस्यापि प्रतिज्ञामात्रत्वात् । अपि च साध्यासाधकत्वाद्वा १तत् कुत्स्यते भवता अन्यथा २वा । अन्यथा चेदलं तदुद्भावनया साध्यसिद्धेरप्रत्यूहत्वात् । नापि प्रथमः प्रमाणञ्च साध्यासाधकञ्चेति व्याघातात् । गौणोऽयं प्रमाणशब्द इति चेन्न प्रमाणत्वयोगिनि वाच्ये प्रमाणशब्दप्रयोगः तदा गौणताव्याघातः मुख्यत्वात् । अथ प्रमाणाभासे तदा, अलन्तदुद्भावनया ईश्वरसद्भावे यः प्रमाणाभासः स कुत्सितस्तत्र परस्यापि सम्प्रतिपन्नत्वात्, ईश्वरसद्भाव इति च विशेषोपादानं व्यर्थं स्यात् अन्यत्रापि हि विषये प्रमाणाभासः कुत्सितएव साध्यासाधकत्वात् । नापि तृतीयः तथा सति हि वितर्कस्य पक्षान्तरसापेक्षत्वेन पक्षान्तरमपि वचनीयं भवति ईश्वरसद्भावे किमेतत् प्रमाणमुतान्यदिति तच्च ? भवता नाभ्यधायि अतो न्यूनत्वं दोषः । नापि चतुर्थः प्रश्नार्थात् खलु किंशब्दात्कस्यचित् पदार्थस्य जिज्ञास्यमानता प्रतीयते सा चेह प्रमाणपदसमभिव्याहारात् प्रमाणविषयिणी प्रतीयते यद्विषयश्च प्रश्नस्तदुत्तरवादिनाभिधेयं तत् । अयं प्रश्न ईश्वरसद्भावे प्रमाणसामान्यविषयस्तद्विशेषविषयो वाभिप्रेत आद्यश्चेदीश्वरसद्भावे प्रमाणमित्येवोत्तरमापद्येत यद्विषयो हि प्रश्नस्तदभिधेयं, प्रमाणसामान्यविषयश्च प्रश्नः तच्च प्रमाणशब्देनाभिधीयतएव । अथ द्वितीयः तथापीश्वरसद्भावे प्रमाणमित्येवोत्तरमापद्येत यथा प्रश्नवाक्ये प्रमाणशब्दविशेषपरस्तथोत्तरवाक्येऽपि । कोऽसौ विशेष इति चेन्न पूर्ववदुक्तोत्तरत्वात् । किञ्च अत्रापि प्रश्नस्य विशेषो विषयः किंशब्दस्य विशेषशब्देन सामानाधिकरण्यात् तथाच सति विशेषएवोत्तरं स्यात् । स्यादेतत् विशेषशब्देन न विशेषमात्रमनिर्द्धारितमत्र विवक्षितं किन्त्वसाधारणो व्यक्तिरत्र विशेषशब्दस्य तात्पर्यं तस्मात्कासावसाधारणी प्रमाणव्यक्तिरिति प्रश्नार्थः तत्र च तादृश्याः प्रमाणव्यक्तेरभिधानमुत्तरं युक्तं नैवं विधाः प्रलापा इति नैतदेवं यतोऽत्रापि विशेषइत्येवोत्तरम् यथा प्रश्नवाक्यगतस्य विशेषशब्दस्य सर्वतोव्यावृत्तस्वरूपायां प्रमाणव्यक्तौ तात्पर्यं तथोत्तरवाक्यस्थितस्यापि । एवञ्च सति यत्र विषये भवदीयस्य प्रश्न वाक्यस्य तात्पर्यं तदेवास्माकमुत्तरवाक्येन प्रतिपादितमिति युक्तमुक्तम् । अथ मन्यसे किमिह प्रमाणमिति पृच्छतोऽयमभिप्रायः अत्रार्थेऽनुमानं प्रमाणमितरद्वेति । अत्राप्यनुमानमित्युत्तरमस्माकम् । किं तदनुमानमिति चेत् । अयमपि प्रश्नोऽनुमानमात्रविषयः उत तद्विशेषविषय इति विकल्प्य प्रमाणप्रश्नवदुत्तरं वाच्यमिति । अत्र च संग्रहश्लोकौ । "यथाविधं यं विषयं नियम्य प्रश्नस्य निर्व्वक्ति परो ययोक्त्या । वाच्यस्तथैवोत्तरवादिनापि तथैव वाचा स तथाविधोऽर्थः । प्रश्नस्य यः स्याद्विषयः स वाच्यो वाचा तया चैव भवेद्विवक्षुः । इदं त्वयाप्याख्यितमेतयैव गिरा स्वप्रश्नविषयस्य वक्त्रा ।" प्रश्नार्थाच्च किंशब्दाज्जिज्ञासाविषयतार्थस्य प्रतीयते जिज्ञासा च ज्ञातुमिच्छा इच्छा च नाज्ञाते भवत्यतिप्रसङ्गात् तस्मादीश्वरविषयं प्रमाणं ज्ञातुमिच्छता तत्र स्वज्ञानमिच्छाकारणीभूतं वक्तव्यं तद्यथार्थं

यथार्थं वा स्यात् । यथार्थञ्चेत् तर्हि तेनैव ज्ञानेन स्वकीयो विषयः प्रमाणमुपस्थाप्यते विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थत्वस्य वक्तुमशक्यत्वात् । तेनापि प्रमाणेन स्वगोचरेश्वरसद्भाव उपस्थाप्यतइत्यनायासेनैव सिद्धोऽस्माकमीश्वरसिद्धिमनोरथः । अथायथार्थं तत्राप्ययथार्थज्ञानविषये यद्यस्माभिरयथार्थमेव ज्ञानमुत्पादनीयमिति भवतः पृच्छतोवाञ्छितं तदा केयं स्वाधीनेऽर्थे परापेक्षा भवानेवायथार्थज्ञानोत्पादनकुशलोयदेकं तत्र मिथ्याज्ञानमजीजनत्तथा परमप्युत्पादयतु वयं पुनर्यथार्थज्ञानस्योत्पादयितारो मिथ्याज्ञाने सर्वथैवाकुशलाः किमिह नियुक्ष्महीति । अथ मदीयस्यायथार्थज्ञानस्य योविषयः स मदीययथार्थज्ञानविषयोभवता क्रियतामिति त्वदीयं वाञ्छितं तदा व्याघातादीदृशार्थे भवतः प्रवृत्तिरेवानुपपन्ना शुक्तिका रजतत्वेन मम यथार्थज्ञानविषयोभवत्वित्येतदर्थं प्रेक्षावान् कथङ्कारं प्रवर्तेत येन रूपेणायथार्थज्ञानविषयत्वं तेनैव रूपेण यथार्थज्ञानविषयत्वे व्याघातात् । अथ मन्यसे स्वसिद्धान्तमनुरुध्यानेन त्वया यथार्थज्ञानं तस्योत्पादनीयमतस्तदर्थं भवाननुयुज्यतइति । नैवम् यदीश्वरसद्भावविषयोभवता प्रमाणाभासः प्रमाणतया भ्रान्त्या प्रतीतः तस्य प्रमाणत्वं अस्माभिर्व्युत्पादनीयमिति नास्माकमीदृशः सिद्धान्तः प्रत्युत ईश्वरसद्भावविषयं यत्प्रमाणं भवता प्रमाणाभासत्वेन भ्रान्त्या प्रतीतमस्ति तत्प्रमापणीयमिति । स्वान्ततम् ईश्वरसद्भावविषयस्य प्रमाणस्य भवता ज्ञापनमात्रं क्रियतामित्यभिमतं पृच्छतामस्माकं, नतु प्रमाणेना प्रमाणेन वेति विशेषोऽप्यभिमतइति, न ज्ञापनमात्रस्याप्रमाणज्ञानमादायाप्युपपत्तेः तत्र स्वाधीने केयं परापेक्षेत्याद्युक्तमनुषङ्गनीयम् । स्यादेतत् येयमीश्वरसद्भावविषया प्रमाणप्रतीतिरस्माकमुत्पन्ना सा व्यभिचारिणी सत्या वेति संशयोऽस्माकं नैनैकपक्षनिर्धारणाधीनं यदिदं दूषणमवादि भवता तन्निरवकाशमिति नैतदस्ति एवं हि तस्यां प्रतीतौ यथार्थत्वायथार्थत्वसंशयेन तस्याः प्रतीतेर्गोचरो यत्प्रमाणं तस्यापि योऽसौ विषयईश्वरसद्भावस्तत्र सर्व्वत्रैव संशयानस्य भवतः प्रश्नोऽयं ननु विप्रतिपन्नस्येति स्यात् तथाच स्वीकृत्य शिष्यभावं प्रसाद्य चिरं चरणशुश्रूषाभिरस्मान् वेत्स्यामस्ते संशयमिति । विप्रतिपन्नाएव वयमाचार्य्याः संशयोऽस्माकमिति चेत् तर्ह्यवधृतैककोटयएव वयं कार्य्यानुरोधात् संशयमात्रमस्मामाह इत्युक्तं स्यात् एवं तर्हि तदेव कोऽवधारणं यथार्थमयथार्थं वेति विकल्पोक्तयुक्त्या दूषणीयम् । एतेनानध्यवसायेन तदस्माभिः प्रतिपन्नमित्यपि निरस्तं वेदितव्यं, व्यभिचारिविषयमव्यभिचारिविषयं वा तदिति विकल्पाभ्यां तस्यापि ग्रस्तत्वात् "परस्परविरोधे हि न प्रकारान्तरस्थितिरिति" न्यायात् । एवमीश्वराभिसन्ध्यादावपि तत्तत्स्थाने तिरस्कृत्यैनामान्तरखण्डनमनुद्रष्टव्यम्" । तृतीयः परिच्छेदः ।

"ननु तथापि भावात्मके तस्मिन्नीश्वरे विधायकं किञ्चित्प्रमाणं वक्तव्यमिति चेत् किं पुनर्भावत्वं विधित्वमिति चेन्न पर्य्यायाप्रश्नात् । स्वरूपसत्त्वमिति चेत् अभावस्यापि तथाभावात् प्रतिस्वं व्यावृत्तत्वेनाननुगतत्वापत्तेश्च । अस्तीतिप्रतीतिविषयत्वमिति चेन्न अभावोघटस्यास्तीति प्रत्ययसम्भवेनाभावस्यापि तथात्वप्रसङ्गात् । नास्तीतिप्रतीतिविषयत्वेऽपि च घटादेर्भावत्वानिवृत्तेः । अस्तीति चाख्यातौ वा शब्दोवा विवक्षितः नाद्यः तस्यानिरुक्तेः । सत्ता तदर्थइति चेन्न सामान्यादीनां तदभावादभावत्वापत्तेः स्वरूपसत्त्वञ्च निरस्तम् । नापि द्वितीयः अभावोऽस्तीतिप्रतीतेरुक्तत्वात् वस्तु तदन्यद्याकारेण च प्रतीयमानस्याभावत्वप्रसङ्गात् । सोऽप्यस्ति पर्य्यायइति चेन्न उभयसाधारणैकार्थनिर्व्वचनमन्तरेण पर्य्यायत्वस्य प्रतिपादयितुमशक्यत्वात् । यत्रैकस्यास्तिपदप्रयोगः तत्रैवापरस्य वर्त्ततइति प्रयोगात् । सामान्येन तावत् पर्य्यायत्वं शक्याधिगममिति चेन्न प्रमेयाभिधेयादिशब्दानां तथात्वे ऽप्यपर्य्यायत्वात् यत्रैतस्य प्रवृत्तिनिमित्तार्थत्वे च तन्निर्व्वचनप्रसङ्गस्तदवस्थः स एवार्थोभावत्वमुच्यतां किं शब्दोल्लेखनेषणया । अपरप्रतिषेधात्मकत्वं भावत्वमिति चेन्न व्यवच्छेद्यासम्भवेनापरपदवैयर्थ्यात् भावाभावयोः परस्परप्रतिषेधात्मकतास्वीकाराच्च । तथापि भावो नास्तीत्यभावप्रतिपत्तिवदभावोनास्तीति भावस्य प्रतीतिरिति चेन्न तावतापि लक्षणानिरुक्तेः । अपरप्रतिषेधमुखेन प्रतीयमानत्वमेव भावत्वमिति चेन्न चक्षुरादिभिर्भावत्वपक्षप्रसङ्गात् । न हि प्रतीयमानत्वं चक्षुरादिग्राह्यम् अभावोनास्तीतिप्रतीतेर्निर्विषयत्वप्रसङ्गाच्च नहीयं भावविषया भवत्यपि परप्रतिषेधमुखेन प्रतीयमानत्वात् । नाप्यभावविषयैव तन्निषेधार्थत्वात् । नैवं प्रतीतिरेव स्यादिति चेन्न शाब्द्याः प्रतीतेः सम्भवात् आकाङ्क्षादिमद्भिः पदैः प्रतिस्वं संसर्गबोधनात् 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" । प्रत्यक्षप्रतीतिस्तथा विवक्षितत्वाददोषइति चेन्न सर्व्वस्य भावस्य प्रत्यक्षत्वानङ्गीकारात् सेश्वरपक्षे सर्व्वं प्रत्यक्षमिति चेन्न तेन तेषामपरप्रतिषेधात्म-

तथा प्रत्यक्षे प्रमाणाभावात्। तेषां विधिरूपतया तथैव प्रत्यक्षमिति चेन्न विधिरूपत्वस्यानवधारणात्। यदपरप्रतिषेधात्मकतया शब्देनापि बोध्यते तत्तावत् भावरूपमिति चेन्न परपदवैयर्थ्यात् तस्यागेऽप्य चाक्षुषादित्वापत्तेः। सुरभि चन्दनमित्यादाविवान्योपनीतभानवत्। तत्र चाक्षुषत्वं भविष्यतीति चेन्न तथाविधेनैव विषयेण विशिष्टाया बुद्धेर्विशेषणतायाञ्च स्वाश्रयोऽप्यंशतः स्यात्। तेनोपलक्षिताभावत्वे चाभावविशिष्टभावपदार्थस्याप्यभावस्य तथात्वापत्तेः। यदेवंविधं तद्भावरूपमिति यदेतदेवंविधत्वाद्भावत्वमन्यद्वाच्यम् अभेदे यदेवविधं तद्भावरूपमिति नियमानुपपत्तेः। अस्योपलक्षणत्वे चोपलक्ष्यस्यान्यस्य वाच्यत्वात् अस्यैव भावार्थत्वे चाभावो नास्तीति कृत्वा प्रतीयमानस्य भावस्य भावत्वाप्रसङ्गात्। भिन्नञ्च भावत्वं न सम्भवति यस्मदार्थव्यतिरेकप्रसङ्गात्। यच्च किञ्चिद्भावत्वं तत्स्वात्मन्यस्ति नोवास्ति चेदात्मनि वृत्तिविरोधः नास्ति चेत्तस्यान्यप्रतिषेधमुखेन चाप्रतीयमानस्याभावत्वप्रसङ्ग इति"। "नन्वेवमीश्वरे प्रमाणानुपदर्शनात्तदभाव एवापद्यत इति चेत् अभावत्वं किमभिधीयते निषेधात्मकत्वमिति चेत् तद्यदि प्रतिषेधात्मकत्वं तदा भावेऽप्यस्ति भावाभावयोर्द्वयोरपि परस्परप्रतिषेधात्मकत्वस्वीकारात्। अथाभावत्वमेव तदा न निवृत्तः पर्य्यनुयोगः। एतेन निषेधमुखेन प्रतीयमानत्वमिति निरस्तम्। भावविरोधित्वमिति चेन्न सर्व्वभावविरोधित्वं तद्विशेषविरोधित्वं वा। नाद्यः असिद्धेः नहि घटाभावो भूतलादि विरुणद्धि। न द्वितीयः भावानामपि केषाञ्चित्तथाभावात्। अथ सहानवस्थानं विरोधो विवक्षितः स भावानां नास्तीति चेन्न गोत्वादौ तस्यापि भावात्। एकविधान्यनिषेधः स इति चेन्न भेदे विरोधिभावभेदयोरेव प्रसङ्गात्। एकविधिरेवापरनिषेधः स इति चेन्न निषेधस्याभावार्थत्वे भावार्थत्वे चासिद्धेः। नास्तीति प्रतीयमानत्वमिति चेन्न घटाभावो नास्तीति घटस्य तथा प्रतीयमानतया अभावत्वापत्तेः अस्तीति भावत्वनिरुक्तौ यदुक्तं दूषणं तदापत्तेश्च। प्रतियोगिनिरूपणाधीननिरूपणत्वमिति चेन्न प्रतियोगिनः परार्थत्वेऽतिप्रसङ्गात् विरोध्यर्थत्वे चैतदनिरुक्तेः असदर्थत्वे नञर्थस्यासिद्धेः अतीतानागतज्ञानादौ विषयादिनातिप्रसङ्गात्। यच्च किञ्चिदभावस्य लक्षणमुच्यते स भावोऽभावो वा स्यात्। नाद्यः भावस्याभावानान्वितत्वात् विषयिधर्मेण च कथमपि तथात्वे तद्विरोधः स्यात्। अन्यदेव तदिति चेन्न तद्भावस्याभावत्वे स्ववृत्तिः भावत्वे च व्याघातात्। न द्वितीयः तस्यात्मनि वृत्तौ विरोधापत्तेः अवृत्तावव्यापकत्वप्रसङ्गादिति। प्रतिषेध्यविशिष्टमेव यत् प्रतिभाति सोऽभाव इति चेन्न प्रतिषेधानिरुक्तौ प्रतिषेध्यानिरुक्तेः विशिष्टपदार्थस्य निर्व्वचनीयः स्यात्। तत्र विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं वा। नाद्यः दण्डपुरुषसम्बन्धमन्तरेण दण्डिनोऽन्यस्याप्रतीतेः दण्डिनमानयेत्युक्ते तदानयप्रसङ्गाच्च। तत्सम्बन्धेनोपलक्षितत्वात्तथेति चेन्न अतद्वत उपलक्ष्यत्वेऽतिप्रसङ्गात्। तद्वत्तयान्यत्वात् सम्बन्धो हेतुः स च तदधिकरण एवेति चेन्न सम्बन्धात्तदधिकरणसम्बन्धान्यत्वापत्तेरिष्टेष्टः न पन्थाः। तत्सम्बन्धिनि तत्र व्यवहार इति चेन्न तस्यापि विशिष्टत्वेनान्यत्वापत्तौ व्यवहारविषयगतविशेषस्य वक्तुमशक्यत्वात्। एवं परम्पराकल्पनायामप्यनवस्थामात्रं नतु व्यवहार्थगतोविशेषः कश्चित्। द्वितीये तु प्रत्येकं दण्डिव्यवहारप्रसङ्गो विशेषाभावात् न ते प्रत्येकं दण्डिपदार्थाः किन्तु मिलिता इति चेत् मिलिता इति किं ते च मेलकं चाभिधीयते उत तेभ्योऽन्यएव कश्चित् आद्ये प्रत्येकं स एव प्रसङ्गः मेलकेऽप्यधिकः। द्वितीयस्तु प्रतीतिव्यवहारविरोधात् स्वयं निरस्तः"। इत्यादिना ४परि॰ विशिष्टपदार्थं निरस्य ईश्वरप्रमाणाभावस्य निर्वचनमपि निराशितम् अधिकं तत्र द्रष्टव्यम्।

तत्र निरीश्वरसांख्यमते उपासाविद्धस्य प्रकृतिलीनस्य पुरुषस्यैव सन्निधिमात्रेण प्रधानप्रवर्त्तनेन कर्त्तृता। सेश्वरयोगरूपसांख्यप्रवचनमते नित्येश्वरस्यैव सन्निधिमात्रेण प्रधानप्रवर्त्तनेन तथात्वम् इति भेदः। प्रदर्शितेष्वेषु मतेषु ईश्वरोनिमित्तकारणम्, वेदान्तिमते तु उपादानकारणं निमित्तकारणञ्चेति भेदः तदेतत् शा॰सू॰भाष्ययोर्दर्शितम् यथा "जन्माद्यस्य यतः" शा॰ सू॰ प्रतिज्ञातस्य ब्रह्मणोजन्मादिकारणत्वस्य विशेषनिर्द्धारणाय प्रवृत्तम् "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" सू॰। "यथाभ्युदयहेतुत्वाद्धर्म्मोजिज्ञास्य एवं निःश्रेयसहेतुत्वाद्ब्रह्मापि जिज्ञास्यमित्युक्तं ब्रह्म च "जन्माद्यस्य यतः" इति लक्षितं तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत् प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतो भवति विमर्शः किमात्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति। तत्र निमित्तकारणमेव तावत् केवलं स्यादिति प्रतिभाति कस्मात्? ईक्षापूर्व्वककर्त्तृत्वश्रवणात्। ईक्षापूर्व्वकं हि ब्रह्मणः कर्त्तृत्वमवगम्यते "स ईक्षाञ्चक्रे स प्राण-

मसृजत" इत्यादिश्रुतिभ्यः। ईक्षापूर्ब्बकञ्च कर्त्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम् अनेककारकपूर्ब्बिका च क्रिया फलसिद्धौ लोके दृष्टा स च न्याय आदिकर्त्तर्य्यपि युक्तः संक्रामयितुम्, ईश्वरत्वप्रसिद्धेश्च ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते तद्वत् परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम्। कार्य्यञ्चेदं जगत् सावयवमचेतनमशुद्धञ्च दृश्यते कारणेनापि तस्य तादृशेनैव भवितव्यं कार्य्यकारणयोः सारूप्यदर्शनात् ब्रह्म च नैवं लक्षणमवगम्यते "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादि श्रुतिभ्यः। पारिशेष्याद्ब्रह्मणोऽन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगन्तव्यं ब्रह्मकारणत्वश्रुतेर्निमित्तमात्रे पर्य्यवसानादित्येवं प्राप्ते ब्रूमः। प्रकृतिश्चोपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं निमित्तकारणञ्च न केवलं निमित्तकारणमेव कस्मात् "प्रतिज्ञादृष्टान्तानुरोधात् एवं हि प्रतिज्ञादृष्टान्तौ श्रुतौ नोपरुध्येते। प्रतिज्ञा तावत् "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतम्भवत्यमतं मतमविज्ञातं विज्ञातमिति" तत्र चैकविज्ञानेन सर्व्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते तच्चोपादानकारणविज्ञाने सर्व्वविज्ञानं सम्भवति उपादानकारणाव्यतिरेकात् कार्य्यस्य, निमित्तकारणाद्व्यतिरेकस्तु कार्य्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात्। दृष्टान्तोऽपि "यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्व्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, इत्युपादान गोचर एवाम्नायते "यथैकेन लोहमणिना सर्व्वं लोहमयं विज्ञातं स्यात्" "एकेन नखनिकृन्तनेन सर्व्वं कार्ष्णायसं विज्ञातं स्यादिति" तथान्यत्रापि "कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं भवतीति" प्रतिज्ञा "यथा पृथिव्यामोषधयः सम्भवन्तीति" दृष्टान्तः "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्व्वं विदितमिति" प्रतिज्ञाय "स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दान् शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इति" दृष्टान्तः एवं यथासम्भवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधकौ प्रत्येतव्यौ। यत इतीयमपि पञ्चमी "यतो वा इमानि भूतानि जायन्ते" इत्यत्र "जनिकर्त्तुः प्रकृतिरिति" पा० विशेषस्मरणात् प्रकृतिलक्षण एवोपादाने द्रष्टव्या। निमित्तत्वन्तु अधिष्ठात्रन्तराभावादवगन्तव्यं यथा हि लोके मृत्सुवर्णादिकमुपादान कारणं कुलालसुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्त्तते नैवं ब्रह्मण उपादानकारणस्य सतोऽन्योऽधिष्ठाताऽपेक्ष्योऽस्ति प्रागुत्पत्तेः "एकमेवाद्वितीय"मित्यवधारणात् अधिष्ठात्रन्तराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेव नोदितो वेदितव्यः" अधिष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्व्वविज्ञानस्यासम्भवात् प्रतिज्ञादृष्टान्तोपरोध एव स्यात् तस्मादधिष्ठात्रन्तराभावादात्मनः कर्त्तृत्वम् उपादानान्तराभावाच्च प्रकृतित्वम्। कुतश्चात्मनः कर्त्तृत्वप्रकृतित्वे" भा०। "अभिध्योपदेशाच्च" सू०। "अभिध्योपदेशश्चात्मनः कर्त्तृत्वप्रकृतित्वे गमयति "सोऽकामयत बहु स्यां प्रजायेति" "तदैक्षतेति" च तत्राभिध्यानपूर्ब्बिकायाः स्वातन्त्र्यप्रवृत्तेः कर्त्तृत्वं गम्यते "बहु स्यामिति" प्रत्यगात्मविषयत्वात् बहुभवनाभिध्यानाच्च प्रकृतिरित्यपि गम्यते" भा०। "साक्षाच्चोभयाम्नानात्" सू०। "प्रकृतित्वस्यायमभ्युच्चयः इतश्च प्रकृतिर्ब्रह्म यत् कारणं साक्षाद्ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते "सर्व्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्तीति" यद्धि यस्मात् प्रभवति यस्मिंश्च प्रलीयते तत् तस्योपादानं प्रसिद्धं यथा व्रीहियवादीनां पृथिवी" साक्षादिति चोपादानान्तरानुपादानं सूचयति आकाशादेवेति। प्रत्यस्तमयश्च नोपादानादन्यत्र कार्य्यस्य दृष्टः" भा०। "आत्मकृतेः परिणामात्" सू०। "इतश्च प्रकृतिर्ब्रह्म यत् कारणं ब्रह्मप्रक्रियायाम्" "तदात्मानं स्वयमकुरुतेति" आत्मनः कर्म्मत्वं कर्त्तृत्वञ्च दर्शयति आत्मानमिति कर्म्मत्वं स्वयमकुरुतेति कर्त्तृत्वम्। कथं पुनः पूर्व्वसिद्धस्य सतः कर्त्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं सम्पादयितुम्? परिणामादिति ब्रूमः पूर्व्वसिद्धो हि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्धः। स्वयमिति च विशेषणान्निमित्तान्तरानपेक्षत्वमपि प्रतीयते। परिणामादिति वा पृथक्सूत्रं तस्यैषोऽर्थः। इतश्च प्रकृतिर्ब्रह्म यत् कारणं ब्रह्मण एव विकारात्मनायं परिणामः सामानाधिकरण्येनाम्नायते" "सच्च त्यच्चाभवन्निरुक्तञ्चानिरुक्तञ्चेत्यादिनेति" भा०। "योनिश्च हि गीयते" सू०। "इतश्च प्रकृतिर्ब्रह्म यत् कारणं ब्रह्म योनिरित्यपि सर्व्वत्र वेदान्तेषु "कर्त्तारमीशं पुरुषं ब्रह्मयोनिमिति" "यद्भूतयोनिं परिपश्यन्ति धीराः" इति च। योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके "पृथिवी योनिरोषधिवनस्पतीनामिति"। स्त्रीयोनेरप्यस्त्येवावयवद्वारा

त्वं प्रत्युपादानत्वम् क्वचित् स्थानवचनोऽपि योनिशब्दो दृष्टः "योनिष्ट इन्द्रनिषदे अकारीति" वाक्यशेषात्। तत्र प्रकृतिवचनता परिगृह्यते "यथोर्णनाभिः सृजते गृह्णते च" इत्येवं जातीयकात्। तदेवं प्रकृतित्वं ब्रह्मणः सिद्धम्। यत् पुनरिदमुक्तं ईक्षापूर्वकं कर्त्तृत्वं निमित्तकारणेष्वेव कुलालादिषु लोके दृष्टं नोपादानेष्वित्यादि तत् प्रत्युच्यते, न लोकवदिह भवितव्यं नह्ययमनुमानगम्योऽर्थः शब्दगम्यत्वात्त्वस्यार्थस्य, यथाशब्दमिह भवितव्यं शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम पुनश्चैतत् सर्वं विस्तरेण प्रतिवक्ष्यामः" भा०।

तत्र चेतनकारणतावादे सांख्याक्षेपप्रदर्शनपूर्वकं ब्रह्मणो यथा कारणत्वसम्भवस्तथा व्यवस्थापितं तत्रैव "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" शा०सू०।

"अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते चेतनाद्धि जगत्प्रक्रियायामाश्रीयमाणायां हिताकरणादयो दोषाः प्रसज्यन्ते कुतः? इतरव्यपदेशात् इतरस्य शारीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रुतिः "स आत्मा तत्त्वमसि श्वेतकेतो"! इति प्रतिबोधनात्। यद्वा इतरस्य ब्रह्मणः शारीरात्मत्वं व्यपदिशति" तत्सृष्ट्वा तदेवानुप्राविशदिति" स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवेशेन शारीरात्मत्वप्रदर्शनात्। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" पर देवताजीवमात्मशब्देन व्यपदिशन्ती न ब्रह्मणोभिन्नः शारीर इति दर्शयति। तस्माद्यद्ब्रह्मणः स्रष्टृत्वं तच्छारीरस्यैव। अतः स्वतन्त्रकर्त्ता स च हितमेवात्मनः सौमनस्यकरं कुर्यात् नाहितं जन्ममरणजरारोगाद्यनेकानर्थजालम्। न हि कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति न च स्वयमत्यन्तनिर्मलः सन्नत्यन्तं मलिनं देहमात्मत्वेनोपेयात् कृतमपि कथञ्चिद्यद् दुःखकरं तदिच्छया जह्यात् सुखकरं चोपाददीत स्मरेच्च मयेदं जगद्विविधं विचित्रं विरचितमिति सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्मरति मयेदं कृतमिति। यथा च मायावी स्वयं प्रसारितां मायामिच्छया अनायासेनोपसंहरति एवं शारीरोऽपीमां सृष्टिमुपसंहरेत्। स्वकीयमपि तावच्छरीरं शारीरो न शक्नोति अनायासेनोपसंहर्त्तुम्। एवं हितक्रियादर्शनादन्याय्या चेतनाज्जगत्प्रक्रियेति मन्यते" भा०।

"अधिकन्तु भेदनिर्देशात्" सू०। "तुशब्दः पूर्वपक्षं व्यावर्त्तयति। यत् सर्वज्ञं सर्वशक्ति ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं शारीरादधिकमन्यत् तद्वयं जगतः स्रष्टृ ब्रूमः न तस्मिन् हिताकरणादयो दोषाः प्रसज्यन्ते। न हि तस्य हितं किञ्चित् कर्त्तव्यमस्ति अहितं वा परिहर्त्तव्यं नित्यमुक्तत्वात्। न च तस्य ज्ञानप्रतिबन्धः शक्तिप्रतिबन्धो वा कश्चिदप्यस्ति सर्वज्ञत्वात् सर्वशक्तित्वाच्च। शारीरस्त्वनेवंविधस्तस्मिन् प्रसज्यन्ते हिताकरणादयो दोषाः न तु तं वयं जगतः स्रष्टारं ब्रूमः। कुत एतत् भेदनिर्देशात् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "सता सौम्य! तदा संपन्नो भवति" "शारीर आत्मा प्राज्ञेनात्मना अन्वारूढ" इत्येवं जातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति। नन्वभेदनिर्देशोऽपि दर्शितः "तत्त्वमसी"त्येवञ्जातीयकः कथं भेदाभेदौ विरुद्धौ सम्भवेताम्?। नैष दोषः। आकाशघटाकाशन्यायेनोभयसम्भवस्य तत्र तत्र प्रतिष्ठापितत्वात्। अपि च यदा "तत्त्वमसी"त्येवञ्जातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवति, अपगतम्भवति तदा जीवस्य संसारित्वं, ब्रह्मणश्च स्रष्टृत्वं, समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् तत्र कुत एव सृष्टिः, कुतो वा हिताकरणादयो दोषाः। अविद्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातोपाध्यविवेककृता हि भ्रान्तिर्हिताहितकरणादिलक्षणः संसारो न तु परमार्थतोऽस्तीत्यसकृदवोचाम जन्ममरणच्छेदनभेदनाद्यभिमानवत्। अबाधिते तु भेदव्यवहारे "सोऽन्वेष्टव्य" इत्येवञ्जातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं निरुणद्धि" भा०। "अश्मादिवच्च तदनुपपत्तिः" सू० "यथा च लोके पृथिवीत्वसामान्यान्वितानामप्यश्मनां केचिन्महार्हा मणयो वज्रवैदूर्यादयोऽन्ये मध्यमवीर्याः सूर्यकान्तादयोऽन्ये प्रहीणाः श्ववायसप्रक्षेपणार्हाः पाषाणा इत्यनेकविधं वैचित्र्यं दृश्यते यथा चैकपृथिवीव्यपाश्रयाणामपि बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं चन्दनचम्पकादिषूपलभ्यते यथा चैकस्याप्यन्नरसस्य लोहितादीनि केशलोमादीनि च कार्याणि विचित्राणि भवन्ति एवमेकस्यापि ब्रह्मणो जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपपद्यत इत्यतस्तदनुपपत्तिः परपरिकल्पितदोषानुपपत्तिरित्यर्थः। श्रुतेश्च प्रामाण्याद्विकारस्य वाचारम्भणमात्रत्वात् स्वप्नदृश्यभाववैचित्र्यवच्चेत्यभ्युच्चयः" भा०। "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" सू०। "चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते कस्मात्? उपसंहारदर्शनात्। इह हि लोके कुलालादयो

घटपटादीनां कर्त्तारो मृद्दण्डचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः सन्तस्तत् कार्यं कुर्वाणा दृश्यन्ते ब्रह्म चासहायं तवाभिप्रेतं तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत तस्मान्न ब्रह्म जगत्कारणमिति चेन्नैष दोषः यतः क्षीरवत् द्रव्यस्वभावविशेषादुपपद्यते यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनं, तथेहापि भविष्यति। ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनम् औष्ण्यादिकं, कथमुच्यते क्षीरवद्धीति नैष दोषः। स्वयमपि हि क्षीरं याञ्च यावतीञ्च परिणाममात्रामनुभवत्येव पार्यते ताञ्च तावतीञ्चौष्ण्यादिना दधिभावाय। यदि स्वयं दधिभावशीलता न स्यान्नैवौष्ण्यादिनापि बलाद्दधिभावमापद्येत। न हि वायुराकाशो वौष्ण्यादिना बलाद्दधिभावमापद्येत। साधनसम्पत्त्या च तस्य संपूर्णता सम्पाद्यते। परिपूर्णशक्तिकन्तु ब्रह्म न तस्यान्येन केनचित् पूर्णता सम्पादयितव्या। श्रुतिश्च तत्र भवति "न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति" तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात् क्षीरादिवद्विचित्रः परिणाम उपपद्यते" भा०। "देवादिवदपि लोके" सू०। "स्यादेतत् उपपद्यते क्षीरादीनामचेतनानामनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः दृष्टत्वात् चेतनाः पुनः कुलालादयश्च साधनसामग्रीमपेक्ष्यैव तस्मै तस्मै कार्याय प्रवर्त्तमाना दृश्यन्ते कथं ब्रह्म चेतनं सदसहायं प्रवर्त्तेतेति? देवादिवदिति ब्रूमः। यथा लोके देवाः पितर ऋषय इत्येवमादयः महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्य किञ्चिद्बाह्यं साधनमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि रथादीनि च निर्मिमाणा उपलभ्यन्ते मन्त्रार्थवादेतिहासपुराणप्रामाण्यात्। तन्तुनाभश्च स्वत एव तन्तून् सृजति बलाका चान्तरेणैव शुक्रं गर्भं धत्ते, पद्मिनी चानपेक्ष्य किञ्चित् प्रस्थानसाधनं सरोन्तरात् सरोन्तरं प्रतिष्ठते। एवं चेतनमपि ब्रह्मानपेक्ष्य बाह्यं साधनं स्वत एव जगत् स्रक्ष्यति स. यदि ब्रूयात्, य एते देवादयो ब्रह्मणो दृष्टान्ता उपात्तास्ते दार्ष्टान्तिकेन ब्रह्मणा समानस्वभावा न भवन्ति शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादने उपादानं न तु चेतन आत्मा, तन्तुनाभस्य च क्षुद्रतरजन्तु-भक्षणाल्लाला कठिनतामापद्यमाना तन्तुर्भवति, बलाका च स्तनयित्नुरवश्रवणाद्गर्भं धत्ते, पद्मिनी च चेतनप्रयुक्ता सत्यचेतनेनैव शरीरेण सरोन्तरात् सरोन्तरमुपसर्पति वल्लीव वृक्षं न तु स्वयमेव अचेतना सरोन्तरोपसर्पणे व्याप्रियते तस्मान्नैते ब्रह्मणो दृष्टान्ता इति, तं प्रति ब्रूयात् नायं दोषः। कुलालादिदृष्टान्तवैलक्षण्यमात्रस्य विवक्षितत्वादिति। यथा हि कुलालादीनां देवादीनाञ्च समाने चेतनत्वे कुलालादयः कार्यारम्भे बाह्यं साधनमपेक्षन्ते न देवादयस्तथा, ब्रह्म चेतनमपि न बाह्यं साधनमपेक्षिष्यते इत्येतावदुक्तं देवाद्युदाहरणेन विवक्षामः। तस्माद्यथैकस्य सामर्थ्यं दृष्टं तथा सर्वेषामेव भवितुमर्हतीति नास्त्येकान्त इत्यभिप्रायः" भा०। "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दव्याकोपो वा" सू०। "चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्षितबाह्यसाधनं स्वयम्परिणममानं जगतः कारणमिति स्थितम्। शास्त्रार्थपरिशुद्धये तु पुनराक्षिपति कृत्स्नप्रसक्तिः कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति निरवयवत्वात् यदि ब्रह्म पृथिव्यादिवत् सावयवमभविष्यत्ततोऽस्यैकदेशः पर्य्यणंस्यत एकदेशश्चावास्थास्यत, निरवयवन्तु ब्रह्म श्रुतिभ्योऽवगम्यते "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः" "इदं महद्भूतमनन्तमपारम्" "विज्ञानघन एव स एष नेति नेत्यात्माऽस्थूलमनण्वित्याद्याभ्यः" सर्वविशेषप्रतिषेधश्रुतिभ्यः। ततश्चैकदेशपरिणामासम्भवात् कृत्स्नपरिणामप्रसक्तौ सत्यां मूलोच्छेदः प्रसज्येत द्रष्टव्यतोपदेशानर्थक्यञ्चापद्यत अयत्नदृष्टत्वात् कार्यस्य। तद्व्यतिरिक्तस्य च ब्रह्मणोऽभावादजत्वादिशब्दव्याकोपश्च। अथैतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत तथापि ये निरवयवत्वस्य प्रतिपादकाः शब्दास्ते प्रकुप्येयुः। सावयवत्वे चानित्यत्वप्रसङ्ग इति सर्वथाऽयं पक्षो न घटयितुं शक्यत इत्याक्षिपति" भा०। "श्रुतेस्तु शब्दमूलत्वात्" सू० "तुशब्देनाक्षेपं परिहरति न खल्वस्मत्पक्षे कश्चिदपि दोषोऽस्ति न तावत् कृत्स्नप्रसक्तिरस्ति कुतः? श्रुतेः तथैव हि ब्रह्मणोऽवस्थानं श्रूयते प्रकृतिविकारयोर्भेदेन व्यपदेशात् "सेयन्देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" "तावानस्य महिमा ततो ज्यायांश्च पुरुषः पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवीति" चैवं जातीयकात् तथा हृदयायतनत्ववचनात् सत्-

सत्त्ववचनाच्च । यदि च कृत्स्नं ब्रह्म कार्यभावेनोपयुक्तं स्यात् "सता सौम्य! तदा सम्पन्नो भवतीति" सुषुप्तिगतं विशेषणमनुपपन्नं स्यात् विकृतेन ब्रह्मणा नित्यं सम्पन्नत्वात् अविकृतस्य च ब्रह्मणोऽभावात् तथेन्द्रियगोचरत्वप्रतिषेधाद्ब्रह्मणः, विकारस्य चेन्द्रियगोचरत्वोपपत्तेः । तस्मादस्ति अविकृतं ब्रह्म न च निरवयवत्वशब्दव्याकोपोऽस्ति श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात् । शब्दमूलञ्च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकं तद्यथाशब्दमभ्युपगन्तव्यम् । शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयति अकृत्स्नप्रसक्तिं निरवयवताञ्च । लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशात् शक्तयोविरुद्धानेककार्यविषया दृश्यन्ते ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्ते अस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय इति किमुताचिन्त्यप्रभावस्य ब्रह्मणोरूपं विना शब्देन न निरूप्येत । तथाचाहुः पौराणिकाः "अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणमिति" । तस्माच्छब्दमूल एवातीन्द्रियार्थयाथात्म्याधिगमः। ननु शब्देनापि न शक्यते विरुद्धार्थः प्रत्याययितुं निरवयवञ्च ब्रह्म परिणमते न च कृत्स्नमिति यदि निरवयवं ब्रह्म स्यान्नैव परिणमेत कृत्स्नमेव वा परिणमेत अथ केनचिद्रूपेण परिणमेत केनचिद्रूपेणावतिष्ठेतेति रूपभेदकल्पनात् सावयवमेव प्रसज्येत । क्रियाविषये "अतिरात्रे षोड़शिनं गृह्णाति नातिरात्रे षोड़शिनं गृह्णाती"त्येवंजातीयिकायां विरुद्धप्रतीतावपि विकल्पाश्रयणं विरोधपरिहारकारणं भवति पुरुषतन्त्रत्वादनुष्ठानस्य इह तु विकल्पाश्रयणेनापि न विरोधपरिहारः सम्भवति अपुरुषतन्त्रत्वाद्वस्तुनः तस्माद्दुर्घटमेतदिति नैष दोषः । अविद्याकल्पितरूपभेदाभ्युपगमात् । नह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु सम्पद्यते । न हि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति । अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वाच्येन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते वाचारम्भणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्य, न निरवयवत्वं ब्रह्मणः कुप्यति । नचेयं परिणामश्रुतिः परिणामप्रतिपादनार्था तत्प्रतिपत्तौ फलानवगमात् । सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा तत्प्रतिपत्तौ फलावगमात् ।"स एष नेति नेत्यात्मा" इत्युपक्रम्याह "अभयं वै जनक! प्राप्तोऽसीति"।तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति भा०।"आत्मनि चैवं विचित्राश्च हि" सू०।"अपि च नैवात्र विवदितव्यं कथमेकस्मिन् ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति यत आत्मन्यप्येकस्मिन् स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते "न तत्र रथा न रथयोगाः पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते" इत्यादिना । लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति" भा० । "स्वपक्षदोषाच्च" सू० । "परेषामप्येष समानः स्वपक्षदोषः प्रधानवादिनोऽपि हि निरवयवमपरिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य शब्दादिमतः कार्यस्य कारणमिति स्वपक्षः तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वात् प्रधानस्य प्राप्नोति निरवयवत्वाभ्युपगमव्याकोपो वा । ननु नैव तैर्निरवयवं प्रधानमभ्युपगम्यते सत्त्वरजस्तमांसि हि त्रयोगुणाः तेषां साम्यावस्था प्रधानं तैरेवावयवैः तत् सावयवमिति, नैवं जातीयकेन सावयवत्वेन प्रकृतोदोषः परिहर्त्तुं पार्य्यते यतः सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वम् एकैकमेवेतरद्वयानुगृहीतं स्वजातीयस्य प्रपञ्चस्योपादानमिति समानत्वात् स्वपक्षदोषप्रसङ्गस्य । तर्काप्रतिष्ठानात् सावयवत्वमेवेति चेत् एवमप्यनित्यत्वादिदोषप्रसङ्गः । अथ शक्तय एव कार्यवैचित्र्यसूचिता अवयवा इत्यभिप्रायः, तास्तु ब्रह्मवादिनोऽप्यविशिष्टाः । तथा अणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः । अथैकदेशेन संयुज्येत तथापि निरवयवत्वाभ्युपगमव्याकोप इति स्वपक्षेऽपि समान एष दोषः। समानत्वाच्च नान्यतरस्मिन्नेव पक्षे उपक्षेप्तव्योभवति । परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः" भा०।"सर्वोपेता च तद्दर्शनात्" सू०।"एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते विचित्रो विकारप्रपञ्च इत्युक्तं तत् पुनःकथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति ?"तदुच्यते सर्वोपेता च तद्दर्शनात् सर्वशक्तियुक्ता च परा देवतेत्यवगन्तव्यं कुतः ? तद्दर्शनात् तथाहि दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः""सत्य-

कामः सत्यसङ्कल्पः" "यः सर्वज्ञः सर्ववित्" "एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्य्याचन्द्रमसौ धृतौ तिष्ठत" इत्येवंजातीयका" भा०। "विकरणत्वान्नेति चेत्तदुक्तम्" सू०। "स्यादेतत् विकरणां परां देवतां शास्ति शास्त्रम् "अचक्षुष्कमश्रोत्रमवागमनः" इत्येवञ्जातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्य्याय प्रभवेत् ? देवादयोहि चेतनाः सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्य्यकरणसम्पन्ना एव तस्मै तस्मै कार्य्याय प्रभवन्तो विज्ञायन्ते । कथञ्च "नेति नेतीति" प्रतिषिद्धसर्व्वविशेषाया देवतायाः सर्व्वशक्तियोगः सम्भवेदिति ? चेत् यदत्र वक्तव्यं तत् पुरस्तादेवोक्तं, श्रुत्यवगाह्यमेवेदमतिगम्भीरं परं ब्रह्म न तर्कावगाह्यम् न च यथैकस्य सामर्थ्यं दृष्टं तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति । प्रतिषिद्धसर्व्वविशेषस्यापि ब्रह्मणः सर्व्वशक्तियोगः सम्भवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव । तथा च शास्त्रम् "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यकरणस्यापि ब्रह्मणः सर्व्वसामर्थ्ययोगं दर्शयति" भा०। "न प्रयोजनवत्त्वात्" सू०। "अन्यथा पुनश्चेतनकर्तृकत्वं जगत आक्षिपति, न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति कुतः ? प्रयोजनवत्त्वात् प्रवृत्तीनाम् । चेतनो हि लोके बुद्धिपूर्व्वकारी पुरुषः प्रवर्त्तमानो न मन्दोपक्रमामपि तावत् प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः किमुत गुरुतरसंरम्भाम्, भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः "न वा अरे सर्व्वस्य कामाय सर्वं प्रियम्भवत्यात्मनस्तु कामाय सर्वं प्रियम्भवतीति" । गुरुतरसंरम्भा चेयं प्रवृत्तिर्यदुच्चावचप्रपञ्चं जगद्बिम्बं विरचयितव्यम् । यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात् । अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्त्तमानो दृष्टस्तथा परमात्मापि प्रवर्त्तिष्यत इत्युच्येत, तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत तस्मादश्लिष्टा चेतनात् सृष्टिरिति" भा० । "लोकवत्तु लीलाकैवल्यम्" सू० "तुशब्देनाक्षेपं परिहरति । यथा लोके कस्यचिदाप्तैषणस्य राज्ञो राजामात्यस्य वा व्यतिरिक्तं किञ्चित्प्रयोजनमनभिसन्धाय केवलं लीलारूपाः प्रवृत्तयः क्रीडाविहारेषु भवन्ति यथा चोच्छ्वासप्रश्वासादयोऽनभिसन्धाय बाह्यं किञ्चित्प्रयोजनान्तरं स्वभावादेव भवन्ति एवमीश्वरस्याप-नपेक्ष्य किञ्चित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति । नहीश्वरस्य प्रयोजनान्तरं निरूप्यमाणं न्यायतः श्रुतितो वा सम्भवति । न च स्वभावः पर्य्यनुयोक्तुं शक्यते । यद्यप्यस्माकमियं जगद्बिम्बविरचना गुरुतरसंरम्भेवावभाति तथापि परमेश्वरस्य लीलैव केवलेयम् अपरिमितशक्तित्वात् । यदि नाम लोके लीलास्वपि किञ्चित् सूक्ष्मं प्रयोजनमुत्प्रेक्षेत तथापि नैवात्र किञ्चित्प्रयोजनमुत्प्रेक्षितुं शक्यते आप्तकामताश्रुतेः । नाप्यप्रवृत्तिरुन्मत्तप्रवृत्तिर्वा सृष्टिश्रुतेः सर्वज्ञत्वश्रुतेश्च । नचेयं परमार्थविषया सृष्टिस्थितिश्रुतिः अविद्याकल्पितनामरूपव्यवहारगोचरत्वात् ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येतदपि न विस्मर्त्तव्यम्" भा०। "वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति" सू०। "पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते स्थूणानिखननन्यायेन प्रतिज्ञातस्यार्थस्य दृढीकरणाय । नेश्वरो जगतः कारणमुपपद्यते कुतः ? वैषम्यनैर्घृण्यप्रसङ्गात् । कांश्चिदत्यन्तसुखभाजः करोति देवादीन्, कांश्चिदत्यन्तदुःखभाजः करोति पश्वादीन्, कांश्चिन् मध्यमभाजो मनुष्यादीनित्येवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविप्रलोपः प्रसज्येत । तथा खलजनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात् सर्व्वप्रजोपसंहरणाच्च प्रसज्येत । तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः कारणमित्येवं प्राप्ते ब्रूमः वैषम्यनैर्घृण्ये नेश्वरस्य प्रसज्येते कस्मात् ? सापेक्षत्वात् । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीत स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यञ्च । न तु निरपेक्षस्य निर्मातृत्वमस्ति, सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते । किमपेक्षत इति चेद्धर्म्माधर्म्मावपेक्षत इति वदामः । अतः सृज्यमानप्राणिधर्म्माधर्म्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः यथा हि पर्ज्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणम्भवति व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणम्भवति देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्म्माणि कारणानि भवन्ति । एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति । कथं पुनरवगम्यते सापेक्ष ईश्वरो नीचमध्यमोत्तमसंसारं निर्मिमीते इति । तथा हि दर्शयति

श्रुतिः "एष ह्येव साधु कर्म्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म्म कारयति तं, यमधोलोकं निनीषते" इति "पुण्यो वै पुण्येन कर्म्मणा भवति, पापः पापेनेति" च। स्मृतिरपि प्राणिकर्म्मविशेषापेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वञ्च दर्शयति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्येवञ्जातीयका" भा०। "न कर्म्माविभागादिति चेन्नानादित्वात्" सू०। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति" प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म्म, यदपेक्षा विषमा सृष्टिः स्यात्, सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म्म। कर्म्मापेक्ष ईश्वरः प्रवर्त्ततां नाम, प्राक् विभागाद्वैचित्र्यनिमित्तस्य कर्म्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेन्नैष दोषः, अनादित्वात् संसारस्य। भवेदेष दोषो यद्यादिमानयं संसारः स्यात् अनादौ तु संसारे वीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्म्मणः, सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते। कथं पुनरेतदवगम्यते अनादिरेष संसार इति? अत उत्तरं पठति" भा०। "उपपद्यते चाप्युपलभ्यते च" सू०। "उपपद्यते च संसारस्यानादित्वं आदिमत्त्वे हि संसारस्याकस्मादुद्भूतेर्मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गः अकृताभ्यागमप्रसङ्गश्च सुखदुःखादिवैषम्यस्य निर्निमित्तत्वात्। न चेश्वरो वैषम्यहेतुरित्युक्तम्। न चाविद्या केवला वैषम्यस्य कारणम् एकरूपत्वात्। रागादिक्लेशवासनाक्षिप्तकर्म्मापेक्षा त्वविद्या वैषम्यकरी स्यात्। न च कर्म्म अन्तरेण शरीरं सम्भवति, न वा शरीरमन्तरेण कर्म्म सम्भवतीतीतरेतराश्रयदोषप्रसङ्गः 'अनादित्वे तु वीजाङ्कुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति। उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः। श्रुतौ तावत् 'अनेन जीवेनात्मनेति, सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिः संसार इति दर्शयति। आदिमत्त्वे तु ततः प्रागनवधारितः प्राणः स कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत। न च धारयिष्यतीत्यतोऽभिलप्येत अनागताद्धि सम्बन्धादतीतः सम्बन्धो बलीयान् भवति अभिनिष्पन्नत्वात्। "सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयदिति" च मन्त्रवर्णः पूर्व्वकल्पसद्भावं दर्शयति। स्मृतावप्यनादित्वं संसारस्योपलभ्यते। "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा" इति भगवद्गीता। पुराणे चातीतानामनागतानाञ्च कल्पानां न परिमाणमस्तीति स्थापितम्" शङ्करभाष्यम्।

ईश्वरस्य केवलनिमित्तकारणतापक्षोऽपि न्यायवैशेषिकाद्यभिमतः तत्रैव प्रत्याख्यातः यथा "पत्युरसामञ्जस्यात्" शा० सू०। "इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते। तत्कथमवगम्यते?। "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "अभिध्योपदेशाच्च" इत्यत्र प्रकृतिभावेनाधिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य स्वयमेवाचार्य्येण प्रतिष्ठापितत्वात्। यदि पुनरविशेषेणेश्वरकारणवादमात्रमिह प्रतिषिध्येत पूर्व्वोत्तरविरोधाद्व्याहताभिव्याहारः सूत्रकार इत्येतदापद्येत। तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो वेदान्तविहितब्रह्मैकत्वप्रतिपक्षत्वाद्यत्नेनात्र प्रतिषिध्यते। सा चेयं वेदबाह्येश्वरकल्पनानेकप्रकारा। केचित्तावत्सांख्ययोगव्यपाश्रयाः कल्पयन्ति प्रधानपुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वरः इतरेतरविलक्षणाः प्रधानपुरुषेश्वरा इति। माहेश्वरास्तु मन्यन्ते "कार्य्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षायोपदिष्टाः। पशुपतिरीश्वरो निमित्तकारणमिति,। तथा वैशेषिकादयोऽपि केचित् कथञ्चित् स्वप्रक्रियानुसारेण निमित्तकारणमीश्वरं वर्णयन्ति। अत उत्तरमुच्यते। "पत्युरसामञ्जस्यादिति"। पत्युरीश्वरस्य प्रधानपुरुषयोरधिष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते कस्मात्? असामञ्जस्यात्। किं पुनरसामञ्जस्यम् हीनमध्यमोत्तमभावेन हि प्राणिभेदान् विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत। प्राणिकर्म्मापेक्षत्वाददोष इति चेन्न कर्म्मेश्वरयोः प्रवर्त्त्यप्रवर्त्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात्। अनादित्वादिति चेन्न वर्त्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरम्परान्यायापत्तेः। अपि च प्रवर्त्तनालक्षणा दोषा इति न्यायवित्समयः। न हि कश्चिददोषप्रयुक्तः परार्थे स्वार्थे वा प्रवर्त्तमानो दृश्यते स्वार्थप्रयुक्त एव च सर्व्वो जनः परार्थेऽपि प्रवर्त्तत इत्येवमप्यसामञ्जस्यम्। स्वार्थकत्वादीश्वरस्यानीश्वरत्वप्रसङ्गात्। पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम्" भा०। "सम्बन्धानुपपत्तेश्च" सू०। "पुनरप्यसामञ्जस्यमेव न हि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण सम्बन्धं प्रधानपुरुषयोरीशिता। न तावत् संयोगलक्षणः सम्बन्धः सम्भवति प्रधानपुरुषेश्वराणां सर्व्वगतत्वात् निरवयवत्वाच्च।

नापि समवायलक्षणः, आश्रयाश्रयिभावानिरूपणात् । नाप्यन्यः कश्चित् कार्य्यगम्यः सम्बन्धः शक्यते कल्पयितुं, कार्य्यकारणभावस्यैवाद्याप्यसिद्धत्वात् । ब्रह्मवादिनः कथमिति चेत् न तस्य तादात्म्यलक्षणसम्बन्धोपपत्तेः । अपि चागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयति नावश्यं तस्य यथादृष्टं सर्व्वमभ्युपगन्तव्यम् । परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्व्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः । परस्यापि सर्व्वज्ञप्रणीतागमसद्भावात् समानमागमबलमिति चेन्न इतरेतराश्रयप्रसङ्गात् आगमप्रत्ययात् सर्व्वज्ञसिद्धिः सर्व्वज्ञप्रत्ययाच्चागमसिद्धिरिति । तस्मादनुपपन्ना साङ्ख्ययोगवादिनामीश्वरकल्पना । एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासम्भवमसामञ्जस्यं योजयितव्यम्"भा०। "अधिष्ठानानुपपत्तेश्च"सू०। "इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानादीनि अधिष्ठाय प्रवर्त्तेत न चैवमुपपद्यते । नह्यप्रत्यक्षं रूपादिहीनञ्च प्रधानमीश्वरस्याधिष्ठेयं सम्भवति मृदादिवैलक्षण्यात्"भा०। "करणवच्चेन्न भोगादिभ्यः"सू०।"स्यादेतत् यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनञ्च पुरुषोऽधितिष्ठत्येवं प्रधानमपीश्वरोऽधिष्ठास्यतीति, तथापि नोपपद्यते भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते न चात्र भोगादयो दृश्यन्ते । करणग्रामसाम्ये वाभ्युपगम्यमाने संसारिणामिवेश्वरस्यापि भोगादयः प्रसज्येरन् । अन्यथा वा सूत्रद्वयं व्याख्यायते । "अधिष्ठानानुपपत्तेश्च" । इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते न निरधिष्ठानः अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि किञ्चिच्छरीरं करणायतनं वर्णयितव्यं स्यात् न च तद्वर्णयितुं शक्यते सृष्ट्युत्तरकालभावित्वात् शरीरस्य प्राक्सृष्टेस्तदनुपपत्तेः । निरधिष्ठानत्वे चेश्वरस्य प्रवर्त्तकत्वानुपपत्तिः एवं लोके दृष्टत्वात् ।"करणवच्चेन्न भोगादिभ्यः"सू०। 'अथ लोकदर्शनानुसारेणेश्वरस्यापि किञ्चित्करणानामायतनं शरीरं कामेन कल्प्यते एवमपि नोपपद्यते सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्येत"भा० । "अन्तवत्त्वमसर्व्वज्ञता वा"सू०।"इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि सर्व्वज्ञस्तैरभ्युपगम्यते अनन्तश्च अनन्तञ्च प्रधानं अनन्ताश्च पुरुषा मिथो भिन्ना अभ्युपगम्यन्ते । तत्र सर्व्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छिद्येत वा न वा परिच्छिद्येत, उभयथापि दोषोऽनुषक्त एव । कथं? पूर्व्वस्मिंस्तावद्विकल्पे इयत्तापरिच्छिन्नं वस्तु घटादिवदन्तवत् दृष्टं तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्नत्वादन्तवत् स्यात् । संख्यापरिमाणं तावत् प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नं, स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येतेति । पुरुषगता च महासंख्या । ततश्चेयत्तापरिच्छिन्नानां ये संसारान्मुच्यन्ते तेषां संसारोऽन्तवान् संसारित्वञ्च तेषामन्तवत् । एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारित्वस्य चान्तवत्त्वं स्यात् । प्रधानञ्च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारत्वेनाभिमतं तच्छून्यतायामीश्वरः किमधितिष्ठेत? किं विषये वा सर्व्वज्ञतेश्वरते स्याताम्?। प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सति, आदिमत्त्वप्रसङ्गः आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः। अथ मा भूदेष दोष इत्युत्तरविकल्पोऽभ्युपगम्यते न प्रधानस्य पुरुषाणामात्मनो वेयत्तेश्वरेण परिच्छिद्यत इति । तत ईश्वरस्य सर्व्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत । तस्मादप्यसङ्गतस्तार्किकपरिगृहीतईश्वरकारणवादः" ।

ईश्वरकारणतादार्ढ्याय अचेतनप्रधानकारणवादखण्डनमपि शा०सू०भाष्ययोः । यथा "रचनानुपपत्तेश्च नानुमानम्" सू० । 'तत्र साङ्ख्या मन्यन्ते यथा घटशरावादयो भेदा मृदात्मकतयान्वीयमाना मृदात्मकसामान्यपूर्व्वकाः लोके दृष्टाः तथा सर्व्व एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मकतयाऽन्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्व्वका भवितुमर्हन्ति । यत्तत् सुख दुःखमोहात्मकं सामान्यं तत् त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं प्रवृत्तं स्वभावेनैव विचित्रेण विकारात्मना विवर्त्तते इति । तथा परिमाणादिभिरपि लिङ्गैस्तदेव प्रधानमनुमिमते । तत्र वदामः यदि दृष्टान्तबलेनैतन्निरूप्यते नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किञ्चिद्विशिष्टपुरुषार्थनिर्व्वर्त्तनसमर्थान् विकारान् विरचयत् दृष्टम् । गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते तथेदं जगदखिलं पृथिव्यादि नानाकर्म्मफलभोगयोग्यं बाह्यमाध्यात्मिकञ्च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्म्मफलानुभवा-

ष्ठितानं दृश्यमानं प्रज्ञावद्भिः सम्भावितत्तमैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत् कथमचेतनं प्रधानं रचयेत् ? लोष्टपाषाणादिष्वदृष्टत्वात्। मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकाररचना दृश्यते तद्वत् प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसङ्गः। न च मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयं न बाह्यकुम्भकारादिव्यपाश्रयेणेति किञ्चिन्नियामकमस्ति न चैवं सति किञ्चिद्विरुध्यते प्रत्युत श्रुतिरनुगृह्यते चेतनकारणतासमर्पणात्। अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यम्भवति। अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति। नहि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयाऽन्वय उपपद्यते सुखादीनाञ्चान्तरत्वप्रतीतेः शब्दादीनाञ्चातद्रूपत्वप्रतीतेः तन्निमित्तत्वप्रतीतेश्च शब्दाद्यविशेषेऽपि च भावनाविशेषात् सुखादिविशेषोपलब्धेः। तथा परिमितानां भेदानां मूलाङ्कुरादीनां संसर्गपूर्व्वकत्वं दृष्ट्वा बाह्याध्यात्मिकानां भेदानां परिमितत्वात् संसर्गपूर्व्वकत्वमनुमिमानस्य सत्त्वरजस्तमसामपि संसर्गपूर्व्वकत्वप्रसङ्गः परिमितत्वाविशेषात्। कार्य्यकारणभावस्तु प्रेक्षापूर्व्वनिर्मितानां शयनासनादीनां दृष्ट इति न कार्य्यकारणभावाद्बाह्याध्यात्मिकानां भेदानामचेतनपूर्व्वकत्वं शक्यं कल्पयितुम्" भा०। "प्रवृत्तेश्च" सू०। "आस्तान्तावदियं रचना तत्सिद्ध्यर्था या प्रवृत्तिः साम्यावस्थानात् प्रच्युतिः सत्त्वरजस्तमसामङ्गाङ्गिरूपापत्तिर्विशिष्टकार्य्याभिमुखप्रवृत्तिर्वा सापि नाचेतनस्य प्रधानस्य स्वतन्त्रस्योपपद्यते मृदादिष्वदर्शनाद्रथादिषु च। न हि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः कुलालादिभिरश्वादिभिर्व्वाऽनधिष्ठिता विशिष्टकार्य्याभिमुखप्रवृत्तयो दृश्यन्ते। दृष्टाच्चादृष्टसिद्धिः। अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणमनुमातव्यम्भवति। ननु चेतनस्यापि प्रवृत्तिः केवलस्य न दृष्टा सत्यमेतत्तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा नत्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा। किं पुनरत्र युक्तं यस्मिन् प्रवृत्तिर्दृष्टा तस्य सा उत यत्संयुक्तस्य दृष्टा तस्यैव सेति। ननु यस्मिन् दृश्यते प्रवृत्तिस्तस्यैव सेति युक्तम् उभयोः प्रत्यक्षत्वात् नतु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो रथादिवत् प्रत्यक्षः प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः केवलाचेतनरथादिवैलक्षण्यं जीवद्देहस्य दृष्टमिति। अतएव प्रत्यक्षे देहे सति चैतन्यदर्शनादसति तददर्शनात् देहस्यैव चैतन्यमपीति लौकायतिकाः प्रतिपन्नाः। तस्मादचेतनस्यैव प्रवृत्तिरिति। तदभिधीयते न ब्रूमो यस्मिन्नचेतने प्रवृत्तिर्दृश्यते न तस्य सेति भवतु तस्यैव सा सापि चेतनाद्भवतीति ब्रूमः। तद्भावे भावात्तदभावे चाभावात् यथा काष्ठादिव्यपाश्रयापि दाहप्रकाशादिलक्षणा विक्रियानुपलभ्यमानापि केवले ज्वलने ज्वलनादेव भवति तत्संयोगे दर्शनात्तद्वियोगे चादर्शनात्तद्वत्। लौकायतिकानामपि चेतनएव देहोऽचेतनानां रथादीनां प्रवर्त्तकोदृष्टइत्यविप्रतिषिद्धं चेतनस्य प्रवर्त्तकत्वम्। ननु तव देहादिसंयुक्तस्याप्यात्मनो विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरनुपपन्नं प्रवर्त्तकत्वमिति चेन्न अयस्कान्तवद्रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्त्तकत्वोपपत्तेः यथाऽयस्कान्तोमणिः स्वयं प्रवृत्तिरहितोऽपि अयसः प्रवर्त्तको भवति यथा च रूपादयो विषयाः स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्त्तका भवन्त्येवं प्रवृत्तिरहितोऽपीश्वरः सर्व्वगतः सर्व्वात्मा सर्व्वज्ञः सर्व्वशक्तिश्च सन् सर्व्वं प्रवर्त्तयेदित्युपपन्नम्। एकत्वात् प्रवर्त्त्याभावे प्रवर्त्तकत्वानुपपत्तिरिति चेन्न अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत् प्रत्युक्तत्वात्। तस्मात् सम्भवति प्रवृत्तिः सर्व्वज्ञकारणत्वे न त्वचेतनकारणत्वे" भा०। "पयोम्बुवच्चेत्तत्रापि" सू०। "स्यादेतत् यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्धये प्रवर्त्तते यथा च जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दते एवं प्रधानमप्यचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्त्तिष्यत इति। नैतत् साधूच्यते, यतस्तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात्। शास्त्रञ्च "योऽप्सु तिष्ठन्नद्भ्योऽन्तरो योऽपोऽन्तरो यमयति" "एतस्य वा अक्षरस्य प्रशासने गार्गि! प्राच्योऽन्या नद्यः स्यन्दन्ते" इत्येवञ्जातीयकं समस्तस्य लोकपरिस्यन्दितस्येश्वराधिष्ठिततां श्रावयति। तस्मात् साध्यपक्षनिक्षिप्तत्वात् पयोऽम्बुवदित्यनुपन्यासः। चेतनायाश्च धेन्वाः स्नेहेनेच्छया पयसः प्रवर्त्तकत्वोपपत्तेः वत्सचूषणेन च पयस आकृष्यमाणत्वात्। नचाम्बुनोऽप्यत्यन्तमनपेक्षा निम्नभूम्याद्यपेक्षत्वात् स्यन्दनस्य। चेतनापेक्षत्वन्तु सर्व्वत्रोपदर्शितम्। "उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" त्विति बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्य्यम्भवतीत्येतल्लोकदृष्ट्या वि

दर्शितं शास्त्रदृष्ट्या पुनः सर्वज्ञेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते” भा०। “व्यतिरेकानवस्थितेश्चानपेक्षत्वात्” सू०। “साङ्ख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानं न तद्व्यतिरेकेण प्रधानस्य प्रवर्त्तकं निवर्त्तकं वा किञ्चिद्बाह्यमपेक्ष्यमवस्थितमस्ति पुरुषस्तूदासीनो न प्रवर्त्तको न निवर्त्तक इत्यतोऽनपेक्षं प्रधानम् अनपेक्षत्वाच्च कदाचित् प्रधानं महदाद्याकारेण परिणमते कदाचिन्न परिणमत इत्येतदयुक्तम्। ईश्वरस्य तु सर्वज्ञत्वात् सर्वशक्तित्वान्महामायित्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते” भा० “अन्यत्राभावाच्च न तृणादिवत्” सू०। “स्यादेतत् यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं स्वभावादेव क्षीराद्याकारेण परिणमते एवं प्रधानमपि महदाद्याकारेण परिणंस्यत इति। कथञ्च निमित्तान्तरनिरपेक्षं तृणादीति गम्यते निमित्तान्तरानुपलम्भात्। यदि हि किञ्चिन्निमित्तान्तरमुपलभेमहि ततो यथाकामं तेन तेन निमित्तेन तृणाद्युपादाय क्षीरं सम्पादयेमहि न तु सम्पादयामहे। तस्मात् स्वाभाविकस्तृणादेः परिणामः तथा प्रधानस्यापि स्यादिति। अत्रोच्यते। भवेत्तृणादिवत् प्रधानस्य स्वाभाविकः परिणामो यदि तृणादेरपि स्वाभाविकः परिणामोऽभ्युपगम्येत न त्वभ्युपगम्यते निमित्तान्तरोपलब्धेः कथं निमित्तान्तरोपलब्धिः अन्यत्राभावात् धेन्वैव ह्युपयुक्तं तृणादि क्षीरीभवति न प्रहीणमनडुहाद्युपयुक्तं वा यदि हि निर्निमित्तमेतत् स्यात् धेनुशरीरसम्बन्धादन्यत्रापि तृणादि क्षीरीभवेत्। न च यथाकामं नरैर्न शक्यं सम्पादयितुमित्येतावता निर्निमित्तता सम्भवति, भवति हि किञ्चित् कार्य्यं मानुषसम्पाद्यं किञ्चिद्दैवसम्पाद्यम्। मनुष्या अपि च शक्नुवन्त्येवोचितेनोपायेन तृणाद्युपादाय क्षीरं सम्पादयितुं प्रभूतं हि क्षीरं कामयमानाः प्रभूतं घासं धेनुञ्चारयन्ति ततश्च प्रभूतं क्षीरं लभन्ते। तस्मान्न तृणादिवत् स्वाभाविकः प्रधानस्य परिणामः” भा०। “अभ्युपगमेऽप्यर्थाभावात्” सू०। “स्वाभाविकी प्रधानस्य प्रवृत्तिर्न भवतीति स्थापितम्। अथापि नाम भवतः श्रद्धामनुरुध्यमानाः स्वाभाविकीमेव प्रधानस्य प्रवृत्तिमभ्युपगच्छेम तथापि दोषोऽनुषज्येतैव कुतः? अर्थाभावात् यदि तावत् स्वाभाविकी प्रधानस्य प्रवृत्तिर्न किञ्चिदन्यदपेक्षत इत्युच्येत ततो यथैव सहकारि किञ्चिन्नापेक्षते एवं प्रयोजनमपि किञ्चिन्नापेक्षिष्यत इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्त्तत इतीयं प्रतिज्ञा हीयेत। स यदि-

ब्रूयात् सहकार्य्येव केवलं नापेक्षते न प्रयोजनमपीति तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यं भोगो वा स्यादपवर्गो वा उभयं वेति। भोगश्चेत् कीदृशोऽनाधेयातिशयस्य भोगो भवेत् अनिर्मोक्षप्रसङ्गश्च। अपवर्गश्चेत् प्रागपि प्रवृत्तेरपवर्गस्य सिद्धत्वात् प्रवृत्तिरनर्थिका स्यात् शब्दाद्यनुपलब्धिप्रसङ्गश्च। उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणामानन्त्यादनिर्मोक्षप्रसङ्ग एव। न चौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः, न हि प्रधानस्याचेतनस्यौत्सुक्यं सम्भवति न च पुरुषस्य निर्मलस्य, दृक्शक्तिसर्गशक्तिवैयर्थ्यभयाच्चेत् प्रवृत्तिस्तर्हि दृक्शक्त्यनुच्छेदवत् सर्गशक्त्यनुच्छेदात् संसारानुच्छेदादनिर्मोक्षप्रसङ्ग एव तस्मात् प्रधानस्य पुरुषार्था प्रवृत्तिरित्येतदयुक्तम्” भा०। “पुरुषाश्मवदिति चेत्तथापि” सू०। “स्यादेतत् यथा कश्चित् पुरुषो दृक्शक्तिसम्पन्नं दृक्शक्तिविहीनमन्धमधिष्ठाय प्रवर्त्तयति यथा वाऽयस्कान्तोमणिः स्वयमप्रवर्त्तमानोऽप्ययः प्रवर्त्तयत्येवं पुरुषः प्रधानं प्रवर्त्तयिष्यतीति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम्। अत्रोच्यते तथापि नैव दोषाद्विनिर्मोक्षोऽस्ति। अभ्युपेतहानं तावद्दोष आपतति, प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात् पुरुषस्य च प्रवर्त्तकत्वानभ्युपगमात्। कथञ्चोदासीनः पुरुषः प्रधानं प्रवर्त्तयेत्। पङ्गुरपि ह्यन्धं पुरुषं वागादिभिः प्रवर्त्तयति नैवं पुरुषस्य कश्चित् प्रवर्त्तनव्यापारोऽस्ति निष्क्रियत्वान्निर्गुणत्वाच्च। नाप्ययस्कान्तवत् सन्निधिमात्रेण प्रवर्त्तयेत् सन्निधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात्। अयस्कान्तस्य चानित्यः सन्निधिरस्ति स्वव्यापारः सन्निधिपरिमार्जनाद्यपेक्षश्चास्यास्तीत्यनुपन्यासः पुरुषाश्मवदिति। तथा प्रधानस्याचैतन्यात् पुरुषे चौदासीन्यात् तृतीयस्य च तयोः सम्बन्धयितुरभावात् सम्बन्धानुपपत्तिः। योग्यतानिमित्ते सम्बन्धे योग्यतानुच्छेदादनिर्मोक्षप्रसङ्गः। पूर्ववच्चेहाप्यर्थाभावो विकल्पयितव्यः। परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयञ्च प्रवर्त्तकत्वमित्यस्त्यतिशयः” भा०। “अङ्गित्वानुपपत्तेश्च” सू०। “इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते यद्धि सत्त्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन स्वरूपमात्रेणावस्थानं सा प्रधानावस्था तस्यामवस्थायामनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात् परस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेः। बाह्यस्य च कस्यचित् क्षोभयितुरभावाद्गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात्” भा०। “अन्यथानुमितौ च ज्ञशक्तिवियोगात्” सू०। “अथापि

स्यात् अन्यथा वयमनुमिमीमहे यथा नायमनन्तरो दोषः प्रसज्येत। न ह्यनपेक्षस्वभावाः कूटस्थाश्चास्माभिर्गुणा अभ्युपगम्यन्ते प्रमाणाभावात्। कार्यवशेन तु गुणानां स्वभावोऽभ्युपगम्यते यथा यथा कार्योत्पाद उपपद्यते तथा तथैतेषां स्वभावोऽभ्युपगन्तव्यः। चलं गुणवृत्तमिति चास्त्यभ्युपगमः। तस्मात् साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्त इति। एवमपि प्रधानस्य ज्ञशक्तिवियोगात् रचनानुपपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव। ज्ञशक्तिमपि त्वनुमिमानः प्रतिवादित्वान्निवर्त्तेत चेतनमेकमनेकप्रपञ्चस्य जगत उपादानमिति ब्रह्मवादप्रसङ्गात्। वैषम्योपगमयोग्या अपि गुणाः साम्यावस्थायां निमित्ताभावान्नैव वैषम्यं भजेरन् भजमाना वा निमित्ताभावाविशेषात् सर्वदैव वैषम्यं भजेरन्निति प्रसज्येत एवायमनन्तरोऽपि दोषः" भाष्यम्।

वेदान्तिपक्षपरिशुद्धये साङ्ख्याद्युद्भावितदोषनिराकरणमपि तत्रैव यथा "नन्वौपनिषदानामप्यसमञ्जसमेव दर्शनं तप्यतापकयोर्जात्यन्तरभावानभ्युपगमात्। एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणमभ्युपगच्छतामेकस्यैवात्मनो विशेषौ तप्यतापकौ न जात्यन्तरभूतावित्यभ्युपगन्तव्यं स्यात्। यदि चैतौ तप्यतापकावेकस्यात्मनो विशेषौ स्यातां स ताभ्यां तप्यतापकाभ्यां न निर्मुच्येत इति तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रमनर्थकं स्यात्। न ह्यौष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते। योऽपि जलवीचितरङ्गफेनाद्युपन्यासस्तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एवेति समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः। प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके। तथा हि अर्थी चार्थश्चान्योन्यभिन्नौ लक्ष्येते। यद्यर्थिनः स्वतोऽन्योऽर्थो न स्यात् यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति तस्य तद्विषयमर्थित्वं न स्यात्। यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वम्भवति अप्राप्ते ह्यर्थेऽर्थिनोऽर्थित्वं स्यादिति। तथार्थस्याप्यर्थत्वं न स्यात् यदि स्यात् स्वार्थत्वमेव स्यात् न चैतदस्ति। सम्बन्धिशब्दौ ह्येतावर्थी चार्थश्चेति द्वयोश्च सम्बन्धिनोः सम्बन्धः स्यान्नैकस्यैव। तस्माद्भिन्नावेतावर्थार्थिनौ। तथाऽनर्थानर्थिनावपि। अर्थिनोऽनुकूलोऽर्थः प्रतिकूलोऽनर्थः ताभ्यामेकः पर्यायेणोभाभ्यां सम्बध्यते तत्रार्थस्याल्पीयस्त्वाद्भूयस्त्वाच्चानर्थस्योभावप्यर्थानर्थावनर्थ एवेति तापकः स उच्यते। तप्यस्तु पुरुषो य एकः पर्यायेणोभाभ्यां सम्बध्यत इति तयोस्तप्यतापकभावानुपपत्तेः। भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयातां नत्वेतदस्ति एकत्वादेव। न ह्यग्निरेकः सन्नात्मानं दहति प्रकाशयति वा सत्यप्यौष्ण्यप्रकाशादिधर्मभेदे परिणामित्वे च किमु कूटस्थे ब्रह्मण्येकस्मिंस्तप्यतापकभावः सम्भवेत्। क्व पुनरयं तप्यतापकभावः स्यादिति उच्यते किं न पश्यसि? कर्मभूतो जीवद्देहस्तप्यः तापकः सवितेति। ननु तप्तिर्नाम दुःखं सा चेतयितुर्नाचेतनस्य देहस्य यदि हि देहस्यैव तप्तिः स्याद्देहनाशे स्वयमेव नश्यतीति तन्नाशाय साधनं नैषितव्यं स्यादिति। उच्यते देहाभावे हि केवलस्य चेतनस्य तप्तिर्न दृष्टा न च त्वयापि तप्तिर्नाम विक्रिया चेतयितुः केवलस्येष्यते। नापि देहचेतनयोः संहतत्वम् अशुद्ध्यादिदोषप्रसङ्गात्। न च तप्तेरेव तप्तिमभ्युपगच्छसीति कथं तवापि तप्यतापकभावः। सत्त्वं तप्यं तापकं रज एवेति चेन्न ताभ्यां चेतनस्य संहतत्वानुपपत्तेः। सत्त्वानुरोधित्वाच्चेतनोऽपि तप्यत इवेति चेत् परमार्थतस्तर्हि नैव तप्यत इत्यापतति इवशब्दप्रयोगात् न चेत्तप्यते नेवशब्दो दोषाय। नहि डुण्डुभः सर्प इवेत्येतावता सविषो भवति, सर्पो वा डुण्डुभ इवेत्येतावता निर्विषो भवति। अतश्चाविद्याकृतोऽयन्तप्यतापकभावो न पारमार्थिक इत्यभ्युपगन्तव्यमिति। नैवं सति ममापि किञ्चिद्दुष्यति। अथ पारमार्थिकमेव चेतनस्य तप्यत्वमभ्युपगच्छसि तवैव सुतरामनिर्मोक्षः प्रसज्येत नित्यत्वाभ्युपगमाच्च तापकस्य तप्यतापकशक्त्योर्नित्यत्वेऽपि सनिमित्तसंयोगापेक्षत्वात्तप्तेः संयोगनिमित्तादर्शननिवृत्तावात्यन्तिकः संयोगोपरमः ततश्चात्यन्तिको मोक्ष उपपन्न इति चेन्न अदर्शनस्य तमसो नित्यत्वाभ्युपगमात्। गुणानाञ्चोद्भवाभिभवयोरनियतत्वादनियतः संयोगनिमित्तोपरम इति, वियोगस्याप्यनियतत्वात् साङ्ख्यस्यैवानिर्मोक्षोऽपरिहार्यः स्यात्। औपनिषदस्य त्वात्मैकत्वाभ्युपगमादेकस्य च विषयविषयिभावानुपपत्तेर्विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणादनिर्मोक्षाशङ्का स्वप्नेऽपि नोपजायते। व्यवहारे तु यत्र यथा दृष्टस्तप्यतापकभावस्तत्र तथैव स इति न चोदयितव्यः परिहर्त्तव्यो वा भवति"।

"प्रधानकारणवादो निराकृतः परमाणुकारणवाद इदानीं निराकर्त्तव्यः। तत्रादौ तावद्योऽणुवा-

रणत्वादिना ब्रह्मवादिनि दोषउत्प्रेक्ष्यते स प्रतिसमाधीयते। तत्रायं वैशेषिकाणामभ्युगमः कारणद्रव्यसमवायिनो गुणाः कार्य्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्य प्रसवदर्शनात्तद्विपर्य्ययाऽदर्शनाच्च। तस्माच्चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्य्येऽपि जगति चैतन्यं समवेयात् तददर्शनात्तु न चेतनं ब्रह्म जगत्कारणम्भवितुमर्हतीति। इममभ्युपगमन्तदीयथैव प्रक्रियया व्यभिचारयति" भा०। "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" सू०। "एषा तेषां प्रक्रिया परमाणवः किल कञ्चित्कालमनारब्धकार्य्या यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणास्तिष्ठन्ति। ते च पश्चाददृष्टादिपुरःसराः संयोगसचिवाश्च सन्तो द्व्यणुकादिक्रमेण कृत्स्नं कार्य्यजातमारभन्ते कारणगुणाश्च कार्य्ये गुणान्तरम्। यदा द्वौ परमाणू द्व्यणुकमारभेते तदा परमाणुगता रूपादिगुणविशेषाः शुक्लादयो द्व्यणुके शुक्लादीनारभन्ते। परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभते द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात्। अणुत्वह्रस्वत्वे हि द्व्यणुकवर्त्तिनी परिमाणे वर्णयन्ति। यदापि द्वे द्व्यणुके चतुरणुकमारभेते तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम्। अणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात्। यदापि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्य्यमारभन्ते तदापि समानैषा योजना। तदेवं यथा परमाणोः परिमण्डलात् सतोऽणु ह्रस्वञ्च द्व्यणुकञ्जायते महद्दीर्घञ्च त्र्यणुकादि न परिमण्डलम्। यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतो महद्दीर्घञ्च त्र्यणुकादि जायते नाणु नोत ह्रस्वम् एवं चेतनाद्ब्रह्मणोऽचेतनं जगज्जनिष्यत इत्यभ्युपगमे तव किं छिन्नम्। अथ मन्यसे विरोधिना परिमाणान्तरेणाक्रान्तं कार्य्यद्रव्यं द्व्यणुकादि ततो नारम्भकाणि कारणगतानि पारिमाण्डल्यादीनि इत्यभ्युपगच्छामि न तु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति येन कारणगता चेतना कार्य्ये चेतनान्तरं नारभेत। न ह्यचेतना नाम चेतनाविरोधी कश्चिद्गुणोऽस्ति चेतनाप्रतिषेधमात्रत्वात् तस्मात् पारिमाण्डल्यादिवैषम्यात् प्राप्नोति चेतनाया आरम्भकत्वमिति। मैवं मंस्थाः यथा कारणे विद्यमानानामपि पारिमाण्डल्यादीनामनारम्भकत्वमेवं चैतन्यस्यापीत्यस्यांशस्य समानत्वात्। न च परिमाणान्तराक्रान्तत्वं पारिमाण्डल्यादीनामनारम्भकत्वे कारणं प्राक् परिमाणान्तरारम्भात् पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः। आरब्धमपि कार्य्यद्रव्यं प्राक् गुणारम्भात् क्षणमात्रमगुणं तिष्ठतीत्यभ्युपगमात्। न च परिमाणान्तरारम्भे व्यग्राणि पारिमाण्डल्यादीनीत्यतः स्वसमानजातीयं परिमाणान्तरं नारभन्ते परिमाणान्तरस्यान्यहेतुकत्वाभ्युपगमात्। "कारणबहुत्वात् प्रचयविशेषाच्च महत् तद्विपरीतमणु। एतेन दीर्घत्वह्रस्वत्वे व्याख्याते"। इति हि काणभुजानि सूत्राणि। न च सन्निधानविशेषात् कुतश्चित् कारणात् बहुत्वादीनि एवारभन्ते न पारिमाण्डल्यादीनीत्युच्येत द्रव्यान्तरे गुणान्तरे वारभ्यमाणे सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात्। तस्मात् स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वं तथा चेतनाया अपि द्रष्टव्यम्। संयोगाच्च द्रव्यादीनां विलक्षणानामुत्पत्तिदर्शनात् समानजातीयोत्पत्तिव्यभिचारः। द्रव्ये प्रकृते गुणोदाहरणमयुक्तमिति चेन्न दृष्टान्तेन विलक्षणारम्भमात्रस्य विवक्षितत्वात्। न च द्रव्यस्य द्रव्यमेवोदाहर्त्तव्यं गुणस्य वा गुणएवेति कश्चिन्नियमे हेतुरस्ति। सूत्रकारोऽपि भवतां द्रव्यस्य गुणमुदाजहार "प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात् संयोगस्य पञ्चात्मकत्वं न विद्यते" इति। यथा प्रत्यक्षाप्रत्यक्षयोर्भूम्याकाशयोः समवयन् संयोगोऽप्रत्यक्षः एवं प्रत्यक्षाप्रत्यक्षेषु पञ्चसु भूतेषु समवयत् शरीरमप्रत्यक्षं स्यात् प्रत्यक्षन्तु शरीरं दृश्यते तस्मान्न पाञ्चभौतिकमिति। एतदुक्तं भवति गुणश्च संयोगः द्रव्यं शरीरम्" इति भा०।

ईश्वरस्य सर्व्वकर्त्तृत्वेऽपि न स्वाभिन्नजीवस्रष्टृत्वमिति निर्णयाय ईश्वरस्य जीवस्रष्टृत्ववादिनो भागवतस्य मतमुत्थाप्य तत्रैव निराकृतं यथा। "उत्पत्त्यसम्भवात्" शा०सू०। "येषामप्रकृतिरधिष्ठाता केवलं निमित्तं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः। येषां पुनः प्रकृतिश्चाधिष्ठाता चेत्युभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते। ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्द्धारितः प्रकृतिश्चाधिष्ठाता चेति। श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः। तत् कस्य हेतोरेष पक्षः प्रत्याचिख्यासितः? इति। उच्यते यद्यप्येवंजातीयकोऽंशः समानत्वान्न विसंवादगोचरोभवति अस्ति तु अंशान्तरं विसंवादस्थानमिति अतस्तत्प्रत्याख्यानायारम्भः। तत्र भागवताः

मन्यन्ते । भगवानेवैको वासुदेवो निरञ्जनः ज्ञानस्वरूपः परमार्थतत्त्वं स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितो वासुदेव व्यूहरूपेण, संकर्षणव्यूहरूपेण, प्रद्युम्नव्यूहरूपेण-अनिरुद्धव्यूहरूपेण च। वासुदेवोनाम परमात्मोच्यते। सङ्कर्षणो नाम जीवः। प्रद्युम्नोनाम मनः। अनिरुद्धो नामाहङ्कारः। तेषां वासुदेवः परा प्रकृतिः अपरे संकर्षणादयः कार्य्यम्। तमित्थंभूतं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशोभगवन्तमेव प्रतिपद्यत इति। तत्र यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्व्वात्मा स आत्मानमनेकधा व्यूह्य व्यवस्थित इति तन्न निराक्रियते "स एकधा भवति त्रिधा भवतीत्यादि" श्रुतिभ्यः परमात्मनोऽनेकधाभवनस्याधिगतत्वात्। यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाभिप्रेयते तदपि न प्रतिषिध्यते श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्। यत्पुनरिदमुच्यते वासुदेवात् संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नःप्रद्युम्नाच्चानिरुद्ध इति अत्र ब्रूमः न वासुदेवसंज्ञकात् परमात्मनः सङ्कर्षणसंज्ञकस्य जीवस्योत्पत्तिः सम्भवति अनित्यत्वादिदोषप्रसङ्गात्। उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन् ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षःस्यात् कारणप्राप्तौ कार्य्यस्य विलयप्रसङ्गात्। प्रतिषेधिष्यति चाचार्य्योजीवस्योत्पत्तिम् "नात्माऽश्रुतेर्नित्यत्वाच्च" इति। तस्मादसङ्गतैषा कल्पना" भा०। "न च कर्त्तुः करणम्" सू०।"इतश्चासङ्गतैषा कल्पना यस्मान्नहि लोके कर्त्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते। वर्णयन्ति च भागवताः कर्त्तुर्जीवात् संकर्षणसंज्ञकात् करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते कर्त्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहङ्कार उत्पद्यत इति। न चैतद्दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः न चैवम्भूतां श्रुतिमुपलभामहे" भा०। "विज्ञानादिभावे वा तदप्रतिषेधः" सू०। "अथापि स्यात् न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते किन्तर्हीश्वरा एवैते सर्व्वे ज्ञानैश्वर्य्यशक्तिबलवीर्य्यतेजोभिरैश्वर्य्यधर्म्मैरन्विता अभ्युपगम्यन्ते। वासुदेवा एवैते सर्व्वे निर्दोषा निरधिष्ठाना निरवद्याश्चेति। तस्मान्नायं यथावर्णितउत्पत्त्यसम्भवोदोषः प्राप्नोतीति। अत्रोच्यते। एवमपि तदप्रतिषेध उत्पत्त्यसम्भवस्याप्रतिषेधः प्राप्नोत्येवायमुत्पत्त्यसम्भवोदोषः प्रकारान्तरेण कथं न भवेदित्यभिप्रायः। परस्परभिन्ना एवैते वासुदेवादयः चत्वार ईश्वरास्तुल्यधर्म्माणो नैषामेकात्मत्वमस्तीति ततोऽनेकेश्वरकल्पनानर्थक्यम् एकेनेश्वरेणेश्वरकार्य्यसिद्धेः। सिद्धान्तहानिश्च भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात्। अथायमभिप्रायः एकस्यैव भगवतः एते चत्वारोव्यूहास्तुल्यधर्म्माण इति तथापि तदवस्थ एवोत्पत्त्यसम्भवः। न हि वासुदेवात् सङ्कर्षणस्योत्पत्तिः सम्भवति, सङ्कर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चानिरुद्धस्य, अतिशयाभावात्। भवितव्यं हि कार्य्यकारणयोरतिशयेन यथा मृद्घटयोः। नह्यसत्यतिशये कार्य्यं कारणमित्यवकल्पते। न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिषु एकैकस्मिन् सर्व्वेषु वा ज्ञानैश्वर्य्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते। वासुदेवा एव हि सर्व्वे व्यूहा निर्विशेषा इष्यन्ते। नचैते भगवद्व्यूहाश्चतुसंख्यायामेव व्यवतिष्ठेरन् ब्रह्मादिस्तम्बपर्य्यन्तस्य समस्तस्यैव जगतोभगवद्व्यूहत्वावगमात्" भा०। "विप्रतिषेधाच्च" सू०। "विप्रतिषेधश्चास्मिन् शास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः ज्ञानैश्वर्य्यशक्तिबलवीर्य्यतेजांसि गुणाः आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात्। वेदप्रतिषेधश्च भवति। चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादि वेदनिन्दादर्शनात्। तस्मादसङ्गतैषा कल्पनेति सिद्धम्" भा०।

उपासनया प्राप्तैश्वर्य्यस्यानित्येश्वरस्य तु न जगत्कर्त्तृत्वमित्यपि तत्रैव व्यवस्थापितं यथा "जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च" शा० सू०। "ये सगुणब्रह्मोपासनात् सहैव मनसेश्वरसायुज्यं व्रजन्ति किन्तेषां निरवग्रहमैश्वर्यं भवत्याहोस्वित् सावग्रहमिति संशयः। किन्तावत् प्राप्तं निरङ्कुशमेवैषामैश्वर्य्यं भवितुमर्हति "आप्नोति स्वाराज्यं सर्व्वेऽस्मै देवा बलिमावहन्ति" "तेषां सर्व्वेषु कामचारो भवतीत्यादि" श्रुतिभ्यः। इत्येवं प्राप्ते पठति "जगद्व्यापारवर्ज्जमिति"। जगदुत्पत्त्यादिव्यापारं वर्ज्जयित्वा अन्यदणिमाद्यात्मकमैश्वर्य्यं मुक्तानां भवितुमर्हति जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः? तस्य तत्र प्रकृतत्वात् असन्निहितत्वाच्चेतरेषाम्। पर एव हीश्वरो जगद्व्यापारेऽधिकृतः तमेव प्रकृत्योत्पत्त्याद्युपदेशान्नित्यशब्दनिबन्धनत्वाच्च। तदन्वेषणविजिज्ञासनपूर्व्वकमितरेषामादिमदैश्वर्य्यं श्रूयते तेनासन्निहितास्ते जगद्व्यापारे। समनस्कत्वादेव चैषामनैकमत्ये कस्यचित् स्थित्यभिप्रायः कस्यचिच्च संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित् स्यात्। अथ कस्यचित्

मण्डलस्थमन्यस्य मण्डलस्य इत्यविरोधः समर्थ्येत ततः परमेश्वरायत्तत्वमेवैतरेषामिति व्यवतिष्ठते" भा०। "प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः" सू०। "अथ यदुक्तं आप्नोति स्वाराज्यमित्यादि प्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति तत्परिहर्त्तव्यम् अत्रोच्यते। नायं दोषः आधिकारिकमण्डलस्थोक्तेः आधिकारिको यः सवितृमण्डलादिषु व्यवस्थितः परमेश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते। यत्कारणमनन्तरम् "आप्नोति मनसस्पति"मित्याह। यो हि सर्वमनसाम्पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोति एतदुक्तं भवति। तदनुसारेण चानन्तरम् "वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवती"त्याह। एवमन्यत्रापि यथासम्भवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम्" भा०। उपासासिद्धस्य यथा जगत्कर्त्तृत्वं न भवति तथानुमानचिन्तामणावनुपदं दर्शितम्। सांख्योक्तदोषनिरसनपूर्वकं तस्य सर्वविषयनित्यज्ञानत्वं तत्रैव समर्थितं यथा "यत्पुनरुक्तं ब्रह्मणोऽपि न मुख्यं सर्वज्ञत्वमुपपद्यते नित्यज्ञानक्रियत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यासंभवादिति। अत्रोच्यते इदं तावद्भवान् प्रष्टव्यः कथं नित्यज्ञानत्वे सर्वज्ञत्वहानिरिति?। यस्य हि सर्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्वज्ञ इति विप्रतिषिद्धम्। अनित्यत्वे हि ज्ञानस्य कदाचिज्जानाति कदाचिन्न जानातीत्यसर्वज्ञत्वमपि स्यात्, नासौ ज्ञाननित्यत्वे दोषोऽस्ति। ज्ञाननित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यव्यपदेशो नोपपद्यते इति चेन्न प्रततौष्ण्यप्रकाशेऽपि सवितरि दहति प्रकाशयतीति स्वातन्त्र्यव्यपदेशदर्शनात्। ननु सवितुर्दाह्यप्रकाश्यसंयोगे सति दहति प्रकाशयतीति व्यपदेशः स्यात् न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्मसंयोगोऽस्तीति विषमो दृष्टान्तः, न असत्यपि कर्मणि सविता प्रकाशत इति कर्त्तृत्वव्यपदेशदर्शनात्, एवमसत्यपि ज्ञानकर्मणि ब्रह्मणः "तदैक्षतेति" कर्त्तृत्वव्यपदेशोपपत्तेर्न वैषम्यम्। कर्मापेक्षायां तु ब्रह्मणि ईक्षितृत्वश्रुतयः सुतरामुपपन्नाः। किं पुनस्तत् कर्म? यत् प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति तत्त्वान्यत्वाभ्यामनिर्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः। यत्प्रसादाद्धि योगिनामप्यतीतानागतविषयं प्रत्यक्षं ज्ञानमिच्छन्ति योगशास्त्रविदः किमु वक्तव्यं तस्य नित्यसिद्धस्येश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यं ज्ञानं भवतीति। यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसंबन्धमन्तरेणेक्षितृत्वमनुपपन्नमिति न तच्चोद्यमवतरति सवितृप्रकाशवत् ब्रह्मणो ज्ञानस्वरूपनित्यत्वेन ज्ञानसाधनापेक्षानुपपत्तेः। अपि चाविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात् न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य। मन्त्रौ चेमावीश्वरस्य शरीराद्यनपेक्षतामनावरणज्ञानतां च दर्शयतः। "न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति" "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति च"।

अस्मादेव च जीवानां तत्तत्कर्मफलसिद्धिर्यथा तथा शा०सूत्रभाष्ययोर्वर्णितम् यथा "फलमत उपपत्तेः" सू०। "तस्यैव हि ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते। यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनां किमेतत् कर्मणो भवत्याहोस्विदीश्वरप्रसादादिति? भवति विचारणा। तत्र तावत् प्रतिपद्यते फलमत ईश्वराद्भवितुमर्हतीति कुतः? उपपत्तेः स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान् विचित्रान् विदधद्देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं फलं संपादयतीत्युपपद्यते। कर्म त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम् अभावाद्भावानुत्पत्तेः।

स्यादेतत् कर्म विनश्यत् स्वकाल एव स्वानुरूपं फलमर्जयित्वा विनश्यति तत्फलं कालान्तरितं कर्त्ता भोक्ष्यत इति तदपि न परिशुध्यति प्राग्भोक्तृसम्बन्धात् फलत्वानुपपत्तेः यत्कालं हि यत् सुखं दुःखं वात्मना भुज्यते तस्यैव लोके फलत्वं प्रसिद्धम्। न ह्यसम्बद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः। अथोच्येत कर्मकार्यादपूर्वात् फलमुत्पत्स्यत इति तदपि नोपपद्यते अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनाप्रवर्त्तितस्य प्रवृत्त्यनुपपत्तेः तदस्तित्वे च प्रमाणाभावात्। अर्थापत्तिः प्रमाणमिति चेन्न ईश्वरसिद्धेरर्थापत्तिपरिक्षयात्" भा०। "श्रुतत्वाच्च" सू०। "न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः किंतर्हि श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे तथा हि श्रुतिर्भवति "स वा एष महानज आत्माऽन्नादो वसुदान" इत्येवंजातीयका" भा०। "धर्मं जैमिनिरत एव" सू०। "जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते अतएव हेतोः श्रुतेरुपपत्तेश्च, श्रूयते तावदयमर्थः स्वर्गकामो यजेतेत्येवमादिषु वा-

क्येषु । तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते अन्यथा ह्यननुष्ठातृको याग आपद्येत तत्रास्योपदेशस्य वैयर्थ्यं स्यात् । नन्वनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति परित्यक्तोऽयं पक्षः। नैष दोषः श्रुतिप्रामाण्यात् । श्रुतिश्चेत् प्रमाणं यथायं कर्मफलसम्बन्धः श्रुत उपपद्यते तथा कल्पयितव्यः नचानुत्पाद्य किमप्यपूर्व्वं कर्म्म विनश्यत्कालान्तरितं फलं दातुं शक्नोतीत्यतः कर्म्मणो वा सूक्ष्मा काचिदुत्तरावस्था, फलस्य वा पूर्व्वावस्थाऽपूर्व्वं नामास्तीति तर्क्यते । उपपद्यते चायमर्थः उक्तेन प्रकारेण ईश्वरस्तु फलं ददातीत्यनुपपन्नम् अविचित्रस्य कारणस्य विचित्रकार्य्यानुपपत्तेः वैषम्यनैर्घृण्यप्रसङ्गादनुष्ठानवैयर्थ्यापत्तेश्च तस्माद्धर्म्मादेव फलमिति" भा० । "पूर्व्वन्तु बादरायणो हेतुव्यपदेशात्" सू०। "बादरायणस्त्वाचार्य्यः पूर्व्वोक्तमेवेश्वरं फलहेतुं मन्यते । केवलात् कर्म्मणोऽपूर्व्वाद्वा केवलात् फलमित्ययं पक्षस्तुशब्देन व्यावर्त्त्यते । कर्म्मापेक्षादपूर्व्वापेक्षाद्वा यथा तथास्त्वीश्वरात् फलमिति सिद्धान्तः । हेतुव्यपदेशात् । धर्म्माधर्म्मयोरपि कारयितृत्वेनेश्वरो हेतुर्व्यपदिश्यते फलस्य च दातृत्वेन 'एष ह्येव साधु कर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं, यमधो लोकं निनीषते" इति । स्मर्य्यते चायमर्थो भगवद्गीतासु ।"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तानिति"। सर्व्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते तदेवेश्वरस्य फलहेतुत्वं यत् स्वकर्म्मानुरूपाः प्रजाः सृजति । विचित्रकार्य्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते"भा०।

मीमांसकैस्तु ईश्वरस्याचेतनताङ्गीकारेण न फलहेतुत्वं किन्तु कर्म्मभ्य एव फलसिद्धिरित्युररीकृतं तच्च जैमिनीयमतत्वेन शा०सूत्रभाष्ययोर्दर्शितम् अपिपदशब्दे चेश्वरस्याचेतनत्वं यथा तथा ४५१ पृष्ठे दर्शितम् ।

'कर्त्ता शास्त्रार्थवत्त्वात्' शास्त्रेण जीवानां कर्त्तृत्वेऽपि ईश्वरस्य च कारयितृत्वं यथाह शा०सूत्रभाष्ययोः ।

"परात्तु तच्छ्रुतेः" सू०।"यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्त्तृत्वं जीवस्याभिहितं तत् किमनपेक्ष्येश्वरं, भवत्याहोस्विदीश्वरापेक्षमिति ? भवति विचारणा । तत्र प्राप्तं तावन्नेश्वरमपेक्षते जीवः कर्त्तृत्व इति । कस्मात् ? अपेक्षाप्रयोजनाभावात् । अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारणान्तरसामग्रीसम्पन्नः कर्त्तृत्वमनुभवितुं शक्नोति तस्य किमीश्वरः करिष्यति ? । न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियास्वनडुहादिवदीश्वरोऽपरोऽपेक्षितव्य इति । क्लेशात्मकेन च कर्त्तृत्वेन जन्तून् संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत, विषमफलञ्चैषां कर्त्तृत्वं विदधतो वैषम्यम् । ननु वैषम्यनैर्घृण्ये न सापेक्षत्वादित्युक्तम् । सत्यमुक्तं सति त्वीश्वरस्य सापेक्षत्वसम्भवे, सापेक्षत्वञ्चेश्वरस्य सम्भवति सतोर्जन्तूनां धर्म्माधर्म्मयोः, तयोश्च सद्भावः सति जीवस्य कर्त्तृत्वे, तदेव चेत् कर्त्तृत्वमीश्वरापेक्षं स्यात् किंविषयमीश्वरस्य सापेक्षत्वमुच्यते । अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत । तस्मात् स्वत एव जीवस्य कर्त्तृत्वमिति । एतां प्राप्तिं तुशब्देन व्यावर्त्त्य प्रतिजानीते परादिति । अविद्यावस्थायां कार्य्यकरणसङ्घाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्म्माध्यक्षात् सर्व्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्त्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः तदनुग्रहहेतुकेन च विज्ञानेन मोक्षस्य सिद्धिर्भवितुमर्हति । कुतः ? तच्छ्रुतेः । यद्यपि दोषप्रयुक्तः सामग्रीसम्पन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्म्मसु नेश्वरकारणत्वं प्रसिद्धं तथापि सर्व्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्त्तेति श्रुतेरवसीयते । तथा हि श्रुतिर्भवति "एष ह्येव साधु कर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति तं, यमधो लोकं निनीषते" इति "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयतीति" चैवंजातीयका । नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातामकृताभ्यागमश्च जीवस्येति नेत्युच्यते"भा० "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः" सू०। "तुशब्दश्चोदितदोषव्यावर्त्तनार्थः। कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणः तदपेक्ष एव चैनमीश्वरः कारयति ततश्चैते चोदिता दोषा न प्रसज्यन्ते । जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्फलानि विषमं विभजते पर्जन्यवदीश्वरो निमित्तमात्रेण । यथा लोके नानाविधानां व्रीहियवादीनां गुच्छगुल्मादीनां चाऽसाधारणेभ्यः स्वबीजेभ्यो जायमानानां साधारणनिमित्तं भवति पर्जन्यः, नह्यसति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते नाप्यसत्सु स्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते । ननु कृतप्रयत्नत्वमेव जीवस्य

पराधीने कर्तृत्वे नोपपद्यते । नैष दोषः । पराधीनत्वेऽपि हि कर्तृत्वं करोत्येव जीवः कुर्वन्तं हि तमीश्वरः कारयति । अपि च पूर्वप्रयत्नमपेक्ष्येदानीं कारयति, पूर्वतरञ्च प्रयत्नमपेक्ष्य पूर्वमकारयदित्यनादित्वात् संसारस्यानवद्यम् । कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति ? विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्याह । एवं हि "स्वर्गकामो यजेत ब्राह्मणो न हन्तव्यः" इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति अन्यथा तदनर्थकं स्यात् ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत अत्यन्तपरतन्त्रत्वाज्जीवस्य । तथा विहितकारिणमप्यनर्थेन संसृजेत्, प्रतिषिद्धकारिणमप्यर्थेन, ततश्च प्रामाण्यं वेदस्यास्तमियात् । ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यं तथा देशकालनिमित्तानां पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकदोषजातमादिग्रहणेन दर्शयति" भा० ।

सेश्वरसांख्यमते तु ईश्वराधिष्ठितप्रधानस्य जगत्कर्तृत्वं तत्रेश्वरप्रसादाद्योगसिद्धितत्स्वरूपादिकं पातञ्जलसूत्रभाष्यविवरणेषु दर्शितं यथा ।

"किमेतस्मादेवासन्नतरः समाधिर्भवति अथास्य लाभे किं भवत्यन्योऽपि कश्चिदुपायो ? न वेति" भा०

"ईश्वरप्रणिधानाद्वा" सू० २३ । "प्रणिधानाद्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण तदभिध्यानमात्रादपि योगिन आसन्नतरः समाधिलाभः फलञ्च भवतीति" भा० २३ । "अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति ?" भा० । "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" सू० २४ । "अविद्यादयः क्लेशाः । कुशलाकुशलानि कर्माणि । तत्फलं विपाकः । तदनुगुणा वासना आशयाः । ते च मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते स हि तत्फलस्य भोक्तेति । यथा जयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते । यो ह्यनेन भोगेनाऽपरामृष्टः स पुरुषविशेष ईश्वरः । कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः ? ते हि त्रीणि बन्धनानि छित्वा कैवल्यं प्राप्ताः ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते नैवमीश्वरस्य, यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः सम्भाव्यते नैवमीश्वरस्य, स तु सदैव मुक्तः, सदैवेश्वर इति । योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिकः उत्कर्षः स किं सनिमित्तः ? आहोस्विन्निर्निमित्तः ? इति तस्य शास्त्रं निमित्तं, शास्त्रं पुनः किंनिमित्तम् ? एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्त्तमानयोरनादिः सम्बन्धः । एतस्मादेतद्भवति सदैवेश्वरः सदैव मुक्त इति । तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तं न तावदैश्वर्यान्तरेण तदतिशय्यते यदेवातिशयि स्यात् तदेव तत् स्यात् तस्मात् । यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वरः, न च तत्समानमैश्वर्यमस्ति । कस्मात् ? द्वयोस्तुल्ययोरेकस्मिन् युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्विति एकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तं, द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्ति, अर्थस्य विरुद्धत्वात् तस्माद् यस्य साम्यातिशयविनिर्मुक्तमैश्वर्यं स ईश्वरः, स च पुरुषविशेषः इति" भा० २४ । किञ्च "तत्र निरतिशयं सर्वज्ञबीजम्" सू० २५ । "यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजमेतद्विवर्द्धमानं यत्र निरतिशयं स सर्वज्ञः । अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य, सातिशयत्वात् परिमाणवदिति यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः स च पुरुषविशेष इति । सामान्यमात्रोपसंहारे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति । तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्य्यन्वेष्या । तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम् । ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति । तथाचोक्तम् "आदिविद्वान्निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति" भा० २५ । स एषः "पूर्वेषामपि गुरुः कालेनानवच्छेदात्" सू० २६ । "पूर्वे हि गुरवः कालेनावच्छिद्यन्ते यत्रावच्छेदार्थेन कालो नोपावर्त्तते स एष पूर्वेषामपि गुरुः यथास्य सर्गस्यादौ प्रकर्षगत्या सिद्धः तथातिक्रान्तसर्गादिष्वपि प्रत्येतव्यः" व्यासभाष्यम् २६ ।

विवृतमिदं वाचस्पतिना यथा "सूत्रान्तरमवतारयितुं विमृशति किमेतस्मादेवेति । नत्वाशङ्कः संशयनिवर्त्तकः । ईश्वरप्रणिधानाद्वा । व्याचष्टे—प्रणिधानाद्भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वा आवर्जितोऽभिमुखीकृतस्तमनुगृह्णाति, अभिध्यानमनागतेऽर्थे इच्छा इदमस्याभिप्रेतमस्त्विति, तन्मात्रेण न व्यापारान्तरेण, शेषं सुगमम्" २३ । ननु चेतनाऽचेतनाभ्यामेव व्यूढं विश्वम्, नान्येन, ईश्वरश्चेदचेतनस्तर्हि प्रधानं, प्रधानविकाराणामपि प्रधानमध्यपातात्तथाच न तस्मादव्यक्तमचेतनत्वात् अथ चेतनस्तथापि चितिशक्तेरौदासीन्या-

दुःसंसारितया चाधिकारादिविरहात् कुतश्चावर्ज्जनम्? कुतश्चाभिध्यानम्? इत्याशयवानाह, अथ प्रधानेति। अत्र सूत्रेणोत्तरमाह "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"। ( न्यायकन्दल्यां क्लेशकर्मेत्यत्र क्लेशेतिपदमधिकम् दृश्यते तच्च लिपिकरप्रमादकृतम् ) अविद्यादयः क्लेशाः, क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति। "कुशलाकुशलानीति" धर्म्माधर्म्मास्तेषाञ्च कर्म्मजत्वादुपचारात् कर्म्मत्वम्। विपाकोजात्यायुर्भोगाः विपाकानुगुणा वासनास्त्वाचित्तभूमौ आशेरत इति आशयाः नहि करभजातिनिर्वर्त्तकं कर्म्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत्करभोचिताय भोगाय कल्पते, तस्माद्भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति। नन्वमी क्लेशादयोबुद्धिधर्म्मा न कथञ्चिदपि पुरुषं परामृशन्ति तस्मात् पुरुषग्रहणादेव तदपरामर्शसिद्धेः कृतं क्लेशकर्म्मेत्यादिनेत्यत आह, "ते च मनसि वर्त्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते" कस्मात्? "स हि तत्फलस्य भोक्ता चेतयितेति"। तस्मात् पुरुषत्वादीश्वरस्यापि तत्सम्बन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्याह, योह्यनेन बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनापरामृष्टः। स पुरुषविशेष ईश्वरः, विशिष्यते इति विशेषः पुरुषान्तराद्व्यवच्छिद्यते। विशेषपदव्यावर्त्त्यं दर्शयितुकामः परिनोदनापूर्व्वं परिहरति कैवल्यं प्राप्तास्तर्हि इति। प्रकृतिलयानां प्राकृतोबन्धः, वैकारिकोविदेहानाम् दक्षिणकादिबन्धोदिव्यादिव्यविषयभोगभाजाम्। तान्यमूनि त्रीणि बन्धनानि। प्रकृतिभावनासंस्कृतमनसोहि देहपातानन्तरमेव प्रकृतिलयतामापद्यन्त इतितेषां पूर्व्वा बन्धकोटिः प्रज्ञायते तेनोत्तरकोटिविधानमात्रमिह तु पूर्व्वापरकोटिनिषेध इति संक्षिप्य विशेषं दर्शयति "स तु सदैव मुक्तः सदैवेश्वरः" इति। ज्ञानक्रियाशक्तिसम्पदैश्वर्य्यः। अत्र पृच्छति "योऽसाविति" ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याः सम्भवत इति। रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये। नचेश्वरस्याविद्याप्रभवचित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावसम्बन्धः सम्भवतोत्यत उक्तं, प्रकृष्टसत्त्वोपादानादिति। नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः, किन्तु तापत्रयपरीतान् प्रेत्यभावमहार्णवात् जन्तूनुद्धरिष्यामि ज्ञानधर्म्मोपदेशेन। नच ज्ञानक्रियासामर्थ्यातिशयसम्पत्तिमन्तरेण तदुपदेशः, नचेदमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विनेत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवानपरामृष्टोऽप्यविद्ययाऽविद्याभिमानीवाविद्यायास्तत्त्वमविद्वान् भवति न पुनरविद्यामविद्यात्वेन सेवमानः, न खलु शैलूषोरामत्वमारोप्य तास्ताश्चेष्टादर्शयन् भ्रान्तोभवति तदिदमाहार्य्यमस्य रूपन्न तात्त्विकमिति। स्यादेतदुद्दिधीर्षया भगवता सत्त्वमुपादेयं तदुपादानेन च तदुद्दिधीर्षा अस्या अपि प्राकृतत्वात्तथाचान्योन्यसंश्रय इत्यत उक्तं, शाश्वतिक इति। भवेदेतदेवं यदीदंप्रथमता सर्गस्य भवेत्, अनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नजिहीर्षावधिसमये, पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवान् जगत्संजहार, तदा चेश्वरचित्तसत्त्वं प्रणिधानवासनावासितप्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ प्रणिधानवासनावशात्तथैवेश्वरचित्तसत्त्वभावेन परिणमते यथा चैत्रः श्वःप्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तस्तदैवोत्तिष्ठति प्रणिधानसंस्कारात्, तस्मादनादित्वादीश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन नान्योन्यसंश्रयः। नचेश्वरस्य चित्तसत्त्वं महाप्रलयेऽपि न प्रकृतिसाम्यमुपैतीति वाच्यं? यस्य हि न कदाचिदपि प्रधानसाम्यं न तत्प्राधानिकं नापि चितिशक्तिः अता तत्त्वेऽर्थान्तरमप्रामाणिकमापद्येत। तच्चायुक्तं, प्रकृतिपुरुषव्यतिरेकेणार्थान्तराभावात्। सोऽयमीदृश ईश्वरस्य शाश्वतिक उत्कर्षः किं सनिमित्तः सप्रमाणक:? आहोस्विन्निर्निमित्तः निष्प्रमाणक:? इति। उत्तरम्—तस्य शास्त्रं निमित्तं श्रुतिस्मृतीतिहासपुराणानि शास्त्रम्। नोदयति शास्त्रं पुनः किं निमित्तम्? प्रत्यक्षानुमानपूर्व्वं हि शास्त्रम्? नचेश्वरस्य सत्त्वप्रकर्षे कस्यचित् प्रत्यक्षमनुमानं वास्ति। नचेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तं, कल्पयित्वापि ह्ययं स्वयं ब्रूयादात्मैश्वर्य्यप्रकाशनायेति भावः। परिहरति प्रकृष्टसत्त्वनिमित्तम्। अयमभिसन्धिः मन्त्रायुर्वेदेषु तावदीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात् प्रामाण्यं सिद्धम्। नचौषधिभेदानां तत्संयोगविशेषाणाञ्च मन्त्राणाञ्च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारो शक्यः कर्त्तुमन्वयव्यतिरेकौ। नचागमादन्वयव्यतिरेकौ ताभ्यां चागमस्तत्सन्तानयोरनादित्वादिति प्रतिपादयितुं युक्तं, महाप्रलये तत्सन्तानयोर्विच्छेदात् न च तज्ज्ञाने प्रमाणाभावः। अभिन्नं प्रधानविकारि जगदिति हि प्रतिपादयिष्यते। सदृशपरिणामस्य पूर्व्वसदृशपरिणामकृतता दृष्टा। यथा क्षीरेक्षुरसादेर्दधिगुड़ादिरूपम्।

विसदृशपरिणामस्य पूर्व्वसदृशपरिणामता च दृष्टा। तदिह प्रधानेनापि महदहङ्कारादिरूपविसदृशपरिणामेन सता भाव्यम्। कदाचित् सदृशपरिणामेन सदृशपरिणामश्चास्य साम्यावस्था स च महाप्रलयः। तस्मान्मन्वायुर्वेदप्रणयनात् तावद्भगवता रजस्तमोमलावरणतया परितः प्रद्योतमानं बुद्धिसत्वमास्थेयं तथा चाभ्युदयनिःश्रेयसोपदेशपरोऽपि वेदराशिरीश्वरप्रणीतस्तद्बुद्धिसत्वप्रकर्षादेव भवितुमर्हति। न च सत्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ सम्भवतस्तत्प्रकृष्टसत्वनिमित्तं शास्त्रमिति। स्यादेतत् प्रकर्षकार्य्यतया प्रकर्षं बोधयच्छास्त्रम् शेषवदनुमानं भवेन्न त्वागम इत्यत आह, एतैरिति। न कार्य्यत्वेन बोधयति अपि त्वनादिवाच्यवाचकभावसम्बन्धेन बोधयतीत्यर्थः। ईश्वरस्य हि बुद्धिसत्वे प्रकर्षो वर्त्तते, शास्त्रमपि तद्वाचकत्वेन तत्र वर्त्तते इति। उपसंहरति, एतस्मात् ईश्वरबुद्धिसत्वप्रकर्षशाश्वतिकाच्छास्त्रादेतद्भवति ज्ञायते विषयेण विषयिणोलक्षणात्। सदैवेश्वरः सदैव मुक्तः इति। तदेव पुरुषान्तराद्व्यवच्छिद्येश्वरान्तरादपि व्यवच्छिनत्ति तच्च तस्येति। अतिशयविनिर्म्मुक्तिमाह न तावदिति। कुतः? यदेवेति। कस्मात् सर्व्वातिशयविनिर्म्मुक्तं तदैश्वर्य्यम्? इत्यत आह, तस्माद्यत्रेति। अतिशयनिष्ठाप्राप्तानामौपचारिकमैश्वर्य्यमित्यर्थः। साम्यविनिर्म्मुक्तिमाह न च तत्समानमिति। प्राकाम्यविहतेच्छता तद्विघातादूनत्वम्, अनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्य्यानुत्पत्तिर्वा विरुद्धधर्म्मसमाजिहितमेकदा कार्य्यमुपलभ्येतेत्याशयवानाह द्वयोश्चेति। अविरुद्धाभिप्रायत्वे वा प्रत्येकमीश्वरत्वे कृतमन्यैरेकेनैवेशनायाः कृतत्वात्, सम्भूयकारित्वे वा न कश्चिदीश्वरः परिषद्वत्, नित्येशनायोगिनाञ्च पर्य्यायायोगात्, कल्पनागौरवप्रसङ्गाच्चेति द्रष्टव्यं तस्मात् सर्व्वमवदातम्" २४वि०। एवमस्य क्रियाज्ञानशक्ती शास्त्रं प्रमाणमभिधाय ज्ञानशक्तावनुमानं प्रमाणयति, किञ्च "तत्र निरतिशयं सर्व्वज्ञबीजम्"। व्याचष्टे यदिदमिति। बुद्धिसत्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकस्य समुच्चयेन च वर्त्तमानानामतीन्द्रियाणां ग्रहणं तस्य विशेषणमल्पं बह्विति सर्व्वज्ञबीजं कारणम्, कश्चित् किञ्चिद्देशातीतादि गृह्णाति, कश्चिद्बहुतरं, कश्चिद्बहुतममिति ग्रहणापेक्षया ग्रहणस्याल्पत्वं बहुत्वं कृतम् एतद्विवर्द्धमानं यत्र निष्ठामनतिशयात् स सर्व्वज्ञ इति तदनेन प्रमेयमात्रं कथितम्। अत्र प्रमाणयति अस्ति काष्ठाप्राप्तिः सर्व्वज्ञबीजस्येति" साध्यनिर्देशः निरतिशयत्वं काष्ठा यतः परमतिशयवत्ता नास्तीति। तेन नावधिमात्रेण सिद्धसाधनम्, सातिशयत्वादिति हेतुः। यद्यत् सातिशयं तत्तत् सर्व्वं निरतिशयं यथा कुवलयामलकबिल्वेषु सातिशयं महत्त्वम् आत्मनि निरतिशयमिति व्याप्तिं दर्शयति परिमाणवत्। न च गरिमादिगुणैर्व्यभिचार इति साम्प्रतं न खल्वप्ययवगरिमावयविनः, किन्त्वापरमाणुभ्य आन्त्यावयविभ्यो यावन्तः केचन, तेषामन्त्यैकवर्त्तिनो गरिमाणः समाहृत्य गरिमवर्द्धमानाभिमानः प्रज्ञानन्तु प्रतिदेशं समाप्यत इत्येकद्विबहुविषयतया युक्तं सातिशयमिति न व्यभिचारः। उपसंहरति, यत्र काष्ठा इति। ननु सन्ति बहवस्तीर्थकरा बुद्धार्हत्कपिलर्षिप्रभृतयस्तत् कस्मात् ते एव सर्व्वज्ञा न भवन्त्यस्मादनुमानात्? इत्यत आह, सामान्येति। कुतस्तर्हि तद्विशेषप्रतिपत्तिः? इत्यत आह, तस्येति। बुद्धादिप्रणीत आगमाभासो नत्वागमः, सर्व्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वादिति भावः। तेन श्रुतिस्मृतीतिहासपुराणलक्षणादागमतः आगच्छन्ति बुद्धिमारोहन्ति अस्मादभ्युदयनिःश्रेयसोपाया इत्यागमः। तस्मात् संज्ञादिविशेषप्रतिपत्तिः। संज्ञाविशेषः शिवेश्वरादिश्रुत्यादिषु प्रसिद्धः। आदिपदेन षडङ्गतादयोऽव्ययते संगृह्यते। यथोक्तं वायुपुराणे "सर्व्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य"। तथा "ज्ञानं वैराग्यमैश्वर्य्यं तपः सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसंबोधोह्यधिष्ठातृत्वमेव च। अव्ययानि दशैतानि नित्यं, तिष्ठन्ति शङ्करे" इति। स्यादेतन्नित्यतृप्तस्य भगवतः सर्व्वातिशयसम्पन्नस्य स्वार्थे तृष्णासम्भवात्, कारुणिकस्य च सुखैकतानजनसर्ज्जनपरस्य दुःखबहुलजीवलोकजननानुपपत्तेरप्रयोजनस्य च प्रेक्षावतः प्रवृत्त्यनुपपत्तेः क्रियाशक्तिशालिनोऽपि न जगत्क्रियेत्यत आह, तस्यात्मानुग्रहाभावेऽपीति। भूतानां प्राणिनामनुग्रहः प्रयोजनं यद्याद्युपभोगविवेकख्यातिरूपकार्य्यकरणात् किल, चरितार्थं चित्तं निवर्त्तते ततः पुरुषः केवली भवति अतस्तत्प्रयोजनाय कारुणिकोऽविवेकख्यात्युपायं कथयति तेनाचरितार्थत्वात् चित्तस्य जन्तून् ईश्वरः पुण्यपापसहायः सुखदुःखे भावयन्नपि नाकारुणिकः। विवेकख्यात्युपायकथ-

नाय भूतानुग्रहद्वारमाह ज्ञानधर्मोपदेशेनेति । ज्ञानञ्च धर्मश्च ज्ञानधर्मौ तयोरुपदेशेन ज्ञानधर्मसमुच्चयात्मकविवेकख्यातिपरिपाकात् । कल्पप्रलये-ब्रह्मणोदिनावसाने यत्र सत्यलोकवर्ज्जं जगदस्तमेति, महाप्रलये ससत्यलोकस्य ब्रह्मणोऽपि निधने, संसारिणः स्वकारणगामिनस्तदा मरणदुःखभाजः । कल्पेत्युपलक्षणम् । अन्यदापि स्वार्जितकर्मपाकवशेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति कैवल्यं प्राप्य पुरुषा उद्धृता भवन्त्वित्यर्थः । एतच्च करुणाप्रवृत्तस्य ज्ञानधर्मोपदेशनं कपिलानामपि सिद्धमित्याह, "तथा चोक्तं आदिविद्वान् कपिल" इति । आदिविद्वानिति पञ्चशिखाचार्य्यवचनम् आदिमुक्तसन्तानादिगुरुविषयं, नत्वनादिमुक्तपरमगुरुविषयम्, आदिमत्सु कदाचिन्मुक्तेषु विद्वत्सु कपिलेषु अस्माकमादिविद्वान् मुक्तः स एव च गुरुरिति । कपिलस्यापि जायमानस्य महेश्वरानुग्रहादेव ज्ञानप्राप्तिः । श्रूयते हि कपिलोनाम विष्णोरवतारविशेषः प्रसिद्धः स्वयंभूस्तु हिरण्यगर्भः, तस्यापि साङ्ख्ययोगप्राप्तिर्वेदे श्रूयते इति "स एवेश्वरः आदिविद्वान् कपिलोविष्णुः स्वयम्भूरिति" स्वायम्भुवादीनामपीश्वर इति भावः २५ । "इमति भगवतो ब्रह्मादिभ्योविशेषमाह, 'स एष इति पातनिका न तु सूत्रम् "पूर्वेषामपि गुरुः कालेनानवच्छेदात्" । व्याचष्टे, पूर्वे हीति । कालस्तु शतवर्षादिः, अवच्छेदार्थेन अवच्छेदनप्रयोजनेनोपावर्त्तते, न वर्त्तते प्रकर्षस्य गतिः प्राप्तिः प्रत्येतव्या आगमात् । तदनेन प्रबन्धेन भगवानीश्वरोदर्शितः" २६ वाचस्पतिविवरणम् ।

तस्येश्वरस्य लक्षणम् "जन्माद्यस्य यतः" शा॰सूत्रभाष्ययोर्दर्शितम् तच्चोपादाननिमित्तकारणोभयकारणपरतया समर्थितं तच्चानुपदमुदाहृतम् । तस्य लक्षणानि नवमितानि यथाह ब्रह्मणस्तटस्थलक्षणोदाहरणे वेदा॰परि॰ "प्रकृते च जगज्जन्मादिकारणत्वम् । अत्र जगत्पदेन कार्य्यजातं विवक्षितम् । कारणत्वञ्च कर्त्तृत्वम् अतो ऽविद्यादौ नातिव्याप्तिः । कर्त्तृत्वञ्च तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम् । ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावे च "यः सर्वज्ञः सर्व्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते" इत्यादि श्रुतिर्म्मानम् । तादृशचिकीर्षासद्भावे च "सोऽकामयत बहु स्यां प्रजायेयेति" श्रुतिर्म्मानम् । तादृशकृतौ च "तन्मनोऽकुरुतेत्यादि" वाक्यम् । ज्ञानेच्छाकृतीनामन्यतमगर्भं लक्षणत्रितयं विवक्षितम् अन्यथा व्यर्थविशेषणापत्तेः । अतएव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः । एवञ्च लक्षणानि नव सम्पद्यन्ते । ब्रह्मणोजगज्जन्मादिकारणत्वे च "यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्यादि" श्रुतिर्म्मानम् । यद्वा निखिलजगदुपादानत्वं जगदाकारेण परिणम्यमानमायाधिष्ठानत्वं वा । एतादृशमेवोपादानत्वमभिप्रेत्य "इदं सर्वं यदयमात्मा" "सच्चत्यच्चाभवत्" "बहु स्यां प्रजायेय" इत्यादिश्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्यव्यपदेशः । घटः सन् घटोभाति घटइष्ट इत्यादिलौकिकव्यपदेशोऽपि सच्चिदानन्दरूपब्रह्माध्यासात्' । अतएव "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं मायारूपं ततो द्वय"मित्युक्तम् । श्रीधरस्वामिनाऽपि भाग॰१स्क॰टीकायाम् "विश्वसर्गविसर्गादिनवलक्षणलक्षितम्" इत्यनेन ब्रह्मणः सर्गादित्रयस्य ज्ञानचिकीर्षाकृतिमत्त्वेन नव लक्षणान्युक्तानि । "मायोपाधिरयं जीवोऽप्यविद्योपाधिरीश्वर" इत्युक्तेः तस्याविद्योपाधित्वम् अविद्या च कार्य्यकारणभेदेन द्विविधा तत्र कार्य्यरूपा मायाशब्देन वाच्या कारणरूपा तु अविद्याशब्दवाच्या । तत्र कार्य्यरूपाभिप्रायेणैव "इन्द्रोमायाभिःपुरुरूप ईयते" श्रुतिर्द्रष्टव्या । अविद्याभिप्रायेणैव तु "मायान्तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्" । "अजामेकां लोहितशुक्लकृष्णवर्णामित्यादि" श्रुतिश्च द्रष्टव्या । तस्या एकत्वेऽपि सत्त्वरजस्तमोरूपगुणभेदात् त्रैविध्येन तदुपहितचैतन्यस्यापि त्रैविध्यम् । तदभिप्रायेणैव "स च परमेश्वरः एकोऽपि स्वोपाधीभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते" इति वेदा॰ परि॰ । "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेतिसंज्ञाः" भागवतम् । मत्स्याद्यवतारप्रभृतयोऽपि ब्रह्मकोटय एव । अत एव सिद्धान्तबिन्दौ "रामाकारविष्णुप्रभृतीनां स्वाकारान्ताञ्च भारतीप्रभृतीनामीश्वररूपत्वमुक्तम् । तस्य नित्यतया निरवयवत्वेऽपि तत्तज्जीवादृष्टवशात् तेषामुपासासिद्ध्यर्थं श्रुतिवेदपुराणप्रसिद्धाकारग्रहणम् "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणोरूपकल्पने"त्युक्तेः "योयो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहमिति" गीतोक्तेश्च । ईश्वरविभूतिशब्दे च दर्शयिष्यमाण

-तत्तत्स्थानेषु ईश्वरस्याराध्यता। "यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत!। अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहम्" गीतोक्तेः जीवानां कार्य्यवशात् तस्य विग्रहवत्त्वेनाविर्भावः। किन्तु स्वादृष्टायत्तशरीरपरिग्रहस्यैव संसारित्वेन ईश्वरस्य शरीरपरिग्रहे जीवादृष्टस्यैव हेतुत्वेनेश्वरस्य न संसारित्वमिति भेद इति द्रष्टव्यम्। तत्र परमेश्वरे "यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः" विक्र॰ "उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः" पुरा॰। "जगदाङ्करमीश्वरम्" गीता "न हीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम्" कुमा॰। "क्लेशकर्म्मफलभोगवर्जितं पुंविशेषममुमीश्वरं विदुः" माघः। आढ्ये "ईश्वरोऽहमहं भोगी कोऽन्योऽस्ति सदृशो मम" गीता स्वामिनि। "आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति" कुमा॰। शिवे स्वामिनि च "प्रालेयशैलमचलेश्वरमीश्वरोऽपि" कुमा॰ ऐश्वर्य्यान्वितस्त्रियां टाप्। "अविधे शयनेऽप्यनीश्वरा सफलीकर्त्तुमहो मनोरथान्" रघु॰। दुर्गायां तु ईश्वरपत्नीत्वाविवक्षायां टाबेव। "विन्ध्यस्थमङ्गलमहौषधिरीश्वरायाः" किरा॰।

**ईश्वरविभूति** स्त्री ६त॰। ईश्वरस्य विभूतौ संसारमध्यस्थानविशेषु तदीयांशभेदे। येषु येषु च भावेषु तस्य चिन्तनीयता तत् दर्शितं गीतायाम्। "हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः। प्राधान्यतः कुरुश्रेष्ठ! नास्त्यन्तो विस्तरस्य मे। अहमात्मा गुडाकेश! सर्व्वभूताशयस्थितः। अहमादिश्च मध्यञ्च भूतानामन्त एव च। आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्। मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी। वेदानां सामवेदोऽस्मि देवानामस्मि वासवः। इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना। रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम्। वसूनां पावकश्चास्मि मेरुः शिखरिणामहम्। पुरोधसाञ्च मुख्यं मां विद्धि पार्थ! बृहस्पतिम्। सेनानीनामहं स्कन्दः सरसामस्मि सागरः। महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम्। यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः। अश्वत्थः सर्व्ववृक्षाणां देवर्षीणाञ्च नारदः। गन्धर्व्वाणां चित्ररथः सिद्धानां कपिलो मुनिः। उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम्। ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम्। आयुधानामहं वज्रं धेनूनामस्मि कामधुक्। प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः। अनन्तश्चास्मि नागानां वरुणो यादसामहम्। पितॄणामर्य्यमा चास्मि यमः संयमतामहम्। प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्। मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्। पवनः पवतामस्मि रामः शस्त्रभृतामहम्। झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी। सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्ज्जुन!। अध्यात्मविद्या विद्यानां वादः प्रवदतामहम्। अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च। अहमेवाक्षयः कालो धाताहं विश्वतोमुखः। मृत्युः सर्व्वहरश्चाहमुद्भवश्च भविष्यताम्। कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा। बृहत्साम तथा साम्नां गायत्री छन्दसामहम्। मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः। द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम्। जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम्। वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः। मुनीनामप्यहं व्यासः कवीनामुशना कविः। दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम्। मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम्। यच्चापि सर्व्वभूतानां वीजं तदहमर्ज्जुन!। न तदस्ति विना यत् स्यान्मया भूतं चराचरम्। नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप!। एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया। यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोऽंशसम्भवम्। अथ वा बहुनैतेन किं ज्ञातेन धनञ्जय!। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्"। इत्यपि च।

**ईश्वरसाक्षिन्** पु॰ ईश्वर एव साक्षी। वेदान्तिमतसिद्धे मायोपहिते चैतन्ये स च वेदान्तपरिभाषायां दर्शितो यथा "ईश्वरसाक्षी तु मायोपहितं चैतन्यं तच्चैकं तदुपाधिभूतमायाया एकत्वात् "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतया चोपपत्तिः। "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्। तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते। योगी मायाममेयाय तस्मै विद्यात्मने नमः"। "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिश्रुतिषु एकवचनेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते। ततश्च तदुपहितं चैतन्यमीश्वरसाक्षी तच्चानादि तदुपाधेर्मायाया अनादित्वात्। मायावच्छिन्नं चैतन्यञ्च परमेश्वरः मायाया विशेषणत्वे ईश्वरत्वं उपा-

धित्वे सामित्वम् इतीश्वरत्वसाक्षित्वयोर्भेदः न तु धर्म्मिणोरीश्वरतत्साक्षिणोः। स च परमेश्वर एकोऽपि स्वोपाधीभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते। नन्वीश्वरानादित्वे "तदैक्षत बहु स्यां प्रजायेय, इत्यादौ सृष्टिपूर्व्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते ?। उच्यते। यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते तथा सृज्यमानप्राणिकर्म्मवशेन परमेश्वरोपाधीभूतमायाया वृत्तिविशेषाः इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्त्तव्यमित्याकाराईत्तिभेदाजायन्ते तासाञ्च वृत्तीनां तत्प्रतिबिम्बितस्य च सादित्वमिति"

**ईश्वरी** स्त्री ईश्वरस्य शिवस्य पत्नी ङीप्। १दुर्गायाम्। "ईश्वरीमीश्वरजिवाम्" दुर्गास्तवः। ईश- वनिप् ङीप् रान्तादेशश्च। २लिङ्गिनीलतायां ३वन्ध्याकर्क्कोट्याम्, ४रुद्रजटालतायाम्, ५नाकुलीकन्दे च। ऐश्वर्य्यान्वितायां स्त्रियाम् च। "ईश्वरी सर्वभूतानां त्वामिहोपह्वयेश्रियम्" श्रीसूक्तम्।

**ईष** उञ्छे (उञ्छतयस्यैवत्वात्,कणश आदाने) तु॰प॰सक॰ सेट्। ईषति ऐषीत्। ईषाम् बभूव आस चकार। ईषिता ईष्यात् ईषिष्यति ऐषिष्यत् "विश्वस्मादीषतो यजमानस्य परिधिः" तैत्ति॰।

**ईष** दाने ईक्षणे, सर्पणे हिंसने च भ्वादि॰आत्म॰सक॰सेट्। ईषते। ऐषिष्ट ईषाञ्च बभूव आस चक्रे। ईषिता ईषिषीष्ट ईष्यते ऐषिष्यत। ईषत् ईषा "ग्रुरस्येव त्वेषथादीषतेवयः" ऋ॰ १,१४१,८। "अस्मादहं तविषादीषमाणः" ऋ॰ १,१७१ ४७।

**ईष** पु॰ ईष–क। उत्तममनोः पुत्रभेदे। "औत्तमेयान् महाराज ! दश पुत्रान् मनोरिमान्। ईष ऊर्ज्जस्तनूर्ज्जश्च मधुर्माधव एव च। शुचिः शुक्र' सहश्चैव नभस्यो नभएव च" हरिवं॰७अ॰।

**ईषत्** अव्य॰ईष–अति।१अल्पे, २किञ्चिदर्थे च।"ईषत्सहासममलं परिपूर्णचन्द्रबिम्बानुकारि" देवीमा॰ ईषदीषदुन्नतनिवेश्य या तातमात्मसदमाविवर्द्धयन्" कुसुमा॰। "ईषद्रक्ता"पा॰समा॰। ईषदुष्णः ईषत्पाण्डु। ३ह्रस्वार्थे च "ईषद्धौतं नवं शुक्लं सदशं यन्न धारितम्"शब्दि॰। "ईषत् सूक्ष्मतन्तुकमिति रघुनन्दनः" एतदुपपदे धातोः खल् ईषत्करः ईषद्भमः। इयादेस्तु युच् वा। ईषद्दर्शः ईषद्दर्शनः। एतत्पूर्व्वे आदन्ते उपपदे खल् ईषदाढ्यङ्करः "ईषदाढ्यङ्करोऽप्येष: भट्टिः ईषदाढ्यम्भवम्।

**ईषत्कर** न॰ ईषत् कृ–खल्। १सेके, २अल्पे च। ३अल्पप्रयाससाध्ये त्रि॰। [वर्णे २तद्वति त्रि॰

**ईषत्पाण्डु** पु॰"ईषद्रक्तेति"पा॰स॰। १अल्पपाण्डौ धूसर-

**ईषदुष्ण** पु॰ "ईषद्रक्तेति" पा॰स॰। अल्पतप्ते १मन्दोष्णे २तद्वति त्रि॰ [२तद्वति त्रि॰

**ईषद्रक्त** पु॰"ईषद्रक्तेति"सा॰स॰। अल्परक्तवर्णे १अव्यक्तरागे

**ईषा** स्त्री ईष–क। १शकटस्य दीर्घकाष्ठे "देवानामिन्द्रप्रस्थानस्य पद्यादीषाम्" कात्या॰ २,२,१४, "शकटस्य दीर्घं काष्ठमीषा" वेददी॰। २रथावयवभेदे च"ईषामन्ये कृपामन्ये सूतमन्ये न्यपातयन्" भा॰व॰२४॰अ॰ "पाञ्चालस्य रथस्येषामाप्लुत्य सहसाऽपतत्" भा॰ द्रो॰ १२८अ॰। ३हलयुगयोर्मध्यमकाष्ठे ४लाङ्गलदण्डे च।

**ईषादन्त** पु॰ईषेव दन्तोऽस्य।१दीर्घदन्तगजे २उद्यदन्ते त्रि॰

**ईषिका** स्त्री ईषेव "इवे प्रतिकृताविति"पा॰कन्। १गजाक्षिगोलके, २तूलिकायाम्, ३अस्त्रविशेषे च।"सोऽभिमन्त्र्य शरैषीकामीषिकास्त्रेण वीर्य्यवान् काकं तमभिसन्धाय ससर्ज पुरुषर्षभः" रामा॰। कर्क्करीकादि॰नि॰ ईषीकापि। तूलिकायाम् तृणभेदे "सोऽभिमन्त्र्य शरैषीका मीषिकास्त्रेण वीर्य्यवान्"ईषिकेति तालव्यमध्योऽप्यत्रार्थे।

**ईषिर** पु॰ ईष हिंसने किरच्। अग्नौ उज्ज्वलदत्तः।

**ईष्म** पु॰ईष–सर्पणे करणे मक्। १कामदेवे ईष ईषणे कर्म्मणि मक्। २वसन्तर्त्तौ च उज्ज्वल॰।

**ईह** चेष्टने भ्वादि॰आत्म॰अक॰सेट्। ईहते ऐहिष्ट ऐहिढ्वम् ऐहिध्वम्। ईहाम्–बभूव आस चक्रे ईहिता ईहिषीष्ट ईहिष्यते ऐहिष्यत। ईहनम् ईहा ईहमानः ईहितः "शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक् क्रिया" स्मृतिः। "ऐहिष्ट तं कारयितुं कृतात्मा" भट्टिः। प्रियाणि वाञ्छत्यसुभिः समीहितुम्। "इन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम्" इति च किरा॰। अस्य इच्छापूर्व्वकचेष्टापरत्वे सक॰ "नेहेतार्थान् प्रसङ्गेन"मनुः। "तस्याराधनमीहते"गीता।

**ईहा** स्त्री ईह–अ। १चेष्टायाम्, २उद्यमे, ३वाञ्छायाञ्च। "ईहादेहार्थम्। यःस्यात्क्लर्त्ते उपतापिते। ज्योति॰।

**ईहामृग** पु॰ ईहां मृगयते अण् ईहाप्रधानो वा मृगः पशुभेदः। (नेकड़ाबाघ)। १वृके ईहया ईहाशाब्दो मृगः। २कल्पितमृगे अलङ्कारशास्त्रवर्णिते ३नाटकभेदे च साहि॰द॰परि॰। यथा"ईहामृगो मिश्रवृत्तचतुरङ्कः प्रकीर्त्तितः।

सुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा । नरदिव्यावनियमौ नायकप्रतिनायकौ । ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् । दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः । शृङ्गाराभासमप्यस्य किञ्चित् किञ्चित् प्रदर्शयेत् । पताका नायका दिव्या मर्त्या वापि दशोद्धताः । युद्धमानीय संरम्भं परं व्याजान्निवर्त्तते । महात्मानो बधं प्राप्ता अपि बध्याः स्युरत्र नो । एकाङ्कोदेव एवात्र नेतेत्याहुः परे पुनः । दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे । मिश्राणि ख्याताख्यातानि । अन्यः प्रतिनायकः पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः यथा कुसुमशेखरविजयादि"

ईहावृक पु० ईहाप्रधानो वृकः । (नेकडियावाघ) ईहामृगे ।

ईहित त्रि० ईह क्त । १चेष्टिते २अपेक्षिते भावे क्त । ३उद्योगे ४चरिते न । "समीहितार्थसिद्धिःस्यात्" तन्त्रम् ।

इति वाचस्पत्ये ईकारादिशब्द-निरूपणम् ।

---

## उ

उ-शब्दे भ्वादि० अक० आ० अनिट् । अवते औट । उवे ओता ओषीट ओष्यते औष्यत । अवनम् उतः । "उवे अस्य शुक्राभिके यथेवाक्र भविष्यति" ऋ० १०,८६,७।

उ अव्य० उ—क्विप् न तुक् । १सम्बोधने २कोपवचने, ३अनुकम्पायां, ४नियोगे (अवधारणे) "उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम" कुमा० । "उदु ष्य देवः सविता स, वाय" ऋ० २,३८,१ । "उषो रुरुचे युवतिर्न योषा" ऋ० ७,७७,१ । "वेत्थो यथेमं लोकं पुनरापद्यन्त इति" छा०उ० । "एष उ एवासाधु कर्म्म कारयति तम्" श्रुतिः ५अङ्गीकारे ६प्रश्ने च" हेमच० । ७पादपूरणे । अतति सातत्येन तिष्ठति अत-डु । ८शिवे पु० । स्वरूपार्थे कारः उकारोऽपि शिवे "अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः । मकारस्तु स्मृतो ब्रह्मा प्रणवस्तु त्रयात्मकः" इति ओमित्यस्य अवयवार्थनिरूपणे पुरा० । उशब्दात् स्वरूपार्थे कारः । उकारः । पञ्चमस्वरे । स च उदात्तानुदात्तस्वरितभेदेन प्रथमं त्रिधा पुनः अनुनासिकाननुनासिकभेदेन प्रत्येकं द्विधेति षड्विधः कालतकारानुसारस्तु ह्रस्वदीर्घप्लुतभेदेन त्रिविधोऽपि प्रत्येकं प्रागुक्तभेदषट्कात् अष्टादशविधः । तस्य वर्णस्य कुण्डलिनीरूपत्वादिना ध्येयत्वमुक्तम् कामधेनुतन्त्रे यथा "उकारं परमेशानि । विद्धि कुण्डलिनीं स्वयम् । पीतचम्पकसङ्काशं पञ्चदेवं सदाऽमयम् । पञ्चप्राणमयं देवि ! चतुर्वर्गप्रदायकम्" तन्त्रान्तरे अकारोकारमकारात्मकप्रणवस्य मध्ये द्वादशकलात्मकार्कमण्डलरूपेण अकारस्य, षोडशकलात्मकचन्द्रमण्डलरूपेण उकारस्य, दशकलात्मकवह्निमण्डलरूपेण च मकारस्य ध्येयत्वोक्त्या अभेदोपचारात् षोडशकलात्मके, ९चन्द्रमण्डले च तत्र मकारान्तस्यैव तन्नामतेति वहवः । उ, इत्यस्य एकाज् निपातत्वात् प्रगृह्यसंज्ञा तेन अचि परे न सन्धिः । उ—उमेशः" सि०कौ० । "एष उ वासाधुकर्म्म कारयति तम्" श्रुतिः । स चादिगणीयः ।

उकानह पु० पीतरक्तवर्णे कृष्णरक्तवर्णे च घोटके । हारा०

उकार पु० उ—स्वरूपार्थे कारः । १उस्वरूपे वर्णे । "अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः । वेदत्रयात् निरदुहत् भूर्भुवःस्वरितीति च" मनुः । २महेश्वरे च उशब्दे उ० ।

उक्त त्रि० वच-दुहा०गौणे कर्मणि क्त । यस्य ज्ञानाय कथ्यते १तादृशे जने । "अनुक्तेनापि वक्तव्यं सुहृदा हितमिच्छता" नीतिः "तथेत्युक्ता च सा देवी" पुरा० गौणकर्मासमभिव्याहारे तु मुख्ये कर्मणि क्त । २कथिते वाक्यादौ ३शब्दाबोधिते "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च" । स्मृतिः "उक्तार्थानामप्रयोगः व्या०प० । भावे क्त कथने न० । "सम्भृत्यसाम्प्रतं वक्तुमुक्ते सुसत्यापिना" माघः । ४एकाक्षरपादके छन्दोभेदे स्त्री मेदि० "उक्तात्युक्ता तथा मध्येति" वृत्त०र० कैचिदत्र "उक्थात्युक्थेति पठित्वा उक्थाशब्दस्तदर्थे इत्याहुः । उक्तञ्च प्रायेण अभिधाशक्त्या बोधितार्थ एव । "प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते । यथा मुख्ये तथा तद्वदनुक्तोऽपि प्रतीयते" भर्तृ० । शक्तिः कारकशक्तिरित्यर्थः ।

उक्ति स्त्री वच—भावे क्तिन् । कथने । "अतिसंक्षिप्तचिरन्तनोक्तिभिः" कुमा० । उक्तिप्रत्युक्तिरूपं वाकोवाक्यम्" का०भा० २शब्दशक्तौ च "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" अमरः ।

उक्थ न० वच-थक् । अप्रगीतमन्त्रसाध्ये "स्तोत्रे" "इन्द्राय नन मर्च्चत उक्थानि च ब्रवीत नः" ऋ०१,८४,५ । "उक्था-

नि अप्रगीतमन्त्रसाध्यानि स्तोत्राणि” भा० “अथ योऽयमन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत् साम तद्यजुस्तदुक्थं तद्ब्रह्म” छा०उ० । तथा हि स्तोत्रं द्विविधं प्रगीतमन्त्रसाध्यमप्रगीतमन्त्रसाध्यञ्च तत्र प्रगीतमन्त्रसाध्यं शस्त्रम् अप्रगीतमन्त्रसाध्यन्तु स्तोत्रमिति तयोर्भेदः । गवामयने प्रायणीयसंज्ञकाहे पाठ्यपञ्चदशस्तोत्रात्मके २चतुर्विंशस्तोमभेदे उपचारात् ३तत्साध्ये उक्थ्ययागे च तद्विधानञ्च” ता०ब्रा०४अ०२ख०उक्तं यथा “१प्रायणीयमहर्भवति”१ इत्युपक्रम्य “चतुर्विंशं भवति”४ क० “इदमहरुक्थ्यसंस्थन्तत्र सर्वेषु स्तोत्रेषु चतुर्विंशएव स्तोमः कार्य्यः ४ । तदेतत् प्रशंसति”भा० । “चतुर्विंशत्यक्षरा गायत्री तेजोब्रह्मवर्चसङ्गायत्री तेज एव ब्रह्मवर्चसमारभ्य स्वर्यन्ति” ५ ।“अयञ्च स्तोमश्चतुर्विंशतिसंख्याकः गायत्री च चतुर्विंशत्यक्षरा सा च गायत्री तेजः, प्रजापतिमुखादग्निना सहोत्पन्नत्वात् अस्यास्तेजोरूपं ब्रह्मवर्चसं च तेजोऽवान्तरभेद इति तेजोब्रह्मवर्चसरूपा गायत्री। एवं सति चतुर्विंशतिस्तोमं प्रथमतः प्रयुञ्जानाः साक्षादेव प्रत्यक्षमेव संवत्सरं प्रारभन्ते अस्मिन्नहनि प्रयुञ्जानाः संख्याद्वारेण तेजोब्रह्मवर्चसञ्चारभ्य अवष्टभ्य स्वर्यन्ति स्वर्गं गच्छन्ति५। पुनरपि विहितं स्तोमम् अनूद्य प्रशंसति” भा०। “चतुर्विंशतिर्भवति चतुर्विंशो वै संवत्सरः साक्षादेव संवत्सरमारभन्ते”६।“चतुर्विंशत्यर्द्धमासात्मकत्वात् संवत्सरस्य चतुर्विंशत्वं तथा सति चतुर्विंशस्तोमं प्रथमतः प्रयुञ्जानाः साक्षादेव प्रत्यक्षमेव संवत्सरमारभन्ते ६। अथेमं स्तोमं स्तोत्रीयागतसंख्याद्वारेण प्रशंसति”भा० । “यावत्यश्चतुर्विंशस्तोकस्य स्तोत्रीयास्तावन्तः संवत्सरस्य रात्रयः स्तोत्रीयाभिरेव संवत्सरमाप्नुवन्ति”७। “पञ्चदशस्तोत्रे अस्मिन्नहनि पञ्चदशसु स्तोत्रेषु प्रत्येकं चतुर्विंशस्तोत्रीयायुक्तेषु परिगणनायां मिलित्वा षष्ठ्युत्तरत्रिशतस्तोत्रीया भवन्ति । तथा सति चतुर्विंशस्तोमस्य यावत्यः स्तोत्रीयाः संवत्सरस्यापि तावत्यो रात्रयः एवं प्रयुञ्जानाः सन्नियतेन चतुर्विंशेन स्तोत्रीयाभिरेव संवत्सरं प्राप्नुवन्ति७ । स्तोत्रसंख्ययापीदमहः प्रशंसति” भा०।“पञ्चदश स्तोत्राणि भवन्ति पञ्चदशार्द्धमासस्य रात्रयोऽर्द्धमासश एव तत्संवत्सरमाप्नुवन्ति”८।“स्पष्टोर्थः८”। अथ स्तोत्रगतान्यपि शस्त्राणि मनसिकृत्य तत्संख्ययापीदमहः प्रशंसति”भा० “पञ्चदश स्तोत्राणि पञ्चदश शस्त्राणि समासो मासश एव तत् संवत्सरमाप्नुवन्ति९”स्पष्टोऽर्थः९भा०। तत्राग्निष्टोमकर्त्तव्यतारूपं पूर्वपक्षमुपन्यस्योत्तरपक्षमाह“अथो खल्वाहुरुक्थ्यमेव कार्य्यमहः सम्बद्धं”१२।“अथो इति पूर्वपक्षव्यावृत्त्यर्थः । उक्थ्यसंस्थमेवेदमहः कार्य्यं किमर्थमहः सम्बद्धं सम्पूर्णतया इति ब्रह्मवादिन आहुः । अग्निष्टोमे हि पूर्वयोः सवनयोः पञ्च पञ्च स्तोत्राणि तृतीये तु द्वे एवेत्यहः सन्दिग्धं भवति, उक्थ्ये तु तृतीयसवने पञ्च स्तोत्राणीत्यहः समृद्धं भवति१२ । उक्थ्यसंस्थाङ्गीकारे युक्त्यन्तरमाह”भा० । “सर्वाणि रूपाणि क्रियन्ते सर्वं ह्येतेनाप्यते” १४ “उत्तरेषामह्नां सम्बन्धीनि यानि रूपाणि स्तोमपृष्ठविभक्त्यादीनि तान्यस्मिन्नुक्थ्ये क्रियन्ते अतः सर्वं हि यज्ञसम्बन्धिरूपं तेनाह्ना उक्थ्यसंस्थेन आप्यते प्राप्यते तत उक्थ्यसंस्थमेव कार्य्यमित्यर्थः । सर्वरूपकरणञ्च सर्वावाप्तिश्च सम्पादानद्वारेणेति निदानकारेणैवमुच्यते, “अथो खल्वाहुः सर्वाणि रूपाणि क्रियन्त इति” आचार्य्याः एतेष्वेव सर्वान् स्तोमान् सर्वाणि पृष्ठानि सर्वा विभक्तीर्द्वेशरात्ररूपा इति विभक्तिमात्रेण कल्पयन्त इति संस्तुत्याग्ना पुनस्त्रिवृत्पञ्चदशौ चतुर्विंशः सम्पाद्यत इत्यादिना”१४ भा०। एतान्येव स्तोमपृष्ठादीनि प्रत्येकं क्रमेण विविच्य तत्र प्रदर्शितानि तत्सर्वं तत एवागन्तव्यम् । तत्र च तस्मिन्नहनि यथा स्तोमादिकं विधेयम् तदपि तत्रैव दर्शितं तत एव तदवसेयम् । अत्र उक्थ्यसाध्ययागे अभेदोपचार इति बोध्यम् ।

४होत्रायां स्त्री उक्थाशस्त्रशब्दे उदा० उच्यतेऽनेन करणे थक् । ५उक्थसाधने प्राणे च “यस्य ब्रणवियोगेन लोकोऽयमप्रियदर्शनः । उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा” भाग०।स्क०१५अ० ।

**उक्थपत्र** पु० उक्थानि अप्रगीतमन्त्रसाध्यानि स्तोत्राणि पत्रं वाहनमिव यस्य ।१यज्ञे, स्तोत्रैरेव हि यज्ञो वाह्यते इति तस्य तथात्वम् ।“समिद्धे अग्नावधिमामहान उक्थपत्र ईड्योगृभीतः” यजु० १७,५५ । “यजमानो वै मामहान उक्थपत्र इत्युक्थानि ह्येतस्य पत्राणि” शत०ब्रा० ९,२,३,९ इत्युक्ते २ यजमानेऽपि । [त्तथात्वम् ।

**उक्थपात्र** न० ६त० । यजमाने तस्य उक्थस्तोत्रकत्वा-

**उक्थभृत्** पु० उक्थं बिभर्त्ति सम्यग्विभजते भृ–क्विप् ६त० । उक्थविभाजके ऋषिभेदे “उक्थभृतं सामभृतं बिभर्त्ति ग्रावाणम्” ऋ० ७, ३३, १४ । उक्थभृत उक्थानां स्तोत्राणां संभर्त्तारम्” ।

**उक्थवर्द्धन** पु०उक्थैः स्तोत्रैर्वर्द्धतेऽसौ वृध–णिच् कर्मणि

ल्युट्। स्तोत्रवर्द्धनीये इन्द्रदेवे। "त्वं हि स्तोमवर्द्धन इन्द्रास्युक्थवर्द्धनः" ऋ०८,१४,११। "उक्थैः शस्त्रैर्वर्द्धनीयः" भा०। इन्द्रस्य यथा उक्थवर्द्धनीयत्वं तथोक्तं "उक्थमिन्द्राय शंस्यं वर्द्धनं पुरुनिष्षिधे" ऋ० १,१०,५, "इन्द्रायेन्द्रार्थं वर्द्धनं वृद्धिसाधनम् उक्थं शस्त्रम्" भा०

**उक्थवाहस्** पु० उक्थानि शस्त्राणि वहति वह–असुन् णिच्च। शस्त्रपाठके विप्रे "यं विप्रा उक्थवाहसोऽभिप्रमं दुरायवः" ऋ० ८,१२,१३,। उक्थवाहसः उक्थानां शस्त्राणां वोढारः" भा०।

**उक्थशंसिन्** पु० उक्थानि शस्त्राणि शंसति शन्स–णिनि। शस्त्रस्तावके ऋत्विग्भेदे "नयसीति द्विषः कृणोष्युक्थशंसिनः" ऋ० ६,४५,६। स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम्" ऋ० ८, १०३, ४।

**उक्थशस्** पु० उक्थं शस्त्रं शंसति क्विप्। शस्त्रस्तावके। उक्थशासृशब्दे उदा०। पदकाले सर्व्वत्र तस्य ह्रस्वमध्यपाठः। स च छान्दसो ह्रस्व इति माधवः। क्विप् प्रत्ययेनैवोपपत्तौ न छान्दसत्वमित्यन्ये। "तस्मादुक्थशसं भूयिष्ठं परिचक्षते" शत०ब्रा०। १०,५,२,५।

**उक्थशास्** पु० उक्थानि शंसति शन्स–क्विप् नि० नलोपः उप० स०। शस्त्रशंसके। "शुचीदयन्दीधितिमुक्थशासः" ऋ० ४,२,१६। "अस्य पदकाले ह्रस्वश्छान्दसः" माधवः। "नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" ऋ०१०,८२, ७। "नरः शंसन्त्युक्थशास उक्था" ऋ०७,१९,९।

**उक्थशुष्म** त्रि० उक्थं शस्त्रं शुष्मं बलं यस्य। उक्थरूपबलयुक्ते स्तवादिवाक्ये "समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसम्" ऋ० ६,३६, ३। "उक्थशुष्मान् वृषभरान् स्वप्नसस्तां" ऋ० १०,६२,२।

**उक्थादि** पु० ईत०। तदधीते वेत्ति वेत्यर्थे विहित-ठक्प्रत्ययनिमित्ततया पाणिन्युक्ते शब्दसमूहे स च गणः "उक्थलोकायत न्याय न्यास पुनरुक्त निरुक्त निमित्त द्विपद ज्योतिष अनुपद अनुकल्प यज्ञ धर्म्म चर्च्चा क्रमेतर श्लक्ष्ण संहिता पद क्रम संघट्ट वृत्ति परिषद् संग्रह गण गुण आयुर्वेद तन्त्रायुर्वेद"। "उक्थं सामविशेषलक्षणपरोग्रन्थविशेषोलक्षणया तदधीते वेद वा औक्थिकः। मुख्यादुक्थशब्दाट्ठगणौ नेष्येते" सि०कौ०।

**उक्थामद** न०उक्था होतृया माद्यति मद–अच्। उक्थसाधने स्तोमभेदे "अग्निर्यजुर्भिः सविता स्तोमैरिन्द्र उक्थामदैर्बृहस्पतिश्छन्दोभिः" कठसं० "बृहस्पतिरुक्थामदानि शंसिषम्" ऐत०।

**उक्थावी** त्रि० उक्थानि अवति अव–ई। शस्त्रस्तावके "इहइते वयस्तत उक्थाव्यं वक्ष्यामि" यजु००,२२।

**उक्थाशस्त्र** न०उक्था होत्रा च शस्त्राणि च द्वन्द्वः। होत्रायामृचि शस्त्रे च। "छन्दोभिरुक्थाशस्त्राणि साम्नावभृथ आप्यते" यजु० १९,२८।

**उक्थिन्** पु० उक्थं स्तुत्यतयाऽस्त्यस्य उक्थ+इनि। १शस्त्रस्तावके होत्रादौ। "प्र यामर्न्न्युक्थिनो नीथाविदोजरितारः" ऋ० २,१२,५, "उक्थं शस्त्रं तद्वन्तः शस्त्रिणो होत्रादयः" भा०। "तद्याचिष्ट उक्थिनोऽनुष्टुवन्ति पूर्व्वथा" ऋ० ८,१५, ६,। उक्थं स्तोत्रसाधनतयाऽस्त्यस्य इनि। २शस्त्रस्तुत्ये इन्द्रादौ। "हिरण्यपर्णमुक्थिनं रशनां बिभ्रतं वशिं भगमिन्द्रं वयोधसम्" यजु० २८,३३ उक्थं शस्त्रं संस्कारसाधनतयाऽस्त्यस्य इनि। ३शस्त्रसाध्ये संस्कारयुक्ते सोमादौ। "तुभ्येदिन्द्र ! मरुत्वते सुताः सोमासो अद्रिवः हृदा हूयन्त उक्थिनः" ऋ० ८,७६,८। "उक्थिनोऽन्या होत्रा उक्थिनःशस्त्रवन्तः सोमाः अनुक्था अन्याः" ऐत०।

**उक्थ्य** त्रि० उक्थमर्हति यत्। शस्त्रस्तुत्ये देवादौ। "इन्द्रः सहस्रदाव्नां वरुणः शंस्यानां क्रतुर्भवत्युक्थ्यः" ऋ० १,१७,५। "उक्थ्यः स्तुत्यः" भा० "होता यक्षीत उक्थ्यः" ऋ० १,७९,१२। २उक्थसाधने शस्त्रे च। "गाय गायत्रमुक्थ्यम्" ऋ०१,३८,१४। उक्थ्यं शस्त्रयोग्यं गायत्रमुक्थ्यम्" भा०। उक्थसम्बन्धित्वात् ३यज्ञेऽपि। 'उक्थ्यं वाचि घोषाय त्वेति यज्ञा जपेत्" आश्व०श्रौ०५,६,२६। 'उक्थ्यं शस्त्रं यज्ञसम्बन्धितया" नारा०वृत्तिः। 'सोमयागात् परं कर्त्तव्येषु षट्सु यागेषु मध्ये ४यज्ञभेदे स च। 'प्रथमं सोमा'' इत्युपक्रम्य 'यद्ग्नरे" "अत्यग्निष्टोम उक्थ्यः षोड़शी वाजपेयोऽतिरात्रोऽप्तोर्यामः कात्या० १०,९,२७,२८ विहितः। तत्प्रकारस्तु तत्रैव दर्शितः प्राक्। तस्य उक्थसाध्यत्वात् उक्थ्यमिति नाम।

"उक्थे तु होत्रकाणाम्" १। "तृतीयसवनइत्यनुवर्त्तते। उक्थे त्वयं विशेषः। तृतीयसवने होत्रकाणामपि शस्त्राणि भवेयुः। तानीमानीत्याह"वृत्तिः। "एह्यु षु ब्रवाणि तेऽग्निरगामि भारतयर्षीष्टतमस्माद्यामसुर इति इत्याविन्द्रावरुणा सुतपावां राजानाविन्द्रावरुणा मधुमत्त-

महेति याज्या । वयमु त्वामपूर्व्य यो न इदमिदं पुरेति प्रगाथौ । सर्वाः ककुभः प्रमंहिष्ठायोदप्रु तोऽच्छाम इन्द्रं हहस्पते युवमिन्द्रश्च वस्व इति याज्या । अवाहीन्द्र गिर्वण इयन्त इन्द्र गिर्वण ऋतुर्जनित्रीन् मर्त्तो भवामित्रः स वां कर्मणेन्द्राविष्णू मदपती मदानामिति याज्या”२ । “अत्र सर्वाः ककुभ इत्युक्तं किमनेनोक्तम् । काकुभेषु तावत् प्रगाथेषु तृतीयषष्ठमयोरभ्यासे सति ककुभ एव सर्वा भवन्ति । तथैव च स्तुवन्ति छन्दोगाः । अतोऽन्यत् प्रयोजनमन्वेषणीयम् । तदिदमुच्यते । होत्रकाश्च येषां प्रगाथाः स्तोत्रीयानुरूपा इतीन्द्राग्निहव-ब्राह्मणस्तत्ववच्छंसनं विहितम् । तत्र वार्हतानामेवायं विधिरित्युक्तत्वात् काकुभेष्वनुप्राप्नोति तन्निवृत्त्यर्थं ककुभ इति वचनम् । सर्वग्रहणं सर्वकाकुभप्रगाथसंग्रहार्थम् । तेन वार्हतेष्वेवासौ विधिरिति मन्तव्यम् । “इत्यन्त उक्थ्यः”३ । “एवमन्त उक्थ्यः क्रतुरित्यर्थः । इत्यन्तोऽग्निष्टोम इत्यस्यानन्तरम् एतानि शस्त्राण्युक्थ्यः इत्यन्ते उक्थ्य इत्येतावत्युच्यमाने एतानि शस्त्राण्युक्थ्य एवेति गम्यते । तत् किमर्थमुक्थे तु होत्रकाणामित्यत्रोक्थग्रहणम् । अयमभिप्रायः । अथ सोमेनेति त्रिषु-ध्यायेषु ज्योतिष्टोमाख्यः सोमयागोऽधिकृतः, स च संस्थाभेदान्नामभेदाच्चतुर्धा भिन्नो व्युत्पादितो भवति । तत्र सर्वत्र सोमेन यजेतेत्येतद्विधिविहित एवैको यागः केनचिदुपाधिविशेषेणाभ्यस्तो भिन्नो नाम प्रतीयते । अतः सर्वेषां प्रकरणित्वे प्राप्ते अग्निष्टोम एव प्रकरणी, अन्ये तस्यैव गुणा विकारा इति ज्ञापयितुमुक्थ्य इत्युच्यते । उक्थ्य एतावदेवौपदेशिकं, अन्यत् सर्वमातिदेशिकमित्यर्थइत्येवं आश्व०श्रौ०६,१,क० तस्य प्रकारोऽभिहितः उक्थेन संस्कार्ये यज्ञरूपे ५ पात्रभेदे । “उक्थ्यमुपयाम गृह्णीत, इति” कात्या०८,६,२१ । “उक्थ्यादि” कात्या० १४,२,१० उक्थ्यग्रहणादि प्राकृतं कर्म भवति उक्थ्यस्थाल्या उक्थ्यसंज्ञकं ग्रहं गृह्णाति” कर्कः । “प्रागुक्थ्यान्करत्यतीयस्तुपात्रेण इन्द्रमरुत्व इति” कात्या० १०,१,१४ । आग्रयणग्रहणानन्तरमुक्थ्यग्रहणात् प्रागिति” कर्कः ।

उक्ष – सेचने भ्वा० सक०प० सेट् । उक्षति औक्षीत् उक्षाम्-बभूव आस चकार । उक्षिता उक्ष्यात् उक्षिष्यति औक्षिष्यत् । उक्षितव्यः उक्षणीयः उक्ष्यः । उक्षिता उक्षन् उक्षितः । उक्षा उक्षणम् । उक्षित्वा समुक्ष्य । कर्मणि उक्ष्यते औक्षि उक्ष्यमाणः “उक्षन्यस्यै मरुद्भि हिताइव” ऋ०१,१६६,२, “औक्षन् घोषितमम्भोदाः” भट्टिः ।“उक्षां प्रचक्रुर्नगरस्य मार्गान्” भट्टिः। अव्यवधाने एवाम्प्रयोगविधानात् प्रचक्रुरित्यव्यवधानादाम्प्रसक्तिरतोऽत्र जयमङ्गलेन उक्षान् प्रचक्रुरिति पठितम् उक्षान् सिक्तानिति तदर्थः “घृतमुक्षता मधुवर्णमर्चते” ऋ०१,८७,२, “गङ्गाप्रवाहोक्षितदेवदारु” कुमा०। “गन्धवद्रुधिरचन्दनोक्षिता” “किञ्चिदुक्षितशिखण्डकावुभौ” रघुः । क्वचिदस्य पदव्यत्ययः । “उक्षमाणो अपिन्वमुक्षमाणाः” ऋ० ४,४२,४ “तमुक्षमाणमव्यये वारे पुनन्ति” ऋ०९,९९,५ “प्रसव्यमात्मानमुदकैः पर्युक्षन्ते” आश्व०श्रौ०। उक्षणञ्च द्रव्यद्रव्येण संयोगविशेषजनकव्यापारः । (सेचा) ।

अभि+अवतानप्राधिना सेचने । “उत्तानेनैव हस्तेन-प्रोक्षणं परिकीर्त्तितम् । न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चाऽवोक्षणं स्मृतमिति” छन्दोप० उक्तेः तथात्वम् । अभ्युक्षणशब्दे विवृतिः “परस्पराभ्युक्षणतत्पराणाम् रघुः । “सिरसि शकुन्तलामभ्युक्ष्य” शकु०। “अथाद्भिरभ्युक्षति, एष वा अपां सम्भारो यदद्भिरभ्युक्षति”शत०ब्रा०२,१,१,३,।

अव+तिर्य्यक्प्राधिना सेचने “दध्ना मधुमिश्रेणावोक्षति” तैत्ति० । “उद्धतमवोक्षितं भवति यत्रैनमुपावहरत्युद्धते वा अवोक्षितेऽग्निमादधति” शत०ब्रा०६, ४,४,१८, “उद्धत्यावोक्षति यत्रैनमुपावहरति”शत०ब्रा० ६,८,१,१२, ।“तिरश्चाऽवोक्षणं स्मृतम्” छन्दोग०।

आ+समन्तात् ईषद् वा सेचने “आ गोमूतिमुक्षतं घृतेन” ऋ०७,६२,५ व्यवहिताश्चेति उपसर्गस्य व्यवधानम् ।

उद्+ऊर्द्ध्वदेशात् सेचने । “किं तृतीयमेतां दिशमुदोक्षीः”? शत०ब्रा०११,५,३,४। [ब्रा०३,७,४,६’ ।

उप+सामीप्येन सेचने । “अघस्तादुपोक्ष्यापोदेवीः” शत० निस्+ निःशेषेण सेचने । “यत्स्रुच्य आनीय निरौक्षिषम्” शत०ब्रा०११,५,३,७ ।

परि+वेष्टनाकारेण समन्तात् सेचने“प्रसव्यमुदकैरात्मानं पर्युक्षन्ते” आश्व०६,१२, “प्रसव्यं वामावर्त्तेन वेष्टयित्वेत्यर्थः ना०उ०।“आहवनीयं पर्युक्ष्योदधारां सिनयत्या गार्हपत्यात्”कात्या०४,१३,१६, “पर्युक्ष्य हस्तगृहीतेनोदकेन समन्तात् सिक्त्वा”कर्कः।“पर्युक्षितं समिदग्निं”कात्या० ४,१४,२०।

प्र+उत्तानहस्तेन सेचने“उत्तानेनैव तु हस्तेन प्रोक्षणं परिकी-

क्तितम्” छन्दो० उक्तेस्तथार्थता “अपिधानं प्रोक्षिताभ्याम्” कात्या० ८,१०,४, । “तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः” ऋ०१०,९०,७, “प्रोक्षिताः स्थ अग्नये त्वा जुष्टं प्रोक्षामि। अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि” यजु० १,१३, “कृष्णोऽस्याखरेष्ठो अग्नये त्वा जुष्टं प्रोक्षामि। वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि। बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि” यजु०२,१, “रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्” यजु०५,२५, “संस्कारः पुंस एवेष्टः” प्रोक्षणाभ्युक्षणादिभिः” कुसुमा० “इत्यक्तेः पुरुषसंस्कार इति नैयायिकाः । मीमांसकमते द्रव्यसंस्कारः इति भेदः अभ्युक्षणशब्दे विवृतिः । “प्रोक्षितं भक्षयेन्मासम्” मनुः । सम्+प्र+ सम्यक् प्रोक्षणे । “प्राणानायम्य संप्रोक्षेत्-चेनाद्वैतेन तु” वा०स्मृतिः।

वि+विशेषेण सेचने “त्वयो वि रोरुवज्जठरे विवक्षते” ऋ०१०,९२,५। “व्यवहिताश्चेति” पा० उपसर्गव्यवधानम् । “केशमिश्रेव ह्यास तां व्यौक्षदोषं धयेति” शत० ब्रा० २,२,४,५ ।

अभि+वि+ आभिमुख्येन विशेषेण सेचने । “तत्स्मात् तवैव संहृत्याम् यथाग्निं नाभिव्युक्षेत्” शत०ब्रा० १,२,१,१०

सम्+सम्यक् सेचने । “समुक्षितं सुतं सोमम्” ऋ० २, ६०,५ । “इदं ते अन्नं युज्यं समुक्षितम्” ऋ० ८,४,१२

**उक्ष** त्रि०उक्ष–अच् ।१सेक्तरि “सुप्रतिष्ठा मनोडुहद्वाय नः” यजु०८,८४, कर्मणि यञ् ।२सिक्ते “उक्षान् प्रचक्रुः” भट्टिः

**उक्षण** न० उक्ष–ल्युट् । द्रवद्रव्येण संयोजनव्यापारे “वसिष्ठमन्त्रोक्षणजात् प्रभावात्” रघुः । [गावस्ये इये ।

**उक्षतर** पु० अल्प उक्षा ह्रस्वत्वे तरप् । अप्राप्तवाह-

**उक्षन्** पु०उक्ष–कनिन् । १वृषे, २ऋषभौषधौ च । “विद्लित-महाकूलास्तुङ्गां विषाणविघट्टनैः” माघः । “उक्षेव यूथा परियन्नरावीत्” ऋ० ९,७१,९ । “उक्षा मिमाति प्रति यन्ति धेनवः” ऋ०९,६९,४। “गरुडध्वजादुद्दीपितमानिवोक्ष्णः” कुमा० “न वराहं न चोक्षाणं न क्षगान् विविधांस्तथा” भा०व० १३१। “उक्षाणं पक्त्वा सह ओदनेन तस्मात् कपोतात् प्रति ते नयेद्वा” भा० व० १९६ । “नीलं चोक्षाणं मेध्यमप्यालभेत” भा० आनु०११अ०। ३सेचनकर्त्तरि । सेचके त्रि० । “उक्षा समुद्रो अरुषः सुपर्णः” ऋ० ५,४७,२, उक्षा बिभर्त्ति भुवनानि वाजयुः” ऋ० ६,८३,२ । आत्मन उक्षाणं इच्छति उक्षोयति वेदे तु न नलोपः । उक्षण्यति । “अयं हि वां ह्वयामहे उक्षण्यन्तो अश्ववत्” ऋ०,६,८ । ततः कर्त्तरि उ उक्षण्य आत्मनोऽपेक्षौ “अनुस्ताबस्त्रविदमुक्षण्युरमाणाऽऽदिभिः” ऋ० ८,२३,१८। जातदृढमहद्भ्यः परस्य अच् समा०। जातोक्षः इद्धोक्षः महोक्षः “महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्” स्मृतिः “विलोक्य वृद्धोक्षमधिष्ठितं त्वया” कुमा०। उक्ष्णोऽपत्यम् अण् टिलोपः । औक्ष्णः तदपत्ये तस्य टेर्नित्वात् अनपत्ये तु नलोपः न टिलोपः । औक्ष सि०कौ० उक्ष्णां समूहः वुञ्। औक्षक इत्यर्थे न० । कुरुपूर्ववंश्ये ४राजभेदे च । तस्य गोत्रापत्ये यञ न वृद्धिः । उक्षण्यतद्गोत्रापत्ये पुंस्त्री० । तदन्तत्वात् फक् उक्षण्यायनः “व्यक्षमुक्षण्यायने रजतं हरयाणे” ऋ०८,५,२,२२ । “उक्षनामा कश्चित् कुरोः पूर्वजः तस्य गोत्रपत्ये उक्षन् शब्दात् यञः तदन्तत्वात् फक् । संज्ञापूर्वकविधिरनित्य इति न वृद्धिः अयञ्च छान्दसः लोकेऽस्य न प्रयोगः” भा०।

**उक्षवशा** स्त्रि० उक्षा वशा वशास्थानीयो यस्य । वन्ध्याऽलाभे वशात्वेन कल्पितवृषके ऋयजमानभेदे । तत्र वशारूपादिकमभिधाय वृषस्य तत्प्रतिनिधित्वम्” शत०ब्रा० ४,५,१,९, उक्तं यथा “मैत्रावरुणी वशा भवति यत्र वै देवाः रेतः सिक्तं प्राजनयंस्तदग्निमारुत” मित्युपक्रम्य पश्वादीनामुत्पत्तिमभिधाय “अथ यदा न कश्चन रसः पर्यशिष्यत त एषा मैत्रावरुणी वशा समभवत् तस्मादेषा न प्रजायते रसाद्धि रेतसः पशवस्तद् यदन्ततः समभवत् तस्मादन्तं यज्ञस्यानुवर्त्तते तस्माद्वा एषाल न प्रजायते मैत्रावरुणी वशाऽलब्ध्वा प्रतमा भवति यदि वशां न विन्देदुक्षवश एव स्यात्” ।२वृषायक्ते त्रि०। “उक्षवेहदपि वेहत्स्थानीयकल्पितवृषे यजमाने” शत० ब्रा० वृद्धिभिस्क्तः।

**उक्षित** त्रि० उक्ष–क्त । सिक्ते उक्षधातौ उदा० ।

**उख** गतौ भ्वादि० पर०सक० सेट् । ओखति औखीत् उवोख ऊखतुः ओखिता उख्यात् ओखिष्यति औखिष्यत् उखा ।

**उख** गतौ इदित् भ्वादि०पर०सक०सेट् । उङ्खति औङ्खीत् । उङ्खाम्—बभूव आस चकार । उङ्खिता उङ्ख्यात् उङ्खिष्यति औङ्खिष्यत् ।

**उखर्वल** पु० उख–वलच् रुडागमः किच्च । भूरिपले तृणभेदे राजनि० “बलदो रुचिकारी च पशूनां सर्वदा-हितः”। अस्य गुणः राजनि० उक्तः ।

**उखल** पु०उख–कलच् । भूरिपले तृणभेदे उखर्वले राजनि०।

**उखा** स्त्री उख–क । १पाकपात्रे पिठरादौ । (हाँड़ि) ।

"ययीक्षणं मांसपच्या उखाया उत पात्राणि यूष्ण आसेचनानि" ऋ० १,१६२,१३ । ऋचमेतामाश्रित्यैव "मांसपच्या उखायाः" इति पा० भाष्यकृतोदाहृतम् । अग्निचेष्टकासाधने २चुल्लीरूपे पदार्थे तत्करणप्रकारः कात्या० श्रौ० १६,१,१, सूत्रादौ उक्तः तच्च इष्टकाशब्दे ८८१पृष्ठे दर्शितम् । "उखास्तत्"सि०कौ० शत०ब्रा०तु स्थालीपरोक्षायमस्य निरुक्तिरन्यथैवोक्ता यथा । "अथैनमुखयाद्विबिभर्त्ति इमे वै लोका उखा इमे वा एतं लोका यन्त्रमर्हन्ति एभिरेतं लोकं देवा अबिभरुरेभिरेवैनमेतल्लोकैर्बिभर्त्यथ यदुखा नाम एतद्वै देवता वैतेन कर्मणैतयाहतेमाँ लोकानुदखनन् यदुखनंस्तस्मादुत्खा उत्खा वैतामुखेत्याचक्षते परोक्षं,परोक्षकामा हि देवाः" ६,७,१,२२, २३ । अस्य "न क्रोडादिबह्वचः" पा० क्रोडादिगणपाठात् स्वाङ्गवाचितापि तेन इन्द्रुखेत्यत्र न ङीष् उखायां संस्कृतं यत् । उख्य तत्र संस्कृते त्रि० । भवार्थे दिगा० यत् । उख्य उखाभवे त्रि० । तस्य वर्ण्यादि० कर्मधारयसमासे आद्योदात्तता ।

**उख्य** त्रि० उखायां संस्कृतं यत् । उखासंस्कृते मांसादौ "न्युख्यमुख्यञ्च शोभयान्"भट्टिः उखायां भवः दिगा० यत् । उखाभवे त्रि० । "उख्यान् कुम्भेषु बिभ्रतः" अथ०४, १४,२ । उख्यमग्नीन् । "अथ यद्येष उख्योऽग्निरनुगच्छेत्"शत०ब्रा०६,६,४,१०। "प्रागनःशत्योख्यस्योत्तरतः समिदाधानम्" "अमुख्यभष्मावपनं क्रयणीयादौ"कात्या० १६,६,१०,१५,२२ । "संविशं शत्योख्यं निरवपति समितमिति" १७,१, १८ । स्त्रियां टाप् ततः कत्र्यादि० जातादौ ढकञ् । औख्येयः उख्याजाते त्रि० ।

**उगण** त्रि० उद्गूर्णं उदायुधः गणो यस्य पृषो० । उदायुधगणोपेते "याः सेना अभीत्वरीराव्याधिनीरुगणा उत" यजु० ११, ७७, "उगणाभ्यस्तृंहतीभ्यश्च वोनमोनमः" यजु० १६,१४ ।

**उग्र** पु० उच–रक् गश्चान्तादेशः । १महादेवे, वायुमूर्त्तिधारिणि शिवे क्षत्रियात् ऊढायां शूद्रायामुत्पन्ने २संकीर्णवर्णे (आगुरी) उग्रपुत्रत्वात् ३शोभाञ्जनवृक्षे, ४केरलदेशे, ५क्रूरसंज्ञके "उग्रः पूर्व्वमघान्तका" इति ज्योतिषोक्ते ५नक्षत्रपञ्चके च ६वत्सनाभाख्ये विषे न० । ७उत्कटे त्रि०। ८वचायां, ९यवान्यां, १०धन्याके, ११उग्रजातेः स्त्रियां च स्त्री टाप् । तत्र "शिवस्याष्टमूर्त्तिनामनिरुक्ति" येषा 'तमब्रवीदुग्रोऽसीति तद्यदस्य तन्नामाकरोत् वायुस्तद्रूपमभवद्वायुर्वा उग्रस्तस्माद्यदा बलवद्वात्युग्रो वातीत्याहुः सोऽब्रवीत् ज्यायान् वा अतोऽस्मि"शत०ब्रा०६,१,२,१२। उक्तयुक्तेः १२वायौ पु०। उग्ररूपत्वादेव अष्टमूर्त्तिपूजने उग्राय वायुमूर्तये नम इति तिथितत्त्वे उक्तम् । "शूद्रस्य विप्रकन्यायां जात उग्र इति स्मृतः" उशनसोक्ते १३चाण्डालरूपवर्णसंकरे च क्षत्रियाच्छूद्रकन्यायां क्रूराचार विहारवान् । क्षत्रशूद्रवपुर्जन्तुरुग्रनामा ततोऽभवदिति मनूक्तादयं भिन्नः" "क्षत्रुग्रपुक्कसानान्तु बिलौकोवधबन्धनमिति" मनुः करणेन समा चास्य इतिभार्गवनिर्म्मिता" स्मृतिः अस्योग्रस्य । १४उत्कटे त्रि०। "उग्रं शर्म महि श्रवः" यजु०२६,१६।१५असुरभेदे पु० "विप्रचित्तिः शिविः शङ्कुः" इत्युपक्रम्यासुरगणनायां "वेगवान् केतुमानुग्रः सोग्रव्यग्रोमहासुरः" हरिवं० ३६३अ० । तत्र वचायाम् "वत्साङ्कयमियङ्गू प्रायश्चाङ्कुवरसाङ्कनैः" "उग्रा कुष्ठम्" तीक्ष्णगन्धा विडङ्गं चेन्द्र नित्यं शावपोढे करञ्जम्"। "विड़ङ्गभल्लातकचित्रकोग्राकटुत्रिकाम्भोदसुराह्वजाश्च" इति च सुश्रु०।१६तीक्ष्णवीर्ये त्रि०।१७कालिकावरणभेदे स्त्री । "विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता घनत्विषः"कालीकवचम् । १८उग्रतारायोगिनीभेदे च। "महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च"कालिकापु०।१९दीर्घे च उग्रनासिकः । २०सर्व्वकार्य्येषु उद्यते"उग्रासोऽरपशा उग्रबाहवः इति" ऋ०८,२०,१२। उग्रासः उद्गूर्णा सर्वकार्य्येषु उद्यताः" भा० उच–समवाये इति धातोर्निष्पन्नतया ओषतीक्ष्णरसादिना विशेषसम्बन्धात् एषां च सर्वेषाम् उग्रत्वम्। उग्रप्रभोग्रदंष्ट्रादियोगिनीभेदेऽपि उत्कटाद्यर्थता ज्ञेयम्"भा०।

**उग्रक** त्रि० उग्र+संज्ञायाम् कन् । नागभेदे । नागनामाख्याने "आर्य्यकश्चोग्रकश्चैव नागः कनकपोतकः" भा० आ० ३५ अ० । २शूद्रे च "उग्रपुत्रशब्दे उदा० ।

**उग्रकर्म्मन्** त्रि० उग्रं कर्म्मास्य । १हिंस्रे पश्वादौ २प्राणिहिंसके ३क्रूरादौ च । [वृक्षभेदे राजनि० ।

**उग्रकाण्ड** पु० उग्रः काण्डोऽस्य । (करेला) कारविल्ले

**उग्रगन्ध** पु० उग्रः गन्धः पुष्पादौ यस्य । १चम्पके, २कट्फले ३अर्जकवृक्षे ४लशुने च । ५हिङ्गुनि न०। ६उत्कटगन्धादौ त्रि० । ७यवान्याम् ८वचायाम्, ९अजमोदायाञ्च स्त्री टाप् । राजनिघण्टु मेदिनी ।

**उग्रचण्डा** स्त्री० उग्रा चण्डा कोपना कर्म्म० । १देवीभेदे । तदाविर्भावः कालिका० पु०५८,६० अ० उक्तः "उग्रचण्डा तु या मूर्त्तिरष्टादशभुजाऽभवत् । सा नवम्यां

पुरा कृष्णपक्षे कन्यां गते रवौ। प्रादुर्भूता महाभागा योगिनीकोटिभिः सह"। अनयैव मूर्त्या दक्षयज्ञो विनाशितः। यथा "आषाढस्य तु पूर्वायां सत्रं द्वादशवार्षिकम्। दक्षः कर्त्तुं समारेभे हुताः सर्व्वे दिवौकसः। ततोऽस्मिन् न हुतस्तेन दक्षेण सुमहात्मना। कपालीति सती चापि तज्जायेति च नो हुता। ततो रोषसमायुक्ता प्राणांस्तत्याज सा सती। त्यक्तदेहा सती चापि चण्डमूर्त्तिस्तदाऽभवत्। ततः प्रवृत्ते सत्रे तु तस्मिन् द्वादशवार्षिके। नवम्यां कृष्णपक्षे तु कन्यायां चण्डमूर्त्तिहृक्। योगनिद्रा महामाया योगिनीकोटिभिः सह। सतीरूपं परित्यज्य यज्ञभङ्गमथाकरोत्। शङ्करस्य गणैः सर्व्वैः सहिता शङ्करेण च। स्वयं बभञ्ज सा देवी महासत्रं महात्मनः"। "उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका" इत्युक्ते २दुर्गावरणभेदे च।

**उग्रता** स्त्री उग्रस्य भावः कर्म्म वा तल्। उग्रस्य १भावे २कर्म्मणि च ३अलङ्कारोक्ते व्यभिचारिगुणभेदे। तल्लक्षणं सा॰द॰। "शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता। तत्र स्वेदशिरःकम्पतर्ज्जनाताड़नादयः"। त्व। उग्रत्व तद्भावकर्म्मणोः न॰। ष्यञ्। औग्र्य तत्रैव न॰।

**उग्रतारा** स्त्री उग्रादपि भयात् तारयति भक्तान् तॄ-णिच्-अच् ५त॰। ताराऱूपायां देव्याम्। "तारकत्वात् सदा तारा महाभोक्षप्रदायिनी। उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्त्तितेति तन्त्रोक्तास्या वा निरुक्तिः। तदाविर्भावः कालिकापु॰ ८१अ॰ "विनिःसृतायां देव्यास्तु मातङ्ग्याः कायतस्तदा। भिन्नाञ्जननिभा कृष्णा साऽभूद्गौरी क्षणादपि। कालिकाख्याऽभवत् सापि हिमाचलकृताश्रया। तामुग्रतारामृषयो वदन्तीह मनीषिणः। उग्रादपि भयाद्यत्र यस्मात् भक्तान् सदाम्बिका। एषैकजटाख्याति यतस्तस्या जटैकिका। स्मृतं चिन्त्यं चास्याः सम्यक् वेतालभैरवौ। यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम्। चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम्। खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं तथः। कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम्। द्यां लिखन्तीं जटामेकां बिभ्रतीं शिरसा स्वयम्। मुण्डमालाधरां शीर्षे ग्रीवायामपि सर्व्वदा। वक्षसा नागहारन्तु बिभ्रतीं रक्तलोचनाम्। कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विताम्। वामपादं शवहृदि संस्थाप्य दक्षिणं पदम्। विन्यस्य सिंहपृष्ठे तु लेलिहानां शवं स्वयम्। साट्टहासमहाघोरारावयुक्तातिभीषणा। चिन्त्योग्रतारा सततं भक्तिमद्भिः सुसेवुभिः" अन्यत्र च "रूपं शृणु नरश्रेष्ठ! येन ध्येया सदा शिवा। कृष्णा लम्बोदरी दीर्घा विरला रक्तदन्तिका। चतुर्भुजा कृशाङ्गी तु दक्षे कर्त्तृकखर्परौ। खड्गं चेन्दीवरं वामे शीर्षे त्वेकजटां पुनः। वामपादं शवस्योर्व्वोर्निधायोत्थाप्य दक्षिणम्। शवस्य हृदये न्यस्य साट्टहासं प्रकुर्व्वती। नागहारशिरोमालाभूषिता कामदा परा"। अस्याः रूपविषये बहुविप्रतिपत्तिरस्तीत्यतस्तन्निरूपणं तावत् क्रियते

राघवकृते पञ्चकल्पतरौ मन्दारदलप्रकरणे श्रीशङ्कराचार्य्यकृतैतदीयसूक्तिप्रकाशकस्तोत्रं यथा। "ज्वलत्पावकज्वालयोज्ज्वालभास्वच्चितामध्यसंस्थां सुपुष्टां सुघर्मां। शवं वामपादेन कण्ठे निपीड्य स्थितां दक्षिणेनाङ्घ्रिणोरू निपीड्य। हहह्रीमलम्बोदरीं मेघवर्णां सकुच्च कुपीनस्तनाभोगरम्याम्। जवारागरागप्रवृत्तत्रिनेत्रां ललज्जिह्वया दंष्ट्रया भीषणास्याम्। ससद्वीपिचर्म्मावृताङ्गीं नितम्बे जटाजूटमध्यस्थितेन्दीवराक्षीम्। शिरोदेशभास्वत्पिशङ्गाभसर्पं जटाजूटमध्यस्थिताक्षोभ्यमूर्त्तिम्। शिवः केशवश्चात् शिरश्छिन्नसद्योगलच्छोणितां मानवीं मुण्डमालाम्। दधानां च पञ्चाशदाख्यानसंख्याम् कृतश्छिन्नमुण्डालिसंनामिताङ्गीम्। समाच्छिन्नमांसोत्करामूर्द्दले स्फुरत्पाणिना धारयन्तीं महासीम्। करे वाम ईषत्स्फुरद्रक्तनालं ससन्नीलपङ्केरुहं धारयन्तीम्। करे सव्य ऊर्द्ध्वेऽधस्ताद्दधानां शितां कर्त्तृकां वामपाणौ कपालम्। जगद्व्यर्त्तिसंसारसंजातजाड्यं स्वतः कर्त्तृकाधारया खण्डयन्तीम्। विचित्रास्थिमालं करालं कपालं ललाटे च पञ्चान्वितं धारयन्तीम्"। इति तत्रैव मन्त्रप्रदीपे "महाहर्षिद्विःकटाक्षिभूषणाम् इत्यनेन अष्टनागानामपसिद्धिरूपत्वोक्त्या तेषां भूषणविशेषकृतया यथा स्थितिस्तथा तत्रैव दर्शितं यथा। "जटासु नन्तः श्वसोत्र तक्षको महादिपद्मो हृदि हारभूषणम्। तथैव कर्कोटकृतोपवीतकम् स मेखलायामथ देवि! वासुकिः। स शङ्खपालः किल कङ्कणोद्भतः करेषु, पद्मः पदयुक्समान्वयः। भुजेषु नागः कुलिकोऽङ्गदे मतः" इति "तेषां वर्णा अपि क्रमशोदर्शिताः सितोऽथ रक्तोधवलश्च मेचकः तथैव पीतोऽप्यसितश्च पाटलः। भुजङ्गमानामिह वर्णजातयो भवन्ति सर्वेषु नरेषु सन्ति ताः"। तत्रायं निर्गलितार्थः। अक्षं लिङ्गपिशङ्गैकजटा जवाकुसुमसङ्काशलक्षनागकृतकुण्डला शुभ्रशेषनागकृतहारा दूर्वा-

दंष्ट्राननागकृतयज्ञोपवीता नीलवर्णा लम्बोदरी खर्वा चतुर्भुजा तत्र उपरि दक्षिणे सरक्तमांसखण्डमण्डितमुष्टिनिविष्टजटाजूटसंलग्नोग्रखड्गविभूषितकरा उपरि वामे रक्तनालकिञ्चिद्विकसितनीलोत्पलकरा अधस्तात् दक्षिणे बीजपूरितकर्त्तृकालङ्कृतकरा अधस्तात् वामे त्रिजगज्जाड्यखण्डककपालमण्डितकरा भुजचतुष्टये धूम्राभनागकृतकेयूरा कनकाभनागकृतकङ्कणा शवारूढा प्रत्यालीढस्थानाधिष्ठिता निर्भरयन्त्रणाभावेन शवहृदयस्थितदक्षिणचरणा शवोरुद्वयस्थितप्रासारितवामपादा कुन्दाभनागकृतकटीसूत्रा पाटलनागकृतनूपुरालङ्कृता सद्यश्छिन्नगलद्रुधिराक्तौन्यकेशग्रथितपादपद्म प्रलम्बित–पञ्चाशत्तमन्त्रमुण्डमाला ज्वलदनलचिताभध्यस्थिता द्वीपिचर्मालङ्कृतकटितटा योषिदखिलालङ्कारभूषिता मौलावक्षोभ्यरूपनागभूषिता पञ्चसंख्यान्वितकपालमालाभूषितललाटा ललज्जिह्वा दन्तुरदंष्ट्रा इत्येवं रूपा। अत्र प्रमाणवाक्ययोः शवहृदयस्थले वामदक्षिणपादयोर्विकल्पदर्शनतोमूर्त्तिद्वयमित्यन्ये। प्रत्यालीढपदाङ्कितशवहृदित्युक्तेः आलीढं दक्षिणं पादं प्रत्यालीढं तु वामकमित्युक्तेः आलीढशब्दे दर्शितवाक्याच्च प्रत्यालीढशब्दस्य आलीढविपर्य्ययरूपत्वात् वामचरणस्यैव शवहृदयस्थितिरिति तु न्याय्यम्।

**उग्रधन्वन्** पु० उग्रं धनुर्यस्य ब०स० अनङ् समा०। १शिवे २शत्रुभिरसह्यधनुष्के त्रि०। "स इषुहस्तैः स निषङ्गिभिर्वशी संसृष्टा सयुध इन्द्रोगणेन। संसृष्टजित् सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता" ऋ० १०,१०३,३।

**उग्रनासिक** त्रि० उग्रा दीर्घा नासिका यस्य। दीर्घनासिके।

**उग्रपुत्र** पु० उग्रस्य शूरस्य पुत्रः। १शूरवंशजाते। "काश्यो वा वैदेहो वोग्रपुत्रः उज्ज्यं धनुरधिज्यं कृत्वा" शत०ब्रा० १४,६,८। "उग्रपुत्रः शूरान्वयः" भा०। "उग्रस्य शिवस्य पुत्रः। २कार्त्तिकेये। उग्र उद्गूर्णः पुत्रो यस्मिन्। ३ताडयेगभीरजलाशये "यां उग्रपुत्रे जिघांसतः" ऋ० ८,६७,११। उग्रपुत्रे उग्राः उद्गूर्णाः पुत्रा यस्मिन् तत्तादृशे उदके" भा०।

**उग्रम्पश्य** त्रि० उग्रं पश्यति उग्+दृश–खश् मुम्। पापाशयतया क्रूरदृष्टियुक्ते उग्रजन्तौ व्याघ्रादौ "उग्रम्पश्याकुलेऽरण्ये" भट्टिः।

**उग्रव्यय** पु० असुरभेदे उग्रशब्दे उदा०।

**उग्रशेखरा** स्त्री उग्रस्य शेखरं वासस्थानत्वेनास्त्यस्याः अर्श० अच्। गङ्गायाम् शब्दरत्ना०। सा हि तस्य शिरसि स्थिता

**उग्रश्रवस्** पु० उग्रम् उत्कृष्टं श्रुतिधरं श्रवः कर्णौ यस्य। १रोमहर्षणे सौतौ। "लोमहर्षण उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये" भा० १अ०। २धृतराष्ट्रपुत्रभेदे च। तत्पुत्रनामाख्याने "उग्रश्रवा उग्रसेनः क्षेममूर्त्तिस्तथैव च" भा० आ० ६७अ०। "उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः" भा०आ० ११७अ०।

**उग्रसेन** पु० उग्रा सेना यस्य। १धृतराष्ट्रपुत्रभेदे, उग्रश्रवःशब्दे उदा०। २कुरुवंश्ये नृपभेदे। "कुरोस्तु पुत्राश्चत्वारः सुधन्वा सुधनुस्तथा। परिक्षिच्च महाबाहुः" इत्युपक्रम्य "परिक्षितस्तु दायादो धार्मिको जनमेजयः। जनमेजयस्य दायादास्त्रय एव महारथाः। श्रुतसेनोग्रसेनौ च भीमसेनश्च नामतः" हरि० ३२ अ०। अयञ्च जनमेजयः अभिमन्युपौत्रात् भिन्नएव। अतएव "द्वावश्वौ तव वंशेऽस्मिन् द्वावेव च परिक्षितौ। भीमसेनास्त्रयोराजन्! द्वौ चापि जनमेजयौ" इति जनमेजयं प्रति तस्योक्तम्। यदुवंश्ये ३नृपभेदे च। "अन्धकञ्च महाबाहुं वृष्णिञ्च यदुनन्दनम्" इत्युपक्रम्य "अन्धकात् काश्यदुहिता चतुरोऽलभतात्मजान्। कुकुरं भजमानञ्च शमं कम्बलबर्हिषम्। कुकुरस्य सुतोवृष्णिर्वृष्णेस्तु तनयस्तथा। कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत्। जज्ञे पुनर्वसुस्तस्मादभिजिच्च पुनर्वसोः। तथा वै पुत्रमिथुनं बभूवाभिजितः किल। आहुकश्चाहुकी चैव ख्यातौ ख्यातिमतां वरौ" इत्याहुकोत्पत्तिमभिधाय "आहुकस्य तु काश्यायां द्वौ पुत्रौ संबभूवतुः। देवकश्चोग्रसेनश्च देवगर्भसमावुभौ। नवोग्रसेनस्य सुताः तेषां कंसस्तु पूर्व्वजः" हरि० ३८अ०।

**उग्रसेनज** पु० जायते इति जन–ड ६त०। कंसे तस्योग्रसेनक्षेत्रेऽसुरजातत्वेन तत्पुत्रत्वम्। कंसशब्दे विवृतिः

**उग्रादेव** पु० उग्रेणादीव्यति आ+दिव–अच् ३त०। राजर्षिभेदे "अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे" ऋ० १,३६,१८, "उग्रादेवनामकञ्च राजर्षिम्" भा०।

**उग्रायुध** पु० उग्राणि आयुधान्यस्य। १पौरवे राजभेदे तस्योत्पत्तिभीष्महननकथादि हरिवं० २० अ०। "अजमीढस्य दायादः" इत्युपक्रम्य तद्वंशपरम्परा उक्ता। "तस्य वै सन्नतेः पुत्रः कृतो नाम महाबलः" इति कृतोत्पत्तिरुक्ता। "कार्त्तिरुग्रायुधः सोऽथ वीरः पौरवनन्दनः। बभूव येन विक्रम्य पृषतस्य पितामहः। नीपो नाम महातेजाः पञ्चालाधिपतिर्हतः। उग्रायुधस्य दायादः क्षेम्यो नाम महायशाः। क्षेम्यात् सुवीरो नृपतिः

शरीरात् जनमेजयः । जनमेजयाद्दुग्रश्च हन्येते पौरवाः हताः । सर्वाश्चुग्रायुधस्तात ! दुर्बुद्धिरभवत्तदा । प्रहृष्ट चक्रो बलवान्नीपान्तकरणो महान् । स दर्पपूर्णो हत्वाजौ नीपानन्यांश्च पार्थिवान् । पितर्युपरते मह्यं श्रावयामास किल्बिषम् । महामात्यैः परिवृतं शयानं धरणीतले । उग्रायुधस्य राजेन्द्र ! दूतोऽभ्येत्य वचोऽब्रवीत् । अद्य त्वं जननीं भीष्म ! गन्धकालीं यशस्विनीम् । स्त्रीरत्नं मम भार्य्यार्थे प्रयच्छ कुरुनन्दन ! । एवं राज्यञ्च ते स्फीतं धनानि च न संशयः । प्रदास्यामि यथाकाममहं वै रत्नभाग् भुवि । मम प्रज्वलितं चक्रं निशम्येदं सुदुर्ज्जयम् । यन्नतो विद्रवन्त्याजौ दर्शनादेव भारत ! । राष्ट्रं स्वेच्छसि चेत् स्वस्ति प्राणानां वा कुलस्य वा । शासने मम तिष्ठस्व न हि ते शान्तिरन्यथा । अधःप्रस्तारशयने शयानस्तेन नोदितः । दूतोऽन्ताहितमेतद्वै वाक्यमग्निशिखोपमम् । ततोऽहं तस्य दुर्बुद्धेर्विज्ञाय मतमच्युत ! । आज्ञापयं वै संग्रामे सेनाध्यक्षांश्च सर्वशः । विचित्रवीर्य्यं बालञ्च मदुपाश्रयमेव च । दृष्ट्वा क्रोधपरीतात्मा युद्धायैव मनो दधे । निरुद्धीतस्तदाऽहं तैः सचिवैर्मन्त्रकोविदैः । ऋत्विग्भिर्द्देवकल्पैश्च सुहृद्भिश्चार्थदर्शिभिः । स्निग्धैश्च शास्त्रविद्भिश्च संयुगस्य निवर्त्तने कारणं श्रावितश्चास्मि युक्तरूपं तदाऽनघ ! । “प्रवृत्तचक्रस्य तवक्रमधर्म्मनिरतस्य वै । परदाराभिलाषेण सद्यस्तात निवर्त्तितः । नत्वहं तस्य जाने तच्चिह्नत्तं चक्रमुत्तमम् । हतं स्वकर्म्मणा तत्तु पूर्व्वं सद्भिश्च निन्दितम् । हतशोचः शरी चापी रथो निष्क्रम्य वै पुरात् । हतस्वस्त्ययनो विप्रैः प्रायोधयमहं रिपुम् । ततः संसर्गमागम्य बलेनास्त्रबलेन च । त्र्यहमत्यद्भुतं युद्धं देवासुरमिवाऽभवत् । स मयाऽस्त्रप्रतापेन निर्द्दग्धो रणमूर्द्धनि । पपाताभिमुखः शूरस्त्यक्त्वा प्राणान् अरिन्दम ! । एतस्मिन्नन्तरे तात ! काम्पिल्यात् पृषतोऽभ्यगात् । हते नीपेश्वरे चैव हते चोग्रायुधे नृपे । अहिच्छत्रं स्वकं राज्यं पित्र्यं प्राप महाद्युतिः । द्रुपदस्य पिता राजन्नमैवानुमते तदा” भा० हरिव० २० अ० । २धृतराष्ट्रपुत्रभेदे । तन्नामकीर्त्तने भा० आ० ६७अ० । “उग्रायुधो भीमशरः कनकायुर्दृढायुधः” ।

उग्रेश पु० उग्राणामुत्कटरूपाणां प्रमथानामीशः । प्रमथाधिपे शिवे । “शङ्करं भवमीशानं पिनाकशूलपाणिनम् । त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम्” भा० व० प० १०६ अ० ।

उङ्कुण पु० उमिति शब्दं कुणति हिंसति कुण कर्म्मणि अण्वर्थेक । (उकुण) उत्कुणे । शब्दमाला ।

उच समवाये दि० पर० सक० सेट् । उच्यति इरित् औचत्—औचीत् उवोच ऊचिता उच्यात् ओचिष्यति औचिष्यत् उचितः उग्रः । “उवोचिथ हि मघवन् देष्णम्” ऋ० ७,२७,२ । उचतिः सेवाकर्म्मेति माधवः “अभि वा एष एतानुच्यति” तैत्ति० । “निवो नृभं पौरुषेयीमुवोच” ऋ० ७,४,२ । “तत्र सेदिन्युच्यतु सर्वाश्च यातुधान्यः” अथ० २,१४,२ ।

उचथ न० उच्यते स्तूयतेऽनेन वच—कथन् । स्तोत्रे “यद्दां मानास उचथमवोचन्” ऋ० १,१८२,८ । उचथम् स्तोत्रम्” भा० । “एवात इन्द्रोचथमहेम” ऋ० २,१६,७ । “कुविन्नो अग्निरुचथस्य” ऋ० १,१४३,६ ।

उचथ्य त्रि० उचथं स्तोत्रमर्हति यत् । १स्तुत्ये २राजभेदे पु० “उचथ्ये वपुषि यः स्वराट्” ऋ० ८,४६,२८ । “उचथ्ये स्तुत्ये । यद्वा उचथ्यो वपुश्च राजानौ” भा० ।

उचित त्रि० उच—क्त वच—कितच् वा । १शक्ते २परिचिते, ३युक्ते । “अमात्यैरिव नीवारभागधेयोचितैर्मृगैः” “दिनानि दीनोद्धरणोचितस्य” “प्रविश्य भीमासुरशोणितोचितः” महोक्षपत्रव्यपरोपणोचितम्” रघुः “शार्ङ्गं कथञ्चिदुचितैः पिचुमर्दपत्रैः” । “स्मरस्तुणमुचितं दधच्छिखो” माघः । “वंशोचितत्वादभिमानवत्याः” किरा० ।

उच्च त्रि० उत्क्षिप्य बाहू चीयते, उपर्य्युपरि निविष्टैरवयवैश्चीयतेऽसौ वा उद्+चि—ड । १उन्नते । “पुरस्तादुच्चम्” कात्या० ७,१,२१। “स तदुच्चकुचौ भवन् प्रभाभर-चक्रभ्रमिमातनोति यत्” नैषधम् । अस्मात् उत्कर्षे तरप् तमप् । “किंस्वित् गुरुतरं भूमेः किं स्विदुच्चतरञ्च खात्” भा० व० ३अ० । उच्चतमम्” कात्या० ७,१, १५ । देवयजनवर्णने “परितः समीपदेशवर्त्तिप्रदेशेभ्यो यद् तिशयेनोच्चम्” कर्कः । राशिचक्रमध्ये ग्रहविशेषाणां २राशिभेदे, यथा “मेषो वृषो मृगः कन्या कर्कमीनतुलाधराः । भास्करादेर्भवन्त्युच्चाः राशयः क्रमशस्त्विमे” ज्योति०त० । अन्यदुक्तं तत्रैव “रविर्मेषे वृषे चन्द्रो गुरुः कर्के बुधः स्त्रियाम् । शनिर्युके (तुलायाम्) मृगे (मकरे) भौमः शुक्रो मीने च तुङ्गिनः” । तेषां राशिभागभेदे परमोच्चतामाह तत्रैव “त्रिंशद्भागे दिशो (१०) रामाः (३) अष्टविंशतिभिस्तिथिः १५ । तथेषुः (५) सप्तविंशच्च विंशतिश्चोच्चसंज्ञकाः” । तथा च रवेर्मेषस्य दशमे भागे,

परमोच्चता, चन्द्रस्य वृषे ३यंशे, कुजस्य मकर२८भागे बुधस्य कन्यायाः १५भागे, गुरोः कर्क५भागे, भृगोः मीन २७भागे शनेस्तुला २०भागे तथात्वम् । "स्वोच्चाच्च सप्तमं नीचं प्रागुक्तांशैर्विनिर्दिशेत् । उच्चान्तः स्वल्पसंज्ञः स्यात् नीचान्ते तु सुनीचकः" परिपूर्णबलः स्वच्चे सुनीचे दुर्बलो ग्रहः। स्वच्चसुनीचयोरन्तर्भागहारात् फलं दिशेत्" ज्योति०त० राहुकल्पोस्तु "उच्चं वृषुग्मं घटभं त्रिकोणं कन्यास्तहं शुक्रशनी च मित्रे । सूर्यः शशाङ्को धरणीसुतश्च राहो रिपुर्विंशतिकः परांशः । सिंहस्त्रिकोणं धनुरुच्चसंज्ञं मीनोऽस्तहं शुक्रशनी विपक्षौ। सूर्यारचन्द्राः सुहृदः समानौ जीवेन्दुजौ षट्त्रिंशिनः परांशाः" ज्यो०त०। राशिपरत्वेऽस्य पुंस्त्वं भपरत्वे क्लीवतेति भेदः । भागहारात् ग्रहबलकृतं तदानयनप्रकारः नी०ता० सूर्यादेर्मेषादीन्युच्चान्यभिधाय "तत् सप्तमं नीचमनेन हीनो ग्रहोऽधिकश्चेत् रसभाद्विशोध्यः । चक्रात्, तदंशाङ्कलवो बलं स्यात्" २तथा च ताजके स्वोच्चे २०कला बलं तेन षड्भिः राशिभिर्यदि पूर्णबलं तदा इष्टांशैः किमिति १८०,२०,१, त्रैराशिकेन प्रत्येकांशं १/९ बलमायाति । जातके तु स्वोच्चे ६०कला बलं तेन प्रत्यंशं १/३ बलम्। नी०ताजके "त्रिंशत्स्वभे विंशतिरुच्चभे स्वे" इति उक्तम्। जातके तु श्रीपतिः ६० कला बलमाह यथा "नीचोनोच्चवरोऽधिको यदि भवेत् षड्भात् तदाप्रच्युतश्चक्रात् तत्प्रकलः खखाष्टखकुभि (१०८००) र्भक्तो-बलं तूच्चजम्। पादोनं तु बलं ३/४,त्रिकोणस्तहगे स्वर्द्धं १/२ दलं च त्रयो ३/८ वशंगा ह्यधिमित्रगेऽथ चरणो १/४ मित्रे समर्षोऽष्टमः। १/८ । शत्रुभे भवति षोडशांशक ११६ चाधिशत्रुभवने रदांशकः १/३२ । अत्र त्रिकोणादौ पादोनादिबलकथनात् स्वोच्चे पूर्णबलमिति प्रतीयते तेन ६०कलात्मक बलम् ।

उच्चाभिमानिनि ग्रहाणां गतिभेदकारके भगणस्थे ३जीवभेदे तेनैवाकर्षणात् ग्रहाणामुच्चादिगतिसम्भवः ।

स च द्विविधः शीघ्रोच्चः मन्दोच्चश्च तादृशोच्चतायां कारणञ्च सू०सि० रङ्गनाथाभ्यां दर्शितं यथा "अदृश्यरूपाः कालस्य मूर्तयो भगणाश्रिताः । शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः" सू०सि०१। "शीघ्रोच्च मन्दोच्चपातसञ्ज्ञकाः पूर्वोक्तपदार्था जीवविशेषाः सूर्यादिग्रहाणां गतिकारणभूताः सन्ति । ननु कालेनैव ग्रहचलनं भवतीति कालो गतिहेतुर्नैत इत्यत आह कालस्येति । पूर्वप्रतिपादितकालस्य स्वरूपाणि तथा चैषां कालमूर्त्तित्वेन ग्रहगतिहेतुत्वं नासम्भवीति भावः। ननु कालस्य घट्यादिमूर्त्तित्वादेषां तदात्मकत्वाभावात् कथं कालमूर्तित्वमित्यत आह भगणाश्रिता इति । भगोलस्थक्रान्तिवृत्तानुसृतग्रहगोलस्थक्रान्तिवृत्तप्रदेशाश्रिता इत्यर्थः । तथा च ग्रहराश्यादिभोगानां कालवशेनैवोत्पन्नत्वात् तदात्मकानां कालमूर्तित्वमिति भावः। ननु ते दृश्यन्ते कुतो नेत्यत आह अदृश्यरूपा इति । वायवीयशरीरा अव्यक्तरूपत्वादप्रत्यक्षा इति भावः । एवं च ग्रहाणामुच्चादिसम्भवात् गतिक्रियोत्पन्नेति तात्पर्यम् १। अथानयोरुच्चपातयोर्मध्य उच्चयोर्गतिहेतुत्वं प्रतिपादयति" र०ना०१ "तद्वातरश्मिभिर्बद्धास्तैः सव्येतरपाणिभिः। प्राक् पश्चादपकृष्यन्ते यथासन्नं स्वदिङ्मुखम्" २ सू०सि०। "तेषामुच्चसंज्ञकजीवानां वायुरूपा ये रश्मयो रज्जवस्ताभिर्बद्धा बिम्बात्मकग्रहास्तैरुच्चसंज्ञकजीवैः सव्यवामहस्तरूपबहुत्वेन हस्तबाहुल्यादुपचयवर्जं हस्ताभ्यामित्यर्थः । स्वदिङ्मुखं स्वाभिमुखं यथासन्नं ग्रहबिम्बं भवति तथा प्राक् पश्चात् पूर्वपश्चिमभागाभ्यामित्यर्थः । अपकृष्यन्ते आकृष्यन्ते। अयमभिप्रायः भचक्रगोलस्थक्रान्तिवृत्तानुसृतग्रहकक्षागोलान्तर्गतक्रान्तिवृत्ते कक्षारूपे स्वस्वप्रदेशे ग्रहोच्चपातास्तिष्ठन्ति । तत्र बिम्बव्यासोनकक्षाकारवृत्तं प्रवहवायुतिरिक्तवायुरूपं स्वतोगतिस्थाने कम्पमानं ग्रहबिम्बव्यासे पूर्वापरे प्रोतसूत्रोयहस्तद्वयान्तर्गतमस्ति । अथ ग्रहबिम्बमुच्चस्थानात् स्वगत्या गच्छदपि वामहस्तस्थितसूत्रेणोच्चस्थानात्, पूर्वरूपेण ग्रहस्थानात् पश्चिमरूपेण हस्तसूत्रावयवात्मकेन स्वस्थानात् पश्चात् स्वाभिमुखमपकृष्यते निरन्तरमुच्चदेवतैः स्वगत्या यावत् षड्भान्तरं तयोरन्तरं तस्मार्गेणाकर्षणस्वभावात् पूर्वस्मिन् गच्छद्ग्रहबिम्बं, सव्यहस्तस्थितसूत्रेणोच्चस्थानात् पूर्वस्मात् स्वाभिमुखमाकृष्यते स्वगत्या निरन्तरं यावदन्तराभावस्तयोरिति" र०ना०। "अथात एवैकरूपां पूर्वाधिकारागतां गतिं त्यक्त्वा कुतः मध्यविलक्षणां गतिं प्राप्ता ग्रहा इत्यत आह । "प्रवहाख्यो मरुत् तांस्तु स्वोच्चाभिमुखमीरयेत् । पूर्वापरापकृष्टास्ते गतिं यान्ति पृथग्विधाम्" सू०सि०३। "प्रवहाख्यः प्रवहसंज्ञको मरुद्वायुः पश्चिमाभिमुखं भ्रमंस्तान् तुकारादुच्चानि स्वोच्चाभिमुखं स्वस्य प्रवहभ्रमणेनोच्चं भावप्रधाननिर्देशादुच्चता यस्यां दिशि तत् स्वोच्चं पूर्वदिक् पूर्वभाग एव ग्रहाणां प्रवहभ्रमे-

ध्रोच्चगमनदर्शनात् तत्सम्मुखं पूर्वदिशीति तात्पर्य्यार्थः। ईरयेत् पश्चिमाभिमुखभ्रमणसिद्धप्रागुक्तप्रवहावलम्बनरूपेण चालयतीत्यर्थः। अतः कारणात् ते ग्रहाः पूर्वपश्चिमदिशोराकृष्टाः पृथग्विधां प्रथमावगतैकरूपभिन्नप्रकारावगतां प्रतिक्षणविलक्षणां गतिं गमनक्रियां यान्ति प्राप्नुवन्ति। अवलम्बनाकर्षणाभ्यां प्रतिदिनं ग्रहाणां गतेरन्यादृशत्वं तदनुसारेण ग्रहचारज्ञानं युक्तमिति ग्रहाणां स्पष्टक्रियोत्पन्नेति भावः। यद्वा ननु वायुरज्जुभिः कथं ग्रहाणामाकर्षणं सम्भवति तद्रज्जूनां विरलतया घनीभूतत्वाभावेनाकर्षणायोग्यत्वादित्यत आह। प्रवाहाख्य इति। उच्चदेवताहस्तद्वयस्थितकक्षाकाररज्जुं वायुः प्रवहवायुसम्बन्धात् प्रवहसञ्ज्ञो न पश्चिमाभिमुखभ्रमत्प्रवहात्मकत्वात् ग्रहान् स्वोच्चाभिमुखं स्वोच्चदेवतास्थानसम्मुखमीरयेत् प्रेरयति चालयति। तुकारादुच्चस्थानात् पूर्वस्मिन् ग्रहे वायुः पश्चिमगत्या ग्रहं चालयति पश्चिमस्थे वायुः पूर्वगत्या ग्रहं चालयतीत्यर्थः। तथा च कक्षाकाररज्जुं तदा तदा तथा तथा भ्रमतीति दैवतैराकृष्यत इत्युपचारादुच्यत इति भावः। अत एव ग्रहाणां स्पष्टक्रियोत्पन्नेत्याह। पूर्वापराकृष्टा इति उच्चदैवतैः पूर्वापरदिशयोराकृष्टा ग्रहाः पृथग्विधां मध्यमातिरिक्तप्रकारां गतिं गमनक्रियां यान्ति। अतो न केवलं मध्यक्रियया निर्वाहः" २ र०ना०। अथ प्राक् पश्चादपकृष्यन्त इत्युक्तं विशदयति। "ग्रहात् प्राग्भगणार्द्धस्थः प्राङ्मुखं कर्षति ग्रहम्। उच्चसञ्ज्ञोऽपरार्द्धस्थस्तद्वत् पश्चान्मुखं ग्रहम्" ४ सू०सि०। "ग्रहस्थानात् पूर्वभागस्थराशिषट्कस्थित उच्चसञ्ज्ञो जीवो ग्रहबिम्बं पूर्वदिगभिमुखं स्वाभिमुखं कर्षत्याकर्षति। अपरार्द्धस्थो ग्रहस्थानात् पश्चिमभागस्थराशिषट्कस्थितउच्चसञ्ज्ञो जीव इत्यर्थः। ग्रहबिम्बं पश्चान्मुखं पश्चिमदिगभिमुखं स्वाभिमुखं तद्वदाकर्षतीत्यर्थः" ४ र०ना०। "अथ पूर्वोक्तसिद्धं फलितमाह। "स्वोच्चापकृष्टा भगणैः प्राङ्मुखं यान्ति यद्ग्रहाः। तत् तेषु धनमित्युक्तमृणं पश्चान्मुखेषु तु" सू०सि० ५। "स्वोच्चजीवाकर्षिता ग्रहाः पूर्वाभिमुखं भगणैः राशिभिर्भगोलस्थक्रान्तिवृत्तानुकूलस्वकक्षाप्रगोलान्तर्गतक्रान्तिवृत्ते द्वादशराश्यन्तिके यद्राशिविभागैरित्यर्थः। यद् यत्संख्यामितं गच्छन्ति तत् तत्सङ्ख्यामितं भागादिकं फलरूपं तेषु पूर्वागतग्रहराश्यादिभोगेषु धनं योज्यम्। पश्चान्मुखेषु पश्चिमाकर्षितग्रहपूर्वागतराश्यादिभोगेषु तुकारादृणं तत्सङ्ख्यामितं फलरूपं पश्चिमतो गच्छन्ति तदित्यर्थः। ऋणं हीनमिति एतत् पूर्वैः कथितम्" र०ना०५। सि०शि० "सृष्टा भचक्रं कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः। शश्वद्भ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा ध्रुवत्वे। ततोऽपराशाभिमुखं भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि। तदल्पगत्येन्द्रदिशं नभश्चराश्चरन्ति नीचोच्चतरात्मकक्षु"। "यदेतद्भचक्रं ग्रहैः सह भ्रमद्दृश्यते तद्विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा सृष्ट्यादौ सृष्टा ततः शश्वद्भ्रमेऽनवरतभ्रमणे नियुक्तम्। एतदुक्तं भवति। भान्यश्विन्यादीन्यन्यानि विशिष्टानि ज्योतींषि तेषां समूहश्चक्रं ग्रहाश्च सूर्य्यादयस्तैः सह सृष्टम्। तानि भानि प्राक्संस्थया समन्तान्निवेशितानि। ग्रहास्तु भगणादावश्विनीमुखे निवेशितास्तूपर्य्युपरिसंस्थया। तत्रादौ तावच्चन्द्रः तदुपरि बुधः, ततः शुक्रः, ततो रविः तस्माद्भौमः, ततो गुरुः ततः शनिः। सर्वेषामुपरि दूरे भचक्रम्। एषां कक्षाप्रमाणानि कक्षाध्याये प्रतिपादयिष्यन्ते। अहो यद्यूर्ध्वोर्ध्वस्था ग्रहास्तदोपरि दूरतो भगणस्तत् कथं भगणादिसंस्थैर्ग्रहैरित्युच्यते? सत्यम्। अत्र भूमध्ये सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल निबद्धम्। तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो ग्रहाः सृष्ट्यादौ ब्रह्मणा निवेशिताः। भमण्डलं द्वादशधा विभज्यैवं भूमध्यात् सूत्राणि प्रतिभागं नीत्वा किल बद्धानि तैः सूत्रैः सह ग्रहकक्षायां ये संपातास्ते तासु कक्षासु राश्यन्ताः। तद्वत्प्रकारा राशय इति संक्षिप्तमिहोक्तम्। कक्षाध्याये गोले च किञ्चिद्विस्तार्य्य वक्ष्यामः। एवंविधं भचक्रं सृष्टा ब्रह्मणा गगने निवेशितम्। यत्र निवेशितं तत्र प्रवहो नाम वायुः। स च नित्यं प्रत्यग्गतिः। तेन समाहतं भचक्रं सखेचरं पश्चिमाभिमुखभ्रमे प्रवृत्तम्। यत् तस्य प्रत्यग्भ्रमणं तच्छीघ्रतरम्। यत एकेनाह्ना भमण्डलस्य परिवर्त्तः। एवं तस्मिन् भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि खेचरा इन्द्रदिशं चरन्ति पूर्वाभिमुखं व्रजन्ति नीचोच्चतरात्मकक्षु। अनन्तरकथितेषु स्वस्वमार्गेषु तेषां प्राग्भ्रमणम्। तत् तदल्पगत्या, प्रत्यग्गतेर्बहुलत्वात् प्रागल्पगत्या व्रजन्तो नोपलक्ष्यन्त इति भावः। तथा तस्य भपञ्जरस्य यौ दक्षिणोत्तरावक्षौ तत्र द्वे तारे ते ध्रुवत्वे

नियुक्ते” प्रमि० । तथा श्रीपतिः । “स्वव्यापारात् प्राग्गतिः खेचराणामूर्ध्वाधस्ताद्याम्यसौम्यापराणि । गोलाभिज्ञैः यत्र यातानि यानि तेषामुक्तान्यन्यथैतानि तानि । प्रत्यग्गतिः प्रवहवायुवशेन तेषां नीचोच्चवृत्तजनितोर्ध्वमधश्च या स्यात् । याम्योत्तरा स्वपमवृत्तविमण्डलाभ्यां षोढा गतिर्निगदितैवमिह ग्रहाणाम्” उच्चता च महत्त्वव्याप्यगुणभेदः । सा च उपर्युपरिसन्निवेशितावयवानां महत्त्वे भवति तस्य गुणवचनत्वात् ततः भावेऽर्थे ष्यञ् । औच्च्यम् उच्चतायां न० । त्व । उच्चत्व तलार्थे न० तल् । उच्चता स्त्री । “उच्चस्थे गुरुपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि । निर्दग्धुं निखिलाः पलाशसमिधः मध्यादयोध्यारणेराविर्भूतमभूदपूर्वविभवं यत्किञ्चिदेकं महः” तिथित०पु० । “ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैरसूर्यगैः सूचितभाग्यसम्पदम्” रघुः । “स्वोच्चस्थः स्वगृहेऽपि वा स्वसुहृदां वर्गेऽपि वा” ज्योति०त० ।

**उच्चैस्** अव्य० उच्च+डैस्+टेरकच् । १उच्चतायां २तद्विशिष्टे च । “जनितमुदस्यादुच्चकैरञ्चितोरः” “स्थितोदयाद्रेरभिसायमुच्चकैः” माघः । उत्कर्षार्थे तरबादि उच्चैस्शब्दवत् ।

**उच्चक्षुस्** त्रि० उत्क्षिप्तमुत्पाटितं वा चक्षुर्यस्य प्रा०ब० । १ऊर्ध्वोत्क्षिप्तनेत्रे २उत्पाटितनेत्रे च । ततः च्विः उच्चक्षूकरोति उच्चक्षूभवति उच्चक्षूस्यात् ।

**उच्चटा** स्त्री उद्+चट–अच् । १लशुनभेदे, २ गुञ्जायां ३चूडालायाम्, ४भूम्यामलक्याम् ५नागरमुस्तायाञ्च ।

**उच्चण्ड** त्रि० उद्–चडि–अच् । १अत्युग्रे २अतिकोपने, ३त्वरायुक्ते अविलम्बिते । ४प्रखरस्वर्गे पु० ५तद्वति त्रि० ।

**उच्चतरु** च०कर्म० । १नारिकेले वृक्षे । २उच्चद्रुमात्रे च ।

**उच्चताल** न० उच्चः तालः हस्ततालः यत्र । १पानगोष्ठ्यां मत्ततया तत्र उच्चैर्हस्ततालदानात्तथात्वम् । २उच्चततालयुक्ते च

**उच्चदेव** पु० उच्चः श्रेष्ठो देवः । वासुदेवे त्रिका० । तस्य “सर्वदेवमयो हरिः” इत्युक्तेः सर्वदेवमयत्वात् सत्त्वप्रधानत्वाच्च उत्कृष्टत्वम् अतएव भागवते “श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युरिति” सत्त्वप्रधानत्वात् तस्य श्रेयःसाधनत्वमुक्तम् ।

**उच्चन्द्र** पु० उच्छिदः स्वल्पाऽवशिष्टश्चन्द्रो यत्र प्रादि०ब० शिष्टशब्दलोपः । रात्रिशेषे शब्दरत्ना० ।

**उच्चय** पु० उत्तोल्य चयः चि–अच् । १पुष्पादेरुत्तोलने । “पुष्पोच्चयं नाटयति” शकु० । “करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम्” रघुः । “प्रत्युपमर्देकैकोच्चयेन कपालान्येककपालप्रभृतीनाम्” कात्या० २२,२,२० । उत्तरेषु पुरुषोच्चयेनैकैकशतविधात् १६, ८,२५ । २नारीकट्यंशुकग्रन्थौ “नीविः स्यादुच्चयोऽप्ययम्” मार्त्तण्डः उत्कटचयः । ३उत्कृष्टसमुदाये च अभ्युच्चयः । “वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः” सा०द० । स निर्ययौ कुलिं रामोऽधी मनःशिलोच्चये” रामा० । “एकतः सरितः सर्व्वाः गङ्गाद्याः सलिलोच्चयाः” भा०व० ८८ अ० । “नैकद्रव्योच्चयवतीं समृद्धविपणापणाम्” भा० अनु०२०अ० । शिलोच्चयोऽपि क्षितिपालमुच्चैः” रघुः । कर्म्मणि अच् । ४हस्ताभ्यामुद्धृत्यावचिते नीवारे” हारा० ।

**उच्चल** न० । उद्+चल–अच् । १मनसि हेमच०तस्य “अमंशयं महाबाहो ! मनोदुर्निग्रहं चलम्” गीतोक्तेश्चञ्चलस्वभावत्वात्तथात्वम् । २चलस्वभावमात्रे त्रि० ।

**उच्चलित** त्रि० उद्+चल–क्त । गमनोद्यते प्रस्तुते गन्तुद्यते

**उच्चललाटा** स्त्री उच्चं ललाटं यस्याः । उन्नतललाटरूपदुर्लक्षणायां स्त्रियाम् । स्त्रीणां च दुर्लक्षणम् कन्याशब्दे वक्ष्यते

**उच्चनीच** त्रि० उच्चं च नीचं च मयू० समा० । उन्नतावनतप्रदेशादौ “द्रष्टारमुच्चनीचानां कर्म्मभिर्देहिनां गतिम्” । भा० आश्व०१६ अ० ।

**उच्चा** अव्य० उद्+चि–ड्रा । १उच्चैःशब्दार्थे । “अमी य ऋक्षा निहिता स उच्चा” ऋ० १,२४,१० । “उच्चा उच्चैःप्रदेशे” भा० । “उच्चा दिवि दक्षिणावन्तोअस्थुः” ऋ० १०,१०७,२ । “अक्राकं द्युक्षमधिपत्र रुहिरुच्चा” २,२,१० । “उच्चा उच्चैः” भा० । “अवतमुच्चाचक्रं परिज्मानम्” ८,७२, १० । “उच्चाचक्रमुपरिस्थितचक्रम्” भा० उच्चाबुध्नं श्रोणादुच्चाचक्रमुः पातवे याः” ऋ० १,११६,२२ । २उन्नतायां स्त्रियां स्त्री “उच्चारयत्पक्षिगणास्तटीस्तस्” माघः ।

**उच्चाटन** न० उद्–चट्–णिच्–ल्युट् । १उत्पाटने स्वस्थानात् २विश्लेषणे “उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्” इति शा०ति०उक्ते ३षट्कर्म्मान्तर्गतेऽभिचारभेदे च । उच्चाट्यतेऽनेन करणे ल्युट् । तन्त्रोक्ते ४तत्साधनकर्म्मणि । तन्त्रसारे बगलाया अभिचारप्रयोगे कुण्डलक्षणमुपक्रम्य “वश्ये तु चतुरस्रं चाकर्षणे तु त्रिकोणकम् । तयोरुच्चाटने प्रोक्तं षट्कोणं मारणं स्मृतम् । वश्ये मेषासनं श्रेष्ठं कर्षणं व्याघ्रचर्म्मणि । शान्तौ मृगासनं प्रोक्तं स्तम्भे गोचर्म्मणि स्मृतः । उष्ट्रासनं तयोच्चाटे विद्वेषे हरगा-

सनम् "मारणे महिषीचर्म मोहने च गजासनम्। मधुलाजतिलादीनि वश्यशान्तिकराणि च। आकर्षणे तथा लोध्रं सतिलं मधुरान्वितम्। निम्बपत्रन्तु तैलाक्तं विद्वेषकरणं परम्। हरितालं हरिद्रा च लवणेन च संयुता। स्तम्भयेत्तु देवेशि! प्रज्ञाञ्चैव गतिं मतिम्। वाजिनालस्य सारेण रुधिरेण च होमयेत्। मारणे तु रिपोर्देवि! श्मशानाग्नौ हुनेत् प्रिये। क्षुद्राणां काकपक्षाणां स्नुहीधूमेन संयुतम्। लाजान् त्रिमधुरोपेतान् सर्वरोगप्रशान्तये" तन्त्रसा० उच्चाटनप्रकारा बहवो दर्शितास्तत्र सामान्यप्रकारस्तत्राभिधीयते निबन्धे "शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने ततः। मारणं तानि शंसन्ति षट् कर्माणि मनीषिणः। रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथाक्रमात्। षट्कर्मदेवताः प्रोक्ताः तस्यादौ ताः प्रपूजयेत्। ईशचन्द्रेन्द्रनिर्ऋतिवायुग्नीनां दिशो मताः। सूर्योदयं समारभ्य घटिकादशकं क्रमात्। ऋतवः स्युर्वसन्ताद्या अहोरात्रे दिने दिने। वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः। जलं शान्तिविधौ शस्तं वश्ये वह्निरुदाहृतः। स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्त्तितम्। उच्चाटने स्मृतो वायुर्भौमाग्निर्मारणे मतः। तत्तद्भूतोदये सम्यक् तत्तन्मण्डलसंयुतम्। तत्तत् कर्म प्रकर्त्तव्यं मन्त्रिणा निश्चितात्मना। शीतांशुसलिलक्षौणीव्योमवायुहविर्भुजाम्। वर्णाः स्युर्मन्त्रबीजानि षट्कर्मसु यथाक्रमम्। ग्रथनञ्च विदर्भश्च संपुटो रोधनं तथा। योगः पल्लव इत्येते विन्यासाः षट्सु कर्मसु। मन्त्रान्ते विहितान् कृत्वा साध्यवर्णान् यथाविधि। ग्रथनं तत् विजानीयात् प्रशस्तं शान्तिकर्मणि। मन्त्रार्णद्वयमध्यस्थं साध्यनामाक्षरं लिखेत्। विदर्भ एष विज्ञेयो मन्त्रिभिर्वश्यकर्मणि। आदावन्ते च मन्त्रः स्यान्नाम्नोऽसौ सम्पुटः स्मृतः। एष स्यात् स्तम्भने शस्त इत्युक्तो मन्त्रवेदिभिः। नाम्न आद्यन्तमध्येषु मन्त्रः स्याद्रोधनं स्मृतम्। विद्वेषणविधाने तु प्रशस्तमिदमुत्तमम्। मन्त्रस्यान्ते भवेन्नाम योगः प्रोच्चाटने मतः। अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः"। भूतानामुदयः शा० ति०। "दण्डाकारा गतिर्भूमेः पुटयोरुभयोरधः। तोयस्य, पावकस्योर्द्धं गतिस्तिर्यङ् नभस्वतः। गतिर्व्योम्नो भवेन्मध्ये भूतानामुदयः स्मृतः। धरणेरुदये कुर्यात् स्तम्भनं वश्यमात्मवित्। शान्तिकं पौष्टिकं कर्म तोयस्य, तेजसस्तथा। मारणादीनि मरुतो विषमोच्चाटनादिकम्। यत् विद्वेषणं शस्तमुदये च विहायसः"। भूतमण्डलादिकं तत्रैवाऽवसेयम्। षट्कर्मकरणनिमित्तमाह रुद्रयामले "उपस्थिते महारौद्रे राष्ट्रपीडासु सम्भवे। भूमिवित्तमहोत्पाते भूतभीतिविपत्सु च। नातःपरतरं कर्म कलौ शान्तिकरं प्रिये!। मारणं मोहनं स्तम्भं विद्वेषणमथापि वा। वशीकरकर्माणि तथोच्चाटनकर्म च। सर्वत्र साधयेन्मन्त्री ततो नान्यत् शुभावहम्। विशेषतः शत्रुसंघरोगोपद्रवनाशनम्। शत्रूणां कर्मनाशे च तदा शत्रुपराजये। आत्मनो विजये चैव नातःपरतरा क्रिया"। घञ्। उच्चाटोऽप्यत्र पु०। "उद्वासन तथोच्चाटे" तन्त्रसारः।

**उच्चार** पु० उद्+चर–णिच्-घञ्। १उच्चारणे। "तस्यकार्योऽनुच्चारः" सु० बो० "मन्त्रोच्चारपरायणः" पु०। उच्चार्य्यते अपानवायुना उत्सृज्यते कर्मणि घञ्। २पुरीषे। विण्मूत्रोत्सर्गविधानप्रकारः आ० त० नानावचनैर्दर्शितो यथा विष्णुधर्मोत्तरे "निद्रां जह्यादुत्थितो राम! नित्यमेवारुणोदये। वेगोत्सर्गं ततः कृत्वा दन्तधावनपूर्वकम्। अरुणोदयकालमाह स्कन्दपुराणम् "उदयात् प्राक् चतस्रस्तु नाडिका अरुणोदयः। तत्र स्नानं प्रशस्तं स्यात्तद्धि पुण्यतमं स्मृतम्"। नाडिका दण्डः। "नाडीषष्ट्या दिवानिशम्" इत्युक्तेः। विष्णुधर्मोत्तरे "वेगरोधं न कर्त्तव्यमन्यत्र क्रोधवेगतः"। "वेगरोधं न कर्त्तव्यमिति तु कां दिशं गन्तव्यमितिवत् भावाख्यातेतरत्वात् साधुत्वम्। आयुर्वेदीयेऽपि "न वेगिनोऽन्यसिद्धिः स्यात् नाजित्वा साध्यमामयम्"। अङ्गिराः "उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम्। अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा। वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः। कुर्य्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः" विष्णुपुराणम् "ततः कल्यं समुत्थाय कुर्य्यान्मैत्रं नरेश्वर!। नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः" तिष्ठन्नातिचिरं तस्मिन्नैव किञ्चिदुदीरयेत्"। कल्यमुषःकालम्, मैत्रं मित्रदेवताकपायुसम्बन्धात् पुरीषोत्सर्गम्, नैर्ऋत्यामुत्थानदेशमारभ्य उत्थायेत्यनेनोपस्थितेः। इषुविक्षेपमतीत्य इषुविक्षेपयोग्यदेशाद्बहिः। तद्देशपरिमाणमाह पितामहः "मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम्। स्थानान्तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः"। आपस्तम्बः "मूत्रपुरीषे कुर्य्यात् दक्षिणां दिशं दक्षिणापराम्वेति"। दक्षिणापरा नैर्ऋती। मनुः "मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः। दक्षिणाभिमुखो

रात्रौ सन्ध्ययोश्च यथा दिवा"। उच्चारः पुरीषम्। यत्तु यमवचनं "प्रत्यङ्मुखश्च पूर्व्वाह्णे अपराह्णे च प्राङ्मुखः। उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः" इति तत् उदङ्मुखेन सहैकार्थविकल्पार्थं सूर्य्याभिमुखनिरासार्थञ्च न तु नियमार्थं देवलवचनविरोधात्। तथा च "सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः। विण्मूत्रे आचरेन्नित्यं सन्ध्यायां परिवर्ज्जयेत्" इति। प्रातःसायाह्नशब्दौ दिवारात्रिपरौ पूर्व्वोक्तमनुवचनैकवाक्यत्वात्। सन्ध्यायां परिवर्ज्जयेदिति तु पीड़ितेतरपरम्। यमः "कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम्। विण्मूत्रे च गृही कुर्य्यात् यद्वा कर्णे समाहितम्"। पृष्ठतः पृष्ठे कण्ठलम्बितं निवीतम्। अत्र लम्बितं निवीतम्। "संवीतं मानुषे कृत्ये" इति तैत्तिरीयश्रुतेः। मानुषे सनकादिकृत्ये। पृष्ठलम्बितं निवीतम्" इति बौधायनवचनाच्च। तथा च हारवत् कृत्वा पृष्ठलम्बितम् स्कन्धे इत्यर्थः। अत्र व्यवस्थामाह शांख्यायनः। "यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठितः" इति कर्णे दक्षिणकर्णे। "पवित्रं दक्षिणकर्णे कृत्वा विण्मूत्रमाचरेत्" इति स्मृतौ तथा दर्शनात्। अवगुण्ठितः कृतशिरोऽवगुण्ठनः। मनुः "छाया यामन्धकारे वा रात्रावहनि वा द्विजः। यथासुखमुखः कुर्य्यात् प्राणबाधाभयेषु च" महाभारते। "प्रत्यादित्यं प्रतिजलं प्रति गाञ्च प्रतिद्विजम्। मेहन्ति ये च पथिषु ते भवन्ति गतायुषः"। प्रतिः सांमुख्ये। मनुः "न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे। न फालकृष्टे न जले न चित्यां नच पर्व्वते। न जीर्णदेवायतने न वल्मीके कदाचन। न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि संस्थितः। न नदीतीरमासाद्य न च पर्व्वतमस्तके। वाय्वग्निविप्रानादित्यमपःपश्यंस्तथैव च। न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्ज्जनम्"। ससत्त्वेषु प्राणिसत्त्वेषु संस्थितः उत्थितः पर्व्वतमस्तकनिषेधोऽधिकदोषाय। वशिष्ठः। "आहारनिर्हारविहारयोगाः सुसम्वृता धर्म्मविदा तु कार्य्याः। वाग्बुद्धिकार्य्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्य्ये"। निर्हारो मूत्रपुरीषोत्सर्गः विहारः स्त्रीसम्भोगः। योगः समाधिः। वाग्गुप्तिरशुभालापत्यागः। बुद्धिगुप्तिरनिष्टचिन्तात्यागः। हारीतः "आहारन्तु रहः कुर्य्यात् निर्हारञ्चैव सर्व्वदा। गुप्ताभ्यां लक्ष्मीमेतः स्यात् प्रकाशे हीयते तथा"। विष्णुपुराणम् "सोमाग्न्यर्काम्बुवायूनां पूज्यानाञ्च न सम्मुखे। कुर्य्यात् ष्ठीवनविण्मूत्रसर्गङ्गुपण्डितः"। आपस्तम्बः "न च सोपानत्को मूत्रपुरीषे कुर्य्यादिति"। बृहन्मनुः "करन्तश्चोतपात्रेण कृत्वा मूत्रपुरीषके। मूत्रतुल्यन्तु पानीयं पीत्वा चान्द्रायणञ्चरेत्"। भरद्वाजः "अथ विहृत्य विण्मूत्रं लोष्टकाष्ठतृणादिना। उद्धृतवासा उत्तिष्ठेद्दृढं विधृतमेहनः" उद्धृतवासा कटिदेशादुत्क्षिप्तवस्त्रः" आ०त० "मूत्रोच्चारौ च कारयेत्"। "यस्योच्चारं विना मूत्रं सम्यग् वायुश्च गच्छति" सुश्रु०। "दाने तपसि शौर्य्ये च यस्य न प्रथितं मनः। विद्यायामर्थलाभे च मातुरुच्चार एव सः" हितो०। उत्कृष्टा चारोगतिः। २ ग्रहादीनां राशिनक्षत्रान्तरसञ्चारे। "कक्षाहतं गतेनाद्यैर्यातञ्च चित्रशिखण्डिजः। "उच्चारे संहिताकारैः" सि०रा०त०।

उच्चारण न० उद्घातेन कण्ठाद्यभिघातेन चार्य्यते निष्पाद्यते उद्+चर-णिच्-ल्युट्। कण्ठताल्वाद्यभिघातेन शब्दजनके व्यापारे तत्प्रकारस्तु "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पञ्चधा मतः" इति शिक्षोक्तदिशावसेयः। वर्णोत्पत्तिस्थानानि चाष्टौ। "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" शिक्षोक्तानि। विवृतिर्वर्णशब्दे दृश्या। यथा च कण्ठताल्वाद्यभिघातेनैवोच्चारणसम्भवस्तथा" ईश्वरशब्दे अनुमा०चिन्ता०१०२६ पृष्ठे दर्शितम्। "उच्चारणज्ञोऽथ गिरां दधानम्" माघः। "वेदोच्चारणकार्य्यार्थमयुक्तं त्वया कृतम्" भा०व०२१४ अ० "सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं वेदस्यापौरुषेयत्वम्" मीमांसकाः वेदान्तिनश्च प्रतिपेदिरे।

उच्चारित त्रि० उच्चार-तारका० इतच्। १कृतविष्ठोत्सर्गे। उद्+चर-णिच्-कर्म्मणि क्त। २कृतोच्चारणे तादृशे वर्णादौ "तएव शक्तिवैकल्यप्रमादालसतादिभिः। अन्यथोच्चारिताःशब्दा अपशब्दा इतीरिताः" भर्त्तृह०। उद्+अन्तर्भूतण्यर्थे चर-क्त। उच्चरितोऽप्यत्रार्थे "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति" तन्नाय्यमन्ये न्यायः।

उच्चार्य्य अव्य० उद्+चर-णिच्+ल्यप्। १कण्ठाद्यभिघातेन उत्पाद्येत्यर्थे। कर्म्मणि यत्। २उच्चारणीये वर्णादौ त्रि०।

उच्चार्य्यमाण त्रि० उद्+चर-णिच्-कर्म्मणि शानच्। यस्योच्चारणं क्रियते तस्मिन् वर्णादौ "कश्चित् कार्य्यायोच्चार्य्यमाणो वर्ण इत्यर्थः, मुग्धबो०।

उच्चावच त्रि० उदक् उत्कृष्टञ्च अवाक् अपकृष्टञ्च मयू०नि०। उत्कृष्टापकृष्टात्मके नानाभेदे "उच्चावचैरपि गतैष सहस्र-संख्याम्" माघः "भवत्युतेव महाब्राह्मण उतेशोच्चा-वचं निगच्छति" शत०ब्रा० १४,५,१,१९। "अथ खलू-च्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्" आश्व०गृ० १,७,१। "उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः"। "उच्चवचानि भूतानि सततं चेष्टयन्ति याः" मनुः

उच्चिङ्गट पु० १हृष्यगङ्गमत्स्ये, २कोपनपुरुषे च मेदि०।

उच्चिटङ्ग पु० विषकीटभेदे (उच्चिङ्गड़े) सुश्रुते "जङ्गमस्य विषस्योक्तान्यधिष्ठानानि षोड़श" इत्युपक्रम्य "वृश्चिकविश्व-म्भरराजीवमत्स्योच्चिटङ्गसमुद्रवृश्चिकालविषाः" इत्युक्त्वा तस्य शूकतुण्डविषत्वमप्युक्तम् "सुच्चूतुण्डोच्चिटङ्गवर-टीशतपदीशूकवलभिकाशृङ्गीभ्रमराः शूकतुण्डविषाः" तेषा-मुत्पत्तिस्थानमपि तत्रोक्तम् "सर्पाणां शुक्रविण्मूत्रशवपूत्य-ण्डसम्भवाः। वाय्वग्न्यम्बुप्रकृतयः कीटास्तु त्रिविधाः स्मृताः" इत्युपक्रम्य "उच्चिटङ्गोऽभिमामा तु चिच्चिटि-ङ्गीमयूरिका" इत्यादीन् अष्टादश कीटानभिधाय "अष्टा-दशेति वायव्याः कीटाः पवनकोपनाः" सुश्रु०। [वस्त्रखण्डे।

उच्चूड़(ल) पु० उन्नता चूड़ा यस्य डस्य वा लत्वम्। ध्वजोर्द्धस्थे

उच्चैःशिरस् त्रि० उच्चैरुन्नतं शिरोऽस्य। उन्नतमस्तके मह-त्तरे "ममत्वमुच्चैःशिरसा सतीव" कुमा०। षा रोः सत्वम्।

उच्चैःश्रवस् त्रि० उच्चैरुन्नतं श्रवोऽस्य। १उन्नतकर्णे समुद्र-जाते श्वेतवर्णे इन्द्रस्य वाहनभूते सप्तमुखे २अश्वभेदे पु०। अस्य चोत्पत्तिकथा यथा "तत उच्चैःश्रवा नाम हयोऽ-भूच्चन्द्रपाण्डरः" भाग० ७स्क० ७अ०। "गृहीतोऽश्वः सप्तमुखस्तथा स्य बलात् किलेति" भागवतोक्तेरस्य सप्तमुख-त्वम्। "धन्वन्तरिस्तथा मद्यं श्रीर्देवी कौस्तुभो मणिः। शशाङ्को विमलश्चापि समुत्तस्थुः समन्ततः। उच्चैःश्रवा हयोरत्नं पीयूषं तदनन्तरमिति" हरिवं० २२० अ०। "उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च" कुमा०। "उच्चैःश्रवाजलनिधेरिव जातमात्रः" "न चित्रमुच्चैःश्रवसः पदक्रमम्" माघः। "उच्चैःश्रवसमश्वानाम्" गीतोक्तेः भगवद्विभूतित्वमस्य। "उच्चैःश्रवःसुतानश्वान् बलादश्वान-वाहिनः" हरि०१४५अ०। "दिग्गजसुताग्रामान् हयां-श्चोच्चैःश्रवोऽन्वयान्" हरि०१५६अ०। अस्य वा विसर्गस्य शत्वे उच्चैश्श्रवा अप्यत्र। अस्य पृषो० अदन्तत्वमपि। "उच्चैःश्रवसंज्ञं तत् प्रणिपत्य समर्पितम्" देवीमा०। उच्चैरुन्नतं शब्दं शृणोति श्रु-असुन्। ३बधिरे त्रि०।

उच्चैर्घुष्ट न० घुष-भावे क्त उच्चैर्घुष्टम्। (ढेंडरा) सर्व-जनश्राव्यघोषणायाम्।

उच्चैर्घोष पु० घुष-घञ् उच्चैर्घोषः। १सर्वजनश्राव्यशब्दे "यदु-च्चैर्घोषस्तनयित्नुरिव ददाति" शत०ब्रा०। ७अ०। २उच्चैःश-ब्दान्विते क्रन्दनादौ ईव०। ३रुद्रमूर्त्तिभेदे। "उच्चैर्घोषाय क्रन्दयते" यजु०१६,१९।

उच्चैस् अव्य० उद्+चि-डैसि। १तुङ्गत्वे, २उन्नते ३महति ४ऊ-र्द्ध्वदेशजाते "उच्चैरुदात्तः" पा०। "उच्चैरुच्चैःश्रवास्तेन" कुमा० "शिलोच्चयोऽपि क्षितिपालमुच्चैः" रघुः "विचकर्ष च संहितेषुमुच्चैः" किरा०। "अकृत्वा हेलया पादमुच्चैर्मूर्द्ध-सु विद्विषाम्" माघः। "उच्चैरधःपातिपयोमुचोऽपि" "जनोऽयमुच्चैःपदलङ्घनोत्सुकः" "उच्चैर्हि रचितं मुकुटम्" कुमा०। "या यः काले वहति सलिलोद्गारमुच्चैर्विमाना" मेघ०। "उच्चैरस्यति मन्दतामरसताम्" चन्द्रालो०। अस्य शब्दस्य गुणवाचितया प्रकर्षे तरप् तमप् च ततः अद्रव्य-प्रकर्षे आमु। उच्चैस्तराम् उच्चैस्तमाम्। औन्न-त्यातिशये "उच्चैस्तरां वक्ष्यति शैलराजः" कुमा०। द्रव्यप्रकर्षे तु नाम्। उच्चैस्तर उच्चैस्तम अत्युन्नतदेशादौ त्रि०। अभिव्यक्तोच्चैः कथने उच्चैस्+कृ-ण्मुल् क्त्वा ल्यप् च। उच्चैःकारम् उच्चैःकृत्वा उच्चैःकृत्य "अभि, यमाचष्टे" सि०कौ०।

उच्छन्न त्रि० उद्-छद क्त। लुप्तप्राये आच्छन्ने। "उच्छन्न प्रच्छन्नपक्षे वेदस्याचारमूलत्वेत्यादि विधिवादे मथुरा० यथा च वेदस्य छिन्नमूलमन्यतया उच्छन्नत्वेऽपि अवि-गीतशिष्टाचारादेव तदनुमानं तथा समर्थनाय शब्दचि० शब्दाप्रामाण्ये वादिपूर्वपक्षं निरस्य व्यवस्थापितं यथा। "स्यादेतत् स्मृत्याचारयोर्वेदमूलत्वे तत्रोच्छेदादिविवादस्य-देव त्वसिद्धं तथा हि वेदसमानार्था महाजनपरिगृहीता च स्मृतिः, स्वार्थोपस्थित्यनन्तरं स्मृत्यर्थानुभावकवेदानुमानेऽपि प्रतीतिप्राथम्यात् साध्यप्रसिद्ध्यर्थमुपजीव्यत्वाच्च स्मृतेरेवा-पूर्वादिवाक्यार्थज्ञानमस्तु किं वेदेन, तदर्थस्य स्मृतित एव सिद्धेः अपूर्वस्य शब्दैकवेद्यत्वेन स्मृतितोऽज्ञातस्य ज्ञापकत्वेनानुवादकतापत्तेश्च सा च स्मृत्यन्तरादिकृता दिरेव स्मृतिधारावश्यकी, अन्यथा मनुस्मृतेः पूर्वं तथापि वेदानुमानं न स्यात्। सर्वा च स्मृतिः स्मृतिजन्यया-थार्थ्यप्रमाणान्यत्वेन महाजनपरिगृहीतत्वेन च प्रमाण-मिति नाश्यपरम्परा। प्रत्यक्षा च स्मृतिः स्मृतिपूर्व-कानुमिता अनुमितवेदवत् तस्या अनुभावकत्वात्।

वेदार्थस्मृतिताप्रसिद्धिस्तु प्रसिद्धवेदमूलस्मृतिसाहचर्य्यभ्रमात् प्रत्यक्षवेदाबोधितलोभन्यायमूलस्मृताविव तान्त्रिकाणां लिङ्गाभासजन्यवेदमूलकत्वभ्रमात् सम्भवन्मूलान्तराणां वेदमूलत्वं कल्पयति । अथ स्मृतिनिष्ठतद्वेदमूलकत्वप्रसिद्धिरपि महाजनपरिगृहीता यत्र सा वेदमूलत्वनिबन्धना अविगीतमहाजनपरिगृहीतवेदमूलत्वप्रसिद्धित्वात् प्रत्यक्षवेदमूलस्मृतौ तत्प्रसिद्धिवत् । एवं वेदार्थस्मृतिताप्रसिद्धिरपि अन्यथा महाजनपरिग्रहानादरे वेदस्मृत्योरपि प्रामाण्यं न स्यादिति चेत् न यूपहस्त्यादिस्मृतेस्तत्प्रसिद्धौ व्यभिचारात् क्षुद्रलोभादिन एव तत्सम्भवात् विचारकाणां विप्रतिपत्तेश्च । तत्र तत्प्रसिद्धौ विगानं महाजनानामिति चेत् न तत्रापि मूलान्तरसम्भवाद्विप्रतिपत्तेश्च विगानमेव तेषाम्, अतएव स्मृतीनां न्यायमूलत्वे सम्भवति वेदमूलत्वप्रसिद्धावपि न वेदमूलत्वं, न च वेदमूलेयमिति ज्ञात्वा स्मृतेर्महाजनपरिग्रहात्तन्मूलत्वं वेदमूलेयमिति प्रथमं ग्रहीतुमशक्यत्वात् शक्यत्वे वा किमनुमानेन, न च वेदमूलत्वेन प्रकारेण महाजनपरिग्रहः, असिद्धेः, मन्वादिस्मृतित्वेन पूर्वं महाजनपरिग्रहेणोत्तरेषां परिग्रहादनुष्ठानाद्युपपत्तेः । एवं होलकाचारेऽपि वेदलिङ्गेनैव कर्त्तव्यताज्ञानोपपत्तेः किं वेदेन, तदर्थस्य लिङ्गादेवोपपत्तेः, अविगीताऽलौकिकविषयकशिष्टाचारस्य वेदमूलत्वदर्शनात् वेदानुमाने चाविगीतशिष्टाचारत्वेन भोजनाद्याचारोऽपि वेदमूलः स्यात् वेदं विनापि तत्कर्त्तव्यताधीसम्भवाच्च तदर्थवेद इति इहापि तुल्यम् । आचारकर्त्तव्यतानुमानयोरनादित्वेनाचाराणां कर्त्तव्यतानुमानमूलकत्वाद्वान्धपरम्परा । न च पूर्व्वानुमानसापेक्षसत्त्वानुमानमिति स्वतन्त्रप्रमाणमूलकत्वाभावात् साध्यव्याप्तिपक्षधर्मतासत्त्वेन पूर्वेषां स्वतन्त्रप्रमाणत्वात् । नापीतरप्रामाण्याधीनं सर्वस्य प्रामाण्यमिति न निरपेक्षत्वं, प्रत्यक्षादेरपि तथात्वापत्तेः । एतेन विवादपदमाचारो निरपेक्षप्रमाणमूलकः अविगीतमहाजनाचारत्वात् प्रत्यक्षवेदमूलाचारवदिति निरस्तम् अनुमानस्य निरपेक्षप्रमाणत्वात् प्रमाणमूलत्वेनैवबुद्धेरुपपत्तेः निरपेक्षत्वस्य गौरवेणाप्रयोजकत्वाच्च । न च सापेक्षत्वेन न प्रमाणता व्याप्त्यादिसत्त्वात् अन्यथा प्रमाणनैरपेक्ष्यस्य वैयर्थ्यात् । नत्वाचारे वेदमूलकत्वप्रसिद्धेस्तदनुमानम्, अर्वाक्तेः व्यभिचारादन्यथोपपत्तेश्च । न च वेदमूलत्वेन महाजनपरिग्रहात्तथा । न हि वेदमूलोऽयमिति ज्ञात्वा महाजनानां तत्परिग्रहः वेदमूलत्वस्य प्रथमं ज्ञातुमशक्यत्वात् शक्यत्वे वा किमनुमानेन । न च वेदमूलत्वेन महाजनपरिगृहीतोऽयमाचारः इति ज्ञात्वा तत्र महाजनपरिग्रहः, गौरवात् असिद्धेश्च पूर्व्वमहाजनपरिग्रहादेवोत्तरेषां परिग्रहानुष्ठानोपपत्तेः । तादृशस्मृत्याचारयोर्वेदमूलत्वेन व्याप्तेर्वेदमूलत्वसिद्धिरिति चेत् न असम्भवन्मूलान्तरस्योपाधित्वात् अन्यथा लोभन्यायमूलस्मृतेस्तत्प्रसङ्गः । अस्तु स्मृत्याचारयोरनादित्वं न चाचारात् स्मृतिः स्मृत्या चाचारः इत्यन्धपरम्परा मूलीभूतप्रमाणाभावादिति वाच्यं स्मृत्याचारयोरुभयोरपि प्रमाणत्वात् । अन्यथा न ततो वेदानुमानमिति ।

उच्यते प्रलये पूर्व्वस्मृत्याचारयोरुच्छेदात् सर्गादौ नित्यसर्व्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः, अन्यथा मूलाभावेनान्धपरम्पराप्रसङ्गः । न च मन्वादीनामतीन्द्रियार्थदर्शित्वं तदुपायश्रवणादेस्तदानीमसत्त्वात् पूर्व्वपूर्व्वसर्गसिद्धसर्व्वज्ञा एव त इति चेत् न प्रमाणाभावात् । स्मृत्याचारयोः प्रमाणमूलकत्वमेव तत्कल्पकमिति चेत् न प्रतिसर्गं तेषामन्यान्यकल्पने गौरवमित्येकस्यैव नित्यसर्व्वज्ञस्य कल्पनात् । न च स्मृतय एव तत्प्रणीताः तासां मन्वादिकर्तृकत्वेन स्मृतौ बोधात्, स्मृतावेव स्मृतीनां वेदमूलत्वस्मरणाच्च । एवञ्च स्मृत्याचारयोर्महाजनपरिग्रहाद्वेदमूलत्वसाधकमपि भगवति प्रमाणम् । अतएव "प्रतिमन्वन्तरं चैषा श्रुतिरन्याऽभिधीयत" इत्यागमोऽपि । एवञ्च पूर्व्वप्रत्यक्षवेदमूलावेव स्मृताचारौ अग्रे च कालक्रमेणायुरारोग्यबलश्रद्धाग्रहणधारणादिप्रकर्षेरहरहरपचीयमानत्वात् तदध्ययनविच्छेदात् शाखोच्छेदात् स्मृत्याचाराभ्यामेव कर्त्तव्यतामधिगत्य प्रवृत्तिः । नन्वेवं स्मृतिरस्तु वेदमूला मङ्गलाद्याचारस्तु ईश्वरादेव भविष्यति घटलिप्यादिसम्प्रदायवदिति चेत् न बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वेन "मङ्गलमाचरेदित्यादिवाक्यस्यैव लाघवेन कल्पनात्" ।

"निवृत्ताचारशौचेषु परपाकोपजीविषु उच्छन्नवृत्तिभिक्षुषु भिक्षान्नोपभोजिषु" सुश्रुतः ।

उच्छल त्रि० उद्–शल अच् । आधारातिक्रमेण सर्व्वतः प्लुते । शतृ । उच्छलत् तत्रैव "छटोच्छलच्छाङ्कुरकाकुलेन" माघः "स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा" काव्यप्र० । ल्युट् । उच्छलन परितः प्लवने न० ।

उच्छादन न० उद्–छद–णिच्–ल्युट् । आच्छादाने

२गन्धद्रव्यद्वारा देहमार्जने च अमरटी० "स्नापनोच्छादनेन" रामा० ।

**उच्छास्त्र** त्रि० उद्गतं शास्त्रात् प्रा०स० । १अतिक्रान्तशास्त्रे २शास्त्रविरुद्धेऽधर्मकृत्ये च । उत्क्रान्तं शास्त्रं यत्र । शास्त्रातिक्रमयुक्ते उच्छास्त्रं यथा तथा वर्त्तते उच्छास्त्रवर्त्तिन् शास्त्रातिक्रमेण यथेष्टचारिणि स्त्रियां ङीप् । "न राज्ञः प्रतिगृह्णीयात् क्रूरस्योच्छास्त्रवर्त्तिनः । या० स्मृ० । "इमस्योच्छास्त्रवर्त्तिनः" भाग० ७स्कन्द०अ० ।

**उच्छासन** त्रि० उत्क्रान्तः शासनम् । शासनातिक्रान्तरि ।

**उच्छिख** त्रि० उद्गता शिखा यस्य प्रा०ब० । १उन्नताग्रे २उदर्चिषि वह्नौ पु० "माङ्गल्यौर्णावलयिनि पुरः पावकस्योच्छिखस्य" रघुः । २तक्षकनागकुलजाते नागभेदे पु० "तक्षकस्य कुलेजातान् प्रवक्ष्यामि निबोध तान्" इत्युपक्रम्य "उच्छिखः शरभोभङ्गोबिल्वतेजा विरोहणः" भा० आ०५७ अ० ।

**उच्छिङ्घन** न० उद्+शिघि आघ्राणे भावे ल्युट् । नासिकावायुनाऽन्तःस्थितकफादिनिःसारणे । "उच्छिङ्घनेन हर्त्तव्योदृष्टिमण्डलजः कफः" । "नेत्रे विलम्बिनि विधिर्विहितः पुरस्तादुच्छिङ्घनं शिरसि वाष्पवसेचनञ्च" सुश्रु० ।

**उच्छित्ति** स्त्री उद्+छिद्-भावे क्तिन् । समूलोत्पाटने अत्यन्तसंमर्दने । "यदा तदा तदुच्छित्तिः पुरुषार्थः" सा०सूत्रम् । "सङ्करः सर्व्ववर्णानां प्रजाशोधर्म्मकर्मणाम्" । प्रजानामपि चोच्छित्तिर्व्यसनहेतुजा" सुश्रु० "अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा" वृ० उ०२ १ ।

**उच्छिन्न** त्रि० उद्+क्त । १समूलं नाशिते २विदलिते ।

**उच्छिरस्** त्रि० उन्नतं शिरोऽस्य । १उन्नते २माहात्म्यादिना उन्नतमस्तके महिमान्विते "शैलात्मजापि पितुरुच्छिरसोऽभिलाषम्" कुमा० शौर्य्यौदार्य्यादिना हि लोक उन्नतशिरा भवति अपकृष्टकर्मणा तु अनवरतशिराः प्रसिद्धः

**उच्छिलीन्ध्र** त्रि०उत्थितं शिलीन्ध्रम् १कन्दाके २विकसितशिलीन्ध्रयुक्ते त्रि० । "उच्छिलीन्ध्रामवन्ध्यामिति" मेघदू० ।

**उच्छिष्ट** त्रि० उत्+शिष-क्त । १भुक्तावशिष्टे, २त्यक्ते च । अमा०अच् । ३अक्षतयोर्वे भक्ताद्ये । तस्योच्छिष्टस्याभक्ष्यता नापवादमभक्ष्यशब्दे २७६ पृष्ठे उक्ता तत्रायं भेदः वर्णविशेषस्योच्छिष्टभोजने पापतारतम्यात् प्रायश्चित्ततारतम्यं प्रायश्चित्तविवेकादावुक्तं यथा "सर्वमुच्छिष्टं यो भुङ्क्ते यो-भुङ्क्ते त्यक्तभाजने । एवं वैवस्वतः प्राह भुक्त्वा चान्द्रायणञ्चरेत्" चतुर्थ्यविषयनम् । "तच्च ज्ञानाभ्यासविषयमिति" प्रा०वि० । "ब्राह्मणोच्छिष्टभोजने महाव्याहृतिभिरभिमन्त्र्यापः पिबेत्, क्षत्रियोच्छिष्टभोजने ब्राह्मीरसविपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्, वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो ब्रह्मसुवर्चलां पिबेत्, शूद्रोच्छिष्टभोजने सुराभाण्डोदकपाने च षड्रात्रमभोजनं चान्द्रायणं वा अभिमन्त्रितं जलं पीत्वोपवसेत्" शङ्खलि० "व्रतरूपत्वात् एतद्ब्राह्मणस्य ब्राह्मणाद्युच्छिष्टाशनेऽज्ञानतः सकृत् एवं क्षत्रियादेः समाधमवर्णोच्छिष्टाशने समाधमवर्णक्रमेतदेव यथायथमूह्यम् शूद्रोच्छिष्टाशने तु ब्राह्मणस्य ज्ञानतः सकृद्विषयम् षड्रात्राभोजनम्" प्रा०वि० । यथा यमः । "अज्ञानाद्यस्तु भुञ्जीत शूद्रोच्छिष्टं द्विजोत्तमः । त्रिरात्रोपोषितोभूत्वा पञ्चगव्येन शुद्ध्यति" । "एतद्द्विजोत्तमपदग्रहणाद्ब्राह्मणविषयम् । क्षत्रियादिपरत्वे वक्ष्यमाणविष्णुवचनविरोधात् । एतदपि सकृद्विषयं कृत्वा च त्रिरात्रेऽघमर्षणमपि जपनीयम्" प्रा०वि० । यथा सुमन्तुः । "शूद्रोच्छिष्टभोजने त्रिरात्रमघमर्षणञ्च जपेत्" "चान्द्रायणन्तु भवत्येव ज्ञानाभ्यासे क्षत्रियादीनाञ्च त्रिपादपादशाद्धानिरूह्या । क्षत्रियस्य च ब्राह्मणोच्छिष्टाशने ब्राह्मणोक्तप्रायश्चित्तार्द्धं, वैश्यस्य ततोऽप्यर्द्धम् । एवं वैश्यशूद्रयोरपि स्वापेक्षया पूर्व्ववर्णत्वेनोह्यम् उशनोवचने वर्णक्रमेण ह्रसितप्रायश्चित्तदर्शनात्" प्रा०वि० । यथा "अन्नानां भुक्तशेषस्तु भक्षितोयैर्द्वि जातिभिः । चान्द्रं कृच्छ्रं तदर्द्धञ्च क्रमात्तेषां विशोधनम्" । तथा विष्णुरपि न्यायप्राप्तमेवार्थमन्वाह । "आमश्राद्धाशने त्रिरात्रं, वर्त्तेत ब्राह्मणः शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रं वैश्योच्छिष्टाशने पञ्चरात्रम्, राजन्योच्छिष्टाशने त्रिरात्रम्, राजन्यः शूद्रोच्छिष्टाशने पञ्चरात्रम् वैश्योच्छिष्टाशने । त्रिरात्रं वैश्यः शूद्रोच्छिष्टाशने च" "अत्र वमनं कृत्वा पयसा वर्त्तेतेति सर्व्वत्रान्वेति" प्रा०वि० ।

"चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे । द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण शुद्ध्यति" अङ्गिराः "एतदज्ञानविषयं ज्ञानतो द्वैगुण्यादिकम्" प्रा०वि० । मनुनापि सामान्याभोज्यप्रकरणे । "शुक्तं पर्य्युषितं चैव शूद्रस्योच्छिष्टमेव च "क्रूरस्योच्छिष्टभोजिन" इति चोक्तम् । शूद्रस्य तु द्विजोच्छिष्टभोजने न दोषः । द्विजोच्छिष्टन्तु भोजनमिति" तस्य मनुना तद्वृत्तितयोक्तेः । एकपङ्क्तिस्थमध्ये

केनचिदग्रे भोजनपात्रत्यागे तत्पङ्क्तिस्थानां तदन्नमुच्छिष्टवत् यथा "अप्येकपङ्क्त्यां नाश्नीयात् संयतः स्वजनैरपि। कोहि जानाति किं कस्य प्रच्छन्नं पातकं महत्। भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिश्च भेदयेत्" व्यासः। जलादिना पङ्क्तिभेदाकरणे तु यज्ञः "एकपङ्क्त्युपविष्टानां विप्राणां भोजने क्वचित्। यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं विवर्जयेत्। मोहात् भुञ्जीत यः पङ्क्त्यामुच्छिष्टस्य भोजनम्। प्राजापत्यं चरेद्विप्रः बालः सान्तपनन्तथा"। "बिड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्, अन्यत्र हिरण्योदकस्पर्शात्" देवलः अज्ञानादुच्छिष्टादिभोजने तदुत्तार्य्यमित्याह "अभोज्यमन्नं नात्तव्यमात्मनः शुद्धिमिच्छता। अज्ञानाद्भुक्तमुत्तार्य्यं शोध्यं वाप्याशु शोधनैः" वमनपक्षेऽपि अल्पप्रायश्चित्तं भवत्येव "आमश्राद्धाशने त्रिरात्रं पयसा वर्त्तेत ब्राह्मणः, शूद्रोच्छिष्टाशने वमनं कृत्वा सप्तरात्रमुपवसेत्" विष्णुना वमनोत्तरमपि प्रायश्चित्तविधानात् "अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः। चान्द्रं कृच्छ्रं तदर्द्धं तु ब्रह्मक्षत्रविशां विधिः" मिता० आप० वचनन्तु ब्राह्मणस्य सकृद्भोजनविषयम् बलात्कारानुसारेऽप्यदेतरताम्बूलाद्युच्छिष्टपरमिति" प्रा०त० रघु०। अन्त्यजैः बलात्कारिते उच्छिष्टादिभोजनेऽपि दोषएव। "दासीकृतोबलान्म्लेच्छचाण्डालाद्यैश्च दस्युभिः। अशुभं कारितः कर्म्म गवादेः प्राणहिंसनम्। उच्छिष्टमार्ज्जनञ्चैव तथा तस्यैव भक्षणम्" इत्याद्यभिधाय "मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम्। चान्द्रायणन्त्वाहिताग्नेः पराकमथ वा भवेत्" देवलोक्तेः। उच्छिष्टचाण्डालादिस्पर्शेऽपि दोषः" प्रा० त० उक्तः यथा। "आपस्तम्बः 'भुक्तोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन वा। प्रमादात् स्पर्शनं गच्छेत् तत्र कुर्य्याद्विशोधनम्। गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत्। त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति। भुक्तोच्छिष्टोऽन्त्यजैः स्पृष्टः प्राजापत्यं समाचरेत्। अर्द्धोच्छिष्टे स्मृतः पादः पाद आचमने तथा"। "प्राजापत्यं स्नाने अर्द्धोच्छिष्टोऽनाचमनः आस्ये निक्षिप्तः न तु निगीर्णः" प्रा० त० रघु०। काश्यपः "श्वसूकरान्त्यचाण्डालमद्यभाण्डरजस्वलाः। यद्युच्छिष्टः स्पृशेत्तत्र कृच्छ्रं सान्तपनं चरेत्। "एतज्ज्ञानाभ्यासे सान्तपने धेनुद्वयम्"। प्रा० त० ब्रह्मपुराणे "उच्छिष्टेन तु शूद्रेण विप्रः स्पृष्टस्तु तादृशः। उपवासेन शुद्धिः स्यात् शुना संस्पृष्टएव वा। उच्छिष्टेन तु विप्रेण विप्रःस्पृष्टस्तु तादृशः। उभौ स्नानं प्रकुर्वीत सद्य एव समाहितौ"। "अनुच्छिष्टब्राह्मणस्य नक्तमिति" प्रायश्चित्तविवेकः।

"सर्वमन्नमेकतोद्धृत्य उच्छिष्टसमीपे दर्भेषु" श्रा०त० गोभिलः। २दत्तावशिष्टे च। "उच्छिष्टे सतिलान् दर्भान् दक्षिणाग्रान्निधापयेत्" श्रा० त०ब्रह्मपु०। "असंस्कृतप्रमीतानां, योगिनां, कुलयोषिताम्। उच्छिष्टं भागधेयं स्यात् दर्भेषु विकिरश्च यः" श्रा०त० ब्रह्मपु०। "प्रेतश्राद्धे यदुच्छिष्टं गृहे पर्य्युषितं च यत्। दम्पत्योर्भुक्तशेषञ्च न भुञ्जीत कदाचन" श्रा०त० स्मृतिः। "उच्छिष्टं पाकपात्रेऽवशिष्टम्, गृहे उपरागे पर्य्युषितं, दम्पत्योराश्रमस्वामिनोर्भोजनानन्तरं पाकस्थाल्यामवशिष्टमिति" श्राद्धचिन्तामणिः। ३मधुनि। मक्षिकोच्छिष्टत्वात्तस्य तथात्वम्। "उच्छिष्टं शिवनिर्माल्यम्—श्राद्धे प्रशस्यते" पु०। उच्छिष्टमोदनः।

**उच्छिष्टगणेश** पु० तन्त्रोक्ते गणपतिभेदे। तस्य मन्त्रध्यानादिकं तत्रैव दृश्यम् "भुक्तोच्छिष्टोजपेन्नित्यं गणेशस्य सदा प्रियः" "उच्छिष्टश्शुचिर्भूत्वा जपपूजनमाचरेत्"। अनुच्छिष्टो न सिध्येत्तु तस्मादेवं समाचरेत्"। "सदोच्छिष्टोगणेशानो यक्षराजेन धीमता" इति च तत्रैव

**उच्छिष्टचाण्डालिनी** स्त्री तन्त्रोक्ते मातङ्गीदेवीमूर्त्तिभेदे। तस्या मन्त्रध्यानादिकं तन्त्रसारे दृश्यम्। "भोजनानन्तरं देवि! विनैवाचमने कृते" इत्युपक्रम्य "उच्छिष्टेन बलिं दत्त्वा जपेत्सङ्गतमानसः। उच्छिष्टेन च कर्त्तव्यो जपोऽस्याः सिद्धिमिच्छता। उच्छिष्टजपमानस्य जायन्ते सर्वसिद्धयः" इति च तत्रैव।

**उच्छिष्टभोजन** पु० उच्छिष्टं पञ्चयज्ञावशिष्टं भोजनमस्य। १पञ्चयज्ञावशिष्टस्य भक्षके "यज्ञशिष्टाशिनः सन्तोमुच्यन्ते सर्वकिल्विषैः" मनुना तथा भोजने किल्विषतारकत्वकीर्त्तनात् तथा भोजनस्य कर्त्तव्यत्वम्। उच्छिष्टं देवनैवेद्यावशिष्टं भोजनमस्य। २देवनैवेद्यभोजके च। "तैर्दत्तमप्रदायैभ्योयो भुङ्क्ते स्तेन एव सः" गीतायां देवानिवेदने दोषश्रवणात् देवाय दत्त्वैव भोज्यता।

**उच्छिष्टभोजिन्** त्रि० उच्छिष्टं इतरस्य भुक्तावशिष्टं भुङ्क्ते भुज–णिनि। निषिद्धोच्छिष्टभोक्तरि "क्रूरस्योच्छिष्टभोजिनः" मनुः। [वर्द्धते सुद–ल्यु। ( मोम ) सिक्थके।

**उच्छिष्टमोदन** न०उच्छिष्टं भ्रमरोच्छिष्टं मधु तेन मोदते

**उच्छिष्य** त्रि० उद्+शिष–मेदे नि० क्यप्। अवशेषयोग्ये

लोके तु यथादेव । उच्छीयम् अवशेषणीयेऽन्नादौ त्रि० ।

**उच्छीर्षक** न० उत्थापितं शय्यातउत्तोल्य स्थापितं शीर्षं यस्मिन् प्रा० ब० कप् । शीर्षोपधाने (वालिश)। प्रा० ईब०। २उन्नतशीर्षके धान्यादौ त्रि० हला० । ऊर्द्ध्वं शीर्षं कायति कै-क । ३शिरःप्रदेशे "उच्छीर्षके श्रियै कुर्य्याद् भद्रकाल्यै च पादतः" मनुः उच्छीर्षके वास्तुपुरुषस्य शिरःप्रदेशे" कुल्लूकभट्टः । [शुष्के ।

**उच्छुष्क** त्रि० ऊर्द्ध्वतः शुष्कम् प्रा० स० । ऊर्द्ध्वप्रदेशात्

**उच्छून** त्रि० उद्-श्वि-क्त । १उन्नते २स्फीते च "हयोच्छूनैः किमेभिर्भुजैः" मा० द० । "अनरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम्" दशकु० । भावे क्त । ३स्फीततायाम् । (फोला)

**उच्छृङ्खल** त्रि० उद्गतं शृङ्खलातः निरा० स०। १बन्धनरहिते, २नियन्तृरहिते, ३अप्रतिबन्धे च । "अन्यदुच्छृङ्खलं सत्वमन्यच्छास्त्रनियन्त्रितम्" "समूर्च्छदुच्छृङ्खलशङ्खनिस्वनः" माघः । [पाटके २नाशके च ।

**उच्छेत्तृ** त्रि० उद्+छिद्-तृच् स्त्रियां ङीप् । १समूलसत्-

**उच्छेद** पु० उद्+छिद्-भावे घञ् ।१समूलोत्पाटने२विनाशने च "किमिति सर्व्वपन्नुच्छेदः क्रियते" हितो० "ततः सत्यवत्यचिन्तयत् मा दौष्मन्तीवंश उच्छेदं व्रजेदिति" भा० आ० ८५ अ० । "सतां भवोच्छेदकरः पिता ते" रघुः । भावे ल्युट् । उच्छेदनमप्यत्र न० "यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः" भा० प० १६२ अ० ।

**उच्छेद्य** त्रि० उच्छेदमर्हति उच्छेद+अर्हार्थे यत् । १उच्छेदार्हे उद्+छिद्-कर्म्मणि ण्यत् । २समूलसत्पाटनीये च ।

**उच्छेषण** न० उच्छिष्यते उद्+शिष-कर्म्मणि ल्युट् । १उच्छिष्टे "उच्छेषणं भूमिगतमजिह्मस्याशठस्य च" उच्छेषणन्तु तत्तिष्ठेत् यावद्विप्रा विसर्ज्जिताः" मनुः "सरस्वतीमधुमुखयोच्छेषणीकृतोदशनच्छद इव चुम्बितम्" दशकु०। भावे ल्युट् । २भुक्तावशेषणे ।

**उच्छोषण** त्रि० उद्+शुष-णिच्-ल्यु । १सन्तापके,२ऊर्द्ध्वशोषके च "यच्छोकमुच्छोषणमिन्द्रियाणाम्" गीता । भावे ल्युट् । ३सम्यक्शोषणे । "तरसा सेतुबन्धनेन सागरोच्छोषणेन च" रामा० । "उच्छोषणं समुद्रस्य पतनं चन्द्रसूर्य्ययोः" रामा० ।

**उच्छोषुक** त्रि० उद्+शुष-वा० उक । ऊर्द्ध्वशोषप्राप्ते, "स यद्वैतावन्तरेणान्यो दीक्षितोषधीस्तदन्तेन लोकेन नानाकुर्य्यादुच्छोषुका ह स्युः" शत० ब्रा० १२,१,१,१

**उच्छ्र(च्छ्रा)य** पु० उद्+श्रि-करणे अच् घञ् वा । १उन्नततायाम् उन्नततया हि ऊर्द्ध्वमाश्रीयते इति तस्याकारणत्वम् । "दम्भो धर्म्मध्वजोच्छ्रयः" भा० व० ३१२अ० । "पताकाः समुच्छ्रयाः" गीत० "अपरेद्युस्ततस्ताः क्रियतेऽभ्युच्छ्रयोन्नतैः" भा० आ० ६३अ० । प्रासादैः सुसतोच्छ्रायैः" भा० आ० १८५ अ० ।"महाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च"या० स्मृतिः ।"उच्छ्रायपातनं धनिनां दर्शयन्निव" कटस० । "महोच्छ्रायैः कुमुदविशदे योवितत्य स्थितः खम्" मेघदू० । "गुणार्ज्जनोच्छ्रायविरुद्धबुद्धयः" किरा० । २ उन्नद्रव्याङ्के "उच्छ्रयेण गुणितं चितेः फलम्" लीला० ।

**उच्छ्रयण** न० उद्+श्रि करणे-ल्युट् । १यौन्नत्ये उद्+श्रि-कर्त्तरि ल्यु । २उत्कटे त्रि० । "सर्व्वाण्युच्छ्रयणानि" आश्व० श्र० ३,८,२१ । उच्छ्रयणानि उत्कटानि" नारा० वृत्तिः ।

**उच्छ्रावण** न० उद्+श्रु-णिच्+ल्युट् । उच्चैःश्रावणे उद्घोषे "उद्दिश्य कुपितो यस्तु तोषितः श्रावयेत् पुनः । तस्मिन् कृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते" विष्णु० । "उच्छ्रावणसद्दोषः" प्रा० त० रघुनन्दनः ।

**उच्छ्रित** त्रि० उद्+श्रि-कर्त्तरि क्त । उन्नते १ऊर्द्ध्वदेशं प्राप्ते । "उन्नकैरुच्छ्रितोरःस्थलनलिननिषण्णाम्" माघः। २संजाते ३समुन्नद्धे ४प्रवृद्धे च मेदि०। ५लब्धे हेमच०

**उच्छ्रिति** स्त्री उद्+श्रि-वा० करणे क्तिन् । १उच्छ्राये उन्नतायाम् २उत्कर्षे च "यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः" मनुः । "चतस्रष्वपि चाद्यासु सर्व्वत्रोच्छ्रितीर्ददेत्" सुश्रु० । ३उन्नसंख्यायाम् "दृष्टोद्वहदुच्छ्रितिश्रितेः" लीला० ।

**उच्छ्वसित** न० उद्+श्वस-क्त । १विकासिते, २जीविते, ३स्फुरिते "विशदोच्छ्वसितेव मेदिनि: रघुः । ४प्राणेषु च "सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम्" शकु०। कर्त्तरि क्त । ५उच्छ्वासयुक्ते ६आश्वास युक्ते च त्रि० । "त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य संभाव्य चैवम्" मेघदू०।

**उच्छ्वास** पु० उद्+श्वस-घञ् । १अन्तर्मुखश्वासे, आख्यायिकायाः २परिच्छेदे, यथा दशकुमारस्य प्रथमोच्छ्वासादि प्राणवायोर्दीर्घगत्या ३बहिर्गतौ ४आश्वासे च । "दीर्घाकृष्टोपवेशोच्छ्वासप्रेषणशालम्" कात्या० "वायोर्मार्गनिरोधाद्र न गर्भस्थः प्ररोदिति" निश्वासोच्छ्वासंक्षोभस्वप्नान् गर्भोऽधिगच्छति" सुश्रु० । उच्छ्वासवहनाडीभेदास्तु तत्र दर्शिताः । "ऊर्द्ध्वगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वास-

जृम्भितक्षुद्वमितकथितरुदितादीनि विशेषानभिवहन्त्यः शरीरं धारयन्ति “पीड्यमानरुजोगाढः सोच्छ्वासः शिथिलः स्मृतः”। “शीतपादकरोच्छ्वासच्छिन्नश्वासश्च यो भवेत्। काकोच्छ्वासश्च यो मर्त्त्यस्तं धीरः परिवर्ज्जयेत्” सुश्रु०। “सततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः” सुश्रु०। उच्छ्वासश्च दीर्घनिश्वासः स च यावत्कालेन श्वासरूपप्राणक्रिया भवति ततोऽल्पकालेन, दीर्घदेशपर्य्यन्तप्राणवायोर्बहिर्गमने भवति। “उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती” मेघदू०। “इत्युच्छ्वासोऽध्यतं माघ आदध” काव्या० ४,८,२८।

उच्छ्वासिन् त्रि० उद्+श्वस-णिनि स्त्रियां ङीप्। १ऊर्द्ध्वश्वासयुक्ते २दीर्घनिश्वासयुक्ते। “समधिकतरोच्छ्वासिना” मेघ०। ४उद्गते च “उच्छ्वासिकालाञ्जनरागमक्ष्णोः” कुमा०। “समधिकतरोच्छ्वासिना” मेघ०। “५ऊर्द्ध्वश्वासयुक्ते मुमूर्षौ” “यत्नैतद्दूरोच्छ्वासी भवति” छ०उ० उत्क्रमणशब्दे दृश्यम्।

उछ उञ्छे (कणशआदाने) तुदा० इदित् पर०सक०सेट्। उञ्छति औञ्छीत्। उञ्छाम्-बभूव आस चकार। उञ्छिता उञ्छ्यात् उञ्छिष्यति औञ्छिष्यत्। उञ्छः उञ्छनम् उञ्छितः। प्र+मार्जने प्रोञ्छनं (पोछा) प्रोञ्छितः।

उछ बन्धे समापने च विरामे पा० तुदा०पर०सक०सेट्। उच्छति औच्छीत् उच्छाम्-बभूव आस-चकार। उच्छिता उच्छ्यात् उच्छिष्यति औच्छिष्यत्। णिच् उच्छयति ते औतिच्छत् औचिच्छत् त। सनि उतिच्छिषति उचिच्छिषति। ईदित् तेन निष्ठाया नेट्। उष्टः।

उज्जय(यि)नी स्त्री विक्रमादित्यराजधान्याम् अवन्तीपुर्य्याम् अवन्तीशब्दे विवृतिः। “सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः” मेघदू०। इयञ्च लङ्कावधिमेरुपर्य्यन्तसमरेखास्थपुरीमध्येऽन्यतमा यथाह श्रीपतिः “लङ्का कुमारो नगरी च काञ्ची पानाटमद्रिश्च सितः षडास्यः। श्रीवत्सगुल्मं च पुरी ततश्च माहिष्मती चोज्जयिनी प्रसिद्धा। स्यादाश्रमोऽस्मान्नगरं सुरम्यं ततः पुरं पट्टशिवाभिधानम्। श्रीगर्गराटं च सरोहिताख्यं स्थानेश्वरं शीतगिरिः सुमेरुः। इतीव याम्योत्तरगां धरायां रेखामिमां गोलविदो वदन्ति। अन्यानि रेखास्थितिभाञ्जि लोके ज्ञेयानि तज्ज्ञैः पुटभेदनानि”। सू०सि०तु सामान्येनोक्तम् यथा “राक्षसालयदेवौकःशैलयोर्मध्यसूत्रगाः। रोहीतकमवन्ती च तथा सन्निहितं सरः”। “राक्षसालयो लङ्का देवानां स्वहरूपः पर्वतो मेरुस्तयोर्मध्ये ऋजुसूत्रं तत्र स्थिता देशा रेखाख्याः। लङ्कादक्षिणस्थलस्यास्त्वनुपयुक्तास्तत्र मनुष्यागोचरत्वादिति नोक्ताः। ग्रामार्थमुदाहरति। रोहीतकमिति। यथा रोहीतकं नगरमवन्त्युज्जयिनी सन्निहितं सरः कुरुक्षेत्रम्। चकारस्तथेत्यव्ययपरः। तथान्यानि परस्परं सन्निहिततया ज्ञेयानि” र०भा०। “यथोज्जयिन्या कुचतुर्थभागे प्राच्यां दिशि स्याद्यमकोटिरेव” सू०सि०।

उज्जयन्त न० उद्+जि-झ। रैवतपर्वते हेम०।

उज्जानक पु० उतङ्कमुनेराश्रमान्तिके समुद्रसविधे मरुभूमिषु वालुकामयदेशभेदे। यत्र हि मधुपुत्रो धुन्धुरुतङ्कप्रार्थितेन कुवलाश्वेन विष्णुतेजसा वंहितवीर्य्येण निपातितः तत्कथा यथा भा०हरिवं०११अ०। “ममाश्रमसमीपे वै समेषु मरुधन्वसु। समुद्रो वालुकापूर्ण उज्जानक इति स्मृतः। देवानामवध्यश्च महाकायो महाबलः। अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान्। राक्षसस्य मधोः पुत्रो धुन्धुर्नाम महासुरः। शेते लोकविनाशाय तप आस्थाय दारुणम्”। इत्युपक्रम्य तद्वधोपाख्यानमुक्तम् कथाधुन्धुमारशब्दे दर्शयिष्यते २उत्तरदेशस्थेऽपि देशभेदे “एतदुद्दारं महाराज! मानसस्य प्रकाशते” इत्युपक्रम्य “एष उज्जानको नाम पावकिर्यत्र शान्तवान्” भा०व०१३०अ० देशभेद उक्तः।

उज्जासन न० उद्+जस-णिच्-ल्युट्। १मारणे वधे एतद्योगे कर्म्मणः संबन्धत्वविवक्षया षष्ठी प्रतिपदविहिततया च तया षष्ठ्या न समासः “चौरस्योज्जासनम्” सि०कौ०। “प्रतिपदविहिता षष्ठी न समस्यते” वार्त्ति०। “प्रोक्ता प्रतिपदा षष्ठी समासस्य निवृत्तये” भर्त्तृ०। तत्रैवोक्तम्

उज्जिघ्र त्रि० उद्+घ्रा-श। आघ्राणकर्त्तरि।

उज्जिति स्त्री उद्+जि-क्तिन्। उत्कृष्टजये “अग्नीषोमयोरुज्जितिमनूज्जेषम्” यजु० २,२५। “उज्जितिमनु पश्चाद्विजयेन हविःस्वीकारयहृपरुत्कृष्टजयम्” वेददी०। “सोमस्योज्जितिमिन्द्रमिन्द्रवनस्पतिः” काव्या० १०,७,१४। “उज्जितिभ्यो योऽत्तरो माहेन्द्रः” काव्या० १४,५,२१। अग्नीषोमयोरुज्जितिमनूज्जेषम्। “अग्नीषोमयोरुज्जितिमनूज्जयति” इन्द्राग्न्योरुज्जितिमनूज्जयति” शत०ब्रा० १,८,३,१,२,२,४। २उज्जयलिङ्गयुक्तमन्त्रकरणकाङ्गतौ च। “अथोज्जितीः” इत्युपक्रम्य “अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषम्” इत्यादि शत०ब्रा० २,२,१६,१७ उक्तम्।

उज्जिहान त्रि० उद्+हा-शानच्। ऊर्द्ध्वगति।

**उज्जीविन्** त्रि॰ उद्+जीव-णिनि । नाशप्रायताप्राप्त्यनन्तरं पुनरुज्जीवनवति ।

**उज्जृम्भ** पु॰ उद्+जृभि-घञ् । १विकाशे २स्फुटने । उद्गता जृम्भा (हाइतोला) यस्मात्” प्रा॰ ब॰ गतलोपः । ३मुख-विकाशनभेदे ३कर्त्तरि अच् । ४प्रकाशान्विते ५उज्जृम्भावति त्रि॰ “उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना”माघः

**उज्जृम्भण** न॰ उद्+जृभि-भावे ल्युट् । विकाशे मुखविकाशनभेदे व्यापारे ( हाइतोला ) । “उद्गारकासश्वथुष्ठीवनोज्जृम्भणानि च” सुश्रुतः । उद्+जृभि-अ । उज्जृम्भाऽप्यत्र स्त्री ।

**उज्जृम्भित** त्रि॰ उद्+जृभि-क्त । विकासिते । भावे क्त । २चेष्टायाम् ( हाइतोला ) ३मुखव्यापारभेदे न॰ ।

**उज्जेष** पु॰ उदा+जिष-गत्याम् भावे घञ् । १उत्कर्षप्राप्तौ उज्जिति शब्दे उदा॰ । अच् । २उत्कृष्टे त्रि॰ ।

**उज्जेषिन्** त्रि॰ उद्+जिष-गत्यां णिनि स्त्रियां ङीप् । उत्कर्षप्राप्ते “क्रीडी च शाकी चोज्जेषी” यजु॰१७, ८५ “उज्जेषी उत्कृष्टजयनशीलः” वेददी॰ ।

**उज्ज्य** न॰उद्गता ज्या यस्य प्रा॰ ब॰ गतलोपः । “आरोपितमौर्वीके धनुषि । उज्ज्यधन्वाः” कात्या॰२२,२, १७ । “उज्ज्यधन्वा आरोपितज्यधनुष्काः” कर्क॰ । उत्क्रान्ता अवतारिता ज्या यतः प्रा॰ ५ब॰ वा क्रान्तलोपः । अवतारितमौर्वीके धनुषि “कामग्रीवा वैदङ्गोवोपधुन उज्ज्यं धनुरधिज्यं कृत्वा”का॰श्रौ॰।

**उज्ज्वल** त्रि॰ उद्+ज्वल-अच् । १दीप्ते, २विशदे, ३विकाशिनि च । ४शृङ्गाररसे पु॰ । “स रागिराशीन्महसां महोज्ज्वलः “शृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते सर्गोनिसर्गोज्ज्वलः” नैष॰। “स्नातन्त्यगुज्ज्वलमथाव करेषु राजः” अविरतमङ्गुतिमुज्ज्वलां दधानैः” माघः । “अस्माकं सखि ! वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलम्” सा॰द॰ “विचित्रोज्ज्वलवेशा तु रणन्नूपुरनिस्वनाः” सा॰ द॰“सुमुखाः पल्लवोज्ज्वलाः”कुसु॰। अस्य च रसान्तरत्वं गोस्वामिग्रन्थे स्थितम् । ५स्वर्णे न॰ राजनि॰ धातुमध्ये तस्योद्दीप्तत्वात्तथात्वम् । तस्य भावः ष्यञ् औज्ज्वल्य न॰ । उज्ज्वलत्व तद्भावे न॰ । तल् । उज्ज्वलता स्त्री तत्रैव ।

**उज्ज्वलदत्त** पु॰ उणादिवृत्तिकारके विद्वद्भेदे । तस्येदम् । छ । उज्ज्वदत्तीय तत्कृतग्रन्थे पु॰ तत्कृतवृत्तौ तु स्त्री ।

**उज्ज्वलन** न॰उद्+ज्वल-भावे ल्युट् ।१उद्दीप्तौ २वैशद्ये च ।

**उज्झ** त्यागे तुदा॰ पर॰ सक॰ सेट् । उज्झति औज्झीत् उज्झाम्—बभूव आस चकार । उज्झिता उज्झ्यात् उज्झिष्यति औज्झिष्यत् । उज्झितः । त्वमङ्ग यस्याः पतिरुज्झितक्रमः” नैष॰ । “अद्यापि नोज्झति हरः किल कालकूटम्” चौरपञ्चाशिका । “प्राणानौज्झीच्च खड्गेन छिन्नश्चैव मूर्द्धनि” भट्टिः । “सपदि-विगतनिद्रस्तल्पमुज्झाञ्चकार”।“अविरतोज्झितवारिविपाण्डुभिः” “परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु मृगद्वन्द्वेषु” सैकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम्” “उदये मदवाच्यमुज्झता” इति च रघुः । अतः “भिद्योद्ध्यौ नदे”पा॰ नि॰क्यप् नदे कर्त्तरि भस्य धत्वम् । “उदकमुज्झति उद्ध्योनदः” सि॰कौ॰ ।

प्र+प्रकर्षेण त्यागे ।“खटद्विषी प्रेयस्यपि प्रोज्झिता”प्र॰बो॰। “लिखितमपि ललाटे प्रोज्झितुं कः समर्थः” हितो॰। सम्+ सम्यक्त्यागे ।

**उज्झ** त्रि॰उज्झति उज्झ-अच् । त्यागिनि ।“ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्” मनुः ।

**उञ्छ** पु॰ उछि-घञ् । “अबाधितस्थानेषु पथि क्षेत्रेषु च च अप्रतिहतावकाशेषु यत्र कुलौषधयो विद्यन्ते तत्राङ्गुलीभ्यामेकैकं कणं समुच्चिनोतीति”बोधा॰स्मृत्युक्ते कणश आदाने । “शिलोञ्छमप्याददीत विप्रोऽजीवन् यतस्ततः” मनुः । “एवं हत्तस्य नृपतेरुञ्छेनापि च जीवतः”मनुः।“तानुञ्छषष्ठाङ्कितसैकतानि”रघुः ।“निराहारस्तु स मुनिरुञ्छं मार्गयते पुनः” “तथामुमुञ्छधर्म्माणं दुर्वासा मुनिसत्तमः”शिलोञ्छवृत्तिधर्म्मात्मा मुद्गलः संयतेन्द्रियः” भा॰व॰ १५८अ॰ । “प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते”मनुः। “आलस्यहानुञ्छवृत्तीनन्यांश्च वनचारिणः”मनुः । अस्य क्लीवताऽपि“उञ्छं भैक्ष्यं यदन्यच्च तत्परिग्रहणम् कृतम्” निगमोक्तेः “प्रतिग्रहात् शिलं श्रेयस्ततोऽप्युञ्छं प्रशस्यते”स्मृत्यन्तरे चोक्तम् । उञ्छशिलमिति समस्तमपि शब्दान्तरं केचिदिच्छन्ति । उञ्छेन पतितधान्यकणग्रहणेन शिल्यते संचीयते इति तद्व्युत्पत्तेः “ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।मृतन्तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम्”मनुः ।

**उञ्छन** न॰ उछि—भावे ल्युट् । आपणक्षेत्रादिपतितस्य क्षेत्रस्वामिगृहीतविक्रीतार्थशिष्टस्य धान्यादेः कणश आदाने

**उञ्छशिल** न॰ शिल—अपहारे क इत॰ । क्षेत्रस्वामिना गृहीतशस्यात् क्षेत्रात्कणशः समुच्चयरूपे आहरणे । अस्य

दन्त्यमकारमध्यतामपि केचित् पृषोदरादि॰ कल्पयन्ति ।

**उट** न॰ उ+टक् नेत्त्वम् । १तृणे, २पर्णे च ।

**उटज** पुंन॰ उटेभ्यो जायते जन+ड । पत्रादिनिर्मितशालायां मुन्यादिगृहे । "उटजद्वाररोधिभिः" "मृगैर्वर्त्तितरोमन्थमुटजाङ्गनभूमिषु" रघुः "नवोटजाभ्यन्तरसंभृतानलम्" कुमा॰

**उठ** गतौ भ्वा॰पर॰सक॰सेट् । ओठति औठीत् । उवोठ ऊठतुः ओठिता उठ्यात् ओठिष्यति औठिष्यत् ।

**उड** संहतौ सौत्र॰ पर॰अक॰ सेट् । ओडति औडीत् । उवोड ऊडतुः । ओडिता उड्यात् ओडिष्यति औडिष्यत् । उडु

**उडु** स्त्री न॰ उड-बा॰ कु । १नक्षत्रे, २जले च क्लीवत्वे वा ऊङ् । "इन्दुप्रकाशान्तरितोडुतुल्याः" । "उत्तम्भितोडुभिरतीवतरां शिरोभिः" माघः ।

**उडुचक्र** न॰ उडूनां चक्रमिव मण्डलम् । १नक्षत्रमण्डले भचक्रे तस्य संस्थितिश्च" सि॰शि॰ उक्ता उडुशब्दे तत्र दर्शितम् । उडुचक्रस्वरूपादि सू॰ सि॰ उक्तम् यथा "ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते । तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा । मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः । परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः" । "ब्रह्माण्डान्तःपरिधितुल्यमानं वृत्तं व्योमकक्षा वक्ष्यमाणाकाशकक्षोच्यते । तन्मध्ये ब्रह्माण्डमध्य आकाशे भानां नक्षत्राणां सर्वेषां सर्वतस्तुल्योर्ध्वान्तरितानां भ्रमणं भवति । तथा तन्त्योर्ध्वान्तरेणाधोधोनक्षत्रेभ्यः शनिबृहस्पतिभौमार्कशुक्रबुधचन्द्राः क्रमशस्तात् परिभ्रमन्ति । सिद्धा विद्याधराघनाश्चाधस्थाश्चन्द्रादधःस्थिता अधोऽधः क्रमेणाकाशे स्थिताः । प्रवहवायावस्थानाभावाच्चन्द्रवच्च तेषां परिभ्रमः" र॰ना॰ । तस्योत्पत्तिविभागस्तत्रैव । "पुनर्द्वादशधात्मानं व्यभजद्राशिसञ्ज्ञकम् । नक्षत्ररूपिणं भूयः सप्तविंशात्मकं वशी" सू॰सि॰ । "पुनरनन्तरमात्मानं द्वादशधा द्वादशस्थानेषु राशिसंज्ञकं व्यभजत् मनःकल्पितं वृत्तं द्वादशविभागं राशिवृत्तमकरोदित्यर्थः । भूयो द्वितीयवारमात्मानं नक्षत्ररूपिणं सप्तविंशात्मकं व्यभजत् । मनःकल्पितं तदेव वृत्तं सप्तविंशतिविभागं चाकरोदित्यर्थः । ननु न्यूनाधिकविभागाः कथं न कृताः ? उक्तसङ्ख्यायां नियामकाभावादित्यत आह वशीति । इच्छाविषयं वशं विद्यते यस्येति वशी स्वतन्त्रस्तस्य नियोगानर्हत्वात् । स्वेच्छया तत्सङ्ख्याका विभागाः कृता इति भावः । सप्तविंशतिविभागव्यञ्जकानि नक्षत्राणि ताराकारकाणि निर्मितानीत्यर्थसिद्धम्" र॰ना॰ । तत्र राशिनक्षत्रनामानि ज्योति॰त॰उक्तानि यथा "मेषवृषमिथुनकर्कटसिंहाःकन्यातुलाधरवृश्चिकभम् । धनुरथ मकरः कुम्भोमीन इति च राशयः कथिताः" । "अश्विन्या सह भरणी कृत्तिकापादः कीर्त्तितोमेषः । वृषभः कृत्तिकाशेषं रोहिण्यर्द्धञ्च मृगशिरसः । मृगशिरसोऽर्द्धं चार्द्रा पुनर्वसोस्त्रिपादं मिथुनम् । पादः पुनर्वसोरन्त्यः पुष्योऽश्लेषा च कर्कटः कथितः । सिंहोऽथ मघा पूर्वफल्गुनीपाद उत्तरायाः । तच्छेषं हस्ता च चित्रार्द्धं कन्यकाख्यः स्यात् । तौलिनि चित्रार्द्धं स्वातिविशाखायाश्च पादत्रयम् । अलिनि विशाखापादस्तथानुराधान्विता ज्येष्ठा । मूलं पूर्वाषाढा प्रथमश्चाप्युत्तरांशको धन्वी । मकरस्तत्परिशेषं श्रवणार्द्धं धनिष्ठायाः । कुम्भोऽथ धनिष्ठार्द्धं शतभिषापौर्व्वभाद्रपदत्रयम् । भाद्रपदायाः शेषस्तथोत्तरा रेवती मीनः" अश्विन्यादिनक्षत्राणां तारासंख्यातत्सन्निवेशस्वरूपं च श्रीपतिनोक्तम् । "वह्नित्रिऋत्विषुगुणेन्दुकृतानि भूतबाणाश्विनेत्रशरभूकयुगाब्धिरामाः । रुद्राब्धिरामगुणवेदशतद्वियुग्मदन्ता बुधैर्निगदिताः क्रमशो भताराः । तुरगमुखसदृक्षं योनिरूपं क्षुराभं शकटनिभमथैणस्योत्तमाङ्गेन तुल्यम् । मणिगृहशरचक्राभानि शालोपमं च शयनसदृशमन्यच्चात्र पर्यङ्करूपम् । हस्ताकारमजस्रमौक्तिकसमं चान्यत् प्रवालोपमं धिष्ण्यं तोरणवत् स्थितं बलिनिभं स्यात् कुण्डलाभं परम् । क्रुध्यत्केसरिविक्रमेण सदृशं शय्यासमानं परं चान्यद्दन्तिविलासवत् स्थितमतः शृङ्गाटकव्यक्ति च । त्रिविक्रमाभं च मृदङ्गरूपं वृत्तं ततोऽन्यद्यमलद्वयाभम् । पर्यङ्कतुल्यं मुरजानुकारमित्येवमश्व्यादिभचक्ररूपम्" ।

भचक्रपरिधिमानम् सि॰शि॰उक्तम् "अभ्रेभाङ्गगजाङ्गरगोऽत्यपदाः" (२५८२८८८५॰योजनानि) कक्षां स्पर्शन्ति गणका भगणस्य चेमाम्" । तस्य भूमध्यात् उच्छ्रितियोजनानि तु तत्रोक्तानि यथा "नागाब्धषड्द्व्यरसाग्निकृतेन्दुसंख्यो" ( ४१२६२६५८ ) नक्षत्रमण्डलभवः श्रवणो निरुक्तः" । अस्य च द्वादशधा विभक्तस्य प्रवहवायुना भ्राम्यमाणस्य दिने प्रत्यागुदयः रात्रौ च पश्चामिति भेदः । "प्राङ्भूमो निजनिजोदयभानुतत्त्वे सूर्योऽस्तभाक्स्वतमोऽस्तमयश्च भानाम्" सि॰शि॰ उक्तेः । २ताराणां समूहे च "वप्रेण पर्यन्तचरोडुचक्रः" माघः ।

**उडु(डू)प** पु॰ उडुनि जले पाति पा—क । १प्लवे भेलायाम् ।

"उडुपप्लवसन्तारोऽयत्र नित्यं भविष्यति" भा०आ० ८०अ०। "वह्नतोवारिविक्षुब्धं फेनोडुपपरिप्लुतम्। भा०व०१४६। "तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्" रघुः। उडुरूपजलसन्तारहेतुत्वादस्य उडुपत्वम्। चर्मावनद्धयानपात्रे न० तच्छ्लोकव्याख्याने मल्लिनाथेन "उडुपेन चर्मावनद्धयानपात्रेणेत्यभिधाय "चर्मावनद्धमुडुपं प्लवकाष्ठं करण्डवदिति" सज्जनोक्तिरुदाहृता। पृषो०। उडपोऽपि प्लवे अमरटी०। उडूनि उडूनां नक्षत्राणि पाति पा—क। २चन्द्रे स हि ताराणां पतिरतस्तद्रक्षकः। उडूनां दिवा हि सूर्य्यकिरणैरभिभवादप्रकाशत्वेन रात्रौ च प्रकाशवत्त्वेन निशाधीशचन्द्रस्य तत्पतित्वम्। एवम् "नक्षत्राणामधीशत्वमोषधीनां तथैव चेति" का०ख० प्रजापतिना तदधीशत्वदानमुक्तम्"। गीतायामपि "नक्षत्राणामहं शशी" इत्युक्तेः तन्मध्ये तस्य श्रेष्ठत्वादपि तत्पतिता "सलिलमये शशिनि" इत्यु०सं० तस्य जलमयत्वोक्तेः उडुमयत्वात् जलमयत्वात् तस्य उडुपतित्वं वा बोध्यम् दक्षकन्याश्विन्यादितारापतित्वाद्वा तथात्वम्।

**उडु(डू)पति** पु० उडूनां पतिः। १चन्द्रे २जलेशे वरुणे च। "परिलुप्यतां शशिगणोडुपतेः" माघः। "रसात्मकस्योडुपतेव रश्मयः" कुमा०।

**उडुपथ** पु० उडूनां पन्थाः। आकाशे। तत्र हि उडूनां मत्यहं प्रवहवायुना भ्रमणात् तथात्वम्।

**उ(दु)डुम्बर** पु० उं शम्भुं डुणोति स उम्बरः उत्कृष्टः उम्बरः प्रा०स० पृषो० दस्य वा डत्वम्। (यज्ञ डुमुर) १यज्ञाङ्गे वृक्षे २ताम्रे च, यज्ञावपदयाम् ३देहल्याम् ४कुष्ठभेदे च न०। "उ(दु)डुम्बुरो यज्ञफलो यज्ञाङ्गो हेमदुग्धकः। उडुडुम्बरोहितोऽक्षवो गुरुपित्तकफास्रजित्। मधुरस्तुवरोवर्ण्योव्रणशोधनरोपणः" इति भा० प्र० उक्तगुणकः। तस्य विकारः अण्। औ(दु)डुम्बर तद्विकारे पात्रादौ त्रि०। स्त्रियां ङीप्। "सन्धीत्यौडुम्बरं पात्रं जानुभ्यां धरणिं गतः" स्मृतिः। "औडुम्बरीं स्पृष्ट्वा गायेत" श्रुतिः। [ङीप्। इन्नोडस्य सञ्च०।

**उडुम्बरपर्णी** स्त्री उडुम्बरस्य पर्णमिव पर्णमस्याः गौरा०

**उडुराज्** पु० उडुषु राजते राज—क्विप्। चन्द्रे। अच्, उडूनां राजा टच् समः० वा। उडुराजोऽप्यत्र "तदोडुराजः ककुभः करैर्मुखं प्राच्याविलिम्पन्" भाग०१०, २८अ०।

**उडुलोमन्** पु० उडुरिव लोमास्य। ऋषिभेदे। तस्यापत्यम् बाह्वा० इञ्। औडुलोमि तदपत्ये पुंस्त्री०। बहुषु का-

कारः। उडुलोमाः। [विश्लेडुडयने निराशताम्" नैष०।

**उड्डयन** न० उद्+डी—ल्युट्। पक्षिणामूर्द्ध्वगतौ "गतौ

**उड्डामर** त्रि० उत्कटो डामरः प्रा०स०। १उद्भटे २श्रेष्ठे च ३तन्त्रभेदे पु०। [तिभेदे।

**उड्डीन** न० उद्+डी—भावे क्त। ऊर्द्ध्वपतनरूपे खगग-

**उड्डीयन** न० उद्+डी—ड उड्डः स इवाचरति क्यङ् उड्डीय—भावे ल्युट्।। उत्पतने। "कथमुड्डीयनेऽशक्तान् पतने च ममात्मजान्" भा० आ० २३३अ०। उड्डीय—कर्त्तरि ताच्छील्ये वा चानश्। उड्डीयमान उड्डयन कर्त्तरि तच्छीले च त्रि०।

**उड्डीश** पु० उद्+डी—क्विप् तस्य ईशः। उत्पतनकर्त्तृणामीश्वरे १महादेवे २तन्त्रभेदे च मेदि०। योगिनां हि उत्पतनं योगशास्त्रप्रसिद्धम् महादेवस्य च तदीशत्वात् तथात्वम्। उड्डीशतन्त्रस्य तु उत्पतनसाधनोपायविधायकत्वात् तथात्वम्।

**उ(ओ)ड्र** पु० उड—सौ० धा० रक् र वा उ—र—रक् वा डुगागमो वा। कूर्मविभागस्यप्राच्यदेशभेदे "सवङ्गाङ्गान् सपौण्ड्रोड्रान् सचोलान् द्रविडान्धकान्" भा० स० ५६ अ०। ओ(उ)ड्रदेशश्च कूर्म्मविभागे वृ०सं० प्राच्यतयोक्तः यथा "प्राच्यामितुपञ्चम्य मिथिलसमतटोड्राश्ववदनदन्तुरकाः" इति। स च उत्कलात् भिन्नएव तत्रैवानन्तरम् "पौण्ड्रोत्कलकाशिमेकलाम्बष्ठाः इत्युक्तेः। भारते च सहदेवदक्षिणदिग्विजये "पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः स०३० अ० उक्तेस्तस्य हस्तिनानगरीतः दक्षिणत्वात् तथात्वम् कूर्म्मविभागे प्राच्यत्वमिति न विरोधः। सर्वत्र उड्रशब्दश्रवणात् उकारादित्वम् रघुनन्दनेन तु ओड्रादिदेशव्यवस्थितमित्युक्तत्वात् ओकारादित्वमपि। अस्य देशवाचित्वात् तस्य राजा तदस्याभिजन इत्यर्थे च अण्। औड्र तद्राजे तद्वासिनि च बहुषु तस्य लुक्। उड्राः तद्राजेषु तन्निवासिषु च।

**उणक** त्रि० ओण—अपसारणे ण्वुल् गौरा० उणक इति पाठात् नि० ह्रस्वः। अपसारके। स्त्रियां गौरा० ङीष्। उणकी।

**उणादि** पु० उण्प्रत्यय आदिर्येषाम्। शाकटायनोक्ते उण्प्रभृतौ प्रत्ययसमुदाये। "उणादयो बहुलम्" "ताभ्यामन्यत्रोणादयः" पा०। "उणादयोऽव्युत्पन्नाः प्रातिपदिकानीति" पा०भा०। व्युत्पन्ना इति पाठान्तरम्। व्युत्पत्तिपक्षाभिप्रायेणैव "राघवस्य ततः कार्य्यं कारुर्वानरपुङ्गवः" इति भट्टौ कार्य्यमित्यत्र द्वितीया अव्युत्पन्नत्वे

सा न स्यादिति बोध्यम् उणादिवृत्तिश्च उज्ज्वलदत्तकृता प्रसिद्धा ।

उण्डुक पु० "गर्भस्य यकृत्प्लीहानौ शोणितजौ । शोणितफेनजः फुप्फुसः शोणितकिट्टप्रभव उण्डुकः" इति सुश्रुतोक्ते रुधिरकिट्टजाते देहस्थमलाशये कोष्ठभेदे तन्मलविभाजकत्वं कलाभेदस्य तत्रोक्तं यथा "यकृत् समन्तात् कोष्ठञ्च तथान्त्राणि समाश्रिता । उण्डुकस्थं विभजते मलं मलधरा कला" सुश्रु० देहप्रत्यङ्गविभागमुक्त्वा सुश्रु० "तस्य पुनः संख्यानम् त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदयमाशय" इत्युक्तम् । "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" इति तस्य आमाद्यपक्वमूत्राद्याधारत्वमुक्तम् । शल्योद्धारे च तत्रैव । "अस्थिशल्यमन्यद्वा तिर्य्यक् कण्ठासक्तमवेक्ष्य केशोण्डुकं दृढैकसूत्रबद्धम् द्रवभक्तोपहितं पाययेत् ।

उत् अव्य० उ–क्विप् । १प्रश्ने २वितर्के ३संशये ४अत्यर्थे ५ऊर्द्धे च । ६उदिते त्रि० । "तस्य उदितिनाम" छा० उ० । उद् इति वा छेदः ।

उत अव्य० उ–क्त । १विकल्पे, २समुच्चये, ३वितर्के, ४प्रश्ने, ५अत्यर्थे च । "यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात्" यजु० २९,१२ । "मानाग्निहोत्रमुत मान सौनम्" भा० आ० ३९२ अ० । "एतावन्ति च दासानां सहस्राण्युत सन्ति मे" भा० स० २२१ अ० । "तत् किमयमातपदोषः स्यादुत यथा मे मनसि वर्त्तते" शकु० । "वीरोरसः किमयमित्युत दर्पएषः" वीरच० "प्रभुः प्रहर्त्तुं किमुतान्यहिंसाः" रघुः । "सारतोन विरोधी न स्वाभासो भरवानुत" किरा० । "धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत" "ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत" गीता । [प्रोतश्च" श्रुतिः

उत त्रि० वेञ्–क्त । स्यूते ग्रथिते अमरः "यस्मिन्नोतश्च ।

उतङ्क पु० आयोदधौम्यशिष्यवेदनामकस्य मुनेः शिष्यभेदे तदुपाख्यानञ्च" भा० आ० ३अ० । वेदमुनिं प्रक्रम्य "स कदाचित् याज्यकार्य्येणाभिप्रस्थित उतङ्कनामानं शिष्यम् नियोजयामास" इत्युपक्रम्य "तत्सौम्य ! गम्यतामनुजाने भवन्तं श्रेयोऽवाप्स्यसीति स उपाध्यायेनानुज्ञातो भगवानुतङ्कः कुण्डलयुगलं प्रतिचिकीर्षुर्हास्तिनपुरं प्रतस्थे" इत्यन्तेन विस्तरेण तच्चरितमुपवर्णितम् । तस्यायं संक्षेपः । गुरुदक्षिणादानार्थं गुरवे उतङ्केन निवेदिते गुरुणा स्वपत्नीवचनात् पौष्यनृपपत्नीधृतकुण्डलद्वयमेव गुरुदक्षिणात्वेन कल्पितम् तच्च पौष्यनृपपत्नीधृतं कुण्डलद्वयं प्राप्य आनयतस्तस्य प्रमादात्तक्षकेणापहृतम् अथ वज्रिणो लब्धवरप्रसादात् नागलोकं गत्वा धूमप्राचुर्य्येण नागलोकावरोधे तद्भयात्तत्कुण्डलद्वयं नागैर्दत्तमानीय गुरुपत्न्यै दत्तमिति

२भार्गवे गौतमस्य शिष्यभेदे च तत्कथा भारते "उतङ्को महता युक्तस्तपसा जनमेजय ! । गुरुभक्तः स तेजस्वी नान्यत् किञ्चिदपूजयत् । सर्वेषामृषिपुत्राणामेष आसीन्मनोरथः । औतङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत ! । गौतमस्य तु शिष्याणां बहूनां जनमेजय । उतङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा । स तस्य दमशौचाभ्यां विक्रान्तेन च कर्म्मणा । सम्यक् चैवोपचारेण गौतमः प्रीतिमानभूत् । अथ शिष्यसहस्राणि समनुज्ञातवानृषिः । उतङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत । तं क्रमेण जरा तात ! प्रतिपेदे महामुनिम् । न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः । ततः कदाचिद्राजेन्द्र ! काष्ठान्यानयितुं ययौ । उतङ्कः काष्ठभारञ्च महान्तं समुपानयत् । स तद्भाराभिभूतात्मा काष्ठभारमरिन्दम ! । निष्पेष क्षितौ राजन् ! परिश्रान्तो बुभुक्षितः । तस्य काष्ठे विलग्नाऽभूज्जटा रूप्यसमप्रभा । ततः काष्ठैः सह तदा पपात धरणीतले । ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भारत ! । दृष्ट्वा तां वयसोऽवस्थां रुरोदार्त्तस्वरस्तदा । ततो गुरुसुता तस्य पद्मपत्रनिभानना । जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना । पितुर्नियोगाद्धर्मज्ञा शिरसाऽवनता तदा । तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः । न हि तानश्रुपातांस्तु शक्ता धारयितुं मही । गौतमस्त्वब्रवीद्विप्रमुतङ्कं प्रीतमानसः । कस्मात्तात ! तवाद्येह शोकोत्तरमिदं मनः । स्वैरं ब्रूहि विप्रर्षे ! श्रोतुमिच्छामि तत्त्वतः । उतङ्क उवाच । भवद्गतेन मनसा भवत्प्रियचिकीर्षया । भवद्भक्तिगतेनेह भवद्भावानुगेन च । जरेयं नावबुद्धा मे नाभिज्ञातं सुखञ्च मे । शतवर्षोषितं मां हि न त्वमभ्यनुजानीथाः । भवता त्वभ्यनुज्ञाताः शिष्याः प्रत्यवरा मम । उपपन्ना द्विजश्रेष्ठाः शतशोऽथ सहस्रशः । गौतम उवाच । त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव । व्यतिक्रामन्महान् कालो नावबुद्धो द्विजर्षभ ! । किन्त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ! । अनुज्ञां प्रतिगृह्य त्वं स्वगृहान् गच्छ मा चिरम् । उतङ्क उवाच । गुर्वर्थं कं प्रयच्छामि ब्रूहि

त्वं द्विजसत्तम। तमुपाहृत्य गच्छेयमनुज्ञातस्त्वया विभो!। गौतम उवाच। दक्षिणा परितोषो वै गुरूणां सद्भिरुच्यते। तव ह्याचरतो ब्रह्मंस्तुष्टोऽहं वै न संशयः। इत्थञ्च परितुष्टं मां विजानीहि भृगूद्वह!। युवा षोड़शवर्षो हि यद्यद्य भविता भवान्। ददानि पत्नीं कन्याञ्च स्वां ते दुहितरं द्विज!। एतामृतेऽङ्गना नान्या त्वत्तेजोऽर्हति सेवितुम्। ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीम्। गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत्। किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष्व माम्। प्रियं हितञ्च काङ्क्षामि प्राणैरपि धनैरपि। यद्दुर्लभं हि लोकेऽस्मिन् रत्नमत्यद्भुतं महत्। तदानयेयं तपसा न हि मेऽस्त्यत्र संशयः। अहल्योवाच। परितुष्टाऽस्मि ते विप्र! नित्यं भक्त्याऽनयाऽनघ!। पर्य्याप्तमेतद्भद्रन्ते गच्छ तात! यथेप्सितम्। वैशम्पायन उवाच। उतङ्कस्तु महाराज पुनरेवाब्रवीद्वचः। आज्ञापयस्व मां मातः! कर्त्तव्यञ्च तव प्रियम्। अहल्योवाच। सौदासपत्नीविधृते दिव्ये ये मणिकुण्डले। ते समानय भद्रन्ते गुर्व्वर्थः सुकृतो भवेत्। स तथेति प्रतिश्रुत्य जगाम जनमेजय!। गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा। स जगाम ततः शीघ्रमुतङ्को ब्राह्मणर्षभः। सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले। गौतमस्त्वब्रवीत् पत्नीमुतङ्को नाद्य दृश्यते। इति पृष्टा तमाचष्ट कुण्डलार्थं गतञ्च वा। ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम्। शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति। अहल्योवाच। अजानन्त्या नियुक्तः स भगवन्! ब्राह्मणोमया। भवत्प्रसादान्न भयं किञ्चित्तस्य भविष्यति। इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः। उतङ्कोऽपि वने शून्ये राजानं तं ददर्श ह"। आश्व० ५६ अ०। इतःपरं तत्कुण्डलानयनादिकं नागतक्षकापहृतपश्चात् वह्निप्रसादात्तत् नागलोकादानीय गुरुपत्न्यै तद्दानमुक्तमित्ययं संक्षेपो विस्तरस्तत्र दृश्यः। अस्यैव तोयाभिलाषपूरणार्थमीश्वरेण उतङ्कमेघः प्रवर्त्तितः तत्कथा उतङ्कमेघशब्दे दृश्या।

**उतङ्कमेघ** पु० उतङ्कार्थमीश्वरेण प्रवर्त्तितो मेघः। मरुदेशस्थोतङ्कतोयाकाङ्क्षापूरणार्थमीश्वरेण कृष्णेन नियोजिते मेघे। तत्कथा भा० आश्व० ५५ अ०। "उतङ्क उवाच। अवश्यकरणीयञ्च यद्येतन्मन्यसे विभो!। तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम्। ततः संहृत्य तत्तेज प्रोवाचोतङ्कमीश्वरः। एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ। ततः कदाचिद्भगवानुतङ्कस्तोयकाङ्क्षया। तृषितः परिचक्राम मरौ सस्मार चाच्युतम्। ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम्। अपश्यत मरौ तस्मिन् श्वयूथपरिवारितम्। भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम्। तस्याधः स्रोतसोऽपश्यत् वारि भूरि द्विजोत्तमः। स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव। एह्युतङ्क! प्रतीच्छस्व मत्तो वारि भृगूद्वह!। कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाहितम्। इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दत। चिक्षेप च स तं धीमान् वाग्भिरुग्राभिरच्युतम्। पुनः पुनश्च मातङ्गः पिबस्वेति तमब्रवीत्। न चापिबत् स सक्रोधः क्षुभितेनान्तरात्मना। स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना। श्वभिः सह महाराज! तत्रैवान्तरधीयत। उतङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः। मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना। अथ तेनैव मार्गेण शङ्खचक्रगदाधरः। आजगाम महाबुद्धिरुतङ्कश्चैनमब्रवीत्। न दत्तं तादृशं दातुं त्वया पुरुषसत्तम। सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो। इत्युक्तवचनं तन्तु महाबुद्धिर्जनार्दनः!। उतङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत्। याऽदृशेनेह रूपेण योग्यं दातुं धृतेन वै। तादृशं खलु ते दत्तं तच्च त्वं नावबुध्यथाः। मया त्वदर्थमुक्तो वै वज्रपाणिः पुरन्दरः। उतङ्कायामृतं देहि तोयरूपमिति प्रभुः। स मामुवाच देवेन्द्रो न मर्त्योऽमर्त्यतां व्रजेत्। अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन। अमृतं देयमित्येव मयैवोक्तः शचीपतिः। स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत्। यदि देयमवश्यं वै मातङ्गो हि महामते!। भूत्वाऽमृतं प्रदास्यामि भार्गवाय महात्मने। यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै। प्रदातुमेष गच्छामि भार्गवस्यामृतं विभो!। प्रत्याख्यातस्त्वहं तेन दास्यामि न कथञ्चन। स तथा समयं कृत्वा तेन रूपेण वासवः। उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत्। चाण्डालरूपी भगवान्! सुमहांस्ते व्यतिक्रमः। यत्तु शक्यं मया कर्त्तुं भूय एव तवेप्सितम्। तोयेप्सां तव दुर्द्धर्षां करिष्ये सफलामहम्। येष्वहःसु च ते ब्रह्मन्! सलिलेप्सा भविष्यति। तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः। रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन!। उतङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते। इत्युक्तः प्रीत-

मान् विप्रः सख्येन स बभूव ह। अद्याप्युतङ्कमेघाश्च मरौ वर्षन्ति भारत"।

**उतथ्य** पु० अङ्गिरसः श्रद्धायां पत्न्यामुत्पन्ने गुरोर्ज्येष्ठभ्रातरि। "त्रयोऽङ्गिरसः पुत्रा एते सर्वत्र विश्रुताः। वृहस्पतिरुतथ्यश्च संवर्त्तश्च धृतव्रताः" भा०आ० ६६अ०। तस्यापत्यम् अण् औतथ्यः स च उतथ्येन ममतायामुत्पन्नः वृहस्पतिशापात् जात्यन्धतां प्राप्तस्तत्कथा यथा "अथोतथ्य इति ख्यात आसीद्धीमानृषिः पुरा। ममता नाम तस्यासीद्भार्य्या परमसम्मता। उतथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम्। वृहस्पतिर्वृहत्तेजा ममतामन्वपद्यत। उवाच ममता तन्तु देवरं वदतांवरम्। अन्तर्वत्न्यहं भ्रात्रा ज्येष्ठेनारम्यतामिति। अयञ्च मे महाभाग! कुक्षावेव वृहस्पते!। औतथ्यो वेदमत्रापि षडङ्गं प्रत्यधीयत। अमोघरेतास्त्वञ्चापि द्वयोर्नास्त्यत्र सम्भवः। तस्मादेवङ्गते नाद्य उपारमितुमर्हसि। एवमुक्तस्तदा सम्यग्वृहस्पतिरुदारधीः। कामात्मानं तदात्मानं न शशाक नियच्छितुम्। स बभूव ततः कामी तया सार्द्धमकामया। उत्सृजन्तन्तु तं रेतः स गर्भस्थोऽभ्यभाषत। भोस्तात! मा गमः कामं द्वयोर्नास्तीह सम्भवः। अल्पावकाशो भगवन्! पूर्वं चाहमिहागतः। अमोघरेताश्च भवान्न पीडां कर्त्तुमर्हसि। अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य वृहस्पतिः। जगाम मैथुनायैव ममतां चारुलोचनाम्। शुक्रोत्सर्गं ततो बुद्ध्वा तस्या गर्भगतो मुनिः। पद्भ्यामारोधयन्मार्गं शुक्रस्य च वृहस्पतेः। स्थानमप्राप्तमपतद्रेतः प्रतिहतं तदा। पपात सहसा भूमौ ततः क्रुद्धो वृहस्पतिः। तद्दृष्ट्वा पतितं शुक्रं शशाप स रुषाऽन्वितः। उतथ्यपुत्त्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः। यन्मां त्वमीदृशे काले सर्व्वभूतेप्सिते सति। एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि। स वै दीर्घतमा नाम शापादृषिरजायत। वृहस्पतेर्वृहत्कीर्त्तेर्वृहस्पतिरिवौजसा। जात्यन्धो वेदवित्प्राज्ञः पत्नीं लेभे स विद्यया। तरुणीं रूपसम्पन्नां प्रद्वेषीं नाम ब्राह्मणीम्। स पुत्राञ्जनयामास गौतमादीन् महायशाः। ऋषेरुतथ्यस्य तदा सन्तानकुलवृद्धये। धर्म्मात्मा च महात्मा च वेदवेदाङ्गपारगः। गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः। प्रावर्त्तत तदा कर्त्तुं श्रद्धावांस्तमशङ्कया"। भा०आ०१०४अ०। "शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च" मनुः। "उतथ्यतनयस्य गौतमस्येति" कुल्लू०। तस्य उतथ्यपौत्रत्वेऽपि तत्कुलवर्द्धनात्तथात्वं तस्य जात्यन्धतया स्मृतिकर्त्तृत्वाभावेन तत्पौत्रस्यैव गौतमस्य स्मृतिकर्त्तृत्वात् तस्यैव सम्मतिकथनं युक्तमिति" "तथ्यमुतथ्यानुजवज्जगादाग्रे गदाग्रजः" माघः। अयञ्च आङ्गिरसगोत्रप्रवरमध्यस्थ ऋषिभेदः ८१७पृ० विवृतः।

**उतथ्यानुज** पु० ६त०। वृहस्पतौ उतथ्यावरजादयोऽप्यत्र। "तथ्यमुतथ्यानुजवज्जगादाग्रे गदाग्रजः"। [चार्य्ये च

**उताहो** अव्य०उत च आहो च द्व०। १विकल्पे, २प्रश्ने ३वि-

**उत्क** त्रि० उद्गतं मनोऽस्य उद्+नि०–क। १उन्मनस्के २अन्यमनस्के। "अगमयदद्रिसुतासमागमोत्कः" कुमा०। "तच्छ्रुत्वा च श्रवणसुभगं गर्ज्जितं मानसोत्काः" मेघ०"। "उत्कं धरं दृष्टुमवेक्ष्य शौरिरुत्कन्धरं दारुक इत्युवाच" माघः।

**उत्कच** त्रि०उद्गतः उन्नतो-कचोऽस्य। १विकचे केशशून्ये २उन्नतकेशे च "प्रथमस्य विकचः पादावस्थाल्लात् स पितुस्तदा। मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः। घटो ह्यस्योत्कच इति माता तं प्रत्यभाषत। अब्रवीत्तेन नामास्य घटोत्कच इति स्म सा" भा०आ०१५६।

**उत्कट** पु० अतीव कटति उद्+कट–अच्। १इक्षौ, २शरे च ३त्वक्पत्रे। (तेजपात) ४गुडत्वचि (दारचिनि) च न०। ४अविसंवादिविषये त्रि०। उत्कटकोटिसम्भवना तत्कौतुकस्य विषयताविशेषः स च अविसंवादिप्रवृत्तिप्रयोजकताप्रयोज्य इति नव्यनैयायिकाः। उद्गतः कटः आवरणं यस्य प्रादि०ब०। ५तीव्रे त्रि०। ६भिन्नकटे गजे पु०। "चन्द्रांशुनिकराभासाहाराः कामाच्चिदुत्कटाः" रामा०। मदोत्कटः। "शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः" सुश्रु०। "कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव" भा०स०६२अ०। ७विषमे त्रि०उत्कटासनम् "कांश्चित्त कुटजानां तु विटपेषूत्कटानिव" भा०व०१५६अ०। ७सैंहलतायाम् स्त्री।

**उत्कण्ठ** पु० उद्गतः कण्ठं पादोयत्र। "नारीपादौ च हस्तेन धारयेद्गलके पुनः। स्तनार्पितकरः कामी बन्धश्चोत्कण्ठसंज्ञित" इति रत्यङ्गे बन्धभेदे उद्गतःकण्ठो यस्य। २उद्ग्रीवे त्रि०। "रथस्थनोत्कण्ठमृगः" रघुः।

**उत्कण्ठा** स्त्री०उद्+कठि–अ। इष्टलाभाय कालाक्षमत्वरूपे १औत्सुक्ये २चिन्तायाञ्च। "यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया" शकु०। "उत्कण्ठायां हृदि न कुरुते कारयानां सहस्रम्" पदाङ्कदू० "त्वामुत्कण्ठा विरचित-

पदम्” केकोत्कण्ठा भवनशिखिनः” मेघदू०।

उत्कण्ठित त्रि० उत्कण्ठा जाताऽस्य तारकादि० इतच्। १उत्कण्ठायुक्ते २नायिकाभेदे स्त्री। “साश्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन” मेघदू०। नायिकाभेदस्तु “आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः। तदनागमदुःखेन विरहोत्कण्ठिता तु सा”सा०द० उक्तः। “उत्कण्ठिताऽसि तरले! न हि नहि सखि! पिच्छिलः पन्थाः सा०द०।

उत्कता स्त्री उत्कं तनोति तन–ड। गजपिप्पल्याम् शब्दच०। उत्कस्य भावः तल्। २ उत्सुकतायाम्।

उत्कन्धर त्रि० उन्नतः कन्धरोऽस्य प्रा०ब० वा नतलोपः। उन्नतग्रीवे “उत्कन्धरं दारुक इत्युवाच” माघः।

उत्कम्प पु० उत्कृष्टः कम्पः प्रा०त०। १ कामादिजनिते कम्पने। “सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि” माघ:। भावे ल्युट्। उत्कम्पनमप्यत्र न०। व्याधिर्जरा-“दिर्नातादौ भूमौच्छ्वोत्कम्पनादिकृत्”शैत्यभयखोत्कम्पनादयः” इति च सा०द०। उत्कम्पते अच्। २उत्कम्पान्विते त्रि०। “विस्मयोत्कम्पहृदया नाम चक्रुर्महर्षयः” भा०प० ३० अ०। णिनि। उत्कम्पिन् स्त्रियां ङीप्। उत्कम्पान्विते, उत्कम्पयति णिजन्तात् णिनि उत्कम्पकारके च “किमिदं हृदयोत्कम्पि मनो मम विषीदति” रामा०।

उत्कर पु० उद्+कॄ-अप्। १धान्यादीनां राशीकरणे २ प्रसारणे, ३ तृणापसारणे ४ हस्तपदादिविक्षेपे ५ समूहे च। “तृणपर्णोत्करयुतं कलुषं विषसंयुतम्” सुश्रु०। “केशरोत्करसंमिश्रमशोकानामिवोत्करम्” भा०व० ११९५०। कर्मणि अप्। ६ उत्कीर्यमाणे धूल्यादौ “अथ खनति मांसमुत्करमितिकरोति” शत०ब्रा० २,६,१,६,। उत्कीर्यतेऽत्र आधारे अप्। पांश्वादेरुत्क्षेपाधारे गर्त्तादौ, “चत्वालोत्करान्तरेण सञ्चरः” कात्या० १,३,४२, सञ्चरोमार्गः चत्वालोगर्त्तः उत्करस्तत्क्षेपणगर्त्तस्तयोरन्तरालेन विहितकार्य्याणि सञ्चारमार्गः। “प्रणीतोत्करावशिष्टेषु” कात्या० १,३,४३,।

उत्करादि पु० चतुरर्थ्याम् “उत्करादिभ्यश्छ” पा०विहितछप्रत्ययनिमित्ते शब्दगणे स च गणः “उत्कर संफल शफर पिप्पल पिप्पलीमूल अश्मन् सुवर्ण खलाजिन तिक कितव अणक त्रैवण पिचुक अश्वत्थ काश क्षुद्र भस्त्रा शाल जन्या अजिर चर्मन् उत्क्रोश क्षान्त खदिर शूर्पणाय श्यावनाय नैवाकव तृण वृक्ष शाक पलाश विजिगीषा अनेक आतप फल सम्पर अर्क गर्त्त अग्नि वैराणक इडा अरण्य निशान्त पर्ण नीचायक शंकर अवरोहित क्षार विशाल वेत्र अरीहण खण्ड वातागर मन्त्रणाई इन्द्रवृक्ष नितान्तावृक्ष आर्द्रवृक्ष”। छ उत्करीय तत्सन्निहितदेशादौ त्रि०।

उत्कर्ण त्रि० उन्नतःकर्णौ यस्य यस्मिन् वा प्रा०ब० वा नतलोपः। उत्कर्णोत्तोलने “उत्कर्णमुद्राहितकन्धरेण” माघः।

उत्कर्त्तन न० उत्+कृत–ल्युट्। १ छेदने २ उत्पाटने “दंशस्योत्कर्त्तनं कुर्य्यादुल्लम्बयुक्तस्य च” सुश्रु० उत्कर्त्तनञ्च मूढगर्भचिकित्सोपायः। सुश्रुते दर्शितः यथा। “उत्कर्षणापकर्षणस्थानापवर्त्तनोत्कर्त्तनभेदनच्छेदनपीडनर्जूकरणदारणानि”। उत्कर्त्तनकर्म्मयोग्यता च पुष्पफलालाबुकालिन्दकत्रपुसैर्वारुककर्कारुकप्रभृतिषु च्छेद्यविशेषान् दर्शयेदुत्कर्त्तनपरिकर्त्तनानि चोपदिशेत्” सुश्रु० उक्तवस्तुषु उपरिशस्त्रचालने तदीयोपरिस्थत्वङ्मात्रखण्डनं न त्वक्खण्डनं यथाभवति एवं गर्भरक्षणेन उपरितनवस्तुभागच्छेदनं यत्तदुत्कर्त्तनमिति शिक्षार्थमुक्तमिति तात्पर्य्यम्। २ उत्पाट्यच्छेदने च।

उत्कर्ष पु० उद्+कृष–घञ्। १प्राशस्त्ये २अतिशये ३स्वकालात् परकालकर्त्तव्यतायाम्। यथा पतितमासिकानां स्वकाले दैवादकरणे मृतसजातीयपरमासीयतिथौ करणम् “एकोद्दिष्टे तु संप्राप्ते यदि विघ्नं प्रजायते। मासेऽन्यस्मिन् तिथौ तस्मिन् तदा दद्यात् विचक्षणः” इति स्मृतौ-तथा विधानात्तस्य तथात्वम्। “पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः” रघुः। स्त्रीणाञ्च उत्कर्षः भर्त्तृगुणेनैव ‘यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि। तादृग्गुणा सा भवति समुद्रेणेव निम्नगा। अक्षमाला वशिष्ठेन संयुक्ताऽधमयोनिजा। शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम्। एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः। उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्त्तृगुणैः शुभैः” मनुः। “उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत् सह। निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्” मनुः।

उत्कर्षः निमित्ततयाऽस्त्यस्य अच्। ४उत्कर्षनिमित्ते त्रि० “निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम्। राजगामि च पैशुन्यं गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया” या०स्मृ०। उत्कर्षमुत्कर्षनिमित्तं राजकुलादावचतुर्वेद एव चतुर्वेदोऽहम्” इत्यनृतभाषणम्” मिता०। उत्कृष्यते अपकृष्टेभ्योगुणविशेषेण विभज्यत इति व्युत्पत्त्या गुणविशेषद्वारेण

अपकर्षात् विभजनम्। स च स्वस्वजातिषु उत्तमगुणेनैव। तत्र विप्राणां विनयविद्यादिना, राज्ञां शौर्य्यवीर्य्यादिना, वैश्यानां धनादिना, शूद्राणां नम्रतादिना। एवमन्येष्वन्यपि यथायथमूह्यम्। द्वयोर्मध्ये एकस्योत्कर्षेऽर्थे तरप् विद्वत्तरः शूरतरः बहूनां मध्ये तु तमप्। विद्वत्तमः शूरतमः इत्यादि। "उत्कर्षे हेतवः प्रोक्ता गुणालङ्काररीतयः" सा०द०। "उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते" सा०द०। "यथा वर्णानामुत्कर्षापकर्षकृतेन संयोगविशेषेण" सुश्रु० भावे ल्युट्। उत्कर्षणमप्यत्र न०। उत्कृष्यते कर्म्मणि घञ्। ५उत्कर्षान्विते। उत्कृष्ट कर्षः। ६उत्पाद्यकर्षणे उद्धरणे पु० "सन्धानमुत्कर्षमिव व्युदस्य" माघः। ल्युट्। उत्कर्षणमप्यत्र न०। "स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया। वस्त्रस्योत्कर्षणं राजा कृतवान् बुद्धिमोहितः" भा०स० ४६अ०।

उत्कर्षक त्रि० उत्कर्षयति उत्+कृष–णिच् ण्वुल्। १उत्कर्षाधायके "काव्यस्योत्कर्षका उच्यन्ते" सा०द० उद्+कृष–ण्वुल्। उत्पाद्य २कर्षणकारिणि। [त्कर्षे।

उत्कर्षित त्रि० उत्कर्षो जातोऽस्य तारका० इतच्। जातो-

उत्कर्षिन् त्रि० उत्कर्षति उत्तोल्य कर्षति। २उत्तोल्यकर्षके उद्धारके "अयं स रशनोत्कर्षी पीनस्तनविमर्द्दनः" सा०द० धृतम्। २उत्कर्षान्विते च। स्त्रियामुभयतो ङीप्।

उत्कल पु० "जगन्नाथप्रान्तदेश उत्कलः परिकीर्त्तितः" इत्युक्ते १उड्रदेशस्थे (उड़िष्या) इति ख्याते देशभेदे। स च देशः कूर्म्मविभागे प्राच्यतया वृ०स०उक्तः तच्च उड्रशब्दे उक्तम्। अकट्टे शामैत्वया च तस्य दाक्षिणात्यत्वमिति भेदः "उत्कलादेशितपथः कलिङ्गाभिमुखं ययोः" रघुः। ४सुद्युम्नपुत्रे राजभेदे। "मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि। सुद्युम्न इति विख्यातस्त्रिषु लोकेषु विश्रुतः" इत्युपक्रम्य "सुद्युम्नस्य च दायादास्त्रयः परमधार्म्मिकाः। उत्कलश्च गयश्चैव विनताश्वश्च भारत!। उत्कलस्योत्कला राजन्! विनताश्वस्य पश्चिमा। दिक् पूर्व्वा भरतश्रेष्ठ गयस्य तु गया पुरी" हरिवं० १० अ०। इत्युक्तेः तस्य उत्कला ख्या पुरी आसीत् तत्सम्बन्धित्वाच्च तद्देशस्योत्कलत्वम्। उत्कलोऽभिजनोऽस्य अण्। औत्कल तद्वासिजने तद्देशानां राजा अण्। औत्कल तद्देशानां राजनि। उभयत्र बहुषु अणो लुक्। "उत्कला मेकलाः पौण्ड्राः कलिङ्गान्ध्राश्च संयुगे" भा०कौ०४अ०। उत्कः सन् लाति ला+क। २व्याधे, ३भारवाहके च शब्दमा०। ४ध्रुवपुत्रभेदे पु०। "प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः। उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ। इडायामपि भार्य्यायां वायोः पुत्र्यां महाबलः!। पुत्रमुत्कलनामानं योषिद्रत्नमजीजनत्" भाग०४स्क०१०अ०। पञ्चगौडमध्ये ५विप्रभेदे च। "सारस्वताः कान्यकुब्जाः गौडमैथिलकोत्कलाः"।

उत्कलिका स्त्री उद्–कल–वुन्। १उत्कण्ठायाम्, कामादिजातायां २स्मृतौ च। ३तरङ्गे हला० "वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः" माघः। ४कलिकायां कोरके ५हेलायाञ्च हेमच०।

उत्कलिकाप्राय न० "भवेदुत्कलिकाप्रायं समासाढ्य दृढाक्षरम्" । छ०म० उक्ते गद्यभेदे

उत्कलित त्रि० क्त उद्+कल–क्त। उद्ग्रथिते

उत्कषण न० उद्+कष–ल्युट्। कर्षणे। "सद्यःसीरोत्कषणसुरभिक्षेत्रमारुह्य मालम्" मेघदू०।

उत्काका स्त्री उत्केदाकाति अक–अच्। प्रतिवर्षप्रसूतायां गवि शब्दचि० तु उत्कारेति शब्दमाह।

उत्काकुद त्रि० उन्नतं काकुदमस्य "उद्विभ्यां काकुदस्य" पा० अन्त्यलोपः समा०। उन्नततालुके।

उत्कार पु० उद्+कॄ–"कॄ धान्ये" पा० घञ्। धान्यादेः विक्षेपे "उत्कारेषु च धान्यानमनभीष्टपरिग्रहाः" भट्टिः।

उत्कारिका स्त्री उद्+कॄ–ण्वुल्। सुश्रुतोक्ते शोफादिनिवारके पाचनभेदे यथा "व्रणस्य षट्प्रिपक्रमा भवन्ति। अपतर्पणमालेप" इत्युपक्रम्य "निर्वापणमुत्कारिका कषाय" इत्यादीनि विभज्य उत्कारिकाविषयपाचनप्रकारोदर्शितः। "निवर्त्तते न यः शोफो विरेकान्तैरुपक्रमैः। तस्य संपाचनं कुर्य्यात् समाहृत्यौषधानि तु। दधितक्रासुराशुक्तधान्याम्लैर्योजितानि तु। स्निग्धानि लवणोतत्र पचेदुत्कारिकां शुभाम्"। "स्नैहिकेषु च बीजेषु पचेदुत्कारिकां शुभाम्"। "स्नैहिकफलसारोत्कारिका वा"। "सुक्ष्मीभाषिताशुत्कारिकां दापयेत्" इति च सुश्रु०।

उत्कास पु० उत्कमस्यति अस–अण् उप०स०। ऋषिभेदे तस्य गोत्रापत्यम् इञ्। औत्कासि तद्गोत्रापत्ये बहुषु तु अस्त्रियां तस्य लुक्। उत्कासाः। अस्यते क्षिप्यतेऽनेन अस करणे घञ् आसः ऊर्द्ध्वस्य कफस्य क्षेपजनस्य आसः। २ऊर्द्ध्वगतश्लेष्मोत्क्षेपकरोगभेदे च। स च अन्तःस्थितकफादेरूर्द्ध्ववायुना उत्क्षेपसाधनं रोगःखनामख्यातः।

**उत्कासिका** उत्कमूर्द्धजलमस्यति अस-ण्वुल्। ऊर्द्धप्रक्षेपके रोगभेदे।

**उत्कासन** न० उत् ऊर्द्ध्वस्य कस्य आसनं क्षेपणम् अस+णिच्--ल्युट्। अन्तःस्थकफरूपस्य कस्य ऊर्द्धदेशेन निःसारणरूपे व्यापारे। "आहारशेषस्ते प्रहीणाम्बुभक्ष्याणि ग्रसनोत्कासनप्रधमनैर्निर्हरेत्"। "सन्धिगतः पीड्यमानो न प्रवर्त्तत आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनोत्कासनप्रवाहणैश्च सवति" सुश्रु०। ( कासीकरान )

**उत्किर** त्रि० उद्--कॄ कर्त्तरि श। उत्क्षेपके। "पुष्परेणूत्किरैर्वातैः" रघुः "विनाय सात्यन्तहिमोत्किरानिलाः। "आभुतात्तीरमन्दारकुसुमोत्किरवीचिषु" कुमा० "शाखिभिः कुसुमोत्किरैः" भट्टिः

**उत्कीर्ण** त्रि० उद्+कॄ--क्त। १उल्लिखिते, २क्षतवेधे च "भयौ वज्रसमुत्कीर्ण" रघुः। ३ऊर्द्धं क्षिप्ते च "रजोभिस्तुरगोत्कीर्णैः" रघुः। ४लिखिते "उत्कीर्णापि विप्रलभते" काद०।

**उत्कीर्त्तन** न० उच्चैः कीर्त्तनम्। देवनामादेः उच्चैः कथने।

**उत्कीर्त्तित** त्रि० उद्+कीर्त्त-क्त। उच्चैः कथिते। [हारा०।

**उत्कुट** न० कुट--सङ्कोचे क उन्नतं कुटो यत्र। उत्तानशयने

**उत्कुण** त्रि० उत्तोल्य कुणयते हिंस्यते कुण--हिंसने अद० चुरा० कर्म्मणि अच्। उत्तोल्य हिंस्ये ( उकुण ) ख्याते केशकीटे हेमच०।

**उत्कूट** पु० उन्नतं कूटमस्य। छत्रे हारा०।

**उत्कूल** त्रि० उत्क्रान्तः कूलात् निरा०स०। १उत्क्रान्तकूले नद्यादौ। कूलमुद्गतः अत्या०स०। २कूलप्राप्ते। तत्करोतीत्यर्थे णिचि कर्म्मणि क्त। उत्कूलित। कूलं प्रापिते त्रि०। "प्रतिपथोत्कूलितशैवलाभाः" माघः।

**उत्कृति** स्त्री षड्विंशत्यक्षरपादके छन्दोभेदे। "उक्तात्युक्ते" त्युपक्रम्य "विकृतिः सङ्कृतिश्चैव तथातिकृतिरुत्कृतिः" वृ०र०

**उत्कृत्य** अव्य० उद्+कृत-ल्यप्। १उत्कर्त्तनं कृत्वेत्यर्थे। "उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधेत्यादि" मालती०। ऋदुपधत्वात् कर्म्मणि क्यप्। २उत्कर्त्तनीये छेदनीये त्रि०

**उत्कृष्ट** त्रि० उद्+कृष-क्त। १प्रशस्ते २उत्तमे ३उत्कर्षान्विते "सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः" "वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने" "कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्" "बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते" इति च मनुः। ४कर्षणयुक्ते क्षेत्रादौ च। अतः अतिशये तरप् तमप् च उत्कृष्टतरः उत्कृष्टतमः।

**उत्कृष्टभूम** पु० उत्कृष्टा भूमिर्यत्र ब० अच् समा०। प्रशस्तभूमौ देशे जटा० अभिधानात् पुंस्त्वम्।

**उत्कोच** पुंस्त्री उद्गतः कोचः सङ्कोचः कार्य्यप्रतिबन्धोयेन। अन्याय्यकर्म्मकरणार्थं स्वार्थप्रतिबन्धनिरासाय वादिप्रतिवादिभ्यां दाने ( घुस् ) इति ख्याते। "तथोत्कोचपरीहासव्याख्यासक्तयोगतः" अदत्तगणनायां नारदः। "उत्कोचजीविनो द्रव्यहीनान् कृत्वा प्रवासयेत्" या० स्मृ०। उत्कोचदत्तस्यादत्तत्वं यथा "दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकमिति" सामान्यतोऽभिधाय "अदत्तं तु भयक्रोधेत्यादिना षोडशविधादत्तपदार्था नारदेन दर्शिताः अदत्ताशब्दे तत्रोदाहृतम् ११२पृष्ठे दृश्यम् "उत्कोचेन कार्य्यप्रतिबन्धनिरासार्थमधिकृतेभ्योदत्तम्" मिता०

**उत्कोचक** पु० उत्कोचे उत्कोचद्रव्यग्रहणे प्रसृतः वा० कन्। १उत्कोचग्राहिणि "उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा" इत्युपक्रम्य "एवमादीन् विजानीयात् प्रकाशाल्लोककण्टकान्" मनुः। २धौम्याश्रमान्तिके तीर्थभेदे "यवीयान् देवलस्यैष वने भ्राता तपस्यति। धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छत"। "तत्र उत्कोचकं तीर्थं गत्वा धौम्याश्रमं ततः" भा०आ०१८३अ०।

**उत्क्रम** पु० उद्+क्रम-घञ् अवृद्धिः। १व्युत्क्रमे, विपरीतक्रमे "क्रमोत्क्रमाभ्यां वलुकादिमानम्" ज्यो०त०। "अथोत्क्रमायानुपक्रमाय शतमानं भवति" शत०ब्रा० १२,४,२,१०। उद्+क्रम-घञ्। २उत्क्रान्तौ ऊर्द्ध्वगतौ।

**उत्क्रमण** न० उद्+क्रम-ल्युट्। १अपसरणे "सोमवदुत्क्रमणमपगमनञ्च" कात्या० १८,५,१७। २देहात् जीवादेरपसरणे "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभि निःसृतैका। तयोर्द्धमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" कठोप० अस्य भाष्यं यथा "शतञ्च शतसङ्ख्याका एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनिःसृता नाड्यः शिरास्तासां मध्ये मूर्द्धानं भित्त्वाऽभिनिःसृता निर्गता एका सुषुम्ना नाम तयाऽन्तकाले हृदये आत्मानं वशीकृत्य योजयेत्। तया नाड्योर्द्धमुपरि आयन् गच्छन्नादित्यद्वारेणामृतत्वममरणधर्म्मत्वमापेक्षिकम्। "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति स्मृतेः। ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान् ब्रह्मलोकगतान्, विष्वङ् नानाविधगतयोऽन्या नाड्यः उत्क्रमणे निमित्तं भवन्ति संसारप्रतिपत्त्यर्था एव भवन्ति-

ण्यर्थः"। तत्रोत्क्रमणप्रकारः वृ० उ० ६,३,४,ब्रा० दर्शितो यथा "तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जद्याति यत्रैतदूर्द्ध्वोच्छ्वासी भवति" ३५क०। स यत्रायमणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव" ३६क०। "तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवति" ३८क०।"स यत्रायमात्माऽबल्यं न्येत्य सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्तते तथा रूपज्ञो भवति १। एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति, चक्षुष्टो वा मूर्द्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति। तं विद्याकर्म्मणी समन्वारभेते पूर्व्वप्रज्ञा च" ४ब्रा०।२क०।

अत्र शाङ्क०भाष्यं यथा। "इत आरभ्यास्य संसारोवर्ण्यते। यत्रायमात्मा स्वप्नान्ताद्बुद्धान्तमागत एवमयमस्माद्देहाद्देहान्तरं प्रतिपत्स्यत इत्याह तत्र दृष्टान्तः। तत्तत्र यथा लोके अनः शकटं सुसमाहितं सुष्ठु भृशं वा समाहितं भाण्डोपस्करणेनोलूखलमुषलशूर्पपिठरादिनान्नाद्येन च सम्पन्नं सम्भारेणाक्रान्तमित्यर्थः। तथा भाराक्रान्तं सदुत्सर्जच्छब्दं कुर्व्वद्याया यायाद्गच्छेत् शाकटिकेनाधिष्ठितं सत्। एवमेव यथोक्तदृष्टान्तोऽयं शारीरः शरीरे भवः। कोऽसौ आत्मा लिङ्गोपाधिर्यः स्वप्नबुद्धान्ताविव जन्ममरणाभ्यां पाप्मसंसर्गवियोगलक्षणाभ्यामिहलोकपरलोकावनुसञ्चरति यस्योत्क्रमणमनु प्राणाद्युत्क्रमणम्। स प्राज्ञेन परेणात्मना स्वयंज्योतिःस्वभावेनान्वारूढोऽधिष्ठितोऽवभास्यमानस्तथा चोक्तम्" "आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते" इति। उत्सर्जन् याति तत्र चैतन्यात्मज्योतिषा भास्ये लिङ्गे प्राणप्रधाने गच्छति सति तदुपाधिरप्यात्मा गच्छतीव। तथा च श्रुत्यन्तरम् "कस्मिन्नहमित्यादि" "ध्यायतीवेति" च। अत एवोक्तं प्राज्ञेनात्मनान्वारूढ इत्यन्यथा प्राज्ञेनैकीभूतः शकटवच्छब्दमुत्सर्जन् याति तेन लिङ्गोपाधिरात्मा उत्सर्जन्मर्म्मसु निःकृत्यमानेषु दुःखवेदनयार्त्तः शब्दं कुर्व्वन् याति गच्छति। तत्कस्मिन्काले? इत्युच्यते। यत्रैतद्भवत्येतदिति क्रियाविशेषणमूर्द्ध्वोच्छ्वासी यत्रोर्द्ध्वोच्छ्वासित्वमस्य भवतीत्यर्थः। दृश्यमानस्याप्यनुवदनं वैराग्यहेतोः। ईदृशः कष्टः खल्वयं संसारो येनोत्क्रान्तिकाले मर्म्मसूत्कृत्यमानेषु स्मृतिलोपो दुःखवेदनार्त्तस्य पुरुषार्थसाधनप्रतिपत्तौ चासामर्थ्यं परवशीकृतचित्तस्य। तस्माद्यावदियमवस्था नागमिष्यति तावदेव पुरुषार्थसाधनकर्त्तव्यतायामप्रमत्ता भवतेत्याह कारुण्याच्छ्रुतिः ३५क०। तदस्योर्द्ध्वोच्छ्वासित्वं कस्मिन्काले? किं निमित्तं? कथं? किमर्थं? वा स्यादित्येतदुच्यते। सोऽयं प्राकृतः शिरःपाण्यादिमान् पिण्डो यत्र यस्मिन् कालेऽयमणिमानमणोर्भावमणुत्वं कार्श्यमित्यर्थः नि इति निगच्छति। किं निमित्तं जरया वा स्वयमेव कालपक्वफलवज्जीर्णः कार्श्यं गच्छति उपतपतीत्युपतपत् ज्वरादिरोगस्तेनोपतपता वा उपतप्यमानो हि रोगेण विषमाग्नितयान्नं भुक्तं न जरयति ततोऽन्नरसेनानुपचीयमानः पिण्डः कार्श्यमापद्यते तदुच्यते उपतपता वेति अणिमानं निगच्छति। यदात्यन्तकार्श्यं प्रतिपन्नो ज्वरादिनिमित्तैस्तदोर्द्ध्वोच्छ्वासी भवति। यदोर्द्ध्वोच्छ्वासी तदा सुसमाहितसम्भारशकटवदुत्सर्जन् याति जराभिभवो रोगादिपीडनं कार्श्यापत्तिश्च शरीरवतोऽवश्यम्भाविन एतेऽनर्था इति वैराग्यार्थमिदमुच्यते। यदाऽसावुत्सर्जन् याति तदा कथं शरीरं विमुञ्चतीति दृष्टान्त उच्यते। तत्तत्र यथाम्रं वा फलमुदुम्बरं वा फलं पिप्पलं वा फलं विषमानेकदृष्टान्तोपादानं मरणस्यानियतनिमित्तताख्यापनार्थम्। अनियतानि हि मरणस्य निमित्तान्यसङ्ख्यातानि च। एतदपि वैराग्यार्थमेव। यस्मादयमनेकमरणनिमित्तवांस्तस्मात्सर्व्वदा मृत्योरास्ये वर्त्तत इति। बन्धनाद्बध्यते येन वृन्तेन स बन्धनकारणो रसो यस्मिन् वा बध्यत इति वृन्तमेवोच्यते बन्धनम्। तस्माद्रसाद्वृन्ताद्वा बन्धनात्प्रमुच्यते वाताद्यनेकनिमित्तम्,एवमेवायं पुरुषो लिङ्गात्मा लिङ्गोपाधिःएभ्योऽङ्गेभ्यश्चक्षुरादिदेहावयवेभ्यः सम्प्रमुच्यते सम्यङ्निर्लेपेन प्रमुच्यते न सुषुप्तगमनकाल इव प्राणेन रक्षन्। किन्तर्हि सह वायुनोपसंहृत्य, पुनः प्रति-

न्यायं पुनःशब्दात् पूर्वमप्ययं देहाद्देहान्तरमसकृद्गतवान् यथा स्वप्नबुद्धान्तौ पुनः पुनर्गच्छति तथा पुनःप्रतिन्यायं प्रतिगमनं यथागतमित्यर्थः। प्रतियोनि योनिं योनिं प्रति कर्म्मश्रुतादिवशादाद्रवति। किमर्थम्? प्राणायैव प्राणव्यूहायैवेत्यर्थः। सप्राण एव हि गच्छति ततः प्राणायैवेति विशेषणमनर्थकं प्राणव्यूहाय हि गमनं देहाद्देहान्तरं प्रति। तेन ह्यस्य कर्मफलभोगार्थसिद्धिः। न प्राणसत्तामात्रेण तस्मात्तादर्थ्यं युक्तं विशेषणं प्राणव्यूहायेति" ३६। "तमेवं जिगमिषुं के सह गच्छन्ति? ये वा गच्छन्ति ते किं तत्प्रयुक्ता? आहोस्वित्तत्कर्म्मवशात्स्वयमेव गच्छन्ति परलौकिकशरीरकर्तृत्वेव भूतानीत्यत्रोच्यते दृष्टान्तः। तद्यथा राजानं प्रयियासन्तं प्रकर्षेण यातुमिच्छन्तमुग्राः प्रत्येनसः सूतग्रामण्य एवाभिसमायन्त्याभिमुख्येन समायान्त्येकीभावेन तमभिमुखा आयान्त्यनाज्ञप्ता एव राज्ञा केवलतज्जिगमिषाभिज्ञाः। एवमेवेममात्मानं भोक्तारमन्तकाले मरणकाले सर्व्वे प्राणा वागादयोऽभिसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवतीति व्याख्यातम्" ३८।

"स यत्रायमात्मेति संसारोपवर्णनं प्रस्तुतम्। तत्रायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्येत्युक्तम्। तत् सम्प्रमोक्षणं कस्मिन् काले कथं वेति? सविस्तरं संसरणं वर्णयितव्यमित्यारभ्यते। सोऽयमात्मा प्रस्तुतो यत्र यस्मिन् काले अबल्यमबलभावं नि एत्य गत्वा यद्देहस्य दौर्बल्यं तदात्मन एव दौर्बल्यमित्युपचर्यते अबल्यं न्येत्येति। न ह्यसौ स्वतोऽमूर्त्तत्वादबलभावं गच्छति तथा सम्मोहमिव संमूढतां संमोहोऽविवेकाभावः संमोहमिव नि एति निगच्छति न चास्य स्वतः संमोहोऽसंमोहो वास्ति नित्यचैतन्यज्योतिःस्वभावत्वात् तेनेवशब्दः संमोहमिव न्येतीति। उत्क्रान्तिकाले हि करणोपसंहारनिमित्तो व्याकुलीभाव आत्मन इव लक्ष्यते लौकिकैः तथा च वक्तारो भवन्ति संमूढः संमूढोऽयमिति। अथ वोभयत्रेवशब्दप्रयोगो योज्योऽबल्यमिव न्येतीत्यसम्मोहमिव न्येतीति। उभयस्य परोपाधिनिमित्तत्वाविशेषात् समानकर्तृकनिर्द्देशाच्च। अथास्मिन् काल एते प्राणा वागादय एनमात्मानमभिसमायन्ति तदास्य शारीरस्यात्मनोऽङ्गेभ्यः सम्प्रमोक्षणम्। कथं पुनः सम्प्रमोक्षणं, केन वा प्रकारेणात्मानमभिसमायन्ति? इत्युच्यते। स आत्मा एतास्तेजोमात्रास्तेजसो मात्रास्तेजोमात्रास्तेजोऽवयवा रूपादिप्रकाशकत्वाच्चक्षुरादीनि करणानीत्यर्थः। ता एताः समभ्याददानः सम्यङ्निर्लेपेनाभ्याददानः आभिमुख्येनाददानः संहरमाणस्तत्स्वप्नापेक्षया विशेषणं समिति न तु स्वप्ने निर्लेपेन समभ्यादानमस्ति त्वादानमात्रम्। "गृहीता वाक् गृहीतश्चक्षुरस्य लोकस्य सर्वावतो मात्रामुपादाय शुक्रमादायेत्यादि" वाक्येभ्यः हृदयमेव पुण्डरीकाकाशमन्ववक्रामत्यन्वत्र गच्छति हृदयेऽभिव्यक्तविज्ञानो भवतीत्यर्थो बुद्ध्यादिविक्षेपोपसंहारे सति। न हि तस्य स्वतश्चलनं विक्षेपोपसंहारादिविक्रिया वा "ध्यायतीव लेलायतीव" इत्युक्तत्वात्। बुद्ध्याद्युपाधिद्वारैव हि सर्वविक्रियाध्यारोप्यते तस्मिन्। कदा पुनस्तस्य तेजोमात्राभ्यादानमित्युच्यते। स यत्रैष चक्षुषि भवश्चाक्षुषः आदित्यांशो भोक्तुः कर्म्मणा प्रयुक्तो यावद्देहधारणं तावच्चक्षुषोऽनुग्रहं कुर्वन् वर्त्तते। मरणकाले त्वस्य चक्षुषोऽनुग्रहं परित्यजति स्वमादित्यात्मानं प्रतिपद्यते। तदेतदुक्तम् "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति, वातं प्राणश्चक्षुरादित्यमित्यादि"। पुनर्देहग्रहणकाले संश्रयिष्यन्ति तथा स्वप्स्यतः प्रबुध्यतश्च। तदेतदाह। चाक्षुषः पुरुषो यत्र यस्मिन् काले पराङ् पर्य्यावर्त्तते परि समन्तात् पराङ् व्यावर्त्तत इति यथाऽत्रास्मिन् कालेऽरूपज्ञो भवति मुमूर्षुर्हि रूपं न जानाति। तदायमात्मा चक्षुरादितेजोमात्राः समभ्याददानो भवति स्वप्न इव। एकीभवति करणजातं स्वेन लिङ्गात्मना। पार्श्वस्था आहुर्न पश्यतीति। तथा प्राणदेवतानिवृत्तौ प्राणमेकीभवति लिङ्गात्मना। तदा न जिघ्रतीत्याहुः। समानमन्यत्। जिह्वायां सोमो वरुणो वा देवता तन्निवृत्त्यपेक्षया न रसयत इत्याहुः। तथा न वदति न शृणोति न मनुते न स्पृशति न विजानातीत्याहुस्तदोपलक्ष्यते देवतानिवृत्तिः करणानाञ्च हृदय एकीभावः तत्र हृदय उपसंहृतेषु योऽन्तर्व्यापारः स कथ्यते। तस्य ह एतस्य प्रकृतस्य हृदयस्य हृदयच्छिद्रस्येत्येतत्। अग्रं नाडीमुखं निर्गमनद्वारं प्रद्योतते स्वप्नकाल इव स्वेन भासा तेजोमात्रादानकृतेन स्वेनैव ज्योतिषाऽऽत्मनैव च तेनात्मज्योतिःप्रद्योतेन हृदयाग्रेण एष आत्मा विज्ञानमयो लिङ्गोपाधिर्निर्गच्छति निष्क्रामति। तथाऽऽथर्वणे "कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि? कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति? स प्राणमसृजतेति" तत्र चात्मचैतन्यज्योतिः सर्वदाभिव्यक्ततरं तदुपाधिद्वारात्मनि जन्ममरणगमनागमनादिसर्वविक्रियालक्षणः संव्यवहारस्तदात्मकं हि द्वादशविधं करणम्। बुद्ध्यादि

तत्र त्वं तज्जीवनं सोऽन्तरात्मा जगतस्तस्थुषश्च। तेन प्रद्योतेन हृदयाग्रप्रकाशेन निःक्रममाणः। केन मार्गेण निष्क्रामतीत्युच्यते। चक्षुष्टो वाऽऽदित्यलोकप्राप्तिनिमित्तं ज्ञानं कर्म्म वा यदि स्यात्। मूर्द्ध्नो वा ब्रह्मलोकप्राप्तिनिमित्तं चेत्। अन्येभ्यो वा शरीरदेशेभ्यः शरीरावयवेभ्यो यथाकर्म्म यथाश्रुतमिति तं विज्ञानात्मानमुत्क्रामन्तं परलोकाय प्रस्थितं परलोकायोद्भूताकूतमित्यर्थः। सर्व्वाधिकारस्थानीयो राजेवानूत्क्रामति तञ्च प्राण मनूत्क्रामन्तं वागादयः सर्व्वे प्राणा अनूत्क्रामन्ति। यथाप्रधानान्वाचिख्यासेयम् न तु क्रमेण सार्थवदुगमनमिह विवक्षितम्। एष आत्मा सविज्ञानो भवति स्वप्न इव विशेषविज्ञानवान् भवति कर्म्मवशाद्स्वतन्त्रः स्वातन्त्र्येण हि सविज्ञानत्वे सर्व्वः कृतकृत्यः स्यात् नैव तु तल्लभ्यते अतएवाह व्यासः "सदा तद्भावभावितः" इति. कर्म्मणानुद्भाव्यमानेनान्तःकरणवृत्तिविशेषाश्रितवासनात्मकविशेषविज्ञानेन सर्व्वोलोक एतस्मिन् काले सविज्ञानोभवति सविज्ञानमेव च गन्तव्यमन्ववक्रामत्यनुगच्छति विशेषविज्ञानोद्भासितमेवेत्यर्थः। तस्मात्तत्काले स्वातन्त्र्यार्थं योगधर्म्मानुसेवनं परिसंख्यानाभ्यासश्च विशिष्ट पुण्योपचयश्च श्रद्दधानैः परलोकार्थिभिरप्रमत्तैः कर्त्तव्य इति सर्व्वशास्त्राणां यत्नतोविधेयोऽर्थो दुश्चरिताच्चोपरमणम् न हि तत्काले शक्यते किञ्चित्संपादयितुम् कर्म्मणानीयमानस्य स्वातन्त्र्याभावात् "पुण्योवै पुण्येन कर्म्मणा भवति पापः पापेन" इत्युक्तेः एतस्य ह्यनर्थस्योपशमोपायविधानाय सर्व्वशाखोपनिषदः प्रवृत्ताः नहि तद्विहितोपायानुसेवनं मुक्त्वात्यन्तिकस्यानर्थस्योपशमोपायोऽस्ति तस्मादत्रैवोपनिषद्विहितोपाये यत्नपरैर्भवितव्यमित्येष प्रकरणार्थः शकटवत्सम्भृतसम्भार उपसर्ज्जद्यातीत्युक्तं किंपुनस्तस्य परलोकाय प्रस्थितस्य पथ्यदनं शाकटिकसम्भारस्थानीयं गत्वा वा परलोकं यद्भुङ्क्ते शरीराद्यारम्भकञ्च यत्तत् किम्? इत्युच्यते। तं परलोकाय गच्छन्तमात्मानं विद्याकर्म्मणी विद्या च कर्म्म च विद्याकर्म्मणी विद्या सर्व्वप्रकारा विहिता प्रतिषिद्धा अविहिताऽप्रतिषिद्धा च तथा कर्म्म विहितं प्रतिषिद्धं चाविहितमप्रतिषिद्धञ्च समन्वारभेते सम्यगन्वारभेते अन्वालभेते अनुगच्छतः पूर्व्वप्रज्ञा च पूर्व्वानुभूतविषया प्रज्ञा पूर्व्वप्रज्ञातीतकर्म्मफलानुभववासनेत्यर्थः। सा च वासनाऽऽपूर्व्वकर्म्मारम्भे कर्म्मविपाके चाङ्गं भवति। तेनासावश्यमन्वारभते नहि तया वासनया विना केनचित् कर्म्म कर्त्तुं फलं चोपभोक्तुं शक्यते नह्यनभ्यस्ते विषये कौशलमिन्द्रियाणां भवति, पूर्व्वानुभववासनाप्रवृत्तानां त्विन्द्रियाणामिहाभ्यासमन्तरेण कौशलमुपपद्यते, दृश्यते च केषाञ्चित् कासुचित् क्रियासु चित्रकर्म्मादिलक्षणासु विनैवेहाभ्यासेन जन्मत एव कौशलम् कासुचिदत्यन्तसौकर्य्ययुक्तास्वप्यकौशलम् केषाञ्चित्, तथा विषयोपभोगेषु स्वभावत एव केषाञ्चित्कौशलाकौशले दृश्येते तच्चैतत् सर्व्वं पूर्व्वप्रज्ञोद्भवानुद्भवनिमित्तं, तेन पूर्व्वप्रज्ञया विना कर्म्मणि वा फलोपभोगे वा न कस्यचित् प्रवृत्तिरुपपद्यते, तस्मादेतत्त्रयं शाकटिकभारस्थानीयं परलोकपथ्यदनं विद्याकर्म्मपूर्व्वप्रज्ञाख्यम्। यस्माद्विद्याकर्म्मणी पूर्व्वप्रज्ञा च देहान्तरप्रतिपत्त्युपभोगसाधनं तस्माद्विद्याकर्म्मादि शुभमेव समाचरेत्। यथा इष्टदेहसंयोगभोगोपभोगौ स्यातामिति प्रकरणार्थः" भा॰।

शा॰ सू॰ भाष्ययोश्च उत्क्रमणप्रकारः प्रपञ्चितो यथा "वाङ्मनसि दर्शनाच्छब्दाच्च" सू॰। "अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन् प्रथमं तावद्यथाशास्त्रमुत्क्रान्तिक्रममाचष्टे समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति। अस्ति प्रायणविषया श्रुतिः "अस्य सोम्य! पुरुषस्य प्रयतोवाङ्मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यान्देवतायामिति" किमिह वाच एव वृत्तिमत्याः मनसि सम्पत्तिरुच्यते उत वाग्वृत्तेरिति? विशयः। तत्र वागेव तावन्मनसि सम्पद्यत इति प्राप्तं तथा हि श्रुतिरनुगृहीता भवति। इतरथा लक्षणा स्यात् श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा तस्माद्वाच एवायं मनसि प्रविलय इत्येवं प्राप्ते ब्रूमः। वाग्वृत्तिर्मनसि सम्पद्यत इति। कथं वाग्वृत्तिरिति व्याख्यायते यावता वाङ्मनसीत्येवाचार्य्यः पठति। सत्यमेतत् पठिष्यति तु "परस्मात् अविभागोवचनादिति"। तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते। तत्त्वप्रलयविवक्षायान्तु सर्व्वत्रैवाविभागसाम्यात् किं परत्रैव विशिंष्यादविभाग इति। तस्मादत्र वृत्त्युपसंहारविवक्षायां वाग्वृत्तिः पूर्व्वमुपसंह्रियते मनोवृत्ताववस्थितायामित्यर्थः। कस्मात्? दर्शनात् दृश्यते हि वाग्वृत्तेः पूर्व्वोपसंहारोमनोवृत्तौ विद्यमानायाम्। न तु वाच एव वृत्तिमत्यामनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते। ननु श्रुतिसामर्थ्याद्वाच एवायं मनस्यप्यय इत्युक्तं नेत्याह अतत्प्रकृतित्वात् यस्य हि यत उत्पत्तिस्तस्य

तत्र तयोनाश्योद्भवे शरावस्य । न च मनसो वागुत्प-
द्यत इति किञ्चन प्रमाणमस्ति । दृश्यन्तूद्भवाभिभवौ त्व
प्रकृतिसमाश्रयावपि दृश्येते । पार्थिवेभ्यो ह्यन्धनेभ्यस्तैजस-
स्याग्नेर्वृत्तिरुद्भवति अप्सु चोपशाम्यति । कथं तर्ह्यस्मिन्
पक्षे वाङ्मनसि सम्पद्यत इति शब्दः, इत्यत आह शब्दा-
च्चेति । शब्दोऽप्यस्मिन् पक्षेऽवकल्पते वृत्तिवृत्तिमतोरभेदोप-
चारादित्यर्थः" भा० । "अतएव च सर्वाण्यनु" सू० ।
"तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः"
इत्यत्राविशेषेण सर्वेषामेवेन्द्रियाणां मनसि सम्पत्तिः श्रूयते
तत्रापि एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्य-
वस्थिते वृत्तिलोपदर्शनात्तत्त्वप्रलयासम्भवाच्छब्दोपपत्तेश्च
वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्त्तन्ते । सर्वे-
षाङ्करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणं
वाङ्मनसि सम्पद्यत इत्युदाहरणानुरोधेन" भा० ।
"तन्मनः प्राण उत्तरात्" सू० । "समधिगतमेतत् वा-
ङ्मनसि सम्पद्यत इत्यत्र वृत्तिसम्पत्तिर्विवक्षितेति ।
अथ यदुत्तरं वाक्यम् "मनः प्राणइति" किमत्रापि वृत्ति-
सम्पत्तिरेव विवक्षिता उत वृत्तिमत्सम्पत्तिरिति ?
विचिकित्सायां वृत्तिमत्सम्पत्तिरेवेति श्रुत्यनुग्रहात्तत्-
प्रकृतित्वोपपत्तेश्च तथा हि "अन्नमयं हि सौम्य ! मन"
आपोमयः प्राण" इत्यत्र अन्नयोनि मन आमन-
न्ति अब्योनिञ्च प्राणम् । आपश्चान्नमसृजन्तेति श्रुतेः"
"अतश्च यन्मनः प्राणे प्रलीयते अन्नमेव तदप्सु प्रलीयते-
अन्नं हि मनः, आपश्च प्राणः, प्रकृतिविकाराभेदादि-
त्येवं प्राप्ते ब्रूमः तदप्यागृहीतबाह्येन्द्रिय-
वृत्तिमनोवृत्तिद्वारेणैव प्राणे प्रलीयत इत्युत्तराद्वाक्यादव-
गन्तव्यम् । तथा हि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ
परिस्पन्दात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृ-
श्यते । न च मनसः स्वरूपाप्ययः प्राणे सम्भ-
वति अतत्प्रकृतित्वात् । ननु दर्शितं मनसः
प्रकृतित्वम् । नैतत्सारं न हीदृशेन प्राणाडिकेन
तत्प्रकृतित्वेन मनः प्राणे सम्पत्तुमर्हति । एवमपि ह्यन्ने
मनः सम्पद्येत अप्सु चान्नं अप्स्वेव च प्राणः । नह्येतस्मि-
न्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्योमनोजायत इति
किञ्चन प्रमाणमस्ति । तस्मान्न मनसः प्राणे स्वरूपाप्ययः ।
वृत्त्यप्यये तु शब्दोऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारादिति
दर्शितम्" भा० । "सोऽध्यक्षे तदुपगमादिभ्यः" सू० ।
"स्थितमेतदस्य यतोनोत्पत्तिस्तस्य तस्मिन् वृत्तिलयो
न स्वरूपलय इति । इदमिदानीं प्राणस्तेजसीत्यत्र
चिन्त्यते किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः किं
वा देहेन्द्रियपञ्जराध्यक्षे जीवे ? इति । तत्र श्रुतेरनति
शङ्क्यत्वात् प्राणस्य तेजस्येव सम्पत्तिः स्यात् अश्रुतकल्पना-
या अन्याय्यत्वादित्येवं प्राप्ते प्रतिपद्यते सोऽध्यक्ष इति ।
स प्रकृतः प्राणोऽध्यक्षेऽविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञा-
नात्मन्यवतिष्ठते तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः । कुतः ?
तदुपगमादिभ्यः । "एवमेवेममात्मानमन्तकाले सर्वे प्राणा
अभिसमायन्ति यत्रैतदूर्द्ध्वोच्छ्वासी भवतीति" हि श्रुत्य-
न्तरम् अध्यक्षोपगामिनः सर्वान् प्राणानविशेषेण दर्शयति ।
विशेषेण च "तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति" पञ्चवृत्तेः
प्राणस्याध्यक्षानुगामितां दर्शयति तदनुवृत्तिताञ्चेतरेषाम्,
"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति" ।
"सविज्ञानोभवतीति" चाध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन
तस्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति ! ननु
"प्राणस्तेजसीति" श्रूयते कथं प्राणोऽध्यक्ष इत्यधिकावापः
क्रियते । नैष दोषः अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य
श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात् । कथं तर्हि
"प्राणस्तेजसीति" श्रुतिरित्यत आह" भा० । "भूतेषु
तच्छ्रुतेः" सू० । "स प्राणसंयुक्तोऽध्यक्षः तेजःसहचरितेषु
भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठत इत्यवगन्तव्यम्
"प्राणस्तेजसि" इत्यतः श्रुतेः । ननु चेयं श्रुतिः प्राणस्य
तेजसि स्थितिं दर्शयति न प्राणसंयुक्तस्याध्यक्षस्य । नैषःदोषः
"सोऽध्यक्षः" इत्यध्यक्षस्याप्यन्तराल उपसंख्यातत्वात् ।
योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं
व्रजति सोऽपि स्रुघ्नात् पाटलिपुत्रं यातीति शक्यते वदि-
तुम् । तस्मात् प्राणस्तेजसीति प्राणसंयुक्तस्याध्यक्षस्यैव त-
त्तेजःसहचरितेषु भूतेष्ववस्थानम् । कथं तेजःसहचरि-
तेषु भूतेष्वित्युच्यते यावता तेजः श्रूयते "प्राणस्तेज-
सि" इत्यत आह" भा० । "नैकस्मिन् दर्शयतोहि" सू० ।
"नैकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽव-
तिष्ठते कार्य्यस्य शरीरस्यानेकात्मकत्वदर्शनात् । दर्शयत-
श्चैतमर्थं प्रश्नप्रतिवचने" "आपः पुरुषवचस" इति ।
तद्व्याख्यातं "त्र्यात्मकत्वात्तु भूयस्त्वात्" इत्यत्र । श्रुति-
स्मृती चैतमर्थं दर्शयतः । श्रुतिः "पृथिवीमय आपमयस्तेज-
मयो वायुमय आकाशमय" इत्याद्या । स्मृतिरपि "अण्व्यो-
मात्रा विनाशिन्यो दशार्द्धानान्तु याः स्मृताः । ताभिः
सार्द्धमिदं सर्वं सम्भवत्यनुपूर्व्वशः"इत्याद्या । ननु चोपसं-

ष्ठितेषु करणेषु शरीरान्तरप्रेप्सावेलायां कायान्तदा पुरुषो भवतीत्युपक्रम्य श्रुत्यन्तरं कर्म्माश्रयतां निरूपयति "तौ ह यदूचतुः कर्म्म हैव तदूचतुः अथ ह यत् प्रशशंसतुः कर्म्म हैव तत् प्रशशंसतुरिति"। तत्रोच्यते। तत्र कर्म्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्येन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्म्माश्रयतोक्ता इह पुनर्भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम्। प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्म्मणः प्रदर्शितं न त्वाश्रयान्तरं निवारितम् तस्मादविरोधः" भा०। "समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य" सू० "सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना ? किं वा विशेषवतीति ? विशयानानां विशेषवतीति तावत् प्राप्तम्। भूताश्रयविशिष्टा ह्येषा पुनर्भवाय भूतान्याश्रीयन्ते न च विदुषः पुनर्भवः सम्भवति" "अमृतत्वं हि विद्वानश्नुते" इति श्रुतेः। तस्मादविदुष एवैषोत्क्रान्तिः। ननु विद्याप्रकरणे समाम्नानाद्विदुष एवैषा भवेत्, न स्वापादिवद्यथाप्राप्तानुकीर्त्तनात्। तथा हि "यत्रैतत्पुरुषः स्वपिति नाम अशिशिषति नाम पिपासति नामेति" च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्त्यन्ते विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधित्स्यन्ते एवमियमप्युत्क्रान्तिर्महाजनगतैवानुकीर्त्यते यस्यां परस्यां देवतायां पुरुषस्य प्रयतस्तेजः सम्पद्यते "स आत्मा तत्त्वमसीति" प्रतिपादयितुम्। प्रतिषिद्धा चैषा विदुषः। तस्मादविदुष एवैषेत्येवं प्राप्ते ब्रूमः। समानैषोत्क्रान्तिः वाङ्मनसीत्याद्या विद्वदविदुषोरासृत्युपक्रमाद्भवितुमर्हति अविशेषश्रवणात्। अविद्वान् देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति विद्वांस्तु ज्ञानप्रकाशितं मोक्षं नाडीद्वारमाश्रयते तदेतदासृत्युपक्रमादित्युक्तम्। ननु अमृतत्वं विदुषा प्राप्तव्यं न च तद्देशान्तरायत्तं तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति"। अत्रोच्यते। अनुपोष्य चेदम् अदग्ध्वाऽत्यन्तमविद्यादीन् क्लेशानपरविद्यासामर्थ्यादापेक्षिकममृतत्वं प्रेप्सते। सम्भवति तत्र सृत्युपक्रमो भूताश्रयत्वञ्च। न हि निराश्रयाणां प्राणानां गतिरुपपद्यते। तस्माददोषः" भा०। "तदापीतेः संसारव्यपदेशात्" सू०। "तेजः परस्यां देवतायामित्यत्र प्रकरणसामर्थ्यात्तद्यथा प्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां सम्पद्यत इत्येतदुक्तं भवति। कीदृशी-

पुनरियं सम्पत्तिः स्यादिति चिन्त्यते। तत्रात्यन्तिक एव तावत् स्वरूपप्रविलय इति प्राप्तं तत्प्रकृतित्वोपपत्तेः। सर्व्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्। तस्मादात्यन्तिकोऽयमविभागापत्तिः इत्येवं प्राप्ते ब्रूमः। तत्तेजआदिभूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतमाऽपीतेरा संसारमोक्षात् सम्यग्ज्ञाननिमित्तादवतिष्ठते। "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम्" इत्यादिसंसारव्यपदेशात्। अन्यथा हि सर्वः प्रायणसमय एवोपाधिप्रत्यस्तमयादत्यन्तं ब्रह्म सम्पद्येत तत्र विधिशास्त्रं चानर्थकं स्यादविद्याशास्त्रञ्च। मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति। तस्मात्तत्प्रकृतित्वेऽपि सुषुप्तिप्रलयवद्बीजभावावशेषैवैषा सत्सम्पत्तिः" भा०। "सूक्ष्मं प्रमाणतश्च तथोपलब्धेः" सू०। "तच्चेतरभूतसहितं तेजो जीवस्याश्रयभूतमस्माच्छरीरात् प्रवसत आश्रयभूतं स्वरूपतः परिमाणतश्च सूक्ष्मं भवितुमर्हति। तथा हि नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते। तत्र तनुत्वात् सञ्चारोपपत्तिः स्वच्छत्वाच्चाप्रतीघातोपपत्तिः अतएव च देहान्निर्गच्छत् पार्श्वस्थैर्नोपलभ्यते" भा०। "नोपमर्दनातः" सू०। "अतएव च सूक्ष्मत्वान्नास्य स्थूलशरीरस्योपमर्द्देन दाहादिनिमित्तेनेतरत् सूक्ष्मशरीरमुपहन्यते" भा०। "अस्यैव चोपपत्तेरेष ऊष्मा" सू०। "अस्यैव च सूक्ष्मशरीरस्यैष ऊष्मा यमेतस्मिन् जीवच्छरीरे संस्पर्शेनोष्माणं विजानाति। तथा हि मृतावस्थायामवस्थितेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते जीवदवस्थायामेव तूपलभ्यते इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति। तथा च श्रुतिः "उष्ण एव जीविष्यन् शीतो मरिष्यन्निति" भा०। "प्रतिषेधादिति चेन्न शारीरात्" सू०। "अमृतत्वञ्चानुपोष्येत्यतो विशेषणादात्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगतः तत्रापि केनचित् कारणेनोत्क्रान्तिमाशङ्क्य प्रतिषेधति। "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतीति"। अतः परविद्याविषयात् प्रतिषेधात् न परब्रह्मविदो देहात् प्राणानामुत्क्रान्तिरस्तीति चेन्नेत्युच्यते। यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानां, न शरीरात्। कथमवगम्यते। "न

तस्मात् प्राणा उत्क्रामन्तीति" शाखान्तरे पञ्चमीप्रयोगात् । सम्बन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या सम्बन्धविशेषे व्यवस्थाप्यते । तस्मादिति च प्राधान्यादभ्युदयनिःश्रेयसाधिकृतो देही सम्बध्यते न देहः । न तस्मादुच्चिक्रमिषोर्जीवात् प्राणा उत्क्रामन्ति सहैव तेन भवन्तीत्यर्थः । सप्राणस्य प्रवसतो भवत्युत्क्रान्तिर्देहादित्येवं प्राप्ते प्रत्युच्यते" भा० । "स्पष्टो ह्येकेषाम्" सू० । "नैतदस्ति यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिः प्रतिषेधस्य देह्यपादानत्वादिति । यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते । तथाह्यार्त्तभागप्रश्ने "यत्रायं पुरुषो म्रियते उदस्मात् प्राणाः उत्क्रामन्त्याहो स्विन्न ?" इत्यत्र "नेति होवाच याज्ञवल्क्यः" इत्यनुत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृत इत्यस्यामाशङ्कायाम् "अत्रैव समवनीयन्त" इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये "स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनन्ति "देहस्य चैतानि स्युर्न देहिनः" । तत्सामान्यात् "न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त" इत्यत्रापि भेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधः यद्यपि प्राधान्यं देहिन इति व्याख्येयम् । येषां पञ्चमीपाठः । येषान्तु षष्ठीपाठस्तेषां विद्वत्सम्बन्धिन्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव सा प्रतिषिद्धा भवति देहादुत्क्रान्तिः प्राप्ता न देहिनः । अपि च "चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्येवमविद्वद्विषये सप्रपञ्चमुत्क्रमणं संसारगमनञ्च दर्शयित्वा "इति नु कामयमान" इत्युपसंहृत्याविद्वत्कथाम् "अथाकामयमान" इति व्यपदिश्य विद्वांसं, यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेदसमञ्जस एव व्यपदेशः स्यात् । तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्यो र्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय । न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिर्वोपपद्यते निमित्ताभावात् । "अत्र ब्रह्म समश्नुत" इति चैवं जातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति" भा० । "स्मर्य्यते च" सू० । स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः । "सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः । देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः" इति । ननु गतिरपि ब्रह्मविदः स्मर्य्यते शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्रावेति" । न सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्व्वकः शरीरोत्सर्ग इति द्रष्टव्यं सर्वभूतदृश्यत्वाद्युपन्यासात् । नह्यशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः । तथा च तत्रैवोपसंहृतम् । "शुकस्तु मारुतादूर्ध्वां गतिं कृत्वान्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवदिति । तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः । गतिश्रुतीनान्तु विषयमुपरिष्टाद्व्याख्यास्यामः" भा० "तानि परे तथा ह्याह" सू० । "तानि पुनः प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविदस्तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते । कस्मात् ? तथाह्याह श्रुतिः "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति" । ननु "गताः कलाः पञ्चदश प्रतिष्ठा" इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयमाहस्म । न सा खलु व्यवहारापेक्षा पार्थिवाद्याः कलाः पृथीव्यादीरेव स्वप्रकृतीरपियन्तीति । इतरा तु विद्वत्प्रतिपत्त्यपेक्षा कृत्स्नं कलाजातं परब्रह्मविदो ब्रह्मैव सम्पद्यत इति तस्माददोषः" भा० "अविभागो वचनात्" सू० । "स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवत्याहोस्विन्निरवशेष ? इति । तत्र प्रलयसामान्याच्छक्त्यवशेषताप्रसक्तौ ब्रवीति अविभागापत्तिरिति । कुतः? वचनात् । तथाहि कलाप्रलयमुक्त्वा वक्ति "भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवतीति" । अविद्यानिमित्तानाञ्च कलानां न विद्यानिमित्ते प्रलये सावशेषतोपपत्तिः । तस्मादविभाग एवेति" भा० । "तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया" सू० । "समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता । संप्रति त्वपराविद्याविषयामेव चिन्तामनुवर्त्तयति । समानाऽऽसृत्युपक्रमा चाविद्वद्विदुषोरुत्क्रान्तिरित्युक्तं तमिदानीं सृत्युपक्रमं दर्शयति । तस्योपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतनं हृदयम् । "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति" श्रुतेः । तदग्रज्वलनम् । तत्पूर्व्विका चक्षुरादिस्थानापादाना चोत्क्रान्तिः श्रूयते "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति "चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य" इति । सा किमविशेषेणैव विद्वदविदुषोर्भवति ? अथास्ति कश्चिद्-

दुषो विशेषनियमः? इति विचिकित्सायां तुल्यविशेषाद् नियमप्राप्तावाचष्टे। समानेऽपि हि विदुदविदुषोर्हृदया ग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च मूर्द्धस्थानादेव विद्वान्निष्क्रामति स्थानान्तरेभ्यस्त्वितरे। कुतः? विद्यासामर्थ्यात्। यदि विद्वानपीतरवत् यतः कुतश्चिद्देहदेशादुत्क्रामेन्नैवोत्कृष्टं लोकं लभेत तत्रानर्थिकैव विद्या स्यात्। तच्छेषगत्यनुस्मृतियोगाच्च विद्याशेषभूता च मूर्द्धन्यनाडीसम्बन्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता तामभ्यस्यन् स तयैव प्रतिष्ठत इति युक्तम्। तस्माद्धृदयालयेन ब्रह्मणा सूपासितेनानुगृहीतस्तद्भावमापन्नो विद्वान् मूर्द्धन्यैव शताधिकया शतादतिरिक्तया एकशततमया नाड्या निष्क्रामति इतराभिरितरे। तथा हि हार्दविद्यां प्रकृत्य समामनन्ति "शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्द्धमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति" भा०। "रश्म्यनुसारी" सू०। "अस्ति दहरोऽस्मिन्नन्तराकाश" इति हार्दविद्या "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इत्युपक्रम्य विहिता। तत्प्रक्रियायाम् "अथ एता हृदयस्य नाड्य" इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसम्बन्धमुक्त्वोक्तम्। "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्धमाक्रमत" इति। पुनश्चोक्तम् "तयोर्द्धमायन्नमृतत्वमेतीति"। तस्माच्छताधिकया नाड्या निष्क्रामन् रश्म्यनुसारी निष्क्रामतीति गम्यते। तत्किमविशेषेणैवाहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वमाहोस्विदहन्येवेति संशये सति अविशेषश्रवणादविशेषेणैव तावद्रश्म्यनुसारीति प्रतिज्ञायते" भा०। "निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च" सू०। "अस्त्यहनि नाडीरश्मिसम्बन्ध इत्यहनि मृतस्य स्याद्रश्म्यनुसारित्वं रात्रौ तु प्रेतस्य न स्यात् नाडीरश्मिसम्बन्धविच्छेदादिति चेन्न। नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात् यावद्देहभावी हि शिराकिरणसम्पर्कः। दर्शयति चैतमर्थं श्रुतिः "अमुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इति। निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते प्रतापादिकार्य्यदर्शनात्। स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वमृत्वन्तररजनीषु शैशिरेष्विव दिनेषु। "अहरेवैतद्रात्रौ विदधातीति" चैतदेव दर्शयति। यदि च रात्रौ प्रेतोऽविनैव रश्म्यनुसारेणोर्द्धमाक्रमेत रश्म्यनुसारानर्थक्यं भवेत्। न ह्येतद्विशिष्याभिधीयते यो दिवा प्रैति स रश्मीनपेक्ष्योर्द्धमाक्रमते यस्तु रात्रौ सोऽनपेक्ष्यैवेति। अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्द्धमाक्रमेत पाक्षिकफला विद्येति अप्रवृत्तिरेव तस्यां स्यात् मृत्युकालानियमात्। अथापि रात्रावुपरतोऽहरागमनमुदीक्षेत। अहरागमेऽप्यस्य कदाचिदरश्मिसम्बन्धार्हं शरीरं स्यात् पावकादिसम्पर्कात्। "स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छतीति" च श्रुतिरनुदीक्षां दर्शयति। तस्मादविशेषेणैवेदं रात्रिन्दिवं रश्म्यनुसारित्वम्" भा०। "अतश्चायनेऽपि दक्षिणे" सू०। "अत एवोदीक्षानुपपत्तेः अपाक्षिकफलत्वाच्च विद्याया अनियतकालत्वाच्च मृत्योर्दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम्। उत्तरायणमरणप्राशस्त्यप्रसिद्धेर्भीष्मस्य च प्रतीक्षादर्शनात् "आपूर्य्यमाणपक्षाद्यान् षडुदङ्ङेति मासान् तानिति" च श्रुतेरपेक्षितव्यमुत्तरायणमिति इमामाशङ्कामनेन सूत्रेणापनुदति। प्राशस्त्यप्रसिद्धिरविद्वद्विषया। भीष्मस्य प्रतिपालनमाचारपरिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थञ्च। श्रुतेस्त्वर्थं वक्ष्यति "आतिवाहिकास्तल्लिङ्गात्" इति। ननु च "यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभेति" कालप्राधान्येनोपक्रम्याहरादिकालविशेषः स्मृतावनावृत्तये नियतः कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायादिति। अत्रोच्यते भा०। "योगिनः प्रति च स्मर्य्यते स्मार्त्ते चैते" सू०। 'योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्य्यते स्मार्त्ते चैते योगसाङ्ख्ये न श्रौते। अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्त्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेष्ववतारः। "ननु अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्"। "धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनमिति" श्रौतावेव देवपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति। उच्यते। "तं कालं वक्ष्यामीति स्मृतौ कालप्रतिज्ञानाद्विरोधमाशङ्क्य परिहार उक्तः। यदा पुनः स्मृतावप्यग्न्याद्या देवता एवातिवाहिका गृह्यन्ते तदा न कश्चिद्विरोध इति भा०"

**उत्क्रमणीय** त्रि० उद्+क्रम-कर्मणि अनीयर्। अतिक्रमणीये "न वेदवचनात्तात! न लोकवचनादपि। मतिरुत्क्रमणीया ते प्रयागमरणं प्रति" भा०व०८५अ०। उद्क्रमणस्येदम् छ। उत्क्रमणसम्बन्धिनि त्रि०।

**उत्क्रान्त** त्रि० उद्+क्रम–कर्त्तरि क्त । १अतिक्रान्ते देहाद् देहान्तरप्राप्ते २अपक्रान्ते मृते च । “उत्क्रान्तानामभियाणोपरिष्टात्” माघः “उत्क्रान्तानां मृतानाम्” मल्लि० ।

**उत्क्रान्ति** स्त्री उत्+क्रम–क्तिन् । देहादुत्क्रमणे अपसरणे च उत्क्रमणशब्दे विवृतिः ।

**उत्क्रोश** पु० उद्+क्रुश–अच् । १कुररीपक्षिणि । अयञ्च पक्षी सुश्रु० जलचरमध्ये प्लवत्वेन संचारित्वेनोक्तः । ‘हंससारसक्रौञ्चेत्याद्युपक्रमे ‘मद्गूत्क्रोशकाचाक्षेत्यानोक्ता “प्लवाः संचारिणः” इत्यन्तेन ।“उत्क्रोशरससंसिद्धामनल्पस्नेहां यवागूं पाययेत्” सुश्रु० । २उच्चैःक्रन्दिनि त्रि० । ततः चतुरर्थ्याम् उत्करा० छ । उत्क्रोशीय तत्सन्निकृते देशादौ ।

**उत्क्लेदिन्** त्रि० उद्+क्लिद–णिच्–णिनि । ऊर्द्ध्वतः क्लेदकारके आर्द्रीकारके “लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम्” सुश्रु० । स्त्रियां ङीप् ।

**उत्क्लेश** पु० उद्+क्लिश–घञ् । ऊर्द्ध्वगत्युन्मुखे क्लेशे च “उत्क्लिश्यान्नं न निर्गच्छेत् प्रसेकष्ठीवनेरितम् । हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत्” इत्युक्तलक्षणः रोगभेदः । ‘गुरुपाकसृष्टविसस्रुतवा कफोत्क्लेशेन च” ‘क्लिन्नमुत्क्लेशजननम्” ‘तृष्णाश्मूलकफोत्क्लेशच्छर्द्दिश्वासनिवारणम्” सुश्रु० ल्युट् । उत्क्लेशनमप्यत्र न० “दद्यादुत्क्लेशनं पूर्व्वम्” सुश्रु० ।

**उत्क्लेशक** त्रि० उद्+क्लिश–णिच्–ण्वुल् । १उत्क्लेशकारके “कौण्डिल्यकः करभक इत्युपक्रमे‘कीटः क्रमिः शरारी च यथाप्युत्क्लेशकः स्मृतः” । एते ह्यग्निप्रकृतयश्चतुर्विंशतिरेव च” सुश्रुतोक्ते २अग्निप्रकृतिके कीटभेदे । उत्क्लेशिन् त्रि उद्+क्लिश–णिनि । १ऊर्द्ध्वगत्युन्मुखक्लेशकारके त्रि० स्त्रियां ङीप् । “अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे” सुश्रु० ।

**उत्क्षिप्त** त्रि० उद्+क्षिप्–क्त । १ऊर्द्ध्वं क्षिप्ते “क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना” “उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बैः” माघः २उद्घाटिते च । (रश्मिभिः) उत्क्षिप्तगुल्मैव तथा हर्य्यैव सपताकिभिः” भा०व० १५अ० “गुल्मो यत्र स्थितेन योधसंघेन चतुर्दिगवस्थितारिपक्षोद्दृष्ट्वा बाणादिना महत्त्वं च शक्यन्ते तादृशमुच्चस्थानमुत्क्षिप्तगुल्मैः परकीयगुल्मोद्घाटनकरैः” नीलक० । धुस्तूरे पु० शब्दच० । तस्य फलसेवने उन्मत्ततावायकत्वात्तथात्वम् ।

**उत्क्षिप्तिका** स्त्री उत्क्षिप्तः धुस्तूर इव कन् स्वार्थे टापि अत इत्वम् । धुस्तूराकारे कर्णभूषणभेदे हेमचन्द्रः ।

**उत्क्षेप** पु० उद्+क्षिप–घञ् । १ऊर्द्ध्वक्षेपणे “पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णसारप्रभाणाम्” मेघ० । “पक्षोत्क्षेपात् समोदितः” सुश्रु० । कर्त्तरि अच् । २उत्क्षेपकारके त्रि० ।

**उत्क्षेपक** त्रि० उद्+क्षिप–ण्वुल् । १ऊर्द्ध्वं प्रक्षेपके २उत्क्षिप्यापहारके चौरे च । “उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकौ । कार्य्यौ द्वितीयापराधे करपादैकहीनकौ” या० स्मृ० वस्त्राद्युत्क्षिप्यापहरतीत्युत्क्षेपकः । वस्त्रादिबद्धं स्वर्णादि विस्रस्योत्कृत्य वा योपहरत्यसौ ग्रन्थिभेदः तौ यथाक्रमक्करेण सन्दंशसदृशेन तर्ज्जन्यङ्गुष्ठेन हीनकौ कार्य्यौ द्वितीयापराधे पुनः करश्च पादश्च करपादं तञ्च तदेकञ्च करपादैकन्तद्धीनं ययोस्तत्करपादैकहीनकौ कार्य्यौ । उत्क्षेपकग्रन्थिभेदकयोरेकमेकं करमादञ्च छिन्द्यादित्यर्थः । एतदप्युत्तमसाहसप्राप्तियोग्यद्रव्यविषयम् । “तदङ्गच्छेद इत्युक्तोदण्ड उत्तमसाहस” इति नारदवचनात् । तृतीयापराधे तु वध एव । तथा च मनुः “अङ्गुलीं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे । द्वितीये हस्तचरणौ तृतीये वधमर्हतीति” मिता० ।

**उत्क्षेपण** न० उद्+क्षिप–ल्युट् । १ऊर्द्ध्वक्षेपणे ।“उत्क्षेपणं तथावक्षेपणमाकुञ्चनं तथा । प्रसारणञ्च गमनं कर्म्माण्येतानि पञ्च च” भाषा० “उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्म्माणि” कणा० सू० “इतिरवधारणार्थः भ्रमणादेरपि गमनान्तर्गतत्वात् । अत्र च उत्क्षेपणत्वावक्षेपणत्वाकुञ्चनत्वप्रसारणत्वगमनत्वानि कर्म्मत्वसाक्षाद्व्याप्याः पञ्च जातयः । नन्वेतदनुपपन्नं गमनस्य कर्म्मपर्य्यायत्वात् सर्व्वत्र गच्छतीतिबुद्धेरुत्पादुत्क्षेपणत्वादीनां चतसृणां जातीनां परस्परात्यन्ताभावसमानाधिकरणानां सामानाधिकरण्याननुभवात् चतस्र एव कर्म्मत्वव्याप्या जातय इति चेत् सत्यं कर्म्मपर्य्याय एव गमनं पृथगभिधानन्तु भ्रमणरेचनस्यन्दनोर्द्ध्वज्वलनतिर्य्यग्गमनादीनां भिन्नभिन्नबुद्धिव्यपदेशभाजामेकेन शब्देन सङ्ग्रहार्थं यद्वा गमनत्वमपि कर्म्मत्वव्याप्या पञ्चमी जातिरेव तेन भ्रमणरेचनादिष्वेव गमनप्रयोगो मुख्यः उत्क्षेपणावक्षेपणादिषु यदि गमनप्रयोगस्तदा भाक्तः स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौणमुख्यसाधारणो धर्म्मः गमनत्वजातेस्तन्निवतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकं तच्च भ्रमणादिषु सर्व्वत्रेति गमनग्रहणेनैव तेषां ग्रहणमिति । निष्क्र-

प्रणालप्रवेशनत्वादिका तु न जातिः एकस्मिन्नेव कर्म्मणि गृहाद् गृहान्तरं गच्छति पुरुषे कस्यचित् द्रष्टुः प्रविशतीति प्रत्ययः कस्यचित्तु निष्क्रामतीति तत्र जातिसङ्करः स्यात् तथा भ्रमणादेरेकस्या जलप्रणाल्या निष्क्रम्यापरां प्रविशति निष्क्रामति प्रविशतीति प्रत्ययद्वयदर्शनादुपाधिसामान्यमेवैतदध्यवसेयम्। उत्क्षेपणादौ तु मुषलमुत्क्षिपामीतीच्छाजनितेन प्रयत्नेन प्रयत्नवदात्मसंयोगादसमवायिकारणाद्धस्ते तावदुत्क्षेपणं तत्र उत्क्षेपणविशिष्टहस्तनोदनादसमवायिकारणात् मुषलेऽप्युत्क्षेपणाख्यं कर्म युगपद्वा तत्र ऊर्द्ध्वमुत्क्षिप्तयोर्हस्तमुषलयोरवक्षेपणेच्छाजनितप्रयत्नवदात्मसंयोगाद्धस्तनोदनाच्च युगपदेव हस्ते मुषले चावक्षेपणम् उलूखलपातानुकूलं संजायते ततो दृढतरद्रव्यसंयोगाद् यदकस्मान्मुषलस्योर्द्ध्वगमनं भवति तत्र नेच्छा न वा प्रयत्नः कारणं किन्तु संस्कारमात्रादेव मुषलस्योत्पतनं तद्गमनमात्रं नतूत्क्षेपणं, भाक्तस्त्वोत्क्षेपणव्यवहारः एवमनुलोमप्रतिलोमवायुद्वयसङ्घट्टवशाद्वाय्वोत्क्षेरितनृणतूलकादौ चोत्क्षेपणव्यवहारो भाक्तः। एवं स्रोतोद्वयसङ्घट्टवशाज्जलोर्द्ध्वगमनेऽपि। एवमुत्क्षेपणावक्षेपणव्यवहारः शरीरतदवयवतत्संयुक्तमुषलतोमरादिष्वेव मुख्यः। भवति हि हस्तमुत्क्षिपति तोमरमुत्क्षिपतीति एवमवक्षिपतीत्यपि” उपस्कारः।

उत्क्षेपणञ्च श्रौते कर्म्मणि गोप्राणायोग्यदेशक्षेपणे भवति तथा हि। “मृतयोः कृत्वा वेणुयष्ट्यां वा कुम्भे वाऽऽसञ्चोभयतः स्थाणुहननं शवलभीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्येतत्ते” कात्या०५,१०,२१। “उत्क्षेपणवदिति गोरप्राणदेशम्” कर्कः यजु० २,६। मन्वव्या० “गोभिराघ्रातमशक्यत्वादिति” वेददी० तत्पदं व्याख्यात्। “अतिमात्रलोहिततलौ बाहू घटोत्क्षेपणात्” शकु०। करणे ल्युट्। २धान्यमर्द्दनकाष्ठादौ मेदि० ३उदश्चने ४षोड़शपणे च हेमच०। कर्म्मणि ल्युट्।५व्यजने न०।

उत्खचित त्रि० उद्+खच-बन्धे क्त। १उद्ग्रथिते २रचिते च। ‘कुसुमोत्खचितान् वलीभृतः” रघुः। [शब्दच०।

उत्खला स्त्री उद्+खल-जन्यर्थे-अच्। मुरानामगन्धद्रव्ये

उत्खात त्रि० उद्+खन-क्त। १उन्मूलिते २उत्पाटिते “फलैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः” रघुः। “रथेनानुत्खातस्तिमितगतिना शकु० भावे क्त। ३उत्खनने न०। उत्खातकेलिः।

उत्खातकेलि पु० उत्खातमुत्खननमेव केलिः। “उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते” इत्युक्तलक्षणे वृषगजादेः शृङ्गादिना मृत्तिकाखननरूपक्रीडायाम्।

उत्खाय अव्य० उद्+खन-ल्यप्। उत्खायेत्यर्थे। ‘वङ्गानुत्खाय तरसा” रघुः पक्षे उत्खन्येत्यपत्र। [अमरः।

उत्खेद पु० उद्+खिद-भावे घञ्। खेदने उद्+खद्धातौ उदा०।

उत्त त्रि० उन्द-क्लेदने क्त वा तस्य नः। क्लिन्ने आर्द्रवस्तुनि

उत्तंस पु० उद्+तसि-अच्। १कर्णाभरणे, २शिरोभूषणे च। “नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि” सा०द०। अस्य कर्णभूषणवाचकत्वेऽपि कर्णपदसमभिव्याहारे भूषणमात्रपरता तत्काले कर्णस्थितत्वद्योतनार्थं वा कर्णादिशब्दप्रयोगः।

उत्तट त्रि० उत्क्रान्तं तटम् अत्या० त०। तटपर्य्यन्तप्लावके “उत्तटा इव नदीरयाः स्थलीम्” रघुः।

उत्तप्त त्रि०उद्+तप-क्त। १संतप्ते २शुष्कमांसे न०भावे क्त। ३उत्तापे न०। उद्गतं तप्तं तापो यस्य।४स्नाते त्रि०मेदि०

उत्तब्ध त्रि० उद्+स्तम्भ-क्त। १ऊर्द्ध्वस्तब्धे २ऊर्द्ध्वावस्थिते।

उत्तम त्रि०उद्+तमप्। १उत्कृष्टे। “ज्योतिषामुत्तमोदेव! दीपोऽयं प्रतिगृह्यताम्” दीपमन्त्रः “यदस्तया तुद्यमनुत्तमं तमः” माघः “उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः” “यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः” गीता। द्विजोत्तमः नरोत्तमः नृपोत्तम! “धर्मोऽधर्मविदुत्तमः” विष्णुस०। उत्-उद्गतः अतिशये तमप्। २विष्णौ पु०। “अनादिनिधनो धाता विधाता धातुरुत्तमः” विष्णुस०। “धातुरुत्तम इति नामैकं सविशेषणं सामानाधिकरण्येन। सर्वधातुभ्यः पृथिव्यादिभ्य उत्कृष्टश्चिदातुरित्यर्थः धातुर्विरिञ्चेरुत्कृष्ट इति वा। नामद्वयं वा कार्य्यकारणप्रपञ्चधारणात् धातुश्चिद्धातुः उत्तमः सर्व्वेषामुद्गतानामुद्गतत्वादुत्तमः” भा०। ३अन्त्ये। “उत्तमैकाभ्याञ्च” पा०। “उत्तमशब्दोऽन्त्यार्थः” सि० कौ०। उत्तानपादस्य पुत्रभेदे ४ध्रुवसपत्नभ्रातरि पु० स च उत्तानपादस्य सुरुचौ भार्य्यायामुत्पन्नः। “जाये उत्तानपदस्य सुनीतिः सुरुचिस्तयोः।सुरुचिः प्रेयसी पत्युर्नेतरा यत् सुतोध्रुवः। एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन्। उत्तमं नारुरुक्षन्तं ध्रुवं राजाभ्यनन्दत” भा०४स्क० ८अ०। “उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा। हतः पुण्यजनेनाद्रौ तन्मातास्य गतिं

गता" भा० ४ स्क० १० अ० । प्रियव्रतस्य ५पुत्रभेदे स एव तृतीयमनुः यथोक्तं भाग० ८स्क० १अ० । "तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः । पवनः सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ! । वशिष्ठतनयाः सप्त ऋषयः प्रमदादयः । सत्यावेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित् । धर्मस्य सूनृतायान्तु भगवान् पुरुषोत्तमः । सत्यसेन इति ख्यातः जातः सत्यव्रतैः सह" । हरिवं० ७अ० तु औत्तमित्येनायं पठितः यथा । "स्वायम्भुवोमनुस्तात ! मनुः स्वारोचिषस्तथा । औत्तमिस्तामसश्चैव रैवतश्चाक्षुषस्तथा । वैवस्वतश्च कौरव्य ! साम्प्रतोमनुरुच्यते" इति सप्तमनूनुद्दिश्य । "इदं तृतीयं वक्ष्यामि तन्निबोध नराधिप ! । वशिष्ठपुत्राः सप्तासन् वासिष्ठा इति विश्रुताः । हिरण्यगर्भस्य सुता ऊर्जा नाम सुतेजसः । ऋषयोऽत्र मया प्रोक्ताः कीर्त्यमानान् निबोध तान् । औत्तमेयान् महाराज ! दश पुत्रान् मनोरमान् । इष ऊर्जस्तनूर्जश्च मधुर्माधव एव च । शुचिः शुक्रः सहश्चैव नभस्यो नभएव च । भानवस्तत्र देवाश्च मन्वन्तरमुदाहृतम्" । तत्र स्वार्थे इञ् औत्तमिः । ऋषिपुत्रादिनामभेदस्तु कल्पभेदादविरुद्धः" । [रत्नमा० ।

**उत्तमफलिनी** स्त्री० नित्यक० । (क्षीराइ) । दुग्धिकावृक्षे

**उत्तमर्ण** पु० उत्तममृणमस्य । ऋणप्रयोजके (महाजन) । उत्तमर्णस्य वृद्ध्यादिग्रहणधर्मो विष्णुना दर्शितो यथा "अधमर्णोऽधमर्णाद्यथादुत्तमर्णं गृह्णीयात् द्विकं त्रिकं चतुष्कं पञ्चकञ्च शतं वर्णानुक्रमेण प्रतिमासम् । सर्वे वर्णा वा स्वप्रतिपन्नां वृद्धिं दद्युः । अकृतामपि वत्सरातिक्रमेण यथाविहिताम् । आध्युपभोगे वृद्ध्यभावः । दैवराजोपघातादृते विनष्टमाधिमुत्तमर्णो दद्यात् । अन्यवृद्धौ प्रविष्टायामपि । न स्थावरमाधिमृते वचनात् । गृहीतधनप्रवेशार्थमेव यत् स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात् । दीयमानं प्रयुक्तमर्थमुत्तमर्णस्याग्रहीतवतः परं न वर्द्धते । हिरण्यस्य परा वृद्धिर्द्विगुणा, धान्यस्य त्रिगुणा, वस्त्रस्य चतुर्गुणा, सन्ततिः स्त्रीपशूनाम् । किण्वकार्पासस्त्रचर्मायुधेष्टकाङ्गाराणामक्षया, अनुक्तानां द्विगुणा । प्रयुक्तमर्थं यथा कथञ्चित् साधयन् राज्ञोवाच्यः स्यात् । साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दण्ड्यः । उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशभागसम्मितं दण्डं दद्यात् । प्राप्तार्थश्चोत्तमर्णो विंशतितमम्मंशम् । सर्वापलाप्येकदेशविभावितोऽपि सर्वं दद्यात् । तस्य च भावनास्त्रिस्रोभवन्ति लिखितं साक्षिणः समयक्रिया च । ससाक्षिकमाप्तं ससाक्षिकमेव दद्यात् । लिखितार्थप्रविष्टे लिखितं पाटयेत् । असमग्रप्रदाने लेख्यासन्निधाने चोत्तमर्णो लिखितं दद्यात्" । अधिकमृणशब्दे वक्ष्यते । उत्तमं देयत्वेनास्त्यस्य ठन् । उत्तमर्णिकोऽप्यत्र । "पञ्च पञ्चाशतम् दाप्यः प्राप्तार्थोह्युत्तमर्णिकः" या०स्मृ० । "यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः । तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम्" मनुः "ते च उपाया बृहस्पतिना दर्शिताः यथा । "सुहृत्सम्बन्धिसन्दिष्टैः" ... "छद्मना याचितश्चार्थमानीय ऋणिकाद्बलैः । अन्वाहितादि वाऽऽहृत्य दाप्यते तत्र सोपधिः । दारपुत्रपशून् हृत्वा कृत्वा द्वारोपवेशनम् । यत्रार्थो दाप्यतेऽर्थं स्वं तदाचरितमुच्यते । बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः । ऋणिको दाप्यते यत्र बलात्कारः स कीर्त्तितः" ।

**उत्तमशाख** पु० उत्तमा उत्कृष्टा शाखाऽस्य । उत्कृष्टशाखे द्रुमे शब्दा० चतुर्थ्यां च । उत्तमशाखीय तन्मध्ये स्थितादौ त्रि० ।

**उत्तमश्लोक** त्रि० उत्तमः श्लोकः चरितं यस्य । १पुण्यकीर्त्तौ कर्म० । २उत्तमे काव्ये पु० । स च ध्वनिरूपः "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्यात् ध्वनिर्बुधैः कथितः" काव्यप्र० उक्तलक्षणः ।

**उत्तमस्** त्रि० उद्गच्छितं तमो येन प्रा०ब० वा उद्गच्छितकोपः । १उद्गच्छिततमस्के २तमोऽतीते च । "क उत्तमःश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात्" भाग० १०स्क० १अ० ।

**उत्तमसाहस** पु० साहसमधिकृततयाऽस्त्यस्य अर्श० अच् + कर्म० । स्मृत्युक्ते साहसाधिकारेण विहिते १उत्कृष्टे दण्डे । "पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः" मनुः "अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्" या०स्मृ० नानास्थाने उत्तमदण्डविषयमाह विष्णुः यथा दण्ड्य इत्युपक्रमे "परस्य पतनीयाक्षेपे कृते तूत्तमसाहसम्" "अनुपातकयुक्ताक्षेपे कार्षापणशतम्" "मातृपुत्रे तूत्तमम्" "पारजायी सवर्णागमने तूत्तमसाहसं दण्ड्यः" । "अदुष्टां (कन्याम्) दुष्टामिति ब्रुवन्नुत्तमसाहसम्" "फलोपगमद्रुमच्छेदी कीठोपघाती तूत्तमसाहसं दण्ड्यः" (अवगोरयिता) "मत्स्येषूत्तमसाहसं दण्ड्यः" नेत्रकन्धराबाहुसक्थ्यंसभङ्गे चोत्तमम्" (साहसं दण्ड्यः) "रत्नान्यपहार्युत्तमसाहसम्" । "यत्नयोः (पितापुत्रयोर्विवादे) साक्षी

स्यात्तस्योत्तमसाहसः" "तुलामानकूटकर्त्तुश्च तदकूटे कूटवादिनश्च द्रव्याणां प्रतिरूपविक्रयिकस्य च" । "सम्भूय वणिजां पण्यमनर्घेणावरुन्धताम्" प्रत्येकं "विक्रीणताञ्च" । "वस्तूत्तमवर्णान् दास्ये नियोजतिस्योत्तमसाहसदण्डः" । "सीमाभेत्तारमुत्तमसाहसेन दण्डयित्वा पुनः सीमां कारयेत्" "अभक्ष्यस्याविक्रेयस्य च विक्रयी देवप्रतिमाभेदकश्चोत्तमसाहसम् दण्डनीयः । "भिषङ्मिथ्याचरन्नुत्तमेषु पुरुषेषु" । २ प्राणिहिंसादिरूपे बलकृते कर्मभेदे न० । तत्रोत्तमसाहसादिस्वरूपलक्षणविभागादि मिता० दर्शितं यथा । "सामान्यद्रव्यप्रसभहरणात् साहसं स्मृतम्" या०स्मृ० । "सामान्यस्य साधारणस्य यथेष्टं विनियोगानर्हत्वाविशेषेण परकीयस्य वा द्रव्यस्यापहरणं साहसम् । कुतः प्रसभहरणात् प्रसह्याहरणाद्बलावष्टम्भेन हरणादिति यावत् । एतदुक्तं भवति । राजदण्डजनाक्रोशं चोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किञ्चिन्मारणमारणपरदारप्रधर्षणादिकं क्रियते तत् सर्वं साहसमिति साहसलक्षणम् । अतः साधारणधनपरधनयोर्हरणस्यापि बलावष्टम्भेन क्रियमाणत्वात् साहसत्वमिति । नारदेनापि साहसस्य स्वरूपं विवृतम् । "सहसा क्रियते कर्म यत् किञ्चिद्बलदर्पितैः । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते" । तदिदं साहसञ्चौर्यवाग्दण्डपारुष्यस्त्रीसंग्रहेषु व्यासक्तमपि बलदर्पावष्टम्भोपाधितोभिद्यत इति दण्डातिरेकार्थं पृथगभिधानम् दण्डवैचित्र्यप्रतिपादनार्थं प्रथमादिभेदेन त्रैविध्यमभिधाय तल्लक्षणन्तेनैव विवृतम् । "तत् पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमन्तथा । उत्तमञ्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् । फलमूलोदकादीनां क्षेत्रोपकरणस्य च । भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् । वासःपश्वन्नपानानां गृहोपकरणस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् । व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् । प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् । तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः । मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः । उत्तमे साहसे दण्डः सहस्रावर इष्यते । वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे" इति । वधादयश्चापराधतारतम्यादुत्तमसाहसे समस्ता व्यस्ता वा योज्याः" । तत्र परद्रव्यापहरणरूपे साहसे दण्डमाह" मिता० । "तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः" या०स्मृ० । "तस्यापहृतद्रव्यस्य मूल्याद्द्विगुणो दण्डः यः पुनः साहसं कृत्वा नाहमकार्षमिति निह्नुते तस्य मूल्याच्चतुर्गुणो दण्डो भवति । एतस्मादेव विशेषदण्डविधानात् प्रथमसाहसादिसामान्यदण्डविधानमपहारव्यतिरिक्तविषयम्" मिता०

**उत्तमस्त्रीसंग्रहण** न० परस्त्रियाः संग्रहणं कर्म० । स्त्र्युक्ते परस्त्रियासुत्तमे मिथुनाभावाय प्रवृत्तिरूपव्यापारभेदे तत्स्वरूपविभागादि मिता० दर्शितं यथा

"प्रथमं साहसादिदण्डप्राप्त्यर्थं त्रेधा तत्स्वरूपं व्यासेन विवृतम् । "त्रिविधं तत्समाख्यातमधमं मध्यमोत्तमम् । अदेशकालभाषाभिर्निर्जने च परस्त्रियाः । कटाक्षावेक्षणं हास्यमधमं साहसं स्मृतम् । प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमं समुदाहृतम् । सहासनं विविक्तेषु परस्परमुपाश्रयः । केशाकेशि ग्रहश्चैव सम्यक् संग्रहणं स्मृतम्" । स्त्रीपुंसयोर्मिथुनीभावः संग्रहणं संग्रहणज्ञानपूर्वकत्वात्तत्कर्तुर्दण्डविधानस्य तज्ज्ञानोपायत्वाच्चदाह । "पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः । सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा" या०स्मृ० । संग्रहणे प्रवृत्तः पुमान् केशाकेश्यादिभिर्लिङ्गैर्ज्ञात्वा ग्रहीतव्यः । परस्परकेशग्रहणपूर्विका क्रीडा केशाकेशि "तत्र तेनेदमिति सरूपे" इति पा० बहुव्रीहौ सति "इच् कर्मव्यतिहारे" पा० इति समासान्त इच् प्रत्ययः अव्ययत्वाच्च लुप्ततृतीयाविभक्तिः । तदयमर्थः । परभार्यया सह केशाकेशिक्रीडनेनाभिनवैः करजदशनादिकृतव्रणैः रागकृतैश्चिह्नैर्द्वयोः सम्प्रतिपत्त्या वा ज्ञात्वा संग्रहणे प्रवृत्तो ग्रहीतव्यः । परस्त्रीग्रहणं नियुक्तावरुद्धादिव्युदासार्थम् । किञ्च । "नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् । अदेशकालसम्भाषं सहैकस्यासनेन च" या०स्मृ० । यः पुनः परदारपरिधानग्रन्थिप्रदेशकुचप्रावरणजघनमूरुकेशादिस्पर्शनं साभिलाषवदाचरति । तथा अदेशे निर्जने जनताकीर्णे वान्धकाराकुलेऽकाले संलापनञ्च करोति । परभार्यया वा सहैकमञ्चकादौ रिरंसयैवावतिष्ठते । सोऽपि संग्रहणे प्रवृत्तो ग्राह्यः । एतच्चायच्छमान दोषपुरुषविषयमितरस्य न दोषः । यथाह मनुः । "यस्त्वनाचारितः पूर्वमभिभाषेत कारणात् । न दोषम्प्राप्नुयात्किञ्चिन्न हि तस्य व्यतिक्रमः" इति यः परस्त्रिया स्पृष्टः क्षमतेऽसावपि ग्राह्य इति तेनैवोक्तम् । "स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया । परस्परस्यानुमते सर्वं संग्रहणं स्मृतमिति" यच्च मयैवं विद्याभाऽसकृद्मि-

नेति लज्जया भुजङ्गजनसमक्षङ्गापयत्यसावपि याचत इति तेनैवोक्तम् ।"दर्पाद्वा यदि वा मोहात् लज्जया वा स्वयं वदेत् । पूर्व्वं मयेयमभ्युक्तेति तञ्च संग्रहणं स्मृतम्"

**उत्तमा** स्त्री उत्कृष्टसौन्दर्य्यान्वितायाम् स्त्रियाम् अमरः ।

**उत्तमाङ्ग** न० कर्म्म० । मस्तके । "बभौ पतङ्ग इवोत्तमाङ्गे" कुमा० । "कश्चिद् द्विषत्खड्गहृतोत्तमाङ्गः" रघुः । "ध्रुवतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन" मनुः । मस्तकस्य अङ्गेषूत्तमत्वं चक्षुरादीन्द्रियाधारत्वात् प्राणवायुसञ्चारस्थानत्वात् सर्वेषामङ्गानामुपरिवर्त्तमानत्वाच्च । अतएव "गर्भस्य हि सम्भवतः प्रथमं शिरः सम्भवतीत्याह शौनकः शिरोमूलत्वाद्देहेन्द्रियाणाम्" सुश्रु० शौनकीयमते इन्द्रियमूलत्वमस्योक्तम् "तच्च शरीरम् षडङ्गं शाखाश्चतस्रो मध्यं पञ्चमं षष्ठं शिरः" इति सुश्रु०षडङ्गविभागे हस्तपादानां चतसृणां शाखात्वेन मध्यमस्य मध्यत्वेन उपवर्णनसर्वशेषे शिरसः कथनं पूर्वोक्तहेतोः प्राधान्याभावस्येति बोध्यम् । प्रत्यङ्गविभागेऽपि "मस्तकोदरेत्यादिना सुश्रु० मस्तकस्य प्रथमनिर्देशः प्राधान्यादेव लोकेऽपि मस्तकच्छेदनेऽवशिष्टाङ्गैः न प्रत्यभिज्ञा छिन्नमस्तकमात्रेण तु प्रत्यभिज्ञा इत्यतो मस्तकस्य प्रत्यभिज्ञासाधनत्वादपि उत्तमत्वम्" कथमन्यथा देवदत्तादिदेहस्य हस्तादिषु च अङ्गेषु मध्ये हस्तादिना न प्रत्यभिज्ञा इत्यतः मस्तकस्य उत्कृष्टत्वम् । हस्तादिच्छेदनेऽपि जीवनसम्भवात् मस्तकस्य छेदने तदभावादपि मस्तकस्य प्राधान्यमित्यपि मन्तव्यम् ।

**उत्तमाम्भस्** न० सांख्यशास्त्रप्रसिद्धे नवविधतुष्टिमध्ये तुष्टिभेदे "नापहृत्य भूतानि विषयोपभोगः सम्भवतीति हिंसादोषदर्शनात् विषयोपरमे या तुष्टिः सा पञ्चमी उत्तमाम्भ उच्यते" सा०कौ० । अस्यास्तुष्टेः अम्भसोऽङ्कुरं प्रतीव विवेकख्यातिं प्रति हेतुत्वात्तथात्वम् ।

**उत्तमाय्य** त्रि० उत्तमं क्रियते उत्तम–णिच्–कर्म्मणि वा० आय्य नि० णिलोपः । उत्तमीकृते । "उतेदमुत्तमाय्यम्" ऋ० ८,२२,६, "उत्तमाय्यमुत्तमीकृतम्" भा० ।

**उत्तमारणी** स्त्री उत्तममृच्छति ऋ–अनि ङीप् । इन्दीवर्य्याम्

**उत्तमौजस्** त्रि० उत्तममोजो यस्य । १उत्कृष्टतेजस्के दशमन्वन्तराधिपमनोः २पुत्रभेदे पु० हरिवं० "दशमे त्वथ पर्य्याय" इत्युपक्रम्य "मनोः सुतोत्तमौजाश्च क्षत्रियः सप्तश्च वीर्य्यवान् । शतानीको निरामित्रो वृषसेनो जयद्रथः । भूरिद्युम्नः सुवर्चाश्च दश त्वेते मनोः सुताः" उक्त० । सुतोत्तमौजा इत्यत्र सन्धिरार्षः । द्वापरयुगीये ३युधामन्युभ्रातरि नृपे पु० । "नेह पश्यामि विबुधा ! राधेयममितौजसम् । भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ" भा०स्वर्गा०२अ० । "युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्य्यवान्" गीता "उत्तमौजाश्च शल्यश्च कौरवाः कैकयास्तथा" हरिवं०९२ अ० । "उत्तमौजास्तथा शाल्वः कैरवेयश्च कौशिकः" हरिवं० ९९अ० ।

**उत्तम्भ** पु० उद्+स्तम्भ–घञ् । १प्रवृत्तिरोधिकायामनिष्टसाधनतोनिवृत्तौ । (थामा) २अवलम्बे च ।

**उत्तम्भन** न० उ+स्तम्भ–ल्युट् । १अवलम्बने । करणे ल्युट् २तत्साधने । "वरुणस्योत्तम्भनमसि" यजु०१४, २२ । "समीपेऽन उपस्थाप्योत्तम्भनेन स्तभ्नाति" कात्या० ७, ९,२२ ।

**उत्तर** न० उत्तीर्य्यते प्रकृताभियोगोऽनेन उद्+तॄ–अप्, उद्–तरप् वा । राजसमीपे वादिकृताभियोगापनोदके उत्तराख्ये १व्यवहाराङ्गे द्वितीयपादे "प्रश्नशोद्यधिया पृच्छा तस्य खण्डनमुत्तरमित्युक्ते" २दोषभञ्जनवाक्ये । ३जिज्ञासितविषयावेदके वाक्ये । ४उदीच्यां दिशि स्त्री । अनन्तरे ५देशे, ६काले च पु० । ७अनन्तरोत्तरदिग्देशकालवृत्तौ त्रि० अश्विन्यादिषु १२,२१,२६ः संख्यकेषु ८नक्षत्रेषु न० स्त्री । "उत्तरात्रयशाक्ररोहिणीरौद्रसार्पपितृभेषु चाग्निभे" "रेवत्युत्तररोहिणी मृगशिरो मूलानुराधा मघा" "त्रीण्युत्तराणि स्वभूः" ज्यो०त० । तत्र पादे उत्तरतदाभासादिलक्षणादि मिता० दर्शितं यथा । "श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ" या० । "श्रुतो-भाषार्थोयेन प्रत्यर्थिनाऽसौ श्रुतार्थस्तस्योत्तरं पूर्वपक्षादुत्तरत्व भवतीति उत्तरं लेख्यं लेखनीयम् । पूर्वावेदकस्यार्थिनः समीपे उत्तरञ्च यत्पूर्वोक्तस्य निराकरणादुच्यते । यथाह । "पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् । अव्याख्यागम्यमित्येतदुत्तरन्तद्विदोविदुरिति" । पक्षस्य व्यापकन्निराकरणसमर्थम् सारं न्याय्यं न्यायादनपेतम्, असन्दिग्धं सन्देहरहितम्, अनाकुलं पूर्वापराविरुद्धम्, अव्याख्यागम्यं अप्रसिद्धपदयोगेन दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन वा अन्यदेशभाषाभिधानेन वा यद्व्याख्येयार्थञ्च भवति तस्मादुत्तरम् । तच्चतुर्व्विधम् । सम्प्रतिपत्तिर्मिथ्या प्रत्यवस्कन्दनं पूर्वन्यायश्चेति । यथाह

कात्यायनः। "सत्यं मिथ्योत्तरञ्चैव प्रत्यवस्कन्दनं तथा। पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधमिति"। तत्र सत्योत्तरं यथा रूपकशतमस्मह्यं धारयत्यनेन उक्ते सत्यं धारयामीति। यथाह। "साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता"। मिथ्योत्तरन्तु नाहं धारयामीति। तथा च कात्यायनः। "अभियुक्तोऽभियोगस्य यदि कुर्य्यादपह्नवम्। मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः" इति। तच्च मिथ्योत्तरञ्च चतुर्विधम्। "मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः। अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधमिति"। प्रत्यवस्कन्दनन्नाम सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहलब्धमिति वा। यथाह नारदः "अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तन्तथा। प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं स्मृतमिति"। प्राङ्न्यायोत्तरन्तु यत्राभियुक्त एवं ब्रूयादस्मिन्नर्थे अनेनाहमभियुक्तस्तत्र चायं व्यवहारमार्गेण पराजित इति। उक्तञ्च कात्यायनेन "आचारेणावसन्नोऽपि पुनर्लेखयते यदि। सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते" इति। एवमुत्तरलक्षणे स्थिते उत्तरलक्षणरहितानाम् उत्तरवदाभासमानानामुत्तराभासत्वमर्थसिद्धं स्पष्टीकृतञ्च स्मृत्यन्तरे। "सन्दिग्धमन्यत् प्रकृतादत्यल्पमतिभूरि च। पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरम्भवेत्। यद्व्यस्तपदमव्यापि निगूढार्थन्तथाकुलम्। व्याख्यागम्यमसारञ्च नोत्तरं स्वार्थसिद्धये" इति। तत्र सन्दिग्धम् सुवर्णशतमनेन गृहीतमिति उक्ते सत्यं गृहीतम्, सुवर्णशतमाषशतं वेति। प्रकृतादन्यत् यथा सुवर्णशताद्यभियोगे पणशतन्धारयामीति। अत्यल्पं सुवर्णशताभियोगे पञ्च धारयामीति। अतिभूरि सुवर्णशताभियोगे द्विशतन्धारयामीति। पक्षैकदेशव्यापि हिरण्यवस्त्राद्यभियोगे हिरण्यं गृहीतवान्यदिति। व्यस्तपदम्। अर्थादानाभियोगे पदान्तरेणोत्तरम्। यथा सुवर्णशताभियोगे अनेनाहन्ताडित इति। अव्यापि देशकालादिविशेषणाव्यापि। यथा मध्यदेशे वाराणस्यां पूर्वस्यां दिशि क्षेत्रमनेनापहृतमिति पूर्वपक्षे लिखिते क्षेत्रमपहृतमिति। निगूढार्थं यथा सुवर्णशताभियोगे किमहमेवास्मै धारयामीत्यत्र ध्वनिना प्राड्विवाकः सभ्यो वार्थी वान्यस्मै धारयतीति निगूढार्थम्। आकुलं पूर्वापरविरुद्धम्। यथा सुवर्णशताभियोगे कृते सत्यं गृहीतन्न धारयामीति। व्याख्यागम्यम् दुःश्लिष्टविभक्तिसमासाध्याहाराभिधानेन अन्यदेशभाषाभिधानेन वा। यथा सुवर्णशतविषये पितृणामभियोगे गृहीतं शतं वचनात् सुवर्णानां पितृने जानामीति। अत्र पितुर्वचनात् सुवर्णानां शतं गृहीतमिति न जानामीति। असारं न्यायविरुद्धम्। यथा सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमिति अभियोगे सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति। उत्तरमित्येकवचननिर्देशादुत्तराणां सङ्करोनिरस्तः। यथाह कात्यायनः। "पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्। मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरमिति"। अनुत्तरत्वे कारणन्नैवोक्तम्। "नचैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः। नचार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयमिति"। मिथ्याकारणोत्तरयोः सङ्करेऽर्थिप्रत्यर्थिनोर्द्वयोः क्रिया- प्राप्नोति। "मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनीति स्मरणात्। तदुभयमेकस्मिन् व्यवहारे विरुद्धम्। यथा सुवर्णशतं रूपकशतं चानेन गृहीतमित्यभियोगे सुवर्णं न गृहीतं रूपकशतं गृहीतं प्रतिदत्तञ्चेति। कारण प्राङ्न्यायसङ्करे तु प्रत्यर्थिन एव क्रियाद्वयम्। "प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियामिति"। यथा सुवर्णं गृहीतं प्रतिदत्तं रूपके व्यवहारमार्गेण पराजित इति। अत्र च प्राङ्न्याये जयपत्रेण वा प्राङ्न्यायदर्शिभिर्वा भावयितव्यम्। कारणोत्तरे तु साक्षिलेख्यादिभिर्भावयितव्यमिति विशेषः। एवमुत्तरत्रय सङ्करेऽपि द्रष्टव्यम्। यथाऽनेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं प्रतिदत्तञ्च रूपशतं तु न गृहीतं वस्त्रविषये पूर्वन्यायेन पराजित इति। एवञ्चतुःसङ्करेऽपि। एतेषाञ्चानुत्तरत्वं योगपद्येन। तस्य तस्यांशस्य तेन तेन विनाऽसिद्धेः क्रमेणोत्तरत्वमेव। क्रमश्चार्थिनः प्रत्यर्थिनः सभ्यानाञ्चेच्छया भवति यत्र पुनरुभयोः सङ्करे यस्य प्रभूतार्थविषयत्वन्तत्क्रियोपादानेन पूर्वं व्यवहारः प्रवर्त्तयितव्यः पश्चादल्पविषयोत्तरोपादानेन व्यवहारो द्रष्टव्यः। यत्र च सम्प्रतिपत्तेरुत्तरान्तरस्य सङ्करस्तत्रोत्तरान्तरोपादानेन व्यवहारो द्रष्टव्यः। सम्प्रतिपत्तौ क्रियाभावात्। यथाहारीतेन "मिथ्योत्तरङ्कारणञ्च स्यातामेकत्र चेदुभे। सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरम्" इत्युक्तोक्तम्। "यत् प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम्। उत्तरन्तत्र तज्ज्ञेयमसङ्कीर्णमतोऽन्यथा"। सङ्कीर्णम्भवतीति शेषः शेषापेक्षया ऐच्छिकः क्रमो भवतीत्यर्थः। तत्र प्रभूतार्थं यथाऽनेन सुवर्णं

रूपकशतं वस्त्राणि च गृहीतानि इत्यभियोगे सत्यं सुवर्णं गृहीतं रूपकशतन्तु न गृहीतं वस्त्राणि तु गृहीतानि प्रतिदत्तानि चेति अत्र मिथ्योत्तरस्य प्रभूतविषयत्वादर्थिनः क्रियामादाय प्रथमं व्यवहारः प्रवर्त्तयितव्यः। पश्चादल्पविषयो व्यवहारः। एवं मिथ्याप्राङ्न्यायसङ्करे कारणप्राङ्न्यायसङ्करे च योजनीयम्। तथा तस्मिन्नेवाभियोगे सत्यं सुवर्णं रूपकशतन्तु गृहीतन्दास्यामि वस्त्राणि तु न गृहीतानि गृहीतानि प्रतिदत्तानीति वा। वस्त्रविषये पूर्व्वं पराजित इति चोत्तरे सम्प्रतिपत्तेर्भूरिविषयत्वेऽपि तत्र क्रियाभावान्मिथ्याद्युत्तरक्रियामादाय व्यवहारः प्रवर्त्तयितव्यः। यत्र तु मिथ्याकारणोत्तरयोः तत्पक्षव्यापित्वम्। यथा गृहस्याहितया कश्चिद्वदति इयङ्गौर्मदीया अमुकस्मिन् काले नष्टा अद्यास्य गृहे दृष्टेति। अन्यस्तु मिथ्यैतदेतत्प्रदर्शितकालात् पूर्व्वमेवास्मद्गृहे स्थिता मम गृहे जाता चेति वदति। इदन्तावत् पक्षनिराकरणसमर्थत्वान्नानुत्तरम्। नापि मिथ्यैव कारणोपन्यासात्। नापि कारणम्। एकदेशस्याभ्युपगमाभावात्। तस्मात् सकारणं मिथ्योत्तरमिदम्"। अत्र कश्चिद्विशेषो व्य०त०दर्शितः यथा "कात्यायनः। "सद्यः कृतेषु कार्य्येषु सद्य एव विवादयेत्। कालातीतेषु वा कालं दद्यात् प्रत्यर्थिने प्रभुः"। वादिनोक्तस्य साध्यस्य प्रतीपमर्थयते इति प्रत्यर्थी। नारदः "गहनत्वाद्धि वादानामसामर्थ्यात् स्मृतेरपि। ऋणादिषु हरेत् कालं कामन्तत्त्वबुभुत्सया" दा०। बृहस्पतिः। "यदा त्वेवंविधः पक्षः कल्पितः पूर्व्ववादिना। दद्यात् तत्पक्षसम्बन्धं प्रतिवादी तदोत्तरम्"। सम्बन्धस्युक्तम् अन्यथा अन्यवादित्वेन भङ्गप्रसङ्गात्। "अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः। आहूतः प्रपलायी च हीनः पञ्चविधः स्मृतः"। प्रपलायी त्रिपक्षेण मौनकृत् सप्तभिर्दिनैः। क्रियाद्वेषी तु मासेन साक्षिभिन्नस्तु तत्क्षणात्" इति नारदोक्तेः क्रिया लेख्यादिका, साक्षिभिन्नः पराजितः। वादिनोक्तस्य साध्यस्य प्रतीपं वदतीति प्रतिवादी उत्तीर्य्यते निस्तीर्य्यते प्रकृताभियोगोऽनेनेति उत्तरम्।

उत्तरस्वरूपं तद्भेदांश्चाह नारदः। "पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम्। अव्याख्यागम्यमित्येवमुत्तरं तद्विदो विदुः। मिथ्या सम्प्रतिपत्तिश्च प्रत्यवस्कन्दनन्तथा। प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः। अभियुक्तोऽभियोगस्य यदि कुर्य्यादपह्नवम्। मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः"। पक्षस्य भाषार्थस्य व्यापकम् आच्छादम् अभियोगप्रतिकूलमिति यावत्। अतएव "पूर्व्वपक्षार्थसम्बन्धं प्रतिपक्षं निवेदयेदि"त्युक्तम्। न च विप्रतिपत्त्या न्यायोऽयमागतस्य धारयसीत्यभियुक्तस्य धारयामीति संप्रतिपत्तेः कथमुत्तरत्वम् अभियोगाप्रतिकूलत्वादिति वाच्यम् भाषावादिनोमूर्खत्वेनापटुकरणतया वा कदाचिद्भाषाविवादादेवायं क्षीयते इति भाषाविमर्दपर्य्यन्तं विप्रतिपन्नस्याप्युत्तरवादिनोभाषार्थं सम्यगवगम्य तन्निषेधार्थं सम्यगुत्तरासम्भवात् विद्वत्सभायां चासत्यवचनमधर्म्मकारकम्। परोक्तिपराजये च दण्ड्यत्वं वादिना च वैरमित्यादि प्रतिसन्दधतः सम्प्रतिपत्तेरुत्तरत्वं सम्भवत्येव। एवम् एतेभ्य एवानिष्टारात् साध्यत्वेनोपदिष्टस्य पक्षस्य सिद्धत्वेनोपन्यासेन साध्यत्वनिवारणात् सिद्धसाधनेनापि वादिनः प्रत्यवस्थानाच्चोत्तरत्वं सम्प्रतिपत्तेः सिद्धमिति सारं प्रकृतोपयोगि अनाकुलं पूर्व्वापरविरोधशून्यं अव्याख्यागम्यमध्याहारादिकं विनैव प्रतीतम् अभियोगस्य अभियुज्यते इत्यभियोगः सन्देहकं साध्यं तस्यापह्नवमित्यर्थः"। "उत्तराभासमाह कात्यायनः। "प्रकृतेन त्वसम्बद्धमत्यल्पमतिभूरि च। पक्षैकदेशव्याप्येवं तच्च नैवोत्तरं भवेत्। अव्यक्तपदव्यापि निगूढार्थं तथाकुलम्। व्याख्यागम्यमसारञ्च नोत्तरं शस्यते बुधैः"। अव्यक्तपदव्यापि अनन्वितार्थपदव्याप्तमिति व्यवहारतिलके भवदेवभट्टाः। मिथ्योत्तरभेदमाह पुनर्व्यासनारदौ। "मिथ्यैतन्नाभिजानामि मम तत्र न सन्निधिः। अजातश्चास्मि तत्काले इति मिथ्या चतुर्विधम्"। मिथ्यैतदितिशब्दतोनाभिजानामीत्यादिकमर्थतोऽपह्नवः। तथा च कात्यायनः। "श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति। अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरम्"। त्वं मह्यं धारयसीति प्रतिज्ञायां न गृहीतमिति शब्दतः। कालविशेषगर्भायां तस्यां सत्यां तदानाहं जात इति अर्थतः। देशकालविशेषगर्भायां तदा तत्र नाहमासम् इत्यर्थतः। देशादिमत्यां तच्छून्यायां वा न जानामीत्यर्थतएव योग्याकरणेनार्थतस्तदपह्नवप्रतिपादनात्। अत्र चरमत्रयं ग्रहणावस्कन्दनमुखेन ग्रहणाभावप्रतिपादकं सापदेशमिथ्योत्तरमात्रम् आद्यं मिथ्योत्तरमात्रम्। तच्च कारणोत्तरं द्विविधं बलवत् स्वबलं दुर्बलञ्च तत्र बलवदुत्तरं यथा मत्तः शं गृहीत-

मिति सत्यं किन्तु परिशोधितमिति अत्रोत्तरवादिन एव क्रियानिर्देशः । तथा च नारदः । "आधर्ष्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् । विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः" । आधर्ष्यं दुर्बलत्वं पूर्वपक्षस्य । ततश्च स्थापकसाध्यस्य धार्य्यमाणत्वस्य ध्वंसकारणं निर्य्यातनादि तद्रूपमुत्तरं कारणोत्तरम् । अतएव मिथ्योत्तरादस्य भेदः तद्धि धार्य्यमाणत्वस्यात्यन्ताभावप्रयोजकमप्यनुपरूपं न तु ध्वंसरूपम् । तुल्यबलकारणोत्तरं यथा मदीयेयं भूमिः क्रमागतत्वादिति वाद्युक्ते मदीयेयं भूमिः क्रमागतत्वादिति प्रतिवादिना तत्रोत्तरमिति तत्र पूर्ववादिनः साक्ष्युपन्यासः । तदसामर्थ्ये प्रतिवादिनः । तथा च याज्ञवल्क्यः । "साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः । पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः" । दुर्बलकारणोत्तरं यथा ममेयं भूः क्रमागतत्वादिति वाद्युक्ते ममेयं भूर्दशवर्षभुज्यमानत्वादिति प्रत्युत्तरम्" व्य०त०रघु० ।

"शोधयेत् पूर्ववादं तु यावन्नोत्तरदर्शनम् । अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत्" नार० । ९न्यायावयवभेदे न० । "विवक्षो विषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतम्" मीमांसा । तच्च सिद्धान्तानुकूलतर्कोपन्यासरूपम् ।१०प्रतिवचने न० "प्रचक्रमे च प्रतिवक्तुमुत्तरम्" रघु० ।११उपरिस्थे, "समे देशे प्रतिष्ठाप्य चैलाजिनकुशोत्तरम्" गीता । "मृदुप्रवालोत्तरपुष्पशय्याम्" रघुः १२ऊर्द्ध्वभागे "तद्याचनाद्देवनतोत्तरकायमीषत्" रघुः "दूर्वाङ्कुरयवक्षताभिन्नपुटोत्तरः इति रघुः । १३वामभागे । "पितृपात्रे निधायार्घ्यं न्युब्जमुत्तरतोन्यसेत्" मत्स्यपु० । "न्यसेदित्यत्र व्यातोपस्थापितकर्तुर्वामपार्श्वे न्यासः कर्तव्यः" श्रा०त०रघु० । तस्य तदर्थत्वे उदा० तत्रैव यथा "तस्मादृषस्य दक्षिणतो लक्ष्म भवति तं पुण्यलक्ष्मीकमित्याचक्षते उत्तरतः स्त्रियाः उत्तरायत्ता हि स्त्रीति" शतपथश्रुतिः । "उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति" भारतम् दिशि "अस्त्युत्तरस्यां दिशि देवतात्मा" कुमा० । "सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः" सू० अत्र वृत्तौ पुंवद्भावः । दिग्देशकालवर्त्तिपरत्वेऽपि अस्य स्वाभिधेयावधिनियमरूपव्यवस्थावाचित्वात् सर्वनामतया तत्कार्य्यम् उत्तरे ग्रामाः उत्तरस्यै नगर्य्यैः उत्तरस्मिन् दिने, संज्ञायां तु न सर्वनामकार्य्यम् उत्तराः कुरवः । तत्रोत्तरकालवृत्तौ "अर्द्धमन्तमधिकर्द्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः" रघुः "सखीभिरस्योत्तरमीक्षितामिमाम्" कुमा० । अवधिश्च द्विविधः दैशिकः कालिकश्च तत्र दैशिकः "समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी" गर्भप्रसवमन्त्रः । अत्र दिग्देशावधिवाचित्वे उद्+ऊर्द्ध्वे तरप् । तथा हि बह्वाद्यवधिमेरुपर्य्यन्तदेशानाम् भूवलये क्रमश उन्नतत्वात् तत्सन्निहितदेशस्य उन्नत्वादुत्तरत्वम् "स्वापेक्षया मेरुसन्निहितत्वमेव उत्तरत्वमिति" सुता० । अतएव तद्देशस्योन्नत्वादेव च कुम्भस्तत्र उत्तरध्रुवस्योन्नत्वम्" सि०शि० उक्तम् "निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ । तदाश्रितं खे जलयन्त्रवत्तथा भ्रमद्भचक्रं निजमस्तकोपरि । उदग्दिशं याति यथा यथा नरस्तथा तथा खान्नतमृक्षमण्डलम् । उदग्ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः" तद्दिशः क्रमशः उच्चत्वात् दक्षिणस्याः अधस्त्वम् । अतएव तद्दिशोऽवाचीत्वम् । तद्दिक्स्थितदेशस्यापि उत्तरदिक्स्थत्वे नोत्तरत्वम् । कालिकस्य उत्तरत्वं तु स्वापेक्षया परत्वम् तच्च स्वापेक्षया ऽल्पस्य क्रियासामानाधिकरण्यम् । सूर्य्यक्रिययैव खण्डकालव्यवहारात् तत्र प्राग्वर्त्तिकालवृत्तेः बहुतरस्य क्रियासामानाधिकरण्यात् तथात्वम् । तथा च एतादृशार्थपरत्वे उदः उत्क्रान्तिप्रकर्षे तरप् । उत्तरकालवाचित्वेऽपि अव्यवहिते एवास्य वृत्तिरौत्सर्गिकी लक्षणया अधिककालोत्तरत्वमपि प्रतीयते । तेन स्वाव्यवहितोत्तरक्षणवृत्तित्वमित्यादिप्रयोगो द्रष्टव्यः । अधिकार्थे तु उदः उत्कर्षार्थत्वमिति विवेकः । १४प्रधाने "धर्मोत्तरं मध्यममाश्रयन्ते" रघुः "कथान्तात तवाद्येह शोकोत्तरमिदं मनः" भा० अनु० १६२ अ० १५अधिके "देवीं तु मनसा ध्यात्वा शतमष्टोत्तरं जपेत्" तन्त्रम् । "सप्तोत्तरं सर्वगतं हि च सन्निगते तथा" या० स्मृ० । उत्तीर्य्यतेऽस्मात् संसारः अपादाने अप् । १६विष्णौ पु० । "उत्तरो गोपतिर्गोप्ता" विष्णु स० "जन्मसंसारबन्धनादुत्तरत्यत उत्तरः विश्वस्माद् वा उत्कृष्टः-भा० । १७शिवे पु० तस्यापि तथात्वात् । भावे अप् । १८उत्तरणे उल्लङ्घने । १९विराटनृपस्य पुत्रे पु० स च भूमिञ्जयापरनामा । २० तत्कन्यायां स्त्री तत्कथा यथा भा०विरा० प०३५।३६अ० । "इहा भूमिञ्जयं नाम पुत्रं मत्स्यस्य मानिनम्" इत्युपक्रम्य "उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः । उत्तरं ब्रूहि कल्याणि ! क्षिप्रं मद्वचनादपि" । "उत्तरायाः प्रमुखतः सर्वं जाम-

नरिन्दमः" "अथोत्तरा च कन्याच सख्यस्तमनुवं सदा" "यद्युत्तरोऽयं संग्रामे विजेष्यति महारथान्" इति च। उत्तरा च अभिमन्योः पत्नी तत्कथापि तत्रैव ७१,अ०। "उत्तरां प्रतिजग्राह सव्यसाची धनञ्जयः" इति विराटेनोक्ते "प्रतिग्रह्णाम्यहं राजन्! स्नुषां दुहितरं तव" "स्नुषार्थं उत्तरां राजन्! प्रतिग्रह्णामि ते सुताम्" "तां प्रत्यगृह्णात् कौन्तेयः सुतस्यार्थे धनञ्जयः। सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा। तत्रातिष्ठन् महाराजो रूपमिन्द्रस्य धारयन्। स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः। प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्दनम्। विवाहं कारयामास सौभद्रस्य महात्मनः" ७२अ०। २१ अष्टकथने "कतात्र देवी वचनाधिकारिणी त्वदुत्तरं दासि! ददासि का सती" नैष०। उत्तरकालभावित्वादुत्तरत्वाद्वास्य तथात्वमजिज्ञासिताधानतया चास्य निग्रहस्थानत्वं तदभिप्रायेण उक्तश्लोकेन निग्रहार्थकाक्षेपः कृतः।

**उत्तरकाण्ड** न० वाल्मीकि रामायणान्तर्गते सप्तमे काण्डे।

**उत्तरकाल** पु० कर्म०। भविष्यत्काले क्रमिकर्म्मणां तस्य गौणकालत्वमाह "एवमागामियागीयमुख्यकालादनन्तरः। स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्म्मणः" हरिहरः।

**उत्तरकुरु** पु० नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदे। वर्षाणां संस्थितिः सि०शि० उक्ता "लङ्कादेशाद्धिमगिरिरुदग्घेमकूटोऽथ तस्मात् तस्मादन्यो निषध इति ते सिन्धुपर्यन्तदैर्घ्याः। एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला वर्षाण्येषां जगुरिह बुधा अन्तरे द्रोणिदेशान्। भारतवर्षमिदं ह्युदगस्मात् किन्नरवर्षमतो हरिवर्षम्। सिद्धपुराच्च तथा कुरु तस्माद्विद्धि हिरण्मयरम्यकवर्षे। माल्यवांश्च यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः। नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम्। माल्यवज्जलधिमध्यवर्ति यत् तत्तु भद्रतुरगं जगुर्बुधाः। गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः। निषधनीलसुगन्धसुमाल्यकैरलमिलावृतमावृतमावभौ। अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम्"। "अत्र भूगोलस्यार्धमुत्तरं जम्बूद्वीपम्। तस्य क्षाराब्धेश्च सन्धिर्निरक्षदेशः। तत्र लङ्का रोमकं सिद्धपुरं यमकोटिरिति पुरचतुष्टयं भूपरिधिचतुर्थांशान्तरं किल कथितम्। तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सोत्तरा। अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः पूर्वापरसिन्धुपर्यन्तदैर्घ्योऽस्ति। तस्योत्तरे हेमकूटः। सोऽपि समुद्रपर्यन्तदैर्घ्यः। तथा तदुत्तरे निषधः। तेषामन्तरे यथोत्तरम् भारतकिन्नरहरिवर्षाणि। एवं सिद्धपुरादुत्तरतः शृङ्गवान् नाम गिरिः। ततः श्वेतगिरिः। ततो नीलगिरिरिति। तेऽपि सिन्धुपर्यन्तदैर्घ्याः। तेषामन्तरे च वर्षाणि। तत्रादौ कुरुवर्षम्। तदुत्तरे हिरण्मयम्। ततो रम्यकमिति। अथ यमकोटेरुत्तरतो माल्यवान् नाम गिरिः। स तु निषधनीलपर्यन्तदैर्घ्यः। तस्य जलधेश्च मध्ये भद्राश्वं वर्षम्। एवं रोमकादुत्तरतो गन्धमादनः तस्य जलधेश्च मध्ये केतुमालम्। एवं निषधनीलमाल्यवद्गन्धमादनैरावृतमिलावृतं नाम नवमखण्डम्। सा स्वर्गभूमिः। अतस्तत्र देवक्रीडास्थानानि" प्रमि०। तत्र प्रधाना नदी भद्राख्या "चक्षुश्च केतुमालस्य भद्राख्या चोत्तरान् कुरून्"। सि०शि०। भा०उ०प०७अ० तद्वर्षं वर्णितं यथा "दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे। उत्तराः कुरवो राजन् पुण्याः सिद्धनिषेविताः। तत्र वृक्षा मधुफला नित्यपुष्पफलोपमाः। पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च। सर्व्वकामफलास्तत्र केचिद्वृक्षा जनाधिप!। अपरे क्षीरिणो नाम वृक्षास्तत्र नराधिप। ये क्षरन्ति सदा क्षीरं षड्रसं ह्यमृतोपमम्। वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च। सर्व्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका। मणिरत्ननिभं रम्यं वज्रवैदूर्य्यसन्निभम्। भूभागं दृश्यते तत्र पद्मरागसमप्रभम्। सर्व्वर्त्तुसुखसंस्पर्शा निष्पङ्का च जनाधिप। पुष्करिण्यः शुभास्तत्र सुखस्पर्शा मनोहराः। देवलोकच्युताः सर्व्वे जायन्ते तत्र मानवाः। शुक्लाभिजनसम्पन्नाः सर्व्वे सुप्रियदर्शनाः। मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः। तेषान्ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम्। मिथुनं जायते काले समन्तात् प्रवर्द्धते। तुल्यरूपगुणोपेतं समवेशं तथैव च। एकमेवानुरूपञ्च चक्रवाकसमं प्रभो!। निरामयाश्च ते लोका नित्यं मुदितमानसाः। दशवर्षसहस्राणि दशवर्षशतानि च। जीवन्ति ते महाराज! न चान्योऽन्यं जहत्युत। भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः। तान्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च। उत्तराः कुरवो राजन्! व्याख्यातास्ते समासतः"। तेनास्य पुंस्त्वं क्लीवत्वञ्च उक्तवाक्येभ्यः। भा०स०२७३अ० अर्ज्जुनोत्तरदिग्विजये "इदं पुरं यः प्रविशेद्ध्रुवं न स भवेन्नरः। प्रीयामहे त्वया वीर! पर्य्याप्तो विजयस्तव। न चात्र किञ्चिज्जेतव्यम-

र्जुनात्र प्रहस्यते। उत्तराः कुरवोह्येते नात्र युद्धं प्रवर्त्तते। प्रविष्टोऽपि हि कौन्तेय! नेह द्रक्ष्यसि किञ्चन। नहि मानुषदेहेन शक्यमत्राभिवीक्षितुम्। अथेह पुरुषव्याघ्र। किञ्चिदन्यच्चिकीर्षसि। तद्ब्रूहि च करिष्यामो वचनात्तव भारत!। ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव। पार्थिवत्वं चिकीर्षामि धर्म्मराजस्य धीमतः। न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः। युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम्"। "ततोदिव्यानि वस्त्राणि दिव्यान्याभरणानि च। क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम्"। "तेऽवतीर्य्य बहून् देशानुत्तरांश्च कुरूनपि"। भा० स० १४५अ०। "विजित्य यः प्राज्यमयच्छदुत्तरान् कुरूनकुप्यं वसु वासवोपमः" किरा०।

**उत्तरकोशला** स्त्री कर्म्म०। अयोध्यानाम्न्यां नगर्य्याम्। "यदुपतेः क्व गता मथुरा पुरी रघुपतेः क्व गतोत्तरकोशला। इति विचिन्त्य कुरुष्व मनः स्थिरं न सदिदं जगदित्यवधारय" उद्भटः।

**उत्तरक्रिया** स्त्री कर्म्म०। उत्तरकालकर्त्तव्ये कर्म्मणि "सर्व्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया। आधौ प्रतिग्रहे क्रीते पूर्व्वा तु बलवत्तरा" या० स्मृ०। "एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याप्याधाय किमपि गृह्णाति तत्र पूर्व्वस्यैव तद्भवति नोत्तरस्य एवं प्रतिग्रहे क्रये च"मिता०। २वार्षिके पितृकृत्ये च। "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु। क्रियन्ते याः क्रिया पित्र्याः प्रोच्यन्ते ता नृपोत्तराः"। विष्णु पु०। ३अन्तिमक्रियायाञ्च।

**उत्तरङ्ग** न० उत्तरमङ्गम् कर्म्म० शकन्धा०। १द्वारोर्द्धस्थदारुणि। २प्रा०ब०। उद्गततरङ्गे त्रि०। "भागीरथीं शोणइवोत्तरङ्गः" रघुः "अपामिवाधारमनुत्तरङ्गम्" कुमा०।

**उत्तरच्छद** पु० कर्म्म०। शय्याया उपर्य्यास्तरणवस्त्रे। "शय्योत्तरच्छदविमर्दकृशाङ्गरागम्"। "सोत्तरच्छदमध्यास्त नेपथ्यग्रहणाय सः" रघुः।

**उत्तरज्योतिष** पु० प्रतीचीस्थदेशभेदे भारते स० ३१ अ० नकुलप्रतीचीविजये। "कृत्स्नं पञ्चनदञ्चैव तथैवामरपर्वतम्। उत्तरज्योतिषञ्चैव तथा दिव्यकटं पुरम्। द्वारपालञ्च तरसा वशे चक्रे महाद्युतिः। रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः"।

**उत्तरतन्त्र** न० सुश्रुतान्तर्गते ग्रन्थभेदे। "इदानीन्तत् प्रवक्ष्यामि तन्त्रमुत्तरमुत्तममिति" सुश्रु०।

**उत्तरतस्** अव्य० उत्तर+प्रथमापञ्चमीसप्तम्यर्थेषु तसिल्। उत्तरस्मिन् उत्तरस्मात् उत्तर इत्यर्थे। त्यप् उत्तरत्यत्र अव्य० ताभ्यां भवार्थे त्यप्। उत्तरतस्त्य उत्तरत्यत्य तद्भवे त्रि०।

**उत्तरदायक** त्रि० उत्तरं ददाति दा+ण्वुल्। १प्रत्युत्तरदायिनि। उत्तरेण वाक्येन दायति शोधयति निजदोषम् दैप्—शोधे—ण्वुल्। स्वामिना स्वकार्य्यप्रमादकथने तद्दोषस्यादोषत्वख्यापनेन निजदोषशोधके भृत्यादौ। "परपुंसि रता नारी भृत्यश्चोत्तरदायकः। ससर्पे च गृहे वासः मृत्युरेव न संशयः" चाण०।

**उत्तरदिक्काल** पु० ७त०। "रवावुत्तरतः कालः सोमे वायव्यभागके। भौमे तु पश्चिमे भागे बुधे नैरृतकोणके। जीवे च याम्यदिग्भागे शुक्रे आग्नेयकोणके। शनौ तु पूर्वदिग्भागे कालचक्रं प्रकीर्त्तितम्" रत्नसारोक्ते रविवारे उत्तरदिग्वर्त्तिकालचक्रे। रात्रौ तु वैपरीत्यम् उत्तरदिक्पाशशब्दे दृश्यम् अन्यदिक्कालोऽप्युक्तदिशा ज्ञेयः

**उत्तरदिक्पाश** पु० ७त०। "रवौ तु दक्षिणे पाशः सोमे आग्नेयकोणके। भौमे तु पूर्व्वदिग्भागे बुधे ईशानकोणके। जीवे चोत्तरदिग्भागे शुक्रे वायव्यकोणके। शनौ तु पश्चिमे भागे पाशचक्रं प्रकीर्त्तितम्। रात्रावेतौ वैपरीत्यात् पाशकालौ यथोदितौ" रत्नसा० उक्ते बृहस्पतिवारे उत्तरदिशि यात्रायुद्धादिनिषेधोपयोगिनि पाशचक्रे। एवमन्यदिक्ष्वप्युक्तदिशा पाशोबोध्यः।

**उत्तरदिक्शूल** त्रि० उत्तरदिशि शूलमिवास्यस्य अच्। "ज्येष्ठा पूर्व्वा भाद्रपदा रोहिण्युत्तरफाल्गुनी। पूर्व्वादिषु क्रमाच्छूलाः यात्रादौ मरणप्रदाः। शूलाख्यानि च धिष्ण्यानि शूलसंज्ञाश्च वासराः। यायिनां स्युरुदाः शीघ्रमथ वा चार्थनाशकाः" भरद्वाजोक्ते उत्तरदिशि यात्रादौ वर्ज्ये १उत्तरफल्गुनीनक्षत्रे २बुधवारे च दिक्शूलवारस्तु पूर्वदिगीशवारः दिगीशाश्च उत्तरदिगीशशब्दे वक्ष्यन्ते। शूला इत्यत्र स्त्रीत्वं ताराविशेषकत्वात्।

**उत्तरदिगीश** पु० ६त०। "इन्द्रोवह्निपितृपतिर्नैरृतोवरुणोमरुत्। कुवेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात्" इत्युक्ते १कुवेरे उत्तरदिक्पालादयोऽप्यत्र। "कुवेरगुप्तां दिशमुष्णरश्मौ" कुमारे "कौवेरदिग्भागमपास्य मार्गम्" माघे च उत्तरदिशः कुवेरसम्बन्धित्वमुक्तम् "सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिःशशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिकदिगीश्वराः" इत्युक्ते २बुधे

एतच्च "दिग्गीशाद्वे शुभा यात्रा पृष्ठाहे मरणं ध्रुवम्" इत्युक्तेः उत्तरदिशः पृष्ठीभूतदक्षिणस्यां बुधवारे यात्रानिषेधाय "प्राच्यादिककुभां नाथाः यथासंख्यं प्रदक्षिणम्। मेषाद्याः राशयो ज्ञेया स्त्रिरावृत्तपरिभ्रमात्" इत्युक्तेषु कर्कवृश्चिकमीनेषु राशिषु च तेषु लग्नेषु तत्स्थे चन्द्रे च उत्तरदिग्गमनं शस्तमित्यपि बोध्यम्।

उत्तरदिग्द्वार न० उत्तरदिशि द्वारं मुखमस्य। "प्राच्यादिषु चतुर्दिक्षु सप्तसप्तानलर्क्षतः" ज्यो० उक्तसाभिजित्काष्टाविंशतिनक्षत्रमध्ये २३,२४,२५,२६,२७,१,२। नक्षत्रेषु तानि च यात्रादिषु तत्र दिशि शस्तानि।

उत्तरदिग्बलिन् पु० उत्तरस्यां दिशि बली। "प्राच्यां सौम्यसुराचार्य्यौ याम्यां भास्करभूमिजौ। प्रत्यक् सौरिरुदीच्यान्तु सितेन्दू दिग्बलान्वितौ" ज्यो० त० उक्ते १शुक्रे २चन्द्रे च।

उत्तरपक्ष पु० कर्म्म०। वादे पूर्व्वपक्षस्य मर्दनक्षमे सिद्धान्तपक्षे। "प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षताम्" माघः। २उत्तरविकल्पे ३कृष्णपक्षे च शुक्लपक्षस्यैव प्राधान्यकत्वात् कृष्णपक्षस्योत्तरत्वात् तथात्वम्।

उत्तरपट पु० कर्म्म०। १उत्तरीये। ततः सस्तोत्तरपटः समस्वेदः सवेपथुः" भा० ११६अ०। २शय्योत्तरच्छदे च

उत्तरपथ पु० उत्तरः पन्थाः अच् समा०। १उत्तरस्थिते २अव्यवहिते च पथि। उत्तरः उत्तरायणचिह्नितः पन्थाः। ३देवयाने पथि येन हि अर्चिरादिमार्गेण विद्यावन्तो ब्रह्मलोकं गच्छन्ति तादृशे मार्गे। तत्र मार्गे च ये तदभिमानिनो देवास्ते अर्चिरादिशब्दे ३६४ पृष्ठे उक्ताः तेषाञ्च यथा आतिवाहिकत्वम् तथा आतिवाहिकशब्दे ६५१ पृष्ठे उक्तम्। "उत्तरपथेनाहृतञ्च" पा०। ठञ्। औत्तरपथिक तत्पथेनाहृते त्रि०।

उत्तरपथिक त्रि० पन्थानं गच्छति "पथः ष्कन्" पा० पथिकः उत्तरः तद्देशभवः पथिकः। उत्तरदेशभवे १पथिके स्त्रियां ङीष्।

उत्तरपद न० उत्तरमुत्तरवर्त्ति पदम्। १समासचरमावयवपदे २स्वोत्तरवर्त्तिपदे च। "एकाजुत्तरपदे णः" पा०। ३समासयोग्ये पदे च। "प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" मीमांसा। भवति च "यजतिषु येयजामहं कुर्य्यात् नानुयाजेषु" इत्यत्र नञः समासयोग्यानुयाजेन साहित्यात् पर्य्युदासपरता तथा रात्रौ श्राद्धं न कुर्वीतेत्यादौ नञो रात्र्या समासयोग्यत्वात्तथात्वम् "अष्टम्यां मांसं नाश्नीयादित्यत्र तु क्रियापदयोगेन तस्य समासयोग्यत्वाभावेन न तत्रोत्तरपदयोग इति न पर्य्युदासपरता किन्तु प्रसज्यप्रतिषेधार्थकता "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्" इति मीमांसकोक्तेः। "पदोत्तरपदात्" वार्त्ति० उत्तरपदमधीते वेत्ति वेत्यर्थे ठन्। उत्तरपदिक तदध्येतरि तद्वेत्तरि च त्रि०।

उत्तरपश्चिमा स्त्री उत्तरस्याः पश्चिमाया अन्तराला दिक् दिक्स०। १उत्तरपश्चिमयोरन्तरालदिशि नैरृतकोणे। सा विद्यतेऽस्य अच्। २तद्दिक्सम्बन्धिनि देशे पु० "उत्तरपश्चिमे गार्हपत्यम्" आश्व० श्र० ४,२,१२। ३तद्वर्त्तिनि त्रि०।

उत्तरपाद पु० कर्म्म०। चतुष्पादात्मकस्य व्यवहारस्य द्वितीये पादे "पूर्व्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः। क्रियापादस्तृतीयः स्याच्चतुर्थो निर्णयः स्मृतः। मिथ्योक्तौ तु चतुष्पात् स्यात् प्रत्यवस्कन्दने तथा। प्राङ्न्याये च स विज्ञेयो द्विपात् संप्रतिपत्तिषु" बृहस्पतिः।

उत्तरपुरस्तात् अव्य० उत्तरस्याः पूर्व्वस्या अन्तराला दिक् उत्तरपूर्व्वा ततः प्रथमापञ्चमीसप्तम्यर्थे अस्ताति पुंवद्भावः पूर्व्वस्य पुरादेशः। ईशानकोणे "उत्तरपुरस्तादाहवनीयस्य जानुमात्रं गर्त्तं खात्वा" आश्व० श्र० ४,४,८।

उत्तरपूर्व्वा स्त्री उत्तरस्याः पूर्व्वस्या दिशोऽन्तराला दिक् पुंवद्भावः दिक्स०। ईशानकोणे "आग्नेय्युत्तरपूर्व्वायै" कात्या० ३,३,२०। दिङ्नामसमासे वा एतस्य सर्व्वनामकार्य्यम् योत्तरा सा पूर्व्वा यस्य सुग्वस्य एवं बहुव्रीहौ तु न सर्व्वनामकार्य्यमिति भेदः। तेन तादृशार्थेऽपि अस्य स्त्रियां त्रि०। "योत्तरा सा पूर्व्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्व्वायै" सि० कौ०।

उत्तरफल्गुनी स्त्री फलति फल–निष्पत्तौ "फलेर्गुक् च" उणा० उनन् गुक् च गौरा० ङीष् कर्म्म०। अश्विन्यादिषु द्वादशे नक्षत्रे तस्याः स्वरूपम् उडुपशब्दे १०७१ पृ० अश्लेषाशब्दे ४८७ पृष्ठे च तदधिदेवादि उक्तम्। फल्गुनशब्दात् स्वार्थे अण् ङीप्। फाल्गुनी कर्म्म०। तत्रैवार्थे। इयं श्रवणान्तर्गता "श्रवणस्त्रीणामुत्तराणि स्युः" इत्युक्तेः यथा चास्य फाल्गुनत्वं तथा समर्थितम्" शत० ब्रा०। "फल्गुनीष्वग्नी आदधीत एता वा इन्द्रनक्षत्रं यत् फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनोह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत्परोक्षमाचक्षते फाल्गुन्य इति कोह्येतस्यार्हति गुह्यं

नाम यद्दोतम्" २,१,२,११ अस्याः प्रथमपादः सिंहराशिः उत्तरपादत्रयं कन्याराशिः प्रमाणं उडुचक्रशब्दे दृश्यम् ।

**उत्तरभाद्रपद्** स्त्री भद्राय हितः भाद्रः पत् पादश्चतुर्थांशो यस्याः ब० ततः कर्म० । अश्विन्यादिनक्षत्रेषु षड्विंशे नक्षत्रे । पदशब्देन समासे टाप् । उत्तरभाद्रपदाप्यत्र । स्वरूपादिकमुडुचक्रशब्दे १०७१पृष्ठे उक्तम् । अधिपत्यादिकमश्लेषाशब्दे चोक्तम् । इयं ध्रुवगणः "ध्रुवगणस्त्रीण्युत्तराणि स्वभूः" इत्युक्तेः मीनराशिघटिका ।

**उत्तरमानस** न० उत्तरमुत्तरस्थं मानसम् । १तीर्थभेदे "कालोदकं नन्दिकुण्डं तथाचोत्तरमानसम् । अभ्येत्य योजनशताद्भ्रूणहा विप्रमुच्यते" भा० अनु० २५अ० । २गयामध्ये उत्तरदिकस्थे तीर्थभेदे "उत्तरे मानसे, स्नानं करोम्यात्मविशुद्धये" इति गयाश्राद्धपद्धतिः । दक्षिणमानसमपि तत्रत्यतीर्थभेदः "दिवाकर ! करोमीह स्नानं दक्षिणमानसे" इति तत्रैव ।

**उत्तरमीमांसा** स्त्री उत्तरस्य वेदशेषभागस्य उपनिषद्रूपस्य मीमांसा पञ्चाङ्गन्यायोपेतवाक्यसमुदायात्मकोविचारः । "अथातो ब्रह्मजिज्ञासा" इत्यादौ "अनावृत्तिः शब्दात्" इत्यन्ते चतुरध्यायीरूपे षोडशपादात्मके शारीरस्य ब्रह्मात्मत्वप्रतिपादके वेदव्यासरचिते शारीरकसूत्राख्ये ग्रन्थे । तत्र प्रतिपाद्यविषयादि संक्षेपतः वैयासिकमालायां भारतीतीर्थमुनिना दर्शितं यथा "शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः । समन्वयाविरोधौ द्वौ साधनं च फलं तथा" ४ । समन्वये स्पष्टलिङ्गमस्पष्टत्वमुपास्यगम् । ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वदः क्रमात्" ५ । द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता । भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता" ६ । तृतीये विरतिस्तत्त्वंपदार्थपरिशोधनम् । गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ७ । चतुर्थे जीवतोमुक्तिरुत्क्रान्तिर्गतिरुत्तरा । ब्रह्मप्राप्तिब्रह्मलोकावाप्तीः पादार्थसंग्रहः" ८ । "अध्यायचतुष्टयात्मकस्य शास्त्रस्य ब्रह्मविचारोऽर्थः सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्येण पर्यवसानं प्रथमाध्यायेन प्रतिपाद्यते । द्वितीयेन सम्भावितविरोधः परिह्रियते । तृतीयेन विद्यासाधननिर्णयः । चतुर्थेन विद्याफलनिर्णयः इत्येते अध्यायार्थाः ४ । तत्र प्रथमाध्यायगतपादार्थान् विभजते । समन्वयेति । स्पष्टब्रह्मलिङ्गयुक्तं वाक्यजातं प्रथमे पादे चिन्त्यम् । "अन्तस्तद्धर्मोपदेशात्" इत्यत्र सार्वज्ञ्यसार्वात्म्यसर्वपापविरहादिकं च ब्रह्मणोऽसाधारणतया स्पष्टब्रह्मलिङ्गम् । अस्पष्टब्रह्मलिङ्गत्वे सत्युपास्यविषयं वाक्यजातं द्वितीयपादे चिन्त्यम् । तद्यथा प्रथमाधिकरणविषये शाण्डिल्योपास्तिवाक्ये मनोमयत्वप्राणशरीरत्वादिकं सोपाधिकब्रह्मणो जीवस्य च साधारणत्वादस्पष्टब्रह्मलिङ्गम् । तृतीयपादे त्वस्पष्टब्रह्मलिङ्गत्वे सति ज्ञेयब्रह्मविषयं वाक्यजातं चिन्त्यं तद्यथा प्रथमाधिकरणे मुण्डकगतब्रह्मवाक्ये द्युभ्वाद्याद्यायतनत्वं सूत्रात्मनः परब्रह्मणश्च साधारणत्वादस्पष्टं ब्रह्मलिङ्गम् । यद्यपि द्वितीयपादे कठवल्ल्यादिगतब्रह्मतत्त्ववाक्यानि विचारितानि । तृतीयपादे दहरोपासनावाक्यं विचारितं तथाप्यवान्तरसंगतिलोभेन तद्विचारस्य प्रासङ्गिकत्वान्न पादार्थयोः साङ्कर्यापत्तिः इत्थेवं पादत्रयेण वाक्यविचारः समापितः । चतुर्थपादे त्वव्यक्तपदमजापदं चेत्येवमादिसन्दिग्धपदं चिन्त्यम्५ । द्वितीयाध्यायगतपादार्थान्विभजते द्वितीये इति । प्रथमपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः । द्वितीयपादे सांख्यादिमतानां दुष्टत्वं प्रदर्शितम् । तृतीयपादे पूर्वभागेण पञ्चमहाभूतश्रुतीनां परस्परविरोधः परिहृतः उत्तरभागेण जीवश्रुतीनाम् चतुर्थपादे लिङ्गशरीरश्रुतीनां विरोधः परिहृतः ६ । तृतीयाध्यायगतपादार्थान्विभजते तृतीये इति । प्रथमपादे जीवस्य परलोकगमनागमने विचार्य वैराग्यं निरूपितम् । द्वितीयपादे पूर्वभागेण त्वंपदार्थः शोधितः । उत्तरभागेण तत्पदार्थः । तृतीयपादेन सगुणविद्यायां गुणोपसंहारो निरूपितः निर्गुणे ब्रह्मणि च पुनरुक्तपदोपसंहारश्च । चतुर्थपादे निर्गुणज्ञानस्य बहिरङ्गभूतान्याश्रमयज्ञादीन्यन्तरङ्गभूतशमदमनिदिध्यासनादीनि च निरूपितानि ७ । चतुर्थाध्यायगतपादार्थान्विभजते चतुर्थे इति । प्रथमपादे श्रवणाद्यावृत्त्या निर्गुणमुपासनया सगुणं वा ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यलेपविनाशलक्षणा मुक्तिरभिहिता । द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारो निरूपितः । तृतीयपादे सगुणविदो मृतस्योत्तरमार्गोऽभिहितः । चतुर्थपादे पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरभिहिता, उत्तरभागेण सगुणब्रह्मविदो ब्रह्मलोकप्राप्तिर्निरूपिता" तद्व्या० । मीमांसा हि वेदतात्पर्यनिर्णयार्थः न्यायपञ्चकात्मकविचारः । सा च द्विविधा पूर्वमीमांसा उत्तरमीमांसा च तत्र पूर्वमीमांसा जैमिनिप्रणीता "अथातो धर्मजिज्ञासा" इत्यादिका, उत्तरमी-

मांसा दर्शिता । इयमेव च ब्रह्ममीमांसात्वेन प्रसिद्धा

**उत्तररामचरित** न० उत्तरं रामस्य चरितं यत्र । भवभूतिप्रणीते नाटकभेदे ।

**उत्तरवयस** त्रि० उत्तरं वयः नि०वेदे अच् समा० । वृद्धावस्थायाम् "तस्मादुत्तरवयसे पुत्रान् पितोपजीवति" शत० ब्रा० १२,२,२,४ । लोके तु उत्तरवयस् इत्येव ।

**उत्तरवस्ति** पु० सुश्रुतोक्ते चिकित्साङ्गे यन्त्रभेदे । तत्स्वरूपप्रयोगप्रकारादि यथा तत्रैव

"वस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतःपरम् । चतुर्द्दशाङ्गुलनेत्रमाहुराङ्गुलिसम्मितम् । मालतीपुष्पवृन्ताग्रं छिद्रं सर्षपनिर्गमम् । मेढ्रायामसमं केचिदिच्छन्ति खलु तद्विदः । स्नेहप्रमाणं परमं कुडुवात्र प्रकीर्त्तितः । पञ्चविंशाद्धोमात्रां विदध्याद्बुद्धिकल्पिताम् । निविष्टकर्णिकं मध्ये नारीणां चतुरङ्गुलम् । मूत्रस्रोतःपरीणाहसद्वाहिद्व्यङ्गुलम् । तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् । द्व्यङ्गुलं मूत्रमार्गे तु कन्यानान्त्वेकमङ्गुलम् । विधेयं चाङ्गुलं तासां विधिवद्वक्ष्यते यथा । स्नेहस्य प्रसृतञ्चात्र स्वाङ्गुलीमूलसंमितम् । देयं प्रमाणं परममवाग्बुद्धिविकल्पितम् । औरभ्रः शौकरो वापि वस्तिराजश्च पूजितः । तदलाभे प्रयुञ्जीत गलचर्म्म तु पक्षिणाम् । अस्यालाभे इतेः पादो मृदुचर्म्म ततोऽपि वा । अथातुरमुपस्निग्धं सुस्विन्नं प्रथिताशयम् । यवागूं सघृतक्षीरां पीतवन्तं यथावलम् । निषस्यमाजानुसमे पीठे स्थानाश्रये समे । स्वभ्यक्तवस्तिमूर्द्धानं तैलेनोष्णेन मानवम् । ततः समं स्थापयित्वा नालमस्य प्रहर्षितम् । पूर्वं शलाकयाऽन्विष्य ततो नेत्रमनन्तरम् । शनैःशनैर्घृताभ्यक्तं विदध्याद्गुलानि षट् । ततोऽवपीडयेद्वस्तिं शनैर्नेत्रंच निर्हरेत् । ततः प्रत्यागते स्नेहमपराह्णे विचक्षणः । भोजयेत् पयसो मात्रां यूषेणाथ रसेन वा । अनेन विधिना दद्याद्वस्तींस्त्रींश्चतुरोऽपि वा । ऊर्द्ध्वजान्वीं स्त्रियं दद्यादुत्तानायै विचक्षणः । कल्पेतरस्यै कन्यायै दद्यान्मृदु पीडितम् । त्रिकर्णिकेन नेत्रेण दद्याद्योनिमुखं प्रति । गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु । अप्रत्यागच्छति भिषक् वस्तावुत्तरसंज्ञिते । भूयोवस्तिं निदध्यात्तु संयुक्तं शोधनैर्गणैः । गुदे वर्त्तिं निदध्याद्वा शोधनद्रव्यसंभृताम् । प्रवेशयेद्वा मतिमानस्थिद्वारमयैषणीम् । पीडयेद्वाप्यधोनाभेर्बलेनोत्तरसृष्टिना । आरग्वधस्य पत्रेषु निर्गुण्ड्याः सुरसेषु च । कुर्य्याद्गोमूत्रपिष्टेषु वर्त्तीर्वापि ससैन्धवाः । सर्षपसमाः प्रविभज्य वयांसि तु । वस्तेरागमनार्थाय ता निदध्याच्छलाकया । आगारधूमबृहतीपिप्पलीफलसैन्धवैः । कृता वा शुक्रगोमलसुरापिष्टैः सनागरैः । अनुवासनसिद्धिञ्च वीक्ष्य कर्म्म प्रयोजयेत् । शर्करामधुमिश्रेण शीतेन मधुकाम्बुना । दह्यमाने तदा वस्तौ दद्याद्वस्तिं विचक्षणः । क्षीरवृक्षकषायेण पयसा शीतलेन च । शुक्रं दुष्टं शोणितं चाङ्गनानां पुष्पोद्रेकं तस्य नाशञ्च कष्टम् । मूत्राघातान् मूत्रदोषान् प्रवृद्धान् योनिव्याधिं संस्थितिं चापरायाः । शुक्रोत्सेकं शर्करामश्मरीञ्च शूलं वस्तौ वङ्क्षणे मेहने च । घोरानन्यान् वस्तिजांश्चापि रोगान् हित्वा मेहानुत्तरो हन्ति वस्तिः । सम्यग्दत्तस्य लिङ्गानि व्यापदः क्रम एव च । वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना" ।

**उत्तरवादिन्** त्रि० उत्तरमुत्तरपक्षं वदति वद-णिनि । वादे प्रतिवादिनि (आसामी) "साक्षिषूभयतः सत्सु भवन्ति पूर्व्ववादिनः । पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः" या० स्मृ० ।

**उत्तरवेदि** स्त्री कर्म्म० वा ङीप् । "तरन्तुकारन्तुकयोर्यदन्तरं रामहृदानाञ्च मचक्रुकस्य च । एतत् कुरुक्षेत्रसमन्तपञ्चकं पितामहस्योत्तरवेदिरुच्यते" भा० व० ८३अ० उक्ते कुरुक्षेत्रान्तर्गते समन्तपञ्चकरूपे तीर्थे । कुरुक्षेत्रञ्च "उत्तरेण दृषद्वत्या दक्षिणेन सरस्वतीम् । ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिपिष्टपे" इत्युक्तस्थले तीर्थभेदः । इयमेव ब्रह्मवेदीत्युच्यते "ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम्" तत्रैवोक्तेः । यज्ञेऽग्निस्थानपार्श्वे २ वेदिभेदे तत्स्वरूपादि दाक्षणा० दर्शितं यथा । "तत्र महावेदिपश्चिमरेखामध्यात् पूर्वतः, शमित्रयमितां, प्राचीरेखामध्यात् पश्चिमतः शमित्रमात्रां, दक्षिणरेखामध्यात् उत्तरस्यामुत्तररेखामध्यात् दक्षिणस्यां तथैव शमित्रमात्रां भूमिं त्यक्त्वा कुण्डादिमध्ये शमिद्वयमितदीर्घविस्तारां समचतुरस्रामुत्तरवेदिमग्निस्थापनाय वेदिमध्ये कल्पयेत्" । "उत्तरवेद्यग्निप्रणयनमन्थनग्रहदाव्यं वरुणप्रघासादयः" कात्या० ५,७,१५ । "दक्षिणेन निर्ह्णृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधाति ८,६,१८ । अथात आहुर्न नोपकिरन्त्युत्तरवेदिम्" शत० ब्रा० २,५,१,१८ । "तद्वै द्वे वेदी द्वावग्नी भवतः । तद्यद् द्वे वेदी द्वावग्नी भवतस्तदुभयतस्तद्भयत एवैतत् वरुणपाशात् प्रजाः प्रमुञ्चतीतद्यो वा इतथावाचीस्तस्माद् द्वे वेदी द्वावग्नी भवतः । स उत्तरस्यामेव वेदौ उत्तरवेदिम् उप-

किरति न दक्षिणस्याम्" शत० ब्रा० २,५,२,५,६ ।

**उत्तरगलङ्कट** पुंस्त्री ब० व० उत्तरस्य गालङ्कटस्य इन्द० ततः गोत्रप्रत्ययस्य लुक् । उत्तरगालङ्कटगोत्रोत्पन्ने ।

**उत्तरसक्थ** न० उत्तरः सक्थ्नः एकदे० त० टच्समा० । सक्थ्न उत्तरभागे

**उत्तरसाक्षिन्** त्रि० "साक्षिणामपि यः साक्ष्यं स्वपक्षं परिभाषताम् । श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञक" इति नारदोक्ते साक्षिभेदे ।

**उत्तरसाधक** त्रि० उत्तरः सन् साधयति सिध–णिच् साधादेशः ण्वुल् । सहाये सहकारिणि । स हि इतरसामग्रीसत्त्वे तदुत्तरवर्त्ती सन् कार्य्यं साधयति ।

**उत्तरा** अव्य० उत्तर+प्रथमापञ्चमीसप्तम्यर्थे आच् । उत्तरस्यां दिशि काले देशे वेत्याद्यर्थे । १प्रययावुत्तरामुखः" भा०स० २९अ० । २उत्तरस्यां दिशि ३विराटकन्यायां स्त्री । "प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते उत्तरा हि ताः" इत्युक्तासु सपिण्डीकरणोत्तरासु वार्षिकश्राद्धक्रियायासु च स्त्री ।

**उत्तरात्** अव्य० उत्तर+दिग्देशकालविषये आति । उत्तरस्मादुत्तरस्मिन्नित्यर्थे । "पश्चादोत्तरादधरादापुरस्तात्" ऋ० ६,१९,९ । "त्वं नः पश्चादधरादुत्तरात् पुरः" ऋ० ८,६१,१६ ।

**उत्तरात्तात्** अव्य० उत्तरात्+स्वा० वेदे० नि० तातिः । उत्तरादित्यर्थे । "सप्त वीरासोऽधरादुदायन्नष्टोत्तरात्तात् समजग्मिरन्" ऋ० १०,२७,१५ । "पुरस्तात् सवितोत्तरात्तात् सविताऽधरात्तात् १०,३६,१४ ।

**उत्तराधर** त्रि० कर्म्म० उत्तरश्च अधरश्च । उच्चावचे "उत्तराधरा इव भवन्त्योयन्ति" शत० ब्रा० ५,२,४,२१ । उपरितनोष्ठे पु० "पुनर्विवक्षुः स्फुरितोत्तराधरः" कुमा० ।

**उत्तराधिकारिन्** त्रि० उत्तरं पूर्व्वस्वामिस्वत्वोपरमानन्तरमधिकरोति तद्धने स्वाम्यमाप्नोति अधि+कृ–णिनि । पूर्व्वस्वामिस्वत्वोपरमे तद्धने स्वामित्वप्राप्ते पूर्व्वस्वामिसम्बन्धिपुत्रादौ स्त्रियां ङीप् । तत्र कस्य धने कस्याधिकारः । तत्र तावत् गौड़देशप्रचलितदायभागमतानुसारिक्रमोऽभिधीयते तत्र तद्ग्रा० श्रीकृष्णेनोक्तम् यथा । "अथायं मृतधनाधिकारिक्रमः । तत्र प्रथमं पुत्रः तदभावे पौत्रः तदभावे प्रपौत्रः, मृतपितृकपौत्र-मृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकारः । प्रपौत्रपर्य्यन्ताभावे पत्नी सा च प्राप्तभर्त्तृदाया भर्त्तृकुलं तदभावे पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्त्तृदायं भुञ्जीत तथा भर्त्तुरुपकारार्थं यथाकथञ्चिद्दानादिकमपि कुर्व्वीत न तु स्त्रीधनवत् स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता तत्र प्रथमं कुमारी तदभावे वाग्दत्ता; तदभावे ऊढा सा च पुत्रवती सम्भावितपुत्रा च ते द्वे युगपदेवाधिकारिण्यौ, वन्ध्या पुत्रहीना विधवा च नाधिकारिणी । ऊढायाश्चाभावे दौहित्रः । तदभावे पिता । तदभावे माता, तदभावे भ्राता, तत्रापि प्रथमं सोदरः तदभावे वैमात्रेयः, मृतस्य भ्रातृसंसृष्टत्वे तु सोदरमात्रविषये प्रथमं संसृष्टसोदर एवाधिकारी तदभावे चासंसृष्टसोदरः, एवं वैमात्रेयमात्रविषये प्रथमं संसृष्टवैमात्रेयः तदभावे चासंसृष्टवैमात्रेयः, यदा तु संसृष्टोवैमात्रेयः सोदरश्चासंसृष्टः तदा तावुभौ तुल्यवदधिकारिणौ । भ्रातॄणामभावे भ्रातृपुत्रः, तत्रापि प्रथमं सोदरभ्रातृपुत्रः तदभावे वैमात्रेयभ्रातृपुत्रः, संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्रः तदभावे चासंसृष्टसोदरभ्रातृपुत्रः, वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः तदभावे चासंसृष्टवैमात्रेयभ्रातृपुत्रः, यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रस्तु संसृष्टः तदा द्वौ भ्रातृवत्तुल्याधिकारिणौ । भ्रातृपुत्राभावे भ्रातृपौत्रः तत्रापि भ्रातुः सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्रः स च सोदरभगिनीपुत्रः वैमात्रेयभगिनीपुत्रश्च, तदभावे पितामहः, तदभावे पितामही, तदभावे पितुः सहोदरः तदभावे पितुर्वैमात्रेयः । तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकारः । तदभावे पितामहदौहित्रः तत्रापि पितृसोदरभगिनीपुत्रः पितृवैमात्रेयभगिनीपुत्रश्च, वक्ष्यमाणप्रपितामहदौहित्राधिकारेऽप्येवम्, तदभावे प्रपितामहः तदभावे प्रपितामही तदभावे पितामहसहोदरभ्रातृतद्वैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिणः । एतावत्पर्य्यन्तानां धनिभोग्यपिण्डदातॄणामभावे धनिदेयपिण्डदातॄणां मातामहमातुलादीनामधिकारः तत्रापि प्रथमं मातामहस्तदभावे मातुलतत्पुत्रपौत्राणां क्रमेणाधिकारः तदभावे चाधस्तनसकुल्यानां धनिभोग्यलेपदातॄणां प्रतिप्रपौत्रप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः, तदभावे पुनरूर्द्धतनसकुल्यानां धनिदेयलेपभुग्वृद्धप्रपिता-

मह्यादितत्सन्ततीनामासत्तिक्रमेणाधिकारः, तदभावे समानोदकानामधिकारः। तेषामभावे चाचार्य्यस्य तदभावे शिष्यस्य तदभावे सब्रह्मचारिणोऽधिकारः, तदभावे चैकपासस्थसगोत्रसमानप्रवरयोः क्रमेणाधिकारः। उक्तपर्य्यन्तानां सर्व्वेषां सम्बन्धिनामभावे ब्राह्मणधनवर्ज्जं राजा गृह्णीयात्, ब्राह्मणधनन्तु त्रैविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः। एवं वानप्रस्थधनं भ्रातृत्वेनानुमतोऽपरवानप्रस्थ एकतीर्थी गृह्णीयात्। तथा यतिधनं सच्छिष्यः। नैष्ठिकब्रह्मचारिणोधनमाचार्य्यः उपकुर्व्वाणस्य तु ब्रह्मचारिणोधनं पित्रादिर्गृह्णीयादिति सङ्क्षेपः"।

दायक्रमसंग्रहे भ्रातृदौहित्रपितृव्यदौहित्रपितामहसोदरदौहित्राणामप्यधिकारोऽभिहितः। विवादभङ्गार्णवमते पुत्रपौत्रदौहित्रयोरप्यधिकारः। इदन्तु बोध्यं पितृधनविभागे जनन्याः पुत्रतुल्यांशेऽधिकारः। पितामहधनविभागे च पितृजनन्याः पौत्रतुल्यांशेऽधिकारः। जीवद्भागे तु पित्रा पितामहेन वा भागद्वयं ग्राह्यम् अप्राप्तस्त्रीधनानां सर्व्वासां स्वस्वपत्नीनां पुत्रस्य मृतपितृपौत्रस्य चैकैकोऽंशोदेयः, अनेकपितृकाणां तु पितृतोभागकल्पना एवं मातृधने पितामहीधनेऽपि पितृतोभागकल्पना इति। स्थावरे तु विशेषः "अविभक्तं स्थावरं यत् सर्व्वेषामेव तद्भवेत्" इति बृहस्पतिवचनात् तुल्यरूपाणां सोदरासोदराणां समाधिकारः। स्त्रीधने विशेषस्त्वेवं। "अथायं स्त्रीधनाधिकारिक्रमनिर्णयः। तत्र कन्याधने प्रथमं सोदरभ्रातुस्तदभावे मातुस्तदभावे पितुरधिकारः। वरदत्तातिरिक्तवाग्दत्ताधनेष्वेवं, वरदत्तधने तु वरस्याधिकार इति। ऊढाया यौतकधने प्रथमं कुमारी, तदभावे वाग्दत्ताऽधिकारिणी, एतयोरभावे ऊढयोः पुत्रवतीसम्भावितपुत्रयोर्युगपदधिकारः। एकस्या अभावेऽपरायाः, एतयोरभावे बन्ध्याविधवयोस्तुल्याधिकारः, एकाभावे चापरायाः। ततः पुत्रदौहित्रपौत्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राणां क्रमेणाधिकारः। मन्वन्तमते तु सपत्नीपुत्रानन्तरं दौहित्रस्याधिकार इति विशेषः। ततोब्राह्मादिविवाहपञ्चकसमयलब्धयौतकधने भर्त्ता, भ्राता माता पिता चेति क्रमः, आसुरादिविवाहत्रयसमयलब्धयौतकधने माता पिता भ्राता भर्त्ता चेति क्रमः। ततो देवरः ततोदेवरपुत्रभ्रातृश्वशुरपुत्रौ, ततोभगिनीपुत्रः, ततोभर्त्तृभागिनेयः, ततोभ्रातृपुत्रः, ततोजामाता, ततः श्वशुरः, भ्रातृश्वशुरः, । ततश्चानन्तर्य्यक्रमेण सपिण्डाः, ततः सकुल्याः, ततः समानोदका इति। यौतकातिरिक्तेऽपि पितृदत्ते प्रथमं कुमारी, ततः पुत्रः, ततः पुत्रवतीसम्भावितपुत्रे, ततः पौत्रदौहित्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राः। ततो बन्ध्या विधवा च युगपदधिकारिण्यौ, ततोब्राह्मादिक्रमेणैव पूर्व्ववत् क्रमः। पितृदत्तातिरिक्ते अयौतकधने तु पुत्रकन्ययोर्युगपदधिकारः, तयोरभावे पुत्रवतीसम्भावितपुत्रयोः, ततः पौत्रदौहित्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राः क्रमेणाधिकारिणः। ततो बन्ध्या विधवा च युगपदधिकारिण्यौ ततः पूर्व्ववत् ब्राह्मादिक्रमः"। अत्र सर्व्वत्र प्रमाणं दायभागेऽनुसन्धेयम्।

चिन्तामणिमते पुत्रहतकपौत्रहतपितापितामहकप्रपौत्राधिकारं दायभागमतवत् सप्रपञ्चं निरूप्य अपुत्रपुंधने विशेषोऽभिहितो यथा।

"अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्" मनुः। "आपस्तम्बः अपुत्रधनाधिकारी आसन्नसपिण्डस्तदभावे व्यवहितस्तदभावे आचार्य्यस्तदभावेऽन्तेवासी"। याज्ञवल्क्यः "पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतोगोत्रजोबन्धुः। शिष्यसब्रह्मचारिणः। एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः। स्वर्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः"। पितरावित्यत्र क्रमाकाङ्क्षायामादौ माता तदभावे पिता विष्णुस्मृत्येकमूलत्वात्। तत्सुतो भ्रातृपुत्रः अपुत्रस्य पुत्रपौत्रप्रपौत्रशून्यस्य। कात्यायनः "विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत्। भ्राता वा जननी वापि माता वा तत्पितुः क्रमात्"। पित्रर्ज्जितं पिता, भ्रात्राद्यर्ज्जितं भ्रात्रादिरिति व्यवस्थितोविकल्पः। पैठीनसिः "अपुत्रस्य स्वर्यातस्य भ्रातृगामि धनं तदभावे पितरौ लभेताम्"। देवलः "ततोदायमपुत्रस्य विभजेरन् सहोदराः। तुल्यादुहितरोवापि ध्रियमाणः पितापि वा। सवर्णाभ्रातरोमाता भार्य्या चेति यथाक्रमम्। एषामभावे गृह्णीयुः सकुल्याः सहवासिनः"। तुल्याः सहोदराश्च सवर्णाभ्रातरोऽत्र वैमात्रेयाः। अत्र च देवलोक्तक्रमेण सह विष्णुयाज्ञवल्क्योक्तक्रमयोर्व्विरोधमाशङ्क्य यथाक्रममिति पदं देवलीयं याज्ञवल्क्योक्तक्रमानतिक्रमेणेति हलायुधेन व्याख्यातम्। देवलवचनलिखनानन्तरं विष्णुयाज्ञवल्क्योक्तवचने लिखितवतः कल्पतरुकृतोऽप्येवमेवाशयः। एतच्च न मनोरमं न हि श्लोकक्रममुल्लङ्घ्य परोक्तक्रमो यथाक्रममिति श्लोकस्यार्थोभवितुमर्हतीति उपस्थितं विहायानुपस्थितपरिग्रहगौरवात् एवमपि पैठीनसिवचनविरोधापरीहाराच्च। तस्मात् स्वयमुपार्ज्जितधने विष्णु-

याज्ञवल्क्योक्तक्रमस्तदन्यधने तु पैठीनस्याद्युक्तक्रम इति रत्नाकरः। बौधायनः "सपिण्डाभावे सकुल्यः तदभावे आचार्य्यः अन्तेवासी ऋत्विग्वा हरेत् तदभावे राजा"। सगोत्रजाभावे बन्धुः याज्ञवल्क्यवचनात् स च स्वबन्धुः पितृबन्धुः मातृबन्धुश्च। "आत्मपितुःष्वसुः पुत्रा आत्ममातुःष्वसुः सुताः। आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः। पितुः पितुःष्वसुः पुत्राः पितुर्मातुःष्वसुः सुताः। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः। मातुः पितुःष्वसुः पुत्रा मातुर्मातुःष्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः"। एतेषां क्रमेणाधिकारः। तदयं संक्षेपः। आदौ पुत्रस्तदभावे पौत्रस्तदभावे प्रपौत्रस्तदभावे साध्वी भार्य्या तदभावे दुहिता तदभावे माता तदभावे पिता तदभावे दौहित्रस्तदभावे भ्राता तदभावे तत्पुत्रस्तदभावे आसन्नसपिण्डस्तदभावे यथाक्रमं व्यवहितसपिण्डस्तदभावे आसन्नसकुल्यस्तदभावे व्यवहितसकुल्यस्तदभावे मातुलपुत्रादिः सर्व्वाभावे ब्राह्मणधनवर्ज्जं राजगामि ब्राह्मणधने तु ब्राह्मणान्तरमेव धनग्रहणाधिकारीति। याज्ञवल्क्यः "वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः। क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः"। क्रमेण प्रतिलोमक्रमेण तेन ब्रह्मचारिणो गुरुकुलस्थस्याचार्य्यः, यतेः सच्छिष्यः, वानप्रस्थस्य भ्रातृत्वेनानुमतोऽपरोवानप्रस्थएव"।

अधिकारिक्रमे पितृदौहित्रादेरकीर्त्तनात् तस्य नाधिकार इति विशेषः।

स्त्रीधने विशेषः "तत्र मनुः जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः। भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः। यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः। मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्व्वकम्"। सममविषमांशम्, सनाभयः सहोदराः, भगिन्यः कुमार्य्य एव समांशास्तदाह बृहस्पतिः "स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी। अप्रत्ता चेत्समूढा तु लभते मानमात्रकम्"। अपत्यानां पुत्राणां तदंशिनीति विशेषात्तुल्या समत्वलाभः समूढा विवाहिता मानमात्रकं द्रव्यानुसारेण किञ्चित्। गौतमः "स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च"। 'अप्रतिष्ठिता अनपत्या निर्धनभर्त्तृका दुर्भगा' चेति रत्नाकरादयः। एता अपुत्रा अपि पुत्रवन्मातृधनभाजः। मनुः "मातुश्च यौतकं यत्स्यात् कुमारीभाग एव सः"। यौतकं विवाहकाले पित्रादितो लब्धम्। वशिष्ठः "मातुः पारिणाय्यं स्त्रियो विभजेरन्"। पारिणाय्यं परिच्छदाद्यैकद्वितिकादि। याज्ञवल्क्यः "मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः"। मातृधनं तदृणावशेषं दुहितरो भजेरन्, ताभ्य ऋते दुहितॄणामभावेऽन्वयः दौहित्रीदौहित्रौ मनुवचनानुरोधात्। ब्राह्मादिवैवाहिकं परिच्छदादिकञ्च यन्मातृधनं तद्विषयमेतत्। कात्यायनः "दुहितॄणामभावे तु ऋक्थं पुत्रेषु तद्भवेत्। बन्धूनामप्यभावे तु भर्त्तृगामि तत् स्मृतम्। भगिन्यो बान्धवैः सार्द्धं विभजेयुः सभर्त्तृकाः। स्त्रीधनस्येति धर्म्मोऽयं विभागस्तु प्रकल्पितः"। दुहितॄणामिति पारिणाय्यं विवाहकाले यौतकलब्धं पितृदत्तञ्च यन्मातृधनं तत्तस्याः पुत्र्यभावे पुत्रगामि भवतीत्यर्थः तदतिरिक्तन्तु स्त्रीधनं तस्या अभावे पुत्रीपुत्रोभयगामि इत्युक्तमेव प्राक्। बन्धुदत्तमिति पितृतिरिक्तेन दत्तं यत्तद्भ्रातृभगिन्यौ किन्तु कन्या तदर्द्धांशा विवाहिता तु किञ्चिद्भागभागिनीति भगिन्य इत्यादेरर्थः। अभावे पुत्रीपुत्राद्यभावे स्त्रियाधनं पतिगामीत्यर्थः मनुः "ब्राह्मदैवार्षगान्धर्व्वप्राजापत्येषु यद्धनम्। अतीतायामप्रजायां भर्त्तुरेव तदिष्यते। यत्त्वस्याः स्याद्धनं किञ्चिद्विवाहेष्वासुरादिषु। अतीतायामप्रजायां मातापित्रोस्तदिष्यते"। अप्रजायामनपत्यायाम्। गौतमः "भगिनीशुल्कं सोदर्य्याणामूर्द्धं मातुः पूर्व्वं चेत्येके"। आसुरादिविवाहलब्धविषयमेतत्। बौधायनः "ऋक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम्। तदभावे भवेन्मातुस्तदभावे भवेत्पितुः" वि॰चि॰। अत्र यस्य भर्त्तृगामित्युक्तं तदभावे तत्सपिण्डानामासत्तिक्रमेणाधिकारः। यस्य तु पितृगामित्वोक्ता तत्र तदभावे तत्प्रत्यासन्नतत्सपिण्डा अधिकारिणः इति बोध्यम्।

मिताक्षरामते तु जन्माधीनस्वत्वाङ्गीकारेण पैतामहे पित्र्ये च धने पितापुत्रयोः पितामहपौत्रयोश्च तुल्याधिकारः। पितुः पितामहस्य चोपरमे पुत्रस्य, पौत्रस्य च स्वपितृखोभ्येऽप्यधिकारः। जीवद्विभागे तु स्वार्ज्जिते पितुर्द्व्यंशहारिता पैतामहे तुल्यांशिता। धनिकृतविभागे तदुपरमे पुत्रादिकृतविभागे च धनिपत्नीनामेकैकांशेऽधिकारः। दुहितॄणान्तु प्रत्येकं स्वजातीयकल्पितभागचतुर्थांशभागिता। सामुदयिकस्वत्वाङ्गीकारेण च भ्रात्रादीनामपुत्रादीनामविभक्तत्वे संसृष्टत्वे च एकस्य मरणे इतरस्य स्वत्वस्थितेः तत्र पत्न्यादीनां न स्वत्वमुत्पद्यते तथा च विभक्तासंसृष्टधनएव पत्न्यादीनामधिकारः। पत्नीदुहितरश्चेत्यादि या॰वचनात्

तच्च वचनं चिन्तामणिमते ११००पृष्ठे दर्शितम् तस्य वचनस्य व्याख्यायाम् मिता० तत्क्रमोदर्शितो यथा

"तस्मादपुत्रस्य स्वर्यातस्य विभक्तस्यासंसृष्टिनः परिणीता स्त्री संयता सकलमेव धनं गृह्णातीति स्थितम्। तदभावे दुहितरः। दुहितर इति बहुवचनं समानजातीयानामसमानजातीयानाञ्च समविषमांशप्राप्त्यर्थम्। तथा कात्यायनः। "पत्नी भर्त्तुर्धनहरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदेति" बृहस्पतिरपि "भर्त्तुर्धनहरी पत्नी तां विना दुहिता स्मृता" अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणाम्। तस्मात्पितृधनं त्वन्यः कथं गृह्णाति मानवः" इति। तत्र चोढानूढासमवायेऽनूढैव गृह्णाति। "तदभावे तु दुहिता यद्यनूढा भवेत्तदेति" विशेषस्मरणात्। तथा प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता तदभावे प्रतिष्ठिता "स्त्रीधनं दुहितॄणाम् अप्रत्तानामप्रतिष्ठितानाञ्चेति" गौतमवचनस्य पितृधनेऽपि समानत्वात् नचैतत्पुत्रिकाविषयमिति मन्तव्यम्। "तत्समः पुत्रिकासुतः" इति पुत्रिकायास्तत्सुतस्य चौरससमत्वेन पुत्रप्रकरणेऽभिधानात्। चशब्दाद्दुहित्रभावे दौहित्रो धनभाक् यथाह विष्णुः। "अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः। पूर्व्वेषां तु स्वधाकारे पौत्रा दौहित्रकाः समा" इति मनुरपि। "अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति"। तदभावे पितरौ मातापितरौ धनभाजौ। यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात् तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते। तथापि विग्रहवाक्ये मातृशब्दस्य पूर्व्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्व्वश्रवणात्पाठक्रमावगमाद्धनसम्बन्धेऽपि क्रमापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक्, तदभावे पितेति गम्यते। किञ्च पिता पुत्रान्तरेष्वपि साधारणो माता तु न साधारणीति प्रत्यासत्त्यतिशयात् "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति" वचनान्मातुरेव प्रथमन्धनग्रहणं युक्तं न च सपिण्डेष्वेव प्रत्यासत्तिर्नियामिका अपि तु समानोदकादिष्वपि विशेषेण धनग्रहणे प्राप्ते प्रत्यासत्तिरेव नियामिकेति अस्मादेव वचनादवगम्यत इति। मातापित्रोर्म्मातुरेव प्रत्यासत्त्यतिशयात् धनग्रहणं युक्ततरम्। तदभावे पिता धनभाक्। पित्रभावे भ्रातरो धनभाजः। तथा च मनुः।

"पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेति अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति" मनुवचनाज्जीवत्यपि पितरि मातरि वृत्तायां पितुर्माता पितामही धनं हरेन्न पिता। यतः पितृगृहीतन्धनं विजातीयेष्वपि पुत्रेषु गच्छति। पितामहीगृहीतं तु सजातीयेष्वेव गच्छतीति पितामह्येव गृह्णातीति। एतदप्याचार्य्यैर्नानुमन्यते। विजातीयपुत्राणामपि धनग्रहणस्योक्तत्वात् "चतुस्त्रिद्व्येकभागिनः" इत्यादिनेति। यत्पुनः "अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः" इतिमनुस्मरणम् तन्नृपाभिप्रायं न पुत्राभिप्रायम्। भ्रातृष्वपि सोदराः प्रथमं गृह्णीयुर्भिन्नोदराणां मातृविप्रकर्षात्। "अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति" स्मरणात्। सोदराणामभावे भिन्नोदरा धनभाजः। भ्रातॄणामप्यभावे तत्पुत्राः पितृक्रमेण धनभाजः। भ्रातृभ्रातृपुत्रसमवाये भ्रातृपुत्राणामनधिकारः भ्रात्रभावे भ्रातृपुत्राणामधिकारवचनात्। यदा त्वपुत्रे भ्रातरि स्वर्याते तद्भ्रातॄणामविशेषेण धनसम्बन्धे जाते भ्रातृधनविभागात्प्रागेव यदि कश्चिद्भ्राता मृतस्तदा तत्पुत्राणाम्पितृतोऽधिकारे प्राप्ते तेषां भ्रातृणाञ्च विभज्य ग्रहणे पितृतोभागकल्पनेति युक्तम्। भ्रातृपुत्राणामप्यभावे गोत्रजा धनभाजः गोत्रजाः पितामह्यादयः सपिण्डाः समानोदकाश्च तत्र पितामही प्रथमन्धनभाक्। "मातर्य्यपि च वृत्तायाम्पितुर्माता धनं हरेदिति" मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते पित्रादीनां भ्रातृसुतपर्य्यन्तानां बहुक्रमत्वेन मध्येऽनुप्रवेशाभावात्पितुर्माता धनं हरेदित्यस्य धनग्रहणाधिकारप्राप्तिमात्रपरत्वादुत्कर्षे तत्सुतानन्तरम् पितामही गृह्णातीत्यविरोधः। पितामह्याश्चाभावे समानगोत्रजाः सपिण्डाः पितामहादयोधनभाजः भिन्नगोत्राणां सपिण्डानां बन्धुशब्देन ग्रहणात्। तत्र च पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तत्पुत्रास्तत्सुताश्चेत्येवमासप्तमात्समानगोत्राणां सपिण्डानान्धनग्रहणं वेदितव्यं तेषामभावे समानोदकानान्धनसम्बन्धः। ते च सपिण्डानामुपरि सप्त वेदितव्या जन्मनामज्ञानावधिका वा। यथाह बृहन्मनुः। "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेता चतुर्दशात्। जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते" इति।

गोत्रजाभावे बन्धवो धनभाजः। बन्धवश्च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृबन्धवश्चेति। यथोक्तम्। आत्मपितृष्वसुः पुत्रा इत्यादि चिन्तामणिमते ११०१ पृ० दर्शितम् तत्र चान्तरङ्गत्वात् प्रथममात्मबन्धवो धनभाजस्तदभावे पितृबन्धवस्तदभावे मातृबन्धव इति क्रमोवेदितव्यः। बन्धूनामभावे आचार्य्यस्तदभावे शिष्यः "पुत्राभावे यः प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यः आचार्य्याभावेऽन्तेवासी" इत्यापस्तम्बस्मरणात्। शिष्याभावे सब्रह्मचारी धनभाक्, तेन सहैकस्मादाचार्य्यादुपनयनाध्ययनतदर्थज्ञानप्राप्तिः स सब्रह्मचारी तदभावे ब्राह्मणद्रव्यं यः कश्चिच्छ्रोत्रियो गृह्णीयात् "श्रोत्रिया ब्राह्मणस्यानपत्यस्य ऋक्थं भजेरन्निति" गौतमस्मरणात्। तदभावे ब्राह्मणमात्रम् यथाह मनुः "सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः। त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते" इति। न कदाचिदपि ब्राह्मणद्रव्यं राजा गृह्णीयात् "अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिरिति" मनुवचनात्। नारदेनाप्युक्तम् "ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन। ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति"। क्षत्रियादिधनं सब्रह्मचारिपर्य्यन्तानामभावे राजा हरेन्न ब्राह्मणः। यथाह मनुः। "इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः" इति। "पुत्राः पौत्राश्च दायं गृह्णन्ति। तदभावे पत्न्यादय इत्युक्तमिदानीन्तदुभयापवादमाह। "वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः। क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः" याज्ञ०। "वानप्रस्थस्य यतेर्ब्रह्मचारिणश्च क्रमेण प्रतिलोमक्रमेणाचार्य्यः सच्छिष्यो धर्मभ्रात्रेकतीर्थी च रिक्थस्य धनस्य भागिनः। ब्रह्मचारी नैष्ठिकः उपकुर्वाणस्य धनं मातादयएव गृह्णन्ति। नैष्ठिकस्य धनन्तदपवादत्वेनाचार्य्यो गृह्णाति इत्युच्यते। यतेस्तु धनं सच्छिष्यो गृह्णाति। सच्छिष्यः पुनरध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमः दुर्वृत्तस्याचार्य्यादेरपि भागानर्हत्वात्। वानप्रस्थधनन्तु धर्म्मभ्रात्रेकतीर्थी गृह्णाति धर्मभ्राताएकतीर्थ्येकाश्रमी धर्मभ्रातृत्वेनैकतीर्थी च धर्मभ्रात्रेकतीर्थी। एतेषामाचार्य्यादीनामभावे पुत्रादिषु सत्स्वप्येकतीर्थ्येव गृह्णाति" मिता०। "सोदरस्य संसृष्टत्वे वैमात्रेयस्य च संसृष्टत्वे तस्याधिकारः। अवेदं बोध्यं "अपुत्रपौत्रसन्ताने" इति वदता विष्णुना प्रपौत्रस्याप्यधिकारः सूचितः तस्यापि तत्सन्तानत्वात् सपिण्डत्वाच्च अन्यथा अधिकारिसङ्ख्यायाम् उपरितनानामेव कीर्त्तनात् तस्यानधिकारत्वापत्तेः। अतएव कन्यादानप्रकरणे तत्सुतः पौत्रसुतः प्रपौत्र अस्तङ्गोतचित्तःप्रपितामहस्ततस्त्वयं न दद्यादिति वदता मिताक्षराकृता प्रपौत्रस्याधिकारः सूचितः। तदभ्रासन्नसन्तानस्य च प्रपितामहपौत्रपर्य्यन्ताभावेऽधिकारः तेषामसपिण्डत्वेऽपि गोत्रजसमानोदकत्वाविशेषात् सपिण्डाधिकारे अधस्तनानामेव प्रथमग्रहणवत् गोत्रजाधिकारेऽपि अधस्तनानामेव ऊर्द्धतनापेक्षया प्रथमं ग्रहणौचित्यादिति एतन्मते च असगोत्रसपिण्डमध्ये, दौहित्रस्यैव ग्रहणात् पितामहदौहित्रादेर्नाधिकारः। बन्धुशब्दस्य असगोत्रसपिण्डपरत्वेऽपि बन्धुशब्दस्य पारिभाषिकपरत्वेन तेन कीर्त्तनादिति बहवः। वीरमित्रोदये तु विषमशिष्टभिया मातुलादीनामधिकारोव्यवस्थापितः तन्मते तेषां बन्धुपदेन ग्रहणात् इति भेदः। तथा दायलब्धधने पत्न्याश्चेष्टं दानभोगादावधिकारः इति मिता० वीर० मते तु स्वामिन उपकाराभावे नटादौ दानेऽनधिकार इति भेदः। "आधिवेदनिकाद्यञ्चेति" याज्ञवल्क्यवचनेन स्त्रिया ऋक्थविभागकथादिलब्धधनमात्रस्य स्त्रीधनत्वं व्यवस्थाप्य तद्विभागः मिता० दर्शितो यथा "अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः" या०। तत्पूर्वोक्तं स्त्रीधनमप्रजस्यानपत्यायां दुहितृदौहित्रपुत्रपौत्ररहितायां स्त्रियामतीतायां बान्धवा भर्त्रादयोवक्ष्यमाणा गृह्णीयुः। सामान्येन बान्धवाधनग्रहणेऽधिकारिणो दर्शिताः। इदानीं विवाहभेदेनाधिकारिभेदमाह। "अप्रजःस्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि। दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्" या०। अप्रजःस्त्रियाः पूर्वोक्तायाब्राह्मदैवार्षप्राजापत्येषु चतुर्षु विवाहेषु भार्य्यात्वं प्राप्ताया अतीतायाः पूर्वोक्तन्धनं प्रथमं भर्त्तुर्भवति। तदभावे तत्प्रत्यासन्नानां सपिण्डानां भवति। शेषेष्वासुरगान्धर्व्वराक्षसपैशाचेषु विवाहेषु तदप्रजःस्त्रीधनं पितृगामि। माता च पिता च पितरौ तौ गच्छतीति पितृगामि एकशेषनिर्दिष्टाया अपि मातुः प्रथमं धनग्रहणं पूर्वमेवोक्तम्। तदभावे तत्प्रत्यासन्नानां धनग्रहणम्। सर्वेष्वेव विवाहेषु प्रसूताऽपत्यवती चेत् दुहितॄणां तद्धनं भवति। अत्र दुहितृशब्देन दुहितृदुहितर उच्यन्ते। साक्षाद्दुहितॄणाम् "मातुर्दुहितरःशेषम्" इत्यत्रोक्तत्वात्। अतश्च मातृधनं मातरि वृत्तायां प्रथमं दुहितरोऽवगृह्णन्ति। तत्र चोढानूढासमवायेऽनूढा गृह्णाति। तदभावे परिणीता तत्रापि प्रतिष्ठिताऽप्रतिष्ठितासमवायेऽप्रतिष्ठिता गृह्णाति तदभावे प्रतिष्ठिता। यदाह गौतमः "स्त्रीधनं

**उत्तरेण** अव्य० उत्तर+एनप् । आसन्नदिग्देशकालानां प्रथमापञ्चमीसप्तम्यन्तानामर्थेषु “तत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्” मेघ० । एतद्योगे द्वितीया । “किञ्चित् पश्चात् व्रज लघुगतिर्भूय एवोत्तरेण” मेघ० । “हृदयदेशमात्रमेतोत्तरेण” आश्व० गृ० १,२०८, “एतस्मिन् काले प्रपद्याच्छावाक उत्तरेणाग्नीध्रीयम्” आश्व० श्रौ० ५,७,२ ।

**उत्तरेद्युस्** अव्य० उत्तरस्मिन् दिने उत्तर+एद्युस् । अनन्तरदिवसे इत्यर्थे ।

**उत्तरोत्तर** उत्तरस्मादुत्तरः । अनन्तरोदितानन्तरे । “पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः । एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः” या० स्मृ० । २क्रमेण उत्तरे । “उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते सा० द० ।

**उत्त(रो)रौष्ठ** पु० उत्तरः उपरितनः ओष्ठः वा वृद्धिः । उपरितने ओष्ठे । “अधरो(रौ)ष्ठं दशति उत्तरो(रौ)ष्ठं वा लेढि” “उत्तरौष्ठस्य योलिह्यादुद्गारांश्च करोति च” सुश्रु०

**उत्तर्जन** न० उद्धै स्तर्ज्जनम् प्रा० स० । उद्धै र्भर्त्सने । तच्च क्रोधकार्य्यं यथाह सा० द० । “निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता । नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्ज्जनादिकृत्”

**उत्तलित** त्रि० उद्+तल–क्त । १उत्क्षिप्ते ।

**उत्तान** त्रि० उद्गतस्तानो विस्तारो यस्य । (चित) भूमिलग्नपृष्ठतया ऊर्द्धभावेन १स्थिते २ऊर्द्धमुखे च । “उत्तानपाणिद्वयसन्निवेशात् प्रफुल्लराजीवमिवाङ्कमध्ये” कुमा० । “उरःस्थोत्तानचरणः सव्ये न्यस्येतरं करम्” उत्तानं किञ्चिदुन्नाम्य मुखं विष्टभ्य चोरसा” या० स्मृ० । “पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्ज्जयेत् या० स्मृतिः “प्रत्येत्य प्रकारे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वा” कात्या० ८,२,८ । “उत्तानार्थे विचक्षणः” सुश्रु०

**उत्तानक** पु० उद्–तन–ण्वुल् । उच्चटावृक्षे रत्नमा० [राजनि०

**उत्तानपत्रक** पु० उत्तानमूर्द्धमुखं पत्रमस्य कप् । रक्ते एरण्डे

**उत्तानपाद्** पु० स्वायम्भुवमनोः पुत्रे ध्रुवपितरि १नृपभेदे । “वैराजात् पुरुषात् वीरं शतरूपा व्यजायत । प्रियव्रतोत्तानपादौ वीरात् काम्या व्यजायत” हरि० २अ० । “स्वायम्भुवस्यापि मनोर्हरेरंशांशजन्मनः । प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ । वासुदेवस्य कलया रक्षायां जगतः स्थितौ । जाये उत्तानपादस्य सुनीतिः सुरुचिस्तथा । सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः” भाग० ४स्क० ८अ० । इतउत्तरं तच्चरितं तत्र पर्ब्बितम् । उत्तान ऊर्द्धस्थितः पादोऽस्य । १परमेश्वरे पु० “पादोऽस्य सर्व्वाभूतानि त्रिपादस्यामृतं दिवीति” श्रुतेस्तस्य सार्व्वोपरिस्थपादत्वात् तथात्वम् । अस्य समासे वा अन्त्यलोपे उत्तानपादपि तत्रैव “भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त” । “तदुत्तान पदस्परि” ऋ० १०,७२,३,४, अत्र भत्वे पादः पदादेशः । ३उत्तानपादयुक्ते शिशुप्रभृतौ त्रि० ।

**उत्तानपादज** पु० उत्तानपादात् जाते जन–ड । ध्रुवे तच्चरितं भागवते ४स्क० ८अध्यायादौ वर्णितम् ।

**उत्तानशय** त्रि० उत्तानः ऊर्द्धमुखः सन्नेव शेते शी–अच् । अतिशिशौ तदानीमवताने सामर्थ्याभावादस्य तथात्वम् ।

**उत्तानशीवन्** त्रि० उत्तानः सन् शेते शी–क्वनिप् । अतिशिशौ २उत्तानस्थिते च । स्त्रियां ङीप् वनोरश्च । उत्तानशीवरी “ये पर्व्वताः सोमपृष्ठा आप उत्तानशीवरीः” अथ० ३,२१,१० ।

**उत्ताप** पु० उद्+तप–घञ् । १उष्णतायाम्, २सन्तापे च ।

**उत्तार** पु० उद्+तॄ–णिच् अच् । १उद्गमने २ उल्लङ्घने ३पारनयने च । “संसारसागरोत्तारतरणिः” प्रबोध० “स घोरामापदं प्राप्य नोत्तारमधिगच्छति” भा० उ० १२६अ० । उद्धै स्तारः प्रा० स० । ४अत्यन्तोच्चशब्दादौ त्रि० ।

**उत्तारक** त्रि० उद्+तॄ–णिच् ण्वुल् । पारप्रापके ।

**उत्तारण** न० उद्+तॄ–णिच्–ल्युट् । पारप्रापणे । कर्त्तरि ल्यु । २पारप्रापके त्रि० ३विष्णौ पु० “उत्तारणोदुष्कृतिहा” विष्णुस० “संसारसागरादुत्तारयतीत्युत्तारणः” भा०

**उत्तार्य्य** त्रि० उद्+तॄ–णिच्–कर्म्मणि यत् । १उद्गमनीये । “अज्ञानभुक्तं तूत्तार्य्यं शोध्यं वाप्याशु शोधनैः” मनुः । ल्यप् । २उद्गमनं कृत्वेत्यर्थे अव्य० । उद्+तॄ–कर्म्मणि ण्यत् । ३उल्लङ्घनीये त्रि० ।

**उत्ताल** त्रि० उद्+चुरा० तल–प्रतिष्ठायाम् अच् । प्रतिष्ठिते महति । “उत्तालतालीवनसंप्रवृत्तः” माघः ।

**उत्तिष्ठहोम** पु० उत्तिष्ठतोऽनुपविष्टस्य होमो यत्र । अनुपविष्टकर्त्तृकहोमे यजतिरूपे यागभेदे । तत्र कुत्रोपविष्टेन कुत्र वा उत्तिष्ठता होमः करणीय इति विचिकित्सायां यजतिजुहोत्योर्भेदप्रदर्शनेन तन्निर्णीतं कात्या० १,२,५,६,७, सूत्रेषु “यजतिजुहोतीनां कोविशेषः” सू० “यजतीनां यागानां जुहोतीनां होमानाञ्च को विशेषः कोभेदः इति प्रश्नः” कर्कः । तिष्ठद्धोमाः वषट्कारप्रदानाः याज्यापुरोनुवाक्यावन्तश्च यजतयः” सू० । उच्यन्ते इति शेषः । तिष्ठता होम

येषु ते तिष्ठद्धोमाः वषट्कारेण प्रदानं येषु ते वषट्कार प्रदानाः तथा याज्यावन्तः पुरोनुवाक्यावन्तश्च ये ते यज-तय उच्यन्ते" कर्कः । "उपविष्टहोमाः स्वाहाकारप्रदा-ना जुहोतयः" सू० । "उपविष्टेन कर्त्रा होमो येषु ते उप-विष्टहोमाः स्वाहाकारेण प्रदानं येषु ते जुहोतय उच्यन्ते" कर्कः तिष्ठत्पदञ्च उत्तिष्ठत्परम्

**उत्तिष्ठमान** पु० उद्+स्था–शानच् । वर्त्तमाने "उत्तिष्ठमा-नस्तु परैर्नोपेक्ष्यः पथ्यमिच्छता" माघः । ऊर्द्धचेष्टायां तु शतृ । उत्तिष्ठत् अनुपविष्टे दण्डायमाने त्रि०स्त्रियाम् ङीप् नुम्" । उत्तिष्ठन्ती [त्रि ।

**उत्तीर्ण** त्रि०उद्+तॄ–कर्त्तरि क्त ।१मुक्ते, २पारङ्गते कर्म्मणि

**उत्तुङ्ग** त्रि० उत्क्रान्तं तुङ्गं प्रा०स०। अत्युन्नते । "उत्तुङ्गशैल शिखरस्थितपादपानां काकः क्षणोऽपि फलमालभते सपक्षः। सिंहो बली द्विरदकुम्भविदारणोऽपि सीदत्यहो-तरुतले खलु पक्षहीनः" उद्भटः "स्वर्गादुत्तुङ्गममलं विषाणं यत्र शूलिनः" भा०व०८८अ० । "करप्रचेया मुत्तुङ्गां प्रभुशक्तिं प्रथीयसीम्" "प्रज्ञोत्साहतत्तुङ्गतया विजेतुम्" "उत्तुङ्गमातङ्गमिताङ्गलूनम्" माघः।

**उत्तुष** पु० उद्गतः कण्डनाभावेऽपि तुषोऽस्मात् । प्रा०ब० वा मतुप्लोपः । लाजाख्ये ( खइ ) भृष्टधान्ये

**उत्तेजना** स्त्री उद्+तिज–णिच् युच् । १प्रेरणायाम्, २व्यग्रताकरणे, ३उद्दीपने, ४तीक्ष्णीकरणे च । "व्याप-कृतोत्तेजनया मणीनाम्" माघः ल्युट् । तत्रैव न० ।

**उत्तेजित** त्रि० उद्+तिज–णिच्–क्त । १प्रेरिते, २उद्दीपिते च । भावे क्त । ३प्रेरणायाम् ४उद्दीपने च न० "उत्ते-जितं मध्यवेगं धोजनं त्वयवगया"इत्युक्ते ५अश्वगतिभेदे न०।

**उत्तेरित** न० उद्–ईर् भावे इतच् गुणे नि० एत्वम् । १अश्व-गतिभेदे । अर्श आद्यच् । "उत्तेरितोऽतिवेगाढ्यो न स्पृशति न पश्यति" इत्युक्तगतियुक्ते २अश्वे पु० ।

**उत्तोरण** त्रि०उन्नतं तोरणमत्र प्रा०ब०वा मतलोपः । १उच्च द्वारयुक्ते नगरादौ । "उत्तोरणामन्वयराजधानीम्" रघुः । "उत्तोरणं राजपथं प्रपेदे" कुमा० उन्नतं तो-रणम् प्रा०स०। २उच्चे तोरणे पुंन० ।

**उत्तोलन** न० उद्+तुल–उन्माने भावे ल्युट् । ऊर्द्ध्वं नीत्वा तोलने । [कृततोलने च

**उत्तोलित** त्रि० उद्+चु०तुल–क्त । १उत्क्षिप्ते, २उत्क्षिप्य

**उत्त्यक्त** त्रि० उद्+त्यज–क्त । १ऊर्द्धक्षिप्ते, २परित्यक्ते च ।

**उत्त्रास** पु० उद्+त्रस–घञ् । अतिभये ।

**उत्थ** त्रि० उद्–स्था–क । १उद्गते २समुद्भूते च । "रजांसि समरोत्थानि तच्छोणितनदीष्विव" रघुः । "भवत्सम्भा-वनोत्थाय परितोषाय मूर्च्छते" कुमा० । "निद्रालस्य प्रमादोत्थं तत् तामसमुदाहृतम्"गीता"तपनं प्रियविच्छेद कारणेऽप्यत्यचेष्टितम्" सा०द०।

**उत्थान** न०उद्+स्था-ल्युट् ।१ऊर्द्ध्वगमने, २उद्यमे, ३ऊर्द्धभव-नचेष्टायाम्,४उद्गमे च । करणे ल्युट् ।५उत्साहे,६पौरुषे, ७हर्षे च। अधिकरणे ल्युट् । ८रणे,९राज्यचिन्तनकर्मे १०तन्त्रे,११प्राङ्गणे,१२चैले च। "इन्दुं नवोत्थानमिवेन्दुमत्यै" रघुः"भ्रातॄणामविभक्तानां यद्युत्थानं भवेत् सह"मनुः । "मम धर्म्मार्थमुत्थानं न कामक्रोधसंचितम्" रामा०"उ-त्थानमभिजानन्ति सर्वभूतानि भारत!। प्रत्यक्षं फलमश्नन्ति कर्म्मणां लोकसाक्षिकम्" भा०व० ३२अ० । मेदश्छेद कृशोदरं लघु भवत्युत्थानयोग्यं वपुः" शकु० "षड् वा सप्त चाष्टौ च पैतृकानं न गच्छति" सुश्रु० ।१३प्रबोधे च "मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने" ति०त०पु० ।

**उत्थानैकादशी** स्त्री उत्थानस्य हरेः निद्रातःप्रबोधनस्य कालः एकादशी । चान्द्रकार्त्तिकशुक्लैकादश्याम् । तत् काल व्यवस्था–ति०त० रघुनन्दनेन दर्शिता यथा मात्स्ये "शेते विष्णुः सदाषाढे भाद्रे च परिवर्त्तते । कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने" भविष्यनारदीययोः "मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च । पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन" भविष्ये "निशि स्वापोदिवोत्थानं सन्ध्यायां परिवर्त्तनम् । अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत्" । अन्यत्र स्वापादिविहितरात्र्यादीतरकाले दशमीप्रतिपदोश्च ।"कि-न्त्वन्त्याद्यपादेन ? दशम्यंशेन यो दिवा । पौष्ण शेषेण किन्तेन ? प्रतिपद्यश्च यो निशि" । दशम्यंशेन दशम्या संयोगेन पादे तेन । यः प्रतिपदि वा प्राप्तस्तेन वा किम्?। अत्र दशमीप्रतिपदोर्वर्जनात् तदितरैकादश्यादिपञ्च-तिथिषु मैत्रादिनक्षत्रपादविशेषलाभे द्वादशीं विनापि शयनादिरिति प्रतीयते । वचनान्तरम् "रेवत्यन्तो यदा रात्रौ द्वादश्या च समायुतः । तदा विबुध्यते विष्णु-र्दिनान्ते प्राप्य रेवतीम्" दिनान्ते त्रिधाविभक्तदिन तृतीयभागे दिवोत्थाननिषेधानुरोधात् । विष्णुधर्म्मोत्तरे "विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते । द्वादश्या-श्च संयोगे पादयोगो न कारणम् । अप्राप्ते द्वादशीकाले उत्थानशयने हरेः । पादयोगेन कर्त्तव्ये नाहोरात्रं

विचिन्तयेत्'' वराहपुराणम् । "द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे । आभाकासितपक्षेषु शयनावर्त्तनादिकम्" आभाकानाम् आषाढभाद्रकार्त्तिकानाम् । ततश्च द्वादश्यां निशादौ नक्षत्रभानुयोगात् द्वादश्यास्तथाभावे तिथ्यन्तरे निशाद्यनादरेण पादविशेषयोगात्, तदभावे द्वादश्यां सन्ध्यायामेव शयनादिकं बोधनन्तु द्वादश्यां रात्रौ रेवत्यन्तपादयोगे दिनतृतीयभाग इति विशेषः" ।

**उत्थापन** न० उद्+स्था-णिच्-ल्युट् । १उत्तोलने उन्नतीकरणे २चालने ३प्रबोधने ४उद्गमने च । "एवं यन्त्रोपायान्न्यांश्च शिरोत्थापनहेतवः तु स्थावेद्य" सुश्रु० ।

**उत्थाप्य** त्रि० उद्+ स्था-णिच् कर्म्मणि यत् । १उत्तोलनीये २चालनीये । ल्यप् । ३उत्तोल्येत्यर्थे ४मिश्रीकृत्येत्यर्थे "आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन च" उत्थाप्य मिश्रीकृत्य मा०त० रघु० । ५उत्तार्य्येत्यर्थे च अव्य० ।

**उत्थित** त्रि० उद्+स्था-क्त । १वृद्धियुक्ते, २उत्थानयुते, अनुपविष्टे । "अर्द्धाचिता सत्वरमुत्थितायाः" कुमा० रघुश्च "न यावदेतावुदपश्यदुत्थितौ" "भित्त्वोत्थितं भूमिमिवोरगाणाम्" माघः । ३उत्पन्ने ४उद्युक्ते च ।

**उत्थिताङ्गुलि** पु० उत्थिता उद्युक्ता अङ्गुलयो यत्र । (चापड़) विस्तृताङ्गुलिके करतले चपेटे शब्दच० ।

**उत्पचनिपचा** स्त्री उत्पच निपचेत्युच्यते यस्यां क्रियायाम् मयू० । उद्धृत्य पाकादिनिर्देशार्थक्रियायाम् ।

**उत्पचिष्णु** त्रि० उद्+पच-इष्णुच् । १उद्धृत्य पचनशीले । पचः विक्लित्तिरूपपाकपरत्वे । ऊर्द्धतः पाकशीले २तृणादौ ।

**उत्पट** पु० उत्पटति उद्+पट-गतौ अच् । वृक्षादीनां त्वचमुद्भिद्य उद्गते निर्यासे । "त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः" शत० १४,६,९,२१, "उत्पटः वृक्षनिर्यासः" भा० । [द्विधा० २उत्पतनकर्तृमात्रे त्रि० ।

**उत्पत** पु० उत्पतति ऊर्द्धं गच्छति उद्+पत-अच् । १पक्षिणि

**उत्पतन** न० उद्+पत-ल्युट् । १ऊर्द्ध्वगमने, २उत्क्षेपणे च । उत्क्षेपणशब्दे उदा० ।

**उत्पतनिपता** स्त्री उत्पत निपत इत्युच्यते यस्यां क्रियायाम् मयू० । उत्पतनादिनिर्देशार्थक्रियायाम् ।

**उत्पताक** त्रि० उत्तोलिता पताका यत्र प्रा० ब० वा तोलितशब्दलोपः । उत्तोलितपताके पुरादौ । "पुरन्दरश्रीः पुरमुत्पताकम्" रघुः

**उत्पतित** त्रि० उद्+पत-क्त । ऊर्द्धंगते ।

**उत्पतिष्णु** उद्+पत-इष्णुच् । उत्पतनशीले । "असङ्गरत्नस्य यानाभिमानादुत्पतिष्णवः" रघुः "उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ" भट्टिः ।

**उत्पत्ति** स्त्री उद्+पत+क्तिन् । १ऊर्द्धपतने ऊर्द्धगतौ । उत्पद्यते प्रथमतो ज्ञायतेऽनेन उद्+पद्-करणे क्तिन् । प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनेष्टसाधनताबोधके कर्मस्वरूपज्ञापके २विधिवाक्ये यथा "स्वर्गकामोऽश्वमेधेन यजेतेत्यादि"वाक्यम् प्रथमं यागादौ इष्टसाधनत्वं बोधयत् तत् प्रवर्त्तयतीति तस्य तथात्वम् विधिशब्दे विवृतिः । "योगसिद्धिर्वा अर्थस्योत्पत्त्ययोगित्वात्" जैमि०सू० । उद्+पद०क्तिन् । आद्यक्षणसम्बन्धरूपे ३उद्भवे । उत्पत्तौ वादिविपत्तयः सन्ति तथाहि असतः सदुत्पद्यते इति बौद्धाः । प्रागुत्पत्तेरसत्कारणव्यापारादुत्पद्यते इति नैयायिकादयः । प्रागुत्पत्तेः सदपि कारणव्यापारादभिव्यज्यते इति सांख्या वेदान्तिनश्च प्रतिपेदिरे तयोरवान्तरभेदः सतो विवर्त्त इति वेदान्तिनः परिणामः इति सांख्याः । तदेतत् सांख्य०कौ० । प्रदर्शितं यथा केचिदाहुरसतः "सज्जायत इति, एकस्य सतो विवर्त्तः कार्य्यजातं न वस्तु सदित्यपरे । अन्ये तु सतोऽसज्जायतइति । सतः सज्जायते इति वृद्धाः । तत्र पूर्व्वस्मिन् कल्पत्रये प्रधानं न सिध्यति । सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकत्वं हि जगत्कारणस्य प्रधानत्वं सत्त्वरजस्तमःस्वभावत्वम् । यदि पुनरसतः सज्जायेत असन्निरुपाख्यं कारणं कथं सुखादिरूपशब्दाद्यात्मकं स्यात् सदसतोस्तादात्म्यानुपपत्तेः । अथैकस्य सतो विवर्त्तः शब्दादिप्रपञ्चस्तथापि सतः सज्जायत इति न स्यात् । नचाद्वयस्य प्रपञ्चात्मकत्वमपि त्वप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव । येषामपि कणभक्षाक्षचरणादीनां सतएव कारणादसतो जन्म तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्य्यात्मकं कारणमिति न प्रधानसिद्धिः । अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्य्यं प्रतिजानीते" कौ० । "असदकरणादुपादानग्रहणात् सर्व्वसम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्य्यम्" का० "सत्कार्य्यं कारणव्यापारात् प्रागपीति शेषः । तथा च न सिद्धसाधनं नैयायिकनयैरुद्भावनीयम् । यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते तथापि न प्रध्वंसस्य कारणत्वमपि तु भावस्यैव बीजाद्यवयवस्य । अभावात्तु भावोत्पत्तौ तस्य सर्व्वत्र सुलभत्वात्सर्व्वत्र सर्व्वकार्य्योत्पाद-

सदङ्ग इत्यादि न्यायवार्त्तिकतात्पर्य्यटीकायामभिहितमस्माभिः। प्रपञ्चप्रत्ययश्चासति बाधके न शक्यो मिथ्येति वक्तुमिति कणभक्षाक्षचरणमतमवशिष्यते। तत्रेदं प्रतिज्ञातं सत्कार्य्यमिति। अत्र हेतुमाह असदकरणात्। असच्चेत्कारणव्यापारात् पूर्वं कार्य्यं नास्य सत्त्वं केनापि कर्त्तुं शक्यं न हि नीलं शिल्पिसहस्रेणापि शक्यं पीतं कर्त्तुम्। सदसत्त्वे घटस्य धर्माविति चेत् तथाप्यसति धर्मिणि न तस्य धर्म इति सत्त्वं तदवस्थमेव तथा च नासत्त्वम् असम्बद्धेनातदात्मना वाऽसत्त्वेन कथमसन् घटः। तस्मात्कारणव्यापारादूर्द्ध्वमिव ततः प्रागपि सदेव कार्य्यमिति। कारणाच्चास्य सतोऽभिव्यक्तिरेवावशिष्यते। सतश्चाभिव्यक्तिरुपपन्ना। यथा पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानां, दोहनेन सौरभेयीषु पयसः। असतः करणे तु न निदर्शनं किञ्चिदस्ति। न खल्वभिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद्दृष्टम्। इतश्च कारणव्यापारात् प्राक् सदेव कार्य्यमित्याह उपादानग्रहणात् उपादानानि कारणानि तेषां ग्रहणं कार्य्येण सम्बन्धः उपादानैः कार्य्यस्य सम्बन्धादिति यावत्। एतदुक्तं भवति कार्य्येण सम्बद्धं कारणं कार्य्यस्य जनकं सम्बन्धश्च कार्य्यस्यासतो न सम्भवति तस्मात् सदिति। स्यादेतत् असम्बद्धमेव कारणैः कस्मात् कार्य्यं न जन्यते? तथा चासदेवोत्पत्स्यतेऽत आह सर्वसम्भवाभावात्। असम्बद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं कार्य्यजातं सर्वस्माद्भवेत् नचैतदस्ति तस्मान्नासम्बद्धमसम्बद्धेन जन्यते अपि तु सम्बद्धं सम्बद्धेन जन्यते इति। यथाहुः साङ्ख्यवृद्धाः "असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः। असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिरिति"। स्यादेतत् असम्बद्धमपि तदेव तत् करोति यत्र यत्कारणं शक्तं शक्तिश्च कार्य्यदर्शनादवगम्यते अतो नाव्यवस्थेति अत आह शक्तस्य शक्यकरणात्। सा शक्तिः शक्तकारणाश्रया सर्वत्र वा स्याच्छक्ये वा। सर्वत्र चेत्तदवस्थैवाव्यवस्था शक्ये चेत् कथमसति शक्ये तदिति वक्तव्यम्। शक्तिभेद एव स तादृशो यतः किञ्चिदेव कार्य्यं जनयेन्न सर्वमिति चेत् हन्त भोः शक्तिविशेषः कार्य्यसम्बद्धो वा स्यादसम्बद्धो वा, सम्बद्धत्वे नासता सम्बन्ध इति सत् कार्य्यम्। असम्बद्धत्वे सैवाव्यवस्थेति सुष्ठूक्तं शक्तस्य शक्यकरणादिति। इतश्च सत्कार्य्यमित्याह कारणभावाच्च कार्य्यस्य कारणात्मकत्वात् न हि कारणाद्भिन्नं कार्य्यं कारणञ्च सदिति कथं तदभिन्नं कार्य्यमसद्भवेत्" सा॰ कौ॰। उत्पत्तेश्च यथाविर्भावरूपता तथाविर्भावशब्दे ८२॰ उक्तम्।

व्याख्यातं चैतदस्माभिस्तट्टीकायां यथा असतः—सत्त्वेन वक्तुमशक्यात् निरुपाख्यात् अभावात् सत्-भावरूपं वस्तु, जायते जाततया व्यवह्रियते तथा हि अङ्कुरादिकं बीजनाशानन्तरमेव, दध्यादि दुग्धनाशानन्तरमेव, उत्पद्यमानं दृश्यते अतोऽनुमीयते कार्य्यभावा अभावकारणकाः कार्य्यत्वात् बीजनाशोत्तरजाताङ्कुरादिवत्। यत्रापि च तन्त्वादिषु पटकारणेषु स्वरूपेण नाशो न दृश्यते तत्राप्यनुमानेनैव तज्ज्ञानं जननीयम्। युक्तं चैतत् उत्पन्ने पटे यदि तन्तवो न नष्टास्तदा तन्तवइमे इति व्यवहारविषयतामापद्येरन् न च तथा, अतस्तत्र तन्तुव्यवहाराभावात् पटरूपेण व्यवहाराच्च तन्तवोनष्टा इत्यनुमातव्यम्। न च कारणनाशे दृश्यतन्तुषु पटदाहवत् पटनाशापत्तिरित्याशङ्क्यम्, तन्तूनां पटकारणत्वस्याद्यापि असिद्धत्वात्, ये हि भावकारणका इति वदेयुस्तान् प्रत्येवैतद्दूषणमवतरेत् नाभावकारणतावादिनं प्रतीति सुस्थितमभावकारणवादिबौद्धादिमतम्। सतः त्रैकालिकबाधरहितात् कूटस्थादपरिणामिनः विवर्त्तः स्वाज्ञानकल्पितः स्वज्ञाननिवर्त्त्यः परिणामविलक्षणः अन्यथाभावापत्तिः उपचारात् तथा उत्पद्यमानं कार्य्यजातमपि विवर्त्तः न वस्तु सदिति वस्तुतः पारमार्थिकेन सत्त्वेन नान्वितं किन्तु व्यवहारयोग्यसत्तयान्वितम्। तथा हि शुक्तिकादौ रजतादिज्ञानं सर्वानुभवसिद्धं तत्र प्रत्यक्षमेव रजतं साक्षात्करोमीत्याद्यनुभवात् प्रत्यक्षे च विषयेन्द्रियसन्निकर्षस्य कारणत्वात् देशान्तरस्थितरजतस्य च चक्षुरसन्निकृष्टतया न प्रत्यक्षविषयता। न च पूर्वज्ञातस्य रजतस्य ज्ञानेन उपनीतस्य शुक्तिकायां भ्रम इति वाच्यम् ज्ञानोपनीतस्य ज्ञानस्वीकारे साक्षात्कारानुभवापलापापत्तेः। अतएव न पूर्वानुभूतरजतस्मरणमात्रमनुभवविरोधात्। अतोऽगत्या तत्र शुक्तिकायामसद्रजतमुत्पद्यते इत्येव कल्पनीयम्। तदुत्पत्तौ च शुक्तिकादिविषयकमज्ञानं कारणं रजतविषयसंस्कारश्च तत्सहकारितया कल्पनीयः। तदेव अध्यासत्वम् यदुत्पन्नस्य तस्यासतो रजतस्य शुक्तिकातादात्म्येन तत्प्रत्यक्षविषयता। तत्रोत्पन्नेऽपि रजते शुक्तिकाया मनागपि व्यावहारिकसत्त्वस्य व्याघातो न भवतीति यथा, एवं कूटस्थे अपरिणामिनि आत्मनि स्वाज्ञानेनाहते वियदादिकार्य्यकदु-

त्पद्यते तत्र च तद्‌ज्ञानं हेतुः तत्संस्कारश्च सहकारीति तथा च विवादाध्यासिता घटादयः सति अध्यस्ताः स्वज्ञाननाश्यत्वे सति सत्तादात्म्येन प्रतीयमानत्वात् शुक्तितादात्म्येन प्रतीयमानशुक्तिज्ञाननाश्यरजतवदित्यनुमानात् अध्यस्तत्वं घटादीनां सिद्धम्। अध्यस्तत्वं च साक्षात्कारिप्रत्यक्षविषयत्वं प्रागुक्तं तच्च तस्यासतोऽप्युत्पत्तौ प्रत्यक्षविषयता न स्यादिति अध्यस्तत्वरक्षार्थं तस्यानुत्पत्तिरप्यङ्गीकार्या। ज्ञाननाश्यत्वं च तेषां मिथ्यात्वात् शुक्तिज्ञाननाश्यासद्रजतवदित्यनुमानव्युत्पत्त्या विस्तरेण इति वेदान्तिमतम्। सतो भावात् विद्यमानादेवेत्यर्थः। असत् उत्पत्तेः, कारणव्यापाराद्वा पूर्वमविद्यमानं, कारणव्यापारादुत्तरन्तु जायते सद्भवतीति काणादनैयायिकादयः। सतः सत्त्वाश्रयात् भावादेव सत्, कारणव्यापारात् प्रागपि, कारणावस्थायामव्यक्तरूपेण विद्यमानं जायते कारणव्यापारात् अभिव्यज्यते व्यवहारयोग्यतामापाद्यते इति यावदिति वृद्धाः साङ्ख्यादयः। एवमुत्पत्तिविषये चतुर्षु पक्षेषु स्थितेषु आद्यपक्षत्रये अनुमिमिषितकार्यात्मककारणरूपप्रधानासिद्धिं क्रमशः प्रदर्शयितुं क्रमप्राप्तं बौद्धपक्षमाह यदि पुनरित्यादि। निरुपाख्यमनिर्वचनीयमिदन्तया वक्तुमशक्यमिति यावत् सति हि लक्षणे वस्तु तल्लक्षणवत्त्वेन वक्तुं शक्यम् अभावस्य च लक्षणाभावात् कथङ्कारं वक्तव्यता। यद्यपि भावभिन्नत्वं, सत्त्वेन प्रतीत्यनर्हत्वम्, असत्त्वेन प्रतीत्यर्हत्वं वा तल्लक्षणं कैश्चिदुच्यते तानि च सर्वाण्यपि अभावज्ञानसापेक्षतया दुर्ज्ञेयत्वादन्योन्याश्रयदोषग्रस्तत्वाल्लक्षणान्येव। सुखदुःखमोहात्मककार्यदर्शनात् कारणस्यापि तथाभूतात्मकत्वमनुमिमिषितं तच्च भावस्यैव कारणतापक्षे सेत्स्यति नाभावस्य भावाभावयोस्तादात्म्यानुपपत्तेरिति भावः। विवर्त्तवादे च कार्य्यजातस्याध्यासेन तादात्म्यभानेऽपि वस्तुतोऽसत्त्वेन सदसतोस्तादात्म्यानुपपत्त्या पूर्ववदनुमिमिषितप्रधानसिद्धिरित्याह अथैकस्येत्यादि। सतोऽसज्जायते इति पक्षेऽपि सदसतोस्तादात्म्यानुपपत्त्यैव न प्रधानसिद्धिरित्याह सदसतोरैकत्वे-इत्यादि। एवमाद्यपक्षत्रिके प्रधानासिद्धिमुक्त्वा सत्कार्यपक्षे तत् साधयितुं सत्कार्यपक्षसमर्थनाय कारिकामवतारयति सत्कार्यं प्रतिजानीते इत्यादि। कार्यं सत् कारणव्यापारात् प्रागपि विद्यमानमित्यर्थः तेन कारणव्यापारोत्तरं सत्त्वस्य नैयायिकादिवादिषु सिद्धत्वेन न सिद्धसाधनमिति दर्शयितुं विशिनष्टि कारणव्यापारादित्यादि।

चतसृषु वादिविप्रतिपत्तिषु दर्शितासु असत्कार्यपक्षनिराकरणेऽपि इतरयोः पक्षयोरनिराकरणात् तत्पक्षयोः प्रधानासिद्धिरित्याशङ्क्य मूले तन्निराकरणाभावेऽपि अयुक्तत्वादेव तयोः पक्षयोर्न प्राशस्त्येति कथयितुमादौ बौद्धपक्षं दूषयितुमुत्थापयति यद्यपीत्यादि। दूषयति तथापीत्यादि। अयमाशयः सम्बद्धं सम्बन्धिनमेव जनयतीति नियमेन कार्यकारणयोः सम्बन्धोऽपेक्षितः बीजनाशाङ्कुरयोश्च केनापि सम्बन्धेन न सम्बन्धिता घटते येन तयोः कार्यकारणभावः स्यात्। असम्बद्धस्य कार्यजनकत्वे सर्वस्मात् सर्वकार्योत्पत्तिरित्यव्यवस्था स्यात्। न च बीजध्वंसाङ्कुरप्रागभावः न तन्तुपिण्डस्य स्वभाव एव शरणं तथा च अङ्कुरप्रागभाव एव नियामको भविष्यतीति वाच्यम् प्रागभावस्य स्वरूपावस्थातिरिक्तत्वे अङ्कुरतत्प्रागभावयोश्च विभिन्नकालिकतया केनापि सम्बन्धेन सम्बन्धित्वाभावेन नियामकत्वाभावात् असम्बद्धस्य नियामकत्वे पूर्वदोषतादवस्थ्यात्। न च प्रतियोगितासम्बन्धेन तयोः सम्बन्धितेति वाच्यम् अभावसम्बन्धितया एव प्रतियोगितापदार्थतया तस्या अव्यक्तत्वपक्षेऽसिद्धत्वात् न च बीजस्य भावात् कथं तस्य अङ्कुरकारणत्वमिति, तस्य नाशेऽपि तदवयवस्य भावात् तस्यैव कारणत्वं वाच्यमिति सर्वं सुस्थम्। विवर्त्तवादे च यद्यपि तदनन्यत्वमारम्भणशब्दादिभ्य इति शा० २, १, १४ सूत्रेण कार्यकारणयोरभिन्नत्वमेव स्वीकृतं तथापि घटपटादिज्ञानानामध्यस्तविषयकतया विषयाणां मिथ्यात्वं तैरङ्गीक्रियते तथा हि विवादाध्यासितानि घटादिज्ञानानि अध्यस्तविषयकाणि सत्यविषयकज्ञानत्वात् शुक्तिकायां रजतज्ञानवदित्यनुमानेन घटादिज्ञानानामध्यस्तविषयकत्वे सिद्धे अध्यस्तस्य च ज्ञाननाश्यतया मिथ्यात्वमित्यवश्यमेव तथा च सदसतोस्तादात्म्यानुपपत्तिदोषेण नैतत्पक्षाश्रयणम्। किञ्च मिथ्यात्वं ज्ञाननिवर्त्यत्वं तच्च नेदं रजतमिति बाधबुद्ध्या यथा रजतस्य मिथ्यात्वं प्रसिद्धमेवं घटादेर्मिथ्यात्वसाधकस्य बाधस्यादर्शनाच्च तस्य मिथ्यात्वमेवञ्च हेत्वसिद्धेः कथं घटादिज्ञानादावध्यस्तविषयकत्वसिद्धिः। एतदर्थमेव असति बाधक इत्युक्तम्। तथा च शुक्तिरजतबाधकवदत्र बाधकाभावान्न तस्य मिथ्यात्वम्। न चाद्वैतश्रुतिरेव बाधिका, तस्याः अन्यार्थपरतया द्वैताभावनिषेधपरत्वाभावात् अतएव "नाद्वैतश्रुतिविरोधो जातिपरत्वात्" इत्यनेन साङ्ख्यसूत्रेण श्रुतेः समानजातीयबहुजीवपरत्वं समर्थितम्। एवं पक्षद्वय-

मयुक्तिकतया निरस्य इदयुक्तिकस्य काणादादिपक्षस्य निरसनीयतयाऽवशेषतां दर्शयति कणभक्षेत्यादि कणभक्षकणं भक्षयतीति कणभक्षः कणादः। अक्षं चक्षुश्चरणे यस्येति अक्षचरणो गौतमस्तदनुसारिमतमित्यर्थः

ननु भावस्य सत्त्वमसत्त्वं च कादाचित्को धर्मो न तु स्वाभाविकः तथा च उत्पत्तेः प्राक् असत्त्वं परतस्तु सत्त्वम् यथा घटे पाकात् पूर्वं श्यामता, पाकोत्तरं रक्तता, तद्वत् कालविशेषे धर्मविशेषो भविष्यतीति असत्कार्यपक्षेऽपि न काचित् क्षतिरिति शङ्कते सदसत्त्वे इति। परिहरति तथाप्यसतीति। अयमाशयः असत्त्वस्य भावधर्मत्वे उत्पत्तेः प्रागपि तस्य धर्मिणः सत्त्वं स्वीकर्त्तव्यं तथा हि धर्मसत्त्वं धर्मिसत्त्वं विनानुपपद्यमानं धर्मिसत्त्वमपि तदाक्षिपति तथा चापादकेन असत्त्वरूपधर्मसत्त्वेन आपाद्यस्य धर्म्मिसत्त्वस्य सिद्धिः इति। सत्त्वं कार्यसत्त्वं तदवस्थं उत्पत्तेः प्रागपि स्थितमिति न तदानीं धर्म्मसत्त्वासिद्धिरित्याह तथा च नासत्त्वमिति असत्त्वधर्मिणस्तदानीमपि सिद्धत्वान्न धर्म्मसत्त्वमित्यर्थः। तदेवोपपादयति असम्बद्धेनेत्यादि। असम्बद्धेन धर्म्मिणा सहेति शेषः असत्त्वेनेत्यत्राप्यन्वयः। अतदात्मना अतत्स्वरूपेण वा असत्त्वेन कथमसत् स्यात् असत्त्वाश्रयः स्यादित्यर्थः धर्म्मिणा सह सम्बद्धेनैव धर्मेण तदाश्रयत्वनियमात् असम्बद्धस्य च तादात्म्येनैव तथात्वनियमाच्च प्रकृते असत्त्वस्य घटेन सह सम्बन्धाभावात् तत्तादात्म्याभावाच्च न तदाश्रयत्वमिति भावः। सत्कार्यपक्षमुपसंहरति तस्मादिति। तैलस्य, तण्डुलानां, पयसश्चाभिव्यक्तिरित्यत्रानुकृष्याऽन्वयः। असत्त्वे कार्यस्य उत्पत्तेः प्रागसत्त्वे सत्त्ववद्भिः सत्त्वाश्रयैः कारणैः सह सम्बन्धो नास्ति। असम्बद्धस्य चोत्पत्तौ प्रागुक्ता अव्यवस्थितिः सर्वस्मात् सर्वोत्पत्तिरित्येवं रूपा अव्यवस्था। प्रथमं तत्पदं द्वितीयान्तं कार्यपरम्, द्वितीयं तु कारणपरं प्रथमान्तम्। कार्य्यानुकूला कारणनिष्ठैव शक्तिः कार्यजननियामिकेत्यवसेयम् तथा च कार्यस्यासत्त्वे कथं तदनुकूलत्वं तस्याः स्यादिति समर्थयितुं शक्तेरितरान्वितत्वं विकल्प्य दूषयति सा शक्तिरिति"।

यथा च असतो न सदुत्पत्तिः सतश्चाभिव्यक्ति स्तथा छा॰उ॰भाष्ययोः समर्थितं यथा "सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयम्। तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतःसज्जायते। कुतस्तु खलु सौम्यैवं स्यादिति? होवाच कथमसतः सज्जायेतेति?। सत्त्वेव सौम्येदमग्र आसीत् एकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति" छा॰उ॰ "सदेव सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्व्वगतम्। एकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्व्ववेदान्तेभ्यः। एवशब्दोऽवधारणार्थः। किन्तदवध्रियते? इत्याह। इदं जगन्नामरूपक्रियावद्विकृतमुपलभ्यते यत्तत्सदेवासीदित्यासीच्छब्देन सम्बध्यते। कदा सदेवेदमासीदित्युच्यते अग्रे जगतः प्रागुत्पत्तेः। किं नेदानीमिदं सद् येनाग्र आसीदिति विशेष्यते, न, कथं तर्हि विशेषणम्? इदानीमपीदं सदेव किन्तु नामरूपविशेषणवदिदंशब्दबुद्धिविषयं चेतीदञ्च भवति। प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्य्यते। न हि प्रागुत्पत्तेर्नामवद्रूपवद्वेदमिति ग्रहीतुं शक्यं वस्तु सुषुप्तकाल इव। यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते सन्मात्रमेव केवलं वस्त्विति तथा प्रागुत्पत्तेरित्यभिप्रायः। यथेदमुच्यते लोके पूर्व्वाह्णे घटादिसिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा प्रत्यागतोऽपराह्णे तत्रैव घटशरावाद्यनेकभेदभिन्नं कार्य्यमुपलभ्य मृदेवेदं घटशरावादि केवलं पूर्व्वाह्णे आसीदिति, तथेहोच्यते सदेवेदमग्र आसीदिति। एकमेवेति। स्वकार्य्यपतितमन्यन्नास्तीत्येकमेवेत्युच्यते। अद्वितीयमिति। मृद्व्यतिरेकेण मृदो यथाऽन्यद्घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते। अद्वितीयमिति नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयम्। ननु वैशेषिकपक्षेऽपि सत्सामानाधिकरण्यं सर्व्वस्योपपद्यते। द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्तेः। सद्द्रव्यं सन् गुणः सत् कर्म्मेत्यादिदर्शनात्, सत्यमेवं स्यादिदानीम्, प्रागुत्पत्तेस्तु नैवेदं कार्य्यं सदेवासीदित्यभ्युपगम्यते वैशेषिकैः प्रागुत्पत्तेः कार्य्यस्यासत्त्वाभ्युपगमात्। न चैकमेव सदद्वितीयं प्रागुत्पत्तेरिच्छन्ति। तस्माद्वैशेषिकपरिकल्पितात् सतोऽन्यत्कारणमिदं सदुच्यते मृदादिदृष्टान्तेभ्यः। तत् तत्र हैतत्किल प्रागुत्पत्तेर्वस्तुनिरूपणे एके वैनाशिका आहुर्वस्तु निरूपयन्तोऽसद्भावमात्रं प्रागुत्पत्तेरिदं जगदेकमेवाद्वितीयमासीदिति। असद्भावमात्रं हि प्रागुत्पत्तेस्तत्त्वं कल्पयन्ति बौद्धाः। न तु सत्प्रतिद्वन्द्विवस्त्वन्तर-

मिच्छन्ति। यथा सन्नासदिति गृह्यमाणं यथाभूतं तद्विपरीतं तत्त्वं भवतीति नैयायिकाः । ननु सदभावमात्रं प्रागुत्पत्तेश्चेदभिप्रेतं वैनाशिकैः कथं प्रागुत्पत्तेरिदमासीदसदेकमेवाद्वितीयञ्चेति कालसम्बन्धः सङ्ख्यासम्बन्धोऽद्वितीयत्वं चोच्यते तैः । बाढम् । न युक्तं तेषां भावाभावमात्रमभ्युपगच्छताम् । असत्त्वमात्राभ्युपगमोऽप्ययुक्त एवाभ्युपगन्तुरनभ्युपगमानुपपत्तेः । इदानीमभ्युपगन्ताभ्युपगम्यते न प्रागुत्पत्तेरिति न प्रागुत्पत्तेः सदभावस्य प्रमाणाभावात् । प्रागुत्पत्तेरसदेवेति कल्पनानुपपत्तिः । ननु कथं वस्त्वाकृते शब्दार्थत्वे ऽसदेवमेवाद्वितीयमिति पदार्थवाक्यार्थोपपत्तिस्तदनुपपत्तौ चेदं वाक्यमप्रमाणं प्रसज्येतेति चेत् नैष दोषः सद्ग्रहणनिवृत्तिपरत्वाद्वाक्यस्य । सदित्ययं तावच्छब्दः सदाकृतिवाचकः । एकमेवाद्वितीयमित्येतौ च समानाधिकरणौ । तथेदमासीदिति च । तत्र नञ् सद्वाक्ये प्रयुक्तः सद्वाक्यमेवावलम्ब्य सद्वाक्यार्थविषयां बुद्धिं सदेकमेवाद्वितीयमिदमासीदित्येवंलक्षणां ततः सद्वाक्यार्थान्निवर्त्तयति । अश्वारूढ इवाश्वालम्बनोऽश्वं तदभिमुखविषयान्निवर्त्तयति तद्वत् । न तु पुनः सदभावमेवाभिधत्तेऽतः पुरुषस्य विपरीतग्रहणनिवृत्त्यर्थपरमिदमसदेवेत्यादि वाक्यं प्रयुज्यते । दर्शयित्वा हि विपरीतग्रहणं ततो निवर्त्तयितुं शक्यत इत्यर्थवत्त्वादसदादिवाक्यस्य श्रौतत्वं प्रामाण्यञ्च सिद्धमित्यदोषः । तस्मादसतः सर्वाभावरूपात्सद्विद्यमानमजायत समुत्पन्नम् । अण्डभावस्थाद्वा । तदेतद्विपरीतग्रहणं महावैनाशिकपक्षं दर्शयित्वा प्रतिषेधति । कुतस्तु ? प्रमाणात् खलु हे सौम्य ! एवं स्यादसतः सज्जायेतेत्येवं कुतो भवेत् न कुतश्चित्प्रमाणादेवं सम्भवतीत्यर्थः । यदपि बीजोपमर्देऽङ्कुरो जायमानो दृष्टोऽभावादेवेति तदप्यभ्युपगमविरुद्धं तेषाम् । कथं ? ये तावद्बीजावयवा बीजसंस्थानविशिष्टास्तेऽङ्कुरेऽप्यनुवर्त्तन्त एव न तेषामुपमर्दोऽङ्कुरजन्मनि । यत्पुनर्बीजाकारसंस्थानं तद्बीजावयवव्यतिरेकेण वस्तुभूतं न वैनाशिकैरभ्युपगम्यते यदङ्कुरजन्मन्युपमृद्येताथ तदस्त्यवयवव्यतिरिक्तं वस्तुभूतं तथाच सत्यभ्युपगमविरोधः । अथ संवृत्याभ्युपगतं बीजसंस्थानरूपमुपमृद्यत इति चेत् । केयं संवृत्तिर्नाम किमसावभाव उत भाव इति । यद्यभावो दृष्टान्ताभावः । अथ भावस्तथापि नाभावादङ्कुरोत्पत्तिः बीजावयवेभ्यो ह्यङ्कुरोत्पत्तेः । अवयवा अप्युपमृद्यन्त इति चेत् ।

न तदवयवेषु तुल्यत्वात् । यथा वैनाशिकानां बीजसंस्थानरूपोऽवयवी नास्ति । तथावयवा अपीति तेषामप्युपमर्दानुपपत्तिः । बीजावयवानामपि सूक्ष्मावयवास्तदवयवानामप्यन्ये सूक्ष्मास्तदवयवा इत्येवं प्रसङ्गस्यानुवृत्तेः सर्वत्रोपमर्दानुपपत्तिः । सद्बुद्ध्यनुवृत्तेः सत्त्वानिवृत्तिश्चेति सद्वादिनां सत एव सदुत्पत्तिः सेत्स्यति । न त्वसद्वादिनां दृष्टान्तोऽस्त्यसतः सदुत्पत्तेः । मृत्पिण्डाद्घटोत्पत्तिर्दृश्यते सद्वादिनां, तद्भावे च भावात्तदभावे चाभावात् । यद्यभावादेव घट उत्पद्येत घटार्थिना मृत्पिण्डो नोपादीयेत । अभावशब्दबुद्ध्यनुवृत्तिश्च घटादौ प्रसज्येत न त्वेतदस्त्यतो नासतः सदुत्पत्तिः । यदप्याहुर्मृद्बुद्धिर्घटबुद्धेर्निमित्तमिति मृद्बुद्धिर्घटबुद्धेः कारणमुच्यते न तु परमार्थत एव मृद्घटो वास्तीति तदपि मृद्बुद्धिर्विद्यमाना विद्यमानाया एव घटबुद्धेः कारणमिति नासतः सदुत्पत्तिः । मृद्बुद्धिघटबुद्ध्योर्निमित्तनैमित्तिकतयानन्तर्यमात्रं न तु कार्यकारणत्वमिति चेत् न बुद्धीनां नैरन्तर्ये गम्यमाने वैनाशिकानां बहिर्दृष्टान्ताभावात् । अतः कुतस्तु खलु सौम्यैवं स्यादिति होवाच कथं केन प्रकारेणासतः सज्जायेतेति ? असतः सदुत्पत्तौ न कश्चिदपि दृष्टान्तप्रकारोऽस्तीत्यभिप्रायः । एवमसद्वादिपक्षमुन्मथ्योपसंहरति सत्त्वेव सोम्येदमग्र आसीदिति स्वपक्षसिद्धिः । ननु सद्वादिनोऽपि सतः सदुत्पद्यत इति नैव दृष्टान्तोऽस्ति । घटाद्घटान्तरोत्पत्त्यदर्शनात् । सत्यमेवं न सतः सदन्तरमुत्पद्यते किं तर्हि सदेव संस्थानान्तरेणावतिष्ठते । यथा सर्पः कुण्डली भवति । यथा च मृच्चूर्णं पिण्डघटकपालादिप्रभेदैः। यद्येवं सदेव सर्वप्रकारावस्थं कथं प्रागुत्पत्तेरिदमासीदित्युच्यते । ननु न श्रुतं त्वया सदेवेत्यवधारणमिदंशब्दवाच्यस्य कार्यस्य। प्राप्तं तर्हि प्रागुत्पत्तेरसदेवासीदिदं शब्दवाच्यमिदानीमिदं जातमिति, न सत एवेदंशब्दबुद्धिविषयतयावस्थानात् यथा मृदेव पिण्डघटादिशब्दबुद्धिविषयत्वेनावतिष्ठते तद्वत् । ननु यथा मृद्वस्त्वेवं पिण्डघटाद्यपि तद्वद्बुद्ध्यन्तरबुद्धिविषयत्वात्कार्यस्य सतोऽन्यद्वस्त्वन्तरं स्यात्कार्यजातं यथाऽश्वाद्गौः, न पिण्डघटादीनामितरेतरव्यभिचारेऽपि मृत्त्वाव्यभिचारात् । यद्यपि घटः पिण्डं व्यभिचरति पिण्डश्च घटं, तथापि पिण्डघटौ मृत्त्वं न व्यभिचरतस्तस्मान्मृन्मात्रं पिण्डघटौ, व्यभिचरत्यश्वं गौरश्वो वा गाम्, तस्मान्मृदादिसंस्थानमात्रं घटादयः । एवं सत्संस्थानमात्रमिदं सर्व-

मिति युक्तं प्रागुत्पत्तेः सदेवेति वाचारम्भणमात्रत्वाद्विकारसंस्थानमात्रस्य । ननु निरवयवं सत् "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः" इत्यादिश्रुतिभ्यो, निरवयवस्य सतः कथं विकारसंस्थानमुपपद्यते । नैष दोषो रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिपरिकल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तेः । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" "एवं सदेव सत्यमिति" श्रुतेः । एकमेवाद्वितीयं परमार्थत इदंबुद्धिकालेऽपि तत्सत् ऐक्षतेक्षां दर्शनं कृतवान् । अतश्च न प्रधानं साङ्ख्यपरिकल्पितं जगत्कारणम् प्रधानस्याचेतनत्वाभ्युपगमात् । इदन्तु सच्चेतनमीक्षितृत्वात्तत्कथमैक्षतेत्याह बहु प्रभूतं स्यां भवेयं प्रजायेय प्रकर्षेणोत्पद्येय । यथा मृद् घटाद्याकारेण यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिकल्पितेन । असदेव तर्हि सर्वं यद्गृह्यते रज्जुरिव सर्पाद्याकारेण, न, सत एव द्वैतभेदेनान्यथागृह्यमाणत्वान्नासत्त्वं कस्यचित् क्वचिदिति ब्रूमः । यथा सतोऽन्यद्वस्त्वन्तरं परिकल्प्य पुनस्तस्यैव प्रागुत्पत्तेः प्रध्वंसाच्चोर्द्ध्वमसत्त्वं ब्रुवते तार्किका न तथाऽस्माभिः कदाचित् क्वचिदपि सतोऽन्यदभिधानमभिधेयं वा वस्तु परिकल्प्यते सदेव तु सर्वमभिधानमभिधीयते च यदन्यबुद्ध्या यथा रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते यथा, वा पिण्डघटादिर्मृदोऽन्यबुद्ध्या पिण्डघटादिशब्देनाभिधीयते लोके । रज्जुविवेकदर्शिनां तु सर्पाभिधानबुद्धी निवर्त्तेते यथा च मृद्विवेकदर्शिनां घटादिशब्दबुद्धी तद्वत्सद्विवेकदर्शिनामन्यविकारशब्दबुद्धी निवर्त्तेते । "यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेति" "अनिरुक्तेऽनिलयने" इत्यादिश्रुतिभ्यः" भा०

बृ०उ० भाष्ये अभावादिकारणवादनिराकरणेन उत्पत्तेः प्रागपि सत्कार्यं कारणव्यापारादभिव्यज्यते इति स्थिरीकृतम् यथा । "नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासीत् बृ०उ० । "नैवेह किञ्चनाग्र आसीत् । इह संसारमण्डले किञ्चन किञ्चिदपि नामरूपप्रविभक्तविशेषं नैवासीत् न बभूव । प्रागुत्पत्तेर्मनआदेः किं शून्यमेव स्यात्, नैवेह किञ्चनेति श्रुतेः न, कार्यं कारणं चासीदुत्पत्तेश्च । उत्पद्यते हि घटः । अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम् न तु कारणस्य नास्तित्वं, मृत्पिण्डादिदर्शनात् । यन्नोपलभ्यते तस्यैव नास्तिता । अस्तु कार्यस्य, न तु कारणस्य, उपलभ्यमानत्वात् न प्रागुत्पत्तेः सर्वानुपलम्भात्, अनुपलब्धिश्चेदभावो हेतुः सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं चोपलभ्यते । तस्मात्सर्वस्यैवाभावोऽस्तु, न मृत्युनैवेदमावृतमासीदिति श्रुतेः । यदि हि किञ्चिदपि नासीत् येनाव्रियते यच्चाव्रियते तदा नावक्ष्यन्मृत्युनैवेदमावृतमिति । न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति । ब्रवीति च मृत्युनैवेदमावृतमासीदिति । तस्माद्येनावृतं कारणेन यच्चावृतं कार्यं प्रागुत्पत्तेस्तदुभयमासीच्छ्रुतेः प्रामाण्यात् अनुमेयत्वाच्च । अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वम् कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात् असति चादर्शनात् । जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते घटादिकारणास्तित्ववत् । घटादिकारणस्याप्यसत्त्वमेवानुपमृद्य मृत्पिण्डादिकं घटाद्युत्पत्तेरिति चेन्न मृदादेः कारणत्वात् । मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेः, न पिण्डाद्याकारविशेषः तदभावे तदभावात् । असत्यपि पिण्डाकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्योत्पत्तिर्दृश्यते । तस्मान्न पिण्डाकारविशेषो घटरुचकादिकारणम् । असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णादिद्रव्यमेव कारणं न तु पिण्डाकारविशेषः । सर्वं हि कारणं कार्यमुत्पादयत् पूर्वोत्पन्नस्यात्मकार्यस्य तिरोधानं कुर्वत् कार्यान्तरमुत्पादयति । एकस्मिन् कारणे युगपदनेककार्यविरोधात् । न च पूर्वकार्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति । तस्मात् पिण्डाद्युपमर्दे कार्योत्पत्तिदर्शनमहेतुः । प्रागुत्पत्तेः कारणसत्त्वे पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत् पिण्डादिपूर्वकार्योपमर्दे मृदादिकारणं नोपमृद्यते । घटादिकार्यान्तरेऽप्यनुवर्त्तत इत्येतदयुक्तम् । पिण्डघटादिव्यतिरेकेण मृदादिकारणस्यानुपलब्धेरिति चेत् न मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तावनुवृत्तिदर्शनात् । सादृश्यादन्वयदर्शनं कारणानुवृत्तेरिति चेन्न पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वेऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः । न च प्रत्यक्षानुमानयोर्विरुद्धा व्यभिचारिता प्रत्यक्षपूर्वकत्वादनुमानस्य सर्वत्रैवानाश्वासप्रसङ्गात् । यदि च क्षणिकं सर्वं, तदेवेदमिति गम्यमानं तद्बुद्धेरपि अन्यतद्बुद्ध्यपेक्षत्वे तस्या अप्यन्यबुद्ध्यपेक्षत्वमित्यनास्थायां तस्मादेवमिदमित्यस्या अपि बुद्धेर्मृषात्वात् सर्वत्रानाश्वासतैव । तदिदम्बुद्ध्योरपि

कर्त्रभावे सम्बन्धानुपपत्तिः । सादृश्यात्सम्बन्ध इति चेन्न । तदिदम्बुद्ध्योरितरेतरविषयत्वानुपपत्तेः । असति चेतरेतरविषये सादृश्यग्रहणानुपपत्तिः । असत्येव सादृश्ये तद्बुद्धिरिति चेन्न । तदिदम्बुद्ध्योरपि सादृश्यबुद्धिवदसद्विषयत्वप्रसङ्गात् । असद्विषयत्वमेव सर्व्वबुद्धीनामस्त्विति चेन्न बुद्धिबुद्धेरप्यसद्विषयत्वप्रसङ्गात् । तदप्यस्त्विति चेन्न । सर्व्वबुद्धीनां मृषात्वेऽसत्यबुद्ध्यनुपपत्तेः । तस्मादसदेतत् सादृश्यात्तु तद्बुद्धिरित्यतः सिद्धः प्राक्कार्य्योत्पत्तेः कारणसद्भावः । कार्य्यस्य चाभिव्यक्तिलिङ्गत्वात् । कार्य्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः कथम् ? अभिव्यक्तिलिङ्गत्वात् । अभिव्यक्तिर्लिङ्गमस्येत्यभिव्यक्तिः साक्षाद्विज्ञानालम्बनत्वप्राप्तिः । यद्धि लोके प्रावृतं तम आदिना घटादि वस्तु तत् आलोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत् प्राक्सद्भावं न व्यभिचरति । तथेदमपि जगत् प्रागुत्पत्तेरित्यवगच्छामः । न ह्यविद्यमानो घट उदितेऽप्यादित्य उपलभ्यते । ननु तेऽविद्यमानत्वाभावादुपलभ्येतैवेति चेत् । न हि तव घटादिकार्य्यं कदाचिदप्यविद्यमानमित्युदितेऽप्यादित्य उपलभ्येतैव । मृत्पिण्डेऽसन्निहिते तम आद्यावरणे चासति विद्यमानत्वादिति चेत् न द्विविधत्वादावरणस्य । घटादिकार्य्यस्य द्विविधं ह्यावरणं मृदादेरभिव्यक्तस्य तमःकुड्यादि प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिण्डादिकार्य्यान्तररूपेण संस्थानम् । तस्मात् प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्य्यस्यावृतत्वादनुपलब्धिः । नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्त्वभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः । पिण्डकपालादेरावरणवैलक्षण्यादयुक्तमिति चेत् तमःकुड्यादि हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टं न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले तस्मात्पिण्डकपालसंस्थानयोर्विद्यमानस्यैव घटस्यावृतत्वादनुपलब्धिरित्ययुक्तमावरणधर्म्मवैलक्षण्यादिति चेत् न क्षीरोदकादेः क्षीराद्यावरणेनैकदेशत्वदर्शनात् । घटादिकार्य्ये कपालचूर्णाद्यवयवानामन्तर्भावादनावरणत्वमिति चेत् न विभक्तानां कार्य्यान्तरत्वादावरणत्वोपपत्तेः । आवरणाभाव एव यत्नः कर्त्तव्य इति चेत् पिण्डकपालावस्थयोर्विद्यमानमेव घटादिकार्य्यमावृतत्वान्नोपलभ्यत इति घटादिकार्य्यार्थिना तदावरणविनाश एव यत्नः कर्त्तव्यो न घटाद्युत्पत्तौ । न चैतदस्ति तस्मादयुक्तं विद्यमानस्यैवावृतत्वादनुपलब्धिरिति चेत् न अनियमात् । न हि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्तिर्नियता तम आद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात् । सोऽपि तमोनाशायैवेति चेत् दीपाद्युत्पत्तावपि यः प्रयत्नः सोऽपि तमस्तिरस्करणाय । तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते न हि घटे किञ्चिदाधीयत इति चेत् न प्रकाशवतो घटस्योपलभ्यमानत्वात् । यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणे, न तथा प्राक् प्रदीपकरणात् । तस्मात् न तमस्तिरस्कारायैव प्रदीपकरणम् किन्तर्हि प्रकाशवत्त्वाय । प्रकाशवत्त्वेनैवोपलभ्यमानत्वात् । क्वचिदावरणविनाशेऽपि यत्नः स्यात् यथा कुड्यादिविनाशे । तस्मान्न नियमोऽस्ति अभिव्यक्त्यर्थिनावरणविनाश एव यत्नः कार्य्य इति । नियमार्थवत्त्वाच्च । कारणे वर्त्तमानं कार्य्यं कार्य्यान्तराणामावरणमित्यवोचाम । तत्र यदि पूर्व्वाभिव्यक्तस्य कार्य्यस्य पिण्डस्य व्यवहितस्य वा कपालस्य विनाश एव यत्नः क्रियेत तदा विदलचूर्णाद्यपि कार्य्यं जायेत । तेनाप्यावृतो घटो नोपलभ्यत इति पुनः प्रयत्नान्तरापेक्षैव । तस्माद्घटाद्यभिव्यक्त्यर्थिनो नियत एव कारकव्यापारोऽर्थवान् । तस्मात् प्रागुत्पत्तेरपि सदेव कार्य्यम् । अतीतानागतप्रत्ययभेदाच्च । अतीतो घटोऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्त्तमानघटप्रत्ययवन्न निर्विषयत्वं युक्तम् । अनागतार्थिप्रवृत्तेश्च । न ह्यसत्यर्थितया प्रवृत्तिर्लोके दृष्टा । योगिनां चातीतानागतज्ञानस्य सत्यत्वात् असंश्चेद्भविष्यद्घट ऐश्वरमभविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात् । न च प्रत्यक्षमुपचर्य्यते । घटसद्भावे ह्यनुमानमवोचाम विप्रतिषेधाच्च । यदि घटो भविष्यतीति कुलालादिषु व्याप्रियमाणेषु घटार्थं, प्रमाणेन निश्चितम् । येन च कालेन घटस्य सम्बन्धो भविष्यतीत्युच्यते तस्मिन्नेव काले घटोऽसन्निति प्रतिषिद्धमभिधीयते भविष्यद्घटोऽसन्निति न भविष्यतीत्यर्थः अयं घटो न वर्त्तत इति यद्वत् । अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्यते घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्त्तमानास्तावत् कुलालादयस्तथा घटो न वर्त्तत इत्यसच्छब्दस्यार्थश्चेन्न विरुध्यते कस्मात् स्वेन हि भविष्यद्रूपेण घटो वर्त्तते । न हि पिण्डस्य वर्त्तमानता कपालस्य वा घटस्य भवति । न च तयोर्भविष्यत्ता घटस्य । तस्मात् कुलालादिव्यापारवर्त्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते । यदि घटस्य यत्स्वम्भविष्यत्ताकार्य्यरूपं तत् प्रतिषिध्येत । तत्प्रतिषेधे विरोधः स्यात् । नतु तद्भवान् प्रतिषेधति । न च सर्व्वेषां

क्रियावतामेकैव वर्त्तमानता भविष्यत्त्वं वा । अपि च चतुर्विधानामभावानां घटस्येतरेतराभावो घटादन्यो दृष्टो यथा घटाभावः पटादिरेव न घटस्वरूपमेव । न च घटाभावः सन् पटोऽभावात्मकः किन्तर्हि भावरूप एव घटस्य प्रागभाव ध्वंसात्यन्ताभावानामपि घटेन व्यपदिश्यमानत्वात् घटस्येतरेतराभाववत् तथैव भावात्मकता अभावानाम् । एवञ्च सति घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति । अथ घटस्य प्रागभाव इति घटस्य यत् स्वरूपं तदेवोच्यते, घटस्येति व्यपदेशानुपपत्तिः । अथ कल्पयित्वा व्यपदिश्येत शिलापुत्त्रकस्य शरीरमिति यद्वत् । तथापि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैव । अथार्थान्तरं घटाद्घटस्याभाव इति उक्तोत्तरमेतत् । किञ्चान्यस्यानुत्पत्तेः शशविषाणवदभावभूतस्य घटस्य स्वकारणसत्तासम्बन्धानुपपत्तिः द्विनिष्ठत्वात् सम्बन्धस्य । अयुतसिद्धानामदोष इति चेत् न भावाभावयोरयुतसिद्धत्वानुपपत्तेः । भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा स्यान्न तु भावाभावयोरभावयोर्वा । तस्मात् सदेव कार्यं प्रागुत्पत्तेरिति सिद्धम्' एतदभिप्रेत्य गीतायामुक्तम् "नासतो विद्यते भावो नाभावो विद्यते सतः" इति

अथ भूतोत्पत्तिप्रकारः काणादभाष्यन्यायकन्दल्योर्दर्शितो यथा "ततः प्रातः प्राणिनां भोगभूतये महेश्वरस्य सिसृक्षानन्तरं सर्व्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिप्रक्रमेण महान् वायुः समुत्पन्नो दोधूयमानस्तिष्ठति" भा० "यद्यपि तदाऽऽत्मनां प्राणसंबन्धो नास्ति तथापि प्राणिन इत्युक्तं योग्यत्वात्। तेषां भोगभूतये सुखदुःखानुभवोत्पत्तये महेश्वरस्य सिसृक्षा सर्जनेच्छा जायते तदनन्तरं सर्वेष्वात्मसु गतान्यदृष्टानि वृत्तिं लभन्ते । यद्यपि युगपदुत्पद्यमानासंख्येयकार्य्योत्पत्तौ व्याप्रियमाणा दिगादिवन्नित्यत्वादेकैवेश्वरेच्छा क्रियाशक्तिरूपा तथाप्येषा तत्तत्कालविशेषसहकारिप्राप्तौ कदाचित् संहारार्था भवति कदाचित् सृष्ट्यर्था भवति यदा संहारार्था तदा तदनुरोधाददृष्टादीनां वृत्तिनिरोध औदासीन्यलक्षणो जायते यदा त्वसौ सृष्ट्यर्था भवेत्तदा वृत्तिलाभः स्वकार्यजननं प्रति व्यापारी भवति। वृत्तिर्लब्धा यैस्तानि वृत्तिलब्धानि आहिताग्न्यादित्वात् निष्ठायाः पूर्व्वनिपातो दन्तजात इति यथा । सर्वात्मगतानि वृत्तिलब्धानि अदृष्टानि तान्यपेक्षन्ते ये तत्संयोगा आत्माणुसंयोगास्तेभ्यः पवनपरमाणुषु कर्म्माण्युत्पद्यन्ते पवनपरमाणवः समवायिकारणं तत्संयोगोऽसमवायिकारणमदृष्टं निमित्तकारणमेवं कर्मोत्पत्तौ तेषां पवनपरमाणूनां परस्परसंयोगा जायन्ते तत्संयोगेभ्यश्च द्व्यणुकान्युत्पद्यन्ते तदनु त्र्यणुकानीति अनेन क्रमेण महान् वायुः समुत्पद्यमानो नभस्याकाशे दोधूयमानः क्वचिदप्रतिहतत्वाद्वेगातिशययुक्तस्तिष्ठति" क०। "तदनन्तरं तस्मिन्नाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानः" भा० "प्रतिरोधकाभावात् सर्वत्र प्लवमानस्तिष्ठति" क०। "ततस्तस्मिन्नेव पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्ना महापृथिवी स्थिरस्वभावा तिष्ठति । ततस्तैजसेभ्यः परमाणुभ्यः समुत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति" भा० । "तदनन्तरं सलिलनिधेरुत्पत्त्यनन्तरं तस्मिन्नेव जलनिधौ पार्थिवेभ्यः परमाणुभ्यो महापृथिवी संहता स्थिरस्वभावाऽवतिष्ठते तदनन्तरं तस्मिन्नेव महोदधौ तैजसेभ्योऽणुभ्यो द्व्यणुकादिक्रमेणोत्पन्नो महांस्तेजोराशिः केनचिदनभिभूतत्वाद्देदीप्यमानस्तिष्ठति यद्यपि पयःपावकयोः स्वाभाविको विरोधोऽस्ति तथाप्यदृष्टवशादाधाराधेयभावेनानुपपन्नः" क०। "एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्याभिध्यानमात्रात्तैजसेभ्योऽणुभ्यः पार्थिवपरमाणुसहितेभ्यो महदण्डमारभ्यते । तस्मिंश्चतुर्वदनकमलं सर्वलोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे नियुङ्क्ते" भा० । "एवमनन्तरोक्तेन क्रमेणोत्पन्नेषु महाभूतेषु महेश्वरस्याभिध्यानमात्रात् सङ्कल्पमात्रात् तैजसेभ्यः परमाणुभ्यः पार्थिवपरमाणुसहितेभ्योऽण्डं महद्डिम्बमारभ्यते डिम्बारम्भे पार्थिवा अवयवा उपष्टम्भकास्तेनेदं वह्निपुञ्जप्रायं मा भूत् । तस्मिन्नण्डे चत्वारि वदनकमलानि यस्य तं ब्रह्माणं सर्वलोकपितामहं सर्वेषामेव लोकानामाद्यं पुरुषं समस्तभुवनैः सहोत्पाद्य प्रजानां सर्गे जनने विनियुङ्क्ते "त्वमिदं कुर्व्विति" क०। "स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्य्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्म्मानुरूपज्ञानभोगायुषः सुतान् प्रजापतीन् मानसान् मनुदेवर्षिपितृगणान् मुखबाहूरूपादतश्चतुरो वर्णान् यानि चोच्चावचानि भूतानि तानि सृष्ट्वाऽऽशयानुरूपैर्धर्म्मज्ञानवैराग्यैश्वर्य्यैः संयोजयतीति" भा०। ज्ञानञ्च वैराग्यञ्चैश्वर्य्यञ्च ज्ञानवैराग्यैश्वर्य्याणि अतिशयेन ज्ञानादीनि तैः सम्पन्न उपचितः ज्ञानातिशयात् प्राणिनां धर्मा-

धर्मां यथावत् प्रश्नोति । वैराग्यादपक्षपातेन प्रवर्त्तते । ऐश्वर्य्यात् कर्मफलं भोजयति । प्राणिनां कर्मविपाकं विदित्वेति विविधेन प्रकारेण पाकोविपाकः कर्मणां विपाकः कर्मविपाकस्तं विदित्वा एतावदस्य कर्मफलं भविष्यतीति ज्ञात्वा कर्म्मानुरूपाणि ज्ञानभोगायूंषि येषां तान् प्रजापतीन् दक्षाद्यान् मानसान् मनःसंकल्पप्रभवान् मनुदेवर्षिपितृगणान् मनून् देवानृषीन् पितृगणान् मुखबाहूरुपादतश्चतुरोवर्णान् मुखात् ब्राह्मणान्, बाहुभ्यां क्षत्रियान्, उरुभ्यां वैश्यान्, पद्भ्यां शूद्रान्, अन्यानि चोच्चावचानि क्षुद्रक्षुद्रतराणि भूतानि सृष्ट्वा आशयानुरूपैरायैते फलोपभोगकालं यावत् आत्मन्यवतिष्ठत इत्याशयः कर्म तदनुरूपैर्ज्ञानधर्मवैराग्यैश्वर्य्यैः संयोजयतीति मात्रयाप्यन्यथा न योजयतीत्यर्थः" । यत् खलु कैश्चिदेवमाचक्षिरे प्रेक्षावत्प्रवृत्तिरिष्टार्था वा स्यादनिष्टपरिहारार्था वा नचेष्टानिष्टप्राप्तिपरिहारार्थो, न चेष्टानिष्टप्राप्तिपरिहारावीश्वरे समस्तावाप्तकामे सम्भवतः तेनास्य जगन्निर्माणे प्रवृत्तिरनुपपन्ना तत्रोत्तरं प्राणिनां भोगभूतय इति परार्था चिकीर्षायां प्रवृत्तिर्न स्वार्थनिबन्धनेत्यभिप्रायः । नन्वेवं तर्हि सुखमयीमेव सृष्टिं कुर्य्यात् न दुःखशबलां करुणया प्रवृत्तत्वादित्यत्रैष-परिहारः प्राणिनां कर्मविपाकं विदित्वेति । परार्थं प्रवृत्तोऽपि न सुखमयीमेव करोति विचित्रकर्म्माशयसहायस्य कर्तृत्वादित्यर्थः नचैवं सति करुणाविरोधोदुःखोत्पादस्य वैराग्यजननद्वारेण परमपुरुषार्थहेतुत्वात् यदि धर्म्माधर्मावपेक्ष्य करोति नास्य स्वाधीनं कर्त्तृत्वमिति अनीश्वरतादोष इत्यस्यायं प्रतिसमाधिः । आशयानुरूपैः धर्मज्ञानवैराग्यैश्वर्य्यैः संयोजयति स हि सर्व्वप्राणिनां कर्म्मानुरूपं फलं प्रयच्छन् कथमनीश्वरः स्यादिति भावः न हि योग्यतानुरूपेण भृत्यानां फलविशेषप्रदः प्रभुरप्रभुर्भवति । कल्पादावुत्पन्नानां प्राणिनां सर्व्वशब्दार्थेष्वनुत्पन्नानां सङ्केतस्याशक्यकरणाच्छब्दव्यवहारानुपपत्तिरिति चोदनायां प्रतिसमाधानबीजमिदं मानसानिति । योनिजशरीरं हि महता गर्भवासादिदुःखप्रबन्धेन विलुप्तसंस्कारं जन्मान्तरानुभूतस्य सर्वस्य न स्मरति । ऋषयः प्रजापतयो मनवस्तु मानसा अयोनिजशरीरविशिष्टा दृष्टसंबन्धिनो दृढसंस्काराः कल्पान्तरानुभूतं सर्व्वमेव शब्दार्थव्यवहारं सुप्तप्रतिबुद्धवत् प्रतिसन्दधते प्रतिसन्धानाच्च परस्परं बहुशो व्यवहरन्ति । तेषां व्यवहाराच्च तत्कालवर्त्तिनां प्राणिनामुत्पत्तिः तद्व्यवहाराच्चापरेषामित्युत्पद्यते व्यवहारपरम्परया शब्दार्थं व्युत्पत्तिरित्यर्थः" क० ।

वेदान्तिमते भूतोत्पत्तिप्रकारो वेदा० प० दर्शितो यथा । "तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतापरिमितानिरूपितशक्तिविशेषविशिष्टमायासहितः नामरूपात्मकं निखिलप्रपञ्चं प्रथमं बुद्ध्याकलय्य इदं करिष्यामीति सङ्कल्पयति 'तदैक्षत बहु स्यां प्रजायेयेति' श्रुतेः । तत आत्मन आकाशादीनि पञ्चभूतानि अपञ्चीकृतानि तन्मात्रपदप्रतिपाद्यानि उत्पद्यन्ते तत्राकाशस्य शब्दोगुणो, वायोस्तु शब्दस्पर्शौ तेजसस्तु शब्दस्पर्शरूपाणि, अपान्तु शब्दस्पर्शरूपरसाः, पृथिव्यास्तु शब्दस्पर्शरूपरसगन्धाः । न तु शब्दस्याकाशमात्रगुणत्वं वाय्वादावपि तदुपलम्भात् । नासौ भ्रमः बाधकाभावात् । इमानि भूतानि त्रिगुणमायाकार्य्याणि अतस्त्रिगुणात्मकानि । एतैश्च सत्त्वगुणोपेतैः पञ्चभूतैः श्रोत्रत्वक्चक्षूरसनघ्राणानि पञ्चेन्द्रियाणि मनोबुद्ध्यहङ्कारचित्तानि च जायन्ते । श्रोत्रादीनां पञ्चानां क्रमेणैव दिग्वातार्कवरुणाश्विनो अधिष्ठातृदेवताः मनआदीनां चतुर्णां क्रमेण चन्द्रचतुर्मुखशङ्कराच्युताः अधिष्ठातृदेवताः । एतैरेव रजोगुणोपेतैः पञ्चभूतैर्यथाक्रमेण वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि जायन्ते । तेषाञ्च क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठातृदेवताः । रजोगुणोपेतैः पञ्चभूतैरेव पञ्च वायवः प्राणापानव्यानोदानसमानाख्याजायन्ते । तत्र प्रागगमनवान् वायुः प्राणोनासाग्रस्थानवर्त्ती । अवागमनवानपानः पाय्वादिस्थानवर्त्ती । विष्वग्गमनवान् व्यानः अखिलशरीरवर्त्ती । ऊर्द्ध्वगमनवानुदानः कण्ठस्थानवर्त्ती । अशितपीतान्नादिसमीकरणः समानः नाभिस्थानवर्त्ती । तैरेव तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतभूतानि जायन्ते "तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति" त्रिवृत्करणश्रुतेः पञ्चीकरणोपलक्षणार्थत्वात् । पञ्चीकरणप्रकारश्चेत्थम् । आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्द्धा विभज्य तेषां चतुर्णामंशानां वाय्वादिषु चतुर्भूतेषु संयोजनम् । एवं वायुं द्वेधा विभज्य तयोरेकं भागं पुनश्चतुर्द्धा विभज्य तेषां चतुर्णां आकाशादिषु संयोजनम् । एवं तेजोऽप्पृथिव्यंशानामपि । तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकम् अर्द्धान्तरञ्च चतुर्विधभूतमयमिति पृथिव्या दी

ऽंशाधिक्यात् पृथिव्यादिव्यवहारः । तदुक्तम् "वैशेष्यात्तद्वादस्तद्वादः" (शा०सू०)इति । पूर्वोक्तैरपञ्चीकृतभूतैर्लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्षपर्य्यन्तस्थायि मनोबुद्धिभ्यासुपेतं ज्ञानेन्द्रियपञ्चककर्म्मेन्द्रियपञ्चकप्राणादिपञ्चकसंयुक्तं जायते । तदुक्तम् । "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति" । तच्च द्विविधं परमपरञ्च । परं हिरण्यगर्भलिङ्गशरीरं महत्तत्त्वरूपम्, अपरमस्मदादिलिङ्गशरीरञ्चाहङ्कारतत्त्वमित्याख्यायते । एवं तमोगुणयुक्तेभ्यः पञ्चीकृतभूतेभ्योभूरन्तरिक्षस्वर्गमहर्ज्जनतपःसत्यात्मकस्योर्द्धलोकसप्तकस्य अतलपातालवितलसुतलतलातलरसातलमहातलाख्यस्याधोलोकसप्तकस्य ब्रह्माण्डस्य जरायुजाण्डजस्वेदजोद्भिज्जाख्यचतुर्विधस्थूलशरीराणाञ्चोत्पत्तिः । तत्र जरायुजानि जरायुभ्योजातानि मनुष्यपश्वादिशरीराणि । अण्डजानि अण्डेभ्यो जातानि पक्षिपन्नगादिशरीराणि । स्वेदजानि स्वेदाज्जातानि यूकमशकादिशरीराणि । उद्भिज्जानि भूमिमुद्भिद्य जातानि वृक्षादिशरीराणि । वृक्षादीनामपि पापफलभोगायतनत्वेन शरीरत्वम् । तत्र परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेतलिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौ च साक्षात्कर्त्तृत्वम् । इतरनिखिलप्रपञ्चोत्पत्तौ च हिरण्यगर्भद्वारा "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" श्रुतेः हिरण्यगर्भोनाम मूर्त्तित्वादन्यः प्रथमोजीवः "स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत" । "हिरण्यगर्भः समवर्त्तताग्रे" इत्यादि "श्रुतेः" ।

सांख्यमते प्रकृतिरेका नित्या अचेतना साम्यावस्थापन्नसत्त्वरजस्तमआत्मिका, पुरुषास्तु बहवश्चिन्मात्रा अपरिणामिनः कूटस्था नित्याः । पूर्व्वकल्पे प्रकृतिपर्य्यन्तसाक्षात्कारिणा प्रकृतिलीनोपाधिकेन आदिविदुषा ईश्वरपदाभिधेयेन स्वस्वामिभावरूपसंयोगवती स्वलीनानन्तबुद्धितत्त्वनिष्ठपूर्व्वकल्पार्ज्जितादृष्टवशेन प्रकृतिः सर्गाद्यकाले सत्त्वादिगुणक्षोभमापन्ना महदाद्याकारेण परिणमते । यथा च परिणमते तथा दर्शितम् सां०सू०प्र० भाष्ययोः यथा । "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्काराद् पञ्च तन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः" सू० । "सत्त्वादीनि द्रव्याणि न वैशेषिकादिवद्गुणाः संयोगविभागवत्त्वात् लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च । तेष्वत्र शास्त्रे श्रुत्यादौ च गुणशब्दः पुरुषोपकरणत्वात् पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्म्मातृत्वाच्च प्रयुज्यते । तेषां सत्त्वादिद्रव्याणां या साम्यावस्था न्यूनानतिरिक्तावस्था न्यूनाधिकाभावेनासंहतावस्थेति यावत् अकार्य्यावस्थेति निष्कर्षः । अकार्य्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः । यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात् । "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा । एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्" इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च । सत्त्वादीनामनुगमाय सामान्येति । पुरुषव्यावर्त्तनाय गुणेति । महदादिव्यावर्त्तनाय चोपलक्षितान्तमिति । महदादयोऽपि हि कार्य्यसत्त्वादिरूपाः पुरुषोपकरणतया गुणाश्च भवन्तीति । तदत्र प्रकृतेः स्वरूपमेवोक्तम् । अस्या विशेषस्तु पश्चाद्वक्ष्यते । प्रकृतेः कार्य्यो महान् महत्तत्त्वम् । महदादीनां स्वरूपं विशेषश्च वक्ष्यते । महतश्च कार्य्योऽहङ्कारः । अहङ्कारस्य कार्य्यद्वयं तन्मात्राण्युभयमिन्द्रियं च । तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेनैकादशविधम् । तन्मात्राणां कार्य्याणि पञ्च स्थूलभूतानि । स्थूलशब्दात् तन्मात्राणां सूक्ष्मभूतत्वमभ्युपेयम् । पुरुषस्तु कार्य्यकारणविलक्षणः इति इत्येवं पञ्चविंशतिर्गणः पदार्थव्यूह एतदतिरिक्त पदार्थो नास्तीत्यर्थः । अत्र वा सत्त्वादीनां प्रत्येकव्यक्त्यानन्त्यं गणशब्दो वक्ति । अयं च पञ्चविंशतिको गणोद्रव्यरूप एव । धर्म्मधर्म्मिभेदात् तु गुणकर्म्मसामान्यादीनामत्रैवान्तर्भावः । एतदतिरिक्तपदार्थसत्त्वे हि ततोऽपि पुरुषस्य विवेक्तव्यतया तदसंग्रहे न्यूनतापद्येत" ।

प्रकृतेरचेतनत्वेऽपि पुरुषभोगापवर्गार्थं वत्सविवृद्ध्यर्थं अचेतनक्षीरवत् प्रवृत्तिः । यथोक्तं सां०का० कौ० । "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" का० "प्रधानस्येति कर्म्मणि षष्ठी प्रधानस्य सर्व्वकारणस्य यद्दर्शनं पुरुषेण तदर्थं, तदनेन भोग्यता प्रधानस्य दर्शिता ततश्च भोग्यं प्रधानं भोक्तारमन्तरेण न सम्भवतीति युक्तास्य भोक्त्रपेक्षा । पुरुषस्यापेक्षां दर्शयति पुरुषस्य कैवल्यार्थम् । तथा हि प्रधानेनासम्भिन्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते तच्च सत्त्वपुरुषान्यताख्यातिनिबन्धनम् । न च सत्त्वपुरुषान्यताख्यातिः प्रधानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते । अनादित्वाच्च संयोगपरम्परायाः,

भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यते इति युक्तम्। ननु भवत्वनयोः संयोगो महदादिसर्गस्तु कुतस्त्य इत्यत आह तत्कृतः सर्गः संयोगो हि न महदादिसर्गमन्तरेण भोगाय पर्य्याप्त इति संयोगएव भोगापवर्गार्थं सर्गं करोतीत्यर्थः" कौ० तथाऽचेतनायाः प्रवृत्तौ दृष्टान्तस्तत्रैवोक्तः "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" सां०का०।

पातञ्जले तु प्रतिकल्पमनेकेषां प्रकृतिलीनानां सर्गहेतुत्वकल्पने गौरवात् एकस्यैव ईश्वरस्य तदधिष्ठानत्वाङ्गीकारेण प्रकृतेस्तथा परिणाम इत्यङ्गीकृतं यथा च एकस्यैव सर्व्वोत्कर्षं सार्व्वज्ञ्यं तथा ईश्वरशब्दे १०५२ पृष्ठे सूत्रभाष्यविवरणेषु दर्शितम्। ४ अभिव्यक्तौ च अभिव्यक्तेर्यथा उत्पत्तिरूपता तथा अभिव्यक्तिशब्दे ३०० पृष्ठे दर्शितम्।

एवं भूतभौतिकोत्पत्तिप्रकारः मतभेदेन निरूपितः। अथ विशेषभौतिकोत्पत्तौ कारणविशेषस्तावदभिधीयते तत्र जन्यमात्रोत्पत्तौ ईश्वरः अदृष्टं कालश्च निमित्तकारणमिति नैयायिकादयः। वेदान्तिमते ब्रह्मणोऽविद्याद्वारा निमित्तोपादानरूपोभयकारणता। सांख्यमते प्रकृतेरुपादानता। जन्यभावोत्पत्तौ द्रव्यमुपादानकारणं यथा घटे कपालम् पटे तन्तवः, कुण्डले, सुवर्ण्णम् समवायिकारणम्। तत्तदवयवसंयोगश्चासमवायिकारणम्। गुणोत्पत्तौ द्रव्यं समवायिकारणम् अवयवगुणोवह्न्यादिसंयोगो वा असमवायिकारणं यथा घटरूपे कपालरूपं, पटरूपे तन्तुरूपम्, श्यामघटे रक्तोत्पत्तौ अग्निसंयोगः। एवमात्मनि ज्ञानाद्युत्पत्तौ मनःसंयोगादि असमवायिकारणम्। संयोगविभागोत्पत्तौ क्रिया असमवायिकारणम्, इत्याद्यूह्यम्। ध्वंसरूपाभावोत्पत्तौ प्रतियोगी निमित्तकारणम्। वाय्वादौ रूपाद्यभावस्यात्यन्ताभावतया नित्यत्वम् घटाभावस्य नाशे तु भूतले घटापसरणं तदानयनं च तदुत्पत्तौ निमित्तकारणं तेनायमुत्पत्तिविनाशशाली चतुर्थः संसर्गाभावः इति न्यायैकदेशिनः।

देहोत्पत्तिप्रकारः कायशब्दे, गर्भोत्पत्तिप्रकारश्च गर्भशब्दे वक्ष्यते। "उत्पत्तिमात्रे कर्त्तृत्वं सर्व्वेष्वस्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भवः" भर्त्तृ०। "उत्पत्तिवद्वा वाऽदोषः" सां०सू०। "न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता" अभियुक्तोक्तिः। जीवोत्पत्तिस्तु देहाद्देहान्तरसम्बन्ध एव तन्निमित्तप्रकारादि। वृ०उ०भा० दर्शितं यथा "तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवं हैवंविदं ब्रह्मायातीदमागच्छतीति" "तत्रास्येदं शरीरं परित्यज्य गच्छतो नास्य देहान्तरस्योपादाने सामर्थ्यमस्ति देहेन्द्रियवियोगात्। न चान्येऽस्य भृत्यस्थानीया गृहमिव राज्ञे शरीरान्तरं कृत्वा प्रतीक्षमाणा विद्यन्ते। अथैवं सति कथमस्य शरीरान्तरोपादानमित्युच्यते। सर्व्वं ह्यस्य जगत्स्वकर्म्मफलोपभोगायतनं कर्म्मफलोपभोगाय चायं प्रवृत्तो देहाद्देहान्तरं प्रतिपित्सुः। तस्मात्सर्व्वमेव जगत्स्वकर्म्मप्रयुक्तं तत्कर्म्मफलोपभोगयोग्यं साधनं कृत्वा प्रतीक्षत एव। "कृतं लोकं पुरुषोऽभिजायत इति" श्रुतेः। यथा स्वप्नजागरिते प्रतिपित्सोः। तत् कथमिति? लोकप्रसिद्धो दृष्टान्त उच्यते। तत्र यथा राजानं राज्याभिषिक्तमायान्तं स्वराष्ट्रे उग्रा जातिविशेषाः क्रूरकर्म्माणो वा प्रत्येनसः प्रति प्रत्येनसि पापकर्म्मणि नियुक्ताः प्रत्येनसस्तस्करादिदण्डनादौ नियुक्ताः सूताश्च ग्रामण्यश्च सूतग्रामण्यः सूता वर्णसङ्करजा जातिविशेषा ग्रामण्यो ग्रामनेतारस्ते पूर्व्वमेव राज्ञ आगमनं बुद्ध्वाऽन्नैर्भोज्यभक्ष्यादिप्रकारैः पानैर्मदिरादिभिरावसथैश्च प्रासादादिभिः प्रतिकल्पन्ते निष्पन्नैरेव प्रतीक्षन्तेऽयं राजा आयात्ययमागच्छतीत्येवं वदन्तः। एवं ह एवंविदं कर्म्मफलस्य वेदितारं संसारिणमित्यर्थः। कर्म्मफलं हि प्रस्तुतं तदेवंशब्देन परामृश्यते। सर्व्वाणि भूतानि शरीरकर्तॄणि करणानुग्राहीणि चादित्यादीनि तत्कर्म्मप्रयुक्तानि कृतैरेव कर्म्मफलोपभोगसाधनैः प्रतीक्षन्ते। इदं ब्रह्म भोक्तृ कर्त्तृ चास्माकमायाति। तथेदमागच्छत्येवमेव कृत्वा प्रतीक्षन्त इत्यर्थः" भाष्यम्। तत्र विस्तरस्तत्रैवोक्तो यथा।

"तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याऽविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति। तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याऽविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम्। स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्म्ममयोऽधर्म्ममयः सर्व्वमयस्-

यदेतदिदम्मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन । अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते" इ० उ० ।

"एवं विद्यादिसम्भारसम्भृतो देहान्तरं प्रतिपद्यमानो मुक्त्वा पूर्वं देहं पक्षीव वृक्षान्तरं प्रतिपद्यते, अथ वाऽऽतिवाहिकेन शरीरान्तरेण कर्मफलजन्मदेशं नीयते किं वात्रास्यैव सर्वगतानां करणानां वृत्तिलाभो भवत्याहोस्विच्छरीरस्थस्य सङ्कुचितानि करणानि स्वतन्त्र भिन्नघटप्रदीपप्रकाशवत्सर्वतो व्याप्य पुनर्देहान्तरारम्भे सङ्कोचमृच्छन्ति किं वा मनोमात्रं वैशेषिकसमय इव देहान्तरारम्भदेशं प्रतिगच्छति किं वा कल्पनान्तरमेव वेदान्तसमय इत्युच्यते । "त एते सर्व एव समाः सर्वेऽनन्ता" इति श्रुतेः । सर्वात्मकानि तावत् करणानि सर्वात्मकप्राणसंश्रयाच्च तेषामाध्यात्मिकाधिभौतिकपरिच्छेदः प्राणिकर्मज्ञानभावनानिमित्तः । अतस्तद्वशात् स्वभावतः सर्वगतानामनन्तानामपि प्राणानां कर्मज्ञानवासनानुरूप्येणैव देहान्तरारम्भवशात् प्राणानां वृत्तिः सङ्कुचति विकसति च । तथाचोक्तम् । "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेणेति" । तथाचेदं वचनमनुकूलम् "स यो हैतानन्तानुपास्ते" इत्यादि "तं यथा यथोपासते" इति च । तत्र वासनापूर्वप्रज्ञाख्या विद्या कर्मतन्त्रा जलूकावत्सन्ततैव स्वप्नकाल इव कर्मकृतं देहाद्देहान्तरमारभते हृदयस्थैव पुनर्देहान्तरं पूर्वाश्रयं विमुञ्चतीत्येतस्मिन्नर्थे दृष्टान्त उपादीयते तत्र देहान्तरसञ्चार इदं निदर्शनम् । यथा येन प्रकारेण तृणजलायुका तृणजलौका तृणस्यान्तमवसानं गत्वा प्राप्यान्यमाक्रमं तृणान्तरमाक्रममाक्रम्यत इत्याक्रमस्तमाक्रममाक्रम्याश्रित्यात्मानमात्मनः पूर्वावयवमुपसंहरत्यन्त्यावयवस्थाने । एवमेवायमात्मा यः प्रकृतो यः संसारी इदं शरीरं पूर्वोपात्तं निहत्य स्वप्नं प्रतिपित्सुरिव पातयित्वा विद्यां गमयित्वा चेतनं कृत्वा स्वात्मोपसंहारेणान्यमाक्रमं तृणान्तरमिव तृणजलौका इव शरीरान्तरं गृहीत्वा प्रसारितया वासनयाऽऽत्मानमुपसंहरति । तत्रात्मभावमारभते । यथा स्वप्ने देहान्तरमारभते । स्वप्नदेहान्तरस्थ इव शरीरारम्भदेशे आरभ्यमाणे देहे जङ्गमे स्थावरे वा । तत्र च कर्मवशात्करणानि लब्धवृत्तीनि संहन्यन्ते बाह्यानि च कुशमृत्तिकास्थानीयं शरीरमारभ्यते । तत्र च करणव्यूहमपेक्ष्य वागाद्यनुग्रहः । या अग्न्यादिदेवताः संश्रयन्त एष देहान्तरारम्भविधिः" ।

तत्र देहान्तरारम्भे नित्योपात्तमेवोपादानमुपमृद्योपमृद्य देहान्तरमारभते आहोस्विदपूर्वमेव पुनः पुनरादत्त इत्यत्रोच्यते दृष्टान्तः । तत्रैतस्मिन्नर्थे यथा पेशस्कारी पेशः सुवर्णं तत्करोतीति पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामुपादायापच्छिद्य गृहीत्वाऽन्यत् पूर्वस्माद्रचनाविशेषादन्यन्नवतरमभिनवतरं कल्याणात् कल्याणतरं रूपं तनुते निर्मिमीते एवमेवायमात्मेत्यादि पूर्ववत् । नित्योपात्तान्येव पृथिव्यादीन्याकाशान्तानि पञ्चभूतानि यानि "द्वे वाव ब्रह्मणो रूपे" इति चतुर्थे व्याख्यातानि पेशःस्थानीयानि । तान्येवोपमृद्योपमृद्यान्यदन्यच्च देहान्तरं नवतरं कल्याणतरं रूपं संस्थानविशेषं देहान्तरमित्यर्थः । कुरुते पित्र्यं वा पितृभ्यो हितं पितृलोकोपभोगयोग्यमित्यर्थः । गान्धर्वं गन्धर्वाणामुपभोगयोग्यम् । तथा देवानां दैवम्, प्रजापतेः प्राजापत्यम्, ब्रह्मण इदं ब्राह्मं वा, यथाकर्म यथाश्रुतमन्येषां वा भूतानां सम्बन्धि शरीरान्तरं कुरुत इत्यभिसम्बध्यते । यस्य बन्धनसङ्घाता उपाधिभूता यैः संयुक्तस्तन्मयोऽयमिति विभाव्यते ते पदार्थाः पुञ्जीकृत्येहैकत्र प्रतिनिर्दिश्यन्ते । स वा अयं य एवं संसरत्यात्मा ब्रह्मैव पर एव योऽशनायाद्यतीतो विज्ञानमयो विज्ञानं बुद्धिस्तेनोपलक्षणमात्मनयः । कतम आत्मेति । योऽयं विज्ञानमयः । प्राणेष्विति ह्युक्तं विज्ञानमयो विज्ञानप्रायो यस्मात्तद्धर्मत्वमस्य विभाव्यते "ध्यायतीव लेलायतीवेति" । तथा मनोमयो मनःसन्निकर्षान्मनोमयः । तथा प्राणमयः प्राणः पञ्चवृत्तिस्तन्मयो येन चेतनश्चलतीव लक्ष्यते । तथा चक्षुर्मयो रूपदर्शनकाले । एवं श्रोत्रमयः शब्दश्रवणकाले । एवं तस्य तस्येन्द्रियस्य व्यापारोद्भवे तत्तन्मयो भवति । एवं बुद्धिप्राणद्वारेण चक्षुरादिकरणमयः सन् शरीरारम्भकपृथिव्यादिभूतमयो भवति । तत्र पार्थिवादिशरीरारम्भे पृथिवीमयो भवति तथा वरुणादिलोकेष्वाप्यशरीरारम्भे आपोमयो भवति । तथा वायव्यशरीरारम्भे वायुमयो भवति । तथाकाशशरीरारम्भे आकाशमयो भवति । एवमेतानि तैजसानि देवशरीराणि । तेष्वारभ्यमाणेषु तत्तन्मयस्तेजोमयो भवति । अतो व्यतिरिक्तानि पश्वादिशरीराणि नरकप्रेतादिशरीराणि चातेजोमयानि ।

तान्यपेक्ष्याद्यहातेजोमय इति एवं कार्य्यकरणसङ्घातमयः सन्नात्मा प्राप्तं वस्त्वन्तरं पश्यन्निदम्मयः, अदोमय इत्यप्राप्तमिति । एवं विपरीतप्रत्ययस्तदभिलाषः काममयो भवति । तस्मिन् कामे दोषं पश्यतस्तद्विषयाभिलाषोपशमे चित्तं प्रसन्नमकलुषं शान्तं भवति तन्मयोऽकाममयः । एवं तस्मिन्विहते कामे केनचित्स कामः क्रोधत्वेन परिणमते तेन तन्मयो भवन् क्रोधमयः । स क्रोधः केनचिदुपायेन निवर्त्तितो यदा भवति तदा प्रसन्नमनाकुलं चित्तं सदक्रोध उच्यते । एवं तेन तन्मयः एवं कामक्रोधाभ्यामकामक्रोधाभ्याञ्च तन्मयो भूत्वा धर्म्ममयोऽधर्म्ममयश्च भवति । न हि कामक्रोधादिभिर्विना धर्मादिप्रवृत्तिरुपपद्यते । "यद्यद्धि कुरुते कर्म्म तत्तत्कामस्य चेष्टितमिति" स्मरणात् । धर्म्ममयोऽधर्म्ममयश्च भूत्वा सर्व्वमयो भवति । समस्तं धर्माधर्म्मयोश्च कार्य्यं यावत्किञ्चिद्व्याकृतं तत्सर्वं धर्माधर्मयोः फलम् । तत्प्रतिपद्यमानस्तन्मयो भवति किं बहुना तदेतत् सिद्धमस्य यदयमिदम्मयो गृह्यमाणविषयादिमयस्तस्मादयमदोमयः अद इति परोक्षं कार्य्येण गृह्यमाणेन निर्द्दिश्यते । अनन्ता ह्यन्तःकरणे भावनाविशेषाः । नैव ते विशेषतो निर्द्देष्टुं शक्यन्ते । तस्मिंस्तस्मिन् क्षणे कार्य्यतोऽवगम्यन्ते । इदमस्य हृदि वर्त्ततेऽदोऽस्येति । तेन गृह्यमाणकार्य्येणेदम्मयतया निर्दिश्यते । परोक्षोऽन्तःस्थो व्यवहारोऽयमिदानीमदोमय इति । सङ्क्षेपतस्तु यथा कर्त्तुं यथा वाऽऽचरितुं शीलमस्य सोऽयं यथाकारी यथाचारी स तथा भवति । करणं नाम नियता क्रियाविधिप्रतिषेधादिगम्या, आचरणं नाम अनियतमिति विशेषः । साधुकारी साधुर्भवति । यथाकारीत्यस्य विशेषणम् । पापकारी पापो भवति च । यथाचारीत्यस्य ताच्छील्यप्रत्ययोपादानात् अत्यन्ततात्पर्य्यतैव तन्मयत्वं न तु तत्कर्म्ममात्रेणेत्याशङ्क्याह । पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति । पुण्यपापकर्म्ममात्रेणैव तन्मयता स्यान्न तु ताच्छील्यमपेक्षते । ताच्छील्ये तु तन्मयत्वातिशय इत्ययं विशेषः । तत्र कामक्रोधादिपूर्व्वकपुण्यापुण्यकारिता सर्व्वमयत्वे हेतुः संसारस्य कारणं देहाद्देहान्तरसञ्चारस्य च । एतत्प्रयुक्तो ह्यन्यदन्यद्देहान्तरमुपादत्ते । तस्मात् पुण्यापुण्ये संसारस्य कारणमेतत् । विषयौ हि विधिप्रतिषेधावत्र शास्त्रस्य साफल्यमिति । अथो अप्यन्ये बन्धमोक्षकुशलाः खल्वाहुः सत्यं कामादिपूर्व्वके पुण्यापुण्ये शरीरग्रहणकारणम् । तथापि कामप्रयुक्तो हि पुरुषः पुण्यापुण्यकर्म्मणोपचिनोति । कामप्रहाणे तु कर्म्म विद्यमानमपि पुण्यापुण्योपचयकरं न भवति । उपचिते अपि पुण्यापुण्ये कर्म्मणी कामशून्ये फलारम्भके न भवतः । तस्मात्काम एव संसारस्य मूलम् । तथाचोक्तमाथर्वणे "कामान् यः कामयते मन्यमानः सकामभिर्जायते तत्र तत्रेति" । तस्मात्काममय एवायं पुरुषो यदन्यमयत्वं तदकारणं विद्यमानमप्यतोऽवधारयति काममय एवेति । स च काममयः सन् यादृशेन कामेन यथाकामो भवति तत्क्रतुर्भवति सकाम ईषदभिलाषमात्रेणाभिव्यक्तो यस्मिन्विषये भवति स विहन्यमानः स्फुटीभवन् क्रतुत्वमापद्यते । क्रतुर्नामाध्यवसायो निश्चयो यदनन्तरा क्रिया प्रवर्त्तते यत्क्रतुर्भवति यादृक्कामकार्य्येण क्रतुना यथास्वरूपः क्रतुरस्य सोऽयं यत्क्रतुर्भवति तत्कर्म्म कुरुते । यद्विषयः क्रतुस्तत्फलनिर्वृत्तये यद्योग्यं कर्म्म तत्कुरुते निर्वर्त्तयति । यत्कर्म्म कुरुते तदभिसम्पद्यते तदीयं फलमभिसम्पद्यते" भा० ।

**उत्पत्तिक्रम** पु० उत्पत्तौ क्रमः । जगतामुत्पत्तिपरिपाट्याम् । स च क्रमः "ब्रह्मेति प्रकृत्य तैत्ति० उ० भाष्ययोर्दर्शितो यथा ।

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधिभ्योऽन्नम् अन्नाद्रेतः रेतसः पुरुषः । स वा एष पुरुषोऽन्नरसमयः" उप० । "तस्मादिति मूलवाक्यसूत्रितं ब्रह्म परामृश्यते । एतस्मादिति । मन्त्रवाक्येन, अनन्तरं यथा लक्षितं यद्ब्रह्मैव ब्राह्मणवाक्येन लक्षितम् यच्च सत्यं ज्ञानमनन्तं ब्रह्मेत्यनन्तरमेव लक्षितम् तस्मादेतस्माद् ब्रह्मण आत्मन आत्मशब्दवाच्यात् । आत्मा हि तत्सर्वस्य "तत् सत्यं स आत्मेति" श्रुत्यन्तरादतो ब्रह्मात्मा । तस्मादेतस्माद्ब्रह्मण आत्मस्वरूपादाकाशः सम्भूतः समुत्पन्नः । आकाशो नाम शब्दगुणोऽवकाशकरो मूर्त्तद्रव्याणां, तस्मादाकाशात् स्वेन स्पर्शगुणेन पूर्व्वेण च कारणगुणेन शब्देन द्विगुणो वायुः सम्भूत इत्यनुवर्त्तते । वायोश्च स्वेन रूपगुणेन पूर्वाभ्याञ्च त्रिगुणोऽग्निः सम्भूतः । अग्नेः स्वेन रसगुणेन पूर्वैश्च त्रिभिश्चतुर्गुणा आपः सम्भूताः । अद्भ्यः स्वेन गन्धगुणेन पूर्वैश्चतुर्भिः पञ्चगुणा पृथिवी सम्भूता । पृथिव्या ओषधयः । ओषधिभ्योऽन्नम् । अन्नाद्रेतोरूपेण परिणतात्पुरुषः शिरःपाण्याद्याकृतिमान् । स वा एष पुरुषोऽन्नरसमयोऽन्नरसविकारः । पुरुषाकृतिभावितं हि सर्वेभ्योऽङ्गेभ्यस्तेजः

सम्भूतं रेतो बीजं तस्माद्यो जायते सोऽपि तथा पुरुषाकृतिरेव स्यात् सर्वजातिषु जायमानानां जनकाकृतिनियमदर्शनात् सर्वेषामप्यन्नरसविकारत्वे ब्रह्मवंश्यत्वे चाविशिष्टे। कस्मात्? पुरुष एव गृह्यते प्राधान्यात्। किं पुनः प्राधान्यं कर्मज्ञानाधिकारः पुरुष एव हि शक्तत्वादर्थित्वाच्च अर्थी विद्वान् समर्थः कर्मज्ञानयोरधिक्रियते। "पुरुषत्वे चाविस्तरात्मा स हि विज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सतीत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिज्ञानमित्यादिश्रुत्यन्तरदर्शनात्" भा०।

एतेषाञ्च ब्रह्माधिष्ठितानामेव तत्तत्कार्यरूपेणाविर्भावः शा०सू०भाष्ययोर्निरूपितो यथा।

"तदभिध्यानादेव तु तल्लिङ्गात् सः" सू०। "किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्त्याहोस्वित् परमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायन् तं तं विकारं सृजतीति सन्देहे सति प्राप्तं तावत् स्वयमेव सृजन्तीति कुतः "आकाशाद्वायुर्वायोरग्निरित्यादि" स्वातन्त्र्यश्रवणात्। नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा, नैष दोषः। "तत्तेज ऐक्षत ता आप ऐक्षन्तेति च भूतानामपि चेतनत्वश्रवणादित्येवं प्राप्तेऽभिधीयते। स एव परमेश्वरस्तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति कुतः? तल्लिङ्गात्। तथा हि शास्त्रम् "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयतीत्येवंजातीयकं, साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति। तथा "सोऽकामयत बहु स्यां प्रजायेयेति" प्रस्तुत्य "सच्च त्यच्चाभवत् तदात्मानं स्वयमकुरुतेति" च तस्यैव सर्वात्मभावं दर्शयति। यत्तु ईक्षणश्रवणमप्तेजसोः, तत् परमेश्वरावेशवशादेव द्रष्टव्यं "नान्योऽतोऽस्ति द्रष्टा" इतीक्षित्रन्तरप्रतिषेधात् प्रकृतत्वाच्च सत ईक्षितुः "तदैक्षत बहु स्यां प्रजायेयेत्यत्र"। "भूतानामुत्पत्तिक्रमश्चिन्तितः" शा०भा०।

**उत्पत्तिमत्** त्रि० उत्पत्तिर्विद्यतेऽस्य मतुप् स्त्रियां ङीप्। उत्पत्तिविशिष्टे "विपदुत्पत्तिमतामुपस्थिता" रघुः।

**उत्पत्तिविधि** पु० उत्पत्तिः कर्मस्वरूपज्ञापको विधिः। "स्वर्गकामोऽश्वमेधेन यजेतेत्यादौ कर्मस्वरूपज्ञापके विधौ। विधिशब्दे विवृतिः। उत्पत्तिवाक्यमप्यत्र न०।

**उत्पत्तिव्युत्क्रम** पु० उत्पत्तितो व्युत्क्रमः। उत्पत्तिक्रमात् विपरीते क्रमे। स च शा०सू० भाष्ययोर्दर्शितः यथा "भूतानामुत्पत्तिक्रमश्चिन्तितोऽथेदानीमप्ययक्रमश्चिन्त्यते "विपर्ययेण तु क्रमोऽत उपपद्यते च" शा०सू०। "किमनियतेन क्रमेणाप्ययः, उतोत्पत्तिक्रमेणाथ वा तद्विपरीतेनेति? त्रयोऽपि चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीति"। तत्रानियमोऽविशेषादिति प्राप्तम्। अथ वोत्पत्तेः क्रमस्य श्रुतत्वात् प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादित्येवं प्राप्ते ततो ब्रूमः विपर्ययेण तु प्रलयक्रमोऽत उत्पत्तिक्रमाद्भवितुमर्हति। तथा हि लोके दृश्यते येन क्रमेण सोपानमारूढस्ततो विपरीतेन क्रमेणावरोहतीति। अपि च दृश्यते मृदो जातं घटाद्यप्ययकाले मृद्भावमप्येति अद्भ्यश्च जातं हिमकरकादि अब्भावमप्येतीत्यतश्चोपपद्यते एतत्, यत् पृथिव्यद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तावपोऽपीयात्, आपश्च तेजसो जाताः सत्यस्तेजोऽपीयुः, एवं क्रमेण सूक्ष्मं सूक्ष्मतरञ्चानन्तरमनन्तरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं ब्रह्माप्येतीति वेदितव्यम्। न हि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः। स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र प्रदर्शितः। "जगत्प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते" इत्येवमादौ। उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति न चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते। न हि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः कारणाप्यये कार्यस्यावस्थानानुपपत्तेः। कार्याप्यये तु कारणस्यावस्थानं युक्तं मृदादिष्वेवं दृष्टत्वात्" भा०। तदेतत् वेदा०प०स्पष्टमुक्तम् यथा। "भूतानां भौतिकानाञ्च न कारणलयक्रमेण लयः कारणलयसमये कार्याणामाश्रयमन्तरेणावस्थानानुपपत्तेः किन्तु सृष्टिक्रमविपरीतक्रमेण तत्तत्कार्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतया उपादाननाशस्याप्रयोजकत्वात् अन्यथा न्यायमतेऽपि महाप्रलये पृथिवीपरमाणुगतरूपरसादेरविनाशापत्तेः। तथा च पृथिव्या अप्सु, अपां तेजसि, तेजसो वायौ, वायोराकाशे, आकाशस्य जीवाहङ्कारे, तस्य हिरण्यगर्भाहङ्कारे, तस्य चाविद्यायामित्येवंरूप एव प्रलयः। तदुक्तम् विष्णुपुराणे "जगत्प्रतिष्ठा देवर्षे! पृथिव्यप्सु प्रलीयते। तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते। वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते। अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः"।

उत्पत्य अव्य० उत्+पत-ल्यप्। ऊर्द्ध्वं पतित्वेत्यर्थे उत्पत्यपाकला मयू०। अन्धप्रध्वस्युक्ते

उत्पथ पु० उत्क्रान्तः पन्थानम् अत्या० समा० अच्। गम्यपथातिक्रान्ते २न्याय्यपथातिक्रान्ते च। भिन्नपथ्यादतया अपकृष्टः पन्थाः तदभावे प्रा०स० अच् समा० कदर्थे यथि "गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम्" भा० आ० १५०अ०। "प्रमदाह्युत्पथं नेतुं कामक्रोधवशानुगम्" मनुः। "चिप्रावरोधाङ्गनमुत्पथेन गाम्" माघः

उत्पन्न त्रि० उद्+पद-क्त। उद्भूते। "औरसे पुनरुत्पन्ने तृतीयांशहराः सुताः" स्मृ० "उत्पन्नस्य पुनरनुत्पादः" न्यायप्र० उत्पन्नेन हरति उत्सङ्गा० ठञ्। औत्पन्निक तेन हारके त्रि०।

उत्पल न० उद्+पल-अच्। १नीलपद्मे, २कुमुदादौ, ३कुष्ठौषधौ च। उत्क्रान्तं पलं मांसम् अत्या० समा०। ४मांसशून्ये त्रि०। "गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानाम्" मेघ०। "यत्नोत्पलदलक्लैब्यमस्त्राण्याप्तः सुरद्विषाम्" "इन्दूत्तंसकर्णोत्पलतां प्रपेदे" "नवावतारं कमलादिवोत्पलम्" रघुः "अन्योन्यमुत्पीडयदुत्पलाक्ष्याः" कुमा०। तच्च त्रिविधं नीलं रक्तं श्वेतञ्च "भ्रंश नीलोत्पलपत्त्रधारया" शकु०।

उत्पलगन्धिक न० उत्पलस्य गन्ध इव गन्धोऽस्य इत् समा० संज्ञायां कन्। गोशीर्षाख्ये चन्दने।

उत्पलपत्र न० उत्पलस्य पत्रमिव। १तिलकभेदे स्त्रीणां स्तनादौ २नखक्षते च। हेम०। इन्दीवरस्य दले।

उत्पलपत्रक न० उत्पलपत्रमिव कन्। उत्पलपत्राकारे सुश्रुतोक्ते शस्त्रभेदे। अर्द्धधारशब्दे ३७५ पृष्ठे तल्लक्षणादि दर्शितम्। "वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च" सुश्रु०।

उत्पलभेद्यक पु० सुश्रुतोक्ते कर्णबन्धाकृतिभेदे। स च पञ्चदशविधः। तद्विभागलक्षणादि सुश्रु० दर्शितं यथा।
"तत्र समासेन पञ्चदशकर्णबन्धनाकृतयः। तद्यथा नेमिसन्धानक उत्पलभेद्यको वल्लूरक आसङ्गिमो गण्डकर्ण आहार्य्यो निर्वेधिमो व्यायोजिमः कपाटसन्धिकोऽर्द्धकपाटसन्धिकः संक्षिप्तो हीनकर्णो वल्लीकर्णो यष्टिकर्णः काकौष्ठक इति। तेषु पृथुलायतसमोभयपालिर्नेमिसन्धानकः। वृत्तायतसमोभयपालिरुत्पलभेद्यकः। ह्रस्ववृत्तसमोभयपालिर्वल्लूरकः। अभ्यन्तरदीर्घैकपालिरासङ्गिमः। बाह्यदीर्घैकपालिर्गण्डकर्णः। अपालिरुभयतोऽप्याहार्य्यः। पीठोपमपालिरुभयतः क्षीणपुत्रिकाश्रितो निर्वेधिमः। स्थूलाणुसमविषमपालिर्व्यायोजिमः। अभ्यन्तरदीर्घैकपालिरितराल्पपालिः कपाटसन्धिकः। बाह्यदीर्घैकपालिरितराल्पपालिरर्द्धकपाटसन्धिकः। तत्र दशैते कर्णबन्धविकल्पाः साध्यास्तेषां स्वनामभिरेवाकृतयः प्रायेण व्याख्याताः। संक्षिप्तादयः पञ्चासाध्यास्तत्र शुष्कशष्कुलिरुत्सन्नपालिरितराल्पपालिः संक्षिप्तः। अनधिष्ठानपालिः पर्य्यन्तयोः क्षीणमांसो हीनकर्णः। तनुविषमाल्पपालिर्वल्लीकर्णः। ग्रथितमांसस्तब्धशिरायतसूक्ष्मपालिर्यष्टिकर्णः। निर्मांससंक्षिप्ताग्राल्पशोणितपालिः काकौष्ठकपालिरिति"। "बद्धेष्वपि तु शोफदाहरागपाकपिडकास्रावयुक्ता न सिद्धिमुपयान्ति"।

उत्पलशा(सा)रिवा स्त्री० उत्पलं तदाकारपुष्पमस्त्यस्याः अर्श० अच् कर्म०। अनन्तमूलायां श्यामालतायाम्। "इक्षादनी पयस्या च लता चोत्पलसा(शा)रिवा" सुश्रु०।

उत्पलषट्क न० ज्वरातीसारचिकित्साङ्गे चक्र० उक्ते औषधभेदे। यथा "ज्वरातीसारे पेयादिक्रमः स्याल्लङ्घिते हितः। ज्वरातिसारी पेयां वा पिबेत् साम्लां शृतां नरः। पृश्निपर्णीबलाविल्वनागरोत्पलधान्यकैः"।

उत्पलावती स्त्री उत्पलमुत्पलाकारं नेत्रमस्त्यस्याः मतुप् मस्य वः संज्ञायां दीर्घः। अप्सरोभेदे" काशीख० ९अ० अप्सरोत्पत्तिवर्णने। "निर्मथ्यमानात् क्षीरोदात् पूर्व्वमप्सरसस्त्वभूः। निःसृता त्रिजगच्चेतोमोहनास्त्रं मनोभुवः। "उर्व्वशी मेनका रम्भा चन्द्ररेखा तिलोत्तमा। वपुष्मती कान्तिमती लीलावत्युत्पलावती। अलम्बुषा गुणवती स्थूलकेशी कलावती। कलानिधिर्गुणनिधिः कर्पूरतिलकोर्व्वरा। अनङ्गलतिका चापि तथा मदनमोहिनी। चकोराक्षी चन्द्रकला तथा मुनिमनोहरा। ग्रावद्रावा तपोद्वेष्ट्री चारुनासा सुकर्णिका। दारुसञ्जीवनी सुश्रीः क्रतुशुल्का शुभानना। तपःशुल्का तीर्थशुल्का दानशुल्का हिमावती। पञ्चाश्वमेधिका चैव राजसूयार्थिनी तथा। अष्टाग्निहोत्रिका तद्वद्वाजपेयशतोद्भवा। कार्य्यविकारयित्री च हरिद्रावा कुकल्पिनी। इत्याद्यप्सरसां श्रेष्ठं सहस्रं षष्टिसंयुतम्। एतस्मिन्नप्सरो लोके वसन्त्यन्या अपि स्त्रियः"।

उत्पलिनी स्त्री उत्पलानि सन्त्यस्मिन् देशे तेषां समूहो वा इनि। १उत्पलयुक्तलतायां, २कुवलयसमुदाये च। "वहधे

सा महाराज बिभ्रती रूपमुत्तमम्। अग्निहोत्रपत्निनी भीममध्येरिव शिखा शुभा" भा०व०८६अ०। २उत्पन्नयुक्ते त्रि०।

उत्पवन न० उद्+पु-ल्युट्। यज्ञियपात्रादिसंस्कारभेदे स च आश्व० गृ० १,३,२,२ सूत्रयोर्दर्शितो यथा। "पवित्राभ्यामाज्यस्योत्पवनम्" सू०। "अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशौ नानान्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां "सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति" प्रागुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीम्" सू०। "कार्यमिति शेषः। अथ किंलक्षणे? पवित्रे कथं वा उत्पवनं? कार्यमित्येतद्द्वयं निर्वक्तुमाह। प्रशस्तः सूक्ष्मच्छिन्नाग्रयोरनिष्टत्त्वर्थः। न विद्यते अन्तर्मध्ये गर्भौ ययोस्तौ तथोक्तौ प्रादेशमात्रौ कुशौ। एवंलक्षणयुक्तौ कुशौ पवित्रसंज्ञौ। नानेत्यस्यार्थम्। पवित्रे अन्तयोरसंस्पृष्टे अङ्गुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां गृहीत्वा प्रागुत्पुनाति सकृन्मन्त्रेण, द्विस्तूष्णीम्" ना०वृ०। तत्र समन्त्रकामन्त्रकव्यवस्था नारा०वृत्तौ दर्शिता पूर्व्वेषामन्त्रकमुत्पवनं विधीयते। अनेन तु समन्त्रकम्। तत्र वैतानिके अमन्त्रकं गृह्ये कर्म्मणि समन्त्रकमित्येवं विनियोगः" इति। "उत्पवनप्रकारः" शत० ब्रा०। "प्रोक्षणीषु पवित्रे भवतः। ते तत आदत्ते, ताभ्यामाज्यमुत्पुनात्येको वाऽउत्पवनस्य बन्धुर्मध्यमेवैतत्करोति। स उत्पुनाति "सवितुष्ट्वा प्रसवऽउत्पुनाम्यच्छिद्रेण सूर्यस्य रश्मिभिरिति" सोऽसावेव बन्धुः"। "अथाञ्जलिप्राभ्यां पवित्राभ्याम् प्रोक्षणीरुत्पुनाति "सवितुर्वः प्रसवऽ उत्पुनाति" एको वा उत्पवनस्य बन्धुः" १,१,३,४,१,२,१, "द्रव्याणाञ्च सर्वेषां शुद्धिरुत्पवनं स्मृतम्" मनुः "प्रादेशप्रमाणकुशद्वयाभ्यामुत्पवनेन शुद्धिः" कुल्लू०।

उत्पश्य त्रि० उद्+दृश-कर्त्तरि श। १ऊर्द्धप्रेक्षके। २उन्मुखे ३ऊर्द्धदृष्टौ हेम०।

उत्पाटन न० उद्+पट-णिच्+ल्युट्। १उन्मूलने सुश्रुतोक्ते २व्रणवेदनाभेदे च। यथा "अत ऊर्द्धं सर्व्वव्रणवेदना वक्ष्यामः तोदनभेदनताडनच्छेदनायमनमन्थनविक्षेपणचुमुचुमायननिर्द्दहनावभञ्जनस्फोटनविदारणोत्पाटनकम्पनविविधशूलविश्लेषणविकिरणपूरणस्तम्भनस्वप्नावकुञ्चनाङ्कुशिकाः सम्भवन्ति"।

उत्पाटक पु० उद्+पट-भेदने णिच्-ण्वुल्। १उन्मूलके सुश्रुतोक्ते २पाल्यामयभेदे उत्पुटशब्दे विवृतिः।

उत्पाटिका स्त्री उद्+पट-णिच् ण्वुल् टाप् अत इत्। वृक्षस्य नीरसायां त्वचि "तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः। त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः" वृ०उ०। उत्पाटनकर्त्र्यां स्त्रियां च।

उत्पात पु० उद्+पत-घञ्। १ऊर्द्धपतने। उद्+पत-ण। अकस्मादागते प्राणिनां शुभाशुभसूचके दैवनिमित्ते २भूकम्पादौ ३सुश्रुतोक्ते विस्राव्यपाल्यामयभेदे च। "पाल्यामयास्तु विस्राव्या दश ताः प्राक्निबोध तान्। परिपोटस्तथोत्पात उन्मन्थो दुःखवर्द्धनः। पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः। सौकुमार्याच्चिरोत्सृष्टः सहसाभिप्रवर्द्धिते। कर्णशोफो भवेत् पाल्यां सरुजः परिपोटवान्। कृष्णारुणनिभः स्तब्धः स वातात् परिपोटकः। गुर्व्वाभरणभारोच्चालनताडनोद्घर्षणादपि। शोफः पाल्यां भवेच्छ्यावो दाहपाकरुगन्वितः। रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः। बलाद्वर्द्धयतः कर्णं पाल्यां वायुः प्रकुप्यति। गृहीत्वा सकफं कुर्य्याच्छोफं तद्वर्णवेदनम्। उन्मन्थकः सकण्डूको विकारः कफवातजः। वर्द्धमाने यदा कर्णे कण्डूदाहरुगन्वितः। शोफो भवति पाकश्च त्वक्स्थोऽसौ दुःखवर्द्धनः। कफासृक्कृमयः कुर्य्युः सर्षपाभा विकारिणीः। लाविणीः पीडकाः पाल्यां कण्डूदाहरुगन्विताः। कफासृक्कृमिसम्भूतः स विसर्पन्नितस्ततः। लिह्यात् सशष्कुलीं पालीं परिलेहीति स स्मृतः"।

शुभाशुभसूचकोत्पातश्च दिव्यान्तरीक्षभौमभेदात् त्रिविधः। स च वृ०सं० दर्शितो यथा "यानत्रेरुत्पातान् गर्गः प्रोवाच तानहं वक्ष्ये। तेषां सङ्क्षेपोऽयं प्रकृतेरन्यत्वमुत्पातः। अपचारेण नराणामुपसर्गः पापसञ्चयाद्भवति। संसूचयन्ति दिव्यान्तरिक्षभौमास्तदुत्पाताः। मनुजानामपचारादपरक्ता देवताः सृजन्त्येतान्। तत्प्रतिघाताय नृपः शान्तिं राष्ट्रे प्रयुञ्जीत। दिव्यं ग्रहर्क्षवैकृतम् उल्कानिर्घातपवनपरिवेषाः। गन्धर्व्वपुरपुरन्दरचापादि यदान्तरिक्षं तत्। भौमं चरस्थिरभवं तच्छान्तिभिराहतं शममुपैति। नाभसमुपैति मृदुतां शाम्यति नो दिव्यमित्येके। दिव्यमपि शममुपैति प्रभूतकनकान्नगोमहीदानैः। रुद्रायतने भूमौ गोदोहात् कोटिहोमाच्च। आत्मसुतकोशवाहनपुरदारपुरोहितेषु लोकेषु। पाकमुपयाति दैवं परिकल्पितमष्टधा नृपतेः। अनिमित्तभङ्गचलनस्वेदाश्रुनिपातजल्पनादीनि। लिङ्गा-

चायतनानां नाशाय नरेशदेशानाम्। दैवतयात्राशकटाक्षचक्रयुगकेतुभङ्गपतनानि। सम्पर्य्यासनसादनसङ्गाश्च न देशनृपशुभदाः। ऋषिधर्म्मपितृब्रह्मोद्भूतं द्विजातीनाम्। यद्रुद्रलोकपालोद्भवं पशूनामनिष्टं तत्। गुरुसितशनैश्चरोत्थं पुरोधसां, विष्णुजं च लोकानाम्। स्कन्दविशाखसमुत्थं माण्डलिकानां नरेन्द्राणाम्। वेदव्यासे मन्त्रिणि विनायके वैकृतं चमूनाथे। धातरि सविश्वकर्म्मणि लोकाभावाय निर्द्दिष्टम्। देवकुमारकुमारीवनिताप्रेष्येषु वैकृतं यत् स्यात्। तन्नरपतेः कुमारकुमारिकास्त्रीपरिजनानाम्। रक्षःपिशाचगुह्यकनागानामेतदेव निर्द्देश्यम्। मासैश्चाप्यष्टाभिः सर्वेषामेव फलपाकः। दृष्ट्वा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः। स्नानकुसुमानुलेपनवस्त्रैरभ्यर्च्चयेत् प्रतिमाम्। मधुपर्केण पुरोधा भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत्। स्थालीपाकं जुहुयाद्विधिवन्मन्त्रैश्च तल्लिङ्गैः। इति विबुधविकारे शान्तयः सप्तरात्रं द्विजविबुधगणार्च्चा गीतनृत्योत्सवाश्च। विधिवदवनिपालैर्यैः प्रयुक्ता न तेषां भवति दुरितपाको दक्षिणाभिश्च वृद्धः" देवप्रतिमावैकृतम्। "राष्ट्रे यस्यानग्निः प्रदीप्यते दीप्यते च नेन्धनवान्। मनुजेश्वरस्य पीडा तस्य सराष्ट्रस्य विज्ञेया। जलमांसार्द्रज्वलने नृपतिवधः प्रहरणे रणो रौद्रः। सैन्यग्रामपुरेषु च नाशो वह्नेर्भयं कुरुते। प्रासादभवनतोरणकेत्वादिष्वनलेन दग्धेषु। तडिता वा षण्मासात् परचक्रस्यागमो नियमात्। धूमोऽनग्निसमुत्थो रजस्तमश्चाह्निजं महाभयदम्। व्यभ्रे निशि उडुनाशो दर्शनमपि चाह्नि दोषकरम्। नगरचतुष्पादाण्डजमनुजानां भयकरं ज्वलनमाहुः। धूमाग्निविस्फुलिङ्गैः शय्याम्बरकेशगैर्मृत्युः। आयुधज्वलनसर्पणस्वनाः कोशनिर्गमनवेपनानि वा। वैकृतानि यदि वायुधेऽपराण्याशु रौद्ररणसङ्कुलं वदेत्। मन्त्रैर्वाह्नैः क्षीरवृक्षात्समिद्भिर्होतव्योऽग्निः सर्षपैः सर्पिषा च। अग्न्यादीनां वैकृते शान्तिरेवं देयं चास्मिन् काञ्चनं ब्राह्मणेभ्यः"। इत्यग्निवैकृतम्। "शाखाभङ्गेऽकस्माद् वृक्षाणां निर्द्दिशेद्रणोद्योगम्। हसने देशभ्रंशं रुदिते च व्याधिबाहुल्यम्। राष्ट्रविभेदस्त्वृतौ बालवधोऽतीव कुसुमिते बाले। वृक्षात् क्षीरस्रावे सर्वद्रव्यक्षयो भवति। मद्ये वाहननाशः संग्रामः शोणिते मधुनि रोगः। स्नेहे दुर्भिक्षभयं महद्भयं निःसृते सलिले। शुष्कविरोहे वीर्य्यान्नसङ्क्षयः शोषणे च विरूढानाम्। पतितानामुत्थाने स्वयं भयं दैवजनितं च। पूजितवृक्षे ह्यनृतौ कुसुमफलं नृपवधाय निर्द्दिष्टम्। धूमस्तस्मिन् ज्वाला वा भवेन्नृपवधायैव। सर्व्वत्र तरुषु वापि जनसङ्क्षयो विनिर्द्दिष्टः। वृक्षाणां वैकृत्ये दशभिर्मासैः फलविपाकः। स्रग्गन्धधूपाम्बरपूजितस्य छत्रं निधायोपरि पादपस्य। कृत्वा शिवं रुद्रजपोऽत्र कार्य्यो रुद्रेभ्य इत्यत्र षडङ्गहोमः। पायसेन मधुना च भोजयेद्ब्राह्मणान् घृतयुतेन भूपतिः। मेदिनी निगदितात्र दक्षिणा वैकृते तरुकृते महर्षिभिः"। इति वृक्षवैकृतम्। "नालेऽब्जयवादीनामेकस्मिन् द्वित्रिसम्भवो मरणम्। कथयति तदधिपतीनां यमलं जातं च कुसुमफलम्। अतिवृद्धिः शस्यानां नानाफलकुसुमभवो वृक्षे। भवति हि यद्येकस्मिन् परचक्रस्यागमो नियमात्। अर्द्धेन यदा तैलं भवति तिलानामतैलता वा स्यात्। अन्नस्य च वैरस्यं तदा च विन्द्याद्भयं सुमहत्। विकृतकुसुमं फलं वा ग्रामादथवा पुराद्बहिः कार्य्यम्। सौम्योऽत्र चरुः कार्य्यो निर्वाप्यो वा पशुः शान्त्यै। शस्ये च दृष्ट्वा विकृतिं प्रदेयं तत् क्षेत्रमेव प्रथमं द्विजेभ्यः। तस्यैव मध्ये चरुमत्र भौमं कृत्वा न दोषान् समुपैति तज्जान्"। इति शस्यवैकृतम्। "दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम्। रोगो ह्यनृतुभवायां नृपवधोऽनभ्रजातायाम्। शीतोष्णविपर्य्यासे नो सम्यगृतुषु च सम्प्रवृत्तेषु। षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च। अन्यर्त्तौ सप्ताहं प्रबन्धवर्षे प्रधाननृपमरणम्। रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः। धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विन्द्यात्। अङ्गारपांशुवर्षे विनाशमायाति तन्नगरम्। उपला विना जलधरैर्विकृता वा प्राणिनो यदा दृष्टाः। छिद्रं चाप्यतिवृष्टौ शस्यानामीतिसञ्जननम्। क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णवारिणां वर्षे। देशविनाशो ज्ञेयोऽसृग्वर्षे चापि नृपयुद्धम्। यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा। देशस्य तदा सुमहद्भयमायातं विनिर्द्देश्यम्। व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथवा रात्रौ। प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत्। सूर्य्येन्दुपर्जन्यसमीरणानां योगः कृतो वृष्टिविकारकाले। धान्यान्नगोकाञ्चनदक्षिणाश्च देयास्ततः शान्तिमुपैति पापम्"। इति वृष्टिवैकृतम्। "अपसर्पणं नदीनां नगरादचिरेण शून्यतां कुरुते। शोषश्चाशोष्याणामन्येषां वा ह्रदादीनाम्। स्नेहासृङ्मांसवहाः

कङ्कलकलुषाः प्रतीपगाश्चापि । परचक्रस्यागमनं नद्यः कथयन्ति षण्मासात् । ज्वलाधूमक्वाथा रुदितोत्क्रुष्टानि चैव कूपानाम् । गीतप्रजल्पितानि च जनमरकाय प्रदिष्टानि । तोयोत्पत्तिरखाते गन्धरसविपर्यये च तोयानाम् । सलिलाशयविकृतौ वा महद्भयं तत्र शान्तिरियम् । सलिलविकारे कुर्य्यात् पूजां वरुणस्य वारुणैर्मन्त्रैः । तैरेव च जपहोमं शुभमेवं पापमुपयाति" । इति जलवैकृतम् । "प्रसवविकारे स्त्रीणां द्वित्रिचतुःप्रभृतिसम्प्रसूतौ वा । हीनातिरिक्तकाले च देशकुलसंक्षयो भवति । वडवोष्ट्रमहिषगोहस्तिनीषु यमलोद्भवे मरणमेषाम् । षण्मासात् सूतिफलं शान्तौ श्लोकौ च गर्गोक्तौ । नार्य्यः परस्य विषये त्यक्तव्यास्ता हितार्थिना । तर्पयेच्च द्विजान् कामैः शान्तिं चैवात्र कारयेत् । चतुष्पदाः स्वयूथेभ्यस्त्यक्तव्याः परभूमिषु । नगरं स्वामिनं यूथमन्यथा हि विनाशयेत्" । इति प्रसववैकृतम् । "परयोनावभिगमनं भवति तिरश्चामसाधु धेनूनाम् । उक्षाणो वान्योऽन्यं पिबति श्वा वा सुरभिसुतम् । मासत्रयेण विन्द्यात् तस्मिन्निःसंशयं परागमनम् । तत्प्रतिघातायैतौ श्लोकौ गर्गेण निर्दिष्टौ । त्यागो विवासनं दानं तस्याशु शुभं भवेत् । तर्पयेद् ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् । स्थालीपाकेन धातारं पशुना च पुरोहितः । प्राजापत्येन मन्त्रेण यजेद्बहुदक्षिणम्" । इति चतुष्पादवैकृतम् । "यानं वाहवियुक्तं यदि गच्छेन्न व्रजेच्च वाहयुतम् । राष्ट्रभयं भवति तदा चक्राणां सादभङ्गे च । अनभिहततूर्य्यनादः शब्दो वा नेषां ताडितेषु यदि नायात् । व्युत्पत्तौ वा परागमो नृपतिमरणं वा । गीतरवतूर्य्यनादा नभसि यदा वा चरस्थिरान्यत्वम् । मृत्युस्तदा गदा वा विस्वरतूर्य्ये पराभिभवः । गोलाङ्गलयोः सङ्गे दर्वीशूर्पाद्युपस्करविकारे । क्रोष्टुकनादे च तथा शस्त्रभयं मुनिवचश्चेदम् । वायव्येष्वेषु नृपतिर्वायुं सक्तुभिरर्च्चयेत् । आ वायोरिति पञ्चर्चो जप्याश्च प्रयतैर्द्विजैः । ब्राह्मणान् परमान्नेन दक्षिणाभिश्च तर्पयेत् । बहुदक्षिणा होमाः कर्त्तव्याश्च प्रयत्नतः" । इति वायव्यवैकृतम् । "पुरपक्षिणो वनचरा वन्या वा निर्भया विशन्ति पुरम् । नक्तं वा दिवसचराः क्षपाचरा वा चरन्त्यहनि । सन्ध्याद्वयेऽपि मण्डलमाबध्नन्तो मृगा विहङ्गा वा । दीप्तायां दिश्यथवा क्रोशन्तः संहता भयदाः । श्वानः प्ररुदन्त इव द्वारे वाशन्ति जम्बुका दीप्ताः । प्रविशेन्नरेन्द्रभवने कपोतकः कौशिको यदि वा । कुक्कुटरुतं प्रदोषे हेमन्तादौ च कोकिलालापाः । प्रतिलोममण्डलचराः श्येनाद्याश्चाम्बरे भयदाः । गृहचैत्यतोरणेषु द्वारेषु च पक्षिसङ्घसम्पाताः । मधुवल्मीकाम्भोरुहसमुद्भवाश्चापि नाशाय । श्वभिरस्थिशवावयवप्रवेशनं मन्दिरेषु मरकाय । पशुशस्त्रव्याहारे नृपमृत्युर्मुनिवचश्चेदम् । मृगपक्षिविकारेषु कुर्य्याद्धोमान् सदक्षिणान् । देवाः कपोत इति च जप्तव्याः पञ्चभिर्द्विजैः । सुदेवा इति चैकेन देया गावश्च दक्षिणा । जपेच्छाकुनसूक्तं वा मनोवेदशिरांसि च" । इति मृगपक्ष्यादिवैकृतम् । "शक्रध्वजेन्द्रकीलस्तम्भद्वारप्रपातभङ्गेषु । तद्वत्कपाटतोरणकेतूनां नरपतेर्मरणम् । सन्ध्याद्वयस्य दीप्तिर्धूमोत्पत्तिश्च कानने ऽनग्नौ । छिद्राभावे भूमेर्द्दरणं कम्पश्च भयकारी । पाषण्डानां नास्तिकानां च भक्तः साध्वाचारप्रोज्झितः क्रोधशीलः । ईर्ष्युः क्रूरो विग्रहासक्तचेता यस्मिन् राजा तस्य देशस्य नाशः । प्रहर हर छिन्धि भिन्धीत्यायुधकाष्ठाश्मपाणयो बालाः । निगदन्तः प्रहरन्ते तत्रापि भयं भवत्याशु । अङ्गारगैरिकाद्यैर्विकृतप्रेताभिलेखनं यस्मिन् । नायकचित्रितमथ वा क्षये क्षयं याति न चिरेण । लूतापटाङ्गशबलं न सन्ध्ययोः पूजितं कलहयुक्तम् । नित्योच्छिष्टस्त्रीकं च यद्गृहं तत्क्षयं याति । दृष्टेषु यातुधानेषु निर्दिशेन्मरकमाशु सम्प्राप्तम् । प्रतिघाताय तेषां गर्गः शान्तिं चकारेमाम् । महाशान्त्योऽथ बलयो भोज्यानि सुमहान्ति च । कारयेत महेन्द्रं च माहेन्द्रीभिः समर्च्चयेत्" । इति शक्रध्वजेन्द्रकीलादिवैकृतम् । "नरपतिदेशविनाशे केतोरुदये ऽथ वा ग्रहेऽर्केन्द्वोः । उत्पातानां प्रभवः स्वर्त्तुभवश्चाप्यदोषाय । ये च न दोषान् जनयन्त्युत्पातास्तानृतुस्वभावकृतान् । ऋषिपुत्रकृतैः श्लोकैर्विद्यादेतैः समासोक्तैः । वज्राशनिमहीकम्पसन्ध्यानिर्घातनिःस्वनाः । परिवेषरजोधूमरक्तार्कास्तमनोदयाः । द्रुमेभ्योऽन्नरसस्नेहबहुपुष्पफलोद्गमाः । गोपक्षिमदवृद्धिश्च शिवाय मधुमाधवे । तारोल्कापातकलुषं कपिलार्केन्दुमण्डलम् । अनग्निज्वलनस्फोटधूमरेण्वनिलाहतम् । रक्तपद्मारुणं सान्ध्यं नभः क्षुब्धार्णवोपमम् । सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् । शक्रायुधपरीवेषविद्युच्छुष्कविरोहणम् । कम्पोद्वर्त्तनवैकृत्यं रसनं दरणं क्षितेः । सरोनद्युदपानानां वृद्ध्यूर्द्ध्वतरणप्लवाः । सरणं चाद्रिगेहानां वर्षासु न भयावहम् । दिव्यस्त्रीभूतगन्धर्वविमानाद्भुतदर्शनम् । खचरताराणां दर्शन

दर्शनं च दिवाम्बरे। गीतवादित्रनिर्घोषा वनपर्वतसानुषु। सस्यवृद्धिरपां हानिरपापाः शरदि स्मृताः। शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम्। रक्षोयक्षादिसत्त्वानां दर्शनं वागमानुषी। दिशो धूमान्धकाराश्च सनभोवनपर्वताः। उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः। हिमपातानिलोत्पाता विरूपाद्भुतदर्शनम्। कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम्। चित्रगर्भोद्भवाः स्त्रीषु गोऽजाश्वमृगपक्षिषु। पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः। ऋतुस्वभावजा ह्येते दृष्टाः स्वर्तौ शुभप्रदाः। ऋतोरन्यत्र चोत्पाता दृष्टास्ते भयदारुणाः। उन्मत्तानां च या गाथाः शिशूनां भाषितं च यत्। स्त्रियो यच्च प्रभाषन्ते तस्य नास्ति व्यतिक्रमः। पूर्वं चरति देवेषु पश्चाद्गच्छति मानुषान्। नाचोदिता वाग्वदति सत्या ह्येषा सरस्वती। उत्पातान् गणितविवर्जितोऽपि बुद्ध्वा विख्यातो भवति नरेन्द्रवल्लभश्च। एतन्मुनिवचनं रहस्यमुक्तं यज्ज्ञात्वा भवति नरस्त्रिकालदर्शी" ४६अ०। "दिव्यान्तरिक्षाश्रयमुक्तमादौ मया फलं शस्तमशोभनं च। प्रायेण चारेषु समागमेषु युद्धेषु मार्गादिषु विस्तरेण। भूयो वराहमिहिरस्य न युक्तमेतत् कर्तुं समासकृदसाविति तस्य दोषः। तज्ज्ञैर्न वाच्यमिदमेव फलानुगीतिर्यद्बर्हिचित्रकमिति प्रथितं वराङ्गम्। स्वरूपमेव तस्य तत् प्रकीर्तितानुकीर्तनम्। ब्रवीम्यहं न चेदिदं तथापि मेऽत्र वाच्यता। उत्तरवीथिगता द्युतिमन्तः क्षेमसुभिक्षशिवाय समस्ताः। दक्षिणमार्गगता द्युतिहीनाः क्षुद्भयतस्करमृत्युकरास्ते। कोष्ठागारगते भृगुपुत्रे पुष्यस्थे च गिराम्प्रभविष्णौ। निर्वैराः क्षितिपाः सुखभाजः संहृष्टाश्च जना गतरोगाः। पीडयन्ति यदि कृत्तिकां मघां रोहिणीं श्रवणमैन्द्रमेव वा। मोज्झ्य सूर्यमपरे ग्रहास्तदा पश्चिमा दिगनयेन पीड्यते। प्राच्यां चेद्भुजवदवस्थिता दिनान्ते प्राच्यानां भवति हि विग्रहो नृपाणाम्। मध्ये चेद्भवति हि मध्यदेशपीडा रूक्षैस्तैर्न तु रुचिरैर्मयूखवद्भिः। दक्षिणां ककुभमाश्रितैस्तु तैर्दक्षिणापथपयोमुचां क्षयः। हीनरूक्षतनुभिश्च विग्रहः स्थूलदेहकिरणान्वितैः शुभम्। उत्तरमार्गे स्पष्टमयूखाः शान्तिकरास्ते तन्नृपतीनाम्। सूक्ष्मशरीरा भस्मसवर्णा दोषकराः स्युर्देशनृपाणाम्। नक्षत्राणां तारकाः सग्रहाणां धूमज्वालाविस्फुलिङ्गान्विताश्चेत्। आलोकं वा निर्निमित्तं न यान्ति याति ध्वंसं सर्वलोकः सभूपः। दिवि भाति यदा तुहिनांशुयुगं द्विजवृद्धिरतीव तदाशु शुभा। तदनन्तरवर्णरणोऽर्कयुगे जगतः प्रलयश्च ततःप्रभृति। मुनीनभिजितं ध्रुवं मघवतश्च भं संस्पृशन् शिखी घनविनाशकृत् कुशलकर्महा शोकदः। भुजङ्गमथ संस्पृशेद्भवति वृष्टिनाशो ध्रुवं क्षयं व्रजति विद्रुतो जनपदश्च बालाकुलः। प्राग्द्वारेषु चरन् रविपुत्रो नक्षत्रेषु करोति च वक्रम्। दुर्भिक्षं कुरुते भयदम्यं मित्राणां च विरोधमवृष्टिम्। रोहिणीशकटमर्कनन्दनो यदि भिनत्ति रुधिरोऽथवा शिखी। किं वदामि यदनिष्टसागरे जगदशेषमुपयाति सङ्क्षयम्। उदयति सततं यदा शिखी चरति भचक्रमशेषमेव वा। अनुभवति पुराकृतं तदा फलमशुभं सचराचरं जगत्। धनुःस्थायी रूक्षो रुधिरसदृशः क्षुद्भयकरो बलोद्योगं चेन्दुः कथयति जयं ज्यास्य च यतः। अवाक्शृङ्गो गोघ्नो निधनमपि सस्यस्य कुरुते ज्वलन्धूमायन् वा नृपतिमरणायैव भवति। स्निग्धः स्थूलः समशृङ्गो विशालस्तुङ्गश्चोदग्विचरन्नागवीथ्याम्। दृष्टः सौम्यैरशुभैर्विप्रयुक्तो लोकानन्दं कुरुतेऽतीव चन्द्रः। पितृमैत्रपुरुहूतविशाखात्वाष्ट्रमेत्य च युनक्ति शशाङ्कः। दक्षिणेन न शुभो हितकृत्स्याद् यद्युदक् चरति मध्यगतो वा। परिघ इति मेघरेखा या तिर्यग्भास्करोदयेऽस्ते वा। परिधिस्तु प्रतिसूर्यो दण्डस्त्वृजुरिन्द्रचापनिभः। उदयेऽस्ते वा भानोर्ये दीर्घा रश्मयस्त्वमोघास्ते। सुरचापखण्डमृजु यद् रोहितमैरावतं दीर्घम्। अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्। तेजःपरिहानिमुखाद् भानोरर्द्धोदयं यावत्। तस्मिन् सन्ध्याकाले चिह्नैरेतैः शुभाशुभं वाच्यम्। सर्वैरेतैः स्निग्धैः सद्यो वर्षं भयं रूक्षैः। अच्छिन्नः परिघो वियद्विमलं श्यामा मयूखा रवेः स्निग्धाद्दीधितयः सितं सुरधनुर्विद्युच्च पूर्वोत्तरा। स्निग्धो मेघतरुर्दिवाकरकरैरालिङ्गितो वा यदा वृष्टिः स्याद्दि वार्कमस्तसमये मेघो महांश्छादयेत्। खण्डो वक्रः कृशो ह्रस्वः काकाद्यैर्वा चिह्नैर्विद्धः। यस्मिन्देशे रूक्षश्चार्कस्तत्रभावः प्रायो राज्ञः। वाहिनीं समुपयाति पृष्ठतो मांसभुक् खगगणो युयुत्सतः। यस्य तस्य बलविद्रवो महान् अग्रगैस्तु विजयो विहङ्गमैः। भानोरुदये यदि वास्तमये गन्धर्वपुरप्रतिमा ध्वजिनी। विम्बं निरुणद्धि तदा नृपतेः प्राप्तं समरं सभयं प्रवदेत्। शस्ता शान्तद्विजमृगघुष्टा सन्ध्या स्निग्धा मृदुपवना च। पांशुध्वस्ता

जनपदनाशं धत्ते रुक्षा रुधिरनिभा वा। यदिह रवेश्च कथितं मुनिभिस्तदखिलं सर्वं मया निगदितं शुभरक्षणार्थम्। स्तुत्यापि कोकिलरुतं कलिभुग्विरौति यस्तत्स्वभावकृतमस्य पिकं न जेतुम्" ३७अ०। एवमन्येऽप्युत्पाताः सन्ति विस्तरभयान्नोक्ता आकरे द्रष्टव्याः उत्पातविशेषे मङ्गलकर्मवर्ज्जनकालव्यवस्था रघुनन्दनेन दर्शिता यथा "गर्गः। दाहे दिशाञ्चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे वा। धूमे तथा पांशुकरप्रपाते न कारयेन्माङ्गलिकादि कार्य्यम्। उल्कापाते च निर्घाते तथैवाकालवर्षणे। छिद्रे सूर्य्ये विनिर्दिष्टे न कुर्य्यान्मङ्गलक्रियाम्। धूमकेतौ समुत्पन्ने ग्रहणे चन्द्रसूर्य्ययोः। ग्रहाणां सङ्गरे चैव न कुर्य्यान्मङ्गलक्रियाम्। द्विसूर्य्यं वा त्रिसूर्य्यं वा दृष्ट्वा गगनमण्डले। रात्रौ शक्रधनुश्चैव मङ्गलानि विवर्जयेत्। दिग्दाहे दिनमेकञ्च ग्रहे सप्त दिनानि च। भूमिकम्पे च सम्भूते त्र्यहाणि परिवर्जयेत्। उल्कापाते च त्रितयं धूमे पञ्च दिनानि च। वज्रपाते दिनमेकं वर्जयेत् सर्वकर्मसु"। भोजराजः "ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे। व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित्"। "ग्रहणकाले भूकम्पोल्कापातवज्रपातादिदोषसमाहारे त्रयोदशाहं ग्राह्यम्। किञ्चिदूनतत्समाहारेऽपि दशाहम्। ग्रहणाद्येकैकदोषे त्र्यहमिति" वाचस्पतिमिश्राः। अत्र स्मृतिसागरधृतवारसंग्रहे। "राज्यादिसमहाभिषेके यज्ञदानतपःसु च। होमस्वाध्याययोश्चैव वर्जयेद्दशरात्रकम्। लक्षहोमे महादाने वर्जयेत् सोमके मखे। तपःस्वाध्याययोश्चैव चिरारम्भे त्रयोदश" इति व्यवस्था अन्यत्र। "उल्कापाते भुवः कम्पे अकालवर्षगर्जिते। धूमकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः। प्रयाणन्तु त्यजेत् सप्तरात्रमतः परम्। ब्राह्मणः क्षत्रियो वैश्यस्त्यजेत् कर्म त्रिरात्रकम्। शूद्रस्त्वेकं चैकरात्रं सर्वं कर्म समाचरेत्"। पराशरः। "प्रयाणे सप्तरात्रं स्यात् त्रिरात्रं व्रतबन्धने। एकरात्रं परित्यज्य कुर्यात् पाणिग्रहं ग्रहे"। भृगुः। "राजन्यानां तु सप्ताहं ब्राह्मणानां त्र्यहन्तथा। शूद्रस्यार्द्धदिनं प्रोक्तं सर्वकार्येषु वै भृगुः"। शूद्रस्यापद्विषयम्। कर्म इत्युपलक्षणम्। ग्रहणादावप्येवमेवान्यत्र पठितत्वात्" मल०त०। पीयूषधारायां तु विशेष उक्तः। नारदः "अनिष्टे त्रिविधोत्पाते सिंहिकासुतदर्शने। सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मङ्गलम्" वशिष्ठः सर्व्वग्रासे दिनान्यष्टौ सर्व्वकार्य्येषु वर्जयेत्। षड्दिनानि त्रिभागोने अर्द्धग्रासे चतुर्द्दिनम्। चतुर्थांशे त्रिरात्रं स्यात् ग्रहणे चन्द्रसूर्य्ययोः" नारदः "उत्पातग्रहणादूर्द्धं सप्ताहं निखिलं त्यजेत्"। अङ्गिराः "सर्व्वग्रासे तु सप्ताहमर्द्धग्रासे दिनत्रयम्। त्र्यङ्गे काङ्गुलतो ग्रासे दिनमेकं तु वर्जयेत्" "अनयोर्विषयव्यवस्था देशभेदेनाचारभेदेन चावगन्तव्या" पी०धा०। अत्यावश्यककार्य्ये परिहारकालोक्तः ज्योतिर्निबन्धे "दिनानि पञ्च वशिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम्। यवनाचार्य्यस्य मते पञ्च मुहूर्त्तांश्च दूषयति"। भागुरवराहप्रदर्शितशुभोत्पातेष्विदमेव दिनं वर्ज्यम्। "शुभदोत्पातेष्व दृष्टं दिनम्" मुहू०चि० उक्तेः। एवञ्च आर्त्तादिव्यवस्थापितं विवाहे ग्रहणे एकदिनवर्ज्जनम् अत्यावश्यकविषयमापद्विषयं वा उक्तवचनजातसामञ्जस्यात्। उत्पातादिविषये विशेषः ग्रहणशब्दे वक्ष्यते "एकतालद्रुमोत्पातपवनप्रेषितो गिरिः" रघुः। "क्षोभमाशे मत्सरोत्पातवातः" माघः। "उत्पातेन ज्ञापिते च" पा०। "उत्पातगृहदृष्टञ्च" ज्यो०।

**उत्पातक** त्रि० उत्पातयति उत्पातं जनयति उद्+पत-णिच् ण्वुल्। १उत्पातजनके उद्+पत-ण्वुल्। २ऊर्द्ध्वपतनशीले च। "दंशोत्पातकमत्कुणमक्षिकामशकाहतम्"। भा० स्वर्गा० २अ०।

**उत्पाद** पु० उत्+पद-भावे घञ्। १उत्पत्तौ "दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा" या०। उत्पत्तिशब्दे विवृतिः। उत्क्षिप्तः पादोऽनेन। २उत्क्षिप्तपादे त्रि०।

**उत्पादक** पु० ऊर्द्ध्वस्थिताः पादा अस्य कप्। १अष्टपदे शरभाख्ये गजारातौ पशुभेदे तस्य पृष्ठस्थचतुश्चरणत्वादूर्द्ध्वपादत्वम्। उत्-पद-णिच्-ण्वुल्। २पितरि पु०। ३उत्पादनकर्त्तरि त्रि०। "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" "आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः" "नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि" मनुः। स्त्रियां टापि अत इत्त्वम्। उत्पादिका ४उत्पादकस्त्रियां ५हिलमोचिकायां शब्दचि० ६पूतिकायां भरतः ७देहिकानामकीटे च स्त्री त्रिका०।

**उत्पादन** न० उद्+पद-णिच्-ल्युट्। जनने उत्पत्तिकरणे "उत्पादनमपत्यस्य जातस्य पालनम् तथा" मनुः

**उत्पादशय** पु० उत्पादः ऊर्द्ध्वक्षिप्तपादः सन् शेते शी-अच्। (टिटिर) १टिट्टिभपक्षिणि हेमच०। २शिशौ च। तयोः

उत्तानपादतया शयनात्तथात्वम्। उत्पादं शयनमस्य उत्पादशयनोऽप्यत्र।

उत्पादित त्रि० उद्+पद–णिच्–कर्मणि क्त। जनिते। "अप्यनारभमाणस्य विभोरुत्पादिताः परैः" माघः।

उत्पादिन् त्रि० उद्+पद–णिनि। १उत्पत्तिमति। "सर्व्वमुत्पादि भङ्गुरम्" हितो०। उत्पादयति णिच् णिनि। २उत्पादके। "दुःखोत्पादि गृहे द्रव्यं त्यजन् प्राणकरं तथा" या०स्मृ०उभयतः स्त्रियां ङीप्।

उत्पाद्य अव्य०उद्+पद–णिच्–ल्यप्। १जनयित्वेत्यर्थे "क्रीत्वा स्वयं वाप्युत्पाद्य" मनुः। "पुत्रानुत्पाद्य संस्कृत्य वृत्तिं चैषां प्रकल्पयेत्" स्मृतिः। कर्म्मणि यत्। जननीये त्रि०। "लावण्य उत्पाद्य इवास यत्नः" कुमा०

उत्पाली स्त्री उन्नतिं पालयति पाल–अण् गौरा०ङीष्। आरोग्ये शब्दच०।

उत्पाव पु० उद्+पू "उदि श्रयतियौतिपूद्रुवः" पा०अपं बाधित्वा घञ्। उत्पवने यज्ञियपात्रादेः संस्कारभेदे

उत्पिञ्जर(ल) त्रि०उद्+पिजि-कलन् वा लस्य रः। अत्यर्थाकुले। "कुर्व्वाणमुत्पिञ्जरजातपत्रैः" माघः। "उत्पिञ्जरीभूतदलैरित्यर्थः रलयोरभेदः" मल्लि०। "तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमम्" भा०द्रो०२५अ०।

उत्पिब त्रि० उद्+पा–श। उद्धृत्य पायिनि।

उत्पिष्ट त्रि० ऊर्द्धतः पिष्टं उद्+पिष–क्त। ऊर्द्धतः क्षत भेदे १उन्मथिते। "सन्धिमुक्तमुत्पिष्टं विश्लिष्टं विवर्त्तितमवक्षिप्तमतिक्षिप्तं तिर्य्यक्क्षिप्तमिति षड्विधम्" सुश्रुतोक्ते षड्विधसन्धिमुक्तरूपेऽस्थिभङ्गे तत् कार्य्यं तत्रोक्तं "विशेषेणोत्पिष्टे सन्धावुभयतः शोफवेदनाप्रादुर्भावो विशेषतस्तत्र नानाप्रकारा वेदना रात्रौ प्रादुर्भवन्ति"।

उत्पीड त्रि० उद्–पीड–अच्। संघर्षेण १पीडके २संबाधके च। भावे घञ्। ३उन्मथने। "स तु बाणवरोत्पीडाद्विस्रवल्लस्फुरत्ययम्" भा०व०२१अ०। "आशाङ्क्लीं नयनसलिलोत्पीडरुद्धावकाशाम्" मेघ०। ल्युट्। उत्पीडन तत्र न०। अ। तत्रैव स्त्री। शतृ उत्पीडयत् उत्पीडाकारके। "अन्योन्यमुत्पीडयदुत्पलाक्ष्याः" कुमा०। स्त्रियां ङीप् [पुच्छयते।

उत्पुच्छ नामधातुः पुच्छमुदस्यति उद्+पुच्छ+णिङ् उत्-

उत्पुच्छ पु० उत्क्षिप्तः पुच्छोऽनेन प्रा०ब० वा क्षिप्तलोपः। ऊर्द्धक्षिप्तपुच्छे पशौ।

उत्पुट त्रि० उद्घाटितं पुटमस्य प्रा०ब० वा घाटितलोपः। पुटन्मुक्ते प्रफुल्ले। तेन निर्वृत्तम् सङ्कलादि०अण्। औत्पुट तेन निर्वृत्ते त्रि०। तेन हरति उत्सङ्गादि० ठञ् औत्पुटिक तेन हारके त्रि० स्त्रियां ङीप्।

उत्पुटक पु० उद्+पुट–क्वुन्। सुश्रुतोक्ते पाल्यामयद्रवभेदे। "अतऊर्द्धं नामलिङ्गं वक्ष्ये पाल्यामयद्रवान्। उत्पाटकश्चोत्पुटकः श्यावः कण्डूयुतोऽभयम्। अवमन्थः सकण्डूको ग्रन्थिको जम्बुलस्तथा। स्रावी च दाहवांश्चैव शृणु तेषां क्रमशः क्रियाम्"। लेपमुत्पुटके दद्यात् तैलमेभिश्च साधितम्" सुश्रु०।

उत्पुत त्रि० उद्+पू–क्त। पवित्रादिना कृतोत्पवनसंस्कारे पात्रादौ। इट्पक्षे उत्पवितोऽप्यत्र त्रि०। तेन हरति उत्सङ्गा० अण्। औत्पुत तेन हारके त्रि०।

उत्पेय त्रि० उद्धृत्य पेयम्। उद्धृत्यपेये जलादौ।

उत्प्रभ त्रि० उद्गता प्रभाऽस्य प्रा०ब० गतलोपः। १उद्गतप्रभान्विते २उदर्च्चिषि वह्नौ पु०हेम०।

उत्प्राशन न० उद्धृत्य प्राशनम्। उद्धृत्य भोजने

उत्प्रास पु० उद्+प्र+अस–दीप्त्यादिषु घञ्। उपहासे। "प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा" सा०द०।

उत्प्रेक्षण न० उद्+प्र–ईक्ष–भावे ल्युट्। १उद्भावने। २लिङ्गादिना कस्यचित् पदार्थस्य सम्भावने। ३ऊर्द्ध्वदृष्टौ च। णिनि। उत्प्रेक्षिन् तत्कारके त्रि०स्त्रियां ङीप्

उत्प्रेक्षा स्त्री उद्+प्र+ईक्ष–अ। उद्भावने अर्थालङ्कारभेदे अलङ्कारशब्दे पृष्ठे ३९५ विवृतिः। [मज्जने

उत्प्लवन न० उद्+प्लु–ल्युट्। उपरि प्लवने (भासा) अनि

उत्प्लवा स्त्री उत्प्लवति उद्+प्लु–अच्। नौकायां शब्दच०

उत्फाल पु०उद्+फल–घञ्। १उल्लम्फे २ऊर्द्धतोविसरणे च

उत्फुल्ल त्रि० उद्+फल–क्त नि०। १विकसिते दलानामन्योन्यविश्लेषेण प्रकाशिते "उत्फुल्लनीलनलिनोदरतुल्यभासः" माघः। २उत्ताने त्रि० ३स्त्रीणां गुह्येन्द्रिये न० मेदि०।

उत्स पु०उनत्ति जलेन उन्द्–स किच्च नलोपः। पर्व्वतादेः १स्वच्छजलस्य पातस्थाने। २जलप्रवाहे च "आसिञ्चदुत्सम् गोतमाय तृष्णजे" ऋ०१,५४,५, "विष्णोः पदे परमे मध्व उत्सः" ऋ० १,५४,५ वव्ध साकं सिषिचुरुत्समुद्रिणम्" २,२४,४, "उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवान्" अथ०६,१०६,१, उत्से भवः उत्सा० अञ्। औत्स तद्भवे त्रि०। २ऋषिभेदे ततः गोत्रे अश्वादि०फञ् औत्सायन तद्गोत्रे पुंस्त्री० स्त्रियां ङीप्

उत्सक्थ त्रि० ऊर्द्ध्वं गते सक्थिनी यस्य ब स० स्त्रियां ङीप्। जङ्घोत्क्षेके "उत्सक्थ्या अवगुदं धेहि समञ्जि चारया वृषन्" यजु० २३,२१।

उत्सङ्ग पु० उत्सज्यते सजतेऽत्र उद्+सन्ज आधारे घञ्। १मध्यभागे "दरीगृहोत्सङ्गनिषक्तभासः" कुमा० "दृषदो वासितोत्सङ्गाः" रघुः। "ततः कृतोत्सङ्गवलिक्रियाभिः" रघुः "शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम्" मेघ०। २क्रोड़े "तस्योत्सङ्गप्रणयिन इव स्रस्तगङ्गादुकूलाम्" "उत्सङ्गे वा मलिनवसने सौम्य! निक्षिप्य वीणाम्" मेघ० ऊर्द्धं तया सजतेऽत्राधारे घञ्। ३उपरिभागे "सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः" मेघ० उत्क्रान्तः सङ्गम् अत्या० स०। ४सन्न्यासिनि सङ्गरहिते तत्त्वज्ञे प्रा०स०। ५ऊर्द्धतः संसर्गे च।

उत्सङ्गादि हरतीत्यर्थे ठञ्निमित्ते "हरत्युत्सङ्गादिभ्यः" पा० उक्ते शब्दसमूहे स च गणः उत्सङ्ग उडुप उत्पुत उत्पन्न उत्पुट पिटक पिटाक" औत्सङ्गिकः सि०कौ०।

उत्सङ्गिन् त्रि० उत्सङ्ग ऊर्द्धसंसर्गः अस्त्यस्य इनि स्त्रियां ङीप्। ऊर्द्धसंसर्गयुक्ते।

उत्सङ्गित त्रि० उत्सङ्गिनः उत्संसृष्टाः कृताः उत्सङ्गिन्+तत्करोतीत्यर्थे णि–कर्मणि क्त। संसर्गयुक्तीकृते। "उत्सङ्गितोत्तुङ्गतरङ्गबाहुः" माघः।

उत्सञ्जन न० उद्+सन्ज–णिच्–ल्युट्। १ऊर्द्धतः संयोजने उत्क्षेपणे। "सम्माननोत्सञ्जनाचार्यकरणेत्यादि" पा० तत्र उत्सञ्जने "दण्डमुत्सञ्जयति उत्क्षिपतीत्यर्थः" सि०कौ०।

उत्सत्ति स्त्री उद्+सद–क्तिन्। उच्छेदे।

उत्सधि पु० उत्सः जलप्रवाहो धीयतेऽस्मिन् धा–कि उप० स०। जलप्रवाहवति कूपादौ "अक्षैरद्धं तुतुद उत्सधिं पिबध्यै" ऋ०१,८८,४।

उत्सन्न त्रि० उद्–सद–क्त। १उच्छिन्ने समूलनष्टे २नष्टे च "मकरध्वजइवोत्सन्नविग्रहः" काद० ३अत्यायाससाध्ये च "उत्सन्नयज्ञ इव वा एष यच्चातुर्मास्यानि" शत०ब्रा०२,५,२,४८, दर्शपौर्णमासवच्चातुर्मास्यानामनुष्ठानबाहुल्याभावादुत्सन्नयज्ञत्वम्" भा० तेन हरति उत्सङ्गा० ठञ्। औत्सन्निक तेन हारके त्रि०।

उत्सर्ग पु० उद्+सृज–कर्मणि घञ्। १सामान्यविधाने, तस्याप्रति बाधके सर्व्वत्र प्रसृतत्वात्तथात्वम्। "कश्चिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" पात०भा०। "अपवादैरिवोत्सर्गाः–कृतव्यावृत्तयः परैः" कुमा० २न्याय्ये। भावे घञ्। ३अपानवायोर्व्यापारे विडुत्सर्गः ४त्यागे ५दाने "तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च" मनुः "श्रीवत्सयोत्सर्गविनीतवेषाः" कुमा० ६समाप्तौ व्रतोत्सर्गः। "उत्सर्गमेके सुव्योपयुक्तत्वात्" आश्व०श्रौ०१,४,२१,० "सोमोत्सर्गा वैकस्याङ्गः" कात्या०२४,७,२५, ७वार्षिकवेदपाठसमाप्तौ। वेदाध्ययनोत्सर्गकालश्च मिता० दर्शितो यथा "पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः" या० "पौषमासस्य रोहिण्यामष्टकायां ग्रामाद्बहिर्जलसमीपे छन्दसां वेदानां स्वगृह्योक्तविधिना उत्सर्गं कुर्य्यात्। यदा पुनर्भाद्रमासे उपाकर्म तदा माघशुक्लस्य प्रथमदिवसे उत्सर्गं कुर्य्यात्। यथोक्तं मनुना "पौषे तु छन्दसां कुर्य्याद्बहिरुत्सर्जनम्बुधः। माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनीति"। तदनन्तरमाक्षिणीमहोरात्रं वा विरम्य शुक्लपक्षेषु वेदान् कृष्णे त्वङ्गान्यधीयीत। यथाह मनुः "यथाशास्त्रन्तु कृत्वैवमुत्सर्गं छन्दसां बहिः। विरमेत्पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम्। अत ऊर्द्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि तु सर्वाणि कृष्णपक्षेषु सम्पठेदिति"। अत्रानध्यायमाह या० "त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु। उपाकर्मणि चोत्सर्गे स्वशाखश्रोत्रिये तथा" "उत्सर्गे मनूक्तपक्षिण्यहोरात्राभ्यां सहास्य विकल्पः" इति मिता० "ओंपूर्वा व्याहृतीः सावित्रीञ्च त्रिरभ्यस्य वेदादिमारभेत्" "तथोत्सर्गे" आश्व०गृ०३,५,१२,१३, उत्सर्जनशब्दे विवृतिः।

उत्सर्गिन् त्रि० उत्सर्गोऽस्त्यस्य इनि। उत्सर्गयुक्ते। "अयनमुत्सर्गिणाम्" २४,४,२२, त्रिवृदभिप्लवेषु एकस्याहेनाग्निष्टोमस्योत्सर्गस्तस्योत्सर्गित्वम्" कर्कः। अयनं गवामयनम्।

उत्सर्जन न० उद्+सृज–ल्युट्। १दाने, २त्यागे, च। वेदोत्सर्गरूपे पक्षात्मकर्त्तव्ये वैदिकानां ३क्रियाभेदे स च आश्व० गृ० उक्तो यथा "मध्यमाष्टकायामेताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोऽभ्यवयन्ति" २०सू०। "मध्यमाष्टकाग्रहणं पक्षान्तोपलक्षणार्थम्"। तेन तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थः शाखान्तरे चैवं दृश्यते। "एताभ्यो देवताभ्यो हुत्वा सावित्र्यादिभ्य आज्यम्, इत्युक्तम्। अग्निमीड इत्यादिभ्योऽन्नेन हुत्वा स्थालीपाकप्रकरणकल्पाद्येनेति यत्नेन ब्रुवन् स्वकृमिदमन्नं यावच्चमिति दर्शयति, ततः स्विष्टकृत्, ततो वेदारम्भ-

वम्। ततो होमशेषं समाप्यापोऽवगाहन्त इत्यर्थः नारा० "एता एव तद्देवतास्तर्पयन्ति" २१ सू०। "स्नात्वा सावित्र्याद्या नव अग्निमीड इत्याद्याश्च विंशतिं तर्पयन्तीत्यर्थः। ऋग्देवता आदिश्य तर्पयेयुः। द्वितीयान्तं कृत्वा तर्पयामीत्येकात्रिंशद्वाक्यानि कृत्वा तावत्कृत्वस्तर्पयेयुः" ना०वृ०।"आचार्यान् ऋषीन् पितॄंश्च" २२सू०। यच्च ब्रह्मयज्ञाङ्गं तर्पणकं तदेतदङ्गत्वेनेदानीमपि कार्यमित्यर्थः। चशब्दो देवतातर्पण समुच्चयार्थः। तेन प्रजापत्याद्या अपि तर्प्याः। देवतास्तर्पयन्तीत्यत्र देवताग्रहणमत्रापि समुच्चयार्थम् क्रमश्च तन्त्रोक्त एव" ना० वृ०। "एतदुत्सर्जनम्" २३सू०। "अस्येयं संज्ञा। ततः षण्मासान् षडङ्गान्यधीयीत। षण्मासानधीयीतेत्यारभ्य एतमन्ता धर्मा षडङ्गाध्ययन एवेत्याहुरेके। अन्ये त्वविशेषेणेत्याहुः" ना० वृ०। उत्सर्गशब्दे दर्शितेन कालेनास्य विकल्पः शाखिभेदेन व्यवस्थाप्यः "पौषे तु छन्दसां कुर्याद्बहिरुत्सर्जनं बुधः" मनुः। [हूने च

**उत्सर्पण** न० उद्+सृप्–ल्युट्। १उत्सृत्य पुरतोगतौ, २उल्ल-

**उत्सर्पिन्** त्रि० उत्सर्पति णिनि। उत्पतिष्णौ "पयोधरोत्सर्पिषु शीर्य्यमाणः" रघुः। "उत्सर्पिभिः पांशुमिवांशुजालैः" किरा० २अतिशयिते स्त्रियां ङीप्। "उत्सर्पिणी खलु महतां प्रार्थना" शकु० सा च हेमचन्द्रोक्ते कालचक्रान्तर्गते ३कालगतिभेदे "सागर कोटिकोटीनां विंशत्या स समाप्यते। अवसर्पिण्यां षड़रा उत्सर्पिण्यां तएव विपरीताः। एवं द्वादशभिररैर्विवर्त्तते कालचक्रमिदम्" हेम०। [पद्मायां शवि जटा०

**उत्सर्य्या** स्त्री उत्+सृ–यत्। १ऋतुमत्यां गर्भयोग्यावस्था-

**उत्सव** पु० उद्+सू–अप्। आनन्दजनकव्यापारे विवाहादौ। "ऋद्धिमन्तमधिकर्द्धिरुत्सवः पूर्व्वमुत्सवमपोहदुत्तरः" "स कृत्वा विरतोत्सवान्" रघुः। "धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम्" "हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम्" भा० व०२०६ अ०

**उत्सवसङ्केत** पु० उत्सव आनन्दजनकः सङ्केतः स्त्रीपुंसयोः रत्यर्थमनुरागादाह्वानम् यत्र। यस्येयं स्त्रीत्वे दाम्पत्यनियमशून्ये स्त्रीपुंसयोरनुरागमात्रहेतुकस्वैरविहारशालिनि पार्व्वतीये जातिभेदे। भा०स० अर्ज्जुनस्योत्तरदिग्विजये "पौरवं युधि निर्ज्जित्य दस्यून् पर्व्वतवासिनः। गणानुत्सवसङ्केतानजयत् सप्त पाण्डवः," २६अ० अत्र नीलक०दर्शितरीत्यैव व्याख्या। तद्धर्मके प्रतीचीस्थेऽपि जातिभेदे "गणानुत्सवसङ्केतान् व्यजयत् पुरुषर्षभः" नकुलस्य प्रतीचीविजये ३१अ० "शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्" रघुः।

**उत्सादन** उद्+सद–णिच्–ल्युट्। १उत्सारणे, २उद्वर्त्तने कषाय द्रव्येण स्नेहाद्यपसारणे ३उच्छेदकरणे "उत्सादनार्थं लोकानां रात्रौ घ्नन्ति ऋषीनिह" भा० व० १०२ अ०। "उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः" भा० व०१००अ०। "न हि दैतवने किञ्चित् विद्यतेऽन्यत् प्रयोजनम्। उत्सादनमृते तेषां वनस्थानां महाद्युते!" भा० व०२३७ अ०। स्थानान्तरनयने "क्रयणवेद्यारम्भण प्रवर्ग्योत्सादनेष्या०" कात्या०१४,१,१२, "उपसदन्ते प्रवर्ग्योत्सादनम्" कात्या० १८,२,१०। उत्साद्यतेऽत्र उद्+सद–णिच् आधारे ल्युट्। महावीरादिपरित्यागदेशे। "उत्सादनदेशं गच्छन्ति सामगानानन्तरम्" कात्या० २६,७,१०,उत्सादनदेशं प्रति आगच्छन्ति उत्सादनं महावीराणां परित्यागः स यत्र देशे विहितः श्रुतौ" कर्क०

**उत्सादनीय** त्रि० उद्+सद–णिच्-कर्म्मणि अनीयर्। १उच्छेद्ये २उन्मूलनीये उद्वर्त्तनीये कषादिद्रव्ये। "कुर्य्यादुत्सादनीयानि सर्पींष्या लेपनानि" च सुश्रु०।

**उत्सादि** पु०भवाद्यर्थे "उत्सादिभ्योऽञ् पा० अञ् प्रत्ययप्रकृतिशब्दगणे। स च उत्स उदपान विकर विनद महानद महानस महाप्राण तरुण तलुन (बष्कयाऽसे) पृथिवी धेनु पङ्क्ति जगती त्रिष्टुप् अनुष्टुप् जनपद भरत उशीनर ग्रीष्म पीलुकुण(उदः स्थानदेशे) दृषदंश भल्लकीय रथन्तर मध्यन्दिन बृहत् महत् सत्वत् कुरु पञ्चाल इन्द्रावसान उष्णिह् ककुभ् सुवर्ण देव (ग्रीष्मादच्छन्दसि) औत्स तद्भवे त्रि०।

**उत्सादित** त्रि० उद्+सद–णिच्–क्त। उन्मूलिते उद्वर्त्तिते च "भद्रासनेषूपविष्टः परिधायाम्बरं लघु। सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः। उत्सादितः कषायेण बलवद्भिः सुशिक्षितैः" भा०द्रो०८२अ०।

**उत्सारक** पु० उद्+सृ–णिच्–ण्वुल्। द्वारपाले हेमच० तेन हि प्रभुद्वारतो जना दूरीक्रियन्ते इति तस्य तथा अपसारके त्रि०। [२चालने, ३स्थानान्तरकरणे च।

**उत्सारण** न० उद्+सृ–णिच्-ल्युट्। १दूरीकरणे

**उत्सारित** त्रि० उद्+सृ–णिच् क्त। दूरीकृते चालिते "गुण्यान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपान्त्यमादीन्" लीला०

**उत्साह** पु० उद्+सह–घञ्। १उद्यमे, २अध्यवसाये, कर्त्तव्य

कार्य्येषु २स्थिरतरे प्रयत्ने "उत्साहो मन्त्रमूलं स्यादिति नीतिविदां मतम्। प्रभुशक्तिर्मन्त्रमूला तस्मादुत्साहवान् भवेत्" इत्युक्ते राज्ञां ४गुणविशेषे, "चारेणोत्साहयोगेन क्रियया च कर्म्मणाम्" मनुः। "भीताविवोत्साहगुणेन सम्पद्" कुमा०। ५कल्याणे, शब्दरत्नावली ६सूत्रे, मेदिनी "कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते" सा० द० उक्तलक्षणके वीररसस्य ७स्थायिभावे। स च वीररसस्य स्थायी भावः "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमस्तथा" स्थायिनो विभज्य "उत्तमप्रकृतिर्वीरः उत्साहस्थायिभावकः" तत्रोक्तेः। तत्र उद्यमभावे "मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन" शकु० "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः" गीता "महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः" या० स्मृ० अस्त्यर्थे वा० मतुप् इनि वा उत्साहिन् उत्साहवत् तद्विशिष्टे त्रि० स्त्रियां ङीप्।

**उत्साहक** त्रि० उद्+सह–ण्वुल्। उत्साहान्विते "तृजकाभ्यामिति" पा० षष्ठीनिषेधेऽपि याजका० षष्ठी समासः। कार्य्योत्साहकः।

**उत्साहन** न० उद्+सह–णिच्–ल्युट्। उत्साहजनने

**उत्साहवर्द्धन** पु० उत्साहं वर्द्धयति वृध–णिच्–ल्यु। वीररसे। वृध–ल्युट् ६त०। उत्साहस्य वृद्धौ न०।

**उत्साहशक्ति** स्त्री उत्साहरूपशक्ति र्बलम्। राज्ञां विक्रमहेतौ बले। "षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" अमरः। "कर्त्तव्येषु कार्य्येषु स्थेयान् प्रयत्न उत्साहः" मल्लि०।

**उत्सिक्त** त्रि० उद्+सिच–क्त। १उद्रिक्ते अतिशयिते २दृप्तियुक्ते ३उद्धते गर्विते च। "जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा" मनुः।

**उत्सुक** त्रि० उत्सुवति सु प्रेरणे मितद्र्वादि० डु कन्। १इष्टावाप्तये कालक्षेपासहिष्णौ २इष्टार्थोद्युक्ते च "दिनावसानोत्सुकबालवत्सा" "श्रुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः" "वत्सोत्सुकापि स्तिमिता सपर्य्याम्" "आयद्धोत्सुकसारङ्गां चित्रकूटस्थलीं जहौ" रघुः। उत्सुकस्य भावः ष्यञ्। औत्सुक्य तद्भावे न०। "इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता। चित्ततापत्वरास्वेददीर्घनिश्वसितादिकृत्" सा० द०। "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया" रत्ना०। भ्वा० अभूततद्भावार्थे क्यङ्। उत्सुकायते उत्सुकायमाना "यस्योत्सुकायमाना त्वं न प्रतोषायसेऽन्तिके" भट्टिः

**उत्सूत्र** त्रि० उत्क्रान्तः सूत्रम् अत्या० स०। विधानसूत्रातीते "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना" माघः।

**उत्सूर** पु० उत्क्रान्तः अतिक्रान्तः सूरं सूर्य्यम् अत्या० स०। दिनान्ते हेमच० उत्सूर्य्यादयोऽप्यत्र। "प्रोत्सूर्य्यमन्यानुत्थापयाद्युषम्"। आश्व०४,५,७, "उत्सूर्य्यशायिनश्चासन् सर्वे चासन् प्रगे निशा" भा० शा० २२८अ०।

**उत्सृज्य** अ० उद्+सृज–ल्यप्। १त्यक्त्वेत्यर्थे "ऋदुपधात् कर्म्मणि क्यप्। २त्यक्तव्ये त्रि०

**उत्सृष्ट** त्रि० उद्+सृज–क्त। १त्यक्ते २दत्ते च। "ब्राह्मणानाह यत्किञ्चित् मयोत्सृष्टं तु निर्ज्जने। तत् कश्चिदन्यो न नयेत् विभाज्यत्वं यथाक्रमम्। न वास्तु न च तत्तीरं पातव्यं केनचित् क्वचित्"। ब्रह्म पु०। "महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः" या० स्मृ०।

**उत्सेक** पु० उद्+सिच–घञ्। १गर्व्वे, "उपदा विविशुः शश्वत् नोत्सेकाः कोशलेश्वरम्" रघुः। "नोत्सेकमगमच्चेदं कदाचिदिह नः कुलम्" भा० आ० ११अ०। २उद्रेके "पातव्यं श्वासकासघ्नं श्लेष्मोत्सेके गलग्रहे" सुश्रु०। ३उद्गत्य बहिः सेचने च।

**उत्सेकिन्** त्रि० उत्सेक+अस्त्यर्थे इनि। १अतिशयिते २गर्वयुक्ते च स्त्रियां ङीप्। "भाग्येष्वनुत्सेकिनी" शकु०

**उत्सेचन** न० उत्क्रम्य आधारमतिक्रम्य सेचनम्। आधारातिक्रमेण प्लवने (उथ्लान)

**उत्सेध** पु० उत्सेधति कारणमतिक्रम्य वर्द्धते उद्+सिध–गत्याम् अच्। १देहे तस्य शुक्रशोणितरूपस्वकारणातिक्रमेण वर्द्धनात्त्वम्। भावे घञ्। २उन्नतौ तस्य कृदभिहितभावत्वात् "पुत्रवित्तार्ज्जनात् पितेत्यादौ, पुत्रार्जितवित्त इव उच्चत्वाश्रयेऽपि वृत्तिः तथात्वेऽपि विशेषणसमासे आहिताग्न्यादिवत् परनिपातः ह्विर्मनिष्ठान्तपाठकर इत्यादिवदिति भेदः। यथा "पयोधरोत्सेधनिपातचूर्णिताः इति कुमा० "तस्य प्रमाणमाहुः शाण्डिपचर्म्मोत्सेधमुपदिशन्ति" सुश्रु०। "उत्सेधनिर्जितमहीधरं ध्वजैः" माघः "तस्याश्चतस्रो दीर्घाः प्रादेशावच्छुक्लाः। तथैवोत्सेधतोऽष्टयावतरस्तास्तु इत्यपि" छन्दोगप० "पयोधरोत्सेधविशीर्णसंहति" कुमा०। कर्त्तरि अच्। ३उच्चे त्रि०। "यावन्तं चैतं पुच्छे उत्सेधमेव तं कुरुते तस्मादुत्सेधं प्रजाभयेऽभि संन-

यान्ति" शत० ब्रा० १२,२,२,८, "उत् सेधस्य पर्व्वतादिकं प्रासादं वा" भा० ।

**उत्स्वन** पु० उद्ध्वैःस्वनः । १उच्चशब्दे । व० । २तद्वति त्रि० ।

**उत्स्वप्न** त्रि० उत् क्रान्तः अतिक्रान्तः स्वप्नं तन्मर्य्यादाम् अत्या० स० । निद्रायां बाह्येन्द्रियाणां विलीनत्वेन मनसैव सर्व्वव्यवहारनियमेन तदतिक्रमेण जाग्रदवस्थावत् स्वप्नवचनादिव्यवहारे । उत्स्वप्नमिव चरति क्यङ् उत्स्वप्नायते यथा मृच्छकटिके "विदूषक उत्स्वप्नायते" स्वप्नदृष्टपदार्थस्य स्ववाचा व्यवहरतीत्यर्थः । एवमुत्तररामचरितेऽपि "अयि एष अज्जउत्त" इत्यादिना सीताया उत्स्वप्नो वर्णितः ।

**उद्** अव्य० उ-क्विप् तुक् "उदोऽनूर्द्ध्वचेष्टायाम्" पा० नि० पूर्वो० दत्वम् । १प्रकाशे, २विभागे, ३लाभे, ४ऊर्द्ध्वे, ५उत्कर्षे, ६प्राबल्ये, ७आश्चर्य्ये, ८शक्तौ, ९प्राधान्ये, १०बन्धने, ११अभावे, १२मोक्षे, "तस्य उदिति नामेति" श्रुतेः १३ब्रह्मणि च । गणरत्ने उदः अर्थानभिधाय उदाहृतं यथा "उत् प्राबल्यवियोगोर्द्ध्वकर्म्मलाभप्रकाशाश्चर्य्यमोक्षणाभावदलप्राधान्यशक्तिषु" तत्र प्राबल्ये उद्धतः वियोगे उद्गच्छति । ऊर्द्ध्वचेष्टायाम् उत्तिष्ठति । लाभे धान्यात् शतमुत्पन्नम् । प्रकाशने उच्चरति आश्चर्य्ये उत्सुकः । मोक्षणे उद्गतः । अभावे उत्पथः । दलने उत्फुल्लः । प्राधान्ये उद्दिष्टः शक्तौ उत्साहः"

**उदक** न० उन्द-ण्वुल् नि० नलोपश्च । जले "अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठति" माघः । "सकृत् प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यतः । प्रोषिते कालशेषः स्यात् पूर्णे दत्त्वोदकं शुचिः" । या० स्मृ० "यावानर्थ उदपाने सर्व्वतः संप्लुतोदके" गीता । "उदकस्योदः संज्ञायाम्" पा० समासे संज्ञायामुदकस्योदादेश उदपानः उदधिः उदमेघः । क्षीरोदः । "पेषंवासवाहनधिषु" पा० । पूर्व्वपदस्थस्य उदादेशः । उदपेषं पिनष्टि उदवासः "सहस्ररात्रोदवासतत्परा" कुमा० उदवाहनः उदधिर्घटः पूरयितव्ये उदकहलादौ परे वा । उदकुम्भ उदककुम्भः । "शान्त्युदकुम्भहस्ताः" भट्टिः पूरयितव्य इत्याद्युक्तेः उदकपर्व्वत उदकस्थाली इत्यादौ न । "मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च" पा० । उदमन्थः उदकमन्थः (जलविलोडनम्) । उदौदनः उदकौदनः (उदकेन सिद्धः ओदनः) । "उदौदनं प्राशयित्वा सर्पिष्मन्तमश्नीयात्" शत० ब्रा० १४,९,४,१५ । उदसक्तवः (उदकमिश्रितसक्तवः) । उदबिन्दुः उदवज्रः उदभारः उदहारः (जलहारकः) उदवीवधः उदगाहः (जलावगाहः) पक्षे न । २उदकसाध्ये तर्पणे च । "ऊनद्विवर्षं निखनेत् न कुर्य्यादुदकं ततः" । "कृतोदकान् समुत्तीर्णान्" "कामोदकं सखिप्रत्तास्वस्त्रीयश्वशुरर्त्विजाम्" "न ब्रह्मचारिणः कुर्य्युरुदकं पतिताश्च ये । "नाशौचोदकभाजनम्" इति च या० स्मृ० ।

**उदककृच्छ्र** पु० "उदकसक्तुभ्यां मासाभ्यवहारेणोदककृच्छ्रः" इति विष्णूक्ते व्रतभेदे ।

**उदकक्रिया** स्त्री उदकेन क्रिया तर्पणम् । शास्त्रविहिते जलादितर्पणे "एवं मातामहाचार्य्यप्रेतानामुदकक्रिया" या० स्मृ० । "अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा । "पिण्डोदकक्रियाहेतोः" स्मृति "उदककर्म्मोदककार्य्यादयोऽप्यत्र न० । उदकदानमप्यत्र न० । "तोयकर्म्मणि चारब्धे राज्ञामुदकदानिके" भा० आ० प० ।

**उदकपरीक्षा** स्त्री विवादादौ लौकिकप्रमाणालाभे कार्य्ये दिव्यरूपभेदे तत्प्रकारश्च मिता० उक्तः । "सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् । नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्" या० उक्तः । प्रपञ्चस्तु मिता० व्य० । दि० तत्त्वे च अनुसन्धेयः ।

**उदकम्** अव्य० उन्द-णमुल् किच्च । क्लेदे गणर० । शाखा० त्वाज्ज वा नलोपः । उदकं कृत्यउदकं कृत्वा क्लेदं कृत्वेत्यर्थः ।

**उदकमेह** पु० उदकमिव मेहः । सुश्रुतोक्ते मेहभेदे । तल्लक्षणं तत्रैव "तत्र श्वेतमवेदनमुदकसदृशमुदकमेही मेहति" । इक्षुमेह शब्दे ९१० पृष्ठे विवृतिः ततः अस्त्यर्थे इनि । उदकमेहिन् तद्युक्ते त्रि० स्त्रियां ङीप् ।

**उदकल** त्रि० उदकमस्त्यस्य सिध्मा० वा लच् । उदकयुक्ते तदभावे मतुप् मस्य वः । उदकवत् तत्रार्थे स्त्रियां ङीप् । पिच्छा० इलच् । उदकिल तत्रार्थे त्रि० ।

**उदकशुद्ध** त्रि० उदकेन शुद्धः । १स्नाते २उदकस्पर्शेन शुद्धे च । ततः भवादौ अण् अनुशति० द्वि पदवृद्धिः । औदकशौद्ध तद्भवे त्रि० ।

**उदकषट्पल** न० "गुडाद्रैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदकैः । समक्षीरं घृतप्रस्थं जरण्ःग्रीष्मकासनुत्" चक्रदत्तोक्ते घृतभेदे ।

**उदकान्त** पु० उदकमेवान्तः सीमा । उदकपर्य्यन्ते । "सद्यस्त्वाः पश्चिमे उदकान्ते दीक्षेरन्" आश्व० श्रौ० १२, ६,२, "ओदकान्तात्स्निग्धजनोऽनुगन्तव्यः" शकु० ।

उदकीय पु० नामधातु आत्मन उदकमिच्छति उदक+क्यच्। उदकीयति अशितर्षायान्तु उदन्यति।

उदकीर्य(र्य्य) पु० उदकेन कीर्यः(र्य्यः) संज्ञायाम् उदादेश:। महाकरञ्जे राजनिर्घ० वर्णिनः रत्नमा०।

उदकेचर पु० उदके जले चरति अच् वा सप्तम्या अलुक्। जलचरे मत्स्यादौ। अध्वर्युर्मत्स्य साम्मदोराजेत्याह तस्योदकेचरा विशस्त इव आसत इति मत्स्याश्च" शत०ब्रा० १३,४,३,१२ जलचरे पक्षिकूर्मादौ च ते च सुश्रुते विभाजिता: ते च आनूपशब्दे ७३१ पृष्ठे दर्शिताः। साप्तम्यालुकि उदकचरोऽप्यत्र, णिनि, उदकचारिन् अप्यत्र स्त्रियां ङीप्।

उदकोदर न० सुश्रुतोक्ते उदरवृद्धिकारकरोगे। उदरशब्दे विवृति:"उदकोदरिणस्तु वातहरतैलाभ्यामित्यादि"सुश्रु०

उदक्त त्रि० उद्+अन्च–क्त। कूपादित उत्तोलिते। "उदक्तमुदकं कूपात्" सि०कौ०।

उदक्प्रवण त्रि० उदक् उत्तरा प्रवणं निम्नम्। क्रमशोदक्षिणत उत्तरनिम्ने। "अपर उदक्प्रवणे समे वा" कात्या० २,१,४। २उत्तरमार्गगतिहेतौ च "एष वा उदक्प्रवणोयत्रो यत्रैनं विद्व मद्धा भवति" छा०उ०। "उदक्प्रवण: उत्तरमार्गं प्रति हेतुरित्यर्थः" भा०। "प्राची हि देवानां दिगथो उदक्प्रवणोदीची हि मनुष्याणां, दिग्दक्षिणत: पुरोष प्रत्युदूहत्येषा वै दिक् पितॄणां सा यद् दक्षिणा प्रवणा स्यात्" शत०ब्रा०। १,२,५,१०।

उदक्य त्रि० उदकमर्हति दण्डा०यत्। १जलार्हे मीनादौ। २तत्स्नानार्हेऽशुचौ ३ऋतुमत्यां स्त्री। तस्याश्च स्नानदिन पर्यन्तमशुद्धे: ततः शुद्ध्यर्थमुदकार्हत्वात् तथात्वम्। "उदक्या सूतिका वापि अन्त्यजं संस्पृशेद्यदि। त्रिरात्रेणैव शुध्येत इति शातातपोऽब्रवीत्" शु०त० उशनः०। "उदक्यया च संभाषां न कुर्वीत कदाचन" भा०अ०प० १०४ अ०। "उदक्ययासते ये च द्विजाः केचिदनग्नयः" भा० शान्ति०१६५ अ०। अथ प्रसङ्गात् प्रथमरजोदर्शनतिथ्यादिफलतदीयधर्मभेदा उच्यन्ते ते च विधानपारिजाते दर्शिता यथा। "प्रथमर्त्तौ द्वितीये वा शुभाशुभ निरीक्षणम्। कर्त्तव्यं ज्ञातिभिः सम्यग् धर्मशास्त्रविधानतः"। तत्र वस्त्रफलम्। वराहसंहितायाम्"सुभगा श्वेतवस्त्राढ्या रोगिणी रक्तवाससा। नीलाम्बरधरा नारी विधवा जायते ध्रुवम्। भोगिनी पीतवस्त्रा स्यात्चित्रवस्त्रा पतिव्रता। दुर्भगा जीर्णवस्त्रा च सुभगा चौमवस्त्रिणी"। रजोवर्णफलम्।

"आलोहिते भवेद्धन्या श्वेतवर्णे च पुत्रिणी। कृष्णे च विधवा नारी रजस्येतत्तु लक्षणम्" विवाहोत्तरकालभेदफलम् "ऊढानां वत्सरार्द्धेन मासि पक्षे तथा खलु। रजसोदर्शनं स्त्रीणां सर्वदैवाशुभावहम्"। अथ तिथिफलम् "आयर्त्तौ विधवा नारी प्रतिपद्याहताऽऽह्वला। वैधव्यदा प्रतिपदा द्वितीया पुत्रवर्द्धिनी। सौभाग्यदा तृतीया च चतुर्थी सुखभागिनी। पञ्चमी सुभगा चैव षष्ठी सम्पत्तिनाशिनी। सप्तमी धननाशाय, पुत्रदा सौख्यदाष्टमी। नवमी क्लेशदा स्त्रीणां दशमी च सुखप्रदा। एकादश्यर्द्धनाशाय द्वादशी रतिवर्द्धिनी। त्रयोदशी शुभाज्ञेया दुर्भगा च चतुर्दशी। पौर्णमासी त्वमावास्या दुःखरोगविवर्द्धिनी"। अथ मासफलम् तत्रैव"चैत्रे मासि विशेषेण वैधव्यं लभते ध्रुवम्। वैशाखे बहुपुत्राढ्या ज्यैष्ठे रोगाहता भवेत्। आषाढे स्त्रसुदः प्रोक्तः श्रावणे धनवत्ता भवेत्। भाद्रे तु दुर्भगा ज्ञेया आश्विने च तपस्विनी। कार्त्तिके निर्द्धना बाला मार्गशीर्षे बहुप्रजा। पौषे स्यात् पुंश्चली नारी माघे पुत्रसुखान्विता। फाल्गुने सर्वसम्पन्ना प्रथमर्त्तौ फलं स्मृतम्"। अथवारफलम्। "आदित्ये विधवा नारी सोमे दैन्यमवाप्नुयात्। मङ्गले ह्यापघाताय बुधे च धनिनी भवेत्। गुरौ च भर्त्तृसुखदा कल्याऽधनपतिर्भृगौ। पौंश्चल्यकारिणी मन्दे म्रियते भर्त्तुरग्रतः"। अन्यत्राप्युक्तम् "सुभगा पतिव्रता दुःखपुत्रिणी भोगभागिनी। पतिव्रता क्लेशभोगा सूर्य्यवारादिषु क्रमात्" अथ वेलाफलम्। "प्रातःकाले रजः स्त्रीणां प्रदत्तं शोकदर्शनम्। सङ्गवे सुखसन्ततिं मध्याह्ने धनसन्ततिः। अपराह्णे धनावाप्ति: सायाह्ने मध्यमं फलम्। पूर्व्वरात्रे सुखायालं मध्यरात्रे धनक्षयः। पररात्रेऽर्थनाशाय प्रथमर्त्तुफलं स्मृतम्"। अथ स्थानफलम्। "स्वगृहमध्ये सुखावाप्तिर्न्ति ह्यारे वियोगिनी। शय्यायां सुखदा भूमावनेकापत्यसन्ततिः"। दृष्टफलम्। "पुरब्ध्रा दृश्यते यत्तु रजः स्त्रीणां सुखाय तत्। विधवया तु यद्दृष्टं रजो वैधव्यदं स्मृतम्। रजः पश्यति चेत्कन्या पुमान्या तत्सुखं भवेत्। स्वयं दृष्टं तथा स्त्रीणां कालघाताय कल्पते"। अथावासफलम्। "पितृगृहे रजो दैन्यं विदधाति पितुः कुले। देवस्थाने पितृस्थाने धनस्थानेऽन्यवेश्मनि। मार्गे भर्त्तृवियोगे च चण्डालादेर्मृतप्रजा"। अथ नक्षत्र फलम्। "अश्विनी सुखदा स्त्रीणां भरणी कामवर्द्धिनी। कृत्तिका दैन्यदा ज्ञेया रोहिणी

सुखदा भवेत् । मृगस्तु कामभोगाय सुखदं रुद्रदैवतम् । अदित्यृक्षं सुखं दद्यात्पुष्यं सुखवर्द्धनम् । अश्लेषा शुभनाशाय शोकायाथ मघा मता । वैधव्यं फल्गुनीहस्ते हस्तः पुत्रविवर्द्धनः । चित्रा चित्रतनुं नारीं कुरुते नात्र संशयः । स्वाती शुभाय नारीणां विशाखा सुखनाशिनी । अनुराधार्थभोगाय ज्येष्ठा भर्त्तृवियोगदा । शुभदाप्यशुभं मूलं पूर्व्वाषाढार्थनाशिनी । सुखदा चोत्तराषाढा श्रवणः सुखवर्द्धनः । धनिष्ठापञ्चकं स्त्रीणां प्रथमर्त्तौ सुखप्रदम् । तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् । वारः षड्गुणो ज्ञेयो मासश्चाष्टगुणः स्मृतः । लग्नं दशगुणं विद्याद्दर्शनं च ततोऽधिकम् । अशुभं चेद्रजः स्त्रीणां प्रथमर्त्तौ हि दृश्यते । विधानं तत्र कर्त्तव्यमरिष्टघ्नं विशेषतः" इति । अथ योगादिफलम् । परिघस्य तु पूर्व्वार्द्धे व्यतीपाते च वैधृतौ । व्याघातस्तु तयोर्विष्कम्भमशुभं प्रथमार्त्तवम्"। विष्टिर्विष्टि भद्रेत्यर्थः । अन्यत्रापि । "अमा संक्रान्तिविष्ट्यादौ व्यतीपाते च वैधृतौ । परिघस्य तु पूर्व्वार्द्धे षट् च गण्डातिगण्डयोः । व्याघाते नव शूले तु नाद्याः पञ्चदशैव तु । वैधव्यमर्थहानिश्च सुतनाशं महद्भयम् । वैधव्यं शत्रुवृद्धिश्च दारिद्र्यं चीणजीवनम् । तेजोहानिं समायाति एषु पुष्पवती क्रमात् । अथ राशिफलम् । "मेषे सव्यभिचारा स्याद्वृषभे परभोगिणी । मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी । पुत्रपाढ्या सिंहराशौ तु कन्यायां श्रीमती तथा । विलक्षणा तुलायां तु वृश्चिके तु पतिव्रता । दुश्चारिणी धनुःपूर्व्वे त्वपरे च पतिव्रता । मकरे मानहीना च कुम्भे निर्द्धनबन्धता । मीने विलक्षणा लग्ने ग्रहसंस्था विशाहवत्"। अथ लग्नफलम् नारसिंहीये । "लग्नस्य सप्तमस्थाने सूर्य्यो वैधव्यकारकः । पुत्रहानिकरश्चारो बुधः सत्पुत्रदो भवेत् । बृहस्पतिर्धमायुष्यं शुक्रः शापमृत्युकारकः । शनैश्चरे च बन्ध्या स्याद्राहौ तु मरणं ध्रुवम्" । अथ गुरुशुक्रोदयफलम् ।"आयुः श्रीः प्रीतिरारोग्यमुदिते गुरुभार्गवे । मन्दोदये विरोधः स्यात् क्लेशः स्यात्तामसोदये । तामसो राहुः । अन्यत्र । "संमार्जनीकाष्ठतृणाग्निशूर्पान् हस्ते दधाना कुलटा तदा स्यात् । तस्योपयोगे तमसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात्" इत्यादि सर्वं ज्योतिःशास्त्रतोऽवगन्तव्यम् ।

अथ ऋतुस्वरूपम् । "नाभिमूले स्थितं पुष्पप्रतुलदलसमन्वितम् । तस्मिन् सर्व्वाश्च दृश्यते गर्भसम्भवकारणम् । अधोमुखं स्थितं स्त्रीणां तद्वै मुकुलाकृति । बाल्यात्परत्र प्राप्तौ मुकुलं विकसद्भवेत् । ऋतुफुल्लं कुसुमं स्त्रीणां स्वभावात् प्रस्रवेद्रजः । तदा प्रभृति सर्व्वासां मासि मासि ऋतुर्भवेदिति" । अथ प्रथमर्त्तौ मङ्गलाचारः प्रयोगपारिजाते स्मृतिचन्द्रिकायाम् ।"प्रथमर्त्तौ तु पुष्पिण्याः पतिपुत्रवती स्त्रियः । अचतैरासनं कुर्य्यात्तस्मिंस्तामुपवेशयेत् । हरिद्रागन्धपुष्पादीन् दद्यात्ताम्बूलकस्रजः । आशिषोवाचयेयुस्ताः पतिपुत्रवती भव । दापनीराजनं कुर्य्यात्प्रदीपे वासयेद्गृहे । ताः सर्व्वाः पूजयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः । लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः"। अन्यश्चाह दक्षः । "आर्त्तवाभिप्लुता नारी नैका वेश्मनि संविशेत् । न संसर्गं व्रजेदद्भिःस्नात्वा पापात् प्रमुच्यते । अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् । न कुर्य्यात्सार्त्तवा नारी ग्रहाणामीक्षणं तथा । नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम्"। नेत्यनुषक्तो मदन "दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत्" । अथ रजस्वला स्पर्शशुद्धिविधानम् स्मृतिरत्नावल्यां दक्षः "उदक्ये द्वे सगोत्रे वा सवर्णे वाऽथवा पुनः । तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् । सवर्णे योनिसम्बन्धे सगोत्रे च रजस्वले । मिथः संस्पृशतोऽमत्या स्नानमात्रेण शुद्ध्यतः । मत्या कराद्धं नाश्नीतः पञ्चगव्यं पिबेत्ततः । उदक्ययोर्यदान्योन्यमसम्बन्धः सवर्णयोः । स्पृशेदमत्या स्नात्वा च तस्मिन्नाद्यात् शुचिर्भवेत्" । तस्मिन् स्पर्शदिने ।"मत्या तु नाऽऽद्यादाशुद्धेर्भुङ्क्ता चेत् प्रतिवासरम् । उपोषणं तदा केचिदाहुस्तद्दिनसंख्यया । उपवासेत्वशक्ता चेत्तत्समं दानमाचरेत् । शूद्रा वैश्या स्पृशेतां वा ब्राह्मणी च रजस्वले । आस्नानकालाद्धाश्नीतो हुभे मत्या मिथः क्वचित् । स्नात्वोपवासं कुर्य्यातां पञ्चगव्येन शुध्यतः । एवमभ्यसतयाद्रप्रायश्चित्तं समाचरेत् । मत्या रजस्वलान्योन्यं इषली ब्राह्मणी स्पृशेत् । आस्नानकालाद्वाश्नीयादतिकृच्छ्रं समाचरेत् । चाण्डालं सार्त्तवा नारी संस्पृशेत् भोजनान्तरे । वाप्यता वहिराशीनाऽऽस्नानकालादुपोषणम् । प्राजापत्यञ्चरेत् पश्चात् पञ्चगव्यं ततः पिबेत् । विप्रान् द्वादशसंख्याकान् भोजयित्वा विशुध्यति । पुष्पिणी संस्पृशेच्छ्वोहादष्टं वा नरं स्त्रियम् । स्नानादर्वाङ् न भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत् । स्पृष्ट्वोदक्या पञ्चनखान् द्विशफैकशफान् पशून् । अण्डजानि च सर्व्वाणि नाद्यादा स्नानवासरात्" । परा-

स्पृश्याशुचिस्पृष्टं तृतीयं चापि मानवः । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति" अशुद्धस्योदक्यादिस्पर्शे तु देवलः "अशुद्धान् स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् । स शुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः । आदिस्पर्शे तूपवासः कृच्छ्रस्तु श्वपचादिके" इति । अधिकमार्त्तवशब्दे ८०८पृष्ठे उक्तम् । [स्थल ।

**उदगद्रि** उदगुत्तरस्यामद्रिः । हिमाचले । उदक्पर्वतादयो-

**उदगयन** न० उदक् उदीच्यामयनम् । १उत्तरायणे । ७र०। माघादिके मासषट्के "उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः" आश्व० गृ० १,४,१, "अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्" मनुः । उत्तरायणशब्दे ११०४पृ० विवृतिः ।

**उदग्दश** न० उदक् उत्तरा दशा यस्य । उत्तराग्रे वस्त्रे "उत्तीर्य्यान्यानि वासांसि परिधाय सहदेवाल्यापीत्योदग्दशानि विच्छ्यासत आनद्धवदर्शनात्" आ०गृ० ४,४,१०, "उदग्दशानि उदगग्राणि" नारा०वृ०।"अथ वासो द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति" शत०ब्रा० २,२,२,८, [छदभूमिके देशे जटा०

**उदग्भूम** त्रि० उदक् उन्नता भूमिर्यत्र अच् समा०। उत्-

**उदग्र** त्रि०उद्गतमग्रं यस्य ।१उच्चे उन्नते २दर्दे "हरिकपिलाम्भदग्रविग्रहः" किरा० "नयन् मयूखैः खंमुदग्रदर्शनांशुभिः" "आक्रम्य संस्थितमुदग्रविशालशृङ्गम्" माघः "अवनिनाथोऽयमुदग्रबाहुः" "संदधे दृशमुदग्रतारकाम्" "क्षतात् किल त्रायत इत्युदग्रः" रघुः । "शौर्य्योदग्रे राजशब्दे मृगे च" "सत्कुलोदग्रतरप्रभावः""आविष्कृतोदग्रतरप्रभावम्"रघुः। ३उन्नते च । "मदोदग्राः ककुद्मन्तः"रघुः। [उन्नतदन्ते

**उदग्रदत्** त्रि० उदग्रा दन्ता यस्य दत्रादेशः स्त्रियां ङीप् ।

**उदग्राभ** पु० उदकं गृह्णाति ग्रह–अण् उप० स० संज्ञाया मुदादेशः वेदे हस्य भः। १मेघे "एवा यजस्व मदिरो मदायोदग्राभस्य नमयन् वधस्नैः"ऋ०६,६७,१५, "उदग्राभमुदकग्राहिणं मेघम्" भा० लोके तु उदग्राह इत्येव । उदग्रा उन्नता आभा यस्य । २महाप्रभे त्रि०।

**उदङ्क** पु०उदच्यते उद्धियतेऽत्र उद्+अन्च–घञ् ।"उदङ्कोऽनुदके"पा०नि०कुः १चर्ममये घृतादिपात्रे (कुपो) तैलोदङ्कः घृतोदङ्कः । उदच्यते आकृष्यतेऽनेन करणे घञ् । आकर्षणसाधने २संदंशे "हृदयोदङ्कसंस्थानं कृतान्ताननसन्निभम्"भट्टिः । ३ऋषिभेदे पु० "अथर्वीणा उदङ्कः शौल्वायनः" शत० ब्रा० १४,६,१०,४, अस्य इञ् अइञ्च उपका० बहुत्वे गोत्रप्रत्ययस्य वा लुक् । औदङ्कायनाः उदङ्काः ।

**उदङ्मुख** त्रि० उदक् उत्तरा मुखमस्य । उत्तरमुखे"मण्डपं कारयेत्तत्र प्राङ्मुखं वाप्युदङ्मुखम्"अग्नाचलकल्पे पुरा० "अन्नं भुङ्क्ते ह्युदङ्मुखः" "यथाशास्त्रमुदङ्मुखः" "मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः" मनुः । "उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्णे वै शुचिः शुचीन्" मनुः । "उदङ्मुखःसोऽस्त्रविदस्त्रमन्त्रम्"रघुः । "स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खम्" मेघ० ।

**उदचमस** पु० उदकस्य उदकधारणार्थश्चमसः संज्ञाया मुदादेशः । उदकस्थापनार्हे चमसरूपे पात्रभेदे "यथान्तरेणोदचमसं निनयति"शत०ब्रा०७,२,१,१७ । "चतसृषु चतसृषु लोष्टीनुदचमसान्निनयति" कात्या० १७,२,४,

**उदच्** त्रि० उद्+अन्च–क्विप् । १ऊर्द्ध्वं गते उत्तरे २देशे ३अनन्तरे ४काले उत्तरदिग्देशकालवृत्तौ च । ५उत्तरदिशि स्त्री ङीप् अचोऽल्लोपे उद्यादेशे दीर्घः उदीची "तेनोदीचीं दिशमनु रवेः" मेघ० । ततः अस्ताति तस्य लुक् । प्रथमापञ्चमीसप्तम्यन्तार्थे वर्त्तमाने दिग्देशकाले अव्य० "अयने द्वे गतिरुदग् दक्षिणार्कस्य वत्सरः" अमरः "उपवीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः" रघुः "संपूयोत्पूनात्युदगग्राभ्याम् पवित्राभ्याम्" "उदगन्ते वत्सस्य कुशलं कारयन्ति" सं०त०गोभि०। "प्रागग्रमुदग्रं वा धौतं वस्त्रं प्रसारयेत्"वि०पा०स्मृ०।"आचम्योदक्परावृत्य"मनुः ।"वारिधिभ्योऽदक्स्थम्" सि०शि०।

**उदज** पु० उद्+अज–अच् अभावः । पशुप्रेरणे ।

**उदजिन** पु० उत्क्रान्तमजिनम् अत्या० स० । चर्म्मातीते निरुदकादि० अन्तोदात्तता ।

**उदज्ञ** पु० उदकं जानाति ज्ञा–क संज्ञायाम् उदादेशः । ऋषिभेदे तस्यापत्यम् तिका० फिञ् । औदज्ञायनि तदपत्ये पुंस्त्री०

**उदञ्च्** त्रि० उद+अन्च–क्विप् । उदक्शब्दार्थे । अत्र उदङ्: उदञ्चा इति भेदः । ततः प्रथमान्ताद्यर्थे अस्ताति तस्य लुक् । उदक् प्रथमान्ताद्यर्थे दिग्देशादौ अव्य० "यान् षडुदङ्ङेति तान् मासान्"का०उ०। उदङ् उत्तरस्याम् ।

**उदञ्चन** न०उद्+अन्च–णिच् करणे ल्युट् । १पिधानार्थे पात्रे (ढाकना) । "प्रतिप्रस्थाता संस्रावानयत्युन्नेता चमसेन वोदञ्चनेन वा" शत०ब्रा०४, २,५, २१,

"प्रतिप्रस्थाता च संस्रावाधवनीयादुच्चेतोदञ्चनेन चमसेन वा" कात्या० १०,५,११ भावे ल्युट् । २ऊर्द्धक्षेपणे । कर्त्तरि ल्यु । ३उत्क्षेपके त्रि० । "सत्पतिर्विश्वासामूधः स धियामुदञ्चनः" ऋ०५,४४,१२ । "उदञ्चन ऊर्द्ध-सद्मभविता" भा० ।

**उदञ्चित** त्रि० उद्–अन्च–पूजायां क्त । १पूजिते । णिच्–क्त । २ऊर्द्धगमिते ३उत्क्षिप्ते । हेम० "उदञ्चिताचोऽञ्चि तदञ्चिचोरुः" भट्टिः ।

**उदञ्चु** त्रि० उद्+अन्च–उन् । उद्गतिर्गते । बाह्वा० अपत्ये इञ् । औदञ्चवि तदपत्ये पुंस्त्री० ।

**उदण्डपाल** पु० उद्भिन्नमण्डं पलति गच्छति कारणतया पल-गतौ अण् उप०स० । १मत्स्ये २सर्पे च मेदि० तयोरण्डोद्भेदेन जातत्वात्तथात्वम् । [र्णचि० ।

**उदद्या** स्त्री उद्+अद–बा० यत् । तैलपिपीलिकायां शब्दा-

**उदधान** पु० उदकं धीयतेऽत्र आधारे ल्युट् । उदादेशः । १कुम्भे २मेघे च ।

**उदधि** पु० उदकानि धीयन्तेऽस्मिन् धा-आधारे कि उदादेशः । १समुद्रे,२घटे च । "उदधेरिव निम्नगाशतैः" "चन्द्रोदय इवोदधेः"रघुः।"यैः कृतः सर्वभक्ष्योऽग्निरपेयश्च महोदधिः" मनुः । समुद्रसामान्यस्यैव संज्ञा तत्तत्-पदसमभिव्याहारे तु विशेषस्य बोधः । यथा क्षारोदधिः क्षीरोदधिः सुरोदधिः। ३मेघे च । "हृदय मधुःसुरपो दक्षोदधिं भिन्न" यजु० १८,५४ । ४उदकधानकर्त्तरि सूर्ये च "संसूर्य्येण दिद्युतदुदधिर्निधिः" यजु०३८,२२ सूर्य्यस्य च जलपूर्णाभिर्नाडीभिर्जलाकर्षणेन तद्धारणात्तथात्वं यथा च तस्यामृताधायकत्वम्" तथा-ऽमृतशब्दे २२३ पृष्ठे उक्तम् ।

**उदधिक्रा** त्रि० उदधिं क्रामति क्रम–वि ङीप् । समुद्र-क्रामके ।

**उदधिमल** पु० उदधेर्मल इव । समुद्रफेने राजनि० ।

**उदधिमेखला** स्त्री उदधिर्मेखलेव यस्याः । मध्यस्थाने समुद्रवेष्टितायां पृथिव्याम् । भूगोले "भूमेरर्द्धं क्षारसिन्धो-रुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः" सि०शि० उक्तेः याम्यार्द्धे एवाम्बुधीनां निवेशात् तेषां पृथिवी मध्यवेष्टकतया मेखलातुल्यत्वम् ।

**उदधिसुता** स्त्री ईत० । १लक्ष्म्याम् तस्याः उदधिजातत्वात् तथात्वम् । उदधितनयादयोऽप्यत्र २चन्द्रे पु० ।

**उदन्** न० उन्द+कनिन् । उदके । "उदकशब्दादेशोऽयमि-त्यन्ये अन्यएवायं शब्द इत्यपरे । "धारावरैवोदभि-र्वुन्दन्ति भूम" ऋ०१,८५,५ "अत्र त्मना भरते फेनमु-दन्" ऋ०१,१०४,२, । उदन् उदनीत्यर्थः परमे व्योमन् इति वत् सप्तम्या लुक् नलोपाभावश्च

**उदन्त** पु० उद्गतोऽन्तो निर्णयो यस्मात् । १वार्त्तायाम् वृत्तान्ते कुशलादिकथने, । "श्रुत्वा रामः प्रियोदन्तम्" रघुः "कान्तोदन्तः सुहृदुपनतः सङ्गमात् किञ्चिदूनः" मेघ० "एवंप्रायेण चास्योदन्तेन" काद० । २साधौ मे० स्वार्थे कन् । तत्रैव उद्गतोऽन्तोऽस्य पाकस्यात् प्रा०ब०गतलोपः । ३पाकस्यात् प्राप्तान्ते त्रि० "व्रतमसदिति तदाकुर्य्यादु-दन्तं तर्हि लुब्धयादिति तद्वैनोदन्तं कुर्य्यादुपह्वदहे-द्यदुदन्तं कुर्य्यादमजन्ति वै रैत उपदग्धं तस्मान्नोदन्तं कुर्य्यात्" शत०ब्रा०२,२,१,१४, "अधिश्रितं वारुणमुदन्तं पौष्णम्" कात्या० २५,२,२,

**उदन्तिका** स्त्री उदन्तमुदन्तं करोति उदन्त+णिच्+ण्वुल् टाप् अत इत् । तृप्तौ हारा० ।

**उदन्य** नामधातु अतिगार्द्धेनोदकमिच्छति क्यच् निपा० उदन्यति औदन्यीत् उदन्याम्–बभूव आस चकार । उदनिता-उदन्यिता उदन्या ।

**उदन्या** स्त्री अतिगार्द्धेन उदकमिच्छति क्यजन्तात् अ । १पिपासायाम् ।"व्यक्रच्चुदन्यां शिशिरैः पयोभिः" भट्टिः वेदे० वा०नयनार्थेऽपि क्यच् । २उदकनयने च "अथ यत्रैतत्पुरुषः पिपासतिनाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येव तत्तेज आचष्ट उदन्येति" छा०उ० यथा च पुरुषस्य पिपासा भवति तद्भाष्ये समर्थितं यथा

"यत्र यस्मिन् काले एतन्नाम पिपासति पातुमिच्छतीति पुरुषो भवति । अशिशिषतीतिवदिदमपि गौणमेव नाम भवति । द्रवीकृतस्याशितस्यान्नस्य नेतार आपोऽन्नशुङ्गं देहं क्लेदयन्त्यःशिथिलीकुर्य्युरब्प्लावयेयुर्यदि तेजसा न शोष्यन्ते । नितराञ्च तेजसा शोष्यमाणास्वप्सु देह-भावेन परिणममानास्य पातुमिच्छा पुरुषस्य जायते तदा पुरुषः पिपासति नाम तदेतदाह । तेजएव तत्तदा पीतमबादि शोषयेद्देहगतलोहितप्राणभावेन नयते परि-णमयति । तद्यथा गोनाय इत्यादि समानमेव । तत्तेज आचष्टे लोकः । उदन्येति उदकं नयतीत्युदन्या उद न्येतीति छान्दसम्" । पिपासा च प्राणस्य धर्मः यथाह

शा० ति० "बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ । शोकमोहौ, शरीरस्य जन्ममृत्यू, षडूर्मयः"। उद्र: -श्रयम् उदन्य उदकसम्बन्धिनि त्रि० "विश्वा उदन्यया वर्षाधारा उदन्या इव" ऋ०२,७,३, "उदन्या उदकसम्बन्धिनी" भा०

उदन्युर त्रि० उदन्य–नामधातोः उन् । पिपासौ "व्यन्ते न दिव उत्सा उदन्यवे" ५,५७,१, "हरिं मदं ते ऽव ता उदन्युवः" ऋ०८,८६,२७, उदन्युवः उदकेच्छावन्तः" भा० उवङ् छान्दसः ।

उदन्वत् पु० उदकानि सन्त्यस्मिन् मतुप् उदन्भावः मस्य वः। समुद्रे "उदन्वदम्भःपरिवीतमूर्त्तिः" माघः। "नवैरुदन्वानिव चन्द्रपादैः" कुमा० "अवकाशं किलोदन्वान्" "ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः" रघुः । वेदे नि०। २ उदकयुक्तमात्रे त्रि०" स्त्रियां ङीप् । "उशदन्वता परिदीवा रथेन" ऋ०५,८३,७,"उदन्वता उदकयुक्तेन रथेन" भा० "उदन्वतीरुदकाश्च याः" ऋ०७,५४,४, [औदापीत् ।

उदप आघाते सौत्रः पर० सक० सेट् । उदपति । औदपीत्

उदपात्र न० उदकपूर्णं पात्रम् उदादेशः । जलपूर्णे पात्रे "भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम्" मनुः।

उदपान पु०न० उदकं पीयतेऽस्मिन् पा ल्युट् उदादेशः । कूपसमीपस्थे खाते क्षुद्रजलाधारे । "तडागा उदपानानि वाप्यः प्रस्रवणानि च" निर्जलेषु च देशेषु खानयामासुरुत्तमान् । उदपानान्" रामा०। "अलवणप्रस्रवणोदपानोदकमायः" सुश्रु० । उत०।उदपानमण्डूकः पात्रेसमितादि० उस०कुल्यारोहा० । आद्युदात्तता ।

उदमान पु० "कुल्या स्यादष्टभिर्द्रोणैर्द्विपादेन आढकः । अस्मात् षष्टिकोभाग उदमान उदाहृतः" इत्युक्ते मानभेदे ।

उदय पु० उद्+इ–अच् । ज्योतिषोक्ते राशेरुदयरूपे लग्ने । आधारे अच् । "यैर्यैर्व दृश्यते भास्वान् स तेषामुदयः स्मृतः" इत्युक्तलक्षणे रवेर्दृष्टियोग्यस्थाने २ उदयाचले पूर्वपर्वते । "उदयाचलचूडाङ्कितेन्दुवपुः" माघः "उदयगिरिवनालीबालमन्दारपुष्पम्" उद्भटः । भावे अच् । ३ पदार्थदर्शनयोग्यतावस्थे, ४ वृद्धौ, ६ उन्नते ७ उद्गमे "आत्मोदयः परग्लानिः" माघः "प्रभातसमयमिव पूर्वदिग्भागरागानुमेयमित्रोदयम्" काद०। "भवोदयं भावमिवौषधीनाम्" "निवातनिस्तिमितां वेलां चन्द्रोदय इवोदधेः" "उदयमस्तमयञ्च रघूद्वहात्" रघुः । "अपमेषोदयं वर्षमदृष्टकुसुमं फलम्" । "यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ" । कुमा० "उदये मदवाच्यमुज्झता" । "आगमैः सदृशारम्भ आरम्भसदृशोदयः" । "प्रसूतावुदयापवर्गयोः" रघुः। "बीजाङ्कुरः प्रागुदयादिवाम्भः" कुमा० ८ उत्कर्षे । "विजितजगत्त्रयोदयम्" माघः । ग्रहाणामुदयश्च स्वाधिष्ठितराशीनामुदयात् "निजनिजोदयलग्नसमुद्गमे समुदयोऽपि भवेद्भनभःसदाम्" सि० शि० । राशीनां देशभेदेनोदयकालविशेषः सि० शि० । तत्रादौ निरक्षदेशलङ्कादौ तज्ज्ञानसाधनं यथा "एकस्य राशेर्बृहती ज्यका या द्वयोस्त्रिभस्यापि तदीरितानाम् । स्वाहापमज्याकृतिवर्जितानां मूलानि तासां त्रिगुणा ३४३८ हृतानि । स्वस्वद्युमौर्व्या विभजेत् फलानां चापान्यधोऽधः परिशोधितानि । क्रमोत्क्रमस्थानि निरक्षदेशे मेषादिकानामुदयासवः स्युः" शि० । "एकस्य राशेर्बृहतीत्यष्टमी ज्या । द्वयोरिति षोडशी ज्या । त्रिभस्येति त्रिज्या । आसां वर्गितानां स्वकीयस्वकीयक्रान्तिज्यावर्गैर्वर्जितानां मूलानि त्रिज्यागुणितानि स्वस्वद्युज्यया विभजेत् । फलानां चापान्यधोऽधः परिशोधितानीति तृतीयात् द्वितीयं द्वितीयात् प्रथमं शोध्यम् । प्रथमं तथाविधमेव । एवं लङ्कोदयासवः स्युः । अत्रोपपत्तिः । अत्रोदयतः क्रान्तिवृत्तस्य तिर्यक्स्थितत्वात् [illegible] । तद्यथा । मेषान्तस्य ज्या क्रान्तिक्षेत्रे कर्णः । तत्क्रान्तिज्या भुजः । तद्वर्गान्तरपदं मेषान्तेऽहोरात्रवृत्ते कोटिः । एवं राशिद्वयस्य ज्या कर्णः । तत्क्रान्तिज्या भुजः । तद्वर्गान्तरपदं वृषभान्तेऽहोरात्रवृत्ते कोटिः । एवं त्रिराशिज्या कर्णः परमाक्रान्तिज्या भुजः। परमाल्पद्युज्या कोटिः। एताः कोटयश्चापकरणार्थं त्रिज्यावृत्ते परिणामिता त्रिज्यागुणाः स्वस्वद्युज्यया भक्तास्तासां चापानि । प्रथमं मेषोदयस्य कालः । द्वितीयं राशिद्वयस्य । तृतीयं राशित्रयस्य । अतो विश्लेषितानीत्युपपन्नम् । इदानीं प्रकारान्तरेणाह" प्रमि० । "कीटादिराश्यन्तजकोटिजीवास्त्रिज्याहृता ३४३८ गुणाः स्वस्वदिनज्ययाप्ताः । चापीकृताः प्राग्वदधो विशुद्धाः कीटादिकानामुदयासवो वा" शि०। "कीटादिराश्यन्तजकोटिजीवाका एकद्वित्रिराशिज्या भवन्ति १७१९।२९७७।३४३८। एतास्त्रिज्यया गुण्याः स्वस्वदिनज्यया भक्ता इति । यैव वृषभान्ते द्युज्या सैव कीटान्तेऽपि ३२१८ । यैव मेषान्ते द्युज्या सैव सिंहान्तेऽपि ३३६६ । कन्यान्ते द्युज्या त्रि-

ज्यौ २४१८। आभिला भाज्याः। फलानां चापान्यधोऽधः शुद्धानि कीटादीनामुदयासवः स्युर्निरक्षे वा। त एव मिथुनवृषभमेषाणामित्यर्थः। अत्रोपपत्तिः। क्रान्तिवृत्ते वृषभान्ते सूत्रमेकमग्रं बद्धा द्वितीयमग्रं कीटान्ते निबध्यते तस्य सूत्रस्यार्द्धमेकराशेर्ज्या भवति। एवं सूत्रमेकमग्रं मेषान्ते बद्धा द्वितीयं सिंहान्ते तस्य सूत्रस्यार्धं राशिद्वयस्य ज्या भवति। एवं मेषतुलादौ बद्धसूत्रस्यार्धं त्रिज्या। एता एव वृषभान्तमेषान्तमीनान्ताहोरात्रवृत्तानां ज्या भवन्ति यतस्तत्संपातेषु क्रान्तिवृत्ते सूत्राणि बद्धानि। अतस्तासां त्रिज्यावृत्तपरिणतानां चापान्तराणि कीटादिकानामुदया भवन्तीति गोले प्रदर्शयेत्। इदानीं पुनः प्रकारान्तरेणाह प्रमि०। "मेषादिजीवास्त्रिभवद्युमौर्व्या २१४१ क्षुण्णा हृताः स्वस्वदिनज्यया वा। चापीकृताः प्राग्वदधो विशुद्धा मेषादिकानामुदयासवो वा" शि०। स्पष्टार्थमिदम्, अस्योपपत्तिर्गोले कथितैव सुगमा च अथ निरक्षदेशोदयानाह" प्रमि०।' "तेऽक्षाद्रिभूपा १६७० गुणगोऽद्रिचन्द्राः १७९३ सप्ताग्निनन्देन्दुमिता १९३७ वर्यते। क्रमोत्क्रमस्थाश्चरखण्डकैः स्वैः क्रमोत्क्रमस्थैश्च विहीनयुक्ताः। मेषादिषण्णामुदयाः स्वदेशे तुलादितोऽमी च विलोमसंस्थाः। उदेति राशिः समयेन येन तस्य प्रमोऽसवः समुपैति तेन" शि०। "अत्र चतुःकरणे जीवानां स्थूलत्वाद्द्वितीयतृतीयावुदयौ नान्यैः सम्यक्पठितौ। अत्र प्रथमप्रकारेण प्रथम उदयो ज्ञायते। द्वितीयादिप्रकारेण द्वितीयतृतीयौ। शेषं स्पष्टार्थम्। अत्रोपपत्तिः। निरक्षस्वदेशार्कोदययोरन्तरं चरम्। निरक्षे स्वदेशे च मेषादिः सममुदेति। मेषान्त आदौ क्षितिजे, तत उन्मण्डले लगति। अतश्चरखण्डोनो मेषोदयः स्वदेशोदयो भवति। एवं वृषमिथुनयोरपि। कर्क्यादौ तु चरखण्डानामुपचीयमानत्वाद्धनं तानि परिणमन्ति। तुलादौ तून्मण्डलस्याधःस्थितत्वाच्चरखण्डानि धनं भवन्ति। मकरादौ तु चरखण्डानामपचीयमानत्वादृणं परिणमन्ति। इत्यादि गोले सम्यग्विलोक्यते" प्रमि०। "चरखण्डानि तत्र योक्ता यथा 'स्वदेशजैस्त्र्यञ्चरखण्डकैर्वा लघुज्यकावद्रविदोस्त्रिभागात्। मेषादिराशित्रितयस्य यानि चराण्यधोऽधः परिशोधितानि। तानि स्वदेशे चरखण्डकानि दिङ्नागसत्र्यंशगुणैः १०।८।३/२० विनिघ्नी। पलप्रभा तोयपलात्मकानि स्थूलानि वा स्युश्चरखण्डकानि। स्थूलं चरं चाम्बुपलात्मकं तैस्तत्प्राणचापं यदि वापि सूक्ष्मम्" शि०। "अथ वा तच्चरं वक्ष्यमाणैस्त्रिभिः खण्डकैः स्वदेशजैर्लघुज्याप्रकारेणाग्रमितदग्राग्रमित्यादिना साध्यम्। कथमित्याह। रविदोस्त्रिभागात्। अर्कस्य सायनांशस्य यो भुजस्तस्य यस्त्र्यंशस्तस्मादंशमितदग्राग्रमित्यादिना। अथ खण्डकानि। मेषादिराशित्रयस्येत्यादि सुगमम्। अथ स्थूलखण्डकैर्यच्चरं तत् स्थूलं पानीयपलात्मकं भवति। तत् षड्गुणं प्राणात्मकम्। तस्माद्यदि धनुः क्रियते तदा सूक्ष्मं चरार्धं स्यात्। अत्रोपपत्तिः। एकमङ्गुलं पलभां प्रकल्प्य एकद्वित्रिराशीनां पृथक् चराण्यानीय तानि षड्भिर्विभज्य पानीयपलात्मकानि कृत्वा यावदधोऽधो विशोध्यन्ते तावद्दिङ्नागसत्र्यंशगुणा उत्पद्यन्ते। अतोऽनुपातः। यद्येकाङ्गुलया पलभया एतानि चरखण्डानि तदेष्टया किमिति। एवं चरखण्डानि स्युः। परं तानि ज्यात्मकानि यतः पूर्वं सूक्ष्मत्वात् धनुर्नोत्पन्नम्। अत एव तस्माच्चापं यदि वापि सूक्ष्ममित्युक्तम्। खण्डकैश्चरकरणे लघुज्यासाधनवद्वासना। तत्र लघुज्याखण्डकानि नव चरखण्डकानि त्रीणि परमे राशित्रये भुजे यथा त्रीणि लभ्यन्ते। तदेवं रविदोस्त्रिभागादित्युक्तम्" प्रमि०।

गोलाध्याये च उदयान्तरकर्मोपपत्तियुक्तं देशान्तरसहितं स्पष्टतया तत्साधनमुक्तं यथा "यद्भगणो मध्यमसावनेन ज्ञातफलत्वात् स्फुटसावनस्य। तत्तुल्यखेटा उदयान्तराख्यकर्मोत्थवेनोनयुताः फलेन। लङ्कोदये स्युर्न कृतान्तयाद्यैर्यतोऽन्तरं स्वल्पमतश्च" शि०। योऽयमहर्गण आनीतः स मध्यमसावनेनैव कुतः? स्फुटसावनस्य चलत्वात् तथाविधेनानुपातेन स्फुटो नायातीत्यर्थः। युगादेरारभ्य वर्तमानरविवर्षादेः प्राक् यावान् मध्यमसावनस्तावानेव स्फुटसावनः स्यात् किन्तु रविवर्षादेरूर्ध्वं यावान् मध्यमसावनस्तावान्न स्फुटः अतस्तत्तुल्यखेटा उदयान्तराख्यकर्मोत्थवेन फलेनोनयुताः सन्तो लङ्कोदये स्युर्नान्यथा लङ्कायां भास्करोदये मध्या इति यदन्यैरुक्तं तदसत्। "अथोदयान्तरकर्माह" प्रमि० "मध्यार्कभुक्त्याप्तसवोनिरक्षे ये ये च मध्यार्ककलासमानाः। तदन्तरं यत् स्फुटमध्ययोस्तत् द्युपिण्डयोः स्याद्विवरं गतिघ्नम्। हृतं द्युरात्रासुभिराप्तलिप्ता हीनाधिकाश्चेद्धनयोऽल्पकाः स्युः। तदन्यथाद्यास्तु निजोदयैश्चेद्भक्तस्य पूर्वं विहितं तदानीम्। कृतं तथा स्याच्चरकर्मसिद्धं कर्म ग्रहाणामुदयान्तराख्यम्" शि०। "सायनांशेन रविणा मेषादेरारभ्य ये भुक्ता राशयस्तत्सम्बन्धिनो ये निरक्षोदयासवो गगनकूरचट्क-

चन्द्राः २१६०। इष्टोदयश्लेषामैक्यं कृत्वा भुज्यमानराशेर्ये भुक्तभागास्तांस्तदुदयासुभिः सङ्गुण्य त्रिंशता ३० विभज्य लब्धासवोऽपि तत्र योज्याः एवं मध्यार्कभुक्तासवः स्युः। भदिनान्तादूर्ध्वं तावत्प्रमाणके काले लङ्कायां मध्यमस्यार्कस्योदयः। तत्काले हि ग्रहाः साध्याः अथ चाहर्गणेन ये सिद्धास्ते मध्यमार्कभुक्तासुमितेऽस्मात्के काले भदिनान्तादूर्ध्वं जाताः, अतोऽसूनां कलानां च यदन्तरं तेनार्कोदयोऽन्तरितः। अतस्तदुदयान्तराख्यं कर्मोच्यते तदन्तरासुभिर्ग्रहगतिं सङ्गुण्यार्कसावनाहोरात्रासुभि २१६५९विभज्य लब्धकला ग्रहे ऋणं कार्याः यदि कलाभ्योऽसवोऽल्पकाः स्युः, अन्यथा धनं,यदि तु स्वदेशोदये मध्यमार्कभुक्तासूनानीयेदं कर्म कृतं तदौदयिकानां ग्रहाणां चरकर्मापि कृतं स्यात् यदि तु स्फुटार्कभुक्तासून् स्वोदयासुभिरानीयेदं कर्म कृतं तदोदयान्तरभुजान्तरचरकर्माणि त्रीण्यपि कृतानि स्युः तर्हि कथमिदमुदयान्तराख्यं कर्माद्यैर्न कृतं तदाह यतोऽन्तरं तद्भवमल्पकञ्च युग्मचरणान्तेषु चतुर्ष्वपि अन्तराभावः तन्मध्येऽन्तरस्य वृद्धिक्षयौ। इदानीं देशान्तरस्वरूपमाह" प्रमि० "येऽनेन लङ्कोदयकालिकास्ते देशान्तरेण स्वपुरोदये स्युः। देशान्तरं प्रागपरं तथान्यद्याम्योत्तरं तच्चरसंज्ञकम्" सि०। "ये उदयान्तरकर्मणा लङ्कायामौदयिका ग्रहा जातास्ते देशान्तरकर्मणा स्वपुरौदयिकाः स्युः। तच्च देशान्तरं द्विविधम् एकं पूर्वापरमन्यद्याम्योत्तरं तच्चरसंज्ञकं तत्र तावत्पूर्वापरमाह" प्रमि०। "यल्लङ्कोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान् स्पृशत् सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः। आदौ प्रागुदयोऽपरत्र विषये पश्चाच्च रेखोदयात् स्यात्तस्मात् क्रियते तदन्तरभवं खेटेष्वृणं स्वं फलम्" सि०।"लङ्काया मेरुपर्यन्तं नीयमाना या रेखा उज्जयिनीकुरुक्षेत्रादिदेशान् स्पृशन्ती याति सा मध्यरेखेत्युच्यते। रेखायां यदार्कोदयस्तत्कालात् पूर्वमेव पूर्वदेशे भवति रेखोदयकालादनन्तरं पश्चिमदेशेऽर्कोदयः। तदन्तरकालस्तदन्तरयोजनैः स्फुटभूवेष्टनाद्यनुपातेन ज्ञायते यदि स्फुटपरिधियोजनैः षष्टि ६० घटिका लभ्यन्ते तदा रेखास्वपुरयोरन्तरयोजनैः किमितीति त्रैराशिकेन देशान्तरघटिका लभ्यन्ते मध्यगत्याऽथ चानीता नाड्यस्त्रिरनुपातः यदि घटीषष्ट्या ग्रहस्य गतिकला लभ्यन्ते तदा देशान्तरघटीभिः किमिति अथ योजनैरेवाऽनुपातः। यदि स्फुटपरिधियोजनैर्गतिः प्राप्यते तदा देशान्तरयोजनैः किमिति फलं कलाः प्राप्यं, यत्कालादौदयिकः पश्चाद्भवं यतस्तत्र रेखोदयादनन्तरमर्कोदय इत्युपपन्नम्। इदानीं भूगोले स्फुटपरिधिप्रदेशं स्फुटतानुपातं चाह" प्रमि० "स्वदेशभैर्विन्तरयोजनैर्यल्लम्बांशजैर्मेरुगिरेः समन्तात्। इत्थं स्फुटो भूपरिधिर्यतः स्यात्त्रिज्याहृतो लम्बगुणाहतोऽस्मात्" सि० "स्वपुरस्य मेरुगर्भस्य चान्तरे यावन्ति योजनानि तावन्ति लम्बांशजानि, यतो निरक्षदेशस्वपुरान्तरयोजनान्यक्षांशजानि, भागेभ्यो योजनानि च व्यक्तमित्युपपद्यत इत्यर्थः। तैर्लम्बांशजैर्योजनैर्मेरुगिरेः समन्तादावृत्तमुत्पद्यते स स्फुटो भूपरिधिः यो मध्यपरिधिः पठितः स निरक्षदेशोपरि। अयन्तु स्वपुरोपरि,अतः किञ्चिन्न्यूनो भवति अथ तदानयनं मध्यपरिधेर्भोत्पन्नत्रिज्यातुल्यं व्यासार्धं प्रकल्प्य तस्मिन् व्यासार्धे स्वपुरे यावती लम्बज्या तावत् स्फुटपरिधेर्व्यासार्धं भवितुमर्हति अतस्तेन त्रैराशिकं यदि त्रिज्याव्यासार्धे मध्यमः परिधिर्लभ्यते तदा लम्बज्यामिते कः इति फलं स्फुटपरिधिरित्युपपन्नम्" प्रमिताक्षरा।

इष्टकाले लग्नाद्यानयनम् अष्टमशब्दे ५१८४ पृष्ठे लङ्कोदयप्रमाणप्रदर्शनपूर्वकमुक्तप्रायम् विशेषस्तु सि० शि०। "तात्कालिकार्कस्य युतस्य राशेरभुक्तभागैर्गुणितोदयात् स्यात्। भोग्यासवः खाग्निहृतादथाप्ता भुक्तासवो भुक्तलवैः स्युरेवम्। इष्टासुसङ्घादपनीय भोग्यांस्तदग्रतो राश्युदयांश्च शेषम्। अशुद्धहृत् खाग्निगुणं लवाद्यमशुद्धपूर्वैर्भवनैरजाद्यैः। युक्तं तनुः स्यादयनांशहीनमिष्टासवोऽल्पा यदि भोग्यकेभ्यः। त्रिंशद्गुणाः स्वोदयभाजितास्ते लवांशयुक्तो रविरेव लग्नम्" सि०। "यस्मिन् काले लग्नं ज्ञेयं तस्मिन् काले तात्कालिकोऽर्कः सायनांशः कार्यः। तेनार्केण युतस्य राशेर्ये भोग्यांशास्तैस्तदुदयासवो गुण्यास्त्रिंशता भाज्याः। ये लब्धास्ते भोग्यासवः स्युः। अथेष्टासुभ्यो भोग्यासून् विशोध्य तदग्रतो यावन्त उदयाः शुध्यन्ति तावन्तः शोध्याः। ततः शेषात् खराग्निगुणादशुद्धोदयेन भक्ताद्यल्लब्धमंशाद्यं तदशुद्धोदयात् पूर्वं यावन्तो मेषाद्या उदयास्तावद्भी राशिभिर्युतमयनांशैश्च रहितं तल्लग्नं स्यात्। अथ यदीष्टासवो भोग्येभ्योऽल्पाः तदेष्टासवस्त्रिंशद्गुणास्तदुदयासुभिर्भाज्याः। फलेनांशाद्येन युतो रविर्लग्नं स्यात्" प्रमि० लग्नांशादिना कालानयनं तत्रैव दर्शितं यथा "अर्कस्य भोग्यस्तनुभुक्तयुक्तो मध्योदयाढ्यः समयो विलग्नात्। यद्यर्कभे लग्नरवी तदा तद्भागान्तरघ्नोदयखाग्निभागः। लग्नेऽल्पके तु द्युनिशात् स शोध्यस्तात्कालि-

कालादसकृत् कालः । चेत् सावनाः प्रद्युरभीष्टकाडयुक्ता-दैव तात्कालिकतिमन्तरङ्गैः ॥ आद्यौ यदेष्टघटिका विलग्नं कालश्च तत्सौदयिकात् सकृत्" सि०। "अर्कस्य प्राग्लग्नोध्वकालः साध्यः । लग्नस्य सायनांशस्य भुक्तकालः साध्यः तयोरैक्यमर्कोदयतो लग्नपर्य्यन्तं ये मध्ये राशयस्तेषामुदयाश्च क्षेप्यास्तत्रैव । एवं लग्नात् कालो भवति । अत्र यद्येकराशौ लग्नार्कौ भवतस्तदा तयोरन्तरांशैः स्वोदयं सङ्गुण्य त्रिंशता भजेत् फलमिष्टकालः स्यात् । परं यद्यर्काल्लग्नमधिकम् । यद्यल्पं तदा स कालोऽहोरात्राच्छोध्यः । शेषमिष्टकालः स्यात् । अत्रेष्टकालसाधनेऽर्कस्य भोग्यमौदयिकादेव क्रियते । यतः कालज्ञानात् तात्कालिकत्वमर्कस्य कार्य्यम् । अतः स्थूलः काल आयाति । अनेन कालेन तात्कालिकमर्कं कृत्वा मुहुः कालः साधयितुं युज्यते । परं यदि प्रद्युः सावनघटिका इष्टाः । एतदुक्तं भवति । उदयानन्तरमेतावतीष्वर्कसावनघटिकासु कीदृग् लग्नं भवतीत्येतदभीष्टं तदैव तात्कालिकार्काल्लग्नं साध्यते तदैव च लग्नादसकृत् कालः। यदा पुनरिष्टघटिका आर्क्षास्तदौदयिकादेवार्काल्लग्नं लग्नात् कालः सकृत् । अस्तोपपत्तिः सुगमा। तात्कालिकीकरणकारणता मयैव कथिता व्याख्याता च। इदानीं विलोमेन लग्नसाधनमाह" प्रमि०।"भुक्तास्तु शुद्धेर्विपरीतलग्नं भुक्तांशगेहाभ्रववोनितोऽर्कः" सि० "यदोदयात् पूर्वघटीषु लग्नमिष्टं तदा शेषासुभ्यो विशोध्य तात्कालिकमर्कं कृत्वा तस्य भुक्तासवः साध्यास्तानिष्टासुभ्यो यावन्त उदया विशुध्यन्ति तावतो विलोमेन विशोधयेत् । शेषात् खरामगुणितादविशुद्धोदयभक्ताद् ये लब्धा अंशास्तैः पार्कभुक्तांशैश्च तथा विशुद्धोदयस्तस्य राशिभिश्चोभोनतो रविर्लग्नं भवति" प्रमि० । होराद्रेक्काणोदयसाधनमपि तत्रैव यथा

"लङ्कायां स्थूलत्वात् स्थूला उदया भवन्ति राशीनाम् । सूक्ष्मार्थी होराणां कुर्य्याद्द्रेक्काणकानां वा" सि० "यथा राश्युदयाः साधितास्तथा होरोदया अपि साध्याः । तद्यथा पञ्चदशादिपञ्चदशभागोत्तरभागाग्रां ज्या होराज्याः षड् भवन्ति । ताभिस्त्रिज्यानाद्युज्या २१४१ पृथक् पृथग्गुण्या स्वस्वद्युज्यया भाज्या। फलानां धनुंष्यधोऽधः शुद्धानि । पलात् पञ्चमं पञ्चमाच्चतुर्थ-मित्यादि । शेषाणि होरोदयासवो भवन्ति । एवं दशादिदशोत्तरभागैर्द्रेक्काणोदया भवन्ति । ते च नव । तथा होरांशानाह षट् चराणि । तान्यधोऽधः शुद्धानि तानि तेषां चरखण्डानि तैः क्रमोत्क्रमस्थैः क्रमोत्क्रमस्था ऊनयुताः सन्तः स्वदेशे होरोदया भवन्ति। मेषादीनां द्वादश, ते च व्यस्तास्तुलादीनाम् । एवं चतुर्विंशतिः २४। एवमेव द्रेक्काणोदयाः षट्त्रिंशत् । तथा चार्कस्य सायनांशस्य भागाः पञ्चदश १५ हृता गता होराः स्युः । शेषांशास्ते भुक्तास्ते पञ्चदशभ्यः शुद्धा भोग्यांशाः स्युः । भोग्यांशघ्नः स्वदेशहोरोदयः पञ्चदशहृतः फलं भोग्यासवः स्युस्तानिष्टासुभ्यो विशोध्य तदग्रतो होरोदयांश्च शोधयेत् ॥ शेषं पञ्चदशगुणमशुद्धहोरोदयेन भजेत् फलं लवाः । अशुद्धपूर्वाणां होरोदयानां संख्यया गुणितैः पञ्चदशभिर्युताः सन्तो लग्नस्यांशा भवन्ति । एवं लग्नात् कालसाधनेऽपि । एवमेव द्रेक्काणोदयैरपि लग्नसाधनम् । तत्र पञ्चदशस्थाने दश १० गुणने भजने च कल्प्याः । एवं होरोदयैर्द्रेक्काणोदयैर्वा साधितं लग्नादिकमुदयान्तराख्यं कर्म्म च सूक्ष्मं भवति अन्यथा स्थूलम्" प्रमि० ।

चराख्यमुदयान्तरकर्म तत्रोक्तम् "भानोः फलं गुणितमर्कभुजस्य राशेर्व्यस्तोदयेन खखनागमहीं १८०० विभक्तम् । गत्या ग्रहस्य गुणितं द्युनिशासु भक्तं स्वर्णं ग्रहेऽर्कवदिदं तु भुजान्तराख्यम्" सि०। "अर्कस्य यद्भुजफलं यस्मिन् राशौ रविर्वर्त्तते तस्य राशेः सम्बन्धी यो निरक्षोदयस्तेन तद्गुणितराशिकलाभि १८०० र्भक्तं पुनर्ग्रहगत्या गुणितमहोरात्रासुभि २१६५९ र्भक्तं यत् फलं तद्ग्रहेऽर्कवत् धनर्णं कार्य्यम् । यदार्कस्य भुजफलम् धनं, तदा सर्व्वस्यान्येषां च धनम् । यदि ऋणं तदा ऋणमित्यर्थः । अत्रोपपत्तिः । ये मध्यमार्कोदयिकास्ते स्फुटार्कोदयिकाः क्रियन्ते । तत्रार्कफलस्यासुकरणायानुपातः । यदि राशिकला १८०० निरक्षोदयासुभिरुद्यन्ति तदा फलकलाः कतिभिरिति । लब्धं भास्वत्फलोत्था असवो भवन्ति । अथान्योऽनुपातः । यदि द्युनिशासुभिर्गतिकला लभ्यन्ते तदैभिः किमिति । ताः कला ऋणं धनं च यतो मध्यमार्कोदयात् प्राक् स्फुटार्कोदयः स्यादतः तत्फले स्वं यतोऽनन्तरमित्युपपन्नम् । इदानीमुदयान्तरमाह" प्रमि०।"युक्तायनांशस्य तु मध्यमस्य भुक्तासवोऽर्कस्य निरक्षदेशे । मेषादिभुक्तोदयसंयुता ये यथायनांशान्वितमध्यभानोः । त्रिभागचक्राद्विवरेण निघ्नी गतिर्ग्रहस्य द्युनिशासुभक्ता । स्वर्णं ग्रहे चेदसवोऽधिकोना इदं चराख्यादुदयान्तराख्यम्" सि० "मध्यमार्कस्य सायनांशस्य ये राशेर्भुक्तभागास्तदुदय

निरक्षदेशीयं संगुणन्तिंशता विभजेत् फलं तस्य राशेर्भुक्तासवः। अथ मेषाद्या येऽर्कस्य भुक्ता राशयस्तेषां च निरक्षोदयासवस्तत्र योज्यास्ते मेषादिभुक्तोदयासवः स्युः। अथ मध्यमार्कस्य सायनांशस्य कलाः कार्याः। तासां कलानां तेषामसूनां च यदन्तरं तेन षड्गतिर्गुण्या द्युनिशासुभिर्भाज्या लब्धाः कला षष्ठे धनं कार्याः यदि कलाभ्योऽसवोऽधिकाः स्युः, यदि न्यूनास्तदा ऋणम्। अत्रोपपत्तिः। इह यः पूर्वमहर्गणः कृतः समध्यमसावनमानेन स्फुटसावनस्य चलत्वात्। रविमध्यगतिकलातुल्यासुभिः सहिता नाक्षत्राः षष्टिघटिकाः ६०,५९,८। इदं मध्यमार्कसावनम्। ता गतिकला यैरसुभिरुद्गच्छन्ति तद्युताः षष्टिघटिकाः स्फुटसावनम्। तच्चलम्। प्रत्यहं गत्यन्यत्वात् प्रतिमासं राश्युदयान्यत्वाच्च। तादृशोऽहर्गणः कर्त्तुं नायातीति मध्यमः कृतः। तेन सम्यगर्कोदये ग्रहा न भवन्ति कदाचिदर्कोदयात् प्राक् कदाचिदनन्तरम्। अत एव मायुक्तम्। "दशशिरःपुरि मध्यमभास्करे क्षितिजसन्निहिते सति मध्यमः" शि० इति। अथ स्फुटमध्याहर्गणयोरन्तरानयनम्। मेषादेरारभ्य येऽर्कभुक्ता राशयस्ते यैरसुभिरुद्गच्छन्ति त एकीकृता। तावत्सु स्फुटे काले भदिनान्ताद्दूर्ध्वमहर्गणेन भवितव्यम्। अथ च मेषादिभुक्तकलातुल्येऽन्तरे कृतः। अतोऽसूनां कलानां च यदन्तरं तावद्भिरसुभिरहर्गणोऽन्तरितः। यद्यहोरात्रासुभिर्गतिर्लभ्यत तदैभिरन्तरासुभिः किमिति। फलं षष्ठेषु स्वं यद्यसवोऽधिकाः। अन्यथा ऋणमित्येतदुक्तं युक्तमेव"। इदानीं येऽस्योदयान्तरस्य वासनां न बुध्यन्ति तेषां प्रतीत्यर्थमन्यदप्याह" प्रमि०। "चेत् स्वोदयैः स्फुटरवेरसवः कृतास्ते विश्लेषिताश्च यदि मध्यरवेः कलाभिः। बाहुन्तराख्यमुदयान्तरकं चराख्यं कर्मत्रयं विहितमौदयिके तदा स्यात्" शि०। "यदि स्फुटरवेः स्वोदयेन भुक्तासवः कृता मेषादिस्वोदयैश्च युतास्तेषामसूनां मध्यमार्ककलानां च यदन्तरं तेन भुक्तिर्गुणिता द्युनिशासुभिर्भक्ता यद्यसवोऽधिकास्तदा फलं षष्ठे स्वम्। अन्यथा ऋणम्। एवं कृते सति भुजान्तरमुदयान्तरं चराख्यं च कर्मत्रयमपि कृतं स्यादौदयिके षष्ठे। इदानीं प्रकारान्तरेणौदयिककर्माह" प्रमि०। "मध्याद्रवेरयनभागयुताद्द्विनिघ्नाद्दोर्ज्या षडुगतिगुणा खनगाश्वि २७० भक्ता। स्वर्णं षष्ठे युगयुजोः पदयोर्विलिप्तास्त्वेवं स्फुटं खलु भवेदुदयान्तरं वा" शि०। "मध्यमार्कस्य सायनांशस्य द्विगुणितस्य या

चतुष्खण्डकैर्दोर्ज्या तया गुणिता षड्गतिः खनगयमैः २७० हृता फलं विकलादि षष्ठे धनम्। एवं युग्मपदस्थितेऽर्के। अयुग्मपदस्थिते त्वृणम्। अत्रोपपत्तिः। क्रान्तिवृत्तस्य चत्वार्यपि पदानि पृथक् पृथक् पञ्चदशभिः पञ्चदशभिर्घटिकाभिरुद्गच्छन्ति। परं नैकैको राशिः पञ्चभिरत उदयान्तरकर्म पदमध्यं यावदुपचीयते ततोऽपचीयते। अत एव पदान्तरेषु तस्याभावः। पदमध्येषु परमता। यदत्र निरक्षोदयैः कर्म दर्शितं तच्छात्रावबोधार्थम्। तत् स्थूलम् उदयानां स्थूलत्वात्। अत एवास्य भट्टादिभिः सूक्ष्मत्वार्थं दशाद्योदयाः पठिताः"। इदमुदयान्तरं कर्म यथा सम्भवति तथोच्यते। मध्यमार्कस्य सायनांशस्य दोर्ज्यां द्युज्यां च कृत्वा तया द्युज्यया सा दोर्ज्या भाज्या त्रिज्यान्त्यद्युज्यया गुणनीया। तस्या धनुषो येऽसवस्तैर्मध्यमार्कस्य सायनांशस्य भुजकला ऊनाः सत्यः स्फुटा अन्तरासवो भवन्ति। तैरुदयोऽन्तरित इत्यर्थः। एवं पदमध्ये षड्विंशतिः पलानि किञ्चिदधिकानि भवन्ति। तानि ज्याप्रकारेण साधयितुमर्को द्विगुणितः। द्विगुणितस्यार्कस्य यावद्भुजः क्रियते तावत् पदमध्ये राशित्रयं भवति। तद्दोर्ज्यया लब्धा षड्विंशत्या चानुपातः। यदि त्र्यार्कमितया दोर्ज्यया षड्विंशतिर्लभ्यते तदाभीष्टया किमिति। अत्र षड्विंशत्या त्र्यार्को अपवर्त्तिता गुणकस्थाने रूपम् १। हरस्थाने सार्धाश्चत्वारः। फलं पानीयपलानि। पुनरन्योऽनुपातः। यदि पानीयपलषष्ट्या गतिकलातुल्या विकला लभ्यन्ते तदैभिः किमिति। पूर्वं लब्धौ दोर्ज्या गुणः सार्धाश्चत्वारो हरः। इदानीं षष्टिर्हरः अतो षड्गतेर्दोर्ज्या गुणः। हरयोर्घातो हरः खनगाश्विनः २७० इत्युपपन्नम्। ओजपदेऽसवः कलाभ्य ऊना एव भवन्त्यतस्तत्र ऋणम्। युग्मपदे त्वधिका अतस्तत्र धनम्" प्रमि०

ग्रहाणां दृश्यादृश्ययोः चन्द्रे विशेषस्य च निरूपणं तत्रैव "निशीष्टलग्नादुदयास्तलग्ने न्यूनाधिके यस्य खगः स दृश्यः। दिनेऽपि चन्द्रो रविसन्निधानाच्चास्तं गतश्चेत् सति दर्शने भा" शि०। "दिनकरेऽस्तंगते यदिष्टकाले लग्नं तदिष्टलग्नम्। तस्माद्ग्रहस्योदयाख्यलग्नं न्यूनमस्ताख्यं चाधिकं यदि भवति तदा ग्रहो दृश्यः इतोऽन्यथा चेददृश्यः। एवं लक्षणे सति चन्द्रो दिवसेऽपि दृश्यः। यदि ग्रहो दृश्यस्तदा ग्रहस्य छाया साध्या" प्रमि०।

ताराग्रहाणामुदयास्तमययोर्ज्ञापनं यथा सू०सि० रङ्गना०। "अथोदयास्तमययोः परिज्ञानं प्रकीर्त्त्यते। दिवा-

करकराक्रान्तमूर्त्तीनामल्पतेजसाम्'' सू० । "अथ नक्षत्रग्रहयुत्यधिकारानन्तरम् । सूर्य्यकिरणाभिभूता मूर्त्तिर्बिम्बं येषां तेषां चन्द्रादिषड्ग्रहाणां नक्षत्राणां च । अतएवाल्पतेजसां न्यूनप्रभावतामुदयास्तमययोः अस्मिन्काले सूर्य्यादधिकासन्निहितसन्निहितत्वसम्भावनया क्रमेणोदयास्तयोः सूर्य्याच्चिःसृतस्य यस्मिन् काले यदन्तरेण प्रथमदर्शनं सम्भावितं स उदयः । सूर्य्याद्दूरस्थितस्य यस्मिन् काले यदन्तरेण प्रथमादर्शनं सम्भावितं सोऽस्तः । अनेन नित्योदयास्तव्यवच्छेदस्तयोरित्यर्थः । परिज्ञानं ज्ञानप्रकारः प्रकीर्त्त्यते कथ्यते स्फुटत्वेन मयोच्यत इत्यर्थः । तथा च ग्रह इत्युद्देशेऽस्तमनमनुद्दिष्टमपि तस्य पूर्व्वमेव सूर्य्यासन्नत्व एव सम्भवात् तद्विलक्षणतया ग्रहयुतिप्रसङ्गे नोक्तम् । नक्षत्रग्रहयुतिस्तु ग्रहयुतिवदिति तदनन्तरमुक्ता । अतः प्रतिबन्धकनिवृत्तावगमेऽवश्याकाङ्क्षत्वादस्यावसरसङ्गतित्वात् तदुक्त्या नक्षत्रग्रहयुत्यधिकारानन्तरं प्रागुद्दिष्टमस्तमनं तत्प्रसङ्गादुदयञ्च प्रतिपाद्यत इति भावः । तत्र प्रथमं ग्रहताराणां पश्चिमास्तपूर्वोदयावाह'' र० ना० । "सूर्य्यादभ्यधिकाः पश्चादस्तं जीवकुजार्कजाः । ऊनाः प्रागुदयं यान्ति शुक्रज्ञौ वक्रिणौ तथा'' सू० "वक्रगतौ शुक्रबुधौ तथा सूर्य्यादधिकौ पश्चिमास्तं गच्छतः । सूर्य्यादूनौ पूर्वोदयं प्राप्नुतः । शेषं स्पष्टम् । अथ चन्द्रबुधशुक्राणां पूर्वास्तपश्चिमोदयावाह र० ना० । "ऊना विवस्वतः प्राच्यामस्तं चन्द्रज्ञभार्गवाः । व्रजन्त्यभ्यधिकाः पश्चादुदयं शीघ्रयायिनः'' सू० । "शीघ्रयायिनः सूर्य्यगत्यधिकगतय इत्यर्थः । एतेन बुधशुक्रावर्कगत्यल्पगतौ सूर्य्यादूनौ पूर्वास्तमधिकौ च पश्चिमोदयं न प्राप्नुत इत्युक्तम् । शेषं स्पष्टम् । अत्रोपपत्तिः । रविगतितोऽल्पगतिर्ग्रहोऽर्कादूनश्चेत् प्राच्यां दर्शनयोग्यो भवितुमर्हति । यतः सूर्य्यस्याधिकत्वेन बहुगतित्वाच्चोत्तरोत्तरमधिकविप्रकर्षात् प्रवहवशेन न्यूनस्य पूर्व्वमुदयादधिकस्यानन्तरमुदयनियमात् । ग्रहस्य क्रान्तिजसंलग्नताकालानन्तरं यावत् सूर्य्यस्य तादृशः कालस्तावत्पर्य्यन्तं विप्रकर्षे दर्शनसम्भवात् । एवं यदाल्पगतिः सूर्य्यादधिकस्तदा प्रवहवशेनार्कस्य पूर्व्वमुदयादनन्तरमुदितग्रहस्य दर्शनासम्भवात् प्रवहवशेनादौ न्यूनार्कस्यास्तसम्भवादनन्तरमधिकग्रहस्यास्तसम्भवात् सूर्य्यास्तानन्तरं पश्चिमभागे ग्रहदर्शनसम्भवेऽप्यधिकगतिसूर्य्यस्य पूर्व्वस्थितत्वेनोत्तरोत्तरमधिकसन्निकर्षात् पश्चिमायामदर्शनं सम्भवत्येव । ते तु भौमगुरुशनयः । वक्रत्वे न्यूनगतित्वाद्बुधशुक्रौ चेति । अथार्कगतितोऽधिकगतिग्रहः । सूर्य्यादूनस्तदोत्तरोत्तरमधिकसन्निकर्षात् पूर्व्वस्मिन्नदर्शनं याति । यदा सूर्य्यादधिकस्तदोत्तरोत्तरमधिकविप्रकर्षात् पश्चिमायामुदयः । ते तु शीघ्राश्चन्द्रबुधशुक्रा इत्युपपन्नमुक्तम् । अथाभीष्टदिने आसन्ने सूर्य्योदयास्तकालिकौ सूर्य्यदृग्ग्रहौ तत्कालज्ञानार्थं कार्य्याविल्याह'' र० ना० । "सूर्य्यास्तकालिकाः पश्चात् प्राच्यामुदयकालिकौ । दिवाकरग्रहौ कुर्य्याद्दृक्कर्माथ ग्रहस्य तु'' सू० । "पश्चात् पश्चिमास्तोदयसाधनेऽभीष्टदिने आसन्ने सूर्य्यग्रहौ सूर्य्यास्तकालिकौ कुर्य्याद्गणकः । पूर्व्वास्तोदयसाधने सूर्य्योदयकालिकौ कुर्य्यात् दिनेऽभीष्टकाले कुर्य्यात् । चकारो विकल्पार्थकः । अनन्तरं ग्रहस्य दृक्कर्म्म आयनाक्षदृक्कर्म्मद्वयं कुर्य्यात् । तुकार आक्षदृक्कर्म्मस्योतपूर्व्वोक्तमिति विशेषार्थकः । अत्रोपपत्तिः । पश्चादस्तोदयसाधने पश्चिमायां तद्दर्शनमिति सूर्य्यास्तकालिकौ सूर्य्यग्रहावभीष्टकालांशसाधनार्थं सूक्तौ । पूर्वोदयास्तसाधने पूर्वदिशि तद्दर्शनमिति सूर्य्योदयकालिकौ सूर्य्यग्रहावभीष्टकालांशसाधनार्थं सूक्तावन्यकाले तु किञ्चित्स्थूलावपि कृतौ दृक्कर्म्मसंस्कृतग्रहस्य सूर्य्यवत् क्षितिजसंलग्नतायोग्यत्वाद्दृक्कर्म्मसंस्कृतो ग्रहः कार्य्य इति । अथेष्टकालांशानयनमाह'' र० ना० । "ततो लग्नान्तरप्राणाः कालांशाः षष्टिभाजिताः । प्रतीच्यां षड्भयुतयोस्तद्वल्लग्नान्तरासवः'' सू० । "ततस्ताभ्यां सूर्य्यदृग्ग्रहाभ्यां लग्नान्तरप्राणाः "भोग्यास्नूनकस्याथ" इत्युक्तप्रकारेणान्तरकालासवः षष्टिभक्ता इष्टाः कालांशा भवन्ति । प्रागुदयास्तसाधने प्रतीच्यां, पश्चिमोदयास्तसाधने षड्भयुतयोः षड्राशियुक्तयोः सूर्य्यदृग्ग्रहयोर्लग्नान्तरासवः । अनन्तरासवस्तद्वत् षष्टिभक्ता इष्टकालांशा भवन्तीत्यर्थः । अत्रोपपत्तिः । दृग्ग्रहसूर्य्याभ्यामन्तरकालो ग्रहस्य सूर्य्योदयकाले दिनगतं पूर्वोदयास्तनिमित्तमुपयुक्तम् । एवं पश्चिमोदयास्तनिमित्तं सूर्य्यदृग्ग्रहाभ्यामस्तकालासुभिरन्तरकालः सूर्य्यास्तकाले ग्रहस्य दिनशेषकाल उपयुक्तः तत्रास्तकालानामनुक्तेरुदयासुभिः साधनार्थं षड्भौ सूर्य्यदृग्ग्रहौ कृतौ स कालोऽस्तात्मकः । यदि अहोरात्रासुभिश्चक्रकलातुल्यं चक्रांशा लभ्यन्ते तदेष्टासुभिः क इत्यनुपाते प्रमाणफलयोः फलापवर्त्तनेन हरस्थाने षष्टिः । अतोऽस्तात्मकान्तरकालः षष्टिभक्त इष्टकालांशा इत्युपपन्नमुक्तम् । अत्रेदमवधेयम् । सूर्य्योदयकालि-

काभ्यामर्केष्टग्रहाभ्यामानीतेन दिनगतेन पूर्वं चास्तोदयग्रहः। सूर्यास्तकालिकाभ्यां षड्भाभ्यामर्केष्टग्रहाभ्यामानीतेन दिनशेषेणाप्ये चास्तः षड्भो दृग्ग्रहः। क्रमेण पश्चोदयास्तकाले प्राक्पश्चिमदृग्ग्रहौ भवतः। ताभ्यां सूर्यषड्भसूर्याभ्यां च क्रमेण पूर्ववदेवान्तरकालौ ग्रहस्य सूर्योदयास्तकाले क्रमेण दिनगतशेषौ नाक्षत्रौ षष्टिभक्तौ कालांशात्मकौ स्फुटौ। अथेष्टकालिकाभ्यामानीतकालेन पूर्वसम्पादिताभ्यां प्राक्पश्चिमदृग्ग्रहाभ्यां सूर्यषड्भसूर्याभ्यां चानीतकालो नाक्षत्रोऽपि सूक्ष्मासन्नः। सूर्योदयास्तसम्बन्धाभावात् तदुत्पन्नाः कालांशा अपि तथा। अथ सूर्योदयास्तकालिकाभ्यामानीतैकवारं कालात् कालांशाः स्थूला इष्टकालिकाभ्यामानीतैकवारकालात् कालांशा अतिस्थूलाः उभयत्र कालस्य सावनत्वात्। न हि सावनषष्टिघटीभिश्चक्रपरिपूर्त्तिर्येन सूक्ष्माः सिद्ध्यन्तीति। अथ यैः कालांशैरुदयोऽस्तो वा भवति तान् विवक्षुः प्रथमं गुरुशनिभौमानां कालांशानाह" र०ना०। "एकादशामरेज्यस्य तिथिसङ्ख्यार्कजस्य च। अस्तांशा भूमिपुत्रस्य दशसप्ताधिकास्ततः" सू०। "तत इष्टकालांशावगमानन्तरमस्तांशाः। अस्तो यैरंशैर्भवति तेऽंशा अस्तोपलक्षणादुदयांशा ज्ञेयाः। अमरेज्यस्य गुरोरेकादश कालांशाः। शनेः पञ्चदश सङ्ख्या कालांशानाम्। चः समुच्चये। भौमस्य सप्ताधिका दश सप्तदश कालांशा इत्यर्थः। अथ शुक्रस्याह" र०ना०। "पश्चादस्तमयोऽष्टाभिरुदयः प्राङ्महत्तया। प्रागस्तमुदयः पश्चादल्पत्वाद्दशभिर्भृगोः" सू० "शुक्रस्य महत्तया वक्रत्वेन नीचासन्नत्वात् स्थूलबिम्बतया पश्चिमायामस्तोऽष्टाभिः कालांशैः प्राच्यामुदयश्च तैः नाधिकैः। प्राच्यां शुक्रस्याल्पत्वादणुबिम्बत्वाद्दशभिः कालांशैरस्तं गमनं कुर्यात् नाल्पैः। पश्चिमायामुदयस्तस्याणुबिम्बस्य दशभिः कालांशैरेव ज्ञेयः। अथ बुधस्याह" र०ना० "एवं बुधो द्वादशभिश्चतुर्दशभिरंशकैः। वक्री शीघ्रगतिश्चार्कात् करोत्यस्तमयोदयौ" सू०। "वक्री शीघ्रगतिः। चः समुच्चये। बुधः सूर्याद्द्वादशभिश्चतुर्दशभिश्च कालांशैरस्तोदयौ एवं शुक्रवत् करोति। पश्चादस्तं प्रागुदयं च द्वादशभिः कालांशैर्महद्बिम्बतया बुधः करोति। प्रागस्तं पश्चादुदयं च चतुर्दशभिः कालांशैरणुबिम्बत्वाद्बुधः करोतीत्यर्थः। अथ प्रोक्तेष्टकालांशाभ्यामस्तोदयस्य वा गतैष्यत्वज्ञानमाह" र० ना०। "एभ्योऽधिकैः कालभागैर्दृश्या न्यूनैरदर्शनाः। भवन्ति लोके खचरा भानुभाग्रस्तमूर्त्तयः" सू०। "एभ्य एकादशामरेज्यस्येति श्लोकत्रयोक्तेभ्योऽधिकैरिष्टकालांशैर्दृश्या दर्शनयोग्या अभीष्टकाले ग्रहा भवन्ति। तथा चास्तसाधने दृश्यत्वे अस्त एष्यः। उदयसाधने दृश्यत्व उदयो गत इति भावः। अल्पैरिष्टकालांशैर्ग्रहा लोके भूलोके अदर्शना न विद्यते दर्शनं दृष्टिगोचरता येषां ते अदृश्या अभीष्टकाले भवन्ति। नन्वदृश्याः कुतो भवन्तीत्यत आह। भानुभाग्रस्तमूर्त्तय इति सूर्यासन्नत्वेन सूर्यकिरणदीप्त्या ग्रस्ता अभिभूता सूर्यकिरणप्रतिहतलोकनयनाविषयो मूर्त्तिर्बिम्बस्वरूपं येषां त इत्यर्थः। तथा चास्तसाधने अदृश्यत्वेऽस्तो गतः। उदयसाधनेऽदृश्यत्व उदय एष्य इति भावः। अत एव। "उक्तेभ्य ऊनाभ्यधिका यदीष्टाः खेटोदयो गम्यगतस्तदा स्यात्। अतोऽन्यथा चास्तमयोऽवगम्यः" इति भास्कराचार्योक्तं सङ्गच्छते। अत्रोपपत्तिः उक्तकालांशतुल्येष्टकालांशे यत्काले ग्रहौ साधितौ तत्काल एव ग्रहस्योदयोऽस्तो वार्कतः। उक्तकालांशानां सूर्यसान्निध्यजनितात्यन्तग्रहादर्शने हेतुत्वप्रतिपादनात्। तथा चेष्टकालांशा उक्तेभ्योऽल्पास्तदा ग्रहस्यास्तङ्गतत्वमेवेत्युदयसाधन इष्टकालांशा उक्तेभ्योऽल्पास्तदेष्टकालादग्रे ग्रहस्योदयः। यदीष्टकालांशा उक्तेभ्योऽधिकास्तदेष्टकालाद्ग्रहस्योदयः पूर्वं जातः। एवमस्तसाधन इष्टकालांशा अधिकास्तदेष्टकालादग्रे ग्रहास्तः। यदीष्टकालांशा न्यूनास्तदेष्टकालात् पूर्वं ग्रहास्तो जात इत्युपपन्नमुक्तम्। अथोदयास्तयोर्गतैष्यदिनाद्यानयनमाह" र०ना०। "तत्कालांशान्तरकला भुक्त्यन्तरविभाजिताः। दिनादि तत्फलं लब्धं भुक्तियोगेन वक्रिणः" सू०। "उक्तेष्टकालांशयोरन्तरस्य कलाः सूर्यग्रहयोर्गत्योः कलात्मकान्तरेण भक्ताः। दिनादिकमुदयास्तयोः फलमुदयास्तयोर्गतैष्यदिनाद्यं भवतीत्यर्थः। वक्रगतिग्रहस्य विशेषमाह। लब्धमिति। वक्रिणो वक्रग्रहस्य भुक्तियोगेन सूर्यग्रहयोः कलात्मकगतियोगेन भक्ताः फलं गतैष्यदिनाद्यं ज्ञेयम्। अत्रोपपत्तिः। यदा सूर्यग्रहयोर्गत्यन्तरकलाभिरेकं दिनं तदेष्टोक्तकालांशयोरन्तकलाभिः किमित्यनुपातेनोदयास्तयोरभीष्टकालाद्गतैष्यदिनाद्यवगमः। वक्रग्रहे तु सूर्यग्रहयोर्गतियोगेन सत्त्वमन्तरवृद्धेर्गतियोगादनुपात उपपन्न इत्युपपन्नमुक्तम्। अथ ग्रहगतिकलयोः क्रान्तिवृत्तस्थत्वात् कालांशान्तरस्याहोरात्रवृत्तस्थत्वाज्जातानुपातः प्रमाणेच्छयोर्वैजात्येनायुक्त इति मनसि कृत्वा तयोरेकजातित्वसम्पा-

दनार्थं गृहगत्योरिच्छाजातीयत्वं यदंशदन्तरेणानुपात-स्तु युक्त एवेत्याह” र० ना० । “तन्नम्नासुहते भुक्ती चटादयगतोद्धृते । स्यातां कालगती ताभ्यां दिनादि गतगम्ययोः” सू० । “भुक्ती रविगृहयोर्गती कलात्मिके तन्नम्नासुहते कालसाधनार्थं गृहस्य यो राश्युदयो चहीतस्तेनासात्मकोदयेन गुणिते चटादयगतेन भक्ते फले सूर्यचन्द्रयोः कालांशवत् कालगती स्याताम् । ताभ्यां गतिभ्यां गतगम्ययोरुदयास्तयोर्दिनादि पूर्वोक्त-प्रकारेण साध्यम् । न तु पूर्वोक्तप्रकारेण, यथास्थित-गतिभ्यां स्थूलत्वापत्तेः । अत्रोपपत्तिः । यदि एकराशि-कलाभीराश्युदयासवस्तदा गतिकलाभिः क इत्यनुपा-तेनाहोरात्रवृत्ते गत्यसवः कलासमा इत्युपपन्नमुक्तम् । अथ नक्षत्राणां सूर्यसान्निध्यवशादस्तोदयज्ञानार्थं कालां-शान् विवक्षुः प्रथममेषामाह” र० ना० । “स्वात्यगस्त्य-मृगव्याधचित्राज्येष्ठाः पुनर्वसुः । अभिजिद्ब्रह्महृदयं त्रयोदशभिरंशकैः” सू० । “मृगव्याधो लुब्धकः । त्रयोद-शभिः कालांशैर्दृश्यादृश्यानि नक्षत्राणि भवन्ति । शेषं स्प-ष्टम् । अथान्येषामाह” र० ना० । “हस्तश्रवणफाल्गुन्यः श्रवि-ष्ठारोहिणीमघाः । चतुर्दशांशकैर्दृश्या विशाखाश्विनदैव-तम्” सू० । फाल्गुन्यः पूर्वोत्तराफाल्गुनीद्वयम् । आश्विनदैव-तमश्विनीकुमारौ दैवतं स्वामी यस्येत्यश्विनीनक्षत्रम् । दृश्या उपलक्षणाददृश्या अपि लिङ्गपरिणामश्च यथायोग्यं बोध्यः । शेषं स्पष्टम् । अथान्येषामाह” र० ना० । “कृत्ति-कामैत्रमूलानि सार्पं रौद्रर्क्षमेव च । दृश्यन्ते पञ्चदशभि-राषाढाद्वितयं तथा” सू० । “कृत्तिकानुराधामूलनक्षत्राणि पञ्चदशभिः कालांशैर्दृश्यन्ते । उपलक्षणाच्च दृश्यन्तेऽपि । एवकारो न्यूनाधिक्यव्यवच्छेदार्थः । रौद्रमार्द्रा । चः समुच्चये । आषाढाद्वितयं पूर्वोत्तराषाढाद्वयं तथा पञ्चदशकालां-शैर्दृश्यन्त इत्यर्थः । अथान्येषामवशिष्टानामाह” र० ना० । “भरणीतिष्यसौम्यानि सौक्ष्म्यात् त्रिःसप्तकांशकैः । शेषाणि सप्तदशभिर्दृश्यादृश्यानि भानि तु” सू० । “तिष्यः पुष्यः सोम-दैवतं मृगशिरो नक्षत्रमेतानि नक्षत्राणि सौक्ष्म्यादल्पबिम्ब-त्वात् त्रिःसप्तकांशकैरेकविंशतिकालांशैर्दृश्यादृश्यानि । उदितान्यस्तङ्गतानि च भवन्तीत्यर्थः । शेषाणि पूर्वाधि-कारोक्तनक्षत्रेभ्योऽतिरिक्तानि शततारापूर्वोत्तराभाद्रप-दारेवतीसंज्ञानि ब्रह्मापांवत्सापसञ्ज्ञानि च सप्त-दशभिः कालांशैर्दृश्यादृश्यानि भवन्ति । तुकारो दृश्या-दृश्यानीत्यत्र समुच्चयार्थकः । अथ दिनाद्यानयनार्थमि-

च्छाया एव प्रमाणजातीयत्वकरणमाह” र० ना० । “चटादयगताभ्यस्ता दृश्यांशाः स्वोदयासुभिः । विभज्य लब्धाः क्षेत्रांशास्तैर्दृश्यादृश्यता च वा” सू० । “दृश्यांशाः कालांशा चटादयगतगुणितास्तान् स्वोदयासुभिर्गृहराश्यु-दयासुभिर्भक्ता लब्धाः क्षेत्रांशाः क्रान्तिवृत्तस्थांशास्तै-रंशैर्दृश्यादृश्यता उदयास्तौ प्रकारान्तरेणोक्तरीत्या ज्ञेयौ । कालांशाभ्यां क्षेत्रांशावानीय तदन्तरकला यथास्थितगत्यो-रन्तरेण योगेन वा भक्ताः फलसुदायास्तयोर्गतैष्यदिनाद्यं पूर्वागतमेव स्यादित्यर्थः । अत्रोपपत्तिः । यदि राश्यु-दयासुभिरेकराशिकलास्तदा कालांशकलातुल्यासुभिः का इति क्रान्तिवृत्ते कलास्ताः षष्टिभक्ता अंशा इति पूर्व-मेवेच्छास्थाने कालांशा एव धृता लाघवात् । इत्युक्तमु-पपन्नम् । गृहाणामस्तकदिश्यस्तोऽस्तकदिश्युदय इत्यु-क्तम् । तथा नक्षत्राणां नोक्तम् गत्यभावाद्वियोगयोगा-सम्भवेन गतैष्यदिनाद्यानयनासम्भवश्चेत्यत आह” र० ना० । “प्रागेषामुदयः पश्चादस्तो दृक्कर्म पूर्ववत् । गतैष्यदिवसप्राप्ति-र्भानुभुक्त्या सदैव हि” सू० । “एषां नक्षत्राणां प्राच्यामुदयः प्रतीच्यामस्तो गत्यभावादल्पगतिगृहवत् । एषां नक्षत्राणां दृक्कर्मायदृक्कर्म पूर्ववत् पूर्वप्रकारेण कार्यम् । परन्तु स्तोकपूर्वाधिकमिति ध्येयम् । सदा नित्यम् । एवका-रात् कदाचिदप्यन्यथा नेत्यर्थः । हि निश्चयेन । र-विगत्या गतैष्यदिवसानां लब्धिः स्यात् । नक्षत्रगत्यस-म्भवात् योगे गृहगतिवत् । अथ कतिपयानां नक्षत्राणां सूर्यसान्निध्यवशादस्तो नास्तीत्याह । “अभिजिद्ब्रह्महृ-दयं स्वातीवैष्णववासवाः । अहिर्बुध्न्यमुदक्स्थत्वान्न लु-प्यन्तेऽर्करश्मिभिः” सू० । अभिजित् । ब्रह्महृदयम् । अने-नैकदेशस्य ब्रह्मणोऽपि ग्रहणम् । स्वातीश्रवणधनिष्ठाः । अहिर्बुध्न्यमुत्तराभाद्रपदा एतानि नक्षत्राण्युत्तरदिक्-स्थत्वादुत्तरविक्षेपाधिक्यादित्यर्थः । सूर्यकिरणैर्न लुप्यन्ते अस्तं न यान्तीत्यर्थः । अत्रोपपत्तिः “यस्योदकाङ्का-द्धिकोऽस्तभानुः प्रजायते सौम्यशरातिदैर्घ्यात् । तिग्मांशु-सान्निध्यवशेन नास्ति धिष्ण्यस्य तस्यास्तमयः कदाचित्”। इति भास्कराचार्योक्ता । परमिदमुक्तमष्टानामेवाम् । अन्यथा पूर्वाभाद्रपदाया अपि तथात्वापत्तेरिति दिक्” र० ना० । “यथा भौमादीनां सूर्यसान्निध्योदयानन्तरे दृष्टा सकल-बिम्बदर्शनं तथा चन्द्रस्य स्वोदयाकाले सकलबिम्बद-र्शनं शुक्लत्वेन न भवति । किन्तु बिम्बैकदेश एव शुक्लत्वेन दृश्यत इति भौमादिविलक्षणत्वं चन्द्रस्य कुत इत्याशङ्का-

वा; पूर्व्वाधिकारे समुपस्थितेस्तदुत्तरभूतश्टङ्गोन्नमनाधिकारोऽवश्यमुपस्थित आरब्धो व्याख्यायते। तत्र शृङ्गोन्नते रुदयकालात् पूर्वकालेऽस्तकालानन्तरकाले चासन्नकतिपयदिवसेषु दर्शनात् पूर्वाधिकारे चन्द्रस्य कालांशानुक्त्वा तदुदयास्तान्तरेण प्रथममुपस्थितचन्द्रोदयास्तयोः साधनमतिदिशति" र० ना०। "उदयास्तविधिः प्राग्वत् कर्त्तव्यः शीतगोरपि। भागैर्द्वादशभिः पश्चाद्दृश्यः प्राग्यात्यदृश्यताम्" सू०। "चन्द्रस्य अपिशब्दः पूर्वाधिकारोक्तैर्ग्रहनक्षत्रैः समुच्चयार्थकः। उदयास्तविधिरुदयास्तयोः साधनप्रकारः प्राग्वत् पूर्वाधिकारोक्तरीत्या गणकेन कार्य्यः। ननु कालांशानां पूर्वमनुक्तेः कथं तन्निर्द्दिरत आह। भागैरिति। द्वादशभिरंशैश्चन्द्रः पश्चिमायां दृश्य उदितो भवति। प्राच्यामदृश्यतामस्तं प्राप्नोति। अत्र पश्चात् प्रागिति पुनरुक्तमपि पूर्वं बुधशुक्रयोः साहचर्य्येण चन्द्रोदयास्तादियुक्ता तत्साहचर्य्येण चन्द्रस्य पश्चिमास्तपूर्वोदयौ वर्त्तेते इति कस्यचिन्मन्दबुद्धेर्भ्रमस्य वारणायेति ध्येयम्"।

सूर्य्योदये विशेषः शु० त० स्क० सं०। 'रेखामात्रं च दृश्येत रश्मिभिश्च समन्वितम्। उदयं तं विजानीयाद्धोमं कुर्य्यात् विचक्षणः।' "उदयादोदयाद्भानोर्भौमसावनवासरः" सू० सि०। "सावनः स्यादहोरात्रमुदयादोदयाद्रवेः" काल० मा० ब्रह्म० सि०। गुरुशुक्रोदये च सर्व्वमङ्गलकार्य्याणि कर्त्तव्यानि। अगस्त्योदयः अगस्त्यशब्दे उक्तः। "प्रससादोदयादम्भः कुम्भयोनेर्महौजसः" रघुः।

**उदयगामिनी** स्त्री उदयं सूर्य्योदयं गच्छति मुहूर्त्तादिना व्याप्नोति गम-णिनि ङीप्। "सूर्य्योदयावधिमुहूर्त्तादिकालव्यापिन्यां तिथौ। कर्मानुष्ठाने उदयकाले कियत्कालस्य ग्राह्यता तन्निर्णीतम्" का० मा०। "व्रतोपवासनियमे घटिकैका यदा भवेत्। उदये सा तिथि ग्राह्या विपरीता तु पैतृके" ब्र० पु०। "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी" विष्णु० ध० पु०। "आदित्योदयवेलायां याऽल्पापि च तिथिर्भवेत्। पूर्णा इत्येव सा ज्ञेया प्रभूता नोदयं विना" देवलः। "यां तिथिं स समासाद्य उदयं याति भास्करः। सा तिथिः सकला ज्ञेया स्नानदानजपादिषु" देवलः। "उदयन्नेव सविता यां तिथिं प्रतिपद्यते। सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु" व्यासः। "पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्। त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः" पैठी०। "उदिते दैवतं भानौ पैत्र्यं चास्तमिते रवौ। द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः" बौधा०। "भानावुदिते मध्याह्नकालेऽह्नो मुहूर्त्तद्वयं दैवत्यम्। तथा चास्तमिते ततः पूर्वकालीनमह्नो मुहूर्त्तत्रयं पित्र्यदैवत्यमतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या" इत्याशङ्कापूर्वकं माधवेन समाहितम्। नन्वस्त्वेवं तत्तद्दिवसाभ्युदयानन्तरोत्तरविद्धयास्तिथेर्ग्रहणे कियत्परिमाणमुदयेऽपेक्षणीयमिति विवेचनीयम्। तत्र बौधायनेन अल्पापीत्यभिधानात् निमेषमात्रं प्रतिभाति, व्यासेन उदयन्नेवेत्यभिधानात् तथैव प्रतिभाति। भविष्यत्पुराणे तु घटिकामात्रं बौधायनवचनान्तरे द्विमुहूर्त्तमित्येवं विरोधमाशङ्क्य "अत्रोच्यते" "पौर्वाह्णिकास्तु तिथयस्त्रिमुहूर्त्ताः फलप्रदाः" इ० या० वचनेन दैवे पूर्वाह्णव्याप्तायास्त्रिमुहूर्त्तमितायास्तिथेरपेक्षणम्। त्रिमुहूर्त्तन्यूनायास्तिथेः पूर्वाह्णव्याप्त्यभावात् पूर्वाह्णस्य च पञ्चधा विभक्तस्य मुख्यत्वात् उदिते भानौ त्रिमुहूर्त्तातिथिर्ग्राह्या। यत्तु "त्रिमुहूर्त्ता न कर्त्तव्या या तिथ्युदयगामिनीति" न तत् त्रिमुहूर्त्तव्याप्तेर्बाधकं प्रत्युतोद्बोधकमेव। तथा हि प्रतिषेधः सर्वत्र प्रसक्तिपूर्वकः, प्रसक्तिश्चात्र यथोक्तरीत्या पौर्वाह्णिकवाक्यात् त्रिमुहूर्त्तवेधविधायिपैठीनसिवाक्याद्वा भवति तस्य प्रसक्तं त्रिमुहूर्त्तत्वं समतिथौ बाधकाभावात्तथैव तिथिद्वये त्वधिकव्याप्तिविवक्षया प्रतिषिध्यते अतश्च तत्र चतुर्थमुहूर्त्तस्पर्शिनी तिथिर्ग्राह्या तिथिसाम्यात्। तिथिद्वयेऽपि मुहूर्त्तत्रयमेव मुख्यं मुहूर्त्तद्वयं त्वनुकल्पः। एतदेव सूचयितुं द्विमुहूर्त्तापीत्यत्र अपिशब्दः पठ्यते"। ततः प्रासङ्गिकमन्यत् समाधाय उपसंहृतम् यथा "प्रकृते तु सूर्य्योदये मुहूर्त्तत्रयव्यापिनी प्रतिपद्दानव्रतयोर्ग्रहीतव्या एवं सत्युदयमात्रव्याप्तिशास्त्रं घटिकामात्रव्याप्तिशास्त्रं च वैश्वानराधिकरणन्यायेनानुवादरूपतया त्रिमुहूर्त्तव्याप्तिं प्रशंसति। अथवा यदा पूर्वेद्युरुदयकालं परित्यज्योपरि सर्वत्र व्याप्नोति परेद्युरुदयकालमात्रं व्याप्नोति तदानीमुदयानन्तरभाविन्यामस्यायास्त्रिमुहूर्त्तव्याप्तेर्दिनद्वयेऽप्यभावेन द्वयोरपि दिनयोर्गौणकालत्वे सति किं ग्राह्यमिति शङ्कायां पूर्वदिने गौणकर्मकालव्याप्तेर्भूयस्त्वात्तदेव ग्राह्यं न्यायतः प्राप्तं केनापि निमित्तेन तत्प्रत्यूहे सति परेद्युः कर्मकालव्याप्तिसम्पादनाय पूर्वत्वमभिधायोदयविहीनस्य

व्याप्तिबाहुल्यस्य श्रेयस्त्वोक्तिव्याजेन तदेव प्रशस्यते। "आदित्योदयवेलायां याल्पापि च तिथिर्भवेत्। पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विनेति"। यदा पूर्वेद्युः सङ्गवमारभ्य परेद्युरुदयात्प्रागेव तिथिक्षयवशात्प्रतिपत्समाप्ता तदा यद्यपि दिनद्वये सोदयमुहूर्त्तत्रयस्पर्शो नास्ति तथापि पूर्वेद्युरेवानुष्ठेयम्। "सा तिथिः सकला ज्ञेया यस्यामस्तमितो रविः" इतिवचनेन सम्पाद्यायाः सोदयत्रिमुहूर्त्तीया व्याप्तेर्विद्यमानत्वात्। यदा न परेद्युरुदयमुहूर्त्तव्याप्तिरस्ति तदा पूर्वेद्युरेवानुष्ठानम्। अस्तमयव्याप्तेरधिकत्वात्। अतएव पद्मपुराणेऽभिहितम्। "व्रते स्नाने तथा नक्ते पितृकार्य्ये विशेषतः। यस्यामस्तङ्गतो भानुः सा तिथिः पुण्यभाग्भवेदिति"। तत्रैव द्वितीयाप्रकरणे च दैवं षड्विधम् उपवासैकभक्तनक्तायाचितदानव्रतभेदेन, तीर्थस्नानजपहोमादयस्तु व्रतशब्देनैव संगृहीताः। पित्र्यं द्विविधम् एकोद्दिष्टं पार्वणं चेति। तत्र सर्वत्र कर्म्मकालव्याप्तिर्मुख्या। अवशिष्टा गौणाः। तिथिव्याप्तिश्च द्विविधा स्वाभाविकतिथिव्याप्तिः साकल्यापादिततिथिव्याप्तिश्चेति। तद्यथा यदा सङ्गवपर्य्यन्तामावास्या तदानीमुपरितनो मध्याह्नो मुख्यैव प्रतिपदा व्याप्तो भवति। यदा मध्याह्नादिमारभ्य तिथिक्षयवशात् परेद्युः सङ्गवान्ता प्रतिपद्भवति तदा पूर्व्वेद्युर्गौणकालव्याप्तिमुपजीव्यैकभक्तानुष्ठानाय तत्स्वीकारे सति मध्याह्नेऽवश्यानुष्ठेयत्वात् तत्र च स्वाभाविकप्रतिपद्व्याप्त्यभावेऽपि साकल्यवचनापादितप्रतिपद्व्याप्तिः स्वीकृता एवञ्च सति कर्म्मकालव्याप्तौ सर्व्वस्मृतीनामत्यन्तनिर्बन्धदर्शनात् कर्म्मकालव्याप्तिशास्त्रमितरेभ्यः प्रबलमिति निश्चीयते। तदनुसारेण द्वितीयाद्यास्वपि तिथयउपवासादौ दैवे, एकोद्दिष्टादौ पित्र्ये च कर्म्मकालव्याप्तियुक्ताः स्वीकर्त्तव्याः। उपवासस्तु सर्व्वतिथिषु नारदीये दर्शितः। "शुक्ला वा यदि वा कृष्णा प्रतिपत्प्रभृतीन् तिथीन्। उपोष्यैव बलिन्दत्त्वा विधिना त्वपरे दिने। ब्राह्मणान् भोजयित्वा तु सर्व्वपापैः प्रमुच्यत" इति। उपवासस्य अहोरात्रः कर्म्मकालः। तत्कालव्यापिनी तिथिर्ग्राह्या तदसम्भवे खण्डतिथिरपि। तत्र का ग्राह्येति निरूप्यते। तत्र सूर्य्योदये त्रिमुहूर्त्ता ततोऽधिका वा प्रतिपद्भवति उत्तरदिने चास्तमयादर्वाक् त्रिमुहूर्त्ता ततोऽधिका वा तृतीया भवति सैवमुभयविद्धा द्वितीया। तत्र वेधकतिथेरुदयेऽस्तमये वा त्रिमुहूर्त्तत्वं वेधप्रयोजकं न तु ततोन्यूनत्वं। तदेव

पैठीनसिवाक्येन पूर्व्वमुदाहृतम्। वेध्यतिथेश्च त्रिमुहूर्त्तसद्भावोऽपेक्षित इति "द्विमुहूर्त्तं त्रिरह्नश्च" इत्यनेन सुमन्तुवचनेन दर्शितम्। "उदयास्तमययोरेव वेध" इत्यस्यायमर्थः "उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" इत्यादिभिः कात्यायनवचनैरवगन्तव्यः। एवं सति उदाहृतविषये द्वितीया उभयवेधेऽपि उत्तरविद्धैवोपास्या युग्मादिवाक्येनान्वयव्यतिरेकाभ्यामुत्तरवेधस्य प्राशस्त्याभिधानात्" इति। पाद्मनूपवासरूपदैवविषयं तदप्युक्तं तेनैव। "यद्यप्युपोष्यत्वं साक्षान्नाभिहितं तथापि कर्म्मान्तरविशेषानुपादानादुपवासविषयत्वं परिशेष्यते तथा हि न तावत् पित्र्यविषयत्वं सम्भवति "द्वितीयादिकयुग्मानां पूज्यता नियमादिषु। एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिदेशनेति" व्यासेन युग्मादिशास्त्रस्य खर्व्वादिशास्त्रस्य च दैवपैत्र्यविषयकत्वेन व्यवस्थापनात् इति"। एवञ्चोपवसेतरदैवकर्म्मणि उदयगामिन्या ग्राह्यता तदपवादकं युग्मशास्त्रम्। तत्र च पैठीनसिवचनेन त्रिमुहूर्त्ततिथेरेव वेधप्रयोजकताऽभिधानेन ततो न्यूनकालिकतिथ्या वेधाभावात् गौड़देशीया यत् स्पर्शमात्रेण वेधं कल्पयन्ति तन्नादृतमात्रम् रघुनन्दनेन कृतापि तथा वेधानुक्तेः कालमा० हेमाद्रिप्रभृतिषु द्विमुहूर्त्तादिव्याप्त्यैव वेधकत्वव्यवस्थापनात्, युग्मशास्त्रस्य सामान्यशास्त्रतया वेधसामान्यप्रतिपादनेऽपि पैठीनसिना तस्य विशेषाभिधानात्तथैव सङ्कोचस्य युक्तत्वमित्युपेक्षामः। युग्मादिशास्त्रस्य बाधकन्तु "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वती प्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति० त० देवी० पु० "भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः। तिथावुदयगामिन्यां सर्व्वास्ताः कारयेद्बुधः" दुर्गो० त० नन्दि० पु० "शरत्काले महापूजा क्रियते या च वार्षिकी। सा कार्य्योदयगामिन्यां न तत्र तिथियुग्मता" तत्रैव पुरा० "पूर्व्वाह्णे तु सदा कार्य्याः शुक्ला मनुयुगादयः। दैवे कर्म्मणि पित्र्ये च कृष्णा चैवापराह्णिके। हेमा० नारदीयम् "युगादिमन्वादिश्राद्धादिषु शुक्लपक्षे उदयव्यापिनी तिथिर्ग्राह्या कृष्णपक्षेऽपराह्णव्यापिनी ग्राह्या स्वल्पार्थकारण दिनद्वये तु तथा लाभे परैवेति हेमाद्रिः। विधानपारिजातादयोऽप्येवम्। निर्ण० सि० "सर्व्वेष्टितिष्वतीपातो युगमन्वादयस्तथा। सम्पूर्णा उपवासेषु दानादावल्पिका स्मृता" अनन्तभट्टधृतवचने स्वादिपादात् श्राद्धसंग्रह इत्याह। इदन्त्ववधेयम्। "कर्म्मणो-

यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्” कर्म्मणोविहितकालव्यापिन्या एव ग्राह्यत्वाभिधानेन यत्, तिथितत्त्ववशात् उभयदिने तुल्यवत्तिथिविभक्तदिनतृतीयांशरूपपूर्व्वाह्णव्याप्तिसत्त्वे प्रतियोगिवैयधिकरण्यघटितव्याप्तेः प्रवेशनेन मुहूर्त्तकालव्याप्तावपि पूर्व्वाह्णव्यापकतया ग्रहणमित्येव रघुनन्दनस्याशयः। तथा च“आरभ्य तस्यां दशमी च यावत्” इत्यादौ यथा पूजायामन्तर्थीनां प्रतियोगिवैयधिकरण्यघटितव्यापकताप्रवेश एवमत्रापि मुहूर्त्तव्यापकतानातोन्यूनदण्डादिव्यापने ग्राह्यता । भवति च द्विमुहूर्त्तव्यापिन्या अपि मुहूर्त्तव्यापितेति सर्व्वं सुस्थम् । तेन मुहूर्त्तन्यूनतायां न ग्राह्यता द्विमुहूर्त्तादिव्याप्तिस्तु मुख्येति । एवञ्च युग्मादिशास्त्रविषये कृष्णप्रतिपदादौ उभयदिने पूर्व्वाह्णमुहूर्त्तव्यापित्वेऽपि त्रिमुहूर्त्ताया एव ग्राह्यतेति विवेकः । एवमस्तगामिन्यामपि अस्तादर्वाक् त्रिमुहूर्त्तायास्तिथेः । पित्र्ये ग्राह्यतेत्यपि बोध्यम् ।

**उदयगिरि** पु० उदय उदयस्थानं गिरिरिव । सूर्य्यादेरुदयस्थाने पर्व्वतवदाच्छादके भूवृत्तपादे “उदयगिरिवनालीबालमन्दारपुष्पम्” उद्भटः “उदयगिरिशिखरसंस्थिते प्रतप्तकनकनिकरपीतलोहिते सवितरि” सुश्रु० उदयाचलादयोऽप्यत्र । “स्थितोदयाद्रेरभिसायमुच्चैः” माघः। भूगोलपादस्यैव यथा सूर्य्याद्याच्छादकत्वम् तथा सिद्धान्तग्रन्थे स्थितम् । यद्यपि सूर्य्योदयस्य देशविशेषे विशेषस्थाने एव सम्भवः तथापि निरक्षदेशावधिकएव देशे मुख्यत्वम् “लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनार्धं यमकोटिपुर्य्याम् । अधस्तदा सिद्धपुरेऽस्तकालः स्याद्रोमके रात्रिदलं तदैव । यत्रोदितोऽर्कः किल तत्र पूर्व्वा तत्रापरा यत्र गतः प्रतिष्ठाम् तद्यन्यतोऽन्ये च ततोऽखिलानामुदक्स्थितोमेरुरिति प्रसिद्धम्” सिद्धान्तशिरोमणौ तथैव व्यवस्थापितम् ।

तथा च लङ्कादिपुरीचतुष्टयस्य भूवृत्तपादान्तरस्थितत्वेन द्वितीयपृथ्व्यर्द्धपरिस्थे सूर्य्यादौ प्रथमं दृश्यता तत्पूर्व्वादिस्थदेशे तु ततः पूर्व्वम् । पश्चात् स्थितदेशेषु च ततः पश्चात् दृश्यता एवञ्च भूवृत्तपादेनाच्छादने तदतिक्रमे दर्शनयोग्यत्वादुदयः । ततश्च यत्र देशे यदा दर्शनं तत्र तदा तद्देशापेक्षया सूर्य्यादेर्भूविम्बपादोपरिस्थितत्वेन तत्स्थानस्य उदयगिरित्वम् यत्र चादर्शनं तद्देशवासिनामस्तगिरित्वं शास्त्रेषु कल्पितम् । एवञ्च निरक्षदेशावधि भूवृत्तपादान्तरेषु स्थितलङ्कापुरवासिनां यमकोटिरेवोदयस्थानमेवमन्यत्र ऊह्यम् । विष्णुपुराणे तु अन्याः पुरीरुक्त्वा तत्रोदयादिव्यवस्थामाह “मानसोपरि माहेन्द्री प्राच्यां मेरोः स्थिता पुरी । दक्षिणे भानुपुत्रस्य वरुणस्य तु वारुणे । सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः । अमरावती संयमिनी सुखा चैव विभा क्रमात् । लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने । काष्ठाङ्गतस्य सूर्य्यस्य गतिर्या तां निबोधत । दक्षिणां प्रक्रमेद्भानुः क्षिप्तेषुरिव धावति । पुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः । सर्व्वैः सांयामनैःसौरो ह्युदयो दृश्यते द्विजाः ! । स एव सुखवत्यान्तु निशान्तस्थः प्रदृश्यते । अस्तमेति तदा सूर्य्यो विभायां विश्वदृग्विभुः । यथा प्रोक्तोऽमरावत्यां यथाऽसौ याति भास्करः । तथा संयमिनीं प्राप्य सुखायाञ्चैव विभां स्वगः । यदा पराह्णस्त्वन्येषां पूर्व्वाह्णोनैर्ऋते द्विजाः ! । तदा त्वपररात्रश्च वायुभागे सुदारुणः । ऐशान्यां पूर्व्वरात्रस्तु गतिरेषास्य सर्व्वत” इति । व्याख्यातञ्च का० उ० आनन्दगिरिणा “तथा चोपरिष्टादमरावत्यास्तिष्ठन्मध्याह्नं तत्रत्यकोणस्थानां तृतीययाममाग्नेयकोणस्थानामाद्ययामं संयमिन्यामुदयं च करोति सविता । एवं यदा याम्ये मध्याह्ने तिष्ठति तदैन्द्रे अस्तमयः, आग्नेये तृतीययामः, नैर्ऋतिकोणे प्रथमो यामः, वारुणे उदयः । यदा च वारुणे मध्याह्नस्तदायाम्येऽस्तमयः, निर्ऋतिकोणे तृतीयो यामः, वायव्ये प्रथमयामः, सौम्ये उदयः । यदा च सौम्ये मध्याह्नस्तदा वारुणेऽस्तमयः, वायव्ये तृतीययामः, ईशानकोणे प्रथमो यामः, ऐन्द्रे उदयः । तथाग्नेयकोणे वर्त्तमानस्तत्रस्थानां मध्यं दिनम्, यमेन्द्रपुर्य्योराद्यतृतीययामौ, नैर्ऋतेशानकोणयोरुदयास्तमयौ च करोति” एतच्च मानसापेक्षयैवोदयास्तमयकीर्त्तनाच्च पूर्व्वोक्तेन विरुद्धम् “अथ यदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्ता दूर्द्ध उदेताऽर्व्वागस्तमेता इत्यादि” का० उ० भाष्ये“पश्चादुत्तरत ऊर्द्धमुदेता विपर्य्ययेणास्तमेता । पूर्व्वस्मात्पूर्व्वस्माद्द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणं दर्शनम् । सवितुश्चतुर्दिगभिन्द्रयमवरुणसोमपुरीषूदयास्तमयकालस्य तुल्यत्वं हि पौराणिकैरुक्तम् । मानसोत्तरस्य मूर्द्धनि मेरोः प्रदक्षिणावृत्तेस्तुल्यत्वादिति” इत्याशङ्क्य अलोकः परिहार आचार्य्यैरमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्धासः स्यात् । उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरतापत्तिस्तद्व्ययश्चास्तमयं न परमार्थेन उदयास्तमये स्तः । तन्निवासिनाञ्च प्राणिनामभावे तान् प्रति तेनैव

मार्गेण गच्छन्नपि नैवोदेता नास्तमेतेति चक्षुर्गोचरतापत्तेरुदयस्य चाभावात् । तथाऽमरावत्याः सकाशाद्द्विगुणकालं सांयमिनीं पुरीं वसत्यतस्तन्निवासिनः प्राणिनः प्रति दक्षिणतः इवोदेत्युत्तरतोऽस्तमेतीत्युच्यते ऽस्यद्द्विगुणावेक्ष तयोत्तरास्वपि पुरोषु योजना । सर्वेषाञ्च मेरुरुत्तरो भवति । यदाऽमरावत्यां मध्याह्नगतः सविता तदा सांयमिन्यामुद्यन् दृश्यते तत्र मध्याह्नगोचरो वारुण्यामुद्यन्दृश्यते । तयोत्तरस्यां प्रदक्षिणावृत्तेस्तुल्यत्वात् । इलावृतवासिनां सर्वतः पर्व्वतप्राकारनिवारितादित्यरश्मीनां सवितोर्द्ध्व इवोदेताऽर्वागस्तमेता दृश्यते पर्व्वतोर्द्धच्छिद्रप्रवेशात्तत्रिलप्रकाशस्य । तथगोद्यस्ततोपज्जोविनामस्ततानाञ्च द्विगुणोत्तरोत्तरवीर्य्यवत्त्वमनुमीयते भोगकालद्वैगुण्यलिङ्गेन" छा० उ० भाष्यम् ।

**उदयन** पु० उद्+इ-ल्यु । १अगस्त्ये मुनौ, कुसुमाञ्जलिप्रभृतिग्रन्थकारके २उदयनाचार्य्ये च । "ख्यातेने किरणावलीमुदयनः" द्रव्यकिरणावली । अयञ्च आत्मतत्त्वविवेकादिनामग्रन्थकर्त्ता । ३वत्सराजे "उदयनमिवानन्दितवत्सकुलम्" काद० ४वत्सराजे च । वत्सराजचरितञ्च वृहत्कथायां विस्तरेण वर्णितम् । "प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्" मेघ० उद्+इ-भावे ल्युट् । ५उदये न० "पूर्व्वतः सागरस्येव चन्द्रस्योदयनं प्रति" भा० भी० ५८अ० "एषा युक्ते परावतः सूर्य्यस्योदयनादधि" ऋ० १,४८,७, "सम्पर्य्याणस्योदयनमादित्यस्य" शत० ब्रा० १२, ८,१८ । ६समाप्तौ च "सैषा त्रिवृत्प्रायणा त्रिवृदुदयना" ता० ब्रा० २, १५,२ त्रिवृत् स्तम्भकम् उदयने समाप्तौ यस्याः" भा० ।

**उदयनीया** स्त्री उदयने समाप्तौ विहिता तन्निमित्तत्वेन तस्य स्वामिनी वा छ । समाप्तिनिमित्ते १इष्टिभेदे "गार्हपत्य उदयनीयामाचरति" आश्व० श्रौ० ६,४,१,१, नेदमादिप्रभाऽदनीयामाचरति" आश्व० श्रौ० ६,४,१,१, नेदमादिप्रभाउदनीयामाचरति" आश्व० श्रौ० ६,४,१,१, नेदमादिषु माजनमर्त्तागुदयनीयायाः" ४,२,६, । चरुमेतयवर्हिनिर्वापादुदयनीयार्थं" कात्या० ७,५,१६, । अवभृथादुत्थाननिमित्ते २अतिरात्रे पु० "वृत्तावेवोदयनीयोऽतिरात्रः" शत० ब्रा० १२,१,२,२,अवभृथादुदेत्योदयनीयेन चरित्वानुबन्ध्यस्य पशुपुरोडाशमनु देविकानां हवींषि निर्वपति" ६, ५,१,२४ । "प्रायणीय एवातिरात्रे युञ्जन्त्युदयनीये विमुञ्चन्ति" । "अथो यथा प्रायणीयेऽतिरात्रे समिधेनीरनूच्य म्रूयादुदनीयएवातोऽनुवक्ताऽस्मीति" ८,४,४,१५,१६

**उदयवेला** स्त्री सूर्य्यस्य तत्किरणस्य वा उदयस्य वेला समयः । १सूर्य्योदयकाले २अरुणोदयकाले च "नाप्रेमास्तमिते पच्चे रटन्त्याश्चयतर्द्दनी । तस्मादुदयवेलायां स्नात्वा नावेक्षते यमम्" म० त० यमः । "उदयवेलायाम् अरुणोदयवेलायामिति" म० त० रघु० । शा० ति० उक्ते २भूतानामुदयसमये च भूतोदयशब्दे विवृतिः ।

**उदयान्तर** न० उदयस्योदयस्थानार्थम् अन्तरं यत्र । सि० शि० उक्ते ग्रहाणामुदयस्थानार्थं संस्कारभेदे उदयशब्दे विवृतिः ।

**उदयास्तसूत्र** न० "स्वाऽजे द्युरात्रसममण्डलमध्यभागजीवाग्रका भवति पूर्व्वपराशयोः सा । अस्याग्रयोः प्रगुणमत्र निबद्धसूत्रं यत्तद्वदन्ति गणका उदयास्तसूत्रम्" सि० शि० उक्ते तिर्य्यक्स्थाहोरात्रवृत्तसम्पातयोर्बद्धे सूत्रे

**उदर** न० उद्+दृ-अप् । १जठरे नाभिस्तनयोर्मध्यभागे । "दश स्थानानि दण्डस्येत्युपक्रम्य "उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमी । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च" मनुः । "मस्तकोदरपृष्ठनाभिललाटनासाचिवुकवस्तिग्रीवाइत्येता एकैकाः" शरीरविभागे सुश्रुतः । "उदरञ्च गुदौ कोष्ठौ विस्तारोऽयमुदाहृतः" या० स्मृ० । "उदरेऽश्वपक्तिः" शत० ब्रा० ८,६,२१,२ । "उदरं मारिमाति कृटिना" "मदसतुंशयगोचरोदरी" नैष० आधारे अप् । २युद्धे । ३मध्यभागमात्रे च "ताम्रोदरेषु तरुपल्लवेषु" रघुः "लतादिविच्छितोदरे" अम० "कुसुममिव पिनद्धं पाण्डुपत्रोदरेण" शकु० उद्+उ-अप् पृषो० दलोपश्च, उदरस्थत्वाद्वास्योदरशब्दवाच्यता "तात्स्थ्यात्तद्धर्म्मताभ्याञ्च तत्समीपतयाऽपि च ।" तत्साहचर्य्यात् शब्दानां इत्तिरुक्ता चतुर्विधा" भा० प्र० उक्तेः । ४उदररोगे । उदररोगनिदानादि सुश्रुते उक्तं यथा "अथात उदराणां निदानं व्याख्यास्यामः । धन्वन्तरिर्धर्म्मभृतां वरिष्ठो राजर्षिरिन्द्रप्रतिमो बभूव । तस्मर्षिपुत्रं विनयोपपन्नं शिष्यं शुभं सुश्रुतमन्वशात्स्यः । पृथक् समस्तैरपि चेह दोषैः प्लीहोदरं बद्धगुदं तथैव । आगन्तुकं सप्तममष्टमञ्च दकोदरं चेति वदन्ति तानि । सुदुर्बलाग्नेरहिताशनस्य संशुष्कपूत्यन्ननिषेवणाद्वा । स्नेहादिमिथ्याचरणाच्च जन्तोर्वृद्धिं गताः कोष्ठमभिप्रपन्नाः । गुल्माकृतिव्यञ्जितलक्षणानि कुर्वन्ति घोराण्युदराणि दोषाः । कोष्ठादुपस्नेहवदुग्रसारी निःसृत्य दुष्टोऽनिलवेगनुन्नः । त्वचः समुन्नम्य शनैः समन्ताद्विवर्द्धमानो जठरं करोति । तस्य स्वरूपं बलवर्णकाङ्क्षावल्लीविनाशो जठरे हि राज्यः । जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोफः । सङ्कुञ्च पार्श्वोदरपृष्ठनाभीर्वर्द्धेत कृष्णसिरावनद्धम् ।

सन्नुद्यमानाश्चनदुपगच्छेत् सतोदभेदं पवनात्मकं तत् १। यच्चोषतृष्णाज्वरदाहयुक्तं पैत्तं सिरा यत्र भवन्ति पीताः। पीताक्षिविण्मूत्रनखाननस्य पित्तोदरम् २ तत्त्वचिराभिवृद्धि। यच्छीतलं शुक्लसिरावनद्धं गुरु स्थिरं शुक्लनखाननस्य। स्निग्धं महच्छोफयुतं सशादं कफोदरम् ३ तच्च चिराभिवृद्धि। स्त्रियोऽन्नपानं नखरोममूत्रविडार्त्तवैर्युक्तमसाधुवृत्ताः। यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा। तेनाशु रक्तं कुपिताश्च दोषाः कुर्वन्ति घोरं जठरं त्रिलिङ्गम् ४। तच्छीतवाताभ्रसमुद्भवेषु विशेषतः कुप्यति दह्यते च। स चातुरो मूर्च्छति सम्प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च। प्रकीर्त्तितं दूष्युदरन्तु घोरं प्लीहोदरम् कीर्त्तयतो निबोध। विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च। प्लीहाभिवृद्धिं सततं करोति प्लीहोदरम् ५ तत्प्रवदन्ति तज्ज्ञाः। वामे च पार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र। मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः। सव्येतरस्मिन् यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव। तस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा सहितैः पृथग्वा। सञ्चीयते तत्र मलः सदोषः क्रमेण नाड्यामिव सङ्करोहि। निरुध्यते चास्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्। हृन्नाभिमध्ये परिवृद्धिमेति यस्योदरं विट्सगन्धिकञ्च। प्रच्छर्दयन् बद्धगुदं ६ विभाव्यं ततः परिस्राव्युदरं निबोध। शल्यं यदन्नोपहितं तदन्त्रं भिनत्ति यस्यागतमन्यथा वा। तस्मात् सुतान्त्रात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः। नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च। एतत्परिस्राव्युदरं ७ प्रदिष्टं दकोदरं कीर्त्तयतो निबोध। यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथ वा निरूढः। पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि। स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्ववदभ्युपैति। स्निग्धं महत्सम्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च। यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं ८ तत्। आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता। शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः। दाहस्तृष्णा च सर्वेषु जठरेषु भवन्ति हि। अन्ते सलिलभावन्तु भजन्ते जठराणि तु। सर्वाण्येव परीपाकात्तदा तानि विवर्जयेत्"। विस्तरस्तु भा॰प्र॰ दृश्यः। गर्भपातनजा रोगा यकृत्प्लीहजलोदराः इत्युक्तेः पुंस्त्वमपि। ५स्वर्थे त्रि॰ "उदरमन्तरं कुरुते" श्रुतिः

**उदरग्रन्थि** पु॰ उदरे ग्रन्थिरिव। गुल्मरोगे हेम॰। गुल्मशब्दे विवृतिः उदरगुल्मोऽप्यत्र पु॰ "दुर्नोर्विकारकारी च भवेदुदरगुल्मवान्" शाता॰स्मृतिः। [उदरबन्धवस्त्रे हेम॰

**उदरत्राण** न॰ उदरं त्रायतेऽनेन त्रै–ल्युट्। (कमरबन्ध)

**उदरथि** पु॰ उद्+ऋ–अथिन्। समुद्रे उज्ज्वलदत्तः।

**उदरपिशाच** त्रि॰ उदरे तत्पूर्त्तौ पिशाच इव। सर्वान्नभक्षके हेमच॰। [स्वेन पूरयित्वेत्यर्थे।

**उदरपूरम्** अव्य॰ उदर+पूर–साकल्ये णमुल्। उदरं साक-

**उदरम्भरि** त्रि॰ उदरं बिभर्त्ति भृ–खि मुम् च। पञ्चयज्ञाद्यकरणेनात्मोदरमात्रपोषके।

**उदररोग** पु॰ ६त॰। (उदरी) इति ख्याते रोगे। उदरशब्दे विवृतिः। उदरव्याधिरप्यत्र "कदलीयवक्षारन्तु पानीयेन प्रसाधितम्। तदास्वादेन नश्यन्ति उदरव्याधयोऽखिलाः" गरु॰ पु॰।

**उदरवत्** त्रि॰ वृहमुदरमस्त्यस्य तुन्दादि॰ वृहतायाम् मतुप् मस्य वः। वृहदुदरयुक्ते। पक्षे–ठन्। उदरिक इनि। उदरिन् पिच्छा॰ इलच्। उदरिल उक्तार्थे त्रि॰ इनौ मतौ च स्त्रियां ङीप्।

**उदरशय** पु॰ उदरे शेते शी–पार्श्वा॰ अच्। गर्भशये

**उदरशाण्डिल्य** पु॰ ऋषिभेदे "वृहद्वोदरशाण्डिल्यः पाराशर्यः कृषीवलः" भा॰स॰ ७अ॰। "तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्तोवाच" छा॰ उ॰।

**उदराध्मान** न॰ ६त॰। (पेटफाँपा) रोगभेदे। तत्कारणमुक्तं सुश्रु॰ "कषायः संग्राहको रोपणः स्तम्भनः शोधनो लेखनः शोषणः पीडनः क्लेदोपशोषणश्चेति स एवं गुणोऽप्येक एवात्यर्थमुपसेव्यमानो हृत्पीडास्यशोषोदराध्मानवाक्यग्रहमन्यास्तम्भगात्रस्फुरणचुमचुमायनाकुञ्चनाक्षेपणप्रभृतीन् जनयति"। तच्चाजीर्णस्य लिङ्गं तदप्युक्तं सुश्रुते तच्च उदरशब्दे वक्ष्यते।

**उदरामय** पु॰ उदरस्थामं रोगं याति नयति या–क। स्वनामख्याते रोगे अतिसारशब्दे ह॰ विवृतिः। "शीतं मधुयुतं कृत्वा पाययेतोदरामये" "शर्करोपहितं शीतं पाययेच्चोदरामये" सुश्रु॰।

**उदरावर्त्त** पु॰ उदरे आवर्त्त इव गम्भीरत्वात्। नाभौ।

**उदरिणी** स्त्री॰ उदरं तत्स्थगर्भोऽस्त्यस्याः इनि ङीप्। गर्भिण्याम्।

**उदर्क** पु॰ उद्+अर्क–अर्च–वा घञ्। १उत्तरकाले २भाविफलके शुभाशुभकर्मणि च। "तद्ब्रवत्वस्योदर्कं जीवतश्च मृतस्य च"

"सोऽनुभूयासुखोदर्कान्" मेत्येह च सुखोदर्कान् प्रजाधर्मान् निबोधत" मनुः। "नन्वयमुदर्कः प्राक्तनस्य दुष्कृतस्य" दशकु०। "नानाप्रभृतयः समानोदर्का ऋतवो वा अहस्सन्त" शत०ब्रा० ८,७,१,२।

**उदर्चिस्** पु० उद् अर्द्ध मर्चिः शिखाऽस्य। १उच्छिखे वह्नौ। उत्कृष्टकान्तित्वात् २कन्दर्पे ऊर्द्ध्वरेतस्त्वात् ३शिवे च। ४उन्नतशिखान्विते त्रि०"प्रदक्षिणप्रक्रमणात् कृशानोरुदर्चिषस्तन्मिथुनं चकासे" "अथेशोदर्चिषं सूर्य्यम्"रघुः। "स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात"कुमा०। प्रा०स०। ५उद्गतायां शिखायां न०स्त्री०।

**उदर्द** पु० उद्+अर्द्द-अच्। "वरटादष्टसंस्थानः शोथः संजायते बहिः। सकण्डूस्तोदबहुलस्तर्हिर्ज्वरविदाहवान्। उदर्दमिति तं विद्याच्छीतपित्तमथापरे। वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकम्" इति निदानोक्ते रोगभेदे।

**उदर्य्य** त्रि०उदरे भवः उदर+यत्। जठरभवे"यदुदर्य्यस्य मेदसःपरिशिष्येत" शत०ब्रा० ३,८,४,५, "पुरीतता नभ, उदर्य्येण चक्रवाकौ"यजु० २५,८।

**उदलावणिक** त्रि० उदकीभूतं लवणमुदलवणम् उदादेशः। तेन पक्वम् ठञ् उत्तरपदवृद्धिः उदकीभूतलवणपक्वे व्यञ्जनादौ हलायु०।

**उदवसित** न० उद्+अव+सि–षो–वा क्त। गृहे अमरः।

**उदवाप** पु० उदकं वपति पिण्डस्थानीयतया वप–अण् उदादेशः उप० स०। जलमात्रेण १श्राद्धकर्त्तरि २तर्पणकारिणि च। तस्यापत्यम् इञ्। औदवापि तदपत्ये पुंस्त्री ततः तस्येदमित्यर्थे रैवति० छ। औदवापीय तत्सम्बन्धिनि त्रि०।

**उदवास** पु० उदके व्रतार्थं वास उदादेशः। व्रतार्थं जलवासे। "अशक्तशिरास्तु योऽम्भेत् उदवासं च योवसेत्। सततं चैकशायी यः स लभेतेप्सितां गतिम्" भा०आनु० १०७अ०"सहस्ररात्रोदवासतत्परा" कुमा०।

**उदवाह** पु०उद उदकं वहति वह–अण् उप०स०। जलवाहके १मेघे। "दिवा चित्तम कृण्वन्ति पर्जन्येनोदवाहेन" ऋ०१,३८,९, २उदकवाहकमात्रे त्रि०"आ वोयक्षदुदवाहासो अद्य वृष्टिं ये विश्वे मरुतो जुनन्ति"ऋ०५,५८, "उक्षा वहन्तु मरुत उदवाहा उदप्रुतः"अथ० १८,२,२२,

**उदशराव** पु०उदकपूर्णः शरावः शा०त०पूरयितव्ये एकहलादौ उदादेशः। जलपूर्णे शरावे "उदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीयस्तन्मे प्रब्रूतमिति तौ होदशरावेऽपेक्षाञ्चक्राते" छा०उ०६प्र०।

**उदशुद्धि** त्रि० उद्‌ना उदकेन शुद्धिः। स्नाते तस्यापत्यम् इञ्। औदशुद्धि तदपत्ये पुंस्त्री ततः यूनि इञन्तत्वात् फिञ् तस्य पैला०लुक।

**उदश्रु** त्रि० उद्गतमश्रु यस्य प्रा०ब० गतलोपः। उद्गतनेत्रजले "तस्य पश्यन् स सौमित्रिरुदश्रुर्वसतिद्रुमान्" रघुः।

**उदश्वित्** न० उदकेन जलेन श्वयति वर्द्धते श्वि-क्विप् संज्ञायाम् उदादेशः। अर्द्धजलेन मथिते तक्रे अमरः। "पाने मूलमुदश्विच्च दधि शुक्तञ्च भोजने"। "मर्द्दनं दध्युदश्विद्भ्यामथ वा तण्डुलाम्बुना"सुश्रु०।

**उदसन** न० उद्+अस–ल्युट्। १निरसने २उत्क्षेपणे च।

**उदस्थान** न० उद्ना प्लावितं स्थानं शाक० त०। १उदकप्लाविते स्थाने। ततः भवार्थे उत्सा० अञ्। औदस्थान तद्भवे त्रि०। उदनि स्थानं वासः। २जलवासे। तत् शीलमस्य छत्रा० ण। औदस्थान जलवासशीले त्रि०।

**उदहरण** पु० उदकं ह्रियतेऽनेन हृ-करणे ल्युट् उदादेशः। कुम्भे। "प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिमभ्यत्य पञ्चदशभ्यः" कात्या० ८,२,२२। "उदहरणाः कलशाः" इति कर्कः। "निधायोदहरणे त्रिविपर्य्ययते" "अथैतमश्मानमुदहरणेऽवधाय" शत०ब्रा०६,१,२,५,६,८।

**उदहार** त्रि० उदकं हरति हृ-अण् उप०स० उदादेशः। १जलहारके"प्रविविक्तां नदीं रात्रावुदहारोऽहमागतः" दशक०। स्त्रियां ङीप्। "उतेन गोपा अदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टो मृडयाति"यजु०१६,७। तेन सि०कौ० "टिड्ढाणञ्इत्यादि" सूत्रे तद्धितायन्तस्यैव ग्रहणोक्तिश्चिन्त्या अतएव सुग्धबो० कर्म्मण्यण्"पा०सूत्रपरिवर्त्तनेन "टात् अण्" इति सूत्रे ङीबर्थं चिन्त्यं कृतम्। तथा च कुम्भकारीत्येव साधु न तु कुम्भकारा। प्रयुज्यते च नाटकादौ प्रतिहारीत्येव तत्र च प्रतिशब्दस्य प्रत्येकार्थत्वात् कर्म्मोपपदत्वं सुलभम्। भावे घञ् द्वैत०। २जलहरणे च।

**उदाज** पु० उद्+अज-घञ् न कुत्वं व्यभावः। पशुप्रेरणे

**उदात्त** पु० उद्+आ+दा–क्त। वर्णोत्पत्तिस्थानेषु उच्चैरुच्चारिते १स्वरे २तद्युक्ते त्रि०। "उच्चैरुदात्तः" पा०। "ताल्वादिषु सभागेषु स्थानेषूर्द्ध्वभागे निष्पन्नोऽजुदात्तः" सि०कौ०। "उदात्तश्चानुदात्तश्च स्वरितश्च स्वरा अचीति" शिक्षोक्तेः अचामेव त्रैस्वर्य्यम्। अनेकाच्कपदे "अनुदात्तं

पदमेकवर्ज्जम्" पा० एकस्यैवोदात्तता अन्यस्य चानुदात्ततोक्ता । तत्रादौ सामान्यत उदात्तविधायकं सूत्रं दर्श्यते । "अञ्चेश्छन्दस्यसर्व्वनामस्थानम्" पा० । अञ्चेः परा विभक्तिरुदात्ता । प्रतीचोबाहून् । "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" पा० ऊठ् इदम् पदादि अप् पुम् रै दिव् इत्येभ्योऽसर्व्वनामस्थानविभक्तिरुदात्ता । प्रष्ठौहः । एभिर्द्दभिः । पद्दन्नोमास् हृन्निश इति षट् पदादयः । पद्भ्याम् । दद्भिः । नसा मासि । हृदा निशा । पुंसः । राया । दिवः । "अष्टनो दीर्घात्" पा० । दीर्घान्तादष्टनः परः शसादिरुदात्तः । अष्टभिः । "शतुरनुमो नद्यजादी" पा० अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात् परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता । जानती जानतः । दधती दधत इत्यादौ तु अभ्यस्तानामादिरित्याद्युदात्तत्वविधानेन अन्तोदात्तत्वाभावात् न तथा । अनुमस्तु तुदन्तीत्यादौ न । "उदात्तयणोहल्पूर्व्वात्" पा० उदात्तस्थाने यो यण् हल्पूर्व्वस्तस्मात् परा नदी शसादिर्विभक्तिश्च उदात्ता । नेत्री, नेत्रा, इत्यत्र सवित्रा । "नोङ्धात्वोः" पा० अनयोर्यणः परे शसादय उदात्ता न स्युः । ब्रह्मबन्ध्वा सुभ्वा । "ह्रस्वनुड्भ्यां मतुप्" पा० ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुप् उदात्तः। अग्निमान् उदधिमान् । नुट् अक्षण्वन्तः । "रैशब्दाच्च" वा० रैमान् । "नामन्यतरस्याम्" पा० । मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात् परो नाम् उदात्तो वा । सुमतीनाम्" "ङ्याश्छन्दसि" पा० ङ्याः परो नाम् उदात्तो वा । अभिभङ्गतीनाम् । "षट्त्रिचतुर्भ्यो हलादिः" पा० एभ्यो हलादिर्विभक्तिरुदात्ता । षड्भिः त्रिभिः । "न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः" पा० एभ्यः परं प्रागुक्तं सावेकाचस्तृतीया विभक्तिरिति न कार्य्यम् । "दिवोझल्" पा० दिवः परा झलादिर्नोदात्ता । "नृ चान्यतरस्याम्" पा० । नुः परा झलादिर्वोदात्ता । नृभिः । "उपोत्तमं रिति" पा० रित्प्रत्ययान्तस्योपोत्तममुदात्तम् । आहवनीयः । "मतोः पूर्व्वमात् संज्ञायां स्त्रियाम्" मतोः पूर्व्वमाकारः उदात्तः संज्ञायां स्त्रियाम् । उदुम्बरावती शरावती अमरावती "एकादेशउदात्तेनोदात्तः" पा० । उदात्तेन सहैकादेश उदात्तःस्यात् । क वोऽश्वाः। "स्वरितोवानुदात्ते पदादौ" पा० अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा पक्षे उदात्तः । "वीदंज्योतिर्हृदये"। "उच्चैस्तरां वा वषट्कारः" पा० यज्ञकर्म्मणि वषट्शब्द उच्चैस्तराम् अथान्तोदात्तः एकश्रुतिर्वा "सुब्रह्मण्यायां स्वरितस्योदात्तः" पा०। सुब्रह्मण्याख्ये निगदे एकश्रुतिर्न स्यात् स्वरितस्य उदात्तः स्यात् । "अल्युपोत्तमम्" पा० षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तम् । पञ्चभिः दशभिः । "विभाषा भाषायाम्" पा० । उक्तविषये लोके वोदात्तः। "अन्तश्च तवै युगपत्" पा० तवैप्रत्ययान्तस्याद्यन्तौ युगपदुदात्तौ । दातवै । "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" पा०। दध्यादेर्योऽनङ् उदात्तः "चतुरनडुहोरामुदात्तः" पा० इत्यादीनि उदात्तविधायकानि । तत्र बह्वच्के पदे कस्योदात्ततेति निर्णयाय आद्यन्तोदात्तादिभेदेन" पा० त्रैविध्यमुक्तं तथा च केचिदाद्युदात्ताः केचिदन्तोदात्ताः केचित् मध्योदात्ताः । तत्राद्युदात्ततविधायकसूत्राणि आद्युदात्तशब्दे ७०६ पृ० उक्तानि अन्तोदात्तविधायकानि अन्तोदात्तशब्दे २०६ पृ० दिङ्मात्रमुदाहृतानीत्यतः प्रकृतान्यत्र प्रदर्श्यन्ते "उञ्छादीनाञ्च" पा० अन्त उदात्तः स्यात् उञ्छादयश्च । उञ्छ म्लेच्छ जञ्ज जल्प जप वध युग (गरोदूष्ये) (वेदवेगवेष्टबन्धाः करणे) (स्तुयुद्रुवश्छन्दसि) (वर्त्तनिःस्तोत्रे) (दरःश्वभ्रे) (साम्नतापौ भावगर्हायाम्) (उत्तमशश्वत्तमौ सर्व्वत्र) भक्ष मन्थ भोग मन्थ । अत्रैव निपातनात् युगवधयोर्घञन्तत्वेऽपि न गुणः" । "चतुरः शसि" पा० । चतुरोऽन्त उदात्तः शसि परे । चतुरः । चतेरुरन्निति नित्त्वादाद्युदात्तत्वेऽपि शसि अन्तोदात्ततैव । "अन्तोऽवत्याः" पा० अवतीशब्दस्यान्त उदात्तः । वेत्रवती । "ईवत्याः" पा० ईवत्यन्तस्यापि अन्त उदात्तः । अहीवती मुनीवती । "चितः" पा० चित्प्रत्ययान्तस्यान्त उदात्तः स्यात्" । "चितः सप्रकृतेर्बह्वकजर्थम्" वार्त्ति०। चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तः । "नमन्तामन्यके सभे "यके सरस्वति" तकत् कुवते 'तद्धितस्य" पा० चितस्तद्धितस्यान्त उदात्तः पूर्व्वेण सिद्धे ञित्स्वरबाधनाय । चफञ् कौञ्जायनाः । "कितः" पा० कितस्तद्धितस्यान्त उदात्तः । ढक् आग्नेयः । "तिसृभ्योजसः" पा० अन्त उदात्तः। तिस्रः। "अन्तोदात्तादुत्तरपदादन्यतरस्याम्" पा० नित्याधिकारसमासादन्यत्र यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीया विभक्तिरन्तोदात्ता वा । परमवाचा । "थलि च सेटीडन्तो वा" पा० सेटि थलि परे इडुदात्तः इडन्तो वाद्यादिर्वा । लुलविथ चत्वारोऽपि पर्य्यायेणोदात्ताः ।

फिट्सूत्रेषु १मपादे केचित् शब्दा अन्तोदात्ताः दर्शिता यथा। "फिषोऽन्त उदात्तः"१। प्रातिपदिकं फिट् तस्यान्त उदात्तः स्यात्। उच्चैः। "पाटलापालङ्काम्बासागरार्थानाम्" २। एतदर्थानामन्त उदात्तः। पाटला फलेरुहा सुरूपा पाकलेति पर्य्यायाः। लघावन्त इति प्राप्तः। पालङ्कीव्याधिघातव्यारेवतव्यारग्बध इति पर्य्यायाः। अम्बार्थः माता। उनर्वन्नन्तानामाद्युदात्ते प्राप्ते। सागरः। समुद्रः। "गेहार्थानामस्त्रियाम्"३। गेहम्। नब्विषयस्येति प्राप्ते। अस्त्रियां किम् शाला आद्युदात्तोऽयम् इहैव पर्य्युदासाज्ज्ञापकात्। "गुदस्य च" ४। अन्त उदात्तः स्यान्न स्त्रियाम्। गुदम्। अस्त्रियां किम् "आन्त्रेभ्यस्ते गुदाभ्यः"। स्वाङ्गशिटामदन्तानामित्यन्तरङ्गमाद्युदात्तत्वम् ततष्टाप्। "ध्यपूर्व्वस्य स्त्रीविषयस्य"५। धकारयकारपूर्व्वीयोऽन्त्योऽच् स उदात्तः। अन्तर्धा। स्त्रीविषयवर्णेति प्राप्ते। छाया। माया। जाया। यान्तस्यान्त्यात् पूर्व्वमित्याद्युदात्तत्वे प्राप्ते। स्त्रीति किम् बाह्यम् यञन्तत्वादाद्युदात्तम्। विषयग्रहणं किम् इभ्या। क्षत्रिया। यतोऽनाव इत्याद्युदात्त इभ्यशब्दः। क्षत्रियशब्दस्तु यान्तस्यान्त्यात्पूर्व्वमिति मध्योदात्तः। "खान्तस्याश्मादेः"६। नखम्। उखा। सुखम्। दुःखम्। नखस्य स्वाङ्गशिटामित्याद्युदात्ते प्राप्ते। उखा नाम भाण्डविशेषस्तस्य कृत्रिमत्वात् खय्युवर्णं कृत्रिमाख्या चेदित्युवर्णस्योदात्तत्वे प्राप्ते। अश्मादेः किम् शिखा। मुखम्। मुखस्य स्वाङ्गशिटामिति नब्विषयस्येति वा आद्युदात्तत्वम्। शिखायास्तु शीङः खो निद्ध्रस्वश्चेति उणादिषु नित्त्वोक्तेः अन्तरङ्गत्वाट्टापः प्रागेव स्वाङ्गशिटामिति वा बोध्यम्। "बंहिष्ठसंवत्सरतिशत्यान्तानाम्"७। एषामन्त उदात्तः स्यात्। अतिशयेन बहुलो बंहिष्ठः। नित्त्वादाद्युदात्ते प्राप्ते। "बंहिष्ठैरश्वैः सुवृता रथेन"। "यद्वंहिष्ठंनाति विधे" इत्यादौ व्यत्ययादाद्युदात्तः। संवत्सरः। अव्ययपूर्व्वपदप्रकृतिस्वरोऽत्र बाध्यते इत्याहुः। सप्ततिः। अशीतिः। लघावन्त इति प्राप्ते। चत्वारिंशत्। इहापि प्राग्वत्। अभ्युता। "नायभयस्य" ८। अव्ययपूर्व्वपदप्रकृतिस्वरोऽत्र बाध्यते इत्याहुः। बाधादिकल्पेव गतार्थमेतत्। "दक्षिणस्य साधौ" ९। अन्त उदात्तः स्यात्। साधुवाचित्वाभावे तु व्यवस्थायां सर्व्वनामतया स्वाङ्गशिटामित्याद्युदात्तः। अर्थान्तरे तु लघावन्त इति गुरुरुदात्तः। दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिष्विति कोशः। "स्वाङ्गाख्यायामादिर्वा"१०। इह दक्षिणस्याद्यन्तावुदात्तौ। दक्षिणो बाहुः आख्याग्रहणं किम्। प्रत्यङ्मुखमासीनस्य वामपाणिर्दक्षिणो भवति। "छन्दसि च" ११। अस्वाङ्गार्थमिदम्। दक्षिणः। इह पर्य्यायेणाद्यन्तावुदात्तौ। "कृष्णस्यामृगाख्या चेत्" १२। अन्त उदात्तः। वर्णानान्तणेत्याद्युदात्ते प्राप्ते अन्तोदात्तो विधीयते। कृष्णानां व्रीहीणाम्। "कृष्णो नो नाव वृषभः"। मृगाख्यायान्तु "कृष्णो रात्र्यै"। "वा नामधेयस्य"१३। "कृष्णस्यैव। "अयं वा कृष्णोऽश्विना"। कृष्ण ऋषिः। "शुक्लगौरयोरादिः"१४। नित्यमुदात्तः स्यादित्येके। नेत्यनुवर्त्तत इति तु युक्तम्। "सरो गौरो यथापि बेत्यन्तोदात्तदर्शनात्"। "अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः"१५। अङ्गुष्ठस्य स्वाङ्गानामकुर्व्वादीनामिति द्वितीयस्योदात्तत्वे प्राप्तेऽन्तोदात्तार्थ आरम्भः। वशाग्रहणं नियमार्थं छन्दस्येवेति। तेन लोके आद्युदात्तेत्याहुः। "पृथस्य च"१६। छन्दस्यन्त उदात्तः स्यात् भाषायाम् वा। पृथम्। "अर्ज्जुनस्य तृणाख्या चेत्"१७। उनर्वन्नन्तानामित्याद्युदात्तस्यापवादः। "अर्य्यस्य स्वाम्याख्या चेत्" १८। यान्तस्यान्त्यात् पूर्व्वमिति यतोऽनाव इति वाद्युदात्ते प्राप्ते वचनम्। "आशाया अदिगाख्या चेत्"१९। दिगाख्याव्यावृत्त्यर्थमिदम्। अतएव ज्ञापकाद्दिक्पर्य्यायस्याद्युदात्तता। "इन्द्र आशाभ्यस्परि"। "नक्षत्राणामाब्विषयाणाम्"२०। अन्त उदात्तः स्यात्। अश्लेषाऽनुराधादीनां लघावन्त इति प्राप्ते। ज्येष्ठाश्रविष्ठाधनिष्ठानामिष्ठन्नन्तत्वेनाद्युदात्ते प्राप्ते वचनम् "न कुपूर्व्वः कृत्तिकाख्या चेत्" २१। अन्त उदात्ता न। कृत्तिका नक्षत्रम्। केचित्तु कुपूर्व्वो य आप् तद्विषयाणामिति व्याख्याय आर्य्यिका बहुलिका इत्यादावप्यन्तोदात्तौ नेत्याहुः। "घृतादीनाञ्च" २२। "घृतं मिमिक्षे" आकृतिगणः। "ज्येष्ठकनिष्ठयोर्वयसि" उदात्तः स्यात्। "ज्येष्ठ आह चमसा"। "कनिष्ठ आह चतुरः"। वयसि किम् ज्येष्ठः श्रेष्ठः, कनिष्ठोऽल्पिष्ठः। इह नित्त्वादाद्युदात्त एव। "बिल्वतिष्ययोः स्वरितो वा" २४। अनयोरन्तः स्वरितो वा स्यात्। पक्षे उदात्तः। सि० कौ०। फिट्सूत्रे २पादे येषां द्वितीयाद्यचामुदात्तताऽभिहिता तत् प्रदर्श्यते "अथ द्वितीयं प्रागीषात्"१। ईषान्तस्य हलादेरित्यतः प्राक् द्वितीयाधिकारः। "त्र्यचां प्राङ्मकरात्"२। मकरवरूढेत्यतः प्राक् त्र्यचामित्यधिकारः। "स्वाङ्गानाम-

कुर्वादीनाम्" ३ । कर्म्मारेफत्वकारादीनि वर्ज्जयित्वा त्र्यचां स्वाङ्गानां द्वितीयमुदात्तम् । ललाटम् । कुर्वादीनान्तु कपोलः । रसना । वदनम् । "मादीनाञ्च" ४ । मलयः । मकरः । "शादीनां शाकानाम्" ५ । शीतन्या शतपुष्पा । "पान्तानां गुर्वादीनाम्" ६ । पादपः आतपः । लघ्वादीनान्तु अनूपम् । "युतान्यण्यन्तानाम्" ७ । युत अयुतम् । अनि धमनिः । अणि विपणिः । "मकरवरूडपारेवतवितस्तेक्ष्वाजिराद्राक्षाकलोमाकाष्ठायुतवाकाशीनामादिर्वा" ८ । एषामादिर्द्वितीयो वोदात्तः । मकरः । वरूड इत्यादि । "छन्दसि च" ९ । अमकराद्यर्थ आरम्भः । लघ्वावसानादादिर्द्वितीयं वोदात्तं ज्ञेयम् । "कर्द्दमादीनाञ्च" १० । आदिर्द्वितीयं वोदात्तम् । "सुगन्धितेजनस्य ते वा" ११ । आदिर्द्वितीयन्ते शब्दश्चेति त्रयः पर्य्यायेणोदात्ताः । सुगन्धितेजनाः । "नपः फलान्तानाम्" १२ । आदिर्द्वितीयञ्चोदात्तम् । राजादनफलम् । "यान्तस्यान्त्यात् पूर्व्वम्" १३ । कुलायः । "थान्तस्य च नालघुनी" १४ । नाशब्दो लघु च उदात्ते स्तः । सनाथा सभा । सरथा सेना "शिशुमारोदुम्बरबलीवर्द्दोष्ट्रारपुरूरवसाञ्च" १५ । अन्त्यात् पूर्व्वमुदात्तं द्वितीयं वा । "साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम्" १६ । द्वितीयमुदात्तं वा । "ईषान्तस्य हलादेरादिर्वा" १७ । हलीषा । लाङ्गलीषा । ४पादे "शकटिशकट्योरक्षरमक्षरं पर्य्यायेण" १ । उदात्तम् । शकटिः । शकटी । "गोष्ठजस्य ब्राह्मणनामधेयस्य" २ । अक्षरमक्षरं पर्य्यायेणोदात्तम् । गोष्ठजः ब्राह्मणः अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । "पारावतस्योपोत्तमवर्जम्" ३ । शेषं क्रमेणोदात्तम् । पारावतः । "धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानामधूजलस्थानाम्" ४ । एषाञ्चतुर्णाम्धूप्रभृतींश्चतुरो वर्जयित्वा शिष्टानि क्रमेणोदात्तानि । धूम्रजानुः मुञ्जकेशः कालवालः स्थालीपाकः । "कपिकेशहरिकेशयोश्छन्दसि" ५ । कपिकेशः हरिकेशः ।

समासस्य बहुपदघटिततया कस्योदात्ततेति निर्णयाय केचित् पूर्व्वपदप्रकृतिस्वराः केचित् उत्तरपदप्रकृतिस्वराः केचित् पूर्व्वपदे आद्युदात्ताः केचिच्च तत्रान्तोदात्ताः केचित् उत्तरपदे आद्युदात्ताः केचिच्च तत्रान्तोदात्ताः इति विभागं मनसि निधाय पाणिनिना ६अध्याये समासस्वरप्रकरणमारब्धं यथा "समासस्य" पा० अन्त उदात्तः स्यात् इत्युत्सर्गः । इति सामान्यतोविधाय विशेषमाह ।

तत्रादौ पूर्व्वपदप्रकृतिस्वरः । "बहुव्रीहौ प्रकृत्या पूर्व्वपदम्" पा० । उदात्तस्वरितयोगिपूर्व्वपदं प्रकृत्या स्यात् ब० व्री० । अन्तोदात्ततापवादः । "सत्यश्चित्रश्रवस्तमः" । सर्वानुदात्ते पूर्व्वपदे तु अन्तोदात्त एव । समपादः । "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाऽव्ययद्वितीयाकृत्याः" पा० । सप्तैते पूर्व्वपदभूतास्तत्पुरुषे प्रकृतिस्वराः । तुल्यश्वेतः समश्वेतः । किरिणा काणः किरिकाणः । मद्यसखः । मदयति मादके इन्द्रे सखा । शस्त्रीश्यामः घनश्यामः । "अव्यये नञ्कुनिपातानामिति वाच्यम्" वार्त्ति० । अयज्ञः । नञिलाद्यङ्गेः स्नात्वाकालकादौ न । द्वितीया अथसुखम् । कृत्या भोज्योष्णम् । "वर्णो वर्णेष्वनेते" पा० वर्णवाचिन्युत्तरपदे एतवर्ज्जिते वर्णवाचि पूर्व्वपदं प्रकृत्या तत्पुरुषे । कृष्णसारङ्गः । वर्णः किं परमकृष्णः इत्यादौ, वर्णेषु किं कृष्णतिला इत्यादौ च न, एवं कृष्णैत इत्यत्रापि । "गाधलवणयोः प्रमाणे" पा० एतयोरुत्तरपदयोः प्रमाणवाचिनि तत्पुरुषे पूर्व्वपदं प्रकृत्या । अरित्रगाधम् तत्प्रमाणमित्यर्थः । गोलवणम् यावद्गवे दीयते तावदित्यर्थः । "दायाद्यं दायादे" पा० धनदायादः । "प्रतिबन्धि चिरकृच्छ्रयोः" पा० । प्रतिबन्धिवाचि पूर्व्वपदं प्रकृत्या एतयोः परयोः । गमनचिरम् । कथनकृच्छ्रम् । गमनादिकारणविकलतया चिरकालभावि कृच्छ्रयोगितया चात्र प्रतिबन्धः । अन्यत्र मूत्रकृच्छ्रमित्यादौ न । "पदेऽपदेशे" पा०' व्याजवाचिनि उत्तरपदे प्राग्वत् । मूत्रपदेन प्रस्थितः । अनपदेशे तु विष्णुपदम् अत्र न "निवाते वातत्राणे" पा० पार्श्ववाचिनिवाते परे वातत्राणवाचिनि तत्पुरुषे प्राग्वत् । कुटीनिवातम् । वातत्राणाभावे तु राजनिवाते वसतीत्यत्र न "शारदेऽनार्त्तवे" पा० आर्त्तवभिन्नवाचिनि शारदे परे प्राग्वत् । रज्जुशारदमुदकम् । रज्ज्वाः सद्य उद्धृतमित्यर्थः । आर्त्तवार्थत्वे तु उत्तमशारदमित्यादौ न । "अध्वर्युकषाययोर्जातौ" पा० एतयोः परयोर्जातिवाचकस्य प्राग्वत् । कठाध्वर्युः दौवारिककषायम् । अजातेस्तु परमाध्वर्युरित्यादौ न "सदृशप्रतिरूपयोः सादृश्ये" पा० पितृसदृशः पितृप्रतिरूपः । असादृश्ये तु परमसदृश इत्यादौ न । सादृश्यमत्र पूज्यता न तु सादृश्यमात्रम् सि० कौ० । "द्विगौ प्रमाणे" पा० द्विगौ प्रमाणवाचिनि परे पूर्व्वपदं प्रकृतिस्वरम् । प्राच्यसप्तसमः ।

अत्र समाः प्रमाणमस्य सप्तसमः ततः कर्म०। "गन्तव्यपण्यं वाणिजे" पा० वाणिजशब्दे परे एतदर्थकौ प्राग्वत् तत्पुरुषे। मद्रवाणिजः गोवाणिजः। अगन्तव्यादौ तु परमवाणिज इत्यादौ न। "मात्रोपज्ञोपक्रमच्छाये नपुंसके" पा० "मात्रादिषु परतः नपुंसकवाचिनि तत्पुरुषे प्रकृत्या। भिक्षामात्रम्। पाणिन्युपज्ञम्। नन्दोपक्रमम्। इषुच्छायम्। नपुंसके किम् वृक्षच्छाया इत्यादौ न। "सुखप्रिययोर्हिते" पा०। गमनसुखं गमनप्रियम्। "प्रीतौ च" पा० प्रीतौ गम्यायां प्राग्वत्। ब्राह्मणसुखं पयःपानम्। छात्रप्रियोऽनध्यायः। "स्वं स्वामिनि" पा०। गोस्वामी। अन्यत्र परमस्वामीत्यादौ न। "पत्यावैश्वर्य्ये" पा०। गृहपतिः। "न भूवाक्चिद्दिधिषु" पा० "प्राग्वत्" न। भूपतिः वाक्पतिः चित्पतिः दिधिषूपतिः। "वा भुवनम्" पा०। प्राग्वत् वा। भुवनपतिः। "आशङ्काबाधनेदीयस्सु सम्भावने" पा०। गमनाशङ्कमस्ति गमनाबाधम् गमननेदीयः। गमनमाशङ्क्यते आबाध्यते निकटतरमिति सम्भाव्यते इत्यर्थः। असम्भावने तु परमनेदीय इत्यादौ न। "पूर्वे भूतपूर्वे" पा० भूतपूर्वार्थे पूर्वशब्दे परे पूर्वपदं प्रकृत्या। आढ्यपूर्वः। "सविधसनीडसमर्य्यादसवेशसदेशेषु सामीप्ये" पा०। मद्रसविधम्। एवं सनीडादिषु। असामीप्ये तु सह मर्य्यादया समर्य्यादं क्षेत्रम् चैत्रसमर्यादमित्यादौ न। "विस्पष्टादीनि गुणवचनेषु" पा०। विस्पष्टकटुकम्। विस्पष्ट विचित्र व्यक्त सम्पन्न पण्डित कुशल चपल निपुण" एते विस्पष्टादयः। अगुणवचने तु विस्पष्टब्राह्मण इत्यादौ न। "श्रज्यावमकन्पापवत्सु भावे कर्मधारये" पा०। श्र, ज्य, अवम, कन् इत्यादेशवति पापवाचिनि च परे भाववाचि पूर्वपदं प्रकृत्या। गमनश्रेष्ठं गमनज्यायः गमनावमम् गमनकनिष्ठम्। गमनपापिष्ठम्। "कुमारश्च" पा०। कर्मधारये पूर्वपदं प्रकृत्या। कुमारश्रमणा। "आदिः प्रत्येनसि" पा० कुमारस्यादिरुदात्तः प्रत्येनसि परे कर्म०। कुमारप्रत्येनाः। "पूगेष्वन्यतरस्याम्" पा० कुमारचातकाः कुमारजीमूताः। "इगन्तकालकपालभगालशरावेषु द्विगौ" पा०। इगन्ते पञ्चारत्निः। काले पञ्चमास्यः दशमास्यः। पञ्चकपालः पञ्चभगालः। (भगालः पात्रभेदः)। पञ्चशरावः। "बह्वन्यतरस्याम्" पा०। प्रकृत्या वा। बह्वरत्निः बहुमास्यः। "दिष्टिवितस्त्योश्च" पा०। प्रकृत्या वा। पञ्चदिष्टिः पञ्चवितस्तिः। "सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्" पा०। अकालवाचि सप्तम्यन्तम् एषु परेषु प्रकृत्या। साङ्काश्यसिद्धः आतपशुष्कः भ्राष्ट्रपक्वः चक्रबन्धः। काले तु पूर्वाह्णसिद्ध इत्यादौ न। "परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु" पा०। एते प्रकृत्या वर्ज्यमानाहोरात्रावयववाचिनि परे। परित्रिगर्त्तं वृष्टो देवः। प्रतिपूर्वाह्णम्। प्रत्यपररात्रम्। उपपूर्वरात्रम्। अपत्रिगर्त्तम्। "उपसर्गा आद्युदात्ताः अभिवर्ज्जम्" इति बहुव्रीहितत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदम्" सि०कौ०। "राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु" पा०। बहुवचनान्तानां राजन्यानामन्धकवृष्णिषु वर्त्तमाने द्वन्द्वे पूर्वपदं प्रकृत्या। श्विनिवासुदेवाः। "संख्या" पा०। द्वन्द्वे संख्यावाचि पूर्वपदं प्रकृत्या "द्वादश त्रयोदश। "आचार्य्योपसर्जनश्चान्तेवासी" पा०। द्वन्द्वे प्राग्वत्। पाणिनीयरौढीयाः।

"कार्त्तकौजपादयश्च" पा०। द्वन्द्वे एषां पूर्वपदं प्रकृत्या। ते च कार्त्तकौजपौ सावर्णिमाण्डूकेयौ अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवार्चलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठकौथुमाः कौथुमलौगाक्षाः स्त्रीकुमारम् मौदपैप्पलादाः। वत्सजरन्तः सौश्रुतपार्थवाः जरामृत्यू याज्यानुवाक्ये। "महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु" पा०। एषु परेषु महच्छब्दः प्रकृत्या। महाव्रीहिः "सन्महदिति प्रतिपदोक्तसमास एवायं स्वरः न षष्ठीसमासे" सि०कौ०। "क्षुल्लकश्च वैश्वदेवे" पा०। क्षुल्लकवैश्वदेवम् महावैश्वदेवम्। क्षुधं लाति क्षुल्लः ततः कन्। "उष्ट्रः सादिवाम्योः" पा० उष्ट्रसादिः उष्ट्रवामिः। "गौःसादसादिसारथिषु" पा०। गोसादः गोसादिः गोसारथिः। "कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलो दासीभाराणाञ्च" पा०। एषां सप्तानां समासानां दासीभारादेश्च पूर्वपदं प्रकृत्या। ष० त०। कुरुगार्हपतम्। "वृजेरिति वाच्यम्" वार्त्ति० वृजिगार्हपतम्। कर्म० रिक्तगुरुः। कर्म० असूतजरती। क० अश्लीलदृढरूपा। पारेवडवेव इवार्थे स० विभक्त्यलोपश्च नि०। क० तैतिलकद्रूः। क० पण्यकम्बलः। ष० त०। दासीभारः देवहूतिः देवभीतिः देवजातिः वसुनीतिः ओषधिचन्द्रमाः आकृतिगणः। "यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वर इष्यते न विशिष्य विधानं स सर्वोऽपि दासीभारादिषु द्रष्टव्यः" सि०कौ० "चतुर्थी तदर्थे" पा०। चतु-

र्थेनार्थाय यत् तद्वाचिनि परे पूर्वपदं प्रकृत्या । ४त०। यूपदारु ।"अर्थे" पा०। अर्थे परे चतुर्थ्यन्तं प्रकृत्या । देवार्थम् ।"क्ते च" पा०। क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या ।४त० गोहितम् । "कर्मधारयेऽनिष्ठा" पा०। क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या । श्रेणिकृताः पूगकृताः श्रेण्या कृतमित्यादौ न । निष्ठान्तस्यापि न, कृताकृतम् । "अहीने द्वितीया" पा० । अहीनवाचिनि समासे क्तान्ते परे द्वितीयान्तं प्रकृत्या । कष्टं श्रितः कष्टश्रितः । ग्रामगतः "अनुपसर्ग इति वक्तव्यम्" वार्त्ति०। नेह सुखप्राप्तः कष्टाश्रितः । "तृतीया कर्मणि" पा०। कर्मवाचकक्तान्ते परे तृतीयान्तं प्रकृत्या । रुद्रहतः महाराजहतः । कर्मणि किं रथेनायातः रथायात इत्यादौ न । "गतिरनन्तरः" पा०। कर्मार्थक्तान्ते परेऽव्यवहितोगतिः प्रकृत्या । पुरोहितम् । व्यवधाने तु न अभ्युद्धृतः । "तादौ च निति कृत्यतौ" पा० । तकारादौ निति तुवर्ज्जिते कृति परे गतिरनन्तरः प्रकृत्या । "प्रभृतौ सकृतिः गौः" कृत्स्वरापवादः । तौ तु न, आगन्तुः । "तवै चान्तश्च युगपत्"पा० तवै प्रत्ययान्तस्यान्त उदात्तः गतिश्चानन्तरः प्रकृत्या तच्च युगपत् । अन्वेतवै । "अनिगन्तोऽञ्चतौ वप्रत्यये" पा० । अनिगन्तगतिर्वप्रत्ययान्ताञ्चतौ परे प्रकृत्या । "येपराञ्चान्" "न्यधी"पा०। तस्मिन् परे न्यधी गती प्रकृत्या । न्यङ् अध्यङ् । "ईषदन्यतरस्याम्"पा०। ईषत्कडारः । ईषद्भेद इत्यादौ तु कृत्स्वरएव ।"हिरण्यपरिमाणं धने" पा० । वा प्रकृत्या । द्विसुवर्णधनं कर्मधारयः ।"प्रथमोऽचिरोपसम्पत्तौ"पा०। प्रथमः प्रकृत्या नूतनत्वे । प्रथमवैयाकरणः । सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । मुख्यार्थत्वे तु न । "कतरकतमौ कर्मधारये" पा० । वा प्रकृत्या । कतरकठः । "आर्य्योब्राह्मणकुमारयोः" पा० । कर्म० प्रकृत्या । आर्य्यब्राह्मणः आर्य्यकुमारः ।"राजा च" पा०। राजब्राह्मणः राजकुमारः।"षष्ठी प्रत्येनसि" पा० षष्ठ्यन्तोराजा प्रत्येनसि परे वा प्रकृत्या । राजप्रत्येनाः । कर्म० न । "क्ते नित्यार्थे" पा० । क्तान्ते परे नित्यार्थे समासे पूर्वं प्रकृत्या । नित्यप्रहसितः "ग्रामः शिल्पिनि" पा०। वा प्रकृत्या । ग्रामनापितः । अशिल्पिनि न, ग्रामरथ्या । "राजा च प्रशंसायाम्" पा०। शिल्पिवाचिनि परे प्रशंसार्थं राजपदं वा प्रकृत्या । राजनापितः राजकुलालः। अशिल्पिनि तु राजहस्त्यादौ न ।

एवम् अन्तोदात्तताप्रवादं पूर्व्वपदप्रकृतिस्वरमभिधाय आद्युदात्तस्वरमपि तदपवादतयाऽभिदधे ।

"आदिरुदात्तः"पा०। अधिकारोऽयम् ।"सप्तमीहारिणौ धर्म्येऽहरणे"पा० सप्तम्यन्तं हारिवाचि च आद्युदात्तं स्यात् धर्म्ये परे अहरणे । देयं यः स्वीकरोति स हारी उच्यते धर्म्यमित्याचारनियतं देयम् । मुकुटेकार्षापणम् । हलेद्विपदिका । संज्ञायामिति सप्तमीसमासः कारनाम्नि चेत्यलुक् । याज्ञिकाश्वः वैयाकरणहस्ती । क्वचिदयमाचारः मुकुटादिषु कार्षापणादि अवश्यत्वेन देयम् याज्ञिकादीनां त्वश्वादिरिति तत्र याज्ञिकादीनां धर्म्यरूपदेयस्य स्वीकारित्वात् याज्ञिकादिपदस्योदात्तत्वम् । वीजनिषेकादुत्तरकालं देहशुद्ध्यर्थं यद्दीयते तद्धरणं तस्मिन् परे न । वाडवहरणम् । वडवाया अयं वाडवः तस्मिन् हरणमित्यर्थः । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते इत्यहरणमित्येवेन ज्ञापितम् । "युक्ते च" पा०। युक्तवाचिनि समासे पूर्व्वमाद्युदात्तम् । गोवल्लवः । कर्त्तव्ये तत्परत्वेन युक्तः । "विभाषाध्यक्षे" पा० । अध्यक्षे परे प्रागुक्तं वा । गवाध्यक्षः । "पापञ्च शिल्पिनि" पा०। पापनापितः । पापाणके इति प्रतिपदोक्तस्यैव ग्रहणात् षष्ठीसमासे न । "गोत्रान्तेवासि माणवब्राह्मणेषु क्षेपे" पा० । क्षेपे गम्ये एषु पूर्व्वपदमाद्युदात्तं स्यात् । तत्र गोत्रे भार्य्यासौश्रुतः । सुश्रुतापत्यस्य भार्य्याप्रधानतयेह क्षेपः । अन्तेवासिनि । कुमारीदाक्षाः ओदनपाणिनीयाः । कुमार्य्यादिलाभकामनयैव दाक्षप्रादिप्रोक्तशास्त्राध्यायिनां क्षेपः । भिक्षामाणवः भिक्षां लप्स्येऽहमिति माणवः इति क्षेपः । भयब्राह्मणः भयेन ब्राह्मणः सम्पद्यते इति क्षेपः । "अङ्गानि मैरेये" पा० मधुमैरेयः मधुनो मद्याङ्गत्वात् तत्परे तथात्वम् । "भक्ताख्यास्तदर्थेषु" पा०। भिक्षादयोऽन्नविशेषाः कंसादिरूपपात्रस्य तदर्थत्वात् तत्परे भिक्षादीनां प्रागुक्तम् । भिक्षाकंसः भाजीकंसः । "गोबिडालसिंहसैन्धवेषूपमाने" पा० । उपमानवाचिषु एषु पूर्व्वपदमाद्युदात्तम् । धान्यगवः धान्यं गौरिवेति वाक्ये गवाकृत्या सन्निवेशितं धान्यं धान्यगवः । गोबिडालः । तृणसिंहः सक्तुसैन्धवः ।"अके जीविकार्थे" पा०। अकान्ते परे जीविकार्थवाचिनि समासे पूर्व्वपदमाद्युदात्तम् । दन्तलेखकः । दन्तलेखनेन जीविकावान् । "प्राचां क्रीडायाम्" पा०। प्राच्यानां क्रीडावाचिनि समासे अकान्ते परे प्रागुक्तम् । उद्दालकपुष्पभञ्जिका ।

"अचि नियुक्ते" पा०। अजन्ते परे नियुक्तवाचिनि समासे प्रागुक्तम्। छत्रधारः। "शिल्पिनि चाकृञः" पा०। शिल्पिवाचिनि अकृञः पराजन्ते परे प्रागुक्तम्। तन्तुवायः। अशिल्पिनि तु न, काण्डलावः। कृञोऽपि न, कुम्भकारः। "संज्ञायाञ्च" पा०। अजन्ते प्रागुक्तम्। तन्तुवायो नाम लूताकृमिः। अकृञ इत्येव रथकारो नाम ब्राह्मण इत्यत्र न। "गोतन्तियवं पाले" पा०। गोपालः तन्तिपालः यवपालः। अनियुक्तार्थोऽयमारम्भः नियुक्ते तु पूर्व्वेण सिद्धः। "णिनि" पा०। णिन्यन्ते परे प्रागुक्तम्। पुष्पहारी। "उपमानं शब्दार्थप्रकृतावेव" पा०। उपमानवाचि पूर्व्वपदं णिन्यन्ते परे आद्युदात्तम्। उष्ट्रक्रोशी ध्वाङ्क्षरावी। अशब्दार्थे तु वृकवञ्चीत्यादौ न। प्रकृतिग्रहणेन उपसर्गेण शब्दार्थत्वे गर्दभोच्चारीत्यादौ न। "युक्तारोह्यादयश्च" पा०। एते आद्युदात्ताः। युक्तारोही आगतरोही आगतयोधी आगतवञ्ची आगतनन्दी आगतप्रहारी आगतमत्स्यः क्षीरहोता भगिनीभर्त्ता ग्रामगोधुक् अश्वत्रिरात्रः गर्गत्रिरात्रः व्युष्टित्रिरात्रः गणपादः एकशितिपात् पात्रेसम्मितादयश्च युक्तारोह्यादिः। "दीर्घकाशतुषभ्राष्ट्रवटं जे" पा०। जे परे एतानि आद्युदात्तानि। दीर्घजः काशज इत्यादि। "अन्त्यात् पूर्व्वं बह्वचः" पा०। बह्वचः पूर्व्वस्यान्त्यात् पूर्व्वपदं जे परे आद्युदात्तम्। उपसरजः। आमलकीजः। "ग्रामेऽनिवसन्तः" पा०। ग्रामे परे अनिवसद्वाचि पूर्व्वपदमाद्युदात्तम्। मल्लग्रामः, (मल्लसमूहः) देवग्रामः (देवस्वामिकः ग्रामः)। निवसतस्तु दाक्षिग्राम इत्यादौ न। "घोषादिषु च" पा० घोष इत्येवमादिषु चोत्तरपदेषु पूर्व्वपदमाद्युदात्तं स्यात्। घोष कट वल्लभ ह्रद बदरी पिङ्गल पिशङ्ग माला रक्षा शाला कूट शाल्मली अश्वत्थ तृण शिल्पी मुनि प्रेक्षा घोषादि। दाक्षिघोषः। "छात्र्यादयः शालायाम्" पा०। छात्रिशाला व्याडिशाला। ते च छात्रि पैलि भाण्डि व्याडि आखण्डि आटि गोमि। "प्रस्थेऽवृद्धमकर्क्यादीनाम्" पा०। प्रस्थपरे अवृद्धं (वृद्धाद्यचः इतिभिन्नं) तादृशपूर्व्वपदमाद्युदात्तं न तु कर्क्यादीनाम्। इन्द्रप्रस्थः। वृद्धस्य तु दाक्षिप्रस्थ इत्यादौ न। कर्क्यादयश्च कर्की मघी मकरी कर्कन्धु शमी करीर कन्दुक कवल बदरी। "मालादीनाञ्च" पा०। वृद्धार्थमिदम्। मालाप्रस्थम्। मालादयश्च। माला शाला शोणा द्राक्षा क्षामा काञ्ची एक काम। "अमहन्नवं नगरेऽनुदीचाम्" पा०। ब्रह्मनगरम्। महन्नवयोस्तु महानगरं नवनगरमित्यादौ न। उदीचान्तु कार्त्तिनगरमित्यादौ न। "अर्म्मे चावर्णं द्व्यच् त्र्यच्" पा०। अर्म्मे परे द्व्यचकं त्र्यचकं वाऽवर्णान्तं पूर्व्वपदमाद्युदात्तं स्यात्। गुप्तार्म्मम्। कुक्कुटार्म्मम्। अनवर्णस्य बृहदर्म्ममित्यादौ न। अधिकात्र्यचकेऽपि कपिञ्जलार्म्ममित्यादौ न। अमहन्नवमित्येव तेन महार्म्मम् नवार्म्ममित्यादौ न। "न भूताधिकसञ्जीवमद्राश्मकज्जलम्" पा०। अर्म्मे एतानि नाद्युदात्तानि। भूतार्म्मम्।

एवं समासे पूर्व्वपदस्य आद्युदात्ततामभिधाय तस्यैव अन्तोदात्ततापि तत्र उक्ता यथा "अन्तः" पा० अधिकारोऽयं प्रागुत्तरपदादिग्रहणात्। "सर्व्वं गुणकार्त्स्न्ये" पा०। सर्व्वशब्दरूपं पूर्व्वपदमन्तोदात्तं स्यात् गुणसाकल्ये गम्ये। सर्व्वश्वेतः सर्व्वमहान्। श्वेतत्वमहत्त्वगुणाभ्यां कृत्स्नव्यापकताद्योतनादस्य तथात्वम्। सर्व्वसौवर्ण इत्यादौ तु गुणेन व्याप्त्यभावान्न। अत्राकल्ये तु सर्व्वेषां श्वेततरः सर्व्वश्वेत इत्यादौ तरलोपे न। "संज्ञायां गिरिनिकाययोः" पा०। एतयोः पूर्व्वमन्तोदात्तम्। अञ्जनागिरिः मौण्डिनिकायः। असंज्ञायान्तु परमगिरिः ब्राह्मणनिकाय इत्यादौ न। "कुमार्य्यां वयसि" पा०। कुमारीपरे पूर्व्वपदमन्तोदात्तम् वयसि। वृद्धकुमारी जरत्कुमारी। कुमारीशब्दः पुंसा सह सङ्गमाभाववतीपरः वृद्धादिसामानाधिकरण्यात् वयोवाचित्वमत्र। अवयसि तु परमकुमारीत्यादौ न। "उदकेऽकेवले" पा० अकेवलं मिश्रं तद्वाचिनि समासे उदके परे पूर्व्वपदमन्तोदात्तम्। गुडोदकम्। गुडमिश्रितमुदकमित्यर्थः स्वरे कृतेऽत्र एकादेशे स्वरितो वानुदात्ते पदादाविति पक्षे स्वरितः। अमिश्रे तु शीतोदकम् इत्यादौ न। "द्विगौ क्रतौ" पा० द्विगावुत्तरपदे क्रतुवाचिनि समासे प्रागुक्तम्। गार्ग्यत्रिरात्रः। अद्विगौ तु अतिरात्र इत्यादौ न "सभायां नपुंसके" पा० क्लीबान्त सभापरे प्रागुक्तम्। गोपालसभम्। अक्लीबे राजसभेत्यादौ न। तत्पुरुषस्यैव ग्रहणं तेन रमणीयसभं ब्राह्मणकुलमित्यादौ न। "पुरे प्राचाम्" पा०। देवदत्तपुरम्। नान्दीपुरम्। अप्राचि तु शिवपुरमित्यादौ न। "अरिष्टगौडपूर्व्वे च" पा०। अरिष्टपुरम्। गौडपुरम्। पूर्व्वग्रहणात् अरिष्टाश्रितपुरं गौडभृत्यपुरमित्यत्रापि स्यात्। "न हास्तिनफलकमार्द्देयाः" पा०। पुरे परे एतानि नान्तोदात्तानि। हास्तिनपुरम्। फलकपुरम्। मार्द्देयपुरम्।

"कुसूलकूपकुम्भशालं बिले" पा० कुसूलबिलम्। कूपबिलमित्यादि "दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु" पा०। एषु परेषु दिग्वाचकशब्दाः अन्तोदात्ताः। पूर्व्वेषुकामशमी। अपरकृष्णमृत्तिका। पूर्वपञ्चालाः पूर्व्वचानराटम्। इह पूर्वकालवाचित्वेऽपि पूर्वादेः दिशि दृष्टत्वाद्दिक्शब्दत्वम् "आचार्य्योपसर्जनश्चान्तेवासिनि" पा० आचार्य्योपसर्जने अन्तेवासिनि परे दिक्शब्दाः अन्तोदात्ताः। पूर्वपाणिनीयाः आचार्य्येत्युक्तेः पूर्व्वान्तेवासीत्यादौ न। "उत्तरपदवृद्धौ सर्वञ्च" पा०। उत्तरपदस्येत्यधिकृत्य या वृद्धिर्विहिता तद्वत्युत्तरपदे परे सर्व्वशब्दः दिक्शब्दश्चान्तोदात्तः। सर्वपाञ्चालः पूर्वपाञ्चालः। "बहुव्रीहौ विश्वं संज्ञायाम्" पा०। ब०व्री० विश्वशब्दः पूर्व्वपदमन्तोदात्तं संज्ञायाम्। पूर्वपदप्रकृतिस्वरेण प्राप्तस्याद्युदात्तस्यापवादः। विश्वकर्मा विश्वदेवः। कर्म० विश्वे देवा इत्यादौ न। अव्ययीभावात् बहुव्रीहावित्यधिकारः। "उदराश्वेषुषु" पा०। एषु परेषु पूर्वपदमन्तोदात्तं स्यात् बहुव्रीहौ। वृकोदरः हर्य्यश्वः महेषुः। "क्षेपे" पा०। निन्दने गम्ये प्रागुक्तम्। घटोदरः कटुकाश्वः चलाचलेषुः। "अनुदर इत्यत्र नञ्सुभ्यामिति पूर्वप्रतिप्रतिषेधेन भवति" सि०कौ०। "नदी बन्धुनि" पा०। गार्गीबन्धुः। "निष्ठोपसर्गपूर्वान्यतरस्याम्" पा०। निष्ठान्तमुपसर्गपूर्व्वं पदमन्तोदात्तं वा। प्रधौतपादः।

एवं समासे आदिपदस्याद्यन्तोदात्ततां विधाय उत्तरपदस्याद्युदात्ततामाह यथा। "उत्तरपदादिः" पा०। उत्तपदाधिकारः आपादान्तम्। आद्यधिकारस्तु प्रकृत्या भगालमित्यवधिकः। "कर्णो वर्ण्णलक्षणात्" पा०। वर्णवाचिनः लक्षणवाचिनश्च परः कर्णशब्दः आद्युदात्तो बहुव्रीहौ। शुक्लकर्णः शङ्कुकर्णः। अन्यस्मात्तु शोभनकर्णं इत्यादौ न। "संज्ञौपम्ययोश्च" पा०। उत्तरपदस्थः कर्णं आद्युदात्तः। मणिकर्णः गोकर्णः। "कण्ठपृष्ठग्रीवाजङ्घञ्च" पा०। संज्ञौपम्ययोर्बहुव्रीहौ। संज्ञायाम् शितिकण्ठः काण्डपृष्ठः सुग्रीवः नाडीजङ्घः। औपम्ये खरकण्ठः गोपृष्ठः अश्वग्रीवः गोजङ्घः। "शृङ्गमवस्थायाञ्च" पा०। अवस्थायाम् उद्गतशृङ्गः द्व्यङ्गुलशृङ्गः अत्र शृङ्गोद्गमनादिना वयो ज्ञाप्यते। संज्ञायाम् ऋष्यशृङ्गः। औपम्ये मेषशृङ्गः। "नञो जरमरमित्रमृताः" पा०। नञः पराएते आद्युदात्ता बहु०। अजरम्। अमरम्। अमित्रम् अमृतम्। "सोर्मनसी अलोमोषसी" पा०। सोः परे लोमोषसी त्यक्त्वा मन्नन्तमसन्तं चाद्युदात्तं बहु०। सुकर्माणः सुयुजः। सुमनाः सुजन्मा सुवर्च्चाः सुपेशसः। लोमोषसोस्तु सुलोमा सूषा इत्यादौ न। "क्रत्वादयश्च" पा०। सोः परे एते आद्युदात्ताः। सुक्रतुः सुप्रतीकः। क्रतु दृशीक प्रतीक प्रतूर्त्ति हव्य भग। "आद्युदात्तं द्व्यच् छन्दसि" पा०। यदाद्युदात्तं द्व्यच् तत् सोरुत्तरं बहुव्रीहौ तथैव स्यात् वेदे लोके तु न। स्वश्वाः सुरथाः। आद्युदात्तं किम् सुबाहुः। द्व्यच् किं सुगुः सुहिरण्य इत्यादौ न। "वीरवीर्य्यौ च" पा०। वेदे सुवीरः सुवीर्य्यः लोके तु न। अत्र वीर्य्यपदग्रहणादन्यत्र वीर्य्यशब्दस्य यदन्तत्वेऽपि यतोनाव इत्याद्युदात्तं नेति ज्ञापितम्। "कूलतीरतूलमूलशालाक्षसममव्ययीभावे" पा०। बहुव्रीह्यधिकारो निवृत्तः। अव्ययीभावे कूलादीन्याद्युदात्तानि स्युः। उपकूलम् उपतीरम् उपशालम्। उपाक्षं सुषमम् निःषमम्। तिष्ठद्ग्वादि० स०। "कंसमन्थशूर्पपाय्यकाण्डं द्विगौ" पा०। द्विगौ एतानि आद्युदात्तानि। द्विकंसः द्विमन्थः द्विशूर्पः द्विपाय्यम् द्विकाण्डम्। "तत्पुरुषे शालायां नपुंसके" पा०। क्लीवशालान्ते तत्पुरुषे उत्तरपदमाद्युदात्तम्। ब्राह्मणशालम्। "कन्था च" पा०। क्लीवलिङ्ग कन्थान्तस्तत्पुरुषः प्राग्वत्। सौशमिककन्थम्। "आदिश्चिहणादीनाम्" पा०। कन्थान्ते तत्पुरुषे क्लीवलिङ्गे चिहणादीनामादिरुदात्तः। न तु कन्थाशब्दरूपस्योत्तरपदस्य पूर्व्वापवादः। चिहणकन्थम्। चिहणादिश्च चिहण मडुर मद्रुमर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण। "चेलखेटकटुककाण्डं गर्हायाम्" पा०। निन्दायां चेलादीन्युत्तरपदान्याद्युदात्तानि। पुत्रचेलम्। नगरखेटं दधिकटुकम्। प्रजाकाण्डम्। चेलादिसादृश्येन पुत्रादीनां निन्दा व्याघ्रा० स०। "चीरमुपमानम्" पा०। उत्तरपदस्थमुपमानं चीरम् आद्युदात्तम्। वस्त्रं चीरमिव वस्त्रचीरम्। अनौपम्ये तु परमचीरम् इत्यादौ न। "पललसूपशाकं मिश्रे" पा० मिश्रार्थे समासे उत्तरपदस्थानामेषां प्राग्वत्। घृतपललं घृतसूपः घृतशाकः। भक्ष्येण मिश्रीकरणमिति समासः। अमिश्रे तु परमपललमित्यादौ न। "कूलसूदस्थलकर्षाः संज्ञायाम्" पा०। उत्तरपदस्थानामेषामादिरुदात्तः संज्ञायाम्। दाक्षिकूलम्। माण्डिसूदम्। दाण्डायनस्थली। दाक्षिकर्षः ग्रामभेदस्य एताः संज्ञाः। असंज्ञायां तु परमकूलमित्यादौ न। "अकर्मधारये रा-

ज्यम्" पा०। ब्राह्मणराज्यम् कर्म्मधारये तु परमराज्यमित्यादौ न। "वर्ण्यादयः" पा०। अकर्म्मधारय इत्येव। अर्जुनवर्ण्यः वासुदेवपक्ष्याः कर्म्मधा० परमवर्ण्य इत्यादौ न। वर्ण्यादिश्च दिगाद्यन्तर्गणः तच्छब्दे दृश्यः। "पुत्रः पुम्भ्यः" पा०। पुंशब्देभ्यः परः पुत्र आद्युदात्तस्तत्पुरुषे। दासकिपुत्रः माहिषपुत्रः। स्त्रीभ्यस्तु दासीपुत्र इत्यादौ न। "नाचार्य्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः" पा०। एभ्यः पुत्रोनाद्युदात्तः। आचार्य्यपुत्रः उपाध्यायपुत्रः। राजपुत्रः ईश्वरपुत्रः नन्दपुत्रः। ऋत्विक्पुत्रः याजकपुत्रः। संयुक्ताः सम्बन्धिनः। श्यालपुत्रः। ज्ञातिपुत्रः भ्रातुष्पुत्रः। "चूर्णादीन्यप्राणिषष्ठ्याः" पा०। एतानि प्राणिभिन्नषष्ठ्यन्तात् पराण्याद्युदात्तानि तत्पुरुषे। मुद्गचूर्णम्। प्राणिनस्तु मत्स्यचूर्णमित्यादौ न। चूर्णादयश्च। चूर्ण करिव कटिव शाकिन शाकट द्राक्षा तूल कुन्दम दलप चमसी चक्कन चौल। "षट् च काण्डादीनि" पा०। काण्ड चीर पलल सूप शाक कूल इत्येतानि षट् अप्राणिषष्ठ्यन्तात् आद्युदात्तानि। दूर्वाकाण्डं दर्भचीरम् तिलपललम् मुद्गसूपः मूलकशाकम् नदीकूलम्। "कुण्डं वनम्" पा०। वनवाचिनि तत्पुरुषे कुण्डमाद्युदात्तम्। दर्भकुण्डम् कुण्डशब्दोऽत्र साहश्ये।

अथ उत्तरपदे प्रकृतिस्वरविधानसूत्राणि। "प्रकृत्या भगालम्" पा०। भगालवाच्युत्तरपदं तत्पुरुषे प्रकृत्या। कुम्भीभगालम्। कुम्भीनदालम् कुम्भीदापालम्। मध्योदात्तावेते। प्रकृत्येत्यधिकारः अन्त इति यावत्। "शितेर्नित्याबह्वज्बहुव्रीहावभसत्" पा०। शितेः परं नित्याबह्वच्कं प्रकृत्या बहुव्रीहौ। शितिपादः। शित्यंसः। पादः वृषा० आद्युदात्तः अंसशब्दः नित्स्वरवान्। शितेराद्युदात्तत्वात् बहुव्रीहौ पूर्व्वपदप्रकृतिस्वरापवादेन उत्तरस्य प्रकृतिस्वरविधानात्तस्य बाधः। "गतिकारकोपपदात् कृत्" पा०। एभ्यः कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे। गतेः, प्रकारकः प्रहरणम्। कारकात् इध्मप्रव्रश्चनः। उपपदात् उच्चैःकारम्। ईषत्करः। शेषषष्ठीस० तु देवस्य कारकः देवकारक इत्यादौ न। "उभे वनस्पत्यादिषु युगपत्" पा०। एषु पूर्व्वोत्तरपदे युगपत् प्रकृत्या। वनस्पतिः बृहस्पतिः। ते च वनस्पति बृहस्पति शचीपति तनूनपात् नराशंस शुनःशेफ शण्डामर्कौ तृष्णावरूत्री लम्बाविश्ववयसौ मर्मृत्यु। "देवताद्वन्द्वे" पा०। उभे युगपत् प्रकृत्या स्तः। इन्द्रावरुणौ।

"नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" पा०। पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे प्रागुक्तञ्च। "इन्द्राग्निभ्यां कं वृषणः" पृथिव्यादौ तु द्यावापृथिव्यौ इत्यादौ स्यादेव। तत्र नि० आद्युदात्तः द्यावा, पृथिवीत्वन्तोदात्तः। एवं रुद्रसोमौ इन्द्रापूषणौ इत्यादौ।

अथोत्तरपदे अन्तोदात्तताविधायकसूत्राणि यथा "अन्तः" पा०। अधिकारोऽयम्। "थाथघञ्क्ताजबित्रकाणाम्" पा० थ, अथ, घञ्, क्त, अच्, अप्, इत्र, क, एतदन्तानाम् उत्तरपदस्थानां गतिकारकोपपदात् परेषामन्त उदात्तः। तत्र थ अवभृथः। अथ आवसथः। घञ् प्रभेदः। क्त पुरुहूतः। अच् प्रचयः। अप् प्रलवः प्रसवः। इत्र प्रलवित्रम्। क गोवृषः मूल० क। गतिकारकोपपदभिन्ने तु सुस्तुत इत्यादौ न . सोः पूजार्थत्वेन गतित्वाभावात्। "उपमानात् क्तः" पा०। सोरुपमानाच्च परं क्तान्तमन्तोदात्तम्। सुकृतम् शशप्लुतः। "संज्ञायामनाचितादीनाम्" पा०। गतिकारकोपपदात् क्तान्तमन्तोदात्तं न तु आचितादौ। "उपहूतः शाकल्यः" आचितादौ न। आचितादयश्च ६।२।१४६ सू० दर्शिताः। "प्रवृद्धादीनाञ्च" असंज्ञार्थमारम्भः। प्रवृद्धं यानं प्रवृद्धो वृषलः। प्रयुतास्तूष्णवः। आकर्षे अवहितः (अवहितो भोगेषु)। खट्वारूढः कविशस्तः आकृतिगणोऽयम्। प्रवृद्धयानम्। अप्रवृद्धो उपकृतो रथः। "कारकाद्दत्तश्रुतयोरेवाशिषि" पा०। कारकपदादुत्तरपदस्थयोर्दत्तश्रुतशब्दयोरेव संज्ञायामन्तोदात्तः आशीर्वादे गम्ये। देवदत्तः विष्णुश्रुतः। अनयोरेवेति नियमात् देवपालित इत्यादौ न। "इत्थम्भूतेन कृतमिति च" पा०। इत्थम्भूतेन कृतमित्यस्मिन्नर्थे यः समासः कृतः ततः क्तान्तमुत्तरपदमन्तोदात्तम्। सुप्तप्रलपितम्। अत्र कृतमिति सामान्यक्रियावाचि। तृतीया कर्म्मणीत्यस्यापवादः। "अनो भावकर्म्मवचनः" पा०। कारकात् परमनप्रत्ययान्तं भाववचनं कर्म्मवचनञ्चान्तोदात्तम्। भावे पयःपानम्। कर्म्मणि राजभोजनाः शालयः। "मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः" पा०। कारकात् पराण्येतानि तत्पुरुषेऽन्तोदात्तानि। तत्स्वरापवादः। मन् रथवर्त्म। क्तिन् पाणिनिकृतिः। करणे ल्युट् छन्दोव्याख्यानम्। तेन न पूर्व्वेण गतार्थः। राजशयनम् राजासनम् अश्वस्थानम् एषु आधारे ल्युट्। ब्राह्मणयाजकः। याजकादिश्च याजकादिशब्दे वक्ष्यते

गोक्रीताः । कारकमिश्रात्तु प्रभृतिः सङ्गतिः इत्यादौ तादौ नितीति स्वरः । "सप्तम्याः पुण्यम्" पा० । अन्तोदात्तम् । अध्ययनपुण्यम् । तृतीयातत्पुरुषे तु वेदपुण्यमित्यादौ न । "ऊनार्थकलहं तृतीयायाः" पा० । तृतीयायाः परावेतौ अन्तोदात्तौ तत्पुरुषे । माषोनम् माषविकलम् । वाक्कलहः । तृतीयापूर्वपदप्रकृतिस्वरापवादः । अर्थेति स्वरूपग्रहणं तेन धान्यार्थे इत्यत्रापि अर्थशब्दस्य तथात्वम् । ऊनशब्देन तदर्थग्रहणमिति केचित् । "मिश्रञ्चानुपसर्गमसन्धौ" पा० । तृतीयायाः परम् अनुपसर्गं मिश्रं प्राग्वत् । तिलमिश्रम् सर्पिर्मिश्रम् । मिश्रग्रहणेऽन्यत्र सोपसर्गस्य ग्रहणमिति अनुपसर्गं विशेषणात् ज्ञापितम् । सन्धौ तु ब्राह्मणमिश्रो राजा इत्यादौ न, ब्राह्मणैः सह ऐकार्थ्यमापन्न इत्यर्थः । "नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः" पा० । सम्पाद्याद्यर्थतद्धितान्ता गुणनिषेधार्थकनञः परेऽन्तोदात्ताः । न कर्णवेष्टकाभ्यां सम्पादितं मुखं भवति अकार्णवेष्टकिकम् । न च्छेदमर्हति अच्छेदिकः । न वत्सेभ्यो हितः अवत्सीयः । न सन्तापाय प्रभवति असन्तापीयः । "ययतोश्चातदर्थे" पा० । तदर्थार्थभिन्नौ ययतौ यौ तद्धितौ तदन्तस्योत्तरपदस्य गुणनिषेधार्थात् नञः परस्यान्त उदात्तः । पाशानां समूहः पाश्या न पाश्या अपाश्या । अदन्त्यम् । तदर्थार्थान्ते तु अपाद्यमित्यादौ न । अतः तानुबन्धस्य ग्रहणात् इतरानुबन्धस्य यस्य अवामदेव्यमित्यादौ न । अत्र वामदेवाड्ड्यड्ड्याविति ड्यत् ड्य वा । "अच्कावशक्तौ" पा० । अजन्तं कान्तञ्च नञः परमन्तोदात्तमसामर्थ्ये गम्ये । अपचः पक्तुं न शक्तः । अविलिखः । सामर्थ्ये तु अपचो दीक्षित इत्यादौ न । दीक्षितस्य न पाकासामर्थ्यं किन्तु निषेधादपचत्वम् । "आक्रोशे च" पा० । नञः परावच्कान्तावन्तोदात्तौ क्षेपे । अपचोऽजाल्मः पक्तुं न शक्नोतीत्येवमाक्षिप्यते । अविक्षिपः । "संज्ञायाम्" पा० । नञः परमन्तोदात्तं संज्ञायाम् क्षेपे । अदेवदत्तः । "कृत्योकेष्णुच्चार्वादयश्च" पा० । नञः परे एतेऽन्तोदात्ताः स्युः । कृत्य अकर्त्तव्यः । उक अनागामुकः । इष्णुच् अनलङ्करिष्णुः । क्ष्णुचोऽपि । अनाढ्यम्भविष्णुः । अचारुः । चार्वादयश्च चारु साधु यौधिकि अनङ्गमेजय वदान्य अकस्मात् (वर्त्तमानवर्द्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम्) (विकारसदृशे व्यस्तसमस्ते) गृहपति गृहपतिक (राजाह्नोश्छन्दसि) अराजा अनहः । भाषायां तु अव्ययस्वरः । "विभाषा तृन्नन्नतीक्ष्णशुचिषु" पा० । तृन् अकर्त्ता । अनन्नम् । अतीक्ष्णम् अशुचिः । पक्षे अव्ययस्वरः । "बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने" पा० । एभ्य एतयोरन्त उदात्तः बहुव्रीहौ । इदं प्रथमं यस्य इदं प्रथमः । एवम् एतद्द्वितीयं तत्पञ्चमम् । द्रव्यगणने तु अयं प्रथमः प्रधानं येषां ते इदंप्रथमा इत्यादौ न । बहुव्रीहावित्यधिकारः । "संख्यायाः स्तनः" पा० । द्विस्तना चतुःस्तना । "विभाषा छन्दसि" पा० । "द्विस्तनां करोति वामदेव्यः" । पक्षे न "संज्ञायां मित्राजिनयोः" पा० । देवमित्रः कृष्णाजिनम् । असंज्ञायां प्रियमित्रः इत्यादौ न । "ऋषिप्रतिषेधो मित्रे" वार्त्ति० । विश्वामित्र ऋषिः अत्र न । "व्यवायिनोऽन्तरम्" पा० । व्यवधायकात् परमन्तरमन्तोदात्तम् । वस्त्रान्तरः । "मुखं स्वाङ्गम्" पा० । गौरमुखः । अस्वाङ्गे तु दीर्घमुखा शाला इत्यादौ न । "नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः" पा० । एभ्यः परं मुखं नान्तोदात्तम् तेन पूर्वपदप्रकृतिस्वरः । उच्चैर्मुखः । प्राङ्मुखः गोमुखः । गोशब्दवत्सपूर्वपदस्योपमानलक्षणोऽपि विकल्पो बाध्यते पुरस्तादपवादन्यायात् । "निष्ठोपमानादन्यतरस्याम्" पा० । निष्ठान्तादुपमावाचिनश्च परं स्वाङ्गं मुखं वान्तोदात्तम् । प्रक्षालितमुखः पक्षे निष्ठोपसर्गेति पूर्वपदान्तोदात्तत्वम् । पूर्वपदप्रकृतिस्वरत्वेन गतिस्वरोऽपि भवति । सिंहमुखः । पक्षे पूर्वपदप्रकृतिस्वरः । "जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" पा० । सारङ्गजग्धः मासभूतः सुखभूतः । सुख दुःख तृप्र कृच्छ्र अस्र आस्र अलीक प्रतीप करुण सोढ इत्येतानि सुखादीनि । आच्छादनात्तु वस्त्रच्छन्न इत्यादौ न । कुण्डकृतः कुण्डमितः कुण्डप्रतिपन्न इत्यादौ च न । "वा जाते" पा० । एभ्यो जातशब्दोऽन्तोदात्तः । दन्तजातः मासजातः । पक्षे पूर्वपदप्रकृतिस्वरः "नञ्सुभ्याम्" पा० । आभ्यां परमन्तोदात्तं बहुव्रीहौ । अव्रीहिः सुमाषः । "कपि पूर्वम्" पा० । नञ्सुभ्यां परमुत्तरपदस्य पूर्वमुदात्तं कपि परे । अब्रह्मबन्धुकः । सुकुमारीकः । "ह्रस्वान्तेऽन्त्यात्पूर्वम्" पा० । ह्रस्वान्ते उत्तरपदे समासे अन्त्यात् पूर्वमुदात्तं नञ्सुभ्यां बहुव्रीहौ । अव्रीहिकः सुमाषकः । "बहोर्नञ्वदुत्तरपदभूम्नि" पा० । उत्तरपदार्थबहुत्ववाचिनो बहोः परस्य पदस्य नञः परस्येव स्वरः स्यात् । बहुव्रीहिकः बहुमित्रः । अबहुत्वे तु बहुषु मानोऽस्य बहुमान इत्यादौ न । "न गुणादयोऽवयवाः" पा० । अवयवे-

वाचिनो बहोः परे गुणादयोनान्तोदात्ताः ब०व्री०। बहुगुणा रज्जुः। बह्वक्षरं पदम्। गुणादयश्च गुण अक्षर अध्याय सूक्त छन्दः मान। गुणादिराकृतिगणः। अनवयवे तु अध्ययनश्रुतसदाचारादिगुणपरत्वे बहुगुणोद्विज इत्यादौ न। "उपसर्गात् स्वाङ्गं ध्रुवमपर्शु" पा०। प्रपृष्ठः। अध्रुवे तु उद्बाहुरित्यादौ विपर्शुरित्यादौ च न। "वनं समासे" पा०। समासमात्रे उपसर्गात् परं वनमन्तोदात्तं स्यात्। प्रवणम्। "अन्तः" पा०। अन्तर् शब्दात् परं वनमन्तोदात्तम् समासमात्रे। अन्तर्वणोदेशः। "अन्तश्च" पा०। उपसर्गादन्तशब्दोऽन्तोदात्तः। पर्य्यन्तः समन्तः। "न निविभ्याम्" पा०। न्यन्तः व्यन्त इत्यादौ न। पूर्व्वपदप्रकृतिस्वरे यणि च कृते उदात्तस्वरितयोर्यण इति स्वरितः। "परेरभितोभावि मण्डलम्" पा०। परेः परम् अभितउभयतो भावि कूलादि, मण्डलं चान्तोदात्तम्। परिकूलम् परिमण्डलम्। "प्रादस्वाङ्गं संज्ञायाम्" पा०। प्रपृष्ठम्। स्वाङ्गे तु प्रपदमित्यादौ न "निरुदकादीनि च" पा०। निरुदक निरुपल निर्म्मक्षिक निर्म्मशक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीक निरजिन उदजिन उपाजिन (परेर्हस्तपादकेशकर्षाः) निरुदकादिराकृतिगणः। एतानि अन्तोदात्तानि। निरुदकम्। "अभेर्मुखम्" पा०। अबहुव्रीह्यर्थमध्रुवार्थमस्वाङ्गार्थमारम्भः। अभिमुखा शाला। "अपाच्च" पा०। अपमुखम् अत्रापि पूर्व्ववदारम्भः। अपमुखा शाला "स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च" पा०। अपादिमान्यन्तोदात्तानि। अपस्फिगम् अपपूतम्। अपाञ्जः। अपाध्वा समासान्तविधेरनित्यत्वात् नेह समा०। अपकुक्षि। अपसीरम् अपहलम्। अपनाम। स्फिगादिग्रहणमबहुव्रीह्यर्थम् अध्रुवार्थमस्वाङ्गार्थञ्च। "अधेरुपरिस्थम्" पा०। अध्यारूढोदन्तोऽधिदन्तः दन्तस्योपरिजातोदन्त इत्यर्थः। अनुपरिस्थे अधिकरणमित्यादौ न। "अनोरप्रधानकनीयसी" पा०। अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तम्। अनुगतोज्येष्ठम् अनुज्येष्ठइत्यादि। अत्र पूर्व्वपदार्थप्राधान्यात् ज्येष्ठशब्दस्याप्रधानत्वम्। अनुगतः कनीयान् प्रा०स०। अनुकनीयान्। अत्र उत्तरपदार्थप्राधान्यम्। प्राधान्यार्थमेव कनीयसः पृथग्ग्रहणम्। "पुरुषश्चान्वादिष्टः" पा०। अनोः परः अन्वादिष्टवाची पुरुषः अन्तोदात्तः। अन्वादिष्टः पुरुषः प्रा० स०। अनुपुरुषः। "अतेरकृत्पदे" पा०। अतेः परमकृदन्तं पदं पदशब्दश्चान्तोदात्तः। अत्यङ्कुशो-नागः। अतिपदा गायत्री। कृत्पदे तु अतिकारः इत्यादौ न। "अतेर्धातुलोप इति वाच्यम्" वार्त्ति०। "प्रादिभ्योधातुजस्य वा चोत्तरपदलोप इति अत्यादयः क्रान्ताद्यर्थे द्वितीययेति यत्र धातुलोपस्तत्रैवायं स्वरः। तेन शोभनोगार्ग्यः प्रा०स०। अतिगार्ग्यः अत्र न। अतिक्रान्तः कारकम्। अतिकारक इत्यत्रापि स्यात् कारकशब्दस्य कृदन्तत्वेऽपि धातुलोपएव कृदन्त नियमनात् अतिकार इत्यादौ तु धातुलोपाभावान्नेति भेदः। "नेरनिधाने" पा०। निधानमप्रकाशः तद्भिन्ने प्रकाशार्थे नेरुत्तरपदमन्तोदात्तम्। निमूलम् न्यक्षम्। निधाने तु निहितो दण्डः निदण्ड इत्यादौ अप्रकाशितः गुप्तोदण्ड इत्यर्थके न। "प्रतेरंश्वादयस्तत्पुरुषे" पा०। प्रतिगतोऽंशुः प्रत्यंशुः प्रतिजनः प्रतिराजा समासान्तविधेरनित्यत्वान्न टच्। बहुव्रीहौ तु न। अंश्वादयश्च २७४० दर्शिताः। "उपाद्द्व्यजजिनमगौरादयः" पा०। उपात् परं द्व्यच्कमजिनञ्चान्तोदात्तम् न तु गौरादयः। ते च गौर तैष तैल लेट लोट जिह्वा कृष्णा कन्या गुध कल्प पाद। उपदेवः उपेन्द्रः उपाजिनम्। गौरादौ उपगौर इत्यादौ न। "सोरवक्षेपणे" पा०। आक्षेपे गम्ये सोःपरमन्तोदात्तम्। सुप्रत्यवसितः सुरत्यपूजार्थः वाक्यार्थस्तु निन्दा असूयया तथाऽभिधानात्। "विभाषोत्पुच्छे" पा०। उत्पुच्छे शब्दे वान्तोदात्तः। उत्क्रान्तः पुच्छात्, पुच्छमुदस्यति उत्पुच्छयतेर्वा शरच्। उभयस्यात्र ग्रहणम्। उत्पुच्छः। "द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ" पा०। आभ्यां परेष्वेषु अन्तोदात्तो वा बहुव्रीहौ। द्विपाद् त्रिपाद्। त्रिमूर्द्धा। समासान्तविधेरनित्यत्वज्ञापकमिदम्। तत्पुरुषे तु द्वयोर्मूर्द्धा द्विमूर्द्धेत्यादौ न। "सक्थञ्चाक्रान्तात्" पा०। कृतसमासान्तसक्थस्य अक्रान्तात् परस्य वान्तोदात्तः। गौरसक्थः श्लक्ष्णसक्थः। क्रान्तात्तु चक्रसक्थ इत्यादौ न किन्तु षच्समासान्तस्य चित्त्वात् नित्यमन्तोदात्तता। "परादिश्छन्दसि बहुलम्" पा०। वेदे उत्तरपदस्य शब्दस्यादिरुदात्तो बहुलम्। "अङ्गिरस्क्थमालभेत" बहुलग्रहणात् "परादिश्च परान्तश्च पूर्व्वान्तश्चापि दृश्यते। पूर्व्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः" वार्त्ति०। इति समासस्वराः। एवमुदात्ते विहिते क्वचित्तस्य निघातेनानुदात्तता स्यात् तच्च निघातशब्दे सापवादं वक्ष्यते।

"निहन्त्यरीनेकपदे यउदात्तः स्वरानिव" माघः। "अवि-

कत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः" सा॰द॰ २उदात्ते (पूर्वपदलोपेन) नायकभेदे। भावे क्त। ३दाने ४वाद्यभेदे शब्दर॰ ५अलङ्कारभेदे पु॰। स च अलङ्कारशब्दे ३८६पृष्ठे दर्शितः। कर्त्तरि क्त ६महति ७समर्थे ८दातरि च त्रि॰।

**उदात्तराघव** न॰ नाटकभेदे।

**उदान** पु॰ अन–घञ् ऊर्द्ध्वमानोऽस्य। ऊर्द्ध्वगतिशीले कण्ठादिदेशवर्त्तिनि प्राणवृत्तिभेदे वायौ। "अथ योऽस्योर्द्ध्वः सुषिः स उदानः स वायुः स आकाशः" छा॰उ॰। "आपादतलादारभ्योर्द्ध्वमुत्क्रमात् उत्कर्षार्थञ्च कर्म्म कुर्वन्निति उदानः" छा॰उप॰भा॰। पदार्थादर्शे योगार्णवे तत्स्थानाद्युक्तम् "स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपनः। उद्वेजयति मर्म्माणि उदानो नाम मारुतः। विद्युत्पावकवर्णः स्यादुत्थानाशनकारकः। पादयोर्हस्तयोश्चापि सर्वसन्धिषु वर्त्तते"। सुश्रुते च "यथाग्निः पञ्चधा भिन्नो नामस्थानकर्म्मभिः। भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः। प्राणोदानौ समानश्च व्यानश्चापान एव च। स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम्। वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्। सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते। प्रायशः कुरुते दुष्टो हिक्काश्वासादिकान् गदान्। उदानो नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः। तेन भाषितगीतादिविशेषोऽभिप्रवर्त्तते। ऊर्द्ध्वजत्रुगतान् रोगान् करोति च विशेषतः। आमपक्वाशयचरः समानो वह्निसङ्गतः। सोऽन्नं पचति तज्जांश्च विशेषान्विविनक्ति हि। गुल्माग्निसङ्गातीसारप्रभृतीन् कुरुते गदान्। कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः। स्वेदासृक्स्रावणो वापि पञ्चधा चेष्टयत्यपि। क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान्। पक्वाधानालयोऽपानः काले कर्षति चाप्ययम्। समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवान्यधः। क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान्। शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपजाः। युगपत्कुपिताश्चापि देहं भिन्द्युरसंशयम्" छान्दोग्ये च भोजनस्याग्निहोत्रस्थानीयतया सम्पादनेन प्राणादिपञ्चकाहुतेर्नित्यं कर्त्तव्यता तत्फलञ्चोक्तम् यथा। "उरएव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीय इत्युपक्रम्य"। (तद्भाष्ये च आस्यस्य हूयतेऽस्मिन्नित्याहवनीयत्वमुक्तम्) आहुतिप्रकारः फलसहितो दर्शितो यथा।

"तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति, प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति१। अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति, व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति२। अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति, अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति३। अथ यां चतुर्थीं जुहुयात्तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति, समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति४। अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति, उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति५। स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात्। अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्व्वेष्वात्मसु हुतं भवति। तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्व्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति। तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यादिति तदेष श्लोकः। यथेह क्षुधिता बाला मातरं पर्य्युपासते। एवं सर्व्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति"।

**उदापु** पु॰ उद्+आप–उन्। जरासन्धपौत्रे क्षत्रियभेदे। "जरासन्धस्य पुत्रो वै सहदेवः प्रतापवान्। सहदेवात्मजः

क्षेमाद्रुदायुः स महायशाः । उदायुर्जनयामास पुत्रं परमधार्म्मिकम्" । हरिव० ३२ अ० ।

**उदार** त्रि० उद्+आ+रा-क । १दातरि, २महति, ३सरले, ४दक्षिणे, ५गम्भीरे, ६असाधारणे च । "मह्यर्युदारा गुणुभेऽर्ज्जुनस्य" "सतषेति विनेतुरुदारमतेः" साकेतोपवनमुदारमध्युवास" "रघुः उदारमन्ते कलभाविकस्वरैः" माघः । "ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरैवं नः" "तथा हि ते शीलमुदारदर्शने !" कुमा०। ततो भावे ष्यञ् औदार्य्य न० तल् उदारता स्त्री त्व उदारत्व न० तद्भावे ।

**उदारथि** उद्+आ+ऋ-थिन् । ऊर्द्ध्वमागन्तरि । "करम्भ ओषधे भव पीवो वृक्क उदारथिः" ऋ० १,१८७,१०, "करम्भं कृत्वा तिर्य्यं पीवस्फाकमुदारथिम्" अथ० ४,७,३ ।

**उदारधी** स्त्री उदारा धीः । १उत्कृष्टबुद्धौ उदारा धीर्यस्य । २उत्कृष्टबुद्धिमति त्रि० "धियः समग्रैः स गुणैरुदारधीः । रघुः । उदारा महती सर्वार्थविषयत्वात् धीर्यस्य । ३विष्णौ पु० । "निमेषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः" विष्णुस०"यः सर्व्वज्ञः सर्ववित्" इति श्रुतेस्तस्य सर्वार्थविषयबुद्धिमत्त्वात्तथात्वम् ।

**उदावर्त्त** पु० उद्+आ+वृत-घञ् । रोगभेदे तल्लक्षणादि सुश्रुते दर्शितं यथा

"अथात उदावर्त्तप्रतिषेधमध्यायं व्याख्यास्यामः । अधश्चोर्द्ध्वञ्च भावानां प्रवृत्तानां स्वभावतः । न वेगान् धारयेद्धीमान् वातादीनां जिजीविषुः । वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः । व्याहन्यमानैरुदितैरुदावर्त्तो निरुच्यते। क्षुत्तृष्णाश्वासनिद्राणामुदावर्त्तो विधारणात् । तस्याभिधास्ये व्यासेन लक्षणञ्च चिकित्सितम् । त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः । अपथ्यभोजनाच्चापि पच्यते च तथापरः । आध्मानशूलौ हृदयोपरोधं शिरोरुजं श्वासमतीव हिक्काम् । कासप्रतिश्यायगलग्रहांश्च बलासपित्तप्रसरञ्च घोरम् । कुर्य्यादपानोऽभिहतः स्वमार्गे हन्यात्पुरीषं मुखतः क्षिपेद्वा । आटोपशूलौ परिकर्त्तनञ्च सङ्गः पुरीषस्य तथोर्द्ध्ववातः १। पुरीषमास्यादपि वा निरेति पुरीषवेगेऽभिहते २नरस्य । मूत्रस्य वेगेऽभिहते ३नरस्तु कृच्छ्रेण मूत्रं कुरुतेऽल्पमल्पम् । मेढ्रे गुदे वङ्क्षणबस्तिमुष्कयोश्च नाभिप्रदेशेष्वथ वापि मूर्द्ध्नि । आनद्धबस्तिश्च भवन्ति तीव्राः शूलाश्च शूलैरिव भिन्नमूर्त्तेः । मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात् ४पवनात्मकाः स्युः । श्रोत्राननघ्राणविलोचनोत्था भवन्ति तीव्राश्च तथा विकाराः । आनन्दजं शोकसमुद्भवं वा नेत्रोदकं ५प्राप्तमवृत्ततो हि । शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन । भवन्ति गाढं क्षवथोर्विघातात् ६शिरोऽक्षिनासाश्रवणेषु रोगाः। कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथ वा प्रवृत्तिः । उद्गारवेगेऽभिहते ७भवन्ति जन्तोर्विकाराः पवनप्रसूताः । छर्द्देर्विघातेन ८ भवेच्च कुष्ठं तेनैव दोषेण विदग्धमन्नम् । मूत्राशये वा गुदमुष्कयोश्च शोफो रुजा मूत्रविनिग्रहश्च । शुक्राश्मरी तत्स्रवणं भवेद्वा ते ते विकारा विहते तु शुक्रे ९ । तन्द्राङ्गमर्दावरुचिः श्रमश्च क्षुधोऽभिघातात् १०कृशता च दृष्टेः । कण्ठास्यशोषः श्रवणावरोधस्तृष्णाभिघातात् ११हृदये व्यथा च । श्रान्तस्य निश्वासविनिग्रहेण १२ हृद्रोगमोहावथ वापि गुल्मः । जृम्भाङ्गमर्दोऽङ्गशिरोऽक्षिजाड्यं निद्राभिघातादथ १३वापि तन्द्रा । इत्यादितं परिक्लिष्टं क्षीणं शूलैरभिद्रुतम् । प्रज्ञाहमन्नं प्रतिमानुदावर्त्तिनमुत्सृजेत् । सर्वेष्वेतेषु 'विधिवदुदावर्त्तेषु कृत्स्नशः । वायोः क्रियाविधातव्या स्वमार्गप्रतिपत्तये" । उद्ध उदकस्यावर्त्तः । २जलस्य स्रतोभ्रमणे । ३स्त्रीचिह्नरोगभेदे स्त्री सा च सुश्रुते दर्शिता यथा "विंशतिर्व्यापदो योनेर्निर्द्दिष्टा रोगसङ्ग्रहे । मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च । जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् । उदावर्त्ता तथा बन्ध्या विप्लुता च परिप्लुता । वातला चेति वातोत्था पित्तोत्था रुधिरक्षरा । वामिनी स्रंसिनी चापि पुत्त्रघ्नी पित्तला च या । अत्यानन्दा च या योनिः कर्णिनी चरणाद्वयम् । श्लैष्मिका सफला ज्ञेया षण्ढी च फलिनी तथा । महती सूचिवक्त्रा च सर्वजेति त्रिदोषजा"। "सफेनिलमुदावर्त्ता रजः कृच्छ्रेण मुञ्चति" ।

**उदावसु** पु० निमिवंश्ये नृपभेदे । "निमिः परमधर्म्मात्मा सर्वसत्त्ववतां वरः । तस्य पुत्रोमिथिर्नाम वभूवानुपमद्युतिः । तस्यापि जनकोनाम जनकस्याप्युदावसुः" रामा० निमिवंशवर्णने । अयञ्च जनकः प्रसिद्धजनकाद्भिन्न एव तत्रैवान्ते "स्वर्णरोमणोऽभवच्चापि ह्रस्वरोमा सुतो बली । तस्य पुत्रद्वयं जज्ञे धर्म्मज्ञस्य महात्मनः । ज्येष्ठोऽहमनुजश्चायं भ्राता मम कुशध्वज इति" दशरथं प्रति स्वकुलकीर्त्तने जनकोक्तौ अहं शब्देनात्मनः कीर्त्तनेन ततो भेदप्रतीतेः । [याञ्च ।

**उदास** पु० उद्+अस-घञ् । १उत्क्षेपणे २निरसने ३उपेक्षा-

**उदासीन** त्रि० उद्+आस-शानच् । १मध्यस्थे, २विवदमानयोरेकतरपक्षानवलम्बके, जिगीषोर्नृपतेः शत्रुमित्रभूमितो व्यवहिते परतरे, आरिमन्त्रे २५५पृ० दर्शिते "मण्डला-

द्विरेतस्मादुदासीनो बलाधिकः" इत्युक्त लक्षणे २राजभेदे। ४उपेक्षके च "उदासीनवदासीनः" गीता० ।

उदास्थित पु० उद्+आ+स्था–क्त । १द्वारपाले २चरे ३अध्यक्षे च हेम० प्रव्रज्याच्युतपतिते ४प्रव्रज्यावसिते चरे च स च पञ्चविधचरान्तर्गतः । प्रव्रज्यावसितः प्रव्रज्याच्युतपतित एव । तत्रच्छादि "तत्तुम्’ चाष्टविधं कर्म पञ्चवर्गञ्च तत्त्वतः" इति मनुवचनस्य कुल्लू० व्याख्यायाम्

"कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चविधं चारवर्गं पञ्चवर्गशब्दवाच्यं तत्त्वतश्चिन्तयेत्" इति संक्षेपेणोक्ता । तत्र परमर्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात्कापटिकस्तं वृत्त्यर्थिनमर्थमानाभ्यामुपष्टभ्य रहसि राजा ब्रूयात् ‘यस्य दुष्टं पश्यसि तत्तदानीमेव मयि वक्तव्यमिति’ । प्रव्रज्याच्युतपतित उदास्थितः तं लोकेषु विदितदोषं प्रज्ञाशौचयुक्तं वृत्त्यर्थिनं ज्ञात्वा रहसि राजा पूर्ववद्ब्रूयात् बहूत्पत्तिकमठे स्थापयेत् प्रचुरशस्योत्पत्तिकभूम्यन्तरञ्च तदर्थं परिकल्पयेत् तथान्येषामपि प्रव्रजितानां राजचारकर्मकारिणां ग्रासाच्छादनादिकं दद्यात् । कर्षकः क्षीणवृत्तिः प्रज्ञाशौचयुक्तो गृहपतिव्यञ्जनस्तमपि पूर्ववदुक्त्वा स्वभूमौ कृषिकर्म कारयेत् । वाणिजकः क्षीणवृत्तिः वैदेहिकव्यञ्जनस्तं पूर्ववदुक्त्वा धनमानाभ्यामात्मीकृत्य वाणिज्यं कारयेत् । मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः सोऽपि कश्चिद्ग्रामे वसन् बहुमुण्डजटिलान्तेवासिपरिवृतो गुप्तराजोपकल्पितवृत्तिः तपस्यां कुर्यात् मासद्विमासान्तरितं प्रकाशं बदरादिमुष्टिमश्नीयात् रहसि च राजोपकल्पितं यथेष्टमाहारं कल्पयेत् । शिष्याश्चास्यातीतानागतज्ञानादिकं ख्यापयेयुः तेन बहुलोकवेष्टनमासाद्य सर्वेषां विश्वसनीयत्वात् सर्वे कार्यमकार्यञ्च पृच्छन्ति। एवंरूपं पञ्चवर्गं यथावच्चिन्तयेत्" विशेषेणोक्तम् ।

उदाहरण न० उद्+आ–हृ-भावे ल्युट् । एकदेशप्रसिद्ध्या सकलसिद्ध्यर्थं १कथने । कर्मणि ल्युट् । दृष्टसिद्ध्यर्थमुच्यमाने २दृष्टान्ते, "त्वदुदाहरणाकृतौ गुणा इति सामुद्रिकसारमुद्रया" नैष० प्रकृतसिद्ध्यर्थं निदर्शनरूपे ३उपोद्घाते च । उदाह्रियते व्याप्तिपक्षधर्मते येन करणे ल्युट् न्यायमते प्रतिवादिपराजयार्थं वादिना प्रयुक्तप्रतिज्ञादिपञ्चकान्तर्गते व्याप्तिपक्षधर्मताप्रदर्शके ४वाक्यभेदे प्रतिज्ञादय गौ० सू० इत्योर्दर्शिता यथा

"प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः"। अनेन विभागेन प्रतिज्ञाद्यन्यतमत्वमिति लक्षणं सूचितम् अत्र च प्रतिज्ञादीनां पञ्चानामवयवत्वकथनाद्दशावयववादो व्युदस्त इति मन्तव्यं ते च भाष्ये दर्शिता यथा "जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्चेति" एते प्रतिज्ञादिसहिता दश" व्याख्यातं चेदं तात्पर्यटीकायाम् "प्रयोजनं हानादिबुद्धयः तत्प्रवर्त्तिका जिज्ञासा, तज्जनकः संशयः, शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यं, संशयव्युदासस्तर्कः, अयमेवार्थो निबन्धे निरङ्कृतः । जिज्ञासा विप्रतिपत्तिरिति कश्चित् एतेषाञ्च न न्यायावयवत्वं न्यायाघटकत्वात् । न न्यायजन्यबोधानुकूलत्वेनैवावयवत्वं एकदेशस्यापि तत्त्वप्रसङ्गात् प्रयोजनेऽतिव्याप्तेश्च" इति । तत्र उदाहरणलक्षणविभागौ तत्रैव दर्शितौ यथा

"साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्" सू० । "दृष्टान्तउदाहरणमिति लक्ष्यं दृष्टान्तवचनं दृष्टान्तकथनयोग्यावयव इत्यर्थः तेन दृष्टान्तस्य सामयिकत्वेनासार्वत्रिकत्वेऽपि न क्षतिः । योग्यतावच्छेदकन्तु अवयवान्तराघटितार्थकावयवत्वं तच्च द्विविधं अन्वयिव्यतिरेकिभेदात् तत्रान्वय्युदाहरणं लक्षयति साध्यसाधर्म्यात्तद्धर्मभावीति अन्वय्युदाहरणमिति शेषः परे तु सम्पूर्णसूत्रमन्वय्युदाहरणलक्षणमेव सामान्यलक्षणं तूक्तमित्याहुः साध्यसाधर्म्यात् साध्यसहचरितधर्मात् प्रकृतसाधनादित्यर्थः तं साध्यरूपं धर्मं भावयति तदा च साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोऽवयवः साध्यसाधनव्याप्त्युपदर्शक उदाहरणमिति यावत् । व्यतिरेक्युदाहरणं लक्षयति" वृ०।"तद्विपर्ययाद्वा विपरीतं व्यतिरेक्युदाहरणम्" सू०। तद्विपर्ययात् साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात्तथा च साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणं व्यतिरेक्युदाहरणं यथा जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यन्नैवं तन्नैवं यथा घट इति । वाकारः प्रयोगभेदेन तथा चान्वय्युदाहरणं व्यतिरेक्युदाहरणं वा प्रयोक्तव्यमित्यर्थः" वृ०।

चिन्तामणिकृता तु तल्लक्षणादिकमुक्तं यथा

"हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणं तत्रानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवद्वृत्तिनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वं सामान्यलक्षणम् साध्यसाधनसम्बन्धबोधकत्वं, साध्यसाधनाभावसम्बन्धबोधकत्वञ्च विशेषलक्षणद्वयम् । न्यायावयवदृष्टान्तवचनमुदाहरणमिति तु

न दृष्टान्तप्रयोगस्य सामयिकत्वेनासार्व्वत्रिकत्वात्, योयो धूमवान् सोऽग्निमानित्येव व्याप्तिप्रतीतेः । नापि प्रकृतानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानविषयव्याप्त्युपनायकं वचनं तत्, उपनयातिव्याप्तेः । उपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम् एतदेवान्वयव्यतिरेकिव्याप्तिविषयत्वविशेषितं विशेषलक्षणद्वयमित्यन्ये, अत्र च व्यभिचारवारणाय वीप्सामाहुः यत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र न वीप्सा केवलान्वयिन्यभेदानुमाने च वीप्सायामपि व्यभिचारतादवस्थ्यमिति तु व्यर्थं, वीप्सा च वक्ष्ये, न तत्पदेऽपि विरुद्धरूपोपस्थितयोरपि तत्पदेन परामर्शाद्बुद्धिस्थवाचकत्वादिति न व्युत्पत्तिविरोधः यथा "यद्यत् पापं प्रतिजहि जगन्नाथ! नम्रस्य तन्म इत्यादौ"।

दीधितिकृता तु निष्कृष्योक्तम् । इतरावान्वितस्वार्थावोधकन्यायावयवत्वमुदाहरणत्वम् अन्वयव्याप्तिबोधकत्वं व्यतिरेकव्याप्तिबोधकत्वञ्च विशेषलक्षणद्वयमिति" । ४कथाप्रसङ्गे च । "अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु" कुमा० "उदाहरणानि कथाप्रसङ्गाः तान्येव वस्तूनि" मल्लि० । भावे ल्युट् । ५कथनमात्रे । ६लक्षणसम्बद्धतया प्रामाणिकवाक्योपन्यासे च । [उदाहृति तत्रार्थे उक्तौ च स्त्री ।

**उदाहार** पु० उद्+आ+हृ-घञ् । उदाहरणार्थे । क्तिन् ।

**उदाहृत** त्रि० उद्+आ+हृ-क्त । १दृष्टान्ततयोपन्यस्ते, २कथिते च "कुमान्तिता दशरथ इत्युदाहृतः" भट्टिः । प्रामाणिकप्रयुक्ततया ३उपन्यस्ते च ।

**उदित** त्रि० वद्-क्त । १कथिते । "श्रुतिस्मृत्युदितं धर्मम्" मनुः भावे क्त । २कथने न० "प्रिय: कियद्दूरमिति त्वयोदिते" नैष० उद्-इण्-क्त । ३उत्थिते, "तदुदितः स हि यो यदनन्तरः" नैष० । ४उदयं प्राप्ते "उदिते जुहोति अनुदिते जुहोति" श्रुतिः "उदितेऽनुदिते चैव समयाध्युषिते तथा" मनुः । "उदिते जगतीनाथे यः कुर्य्याद्दन्तधावनम्" स्मृतिः । "उदितं सोमनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत्" । प्रारब्ध० उदयप्राप्तिश्च ग्रहादौ भूउत्तपादान्तरितदेशोपरिस्थे एव भवति सा च दिवा न भवति भस्कांशुकराभिभूतत्वेन दर्शनयोग्यताभावात् । तथा च दर्शनयोग्ये ग्रहादौ तच्छब्दस्य वृत्तिः । "उदिते स्रुतिसंशये" नील०क० "चतुर्थ्यामुदितचन्द्रो नेक्षितव्यः कदाचन" इति व्याख्याने "उदितः कथितः" इति अर्द्धोदितव्याहृतिपरं वेति ति०त० उक्तं ५सम्पूर्णोदिते च त्रि० भावे क्त । ६राशीनामुदये लग्ने । कर्त्तरि क्त । उदयं प्राप्ते ७राशौ च । "लग्नमेकस्य दोषाणां हन्याद्वैनोदिते गुरुः" ज्योति० नरपतिजयचर्य्योक्ते स्वरभेदे स च भुक्तावशिष्टःस्वरः यथा । "द्वादशाब्दादिनाद्यन्ताः स्वस्थानाद्वै च कालतः । उदयन्ते पुनस्तत्रान्तरे एकादशोदयैः । वर्षमासदिवानाडीपलानि च क्रमादिकम् । कालमानं मया प्रोक्तं पञ्चधा च स्वरोदये । यत् भुक्तं स्वस्वभोगेन लब्धं शेषोदितं भवेत् । लब्धे भुक्ताः स्वरा ज्ञेयाः शेषाङ्के तूदितस्वराः । अस्मिन् षष्ट्या विभक्ते तु भुक्तं स्यादुदितस्वरे । उदितस्य स्वरस्य स्वनामस्वरवशेन तत्" । अधिकं चक्रशब्दे बालादिचक्रे वक्ष्यते । पञ्चस्वरोक्ते ८ स्वरभेदे च । तच्चेत्थम् प्रकारश्च बालादिचक्रवत् ज्ञेयः । तदप्युक्तं तत्रैव । "तिथिः प्रतिपदादिश्च कुजादिर्वारनिर्णयः । नन्दा भद्रा जयारिक्ता पूर्णा चापि यथाक्रमम् । क्रमेणाङ्काः प्रदातव्या याह्यवाङ्कसमुच्चयः । चन्द्रादौ ८१ प्रथमे देया नगनाग ८७द्वितीयके । तृतीये चाग्निनवकं ९३ चतुर्थे तु अङ्कग्रहाः ९९। पञ्चोत्तरशत १०५देयम् क्रमेण पञ्चकोष्ठतः । अङ्कपङ्क्त्यन्तु "वयोराशिं स्वराङ्कञ्च एकीकृत्य त्रिधापयेत्"। इत्यादि सप्तादिशून्यगणनार्थं, सप्तशून्यशब्दे विवृतिः । एतेषां पञ्चकोष्ठस्थवर्णादीनां संज्ञा तत्रैवोक्ता यथा "उदितं भ्रमितं भ्रान्तं सन्ध्याख्यं तदनन्तरम्" संज्ञान्तरमपि तत्रैव "जन्म कर्म च आधानं पिण्डं क्रिड" तत्रैव चेति "उदिते विजयोमित्यं भ्रमिते लाभ एव च । भ्रान्ते तु सिद्धिमाप्नोति सन्ध्याख्ये मरणं स्मृतम् । यत्र नामाक्षरं प्राप्तं तत्रैव उदितस्वरः । ९०सम्बद्धे । "पुरोक्तितश्च कुर्व्वीत दैवतमुदितोदितम्" या०स्मृ० । विद्याभिजनानुष्ठानादिभिरुदितैः शास्त्रोक्तैरुदितं सम्बद्धम्" मिता० । ११वालकनामगन्धद्रव्ये ह्रीवेरे(बाला) न० अमरः ।

**उदिति** स्त्री उद्+इ-क्तिन् । उदये उद्गमने "यशस्य वा निमितिं योदितिं वा" ऋ०६,१५,११ ।

**उदीक्षण** न० उद्+ईक्ष-ल्युट् । १ऊर्द्ध्वदर्शने २उद्भावने च ।

**उदीक्ष्य** अव्य० उद्+ईक्ष-ल्यप् । १ऊर्द्ध्वं दृष्ट्वेत्यर्थे २उद्भाव्येत्यर्थे च । कर्मणि यत् । ३उद्भावनीये ४उदीक्षणीये च त्रि० ।

**उदीचीन** त्रि० उदीचि उदीच्यां वा भवः खः उद्यादेशे अल्लोपे पूर्व्वदीर्घः । उत्तरदिग्देशकालभवे । "उदीचीनप्रवणं करोत्युदीची वै मनुष्याणां दिक्" शत० ब्रा० १३,८,१,६ । "उदीचीनदशं वै तत्पवित्रं भवति" शत० ब्रा० १,७,१,१२ ।

**उदीच्य** त्रि० उदच्+भवार्थे यत् उद्यादेशः अल्लोपे दीर्घः

उत्तरदिग्देशकालभवे । "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव" रघुः । २कर्मसमाप्तौ कर्त्तव्ये दक्षिणादिदानादिरूपे कर्मादौ च । "अश्वतरीरथानुदीच्येषु" कात्या० २२,३,२५ । "अश्वतरीयुक्तान् रथानुदीच्येषु ददाति" कर्कः । यथा होमादौ प्रकृतहोमानन्तरं कर्त्तव्योदकाञ्जलिसेकादि । यथाह सं०त० "अथोदीच्यकर्म, तत्र गोभिलः । "समिधमाधायानुपर्युक्ष्य तथैवोदकाञ्जलीन् सिञ्चेत् अन्वमंस्थाः"इति यथायथमूह्यम् । उदीच्यदेशाश्च शरावत्याः पश्चिमोत्तरस्था देशभेदास्ते च मत्स्यपुराणे दर्शिताः यथा "वाह्लीका वाटधानाश्च आभीराः कालतोयकाः । परन्ध्राश्चैव शूद्राश्च पह्लवाश्चात्मखण्डिकाः । गान्धारा यवनाश्चैव सिन्धुसौवीरमद्रकाः । शका द्रुह्याः पुलिन्दाश्च पारदा हारमूर्त्तिकाः । रामठाः कण्टकाराश्च केकया दशमानिकाः । क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च । आत्रेयोऽथ भरद्वाजः प्रस्थलाः सदशेरकाः । लम्पकास्तलगानाश्च सैनिकाः सहजाङ्गलैः एते देशा उदीच्यास्तु पुराणैः परिकीर्त्तिताः" । वृहत्सं०कूर्म्मविभागे तु अन्य एव ते उक्ता यथा "उत्तरतः कैलासो हिमवान्वसुमान् गिरिर्धनुष्मांश्च । क्रौञ्चो मेरुः कुरवस्तथोत्तराः क्षुद्रमीनाश्च । केकयवसातियामुनभोगप्रस्थार्जुनायनाग्नीध्राः । आदर्शान्तर्द्वीपित्रिगर्त्ततुरगाननाश्वमुखाः । केशधरचिपिटनासिकदासेरकवाटधानशरधानाः । तक्षशिलापुष्कलावतकैलावतकण्ठधानाश्च । अम्बरमद्रकमालवपौरवकच्छारदण्डपिङ्गलकाः । माणहलहूणकोहलशीतकमाण्डव्यभूतपुराः । गान्धारयशोवतिहेमतालराजन्यखचरगव्याश्च । यौधेयदासमेयाःश्यामाकाः क्षेमधूर्त्ताश्च" अनयोर्विरोधपरिहारः अपेक्षाभेदात् नामान्तरानुसेखाच्च बोध्यः ।

उदीच्यवृत्ति स्त्री "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः" इत्युपक्रम्य "उदीच्यवृत्तिर्द्वितीयलः सक्तोऽस्पेष भवेद्युग्मयोः" इ०र०उक्ते वैतालीयभेदे छन्दसि । [देशे।

उदीप त्रि० उद्गता आपोयतः अच् समा० ईत्वम् । उद्गतजले

उदीरण न० उद्+ईर–ल्युट् । १उच्चारणे "उद्घातः प्रणवोयासां न्यायैस्त्रिभिरुदीरणम्" कुमा० युच् तत्रैव स्त्री ।

उदीरित त्रि० उद्+ईर–क्त । १कथिते २उद्गिक्ते ३प्रेरिते च । "अभिलाषमुदीरितेन्द्रियः" कुमा० । भावे क्त । ४कथने न० ।

उदीर्ण त्रि० उद्–ॠ–क्त । १उदिते २महति ३उद्रिक्ते च । "उदीर्णरागप्रतिरोधकं मुहुः" माघः । "भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः" कुमा० । ४विष्णौ पु० । "उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतःस्थिरः" विष्णु०स० ।

उदुत्य न० उदुत्यमितिपदयुक्तम् । सूर्य्योपस्थानार्थे मन्त्रे स च सन्ध्याप्रयोगे दृश्यः "उदयन्तमुदुत्यञ्च चित्रं देवेति तत्परम् । तच्चक्षुरित्युपस्थानं मन्त्रा नभस्य त्रिविदाः । काशीख० ।

उदुम्बर पु० उडुम्बरवत् । (यज्ञडुमुर) १वृक्षे । २देहल्यां ३नपुंसके ४कुष्ठभेदे च ५ताम्रे न० । ६अशीतिरक्तिकापरिमिते कर्षे पु० । उडुम्बरशब्दे उदा० । "यदुदुम्बरपर्णानां षटीपु मण्डलं महत् । यातं न गमयेत् खगं किन्तु कण्ठगतं नयेत्" । सौत्रमणीयागे सुरापात्रदृष्टत्वबोधकम् । "हीवेरचक्रमञ्जिष्ठोदुम्बरत्वच् साधितम्" । कच्छुरामूलकल्कं वा उदुम्बरफलोपमम्" सुश्रुतः । ७शाल्वजनपदावयवे च । "शाल्वावयवेत्यादि" पा० ततोभवाद्यर्थे इञ् । औदुम्बरि तद्भवे त्रि० "शाल्वावयवा उदुम्बरादयः"सि०कौ० उदुम्बर एव स्वार्थे अण् तस्मिन् ग्रामे । "औदुम्बरकापित्थगजाह्वयश्चेति मध्यमिदम्" वृ०सं० । उदुम्बरे कृमिः पात्रेसमि० स० । उदुम्बरकृमिः तन्मध्यस्थकृमौ । उदुम्बर इव मशकः पात्रेसमिता०स । स्थूलमशके पु०

उदुम्बरदला स्त्री उदुम्बरस्येव दलमस्याः । दन्तीवृक्षे राजनि०

उदुम्बरपर्णी स्त्री उदुम्बरपर्णीवत् सर्वम् न ङत्वम् । तदर्थे

उदुम्बरावती स्त्री उदुम्बफलानि बाहुल्येन सन्त्यस्यां नद्यां मतुप् संज्ञायां दीर्घः । नदीभेदे ।

उदुम्बल पु० उदुम्बरशब्दे रस्य वा लः । उदुम्बरे "उरुणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतोजनाँ अनु" ऋ०१०,१४,१२, "उदुम्बलौ उरुबलौ विस्तीर्णबलौ" भा० । "उदैयन्नादुम्बलम् तृण्डेलम्हतसालुदम्" अथ०८,६,१७, । उरुव लमस्य पृषो० । २विस्तीर्णबलयुक्ते त्रि०

उदूखल न० ऊर्द्ध्वं खं खाति खा-क पृषो० नि० । तण्डुलादि कण्डनार्थे काष्ठादिरचिते १द्रव्ये, २गुग्गुलौ च । "सधान्यमुदूखलं मुषलेनाभिहन्यात्" सुश्रु० । सुश्रुतोक्ते शारीरे ३सन्धिभेदे पु० सन्धयश्च सुश्रु० दर्शिताः "कोरोदूखलसामुद्गप्रतरतुन्नसेवनी वायसतुण्डमण्डल शङ्खावर्त्ताः" इत्यष्टविधान् सन्धीनुक्त्वा "कक्षावङ्क्षणदशनेषूदूखल इति उदूखलाकृतित्वाच्च तदभिकृहरस्य तथात्वम् ।

उदूढ त्रि० उद्+वह–क्त । १ऊढे, २स्थूले, ३धृते च । "उदूढलोकत्रितयेनेति" माघः । "उदूढवक्षःस्थगितैकदिङ्मुखे" किरा० ४विवाहितस्त्रियां स्त्री ।

**उदृच्** स्त्री उत्क्रान्ता ऋक् समासान्तविधेरनित्यत्वात् न समा०। उत्क्रान्तायामृचि। "मा पातमाख यज्ञस्योदृचः मा पाद्यं हस ऊाख यज्ञस्योदृचः" यजु० ४,६,१० "उदृचः उत्तमाया ऋचः पर्यन्तम्" वेददी०। यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीति" शत० ब्रा० २,१,१,१२ उद्+ऋच–स्तुतौ क्विप्। २उदये "सत्याः सन्तु यजमानस्य कामाः इत्याह स वै कामो यजमानस्य यदनार्त्त उदृचं गच्छति" तैत्ति० "स्वस्ति ते देव सोम सुत्यामुदृचमशीय" ऐत०

**उदेजय** त्रि० उद्+एज–णिच्–खश्। उद्वेगकारके "उदेजयान् भूतगणान् न्यषेधीत्" भट्टिः। [उदकशब्दे उदा०।

**उदौदन** पु० उदकेन सिद्ध ओदनः उदादेशः। जलमात्रसिद्धे

**उद्गत** त्रि० उद्+गम–क्त। १उदिते, २उत्पन्ने, "ययोऽतिपातोद्गतवातवेपितैः" नैष०। ३ऊर्द्ध्वगते, ४वान्ते च।

**उद्गतशृङ्ग** पु० उद्गतमुत्थितं शृङ्गमस्य। जातशृङ्गावस्थपशौ

**उद्गति** स्त्री उद्+गम–क्तिन्। १उदये २ऊर्द्ध्वगतौ ३उत्पत्तौ च।

**उद्गन्धि** त्रि० उत्कटो गन्धोऽस्य प्रा० ब० इत्लोप इत्समा०। १उत्कटगन्धादौ २उत्कटगन्धयुक्ते च। "विजृम्भणोद्गन्धिषु कुड्मलेषु" रघुः।

**उद्गम** पु० उद्–गम–घञ् अमन्तत्वात् न वृद्धिः। १उदये २ऊर्द्ध्वगतौ ३उद्भवे ४उन्नतौ च। "रोमोद्गमः प्रादुरभूदुमायाः" कुमा० "फलेन सहकारस्य पुष्पोद्गम इव प्रजाः" रघुः। "हरितहयोद्गमशङ्कया मृगीभिः" किरा० भावे ल्युट्। उद्गमनमप्यत्र न० "आङ उद्गमने" पा०

**उद्गता** स्त्री "सजसादिमे सलघुकै च नसजगुरुकैष्वथोद्गता। अङ्घ्रिगतभनजलगागयुताः सजसा जगौ च चरणमेकतः पठेत्" वृ० र० उक्ते विषमवृत्ते छन्दोभेदे।

**उद्गमनीय** न० उद्+गम–अनीयर्। धौतवस्त्रद्वये "गृहीतपत्युद्गमनीयवस्त्रेति" कुमारः। "तत् स्यादुद्गमनीयं यत् धौतयोर्वस्त्रयोर्युगम्" इत्यमरव्याख्यायां युगमित्यविवक्षितम् इति प्रायशः यद्वस्त्रं तदेवेति व्याख्याय क्षीरस्वामी इममेव श्लोकमुदाजहार। "गृहीतं पतिं प्रति उद्गमनीयं वस्त्रं ययेति मल्लि०। स्त्रीणामेकवस्त्रधारित्वं लोकप्रसिद्धं वैदिके कर्मणि एव द्विवस्त्रता अतएव पतिं प्रतीतीत्यध्याहृत्य व्याख्यातम्। "धौतोद्गमनीयवाससी" दशकुमा०।

**उद्गाढ** न० उद्+गाह–क्त। १अतिशये २अत्यन्ते। ३अतिशययुक्ते त्रि०। "प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयाः" सा० द०।

**उद्गातृ** पु० उद्गायति साम उद्+गै–तृच्। १सामवेदगायके। अस्य च उद्गीथरूपसामावयवस्योर्द्ध्वं गानादुद्गातृत्वम्। यदा चास्य तथात्वं तथा उद्गीथशब्दे वक्ष्यते। षोडशसु ऋत्विक्षु मध्ये २ऋत्विग्भेदे। ते च ऋत्विजः अच्छावाकशब्दे ५४३० दर्शिताः। "एवं हरेदथाध्वर्युर्ब्रह्माधाने च वाजिनम्। होता चापि हरेदश्वमुद्गाता चाप्यनः क्रये" मनुः। राजसूये तस्य च दक्षिणाभेद उक्तः "सौवर्णीं स्रजमुद्गातुः" आश्व० ९,४,९। उद्गातृप्रशंसनपूर्वं तत्कर्म च शत० ब्रा० दर्शितं यथा। "अध्याति ह वा एतद्धोता यच्छंसति। तस्मा एतदुद्यते प्रत्येवाध्वर्युरास्थाति तस्मात् प्रतिगरो नाम। तं वै प्राङ्ङासीनमाह्वयते सर्वे वा अन्य उद्गातुः प्राञ्च आर्त्विज्यं कुर्वन्ति तयो ह्यस्यैतत् प्रागेवार्त्विज्यं कृतं भवति। प्रजापतिर्वा उद्गाता। योषाऽग्र्येता स एतत् प्रजापतिरुद्गाता योषायामृचि होतरि रेतः सिञ्चति यत् स्तुते तद्धोता शस्त्रेण प्रजनयति तच्छ्यति ययायं पुरुषः पितरश्चदेनच्छ्यति तस्माच्छस्त्रं नाम" ४,३,१,१,२,३,। उद्गीथगानकर्त्तृत्वाच्च यथाऽस्योद्गातृत्वं तथोक्तं छा० उ०। "तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता" "इममेवोद्गातारमुवाचोद्गातः! या देवतोद्गीथमन्वायत्ता तां चेदविद्वान् उद्गास्यसि मूर्द्धा ते विपतिष्यतीति" च। तथाज्ञानपूर्वकोद्गानस्य फलमपि तत्रोक्तं यथा "य एतदेवं विद्वान् साम गायति उभौ स गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च अथानेनैवेमेऽतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च। तस्मादुहैवं विदुद्गाता ब्रूयात् कं ते काममागायानीति एष ह्येव कामागानस्येष्टे य एतदेवं विद्वान् साम गायति" छा० उ०।

**उद्गार** पु० उद्+गॄ+"उदोरप्" बाधित्वा "उन्न्योर्ग्रः" पा० घञ्। उद्गमने। "खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु" रघुः। "सलिलोद्गारमुच्चैर्विमानाः" "धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति" मेघ०। "तमिस्रोद्गार इवाद्रिराजः" रघुः। (ढेकुर) इति २कण्ठशब्दभेदे च। "धूमोद्गारे तथा वान्ते क्षुरकर्मणि मैथुने। स्नातके सूतके चैव नित्यं नैमित्तिकं त्यजेत्" आ० त० स्मृतिः। वमनप्रकारः निदानादिसहितः सुश्रुते दर्शितो यथा

"अथातो वमनविरेचनव्यापच्चिकित्सितं व्याख्यास्यामः। वैद्यातुरनिमित्तं वमनं विरेचनं च षड्दशधा व्यापद्यते तत्र वमनस्याधोगतिरूर्द्ध्वं विरेचनस्येति पृथक्। समान-

उभयोः सावशेषौषधत्वं जीर्णौषधत्वं हीनाधिकदोषापहृतत्वं वातश्लेष्मयोगातियोगौ जीवादानमाध्मानं परिकर्त्तिका परिस्रावप्रवाहिका हृदयोपसरणं विबन्धः इति । तत्र बुभुक्षापीडितस्यातितीक्ष्णाग्नेर्मृदुकोष्ठस्य चावतिष्ठमानं दुर्ब्बलस्य वा गुणसामान्यभावाद्वमनमधोगच्छति । तत्रेप्सितानवाप्तिर्दोषोत्कर्षश्च तमाशु स्नेहयित्वा भूयस्तीक्ष्णतरैर्वामयेत् । अपरिशुद्धामाशयस्योत्क्लिष्टश्लेष्मणः सशेषान्नस्य वाऽहृद्यमतिप्रभूतविरेचनं पीतमूर्द्ध्वं गच्छति तत्राशुद्धामाशयसलवणे प्राप्यमाशु वामयित्वा भूयस्तीक्ष्णतरैर्विरेचयेत् । आमान्वये त्वामवत्तु विधानम् । अहृद्येऽतिप्रभूते च हृद्यं प्रमाणं युक्तञ्च । अतऊर्द्ध्वमुत्तिष्ठत्यौषधे न तृतीयं पाययेत् । ततस्तेन मधुघृतफाणितयुक्तैर्लेहैर्विरेचयेत् । दोषविच्छ्यावितमल्पमौषधमवस्थितमूर्द्ध्वभागिकमधोभागिकं वा न स्रंसयति दोषान् । तत्र तृष्णापार्श्वशूलं छर्द्दिर्मूर्च्छापर्व्वभेदो हृल्लासारत्युद्गाराविशुद्धिश्च भवति । तमुष्णाभिरद्भिराशु वामयेत् । सावशेषौषधमतिप्रधावितदोषमतिबलमसम्यग्विरिक्तमपरं वामयेत् । क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमौषधमल्पगुणं वा भक्तवत्पाकमुपैति तत्र समुदीर्णा दोषा यथाकालमनिर्हृयमाणा व्याधिं बलविभ्रमञ्चापादयन्ति । तमनल्पममन्दमौषधञ्च पाययेत् । अस्निग्धस्विन्नेनाल्पगुणं वा भेषजमुपयुक्तमल्पान्दोषान्हन्ति । तत्र वमने दोषशेषः गौरवमुत्क्लेशं हृदयाविशुद्धिं व्याधिवृद्धिं करोति तत्र यथायोगं पाययित्वा वामयेद्दृढतरम् । विरेचने गुदपरिकर्त्तनमाध्मानं शिरोगौरवमनिःसरणं वा वायोर्व्याधिवृद्धिं करोति । तमुपपाद्य भूयः स्नेहस्वेदाभ्यां विरेचयेद्दृढतरम् । दृढं बहुप्रचलितदोषं वा तृतीये दिवसेऽल्पगुणं चेति । अस्निग्धस्विन्नेन रूक्षमौषधमुपयुक्तमसञ्चारित्वा वा वायुं कोपयति । तत्र वायुः प्रकुपितः पार्श्वपृष्ठश्रोणिमन्यामर्म्मशूलं मूर्च्छां भ्रमं संज्ञानाशञ्च करोति । तमभ्यज्य धान्यस्वेदेन स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत् । स्नेहस्वेदाभ्यामविभावितशरीरेणाल्पमौषधमल्पगुणं वा पीतमूर्द्ध्वमधो वा नाभ्येति दोषांश्चोत्क्लिश्य तैः सह बलक्षयमापादयति । ततश्चाध्मानं हृदयग्रहस्तृष्णा मूर्च्छा दाहश्च भवति तमयोगमित्याचक्षते तमाशु वामयेन्मदनफललवणाम्बुभिर्विरेचयेत्तीक्ष्णतरैः कषायैश्च । दुर्व्वान्तस्य तु समुत्क्लिष्टा दोषा व्याप्य शरीरं कण्डूश्वयथुकुष्ठपिडकाज्वराङ्गमर्द्दनिस्तोदनानि कुर्व्वन्ति । ततस्तानवशेषानूर्द्ध्वभागेनापहरेत् । अस्निग्धस्विन्नस्य मृदुविरिक्तस्याशोभनाभिः सम्यगूर्द्ध्वोदरता शूलं वातपुरीषसङ्गः कण्डूमण्डलप्रादुर्भावो भवति तमास्थाप्य पुनः संस्नेह्य विरेचयेत्तीक्ष्णेन । नातिप्रवर्त्तमाने तिष्ठति वा दुष्टसंशोधने तत्कालजननार्थमुष्णोदकं पाययेत् पाणितापैश्च पार्श्वोदरमुपस्वेदयेत् । ततः प्रवर्त्तन्ते दोषाः । अनुप्रवृत्ते चाल्पदोषे जीर्णौषधं बहुदोषमहःशेषं बलञ्चावेक्ष्य भूयोमात्रां विदध्यात् । अप्रवृत्तदोषं दशरात्रादूर्द्ध्वमुपसंस्कृतदेहं स्नेहस्वेदाभ्यां भूयः शोधयेत् । दुर्विरेच्यमास्थाप्य पुनः संस्नेह्य विरेचयेत् । ह्रीभयलोभैर्वेगाघातशीलाः प्रायशः स्त्रियो राजसमीपस्था वणिजः श्रोत्रियाश्च भवन्ति । तस्मादेते दुर्विरेच्या बहुवातत्वादत एव तानतिस्निग्धान् स्वेदोपपन्नान् शोधयेत् । स्निग्धस्विन्नस्यातिमात्रमतिमृदुकोष्ठस्य वा तीक्ष्णाधिकदत्तमौषधमतियोगं कुर्य्यात् । तत्र वमनातियोगे पित्तातिप्रवृत्तिर्बलविभ्रंशो वातकोपश्च बलवान् भवति तं घृतेनाभ्यज्यावगाह्यावगाह्य शीताम्बु शर्करामधुभिर्लेहैरुपचरेद्यथाक्रमम् । विरेचनातियोगे कफस्यातिप्रवृत्तिरुत्तरकालञ्च रक्तस्य तत्रापि बलविभ्रंशो वातकोपश्च बलवान् भवति तमतिशीताम्बुभिः परिषिच्यावगाह्य वा शीतैस्तण्डुलाम्बुभिर्मधुमिश्रैश्छर्द्दयेत् । पिच्छावस्तिं चास्मै दद्यात् क्षीरसर्पिषा चैनमनुवासयेत् प्रियङ्ग्वादिं चास्मै तण्डुलाम्बुना पातुं प्रयच्छेत् । क्षीररसयोश्चान्यतरेण भोजयेत् । तत्रैव वमनातियोगे प्रवृत्ते शोणितं ष्ठीवति छर्द्दयति वा तत्र जिह्वानिःसरणमक्ष्णोर्व्यावृत्तिर्हनुसंहननं तृष्णा हिक्का ज्वरो वैसंज्ञमित्युपद्रवा भवन्ति तत्राजाक्षुचन्दनोशीराञ्जनलाजचूर्णैः शर्करोदकैर्मन्थं पाययेत् । फलरसैर्वा घृतक्षौद्रशर्करैः शुङ्गाभिर्वा वटादीनां पेयां सिद्धां सक्षौद्रां खर्ज्जूरादिभिर्वा पयसा जाङ्गलरसेन वा भोजयेत् अतिस्रुतशोणितविधानेनोपचरेत् । जिह्वामतिसर्पितान्त्रिकटुकलवणचूर्णप्रघृष्टां तिलद्राक्षाप्रलिप्तां वा पीडयेत् प्रविष्टायामम्लमन्ये तस्य पुरस्तात्खादेयुः । व्यावृत्ते चाक्षिणी घृताभ्यक्ते पीडयेत् । हनुसंहनने वातश्लेष्महरं नस्यं स्वेदांश्च विदध्यात् । तृष्णादिषु च यथास्वं प्रतिकुर्वीत । विसंज्ञे वेणुवीणागीतस्वनं श्रावयेत्"।

उद्गारस्याजीर्णरोगलिङ्गत्वमिङ्गिरणशब्दे वक्ष्यते । अपथ्यादिभोजनरूपकारणसहिताजीर्णस्वरूपादि श्रूयते उक्तम् । "प्रागभुक्ते त्वविविक्तेऽग्नौ द्विरन्नं न समाचरेत् । पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् । मात्रागुरुं परिहरे

दाहारं द्रव्यतश्च यः । पिष्टान्नं नैव भुञ्जीत मात्रया वा बुभुक्षितः । द्विगुणञ्च पिबेत्तोयं सुखं सम्यक् प्रजीर्य्यति । पिष्टेभ्योऽप्याद्यभक्ष्याणां गुरु विद्याद्यथोत्तरम् । गुरूणामर्द्धसौहित्यं लघूनां तृप्तिरिष्यते । द्रवोत्तरो द्रवश्चापि न मात्रागुरुरिष्यते । द्रवाढ्यमपि शुष्कन्तु सम्यगेवोपपद्यते । विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति । पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति । स्रोतस्यवस्थिते पित्ते पक्तौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते । शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् । आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः । अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः । अत्यम्बुपानाद्विषमाशनाद्वा सन्धारणात्स्वप्नविपर्य्ययाच्च । कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य । ईर्ष्याभयक्रोधपरिक्षतेन लुब्धेन रुग्दैन्यनिपीडितेन । प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् परिणाममेति । माधुर्य्यमन्नं गतमामसंज्ञं विदग्धसंज्ञं गतमम्लभावम् । किञ्चिद्विपक्वं भृशतोदशूलं विष्टब्धमाबद्धविरुद्धवातम् । उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य । रसावशेषेण तु सप्रसेकं चतुर्थमेतत्प्रवदन्त्यजीर्णम् । मूर्च्छाप्रलापो वमथुः प्रसेकः सदनं भ्रमः । उपद्रवा भवन्त्येते मरणं चाप्यजीर्णतः । तत्रामे लङ्घनं कार्य्यं विदग्धे वमनं हितम् । विष्टब्धे स्वेदनं पथ्यं रसशेषे शयीत च । वामयेदाशु तं तस्मादुष्णेन लवणाम्बुना । कार्य्यं चानशनं तावद्यावन्न प्रकृतिं भजेत् । लघुकायमतश्चैनं लङ्घनैः समुपाचरेत् । यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा । हिताहितोपसंयुक्तमन्नं समशनं स्मृतम् । बहु स्तोकमकाले वा विज्ञेयं विषमाशनम् । अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते । त्रयमेतन्निहन्त्याशु बहून् व्याधीन् करोति वा । अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति । तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् । विदह्यते यस्य तु भुक्तमात्रे दह्येत हृत्कोष्ठगलञ्च यस्य । द्राक्षाऽभयां माक्षिकसम्प्रयुक्तां लीढ्वाऽभयां वा स सुखं लभेत । भवेदजीर्णं प्रति यस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले । प्रातः स शुण्ठीमभयामशङ्को भुञ्जीत सम्प्राश्य हितं हितार्थी । स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति । भवत्यजीर्णेऽपि तदा बुभुक्षा या मन्दबुद्धिं विषवन्निहन्ति ।

इत्थमजीर्णताकारणप्रदर्शनपूर्वमुद्गारशुद्धेः प्रकारान्तरेण दर्शितः यथा "या मात्रा परिजीर्य्येत चतुर्भागगतेऽहनि । सा मात्रा दीपयत्यग्निमल्पदोषे च पूजिता । या मात्रा परिजीर्य्येत तथार्द्धदिवसे गते । सा इष्टा बृंहणी चैव मध्यदोषे च पूजिता । या मात्रा परिजीर्य्येत चतुर्भागावशेषिते । स्नेहनीया च सा मात्रा बहुदोषे च पूजिता ॥ या मात्रा परिजीर्य्येत तथा परिणतेऽहनि । ग्लानिमूर्च्छामदान् हित्वा सा मात्रा पूजिता भवेत् । अहोरात्रादसन्दुष्टा या मात्रा परिजीर्य्यति । सा तु कुष्ठविषोन्मादग्रहापस्मारनाशिनी । यथाग्नि प्रथमां मात्रां पाययेत विचक्षणः । पीतो घृतबहुस्नेहो जनयेत्प्राणसंशयम् । मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति । विष्टभ्य चापि जीर्य्यन्तं वारिणोष्णेन वामयेत् । जीर्णाजीर्णविशङ्कायां स्नेहस्योष्णोदकं पिबेत् । तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा । स्नेहः पच्यमाने तृड्दाहभ्रमसादारतिक्लमाः । परिषिच्याद्भिरुष्णाभिर्जीर्णस्नेहं ततो नरम् । यवागूं पाययेदुष्णां कामं द्रवाल्पतण्डुलाम् । देयौ यूषरसौ वापि सुगन्धी स्नेहवर्ज्जितौ । कृतौ वाल्पलवणस्निग्धौ यवागूर्वा विधीयते । पिबेत्त्र्यहं चतुरहं पञ्चाहं षडहं तथा । सप्तरात्रात्परं स्नेहः सात्मीभवति सेवितः" ।

उद्गारश्च नागवायुकार्य्यम् यथोक्तं पदार्था० योगार्णवे "उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः । उन्मीलने स्थितः कूर्म्मो भिन्नाञ्जनसमप्रभः । कृकरस्तु क्षुते चैव जवाकुसुमसन्निभः । जृम्भणे देवदत्तः स्यात् शुद्धस्फटिकसन्निभः । धनञ्जयस्तथा घोषे महारजतवर्णकः । ललाटे चोरसि स्कन्धे हृदि नाभौ त्वगस्थिषु । नागाद्या वायवः पञ्च देहे तु परिवेष्टिताः" । [शिरके शब्दचि० ।

**उद्गारशोधन** पु० उद्गारं शोधयति शुध–णिच्–ल्यु । क्षण-

**उद्गारिन्** त्रि० उद्+गॄ–णिनि स्त्रियां ङीप् । उद्गारयुक्ते । "यत्ते नीलो कनककपिशं चौरमोद्गारि वासः" उद्भट० । "धारास्वनोद्गारिदरीमुखोऽसौ" रघुः । "यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणाम्" मेघ० ।

**उद्गिरण** न० उद्+गॄ–ल्युट् त्रि० वमनम् । १उद्गमने । उद्गारे (ढेकुर) २कण्ठस्वरभेदे च । "आध्मानमुद्गिरणमरुचो विदाहोऽजीर्णस्य पानजनितस्य भवन्ति चिह्नम्" सुश्रु० । उद्गारशब्दे विवृतिः ।

**उद्गीति** स्त्री उद्+गै–भावे क्तिन् । १उद्गाने कर्मणि क्तिन् । "आर्य्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः । सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता" वृ०र०उक्ते मात्रा-

ह्रुत्तभेदे। उद्+गै–भावे क्त। उद्गीत उच्चैर्गाने न०।

उद्गीथ पु० उद्+गै–थक्। सामगानावयवभेदे।

"उद्गीथरश्म्यपदपाठवताञ्च साम्नाम्" देवीम०। साम्नोहि पञ्चविधाः सप्तविधा वा अवयवाः। "प्रस्तावस्तत उद्गीथः प्रतिहार उपद्रवः। निधनं पञ्चधेत्याहुर्हिङ्कारः प्रणवस्तथा" माध०भाष्यधृतवाक्यात्। तत्र साम्न आद्योभागः प्रस्तोत्रा गेयः प्रस्तावनामा। द्वितीयोभाग उद्गात्रा गेय उद्गीथनामा। तृतीयोभागः प्रतिहर्त्रा गेयः प्रतिहारनामा। चतुर्थोभागः पुनरुद्गात्रा गेय उपद्रवनामा। पञ्चभिर्युगपत् गेयः निधननामा इति पञ्चविधः। गानारम्भकाले सर्वैरुत्विग्भिर्मिलित्वा हुङ्कारकरणरूपो हिङ्कारः, ओङ्कारपूर्व्वकत्वात् सर्वेषां वेदानां प्रणवरूपः प्रथमावयवः इति सप्तावयवत्वं तदेतत् छा०उप०दर्शितम् यथा "समस्तस्य खलु साम्न उपासनं साधु" इति साधुत्वोपन्यासेन "अग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्द्ध्वेषु अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम्। कल्पन्ते हास्मै लोका ऊर्द्ध्वाश्चावृत्ताश्च य एतदेवं विद्वांल्लोकेषु पञ्चविधं सामोपास्ते" इति पञ्चविधस्योपासनमुक्तं तत्रैव

"वृष्टौ पञ्चविधं सामोपासीत पुरोवातो हिङ्कारो, मेघो जायते स प्रस्तावो, वर्षति स उद्गीथो, विद्योतते स्तनयति स प्रतिहारः, उद्गृह्णाति तन्निधनं, वर्षति हास्मै वर्षयति ह य एतदेवंविद्वान् वृष्टौ पञ्चविधं सामोपास्ते। सर्व्वास्वप्सु पञ्चविधं सामोपासीत मेघो यत् सम्प्लवते स हिङ्कारो, यद्वर्षति स प्रस्तावो, याः प्राच्यः स्यन्दन्ते स उद्गीथो, याः प्रतीच्यः स प्रतिहारः, समुद्रो निधनम्। न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवंविद्वान् सर्व्वास्वप्सु पञ्चविधं सामोपास्ते"।

ऋत्वादिषु पञ्चविधस्योपासनं तत्रैवोक्तम्

"ऋतुषु पञ्चविधं सामोपासीत वसन्तो हिङ्कारो, ग्रीष्मः प्रस्तावो, वर्षा उद्गीथः, शरत्प्रतिहारो, हेमन्तो निधनम्। कल्पन्ते हास्मा ऋतव ऋतुमान् भवति य एतदेवंविद्वानृतुषु पञ्चविधं सामोपास्ते"।

"पशुषु पञ्चविधं सामोपासीताजा हिङ्कारो,ऽवयः प्रस्तावो, गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम्। भवन्ति हास्य पशवः, पशुमान् भवति य एतदेवंविद्वान् पशुषु पञ्चविधं सामोपास्ते"

"प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो, वाक् प्रस्तावश्चक्षुरुद्गीथः, श्रोत्रं प्रतिहारो, मनो निधनं, परोवरीयांसि वैतानि। परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवंविद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य"। वाचि सप्तविधस्य साम्न उपासनं तत्रैवोक्तम्

"अथ सप्तविधस्य वाचि सप्तविधं सामोपासीत यत्किञ्च वाचो हुं इति स हिङ्कारो, यत्प्रेति स प्रस्तावो, यदेति स आदिः, (प्रणवः)। यदुदिति स उद्गीथो, यत्प्रतीति स प्रतिहारो, यदुपेति स उपद्रवो, यन्नीति तन्निधनम्। दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविधं सामोपास्ते"।

आदित्ये सप्तविधस्योपासनं तत्रैवोक्तम्

"अथ खल्वमुमादित्यं सप्तविधं सामोपासीत सर्व्वदा समस्तेन साम। मां प्रति मां प्रतीति सर्व्वेण समः तेन साम। तस्मिन्निमानि सर्व्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः। अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशंसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः। अथ यत्सङ्गववेलायां स आदिः (ओङ्कारः) तदस्य वयांस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः। अथ यत्सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः। अथ यदूर्द्ध्वं मध्यन्दिनात् प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः। अथ यदूर्द्ध्वमपराह्णात् प्रागस्तमयात्स उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः। अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्नः। एवं खल्वमुमादित्यं सप्तविधं सामोपास्ते"।

अतिमृत्युफलाय सप्तविधसामोपासनं तत्रैवोक्तम्

"अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधं सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम्। आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम्। उद्गीथ इति त्र्यक्षरमुपद्रव इति चतु-

क्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम्। निधनमिति त्र्यक्षरं तत्सममेव भवति, तानि ह वा एतानि द्वाविंशतिरक्षराणि। एकविंशत्यादित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वाविंशेन परमादित्याज्जयति तन्नाकं तद्विशोकम्। आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधं सामोपास्ते सामोपास्ते"।

पुनः पञ्चविधस्य मनआदिनाम्ना उपासनं तत्रोक्तं यथा "मनो हिङ्कारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम्। स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, महामनाः स्यात्तद्व्रतम्। अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथो ऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनं संशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम्। स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम्। उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्री सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम्। स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, न काञ्चन परिहरेत्तद्व्रतम्। उद्यन् हिङ्कारः उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम्। स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, तपन्तं न निन्देत्तद्व्रतम्। अभ्राणि सम्प्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम्। स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपांश्च सुरूपांश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम्। वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम्। स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन, सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, ऋतून्न निन्देत्तद्व्रतम्। पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः। स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, लोकान्न निन्देत्तद्व्रतम्। अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः। स य एवमेता रेवत्यः पशुषु प्रोता वेद, पशुमान् भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, पशून्न निन्देत्तद्व्रतम्। लोम हिङ्कारः त्वक् प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम्। स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गीभवति नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा। अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम्। स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानां सलोकतां सार्ष्टितां सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या, ब्राह्मणान्न निन्देत्तद्व्रतम्। त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयांसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन् प्रोतम्। स य एवमेतत्साम सर्वस्मिन् प्रोतं वेद सर्वं ह भवति। तदेष श्लोको भवति 'यानि पञ्चधा त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति। यस्तद्वेद स वेद सर्वं सर्वा दिशो बलिमस्मै हरन्ति' सर्वमस्मीत्युपासीत तद्व्रतम्"।

एवं सामावयवानां तत्तद्दृष्ट्योपासनमुक्त्वा उद्गीथरूपावयवस्य ओङ्कारादिदृष्ट्योपासनमुक्तं तत्रैव यथा "ओमित्येतदक्षरमुद्गीथः तस्य एतन्मिथुनं यद्वाक् च प्राणश्चर्क् च साम च। तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम्। आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते। तस्य एतदनुज्ञाक्षरं यद्धि किञ्चा-

नुजानात्योमित्येव तदाह एषो एव समृद्धिर्यदनुज्ञा समर्द्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते । तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन । तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति"। तस्य प्राणदृष्ट्या उपासनमुक्तं तत्रैव "देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति । ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तं हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः । अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे तां हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यञ्चानृतं च पाप्मना ह्येषा विद्धा । अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् । अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं शृणोति श्रवणीयञ्चाश्रवणीयञ्च पाप्मना ह्येतद्विद्धम् । अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं सङ्कल्पते सङ्कल्पनीयञ्चासङ्कल्पनीयञ्च पाप्मना ह्येतद्विद्धम् । अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वंसेत । एवं यथाश्मानमाखणमृत्वा विध्वंसत एवं हैव स विध्वंसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः । नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवति । एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति"। अङ्गिरस्त्वेन तस्योपासनं तत्रैवोक्तम् यथा ।
"तं हाङ्गिरा उद्गीथमुपासाञ्चक्र एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः । तेन तं ह बृहस्पतिरुद्गीथमुपासाञ्चक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः । तेन तं हायास्य उद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते । तेन तं ह वको दाल्भ्यो विदाञ्चकार । स ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति । आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् । अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन् वा एष प्रजाभ्य उद्गायति । उद्यंस्तमोभयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद । समान उ एवायञ्चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुञ्चोद्गीथमुपासीत" ।

तस्य व्यानत्वेनोपासनं तत्रैव यथा

"अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः । अथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् । तस्मादप्राणन्ननपानन्वाचमभिव्याहरति । या वाक् सर्क् तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क् तत्साम तस्मादप्राणन्ननपानन् साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति । अतो यान्यन्यानि वीर्य्यवन्ति कर्म्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत" ।

उद्गीथाक्षराणां प्राणादित्वेनोपासनं तत्रोक्तम् ।
"अथ खलूद्गीथाक्षराण्युपासीत उद्, गी थ इति प्राण एवोत्, प्राणेन ह्युत्तिष्ठति वाग्गीर्, वाचो ह गिर इत्याचक्षतेऽन्नं थम्, अन्ने हीदं सर्वं स्थितम् । द्यौरेवोत्, अन्तरिक्षं गीः, पृथिवी थम्, आदित्य एवोत्, वायुर्गीरग्निस्थम्, सामवेद एवोत्, यजुर्वेदो गीः, ऋग्वेदस्थं, दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः अन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद् गी थ इति"। तस्य प्रणवत्वेनोपासनं तत्रैव "अथ खलु य उद्गीथः स प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति" । तस्य परोवरीयस्त्वेनोपासनं तत्रोक्तं यथा
"त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति । तथेति समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति । स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच । का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरिति आप इति होवाच । अपां का गतिरित्यसौ लोक इति होवाच अमुष्य लोकस्य का गतिरिति न स्वर्गं लोक-

प्रतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसंस्तावं हि सामेति । तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य ! साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति । हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाच अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति । तं ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य ! साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच । अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् । स एष परो वरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् परोवरीयांसमुद्गीथमुपास्ते । तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति । तथामुष्मिँल्लोके लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति" उद्गीथस्य देवताऽपि तत्रोक्ता "अथ हैनमुद्गातोपससादोद्गातः या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति । आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति"। अत्राकाशादित्यशब्दौ ब्रह्मपरौ "आकाशस्तल्लिङ्गादित्यादि" शा॰ सू॰ भा॰ व्यवस्थापितम् ।

**उद्गीर्ण** त्रि॰ उद्+गॄ–क्त । १उद्वान्ते २उद्गमिते । "प्रगमादर्शयमितदनुद्गीर्णशरायुधम्" कुमा॰ "वलय-कुलिशोद्घट्टनोद्गीर्णतोयम्" मेघ॰। [युडाङ्गुलिभिः" कटिनः

**उद्गूर्ण** त्रि॰ उद्+गुरी–क्त । उद्यते दत्तोत्थिते "उद्गूर्णेव

**उद्ग्रथित** त्रि॰ उद्+ग्रन्थ–क्त । उत्तोल्य ग्रथिते

**उद्ग्रन्थ** त्रि॰ उद्गतो ग्रन्थात् निरा॰स॰ । १उन्मुक्ते २ग्रन्थोन्मुक्ते । उद्+ग्रन्थ–घञ् । ३उन्मोचने पु॰ ।

**उद्ग्रभण** न॰ उद्+ग्रह–ल्युट् वेदे हस्य वा भः । १उद्ग्रहणे २ऊर्द्धं विस्तृत्य दाने च "प्रतिमन्त्रयोद्ग्रभणं तस्मिं स्त्रियम्" काण्वा॰१६,५,११, भत्वाभावे उद्ग्रहणमप्यत्र । "तस्योद्ग्रहणायेव स्यात्" शत॰ब्रा॰ १४.५.,४,१२

**उद्ग्राभ** पु॰ उद्+ग्रह–घञ् वा वेदे हस्य भः । १उद्ग्रहणे २ऊर्द्धं विस्तृत्यादाने च । "वाजस्य मा प्रसव उद्ग्राभेणोदग्रभीत्" यजु॰१७,६३, "उद्ग्राभेण ऊर्द्धं विस्तृत्य दीयते इत्युद्ग्रभणम् दानम्" वेददी॰ । भत्वाभावे उद्ग्राहोऽप्युक्तार्थे २वादभेदे च । उद्ग्राहमल्लः ।

**उद्ग्राहिणी** स्त्री उद्+ग्रह–णिनि ङीप् । मायाक्षरत्वौ स्वार्थे कन् अतइत्वम् । उद्ग्राहणिकाप्यत्र ।

**उद्ग्राहित** त्रि॰ उद्+ग्रह–णिच्–क्त । १उपन्यस्ते, २बद्धे, ३उद्धृते, ४प्रत्यर्पिते, ५ग्राहिते च मेदि॰ ।

**उद्घ** पु॰ उद्+हन–अप् नि॰ । १हस्तपुटे, २वह्नौ, देहवायौ, ३प्रशंसायां ४प्रशस्ते च "पिप्रायाद्रिगुहोपघ्नानुद्घान् संघसमागताम्" भट्टिः । अस्य च प्रशंसावचनतया जातिवाचकेन "प्रशंसावचनैश्च" पा॰ समासे जातिवाचकस्य पूर्वनिपाते गवोद्घः अश्वोद्घ इत्यादि "उद्घादयश्च नियतलिङ्गा न तु विशेष्यलिङ्गाः" सि॰ कौ॰ ।

**उद्घट्टन** न॰ उद्+घट्ट–ल्युट् । उद्घर्षणेन चालने । युच् । उद्घट्टनापि तत्रार्थे स्त्री । "तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयम्" मेघ॰ ।

**उद्घन** पु॰ ऊर्द्धं निवेश्य हन्यतेऽत्र उद्+हन–आधारे अप् नि॰ । काष्ठादितक्षणसाधनेऽधःस्थकाष्ठादौ यदुपरि निधाय काष्ठादिकं हन्यते तत्र । "लौहोद्घनघनस्कन्धा ललितापघनां स्त्रियम्" भट्टिः ।

**उद्घर्षण** न॰ उद्+घृष–ल्युट् । इष्टकादिकठिनादिद्रव्यैः गात्रादिमार्जने । "उद्घर्षणं तु विज्ञेयं कण्डूकोठानिलापहम्" सुश्रु॰ "शिरामुखविविक्तत्वं त्वक्स्थस्याग्नेश्च तेजनम् । उद्घर्षोत्सादनाभ्यां जायेयातामसंशयम्" सुश्रु॰ । घञ् उद्घर्षोऽप्यत्र पु॰ ।

**उद्घस** न॰ उद्+घस कर्मणि अच् । मांसे त्रिका॰ ।

**उद्घाट** पु॰ उद्घाट्यते मुद्रादिमद्वस्तु दर्शनार्थमत्र उद्+घट–णिच्–आधारे अच् । मुद्रादितस्य पण्यादिद्रव्यस्य दर्शनार्थोद्घाटनाधारे राजस्थापिते गृहभेदे (चौकीघर)

**उद्घाटक** पुंन॰ उद्+घट–णिच्–ण्वुल् । कूपात् जलोद्धारणार्थे (अरघट्) (घुरना) इति ख्याते यन्त्रभेदे । उद्घाटनकारिणि त्रि॰ णिनि तत्रैव स्त्रियां ङीप् । "उद्

घाटिनी कुञ्चिका" प्रसन्नरा० करणे ल्युट्। उद्घाटन तत्साधने न०। भावे ल्युट्। उद्घाटन प्रतिबन्धनिरासे, कृतबन्धस्य बन्धापकरणे च न० (खोला)।

**उद्घाटित** त्रि० उद्+घट–णिच्–क्त। १अपावृते आच्छादनरहिते प्रकाशिते आवरणरहिते कृतोद्घाटने ।

**उद्घाटितज्ञ** पु० उद्घाटितं प्रकाशितं यथा तथा जानाति ज्ञा–क। विज्ञे।

**उद्घात** पु० उद्+हन–घञ्। (ठोकरलागा) १प्रतिघाते। "यथावदुद्घातसुखेन मार्गम्" रघुः। "यथावदुद्घातसुखेन सोऽध्वना" माघः। "उद्घातिनी भूमिरिति रश्मिसंयमनात्" शकु०। "प्राणेन प्रेर्यमाणेन अपानः पीड्यते यदि। गत्वा चोर्द्ध्वं निवर्त्तेत एतदुद्घातलक्षणम्" इत्युक्ते २प्राणवायुनाऽपानाभिघाते। नाभिमूलात् प्रेरितस्य वायोर्विरिच्यमानस्य शिरस्यभिहननमुद्घात इत्युच्यते। ३आरम्भे "उद्घातः प्रणवो यासाम्" कुमा०। "आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः" रघुः। ४उत्क्षेपे ५मुद्गरे ६शास्त्रग्रन्थपरिच्छेदे।

**उद्घुषित** त्रि० उद्+घुष–रवे इट्। १कृतोद्घोषे २प्रकटिताभिप्राये वाक्ये न०। अशब्दे तु उद्घुष्ट। उद्घुष्टे मेदि०।

**उद्घोष** पु० उद्+घुष–घञ्। उच्चशब्दकरणे "दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत्" सा०द०।

**उद्दंश** पु० उद्दशति उद्+दन्श–अच्। मत्कुणदंशके (उकुण) कीटभेदे।

**उद्दण्ड** त्रि० दण्डोद्यमनम् नियमनम् उत्क्रान्तोद्दण्डम् अत्या०स०। १प्रचण्डे। उद्गतो दण्डो यस्य। २उन्नतदण्डयुक्ते त्रि० "उद्दण्डपद्मं गृहदीर्घिकाणाम्" रघु०। "उद्दण्डधवलच्छत्रः" हितो०। प्रा०स०। ३उन्नतदण्डे पु०

**उद्दण्डपाल** पु० उन्नतदण्ड उद्दण्डः सइव पाल्यते पाल-कर्मणि घञ्। उन्नतदण्डाकारे १सर्पभेदे २मत्स्यभेदे च मेदि०

**उद्दन्तुर** त्रि० उत्कृष्टे। १उन्नते २उच्चदन्तान्विते च।

**उद्दान** न० उद्+दो–भावे ल्युट्। १बन्धने अमरः "उद्दाने क्रियमाणे तु मत्स्यानां तत्र रज्जुभिः" भा०आ० १२७अ०। २उद्यमे ३चुल्ल्यां ४वाडवानले ५मध्ये ६लग्ने च पु० विश्वः

**उद्दान्त** त्रि० उद्+दम–क्त। अतिदमिते।

**उद्दाम** त्रि० उद्गतं दाम्नः अत्य०स०। १बन्धनरहिते, "गन्धमुद्धतमुद्दामो वने मत्त इव द्विपः" भा०व०१४६अ०। अप्रतिनियमे २स्वतन्त्रे ३अनुपे च। "उद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि" मेघ० "नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे" रघुः उत्कृष्टं श्रेष्ठं दाम पाशाख्यमस्त्रं यस्य। ४वरुणे पु० ५गम्भीरे त्रि० "उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतो मदनोऽपि यासाम्" भाग०१स्क०। ६दण्डकभेदे छन्दोभेदे पु० "यदि न युगलं ततः सप्तरेफास्तदा दण्डवृष्टिप्रयातो भवेद्दण्डकः। प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः" इति वृत्तर०।

**उद्दाल** पु० उद्+दल+णिच्–अच्। १बहुवारकवृक्षे, २वनकोद्रवे "भोज्याः पुराणश्यामाककोद्रवोद्दालशालयः" सुश्रु०

**उद्दालक** पु० उद्दलयति भूमिमुद्भिनत्ति+उद्+दल–णिच्–ण्वुल्। १वनकोद्रवे उत्पन्ने तु शिलाजतुन्यादुपक्रम्य "भद्रकोरदूषकश्यामाकोद्दालकादीनां विरूक्षणच्छेदनीयानाञ्च द्रव्याणां विधिवदुपयोगः" "अथ सर्वेषां प्राणिनामथमाहारार्थं वर्ग उपदिश्यते। तद्यथा रक्तशालिषष्टिकगवेधुकमुकुन्दकपाण्डुकपीतकप्रमोदककालकाशनकपुष्पककर्द्दमकशकुनाहृतसुगन्धककलमनीवारककोद्रवोद्दालकश्यामाकगोधूमवेणुयवादयः" इति च सुश्रुतः। आयोदधौम्यशिष्ये आरुणौ २ऋषिभेदे। तस्य तन्नामकत्वप्राप्तिः भा० आ० ३अ० उक्ता "अथ एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदधौम्यस्तस्य शिष्यास्त्रयो बभूवुः उपमन्युरारुणिर्वेदश्चेति। स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ केदारखण्डं बधानेति। स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत् केदारखण्डं बद्धुं नाशकत्। स क्लिश्यमानोऽपश्यदुपायं भवत्वेवं करिष्यामीति। स तत्र संविवेश। केदारखण्डे शयाने च तथा तस्मिंस्तदुदकं तस्थौ। ततः कदाचिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् क्व आरुणिः पाञ्चाल्यो गत? इति। ते तं प्रत्यूचुर्भगवन्! प्रेषितो गच्छ केदारखण्डं बधानेति। स एवमुक्तस्तान् शिष्यान् प्रत्युवाच तस्मात् तत्र सर्वे गच्छामो यत्र स गत इति। स तत्र गत्वा तस्याह्वानाय शब्दं चकार। भो आरुणे! पाञ्चाल्य क्वासि वत्स! एहीति। स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं तस्मात् केदारखण्डात् सहसा उत्थाय तमुपाध्यायमुपतस्थे। प्रोवाच चैनमयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य्य केदारखण्डं भवन्तमुपस्थितः। तदभिवादये भगवन्तमाज्ञापयतु भवान् कमर्थम् करवाणीति। स एवमुक्त उपाध्यायः प्रत्युवाच यस्मात् भवान् केदारखण्डं विदार्योत्थितः तस्मादुद्दालक एव

नाम्ना भवान् भविष्यतीति उपाध्यायेनानुगृहीतः”। “उद्दालकोहारुणिः श्वेतकेतुं पुत्रमुवाच” छा॰उ॰ “उद्दालकाद्युद्दालकोऽरुणादरुण” इति वृ॰उ॰।

उद्दालकपुष्पभञ्जिका स्त्री उद्दालकानां पुष्पाणि भज्यन्ते यत्र क्रीड़ायाम् ण्वुल्। क्रीड़ाविशेषे यत्र उद्दालकपुष्पभञ्जनं क्रियते तस्यां क्रीड़ायाम्।

उद्दालकव्रत न॰ उद्दालकं पापनाशकं व्रतम्। पतितसावित्रीकस्य कार्य्ये वशिष्ठोक्ते व्रतभेदे “पतितसावित्रीक उद्दालकव्रतं चरेत्। द्वौ मासौ यावकेन वर्त्तयेन्मासं क्षीरेणाष्टरात्रमामिक्षया षड्रात्रमघाचितं त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत् इति”वशिष्ठः। मिता॰प्रा॰वि॰ उद्दालव्रतमित्येव पाठः संहितायन्त्वे उद्दालकेति पाठः प्रामादिकः।

उद्दालकायन पु॰ उद्दालकस्य गोत्रापत्यं फक्। ऋषिभेदे श्वेतकेतौ। तस्य तत्पुत्रत्वमुद्दालकशब्दे उक्तम्।

उद्दालवत् पु॰ उद्दालो भूकेदारभेदः प्रकाशस्थानतया विद्यतेऽस्य मतुप्। उद्दालके ऋषौ। “यस्मात् ऋषिरुद्दालकवान् धानान्तर्वान्” शत॰ब्रा॰ ११,२२,८।

उद्दास पु॰ उद्+दास-घञ्। उत्पीड़ने तत: बला॰ अस्त्यर्थे मतुप् इनिर्वा। उद्दासवत् उद्दासिन् तद्वति त्रि॰ स्त्रियां ङीप्।

उद्दित त्रि॰ उद्+दो-क्त। बद्धे भरतः

उद्दिष्ट त्रि॰ उद्+दिश-क्त। १उपदिष्टे, २अभिलषिते “तत्समुद्दिष्टं कर्म्म” संक्षिप्तसारः छन्दःशास्त्रोक्ते निर्द्धारितगुर्व्वादिस्थितिकभेदस्य प्रस्तारे कतमसंख्यकत्वज्ञानार्थे ३उपायभेदे न॰। तत्प्रकारो यथा “उद्दिष्टं द्विगुणानाद्यादुपर्य्यङ्कान् समालिखेत्। लघुस्था ये तु तत्राङ्कास्तैःसैकैर्मिश्रितैर्भवेत्” वृत्तर॰। आद्यात् आद्यवर्णमारभ्य उपरि यथोत्तरं द्विगुणान् द्विगुणान् अङ्कान् समालिखेत् तत्र लघुवर्णोपरिस्थाङ्कैर्मिलितैः एकेन युक्तैः उद्दिष्टं स्यात्। यथा त्र्यक्षरप्रस्तारे मध्यगुरुको भेदः प्रस्तारे कियत्संख्यक इति प्रश्ने यथोत्तरं द्विगुणान् द्विगुणान् अक्षरसंख्यया अङ्कान् दद्यात् तत्र आद्यलघूपरिस्थेनैकाङ्केन तृतीयलघूपरिस्थचतुरङ्केण योगे पञ्चाङ्कः एकेन युक्तः षडङ्कः संपद्यते एवञ्च षष्ठोऽयं भेद इत्युत्तरम्। एवमन्यत्र कल्प्यम्। सर्व्वगुरुकभेदे तु लघुवर्णाभावात् योज्याङ्काभावेन एकमात्रेण योज्याङ्केन प्रथमोभेद इत्युदेयम्। मात्रावृत्ते उद्दिष्टं विस्तरभयान्नोक्तमाकरे दृश्यम्।

उद्दीपक त्रि॰ उद्+दीप-णिच् ण्वुल्। उद्भासके प्रकाशके।

उद्दीपन न॰ उद्+दीप-णिच्-ल्युट्। १प्रकाशने, २उत्तेजने च। ल्यु। अलङ्कारोक्ते रसाद्युद्दीपके “उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये” “रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः। आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ” आलम्बनस्य चेष्टाद्या देशकालादयस्तथा” सा॰द॰ उक्ते आलम्बनस्य १चेष्टादौ विभावे यथा शृङ्गारे रसे “चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्” हास्ये “विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः। तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्”। करुणे “शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम्। तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः”। वीरे “आलम्बनविभावास्तु विजेतव्यादयोमताः। विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः”। भयानके “यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्। चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः”। जुगुप्सायाम् “दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम्। तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम्”। अद्भुते “मीतवर्णौ, वस्तु लोकातिगमालम्बनं मतम्। गुणानां तस्य महिमा भवेदुद्दीपनं पुनः”। शान्ते “परमात्मस्वरूपं वा तस्यालम्बनमिष्यते। पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः। महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः” सा॰द॰।

उद्दीप्त त्रि॰ उद्+दीप-क्त। प्रकाशान्विते।

उद्दीप्र पु॰ उद्+दीप्-रन्। १गुग्गुलौ वाच २उद्दीप्ते त्रि॰।

उद्दृप्त त्रि॰ उद्+दृप-क्त। उद्धते गर्व्वान्विते

उद्देश पु॰ उद्+दिश+घञ्। १अनुसन्धाने, २अन्वेषणे, ३अभिलाषे ४उपदेशे च। आधारे घञ्। ५उपदेशदेशे “यथोद्देशं संज्ञापरिभाषम्” व्या॰परिभाषा। व्याख्यातैषा नागेशेन “उद्देशमनतिक्रम्य यथोद्देशम्। उद्देश उपदेशदेशः। अधिकरणसाधनश्चायम्। यत्र देशे उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतसंज्ञया गृहीतपरिभाषार्थेन च सर्व्वत्र शास्त्रे व्यवहारः। देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते भविष्यति किञ्चिदनेन प्रयोजनमिति ज्ञानमात्रेण सन्तुष्यद्याज्ञवल्काद्यप्रतिपत्त्यपेक्षोऽयम्” इति “इदित्”पा॰१,१,११ सूत्रे कैयटः। केचित्तु परिभाषाविषये “तस्मिन्”पा॰१,१,६६ इत्यादिवाक्यार्थबोधे सप्तमीनिर्द्देशादिके इति पर्य्यालोचनायां सकलतद्विध्युपस्थितौ सकलतत्संस्कारायं गुणभेदं परिकल्प्य क्वाक्यतयैव नियमः। कार्य्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः। एतदेवाभिप्रेत्य “अधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्व्वशास्त्रमभिज्वलयति यथा प-

दीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति” “षष्ठी स्थाने” [१,१,४९ इति पा० सूत्रे भाष्य उक्तम्। अधिकारशब्देन पाराशर्यात् परिभाषाप्युच्यते। “कचित्परिभाषारूप”इति कैयटः। दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यं, पक्षद्वयेऽपि प्रदेशैकवाक्यतया इतः प्रतीतेः। तत्रैतावान्विशेषः। यथोद्देशे परिभाषादेशे सर्वविधिस्थलानुवादात्मभेदं परिकल्प्य तैरेकवाक्यतापरिभाषणम्। तदुक्तं “क्ङिति च” १,१,५ पा० इति सूत्रे कैयटेन। “यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जत इति”। कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषावुद्धैरक्ततेति। यत्रैकदेशस्य इत्यनेन तत्र तत्र तत्तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः किं त्वभिजनदेशीयत्वव्यवहार एव तद्वत्”।

६संक्षेपे “एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया” गीता “समासकथनमुद्देशः इति सुश्रुतोक्ते ७तन्त्राधिकरणभेदे। उत्कटोद्देशः प्रा०ष०। ७उत्कटदेशे च “न वने नन्दनोद्देशे न चैत्ररथसंश्रये”रामा०। “अस्ति कश्चिद्वनोद्देशे” हितो०भूरिप्रयोगः ततस्तसिल्। उद्देशादित्यर्थे अव्य०।

उद्देशक पु० उद्+दिश-ण्वुल्। १उपदेशके २उदाहरणवाक्ये च। “अत्रोद्देशक इति” लीला० भूरिप्रयोगः। ३प्रश्ने “उद्देशकालापवदिष्टराशिः” लीला० इष्टकर्म्मशब्दे ९९१पृ० दृश्यम्। “उद्देशेन पूजाभिसन्धिना रोपितः कन्। पूजाद्यभिसन्धिना रोपिते वृक्षादौ “चैत्यमायतने बुद्धविप्रोद्देशकवृक्षयोः” त्रिका० इति केचित् उद्देशशब्देन बहुव्रीहौ कप् इति तु न्याय्यम्।

उद्देश्य त्रि०उद्+दिश-ण्यत्। १अभिसन्धेये यमुद्दिश्य विधेयप्रवृत्तिस्तस्मिन् २अनुवाद्ये। उद्देश्यविधेयभावस्थले “अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्” इति नियमात् उद्देश्यवाचकस्य प्राक् प्रयोगः यथा पर्वतो वह्निमान्। वह्निः पर्वते इत्यादौ तु वह्नेरेवोद्देश्यत्वं पर्वतवृत्तित्वं तत्र विधेयम्। अतएव“न्यक्कारोह्ययमेव मे यदरयः” इत्यादौ अयंपदस्य उद्देश्यवाचितयादौ प्रयोगौचित्येन परतः प्रयोगात् वाक्यगतविधेयाविमर्शदोष इति समर्थितमालङ्कारिकैः। “वृद्धिरादैच् इति” पा० सूत्रेऽपि तथैव भाष्यकृताङ्गीकृत्य मङ्गलार्थमेव तथाप्रयोग इत्युक्तम् यथा “एतदेकमाचार्य्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्य्योमहतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषाणि च अध्येतारश्च वृद्धियुक्ता यथा स्युरिति। सर्वत्रैव हि व्याकरणे पूर्वोच्चरितः संज्ञी परोच्चारितः संज्ञेति “अदेङ् गुणः” इति यथैतदन्येन। उद्देश्यविधेयभावेनान्वयस्थले विवक्षया उभयलिङ्गवचनानुसारेण प्रयोगः यथा वेदाः प्रमाणं भवति भवन्ति वा। “अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थिताः” “मुखगोत्रमरोपि मनोभुवा तदुपमाः कुसुमान्यखिलाः शराः” इति नैषधे उभयथैव प्रयोगः। व्युत्पत्तिवादे तु गदाधरेण उद्देश्यवचनानुसारेणैव वचनादिप्रयोग इति महतायासेन व्यवस्थापितं तच्च तत एवावसेयम्। “उद्देश्यप्रतिनिर्देश्यप्रतिरिक्तविषयत्वात्”सा०द०। उद्देश्यमेव प्रतिनिर्देश्यम् प्राक् विधेयस्योद्देश्यतया पुनर्निर्देशकर्म्म इत्यर्थः यथा “उदेति सविता ताम्रस्ताम्र एवास्तमेति च” इत्युदाहृतौ प्राक् विधेयस्य ताम्रस्य अस्ततागुणविधानार्थं पुनः प्रतिनिर्देशात् कथितपदत्वं न दोषायेति तदाशयः। तदन्यत्रैव तस्य दोष इति बोध्यम्।

अनुवाद्यता च प्रमाणान्तरसिद्धस्य किञ्चिद्धर्म्मविधानार्थम् पुनरुपन्यास्यता यथा पर्वतोवह्निमान् इत्यादौ पर्वतरूपोद्देश्यस्य सिद्धत्वेऽपि वह्निमत्त्वरूपधर्मविधानार्थमुपन्यासः। ततो भावे तल्। उद्देश्यता स्त्री त्व। उद्देश्यत्व न०। विषयताविशेषे सा च अनुमितौ शाब्दबोधे च विशेष्यतारूपा प्रवृत्तौ तु स्वजनकेच्छाविषयत्वरूपा “स्वर्गकामो यजेतेत्यादि” वाक्यजनितेष्टसाधनताज्ञानतः स्वर्गफलोद्देशेनैव यागे प्रवृत्तेः इति स्वर्गस्य तत्रोद्देश्यता एवमन्यत्राप्यूह्यम्। इच्छाविषयत्वे च “अवच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे” गदा०। [ मितिदोषभेदे

उद्देश्यासिद्धि स्त्री ६त०। अनुमितृसितस्यासिद्धिरूपे अनु-

उद्देहिका स्त्री उद्गतो देहोऽस्य कप् अत इत्त्वम्। कीटभेदे हारा०।

उ(द्यो)द्योत पु० उद्+द्युत-घञ् वा दलोपः। विशिष्टप्रकाशे “त्रिभिर्नेत्रैः कृतोद्द्योतं त्रिभिः सूर्य्यैरिवोदितैः” भा० अनु० १४ अ०। “निरवद्यविद्योद्द्योतेन द्योतितसमस्ततोऽवमर्शः” दायभा० उद्+द्युत-णिच्-अच्। २किरणावलीव्याख्याने ३नागेशकृते काव्यप्रदीपव्याख्याने

४पद्माभाख्यदीपव्याख्याने च ग्रन्थे पु० ५उद्दीपके त्रि०

उद्द्राव पु० उद्–द्रु–घञ्। १पलायने अमरः। उत्कृष्टो द्रावोऽस्य प्रा०ब०। २उत्कृष्टगतियुक्ते। "यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा" यजु०२२,८ "उद् अधिको द्रावोऽस्य स उद्द्रावः" वेददी० "उदि श्रयतियौति पूद्रुवः" पा० उत्पूर्वकादेव घञ् विधानात् केवलात् "ऋदोरप्" पा० अवेव। तेन तथाविग्रहकल्पनं निर्मूलमेव। तत्र संज्ञायां कर्त्तरि घञ् इत्येवोचितम्।

उद्धत पु० उद्+हन–क्त। १राजमल्ले। २वाक्यादिचञ्चले, ३अविनीते, ४प्रगल्भे ५उद्गते च त्रि०। "परिगतोऽव्यवदुद्धतवारिधिः" भट्टिः "मदोद्धताः प्रत्यनिलं विचेरुः" कुमा० "महजवापलदोषसमुद्धतः" "जनावहद्धोद्धतमिन्धु रंहसाम्" मधुरोद्धतध्वजविलम्बिताम्बरः "अथानुद्धतसुद्धवः" माघः। ५क्षतोल्लेखने च। "उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिश्रते प्राग्द्वारे पिण्डं निदधात्योषधय इति" काव्या०१६.२.१४, "परिहते उद्धते क्षतोल्लेखने अवोक्षिते सिक्ते" यजु०११,४७मन्त्रे वेददी०। ततो भावे ष्यञ्। औद्धत्य न०। तल्। उद्धता स्त्री, त्व, उद्धतत्व न०, तद्भावे चाञ्चल्यादौ।

उद्धतमनस्कत्व न० उद्धतं मनोऽस्य कप् तस्य भावः त्व। अभिमाने गर्वे शब्दचन्द्रिका।

उद्धति स्त्री उद्+हन–गतौ–क्तिन्। १उद्गतौ २उन्नतौ। हन–आघाते क्तिन्। ३पाषाणादिनाऽऽघाते(ठोकरलागा) "अभूतलस्पर्शितया निरुद्धतिस्तथावतीर्णोऽपि न लक्ष्यते रथः" शकु०। [रैभिः" भट्टिः।

उद्धम त्रि० उद्+ध्मा–श धमादेशः। क्षतयव्दे "ध्मानीनामुद्धमै

उद्धमचूडा स्त्री उद्धम–चूडे इत्युच्यते यस्यां क्रियायाम् मयू०स०। चूडां प्रति उद्ध्मानार्थनिर्देशक्रियायाम्। एवं उद्धरचूडा उद्धमविधमा अपि मयू० स०। तत्तत्क्रियार्थं निर्देशक्रियायाम्। [र्भयम्" भट्टिः।

उद्धय त्रि० उद्+धेट–श। उच्चैः पानकर्त्तरि। "मधूनामुद्धयै

उद्धरण न० उद्+हृ–भावे–ल्युट्। १ऋणौ, २वमने, ३ऋणशुद्धौ, ४उन्मूलने ५उत्तारणे। "दिनानि दीनोद्धरणोचितस्य" रघुः। "तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्" वायुपु०। "कण्टकोद्धरणे नित्यमातिष्ठेत् यत्नमुत्तमम्" मनुः। ६उत्थापने। "प्रतिकर्मोद्धरणसंप्रवक्ष्ये" काव्या० १,१.२६ "आहवनीयदक्षिणाभ्यां मार्जयत्वाद्धरणं कर्त्तव्यम्" कर्कः। ७उद्धृत्य हरणे परिवेषणे च। "सव्येनोद्धरणं सामवर्जीत्" काव्या०४,१,१०, "उद्धरणं परिवेषणम्" कर्कः। ८वह्निनिष्कासने। "द्वितीय प्रदक्षिणोद्धरणे" काव्या० ०१६,४, उद्धरणं वह्निनिष्कासनम्" कर्कः। ९उत्पादने। "आहवनीयजागरणे तत एवोद्धरणम्" काव्या० २५, २,५, "तत आहवनीयोद्धरणम्" कर्कः। अग्न्युद्धारशब्दे तत्प्रकारः ६२ पृ० उक्तः। कर्मणि ल्युट्। १०वान्तेऽन्नादौ।

उद्धरणीय त्रि० उद्+हृ–कर्मणि अनीयर्। १उन्मूलनीये २उत्थापनीये ३आहरणीये च। तव्य उद्धर्त्तव्योऽप्यत्र त्रि०।

उद्धरावसृजा स्त्री उद्धर अवसृज इत्युच्यते यस्यां क्रियायाम् मयू०स०। उद्धरणावसर्जनार्थनिर्देशक्रियायाम्।

उद्धर्त्तृ त्रि० उत्+हृ–तृच् स्त्रियां ङीप्। १उद्धारकारके २उन्मूलके ३तारणकारके च। "विनीतभर्त्तुस्तु पथि चौरोद्धर्त्तुरधीतकै" या०स्मृ० स्त्रियां ङीप्। ण्वुल्। उद्धारक उक्तार्थे त्रि०

उद्धर्ष पु० उत्कृष्ट उद्गतो वा हर्षः प्रा०स०। १उत्कृष्टे २हर्षे उद्गतहर्षे च। उद्गतो हर्षो यस्य प्रा०ब०। ३जातहर्षे त्रि० "उद्धर्षय मघवन्नायुधानि" यजु०७।१२ "उद्धर्षय उद्गतहर्षयुक्तं कुरु" वेददी० नामधातुरूपम्। तत्र हेतुणिजन्तरूपमित्येव न्याय्यम्।

उद्धर्षण न० उद्+हृष–णिच–ल्युट्। १हर्षयुक्तकरणे २प्रोत्साहने च "हितमुद्धर्षणं चैव उवाच प्रथितं वचः" रामा० "एवमेतन्महाबाहो! यथा वदसि पाण्डव!। कृतमुद्धर्षणं पूर्वम्" इत्यादिषु भा० आश्व० १७ अ० बहुशश्च प्रयोगः। आधारे ल्युट्। २रोमाञ्चे हेम०।

उद्धर्षिन् त्रि० उद्+हृष–णिच्–णिनि। उद्धर्षकारके स्त्रियां ङीप्। सा च वसन्ततिलकाख्ये वर्णवृत्तभेदे। "उक्तावसन्ततिलका तभजा जगौगः। सिंहोन्नतेयमुदिता मुनिकश्यपेन। उद्धर्षिणीयमुदिता मुनिसैतवेन" वृ०र०।

उद्धव पु० उद्+हु–आधारे अप्। १यज्ञाग्नौ, २उत्सवे अमरः। ३कृष्णदयिते यादवविशेषे च। उद्धवश्च यादवविशेषः। हरिवंशवर्णने। "उद्धवो देवभागस्य, महाभाग! सुतोऽभवत्। पण्डितानां परं प्राहुर्देवश्रवसमुद्भवम्" हरिवं० ३५अ०। "भारतीमाहितभरामथानुद्धतमुद्धवः" माघः। भाग०११स्क० एवं प्रत्येव भगवतोज्ञानोपदेशो वर्णितः स एव उद्धवसंवादत्वेन प्रसिद्धः पारायणे च षष्ठदिने तत्पर्याध्येयता "यावदुद्धवसंवादं षष्ठेऽह्नि परिकीर्त्तयेत्" इत्युक्तेः

उद्धवदूत न० उद्धवो दूतोऽस्य। दूतत्वेन उद्धवं परिकल्प्य यो-

यक्तिरूपे काव्यभेदे उद्धवसन्देशोऽपि काव्यभेदे पु० ।

उद्धस्त त्रि० उत्क्षिप्तौ हस्तौ येन प्रा०ब० । उत्क्षिप्तहस्ते उद्बाहौ "उद्धस्तः क्षणपरुषध्वनिप्रलापी दुर्गन्धो मृगमशुचिस्तथाऽतिलोलः । बद्धाशो विजनश्मशानचारिनिषेवी व्याघेटन् भ्रमति रुदन् पिशाचजुष्टः" सुश्रु० ।

उद्धान न० उद्धीयतेऽस्मिन्नग्निः धाञ्-आधारे ल्युट् । १चुल्ल्याम् । कर्मणि ल्युट् । २वमिते, ३उद्धृते च । [२वमिते रमा०

उद्धान्त पु० उद्+धा बा०क्त । मदस्रुत्ये १हस्तिनि अमरः

उद्धार पु० उद्ध्रियते उद्+हृ भावे-घञ् । १मुक्तौ, २ऋणशुद्धौ ३उद्धरणे । कर्मणि घञ् । सर्वधनादुद्धृत्य ज्येष्ठादिभ्यो देये ४अंशभेदे यथा चोद्धारस्तथा मनुना दर्शितः यथा "ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्द्धं मध्यमस्य स्यात् तुरीयन्तु यवीयसः ।" "ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम् । येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमन्धनम् । सर्वेषान्धनजातानामाददीताग्र्यमग्रजः । यच्च सातिशयं किञ्चिद्दशतश्चाप्नुयाद्वरम् । उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्मसु । यत्किञ्चिदेव देयन्तु ज्यायसे मानवर्द्धनम् । एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत् । उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ।" अन्योऽपि विशेषः स्मृत्यन्तरे उक्तः किन्तु "तथोद्धारविभागस्तु नैव संप्रति वर्त्तते" मिता० स्मृत्युक्तेः इदानीमुद्धारो नास्तीति सर्व्वनिबन्धकर्त्तृणामेकमत्यात्तथोक्तम् "स्वान्वययोग्यपदान्तराक्षेपेण श्रुतपदस्य५परित्यागे यथा गां बधान अश्वमानयेत्यादौ आवापोद्धाराभ्यां गोशब्दस्य सास्नादिमानर्थः" सा०द०। अन्वयव्यतिरेकावेवावापोद्धाराविति तु तत्त्वम् । "जगन्नाथस्याय सुरधुनि ! समुद्धारसमयः" गङ्गालहरी । ६वर्ज्जने च "पशवं समुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनम्" मनुः "उद्धृतोद्धारमित्यस्य "वर्जनीयवर्जितम्" कुल्लू० व्याख्या । ७उत्कर्षे च "सगुणानामेव कर्म्मणामुद्धार उपजने" आश्व०श्रौ० १२,४,१४ "यस्मात् प्रधानकर्म्मणामुद्धारे उपजने उत्कर्षे च सगुणानामेव सर्व्वोद्धरणम्" ना०वृ०

उद्धारण न० उद्+हृ+णिच्-ल्युट् । १उत्थापने "लाङ्गलोद्धारणोद्धुरः" भा०व० १४७अ० । हृ-णिच् ल्युट् । २उद्धारसम्पादने ।

उद्धि पु०उद्+धा-कि । अर्द्धधारके । "पुरोडाशाः शफा अन्तरिक्षमुद्धिः" अथ०८,६,२२, "उद्धारकौ दशरात उद्धिः इत्यभिहितौ पक्षे" शत०ब्रा०१२,२,२,२ ।

उद्धुर त्रि० उद्गता धुरस्मात् प्रा०ब० अच् समा० । १निरङ्कुशे २भारक्षमे ३दृढे । "प्रसभालकचबन्धुरोद्धुरोरः" माघः । "जघनमंसबन्धोद्धुरम्" मालतीमा० । "बलवानपि द्वीमाङ्गाङ्गलोद्धारणोद्धुरः" भा०व० १४७ अ० । ४उच्चे च "पश्चाद्दुश्चहभुजं पिनरद्धुरध्वनिमहाजनानुयातमानीय"दशकु० ।

उद्धूत त्रि०उद्+धू-क्त । उत्कम्पिते "उद्धूतवक्षध्वजिनीभिरंशुभिः" माघः । "पुनानं पवनोद्धूतैः" रघुः । [२उत्क्षिप्ते च ।

उद्धूनन न० उद्+धू-णिच्-नुक् भावे ल्युट् । १उत्क्षेपणे

उद्धूपन न० उद्+धूप-आयाभावपक्षे भावे ल्युट् । १द्रव्यविशेषेण ऊर्द्धसन्तापनरूपे व्यापारे ( भाकरादेव्वोया ) "श्वभ्रोलूकपुरीषाणि केशा हस्तिनखाहृतम् । वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च" सुश्रु० । (करणे ल्युट् ) २तत्साधने द्रव्ये । "सर्षपाः सर्पनिर्म्मोको वचाकाकादनीघृतम् । उष्ट्राजाविगवाञ्चैव रोमाण्युद्धूपनं शिशोः । श्वभ्रोलूकपुरीषाणि यवा यवफलो घृतम् । सन्ध्ययोरुभयोः कार्य्यमेतदुद्धूपनं शिशोः" सुश्रु० ।

उद्धूलन न०धूलिमुद्धर्षयति उद्+धूलि-णिच् । उद्धूलयति ततः भावे ल्युट् । १धूलिवन्मर्दने २पाकार्थोपकरणभेदे च । (मशालापूर्ण) "चूर्णस्योद्धूलनं देयं भोज्ये चीरेक्षुसम्भवे । व्यञ्जनेषु च सर्व्वेषु शाकजेष्वन्नजेषु च । मांसमत्स्यभवेष्वेवं प्रलेहतलनादिषु । आदावेव पचेत् श्लेष्टे ततोहिङ्गूदकं क्षिपेत् । वेसवारं सलवणं क्षिप्त्वा तत् पिशितं पचेत् । अर्द्धसिद्धे क्षिपेत्तक्रमथ वा दाडिमीरसम् । सिद्धे पाके च दातव्यं चूर्णमुद्धूलनस्य तत्" पाकशास्त्रम् ।

उद्धूषण न० उद्+धूष-ल्युट् । रोमाञ्चे हला०

उद्धृत त्रि०उद्+हृ-क्त । १उत्क्षिप्ते, २भुक्तोज्झिते, ३उन्मीलिते, ४पृथक्कृते, ५उच्छेदिते च । "इतीव वाहैर्निजवेग दर्पितैः पयोधिरोधक्षममुद्धृतं रजः" नैष० "उद्धृतासि पिनाकिना" ऋरिकाद्यमन्त्रः । "पयोऽनुद्धृतसारञ्च" "स्नेहेऽप्युद्धृतलक्षणैः" आ०त०पु० "उद्धर्तुमैच्छत् प्रसभोद्धृतारिः" रघुः ।

उद्धृतपाणि त्रि० उत्तरीयात् उद्धृतः बहिष्कृतः पाणिर्येन । उत्तरीयबहिष्कृतहस्ते । स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत्" मनूक्तकर्म्मस्वेव तथा भवनम् ।

उद्धृति स्त्री उद्+हृ-क्तिन् । १उत्क्षेपणे २उत्तोलने च । "शस्योद्धृतिर्नृपस्थानं दूतस्त्रप्नदिदर्शनम्" सुश्रु० ।

उद्ध्मान न० उद्धमति वह्निरत्र उद्+ध्मा-ल्युट् । १ चुल्लाम्

उद्ध्र पु० उज्झ-रक् "भिद्योद्ध्यौ नदे" पा०नि० । नदभेदे "कूलं भिद्योद्ध्यविभौ" भट्टिः "तोयदागमइवोद्ध्यभिद्ययोः" रघुः ।

उद्बन्धक पु० । (धोपा)वर्णसङ्करभेदे । "आयोगवेन विप्रायां जातास्ताम्रोपजीविनः । तस्यैव नृपकन्यायां जातः सूनिक उच्यते । सूनिकस्य नृपायान्तु जाता उद्बन्धकाः स्मृताः । निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः" उशना ।

उद्बन्धन न० उद्+बन्ध-भावे ल्युट् । ऊर्द्ध्वतः पाशादिना गलादिबन्धने । "उद्बन्धनमृता ये च गतिर्येषां न विद्यते । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्" वायु पु० गयामाहात्म्ये "विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् । करिष्ये न हि ताम्नद्यात् पुनरुद्बन्धिहोतृपदे" भा०व० ७अ० । "जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशनच्युताः । विषप्रपतनप्रायाद्ग्राम्यशनच्युताश्च ये । सर्व्वे ते प्रत्यवसिताः सर्व्वे धर्म्मबहिष्कृताः । चान्द्रायणेन शुध्येयुस्तप्तकृच्छ्रद्वयेन वा" प्रा०वि०यमः । भावे घञ् उद्बन्धोऽप्यत्र पु० ।

उद्बा(वा)हु त्रि० उत्तोलितो(वा)बाहुर्येन प्रा०व० । उत्तोलितबाहौ "प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः" रघुः ।

उद्बुद्ध त्रि० उद्+बुध-क्त । १विकसिते न्यायादिमते ज्ञातवस्तुनः संबन्धिज्ञानादिना २कृतोद्दीपने संस्कारे च । यथा हस्तिदर्शनात् अनुभूतहस्तिपकसंस्कारस्य उद्बोधरूपे उद्दीपने कृते हस्तिपकः स्मर्य्यते इति । ३प्रबुद्धे ४जागरिते च "उद्बुद्धां च जगद्धात्रीं पूजयेद्दीपमालया" ति०त०पु० येन येन वस्तुना संस्कार उद्बुध्यते तथा उद्बोधकमन्दे वक्ष्यते । "उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयेत्" सा०द० ।

उद्बोध पु० उद्+बुध घञ् । १किञ्चिद्बोधे न्यायादिमते स्मृतिजननाय २संस्कारोद्दीपने च । "उद्बाहादिसदुद्बोधः साधारण्याभिमानतः" "ननु कथं रामादिरत्याद्युद्बोधकारणैः सीतादिभिः सामाजिकानां रत्युद्बोधः" इति "रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः" इति च सा०द० ।

उद्बोधक त्रि० उद्बोधयति उद्+बुध-णिच्-ण्वुल् । १उद्दीपके २उद्बोधकारके ३सूर्य्ये पु० उदयेन सर्व्वेषां प्रबोधकत्वात्तस्य तथात्वम् । उद्बोधकानि च न्यायसूत्रतद्वृत्त्योर्दर्शितानि यथा "प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्य्यवियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्म्माधर्म्मनिमित्तेभ्यः" सू० "स्मरणमित्यनुवर्त्तते निमित्तशब्दस्य द्वन्द्वान्तरं श्रुतस्य प्रत्येकमभेदेनान्वयः । प्रणिधानं मनसोविषयान्तरसञ्चारवारणम् । निबन्ध एकग्रन्थोपनिबन्धनं यथा प्रमाणेन प्रमेयादिस्मरणम् । अभ्यासः संस्कारबाहुल्यम् एतस्य यद्यपि नोद्बोधकत्वं तथापि तादृशे शीघ्रमुद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः । अभ्यासोदृढतरसंस्कारः उद्बोधकत्वे नोक्त इति केचित् । लिङ्गं व्याप्यं व्यापकस्य स्मारकम् । लक्षणं यथा कपिध्वजादि अर्ज्जुनादेः । सादृश्यं देहादेः । परिग्रहः स्वीकारस्तस्य स्वस्वामिभावोऽर्थः तदेकतरेणान्यतरस्मरणम् । आश्रयाश्रितौ राजादितत्परिजनौ परस्परस्मारकौ । सम्बन्धोगुरुशिष्यभावादिः सोऽनन्यथात् पृथगुक्तः । आनन्तर्य्यं प्रोक्षणावघातादेः । वियोगोयथा दारादेः । एककार्य्यान्तेवासिप्रभृतयः परस्परस्मारकाः । विरोधादहिनकुलादेरन्यतरेणापरस्मरणम् । अतिशयः संस्कार उपनयनादिराचार्य्यादिस्मारकः । प्राप्तिर्धनादेर्दातारं स्मारयति । व्यवधानमावरणं यथा खड्गादेः कोषादि । सुखदुःखयोरन्यतरेणापरस्य ताभ्यां तत्प्रयोजकस्य वा स्मरणम् । इच्छाद्वेषौ यद्विषयकतया व्यपदिष्टौ तस्य स्मारकौ । भयं मरणादेर्भयहेतोर्वा स्मारकम् । अर्थित्वं दातुः । याचनादेः क्रिया वाम्यादेः, रागात्प्रीतिः सुतादेःस्मरणं, धर्म्माधर्म्माभ्यां जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतस्यादेव स्मरणमिति उक्तेषु च किञ्चित्स्वरूपसत्किञ्चिच्च ज्ञातमुद्बोधकं शिष्यव्युत्पादनाय चायं प्रपञ्चः" वृ० ।

उद्भट पु० उद्+भट-करणे-अप् । तण्डुलादेः प्रस्फोटनहेतौ १सूर्पे, तदाकारत्वात् २कच्छपे, ३श्रेष्ठाशये महाशये, ४प्रवरे, च "पदेपदे सन्ति भटारणोद्भटाः" नैष० उद्गतो भटात् पञ्चात् "निरा०त०। मन्यवर्त्तिभूते लोकप्रसिद्धेऽप्यातमक्षे श्लोके ।

उद्भव पु० उद्+भू-भावे अप् । १उत्पत्तौ । "स्वर्गे वद्ये त्वङ्गानां प्रथमे शोणितोद्भवः" सा०द० । कर्त्तरि अच् । २उत्पत्तिमति । "दिलीपसूनुर्मणिराकरोद्भवः" "सोमोद्भवायाः सरितो नृसोमः" रघुः । "लुप्तादुद्देशोऽमितेन कथ्ये सोमोद्भवायाः सुरनिम्नगायाः" वस्तुः । "विष्णुपादोद्भवा गङ्गा" पुरा० "बल्मीकोद्भववात्तेन भिन्ना धम्मन्तु भावतः" सा०द० । अपादाने अप् । ३उत्पत्त्युपादाने । "कृत्स्नमन्नं भूतानामुद्भवश्च भविष्यताम्" गीता । उद्गतो भवात् निरा० स० । ४संसारातीते ५विष्णौ पु० । "उद्भवः क्षोभणोदेवः" विष्णुस० "प्रपञ्चोत्पत्त्युपादानकारणत्वात् उद्भवः, उद्गतः संसारादिति वा" भा० उभयथा साम्यम् ।

६उद्भूतत्वे विशेषगुणगते जातिभेदे उद्भूतशब्दे विवृतिः।

उद्भावन न० उद्+भू—णिच्-ल्युट्। १कल्पने, २उत्पादने च उद्+भु०भू०ल्युट्। ३चिन्तने ४उत्प्रेक्षणे च "उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः" भा०आ०१४१अ०

उद्भास पु० उद्+भास—भावे घञ्। उद्दीप्तौ। ततः अस्त्यर्थे "नैकाचारात् क्षतो जातेः मत्वर्थाच्च न तौ स्मृतौ" वार्त्ति० अजरूपैकाचात् इनेरप्राप्तौ बाला० पाठात् मतुप् इनि र्वा। उद्भासवत् उद्भासिन्—तद्युक्ते त्रि०। "विभूषणोद्भासि पिनद्धभोगि वा" कुमा० स्त्रियां ङीप्।

उद्भिज्ज पु० उद्भिनत्ति क्विप् उद्भित् तथा सन् जायते जन-ड कर्म०। भूमिमुद्भिद्य जाते १तरुगुल्मादौ "उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः" इति मनुः। पदा० योगार्णवे। "देहश्चतुर्विधोज्ञेयो ह्युत्पत्तिभेदतः। उद्भिज्जः स्वेदजोऽण्डोत्थश्चतुर्थश्च जरायुजः। उद्भिद्य भूमिं निर्गच्छन्नुद्भिदः स्थावरश्च यः" इति विभज्य तदुत्पत्तिप्रकारस्तत्र दर्शितः "उद्भिज्जाः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः। तत्र भित्त्वा जलैर्भूमेरूर्ध्वभित्त्व विपाचिताः। वायुना व्यूह्यमानास्तु बीजत्वं प्रतियान्ति ते। तथाचोप्तानि बीजानि संसिक्तान्यम्भसा पुनः। उच्छूनतां मृदुत्वं च मूलभावं प्रयान्ति च। तन्मूलादङ्कुरोत्पत्तिरङ्कुरात् पर्णसम्भवः। पर्णात्प्रकाण्डस्तत्काण्डः काण्डाच्च प्रसरः पुनः"। एतेषां च यथा पापभोगायतनत्वात् देहत्वं तथाऽयोनिजशब्दे ३४०पृष्ठे उक्तम् "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" या० स्मृतौ शारीरपापेन तेषां देहोत्पत्तिश्रवणात् भोगायतनदेहत्वमवसेयम्। अतएव तन्नावस्थायाम् चेष्टाश्रयत्वं शरीरलक्षणमुक्त्वा "वृक्षादीनामपि चेष्टावत्त्वात्तत्र व्याप्तिः। न च वृक्षादीनां शरीरित्वे किं मानम्? इति वाच्यम् आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात् तत्रैव किं मानम्? इति चेत् भग्नक्षतसंरोहणादिना तदनुमानात्" इत्युक्तम्। यथा च स्थावराणां स्वस्वकर्मोत्पन्नदेहत्वं तथाऽप्ररोहशब्दे ४४० पृष्ठे शा०सू०भाष्ये दर्शितम्। तेषां विभागोऽन्यत्रकन्दलाम् दर्शितं यथा "स्थावरास्तृणौषधिलतावतानवनस्पतय इति" भा०। "तृणमूलपादिः ओषधयःफलपाकान्ता गोधूमादयः, ये न पुष्पफलाश्च वृक्षा कोविदारप्रभृतयः लता प्रसिद्धैव। अवतन्वन्ति अवतानाः विटपाश्चाद्यन्तः केतकी बीजपूराद्यः ये विना पुष्पं फलन्ति ते वनस्पतय औदुम्बरादयः"। न्या०क०। २भूमिमुद्भिद्यजातमात्रे त्रि०स्थावरादिविभागे सुश्रुतः "द्रव्याणि पुनरौषधयस्ता द्विविधाः स्थावरा जङ्गमाश्च। तासां स्थावराश्चतुर्विधाः। वनस्पतयो वृक्षा वीरुध ओषधय इति। तासु अपुष्पाः फलवन्तो वनस्पतयः पुष्पफलवन्तो वृक्षाः। प्रतानवत्यः स्तम्बिन्यश्च वीरुधः। फलपाकनिष्ठा ओषधय इति। जङ्गमा अपि चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र पशुमनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयो ऽण्डजाः। कृमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्रगोपमण्डूकप्रभृतय उद्भिज्जाः"।

उद्भिद् पु० भूमिमुद्भिनत्ति उद्+भिद्—क्विप्। १वृक्षगुल्मवल्लीलतारूपे पञ्चविधे स्थावरभेदे उद्भिज्जशब्दे उदा०। उद्भिनत्ति पन्थानम्। २यागभेदे "उद्भिदा यजेत" श्रुतिः उद्भिदादिशब्दानां यथा कर्मनामधेयता व्युत्पत्तिस्तथैव जै०सू०भाष्ययोस्तथा दर्शितं यथा

"उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात्" १,४,१, सू०। "उद्भिदा यजेत" "बलभिदा यजेत" "अभिजिता यजेत" "विश्वजिता यजेत" इति समामनन्ति, तत्र सन्देहः, किम् उद्भिदादयो गुणविधयः, आहोस्वित् कर्मनामधेयानि? इति। कुतः संशयः? उभयथाऽपि प्रतिभाति वाक्यात्, उद्भिदा इत्येष शब्दो यजेतेत्यनेन संबध्यते, स किं वैयधिकरण्येन संबन्धमुपैति, उद्भिदा द्रव्येण यागमभिनिर्वर्त्तयेदिति, उत सामानाधिकरण्येन, उद्भिदा यागेन यजेत इति द्वेधाऽपि एतस्मिन् प्रतिभाति वाक्ये, तस्मात् भवति संशयः।

किं तावत् प्राप्तम्? उक्तमस्माभिः, समाम्नायस्यैदमर्थ्यं, कश्चिदस्य भागो विधिः, योऽविदितमर्थं वेदयति, यथा "सोमेन यजेत" इति कश्चिदर्थवादः, यः प्ररोचयन् विधिं स्तौति, यथा "वायुर्वै क्षेपिष्ठा देवता" इति, कश्चिन्मन्त्रः, योऽभिहितमर्थं प्रयोगकाले प्रकाशयति, यथा "बर्हिर्देवसदनं दामि" इत्येवमादि, तस्मादुद्भिदादयोऽमीषां प्रयोजनानामन्यतमस्य प्रयोजनाय भवेयुः, तत्र तावन्नार्थवादः, वाक्यशेषो हि स भवति विधातव्यस्य, न च मन्त्रः, एवंजातीयकस्य प्रकाशयितव्यस्य अभावात्, पारिशेष्यात् गुणविधिः, उद्भिद्वता यागस्य विधीयते प्रविशेरनुपपत्तेः, गुणविधेरर्थवत्त्वात्, प्रवृत्तिविशेषकरत्वाच्च। न च, एषां यागार्थता लोकेऽवगम्यते। न च, वेदेन परिभाष्यते। अतो गुणविधयः। "यदि गुणविधिः, न तर्हि कर्म विधीयते, अविहिते च कर्मणि

तत्र गुणविधानमनर्थकम्। न इति ब्रूमः, प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति,यदि नामधेयं स्यात्, यावदेव यजेत इति, तावदेव उद्भिदा यजेत इति, न प्रवृत्तौ कश्चित् गुणविशेषः स्यात्। गुणविधौ च गुणसंयोगात् अभ्यधिकमर्थं विदधत उद्भिदादयः शब्दा अर्थवन्तो भविष्यन्ति तस्मात् गुणविधय इत्येवं प्राप्तम्"भा॰ "अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वात्" १,४,२,सू॰"अपि वा इति पक्षो विपरिवर्त्तते। नामधेयं स्यात् इति प्रतिजानीमहे, एवमविहितमर्थं विधास्यति ज्योतिष्टोमात् यागान्तरं, श्रुतिरेवं यागमभिधास्यति, इतरथा श्रुतिरुद्भिदादीन् वदन्ती उद्भिदादिमतो लक्षयेत्! उद्भिद्वता यागेन कुर्य्यादिति। यागेन कुर्य्यात् इति यजेतेत्यस्यार्थः करणं हि यागः। उद्भिदाद्यपि तृतीयानिर्द्देशात् करणं, तत्र उद्भिदा यागेन इति कर्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यं, द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात्। श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी। तस्मात् कर्मनामधेयम्। 'ननु प्रसिद्धं द्रव्यवचनत्वमपह्नुवीत, अप्रसिद्धं कर्मवचनत्वं प्रतिपादयेत्' उच्यते, तृतीयानिर्द्देशात् कर्मवचनता। कुतः? करणवाचिनो हि प्रातिपदिकात् तृतीया भवति, करणं च यागः, तेन यागवचनमिममवगच्छामहे।

"नैतद्युक्तं,यदि तृतीयानिर्द्देशे सति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेवं, न हि नो बुद्धिरुत्पद्यते, तस्मात् अयुक्तम्। तृतीयावचनम् अन्यथा नोपपद्यते" इति चेत्। कामं नोपपादि, न जातुचित् अनवगम्यमानेऽपि यागवचनो भविष्यति, तस्मात् गुणविधयः। लक्षणेति चेत्, वरं लक्षणा कल्पिता, न यागाभिधानं, लौकिकी हि लक्षणा, इतोऽप्रसिद्धकल्पनेति। अपि च यदि नामधेयं विधीयते, न यागः,अथ यागः, न नामधेयम्, उभयविधाने वाक्यभेदः" इति। उच्यते, न नामधेयं विधास्यते, अनुवादा हि उद्भिदादयः। कुतः प्राप्तिः? इति चेत्। ततोऽभिधीयते, उच्चशब्दसामर्थ्यात् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः, उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इत्युद्भित् यागः, एवमभिधानेन जयात् अभिजित्, विश्वजयात् विश्वजित्, एवं सर्वत्र। अतः कर्मनामधेयम्। यत्त्वप्रवृत्तिविशेषकरोऽनर्थकः इति, नामधेयेऽपि गुणफलोपबन्धेनार्थवत्, तस्मात् कर्मनामधेयान्येवंजातीयकानि—इति सिद्धम्"भा॰

गवामयने षष्ठे सप्तममासिकोत्तमाभिप्लविकस्थाने १एकादशे दिने। "सप्तमस्य मासस्योत्तमयोरभिप्लवयोः स्थाने त्रिवृद्व्यूढोदशरात्र उद्भिद्बलभिदौ" आश्व॰श्रौ॰ १२, १,५,"सप्तमस्य मासस्य ये तयोऽभिप्लवाः तेषां यौ उत्तमाभिप्लवौ तयोः स्थाने त्रिवृत्स्तोमको व्यूढोदशरात्रः उद्भिद्बलभिदौ च द्वे अहनी इत्येतानि द्वादशाहानि" नारा॰वृ॰। गवामयनशब्दे विवृतिः।

उद्भिद पु॰ उद्+भिद–क। १वृक्षादौ पञ्चविधे स्थावरे। २उद्भेदके त्रि॰ "होता यक्षत्तनूनपातमुद्भिदम्" यजु॰ २८,२५ "उद्भिदं यज्ञफलानामुद्भेत्तारम्" वेददी॰।

उद्भिन्न त्रि॰ उद्+भिद–क्त। १उत्पन्ने कर्मणि क्त। २द्विधाकृते दलिते च। "यौवनोद्भिन्नशैशवा"।

उद्भूत त्रि॰ उद्+भू–क्त। १उत्पन्ने "पितृविक्रुतयोद्भूतः कौटिल्यं समप्रभः" ति॰त॰ पु॰ "घतद्भयनोद्भूतः" कलसमन्त्रः न्यायमते २प्रत्यक्षयोग्ये "उद्भूतरूपं नयनस्य गोचरः" उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः" भाषा॰। उद्भूतत्वञ्च उद्भवापरपर्य्यायो रूपादिविशेषगुणगतोजातिभेदः कणा॰ सूत्रवृत्तौ उक्तः यथा "अनेकद्रव्यसमवायात् रूपविशेषाच्च रूपोपलब्धिः"कं॰सू॰। "तेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातम्"सू॰। "रूपगतोविशेषोरूपविशेषः तच्चोद्भूतमनभिभूतत्वं रूपत्वञ्च तस्माद्रूपस्योपलब्धिः। नन्वेवं परमाणोर्द्व्यणुकस्य च रूपं गृह्येतेत्यत उक्तमनेकद्रव्यसमवायादिति अनेकपदं भूयस्त्वपरं तेनानेकानि भूयांसि द्रव्याणि आश्रयतया यस्य तदनेकद्रव्यं त्र्यसरेणुप्रभृति तत्समवायात्, घटादयोऽप्यवयवद्वारकाः परम्परयाऽनेकद्रव्याश्रया एव, रसस्पर्शादौ रूपत्वविरहात् चाक्षुषत्वाभावः चाक्षुषे तेजसि च उद्भूतत्वविरहात्। उद्भवः रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः। नन्वेवं शुक्लत्वसुरभित्वकटुत्वादिभिरपि परस्परभावानुपपत्तिरेव तत्तद्ग्राह्यतत्त्वामात्रकल्पने तु कल्पनागौरवम् उद्भवपदस्य नानार्थत्वञ्चेति चेन्न बाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वस्यैवोपाधेरुद्भवत्वात् तदुपाधिविरहस्यैवानुद्भवत्वात्। अनुद्भवाभाव एव उद्भव इति केचित्। तच्चिन्त्यम् अनुद्भवस्याप्येवं व्यवस्थापयितुमशक्यत्वात्। अतीन्द्रियविशेषगुणत्वमनुद्भूतत्वमिति चेत् एवं तर्हि ऐन्द्रियकविशेषगुणत्वस्यैवोद्भवत्वाप्रत्तेः। ऐन्द्रियकत्वावच्छेदकं किमिति चेत् उच्यम्, विशेषगुणेषु वैशेष्योद्भूतत्वं जातिः गुणगतजातौ परस्पर-

भावानुपपत्तिर्न दोषायेत्यपि वदन्ति । तेनेति रूपमलग्रहणेनेत्यर्थः यथा रूपविशेषात् रूपत्वानभिभूतत्वोद्भूतत्ववत्त्वात्, रूपोपलब्धिस्तथा रसविशेषात् रसत्वानभिभूतत्वोद्भूतत्ववत्त्वात् रसोपलब्धिः एवमितरत्रापि बोध्यम् । अनेकद्रव्यसमवायत्वातिदेशः । घ्राणरसनत्वगिन्द्रियाणामनुद्भवाद्रूपरसस्पर्शानामग्रहणम् पाषाणादावनुद्भवाद्गन्धरसयोः। तद्भस्मनि तयोरुपलम्भात् तयोः पाषाणादावुपलम्भ एव न तु सन्त इत्येके । विभक्तावयवाप्यद्रव्यरूपानुद्भवात्तदग्रहणम् एवं रसस्यापि । उष्णजले तेजोरूपस्यानुद्भवात् स्पर्शस्य चाभिभवात् विततवर्णुरश्म्यादौ रूपरसस्पर्शानामनुद्भवादनुपलम्भः । कनकादौ रूपमुद्भूतमेव शुक्लभास्वरत्वे परमभिभूते । रूपमप्यभिभूतमित्येके कनकग्रहणन्तु रूपान्तरोपष्टम्भात् । अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणं न तु बलवत्सजातीयसम्बन्धमात्रम्, बलवत्सजातीयसम्बन्धस्याग्रहणनिरूप्यतया अग्रहणस्यैवोपजीव्यत्वात् तथाग्रहणप्रयोजकत्वेन बलवत्सजातीय एवोपजीव्यः, अग्रहणस्य ग्रहणप्रागभावस्य तद्ध्वंसाभावस्य वा तदप्रयोज्यत्वात् ग्रहणध्वंसस्य च तदभावात् । तथापि तर्हि बलवत्सजातीयग्रहणकृतमग्रहणमनुपपन्नमेवेति चेत् अस्त्वेवं तथापि सजातीयस्य बलवत्त्वे दुर्बलत्वे वा तादृशसम्बन्धसत्त्वे वा ग्रहणाग्रहणे एव प्रयोजके एवेति स एवाभिभवपदार्थः"।

उद्भूति स्त्री० उद्+भू–क्तिन् । १उत्पत्तौ । उत्कृष्टा भूतिः । २उत्तमविभूतौ ३श्रीसम्पत्तौ च । "उमा वधूर्भवान् दाता याचितार इमे वयम् । वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः" कुमा०।

उद्भेद पु० उद्+भिद–घञ् । १रोमाञ्चे । भावे घञ् । २उद्भिद्योत्पत्तौ ३प्रकाशे च । "उमास्तनोद्भेदमनु प्रवृद्धः" कुमा० । "तं यौवनोद्भेदविशेषकान्तम्" रघुः । "पुष्पोद्भेदं सह किसलयैर्भूषणानां विशेषात्" मेघ० । "कन्दोद्भेदा वैदूर्य्या वारिणीव" माघः । "दर्शितं तु यथाहारो यौवनोद्भेदसम्भवः" "चक्षोऽपि मत्कायोद्भेदस्तदागमनहेतुकः" सा०द० । ४निर्झरे च "गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः" भा०व०८४अ० । ल्युट् । उद्भेदनमप्यत्र न० । "वनयोद्भेदनं विप्रास्तत्रापि कथयन्त्युत" भा० व०८८अ० । "उद्भेदनं प्रकाशनम्" उद्भिच्छब्दे अमरगा० ।

उद्भ्रम पु० उद्+भ्रम–करणे घञ् न वृद्धिः । १उद्वेगे भावे घञ् । २समन्तात् भ्रमणे । भावे ल्युट् । उद्भ्रमणमप्यत्र न०

उद्भ्रान्त न० उद्+भ्रम–भावे क्त । १उद्भ्रमे खड्ग०स्य ३२ कर्मसु । घूर्णितगतौ शब्द०। अन्तर्भूतण्यर्थे भावे क्त । २खड्गमुद्यम्य खड्गभ्रामणे। उद्+भ्रम–कर्त्तरि क्त।३भ्रान्तियुक्ते ४उद्भ्रमणकर्त्तरि च त्रि० । "मारीचोद्भ्रान्तहारीताः" रघु० ।

उद्य त्रि० वद–क्यप् । कथनीये "अन्वतोद्यं न तत्रास्ति" भट्टिः सुप्युपपद एवास्य साधुत्वम् न पृथक्प्रयोग इति ।

उद्यत् त्रि० उद्+या–शतृ । उद्गच्छति "उद्यता जयिनि कामिनीस्तने तेन साहसमनुष्ठितं पुनः" का०प्र० "उद्यन् समुद्रादुत वा पुरीषात्" यजु०२९,१२ । "नैक्षेतोद्यन्तमादित्यम्" मनुः । स्त्रियां ङीप् । सा च २त्रिवृत्स्तोमभेदे च सा च ताण्ड्य०ब्रा० दर्शिता

"तिसृभ्यो हिङ्करोति स प्रथमया, तिसृभ्यो हिङ्करोति स मध्यमया, तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः" । "एकैकस्य साम्नः पञ्च विभक्तयः प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः, तत्र हिङ्कारस्त्रिभिरुद्गातृभिः सर्वैः कर्त्तव्यः अतएव सूत्रकृतोच्यते "साम्नि साम्नि हिङ्कुर्युरिति" तिसृभ्य इति "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" पा० कर्मणि चतुर्थी तिसृ ऋचो गातुं हिङ्कुर्यात् एकवचनमतन्त्रम् उक्तादेव हेतोः" अतस्त्रयोऽप्युद्गात्रादौ हिङ्कुर्युरित्यर्थः । एवमुत्तरत्रापि हिङ्कारविधायकेषु वाक्येषु योजना । स हिङ्करोति स हिंकर्त्ता प्रथमया त्रिरुक्तया गायेत् अयं प्रथमः पर्य्यायः । तिसृभ्यो हिङ्करोति स हिङ्कर्त्ता मध्यमया त्रिरुक्तया गायेत् अयं द्वितीयः पर्य्यायः, पुनरपि तिसृभ्यो हिङ्करोति स हिङ्कर्त्ता तृचस्योत्तमा अन्त्या तया त्रिरुक्तया गायेत् एषः तृतीयः पर्य्यायः । अनेन पर्य्यायेण त्रिवृत्स्तोमः सम्पद्यते उक्तप्रकारेण त्रिधा वर्त्तत इति त्रिवृत् स्तोमः तस्य विष्टुतिरेषा उद्यती ऊर्द्ध्वं गच्छन्ती उक्तेषु पर्य्यायेषु प्रथममध्यमोत्तमक्रमेण ऋचां गमनादन्वर्थसंज्ञेयमेषा त्रिवृतः प्रथमा विष्टुतिः" भा० सामसं०भाष्ये माधवेन उद्यतीनामकविष्टुतेः प्रकारः स्पष्टं दर्शितो यथा "पठितानां तिसृणामृचां गानं त्रिभिः पर्य्यायैः कर्त्तव्यम् तत्र प्रथमपर्य्याये त्रिषु ऋक्षु आद्यास्तिस्र ऋचः, द्वितीये पर्य्याये मध्यमाः, तृतीये पर्य्याये चोत्तमाः । तिसृभ्य इति तृतीयार्थे पञ्चमी, हिङ्करोति गायतीत्यर्थः । सेयं यथोक्तप्रकारोपेता गीतिस्त्रिवृत्स्तोमस्य विष्टुतिः (स्तुति-प्रकार-विशेषः), अस्याः विष्टुतेरुद्यती नामेति, सा० पञ्चदशस्तोमेऽपरा उद्यती विष्टुतिः ता०ब्रा०दर्शिता यथा

"तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिश्च एकया, सप्तभ्यो हिङ्करोति स तिसृभिस्स एकया स तिसृभिरुद्यती पञ्चदशस्य विष्टुतिः" ब्रा॰ "त्रिषु पर्यायेषूत्तरोत्तरसंख्योत्कर्षमेत्युद्यती पञ्चदशस्य विष्टुतिरिति। त्रिषु पर्यायेषूत्तरोत्तरसंख्योत्कर्षमेतीत्युद्यतीत्युच्यते" भा॰।

सप्तदशस्तोमस्यापराप्युद्यती तत्रैव दर्शिता "अथोद्यन्त्याख्यां सप्तदशस्तोमस्यापरां विष्टुतिमाह" भा॰। "तिसृभ्यो हिङ्करोति स पराचीभिः, पञ्चभ्यो हिङ्करोति स एकया स तिसृभिस्स एकया, नवभ्योहिङ्करोति स तिसृभिस्सतिसृभिस्स तिसृभिरुद्यती सप्तदशस्य विष्टुतिः" ब्रा॰। "तिसृभ्यः पञ्चभ्यो नवभ्य इति क्रमेण संख्याया ऊर्द्ध्वगमनादुद्यती ऊर्द्ध्वं गच्छन्ती एतन्नाम्रा एषा सप्तदशस्तोमस्य विष्टुतिः" भा॰।

अयं संक्षेपः गवामयने त्रिवृदादयः स्तोमाः विहिताः तेषां त्रिवृदादिस्तोमानां तिस्रोविष्टुतयः ( सन्निवेशविशेषरूपेण स्तवनानि ) तत्र बहिष्पवमानसाधनस्य त्रिवृत्स्तोमस्य तिस्रो विष्टुतयः उद्यती कुलायिनी परिवर्त्तिनी चेति तत्राद्या दर्शिता अन्ये तत्तच्छब्दे वक्ष्येते।

**उद्यत** त्रि॰ उद्+यम–कर्त्तरि–क्त। १उद्यमयुक्ते कृतोद्यमे "आततायी वधोद्यतः" अमरः। भावे क्त। २उद्यमे न॰। यमेर्नियमनार्थत्वे कर्मणि क्त। ३उत्तोलिते ४उद्यमिते "प्रत्नक्तेज उद्यत आश्विनः" यजु॰ २८,९। "उद्यम्यते इत्युद्यतः" वेददी॰। "पर्य्यायोद्यतकार्म्मुकौ" रघुः।

**उद्यति** स्त्री उद्+यम–भावे क्तिन्। उद्यमे। "वैश्वदेवानि जुहोत्यश्वमेधस्योद्यत्यै" शत॰ब्रा॰ १३,१,८,१।

**उद्यम** पु॰ उद्+यम–घञ् न वृद्धिः। १प्रयासे यत्नभेदे २उद्योगे। "निशम्य चैनां तपसे कृतोद्यमाम्" "यथाक सैना न नियन्तुमुद्यमात्" कुमा॰। ३उत्तोलने च "विप्रदण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने" या॰स्मृ॰।

**उद्यमन** न॰ उद्+यम–णिच्–ल्युट्। १उत्क्षेपणे २उत्तोलने।

**उद्यमित** त्रि॰ उद्+यम–णिच्–क्त। १उत्तोलिते २उद्यमाय प्रेरिते। "आत्मनोमधुमदोद्यमितानाम्" किरा॰।

**उद्यान** पुंन॰ उद्यायतेऽत्र उद्+या–आधारे ल्युट् अर्द्धर्चादि। आरामे। तत्करणप्रकारादि आरामशब्दे ८॰१पृ॰उक्तम्। "बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या" "उद्यानानां नवजलकणैर्यूथिकाजालकानि" मेघ॰।

**उद्यानपाल** त्रि॰ उद्यानं पालयति पाल–अण् उप॰स॰। ( माली ) उद्यानरक्षके "उद्यानपालसामान्यमृतवस्तमुपासते" कुमा॰। ण्वुल्। उद्यानपालकोऽप्यत्र। स्त्रियां टाप् अतइत्त्वम्। "ततः प्रविशति उद्यानपालिका" मालविकाग्निमित्रनाटकम्।

**उद्यापन** पुंन॰ उद्+या–णिच्–ल्युट् अर्द्धर्चादि। व्रतादिसमापने व्रतप्रतिष्ठायाम्। हेमाद्रौ व्रतखण्डे "उद्यापनं प्रवक्ष्यामि" इत्युपक्रम्य व्रतभेदे प्रयोगः। "प्रतिज्ञा च कर्म्मान्तरं न तदङ्गमिति" रघु॰। अस्येतिकर्त्तव्यतासामान्यप्रकारः व्रततत्त्वादौ अनुसन्धेयः। विशेषतस्तु तत्तद्व्रतोक्तविधायकवाक्येभ्योऽवसेयः विस्तरस्तु हेमाद्रौ व्रतखण्डे दृश्यः। तत्र तिथि॰ त॰ व्रतारम्भप्रतिष्ठयोर्वर्ज्यं कालमाह ज्योतिषे "गुरोर्भृगोरस्तवाल्ये वार्धक्ये सिंहके गुरौ। वक्रिजीवाष्टविंशेऽह्नि गुर्वादित्ये दशाहिके। पूर्वरात्रावनायातातिचारिगुरुवत्सरे। प्राग्वाविगन्तृजीवस्य चातिचारे त्रिपक्षके। कम्पाद्यद्भुत सप्ताहे नोपस्येज्ये मलिम्लुचे। मासलङ्घितके वापि क्षये राहुयुते गुरौ। पौषादिकचतुर्मासे चरचाङ्कित वर्षके। एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये। तृतीयेन तु सप्ताहे माङ्गल्यानि शुभान्विताः। विद्यारम्भकर्णवेधौ चूड़ोपनयनोद्वहान्। तीर्थस्नानमनाद्यन्तं तडागादिसुरेक्षणम्। परीक्षाऽऽरामयज्ञांश्च पुरश्चरणदीक्षणे। व्रतारम्भप्रतिष्ठा च गृहारम्भप्रवेशने। प्रतिष्ठारम्भणे देवकूपादेर्वर्जयन्ति च। शान्तिं वह्निवसावास्ते जीवस्य भार्गवस्य च। शावप्रतिर्मृत्युस्ते पादाक्तो द्वादश क्रमात्। अस्तात् प्राक् परयोः पक्षं गुरोर्बालवृद्धयोः। वासते। पक्षं वृद्धोमहास्तेतु भृगुर्बालोदशाहिकः। पादाक्ते तु दशाहानि वृद्धःशुक्रो दिनत्रयम्"। एवं व्रतारम्भप्रतिष्ठयोर्वर्ज्यकालोक्तेः सिंहस्थरवौ तदकर्त्तव्यताकल्पनं साहसमेव हरितालिकादिव्रते तद्वर्जनस्यासम्भवात् तस्य सिंहस्थरविकत्वेनैव निमित्तत्वात् तच्च हरितालिकाशब्दे वक्ष्यते। सिंहस्थरविककालस्याशुद्धिबोधकवाक्यस्य व्रतारम्भप्रतिष्ठाव्यतिरिक्तविषयकत्वेनाप्युपपत्तेः। "पूर्वे काले व्रतानां तु प्रतिष्ठां विधिवच्चरेत्। न तत्र कालनियमस्तत्र विघ्ने परावृदके इति" वचनात् पूर्वकाले न समयाशुद्धिर्बाधिकेति केचित्। एतद्वचनस्यामूलकत्वमाहुरन्ये।

**उद्याम** पु॰ उद्यम्यतेऽनेन उद्+यम–करणे घञ् वा वृद्धिः। ऊर्द्ध्वनियमनसाधने रज्ज्वादौ। "शिक्यपार्श्वं प्रतिमुञ्चते

षड्उद्यामं विश्वाह्यपाप्नोति" कात्या० १६,५,६, उद्यन्ते यम्यते नियम्यते यैस्ते उद्यामाः षड्उद्यामारज्जवः जङ्घाकर्षयाद्येतिज्ञेयस्य" यजु० १२,१०२मन्त्रव्या० वेददी० "षड्उद्यामं भवति षड्ढि दिशो मौञ्जं त्रिवृत्" "संवत्सर एषोऽग्निरकर्तवः शिक्यमृतुभिर्हि संवत्सरः शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यमृतुभिरेवैनमेतद्बिभर्त्ति षड्उद्यामं भवति षड्ढ्यृतवः" शत० ब्रा० ६,७,१,१६,१८,

उद्याव पु० उद्+यु- अपं बाधित्वा "उदि श्रयतियौतिपुद्रुवः" पा० घञ्। अर्द्धतोमिश्रणे अनुदि तु अवेव।

उद्यास पु० उद्+यस-घञ्। १उद्यमे कर्त्तरि संज्ञायां घञ्। २देवभेदे पु०। "आयासाय स्वाहा प्रयासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा" यजु० २२,११, "आयासादयो देवविशेषाः" वेददी०।

उद्योग पु०न० उद्+युज-घञ् अर्द्धर्चादि। १उद्यमे कर्म्मकरणार्थं प्रयासभेदे "उद्योगादनिवृत्तस्य सुसहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः सहचारिणी" नीति०। "यत्नादिविषयोद्योगकर्म्मणा मनसा गिरा" या० स्मृतिः। "उद्योगं सर्व्वसैन्यानां दैत्यानामादिदेश ह" देवीमा०। भीमसेनवत् उत्तरपदलोपे २उद्योगपर्व्वणि च। "उद्योगः सैन्यनिर्याणं श्वेतोपाख्यानमेव च" भा० आ० १अ० "उद्योगे भरतश्रेष्ठः सर्व्वं कामगुणान्वितम्। भोजनं भोजयेद्विप्रान् गन्धमाल्यैरलङ्कृतान्" भा० स्वर्गा० ६अ०

उद्योगपर्वन् न० उद्योगस्य प्रतिपादकं पर्व्व। व्यासरचितभारतान्तर्गते पञ्चमे पर्वणि। "उद्योगपर्व्व विज्ञेयमतऊर्द्धं महाद्भुतम्"। "उद्योगपर्व्व विज्ञेयं पञ्चमं शृण्वतः परम्" तदवान्तरपर्वाणि। "उद्योगपर्व्व निर्द्दिष्टं सन्धिविग्रहसम्मितम्" भा० आ० १अ०।

उद्योगिन् त्रि० उद्+युज-घिणुन्। उद्योगयुक्ते। "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्ति। दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः" हितो०।

उद्योजक त्रि० उद्+युज-ण्वुल्। प्रवर्त्तके।

उद्र पु० उनत्ति क्लिद्यति उन्द्-रक्। जलविड़ाले। (उद्बिराल)

उद्रङ्क(ङ्ग) पु० सोमपुरे व्योमचारिपुरभेदे जटाधरः।

उद्रथ पु० उद्गतोरथो यस्मात्। १रथकीले। उद्गतरथवत्त्वः पक्षो यस्य। ताम्रचूड़विहगे। मेदिनिः।

उद्रपारक पु० "धृतराष्ट्रकुले जातान् शृणु नागान् यथातथम्" इत्युपक्रम्य "भैरवोमुण्डवेदाङ्गः पिशङ्गश्चोद्रपारकः" भा० आ० ५७अ० सर्पसत्रे हतनागभेदः। [च

उद्रिक्त त्रि० उद्+रिच-क्त। १अतिशयिते, २अधिके, ३स्फुटे

उद्रेक पु० उद्+रिच-घञ्। १वृद्धौ, २अतिशये, ३उपक्रमे च। "गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा" पुष्पदन्तः। "प्रक्षीयते धनोद्रेको जनानामविजानताम्" भा० व० १९२ अ०। "स्नेहो रागश्च तन्द्रा च मोहोद्रेकश्च केवलः" भा० अनु० २अ०। ४महानिम्बे स्त्री राजनि०।

उद्वंशीय न० सामभेदे। "तदाहुरीर्म एव वा एषा होत्रा यदच्छावाक्या यदच्छावाकमनुसन्तिष्ठत ईश्वरेर्मा भवितोरिति यद्युक्थं स्यात्त्रैककुभस्वोद्वंशीयस्थान्ततः प्रतिष्ठाप्ये वीर्यं वा एते सामनी वीर्य एवान्ततः प्रतितिष्ठन्ति"। ब्रा० "अतो यदीयमुक्थम् उक्थसंस्थं स्यात् उक्तदोषपरिहाराय त्रैककुभं चोद्वंशीयं चोभे सामनी अन्ततस्तृतीयसवनस्यान्ते प्रतिष्ठाप्ये त्रैककुभं ब्रह्मसाम उद्वंशीयमच्छावाकसामेत्येवं कर्त्तव्ये इत्यर्थः" ता० ब्रा० भा०।

उद्वत् त्रि० उद्, उत्कर्षितस्वभावोऽस्त्यस्य वा मतुप् मस्य वः। १उत्कृष्टे २उन्नते च। "स उद्वतोनिवतोयाति वेविषत्" ऋ० ३,२,१०। "उद्वतः उच्छ्रायवतः" भा० "उद्वत्स्वस्मा अकृणोतना" १,१६१,११। "उद्वत्स्वुन्नतेषु" भा०।

उद्वत्सर पु० उत्क्रान्तोरविसंक्रान्तिं चान्द्रोमासोयत्र प्रा० ब०। वत्सरपञ्चकान्तर्गते वत्सरभेदे इदावत्सरशब्दे विवृतिः उद्वावत्सरोऽप्यत्र।

उद्वपन न० उद्+वप-ल्युट्। १दाने २उत्तोलने (तोला)। "उत्थायामत्रोद्वपनमस्तमिते पात्र" "अनुदिते भस्मोद्वपनादि" कात्या० १६,६,१,२। उत्क्रान्तोवपनम् अत्या० स०। ३उत्पाटने च।

उद्वमन न० उद्+वम-ल्युट् उदुपसर्गस्य धात्वर्थानुगममात्रमत्र। वमने। उद्गारशब्दे विवृतिः।

उद्वयस् त्रि० उद्गतं वयोऽन्नं यस्मात् प्रा० ब०। अन्नोत्पादके वायौ "अपां रसमुद्वयसं सूर्य्ये सन्तं समाहितम्" यजु० ९,३, "उद्गतं वयोऽन्नं यस्मात् वायोः स उद्वया वायुः वायुनैव हि धान्यानि निष्पद्यन्ते" वेददी०। उत्क्रान्तो वयः बालिकावस्थाम् अत्या० स०। अतिक्रान्तवयसि वृद्धे त्रि०।

उद्वर्त्त पु० उद्+वृत-घञ्। १अतिशये २आधिक्ये च। (उपटान) णिच्-घञ्। चूर्णविशेषैः २देहस्वक्त्वाद्यपसारणव्यापारे।

उद्वर्त्तन न० उद्वर्त्यतेऽनेन उद्+वृत-णिच् करणे-ल्युट्।

३शरीरनिर्मलीकरणद्रव्यादौ। चूर्णैरुद्वर्त्तनैः पार्श्वौ तैला-क्तामवचूर्णयेत्" सुश्रु०। "नाकमेद्रक्तविप्लुतलोचनोद्व-र्त्तनादि च" या०स्मृतिः। भावे ल्युट्। २द्रव्यभेदैः स्नेहा-द्यपहारार्थे व्यापारे च। "उद्वर्त्तनं वातहरं कफमेदो-विनाशनम्। स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम्" "यवाश्वगन्धायष्ट्याह्वैस्तिलैश्चोद्वर्त्तनं हितम्। यतावर्थत्र गन्धाभ्यां पयस्यैरण्डजीवनैः" "ततोऽस्य बलातैलमभ्य-ङ्गार्थेऽवचार्य्यम् यवदिश्चोद्वर्त्तनार्थे" सुश्रु०। ३विलेपने, ४घर्षणे च। उद्+वृत-ल्युट्। ५उत्पतने ६उल्लुण्ठने च "गात्रस्योत्तर्त्तनञ्चैव हितं संवाहनानि च" सुश्रु० "चटुलशफरोद्वर्त्तनप्रेक्षितानि" मेघ०।

**उद्वर्त्तनीय** त्रि०उद्वर्त्तनाय हितम् छ। उद्वर्त्तनसाधने द्रव्ये "इदमुद्वर्त्तनीयं गोधूमयवचूर्णमिति" दुर्गार्चापद्धतिः।

**उद्वर्द्धन** न० उद्+वृध-ल्युट्। १अन्तर्हासे त्रिका०। णिच्-ल्युट्। २उद्भवसम्पादने। ल्यु। ३वृद्धिसम्पादके त्रि०।

**उद्वर्हण** न०उद्+वर्ह-ल्युट्। १उन्मूलने २उत्पाटने ३उद्ध-रणे। क्त। उद्वर्हित उन्मूलिते त्रि०

**उद्वह** पु०उद्वहति ऊर्द्ध्वं नयति उद्+वह-अच्। पुत्रे "पुन्ना-म्नो नरकाद्यस्मात् पितरं त्रायते सुतः" स्मृतेस्तस्य नरक त्राणकर्त्तृत्वात् तथात्वम् २वंशकारके "उदयमस्तमतञ्च रघू-द्वहात्" "पार्थिवोद्वहरघूद्वहः" रघुः ३कन्यायां स्त्री ऊर्द्ध्वं प्रवहवायोरुपरिवहति अच्। वायुसप्तमार्गते ४तृतीयस्क-न्धस्थे वायौ पु०। आवहशब्दे विवृतिः "आवहः प्रवहश्चैव विवहश्च समीरणः। परावहः संवहश्च उद्वहश्च महाबलः। तथा परिवहः श्रीमानुत्पातभयशंसिनः। इत्येते क्षुभिताः सप्त मारुता गगनेचराः" हरि०२३६अ०। वा० भावे अप्। ५विवाहे "चूड़ोपनयनोद्वहान्" राजमा०।

**उद्वहन** न० उत्तोल्य वहनम्। उत्तोल्य स्कन्धादिना वहने। "कण्ठेन देहोद्वहनाय शेषः" कुमा० "कैलास-नाथोद्वहनाय भूयः" "आपीनभारोद्वहनप्रयत्नात्" रघु० २विवाहे च "भुवः प्रयुक्तोद्वहनक्रियायाः" रघुः। "अपितृभ्यः पितादद्यात् सुतसंस्कारकर्मसु। पित्र्यानो-द्वहनात्तेषां तदभावेऽपि तत्क्रमात्" स्मृतिः।

**उद्वादन** न० उद्+वद-णिच्-ल्युट्। १उच्चैरावेदने। "उप-दीप्तौ खेष्वग्निषु नखनिकृन्तनाद्युद्वादनान्तं साग्निपाति-कम्" कात्या०२५,१४,२, "उपदीप्तो नेदितः स्वानग्नीन् विहृत्य नखनिकृन्तनाद्युद्वादनान्तं साग्निपातिकं कर्म्म कुर्य्यात्" कर्कः। उद्वादनप्रकारश्च शत०ब्रा० ३,२,१,२८, दर्शि-तोयथा "अयं वै उद्वदति दीक्षितोऽयं ब्राह्मणोदीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्य्योयत्त मार्पादत्वयं युष्माकैकोऽभूत्तं गोपायत त्येवैतदाह त्रिष्कृत्वाह" । "उद्वदति उच्चैरावेदयति" भा० २उच्चैर्वाद्यकरणे च उद्+वद-णिच् ल्युट्। उद्वाचनमप्यत्र न० "यथेन्द्र उद्वाचनं लब्ध्वा चक्रे अधस्पदम्" अथ० ५,८,८,

**उद्वान** पु० उद्+वन-संभक्तौ घञ्। १उद्वमने णिच्-कर्म्मणि अच्। २उद्वमिते त्रि० रायमुकुटः।

**उद्वान्त** न० उद्+वम-क्त। क्षतोद्वमने उद्गीर्णे अमरः।

**उद्वाप** पु० उद्+वप-भावे घञ्। १उन्मूलने २उद्धरणे। ३भूयमाण परिधरित्यागे पचात् "आवापोद्वापाभ्याम्" मुक्ता०। कर्म्मणि घञ्। उद्वाप्य सङ्गीयमाने ४भस्मादौ। "कपालानि भस्मोद्वापे कुर्य्यात्" कात्या० ५,२,६, भस्मोद्वापशब्देन प्रत्यहं गार्हपत्यादिभ्यो भस्मोद्धृत्य यो राशिः क्रियते सउच्यते कर्कः"। णिच् भावे अच्। ५मुण्डने।

**उद्वाय** पु० उद्+वा-घञ्। १उद्वासने २उपशमे। तत आ-चारे क्विप्। उद्वायति। "वायुर्वाव संवर्गोयदा वा अग्निरुद्वायति वायुमेवाप्येति" छा०उ०। "उद्वायति उद्वासनं प्राप्नोत्युपशाम्यति" भा०। गणव्यत्ययोवात्र।

**उद्वास** पु० उद्+वास-घञ्। स्वस्थानातिक्रमेण अन्तप्राप्तौ "अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनो-द्वासः" छा०उ०भा०। ततः बलादि०इनि मतुप् वा। उद्वासिन् उद्वासवत् तद्वति त्रि० स्त्रियां ङीप्।

**उद्वासन** न० उद्+वस-ल्युट्। १मारणे उद्+वस+णिच्-ल्युट्। २विसर्जने। स्रुगादीनाम् उत्तोलनेनान्यत्र स्था-पनरूपे अग्न्याधानाङ्गे ३संस्कारभेदे "अथ उपसृष्य भावाद्यर्थे दरिद्ररणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधि-श्रयणस्रुक्संमार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उत्पूय पश्चादाज्यग्रहणम्" कात्या०६,१,२, "अतोद्वासनमाहवनीय स्यायिपः २,७,८, "आज्याधिश्रयणस्रुक्संमार्जनोद्वास-नावेक्षणानि" कात्या० ८,६,२१, ४स्थानान्तरनयने च "दक्षिणतोऽधिश्रयणोद्वासने" २५,८,६,भस्मानि अधिश्रय-णमुद्वासनं च गार्हपत्यादुत्तिणस्यां दिशि कुर्य्यात्" कर्कः।

**उद्वास्य** अव्य० उद्+वस-णिच्-ल्यप्। विसृज्येत्यर्थे "उद्वास्य देवं स्वेधाम्नि" तन्त्रम्। २स्थानान्तरं नीत्वेत्यर्थे च कर्मणि यत्। ३उत्तोलनीये ४उद्धरणीये च त्रि०।

उद्वाह पु॰ उद्+वह घञ्। विवाहे स च ज्ञानविशेष इति रघु॰ येन ज्ञानेन ममेयं भार्या, ममायं पतिरिति व्यवहारो भवति तादृशं ज्ञानम्। तच्च सम्बन्धभेदेनोभयनिष्ठम्। चरमसंस्कार इति नव्यनैयायिकाः। चरमत्वञ्च संस्कारप्रागभावासहचरितत्वम्। द्वितीयविवाहस्य संस्कारत्वाभावात् तत्प्रागभावसत्त्वेऽपि आद्यविवाहे चरमत्वाक्षतिः। तत्र च स्त्रियाः संस्काररूपतया विवाहत्वव्यवहारः। यस्य पुरुषस्य विवाहात् प्रागेव चूड़ादिषु जातेषु मरणम् तत्र पुरुषे चूड़ादौ संस्कारप्रागभावासहचरितत्वात् अतिव्याप्ते नैतत् साध्यम्। किन्तु शास्त्रविहितसंस्कारान्तिमत्वमेव चरमत्वमिति युक्तम्। शास्त्रेषु च संस्कारेषु विवाहस्यैवान्तिमतया विधानादितरेषामुपान्तिमत्वादिनेति नातिप्रसङ्गः। यूपाहवनीयादौ यथा संस्कारादेव तत्तच्छब्दप्रवृत्तिः एवं शास्त्रविधिना कृतसंस्कारयोरेव दम्पत्योस्तच्छब्दप्रवृत्तिः। संस्कारस्यालौकिकत्वात् तत्तत्कर्मफलापत्ताध्य इति न आदानमात्रेण तत्सिद्धिः। अतएव "अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेदिति" या॰स्मृतौ "उद्वहेत द्विजोभार्याम्" इत्यादौ च विधिश्रवणम्, आदानमात्रस्य प्रमाणान्तरप्राप्ततया तदंशे विधित्वासम्भवात् अप्राप्तप्रापकस्यैव विधित्वात् अतएव "पाणिग्रहणिकामन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे" इति मनुना मन्त्रविशेषाणामेव भार्यात्वरूपसंस्कारप्रयोजकत्वमभिहितम्। आदानमात्रस्य विवाहत्वे तस्य च लौकिकत्वात् स्वीकृतेतरद्रव्यवत् तद्दानविक्रयापत्तिःस्यात् "न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्या वियुज्यते" इति कात्यायनेन दानविक्रयाभ्यां भार्यात्वविगमाभावं वदता च विवाहस्य लौकिकत्वं निरासितम्। किन्तु विवाहसंस्कारस्य वैधत्वे यथाविधानमेव तत्र प्रवर्त्तितव्यम्। विधानातिक्रमे च कर्त्तुः प्रत्यवायोऽनिष्टं च फलं भवतीति गम्यते। तद्विधानप्रकारश्च आश्व॰गृ॰ १,४, कण्डिकादौ दर्शितः अन्योऽपि प्रकारस्तत्तद्गृह्यकारैरुक्तः। स च ततोऽवसेयः। उद्वाहे वर्ज्जनीयकन्याः स्मृतिषु दर्शिता यथा। "असपिण्डा च या मातुरसगोत्रा च या पितुः सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने" मनुः। असपिण्डाश्च असपिण्डशब्दे ५४१पृ॰ मतभेदेनोक्ताः। "अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम्। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" याज्ञ॰। अन्यमुक्ताश्च। "सप्त पौनर्भवाः कन्या वर्ज्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला। उदकस्पर्शिता या च या च पाणिगृहीतिका। अग्निं परिगता या च पुनर्भूप्रभवा च या। इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्" काश्य॰। "तत्र सपिण्डासगोत्रासमानप्रवरासु भार्यात्वमेव नोत्पद्यते रोगिण्यादिषु भार्यात्वे उत्पन्नेऽपि दृष्टदोष एव" मिता॰ एवमेव रघुनन्दनादयः। समानार्षाश्च आर्षशब्दे ८१२ पृष्ठे दर्शिताः। "सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि। जन्मनाम्नोरविज्ञाने उद्वहेताविशङ्कितः" इति उ॰त॰ व्यासः। "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्" मिता॰ स्मृ॰। "आ सप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः। अविवाह्या सगोत्रा च समानप्रवरा तथा। पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रिया। ते च सन्तानिनः सर्वे पतिताः शूद्रतां गताः" नारदः। बन्धवश्च उत्तराधिकारशब्दे १०८८पृ॰ दर्शिताः। "सगोत्राच्चेदमत्वोपयच्छेन्मातृवदेनाम् बिभृयात् समानार्षेयां विवाह्य चान्द्रायणं चरेत्" सुमन्तुः "समानगोत्रप्रवरां समुद्वाह्योपगम्य च। तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव हीयते। आप॰। "सर्वाः पितृपत्न्यो मातरस्तद्भ्रातरो मातुलास्तदपत्यानि भगिन्यस्तदपत्यानि भागिनेयानि ता धर्म्मतोऽविवाह्याः अन्यथा सङ्करकारिण्यस्तथाध्यापयितुरिति" सुमन्तुः। "अध्यापयितुरेतद्विवाहमन्त्रपाठयितुरेतत् सङ्करकारित्वमिति" रत्नाकरादयः। अध्यापयितुर्गुरोः कन्या अविवाह्येति रघुनन्दनेनोक्तम् "समानप्रवरा वाऽपि शिष्यसन्ततिरेव च। मन्त्रदातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते" मत्स्यपु॰। "मातुर्यं नाम गुह्यं स्यात् सुप्रसिद्धमथापि वा। तन्नाम्नी या भवेत् कन्या मातृनाम्नी प्रचक्षते। प्रमादात् यदि गृह्णीयात् प्रायश्चित्तं समाचरेत्। ततश्चान्द्रायणं कृत्वा तां कन्यां परिवर्ज्जयेत्" मत्स्य पु॰। तथा भ्रातृकापुत्र्या अपि पुत्रस्थानिकतया अविवाह्यत्वमुक्तं दत्तकमी॰ दृश्यम्। अत्र सपिण्डविषयेऽपवादः "सप्तिकर्षेऽपि कर्त्तव्यं त्रिगोत्रात् परतो यदि"। मत्स्य पु॰। "असम्बन्धा भवेद्यास्तु पिण्डेनैवोदकेन वा। सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या"। मनुः। शूद्राणान्तु अतिदिष्टादिष्टगोत्रभागित्वेन सगोत्राविवाहो न निषिद्धः इति रघुनन्दनादयः। "द्विजानामसवर्णासु कन्यासूपयमस्तथा" उद्व॰ना॰ उक्तेः कलौ असवर्णाविवाहनिषेधात्तद्विशेषोनाभिहितः। द-

त्रियस्यां मातुलकन्योद्वाहस्तु शिष्टैरपि क्रियते तस्य स्मृतिविरुद्धत्वेऽपि किञ्चित् श्रौतं लिङ्गमास्थाय तेषां तथाचरणमिति बहवः। तच्च श्रौतलिङ्गस्यान्यार्थपरता परागर भाष्यादौ दर्शिता। अतएव द्वारकाख्यदक्षिणदेशवासिनां तथाचरणं भाग०१०स्कन्दे। “यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः। व्यतरत् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम्”। “दौहित्रायानिरुद्धाय पौत्रीं रुक्म्याददद्धरेः। रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया जानन्नधर्म्मं तद्यौनं स्नेहपाशवशानुगः”। अधर्मं जानन्नित्युक्त्या तेन तस्याधर्मत्वम्। “मातुलस्य सुतामूढ्वे”ति प्रागुक्तवचनाच्च तस्याधर्मत्वम् सुव्यक्तमेव। स च विवाहोऽष्टविधः “ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः” मनुः एतेषां लक्षणं तत्तच्छब्दे दृश्यम्। “येन भार्य्या कृता पूर्वं कृतोद्वाहा परस्य वै” हरिवं०।

**उद्वाहन** न० उद्+वह–णिच्–ल्युट्। १पुत्रादेरुद्वाहसम्पादने २उन्नयने ३स्थानान्तरनयने। उद्वाह्यते स्थानान्तरं नीयतेऽनेन उद्+वह–णिच्–करणे ल्युट्। ४उद्धारणसाधने “उद्घाटनं घटीयन्त्रं सलिलोद्वाहने प्रहेः” अमरः। उद्+वह–स्वार्थे णिच्-भावे ल्युट्। ५विवाहे। वाहनस्य हलाकर्षणस्योपरि वाहनं कर्षणं यत्र। ६द्विहल्ये क्षेत्रे यत्र प्रथममेकवारं हला पुनः कर्षणं क्रियते तादृशे क्षेत्रे हेम०। [ टके (कड़ि) हेम०।

**उद्वाहनी** स्त्री उद्वह्यते स्वार्थे णिच्-कर्मणि ल्युट्। वरा-

**उद्वाहिक** त्रि० उद्वाहः प्रयोजनमस्य ठक् संज्ञापूर्वकविधेरनित्यत्वात् न वृद्धिः। विवाहसाधने मन्त्रादौ “नोद्वाहिकेषु मन्त्रेषु विधवावेदनं क्वचित्” मनुः। वृद्धौ औद्वाहिकोऽप्यत्र त्रि०।

**उद्वाहित** पु०स्त्री उद्वाहो जातोऽस्य तारका० इतच्। जातविवाहे “बाले दत्ते तथैवाद्यं गते च दैवमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनायनम्” राजमा०।

**उद्वाहिनी** स्त्री उद्वाहः उद्वहनं साध्यतयाऽस्त्यस्याः इनि ङीप्। रज्जौ मेदिनिः।

**उद्विग्न** त्रि० उद्+विज–कर्त्तरि क्त। उद्वेगयुक्ते, “निमग्नोद्विग्नसंक्षोभैः पप्रे दीनैव मेदिनी” भट्टिः। दुःखपरिहारासमर्थतया२आकुलचित्ते,३क्षुभिते च।

**उद्वीक्षण** न०उद्+वि+ईक्ष–भावे ल्युट्। १ऊर्द्ध्वदृष्टौ। करणे ल्युट्। २तत्साधने नेत्रे “कमलोजनोद्वीक्षणकौतुकोत्सवम्” रघुः।

**उद्वीत** त्रि० उद्+वि+इ–क्त। विशेषेणोद्गते। (कयलापिङ्गकीया) समन्तात् प्लाविते “ततो युधिष्ठिरानीकमुद्वीतार्णवनिःस्वनम्” भा० द्रो० १६अ०।

**उद्वृत्त** त्रि०उद्गतो वृत्तात् निरा०स०। १दुर्वृत्ते। उद्+वृत–क्त। २उत्क्षिप्ते ३समुत्क्षिप्ते। ४अधिके। “उद्वृत्तो हि मन्त्रः समधिकफलमाचष्टे” व्या० न्याय:। “कलत्रयोरुद्वृत्तमिवार्णवाम्भः” भा० श्वा० प०७। ५क्षुभिते च “उद्वृत्तनक्रात् सहसोन्ममज्ज” रघुः।

**उद्वेग** पु० उद्+विज–घञ्। १व्याकुलचित्ततायाम् २विरहजन्ये दुःखोद्गमे, “मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः” किरा०। “सङ्कोद्वेगमियं व्रजेदिति” रघुः। “यान्त्योद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्याः” मेघ०। “योजिह्वाम् बाधते उद्वेगं जनयति शिरोऽवहीते नासिकाञ्च स्रावयति स कटुकः” सुश्रु०। “सङ्क्षोभेऽप्यनुद्वेगो माधुर्यं परिकीर्त्तितम्” सा०द०। ३भये च। ४गुवाकफले न०। उद्गतो वेगोऽस्मात्। ५निश्चले,६स्तिमिते ७शीघ्रगामिनि च त्रि०।

**उद्वेजन** त्रि० उद्+विज–भावे ल्युट्। १उद्वेगे अमरः “परदाराभिमर्षेषु प्रवृत्तान् नृन् महीपतिः। उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत्” मनुः तन्ते साधु छ। उद्वेजनीय उद्वेजके त्रि० “परिहरेदुद्वेजनीयाश्च कथाः” सुश्रु०।

**उद्वेजित** त्रि० उद्+विज–णिच्-क्त। कृतोद्वेगे “उद्वेजिता वृष्टिभिराश्रयन्ते” कुमा०।

**उद्वेदि** त्रि०उद्गता वेदिर्यत्र प्रा० ब० नतलोपः। उन्नतवेदिके। “विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम्” रघुः

**उद्वेप** पु०उद्+वेप–भावे घञ्। १उत्कम्पने। कर्त्तरि अच्। २तद्युक्ते त्रि०। ततः तेन निर्वृत्तमित्यर्थे संकु ला० अण्। औद्वेप तन्निर्वृत्ते त्रि०। स्त्रियां ङीप्।

**उद्वेल** त्रि० उत्क्रान्तोवेलाम् अत्या० स०। १वेलातिक्रान्ते २मर्य्यादातिक्रान्ते “भयमप्रलयोद्वेलादाचख्युर्नैकतोदधेः” रघुः

**उद्वेष्टन** न० उद्+वेष्ट–ल्युट्। १हस्तपादयोर्बन्धने, २उपच्छेदे च। “वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः” “हृदयोद्वेष्टनं तन्द्रा लालास्रुतिररोचकः” सुश्रु०। उद्गतं वेष्टनात् निरा०त०। । २उन्मुक्तबन्धने त्रि०। “कथाचिदुद्वेष्टनवान्तमाल्यया” रघुः कुमारश्च

**उद्वोढ़** पु० उद्+वह–तृच्। परिणेतरि। “उद्वोढापि भवेत् पापी संसर्गात् कुलनायिके!। वेश्यागमनजं पापं तस्य दुःखोदिनेदिने” महानि०त०।

**उभ्रस** उञ्छे भ्वा० पर० सक० सेट्। उभ्रसति औभ्रासीत्

उभ्राम्-बभूव आस चकार । [भयति ते । औदिभ्रसत् त
उभ्रस उत्क्षेपे उञ्छे च (कणशआदाने) चु॰सक॰सेट् । उभ-
उन्द क्लेदने रुधा॰पर॰सक॰सेट् । उनत्ति उन्तः उन्दन्ति उ-
न्द्यात् उनत्तु । औनत् औन्ताम् औन्दन् औन:–औ-
नत् । औन्दीत् । उन्दाम्–बभूव आस चकार । उन्दिता
उन्दिष्यति औन्दिष्यत् । उन्दन् उन्दनम् उत्तिः उन्नः–
उत्तः । “हतप्रुषा मनसा हव्यमुन्दन्” ऋ॰ २,३,२ ।
“यत्र ह्याप उन्दन्त्यतिष्ठन्ति तदोषधयोजायन्ते” शत॰
७,५,२,२ । भ्वादित्वमपि । “शिरश्चिदुन्दति अदितिः
केशान् वपत्वाप उन्दन्तु वर्चसः इति” आश्व॰ गृ॰ १,१७,
७ । णिच् उन्दयति-ते औन्दिदत्-त सन् उन्दिदिषति ।

उन्दुर(रु) पु॰ उन्द–उर–उरु वा । मूषिके मूषिक-
भेदास्तद्दंशोपद्रवाश्च सचिकित्साः सुश्रु॰दर्शिता यथा ।
“अथातो मूषिककल्पं व्याख्यास्यामः । पूर्वमुक्ताः शुक्र
विषा मूषिका वे समासतः । नामलक्षणभैषज्यैरष्टादश
निबोध तान् । लालनः पुत्रकः कृष्णो हंसिरश्चिक्किर-
स्तथा । छुछुन्दरोऽलसश्चैव कषायदशनोऽपि च । कुलि-
ङ्गश्चाजितश्चैव चपलः कपिलस्तथा । कोकिलोऽरुणसंज्ञश्च
महाकृष्णस्तथोन्दुरः । श्वेतेन महता सार्द्धं कपिलेनाखुना
तथा । मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः । शुक्रं
पतति यत्रैषां शुक्रदिग्धैः स्पृशन्ति वा । नखदन्तादिभि-
स्तस्मिन् गात्रे रक्तं प्रदुष्यति । जायन्ते ग्रन्थयः शोफाः
कर्णिका मण्डलानि च । पिडकोपचयश्चोग्रो विसर्पाः
किटिभानि च । पर्वभेदोरुजस्तीव्रा ज्वरो मूर्च्छा च दारु-
णा । दौर्बल्यमरुचिः श्वासो वमथुर्लोमहर्षणम् । दष्ट-
रूपं समासोक्तमेतच्च व्यासतः शृणु । लालास्रावो
लालनेन हिक्काच्छर्दिश्च जायते । तण्डुलीयककल्कन्तु
लिह्यात्तत्र समाक्षिकम् । पुत्रकेणाङ्गसादश्च पाण्डुवर्णश्च
जायते । चीयते ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः ।
शिरीषेङ्गुदकल्कन्तु लिह्यात्तत्र समाक्षिकम् । कृष्णेना-
सृक् छर्दयति दुर्दिनेषु विशेषतः । शिरीषफलकल्कन्तु
पिबेत् किंशुकभस्मना । हंसिरेणान्नविद्वेषो जृम्भा
लोमाञ्चहर्षणम् । पिबेदारग्वधादिन्तु सुवान्तस्तत्र मान-
वः । चिक्किरेण शिरोदुःखं शोफो हिक्का वमी तथा ।
जालिनीमदनाङ्कोटकषायैर्वामयेत्तु तम् । छुछुन्दरेण तृट्-
छर्दिर्ज्वरोऽङ्गदौर्बल्यमेव च । ग्रीवास्तम्भः पृष्ठशोको गन्धा-
ख्यानं विषूचिका । ऋव्यं हरीतकीं शुण्ठीं विडङ्गं पि-
प्पलीं मधु । ग्रसनाकर्षभल्लातं हृष्ट्वाच्यात दापयेत् । ग्रीवाऽ-
लम्भोऽलसेनोर्द्ध्ववातुर्दंशे रुजा ज्वरः । महागदं ससर्पिष्कं
लिह्यात्तत्र समाक्षिकम् । निद्रा कषायदन्तेन हृच्छोषः
कार्श्यमेव च । चौद्रोपेताः शिरीषस्य लिह्यात् सार-
फलत्वचः । कुलिङ्गेन रुजः शोफो राज्यश्च दंशम-
ण्डले । मह्ये सविन्धुवारे च लिह्यात्तत्र समाक्षिके ।
अजितेन वमी मूर्च्छा हृद्ग्रहः कृष्णनेत्रता । तत्र स्नु-
ह्याः क्षीरपिष्टां कालिन्दीं मधुना लिहेत् । चपलेन भवे-
च्छर्दिर्मूर्च्छा च सह तृष्णया । सभद्रकाष्ठां सजटां चौ-
द्रेण त्रिफलां लिहेत् । कपिलेन व्रणे कोथो ज्वरो
ग्रन्थ्युद्गमस्तथा । चौद्रेण लिह्यात्त्रिफलां श्वेतां-
चापि पुनर्नवाम् । ग्रन्थयः कोकिलेनोग्रा ज्वरो दाहश्च
दारुणः । वर्षाभूनीलिनीक्वाथसिद्धं तत्र घृतं पिबेत् ।
अरुणेनानिलः क्रुद्धो वातजान् कुरुते गदान् । महा-
कृष्णेन पित्तञ्च श्वेतेन कफ एव च । महता कपिलेना-
सृक् कपोतेन चतुष्टयम् । भवन्ति चैषां दंशेषु ग्रन्थि-
मण्डलकर्णिकाः । पिडकोपचयश्चोग्राः शोफश्च भृश-
दारुणः” ।

उन्दु र(रु)कर्णी स्त्री उन्दुरस्य कर्ण इव पर्णमस्याः गौ॰ ङीष् ।
आखुकर्ण्याम् । (उन्दुरकानी ) स्वार्थे कन् तत्रैव

उन्दूरु पु॰ उन्द–ऊरु । मूषिके । [ पक्षे उत्त आर्द्रे त्रि॰ ।

उन्न त्रि॰ उन्द–क्त । क्लिन्ने १आर्द्रे (भिजे) २दयापरे च ।

उन्नत त्रि॰ उद्+नम–क्त । १उच्चे, २महति च । “उन्नतेन
स्थितिमता धुरमुद्वहता भुवः” कुमा॰ “स्थितः सर्वो-
न्नतेनोर्वीम्” रघुः । “बन्धुरं तून्नतानतम्” अमरः ।
“मध्योन्नतञ्च ललितञ्च दृशोः” माघः ।
सि॰शि॰ उक्ते दिनमानज्ञानसाधने ३उपायभेदे न॰ ।
“उन्नतप्रभाभिमतदिक्क्रियमेत तावत् तामेव कालनियमेन च
वच्मि भूयः । खाद्युन्नतं द्युगतशेषकयोर्यदल्पं तेनोनितं
दिनदलं नतसंज्ञकं च । अथोन्नताद्धूनयुताद्युरेष क्रमादुद-
ग्दक्षिणगोलयोर्ज्या । स्यात् सूत्रमेतद्गुणितं द्युमौर्व्या
व्यासार्धभक्तं च कलाभिधानम्” सि॰। “दिवसस्य यद्गतं यच्च
शेषं तयोर्यदल्पं तदुन्नतसंज्ञं ज्ञेयम् । तेनोन्नतेनोनीकृतं दिन-
दलप्रमाणं नतसंज्ञं भवति । अथोन्नतादुन्नतकालादुत्त-
रगोले च तैरन्विता दक्षिणे युताद्या ज्या तत्सूत्रम् ।
सा सूत्रसंज्ञेत्यर्थः । तत् सूत्रं द्युज्यया गुणितं त्रि-
ज्यया भक्तं कलासंज्ञं भवति । अत्रोपपत्तिः । यस्मिन्
काले छाया साध्या तस्मिन् काले स्वाहोरात्रवृत्ते यावती-
भिर्घटिकाभिः क्षितिजादुन्नतो रविस्तावत्युन्नतसंज्ञा । येन्

ता। नहि नरैः लघुगुरूत्वोन्नतिः समुपलभ्यते। प्रसिद्धा तु गुरुगुरूत्वोन्नतिः। अत उक्तं भाषान्तपादे प्रथमेऽथ वेति। "यथोजो करिकरविभ्रकरोमनुन्नतिं, गच्छतः"। "लोके-नोन्नतिमायाति" इति च मा०द०

उन्नतीश पु० ईश०। गरुड़े त्रिका०।

उन्नद्ध त्रि० उद्+नह-क्त। १उद्बद्धे। उत्कटे च। "जहुः स्वतेज उन्नद्धमस्तघोऽस्वस्वतेजसा" भा० १स्क०। उन्नद्धं उत्कटम्" श्रीधरः।

उन्नमन न० उद्+नम-ल्युट्।१उन्नतौ। णिच्-ल्युट् न वृद्धिः। २उत्तोलने सुश्रुतोक्ते ३यन्त्रकर्मभेदे च। तानि चतुर्विंशतिः यथोक्तं तत्रैव। "यन्त्रकर्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तनचालनविवर्त्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाकुञ्चनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः"। उन्नमनञ्च प्रयत्नविरचावसाधनं यथोक्तं तत्रैव "सन्निगतः पोड्यमानो न प्रवर्त्तेत आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनात् कासनप्रवादैश्च भूवति"।

उन्नमित त्रि० उद्+नम-णिच्-क्त। १उत्तोलिते, २ऊर्द्ध्वीकृते च "अथ प्रयत्नोन्नमितानमत्फणैः" कुमा० "कश्चिदुन्नमिताननौ" रघुः। [ मथितं तत्" माघः

उन्नम्र त्रि० उद्+नम-रन्। उन्नते "उन्नम्रताम्रपटमण्डप

उन्नय पु० उद्+नी-"क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इत्युक्तेः अच्। कूपादितो जलादेरुत्तोलने अमरः।

उन्नयन न० उद्+नी-ल्युट्। १वितर्के, २ऊर्द्ध्वप्रापणे च। "अनादिष्टार्थेदोन्नयनश्रुतेः कात्या०" ८,५,२४, उन्नयनश्रुतिश्च। "अतोऽतिरिक्तेभ्य उन्नयन्त्यतोमत्तुमेभ्यः" शत०ब्रा० ४,५,६,२, "चमसोन्नयनकाले वाहूत्य दक्षोक्ष्य तद्भक्षेनोन्नयेत्" कात्या० १०,८,२१, "तेभ्यश्चोन्नयनमप्यभि सोमादुन्नयन्तीति श्रुतेः" कात्या० २२,१०, ५, "उन्नयन्त्यस्मात् अपादाने ल्युट्"। ३पूतभृत्पात्रे। "उन्नयने च" कात्या० २५,१२,१४, तदेव भवति उन्नयनम् अस्मादित्युन्नयनम् पूतभृदुच्यते" कर्कः। उन्नमितं नयनं येन प्रा०ब०। उन्नमितनेत्रे त्रि०।

उन्नस त्रि० उन्नता नासा यस्य अच् समा० नसादेशः। उन्नतनासिके। "उन्नसं दधतो वक्त्रम्" भट्टिः।

उन्नाद पु० उद्+नद-घञ्। उच्चशब्दे "शरभोन्नादसंजुष्टम् नानामृगनिषेवितम्" भा०व० १५८अ०।

उन्नाभ पु० उन्नता नाभिर्यस्य अच् समा०। सूर्यवंश्ये नृपभेदे "उन्नाभ इत्युदितनामधेयः" रघुः असंज्ञायान्तु न अच्। उन्नाभिरप्यत्रैव त्रि०। उन्नता नाभिः प्रा०स०। उन्नतनाभौ पुंस्त्री०।

उन्नाय पु० उद्+नी-"अवोदोर्नियः" पा० घञ्। १ऊर्द्ध्वनयने २वितर्के ३उद्भवे च "उन्नायानधिगच्छन्तः महार्णवमुधा न्वताम्" भट्टिः। [हेमच०।

उन्नाह पु० उद्+नह-घञ्। १उत्तोलवन्धने २काञ्जिके न०

उन्निद्र त्रि० उद्गता निद्रा मुद्रा यस्य। १विकसिते निद्रायाश्च मुकुलीभावरूपनेत्रनिमीलनात्मकत्वेन तथात्वम्। "उन्निद्रपुष्पचयचम्पककुसुमभासा" माघः। २निद्रारहिते च। "तामुन्निद्रामवनिशयनां सौधवातायनस्थाम्" मेघ०। "प्रत्यासन्नविवर्त्तैर्विगमयत्युन्निद्र एव क्षपाः" शकु०। उन्निद्रता च जागरणं तच्च विप्रलम्भशृङ्गारे कामकृतदशविधावस्थाभेदः तासावस्थाः ४४७पृ० उक्ताः।

उन्नीत त्रि० उद्+नी-क्त। १ऊर्द्ध्वं नीते २वितर्किते च।

उन्नेतृ त्रि० उद्+नी-तृच् स्त्रियां ङीप्। १ऊर्द्ध्वनायिनि २उद्भावके च षोड़शसु ऋत्विक्षु ३ऋत्विग्भेदे पु० स च अध्वर्याकशब्दे ८५पृ० दर्शितः। तस्य च गीते कृताकृतस्मादनादुदकादुत्तारणाद्योन्नेतृत्वम् "उन्नेतैनानुनयति" "उन्नेतर्ममयोन्नयोन्नेतर्ममो अभ्युन्नयान इत्युच्यमानाजपन्ति" आश्व० श्रौ० ६,१२,१२,१४। "उन्नेता यथाप्रोक्तविधिना सर्वानुदकादुत्तारयति" "उन्नेतरिष्येतं मन्त्रं जपन्ति" ना०द्र० "आहृतमुन्नेता द्रोणकलशमिडामिव प्रतिस्रुत्योपहवमिडाऽवेक्षेत" आश्व० श्रौ० ६,१२,१। "अथोन्नेतः उपांशुसवनं प्रयच्छत्यथाहोन्नेतारमाहुत धावय" इति संप्रस्तुताति प्रतिप्रस्थाता वसवानुन्नेता चमसेनोदञ्चनेन वा" शत०ब्रा० ४,२,५,१८,२१। ततः उद्गाता० अण् न वृद्धिः। उन्नेत्र उन्नेतृसम्बन्धिनि त्रि०। "प्रतिप्रस्थातान्नोन्नेत्रं" कात्या० २४,४,४६। तस्यौ औन्नेत्रमित्यपि तत्रैव त्रि०।

उन्नेय त्रि० उद्-नी-यत्। १ऊर्द्ध्वनयनीये २उद्भावनीये च।

उन्मज्जक पु० उद्+मस्ज-ण्वुल्। "कण्ठदघ्ने जले स्थित्वा तपः कुर्वन् प्रवर्त्तते। उन्मज्जकः स विज्ञेयस्तापसो लोकपूजितः" इत्युक्तलक्षणे १तापसे। जलादेरुपरि २उद्भावके त्रि०। [ (भाषा) प्लवने।

उन्मज्जन न० उद्+मस्ज-ल्युट्। मज्जनविपरीतव्यापारे

उन्मण्डल न० उन्नम्रं मण्डलम्। वि० सि० उक्ते दिनरात्र्योः क्षयवृद्धिसाधने मण्डलभेदे। यथाह तत्रैव।

"पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पललवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चापलवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि" शि०। "समवृत्तक्षितिजयोर्यौ पूर्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च लग्नं यद्विबध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवतः" प्रमि०। सूर्य्यसिद्धान्ते रङ्गनाथेन च स्पष्टमुक्तं यथा "प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम्। उन्मण्डलं च विषुवन्मण्डलं परिकीर्त्यते" सू०। "प्राक्पश्चिमाश्रिता पूर्वपश्चिमसम्बद्धा साधिता रेखा समवृत्तमुच्यते। सैव रेखोन्मण्डलं विषुवन्मण्डलम्। चः समुच्चये। उभयसंज्ञकं कथ्यते। अत्रोपपत्तिः। क्षितिजपूर्वापरवृत्तसंयोगौ पूर्वापरे तन्मूलं पूर्वापरस्थलमिति। पूर्वापरवृत्तस्य भूमावूर्ध्वाधरानुकारिवृत्तत्वेनादर्शनाद्रेखाकारतयैव दर्शनाच्च पूर्वापरवृत्तमपि तन्मूलम्। पूर्वापरवृत्तस्य सममण्डलत्वेनाभिधानात् तद्रेखा सममण्डलसञ्ज्ञोक्ता। अथ स्वनिरक्षदेशक्षितिजवृत्तस्योन्मण्डलाख्यस्य तत्र योगयोः संलग्नत्वात् तन्मध्यस्थलत्वेन पूर्वापरस्थलस्यापि सत्त्वात् पूर्वापरस्थलमुन्मण्डलसञ्ज्ञम्। एतेनान्यदेशक्षितिजसञ्ज्ञया स्वदेशक्षितिजसञ्ज्ञा सुतरां सिद्धेति पूर्वापरस्थलस्य क्षितिजत्वसञ्ज्ञा द्योतिता। पूर्वापरस्थानयोः क्षितिजवृत्तस्य संलग्नत्वादुक्षिक्षितवृत्तस्य क्षितिजानुकारित्वाच्च" रङ्ग०। "उद्वृत्तादयोऽप्यत्र। परोऽथ वोद्वृत्तगते रवौ स्युतिः" शि० शि०। प्रा०स०। २अर्द्धमण्डले त्रि०।

उन्मण्डलकर्ण पु० शि०शि० उक्ते छायया दिग्ज्ञानार्थे उन्मण्डलस्थार्कस्य छायाकर्णे। तदानयनं तत्रैव यथा "द्युतावनांशार्कभुजद्युलज्यया कराग्रतिग्मभ्रुवौ" (१०।१५, २०) द्युताः परः। पलश्रुतिघ्नः पलभाविभाजितः परोऽथ वोद्वृत्तगते रवौ स्युतिः" शि०। "अर्कस्य सायनांशस्य वृहती भुजज्या साध्या। न लघुखण्डज्याद्यैः। तथा ज्यया पूर्वाग्नितिथिन्द्वन्द्वयमिनो (१०।१५।२०) भाज्याः। यल्लब्धस्तौ पराख्यः। स परः पलकर्णेन गुण्यः पलभया भाज्यः। फलमुन्मण्डलगतस्यार्कस्य छायाकर्णो वा भवति" प्रमि०।

उन्मण्डलशङ्कु पु० शि०शि०उक्ते अक्षदेशप्रदर्शनार्थे उन्मण्डलशङ्कौ। "क्षमादिखण्डं कथिता च कोटिरुद्वृत्तना दोः श्रवणोऽपमज्या। उद्वृत्तना कोटिरथापमाख्यखण्डं भुजस्तच्छ्रवणः क्षितिज्या। खण्डं यदूर्द्ध्वं समवृत्तशङ्कोर्यत् तद्वृतेऽपि च कोटिकर्णौ। क्षमादिखण्डं भुज एवमष्टौ क्षेत्राण्यथ मूल्यसमवानि तावत्" शि०।"अत्र किञ्च निरक्षदेशे यदेव विषुवन्मण्डलं तदेव सममण्डलम्। तथा क्षितिजादन्यदुन्मण्डलं नाम वलयं नास्ति। तत्र ध्रुवौ च क्षितिजासक्तौ। अथ निरक्षदेशादुद्वृष्टा यथा यथोत्तरतो गच्छति तथा तथोदग्ध्रुवमुन्नतं पश्यति। तथा यैर्भागैर्ध्रुव उन्नतस्तैरेव भागैरक्षसंज्ञैः स्वस्तिकाद्दक्षिणतो विषुवन्मण्डलं नतं पश्यति। विषुवन्मण्डलस्य तिर्यक्स्थितत्वात् तदाश्रितान्यहोरात्रवृत्तानि स्वस्थाने तिरश्चीनानि भवन्ति। अतः साक्षे देशे खगोलवलयानां तिरश्चीनखगोलवलयानां च संपातात् त्र्यस्राणि क्षेत्राण्युत्पद्यन्ते। तान्यत्रोक्तस्वोपयोगित्वात् कथ्यन्ते। अक्षभा नाम पलभा प्रसिद्धा सा भुजः। द्वादशाङ्गुलः शङ्कुः कोटिः। अक्षकर्णस्तत्र कर्णः" प्रमि० उद्वृत्तनाप्यत्र। एवमुन्मण्डलादिशङ्कुरप्यत्र।

उन्मत्त पु० उद्+मद्–कर्त्तरि क्त। १धूस्तूरे "विल्वैरखण्डार्कवर्णाभूदधिस्योन्मत्तशिशुभिः" सुश्रु०। २मुचकुन्दवृक्षे च। कर्त्तरि क्त। ३उन्मादवति, ४ग्रहावेशवति च त्रि०। "बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम्" नारदः। "उन्मत्तेन वातिकाद्युन्मादयुक्तेन" मिता०। "उन्मत्तानाञ्च या गाथा शिशूनां चेष्टितं च यत्। स्त्रियो यत्र प्रभाषन्ते नास्ति तत्र व्यतिक्रमः" म०त० मत्स्यपु०। ४उद्धते च उन्मत्तगङ्गम्। अतिशयेन मत्तः। ५अतिमत्ते "मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः" पञ्चतन्त्रम्।

उन्मत्तक पु०उन्मत्त इव कन्। १तापसभेदे। अवधूतशब्दे ४२८ पृष्ठे विवृतिः। स्वार्थे कन्। २उन्मत्तार्थे। "क्रोधोऽथ पतितस्त्यज्य पङ्क उन्मत्तको जडः" याज्ञवल्क्यः।

उन्मत्तगङ्ग अव्य० उन्मत्ता उद्धता गङ्गा यत्र संज्ञायाम् अन्यपदार्थत्वे अव्ययी०। देशभेदे। "उन्मत्तगङ्गं नाम देशः" सि०कौ०।

उन्मत्तगीत त्रि० उन्मत्तेन गीतम् "इत्यद्भुतेन कृतमिति" पा० इत्यादौ। उन्मत्तेन गीते एवम् उन्मत्तप्रलपितादयोऽपि उन्मत्तेन प्रलपिताद्यर्थे त्रि०।

उन्मथन न० उद्+मथ–भावे ल्युट्। १उन्मर्द्दने २हिंसने। "अन्योन्यसूतोन्मथनादभूताम्" रघुः "वायुनोन्मथनं चापि भ्रमन् क्रमतस्तया" सुश्रु०। सुश्रुतोक्ते ३यन्त्रकर्मभेदे च उन्मथनशब्दे ११९०पृ० दृश्यम्। कर्त्तरि ल्यु। ४उन्मर्द्दनकारके त्रि०। "विपक्षचित्तोन्मथना नखव्रणाः" किरा०।

उन्मथित त्रि० उद्+मथ-क्त। उद्धृष्टे मर्द्दिते।

उन्मद पु० उद्गतो मदो मत्तताऽस्य प्रा० ब० गतलोपः।

२उद्धतमदे। "उन्मदमृगमदरभसवशंवदनवदलमालतमाले" जयदेवः "उदीरयामासुरिवोन्मदानाम्" रघुः "कपोल-लोलोन्मदराजहंसे" रघुः। १व०। २उद्धतमदसाधने "मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे" माघः।

उन्मदन त्रि० उद्भूतो मदनोऽस्य प्रा०ब० भूतलोपः। उद्भूतकामे। "तदा प्रभृत्युन्मदना बभूव" कुमा०।

उन्मदिष्णु त्रि० उद्+मद-ताच्छील्ये इष्णुच्। उन्मादशीले।

उन्मनस् त्रि० उद्भ्रान्तं मनोऽस्य। १उत्कण्ठायुक्ते, २अन्यमनस्के च। "पयोधरेणोरसि काचिदुन्मनाः" माघः। "उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः" रघुः वा कप्। उन्मनस्कोऽप्यत्र। भृशा० अभूततद्भावे क्यङ् सलोपश्च उन्मनायते उन्मनायमानः "भृशमुन्मनायितम्"। च्वि-कृभ्वस्तिषु सलोपश्च उन्मनीकरोति उन्मनीभवति उन्मनीस्यात्"।

उन्मनी स्त्री उन्मनस्+ङीप्०। योगिनामवस्थाभेदे। "उन्मन्यवस्थाधिगमाय विद्वन्नुपायमेकं तव निर्दिशामि। पश्यन्नुदासीनतया प्रपञ्चं सङ्कल्पमुन्मूलय सावधानः" आचार्य्यः।

उन्मन्थ पु० उद्+मन्थ-भावे घञ्। वधे २हिंसने ३उन्मर्द्दने च।

उन्मन्थन न० न० उद्+मन्थ-ल्युट्। ऊर्द्ध्वतो दण्डादिना विलोडने। करणे ल्युट्। तत्साधने २दण्डादौ।

उन्मर्द्दन न० उद्+मृद-ल्युट्। १उद्वर्त्तने सुश्रुतोक्ते वायुप्रसादनार्थे २व्यापारभेदे। "वायौ दुष्टे पक्वस्य सुश्रु० "त्वङ्मांसास्नायुशिराः प्राप्ते कुर्य्याच्छास्त्रविमोक्षणम्। स्नेहोपनाहाग्निकर्म्म बन्धनोन्मर्द्दनानि च" शूलोपद्रवनिवारणार्थे सुश्रुतोक्ते ३व्यापारभेदे च "वमनोन्मर्द्दनस्वेदलङ्घनलपनक्रियाः"। करणे ल्युट्। ४उन्मर्द्दनसाधने द्रव्यादौ। "अथैतान्युपकल्पयीत समावर्त्तमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्द्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्य्याय च" आ०गृ० ३,८,१, "उन्मर्द्दनमभिषेकेऽथनीयैके" कात्या०१८,४,८। "उन्मर्द्दनचन्दनादि" कर्कः।

उन्मा स्त्री उद्+मा-क। ऊर्द्ध्वमाने। "सहस्रस्योन्मासि साहस्रोऽसि" यजु० १५,६५, "उन्मा" उन्मानं तुलादि वेददी०।

उन्माथ पु० उन्मथ्यतेऽनेन उद्+मथ-करणे घञ्। १आमिषदानेन मृगादिबन्धनार्थे निवेशिते कूटयन्त्रे (फांद) इति ख्याते। भावे घञ्। २विलोडने ३व्यापने, ४हिंसने च। "तत्रागत्य चाण्डालोद्धरणे कृतकेतनः। प्रयोजयति योन्माथं निष्फलं गते रवौ" भा०शा० १३८ अ०।

उन्माद पु० उद्+मद-आधारे घञ्। रोगभेदे स च सुश्रुते दर्शितो यथा "अथात उन्मादप्रतिषेधमध्यायं व्याख्यास्यामः॥ मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः। मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः॥ एकैकशः समस्तैश्च दोषैरत्यर्थमूर्च्छितैः। मानसेन च दुःखेन स पञ्चविध उच्यते॥ विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम्। स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च॥ मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम्। अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम्॥ वायुनोन्मथनञ्चापि भ्रमश्च क्रमतस्तथा। यस्य स्यादचिरेणैवमुन्मादं सोऽधिगच्छति॥ रूक्षच्छविः परुषवाक् धमनीततो वा श्वासातुरः कृशतनुः स्फुरिताङ्गसन्धिः। आस्फोटयन् पठति गायति नृत्यशीलो विक्रोशति भ्रमति चाप्यनिलप्रकोपात्॥ तृट्स्वेददाहबहुलो बहुभुग्विनिद्रश्छायाहिमानिलजलान्तविहारसेवी। तीक्ष्णो हिमाम्बुनिचयेऽपि स वह्निशङ्की पित्ताद्दिवा नभसि पश्यति तारकाश्च॥ छर्द्यग्निसादसदनारुचिकासयुक्तो योषिद्विविक्तरतिरल्पमतिप्रचारः। निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी रात्रौ भृशं भवति चापि कफप्रकोपात्॥ सर्वात्मके त्रिभिरपि व्यतिमिश्रितानि रूपाणि वातकफपित्तकृतानि विद्यात्। सम्पूर्णलक्षणमसाध्यमुदाहरन्ति सर्वात्मकं क्वचिदपि प्रवदन्ति साध्यम्॥ चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यैर्वित्रासितस्य धनबान्धवसंक्षयाद्वा। गाढं क्षते मनसि च प्रियया रिरंसोर्जायेत चोत्कटतरो मनसो विकारः॥ चित्रं स जल्पति मनोऽनुगतं विसंज्ञो गायत्यथो हसति रोदिति चापि मूढः। रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः श्यावाननो विषकृतेन भवेत् परासुः॥ स्निग्धं स्विन्नन् मनुजमुन्मादार्त्तं विशोधयेत्"। एतद्व्याख्याच्छलेन तत्त्वविभागादि चोक्तं भावप्रकाशे "तत्र उन्मादस्य निरुक्तिमाह। "मदयन्त्युद्धता इत्यादि" सुश्रुतवाक्यम् यस्मादुद्धताः प्रवृद्धा दोषा उन्मार्गमाश्रिताः मदयन्ति चित्तं विक्षिपन्ति तान्। अतोऽयमुन्माद इतिकीर्त्तितः। स उन्मादः मानसो व्याधिः मनोवैकल्यकरत्वात्। तस्यैवावस्थाभेदेन लक्षणान्तरमाह। "स चाप्रवृद्धस्तरुण इत्यादि" सुश्रु० "उन्मादस्य विप्रकृष्टनिदानमाह। "विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्। उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः"। दुष्टं भक्तं कीटादिसहितम्। अशुचि रजस्वलादिस्पृष्टम्। प्रधर्षणमभिभवः।

विषमाश्च चेष्टाः बलवद्विग्रहादयः। सन्निकृष्टं निदानमाह । "एकैकशः इत्यादि" सुश्रु॰ तस्य सम्प्राप्तिमाह । "तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य । स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः" । अल्पसत्त्वस्य अल्पसत्त्वगुणस्य । मलाः वातादयः । बुद्धेर्निवासं हृदयं प्रदूष्येति । एतेनाश्रयस्य दुष्ट्या तदाश्रितायाः बुद्धेरपि दुष्टिरुक्ता । मनोवहानि स्रोतांसि हृदयाश्रितानि दश एतानि विशेषतो बोद्धव्यानि । यतश्चरकेण सकलशरीरस्रोतांस्येव मनोधिष्ठानत्वेनोक्तानि । प्रमोहयन्ति विक्रतं कुर्वन्ति । उन्मादस्य सामान्यं रूपमाह । "धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च । अबद्धवाक्त्वं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम्" । धीविभ्रमः शुक्तिकायां रजतज्ञानम् । सत्त्वपरिप्लवः सत्त्वं मनस्तस्य चाञ्चल्यम् । अबद्धवाक्त्वम् असम्बद्धभाषित्वम् । शून्यं स्मृतिशून्यम् । वातिकोन्मादस्य निदानपूर्विकां सम्प्राप्तिमाह । "रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः । चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम्" । प्रदूष्य प्रकर्षेण दूषयित्वा । तस्यैव रूपमाह । "अस्थानहासस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि । पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलञ्चानिलजस्य रूपम्" । अस्थाने अनवसरे हासादीनि रोदनान्तानि । जीर्णे आहारे । बलं व्याधेः । पैत्तिकस्य निदानपूर्विकां सम्प्राप्तिमाह । "अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् । उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात्" । हृदि स्थितं पित्तं चितं सञ्चितम् पुनः अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैरुदीर्णवेगं सत् उन्मादं कुर्यात् पूर्ववत् हृदयं प्रदूष्य इत्यर्थः । तस्य रूपमाह "। अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः । प्रच्छायशीतान्नजलाभिलाषः पीताभा पित्तकृतस्य लिङ्गम्" । अमर्षोऽसहिष्णुता । संरम्भः आरभटी आडम्बर इति यावत् । सन्तर्जनं परत्रासनम् । अभिद्रवणं पलायनम् । औष्ण्यं गात्रे । रोषो दाहविशेषः । प्रच्छायेत्यादि छायायां शीतयोरन्नजलयोरभिलाषः । श्लैष्मिकस्य निदानपूर्विकां संप्राप्तिमाह । "सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्मणि संप्रवृद्धः । बुद्धिं स्मृतिं चाप्युपहन्ति चित्तं प्रमोहयन् सञ्जनयेद्विकारम्" । संपूरणैः भोजनादिभिः । मन्दविचेष्टितस्य व्यायामरहितस्य । सोष्मा कफ इति कफोऽप्युन्मादं करिष्यन् पित्तं सहाय मपेक्षते व्याधिस्वभावात् । मर्मणि अत्र मर्मशब्देन हृदयमुच्यते । विकारमुन्मादरूपम् । तस्य रूपमाह । "वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा । छर्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मके स्यात्" । वाक्चेष्टितं मन्दं वचनमल्पम् । नारीविविक्तप्रियता नारीप्रियता विजनप्रियता च । भुक्ते सति बलं व्याधेः । सान्निपातिकस्य निदानपूर्वकं लक्षणमाह । "यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स तु हेतुभिः स्यात् । सर्वाणि रूपाणि बिभर्त्ति तादृग्विरुद्धभैषज्यविधिर्विवर्ज्यः" स सान्निपातिक उन्मादः । सन्निपातग्रहणेनैव सर्वात्मकत्वं लब्धम् । पुनः सर्वैरिति यदुक्तं तद्रजःतमःप्राधान्यार्थम् । तेन रजस्तमोभिर्मिलितैरित्यर्थः । तेन वातादयो रजस्तमोभिर्मनोदोषैर्मिलिताः समस्तैश्च निदानैः कुपिता उन्मादं जनयन्ति । सर्वैर्हेतुभिः समस्तैर्मिलितैः स्यात् । यतोऽन्योव्याधिः सर्वैर्हेतुभिर्मिलितैरेव भवतीति नियमो नास्ति । अयन्तु व्याधिस्वभावात् सर्वैर्हेतुभिर्मिलितैः स्यात् । तादृगुन्मादः विरुद्धभैषज्यविधिः विरुद्धभैषज्यविधिरिति कोऽर्थः । त्रिदोषजे प्रत्येकं वातादिप्रत्यनीका कार्य्या । सा च परस्परविरोधिनी त्रिदोषघ्नानि किञ्चिदेव द्रव्यमामलकादि तच्चात्यायौगिकम् । अतएव विवर्ज्यः न चिकित्स्य इत्यर्थः"। मनोदुःखजस्य विप्रकृष्टं निदानमाह ।"चौरैर्नरेन्द्रपुरुषैरित्यादि" सुश्रु॰ । अन्यैर्हिंसादिभिः । गाढमतिशयेन । घ्नते अभिहते प्रियया प्राप्तुमशक्यया रिरंसोः पुरुषस्य विकारः उन्मादरूपः । तस्य रूपमाह ।"चित्रं प्रजल्पतीत्यादि"सुश्रु॰चित्रमाश्चर्य्यम् । मनोऽनुगतं गोप्यमपि । विसंज्ञो विगतज्ञानः । अतीव मूढः अतीवज्ञानशून्यः । अत्र विकल्पो बोद्धव्यः । विषजस्य रूपमाह । "रक्तेक्षण इत्यादि" सुश्रु॰ परासुः मृतः । अरिष्टमाह । "अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः । जागरूको ह्यसन्देहमुन्मादेन विनश्यति" । अथ देवादिकृतस्योन्मादस्य सामान्यं लक्षणमाह । "अमर्त्त्यवाग्विक्रमवीर्य्यचेष्टो ज्ञानादिविज्ञानबलादियुक्तः । प्रकोपकालो नियतश्च यस्य देवादिजन्मा स मनोविकारः" । अमर्त्त्यवाग्विक्रमवीर्य्यचेष्टः न मर्त्त्यस्येव मनुष्यस्येव वागादयो यस्य सः । विक्रमः पराक्रमः । वीर्य्यं शौर्य्यम् । ज्ञानादिविज्ञानबलादियुक्तः । ज्ञानं बुद्धिः । आदिपदेन तद्भेदा मेधाविचारणास्मृत्यादयो गृह्यन्ते । विज्ञानं शि-

त्वादिविषयकं ज्ञानम् । चेष्टा पाटवम् । आदिपदेनाभिमानादि गृह्यते । नियतः वक्ष्यमाणतिथ्यादिभिः । मनोविकारः उन्मादः । तत्र देवाविष्टस्य लक्षणमाह । "सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्रोऽवितथसंस्कृतप्रभाषी । तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति नरः स देवजुष्टः"। अतिदिव्यमाल्यगन्धः अतिशयो दिव्यमाल्यस्येव गन्धो यस्य सः । निस्तन्द्रः निद्रारहितः । अवितथं सत्यम् । ब्रह्मण्यः ब्राह्मणभक्तः। दैत्याविष्टमाह । "संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः । सन्तुष्टो भवति न चान्नपानजातैर्दुष्टात्मा भवति स देवशत्रुजुष्टः"। विमार्गदृष्टिः कुमार्गरतः । दुष्टात्मा दुष्टस्वभावः । गन्धर्वाविष्टमाह । "हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः । नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीड़ितो मनुष्यः" । हृष्टात्मा हृष्टजीवात्मा । पुलिनं तोयोत्थितं तटम् वनान्तरं वनमध्यम् तयोः सेवी । स्वाचारः अनिन्दिताचारः । प्रियाणि परि समन्ततोभावेन गीत गन्धमाल्यानि यस्य स तथा । चारु चाल्पशब्दमिति हसनक्रियाया विशेषणम् । यक्षाविष्टमाह । "ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरोऽद्रुतगतिरल्पवाक् सहिष्णुः। तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीड़ितो मनुष्यः" । पित्राविष्टमाह । "प्रेतानां स दिशति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्यवस्त्रः । मांसेप्सुस्तिलगुड़पायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिजुष्टः"। प्रेतानां मृतानां पितॄणाम्। दिशति ददाति । अपसव्यवस्त्रः दक्षिणस्कन्धस्थितोत्तरीयः । नागाविष्टमाह ।"यस्तूर्व्यां प्रसरति सर्पवत् कदाचित् सृक्किण्यौ मुहुरपि जिह्वयावलेढि । क्रोधालुर्घृतमधुदुग्धपायसेप्सुर्विज्ञेयः स खलु भुजङ्गमेन जुष्टः" । प्रसरति सर्पवत् उरसा चलति । सृक्किण्यौ ओष्ठप्रान्तौ । राक्षसाविष्टमाह ।"मांसासृग्विविधसुराविकारलिप्सुर्निर्लज्जोभृशमतिनिष्ठुरोऽतिशूरः । क्रोधालुर्विपुलबलो निशाविहारी शौचद्विड् भवति स राक्षसैर्गृहीतः" । अतिनिष्ठुरोऽतिनिर्दयः ब्रह्मराक्षसाविष्टमाह । "देवविप्रगुरुद्वेषी वेदवेदाङ्गविच्छुचिः । आत्मपीड़ाकरोऽहिंस्रो ब्रह्मराक्षससेवितः । अहिंस्रः अहिंसाशीलः । पिशाचाविष्टमाह । "उद्ध्वस्तः कृशपरुषो विरुद्धभाषी दुर्गन्धो भृशमशुचिस्तथातिलोलः । बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः" । उद्ध्वस्तः नग्नः । दिगम्बर इति विदेहवचनात् । ( सु०सुश्रु० उद्धस्त इति पाठः ) कृशो निर्मांसः । परुषो रूक्षः । अतिलोलः सर्वस्मिन् अन्नपाने लोलुपः । व्याचेष्टन् विरुद्धमाचेष्टन् । ग्रहा हिंसाक्रीड़ापूजार्थं गृह्णन्ति । अतएवोक्तम् । "अशुचिं भिन्नमर्यादं क्षतं वा यदि वाऽक्षतम् । हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि वा । तत्र हिंसार्थं गृहीतस्य लक्षणमाह । "स्थूलाक्षो द्रुतमटनः सफेनवामी निद्रालुः पतति च कम्पते च योऽति । यश्चाद्रिद्विरदनगादिविच्युतः स्यात् सोऽसाध्यो भवति तथा त्रयोदशेऽब्दे । यश्चाद्रीत्यादि यः पर्वतादिपतितः सन् गृहैर्गृहीत इत्यर्थः । आदिशब्देन भित्तिप्रासादादयो गृह्यन्ते त्रयोदशेऽब्दे सर्व एव देवादिगृहीतोऽसाध्यः । देवादीनामावेशसमयमाह ।"देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि । गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यपि । पितरः कृष्णपक्षे च पञ्चम्यामपि चोरगाः । रक्षःपिशाचा रात्रौ च चतुर्दश्यां विशन्ति हि" । कृष्णपक्षे अमायाम् । प्रायशःपदादन्यदापि । तिथ्यभिधानप्रयोजनं लक्षणार्थं तत्र तिथौ बलिदानार्थञ्च । ननु यदि देवादयो विशन्ति तदा विशन्तस्ते दृश्यन्ते कथं नेत्यत आह । "दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा । स्वमणिं भास्करार्चिश्च यथा देहञ्च देहधृक् । विशन्ति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिणम्" । दर्पणादीत्यादिशब्देनान्यदपि निर्मलद्रवद्रव्यं गृह्यते । छाया प्रतिबिम्बम् । स्वमणिं सूर्यमणिम् । देहधृक् जीवात्मा" । भा०प्र० । एतानि च वाक्यानि सुश्रुतोत्तरतन्त्रस्थानि । तत्र हि "गुह्यानागतविज्ञानमनवस्था सहिष्णुता । क्रिया वाऽमानुषी यस्मिन् स ग्रहः परिकीर्त्त्यते" इति ग्रहशब्दं परिभाष्य "असंख्येया ग्रहगणा ग्रहाधिपतयस्तु ये । व्यज्यन्ते विविधाकाराभिद्यन्ते ते तथाष्टधा देवास्तथा शत्रुगणास्तु तेषां गन्धर्वयक्षाः पितरोभुजङ्गाः । रक्षांसि या चापि पिशाचजातिरेषोऽष्टधा देवगणग्रहाख्यः" इति विभज्य "संतुष्टः शुचिरित्यादिना तज्जुष्टानां लक्षणान्याह । तानि भा०प्र०सङ्ग्रहकृतोदाहृत्य व्याख्यातानीति द्रष्टव्यम् । अन्ते च प्रकृतदेवादीनां न कश्चित् प्रवेशः किन्तु तत्परिचारकाणामेव देवाद्याचरवतां प्रवेश उक्तः यथा सुश्रु० उत्त० ।"तपांसि तीव्राणि दया च दानं व्रतानि धर्मो नियमश्च सत्यम् । गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च

यथाप्रभावम् । न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति । ये वा विशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः । तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः। असृग्वसामांसभुजः सुभीमा निशाविहाराय समाविशन्ति । निशाचराणां तेषां हि ये देवगणसंस्कृताः। ते तु तत्सत्वसंसर्गाद्विज्ञेयास्तु तदङ्गनाः । देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये । देववच्च नमस्यन्ते प्रत्यर्थ्यन्ते च देववत् । स्वामिशीलक्रियाचाराः क्रमएव सुरादिषु । नैऋर्तेया इहितरस्तासां स प्रसवः स्मृतः । सत्वन्यादपदस्तेषु हलिस्तेषां मर्षः कृता । हिंसाविहारा ये केचिद्दिव्यं भावमुपाश्रिताः । भूतानीति कृता संज्ञा तेषां संज्ञा प्रवक्तृभिः । ग्रहसंज्ञाभिभूतानि यस्माद्वेत्त्यनया भिषक् । विद्यया भूतविद्यात्वमतएव निरुच्यते"। अथोन्मादस्य सामान्यचिकित्सा

'वातिके स्नेहपानं प्राक् विरेकः पित्तसम्भवे । कफजे वमनं कार्यं परे वस्त्यादिकक्रमः । यच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सितम् । उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः । जलादिद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा । रक्षेदुन्मादिनं यत्नात् सद्यः प्राणहरा हि ते । ते जलादयः" । विशेषचिकित्सा भा०प्र०आदौ दृश्या । सचायं रोगः। महापातककर्म्मविपाकजः । "उन्मादस्त्वगदोषो राजयक्ष्मेत्यादि" शु० त० नारदोक्तेः "चित्तसंमोह उन्मादः कामशोकभयादिभिः" । सा०द० उक्ते २व्यभिचारिभावभेदे ।

उन्मादक पु० उद्+मद्-णिच्-ण्वुल् । उन्मादजनके धुस्तूरादौ । [ उन्मादकारके त्रि०।

उन्मादन पु०उद्+मद्-णिच्-ल्यु । १कन्दर्पबाणभेदे त्रिका०।

उन्मादवत् त्रि० उन्मादोऽस्त्यस्य मतुप् मस्य वः । उन्मादयुक्ते स्त्रियां ङीप् । [ न्मादिनं यत्नात्" सुश्रु० ।

उन्मादिन् त्रि० उद्+णिनि स्त्रियां ङीप् । उन्मत्ते "रक्षेदु-

उन्मान न०उद्+मा-भावे ल्युट् । ऊर्द्ध्वमाने तच्च प्रथितगुरुत्वेन पलादिमितपाषाणादिना तुलाधारफलके एकपार्श्वे स्थितेन अन्यपार्श्वस्थसुवर्णादेरुन्नमनादिना गुरुत्वविशेषज्ञापनव्यापारः (ओजनकरा)"ऊर्द्ध्वमानं किलोन्मानम्" वार्त्तिकोक्ते २ऊर्द्ध्वतः प्रमाणे च । अभिधेयार्थे "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" पा० "प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम"वार्त्तिकोक्तेः द्वयसच् दघ्नच् । ऊरुद्वयसः ऊरुदघ्नः "गजपतिद्वयसीरिति" माघः । सामान्यप्रमाणे तु मात्रजेव । ऊरुमात्रं प्रस्थमात्रम् । ४करणे ल्युट् । २तुलादौ । ३द्रोणपरिमाणे पु० वैद्यकम् ।

उन्मार्ग त्रि०उत्क्रान्तः मार्गात् निरा०स० । कार्यातिक्रान्ते मार्गे च पन्थाः रीतिश्च" "नाययति च दिङ्मोहमिवोन्मार्गः" काद० । २विरुद्धपथे च "मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः । उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः" पञ्चतन्त्रम् । उन्मादशब्दे उदा० ।

उन्मिति त्रि० उद्+मद्-क्तिन् । ऊर्द्ध्वमाने ।

उन्मिष त्रि०उद्+मिष-क । १प्रफुल्ले २किञ्चित्प्रकाशयुक्ते च

उन्मिषित त्रि० उद्+मिष-क्त । १प्रफुल्ले, विकसिते २किञ्चित् प्रकाशिते च ।"व्यलोकयदुन्मिषितैस्तडिन्मयैः" कुमा०।

उन्मीलन न०उद्+मील-ल्युट् । १विकाशे २चक्षुरादेः पुटविभेदे (ताकान) "ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारकः" भा०आ०८४अ० । "सम्मीलने मीलनके तथैव" सि० शि० । भावे घञ् उन्मीलोऽप्यत्र पु० ।

उन्मीलित त्रि० उद्+मील-क्त । १विकसिते "ते चोन्मीलित मालतीसुरभयः प्रौढाः कदम्बानिलाः" सा०द०। २स्फुटिते च णिच्-कर्मणि क्त । ३प्रकाशिते "उन्मीलितं तूलिकयेव चित्रम्"कुमा०। ४भेदितपुटद्वये नेत्रादौ "अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः" गुरुनतिमन्त्रः ।

उन्मुक्त त्रि० उद्+मुच-क्त । बन्धनरहिते

उन्मुख त्रि० उद्+ऊर्द्ध्वं मुखमस्य । १ऊर्द्ध्वास्ये,२उद्युक्ते च । "उन्मुखद्वाःस्थवीक्षिताः"कुमा०। "तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे" कुमा० । "विपुलतरोन्मुखलोचनावलम्बम्" "दन्ताग्रनिर्भिन्नपयोदमुन्मुखाः" माघः । "असौ शरण्यः शरणोन्मुखानाम्" "सा नीलपीरास्पदोन्मुखैव" । "मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः" रघुः स्त्रियां ङीप् । "चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी" कुमा० "प्रतिसिद्धापि कैकेय्या लक्ष्मीरिव सुतोन्मुखी" "पतिः प्रतीतः प्रसवोन्मुखीं प्रियाम्" "अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः" "इत्याख्याते पवनतनये मैथिलीवोन्मुखी सा" मेघ० ।

उन्मुद्र त्रि०उद्गता मुद्रा यस्मात् प्रा०ब०।१व्यक्तमुद्रे,२विकसिते च

उन्मूल नामधा०मूलात् उत्पाटयति उद्+मूल-णिच्। उन्मूलयति ते "उन्मूलयन् महाद्रुमान्" भा०व०१४६अ०

उन्मूलन न० उन्मूल+णिच्-ल्युट् । उत्पाटने उद्धृतमूलकरणे । "न पादपोन्मूलनशक्ति रंहः" रघुः ।

उन्मूलित त्रि० उन्मूलि–नामधा० क्त । उत्पाटिते "उन्मूलिता कुलधरैव पदाग्रपातैः" उद्भटः "दूरे सन्तु फलानि फल भवता तन्मूलमुन्मूलितम्" उद्भटः० ।

उन्मृजावमृजा स्त्री उन्मृज अवमृज इत्युच्यते यस्यां क्रियायां मयू० स० । उन्मार्जनावमार्जनार्थनिर्देशक्रियायाम् ।

उन्मृश्य त्रि० उद्+मृश–क्यप् । "मृशमृचोऽनुप्सर्गे । "उन्मृश्या इव द्यौरसि" शत०ब्रा० १,४,१,२२, ल्यप् । २उद्धृतः स्पृष्टेत्यर्थे अव्य० ।

उन्मेय त्रि० उद्+मा–यत् । १परिमेये "आचितः शकटोन्मेये" लिका० । २उन्मानमेये सुवर्णादौ च ।

उन्मेष पु० उद्+मिष–घञ् । १चक्षुरादेरुन्मीलने, किञ्चित्प्रकाशे च । "स्फुरितपरितेजोनुमेषनुत्या: प्रदीपाः" रघुः । "दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते" कुमा० "विद्युदुन्मेषदर्शितम्" मेघ० । भावे ल्युट् । उन्मेषणमप्यत्र न० "मन्मथोन्मेषणातिविलासो यो भवेत् कान्तिः" सा०द० ।

उन्मोचन न० उद्+मुच–ल्युट् । बन्धनात् उद्धृत्य विश्लेषणे । "उन्मोचनप्रमोचने उभे वाचो वदामि" अ०५,३०,१,

उप अव्य०वप–क । १अधिकार्थे, २हीने, ३आसन्ने, ४सामीप्ये, ५सादृश्ये, ६प्रतियत्ने सतो गुणान्तराधाने, ७व्याप्तौ, ८पूजायाम् ९शक्तौ, १०आरम्भे, ११दाने, १२दोषाख्याने, १३आचार्यकरणे १४अध्ययने, १५निदर्शने च । गणरत्ने "उप सामीप्यसामर्थ्यव्याप्त्याचार्यकृतिक्षतिदोष दानक्रियादीप्त्यारम्भाध्ययनपूजनेषु" इति उपार्थांस्तत्क्रमेणोदाजहार तत्र सामीप्ये उपकूपम् । सामर्थ्ये उपकरोति । व्याप्तौ उपकीर्णम् । आचार्यकृतौ उपदिशति । क्षतौ उपरतः, दोषे उपघातः (इन्द्रियाणां स्वस्वग्राह्यग्रहणासामर्थ्यम् । दाने उपहरति । क्रियाभेदे उपचरति । दीप्त्यां देवं देवमुपचरति । आरम्भे उपक्रमते भोक्तुम् । अध्ययने उपाध्यायः । पूजने उपचरितः पिता एवेष" इति । प्रतियत्ने (संस्कारे) "उप त्वा नेष्ये समिधमाहरेति" छा०उ० सामीप्ये "उपोपविश्य प्राणान् संस्मरन्" स०त०गो० । सादृश्ये उपदेवः उपधातुः । "उपोऽधिके च" पा० "१हीनाधिके "उप च त्रयोदश मासः" शत०ब्रा०६,२,२, अस्य हीनेऽधिके च कर्मप्रवचनीयता तत्र हीनार्थयोगे तत्सम्बन्धिनि द्वितीया । उप हरिं हराः–हरेर्हीना इत्यर्थः । अधिकार्थयोगे सप्तमी । उप परार्द्धे हरेर्गुणाः–परार्द्धादधिकाइत्यर्थः । सामीप्येऽव्ययीभावः उपकूलम् उपकूलम् । "उपसर्गाः क्रियायोगे" पा० क्रियायोगे उपसर्गता अन्यत्र गतिता ततः भवार्थे त्यकन् उपत्यका ।

उपक पु० उप+संज्ञायां कन् । १ऋषिभेदे ततः नडा० फक् । औपकायनः तस्य अद्वन्द्वे द्वन्द्वे च बहुत्वे वा लुक् । अद्वन्द्वे औपकाः औपकायनाः । द्वन्द्वे उपकलमकाः औपकायनलामकायनाः । अनुकम्पितः उपेन्द्रदत्तादिः "प्राचामुपादेरडज्वुचौ" पा० वुच् "ठाजादावूर्ध्वं द्वितीयादचः" पा० इन्द्रदत्तलोपे । उपक २अनुकम्पिते उपेन्द्रदत्ते पु० । पक्षे अडच् उपडः । वात् ठच् घन् इलच् च । तत्र ठचि उपिकः घनि उपियः इलचि उपिलः । तत्रार्थे पु० अजादाविन्युक्तेः कनि न लुक् । उपेन्द्रदत्तकः । एवमन्यत्रापि उपपूर्वकस्य संज्ञाशब्दस्य रूपं बोध्यम् । तेन तत्रापि उपकादिशब्दप्रवृत्तिः ।

उपकण्ठ त्रि० उपगतः कण्ठम् अत्या० स० । १निकटे, २कण्ठासन्ने च "तस्योपकण्ठे घननीलकण्ठः" कुमा० । "आलक्ष्य चापं श्रवणोपकण्ठे" "उपकण्ठं महोदधेः" रघुः ३ग्रामान्ते ४अश्वानामास्कन्दितगतौ च न० । विभक्त्यर्थे सामीप्ये वा अव्ययी० । ५कण्ठ इत्यर्थे "रथाङ्गभर्त्रेऽभिनवं वरस्य यस्याः पितेव प्रतिपादितायाः । प्रेम्णोपकण्ठं मुहुरङ्कभाजो रत्नावलीरम्बुधिराबबन्ध" माघः । उपकण्ठम्–कण्ठे पर्वेऽन्तिके इत्यर्थः ६कण्ठसामीप्ये च अव्य० ।

उपकनिष्ठिका स्त्री उपगता कनिष्ठिकाम् अत्या० स० । अनामाङ्गुलौ "अप्रच्छिन्नाग्रावनन्तर्गर्भौ प्रादेशमात्रौ कुशानामन्तयोर्गृहीत्वाङ्गुष्ठोपकनिष्ठिकाभ्याम्" आ० श्र०स० १,३,२ "अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्यासं छादयन्तः" ४,५,३ ।

उपकन्या स्त्री उपगता कन्याम् अत्या० स० । कन्यासख्यादौ अस्य गौरा० पाठात् उपादुद्गृत्वेऽपि नान्तोदात्तता ।

उपकरण न० उपक्रियतेऽनेन उप–कृ–ल्युट् । १प्रधानसाधके अङ्गे यथान्नभोजनादौ व्यञ्जनादि, शयने खट्वादि, स्नानेऽनुलेपनादि, पूजायां पुष्पादि यागे यज्ञादि । "यच्च वेश्म शुभं दद्यात् सर्वोपकरणान्वितम्" शु०त० नन्दिपु० । "भक्तावकाशाम्भ्युदकमन्योपकरणव्ययान्" या० स्मृ० । २नृपादीनां छत्रचामरादिपरिच्छदे च । उपगतः करणम् अत्या० स० । ३इन्द्रियानुगते त्रि० विभक्त्यर्थे सामीप्ये वाऽव्ययी० । ३करणे इत्यर्थे ४इन्द्रियसामीप्ये च अव्य० ।

उपकर्ण अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी० । १कर्णे इत्यर्थे २श्रोत्रसामीप्ये च । तत्र प्रायभवः ठक् औपकर्णिकः तत्र प्रायभवे त्रि० "यःस्वामी कम कानादानोपकार्यकवेषनः" भट्टिः ।

**उपकर्त्तृ** त्रि० उप–कृ–तृच् स्त्रियां ङीप् । उपकारके आनुगुण्यकारके "उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा" माघः । "हीनान्यनुपकर्त्तॄणि प्रवृद्धानि विकुर्वते" रघुः ।

**उपकलाप** अव्य० विभक्त्यर्थे सामीप्ये वाऽव्ययी० । १कलापे इत्यर्थे २तत्सामीप्ये च ततो भवार्थे परिमुखा० ञ्य । औपकलाप्य तद्भवे त्रि० ।

**उपकल्य** त्रि० उपगतः कल्यम् अत्या० स । कल्योपगते । गौरा० पाठात् उपात् द्व्यच्कत्वेऽपि नान्तोदात्तता ।

**उपकल्पन** न० उप+क्लृप–णिच्–ल्युट् । १सम्पादने २आयोजने च "अतःपरं सम्यगाहारस्योपकल्पनम्" सुश्रु० युच् । तत्रैव स्त्री । "एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम्" सुश्रु० ।

**उपकादि** पु० द्वन्द्वेऽद्वन्द्वे च बहुत्वे गोत्रप्रत्ययलुग्निमित्ते पाणिन्युक्ते शब्दसमूहे । स च उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट सुपिष्ट मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक काशकृत्स्न निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिलक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वटारक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कबलक कमन्तक कदामत्त ।

**उपकार** पु० उप+कृ–भावे घञ् । प्रधानस्यानुगुण्यसंपादने, उपकृतौ "उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" माघः । "कृतोपकारेव रतिर्बभूव" कुमा० "उपकारो महांस्तात कृतोऽयं मम खेचरैः" भा०व०१५०अ० । तस्योपकार्य्यारचितोपचा(चा)रा" रघुः । उपकारश्च सहकारिभिः कारणस्य कार्य्योत्पादनार्थमानुगुण्यभेदः यथा दर्शादियागस्य प्रधानापूर्व्वसाधनेऽङ्गादीनां प्रयाजादीनां कलिकापूर्व्वसाधनद्वारा तदानुगुण्यम् । स च बौद्धैः कुर्व्वद्रूपतारूपस्य बीजादेरङ्कुरजनकस्य सम्पादनरूपातिशयाधानमुच्यते सर्व्व० दर्श० । "तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमङ्कुरमुत्पादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत् । बीजस्यातिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्व्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत । तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्व्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिसम्पाद्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता । अथोपकारः कार्य्यमपेक्षमाणोऽपि बीजादिनिरपेक्षं कार्य्यं जनयति तत्सापेक्षो वा । प्रथमे बीजादेरहेतुत्वमापतेत् । द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेयः एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत् । एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्म्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापातइति तृतीयानवस्था दुरवस्था स्यात् । अथ भावाद्भिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावो ऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्व्वद्रूपादिपदवेदनीयो जायत इति फलितम् ।

**उपकारक** त्रि० उप+कृ–ण्वुल् । १उपकारकर्त्तरि । "आगन्तवोऽपि कदाचिदुपकारका दृश्यन्ते" हितो० । स्त्रीत्वे टापि अतइत्त्वे उपकारिका । सा च २अपासवे, ३पटनिर्म्मिते गृहे च । ४कारणमात्रे त्रि० । "स्पर्शत्वगिन्द्रियग्राह्यस्त्वक् स्यादुपकारकः" भाषा० णिनि । उपकारिन् उपकारके त्रि० । "तदुपकारीणि शारीरकसूत्रादीनि" वेदा० सा० । "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे" गीता "मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि" दक्षः । स्त्रियां ङीप् ।

**उपकार्य्या** त्रि० उप+कृ–ण्यत् । १उपकारयोग्ये । २राजालये, ३पटनिर्म्मितराजसदने च स्त्री टाप् । "तस्योपकार्य्यारचितोपचा(चा)रा" रघुः । "तीरोपकार्य्यां गतमात्र एव" "स्व पुनः प्रतिविहितोपकार्य्यमार्य्यैः" रघुः राजभवने "रम्यां रघुप्रतिनिधिः स नवोपकार्य्याम्" । "उपकार्य्या राजसद्मन्युपचारचितेऽन्यवदिति विश्वोक्तेः ५उपचारव्याप्ते त्रि० ।

**उपकिरण** न० उप+कॄ–ल्युट् णि० इत्वम् । १व्याप्तौ २सम्यान् विक्षेपे च "आधूतकरोत्किरणं वा" कात्या० २५, १०, २४ । समीपादौ अव्ययी० । ३किरणसामीप्यादौ अव्य० ।

**उपकीचक** पु० उपगतः कीचकम् अत्या० स० । विराटनृपश्यालककीचकानुजे विराटसैन्यभेदे "समवेतेषु सर्व्वेषु तानूचुरुपकीचकाः । हन्यतां शीघ्रमसतौ यत्कृते कीचको हतः" । ते च पञ्चाधिकशतमिताः कीचकश्चापि प्रसिद्धः "एवं ते निहता राजन् ! शतं पञ्च च कीचकाः । स च सेनापतिः पूर्व्वमित्येतत् षट्शतम्" भा० वि० २२, २३अ० ।

**उपकुञ्चि** स्त्री उप+कुन्च–इ । कृष्णजीरके ।

**उपकुञ्चिका** स्त्री उप+कुञ्च–ण्वुल् अतइत्त्वम् । १तल्लायां

(वृँते) २स्थूलैलायाञ्च । स्वार्थे कन् । ३कृष्णजीरके ।

उपकुर्व्वाण पु० उपकुरुते गुरोर्द्विद्यादानादिना उप+कृ-शानच् । समावर्त्तनयोग्ये स्वाध्यायग्रहणावधिकब्रह्मचर्य्य-वति १ब्रह्मचारिणि "न पूर्व्वं गुरवे किञ्चिदुपकुर्वीत धर्म्मवित् । स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्व्वर्थमाहरेत्" मनुना स्नास्यत एव गुरूपकारविधानेन ततः पूर्व्वमुपकारकर्त्तृत्वनिषेधेन चास्यैवोपकर्त्तृत्वाच्चणात्वम् । ब्रह्मचारी हि द्विविधः नैष्ठिक उपकुर्वाणश्च । यो निरवधि मरणान्तम् उपनयनादूर्द्ध्वं गुरौ वसति स नैष्ठिकः । यस्तु स्वाध्यायग्रहणान्तं गुरौवसन् गुरुणानुज्ञातः गुरोरुपकारं कृत्वा स्नानगार्हस्थ्ये करोति स उपकुर्व्वाणः । स्नास्यतो दातव्या च मनुनोक्ता यथा "क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम् । धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत्" । आश्व० गृ० ३,८,१,२ तु "अथैतान्युपकल्पयीत समावर्त्तमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्द्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्य्याय च" "यद्युभयोर्न विन्देताचार्य्यायैव" । एकादश द्रव्याण्युक्तानि एतच्चोपलक्षणं गुरोरभिलषितं दद्यादित्यत्रैव तात्पर्य्यम् अत एव या०स्मृ० "गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया" तद्वरदानमेवोक्तम् "गुरवे पूर्वोक्ताय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात् तदशक्तौ तदनुज्ञयाऽदत्तवरोऽपि" मिता० । संज्ञायां कन् तत्रैव । "उपकुर्वाणकास्तु स्वाध्यायग्रहणार्था:" छा०उ०भा० । ताच्छील्ये चानश् । २उपकारशीले त्रि० ।

उपकुल्या स्त्री उप+कुल–अघ्न्या० नि० । १पिप्पल्याम् (पिपुल) अम० "हरिद्रोपकुल्याविशालेत्यादि" सुश्रु० तत्पर्य्यायगुणादि भा०प्र० दर्शितं यथा "पिप्पली मागधी कृष्णा वैदेही चपला कणा । उपकुल्योषणा शौण्डी कोला स्यात् तीक्ष्णतण्डुला । पिप्पली दीपनी वृष्या स्वादुपाका रसायनी । अनुष्णा कटुका स्निग्धा वातश्लेष्महरा लघुः । पित्तला रेचनी हन्ति श्वासकासोदरज्वरान् । कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् । आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः । पित्तप्रशमनी सा तु शुष्का पित्तप्रकोपिनी । पिप्पली मधुसंयुक्ता मेदः कफविनाशिनी । श्वासकासज्वरहरी वृष्या मेधाग्निवर्द्धिनी । जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली । कासाजीर्णारुचिश्वासहृत्पाण्डुकृमिरोगनुत् । द्विगुणः पिप्पलीचूर्णाद्गुडोऽत्र भिषजां मते" । उपगतः कुल्याम् अत्यादिसमासः अत्या०स० । कुल्योपगते त्रि० । २सामीप्यादौ अव्ययी० । ३कुल्यासामीप्यादौ अव्य० ।

उपकुश पु० सुश्रुतोक्ते १मुखरोगभेदे । "मुखरोगाः सप्तस्वायतनेषु" इत्युपक्रम्य ओष्ठादीनि सप्तायतनानि उक्त्वा "दन्तमूलगतास्तु शीतादो दन्तपुप्पुटको दन्तवेष्टकः शौषिरो महाशौषिरः परिदर उपकुशोदन्तवैदर्भो वर्द्धनोऽधिमांसो नाड्यः पञ्चेति" दन्तमूलगतानुक्त्वा "वेष्टेषु दाहः पाकश्च तेभ्योदन्ताश्चलन्ति च । आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः । आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते । यस्मिन्नुपकुशः स स्यात् पित्तरक्तकृतोगदः" । लक्षितः । "संशोध्योभयतः कार्य्यं शिरश्चोपकुशे तथा" सुश्रु० । सामीप्यादौ अव्ययी० । २कुश इत्यर्थे ३कुशसामीप्ये च अव्य० । उपगतः कुशम् अत्या०स० । ४कुशोपगते त्रि० ।

उपकूप त्रि० उपगतः कूपं अत्या०स० । १कूपोपगते देशे सामीप्यादौ अव्ययी० । २कूपसामीप्ये ३कूप इत्यर्थे च अव्य० ।

उपकूल न० कूले कूलस्य समीपं वा अव्य० । १कूले इत्यर्थे । २तीरसामीप्ये च अव्य० । "उपकूलं स कालिन्द्याः पुरीं पौरवभूषणः" रघुः ततो भवादौ अण् "अव्ययो भावाच्चेति" पा० "परिमुखादिभ्य एवेति" वार्त्तिके नियमनाच्च ञ्य । (301) औपकूलः तद्भवादौ त्रि० ।

उपकृत त्रि० उप+कृ–क्त । १कृतोपकारे यस्योपकारः कृत कस्मिन् । भावे क्त । २उपकारे न० "उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्" सा०द० । उपकृतमनेन इष्टा० इनि । उपकृतिन् येनोपकारः कृतस्तस्मिन् त्रि० स्त्रियां ङीप् ।

उपकृष्ण त्रि० उपगतः कृष्णम् अत्या०स० । १कृष्णोपगते उपादुद्व्यच्कत्वेऽपि गौरा०पाठात् नान्तोदात्तता । सामीप्यादौ अव्ययी० । २कृष्णसामीप्यादौ अव्य० । [समर्थे च ।

उपक्लृप्त त्रि०उप–क्लृप–क्त । १नियते २विन्यस्ते ३उपभोगाय-

उपकोसल पु० कमलापत्ये ऋषिभेदे । "उपकोसलोह कामलायनः सत्यकामे जाबाले ब्रह्मचर्य्यमुवास" छा०उ० "उपकोसलोनामतः कमलस्यापत्यं कामलायनः" भा० ।

उपक्रम पु० उप–क्रम–घञ् न वृद्धिः । १उपायज्ञानपूर्वकारम्भे, २प्रथमारम्भे "ज्योतिरुपक्रमात्तु तथाह्यधीयत एके" "समानाम्नायत्व्युपक्रमादस्तत्वं चानुपोथ" शा० सू० । "तत्र च प्रतिकुर्व्वन्ति यदि पश्यन्त्युपक्रमात्" भा०व०२१५ अ० । "उपक्रमोपसंहारौ—वेद-

